नगर-सरित्-समुद्र-घट-पटादीनां प्रत्यक्षेणैव दर्शनात् सर्वादर्शनलक्षणस्य हेतोः प्रत्यक्षविरोधः। ततः प्रत्यक्षविरोधतश्च 'सर्वादर्शनात्' इत्येतदयुक्तमिति।

अत्र कश्चिदाह– ननु सपक्षस्य सर्वस्याऽव्यापकोऽपि विपक्षात् सर्वथा निवृत्तो हेतुरिष्यत एव, यथा 'अनित्यः शब्दः, प्रयत्नानन्तरीयकत्वात्' इति; न ह्यनित्योऽर्थः सर्वोऽपि प्रयत्नानन्तरीयकः, विद्युद्-घन-कुसुमादिभिर्व्यभिचारात्; तद्वदिहापि यद्यपि सर्वेष्वपि भावेषु परभागादर्शनं नास्ति, यथापि बहुषु तावदस्ति, अतस्तेषु शून्यतां साधयन्नसौ सम्यग् हेतुर्भविष्यति। तदयुक्तम्, यतस्तत्र 'यदनित्यं न भवति तत् प्रयत्नानन्तरीयकमपि न भवति, यथाऽऽकाशम्' इत्येवं व्यतिरेकः सिध्यति; इह तु यत्र शून्यता नास्ति, किं तर्हि ? वस्तुनः सत्त्वम्, परभागादर्शनमपि तत्र नास्ति, किन्तु परभागदर्शनम्, यथा क ?, इति भवतः सर्वासद्वादिनो व्यतिरेकः क्वचिदपि न सिध्यति, अतोऽहेतुरेवायमिति ॥ १७४४ ॥ १७४५ ॥

अत्र पराभिप्रायमाशङ्क्य परिहरन्नाह—

[1]नत्थि पर-मज्झभागा अपच्चक्खत्तओ मई होज्जा। नणु अक्ख-त्थावत्ती अपच्चक्खत्तहाणी वा ॥१७४६॥

अथ स्यान्मतिः– पर-मध्यभागौ न स्तः, अप्रत्यक्षत्वात्, खरविषाणवत्। तदसत्त्वे च तदपेक्षया निर्दिश्यमान आराद्भागोऽपि नास्ति, अतः सर्वशून्यतेत्यभिप्रायः। तदयुक्तम्, यतः 'अक्षमक्षमिन्द्रियमिन्द्रियं प्रति वर्तत इति प्रत्यक्षोऽर्थः, न प्रत्यक्षोऽप्रत्यक्षः, तद्भावोऽप्रत्यक्षत्वम्, तस्मादप्रत्यक्षत्वात्' इत्युच्यमाने नन्वक्षाणामर्थस्य चाऽऽपत्तिः सत्ता प्राप्नोति, तदापत्तौ च शून्यताभ्युपगमहानिः। शून्यतायां वाऽप्रत्यक्षत्वलक्षणस्य हेतोर्हानिः, अक्षा-ऽर्थानामभावे प्रत्यक्षा-ऽप्रत्यक्षव्यपदेशानुपपत्तेरिति भावः ॥१७४६॥

अपि च, 'अप्रत्यक्षत्वात्' इत्यनैकान्तिको हेतुरिति दर्शयन्नाह—

[2]अत्थि अपच्चक्खं पि हु जह भवओ संसयाइविन्नाणं। अह नत्थि सुणया का कास व केणोवलद्धा वा?॥१७४७॥

नन्वप्रत्यक्षमप्यस्ति किञ्चिद् वस्तु, यथा भवतः संशयादिविज्ञानमन्येषामप्रत्यक्षमप्यस्ति, ततो यथैतत्, तथा पर-मध्यभागावप्रत्यक्षौ भविष्यत इत्यनैकान्तिको हेतुः। अथ भवत्संशयादिविज्ञानमपि नास्ति, तर्हि का नाम शून्यता ?, कस्य वाऽसौ ?,

1 न स्त पर-मध्यभागावप्रत्यक्षत्वतो मतिर्भवेत्। नन्वक्षा-ऽर्थापत्तिरप्रत्यक्षत्वहानिर्वा ॥ १७४६ ॥
2 अस्त्यप्रत्यक्षमपि खलु यथा भवत संशयादिविज्ञानम्। अथ नास्ति शून्यता का कस्य वा केनोपलब्धा वा ? ॥ १७४७ ॥

[1]अत्थित्त-घडेगाणेगया य पज्जायमेत्तचिंतेयं। अत्थि घडे पडिवन्ने, इहरा सा किं न खरसिंगे ? ॥ १७१९॥

इह 'अस्ति घटो न तु नास्ति' इत्येवं प्रतिपन्ने सति तदनन्तरमेवास्तित्व-घटयोः 'किमेकता, अनेकता वा ?' इत्यादिना घटा-स्तित्वयोरेकत्वा-ऽनेकत्वलक्षणपर्यायमात्रचिन्तैव भवता कृता भवति, न तु तयोरभावः सिध्यति। अन्यथा ह्यभावरूपाविशेषाद् यथा घटा-ऽस्तित्वयोः, एवं खरविषाण-वन्ध्यापुत्रयोरप्येकत्वा-ऽनेकत्वचिन्ता भवतः किं न प्रवर्तते ? इति ॥ १७१९ ॥

किञ्च, यथा [3]घटा-ऽस्तित्वयोरेकत्वा-ऽनेकत्वविकल्पौ त्वं विधत्से, तथा घट-शून्यतयोरपि तौ विधातुं शक्येते। कथम् ? इत्याह—

[4]घड-सुन्नयन्नयाए वि सुन्नया का घडाहिया सोम्म !। एगत्ते घडओ च्चिय न सुण्णया नाम घडधम्मो॥१७२०॥

ननु घट-शून्यतयोरप्यन्यता, अनन्यता वा ?। यद्यन्यता, तर्हि 'सुन्नया का घडाहिया सोम्म ! त्ति' सौम्य व्यक्त ! शून्यता का घटाधिका नाम ?– ननु घटमात्रमेव पश्यामः, न पुनः क्वचित् शून्यता घटादधिका समीक्ष्यते। अथानन्यता, तथापि सति घट-शून्यत्वयोरेकत्वे घट एवासौ युज्यते, प्रत्यक्षत एवोपलभ्यमानत्वात्, न तु शून्यत्वं नाम कश्चित् तद्धर्मः, सर्वप्रमाणैरनुपलब्धे-रिति ॥ १७२० ॥

अपिच,

[5]विण्णाण-वयण-वाईणमेगया तो तदत्थिया सिद्धा। अण्णत्ते अण्णाणी निव्वयणो वा कहं वाई ?॥१७२१॥

'शून्यं सर्वमेव विश्वत्रयम्' इत्येवंभूतं यद् विज्ञानं वचनं च, तेन सह शून्यवादिनो भवत एकत्वम्, अनेकत्वं वा ?। यद्येक-त्वम्, ततस्तदस्तिता वस्त्वस्तिता सिद्धेति कुतः शून्यता, वृक्षत्व-शिंशपात्वयोरिवैकत्वस्य वस्तुत्वात् ?। अन्यत्वे तु विज्ञान-वचनयोरज्ञानी निर्वचनश्च वादी कथं शून्यतां साधयेत्, शिलासंघातवत् ? इति ॥ १७२१ ॥

---

१ गाथा १६९३। २ अस्तित्व-घटैकानेकता वा पर्यायमात्रचिन्तेयम्। अस्ति घटे प्रतिपन्ने, इतरथा सा किं न खरशृङ्गे ॥ १७१९ ॥ ३ घ. ज 'घटसत्त्वयो'।
४ घट-शून्यतान्यतायामपि शून्यता का घटाधिका सौम्य !। एकत्वे घटक एव न शून्यता नाम घटधर्मः ॥१७२०॥
५ विज्ञान-वचन-वादिनोरेकता ततस्तदस्तिता सिद्धा। अन्यत्वेऽज्ञानी निर्वचनो वा कथं वादी ? ॥ १७२१ ॥

केन वोपलब्धा ? । भवत एवेह तत्र किल संशयः, स चेद् नास्ति, तर्हि कस्यान्यस्य ग्राम-नगरादिसत्त्वे विप्रतिपत्तिः ? इति भावः॥१७४७॥

तदेवं युक्तिभिः शून्यतामपाकृत्य भगवान् व्यक्तं शिक्षयन्नाह—

पच्चक्खेसु न जुत्तो तुह भूमि-जला-ऽनलेसु संदेहो । अनिला-ऽऽगासेसु भवे सोऽवि न जुत्तोऽणुमाणाओ ॥१७४८॥

तस्माद् भूमि-जल-वह्निषु प्रत्यक्षेषु तव सौम्य ! संशयो न युक्तः, यथा स्वस्वरूपे । तथा, अनिलोऽपि प्रत्यक्ष एव, गुणप्रत्यक्षत्वात्, घटवत्, ततस्तत्रापि न संशयो युक्तः । भवतु वा, अनिला-ऽऽकाशयोरप्रत्यक्षत्वेन संशयः, तथाऽप्यसौ न युक्तः, अनुमानसिद्धत्वात् तयोरिति ॥ १७४८ ॥

तत्रानिलविषयं तावदनुमानमाह—

अत्थि[2] अदिस्सापाइयफरिसणाईणं गुणी गुणत्तणओ । रूवस्स घडो व्व गुणी जो तेसिं सोऽनिलो नाम ॥१७४९॥

य एतेऽदृश्येन केनाप्यापादिता जनिताः स्पर्शादयस्ते विद्यमानगुणिनः, गुणत्वात्, आदिशब्दाच्छब्द-स्वास्थ्य-कम्पा गृह्यन्ते, एतेऽपि हि वायुप्रभवाद् वायुगुणा एव, इह ये गुणास्ते विद्यमानगुणिनो दृष्टाः, यथा घट-रूपादयः, यश्चैषां स्पर्श-शब्द-स्वास्थ्य-कम्पानां गुणी स वायुः, तस्मादस्त्यसाविति ॥ १७४९ ॥

आकाशसाधकमनुमानमाह—

अत्थि[3] वसुहाइभाणं तोयस्स घडो व्व मुत्तिमत्ताओ । जं भूयाणं भाणं तं वोमं वत्त ! सुव्वत्तं ॥ १७५० ॥

अस्ति वसुधा-जला-ऽनल-वायूनां भाजनमाधारः, मूर्तिमत्त्वात्, तोयस्य घटवत्, यच्च तेषां भाजनं, तदायुष्मन् व्यक्त ! सुव्यक्तं व्योमेति । यदि च साध्यैकदेशतां दृष्टान्तस्य कश्चित् प्रेरयति, तदेत्थं प्रयोगः– विद्यमानभाजना पृथिवी, मूर्तत्वात्, तोयवत्; तथा, आपः, तेजोवत्; तेजश्च, वायुवत्; वायुश्च, पृथिवीवदिति ॥ १७५० ॥

तदेवं पञ्चापि भूतानि प्रसाध्योपसंहरन्नाह—

---

१ प्रत्यक्षेषु न युक्तस्तव भूमि-जला-ऽनलेषु संदेहः । अनिला-ऽऽकाशयोर्भवेत् सोऽपि न युक्तोऽनुमानात् ॥ १७४८ ॥

२ अस्त्यदृश्यापादितस्पर्शनादीनां गुणी गुणत्वतः । रूपस्य घट इव गुणी यस्तेषां सोऽनिलो नाम ॥ १७४९ ॥

३ अस्ति वसुधादिभाजनं तोयस्य घट इव मूर्तिमत्त्वात् । यद् भूतानां भाजनं तद् व्योम व्यक्त ! सुव्यक्तम् ॥ १७५०॥

यच्च घट-सत्त्वयोरेकत्वविकल्पेऽभ्यधायि– 'यो घटः स एवास्तीति घटमात्रेऽस्तित्वस्य प्रवेशाद् घट एवास्ति, यदिवा, प्रतिपक्षाभावात् सोऽपि नास्ति' इति, तत्राह—

घडसत्ता घडधम्मो तत्तोऽणण्णो पडाइओ भिण्णो। अत्थि त्ति तेण भणिए को घड एवेति नियमोऽयं? ॥१७२२॥

घटास्तित्वलक्षणा घटसत्ता घटस्य धर्मः, स च ततो घटादनन्योऽभिन्नः, पटादिभ्यस्तु सर्वेभ्योऽपि भिन्नः। तेन ततो 'घटोऽस्ति' इति भणिते 'घट एव' इति 'घट एवास्ति' इति कोऽयं नियमः?– निजनिजसत्तायाः पटादिष्वपि भावात् तेऽपि सन्त्येवेति भावः ॥१७२२॥

तथा, अस्मिन्नेव घटा-ऽस्तित्वयोरेकत्वविकल्पे यदुक्तम्– 'यो योऽस्ति स स घट इति सर्वस्य घटत्वप्रसङ्गः, घटस्य वा सर्ववस्त्वात्मकत्वम्' इति। तदपि सर्वं 'घटसत्ता घटधर्मः' इत्यादिनैव परिहृतम्, अत एवाह—

जं वा जदत्थि तं तं घडो त्ति सव्वघडयापसंगो को। भणिए घडोत्थि व कहं सव्वत्थित्तावरोहो त्ति? ॥१७२३॥

यद् वा प्रोक्तम्– 'यद् यदस्ति तत्तत् सर्वं घटः' इति, तत्र कोऽयं सर्वघटताप्रसङ्गः?। तथा, 'यो घटः स एवास्ति' इत्यप्युक्ते कथं सर्वास्तित्वावरोधः– कथं घटस्य सर्वात्मकत्वम्? इत्यर्थः। यदा हि घटसत्ता घट एवास्ति नान्यत्र, तदा 'यत्र यत्र घटास्तित्वं तत्र तत्र घटः' इति न कश्चित् सर्वेषां घटताप्रसङ्गः; तथा, 'घटसत्त्वेन घट एवास्ति' इत्येतस्मिन्नप्युक्ते न किञ्चिद् घटस्य सर्वात्मकत्वं प्रतीयत इति भावः ॥ १७२३ ॥

तदेवं प्रस्तुतं परपक्षमपाकृत्य स्वपक्षस्य भावार्थमाह—

अत्थि त्ति तेण भणिए घडोऽघडो वा घडो उ अत्थेव। चूओऽचूओ व दुमो चूओ उ जहा दुमो नियमा ॥१७२४॥

येन कारणेन घटसत्ता घटधर्मत्वाद् घट एवास्ति पटादिभ्यस्तु भिन्ना, तेन तस्मात् 'अस्ति' इत्युक्ते घटः, अघटो वा– पटादिर्गम्यते, निजनिजसत्त्वस्य सर्वेषु पटादिष्वपि भावात्। 'घडो उ अत्थेव त्ति' घट इति तु प्रोक्तेऽस्त्येवेति गम्यते, निजसत्त्वस्य निय-

---

1 घटसत्ता घटधर्मस्ततोऽनन्यः पटादितो भिन्न। अस्तीति तेन भणिते को घट एवेति नियमोऽयम्? ॥ १७२२ ॥

2 यद्वा यदस्ति तत्तद् घट इति सर्वघटताप्रसङ्गः कः। भणिते घटोऽस्ति वा कथं सर्वास्तित्वावरोध इति? ॥ १७२३ ॥

3 अस्तीति तेन भणिते घटोऽघटो वा घटस्त्वस्त्येव। चूतोऽचूतो वा द्रुमश्चूतस्तु यथा द्रुमो नियमात् ॥ १७२४ ॥

[1]एवं पच्चक्खाइपमाणसिद्धाइं सोम्म ! पडिवज्ज । जीव-सरीराहारोवओगधम्माइं भूयाइं ॥ १७५१ ॥

तदेवं सौम्य ! प्रत्यक्षादिप्रमाणसिद्धानि प्रतिपद्यस्व पञ्च भूतानि, जीव-शरीरा-ऽऽधाराद्युपयोगधर्मकानि चैतानीति ॥१७५१॥

अशस्त्रोपहतानि च पृथिव्य-ऽप्-तेजो-वायुलक्षणानि चत्वारि भूतानि सचेतनानि, अतः पराभिप्रायमाशङ्क्य तेषां सचेतनत्वं सिसाधयिषुराह—

[2]किह सजीवाइं मई तल्लिङ्गाओऽनिलावसाणाइं । वोमं विमुत्तिभावादाधारो चेव न सजीवं ॥ १७५२ ॥

कथं पुनः सह जीवेन वर्तन्त इति सजीवानि भूतानि ? इति परस्य मतिः स्यात् । अत्रोच्यते– तस्य जीवस्य लिङ्गं तल्लिङ्गं तस्मात् तदुपलब्धेरित्यर्थः, सचेतनान्यनिलावसानानि चत्वारि भूतानि । व्योम– आकाशं पुनर्विगतमूर्तिभावमाधार एव, न तु सजीवमिति ॥ १७५२ ॥

'तल्लिङ्गात्' इत्युक्तम्, तत्र पृथिव्याः सजीवत्वे किं लिङ्गम् ? इत्याह—

[3]जम्म-जरा-जीवण-मरण-रोहणा-हार-दोहला-मयओ । रोग-तिगिच्छाईहि य नारि व्व सचेयणा तरवो ॥१७५३॥

'सचेतनास्तरवः' इति प्रतिज्ञा । 'जन्म-जरा-जीवन-मरण-क्षतसंरोहणा-ऽऽहार-दौहृदा-ऽऽमय-तच्चिकित्सादिसद्भावात्' इति हेतुः । 'नारीवत्' इति दृष्टान्तः । आह– नन्वनैकान्तिकोऽयम्, अचेतनेष्वपि जन्मादिव्यपदेशदर्शनात्; तथाहि– 'जातं तद् दधि' इति व्यपदिश्यते, न चैतत् सचेतनम्; तथा, 'जीवितं विषम्' 'मृतं कुसुम्भकम्' इत्यादि । अत्रोच्यते– वनस्पतौ सर्वाण्यपि सचेतनलिङ्गानि जन्मादीन्युपलभ्यन्ते, अतो मनुष्येष्विव तानि तेषु निरुपचरितानि, दध्यादौ तु प्रतिनियत एव कश्चिज्जातादिव्यपदेशो दृश्यते, स चौपचारिक एव– जातमिव जातं दधि, मृतमिव मृतं कुसुम्भकमित्यादि ॥ १७५३ ॥

वनस्पतेरेव सचेतनत्वसाधने हेत्वन्तराण्यप्याह—

---

१ एव प्रत्यक्षादिप्रमाणसिद्धानि सौम्य ! प्रतिपद्यस्व । जीव-शरीराधारोपयोगधर्माणि भूतानि ॥ १७५१ ॥
२ कथं सजीवानि मतिस्तल्लिङ्गादनिलावसानानि । व्योम विमूर्तिभावादाधार एव न सजीवम् ॥ १७५२ ॥
३ जन्म-जरा-जीवन-मरण रोहणा-ऽऽहार-दौहृदा-ऽऽमयत॰ । रोग-चिकित्सादिभिश्च नारीव सचेतनास्तरव. ॥ १७५३ ॥

मेन घटे सद्भावात् । अत्र यथासंख्यमुदाहरणद्वयम् । यथा 'द्रुमः' इत्युक्ते चूतः, अचूतो वा निम्बादिर्गम्यते, द्रुमत्वस्य सर्वत्र भावात् । 'चूतः' इति तु निगदिते द्रुम एव गम्यते, अद्रुमस्य चूतत्वायोगादिति ॥ १७२४ ॥

यदुक्तम्– यदेतज्जातं न जायते, नाप्यजातम्, न च जाताजातम्, नापि जायमानम्[2] इत्यादि, तत्रोत्तरमाह––

[1]किं तं जायं ति मई जाया-ऽजाओ-भयं पि जदजायं । अह जायं पि न जायं किं न खपुप्फे वियारोऽयं ॥१७२५॥

प्रष्टव्योऽत्र देवानांप्रियः, कथय– किं तद् वस्तु जातमिति प्रतिपद्यते तव मतिः, यज्जाता-ऽजातो-भयादिप्रकारैरजातं साध्यते– यस्य जाताजातादिप्रकारैर्जन्म त्वया निषिध्यत इत्यर्थः । यदि हि जातं किमपि वस्तु तव सिद्धं, तर्हि तत्सत्त्वेनैव प्रतिहता शून्यता, अतः 'किं तज्जातं जायते ? किं तदजातं जायते ? किं तज्जाताजातं जायते ?' इत्यादयः शून्यतासिद्ध्यर्थमुपन्यस्यमाना निरर्थका एव विकल्पा इति प्रच्छकाभिप्रायः । अथ तदपि जातं जाताजातादिविकल्पाश्रयभूतं जातत्वेन भवतो न सिद्धम्, किन्त्वजातमेव तत्, ननु स्ववचनविरुद्धमिदं– जातमप्यजातमिति । किञ्च, जातस्यासत्त्वे निराश्रयत्वाज्जाताजातादिविकल्पा निरर्थका एव । अथैतदाश्रयभूते जाताख्ये वस्तुन्यसिद्धेऽपि 'न जातं जायते' इत्यादिविकल्पविचारः प्रवर्तते, तर्हि खपुष्पेऽप्यसौ किं न विधीयते, असत्त्वाविशेषेण 'समया विवज्जओ वा' इत्यादिव्यक्तदोषप्रसङ्गात् ? । न च वक्तव्यं– परेषां सिद्धं जातमुररीकृत्य विकल्पा विधीयन्ते, स्व-परभावाभ्युपगमे शून्यताहानिप्राप्तेरिति ॥ १७२५ ॥

अपि च,

[3]जइ सव्वहा न जायं किं जम्माणंतरं तदुवलम्भो । पुव्वं वाऽणुवलंभो पुणो वि कालंतरहयस्स ? ॥१७२६ ॥

यदि सर्वैरपि प्रकारैर्घटादि कार्यं न जातमिति शून्यवादिना प्रतिपाद्यते, तर्हि मृत्पिण्डाद्यवस्थायामनुपलब्धं कुलालादिसामग्री-निर्वर्तितजन्मानन्तरं किमिति तस्मात् तदुपलभ्यते ? । पूर्वं वा जन्मतः किमिति तस्यानुपलम्भः ? । पुनरपि च कालान्तरे लगुडादिना हतस्य किमिति तस्यानुपलम्भः ? । अजातस्य गगननलिनस्येव सर्वदैव घटादेरनुपलम्भ एव स्यात्, यस्तु कदाचिदुपलम्भः, कदाचित्तु नोपलम्भः, असौ जातस्यैवोपपद्यत इति भावः ॥ १७२६ ॥

१ किं तज्जातमिति मतिर्जाता-ऽजातो-भयमपि यद्यजातम् । अथ जातमपि न जातं किं न खपुष्पे विचारोऽयम् ॥ १७२५ ॥ २ गाथा १७०८ ।
३ यदि सर्वथा न जातं किं जन्मानन्तर तदुपलम्भः । पूर्वं वाऽनुपलम्भः पुनरपि कालान्तरहतस्य ? ॥ १७२६ ॥

[1]छिक्कपरोइया छिक्कमेत्तसंकोयओ कुलिंगो व्व । आसयसंचाराओ वियत्त ! वल्लीवियाणाइं ॥१७५४॥

सम्मादओ य साव-प्पबोह-संकोयणाइओऽभिमया । बउलादओ य सद्दाइविसयकालोवलंभाओ ॥ १७५५॥

सचेतनाः स्पृष्टप्ररोदिकादयो वनस्पतयः, स्पृष्टमात्रसंकोचात्, कुलिङ्गः कीटादिस्तद्वत् । तथा, सचेतना वल्ल्यादयः, स्वरक्षार्थं वृत्ति-वृक्ष-वरण्डकाद्याश्रयं प्रति संचरणात् । तथा, शम्यादयश्चेतनत्वेनाभिमताः, स्वाप-प्रबोध-संकोचादिमत्त्वात्, देवदत्तवत् । तथा, सचेतना बकुला-ऽशोक-कुरुबक-विरहक-चम्पक-तिलकादयः, शब्दादिविषयकालोपलम्भात्– शब्द-रूप-गन्ध-रस-स्पर्शविषयाणां काले प्रस्ताव उपभोगस्य यथासंख्यमुपलम्भादित्यर्थः, यज्ञदत्तवदिति। एवं पूर्वमपि दौहृदादिलिङ्गेषु कूष्माण्डी-बीजपूरकादयो वनस्पतिविशेषाः पक्षीकर्तव्या इति ॥ १७५४ ॥ १७५५ ॥

अथ सामान्येन तरूणां, पृथ्वीविशेषाणां च विद्रुमादीनां सचेतनत्वसाधनायाह—

[3]मंसंकुरो व्व सामाणजाइरूवंकुरोवलंभाओ । तरुगण-विद्दुम-लवणो-वलादओ सासयावत्था ॥ १७५६ ॥

तरुगणः, तथा विद्रुम-लवणो-पलादयश्च स्वाश्रयावस्था स्वजन्मस्थानगताः सन्तश्चेतनाः, छिन्नानामप्यमीषां पुनस्तत्स्थान एव समानजातीयाङ्कुरोत्थानात्, अर्शोमांसाङ्कुरवत् । आह– ननु पृथिव्यादिभूतानामिह सचेतनत्वं साधयितुमारब्धम्, ततः पृथिव्या एवादौ तत् साधयितुं युक्तम्, तस्या एवादावुपन्यासात्, तत्किमिति 'जॅम्म-जरा-जीवण-' इत्यादिना तरूणामेवादौ तत् साधितम्, पश्चात्तु विद्रुम-लवणो-पलादीनामिति ? । सत्यम्, किन्तु पृथ्वीविकारतया पृथ्वीभूत एव तरूणामन्तर्भावो लोकप्रसिद्धः, सुव्यक्तचैतन्यलिङ्गाश्च यथा तरवो न तथा लवणो-पल-जलादय इति तेषामेवादौ चैतन्यं साधितमिति ॥ १७५६ ॥

अथोदकस्य सचेतनत्वं साधयितुमाह—

[5]भूमिक्खयसाभावियसंभवओ दद्दुरो व्व जलमुत्तं । अहवा मच्छो व सभाववोमसंभूयपायाओ॥ १७५७ ॥

---

१ स्पृष्टप्ररोदिकाः स्पृष्टमात्रसकोचत कुलिङ्ग इव । आश्रयसचाराद् व्यक्त ! वल्लीवितानानि ॥ १७५४ ॥
शम्यादयश्च स्वाप-प्रबोध-संकोचनादितोऽभिमताः । बकुलादयश्च शब्दादिविषयकालोपलम्भात् ॥ १७५५ ॥ २ ज 'रोहिका' ।
३ मांसाङ्कुर इव समानजातिरूपाङ्कुरोपलम्भात् । तरुगण-विद्रुम-लवणो-पलादय स्वाश्रयावस्था ॥ १७५६ ॥ ४ गाथा १७५३ ।
५ भूमिक्षतस्वाभाविकसभवतो दर्दुर इव जलमुक्तम् । अथवा मत्स्य इव स्वभावव्योमसंभूतपातात् ॥ १७५७ ॥

किञ्च,

[1] जह सव्वहा न जायं जायं सुण्णवयणं तहा भावा। अह जायं पि न जायं पयासिया सुण्णया केण ?॥१७२७॥

'शून्यं सर्वं जगत्' इत्येवंभूतं यच्छून्यताविषयं विज्ञानं वचनं च तद् यथा जाता-ऽजातादिप्रकारैः सर्वथा जातमप्यजातमपि सत् केनापि प्रकारेण तावज्जातम्, तथा भावा अपि घट-पटादयो जाता एष्टव्या इत्यतो न शून्यं जगत्। अथ शून्यताविज्ञान-वचनद्वयं जातमप्यजातमिष्यते, तर्हि तद्विज्ञान-वचनाभ्यां विना केनासौ शून्यता प्रकाशिता, ?- न केनचिदिति शून्यतानुपपत्तिरिति ॥१७२७॥

यदप्युक्तम्— 'न जातं जायते नाप्यजातम्' इत्यादि, तदप्ययुक्तम्, यतो विवक्षया सर्वैरपि प्रकारैर्यथासंभवं वस्तु जायते, किञ्चित्तु सर्वथा न जायते, इति दर्शयति—

[2] जायइ जायमजायं जायाजायमह जायमाणं च। कज्जमिह विवक्खाए न जायए सव्वहा किंचि ॥१७२८॥

रूवि त्ति जाइ जाओ कुंभो संठाणओ पुणरजाओ। जायाजाओ दोहि वि तस्समयं जायमाणो त्ति ॥ १७२९॥

पुव्वकओ उ घडतया परपज्जाएहिं तदुभएहिं च। जायंतो य पडतया न जायए सव्वहा कुंभो ॥ १७३०॥

वोमाइ निच्चजायं न जायए तेण सव्वहा सोम्म !। इय दव्वतया सव्वं भयणिज्जं पज्जवगईए ॥ १७३१ ॥

इह कार्यं घटादिकं विवक्षया किमपि जातं जायते, किञ्चिदजातम्, किञ्चिज्जाताजातम्, किञ्चिज्जायमानम्, किञ्चित्तु सर्वथा न जायत इति। अथ यथाक्रममुदाहरणानि-'रूवीत्यादि' रूपितया घटो जातो जायते, मृद्रूपतायाः प्रागपि भावात्, तद्रूपतया जात एव घटो जायत इत्यर्थः। संस्थानतयाऽऽकारविशेषेण पुनः स एवाजातो जायते, मृत्पिण्डाद्यवस्थायामाकारस्यासंभवात्। मृद्रूपतया, आकारविशेषेण चेति द्वाभ्यामपि प्रकाराभ्यां जाताजातो जायते, तदनर्थान्तरभूतत्वाद् घटस्य। तथा, अतीताऽनागतकालयोर्विनष्टा-

१ यथा सर्वथा न जात जात शून्यवचनं तथा भावाः। अथ जातमपि न जात प्रकाशिता शून्यता केन ? ॥ १७२७ ॥
२ जायते जातमजात जाताजातमथ जायमान च। कार्यमिह विवक्षया न जायते सर्वथा किञ्चित् ॥ १७२८ ॥
रूपीति जायते जातः कुम्भ संस्थानत पुनरजात। जाताजातो द्वाभ्यामपि तत्समयं जायमान इति ॥ १७२९ ॥
पूर्वकृतस्तु घटतया परपर्यायैस्तदुभयैश्च। जायमानश्च पटतया न जायते सर्वथा कुम्भ ॥ १७३० ॥
व्योमादि नित्यजात न जायते तेन सर्वथा सौम्य !। इति द्रव्यतया सर्वं भजनीयं पर्यवगत्या ॥ १७३१ ॥

भौममम्भः सचेतनमुक्तम्, क्षतभूमिसजातीयस्वाभाविकस्य तस्य संभवात्, दर्दुरवत्। अथवा, सचेतनमन्तरिक्षमम्भः, अभ्रादिविकारस्वभावसंभूतपातात्, मत्स्यवदिति ॥ १७५७ ॥

तेजो-ऽनिलावधिकृत्याह—

[1]अपरप्पेरियतिरियानियमियदिग्गमणओऽणिलो गो व्व। अनलो आहाराओ विड्ढि-विगारोवलम्भाओ ॥१७५८॥

सात्मको वायुः, अपरप्रेरिततिर्यगनियमितदिग्गमनात्, गोवत्। यथा, सात्मकं तेजः, आहारोपादानात्, तद्वृद्धौ विकारविशेषोपलम्भाच्च, नरवत्। गाथाबन्धानुलोम्याच्च व्यत्ययेनोपन्यास इति ॥ १७५८ ॥

तदेवं पृथिव्यादीनां प्रत्येकं सचेतनत्वं प्रसाध्येदानीं सर्वेषां सामान्येन तत् साधयन्नाह—

[2]तणवोऽणब्भाइविगारमुत्तजाइत्तओऽणिलंताइं। सत्थासत्थहयाओ निज्जीव-सजीवरूवाओ ॥ १७५९ ॥

पृथिव्याद्यनिलान्तानि चत्वारि भूतानि जीवनिर्वर्तितास्तदाधारभूतास्तनव इति प्रतिज्ञा, अभ्रादिविकारादन्यत्वे सति मूर्तजातित्वात्, गवादिशरीरवत्। अभ्रादिविकारस्तु विस्रसापरिणतपुद्गलसंघातरूपत्वेनाचेतनत्वाद् वर्जितः। ताश्च पृथिव्यादितनवः शस्त्रोपहता निर्जीवाः, अशस्त्रोपहतास्तु सजीवा वर्ण-गन्ध-रसादिलक्षणतः समवसेया इति ॥ १७५९ ॥

प्रकारान्तरेणापि पृथिव्याद्येकेन्द्रियाणां जीवत्वं साधयितुमाह—

[3]सिज्झंति सोम्म! बहुसो जीवा नवसत्तसंभवो नावि य। परिमियदेसो लोगो न संति चेगिंदिया जेसिं ॥१७६०॥

ते सिं भवविच्छित्ती पावइ नेट्ठा य सा जओ तेण। सिद्धमणंता जीवा भूयाहारा य तेऽवस्सं॥ १७६१ ॥

सिध्यन्ति मुक्तिं यान्ति तावदजस्रं बहुशो जीवाः, न च नवसत्त्वोत्पादः केनापीष्यते, परिमितदेशश्च लोकः, ततस्तदाधाराः स्थूलाः स्तोका एव जीवा घटन्ते। एवं च सति येषां मतेन वनस्पत्यादय एकेन्द्रिया जीवा न सन्ति, तेषां भवस्य संसारस्य व्यवच्छित्तिः

१ अपरप्रेरिततिर्यगनियमितदिग्गमनतोऽनिलो गौरिव। अनल आहाराद् वृद्धि-विकारोपलम्भात् ॥ १७५८ ॥
२ तनवोऽनभ्रादिविकारमूर्तजातित्वतोऽनिलान्तानि। शस्त्राऽशस्त्रहता निर्जीव-सजीवरूपाः ॥ १७५९ ॥
३ सिध्यन्ति सौम्य! बहुशो जीवा नवसत्त्वसंभवो नापि च। परिमितदेशो लोको न सन्ति चैकेन्द्रिया येषाम् ॥ १७६० ॥
तेषां भवविच्छित्तिः प्राप्नोति नेष्टा च सा यतस्तेन। सिद्धमनन्ता जीवा भूताधाराश्च तेऽवश्यम् ॥ १७६१ ॥

अहवा[1] साहिकय च्चिय वक्खाणंगं ति जं तओऽणुगमे । जं जं वक्खाणंगं तं तं सव्वं जओऽणुगमो ॥ ७ ॥
सुत्ताणुगमाईए वक्खाणविही जओ तदंगं सा । जं च सुयावसरे च्चिय सफलाइं गवाइनायाइं ॥ ८ ॥
जइ साणुगमंगं च्चिय दारविहीए तओ किमाईए । उयारेउं भन्नइ उक्कमकरणे गुणो को णु ? ॥ ९ ॥
दारविही वि महत्था तत्थ वि वक्खाणविहिविवज्जासो । मा होज्ज तदाईए वक्खाणविहिं निरूवेइ ॥ १० ॥
ऐत्थेव[2] गुरू सीसं सीसो य गुरुं परिच्छिउं पच्छा । वोच्छिइ सोच्छिइ व सुहं मोच्छिइ व सुदिट्ठपेयालो ॥११॥
साणुगमंगं पि इहं जइ भन्नइ किं न कीरइ इहेव ? । दाएइ पयत्तयरं वक्खाणविही य सुत्तम्मि ॥ १२ ॥
अणुओगाइविभागे वक्खाणविही वि तप्पसंगेण । जंपंति केइ तेसिं वुत्तुं सोउं व को जोग्गो ? ॥ १३ ॥
संगहगाहाए पुणो अणुओगाईए बिंति दाएंता । जो वन्निओऽणुओगो सोऽयं स विही जदत्थं ति ॥ १४ ॥
सुयमिह जिणपवयणं तस्सुप्पत्ती पसंगओऽभिहिया । जिण-गणहरवयणाओ इमाइं तस्साभिहाणाइं ॥ १५ ॥

**एगट्ठियाणि तिन्नि उ पवयण सुत्तं तहेव अत्थो य ।**
**ऐक्केक्कस्स[3] य एत्तो नामा एगट्ठिया पंच ॥ १२२ ॥**

जमिह पगयं पसत्थं पहाणवयणं च पवयणं तं च । सामन्नं सुयनाणं विसेसओ सुत्तमत्थो य ॥ १ ॥
सिंचइ खरइ जमत्थं तम्हा सुत्तं निरुत्तविहिणा वा । सूएइ सवइ सुव्वइ सिव्वइ सरए व जेणत्थं ॥ २ ॥
अविवरियं सुत्तं पिव सुट्ठिय-वावित्तउ व सुत्तं ति । जो सुत्ताभिप्पाओ सो अत्थो अज्जए जम्हा ॥ ३ ॥
सह पवयणेण जुत्ता न सुयत्थेगत्थया परोप्परओ । जं सुत्तं वक्खेयं अत्थो तं तस्स वक्खाणं ॥ ४ ॥
जुज्जइ च विभागाओ तिण्ह वि भिन्नत्थया न चेहरहा । एगत्थाणं पि पुणो किमिहेगत्थाभिहाणेहिं ? ॥ ५ ॥

1 'ह सा' । 2 'तत्थे' । 3 'इक्कि' ।

मउलं फुल्लं ति जहा संकोयं-विबोहमेत्तभिन्नाइं । अत्थेणाभिन्नाइं कमलं सामण्णओ चेगं ॥ ६ ॥
अविवरियं तह सुत्तं विवरीयमत्थो त्ति बोहकालम्मि । किंचिम्मत्तविभिन्ना सामन्नं पवयणं नेयं ॥ ७ ॥
सामन्न-विसेसाणं जह वेगा-णेगया ववत्थाए । तदुभयमत्थो य जहा वीसुं बहुपज्जवा ते य ॥ ८ ॥
एवं सुत्त-त्थाणं एगा-णेगट्ठया ववत्थाए । पवयणमुभयं च तयं तियं च बहुपज्जयं वीसुं ॥ ९ ॥
अहवा सव्वं नामं वंजणसुद्धियनयस्स भिन्नत्थं[2] । इयरस्स अभिन्नत्थं संववहारो य तदवेक्खो[3] ॥ १० ॥
संववहारट्ठाए जम्हा जेणेगया, न निच्छयओ । तो जुत्ताइं तेसिं वीसुं पज्जायनामाइं ॥ ११ ॥

**सुयधम्म तित्थ मग्गो पावयणं पवयणं च एगट्ठा ।**
**सुत्तं तंतं गंथो पाढो सत्थं च एगट्ठा ॥ १२३ ॥**

बोहो सुयस्स धम्मो सुयं व धम्मो स जीवपज्जाओ । सुगईए संजमम्मि य धरणाओ वा सुयं धम्मो ॥ १ ॥
तित्थं ति पुव्वभणियं संघो जो नाण-चरण-संघाओ । इह पवयणं तित्थं तत्तोऽणत्थंतरं जेण ॥ २ ॥
मज्जिज्जइ सोहिज्जइ जेणं तो पवयणं तओ मग्गो । अहवा सिवस्स मग्गो मग्गणमन्नेसणं पंथो ॥ ३ ॥
पगयाइअभिविहीए पवयणं पावयणमाइवयणं वा । सिवपावयवयणं वा पावयणं, पवयण भणियं ॥ ४ ॥
सुत्तं भणियं तंतं तणिज्जए तेण तम्मि व जमत्थो । गंथिज्जइ तेण तओ तम्मि व तो तं मयं गंथो ॥ ५ ॥
पढणं पाढो तं तेण तम्मि व पढिज्जएऽभिधेयं ति । सासिज्जए तेण तहिं व नेयमाया व तो सत्थं ॥ ६ ॥

**अणुओगो य निओगो भास-विभासा य वत्तियं चेव ।**

---

१ 'यविकासमे' । २ 'भिण्णत्थ' । ३ 'दविक्खो' ।

प्राप्नोति। न चासौ कस्यापि तीर्थान्तरीयस्येष्टा यतः, तेन तस्मात् कारणात् सिद्धं सत्त्वानामानन्त्यम्। ते च संसारित्वादवश्यं भूताधाराः शरीरिण एवेत्यर्थः। न च वनस्पत्यादीनन्तरेणान्यत् तेषां शरीरमुपपद्यते । निवेद्यन्तां वा यच्छरीरास्ते, अभ्युपगम्यतां वा वनस्पत्यादीनां सात्मकत्वमिति भावः ॥ १७६० ॥ १७६१ ॥

अथ प्रेरकमाशङ्क्य परिहारमाह—

[1]एवमहिंसाभावो जीवघणं ति न य तं जओऽभिहिअं। सत्थोवहयमजीवं न य जीवघणं ति तो हिंसा ॥१७६२॥

नन्वेवं सति लोकस्यातीवपृथिव्यादिजीवघनत्वादहिंसाऽभावः, संयतैरप्यहिंसाव्रतमित्थं निर्वाहयितुमशक्यमिति भावः । तदेतद् न, यतोऽनन्तरमेवाभिहितमस्माभिः– 'शस्त्रोपहतं पृथिव्यादिकमजीवं भवति । तदजीवत्वे चाकृता-ऽकारितादिपरिभोगेन निर्वहत्येव यतीनां संयमः। न च 'जीवघनो लोकः' इत्येतावन्मात्रेणैव हिंसा संभवतीति ॥ १७६२ ॥

आह– ननु जीवाकुले लोकेऽवश्यमेव जीवघातः संभाव्यते, जीवांश्च घ्नन् कथं हिंसको न स्यात्? इत्याह—

[2]न य घायउ त्ति हिंसो नाघायंतो त्ति निच्छियमहिंसो। न विरलजीवमहिंसो न य जीवघणं ति तो हिंसो ॥१७६३॥

अहणंतो वि हु हिंसो दुट्ठत्तणओ मओ अहिमरो व्व। बाहिंतो न वि हिंसो सुद्धत्तणओ जहा विज्जो ॥१७६४॥

न हि 'घातकः' इत्येतावता हिंस्रः, न चाघ्नन्नपि निश्चयनयमतेनाहिंस्रः, नापि 'विरलजीवम्' इत्येतावन्मात्रेणा हिंस्रः, न चापि 'जीवघनम्' इत्येतावता च हिंस्र इति। किं तर्हि? अभिमरो गजादिघातकः स इव दुष्टाध्यवसायोऽघ्नन्नपि हिंस्रो मतः। बाधमानोऽपि च शुद्धपरिणामो न हिंस्रो यथा वैद्यः, इति घ्नन्नप्यहिंस्रः, अघ्नन्नपि च हिंस्र उक्तः ॥ १७६३ ॥ १७६४ ॥

स इह कथंभूतो ग्राह्यः? इत्याह—

[3]पंचसमिओ तिगुत्तो नाणी अविहिंसओ न विवरीओ। होउ व संपत्ती से मा वा जीवोवरोहेणं ॥१७६५॥

---

१ एवमहिंसाऽभावो जीवघनमिति न च तद् यतोऽभिहितम्। शस्त्रोपहतमजीवं न च जीवघनमिति ततो हिंसा ॥१७६२ ॥

२ न च घातक इति हिंस्रो नाघ्नन्निति निश्चितमहिंस्र । न विरलजीवमहिंस्रो न च जीवघनमिति ततो हिंस्रः ॥ १७६३ ॥

अघ्नन्नपि खलु हिंस्रो दुष्टत्वतो मतोऽभिमर इव। बाधमानो नापि हिंस्रः शुद्धत्वतो यथा वैद्यः ॥ १७६४ ॥

३ पञ्चसमितस्त्रिगुप्तो ज्ञान्यविहिंसको न विपरीतः। भवतु वा संपत्तिस्तस्य मा वा जीवोपरोधेन ॥ १७६५ ॥

[1]को सव्वहेव सरिसो असरिसो वा इहभवे परभवे वा ?। सरिसासरिसं सव्वं निच्चानिच्चाइरूवं च ॥१७९६॥

को ह्यर्थोऽर्थान्तरैरात्मना वा सहेहभवेऽपि सर्वथा सदृशोऽसदृशो वा, किं पुनः परभवे ?। तस्मात् सर्वमपि वस्तु सर्वेणापि सह समाना-ऽसमानरूपमेवेहभवेऽपि, इति कुतः परभवे सादृश्यमेव प्रतिज्ञायते भवता ? इति भावः। तथा, सर्वमपि नित्या-ऽनित्याद्यनन्तधर्मात्मकमिति ॥ १७९६ ॥

अमुमेवार्थं दृष्टान्तेन प्रतिपादयितुमाह—

[2]जह नियएहिं वि सरिसो न जुवा भुवि बाल-वुड्ढधम्मेहिं। जगओ वि समो सत्ताइएहिं तह परभवे जीवो॥१७९७॥

यथेह युवा निजैरप्यतीता-ऽनागतैर्बाल-वृद्धत्वादिपर्यायैरात्मनोऽपि सर्वथा न समानः, सत्तादिभिस्तु सामान्यपर्यायैर्जगति न केनचिद् न समानः, तथायमपि जीवः परलोकं गतः सर्वेणापि सह समाना-ऽसमानरूप एव, इति कुतः सर्वथा सादृश्यम् ? इति ॥ १७९७ ॥

एतदेव दृष्टान्तेन भावयति—

[3]मणुओ देवीभूओ सरिसो सत्ताइएहिं जगओ वि। देवाईहि विसरिसो निच्चानिच्चो वि एमेव ॥१७९८॥

मनुष्यो मृत्वा देवत्वमापन्नो जगत्त्रयस्यापि सत्तादिभिः पर्यायैः सदृशः, देवत्वादिभिस्तु विसदृशः, इति नैकान्तेन क्वापि सदृशता। तथा, द्रव्यतयाऽसौ नित्यः, पर्यायतया त्वनित्य इत्याद्यपि वक्तव्यम्। अत्राह– नन्वस्माभिरपि नैकान्तेन परभवे सादृश्यमभ्युपगम्यते, किन्तु समानजात्यन्वयमात्रमेवेष्यते, पुरुषादिर्मृतः पुरुषादिरेव भवतीति। एतदप्ययुक्तम्, कर्मजनितो हि परभव इति साधितम्। तच्च मिथ्यात्वादिविचित्रहेतुजन्यत्वाद् विचित्रमेवेति, अतस्तज्जन्यः परभवो विचित्र एव युज्यते, न तु समानजात्यन्वयः सिध्यतीति ॥ १७९८ ॥

---

१ कः सर्वथैव सदृशोऽसदृशो वेहभवे परभवे वा ?। सदृशासदृशं सर्वं नित्यानित्यादिरूपं च ॥ १७९६ ॥

२ यथा निजकैरपि सदृशो न युवा भुवि बाल-वृद्धधर्मैः। जगतोऽपि समः सत्तादिकैस्तथा परभवे जीवः ॥ १७९७ ॥

३ मनुजो देवीभूतः सदृशः सत्तादिकैर्जगतोऽपि। देव(त्व)ादिभिर्विसदृशो नित्यानित्योऽप्येवमेव ॥ १७९८ ॥

पञ्चभिः समितिभिः समितः, तिसृभिर्गुप्तिभिश्च गुप्तो ज्ञानी जीवस्वरूप-तद्रक्षाक्रियाभिज्ञः सर्वथा जीवरक्षापरिणामपरिणतः, तत्प्रयतश्च कथमपि हिंसन्नप्यविहिंसको मतः। एतद्विपरीतलक्षणस्तु नाहिंसकः, किन्तु हिंस्र एवायम्, अशुभपरिणामत्वात्। बाह्य-जीवहिंसायास्तु जीवोपरोधेन जीवस्य कीटादेरुपरोधेनोपघातेन संपत्तिर्भवतु, मा भूद् वा 'स' तस्य साध्वादेः, हिंसकत्वे तस्या अनैकान्तिकत्वादिति ॥ १७६५ ॥

कुतस्तस्या अनैकान्तिकत्वम्? इत्याह—

असुभो[1] जो परिणामो सा हिंसा सो उ बाहिरनिमित्तं। को वि अवेक्खेज्ज नवा जम्हाऽणेगंतियं बज्झं ॥ १७६६ ॥

यस्मादिह निश्चयनयतो योऽशुभपरिणामः स एव 'हिंसा' इत्याख्यायते। स च बाह्यसत्त्वातिपातक्रियालक्षणं निमित्तं कोऽप्यपेक्षते, कोऽपि पुनस्तन्निरपेक्षोऽपि भवेत्, यथा तन्दुलमत्स्यादीनाम्; तस्मादनैकान्तिकमेव बाह्यनिमित्तम्, तत्सद्भावेऽप्य-हिंसकत्वात्, तदभावेऽपि च हिंसकत्वादिति ॥ १७६६ ॥

नन्वेवं तर्हि बाह्यो जीवघातः किं सर्वथैव हिंसा न भवति?। उच्यते– कश्चिद् भवति, कश्चित्तु न। कथम्? इत्याह—

असुभपरिणामहेऊ[3] जीवाबाहो त्ति तो मयं हिंसा। जस्स उ न सो निमित्तं संतो वि न तस्स सा हिंसा ॥१७६७॥

ततस्तस्माद् यो जीवाबाधोऽशुभपरिणामस्य हेतुः, अथवा, अशुभपरिणामो हेतुः कारणं यस्यासावशुभपरिणामहेतुर्जीवाबाधो जीवघातः, स एव 'हिंसा' इति मतं तीर्थंकर-गणधराणाम्। यस्य तु जीवाबाधस्य सोऽशुभपरिणामो न निमित्तं स जीवाबाधः सन्नपि तस्य साधोर्न हिंसेति ॥ १७६७ ॥

अमुमेवार्थं दृष्टान्तेन द्रढयन्नाह—

सद्दादओ[4] रइफला न वीयमोहस्स भावसुद्धीओ। जह, तह जीवाबाहो न सुद्धमणसो विहिंसाए ॥ १७६८ ॥

१ अशुभो य परिणाम सा हिंसा स तु बाह्यनिमित्तम्। कोऽप्यपेक्षेत नवा यस्मादनैकान्तिकं बाह्यम् ॥ १७६६ ॥ २ घ ज 'यतो'।

३ अशुभपरिणामहेतुर्जीवाबाध इति ततो मत हिंसा। यस्य तु न स निमित्तं सन्नपि न तस्य सा हिंसा ॥ १७६७ ॥

४ शब्दादयो रतिफला न वीतमोहस्य भावशुद्धेः। यथा, तथा जीवाबाधो न शुद्धमनसोऽपि हिंसायै ॥ १७६८ ॥

किञ्च,

[1]उक्करिसा-ऽवक्करिसा न समाणाए वि जेण जाईए। सरिसग्गाहे जम्हा दाणाइफलं विहा तम्हा ॥ १७९९ ॥

सदृशग्रहे समानजातीयताग्रहे सति समानायामपि जातौ येन यस्मादीश्वर-दरिद्र-कुलीना-ऽकुलीनादिरूपेणोत्कर्षा-ऽपकर्षौ न घटां प्राञ्चतः। यो हि यादृश इहभवे, स यदि परभवेऽपि तादृश एव, तर्हि य इह भवे ईश्वरः स परभवेऽपि तादृश एव, एवं दरिद्रादिष्वपि वाच्यम्। ततश्चेहभवात् परभवे सर्वप्रकारैरप्युत्कर्षा-ऽपकर्षौ न स्याताम्, किन्त्वेकान्तसदृशतैव भवेत्। 'तम्ह त्ति' तस्माद् मोक्तव्योऽयं सादृश्यग्रह इति प्रक्रमाद् द्रष्टव्यम्। अथेत्थमाचक्षीथाः– मा भूतामुत्कर्षा-ऽपकर्षौ, का नो हानिः? इत्याह– 'जम्हा दाणाइफलं विह त्ति' चकारस्य गम्यमानत्वाद् यस्माच्चेत्थं परत्रोत्कर्षा-ऽपकर्षयोरभावे दानादिफलं वृथा संपद्यते। लोको हि परत्र देवादिसमृद्धिमाप्त्याऽऽत्मन उत्कर्षार्थं दानादिप्रवृत्तिं विदधाति। यदि चोक्तयुक्त्योत्कर्षाद्यभावाद् दरिद्रो दान-तपस्-तीर्थावगाहनाद्यपि कृत्वाऽमुत्र दरिद्र एव स्यात्, तर्हि क तद्दानादिफलम्? इत्यपार्थिका दानादौ प्रवृत्तिः, तस्माद् न विधेयः सादृश्यग्रह इति ॥ १७९९ ॥

अपिच, एतस्मिन् सादृश्यग्रहे वेदपदानामप्यप्रामाण्यमापद्यत इति दर्शयन्नाह—

[2]जं च सिगालो वइ एस जायए वेयविहियमिच्चाइं। सग्गीयं जं च फलं तमसंबद्धं सरिसयाए ॥ १८०० ॥

यच्च "शृगालो वै एष जायते यः सपुरीषो दह्यते" इत्यादि वेदविहितं तदपि परभवसदृशताग्रहेऽसंबद्धमेव स्यात्, पुरुषादेरमुत्र शृगालतयानुपपत्तेः, तथा, यदपि "अग्निहोत्रं जुहुयात् स्वर्गकामः" तथा, "अग्निष्टोमेन यमराज्यमभिजयति" इत्यादिकं स्वर्गीयफलसूचकत्वात् स्वर्गीयं फलं तदप्यसंबद्धं भवेत्, मनुष्यस्य त्वदभिप्रायेण देवत्वानुपपत्तेरिति। "पुरुषो वै पुरुषत्वमश्नुते, पशवः पशुत्वम्" इत्यादीनां च वेदपदानामयमर्थः– कोऽपि पुरुषः खल्विह जन्मनि प्रकृत्या भद्रको विनीतः सानुक्रोशोऽमत्सरश्च मनुष्यनाम-गोत्रे कर्मणी बद्ध्वा मृतः सन् पुरुषत्वमश्नुते, न तु नियमेन सर्व एव, अन्यस्यान्यकर्मवशगस्यान्यथाप्युत्पत्तेः। एवं पशवोऽपि केचिद् मायादिदोषवशात् पशुनाम-गोत्रे कर्मणी बद्ध्वा परभवे पशवो जायन्ते, न तु सर्वेऽपि, नियमेन कर्मापेक्षित्वाज्जीवगतेरिति। तदेवं तस्यापि च्छिन्नः संशयः ॥ १८०० ॥

---

1 उत्कर्षा-ऽपकर्षौ न समानायामपि येन जातौ। सदृशग्रहे यस्माद् दानादिफलं वृथा तस्मात् ॥ १७९९ ॥
2 यच्च शृगालो वै एष जायते वेदविहितमित्यादि। स्वर्गीयं यच्च फलं तदसंबद्धं सदृशतायाम् ॥ १८०० ॥

यथेह वीतराग-द्वेष-मोहस्य भगवत इष्टाः शब्द-रूपादयो भावविशुद्धितो न कदाचिद् रतिफला रतिजनकाः संपद्यन्ते, यथा वेह शुद्धात्मनो रूपवत्यामपि मातरि न विषयाभिलाषः संजायते; तथा शुद्धपरिणामस्य यत्नवतः साधोः सत्त्वोपघातोऽपि न हिंसायै संपद्यते। ततोऽशुभपरिणामजनकत्वे बाह्यं निमित्तमनैकान्तिकमेवेति। तस्माद् व्यक्त! सन्ति पञ्च भूतानि, चेतनानि चाद्यानि चत्वारि, इत्येतत् प्रतीहीति स्थितम्। यच्च "स्वप्नोपमं वै सकलम्" इत्यादि। तत्रापि यस्तव चेतसि वर्तते नासावर्थः, किन्तु भवभयोद्विग्नानां भव्यसत्त्वानां धन-कनक-पुत्र-कलत्राद्यसारतामात्रप्रतिपादनं तेन विधीयते, येन ते तदास्थां परित्यज्य मुक्तये प्रवर्तन्ते, न पुनस्तत्र भूताभावः प्रतिपाद्यते। इति मुञ्च संशयम्, प्रतिपद्यस्व भूतास्तित्वमिति ॥ १७६८ ॥

ततो व्यपगतसंदेहोऽसौ संवेगमागतो व्यक्तः किं कृतवान्? इत्याह—

[1]छिन्नम्मि संसयम्मि जिणेण जरा-मरणविप्पमुक्केणं। सो समणो पव्वइओ पंचहिं सह खंडियसएहिं ॥१७६९॥

व्याख्यानं पूर्ववत् ॥ इति त्र्यशीतिगाथार्थः ॥ १७६९ ॥

॥ इति चतुर्थो गणधरवादः समाप्तः ॥

अथ पञ्चमगणधरवक्तव्यतामभिधित्सुराह—

[2]ते पव्वइए सोउं सुहुम आगच्छइ जिणसगासं। वच्चामि ण वंदामी वंदित्ता पज्जुवासामि॥ १७७० ॥

व्याख्या पूर्ववत्, नवरं सुधर्मनामा द्विजोपाध्यायोऽत्र वक्तव्यः ॥ १७७० ॥

आगतस्य तस्य भगवता किं कृतम्? इत्याह—

[3]आभट्ठो य जिणेणं जाइ-जरा-मरणविप्पमुक्केणं। नामेण य गोत्तेण य सव्वण्णू सव्वदरिसी णं ॥१७७१॥

व्याख्या पूर्ववदिति ॥ १७७१ ॥

आभाष्य किमुक्तोऽसौ? इत्याह—

[4]किं मन्ने जारिसो इहभवम्मि सो तारिसो परभवे वि। वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥१७७२॥

१ गाथा १६०४। २ तान् प्रव्रजितान् श्रुत्वा सुधर्माऽऽगच्छति जिनसकाशम्। व्रजामि वन्दे वन्दित्वा पर्युपासे ॥ १७७० ॥
३ गाथा १६०९। ४ किं मन्यसे यादृश इहभवे स तादृश परभवेऽपि। वेदपदानां चार्थं न जानासि तेषामयमर्थः ॥ १७७२ ॥

ततः किम् ? इत्याह—

[1]छिन्नम्मि संसयम्मि जिणेण जरा-मरणविप्पमुक्केणं । सो समणो पव्वइओ पंचहिं सह खंडियसएहिं ॥१८०१॥

गाथा सव्याख्यानापि पूर्ववत् ॥ इति द्वात्रिंशद्गाथार्थः ॥१८०१॥

॥ इति पञ्चमो गणधरवादः समाप्तः ॥

अथ षष्ठगणधरवक्तव्यतां बिभणिषुराह—

[2]ते पव्वइए सोउं मंडिओ आगच्छइ जिणसगासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ १८०२ ॥

व्याख्या पूर्ववत्, नवरं मण्डिको नाम षष्ठो द्विजोपाध्यायः श्रीमज्जिनसकाशमागच्छतीति ॥ १८०२ ॥

ततः किम् ? इत्याह—

[3]आभट्ठो य जिणेणं जाइ-जरा-मरणविप्पमुक्केणं । नामेण य गोत्तेण य सव्वण्णू सव्वदरिसी णं ॥ १८०३ ॥

व्याख्या पूर्ववदिति ॥ १८०३ ॥

नाम-गोत्राभ्यामाभाष्य ततः किमुक्तः ? इत्याह—

[4]किं मन्ने बंध-मोक्खा संति न संति त्ति संसओ तुज्झं । वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥१८०४॥

मण्डिक ! त्वमित्थं मन्यसे– किं बन्ध-मोक्षौ स्तो नवा ? इति । अयं चानुचितस्तव संशयः, विरुद्धवेदपदश्रुतिनिबन्धनत्वात्, तथाहि– " स एष विगुणो विभुर्न बध्यते संसरति वा, न मुच्यते मोचयति वा, नवा एष बाह्यमभ्यन्तरं वा वेद" इत्यादीनि वेदपदानि; तथा, "न ह वै सशरीरस्य प्रिया-ऽप्रिययोरपहतिरस्ति, अशरीरं वा वसन्तं प्रिया-ऽप्रिये न स्पृशतः" इत्यादीनि च । एतेषां चार्थं त्वं न जानासि, यतोऽयमेतदर्थस्तव चेतसि वर्तते, तद्यथा— स एषः– अधिकृतो जन्तुः, विगुणः– सत्त्व-रजस्-तमोगुणरहितः, विभुः– सर्वगतः, न बध्यते– पुण्य-पापाभ्यां न युज्यत इत्यर्थः, संसरति वा 'न' इत्यनुवर्तते, न मुच्यते– न कर्मणा वियुज्यते,

1 गाथा १६०४। 2 तान् प्रव्रजितान् श्रुत्वा मण्डिक आगच्छति जिनसकाशम् । व्रजामि वन्दे वन्दित्वा पर्युपासे ॥ १८०२ ॥ 3 गाथा १६०९ ।
4 किं मन्यसे बन्ध-मोक्षौ स्तो न स्त इति संशयस्तव । वेदपदानां चार्थं न जानासि तेषामयमर्थः ॥ १८०४ ॥

त्वमेवं मन्यसे– यो मनुष्यादिर्यादृश इहभवे स तादृशः परभवेऽपि । नन्वयमनुचितस्ते संशयः, यतोऽसौ विरुद्धवेदपदश्रुतिनिबन्धनो वर्तते । तानि चामूनि वेदपदानि– "पुरुषो वै पुरुषत्वमश्नुते, पशवः पशुत्वम्" इत्यादि, तथा, "शृगालो वै एष जायते यः सपुरीषो दह्यते" इत्यादि । एषां च वेदपदानाममुमर्थं मन्यसे त्वम्– 'पुरुषो मृतः सन् परभवे पुरुषत्वमेवाश्नुते प्राप्नोति, तथा, पशवो गवादयः पशुत्वमेवेत्यादि, अमूनि किल भवान्तरगतजन्तुसादृश्यप्रतिपादकानि; तथा, 'शृगालो वै" इत्यादीनि तु वैसदृश्यख्यापकानि' इति । अतस्तव संशयः । अयं चायुक्त एव, यतोऽमीषां वेदपदानां नायमर्थः, किन्तु वक्ष्यमाणलक्षण इति ॥ १७७२ ॥

अत्र भाष्यम्—

[1]कारणसरिसं कज्जं बीयस्सेवङ्कुरो त्ति मण्णंतो । इहभवसरिसं सव्वं जमवेसि परे वि तमजुत्तं ॥१७७३॥

सुधर्माणं प्रति भगवानुवाच– 'इह कारणानुरूपमेव कार्यं भवति, यथा यवबीजानुरूपो यवाङ्कुरः, इहभवकारणं चान्यजन्म, ततस्तेनापीहभवसदृशेन भवितव्यम्' इत्येवं मन्यमानस्त्वं यदिहभवसदृशं सर्वं पुरुषादिकं परभवेऽप्यवैषि, तदयुक्तमेवेति ॥ १७७३ ॥

कुतः? इत्याह—

[2]जाइ सरो सिंगाओ भूतणओ सासवाणुलित्ताओ । संजायइ गोलोमा-ऽविलोमसंजोगओ दुव्वा ॥१७७४॥

इति रुक्खायुव्वेदे जोणिविहाणे य विसरिसेहिंतो । दीसइ जम्हा जम्मं सुहम्म ! तो नायमेगंतो ॥१७७५॥

ततः 'कारणानुरूपं कार्यम्' इति सुधर्मन् ! नायमेकान्तः, यतः शृङ्गादपि शरो जायते, तस्मादेव च सर्षपानुलिप्ताद् भूतृणकः शष्यसंघातो जायते; तथा, गोलोमा-ऽविलोमाभ्यां दूर्वा प्रभवति, इत्येवं वृक्षायुर्वेदे विलक्षणानेकद्रव्यसंयोगजन्मानो वनस्पतयो दृश्यन्ते । तथा, योनिविधाने च योनिप्राभृते विसदृशानेकद्रव्यसंयोगयोनयः सर्प-सिंहादिप्राणिनो मणयो हेमादयश्च पदार्था नानारूपाः समुपलभ्यन्ते । अतः केयं कार्यस्य कारणानुरूपता? इति ॥ १७७४ ॥ १७७५ ॥

अथवा, यत एव कारणानुरूपं कार्यम्, अत एव भवान्तरे विचित्ररूपता जन्तूनाम्, इति दर्शयति—

---

१ कारणसदृश कार्यं बीजस्येवाङ्कुर इति मन्यमान । इहभवसदृश सर्वं यदवैपि परस्मिन्नपि तदयुक्तम् ॥ १७७३ ॥

२ जायते शर· शृङ्गाद् भूतृणक सर्षपानुलिप्तात् । सजायते गोलोमा-ऽविलोमसयोगतो दूर्वा ॥ १७७४ ॥
इति वृक्षायुर्वेदे योनिविधाने च विसदृशेभ्य. । दृश्यते यस्माज्जन्म सुधर्मन् ! ततो नायमेकान्तः ॥ १७७५ ॥

बन्धस्यैवाभावात्; मोचयति वा नान्यम्, इत्यनेनाकर्तृकत्वमाह; नवा एष बाह्यम्– आत्मभिन्नं महदहङ्कारादि, अभ्यन्तरं– निजस्वरूपमेव, वेद– विजानाति, प्रकृतिधर्मत्वाज्ज्ञानस्य, प्रकृतेश्चाचेतनत्वात् । ततश्चामूनि किल बन्ध-मोक्षाभावप्रतिपादकानि । तथा, न ह वै– नैवेत्यर्थः, सशरीरस्य प्रिया-ऽप्रिययोरपहतिरस्तीति– बाह्या-ऽऽध्यात्मिकानादिशरीरसंतानयुक्तत्वात् सुख-दुःखयोरपहतिः संसारिणो नास्तीत्यर्थः, अशरीरं वा वसन्तं– अमूर्तमित्यर्थः, प्रिया-ऽप्रिये न स्पृशतः, तत्कारणभूतस्य कर्मणोऽभावादित्यर्थः । अमूनि च बन्ध-मोक्षाभिधायकानीति । अतः संशयः । तत्र "स एष विगुणो विभुः" इत्यादीनां नायमर्थः, किन्त्वयं वक्ष्यमाणलक्षण इति ॥१८०४॥

अत्र भाष्यम्—

[1]तं मन्नसि जइ बंधो जोगो जीवस्स कम्मुणा समयं । पुव्वं पच्छा जीवो कम्मं व समं व ते होज्जा ? ॥१८०५॥

'वेयपयाण य' इत्यत्र चशब्दाद् युक्तिं च त्वं न जानासि । कुतः ? यस्मादायुष्मन् मण्डिक ! त्वमेवं मन्यसे– जीवस्य बन्धो यदि कर्मणा समकं सार्धं योगः संयोगोऽभिप्रेतः स खल्वादिमान्, आदिरहितो वा ? । यद्यादिमान्, ततः किं पूर्वं जीवः प्रसूयेत पश्चात् कर्म, पूर्वं वा कर्म पश्चाज्जीवः प्रसूयेत, समं वा युगपद् वा तौ द्वावपि प्रसूयेयाताम् ? इति पक्षत्रयमिति ॥ १८०५ ॥

अत्राद्यपक्षस्य दूषणमाह—

[2]न हि पुव्वमहेऊओ खरसंगं वायसंभवो जुत्तो । निक्कारणजायस्स य निक्कारणउ च्चिय विणासो ॥१८०६॥

'पूर्वं जीवः पश्चात्कर्म' इत्येतदयुक्तम्, यतो न कर्मणः पूर्वं 'खरसंगं वायसंभवो जुत्तो' खरशृङ्गस्येवात्मनः संभवो युक्तः, अहेतुकत्वात्, इह यदहेतुकं तद् न जायते, यथा खरशृङ्गम्, यच्च जायते तद् निर्हेतुकमपि न भवति, यथा घटः, निष्कारणस्य च जातस्य निष्कारण एव विनाशः स्यादिति ॥ १८०६ ॥

अमुमेव विकल्पं दूषयितुमाह—

[3]अहवाऽणाइ च्चिय सो निक्कारणओ न कम्मजोगो से । अह निक्कारणओ सो, मुक्कस्स वि होहिइ स भुज्जो ॥१८०७॥

१ एव मन्यसे यदि बन्धो योगो जीवस्य कर्मणा समकम् । पूर्वं पश्चाज्जीव. कर्म वा समं वा ते भवेताम् ? ॥ १८०५ ॥

२ न हि पूर्वमहेतो खरशृङ्गमिवात्मसंभवो युक्त' । निष्कारणजातस्य च निष्कारणक एव विनाश ॥ १८०६ ॥

३ अथवाऽनादिरेव स निष्कारणको न कर्मयोगस्तस्य । अथ निष्कारण स', मुक्तस्यापि भविष्यति स भूय. ॥ १८०७ ॥

[1]अहवा जउ च्चिय बीयाणुरूवजम्मं मयं तओ चेव । जीवं गिण्ह भवाओ भवंतरे चित्तपरिणामं ॥ १७७६ ॥
जेण भवंकुरबीयं कम्मं चित्तं च तं जओऽभिहियं । हेउविचित्तत्तणओ भवंकुरविचित्तया तेणं ॥१७७७॥
जइ पडिवन्नं कम्मं हेउविचित्तत्तओ विचित्तं च। तो तप्फलं वि चित्तं पवज्ज संसारिणो सोम्म ! ॥१७७८॥

व्याख्या– अथवा, यत एव बीजानुरूपं कारणानुगुणं कार्याणां जन्म मतम्, तत एवेह भवाद् भवान्तरे जीवं गृहाण प्रतिपद्यस्व। कथंभूतम् ? जाति-कुल-बलै-श्वर्य-रूपादिविचित्रपरिणामम् । यदि नाम बीजानुरूपं जन्म, तथापि कथं भवान्तरे विचित्रता जीवानाम् ?, इत्याह–'जेण भवंकुरेत्यादि' येन यस्माद् नारक-तिर्यगादिरूपेण भवनं भवः स एवाऽङ्कुर इवाङ्कुरस्तस्य बीजमिह कर्मैवावसेयम्, तच्च मिथ्यात्वा-ऽविरत्यादिहेतुवैचित्र्याद् विचित्रं यस्माद् मयाऽभिहितम्, तस्मात् तज्जन्यस्य भवाङ्कुरस्यापि जात्यादिभेदेन विचित्रता । ततो यदि त्वया कर्म प्रतिपन्नम्, हेतुवैचित्र्याच्च यदि तद्वैचित्र्यमभ्युपगतम्, ततः संसारिणो जीवस्य तत्फलमपि नारक-तिर्यङ्-मनुष्या-ऽमररूपेण भवनरूपं सौम्य ! विचित्ररूपं प्रतिपद्यस्वेति ॥ १७७६ ॥ १७७७ ॥ १७७८ ॥

अत्र प्रमाणमुपरचयन्नाह[2]—

[3]चित्तं संसारित्तं विचित्तकम्मफलभावओ हेऊ। इह चित्तं चित्ताणं कम्माण फलं व लोगम्मि ॥१७७९॥

चित्रं संसारिजीवानां नारकादिरूपेण संसारित्वमिति प्रतिज्ञा। विचित्रस्य कर्मणः फलरूपत्वादिति हेतुः। इह यद् विचित्रहेतुकं तद् विचित्रमुपलभ्यते, यथेह विचित्राणां कृषि-वाणिज्यादिकर्मणां फलं लोक इति। तदेवं कर्मवैचित्र्याद् भववैचित्र्ये प्रमाणमुक्तम् ॥१७७९॥

अथ कर्मणो वैचित्र्ये प्रमाणमाह—

[4]चित्ता कम्मपरिणई पोग्गलपरिणामओ जहा बज्झा । कम्माण चित्तया पुण तद्धेउविचित्तभावाओ ॥१७८०॥

---

१ अथवा यत एव बीजानुरूपजन्म मत तत एव । जीवं गृहाण भवाद् भवान्तरे चित्रपरिणामम् ॥ १७७६ ॥
येन भवाङ्कुरबीजं कर्म चित्रं च तद् यतोऽभिहितम् । हेतुविचित्रत्वतो भवाङ्कुरविचित्रता तेन ॥ १७७७ ॥
यदि प्रतिपन्न कर्म हेतुविचित्रत्वतो विचित्रं च । ततस्तत्फलमपि चित्र प्रपद्यस्व ससारिण सौम्य ' ॥ १७७८ ॥ २ घ ज 'नुगत का' ।
३ चित्र संसारित्वं विचित्रकर्मफलभावतो हेतोः । इह चित्रं चित्राणां कर्मणा फलमिव लोके ॥ १७७९ ॥
४ चित्रा कर्मपरिणतिः पुद्गलपरिणामतो यथा बाह्या । कर्मणां चित्रता पुनस्तद्धेतुविचित्रभावात् ॥ १७८० ॥

अथ चेत् कर्मणः पूर्वमात्माऽनादिकालसिद्ध एव, इति किं तस्य सहेतुक-निर्हेतुकचिन्तया ? इति । अत्रोच्यते– 'निक्कारणओ इत्यादि' यद्येवम्, ततः 'से' तस्य जीवस्य कर्मयोगः कर्मबन्धो न प्राप्नोति, अकारणत्वात्, नभस इव। अथ निष्कारणोऽप्यसौ भवति, तर्हि मुक्तस्यापि भूयः स भविष्यति, निष्कारणत्वाविशेषात्, ततश्च मुक्तावप्यनाश्वास इति ॥ १८०७ ॥

यदिवा,

होज्ज[1] स निच्चमुक्को बंधाभावम्मि को व से मोक्खो ?। न हि मुक्कव्ववएसो बंधाभावे मओ नभसो ॥१८०८॥

अथवा, कर्मयोगाभावाद् नित्यमुक्त एवासौ भवेत्। यदिवा, बन्धाभावे कः किल तस्य मोक्षव्यपदेशः ? । न ह्यबद्धस्य नभसः कस्यापि मुक्तव्यपदेशो मतः, बन्धपूर्वकत्वाद् मोक्षस्य। तस्माद् न 'पूर्वं जीवः पश्चात् कर्म' इति प्रथमविकल्प इति ॥ १८०८ ॥

अथ 'पूर्वं कर्म पश्चाज्जीवः, युगपद् वा द्वावपि' इति पक्षद्वयस्य प्रतिविधानमाह—

न[2] य कम्मस्स वि पुव्वं कत्तुरभावे समुब्भवो जुत्तो। निक्कारणओ सो वि य तह जुगवुप्पत्तिभावे य ॥१८०९॥

न हि कत्ता कज्जं ति य जुगवुप्पत्तीए जीव-कम्माणं। जुत्तो ववएसोऽयं जह लोए गोविसाणाणं ॥१८१०॥

न च जीवात् प्राक् कर्मणोऽपि समुद्भवो युक्तः, कर्तुर्जीवस्य तदानीमभावात्, अक्रियमाणस्य च कर्मत्वायोगात्, निष्कारणश्चेत्थमसौ कर्मसमुद्भवः स्यात्, ततोऽकारणजातस्याकारणत एव विनाशोऽपि स्यादिति। तथा, युगपदुत्पत्तिभावे च 'प्रत्येकपक्षोक्ता दोषाः वाच्याः' इति शेषः– निर्हेतुकत्वात् प्रत्येकवदुभयस्यापि समुदितस्यानुत्पत्तिरित्यादि। न च युगपदुत्पन्नयोर्जीव-कर्मणोः कर्तृ-कर्मभावो युज्यत इत्येतदेवाह— 'न हीत्यादि' न हि युगपदुत्पन्नयोर्जीव-कर्मणोः 'अयं जीवः कर्ता' 'इदं वा ज्ञानावरणादिपुद्गलनिकुरम्बं कर्म' इति व्यपदेशो युज्यते, यथा लोके सव्ये-तरगोविषाणयोरिति ॥ १८०९ ॥ १८१० ॥

द्वितीयं मूलविकल्पमधिकृत्याह—

---

१ भवेत् स नित्यमुक्तो बन्धाभावे को वा तस्य मोक्ष ?। न हि मुक्तव्यपदेशो बन्धाभावे मतो नभसः ॥ १८०८ ॥

२ न च कर्मणोऽपि पूर्वं कर्तुरभावे समुद्भवो युक्त । निष्कारणकः सोऽपि च तथा युगपदुत्पत्तिभावे च ॥ १८०९ ॥
न हि कर्ता कार्यमिति च युगपदुत्पत्तौ जीव-कर्मणोः । युक्तो व्यपदेशोऽयं यथा लोके गोविषाणयोः ॥ १८१० ॥

इह विचित्रा कर्मपरिणतिः, पुद्गलपरिणामात्मकत्वात्, इह यत्पुद्गलपरिणामात्मकं तद् विचित्रपरिणतिरूपं दृश्यते, यथा बाह्योऽभ्रादिविकारः, पृथिव्यादिविकारो वा, यत्तु विचित्रपरिणतिरूपं न भवति तत् पुद्गलपरिणामात्मकमपि न भवति, यथाऽऽकाशम्, या पुनः पुद्गलपरिणामसाम्येऽपि कर्मणामावरणादिभेदेन विशेषतो विचित्रता सा तद्धेतुवैचित्र्यादवगन्तव्या, विचित्राश्च मिथ्यात्वादयः प्रद्वेष-निह्नवादयश्च कर्महेतव इति ॥ १७८० ॥

अथ पराभ्युपगमेनैव परभवे जीवानां वैसदृश्यं साधयन्नाह—

अहवा[1] इहभवसरिसो परलोगो वि जइ सम्मओ तेणं। कम्मफलं पि इहभवसरिसं पडिवज्ज परलोए ॥१७८१॥
किं भणियमिह मणुया नाणागइकम्मकारिणो संति। जइ ते तप्फलभाजो परे वि तो सरिसया जुत्ता॥१७८२॥

व्याख्या— अथवा, यदीहभवसदृशः परलोकोऽपि संमतो भवतः, 'तेणं ति' ततः कर्मफलमपि परलोक इहभवसदृशमिहत्यविचित्रशुभा-ऽशुभक्रियानुरूपं विचित्रं प्रतिपद्यस्वेति। एवं मुकुलितं प्रतिपाद्यैतदेव भावयति— 'किं भणियमित्यादि' किमेतावता प्रतिपादितं भवति ?। इह तावद् मनुष्या नानागतिहेतुविचित्रक्रियानुष्ठायिनः सन्तीति प्रत्यक्षत एव लक्ष्यन्ते। ततो यदि ते परलोके तत्तत्क्रियाफलभाज इष्यन्ते, ततो यथेहत्यक्रियाणामसदृशता, तथा परलोकगतजन्तूनामपि सैव युक्ता, ननु योऽत्र यादृशः स परत्रापि तादृश एव भवति ॥ १७८१ ॥ १७८२ ॥

अत्र पराभिप्रायमाशङ्क्य परिहरन्नाह—

अह[2] इह सफलं कम्मं न परे तो सव्वहा न सरिसत्तं। अकयागम-कयनासा कम्माभावोऽहवा पत्तो ॥१७८३॥
कम्माभावे य कओ भवंतरं, सरिसया व तदभावे। निक्कारणओ य भवो जइ तो नासो वि तह चेव ॥१७८४॥

अथैवं ब्रूषे— इह सफलं कर्मेति— इहभवसंबन्ध्येव कृष्यादिक्रियारूपं कर्म सफलम्, न तु पारभविकदानादिक्रियारूपं कर्म।

1 अथवेहभवसदृश परलोकोऽपि यदि संमतस्तेन। कर्मफलमपीहभवसदृश प्रतिपद्यस्व परलोके ॥ १७८१ ॥
किं भणितमिह मनुजा नानागतिकर्मकारिणः सन्ति। यदि ते तत्फलभाज परस्मिन्नपि तत सदृशता युक्ता ॥ १७८२ ॥

2 अथेह सफलं कर्म न परस्मिन्नत. सर्वथा न सदृशत्वम्। अकृतागम कृतनाशौ कर्माभावोऽथवा प्राप्तः ॥ १७८३ ॥
कर्माभावे च कुतो भवान्तरं, सदृशता वा तदभावे। निष्कारणकश्च भवो यदि ततो नाशोऽपि तथैव ॥ १७८४ ॥

[1]होज्जाणाईओ वा संबंधो तह वि न घडए मोक्खो। जोऽणाई सोऽणंतो जीव-नहाणं व संबंधो ॥१८११॥

स्यादेतत्, अनादिरेव जीव-कर्मणोः संबन्धः संयोगः। ननु तथापि मोक्षो न घटते, यस्माद् योऽनादिः संयोगः सोऽनन्तो दृष्टः, यथा जीव-नभसोः। न ह्याकाशेन सह जीवस्य कदाचिदपि संयोगो निवर्तते। एवं कर्मणापि सहासौ न निवर्तेत, तथाच सति मुक्त्यभावप्रसङ्ग इति ॥ १८११ ॥

उपसंहरन्नाह—

[3]इय जुत्तीए न घटइ सुव्वइ य सुईसु बंध-मोक्खा त्ति[4]। तेण तुह संसओऽयं न य कज्जोऽयं जह सुणसु[5] ॥१८१२॥

इत्येवं युक्तयुक्त्या बन्धो मोक्षश्च न घटते, श्रूयते च श्रुतिषु वेदवाक्येष्वसौ। ततस्तव संशयोऽयम्। यथा चायं न कार्यस्तथा शृणु सौम्य! इति। उक्तः पूर्वपक्षः ॥ १८१२ ॥

अत्र प्रतिविधीयते— तत्र यत् तावदुक्तम्– 'किं पूर्वं जीवः पश्चात् कर्म, उत व्यत्ययः?' इत्यादि। तत् सर्वमयुक्तम्। कुतः? इत्याह—

[6]संताणोऽणाईओ परोप्परं हेउ-हेउभावाओ। देहस्स य कम्मस्स य मंडिय! बीयं-कुराणं व ॥१८१३॥

शरीर-कर्मणोरनादिः संतान इति प्रतिज्ञा, परस्परं हेतु-हेतुमद्भावात्, बीजाङ्कुरवदिति। ततश्च 'किं पूर्वं जीवः पश्चात् कर्म?' इत्यादि[7] प्लवत एव, अनादित्वात् तत्संतानस्येति ॥ १८१३ ॥

एतदेव कर्मसंतानस्यानादित्वं साधयन्नाह—

[8]अत्थि स देहो जो कम्मकारणं जो य कज्जमण्णस्स। कम्मं च देहकारणमत्थि य जं कज्जमण्णस्स ॥१८१४॥

अस्ति स कश्चिद् देहो योऽग्रेतनस्य कर्मणः कारणम्, यश्चान्यस्यातीतस्य कर्मणः कार्यम्। तथा, कर्मापि समस्ति। किंवि-

१ भवेदनादिको वा सबन्धस्तथापि न घटते मोक्ष'। योऽनादिः सोऽनन्तो जीव-नभसोरिव संबन्ध ॥ १८११ ॥ २ क ग 'मुक्ताभा'। ३ इति युक्त्या न घटते श्रूयते च श्रुतिषु बन्ध-मोक्षाविति। तेन तव संशयोऽय न च कार्योऽय यथा श्रृणु ॥ १८१२ ॥ ४ घ ज झ 'मोक्खो त्ति'। ५ क ग 'सुणेसु'। ६ सतानोऽनादिक परस्पर हेतु हेतुमद्भावात्। देहस्य च कर्मणश्च मण्डिक! बीजाऽङ्कुरयोरिव ॥ १८१३ ॥ ७ ज 'दि पूर्ववदेव, अ'। ८ अस्ति स देहो यः कर्मकारण यश्च कार्यमन्यस्य। कर्म च देहकारणमस्ति च यत् कार्यमन्यस्य ॥ १८१४ ॥

ततश्च तत्फलाभावाद् न परलोके जन्तुवैसदृश्यम् । अत्रोत्तरमाह— 'तो सव्वहा न सरिसत्तं ति' तत एवं सति यत् तवाभिमेतं तत् सर्वथा परभवे जीवानां सदृशत्वं न स्यात् । तद्धि कर्मणा जन्यते, तच्च नास्ति, पारभविकक्रियाणां त्वया निष्फलत्वाभ्युपगमात्, तन्निष्फलत्वे च कर्माभावात् । अथ कर्माभावेऽपि भवेत् सादृश्यम्, तर्ह्यकृतस्यैव तस्य निर्हेतुकस्याऽऽगमः प्राप्नोति, कृतस्य च दान-हिंसादिक्रियाफलरूपस्य कर्मणो नाशः प्रसजति । अथवा, मूलत एव कर्मणामभावः प्राप्तः—दान-हिंसादिक्रियाणां निष्फलत्वाभ्युपगमाद् मूलत एव कर्मणो बन्धोऽपि न स्यादिति भावः । ततः किम् ? इत्याह– कर्माभावे च कारणाभावात् कुतो भवान्तरम्, तदभावे च दूरोत्सारितमेव सादृश्यम् । अथ कर्माभावेऽपि भव इष्यते, तर्हि निष्कारण एवासौ स्यात् । यदि चैवमयमिष्येत, ततो नाशोऽपि तस्य भवस्य निष्कारण एव स्यात्, अतो व्यर्थस्तपो-नियमाद्यनुष्ठानप्रयासः । निष्कारणे च भवेऽभ्युपगम्यमाने वैसदृश्यमपि जीवानां निष्कारणं किं नेष्यते, विशेषाभावात् ? इति ॥ १७८३ ॥ १७८४ ॥

अथ प्रेरकमाशङ्क्य परिहरन्नाह—

कम्माभावे[3] वि मई को दोसो होज्ज जइ सभावोऽयं । जह कारणाणुरूवं घडाइ कज्जं सहावेणं ॥ १७८५॥

अथ परस्यैवंभूता मतिः स्याद् यदुत– कर्माभावेऽपि यदि भवसद्भावरूपः स्वभाव एवायं भवेत् तर्हि को दोषः स्यात् ?– विनापि कर्म यदि स्वभावादेव भवः स्यात् तर्हि किं दूषणं भवेत् ?– न किञ्चिदित्यर्थः । दृष्टान्तमाह– यथा कर्म विनापि मृत्पिण्डादिकारणानुरूपं घटादि कार्यं स्वस्वभावेनैवोत्पद्यमानं दृश्यते, तथा सदृशप्राणिजन्मपरम्परारूपो भवोऽपि स्वभावादेव भविष्यति । अत्रोच्यते– ननु घटोऽपि न स्वभावत एव जायते, कर्तृ-करणाद्यपेक्षित्वात् तस्य । ततश्चेहापि कर्तुरात्मनः पारभविकस्य च शरीरादिकार्यस्य करणं संभाव्यते, तच्च कर्तृ-कार्याभ्यां भिन्नं लोकेऽपि दृश्यते, कुलाल-घंटाभ्यां चक्रादिवत्, यच्चेहात्मनः शरीरादि कार्यं कुर्वतः करणं तत् कर्मेति प्रतिपद्यस्व । स्यादेतत्, घटादेः प्रत्यक्षसिद्धत्वाद् भवन्तु कुलालादयः कर्तारः, शरीरादि कार्यं त्वभ्रादिविकारवत् स्वभावतोऽपि भविष्यति, ततो न कर्मसिद्धिः । तदयुक्तम्, यतो न स्वाभाविकं शरीरादि, आदिमत्प्रतिनियताकारत्वात्, घटवदिति । किञ्च, 'कारणानुरूपमेव कार्यम्' इत्येवं यत् परभवे सादृश्यं त्वयाऽभ्युपगम्यते, तदपि स्वभाववादिनस्तवाभ्रादिविकारदृष्टान्ते परिहीयते, अभ्रादिविकारस्य स्वकारणभूतपुद्गलद्रव्यादतिविलक्षणत्वादिति ॥ १७८५ ॥

१ क. ग 'मिष्यते'। २ घ.ज 'रकशङ्कामाह'।
३ कर्माभावेऽपि मतिः को दोषो भवेद् यदि स्वभावोऽयम् । यथा कारणानुरूपं घटादि कार्यं स्वभावेन ॥ १७८५ ॥ ४ ज 'तृंकार'।

शिष्टम् ? इत्याह— यदग्रेतनस्य देहस्य कारणम्, यच्चान्यस्यातीतस्य देहस्य कार्यमिति। एवमनादौ संसारे न क्वचिद् विश्राम्यति, अतोऽनादिर्देह-कर्मसंतान इति। आह— ननु बन्ध-मोक्षाविह साधयितुं प्रस्तुतौ, ततः कर्मसंतानस्यानादित्वसाधनमसंबद्धमिव लक्ष्यते। तदयुक्तम्, अभिप्रायापरिज्ञानात्, न ह्यकृतं कर्म संभवति 'क्रियत इति कर्म' इति व्युत्पत्तेः, यच्च तस्य करणमसावेव बन्ध इति कथं न तत्सिद्धिः ? ॥ १८१४ ॥

ननु यदि क्रियत इति कर्मोच्यते, तर्हि कोऽस्य देहस्य च कर्ता ?, इत्याह—

[1]कत्ता जीवो कम्मस्स करणओ जह घडस्स घडकारो। एवं चिय देहस्स वि कम्मकरणसंभवाउ त्ति ॥१८१५॥

कर्ता चात्र कर्मणो जीवः, करणसमेतत्वात्, दण्डादिकरणयुक्तकुलालवद् घटस्य, करणं चेह जीवस्य कर्म निर्वर्तयतः शरीरमवगन्तव्यम्। एवं देहस्याप्यात्मैव कर्ता, कर्मरूपं करणं कर्मकरणं तत्संभवात्– तद्युक्तत्वात्, दण्डादिकरणसमेतकुलालवदिति॥१८१५॥

अथात्र प्रेर्यं परिहारं चाह—

[2]कम्मं करणमसिद्धं व ते मई कज्जओ तयं सिद्धं। किरियाफलओ य पुणो पडिवज्ज तमग्गिभूइ व्व ॥१८१६॥

स्यादेतत्, अतीन्द्रियत्वेनासिद्धत्वात् कर्मणः करणत्वमसिद्धम्। तदयुक्तम्, यतः कार्यतः कार्यद्वारेण तत् सिद्धमेव, तथाहि– विद्यमानकरणं शरीरादि, कृतकत्वात्, घटादिवत्, यच्चास्य करणं तत् कर्मैव, तस्मादस्त्येव तत्। अथवा, विद्यमानकरणमेवात्म-शरीरलक्षणं द्वयम्, कर्तृ-कार्यरूपत्वात्, कुलाल-घटादिवत्। यच्च कर्तुरात्मनः शरीरमुत्पादयतः करणं तत् कर्मेति कथं न तत्सिद्धिः ?। तथा, फलवत्यो दानादिक्रियाः, चेतनारब्धक्रियारूपत्वात्, कृष्यादिक्रियावत्, यच्च तासां फलं तत् कर्म। इत्यग्निभूतिरिव त्वमपि प्रतिपद्यस्वेति ॥ १८१६ ॥

यच्चोक्तम्– 'योऽनादिः संयोगः सोऽनन्तो दृष्टः' इत्यादि। तत्राह—

[3]जं संताणोऽणाई तेणाणंतोऽवि णायमेगंतो। दीसइ संतो वि जओ कत्थइ बीयं-कुराईणं ॥ १८१७ ॥

१ कर्ता जीवः कर्मणः करणतो यथा घटस्य घटकारः। एवमेव देहस्यापि कर्मकरणसंभवादिति ॥ १८१५ ॥

२ कर्म करणमसिद्धं वा तव मतिः कार्यतस्तत् सिद्धम्। क्रियाफलतश्च पुनः प्रतिपद्यस्व तदग्निभूतिरिव ॥ १८१६ ॥

३ यत् संतानोऽनादिस्तेनानन्तोऽपि नायमेकान्तः। दृश्यते सन्नपि यतः कुत्रापि बीजा-ऽङ्कुरादीनाम् ॥ १८१७ ॥

अपिच,

होज्ज[1] सहावो वत्थुं निक्कारणया व वत्थुधम्मो वा ?। जइ वत्थुं णत्थि तओऽणुवलद्धीओ खपुप्फं व ॥१७८६॥
अच्चंतमणुवलद्धो वि अह तओ अत्थि नात्थि[2] किं कम्मं। हेऊ[3] व तदत्थित्ते जो नणु कम्मस्स वि स एव॥१७८७॥
कम्मस्स वाभिहाणं होज्ज सहावो त्ति होउ को दोसो। निच्चं व सो सभावो सरिसो एत्थं च को हेऊ?॥१७८८॥

एतद् गाथात्रयमपि प्रायः प्रागेव व्याख्यातार्थम्, नवरं 'निच्चं' इत्यादि तृतीयगाथोत्तरार्धम्। इदमत्र हृदयम्- स स्वभावो नित्यं सदृश एव त्वयाऽभ्युपगन्तव्यः, भवान्तरे सदृशस्यैव मनुष्यादिभवस्य जननात्, तस्य च स्वभावस्य नित्यं सदृशत्वे को हेतुः ? न कश्चिदित्यभिप्रायः। स्वभावत एवायं स्वभावः सदृश इति चेत्। ननु भवविसदृशतायामप्येतद् वक्तुं शक्यत एवेति ॥१७८६-८८॥

किञ्च,

सो[4] मुत्तोऽमुत्तो वा जइ मुत्तो तो न सव्वहा सरिसो। परिणामओ पयं पिव न देहहेऊ जइ अमुत्तो ॥१७८९॥
उवगरणाभावाओ न य हवइ सुहम्म! सो अमुत्तो वि। कज्जस्स मुत्तिमत्ता सुहसंवित्तादिओ चेव ॥१७९०॥

व्याख्या— स स्वभावो मूर्तः, अमूर्तो वा ?। यदि मूर्तः, तर्हि कर्मणा सह तस्य को विशेषः ?- संज्ञान्तरमात्रविशिष्टकर्मैवेत्थमुक्तं स्यादिति। न चासौ सर्वदैव सर्वथा सदृशो युज्यते, परिणामित्वात्, दुग्धादिवत्। अथवा, मूर्तत्वादेवाभ्रादिविकारवदिति। अथामूर्तोऽसौ स्वभावः, तर्हि नैष देहादीनामारम्भकः, अनुपकरणत्वात्, दण्डादिविकलकुलालवत्, अमूर्तत्वादेव वा, आकाशवत्। 'न य हवइ सुहम्म ! सो अमुत्तो वि त्ति' किञ्च, सुधर्मन् ! इतोऽपि स स्वभावोऽमूर्तो न युक्तः, शरीरादेस्तत्कार्यस्य मूर्तिमत्त्वात्। न ह्यमूर्तस्य नभस

1 भवेत् स्वभावो वस्तु निष्कारणता वा वस्तुधर्मो वा ?। यदि वस्तु नास्ति सकोऽनुपलब्धे खपुष्पमिव ॥ १७८६ ॥ अत्यन्तमनुपलब्धोऽप्यथ सकोऽस्ति नास्ति किं कर्म। हेतुर्वा तदास्तित्वे यो ननु कर्मणोऽपि स एव ॥ १७८७ ॥ कर्मणो वाभिधानं भवेत् स्वभाव इति भवतु को दोष। नित्य वा स स्वभाव सदृशोऽत्र च को हेतु ? ॥ १७८८ ॥ 2 क.ग.'त्थि तो क'। 3 क.ग.'ऊ वि त'। 4 स मूर्तोऽमूर्तो वा यदि मूर्तस्ततो न सर्वथा सदृश। परिणामतः पय इव न देहहेतुर्यद्यमूर्त ॥ १७८९ ॥ उपकरणाभावाद् न च भवति सुधर्मन् ! सोऽमूर्तोऽपि। कार्यस्य मूर्तिमत्त्वात् सुखसंवित्त्यादितश्चैव ॥ १७९० ॥

'यद् यस्माज्जीव-कर्मसंयोगसंतानोऽनादिस्तेन तस्मादनन्तोऽपि' इति नायमेकान्तः, यतोऽनादिरपि संयुक्तयोर्वस्तुनोः संतानः सान्तोऽपि क्वचिद् दृश्यते, यथा बीजा-ऽङ्कुरादीनां संतान इति ॥ १८१७ ॥

तथाहि—

अण्णयरमणिव्वत्तियकज्जं बीयं-कुराण जं विहयं। तत्थ हओ संताणो कुक्कुडि-अंडाइयाणं च ॥ १८१८ ॥

जह वेह कंचणो-वलसंजोगोऽणाइसंतइगओ वि। वोच्छिज्जइ सोवायं तह जोगो जीव-कम्माणं ॥ १८१९ ॥

बीजा-ऽङ्कुरयोर्मध्येऽन्यतरदनिर्वर्तितकार्यमेव यद् विहतं व्यवच्छिन्नं तत्रानयोर्हतो व्यवच्छिन्नः संतानः। एवं कुक्कुट्य-ण्डकयोः, पिता-पुत्रयोरपि च वक्तव्यम्। यथा वा काञ्चनो-पलयोरनादिकालप्रवृत्तसंतानभावगतोऽपि संयोगः सोपायमग्नितापाद्युपायाद् व्यवच्छिद्यते, तथा जीव-कर्मणोरपि संयोगोऽनादिसंतानगतोऽपि तपः-संयमाद्युपायाद् व्यवच्छिद्यते, इति न मोक्षाभाव इति ॥ १८१८ ॥ १८१९ ॥

अत्र परस्य प्रश्नमुपन्यस्योत्तरमाह—

तो[3] किं जीव-नहाण व अह जोगो कंचणो-वलाणं व ?। जीवस्स य कम्मस्स य भणइ दुविहो वि न विरुद्धो॥१८२०॥

पढमोऽभव्वाणं चिय भव्वाणं कंचणो-वलाणं व। जीवत्ते सामण्णे भव्वोऽभव्वो त्ति को भेओ ?॥१८२१॥

आह— जीवस्य कर्मणश्च योऽयं परस्परं योगः सोऽनादिः सन् किं जीव-नभसोरिवानन्तः, अथ काञ्चनो-पलयोरिव सान्तोऽपि स्यात् ?, उभयथापि दर्शनात् किमत्र प्रतिपद्यामहे ?। भण्यतेऽत्रोत्तरम्— द्विधाऽप्ययमविरुद्धः, तत्र प्रथमोऽनाद्यनन्तरूपोऽभव्यानां द्रष्टव्यः। यस्तु काञ्चनो-पलयोरिवानादिः सान्तोऽसौ भव्यानां विज्ञेयः। आह— ननु जीवत्वसाम्येऽपि 'अयं भव्यः' 'अयं चाभव्यः' इति किंकृतोऽयं विशेषः ?। न च वक्तव्यम्— यथा जीवत्वे समानेऽपि नारक-तिर्यगादयो विशेषास्तथा भव्या-ऽभव्यत्वविशेषोऽपि

---

१ अन्यतरदनिर्वर्तितकार्यं बीजा-ऽङ्कुरयोर्यद् विहतम्। तत्र हत. सतान कुक्कुट्य ण्डादिकाना च ॥ १८१८ ॥ २ घ ज. 'योरन्य'।
यथा वेह काञ्चनो-पलसंयोगोऽनादिसततिगतोऽपि। व्यवच्छिद्यते सोपायं तथा योगो जीव-कर्मणो॰ ॥ १८१९ ॥
३ तत किं जीव-नभसोरिवाथ योग काञ्चनो-पलयोरिव ?। जीवस्य च कर्मणश्च भण्यते द्विविधोऽपि न विरुद्ध॰ ॥ १८२० ॥
प्रथमोऽभव्यानामेव भव्यानां काञ्चनो-पलयोरिव। जीवत्वे सामान्ये भव्योऽभव्य इति को भेद॰ ? ॥ १८२१ ॥

इव मूर्तं कार्यमुपजायते। तथा, सुख-संवित्त्यादेश्च नायममूर्तः। इदमुक्तं भवति– कर्म तावद् भवता नेष्यते, स्वभाववादित्वात्। ततश्च शरीरादीनि, सुखे-दुःखसंवित्त्यादीनि च स्वभावस्यैव कार्याण्येष्टव्यानि, तस्य चामूर्तत्वे नैतान्युपपद्यन्ते। ततो यथा द्वितीयगणधरवादे कार्यस्य मूर्तत्वात्, सुखसंवित्त्यादेश्च कर्मणो मूर्तत्वं साधितम्, तथेह स्वभावस्यापि तत् साधनीयम्। तथा च प्रागुक्तम्—

'आह ननु मुत्तमेवं मुत्त चिय कज्जमुत्तिमत्ताओ। इह जह मुत्तत्तणओ घडस्स परमाणवो मुत्ता ॥ १ ॥
तह सुहसंवित्तीओ सबंधे वेयणुब्भवाओ य। बज्झबलाहाणाओ परिणामाओ य विण्णेयं ॥ २ ॥'[2]

इति ॥१७८९॥१७९०॥

अथ निष्कारणता स्वभाव इति द्वितीयविकल्पमधिकृत्याह—

[3]अहवाऽकारणउ च्चिय सभावओ तो वि सरिसया कत्तो। किमकारणओ न भवे विसरिसया किं व विच्छित्ती?॥१७९१॥

अथ स्वभावत एव भवोत्पत्तिरित्यत्र 'अकारण एव' इत्ययमर्थोऽभिप्रेतः, 'तो वि त्ति' तथापि हन्त! परभवे सदृशता कुतः?। कोऽभिप्रायः? इत्याह– यथाऽकारणतः सदृशता भवति, तथा किमित्यकारणत एव विसदृशता न स्यात्?। अकस्माच्चाकारणतो भवविच्छित्तिः कस्माद् न स्यात्?। अकस्माच्च भवन् खरविषाणादिरपि भवेत्, शरीरादीनां चाकारणतो भवतामभ्रादीनामिव प्रतिनियताकारत्वादिरूपता न स्यात्। तस्माद् नाकारणता स्वभाव इति ॥ १७९१ ॥

अथ वस्तुधर्मोऽसाविति तृतीयविकल्पमाश्रित्याह—

[4]अहव सहावो धम्मो वत्थुस्स, न सो वि सरिसओ निच्चं। उप्पाय-ट्ठिइ-भंगा चित्ता जं वत्थुपज्जाया ॥१७९२॥

अथ वस्तुनो धर्मः स्वभावः, सोऽपि सर्वदैव सदृशो न घटते, इति कथं सर्वदैव शरीरादीनां सदृशतां जनयेत्। कथं पुनरस्य सदैव सदृशता न घटते? इत्याह– 'उप्पायेत्यादि' यद् यस्मादुत्पाद-स्थिति-भङ्गादयश्चित्रा वस्तुपर्यायाः, न च ते सदैवाऽवस्थितसादृश्याः, नीलादीनां वस्तुधर्माणां प्रत्यक्षत एवान्यान्यरूपतया परिणतिदर्शनात्। किञ्च, वस्तुधर्मोऽसौ भवत्स्वभाव आत्मधर्मो वा स्यात्,

१ घ ज 'खस'। २ गाथा १६२५, १६२६।
३ अथवाऽकारणत एव स्वभावतस्ततोऽपि सदृशता कुतः। किमकारणतो न भवेद् विसदृशता किं वा विच्छित्ति ?॥ १७९१ ॥
४ अथवा स्वभावो धर्मो वस्तुनः, न सोऽपि सदृशको नित्यम्। उत्पाद-स्थिति-भङ्गाश्चित्रा यद् वस्तुपर्यायाः ॥ १७९२ ॥

भविष्यतीति, यतः कर्मजनिता एव नारकादिविशेषाः, न तु स्वाभाविकाः। भव्या-भव्यत्वविशेषोऽपि यदि कर्मजनितस्तदा भवतु, को निवारयिता ?, न चैवमिति ॥ १८२० ॥ १८२१ ॥

एतदेवाह—

[1]होउ जइ कम्मकओ न विरोहो नारगाइभेउ व्व। भणह य भव्वा-ऽभव्वा सभावओ तेण संदेहो ॥१८२२॥

भवतु वा यदि कर्मकृतोऽयं भव्या-ऽभव्यत्वविशेषो जीवानामिष्यते, नात्र कश्चिद् विरोधः, नारकादिभेदवत्, न चैतदस्ति, यतो 'भव्या ऽभव्याः स्वभावत एव जीवा न तु कर्मतः' इति यूयं भणथ, तेनास्माकं संदेह इति ॥ १८२२ ॥

परेणैवमुक्ते सत्याह—

[2]दव्वाइत्ते तुल्ले जीव-नहाणं सभावओ भेओ। जीवा-ऽजीवाइगओ जह, तह भव्वे-यरविसेसो ॥ १८२३ ॥

यथा जीव-नभसोर्द्रव्यत्व-सत्त्व-प्रमेयत्व-ज्ञेयत्वादौ तुल्येऽपि जीवा-ऽजीवत्व-चेतना-ऽचेतनत्वादिस्वभावतो भेदः, तथा जीवानामपि जीवत्वसाम्येऽपि यदि भव्या-ऽभव्यकृतो विशेषः स्यात्, तर्हि को दोषः ? इति ॥ १८२३ ॥

इत्थं संबोधितो भव्यत्वादिविशेषमभ्युपगम्य दूषणान्तरमाह—

[3]एवं पि भव्वभावो जीवत्तं पिव सभावजाईओ। पावइ निच्चो तम्मि य तदवत्थे नत्थि निव्वाणं ॥ १८२४ ॥

नन्वेवमपि भव्यभावो नित्योऽविनाशी प्राप्नोति, स्वभावजातीयत्वात्– स्वाभाविकत्वात्, जीवत्ववत्। भवत्वेवमिति चेत्। तदयुक्तम्, यतस्तस्मिन् भव्यभावे तदवस्थे नित्यावस्थायिनि नास्ति निर्वाणम्, "सिद्धो न भव्यो नाप्यभव्यः" इति वचनादिति ॥१८२४॥

नैवम्, कुतः ? इत्याह—

[4]जह घडपुव्वाभावोऽणाइसहावो वि सनिहणो एवं। जइ भव्वत्ताभावो भवेज्ज किरियाए को दोसो ? ॥१८२५॥

---

१ भवतु यदि कर्मकृतो न विरोधो नारकादिभेद इव। भणथ च भव्या-ऽभव्यान् स्वभावतस्तेन संदेहः ॥ १८२२ ॥
२ द्रव्यादित्वे तुल्ये जीव-नभसोः स्वभावतो भेदः। जीवा-ऽजीवादिगतो यथा, तथा भव्ये तरविशेषः ॥ १८२३ ॥
३ एवमपि भव्यभावो जीवत्वमिव स्वभावजातीयः। प्राप्नोति नित्यस्तस्मिंश्च तदवस्थे नास्ति निर्वाणम् ॥ १८२४ ॥
४ यथा घटपूर्वाभावोऽनादिस्वभावोऽपि सनिधन एवम्। यदि भव्यत्वाभावो भवेत् क्रियया को दोष. ? ॥ १८२५ ॥

पुद्गलधर्मो वा ? । यद्यात्मधर्मः, तर्हि नासौ शरीरादीनां कारणम्, अमूर्तत्वात्, आकाशादिवत् । अथ पुद्गलधर्मः, तर्हि कर्मैवासौ, कर्मणोऽपि हि पुद्गलास्तिकायधर्मत्वेनास्माभिरभ्युपगतत्वादिति ॥१७९२॥

किञ्च,

कम्मस्स वि परिणामो सुहम्म ! धम्मो स पोग्गलमयस्स। हेऊ चित्तो जगओ होइ सहावो त्ति को दोसो ?॥१७९३॥[1]

सुधर्मन् ! असौ वस्तुधर्मो भवत्स्वभावो धर्मो भवतु, को दोषः ?– न कश्चित्, युक्तियुक्तत्वात् । किंविशिष्टो धर्मः ? इत्याह– परिणामः । कस्य ? । कर्मणः । कथंभूतस्य ? । पुद्गलमयस्य । कथंभूतो यः कर्मपरिणामः ? इत्याह– हेतुः । कस्य ? । जगतः– जगद्वैचित्र्यस्य । तदेवं कर्मलक्षणस्य वस्तुनः कर्मपरिणामरूपो धर्मो भवति स्वभावः, नात्र काचिद् दोषापत्तिः । अस्माकमपि संमतोऽयमर्थः, केवलं सर्वदा सदृशोऽसौ न भवति, किन्तु चित्रो मिथ्यात्वादिहेतुवैचित्र्याद् विचित्रो विविधस्वभावः । अतो न तस्मात् परभवे सादृश्यमेव, किन्तु विचित्ररूपतेति ॥ १७९३ ॥

यदिवा, किमनेनाव्यापकेन, मिथ्यारूपेण चैकान्तवादेन ? । सर्वव्यापकम्, अवितथरूपं चानेकान्तवादमेव दर्शयन्नाह—

अहवा सव्वं वत्थुं पइक्खणं चिय सुहम्म ! धम्मेहिं । संभवइ वेइ केहि वि केहि वि तदवत्थमच्चंतं ॥१७९४॥[2]

तं अप्पणो वि सरिसं न पुव्वधम्मेहिं पच्छिमिल्लाणं। सयलस्स तिहुअणस्स च सारिसं सामण्णधम्मेहिं ॥१७९५॥

व्याख्या— अथवा, सुधर्मन् ! किमेक एव परभवः ?, सर्वमेव हि घट-पटादिकं भुवनान्तर्गतं वस्तु कैश्चित् पूर्वपर्यायैः समाना-ऽसमानपर्यायैः प्रतिक्षणमुत्पद्यते, कैश्चित् पुनरुत्तरपर्यायैः समाना-ऽसमानपर्यायैर्व्येति व्युपरमति, कैश्चित्तु तदवस्थमेवास्ते । ततश्चैवं सति तद्वस्त्वात्मनोऽपि पूर्वपूर्वधर्मैरुत्तरोत्तरधर्माणां न सदृशम्, किं पुनरन्यवस्तूनाम् ?; सामान्यधर्मैस्तु सर्वस्यापि त्रिभुवनस्य समानम्, किं पुनरेकस्यैव निजपूर्वजन्मनः ? इति ॥ १७९४ ॥ १७९५ ॥

ततः किं स्थितम् ? इत्याह—

---

१ कर्मणोऽपि परिणाम. सुधर्मन् ! धर्मः स पुद्गलमयस्य । हेतुश्चित्रो जगतो भवति स्वभाव इति को दोष. ? ॥ १७९३ ॥

२ अथवा सर्वं वस्तु प्रतिक्षणमेव सुधर्मन् ! धर्मैः । संभवति व्येति कैरपि कैरपि तदवस्थमत्यन्तम् ॥ १७९४ ॥
तदात्मनोऽपि सदृशं न पूर्वधर्मैः पाश्चात्यानाम् । सकलस्य त्रिभुवनस्य च सदृशं सामान्यधर्मैः ॥ १७९५ ॥

यथा घटस्य प्रागभावोऽनादिस्वभावजातीयोऽपि घटोत्पत्तौ सनिधनो विनश्वरो दृष्टः, एवं यदि भव्यत्वस्यापि ज्ञान-तपःसचिव-चरणक्रियोपायतोऽभावः स्यात्, तर्हि को दोषः संपद्यते ?– न कश्चिदिति ॥ १८२५ ॥

आक्षेप-परिहारौ माह—

[1]अणुदाहरणमभावो खरसंगं पिव मई न तं जम्हा । भावो च्चिय स विसिट्ठो कुंभाणुप्पत्तिमेत्तेणं ॥ १८२६ ॥

स्याद् मतिः परस्य– नन्वनुदाहरणमसौ प्रागभावः, अभावरूपतयैवावस्तुत्वात्, खरविषाणवत् । तन्न, यस्माद् भाव एवासौ घटप्रागभावः, तत्कारणभूतानादिकालप्रवृत्तपुद्गलसंघातरूपः, केवलं घटानुत्पत्तिमात्रेण विशिष्ट इति ॥ १८२६ ॥

भवतु तर्हि घटप्रागभाववद् भव्यत्वस्य विनाशः, केवलमित्थं सति दोषान्तरं प्रसजति । किम् ? इत्याह—

[2]एवं भव्वुच्छेओ कोट्ठागारस्स वा अवचउ त्ति । तं नाणंतत्तणओऽणागयकालं-बराणं व ॥ १८२७ ॥

नन्वेवं सति भव्योच्छेदः– भव्यजीवैः संसारः शून्यः प्राप्नोति, अपचयात् । कस्य यथा समुच्छेदः ? इत्याह– स्तोकस्तोकाकृष्यमाणधान्यस्य धान्यभृतकोष्ठागारस्य। इदमुक्तं भवति– कालस्यानन्त्यात् षण्मासपर्यन्ते चावश्यमेकस्य भव्यस्य जीवस्य सिद्धिगमनात् क्रमेणापचीयमानस्य धान्यकोष्ठागारस्येव सर्वस्यापि भव्यराशेरुच्छेदः प्राप्नोतीति । अत्रोत्तरमाह– तदेतद् न, अनन्तत्वाद् भव्यराशेः, अनागतकाला-ऽऽकाशवदिति। इह यद् बृहदनन्तकेनानन्तं, तत् स्तोक-स्तोकतयाऽपचीयमानमपि नोच्छिद्यते, यथा प्रतिसमयं वर्तमानतापत्त्याऽपचीयमानोऽप्यनागतकालसमयराशिः, प्रतिसमयं बुद्ध्या प्रदेशापहारेणापचीयमानः सर्वनभःप्रदेशराशिर्वा । इति न भव्योच्छेदः ॥ १८२७ ॥

कुतः ? इत्याह—

[3]जं चातीता-ऽणागयकाला तुल्ला जओ य संसिद्धो । एक्को अणंतभागो भव्वाणमईयकालेणं ॥१८२८॥

---

१ अनुदाहरणमभाव खरशृङ्गमिव मतिर्न तद् यस्मात् । भाव एव स विशिष्ट कुम्भानुत्पत्तिमात्रेण ॥ १८२६ ॥

२ एव भव्योच्छेद' कोष्ठागारस्येवापचय इति । तद् नानन्तत्वतोऽनागतकाला-ऽम्बरयोरिव ॥ १८२७ ॥

३ यच्चातीता-ऽनागतकालौ तुल्यौ यतश्च ससिद्धः । एकोऽनन्तभागो भव्यानामतीतकालेन ॥ १८२८ ॥

एए अणुओगस्स उ नामा एगट्ठिया पंच ॥ १२४ ॥

अणुओयणमणुओगो सुयस्स नियएण जमभिधेएणं । वावारो वा जोगो जो अणुरूवोऽणुकूलो वा ॥ १ ॥
अहवा जमत्थओ थोव-पच्छभावेहिं सुयमणुं तस्स । अभिधेए वावारो जोगो तेणं व संबंधो ॥ २ ॥

नामं ठवणा दविए खित्ते काले वयण-भावे य ।
एसो अणुओगस्स उ निक्खेवो होइ सत्तविहो ॥ १२५ ॥

नामस्स जोऽणुओगो अहवा जस्साभिहाणमणुओगो । नामेण व जो जोग्गो जोगो नामाणुओगो सो ॥ १ ॥
ठवणाए जोऽणुओगोऽणुओग इति वा ठविज्जए जं च । जो वेह जस्स ठवणा जोग्गा ठवणाणुओगो सो ॥२॥
दव्वस्स जोऽणुओगो दव्वे दव्वेण दव्वहेऊ वा । दव्वस्स पज्जवेण व जोग्गा दव्वेण वा जोगो ॥ ३ ॥
बहुवयणओ वि एवं नेओ जो वा कहे अणुवउत्तो । दव्वाणुओग एसो एवं खेत्ताइयाणं पि ॥ ४ ॥
दव्वस्स उ अणुओगो जीवदव्वस्स वा अजीवदव्वस्स । एक्केक्कम्मि वि भेया हवंति दव्वाइया चउरो ॥ ५ ॥
दव्वेणेगं दव्वं संखाईयप्पएसओगाढं । कालेऽणाइ अनिहणो भावे नाणाइयाणंता ॥ ६ ॥
एमेव अजीवस्स वि परमाणू दव्व एगदव्वं तु । खेत्ते एगपएसे ओगाढो सो भवे नियमा ॥ ७ ॥
समयाइठिइ असंखा उसप्पिणीओ हवंति कालम्मि । वण्णाइभावणंता एवं दुपएसमाई वि ॥ ८ ॥
दव्वाणं अणुओगो जीवा-जीवाण पज्जवा नेया । तत्थवि व मग्गणाओऽणेगा सट्ठाण-परठाणे ॥ ९ ॥
वत्तीए अक्खेण व करंगुलाईण वा वि दव्वाणं । अक्खेहिं य दव्वेहिं अहिगरणे कप्प-कप्पेहिं ॥ १० ॥
पन्नत्तिजंबुदीवे खेत्तस्सेमाइ होइ अणुओगो । खेत्ताणं अणुओगो दीव-समुद्दाण पन्नत्ती ॥ ११ ॥

जंबूदीवपमाणं पुढविजियाणं तु पत्थयं काउं । एवं मविज्जमाणा हवंति लोगा असंखेज्जा ॥ १२ ॥
खेत्तम्मि उ अणुओगो तिरियं लोगम्मि जम्मि वा खेत्ते । अड्ढाइयदीवेसु छलद्धवीसाए खेत्तेसु ॥ १३ ॥
कालस्स समयरूवण कालाण तदाइ जाव सव्वद्धा । कालेणानिलावहारो कालेहिं उ सेसकायाणं ॥ १४ ॥
कालम्मि बीयपोरिसि समासु तिसु दोसु वा वि कालेसु । पवयणस्सेगवयाइवयणाणं सोलसण्हं तु ॥ १५ ॥
वयणेणायरियाई एक्केणुत्तो बहूहिं वयणेहिं । वयणे खओवसमिए वयणेसु उ नत्थि अणुओगो ॥ १६ ॥
भावस्सेगयरस्स उ अणुओगो जो जहट्ठिओ भावो । दोमाइसंनिगासे अणुओगो होइ भावाणं ॥ १७ ॥
भावेण संगहाईण ण्णयरेणं दुगाइभावेहिं । भावे खओवसमिए भावेसु य नत्थि अणुओगो ॥ १८ ॥
अहवा आयाराइसु भावेसु वि एस होइ अणुओगो । सामित्तं आसज्ज व परिणामेसुं बहुविहेसुं ॥ १९ ॥
दव्वे नियमा भावो न विणा ते यावि खेत्त-कालेहिं । खेत्ते तिण्ह वि भयणा कालो भयणाए तीसुं पि ॥ २० ॥
ओहारो आहेयं च होइ दव्वं तहेव भावो य । खेत्तं पुण आहारो कालो नियमाउ आहेओ ॥ २१ ॥
एसोऽणुरूवजोगो गओऽणुओगो इओ विवज्जत्थं । जो सो अणणुओगो तत्थेमे होंति दिट्ठंता ॥ २२ ॥

वच्छगगोणी खुज्जा सज्झाए चेव बहिरउल्लावे।
गामेल्लुए य वयणे सत्तेव य होंति भावम्मि ॥ १२६ ॥
सावगभज्जा सत्तवईए य कोंकणगदारए नउले ।
कमलामेला संबस्स साहसं सेणिए कोवो ॥ १२७ ॥

१ 'आधारो आधेय' ।-२ 'गामिल्ल' ।

एसेण तत्तिउ च्चिय जुत्तो जं तो वि सव्वभव्वाणं । जुत्तो न समुच्छेओ होज्ज मई कहमिणं सिद्धं ? ॥१८२९॥
भव्वाणमणंतत्तणमणंतभागो व किह व मुक्को सिं । कालादओ व मंडिय ! मह वयणाओ व पडिवज्ज ॥१८३०॥

व्याख्या– यस्माच्चातीता ऽनागतकालौ तुल्यावेव, यतश्चातीतेनापि कालेनैक एव निगोदानन्ततमो भागोऽद्यापि भव्यानां सिद्धः, एष्यतापि भविष्यत्कालेन तावन्मात्र एव भव्यानन्तभागः सिद्धिं गच्छन् युक्तो घटमानकः, न हीनाधिकः, भविष्यतोऽपि कालस्यातीततुल्यत्वात् । तत एवमपि सति न सर्वभव्यानामुच्छेदो युक्तः, सर्वेणापि कालेन तदनन्तभागस्यैव सिद्धिगमनसंभवोपदर्शनात् । अथ परस्य मतिर्भवेत्– तत् कथमिदं सिद्धं यदुत– अनन्ता भव्याः, तदनन्तभागश्च सर्वेणैव कालेन सेत्स्यतीति ? । अत्रोच्यते– काला-ऽऽकाशादय इवानन्तास्तावद् भव्याः, तदनन्तभागस्य च मुक्तिगमनात्, काला-ऽऽकाशयोरिव न सर्वेषामुच्छेद इति प्रतिपद्यस्व, मद्वचनाद् वा मण्डिक ! सर्वमेतत् श्रद्धेहीति ॥ १८२८ ॥ १८२९ ॥ १८३० ॥

कथं पुनस्त्वद्वचनात् सर्वमेतत् सत्यतया प्रतिपद्यामहे ? इत्याशङ्क्याह—

सब्भूयमिणं गिण्हसु मह वयणाओऽवसेसवयणं व । सव्वण्णुताइओ वा जाणयमज्झत्थवयणं व ॥१८३१॥
मण्णसि किह सव्वण्णू सव्वेसिं सव्वसंसयच्छेया । दिट्ठंताभावम्मि वि पुच्छउ जो संसओ जस्स॥ १८३२॥

व्याख्या– सद्भूतमिदमनन्तरोक्तं सर्वमपीति गृहाण त्वम्, मद्वचनत्वात्, यथा त्वत्संशयादिविषयमवशेषं मद्वचनम्, सर्वज्ञत्वादित्यादिभ्यो वा हेतुभ्यः, आदिशब्दाद् वीतरागत्वादिपरिग्रहः, ज्ञायकमध्यस्थवचनवदित्ययमत्र दृष्टान्त इति । अथैवं मन्यसे— कथमिव सर्वज्ञस्त्वम् ? । अत्रोच्यते– सर्वेषां सर्वसंशयच्छेदात् । अन्यस्य सर्वसंशयच्छेत्तुः कस्याप्यदर्शनात् कोऽत्र दृष्टान्तः ?– न कश्चिदिति । अत्रोच्यते– किमत्र दृष्टान्तान्वेषणेन ? । तदभावेऽपि हि यो यस्य संशयः स तं सर्वमपि पृच्छतु, येन स्वप्रत्ययसिद्ध एव मयि सर्वज्ञत्वनिश्चयो भवतीति ॥ १८३१ ॥ १८३२ ॥

---

१ एष्यता तावानेव युक्तो यत् ततोऽपि सर्वभव्यानाम् । युक्तो न समुच्छेदो भवेद् मतिः कथमिदं सिद्धम् ? ॥ १८२९ ॥
भव्यानामनन्तत्वमनन्तभागो वा कथं वा मुक्त एषाम् ? । कालादय इव मण्डिक ! मम वचनाद् वा प्रतिपद्यस्व ॥ १८३० ॥
२ सद्भूतमिदं गृहाण मद्वचनादवशेषवचनमिव । सर्वज्ञतादितो वा ज्ञायकमध्यस्थवचनमिव ॥ १८३१ ॥
मन्यसे कथं सर्वज्ञ. सर्वेषां सर्वसंशयच्छेदात् । दृष्टान्ताभावेऽपि पृच्छतु यः संशयो यस्य ॥ १८३२ ॥

भवओ सिद्धो त्ति मई तेणाइमसिद्धसंभवो जुत्तो। कालाणाइत्तणओ पढमसरीरं व तदजुत्तं ॥ १८५९ ॥

अथ स्याद् मतिः परस्य— यतो भवात् संसारात् सर्वोऽपि मुक्तात्मा सिद्धस्तेन ततः सर्वेषामपि सिद्धानामादिमत्त्वादवश्यमेव केनाप्यादिसिद्धेन भवितव्यम्। तदयुक्तम्, यतो यथा सर्वाण्यपि शरीराणि, अहोरात्राणि च सर्वाण्यादियुक्तान्येव, अथ च कालस्यानादित्वाद् नाद्यशरीरम्, आद्याहोरात्रं वा किमपि ज्ञायते, तथा कालस्यानादित्वात् सिद्धोऽपि नाद्यः प्रतीयत इति ॥ १८५९ ॥

अथान्यदपि प्रेर्यं परिहारं चाह—

परिमियदेसेऽणंता किह माया मुत्तिविरहियत्ताओ। नियम्मि व नाणाई दिट्ठीओ वेगरूवम्मि ॥ १८६० ॥

आह– परिमितदेशमेव सिद्धिक्षेत्रम्, तत्र कथमनादिकालवर्तिनोऽनन्ताः सिद्धा मान्ति?। अत्रोत्तरमाह– अमूर्तत्वात् सिद्धाः परिमितेऽपि क्षेत्रेऽनन्तास्तिष्ठन्ति, यथा प्रतिद्रव्यमेवानन्तानि सिद्धानां संबन्धीनि केवलज्ञान-केवलदर्शनानि संपतन्ति, दृष्टयो वा यथैकस्यामपि नर्तक्यां सहस्रशः प्रपतन्ति, परिमितेऽपि वाऽपवरकादिक्षेत्रे बह्वयोऽपि प्रदीपप्रभा मान्ति; एवमिहामूर्ताः सिद्धा कथं परिमितक्षेत्रेऽनन्ता न मास्यन्ति, मूर्तानामपि प्रदीपप्रभादीनां बहूनामेकत्रावस्थानं दृश्यते, किमुताऽमूर्तानाम्? इति भावः ॥ १८६० ॥

तदेवं युक्तिभिः सप्रसङ्गौ बन्ध-मोक्षौ व्यवस्थाप्य वेदवाक्यद्वारेणापि तद्व्यवस्थामाह—

न ह वई ससरीरस्स प्पिया-ऽप्पियावहतिरेवमाईणं। वेयपयाणं च तुमं न सदत्थं मुणासि तो संका ॥ १८६१ ॥

तुह बंधे मोक्खम्मि य, सा य न कज्जा जओ फुडो चेव। ससरीरे-यरभावो नणु जो सो बंध मोक्खो त्ति ॥ १७६२ ॥

व्याख्या– "न हि वै सशरीरस्य प्रिया-ऽप्रिययोरपहतिरस्ति, अशरीरं वा वसन्तं प्रिया-ऽप्रिये न स्पृशतः" इत्यादीनां च वेदपदानां सदर्थं त्वं न मुणसि। ततो बन्धे मोक्षे च तव सौम्य! शङ्का, सा च न कार्या, यतो ननु यः सशरीरे-तरभावः स स्फुट एव बन्धो मोक्षश्चेति कथं शङ्का युज्यते?। एतदुक्तं भवति– 'सशरीरस्य' इत्यनेन बाह्या-ऽऽध्यात्मिकानादिशरीरसंतानस्वरूपो बन्धः प्रोक्तः, तथा, 'अशरीरं वा

१ भवतः सिद्ध इति मतिस्तेनादिमसिद्धसंभवो युक्तः। कालानादित्वतः प्रथमशरीरमिव तदयुक्तम् ॥१८५९॥
२ परिमितदेशेऽनन्ताः कथं माता मूर्तिविरहितत्वात्। निजके वा ज्ञानादयो दृष्टयो वैकरूपे ॥ १८६० ॥ ३ घ ज. 'णाइं दि'।
४ न ह वै सशरीरस्य प्रिया-ऽप्रिययोरपहतिरेवमादीनाम्। वेदपदानां च त्वं न सदर्थं मुणासि तत शङ्का ॥ १८६१ ॥
तव बन्धे मोक्षे च, सा च न कार्या यत स्फुट एव। सशरीरे-तरभावो ननु यः स बन्धो मोक्ष इति ॥ १८६२ ॥ ५ क घ.ज. 'इ सरी'।

अत्र प्रेरकः प्राह—

[1]भव्वा वि न सिज्झिस्संति केइ कालेण जइ वि सव्वेण। नणु ते वि अभव्व च्चिय किंवा भव्वत्तणं तेसिं ? ॥१८३३॥

ननु भव्या अपि सन्तो यदि सर्वेणापि कालेन सर्वेऽपि न सेत्स्यन्ति, तर्हि येषां सिद्धिर्न भविष्यति, अभव्या एव ते किं न व्यपदिश्यन्ते ? केन वा विशेषेण तेषां भव्यत्वम् ? इति निवेद्यतामिति ॥ १८३३ ॥

अत्रोत्तरमाह—

[2]भण्णइ भव्वो जोग्गो न य जोग्गत्तेण सिज्झए सव्वो। जह जोग्गम्मि वि दलिए सव्वम्मि न कीरए पडिमा ॥१८३४॥

भण्यतेऽत्रोत्तरम्। किम् ? इत्याह— भव्योऽत्र सिद्धिगमनयोग्योऽभिप्रेतः, न तु यः सिद्धिगतिं यास्यत्येव, न च योग्यत्वमस्तीत्येतावतैव सर्वः सिध्यति, किन्तु सिद्धिगमनसामग्रीसंभवे सति। दृष्टान्तमाह— यथा हेम मणि-पाषाण-चन्दन-काष्ठादिके योग्येऽपि प्रतिमार्हेऽपि दलिके न सर्वस्मिन् प्रतिमा विधीयते, किन्तु यत्रैव तन्निष्पत्तियोग्या सामग्री संभवति तत्रैवासौ क्रियते। न च तदसंभवमात्रेण प्रतिमाविषयेऽयोग्यता भवति। नियमश्चेह नैवं विधीयते यदुत—प्रतिमायोग्ये वस्तुनि प्रतिमा भवत्येवेति, किन्तु यदा तदा वा तद्योग्य एव सा भवति, नान्यत्रेति; एवमिहापि न 'भव्यः' इत्येतावन्मात्रेणैव सर्वः सिध्यति, किन्तु सामग्रीसंपत्तौ, न च तदसंपत्तावपि तस्याभव्यता भवति, किन्तु यदा तदा वा भव्यस्यैव मुक्तिर्नाभव्यस्येति ॥ १८३४ ॥

दृष्टान्तान्तरमाह—

[3]जह वा स एव पासाण-कणगजोगो विओगजोग्गो वि। न विजुज्जइ सव्वो च्चिय स विजुज्जइ जस्स संपत्ती ॥१८३५॥

किं पुण जा संपत्ती सा जोग्गस्सेव न उ अजोग्गस्स। तह जो मोक्खो नियमा सो भव्वाणं न इयरेसिं ॥ १८३६ ॥

व्याख्या— यथा वा स एव पूर्वोक्तः सुवर्णपाषाण-कनकयोर्योगो वियोगयोग्यतान्वितोऽपि सर्वो न वियुज्यते, किन्तु स एव

---

1 भव्या अपि न सेत्स्यन्ति केऽपि कालेन यद्यपि सर्वेण। ननु तेऽप्यभव्या एव किंवा भव्यत्वं तेषाम् ? ॥ १८३३ ॥

2 भण्यते भव्यो योग्यो न च योग्यत्वेन सिध्यति सर्वः। यथा योग्येऽपि दलिके सर्वस्मिन् न क्रियते प्रतिमा ॥ १८३४ ॥

3 यथा वा स एव पाषाण-कनकयोगो वियोगयोग्योऽपि। न वियुज्यते सर्व एव स वियुज्यते यस्य संप्राप्तिः ॥ १८३५ ॥
किं पुनर्या संप्राप्तिः सा योग्यस्यैव न त्वयोग्यस्य। तथा यो मोक्षो नियमात् स भव्यानां नेतरेषाम् ॥ १८३६ ॥

वसन्तम्' इत्यनेन त्वशेषशरीरापगमस्वभावो मोक्षः प्रतिपादितः । तथा, "स एष विगुणो विभुर्न बध्यते" इत्यादीन्यपि पदानि संसारिजीवस्य बन्ध-मोक्षाभावप्रतिपादकानि त्वं मन्यसे । तच्चायुक्तम्, मुक्तजीवविषयत्वात् तेषाम् । मुक्तस्य च बन्धाद्यभावेऽविप्रतिपत्तिरेवेति । तदेवं भगवता छिन्नस्तस्य संशयः ॥ १८६१ ॥ १८६२ ॥

ततः किम् ? इत्याह—

[1]छिन्नम्मि संसयम्मी जिणेण जर-मरणविप्पमुक्केणं । सो समणो पव्वइओ अद्धुट्ठेहि सह खंडियसएहिं ॥१८६३॥

व्याख्या पूर्ववत्, नवरमर्धचतुर्थैः शिष्यशतैः सह प्रव्रजितोऽयम् ॥ इति द्वाषष्टिगाथार्थः ॥ १८६३ ॥

॥ इति षष्ठगणधरवादः समाप्तः ॥

अथ सप्तमगणधरवक्तव्यतामभिधित्सुराह—

[2]ते पव्वइए सोउं मोरिओ आगच्छई जिणसगासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥१८६४॥

[3]आभट्ठो य जिणेणं जाइ-जरा-मरणविप्पमुक्केणं । नामेण य गोत्तेण य सव्वण्णू सव्वदरिसी णं ॥१८६५॥

गाथाद्वयमपि प्रकटार्थम् ॥ १८६४ ॥ १८६५ ॥

आभाष्य ततः किमुक्तः ? इत्याह—

[4]किं मण्णे अत्थि देवा उयाहु न त्थि त्ति संसओ तुज्झ । वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥१८६६॥

हे आयुष्मन् मौर्य ! त्वमेवं मन्यसे– किं देवाः सन्ति, नवेति, उभयथापि वेदपदश्रवणात् ? । तथाहि–"स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गलोकं गच्छति" इत्यादि; तथा, "अपाम सोमं अमृता अभूम अगमन् ज्योतिरविदाम देवान्, किं नूनमस्मात् तृण-

१ छिन्ने संशये जिनेन जरा-मरणविप्रमुक्तेन । स श्रमण. प्रव्रजितोऽर्धचतुर्थै सह खण्डिकशतै ॥ १८६३ ॥
२ तान् प्रव्रजितान् श्रुत्वा मौर्य आगच्छति जिनसकाशम् । व्रजामि वन्दे वन्दित्वा पर्युपासे ॥ १८६४ ॥ ३ गाथा १६०९ ।
४ किं मन्यसे सन्ति देवा उताहो न सन्तीति संशयस्तव । वेदपदानां चार्थं न जानासि तेषामयमर्थः ॥ १८६६ ॥

वियुज्यते, यस्य वियोगसामग्रीसंप्राप्तिरिति । किं पुनः?, एतद् भुजमुत्क्षिप्य ब्रूमः– या वियोगसामग्रीसंप्राप्तिः सा वियोगयोग्यस्यैव सुवर्णोपलस्य भवति, न तु तदयोग्यस्य, तथा तेनैव प्रकारेण यः सर्वकर्मक्षयलक्षणो मोक्षः स नियमाद् भव्यानामेव भवति, नेतरेषामभव्यानामिति भव्या-ऽभव्ययोर्विशेष इति ॥ १८३५ ॥ १८३६ ॥

अथ प्रकारान्तरेणाक्षेप-परिहारौ माह––

[1]कयगाइमत्तणाओ मोक्खो निच्चो न होइ कुंभो व्व। नो पद्धंसाभावो भुवि तद्धम्मा वि जं निच्चो ॥ १८३७ ॥

अणुदाहरणमभावो एसो वि मई न तं जओ नियओ। कुंभविणासविसिट्ठो भावो च्चिय पोग्गलमओ यं ॥१८३८॥

व्याख्या– ननु मोक्षो नित्यो न भवति, किन्त्वनित्यो विनाशी, कृतकत्वात्; आदिशब्दात् प्रयत्नानन्तरीयकत्वा-ऽऽदिमत्त्वादिपरिग्रहः। कुम्भवदिति दृष्टान्तः। अत्रोच्यते– अनैकान्तिकता हेतूनाम्, विपक्षेऽपि गमनात्, यस्मादिह घटादिप्रध्वंसाभावः कृतकादिस्वभावोऽपि नित्य एव, तदनित्यत्वे घटादेस्तद्रूपतयैवोन्मज्जनप्रसङ्गादिति । अथैवं परस्य मतिः– न केवलं पूर्वोक्तः प्रागभावः किन्त्वेषोऽपि प्रध्वंसाभावोऽभावत्वेनावस्तुत्वादनुदाहरणमेव । तदेतद् न, यतो यस्माद् नियतो निश्चितः कुम्भविनाश[2]विशेषेण विशिष्टः पुद्गलात्मको भाव एवायमपि प्रध्वंसाभावः । अतो युक्तमेतदुदाहरणमिति । एतच्च मोक्षस्य कृतकत्वमभ्युपगम्योक्तम् ॥ १८३७ ॥ १८३८ ॥

यदिवा, न भवत्येव कृतको मोक्ष इति दर्शयन्नाह––

[3]किं वेगंतेण कयं पोग्गलमेत्तविलयम्मि जीवस्स। किं निव्वत्तियमहियं नभसो घडमेत्तविलयम्मि ? ॥१८३९॥

किमिह पुद्गलमात्रविलये [4]सति समस्तकर्मपुद्गलपरिशाटसमये जीवस्यात्मनः स्वतत्त्वे वृत्तिमादधत एकान्तेन कृतं विहितम्, येन कृतको मोक्षः स्यात् ?। एतदुक्तं भवति– इहात्म-कर्मपुद्गलवियोगो मोक्षोऽभिप्रेतः । तत्र तपः-संयमप्रभावतो जीवात् कर्मणि पृथग् जायमाने किमात्मनः क्रियते, येन कृतकत्वादनित्यत्वं मोक्षस्य प्रतिपाद्यते ?। अथ स एवात्म-कर्मवियोगः क्रियमाणत्वात् कृतकः, ततोऽनित्य इत्याशङ्क्याह– 'किं निव्वत्तियमित्यादि' मुद्गरादिना घटमात्रस्य विनाशे सति किं नाम नभसोऽभ्यधिकं निर्वर्तितम् ?–

१ कृतकादिमत्त्वाद् मोक्षो नित्यो न भवति कुम्भ इव । नो प्रध्वंसाभावो भुवि तद्धर्मापि यद् नित्यः ॥ १८३७ ॥
अनुदाहरणमभाव एषोऽपि मतिर्न तद् यतो नियत । कुम्भविनाशविशिष्टो भाव एव पुद्गलमयश्च ॥ १८३८ ॥ २ ज. 'शविशि' ।
३ किं वैकान्तेन कृत पुद्गलमात्रविलये जीवस्य । किं निर्वर्तितमधिक नभसो घटमात्रविलये ? ॥ १८३९ ॥ ४ घ.ज. 'सम' ।

वदरातिः किमु मूर्तिममृतमर्त्यस्य" इत्यादि ; तथा "को जानाति मायोपमान् गीर्वाणानिन्द्र-यम-वरुण-कुबेरादीन्" इत्यादि। एतेषां च वेदपदानामयमर्थस्तव बुद्धौ प्रतिभासते, यथा– स एष यज्ञ एव दुरितवारणक्षमत्वादायुधं प्रहरणं यस्यासौ यज्ञायुधी, यजमानोऽञ्जसा– प्रगुणेन न्यायेन, स्वर्गलोकं गच्छति, इति देवसत्ताप्रतिपत्तिः। तथा, अपाम– पीतवन्तः, सोमं लतारसम्, अमृताः– अमरणधर्माणः, अभूम– भूताः स्मः, अगमन्– गताः, ज्योतिः– स्वर्गम्, अविदाम देवान्– देवत्वं प्राप्ताः स्मः, किं नूनमस्मादूर्ध्वं तृणवत् करिष्यतिः कोऽसौ ? इत्याह– अरातिः– व्याधिः, तथा, किमु प्रश्ने, मूर्तिं– जराम्, अमृतमर्त्यस्येति– अमृतत्वं प्राप्तस्य मर्त्यस्य पुरुषस्येत्यर्थः, अमरणधर्मिणो मनुष्यस्य किं करिष्यन्ति जरा-व्याधयः ? इति भावः। अत्रापि देवसत्ताप्रतिपत्तिः। "को जानाति मायोपमान्" इत्यादीनि तु देवाभावप्रतिपादकानि। अतस्तव संशयः। अयुक्तश्चायम्, यतोऽमीषां वेदपदानामर्थं त्वं न जानासि, चशब्दाद् युक्तिं च न वेत्सि। एतेषां हि वेदपदानां नायमर्थो यस्तवाभिप्रेतः, किन्त्वयम्– वक्ष्यमाणलक्षण इति ॥ १८६६ ॥

अत्र भाष्यम्—

[1]तं मन्नसि नेरइया परतंता दुक्खसंपउत्ता य। न तरंतीहागंतुं सद्धेया सुव्वमाणा वि ॥ १८६७ ॥

सच्छंदयारिणो पुण देवा दिव्वप्पभावजुत्ता य। जं न कयाइ वि दरिसणमुवेंति तो संसओ तेसु ॥१८६८॥

मौर्य ! त्वमेवं मन्यसे— नारकाः स्वकृतपापनरकपालादिपरतन्त्राः पराधीनवृत्तयोऽतीव दुःखसंघातविह्वलाश्च न शक्नुवन्त्यत्रागन्तुम्, अतः प्रत्यक्षीकरणोपायाभावात् श्रूयमाणा अपि श्रद्धेया भवन्तु। देवास्तु स्वच्छन्दचारिणो दिव्यप्रभावयुक्ताश्च, तथापि यस्माद् न कदाचिद् दर्शनपथमवतरन्ति, श्रूयन्ते च श्रुति-स्मृत्यादिषु, अतस्तेषु शङ्केति ॥ १८६७ ॥ १८६८ ॥

अत्रोत्तरमाह—

[2]मा कुरु संसयमेए सुदूरमणुयाइभिन्नजाईए। पेच्छसु पच्चक्खं चिय चउव्विहे देवसंघाए ॥ १८६९ ॥

मौर्यपुत्र ! देवेषु मा संशयं कार्षीस्त्वम्, एतानेव हि सुदूरमत्यर्थं मनुजादिभ्यो भिन्नजातीयान् दिव्याभरण-विलेपन-वसन-

---

१ त्वं मन्यसे नैरयिका परतन्त्रा दुःखसंप्रयुक्ताश्च। न शक्नुवन्तीहाऽऽगन्तुं श्रद्धेया श्रूयमाणा अपि ॥ १८६७ ॥
स्वच्छन्दचारिणः पुनर्देवा दिव्यप्रभावयुक्ताश्च। यन्न कदाचिदपि दर्शनमुपयन्ति तत संशयस्तेषु ॥ १८६८ ॥
२ मा कुरु संशयमेतान् सुदूरमनुजादिभिन्नजातीयान्। प्रेक्षस्व प्रत्यक्षमेव चतुर्विधान् देवसङ्घातान् ॥ १८६९ ॥

न किञ्चिदित्यर्थः। एवमिहापि कर्ममात्रविनाशे सति किं जीवस्याधिकं कृतम्, येन तदेकाकितारूपस्य मोक्षस्य कृतकत्वेनानित्यत्वं स्यात्? । स एव कर्मणो विनाशो घटविनाशवत् क्रियमाणत्वात् कृतकः, ततः सर्वकर्मक्षयलक्षणो मोक्षोऽनित्य इति चेत्। तदयुक्तम्, यतो यथाऽयमेव घटविनाशो यः केवलाकाशसद्भावो न पुनस्ततो विभिन्नोऽसौ, न चाकाशस्य किमप्यधिकं क्रियते, तस्य सदावस्थितत्वेन नित्यत्वात्, एवमिहाप्ययमेव कर्मणो विनाशो यः केवलात्मसद्भावः, न त्वात्मनो विभिन्नोऽसौ, न चात्मनः किञ्चिदधिकं विधीयते, तस्यापि नभोवद् नित्यत्वात्। तस्माद् न मोक्षस्य कृतकत्वमनित्यत्वं वा। कथञ्चिच्चानित्यत्वे सिद्धसाध्यतैव, द्रव्य-पर्यायोभयरूपतया सर्वस्यापि वस्तुनो नित्यानित्यरूपत्वादिति ॥ १८३९ ॥

आह– ननु कर्मपुद्गला ये निर्जीर्य जीवेन परित्यक्तास्ते लोकमेवाभिव्याप्य तिष्ठन्ति, न पुनस्तद्बहिः क्वापि गच्छन्ति, जीवोऽपि च लोकमध्य एव तिष्ठति। ततश्च यथा घटवियुक्तस्याप्याकाशस्य तत्कपालपुद्गलसंयोगस्तदवस्थ एव, एवं कर्मवियुक्तस्याप्यात्मनो निर्जीर्णतत्पुद्गलसंयोगः समस्त्येव, इति कथं पुनरपि न तस्य तद्बन्धः? इत्याशङ्क्याह—

[1]सोऽणवराहो व्व पुणो न बज्झए बंधकारणाभावा। [2]जोगा य बंधहेऊ न [3]य ते तस्सासरीरो त्ति ॥१८४०॥

स मुक्तो जीवः पुनरपि न बध्यते, बन्धकारणाभावात्, अनपराधपुरुषवत्, मनो-वाक्-काययोगादयश्च बन्धहेतवोऽभिधीयन्ते, न च ते मुक्तस्य सन्ति, शरीराद्यभावात्। न च कर्मवर्गणागतपुद्गलमात्रसंयोगमात्ररूपोऽत्र बन्धोऽधिक्रियते, अतिप्रसङ्गादिदोषाघ्रातत्वात्, किन्तु मिथ्यात्वादितद्धेतुनिबन्धन इति ॥ १८४० ॥

आह– नन्वयं मुक्तात्मा सौगतानामिव भवतामप्यभिप्रायेण पुनरपि भवे प्रादुर्भवति, नवा? इत्याशङ्क्याह—

[4]न पुणो तस्स पसूई बीयाभावादिहंकुरस्सेव। बीयं च तस्स कम्मं न य तस्स तयं तओ निच्चो ॥१८४१॥

न तस्य मुक्तस्य पुनरपि भवप्रसूतिरुपजायते, बीजाभावात्– कारणस्यासत्त्वात्, यथाऽङ्कुरस्य तदभावाद् न प्रसूतिः। बीजं चास्य कर्मैवावगन्तव्यम्, तच्च मुक्तस्य नास्त्येव, ततः पुनरावृत्त्यभावाद् नित्योऽसाविति ॥ १८४१ ॥

इतश्च नित्यो मुक्तः। कुतः? इत्याह—

1 सोऽनपराध इव पुनर्न बध्यते बन्धकारणाभावात्। योगाश्च बन्धहेतवो न च ते तस्याशरीर इति ॥ १८४० ॥ 2 क ग ङ 'जोगो य'। 3 क.ग.ङ 'य सो त'। 4 न पुनस्तस्य प्रसूतिर्बीजाभावादिहाङ्कुरस्येव। बीजं च तस्य कर्म न च तस्य तत् ततो नित्य ॥ १८४१ ॥ 5 क ग 'तिर्जा'।

सुमनोमालालङ्कृतान् भवनपति-व्यन्तर-ज्योतिष्क-वैमानिक-लक्षणांश्चतुर्विधदेवसंघातान् मम वन्दनार्थमिहैव समवसरणागतान् प्रत्यक्षत एव पश्येति ॥ १८६९ ॥

अथैतद्दर्शनात् पूर्वं य आसीत् संशयः, स युक्तोऽभवत्। नैवम्। कुतः ? इत्याह--

[1]पुव्वं पि न संदेहो जुत्तो जं जोइसा सपच्चक्खं। दीसंति तक्कया वि य उवघाया-ऽणुग्गहा जगओ ॥१८७०॥

इह समवसरणागतदेवदर्शनात् पूर्वमपि तवान्येषां च संशयो न युक्तः, यद् यस्माच्चन्द्रा-ऽऽदित्यादिज्योतिष्कास्त्वया सर्वेणापि च लोकेन स्वप्रत्यक्षत एव सर्वथा दृश्यन्ते। अतो देशतः प्रत्यक्षत्वात् कथं समस्तापरास्तित्वशङ्का ?। किञ्च, सन्त्येव देवाः, लोकस्य तत्कृतानुग्रहो-पघातदर्शनात्। तथाहि— दृश्यन्ते क्वचित् केचित् त्रिदशाः, कस्यापि किञ्चिद्विभवप्रदानादिनाऽनुग्रहम्, तत्प्रहरणादिना चोपघातं कुर्वन्तः। ततो राजादिवत् कथमेते न सन्ति ? इति ॥ १८७० ॥

पुनरपि परमाशङ्क्य ज्योतिष्कदेवास्तित्वं साधयन्नाह—

[3]आलयमेत्तं च मई पुरं व तव्वासिणो तह वि सिद्धा। जे ते देव त्ति मया न य निलया निच्चपरिसुण्णा॥१८७१॥

अथैवंभूता मतिः परस्य भवेत्– आलया एवालयमात्रं चन्द्रादिविमानानि, न तु देवाः, तत् कथं ज्योतिष्कदेवानां प्रत्यक्षत्वमभिधीयते ?। किं तद् यथाऽऽलयमात्रम् ? इत्याह— 'पुरं ति' यथा पुरं शून्यं लोकानामालयमात्रं स्थानमात्रं, न तु तत्र लोकाः सन्ति, एवं चन्द्रादिविमानान्यप्यालयमात्रमेव, न तु तत्र देवाः केचित् तिष्ठन्ति, अतः कथं तेषां प्रत्यक्षत्वम् ?। अत्रोत्तरमाह– तथापि तद्वासिन आलयवासिनः सामर्थ्याद् ये सिद्धास्ते देवा इति मताः संमताः। यो ह्यालयः स सर्वोऽपि तन्निवासिनाऽधिष्ठितो दृष्टः, यथा प्रत्यक्षोपलभ्यमाना देवदत्ताद्यधिष्ठिता वसन्तपुराद्यालयाः, आलयाश्च ज्योतिष्कविमानानि, अत आलयत्वान्यथानुपपत्तेर्ये तन्निवासिनः सिद्धास्ते देवा इति मताः। आह– ननु कथं ते देवाः सिध्यन्ति ?। यादृशा हि प्रत्यक्षेण देवदत्तादयो दृश्यन्ते तेऽपि तादृशा एव स्युरिति। तदयुक्तम्, विशिष्टा हि देवदत्ताद्यालयेभ्यश्चन्द्राद्यालया इति, अतस्तन्निवासिनोऽपि विशिष्टाः सिध्यन्ति, ते च देवदत्तादिविलक्षणा देवा इति। अपरस्त्वाह– ननु 'आलयत्वात्' इत्ययं हेतुस्तन्निवासिजनसाधनेऽनैकान्तिकः, शून्यालयैर्व्यभिचारात्। अत्रोत्तरमाह– 'न य

1 पूर्वमपि न संदेहो युक्तो यज् ज्योतिष्काः स्वप्रत्यक्षम्। दृश्यन्ते तत्कृता अपि चोपघाता-ऽनुग्रहा जगत ॥ १८७० ॥ 2 प. ज 'न्द्रादिज्यो'। 3 आलयमात्रं च मतिः पुरमिव तद्वासिनस्तथापि सिद्धाः। ये ते देवा इति मता न च निलया नित्यपरिशून्याः ॥ १८७१ ॥

दव्वामुत्तत्तणओ नहं व निच्चो मओ स दव्वतया। सव्वगयत्तावत्ती मइ त्ति तं नाणुमाणाओ ॥१८४२॥[1]

स मुक्तात्मा नित्य इति प्रतिज्ञा। 'दव्वामुत्तत्तणउ त्ति' द्रव्यत्वे सत्यमूर्तत्वादिति हेतुः। 'दव्वतय त्ति' यथा द्रव्यत्वे सत्यमूर्तं नभ इति दृष्टान्तः। अथैवंभूता मतिः परस्य स्यात्– अनेन हेतुना सर्वगतत्वापत्तिरप्यात्मनः सिध्यति; तथाहि– सर्वगत आत्मा, द्रव्यत्वे सत्यमूर्तत्वात्, नभोवत्। ततश्च धर्मविशेषविपरीतसाधनाद् विरुद्धोऽयम्। तदेतद् न। कुतः ?। अनुमानात्– अनुमानबाधितत्वात् सर्वगतत्वस्येत्यर्थः; तथाहि– असर्वगत आत्मा, कर्तृत्वात्, कुलालवत्। न च कर्तृत्वमसिद्धम्, भोक्तृत्व द्रष्टृत्वाद्यनुपपत्तेरिति ॥ १८४२ ॥

यदि वा, किमनेनैकान्तिकेन नित्यत्वग्रहेण ?, एकान्तानित्यत्ववादिनिराकरणार्थमेव ह्येवमभिहितम्, परमार्थतस्तु सर्वमेव वस्तु जैनानां भवन-भङ्ग-स्थित्यात्मकमेवेति दर्शयन्नाह—

को वा निच्चग्गाहो सव्वं चिय वि भव-भंग-ट्ठिइमइयं। पज्जायंतरमेत्तप्पणादनिच्चाइववएसो ॥ १८४३ ॥[3]

गतार्था, नवरं पर्यायान्तरमात्रस्यार्पणं प्रधानभावेन विवक्षणं तस्मादनित्यादिव्यपदेशः, तथाहि– घटः पूर्वेण मृत्पिण्डपर्यायेण विनश्यति, घटपर्यायतया पुनरुत्पद्यते, मृद्रूपतया त्ववतिष्ठते। ततश्च यो विनष्टरूपतादिपर्यायो यदार्पितः प्रधानभूतो विवक्ष्यते, तदा तेनानित्यत्वादिव्यपदेशः। एवमसावपि मुक्तः संसारितया विनष्टः, सिद्धतयोत्पन्नः, जीवत्व-सोपयोगत्वादिभिस्त्ववतिष्ठते, तथा, प्रथमसमयसिद्धतया विनश्यति, द्विसमयसिद्धतयोत्पद्यते, द्रव्यत्व-जीवत्वादिभिस्त्ववतिष्ठते। ततोऽर्पितपर्यायेणानित्यत्वादिव्यपदेश इति ॥ १८४३ ॥

मुक्तस्यावस्थानक्षेत्रनिरूपणार्थमाह—

मुत्तस्स कोऽवगासो सोम्म ! तिलोगसिहरं, गई किह से ?। कम्मलहुया तहागइपरिणामाईहिं भणियमिदं॥१८४४॥[4]

'मुक्तस्य क्षीणसमस्तकर्मणो जीवस्य कोऽवकाशः कावस्थानम् ?, इति पृष्टे सत्याह– सौम्य ! त्रिलोकशिखरं, लोकान्त इत्यर्थः।

१ द्रव्यामूर्तत्वतो नभ इव नित्यो मतः स द्रव्यतया। सर्वगतत्वापत्तिर्मतिरिति तद् नानुमानात् ॥१८४२॥ २ घ. ज 'धर्मिवि'।

३ को वा नित्यग्रह· सर्वमेवापि भव-भङ्ग-स्थितिमयम्। पर्यायान्तरमात्रार्पणादनित्यादिव्यपदेश ॥ १८४३ ॥

४ मुक्तस्य कोऽवकाशः सौम्य ! त्रिलोकशिखर, गतिः कथं तस्य ?। कर्मलघुता तथागतिपरिणामादिभिर्भणितामिदम् ॥ १८४४ ॥

निलयेत्यादि' न च निलया आलया नित्यमेव शून्या भवन्ति। अयमभिप्रायः— ये केचिदालयास्ते प्राग्, इदानीं, एष्यति वा कालेऽवश्यमेव तन्निवासिभिरधिष्ठिता एव भवन्ति, न तु नित्यमेव परिशून्याः। ततो यदा तदा वा चन्द्राद्यालयनिवासिनो देवाः सिध्यन्तीति ॥ १८७१ ॥

पुनरप्यत्र पराभिप्रायमाशङ्क्य परिहारमाह—

[1]को जाणइ व किमेयं ति होज्ज निस्संसयं विमाणाइं। रयणमयनभोगमणादिह जह विज्जाहराईणं ॥ १८७२ ॥

यदिवा, एवंभूता मतिः परस्य भवेद् यदुत— चन्द्राद्यालयत्वेन यद् गीयते भवद्भिस्तदिदं को जानाति किञ्चिद् भवेत्, किं सूर्योऽग्निमयो गोलः, चन्द्रस्त्वम्बुमयः स्वभावतः स्वच्छः, आहोस्विदेवंभूता एवैते भास्वररत्नमया गोलका ज्योतिष्कविमानानि ?, अतः कथमेतेषामालयत्वसिद्धिः ? । अत्र प्रतिविधानमाह— निःसंशयं विमानान्येतानि, रत्नमयत्वे सति नभोगमनात्, पुष्पकादिविद्याधरतपःसिद्धविमानवदिति। अभ्रविकार-पवनादिव्यवच्छेदार्थं रत्नमयत्वविशेषणमिति ॥ १८७२ ॥

अपरमपि पराभिप्रायमाशङ्क्य परिहरन्नाह—

[2]होज्ज मई माएयं तहा वि तक्कारिणो सुरा जे ते। न य मायाइविगारा पुरं व निच्चोवलम्भाओ ॥ १८७३ ॥

अथ परस्य मतिर्भवेत्— नैते चन्द्रादिविमानान्यालयाः, किन्तु मायेयं मायाविना केनापि प्रयुक्ता। अत्रोच्यते— मायात्वममीषामसिद्धम्, वाङ्मात्रेणैव भवताऽभिधानात्; तथाप्यभ्युगम्योच्यते— ये तत्कारिणस्तथाविधमायाप्रयोक्तारस्ते सुराः सिद्धा एव, मनुष्यादीनां तथाविधवैक्रियकरणादर्शनात्। अभ्युपगम्य च मायात्वममीषामभिहितम्। न चैते मायादिविकाराः, नित्योपलम्भात्, सर्वेण सर्वदा दृश्यमानत्वादित्यर्थः, प्रसिद्धपाटलिपुत्रादिपुरवदिति। माये-न्द्रजालकृतानि हि वस्तूनि न नित्यमुपलभ्यन्त इति नित्यविशेषणोपादानमिति ॥ १८७३ ॥

प्रकारान्तरेणापि देवास्तित्वं साधयन्नाह—

[3]जइ नारगा पवन्ना पगिट्ठपावफलभोइणो तेणं। सुबहुगपुण्णफलभुजो पवज्जियव्वा सुरगणा वि ॥१८७४॥

---

१ को जानाति वा किमेतदिति भवेद् निस्संशय विमानानि। रत्नमयनभोगमनादिह यथा विद्याधरादीनाम् ॥ १८७२ ॥

२ भवेद् मतिर्मायेयं तथापि तत्कारिणः सुरा ये ते। न च मायादिविकाराः पुरमिव नित्योपलम्भात् ॥ १८७३ ॥

३ यदि नारकाः प्रपन्नाः प्रकृष्टपापफलभोगिनस्तेन। सुबहुकपुण्यफलभुज प्रपत्तव्याः सुरगणा अपि ॥ १८७४ ॥

ननु कथं 'से' तस्याकर्मणो जीवस्यैतावद् दूरमितो गतिः प्रवर्तते ?, । कर्मनिबन्धना हि जीवानां सर्वापि चेष्टा, ततो विहायोगत्यादि-कर्माभावेऽपि गतिचेष्टायामतिप्रसङ्गः प्राप्नोति[1] । अत्रोच्यते– 'कम्मलहुय त्ति' कर्मापगमे सति लाघवात् समयमेकं तद्गतिप्रवृत्तिरित्यर्थः, तथागतिपरिणामात्– कर्मक्षये सिद्धत्ववदपूर्वगतिपरिणामलाभादित्यर्थः, यथा हि समस्तकर्मक्षयादपूर्वं सिद्धत्वपरिणामं जीवः समासादयति, तथोर्ध्वगतिपरिणाममपीति भावः । आदिशब्दादपरमपि तद्गतिकारणं समयभणितमिदमवगन्तव्यम् , तद्यथा—

'लाउ य एरंडफले अग्गी धूमो य इसु धणुविमुक्को । गइ पुव्वपओगेणं एवं सिद्धाण वि गई उ ॥ १ ॥' १८४४ ॥

अथान्यत् प्रेर्यमाशङ्क्य परिहरति—

[5]किं सक्किरियमरूवं मंडिय ! भुवि चेयणं च किमरूवं ? । जह से विसेसधम्मो चेयन्नं तह मया किरिया ॥१८४५॥

आह— नन्वाकाश-कालादयोऽमूर्ता निष्क्रिया एव प्रसिद्धाः, तत् किं नाम त्वयाऽरूपममूर्त्तं सद् वस्तु सक्रियं दृष्टं, येन मुक्तात्मनः सक्रियत्वमभ्युपगम्यते ?– ननु निष्क्रिय एव मुक्तात्मा प्राप्नोति, अमूर्तत्वात्, आकाशवदिति भावः । अत्रोच्यते— मण्डिक ! त्वमप्येतत् कथय,– भुवि किमरूपं सद्वस्तु चेतनं वीक्षितम् , येन मुक्तात्मा चेतनोऽभ्युपगम्यते ?– अमूर्तत्वादचेतन एवायं प्राप्नोति, आकाशवदिति । तस्माद् यथा 'से' तस्य जीवस्यारूपेभ्य आकाशादिभ्यस्तद्रूपत्वे समानेऽन्योऽपि चैतन्यलक्षणो विशेषधर्मः समस्ति, तथा क्रियापि मता,– सक्रियत्वमपि विशेषधर्मोऽस्तु, को विरोधः ? इति भावः ॥ १८४५ ॥

यच्चोक्तम्– 'निष्क्रियो मुक्तात्मा, अमूर्तत्वात्' तदनैकान्तिकमत्र, प्रतिबन्धाभावादित्याह— । अथवा, मुक्ता-ऽमुक्ताविशेषम-पहाय सामान्येनात्मनः सक्रियत्वं साधयन्नाह—

[6]कत्ताइत्तणओ वा सक्किरिओऽयं मओ कुलालो व्व । देहप्फंदणओ वा पच्चक्खं जंतपुरिसो व्व ॥ १८४६ ॥

अथवा, सक्रियोऽयमात्मा, कर्तृत्वात्, कुलालवत् । आदिशब्दाद् 'भोक्तृत्वात्' इत्यादि वाच्यम् । अथवा, सक्रिय आत्मा, प्रत्यक्षत एव देहपरिस्पन्ददर्शनात् , यन्त्रपुरुषवदिति ॥ १८४६ ॥

१ घ ज. 'ति क' । २ अलाबु चैरण्डफलमग्निर्धूमश्चेषुर्धनुर्विमुक्त । गति. पूर्वप्रयोगेणैव सिद्धानामपि गतिस्तु ॥ १ ॥ ३ घ ज 'धूमे य' । ४ घ ज. 'मुक्के ग' । ५ कि सक्रियमरूप मण्डिक ! भुवि चेतनं च किमरूपम् ? । यथा तस्य विशेषधर्मश्चैतन्य तथा मता क्रिया ॥ १८४५ ॥ ६ कर्त्रादित्वतो वा सक्रियोऽय मत कुलाल इव । देहस्पन्दनतो वा प्रत्यक्ष यन्त्रपुरुष इव ॥ १८४६ ॥

इह स्वकृतप्रकृष्टपापफलभोगिनस्तावत् कचिद् नारकाः प्रतिपत्तव्यास्ते च यदि प्रपन्नाः, 'तणं ति' तर्हि तेनैव प्रकारेण स्वोपार्जितसुष्ठुबहुकपुण्यफलभुजः सुरगणा अपि प्रतिपत्तव्याः। अत्राह– नन्विहैवातिदुःखितनरास्तिर्यञ्चश्चातिदुःखिताः प्रकृष्टपापफलभुजो भविष्यन्ति, तथा, मनुष्या एवातिसुखिताः प्रकृष्टपुण्यफलभुजो भविष्यन्ति, किमदृष्टनारक-देवपरिकल्पनया ? इति। तदयुक्तम्, प्रकृष्टपापफलभुजां सर्वप्रकारेणापि दुःखेन भवितव्यम्, न चातिदुःखितानामपि नर-तिरश्चां सर्वप्रकारं दुःखं दृश्यते, सुखदपवनाऽऽलोकादिसुखस्य सर्वेषामपि दर्शनात्। प्रकृष्टपुण्यफलभुजामपि सर्वप्रकारेणापि सुखेन भवितव्यम्, न चेहातिसुखितानामपि नराणां सर्वप्रकारं सुखमवलोक्यते, पूतिदेहोद्भवस्य रोग-जरादिप्रभवस्य च दुःखस्य तेषामपि सद्भावात्। तस्मात् प्रकृष्टपापनिबन्धनसर्वप्रकारदुःखवेदिनो नारकाः, प्रकृष्टपुण्यहेतुकसर्वप्रकारसुखभोगिनो देवाश्चाभ्युपगन्तव्या एवेति ॥ १८७४ ॥

ननु यदि देवाः सन्ति, तर्हि स्वच्छन्दचारिणोऽपि किमित्यत्र ते कदाचिदपि नागच्छन्ति ? इत्याह—

संकंतदिव्वपिम्मा[1] विसयपसत्ताऽसमत्तकत्तव्वा। अणहीणमणुयकज्जा नरभवमसुभं न एंति सुरा ॥१८७५॥

नागच्छन्तीह सदैव सुरगणाः, संक्रान्तदिव्यप्रेमत्वात्, विषयप्रसक्तत्वात्, प्रकृष्टरूपादिगुणकामिनीप्रसक्तरम्यदेशान्तरगतपुरुषवत्; तथा, असमाप्तकर्तव्यत्वात्, बहुकर्तव्यताप्रसाधननियुक्तविनीतपुरुषवत्। तथा, अनधीनं मनुजानां कार्यं येषां तेऽनधीनमनुजकार्याः, तद्भावस्तत्त्वं तस्माद् नेहागच्छन्ति सुराः, अनभिमतगेहादौ निःसङ्गयतिवदिति। तथा, अशुभत्वाद् नरभवस्य तद्गन्धासहिष्णुतया नेहागच्छन्ति देवाः, स्वपरित्यक्तकडेवरवदिति ॥ १८७५ ॥

तत् किं सर्वथा तेऽत्र नागच्छन्ति ?। नैवम्। अत एवाह—

नवरि[2] जिणजम्म-दिक्खा-केवल-निव्वाणमहनिओगेणं। भत्तीए सोम्म ! संसयविच्छेयत्थं व एज्जहण्हा ॥१८७६॥
पुव्वाणुरागओ वा समयनिबंधा तवोगुणाओ वा। नरगणपीडाऽणुग्गह-कंदप्पाईहिं वा केइ ॥ १८७७ ॥

---

१ सङ्क्रान्तदिव्यप्रेमाणो विषयप्रसक्ता असमाप्तकर्तव्याः। अनधीनमनुजकार्या नरभवमशुभं नागच्छन्ति सुरा. ॥ १८७५ ॥
२ नवरं जिनजन्म-दीक्षा-केवल-निर्वाणमहनियोगेन। भक्त्या सौम्य ! संशयविच्छेदार्थं वैयुरिहाह्वाय ॥ १८७६ ॥
पूर्वानुरागतो वा समयनिबन्धात् तपोगुणाद् वा। नरगणपीडाऽनुग्रह-कन्दर्पादिभिर्वा केचित् ॥ १८७७ ॥

पराशङ्कां प्रतिविधानं चाह—

[1]देहप्फंदणहेऊ होज्ज पयत्तो त्ति सो वि नाकिरिए। होज्जादिट्ठो व मई तदरूवत्ते नणु समाणं ॥१८४७॥

रूवित्तम्मि स देहो वच्चो तप्फंदणे पुणो हेऊ। पइनिययपरिप्फंदणमचेयणाणं न वि य जुत्तं ॥ १८४८ ॥

अथैवं ब्रूषे– देहपरिस्पन्दहेतुरात्मनः प्रयत्नो न तु क्रिया, अतो नात्मनः सक्रियत्वसिद्धिरित्यभिप्रायः। अत्रोत्तरमाह— सोऽपि प्रयत्नो नभसीवाक्रिय आत्मनि न संभवति, अतः सक्रिय एवासौ। अमूर्तस्य च प्रयत्नस्य देहपरिस्पन्दहेतुत्वे कोऽन्यो हेतुरिति वाच्यम्?। अन्यहेतुनिरपेक्षः स्वत एवायं परिस्पन्दहेतुरिति चेत्। यद्येवम्, आत्मापि तद्धेतुर्भविष्यति, किमन्तर्गडुना प्रयत्नेन?। अथादृष्टः कोऽपि देहपरिस्पन्दहेतुः, न त्वात्मा, निष्क्रियत्वात्। ननु सोऽप्यदृष्टः किं मूर्तः, अमूर्तो वा?। यद्यमूर्तः, तर्ह्यात्मापि देहपरिस्पन्दहेतुः किं नेष्यते, अमूर्तत्वाविशेषात्?। अथ मूर्तिमानदृष्टः, तर्हि स कार्मणशरीरलक्षणो देह एव, नान्यः संभवति। तस्यापि च बहिर्दृश्यदेहपरिस्पन्दहेतुतया व्याप्रियमाणस्य परिस्पन्दो द्रष्टव्यः, तस्य चान्यो हेतुर्वाच्यः, तस्यापि चान्यः, तस्यापि चान्य इत्यनवस्था। अथ स्वभावादेवादृष्टस्य कार्मणदेहस्य परिस्पन्दः प्रवर्तते, तर्हि बहिर्दृश्यस्यापि देहस्य तत एव तत्प्रवृत्तिर्भविष्यति, किमदृष्टकार्मणदेहपरिकल्पनेन?। अस्त्वेवमिति चेत्। तदयुक्तम्, अचेतनानामेवंभूतप्रतिनियतविशिष्टपरिस्पन्दनस्य स्वाभाविकत्वानुपपत्तेः, "नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्" इत्यादिदोषप्रसङ्गात्। तस्मात् कर्मविशिष्ट आत्मैव प्रतिनियतदेहपरिस्पन्दनहेतुत्वेन व्याप्रियत इति सक्रियोऽसाविति ॥ १८४७ ॥ १८४८ ॥

भवतु तर्हि भवस्थस्य सकर्मणो जीवस्य क्रिया, मुक्तस्य तु कथमसौ?, इत्याशङ्क्य परिहरन्नाह—

[2]होउ किरिया भवत्थस्स कम्मरहियस्स किंनिमित्ता सा?। नणु तग्गइपरिणामा जह सिद्धत्तं तहा सा वि ॥१८४९॥

पूर्वार्धेनाक्षेपः, पश्चार्धेन तु परिहारः, प्राग् व्याख्यातार्थ एवेति ॥ १८४९ ॥

अपरस्त्वाह—

१ देहस्पन्दनहेतुर्भवेत् प्रयत्न इति सोऽपि नाक्रिये। भवेददृष्टो वा मतिस्तदरूपत्वे ननु समानम् ॥ १८४७ ॥
रूपित्वे स देहो वाच्यस्तत्स्पन्दने पुनर्हेतुः। प्रतिनियतपरिस्पन्दनमचेतनानां नापि च युक्तम् ॥ १८४८ ॥

२ भवतु क्रिया भवस्थस्य कर्मरहितस्य किंनिमित्ता सा?। ननु तद्गतिपरिणामाद् यथा सिद्धत्वं तथा सापि ॥ १८४९ ॥

नवरं जिनजन्म-दीक्षा-केवल-निर्वाणमहोत्सवनियोगेन तत्कर्तव्यतानियमेनेह देवा आगच्छेयुः । तत्र सौम्य ! केचिदिन्द्रादयो निजभक्त्या समागच्छन्ति, केचित् तु तदनुवृत्त्या, अन्ये संशयव्यवच्छेदार्थम्, अपरे तु पूर्वभविकपुत्र-मित्राद्यनुरागात् । समयनिबन्धः– प्रतिबोधादिनिमित्तः संकेतनिश्चयः, तस्माच्च केचिद् देवा इहागच्छन्ति । अन्ये तु महासत्त्वसाध्वादितपोगुणसमाकृष्टाः, केचित्तु पूर्ववैरिकनरगणपीडार्थम्, अपरे तु पूर्वसुहृत्-पुत्राद्यनुग्रहार्थम्, केचित्तु देवाः कन्दर्पादिभिरिहागच्छन्ति । आदिशब्दात् साध्व्यादिपरीक्षाहेतोरिति द्रष्टव्यमिति । तदेवं निरूपितं देवानामत्रागमनकारणम्, अनागमनकारणं च ॥ १८७६ ॥ १८७७ ॥

अथ देवसिद्धावन्यदपि कारणमाह—

[1]जाइस्सरकहणाओ कासइ पच्चक्खदरिसणाओ य । विज्जा-मंतो-वायणसिद्धीओ गहविगाराओ ॥१८७८॥

उक्किट्ठपुण्णसंचयफलभावाओऽभिहाणसिद्धीओ । सव्वागमसिद्धीउ य संति देव त्ति सद्धेयं ॥ १८७९ ॥

'सन्ति देवा इत्येतत् श्रद्धेयम्' इति प्रतिज्ञा, जातिस्मरणप्रत्ययितपुरुषेण कथनात्, नानादेशविचारिप्रत्ययितपुरुषावलोकितकथितविचित्रबृहद्देवकुलादिवस्तुवत्; तथा, कस्यापि तपःप्रभृतिगुणयुक्तस्य प्रत्यक्षदर्शनप्रवृत्तेश्च– केनचित् प्रत्यक्षप्रमाणेनोपलम्भादित्यर्थः, दूरविप्रकृष्टनगरादिवत्; तथा, विद्या-मन्त्रोपयाचनेभ्यः कार्यसिद्धेः, प्रसादफलानुमितराजादिवत्; तथा, 'गहविगाराउ त्ति' अत्र प्रयोगः– ग्रहाधिष्ठितपुरुषदेहो जीवव्यतिरिक्तादृश्यवस्त्वधिष्ठातृकः, पुरुषासंभाव्यविकारवत्क्रियादर्शनात्, संचरिष्णुयन्त्रव्यतिरिक्तमध्यप्रविष्टादृश्यमानपुरुषाधिष्ठितयन्त्रवत्; तथा, तपो-दानादिक्रियासमुपार्जितोत्कृष्टपुण्यसंभारफलसद्भावात्, उत्कृष्टपापप्राग्भारफलसद्भावनिश्चितनारकवत्, एतच्च प्रागेव भावितम् । तथा, 'देवाः' इति यदभिधानं ततोऽपि च देवानां सिद्धिः । एतच्चानन्तरगाथायां व्यक्तीकरिष्यते । तथा, सर्वे च त आगमाश्च सर्वागमास्तेष्वविप्रतिपत्त्या सिद्धत्वाच्च सन्ति देवा इति ॥१८७८॥१८७९॥

यदुक्तम्– 'अभिहाणसिद्धीउ त्ति' तद् भावयन्नाह—

[2]देव त्ति सत्थयमिदं सुद्धत्तणओ घडाभिहाणं व । अह व मई मणुउ च्चिय देवो गुण-रिद्धिसंपण्णो ॥१८८०॥

---

१ जातिस्मरकथनात् कस्यचित् प्रत्यक्षदर्शनाच्च । विद्या मन्त्रोपयाचनसिद्धेर्ग्रहविकारात् ॥ १८७८ ॥
उत्कृष्टपुण्यसंचयफलभावादभिधानसिद्धेः । सर्वागमसिद्धेश्च सन्ति देवा इति श्रद्धेयम् ॥ १८७९ ॥
२ देवा इति सार्थकमिदं शुद्धत्वतो घटाभिधानमिव । अथवा मतिर्मनुज एव देवो गुण-र्द्धिसपन्नः ॥ १८८० ॥

[1]किं सिद्धालयपरओ न गई, धम्मात्थिकायविरहाओ। सो गइउवग्गहकरो लोगम्मि जमत्थि नालोए ॥१८५०॥

यद्युक्तन्यायेन मुक्तस्य गतिक्रियया सक्रियत्वमिष्यते, तर्हि सिद्धालयात् सिद्धावस्थितिक्षेत्रात् परतोऽलोकेऽपि किमिति तस्य गतिर्न प्रवर्तते ?। अत्रोच्यते– परतो धर्मास्तिकायविरहात्। तद्विरहोऽपि कुतः ? इत्याह– यद् यस्मादसौ धर्मास्तिकायो लोक एव समस्ति, नालोके। मा भूदसावलोके, किं तेन प्रस्तुतानुपयोगिना कर्तव्यम्, तद्विरहेऽपि भवतु मुक्तस्य तत्र गतिः, नियमाभावात् ?। तदयुक्तम्, यतो जीवानां पुद्गलानां च गतेर्गमनस्योपग्रह उपष्टम्भस्तत्कारी स एव धर्मास्तिकायो नान्यः, ततस्तस्यालोकेऽभावात् कथं लोकात् परतोऽलोकेऽपि मुक्तात्मनां गतिः प्रवर्तते ? इति ॥ १८५० ॥

कथं पुनरेतदवसीयते यदुत– लोकादन्योऽप्यलोकपदार्थः कश्चिदस्ति ? इत्याशङ्क्याह—

[2]लोगस्स त्थि विवक्खो सुद्धत्तणओ घडस्स अघडो व्व। स घडाइ च्चिय मई न निसेहाओ तदणुरूवो ॥ १८५१॥

अस्ति लोकस्य विपक्षः, व्युत्पत्तिमच्छुद्धपदाभिधेयत्वात्, इह यद् व्युत्पत्तिमता शुद्धपदेनाभिधीयते तस्य विपक्षो दृष्टः, यथा घटस्याघटः, यश्च लोकस्य विपक्षः सोऽलोकः। अथ स्यान्मतिः– 'न लोकोऽलोकः' इति यो लोकस्य विपक्षः स घटादिपदार्थानामन्यतम एव भविष्यति, किमिह वस्त्वन्तरपरिकल्पनया ?। तदेतद् न, पर्युदासनञा निषेधाद् निषेध्यस्यैवानुरूपोऽत्र विपक्षोऽन्वेषणीयः, 'न लोकोऽलोकः' इत्यत्र च लोको निषेध्यः, स चाकाशविशेषः, अतोऽलोकेनापि तदनुरूपेण भवितव्यम्, यथा 'इहापण्डितः' इत्युक्ते विशिष्टज्ञानविकलश्चेतन एव पुरुषविशेषो गम्यते, नाचेतनो घटादिः, एवमिहापि लोकानुरूप एवालोको मन्तव्यः। उक्तं च–

"नञ्युक्तमिवयुक्त वा यद्धि कार्यं विधीयते। तुल्याधिकरणेऽन्यस्मिँल्लोकेऽप्यर्थगतिस्तथा ॥ १ ॥"

"नञ्-इवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः"। तस्माल्लोकविपक्षत्वादस्त्यलोक इति ॥ १८५१ ॥

अथालोकास्तित्वादेव धर्मा-ऽधर्मास्तिकायौ साधयन्नाह—

[3]तम्हा धम्मा-ऽधम्मा लोयपरिच्छेयकारिणो जुत्ता। इहरागासे तुल्ले लोगोऽलोगो त्ति को भेओ ? ॥१८५२॥

१ किं सिद्धालयपरतो न गतिः, धर्मास्तिकायविरहात्। स गत्युपग्रहकरो लोके यदस्ति नालोके ॥ १८५० ॥
२ लोकस्यास्ति विपक्षः शुद्धत्वतो घटस्याघट इव। स घटादिरेव मतिर्न निषेधात् तदनुरूप. ॥ १८५१ ॥
३ तस्माद् धर्मा-ऽधर्मौ लोकपरिच्छेदकारिणौ युक्तौ। इतरथाकाशे तुल्ये लोकोऽलोक इति को भेद· ? ॥ १८५२ ॥

[1]तं न जउ तच्चत्थे सिद्धे उवयारओ मया सिद्धी । तच्चत्थसीह सिद्धे माणवसीहोवयारो व्व ॥१८८१॥

'देवाः' इत्येतत् पदं सार्थकं व्युत्पत्तिमच्छुद्धपदत्वात्, घटादिवत् । तत्र दीव्यन्तीति देवा इति व्युत्पत्तिमत्त्वम्, समास-तद्धितरहितत्वेन च शुद्धत्वम् । भावना चात्र प्रागुक्तैव । अथ परस्य मतिर्भवेत्– ननु मनुष्य एवेह दृश्यमानो देवो भविष्यति, किमदृष्ट-देवकल्पनया ? । किं सर्वोऽपि मनुष्यो देवः ? इति । न, इत्याह– गुणसंपन्नो गणधरादिः, ऋद्धिसंपन्नश्चक्रवर्त्यादिः । अत्रोच्यते– तदेतद् न, यस्मात् तथ्ये मुख्ये वस्तुनि क्वचित् सिद्धे सत्यन्यत्रोपचारतस्तत्सिद्धिर्मता, यथा मुख्ये यथार्थे सिंहेऽन्यत्र सिद्धे ततो माणवके सिंहोपचारः सिध्यति, एवमिहापि यदि मुख्या देवाः क्वचित् सिद्धा भवेयुः, तदा राजादेर्देवोपचारो युज्यते, नान्यथेति ॥ १८८० ॥ १८८१ ॥

देवाभावे चाग्निहोत्रक्रियाणां वैफल्यमिति दर्शयन्नाह—

[2]देवाभावे विफलं जमग्गिहोत्ताइयाण किरियाणं । सग्गीयं जन्नाण य दाणाइफलं च तदजुत्तं ॥१८८२॥

'वा' इत्यथवा, इदं दूषणम्– देवाभावेऽभ्युपगम्यमाने यदग्निहोत्रादिक्रियाणाम् "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादिना स्वर्गीयं फलमुक्तम्, तथा, यज्ञानां च यत् फलमभिहितं, दानादिफलं च यत् समस्तलोके प्रसिद्धम्, तत् सर्वमयुक्तं प्राप्नोति । स्वर्गो ह्येतेषां फलमुक्तम्, स्वर्गिणां चाभावे कुतः स्वर्गः ? इति । "स एष यज्ञायुधी" इत्यादीनि च वेदवाक्यानि देवास्तित्वप्रतिपादनपराणि वर्तन्ते । अतः किं तान् न प्रतिपद्यसे ?। यदपि "को जानाति मायोपमान् गीर्वाणानिन्द्र-यम-वरुण कुबेरादीन्" इत्यादि वाक्यम्, तदपि न देवनास्तित्वाभिधायकम्, किन्तु सुराणामपि मायोपमत्वाभिधानेन शेषर्द्धिसमुदायानां सुतरामनित्यत्वप्रतिपादकं बोद्धव्यम्; अन्यथा हि देवास्तित्वप्रतिपादकवाक्यानि, श्रुतिमन्त्रपदैरिन्द्रादीनामाह्वानं चानर्थकं स्यात् ॥ १८८२ ॥

एतदेवाह—

[3]जम-सोम-सूर-सुरगुरु-सारज्जाईणि जयइ जण्णेहिं । मंतावाहणमेव य इंदाईणं विहा सव्वं ॥ १८८३ ॥

---

१ तद् न यतस्तथ्यार्थे सिद्ध उपचारतो मता सिद्धिः । तथ्यार्थसिंहे सिद्धे माणवसिंहोपचार इव ॥ १८८१ ॥
२ देवाभावे विफलं यदग्निहोत्रादिकाना क्रियाणाम् । स्वर्गीयं यज्ञाना च दानादिफलं च तदयुक्तम् ॥ १८८२ ॥
३ यम-सोम-सूर-सुरगुरु स्वाराज्यादीनि जयति यज्ञैः । मन्त्राह्वानमेव चेन्द्रादीनां वृथा सर्वम् ॥ १८८३ ॥

[1]लोगविभागाभावे पडिघायाभावओऽणवत्थाओ । संववहाराभावो संबंधाभावओ होज्जा ॥ १८५३ ॥

यस्मादुक्तप्रकारेणास्त्यलोकः, तस्मादलोकास्तित्वादेवावश्यं लोकपरिच्छेदकारिभ्यां धर्मा-ऽधर्मास्तिकायाभ्यां भवितव्यम् ; अन्यथाऽऽकाशे सामान्ये सति 'अयं लोकः' 'अयं चालोकः' इति किंकृतोऽयं विशेषः स्यात् ? । तस्माद् यत्र क्षेत्रे धर्मा-ऽधर्मास्तिकायौ वर्तेते, तल्लोकः, शेषं त्वलोक इति लोका-ऽलोकव्यवस्थाकारिणौ धर्मा-ऽधर्मास्तिकायौ विद्येते इति । 'लोगेत्यादि' यदि हि धर्मा-ऽधर्माभ्यां लोकविभागो न स्यात् , ततो लोकविभागाभावेऽविशिष्ट एव सर्वास्मिन्नप्याकाशे गतिपरिणतानां जीवानां पुद्गलानां च प्रतिघाताभावेन तद्गत्यवस्थानाभावादलोकेऽपि गमनात् , तस्य चानन्तत्वात् तेषां परस्परं संबन्धो न स्यात् । ततश्चौदारिकादिकार्मणवर्गणापर्यन्तपुद्गलकृतो जीवानां बन्ध-मोक्ष-सुख-दुःख-भवसंसरणादिव्यवहारो न स्यात् । जीवस्य च जीवेन सहान्योन्यमीलनाभावात् तत्कृतोऽनुग्रहो-पघातादिव्यवहारो न स्यादिति ॥ १८५२ ॥ १८५३ ॥

ततः किम् ? इत्याह—

[2]निरणुग्गहत्तणाओ न गई परओ जलादिव झसस्स । जो गमणाणुग्गहिया सो धम्मो लोगपरिमाणो ॥१८५४॥

ततो लोकात् परतोऽलोके जीव-पुद्गलानां न गतिः, निरनुग्रहत्वात्– तत्र गत्यनुग्रहकर्तुरभावादित्यर्थः, यथा जलात् परतो झषस्य मत्स्यस्य गतिर्न भवति, उपग्राहकाभावादिति । यश्चात्र जीव-पुद्गलगतेरनुग्रहकर्ता, स लोकपरिमाणो धर्मास्तिकाय इति ॥१८५४॥

तत्र प्रयोगमाह—

[3]अत्थि परिमाणकारी लोगस्स पमेयभावओऽवस्सं । नाणं पिव नेयस्सालोगत्थित्ते य सोऽवस्सं ॥ १८५५ ॥

अस्ति लोकस्य परिमाणकारी, प्रमेयत्वात् , ज्ञानमिव ज्ञेयस्य । अथवा, जीवाः पुद्गलाश्च लोकोऽभिधीयते, ततोऽस्ति तत्परिमाणकारी, प्रमेयत्वात् , यथा शाल्यादीनां प्रस्थः, यश्चेह परिमाता स धर्मास्तिकायः, स चावश्यमलोकस्यास्तित्व एव युज्यते, नान्यथा, आकाशस्य सर्वत्राविशिष्टत्वात् । तस्माल्लोकाग्रे सिद्धस्यावस्थानमिति प्रस्तुतम् ॥ १८५५ ॥

१ लोकविभागाभावे प्रतिघाताभावतोऽनवस्थातः । संव्यवहाराभावः संबन्धाभावतो भवेत् ॥ १८५३ ॥
२ निरनुग्रहत्वाद् न गतिः परतो जलादिव झषस्य । यो गमनानुग्रहीता स धर्मो लोकपरिमाण. ॥ १८५४ ॥
३ अस्ति परिमाणकारी लोकस्य प्रमेयभावतोऽवश्यम् । ज्ञानमिव ज्ञेयस्यालोकास्तित्वे च सोऽवश्यम् ॥ १८५५ ॥

'जमित्यादि' पूर्वार्धस्यायमर्थः– उक्थषोडशिप्रभृतिक्रतुभिर्यथाश्रुति "यम-सोम-सूर्य-सुरगुरु-स्वाराज्यानि जयति" इत्यादीनि देवास्तित्वसूचकानि वेदवाक्यानि देवाभावे वृथैव स्युः। इह चोक्थषोडशिप्रभृतयो यज्ञविशेषा मन्तव्याः। सयूपो यज्ञ एव हि क्रतुरुच्यते, यूपरहितस्तु दानादिक्रियायुक्तो यज्ञ इति। स्वः– स्वर्गः, तत्र राज्यानि जयति– उपार्जयतीत्यर्थ इति। तथा, मन्त्रैरिन्द्रादीनामाह्वानं देवास्तित्व एवोपपद्यते, अन्यथा वृथैव स्यात्। इन्द्रादीनां मन्त्रपदैराह्वानमेवमवगन्तव्यम्– "इन्द्र! आगच्छ मेधातिथे मेषवृषण" इत्यादि। तस्माद् युक्तितो वेदवाक्येभ्यश्च 'सन्ति देवाः' इति स्थितम्। तदेवं छिन्नो मौर्यपुत्रस्य भगवता संशयः ॥१८८३॥

ततः किं कृतवानसौ? इत्याह—

[1]छिन्नम्मि संसयम्मी जिणेण जर-मरणविप्पमुक्केणं। सो समणो पव्वइओ अद्धुट्ठेहि सह खंडियसएहिं ॥१८८४॥

व्याख्या पूर्ववत्। इत्येकविंशतिगाथार्थः ॥ १८८४ ॥

॥ इति सप्तमो गणधरवादः समाप्तः ॥

अष्टमगणधरवक्तव्यतामाह—

[2]ते पव्वइए सोउं अकंपिओ आगच्छई जिणसगासं। वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥१८८५॥

व्याख्या तथैव, नवरमकम्पितनामा द्विजोपाध्यायोऽत्र वक्तव्यः ॥ १८८५ ॥

ततः किम्? इत्याह—

[3]आभट्ठो य जिणेणं जाइ-जरा-मरणविप्पमुक्केणं। नामेण य गोत्तेण य सव्वण्णू सव्वदरिसी णं ॥१८८६॥

व्याख्याता तथैवेति ॥ १८८६ ॥

नाम-गोत्राभ्यामाभाष्य ततोऽसौ भगवता किमुक्तः? इत्याह—

[4]किं मण्णे नेरइया अत्थि नत्थि त्ति संसओ तुज्झं। वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥ १८८७ ॥

1. गाथा १८६३। 2. तान् प्रव्रजितान् श्रुत्वाऽकम्पित आगच्छति जिनसकाशम्। व्रजामि वन्दे वन्दित्वा पर्युपासे ॥ १८८५ ॥ 3. गाथा १६०९। 4. किं मन्यसे नैरयिकाः सन्ति न सन्तीति संशयस्तव। वेदपदानां चार्थं न जानासि तेषामयमर्थः ॥ १८८७ ॥

अथ प्रकारान्तरेणाक्षेप-परिहारौ आह—

[1]पयणं पसत्तमेवं थाणाओ तं च नो जओ छट्ठी। इह कत्तिलक्खणेयं कत्तुरणत्थंतरं थाणं ॥ १८५६ ॥

ननु 'स्थीयतेऽस्मिन्निति स्थानम्' इत्यधिकरणसाधनोऽयं शब्दः। ततश्च सिद्धस्य स्थानं सिद्धस्थानमिति समासः। ततश्चैवं सति सिद्धस्य पतनं प्रसक्तम्, स्थानात्, पर्वत-पादपाद्यग्रस्थितदेवदत्तस्येव, फलस्येव वा। यस्य किल क्वापि पर्वतादावत्रस्थानं, तस्य कदाचित् कस्यापि पतनमपि दृश्यते; अतः सिद्धस्यापि तत् कदाचित् प्राप्नोतीति भावः। तच्च न, यतः 'सिद्धस्य स्थानम्' इतीयं कर्तरि षष्ठी। ततश्च 'सिद्धस्य स्थानम्' इति कोऽर्थः?— सिद्धस्तिष्ठति, न तु तदर्थान्तरभूतं स्थानमस्तीति ॥१८५६ ॥

अथवा,

[2]नहनिच्चत्तणओ वा थाणविणासपयणं न जुत्तं से। तह कम्माभावाओ पुणक्रियाभावओ वा वि ॥ १८५७ ॥

अर्थान्तरत्वेऽपि स्थानस्य न पतनं सिद्धस्य, यतोऽस्यार्थान्तरं स्थानं नभ एव, तस्य च नित्यत्वाद् विनाशो न युक्तः, तदभावे च कुतः पतनं मुक्तस्य?। कर्म चात्मनः पतनादिक्रियाकारणम्, मुक्तस्य च कर्माभावात् कुतः पतनक्रिया?। या च समयमेकमस्याप्यूर्ध्वं गतिक्रिया, तस्याः कारणं [3]'लाउ य एरंडफले' इत्यादिना दर्शितमेव। पुनःक्रिया च मुक्तस्य नास्ति, कारणाभावात्। निजप्रयत्न-प्रेरणा-ऽऽकर्षण-विकर्षण-गुरुत्वादयो हि पतनकारणम्, तत्संभवश्च मुक्तस्य नास्ति, हेतोरभावात्, इति कुतोऽस्य पतनम्? इति ॥१८५७॥

किञ्च, 'स्थानात् पतनम्' इत्यनैकान्तिकमेवेति दर्शयति—

[4]निच्चथाणाओ वा वोमाईणं पडणं पसज्जेज्जा। अह न मयमणेगंतो थाणाओऽवस्स पडणं ति ॥१८५८॥

ननु च 'स्थानात् पतनम्' इति स्ववचनविरुद्धमिदम्, अस्थानादेव पतनस्य युज्यमानत्वात्। अथ स्थानादपि पतनमिष्यते, तर्हि नित्यमेव स्थानाद् व्योमादीनां पतनं प्रसज्येत। अथ न तत् तेषां मतम्, तर्हि 'स्थानात् पतनम्' इत्यनैकान्तिकमेवेति ॥१८५८॥

अथान्येन प्रकारेण प्रेर्यमाशङ्क्य परिहरन्नाह—

---

१ पतनं प्रसक्तमेवं स्थानात् तच्च नो यत. षष्ठी। इह कर्तृलक्षणेय कर्तुरनर्थान्तर स्थानम् ॥ १८५६ ॥

२ नभोनित्यत्वतो वा स्थानविनाशपतन न युक्त तस्य। तथा कर्माभावात् पुन.क्रियाभावतो वापि ॥ १८५७ ॥ ३ पृ० ७७२।

४ नित्यस्थानाद् वा व्योमादीनां पतन प्रसज्येत। अथ न मतमनेकान्त. स्थानादवश्य पतनमिति ॥ १८५८ ॥

किं नारकाः सन्ति, नवा ? इति त्वं मन्यसे। अयं च तत्र संशयो विरुद्धवेदपदश्रवणनिबन्धनः; तथाहि– "नारको वै एष जायते यः शूद्रान्नमश्नाति" इत्यादि– एष ब्राह्मणो नारको जायते यः शूद्रान्नमश्नातीत्यर्थः, इत्यादीनि वाक्यानि नारकसत्ताप्रतिपादकानि; "न ह वै प्रेत्य नारकाः सन्ति" इत्यादीनि तु नारकाभावप्रतिपादकानि। तत्रैषां वेदपदानामर्थं, चशब्दाद् युक्तिहृदयं च त्वं न जानासि, यत एतेषामयं वक्ष्यमाणोऽर्थ इति ॥ १८८७ ॥

अत्र भाष्यम्—

[1]तं मन्नसि पच्चक्खा देवा चंदादओ तहन्ने वि। विज्जा-मंतोवायणफलाइसिद्धीए गम्मंति ॥ १८८८॥

जे पुण सुइमेत्तफला नेरइय त्ति किह ते गहेयव्वा। सक्खमणुमाणओ वाऽणुवलंभा भिन्नजाईया ? ॥१८८९॥

हे आयुष्मन्नकम्पित ! त्वमेवं मन्यसे– देवास्तावच्चन्द्रादयः प्रत्यक्षप्रमाणसिद्धा एव, अन्ये त्वप्रत्यक्षा अपि विद्या-मन्त्रोपयाचितकादिफलसिद्ध्याऽनुमानतो गम्यन्ते; ये पुनः 'नारकाः' इत्यभिधानमात्ररूपा श्रुतिरेव फलं येषां, न पुनस्तदभिधायकशब्दव्यतिरिक्तोऽर्थः, ते साक्षात्, अनुमानतो वाऽनुपलभ्यमानत्वेन तिर्यग्-नरा-ऽमरेभ्यः सर्वथा भिन्नजातीयाः कथं 'सन्ति' इति ग्रहीतव्याः, खरविषाणवत् ? इति ॥ १८८८ ॥ १८८९ ॥

[2]अथ भगवानुत्तरमाह—

[3]मह पच्चक्खत्तणओ जीवाई य व्व नारए गिण्ह। किं जं सपच्चक्खं तं पच्चक्खं नवरि[4] इक्कं ? ॥१८९०॥

जं कासइ पच्चक्खं पच्चक्खं तं पि घेप्पए लोए। जह सीहाइदरिसणं सिद्धं न य सव्वपच्चक्खं ॥१८९१॥

हे आयुष्मन्नकम्पित ! 'साक्षादनुपलभ्यमानत्वात्' इत्यसिद्धो हेतुः, यतोऽहं केवलप्रत्यक्षेण साक्षादेव पश्यामि नारकान्, ततो मत्प्रत्यक्षत्वात् 'सन्ति' इति गृहाण प्रतिपद्यस्व नारकान्, जीवा-ऽजीवादिपदार्थवत्। अथैवं मन्यसे– ममाप्रत्यक्षत्वात् कथमेतान्

1 त्वं मन्यसे प्रत्यक्षा देवाश्चन्द्रादयस्तथान्येऽपि। विद्या-मन्त्रोपायनफलादिसिद्धेर्गम्यन्ते ॥ १८८८ ॥
ये पुन श्रुतिमात्रफला नैरयिका इति कथ ते ग्रहीतव्या'। साक्षादनुमानतो वाऽनुपलम्भाद् भिन्नजातीया. ? ॥१८८९॥ २ घ ज. 'अत्र भ'।
३ मम प्रत्यक्षत्वतो जीवादींश्चव नारकान् गृहाण। किं यत् स्वप्रत्यक्ष तत् प्रत्यक्षं नवरमेकम् ? ॥ १८९० ॥
यत् कस्यचित्प्रत्यक्ष प्रत्यक्ष तदपि गृह्यते लोके। यथा सिंहादिदर्शन सिद्ध न च सर्वप्रत्यक्षम् ॥ १८९१ ॥ ४ घ ज झ 'रि एक्कं'।

खीरं न देइ सम्मं परत्थनिओगओ जहा गावी । छड्डेज्ज व परदुद्धं करिज्ज देहोवरोहं वा ॥ १ ॥
तह न चरणं पसूते परपज्जायविणिओगओ दव्वं । पुव्वचरणोवघायं करेइ देहोवरोहं वा ॥ २ ॥
जिणवयणासायणओ उम्माया-ऽऽतंक-मरणवसणाइं । पावेज्ज सव्वलोयं स बोहिलाहोवघायं च ॥ ३ ॥
दव्वविवज्जासाउ साहणभेओ तओ चरणभेओ । तत्तो मोक्खाभावो मोक्खाभावेऽफला दिक्खा ॥ ४ ॥
सम्मं पयं पयच्छइ सव्वत्थविणिओगओ जहा धेणू । तह सयपज्जवजोए दव्वं चरणं जओ मोक्खो ॥ ५ ॥
एवं खेत्ताईसु वि सधम्मविणिओगओऽणुओय त्ति । विवरीए विवरीओ सोदाहरणोऽणुगंतव्वो ॥ ६ ॥
नियओ व निच्छिओ वा हिओ व जोगो मओ निओगो त्ति । नेओ सभेअ-लक्खण-सोदाहरणोऽणुओगो व्व ७
भासा वत्ता वाया सुयवत्तीभावमित्तयं सा य । सुयभावमित्तयं जह सामाइयमिहेवमाईयं ॥ ८ ॥
विविहा विसेसओ वा होइ विभासा दुगाइपज्जाया । जह सामइयं समओ सामाओ वा समाओ वा ॥ ९ ॥
वित्तीए वक्खाणं वत्तियमिह सव्वपज्जवेहिं वा । वित्तीओ वा जायं जम्मि वा जह वत्तए सुत्ते ॥ १० ॥
उक्कोसयसुयनाणी निच्छयओ वत्तियं वियाणाइ । जो वा जुगप्पहाओ तओ य जो गिण्हए सव्वं ॥ ११ ॥
ऊणं सममहियं वा भणियं भासंति भासगाइया । अहवा तिण्णवि साहेज्ज कट्ठकम्माइनाएहिं ॥ १२ ॥

**कट्ठे पोत्थे चित्ते सिरिघरिए वोंड-देसिए चेव ।**
**भासग-विभासए वा वित्तीकरणे य आहरणा ॥ १२८ ॥**

पढमो रूवागारं थूलावयवोवदंसणं बीओ । तइओ सव्वावयवे निद्दोसे सव्वहा कुणइ ॥ १ ॥
कट्ठसमाणं सुत्तं तदत्थरूवेगभासणं भासा । थूलत्थाण विभासा सव्वेसिं वत्तियं नेयं ॥ २ ॥
पोत्थं दिट्ठागारं दिट्ठावयवं समत्तपज्जायं । जह, तह सुत्तं भासा विभासणं वत्तियं चेव ॥ ३ ॥

कुड्डे वत्तीलिहियं वण्णुब्भिन्नं समत्तपज्जायं । जह, तह सुत्तं भासा विभासणं वत्तियं चरिमं ॥ ४ ॥
भाणे जाई-माणं गुणे य रयणाणं मुणइ सिरिघरिओ । जह, तह सुयभाणे भासगादओ अत्थरयणाणं ॥ ५ ॥
वोंडं विभिन्नमीसं दरफुल्लं वियसियं विसेसेण । जह कमलं चउरूवं सुत्ताइचउक्कमप्पेवं ॥ ६ ॥
पंथो दिसाविभागो गाम-पुराइगुण-दोसपेयालं । जह, पहदेसणमेवं सुत्तं भासाइतियं च ॥ ७ ॥
एयस्स कोणु जोग्गो वोत्तं सोउं च, केण विहिणा वा ? । पुव्वोइयसंबंधो वक्खाणविही विभागाओ ॥ ८ ॥

**गोणी चंदणकंथा चेडीओ सावए बहिरगोहे ।**
**टंकणओ ववहारो पडिवक्खे आयरिय-सीसे ॥ १२९ ॥**

भग्गनिविट्ठं गोणिं केउं दंतो व्व न सुयमायरिओ । एवं मए वि गहियं गिण्हि तुमं पि त्ति जंपंतो ॥ १ ॥
अविगलगोविक्केया व जो वि मदक्खमो सुगंभीरो । अक्खेवनिण्णयपसंगपारओ सो गुरू जोग्गो ॥ २ ॥
सीसो वि पहाणयरो णेगंताणावियारियग्गाही । सुपरिच्छियकेया इव त्थाणवियारक्खमो इट्ठो ॥ ३ ॥
जो सीसो सुत्तत्थं चंदणकंथं व परमयाईहिं । मीसेइ गलियमहवा सिक्खियमाणेण स न जोग्गो ॥ ४ ॥
कंथीकयसुत्तत्थो गुरू वि जोग्गो न भासियव्वस्स । अविणासियसुत्तत्था सीसा-यरिया विणिद्दिट्ठा ॥ ५ ॥
अत्थाणत्थनिउत्ताभरणाणं जिण्णसेट्ठिधूय व्व । न गुरू विहिभणिए वा विवरीयानिओयओ सीसो ॥ ६ ॥
सत्थाणत्थनिउत्ता ईसरधूया सभूसणाणं व । होइ गुरू सीसोऽवि य विणिओएंतो जहाभणियं ॥ ७ ॥
चिरपरिचियं पि न सरइ सुत्तत्थं सावओ सभज्जं व । जो न स जोग्गो सीसो गुरुत्तणं तस्स दूरेणं ॥ ८ ॥
अन्नं पुट्ठो अन्नं जो साहइ सो गुरू न बहिरु व्व । न य सीसो जो अन्नं सुणेइ परिभासए अन्नं ॥ ९ ॥
अक्खेव-निण्णय-पसंगदाणगहणाणुवत्तिणो दो वि । जोग्गा सीसायरिया टंकण-वणिओवमा समए ॥ १० ॥

गृह्णामि ? । ननु दुरभिप्रायोऽयम्, यतः किं यत् स्वस्यात्मनः प्रत्यक्षं तदेवैकं नवरं प्रत्यक्षमुच्यते ? इति काका नेयम् । ननु यदपि कस्यचित् प्रत्ययितपुरुषस्यान्यस्य प्रत्यक्षं तदपि 'प्रत्यक्षम्' इति गृह्यते व्यवह्रियते लोके; तथाहि– सिंह-सरभ-हंसादिदर्शनं सिद्धं प्रसिद्धं लोके, न च सिंहादयः सर्वजनप्रत्यक्षाः, देश-काल ग्राम-नगर-सरित्-समुद्रादयश्च न सर्वेऽपि भवतः प्रत्यक्षाः, अथ चान्यस्यापि प्रत्यक्षास्ते प्रत्यक्षतया व्यवह्रियमाणा दृश्यन्ते । अतो मत्प्रत्यक्षा नारकाः किमिति प्रत्यक्षतया न व्यवह्रियन्ते ? इति ॥१८९०॥१८९१॥

अथाभिप्रायान्तरमाशङ्क्य परिहरन्नाह—

अहवा[1] जमिंदियाणं पच्चक्खं किं तदेव पच्चक्खं ?। उवयारमेत्तओ तं पच्चक्खमणिंदियं तत्थं ॥१८९२॥

अथवा, किं यदिन्द्रियाणां प्रत्यक्षं तदेव प्रत्यक्षमिष्यते भवता, मदीयं तु प्रत्यक्षं नाभ्युपगम्यते, अतीन्द्रियत्वात् ? । ननु महानयं विपर्यासः, यस्मादुपचारमात्रत एव तदिन्द्रियप्रत्यक्षं प्रत्यक्षतया व्यवह्रियते– यथाऽनुमाने बाह्यधूमादिलिङ्गद्वारेण बाह्यमग्न्यादि वस्तु ज्ञायते, नैवमत्र, तत उपचारात् प्रत्यक्षमिव प्रत्यक्षमुच्यते । परमार्थतस्तु– इदमपि परोक्षमेव, यतोऽक्षो जीवः, स चानुमानवदत्रापि वस्तु साक्षाद् न पश्यति, किन्त्विन्द्रियद्वारेणैव, ततोऽतीन्द्रियमेव तथ्यं प्रत्यक्षमवगन्तव्यम्, तत्र जीवेन साक्षादेव वस्तुन उपलम्भादिति ॥ १८९२ ॥

अत्राह– नन्विन्द्रियप्रत्यक्षे यद्यपि जीवः साक्षाद् वस्तु न जानाति, तथापीन्द्रियाणि साक्षात् तज्ज्ञास्यन्ति, ततश्चेन्द्रियाणां प्रत्यक्षमिन्द्रियप्रत्यक्षं भविष्यति, इत्याशङ्क्याह—

मुत्ताइभावओ[2] नोवलद्धिमंतिंदियाइं कुंभो व्व । उवलंभद्दाराणि ताइं जीवो तदुवलद्धा ॥ १८९३ ॥

नोपलब्धिमन्तीन्द्रियाणि– न वस्तुज्ञायकानीत्यर्थः, पुद्गलसंघातरूपत्वेन मूर्तत्वात्, आदिशब्दादचेतनत्वात्, कुम्भवत् । नवरमुपलम्भस्य श्रोत्रादिज्ञानस्य द्वाराणि भवन्त्यमूनि, गवाक्षवत्, तत्सापेक्षस्यैव क्षयोपशमस्य प्रबोधात् । जीव एव च तदुपलब्धा वस्तूपलब्धा ॥ १८९३ ॥

जीवस्य, इन्द्रियाणां चाभेद एवेति चेत् । नैवम् । कुतः ? इत्याह—

१ अथवा यदिन्द्रियाणां प्रत्यक्षं किं तदेव प्रत्यक्षम् ? । उपचारमात्रतस्तत् प्रत्यक्षमनिन्द्रिय तथ्यम् ॥ १८९२ ॥
२ मूर्तादिभावतो नोपलब्धिमन्तीन्द्रियाणि कुम्भ इव । उपलम्भद्वाराणि तानि जीवस्तदुपलब्धा ॥ १८९३ ॥

मित्यादि' सौम्य! तुल्या-ऽतुल्यत्वे सर्वगतेऽपि यद् यस्मात् कारणस्य कार्यं स्वपर्यायः, तस्मात् कारणं कार्यस्येहानुरूपमुच्यते, शेषस्त्वकार्यरूपः सर्वोऽपि पदार्थः कारणस्य परपर्यायः, इति तं प्रति विवक्षितं कारणमसमानरूपमभिधीयते। आह– ननु कथं प्रस्तुते सुख-दुःखे कारणस्य स्वपर्यायः?। उच्यते– जीव-पुण्यसंयोगः सुखस्य कारणम्, तस्य च सुखं पर्याय एव, दुःखस्यापि जीव-पापसंयोगः कारणम्, अतस्तस्यापि दुःखं पर्याय एव, यथा च सुखं शुभं, कल्याणं, शिवमित्यादीन् व्यपदेशाँल्लभते तथा तत्कारणभूतं पुण्यस्कन्धद्रव्यमपि; यथा च दुःखमशुभम्, अकल्याणम्, अशिवमित्यादिसंज्ञाः प्राप्नोति तथा तत्कारणभूतं पापद्रव्यमपि, इति विशेषतोऽत्र पुण्य-पापे सुख दुःखयोरनुरूपकारणत्वेनोक्ते इति ॥ १९२४ ॥

अथ परः प्रेर्यं चिकीर्षुस्तदवकाशहेतोः पृच्छति—

[1]किं जह मुत्तममुत्तस्स कारणं तह सुहाईणं कम्मं। दिट्ठं सुहाइकारणमन्नाइ जहेह तह कम्मं? ॥ १९२५ ॥

किं यथा मूर्तं नीलादिकममूर्तस्य स्वप्रतिभासिज्ञानस्य कारणं हेतुस्तथा सुख-दुःखयोः पुण्य-पापात्मकं कर्मापि मूर्तमेव सत् कारणम्, यथा प्रत्यक्षत एव दृष्टमन्नादिकम्; आदिशब्दात् स्रक्-चन्दना-ऽङ्गना-ऽहि-विष-कण्टकादिकमिह सुख-दुःखयोर्मूर्तं सत् कारणं तद्वत् कर्मापि तयोरिति भावार्थः? ॥ १९२५ ॥

ततः किम्? इति चेत्। उच्यते—

[2]होउ तयं चिय किं कम्मणा, न जं तुल्लसाहणाणं पि। फलभेदओ सोऽवस्सं सकारणो कारणं कम्मं ॥१९२६॥

ननु तदेव दृष्टमन्नादिकं वस्तु तर्हि सुखादेः कारणमस्तु, किमदृष्टेन तेन कर्मणा परिकल्पितेन, अतिप्रसङ्गात्?। तदेतद् न, यद् यस्मात् तुल्यान्यन्नादीनि साधनानि येषां ते तुल्यसाधनाः पुरुषास्तेषामपि फले सुख-दुःखलक्षणे कार्यभेदः फलभेदो महान् दृश्यते, तुल्येऽप्यन्नादिके भुक्ते कस्याप्याह्लादः, अन्यस्य तु रोगाद्युत्पत्तिर्दृश्यत इत्यर्थः। यश्चेत्थं तुल्यान्नादिसाधनानामपि फलभेदः, सोऽवश्यमेव सकारणः, निष्कारणत्वे नित्यं सत्त्वा-ऽसत्त्वप्रसङ्गात्। यच्च तत्कारणं तददृष्टं कर्म, इति न तत्कल्पनाऽऽनर्थक्यमिति ॥ १९२६ ॥

---

१ किं यथा मूर्तममूर्तस्य कारणं तथा सुखादीनां कर्म। दृष्टं सुखादिकारणमन्नादि यथेह तथा कर्म? ॥ १९२५ ॥
२ भवतु तदेव किं कर्मणा, न यत् तुल्यसाधनानामपि। फलभेदत. सोऽवश्यं सकारणः कारण कर्म ॥ १९२६ ॥

तदुवरमे वि सरणओ तव्वावारे वि नोवलंभाओ । इंदियभिन्नो नाया पंचगवक्खोवलद्धा वा ॥ १८९४ ॥

इन्द्रियेभ्यो भिन्नो 'नाय त्ति' ज्ञाता जीवः, तदुपरमेऽपीन्द्रियोपरमेऽपि तद्द्वारोपलब्धार्थानुसमरणात्, तद्व्यापारेऽपीन्द्रियव्यापारेऽप्यन्यमनस्कतायामनुपलम्भात्; यथा पञ्चभिर्गवाक्षैरुपलब्धा वस्तूपलम्भकस्तेभ्यो भिन्न इति ॥ १८९४ ॥

अथेन्द्रियप्रत्यक्षमतीन्द्रियप्रत्यक्षाद् बहु पश्यति । तदयुक्तम् । कुतः ? इत्याह—

[2] जो पुण अणिंदिउ च्चिय जीवो सव्वप्पिहाणविगमाओ । सो सुबहुयं वियाणइ अवणीयघरो जहा दट्ठा ॥ १८९५ ॥

यः पुनरनिन्द्रिय एव केवलज्ञानसंपन्नो जीवः स इन्द्रियज्ञानवतो जीवात् सुबहु विजानातीति प्रतिज्ञा, सर्वापिधानविगमात्– सर्वावरणक्षयादित्यर्थः, यथा पञ्चगवाक्षगृहस्थितपुरुषात् सर्वथाऽपनीतगृहः सर्वत एवाऽऽकाशीकृतप्रदेशे स्थितो द्रष्टा पुरुष इति ॥ १८९५ ॥

अपिच, इन्द्रियजं ज्ञानं न भवत्येव प्रत्यक्षम् । कुतः ? इत्याह—

[3] न हि पच्चक्खं धम्मंतरेण तद्धम्ममेत्तगहणाओ । कयगत्तओ व सिद्धी कुंभाणिच्चत्तमेत्तस्स ॥ १८९६ ॥

न भवति प्रत्यक्षम् 'इन्द्रियजं ज्ञानम्' इति प्रक्रमाल्लभ्यते । चक्षुरादीन्द्रियस्य रूपादिपरिच्छेदशक्तिविशेषरूपेण धर्मान्तरेण हेतुभूतेन तस्यानन्तधर्मात्मकस्य वस्तुनो यद् रूपादिकमेकं धर्ममात्रं तस्य ग्रहणादिति हेतुः । किं तद् यथा न प्रत्यक्षम् ? इत्याह– यथा कृतकत्वाद् घटानित्यत्वमात्रसिद्धिलक्षणमनुमानमित्येष दृष्टान्तः । इह च यथा परस्मात् साध्यसिद्धौ नानुमानं प्रत्यक्षम्, तथेन्द्रियजमपि विज्ञानमित्येतावान् भावार्थ इति ॥ १८९६ ॥

प्रकारान्तरेणापीन्द्रियजज्ञानस्याप्रत्यक्षतां साधयन्नाह—

[4] पुव्वोवलद्धसंबंधसरणओ वानलो व्व धूमाओ । अहव निमित्तंतरओ निमित्तमक्खस्स करणाइं ॥ १८९७ ॥

---

१ तदुपरमेऽपि स्मरणतस्तद्व्यापारेऽपि नोपलम्भात् । इन्द्रियभिन्नो ज्ञाता पञ्चगवाक्षोपलब्धेव ॥ १८९४ ॥
२ य पुनरनिन्द्रिय एव जीवः सर्वपिधानविगमात् । स सुबहुकं विजानात्यपनीतगृहो यथा द्रष्टा ॥ १८९५ ॥
३ न हि प्रत्यक्ष धर्मान्तरेण तद्धर्ममात्रग्रहणात् । कृतकत्वत इव सिद्धि कुम्भानित्यत्वमात्रस्य ॥ १८९६ ॥
४ पूर्वोपलब्धसबन्धस्मरणतो वाऽनल इव धूमात् । अथवा निमित्तान्तरतो निमित्तमक्षस्य करणानि ॥ १८९७ ॥

मूर्तं च तत् कर्म। कुतः ? इत्याह—

[1]एत्तो च्चिय तं मुत्तं मुत्तबलाहाणओ जहा कुंभो। देहाइकज्जमुत्ताइओ व्व भणिए पुणो भणइ ॥ १९२७ ॥

यत एव तुल्यसाधनानां कर्मनिबन्धनः फलभेदः, अत एवोच्यते– मूर्तं कर्म, मूर्तस्य देहादेर्बलाधानकारित्वात्, कुम्भवत्, यथा निमित्तमात्रभावित्वेन घटो देहादीनां बलमाधत्ते, एवं कर्मापि, अतो मूर्तमित्यर्थः। अथवा, मूर्तं कर्म, मूर्तेन स्रक्-चन्दना-ऽङ्गनादिना तस्योपचयलक्षणस्य बलस्याधीयमानत्वात्, कुम्भवत्– यथा मूर्तत्वेन तैलादिना बलस्याधीयमानत्वात् कुम्भो मूर्तः, एवं स्रक्-चन्दनादिनोपचीयमानत्वात् कर्मापि मूर्तमिति भावः। यदिवा, मूर्तं कर्म, देहादेस्तत्कार्यस्य मूर्तत्वात्, परमाणुवत्– यथा घटादेस्तत्कार्यस्य मूर्तस्य दर्शनात् परमाणवो मूर्ताः, एवं देहादेस्तत्कार्यस्य मूर्तस्य दर्शनात् कर्मापि मूर्तमित्यर्थः। एवं भणिते पुनर्भणति परः ॥

किम् ? इत्याह—

[2]तो किं देहाईणं मुत्तत्तणओ तयं हवइ मुत्तं। अह सुह-दुक्खाईणं कारणभावादरूवं ति ? ॥ १९२८ ॥

ततः किं देहादीनां कर्मकार्याणां मूर्तानां दर्शनात् तत् कर्म मूर्तं भवतु, आहोस्वित् सुख-दुःख-क्रोध-मानादीनां जीवपरिणामभूतानां तत्कार्याणाममूर्तानां दर्शनात् तत् कारणभावेनामूर्तमस्तु कर्म ? इत्येवं मूर्तत्वा-ऽमूर्तत्वाभ्यामुभयथापि तत्कार्यदर्शनात् किं मूर्तम्, अमूर्तं वा कर्म भवतु ? इति निवेद्यतामिति ॥ १९२८ ॥

एवं प्रेरकेणोक्ते सत्याह—

[3]न सुहाईणं हेऊ कम्मं चिय किन्तु ताण जीवो वि। होइ समवाइकारणमियरं कम्मं ति को दोसो ? ॥१९२९॥

सुखादीनां कर्मैव केवलं कारणं न भवति, किन्तु जीवोऽपि तेषां समवायि कारणं भवति, कर्म पुनरितरदसमवायि कारणं भवतीति को दोषः ? । इदमुक्तं भवति— सुखादेरमूर्तत्वेन समवायिकारणस्य जीवस्यामूर्तत्वमस्त्येव, असमवायिकारणस्य तु कर्मणः सुखाद्यमूर्तत्वेनामूर्तत्वं न भवतीत्यपीति न दोष इति ॥ १९२९ ॥

---

१ एतस्मादेव तद् मूर्तं मूर्तबलाधानतो यथा कुम्भः। देहादिकार्यमूर्तादित इव भणिते पुनर्भणति ॥ १९२७ ॥

२ ततः किं देहादीनां मूर्तत्वतस्तद् भवति मूर्तम्। अथ सुख-दुःखादीनां कारणभावादरूपमिति ? ॥ १९२८ ॥

३ न सुखादीनां हेतुः कर्मैव किन्तु तेषां जीवोऽपि। भवति समवायिकारणमितरत् कर्मेति को दोषः ? ॥ १९२९ ॥

'वा' इत्यथवा, न प्रत्यक्षमिन्द्रियजं ज्ञानमिति सैव प्रतिज्ञा, पूर्वोपलब्धश्चासौ संबन्धश्च पूर्वोपलब्धसंबन्धस्तत्स्मरणाज्जायमानत्वात्, धूमादनलज्ञानवत्; तथाहि– 'घटोऽयं, पूर्वसंकेतकाल एवंभूत एव पदार्थे प्रत्ययिताभिज्ञपुरुषाद् घटसंकेतस्य मया गृहीतत्वात्' इति पूर्वोपलब्धसंबन्धस्मरणादेव सर्वस्यापि घटादिग्राहकमिन्द्रियज्ञानमुपजायते; अन्यथा नालिकेरद्वीपाद्यायातस्याप्यविशेषेणैतत् स्यात्। अभ्यास-पाटवादिभ्यश्चाशुकारितयेन्द्रियज्ञानप्रवृत्तेः सर्वत्रैतद् न लक्ष्यत इति। अथवा, प्रत्यक्षमिन्द्रियजं ज्ञानम्, पूर्वप्रतिपादितव्युत्पत्त्याऽक्षस्य जीवस्य स्वव्यतिरिक्तनिमित्तविशेषाज्जायमानत्वात्, धूमादग्निज्ञानवत्। स्वव्यतिरिक्तानि च निमित्तान्यक्षस्य जीवस्य करणानीन्द्रियाणि मन्तव्यानि। यच्च प्रत्यक्षं न तज्जीवस्य निमित्तान्तराज्जायते, किन्तु जीवस्तत्र साक्षादेव ज्ञेयं पश्यति, यथाऽवधि-मनःपर्याय-केवलज्ञानेष्विति ॥ १८९७ ॥

अत एवाह—

[1]केवल-मणो-हिरहियस्स सव्वमणुमाणमेत्तयं जम्हा। नारगसब्भावम्मि य तदत्थि जं तेण ते संति ॥१८९८॥

केवल-मनःपर्याया-ऽवधिज्ञानरहितस्य प्रमातुः संबन्धि सर्वमपि ज्ञानं यस्मादनुमानमात्रमेव, परोक्षार्थविषयत्वात्। केवलादिज्ञानत्रयं तु वस्तुसाक्षात्कारित्वात् प्रत्यक्षम्। तदेवमनुमानं प्रत्यक्षं च यस्माद् नारकसद्भावे साध्ये विद्यत एव, तेन ते नारकाः सन्तीति प्रतिपद्यस्व। तत्र प्रत्यक्षं मदीयमेव केवलज्ञानम् ॥ १८९८ ॥

अनुमानं त्विदम्—

[2]पावफलस्स पगिट्ठस्स भोइणो कम्मओऽवसेस व्व। सन्ति धुवं तेऽभिमया नेरइया, अह मई होज्जा ॥१८९९॥

अच्चत्थदुक्खिया जे तिरिय-नरा नारग त्ति तेऽभिमया। तं न जओ सुरसोक्खप्पगरिससरिसं न तं दुक्खं ॥१९००॥

प्रकृष्टस्य पापफलस्य भोगिनः केचिद् ध्रुवं सन्ति, 'कम्मउ त्ति' कर्मफलत्वात् तस्येत्यर्थः, अवशेषवदिति– यथा जघन्य-मध्यमपापफलभोगिनः शेषास्तिर्यङ्-नरा विद्यन्त इत्यर्थ इति दृष्टान्तः। 'तेऽभिमया नेरइय त्ति' ये प्रकृष्टपापफलभोगिनस्ते 'नारकाः

१ केवल-मनो-ऽवधिरहितस्य सर्वमनुमानमात्रकं यस्मात्। नरकसद्भावे च तदस्ति यत् तेन ते सन्ति ॥१८९८॥
२ पापफलस्य प्रकृष्टस्य भोगिनः कर्मतोऽवशेष इव। सन्ति ध्रुवं तेऽभिमता नैरयिकाः, अथ मतिर्भवेत् ॥१८९९॥
अत्यर्थदुःखिता ये तिर्यग्-नरा नारका इति तेऽभिमताः। तद् न यतः सुरसौख्यप्रकर्षसदृशं न तद् दुःखम् ॥ १९००॥

तदेवमुक्तमर्थमुपसंहरन् केवलपुण्यलक्षणं प्रथमविकल्पं दूषयितुमाह—

[1]इय रूवित्ते सुह-दुक्खकारणत्ते य कम्मुणो सिद्धे । पुण्णावगरिसमेत्तेण दुक्खबहुलत्तणमजुत्तं ॥ १९३० ॥

इत्येवं पञ्चमविकल्पोपन्यस्तस्वभाववादनिरासेन पुण्य-पापात्मकस्य कर्मणः सुख-दुःखकारणत्वे रूपित्वे च सिद्धे पुण्यापकर्षमात्रेण यद् दुःखबहुलत्वं प्रथमविकल्पोपन्यासे प्रोक्तं तदयुक्तमिति ॥ १९३० ॥

कुतोऽयुक्तम् ? इत्याह—

[2]कम्मप्पगरिसजणियं तदवस्सं पगरिसाणुभूईओ । सोक्खप्पगरिसभूई जह पुण्णप्पगरिसप्पभवा ॥१९३१॥

तद् दुःखबहुलत्वं पुण्यापकर्षजनितं न भवति, किन्तु स्वानुरूपकर्मप्रकर्षजनितम्, प्रकर्षानुभूतित्वात्– वेदनाप्रकर्षानुभवरूपत्वादिति हेतुः, यथा सौख्यप्रकर्षानुभूतिः स्वानुरूपकर्मप्रकर्षप्रभवेति दृष्टान्तः ॥ १९३१ ॥

उपपत्त्यन्तरमाह—

[3]तह बज्झसाहणप्पगरिसंगभावादिहण्णहा न तयं । विवरीयबज्झसाहणबलप्पगरिसं अवेक्खेज्जा ॥१९३२॥

'तथा' इत्युपपत्त्यन्तरार्थः, । इह देहिनां दुःखबहुलत्वं केवलपुण्यापकर्षमात्रजनितं न भवति । कुतः ? इत्यत्र हेतुमाह– बाह्यानि यान्यनिष्टाहारादीनि साधनानि तेषां यस्तदनुरूपः प्रकर्षस्तस्याङ्गभावात् कारणभावादिति । विपर्यये बाधकमाह– 'इहेत्यादि' तद् दुःखमन्यथा यदि पुण्यापकर्षमात्रजन्यं भवेत् तदा पुण्यसंपाद्येष्टाहारापचयमात्रादेव भवेत्, न तु पापोपचयसंपाद्यानिष्टाहारादिरूपविपरीतबाह्यसाधनानां यद् बलं सामर्थ्यं तस्य स्वानुरूपो यः प्रकर्षस्तमपेक्षेत । इदमत्र हृदयम्– यदि पुण्यापकर्षमात्रजन्यं दुःखं भवेत्, तदा पुण्योदयमाप्येष्टाहारादिसाधनापकर्षमात्रादेव भवेत्, न चैतदस्ति, इष्टविपरीतानिष्टाहारादिसाधनप्रकर्षसामर्थ्यादेव तद्भावादिति ॥ १९३२ ॥

अपिच,

[4]देहो नावचयकओ पुण्णुक्करिसे व मुत्तिमत्ताओ। होज्ज व स हीणतरओ कहमसुभयरो महल्लो य ? ॥१९३३॥

---

१ इति रूपित्वे सुख-दुःखकारणत्वे च कर्मणः सिद्धे । पुण्यापकर्षमात्रेण दुःखबहुलत्वमयुक्तम् ॥ १९३० ॥
२ कर्मप्रकर्षजनितं तदवश्यं प्रकर्षानुभूतेः । सौख्यप्रकर्षभूतिर्यथा पुण्यप्रकर्षप्रभवा ॥ १९३१ ॥
३ तथा बाह्यसाधनप्रकर्षाङ्गभावादिहान्यथा न तत् । विपरीतबाह्यसाधनबलप्रकर्षमपेक्षेत ॥ १९३२ ॥
४ देहो नापचयकृत पुण्योत्कर्ष इव मूर्तिमत्त्वात् । भवेद् वा स हीनतरकः कथमशुभतरो महांश्च ? ॥ १९३३ ॥

इत्यभिमताः । अथ परस्यैवंभूता मतिर्भवेत्– अत्यर्थं दुःखिता ये तिर्यग् मनुष्यास्त एवोत्कृष्टपापफलभोगित्वाद् नारकव्यपदेशभाजो भविष्यन्ति, किमदृष्टनारककल्पनया ? इति । तदेतद् न, यतोऽतिदुःखितानामपि तिर्यग्-मनुष्याणां यद् दुःखं तदमरसौख्यप्रकर्षसदृश प्रकर्षवद् न भवति । इदमुक्तं भवति– येषामुत्कृष्टपापफलभोगस्तेषां संभवद्भिः सर्वैरपि प्रकारैर्दुःखेन भवितव्यम्, न चैवमतिदुःखितानामपि तिर्यगादीनां दृश्यते, आलोक-तरुच्छाया-शीतपवन-सरित्-सरः-कूपजलादिसुखस्यातिदुःखितेष्वपि तेषु दर्शनात्– छेदन-भेदन-पाचन-दहन-दम्भन-वज्र-कण्टक-शिलास्फालनादिभिश्च नरकप्रसिद्धैः प्रकारैर्दुःखस्यादर्शनात्, इत्यादि प्रागुक्तानुसारेण स्वयमेवाभ्यूह्य वाच्यमिति । आगमार्थश्चायमवगन्तव्य इति ।

"सततमनुबद्धमुक्तं दुःखं नरकेषु तीव्रपरिणामम् । तिर्यक्ष्वूष्ण-भय क्षुत्-तृडादिदुःख सुखं चाल्पम् ॥ १ ॥

सुख-दुःखे मनुजानां मनः-शरीराश्रये बहुविकल्पे । सुखमेव तु देवानामल्प दुःखं तु मनसि भवम् ॥ २ ॥"

इति ॥ १८९९ ॥ १९०० ॥

प्रागनेकशोऽभिहितानुमानतोऽपि नारकान् साधयितुमाह––

सच्चं[1] चेदमकंपिय ! मह वयणाओऽवसेसवयणं व । सव्वण्णुत्तणओ वा अणुमयसव्वण्णुवयणं व ॥ १९०१ ॥

'नारकाः सन्ति' इति सत्यमकम्पित ! इदम्, मद्वचनत्वात्, यथाऽवशेषं त्वत्संशयादिविषयं मद्वचनम् । अथवा, 'सर्वज्ञवचनत्वात्' इत्येव हेतुर्वक्तव्यः, त्वदनुमतमनु-जैमिन्यादिसर्वज्ञवचनवदिति ॥ १९०१ ॥

अपिच,

भय[2]-राग-दोस-मोहाभावाओ सच्चमणइवाइं च । सव्वं चिय मे वयणं जाणयमज्झत्थवयणं व ॥१९०२॥

प्रागनेकधा व्याख्यातेयम् ॥ १९०२ ॥

अकम्पिताभिप्रायमाशङ्क्यात्मनि सर्वज्ञतादिसाधनाय भगवानाह––

1 सत्य चेदमकम्पित ! मम वचनादवशेषवचनमिव । सर्वज्ञत्वतो वाऽनुमतसर्वज्ञवचनमिव ॥ १९०१ ॥ 2 गाथा १५७८ ।

दुःखितहस्त्यादिदेहः केवलपुण्यापचयमात्रकृतो न भवति, मूर्तिमत्त्वात्, यथा पुण्योत्कर्षे तज्जन्योऽनुत्तरसुर-चक्रवर्त्यादिदेहः, यश्च पुण्यापचयमात्रजन्यः स मूर्तिमानपि न भवति, यथा न कोऽपि, यदि च पुण्यापचयमात्रेण देहो जन्येत, तदा हीनतरः शुभ एव च स्यात्, कथं महान्, अशुभतरश्च भवेत्, महतो महापुण्योपचयजन्यत्वात्, अशुभस्य चाशुभकर्मनिर्वर्त्यत्वात् ? । पुण्येन पुनरणीयसापि शुभ एव देहो जन्येत, न तु दुःखितः। अणीयसापि हि सुवर्णलवेनाणीयानपि सौवर्ण एव घटो भवति न तु मार्तिकः, ताम्रादिर्वेति ॥ १९३३ ॥

अथ केवलपापपक्षं संकीर्णपुण्यपापपक्षं च दूषयितुमाह—

एवं[1] चिय विवरीयं जोएज्जा सव्वपावपक्खे वि। न य साहारणरूवं कम्मं तक्कारणाभावा ॥ १९३४ ॥

'सर्वं पापमेवास्ति, न तु पुण्यम्, पापापचयमात्रजन्यत्वात् सुखस्य' इत्येतस्मिन्नपि पक्षे एवमेव– केवलपुण्यवादोक्तदूषणाद् विपरीतगत्या सर्वं योजयेत्; यद्यथा– पापापकर्षमात्रजनितं सुखं न भवति, पापस्याल्पीयसोऽपि दुःखजनकत्वात्। न ह्यणीयानपि विषलवः स्वास्थ्यहेतुर्भवति। तस्मात् पुण्यजनितमेवाल्पमपि सुखमित्यादि स्वबुद्ध्याऽभ्यूह्य वाच्यम्। इति पृथग् दुःखयोः कारणभूते स्वतन्त्रे पुण्य-पापे एष्टव्ये। अत एव साधारणे अपि संकीर्णे पुण्य-पापे नेष्टव्ये। कुतः ? इत्याह– 'न येत्यादि' न च साधारणरूपं संकीर्णस्वभावं पुण्य-पापात्मकमेकं कर्मास्ति, तस्यैवंभूतस्य कर्मणः कारणाभावात्। अत्र प्रयोगः– नास्ति संकीर्णोभयरूपं कर्म, असंभाव्यमानैवंविधकारणत्वात्, वन्ध्यापुत्रवदिति ॥१९३४॥

हेतोरसिद्धतां परिहरन्नाह—

कम्मं[2] जोगनिमित्तं सुभोऽसुभो वा स एगसमयम्मि। होज्ज न उ उभयरूवो कम्मं पि तओ तयणुरूवं ॥१९३५॥

मिथ्यात्वा-ऽविरति-प्रमाद-कषाययोगा बन्धहेतव इति पर्यन्ते योगाभिधानात् सर्वत्र कर्मबन्धहेतुत्वस्य योगाविनाभावाद् योगानामेव बन्धहेतुत्वमिति कर्म योगनिमित्तमुच्यते। स च मनो-वाक्-कायात्मको योग एकस्मिन् समये शुभोऽशुभो वा भवेत्, न तूभयरूपः, अतः कारणानुरूपत्वात् कार्यस्य कर्मापि तदनुरूपं शुभं पुण्यरूपं बध्यते, अशुभं वा पापरूपं बध्यते, न तु संकीर्णस्वभावमुभयरूपमेकदैव बध्यत इति ॥ १९३५ ॥

1 एवमेव विपरीतं योजयेत् सर्वपापपक्षेऽपि। न च साधारणरूप कर्म तत्कारणाभावात् ॥ १९३४ ॥
2 कर्म योगनिमित्तं शुभोऽशुभो वा स एकसमये। भवेद् न तूभयरूप कर्माऽपि ततस्तदनुरूपम् ॥ १९३५ ॥

[1]किह सव्वण्णु त्ति मई पच्चक्खं सव्वसंसयच्छेया । भय-रोग-दोसरहिओ तल्लिंगाभावओ सोम्म !॥१९०३॥

इयमपि व्याख्यातार्था । यदपि "नह वै प्रेत्य नारकाः सन्ति" इत्यादौ नारकाभावः शङ्कयते भवता, तदप्ययुक्तम्, यतोऽयमत्राभिप्रायो मन्तव्यः– न खलु प्रेत्य परलोके मेर्वादिवच्छाश्वताः केचनाप्यवस्थिता नारकाः सन्ति, किन्तु य इहोत्कृष्टं पापमर्जयति, स इतो गत्वा प्रेत्य नारको भवति, अतः केनापि तत्पापं न विधेयं येन प्रेत्य नारकैर्भूयते । तदेवं छिन्नस्तत्संशयो भगवता ॥१९०३॥

ततः किं कृतवानसौ ? इत्याह—

[2]छिन्नम्मि संसयम्मी जिणेण जर-मरणविप्पमुक्केणं । सो समणो पव्वइओ तिहिं ओ सह खंडियसएहिं ॥१९०४॥

सुबोधा ॥ इति विंशतिगाथार्थः ॥ १९०४ ॥

॥ इत्यष्टमो गणधरवादः समाप्तः ॥

अथ नवमगणधरवक्तव्यतामभिधित्सुराह—

[3]ते पव्वइए सोउं अयलभाया आगच्छई जिणसगासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥१९०५॥

गतार्था, नवरमचलभ्राता द्विजोपाध्यायो नवमो गणधर इति ॥ १९०५ ॥

[4]आभट्ठो य जिणेणं जाइ-जरा-मरणविप्पमुक्केणं । नामेण य गोत्तेण य सव्वण्णू सव्वदरिसी णं ॥१९०६॥

तथैव ॥ १९०६॥

आभाष्य ततः किमुक्तम् ? इत्याह—

[5]किं मण्णे पुण्ण-पावं अत्थि नत्थि त्ति संसओ तुज्झ । वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥१९०७॥

१ कथं सर्वज्ञ इति मतिः प्रत्यक्षं सर्वसंशयच्छेदात् । भय-रोग-दोषरहितस्तल्लिङ्गाभावतः सौम्य ! ॥ १९०३ ॥
२ छिन्ने संशये जिनेन जरा-मरणविप्रमुक्तेन । स श्रमणः प्रव्रजितस्त्रिभिस्तु सह खण्डिकशतैः ॥ १९०४ ॥
३ तान् प्रव्रजितान् श्रुत्वाऽचलभ्राताऽऽगच्छति जिनसकाशम् । व्रजामि वन्दे वन्दित्वा पर्युपासे ॥ १९०५ ॥ ४ गाथा १६०९ ।
५ किं मन्यसे पुण्य-पापे स्तो न स्त इति संशयस्तव । वेदपदानां चार्थं न जानासि तेषामयमर्थः ॥ १९०७ ॥

प्रेरकः प्राह—

नणु मण-वइ-काओगा सुभासुभा वि समयम्मि दीसंति। दव्वम्मि मीसभावो भवेज्ज न उ भावकरणम्मि ॥१९३६॥

ननु मनो-वाक्-काययोगाः शुभाशुभाश्च मिश्रा इत्यर्थः, एकस्मिन् समये दृश्यन्ते, तत् कथमुच्यते— 'सुभोऽसुभो वा स एगसमयम्मि' इति? तथाहि— किञ्चिदविधिना दानादिवितरणं चिन्तयतः शुभाशुभो मनोयोगः; तथा, किमप्यविधिनैव दानादिधर्ममुपादिशतः शुभाशुभो वाग्योगः; तथा, किमप्यविधिनैव जिनपूजा-वन्दनकादिकायचेष्टां कुर्वतः शुभाशुभकाययोग इति। तदेतदयुक्तम्। कुतः? इत्याह— 'दव्वम्मीत्यादि' इदमुक्तं भवति— इह द्विविधो योगः— द्रव्यतः, भावतश्च। तत्र मनो-वाक्-काययोगप्रवर्तकानि द्रव्याणि, मनो-वाक्-कायपरिस्पन्दात्मको योगश्च द्रव्ययोगः; यस्त्वेतदुभयरूपयोगहेतुरध्यवसायः स भावयोगः। तत्र शुभाशुभरूपाणां यथोक्तचिन्ता-देशना-कायचेष्टानां प्रवर्तके द्विविधेऽपि द्रव्ययोगे व्यवहारनयदर्शनविवक्षामात्रेण भवेदपि शुभाशुभत्वलक्षणो मिश्रभावः, न तु मनो-वाक्-काययोगनिबन्धनाध्यवसायरूपे भावकरणे भावात्मके योगे। अयमभिप्रायः— द्रव्ययोगो व्यवहारनयदर्शनेन शुभाशुभरूपोऽपीष्यते, निश्चयनयेन तु सोऽपि शुभोऽशुभो वा केवलः समस्ति, यथोक्तचिन्ता-देशनादिप्रवर्तकद्रव्ययोगाणामपि शुभाशुभरूपमिश्राणां तन्मतेनाभावात्; मनो-वाक्-कायद्रव्ययोगनिबन्धनाध्यवसायरूपे तु भावकरणे भावयोगे शुभाशुभरूपो मिश्रभावो नास्ति, निश्चयनयदर्शनस्यैवागमेऽत्र विवक्षितत्वात्। न हि शुभान्यशुभानि वाऽध्यवसायस्थानानि मुक्त्वा शुभाशुभाध्यवसायस्थानरूपस्तृतीयो राशिरागमे क्वचिदपीष्यते, येनाध्यवसायरूपे भावयोगे शुभाशुभत्वं स्यादिति भावः। तस्माद् भावयोग एकस्मिन् समये शुभोऽशुभो वा भवति न तु मिश्रः। ततः कर्मापि तत्प्रत्ययं पृथक् पुण्यरूपं पापरूपं वा बध्यते, न तु मिश्ररूपमिति स्थितम् ॥ १९३६ ॥

एतदेव समर्थयन्नाह—

झाणं सुभमसुभं वा न उ मीसं जं च झाणविरमे वि। लेसा सुभाऽसुभा वा सुभमसुभं वा तओ कम्मं ॥१९३७॥

ध्यानं यस्मादागमे एकदा धर्म-शुक्लध्यानात्मकं शुभम्, आर्त-रौद्रात्मकमशुभं वा निर्दिष्टम्, न तु शुभाशुभरूपम्, यस्माच्च ध्यानोपरमेऽपि लेश्या तैजसीप्रभृतिका शुभा, कापोतीप्रमुखा वाऽशुभैकदा प्रोक्ता, न तु शुभाशुभरूपाः; ध्यानलेश्यात्मकाश्च भावयोगाः,

१ नतु मनो वाक्-काययोगाः शुभाशुभा अपि समये दृश्यन्ते। द्रव्ये मिश्रभावो भवेद् न तु भावकरणे ॥१९३६॥ २ गाथा १९३५। ३ क ग 'भत्वोपल'। ४ क. ग. 'भमिश्ररूपाणां'। ५ ध्यानं शुभमशुभं वा न तु मिश्रं यच्च ध्यानविरमेऽपि। लेश्या शुभाऽशुभा वा शुभमशुभं वा ततः कर्म ॥ १९३७ ॥

हे आयुष्मन्नचलभ्रातः ! त्वमेवं मन्यसे– किं पुण्य-पापे स्तो नवा ? इति । अयं चानुचितः संशयः, यस्माद् विरुद्धवेदपद-निबन्धनो विरुद्धदर्शनश्रुतिनिबन्धनश्च तव वर्तते । तत्र वेदपदानि तावत्– "पुरुष एवेदं ग्निं सर्वम्–" इत्यादि यथा द्वितीयगणधरे तथा वाच्यानि । तेषां चार्थं त्वं न जानासीत्याद्यपि तथैव व्याख्येयमिति ॥ १९०७ ॥

अत्र भाष्यकारः पूर्वपक्षं मपञ्चयन्नाह—

[1]मण्णसि पुण्णं पावं साहारणमहव दो वि भिन्नाइं । होज्ज न वा कम्मं चिय सभावओ भवपवंचोऽयं ॥१९०८॥

इह केषाञ्चित् तीर्थिकानामयं प्रवादः– 'पुण्यमेवैकमास्ति न पापम्' । अन्ये त्वाहुः– 'पापमेवैकमास्ति न तु पुण्यम्' । अपरे तु वदन्ति– 'उभयमप्यन्योन्यानुविद्धस्वरूपं मेचकमणिकल्पं संमिश्रसुख-दुःखाख्यफलहेतुः साधारणं पुण्यपापाख्यमेकं वस्तु' इति । अन्ये तु प्रतिपादयन्ति– स्वतन्त्रमुभयं विविक्तसुख-दुःखकारणं 'होज्ज त्ति' भवेदिति । अन्ये पुनराहुः– 'मूलतः कर्मैव नास्ति, स्वभावसिद्धः सर्वोऽप्ययं जगत्प्रपञ्चः' । अतस्त्वमप्येतान् पञ्च विकल्पान् मन्यसे । एतेषां च विकल्पानां परस्परविरुद्धत्वात् संशयदोलामारूढोऽसि त्वमिति ॥ १९०८ ॥

ननु येषां पुण्यमेवैकमास्ति, न तु पापम्, तन्मते कथं कस्यापि दुःखोपपत्तिः ? इत्याह—

[2]पुण्णुक्करिस्से सुभया तरतमजोगावगरिसओ हाणी । तस्सेव खए मोक्खो पत्थाहारोवमाणाओ ॥ १९०९ ॥

पुनातीति पुण्यं तस्योत्कर्षलेशतो लेशतश्च वृद्धौ शुभता भवति, सुखस्यापि क्रमशो वृद्धिर्भवति तावत्, यावदुत्कृष्टं स्वर्गसुखमित्यर्थः । तस्यैव पुण्यस्य तर-तमयोगापकर्षतो हानिः सुखस्य– दुःखं भवति । इदमुक्तं भवति– यथा यथा पुण्यमपचीयते तथा तथा जीवानां क्रमेण दुःखमुत्पद्यते, यावत् सर्वमकर्षप्राप्तं नरकदुःखम् । तस्यैव च पुण्यस्य सर्वथा क्षये मोक्ष इति । एतच्च सर्वं पथ्याहारोपमानाद् भावनीयम् ; तथाहि– यथा पथ्याहारस्य क्रमेण वृद्धावारोग्यवृद्धिस्तथा पुण्यवृद्धौ सुखवृद्धिः, यथा च पथ्याहारस्य क्रमेण परिहारे सरोगता भवति, एवं पुण्यापचये दुःखोत्पत्तिः; सर्वथा पथ्याहारपरिहारे च मरणवत् पुण्यक्षये मोक्ष इति ॥ १९०९ ॥

केवलपापाभ्युपगमे सुखसंभवः कथम् ? इत्याह—

---

१ मन्यसे पुण्यं पापं साधारणमथवा द्वे अपि भिन्ने । भवेद् न वा कर्मैव स्वभावतो भवप्रपञ्चोऽयम् ॥ १९०८ ॥
२ पुण्योत्कर्षे शुभता तरतमयोगापकर्षतो हानिः । तस्यैव क्षये मोक्षः पथ्याहारोपमानात् ॥ १९०९ ॥

ततस्तेऽप्येकदा शुभा अशुभा वा भवन्ति न तु मिश्राः । ततो भावयोगनिमित्तं कर्माप्येकदा पुण्यात्मकं शुभं बध्यते, पापात्मकमशुभं वा बध्यते, न तु मिश्रमिति ॥ १९३७ ॥

अपिच,

पुव्वगहियं[1] च कम्मं परिणामवसेण मीसयं नेज्जा । इयरेयरभावं वा सम्मा-मिच्छाइं न उ गहणे ॥१९३८॥

'वा' इत्यथवा, एतदद्यापि संभाव्यते यत्– पूर्वं गृहीतं पूर्वं बद्धं मिथ्यात्वलक्षणं कर्म परिणामवशात् पुञ्जत्रयं कुर्वन् मिश्रतां सम्यग्-मिथ्यात्वपुञ्जरूपतां नयेत् प्रापयेदिति; इतरेतरभावं वा नयेत् सम्यक्त्वं मिथ्यात्वं वेति । इदमुक्तं भवति– पूर्वबद्धान् मिथ्यात्वपुद्गलान् विशुद्धपरिणामः सन् शोधयित्वा सम्यक्त्वरूपतां नयेत्, अविशुद्धपरिणामस्तु रसमुत्कर्षं नीत्वा सम्यक्त्वपुद्गलान् मिथ्यात्वपुञ्जे संक्रमय्य मिथ्यात्वरूपतां नयेत्, इति पूर्वगृहीतस्य सत्तावर्तिनः कर्मण इदं कुर्यात् । ग्रहणकाले पुनर्न मिश्रं पुण्यपापरूपतया संकीर्णस्वभावं कर्म बध्नाति, नापीतरदितररूपतां नयतीति ॥ १९३८ ॥

'सम्यक्त्वं मिथ्यात्वे संक्रमय्य मिथ्यात्वरूपतां नयति' इत्युक्तम्; ततः संक्रमविधिमेव संक्षेपतो दर्शयति—

मोत्तूण[2] आउयं खलु दंसणमोहं चरित्तमोहं च । सेसाणं पगईणं उत्तरविहिसंकमो भज्जो ॥ १९३९ ॥

इह ज्ञानावरणादिमूलप्रकृतीनामन्योन्यं संक्रमः कदापि न भवत्येव, उत्तरप्रकृतीनां तु निजनिजमूलप्रकृत्यभिन्नानां परस्परं संक्रमो भवतीति । तत्र चायं विधिः– 'मोत्तूण आउयमित्यादि' 'आउयं' इति जातिप्रधानो निर्देश इति बहुवचनमत्र द्रष्टव्यम्– चत्वार्यायूंषि मुक्त्वेति । एकस्या आयुर्लक्षणाया निजमूलप्रकृतेरभिन्नानामपि चतुर्णामायुषामन्योन्यं संक्रमो न भवतीति तद्वर्जनम् । तथा, दर्शनमोहं चारित्रमोहं च मुक्त्वा; एकस्या मोहनीयलक्षणायाः स्वमूलप्रकृतेरभिन्नयोरपि दर्शनमोह-चारित्रमोहयोरन्योन्यं संक्रमो न भवतीत्यर्थः । उक्तशेषाणां तु प्रकृतीनाम्, कथंभूतानाम् ? इत्याह– 'उत्तरविहि त्ति' विधयो भेदाः, उत्तरे च ते विधयश्चोत्तरविधय उत्तरभेदास्तद्भूतानामुत्तरप्रकृतिरूपाणामिति तात्पर्यम् । किम् ? इत्याह– संक्रमो भाज्यो भजनीयः ।

भजना चैवं द्रष्टव्या– याः किल ज्ञानावरणपञ्चक-दर्शनावरणनवक-कषायषोडशक-मिथ्यात्व-भय-जुगुप्सा-तैजस-कार्मण-

---

१ पूर्वगृहीत च कर्म परिणामवशेन मिश्रतां नयेत् । इतरेतरभाव वा सम्यक्-मिथ्यात्वे न तु ग्रहणे ॥ १९३८ ॥

२ मुक्त्वाऽऽयुष्क खलु दर्शनमोहं चारित्रमोह च । शेषाणा प्रकृतीनामुत्तरविधिसंक्रमो भाज्य. ॥ १९३९ ॥

[1]पावुक्करिसेऽहमया तरतमजोगावगरिसओ सुभया । तस्सेव खए मोक्खो अपत्थभत्तोवमाणाओ ॥१९१०॥

इहापथ्याहारोपमानाद् वैपरीत्येन भावना कार्या । तथाहि– यथा क्रमेणापथ्यवृद्धौ रागवृद्धिः, तथा पांशयत्यात्मानं मलिनयतीति पापं, तस्य वृद्धौ सुखवृद्धिरूपाऽधमता मन्तव्या– क्रमेण दुःखं वर्धते, यावदुत्कृष्टं नारकदुःखम् । यथा चापथ्यत्यागात् क्रमेणारोग्यवृद्धिः, तथा क्रमेण पापस्यापकर्षात् सुखस्य वृद्धिः, यावदुत्कृष्टं सुरसौख्यम् । यथा चापथ्याहारस्य सर्वथा परित्यागात् परमारोग्यमुपजायते, एवं सर्वपापक्षये मोक्ष इति ॥ १९१० ॥

अथ साधारणं पुण्यपापाख्यमेकमेव संकीर्णं वस्त्विति तृतीयविकल्पं भावयन्नाह—

[2]साहारणवण्णादि व अह साहारणमहेगमत्ताए । उक्करिसा-वगरिसओ तस्सेव य पुण्णपावक्खा ॥१९११॥

'अह साहारणमिति' अथ साधारणं संकीर्णपुण्यपापाख्यं वस्तु भाव्यत इत्यर्थः । कथंभूतं पुनरिदमवगन्तव्यम् ? इत्याह– 'साहारणवण्णादि व त्ति' यथा साधारणं तुल्यं हरितालगुलिकादीनामन्यतरन्मीलितं वर्णकद्वयम्; आदिशब्दाद् यथा मेचकमणिः, नरसिंहादिर्वा, तथेदमपि पुण्यपापाख्यं संकीर्णमेकं वस्त्वित्यर्थः । ननु यद्येकं वस्त्विदम्, तर्हि पुण्यं पापं चेति परस्परविरोधिवस्तुविषयमाख्याद्वयं कथं लभते ? इत्याह– 'अहेगमत्ताए इत्यादि' अथ तस्यैवैकस्य संकीर्णपुण्यपापाख्यस्य वस्तुन एकया पुण्यमात्रया– एकेन पुण्यांशेनेत्यर्थः, उत्कर्षतो वृद्धौ सत्यां पुण्याख्या प्रवर्तते; एकया तु पापमात्रया– एकेन पापांशेनेत्यर्थः, उत्कर्षतो वृद्धौ सत्यां पापाख्या प्रवर्तते । अपकर्षेऽपि पुण्यांशस्य पापाख्या प्रवर्तते, पापांशस्य त्वपकर्षे पुण्याख्या प्रवर्तत इति ॥ १९१० ॥ १९११ ॥

चतुर्थं पञ्चमं च विकल्पमधिकृत्याह—

[3]एवं चिय दो भिन्नाइं होज्ज, होज्ज व सभावओ चेव । भवसंभूई, भण्णइ न सभावाओ जओऽभिमओ ॥ १९१२ ॥

[4]होज्ज सभावो वत्थुं निक्कारणया व वत्थुधम्मो वा । जउ वत्थुं णत्थि तओऽणुवलद्धीओ खपुप्फं व ॥ १९१३ ॥

एवमेव केषाञ्चिद् मतेन द्वे अपि भिन्ने स्वतन्त्रे स्यातां पुण्य-पापे, तत्कार्यभूतयोः सुख-दुःखयोर्यौगपद्येनानुभवाभावात् ।

१ पापोत्कर्षेऽधमता तरतमयोगापकर्षतः शुभता । तस्यैव क्षये मोक्षोऽपथ्यभक्तोपमानात् ॥ १९१० ॥

२ साधारणवर्णादीवाथ साधारणमथैकमात्रया । उत्कर्षा-ऽपकर्षतस्तस्यैव च पुण्यपापाख्या ॥ १९११ ॥

३ एवमेव द्वे भिन्ने भवेतां, भवेद् वा स्वभावत एव । भवसभूतिः, भण्यते न स्वभावाद् यतोऽभिमतः ॥ १९१२ ॥ ४ गाथा १७८६ ।

वर्णादिचतुष्का-ऽगुरुलघू-पघात-निर्माणा-ऽन्तरायपञ्चकलक्षणाः सप्तचत्वारिंशद् ध्रुवबन्धिन्य उत्तरप्रकृतयः, तासां निजैकमूलप्रकृत्यभिन्नानामन्योन्यं संक्रमः सदैव भवति; यथा ज्ञानावरणपञ्चकान्तर्वर्तिनि मतिज्ञानावरणे श्रुतज्ञानावरणादीनि, तेष्वपि मतिज्ञानावरणं संक्रामतीत्यादि। यास्तु शेषा अध्रुवबन्धिन्यस्तासां निजैकमूलप्रकृत्यभेदवर्तिनीनामपि बध्यमानायामबध्यमाना संक्रामति, न त्वबध्यमानायां बध्यमाना; यथा साते बध्यमानेऽसातमबध्यमानं संक्रामति, न तु बध्यमानमबध्यमाने; इत्यादि वाच्यमिति। एष प्रकृतिसंक्रमे विधिः। शेषस्तु प्रदेशादिसंक्रमविधिः "मूलप्रकृत्यभिन्नासु वेद्यमानासु संक्रमः, भवति" इत्यादिना स्थानान्तरादवसेय इत्यलं प्रसङ्गेनेति ॥ १९३९ ॥

तदेवं पुण्य-पापे पृथग् व्यवस्थाप्येदानीं तयोरेव पृथग्लक्षणमाह—

[1]सोहणवण्णाइगुणं सुभाणुभावं च जं तयं पुण्णं। विवरीयमओ पावं न बायरं नाइसुहुमं च ॥१९४०॥

शोभनाः शुभा वर्णादयो वर्ण-गन्ध-रस-स्पर्शलक्षणा गुणा यस्य तच्छोभनवर्णादिगुणम्, तथा, यच्छुभानुभावं शुभविपाकमित्यर्थः, तत् पुण्यमभिधीयते। यत् पुनरतः पुण्याद् विपरीतलक्षणम्- अशुभवर्णादिगुणम्, अशुभविपाकं चेत्यर्थः, तत् पापमुच्यते। एतच्चोभयमपि कथंभूतम्? इत्याह— न मैत्र्यादिभावेन परिणतस्कन्धवदतिबादरम्, सूक्ष्मेण कर्मवर्गणाद्रव्येण निष्पन्नत्वात्; नापि परमाण्वादिवदतिसूक्ष्ममिति ॥ १९४० ॥

आह— ननु तत् पुण्य-पापरूपं कर्मद्रव्यं गृह्णानो जीवः कीदृशं गृह्णाति, कथं च गृह्णाति? इत्याह—

[2]गिण्हइ तज्जोगं चिय रेणुं पुरिसो जहा कयब्भंगो। एगक्खेत्तोगाढं जीवो सव्वप्पएसेहिं ॥ १९४१ ॥

तस्य पुण्य-पापात्मकस्य कर्मणो योग्यमेव कर्मवर्गणागतं द्रव्यं जीवो गृह्णाति, न तु परमाण्वादिकम्, औदारिकादिवर्गणागतं वाऽयोग्यमित्यर्थः। तदप्येकक्षेत्रावगाढमेव गृह्णाति, न तु स्वावगाढप्रदेशेभ्यो भिन्नप्रदेशावगाढमित्यर्थः। तच्च यथा तैलादिकृताभ्यङ्गः पुरुषो रेणुं गृह्णाति तथा राग-द्वेषक्लिन्नस्वरूपो जीवोऽपि गृह्णाति, न तु निर्हेतुकमिति भावः। इदं च सर्वैरपि स्वप्रदेशैर्जीवो गृह्णाति, न तु कैश्चिदित्यर्थः। उक्तं च—

१ शोभनवर्णादिगुणं शुभानुभावं च यत् तत् पुण्यम्। विपरीतमत पापं न बादरं नातिसूक्ष्मं च ॥ १९४० ॥
२ गृह्णाति तद्योग्यमेव रेणुं पुरुषो यथा कृताभ्यङ्गः। एकक्षेत्रावगाढं जीवः सर्वप्रदेशैः ॥ १९४१ ॥

अतोऽनेनैव भिन्नकार्यदर्शनेन तत्कारणभूतयोः पुण्य-पापयोर्भिन्नताऽनुमीयत इति । 'होज्ज वेत्यादि' अथवा स्वभावत एव विनापि पुण्य-पापाभ्यां भवसंभूतिः- भववैचित्र्यस्य संभवः कैश्चिदिष्यते । तदेवं दर्शिताः पञ्चापि पुण्य-पापविषया विकल्पाः । एतैश्च भ्रमितमनोभिः संशयो न कर्तव्यः, एकस्यैव चतुर्थविकल्पस्यादेयत्वात्, शेषाणां चानादेयत्वात् । अत एव प्रत्यासत्तिन्यायमङ्गीकृत्य पञ्चमविकल्पं तावद् दूषयितुमाह- 'भण्णईत्यादि' भण्यतेऽत्रोत्तरम्- न स्वभावतो भवसंभूतिः, यतः स्वभावो वस्तुरूपो वाभिमतो भवेदिति द्वितीयगाथायां संवन्धः, निष्कारणता वा, वस्तुधर्मो वा स्वभावोऽभिमतो भवेत् ? इति त्रयो विकल्पाः । तत्र यदि वस्तुरूपोऽयमिति प्रथमो विकल्पः, तर्हि तकोऽसौ स्वभावो नास्ति, अनुपलम्भात्, खपुष्पवदिति ॥ १९१२ ॥ १९१३ ॥

अथानुपलभ्यमानोऽप्यस्त्यसावित्याशङ्क्याह—

[1]अच्चंतमणुवलद्धो वि अह तओ अत्थि नत्थि किं कम्मं ? । हेऊ व तदत्थित्ते जो णणु कम्मस्स वि स एव ॥१९१४॥
[2]कम्मस्स वाभिहाणं होज्ज सभावो त्ति होउ को दोसो ? । पइनियया गाराओ न य सो कत्ता घडस्सेव ॥ १९१५ ॥
मुत्तो अमुत्तो व तओ जइ मुत्तो तोऽभिहाणओ भिन्नो । कम्म त्ति सहावो त्ति य जइ वाऽमुत्तो न कत्ता तो ॥१९१६॥
देहाणं वोमं पिव, जुत्ता कज्जाइओ य मुत्तिमया । अह सो निक्कारणया तो खरसिंगादओ होंतु ॥१९१७॥
अह वत्थुणो स धम्मो परिणामो तो स कम्म-जीवाणं । पुन्ने-यराभिहाणो कारण-कज्जाणुमेओ सो ॥१९१८॥
किरियाणं कारणओ देहाईणं च कज्जभावाओ । कम्मं मदभिहियं ति य पडिवज्ज तमग्गिभूइ व्व ॥१९१९॥
तं चिय देहाईणं किरियाणं पि य सुभा-ऽसुभत्ताओ । पडिवज्ज पुण्णपावं सहावओ भिन्नजाईयं ॥१९२०॥

---

[1] गाथा १७८७ । [2] कर्मणो वाभिधान भवेत् स्वभाव इति भवतु को दोषः ? । प्रतिनियताकाराद् न च स कर्ता घटस्येव ॥ १९१५ ॥
मूर्तोऽमूर्तो वा सको यदि मूर्तस्ततोऽभिधानतो भिन्न. । कर्मेति स्वभाव इति च यदि वाऽमूर्तो न कर्ता तत ॥ १९१६ ॥
देहानां व्योमेव, युक्ता कार्यादितश्च मूर्तिमत्ता । अथ स निष्कारणता तत. खरशृङ्गादयो भवन्तु ॥ १९१७ ॥
अथ वस्तुन स धर्मः परिणामस्ततः स कर्म-जीवयोः । पुण्ये-तराभिधान कारण-कार्यानुमेयः स ॥१९१८ ॥
क्रियाणां कारणतो देहादीनां च कार्यभावात् । कर्म मदभिहितमिति च प्रतिपद्यस्व त्वमग्निभूतिरिव ॥ १९१९ ॥
तदेव देहादीनां क्रियाणामपि च शुभा-ऽशुभत्वात् । प्रतिपद्यस्व पुण्य-पापे स्वभावतो भिन्नजातीये ॥ १९२० ॥

"एगपएसोगाढं सव्वपएसेहिं कम्मुणो जोग्गं। बंधइ जहुत्तहेउं साइयमणाइयं वावि ॥ १ ॥"

उपशमश्रेणेः प्रतिपतितो मोहनीयादिकं कर्म सादि बध्नाति, शेषस्त्वनवाप्तोपशमश्रेणिर्जीवोऽनाद्येव बध्नातीत्यर्थ इति ॥१९४१॥

अथ प्रेरकः प्राह—

अविसिट्ठपोग्गलघणे लोए थूणतणुकम्मपविभागो। जुज्जेज्ज, गहणकाले सुभा-ऽसुभविवेयणं कत्तो ? ॥१९४२॥

नन्वविशिष्टैः मत्याकाशप्रदेशमनन्तानन्तैः शुभा-ऽशुभादिभेदेनाव्यवस्थितैः पुद्गलैर्घनो निरन्तरं व्याप्तोऽयं लोकः। ततश्च ग्रहणकाले गृह्णतो जीवस्य स्थूल-सूक्ष्मकर्मप्रविभागो युज्येत; ततो 'न वायरं नाइसुहुमं च' इति विशेषणमुपपन्नम्, एतद्विशेषणविशिष्टादन्यस्य स्वभावत एव जीवैरग्रहणात्। यत्तु शुभाशुभविवेचनं तत् समयमात्ररूपे कर्मग्रहणकाले तत्क्षण एव गृह्णतो जीवस्य कुतः संभाव्यते ?– न कुतश्चिदिति परस्याभिप्रायः। ततश्च 'सोहणवण्णाइगुणं' इत्यादि विशेषणं न युज्यत इति प्रेरकाकूतमिति ॥ १९४२ ॥

आचार्यः प्राह—

अविसिट्ठं चिय तं सो परिणामा-ऽऽसयसभावओ खिप्पं। कुरुते सुभमसुभं वा गहणे जीवो जहाहारं॥१९४३॥

स जीवस्तत्कर्म ग्रहणे ग्रहणकाले शुभा-ऽशुभादिविशेषणाविशिष्टमपि गृह्णन् क्षिप्रं तत्क्षणमेव शुभमशुभं वा कुरुते– शुभा-ऽशुभविभागेन व्यवस्थापयतीत्यर्थः। कुतः ? इत्याह–'परिणामा-ऽऽसयसभावउ त्ति' इहाश्रयो द्विविधकर्मणो जीव आश्रयः, कर्म तु शुभाशुभत्वस्य, तस्य द्विविधस्याप्याश्रयस्य स्वभाव आश्रयस्वभावः, परिणामश्चाश्रयस्वभावश्च परिणामा-ऽऽश्रयस्वभावौ, ताभ्यामेतत् कुरुते जीवः। इदमुक्तं भवति– जीवस्य यः शुभोऽशुभो वा परिणामोऽध्यवसायस्तद्वशाद् ग्रहणसमय एव कर्मणः शुभत्वमशुभत्वं वा जनयति; तथा जीवस्यापि कर्माश्रयभूतस्य स कोऽपि स्वभावोऽस्ति येन शुभा-ऽशुभत्वेन परिणमयन्नेव कर्म गृह्णाति; तथा, कर्मणोऽपि शुभा-ऽशुभभावाद्याश्रयस्य स स्वभावः– स कश्चिद् योग्यताविशेषोऽस्ति, येन शुभा-ऽशुभपरिणामान्वितजीवेन गृह्यमाणमेवैतद्रूपतया परिणमति। उपलक्षणं चैतत्; प्रकृति-स्थित्य-ऽनुभागवैचित्र्यम्, प्रदेशानामल्प-बहुभागवैचित्र्यं च जीवः कर्मणो ग्रहणसमय एव सर्वं करोतीति। उक्तं च—

१ एकप्रदेशावगाढं सर्वप्रदेशैः कर्मणो योग्यम्। बध्नाति यथोक्तहेतु सादिकमनादिकं वापि ॥ १ ॥
२ अविशिष्टपुद्गलघने लोके स्थूलतनुकर्मप्रविभाग। युज्येत, ग्रहणकाले शुभा-ऽशुभविवेचनं कुत ? ॥ १९४२ ॥ ३ गाथा १९४०।
४ अविशिष्टमेव तत् स परिणामा-ऽऽश्रयस्वभावत क्षिप्रम्। कुरुते शुभमशुभ वा ग्रहणे जीवो यथाऽऽहारम् ॥ १९४३ ॥

एताश्च गाथाः प्रायोऽग्निभूतिगणधरवादे व्याख्याता एव, सुगमाश्च। नवरं 'कारण-कज्जाणुमेओ सो त्ति' स च जीव-कर्मणोः पुण्य-पापाभिधानः परिणामः कारणेन कार्येण चाऽनुमीयते– कारणानुमानात् कार्यानुमानाच्च गम्यत इत्यर्थः। एतदेवानुमानद्वयमाह– 'क्रिरियाणं कारणओ इत्यादि' दानादिक्रियाणां हिंसादिक्रियाणां च कारणत्वात् कारणरूपत्वादस्ति तत्फलभूतस्तत्कार्यरूपपुण्य-पापात्मको जीव-कर्मपरिणामः, यथा कृष्यादिक्रियाणां शालि-यव-गोधूमादिकम्; उक्तं च—

"समासु तुल्यं विषमासु तुल्यं सतीष्वसच्चाप्यसतीषु सच्च। फलं क्रियास्वित्यथ यन्निमित्तं तद् देहिनां सोऽस्ति नु कोऽपि धर्मः॥ १॥"

एतत् कारणानुमानम्। 'देहाईणमित्यादि' देहादीनां कारणमस्ति, कार्यरूपत्वात् तेषाम्, यथा घटस्य मृद्-दण्ड-चक्र-चीवरादिसामग्रीकलितः कुलालः। न च वक्तव्यम्– दृष्ट एव माता-पित्रादिकस्तेषां हेतुः, दृष्टहेतुसाम्येऽपि सुरूपे-तरादिभावेन देहादीनां वैचित्र्यदर्शनात्, तस्य चादृष्टकर्माख्यहेतुमन्तरेणाभावात्। अत एव पुण्य-पापभेदेन कर्मणो द्वैविध्यम्, शुभदेहादीनां पुण्यकार्यत्वात्, इतरेषां तु पापफलत्वात्; उक्तं च—

"इह दृष्टहेत्वसंभविकार्यविशेषात् कुलालयत्न इव। हेत्वन्तरमनुमेयं तत् कर्म शुभा-ऽशुभं कर्तुः॥ १॥"

एतत् कार्यानुमानम्। तथा, मदभिहितमिति च कृत्वाऽग्निभूतिवत् त्वमपि कर्म प्रतिपद्यस्व, सर्वज्ञवचनप्रामाण्यादित्यर्थः। तदपि पुण्य-पापविभागेन विभक्तं प्रतिपद्यस्व, देहादीनां तत्कार्याणां क्रियाणां च तत्कारणभूतानां शुभा-ऽशुभत्वेन तद्द्वैविध्यदर्शनादिति॥ १९१४॥ १९१५॥ १९१६॥ १९१७॥ १९१८॥ १९१९॥ १९२०॥

पुनरपि पुण्य-पापयोः साधनाय प्रमाणमाह—

सुह-दुक्खाणं कारणमणुरूवं कज्जभावओऽवस्सं। परमाणवो घडस्स व कारणमिह पुण्ण-पावाइं॥१९२१॥

अस्त्यवश्यं सुख-दुःखयोरनुरूपं कारणम्, कार्यत्वात् तयोः, यच्चेह कार्यं तस्यानुरूपं कारणं भवत्येव, यथा घटस्य परमाणवः, तच्च तयोरिहानुरूपं कारणं सुखस्य पुण्यं, दुःखस्य तु पापमिति॥१९२१॥

प्रेरकः प्राह—

१ सुख-दुःखयोः कारणमनुरूपं कार्यभावतोऽवश्यम्। परमाणवो घटस्येव कारणमिह पुण्य-पापे॥ १९२१॥

"गहणसमयम्मि जीवो उप्पाएइ गुणे सपच्चयओ । सव्वजियाणंतगुणे कम्मपएसेसु सव्वेसु ॥ १ ॥

आउयभागो थोवो नामे गोए समो तओ अहिगो । आवरणमंतराए सरिसो अहिगो य मोहे वि ॥ २ ॥

सव्वुवरि वेयणीए भागो अहिगो उ कारण किंतु । सुह-दुक्खकारणत्ता ठिई विसेसेण सेसासु ॥ ३ ॥"

इति ॥ १९४३ ॥

एतत् सर्वं कर्मणो ग्रहणसमय आहारदृष्टान्तेन जीवः करोति, इत्याहारदृष्टान्तमेव भावयति—

[2]परिणामा-ऽऽसयवसओ धेणूए जहा पओ विसमहिस्स । तुल्लो वि तदाहारो तह पुण्णा-ऽपुण्णपरिणामो ॥१९४४॥

'तदाहारो त्ति' तयोरहि-धेन्वोराहारस्तदाहारः स तुल्योऽपि दुग्धादिको गृहीतः परिणामा-ऽऽश्रयवशाद् यथा धेन्वाः पयो दुग्धं भवति, अहेस्तु स एव विषं– विषरूपतया परिणमति, तथा तेनैव प्रकारेण पुण्या-ऽपुण्यपरिणामः । इदमुक्तं भवति– अस्ति स कश्चित् तस्याऽऽहारस्य परिणामो येन तुल्योऽपि सन्नाश्रयवैचित्र्याद् विचित्रतया परिणमति; आश्रयस्याप्यहि-धेनुलक्षणस्यास्ति तत्तद् निजसामर्थ्यम्, येन तुल्योऽपि गृहीत आहारस्तत्तद्रूपतया परिणमते; तथा पुण्य-पापयोरुपनययोजना कृतैवेति ॥ १९४४ ॥

अथवा, अयमेवाहारदृष्टान्तोऽन्यथा भाव्यते; तद्यथा—

[3]जह वेगसरीरम्मि वि सारा-ऽसारपरिणामयामेइ । अविसिट्ठो वाहारो तह कम्मसुभा-ऽसुभविभागो ॥१९४५॥

धेनु-विषधरयोर्भिन्ने शरीर आहारस्य परिणामवैचित्र्यं दर्शितम् । 'वा' इत्यथवा, यथैकस्मिन्नपि पुरुषादिशरीरेऽविशिष्टेऽप्येकरूपोऽप्याहारो गृहीतस्तत्क्षण एव सारा-ऽसारपरिणामतामेति– रसा-ऽसृग्-मांसादिरसपरिणामं मूत्र-पुरीषरूपमलपरिणामं च युगपदागच्छतीत्यर्थः, तथा कर्मणोऽप्यविशिष्टस्य गृहीतस्य परिणामा-ऽऽश्रयवशात् शुभा-ऽशुभविभागो द्रष्टव्य इति ॥ १९४५ ॥

---

१ ग्रहणसमये जीव उत्पादयति गुणान् स्वप्रत्ययतः । सर्वजितानन्तगुणान् कर्मप्रदेशेषु सर्वेषु ॥ १ ॥
आयुष्कभाग स्तोको नाम्नि गोत्रे समस्ततोऽधिक । आवरणेऽन्तराये सदृशोऽधिकश्च मोहेऽपि ॥ २ ॥
सर्वोपरि वेदनीये भागोऽधिकस्तु कारण किन्तु । सुख-दुःखकारणत्वात् स्थितिर्विशेषेण शेषासु ॥ ३ ॥

२ परिणामा-ऽऽश्रयवशतो धेन्वा यथा पयो विषमहे । तुल्योऽपि तदाहारस्तथा पुण्या ऽपुण्यपरिणाम ॥ १९४४ ॥

३ यथा वैकशरीरेऽपि सारा-ऽसारपरिणामततामेति । अविशिष्ट इवाहारस्तथा कर्मशुभा-ऽशुभविभाग ॥ १९४५ ॥

सुह-दुक्खकारणं जइ कम्मं कज्जस्स तदणुरूवं च। पत्तमरूवं तं पि हु अह रूविं नाणुरूवं तो ॥१९२२॥

ननु यदि सुख-दुःखयोः पुण्य-पापात्मकं कर्म कारणम्, तच्च यदि कार्यस्य सुख-दुःखरूपस्यानुरूपं सदृशमिष्यते, तर्हि सुख-दुःखयोरात्मपरिणामत्वेनारूपत्वात् तदपि पुण्य-पापात्मकं कर्म तदनुरूपतयाऽरूपं प्राप्नोति। अथ रूपवत्, तर्हि नानुरूपं तत्, मूर्तत्वेन विलक्षणत्वादिति ॥१९२२॥

अत्रोत्तरमाह—

नेहि सव्वहाणुरूवं भिन्नं वा कारणं, अह मयं ते। किं कज्ज-कारणत्तणमहवा वत्थुत्तणं तस्स? ॥१९२३॥

न हि सर्वथा कार्यानुरूपं कारणमिष्यते, येन सुख-दुःखवत् कर्मणोऽप्यरूपत्वं प्रेर्यते। नाप्येकान्तेन सर्वधर्मैः कारणं कार्याद् भिन्नमेष्टव्यम्। 'अह मयं ते त्ति' अथ ते तवैतद् मतम्– एकान्तेन सर्वैरपि धर्मैः कारणं कार्यानुरूपमेव, भिन्नं वाऽनुरूपमेवेति; तर्हि सर्वथाऽनुरूपत्व एकस्य कारणत्वेऽपरस्यापि कारणत्वात्, एकस्य च कार्यत्वेऽन्यस्यापि कार्यत्वात् किं तयोः कार्य-कारणत्वम्?– न किञ्चित्, द्वयोरपि कारणत्वात्, कार्यत्वाद् वेति। अथैकान्तभेदेऽभ्युपगम्यमाने कार्यस्य वस्तुत्वे किं नाम तस्य कारणस्य वस्तुत्वम्?– न किञ्चित्, द्वयोरपि वस्तुत्वे सर्वथा भेदहानिप्रसङ्गादिति। तस्माद् नैकान्तेनानुरूपता, अननुरूपता वा कार्य-कारणयोः ॥१९२३॥

किं तर्हि?,

सव्वं तुल्लातुल्लं जइ तो कज्जाणुरूवया केयं?। जं सोम्म! सपज्जाओ कज्जं परपज्जओ सेसो ॥१९२४॥

न केवलं कार्य-कारणे एव तुल्या-ऽतुल्यरूपे, किन्तु सकलमपि त्रिभुवनान्तर्गतं वस्तु परस्परं तुल्या-ऽतुल्यरूपमेव, न पुनः किञ्चित् कस्याप्येकान्तेन तुल्यमतुल्यं वा। लब्धावकाशः परः प्राह– 'जईत्यादि' यद्येवम्, ततः केयं कार्यानुरूपता कारणस्य विशेषतोऽन्विष्यते, येनोच्यते– 'सुह-दुक्खाणं कारणमणुरूवं' इत्यादि?। यदि हि किञ्चिदेकान्तेनानुरूपं स्यात् तदेत्थं वक्तुं युज्यते, यदा त्वेकान्ततो न किञ्चिदनुरूपम्, नाप्यननुरूपम्; किन्तु सर्वं सर्वेण तुल्या-ऽतुल्यरूपमेव, तदा किमनेन विशेषणेन?। अत्रोच्यते– 'ज-

१ सुख-दुःखकारण यदि कर्म कार्यस्य तदनुरूप च। प्राप्तमरूपं तदपि खल्वथ रूपि नानुरूप तत ॥ १९२२ ॥
२ नहि सर्वथानुरूप भिन्न वा कारण, अथ मतं ते। किं कार्य-कारणत्वमथवा वस्तुत्व तस्य? ॥ १९२३ ॥
३ सर्वं तुल्या-ऽतुल्य यदि ततः कार्यानुरूपता केयम्?। यत् सौम्य! स्वपर्याय कार्यं परपर्यय. शेष ॥ १९२४ ॥ ४ गाथा १९२१।

तदेवं पुण्य-पापयोर्लक्षणादिभिर्भेदं प्रसाध्य तद्भेदभूतप्रकृतिभेदेनापि तयोर्भेदमुपदर्शयन्नाह—

सायं सम्मं हासं पुरिस-रइ-सुभाउ-नाम-गोत्ताइं। पुण्णं, सेसं पावं नेयं सविवागमविवागं ॥ १९४६ ॥

सातवेदनीयम्, शोधितमिथ्यात्वपुद्गलरूपं सम्यक्त्वम्, हास्यम्, पुरुषवेदः, रतिः; शुभायुः, नाम-गोत्राणि चेत्येतत् सर्वं पुण्यमभिधीयते। तत्र नारकायुर्वर्जं शेषमायुस्त्रयं शुभम्, देवद्विक-यशः-कीर्ति तीर्थकरनामाद्याः सप्तत्रिंशत् प्रकृतयो नामकर्मणि शुभाः, गोत्रे पुनरुच्चैर्गोत्रं शुभम्। एताः षट्चत्वारिंशत् प्रकृतयः किल शुभत्वात् पुण्यम्। अन्ये तु मोहनीयभेदान् सर्वानपि जीवस्य विपर्यास-हेतुत्वात् पापमेव मन्यन्ते। ततः सम्यक्त्व-हास्य-पुरुषवेद-रतिवर्जा द्विचत्वारिंशदेव प्रकृतयः पुण्यम्; तद्यथा—

"सोय उच्चागोयं नर-तिरि-देवाउयाइं तह नामे। देवदुग मणुयदुगं पणिदजाई य तणुपणगं ॥ १ ॥

अंगोवंगाण तिगं पढम सघयणमेव संठाणं। सुभवण्णाइचउक्क अगुरुलहू तह य परघायं ॥ २ ॥

ऊसासं आयाव उज्जोय विहगगई वि य पसत्था। तस-बायर-पज्जत्तं पतेय थिरं सुभं सुभगं ॥ ३ ॥

सुस्सर आएज्ज जस निम्मिण तित्थयरमेव एयाओ। बायाल पगईओ पुण्ण ति जिणेहिं भणिआओ ॥ ४ ॥"

भणितशेषास्तु या द्व्यशीतिप्रकृतयस्तत् सर्वमशुभत्वात् पापं विज्ञेयम्। सम्यक्त्वं कथमशुभम्– कथं तत् पापम्? इति चेत्। उच्यते— रुचिरूपमेव हि सम्यक्त्वं शुभं तच्चेह न विचार्यते, किन्तु शोधितमिथ्यात्वपुद्गलरूपम्, तच्च शङ्काद्यनर्थहेतुत्वादशुभमेव, अशुभत्वाच्च पापम्। सम्यग्रुचेश्चातिशयेनानावारकत्वादुपचारमात्र एवेदं सम्यक्त्वमुच्यते, परमार्थतस्तु मिथ्यात्वमेवैतत्। इत्यलं प्रसङ्गेन। इदं च पुण्य-पापलक्षणमुभयमपि सविपाकमविपाकं च मन्तव्यम्– यथा बद्धं तथैव विपाकतः किञ्चिद् वेद्यते, किञ्चित्तु मन्द-रसं नीरसं वा कृत्वा प्रदेशोदयेनाविपाकं वेद्यत इत्यर्थः। तदेवं पुण्यं पापं च भेदेन व्यवस्थाप्य निरस्तः संकीर्णपुण्य-पापपक्षः।

१ सातं सम्यक्त्वं हास्यं पुरुष रति-शुभायु-नाम-गोत्राणि। पुण्यं, शेष पापं ज्ञेयं सविपाकमविपाकम् ॥ १९४६ ॥

२ सातमुच्चैर्गोत्रं नर तिर्यग्-देवायुष्काणि तथा नाम्नि। देवद्विकं मनुजद्विक पञ्चेन्द्रियजातिश्च तनुपञ्चकम् ॥ १ ॥
अङ्गोपाङ्गानां त्रिकं प्रथमं संहननमेव संस्थानम्। शुभवर्णादिचतुष्कमगुरुलघु तथा च पराघातम् ॥ २ ॥
उच्छ्वास आताप उद्द्योतो विहायोगतिरपि प्रशस्ता। त्रस बादर-पर्याप्त प्रत्येकं स्थिर शुभ सुभगम् ॥ ३ ॥
सुस्वरमादेय यशो निर्माण तैर्थकरमेवैताः। द्विचत्वारिंशत् प्रकृतय पुण्यमिति जिनैर्भणिता. ॥ ४ ॥

अहवा गुरुविणय-सुप्पयाणभण्डविणिओगओ दो वि । निज्जरलाभयसहिया टंकण-वणिओवमा जोग्गा ॥११॥
अत्थी स एव य गुरू होइ जओ तो विसेसओ सीसो । जोग्गोऽजोग्गो भन्नइ तत्थाजोग्गो इमो होइ ॥१२॥

कस्स न होही [1]देसो अणब्भुवगओ य निरुवँगारी य ।
अप्पच्छंदमईओ पत्थियओ गंतुकामो य ॥ १३० ॥

भन्नइ अणब्भुवगओऽणुवसंपन्नो सुउवसंपदया । गुरुणो करणिज्जाइं अकुव्वमाणो निरुवगारी ॥ १ ॥
अप्पच्छंदमईओ सच्छंदं कुणइ सव्वकज्जाइं । पत्थियओ संपत्थियबिइज्जओ निच्चगमिउ व्व ॥ २ ॥
गंतुमणो जो जंपइ नवरिं समप्पउ इमो सुयक्खंधो । पढिउं सोउं च तओ गच्छं को अत्थए[3] एत्थ ? ॥ ३ ॥

विणओणएहिं पंजलि[4]यडेहिं छंदमणुयत्तमाणेहिं ।
आराहिओ गुरुजणो सुयं बहुविहं लहुं देइ ॥ १३१ ॥

विणओणओऽभिवंदइ पढए पुच्छए पडिच्छइ वा णं । पंजलियडोऽभिमुहो कयंजली पुच्छणाईसु ॥ १ ॥
सद्दहइ समत्थेइ य कुणइ करावेइ गुरुजणाभिमयं । छंदमणुयत्तमाणो स गुरुजणाराहणं कुणइ ॥ २ ॥

सेलघण-कुडग-चालणि-परिपूणग-हंस-महिस-मेसे य ।
मसग-जलूग-बिराली जाहग-गोभेरी आहेरी ॥ १३२ ॥

ऊल्लेऊण न सक्को गज्जइ इय मुग्गसेलओऽरन्ने । तं संवट्टयमेहो गंतुं तस्सुपरिं पडइ ॥ १ ॥

१ 'वेसो' । २ 'वयारि य' । ३ 'इच्छए इत्थ' । ४ 'लिउडे' ।

रविउ त्ति ठिओ मेहो, उच्छोऽम्हि नव त्ति गज्जइ सेलो। सेलसमं गाहिस्सं निविज्जइ गाहगो एवं ॥ २ ॥
आयरिए सुत्तम्मि य परिवाओ सुत्त-अत्थपलिमंथो। अन्नेसिं पिय हाणी, पुट्ठा वि न दुद्धया वंझा ॥ ३ ॥
वुट्ठे वि दोणमेहे न कण्हभोमाओ लोठए उदयं। गहण-धरणासमत्थे इय देयमच्छित्तिकारिम्मि ॥ ४ ॥
भाविय इयरे य कुडा अपसत्थ-पसत्थभाविया दुविहा। पुप्फाईहिं पसत्था सुर-तेल्लाईहिं अपसत्था ॥ ५ ॥
वम्मा अवम्मा वि य पसत्थवम्माओ होंति अगेज्झा। अपसत्थअवम्मा वि य, तप्पडिवक्खा भवे गेज्झा ॥६॥
कुप्पवयणओसन्नेहिं भाविया एवमेव भावकुडा। संविग्गेहिं पसत्था वम्मा अवम्मा य तह चेव ॥ ७ ॥
जे उण अभाविया ते चउव्विहा, अहविमो गमो अन्नो। छिड्डकुड-भिन्न-खंडे सगले य परूवणा तेसिं ॥ ८ ॥
सेले य छिड्ड-चालणि मिहो कहा सोउमुट्ठियाणं तु। छिड्डाह तत्थ विट्ठो सुमरिंसु सरामि नेदाणिं ॥ ९ ॥
एगेण विसइ बीएण नीइ कन्नेण चालणी आह। धन्न त्थ आह सेलो जं पविसइ नीइ वा तुज्झं ॥१०॥
तावसखउरकठिणयं चालणिपडिवक्खो न सवइ दव्वं पि। परिपूणगम्मि उ गुणा गलंति दोसा य चिट्ठंति ॥११॥
सव्वण्णुपामण्णा दोसा हु न संति जिणमए केइ। जं अणुवउत्तकहणं अपत्तमासज्ज व हवेज्ज ॥ १२ ॥
अंबत्तणेण जीहाए कूचिया होइ खीरमुदगम्मि। हंसो मुत्तूण जलं आवियइ पयं तह सुसीसो ॥ १३ ॥
सयमवि न पियइ महिसो न य जूहं पियइ लोडियं उदगं। विग्गह-विगहाहिं तहा अत्थकुपुच्छाहि य कुसीसो ॥१४॥
अवि गोपयम्मि पिबे सुढिओ तणुयत्तणेण तुंडस्स। न करेइ कलुस तोयं मेसो एवं सुसीसो वि ॥ १५ ॥
मसउ व्व तुदं जच्चाइएहिं निच्छुब्भए कुसीसो वि। जलुगा व अदूमंतो पिबइ सुसीसो वि सुयनाणं ॥ १६ ॥
छड्डेउं भूमीए खीरं जह पिबइ दुट्ठमज्जारी। परिसदुट्ठियाण पासे सिक्खइ एवं विणयभंसी ॥ १७ ॥
पाउं थोउं थोउं खीरं पासाइं जाहगो जह लिहइ। एमेव जियं काउं पुच्छइ मइमं न खेएइ ॥ १८ ॥

इतश्चायमयुक्तः– सर्वस्यापि सन्मिश्रसुखं-दुःखाख्यकार्यप्रसङ्गात्; न चैतदस्ति, देवादीनां केवलसुखाधिक्यदर्शनात्, नारकादीनां च केवलदुःखप्राचुर्यनिर्णयात् । न च सर्वथा सन्मिश्रैकरूपस्य हेतोरल्प-बहुत्वभेदेऽपि कार्यस्य प्रमाणतोऽल्प-बहुत्वं विहाय अन्यथा स्वरूपतो भेदो युज्यते । न हि मेचककारणप्रभवं कार्यमन्यतमवर्णोत्कटं घटते । तस्मात् सुखातिशयस्यान्यद् निमित्तम्, अन्यच्च दुःखातिशयस्येति । न च सर्वथैकरूपस्य संकीर्णपुण्यपापलक्षणस्य हेतोः सुखातिशयनिबन्धनं पुण्यांशवृद्धिर्दुःखातिशयकारणपापांशहान्या सुखातिशयप्रभवाय कल्पयितुं न्याय्या, पुण्यांश-पापांशयोर्भेदप्रसङ्गात्; तथाहि– यद्वृद्धावपि यद् न वर्धते तत् ततो भिन्नम्, यथा देवदत्तवृद्धावप्यवर्धमानो यज्ञदत्तः, न वर्धते च पुण्यांशवृद्धौ पापांशः, तस्मात् ततो भिन्नोऽसाविति । तस्माद् न सर्वथैकरूपता पुण्य-पापांशयोर्घटते। कर्मसामान्यरूपतया तु यद्यसौ तयोरिष्यते तदा सिद्धसाध्यता, सात-यशः-कीर्त्यादेः पुण्यस्य, असाताऽयशः-कीर्त्यादेस्तु पापस्यास्माभिरपि कर्मत्वेनैकताया अभ्युपगमात् । तस्मात् पुण्य-पापरूपतया विविक्ते एव पुण्य-पापे स्त इति । ततः सुख-दुःखवैचित्र्यनिबन्धनयोः पुण्य-पापयोर्यथोक्तनीत्या साधितत्वाद् न कर्तव्यस्तत्संशयः ॥ १९४६ ॥

किञ्च, असत्त्वे पुण्य-पापयोर्वेदोक्तनीत्या साधितस्याग्निहोत्रादेः, लोकप्रसिद्धस्य च दानादेर्वैफल्यं स्यादिति दर्शयन्नाह—

असइ बहिं पुन्न-पावे जमग्गिहोत्ताइं सग्गकामस्स । तदसंबद्धं सव्वं दाणाइफलं च लोअम्मि ॥ १९४७ ॥

पुण्य-पापयोरसत्त्वे यदेतद् बहिरग्निहोत्राद्यनुष्ठानं स्वर्गकामस्य, यच्च दान-हिंसादिफलं पुण्य-पापात्मकं लोके प्रसिद्धं, तत् सर्वमसंबद्धं स्यात्, स्वर्गस्यापि पुण्यफलत्वात्, पुण्य-पापयोश्च भवदभिप्रायेणासत्त्वात् । तस्मादभ्युपगन्तव्ये एव पुण्य-पापे । तदेवं वेदवचनप्रामाण्यात्, युक्तितश्च छिन्नस्तस्य संशय इति ॥ १९४७ ॥

ततः किं कृतवानसौ ? इत्याह—

छिन्नम्मि संसयम्मी जिणेण जर-मरणविप्पमुक्केणं । सो समणो पव्वइओ तिहिं ओ सह खंडियसएहिं ॥१९४८॥

गतार्था ॥ इति चतुश्चत्वारिंशद्गाथार्थः ॥ १९४८ ॥

॥ इति नवमो गणधरवादः समाप्तः ॥



१ असतोर्बहिः पुण्य पापयोरग्निहोत्रादि स्वर्गकामस्य । तदसंबद्धं सर्वं दानादिफलं च लोके ॥ १९४७ ॥ २ गाथा १९०४ ।

नायमेकान्तो यदनादिसंयोगो न भिद्यते, यतः काञ्चन-धातुपाषाणयोरनादिरपि संयोगोऽग्न्यादिसंपर्केण विघटत एव, तद्वज्जीव-कर्मसंयोगस्यापि सम्यग्ज्ञान-क्रियाभ्यां वियोगं मण्डिकवत् त्वमपीह प्रतिपद्यस्वेति ॥ १९७७ ॥

अथ प्रकारान्तरेणापि मोक्षाभावप्रतिपादकं प्रभासाभिप्रायं भगवान् प्रकटयितुमाह—

[1]जं नारगाइभावो संसारो नारगाइभिण्णो य । को जीवो तं मन्नसि तन्नासे जीवनासो त्ति ॥ १९७८ ॥

यद् यस्माद् नारक-तिर्यग्-नरा-ऽमरभाव एव नारकादित्वमेव संसार उच्यते नान्यः, नारकादिपर्यायभिन्नश्च कोऽन्यो जीवः ?— न कोऽपीत्यर्थः, नारकादिभावादन्यत्वेन कदाचिदपि जीवस्यानुपलम्भादिति भावः । ततस्तन्नाशे नारकादिभावरूपसंसारनाशे जीवस्य स्वस्वरूपनाशात् सर्वथा नाश एव भवति; ततः कस्यासौ मोक्षः ? । इति त्वं मन्यसे ॥ १९७८ ॥

तदेतदयुक्तम्; कुतः ? इत्याह—

[2]न हि नारगाइपज्जायमेत्तनासम्मि सव्वहा नासो । जीवदव्वस्स मओ मुद्दानासे व हेमस्स ॥ १९७९ ॥

कम्मकओ संसारो तन्नासे तस्स जुज्जए नासो । जीवत्तमकम्मकयं तन्नासे तस्स को नासो ? ॥ १९८० ॥

नारक-तिर्यगादिरूपेण यो भावः स जीवस्य पर्याय एव । न च पर्यायमात्रनाशे पर्यायिणो जीवद्रव्यस्यापि सर्वथा नाशो मतः, कथञ्चित्तु भवत्यपि । न हि मुद्रादिपर्यायमात्रनाशे हेम्नः सुवर्णस्य सर्वथा नाशो दृष्टः । ततो नारकादिसंसारपर्यायनिवृत्तौ मुक्तिपर्यायान्तरोत्पत्तिर्जीवस्य, मुद्रापर्यायनिवृत्तौ कर्णपूरपर्यायान्तरोत्पत्तिरिव सुवर्णस्य, न किञ्चिद् विरुध्यत इति । ननु यथा कर्मणो नाशे संसारो नश्यति तथा तन्नाशे जीवत्वस्यापि नाशाद् मोक्षाभावो भविष्यति । एतदप्यसारम् । कुतः ? इत्याह— 'कम्मकओ इत्यादि' कर्मकृतः कर्मजनितः संसारः, ततस्तन्नाशे कर्मनाशे तस्य संसारस्य नाशो युज्यत एव, कारणाभावे कार्याभावस्य सुप्रतीतत्वात् । जीवत्वं पुनरनादिकालप्रवृत्तत्वात् कर्मकृतं न भवति, अतस्तन्नाशे कर्मनाशे तस्य जीवस्य को नाशः ?— न कश्चित्; कारण-व्यापकयोरेव कार्य-व्याप्यनिवर्तकत्वात्; कर्म तु जीवस्य न कारणं नापि व्यापकमिति भावः ॥ १९७९ ॥ १९८० ॥

---

1 यद् नारकादिभावः संसारो नारकादिभिन्नश्च । को जीवस्त्वं मन्यसे तन्नाशे जीवनाश इति ॥ १९७८ ॥

2 न हि नारकादिपर्यायमात्रनाशे सर्वथा नाशः । जीवद्रव्यस्य मतो मुद्रानाश इव हेम्नः ॥ १९७९ ॥
कर्मकृत संसारस्तन्नाशे तस्य युज्यते नाशः । जीवत्वमकर्मकृतं तन्नाशे तस्य को नाशः ? ॥ १९८० ॥

अथ दशमगणधरवक्तव्यतामाह—

[1]ते पव्वइए सोउं मेअज्जो आगच्छई जिणसयासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥१९४९॥

मेतार्यनामा दशमो द्विजोपाध्यायः श्रीमज्जिनसकाशमागच्छति । शेषं गतार्थमिति ॥ १९४९ ॥

ततः किम् ? इत्याह—

[2]आभट्ठो य जिणेणं जाइ-जरा-मरणविप्पमुक्केणं । नामेण य गोत्तेण य सव्वण्णू सव्वदरिसी णं ॥१९५०॥

सव्याख्याना तथैव ॥ १९५० ॥

आभाष्य ततः किमुक्तोऽसौ ? इत्याह—

[3]किं मन्ने परलोओ अत्थि नत्थि त्ति संसओ तुज्झ । वेयपयाण य अत्थं न याणसि तेसिमो अत्थो ॥१९५१॥

आयुष्मन् मेतार्य ! त्वमेवं मन्यसे– किं भवान्तरगमनलक्षणः परलोकोऽस्ति, नास्ति वा ? इति । अयं च संशयस्तव विरुद्धवेदपदश्रुतिनिबन्धनो वर्तते । तानि च "विज्ञानघन एवैतेभ्यो भूतेभ्यः०" इत्यादीनि प्रथमगणधरोक्तानि द्रष्टव्यानि । 'तेषां चार्थं न जानासि' इत्यादि तथैवेति ॥ १९५१ ॥

यया च युक्त्या मेतार्यः परलोकनास्तित्वं मन्यते, तां भगवान् व्यक्तीकुर्वन्नाह—

[4]मन्नसि जइ चेयण्णं मज्जंगमउ व्व भूयधम्मो त्ति । तो नत्थि परलोगो तन्नासे जेण तन्नासो ॥१९५२॥

सौम्य ! त्वमेवं मन्यसे– यदि तावच्चैतन्यं पृथिव्यादिभूतधर्मः– भूतेभ्योऽनर्थान्तरभूतमित्यर्थः, यथा गुड-धातक्यादिमद्याङ्गेभ्योऽनर्थान्तरं मदधर्मः, तर्हि नास्त्यवान्तरगमनलक्षणः परलोकः, येन तन्नाशे भूतनाशे तस्यापि चैतन्यस्य नाशो ध्वंसो जायते । यो हि

1 तान् प्रव्रजितान् श्रुत्वा मेतार्य आगच्छति जिनसकाशम् । व्रजामि वन्दे वन्दित्वा पर्युपासे ॥ १९४९ ॥ 2 गाथा १६०९ ।
3 किं मन्यसे परलोकोऽस्ति नास्तीति संशयस्तव । वेदपदानां चार्थं न जानासि तेषामयमर्थः ॥ १९५१ ॥
4 मन्यसे यदि चैतन्य मद्याङ्गमद इव भूतधर्म इति । ततो नास्ति परलोकस्तन्नाशे येन तन्नाशः ॥ १९५२ ॥

इतश्च जीवो न विनश्यति । कुतः ? इत्याह—

[1]न विगाराणुवलंभादागासं पिव विणासधम्मो सो । इह नासिणो विगारो दीसइ कुंभस्स वाऽवयवा ॥१९८१॥

न विनाशधर्मा जीव इति प्रतिज्ञा । विकारानुपलम्भादिति हेतुः । इह यो विनाशी तस्य विकारो दृश्यते, यथा मुद्गरादिध्वस्तस्य कुम्भस्य कपाललक्षणा अवयवाः; यस्त्वविनाशी न तस्य विकारदर्शनम्, यथाऽऽकाशस्येति । ततो मुक्तस्य जीवस्य नित्यत्वाद् नित्यो मोक्ष इति ॥ १९८१ ॥

स्याद् मतिः– तर्हि प्रतिक्षणध्वंसी मोक्षो मा भूत्, कालान्तरविनाशी तु भविष्यति, कृतकत्वात्, घटवत् । तदयुक्तम्, घटप्रध्वंसाभावेनानैकान्तिकत्वात्, इति दर्शयन्नाह—

[2]कालंतरनासी वा घडो व्व कयगाइओ मई होज्जा । नो पद्धंसाभावो भुवि तद्धम्मा वि जं निच्चो ॥१९८२॥

अत्र प्रेर्यं परिहारं चाह—

[3]अणुदाहरणमभावो खरसंगं पिव मई न तं जम्हा । कुंभविणासविसिट्ठो भावो च्चिय पोग्गलमओ सो ॥१९८३॥

यद्वा, कृतकत्वं मोक्षस्याभ्युपगम्योक्तम् ; इदानीं तदेव तस्य नास्तीति सोदाहरणमुपदर्शयन्नाह—

[4]किंवेगंतेण कयं पोग्गलमेत्तविलयम्मि जीवस्स । किं निव्वत्तियमहियं नभसो घडमेत्तविलयम्मि ॥१९८४॥

अनुमानात् पुनरपि मुक्तस्य नित्यत्वं साधयति—

[5]दव्वामुत्तत्तणओ मुत्तो निच्चो नभं व दव्वतया । नणु विभुयाइपसंगो एवं सइ, नाणुमाणाओ ॥ १९८५ ॥

नित्यो मुक्तात्मा, द्रव्यत्वे सत्यमूर्तत्वात् ; 'दव्वतय त्ति' यथा द्रव्यत्वे सत्यमूर्तत्वाद् नित्यं नभः । आह– नन्वनेन दृष्टान्तेन व्यापकत्वाद्यपि सिध्यति जीवस्य; तथाहि– विभुर्व्यापकः सर्वगतो जीवः, द्रव्यत्वे सत्यमूर्तत्वात्, यथा नभः । तदेतद् न । कुतः ? ।

1 न विकारानुपलम्भादाकाशमिव विनाशधर्मा स । इह नाशिनो विकारो दृश्यते कुम्भस्येवावयवाः ॥ १९८१ ॥
2 कालान्तरनाशी वा घट इव कृतकादितो मतिर्भवेत् । नो प्रध्वंसाभावो भुवि तद्धर्मापि यद् नित्य. ॥ १९८२ ॥
3 अनुदाहरणमभाव खरशृङ्गमिव मतिर्न तद् यस्मात् । कुम्भविनाशविशिष्टो भाव एव पुद्गलमय. स ॥ १९८३ ॥ 4 गाथा १८३९ ।
5 द्रव्यामूर्तत्वतो मुक्तो नित्यो नभ इव द्रव्यतया । ननु विभुतादिप्रसङ्ग एवं सति, नानुमानात् ॥ १९८५ ॥

यदनर्थान्तरभूतो धर्मः स तद्विनाशे नश्यत्येव, यथा पटादिधर्मः शुक्लत्वादिः। ततो भूतैरेव सह प्रागेव नष्टस्य चैतन्यस्य कुतो भवान्तरगमनम्? इति ॥ १९५२ ॥

अथ भूतेभ्योऽर्थान्तरं चैतन्यं, तथापि न परलोक इत्याह—

[1]अह वि तदत्थंतरया न य निच्चत्तणमओ वि तदवत्थं। अनलस्स वाऽरणीओ भिन्नस्स विणासधम्मस्स ॥१९५३॥

अथापि तदर्थान्तरता भूतेभ्योऽर्थान्तरता चैतन्यस्याभ्युपगम्यते, नन्वतोऽपि तदवस्थं भवान्तरगामित्वाभावलक्षणं दूषणम्; चशब्दो यस्मादर्थे, यतोऽर्थान्तरभूतस्यापि चैतन्यस्य न नित्यत्वम्। कथंभूतस्योत्पत्तिमत्त्वेन विनाशधर्मकस्य। कस्य यथाऽनित्यत्वम्? इत्याह— अनलस्य। कथंभूतस्य? । भिन्नस्य। कस्य?। अरणीतोऽरणेः। इदमुक्तं भवति— भूतेभ्योऽर्थान्तरत्वेऽप्यनित्यं चैतन्यम्, उत्पत्तिधर्मकत्वात्, अरणिकाष्ठोत्पन्नतद्भिन्नानलवदिति, यच्चानित्यं तत् किमपि कालं स्थित्वाऽनलवदत्रापि ध्वंसते, इति न तस्य भवान्तरयायित्वम्, अत इत्थमपि न परकोलसिद्धिरिति ॥ १९५३ ॥

अथ प्रतिपिण्डं भिन्नानि भूतधर्मरूपाणि बहूनि चैतन्यानि नेष्यन्ते, किन्त्वेक एव समस्तचैतन्याश्रयः सर्वत्रिभुवनगतो [2]निष्क्रियश्चात्माऽभ्युपगम्यते; यत उक्तम्—

"एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ १ ॥"

ननु तथापि न परलोकसिद्धिरिति दर्शयन्नाह—

[3]अह एगो सव्वगओ निक्किरिओ तहवि नत्थि परलोओ। संसरणाभावाओ वोमस्स व सव्वपिंडेसु ॥१९५४॥

अथैकः सर्वगतो निष्क्रियश्चात्माऽभ्युपगम्यते, ननु तथापि न परलोकगमनसिद्धिः, तस्यात्मनः सर्वेषु गो-मनुष्यादिपिण्डेषु सर्वगतत्वेन निष्क्रियत्वेन च संसरणाभावात्, व्योमवदिति ॥ १९५४ ॥

इतोऽपि च परलोकाशङ्का। कुतः? इत्याह—

१ अथापि तदर्थान्तरता न च नित्यत्वमतोऽपि तदवस्थम्। अनलस्येवाऽरणितो भिन्नस्य विनाशधर्मेण ॥ १९५३ ॥ २ घ छ 'नि संगताकिय'। ३ अथैक सर्वगतो निष्क्रियस्तथापि नास्ति परलोकः। संसरणाभावाद् व्योम्न इव सर्वपिण्डेषु ॥ १९५४ ॥

सर्वगतत्वबाधकानुमानसद्भावात्; तथाहि– त्वक्पर्यन्तदेहमात्रव्यापको जीवः, तत्रैव तद्गुणोपलब्धेः, स्पर्शनवत्, इत्यनुमानाद् बाध्यते सर्वगतत्वं जीवस्य। एवं 'न बध्यते, नापि मुच्यते जीवः, द्रव्यत्वे सत्यमूर्तत्वात्, नभोवत्' इत्याद्यपि दूषणं, 'बध्यते पुण्य-पापकर्मणा जीवः, दान-हिंसादिक्रियाणां सफलत्वात्, कृष्यादिक्रियावत्, तथा, विघटते सम्यगुपायात् कोऽपि जीव-कर्मसंयोगः, संयोगत्वात्, काञ्चन-धातुपाषाणसंयोगवत्' इत्याद्यनुमानात् परिहर्तव्यमिति ॥ १९८५ ॥

अथवा, किमेकान्तेन बद्धाग्रहैर्मोक्षस्य नित्यत्वं साध्यते, सर्वस्यापि वस्तुनः परमार्थतो नित्यानित्यरूपत्वात् ?। उत्कटा-ऽनुत्कटपर्यायविशेषविवक्षामात्रेणैव हि 'केवलम्' इत्यादिव्यपदेश इति दर्शयन्नाह—

[1]को वा निच्चग्गाहो सव्वं चिय विभव-भङ्ग-ठिइमइयं। पज्जायंतरमेत्तप्पणादनिच्चाइववएसो ॥ १९८६ ॥

अथ कथञ्चिदनित्यत्वेऽपि मोक्षस्य न किञ्चिद् नः क्षूयत इति भावः। इह '[2]कालंतरनासी वा घडो व्व' इत्यादिगाथाः प्रागपि षष्ठगणधरे बन्ध-मोक्षविचारे व्याख्याता एव। ततो यदिह न व्याख्यातं तत् ततोऽवगन्तव्यमिति ॥ १९८६ ॥

अथ प्रथमपक्षे यदुक्तम्– '[3]किं दीवस्स व नासो निव्वाणं' इत्यादि। तत्रोत्तरमाह—

[4]न य सव्वहा विणासोऽणलस्स परिणामओ पयस्सेव। कुंभस्स कवालाण व तहाविगारोवलंभाओ ॥१९८७॥

न प्रदीपानलस्य सर्वप्रकारैर्विनाशः, परिणामत्वात्, पयसो दुग्धस्येव; अथवा, यथा मुद्गराद्याहतस्य कपालतया परिणतस्य घटस्य, यथा वा चूर्णीकृतानां कपालानाम्। कुतो न सर्वथा विनाशः ? इत्याह– तथा तेन रूपान्तरप्रकारेण विकारस्य प्रत्यक्षादि-प्रमाणोपलम्भादिति ॥ १९८७ ॥

[5]अत्र प्रेर्यं परिहारं चाह—

[6]जइ सव्वहा न नासोऽणलस्स किं दीसए न सो सक्खं ?। परिणामसुहुमयाओ जलयविगारंजणरउ व्व ॥१९८८॥

यदि सर्वथाऽनलस्य न नाशः, तर्हि विध्यातानन्तरं किमित्यसौ साक्षाद् न दृश्यते ?। अत्रोत्तरमाह– 'परिणामेत्यादि' विध्याते

1 गाथा १८४३। 2 गाथा १९८२। 3 गाथा १९७५।

4 न च सर्वथा विनाशोऽनलस्य परिणामत पयस इव। कुम्भस्य कपालानामिव तथाविकारोपलम्भात् ॥ १९८७ ॥ 5 क. ग 'अथ प्रे'।

6 यदि सर्वथा न नाशोऽनलस्य किं दृश्यते न स साक्षात्। परिणामसूक्ष्मतातो जलदविकारोऽञ्जनरज इव ॥ १९८८ ॥

[1]इहलोगाओ व परो सुराइलोगो न सो वि पच्चक्खो। एवं पि न परलोगो सुव्वइ य सुईसु तो संका ॥१९५५॥

अथवा, इहलोकापेक्षया सुर-नारकादिभवः परलोक उच्यते, स च न प्रत्यक्षो दृश्यते, अत एवमपि न परलोकः सिध्यति, श्रूयते चासौ श्रुतिषु शास्त्रेषु, ततस्तच्छङ्का– किमस्ति नास्ति वा ?। इति दर्शितः पूर्वपक्षः ॥ १९५५ ॥

अत्र प्रतिविधीयते— यदुक्तम्— 'भूतधर्मश्चैतन्यम्' तत्राह—

[2]भूइंदियाइरित्तस्स चेयणा सो य दव्वओ निच्चो। जाइस्सरणाईहिं पडिवज्जसु वाउभूइ व्व ॥ १९५६ ॥

इह भूतेन्द्रियातिरिक्तस्य पूर्वाभिहितानुमानादिप्रमाणसिद्धस्यात्मन एव संबन्धिनी चेतना मन्तव्या, न तु भूतधर्मः। स चात्मा जातिस्मरणादिहेतुर्द्रव्यतो नित्य इति वायुभूतिरिव प्रतिपद्यस्व । अतो नैकान्तानित्यत्वपक्षोक्तो दोषः, पर्यायत एवाऽस्यानित्यत्वादिति भावः ॥ १९५६ ॥

अथैकः सर्वगतो निष्क्रियश्चात्मा कस्माद् नेष्यते ? इत्याह—

[3]न य एगो सव्वगओ निक्किरिओ लक्खणाइभेआओ। कुंभादउ व्व बहवो पडिवज्ज तमिंदभूइ व्व ॥१९५७॥

न चास्माभिरेक आत्मेष्यते, किन्तु बहवः– अनन्ताः। कुतः ?। लक्षणभेदात्। उपयोगलक्षणो हि जीवः, स चोपयोगो राग-द्वेष-कषाय-विषयाध्यवसायादिभिर्भिद्यमान उपाधिभेदादानन्त्यं प्रतिपद्यत इत्यनन्ता जीवाः, लक्षणभेदात्, घटादिवदिति । तथा, न सर्वगत आत्मा, किन्तु शरीरमात्रव्यापकः, तत्रैव तद्गुणोपलब्धेरित्यादिशब्दोपात्तो हेतुः, स्पर्शनवदिति दृष्टान्तश्च । एवं न निष्क्रिय आत्मा, भोक्तृत्वात्, देवदत्तवदिति। तदेतदिन्द्रभूतिप्रथमगणधरवत् प्रतिपद्यस्वेति ॥ १९५७ ॥

यदुक्तम्— 'देव-नारकाणां प्रत्यक्षाविषयत्वात् संदिग्धः परलोकः' इति; तदयुक्तम्, मौर्या-ऽकम्पितवादयोर्देव-नारकाणां साधितत्वात्, इति दर्शयन्नाह—

[4]इहलोगाओ य परो सोम्म ! सुरा नारगा य परलोओ। पडिवज्ज मोरिआ-ऽकंपिउ व्व विहियप्पमाणाओ ॥१९५८॥

१ इहलोकाद् वा पर सुरादिलोको न सोऽपि प्रत्यक्ष । एवमपि न परलोक श्रूयते च श्रुतिषु ततः शङ्का ॥ १९५५ ॥
२ भूतेन्द्रियातिरिक्तस्य चेतना स च द्रव्यतो नित्य । जातिस्मरणादिभि प्रतिपद्यस्व वायुभूतिरिव ॥ १९५६ ॥
३ न चैक. सर्वगतो निष्क्रियो लक्षणादिभेदात्। कुम्भादय इव बहव प्रतिपद्यस्व तदिन्द्रभूतिरिव ॥ १९५७ ॥
४ इहलोकाच्च पर सौम्य । सुरा नारकाश्च परलोक । प्रतिपद्यस्व मौर्या-ऽकम्पिताविव विहितप्रमाणात् ॥ १९५८ ॥

प्रदीपेऽनन्तरमेव तामसपुद्गलरूपो विकारः समुपलभ्यत एव, चिरं चासौ पुरस्ताद् यद् नोपलभ्यते, तत् सूक्ष्म-सूक्ष्मतरपरिणामभावात्; तथाहि– विशीर्यमाणस्य जलदस्यापि यः कृष्णाभ्रपुद्गलविकारः स परिणामसौक्ष्म्याद् नोपलभ्यते । तथा, अञ्जनस्यापि पवनेन ह्रियमाणस्य यदुत्कृष्टरज उड्डीयते तदपि परिणामसौक्ष्म्याद् नोपलभ्यते, न पुनरसत्त्वादिति ॥ १९८८ ॥

चित्ररूपश्च पुद्गलपरिणाम इति दर्शयन्नाह—

[1]होऊण इंदियंतरगज्झा पुणरिंदियंतरग्गहणं । खंधा एंति न एंति य पोग्गलपरिणामया चित्ता ॥ १९८९ ॥

इह सुवर्णपत्र-लवण-सुण्ठी-हरीतकी-चित्रक-गुडादयः स्कन्धाः पूर्वमिन्द्रियान्तरग्राह्याश्चक्षुरादीन्द्रियविषया भूत्वा पुनर्द्रव्य-क्षेत्र-कालादि सामग्र्यन्तरं प्राप्य पुद्गलपरिणामवैचित्र्यादिन्द्रियान्तरग्रहणं स्पर्शन-रसनादीन्द्रियग्राह्यतामायान्ति; तथाहि– सुवर्णं पत्रीकृतं चक्षुर्ग्राह्यं भूत्वा शोधनार्थमग्नौ प्रक्षिप्तं भस्मना मिलितं सत् स्पर्शनेन्द्रियग्राह्यतामेति, पुनः प्रयोगेण भस्मनः पृथक्कृतं चक्षुर्विषयतामुपगच्छति । लवण-सुण्ठी-हरीतकी-चित्रक-गुडादयोऽपि प्राक् चक्षुरिन्द्रियग्राह्या भूत्वा पश्चात् सूपाद्यन्ते बह्वौषधसमुदाये च क्वाथ-चूर्णा-ऽवलेहादिपरिणामान्तरमापन्नाः सन्तो रसनेन्द्रियसंवेद्या भवन्ति । कर्पूर-कस्तूरिकादीनामपि पुद्गलाश्चक्षुर्ग्राह्या अपि वायुना दूरमुपनीता घ्राणसंवेद्या भवन्ति । योजननवकात्तु परतो गतास्तथाविधं कञ्चित् सूक्ष्मपरिणाममापन्ना नैकस्यापीन्द्रियस्य विषयतां प्रतिपद्यन्त इति । अनया दिशाऽन्यापि पुद्गलपरिणामता चित्रा भावनीयेति ॥ १९८९ ॥

अथास्यैव पुद्गलपरिणामवैचित्र्यस्य प्रस्तुते योजनार्थमाह—

[2]एगेगेंदियगज्झा जह वायव्वादओ तहग्गेया । होउं चक्खुग्गज्झा घाणिंदियगज्झयामेंति ॥ १९९० ॥

वायुः स्पर्शनेन्द्रियस्यैव ग्राह्यः, रसो रसनस्यैव, गन्धो घ्राणस्यैव, रूपं चक्षुष एव, शब्दस्तु [3]श्रोत्रस्यैव ग्राह्यः । तदेवं यथा वाय्वादयः पुद्गला एकैकस्य प्रतिनियतस्येन्द्रियस्य ग्राह्या भूत्वा पश्चात् परिणामान्तरं किमप्यापन्ना इन्द्रियान्तरग्राह्या अपि भवन्तीति स्वयमेव गम्यते, तथा प्रस्तुता अपि प्रदीपगता आग्नेयाः पुद्गलाश्चक्षुर्ग्राह्या भूत्वा पश्चाद् विध्याते तस्मिन् प्रदीपे त एव तामसीभूताः सन्तो घ्राणेन्द्रियग्राह्यतामुपयान्ति, तत् किमुच्यते– [4]"किं दीसए न सो सक्खं' इति ? । ननु घ्राणेन्द्रियेणोपलभ्यत एव विध्यातप्रदीप-विकार इति ॥ १९९० ॥

१ भूत्वेन्द्रियान्तरग्राह्याः पुनरिन्द्रियान्तरग्रहणम् । स्कन्धा यान्ति न यान्ति च पुद्गलपरिणामता चित्रा ॥ १९८९ ॥
२ एकैकेन्द्रियग्राह्या यथा वाय्वादयस्तथाऽऽग्नेयाः । भूत्वा चक्षुर्ग्राह्या घ्राणेन्द्रियग्राह्यता यान्ति ॥ १९९० ॥ ३ क ग 'श्रोत्रेन्द्रियग्रा' । ४ गाथा १९८८ ।

गतार्था ॥ १९५८ ॥

अथ प्रेरकः प्राह—

[1] जीवो विण्णाणमओ तं चाणिच्चं ति तो न परलोगो । अह विण्णाणादण्णो तो अणभिण्णो जहागासं ॥१९५९॥

इत्तो च्चिय न स कत्ता भोत्ता य अओ वि नत्थि परलोगो । जं च न संसारी सो अण्णाणा-ऽमुत्तिओ खं व ॥१९६०॥

व्याख्या– जीवो विज्ञानमयस्तावद् युष्माभिरिष्यते विज्ञानादभिन्न इत्यर्थः । तच्च विज्ञानमनित्यं विनश्वरम्, अतस्तदभिन्नस्य जीवस्यापि विनश्वरत्वाद् न भवान्तरगमनलक्षणः परलोकः । अथ विज्ञानादन्यो जीवस्ततोऽनित्ये विज्ञाने जीवाद् भिन्ने सति स्वयं नित्योऽसाविति न परलोकाभावः । यद्येवम्, तर्हि अनभिज्ञो जीवः, विज्ञानादन्यत्वात्, आकाशवत्, काष्ठादिवद् वा । अत एव च नित्यत्वादेवासौ जीवो न कर्ता, नापि भोक्ता । नित्यस्य कर्तृत्वाद्यभ्युपगमे हि सर्वदैव तद्भावप्रसङ्गः, तस्य सदैवैकरूपत्वात् । कर्तृत्वाभावे च न परलोकः, अकृतस्य तस्याभ्युपगमे सिद्धानामपि तत्प्रसङ्गात् । भोक्तृत्वाभावेऽपि न परलोकः, अभोक्तुः परलोकहेतुभूतकर्मभोगायोगात् । इतोऽपि च न परलोकः । कुतः ? इत्याह— 'जं चेत्यादि' यस्माच्च नासौ संसारी, नास्य ज्ञानाद् भिन्नस्य जीवस्य भवाद् भवान्तरगमनलक्षणं संसरणमस्तीत्यर्थः । कुतः ? इत्याह— स्वयमज्ञानत्वात्, काष्ठखण्डवत् । तथा, अमूर्तत्वात्, आकाशवदिति ॥ १९५९ ॥ १९६० ॥

अत्रोत्तरमाह—

[3] मन्नसि विणासि चेओ उप्पत्तिमदादिओ जहा कुंभो । नणु एयं चिय साहणमविणासित्ते वि से सोम्म ! ॥१९६१॥

ननु 'जीवो विण्णाणमओ तं चाणिच्चं' इति ब्रुवाणो नूनं त्वमेवं मन्यसे– विनाशि विनश्वरं चेतश्चेतना चैतन्यं विज्ञानमिति यावत् । उत्पत्तिमत्त्वादिति हेतुः । यथा कुम्भ इति दृष्टान्तः । आदिशब्दात् 'पर्यायत्वात्' इत्यादिकोऽपि हेतुर्वक्तव्यः । यो हि पर्यायः स सर्वोऽप्यनित्यः, यथा स्तम्भादीनां नव-पुराणादिपर्यायः । ततश्चानित्याच्चैतन्यादभिन्नत्वे जीवस्याप्यनित्यत्वात् परलोकाभाव इति तवाभिप्रायः । तदेतद् न चायं युक्तः, यतो हन्त ! नैकान्तेन विज्ञानमनित्यम्, यतोऽविनाशित्वेऽपि 'से' तस्य विज्ञानस्यैतदेव सौम्य ! त्वदुक्तं साधनं प्रमाणं

१ जीवो विज्ञानमयस्तच्चानित्यमिति ततो न परलोक. । अथ विज्ञानादन्यस्ततोऽनभिज्ञो यथाऽऽकाशम् ॥ १९५९ ॥ इत एव न स कर्ता भोक्ता चातोऽपि नास्ति परलोक । यच्च न संसारी सोऽज्ञाना-ऽमूर्तितः खमिव ॥१९६०॥ २ घ छ 'त इत्यत आह' । ३ मन्यसे विनाशि चेत उत्पत्तिमदादितो यथा कुम्भ । नन्वेतदेव साधनमविनाशित्वेऽपि तस्य सौम्य ! ॥१९६१॥ ४ गाथा १९५९ ।

यद्येवम्, ततः प्रस्तुते किम्? इत्याह—

जह दीवो निव्वाणो परिणामन्तरमिओ तहा जीवो। भण्णइ परिनिव्वाणो पत्तोऽणाबाहपरिणामं ॥१९९१॥

यथाऽनन्तरोक्तस्वरूपपरिणामान्तरं प्राप्तः प्रदीपो 'निर्वाणः' इत्युच्यते तथा जीवोऽपि कर्मविरहितकेवलामूर्तजीवस्वरूपभावलक्षणमबाधं परिणामान्तरं प्राप्तो निर्वाणो निर्वृतिं प्राप्त उच्यते। तस्माद् दुःखादिक्षयरूपा सतोऽवस्था निर्वाणमिति स्थितम् ॥ १९९१ ॥

तर्हि शब्दादिविषयोपभोगाभावाद् निःसुख एवायमिति चेत्। नैवम्। कुतः? इत्याह—

मुच्चस्स[2] परं सोक्खं णाणाणाबाहओ जहा मुणिणो। तद्धम्मा पुण विरहादावरणा-ऽऽबाहहेऊणं ॥१९९२॥

मुक्तस्य जन्तोः परं प्रकृष्टमकृत्रिममिथ्याभिमानजं स्वाभाविकं सुखमिति प्रतिज्ञा। 'णाणाणाबाहउ त्ति' ज्ञानप्रकर्षे सति जन्म-जरा-व्याधि-मरणे-ष्टवियोगा-ऽरति-शोक-क्षुत्-पिपासा-शीतो-ष्ण-काम-क्रोध-मद-शाठ्य-तृष्णा-राग-द्वेष-चिन्तौ-त्सुक्यादिनिःशेपाबाधविरहितत्वादिति हेतुः। तथाविधप्रकृष्टमुनेरिव। यथोक्ताबाधरहितानि काष्ठादीन्यपि वर्तन्ते, परं तेषां ज्ञानाभावाद् न सुखम्; अतस्तद्व्यवच्छेदार्थं ज्ञानग्रहणम्। कथं पुनरसौ प्रकृष्टज्ञानवान्, आबाधरहितश्च? इत्याह– 'तद्धम्मेत्यादि' तद्धर्मा– प्रकृष्टज्ञाना-ऽनाबाधवान् मुक्तात्मा। कुतः?। विरहात्– अभावात्। केषाम्?। आवरणहेतूनाम्, आबाधहेतूनां च। एतदुक्तं भवति– क्षीणनिःशेषावरणत्वात् प्रकृष्टज्ञानवानसौ, वेदनीयकर्मादीनां च सर्वेषामप्याबाधहेतूनां सर्वथाऽपगमात् सर्वाऽऽबाधरहितोऽयमिति। प्रयोगः– स्वाभाविकेन स्वेन प्रकाशेन प्रकाशवान् मुक्तात्मा, समस्तप्रकाशावरणरहितत्वात्, तुहिनांशुवत्। तथा चाह—

"स्थितः शीतांशुवज्जीवः प्रकृत्या भावशुद्धया। चन्द्रिकावच्च विज्ञानं तदावरणमभ्रवत् ॥ १ ॥"

इति। तथा, अनाबाधसुखो मुक्तात्मा, समस्ताबाधहेतुरहितत्वात्, ज्वराद्यपगमे स्वच्छाऽऽतुरवत्। तथाचोक्तम्—

"स व्याबाधाभावात् सर्वज्ञत्वाच्च भवति परमसुखी। व्याबाधाभावोऽत्र स्वच्छस्य ज्ञस्य परमसुखम् ॥ १ ॥"

इति ॥ १९९२ ॥

१ यथा दीपो निर्वाण. परिणामान्तरमितस्तथा जीवः। भण्यते परिनिर्वाणः प्राप्तोऽनाबाधपरिणामम् ॥ १९९१ ॥

२ मुक्तस्य पर सौख्यं ज्ञानानाबाधतो यथा मुने। तद्धर्मा पुनर्विरहादावरणा-ऽऽबाधहेतूनाम् ॥ १९९२ ॥

वर्तते। ततोऽनैकान्तिकस्त्वदुक्तो हेतुरिति भावः। इदमुक्तं भवति– उत्पाद-व्यय-ध्रौव्यात्मकं वस्तु। ततश्च यथोत्पत्तिमत्त्वाद् विनाशित्वं सिध्यति तथा ध्रौव्यात्मकत्वाद् वस्तुनः कथञ्चिद् नित्यत्वमपि सिध्यति। ततश्चेदमपि शक्यते वक्तुम्– नित्यं विज्ञानम्, उत्पत्तिमत्त्वात्, घटवत्। ततश्च कथञ्चिन्नित्याद् विज्ञानादभिन्नस्य जीवस्य नित्यत्वाद् न परलोकाभाव इति ॥ १९६१ ॥

अथवा, विरुद्धाव्यभिचार्यप्ययमुत्पत्तिमत्त्वरूपो हेतुः, प्रत्यनुमानसद्भावात्। किं पुनस्तत् प्रत्यनुमानम्? इत्याह—

[2]अहवा वत्थुत्तणओ विणासि चेओ न होइ कुंभो व्व। उप्पत्तिमदादित्ते कहमविणासी घडो, बुद्धी? ॥१९६२॥

एकान्तेन विनाशि विनश्वरं चेतो विज्ञानं न भवति, वस्तुत्वात्, कुम्भवत्। ततोऽस्य प्रत्यनुमानस्योपस्थापनाद् विरुद्धाव्यभिचार्यप्युत्पत्तिमत्त्वलक्षणो हेतुः। यदुक्तम्–'[3]नणु एयं चिय साहणमविणासित्ते वि' इत्यादि, तत्र परस्येयं बुद्धिः स्यात्। कथंभूता बुद्धिः? इत्याह– कथमुत्पत्तिमत्त्वाद् दृष्टान्तत्वेनोपन्यस्तो घटोऽविनाशी सिध्यति?– न कथञ्चित्, घटस्य विनाशित्वेन सुप्रतीतत्वात्। ततश्च दृष्टान्तेऽविनाशित्वस्यासिद्धेर्दार्ष्टान्तिके विज्ञाने तद् न सिध्यतीति परस्याभिप्राय इति ॥ १९६२ ॥

अत्रोत्तरमाह—

[4]रूव-रस-गंध-फासा संखा संठाण-दव्व-सत्तीओ। कुंभो त्ति जओ ताओ पसूइ-विच्छित्ति-धुवधम्मा ॥१९६३॥

इह रूप-रस-गन्ध-स्पर्शलक्षणो गुणसमुदायः, एकलक्षणा संख्या, पृथुबुध्नोदराद्याकारलक्षणं संस्थानम्, मृद्द्रव्यम्, जलाहरणादिशक्तिश्चेत्येतानि समुदितानि यतः कुम्भ इत्युच्यते, ताश्च रूप-रस-गन्ध-स्पर्श-संख्या-संस्थान-द्रव्य-शक्तयः प्रसूति-विच्छित्ति-ध्रौव्यधर्मिण्य उत्पाद-व्यय-ध्रौव्यस्वरूपाः, तत उत्पत्तिमत्त्वादविनाश्यपि घटः सिध्यतीति ॥ १९६३ ॥

एतदेव विस्तरतो भावयन्नाह—

[5]इह पिण्डो पिण्डागार-सत्तिपज्जायविलयसमकालं। उप्पज्जइ कुंभागार-सत्तिपज्जायरूवेण ॥ १९६४ ॥

रूवाइं दव्वयाए न जाइ न य वेइ तेण सो निच्चो। एवं उप्पाय-व्वय-धुवस्सहावं मयं सव्वं ॥१९६५ ॥

---

१ घ.छ. 'प्रव'। २ अथवा वस्तुत्वतो विनाशि चेतो न भवति कुम्भ इव। उत्पत्तिमदादित्वे कथमविनाशी घटो, बुद्धि? ॥ १९६२ ॥ ३ गाथा १९६१ ॥
४ रूप रस-गन्ध-स्पर्शा सख्या संस्थान-द्रव्य-शक्तय । कुम्भ इति यतस्ता. प्रसूति व्यवच्छित्ति-ध्रुवधर्माण ॥ १९६३ ॥
५ इह पिण्ड पिण्डाकार-शक्तिपर्यायविलयसमकालम्। उत्पद्यते कुम्भाकार-शक्तिपर्यायरूपेण ॥ १९६४ ॥
रूपादि द्रव्यतया न जायते न च व्येति तेन स नित्य । एवमुत्पाद-व्यय-ध्रौव्यस्वभाव मत सर्वम् ॥ १९६५ ॥

अपरस्त्वाह—

मुत्तो[1] करणाभावादण्णाणी खं व, नणु विरुद्धोऽयं। जमजीवया वि पावइ एत्तो च्चिय भणइ- तन्नाम॥१९९३॥

नन्वज्ञानी मुक्तात्मा, करणाभावात्, आकाशवत्। अत्राचार्यः प्राह- ननु धर्मिस्वरूपविपरीतसाधनाद् विरुद्धोऽयं हेतुः; तथाहि- अनेनैतदपि सिध्यति- अजीवो मुक्तात्मा, करणाभावात्, आकाशवत्। अत्र परः सोत्कर्षं भणति- 'तन्नाम त्ति' 'नाम' इत्यभ्यनुज्ञायाम्- अस्त्वेतत्, न नः किमपि क्षूयते। न हि मुक्तात्मनामजीवत्वेऽस्माकं किञ्चिद् नश्यति, येन हेतोर्विरुद्धता प्रेर्यमाणा शोभेत। अत्राह कश्चित्- ननु मुक्तस्याजीवत्वमार्हतानामप्यनिष्टमेव; ततश्चैतद् दूषणमाचार्येणापि परिहर्तव्यमेव, यच्चात्मनोऽपि दूषणं समापतति तत् कथं परस्यैवैकस्योद्भाव्यते?। सत्यमेतत्, किन्तु परशक्तिपरीक्षार्थं प्रेर्यमाचार्यः कृतवान्, कदाचित् क्षोभाद् विगलितप्रतिभः परोऽत्रापि प्रतिविधाने स्खलितस्तूर्णीं विदध्यात्। परमार्थतस्तु जीवस्याजीवत्वं कदाचिदपि न भवत्येव ॥ १९९३ ॥

कुतः? इत्याह—

दव्वा-[2]ऽमुत्तत्त सहावजाइओ तस्स दूरविवरीयं। न हि जच्चंतरगमणं जुत्तं नभसो व्व जीवत्तं ॥ १९९४ ॥

तस्य मुक्तात्मनो हि यस्मात् कारणाद् न युक्तमिति संबन्धः। किं तद् न युक्तम्? इत्याह— एकस्या जीवत्वलक्षणाया जातेर्यदजीवत्वलक्षणं जात्यन्तरं तत्र गमनं जात्यन्तरगमनम्, तन्न युक्तम्। कथंभूतं जात्यन्तरम्? इत्याह- दूरमत्यर्थं विपरीतं दूरविपरीतम्। कस्या दूरविपरीतम्? इत्याह— 'सहावजाइउ त्ति' जीवत्वलक्षणा या स्वाभाविकी स्वभावभूता जातिः स्वभावजातिस्तस्याः। किंवद् या स्वभावजातिः? इत्याह— उपमानप्रधानत्वाद् निर्देशस्य, द्रव्या-ऽमूर्तत्ववदिति द्रव्यत्ववदमूर्तत्ववच्चेत्यर्थः। स्वभावजातेर्दूरविपरीतं सत् कस्य यथा किं न युक्तम्? इत्याह- नभस इव जीवत्वम्। इदमत्र हृदयम्- द्रव्यत्वम्, अमूर्तत्वं च जीवस्य तावत् स्वभावभूता जातिः, तस्याश्च यद् दूरविपरीतं जात्यन्तरमद्रव्यत्वम्, अमूर्तत्वं च, तत्र गमनं तस्य कस्यामप्यवस्थायां न भवति। एवं जीवत्वमपि जीवस्य स्वभावभूतैव जातिः, ततस्तस्या अपि स्वभावजातेर्यद् दूरविपरीतमजीवत्वलक्षणं जात्यन्तरं तत्र गमनं मुक्तावस्थायामपि तस्य न युज्यते। न ह्यजीवस्य सतो नभसः कदाचिदपि जीवत्वप्राप्तिर्भवति। तस्माद् मुक्तो जीवो यथाऽद्रव्यं मूर्तश्च न

1 मुक्तः करणाभावादज्ञानी खमिव, ननु विरुद्धोऽयम्। यदजीवतापि प्राप्नोत्येतस्मादेव भणति तन्नाम ॥ १९९३ ॥

2 द्रव्या-ऽमूर्तत्ववत् स्वभावजातितस्तस्य दूरविपरीतम्। न हि जात्यन्तरगमनं युक्तं नभस इव जीवत्वम् ॥ १९९४ ॥

इह मृत्पिण्डः कर्ता। योऽयं वृत्तसंस्थानरूपः स्वकीयो मृत्पिण्डाकारः, शक्तिश्च या काचिदात्मीया, एतदुभयलक्षणो यः पर्यायस्तस्य यो विलयो विनाशस्तत्समकालमेवासावुत्पद्यते मृत्पिण्डः। केन ? इत्याह— पृथुबुध्नोदरादिको यः कुम्भाकारः, तच्छक्तिश्च या जलाहरणादिविषया, एतदुभयलक्षणो यः पर्यायस्तेनोत्पद्यते। रूप-रस-गन्ध-स्पर्शरूपतया मृद्द्रव्यरूपतया चासौ मृत्पिण्डो न जायते, नापि व्येति विनश्यति। ततस्तद्रूपतया नित्योऽयमुच्यते, तेन रूपेण तस्य सदैवावस्थितत्वात्। तदेवं मृत्पिण्डो निजाकार-स्वशक्तिरूपतया विनश्यति, घटाकार-तच्छक्तिरूपतयोत्पद्यते, रूपादिभावेन मृद्द्रव्यरूपतया चावतिष्ठते, इत्युत्पाद-व्यय-ध्रौव्यस्वभावोऽयमुच्यते। एवं घटोऽपि पूर्वपर्यायेण विनश्यति, घटाकारतया तूत्पद्यते, रूपादित्वेन मृद्द्रव्यतया चावतिष्ठत इत्यसावप्युत्पाद-व्यय-ध्रौव्यस्वभावः। एवमन्यदपि यदस्ति वस्तु, तत् सर्वमप्युत्पाद-व्यय-ध्रौव्यस्वभावमेवाभिमतं तीर्थकृताम्। ततश्च यथोत्पत्तिमत्त्वाद् विनाशित्वं घटे सिध्यति तथाऽविनाशित्वमपि। तथा च सति साध्यधर्मिणि चैतन्येऽपि तत्सिद्धिरिति। तदेवं चैतन्याद्व्यतिरिक्तोऽपि जीवः कथञ्चिद् नित्य एव ॥ १९६४ ॥ १९६५ ॥

ततश्च न परलोकाभाव इति दर्शयन्नाह—

[1]घडचेयणया नासो पडचेयणया समुब्भवो समयं। संताणेणावत्था तहेह-परलोअ-जीवाणं ॥ १९६६ ॥

मणुएहलोगनासो सुराइपरलोगसंभवो समयं। जीवतयाऽवत्थाणं नेहभवो नेय परलोओ ॥ १९६७ ॥

घटविषयं विज्ञानं घटचेतनोच्यते, पटविषयं तु विज्ञानं पटचेतना। यदा च घटविज्ञानानन्तरं पटविज्ञानमुपजायते जीवस्य, तदा घटचेतनया घटविज्ञानरूपेण तस्य नाश उच्यते, पटचेतनया तु पटविज्ञानरूपेण 'समयं' युगपदेव समुद्भव उत्पादः, अनादिकालप्रवृत्तेन तु चेतनासंतानेन निर्विशेषणेन जीवत्वमात्रेणावस्थानमिति। एवं च यथेहभवेऽपि तिष्ठतो जीवस्योत्पाद-व्यय-ध्रौव्यस्वभावत्रयं दर्शितम्, तथा परलोकं गता जीवाः परलोकजीवास्तेषामप्येतत् स्वभावत्रयं द्रष्टव्यम्; तद्यथा— यदा मनुष्यो मृत्वा सुरलोकादावुत्पद्यते तदा मनुष्यरूप इहलोको मनुष्येहलोकस्तस्य नाशः, तत्समकालमेव च सुरादिपरलोकस्य संभव उत्पादः, जीवतया त्ववस्थानम्। तस्यां च जीवत्वावस्थायां विवक्षितायां नेहभवो विवक्ष्यते, नापि सुरादिपरलोको विवक्ष्यते, किन्तु निष्पर्यायं जीव-द्रव्यमात्रमेव विवक्ष्यते। तदेवमुत्पाद-व्यय-ध्रौव्य-स्वभावत्वे जीवस्य[2] न परलोकाभाव इति ॥ १९६६ ॥ १९६७ ॥

१ घटचेतनया नाश पटचेतनया समुद्भव- समकम्। संतानेनावस्था तथेह-परलोक जीवानाम् ॥ १९६६ ॥
मनुजेहलोकनाशः सुरादिपरलोकसंभव समकम्। जीवतयाऽवस्थानं नेहभवो नैव परलोकः ॥ १९६७ ॥ २ घ छ 'स्य कथ प'।

भवति, तद्विपक्षस्वभावत्वात्; एवं जीवस्वाभाव्यादजीवोऽप्यसौ कदाचिदपि न भवति; अन्यथा नभः-परमाण्वादीनामपि स्वस्वभावत्यागेन वैपरीत्यापत्त्याऽतिप्रसङ्गादिति ।

अत्राह— यद्येवम्, तर्हि यद् भवतैवोक्तम्- 'अजीवो मुक्तात्मा, करणाभावात्, आकाशवत्' इति, तत् कथं नेतव्यम् ? । अत्रोच्यते- परस्य प्रसङ्गापादनमेव तदस्माभिः कृतम्, तत्करणे च कारणमुक्तमेव, न पुनरनेन हेतुना मुक्तस्याजीवत्वं सिध्यति, प्रतिबन्धाभावात्; तथाहि- यदि करणैर्जीवत्वं कृतं भवेत्, यथा दहनेन धूमः; व्यापकानि वा जीवत्वस्य करणानि यदि भवेयुः, यथा शिंशपाया वृक्षत्वम्, तदा करणनिवृत्तौ भवेज्जीवत्वनिवृत्तिः, यथाऽग्नि-वृक्षत्वनिवृत्तौ धूम-शिंशपात्वयोः; न चैतदस्ति, जीवत्वस्यानादिपारिणामिकभावरूपत्वेनाकृतकत्वात् । व्याप्य-व्यापकभावोऽपीन्द्रियाणां शरीरेणैव सह युज्यते, उभयस्यापि पौद्गलिकत्वात्, न तु जीवत्वेन, जीवस्यामूर्तत्वेनात्यन्तं तद्विलक्षणत्वात् । तस्मात् करणनिवृत्तावप्यनिवृत्तमेव मुक्तस्य जीवत्वमिति ॥ १९९४ ॥

आह- यद्येवम्, 'अज्ञानी मुक्तात्मा, करणाभावात्, आकाशवत्' इत्यत्र धर्मिस्वरूपविपरीतसाधनाद् या हेतोर्विरुद्धतोद्भाविता, सा न भवद्भिरपि परिहृता, अतस्तत्रान्यत् किमप्युत्तरमुच्यतामित्याशङ्क्याह—

[1]मुत्ताइभावओ नोवलद्धिमंतिंदियाइं कुंभो व्व । उवलंभदाराणि उ ताइं जीवो तदुवलद्धा ॥ १९९५ ॥

तदुवरमे वि सरणओ तव्वावारे वि नोवलंभाओ । इंदियभिन्नो आया पंचगवक्खोवलद्धा वा ॥१९९६॥

अनयोर्व्याख्या पूर्ववत् । केवलं प्रस्तुते भावार्थ उच्यते- यदीन्द्रियाण्युपलब्धिमन्ति भवेयुस्तदा तन्निवृत्तावप्युपलब्धिनिवृत्तिर्भवेत्, न चैतदस्ति, अन्वय-व्यतिरेकाभ्यां जीवस्योपलब्धिमत्त्वनिश्चयादिति ॥ १९९५ ॥ १९९६ ॥

स्वभावभूतं च ज्ञानं जीवस्य, इति कथं करणनिवृत्तौ मुक्तस्य तद् निवर्तत इति दर्शयन्नाह—

[2]नाणरहिओ न जीवो सरूवओऽणु व्व मुत्तिभावेणं । जं तेण विरुद्धमिदं अत्थि य सो नाणरहिओ य ॥१९९७॥

यद् यस्माज्ज्ञानरहितो जीवः कदाचिदपि न भवति, ज्ञानस्य तत्स्वरूपत्वात्, यथा मूर्तिभावेन रहितोऽणुर्न भवति, तेन

१ मूर्तादिभावतो नोपलब्धिमन्तीन्द्रियाणि कुम्भ इव । उपलम्भद्वाराणि तु तानि जीवस्तदुपलब्धा ॥ १९९५ ॥
तदुपरमेऽपि स्मरणतस्तद्व्यापारेऽपि नोपलम्भात् । इन्द्रियभिन्न आत्मा पञ्चगवाक्षोपलब्धेव ॥ १९९६ ॥
२ ज्ञानरहितो न जीवः स्वरूपतोऽणुरिव मूर्तिभावेन । यत् तेन विरुद्धमिदमास्ति च स ज्ञानरहितश्च ॥ १९९७ ॥

आह– ननु कथं सर्वस्यापि वस्तुन इयं त्रिस्वभावता ? इति । अत्र युक्तिमाह—

[1]असओ नत्थि पसूई, होज्ज व जइ, होउ खरविसाणस्स । न य सव्वहा विणासो सव्वुच्छेयप्पसंगाओ ॥१९६८॥

तोऽवत्थियस्स केणवि विलओ धम्मेण भवणमन्नेण । सव्वुच्छेओ न मओ संववहारोवरोहाओ ॥ १९६९ ॥

इहैकान्तेन सर्वथाऽसतो वस्तुनः प्रसूतिरुत्पत्तिर्नास्ति न घटते । अथ भवति, तर्हि खरविषाणस्यापि भवतु, असत्त्वाविशेषात् । तस्मात् केनापि रूपेण सदेवोत्पद्यते । न च सतः सर्वथा विनाशः, क्रमशः सर्वस्यापि नारक-तिर्यगादेरुच्छेदप्रसङ्गात् । ततस्तस्मात् तस्यावस्थितस्य जीवादेरस्ति केनापि मनुष्यत्वादिधर्मेण विलयो विनाशः, अन्येन तु सुरादिरूपेण भवनमुत्पादः, सर्वोच्छेदस्तु न मतस्तीर्थकृताम्, संव्यवहारोपरोधात्–अन्यथा व्यवहारोच्छेदप्रसङ्गादित्यर्थः; तथाहि– राजपुत्र्याः क्रीडाहेतुभूतं सौवर्णकलशकं भङ्क्त्वा राजतनयस्य क्रीडार्थमेव कन्दुको घटितः; ततो राजपुत्र्याः शोकः, कुमारस्य तु हर्षः, सुवर्णस्वामिनश्च नरपतेरौदासीन्यम्, सुवर्णस्योभयावस्थायामप्यविनष्टत्वात्, इत्यादिको योऽसौ लोकव्यवहारस्तस्य सर्वस्याप्युत्पाद व्यय-ध्रौव्यात्मकवस्त्वनभ्युपगमे समुच्छेदः स्यात् । तस्मात् कथञ्चिदवस्थिततत्त्वे जीवस्य न परलोकाभाव इति ॥ १९६८ ॥ १९६९ ॥

किञ्च, स्वर्गादिपरलोकाभावेऽग्निहोत्र-दानादीनामानर्थक्यं स्यादिति दर्शयन्नाह—

[3]असइ व परम्मि लोए जमग्गिहोत्ताइं सग्गकामस्स । तदसंबद्धं सव्वं दाणाइफलं च लोअम्मि ॥१९७०॥

गतार्था ॥ १९७० ॥

तदेवं छिन्नस्तस्यापि संशयः । ततः किं कृतवानसौ ? इत्याह—

[4]छिन्नम्मि संसयम्मी जिणेण जर-मरणविप्पमुक्केणं । सो समणो पव्वइओ तिहिं ओ सह खण्डियसएहिं॥१९७१॥

अर्थः स एव ॥ इति त्रयोविंशतिगाथार्थः ॥ १९७१ ॥

॥ इति दशमो गणधरवादः समाप्तः ॥

---

१ असतो नास्ति प्रसूति , भवेद् वा यदि, भवतु खरविषाणस्य । न च सर्वथा विनाश 'सर्वोच्छेदप्रसङ्गात् ॥ १९६८ ॥
ततोऽवस्थितस्य केनापि विलयो धर्मेण भवनमन्येन । सर्वोच्छेदो न मत सव्यवहारोपरोधात् ॥ १९६९ ॥ २ घ छ 'दास्यम्' ।
३ असति वा परस्मिँल्लोके यदग्निहोत्रादि स्वर्गकामस्य । तदसबद्ध सर्वं दानादिफलं च लोके ॥ १९७० ॥ ४ गाथा १९०४ ।

तस्माद् कारणाद् विरुद्धमेतत्— 'अस्ति चासौ मुक्तो जीवः, अथ च स ज्ञानरहितः' इति। न हि स्वरूपस्याभावे स्वरूपवतोऽवस्थानं युज्यते, तद्व्यतिरिक्तस्य तस्यासत्त्वात्, तथाचानन्तरमेवोक्तम्- 'न हि जच्चंतरगमणं जुत्तं नभसो व्व जीवत्तं' इति ॥१९९७॥

पराभिप्रायमाशङ्क्यैतदेव समर्थयन्नाह—

[2]किह सो नाणसरूवो नणु पच्चक्खाणुभूइओ नियए। परदेहम्मि वि गज्झो स पवित्ति-निवित्तिलिंगाओ ॥१९९८॥

ननु कथमसौ जीवो ज्ञानस्वरूप इति निश्चीयते ?। अत्रोत्तरमाह— 'ननु' इत्यक्षमायाम्, ननु निजे देहे तावत् प्रत्यक्षानुभवादेव ज्ञानस्वरूपो जीव इति विज्ञायते, इन्द्रियव्यापारोपरमेऽपि तद्व्यापारोपलब्धार्थानुस्मरणात्, तद्व्यापारेऽपि चान्यमनस्कतायामनुपलम्भात्, अदृष्टा-ऽश्रुतानामपि चार्थानां तथाविधक्षयोपशमपाटवात् कदाचिद् व्याख्यानावस्थायां चेतसि स्फुरणात्। एतच्च स्वसंवेदनसिद्धमपि भवतः प्रष्टव्यतां गतम्। तथा, स जन्तुः परदेहेऽपि ज्ञानस्वरूप एवेति ग्राह्यः। कुतः ?। तथाविधप्रवृत्ति निवृत्तिलिङ्गादिति ॥

अपिच, मुक्तावज्ञानित्वापादने महान् विपर्यासः। कुतः ? इत्याह—

[3]सव्वावरणावगमे सो सुद्धयरो भवेज्ज सूरो व्व। तम्मयभावाभावादण्णाणित्तं न जुत्तं से ॥ १९९९ ॥

सेन्द्रियो जन्तुर्देशतोऽप्यावरणक्षये तावत् तारतम्येन ज्ञानयुक्त एव भवति, यस्य त्वनिन्द्रियस्य सर्वमप्यावरणं क्षीणम्, स निःशेषावरणापगमे शुद्धतर एव भवति- संपूर्णज्ञानप्रकाशयुक्त एव भवतीत्यर्थः; यथा समस्ताभ्रावरणापगमे संपूर्णप्रकाशमयः सूर्यः। ततस्तन्मयभावस्य प्रकाशमयत्वस्य करणाभावेनाभावाद् हेतोः 'से' तस्य मुक्तस्य यदज्ञानित्वं प्रेर्यते भवता, तद् न युक्तम्, आवारकाभावे तस्यैव प्रकर्षवतो ज्ञानप्रकाशस्य सद्भावादिति ॥ १९९९ ॥

तदेवं सति किमिह स्थितम् ? इत्याह—

[4]एवं पगासमइओ जीवो छिद्दावभासयत्ताओ। किंचिम्मेत्तं भासइ छिद्दावरणपईवो व्व ॥ २००० ॥

सुबहुयरं वियाणइ मुत्तो सव्वप्पिहाणविगमाओ। अवणीयघरो व्व नरो विगयावरणप्पईवो व्व ॥ २००१ ॥

---

१ गाथा १९९४। २ कथं स ज्ञानस्वरूपो ननु प्रत्यक्षानुभूतितो निजके। परदेहेऽपि ग्राह्यः स प्रवृत्ति-निवृत्तिलिङ्गात् ॥ १९९८ ॥
३ सर्वावरणापगमे स शुद्धतरो भवेत् सूर इव। तन्मयभावाभावादज्ञानित्वं न युक्तं तस्य ॥ १९९९ ॥
३ एवं प्रकाशमयो जीवश्छिद्रावभासकत्वात्। किञ्चिन्मात्रं भासते छिद्रावरणप्रदीप इव ॥ २००० ॥
सुबहुतरं विजानाति मुक्तः सर्वपिधानविगमात्। अपनीतगृह इव नरो विगतावरणप्रदीप इव ॥ २००१ ॥

अथैकादशगणधरवक्तव्यतामाह—

[1]ते पव्वइए सोउं पहासो आगच्छई जिणसयासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि॥१९७२॥

सुगमा ॥१९७२ ॥

ततः किम् ? इत्याह—

[2]आभट्ठो य जिणेणं जाइ-जरा-मरणविप्पमुक्केणं । नामेण य गोत्तेण य सव्वण्णू सव्वदरिसी णं ॥१९७३॥

तथैव ॥ १९७३ ॥

आभाष्य ततः किमुक्तोऽसौ ? इत्याह—

[3]किं मन्ने निव्वाणं अत्थी नत्थि त्ति संसओ तुज्झ। वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥१९७४॥

हे आयुष्मन् ! प्रभास ! त्वमेवं मन्यसे– किं निर्वाणमस्ति, नवा ? इति । अयं च संशयस्तव विरुद्धवेदपदश्रवणनिबन्धनः । तानि चामूनि वेदपदानि–"जरामर्यं वैतत् सर्वं यदग्निहोत्रम्" । तथा, "सैषा गुहा दुरवगाहा" । तथा, "द्वे ब्रह्मणी परमपरं च, तत्र परं सत्यं ज्ञानमनन्तरं ब्रह्म" इति । एतेषां चायमर्थस्तव चेतसि वर्तते– यदेतदग्निहोत्रं तज्जरामर्यमेव यावज्जीवं कर्तव्यमिति। अग्निहोत्रक्रिया च भूतवधहेतुत्वाच्छबलरूपा । सा च स्वर्गफलैव स्याद् नापवर्गफला । 'यावज्जीवम्' इति चोक्ते कालान्तरं नास्ति यत्रापवर्गहेतुभूतक्रियान्तरारम्भः स्यात् । तस्मात् साधनाभावाद् मोक्षाभावः । ततश्चेत्यादिकानि किल मोक्षाभावप्रतिपादकानि। शेषाणि तु तदास्तित्वसूचकानि, यतो गुहाऽत्र मुक्तिरूपा, सा च संसाराभिनन्दिनां दुरवगाहा, दुष्प्रवेशात् । तथा, परं ब्रह्म सत्यं मोक्षः, अनन्तरं तु ब्रह्म ज्ञानमिति । ततो मोक्षास्तित्वं नास्तित्वं च वेदपदप्रतिपादितमवगम्य तव संशयः । तत्रैषां वेदपदानामर्थं त्वं न जानासि, यतस्तेषामयमर्थो वक्ष्यमाणलक्षण इति ॥ १९७४ ॥

युक्तिमपि मोक्षाभावप्रतिपादने प्रभासाध्यवसितां दूषयितुं भगवान् प्रकटयितुमाह—

[4]मन्नसि किं दीवस्स व नासो निव्वाणमस्स जीवस्स । दुक्खक्खयाइरूवा किं होज्ज व से सओऽवत्था ?॥१९७५॥

१ तान् प्रव्रजितान् श्रुत्वा प्रभास आगच्छति जिनसकाशम् । व्रजामि वन्दे वन्दित्वा पर्युपासे ॥ १९७२ ॥ २ गाथा १६०९ ।

३ किं मन्यसे निर्वाणमस्ति नास्तीति संशयस्तव । वेदपदानां चार्थं न जानासि तेषामयमर्थः ॥ १९७४ ॥

४ मन्यसे किं दीपस्येव नाशो निर्वाणमस्य जीवस्य ? । दुःखक्षयादिरूपा किं भवेद् वा तस्य सतोऽवस्था ? ॥ १९७५ ॥

तदेवं सति सर्वदा प्रकाशमयः प्रकाशस्वभाव एव जीवः, केवलं संसार्यवस्थायां छद्मस्थः किञ्चिन्मात्रमवभासयति, क्षीणाऽक्षीणावरणच्छिद्रैरिन्द्रियच्छिद्रैश्चावभासनात्, सच्छिद्रकुट-कुड्याद्यन्तरितप्रदीपवदिति । मुक्तस्तु मुक्तावस्थायां प्राप्तो जीवः सुबहुतरं विजानाति– यदस्ति तत् सर्वं प्रकाशयतीत्यर्थः, सर्वापिधानविगमात्– सर्वावरणक्षयादित्यर्थः, अपनीतसमस्तगृहः पुरुष इव, [4]विगतसमस्तकुट-कुड्याद्यावरणप्रदीप इव वेति। यो हि सच्छिद्रावरणान्तरितः स्तोकं प्रकाशयति स निःशेषावरणापगमे सुबह्वेव प्रकाशयति, न तु तस्य सर्वथा प्रकाशाभाव इति भावः । तस्मात् 'मुत्तस्स परं सोक्खं णाणा-ऽणाबाहओ' इत्यादि स्थितम् ॥ २००० ॥ २००१ ॥

अथाद्यापि मुक्तस्य सुखाभावं पश्यन् परः प्राह—

[2]पुण्णा-ऽपुण्णकयाइं जं सुह-दुक्खाइं तेण तन्नासे । तन्नासाओ मुत्तो निस्सुह-दुक्खो जहागासं ॥ २००२॥

अहवा निस्सुह-दुक्खो नभं व देहें-दियादभावाओ । आधारो देहो च्चिय जं सुह-दुक्खोवलद्धीणं ॥२००३॥

पुण्यात् सुखमुपजायते, पापाच्च दुःखम्, इति भवतामपि संमतम्, तेन तस्मात् तयोः पुण्य-पापयोः कारणभूतयोर्नाशे सुख-दुःखयोः कार्यरूपयोर्नाशाद् निःसुख-दुःख एव मुक्तात्मा प्राप्नोति, तत्कारणाभावात्, आकाशवदिति । अथवा, निःसुख-दुःखोऽसौ, देहे-न्द्रियाभावात्, नभोवत्, यद् यस्माद् देह एव, तथेन्द्रियाणि च सुख-दुःखोपलब्धीनामाधारो दृश्यते, न पुनर्देहाभावे सुख-दुःखे दृश्येते, नापीन्द्रियाभावे ज्ञानं क्वाप्युपलभ्यते । ततः सिद्धस्य कथं तदभावात् तानि श्रद्धीयन्ते ? इति ॥ २००२ ॥ २००३ ॥

अत्रोत्तरमाह—

[3]पुण्णफलं दुक्खं चिय कम्मोदयओ फलं व पावस्स । नणु पावफले वि समं पच्चक्खविरोहिआ चेव ॥२००४॥

चक्रवर्तिपदलाभादिकं पुण्यफलं निश्चयतो दुःखमेव, कर्मोदयजन्यत्वात्, नरकत्वादिपापफलवत् । परः प्राह– ननु पापफलेऽपि समानमिदम्, तथाहि– अत्रापि वक्तुं शक्यत एतत्– उक्तं पापफलं दुःखत्वेनाभिमतं परमार्थतः सुखमेव, कर्मोदयजन्यत्वात्, पुण्यफलवत् । एवं च वदतां प्रत्यक्षविरोधिता, स्वसंवेद्यसुख-दुःखयोर्वैपरीत्येन संवित्त्यभावादिति ॥ २००४ ॥

---

1 गाथा १९९२ । 2 पुण्या-ऽपुण्यकृते यत् सुख-दुःखे तेन तन्नाशे । तन्नाशाद् मुक्तो निःसुख-दुःखो यथाकाशम् ॥ २००२ ॥
अथवा निःसुख-दुःखो नभ इव देहे-न्द्रियाद्यभावात् । आधारो देह एव यत् सुख-दुःखोपलब्धीनाम् ॥ २००३ ॥
3 पुण्यफलं दुःखमेव कर्मोदयतः फलमिव पापस्य । ननु पापफलेऽपि समं प्रत्यक्षविरोधिता चैव ॥ २००४ ॥ 4 क ख 'त्रस्य वै' ।

आयुष्मन् ! प्रभास ! त्वमेवं मन्यसे– किं दीपस्येवास्य जीवस्य नाशो ध्वंस एव निर्वाणम् ?, यथाऽऽहुः सौगतविशेषाः केचित्, तद्यथा—

"दीपो यथा निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम् । दिशं न काञ्चिद् विदिशं न काञ्चित् स्नेहक्षयात् केवलमेति शान्तिम् ॥ १ ॥
जीवस्तथा निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम् । दिशं न काञ्चिद् विदिशं न काञ्चित् क्लेशक्षयात् केवलमेति शान्तिम् ॥ २ ॥"

इति । किं वा यथा जैनाः प्राहुस्तथा निर्वाणं भवेत् ? । किं तत् ? इत्याह– सतो विद्यमानस्य जीवस्य विशिष्टा काचिदवस्था । कथंभूता ? राग-द्वेष-मद-मोह-जन्म-जरा-रोगादिदुःखक्षयरूपा । उक्तं च–

"केवलसंविद्-दर्शनरूपाः सर्वार्तिदुःखपरिमुक्ताः । मोदन्ते मुक्तिगता जीवाः क्षीणान्तरारिगणाः ॥ १ ॥"

इति ॥ १९७५ ॥

प्रकारान्तरेणापि संशयकारणमाह—

अहवाऽणाइत्तणओ खस्स व किं कम्म-जीवजोगस्स । अविओगाओ न भवे संसाराभाव एव त्ति ? ॥ १९७६ ॥

अथवा, त्वमेवं मन्यसे– नूनं संसाराभाव एव न भवेत् । कुतः ? । अवियोगात्– वियोगायोगात् । कस्य ? । कर्म-जीवयोः संयोगस्य । कुतः ? । अनादित्वात्; खस्येव । इह ययोरनादिः संयोगस्तयोर्वियोगो नास्ति, यथा जीवा-ऽऽकाशयोः, अनादिश्च जीव-कर्मणोः संयोगः; ततो वियोगानुपपत्तिः; ततश्च न संसाराभावः; तथा च सति कुतो मोक्षः ? इति ॥ १९७६ ॥

अथ प्रत्यासत्तेरेवानन्तरोक्तस्यैव प्रतिविधानमाह—

पेडिवज्ज मण्डिओ इव वियोगमिह कम्म-जीवजोगस्स । तमणाइणो वि कंचण-धाऊण व णाण-किरियाहिं ॥ १९७७ ॥

'अणाइणो वि त्ति' अनादेरपि जीव-कर्मसंयोगस्य 'तं' इति त्वं प्रतिपद्यस्व वियोगम्, बन्ध-मोक्षवादे मण्डिकवत् । कयोरिव यो वियोगः ? । काञ्चन-धातुपाषाणयोरिव । किं निर्हेतुक एव जीव-कर्मणोर्वियोगः ? । न, इत्याह– ज्ञान-क्रियाभ्याम् । इदमुक्तं भवति–

१ अथवाऽनादित्वत. खस्येव किं कर्म-जीवयोगस्य । अवियोगाद् न भवेत् संसाराभाव एवेति ? ॥ १९७६ ॥
२ प्रतिपद्यस्व मण्डिक इव वियोगमिह कर्म जीवयोगस्य । त्वमनादेरपि काञ्चन-धात्वोरिव ज्ञान-क्रियाभ्याम् ॥ १९७७ ॥

भगवानाह—

जत्तो च्चिय पच्चक्खं सोम्म ! सुहं नत्थि दुक्खमेवेदं । तप्पडियारविभत्तं तो पुण्णफलं ति दुक्खं ति ॥२००५॥



सौम्य ! प्रभास ! यत एव दुःखेऽनुभूयमाने कस्याप्यविपर्यस्तमतेः सुखं प्रत्यक्षं नास्ति, सुखानुभवः स्वसंविदितो न विद्यते, अत एवास्माभिरुच्यते– 'दुक्खमेवेदं' इति, यत् किमप्यत्र संसारचक्रे स्रक्-चन्दना-ऽङ्गनासंभोगादिसमुत्थमपि विद्यते तत् सर्वं दुःखमेवेत्यर्थः, केवलं तस्याङ्गनासंभोगादिविषयौत्सुक्यजनितारतिरूपस्य दुःखस्य प्रतीकारोऽङ्गनासंभोगादिकस्तत्प्रतीकारस्तेन तत्प्रतीकारेण दुःखमपि सद् विभक्तं मूढैर्भेदेन व्यवस्थापितम्– तत्प्रतीकाररूपं कामिनीसंभोगादिकं पामाकण्डूयनादिवत् सुखमध्यवसितम्, शूलारोपण-शूल-शिरोबाधादिव्याधि-बन्ध-वधादिजनितं तु दुःखमिति । रमणीसंभोग-चक्रवर्तिपदलाभादि सुखं स्वसंविदितं 'दुःखम्' इति वदतां प्रत्यक्षविरोध इति चेत् । तदयुक्तम्, मोहमूढप्रत्यक्षत्वात् तस्य, तल्लाभौत्सुक्यजनितारतिरूपदुःखप्रतीकाररूपत्वाद् दुःखेऽपि तत्र सुखाध्यवसायः, पामाकण्डूयना-ऽपथ्याहारपरिभोगादिवत्; तथाचोक्तम्—

"नग्नः प्रेत इवाविष्टः क्वणन्तीमुपगृह्य ताम् । गाढायासितसर्वाङ्गः स सुखी रमते किल ॥ १ ॥
औत्सुक्यमात्रमवसादयति प्रतिष्ठा क्लिश्नाति लब्धपरिपालनवृत्तिरेव ।
नातिश्रमापगमनाय यथा श्रमाय राज्य स्वहस्तगतदण्डमिवातपत्रम् ॥ २ ॥
भुक्ताः श्रियः सकलकामदुघास्ततः किं संप्रीणिताः प्रणयिनः स्वधनैस्ततः किम् ? ।
दत्त पद शिरसि विद्विषता ततः किं कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ? ॥ ३ ॥
इत्थं न किञ्चिदपि साधन-साध्यजातं स्वप्नेन्द्रजालसदृश परमार्थशून्यम् ।
अत्यन्तनिर्वृतिकरं यदपेतबाधं तद् ब्रह्म वाञ्छत जनाः ! यदि चेतनास्ति ॥ ४ ॥"

इत्यादिना । 'पुण्णफलं ति दुक्खं ति' यत एवमुक्तप्रकारेण दुःखेऽपि सुखाभिमानः, तस्मात् पुण्यफलमपि सर्वं तत्त्वतो दुःखमेवेति ॥ २००५ ॥

एतदेव प्रपञ्चयति—



१ यत एव प्रत्यक्ष सौम्य ! सुख नास्ति दुःखमेवेदम् । तत्प्रतीकारविभक्त ततः पुण्यफलमिति दुःखमिति ॥ २००५ ॥ २ क ग सामिति' ।

अन्नो दोज्जिइ केहे निरत्थियं किं वहामि से चारिं । चउचरणगवी उ मया अवन्न-हाणी य बहुयाणं ॥ १९ ॥
मा मे होज्ज अवण्णो गोवज्झा वा पुणो वि न दविज्जा । वयमवि दोज्झामो पुणो अणुग्गहो अन्नदुद्धे वि ॥२०॥
सीसा पडिच्छगाणं भरो त्ति ते विय हु सीसगभरो त्ति । न करेंति सुत्तहाणी अन्नत्थ वि दुल्लहं तेसिं ॥ २१ ॥
कोमुइया तह संगामिया य उब्भूइया य भेरीओ । कण्हस्सासिण्हुतया असिवोवसमी चउत्थी उ ॥ २२ ॥
सक्कपसंसा गुणगाहि केसवो नेमिवंद-सुणुदंता । आसरयणस्स हरणं कुमारभंगे य पुयजुद्धं ॥ २३ ॥
नेहि जिओ म्हि त्ति अहं असिवोवसमीए संपयाणं च । छम्मासियघोसणया पसमइ न य जायए अन्नो ॥२४॥
आगंतुवाहिक्खोभो महिड्ढिमुल्लेण कंथ-दंडणया । अट्ठमआराहण अन्नभेरी अन्नस्स ठवणं च ॥ २५ ॥
मुक्कं तया अगहिए दुपरिग्गहियं कयं तया, कलहो । पिट्टण-अइचिरविक्कय गएसु चोरा य ऊणग्घे ॥ २६ ॥
मा निण्हवए य दाउं उवजुज्जिय देहि किं विचिंतेसि ? । वच्चामेलियदाणे किलस्ससि तं च हं चेव ॥ २७ ॥
भणिया जोग्गा-ऽजोग्गा सीसा गुरवो य तत्थ दोण्हं पि । पेयालियगुण-दोसो जोग्गो जोग्गस्स भासेज्जा ॥ २८ ॥
कयमंगलोवयारो[2] संपइ वण्णियपसंगवक्खाणो । दाइयवक्खाणविही वोच्छमुवग्घायदाराविहिं ॥ २९ ॥

उद्देसे निद्देसे य निग्गमे खेत्त-काल-पुरिसे य ।
कारण-पच्चय-लक्खण-नए समोयारणा-णुमए ॥ १३३ ॥
किं कइविहं कस्स कहिं केसु कह केच्चिरं हवइ कालं ।
कइ संतरमविरहियं भवा-गरिस-फोसणनिरुत्ती ॥ १३४ ॥



१ 'कह्न नि'। २ 'यारे स'।

उद्देट्ठुं निद्दिस्सइ पायं सामन्नओ विसेसो त्ति । उद्देसो तो पढमं निद्देसोऽणंतरं तस्स ॥ १ ॥

**नामं ठवणा दविए खित्ते काले समासउद्देसे ।**
**उद्देसुद्देसम्मि य भावम्मि होइ अट्ठमओ ॥ १३५ ॥**

नामं जस्सुद्देसो नामेणुद्देस एव जो जेणं । उद्देस्सो नामस्स व नामुद्देसोऽभिहाणं ति ॥ १ ॥
एवं नणु सव्वो च्चिय नामुद्देसो जओऽभिहाणं ति । दव्वाईणं तेहिं व तेसु व जं कीरए जस्स ॥ २ ॥
सच्चं सव्वाणुगओ नामुद्देसोऽभिहाणमेत्तं जं । नाणत्तं तहवि मयं मइ-किरिया-वत्थुभेएहिं ॥ ३ ॥
ठवणाए उद्देसो ठवणोद्देसो त्ति तस्स वा ठवणा । तं तेण तओ तम्मि व दव्वाईयाणमुद्देसो ॥ ४ ॥
दव्वुद्देसो दव्वं दव्वपई दव्ववं सदव्वो त्ति । एवं खेत्तं खेत्ती खेत्तपई खेत्तजायं ति ॥ ५ ॥
कालो कालाईयं कालोवेयं ति कालजायं ति । संखेवो त्ति समासो अंगाईणं तओ तिण्हं ॥ ६ ॥
अंग-सुयक्खंध-ज्झयणाणं नियमियप्पभेयसंगहओ । होइ समासुद्देसो जहंगमंगी तदज्झेया ॥ ६ ॥
एमेव य सुयक्खंधो तस्सज्झेया तैयत्थविण्णाया । अज्झयणं अज्झयणी तस्सज्झेया तैयत्थण्णू ॥ ८ ॥
उद्देसो उद्देसी उद्देसण्णू तयत्थवेत्ता वा । उद्देसुद्देसोऽयं भावो भावि त्ति भावम्मि ॥ ९ ॥

**एमेव य निद्देसो अट्ठविहो सो वि होइ नायव्वो ।**
**आविसेसियमुद्देसो विसेसिओ होइ निद्देसो ॥ १३६ ॥**

नामं जिणदत्ताई ठवणा य विसिट्ठिवत्थुनिक्खेवो । दव्वे गोमं दंडी रहि त्ति तिविहो सच्चित्ताई ॥ १ ॥

१ 'तवई' । २ 'तदत्थविण्णेया' । ३ 'तदत्थ' ।

[1]विसयसुहं दुक्खं चिय दुक्खपडियारओ तिगिच्छ व्व । तं सुहमुवयाराओ न उवयारो विणा तच्चं ॥२००६॥

विषयसुखं तत्त्वतो दुःखमेव, दुःखप्रतीकाररूपत्वात्, कुष्ठ गण्डा-ऽर्शोरोग-काथपान-च्छेदन-दम्भनादिचिकित्सावत्। यश्च लोके तत्र सुखव्यपदेशः प्रवर्तते, स उपचारात्। न चोपचारस्तथ्यं पारमार्थिकं विना क्वापि प्रवर्तते, माणवकादौ सिंहाद्युपचारवदिति ॥२००६॥

ततः किम्? इत्याह—

[2]तम्हा जं मुत्तसुहं तं तच्चं दुक्खसंखएऽवस्सं । मुणिणोऽणाबाहस्स व णिप्पडियारप्पसूईओ ॥ २००७॥

तस्माद् यद् मुक्तस्य संबन्धि तदेव सुखं तथ्यं निरुपचरितम्। कुतः? । स्वाभाविकत्वेन निष्प्रतीकाररूपस्य तस्य प्रसूतेरुत्पत्तेः। कथम्?। अवश्यम्। क सति?। दुःखसंक्षये। सांसारिकं हि सर्वं पुण्यफलमपि दुःखरूपतया समर्थितम्, ततः पापफलम्, इतरच्च सर्वं दुःखमेवेहास्ति नान्यत्, तच्च मुक्तस्य क्षीणम्; अतस्तत्संक्षयेऽवश्यंतया यत् तस्य निष्प्रतीकारं स्वाभाविकं निरुपमं सुखमुत्पद्यते तदेव तथ्यम्। कस्येव?। विशिष्टज्ञानवतोऽनाबाधस्य मुनेरिव। उक्तं च—

"[3]निर्जितमद-मदनानां वाक्-काय-मनोविकाररहितानाम्। विनिवृत्तपराशानामिहैव मोक्षः सुविहितानाम् ॥ १ ॥"

इति ॥ २००७ ॥

अथवा, प्रकारान्तरेणापि मुक्तस्य तथ्यसुखसंभवमाह—

[4]जह वा नाणमओऽयं जीवो नाणोवघाइ चावरणं । करणमणुग्गहकारिं सव्वावरणक्खए सुद्धी ॥ २००८ ॥

तह सोक्खमओ जीवो पावं तस्सोवघाइयं नेयं । पुण्णमणुग्गहकारिं सोक्खं सव्वक्खए सयलं ॥२००९॥

व्याख्या– यथा वाऽनन्तज्ञानमयोऽसौ स्वरूपेण जीवः। तदीयज्ञानस्य च मत्यावरणादिकमावरणमुपघातकं मन्तव्यम्। करणानि त्विन्द्रियाणि तज्ज्ञानस्य, सूर्यातपस्य तदावारकमेघपटलच्छिद्राणीवोपकारकाणि। सर्वावरणक्षये तु ज्ञानशुद्धिर्निर्मलता सर्वथावभास-

१ विषयसुख दुःखमेव दुःखप्रतीकारतश्चिकित्सेव। तत् सुखमुपचाराद् नोपचारो विना तथ्यम् ॥ २००६ ॥
२ तस्माद् यद् मुक्तसुख तत् तथ्य दुःखसंक्षयेऽवश्यम्। मुनेरनाबाधस्येव निष्प्रतीकारप्रसूते. ॥ २००७ ॥ ३ प्रशमरतौ श्लो० २३८।
४ यथा वा ज्ञानमयोऽयं जीवो ज्ञामोपघाति चावरणम्। करणमनुग्रहकारि सर्वावरणक्षये शुद्धिः ॥ २००८ ॥
तथा सौख्यमयो जीव. पापं तस्योपघातिकं ज्ञेयम्। पुण्यमनुग्रहकारि सौख्यं सर्वक्षये सकलम् ॥ २००९ ॥

[1]सो वत्तणाइरूवो कालो दव्वस्स चेव पज्जाओ । किंचिम्मेत्तविसेसेण दव्वकालाइववएसो ॥ २०२९ ॥

स वर्तनादिरूपः कालो द्रव्यस्यैव पर्यायः । ततः पर्यायरूपतया तत्त्वत एकरूपस्यापि तस्य किञ्चिन्मात्रविशेषविवक्षया द्रव्यकालः, अद्धाकालः, यथाऽऽयुष्ककाल इत्यादिव्यपदेशः प्रवर्तते ॥ इति भाष्यगाथाचतुष्टयार्थः ॥ २०२९ ॥

तेषामेव द्रव्य-कालादिभेदानां प्रतिपादनार्थं निर्युक्तिकारः प्राह—

[2]दव्वे अद्ध अहाउ य उवक्कमे देस-कालकाले य । तह य पमाणे वन्ने भावे, पगयं तु भावेणं ॥ २०३० ॥

इह नाम-स्थापने सुखावसेयत्वाद् नोक्ते । शेषास्तु नव कालभेदाः प्रोच्यन्ते । तत्र द्रव्य इति वर्तनादिरूपो द्रव्यकालो वाच्यः । 'अद्धेति' चन्द्र-सूर्यादिक्रियाभिव्यङ्ग्योऽर्धतृतीयद्वीप-समुद्रान्तर्वर्त्यद्धाकालः समयादिलक्षणो वाच्यः । तथा, यथायुष्ककालो देवाद्यायुष्ककालो देवाद्यायुष्कलक्षणो वक्तव्यः । तथा, उपक्रमकालोऽभिप्रेतार्थसामीप्यानयनलक्षणः सामाचारी-यथायुष्कभेदभिन्नोऽभिधानीयः । तथा, देशः प्रस्तावोऽवसरो विभागः पर्याय इत्यनर्थान्तरम्, स देशरूपः कालो देशकालो वक्तव्यः, अभीष्टवस्त्ववाप्त्यवसरकाल इत्यर्थः । तथा, कालकालोऽभिधानीयः, तत्रैकः कालशब्दोऽनन्तरनिरूपितशब्दार्थः, द्वितीयस्तु समयपरिभाषया कालो मरणमुच्यते । ततश्च कालस्य मरणक्रियारूपस्य कलनं कालः काल इत्यर्थः । तथा, प्रमाणकालोऽद्धाकालस्यैव विशेषभूतो दिवसादिलक्षणो वक्तव्यः । तथा, वर्णश्चासौ कालश्च वर्णकालो भणनीयः । तथा, 'भावे त्ति' औदयिकादेर्भावस्य सादिसपर्यवसानादिभेदभिन्नः कालो भावकालः प्ररूपणीयः । 'पगयं तु भावेणं ति' प्रकृतं प्रस्तुतं पुनरत्र भावेन– भावकालेनेहाधिकारः । शेषास्तु द्रव्य-कालादयः कालभेदमात्रतः प्ररूपिताः ॥ इति निर्युक्तिद्वारगाथासंक्षेपार्थः ॥ २०३० ॥

अथ प्रतिद्वारं विस्तरार्थमभिधित्सुराह—

[3]चेयणमचेयणस्स य दव्वस्स ठिई उ जा चउविगप्पा । सा होइ दव्वकालो अहवा दवियं तयं चेव ॥२०३१॥

'चेतनं' इति विभक्तिव्यत्ययात् षष्ठी द्रष्टव्या । वाशब्दः समुच्चये । ततश्च चेतनस्य सुर-नारकादेरचेतनस्य च पुद्गलस्कन्धा-

१ स वर्तनादिरूप कालो द्रव्यस्यैव पर्याय । किञ्चिन्मात्रविशेषेण द्रव्य-कालादिव्यपदेशः ॥ २०२९ ॥
२ द्रव्यमद्धा यथायुश्चोपक्रमो देश-कालकालौ च । तथा च प्रमाणं वर्णो भाव , प्रकृतं तु भावेन ॥ २०३० ॥
३ चेतनस्याचेतनस्य च द्रव्यस्य स्थितिस्तु या चतुर्विकल्पा । सा भवति द्रव्यकालोऽथवा द्रव्यं तदेव ॥ २०३१ ॥

कत्वलक्षणा भवति। प्रकृतयोजनामाह— तथा तेनैव प्रकारेण स्वरूपतः स्वाभाविकानन्तसौख्यमयो जीवः, तस्य च सुखस्यैवोपघातकारकं पापकर्म विज्ञेयम्। पुण्यं त्वनुत्तरसुरपर्यन्तसुखफलं तस्य स्वाभाविकसुखस्यानुग्रहकारकम्। ततः सर्वावरणापगमे प्रकृष्टज्ञानमिव समस्तपुण्यपापक्षये सकलं परिपूर्णं निरुपचरितं निरुपमं स्वाभाविकमनन्तं सुखं भवति सिद्धस्येति ॥ २००८ ॥ २००९ ॥

अन्येन वा प्रकारेण मुक्तस्य तस्य सुखसंभवमाह—

[1]जह वा कम्मक्खयओ सो सिद्धत्ताइपरिणइं लभइ। तह संसाराईयं पावइ तत्तो च्चिय सुहं ति ॥२०१०॥

यथा वा सकलकर्मक्षयादसौ मुक्तात्मा सिद्धत्वादिपरिणतिं लभते, तत एव सकलकर्मक्षयात् संसारातीतं वैषयिकसुखाद् विलक्षणस्वरूपं निरुपमं तथ्यं सुखं प्राप्नोति। एतेन यदुक्तम्– 'क्षीणपुण्य-पापत्वेन कारणाभावाद् निःसुख-दुःखो मुक्तात्मा, व्योमवत्' इत्येतदपि प्रत्युक्तं द्रष्टव्यम्, 'कारणाभावात्' इत्यस्य हेतोरसिद्धत्वात्, सकलकर्मक्षयलक्षणकारणजन्यत्वेन सिद्धसुखस्य सकारणत्वादिति ॥ २०१० ॥

यदुक्तम्–'[2]आधारो देहो च्चिय जं सुह-दुक्खोवलद्धीणं' इति; तत्राह—

[3]साया-ऽसायं दुक्खं तव्विरहम्मि य सुहं जओ तेणं। देहिं-दिएसु दुक्खं सोक्खं देहिं-दियाभावे ॥ २०११ ॥

ननु यत् पुण्यफलं सातं सुखतया लोकव्यवहारतो रूढं तत् सर्वं दुःखमेवेत्यनन्तरमेव समर्थितम्, असातं तु पापफलत्वाद् निर्विवादं दुःखमेव। एवं च सति सर्वं दुःखमेवास्ति संसारे, न सुखम्। तच्च दुःखं सिद्धस्य सर्वथा क्षीणम्। अतस्तद्विरहे यद् यस्मात् सिद्धस्य स्वाभाविकं, निरुपमम्, अनन्तं च युक्तिसिद्धमेव सुखम्, तेन तस्मात् कारणात् पारिशेष्यन्यायात् संसारिणामेव जीवानां देहे-न्द्रियेष्वाधारभूतेषु यथोक्तस्वरूपं दुःखम्, सुखं तु देहे-न्द्रियाभाव एव, सिद्धस्य क्षीणानिःशेषसुख-दुःखत्वेन तस्य तत्र युक्तिसिद्धत्वादिति ॥ २०११ ॥

अथवा, देहे-न्द्रियाभावे सुखाभावलक्षणो दोषस्तस्य भवतु यः, किम्? इत्याह—

[4]जो वा देहिं-दियजं सुहमिच्छइ तं पडुच्च दोसोऽयं। संसाराईयमिदं धम्मंतरमेव सिद्धिसुहं ॥ २०१२ ॥

1 यथा वा कर्मक्षयत स सिद्धत्वादिपरिणतिं लभते। तथा ससारातीत प्राप्नोति तत एव सुखमिति ॥ २०१० ॥ २ गाथा २००३।
३ साता-ऽसातं दु ख तद्विरहे च सुख यतस्तेन। देहे-न्द्रियेपु दुःख सौख्य देहे-न्द्रियाभावे ॥२०११॥
४ यो वा देहे-न्द्रियजं सुखमिच्छति त प्रतीत्य दोषोऽयम्। ससारातीतमिद धर्मान्तरमेव सिद्धिसुखम् ॥ २०१२ ॥

देर्द्रव्यस्य च याऽवस्थानरूपा स्थितिः सा सादिसपर्यवसानादिभेदाच्चतुर्विकल्पा चतुर्भेदा । सा स्थितिर्भवति । किम् ? इत्याह - द्रव्यस्य कालो द्रव्यकालः, तत्पर्यायत्वात्; अथवा, तदेव सचेतना-ऽचेतनरूपं द्रव्यं कालो द्रव्यकालः प्रोच्यते, पर्याय-पर्यायिणोरभेदोपचारात् ॥ इति निर्युक्तिगाथार्थः ॥ २०३१ ॥

अथैतां भाष्यकारो व्याचिख्यासुराह—

[1]दव्वस्स वत्तणा जा स दव्वकालो तदेव वा दव्वं । न हि वत्तणाइरित्तं जम्हा दव्वं जओऽभिहिअं ॥२०३२॥

सुत्ते जीवा-ऽजीवा समया-ऽऽवलियादओ पवुच्चंति । दव्वं पुण सामन्नं भण्णइ दव्वट्ठयामेत्तं ॥२०३३॥

द्रव्यस्य या सादिसपर्यवसानादिलक्षणा तेन रूपेण वृत्तिर्वर्तना स द्रव्यस्य कालो द्रव्यकालः समुत्कीर्त्यते । अथवा, तदेव चेतनाचेतनं द्रव्यं कालो द्रव्यकाल इष्यते । कुतः ? इत्याह- न खलु यस्माद् वर्तना-परिणामादिभ्यो भिन्नं पृथग्भूतं द्रव्यमस्ति, यतोऽभिहितं सूत्र आगमे । किमभिहितम् ? इत्याह- 'जीवा-ऽजीवेत्यादि' समया ऽऽवलिकादयः केऽभिधीयन्ते ? इत्याह - जीवा-ऽजीवाः- जीवा-ऽजीवद्रव्याण्येव समया-ऽऽवलिकादयो भण्यन्ते, न पुनस्तद्व्यतिरिक्तास्त इति भावः । तदेवं जीवा-ऽजीवेभ्योऽव्यतिरिक्तः समया-ऽऽवलिकादिरूपः कालः । ते च जीवा-ऽजीवा द्रव्यार्थतामात्ररूपं सामान्यतो द्रव्यमुच्यते । ततो द्रव्यमेव कालो द्रव्यकाल इति सिद्धम् । इह चागमोक्तोऽर्थ एव लिखितः, सूत्रं पुनरित्थमवगन्तव्यम्- "[2]किमयं भंते ! काले त्ति पवुच्चइ ? । गोयमा ! जीवा चेव अजीवा चेव" इति ॥ २०३२ ॥ २०३३ ॥

कथं पुनश्चेतनस्याचेतनस्य च द्रव्यस्य चतुर्विधा स्थितिः ? इत्याह—

[3]सुर-सिद्ध-भव्वा-ऽभव्वा साइ-सपज्जवसियादओ जीवा । खंधाणागयतीया नभादओ चेयणारहिया ॥२०३४॥

सुरग्रहणस्योपलक्षणत्वात् सुर-नारक-तिर्यग् मनुष्याः सुरत्वादिपर्यायमधिकृत्य सादिसपर्यवसितस्थितयः । सिद्धाः, भव्याः

---

1 द्रव्यस्य वर्तना या स द्रव्यकालस्तदेव वा द्रव्यम् । न हि वर्तनातिरिक्तं यस्माद् द्रव्यं यतोऽभिहितम् ॥ २०३२ ॥
सूत्रे जीवा अजीवाः समया-ऽऽवलिकादयः प्रोच्यन्ते । द्रव्यं पुनः सामान्यं भण्यते द्रव्यार्थतामात्रम् ॥ २०३३ ॥
2 किमयं भगवन् ! काल इति प्रोच्यते ? । गौतम ! जीवाश्चैव, अजीवाश्चैव ।
3 सुर-सिद्ध-भव्या-ऽभव्याः सादिसपर्यवसितादयो जीवाः । स्कन्धा अनागता-ऽतीता नभआदयश्चेतनारहिताः ॥ २०३४ ॥

यो वा कश्चित् संसाराभिनन्दी मोहमूढः परमार्थादर्शी विषयामिषमात्रगृद्धो देहे-न्द्रियजमेव सुखं मन्यते, न तु सिद्धिसुखम्, तस्य तेन स्वप्नेऽप्यदर्शनात्, तस्य वादिनः संसारविपक्षे मोक्षे प्रमाणतः साधिते सति 'निःसुखः, सिद्धः, देहे-न्द्रियाभावात्' इत्ययं दोषो भवेत्; न त्वस्माकं संसारातीतं पुण्य-पापफलसुख-दुःखाभ्यां सर्वथा विलक्षणं धर्मान्तरभूतमेवाऽनुपममक्षयं निरुपचरितं सिद्धिसुखमिच्छतामिति ॥ २०१२ ॥

अत्र प्रेर्यमाशङ्क्य परिहरन्नाह—

[1]कह नणु मेयं ति मई नाणा-ऽणाबाहउ त्ति नणु भणियं । तदणिच्चं णाणं पि य चेयणधम्मो त्ति रागो व्व ॥२०१३॥

अत्रैवंभूता मतिः परस्य भवेत्– नन्विच्छन्ति भवन्तः सिद्धस्य यथोक्तं सुखम्, किन्तु नेच्छामात्रतो वस्तुसिद्धिः, अपितु प्रमाणतः; ततो येन प्रमाणेन तत् सिध्यति तद् वक्तव्यम् । अनुमानेन तदनुमीयत इति चेत् । तर्हि केनानुमानेन तदनुमेयम्– अनुमीयत इत्यर्थः ? इत्याह– 'नाणा-ऽणावाहउ त्ति नणु भणियं ति' ननु भणितमत्रार्थे प्रागनुमानम्– सिद्धस्य प्रकृष्टं सुखम्, ज्ञानत्वे सत्यना-बाधत्वात्, मुनिवदिति । पुनरपि परः प्राह– यद्येवम्, तर्ह्यनित्यं सुखं ज्ञानं च सिद्धस्य, चेतनधर्मत्वात्, रागवदिति ॥ २०१३ ॥

अथवा हेत्वन्तरमाह—

[2]कयगाइभावओ वा नावरणा-ऽऽबाहकारणाभावा । उप्पाय-ट्ठिइ-भङ्गस्सहावओ वा न दोसोऽयं ॥ २०१४ ॥

अथवा, अनित्ये सिद्धस्य सुख-ज्ञाने, तपःप्रभृतिकष्टानुष्ठानेन क्रियमाणत्वात्, आदिशब्दादभूतप्रादुर्भावात्, घटवदिति । अत्रोत्तरमाह–'नावरणेत्यादि' न सिद्धस्यानित्ये ज्ञान-सुखे। कुतः ?। आवरणं चाबाधश्चावरणा-ऽऽबाधौ, तयोः कारणं हेतुस्तस्याऽभावात्, आकाशवदिति । इदमुक्तं भवति– सिद्धस्य ज्ञानं सुखं च यद्यपगच्छेत् तदा स्यादनित्यम्, अपगमश्च ज्ञानस्यावरणोदयात्, सुखस्य त्वाबाधहेतुभूतादसातवेदनीयोदयादिकारणाद् भवेत्; आवरण-वेदनीयादीनि च मिथ्यात्वादिभिर्बन्धहेतुभिर्बध्यन्ते, ते च सिद्धस्य न विद्यन्ते, ततस्तदभावाद् नावरणा-ऽऽबाधाकारणसद्भावः, तदभावाच्च न सिद्धस्य ज्ञान-सुखापगमः, तदसत्त्वे च तयोः सदाऽव-स्थितत्वात् कथमनित्यत्वम् ?। न च चेतनधर्माः सर्वेऽप्यनित्या भवन्ति, जीवगतद्रव्यत्वा-ऽमूर्तत्वादिभिर्व्यभिचारात् । ततश्च 'चेतनध-

१ कथं ननु मेयमिति मतिर्ज्ञाना-ऽनाबाधत इति ननु भणितम् । तदानित्य ज्ञानमपि च चेतनधर्मं इति राग इव ॥ २०१३ ॥
२ कृतकादिभावतो वा नावरणा-ऽऽबाधकारणाभावात् । उत्पाद-स्थिति-भङ्गस्वभावतो वा न दोषोऽयम् ॥ २०१४ ॥

सिद्धत्वमधिकृत्य, साद्यपर्यवसानाः। भव्यजीवाः, भव्यत्वमाश्रित्य, केचनाप्यनादिसपर्यवसानाः, "[1]सिद्धे नो भव्वे, नो अभव्वे" इति वचनात् सिद्धत्वप्राप्तौ भव्यत्वनिवृत्तेः। अभव्यजीवाः, अभव्यत्वमङ्गीकृत्य, अनाद्यपर्यवसिताः। इत्येवं चेतनद्रव्यस्य सादिसपर्यवसितादिका चतुर्विधा स्थितिः। अचेतनद्रव्यमुररीकृत्याह– 'खंधेत्यादि' द्व्यणुकादिस्कन्धाः सादिसपर्यवसिताः, एकेन द्व्यणुकत्वादिना परिणामेनोत्कृष्टतोऽपि पुद्गलद्रव्यस्यापि संख्येयकालमेव स्थितेः। अनागताद्धा भविष्यत्कालरूपा साद्यपर्यवसिता। अतिक्रान्तकालरूपाऽतीताद्धा अनादिसपर्यवसिता। आकाश-धर्मा-ऽधर्मास्तिकायादयस्त्वनाद्यपर्यवसिताः। इत्येवं चेतनारहितस्यापि द्रव्यस्य चतुर्विधा स्थितिः। तदेवमभिहितो द्रव्यकालः॥ २०३४॥

सांप्रतमद्धाकालस्वरूपोपदर्शनार्थमाह—

[2]सूरकिरियाविसिट्ठो गोदोहाइकिरियासु निरवेक्खो। अद्धाकालो भण्णइ समयखेत्तम्मि समयाई ॥२०३५॥

सूरो भास्करस्तस्य क्रिया मेरोश्चतसृष्वपि दिक्षु प्रदक्षिणतोऽजस्रं भ्रमणलक्षणा, सूरस्योपलक्षणत्वाचन्द्र-ग्रह-नक्षत्र-ताराणामपीत्थंभूता क्रिया गृह्यते, तया सूर्यादिक्रियया विशिष्टो विशेषितो व्यक्तीकृतोऽर्धतृतीयद्वीपसमुद्रलक्षणे समयक्षेत्रे यः समया-ऽऽवलिकादिरर्थः प्रवर्तते, न परतः, सूर्यादिक्रियाऽभावात्, सोऽद्धाकालो भण्यते। क्रियैव परिणामवती कालो नान्य इति। ये कालमपह्नुवते तन्मतव्यवच्छेदार्थमाह– गोदोहादिक्रियासु निरपेक्षः। न खलु यथोक्तोऽद्धाकालः क्रियां गोदोहाद्यात्मिकामपेक्ष्य प्रवर्तते, किन्तु सूर्यादिगतिम्; तथाहि– यावद् यावत् क्षेत्रं स्वकिरणैर्दिनकरश्चलन्नुद्द्योतयते तद् दिवस उच्यते, परतस्तु रात्रिः, तस्य च दिवसस्य परमनिकृष्टः सूक्ष्मोऽसंख्याततमो भागः समयः, ते चासंख्येया आवलिका इत्यादि। एवं च प्रवृत्तस्यास्य कालस्य सूर्यादिगतिक्रियां विहाय काऽन्या गोदोहादिक्रियापेक्षा? ॥ इति भाष्यगाथाचतुष्टयार्थः॥ २०३५॥

के पुनस्ते समयादयोऽद्धाकालभेदाः? इत्याह निर्युक्तिकारः—

[3]समया-ऽऽवलि-मुहुत्ता दिवसमहोरत्त-पक्ख-मासा य। संवच्छर-जुग-पलिया सागर-ओसप्पि-पलियट्टा ॥२०३६॥

---

१ सिद्धा नो भव्या नो अभव्याः। २ सूरक्रियाविशिष्टो गोदोहादिक्रियासु निरपेक्षः। अद्धाकालो भण्यते समयक्षेत्रे समयादयः॥ २०३५॥
३ समया-ऽऽवलि मुहूर्ता दिवसमहोरात्र-पक्ष-मासाश्च। संवत्सर-युग-पल्यानि सागरो त्सर्पिणी-परावर्ता.॥ २०३६॥

र्मत्वात्' इत्यनैकान्तिको हेतुः । तथा, कृतकत्वादिरप्यनैकान्तिकः, घटप्रध्वंसाभावेन व्यभिचारात् । असिद्धश्चायम्, सिद्धस्य ज्ञान-सुखयोः स्वाभाविकत्वेन कृतकत्वाद्ययोगात्, आवरणा-ऽऽबाधकारणाभावेन च तत्तिरोभावमात्रमेव निवर्तते, न पुनस्ते क्रियेते, घटादिवत्; नाप्यभूते प्रादुर्भवतः, विद्युदादिवत्, येन तयोरनित्यत्वं स्यात् । न हि घनपटलापगमे चन्द्रज्योत्स्नायाः सूर्यप्रभाया वा तिरोभावमात्रनिवृत्तौ कृतकत्वम्, अभूतप्रादुर्भावो वा वक्तुं युज्यत इति ।

अथ तेनाविर्भूतेन विशिष्टेन रूपेण कृतकत्वादनित्ये सिद्धस्य ज्ञान-सुखे; प्रतिक्षणं च पर्यायरूपतया ज्ञेयविनाशे ज्ञानस्य विनाशात्, सुखस्यापि प्रतिसमयं परापररूपेण परिणामादेतयोरनित्यत्वमुच्यते । तर्हि सिद्धसाध्यता, इति दर्शयति– 'उप्पाय-ट्ठिईत्यादि' इत्थमात्मा-ऽऽकाश-घटादिरूपस्य सर्वस्यापि वस्तुस्तोमस्य स्थित्यु-त्पाद-प्रलयस्वाभाव्याभ्युपगमात् सिद्धसुख ज्ञानयोरपि कथञ्चिदनित्यत्वाद् नायं तदनित्यत्वापत्तिलक्षणोऽस्माकं दोष इति ॥ २०१४ ॥

तदेवं जीवस्य सदवस्थालक्षणं निर्वाणम्, निवृत्तस्य च निरुपमसुखसद्भावं युक्तितः प्रसाध्य वेदोक्तद्वारेणापि तत्साधनार्थमाह—

न ह वइ ससरीरस्स प्पिय-ऽप्पियावहतिरेवमादि व जं। तदमोक्खे नासम्मि व सोक्खाभावम्मि व न जुत्तं ॥२०१५॥

"न ह वै सशरीरस्य प्रिया-ऽप्रिययोरपहतिरस्ति" "अशरीरं वा वसन्तं प्रिया-ऽप्रिये न स्पृशतः" इति च यद् वेदोक्तम्, तदप्यमोक्षे मोक्षाभावे– जीव-कर्मणोर्वियोगेऽनभ्युपगम्यमान इत्यर्थः, तथा, "मतिरपि न प्रज्ञायते" इति वचनाद् मुक्तावस्थायां सर्वथा नाशे वा जीवस्याभ्युपगम्यमाने, सत्त्वे वा मुक्तात्मनः सुखाभाव इष्यमाणे न युक्तं प्राप्नोति–अभ्युपगमविरोधस्तत्रेत्यर्थः । अनेन हि वाक्येन किल यथोक्तो मोक्षः, मुक्तौ च निष्कर्मणो जीवस्य सत्त्वम्, निरुपमसुखं च तस्य, एतानि त्रीण्यप्यभ्युपगम्यन्ते । एतच्च पुरस्ताद् व्यक्तीकरिष्यते । ततोऽस्य त्रितयस्य निषेधं कुर्वतस्तत्राभ्युपगमविरोध इति भावः ॥ २०१५ ॥

अत्राद्य-ऽन्तपक्षौ परिहृत्य मध्यगतं जीवनाशपक्षसंभविनमभ्युपगमविरोधं परिहर्तुं तावत् परः प्राह—

नट्ठो असरीरो च्चिय सुह-दुक्खाइं पिय-ऽप्पियाइं च । ताइं न फुसंति नट्ठं फुडमसरीरं ति को दोसो ? ॥२०१६॥

"न ह वै०" इत्यादिवेदवाक्यस्य किल परोऽमुमर्थं मन्यते– शरीरसर्वनाशेन नष्टः खरविषाणकल्प एवोच्यते, तमेवंभूतमश-

१ न ह वै सशरीरस्य प्रिया-ऽप्रियापहतिरेवमादि वा यत् । तदमोक्षे नाशे वा सौख्याभावे वा न युक्तम् ॥ २०१५ ॥
२ नष्टोऽशरीर एव सुख-दुःखे प्रिया-ऽप्रिये च । ते न स्पृशतो नष्टं स्फुटमशरीरमिति को दोषः ? ॥ २०१६ ॥

इह निर्विभागः परमसूक्ष्मकालांशः समयो भण्यते। स च प्रवचनप्रतिपादितोत्पलपत्रशतपट्टसाटिकापाटनदृष्टान्ताद् विशेषतः समवसेयः। असंख्येयसमयसमुदयसमितिसमागमनिष्पन्ना आवलिका। द्विघटिको मुहूर्तः। दिवसकरप्रभाप्रकाशितनभःखण्डरूपः, चतुष्प्रहरात्मको वा दिवसः। सूर्यकिरणस्पृष्टव्योमखण्डरूपः, चतुष्प्रहरात्मको वा दिवसः; सूर्यकिरणास्पृष्टव्योमखण्डरूपा, चतुर्यामात्मिका वा रात्रिः, तदुभयं त्वहोरात्रम्। पञ्चदशाहोरात्राणि पक्षः। पक्षद्वयात्मको मासः। द्वादशमासनिर्वृत्तः संवत्सरः। पञ्चसंवत्सरप्रमाणं युगम्। असंख्येययुगमानं पल्योपमम्। पल्योपमदशकोटीकोटिघटितं सागरोपमम्। दशसागरोपमकोटीकोटयात्मिकोत्सर्पिणी। एवमवसर्पिण्यपि। अनन्ताभिरुत्सर्पिण्य-ऽवसर्पिणीभिः पुद्गलपरावर्तः। स च द्रव्यादिभेदभिन्नः प्रवचनादवसेयः॥ इति निर्युक्तिगाथार्थः॥ २०३६॥

अथ यथायुष्ककालं विभणिषुर्भाष्यकारस्तत्स्वरूपमाह—

[1]आउयमेत्तविसिट्ठो स एव जीवाण वत्तणाइमओ। भण्णइ अहाउकालो वत्तइ जो जच्चिरं जेण॥२०३७॥

स एवोक्तरूपोऽद्धाकालो वर्तनादिमयो जीवानां नारक-तिर्यग्-नरा-ऽमराणां यथायुष्ककालो भण्यते। किं सर्वोऽपि?। न, इत्याह– आयुष्कमात्रविशिष्टः– नारकाद्यायुष्कमात्रविशेषित इत्यर्थः, अत एवायं यथायुष्ककालो भण्यते। यद्येन तिर्यग्-मनुष्यादिना जीवेन यथा येन रौद्रा-ऽऽर्त-धर्मध्यानादिना प्रकारेणोपार्जितमायुर्यथायुष्कम्, तस्यानुभवनकालो यथायुष्ककालः। कियन्तमवधिं यावदसौ भवति? इत्याह– यो जीवो येनात्मबद्धेनायुषा 'जच्चिरं ति' यावन्तमन्तर्मुहूर्तादिकं त्रयस्त्रिंशत्सागरोपमपर्यन्तं कालं वर्तते, स तस्य जीवस्य तावन्तमवधिं यावद् यथायुष्ककालो भवतीति तात्पर्यार्थः। इत्येवं विवक्षामात्रकृतोऽद्धाकाल-यथायुष्ककालयोर्भेदः। अतोऽद्धाकालस्यैव विशेषभूतत्वात् तदनन्तरं यथायुष्ककालमाहेति भावः॥ इति गाथार्थः॥ २०३७॥

इति विहितसंबन्धमेव यथायुष्ककालं निर्युक्तिकारः प्राह—

[2]नेरइय-तिरिय-मणुआ-देवाण अहाउयं तु जं जेणं। निव्वत्तियमन्नभवे पालंति अहाउकालो उ॥२०३८॥

नारक-तिर्यग् मनुष्य-देवानां मध्याद् यद् येन जीवेन यथा येन रौद्रध्यानादिना प्रकारेणान्यभवे पूर्वजन्मन्यभिनिर्वर्तितमायु-

१ आयुर्मात्रविशिष्ट स एव जीवानां वर्तनादिमय। भण्यते यथायु कालो वर्तते यो यच्चिरं येन॥ २०३७॥
२ नैरयिक-तिर्यग्-मनुज-देवाना यथायुष्क तु यद् येन। निर्वर्तितमन्यभवे पालयन्ति यथायु कालस्तु॥ २०३८॥

रीरं नष्टं प्रिया-ऽप्रिये सुख-दुःखे यद् न स्पृशतः, तत् स्फुटमेव बुध्यत एवेदम्, नष्टस्य सुख-दुःखस्पर्शायोगात्, अशरीरशब्देन च जीवनाशाभिधानात् । एवंभूते चास्य वाक्यस्यार्थे मुमुक्षुजीवस्य निर्वाणप्रदीपस्येव सर्वनाशमभ्युपगच्छतां कोऽस्माकमभ्युपगमविरोधलक्षणो दोषः ?– न कश्चिदपीति पराभिप्राय इति ॥ २०१६ ॥

अत्र प्रभासस्य भगवान् बोधान्यथात्वमवगम्यैतेषां वेदपदानां यथावस्थितमर्थं व्याचिख्यासुराह—

[1]वेयवयाण य अत्थं न सुट्ठु जाणसि इमाण तं सुणसु । असरीरव्ववएसो अधणो व्व सओ निसेहाओ ॥२०१७॥

ननिसेहओ य अन्नम्मि तव्विहे चेव पच्चओ जेण । तेणासरीरग्गहणे जुत्तो जीवो न खरसिंगं ॥ २०१८ ॥

आयुष्मन् ! प्रभास ! न केवलं युक्तिम्, वेदपदानाममीषामर्थं च त्वं सुष्ठु न जानासि, ततस्तं शृणु "न ह वै०" इत्यादि पूर्वार्धं सुगमत्वादत्र गाथाद्वये न व्याख्यातम्, तदपि सुखप्रतिपत्त्यर्थं व्याख्यायते– 'न' इति निपातो निषेधार्थः । 'ह' 'वै' इत्येतदपि निपातद्वयं हिशब्दार्थत्वाद् यस्मादर्थे । सह शरीरेण वर्तत इति सशरीरो जीवस्तस्य सशरीरस्येत्यत्रैवकारो द्रष्टव्यः । ततश्चायमर्थः— यस्मात् सशरीरस्य जीवस्य प्रिया-ऽप्रिययोः सुख-दुःखयोरपहतिर्विघातोऽन्तरं नास्ति, न त्वशरीरस्य; तस्मादशरीरं शरीररहितं मुक्त्यवस्थायां वसन्तं लोकान्तस्थितं जीवं प्रिया-ऽप्रिये सुख-दुःखे न स्पृशतः । इदमुक्तं भवति– यावदयं जीवः सशरीरः, तावत् सुखेन दुःखेन वाऽन्यतरेण कदाचिदपि न मुच्यते; अशरीरस्त्वसौ क्षीणवेदनीयत्वात् सुख-दुःखाभ्यां कदाचिदपि न स्पृश्यत इति । एवंभूते चास्य वाक्यस्यार्थे सति योऽयमशरीरव्यपदेशः, असौ सत एव विद्यमानस्यैव जीवस्य मुक्त्यवस्थायां विधीयते, न तु सर्वथा नष्टस्य । कुतः ? इत्याह– निषेधात् । इह यो यस्य निषेधः स तस्य सत एव विधीयते, न त्वसतः, यथाऽधन इति, अत्र सत एव देवदत्तस्य धननिषेधो विधीयते, न त्वसतः खरविषाणस्य ।

आह– न विद्यते शरीरं यस्येत्येवं निषेधादन्यपदार्थे जीव एव कथं प्रतीयते ? इत्याह– 'ननिसेहओ य इत्यादि' व्याख्यातो विशेषप्रतिपत्तेः पर्युदासवृत्तिना नञा निषेधो नञ्निषेधस्तस्माद् नञ्निषेधात् कारणात् सशरीरादन्यस्मिंस्तद्विध एव शरीरसदृशे कस्मिंश्चिदन्यपदार्थे संप्रत्ययो विज्ञेयः, यथा 'न ब्राह्मणोऽब्राह्मणः' इत्युक्ते ब्राह्मणसदृशः क्षत्रियादिरेव गम्यते, न तु तुच्छरूपोऽभावः । उक्तं च—

[1] वेदपदानां चार्थं न सुष्ठु जानास्येषां तं शृणु । अशरीरव्यपदेशोऽधन इव सतो निषेधात् ॥ २०१७ ॥
नञ्निषेधतश्चान्यस्मिंस्तद्विध एव प्रत्ययो येन । तेनाशरीरग्रहणे युक्तो जीवो न खरशृङ्गम् ॥ २०१८ ॥

रेतद् यथायुरिहोच्यते। तत्र यदा त एव नारकादयो विपाकतः पालयन्ति– अनुभवन्ति, तदाऽसौ तेषां यथायुष्ककालोऽभिधीयते। तुशब्दो द्रव्यकालादिभ्योऽस्य विशेषणार्थः ॥ इति निर्युक्तिगाथार्थः ॥ २०३८ ॥

अथोपक्रमकालं विभणिषुर्भाष्यकारस्तत्स्वरूपमाह—

[1]जेणोवक्कामिज्जइ समीवमाणिज्जए जओ जं तु। स किलोवक्कमकालो किरियापरिणामभूइट्ठो ॥ २०३९॥

'क्रमु पादविक्षेपे' विवक्षितस्य दूरस्थस्य वस्तुनस्तैस्तैरुपायभूतैः क्रियाविशेषैरुपक्रमणं सामीप्यानयनमुपक्रमः। अथवा, येन क्रियाविशेषेणोपक्रम्यते– दूरस्थं समीपमानीयते, स उपक्रमः, यतो वा क्रियाविशेषादुपक्रम्यते, यद् वा सामाचारीप्रभृतिकं वस्तूपक्रम्यते स उपक्रमः, तस्य कालोऽप्युपचारादुपक्रमकाल एवोपक्रमकालः। किलशब्द आप्तवचनत्वोपदर्शनार्थः। अयं च बहुभिः क्रियापरिणामैर्भूयिष्ठः प्रचुरो भवति, प्रभूताः क्रियापरिणामा इह भवन्ति, बह्व्योऽत्रायुष्काद्युपक्रमहेतुभूताः क्रिया भवन्तीति यावत्। तथा च वक्ष्यति—

'अज्झवसाण निमित्ते आहारे वेयणा पराघाए। फासे आणापाणू सत्तविहं भिज्जए आउं ॥ १ ॥'

इत्यादि ॥ इति गाथार्थः ॥ २०३९ ॥

अयं च द्विविधो भवति कथम्? इत्याह निर्युक्तिकारः—

[3]दुविहोवक्कमकालो सामायारी अहाउयं चेव। सामायारी तिविहा ओहे दसहा पयविभागे ॥२०४०॥

यथोक्त उपक्रमकालो द्विविधः। तदेव द्वैविध्यं दर्शयति– सामाचार्युपक्रमकालः, यथायुष्कोपक्रमकालश्च। तत्र समाचारः शिष्टजनसमाचरितः क्रियाकलापस्तस्य भाव इति "गुणवचनब्राह्मणादिभ्यः कर्मणि च"(पा०५,१,१२४) इति ष्यञ्प्रत्यये सामाचार्यम्, ततः 'सामग्री' इत्यादाविव स्त्रीत्वविवक्षायामीप्रत्यये यलोपे च 'सामाचारी' इति भवति, तस्या उपक्रमणमुपरितनश्रुतादिहानयनं सामाचार्युपक्रमः, स चासावुपचारात् कालश्च सामाचार्युपक्रमकालः। यथाबद्धस्यायुष्कस्योपक्रमणं दीर्घकालभोग्यस्य लघुतरकालेनैव क्षपणं यथायुष्कोपक्रमः, स चासावुपचारात् कालश्च यथायुष्कोपक्रमकालः। यः सामाचार्युपक्रमणद्वारेणोपक्रम्यते कालः स सामाचार्युपक्रमकालः,

१ येनोपक्रम्यते समीपमानीयते यतो यत् तु। स किलोपक्रमकालः क्रियापरिणामभूयिष्ठः ॥ २०३९ ॥ २ गाथा २०४१।
३ द्विविध उपक्रमकालः सामाचारी यथायुष्कं चैव। सामाचारी त्रिविधौघो दशधा पदविभागः ॥ २०४० ॥

"नञिवयुक्तमन्यसदृशाधिकरणे लोके तथा ह्यर्थगतिः" इति । इह च शरीरसदृशोऽशरीरो जीव एव गम्यते, द्वयोरप्युपयोगरूपत्वेन सदृशत्वात् । न चेह शरीरं सादृश्यबाधकम्, तस्य जीवेन सह क्षीर नीरन्यायतो लोलीभूतत्वेनैकत्वादिति । तदेवं येन यस्मात् कारणात् नञ्निषेधादन्यस्मिंस्तद्विध एवान्यपदार्थे संप्रत्ययो भवति, तेन तस्मात् कारणात् "अशरीरं वा वसन्तं" इत्यत्राशरीरग्रहणे जीव एवाशरीरो युज्यते, न तु खरविषाणं तुच्छरूपोऽभाव इत्यर्थः । तदेवमशरीरमिति व्याख्यातम् ॥ २०१७ ॥ २०१८ ॥

इदानीं 'वा वसन्तं' इत्येतद् व्याचिख्यासुराह—

जं व वसंतं संतं तमाह वासद्दओ सदेहं पि । न फुसेज्ज वीयरायं जोगिणमिट्ठे-यरविसेसा ॥ २०१९ ॥[1]

यस्माच्चाशरीरम् । कथंभूतम् ? । वसन्तं लोकाग्रे निवसन्तं तिष्ठन्तमिति यावत् । अनेन वसनविशेषणेन तमशरीरशब्दवाच्यमर्थं सन्तं विद्यमानमाह, न त्वसद्भूतम्, वसनस्य सद्धर्मत्वात् । तस्मात् कथं जीवनाशरूपं निर्वाणं स्यात् ?, न केवलमशरीरं मुक्तम्, किन्तु वाशब्दात् सदेहमपि सशरीरमपि वीतरागं– क्षीणोपशममोहयोगिनं परमसमाधिमन्तं भवस्थमपि न स्पृशेयुः । के ? । इष्टे-तरविशेषाः सुख-दुःखभेदा इत्यर्थः ॥ २०१९ ॥

प्रकारान्तरेणापि 'वाव सन्तं' इत्येतद् व्याचिख्यासुराह—

वाव त्ति वा निवाओ वासद्दत्थो भवंतमिह संतं । बुज्झाऽव त्ति व संतं नाणाइविसिट्ठमहवाह ॥२०२०॥[2]

'वा' इत्यथवा, 'वाव' इत्ययं शब्दो निपातः, स च वाशब्दार्थः । ततश्चाशरीरं सन्तं भवन्तं मुक्तौ विद्यमानं जीवं प्रिया-ऽप्रिये न स्पृशतः, वाशब्दात् सशरीरमपि वीतरागं न ते स्पृशतः । यदिवा, 'वसन्तम्' इत्यन्यथा व्याख्यायते–'बुज्झाऽव त्ति वेत्यादि' 'वा' इत्यथवाऽयमर्थः । 'वाव संतं ति' रक्षण-गति-प्रीत्यादिष्वेकोनविंशतावर्थेष्ववधातुः पठ्यते । गत्यर्थाश्च धातवो ज्ञानार्था अपि भवन्ति । ततश्चाह– विनेय ! त्वमेवं बुध्यस्व । किं तत् ? इत्याह– अशरीरं सन्तं मुक्त्यवस्थायां विद्यमानं जीवम्; अथवा, ज्ञानादिभिर्गुणैर्विशिष्टं सन्तमित्याह ब्रूते, प्रियाऽप्रिये न स्पृशतः; वाशब्दात् सशरीरमपि वीतरागमिति तथैवेति ॥ २०२० ॥

आह– नन्वेवमक्षरकुट्या मयापि स्वाभिप्रायसिद्धये व्याख्यानान्तरं कर्तुं पार्यत एव । न हीयं भवतैव केवलेन क्रेण्या गृहीता, इत्यभि-

1 यद् वा वसन्तं सन्त तमाह वाशब्दतो सदेहमपि । न स्पृशेयुर्वीतराग योगिनमिष्टे तरविशेषा. ॥ २०१९ ॥

2 वावेति वा निपातो वाशब्दार्थो भवन्तमिह सन्तम् । बुध्यस्वाऽवेति वा सन्त ज्ञानादिविशिष्टमथवाऽथ ॥ २०२० ॥

मायवतः परस्य मतमाशङ्क्य परिहरन्नाह—

न वसंतं अवसंतं ति वा मई नासरीरगहणाओ । फुसणाविसेसणं पि य जओ मयं संतविसयं ति ॥२०२१॥

'अशरीरं वावसन्तं' इत्यत्र लुप्तस्याकारस्य दर्शनाद् 'न वसन्तमवसन्तं क्वाप्यतिष्ठन्तम्' इति व्याख्यानतो नास्ति मुक्त्यवस्थायां जीवः, क्वाप्यवसनात्, असत्त्वादेव च नामुं प्रिया-ऽप्रिये स्पृशत इति परस्य मतिर्भवेत् । तदेतद् न । कुतः ? इत्याह– अशरीरग्रहणात् । एतदुक्तं भवति– 'न विद्यते शरीरं यस्य' इत्यत्र पर्युदासनिषेधात् पूर्वोक्तयुक्त्या मुक्त्यवस्थायामशरीरो जीवो गम्यते, इत्यतोऽत्राकारप्रश्लेषव्याख्यानं कर्तुं न पार्यते, अशरीरग्रहणाद् मुक्तौ जीवसिद्धेः । किञ्च, 'प्रिया-ऽप्रिये न स्पृशतः' इति यदशरीरस्य स्पर्शनाविशेषणं तदपि यस्मात् सद्विषयमेव मतम्, तस्माद् न मुक्तौ जीवस्याभावः । यदि ह्यशरीरशब्दस्य जीवाभावो वाच्यः स्यात् तदा तं प्रिया-ऽप्रिये न स्पृशत इति विशेषणमनर्थकं स्यात् । न हि 'वन्ध्यापुत्रं प्रिया-ऽप्रिये न स्पृशतः' इति विशेष्यमाणं विराजते । तस्माद् मुक्त्यवस्थो जीव एवाशरीरशब्दवाच्यः, न पुनस्तदभावः । ततो नाकारप्रश्लेषव्याख्यानं युज्यत इति । तदेवं 'अशरीरं वा वसन्तं' इत्यनेन जीवकार्मणशरीरावियोगलक्षणस्य मोक्षस्य मुक्तजीवसत्त्वस्य चाभिधानात् तन्निषेधं कुर्वतस्तवाभ्युपगमविरोध एवेति ॥ २०२१ ॥

एवमपि मुक्तस्य सुखाभावलक्षणं तृतीयपक्षमप्रतिविहितमेवोत्पश्यन् परः प्राह—

एवं पि होज्ज मुत्तो निस्सुह-दुक्खत्तणं तु तदवत्थं । तं नो पिय-ऽप्पियाइं जम्हा पुण्णे-यरकयाइं ॥ २०२२ ॥

नाणाऽबाहत्तणओ न फुसंति वीयराग-दोसस्स । तस्स प्पियमाप्पियं वा मुत्तसुहं को पसंगोऽत्थ ? ॥ २०२३ ॥

एवमुक्तप्रकारेण मुक्तो जीवो भवेदित्यकामैरप्यभ्युपगतमस्माभिः, तथा च सति जीवस्य कर्मवियोगलक्षणो मोक्षः, तत्र जीवसत्त्वं च सिद्धम् । यत्तु निःसुख-दुःखत्वं सिद्धस्य मया प्रेरितं तत् "प्रिया-ऽप्रिये अशरीरं न स्पृशतः" इति वचनात् तदवस्थमेव । अत्रोत्तरमाह– तदेतद् न, यस्मात् पुण्य-पापकर्मजनिते एव जीवानां प्रिया-ऽप्रिये सांसारिकसुख-दुःखे भवतः । ते च तं क्षीणनिःशेषपुण्य-पापकर्माणं सकलसंसारार्णवपारप्राप्तं मुक्तात्मानं न स्पृशत इत्युत्तरगाथायां संबन्धः । न चैतावता तस्य निःसुखत्वमिति स्वयमेव द्रष्टव्यम् । कुतः ?

१ न वसन्तमवसन्तमिति वा मतिर्नाशरीरग्रहणात् । स्पर्शनाविशेषणमपि च यतो मतं सद्विषयमिति ॥ २०२१ ॥

२ एवमपि भवेद् मुक्तो निःसुख-दुःखत्व तु तदवस्थम् । तद् नो प्रिया ऽप्रिये यस्मात् पुण्ये-तरकृते ॥ २०२२ ॥

ज्ञानाऽनाबाधत्वतो न स्पृशतो वीतराग-द्वेषस्य । तस्य प्रियमप्रियं वा मुक्तसुखं कः प्रसङ्गोऽत्र ? ॥ २०२३ ॥

काचित् कामिनी जलाधारं प्रक्षिपन्त्येवातिरागाध्यवसायाद् मुक्ता प्राणैः पतितेति । अन्या त्वतिस्नेहादलीकामपि मृतभर्तृवार्तां श्रुत्वा मृता, भर्तापि तथैव तन्मरणश्रवणाद् मृतः । रूपादिगुणाकृष्टचेतसां रागः, सामान्येन तु प्रतिबन्धः स्नेह इत्यनयोर्विशेषः । अतिभयादध्यवसायादायुष्कोपक्रमः, यथा गजसुकुमालवधकसोमिलधिग्जातीयस्येति । विस्तरतस्तूदाहरणान्यावश्यकटीकातोऽवसेयानीति । निमित्तं दण्ड-कशादिकं वक्ष्यति, तत्र च सत्यायुर्भिद्यते । तथा, आहारे समधिकेऽभ्यवहृते, वेदनायां चातिशयवत्यां शिरो-ऽक्षि कुक्ष्यादिप्रभवायाम्, पराघाते च गर्ताऽऽपातादिसमुत्थे, तथा, स्पर्शे भुजङ्गादिसंबन्धिनि, तथा, प्राणा-ऽपानयोश्च निरोधे सत्यायुर्भिद्यत इति । इदं सप्तविधं सप्तभिः प्रकारैः प्राणिनामायुर्भिद्यत उपक्रम्यत इति ॥ २०४१ ॥

'निमित्ते सत्यायुर्भिद्यते' इत्युक्तम् । कानि पुनस्तानि निमित्तानि ? इत्याह—

[2]दंड-कस-सत्थ-रज्जू अग्गी उदगपडणं विसं वाला । सीउण्हं अरइ भयं खुहा पिवासा य वाही य ॥२०४२॥

मुत्त-पुरीसनिरोहे जिन्नज़िन्ने य भोयणे बहुसो । घंसण-घोलण-पीलण आउस्स उवक्कमा एए ॥२०४३ ॥

दण्ड-कशा-शस्त्र-रज्जवः, अग्निः, उदकपतनम्, विषम्, व्यालाः, शीतोष्णम्, अरतिः, भयम्, क्षुत्, पिपासा च, व्याधिश्च, मूत्र-पुरीषनिरोधः, जीर्णाजीर्णे च भोजने बहुशः, घर्षण-घोलन-पीडनानि, इत्येत एवंप्रकारा आयुष उपक्रमहेतुत्वादुपक्रमाः । तत्र दण्डादयः प्रतीताः । व्यालाः सर्पाः, दुष्टगजाश्चोच्यन्ते । घर्षणं चन्दनस्येव, घोलनमङ्गुष्ठका-ऽङ्गुलिगृहीतसंचाल्यमानयूकाया इव । पीडनमिक्ष्वादेरिवेति । आह— नन्वध्यवसानादीन्यपि निमित्तान्येवायुष्कोपक्रमस्य, तत्कोऽत्र भेदः ? । सत्यम्, किन्त्वान्तरे-तरत्रिचिन्नोपाधिभेदेन भेदाद् विस्तरप्रियविनेयानुग्रहार्थत्वाद् वा न दोषः ॥ इति निर्युक्तिगाथाचतुष्टयार्थः ॥ २०४२ ॥ २०४३ ॥

अथ सामाचार्या उपक्रमकालत्वं समर्थयन्नाह भाष्कारः—

[3]ज़ेणोवरिमसुयाओ सामायारिसुयमाणियं हेट्ठा । ओहाइतिविह एसो उवक्कमो समयचज्जाए ॥ २०४४ ॥

पूर्वनिर्दिष्टाद् नवमपूर्वादेरुपरिमश्रुतादुद्धृत्य येन साधुसामाचारीप्रतिपादकं श्रुतमधस्तादिदानींतनकालेऽपि समानीतम्— अस्मदा-

१ घ छ. 'या मु' । २ दण्ड-कशा-शस्त्र-रज्जवोऽग्निरुदकपतनं विषं व्यालाः । शीतो-ष्णमरतिर्भयं क्षुधा पिपासा च व्याधिश्च ॥ २०४२ ॥
सूत्र-पुरीषनिरोधो जीर्णाजीर्णे च भोजने बहुशः । घर्षण-घोलन-पीडनान्यायुष उपक्रमा एते ॥ २०४३ ॥
३ येनोपरिमश्रुतात् सामाचारीश्रुतमानीतमधस्तात् । ओघादित्रिविध एष उपक्रम. समयचर्यया ॥ २०४४ ॥

इत्याह–'नाणेत्यादि' ज्ञानत्वे सत्यनाबाधरूपत्वादित्यर्थः। यच्च तद् मुक्तस्य सुखं मुक्तसुखं स्वाभाविकं निष्प्रतीकारं निरुपमं च। 'मुत्तस्स परं सोक्खं णाणा-ऽणाबाहओ जहा मुणिणो' इत्यादिना प्रागेव साधितम्, तत् तस्य वीतराग-द्वेषस्य मुक्तात्मनो न प्रियं न पुण्यजनितं सुखं भण्यते, न चाप्रियं न पापजनितं दुःखं भण्यते, किन्त्वेताभ्यां सर्वथा विलक्षणम्, अकर्मजनितत्वेन स्वाभाविकत्वात्, निष्प्रतीकाररूपत्वात्, निरुपमत्वात्, अप्रतिपातित्वाच्चेति।

अथ 'को पसंगोऽत्थ त्ति' "अशरीरं प्रियाऽप्रिये न स्पृशतः" इत्युक्ते कोऽत्र मुक्तात्मनि मुक्तसुखाभावप्रसङ्गः ?– न कश्चिदित्यर्थः, पुण्य-पापजनितप्रिया-ऽप्रिययोरभावे तस्य सुतरामेव भावात्। तस्मात् "न ह वै सशरीरस्य०" इत्यादिवेदपदैर्यथोक्तनीत्या जीव-कार्मण-शरीरविरहलक्षणो मोक्षः, मुक्तावस्थस्य च जीवस्य सत्त्वम्, तथा, "अशरीरं प्रिया-ऽप्रिये न स्पृशतः" इत्यतोऽपि वचनात् पुण्य-पापक्षयसमुत्थं स्वाभाविकम्, अप्रतिपाति सुखं चास्य, इत्येतत्त्रितयं सिद्धम्। अत एतदनभ्युपगच्छतस्तवाभ्युपगमविरोध इति स्थितम्।

यदपि "जरामर्यं वैतत् सर्वं यदग्निहोत्रम्" इत्येतस्माद् वाक्याद् मोक्षहेतुक्रियारम्भयोग्यकालाभावाद् मोक्षाभावं शङ्कसे; तदप्ययुक्तम्, तदर्थापरिज्ञानात्। तस्य ह्ययमर्थः– यदेतदग्निहोत्रं तद् यावज्जीवं सर्वमपि कालं कर्तव्यम्, वाशब्दाद् मुमुक्षुभिर्मोक्षहेतुभूतमप्यनुष्ठानं विधेयमिति। इत्येवं वेदपदोक्तद्वारेण युक्तिभिश्च प्रसाधितो मोक्षः। छिन्नश्च प्रभासस्य तत्संशयः॥ २०२२ ॥ २०२३ ॥

ततः किं कृतवानसौ ? इत्याह—

[2]छिन्नम्मि संसयम्मी जिणेण जर-मरणविप्पमुक्केणं। सो समणो पव्वइओ तिहिं ओ सह खंडियसएहिं॥२०२४॥

व्याख्या पूर्ववत्॥ इति त्रिपञ्चाशद्गाथार्थः॥ २०२४॥

(गणधरेभ्यस्तु परत एकोनपञ्चाशदधिकानि पञ्चदश शतानि गाथानां व्याख्यातानि, अङ्कतोऽपि १५४९, उभयं गाथा २०२४)

॥ इत्येकादशो गणधरवादः समाप्तः॥

॥ तत्समाप्तौ च सर्वोऽपि गणधरवादवक्तव्यता समाप्ता॥

1 गाथा १९९२। 2 गाथा १९०४।

दीनां समीपीकृतं, स एषः– समस्तसाधुवर्गप्रत्यक्षः, 'ओहाइ त्ति' ओघनिर्युक्तिः, तथा 'इच्छा मिच्छा तहक्कारो' इत्यादिदशधासामाचारीप्रतिपादको ग्रन्थः, छेदसूत्राणि चेति त्रिविधः समयचर्यया समयपरिभाषयोपक्रमः सामाचार्युपक्रमकालो भण्यत इत्यर्थः । इदमुक्तं भवति– लोके सामाचार्युपक्रमकालतया न कश्चित् कालो रूढः समस्ति, आगमे पुनरसौ भण्यते। कथम् ? इति चेत् । उच्यते– येन प्रभूतेन कालेन नवमपूर्वादिगतं सामाचारीश्रुतं शिष्योऽध्येतुमलप्स्यत, स कालः सामाचारीश्रुतोपक्रमणद्वारेण स्थविरैरुपक्रम्य किलीर्वागप्यानीतः, तत्काललभ्यस्य सामाचारीश्रुतस्य स्थविरैरिदानीमपि विनेयेभ्यः प्रदानात् । ततश्च सामाचार्युपक्रमद्वारेणोपचारतः कालस्यापि तस्योपक्रान्तत्वात् सामाचार्युपक्रमकालोऽसौ भण्यत इति ॥ २०४४ ॥

आयुष्कोपक्रमस्यापि यथायुष्कोपक्रमकालतां दर्शयन्नाह—

जं[1] जीवियसंवट्टणमज्झवसाणाइहेउसंजणियं । सोवक्कमाउयाणं स जीविउवक्कमणकालो ॥२०४५॥

स जीवितोपक्रमणकालो यथायुष्कोपक्रमणकालोऽभिधीयत इत्यर्थः, यत्। किम् ? इत्याह– यज्जीवितस्य यथावद्धस्य दीर्घकालवेद्यस्यायुष्कस्य संवर्तनं स्वल्पस्थितिकत्वापादनम् । केषाम् ? । सोपक्रमायुषां जीवानाम्, निरुपक्रमायुषां निकाचितावस्थस्यैव बद्धत्वादपवर्तनायोगात् । किं नु निर्हेतुकमेव जीवितसंवर्तनम् ? । न, इत्याह– अध्यवसान-निमित्तादिहेतुसजनितम् । अत्राप्ययमभिप्रायः– यश्चिरेण मरणकालोऽभविष्यदसावायुष्कर्मस्थित्यपवर्तनद्वारेणोपचारतः किलोपक्रम्यार्वागानीत इत्यसौ यथायुष्कोपक्रमकाल उच्यत इति ॥ २०४५ ॥

नन्वेवमुपक्रमः किमायुष एव भवति, आहोस्विदन्यासामपि ज्ञानावरणादिप्रकृतीनाम् ? इति विनेयप्रश्नमाशङ्क्याह—

सव्वपगईणमेवं[2] परिणामवसादुवक्कमो होज्जा । पायमनिकाइयाणं तवसा उ निकाइयाणं पि ॥ २०४६ ॥

न केवलमायुषः, किन्तु सर्वासामपि ज्ञानावरणादिप्रकृतीनां शुभाशुभपरिणामवशादपवर्तनाकरणेन यथायोगं स्थित्यादिखण्डनद्वारेणापवर्त्यमानानामुपक्रमो भवति । स च प्रायो निकाचनाकरणेनानिकाचितानां स्पृष्ट-बद्ध-निधत्तावस्थानामेव भवति । प्रायोग्रहणस्य फलमाह– तीव्रेण तपसा पुनर्निकाचितान्यपि कर्माण्युपक्रम्यन्त एव । यदि पुनर्यथा बद्धं तथैवानुपक्रान्तं सर्वमपि कर्म वेद्यते,

१ यज्जीवितसवर्तनमध्यवसानादिहेतुसजनितम् । सोपक्रमायुष्काणां स जीवितोपक्रमणकालः ॥ २०४५ ॥
२ सर्वप्रकृतीनामेव परिणामवशादुपक्रमो भवेत् । प्रायोऽनिकाचितानां तपसा तु निकाचितानामपि ॥ २०४६ ॥

तदेवं भगवता केवलज्ञाने समुत्पन्ने यथैकादश गणधराः प्रव्राजितास्तथा प्रतिपादितम् । अथैषामेव गणधराणामुत्पत्तिकारणभूतक्षेत्र-कालादीन्येकादश स्थानानि प्रतिपाद्यन्ते । तत्र चेयं द्वारगाथा—

[1]खेत्ते काले जम्मे गोत्तमगार-छउमत्थपरियाए । केवलिय आउ आगम परिनिव्वाणे तवे चेव ॥ २०२५ ॥

इह क्षेत्रं जनपद-ग्राम-नगरादि यद् वक्ष्यति– 'मगहा गोब्बरगामे जाया तिन्नेव गोयमसगोत्ता' इत्यादि । कालस्तु नक्षत्रोपलक्षितः, यदभिधास्यति– 'जेट्ठा कत्तिय साई' इत्यादि । जन्म यतस्तेषां भवति तद् माता-पितृलक्षणं कारणं वाच्यम्, 'वसुभूइ धणमित्ते' इत्यादि 'पुहवी य वारुणी'[2] इत्यादि । 'तिन्नि य गोयमगोत्ता' इत्यादिना तु गोत्रमभिधानीयम् । 'पण्णा छायालीसा' इत्यादिनाऽगारं गृहं तत्पर्यायो वक्तव्यः । 'तीसा बारस दसगं' इत्यादिना तु च्छद्मस्थपर्यायः । 'बारस सोलस अट्ठारस वा' इत्यादिना केवलिपर्यायः । 'बाणउई चउहत्तरी' इत्यादिना सर्वायुःप्रमाणम् । 'सव्वे दुवालसंगीआ सव्वे चउदसपुव्विणो' इत्यनेन त्वागमः । 'परिनिव्वुया गणहरा' इत्यादिना निर्वाणसमयः । 'मासं पाउवगया' इत्यादिना पुनर्निर्वाणसमयविहितं तपोऽभिधानीयमिति । इत्येवमेता अष्टादश निर्युक्तिगाथाः प्रोक्ताः । तदेवं 'उद्देसे निद्देसे य निग्गमे'[3] इत्याद्युपोद्घातोक्ततृतीयद्वारे यो नामादिभेदात् षोढा निगमोऽभिहितः, तत्र जिन-गणधरलक्षणद्रव्यनिर्गमभणनेनैवावसितो द्रव्यनिर्गमः ॥ २०२५ ॥

इदानीं क्षेत्रनिर्गमं प्रस्तुतमप्यतिक्रम्य, अन्तरङ्गत्वात् कालनिर्गममभिधित्सुर्भाष्यकारः प्रस्तावनामाह—

[4]जिण-गणहरनिग्गमणं भणियमओ खित्तनिग्गमावसरो । कालंतरंगदरिसणहेओ तु विवज्जओ तह वि ॥२०२६॥

तदित्थं जिन-गणधरलक्षणद्रव्यस्य निर्गमनं भणितम्, अत ऊर्ध्वं 'नामं ठवणा दविए खेत्ते काले तहेव भावे य'[5] इति निर्देशक्रमप्रामाण्यात् क्षेत्रनिर्गमस्यावसरः, परं तथापि विपर्ययः कालनिर्गमनं तावदभिधाय ततः क्षेत्रनिर्गमो भणिष्यत इत्यर्थः । किमर्थम्? इत्याह– कालस्यान्तरङ्गत्वदर्शनहेतोः । अयमभिप्रायः– काल एव द्रव्यस्यान्तरङ्गः, क्षेत्रं तु बहिरङ्गम्, अतो द्रव्यनिर्गमानन्तरमन्तरङ्गत्वात् कालनिर्गममभिधाय पश्चात् क्षेत्रनिर्गममभिधास्यति, 'नामं ठवणा दविए' इत्यादिगाथायां तु निर्युक्तिकृता क्षेत्रस्याल्पवक्तव्यत्वादन्यथोपन्यासः कृत इति ॥ २०२६ ॥

---

१ क्षेत्रं कालो जन्म गोत्रमगार-च्छद्मस्थपर्याय. । केवलिताऽऽयुरागमः परिनिर्वाणं तपश्चैव ॥ २०२५ ॥

२ आवश्यकनिर्युक्तौ पृ० ११७–१२०, गाथा ६५–८२ । ३ गाथा ९७३ ।

४ जिन-गणधरनिर्गमनं भणितमतः क्षेत्रनिर्गमावसरः । कालान्तरङ्गदर्शनहेतोस्तु विपर्ययस्तथापि ॥ ॥ २०२६ ॥ ५ गाथा १५३३ ।

तदा मुक्तिगमनं कस्यापि न स्यात्, तद्भवसिद्धिकानामपि नियमेन सत्तायामन्तः सागरोपमकोटीकोटिस्थितिकस्य कर्मणः सद्भावात्। एतच्च स्वत एव वक्ष्यति। तह्यायुष एव किमित्यत्रोपक्रमकाल उक्तो न शेषकर्मणाम्? इति चेत्। उच्यते- लोके आयुष्कोपक्रमस्यैव प्रसिद्धत्वात् तदुपक्रमकाल एवेह प्रोक्तः, उपलक्षणव्याख्यानाच्छेषकर्मोपक्रमकालोऽपि द्रष्टव्य इति ॥ २०४६ ॥

अथ प्रेरकः प्राह—

कम्मोवक्कामिज्जइ अपत्तकालं पि जइ तओ पत्ता। अकयागम-कयनासा मोक्खाणासासया दोसा ॥ २०४७ ॥

ननु यद्यप्राप्तकालमपि बहुकालवेद्यं कर्मेत्थमुपक्रम्यते- इदानीमपि क्षिप्रमेव वेद्यते, ततस्तर्ह्यकृतागम-कृतनाशौ, मोक्षानाश्वासता चेत्येते दोषाः प्राप्ताः; तथाहि- यदिदानीमेवोपक्रमात् कृताल्पस्थित्यादिरूपं कर्म वेद्यते तत् पूर्वमकृतमेवागतम्, इत्याकृताभ्यागमः। यत् तु पूर्वं दीर्घस्थित्यादिरूपतया कृतं बद्धं तस्यापवर्तनाकरणोपक्रमेण नाशितत्वात् कृतनाशः। ततो मोक्षेऽप्येवमनाश्वासः, सिद्धानामप्येवमकृतकर्माभ्यागमेन प्रतिपातप्रसङ्गादिति ॥ २०४७ ॥

अत्रोत्तरमाह—

न हि दीहकालियस्स विनासो तस्साणुभूइओ खिप्पं। बहुकालाहारस्स व दुयमग्गियरोगिणो भोगो ॥२०४८॥

'न कृतनाशादयो दोषाः' इति प्रकरणाद् गम्यते। कुतः? इत्याह- न यस्मात् तस्यायुष्कादेः कर्मणो दीर्घकालिकस्यापि दीर्घस्थित्यादिरूपतया बद्धस्याप्युपक्रमेण नाशः क्रियते। कुतः? इत्याह- क्षिप्रं शीघ्रमेव सर्वस्यापि तस्याध्यवसायवशादनुभूतेर्वेदनात्। यदि हि तद् बहुकालवेद्यं कर्माविदितमेव नश्येत्, यच्चाल्पस्थित्यादिविशिष्टं वेद्यते तत् ततोऽन्यदेव भवेत्, तदा कृतनाशा-ऽकृताभ्यागमौ भवेताम्; यदा तु तदेव दीर्घकालवेद्यमध्यवसायविशेषादुपक्रम्य स्वल्पेनैव कालेन वेद्यते तदा कथं कृतनाशादिदोषः? । यथा हि बहुकालभोगयोग्यस्याहारस्य धान्यमूढकदशकादेरग्निरोगिणो भस्मकवातव्याधिमतो द्रुतं स्वल्पकालेनैव भोगो भवति, न च तत्र कृतनाशः, नाप्यकृताभ्यागम इति; एवमिहापि भावनीयमिति। अत्राह- ननु यद् बद्धं तद्यदि स्वल्पकालेन सर्वमपि वेद्यते, तर्हि प्रसन्नचन्द्रादिभिः सप्तमनरकपृथ्वीयोग्यमसातवेदनीयादिकं कर्म बद्धं श्रूयते, तद्यदि सर्वमपि तैर्वेदितं, तर्हि सप्तमनरकपृथ्वीसम्भविदुःखो-

१ कर्मोपक्रम्यतेऽप्राप्तकालमपि यदि तत प्राप्ता.। अकृतागम-कृतनाशौ मोक्षानाश्वासता दोषा ॥ २०४७ ॥

२ न हि दीर्घकालिकस्य विनाशस्तस्यानुभूतित. क्षिप्रम्। बहुकालाहारस्येव द्रुतमग्निकरोगिणो भोग. ॥ २०४८ ॥

कथं पुनर्द्रव्यस्य कालोऽन्तरङ्गः, न तु क्षेत्रम् ? इत्याह—

[1]जं वत्तणाइरूवो वत्तुरणत्थंतरं मओ कालो । आहारमित्तमेव उ खेत्तं तेणंतरंगं सो ॥ २०२७ ॥

वर्तनाऽऽदिर्येषां परिणामादीनां ते वर्तनादयः, त एव रूपं यस्यासौ वर्तनादिरूपस्तीर्थकरादीनां संमतः कालः; उक्तं च— "वर्तनापरिणामः क्रिया परा-ऽपरत्वे च कालस्योपग्रहः" इति । तत्र विवक्षितेन नव-पुराणादिना तेन तेन रूपेण यत् पदार्थानां वर्तनं शश्वद् भवनं स वर्तनापरिणामोऽभ्रादीनां सादिः, चन्द्रविमानादीनामनादिः, क्रिया देशान्तरप्राप्तिलक्षणा, देवदत्ताद् यज्ञदत्तः परः– पूर्वमुत्पन्नः, यज्ञदत्तात् पुनर्देवदत्तोऽपरः– अर्वागुत्पन्न इत्यादिरूपं परापरत्वम्, इत्येतानि कालस्योपग्रह उपकारः । एतानि चत्वार्यपि कालकृतत्वात् तल्लिङ्गानीति भावः । स च वर्तनादिरूपः कालो यद् यस्माद् वर्तितुर्द्रव्यादनर्थान्तरमभिन्नस्वरूप एव वर्तते । क्षेत्रं तु द्रव्यस्याधारमात्रमेव, न त्वनर्थान्तरम् । तेन द्रव्यस्यान्तरङ्गः कालः, बहिरङ्गं तु क्षेत्रम् । अतो द्रव्यनिर्गमादनन्तरं कालनिर्गमोऽभिधीयत इति ॥ २०२७ ॥

तत्र कालशब्दव्युत्पादनार्थमाह—

[2]कलणं पज्जायाणं कलिज्जए तेण वा जओ वत्थु । कलयंति तयं तम्मि व समयाइकलासमूहो वा ॥२०२८॥

'कल शब्द-संख्यानयोः' नव-पुराणादीनां समयादीनां वा पर्यायाणां कलनं संशब्दनं, संख्यानं वा भावप्रत्यये कालः । अथवा, 'मासिकोऽयम्' 'सांवत्सरिकोऽयम्' 'शारदोऽयम्' इत्यादिरूपेण कल्यते परिच्छिद्यते यतो यस्माद् वस्त्वनेनेति कालः । अथवा, कलयन्ति ज्ञानिनः समयादिरूपेण परिच्छिन्दन्ति तमिति कालः । यदिवा, 'मासिकोऽयम्' 'सांवत्सरिकोऽयम्' इत्यादिरूपतया कलयन्ति परिच्छिन्दन्ति वस्तु तस्मिन् सतीति कालः । समयादिकलानां वा समूहः कालः । आह– ननु सामूहिके प्रत्यये नपुंसकत्वं प्राप्नोति, यथा कापोतं मायूरमित्यादि । सत्यम्, 'किन्तु शिष्टप्रयोगाद् रूढितश्चादोषः; तथा चाह– "लिङ्गमशिष्यं लोकाश्रयत्वात्" (पा० म० २,४,१,१२) इति । तदेवं कालस्यान्तरङ्गता-निरुक्ती भणिते ॥ २०२८ ॥

इदानीमुत्तरगाथासंबन्धनार्थमाह—

---

१ यद् वर्तनादिरूपो वर्तितुरनर्थान्तरं मतः कालः । आधारमात्रमेव तु क्षेत्रं तेनान्तरङ्गः स. ॥ २०२७ ॥
२ कलनं पर्यायाणां कल्यते तेन वा यतो वस्तु । कलयन्ति तत् तस्मिन् वा समयादिकलासमूहो वा ॥ २०२८ ॥

दयप्रसङ्गः, अथ न सर्वमपि वेदितम्, तर्हि कथं न कृतनाशादिदोषः ?। सत्यमुक्तम्, किन्तु प्रदेशापेक्षयैव तस्य सर्वस्यापि शीघ्रमनुभवनमुच्यते, अनुभागवेदनं तु न भवत्यपीति ॥ २०४८ ॥

एतदेवाह—

सैव्वं च पएसतया भुज्जइ कम्ममणुभावओ भइयं । तेणावस्साणुभवे के कयनासादओ तस्स ? ॥ २०४९ ॥

सर्वमष्टप्रकारमपि कर्म सोत्तरभेदं प्रदेशतया प्रदेशानुभवद्वारेण भुज्यते वेद्यत एव, इत्येष तावद् नियमः; अनुभागस्तु– स्वानुभवमाश्रित्येत्यर्थः, भजनीयं विकल्पनीयम्– अनुभागः कोऽपि वेद्यते, कोऽपि पुनरध्यवसायविशेषेण हतत्वाद् न वेद्यत इत्यर्थः । तदुक्तमागमे– "तैत्थ णं जं तं अणुभागकम्मं तं अत्थेगइयं वेएइ, अत्थेगइयं नो वेएइ; तत्थ णं जं तं पएसकम्मं तं नियमा वेएइ" इति । अतः प्रसन्नचन्द्रादिभिस्तस्य नरकयोग्यकर्मणः प्रदेशा एव नीरसा इह वेदिताः, न त्वनुभागः, तस्य शुभाध्यवसायेन हतत्वात् । अत एव न तेषां नरकसम्भविदुःखोदयः, कर्मणां विपाकानुभव एव सुख-दुःखयोर्वेदनात् । येनैवम्, तेन बद्धस्य कर्मणः सर्वेषामपि प्रदेशानामवश्यं वेदनात् के किल तस्य कर्मोपक्रमकर्तुः कृतनाशादयो दोषाः ? न केचिदित्यर्थः ।

आह— नन्वेवमप्यनुभागो यथा बद्धस्तथैव प्रसन्नचन्द्रादिभिर्न वेदित इति कथं न कृतनाशः ?। अस्त्वेवं कृतनाशः, न नः काचिद् बाधा, यदि ह्यध्यवसायविशेषेणोपहतत्वाद् नश्यति रसः, तदा किमनिष्टम् ?। सर्वस्यापि ह्यष्टप्रकारकर्मणो मूलोच्छेदाय यतन्त एव साधव इत्यभीष्ट एवेत्थं तेषां कृतनाशः । यदा बहुरसं बहुस्थितिकं च सत् कर्माल्परसमल्पस्थितिकं च कृत्वा वेदयति, तदा तस्याल्परसस्याल्पस्थितिकस्य च कर्मणः पूर्वमकृतस्यागमः, ततश्च मोक्षेऽप्यनाश्वासः, सिद्धानामप्यकृतकर्मानुगमेन पुनरावृत्तिप्रसङ्गात्, इति चेत् । तदयुक्तम्, यदि ह्यल्परसत्वमल्पस्थितिकत्वं च कर्मणोऽत्र निर्हेतुकं स्यात् तदा स्यादेवम्, तच्च नास्ति, अल्परसत्वस्याध्यवसायविशेषकृतत्वेनाकृताभ्यागमत्वायोगात्, अल्पस्थितिकत्वमप्यायुष्कादीनां न निर्हेतुकमेव जायते, अध्यवसान-निमित्तादिहेतूनां दर्शितत्वात्, अतस्तस्यापि कथमकृतागमत्वम् ?। अत एव न सिद्धानां कर्मसमागमः, तदागमहेतूनां तेष्वभावात्, इत्यलं प्रसङ्गेन, भाष्यकारेणाप्यस्यार्थस्य प्रपञ्चयिष्यमाणत्वादिति ॥ २०४९ ॥

युक्तियुक्तश्चोपक्रमः कर्मणाम् । कुतः ? इत्याह—

१ सर्वं च प्रदेशतया भुज्यते कर्मानुभावतो भाज्यम् । तेनावश्यमनुभवे के कृतनाशादयस्तस्य ? ॥ २०४९ ॥
२ तत्र यत् तदनुभागकर्म तदस्त्येकं वेद्यते, अस्त्येकं नो वेद्यते, तत्र यत्तत् प्रदेशकर्म तद् नियमाद् वेद्यते ।

खेत्ते भरहं तत्थ व भवो त्ति मगह त्ति मागहो व त्ति। सरउ त्ति य सारउ त्ति य संवच्छरिउ त्ति कालम्मि ॥२॥
आयारो आयारवमायारधरो त्ति वा समासम्मि । आवस्सयमावासइ सुत्तत्थधरोऽहवाऽयं ति ॥ ३ ॥
सत्थपरिण्णाई य व अज्झेओऽयं समासनिद्देसो । उद्देसयनिद्देसो सपएसो पोग्गलुद्देसो ॥ ४ ॥
ओदइओ खइउ त्ति व नाणं चरणं ति भावनिद्देसो । एत्थ विसेसाहिगओ समासउद्देस निद्देसो ॥ ५ ॥
अज्झयणं उद्देसो तं चिय सामाइयं ति निद्देसो । बुद्धीए जहासंभवमाओज्जं सेसएसुं पि ॥ ६ ॥
सामाइयं ति नपुंसयमस्स पुमं थी नपुंसगं वावि । निद्दिट्ठा तत्थिच्छइ कं निद्देसं नओ को णु ? ॥ ७ ॥

**दुविहं पि नेगमनओ निद्दिट्ठं संगहो य ववहारो ।**
**निद्देसयमुज्जुसुओ उभयसरिच्छं च सद्दस्स ॥ १३७ ॥**

जं संववहारपरो णेगगमो णेगमो तओ दुविहं । इच्छइ, संववहारो दुविहो जं दीसए पायं ॥ १ ॥
सज्जीवणियाऽऽयारो निदिदिट्ठवसेण तह सुयं चण्णं । त चेवं य जिणवयणं सव्वं निद्देसयवसेणं ॥ २ ॥
जहवा निद्दिट्ठवसा वासवदत्ता-तरंगवइयाइं । तह निद्देसगवसओ लोए मणुरक्खवाउ त्ति ॥ ३ ॥
तह निद्दिट्ठवसाओ नपुंसगं नेगमस्स सामइयं । थी पुं नपुंसगं वा तं चिय निद्देसयवसाओ ॥ ४ ॥
जह वा घडाभिहाणं घडसद्दो देवदत्तसद्दो त्ति । उभयमविरुद्धमेवं सामाइयं नेगमनयस्स ॥ ५ ॥
अत्थाउ च्चिय वयणं लहइ सरूवं जओ पईवो व्व । तो संगह-ववहारा भणंति निद्दिट्ठवसगं तं ॥ ६ ॥
अहव निद्दिट्ठत्थस्स पज्जओ चेव तं सधम्म व्व । तप्पच्चयकारणओ घडस्स रूवाइधम्म व्व ॥ ७ ॥
वयणं विण्णाणफलं जइ तं भणिए वि नत्थि किं तेण ? । अण्णत्थ पच्चए वा सव्वत्थ वि पच्चओ पत्तो[3] ॥८॥

१ 'यो ज स'। २ 'ह्वावि जं'। ३ 'पत्ते'।

अभिधेयसंकरो वा वत्तरि पच्चओऽणभिहिए वि । तम्हा निद्दिट्ठवसा नपुंसगं बेंति सामइयं ॥ ९ ॥
उज्जुसुओ निद्देसगवसेण सामाइयं विणिद्दिसइ । वयणं वत्तुरहीणं तप्पज्जाओ य तं जम्हा ॥ १० ॥
करणत्तणओ मण इव सपज्जयाओ घडाइरूवमिव । साहीणत्तणओ विय सधणं व वओ वयंतस्स ॥ ११ ॥
तह सुत्त-दुरुत्ताओ तस्सेवाणुग्गहो-वघायाओ । तस्स तयमिंदियं पिव इहरा अकयागमो होज्जा ॥ १२ ॥
निद्दिट्ठस्स वि कस्सचि नणूवघायाइओ तयं जुत्तं । ते तस्स सकारणाओ इहरा थाणुस्स वि हवेज्जा ॥ १३ ॥
सरनामोदयजाणियं वयणं देहो व्व वत्तुपज्जाओ । तं नाभिधेयधम्मो जुत्तमभावाभिहाणाओ ॥ १४ ॥
भावम्मि वि संबद्धं तमसंबद्धं व तं पगासेज्जा । जइ संबद्धं तिहुयणवावि त्ति तयं पगासेउ ॥ १५ ॥
निव्विण्णाणत्तणओ नासंबद्धं तयं पईवो व्व । भासयइ असंबद्धं अह तो सव्वं पगासेउ ॥ १६ ॥
जइ वि वयणिज्ज वत्ता बज्झ-ब्भंतरनिमित्तसामण्णं । वत्ता तहवि पहाणो निमित्तमब्भंतरं जं सो ॥ १७ ॥
सद्दो समाणलिंगं निद्देसं भणइ विसरिसमवत्थुं । उवउत्तो निद्दिट्ठा निद्दिस्साओ जओऽणण्णो ॥ १८ ॥
थीं निद्दिसइ जइ पुमं थी चेव तओ जओ तदुवउत्तो । थीविन्नाणाणन्नो निद्दिट्ठसमाणलिंगो त्ति ॥ १९ ॥
जइ स पुमं तो नत्थी अह थी न पुमं नवा तदुवउत्तो । जो थीविण्णाणमओ नो थी सो सव्वहा नत्थि ॥२०॥
भासइ वाणुवउत्तो जह अन्नाणी तओ न तव्वयणं । निद्देसो ज़ेण मयं निच्छियदेसो त्ति निद्देसो ॥ २१ ॥
सो जइ नाणुवउत्तोऽणुवउत्तो वा न नाम निद्देसो । निद्देसोऽणुवउत्तो य बेइ सद्दो न तं वत्थुं ॥ २२ ॥
तम्हा जं जं निद्दिस्सइ तदुवउत्तो स तम्मओ होइ। वत्ता वयणीज्जाओ अनन्नो त्ति समाणलिंगो सो ॥ २३ ॥
सामाइओवउत्तो जीवो सामाइयं सयं चेव । निद्देसइ जओ सव्वो समाणलिंगो स तेणेव ॥ २४ ॥
इय सव्वनयमयाइं परित्तविसयाइं, समुदियाइं तु । जइणं बज्झ-ब्भंतरनिद्देसनिमित्तसंगाहि ॥ २५ ॥

उदय-खय-खओवसमो-वसमा जं च कम्मणो भणिया । दव्वाइपंचयं पइ जुत्तमुवक्कामणमओ वि ॥२०५०॥

यच्च यस्मादुदयश्च क्षयश्च क्षयोपशमश्चोपशमश्चोदय-क्षय-क्षयोपशमो-पशमास्ते कर्मणो द्रव्य-क्षेत्र-काल-भव-भावपञ्चकं प्रति भणिताः– द्रव्यादीनाश्रित्योक्ताः, अतोऽपि कारणाच्छस्त्रादिद्रव्याणि प्राप्यायुष्कादीनां युक्तमुपक्रमणं क्षय इति । तथाहि– असातवेदनीयस्य कर्मणो द्रव्यमहिविष-कण्टकादि प्राप्योदयो भवति, क्षेत्रं तु नरकावासादिकम्, कालं तीव्रनिदाघसमयादिकम्, भवं नारकभवादिकम्, भावं तु वृद्धभावादिकम् । क्षयोऽप्यस्य द्रव्यं सद्गुरुचरणारविन्दादिकं प्राप्य भवति, क्षेत्रं तु पुण्यतीर्थादिकम् । कालं सुषमदुःषमादिकम्, भवं सुमनुजकुलजन्मलक्षणम्, भावं तु सम्यग्ज्ञान-चरणादिकम्। क्षयोपशमो-पशमौ तु वेदनीयस्य न भवतः। एवं मोहनीयेऽपि मिथ्यात्वमोहनीयस्य द्रव्यं कुतीर्थ्यादिकं प्राप्योदयो भवति, क्षेत्रं तु कुरुक्षेत्रादिकम्, साध्वादिरहितदेशादिकं वा, कालं दुःषमादिकम्, भवं तेजो-वाय्वेकेन्द्रियादिकम्, अनार्यमनुजकुलरूपं वा, भावं तु कुसमयदेशनादिकमिति । क्षय-क्षयोपशमो-पशमास्त्वस्य द्रव्यं तीर्थकरादिकं प्राप्य भवन्ति, क्षेत्रं तु महाविदेहादिकम्, कालं सुषमदुःषमादिकम्, भवं सुमनुजकुलजन्म, भावं तु सम्यग्ज्ञान-चरणादिकमिति । एवं शेषेऽपि ज्ञान-दर्शनावरणादिके कर्मणि निद्रावेदनीयकर्मणो माहिषदधि-वृन्ताकादिकं द्रव्यमासाद्योदयो भवति, क्षेत्रं त्वनूपादिकम्, कालं ग्रीष्मादिकम्, भवमेकेन्द्रियादिकम्, भावं तु वृद्धत्वादिकमिति । क्षयोऽप्यस्योक्तानुसारेण वाच्यः । क्षयोपशमो-पशमौ त्वस्यापि न भवतः । एवमन्येषामपि कर्मणामुदयादयो यथायोगं द्रव्यादीन् प्राप्य स्वधिया भावनीया इति ॥२०५०॥

अथ दृष्टान्तद्वारेण कर्मणां द्रव्य-क्षेत्रादिसहकारिकारणापेक्षां साधयन्नाह—

पुण्णा-ऽपुण्णकयं पि हु सायासायं जहोदयाईए । बज्झबलाहाणाओ देइ तहा पुण्ण-पावं पि ॥२०५१॥

यथा सातं सुखम्, असातं तु दुःखं पुण्या-ऽपुण्यस्वरूपकर्मजनितमपि स्रक्-चन्दना-ऽङ्गना-ऽहिविष-कण्टकादिना बाह्येन सहकारिणा यद् बलस्य सामर्थ्यस्याधानं विधानं तस्मादेवोदयादीन् ददाति, न त्वेवमेव पुण्य-पापोदयमात्रात् । ततश्च यथैतत् सकललोकस्यानुभवसिद्धं सुख-दुःखाख्यं कार्यं बाह्यान् द्रव्य क्षेत्रादीनपेक्ष्यैवोदेति क्षीयते वा, न पुनरेवमेव, तथा तत्कारणं पुण्य-पापात्मकं कर्मापि द्रव्य-क्षेत्रादीनपेक्ष्यैवोदेति क्षीयते चेति सिद्धमेव । न हि 'कार्यं द्रव्यादीनपेक्षते, तत्कारणं तु तन्निरपेक्षम्' इति शक्यते वक्तुम् ।

१ उदय-क्षय क्षयोपशमो-पशमा यच्च कर्मणो भणिता । द्रव्यादिपञ्चक प्रति युक्तमुपक्रमणमतोऽपि ॥ २०५० ॥

२ पुण्या-ऽपुण्यकृतमपि खलु साता-ऽसातं यथोदयादीन् । बाह्यबलाधानाद् ददाति तथा पुण्य-पापमिति ॥ २०५१ ॥

  

योऽयं कालः कृष्णो वर्णः स वर्णश्चासौ कालश्च वर्णकाल इति भण्यते । स च कथंभूतः ? । पर्यायकालभेदः । इदमुक्तं भवति– यथा द्रव्यस्य कलनं कालो द्रव्यकालः प्रागुक्तः, तथा पर्यायाणां कलनं कालः पर्यायकाल इत्यपि द्रष्टव्यम् । ततश्च कृष्णवर्णस्य द्रव्यपर्यायत्वादयं वर्णकालः पर्यायकालभेद एव मन्तव्यः । ननु यदि पर्यायकालोऽपि कश्चिदस्ति, तर्हि 'दव्वे अद्ध अहाउ य' इत्यादौ किमयं नोपन्यस्तः?। सत्यम्, किन्तु द्रव्यात् पर्यायाणां कथञ्चिदभिन्नत्वाद् द्रव्यकालभणनद्वारेणैवोक्तत्वाद् न पृथगत्रायमुक्तः। अथवा, तद्भेदभूतस्याऽस्य वर्णकालस्याभिधानात् सोऽप्यभिहित एव द्रष्टव्यः । अत्राह– नन्वेष कृष्णो वर्णो नामत एव कालो भण्यते, ततश्च नामकाल एवायं किमितीहोपन्यस्तः ? इति भावः । अत्रोत्तरमाह— नानियमतस्तस्येति, तस्य कालनाम्नः संकेतवशाद् गौरेऽपि विधीयमानत्वादनियतत्वम्, अतोऽन्यस्माद् व्यवच्छिद्य वर्ण एव यः कालः स इह वर्णकालोऽभिधीयते, नान्यत्, इत्येतावता नामकालादस्य भेदः । इति गाथापञ्चकार्थः ॥ २०७४ ॥

अथ भावकालमाह—

सोई सपज्जवसिओ चउभंगविभागभावणा एत्थं । ओदइयाईयाणं तं जाणसु भावकालं तु ॥ २०७५ ॥

इहौदयिकौ-पशमिक-क्षायिक-क्षायोपशमिक-पारिणामिकभावानां या स्थितिरसौ भावकालः । अत एवाह— सादिः सपर्यवसित इत्यादीनां वक्ष्यमाणस्वरूपाणां चतुर्णां भङ्गकानां याऽसौ विभागभावना– 'क्व भावे को भङ्गः संभवति, को वा न संभवति ?' इत्येवं विषयविभागेन स्थापना । केषाम् ? इत्याह– औदयिकादिभावानाम् । तं चतुर्भङ्गविभागभावनाविषयं पुनर्भावकालं जानीहि । इति निर्युक्तिगाथार्थः ॥ २०७५ ॥

अथ के त औदयिकादिभावानां प्रत्येकं चत्वारो भङ्गाः, का च तेषां विभागभावना ? इत्याह भाष्यकारः—

सोई संतोऽणंतो एवमणाई वि एस चउभंगो । ओदइयाईयाणं होइ जहाजोगमाउज्जो ॥ २०७६ ॥

सादिर्भावः सान्तः, तथा सादिरनन्तः, एवमनादिरपि सान्तोऽनन्तश्च वाच्य इति । एवमेते चत्वारो भङ्गा औदयिकादिभावानां यथायोगं यथासंभवमायोजनीयाः । यो यत्र भावो नरकादिगतिमाश्रित्य संभवति स तत्र वाच्यः, शेषस्तु निषेधनीय इति ॥२०७६॥

१ गाथा २०३० । २ सादिः सपर्यवसितश्चतुर्भङ्गविभागभावना अत्र । औदयिकादीनां त जानीहि भावकालं तु ॥ २०७५ ॥
३ सादिः सान्तोऽनन्त एवमनादिरप्येष चतुर्भङ्गः । औदयिकादीनां भवति यथायोगमायोज्यः ॥ २०७६ ॥

न खलु 'कार्यभूतो घटश्चक्र-चीवरादीन्यपेक्ष्यैव जायते, तत्कारणभूतस्तु कुलालश्चक्राद्यनपेक्ष एव घटं जनयति' इत्युच्यमानं शोभां बिभर्ति। तस्मादुदयादीन् प्रति द्रव्यादिसव्यपेक्षाणां कर्मणां युक्तस्तत्सन्निधानादुपक्रम इति ॥ २०५१ ॥

यदि पुनर्यथा बद्धं तथैव वेद्यते सर्वं कर्म, न पुनरुपक्रम्यते, तदा किं दूषणम्? इत्याह—

जइ ताणुभूइउ च्चिय खविज्जए कम्ममन्नहा न मयं। तेणासंखभवज्जियनाणागइकारणत्तणओ ॥२०५२॥

नाणाभवाणुभवणाभावादेक्कम्मि पज्जएणं वा। अणुभवओ बंधाओ मोक्खाभावो स चाणिट्ठो ॥२०५३॥

यदि तावद् यथा बद्धं तथैव प्रतिसमयानुभूतितः प्रतिसमयं विपाकानुभवनेन कर्म क्षिप्यत इति तवानुमतं, नान्यथा, नोपक्रमद्वारेणाऽऽश्वेव तत्क्षपणमभिप्रेतम्; हन्त! तेन तर्हि सर्वस्यापि जन्तोर्मोक्षाभावस्त्वदभिप्रायेण प्राप्नोति, स चानिष्ट एव। कस्मात् पुनर्मोक्षाभावप्राप्तिः? इत्याह— तद्भवसिद्धिकस्यापि सत्तायामसंख्येयभवार्जितकर्मणः सद्भावात्, तस्य च नानाध्यवसायबद्धत्वेन नरकादिनानागतिकारणत्वात्, ततस्तस्य विपाकत एवानुभवन एकस्मिन्नपि तत्र चरमभवे नानाभवानामनुभवनं प्राप्नोति, तच्चायुक्तम्, कुतः? इत्याह— 'नाणाभवाणुभवणाभावादेक्कम्मि त्ति' तत्र चैकस्मिन् मनुष्यगतिवर्तिनि चरमभवे नारक-तिर्यगादिनानाभवानां परस्परविरुद्धत्वेनानुभवनाभावात्। तर्हि तन्नानागतिकारणं कर्म पर्यायेणापि क्रमेण नानाभवेष्वनुभूय सिध्यतु, किमेतावता विनश्यति?। तदयुक्तम्। कुतः? इत्याह— 'पज्जएणं वा अणुभवओ बन्धाउ त्ति' इदमुक्तं भवति— पर्यायेण वा क्रमेण तान् नानाभवान् विपाकतोऽनुभवतः पुनरपि नानागतिकारणस्य कर्मणो बन्धः, पुनरपि च क्रमेण नानाभवभ्रमणम्, पुनर्नानागतिकारणकर्मबन्ध इत्येवं मोक्षाभावः। एतच्चानिष्टम्। तस्मादेष्टव्यः कर्मणामुपक्रम इति ॥ २०५२ ॥ २०५३ ॥

अथ प्रकारान्तरेणोत्तरदित्सया पूर्वविहितमेव प्रेर्यं पुनः कारयन्नाह—

नणु तन्न जहोवचियं तहाणुभवओ कयागमाईया। तप्पाओगं तं चिय तेण चियं सज्झरोगो व्व ॥२०५४॥

'नणु तन्न जहोवचियं ति' ननु यदुपक्रमाल्लघुस्थितिकं कृत्वा जीवो वेदयति, तदायुष्कर्म न भवति। कथंभूतम्? इत्याह—

---

१ यदि तावदनुभूतित एव क्षप्यते कर्मान्यथा न मतम्। तेनासंख्यभवार्जितनानागतिकारणत्वतः ॥ २०५२ ॥
नानाभवानुभवनाभावादेकस्मिन् पर्ययेण वा। अनुभवतो बन्धाद् मोक्षाभाव स चानिष्टः ॥ २०५३ ॥
२ ननु तन्न यथोपचितं तथानुभवत कृतागमादिका.। तत्प्रायोग्य तदेव तेन चित साध्यरोग इव ॥ २०५४ ॥

अत एवैतेषां भङ्गकानामौदयिकादिभावेषु विभागभावनां विषयविभागस्थापनां चिकीर्षुराह—

जो नारगाइभावो तह मिच्छत्तादओ वि भव्वाणं । ते चेवाभव्वाणं ओदइओ बितियवज्जोऽयं ॥ २०७७ ॥

औदयिको भावः सादिरपर्यवसितो न क्वचित् संभवति, अत एव द्वितीयभङ्गकवर्जोऽयं द्रष्टव्यः । तत्र यो नारकादिभावो नारक-तिर्यग्-नरा-ऽमरगतिलक्षणो य औदयिको भाव इत्यर्थः, स सादिः सपर्यवसान इति द्रष्टव्यम्, नारकादीनां प्रत्येकं सर्वेषामपि सादित्वात्, सान्तत्वाच्चेति सादिरपर्यवसान इति द्वितीयो भङ्गः शून्यः । तथा, मिथ्यात्वादयोऽपि भव्यानां तृतीयः, इदमुक्तं भवति– मिथ्यात्वम्, कषायाः वेदत्रयम्, अज्ञाना-ऽसंयतत्वा-ऽसिद्धत्वानि, लेश्याश्च, इत्येवं यः सप्तदशविध औदयिको भावः स भव्यानाश्रित्य अनादिसपर्यवसानः । अभव्यानाश्रित्य पुनः स एवानादिरपर्यवसानश्चेति ॥ २०७७ ॥

औपशमिकादीनाश्रित्याह—

[२]सम्मत्त-चरित्ताइं साई संतो य ओवसमिओऽयं । दाणाइलद्धिपणगं चरणं पि य खाइओ भावो ॥ २०७८ ॥

सम्मत्त-नाण-दंसण-सिद्धत्ताइं तु साइओऽणंतो । नाणं केवलवज्जं साई संतो खओवसमो ॥ २०७९ ॥

मइअन्नाणाईया भव्वा-ऽभव्वाण तइयचरमोऽयं । सव्वो पोग्गलधम्मो पढमो परिणामिओ होइ ॥ २०८० ॥

भव्वत्तं पुण तइओ जीवा-ऽभव्वाइं चरमभंगो उ । भावाणमयं कालो भावावत्थाणओऽणण्णो ॥ २०८१ ॥

व्याख्या– सम्यक्त्व-चारित्रे समाश्रित्य सादिः सपर्यवसान इति प्रथमभङ्ग एवौपशमिको भावः संभवति, प्रथमसम्यक्त्वलाभकाल उपशमश्रेण्यां चौपशमिकसम्यक्त्वस्य, उपशमश्रेण्यां तु चारित्रस्यौपशमिकस्य लाभात्, तयोश्चावश्यं सादिसपर्यवसितत्वात् । ततः शेषास्त्रयो भङ्गा इह शून्या एव । न केवलमौपशमिकस्तथा, क्षायिकोऽपि भावः क्षीणमोह-भवस्थकेवलावस्थायां दान-लाभ-भोगो-पभोग-

१ यो नारकादिभावस्तथा मिथ्यात्वादयोऽपि भव्यानाम् । त एवाऽभव्यानामौदयिको द्वितीयवर्जोऽयम् ॥ २०७७ ॥

२ सम्यक्त्व-चारित्रे सादि. सान्तश्चौपशमिकोऽयम् । दानादिलब्धिपञ्चक चारित्रमपि च क्षायिको भाव. ॥ २०७८ ॥

सम्यक्त्व ज्ञान-दर्शन-सिद्धत्वानि तु सादिकोऽनन्तः । ज्ञान केवलवर्जं सादि सान्त क्षयोपशमः ॥ २०७९ ॥

मत्यज्ञानादिका भव्या-ऽभव्यानां तृतीयचरमोऽयम् । सर्वं पुद्गलधर्मं प्रथमः पारिणामिको भवति ॥ २०८० ॥

भव्यत्व पुनस्तृतीयो जीवा-ऽभव्याश्चरमभङ्गस्तु । भावानामय कालो भावावस्थानतोऽनन्यः ॥ २०८१ ॥

येन प्रकारेण वर्षशतभोग्यत्वलक्षणेन पूर्वमुपचितं तेन जीवेन बद्धं यथोपचितमिति— यादृशं पूर्वजन्मनि बद्धं तादृशमेव तत्र भवतीत्यर्थः। वर्षशतभोग्यं हि दीर्घकालस्थितिकं पूर्वभवे बद्धम्, उपक्रमानन्तरं तु यदन्तर्मुहूर्तादिलघुस्थितिकमनुभवत्यायुस्तदन्यदेव, अन्यथाऽनुभवादिति भावः। ततः को दोषः ? इत्याह— 'तहाणुभवओ इत्यादि' तथा तेन प्रकारेण पूर्वबद्धविलक्षणमायुरनुभवतो जीवस्य पूर्वोक्ता अकृतागमादयो दोषाः प्रसजन्ति। अत्रोत्तरमाह— 'तप्पाओग्गमित्यादि' तस्योपक्रमस्य प्रायोग्यं योग्यं तत्प्रायोग्यमुपक्रमार्हमेव तदायुः कर्म तेन सोपक्रमायुषा जीवेन चितं पूर्वजन्मनि बद्धम्, साध्यरोगवदिति। ततश्च यथोपक्रमसाध्यो रोगो व्याधिः केनापि प्रागुपार्जित इत्युपक्रम्य तं स्फोटयति, न च तस्य तथा कुर्वतोऽकृतागमादयः, एवमायुरप्युपक्रमसाध्यतया बद्धत्वाद् यद्युपक्रम्यैव वेदयति तदा के तस्याकृतागमादयः ? इति ॥ २०५४ ॥

ननु साध्योऽसाध्यो वा रोग इति कथं ज्ञायते ? इत्याह—

अणुवक्कमओ नासइ कालेणोवक्कमेण खिप्पं ति। कालेणं वाऽसज्झो सज्झासज्झं तहा कम्मं ॥ २०५५ ॥[1]

'साध्यो रोगः, इति वर्तते। स चानुपक्रमत उपक्रमाभावात् कालेन निजभुक्तिच्छेदेन नश्यति, उपक्रमेण तु विहितेन क्षिप्रमर्वागपि शीघ्रं नश्यति, साध्यत्वादेव। यस्त्वसाध्यो रोगः स कालो मरणं तेनैव नश्यति, न तूपक्रमशतैरपि, तथा कर्मापि यत् साध्यं बन्धकालेऽप्युपक्रमसव्यपेक्षमिव बद्धं तदुपक्रमसामग्र्यभावे कालेन संपूर्णवर्षशतादिलक्षणेन निजभुक्तिच्छेदेन नश्यति, उपक्रमसामग्रीसंनिधाने तु शीघ्रमन्तर्मुहूर्तादिनैव कालेन नश्यति, साध्यत्वादेव। यत् पुनरसाध्यं बन्धकाले निकाचितावस्थमनुपक्रममेव बद्धं तदनेकोपक्रमसद्भावेऽपि निजभुक्तिपरिपूर्तिकालमन्तरेण न नश्यतीति ॥ २०५५ ॥

अस्यैवार्थस्य साधनार्थं प्रमाणयन्नाह—

[2]सज्झासज्झं कम्मं किरियाए दोसओ जहा रोगो। सज्झमुवक्कामिज्जइ एत्तो च्चिय सज्झरोगो व्व ॥ २०५६ ॥

'किरियाए त्ति' क्रियाया उपक्रमलक्षणायाः साध्यमसाध्यं च कर्म भवतीति प्रतिज्ञा। 'दोसउ त्ति' दोषत्वादिति हेतुः। यो यो दोषः स स उपक्रमक्रियायाः साध्योऽसाध्यश्च भवति, यथा ज्वरादिरोगः, यच्च साध्यं तदुपक्रम्यते, 'एत्तो च्चिय त्ति' साध्यत्वादेव। साध्यरोगवदिति ॥ २०५६ ॥

१ अनुपक्रमतो नश्यति कालेनोपक्रमेण क्षिप्रमिति। कालेनेवाऽसाध्य साध्यासाध्यं तथा कर्म ॥ २०५५ ॥
२ साध्यासाध्य कर्म क्रियाया दोषतो यथा रोग'। साध्यमुपक्रम्यत एतस्मादेव साध्यरोग इव ॥ २०५६ ॥

वीर्यलब्धिपञ्चकं, चारित्रं चाश्रित्य सादिसपर्यवसितत्वलक्षणे प्रथमभङ्गे वर्तत इति। ननु चारित्रं सिद्धस्याप्यस्तीति तदाश्रित्यापर्यवसान एवायं
किमिति न भवति? इति चेत्। तदयुक्तम्, "[1]सिद्धे नो चरित्ती, नो अचरित्ती" इति वचनादिति। क्षायिकसम्यक्त्व-केवलज्ञान-केवलदर्शन-
सिद्धत्वानि पुनः सिद्धावस्थायामपि भवन्ति, अतस्तान्याश्रित्य क्षायिको भावः सादिरपर्यवसान इति द्वितीयेऽपि भङ्गे वर्तते। शेषौ तु द्वाविह
शून्यावेव। अन्ये तु दानादिलब्धिपञ्चकं चारित्रं च सिद्धस्यापीच्छन्ति, तदावरणस्य तत्राप्यभावात्, आवरणाभावेऽपि च तदसत्त्वे
क्षीणमोहादिष्वपि तदसत्त्वप्रसङ्गात्, ततस्तन्मतेन चारित्रादीनां सिद्धयवस्थायामपि सद्भावेनापर्यवसितत्वादेकस्मिन् द्वितीयभङ्ग एव
क्षायिको भावो न शेषेषु त्रिष्विति। केवलवर्जानि शेषाणि चत्वारि ज्ञानान्याश्रित्य क्षायोपशमिको भावः प्रथमे भङ्गे वर्तते। सादिरनन्त
इति द्वितीयभङ्गोऽत्रापि शून्यः। मति-श्रुताज्ञाने समाश्रित्य भव्यानामनादिः सान्तश्चेति तृतीयभङ्गः। अभव्यानां तु ते एवाङ्गीकृत्याना-
दिरनन्त इति चरमश्चतुर्थो भङ्ग इति। सर्वोऽपि पुद्गलधर्मो द्व्यणुकादिपरिणामः सादिः सान्तश्चेति प्रथमः पारिणमिकभावभङ्गो भवति।
सादिरनन्त इतीहापि द्वितीयो भङ्गः शून्यः। भव्यत्वमाश्रित्य पुनरनादिः सान्त इति तृतीयो भङ्गः, "[2]सिद्धे नो भव्वे, नो अभव्वे" इति
वचनात् सिद्धावस्थायां भव्या-ऽभव्यत्वनिवृत्तेः। जीवत्वमभव्यत्वं चानादिरनन्त इति चरमश्चतुर्थो भङ्गः। तदेवं वर्णितोऽयं भावानामौ-
दयिकादीनां कालः। ननु सादिसपर्यवसानादिकमवस्थानादिकमेवेदं भावानाम्, कथं पुनरयं कालः? इत्याह– भावावस्थानतोऽनन्यो-
ऽभिन्नः। यदेव हि जीवा-ऽजीवादिभावानामवस्थानम्, अयमेव कालो नान्य इति, अतस्तद्वर्णनेऽभिहित एव भावकालः॥ इति गाथा-
षट्कार्थः॥ २०७८ ॥ २०७९ ॥ २०८० ॥ २०८१ ॥

तदेवं '[3]दव्वे अद्ध अहाउ य' इत्यादिनोपक्षिप्तान् कालभेदान् व्याख्याय प्रस्तुते येनाधिकारस्तमाह—

[4]एत्थं पुण अहिगारो पमाणकालेण होइ नायव्वो। खेत्तम्मि कम्मि कालम्मि भासियं जिणवरिंदेणं ?॥२०८२॥

अत्र पुनरनेकविधकालप्ररूपणायामधिकारः प्रयोजनं प्रस्तावः प्रमाणकालेन भवति ज्ञातव्यः। आह— ननु '[3]दव्वे अद्ध अहाउ य'
इत्यादिद्वारगाथायां '[3]पगयं तु भावेणं' इत्युक्तम्, इह पुनः 'अधिकारः प्रमाणकालेन भवति ज्ञातव्यः' इत्युच्यते, तत् कथं न पूर्वापर-
विरोधः?। अत्रोच्यते– 'क्षायिकभावकाले वर्तमानेन भगवता सामायिकाध्ययनं भाषितम्' इत्यभिप्रायवता '[3]पगयं तु भावेणं' इति
प्रागुक्तम्, तथा 'पूर्वाह्णलक्षणे प्रमाणकाले च भगवता भाषितं सामायिकम्' इत्यध्यवसायवताऽत्रोक्तं 'प्रमाणकालेनाधिकारः' इत्युभय-

1 सिद्धा नो चारित्रिणः, नो अचारित्रिणः। 2 सिद्धा नो भव्या, नो अभव्या.। 3 गाथा २०३०।
4. अत्र पुनरधिकारः प्रमाणकालेन भवति ज्ञातव्य'। क्षेत्रे कस्मिन् काले भाषितं जिनवरेन्द्रेण ॥२०८२॥

अथवा, प्रकारान्तरेण प्रमाणयन्नाह—

सज्झामयहेऊओ सज्झनियाणासओऽहवा सज्झं। सोवक्कमणमयं पिव देहो देहाइभावाओ ॥ २०५७ ॥

अथवा, सहोपक्रमणेन वर्तते सोपक्रमणं वेदनीयादिकं साध्यमुपक्रमक्रियाविषयभूतं कर्मेति प्रतिज्ञा। उपक्रमस्य साध्यश्चामावामयश्च साध्यामयस्तद्धेतुत्वादिति हेतुः। यथाऽयमेव प्रत्यक्षो देहः, गण्डच्छेदादिद्वारेण देहोऽपि साध्य उपक्रमक्रियाविषयः सोपक्रमश्चेति साध्यविकलत्वाभावो दृष्टान्तस्य। साध्यामयस्य च गण्डादेः कारणत्वाद् देहस्य साधनविकलत्वस्याप्यभावः। अथवा, हेत्वन्तरभावादन्यथा प्रमाणम्— सोपक्रमणं साध्यं कर्मेति सैव प्रतिज्ञा, साध्यनिदानाश्रयत्वादिति हेतुः। तत्र निदानं कारणं साध्यकर्मजनकं तन्निदानमपि साध्यमुच्यते, साध्यं च तद् निदानं च साध्यनिदानम्, तस्याश्रयः साध्यनिदानाश्रयः, तद्भावः साध्यनिदानाश्रयत्वं, तस्मात् साध्यनिदानाश्रयत्वात् साध्यनिदानजन्यत्वादिति भावः। निदानस्य साध्यत्वं कथं ज्ञायते ? इति चेत्। उच्यते— साध्यकर्मजनकत्वात्। कर्मणोऽपि साध्यत्वं कथमवसीयते ? इति चेत्। उच्यते— उपक्रमान्यथानुपपत्तेरिति।

आह— ननूपक्रम एव यत्र साध्यः, ततस्तदसिद्धौ कर्मणः साध्यत्वं न सिध्यति, तदसिद्धौ तु कर्मजनकनिदानस्यापि साध्यत्वासिद्धिः, इति 'साध्यनिदानजन्यत्वात्' इति साध्यत्वविशेषणासिद्धताऽसिद्धो हेतुरिति। सत्यम्, किन्त्वेवं मन्यते— "जइ ताणुभूअं चिय खविज्जए कम्मं" इत्यादिग्रन्थोक्तयुक्तिभ्यः सिद्धमेव कर्मणः सोपक्रमत्वम्, ततस्तत्सिद्धौ कर्मणः साध्यत्वं सिध्यति, तत्सिद्धौ च साध्यकर्मजनकतया तज्जनकनिदानस्यापि साध्यत्वसिद्धिरिति। यद्येवं पूर्वोक्तयुक्तिभ्य एव सिद्धं कर्मणः सोपक्रमत्वम्, इह पुनरपि तत्साधनमपार्थकमिति चेत्। सत्यम्, किन्तु प्रपञ्चप्रियविनेयानुग्रहार्थत्वाददोषः। यदिवा, कर्मणो निदानमध्यवसायस्थानान्येव, तानि च चित्रत्वेनासंख्येयलोकाकाशप्रदेशराशिप्रमाणानि, अतस्तेषु मध्ये यथा निरुपक्रमजनकानि तथा सोपक्रमकर्मजनकान्यप्यध्यवसायस्थानानि विद्यन्त एवेति, तद्वैचित्र्यान्यथानुपपत्तेः; इत्यादियुक्तितः साध्यकर्मजनकनिदानस्य साध्यत्वं साधनीयम्; तत्सिद्धौ च तत्कार्यस्य कर्मणोऽपि साध्यत्वं सोपक्रमणत्वं च सिध्यति, इत्यलं प्रपञ्चेन। यथाऽयं देह इति स एव दृष्टान्तः। अस्य च गण्डच्छेदादिद्वारेण च्छिद्यमानत्वात् सोपक्रमत्वम्, अत एव साध्यनिदानजन्यता। अतः साध्य-साधनधर्माभ्यामस्याविकलतेति।

अथवा, हेत्वन्यथात्वेनान्यथा प्रमाणम्— 'देहाइभावाउ त्ति' सोपक्रमणं साध्यमुपक्रमक्रियाविषयभूतं कर्मेति प्रतिज्ञा सैव। देहादौ

१ साध्यामयहेतुत साध्यनिदानाश्रयतोऽथवा साध्यम्। सोपक्रमणमयमिव देहो देहादिभावात् ॥ २०५७ ॥ २ गाथा २०५२।

संग्रहपरत्वाददोषः। अथवा, अद्धाकालपर्यायत्वात् प्रमाणकालोऽपि भावकाल एवेत्यविरोधः। आह– ननु कस्मिन् क्षेत्रे श्रीमन्महावीरजिनवरेन्द्रेण प्रथमतः सामायिकाध्ययनं भाषितम्?; तथा, प्रमाणकालोऽपि दिनप्रथमपौरुषी-पूर्वाह्णादिभेदादनेकविध इत्यतः प्रश्नः– प्रमाणकाले च कस्मिंस्तज्जिनवरेन्द्रेण भाषितम्– विनेयः पृच्छति कस्मिन् क्षेत्रे काले च क सामायिकस्य निर्गमः? इत्यर्थ इति॥२०८२॥

अत्रोत्तरमाह—

[1]वइसाहसुद्धइक्कारसीए पुव्वण्हदेसकालम्मि। महसेणवणुज्जाणे अणंतरं परंपरं सेसं ॥ २०८३ ॥

वैशाखशुक्लैकादश्यां पूर्वाह्णदेशकाले प्रथमपौरुष्यामित्यर्थः, कालस्यान्तरङ्गत्वख्यापनार्थमेव प्रश्नाद् व्यत्ययेनोत्तरनिर्देशः, महासेनवनोद्यानलक्षणे क्षेत्रे चानन्तरं निर्गमः सामायिकाध्ययनस्य। 'परंपरं सेसं ति' अन्येष्वपि गुणशिलकाद्युद्यानक्षेत्रेषु पश्चात् प्ररूपितमेव भगवता सामायिकम्, किन्तु महासेनवनात् शेषं क्षेत्रजातमधिकृत्य परंपरनिर्गमः, तस्य केवलज्ञानोत्पत्तावपापामध्यमानगर्यां महासेनवनोद्यान एव प्रथमं तस्य प्ररूपितत्वादिति। तदेवं

'[2]नामं ठवणा दविए खेत्ते काले तहेव भावे य। एसो उ निग्गमस्स निक्खेवो छव्विहो होइ ॥ १ ॥'

अस्यां निर्गमनिक्षेपप्रतिपादकगाथायामुद्दिष्टौ व्याख्यातौ क्षेत्र-कालनिर्गमौ ॥ २०८३ ॥

अथ भावनिर्गममभिधित्सुराह—

[3]खइयम्मि वट्टमाणस्स भगवओ निग्गयं [4]जिणिंदस्स। भावे खओवसमियम्मि वट्टमाणेहिं तं गहियं ॥२०८४॥

भावशब्दोऽत्रापि संबध्यते। ततश्च क्षायिके भावे वर्तमानस्य जिनेन्द्रस्य भगवतः श्रीमन्महावीरस्य निर्गतं सामायिकम्। क्षायिकोपशमिके भावे च वर्तमानैस्तस्मात् सामायिकमन्यच्च श्रुतं गृहीतम् 'गणधरादिभिः' इति गम्यते। तत्र भगवतो दर्शन-ज्ञान-चारित्रावरणस्य सर्वथा क्षीणत्वात् क्षायिको भावः, गणधरादीनां तु तदावरणस्य तदानीं क्षयोपशमावस्थत्वात् क्षायोपशमिको भावः। निर्गम एव चात्र प्रस्तुतः, यत्तु क्षायोपशमिकभावग्रहणप्रतिपादनं तत् प्रसङ्गतो द्रष्टव्यम्। तत्र श्रीगौतमस्वामिना निषद्यात्रयेण चतुर्दश पूर्वाणि गृहीतानि। प्रणिपत्य पृच्छा च निषद्योच्यते। प्रणिपत्य पृच्छति गौतमस्वामी– कथय भगवन्! तत्त्वम्। ततो भगवानाचष्टे-

१ वैशाखशुद्धैकादश्या पूर्वाह्णदेशकाले। महासेनवनोद्यानेऽनन्तर परम्पर शेषम् ॥ २०८३ ॥ २ गाथा १५३३।
३ क्षायिके वर्तमानस्य भगवतो निर्गत जिनेन्द्रस्य। भावे क्षायोपशमिके वर्तमानैस्तद् गृहीतम् ॥ २०८४ ॥ ४ क ग 'जिणवरिंद'।

भावात्, आदिशब्दाज्जीवे च भावादिति हेतुः। देहे जीवे च किल वर्तते कर्म, केवलं जीवे वह्न्ययःपिण्डन्यायेन तस्य वृत्तिः, देहे त्वाधाराधेयभावेन जीवो वर्तते, तद्द्वारेण च कर्मापीति, यथाऽयमेव प्रत्यक्षो देह इति दृष्टान्तः। नन्वाधाराधेयभावेन देहस्यापि जीवे वृत्तिर्युक्ता, 'देहस्य च देहे वृत्तिः' इत्येतत् कथम्?। सत्यम्, 'सर्वे भावाः स्वात्मनि वर्तन्ते, वस्त्वन्तरे चाधारे' इति न्यायाद् देहस्यापि देहवृत्तिर्युज्यत एव। अथवा, अस्यौदारिकादिदेहस्य जीववत् कार्मणलक्षणे देहेऽपि वृत्तिः प्रतीतैव, इति न 'देहादौ भावात्' इति साधनधर्मविकलता दृष्टान्तस्येति ॥ २०५७ ॥

अथ कर्मणः सोपक्रमत्वसिद्धावुपपत्त्यन्तराण्याह—

[1]किंचिदकाले वि फलं पाइज्जइ पच्चए य कालेणं। तह कम्मं पाइज्जइ[2] कालेण विपच्चए यण्णं ॥ २०५८ ॥

भिण्णो जहेह कालो तुल्ले वि पहम्मि गइविसेसाओ। सत्थे व गहणकालो मइ-मेहाभेयओ भिन्नो ॥२०५९॥

तह तुल्लम्मि वि कम्मे परिणामाइकिरियाविसेसाओ। भिण्णोऽणुभवणकालो जेट्ठो मज्झो जहन्नो य ॥२०६०॥

जह वा दीहा रज्जू डज्झइ कालेण पुंजिया खिप्पं। वियओ पडो व सुस्सइ पिंडीभूओ य कालेणं ॥२०६१॥

भागो य निरोवट्टो हीरइ कमसो जहण्णहा खिप्पं। किरियाविसेसओ वा समे वि रोगे चिगिच्छाए ॥२०६२॥

व्याख्या— अथवा, यथा किञ्चिदाम्र-राजादनादिफलं यावता कालेन वृक्षस्थं क्रमेण पच्यते तदपेक्षयाऽर्वाक्कालेऽपि गर्ता-प्रक्षेप-पलालस्थगनाद्युपायेन पाच्यते, अन्यत्तु वृक्षस्थमेवोपायाभावतः क्रमशः स्वपाककालेन पच्यते, तथा कर्माप्यायुष्कादिकं किमप्यध्यवसानादिहेतुभिर्बन्धकालनिर्वर्तितवर्षशतादिरूपस्थितिकालापेक्षयाऽकालेनाप्यन्तर्मुहूर्तादिना पाच्यते वेद्यते— अनुभूय पर्यन्तं नीयत इति तात्पर्यम्, अन्यत्तु बन्धकालनिर्वर्तितवर्षशतादिलक्षणस्थितिकालेनैव संपूर्णेन विपच्यते— अनुभूयत इति। अथवा, यथेह

१ किञ्चिदकालेऽपि फलं पाच्यते पच्यते च कालेन। तथा कर्म पाच्यते कालेन विपच्यते चान्यत् ॥ २०५८ ॥
भिन्नो यथेह कालस्तुल्येऽपि पथि गतिविशेषात्। शास्त्रे वा ग्रहणकालो मति-मेधाभेदतो भिन्नः ॥ २०५९ ॥
तथा तुल्येऽपि कर्मणि परिणामादिक्रियाविशेषात्। भिन्नोऽनुभवनकालो ज्येष्ठो मध्यो जघन्यश्च ॥ २०६० ॥
यथा वा दीर्घा रज्जुर्दह्यते कालेन पुञ्जिता क्षिप्रम्। विततः पटो वा शुष्यति पिण्डीभूतश्च कालेन ॥ २०६१ ॥
भागश्च निरपवर्तो ह्रियते क्रमशो यथाऽन्यथा क्षिप्रम्। क्रियाविशेषतो वा समेऽपि रोगे चिकित्सया ॥ २०६२ ॥ २ क ग ज. 'इ पाएण वि'।

"[1]उप्पज्जेइ वा" । पुनस्तथैव पृष्टे प्राह– "[2]विगमेइ वा" । पुनरप्येवं कृते वदति– "[3]धुवेइ वा" । एतास्तिस्रो निषद्याः । आसामेव सकाशात् 'यत् सत् तदुत्पाद-व्यय-ध्रौव्ययुक्तम्, अन्यथा वस्तुनः सत्ताऽयोगात्' इत्येवं तेषां गणभृतां प्रतीतिर्भवति । ततश्च ते पूर्वभवभावितमतयो बीजबुद्धित्वाद् द्वादशाङ्गमुपरचयन्ति । ततो भगवांस्तेषां तदनुज्ञां करोति । शक्रश्च दिव्यं वज्रमयस्थालं दिव्यचूर्णानां भृत्वा त्रिभुवनस्वामिनः संनिहितो भवति । ततः स्वामी रत्नसिंहासनादुत्थाय परिपूर्णां चूर्णमुष्टिं गृह्णाति । ततो गौतमस्वामिप्रमुखा एकादशापि गणधरा ईषदवनततनवः परिपाट्या तिष्ठन्ति । ततो देवास्तूर्यध्वनि-गीत-शब्दादिनिरोधं विधाय तूष्णीकाः शृण्वन्ति । ततो भगवान् पूर्वं तावदेतद् भणति– 'गौतमस्य द्रव्य-गुण-पर्यायैस्तीर्थमनुजानामि' इति, चूर्णांश्च तन्मस्तके क्षिपति । ततो देवा अपि चूर्ण-पुष्प-गन्धवर्षां तदुपरि कुर्वन्ति । गणं च भगवान् सुधर्मस्वामिनं धुरि व्यवस्थाप्यानुजानाति । एवं सामायिकस्यार्थो भगवतः सकाशाद् निर्गतः, सूत्रं तु गणधरेभ्यो निर्गतम्, इत्यलं प्रसङ्गेन ॥ इति निर्युक्तिगाथात्रयार्थः ॥ २०८४ ॥

यदुक्तम्– '[4]एत्थं पुण अहिगारो पमाणकालेण' इत्यादि, तत्र परः पूर्वापरविरोधमुद्भावयन्नाह—

[5]किह पगयं भावेणं कहमहिगारो पमाणकालेणं ? ।

आचार्यः प्राह—

[6]खाइयभावेऽरुहया पमाणकालेण जं भणियं ॥ २०८५ ॥

अहवा पमाणकालो वि भावकालो त्ति जं च सेसा वि । किंचिम्मेत्तविसिट्ठा सव्वे च्चिय भावकाल त्ति॥२०८६॥

आहिक्केणं कज्जं पमाणकालेण जमहिगारो त्ति । सेसा वि जहासंभवमाउज्जा निग्गमे काला ॥ २०८७ ॥

तिस्रोऽपि प्रायो व्याख्यातार्थाः, नवरं 'अरुहय त्ति' अर्हता श्रीमन्महावीरेण । 'जं च सेसा वीत्यादि' यस्माच्च शेषा अपि द्रव्या-ऽद्धाकालादयः किञ्चिदुपाधिमात्रविशिष्टाः सर्वेऽपि भावकाला एव; तथाहि– द्रव्यस्य या चतुर्विकल्पा स्थितिः सा द्रव्यकाल उक्तः,

---

१ उत्पद्यन्ते वा । २ विगच्छन्ति वा । ३ ध्रुवाणि वा । ४ गाथा २०८२ ।

५ कथं प्रकृतं भावेन कथमधिकार. प्रमाणकालेन ? । ६ क्षायिकभावेऽर्हता प्रमाणकालेन यद् भणितम् ॥ २०८५ ॥ अथवा प्रमाणकालोऽपि भावकाल इति यच्च शेषा अपि । किञ्चिन्मात्रविशिष्टा सर्वे एव भावकाला इति ॥ २०८६ ॥ आधिक्येन कार्यं प्रमाणकालेन यदधिकार इति । शेषा अपि यथासंभवमायोज्या निर्गमे कालाः ॥ २०८७ ॥

तुल्येऽपि त्रियोजनादिके पथि त्रयाणां पुरुषाणां गच्छतां प्रहरैक-द्वि-त्र्यादिलक्षणो गतिविशेषाद् भिन्नो गतिकालो दृश्यते, एवं कर्मणस्तुल्यस्थितिकस्यापि तीव्र-मन्द-मध्यमाध्यवसायविशेषाज्जघन्य-मध्यमो-त्कृष्टलक्षणस्त्रिविधोऽनुभवकालो भवति । यदिवा, यथा तुल्येऽपि शास्त्रेऽध्येतॄणां मतिर्ग्रहणबुद्धिः, मेधा पुनरिहावधारणास्वरूपा गृह्यते, तद्भेदात् त्रिविधो ग्रहणस्य पठनस्य कालो भिन्नोऽनेकरूपो विलोक्यते, एवमायुषोऽपि परिणामविशेषात् तुल्यस्थितिकस्याप्यनेकरूपोऽनुभवनकाल इति ।

पथि-शास्त्रदृष्टान्तयोः प्रकृतयोजनामाह— 'तह तुल्लम्मि वीत्यादि' गतार्थैव, नवरं 'परिणामाइकिरियाविसेसाउ त्ति' परिणामोऽध्यवसानम्, आदिशब्दाद् बाह्या दण्ड-कशा-शस्त्रादयो गृह्यन्ते, क्रिया चारित्रलक्षणा, परिणामादयश्च क्रिया च परिणामादि-क्रियास्तद्विशेषात् तद्भेदाद् बहुभिस्तुल्यस्थितिके बद्धेऽपि कर्मणि भिन्न एवानुभवनकाल इति । यथा दीर्घा प्रसारिता रज्जुरेकस्मात् पक्षात् क्रमेण ज्वलन्ती प्रभूतेनैव कालेन दह्यते, पुञ्जीकृता तु पिण्डीकृता तु ज्वलन्ती क्षिप्रं शीघ्रमेव भस्मीभवति, एवं कर्माप्यायुष्कादिकं दीर्घकालस्थितिकं प्रतिसमयं क्रमेण वेद्यमानं चिरकालेन वेद्यते, अपवर्त्य पुनर्वेद्यमानमल्पेनैव कालेन वेद्यत इति । यथा वा जलार्द्रः पिण्डीभूतः पटश्चिरकालेन शुष्यति, विततः प्रसारितः पुनरल्पेनैव कालेन शुष्यति, एवं कर्मापि, इत्युपनयस्तथैव । यथा वा लक्षादिकस्य महतो राशेर्निरपवर्तनोऽपवर्तनारहितो भागः क्रमशश्चिरेण ह्रियते, अन्यथा पुनरपवर्तनायां विहितायां क्षिप्रं शीघ्रमेवापह्रियते; तथाहि किल लक्षप्रमाणस्य राशेर्दशभिर्भागो हरणीयः, स च यद्यपवर्तनामन्तरेण ह्रियते तदा महती वेला लगति, यदा तु गुण्यस्य लक्षस्य गुणकारकस्य च दशलक्षस्य पञ्चभिरपवर्तना विधीयते पञ्चभिर्भागो ह्रियत इत्यर्थः, तदा शीघ्रमेव ह्रियते भागः, लक्षस्य हि पञ्चभिर्भागे हृते लब्धानि विंशतिः सहस्राणि, दशानां तु पञ्चभिर्भागे हृते लब्धौ द्वौ । एताभ्यां विंशतिसाहस्रिकस्य लघुराशेर्भागे हृते झटित्येव दश सहस्राण्यागच्छन्ति, अनपवर्तितैस्तु दशभिरनपवर्तितस्यैव लक्षस्य दीर्घो भागापहारकालो भवति । एवमायुषोऽप्यनपवर्तितस्य दीर्घोऽनुभवनकालः, अपवर्तितस्य तु लघुरसाविति । यथा वा समेऽपि कुष्ठादिके रोगे क्रियाविशेषाच्चिकित्सायाः रोगनिग्रहलक्षणायाः कालभेदो भवति, एवमायुषोऽपीति । तदेवं सति समसङ्ख्यो द्विविधोऽप्युक्त उपक्रमकालः ॥२०५८॥२०५९॥२०६०॥२०६१॥२०६२॥

इदानीं देशकालमभिधित्सुस्तत्स्वरूपं विवृण्वन्नाह—

जो जस्स जयाऽवसरो कज्जस्स सुभासुभस्स सोपायं । भण्णइ स देसकालो देसोऽवसरो त्ति थक्को त्ति ॥२०६३॥

१ यो यस्य यदावसर कार्यस्य शुभाशुभस्य सोपायम् । भण्यते स देशकालो देशोऽवसर इति थक्क इति ॥ २०६३ ॥

समया-ऽऽवलिकादयस्त्वद्धाकालः, यथायुष्कं चायुष्ककाल इत्यादि । एते च स्थित्यादयः सर्वेऽपि जीवा-ऽजीवपर्यायत्वाद् भावरूपा एवेति परमार्थतो भावकालाद् न विशिष्यन्त इति । परं तथापि 'प्रमाणकालेनात्राधिकारः' इति यदुक्तं तदाधिक्येन विशेषतस्तेन प्रमाण-कालेन कार्यमिति हेतोरवगन्तव्यम्, अन्यथा शेषा अपि द्रव्या-ऽद्धाकालादयः पारम्पर्यादिना सामायिकनिर्गमे यथासंभवमायोजनीयाः; यथा हि क्षायिके भावे वर्तमानस्य सामायिकं निर्गतं भगवतस्तथा रत्नमयसिंहासनलक्षणे द्रव्ये चोपविष्टस्य, यत्र च द्रव्ये तत्र तत्स्थितिलक्षणः कालोऽप्यस्त्येव; तथा, यथायुष्ककालं चानुभवतः, कर्माणि चोपक्रामतः, प्रस्तावं चावगच्छतः, आवीचिमरणलक्षणं मरणकालं चानुभवतः, जीवादिपदार्थवर्णनाकाले च प्रवृत्तस्य तस्य तन्निर्गतम्, प्रमाण-भावकालौ त्वधिकृतत्वेनोक्तावेव । प्रमाणकाले चाधिकृतेऽद्धा-कालोऽधिकृत एव, तस्य तद्विशेषत्वादेवेति । एवं सर्वेऽपि द्रव्यकालादयोऽत्रोपयुज्यन्त एव । केवलमाधिक्येन प्रमाणकालो भावका-लश्चेहोपयुज्येते, इति तयोर्विशेषतोऽधिकृतत्वमुक्तमिति ॥ २०८५ ॥ २०८६ ॥ २०८७ ॥

आह– ननु कालनिर्गममभिधित्सता कालो भेददर्शनतो विस्तरेण व्याख्यातः, क्षेत्रं तु न किञ्चिद् व्याख्यातम्, तदत्र किं कारणम् ? । सत्यम्, सुगमत्वाद् न व्याख्यातम् । अथवा, भाष्यकारस्तत्स्वरूपं किञ्चिद् विवृण्वन्नाह—

[1]खेत्तं मयमागासं सव्वदव्वावगाहणालिंगं । तं दव्वं चेव निवासमेत्तपज्जायओ खेत्तं ॥ २०८८ ॥

तं च महासेणवणोवलक्खियं जत्थ निग्गयं पुव्वं । सामाइयमन्नेसु य परंपरविणिग्गमो तस्स ॥ २०८९ ॥

व्याख्या–'क्षि निवास-गत्योः' क्षियन्ति– अवगाहन्ते निवसन्ति जीवादयोऽस्मिन्निति क्षेत्रम् । तच्चाकाशं सर्वार्थवेदिनां मतम् । कथंभूतम् ? । सर्वेषामपि जीवादिद्रव्याणां याऽवगाहनाऽवस्थानरूपा सैव लिङ्गं चिह्नमुपयोगो यस्य तत् सर्वद्रव्यावगाहनालिङ्गम् । तच्चापरपर्यायेषु द्रवणाद् गमनाद् द्रव्यमेव, केवलं निवासमात्रपर्यायमाश्रित्य क्षेत्रमुच्यते । तच्चोपाधिभेदाद् बहुभेदम् । अत इह महासेनवनोपलक्षितमेव गृह्यते । यत्र किम् ? इत्याह– यत्र पूर्वं प्रथमतः सामायिकं निर्गतम्, अन्येषु तु गुणशिलकाद्युद्यानेषु परम्पर-निर्गमस्तस्य सामायिकस्य ॥ इति गाथापञ्चकार्थः ॥ २०८८ ॥ २०८९ ॥

तदेवमुक्तः षड्विधोऽपि निर्गमः, तद्भणने 'उद्देसे निद्देसे य निग्गमे खेत्त काल पुरिसे य' इत्याद्युपोद्घातनिर्युक्तिगाथागतं व्याख्यातं

१ क्षेत्रं मतमाकाश सर्वद्रव्यावगाहनालिङ्गम् । तद् द्रव्यमेव निवासमात्रपर्यायतः क्षेत्रम् ॥ २०८८ ॥
तच्च महासेनवनोपलक्षित यत्र निर्गत पूर्वम् । सामायिकमन्येषु च परम्परविनिर्गमस्तस्य ॥ २०८९ ॥ २ गाथा १७३ ।

देशः, अवसरः, थक्कमिति पर्यायाः, तद्रूपकालो देशकालः स भण्यते । कः ? इत्याह– यो यस्य शुभस्याशुभस्य वा कार्यस्य निश्चितो यदावसरः स देशकालो भण्यते । कथं निश्चितः ? इत्याह— सोपायं– वक्ष्यमाणोपायत इत्यर्थः । इति विंशतिगाथार्थः ॥ २०६३ ॥

तत्र शुभस्य साध्वादिभिक्षालक्षणस्य कार्यस्य निश्चयोपायगर्भं प्रस्तावकालमाह—

[2]निद्धूमगं च गामं महिलाथूभं च सुण्णयं दट्ठुं । नीयं च काया ओलिंति जाया भिक्खस्स हरहरा ॥२०६४॥

ओदनादिपाकक्रियापरिसमाप्तौ निर्धूमकं च ग्रामं, पानीयवाहिकामहिलास्तूभं च कूपादितटं शून्यं दृष्ट्वा, तथा, नीचं च काकाः 'ओलिंति त्ति' अवलीयन्ते– गृहाणि प्रत्यागच्छन्ति, इत्यादि च चिह्नं दृष्ट्वा जानीयाद् यथा संजाता भैक्षस्य हरहरेति– अतीव भिक्षाप्रस्ताव इति ॥ २०६४ ॥

अथाप्रशस्तस्य कार्यस्य निश्चयोपायपूर्वकं प्रस्तावकालमाह—

[3]निम्मच्छियं महुं पायडो निही खज्जगावणो सुन्नो । जा यंगणे पसुत्ता पउत्थवइया य मत्ता य ॥२०६५॥

निर्माक्षिकमपगतसकलमाक्षिकं मधु, तथा, प्रकटश्चाकाशीभूतो निधिः, इत्येतद् दृष्ट्वा तद्ग्रहणस्य यः प्रस्तावो ज्ञायते स देशकालः । तथा, खाद्यकापणः कुल्लूरिकहट्टः शून्य इत्यवलोक्य यस्तद्गतखाद्यानां ग्रहणप्रस्तावो निश्चीयते, तथा, यात्राङ्गणे प्रसुप्ता प्रोषितपतिका च मदिरामत्ता च, तस्या अपि तदानीमतीव मदनाकुलीकृतत्वाद् यो ग्रहणप्रस्तावो विज्ञायते स सर्वोऽपि देशकालः ॥ इति निर्युक्तिगाथाद्वयार्थः ॥ २०६५ ॥

अथ कालकालमभिधित्सुर्भाष्यकारस्तद्व्याख्यानमाह—

[4]कालो त्ति मयं मरणं जहेह मरणं गउ त्ति कालगओ । तम्हा स कालकालो जो जस्स मओ स मरणकालो ॥२०६६॥

एकः कालशब्दः 'कलनं कालः' इत्यादिना प्राग्निरूपितशब्दार्थ एव, द्वितीयस्तु कालोऽत्र मरणम् । इह यथा लोके मरणं गतः प्राप्तः कालगत इत्युच्यते, अतोऽनयैव लोकरूढ्या द्वितीयः कालशब्दो मरणवाचकः । ततः किमिह स्थितम् ? इत्याह– तस्माद् यो यस्य प्राणिनो मरणकालः स तीर्थकृतां कालकालो मतः ॥ इति गाथार्थः ॥ २०६६ ॥

---

१ छ. 'थकामि' । २ निर्धूमकं च ग्राम महिलास्तूभ च शून्यक दृष्ट्वा । नीचं च काका अवलीयन्ते जाता भैक्षस्य हरहरा ॥ २०६४ ॥

३ निर्माक्षिक मधु प्रकटो निधिः खाद्यकापणः शून्यः । या वाङ्गणे प्रसुप्ता प्रोषितपतिका च मत्ता च ॥ २०६५ ॥

४ काल इति मत मरणं यथेह मरणं गत इति कालगतः । तस्मात् स कालकालो यो यस्य मत. स मरणकाल. ॥ २०६६ ॥

तृतीयं निर्गमद्वारम् । क्षेत्र-काललक्षणं तु चतुर्थ-पञ्चमद्वारद्वयं सामायिकनिर्गमाङ्गत्वादेव निर्गमान्तर्गतक्षेत्र-कालभणनेनैव व्याख्यातम् ।

अथ षष्ठं पुरुषलक्षणमुपोद्घातद्वारं व्याचिख्यासुराह—

दव्वा-ऽभिलाव-चिंधे वेए धम्म-त्थ-भोग-भावे य । भावपुरिसो उ जीवो भावे पगयं तु भावेणं ॥ २०९० ॥[1]

'दव्व त्ति' द्रव्यपुरुषो विस्तरेण वक्ष्यमाणस्वरूपः । अभिलप्यतेऽनेनेत्यभिलापः शब्दः, ततोऽभिलापपुरुषः पुंलिङ्गाभिधानमात्रपुरुष इति, घटः पट इत्यादिर्वा । चिह्नपुरुषस्त्वपुरुषोऽपि पुरुषचिह्नोपलक्षितो यथा 'नपुंसकं श्मश्रुचिह्नम्' इत्यादि । स्त्र्यादिरपि पुरुषवेदकर्मविपाकानुभावाद् वेदपुरुषः । धर्मार्जनव्यापाररतः साधुर्धर्मपुरुषः । अर्थार्जनपरस्त्वर्थपुरुषः । समस्तभोगो-पभोगसुखभाग् भोगपुरुषः । 'भावे य त्ति' भावपुरुषश्च । चशब्दो नामाद्यनुक्तभेदसमुच्चयार्थः । तत्र भावे भावद्वारे विचार्ये भावपुरुषः । कः ? इत्याह— भावपुरुषस्तु जीवः । इदमुक्तं भवति— पूः शरीरं, पुरि शरीरे शेत इति निरुक्तिवशाद् भावपुरुषः पारमार्थिकः पुरुषो द्रव्या-ऽभिलाप-पुरुषादिसर्वोपाधिरहितो निर्विशेषणः शुद्धो जीव एवोच्यते । तत्रेह प्रकृतं प्रस्तुतं भावेन भावपुरुषेण शुद्धेन जीवेन तीर्थकरेणेत्यर्थः । तुशब्दादन्यैश्च वेदादिपुरुषैर्गणधरैरिहाधिकारः, सूत्रतस्तेभ्योऽपि सामायिकस्य निर्गतत्वात् ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ २०९० ॥

विस्तरार्थं तु भाष्यकारः प्राह—

आगमओऽणुवउत्तो इयरो दव्वपुरिसो तहा तइओ । एगभवियाइतिविहो मूलुत्तरनिम्मिओ वावि ॥२०९१॥[2]

इह नाम-स्थापनापुरुषौ नोक्तौ, तद्विचारस्यातिप्रतीतत्वात् । द्रव्यपुरुषस्तु द्वेधा— आगमतः, नोआगमतश्च । तत्रागमतः पुरुषपदार्थज्ञः, तत्र चानुपयुक्तो द्रव्यपुरुष उच्यते । इतरस्तु नोआगमत इत्यर्थः, द्रव्यपुरुषो ज्ञशरीर-भव्यशरीर-तद्व्यतिरिक्तभेदात् त्रिधा । तत्र ज्ञशरीर-भव्यशरीरद्रव्यपुरुषौ द्रव्यावश्यकादिवत् सुचर्चौ । तृतीयस्तु ज्ञशरीर-भव्यशरीरव्यतिरिक्तो द्रव्यपुरुषः पुनरप्येकभविकबद्धायुष्काभिमुखनामगोत्रभेदात् त्रिविधः । अथवा, व्यतिरिक्तो द्विविधः । कथम् ? । मूलगुणनिर्मितः, उत्तरगुणनिर्मितश्च । तत्र मूलगुणनिर्मितः पुरुषप्रायोग्याणि द्रव्याणि, उत्तरगुणनिर्मितस्तु तान्येव तदाकारवन्तीति । उक्तो द्रव्यपुरुषः ॥ २०९१ ॥

इदानीमभिलाप-चिह्नपुरुषौ प्राह—

---

१ द्रव्या-ऽभिलाप-चिह्नानि वेदो धर्मा-ऽर्थ भोगभावाश्च । भावपुरुषस्तु जीवो भावे प्रकृतं तु भावेन ॥ २०९० ॥

२ आगमतोऽनुपयुक्त इतरो द्रव्यपुरुषस्तथा तृतीय । एकभविकादित्रिविधो मूलोत्तरनिर्मितो वापि ॥ २०९१ ॥

अमुमेव कालं लोकोक्तिद्वारेण दर्शयन् निर्युक्तिकारः माह—

[1]कालेण कओ कालो अम्हं सज्झायदेसकालम्मि । तो तेण हओ कालो अकाले कालं करेंतेण ||२०६७||

कालेन कृष्णवर्णेन शुनाऽस्मदुपाश्रयमत्यासत्तौ कालः कृतो मरणं कृतमित्यर्थः । कदा ? इत्याह— अस्माकं स्वाध्यायदेशकाले स्वाध्यायकरणमस्तावे । ततस्तेन शुना हतो भग्नः कालः स्वाध्यायकरणकालः, अकालेऽमस्तावे कालं मरणं कुर्वतेति । तदनेन कृष्णशुनः स्वाध्यायकालादीनां च कालशब्दवाच्यत्वदर्शनेन कालशब्दस्यानेकार्थत्वम् , तथा, मरणकालस्य च लोकोक्त्यैव कालकालत्वमुपदर्शितमिति ॥ इति निर्युक्तिगाथार्थः ||२०६७ ॥

अथ ममाणकालाभिधित्सया तत्स्वरूपं विवरीषुर्भाष्यकारः माह—

[2]अद्धाकालविसेसो पत्थयमाणं व माणुसे खित्ते । सो संववहारत्थं पमाणकालो अहोरत्तं ॥ २०६८ ॥

स ममाणकाल इति समयविद्भिः मरूप्यते । यः कथंभूतः ? इत्याह– अद्धाकालस्यैव विशेषस्वरूपः । अयं च सूर्यादिगतिक्रियाभिव्यङ्ग्यत्वाद् मनुष्यक्षेत्र एव भवति, न परतः, सूर्यादिगतिक्रियाऽभावात् । किंविशिष्टः पुनरसौ ? इत्याह– अहोरात्रम्– अहोरात्रसंज्ञितः । किमर्थं पुनरसौ मरूप्यते ? इत्याह– संव्यवहारार्थं जीवा-ऽजीवादि-स्थित्यादिमानव्यवहारार्थम् । किंवत् ? । मस्थकमानवत् । यथा सामान्यमानस्य विशेषभूतं मनुष्यक्षेत्रे धान्यादिमिनन(?)संव्यवहारार्थं "दो असईओ, पसईओ दो पसईओ सेइया, चत्तारि सेईयाओ कुडवो, चत्तारि कुडवा पत्थो" इत्यादिना सूत्रे मरूपितं मस्थकमानम् , तथाऽयमप्यहोरात्रिरूपः ममाणकालः ॥ इति गाथार्थः ॥ २०६८ ॥

इति किञ्चिद् व्याख्यातस्वरूपमेव ममाणकालं निर्युक्तिकारः माह—

[3]दुविहो पमाणकालो दिवसपमाणं च होइ राई य । चउपोरिसिओ दिवसो राई चउपोरिसी चेव ||२०६९||

मर्मीयतेऽनेनेति ममाणं तदेव ममाणकालः । स द्विविध इति दिवसममाणकालो रात्रिममाणकालश्च भवति । तत्र चतसृभिः पौरुषीभिर्दिवसो भवति, एवं रात्रिरपि ॥ इति निर्युक्तिगाथार्थः ॥ २०६९ ॥

---

१ कालेन कृत कालोऽस्माकं स्वाध्यायदेशकाले । ततस्तेन हत. कालोऽकाले कालं कुर्वता ॥ २०६७ ॥

२ अद्धाकालविशेष मस्थकमानमिव मानुषे क्षेत्रे । स सव्यवहारार्थं प्रमाणकालोऽहोरात्रम् ॥ २०६८ ॥

३ द्विविधः प्रमाणकालो दिवसप्रमाणं च भवति रात्रिश्च । चतुष्पौरुषीको दिवसो रात्रिश्चतुष्पौरुष्येव ॥ २०६९ ॥

[1]अभिलावो पुंलिंगाभिहाणमेत्तं घडो व्व चिंधे उ । पुरिसागिई नपुंसो वेओ वा पुरिसवेसो वा ॥२०९२॥

अभिलापः शब्दस्तद्रूपः पुरुषोऽभिलापपुरुषः, यथा पुरुष इति पुंलिङ्गवृत्त्यभिधानमात्रम् , घटः पट इत्यादिर्वा । चिह्ने चिह्नविषये पुरुषश्चिह्नपुरुषः । पुरुषाकृतिर्नपुंसकात्मा श्मश्रुप्रभृतिपुरुषचिह्नयुक्तः । अथवा, वेदः पुरुषवेदश्चिह्नपुरुषः, चिह्नयते लक्ष्यते पुरुषोऽनेनेति कृत्वा । अथवा, पुरुषस्य संबन्धी वेषो यस्य स पुरुषवेष स्त्र्यादिरपि चिह्नमात्रेण पुरुषश्चिह्नपुरुष इति ॥ २०९२ ॥

वेद-धर्मपुरुषौ प्राह—

[2]वेयपुरिसो तिलिंगो वि पुरिसवेयाणुभूइकालम्मि । धम्मपुरिसो तयज्जणवावारपरो जहा साहू ॥ २०९३ ॥

स्त्री-पुं-नपुंसकलिङ्गत्रयवृत्तिरपि प्राणी यदा तृणज्वालोपमविपाकं पुरुषवेदमनुभवति तदा पुरुषवेदानुभावमाश्रित्य पुरुषो वेदपुरुषः स्त्र्यादिरप्युच्यते । धर्मार्जनव्यापारपरो धर्मपुरुषो यथा साधुरिति ॥ २०९३ ॥

अर्थ-भोगपुरुषौ प्राह—

[3]अत्थपुरिसो तयज्जणपरायणो मम्मणो व्व निहिपालो । भोगपुरिसो समज्जियविसयसुहो चक्कवट्टि व्व ॥२०९४॥

गतार्था । नवरं राजगृहनगरनिवासी रत्नमयवलीवर्दनिर्मापको मम्मणवणिगावश्यकवृत्तितोऽवसेय इति ॥ २०९४ ॥

भावपुरुषमाह—

[4]भावपुरिसो उ जीवो सरीरपुरि सयणओ निरुत्तवसा । अहवा पूरण-पालणभावाओ सव्वभावाणं ॥२०९५॥

भावपुरुषस्तु द्रव्या-ऽभिलाप-चिह्नाद्युपाधिरहितः शुद्धो जीवः । कुतः ? । पूः शरीरम्, तत्र शयनाद् निवसनात् पुरुष इत्येवं भूतनिरुक्तवशात् । अथवा, सर्वेषामपि स्वर्ग-मर्त्य-पातालगतानां स्वर्गविमान-भवन-शयना-ऽऽसन-यान-वाहन-देहविभवादिभावानां नानाभवेषु 'पॄ पालन पूरणयोः' पूरण-पालनभावाद् भावरूपः पारमार्थिकः पुरुषो भावपुरुषः शुद्धो जीव इति ॥ २०९५ ॥

१ अभिलाप पुलिङ्गाभिधानमात्रं घट इव चिह्नं तु । पुरुषाकृतिर्नपुंसको वेदो वा पुरुषवेषो वा ॥ २०९२ ॥
२ वेदपुरुषस्त्रिलिङ्गोऽपि पुरुषवेदानुभूतिकाले । धर्मपुरुषस्तदर्जनव्यापारपरो यथा स धु' ॥ २०९३ ॥
३ अर्थपुरुषस्तदर्जनपरायणो मम्मण इव निधिपाल' । भोगपुरुष समर्जितविषयसुखश्चक्रवर्तीव ॥ २०९४ ॥
४ भावपुरुषस्तु जीव शरीरपुरि शयनतो निरुक्तवशात् । अथवा पूरण-पालनभावात् सर्वभावानाम् ॥ २०९५ ॥

ननु पौरुष्याः किं मानम्? इति विनेयप्रश्नमाशङ्क्य भाष्यकारः प्राह—

पोरिसिमाणमनिययं दिवस-निसावुड्ढि-हाणिभावाओ। हीणं तिन्नि मुहुत्तद्धपंचमा माणमुक्कोसं ॥ २०७० ॥[1]

न नियतं मानमस्ति पौरुष्याः। कुतः?। दिवस-निशावृद्धि-हानिभावात्। इदमुक्तं भवति– दिवसस्य रात्रेर्वा चतुर्थो भागः पौरुषी भण्यते। ततश्चेयं दिवसस्य रात्रेर्वा वृद्धि-हानिभ्यां वृद्धा हीना च भवति। तत्र दिवससंबन्धिन्याः पौरुष्याः सर्वहीनं जघन्यमानमिह त्रयो मुहूर्ताः षड् घटिका मकरसंक्रान्तिदिने द्रष्टव्यम्, रात्रिसंबन्धिन्या अपि जघन्यमिदमेव मानम्, केवलं कर्कसंक्रान्तिरजन्यां मन्तव्यम्। उत्कृष्टं तु मानमस्या अर्धपञ्चममुहूर्ता नव घटिका दिवससंबन्धिन्याः कर्कसंक्रान्तौ, रात्रिसंबन्धिन्यास्तु मकरसंक्रान्ताविति ॥ २०७९ ॥

जघन्यायाः पौरुष्या उत्कृष्टायाश्च प्रारभ्य प्रतिदिनं किञ्चिद् वर्धते, किंवा हीयते? इत्याशङ्क्याह—

वुड्ढी[2] वावीसुत्तरसयभागो पइदिणं मुहुत्तस्स। एवं हाणी वि मया अयणादिणभागओ नेया ॥ २०७१ ॥

इह जघन्यपौरुष्याः प्रतिदिनं वृद्धिर्भवति। कियती? इत्याह– मुहूर्तस्य द्वाविंशत्युत्तरशततमो भागः, उत्कृष्टपौरुष्यास्तु प्रतिदिनं हानिर्भवति, साऽपि चैवमेव मता, मुहूर्तस्य द्वाविंशत्युत्तरशततमो भाग इत्यर्थः। इयं च पौरुष्या वृद्धिर्हानिश्चोत्तरायण-दक्षिणायनदिनभागतो ज्ञेया। इदमत्र हृदयम्– षड्भिर्मासैस्तावदुत्तरायणं दक्षिणायनदिनभागतो ज्ञेयं भवति, एवं दक्षिणायनमपि। तत्रोत्तरायणे प्रतिदिनं चतुर्भिः पानीयपलैर्वर्धमानानां दिवसानामुत्कृष्टदिवसे षड् मुहूर्ता वर्धन्ते, रात्रीणां त्वनयैव हान्या हीयमानानां सर्वहीनायां रात्रौ षड् मुहूर्ता हीयन्ते। एवं दक्षिणायनेऽपि, नवरं रात्रेः षड् मुहूर्ता वर्धन्ते, दिवसस्य तु हीयन्त इति व्यत्ययोऽवगन्तव्यः। ततश्चैवं सति षड्भिः षड्भिर्मासैर्दिन-रजन्योर्यथायोग्यं षड् मुहूर्ता वर्धन्ते, हीयन्ते च। मासेन त्वेकस्य मुहूर्तस्य वृद्धि-हानी। सूर्यसंवत्सरस्तु षट्षष्ट्यधिकैस्त्रिभिर्दिनशतैर्भवति। ततश्चैकैकमयनं त्र्यशीत्यधिकादिनशतेनातिक्रामति। मासे तु सूर्यसंबन्धिनि सार्धत्रिंशद् दिनानि भवन्ति। यश्च मासे मुहूर्तो वर्धते, तस्यैतैः सार्धत्रिंशद्दिवसैर्भागो ह्रियते, मुहूर्तस्तु द्विघटिकामानो भवति, अत एकैकस्या अपि घटिकाया एकषष्टिभागाः कल्प्यन्ते। ततो घटिकाद्वय एकषष्टिभागानां द्वाविंशं शतं भवति। सार्धत्रिंशद्दिनमाने च मासे रात्रि-दिनपौ-

1 पौरुषीमानमनियत दिवस-निशावृद्धि-हानिभावात्। हीनं त्रयो मुहूर्ता अर्धपञ्चमा मानमुत्कृष्टम् ॥ २०७० ॥

2 वृद्धिर्द्वाविंशत्युत्तरशतभागः प्रतिदिनं मुहूर्तस्य। एवं हानिरपि मताऽयनदिनभागतो ज्ञेया ॥ २०७१ ॥

कथं पुनः शुद्धो जीवो भावपुरुषः ? इत्याह—

[1]दव्वपुरिसाइभेया वि जं च तस्सेव होंति पज्जाया । तेणेह भावपुरिसो सुद्धो जीवो जिणिंदो व्व ॥ २०९६ ॥

न केवलं यथोक्तनिरुक्तवशाद् भावपुरुषो जीव उच्यते, यस्माच्च द्रव्या-ऽभिलाप-चिह्नादिपुरुषभेदा अपि तस्यैव शुद्धजीवस्य पर्याया भवन्ति । तेनाद्यप्रकृतित्वात् शुद्धो निर्विशेषणो जीव एवेह भावपुरुषः, जिनेन्द्रवदिति ॥ २०९६ ॥

केन पुनः पुरुषेणेहाधिकारः ? इत्याह—

[3]पगयं विसेसओ तेण वेयपुरिसेहिं गणहरेहिं च । विसेसा वि जहासंभवमाउज्जा उभयवग्गे वि ॥ २०९७ ॥

अनेकविधपुरुषप्ररूपणेऽत्र विशेषतः प्रकृतं प्रस्तुतमधिकारस्तेन भावजीवरूपेण जिनेन्द्रेण श्रीन्महावीरेण, तस्यैवार्थतः सामायिकप्रणेतृत्वात्, तथा, सूत्रतस्तत्प्रणेतृभिर्वेदपुरुषैर्गणधरैश्चेहाधिकारः । आह– ननु जिनेन्द्रो यथा भावपुरुषस्तथा सदैव धर्मव्यापारनिरतत्वाद् धर्मपुरुषोऽपि भवति, तथा चिह्नपुरुषोऽपि, पुरुषचिह्नयुक्तत्वात्, एवं गणधरेष्वपि वाच्यम्; ततश्च यथा भावपुरुषेण वेदपुरुषैश्चाधिकारः, तथा धर्मादिपुरुषैरप्यधिकारोऽत्र वक्तुं युज्यत एव, इत्याशङ्क्याह– शेषा अपि धर्मपुरुषादयो यथासंभवं तीर्थकर-गणधरलक्षण उभयवर्गेऽप्यायोज्याः । ततः संभवद्भिर्धर्मपुरुषादिभिरपीहाधिकारो वाच्य इति भावः । इति गाथासप्तकार्थः । तदेवं व्याख्यातं पुरुषद्वारम् ॥ २०९७ ॥

अथ कारणद्वारमभिधित्सुराह—

[4]निक्खेवो कारणम्मी चउव्विहो दुविहु होइ दव्वम्मि । तद्दव्वमन्नदव्वे अहवा वि निमित्त-नेमित्ती ॥२०९८॥

समवाइ असमवाई छव्विह कत्ता य[5] करण कम्मं च । तत्तो य संपयाणापयाण तह संनिहाणे य ॥२०९९॥

इह करोति कार्यमिति कारणम् । तस्य नाम-स्थापना-द्रव्य-भावभेदाच्चतुर्विधो निक्षेपो न्यासः । तत्र नाम-स्थापने सुज्ञाने ।

१ द्रव्यपुरुषादिभेदा अपि यच्च तस्यैव भवन्ति पर्यायाः । तेनेह भावपुरुष शुद्धो जीवो जिनेन्द्र इव ॥ २०९६ ॥ २ घ छ. 'व्यपुरुषचि' ।

३ प्रकृतं विशेषतस्तेन वेदपुरुषैर्गणधरैश्च । विशेषा अपि यथासंभवमायोज्या उभयवर्गेऽपि ॥ २०९७ ॥

४ निक्षेपः कारणे चतुर्विधो द्विविधो भवति द्रव्ये । तद्द्रव्या-ऽन्यद्रव्ये अथवापि निमित्त-नैमित्तिके ॥ २०९८ ॥
समवायि असमवायि षड्विधं कर्ता च करणं कर्म च । ततश्च संप्रदानमपादान तथा संनिधानं च ॥ २०९९ ॥ ५ ज. 'य कम्म करणं च' ।

रुषीणामपि प्रत्येकं द्वाविंशं शतं भवति । अत एतेन द्वाविंशेन शतेन मुहूर्तगतघटिकैकषष्टिभागानां द्वाविंशस्य शतस्य भागे हृत एकैको द्वाविंशशततमो घटिकैकषष्टिभागः समागच्छति । स च प्रतिदिनमेकैकस्या दिन-रात्रिपौरुष्या यथायोगं वर्धते, हीयते चेति । अतः साधूक्तम्– 'वुड्ढी वावीसुत्तर'— इत्यादि ॥ २०७१ ॥



अथवा, प्रकारान्तरेणाप्यस्यार्थस्यावबोधार्थमाह—

[1]उक्कोस-जहण्णाणं जदंतरालमिह पोरिसीणं तं । तेसीयसयविभत्तं वुड्ढिं हाणिं च जाणाहि ॥ २०७२ ॥

उत्कृष्टा नवघटिकाप्रमाणा पौरुषी, जघन्या तु षड्घटिकाप्रमाणेत्युक्तमेव । एतयोश्च जघन्योत्कृष्टयोः पौरुष्योर्यद् घटिकात्रयलक्षणमन्तरालं तदयनगतत्र्यशीतिशतविभक्तं प्रतिदिनं पौरुष्या वृद्धिं हानिं च जानीहि । इदमुक्तं भवति– यदि त्र्यशीतेन दिनशतेन तिस्रो घटिका वर्धन्ते हीयन्ते वा पौरुष्याः, तर्हि प्रतिदिनं तस्याः किं वर्धते हीयते वा ? इत्यस्य जिज्ञासायां घटिकात्रयस्य त्र्यशीतेन भागो ह्रियते, तत एकैका घटिकैकषष्टिभिर्भागैः क्रियते, ततस्त्र्यशीत्यधिकं शतमेकषष्टिभागानां भवति, तस्य च त्र्यशीतेनैव दिनशतेन भागे हृते प्रतिदिनमेकषष्टिभागो वृद्धौ हानौ वा पौरुष्या लभ्यत इति स एवाऽर्थः, अस्याप्येकस्यैकषष्टिभागस्य मुहूर्तद्वाविंशशततमभागरूपत्वादिति । उक्तः प्रमाणकालः ॥ २०७२ ॥

अथ निर्युक्तिकृद् वर्णकालमाह—

[2]पंचण्हं वण्णाणं जो खलु वन्नेण कालओ वण्णो । सो होइ वण्णकालो वण्णिज्जइ जो व जं कालं ॥२०७३॥

शुक्लादीनां पञ्चानां वर्णानां मध्ये यो वर्णेन च्छायया कृष्ण एव वर्णः स भवति वर्णकालः । अथवा, यः कोऽपि जीवादिपदार्थो यत्कालं यस्मिन् काले वर्ण्यते प्ररूप्यते स वर्णनं वर्णस्तत्प्रधानकालो वर्णकालः । यदिवा, शुक्लादिवर्ण एव वर्ण्यते यत्र काले स शुक्लादिवर्णप्ररूपणस्य कालो वर्णकाल इत्यादि स्वधियाऽभ्यूह्य वाच्यमिति ॥ २०७३ ॥

अथ भाष्यम्—

[3]पज्जायकालभेओ वण्णो कालो त्ति वण्णकालोऽयं । नणु एस नामउ च्चिय कालो नानियमतो तस्स ॥२०७४॥

---

१ उत्कृष्ट-जघन्ययोर्यदन्तरालमिह पौरुषीणां तत् । त्र्यशीतिशतविभक्तं वृद्धिं हानिं च जानीहि ॥ २०७२ ॥
२ पञ्चानां वर्णानां यः खलु वर्णेन कालतो वर्णः । स भवति वर्णकालो वर्ण्यते यो वा यत्कालम् ॥ २०७३ ॥
३ पर्यायकालभेदो वर्णः काल इति वर्णकालोऽयम् । नन्वेष नामत एव कालो नानियमतस्तस्य ॥ २०७४ ॥

द्रव्यकारणं तु ज्ञशरीर-भव्यशरीरव्यतिरिक्तमाह–'दुविहु इत्यादि' व्यतिरिक्तद्रव्यकारणविषयो निक्षेपो द्विविधः। कथम्?। 'तद्दव्वमन्नदव्वे त्ति' तद्द्रव्यकारणम्, अन्यद्रव्यकारणं चेत्यर्थः। तस्यैव जन्यस्य पटादेः सजातीयत्वेन संबन्धि द्रव्यं तन्त्वादि तद्द्रव्यम्, तच्च तत् कारणं च तद्द्रव्यकारणम्; तथा, यत् तद्विपरीतं तदन्यद्रव्यकारणं जन्यपटादिविजातीयं वेमादीत्यर्थः। तद्द्रव्यकारणत्वे कार्यकारणयोरेकत्वमिति प्रेर्यस्य परिहारं वक्ष्यति भाष्यकारः। अथवा, अन्यथा व्यतिरिक्तकारणस्यैव द्वैविध्यं– निमित्तकारणं, नैमित्तिककारणं चेति। तत्र कार्यात्मन आसन्नभावेन जनकं निमित्तम्, यथा पटस्यैव तन्तवः, तद्व्यतिरेकेण पटस्यानुत्पत्तेः; तच्च तत् कारणं च निमित्तकारणम्; यथा च तन्तुभिर्विना पटो न भवति तथा तद्गताऽऽतान-वितानादिचेष्टाव्यतिरेकेणापि न भवत्येव, तस्याश्च तच्चेष्टाया वेमादि कारणम्, अतो निमित्तस्येदं नैमित्तिकमिति। अथवा, अन्यथा व्यतिरिक्तकारणस्य द्वैविध्यमित्याह– 'समवायीत्यादि' 'सम्' एकीभावे, अवशब्दोऽपृथक्त्वे, 'अय् गतौ' 'इण् गतौ वा'। ततश्चैकीभावेनापृथग् गमनं समवायः संश्लेषः स विद्यते येषां ते समवायिनस्तन्तवः, यस्मात् तेषु पटः समवैतीति, समवायिनश्च ते कारणं च समवायिकारणम्। तन्तुसंयोगास्तु कारणरूपद्रव्यान्तरधर्मत्वेन पटाख्यकार्यद्रव्यान्तरस्य दूरवर्तित्वादसमवायिनस्त एव कारणमसमवायिकारणम्। आह– ननु तद्द्रव्यादिप्रकारत्रयेऽपि यथोक्तन्यायेनार्थस्याभेद एव, इति किं भेदेनोपन्यासः?। सत्यम्, किन्तु तन्त्रान्तराभ्युपगतसंज्ञान्तरप्रदर्शनपरत्वाददोषः। अथवा, व्यतिरिक्तं द्रव्यकारणं 'छव्विह त्ति' अनुस्वारस्य लुप्तस्य दर्शनात् षड्विधं षट्प्रकारम्। कथम्?। कर्ता कुलाललक्षणस्तावत् कार्यस्य घटादेः कारणम्, तस्य तत्र स्वातन्त्र्येण व्यापारात्। तथा, करणं च मृत्पिण्ड-दण्ड-सूत्रादिकं घटस्य करणम्, साधकतमत्वात्। तथा, क्रियते निर्वर्त्यते यत् तत् कर्म घटलक्षणं तदपि कारणम्। आह– ननु कथमात्मैवात्मनः कारणम्, अलब्धात्मलाभस्य तस्य कारणत्वानुपपत्तेः?। सत्यम्, कुलालादिकारणव्यापृतिक्रियाविषयत्वादुपचारतस्तस्य कारणत्वम्। उक्तं च—

"निर्वर्त्यं वा विकार्यं वा प्राप्यं वा यत् क्रियाफलम्। तद् दृष्टा-ऽदृष्टसत्कारं कर्म कर्तुर्यदीप्सितम्॥ १॥"

तदेवं क्रियाफलत्वेन कार्यस्यापि कारणत्वम्, अन्यथा कुलालादिक्रियावैयर्थ्यप्रसङ्गादिति। मुख्यवृत्त्या वासौ कार्यगुणेन कारणत्वम्। तथा, सम्यक् सत्कृत्य वा प्रयत्नेन दानं यस्मै तत् संप्रदानं– घटग्राहकदेवदत्तादि। तदपि घटस्य कारणम्, तदुद्देशेनैव घटस्य निष्पत्तेः, तदभावे तन्निष्पत्त्ययोगादिति। 'अवयाण त्ति' 'दो अवखण्डने' दानं खण्डनम्, अपसृत्य आ-मर्यादया दानं खण्डनं नियोजनं मृत्पिण्डादेर्यस्मात् तद् मृत्पिण्डापायेऽपि ध्रुवत्वाद् भूमिलक्षणमपादानम्। तदपि कार्यस्य घटस्य कारणम्, तदन्तरेणापि तस्यानुत्पत्तेः। तथा, संनिधीयते स्थाप्यते कार्यं यत्र तत् संनिधानमाधारः, अधिकरणमित्यर्थः। तदपि कार्यस्य कारणम्, आधा-

निद्दिट्ठस्स पसूई सा दव्व-खेत्त-काल-भावेहिं । किं तं च जीवदव्वं पसूयमेयं जओ जह वा ॥ २६ ॥
खेत्ते कम्मि व काले पुरिसविसेसो व भावओ को सो । खेत्ताइतिगं निग्गमभेउ च्चिय छव्विहो जं सो ॥२७॥



**नामं ठवणा दविए खेत्ते काले तवेह भावे य ।**
**एसो उ निग्गमस्स निक्खेवो छव्विहो होइ ॥ १३८ ॥**

दव्वाओ दव्वस्स व विणिग्गमो दव्वनिग्गमो सो य । तिविहो सचित्ताई तिविहाओ संभवो नेओ ॥ १ ॥
पभवो सचित्ताओ भूमरंकुर-पयंग-बप्फाई । किमि-गब्भ-सोणियाई मीसाओ थीसरीराओ ॥ २ ॥
किमि-घुण-घुणचुण्णाई दारुओ जं व निग्गयं जत्तो । दव्वं विगप्पवसओ जहसब्भावो-वयारेहिं ॥ ३ ॥
खेत्तस्स विनिग्गमणं सरूवओ नत्थि तं जमकिरियं । खेत्ताओ खेत्तम्मि वि हवेज्ज दव्वाइनिग्गमणं ॥ ४ ॥
उवयारओ खेत्तस्स निग्गमो लोगनिक्खुडाणं च । लद्धं विनिग्गयं ति य जह खेत्तं राउलाउ त्ति ॥ ५ ॥
कालो वि दव्वधम्मो निक्किरिओ तस्स निग्गमो पभवो । तत्तो च्चिय दव्वाओ पभवइ काले व जं जम्मि ॥६॥
उवयारओ व सरओ विणिग्गओ निग्गओ य तत्तोऽहं । अहवा दुक्कालाओ नरो व बालाइकालाओ ॥ ७ ॥
भावो वि दव्वधम्मो तत्तो च्चिय तस्स निग्गमो पभवो । दव्वस्स व भावाओ विणिग्गमो भावओऽवगमो ॥८॥
रूवाई पोग्गलाओ कसाय-नाणादओ य जीवाओ । निंति पभवंति ते वा तेहिंतो तव्विओगम्मि ॥ ९ ॥
तत्थ पसत्थं मिच्छत्तण्णाणाविरइभावनिग्गमणं । जीवस्स संभवंति य जं सम्मत्तादओ तत्तो ॥ १० ॥
एत्थ उ पसत्थभावप्पसूइमेत्तं विसेसओऽहिगयं । अपसत्थावगमो विय सेसा वि तदंगभावाओ ॥ ११ ॥
वीरो दव्वं खेत्तं महसेणवणं पमाणकालो य । भावो य भावपुरिसो समासओ निग्गमंगाइं ॥ १२ ॥

1. 'पसवो' ।

सामइयं वीराओ महसेणवणे पमाणकाले य । भावपुरिसाहि भावो विणिग्गओ वक्खमाणोऽयं ॥ १३ ॥
इच्चेवमाइं सव्वं दव्वाहीणं जओ जिणस्सेव । तो निग्गमणं वोत्तुं वोच्छं सामाइयस्स तओ ॥ १४ ॥

[1]मिच्छत्ताइतमाओ स निग्गओ जह य केवलं पत्तो ।
जह य पसूयं तत्तो सामइयं तह पवक्खामि ॥ १३९ ॥

[2]जीवे तुह संदेहो पच्चक्खं जं न घिप्पइ घडो व्व । अच्चंतापच्चक्खं च नत्थि लोए खपुप्फं व ॥ १ ॥
न य सोऽणुमाणगम्मो जम्हा पच्चक्खपुव्वयं तं पि । पुव्वोवलद्धसंबंधसरणओ लिंग-लिंगीणं ॥ २ ॥
न य जीवलिंगसंबंधदरिसणमभू जओ पुणो सरओ । तल्लिंगदरिसणाओ जीवे संपच्चओ होज्जा ॥ ३ ॥
नागमगम्मो वि तओ भिज्जइ जं नागमोऽणुमाणाओ । न य कासइ पच्चक्खो जीवो जस्सागमो वयणं ॥४॥
जं चागमा विरुद्धा परोप्परमओ वि संसओ जुत्तो । सव्वप्पमाणविसयाईओ जीवो त्ति तो बुद्धी ॥ ५ ॥
गोयम ! पच्चक्खु च्चिय जीवो जं संसयाइविन्नाणं । पच्चक्खं च न सज्झं जह सुह-दुक्खा सदेहम्मि ॥६॥
कयवं करेमि काहं वाहमहं पच्चया इमाउ य । अप्पा सप्पच्चक्खो तिकालकज्जोवएसाओ ॥ ७ ॥
कह पडिवण्णमहं ति य किमत्थि नत्थि त्ति संसओ कह णु ? । सइ संसयम्मि वायं कस्साहंपच्चओ जुत्तो ? ॥८॥
जइ नत्थि संसइ च्चिय किमत्थि नत्थि त्ति संसओ कस्स ? । संसइए व सरूवे गोयम ! किमसंसयं होज्जा ? ॥९॥
गुणपच्चक्खत्तणओ गुणी वि जीवो घडो व्व पच्चक्खो । घडओ वि घेप्पइ गुणी गुणमेत्तग्गहणओ जम्हा ॥१०॥
अन्नोऽणन्नो व गुणी होज्ज गुणेहिं, जह नाम सोऽणन्नो । ननु गुणमेत्तग्गहणे घेप्पइ जीवो गुणी सक्खं ॥ ११ ॥
अह अन्नो तो एवं गुणिनो न घडादओ वि पच्चक्खा । गुणमेत्तग्गहणाओ जीवम्मि कओ वियारोऽयं ? ॥१२॥

१ 'जह मिच्छत्त' । २ इत. पूर्वं "पुथ-किर देसित्ता साहूणं अडविविप्पणट्ठाण । सम्मत्तपढमलभो बोधव्वो वद्धमाणस्स" इतीयं निर्युक्तिगाथैकत्रादर्शे ।

रतया तस्यापि तत्रोपयोगात् । तच्च घटस्य चक्रम्, तस्यापि भूमिः, तस्याप्याकाशम् ॥ इति निर्युक्तिगाथाद्वयार्थः ॥२०९८॥२०९९॥

अथैतद् व्याचिख्यासुर्भाष्यकारः प्राह—

[1]तद्दव्वकारणं तंतवो पडस्सेह जेण तम्मयया । विवरीयमन्नकारणमिट्ठं वेमादओ तस्स ॥ २१०० ॥

यदात्मकं कार्यं दृश्यते तदिह तद्द्रव्यकारणम्– तस्य कार्यद्रव्यस्य सजातीयत्वेन संबन्धि कारणं तद्द्रव्यकारणमित्यर्थः, यथा पटस्य तन्तवः, येन तन्मयता तन्त्वात्मकता पटस्य । उक्तविपरीतं तु यत् तदात्मकं कार्यं न भवति तदन्यद्रव्यकारणमिष्टम्, यथा तस्यैव पटस्य वेमादय इति ॥ २१०० ॥

अत्र परः प्रेरयन्नाह—

[2]जइ तं तस्सेव मयं हेऊ णणु कज्जकारणेगत्तं । न य तं जुत्तं ताइं जओऽभिहाणाइभिन्नाइं ॥ २१०१ ॥

ननु यदि तत् तस्यैव पटस्य संबन्धि तन्तुद्रव्यं तस्यैव च पटस्य हेतुः कारणं मतं संमतम्, तन्नु कार्य-कारणयोरेकत्वं प्राप्नोति, ततश्च न तन्तु-पटयोः कार्यकारणभावः, एकत्वात्, पटस्वरूपवदिति परस्याभिप्रायः। न च तत्कार्य-कारणयोरेकत्वं युक्तम्, यतस्ते कार्य-कारणे अभिधानादिना भिन्ने वर्तेते, आदिशब्दात् संख्या-लक्षण-कार्यपरिग्रहः; तथाहि– 'पटः' 'तन्तवः' इत्यभिधानभेदः, 'एकः पटः' 'बहवस्तन्तवः' इति संख्याभेदः, लक्ष्यतेऽनेनेति लक्षणं स्वरूपम्, तच्चान्यादृशं पटस्य, अन्यादृशं च तन्तूनामिति लक्षणभेदः, शीतत्राणादिकार्यः पटः, बन्धनादिकार्याश्च तन्तव इति कार्यभेदः । ततश्च भिन्ने पटतन्तुलक्षणे कार्य-कारणे, अभिधानादिभेदात्, घट-पटादिवदिति । तथा च सति भवदभिप्रायेण यत् तयोरेकत्वमापतति, तदयुक्तमेवेति ॥ २१०१ ॥

अत्रोत्तरमाह—

[3]तुल्लोऽयमुवालंभो भेए वि न तंतवो घडस्सेव । कारणमेगंते वि य जओऽभिहाणादओ भिन्ना ॥ २१०२ ॥

यस्तन्तु-पटयोरभेदपक्षे कार्य-कारणभावाभावप्रसङ्गलक्षण उपालम्भस्तव चेतसि वर्तते, स भेदेऽपि भेदपक्षेऽपि तुल्यः समान एव

१ तद्द्रव्यकारण तन्तव' पटस्येह येन तन्मयता । विपरीतमन्यकारणमिष्टं वेमादयस्तस्य ॥ २१०० ॥

२ यदि तत् तस्यैव मत हेतुर्ननु कार्य-कारणैकत्वम् । न च तद् युक्तं ते यतोऽभिधानादिभिन्ने ॥ २१०१ ॥

३ तुल्योऽयमुपालम्भो भेदेऽपि न तन्तवो घटस्येव । कारणमेकान्तेऽपि च यतोऽभिधानादयो भिन्नाः ॥ २१०२॥

अथ प्रत्ययद्वारमाह—

[1]पच्चयनिक्खेवो खलु दव्वम्मी तत्तमासगाईओ । भावम्मि ओहिमाई तिविहो पगयं तु भावेणं ॥२१३१॥
केवलनाणि त्ति अहं अरिहा सामाइयं परिकहेइ । तेसिं पि पच्चओ खलु सव्वण्णू तो निसामिंति ॥२१३२॥

प्रत्याययतीति प्रत्ययः, प्रत्ययनं वा प्रत्ययस्तन्निक्षेपस्तन्न्यासः । खलुशब्दस्यापिशब्दार्थत्वात् सोऽपि तन्निक्षेपः कारणनिक्षेपवद् नाम-स्थापनादिभेदाच्चतुर्विधः । तत्र नाम-स्थापने प्रतीते । द्रव्ये द्रव्यविषयः प्रत्ययो ज्ञशरीर-भव्यशरीररूपः सुगमः । तद्व्यतिरिक्तस्तु तप्तमाषकादिः, आदिशब्देन घटतन्दुलचर्वणादिदिव्यपरिग्रहः । द्रव्यं च तत् प्रत्याय्य प्रतीतिहेतुत्वात् प्रत्ययश्च द्रव्यप्रत्ययस्तप्तमाषकादिरेव, तज्जो वा प्रत्याय्यपुरुषगतप्रत्ययः । 'भावम्मि त्ति' भावे भावप्रत्यये विचार्येऽवध्यादिस्त्रिविधो भावप्रत्ययः । अवधि-मनःपर्याय-केवलज्ञानत्रयलक्षणो बाह्यलिङ्गानपेक्ष एव प्रत्याययति, अतस्तात्त्विकप्रत्ययत्वाद् भावप्रत्ययस्त्रिविध इत्यर्थः । मति-श्रुते तु बाह्यलिङ्गं करणमपेक्ष्य प्रत्याययतः, न साक्षात्, अतः किलात्र न विवक्षिते । प्रकृतं प्रस्तुतोपयोगस्तु सामायिकमङ्गीकृत्य भावेन भावप्रत्ययेनेति । अत एव 'केवलज्ञान्यहम्' इति स्वकीयादेव केवललक्षणाद् भावप्रत्ययादर्हन् साक्षादेव सामायिकार्थमुपलभ्य सामायिकं परिकथयति, तेषामपि श्रोतॄणां गणधरादीनां हृद्गताशेषसंशयपरिच्छित्त्या 'सर्वज्ञः' इति प्रत्ययो बोधनिश्चयो भवति । ततो यस्मात् सर्वज्ञप्रत्ययात् ते निशमयन्ति शृण्वन्ति सामायिकम्, अत एव यत् कैश्चिदुच्यते—

"सर्वज्ञोऽसाविति ह्येतत् तत्कालेऽपि बुभुत्सुभिः । तज्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथम् ? ॥ १ ॥"

इत्यादि, तद् व्युदस्तं भवति, अन्यथा 'चतुर्वेदोऽयम्' इत्यादिलोकव्यवहारानुपपत्तेः । इति निर्युक्तिगाथाद्वयार्थः ॥२१३१॥२१३२॥

अथ भाष्यम्—

[2]दव्वस्स दव्वओ वा दव्वेण व दव्वपच्चओ नेओ । तव्विवरीओ भावे सो वि हु नाणाइओ तिविहो ॥२१३३॥

---

१ प्रत्ययनिक्षेपः खलु द्रव्ये तप्तमाषकादिक । भावेऽवध्यादिस्त्रिविध प्रकृतं तु भावेन ॥ २१३१ ॥
केवलज्ञानीत्यहमर्हन् सामायिक परिकथयति । तेषामपि प्रत्यय खलु सर्वज्ञस्ततो निशमयन्ति ॥ २१३२ ॥
२ द्रव्यस्य द्रव्यतो वा द्रव्येण वा द्रव्यप्रत्ययो ज्ञेय । तद्विपरीतो भावे सोऽपि खलु ज्ञानादिकस्त्रिविधः ॥ २१३३ ॥

वर्तेते; तथाहि– न तन्तवः पटस्य कारणम्, भिन्नत्वात्, घटस्येवेति । किञ्च, एत एकत्वेऽपि वस्तूनामभिधानादयो भिन्ना दृश्यन्त एव, ततः 'अनैकान्तिको हेतुः' इति शेषः; तथाहि– घटस्य रूपादीनां चैकत्वं लोके प्रतीतम्, अथचाभिधानादयो भिन्ना एव, तद्यथा– 'घटः' 'रूपादयः' इत्यभिधानभेदः; 'एको घटः' 'बहवो रूपादयः' इति संख्याभेदः; पृथुबुध्नोदराद्याकारलक्षणो घटः, रक्तत्वादिलक्षणा रूपादय इति लक्षणभेदः; जलाहरणादिक्रियाकारको घटः, रङ्गाधानादिहेतवश्च रूपादय इति कार्यभेदः । ततोऽभिधानादिभेदाद् भेद इत्यनैकान्तिको हेतुः, यत एतदपि शक्यते वक्तुम्– अभिन्ने पट-तन्त्वादिलक्षणे कार्य-कारणे, अभिधानादिभेदात्, घट-रूपादिवदिति ॥ २१०२ ॥

आह– यद्यैकत्ववद् भेदेऽपि कार्य-कारणयोस्तुल्य उपालम्भः, तर्हि कथं नाम लोकप्रसिद्धस्तन्तु-पटादीनां कार्य-कारणभावः सिध्यति ? इति भवन्त एव कथयन्तु, इत्याह—

जं[1] कज्ज-कारणाइं पज्जाया वत्थुणो जओ ते य । अन्नेऽणन्ने य मया तो कारण-कज्जभयणेयं ॥ २१०३ ॥

यद् यस्माद् घट-मृत्पिण्डादिलक्षणे कार्य-कारणे वस्तुनः पृथिव्यादेः पर्यायौ वर्तेते, तौ च घट-मृत्पिण्डलक्षणौ पृथ्वीपर्यायौ परस्परं यतो यस्मादन्यावनन्यौ च मतौ । तत्र संख्या-संज्ञा-लक्षणादिभेदादन्यत्वम्, मृदादिरूपतया सत्त्व-प्रमेयत्वादिभिश्चानन्यत्वम् । तस्मात् कार्य-कारणयोरियमन्या-ऽनन्यत्वलक्षणा भजना द्रष्टव्या । ततश्च कथञ्चित् तयोः परस्परं भेदे, कथञ्चित्त्वभेदे कार्य-कारणभाव इति भावार्थः ॥ २१०३ ॥

एतदेवाह—

नत्थि[2] पुढवीविसिट्ठो घडो त्ति जं तेण जुज्जइ अणन्नो । जं पुण घडो त्ति पुव्वं न आसि पुढवी तओ अन्नो ॥२१०४॥

पृथिव्या मृत्तिकाया विशिष्टो व्यतिरिक्तो तन्मयो घटो नास्ति न दृश्यते यद् यस्मात्, तेन तस्माद् युज्यतेऽनन्यो मृत्तिकातोऽभिन्नः । यत् पुनः 'घटः' इति व्यक्तेन रूपेण पूर्वं घटनिष्पत्तेः प्राग् नासीद् नाभूत् किन्तु पृथिवी मृत्तिकैवासीत्, अन्यथा सर्वथैकत्वे

1 यत् कार्य-कारणे पर्यायौ वस्तुनो यतस्तौ च । अन्यावनन्यौ च मतौ ततः कारण-कार्यभजनेयम् ॥ २१०३ ॥

2 नास्ति पृथिवीविशिष्टो घट इति यत् तेन युज्यतेऽनन्यः । यत् पुनर्घट इति पूर्वं नासीत् पृथिवी ततोऽन्य. ॥ २१०४ ॥

प्रत्याय्यपुरुषलक्षणस्य प्रत्ययः प्रतीतिर्द्रव्यप्रत्ययः, तथा, द्रव्यात् तप्तमापकादेः, द्रव्येण वा घटादिना प्रत्ययो द्रव्यप्रत्ययो ज्ञेयः। यस्तु बाह्यद्रव्याद् बाह्यद्रव्येण वा न क्रियते, किन्तु तद्विपरीतस्तन्निरपेक्ष एव साक्षादुपलम्भाद् भवति स भावरूपः प्रत्ययो भावप्रत्ययः। स चावधि-मनःपर्याय-केवलज्ञानभेदात् त्रिविध इति। अनेनैव च भावप्रत्ययेनेहाधिकारः ॥ २१३३ ॥

तथा चाह—

[1]केवलनाणित्तणओ अप्प च्चिय पच्चओ जिणिंदस्स। तप्पच्चक्खत्तणओ तत्तो च्चिय गोयमाईणं ॥२१३४॥

जिनेन्द्रस्य तीर्थकरस्य केवलज्ञानित्वात् सामायिकार्थं साक्षादुपलभ्य कथयत आत्मैव प्रत्ययो नान्यः, केवलज्ञानात्मना भावप्रत्ययावष्टम्भेनैव तस्य सामायिकप्ररूपणादिति। गौतमादीनामपि श्रोतॄणां तत एव केवलज्ञानलक्षणाद् भावप्रत्ययात् 'सामायिक-श्रवणम्' इति गम्यते। कुतः? इत्याह– तस्य केवलज्ञानिनः प्रत्यक्षत्वं तत्प्रत्यक्षत्वं तस्मात्। इदमुक्तं भवति– सर्वसंशयपरिच्छेदादिना 'केवलज्ञान्यसौ' इत्यनुभवप्रत्यक्षद्वारेणैव गौतमादयोऽवगच्छन्त्येव। ततस्तेषामपि वस्तुतः केवलज्ञानलक्षणभावप्रत्ययादेव सामायिकश्रवणं प्रवर्तत इति ॥ २१३४ ॥

आह– ननु कथमवध्यादिरेव त्रिविधो भावप्रत्ययः, यावता मति-श्रुते अपि प्रत्यायनफलत्वात् कथं न भावप्रत्ययः? इत्याह—

[2]जेणाइंदियमिट्ठं सामइयं तोऽवहाइविसयं तं। न उ मइ-सुयपच्चक्खं जं ताइं परोक्खविसयाइं ॥२१३५॥

येन यस्मात् कारणाज्जीवपर्यायत्वात्, जीवस्य चामूर्तत्वादतीन्द्रियमिन्द्रियविषयो न भवति सामायिकम्, इतीष्टं तत्त्ववेदिनाम्, तस्मादवध्यादिज्ञानानामेव तद्विषयः। मति-श्रुतप्रत्यक्षं तु तद् न भवति, यद् यस्मात् ते मति-श्रुते परोक्षार्थविषये, इन्द्रियद्वारेणैवोत्पत्तेरिति ॥ २१३५ ॥

अत्र प्रेरकः प्राह—

[3]जुत्तमिह केवलं चेव पच्चओ नोहि-माणसं नाणं। पोग्गलमेत्तविसयओ सामाइयारूवया जं च ॥२१३६॥

१ केवलज्ञानित्वत आत्मैव प्रत्ययो जिनेन्द्रस्य। तत्प्रत्यक्षत्वतस्तत एव गौतमादीनाम् ॥ २१३४ ॥
२ येनातीन्द्रियमिष्टं सामायिकं ततोऽवध्यादिविषयं तत्। न तु मति-श्रुतप्रत्यक्षं यत् ते परोक्षविषये ॥ २१३५ ॥
३ युक्तमिह केवलमेव प्रत्ययो नावधि-मानसे ज्ञाने। पुद्गलमात्रविषयतः सामायिकारूपता यच्च ॥ २१३६ ॥

पृथिवीकालेऽपि घटो दृश्येतेति भावः, ततस्तस्माज्ज्ञायते– पृथिवीतोऽन्यो घट इति । एवं यथा मृद्-घटयोरन्या-ऽनन्यत्वमेव, एवं सर्वत्र कार्य-कारणयोस्तद् भावनीयमिति ॥ २१०४ ॥

'अहवा वि निमित्त-नेमित्ती' इत्येतद् व्याचिख्यासुराह—

[1]जह तंतवो निमित्तं पडस्स वेमादओ तहा तेसिं । जं चेट्ठाइनिमित्तं तो ते पडयस्स नेमित्तं ॥ २१०५ ॥

यथा तन्तवः पटस्य निमित्तं कारणं तथा तेनैव प्रकारेण यस्मात् तेषां तन्तूनामातान-वितानादिचेष्टाया निमित्तं वेमादयस्ततस्ते निमित्तस्येदं नैमित्तिकं कारणं पटस्य भवतीति ॥ २१०६ ॥

'[3]समवाइ असमवाई' इत्येतद्विवरणायाह—

[4]समवाइकारणं तंतवो पडे जेण ते समवयंति । न समेइ जओ कज्जे वेमाइ तओ असमवाई ॥ २१०६ ॥

समवायिकारणं तन्तवः पटस्य येन ते समवयन्ति पटे, येन पटस्तेषु समवेतः समुत्पद्यत इतीह तात्पर्यम्, 'इह तन्तुषु पटः' इत्येवं वैशेषिकैरभ्युपगमात् । वेमादि पुनः पटाख्ये कार्ये न समवैति न संश्लिष्यते, अतोऽसमवायिकारणं तदिति ॥ २१०६ ॥

वैशेषिकसिद्धान्तेऽपि मतभेदमुपदर्शयन्नाह—

[5]वेमादओ निमित्तं संजोगा असमवाई केसिंचि । ते जेण तन्तुधम्मा पडो य दव्वंतरं जेण ॥ २१०७ ॥

दव्वंतरधम्मस्स य न जओ दव्वंतरम्मि समवाओ । समवायम्मि य पावइ कारण-कज्जेगया जम्हा ॥२१०८॥

इह केषाञ्चिद् वैशेषिकविशेषाणां मतेन वेमादयः, आदिशब्दात् सजातीया-ऽतज्जातीयतुरी-दिक्-कालादयश्च पटस्य निमित्तं निमित्तकारणम्, न त्वसमवायिकारणम्, तन्तुसंयोगमात्रनिमित्तत्वेन तन्तुलक्षणकारणद्रव्यानाश्रितत्वात् तेषामित्यभिप्रायः । के पुनस्तर्ह्यसमवायिकारणम् ? इत्याह— संयोगास्तन्तुगुणास्तन्तुधर्मा इत्यर्थः, तन्तुलक्षणकारणाश्रितत्वात् ; तथा चाह– ते तन्तु-

१ गाथा २०९८ । २ यथा तन्तवो निमित्तं पटस्य वेमादयस्तथा तेषाम् । यच्चेष्टादिनिमित्तं ततस्ते पटस्य नैमित्तिकम् ॥ २१०५ ॥
३ गाथा २०९९ । ४ समवायिकारणं तन्तव. पटे येन ते समवयन्ति । न समवैति यतः कार्ये वेमादि ततोऽसमवायि ॥ २१०६ ॥
वेमादयो निमित्त सयोगा असमवायिन केषाञ्चित् । ते येन तन्तुधर्माः पटश्च द्रव्यान्तरं येन ॥ २१०७ ॥
५ द्रव्यान्तरधर्मस्य च न यतो द्रव्यान्तरे समवाय. । समवाये च प्राप्नोति कारण-कार्यैकता यस्मात् ॥ २१०८ ॥

ननु यद्येवम्, तर्हि जीवपर्यायत्वादमूर्तत्वेन सामायिकं केवलज्ञानस्यैव विषयः। अतस्तदेवैकं भावप्रत्ययो युक्तम्, न त्ववधि-मनःपर्यायज्ञाने, तयोः पुद्गलमात्रविषयत्वात्– रूपिद्रव्यविषयत्वादित्यर्थः। सामायिकमपि पौद्गलिकं भविष्यति, न, इत्याह– यद् यस्माच्चारूपताऽमूर्तता सामायिकस्य, जीवपर्यायत्वादित्युक्तमेवेति ॥ २१३६ ॥

सूरिराह—

[1]जं लेसापरिणामो पायं सामाइयं भवत्थस्स । तप्पच्चक्खत्तणओ तेसिं तो तं पि पच्चक्खं ॥ २१३७ ॥

यद् यस्माद् भवस्थस्य जन्तोः संबन्धि प्रायो द्रव्यलेश्याजनित एव परिणामोऽध्यवसायः सामायिकम्। सिद्धस्यालेश्यापरिणामोऽपि सम्यक्त्वसामायिकं भवति, अतस्तद्व्यवच्छेदार्थं भवस्थग्रहणम्। भवस्थस्याप्ययोगिकेवलिनोऽलेश्यापरिणामरूपे अपि सम्यक्त्व-चारित्रसामायिके भवतः, ततस्तन्निरासार्थं प्रायोग्रहणम्, यस्मात् प्रायो द्रव्यलेश्याजनित एव परिणामो भवस्थस्य सामायिकम्। 'तो तं पच्चक्खं ति' ततस्तदपि सामायिकं प्रत्यक्षम्। केषाम्? इत्याह– 'तेसिं ति' तेषामवधि-मनःपर्यायज्ञानिनाम्। कुतः? इत्याह– 'तप्पच्च-क्खत्तणउ त्ति' तासां द्रव्यलेश्यानां प्रत्यक्षत्वं तत्प्रत्यक्षत्वं तस्मात् तत्प्रत्यक्षत्वात्। इदमुक्तं भवति– अवधि-मनःपर्यायज्ञानिनोऽपि सामायिकपरिणामजनकानि लेश्याद्रव्याणि साक्षात् पश्यन्ति। ततस्तद्द्वारेण तज्जनितपरिणामरूपं सामायिकमपि तेषां प्रत्यक्षमुच्यते। मति-श्रुते तु साक्षाद् न किञ्चित् पश्यत इत्येतावता भेदेन तयोर्भावप्रत्यक्षत्वं नोक्तमिति ॥ २१३७ ॥

एवमप्यन्यदनिष्टमापादयन्नाह परः—

[2]ओहाइपच्चयं चिय जइ तं न सुयं पि पच्चओ पत्तो । पच्चक्खनाणिवज्जस्स तेण वयणं न सद्धेयं ॥२१३८॥

ननु यद्युक्तन्यायेनावध्यादिज्ञानत्रयप्रत्ययमेव सामायिकम्, ततः श्रुतज्ञानमपि हन्त! न प्रत्ययः प्राप्तः। मा प्रापत्, किं नः क्षूयते? इति चेत्। उच्यते– तेन ततः प्रत्यक्षमवधि-मनःपर्यय-केवलरूपं ज्ञानं येषां ते प्रत्यक्षज्ञानिनस्तद्वर्जस्य तान् वर्जयित्वाऽन्यस्य कस्यापि वचनं न श्रद्धेयं प्राप्नोति। न चैतदस्ति, चतुर्दशपूर्वधरादिवचनस्य प्रमाणत्वेनोक्तत्वादिति ॥ २१३८ ॥

अत्रोत्तरमाह—

---

१ यल्लेश्यापरिणामः प्राय सामायिकं भवस्थस्य। तत्प्रत्यक्षत्वतस्तेषां ततस्तदपि प्रत्यक्षम् ॥ २१३७ ॥
२ अवध्यादिप्रत्ययमेव यदि तद् न श्रुतमपि प्रत्यय-प्राप्त। प्रत्यक्षज्ञानिवर्जस्य तेन वचन न श्रद्धेयम् ॥ २१३८ ॥

संयोगा येन कारणेन तन्तुधर्माः, अतो निमित्तकारणं न भवति, तद्विलक्षणरूपत्वात्। भवन्तु तर्हि समवायिकारणम्, तन्तुवत् तेषामपि पटे समवेतत्वात्। नैवम्, यतस्तन्तुद्रव्याद् द्रव्यान्तरं पटः, तस्माच्च द्रव्यान्तरं तन्तवः, 'द्रव्याणि द्रव्यान्तरमारभन्ते, गुणाश्च गुणान्तरम्' इति सिद्धान्तादिति। ततः किम्? इत्याह– द्रव्यान्तरधर्मस्य च यतो न द्रव्यान्तरे समवायः, शीतादीनामिव हुतभुजि, यस्मात् तन्तुधर्माणां तत्संयोगानां पटे द्रव्यान्तरे समवाय इष्यमाणे पट-तन्तुलक्षणयोः कार्य-कारणयोरेकता प्राप्नोति, इतरेतरगुणसमवायात्। ततश्च यथा पटधर्माः शुक्लादयः पटे समवेतत्वात् तदव्यतिरिक्ताः सन्तो न पटस्य कारणम्, एवं तन्तुसंयोगा अपि न तत्कारणं स्युः, एकत्वे कार्यकारणभावायोगादिति। तदेवं वैशेषिकाः कार्य-कारणयोरेकत्वं कथमपि नेच्छन्ति ॥२१०७॥२१०८॥

आचार्यस्तु जैनत्वात् स्याद्वादितया कारणात् कार्यं भिन्नमभिन्नं च पश्यन्नाह—

जह तंतूणं धम्मा संजोगा तह पडो वि सगुणा व्व। समवायाइत्तणओ दव्वस्स गुणादओ चेवं ॥२१०९॥

अभिहाण-बुद्धि-लक्खणभिन्ना वि जहा सदत्थओऽणन्ने। दिक्-कालाइविसेसा तह दव्वाओ गुणाईआ॥२११०॥

उवयारमेत्तभिन्ना ते चेव जहा तहा गुणाईआ। तह कज्जं कारणओ भिन्नमभिन्नं च को दोसो?॥२१११॥

ननु यथा तन्तूनां धर्मा वर्तन्ते, के?, तत्संयोगाः, तथा पटोऽपि तन्तूनां धर्म एव, यथा तेषामेव तन्तूनां स्वगुणाः शुक्लादयस्तद्धर्मः। कुतः?। समवायादित्वात्। इह यो यत्र समवेतः स तस्य धर्म एव, यथा तन्तूनां स्वगुणाः शुक्लादयस्तद्धर्मः, समवेतश्च तन्तुषु पटः। तस्मात् तद्धर्मः पटः। यथा च तन्तूनां धर्मः पट एवं द्रव्यस्य गुणादयोऽपि गुण कर्म-सामान्य-विशेष-समवाया अपि धर्म इत्यर्थः। यदि नाम तन्तूनां धर्मः पटः, द्रव्यस्य वा गुणादयो धर्मः, तथापि प्रस्तुते कारणात् कार्यस्य भेदाभेदे किमायातम्? इत्याह– 'अभिहाणेत्यादि' यथा दिक्-काला-ऽऽत्मादयो विशेषा अभिधान-बुद्धि-लक्षणादिभिर्भिन्ना अपि, संश्चासावर्थश्च सदर्थः सत्तासामान्यमित्यर्थः, तस्मात् सत्त्व-ज्ञेयत्व-प्रमेयत्वादिभिरनन्येऽभिन्नाः, तथा तेनैव प्रकारेण द्रव्याद् गुण-कर्म-सामान्य-समवायादयोऽनन्येऽभेदवन्तः। इदमुक्तं भवति– दिक्-कालादीनामन्यदभिधानम्, अन्यच्च सामान्यस्य; अन्यादृशी दिगादिषु बुद्धिः, अन्यादृशी च सत्ता-

१ यथा तन्तूना धर्मा सयोगास्तथा पटोऽपि स्वगुणा इव। समवायादित्वतो द्रव्यस्य गुणादयश्चैवम् ॥ २१०९ ॥
अभिधान-बुद्धि-लक्षणभिन्ना अपि यथा सदर्थतोऽनन्ये। दिक्-कालादिविशेषास्तथा द्रव्याद् गुणादिका. ॥ २११० ॥
उपचारमात्रभिन्नास्त एव यथा तथा गुणादिकाः। तथा कार्यं कारणतो भिन्नमभिन्नं च को दोष.? ॥ २१११ ॥

[1]सुयमिह सामइयं चिय पच्चइयं तं जओ य तव्वयणं । पच्चक्खनाणिणो च्चिय पच्चायणमेत्तवावारं ॥२१३९॥

ननु श्रुतं श्रुतज्ञानं यत् त्वया गणधरादिसम्बद्धं प्रत्ययत्वेन गीयते, तदिह श्रुतसामायिकमेव, सामायिकहेतुत्वात्, न पुनरन्यत् किञ्चित् । तच्च प्रत्ययिकं प्रतीयतेऽर्थो यस्मादसौ प्रत्ययोऽवध्यादिज्ञानत्रयलक्षणः स प्रत्यायकत्वेन यस्यास्तीति प्रत्ययिकं सर्वाभिलाप्यार्थगोचरं सर्वद्रव्यासर्वपर्यायविषयं श्रुतज्ञानमित्यादिरूपेण केवलादिज्ञानत्रयप्रत्याय्यं, न तु केवलादिज्ञानत्रयवत् स्वयमेव तत्प्रत्यय इत्यर्थः, ततः कथमत्र भावप्रत्ययत्वेन तदधिक्रियते ? । अथ वचनरूपं द्रव्यश्रुतं त्वया प्रत्ययोऽभिधीयते । तदप्ययुक्तम् । कुतः ? इत्याह– 'जं तओ य तव्वयणमित्यादि' यतश्च तस्य प्रत्यक्षज्ञानिनो व्याख्याविधिप्रवृत्तस्य वचनं तद्वचनम् । कथंभूतम् ? इत्याह– प्रत्यक्षज्ञानिन एव प्रत्यायनमात्रमेव परावबोधनमात्रमेव व्यापारो यस्य तत् प्रत्यायनमात्रव्यापारम् । अतः केवलिप्रयुक्तत्वेन श्रद्धीयमानत्वात् तदपि प्रत्ययः, न तु केवलादिवत् स्वयमेवेति ॥ २१३९ ॥

यद्येवम्, तर्हि किमिह स्थितम् ?– किं श्रुतं सर्वथैव प्रत्ययत्वेन नेहाधिकर्तव्यम् ? इत्याह—

[2]ओहाइपच्चओ त्ति य भणिए तो तं पि पच्चओऽभिहियं । ओहाइतिगं च कहं तदभावे पच्चओ होज्जा ? ॥२१४०॥

ततस्तदपि श्रुतं प्रत्ययोऽभिहितं प्रत्ययत्वेनाऽत्राधिकृतं भवति । किं साक्षात् ?। नैवम्, सामर्थ्यात् । कथम् ? इत्याशङ्क्याह– 'अवध्यादिस्त्रिविधोऽत्र प्रत्ययोऽधिक्रियते' इति भणितेऽर्थापत्तेः श्रुतमपि प्रत्ययो गम्यते । किं पुनस्तदन्तरेण नोपपद्यते ? इत्याह– अन्यथा तदभावे श्रुताभावेऽवध्यादि ज्ञानत्रयमपि कथं प्रत्ययो भवेत् ? । इदमुक्तं भवति– 'अवध्यादित्रयं प्रत्ययः' इति द्रव्यश्रुतेनैव परस्य प्रत्याय्यते, तदभावे त्ववध्यादीनि मूकत्वादात्मनः प्रत्ययत्वं परस्य प्रतिपादयितुं न शक्नुयुः, न चाप्रतिपादितं तत्प्रत्ययत्वं सिध्येत्, द्रव्यश्रुतमपि चोपचारात् श्रुतज्ञानेऽन्तर्भवति; अतोऽवध्यादिप्रत्ययत्वसाधकत्वात् श्रुतस्यापीह प्रत्ययत्वमवगन्तव्यम्; उक्तं च,—

" [3]सुयनाणे उ निउत्तं केवले तयणतरं । अप्पणो य परेसिं च जम्हा त परिभावगं ॥ १ ॥"

इति । तदेवमवध्यादयस्त्रयः प्रत्ययाः साक्षादुक्ताः, श्रुतप्रत्ययस्तु सामर्थ्यादभिहितः ॥ २१४० ॥

---

१ श्रुतमिह सामायिकमेव प्रत्ययिकं तद् यतश्च तद्वचनम् । प्रत्यक्षज्ञानिन एव प्रत्यायनमात्रव्यापारम् ॥ २१३९ ॥

२ अवध्यादिप्रत्यय इति च भणिते ततस्तदपि प्रत्ययोऽभिहितम् । अवध्यादित्रिकं च कथं तदभावे प्रत्ययो भवेत् ? ॥ २१४० ॥

३ श्रुतज्ञाने तु नियुक्तं केवले तदनन्तरम् । आत्मनश्च परेषां च यस्मात् तत् परिभावकम् ॥ १ ॥

सामान्ये; अन्यद् दिगादीनां लक्षणं स्वरूपम्, अन्यादृशं च सत्तासामान्यस्य; इत्येवमभिधानादिवैलक्षण्याद् यथा भिन्ना अपि दिक्-कालादयः सत्तासामान्यात् सत्त्व-ज्ञेयत्वादिभिरभिन्नाः, तथा द्रव्यादपि तन्त्वादिशुक्लगुणादयोऽभिधानादिभिर्भिन्ना अपि सत्त्व-ज्ञेयत्वादिभिरभिन्ना इति । यद्यभिन्नास्तर्हि भेदः कथम् ? इत्याह– 'उवयारेत्यादि' ते चैव दिगादयो यथोपचारमात्रतः सत्तासामान्याद् भिन्नास्तथा गुणादयोऽपि द्रव्याद् भिन्नाः । इदमुक्तं भवति– यथा सत्तासामान्यादभिन्नेष्वपि दिगादिष्वभिधानादिभेदाद् भेद उपचर्यते, एवं द्रव्याद् गुणादीनामपि; तथाहि– प्रभातसमये मन्दमन्दप्रकाशेऽविरलपत्रनिचिततरुशाखानिलीनबलाकायाः पत्रविवरेण केनापि 'किञ्चिच्छुक्लमुपलभ्यते' इत्येवं शुक्लत्वं निश्चीयते, न तु बलाका । एतच्च गुण-गुणिनोः कथञ्चिद् भेदमन्तरेण नोपपद्यते, एकान्ताभेदे गुणग्रहणे गुणिनोऽवश्यं ग्रहणप्रसङ्गात् । तस्माद् द्रव्याद् गुणादीनां कथञ्चिद् भेदः, कथञ्चित् त्वभेद इति । तथा तेनैवोक्तप्रकारेण कारणात् कार्यमभिधानादिभेदाद् भिन्नं सत्त्व-ज्ञेयत्वादिभिस्त्वभिन्नं यदि स्यात्, तर्हि को दोषः, येन वैशेषिकादयो भेद एव कार्यकारणभावमिच्छन्ति ? इति ॥ २१०९ ॥ २११० ॥ २१११ ॥

अथ षड्विधं व्यतिरिक्तकारणं व्याचिख्यासुराह—

कारणमहवा छद्धा तत्थ सतंतो त्ति कारणं कत्ता । कज्जपसाहगतमं करणम्मि उ पिंड-दंडाइं ॥ २११२ ॥[1]

कम्मं किरिया कारणमिह निच्चिट्ठो जओ न साहेइ । अहवा कम्मं कुंभो स कारणं बुद्धिहेउ त्ति ॥ २११३॥

भव्वो त्ति व जोग्गो त्ति व सक्को त्ति व सो सरूवलाभस्स । कारणसंनिज्झम्मि वि जं नागासत्थमारंभो ॥२११४॥

बज्झनिमित्तावेक्खं कज्जं वि य कज्जमाणकालम्मि । होइ सकारणमिहरा विवज्जया-ऽभावया होज्जा ॥२११५॥

देओ स जस्स तं संपयाणमिह तं पि कारणं तस्स । होइ, तदत्थित्ताओ न कीरए तं विणा जं सो ॥२११६॥

1 कारणमथवा षोढा तत्र स्वतन्त्र इति कारण कर्ता । कार्यप्रसाधकतम करणे तु पिण्ड-दण्डादि ॥ २११२ ॥
कर्म क्रिया कारणमिह निश्चेष्टो यतो न साधयति । अथवा कर्म कुम्भः स कारण बुद्धिहेतुरिति ॥ २११३ ॥
भव्य इति वा योग्य इति वा शक्य इति वा स स्वरूपलाभस्य । कारणसांनिध्येऽपि यद् नाकाशार्थमारम्भः ॥ २११४ ॥
बाह्यनिमित्तापेक्ष कार्यमपि च क्रियमाणकाले । भवति स्वकारणमितरथा विपर्यया-ऽभावते भवेताम् ॥ २११५ ॥
देयः स यस्मै तत् सम्प्रदानमिह तदपि कारणं तस्य । भवति, तदर्थित्वाद् न क्रियते तद् विना यत् सः ॥ २११६ ॥

अथवा, अन्यथा 'त्रयः प्रत्यया भवन्ति' इत्याह—

[1]आया गुरवो सत्थं ति पच्चया वादिमो च्चिय जिणस्स । सपच्चक्खत्तणओ सीसाण उ तिप्पयारो वि॥२१४१॥

'वा' इत्यथवा, आत्मा गुरवः शास्त्रमित्येवं त्रयः प्रत्ययाः। तत्रादिम आद्य एवात्मलक्षणः प्रत्ययो जिनस्य, केवलित्वेन स्वप्रत्यक्षत्वात्, आत्मावष्टम्भेनैव जिनः सामायिकं कथयतीत्यर्थः। शिष्याणां तु गणधर-तच्छिष्य-प्रशिष्यादीनामात्म-गुरु-शास्त्रलक्षणस्त्रिप्रकारोऽपि प्रत्ययो विज्ञेय इति ॥ २१४१ ॥

तत्र सर्वोऽपि प्रेक्षावान् 'युक्तमिदम्' इत्यात्मना ज्ञात्वैव प्रायः सामायिकप्ररूपण-श्रवणादिकार्ये प्रवर्तत इत्यात्मप्रत्ययत्वं शिष्येष्वप्यस्तीति पश्चाद् वक्ष्यति। अतो यथा गुरुप्रत्ययस्तथा दिदर्शयिषुर्गणधरापेक्षं तावदाह—

[2]ऐस गुरू सव्वण्णू पच्चक्खं सव्वसंसयच्छेया । भय-राग-दोसरहिओ तल्लिंगाभावओ जं च ॥२१४२॥

अणुवकयपराणुग्गहपरो पमाणं च जं तिहुयणस्स । सामाइयउवएसे तम्हा सद्धेयवयणो त्ति ॥२१४३॥

गणधराणां तीर्थकरो गुरुः। ततस्ते तत्प्रत्ययत्वेन सामायिकं शृण्वन्ति। किं विचिन्त्य ते तस्य प्रत्ययत्वमुपकल्पयन्ति ? इत्याह– एषोऽस्माकं गुरुः सर्वज्ञः प्रत्यक्षमनुभवसिद्धः सर्वसंशयच्छेदात्। अपरं च भय-राग-द्वेषरहितोऽयम्, शस्त्रपरिग्रहा-ऽङ्गनासंनिधान-वदनकार्ष्ण्यादितल्लिङ्गाभावात्। ततः सर्वज्ञत्वात्, भय-रागादिदोषरहितत्वाच्च नायमनृतं कदाचिदपि भाषते, अतः सामायिकोपदेशे श्रद्धेयवचन इति संबन्धः। तथा, अनुपकृत आत्मोपकारे निरपेक्ष एव परानुग्रहपरः, प्रमाणं च सकलत्रिभुवनस्य यस्मात्, ततः सामायिकोपदेशेऽस्माकं श्रद्धेयवचनः। एवं जम्बू-प्रभवादीनामपि शिष्य-प्रशिष्याणां निजनिजगुरुषु संभवद्गुणोद्भावनपूर्वकं सामायिकश्रवणप्रत्ययत्वं भावनीयम् ॥ २१४२ ॥ २१४३ ॥

शास्त्रस्य कथं ते प्रत्ययत्वमवगम्य प्रवर्तन्ते ? इत्याह—

[3]सैत्थं च सव्वसत्तोवगारि पुव्वावराविरोहीदं । सव्वगुणादाणफलं सव्वं सामाइयज्झयणं ॥ २१४४ ॥

---

१ आत्मा गुरव. शास्त्रमिति प्रत्यया वाऽऽदिम एव जिनस्य । स्वप्रत्यक्षत्वतः शिष्याणां तु त्रिप्रकारोऽपि ॥ २१४१ ॥

२ एष गुरु सर्वज्ञः प्रत्यक्षं सर्वसंशयच्छेदात् । भय-राग-द्वेषरहितस्तल्लिङ्गाभावतो यच्च ॥ २१४२ ॥
अनुपकृतपरानुग्रहपरः प्रमाणं च यत् त्रिभुवनस्य । सामायिकोपदेशे तस्मात् श्रद्धेयवचन इति ॥ २१४३ ॥

३ शास्त्रं च सर्वसत्त्वोपकारि पूर्वापराविरोधीदम् । सर्वगुणादानफलं सर्वं सामायिकाध्ययनम् ॥ २१४४ ॥

भूपिंडावायाओ पिंडो वा सक्करादवायाओ। चक्कमहावाओ वाऽपादाणं कारणं तं पि ॥ २११७ ॥
वसुहाऽऽगासं चक्कं सरूवमिच्चाइ संनिहाणं जं। कुंभस्स तं पि कारणमभावओ तस्स जदसिद्धी ॥ २११८॥

सप्तापि प्रायो व्याख्यातार्थाः, नवरं क्रियते कर्त्रा निर्वर्त्यत इति व्युत्पत्तेः कर्म भण्यते। कासौ क्रिया कुम्भं प्रति ?। कर्तृव्यापाररूपा। सा च कुम्भलक्षणकार्यस्य कारणमिति प्रतीतमेव। आह– ननु कुलाल एव कुम्भं कुर्वन्नुपलभ्यते, क्रिया तु न काचित् कुम्भकरणे व्याप्रियमाणा दृश्यत इत्याह– इह निश्चेष्टः कुलालोऽपि यस्माद् न घटं साधयति निष्पादयति, या च तस्य चेष्टा सा क्रिया, इति कथं न तस्याः कुम्भकारणत्वम् ? इति। अथवा, कर्तुरीप्सिततमत्वात् क्रियमाणः कुम्भ एव कर्म। तर्हि कार्यमेवेदम्, अतः कथमस्य कारणत्वम् ?। न हि सुतीक्ष्णमपि सूच्यग्रमात्मानमेव विध्यति। ततः कार्यं निर्वर्त्यस्यात्मन एव कारणमित्यनुपपन्नमेव, इत्याह– 'स कारणं बुद्धिहेउ त्ति' स कुम्भः कारणं हेतुः कुम्भस्य। कुतः ?। प्रस्तावात् कुम्भबुद्धिहेतुत्वात्। इदमुक्तं भवति– सर्वोऽपि बुद्धौ संकल्प्य कुम्भादिकार्यं करोतीति व्यवहारः, ततो बुद्ध्याऽध्यवसितस्य कुम्भस्य चिकीर्षितो मृन्मयकुम्भस्तद्बुद्ध्यालम्बनतया कारणं भवत्येव। न च वक्तव्यम्– अनिष्पन्नत्वादसन्नसौ तद्बुद्धेरपि कथमालम्बनं स्यात् ?, द्रव्यरूपतया तस्य सर्वदा सत्त्वादिति। ननु य एवेह मृन्मयकार्यरूपो घटस्तस्यैव कारणं चिन्त्यत इति प्रस्तुतम्, बुद्ध्याऽध्यवसितस्तु तस्मादन्य एव, इति तत्कारणाभिधानमप्रस्तुतमेव। सत्यम्, भाविनि भूतवदुपचारन्यायेन तयोरेकत्वाध्यवसानाददोषः। स्थास-कोशादिकारणकालेऽपि हि 'किं करोषि' इति पृष्टः कुम्भकारः 'कुम्भं करोमि' इत्येतदेव वदति, बुद्ध्यध्यवसितेन निष्पत्स्यमानस्यैकत्वाध्यवसायादिति। अथवा, भव्यो योग्यः स्वरूपलाभस्येति शक्य उत्पादयितुम्, अतः सुकरत्वात् कार्यमप्यात्मनः कारणमिष्यते। अवश्यं च कर्मणः कारणत्वमेष्टव्यम्, यद् यस्मात् समस्तकारणसामग्रीसंनिधानेऽपि नैवमेवाकाशार्थं प्रारम्भः, किन्तु विवक्षितकार्यार्थम्, अतस्तदविनाभावित्वात् तत्क्रियायाः कार्यमप्यात्मनः कारणमिति। एतदेव भावयति– बाह्यानि कुलाल-चक्र-चीवरादीनि यानि निमित्तानि तदपेक्षं क्रियमाणकालेऽन्तरङ्गबुद्ध्यालोचितं कार्यं भवति स्वस्यात्मनः कारणं स्वकारणम्, अन्यथा यदि बुद्ध्या पूर्वमपर्यालोचितमेव कुर्यात् तदाऽप्रेक्षापूर्वं शून्यमनस्कार-

१ भूपिण्डापायात् पिण्डो वा शर्कराद्यपायात्। चक्रमथापाको वाऽपादान कारण तदपि ॥२११७॥
वसुधाऽऽकाश चक्र स्वरूपमित्यादि सनिधान यत्। कुम्भस्य तदपि कारणमभावतस्तस्य यदसिद्धि. ॥ २११८ ॥
२ घ छ 'ता न'। ३ घ. छ 'बुद्धावध्यवस्य कु'।

'शास्त्रं चेदं सर्वसत्त्वोपकारि, तथा, पूर्वापराविरोधि, सर्वगुणग्रहणफलं च सर्वमप्येतत् सामायिकाध्ययनम्, अतः प्रमाणमस्माकम्' इत्येवं शास्त्रस्य प्रत्ययत्वमवधार्य तच्छ्रवणे प्रवर्तन्ते शिष्याः। आह– ननु श्रुतस्य शास्त्रस्य प्रथममेव कथं सर्वसत्त्वोपकारकत्वादीन् गुणान् शिष्या जानन्ति ?। सर्वं शास्त्रं ज्ञात्वा जानन्तीति चेत्। तदयुक्तम्, श्रुते शास्त्रे तत्प्रत्ययाध्यवसायस्य निष्फलत्वात्, तमन्तरेणापि तच्छ्रवणस्य प्रवृत्तत्वात्। नैतदेवम्, यतो वर्णिकामात्रहेतोः कियदपि शास्त्रं श्रुत्वा तद्गुणान् विदन्ति शिष्याः, ततः शेषं शृण्वन्ति, आदिवाक्याद् वा समुदायार्थं वा गुर्वादिभ्यः श्रुत्वाऽश्रुतेऽपि शास्त्रे तद्गुणान् ज्ञात्वा तच्छ्रवणे प्रवर्तन्त इत्यदोष इति ||२१४४||

अथ शिष्याणामात्मप्रत्ययत्वमाह—

बुज्झामो णं निजमिव विण्णाणं संसयादभावाओ। कम्मक्खओवसमओ य होइ सप्पच्चओ तेसिं ||२१४५||[1]

बुध्यामहे– संविज्ञानरूपतया सामायिकाध्ययनमवगच्छामः। किमिव ? इत्याह– निजमिव घटादिविज्ञानमिति। एवंभूतः स्वप्रत्यय आत्मप्रत्ययस्तेषां शिष्याणां भवति। कुतो हेतोः पुनरयं स्वप्रत्ययस्तेषां भवति ? इत्याह– 'संशयाद्यभावात्' संशय-विपर्यया-ऽनध्यवसायाभावत्वेनास्याध्ययनस्य तेषां सिद्धत्वादित्यर्थः। कर्मक्षयोपशमाद् वा कुतश्चिदेवंभूतः स्वप्रत्ययस्तेषां भवति।। इति त्रयोदशगाथार्थः ||२१४५||

अथ लक्षणद्वारमाह—

नामं ठवणा दविए सरिसे सामन्नलक्खणा-ऽऽगारे। गइरागइ-नाणत्ती निमित्त उप्पाय-विगई य || २१४६ ||[2]

वीरियभावे य तहा लक्खणमेयं समासओ भणियं। अहवा वि भावलक्खण चउव्विहं सद्दहणमाई ||२१४७||

सद्दहण जाणणा खलु विरई मीसं च लक्खणं कहए। ते वि निसामिंति तहा चउलक्खणसंजुअं चेव ||२१४८||

लक्ष्यतेऽनेनेति लक्षणं पदार्थानां स्वरूपं, तच्च नामादिभेदाद् द्वादशधा || २१४६ || २१४७ || २१४८ ||

अत्र नाम-स्थापनालक्षणे व्याचिख्यासुराह भाष्यकारः—

---

१ बुध्यामहे निजमिव विज्ञानं संशयाद्यभावात्। कर्मक्षयोपशमतश्च भवति स्वप्रत्ययस्तेषाम् || २१४५ ||

२ नाम स्थापना द्रव्ये सदृशे सामान्यलक्षणा-ऽऽकारौ। गत्यागति-नानात्वे निमित्तमुत्पाद-विगती च || २१४६ ||
वीर्यभावे च तथा लक्षणमेतत् समासतो भणितम्। अथवाऽपि भावलक्षणं चतुर्विधं श्रद्धानादि || २१४७ ||
श्रद्धान ज्ञानज्ञा खलु विरतिर्मिश्र च लक्षण कथयति। तेऽपि निशमयन्ति तथा चतुर्लक्षणसयुतमेव || २१४८ ||

म्भविपर्ययो भवेत्, घटकारणसंनिधानेऽप्यन्यत् किमपि शरावादिकार्यं भवेत्, अभावो वा भवेत्– न किञ्चित् कार्यं भवेदित्यर्थः। तस्माद् बुद्ध्यध्यवसितं कार्यमप्यात्मनः कारणमेष्टव्यम्। किं बहुना ?, यथा यथा युक्तितो घटते तथा तथा सुधिया कर्मणः कारणत्वं वाच्यम्, अन्यथा कर्मणोऽकारकत्वे 'करोतीति कारकम्' इति षण्णां कारकत्वानुपपत्तिरेव स्यादिति।

'भूपिंडेत्यादि' भूरपादानम्, पिण्डापायेऽपि ध्रुवत्वात्। अथवा, विवक्षया पिण्डोऽपादानं, तद्गतशर्करादीनामपायेऽपि विवेकेऽपि ध्रुवत्वात्। अथवा, घटापायाच्चक्रमापाको वाऽपादानमिति। 'वसुहेत्यादि' घटस्य चक्रं संनिधानमाधारः, तस्यापि वसुधा, तस्या अप्याकाशम्, अस्य पुनः स्वप्रतिष्ठत्वात् स्वरूपमाधारः, इत्येवमादि यत् किमप्यानन्तर्येण परंपरया वा संनिधानमाधारो घटस्य विवक्ष्यते तत् सर्वमपि तस्य कारणम्, तदभावे तस्य घटस्य यद् यस्मादसिद्धिः॥ इत्येकोनविंशतिगाथार्थः॥ तदेवमुक्तं द्रव्यकारणम् ॥२११२॥ ॥ २११३ ॥ २११४ ॥ २११५ ॥ २११६ ॥ २११७ ॥ २११८ ॥

अथ भावकारणमाह—

भावम्मि होइ दुविहं अपसत्थ पसत्थयं च अपसत्थं। संसारस्सेगविहं दुविहं तिविहं च नायव्वं ॥२११९॥[1]

भवतीति भाव औदयिकादिः स चासौ कारणं च संसारा-ऽपवर्गयोरिति भावकारणम्। ततश्च भावे भावकारणे विचार्ये द्विविधं कारणं भवति, अप्रशस्तं प्रशस्तं च– शोभनमशोभनं चेत्यर्थः। तत्राप्रशस्तं संसारस्य संबन्ध्येकविधमेकप्रकारं, द्विविधं, त्रिविधं च। चशब्दोऽनुक्तचतुर्विधादिसंसारकारणसमुच्चयार्थ इति ॥ २११९ ॥

अथ किं तदेकविधादि संसारस्य कारणम् ? इत्याह—

असंजमो य एक्को अन्नाणं अविरई य दुविहं च। मिच्छत्तं अन्नाणं अविरई चेव तिविहं तु ॥ २१२० ॥[2]

असंयमोऽविरतिलक्षणः स प्रधानतया विवक्षितः सन्नेकविध एव संसारकारणम्, अज्ञानादीनां तदुपष्टम्भकत्वेनाप्रधानत्वविवक्षणात्। तथा, अज्ञानमविरतिश्च प्रधानतया विवक्षितं द्विविधं संसारस्य कारणम्। तत्राज्ञानं मिथ्यात्वतिमिरोपप्लुतदृष्टेर्जीवस्य विपर्यस्तो बोधः, अविरतिस्तु सावद्ययोगादनिवृत्तिः। तथा, मिथ्यात्वमज्ञानमविरतिश्चैवेति त्रिविधं संसारकारणम्। तत्र तत्त्वार्था-

1 भावे भवति द्विविधमप्रशस्तं प्रशस्तं चाप्रशस्तम्। संसारस्यैकविध द्विविधं त्रिविधं च ज्ञातव्यम् ॥ २११९ ॥
2 असंयमश्चैकोऽज्ञानमविरतिश्च द्विविधं च। मिथ्यात्वमज्ञानमविरतिश्चैव त्रिविधं तु ॥ २१२० ॥

लक्खणमिह जं नामं जस्स व लक्खिज्जए व जो जेणं। ठवणागारविसेसो विण्णासो लक्खणाणं वा ॥२१४९॥

इह 'लक्षणम्' इति यल्लकारादिवर्णत्रयावलीमात्रं तद् नामैव लक्षणं नामलक्षणम् । अथवा, 'जस्स व त्ति' यस्य वा कस्यचिज्जीवादेः 'लक्षणम्' इति नाम क्रियते तद् वस्तु नाम्ना हेतुभूतेन लक्षणं नामलक्षणम् । अथवा, नाम-तद्वतोरभेदाद् नाम च तल्लक्षणं च नामलक्षणम् । 'लक्खिज्जए व जो जेणं ति' यो वा स्तम्भ-कुम्भा-ऽम्भोरुहादिः पदार्थो निजेन स्तम्भ-कुम्भादिनाम्ना लक्ष्यते ज्ञायते तत्स्तम्भादि नामलक्षणमुच्यते, लक्ष्यतेऽनेनेति कृत्वा। 'ठवण त्ति' स्थापनालक्षणमुच्यते । किं तत् ? इत्याह– लक्षणरूपस्य वर्णत्रयस्याकारविशेषः । अथवा, लक्षणानां स्वस्तिक-शङ्ख-चक्र-ध्वजादीनां यो मङ्गलपट्टादावक्षतादिभिर्न्यासो विरचना विधीयते तत् स्थापनालक्षणमिति ॥ २१४९ ॥

'दविए त्ति' द्रव्यलक्षणम् । तच्चागम-नोआगम-ज्ञशरीर-भव्यशरीररूपं सुगमम् । तद्व्यतिरिक्तं पुनराह—

लक्खिज्जइ जं जेणं दव्वं तं तस्स लक्खणं तं च । गच्चुवगाराईयं बहुहा धम्मत्थियाईणं ॥२१५०॥

यद् द्रव्यं धर्मास्तिकायादिकं लक्ष्यते येन तत् तस्य द्रव्यस्य लक्षणम् । तच्च गत्युपकारादिकं धर्मास्तिकायादीनां संबन्धि बहुभेदं विज्ञेयमिति ॥ २१५१ ॥

अथान्येषां सादृश्य-सामान्यादिलक्षणानां सामान्येन भावार्थमाह—

किंचिम्मित्तविसिट्ठं एयं चिय सेसलक्खणविसेसा । जं दव्वलक्खणं च्चिय भावो वि स दव्वधम्मो त्ति ॥२१५१॥

इदमेव च द्रव्यलक्षणं किञ्चिन्मात्रविशिष्टं सत् शेषाः सादृश्य-सामान्यादयो नव लक्षणभेदा भवन्ति। कुतः ? इत्याह– यद् यस्मात् स वक्ष्यमाणो भावोऽपि भावलक्षणरूपो द्रव्यधर्मत्वाद् द्रव्यं लक्ष्यतेऽनेनेति कृत्वा द्रव्यलक्षणमेव, आसतां पुनः शेषाः सादृश्य-सामान्यादयो लक्षणभेदा इति ॥ २१५१ ॥

तदेवं सामान्येन सादृश्यादिलक्षणभेदान् व्याख्याय विशेषतोऽपि 'सरिसे त्ति' सादृश्यलक्षणस्वरूपं विवृण्वन्नाह—

१ लक्षणमिह यद् नाम यस्य वा लक्ष्यते वा यो येन । स्थापनाऽऽकारविशेषो विन्यासो लक्षणानां वा ॥ २१४९ ॥ २ घ. छ.' न घट-स्तम्भादि'। ३ घ. छ. 'तद् घटादि'। ४ लक्ष्यते यद् येन द्रव्यं तत् तस्य लक्षणं तच्च । गत्युपकारादिकं बहुधा धर्मास्तिकायादीनाम् ॥ २१५० ॥ ५ किञ्चिन्मात्रविशिष्टमेतदेव शेषलक्षणविशेषाः । यद् द्रव्यलक्षणमेव भावोऽपि स द्रव्यधर्म इति ॥ २१५१ ॥

श्रद्धानरूपं मिथ्यात्वं प्रतीतमेवेति । एवं कषायादियोगादन्येऽपि चतुर्विधादिसंसारकारणभेदा वक्तव्या इति ॥ उक्तमप्रशस्तं भावकारणम् ॥ २१२० ॥

अथ प्रशस्तं भावकारणमाह—

[1]होइ पसत्थं मोक्खस्स कारणमेगविह दुविह तिविहं च। तं चेव य विवरीयं अहिगार पसत्थएणेत्थं ॥२१२१॥

इह यद् मोक्षस्य कारणं हेतुस्तत् प्रशस्तभावकारणमुच्यते । किं पुनस्तत्? इत्याह— 'ते चेव य विवरीयं ति' यदप्रशस्तमसंयमादि भावकारणमुक्तं तदेव विपरीतं सदेकविधं, द्विविधं त्रिविधं च प्रशस्तं भावकारणं भवति । तत्रासंयमाद् विपरीतः संयम एकविधं प्रशस्तभावकारणं भवति; अज्ञाना-ऽविरतिविपरीतं तु ज्ञान-संयमौ द्विविधम्, मिथ्यात्वा-ऽज्ञाना-ऽविरतिविपरीतं सम्यग्दर्शन-ज्ञान-संयमरूपं तु त्रिविधमिति । तदेवं नामादिभेदतश्चतुर्विधकारणं विचार्य प्रस्तुते येनाधिकारस्तदाह— 'अहिगार पसत्थएणेत्थं ति' इह सामायिके विचार्यमाणे प्रशस्तेन भावकारणेनाधिकारः । सामायिकाध्ययनं हि क्षायोपशमिकभावरूपं वर्तते । स च प्रशस्तः, मोक्षकारणत्वात् । अतो युक्तमुक्तम्— 'प्रशस्तभावकारणेनात्राधिकारः' इति ॥ २१२१ ॥

अथ कारणद्वार एव कारणवक्तव्यतानुगतं प्रसङ्गतः किञ्चिदाह—

[2]तित्थयरो किंकारणं भासइ सामाइयं तु अज्झयणं ?। तित्थयरनामगोत्तं बद्धं मे वेइअव्वं ति ॥ २१२२ ॥

तीर्थंकरः किंकारणं किंनिमित्तं भाषते सामायिकाध्ययनम्?। तुशब्दादन्यानि चाध्ययनानि, केवलज्ञानोत्पत्तितस्तस्य कृतकृत्यत्वात् किं तद्भाषणेन? इत्यभिप्रायः । अत्रोच्यते— तीर्थकर इति नामगोत्रं संज्ञा यस्य तत् तीर्थकरनामसंज्ञकं कर्म पूर्वं मया बद्धं तदिदानीमनेन प्रकारेण वेदितव्यम्, इत्यनेन कारणेन स तद् भाषत इति ॥२१२२ ॥

पुनरत्रैव च विनेयप्रश्नमुत्तरं चाह—

[3]तं च कहं वेइज्जइ अगिलाए धम्मदेसणाईहिं । बज्झइ तं तु भगवओ तइयभवोसक्कइत्ता णं ॥२१२३ ॥

१ भवति प्रशस्त मोक्षस्य कारणमेकविध द्विविध त्रिविध च । तदेव च विपरीतमधिकार' प्रशस्तेनात्र ॥ २१२१ ॥
२ तीर्थकर. किंकारण भाषते सामायिक त्वध्ययनम् ? । तीर्थकरनामगोत्र बद्ध मया वेदितव्यमिति ॥ २१२२ ॥
३ तच्च कथं वेद्यतेऽग्लान्या धर्मदेशनादिभि. । बध्यते तत्तु भगवतस्तृतीयभवमवष्वक्य ॥ २१२३ ॥

तुल्लागारदरिसणं सरिसं दव्वस्स लक्खणं तं पि । जह घडतुल्लागारो घडो त्ति तह सव्वमुत्तीसु ॥२१५२॥

यद् द्व्यादिवस्तूनां तुल्यस्याकारस्य दर्शनं तदिह 'सरिसं ति' सादृश्यमुच्यते । द्रव्यस्य तदपि लक्षणम् । तेनापि हि 'सदृशममुकस्येदम्' इति व्यपदेशहेतुत्वाद् द्रव्यं लक्ष्यत इति, एतदपि सामान्यतो द्रव्यलक्षणमेव, विशेषतस्तु सादृश्यलक्षणमुच्यत इतीह भावार्थः । एवमुत्तरत्रापि सामान्यतो द्रव्यलक्षणता विशेषतस्तु वक्ष्यमाणतत्तद्विशेषलक्षणता द्रष्टव्येति । उदाहरणमाह– यथैकेन दृश्यमानघटेन तुल्याकारोऽन्योऽपि सर्वो घट इति । एवमनेनैव प्रकारेण सर्वासु मूर्तिषु सर्वेष्वपि मूर्तवस्तुषु यस्य येन सादृश्यं घटते, तत् सर्वं सादृश्यलक्षणमिति ॥ २१५२ ॥

अथ 'सामण्णलक्खण त्ति' सामान्यलक्षणव्याख्यानमाह––

सामण्णमप्पियमणप्पियं च तत्थंतिमं जहा सिद्धो । सिद्धस्स होइ तुल्लो सव्वो सामण्णधम्मेहिं ॥२१५३॥

एगसमयाइसिद्धत्तणेण पुणरप्पिओ स तस्सेव । तुल्लो सेसाऽतुल्लो सामण्ण-विसेसधम्मो त्ति ॥२१५४॥

व्याख्या– इह सामान्यं द्विधा– अर्पितमनर्पितं च । तत्रार्पितं विशेषितमुच्यते, अनर्पितं त्वविशिष्टम् । तत्रान्तिममविशिष्टं सामान्यं यथा सिद्धः सर्वोऽप्यन्यस्य सर्वस्यापि सिद्धस्य सत्त्व-द्रव्यत्व-प्रमेयत्वा-ऽमूर्तत्व-क्षीणकर्मत्वा-ऽनाबाधत्व-सिद्धत्वादिभिः सामान्यधर्मैस्तुल्यः समानो भवति । एक-द्वि-त्र्यादिसमयसिद्धत्वेन पुनरर्पितो विशेषितः स सिद्धः 'तस्सेव तुल्ल त्ति' तस्यैवैक-द्वि-त्र्यादिसमानसमयसिद्धस्यैव सिद्धस्य तुल्यः समानः, शेषस्य त्वसमानसमयसिद्धस्यातुल्योऽसमानः । ननु कथमेक एवायं सिद्धः सिद्धान्तरैस्तुल्योऽतुल्यश्च ? इत्याह– सामान्यरूपो विशेषरूपाश्च धर्मा यस्य स सामान्य-विशेषधर्मा इति हेतोः । न ह्यसौ यैरेव धर्मैस्तुल्यस्तैरेवातुल्यो येन विरोधः स्यात्, किन्तु समानधर्मैस्तुल्यो विशेषधर्मैः पुनरतुल्य इति भावः । यच्चेह सिद्धस्य सिद्धेन सह समानत्वं तत् सामान्यलक्षणमिति ॥ २१५३ ॥ २१५४ ॥

'आगारे त्ति' आकारलक्षणं व्याचिख्यासुराह––

---

१ तुल्याकारदर्शन सदृशं द्रव्यस्य लक्षणं तदपि । यथा घटतुल्याकारो घट इति तथा सर्वमूर्तिषु ॥२१५२ ॥
१ सामान्यमर्पितमनर्पित च तत्रान्तिमं यथा सिद्ध । सिद्धस्य भवति तुल्य सर्वं सामान्यधर्मैः ॥ २१५३ ॥
एकसमयादिसिद्धत्वेन पुनरर्पितः स तस्यैव । तुल्य शेषातुल्य सामान्य विशेषधर्मेति ॥ २१५४ ॥

[1]नियमा मणुयगईए इत्थी पुरिसेयरो व सुहलेसो । आसेवियबहुलेहिं वीसाए अन्नयरएहिं ॥ २१२४ ॥

एतयोर्व्याख्यानं पूर्ववदेव, नवरं तत् पुनस्तीर्थकरनामकर्म बद्धं सत् कथं वेद्यते ? इति प्रश्नः । अत्रोत्तरम्– अग्लान्याऽनिर्वेदेन धर्मदेशनादिभिः । तच्च भगवतस्तीर्थकरस्यैव– यस्तीर्थकरो भविष्यति तस्यैव बध्यते बन्धमायाति । कदा ? इत्याह– सिद्धिगमनभवात् तृतीयभवं यावदवष्वक्यापसृत्य । इदमुक्तं भवति– अनेन बद्धेन भवत्रयमेव संसारेऽवतिष्ठते, ततः सिध्यति । एकस्तावत् स एव मनुष्यभवो यत्र तद् बध्यते, द्वितीयस्तु देवभवः, नरकभवो वा, तृतीयभवे तु तीर्थकरो भूत्वा सिध्यति । तच्च नियमाद् मनुष्यगतावेव प्रारम्भमाश्रित्य सम्यग्दृष्टिमनुष्यो बध्नाति, नान्यगतावन्यः । कथंभूतो मनुष्यः ? इत्याह– स्त्री, पुरुषः, इतरो वा पुरुषनपुंसकवेदको मन्त्रादिकारणैरुपहतपुरुषवेदः सन् यो नपुंसकः, न तु क्लिष्टः पण्डकादिरित्यर्थः । कथंभूतः पुनः स्त्र्यादिः ? इत्याह– सम्यग्दर्शनादिगुणयुक्तत्वात् शुभलेश्यः । कैः पुनः कारणैः सोऽपि बध्नाति ? इत्याह– 'अरहंत-सिद्ध-पवयण' इत्यादिना पूर्वमभिहितैर्बहुलैः पुनः पुनरासेवितैः संपूर्णैर्विंशत्या कारणैः, अन्यतरैर्वैक-द्वि-त्र्यादिभिरतिपुष्टिं नीतैरिति ॥ १२२३ ॥ २१२४ ॥

एवं तीर्थकृतः सामायिकाध्ययनभाषणकारणमभिधाय, अथ गणभृतामाशङ्काद्वारेण तच्छ्रवणकारणमभिधित्सुराह—

[3]गोयममाई सामाइयं तु किंकारणं निसामेंति । नाणस्स तं तु सुन्दर-मङ्गुलभावाण उवलद्धी ॥ २१२५ ॥

होइ पवित्ति-निवित्ती संजम-तव पावकम्मअग्गहणं । कम्मविवेगो य तहा कारणमसरीरया चेव ॥२१२६॥

कम्मविवेगो असरीरयाइ असरीरयाऽणबाहाए । होअणबाहनिमित्तं अवेयणु अणाउलो निरुओ ॥२१२७॥

निरुयत्ताए अयलो अयलत्ताए य सासओ होइ । सासयभावमुवगओ अव्वाबाहं सुहं लहइ ॥ २१२८ ॥

---

१ नियमाद् मनुष्यगतौ स्त्री पुरुष इतरो वा शुभलेश्य. । आसेवितबहुलैर्विंशत्या अन्यतरै. ॥ २१२४ ॥ २ आ० नि० पृ० २८ ।

३ गौतमादय· सामायिकं तु किंकारणं निशमयन्ति । ज्ञानाय तत्तु सुन्दर-मङ्गुल(तदितर)भावानामुपलब्धये ॥ २१२५ ॥

भवतः प्रवृत्ति-निवृत्ती संयम-तपसोः पापकर्माग्रहणम् । कर्मविवेकश्च तथा कारणमशरीरता चैव ॥ २१२६ ॥

कर्मविवेकोऽशरीरताया अशरीरताऽनाबाधायाः । भवत्यनाबाधनिमित्तमवेदनोऽनाकुलो नीरुक् ॥ २१२७ ॥

निरुक्तयाऽचलोऽचलतया च शाश्वतो भवति । शाश्वतभावमुपगतोऽव्याबाधं सुखं लभते ॥ २१२८ ॥

बाहिरचिट्ठागारो लक्खिज्जए तेण माणसाकूतं । आहारादिच्छा हत्थ-वयण-नेत्ताइसण्णाहिं ॥ २१५५ ॥

आक्रियत आकल्प्यते ज्ञायतेऽभिमेतं मनोविकल्पितं वस्त्वनेनेत्याकारो बाह्यचेष्टारूपः । तेन च मानसमाकूतमभिमेतं वस्तु लक्ष्यत इति लक्षणमसावुच्यते; तथाहि– राजादीनामाहारादीच्छा हस्त-वदन-नेत्रादिसंज्ञाभिर्लक्ष्यत एव विचक्षणैः, उक्तं च—

"आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च । नेत्र-वक्त्रविकारैश्च लक्ष्यतेऽन्तर्गतं मनः ॥ १ ॥"

इति ॥ २१५५ ॥

अथ 'गइरागइ त्ति' गत्यागतिलक्षणस्वरूपं प्रचिकटयिषुराह—

अवरोप्परं पयाणं विसेसणविसेसणिज्जया जत्थ । गच्चागई य दोण्हं गच्चागइलक्खणं तं तु ॥ २१५६ ॥

परस्परं द्वयोर्द्वयोः पदयोर्यत्र विशेषण-विशेष्यतयाऽऽनुकूल्येन गमनं गतिः । यथा 'जीवो भदन्त ! देवः' इति जीवमनूद्य देवत्वं पृच्छ्यते; अत्र जीवपदाद् देवपदे आनुकूल्येन यथास्थित्या गतिः । तथा, प्रत्यावृत्त्या प्रातिकूल्येनागमनमागतिर्यथा 'देवो जीवः ?' इत्यत्र देवमनूद्य जीवत्वं पृच्छ्यत इतीह प्रत्यावृत्त्या देवपदाज्जीवपदे आगतिः । गतिश्चागतिश्च गत्यागती ताभ्यां ते वा लक्षणं तदेतद् गत्यागतिलक्षणम् । एतच्च चतुर्धा; तद्यथा– पूर्वपदव्याहतम्, उत्तरपदव्याहतम्, उभयपदव्याहतम्, उभयपदाव्याहतं चेति । तत्र पूर्वपदं व्याहतं व्यभिचारि यत्र तत् पूर्वपदव्याहतं लक्षणं पूर्वपदव्यभिचारीत्यर्थः । एवमन्यत्रापि यथायोगं समासः ॥ २१५६ ॥

एतानेव चतुरो भङ्गान् सोदाहरणानाह भाष्यकारः—

पुव्वा-वरो-भएसुं वाहयमव्वाहयं च तं तत्थ । जीवो देवो देवो जीवो त्ति विगप्पनियमोऽयं ॥ २१५७ ॥

इह पूर्वपदव्याहतम्, अपरपदव्याहतम्, उभयपदव्याहतम्, उभयपदाव्याहतं चेति चतुर्धा तद्गत्यागतिलक्षणमुक्तम् । तत्र "जीवे भन्ते ! देवे, देवे जीवे ?। गोयमा ! जीवे सिय देवे, सिय नो देवे, देवे पुण नियमा जीवे" इति भुवनगुरुवचनाज्जीवो देव इति विशेषणविशेष्यभूते पदद्वये जीव इति पूर्वपदं देवत्वं व्यभिचरत्यपि, जीवस्य देवस्यादेवस्य च नारकादेर्दर्शनात् । 'देवः किं जीवः ?' इति

१ बाह्यचेष्टाऽऽकारो लक्ष्यते तेन मानसाकूतम् । आहारादीच्छा हस्त-वचन-नेत्रादिसंज्ञाभिः ॥ २१५५ ॥ २ क ग 'भाषणेन'।

३ परस्परं पदयोर्विशेषण-विशेषणीयता यत्र । गत्यागतिश्च द्वयोर्गत्यागतिलक्षणं तत् तु ॥ २१५६ ॥

४ पूर्वा-ऽपरो-भयेषु व्याहतमव्याहतं च तत् तत्र । जीवो देवो देवो जीव इति विकल्पनियमोऽयम् ॥ २१५७ ॥

५ जीवो भगवन् ! देवः, देवो जीवः ?। गौतम ! जीवः स्याद् देवः, स्याद् नो देवः, देवः पुनर्नियमाज्जीवः ।

व्याख्या– गौतमादयो गणधराः किंकारणं किंनिमित्तं किंप्रयोजनं सामायिकं निशमयन्ति शृण्वन्ति ? इत्याह– 'नाणस्स त्ति' विभक्तिव्यत्ययाच्चतुर्थीह द्रष्टव्या, सा च तादर्थ्ये, ततश्च ज्ञानार्थं ज्ञानायेत्यर्थः, तेषां भगवद्वदनारविन्दनिर्गतं सामायिकमिदं श्रुत्वा तदर्थविषयं ज्ञानमुत्पद्यत इति भावः। तत्तु ज्ञानं सुन्दर-मङ्गुलभावानां शुभा-ऽशुभपदार्थानामुपलब्धये उपलब्धिनिमित्तं भवति। तस्याश्च शुभा-ऽशुभपदार्थोपलब्धेः सकाशात् शुभेषु प्रवृत्तिः, इतरेभ्यस्तु निवृत्तिर्भवति । ते च निवृत्ति-प्रवृत्ती 'संजम-तव त्ति' संयम-तपसोः कारणं निमित्तं भवतः, अशुभनिवृत्तिः संयमकारणम्, शुभप्रवृत्तिस्तु तपःकारणमित्यर्थः। तयोश्च संयम-तपसोः पापकर्मणोऽग्रहणं, तथा, कर्मविवेकश्च कर्मनिर्जरारूपो यथासंख्यं कारणं निमित्तं प्रयोजनमिति यावत्। कर्मविवेकस्य च कारणं प्रयोजनमशरीरतैव चेति। अथ विवक्षितमर्थमुक्तानुवादेन प्रतिपादयन्नाह– कर्मविवेकः कर्मपृथग्भावोऽशरीरतायाः कारणम्। अशरीरता पुनरनाबाधतायाः कारणं भवति। 'होअणबाहनिमित्तं ति' अनाबाधतानिमित्तमनाबाधताकारणमनाबाधतया हेतुभूतयेत्यर्थः, अवेदनो वेदनारहितो भवति जीवः। अवेदनत्वाच्चानाकुलोऽविह्वलो भवति। रोगाद्यनाकुलत्वाच्च नीरुक् समस्तभावरोगरहितो भवति। नीरुक्तया पुनरचलः, अचलतया च तत्रैव मुक्तिक्षेत्रे शाश्वतो नित्यो भवति। शाश्वतभावं चोपगतः सन्नव्याबाधसुखं लभते। इत्थं पारम्पर्येणाव्याबाधमुक्तिसुखनिमित्तं सामायिकश्रवणं सिद्धम्। इति निर्युक्तिगाथादशकार्थः ॥ २१२५ ॥ २१२६ ॥ २१२७ ॥ २१२८ ॥

एताश्च गाथाः सुगमत्वात् संक्षेपतो भाष्यकारः किञ्चिद् व्याचिख्यासुराह—

[1]तित्थयरनामकम्मक्खयस्स कारणमिदं जिणिंदस्स। सामाइयाभिहाणं नाणस्स उ गोयमाईणं ॥ २१२९ ॥

तं पि सुभेयरभावोवलद्धिए सा पवित्ति-नियमाणं। एवं नेयं कमसो पुव्वं पुव्वं परनिमित्तं ॥ २१३० ॥

इदं सामायिकाभिधानं सामायिकभाषणं जिनेन्द्रस्य तीर्थकरस्य भगवतस्तीर्थकरनामकर्मक्षयस्य कारणं हेतुः। गौतमादीनां पुनर्ज्ञानस्य 'तच्छ्रवणं कारणम्' इति गम्यते। तदपि ज्ञानं शुभा-ऽशुभभावोपलब्धेः कारणम्, एषापि प्रवृत्ति-नियमयोः प्रवृत्ति-निवृत्त्योः कारणम्। एवं क्रमशः क्रमेण पूर्वं परस्योत्तरस्य निमित्तं तावज्ज्ञेयं यावत् शाश्वतत्वादव्याबाधं मुक्तिसुखं लभते। इति गाथाद्वयार्थः। उक्तं कारणद्वारम् ॥ २१२९ ॥ २१३० ॥

१ घ. छ 'लम्भाय नि'। २ तीर्थकरनामकर्मक्षयस्य कारणमिदं जिनेन्द्रस्य। सामायिकाभिधानं ज्ञानस्य तु गौतमादीनाम् ॥ २१२९ ॥ तदपि शुभे-तरभावोपलब्धे. सा प्रवृत्ति-नियमयोः। एवं ज्ञेयं क्रमशः पूर्वं पूर्वं परनिमित्तम् ॥ २१३० ॥

प्रत्यावृत्तौ देवो जीवत्वं न व्यभिचरत्येव, देवस्य नियमेन जीवत्वात्। तस्मात् पूर्वपदव्याहतो विकल्पनियमोऽयं भङ्गः, विकल्पो व्याहति-भजना व्यभिचार इत्यर्थः, नियमो निश्चयोऽव्यभिचार इत्यर्थः, ततश्च पूर्वपदविकल्पोपलक्षित उत्तरपदनियमो यत्रासौ विकल्पनियमः प्रथमभङ्ग इति ॥ २१५७ ॥

शेषं भङ्गत्रयं सोदाहरणं यथा—

जीवइ जीवो जीवो जीवइ नियमो मओ विगप्पो य। देवो भव्वो भव्वो देवो त्ति विगप्पमो दो वि ॥२१५८॥
जीवो जीवो जीवो जीवो त्ति दुगे वि गम्मए नियमो। जीवो जहोवओगो तहोवओगो य जीवो त्ति ॥२१५९॥

व्याख्या– 'जीवइ जीवो जीवो जीवइ' इत्यनेन द्वितीयभङ्गप्रतिपादकं भगवतीसूत्रं सूचितम्। तच्चेदम्–"जीवइ भंते! जीवे, जीवे जीवइ?। गोयमा! जीवइ ताव नियमा जीवे, जीवे पुण सिय जीवइ, सिय नो जीवइ' इति। इह 'जीवइ' शब्देन दशविधप्राणलक्षणं जीवनं जीवितव्यमुच्यते। तत्र जीवनं तावद् नियमाज्जीवः, अजीवे तस्य सर्वथाऽसंभवात्; जीवः पुनः स्याज्जीवति स्याद् न जीवति, सिद्धजीवस्य जीवनासंभवात्। अत इहोत्तरपदं व्याहतम्, व्यभिचारात्; पूर्वपदं त्वव्याहतं, जीवनस्य जीवमन्तरेणाभावात्। अत एवाह– 'नियमो मओ विगप्पो य त्ति' पूर्वपदेऽव्यभिचाराद् नियमो मतः, उत्तरपदे तु विकल्पो भजना व्याहतिर्व्यभिचार इत्यर्थः। ततश्च नियमेनोपलक्षितो विकल्पो यत्रासौ नियमविकल्पनामकोऽयमुत्तरपदव्याहतो द्वितीयो भङ्गः। 'देवो भव्वो भव्वो देवो त्ति' अनेनापि तृतीयभङ्गप्रतिपादकं प्रज्ञप्तिसूत्रं सूचितम्; तद्यथा– "देवे णं भंते भवसिद्धिए, भवसिद्धिए देवे?। गोयमा! देवे सिय भवसिद्धिए, सिय अभव्वसिद्धिए; भवसिद्धिए वि सिय देवे, सिय नो देवे त्ति"। अत्र पूर्वपदवर्ती देवो भव्यत्वं व्यभिचरति, अभव्यस्यापि तस्य संभवात्। उत्तरपदवर्त्यपि भव्यो देवत्वं व्यभिचरति, अदेवस्यापि तस्य नरकादौ संभवात्। अत उभयपदव्याहतमिदम्। अत एवाह– 'विगप्पमो दो वि त्ति' इह प्राकृतशैल्या द्वयोरपि पदयोर्विकल्पो व्यभिचार इत्यर्थः। ततश्च विकल्पयुक्तो विकल्पो यत्रासौ

१ जीवति जीवो जीवो जीवति नियमाद् मतो विकल्पश्च। देवो भव्यो भव्यो देव इति विकल्पो द्वयोरपि ॥ २१५८ ॥
जीवो जीवो जीवो जीव इति द्विकेऽपि गम्यते नियम। जीवो यथोपयोगस्तथोपयोगश्च जीव इति ॥ २१५९ ॥
२ जीवति भगवन्! जीवः, जीवो जीवति?। गौतम! जीवति तावद् नियमाज्जीवः, जीवः पुनः स्याज्जीवति, स्याद् नो जीवति। ३ देवो भगवन्! भवसिद्धिकः, भवसिद्धिको देवः?। गौतम! देवः स्याद् भवसिद्धिकः, स्यादभवसिद्धिकः। भवसिद्धिकोऽपि स्याद् देवः, स्याद् नो देव इति।

अह मन्नासि अत्थि गुणी न य देहत्थंतरं तओ किंतु । देहे नाणाइगुणा सो च्चिय तेसिं गुणी जुत्तो ॥ १३ ॥
नाणादओ न देहस्स मुत्तिमत्ताइओ घडस्सेव । तम्हा नाणाइगुणा जस्स स देहाहिओ जीवो ॥ १४ ॥
इय तुह देसेणायं पच्चक्खो सव्वहा महं जीवो । अविहयनाणत्तणओ तुह विण्णाणं पडिवज्ज ॥ १५ ॥
एवं चिय परदेहेऽणुमाणओ गिण्ह जीवमत्थि त्ति । अणुवित्ति-निवित्तीओ विन्नाणमयं सरूवे व्व ॥ १६ ॥
जं च न लिंगेहिं समं मन्नति लिंगी जओ पुरा गहिओ । संगं ससेण व समं लिंगओ तोऽणुमेओ सो ॥१७॥
सोऽणेगंतो जम्हा लिंगेहिं समं न दिट्ठपुव्वो वि । गहलिंगदरिसणाओ गहोऽणुमेओ सरीरम्मि ॥ १८ ॥
देहस्स त्थि विहाया पइनिययागारओ घडस्सेव । अक्खाणं च करणओ दंडाईणं कुलालो व्व ॥ १९ ॥
अत्थिंदिय-विसयाणं आयाणादेयभावओऽवस्सं । कम्मार इवादाया लोए संडास-लोहाणं ॥ २० ॥
भोत्ता देहाईणं भोज्जत्तणओ नरो व्व भत्तस्स । संघायाइत्तणओ अत्थि य अत्थी घरस्सेव ॥ २१ ॥
जो कत्ताइ स जीवो सज्झविरुद्धो त्ति ते मई होज्जा । मुत्ताइपसंगाओ तं न संसारिणो दोसो ॥ २२ ॥
अत्थि च्चिय ते जीवो संसयओ सोम्म ! थाणुपुरिसो व्व । जं संदिद्धं गोयम ! तं तत्थन्नत्थ वत्थि धुवं ॥२३॥
एवं नाम विसाणं खरस्स पत्तं न तं खरे चेव । अन्नत्थ तदत्थि च्चिय एवं विवरीयगाहे वि ॥ २४ ॥
अत्थि अजीवविवक्खो पडिसेहाओ घडोऽघडस्सेव । नत्थि घडो त्ति व जीवत्थित्तपरो नत्थिसद्दोऽयं ॥ २५ ॥
असओ नत्थि निसेहो संजोगाइपडिसेहओ सिद्धं । संजोगाइचउक्कं पि सिद्धमत्थंतरे निययं ॥ २६ ॥
जीवो त्ति सत्थयमिणं सुद्धत्तणओ घडाभिहाणं व । जेण त्थेण सदत्थं सो जीवो, अह मई [1]होज्ज ॥ २७ ॥
अत्थो देहो च्चिय से तं नो पज्जायवयणभेआओ । नाणाइगुणो य जओ भणिओ जीवो न देहो त्ति ॥२८॥

१ 'हुज्जा' ।

जीवो त्थि वओ सच्चं मव्वयणाओऽवसेसवयणं व । सव्वण्णुवणयओ वा अणुमयसव्वण्णुवयणं वा ॥ २९ ॥
भय-राग-दोस-मोहाभावाओ सच्चमणइवाइं च । सव्वं चिय मे वयणं जाणयमज्झत्थवयणं व ॥ ३० ॥
कहं सव्वण्णु त्ति मई जेणाहं सव्वसंसयच्छेई । पुच्छसु व जं न जाणासि जेण व ते पच्चओ होज्जा ॥ ३१ ॥
एवमुवओगलिंगं गोयम ! सव्वप्पमाणसंसिद्धं । संसारी-यर-थावर-तसाइभेयं मुणे जीवं ॥ ३२ ॥
जइ पुण सो एगो च्चिय हवेज्ज वोमं व सव्वपिंडेसु । गोयम ! तदेगलिंगं पिंडेसु तहा न जीवोऽयं ॥ ३३ ॥
नाणा जीवा कुंभादउ व्व भुवि लक्खणाइभेयाओ । सुह-दुक्ख-बंध-मोक्खाभावो य जओ तदेगत्ते ॥ ३४ ॥
जेणोवओगलिंगो जीवो भिन्नो य सो पइसरीरं । उवओगो उक्करिसा-वगरिसओ तेण तेऽणंता ॥ ३५ ॥
एगत्ते सव्वगयत्तओ न मोक्खादओ नभस्सेव । कत्ता भोत्ता मंता न य संसारी जहागासं ॥ ३६ ॥
एगत्ते नत्थि सुही बहूवघाउ त्ति देसनिरुइ व्व । बहुतरबद्धत्तणओ न य मुक्को देसमुक्को व्व ॥ ३७ ॥
जीवो तणुमेत्तत्थो जह कुंभो तग्गुणोवलंभाओ । अहवाऽणुवलंभाओ भिन्नम्मि घडे पडस्सेव ॥ ३८ ॥
तम्हा कत्ता भोत्ता बंधो मोक्खो सुहं च दुक्खं च । संसरणं च बहुत्ता-ऽसव्वगयत्ते सुजुत्ताइं ॥ ३९ ॥
गोयम ! वेयपयाणं इमाण अत्थं च तं न याणासि । जं विन्नाणघणो च्चिय भूएहिंतो समुत्थाय ॥ ४० ॥
मण्णसि मज्जंगेसु व मयभावो भूयसमुदउब्भूओ । विन्नाणमेत्तमाया भूएऽणु विणस्सइ स भूओ ॥ ४१ ॥
अत्थि न य पेच्चसण्णा जं पुव्वभवेऽभिहाणममुगो त्ति । जं भणियं न भवाओ भवंतरं जाइ जीवो त्ति ॥४२॥
गोयम ! पयत्थमेवं मन्नंतो नत्थि मन्नसे जीवं । वक्कंतरेसु य पुणो भणिओ जीवो जमत्थि त्ति ॥ ४३ ॥
अग्गिहवणाइकिरियाफलं च तो संसयं कुणसि जीवे । मा कुरु न पयत्थोऽयं इमं पयत्थं निसामेहि ॥ ४४ ॥
विण्णाणाओऽणण्णो विण्णाणघण्णो त्ति सव्वओवावि । स भवइ भूएहिंतो घडविण्णाणाइभावेण ॥ ४५ ॥

विकल्पविकल्पनामकोऽयमुभयपदव्याहतस्तृतीयो भङ्ग इति । 'जीवो जीवो जीवो जीवो त्ति' इहापि व्याख्याप्रज्ञप्तिसूत्रमेतद् द्रष्टव्यम्; तद्यथा– "जीवे भंते ! जीवे, जीवे जीवे ?[1] । गोयमा ! जीवे ताव नियमा जीवे, जीवे वि नियमा जीवे त्ति" । इह एकस्य जीवशब्दस्योपयोगो वाच्यः । ततश्चोपयोगो नियमाज्जीवः, जीवोऽपि नियमादुपयोगः, अत उभयपदाव्याहतमिदम् । अत एवाह– 'दुगे वि गम्मए नियमो इत्यादि' पदद्वयेऽप्यत्र नियमो गम्यते । ततश्च नियमान्वितो नियमो यत्रासौ नियमनियमाभिधान उभयपदाव्याहतश्चतुर्थो भङ्ग इति ॥ २१५८ ॥ २१५९ ॥

अथ लोकेऽपि चतुर्विधमिदं गत्यागतिलक्षणं प्रसिद्धमिति दर्शयन्नाह—

[2]रूवी घडो त्ति चूओ दुमो त्ति नीलुप्पलं च लोयम्मि । जीवो सचेयणो त्ति य विगप्पनियमादओ सिद्धा ॥२१६०॥

पूर्वपदव्याहतं यथा 'रूपी घटः' इति । अत्र रूपिणो घटस्य पटादेश्च भावात् पूर्वपदव्याहतिः, उत्तरपदं तु न व्याहतम्, घटस्य रूपिण एव भावादिति विकल्पनियमः प्रथमो भङ्गः । उत्तरपदव्याहतं 'चूतो द्रुमः' इति । इह चूतो द्रुम एव भवतीति न व्याहतिः, द्रुमस्तु चूतोऽचूतश्च स्यादित्युत्तरपदव्याहतिरिति नियमविकल्पो द्वितीयो भङ्गः । उभयपदव्याहतं यथा 'नीलोत्पलम्' इति । नीलमुत्पलं मरकतादि च भवति, उत्पलमपि नीलं शुक्लादिरूपं च भवति, इत्युभयपदव्यभिचाराद् विकल्पविकल्पस्तृतीयो भङ्गः । उभयपदाव्याहतं यथा 'जीवः सचेतनः' इति। जीवः सचेतन एव भवति, चेतनापि जीवस्यैव, इत्युभयपदाव्यभिचाराद् नियमनियमश्चतुर्थो भङ्ग इति । एवं विकल्पनियमादयश्चत्वारो भङ्गा लोकेऽपि सिद्धा इति । तदेवमभिहितं गत्यागतिलक्षणम् ॥ २१६० ॥

अथ 'नाणत्ति त्ति' नानातालक्षणं विवरीषुराह—

[3]नाणत्ति त्ति विसेसो सो दव्व-क्खेत्त-काल-भावेहिं । असमाणाणं णेओ समाणसंखाणमविसेसो ॥ २१६१ ॥

परमाणु-दुयणुयाणं जह नाणत्तं तहावसेसाणं । असमाणाणं तह खेत्त-काल-भावप्पभेयाणं ॥ २१६२ ॥

---

१ जीवो भगवन् ! जीवः, जीवो जीवः ? । गौतम ! जीवस्तावद् नियमाज्जीव., जीवोऽपि नियमाज्जीव इति ।

२ रूपी घट इति चूतो द्रुम इति नीलोत्पलं च लोके । जीव' सचेतन इति च विकल्पनियमादय' सिद्धाः ॥ २१६० ॥

३ नानातेति विशेष स द्रव्य-क्षेत्र-काल-भावैः । असमानाना ज्ञेय' समानसंख्यानामविशेष. ॥ २१६१ ॥
परमाणु-द्व्यणुकानां यथा नानात्वं तथाऽवशेषाणाम् । असमानानां तथा क्षेत्र काल-भावप्रभेदानाम् ॥ २१६२ ॥

एवमेतासु सर्वास्वप्यवस्थासु नैगमः प्रस्थकव्यपदेशं मन्यत इति प्रस्थकौपम्यमिति। सीमापर्यन्तो ग्रामः, प्रजासमध्यासितगृहा-ऽऽराम-वापी-देवकुलादिरूपो वा, केवला प्रजा वा, प्रधानपुरुषो वा ग्राम इत्यादीन् सर्वानपि प्रकारान् मन्यतेऽसाविति ग्रामौपम्यम्। एवमन्येष्वपि घटाद्यर्थेष्वविशुद्ध-मध्यम-विशुद्धाभ्युपगमभेदेनोदाहरणानि द्रष्टव्यानीति ॥ २१८८ ॥

सामान्यं विशेषांश्चायमभ्युपगच्छति, अतः कथंभूतस्तानिच्छति ? इत्याह—

[1]सामन्नमन्नदेव हि हेऊ सामन्नबुद्धि-वयणाणं। तस्स विसेसो अन्नो विसेसमइ-वयणहेउ त्ति ॥ २१८९ ॥

सामान्यं विशेषेभ्योऽन्यदेव, हेतुश्च तत् 'सत्' इति सामान्यबुद्धेः सामान्यवचनस्य च। तस्मादपि सामान्यादन्यो भिन्न एव नित्यद्रव्यवर्ती अन्त्यो विशेषः। स च हेतुः 'विशेषः' 'विशेषः' इति मतेर्वचनस्य च। प्रयोगः– भिन्नौ परस्परं सामान्य विशेषौ, भिन्नकार्यत्वात्, घट-पटादिवदिति ॥ २१८९ ॥

न केवलं सामान्य-विशेषौ नैगमः परस्परं भिन्नौ मन्यते, किन्तु स्वाश्रयादपि गो-परमाण्वादेस्तयोर्भेदमेवायमिच्छतीति दर्शयन्नाह—

[2]सदिति भणिएऽभिमन्नइ दव्वादत्थंतरं ति सामन्नं। अविसेसओ मईए सव्वत्थाणुप्पवित्तीए ॥ २१९० ॥

'सत्' इति यतो 'द्रव्य-गुण-कर्मसु सा सत्ता' इति वचनात् सत्तासमवायादेव परस्परविलक्षणेषु द्रव्य-गुण-कर्मसु 'सत्' इत्येकाकारा बुद्धिः प्रवर्तते, अतः 'सत्' इति भणिते द्रव्यादिभ्योऽर्थान्तरमेव सामान्यं मन्यते नैगमः। कुतः ? इत्याह– 'सत्' इत्यविशेषितमतेर्वचनस्य च सर्वत्र द्रव्य-गुण-कर्मस्वन्योन्यमतिविलक्षणेष्वप्यविशेषेण प्रवृत्तेः। इदमुक्तं भवति– यदि सत्तासामान्यं द्रव्यादिभ्योऽभिन्नं स्यात् तदा द्रव्यादिवत् तस्यापि भिन्नत्वात् ततः सर्वत्र 'सत्' इत्यभिन्ना बुद्धिर्न स्यात्। न हि भिन्नादभिन्नबुद्धिप्रसवो युज्यते, घट-स्तम्भादिभ्योऽपि तत्प्रसङ्गात्। तस्माद् भिन्नेष्वभिन्नबुद्ध्यन्यथानुपपत्तेर्द्रव्यादिभ्योऽर्थान्तरमेव सामान्यमिति ॥ २१९० ॥

गोत्वादिसामान्यं तर्हि कथंभूतम् ? इत्याह—

[3]गोत्तादओ गवाइसु निययाधाराणुवित्तिबुद्धीओ। परओ य नि।वित्तीओ सामन्नविसेसनामाणो ॥ २१९१ ॥

---

१ सामान्यमन्यदेव हि हेतु सामान्यबुद्धि-वचनयोः। तस्माद् विशेषोऽन्यो विशेषमति-वचनहेतुरिति ॥ २१८९ ॥

२ सदिति भणितेऽभिमन्यते द्रव्याद्यर्थान्तरमिति सामान्यम्। अविशेषतो मतेः सर्वत्रानुप्रवृत्तेः ॥ २१९० ॥

३ गोत्वादयो गवादिषु निजकाधारानुवृत्तिबुद्धेः। परतश्च निवृत्तेः सामान्यविशेषनामानः ॥ २१९१ ॥

नाना इत्येतस्य भावो नानाता वस्तूनां परस्परं भिन्नता विशेष इत्यर्थः। स च विशेषो द्रव्य-क्षेत्र-काल-भावैरसमानानामसमानसंख्यानां ज्ञेयोऽवगन्तव्यः, द्रव्यादिभिः समानसंख्यानां पुनरविशेष इति। अत्रोदाहरणमाह– 'परमाण्वित्यादि' यथा द्रव्यसंख्ययाऽसमानानां परमाणूनां द्व्यणुकस्कन्धानां च, तथाऽवशेषाणां द्व्यणुकानां त्र्यणुकानां च, तथा त्र्यणुकानां चतुरणुकानां च, तथा, चतुरणुकानां पञ्चाणुकानां चेत्यादिद्रव्यसंख्ययाऽसमानानां परस्परं नानात्वं विशेषो ज्ञेयः। तथा तेनैव प्रकारेण क्षेत्र-काल-भावसंख्ययाऽसमानानां क्षेत्र-काल-भावप्रभेदानामपि परस्परं नानात्वं विशेषो मन्तव्यः; तद्यथा– एकप्रदेशावगाढानां द्व्यादिप्रदेशावगाढानां च, तथैकसमयस्थितिकानां द्व्यादिसमयस्थितिकानां च; तथा, एकगुणकालकादीनां द्विगुणकालकादीनां चेत्यादि। उपलक्षणं चेदम्, द्रव्यतः समानसंख्यानामपि परमाण्वादीनां क्षेत्र-काल-भावैर्नानात्वं द्रष्टव्यम्; एवमेकादिप्रदेशावगाढानां क्षेत्रावगाढप्रदेशैः समानसंख्यानामपि द्रव्य-काल-भावैर्नानात्वम्, एकसमयादिस्थितीनां च स्थितिसमयैः समानसंख्यानामपि द्रव्य-क्षेत्र-भावैर्नानात्वम्; एकगुणकालकादीनां च वर्ण-गन्धादिगुणैः समानसंख्यानामपि द्रव्य-क्षेत्र-कालैर्नानात्वमिति ॥ २१६१ ॥ २१६२ ॥

अथ 'निमित्त त्ति' निमित्तलक्षणं विवृण्वन्नाह—

[1]लक्खिज्जइ सुभासुभमणेण तो लक्खणं निमित्तं ति। भोमाइ तदट्ठविहं तिकालविसयं जिणाभिहियं ॥२१६३॥

लक्ष्यते विज्ञायते यस्मात् शुभाशुभमनेन ततो निमित्तमपि लक्षणम्। तच्चाष्टविधमष्टप्रकारम्; उक्तं च–

"[2]भोम सुमिण-तलिक्खं दिव्वं अगसरलक्खणं तह य। वंजणमट्ठविहं खलु निमित्तमेवं मुणेयव्वं ॥ १ ॥"

इति। भौमादिस्वरूपं च ग्रन्थान्तरादवसेयम्। इदं चाष्टविधमपि निमित्तं प्रत्येकमतीता-ऽनागत-वर्तमानरूपकालत्रयविषयं जिनैरभिहितमिति ॥ २१६३ ॥

अथ 'उप्पाय-विगई य त्ति' उत्पाद-विगमलक्षणस्वरूपमाह—

[3]नाणुप्पन्नं लक्खिज्जए जओ वत्थु लक्खणं तेणं। उप्पाओ संभवओ तह चेव विगच्छओ विगमो ॥२१६४॥

१ लक्ष्यते शुभाशुभमनेन ततो लक्षणं निमित्तमिति। भौमादि तदष्टविध त्रिकालविषय जिनाभिहितम् ॥ २१६३ ॥
२ भौम-स्वाप्ना-ऽऽन्तरिक्ष दिव्यमङ्गस्वरलक्षण तथा च। व्यञ्जनमष्टविधं खलु निमित्तमेव ज्ञातव्यम् ॥ १ ॥
३ नानुत्पन्न लक्ष्यते यतो वस्तु लक्षणं तेन। उत्पाद. संभवतस्तथैव विगच्छतो विगम. ॥ २१६४ ॥

गोत्व-गजत्वादयस्तु गो-गजाद्याश्रयवृत्तयः सामान्यविशेषनामानो मन्तव्याः। कुतः? इत्याह– निजकाधारेषु गो-गजादिष्वनुवृत्तिबुद्धितः– अनुगताकारबुद्धिहेतुत्वात् सामान्यनामानः, परतस्तु तुरग-महिषादेर्निवृत्तितो निवर्तनाद् विशेषनामानः। तेऽपि च गोत्वादयो भिन्नेष्वभिन्नबुद्धिहेतुत्वात् स्वाश्रयाद् भिन्ना एवास्य मतेन मन्तव्या इति। तदेवं निरूपितं सामान्यम् ॥ २१९१ ॥

अथ विशेषस्वरूपनिरूपणार्थमाह—

तुल्लागइ-गुण-किरिएगदेसतीयागएऽणुदव्वम्मि[1]। अन्नत्तबुद्धिकारणमंत विसेसो त्ति से बुद्धी ॥ २१९२ ॥

आकृतिश्च गुणाश्च क्रिया चाकृति-गुण-क्रियाः, तुल्या आकृति-गुण-क्रिया यस्य तत् तुल्याकृति-गुण-क्रियम्, अतीतमतिक्रान्तमपगतम्, आगतं तु प्रतीतम्, अतीतं च तदागतं चातीतागतम्, एकदेशादतीतागतमेकदेशातीतागतम्, तुल्याकृति-गुण-क्रियं च तदेकदेशातीतागतं च तथा तस्मिंस्तुल्याकृति-गुण-क्रियैकदेशातीतागते परमाणुद्रव्ये 'अयमस्मादन्यः परमाणुः' इत्येवंभूताया योगिनामन्यत्वबुद्धेर्यः कारणं हेतुर्भवति सोऽन्त्यो विशेष इति 'से' तस्य नैगमस्य बुद्धिरभिप्रायः। इदमुक्तं भवति–'परिमण्डलसंस्थानाः सर्वेऽपि परमाणवः' इति वैशेषिकाः, ततः 'तेषु तुल्याकृतिष्वपि सर्वेषु परमाणुषु भिन्ना, एतेन त्वभिन्ना' इत्येवं येयं परस्परमन्यत्वग्राहिका योगिनां बुद्धिरुत्पद्यते तद्धेतुभूतः परमाणुद्रव्यवर्ती अन्त्यो विशेष उच्यते। यथाभूता हि प्रथमेऽणौ विशेषा न यथाभूता एव द्वितीये, यथाभूताश्च द्वितीये न तथाभूता एव प्रथमे, अन्यथैकत्वप्रसङ्गादितीह भावार्थः।

तथा, पार्थिवा अणवः सर्वेऽपि परस्परं तुल्यगुणाः। तथा, अणु-मनसोराद्यं कर्मादृष्टकारितम्, यथाऽग्नेरूर्ध्वज्वलनम्, वायोस्तिर्यग् गमनमिति सर्वेऽप्यणवस्तुल्यक्रियाः। तथा, एकस्मादाकाशदेशादाकाशप्रदेशाद् यदैवैकः परमाणुः स्थितिक्षयादत्येति– अन्यत्र गच्छति– तदैव यदाऽन्यः परमाणुस्तत्स्थित्युद्भवात् तत्रैवाकाशप्रदेशे समागत्य तिष्ठति, तदैकदेशातीता-ऽऽगतत्वम्, अत एवं वैशेषिकप्रक्रियया तुल्याकृतिषु, तुल्यगुणेषु, तुल्यक्रियेषु, एकप्रदेशनिर्गतागतेषु च परमाणुद्रव्येषु यदन्यत्वबुद्धेः कारणं सोऽन्त्यो विशेष इति 'से' तस्य नैगमस्य बुद्धिः। स चाकृत्यादिना तुल्येष्वतुल्यबुद्धिहेतुत्वादणुभ्यो भिन्न एवेति ॥ २१९२ ॥

एवं सामान्य-विशेषेषु प्ररूपितेषु परः प्राह—

[1] तुल्याकृति-गुण क्रियैकदेशातीतागतेऽणुद्रव्ये। अन्यत्वबुद्धिकारणमन्त्यो विशेष इति तस्य बुद्धिः ॥ २१९२ ॥

यतो नानुत्पन्नं वस्तु लक्ष्यते तेनोत्पादोऽपि तल्लक्षणम्। कथंभूतस्य वस्तुन उत्पादो लक्षणम्? । संभवत उत्पद्यमानस्य। तथा, विगच्छतो विनश्यतो वस्तुनो विगमो विनाशो लक्षणमेवेति ॥ २१६४ ॥

ननु विगमो नाशः कथं वस्तुलक्षणम्? इत्याह—

लक्खिज्जइ जं विगयं विगमेण विणा व जं न संभूई। विगमो वि लक्खणमओ विगच्छओ वत्थुणोऽणण्णो ॥२१६५॥[1]

यद् यस्माद् यथोत्पादेनोत्पन्नं लक्ष्यत एवं विगतमपि विगमेन लक्ष्यत एव, यथा चोत्पादमन्तरेण न वस्तुनः संभूतिः, एवं 'विगमेण' इत्यस्यावृत्त्योत्तरत्रापि संबन्धाद् यस्माद् विगमेनापि विना न वस्तुनः संभूतिः संभवः। न हि मृदः प्राक्तने रूपेऽविनष्टे घटस्य संभवोऽस्ति। अतोऽस्मात् कारणाद् विगमोऽपि वस्तुनो लक्षणमेव, तत्संभवहेतुत्वात्, उत्पादवत्। कथंभूतो विगमः? इत्याह— विगच्छतो वस्तुनोऽनन्योऽभिन्नः, यथोत्पन्नादभेदवानुत्पाद इति ॥ २१६५ ॥

एतदेव भावयति—

अङ्गुलिरिजुता निययप्पसूइ-वक्कत्तणासओ समयं। लक्खिज्जइ नेयरहा तह सव्वे दव्वपज्जाया ॥२१६६॥[2]

अङ्गुल्या ऋजुताऽङ्गुल्यृजुता सा समकं युगपद् निजकप्रसूति-वक्रत्वनाशत एव लक्ष्यते, नेतरथा नान्यथेत्यर्थः। तत्र निजकप्रसूतिरुत्पाद ऋजुतायाः, वक्रत्वस्य नाशो वक्रत्वनाशः, निजकप्रसूतिश्च वक्रत्वनाशश्च निजकप्रसूति-वक्रत्वनाशौ, ताभ्यां निजकप्रसूति-वक्रत्वनाशाभ्यामिति समासः। अस्माच्च पञ्चमीद्विवचनान्तात् "पञ्चम्यास्तसिल् (पा०५,३,७) इति तस्प्रत्ययः। इदमुक्तं भवति— अङ्गुलीद्रव्यस्य ऋजुतापर्यायो नियमत एव स्वस्योत्पादेन वक्रत्वस्य च नाशेन लक्ष्यते, नान्यथा, अनुत्पन्नस्य खरविषाणस्येव लक्षणायोगात्, विपक्षभूतपर्यायाविनाशे चोत्पादायोगात्। यथा चाङ्गुल्या ऋजुतापर्यायस्तथाऽन्येऽपि सर्वद्रव्यपर्यायाः स्वस्योत्पादे स्वविपक्षभूतपर्यायविनाश एव च सति लक्ष्यन्ते, नान्यथा। ततश्च यथोत्पादो वस्तुलक्षकत्वाल्लक्षणं तथा विनाशोऽपि, पूर्वपर्यायविनाशमन्तरेणाप्युत्तरपर्यायविशिष्टवस्तुनो लक्षणायोगादिति ॥ २१६६ ॥

अथ विनाशस्य ये सर्वथा वस्तुत्वं नेच्छन्ति सौगताः, तन्मतानुसारी परः प्राह—

१ लक्ष्यते यद् विगत विगमेन विना वा यद् न संभूति। विगमोऽपि लक्षणमतो विगच्छतो वस्तुनोऽनन्यः ॥ २१६५ ॥

२ अङ्गुल्यृजुता निजकप्रसूति-वक्रत्वनाशत. समकम्। लक्ष्यते नेतरथा तथा सर्वे द्रव्यपर्यायाः ॥ २१६६ ॥

[1]णु दव्व-पज्जवट्ठियनयावलंबि त्ति नेगमो चेव । सम्मदिट्ठी साहु व्व कीस मिच्छत्तभेओऽयं ? ॥२१९३॥

आह– नन्वेवं सति यत् सामान्यं तद् द्रव्यम्, विशेषास्तु पर्यायाः, ततो द्रव्य-पर्यायास्तिकनयद्वयमतावलम्बित्वात् सम्यग्दृष्टिरेवायं नैगमनयः, जैनसाधुवत् । न हि जैनसाधवोऽपि द्रव्य-पर्यायोभयरूपाद् वस्तुनोऽन्यत् किञ्चिदिच्छन्ति । तत् किमित्यसौ मिथ्यात्वभेदः? इति ॥ २१९३ ॥

अत्रोत्तरमाह—

[2]जं सामन्नविसेसे परोप्परं वत्थुओ य सो भिन्ने । मन्नइ अच्चंतमओ मिच्छद्दिट्ठी कणादो व्व ॥२१९४॥

दोहिं वि नएहिं नीयं सत्थमुलूएण तह वि मिच्छत्तं । जं सविसयप्पहाणत्तणेण अन्नोन्ननिरवेक्खा ॥२१९५॥

यद् यस्मात् सामान्य-विशेषौ नैगमनयः परस्परमत्यन्तभिन्नौ मन्यते, वस्तुनोऽप्याधारभूताद् द्रव्य-गुण-कर्म-परमाणुरूपादत्यन्तभिन्नौ स ताविच्छति; जैनसाधवस्तु परस्परं स्वाधाराच्च कथञ्चिदेव तौ भिन्नाविच्छन्ति; अतो मिथ्यादृष्टिरेवाऽयम्, कणादवदिति; तथाहि– द्वाभ्यामपि द्रव्य-पर्यायास्तिकनयाभ्यां सर्वमपि निजं शास्त्रं नीतं समर्थितमुलूकेन तथापि तद् मिथ्यात्वमेव, यद् यस्मात् स्वस्वविषयप्राधान्याभ्युपगमेनोलूकाभिमतौ द्रव्य-पर्यायास्तिकनयावन्योन्यनिरपेक्षौ, जैनाभ्युपगतौ पुनस्तौ परस्परसापेक्षौ, स्याच्छब्दलाञ्छितत्वादिति ॥ २१९४ ॥ २१९५ ॥

अथ सिद्धान्तवादी स्थितपक्षदर्शनार्थमेकान्तवादिनं नैगमं दूषयितुमाह—

[3]जइ सामन्नं सामन्नबुद्धिहेउ त्ति तो विसेसो वि । सामन्नमन्नसामन्नबुद्धिहेउ त्ति को भेओ ? ॥२१९६ ॥

यदि 'गौः' 'गौः' इत्यादिसामान्यबुद्धि-वचनहेतुरिति कृत्वा सामान्यं त्वयेष्यते, हन्त ! तर्हि परमाणुगतोऽन्त्यो विशेषोऽपि सामान्यं प्राप्नोति, 'विशेषः' 'विशेषः' इत्यन्यसामान्यबुद्धि-वचनहेतुत्वात् । न च विशेषेष्वपि सामान्यमस्ति, द्रव्य-गुण-कर्मस्वेव तद्वृत्त्यभ्युपगमात् ।

---

१ ननु द्रव्य-पर्यायास्तिकमतावलम्बीति नैगम एव । सम्यग्दृष्टिः साधुरिव कस्माद् मिथ्यात्वभेदोऽयम् ? ॥ २१९३ ॥

२ यत् सामान्य-विशेषौ परस्परं वस्तुतश्च स भिन्नौ । मन्यतेऽत्यन्तमतो मिथ्यादृष्टिः कणाद इव ॥ २१९४ ॥

द्वाभ्यामपि नयाभ्यां नीतं शास्त्रमुलूकेन तथापि मिथ्यात्वम् । यत् स्वविषयप्रधानत्वेनाऽन्योन्यनिरपेक्षौ ॥ २१९५ ॥

३ यदि सामान्यं सामान्यबुद्धिहेतुरिति ततो विशेषोऽपि । सामान्यमन्यसामान्यबुद्धिहेतुरिति को भेदः ? ॥ २१९६ ॥ ४ घ. ज. 'त्सपरसा' ।

उप्पायस्स[1] हि जुत्ता लक्खणया नासओ विणासस्स । नासोवलक्खियं वा वत्थुं न भावो खपुप्फं व ॥२१६७॥

ननूत्पादस्य लक्षणता युक्ता, उत्पन्नवस्त्वनन्यत्वेन तस्य सत्त्वात्, विनाशस्य त्वसतोऽविद्यमानस्य नासौ युक्ता । न ह्यसत् खर-विषाणं कस्यापि लक्षणं भवितुमर्हति । अथ नाशोऽपि वस्तुनो लक्षणमिष्यते, तर्हि तस्याभावरूपत्वात् तल्लक्षितं वस्त्वप्यभाव एव स्यात्, आकाशकुसुमवदिति । एतदेवाह– 'नासोवलक्खियं वेत्यादि' ॥ २१६७ ॥

अत्रोत्तरमाह—

नासो[2] भावो संभूइहेऊओ वत्थुणो धुवत्तं व । अहव समुप्पाओ इव वत्थुप्पभवाइभावाओ ॥ २१६८ ॥

नाशो भाव इति प्रतिज्ञा, पूर्वोक्तन्यायेन वस्तुनः संभूतिहेतुत्वात्, ध्रुवत्ववदिति । अथवा, हेतु-दृष्टान्तान्यत्वेनान्यथा प्रमाणम्– नाशो भाव इति सैव प्रतिज्ञा, वस्तुनः प्रकृष्टं भवनं प्रभवः प्रौढतापर्यायस्तस्यादौ प्रथमं पूर्वं भावः सत्त्वं तस्माद् वस्तुप्रभवादिभावा-दिति हेतुः । समुत्पादवदिति दृष्टान्तः । इह यो यो वस्तुनः प्रकृष्टभवनस्यादौ भवति स स भावः, यथोत्पादः, भवति च वस्तुप्रभवस्यादौ पूर्वोक्तयुक्तितो नाशः, तस्माद् भाव इति ॥ २१६८ ॥

यदुक्तम्– 'नासोवलक्खियं वेत्यादि' तत्राह—

नासोवलक्खियं[3] चिय तदभावो च्चिय तदन्नहा भावो । आह नणु पत्तमेवं भावाभावोभयसभावं ॥२१६९॥

एवं च सति 'नासोवलक्खियं चिय तादिति' नाशोपलक्षितमेव तत्– निर्दिष्टयुक्तितो नाशेन लक्ष्यत एवैतदित्यर्थः। तथा चैतावतां-शेनाभाव एव तद् वस्तु, नात्र विवादः, कथञ्चिद् वस्तूनामभावरूपताया जैनैरभ्युपगतत्वादिति । 'अन्नहा भावो त्ति' अन्यथा पुनरन्येन रूपेण तद्वस्तु भावः– उत्पाद-ध्रौव्यरूपतया भाव एव तदित्यर्थः । अत्राह परः– नन्वेवं सति भावाभावोभयस्वभावं वस्तु प्राप्तम्, एतच्चायुक्तम्, भावा-ऽभावयोः परस्परपरिहारेणावस्थानाच्छाया-ऽऽतपवदेकत्रायोगादिति ॥ २१६९ ॥

अत्रोत्तरमाह—

---

१ उत्पादस्य हि युक्ता लक्षणता नाऽसतो विनाशस्य । नाशोपलक्षित वा वस्तु न भाव खपुष्पमिव ॥ २१६७ ॥

२ नाशो भाव संभूतिहेतुतो वस्तुनो ध्रुवत्वमिव । अथवा समुत्पाद इव वस्तुप्रभवादिभावात् ॥ २१६८ ॥

३ नाशोपलक्षितमेव तदभाव एव तदन्यथा भाव. । आह ननु प्राप्तमेव भावाभावोभयस्वभावम् ॥ २१६९ ॥

अथवा, गोत्व-गजत्वादिको विशेषोऽपि सामान्यं प्राप्नोति– गोत्व-गजत्वादिसामान्येष्वपि सामान्यं प्राप्नोतीत्यर्थः, 'सामान्यम्' 'सामान्यम्' इति बुद्धि-वचनयोस्तत्रापि प्रवृत्तेः। न च सामान्येष्वपि सामान्यमस्ति, "निःसामान्यानि सामान्यानि" इति वचनात्। ततश्चोक्तयुक्तेर्विशेषस्यापि सामान्यत्वात् को भेदः सामान्य-विशेषयोः ?– न कश्चिदित्यर्थ इति ॥ २१९६ ॥

सामान्यस्यापि च विशेषरूपता प्राप्नोतीति दर्शयन्नाह—

[1]जइ जेण विसेसिज्जइ स विसेसो तेण जं पि सामण्णं। तं पि विसेसोऽवस्सं सत्ताइविसेसयत्ताओ ॥२१९७॥

यदि येन वस्तुना बुद्धिर्वचनं च विशेष्यते स विशेष उच्यते, तेन ततो यदपि परमपरं च सत्ता-गोत्वादिकं सामान्यं तदपि विशेषः प्राप्नोति। कुतः ? सत्तादीनामपि विशेषकत्वात्; तथाहि– सत्तासामान्यमपि गोत्वादिभ्यो बुद्धि-वचने विशेषयति, गोत्वादयोऽपि च सत्तादिभ्यस्ते विशेषयन्त्येव; प्रयोगः– सामान्यमपि विशेष एव, बुद्धि-वचनविशेषकत्वात्, अन्त्यविशेषवदिति। तदेवं विशेषोऽपि सामान्यम्, सामान्यमपि विशेषः प्राप्नोतीत्युक्तम् ॥ २१९७ ॥

किञ्च, "त्रिपदार्थसत्करी सत्ता" इति वचनात् सत्तासमवायात् सत्त्वं भवताऽभ्युपगम्यते, तच्चायुक्तम्। कुतः ? इत्याह—

[2]सत्ताजोगादसओ सओ व सत्तं हवेज्ज दव्वस्स। असओ न खपुप्फस्स व सओ व किं सत्तया कज्जं ? ॥२१९८॥

यत् सत्तायोगाद् वस्तुनः सत्त्वमिष्यते तत् स्वरूपेण किं सतोऽसतो वा भवेत् ? इति वक्तव्यम्। न तावदसतः खपुष्पस्येव सत्त्वं युज्यते। यदि तु स्वरूपेणैव सद् वस्तु, तर्हि सत्तया किं कार्यम् ?, तामन्तरेणापि स्वरूपेणैव वस्तुनः सत्त्वादिति ॥ २१९८ ॥

अपि च,

[3]पइवत्थुं सामन्नं जइ तो णेगं न यावि सामन्नं। अह दव्वेसु तदेगं तह वि सदेसं न सामन्नं ॥ २१९९ ॥

यदि तत् सामान्यं प्रतिवस्तु वर्तते तर्हि नैकम्, प्रतिवस्तुवृत्तित्वात्, प्रतिवस्तुस्वात्मवत्। यदिवा, न तत् सामान्यम्,

---

१ यदि येन विशेष्यते स विशेपस्तेन यदपि सामान्यम्। तदपि विशेषोऽवश्य सत्तादिविशेपकत्वात् ॥ २१९७॥
२ सत्तायोगादसत सतो वा सत्त्व भवेद् द्रव्यस्य। असतो न खपुष्पस्येव सतो वा किं सत्तया कार्यम् ? ॥ २१९८ ॥
३. प्रतिवस्तु सामान्य यदि ततो नैक न चापि सामान्यम्। अथ द्रव्येषु तदेक तथापि सदेश न सामान्यम् ॥ २१९९ ॥

एवं चिय तं वत्थुं सव्वाभावे व तं खपुप्फं व । भावे व सव्वहा सव्वसंकरे-गत्त-णिच्चाइं ॥ २१७० ॥

नन्वेवमेव भावाभावोभयरूपतायामेव तद् वस्तु भवति, न पुनरेकान्तेन भावस्वरूपत्वेऽभावस्वरूपत्वे वा । एतदेवाह– सर्वाभावे वा सर्वथैवाभावरूपतायां वेष्यमाणायां खपुष्पमिव तद् वस्तु स्यात् । भावे वा सर्वथा भावरूपतायां वैकान्तेनेष्यमाणायां सर्वसंकरै-कत्व-नित्यत्वादयो दोषाः प्रसजन्ति; तथाहि– 'सर्वथा सर्वैरपि प्रकारैर्घटस्य भावः' इत्युक्ते यथा घटरूपतया तथा पट-स्तम्भ-भू-भूधरादित्रैलोक्यरूपतयापि तस्य भावः प्राप्नोति, कथञ्चिदप्यभावरूपतानभ्युपगमात् । एवं स्तम्भ-भू-भूधरादीनामपि सर्वात्मना भावात् सर्वसंकरोऽन्योन्यानुप्रवेशलक्षणः स्यात् । एकस्मिन् वा कस्मिंश्चिद् घटादिवस्तुनि सर्वस्यापि त्रिभुवनस्यानुप्रवेशात् सर्वैकत्वं भवेत् । ततश्चैकस्मिन्नपि व्योमादिवस्तुनि सर्वदैवावतिष्ठमाने शेषस्यापि घटादिवस्तुजातस्य तदेकत्वापत्त्या सर्वदाऽवस्थानात् सर्वनित्यत्वप्रसङ्गः । आदिशब्दादेकस्मिन् घटादिवस्तुनि विनष्टे शेषस्यापि भू-भूधरादेस्तदेकत्वेन विनाशात् सर्वशून्यतापत्तिः, सर्वस्यापि च सर्वत्र विद्यमानत्वात् सर्वार्थेषु निराकाङ्क्षमेव विश्वं स्यादिति । तस्मात् केवले भावरूपत्वेऽभावरूपत्वे वेष्यमाणे दोषदर्शनाद् भावाभावोभयरूपं वस्तु । न चैवं विरोधः, भावा-ऽभावयोर्भिन्ननिमित्तत्वात् । यदि हि येनैव भावस्तेनैव चाभावः स्यात् तदा भवेद् विरोधः । न चैतदस्ति, स्वरूपेण घटादेर्भावात्, पररूपेण चाभावादिति ॥ २१७० ॥

ननु यद्येवम्, तर्ह्युत्पन्नमप्यनुत्पन्नम्, तस्याभावरूपत्वात्; अनुत्पन्नमभावीभूतं चास्ति, अभावरूपतया सत्त्वात् । तथा च सति 'उत्पन्नम्, विनष्टं वेदम्' इत्यादिलोकव्यवहारो न प्राप्नोति, इत्याशङ्क्याह—

उप्पन्नं विगयं वाऽणप्पियमविसेसियं सधम्मेहिं । तं चिय पज्जायंतरविसेसियमहप्पियं नाम ॥ २१७१ ॥

इहोत्पन्नं विगतं वेति यल्लोके व्यपदिश्यते वस्तु, तत् सर्वमपि द्विविधम्– अर्पितम्, अनर्पितं च । तत्र स्वधर्मैः विशेषवद्भिः, पर्यायैरविशेषितं सामान्यरूपं वस्त्वनर्पितमभिधीयते । तदेव च पर्यायान्तरैः पर्यायविशेषैर्विशेषितमर्पितमुच्यत इति । एवं व्यवस्थिते यदा सामान्यरूपमनपेक्ष्योत्पाद-विगमादिपर्यायेण केनापि विशेषितं वस्तु वक्तुमिष्यते तदोत्पन्नं विगतं चेत्यादि व्यपदेशतः सर्वोऽपि

१ एवमेव तद् वस्तु सर्वाभावे वा तत् खपुष्पमिव । भावे वा सर्वथा सर्वसकरै-कत्व-नित्यत्वानि ॥ २१७० ॥

२ उत्पन्न विगतं वाऽनर्पितमविशेषितं स्वधर्मैः । तदेव पर्यायान्तरविशेषितमथार्पितं नाम ॥ २१७१ ॥

प्रतिवस्तुवृत्तित्वात्, प्रतिवस्तुस्वात्मवत्। अथ बहुषु द्रव्येषु वृत्तमपि तदेकं तथापि सदेशं प्राप्नोति, अदेशस्य परमाणोरिव बहुषु द्रव्ययोगात्। सदेशत्वे च सति न सामान्यम्, देशभेदे देशिनोऽपि तदव्यतिरिक्तस्य भेदादिति ॥ २१९९ ॥

अथ प्रतिवस्तु वर्तमानमपि तदेकमिष्यते तथापि दोष इति दर्शयन्नाह—

[1]अह पइवत्थुमिहेगं च तहवि तं नत्थि खरविसाणं व। न य तदुवलक्खणं तं सव्वगयत्तओ खं व ॥२२००॥

अथ प्रतिवस्तु वर्तते तत्, एकं चेष्यते, तथापि तद् नास्ति, अनुपलभ्यमानत्वात्, खरविषाणवत्। न च तस्य स्वाश्रयभूतस्य गवादेरुपलक्षणमुपलक्षकं तद् युज्यते, सर्वगतत्वात्, गवादिव्यक्तिभ्योऽन्यत्वाच्च, आकाशवदिति ॥ २२०० ॥

किञ्च,

[2]सामन्नविसेसकयं जइ नाणं तेसु किंनिमित्तं तो। अह तत्तो च्चिय तम्हा तं परहेउ त्ति णेगंतो ॥ २२०१ ॥

यदि 'गौः' 'गौः' इत्यादि सामान्यज्ञानं वचनं च सामान्यहेतुकं प्रवर्तते, तथा परमाणुषु 'अयमस्माद् विशिष्टः' इति विशेषज्ञानं वचनं च यदि विशेषकृतम्, ततस्तेषु गोत्व-तुरगत्वादिसामान्येषु सर्वत्र 'सामान्यम्' 'सामान्यम्' इति ज्ञानं वचनं च तथा तेषु विशेषेषु सर्वत्र 'विशेषः' 'विशेषः' इति विशेषबुद्धिर्वचनं च किंनिमित्तमिति वक्तव्यम्? । न च सामान्येष्वपि सामान्यमस्ति, नापि विशेषेष्वन्ये विशेषाः सन्ति, येन तेषु तन्निमित्ते ते स्याताम्। अथ तत एव तेभ्य एव गोत्वादिसामान्येभ्योऽपरसामान्यमन्तरेणापि सामान्यज्ञान-वचने अभ्युपगम्येते, विशेषेभ्य एव चान्यविशेषनिरपेक्षेभ्यो विशेषज्ञान-वचने इष्येते, तस्मात् तर्हि तत् सामान्य-विशेषज्ञानं वचनं च परहेतुकं सामान्य-विशेषनिमित्तमेवेति नायमेकान्तः, सामान्य-विशेषविषयाभ्यामेव सामान्यविशेषज्ञान-वचनाभ्यां व्यभिचारादिति ॥ २२०१ ॥

अथ सिद्धान्तवादी स्थितपक्षमुपदर्शयन्नाह—

[3]तम्हा वत्थूणं चिय जो सरिसो पज्जवो स सामन्नं। जो विसरिसो विसेसो स मओऽणत्थंतरं तत्तो ॥२२०२॥

---

१ अथ प्रतिवस्त्विहैकं च तथापि तद् नास्ति खरविषाणमिव। न च तदुपलक्षणं तत् सर्वगतत्वतः खमिव ॥ २२०० ॥

२ सामान्यविशेषकृत यदि ज्ञानं तेषु किंनिमित्तं ततः? । अथ तत एव तस्मात् तत् परहेत्विति नैकान्तः ॥ २२०१ ॥

३. तस्माद् वस्तूनामेव य. सदृशः पर्यव. स सामान्यम्। यो विसदृशो विशेष. स मतोऽनर्थान्तर ततः ॥ २२०२ ॥

लोकव्यवहारः प्रवर्तते। तथाचाह–"अर्पिता-ऽनर्पितसिद्धेः" (तत्त्वा० ५,३१,१३३) इति। तदेवमुक्तमुत्पाद-विगमलक्षणम्। ध्रौव्यलक्षणं तु द्रव्यलक्षणाभिधानद्वारेणैवाभिहितम्, ध्रुवत्व-द्रव्यत्वयोरेकार्थत्वात् ॥ २१७१ ॥

अथ 'वीरिय त्ति' वीर्यलक्षणमभिधित्सुराह—

[1]वीरियं ति बलं जीवस्स लक्खणं जं व जस्स सामत्थं। दव्वस्स चित्तरूवं जह वीरियमहोसहाईणं ॥२१७२॥

वीर्यं जीवस्य बलमुच्यते। तेन च 'बलवानयम्' इत्यादिव्यपदेशाज्जीवो लक्ष्यत इति तत् तस्य लक्षणम्। अथवा, न जीवस्यैव बलं वीर्यमुच्यते, किन्तु यद् यस्य सचेतनस्याचेतनस्य वा द्रव्यस्य चित्ररूपं सामर्थ्यं तदिह वीर्यमभिधीयते यथा लोकेऽपि प्रसिद्धं हरीतकी-गुडूच्याद्यौषधीनां वीर्यम्, आदिशब्दाद् मणि-मन्त्रादिपरिग्रहः; उक्तं च– 'अचिन्त्यो हि मणि-मन्त्रौ-षधीनां प्रभावः' इति ॥ २१७२ ॥

अथ 'भावे य त्ति' भावलक्षणमाह—

[2]जमिहोदइयाईणं भावाणं लक्खणं त एवहवा। तं भावलक्खणं खलु तत्थुदओ पोग्गलविवागो ॥२१७३॥

यदिह भावानामौदयिकादीनां कर्मपुद्गलोदयादिरूपं लक्षणं तद् भावलक्षणम्, यथा कर्मपुद्गलानामुदयलक्षण औदयिकः, कर्मपुद्गलानामेवोपशमलक्षण औपशमिकः, तेषामेव सर्वथाऽभावलक्षणः क्षायिकः, क्षयोपशमरूपमिश्रतालक्षणः क्षायोपशमिकः, सामान्येन पुद्गलपरिणतिरूपः पारिणामिकः। एषामेव भावानां व्यादिसंयोगलक्षणः सांनिपातिकः। 'त एवहव त्ति 'अथवा, त एवौदयिकादयो भावा लक्षणं भावलक्षणम्। जीवो हि नारकादिव्यपदेशहेतुत्वात् तैर्लक्ष्यत एवेति। 'तत्थुदओ पोग्गलविवागो त्ति' तत्र प्रथमव्याख्यापक्ष औदयिकभावस्य कर्मपुद्गलविपाकलक्षण उदयो लक्षणम्, एवमन्येषामपि भावानां यथायोगं लक्षणं वाच्यम्। तच्च दर्शितमेवेति ॥ २१७३ ॥

भाष्यकारोऽपि 'तस्मिन्नुदये भव औदयिकः; तेन वा निर्वृत्तः, स एव वौदयिकः' इत्यादिकां भावानां व्युत्पत्तिं, शेषाणामौपशमिकादिभावानामुपशमादिरूपं लक्षणं च दर्शयन्नाह—

१ वीर्यमिति बलं जीवस्य लक्षणं यद्वा यस्य सामर्थ्यम्। द्रव्यस्य चित्ररूपं यथा वीर्यमथौषध्यादीनाम् ॥ २१७२ ॥
२ यदिहौदयिकादीनां भावानां लक्षणं त एवाथवा। तद् भावलक्षणं खलु तत्रोदयः पुद्गलविपाकः ॥ २१७३ ॥

तस्माद् वस्तूनामेव गवादीनां खुर-ककुद-लाङ्गूल-विषाण-सास्नादिमत्त्वलक्षणो यः सदृशः पर्यायः स एव सामान्यं, न पुनरेक-नित्य-निरवयवा-ऽक्रिय-सर्वगतत्वादिधर्मोपेतं पराभ्युपगतम् । यस्तु तेषामेव गवादीनां शावलेय-धावलेयत्वादिको विसदृशोऽन्योन्यं विलक्षणः पर्यायः स विशेषः। स च सामान्यरूपो विशेषरूपश्च पर्यायस्ततो वस्तुनोऽनर्थान्तरमभिन्नः, कथञ्चित्तु पररूपतादिभिर्भिन्नोऽपि, न त्वेकान्तेनाभिन्नो भिन्नो वेति द्रष्टव्यमिति । तदेवमुक्तो नैगमनयः ॥ २२०२ ॥

अथ संग्रहनयं व्याचिख्यासुराह—

[1]संगहणं संगिण्हइ संगिज्झंते व तेण जं भेया । तो संगहो त्ति संगहियपिंडियत्थं वओ जस्स ॥ २२०३ ॥

संग्रहणं सामान्यरूपतया सर्ववस्तूनामाक्रोडनं संग्रहः अथवा, सामान्यरूपतया सर्वं संगृह्णातीति संग्रहः । अथवा, यद् यस्मात् सर्वेऽपि भेदाः सामान्यरूपतया संगृह्यन्तेऽनेनेति संग्रहः । संगृहीतं च तत् पिण्डितं च संगृहीतपिण्डितं तदेवार्थोऽभिधेयं यस्य तत् संगृहीतपिण्डितार्थम्, एवंभूतं वचो वचनं यस्य संग्रहस्येति ॥ २२०३ ॥

तत्र संगृहीतपिण्डितार्थं किमुच्यते ? इत्याह—

[2]संगहियमागहीयं संपिंडियमेगजाइमाणीयं । संगहियमणुगमो वा वइरेगो पिंडियं भणियं ॥ २२०४ ॥

अहव महासामन्नं संगहियपिंडियत्थमियरं ति । सव्वविसेसानन्नं सामन्नं सव्वहा भणियं ॥ २२०५ ॥

व्याख्या– सामान्याभिमुखेनाऽऽग्रहणमागृहीतं संगृहीतमुच्यते, पिण्डितं त्वेकजातिमानीतमभिधीयते, तदेवंभूतं वस्त्वर्थोऽभिधेयं यस्य तत् संगृहीतपिण्डितार्थं 'वचनं संग्रहनयस्य' इति स्वयमेव द्रष्टव्यम् । अथवा, संगृहीतमनुगमोऽभिधीयते, सर्वव्यक्तिष्वनुगतस्य सामान्यस्य प्रतिपादनमित्यर्थः । व्यतिरेकस्तु पिण्डितमुच्यते, विशेषप्रतिपादकपरमतनिराकरणमित्यर्थः । ततश्च संगृहीतपिण्डितार्थमनुगम-व्यतिरेकार्थं संग्रहवचनमिति हृदयम् । अथवा, सत्ताख्यं महासामान्यं संगृहीतमुच्यते, इतरत्तु गोत्वादिकमवान्तरसामान्यं पिण्डितार्थमभिधीयते । ततः संगृहीतपिण्डितार्थं परा-ऽपरसामान्यार्थं संग्रहवचः । किं बहुनोक्तेन ? सर्वे विशेषा अनन्या अभिन्ना यस्य तत्

१ सग्रहण सगृह्णाति सगृह्यन्ते वा तेन यद् भेदा । तत सग्रह इति सगृहीतपिण्डितार्थं वचो यस्य ॥ २२०३ ॥
२ सगृहीतमागृहीतं संपिण्डितमेकजातिमानीतम् । संगृहीतमनुगमो वा व्यतिरेक पिण्डित भणितम् ॥ २२०४ ॥
अथवा महासामान्य संगृहीतपिण्डितार्थमितरदिति । सर्वविशेषानन्य सामान्य सर्वथा भणितम् ॥ २२०५ ॥

उँदए सइ जो तेण व निव्वत्तो उदय एव ओदईओ। उदयविघाय उवसमो उवसम एवोवसमिउ त्ति॥२१७४॥
खय इह कम्माभावो तब्भावे खाइओ स एवहवा। उभयसहावो मीसो खओवसमिओ तहेवायं ॥ २१७५ ॥
सव्वत्तो किर नामो परिणामोऽभिमुहया स एवेह। परिणामिउ त्ति सुद्धो जो जीवा-ऽजीवपरिणामो ॥२१७६॥

तिस्रोऽपि गतार्थाः, नवरं 'उभयसहावो इत्यादि' कर्मणो यावनन्तरोक्तौ क्षयो-पशमौ तदुभयस्वभावत्वाद् मिश्रः क्षायोपशमिको भावः। कथं कया व्युत्पत्त्या ? इत्याह— तथैवेति, क्षयोपशमावेव क्षायोपशमिकः; तयोर्वा भवः, ताभ्यां वा निर्वृत्त इति पूर्वदर्शितव्युत्पत्त्येत्यर्थः। तदेवं नामादि भावावसानं द्वादशधा संक्षेपतो लक्षणमभिहितम्। एतदेवाह निर्युक्तिकारः—'लक्खणमेयं समासओ भणियं' इति॥ २१७४ ॥ २१७५ ॥ २१७६ ॥

इह च प्रकृते भावलक्षणेनाधिकार इत्येतदेव दर्शयन्नाह भाष्यकारः—

[3]सम्मत्त-चरित्ताइं मीसो-वसम-क्खयस्सहावाइं। सुय-देसोवरईओ खओवसमभावरूवाओ ॥ २१७७ ॥
सामाइएसु एवं संभवओ सेसलक्खणाइं पि। जोएज्ज भावओ वा वइसेसियलक्खणं चउहा ॥ २१७८ ॥

इह सामायिकं तावच्चतुर्विधम्— सम्यक्त्वसामायिकम्, श्रुतसामायिकम्, देशविरतिसामायिकम्, सर्वविरतिसामायिकं चेति। तत्र सम्यक्त्वसामायिकं चारित्रसामायिकं चेत्येते द्वे अपि सामायिके मिश्रो-पशम-क्षयस्वभावे मन्तव्ये— मिश्रः क्षायोपशमिको भावः, उपशमस्त्वौपशमिको भावः, क्षयः क्षायिको भावः, एतेषु त्रिष्वपि भावेषु यथोक्तं सामायिकद्वयं वर्तत इत्यर्थः। श्रुतमिति श्रुतसामायिकं, देशोपरतिर्देशविरतिसामायिकम्, एते द्वे अप्येकस्मिन्नेव क्षायोपशमिके भावे वर्तेते। अत एतानि चत्वार्यपि सामायिकानि यथोक्तभावरूपत्वात्, जीवस्य चैतैः सामायिकवत्त्वेन लक्षणाद् भावलक्षणरूपाणि भवन्ति। एवमेतेषु सामायिकेषु संभवतो यथासंभवं शेषाण्यपि नाम-

---

१ उदये सति यत्तेन वा निर्वृत्त उदय एवौदयिकः। उदयविघात उपशम उपशम एवौपशमिक इति ॥ २१७४ ॥
क्षय इह कर्माभावस्तद्भावे क्षायिकः स एवाथवा। उभयस्वभावो मिश्रः क्षायोपशमिकस्तथैवायम् ॥ २१७५ ॥
सर्वतः किल नामः परिणामोऽभिमुखता स एवेह। पारिणामिक इति शुद्धो यो जीवा-ऽजीवपरिणामः ॥ २१७६ ॥ २ गाथा २१८०।
३ सम्यक्त्व-चारित्रे मिश्रो-पशम-क्षयस्वभावे। श्रुत-देशोपरती क्षयोपशमभावरूपे ॥ २१७७ ॥
सामायिकेष्वेवं संभवतः शेषलक्षणान्यपि। योजयेद् भावतो वा वैशेषिकलक्षणं चतुर्धा ॥ २१७८ ॥

सर्वविशेषानन्यम् । अतः क्रोडीकृतसर्वविशेषं सामान्यमेव सर्वैः प्रकारैः संग्रहवचनस्याभिधेयतया भणितमिति ॥ २२०४ ॥२२०५ ॥

कथंभूतं पुनः सामान्यं संग्रहो मन्यते ? विशेषांस्तु कुतोऽसौ नाभ्युपगच्छति ? इति दर्शनार्थमाह—

[1]एगं निच्चं निरवयवमक्कियं सव्वगं च सामन्नं । निस्सामन्नत्ताओ नत्थि विसेसो खपुप्फं व ॥ २२०६ ॥

एकं सामान्यम्, सर्वत्र तस्यैव भावात्, विशेषाणां चाभावात्; तथा, नित्यं सामान्यम्, अविनाशात्; तथा, निरवयवम्, अदेशत्वात्; अक्रियम्, देशान्तरगमनाभावात्; सर्वगतं च सामान्यम्, अक्रियत्वादिति । विशेषास्तु न सन्ति, निःसामान्यत्वात्; सामान्यव्यतिरेकिणां तेषामभावात् । इह यत् सामान्यातिरिक्तं तद् नास्ति, यथा खपुष्पमिति ॥ २२०६ ॥

एतदेव समर्थयति—

[2]सदिति भणियम्मि जम्हा सव्वत्थाणुप्पवत्तए बुद्धी । तो सव्वं तम्मत्तं नत्थि तदत्थंतरं किंचि ॥२२०७॥

यस्मात् 'सत्' इत्येवं भणिते सर्वत्र भुवनत्रयान्तर्गते वस्तुनि बुद्धिरनुप्रवर्तते प्रधावति । न हि तत् किमपि वस्त्वस्ति यत् 'सत्' इत्युक्ते झगिति बुद्धौ न प्रतिभासते । ततस्तस्मात् सर्वं तन्मात्रमेव सत्तामात्रमेव, न तदर्थान्तरं किञ्चिदस्ति यद् विशेषतया कल्पेतेति ॥ २२०७ ॥

सत्तामात्रत्वमेव सर्वभावानां भावयन्नाह—

[3]कुंभो भावाणन्नो जइ तो भावो अहन्नहाऽभावो । एवं पडादओ वि हु भावाणन्न त्ति तम्मत्तं ॥२२०८॥

कुम्भो घटः स भावात् सत्तातोऽन्यः, अनन्यो वा ?। यद्यनन्योऽभिन्नः, तर्हि भावः सत्तामात्रमेवासौ। 'अहन्नह त्ति' अथान्यथा- भावाद् भिन्नोऽभ्युपगम्यत इत्यर्थः, तर्ह्यभावोऽसन्नेवासौ, भावादन्यत्वात्, खरविषाणवदिति। एवं पटादयोऽपि प्रत्येकं वाच्याः। ततस्तेऽपि द्वितीयपक्षेऽसत्त्वप्रसङ्गाद् भावादनन्येऽभ्युपगन्तव्याः, इति सर्वमेव घट-पटादिकं वस्तु तन्मात्रं सत्तामात्रमेवेति॥२२०८॥

अथवाऽयमेवार्थोऽन्यथाऽभिधीयते । कथम् ? इत्याह—

---

१ एकं नित्य निरवयवमक्रियं सर्वगं च सामान्यम् । नि.सामान्यत्वाद् नास्ति विशेष खपुष्पमिव ॥ २२०६ ॥

२ सदिति भणिते यस्मात् सर्वत्रानुप्रवर्तते बुद्धि । तत सर्व तन्मात्रं नास्ति तदर्थान्तरं किञ्चित् ॥ २२०७ ॥

३ कुम्भो भावानन्यो यदि ततो भावोऽथान्यथाऽभाव. । एवं पटादयोऽपि खलु भावानन्य इति तन्मात्रम् ॥ २२०८ ॥

स्थापना-द्रव्यसादृश्यरूपाणि लक्षणानि योजयेत्; तथाहि– जीवद्रव्यमेतैर्लक्ष्यत इति द्रव्यलक्षणमप्येतानि भवन्ति, एवमन्यलक्षणताप्यभ्यूह्य वाच्या। यदुक्तं निर्युक्तिकृता– 'अहवा वि भावलक्खण' इत्यादि, तद्व्याख्यानार्थमाह– 'भावओ वेत्यादि'। 'वा' इत्यथवा, भावतो भावविषयेऽन्यद् वैशेषिकं विशेषरूपलक्षणं चतुर्विधं बोद्धव्यम् ॥ २१७७ ॥ २१७८ ॥

तच्च 'सद्दहण जाणणा' इत्यादिना निर्युक्तिकृता दर्शितं भाष्यकारो व्याख्यातुमाह—

[3]सद्दहणाइसहावं जह सामाइयं जिणो परिकहेइ। तल्लक्खणं चिय तयं परिणमए गोयमाईणं ॥ २१७९ ॥

पूर्वमौदयिकादिभावानामुदयो-पशमादयो लक्षणमित्येतद् भावलक्षणमुक्तम्। अथवा, त एवौदयिकादयो भावा जीवा-ऽजीवलक्षकत्वेन भावलक्षणमुक्ताः। इदं च द्विविधमपि भावलक्षणं सामान्यम्, जीवा-ऽजीवलक्षकत्वेन सर्वत्र भावात्। श्रद्धानादिकं तु विशेषलक्षणम्, सम्यक्त्वादिसामायिकेष्वेव भावात्; तथाहि– जीवादिपदार्थश्रद्धानं सम्यक्त्वसामायिकस्य लक्षणम्; आदिशब्दात् 'जाणण त्ति' ज्ञानज्ञा जीवादिवस्तुपरिच्छित्तिरित्यर्थः। सा च श्रुतसामायिकस्य लक्षणम्। 'विरइ त्ति' विरमणं विरतिरशेषसावद्ययोगनिवृत्तिः। सा पुनश्चारित्रसामायिकस्य लक्षणम्। 'मीसं व त्ति'। 'मीसा व त्ति' पाठान्तरं च। तत्र मिश्रं विरताविरतं, मिश्रा वा विरत्यविरतिर्देशविरतिसामायिकस्य लक्षणम्। ततश्चैतद् यथा श्रद्धानादिस्वभावं श्रद्धानादिचतुर्लक्षणसंयुक्तं सम्यक्त्वादिसामायिकं जिनः श्रीमन्महावीरः परिकथयति, तल्लक्षणयुक्तमेव तद् गौतमादिश्रोतॄणां परिणमतीति। तदेवमभिहितं लक्षणद्वारम् ॥ २१७९ ॥

अथ नयद्वारम्। तत्र 'नयः' इति किमुच्यते, कतिभेदश्चायम्? इत्याह—

[4]एगेण वत्थुणोऽणेगधम्मुणो जमवधारणेणेव। नयणं धम्मेण तओ होइ नओ सत्तहा सो य ॥ २१८० ॥

अनेकधर्मणोऽनन्तधर्मात्मकस्य वस्तुनो यदेकेन नित्यत्वादिनाऽनित्यत्वादिना वा धर्मेणावधारणेनैव सावधारणं नयनं प्ररूपणं तकोऽसौ नयो भवति। अनन्तधर्मात्मकं वस्त्वेकांशेनैव नयति प्ररूपयतीति नयः। कथं पुनरेकस्य वस्तुनो युगपदनन्तधर्मात्मकत्वम्?। अत्रोच्यते– सर्वमेव वस्तु तावत् सपर्यायम्। ते च पर्याया द्विविधा रूप-रसादयो युगपद्भाविनः, नव-पुराणादयस्तु क्रमभाविनः। पुनः शब्दा-ऽर्थपर्यायभेदात् सर्वेऽपि द्विविधाः। तत्र 'इन्द्रो दुश्च्यवनो हरिः' इत्यादिशब्दैर्येऽभिलप्यन्ते ते

1 गाथा २१४७। 2 गाथा २१४८। 3 श्रद्धानादिस्वभाव यथा सामायिक जिन· परिकथयति। तल्लक्षणमेव तत् परिणमते गौतमादीनाम्॥ २१७९ ॥
4 एकेन वस्तुनोऽनेकधर्मणो यदवधारणेनैव। नयनं धर्मेण ततो भवति नय· सप्तधा स च॥ २१८० ॥

तम्मत्तमिह विसेसो सामन्नं पिव पमेयभावाओ । सव्वत्थ सम्मईओ वभिचाराभावओ वावि ॥२२०९॥

तन्मात्रमिह विशेषा इति प्रतिज्ञा, प्रमेयत्वात्, सामान्यवत्। अथवा, अन्यो हेतुः- सर्वत्र सन्मतेर्व्यभिचाराभावात्- सर्वत्र सन्मतिप्रवृत्तेरित्यर्थ इति ॥ २२०९ ॥

प्रकारान्तरेणापि विशेषाणां सामान्यरूपतां साधयितुमाह—

[2]चूओ वणस्सइ च्चिय मूलाइगुणो त्ति तस्समूहो व्व । गुम्मादओ वि एवं सव्वे न वणस्सइविसिट्ठा ॥२२१०॥

चूतो वनस्पतिः सामान्यरूप एव, मूलादिगुणत्वात्, तत्समूहवत्- चूतादिवृक्षसमूहवत्। गुल्मो लतासमूहः, तदादयोऽपि सर्वे वृक्षविशेषा वनस्पतेरविशिष्टा एव, इति सामान्यमेवास्ति, न विशेषा इति ॥ २२१० ॥

किञ्च,

[3]सामन्नाओ विसेसोऽन्नोऽणन्नो व नत्थि जइ अन्नो । निस्सामन्नत्ताओऽणन्नो सामन्नमेत्तं सो ॥ २२११ ॥

सामान्याद् विशेषोऽन्यः, अनन्यो वा ? । यद्यन्यः, तर्हि नास्त्यसौ, सामान्यबहिर्भूतत्वात्, खरविषाणवत्। अथानन्यः, तर्हि सामान्यमात्रमेवासौ, तत्स्वरूपवदिति । तदेवमुक्तः संग्रहः ॥ २२११ ॥

अथ व्यवहारनयमाह—

[4]ववहरणं ववहरए स तेण व वहीरए व सामन्नं । ववहारपरो व जओ विसेसओ तेण ववहारो ॥ २२१२ ॥

व्यवहरणं व्यवहारः, व्यवहरति स इति वा व्यवहारः, विशेषतोऽवह्रियते निराक्रियते सामान्यं तेनेति व्यवहारः, लोको व्यवहारपरो वा विशेषतो यस्मात् तेन व्यवहार इति । अयं च न यदुक्तसूक्तिकां प्रतिपद्यते ॥ २२१२ ॥

[5]'वच्चइ विणिच्छियत्थं ववहारो सव्वदव्वेसु' अस्य व्याख्यामाह—

१ तन्मात्रमिह विशेष सामान्यमिव प्रमेयभावात् । सर्वत्र सन्मतेर्व्यभिचाराभावतो वापि ॥ २२०९ ॥
२ चूतो वनस्पतिरेव मूलादिगुण इति तत्समूह इव । गुल्मादयोऽप्येव सर्वे न वनस्पतिविशिष्टा ॥ २२१० ॥
३ सामान्याद् विशेषोऽन्योऽनन्यो वा नास्ति यद्यन्य । नि सामान्यत्वादनन्य. सामान्यमात्रं स ॥ २२११ ॥
४ व्यवहरण व्यवहरति स तेन वाऽवह्रियते वा सामान्यम् । व्यवहारपरो वा यतो विशेपतस्तेन व्यवहार ॥ २२१२ ॥ ५ गाथा २१८३ ।

सर्वेऽपि शब्दपर्यायाः। ये त्वभिलपितुं न शक्यन्ते श्रुतज्ञानविषयत्वातिक्रान्ताः केवलादिज्ञानविषयास्तेऽर्थपर्यायाः। पुनरेते द्विविधाः—स्वपर्यायाः, परपर्यायाश्च। पुनस्तेऽपि केचित् स्वाभाविकाः, केचित्तु पूर्वापरादिशब्दवदापेक्षिकाः। पुनरेते सर्वेऽप्यतीता-ऽनागत-वर्तमान-कालभेदात् त्रिविधा इत्यादिना प्रकारेण समयानुसारतः सुधिया वस्तुनो युगपदनन्तधर्मकत्वं भावनीयम्। स च नयः सप्तविधः सप्तप्रकारः॥ इति व्याख्यातास्तिस्रो निर्युक्तिगाथाः, द्वात्रिंशच्च भाष्यगाथाः, इत्युभयं पञ्चत्रिंशद्गाथार्थः॥ २१८०॥

के पुनस्ते सप्त नयप्रकाराः? इत्याह—

[1]नेगम संगह ववहार उज्जुसुए चेव होइ बोधव्वो। सद्दे य समभिरूढे एवंभूए य मूलनया ॥२१८१॥

णेगेहिं माणेहिं मिणइ त्ती णेगमस्स नेरुत्ती। सेसाणं पि नयाणं लक्खणमिणमो सुणह, वोच्छं ॥२१८२॥

संगहियपिंडियत्थं संगहवयणं समासओ बिंति। वच्चइ विणिच्छियत्थं ववहारो सव्वदव्वेसु ॥२१८३॥

पच्चुप्पन्नग्गाही उज्जुसुओ नयविही मुणेअव्वो। इच्छइ विसेसियतरं पच्चुप्पन्नं नओ सद्दो ॥ २१८४ ॥

वत्थुओ संकमणं होइ अवत्थू नए समभिरूढे। वंजण-अत्थ-तदुभए एवंभूओ विसेसेइ ॥ २१८५ ॥

एताः पञ्च निर्युक्तिगाथाः क्रमेण व्याचिख्यासुर्भाष्यकारो नैगमनयशब्दार्थं तावदाह—

[2]णेगाइं माणाइं सामन्नो-भय-विसेसनाणाइं। जं तेहिं मिणइ तो णेगमो णओ णेगमाणो त्ति ॥२१८६॥

न एकं नैकं प्रभूतानीत्यर्थः, नैकानि किन्तु प्रभूतानि यानि मानानि सामान्यो-भय-विशेषज्ञानानि। तत्र समानानां भावः सामान्यं सत्तालक्षणम्, उभयं सामान्यविशेषोभयरूपमपान्तरालसामान्यं वृक्षत्व-गोत्व-गजत्वादिकम्, विशेषास्तु नित्यद्रव्य-

1 नैगमः संग्रहो व्यवहार ऋजुसूत्रश्चैव भवति बोद्धव्यः। शब्दश्च समभिरूढ एवंभूतश्च मूलनयाः॥ २१८१॥
नैकैर्मानैर्मिनोतीति नैगमस्य निरुक्तिः। शेषाणामपि नयानां लक्षणमिदं तु शृणुत, वक्ष्ये॥ २१८२॥
संगृहीतपिण्डितार्थं संग्रहवचनं समासतो ब्रुवन्ति। व्रजति विनिश्चितार्थं व्यवहारः सर्वद्रव्येषु॥ २१८३॥
प्रत्युत्पन्नग्राही ऋजुसूत्रो नयविधिर्ज्ञातव्यः। इच्छति विशेषिततरं प्रत्युत्पन्नं नयः शब्दः॥ २१८४॥
वस्तुनः संक्रमणं भवत्यवस्तु नये समभिरूढे। व्यञ्जना-ऽर्थ-तदुभयानेवंभूतो विशेषयति॥ २१८५॥

2 नैकानि मानानि सामान्यो-भय-विशेषज्ञानानि। यत् तैर्मिनोति ततो नैगमो नयोऽनेकमान इति॥ २१८६॥

[1]सदिति भणियम्मि गच्छइ विणिच्छयं सदिति किं तदन्नं ति। होज्ज विसेसेहिंतो संववहारादवेतं जं? ॥२२१३॥

'सत्' इति भणिते सति विनिश्चयमसौ गच्छति– विचार्य विशेषानेव वस्तुत्वेन व्यवस्थापयतीत्यर्थः, तथा ह्येवमयं विचारयति– ननु 'सत्' इति यदुच्यते तद् घट-पटादिविशेषेभ्यः किमन्यद् नाम यत् संव्यवहारादप्यपेतं व्यवहारे न क्वचिदुपयुज्यते, वार्तामात्रप्रसिद्धं सामान्यम्?– नास्त्येव क्वापि तदित्यर्थः ॥ २२१३ ॥

अपिच,

[2]उवलंभव्ववहाराभावाओ निव्विसेसभावाओ। तं नत्थि खपुप्फं पिव संति विसेसा सपच्चक्खं ॥२२१४॥

नास्ति सामान्यम्, उपलम्भव्यवहाराभावात्– उपलब्धिलक्षणप्राप्तस्यानुपलब्धेरित्यर्थः, तथा, निर्विशेषभावात्– विशेषव्यतिरिक्तत्वात्, खपुष्पवत्। विशेषास्तु सन्ति, स्वप्रत्यक्षत्वात्, घटादिवदिति ॥ २२१४ ॥

उपचयहेतुमाह—

[3]जं च विसेसेहिं चिय संववहारो वि कीरए सक्खं। जम्हा तम्मत्तं चिय फुडं तदत्थंतरमभावो ॥२२१५॥

यस्माच्च जलाहरण-व्रणपिण्डीप्रदानादिको लोकव्यवहारो घट-निम्बपत्रादिविशेषैरेव साक्षात् क्रियमाणो दृश्यते, न सामान्येन; तन्मात्रमेव च विशेषमात्रं यस्मात् स्फुटं 'उपलभ्यते' इति शेषः, तस्मात् तदर्थान्तरभूतं सामान्यमभाव एव, न तु भाव इति ॥२२१५॥

किञ्च,

[4]अन्नमणन्नं व मयं सामन्नं जइ विसेसओऽणन्नं। तम्मत्तमन्नमहवा नत्थि तयं निव्विसेसं ति ॥२२१६॥

विशेषेभ्यः सामान्यमन्यत्, अनन्यद् वा मतं भवतः?। यदि विशेषेभ्यस्तदनन्यदभिन्नम्, तर्हि तन्मात्रं विशेषमात्रमेव तदिति। अथान्यद् विशेषेभ्यो भिन्नं सामान्यम्, तर्हि नास्त्येव तत्, निर्विशेषत्वात्, खरशृङ्गवदिति ॥ २२१६ ॥

१ सदिति भणिते गच्छति विनिश्चय सदिति किं तदन्यदिति। भवेद् विशेषेभ्यः संव्यवहारादपेतं यत्? ॥ २२१३ ॥
२ उपलम्भव्यवहाराभावाद् निर्विशेषभावात्। तद् नास्ति खपुष्पमिव सन्ति विशेषाः स्वप्रत्यक्षम् ॥ २२१४ ॥
३ यच्च विशेषैरेव संव्यवहारोऽपि क्रियते साक्षात्। यस्मात् तन्मात्रमेव स्फुटं तदर्थान्तरमभाव ॥ २२१५ ॥
४ अन्यदनन्यद् वा मतं सामान्यं यदि विशेषतोऽनन्यत्। तन्मात्रमन्यदथवा नास्ति तद् निर्विशेषमिति ॥ २२१६ ॥

वृत्तयोऽन्त्यस्वरूपा व्यावृत्त्याकारबुद्धिहेतवः, तेषां सामान्यो-भय-विशेषाणां ग्राहकाणि ज्ञानानि सामान्यो-भय-विशेषज्ञानानि, तैर्यस्माद् मिनोति मिमीते वा, ततो नैगमः, अत एव नैकमानो नैकपरिच्छेदः किन्तु विचित्रपरिच्छेद इति ॥ २१८६ ॥

नैगमनयस्यैव व्युत्पत्त्यन्तरमाह—

[1]लोगत्थनिबोहा वा निगमा तेसु कुसलो भवो वाऽयं । अहवा जं नेगगमोऽणेगपहो णेगमो तेणं ॥२१८७॥

'वा' इत्यथवा निगमा भण्यन्ते। के ?। लोकार्थनिबोधाः— अर्था जीवादयस्तेषु नितरामनेकप्रकारा बोधा निबोधा लोकस्यार्थनिबोधा लोकार्थनिबोधाः। तेष्वेवंविधेषु निगमेषु भवः कुशलो वाऽयमिति नैगमः। अथवा, अन्यथा व्युत्पत्तिः— गम्यतेऽनेनेति गमः पन्था नैके गमाः पन्थानो यस्यासौ नैकगमः, वक्ष्यमाणनीत्या बहुविधाभ्युपगमपरत्वाद् नैकमार्गः, निरुक्तविधिना च ककारलोपाद् नैगम इति ॥२१८७॥

कथंभूतः पुनरयम्, कथं त्वाऽनुगन्तव्यः ? इत्याह—

[2]सो कमविसुद्धभेओ लोगपसिद्धिवसओऽणुगंतव्वो । विहिणा निलयण-पत्थय-गामोवम्माइसंसिद्धो ॥२१८८॥

स नैगमनयः क्रमेण परिपाट्या विशुद्धा विशेषवन्तो भेदाः प्रकारा यस्य स क्रमविशुद्धभेदः, तथाहि— आद्यभेदोऽस्य निर्विकल्पमहासत्ताख्यकेवलसामान्यवादित्वात् सर्वाविशुद्धः, गोत्वादिसामान्यविशेषवादी तु द्वितीयभेदो विशुद्धाविशुद्धः, विशेषवादी तु तृतीयभेदः सर्वविशुद्धः। एवं प्रस्थकाद्युदाहरणेष्वपि क्रमविशुद्धिर्भावनीया। स चैवंभूतो नैगमनयो लोकप्रसिद्धिवशतः समयोक्तो यो विधिस्तेनानुगन्तव्यो ज्ञातव्यः। निलयन-प्रस्थक-ग्रामौपम्यादिना संसिद्धः साधितः। तत्र निलयनौपम्यं यथा— 'क्व वसति भवान् ?' इति पृष्टे कश्चिदाह— 'लोकेऽहं वसामि, तथा, तिर्यग्लोके, मनुष्यक्षेत्रे, जम्बूद्वीपे, भरतक्षेत्रे, मध्यमखण्डे, पाटलीपुत्रे, वसतौ, संस्तारके, आकाशप्रदेशेषु, यावदाह— 'स्वात्मनि वसामि' इत्येवमेतान् सर्वानपि प्रकारान् नैगमो मन्यत इति निलयनौपम्यम्। प्रस्थकः काष्ठघटितो धान्यमानविशेषः। तत्र तद्योग्यं काष्ठमटव्यां छिन्दानस्तक्षा 'किं करोषि' इति पृष्टः सन् प्राह— 'प्रस्थकं छिनद्मि'। मार्गे चागच्छन् पृष्टः— 'किमिदं स्कन्धे त्वयाऽऽरोपितम् ?' अत आह— 'प्रस्थकः'। एवमाकुट्टयन्, घटयन्, उत्किरन्, श्लक्ष्णीकुर्वन्, नाम च तत्राकुट्टयन्, यावद् धान्यमाने च तं व्यापारयन् 'किमिदम् ?' इति पृष्टः सन्नाह— 'प्रस्थकोऽयम्' इति।

१ लोकार्थनिबोधा वा निगमास्तेषु कुशलो भवो वाऽयम्। अथवा यद् नैकगमोऽनेकपथो नैगमस्तेन ॥ २१८७ ॥

२ स क्रमविशुद्धभेदो लोकप्रसिद्धिवशतोऽनुगन्तव्यः। विधिना निलयन-प्रस्थक-ग्रामौपम्यादिसंसिद्ध. ॥ २१८८ ॥

यदुक्तम्– '[1]चूओ वणस्सइ च्चिय ' इत्यादि, तद्विपक्षमाह–

[2]तह चूयाइविरहिओ अन्नो को सो वणस्सई नाम । अवणस्सइ च्चिय तओ घडो व्व चूयादभावाओ ॥२२१७॥

तथा, चूतादिविरहितः– चूत-निम्ब-कदम्ब-जम्बूप्रभृतिविशेषेभ्योऽन्यः को नाम वनस्पतिर्यः सामान्यत्वेन गीयते ? । अथास्ति चूतादिभ्योऽपरः कोऽपि वनस्पतिः । ननु यद्येवम्, तर्हि तकोऽसाववनस्पतिरेव, चूताद्यभावरूपत्वात्, घटादिवदिति ॥ २२१७ ॥

तदेवं '[3]वच्चइ विणिच्छियत्थं' इत्येतद्व्याख्यायोपसंहरन्नाह—

[4]तो ववहारो गच्छइ विणिच्छयं को वणस्सई चूओ ?। होज्ज व बउलाइरूवो तह सव्वदव्वभेएसु ॥२२१८॥

ततस्तस्मादुक्तन्यायेन विचार्य विगतसामान्यानां विशेषाणां निश्चयो विनिश्चयस्तं गच्छति स्वीकरोति व्यवहारनयः । कथं विचार्य ? इत्याह– को नाम वनस्पतिर्भवेत् ? इति चिन्तायां चूतो वकुलादिर्वासौ भवेत्, न तु तदतिरिक्तवृक्षत्वसामान्यम् । तथा तेनैव प्रकारेण सर्वेष्वपि द्रव्यभेदेषु वक्तव्यम्– गो-तुरग-रथादयो विशेषा एव, गोत्वादिसामान्यं न पुनरन्यदित्येवं सर्वत्र वाच्यमित्यर्थ इति ॥२२१८॥

अथवा, अन्यथा विनिश्चयशब्दार्थं व्याचिख्यासुराह—

[5]अहिगो चउ त्ति वा निच्छओ त्ति सामन्नमस्स ववहारो । वच्चइ विणिच्छयत्थं जाइ विसामन्नभावं ति ॥२२१९॥

वा– अथवा, अधिकश्चयो निश्चयः, यथाऽधिको दाघो निदाघः, स च निश्चयोऽत्र सामान्यम् । अस्य सामान्यस्य व्यवहारनयो व्रजति याति । किमर्थम् ? । विनिश्चयार्थम् । कोऽर्थः ? । विसामान्यभावं विसामान्यभावार्थं तदभावाय यतत इत्यर्थः ॥२२१९॥

अथवा, लोकव्यवहारो विनिश्चयस्तदर्थं व्रजति व्यवहार इति दर्शयति—

[6]भमराइपंचवण्णाइं निच्छए जत्थ वा जणवयस्स । अत्थे विणिच्छओ सो विणिच्छयत्थो त्ति सो गज्झो॥२२२०॥

---

१ गाथा २२१० । २ तथा चूतादिविरहितोऽन्य' क' स वनस्पतिर्नाम । अवनस्पतिरेव सको घट इव चूताद्यभावात् ॥ २२१७ ॥
३ गाथा २१८३ । ४ ततो व्यवहारो गच्छति विनिश्चय को वनस्पतिश्चूत ? । भवेद् वा वकुलादिरूपस्तथा सर्वद्रव्यभेदेषु ॥ २२१८ ॥
५ अधिकश्चय इति वा निश्चय इति सामान्यमस्य व्यवहार । व्रजति विनिश्चयार्थं याति विसामान्यभावमिति ॥ २२१९ ॥
६ भ्रमरादिपञ्चवर्णादी निश्चये यत्र वा जनपदस्य । अर्थे विनिश्चय स विनिश्चयार्थ इति स ग्राह्यः ॥ २२२० ॥

ताइं चिय भूयाइं सोऽणु [1]विणस्सइ विणस्समाणाइं । अत्थंतरोवओगे कमसो विण्णेयभावेणं ॥ ४६ ॥
पुव्वावरविण्णाणोवओगओ विगम-संभवसहावो । विण्णाणसंतईए विण्णाणघणोऽयमविणासी ॥ ४७ ॥
न च पेच्चनाणसण्णावतिट्ठए संपओवओगाओ । विण्णाणघणाभिक्खो जीवोऽयं वेयपयभिहिओ ॥ ४८ ॥
एवं पि भूयधम्मो नाणं तब्भावभावओ बुद्धी । तं नो तदभावम्मि वि जं नाणं वेयसमयम्मि ॥ ४९ ॥
अत्थमिए आइच्चे चेदं संतासु अग्गि-वायासु । किंजोइरयं पुरिसो अप्पज्जोइ त्ति निद्दिट्ठो ॥ ५० ॥
तदभावे भावाओ भावे चाभावओ न तद्धम्मो । जह घडभावाभावे विवज्जयाओ पडो भिन्नो ॥ ५१ ॥
एसिं वेयपयाणं न तमत्थं वियासि अहव सव्वेसिं । अत्थो किं होज्ज सुई विण्णाणं वत्थुभेओ वा ॥ ५२ ॥
जाई दव्वं किरिया गुणोऽहवा संसओ तवाजुत्तो । अयमेवेति नवायं न वत्थुधम्मो जओ जुत्तो ॥ ५३ ॥
सव्वं चिय सव्वमयं स-परपज्जायओ जओ निययं । सव्वमसव्वमयं पि य विवित्तरूवं विवक्खाओ ॥५४॥
सामण्ण-विसेसमओ तेण पयत्थो विवक्खया जुत्तो । वत्थुस्स विस्सरूवो पज्जायावेक्खया सव्वो ॥ ५५ ॥

**छिन्नम्मि संसयम्मी जिणेण जर-मरणविप्पमुक्केणं ।**
**सो समणो पव्वइओ पंचहिं सह खंडियसएहिं ॥ १४० ॥**

एवं कम्माईसु वि जं सामण्णं तयं समाउज्जं । जो पुण जत्थ विसेसो समासओ तं पवक्खामि ॥ १ ॥

**तं पव्वइअं सोउं बीओ आगच्छइ अमरिसेणं ।**
**वच्चामि णमाणेमी पराजिणित्ता ण तं समणं ॥ १४१ ॥**

१ 'विणासाइ' ।

छलिओ छलाइणा सो मण्णे माइंदजालिओ वा वि ।
को जाणइ कह वत्तं एत्ताहे वट्टमाणी से ॥ १४२ ॥
सो पक्खंतरमेगं पि जाइ जइ मे तओ मि तस्सेव ।
सीसत्तं होज्ज गओ वोत्तुं पत्तो जिणसगासे ॥ १४३ ॥
आभट्ठो य जिणेणं जाइ-जरा-मरणविप्पमुक्केणं ।
नामेण य गोत्तेण य सव्वण्णू सव्वदरिसी णं ॥ १४४ ॥
कि मन्ने अत्थि कम्मं उयाहु न त्थि त्ति संसओ तुज्झं ।
वेयपयाण य अत्थं न याणसि तेसिमो अत्थो ॥ १४५ ॥

कम्मे तुह संदेहो मन्नसि तं नाणगोयराईयं । तुह तमणुमाणसाहणमणुभूइमयं फलं जस्स ॥ १ ॥
अत्थि सुह-दुक्खहेऊ कज्जाओ बीयमंकुरस्सेव । सो दिट्ठो चेव मई वभिचाराओ न तं जुत्तं ॥ २ ॥
जो तुल्लसाहणाणं फले विसेसो न सो विणा हेउं । कज्जत्तणओ गोयम ! घडो व्व, हेऊ य सो कम्मं ॥ ३ ॥
बालसरीरं देहंतरपुव्वं इंदियाइमत्ताओ । जह बालदेहपुव्वो जुवदेहो, पुव्वमिह कम्मं ॥ ४ ॥
किरियाफलभावाओ दाणाईणं फलं किसीए व्व । तं चिय दाणाइफलं मणप्पसायाई जइ बुद्धी ॥ ५ ॥
किरियासामण्णाओ जं फलमस्सावि तं मयं कम्मं । तस्स परिणामरूवं सुह-दुक्खफलं जओ भुज्जो ॥ ६ ॥
होज्ज मणोवित्तीए दाणाइकिए व जइ फलं बुद्धी । तं न निमित्तत्ताओ पिंडो व्व घडस्स विन्नेओ ॥ ७ ॥

१ 'हुज्ज' ।

[1]बहुतरउ त्ति य तं च्चिय गमेइ संते वि सेसए मुयए। संववहारपरतया ववहारो लोगमिच्छंतो ॥२२२१॥

वा– अथवा, निश्चये निश्चयनयमते विचिन्त्यमाने भ्रमरादेः पञ्चवर्ण-द्विगन्ध-पञ्चरसा-ऽष्टस्पर्शत्वे सत्यपि यत्र कृष्णवर्णादावर्थे जनपदस्य निश्चयो भवति स विनिश्चयार्थस्तं व्रजति 'व्यवहारनयः' इति प्रकृतम्। कोऽर्थः ?। सत्स्वपि वर्ण-गन्ध-रस-स्पर्शेषु यो यत्र जनपदस्य ग्राह्यः, तमेव व्यवहारनयो गमयति, मन्यते, प्ररूपयति च, सतोऽपि शेषान् वर्णादीन् मुञ्चति। कुतः ?। स एव बहुतरः स्पष्ट इति कृत्वा। किं कुर्वन् ?। लोकव्यवहारमिच्छन्। कया ?। व्यवहारपरतया व्यवहारप्रधानतयेति। तदेवमभिहितो व्यवहार-नयः ॥ २२२० ॥ २२२१ ॥

अथ ऋजुसूत्रमाह—

[2]उज्जं रुजुं सुयं नाणमुज्जुसुयमस्स सोऽयमुज्जुसुओ। सुत्तयइ वा जमुज्जुं वत्थुं तेणुज्जुसुत्तो त्ति ॥२२२२॥

'उज्जं' इति ऋजु, 'श्रुतम्' इति ज्ञानं बोधरूपम्, ततश्च ऋजु– अवक्रं श्रुतमस्य सोऽयमृजुश्रुतः। वा– अथवा, ऋजु– अवक्रं वस्तु सूत्रयतीति ऋजुसूत्र इति ॥ २२२२ ॥

कथं पुनरेतदभ्युपगतस्य वस्तुनोऽवक्रत्वम् ? इत्याह—

[3]पच्चुप्पन्नं संपयमुप्पन्नं जं च जस्स पत्तेयं। तं रुजु तदेव तस्स त्थि उ वक्कमन्नं ति जमसंतं ॥ २२२३ ॥

यत् सांप्रतमुत्पन्नं वर्तमानकालीनं वस्तु, यच्च यस्य प्रत्येकमात्मीयं तदेतदुभयस्वरूपं वस्तु प्रत्युत्पन्नमुच्यते। तदेवासौ नय ऋजुः प्रतिपद्यते। तदेव वर्तमानमात्मीयं च वस्तु तस्यर्जुसूत्रनयस्यास्ति। अन्यत्तु शेषमतीतानागतं परकीयं च यद् यस्मादसदविद्यमानं ततोऽसत्त्वादेव तद् वक्रमिच्छत्यसाविति। अत एवोक्तं निर्युक्तिकृता– '[4]पच्चुप्पन्नग्गाही उज्जुसुओ नयविही मुणेअव्वो' इति ॥ २२२३ ॥

एतन्मतमेव प्रमाणतः समर्थयन्नाह—

---

१ बहुतरक इति च तमेव गमयति सतोऽपि शेषकान् मुञ्चति। संव्यवहारपरतया व्यवहारो लोकमिच्छन् ॥ २२२१ ॥

२ ऋजु ऋजु श्रुतं ज्ञानमृजुश्रुतमस्य सोऽयमृजुश्रुतः। सूत्रयति वा यदृजु वस्तु तेनर्जुसूत्र इति ॥ २२२२ ॥

३ प्रत्युत्पन्नं सांप्रतमुत्पन्नं यच्च यस्य प्रत्येकम्। तदृजु तदेव तस्यास्ति तु वक्रमन्यदिति यदसत् ॥ २२२३ ॥ ४ गाथा २१८४।

अपरमपि समभिरूढनयाभिप्रायभेदं दर्शयन्नाह–

[1]घडकारविवक्खाए कत्तुरणत्थंतरं जओ किरिया । न तदत्थंतरभूए समवाओ तो मओ तीसे ॥ २२४९ ॥

कुंभम्मि वत्थुपज्जायसंकराइप्पसंगदोसाओ । जो जेण जं व कुरुए तेणाभिन्नं तयं सव्वं ॥ २२५० ॥

'घटं करोति' इति घटकार इत्यस्यां विवक्षायां प्ररूपणायां यस्मात् तस्य घटकर्तुरनर्थान्तरमव्यतिरिक्ता घटकरणक्रिया, कर्तर्येव घटकारे तस्याः समवायात् । 'तो त्ति' तस्माद् न तदर्थान्तरभूते कर्तुर्व्यतिरिक्ते कुम्भे घटे यस्याः समवायः संश्लेषो मतः । कुतः ?। वस्तुपर्यायसंकरादिदोषप्रसङ्गात्– वस्तूनां ये पर्याया धर्मास्तेषां परस्परं संकरः संकीर्णत्वमेकत्वं वा स्यात्, कर्तृगतक्रियायाः कुम्भेऽपि समवायाभ्युपगमात् । ततश्च यः कुम्भकारादिर्येन क्रियाविशेषेण यत् कुम्भादिकं कुरुते तेन क्रियाविशेषेण तत्क्रियारूपतयेत्यर्थः, सर्वं तत् कर्तृ-कर्माद्यभिन्नं स्यात् । तस्मात् कर्तृगतक्रियाया न कर्मणि संक्रमः, किन्तु कुर्वन् कारकः, कुम्भनादिभ्य एव कुम्भादय इति मन्यते समभिरूढ इति । उक्तः समभिरूढनयः ॥ २२४९ ॥ २२५० ॥

अथैवंभूतमाह—

[2]एवं जह सद्दत्थो संतो भूओ तदन्नहाऽभूओ । तेणेवंभूयनओ सद्दत्थपरो विसेसेणं ॥ २२५१ ॥

एवं यथा 'घट चेष्टायाम्' इत्यादिरूपेण शब्दार्थो व्यवस्थितः, 'तह त्ति' तथैव यो वर्तते घटादिकोऽर्थः, स एव सन् भूतो विद्यमानः । 'तदन्नहाऽभूउ त्ति' यस्तु तदन्यथा शब्दार्थोल्लङ्घनेन वर्तते स तत्त्वतो घटाद्यर्थोऽपि न भवति किन्त्वभूतोऽविद्यमानः । येनैवं मन्यते, तेन कारणेन शब्द-समभिरूढनयाभ्यां सकाशादेवंभूतनयो विशेषेण शब्दार्थतत्परः । अयं हि योषिन्मस्तकारूढं जलाहरणादिक्रियानिमित्तं घटमानमेव चेष्टमानमेव घटं मन्यते, न तु गृहकोणादिव्यवस्थितम्, अचेष्टनात्, इत्येवं विशेषतः शब्दार्थतत्परोऽयमिति ॥२२५१॥

[3]'वंजण-अत्थ-तदुभए एवंभूओ विसेसेइ' इति निर्युक्तिगाथादलं व्याचिख्यासुराह––

१ घटकारविवक्षायां कर्तुरनर्थान्तरं यतः क्रिया । न तदर्थान्तरभूते समवायस्ततो मतस्तस्या ॥ २२४९ ॥
कुम्भे वस्तुपर्यायसंकरादिप्रसङ्गदोषात् । यो येन यद् वा कुरुते तेनाभिन्नं तत् सर्वम् ॥ २२५० ॥

२ एवं यथा शब्दार्थः सन् भूतस्तदन्यथाऽभूतः । तेनैवंभूतनयः शब्दार्थपरो विशेषेण ॥ २२५१ ॥ ३ गाथा २१८५ ।

[1]न विगयमणागयं वा भावोऽणुवलंभओ खपुप्फं व । न य निप्पओयणाओ परकीयं परधणमिव त्थि ॥२२२४॥

विगतं विनष्टमतीतम्, अनागतं त्वनुत्पन्नम्, एतदुभयरूपमपि न भावो न वस्तु, अनुपलम्भात्- खपुष्पवदिति । न च परकीयं वस्त्वस्ति, निष्प्रयोजनत्वात्, प्रयोजनाकर्तृत्वात्, परधनवदिति ॥ २२२४ ॥

अथ व्यवहारनयं युक्तितः स्वपक्षं ग्राहयन्नाह--

[2]जइ न मयं सामन्नं संववहारोवलद्धिरहियं ति । नणु गयमेस्सं च तहा परकमवि निप्फलत्तणओ ॥२२२५॥

हे व्यवहारनयवादिन्! यदि तव व्यवहारानुपयोगादनुपलम्भाच्च सामान्यं न मतं संग्रहस्य संमतमपि नेष्टमित्यर्थः, ननु तथा तेनैव प्रकारेण व्यवहारानुपयोगादनुपलम्भाच्च गतमतिक्रान्तम्, एष्यच्चानागतं वस्तु माऽभ्युपगमस्त्वम्, युक्तेः समानत्वात्। तथा, परकीयमपि वस्तु मैषीः, स्वप्रयोजनासाधकत्वेन निष्फलत्वात्, परधनवदिति ॥ २२२५ ॥

अथ यदसौ नयोऽभ्युपगच्छति तत् सर्वमुपसंहृत्य दर्शयति--

[3]तम्हा नियमं संपइकालीणं लिंग-वयणभिन्नं पि । नामाइभेयविहियं पडिवज्जइ वत्थुमुज्जुसुओ ॥ २२२६ ॥

तस्मादृजुसूत्रनयः प्रतिपादितयुक्तितो वस्तु प्रतिपद्यते । कथंभूतम् ?। निजकमात्मीयम्, न परकीयम्, तदपि सांप्रतकालीनं वर्तमानम्, न त्वतीतानागतरूपम्। तच्च निजं वर्तमानं च वस्तु लिङ्ग-वचनभिन्नमपि प्रतिपद्यते । तत्रैकमपि त्रिलिङ्गम्, यथा तटः, तटी, तटमित्यादि । तथैकमप्येकवचन-बहुवचनवाच्यम्, यथा गुरुर्गुरवः, आपो जलम्, दाराः कलत्रमित्यादि । तथा, नामादिभेदविहितमप्यसौ वस्त्वभ्युपगच्छति, नाम- स्थापना-द्रव्य भावरूपांश्चतुरोऽपि निक्षेपानसौ मन्यत इत्यर्थः । तदिह 'लिंग वयण' इत्यादिनाऽभ्युपगमद्वयोपन्यासेन वक्ष्यमाणशब्दनयेन सहास्याभ्युपगमभेदो दर्शितः । शब्दनयो हि लिङ्गभेदाद् वचनभेदाच्च वस्तुनो भेदमेव प्रतिपत्स्यते, न पुनरेकत्वम्; तथा, नामादिनिक्षेपेऽप्येकमेव भावनिक्षेपं मंस्यते, न तु शेषनिक्षेपत्रयमिति । तदेवमुक्त ऋजुसूत्रनयः ॥ २२२६ ॥

अथ शब्दनयमाह--

---

1 न विगतमनागत वा भावोऽनुपलम्भत खपुष्पमिव । न च निष्प्रयोजनात् परकीय परधनमिवास्ति ॥ २२२४ ॥

2 यदि न मत सामान्य सव्यवहारोपलब्धिरहितमिति । ननु गतमेष्यच्च तथा परकीयमपि निष्फलत्वत ॥ २२२५ ॥

3 तस्माद् निजक सम्प्रतिकालिक लिङ्ग वचनभिन्नमपि । नामादिभेदविहित प्रतिपद्यते वस्तु ऋजुश्रुत ॥ २२२६ ॥

वंजणमत्थेणत्थं च वंजणेणोभयं विसेसेइ । जह घडसद्दं चेट्ठावया तहा तं पि तेणेव ॥ २२५२ ॥

व्यज्यतेऽर्थोऽनेनेति व्यञ्जनं वाचकशब्दो घटादिस्तं चेष्टावतैद्वाच्येनार्थेन विशिनष्टि– स एव घटशब्दो यश्चेष्टावन्तमर्थं प्रतिपादयति, नान्यम्, इत्येवं शब्दमर्थेन नैयत्ये व्यवस्थापयतीत्यर्थः । तथा, अर्थमप्युक्तलक्षणमभिहितरूपेण व्यञ्जनेन विशेषयति– चेष्टापि सैव या घटशब्दवाच्यत्वेन प्रसिद्धा योषिन्मस्तकारूढस्य घटस्य जलाहरणादिक्रियारूपा, न तु स्थान-भरणक्रियात्मिका, इत्येवमर्थं शब्देन नैयत्ये स्थापयतीत्यर्थ इति, एवमुभयं विशेषयति । शब्दमर्थेन, अर्थस्तु शब्देन नैयत्ये स्थापयतीत्यर्थः । एतदेवाह– 'जह घडसद्दमित्यादि' । इदमत्र हृदयम्– यदा योषिन्मस्तकारूढश्चेष्टावानर्थो घटशब्देनोच्यते तदा स घटलक्षणोऽर्थः, स च तद्वाचको घटशब्दः; अन्यदा तु वस्त्वन्तरस्येव तच्चेष्टाऽभावादघटत्वं, घटध्वनेश्चावाचकत्वमिति । एवमुभयविशेषक एवंभूतनय इति ॥ २२५२ ॥

एतदेव प्रमाणतः समर्थयन्नाह—

[2] सद्दवसादभिधेयं तप्पच्चयओ पईव-कुम्भो व्व । संसय-विवज्जए-गत्त-संकराइप्पसंगाओ ॥ २२५३ ॥

यथाऽभिधायकः शब्दस्तथैवाभिधेयं प्रतिपत्तव्यमिति प्रतिज्ञा । तत्प्रत्ययत्वात्– तथाभूत एवार्थे ततः प्रत्ययसंभूतेरिति हेतुः, प्रदीपवत् कुम्भवद् वेति दृष्टान्तः । विपर्यये बाधकमाह– 'संसयेत्यादि' । इदमुक्तं भवति– प्रदीपशब्देन प्रकाशवानेवार्थोऽभिधीयते, अन्यथा संशयादयः प्रसज्येरन्, तथाहि– यदि दीपनक्रियाविकलोऽपि दीपस्तर्हि दीपशब्दे समुच्चारिते किमनेन दीपनः प्रकाशवानर्थोऽभिहितः, किं वाऽप्रकाशकोऽप्यन्धोपलादिः? इति संशयः । अन्धोपलादिरेव तेनाभिहितो न दीप इति विपर्ययः । तथा, दीप इत्युक्तेऽप्यन्धोपलादौ, अन्धोपलादौ चोक्ते दीपे प्रत्ययात् पदार्थानामेकत्वं सांकर्यं वा स्यात् । तस्माच्छब्दवशादेवाभिधेयम्, अभिधेयवशाच्च शब्द इति ॥ २२५३ ॥

समभिरूढनयं शिक्षयन्नाह—

[3] सद्दपरिणामओ जइ घड-कुडसद्दत्थभेयपडिवत्ती । तो निच्चेट्ठो वि कहं घडसद्दत्थो घडोऽभिमओ ? ॥२२५४॥

१ व्यञ्जनमर्थेनार्थं च व्यञ्जनेनोभय विशेषयति । यथा घटशब्दं चेष्टावता तथा तामपि तेनैव ॥ २२५२ ॥
२ शब्दवशादभिधेय तत्प्रत्ययत्वात् प्रदीप कुम्भवत् । संशय-विपर्ययै-कत्व संकरादिप्रसङ्गात् ॥ २२५३ ॥
३ शब्दपरिणामतो यदि घट-कुटशब्दार्थभेदप्रतिपत्तिः । ततो निश्चेष्टोऽपि कथ घटशब्दार्थो घटोऽभिमतः ? ॥ २२५४ ॥

[1]सवणं सपइ स तेणं व सप्पए वत्थु जं तओ सद्दो। तस्सत्थपरिग्गहओ नओ वि सद्दो त्ति हेउ व्व ॥२२२७॥

'शप' आक्रोशे, शपनमाह्वानमिति शब्दः, शपतीति वाऽऽह्वयतीति शब्दः, शप्यते वाऽऽहूयते वस्त्वनेनेति शब्दः। तस्य शब्दस्य यो वाच्योऽर्थस्तत्परिग्रहात् तत्प्रधानत्वाद् नयोऽपि शब्दः, यथा कृतकत्वादित्यादिकः पञ्चम्यन्तः शब्दोऽपि हेतुः। अर्थरूपं हि कृतकत्वमनित्यगमकत्वाद् मुख्यतया हेतुरुच्यते, उपचारतस्तु तद्वाचकः कृतकत्वशब्दोऽपि हेतुरभिधीयते, एवमिहापि शब्दवाच्यार्थपरिग्रहादुपचारेण नयोऽपि शब्दो व्यपदिश्यत इति भावः ॥ २२२७ ॥

'इ[2]च्छइ विसेसिययरं पच्चुप्पन्नं नओ सद्दो' इति निर्युक्तिगाथादलव्याख्यानमाह—

[3]तं चिय रिउसुत्तमयं पच्चुप्पन्नं विसेसिययरं सो। इच्छइ भावघडं चिय जं न उ नामादए तिन्नि ॥२२२८॥

तदेव ऋजुसूत्रनयस्य मतमभीष्टं प्रत्युत्पन्नं वर्तमानं वस्त्विच्छत्यसौ शब्दनयः। कथंभूतं तदित्याह– विशेषिततरम्। कुत इदं ज्ञायते? इत्याह– यद् यस्मात् पृथुबुध्नोदराद्याकारकलितं मृन्मयं जलाहरणादिक्रियाक्षमं प्रसिद्धघटरूपं भावघटमेवेच्छत्यसौ, न तु शेषान् नाम-स्थापना-द्रव्यरूपांस्त्रीन् घटानिति। शब्दप्रधानो ह्येष नयः, चेष्टालक्षणश्च घटशब्दस्यार्थः, 'घट चेष्टायाम्' 'घटत इति घटः' इति व्युत्पत्तेः। ततश्च य एव जलाहरणादिक्रियार्थमाचष्टे प्रसिद्धो घटस्तमेव भावरूपं घटमिच्छत्यसौ, शब्दार्थोपपत्तेः, न तु नामादिघटान्, घटशब्दार्थानुपपत्तेः। अतश्चतुरोऽपि नामादिघटानिच्छत ऋजुसूत्राद् विशेषिततरं वस्त्विच्छत्यसौ, एकस्यैव भावघटस्यानेनाभ्युपगमादिति ॥ २२२८ ॥

नामादिघटनिराकरणार्थमेव प्रमाणयन्नाह—

[4]नामादओ न कुंभा तक्कज्जाकरणओ पडाइ व्व। पच्चक्खविरोहाओ तल्लिंगाभावओ वावि ॥२२२९॥

नाम-स्थापना-द्रव्यरूपाः कुम्भा न भवन्तीति प्रतिज्ञा, जलाहरणादितत्कार्याकरणात्, पटादिवत्; तथा, प्रत्यक्षविरोधात्,

१ शपनं शपति स तेन वा शप्यते वस्तु यत् ततः शब्दः। तस्यार्थपरिग्रहतो नयोऽपि शब्द इति हेतुरिव ॥ २२२७ ॥ २ गाथा २१८४।
३ तदेवर्जुसूत्रमत प्रत्युत्पन्न विशेषिततर स। इच्छति भावघटमेव यद् न तु नामादींस्त्रीन् ॥ २२२८ ॥
४ नामादयो न कुम्भास्तत्कार्याकरणतः पटादिरिव। प्रत्यक्षविरोधात् तल्लिङ्गाभावतो वापि ॥ २२२९ ॥

यदि शब्दपरिणामतः शब्दभेदाद् घट-कुट-कुम्भादिपर्यायशब्दानामर्थभेदप्रतिपत्तिस्तव, ततस्तर्हि निश्चेष्टोऽपि घटशब्दाभिधेयोऽर्थः कथं घटोऽभिमतः, घटनाद् घट इति शब्दार्थाभावात्? इति ॥ २२५४ ॥

किञ्च,

[1]जइ वत्थुसंकमो वा निट्ठो चिट्ठावओ य संकन्ती। तो नहि निच्चिट्ठतया जुत्ता हाणी व समयस्स॥२२५५॥

वा– अथवा, युक्त्यन्तरमुच्यते– हन्त! यदि '[2]वत्थुओ संकमणं होइ अवत्थु' इत्यादिवचनात् तत्र वस्तुसंक्रमो नेष्टो नाभिमतः, तर्हि चेष्टावतोऽपि भावघटस्य निश्चेष्टतयेति। कोऽर्थः?। चेष्टाविकले द्रव्यघटे घटशब्दप्रवृत्तितः संक्रमणं संक्रान्तिर्नहि नैव युक्ता। अथ चेष्टावतोऽपि निश्चेष्टेऽर्थे संक्रान्तिरिष्यते, तर्हि समयहानिर्भवतः, 'वत्थुओ संकमणं' इत्यादिस्वप्रतिज्ञाक्षतिरित्यर्थः ॥ २२५५ ॥

अपरमप्यस्य मतभेदं दर्शयन्नाह—

[3]एवं जीवं जीवो संसारी पाणधारणाणुभवो। सिद्धो पुणरजीवो जीवपरिणामरहिउ त्ति ॥ २२५६ ॥

जीवति

"पञ्चेन्द्रियाणि त्रिविधं बलं च उच्छ्वास-निःश्वासमथान्यदायुः। प्राणा दशैते भगवद्भिरिष्टास्तेषां वियोगीकरणं च हिंसा ॥ १ ॥"

इत्यादिवचनप्रसिद्धान् दशविधप्राणान् धरतीति शब्दार्थवशाज्जीवन्नेव दशविधप्राणधारणं कुर्वन्नस्य नयस्य मतेन जीव उच्यते। स च सामर्थ्याद् दशविधप्राणधारणमनुभवतीति दशविधप्राणानुभवो नारकादिः संसार्येव भवति। सिद्धस्त्वेतन्नयमतेन जीवः, आयुष्मान्, प्राणीत्यादिशब्दैर्न व्यपदिश्यते, जीवनादिपरिणामरहित इति कृत्वा शब्दार्थाभावात्। किं तर्हि?। सत्तायोगात् सत्त्वः, अतति तांस्तान् ज्ञान-दर्शन-सुखादिपर्यायान् गच्छतीत्यात्मा, इत्यादिभिरेव शब्दैर्निर्दिश्यत इति ॥ २२५६ ॥

यदपि देश देशिनोरेकत्वं समर्थयता 'देशी चासौ देशश्च' इत्याद्युक्तं समभिरूढेन, तदप्ययुक्तमिति दर्शयन्नाह—

[4]जइ देसि च्चिय देसो पत्ता पज्जायवयणपडिवत्ती। पुणरुत्तमाणत्थं वत्थुसंकमो वा ण चेट्ठं ते ॥ २२५७॥

१ यदि वस्तुसक्रमो वा नेष्टश्चेष्टावतश्च संक्रान्तिः। ततो नहि निचेष्टतया युक्ता हानिर्वा समयस्य ॥ २२५५ ॥ २ गाथा २१८५।
३ एवं जीवञ्जीव. ससारी प्राणधारणानुभवः। सिद्धः पुनरजीवो जीवपरिणामरहित इति ॥ २२५६ ॥
४ यदि देश्येव देशः प्राप्ता पर्यायवचनप्रतिपत्तिः। पुनरुक्तमानर्थ्यं वस्तुसक्रमो वा न चेष्ट ते ॥ २२५७ ॥

घटलिङ्गादर्शनाच्चेति । अघटरूपास्ते प्रत्यक्षेणैव दृश्यन्त इति प्रत्यक्षविरोधः । जलाहरणादिकं घटलिङ्गं च तेषु न दृश्यत इति ततोऽनुमानविरोधोऽपीति ॥ २२२९ ॥

'कथं ते नामादिघटा घटव्यपदेशभाजो भवेयुः ?' इति ऋजुसूत्रशिक्षणार्थमाह—

जइ[1] विगया-णुप्पन्ना पओयणाभावओ न ते कुंभा । नामादओ किमिट्ठा पओयणाभावओ कुंभा ? ॥२२३०॥

यदि विगता अनुत्पन्नाश्च त्वयाहो ! ऋजुसूत्र ! कुम्भा नेष्टाः, प्रयोजनाभावात्, तर्हि नामादयोऽपि कुम्भाः किमिष्टाः, प्रयोजनाभावस्य समानत्वात् ? । न खलु तैरपि कुम्भप्रयोजनं किमपि विधीयत इति ॥ २२३० ॥

तदेवमृजुसूत्रात् शब्दनयस्य विशेषिततरत्वमुक्तम् । अथवा, अन्यथा तद् द्रष्टव्यम् । कथम् ? इत्याह—

अहवा[2] पच्चुप्पन्नो रिउसुत्तस्साविसेसिओ चेव । कुंभो विसेसिययरो सब्भावाईहिं सद्दस्स ॥२२३१॥

सब्भावा-सब्भावो-भयप्पिओ स-परपज्जओ-भयओ । कुंभा-ऽकुंभा-ऽवत्तव्वोभयरूवाइभेओ सो ॥२२३२॥

अथवा, प्रत्युत्पन्न ऋजुसूत्रस्याविशेषित एव सामान्येन कुम्भोऽभिमतः, शब्दनयस्य तु स एव सद्भावादिभिर्विशेषिततरोऽभिमत इत्येवमनयोर्भेदः, तथाहि— स्वपर्यायैः, परपर्यायैः, उभयपर्यायैश्च सद्भावेन, असद्भावेन, उभयेन, चार्पितो विशेषितः कुम्भः कुम्भा-ऽकुम्भा-ऽवक्तव्योभयरूपादिभेदो भवति— सप्तभङ्गीं प्रतिपद्यत इत्यर्थः; तद्यथा— ऊर्ध्वग्रीवा-कपाल-कुक्षि-बुध्नादिभिः स्वपर्यायैः सद्भावेनार्पितो विशेषितः कुम्भः कुम्भो भण्यते— 'सन् घटः' इति प्रथमो भङ्गो भवतीत्यर्थः । तथा, पटादिगतैस्त्वक्त्राणादिभिः परपर्यायैरसद्भावेनार्पितो विशेषितोऽकुम्भो भवति— सर्वस्यापि घटस्य परपर्यायैरसत्त्वविवक्षायां 'असन् घटः' इति द्वितीयो भङ्गो भवतीत्यर्थः। तथा, सर्वोऽपि घटः स्व-परो-भयपर्यायैः सद्भावा-ऽसद्भावाभ्यां सत्त्वा-ऽसत्त्वाभ्यामर्पितो विशेषितो युगपद् वक्तुमिष्टोऽवक्तव्यो भवति, स्व-पर-पर्यायसत्त्वा-ऽसत्त्वाभ्यामेकेन केनाप्यसांकेतिकेन शब्देन सर्वस्यापि तस्य युगपद् वक्तुमशक्यत्वादिति । एते त्रयः सकलादेशाः ।

अथ चत्वारोऽपि विकलादेशाः प्रोच्यन्ते । तत्रैकस्मिन् देशे स्वपर्यायसत्त्वेन, अन्यत्र तु देशे परपर्यायासत्त्वेन विवक्षितो घटः

1 यदि विगता-ऽनुत्पन्ना प्रयोजनाभावतो न त्वया कुम्भाः । नामादय किमिष्टा प्रयोजनाभावत. कुम्भा ? ॥ २२३० ॥
2 अथवा प्रत्युत्पन्न ऋजुसूत्रस्याविशेषित एव । कुम्भो विशेषिततर सद्भावादिभि. शब्दस्य ॥ २२३१ ॥
सद्भावा सद्भावो-भयार्पित स्व-परपर्ययो-भयत. । कुम्भा-ऽकुम्भा-ऽवक्तव्योभयरूपादिभेद. स ॥ २२३२ ॥

यदि देश्येव देशः, देशो वा देशी, तद् नन्वनयोः पर्यायवचनतैव प्राप्ता, यथा वृक्षः पादप इत्यादीनां पर्यायवचनता तथा देशि-देशशब्दयोरपीत्यर्थः । ततः को दोषः ? इति चेत् । उच्यते– ततो यथा वृक्षः पादप इत्येकार्थशब्दप्रयोगे पौनरुक्त्यं तथा देशिदेशशब्द-प्रयोगेऽपि स्यात् । तथैकेनापि द्वितीयशब्दार्थस्य प्रतिपादितत्वाद् द्वितीयशब्दप्रयोगस्यानर्थक्यं च स्यात् । तथा, देशस्य देशिनि, देशिनश्च देशे तिरोधानाद् वस्तुसंक्रमोऽपि भवेत् । न चेदं तवेष्टम् । तस्माद् न देश-देशिनोरेकत्वमिति । भेदपक्षस्तु तयोस्त्वयापि निराकृतः ॥ २२५७ ॥

अथ निराकृतमप्यभेदपक्षोक्तदूषणभयात् पुनस्तमङ्गीकरिष्यसीत्याह—

अह भिण्णो तस्स तओ न होइ न य वत्थुसंकमभयाओ । देसी चेव य देसो न वा पएसी पएसो त्ति ॥२२५८॥

अथ भिन्नो देशिनो देशः, तर्हि प्राक्त्वदुक्तयुक्तेरेव तस्य देशिनस्तकोऽसौ देशो न भवतीति स्मर्यतामिदम् । न च वस्तुसंक्रमा-दिदोषभयाद् देश्येव देशोऽभ्युपगन्तव्य इत्यनन्तरमेवोक्तम् । एवं प्रदेशी प्रदेश इत्यपि नैष्टव्यम्, समानदोषत्वात् । तस्माद् देशिमात्रं प्रदेशिमात्रं चाखण्डवस्त्वभ्युपगन्तव्यम् । न तु देश-प्रदेशकल्पना कार्या, तयोर्भेदेऽभेदे च यथोक्तदोषप्रसङ्गात् । अत एतन्मतेन कर्म-धारयोऽपि पदानां न भवति । सर्वस्यापि वस्तुनः प्रत्येकमखण्डरूपत्वात् ॥ २२५८ ॥

अथ देशप्रतिपादनार्थं नो देशीति प्रयोगः क्रियते, एकदेशवचनश्च नोशब्दो देशिन एकदेशभूत एव देशः, न पुनस्तद्व्यतिरिक्त इत्यर्थः । एतदप्ययुक्तम् । कुतः ? इत्याह—

नोसद्दो वि समत्तं देसं व भणिज्ज जइ समत्तं तो । तस्स पओगोऽणत्थो अह देसो तो न सो वत्थुं ॥२२५९॥

'नो देशी' इति प्रयोगे योऽयं नोशब्दः स किं समस्तं देशिलक्षणं वस्तु वदेत्, अथवा तं देशमेव ब्रूयात् ? । यद्याद्यः पक्षः, तर्हि नोशब्दस्य प्रयोगोऽनर्थकः, केवलाद् देशिशब्दादेव समस्तवस्तुप्रतीतेः । अथ देशो नोशब्देनोच्यते ततो नासौ वस्तु, देशिनो भिन्नो-ऽभिन्नो वा नायमुपपद्यत इत्युक्तत्वादिति ॥ २२५९ ॥

नीलोत्पलादिसमासश्च द्वयोः पदयोरेकाधिकरणतायां भवति । द्वयोश्चैकमधिकरणं नास्ति, अनन्तरमेव निषिद्धत्वात् । ततस्तद्-भावात् कर्मधारयसमासो न युक्त इति दर्शयन्नाह—

१ अथ भिन्नस्तस्य सको न भवति न च वस्तुसंक्रमभयात् । देश्येव च देशो न वा प्रदेशी प्रदेश इति ॥ २२५८ ॥
२ नोशब्दोऽपि समस्तं देशं वा भणेद् यदि समस्तं तत. । तस्य प्रयोगोऽनर्थोऽथ देशस्ततो न स वस्तु ॥ २२५९ ॥

सन्नसंश्च भवति, घटोऽघटश्च भवतीत्यर्थः। तथा, एकस्मिन् देशे स्वपर्यायैः सद्भावेन सत्त्वेनार्पितो विशेषितोऽन्यत्र तु देशे स्व-परो-भयपर्यायैः सद्भावा-ऽसद्भावाभ्यां सत्त्वा-ऽसत्त्वाभ्यां युगपदसांकेतिकेनैकेन शब्देन वक्तुं विवक्षितः कुम्भः संश्चावक्तव्यश्च भवति, घटोऽवक्तव्यश्च भवतीत्यर्थः, देशे तस्य घटत्वात्, देशे चावक्तव्यत्वादिति। तथा, एकदेशे परपर्यायैरसद्भावेनार्पितो विशेषितोऽन्यस्मिंस्तु देशे स्व-परपर्यायैः सद्भावा-ऽसद्भावाभ्यां सत्त्वा-ऽसत्त्वाभ्यां युगपदसांकेतिकेनैकेन शब्देन वक्तुं विवक्षितः कुम्भोऽसन्नवक्तव्यश्च भवति- अकुम्भोऽवक्तव्यश्च भवतीत्यर्थः, देशे तस्याकुम्भत्वात्, देशे चावक्तव्यत्वादिति। तथा, एकदेशे स्वपर्यायैः सद्भावेनार्पितः, एकस्मिंस्तु देशे परपर्यायैरसद्भावेनार्पितः, अन्यस्मिंस्तु देशे स्व-परो-भयपर्यायैः सद्भावा-ऽसद्भावाभ्यां युगपदेकेन शब्देन वक्तुं विवक्षितः कुम्भः संश्चासंश्चावक्तव्यश्च भवति- घटोऽघटोऽवक्तव्यश्च भवतीत्यर्थः, देशे तस्य घटत्वात्, देशेऽघटत्वात्, देशे चावक्तव्यत्वादिति।

इह च 'कुंभाकुंभ' इत्यादिना गाथार्धेन षड् भङ्गाः साक्षादुपात्ताः, सप्तमस्त्वादिशब्दात्; तद्यथा- 'कुम्भः' 'अकुम्भः' 'अवक्तव्यः' उभय त्ति' संश्चासंश्चेत्युभयम्, तथा सन्नवक्तव्यक इत्युभयम्, तथाऽसन्नवक्तव्यक इति चोभयम्, आदिशब्दसंगृहीतस्तु सप्तमः सन्नसन्नवक्तव्यक इति। एवं सप्तभेदो घटः। एवं पटादिरपि द्रष्टव्यः। तदेवं स्याद्वाददृष्टं सप्तभेदं घटादिकमर्थं यथाविवक्षमेकेन केनापि भङ्गकेन विशेषिततरमसौ शब्दनयः प्रतिपद्यते, नयत्वात्, ऋजुसूत्राद् विशेषिततरवस्तुग्राहित्वाच्च; स्याद्वादिनस्तु संपूर्णसप्तभङ्ग्यात्मकमपि प्रतिपद्यन्त इति। अलं विस्तरेणेति ॥ २२३१ ॥ २२३२ ॥

अथवा, लिङ्ग-वचने समाश्रित्य विशेषिततरं वस्त्विच्छति शब्दनय इति दर्शयन्नाह—

वत्थुमविसेसओ वा जं भिन्नाभिन्नलिंग-वयणं पि। इच्छइ रिउसुत्तनओ विसेसिययरं तयं सद्दो ॥२२३३॥

'वा' इत्यथवा, भिन्ना-ऽभिन्नलिङ्गवचनमप्यविशेषतो यद् वस्त्विच्छति ऋजुसूत्रनयः, तद् विशेषिततरमिच्छति शब्दनय इति ॥ २२३३ ॥

कुतः? इत्याह—



१ वस्त्वविशेषतो वा यद् भिन्नाभिन्नलिङ्ग-वचनमपि। इच्छत्यृजुसूत्रनयो विशेषिततर तत् शब्दः ॥ २२३३ ॥

[1]नीलुप्पलाइसद्दाहिगरणमेगं च जं मयं तत्थ। नणु पुणरुत्ता-ऽणत्थय-समयविघाया पुहत्तं वा ॥ २२६० ॥

नीलोत्पलादिशब्दानां यदेकमधिकरणमतिक्रान्तनयस्य संमतं, तत्र ननु पौनरुक्त्या-ऽऽनर्थक्य समयविघातलक्षणा दोषा उक्ता एवेति न कर्मधारयः। अथ पौनरुक्त्यादिदोषा नेष्यन्ते, तर्हि नीलोत्पलादिशब्दाभिधेयस्यार्थस्य पृथक्त्वं भेदः प्राप्नोति, इत्यतोऽपि तुल्याधिकरणताऽभावाद् न कर्मधारयः ॥ २२६० ॥

तस्मात् किं स्थितम् ? इत्याह—

[2]तो वत्थुसंकराइप्पसंगओ सव्वसेव पडिपुन्नं। वत्थुं सेसमवत्थुं विलक्खणं खरविसाणं व ॥ २२६१ ॥

तस्माद् वस्तुसांकर्यादिदोषप्रसङ्गतः सर्वं धर्मास्तिकायादिकं संपूर्णं देशि-देशकल्पनारहितमखण्डं वस्तु। एतस्मात्तु विलक्षणं देशि-देशकल्पनान्वितमवस्तु, युक्तिविकलत्वात्, खरविषाणवदिति। तदेवमुक्ता विस्तरतः समस्ता अपि नयाः ॥ २२६१ ॥

अथ विस्तरावधारणविकलशक्तिविनेयानुग्रहार्थं संक्षिप्य तदभिप्रायमाह—

[3]अत्थप्पवरं सद्दोवसज्जणं वत्थुमुज्जुसुत्तंता। सद्दप्पहाणमत्थोवसज्जणं सेसया बिंति ॥ २२६२ ॥

ऋजुसूत्रान्ताश्चत्वारो नया वस्तु ब्रुवते प्रतिपादयन्ति। कथंभूतम् ? इत्याह— अर्थप्रवरं शब्दोपसर्जनं च, अर्थः प्रवरः प्रधानभूतो मुख्यो यत्र तदर्थप्रवरम्, शब्द उपसर्जनमप्रधानभूतो गौणो यत्र तत् शब्दोपसर्जनम्। शेषास्तु शब्दादयस्त्रयो नया व्यत्ययमिच्छन्ति। अत एवाद्याश्चत्वारोऽर्थनयाः, अन्त्यास्तु त्रयः शब्दनयाः प्रोच्यन्त इति ॥ २२६२ ॥

अथाभिहितमुपसंहरन् वक्ष्यमाणं च संबन्धयन्नाह—

[4]इय नेगमाइसंखेवलक्खणं मूलजाइभेएणं। एवं चिय वित्थरओ विण्णेयं तप्पभेएणं ॥ २२६३ ॥

इत्येवं नैगमादिनयानां मूलजातिभेदतः संक्षेपलक्षणमुपलक्षणमुक्तम्। विस्तरतोऽप्येवमेवोक्तानुसारेणैषां लक्षणं विज्ञेयम्।

१ नीलोत्पलादिशब्दाधिकरणमेकं च यद् मत तत्र। ननु पुनरुक्ता-ऽनर्थक-समयविघाता पृथक्त्वं वा ॥ २२६० ॥
२ ततो वस्तुसंकरादिप्रसङ्गत. सर्वमेव परिपूर्णम्। वस्तु शेषमवस्तु विलक्षण खरविषाणमिव ॥ २२६१ ॥
३ अर्थप्रवर शब्दोपसर्जनं वस्तु ऋजुसूत्रान्ता। शब्दप्रधानमर्थोपसर्जन शेषका ब्रुवते ॥ २२६२ ॥
४ इति नैगमादिसक्षेपलक्षण मूलजातिभेदेन। एवमेव विस्तरतो विज्ञेय तत्प्रभेदेन ॥ २२६३ ॥

धणिभेयाओ भेओ त्थी-पुंलिङ्गाभिहाणवच्चाणं । पड-कुंभाणं व जओ तेणाभिन्नत्थमिट्ठं तं ॥ २२३४ ॥

यतो यस्मात् कारणात् स्त्री-पुं-नपुंसकलिङ्गाभिधानवाच्यानामर्थानां तटादीनां भेद एव न पुनरेकत्वम्, 'तटी' इत्यभिधानस्यान्योऽर्थो वाच्यम्, 'तट' इत्यभिधानस्य त्वन्यः, 'तटम्' इत्यभिधानस्य त्वपरः । कुतः ? । ध्वनिभेदात् । तथा, 'गुरुर्गुरवः' इत्याद्येकवचन-बहुवचनवाच्यानामर्थानां ध्वनिभेदादेव भेदः । केषामिव ? इत्याह– पट-कुम्भादिध्वनिभेदात् पट कुम्भाद्यर्थानामिव । तेन तस्मात् कारणात् तल्लिङ्गं वचनं वा भिन्नार्थमेवेष्टम् । यादृशो ध्वनिस्तादृश एवाऽर्थोऽस्येष्ट इत्यर्थः । अन्यालिङ्गवृत्तेस्तु शब्दस्य नान्यालिङ्गमर्थं वाच्यमिच्छत्यसौ, नाप्यन्यवचनवृत्तेः शब्दस्यान्यवचनवाच्यं वस्त्वभिधेयमिच्छत्येष इति भावः ॥ २२३४ ॥

अथ यदसौ मन्यते तत् सर्वमुपसंहृत्य दर्शयति—

[2]तो भावु च्चिय वत्थुं विसेसियमभिण्णलिंग-वयणं पि । बहुपज्जायं पि मयं सद्दत्थवसेण सद्दस्स ॥२२३५॥

ततस्तस्माद् नामादिनिक्षेपे भावघटादिको भाव एव वस्त्वित्यसाविच्छति । तदपि पूर्वोक्तनीत्या सद्भावादिभिर्विशेषितमभिन्नलिङ्ग-वचनं चाभ्युपैति, स्ववाचकध्वनीनामभिन्ने लिङ्ग-वचने यस्य तदभिन्नलिङ्ग-वचनं वस्त्वसावभ्युपगच्छति, न पुनरेकस्यैवार्थस्य लिङ्गत्रयवृत्तिशब्दवाच्यत्वम्, एक-बहुवचनवृत्तिशब्दवाच्यत्वं वा मन्यत इत्यर्थः । समभिरूढेन सहास्य मतभेदं दर्शयति– 'इन्द्रः' 'शक्रः' पुरन्दरः' इत्यादिबहुपर्यायमप्येकमिन्द्रादिकं शब्दनयस्य मतेन भवति । केन ? । शब्दस्येन्द्रादेरिन्दनादिको योऽर्थस्तद्वशेनैकस्मिन्नपीन्द्रादिके वस्तुनि यावन्त इन्दन-शकन-पूर्दारणादयोऽर्था घटन्ते तद्वशेनेन्द्र-शक्रादिबहुपर्यायमपि तद् वस्तु शब्दनयो मन्यत इत्यर्थः । समभिरूढस्तु नैवं मंस्यत इत्यनयोर्भेद इति ॥ उक्तः शब्दनयः ॥ २२३५ ॥

अथ समभिरूढमाह—

[3]जं जं सण्णं भासइ तं तं चिय समभिरोहए जम्हा । सण्णंतरत्थविमुहो तओ तओ समभिरूढो त्ति ॥२२३६॥

यां यां संज्ञां घटादिलक्षणां भाषते वदति तां तामेव यस्मात् संज्ञान्तरार्थविमुखः कुट कुम्भादिशब्दवाच्यार्थनिरपेक्षः

१ ध्वनिभेदाद् भेद स्त्री-पुलिङ्गाभिधानवाच्यानाम् । पट-कुम्भानामिव यतस्तेनाभिन्नार्थमिष्टं तत् ॥ २२३४ ॥
२ यतो भाव एव वस्तु विशेपितमभिन्नलिङ्ग वचनमपि । बहुपर्यायमपि मत शब्दार्थवशेन शब्दस्य ॥ २२३५ ॥
३ यां यां संज्ञा भापते तां तामेव समभिरोहति यस्मात् । संज्ञान्तरविमुखस्तत. सक. समभिरूढ इति ॥ २२३६ ॥

केन ? । 'तप्पभेएणं ति' तेषां मूलजातिभेदानां येऽन्ये प्रकृष्टाः सूक्ष्मतरा भेदास्तैरित्यर्थ इति । एवं व्याख्याताः पञ्च निर्युक्तिगाथाः, अष्टसप्ततिश्च भाष्यगाथाः, इत्युभयं त्र्यशीतिगाथार्थः ॥ २२६३ ॥

के पुनस्ते प्रभेदाः ? इत्याह—

इक्किक्को य सयविहो सत्त नयसया हवंति एमेव । अन्नो वि य आएसो पंचेव सया नयाणं तु ॥२२६४॥

एतेषां मूलजातिभेदतः सप्तानां नैगमादिनयानामेकैकः प्रभेदतः शतविधः शतभेदः । एवं च सर्वैरपि प्रभेदैः सप्त नयशतानि भवन्ति । अन्योऽपि चादेशः प्रकारस्तेन पञ्च नयशतानि भवन्ति । शब्दादिभिस्त्रिभिरपि नयैर्यदैक एव शब्दनयो विवक्ष्यते तदा पञ्चैव मूलनया भवन्ति, एकैकस्य च शतविधत्वात् पञ्चशतविधत्वं नयानाम् । 'अन्नो वि य त्ति' अपिशब्दात् षट्, चत्वारि, द्वे वा शते नयानाम् । तत्र यदा सामान्यग्राहिणो नैगमस्य संग्रहे, विशेषग्राहिणस्तु व्यवहारेऽन्तर्भावो विवक्ष्यते तदा मूलनयानां षड्विधत्वादेकैकस्य च शतभेदत्वात् षट् शतानि नयानाम् । यदा तु संग्रह-व्यवहार-ऋजुसूत्रलक्षणास्त्रयोऽर्थनया विवक्ष्यन्ते, एकस्तु शब्दनयः पर्यायास्तिकस्तदा चत्वारो मूलनया भवन्ति, प्रत्येकं च शतभेदत्वाच्चत्वारि नयशतानि । यदा तु नैगमादयश्चत्वारोऽप्येको द्रव्यास्तिकः, शब्दनयास्तु त्रयोऽप्येक एव पर्यायास्तिक इत्येवं द्वावेव नयौ विवक्ष्येते तदाऽनयोः प्रत्येकं शतभेदत्वाद् द्वे नयशते भवतः ॥ इति निर्युक्तिगाथार्थः ॥ २२६४ ॥

अथवा, किमनेन स्तोकभेददर्शनेन ?, उत्कृष्टतोऽसंख्याता अपि नया भवन्ति । तेऽपि चापिशब्दाद् द्रष्टव्या इति दर्शयन्नाह—

जावन्तो वयणपहा तावन्तो वा नया विसद्दाओ । ते चेव य परसमया सम्मत्तं समुदिया सव्वे ॥२२६५ ॥

'वा' अथवा, यावन्तो वचनपथा वचनमार्गा वचनप्रकारास्तेऽपीहापिशब्दात् संगृहीताः । य एव च नयास्त एव च सावधारणाः सर्वेऽपि परसमयास्तीर्थिकसिद्धान्ताः, समुदितास्तु निरवधारणाः स्याच्छब्दलाञ्छिताः सर्वेऽपि नयाः सम्यक्त्वं जिनशासनभावं प्रतिपद्यन्त इत्यर्थः । आह च स्तुतिकारः—

"उदधाविव सर्वसिन्धवः समुदीर्णास्त्वयि नाथ ! दृष्टयः । न च तासु भवान् प्रदृश्यते प्रविभक्तासु सरित्स्विवोदधिः ॥ १ ॥"

१ एकैकश्च शतविधः सप्त नयशतानि भवन्त्येवमेव । अन्योऽपि चादेश पञ्चैव शतानि नयानां तु ॥ २२६४ ॥

२ यावन्तो वचनपथास्तावन्तो वा नया अपिशब्दात् । त एव च परसमया सम्यक्त्वं समुदिता सर्वे ॥ २२६५ ॥

समभिरोहति समध्यास्ते तत्तद्वाच्यार्थविषयत्वेन प्रमाणीकरोति, ततस्तस्माद् नानार्थसमभिरोहणात् समभिरूढो नयः। यो घटशब्द-वाच्योऽर्थस्तं कुट-कुम्भादिपर्यायशब्दवाच्यं नेच्छत्यसावित्यर्थ इति ॥ २२३६ ॥

यदुक्तं निर्युक्तिकृता– 'वत्थुओ संकमणं होइ अवत्थू नए समभिरूढे' इति, तद्व्याख्यानार्थमाह––

दव्वं[2] पज्जाओ वा वत्थुं वयणंतराभिधेयं जं। न तदन्नवत्थुभावं संकमए संकरो मा भू ॥ २२३७ ॥

न हि सद्दंतरवच्चं वत्थुं सद्दंतरत्थतामेइ। संसय-विवज्जए-गत्त-संकराइप्पसंगाओ ॥ २२३८ ॥

द्रव्यं कुटादि, पर्यायस्तु तद्गतो वर्णादिस्तल्लक्षणं प्रस्तुतघटादिवचनाद् यत् कुटादि वचनान्तरं तदभिधेयं यद् वस्तु न तदन्यवस्तु-भावं घटादिशब्दाभिधेयवस्तुभावं संक्रामति। कुतः? इत्याह– वस्तुनो वस्त्वन्तरसंक्रमे मा भूत् संकरादिदोष इति। एतदेव भावयति– न हि शब्दान्तरवाच्यं वस्तु शब्दान्तरवाच्यार्थरूपतामेति। एवं हि घटादौ पटाद्यर्थसंक्रमे किमयं घटः पटादिर्वा? इति संशयः स्यात्; विपर्ययो वा भवेत्, घटादावपि पटादिनिश्चयात्; पटादौ वा घटाद्यध्यवसायादेकत्वं वा घट-पटाद्यर्थानां प्राप्नुयात्; मेचकमणिवत् संकीर्णरूपता वा घट-पटाद्यर्थानां भवेदिति। इयमत्र भावना– घटः कुटः कुम्भ इत्यादिशब्दात् पट-स्तम्भादिशब्दादिव भिन्नप्रवृत्ति-निमित्तत्वाद् भिन्नार्थगोचरानेव समभिरूढनयो मन्यते; तथाहि– घटनाद् घट इति विशिष्टचेष्टावानर्थो घट इति गम्यते, तथा 'कुट कौटिल्ये' कुटनात् कौटिल्ययोगात् कुटः, तथा 'उभ उंभ पूरणे' कूम्भनात् कुत्सितपूरणात् कुम्भ इति भिन्नाः सर्वेऽपि घट-कुटा-द्यर्थाः। ततश्च यदा घटाद्यर्थे कुटादिशब्दः प्रयुज्यते तदा वस्तुनः कुटादेस्तत्र संक्रान्तिः कृता भवति, तथा च सति यथोक्तसंशयादिदोष इति ॥ २२३७ ॥ २२३८ ॥

ततो घट-कुटाद्यर्थानां भेदसाधनायैव प्रमाणयन्नाह––

घड[3]-कुडसद्दत्थाणं जुत्तो भेओऽभिहाणभेआओ। घड-पडसद्दत्थाण व तओ न पज्जायवयणं ति ॥२२३९॥

घट-कुट-कुम्भादिशब्दवाच्यानामर्थानां भेद एव परस्परं युक्त इति प्रतिज्ञा, अभिधानभेदाद् वाचकध्वनिभेदादिति हेतुः।

---

1 गाथा २१८६। 2 द्रव्यं पर्यायो वा वस्तु वचनान्तराभिधेयं यत्। न तदन्यवस्तुभावं संक्रामति संकरो मा भूत् ॥ २२३७ ॥
न हि शब्दान्तरवाच्यं वस्तु शब्दान्तरार्थतामेति। संशय-विपर्ययै-कत्व-संकरादिप्रसङ्गात् ॥ २२३८ ॥
3 घट-कुटशब्दार्थानां युक्तो भेदोऽभिधानभेदात्। घट-पटशब्दार्थानामिव ततो न पर्यायवचनमिति ॥ २२३९ ॥

इति ॥ २२६५ ॥

एतदक्षममाणः परः प्राह—

न[1] समेन्ति न य समेया सम्मत्तं नेव वत्थुणो गमगा। वत्थुविघायाय नया विरोहओ वेरिणो चेव ॥२२६६॥

न समयन्ति न समुदायभावमापद्यन्ते नयाः, नापि समेतास्ते सम्यक्त्वं भवति, प्रत्येकावस्थायां मिथ्यादृष्टित्वात्, तत्समुदाये महामिथ्यात्वप्रसङ्गात्, प्रचुरविषलवसमुदाये विषप्राचुर्यवत्। नापि ते समेता वस्तुनो गमकाः, प्रत्येकावस्थायां तदगमकत्वात्। समुदिताश्च ते विवदमानाः प्रत्युत वस्तुविघातायैव भवन्ति, न पुनस्तद्गमकाः। कुतः पुनस्ते न समयन्ति, न च समुदिताः सम्यक्त्वं, नापि वस्तुगमकाः? इत्याह– विरोधित्वात्, वैरिवदिति ॥ २२६६ ॥

अत्रोत्तरमाह—

सव्वे[2] समयंति सम्मं चेगवसाओ नया विरुद्धा वि। भिच्च-ववहारिणो इव राओदासीणवसवत्ती ॥२२६७॥

परस्परविरुद्धा अपि नयाः सर्वेऽपि समयन्ति समुदिता जायन्ते, सर्वे च सम्यक्त्वं भवन्ति। कुतः? इत्याह– एकस्य जिनसाधोर्वशवर्तित्वात्, राजवशवर्तिनानाभिप्रायभृत्यवर्गवत्। अथवा, व्यवहारिण इवोदासीनवशवर्तिनः। इदमुक्तं भवति– यथा नयदर्शिनाऽऽज्ञासारेणैकेन राज्ञा विरोधादिभावमापन्ना बहवोऽपि भृत्याः सम्यगुपायतो विरोधादिकारणान्यपनीयैकत्र मीलयन्ते, सत्प्रवृत्तिं च कार्यन्ते; यथा वा धन-धान्य-भूम्याद्यर्थे परस्परं विवदमाना बहवोऽप्यर्थि-प्रत्यर्थिलक्षणा व्यवहारिणः सम्यग् न्यायदर्शिना केनाप्युदासीनेन युक्तिभिर्विवादकारणान्यपनीय मील्यन्ते, सन्मार्गं च ग्राह्यन्ते; तथेहापि परस्परविरुद्धान् बहूनपि नयान् सम्यग्ज्ञानी जैनसाधुस्तेषां सावधारणतालक्षणं विरोधकारणमपनीयैकत्र मीलयति, सावधारणत्वे च मिथ्यात्वकारणेऽपनीते तान् सम्यग्रूपतां ग्राहयति। प्रचुरविषलवा अपि हि प्रौढमन्त्रवादिना निर्विषीकृत्य कुष्ठादिरोगिणो दत्ता अमृतरूपतां प्रतिपद्यन्त एवेति ॥ २२६७ ॥

प्रत्येकावस्थायामेकैकांशग्राहित्वात् समुदिता अपि कथं ते वस्तुगमकाः? इत्यत्राह—

१ न समयन्ति न च समेताः सम्यक्त्वं नैव वस्तुनो गमकाः। वस्तुविघाताय नया विरोधतो वैरिण इव ॥ २२६६ ॥
२ सर्वे समयन्ति सम्यक्त्वं चैकवशाद् नया विरुद्धा अपि। भृत्य-व्यवहारिण इव राजो दासीनवशवर्तिनः ॥ २२६७ ॥

घट-पट-स्तम्भादिशब्दवाच्यानामिवार्थानामिति दृष्टान्तः । तत एतदभिप्रायेण घटादेः कुट-कुम्भ-कलशादिकं पर्यायवचनं नास्त्येव, एकस्मिन्नर्थेऽनेकशब्दप्रवृत्त्यनभ्युपगमादिति ॥ २२३९ ॥

अतिक्रान्तशब्दनयशिक्षणार्थमाह—

धणिभेयाओ भेओऽणुमओ जइ लिंग-वयणभिन्नाणं। घड-पडवच्चाणं पिव घड-कुडवच्चाण किमणिट्ठो ? ॥२२४०॥

हन्त ! यदि लिङ्ग-वचनभिन्नानां घट-पट-स्तम्भादिशब्दवाच्यानामिवार्थानां ध्वनिभेदाद् भेदस्तवानुमतः, तर्हि घट-कुट-कुम्भ-कलशादिशब्दवाच्यानामर्थानां किमिति भेदो नेष्टः, ध्वनिभेदस्यात्रापि समानत्वात् । तस्मादस्मत्पथवर्तित्वं भवतोऽपि बलादापतितमिति ॥ २२४० ॥

वसति-प्रस्थकादिविचारेऽप्यस्य पूर्वनयेभ्यो भेद इति दर्शयन्नाह—

[2]आगासे वसइ त्ति य भणिए भणइ किह अन्नमन्नम्मि । मोत्तूणायसहावं वसेज्ज वत्थुं विहम्मम्मि ? ॥२२४१॥

वत्थुं वसइ सहावे सत्ताओ चेयणा व जीवम्मि । न विलक्खणत्तणाओ भिन्ने छायातवे चेव ॥ २२४२॥

'क्वासौ साध्वादिर्वसति ?' इति पृष्टे 'लोक-ग्राम-वसत्यादौ वसति' इति नैगमादिनयवादिनो वदन्ति । ऋजुसूत्रनयवादी तु वदति– 'यत्रावगाढस्तत्राकाशखण्डे वसति' । ततश्च ऋजुसूत्रेणैवं भणिते भणति समभिरूढः– नन्वात्मस्वभावं मुक्त्वा कथमन्यद् वस्त्वन्यस्मिन् विधर्मके आत्मविलक्षणे वस्तुनि वसेत् ? न कथञ्चिदित्यर्थः । तर्हि क्व वसति ? इत्याह– सर्वमेव वस्त्वात्मस्वभावे वसति, सत्त्वात्, जीवे चेतनावत् । भिन्ने त्वात्मविलक्षणस्वरूपे वस्तुन्यन्यद् न वसति, यथा छायाऽऽतप इति । एष त्रयाणामपि शब्दनयानामभिप्राय इति ॥ २२४१ ॥ २२४२ ॥

अथ प्रस्थकविचारमधिकृत्याह—

---

१ ध्वनिभेदाद् भेदोऽनुमतो यदि लिङ्ग-वचनभिन्नानाम् । घट पटवाच्यानामिव घट कुटवाच्यानां किमनिष्टः ? ॥ २२४० ॥

२ आकाशे वसतीति च भणिते भणति कथमन्यदन्यस्मिन् । मुक्त्वात्मस्वभावं वसेद् वस्तु विधर्मणि ? ॥ २२४१ ॥

वस्तु वसति स्वभावे सत्त्वाच्चेतनेव जीवे । न विलक्षणत्वाद् भिन्ने छायाऽऽतप इव ॥ २२४२ ॥

[1]देसगमगत्तणाओ गमग च्चिय वत्थुणो सुयाइ व्व । सव्वे समत्तगमगा केवलमिव सम्मभावम्मि ॥२२६८॥

इह नया वस्तुनस्तावत् सामान्येन गमका अवबोधकाः मापका इति पक्षः, तद्देशगमकत्वात् । ननु वस्तुनो देशमात्रमेव प्रत्येकममी गृह्णन्ति, तत्कथं वस्तुगमका उच्यन्ते ? इत्याह– श्रुतादिवत् । इदमुक्तं भवति– घटादीनां रूपमात्रमेव चक्षुर्गृह्णाति, न रसादिधर्मान्; पर्वतादीनां चार्वाग्देशमात्रमेव गृह्णाति न परभागमिति, एवं देशग्राहकमपि सद् वस्तु गमयत्येव, एवं नया अपि। किञ्च, एत एव सर्वे नया मिथ्यात्वापगमेन सम्यक्त्वसद्भावे क्रमेण विशुध्यमानाः सर्वावरणप्रतिबन्धाभावात् समस्तवस्तुगमका भवन्ति, केवलज्ञानमिवेति ॥ २२६८ ॥

आह– ननु यदि ते प्रत्येकमपि वस्तुगमकाः, तर्हि मिथ्यादृष्टयः कथम् ? इत्याह—

[2]जमणेगधम्मणो वत्थुणो तदंसे च सव्वपडिवत्ती । अन्ध व्व गयावयवे तो मिच्छद्दिट्ठिणो वीसु ॥२२६९॥

यद् यस्मादनेकधर्मस्यानेकधर्मात्मकस्य वस्तुनस्तदंशेऽपि गृहीतेऽनित्यत्वाद्येकधर्ममात्रेऽपि परिच्छिन्ने बौद्धादेर्नयवादिनः 'समस्तं वस्तु मया गृहीतम्' इत्येवंभूता प्रतिपत्तिर्भवति । ततस्तस्माद् विष्वक् पृथगेकैकशो मिथ्यादृष्टयः, विपर्यस्तबुद्धित्वात्, एकस्मिन् पुच्छ-पादाद्यवयवे समस्तगजप्रतिपत्तारोऽन्धा इवेति ॥ २२६९ ॥

समुदिता अपि तर्हि कथं ते सम्यग्दृष्टयः ? इत्याह—

[3]जं पुण समत्तपज्जायवत्थुगमग त्ति समुदिया तेणं । सम्मत्तं चक्खुमओ सव्वगयावयवगहणे व्व ॥२२७०॥

यस्मात् तु समुदिता नयाः समस्तपर्याया यस्य वस्तुनस्तत् समस्तपर्यायं वस्तु तस्य गमकाः मापका भवन्ति, तेन ते सम्यक्त्वं सम्यग्वादिनो व्यपदिश्यन्ते । यथा समस्तगजावयवग्रहणे सर्वगजावयवसमुदायात्मकगजवादिनश्चक्षुष्मन्तः । निरवधारणोऽपरनयसापेक्षः स्यात्पदलाञ्छित एकोऽपि नयः सम्यग्वादी, ये तु सावधारणा अन्योन्यमनपेक्षाः स्यात्पदालाञ्छितास्ते बहवोऽपि समुदिता मिथ्यादृष्टय एवेतीह तात्पर्यम् । अत एव ये सावधारणास्ते बहवोऽपि समुदितव्यपदेशं न लभन्ते, तत्त्वतस्तेषामसमुदितत्वात् । निरवधारणास्तु नयाः पृथगपि स्थिताः परस्परं सापेक्षत्वेन समुदिता भण्यन्त इति ॥ २२७० ॥

१ देशगमकत्वाद् गमका एव वस्तुन. श्रुतादिरिव । सर्वे समस्तगमका' केवलमिव सम्यग्भावे ॥ २२६८ ॥
२ यदनेकधर्मणो वस्तुनस्तदशे च सर्वप्रतिपत्ति । अन्धा इव गजावयवे ततो मिथ्यादृष्टयो विष्वक् ॥ २२६९ ॥
३ यत् पुनः समस्तपर्यायवस्तुगमका इति समुदितास्तेन । सम्यक्त्व चक्षुष्मन्त सर्वगजावयवग्रहण इव ॥ २२७० ॥

[1]माणं पमाणमिट्ठं नाणसहावो स जीवओऽणन्नो। कह पत्थयाइभावं वएज्ज मुत्ताइरूवं सो ? ॥२२४३॥

न हि पत्थाइ पमाणं घडो व्व भुवि चेयणाइविरहाओ। केवलमिव तन्नाणं पमाणमिट्ठं परिच्छेओ ॥२२४४॥

इह यद् मानं तत् प्रमाणमेवेष्टम्, प्रमीयते परिच्छिद्यते वस्त्वनेनेति कृत्वा। प्रमाणं च परिच्छेदात्मकं जीवस्वभाव एव, स च जीवादनन्यः, अतः कथं मूर्तादिस्वभावम्, आदिशब्दादचेतनस्वभावं प्रस्थकादिस्वभावं व्रजेदसौ, येन नैगमादयः काष्ठमयं प्रस्थादिकं मानमिच्छन्ति ?। तर्हि शब्दनयानां किं प्रस्थकादि प्रमाणम्, किंवा न प्रमाणम् ? इत्याह– न हि नैव काष्ठघटितं प्रस्थादिकं प्रमाणम्, चेतनादिरहितत्वात्, घट-पट-लोष्टादिवत्; किन्तु तस्य प्रस्थकस्य ज्ञानं तज्ज्ञानं तदुपयोगस्तत्परिच्छेदः प्रमाणं मानमिष्टम्, तेनैव तत्त्वतः प्रमीयमाणत्वात्। 'परिच्छेया' इति पाठान्तरं वा, तेनैव परिच्छेदात्। केवलज्ञानवत्। तस्मात् प्रस्थकज्ञानमेव प्रस्थक इति स्थितम् ॥ २२४३ ॥ २२४४ ॥

अत्र परमतमाशङ्क्य परिहरन्नाह—

[2]पत्थादओ वि तक्कारणं ति माणं मई न तं तेसु। जमसंतेसु वि बुद्धी कासइ संतेसु वि न बुद्धी ॥२२४५॥

तक्कारणं ति वा जइ पमाणसिद्धं तओ पमेयं पि। सव्वं पमाणमेवं किमप्पमाणं पमाणं वा ? ॥२२४६॥

प्रस्थादयोऽपि मानमिति प्रतिज्ञा, तत्कारणात्– प्रस्थकज्ञानकारणत्वात्, यथा 'नड्वलं पादरोगः' इत्येवंभूता परस्य मतिः स्यात्। तदेतद् न, यतस्तेषु प्रस्थकादिष्वसत्स्वपि कस्यापि धान्यराश्यवलोकनमात्रेणापि कलनशक्तिसंपन्नस्य, अतिशयज्ञानिनो वा प्रस्थकपरिच्छेदबुद्धिरुपजायते। कस्यापि पुनर्नालिकेरद्वीपाद्यायातस्य सत्स्वपि तेषु प्रस्थकपरिच्छेदबुद्धिर्न संपद्यते, इत्यनैकान्तिका एव काष्ठमयप्रस्थकादयः प्रस्थकज्ञानजनने, इति कथं तत्कारणत्वात् ते प्रस्थकादिमानरूपा भवेयुः ?। यदिवा, भवन्तु ते तत्कारणम्, तथापि न तत्कारणत्वेन तेषां प्रस्थादिमानरूपता, अतिप्रसङ्गादिति दर्शयति– 'तक्कारणं ति वेत्यादि' यदि प्रस्थकज्ञानकारण-

१ मानं प्रमाणमिष्टं ज्ञानस्वभाव स जीवतोऽनन्यः। कथं प्रस्थकादिभावं व्रजेद् मूर्तादिरूपं सः ? ॥ २२४३ ॥
न हि प्रस्थादि प्रमाणं घट इव भुवि चेतनादिविरहात्। केवलमिव तज्ज्ञानं प्रमाणमिष्टं परिच्छेद ॥ २२४४ ॥

२ प्रस्थादयोऽपि तत्कारणमिति मानं मतिर्न तत् तेषु। यदसत्स्वपि बुद्धिः कस्यचित् सत्स्वपि न बुद्धिः ॥ २२४५ ॥
तत्कारणमिति वा यदि प्रमाणसिद्धं ततः प्रमेयमपि। सर्वं प्रमाणमेवं किमप्रमाणं प्रमाणं वा ? ॥ २२४६ ॥

दृष्टान्तान्तरेणापि समुदितानां समस्तवस्तुगमकत्वं समर्थयन्नाह—

न[1] समत्तवत्थुगमगा वीसुं रयणावलीए मणउ व्व । सहिया समत्तगमगा मणओ रयणावलीए व्व॥२२७१॥

न समस्तवस्तुगमकाः पृथग्भूता नयाः, परस्परानिरपेक्षत्वात्, पृथक्स्थितरत्नावलीव्यपदेशानर्हमणय इव । त एव समुदिताः समस्तवस्तुगमकाः, यथास्थानविनियोगेन परस्परसापेक्षत्वात्, एकसूत्रक्रमप्रोतरत्नावलीमणय इवेति ॥ २२७१ ॥

अथ परस्परं विवदमानान् नयान् समीक्ष्य ये मुह्यन्ति, 'न किञ्चिदिह परस्परं मिलति' इत्यादिभाषणतः समयाशातनां च कुर्वन्ति, तदुपदेशगर्भमुपसंहरन्नाह—

एवं[2] सविसयसच्चे परविसयपरंमुहतए नाउं । नेएसु न संमुज्झइ न य समयासायणं कुणइ ॥ २२७२ ॥

एवमुक्तप्रकारेण यो यस्य द्रव्यास्तिकायादिनयस्यात्मीयो नित्यत्वादिको विषयस्तन्मात्रप्रतिपादने सत्योऽवितथो नयः, परस्य तु पर्यायास्तिकादिनयस्स योऽनित्यत्वादिको विषयस्तत्र पराङ्मुखः, न तं निराकरोति, निरवधारणत्वेन सम्यग्नयत्वात्, नापि तं स्थापयति, नयत्वेनैकांशग्राहित्वादित्यर्थः। एवंभूतान् सर्वानपि नयान् ज्ञात्वाऽन्योन्यरूपतया तेषां स्वविषयप्रतिपादनेऽपि नयविधिज्ञः साधुर्ज्ञेयेषु वस्तुषु न संमुह्यति, न दोलायमानमानसो भवति। नापि निन्दादिभिः समयाशातनां विधाय मिथ्यात्वमुपगच्छति, किन्तु 'कथञ्चिदेतदप्यस्ति कथञ्चिदिदमपि च घटते' इत्यादिरूपतया नयान् विषयविभागेन व्यवस्थाप्य वस्त्वर्थं गमयतीति ॥२२७२॥

नन्वनेन संमोहहेतुना नयविचारेण मूलत एव किं प्रयोजनम्? इत्याह—

अत्थं[3] जो न समिक्खइ निक्खेव-नय-प्पमाणओ विहिणा । तस्साजुत्तं जुत्तं जुत्तमजुत्तं व पडिहाइ॥२२७३॥

परसमएगनयमयं तप्पडिवक्खनयओ निवत्तेज्जा । समए व परिग्गहियं परेण जं दोसबुद्धीए ॥२२७४॥

यो नाम-स्थापनादिद्वारेण, तथा नैगमादिनयैः, प्रत्यक्षादिभिश्च प्रमाणैरर्थं सूक्ष्मेक्षिकया विचार्य न समीक्षते न परिभावयति,

---

१ न समस्तवस्तुगमका विष्वग् रत्नावल्या मणय इव । सहिताः समस्तगमका मणयो रत्नावल्या इव ॥ २२७१ ॥

२ एवं स्वविषयसत्यान् परविषयपराङ्मुखतया ज्ञात्वा । ज्ञेयेषु न संमुह्यति न च समयाशातनां करोति ॥ २२७२ ॥

३ अर्थं यो न समीक्षते निक्षेप-नय-प्रमाणतो विधिना । तस्यायुक्तं युक्तं युक्तमयुक्तं वा प्रतिभाति ॥ २२७३ ॥

परसमयैकनयमतं तत्प्रतिपक्षनयतो निवर्तयेत् । समये वा परिगृहीतं परेण यद् दोषबुद्ध्या ॥ २२७४ ॥

तामात्रेणापि ते काष्ठमयप्रस्थकादयः प्रमाणमिष्टाः, तर्हि प्रमेयमपि प्रमाणं प्राप्नोति, प्रमाणज्ञानकारणत्वात् । एवं च सति दधिभक्षणादीनामपि परम्परया तत्कारणत्वेन प्रमाणत्वात् किं नामाप्रमाणं स्यात् ?। यदि च सत्यपि तत्कारणत्वेऽन्यत् सर्वं दधिभक्षणादिकं न प्रमाणम्, तर्हि काष्ठमयप्रस्थकादयोऽपि न प्रमाणम्, अतः किं नाम प्रमाणं भवेत् ?– न किञ्चित् । ततो विशीर्णा प्रमाणा-ऽप्रमाणव्यवस्था । तस्मात् प्रस्थकज्ञानमेव प्रस्थकप्रमाणं त्रयाणामपि शब्दनयानामिति ॥ २२४५ ॥ २२४६ ॥

तथा, पञ्चानां धर्मा-ऽधर्मा-ऽऽकाश-जीव-पुद्गलास्तिकायानां देश-प्रदेशकल्पनायामस्य षष्ठीसमासादि नेष्टम् । किं तर्हि ? देशी चासौ देशश्चेत्यादिकर्मधारयमेव मन्यतेऽसौ नयः । कुतः ? इत्याह—

[1]देसी चेव य देसो नो वत्थुं वा न वत्थुणो भिन्नो । भिन्नो व न तस्स तओ तस्स व जइ तो न सो भिन्नो॥२२४७॥

एत्तो चेव समाणाहिगरणया जुज्जए पयाणं पि । नीलुप्पलाइयाणं न रायपुरिसाइसंसग्गो ॥ २२४८ ॥

व्याख्या– धर्मास्तिकायादिको देश्येव हि देशो न पुनस्तस्माद् घटादिवारघट्टोऽत्यन्तभिन्नं स्वतन्त्रवस्तु देशः । अथ न स्वतन्त्रवस्तु देशः, किन्तु तत्संबन्धित्वादस्वतन्त्रोऽपि देशितो भिन्नो देश इति चेत् । तदप्ययुक्तम् । कुतः ? इत्याह– न वा देशिलक्षणाद् वस्तुनो भिन्नोऽसौ देशः । अथ भिन्नस्तस्मादिष्यते सः, तर्ह्यन्यस्यान्येन विन्ध्य-हिमवदादीनामिव सर्वथा संबन्धायोगाद् न तस्य देशिनस्तकोऽसौ देशः । यदि पुनस्तस्य देशिनः संबन्धी देशोऽभ्युपगम्यते, तर्हि घटादेः स्वस्वरूपवद् न स देशस्तस्माद् देशिनो भिन्नः किन्तु तदात्मक एवेति । अत एव विशेषणविशेष्यभूतानां सर्वेषां पदानां समानाधिकरणता– कर्मधारय एव समासो युज्यत इत्यर्थः, यथा नीलोत्पलादीनाम्, उपलक्षणं चेदं धव-खदिर-पलाशादीनां द्वन्द्वोऽपि स्यात्, न तु राज्ञः पुरुषो राजपुरुष इति षष्ठ्यादिसमासः, यतो भिन्नानामन्योन्यं संसर्गः संबन्धो न घटते, तथाहि–संबद्धवस्तुद्वयात् संबन्धो भिन्नो वा स्यादभिन्नो वा ? । यदि भिन्नः, तर्हि संबद्धवस्तुद्वयाद् भिन्नं स्वतन्त्रं तृतीयमेव वस्तु तत् स्याद् न तु संबन्ध इति कथं तद्वशात् षष्ठ्यादिविभक्तिः ?। न हि विन्ध्य-हिमवदादिभ्यो भिन्नो घटादिः संबन्धो भण्यते । नापि तद्वशात् तेषां षष्ठ्यादिविभक्तिः प्रवर्तते । अथ संबद्धवस्तुद्वयादभिन्नः संबन्धः, तर्हि नासौ षष्ठ्यादिहेतुः, संबद्धवस्तुद्वयादव्यतिरिक्तत्वात्, तत्स्वरूपवत्, इत्यादि वक्त्र वक्तव्यम्, तत्तु नोच्यते, ग्रन्थगहनताप्रसङ्गादिति ॥२२४७॥ ॥ २२४८ ॥

---

१ देश्येव च देशो नो वस्तु वा न वस्तुनो भिन्न । भिन्नो वा न तस्य सकस्तस्य वा यदि ततो न स भिन्न. ॥ २२४७ ॥ एतस्मादेव समानाधिकरणता युज्यते पदानामपि । नीलोत्पलादिकानां न राजपुरुषादिससर्ग ॥ २२४८ ॥

तस्याविचारितरमणीयतयाऽयुक्तं युक्तं प्रतिभाति, युक्तमपि वान्यतयाऽयुक्तं प्रतिभाति । अतः कर्तव्यो नयविचारः । किञ्च, बौद्धादिपरसमयरूपमनित्यत्वादिप्रतिपादकस्यर्जुसूत्रादिकनयस्य यन्मतं तद् नयविधिज्ञः साधुः 'तप्पडिवक्खनयउ त्ति' तस्यानित्यत्वादिप्रतिपादकनयस्य प्रतिपक्षभूतो नित्यत्वादिप्रतिपादको यो द्रव्यास्तिकादिनयस्तस्मात् ततो निवर्तयेद् निराकुर्यात् । अथवा, समये स्वसिद्धान्ते जैनागमेऽपीत्यर्थः, यदज्ञान-द्वेषादिदोषकलुषितेन परेण दोषबुद्ध्या किमपि जीवादिकं वस्तु परिगृहीतं भवति तदपि नयविधिज्ञो निवर्तयेत्– नयोक्तिभिर्गुणरूपतया तत् स्थापयेदित्यर्थः । अस्मात् कर्तव्यो नयविचारः । इति गाथाद्वयार्थः॥२२७३॥२२७४॥

आह– किं सर्वत्र सर्वदा सर्वोऽपि कर्तव्यो नयविचारः ? । न, इत्याह—

[1]एएहिं दिट्ठिवाए परूवणा सुत्त-अत्थकहणाए । इह पुण अणब्भुवगमो अहिगारो तीहिं ओसन्नं॥२२७५॥

एभिर्नैगमादिभिर्नयैः सप्रभेदैर्दृष्टिवादे सर्ववस्तुप्ररूपणा सूत्रार्थकथना च 'क्रियते' इति शेषः । इह पुनः कालिकश्रुतेऽनभ्युपगमो नावश्यं नयैर्व्याख्या कार्या । यदि च श्रोत्रपेक्षया नयविचारः क्रियते तदा त्रिभिराद्यैरुत्सन्नं प्रायेणात्राधिकारः ॥ इति निर्युक्तिगाथार्थः ॥२२७५ ॥

किमिति त्रिभिरेवाद्यनयैरिहाधिकारो न शेषैः ? इत्याह—

[2]पायं संववहारो ववहारंतेहिं-तिहिं य जं लोए । तेण परिकम्मणत्थं कालियसुत्ते तदहिगारो ॥ २२७६ ॥

सुगमा, नवरं शिष्यमतिपरिकर्मणार्थं तैः स्थूलसंव्यवहारार्थप्रतिपादकैरेव नैगम-संग्रह-व्यवहारनयैरिहाधिकारः ॥ इति गाथार्थः ॥ २२७६ ॥

आह— नन्विह पुनर्नाभ्युपगम इत्यभिधाय पुनस्त्रिनयानुज्ञा किमर्थम् ? इत्याह—

[3]नत्थि नएहिं विहूणं सुत्तं अत्थो य जिणमए किंचि । आसज्ज उ सोयारं नए नयविसारओ बूया ॥२२७७॥

सूत्रमर्थो वा नास्ति जिनमते नयैर्विहीनं किञ्चिदपि, तथाप्याचार्य-शिष्याणां मतिमान्द्यापेक्षया सर्वनयविचारनिषेधः कृतः ।

१ एभिर्दृष्टिवादे प्ररूपणा सूत्रा-ऽर्थकथनायाम् । इह पुनरनभ्युपगमोऽधिकारस्त्रिभिरुत्सन्नम् ॥ २२७५ ॥
२ प्राय संव्यवहारो व्यवहारान्तैस्त्रिभिश्च यल्लोके । तेन परिकर्मणार्थं कालिकसूत्रे तदधिकार ॥ २२७६ ॥
३ नास्ति नयैर्विहीनं सूत्रमर्थश्च जिनमते किञ्चित् । आसाद्य तु श्रोतार नयान् नयविशारदो ब्रूयात् ॥ २२७७ ॥

एवं पि दिट्ठफलया किरिया न कम्मफला पसत्ता ते । सा तम्मेत्तफल च्चिय जह मंसफलो पसुविणासो ॥ ८ ॥
पायं व जीवलोगो वट्टइ दिट्ठप्फलासु किरियासु । अदिट्ठफलासुं पुण वट्टइ नासंखभागो वि ॥ ९ ॥
सोम्म ! जउ च्चिय जीवा पायं दिट्ठफलासु वट्टंति । अदिट्ठफलाओ वि य ताओ पडिवज्ज तेणेव ॥ १० ॥
इहरा अदिट्ठरहिया सव्वे मुच्चेज्ज ते अपयत्तेणं । अदिट्ठारंभो चेव केसब्बहुलो भविज्जाहि ॥ ११ ॥
जमणिट्ठभोगभाजो बहुतरगा जं च नेह मइपुव्वं । अदिट्ठाणिट्ठफलं कोइ वि किरियं समारभइ ॥ १२ ॥
तेण पडिवज्ज, किरिया अदिट्ठेगंतियप्फला सव्वा । दिट्ठाणेगंतफला सा वि अदिट्ठाणुभावेण ॥ १३ ॥
अहवा फलाउ कम्मं कज्जत्तणओ पसाहियं पुव्वं । परमाणवो घडस्स व किरियाण तयं फलं भिन्नं ॥ १४ ॥
आह नणु मुत्तमेवं मुत्तं चिय कज्जमुत्तिमत्ताओ । इह जह मुत्तत्तणओ घडस्स परमाणवो मुत्ता ॥ १५ ॥
तह सुहसंवित्तीओ संबंधे वेयणुब्भवाओ य । बज्झबलाहाणाओ परिणामाओ य विण्णेयं ॥ १६ ॥
आहार इवानल इव घडु व्व नेहाइकयबलाहाणो । खीरमिवोदाहरणाइं कम्मरूवित्तगमगाइं ॥ १७ ॥
अह मयमसिद्धमेयं परिणामाउ त्ति सो वि कज्जाओ । सिद्धो परिणामो से दहिपरिणामादिव पयस्स ॥ १८ ॥
अब्भादिविगाराणं जह वेचित्तं विणा वि कम्मेण । तह जइ संसारीणं हवेज्ज को नाम तो दोसो ? ॥ १९ ॥
कम्मम्मि व को भेओ जह बज्झक्खंधचित्तया सिद्धा । तह कम्मपोग्गलाण वि विचित्तया जीवसहियाणं ॥ २० ॥
बज्झाण चित्तया जइ पडिवन्ना कम्मणो विसेसेण । जीवाणुगयस्स मया भत्तीण व सिप्पिनत्थाणं ॥ २१ ॥
तो जइ तणुमेत्तं चिय हवेज्ज का कम्मकप्पणा नाम ? । कम्मं पि नणु तणु च्चिय सण्हयरब्भंतरा नवरं ॥ २२ ॥
को तीए विणा दोसो थूलाए सव्वहा विप्पमुक्कस्स । देहग्गहणाभावो तओ य संसारवोच्छित्ती ॥ २३ ॥
सव्वविमोक्खावत्ती निक्कारणउ व्व सव्वसंसारो । भवमुक्काणं व पुणो संसरणमओ अणासासो ॥ २४ ॥

मुत्तस्सामुत्तिमया जीवेण कहं हवेज्ज संबंधो ? । सोम्म ! घडस्स व्व नभसा जह वा दव्वस्स किरियाए ॥२५॥
अहवा पच्चक्खं चिय जीवोवनिबंधणं जह सरीरं । चिट्ठइ कम्मयमेवं भवंतरे जीवसंजुत्ते ॥ २६ ॥
मुत्तेणामुत्तिमओ उवघाया-ऽणुग्गहा कहं होज्जा ? । जह विण्णाणाईणं मइरापाणो-सहाईहिं ॥ २७ ॥
अहवा नेगंतोऽयं संसारी सव्वहा अमुत्तो त्ति । जमणाइकम्मसंतइपरिणामावन्नरूवो सो ॥ २८ ॥
संताणोऽणाई उ परोप्परं हेउहेउभावाओ । देहस्स य कम्मस्स य गोयम! बीयं-कुराणं व ॥ २९ ॥
कम्मे चासइ गोयम! जमग्गिहोत्ताइं सग्गकामस्स । वेयविहियं विहण्णइ दाणाइफलं च लोयम्मि ॥ ३० ॥
कम्ममणिच्छंतो वा सुद्धं चिय जीवमीसराइं वा । मण्णासि देहाईणं जं कत्तारं न सो जुत्तो ॥ ३१ ॥
उवगरणाभावाओ निच्चेट्ठा-ऽमुत्तयाइओ वा वि । ईसरदेहारंभे वि तुल्लया वाऽणवत्था वा ॥ ३२ ॥
अहव सहावं मन्नसि विण्णाणघणाइवेयवुत्ताओ । तह बहुदोसं गोयम ! ताणं च पयाणमयमत्थो ॥ ३३ ॥

छिन्नम्मि संसयम्मी जिणेण जरा-मरणविप्पमुक्केणं ।
सो समणो पव्वइओ पंचहिं सह खंडियसएहिं ॥ १४६ ॥
ते पव्वइए सोउं तइओ आगच्छइ जिणसगासं ।
वच्चामि वंदामी वंदित्ता पज्जुवासामि ॥ १४७ ॥
सीसत्तेणोवगया संपयमिंद-ग्गिभूइणो जस्स ।
तिहुयणकयप्पणामो स महाभागोऽभिगमणिज्जो ॥ १४८ ॥

१ 'यम्मि अ जि' ।

विमलमतिं श्रोतारं पुनरासाद्य नयविशारदः सूरिः समनुज्ञातमाद्यनयत्रयं शेषान् वा नयान् ब्रूयात् ॥ इति निर्युक्तिगाथार्थः ॥२२७७॥

अत्र भाष्यम्—

[1]भासिज्ज वित्थरेण वि नयमयपरिणामणासमत्थम्मि । तदसत्ते परिकम्मणमेगनएणं पि वा कुज्जा ॥२२७८॥

सुगमा, नवरं वाशब्दाद् नयद्वयेन त्रयेण वा शिष्यमतिपरिकर्मणां कुर्यात्, तथाविधमतिमान्द्ये तु नैकमपि नयं भाषेत, इत्ये-तदपि द्रष्टव्यम् ॥ २२७८ ॥

॥ तदेवमुक्तं नयद्वारम् ॥

अथ समवतारद्वारमुच्यते। क षां नयानां समवतारः? क वाऽनवतारः? इति संशयापनोदार्थमाह—

[2]मूढनइयं सुयं कालियं तु नया समोयरंति इहं । अपुहत्ते समोयारो नत्थि पुहत्ते समोयारो ॥२२७९॥

मूढा अविभागस्था नया यत्र तद् मूढनयं तदेव मूढनयिकम्। किं तत्? । कालिकं श्रुतं- काले प्रथम-चरमपौरुषीलक्षणे कालग्रहणपूर्वकं पठ्यत इति कालिकम्, तत्र न नयाः समवतरन्ति- अत्र प्रतिपदं न भण्यन्त इत्यर्थः। क पुनस्तर्ह्यमीषां समवतार आसीत्, कदा चायमनवतारस्तेषामभूत्? इत्याह- 'अपुहत्ते इत्यादि'। चरणकरणानुयोग-धर्मकथानुयोग-गणितानुयोग-द्रव्यानुयोगानामपृथग्भावोऽपृथक्त्वं प्रतिसूत्रमविभागेन वक्ष्यमाणेन विभागाभावेन प्रवर्तनं प्ररूपणमित्यर्थस्तस्मिन्नपृथक्त्वे नयानां विस्तरेणासीत् समवतारः। चरणकरणाद्यनुयोगानां पुनर्वक्ष्यमाणलक्षणे पृथक्त्वे नास्ति समवतारो नयानाम्। भवति वा कचित् पुरुषापेक्षोऽसौ ॥ इति निर्युक्तिगाथार्थः ॥२२७९॥

भाष्यकारव्याख्या—

[3]अविभागत्था मूढा नय त्ति मूढनइयं सुयं तेण । न समोयरंति संता पइपयं जं न भण्णंति ॥२२८०॥

---

१ भाषेत विस्तरेणापि नयमतपरिणामनासमर्थे। तदसत्त्वे परिकर्मणामेकनयेनापि वा कुर्यात् ॥ २२७८ ॥

२ मूढनयिकं श्रुतं कालिकं तु न नयाः समवतरन्तीह। अपृथक्त्वे समवतारो नास्ति पृथक्त्वे समवतार. ॥२२७९॥

३ अविभागस्था मूढा नया इति मूढनयिकं श्रुत तेन। न समवतरन्ति सन्त. प्रतिपदं यद् न भण्यन्ते ॥२२८०॥

'[1]चलमाणे चलिए, उईरिज्जमाणे उईरिए, वेइज्जमाणे वेइए" इत्यादि, तत् सर्वं मिथ्येत्यभिप्राय इति ॥ २३०८ ॥

अपिच, क्रियमाणकृताभ्युपगमे बहवो दोषाः । क एते ? इत्याह—

[2]जस्सेह कज्जमाणं कयं ति तेणेह विज्जमाणस्स । करणकिरिया पवन्ना तहा य बहुदोसपडिवत्ती ॥२३०९॥

इह यस्य वादिनः 'क्रियमाणं वस्तु कृतम्' इत्यभ्युपगमः, तेनेह विद्यमानस्य सतः करणरूपाः क्रियाः करणक्रियाः प्रतिपन्ना अङ्गीकृताः । तथा च सति वक्ष्यमाणानां बहूनां दोषाणां प्रतिपत्तिरभ्युपगमरूपा कृता भवतीति ॥ २३०९ ॥

तथाहि—

[3]कयमिह न कज्जमाणं सब्भावाओ चिरंतनघडो व्व । अहवा कयं पि कीरइ कीरउ निच्चं न य समत्ती ॥२३१०॥

इह क्रियमाणं कृतं न भवतीति प्रतिज्ञा । सद्भावात्— कृतस्य विद्यमानत्वादिति हेतुः । चिरन्तनघटवदिति दृष्टान्तः । विपर्यये बाधकमाह— अथ कृतमपि क्रियत इत्यभ्युपगम्यते, तर्हि नित्यमनवरतमेव क्रियतां, कृतत्वाविशेषात् । एवं च सति न कदाचिदपि कार्यक्रियापरिसमाप्तिरिति ॥ २३१० ॥

किमेतावन्मात्रमेव दूषणम् ? नेत्याह—

[4]किरियावेफल्लं ति य पुव्वमभूयं च दीसए होंतं । दीसइ दीहो य जओ किरियाकालो घडाईणं ॥२३११॥

यदि च क्रियमाणं कृतमिष्यते, तर्हि घटादिकार्यार्थं या मृन्मर्दन-चक्रभ्रमणादिका क्रिया तस्या वैफल्यं प्राप्नोति, तत्काले कार्यस्य कृतत्वाभ्युपगमात् । प्रयोगः— इह यत् कृतम्, तत्क्रिया विफलैव, यथा चिरनिष्पन्नघटे, कृतं चाभ्युपगम्यते क्रियाकाले कार्यम्, ततो विफला तत्र क्रियेति । किञ्च, क्रियमाणकृतवादिना कृतस्य विद्यमानस्य क्रियेति प्रतिपादितं भवति । एवं च प्रत्यक्षविरोधः, यस्मादुत्पत्तिकालात् पूर्वमभूतमविद्यमानमेव कार्यं भवज्जायमानं दृश्यत उत्पत्तिकाले, तस्मात् क्रियमाणमकृतमेवेति । किञ्च,

१ चल्यमाने चलितम्, उदीर्यमाणे उदीरितम्, वेद्यमाने वेदितम् । भगवत्यां प्रथमशतके प्रथमोद्देशे ।

२ यस्येह क्रियमाणं कृतमिति तेनेह विद्यमानस्य । करणक्रिया प्रपन्ना तथा च बहुदोषप्रतिपत्तिः ॥ २३०९ ॥

३ कृतमिह न क्रियमाणं सद्भावाच्चिरन्तनघट इव । अथवा कृतमपि क्रियते क्रियतां नित्यं न च समाप्तिः ॥ २३१० ॥

४ क्रियावैफल्यमिति च पूर्वमभूतं च दृश्यते भवत् । दृश्यते दीर्घश्च यतः क्रियाकालो घटादीनाम् ॥ २३११ ॥

[1]अपुहत्तमेगभावो सुत्ते सुत्ते सवित्थरं जत्थ । भण्णंतणुओगा चरण-धम्म-संखाण-दव्वाणं ॥२२८१॥

तत्थेव नयाणं पि हु पइवत्थुं वित्थरेण सव्वेसिं । देसिंति समोयारं गुरवो, भयणा पुहत्तम्मि ॥२२८२॥

एगो च्चिय देसिज्जइ जत्थणुओगो न सेसआ तिण्णि। सन्ता वि तं पुहत्तं तत्थ नया पुरिसमासज्ज ॥२२८३॥

चतस्रोऽपि गतार्थाः, नवरं प्रथमगाथोत्तरार्धे यद् यस्मात् सन्तोऽपि प्रतिपदं न भण्यन्ते । अपृथक्त्वं किमुच्यते ? इत्याह- एकभावः। एकभावमेव विवृणोति- 'सुत्ते सुत्ते इत्यादि' यत्र सूत्रे सूत्रेऽनुयोगा व्याख्यानानि भण्यन्ते। केषाम् ? इत्याह- 'चरणेत्यादि'। संख्यानं गणितमुच्यते। ततश्चेदमत्र हृदयम्- यत्रैकैकस्मिन् सूत्रे चरणकरणानुयोगः, धर्मकथानुयोगः, गणितानुयोगः, द्रव्यानुयोगश्च सविस्तरं व्याख्यायते, न तु वक्ष्यमाणेन पार्थक्येन 'तदपृथक्त्वम्' इति शेषः। पृथक्त्वं तु किमुच्यते ? इत्याह- 'एगो च्चियेत्यादि' इदं च 'कालियसुयं च' इत्यादिवक्ष्यमाणगाथायां व्यक्तीभविष्यतीति ॥ २२८० ॥ २२८१ ॥ २२८२ ॥ २२८३ ॥

आह- कियन्तं कालं यावत् पुनरिदं पृथक्त्वमासीत् ? कुतो वा पुरुषविशेषादारभ्य पृथक्त्वमभूत् ? इत्याह—

[2]जावं ति अज्जवइरा अपुहत्तं कालियाणुओगस्स । तेणारेण पुहत्तं कालियसुय दिट्ठिवाए य ॥ २२८४ ॥

यावदार्यवैरा गुरवो महामतयस्तावत् कालिकश्रुतानुयोगस्यापृथक्त्वमासीत्, तदा व्याख्यातॄणां श्रोतॄणां च तीक्ष्णप्रज्ञत्वात्। कालिकग्रहणं च प्राधान्यख्यापनार्थम्, अन्यथोत्कालिकेऽपि सर्वत्र प्रतिसूत्रं चत्वारोऽप्यनुयोगास्तदानीमासन्नेवेति। तदाऽऽरत आर्यरक्षितेभ्यः समारभ्य कालिकश्रुते दृष्टिवादे चानुयोगानां पृथक्त्वमभूत् ॥ इति निर्युक्तिगाथार्थः ॥ २२८४ ॥

भाष्यम्—

[3]अपुहत्तमासि वइरा जावं ति पुहत्तमारओऽभिहिए । के ते आसि कया वा पसंगओ तेसिमुप्पत्ती ॥२२८५॥

---

१ अपृथक्त्वमेकभावः सूत्रे सूत्रे सविस्तरं यत्र । भण्यन्तेऽनुयोगाश्चरण धर्म सख्यान-द्रव्याणाम् ॥२२८१॥
तत्रैव नयानामपि खलु प्रतिवस्तु विस्तरेण सर्वेषाम् । दिशन्ति समवतार गुरवो, भजना पृथक्त्वे ॥२२८२॥
एक एव दिश्यते यत्रानुयोगो न शेषकास्त्रयः। सन्तोऽपि तत् पृथक्त्व तत्र नया पुरुषमासाद्य ॥ २२८३ ॥
२ यावदित्यार्यवैरा अपृथक्त्वं कालिकानुयोगस्य । तेनाऽऽर्यत पृथक्त्व कालिकश्रुते दृष्टिवादे च ॥ २२८४ ॥
३ अपृथक्त्वमासीद् वैराद् यावदिति पृथक्त्वमार्यतोऽभिहिते । के त आसन् कदा वा प्रसङ्गतस्तेषामुत्पत्ति ॥ २२८५ ॥

आरम्भक्रियासमय एव कार्यमुत्पद्यत इति तवाभ्युपगमः । एतच्चायुक्तम् । कुतः ? । यस्माद् घटादिकार्याणामुत्पद्यमानानां दीर्घ एव निर्वर्तनक्रियाकालो दृश्यत इति ॥ २३११ ॥

दृश्यतां नाम दीर्घः क्रियाकालः, परं घटादि कार्यमारम्भक्रियासमय एव शिवकादिकाले वा द्रक्ष्यत इति चेत् । तदयुक्तम् । कुतः ? इत्याह—

[1]नारंभे च्चिय दीसइ न सिवादद्धाए दीसइ तदंते । तो नहि किरियाकाले जुत्तं कज्जं तदंतम्मि ॥२३१२॥

नारम्भक्रियासमय एव घटादि कार्यं भवद् दृश्यते, नापि शिवाद्यद्धायां– शिवक-स्थास-कोश-कुशूलादिसमयेष्वपि न दृश्यत इत्यर्थः । क तर्हि दृश्यते ? इत्याह– 'तदंते' दीर्घक्रियाकालस्यान्ते घटादिकार्यं भवद् दृश्यते । तस्माद् न क्रियाकाले कार्यं युक्तम्, तस्य तदानीमदर्शनात् । तदन्ते तु दीर्घक्रियाकालस्यान्ते युक्तं कार्यम्, तदानीमेव तस्य दर्शनादिति सकलजनस्य प्रत्यक्षसिद्धमेवेदम् । इति जमालिपूर्वपक्षः ॥ २३१२ ॥

अत्र स्थविराः प्रतिविदधति स्म । कथम् ? इत्याह—

[2]थेराण मयं नाकयमभावओ कीरए खपुप्फं व । अह व अकयं पि कीरइ कीरउ तो खरविसाणं पि ॥२३१३॥

स्थविराः श्रुतवृद्धा गीतार्थाः साधवस्तेषां मतं– कुमरूपणां कुर्वन्तं जमालिं त एवं प्रज्ञापयन्तीत्यर्थः– नाकृतमविद्यमानं घटादिकार्यं क्रियते, असत्त्वात्, आकाशकुसुमवत् । अथाकृतमविद्यमानमपि क्रियते, क्रियतां तर्हि खरविषाणमपि, अकृतत्वाविशेषादिति ॥२३१३॥

यदुक्तम्– 'कीरउ निच्चं न य समत्ती'[3] इत्यादि, तत्राह—

[4]निच्चकिरियाइदोसा नणु तुल्ला असइ कट्ठतरगा वा । पुव्वमभूयं च न ते दीसइ किं खरविसाणं पि ? ॥२३१४॥

नन्वसत्यऽविद्यमाने वस्तुनि करणक्रियाभ्युपगमे नित्याक्रियादिदोषाः, आदिशब्दात् क्रियाऽपरिसमाप्ति-क्रियावैफल्यपरिग्रहः, आवयोस्तुल्याः समाः, यथा कृतपक्षे त्वया दत्तास्तथाऽकृतपक्षेऽप्यापतन्तीत्यर्थः । किं तुल्या एव ? । नेत्याह– कष्टतरका वा । विद्यमाने

१ नारम्भ एव दृश्यते न शिवाद्यद्धायां दृश्यते तदन्ते । ततो नहि क्रियाकाले युक्त कार्यं तदन्ते ॥ २३१२ ॥
२ स्थविराणा मतं नाकृतमभावत· क्रियते खपुष्पमिव । अथ वाऽकृतमपि क्रियते क्रियतां तत. खरविषाणमपि ॥ २३१३ ॥ ३ गाथा २३१० ।
४ नित्यक्रियादिदोषा ननु तुल्या असति कष्टतरका वा । पूर्वमभूत च न तव दृश्यते किं खरविषाणमपि ? ॥ २३१४ ॥

आर्यवैराद् यावदपृथक्त्वमासीत् तदाऽऽरतस्तु पृथक्त्वमुक्तम् । एतस्मिंश्चाभिहिते क एत आर्यवैराः, कदा च त आसन् ? इति विनेयपृच्छायां प्रसङ्गत आर्यवैराणामुत्पत्तिरुच्यते ॥ इति गाथार्थः ॥ २२८५ ॥

तां चार्यवैरोत्पत्तिमनन्यसाधारणतद्गुणरञ्जितमानसो ग्रन्थकारः स्तुतिद्वारेणाह– 'तुंबवण'–इत्यादि । एतच्चारितगाथाश्च सुगमाः, मूलावश्यकटीकातश्च सभावार्थाः समवसेयास्तावत्, यावदियं गाथा—

[2]अपुहत्तेऽणुओगो चत्तारि दुवार भासई एगो । पुहत्ताणुओगकरणे ते अत्थ तओ वि वोच्छिन्ना ॥२२८६॥

आर्यवैराद् यावदपृथक्त्वे सति सूत्रव्याख्यारूप एकोऽप्यनुयोगः क्रियमाणः प्रतिसूत्रं चत्वारि द्वाराणि भाषते– चरणकरणादींश्चत्वारोऽप्यर्थान् प्रतिपादयतीत्यर्थः । पृथक्त्वानुयोगकरणे तु ते चरणकरणादयोऽर्थास्ततोऽपि पृथक्त्वानुयोगकरणादेव व्यवच्छिन्नाः, तत्प्रभृत्येक एव चरणकरणादीनामन्यतरोऽर्थः प्रतिसूत्रं व्याख्यायते न तु चत्वारोऽपीत्यर्थः ॥ इति निर्युक्तिगाथार्थः ॥२२८६॥

अथ यैरनुयोगाः पार्थक्येन व्यवस्थापितास्तेषामार्यरक्षितसूरीणामुत्पत्तिमभिधित्सुर्भाष्यकारः संबन्धगाथामाह—

[3]किं वइरेहिं पुहत्तं कयमह तदणंतरेहिं भणियम्मि । तदणंतरेहिं तदभिहियगहियसुत्तत्थसारेहिं ॥२२८७॥

विनेयः पृच्छति– नन्वार्यवैराद् यावदपृथक्त्वमित्युक्तम्, तत् किमार्यवैरैरेव कृतम्, किंवा तदनन्तरैरार्यरक्षितसूरिभिः ? इत्येवमुभयथापि यावच्छब्दार्थोपपत्तेः । इति शिष्येण भणिते गुरुराह– तदनन्तरैरेवार्यरक्षितसूरिभिरनुयोगानां पृथक्त्वमकारि । कथंभूतैः ? । तेनार्यवैरेणाभिहितः प्रतिपादितो गृहीतः सूत्रार्थसारो यैस्ते तथा तैः, आर्यवैरसमीपेऽधीतसूत्रार्थोभयैरित्यर्थः ॥ इति गाथार्थः ॥२२८७॥

पुनरपि कथंभूतैः, किंनामकैश्च तैः ? इत्याह—

[4]देविंदवंदिएहिं महाणुभावेहिं रक्खियज्जेहिं । जुगमासज्ज विभत्तो अणुओगो तो कओ चउहा ॥२२८८॥

देवेन्द्रवन्दितैर्महानुभावैरार्यरक्षितैर्दुर्बलिकापुष्पमित्रं प्राज्ञमप्यतिगुपिलतयाऽनुयोगस्य विस्मरत्सूत्रार्थमवलोक्य वर्तमानकाललक्षणं युगं चासाद्य प्रवचनहितायानुयोगो विभक्तः पृथक् पृथग् व्यवस्थापितः, ततश्चतुर्धा कृतश्चतुर्धाकालिकश्रुतादिस्थानेषु नियुक्तः ।

१ आ० नि० पृ० १३६ । २ अपृथक्त्वेऽनुयोगश्चत्वारि द्वाराणि भाषत एकः । पृथक्त्वानुयोगकरणे तेऽर्थास्ततोऽपि व्युच्छिन्नाः ॥ २२८६ ॥

३ किं वैरैः पृथक्त्वं कृतमथ तदनन्तरैर्भणिते । तदनन्तरैस्तदभिहितगृहीतसूत्रार्थसारैः ॥ २२८७ ॥

४ देवेन्द्रवन्दितैर्महानुभावै रक्षितार्यैः । युगमासाद्य विभक्तोऽनुयोगस्ततः कृतश्चतुर्धा ॥ २२८८ ॥

हि वस्तुनि पर्यायविशेषाधानद्वारेण कथञ्चित् करणक्रियाद्युपपद्यत एव, यथा 'आकाशं कुरु, पादौ कुरु, पृष्ठं कुरु' इत्यादि । अविद्यमाने तु सर्वथा नायं न्यायः संभवति, सर्वथाऽसत्त्वात्, खरविषाणवदिति । यदि च पूर्वं कारणावस्थायामभूतमसत् कार्यं जायते, तर्हि मृत्पिण्डाद् घटवत् खरविषाणमपि जायमानं किं न दृश्यते, असत्त्वाविशेषात् ? । अथ खरविषाणं भवद् न दृश्यते, तर्हि घटोऽपि तथैवास्तु, विपर्ययो वेति ॥ २३१४ ॥

यदुक्तम्- '[1]दीसइ दीहो य जओ' इत्यादि । तत्राह—

[2]पइसमउप्पन्नाणं परोप्परविलक्खाण सुबहूणं । दीहो किरियाकालो जइ दीसइ किं त्थ कुंभस्स ?॥२३१५॥

यदि नाम प्रतिसमयोत्पन्नानां परस्परविलक्षणस्वरूपाणां सुबहूनां शिवक-स्थास-कोश-कुशूलादिकार्यकोटीनां क्रियाकाल-निष्ठाकालयोरेकत्वेन प्रतिप्रारम्भसमयनिष्ठाप्राप्तानां दीर्घक्रियाकालो दृश्यते, तर्हि कुम्भस्य घटस्य किमत्रायातम् ? । इदमुक्तं भवति- मृदानयन-मर्दन-पिण्डविधानादिकालः सर्वोऽपि घटनिर्वर्तनक्रियाकाल इति तवाभिप्रायः । अयं चायुक्त एव । यतस्तत्र प्रतिसमयमन्यान्येव कार्याण्यारभ्यन्ते, निष्पाद्यन्ते च, कार्यस्य कारणकाल-निष्ठाकालयोरेकत्वात् । घटस्तु पर्यन्तसमय एवारभ्यते, तत्रैव च निष्पद्यते, इति कोऽस्य दीर्घो निर्वर्तनक्रियाकालः ? इति ॥ २३१५ ॥

अथान्यप्राक्तनकार्यसमयेष्वपि घटः किं न दृश्यते ? इत्याह—

[3]अन्नारंभे अन्नं किह दीसउ जह घडो पडारंभे । सिवकादओ न कुंभो किह दीसए सो तदद्धाए ? ॥२३१६॥

अन्यस्य शिवकादेरारम्भेऽन्यद् घटलक्षणं कार्यं कथं दृश्यते ? । न हि पटारम्भे घटः कदाचिदपि दृश्यते । अतः किमुच्यते- '[4]नारंभे च्चिय दीसइ त्ति' । शिवकादयोऽपि कुम्भरूपा न भवन्ति, किन्तु ततोऽन्य एवेति कथं तदद्धायामप्यसौ कुम्भो दृश्यते ? । अत एव तदप्यज्ञतया प्रोच्यते 'न सिवादद्धाए' इति ॥ २३१६ ॥

यत्तूक्तम्-'[4]दीसइ तदन्ते' इति, तत्राह—

[5]अंते च्चिय आरद्धो जइ दीसइ तम्मि चेव को दोसो ?।अकयं व संपइ गए कह कीरउ कह व एस्सम्मि ?॥२३१७॥

---

[1] गाथा २३११ । [2] प्रतिसमयोत्पन्नानां परस्परविलक्षणाना सुबहूनाम् । दीर्घः क्रियाकालो यदि दृश्यते किमत्र कुम्भस्य ? ॥ २३१५ ॥
[3] अन्यारम्भेऽन्यत् कथं दृश्यतां यथा घट. पटारम्भे । शिवकादयो न कुम्भः कथं दृश्यते स तदद्धायाम् ? ॥ २३१६ ॥ [4] गाथा २३१२ ।
[5] अन्त एवारब्धो यदि दृश्यते तस्मिन्नेव को दोषः ? । अकृतं वा संप्रति गते कथ क्रियतां कथं वैष्यति ? ॥ २३१७ ॥

इति निर्युक्तिगाथार्थः। 'माया य रुद्दसोमा' इत्यादि सर्वं मूलावश्यकटीकालिखितार्यरक्षितकथानकादवसेयमिति ॥ २२८८ ॥

भाष्यकारो 'देविंदवंदिएहिं' इत्यादिभावार्थमाह—

नाऊण[1] रक्खियज्जो मइ-मेहा-धारणासमग्गं पि। किच्छेण धरेमाणं सुयण्णवं पूसमित्तं पि ॥ २२८९ ॥

अइसयकओवओगो मइ-मेहा-धारणाइपरिहीणे। नाऊणमेस्सपुरिसे खेत्तं-कालाणुरूवं च ॥ २२९० ॥

साणुग्गहोऽणुओगे वीसुं कासी य सुयविभागेण। सुहगहणाइनिमित्तं नए य सुनिगूहियविभागे ॥२२९१॥

सविसयमसद्दहंता नयाण तम्मत्तयं च गिण्हंता। मण्णंता य विरोहं अपरिणामातिपरिणामा ॥२२९२॥

गच्छेज्ज मा हु मिच्छं परिणामा य सुहुमाइबहुभेए। होज्जाऽसत्ते घेत्तुं न कालिए तो नयविभागो ॥२२९३॥

व्याख्या— स देवेन्द्रवन्दितः श्रीमानार्यरक्षितसूरिर्निजशिष्यं दुर्बलिकापुष्पमित्रमपि कृच्छ्रेण श्रुतार्णवं धारयन्तं ज्ञात्वा विनेयवर्गे सानुग्रहो वक्ष्यमाणकालिकादिश्रुतविभागेन विष्वक् पृथक् चरणकरणाद्यनुयोगानकार्षीदिति संबन्धः। कथंभूतं दुर्बलिकापुष्पमित्रम्? मति-मेधा-धारणासमग्रमपि, तत्र 'मनु बोधने' मननं मतिरवबोधशक्तिः, मेधा— पाठशक्तिः, धारणा— अवधारणशक्तिः, ताभिः समग्रं युक्तमपि। तथा, अतिशयज्ञानकृतोपयोगतया एष्यतो भविष्यतः पुरुषांश्च ज्ञात्वा। कथंभूतान्? मति-मेधा-धारणादिपरिहीणान्। तथा क्षेत्र-कालानुरूपं च ज्ञात्वा न केवलमनुयोगान् पृथगकार्षीत्, तथा नयांश्च नैगमादीन् 'अकार्षीत्' इति वर्तते। कथंभूतान्। सुष्ठु— अतिशयेन निगूहितो व्याख्यानिरोधेन च्छन्नीकृतो विभागो व्यक्ततापादानरूपो येषां ते सुनिगूहितविभागास्तांस्तथाभूतान्। किमर्थम्। सुखग्रहणादिनिमित्तम्, आदिशब्दाद् धारणादिपरिग्रहः।

---

१आ०नि०पृ० १३८। २ ज्ञात्वा रक्षितार्यो मति मेधा-धारणासमग्रमपि। कृच्छ्रेण धारयन्त श्रुतार्णव पुष्पमित्रमपि ॥ २२८९ ॥
अतिशयकृतोपयोगो मति-मेधा-धारणादिपरिहीणान्। ज्ञात्वैष्यत॰ पुरुषान् क्षेत्र-कालानुरूपं च ॥ २२९० ॥
सानुग्रहोऽनुयोगे विष्वगकार्षीच्च श्रुतविभागेन। सुखग्रहणादिनिमित्त नयाश्च सुनिगूहितविभागान् ॥ २२९१ ॥
स्वविषयमश्रद्दधाना नयाना तन्मात्रक च गृह्णन्त। मन्वानाश्च विरोधमपरिणामा-ऽतिपरिणामा ॥ २२९२ ॥
गच्छेयुर्मा खलु मिथ्यात्वं परिणामाश्च सूक्ष्मादिबहुभेदा.। भवेयुरशक्ता ग्रहीतु न कालिके ततो नयविभाग ॥ २२९३ ॥

अन्त एव क्रियाक्षणे प्रारब्धो घटो यदि तत्रैव दृश्यते तर्हि को दोषः ?– न कश्चिदित्यर्थः । यदुक्तम्— 'तो नहि किरियाकाले' इत्यादि । तत्राह— 'अकयं वेत्यादि' । यदि च संप्रति वर्तमानक्रियाक्षणे न कृतं कार्यमितीष्यते तदा गतेऽतिक्रान्ते, एष्यति– अनागते च क्रियाक्षणे कथं नाम तत् कार्यं क्रियताम् ?– न कथञ्चिदित्यर्थः । तथाहि– नातीत-भविष्यत्क्रियाक्षणौ कार्यकारकौ, विनष्टा-ऽनुत्पन्नत्वेनासत्त्वात्, खरविषाणवत् । अतः कथं क्रियान्ते कार्यं स्यात् ? । तस्मात् क्रियमाणमेव कृतमिति । यदि च क्रियमाणमपि न कृतम्, क तर्हि कृतमिति वक्तव्यम् ? । क्रियाविगम इति चेत् । तदयुक्तम्, तदानीं क्रियाया असत्त्वात् । तदसत्त्वेऽपि च कार्योत्पत्ताविष्यमाणायां क्रियारम्भात् प्रागपि कार्योत्पत्तिः स्यात्, क्रियासत्त्वाविशेषात् । अथ संप्रतिसमयः क्रियमाणकालः, तदनन्तरस्तु कृतकालः, न च क्रियमाणकाले कार्यमस्ति, इत्यतः खल्वकृतं क्रियते न तु कृतमित्यभिधत्से । नन्वेतदिह प्रष्टव्योऽसि किं भवतः कार्यं क्रियया क्रियते, उत तामन्तरेणापि भवति ? । यदि क्रियया, तर्हि कथं साऽन्यत्र समये, अन्यत्र तु कार्यम् ? । न हि खदिरे च्छेदनक्रियायां पलाशे च्छेदः समुपजायते । किञ्च, 'क्रियोपरमे कार्यं भवति, न तु क्रियासद्भावे' इति वदता प्रत्युत कार्योत्पत्तेर्विघ्नहेतुः क्रियेति प्रतिपादितं भवति । ततश्च कारणमप्यकारणमिति प्रत्यक्षादिविरोधः । अथ क्रियामन्तरेण कार्यमुपजायत इत्यभ्युपगम्यते, तर्हि घटादिकार्यार्थिना निरर्थकः सर्वोऽपि मृन्मर्दन-पिण्डविधान-चक्रारोपण-भ्रमणादिक्रियारम्भः । अतो न कर्तव्यं मुमुक्षुभिरपि तपः-संयमादिक्रियानुष्ठानम्, तदन्तरेणापि मुक्तिसुखसिद्धेः । न चैवम् । तस्मात् क्रियाकाल एव कार्यम्, न पुनस्तदुपरम इति ॥ २३१७ ॥

पुनरप्याह– ननु मृदानयन-तन्मर्दनादिकश्चक्रादिच्छिन्नताकरणकार्यपर्यन्तो दीर्घ एव मया घटनिर्वर्तनक्रियाकालोऽनुभूयते, न तु यत्रैव समये प्रारभ्यते तत्रैव निष्पद्यत इत्यनुभूयते । तदेतत् कथम् ? इत्याह—

पइसमयकज्जकोडीनिरवेक्खो घडगयाहिलासो सि । पइसमयकज्जकालं थूलमई ! घडम्मि लाएसि ॥२३१८॥[2]

हन्त ! यद्यपि प्रतिसमयमन्यान्यरूपाः कार्यकोटयस्तत्रोत्पद्यन्ते, तथापि तन्निरपेक्षस्त्वं– निष्प्रयोजनत्वेनाविवक्षितत्वादुत्पद्यमाना अपि तास्त्वं न गणयसीत्यर्थः । कुतः ? । यस्माद् घटगताभिलाषोऽसि, सप्रयोजनत्वेन तस्यैव प्रधानतया विवक्षितत्वात् । 'घट इहोत्पत्स्यते' इत्येवं तत्रैव तवाभिलाषः, अतः प्रतिसमयकार्यकोटीनामदर्शकत्वेन स्थूलमते ! प्रतिसमयकार्यसंबन्धिनमपि कालं सर्वमपि घटे लगयसि– 'सर्वोऽप्ययं घटोत्पत्तिकालः' इत्येवमध्यवस्यासि त्वमित्यर्थः, अतो मिथ्यानुभवोऽयं तवेत्यभिप्रायः, एकसामयिक एव

१ गाथा २३१२ । २ प्रतिसमयकार्यकोटीनिरपेक्षो घटगताभिलापोऽसि । प्रतिसमयकार्यकाल स्थूलमते ' घटे लगयसि ॥ २३१८ ॥

तदेवमनुयोगपृथक्करणे तथा विभागकरणे च सामान्येनोक्तेऽपि कारणे पुनरपि नयाविभागे विशेषतः कारणमाह– 'सविसये-त्यादि'। इह शिष्यास्त्रिविधाः, तद्यथा– अपरिणामाः, अतिपरिणामाः, परिणामाश्चेति। तत्राविपुलमतयोऽगीतार्था अपरिणतजिनवचनरहस्या अपरिणामाः। अतिव्याप्त्याऽपवाददृष्टयोऽतिपरिणामाः। सम्यक्परिणतजिनवचनास्तु मध्यस्थवृत्तयः परिणामाः। तत्र येऽपरिणामास्ते नयानां यः स्वः स्व आत्मीय आत्मीयो विषयः 'ज्ञानमेव श्रेयः क्रिया चाश्रेयः' इत्यादिकस्तमश्रद्दधानाः। ये त्वतिपरिणामास्तेऽपि यदैवै-केन नयेन क्रियादिकं वस्तु प्रोक्तं तदेव तन्मात्रं प्रमाणतया गृह्णन्त एकान्तनित्यादिवस्तुप्रतिपादकनयानां च परस्परविरोधं मन्वाना मिथ्यात्वं मा गच्छेयुः। येऽप्युक्तस्वरूपाः परिणामाः शिष्यास्ते यद्यपि मिथ्यात्वं न गच्छन्ति तथापि विस्तरेण नयैर्व्याख्यायमानैर्ये सूक्ष्माः सूक्ष्मतराश्च तद्भेदास्तान् ग्रहीतुमशक्ता असमर्था भवेयुरिति मत्वा तत आर्यरक्षितसूरिभिः 'कालिक'– इत्युपलक्षणत्वात् सर्वस्मिन्नपि श्रुते नयविभागो विस्तरव्याख्यारूपो न कृतः॥ इति गाथापञ्चकार्थः॥ २२८९ ॥ २२९० ॥ २२९१ ॥ २२९२ ॥ २२९३ ॥

कः पुनरयं चरणकरणाद्यनुयोगानां श्रुतविभागः? इत्याह—

कालियसुयं च इसिभासियाइं तइओ य सूरपन्नत्ती। सव्वो य दिट्ठिवाओ चउत्थओ होइ अणुओगो ॥२२९४॥

जं च महाकप्पसुयं जाणि अ सेसाणि छेअसुत्ताणि। चरणकरणाणुओगो त्ति कालियत्थे उवगयाणि ॥२२९५॥

इहैकादशाङ्गरूपं सर्वमपि श्रुतं कालग्रहणादिविधिनाऽधीयत इति कालिकमुच्यते। तत्र प्रायश्चरण-करणे एव प्रतिपाद्येते। अत आर्यरक्षितसूरिभिस्तत्र चरणकरणानुयोग एव कर्तव्यतयानुज्ञातः, न तु सन्तोऽपि शेषा धर्मकथाद्यनुयोगास्त्रय इति, अतोऽनुयोग-तद्वतोरभेदोपचारात् कालिकश्रुतं प्रथमश्चरणकरणानुयोगो व्यपदिश्यते। तथा, ऋषिभाषितान्युत्तराध्ययनानि तेषु च नमि-कपिलादि-महर्षीणां संबन्धीनि प्रायो धर्माख्यानकान्येव कथ्यन्त इति धर्मकथानुयोग एव तत्र व्यवस्थापितः। सूर्यप्रज्ञप्त्या तु चन्द्र-सूर्य-ग्रह-नक्षत्रादिचारगणितमेव प्रायः प्रतिपाद्यत इति तत्र गणितानुयोग एव व्यवस्थापितः। दृष्टिवादे तु सर्वस्मिन्नपि चालना-प्रत्यवस्थाना-दिभिर्जीवादिद्रव्याण्येव प्रतिपाद्यन्ते, तथा सुवर्ण-रजत-मणि-मौक्तिकादिद्रव्याणां च सिद्धयोऽभिधीयन्त इति द्रव्यानुयोग एव तत्र निरूपित इति। एवं चत्वारोऽप्यनुयोगाः श्रुतभेदेन स्थापिताः, प्रतिसूत्रं तत्करणं निषिद्धमित्यर्थः। ऋषिभाषितानि धर्मकथानुयोग

१ कालिकश्रुतं चर्षिभाषितानि तृतीयश्च सूरप्रज्ञप्तिः। सर्वश्च दृष्टिवादश्चतुर्थको भवत्यनुयोगः॥ २२९४॥
यच्च महाकल्पश्रुतं यानि च शेषाणि च्छेदसूत्राणि। चरणकरणानुयोग इति कालिकार्थे उपगतानि॥ २२९५॥

घटोत्पत्तिकाले बहुसामयिकत्वग्रहणेन प्रवृत्तेः। अत्राह– ननु प्रतिसमयं कार्यकोटय उत्पद्यमानास्तत्र न काश्चन संवेद्यन्ते, किन्त्वपान्तराले शिवक-स्थास-कोशादीनि कानिचिदेव कार्याणि संवेद्यन्ते। सत्यम्, किन्तु स्थूलान्येव शिवकादिकार्याणि, यानि तु प्रतिसमयभावीनि सूक्ष्मकार्याणि तानि च्छद्मस्थो व्यक्त्या नावधारयितुं शक्नोति, परं प्रतिसमयकार्याणां ग्राहकाण्यनन्तसिद्धकेवलिनां ज्ञानान्युत्पद्यन्ते तान्यपि तत्रापान्तराले कार्याण्येव, इति घटन्त एव प्रतिसमयं कार्यकोटय इति ॥ २३१८ ॥

अत्र प्रेरकः प्राह—

[1]को चरमसमयनियमो पढमे च्चिय तो न कीरए कज्जं ?। नाकारणं ति कज्जं तं चेवं तम्मि से समए ॥२३१९॥

ननु यदि कार्यस्य दीर्घः क्रियाकालो नेष्यते, किन्त्वेकसामयिक एव, तर्हि कोऽयं चरमसमयनियमो येन तत्रैवोत्पद्यते घटादिकार्यम्– न घटत एवायं नियम इत्यर्थः। तत एतन्नियमाभावात् किं प्रथमसमय एव कार्यं न क्रियते ?– अपि तु क्रियत एवेति काका नीयते। अत्रोत्तरमाह– अकारणं कार्यं न भवति, तच्चान्त्यसमय एव 'से' तस्य घटस्य कारणमस्ति, न तत्प्रथमसमये, अतः कथं तत्रोत्पद्यते ?। अन्वय-व्यतिरेकसमधिगम्यो हि कार्य-कारणभावः, अन्वय-व्यतिरेकाभ्यां चान्त्यसमय एव घटादेः कारणं लक्ष्यत इति तत्रैव तदुत्पद्यत इति युक्त एव चरमसमयनियम इति ॥ २३१९ ॥

अथोपसंहरंस्तात्पर्यमाह—

[2]तेणेह कज्जमाणं नियमेण कयं कयं तु भयणिज्जं। किंचिदिह कज्जमाणं उवरयकिरियं च हुज्जाहि ॥२३२०॥

तेनोक्तप्रकारेण क्रियमाणं वर्तमानक्रियाक्षणभावि कार्यं नियमेन कृतमेवोच्यते, यत्तु कृतं तद् भजनीयं विकल्पनीयम्। कथम् ? इत्याह– किञ्चिदिह कृतं क्रियाप्रवृत्तकालभावि क्रियमाणमुच्यते, अन्यत् तूपरतक्रियं चक्रापाकाद्युत्तीर्णं कृतं घटादिकार्यं न क्रियमाणमुच्यते, उपरतक्रियत्वादिति ॥ २३२० ॥

तदेवं सामान्येन प्रतिपाद्य प्रस्तुते जमालिसंस्तारकेऽमुं सकलमपि स्थविरोक्तं युक्तिकलापमायोजयन्नाह—

[3]जं जत्थ नभोदेसे अत्थुव्वइ जत्थ जत्थ समयम्मि। तं तत्थ तत्थमत्थुयमत्थुव्वंतं पि तं चेव ॥२३२१॥

१ कश्चरमसमयनियमः प्रथम एव ततो न क्रियते कार्यम् ?। नाकारणमिति कार्यं तदेव तस्मिंस्तस्य समये ॥ २३१९ ॥
२ तेनेह क्रियमाणं नियमेन कृतं कृतं तु भजनीयम्। किञ्चिदिह क्रियमाणमुपरतक्रियं च भवेत् ॥ २३२० ॥
३ यद् यत्र नभोदेश आस्तीर्यते यत्र यत्र समये। तत् तत्र तत्रास्तीर्णमास्तीर्यमाणमपि तदेव ॥ २३२१ ॥

इत्युक्तम्, ततश्च महाकल्पश्रुतादीनामपि दृष्टिवादादुद्धृत्य महर्षिभिः प्रतिपादितत्वेनर्षिभाषितत्वाद् धर्मकथानुयोगत्वप्रसङ्गे चरणकरणानुयोगत्वप्रतिपादनार्थमाह— 'जं चेत्यादि' यच्च महाकल्पश्रुतं, यानि च शेषाणि कल्पादीनि च्छेदसूत्राणि तान्यपि सर्वाणि चरणकरणानुयोग इति मन्तव्यानि। कुतः? । यस्मात् तान्यपि कालिकार्थं उपगतानि कालिकश्रुतेऽन्तर्भूतानीत्यर्थः । इति निर्युक्तिगाथाद्वयार्थः ॥ २२९४ ॥ २२९५ ॥

अथ 'बहुरय पएस' इत्यादिवक्ष्यमाणनिर्युक्तिगाथायाः प्रस्तावनां कर्तुमाह—

[2]एवं विहियपुहत्तेहिं रक्खियज्जेहिं पूसमित्तम्मि । ठविए गणिम्मि किर गोट्ठमाहिलो पडिनिवेसेणं ॥२२९६॥

सो मिच्छत्तोदयओ सत्तमओ निण्हवो समुप्पण्णो । के अन्ने छ [1]भणिए पसंगओ निण्हउप्पत्ती ॥२२९७॥

एवमुक्तप्रकारेण विहितानुयोगपृथक्त्वैरार्यरक्षितसूरिभिर्दिवं यियासुभिर्घृत-तैल-वल्लघटादिप्ररूपणां सकलगच्छसमक्षं विधाय दुर्बलिकापुष्पमित्रे गणिन्याचार्ये स्थापिते यो मथुरानगर्यामन्यतीर्थिकेन सह 'वचस्वी' इति कृत्वा वाददानार्थं सूरिभिर्निजमातुलको गोष्ठामाहिलः प्रेषित आसीत्, स यशःशेषेषु सूरिषु प्रतिवादिनं जित्वा समागतः सन् 'मामेवंभूतं वचस्विनं परित्यज्यान्योऽयमृषिर्मूककल्पः सूरिभिराचार्य उपवेशितः, तत्पश्य कीदृशं तैः कृतम्' इत्यभिप्रायतः, तथा तां च घृतघटादिप्ररूपणां श्रुत्वा प्रतिनिवेशेन गाढानुशयेन यो मिथ्यात्वोदयो जातस्तस्मात् स गोष्ठामाहिलः सप्तमो निह्नवः समुत्पन्नः । ननु यद्ययं सप्तमः, तर्हि केऽन्ये षड् ? इत्याशङ्क्य प्रसङ्गतो निह्नवोत्पत्तिर्भण्यते । इत्येका प्रस्तावना ॥ २२९६ ॥ २२९७ ॥

अथवा, अन्यथाऽभिधीयते, तद्यथा—

[3]अहवा चोएइ नयाणुओगनिण्हवणओ कहं गुरवो। न हि निण्हवंति, भण्णइ जओ न जंपंति नत्थि त्ति ॥२२९८॥

न य मिच्छभावणाए वयंति जो पुण पयं पि निण्हवइ। मिच्छाभिनिवेसाओ स निण्हवो बहुरयाइ व्व ॥२२९९॥

---

[1] गाथा २३०१ । [2] एव विहितपृथक्त्वै रक्षितार्यै पुष्पमित्रे । स्थापिते गणिनि किल गोष्ठामाहिल प्रतिनिवेशेन ॥ २२९६ ॥
स मिथ्यात्वोदयत सप्तमको निह्नव समुत्पन्न । केऽन्ये षड् भणिता प्रसङ्गतो निह्नवोत्पत्ति ॥ २२९७ ॥

[3] अथवा चोदयति नयानुयोगनिह्नवनत कथ गुरव । न हि निह्नग इति, भण्यते यतो न जल्पन्ति न सन्तीति ॥ २२९८ ॥
न च मिथ्याभावनया वदन्ति य पुन पदमपि निह्नुते । मिथ्याभिनिवेशात् स निह्नवो बहुरतादिरिव ॥ २२९९ ॥

आस्तीर्यमाणसंस्तारकस्य यद् यावन्मात्रं नभोदेशे यत्र यत्र समये 'अत्थुव्वइ' आस्तीर्यते तद् तावन्मात्रं तस्मिन् नभोदेशे तत्र तत्र समय आस्तीर्णमेव भवति, आस्तीर्यमाणमपि च तदेवोच्यते। इदमुक्तं भवति- सर्वोऽपि संस्तारक आस्तीर्यमाणो नास्तीर्ण इति 'क्रियमाणं कृतम्' इत्यादि महावीरवचनं व्यलीकमेव जमालिर्मन्यते। एतच्चायुक्तम्, भगवद्वचनाभिप्रायापरिज्ञानात्। सर्वनयात्मकं हि भगवद्वचनम्। ततश्च 'क्रियमाणमकृतम्' इत्यपि भगवान् कथञ्चिद् व्यवहारनयमतेन मन्यत एव, परं "[1]चलमाणे चलिए, उईरिज्जमाणे उईरिए" इत्यादिसूत्राणि निश्चयनयमतेनैव प्रवृत्तानि। तन्मतेन च क्रियमाणं संस्तृतम्, इत्यादि सर्वमुपपद्यत एव। निश्चयो हि मन्यते- प्रथमसमयादेव घटः कर्तुं नारब्धः, किन्तु मृदानयन-मर्दनादीनि प्रतिसमयं परापरकार्याण्यारभ्यन्ते, तेषां च मध्ये यद् यत्र समये प्रारभ्यते तत् तत्रैव निष्पद्यते, कार्यकाल-निष्ठाकालयोरेकत्वात्, अन्यथा पूर्वोक्तदोषप्रसङ्गात्। ततः क्रियमाणं कृतमेव भवति। एवं प्रस्तुतः संस्तारकोऽपि नाद्यसमयात् सर्वोऽपि संस्तरीतुमारभ्यते, किन्त्वपरापरे तदवयवाः प्रतिसमयमास्तीर्यन्ते, तेषां च मध्ये यो यत्र समयेऽवयवः संस्तरीतुमारभ्यते, स तत्रैवास्तीर्यते, परिपूर्णस्तु संस्तारकश्चरमसमय एव संस्तरीतुमारभ्यते तत्रैव च निष्पद्यत इति संस्तीर्यमाणं संस्तीर्णमेव भवतीति॥ २३२३ ॥

'[2]दीसइ दीहो य जओ' इत्यत्राह—

[3]बहुवत्थत्तरणविभिण्णदेसकिरियाइकज्जकोडीणं। मण्णसि दीहं कालं जइ, संथारस्स किं तस्स?॥२३२२॥

यदि नाम बहुवस्त्रास्तरणविभिन्नदेशक्रियादिकार्यकोटीनां संबन्धिनं दीर्घकालं मन्यसे जानासि त्वम्, ततः संस्तारकस्य तस्य किमायातम्? इत्यक्षरघटना। विभिन्नो देशो यासां ता विभिन्नदेशास्ताश्च ताः क्रियाश्च विभिन्नदेशक्रियाः, वस्त्रस्योपलक्षणत्वात् कम्बलानां चास्तरणं वस्त्र-कम्बलास्तरणं तस्य विभिन्नदेशक्रिया वस्त्रकम्बलास्तरणविभिन्नदेशक्रियाः, तदादयश्च ताः कार्यकोटयश्च तास्तथा, बह्व्यश्च ता वस्त्र-कम्बलास्तरणविभिन्नदेशक्रियादिकार्यकोटयश्च बहुवस्त्रकम्बलास्तरणविभिन्नदेशक्रियादिकार्यकोटय इति समासस्तासामिति। आदिशब्दः स्वगतानेकभेदव्यापकः। कार्याणां च कोटिसंख्यत्वमिहापि पूर्ववद् भावनीयमिति॥२३२२॥

ननु यदि पूर्वमपरापराणि कार्याणि निष्पद्यन्ते, संस्तारकस्तु पर्यन्तसमय एवारभ्यते, निष्पद्यते च, कार्यक्रियाकाल-निष्ठाकालयोरभेदात्। तर्हि कथं संस्तारकस्यैव स दीर्घः क्रियाकालो मयाऽनुभूयते? इत्याह—

1. चल्यमाने चलितम्, उदीर्यमाण उदीरितम्। 2 गाथा २३११।
3. बहुवस्त्रास्तरणविभिन्नदेशक्रियादिकार्यकोटीनाम्। मन्यसे दीर्घं कालं यदि, संस्तारस्य किं तस्य?॥ २३२२ ॥

अथवेति प्रस्तावनान्तरसूचकः । परः प्रेरयति– ननु नयानुयोगनिह्नवात् कथमार्यरक्षितगुरवो न निह्नवा भण्यन्ते ? । अत्रोत्तरम्– यतो 'न सन्ति नयानुयोगाः' इति तेन जल्पन्ति, नापि मिथ्यात्वभावनया मिथ्याभिनिवेशेन ते किञ्चिद् वदन्ति । किन्तु प्रवचनहितार्थमेव नयानुयोगगोपनं तैर्विहितम् । यः पुनर्मिथ्याभिनिवेशादेकमपि जिनोक्तं पदं निह्नुते स बहुरतादिवज्जमाल्यादिवद् निह्नव एवेति ॥ २२९८ ॥ २२९९ ॥

के पुनस्ते बहुरतादयः ? इत्याह —

बहुरय[1] पएस अव्वत्त सामुच्छा दुग तिग अबद्धिआ चेव । एएसिं निग्गमणं वोच्छामि अहाणुपुव्वीए ॥२३००॥

'बहुरय त्ति' एकस्मिन् क्रियासमये वस्तु नोत्पद्यते, किन्तु बहुभिः क्रियासमयैः, इत्यभ्युपगमाद् बहुषु समयेषु रताः सक्ता बहुरता दीर्घकालवस्तुप्रभवप्ररूपका इत्यर्थः । 'पएस त्ति' पूर्वपदलोपाज्जीवप्रदेशा इति द्रष्टव्यम्, यथा वीरो महावीर इति । एक एव चरमप्रदेशो जीव इत्यभ्युपगमाज्जीवः प्रदेशो येषां ते जीवप्रदेशा निह्नवाश्चरमप्रदेशजीवप्ररूपिण इति हृदयम् । 'अव्वत्त त्ति' उत्तरपदलोपादव्यक्तमता यथा भीमो भीमसेन इति । न ज्ञायतेऽत्र कोऽपि संयतः, कोऽप्यसंयत इत्यव्यक्तस्यैव सर्वस्याभ्युपगमाद् न व्यक्तमव्यक्तमस्फुटम्, अव्यक्तं मतं येषां तेऽव्यक्तमताः संयतासंयताद्यवगमे संदिग्धबुद्धय इत्यर्थः । 'समुच्छ त्ति' एकदेशेन समुदायस्य गम्यमानत्वादुत्पत्त्यनन्तरमेव सामस्त्येन प्रकर्षतश्छेदः समुच्छेदो वस्तुविनाशः, समुच्छेदमधीयते, तद्वेदिनो वा, इत्यण्प्रत्यये सामुच्छेदाः क्षणक्षयिभावप्ररूपका इत्यर्थः । 'दुग त्ति' उत्तरपदलोपादेकस्मिन्नपि समये क्रियाद्वयानुभवाभ्युपगमाद् द्विक्रियाः, एकसमये द्वे क्रिये समुदिते द्विक्रियम्, तदधीयते तद्वेदिनो वा द्वैक्रियाः कालभेदेन क्रियाद्वयानुभवप्ररूपिण इति भावः। 'तिग त्ति' त्रैराशिकाः, जीवा-ऽजीव-नोजीवभेदात् त्रयो राशयः समाहृतास्त्रिराशि तत्प्रयोजनमेषां ते त्रैराशिका जीवा-ऽजीव-नोजीवराशित्रयख्यापका इति तात्पर्यम्। 'अबद्धिअ त्ति' स्पृष्टं जीवेन कर्म न स्कन्धवद् बद्धमबद्धमेव येषामस्ति वदन्ति वेत्यबद्धिकाः स्पृष्टकर्मविपाकप्ररूपका इत्यर्थ इति । एते सप्त निह्नवाः । एतेषां निर्गमनमुत्पत्तिमानुपूर्व्या यथाक्रमं वक्ष्ये ॥ इति गाथापञ्चकार्थः ॥ २३०० ॥

अथ येभ्यो ये निह्नवाः समुत्पन्नास्तदेतदाह—

[1] बहुरता प्रदेशा अव्यक्ता सामुच्छेदा द्वैक्रियास्त्रैराशिका अबद्धिकाश्चैव । एतेषां निर्गमन वक्ष्येऽथानुपूर्व्या ॥ २३०० ॥

पइसमयकज्जकोडीविमुहो[1] संथारयाहिकयकज्जो। पइसमयकज्जकालं कथं संथारम्मि लाएसि ? ॥२३२३॥

गतार्था, नवरं संस्तारकेणाधिकृतं प्रस्तुतं कार्यं यस्यासौ संस्तारकाधिकृतकार्य इति समासः ॥ २३२३ ॥

तदेवं स्थविरैर्युक्तिभिः संबोध्यमाने तस्मिन् किं संजातम् ? इत्याह—

सो[2] उज्जुसुयनयमयं अमुणंतो न पडिवज्जए जाहे। ताहे समणा केई उवसंपण्णा जिणं चेव ॥ २३२४ ॥

पियदंसणा वि पइणोऽणुरागओ तम्मयं चिय पवण्णा। ढंकोवहियागणिदड्ढवत्थदेसा तयं भणइ ॥२३२५॥

सावय! संघाडी मे तुमए दड्ढ त्ति सो वि य तमाह। नणु तुज्झ डज्झमाणं दड्ढं ति मओ न सिद्धंतो ॥२३२६॥

दड्ढं न डज्झमाणं जइ विगएऽणागए व का संका। काले तयभावाओ संघाडी कम्मि ते दड्ढा ? ॥२३२७॥

चतस्रोऽपि[3] गाथा गतार्थाः, नवरमृजुसूत्रो निश्चयनयविशेषः। 'पियदंसणा वि त्ति' आह–ननु पूर्वं 'सुदर्शना' इति तस्या नाम प्रोक्तम्, कथमिदानीं 'प्रियदर्शना' इत्युच्यते ?। सत्यम्, किन्त्विदमपि तस्या नाम द्रष्टव्यम्। तथा चोक्तम्–"तेयसिरिं[4] च सुरूवं जणइ य पियदंसणं धूयं" इति। 'ढंकोवहियेत्यादि' स्वाध्यायपौरुषीं कुर्वत्यास्तस्या आपाकाद् गृहीत्वा ढङ्केनोपहितः क्षिप्तो योऽग्निस्तेन दग्धो वस्त्रदेशो यस्याः सा ढङ्कोपहिताग्निदग्धवस्त्रदेशा सती तं ढङ्कं भणति। सोऽपि तां प्रियदर्शनामाह– दड्ढमित्यादिचतुर्थगाथाया अयं भावार्थः– ननु यदि दह्यमानं दाहक्रियाक्षणे वर्तमाने वस्त्रं न दग्धमिति भवद्भिरुच्यते, ततो विगत उपरते, अनागते वा भविष्यति दाहक्रियाकाले का शङ्का वस्त्रदाहविषया, तदभावात्– दाहक्रियाया विनष्टानुत्पन्नत्वेन सर्वथाऽभावादित्यर्थः। अतो वर्तमाना-ऽतीताऽनागतलक्षणे काल त्रयेऽप्युक्तयुक्तितोऽदग्धत्वात् कस्मिन् काले आर्ये! ते तव संघाटी मया दग्धेत्युच्यताम् ? इति ॥२३२४॥२३२५॥२३२६॥२३२७॥

अथार्ये! त्वमेवं मन्यसे किम् ? इत्याह—

---

१ प्रतिसमयकार्यकोटिविमुख संस्तारकाधिकृतकार्य। प्रतिसमयकार्यकालं कथं संस्तारके लगयसि ? ॥ २३२३ ॥

२ स ऋजुसूत्रनयमतमजानन् न प्रतिपद्यते यावत्। तावत् श्रमणाः केऽप्युपसपन्ना जिनमेव ॥ २३२४ ॥
प्रियदर्शनापि पत्युरनुरागतस्तन्मतमेव प्रपन्ना। ढङ्कोपहिताग्निदग्धवस्त्रदेशा तं भणति ॥ २३२५ ॥
श्रावक! संघाटी मे त्वया दग्धेति सोऽपि च तामाह। ननु तव दह्यमान दग्धमिति मतो न सिद्धान्तः ॥ २३२६ ॥
दग्धं न दह्यमानं यदि विगतेऽनागते वा का शङ्का। काले तदभावात् सघाटी कस्मिंस्ते दग्धा ? ॥ २३२७ ॥

३ घ. ज. 'पि गता'। ४ तेज.श्रिय च सुरूपां जनयति प्रियदर्शनां दुहितरम्।

बहुरय जमालिपभवा जीवपएसा य तीसगुत्ताओ । अव्वत्ताऽऽसाढाओ सामुच्छेआ असमित्ताओ ॥२३०१॥
गंगाओ दोकिरिया छलुगा तेरासिआण उप्पत्ती । थेरा य गोट्ठमाहिल पुट्ठमबद्धं परूविंति ॥ २३०२ ॥

बहुरता जमालिप्रभवाः, जमालेराचार्यात् प्रभव उत्पत्तिर्येषां ते जमालिप्रभवाः । जीवप्रदेशाः पुनस्तिष्यगुप्तादुत्पन्नाः । अव्यक्ता आषाढात् । सामुच्छेदा अश्वमित्रादिति । गङ्गाद् द्वैक्रियाः । षडुलूकात् त्रैराशिकानामुत्पत्तिः । स्थविराश्च गोष्ठामाहिलाः स्पृष्टमबद्धं प्ररूपयन्ति 'कर्म' इति गम्यते । 'परूविंसु वा' इति पाठान्तरं वा । ततो गोष्ठामाहिलादबद्धिका जाता इति सामर्थ्याद् गम्यत इति ॥ २३०१ ॥ २३०२ ॥

येषु स्थानेष्वेते समुत्पन्नास्तानि क्रमेणाह—

सावत्थी[2] उसभपुरं सेअम्बिआ मिहिल उल्लुगातीरं । पुरमंतरंजि दसउर रहवीरपुरं च नयराइं ॥२३०३॥

श्रावस्ती, ऋषभपुरम्, श्वेतविका, मिथिला, उल्लुकातीरम्, पुनरन्तरञ्जिका, दशपुरम्, रथवीरपुरं चेति । एतान्यष्टौ नगराणि निह्नवानां यथायोगमुत्पत्तिस्थानानि बोद्धव्यानि । अष्टमं नगरं द्रव्यलिङ्गमात्रेणापि भिन्नानां सर्वापलापिनां महामिथ्यादृशां वक्ष्यमाणानां बोटिकनिह्नवानां लाघवार्थमुत्पत्तिस्थानमुक्तमिति ॥ २३०३ ॥

अथ भगवतः समुत्पन्नकेवलज्ञानस्य परिनिर्वृतस्य च कः कियता कालेन निह्नवः समुत्पन्न इत्येतत् प्रतिपादयन्नाह—

चोद्दस[3] सोलस वासा चोद्दा-वीसुत्तरा य दुण्णि सया । अट्ठावीसा य दुवे पंचेव सया य चोआला ॥२३०४॥
पंच सया चुलसीओ छच्चेव सया नवुत्तरा हुंति । नाणुप्पत्तीए दुवे उप्पन्ना निव्वुए सेसा ॥२३०५॥

चतुर्दश वर्षाणि । तथा षोडश वर्षाणि । तथा 'चोद्दा वीसुत्तरा य दुण्णि सय त्ति' चतुर्दशाधिके द्वे शते, विंशत्युत्तरे च द्वे

---

१ बहुरता जमालिप्रभवा जीवप्रदेशाश्च तिष्यगुप्तात् । अव्यक्ता आषाढात् सामुच्छेदा अश्वमित्रात् ॥ २०३१ ॥
गङ्गाद् द्वैक्रिया. षडुलूकात् त्रैराशिकानामुत्पत्ति· । स्थविराश्च गोष्ठामाहिला स्पृष्टमबद्धं च प्ररूपयन्ति ॥ २३०२ ॥

२ श्रावस्ती ऋषभपुरं श्वेतविका मिथिलोल्लुकातीरम् । पुरमन्तरञ्जिका दशपुर रथवीरपुरं च नगराणि ॥ २२०३ ॥

३ चतुर्दश षोडश वर्षाणि चतुर्दश विंशत्युत्तरे च द्वे शते । अष्टाविंशत्या च द्वे पञ्चैव शतानि च चतुश्चत्वारिंशता ॥ २३०४ ॥
पञ्च शतानि चतुरशीत्या षडेव शतानि नवोत्तराणि भवन्ति । ज्ञानोत्पत्तौ द्वावुत्पन्नौ निर्वृते शेषा. ॥ २३०५ ॥

[1]अहवा न डज्झमाणं दड्ढं दाहकिरियासमत्तीए। किरियाऽभावे दड्ढं जइ दड्ढं किं न तेलुक्कं?॥२३२८॥

अथवैवं ब्रूषे– दह्यमानं न दग्धम्, किन्तु दाहक्रियासमाप्तौ दग्धम्। नन्वेवं सति दाहक्रियाऽभावे दग्धमित्युक्तं भवति। एतच्चायुक्तम्, यतो यदि दाहक्रियाऽभावे दग्धम्, तर्हि त्रैलोक्यमपि किं न 'दग्धम्' इत्यत्रापि संबध्यते, यथा वस्त्रे तथा त्रैलोक्येऽपि दाहक्रियाऽभावस्य तुल्यत्वादिति ॥ २३२८ ॥

ततः किमिह स्थितम्? इत्याह––

[2]उज्जुसुयनयमयाओ वीरजिणिंदवयणावलंबीणं। जुज्जेज्ज डज्झमाणं दड्ढं वोत्तुं न तुज्झ त्ति ॥२३२९॥

उत्तानार्था ॥ २३२९ ॥

ननु दह्यमानदग्धत्वादिनोऽप्यञ्चलमात्रदेशे दह्यमाने संघाटी कथं 'दग्धा' इति व्यपदिश्यते? इत्याह––

[3]समए समए जो जो देसोऽगणिभावमेइ डज्झमाणस्स। तं तम्मि डज्झमाणं दड्ढं पि तमेव तत्थेव ॥ २३३० ॥

यो यो दाह्यस्य पटादेर्देशस्तन्त्वादिः समये समयेऽग्निभावमेति– दह्यत इत्यर्थः, तत्तद्देशरूपं वस्तु तस्मिन् समये दह्यमानं भण्यते, तथा दग्धमपि तदेव वस्तु तस्मिन्नेव समये भण्यते। अतो दह्यमानमेव दग्धम्। यत्तु देशमात्रेऽपि दग्धे संघाटी मे 'दग्धा' इति त्वं वदसि, तद् संघाट्येकदेशेऽपि संघाटीशब्दोपचारादिति मन्तव्यमिति ॥ २३३० ॥

ततः किमिह स्थितम्? इत्याह––

[4]नियमेण डज्झमाणं दड्ढं दड्ढं तु होइ भयणिज्जं। किंचिदिह डज्झमाणं उवरयदाहं च हुज्जाहि॥२३३१॥

व्याख्या प्रागुक्तानुसारेण कार्येति ॥ २३३१ ॥

इत्यादिढङ्कोक्तयुक्तिभिः संबुद्धा प्रियदर्शना, शेषसाधवश्च 'आर्य! इच्छामः सम्भूतमिदं त्वदीयसंबोधनम्' इत्येवं ढङ्काभिमुखमा-

---

१ अथवा न दह्यमानं दग्धं दाहक्रियासमाप्तौ। क्रियाऽभावे दग्धं यदि दग्धं किं न त्रैलोक्यम्? ॥ २३२८ ॥

२ ऋजुसूत्रनयमताद् वीरजिनेन्द्रवचनावलम्बिनाम्। युज्यते दह्यमानं दग्धं वक्तुं न तवेति ॥ २३२९ ॥

३ समये समये यो यो देशोऽग्निभावमेति दह्यमानस्य। तत् तस्मिन् दह्यमानं दग्धमपि तदेव तत्रैव ॥ २३३० ॥

४ नियमेन दह्यमानं दग्धं दग्धं तु भवति भजनीयम्। किञ्चिदिह दह्यमानमुपरतदाहं च भवेत् ॥ २३३१ ॥

शते 'वर्षाणाम्' इति गम्यते। तथा, अष्टाविंशत्यधिके च द्वे शते, तथा पञ्चैव शतानि चतुश्चत्वारिंशदधिकानि, पञ्च शतानि चतुरशीत्यधिकानि, षट् चैव शतानि नवोत्तराणि भवन्ति। एतावता व्यवधानकालेन ज्ञानोत्पत्तेरारभ्याद्यौ द्वौ निह्नवौ समुत्पन्नौ। शेषास्तु षड् भवन्ति श्रीमन्महावीरे निर्वृते निर्वाणकालादारभ्य उक्तशेषेण यथोक्तेन व्यवधानकालेनोत्पन्नाः। इदमुक्तं भवति— श्रीमन्महावीरस्य केवलोत्पत्तेश्चतुर्दशभिर्वर्षैरतिक्रान्तैर्बहुरताः समुत्पन्नाः, षोडशभिर्वर्षैर्व्यतिक्रान्तैर्जीवप्रदेशाः समुत्पन्नाः। भगवत एव निर्वाणकालात् शेषेण चतुर्दशाधिकवर्षशतद्वयादिना कालेनातिक्रान्तेन शेषा अव्यक्तादयो निह्नवाः समुत्पन्ना इति ॥ २३०४ ॥ २३०५ ॥

अथ संपिण्ड्य सामान्यतः सूचितमेवार्थमेकैकनिह्नवं प्रति व्यक्तितो निर्दिशन्नाह—

[1]चोद्दस वासाणि तया जिणेण उप्पाडियस्स नाणस्स। तो बहुरयाण दिट्ठी सावत्थीए समुप्पन्ना ॥२३०६॥

चतुर्दश वर्षाणि तदा जिनेन श्रीमन्महावीरेणोत्पादितस्य केवलज्ञानस्य ततोऽत्रान्तरे बहुरतनिह्नवानां दर्शनं दृष्टिः श्रावस्त्यां नगर्यां समुत्पन्नेति ॥ २३०६ ॥

सा च यथोत्पन्ना तथा दिदर्शयिषुः संग्रहगाथामाह—

[2]जिट्ठा सुदंसण जमालिणोज्ज सावत्थीतिंदुगुज्जाणे। पंच सया य सहस्सं ढंकेण जमालि मोत्तूणं ॥२३०७॥

व्याख्या— अत्र भावार्थस्तावत् कथानकेनोच्यते— इहैव भरतक्षेत्रे कुण्डपुरं नाम नगरम्। तत्र भगवतः श्रीमन्महावीरस्य भागिनेयो जमालिर्नाम राजपुत्र आसीत्। तस्य च भार्या श्रीमन्महावीरस्य दुहिता। तस्याश्च ज्येष्ठेति वा, सुदर्शनेति वा, अनवद्याङ्गीति वा नामेति। तत्र पञ्चशतपुरुषपरिवारो जमालिर्भगवतो महावीरस्यान्तिके प्रव्रज्यां जग्राह। सुदर्शनापि सहस्रस्त्रीपरिवारा तदनु प्रव्रजिता। ततश्चैकादशस्वङ्गेष्वधीतेषु जमालिना भगवान् विहारार्थं मुत्कलापितः। ततो भगवता तूष्णीमास्थाय न किञ्चित् प्रत्युत्तरमदायि। तत एवमुत्कलितोऽपि पञ्चशतसाधुपरिवृतो निर्गतः श्रीमन्महावीरान्तिकात्। ग्रामानुग्रामं च पर्यटन् गतः श्रावस्तीनगर्याम्। तत्र च तैन्दुकाभिधानोद्याने कोष्ठकनाम्नि चैत्ये स्थितः। ततश्च तत्र तस्यान्त-प्रान्ताहारैस्तीव्रो रोगातङ्कः समुत्पन्नः। तेन च न शक्नोत्युपविष्टः स्थातुम्। ततो बभाण श्रमणान्— 'मन्निमित्तं शीघ्रमेव संस्तारकमास्तृणीत येन तत्र तिष्ठामि'। ततस्तैः कर्तुमारब्धोऽसौ। बाढं च

१ चतुर्दश वर्षाणि तदा जिनेनोत्पादितस्य ज्ञानस्य। ततो बहुरतानां दृष्टिः श्रावस्त्यामुत्पन्ना ॥ २३०६ ॥
२ ज्येष्ठा सुदर्शना जमालिरनवद्या श्रावस्तीतैन्दुकोद्याने। पञ्च शतानि च सहस्रं ढङ्केन जमालिं मुक्त्वा ॥ २३०७ ॥

भिधायैकाकिनं जमालिनं मुक्त्वा सर्वाण्यपि गतानि जिनसमीपमिति । एतदेवाह—

इच्छामो संबोहणमज्जो! पियदंसणादओ ढंकं । वोत्तुं जमालिमेक्कं मोत्तूण गया जिणसगासं ॥ २३३२ ॥

उक्तार्थैव ॥ इति पञ्चविंशतिगाथार्थः ॥ २३३२ ॥

॥ इति बहुरताख्यः प्रथमो जमालिनिह्नवः समाप्तः ॥

अथ द्वितीयनिह्नववक्तव्यतामाह—

सोलस वासाणि तया जिणेण उप्पाडियस्स नाणस्स । जीवपएसियदिट्ठी तो उसभपुरे समुप्पण्णा ॥२३३३॥

रायगिहे गुणसिलए वसु चउदसपुव्वि तीसगुत्ते य । आमलकप्पा नयरी मित्तसिरी कूर-पिउडाई ॥२३३४॥

व्याख्या– श्रीमन्महावीरजिनेन तदा षोडश वर्षाणि केवलज्ञानस्योत्पादितस्याभूवन् । ततश्च राजगृहापरनाम्नि ऋषभपुरे नगरे जीवप्रदेशिकदृष्टिः समुत्पन्नेति । कथमुत्पन्ना ? इत्याह– राजगृहे नगरे गुणशिलके चैत्ये चतुर्दशपूर्विणो वसुनामान आचार्याः समागताः, तेषां च तिष्यगुप्तो नाम शिष्यः । स च तत्र पूर्वगतमालापकं वक्ष्यमाणस्वरूपमधीयानो वक्ष्यमाणयुक्तिभिर्विप्रतिपन्नोऽसंबुद्धः परिहृतो गुरुभिर्विहरन्नामलकल्पायां नगर्यां गतः । तत्र मित्रश्रीनाम्ना श्रावकेण कूर-पिउडादिना कूर-सिक्थादिदानेन प्रतिबोधित इत्यर्थः ॥ २३३३ ॥ २३३४ ॥

अथास्य निर्युक्तिगाथाद्वयस्य भाष्यमाह—

[3]आयप्पवायपुव्वं अहिज्जमाणस्स तीसगुत्तस्स । नयमयमयाणमाणस्स दिट्ठिमोहो समुप्पण्णो ॥२३३५॥

१ इच्छामः संबोधनमार्य ! प्रियदर्शनादयो ढङ्कम् । उक्त्वा जमालिमेकं मुक्त्वा गता जिनसकाशम् ॥ २३३२ ॥
२ षोडश वर्षाणि तदा जिनेनोत्पादितस्य ज्ञानस्य । जीवप्रदेशिकदृष्टिस्तत ऋषभपुरे समुत्पन्ना ॥ २३३३ ॥
राजगृहे गुणशिलके वसुश्चतुर्दशपूर्वी तिष्यगुप्तश्च । आमलकल्पा नगरी मित्रश्री: कूर-सिक्थादिना ॥ २३३४ ॥
३ आत्मप्रवादपूर्वमधीयानस्य तिष्यगुप्तस्य । नयमतमजानतो दृष्टिमोहः समुत्पन्नः ॥ २३३५ ॥

दाहज्वराभिभूतेन जमालिना पृष्टम्–'संस्तृतः संस्तारको नवा ?' इति। साधुभिश्च संस्तृतप्रायत्वादर्धसंस्तृतेऽपि प्रोक्तम्–'संस्तृतः' इति। ततोऽसौ वेदनाविह्वलितचेता उत्थाय तत्र तिष्ठासुरर्धसंस्तृतं तद् दृष्ट्वा क्रुद्धः 'क्रियमाणं कृतम्' इत्यादि सिद्धान्तवचनं स्मृत्वा मिथ्यात्वमोहनीयोदयतो वक्ष्यमाणयुक्तिभिर्वितथमिति चिन्तयामास। ततः स्थविरैर्वक्ष्यमाणाभिरेव युक्तिभिः प्रतिबोधितो यदा कथमपि न प्रतिबुध्यते तदा गतास्तं परित्यज्य भगवत्समीपे। अन्ये तु तत्समीप एव स्थिताः। सुदर्शनापि तदा तत्रैव श्रावकढङ्ककुम्भकारगृह आसीत्। जमाल्यनुरागेण च तन्मतमेव प्रपन्ना ढङ्कमपि तद् ग्राहयितुं प्रवृत्ता। ततो ढङ्केन 'मिथ्यात्वमुपगतेयम्' इति ज्ञात्वा प्रोक्तम्– 'नेदृशं किमपि वयं जानीमः'। अन्यदा चापाकाग्निमध्ये मृद्भाजनोद्वर्तन-परावर्तने कुर्वताऽङ्गारकमेकं प्रक्षिप्य तत्रैव प्रदेशे स्वाध्यायं कुर्वत्याः सुदर्शनायाः संघाट्यञ्चलो दग्धः। ततस्तया प्रोक्तम्– 'श्रावक! किं त्वया मदीयसंघाटी दग्धा ?।' तेनोक्तम्– 'ननु दह्यमानमदग्धम्' इति भवतां सिद्धान्तः, ततः क केन त्वदीया संघाटी दग्धा ?'। इत्यादि तदुक्तं परिभाव्य संबुद्धाऽसौ 'सम्यक् प्रेरिताऽस्मि' इत्यभिधाय मिथ्या दुष्कृतं ददाति। जमालिं च गत्वा प्रज्ञापयति। यदा चासौ कथमपि न प्रज्ञाप्यते तदासौ सपरिवारा, शेषसाधवश्चैकाकिनं जमालिं मुक्त्वा भगवत्समीपं जग्मुः। जमालिस्तु बहुजनं व्युद्ग्राह्यानालोचितप्रतिक्रान्तः कालं कृत्वा किल्बिषिकदेवेषूत्पन्नः। व्याख्याप्रज्ञप्त्यागमाच्चैतच्चरितं विस्तरतोऽवसेयमिति। एष संग्रहगाथाभावार्थः। अक्षरार्थस्त्वयम्— 'जेट्ठा सुदंसण जमालिणोज्ज त्ति' ज्येष्ठा, सुदर्शना, अनवद्याङ्गीति जमालिगृहिणीनामानि। अन्ये तु व्याचक्षते– 'ज्येष्ठा महती सुदर्शना नाम भगवतः श्रीमन्महावीरस्य भगिनी तस्याः पुत्रो जमालिः, अनवद्याङ्गी नाम भगवतो दुहिता जमालिगृहिणी' इति। श्रावस्त्यां नगर्यां तैन्दुकोद्याने 'जमालिनिह्नवदृष्टिरुत्पन्ना' इति वाक्यशेषः। तत्र पञ्च शतानि साधूनां, सहस्रं चार्यिकाणाम्, एतेषां मध्ये यः स्वयं न प्रतिबुद्धस्तं जमालिं मुक्त्वा ढङ्केन प्रतिबोधितः॥ इति निर्युक्तिगाथासप्तकार्थः॥ २३०७॥

अथ भाष्यकारो येन विप्रतिपत्त्यभिप्रायेण जमालिर्निह्नवो जातस्तं प्रकटयन्नाह—

संक्खं चिय संथारो न कज्जमाणो कउ त्ति मे जम्हा। बेइ ज्जमाली सव्वं न कज्जमाणं कयं तम्हा॥२३०८॥

'मे जम्ह त्ति' यस्माद् मम साक्षात् प्रत्यक्षमेवेदं वृत्तं यदुत– कम्बलास्तरणरूपः संस्तारकः क्रियमाणो न कृतः संस्तीर्यमाणो न संस्तृतः। तस्माज्जमालिर्ब्रवीति– सर्वमपि वस्तु क्रियमाणं कृतं न भवति, किन्तु कृतमेव कृतमुच्यते। ततो भगवत्यादिषु यदुक्तम्–

१ साक्षादेव सस्तरो न क्रियमाण. कृत इति मम यस्मात्। ब्रवीति जमालि. सर्वं न क्रियमाण कृत तस्मात्॥ २३०८॥

आत्मप्रवादनामकं पूर्वमधीयानस्य तिष्यगुप्तस्यायं सूत्रालापकः सामायातस्तद्यथा– "एगे भंते ! जीवपएसे जीवे त्ति वत्तव्वं सिया ? । नो इणट्ठे समट्ठे । एवं दो, तिन्नि, जाव दस, संखेज्जा, असंखेज्जा भंते ! जीवपएसा जीव त्ति वत्तव्वं सिया ? । नो इणट्ठे समट्ठे, एगपएसूणे वि णं जीवे नो जीवे त्ति वत्तव्वं सिया । से केणं अट्ठेणं ? । जम्हा णं कसिणे पडिपुन्ने लोगागासपएसतुल्ले जीवे जीवे त्ति वत्तव्वं सिया, से तेणं अट्ठेणं" इति । अमुं चालापकमधीयानस्य 'कस्यापि नयस्येदमपि मतम्, न तु सर्वनयानाम्' इत्येवमजानतस्तिष्यगुप्तस्य मिथ्यात्वोदयाद् दृष्टेर्दर्शनस्य मोहो विपर्यासः संजात इति ॥ २३३५॥

कथम् ? इत्याह—

[2]एगादओ पएसा नो जीवो नो पएसहीणो वि । जं तो स जेण पुण्णो स एव जीवो पएसो त्ति ॥२३३६॥

यद् यस्मादेकादयः प्रदेशास्तावज्जीवो न भवति, "एगे भंते ! जीवपएसे" इत्याद्यालापके निषिद्धत्वात्; एवं यावदेकेनापि प्रदेशेन हीनो जीवो न भवति, अत्रैवालापके निवारितत्वात् । ततस्तस्माद् येन केनापि चरमप्रदेशेन स जीवः परिपूर्णः क्रियते स एव प्रदेशो जीवो न शेषप्रदेशाः, एतत्सूत्रालापकप्रामाण्यादिति । एवं विप्रतिपन्नोऽसाविति ॥ २३३६ ॥

ततः किम् ? इत्याह—

[3]गुरुणाऽभिहिओ जइ ते पढमपएसो न संमओ जीवो । तो तप्परिणामो च्चिय जीवो कहमंतिमपएसो ?॥२३३७॥

'एकोऽन्त्यप्रदेशो जीवः, तद्भावभावित्वाज्जीवत्वस्य' इत्यादि ब्रुवाणस्तिष्यगुप्तो गुरुणा वसुसूरिणाऽभिहितः– हन्त ! यदि ते तव प्रथमो जीवप्रदेशो जीवो न संमतः, ततस्तर्ह्यन्तिमो जीवप्रदेशः कथं केन प्रकारेण जीवः ?– न घटत एव सोऽपि जीव इत्यर्थः । कुतः ? तत्परिणाम इति कृत्वा । इदमुक्तं भवति– भवदभिमतोऽन्त्यप्रदेशोऽपि न जीवः, अन्यप्रदेशैस्तुल्यपरिणामत्वात्, प्रथमाद्यन्यप्रदेशवदिति ॥ २३३७ ॥

---

१ एको भगवन् ! जीवप्रदेशो जीव इति वक्तव्यं स्यात् ? । नो अयमर्थ समर्थ. । एव द्वौ, त्रयो यावद् दश, सख्येयाः, असख्येया भगवन् ! जीवप्रदेशा जीव इति वक्तव्यं स्यात् ?। नो अयमर्थः समर्थः, एकप्रदेशोनोऽपि जीवो नो जीव इति वक्तव्यं स्यात् । अथ केनार्थेन ? । यस्मात् कृत्स्नः परिपूर्णो लोकाकाशप्रदेशतुल्यो जीवो जीव इति वक्तव्य स्यात् तेनार्थेन ।

२ एकादय प्रदेशा नो जीवो नो प्रदेशहीनोऽपि । यत् तत स येन पूर्ण स एव जीव प्रदेश इति ॥ २३३६ ॥

३ गुरुणाऽभिहितो यदि तव प्रथमप्रदेशो न संमतो जीव· । ततस्तत्परिणाम एव जीव. कथमन्तिमप्रदेश ? ॥ २३३७ ॥

तदभिगमण-वंदणो-वासणाइणा होज्ज पूयपावोऽहं ।
वोच्छिण्णसंसओ वा वोत्तुं पत्तो जिणसगासे ॥ १४९ ॥
आभट्ठो य जिणेणं जाइ-जरा-मरणविप्पमुक्केणं ।
नामेण य गोत्तेण य सव्वण्णू सव्वदरिसी णं ॥ १५० ॥
तज्जीव तस्सरीरं ति संसओ न वि य पुच्छसे किंचि ।
वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥ १५१ ॥

वसुहाइभूयसमुदयसंभूया चेयण त्ति ते संका । पत्तेयमदिट्ठा वि हु मज्जंगमउ व्व समुदाए ॥ १ ॥
जह मज्जंगेसु मओ वीसुमदिट्ठो वि समुदए होउं । कालंतरे विणस्सइ तह भूयगणम्मि चेयण्णं ॥ २ ॥
पत्तेयमभावाओ न रेणुतेल्लं व समुदए चेया । मज्जंगेसु तु मओ वीसुं पि न सव्वसो नत्थि ॥ ३ ॥
भमि-धणि-वितण्हयाई पत्तेयं पि हु जहा मयंगेसु । तह जइ भूएसु भवे चेया तो समुदए होज्जा ॥ ४ ॥
जइ वा सव्वाभावो वीसुं तो किं तदंगनियमोऽयं । तस्समुदयनियमो वा अन्नेसु वि तो हवेज्जाहि ॥ ५ ॥
भूयाणं पत्तेयं पि चेयणा समुदए दरिसणाओ । जह मज्जंगेसु मओ मइ त्ति हेऊ न सिद्धोऽयं ॥ ६ ॥
नणु पच्चक्खविरोहो गोयम ! तं नाणुमाणभावाओ । तुह पच्चक्खविरोहो पत्तेयं भूयचेय त्ति ॥ ७ ॥
भूइंदिओवलद्धाणुसरणओ तेहिं भिन्नरूवस्स । चेया पंचगवक्खोवलद्धपुरिसस्स वा सरओ ॥ ८ ॥
तदुवरमे वि सरणओ तव्वावारे वि नोवलंभाओ । इंदियभिन्नस्स मई पंचगवक्खाणुभाविणो व्व ॥ ९ ॥
उवलब्भन्नेण विगारगहणओ तदहिओ धुवं अत्थि । पुव्वावरवातायणगहणविगाराइपुरिसो व्व ॥ १० ॥

सव्वेंदिउवलद्धाणुसरणओ तदहिओऽणुमंतव्वो । जह पंचभिन्नविन्नाणपुरिसविन्नाणसंपन्नो ॥ ११ ॥
विण्णाणंतरपुव्वं बालण्णाणमिह नाणभावाओ । जह बालनाणपुव्वं जुवनाणं तं च देहहिअं ॥ १२ ॥
पढमो थणाहिलासो अण्णाहाराहिलासपुव्वोऽयं । जह संपयाहिलासोऽणुभूइओ सो य देहहिओ ॥ १३ ॥
बालसरीरं देहंतरपुव्वं इंदियाइमत्ताओ । जुवदेहो बालादिव स जस्स देहो स देहि त्ति ॥ १४ ॥
अण्णसुह-दुक्खपुव्वं सुहाइ बालस्स संपइसुहं व । अणुभूइमयत्तणओ अणुभूइमओ य जीवो त्ति ॥ १५ ॥
संताणोऽणाई उ परोप्परं हेउ-हेउभावाओ । देहस्स य कम्मस्स य गोयम ! बीयं-कुराणं व ॥ १६ ॥
तो कम्म-सरीराणं कत्तारं करण-कज्जभावाओ । पडिवज्ज तदब्भहिअं दंड-घडाणं कुलालं व ॥ १७ ॥
अत्थि सरीरविहाया पइनियययागारओ घडस्सेव । अक्खाणं च करणओ दंडाईणं कुलालो व्व ॥ १८ ॥
अत्थिंदिय-विसयाणं आयाणादेयभावओऽवस्सं । कम्मार इवादाया लोए संडास-लोहाणं ॥ १९ ॥
भोत्ता देहाईणं भोज्जत्तणओ नरो व्व भत्तस्स । संघायाइत्तणओ अत्थि य अत्थी घरस्सेव ॥ २० ॥
जो कत्ताइ स जीवो सज्झविरुद्धो त्ति ते मई होज्जा । मुत्ताइपसंगाओ तं नो संसारिणो दोसो ॥ २१ ॥
जाइस्सरो न विगओ सरणाओ बालजाइसरणो व्व । जह वा सदेसवत्तं नरो सरंतो विदेसम्मि ॥ २२ ॥
अह मन्नसि खणिओ वि हु सुमरइ विन्नाणसंतइगुणाओ । तहवि सरीरादण्णो सिद्धो विण्णाणसंताणो ॥२३॥
न य सव्वहेव खणिअं नाणं पुव्वोवलद्धसरणाओ । खणिओ न सरइ भूयं जह जम्माणंतरविनट्ठो ॥ २४ ॥
जस्सेगमेगबंधणमेगंतेण खणियं च विण्णाणं । सव्वखणियविण्णाणं तस्साजुत्तं कदाचिदावि ॥ २५ ॥
जं सविसयनियंयं चिय जम्माणंतरहयं च तं किह णु । नाहिति सुबहुयविण्णाणविसयखयभंगयाईणि ॥२६॥

१ 'आदाणा' । २ 'भुत्ता' ।

अथवा, व्यत्ययेन प्रयोग इति दर्शयति—

अहव स जीवो कह नाइमो त्ति को वा विसेसहेऊ ते ?। अह पूरणो त्ति बुद्धी एक्केक्को पूरणो तस्स ॥२३३८॥

अथवा, सोऽन्तिमप्रदेशः कथं जीवस्त्वयाऽभ्युपगम्यते, कथं च न– नैवादिमः प्रथमस्तद्रूपतयेष्यते ?–। नन्वाद्योऽपि प्रदेशो जीव एवेष्यताम्, शेषप्रदेशतुल्यपरिणामत्वात्, अन्त्यप्रदेशवदिति । को वाऽत्र विशेषहेतुस्तव, येन प्रदेशत्वे तुल्येऽप्यन्तिमो जीवो न प्रथमः ? इति। अथ विवक्षितासंख्येयप्रदेशराशेरन्त्यः प्रदेशः पूरण इति विशेषसद्भावतः स जीवो न प्रथम इति तव बुद्धिः। तदयुक्तम्, यतो यथाऽन्त्यः प्रदेशः पूरणस्तथैकैकः प्रथमादिप्रदेशस्तस्य विवक्षितजीवप्रदेशराशेः पूरण एव, एकमपि प्रदेशमन्तरेण तस्यापरिपूर्तेरिति ॥ २३३८ ॥

एवं च सर्वप्रदेशानां पूरणत्व इदमनिष्टमापतति। किम् ? इत्याह—

एवं जीवबहुत्तं पइजीवं सव्वहा व तदभावो । इच्छा विवज्जओ वा विसमत्तं सव्वसिद्धी वा ॥२३३९॥

एवं सर्वजीवप्रदेशानां विवक्षितप्रदेशमानपूरणत्वेऽन्त्यप्रदेशवत् प्रत्येकं जीवत्वात् प्रतिजीवं जीवबहुत्वमसंख्येयजीवात्मकं प्राप्नोति। अथवा, प्रथमादिप्रदेशवदन्त्यप्रदेशस्याप्यजीवत्वे सर्वथा तदभावो जीवाभावः प्रसजति । अथ पूरणत्वे समानेऽप्यन्त्यप्रदेश एव जीवः, शेषास्तु प्रदेशा अजीवा इत्याग्रहो न मुच्यते, तर्हि राजादेरिवेच्छा भवतः, यत् प्रतिभासते तदेव हि जल्प्यत इति। तथा च सति विपर्ययोऽपि कस्माद् न भवति, आद्यो जीवः, अन्त्यस्तु प्रदेशोऽजीव इति ?। विषमत्वं वा कुतो न भवति– केचनापि प्रदेशा जीवाः, केचित्तु अजीवा इति ?। अनियमेन सर्वविकल्पसिद्धिर्वा कस्माद् न भवति, स्वेच्छया सर्वपक्षाणामपि वक्तुं शक्यत्वात् ? इति ॥ २३३९ ॥

किञ्च,

जं सव्वहा न वीसुं सव्वेसु वि तं न रेणुतेल्लं व । सेसेसु असब्भूओ जीवो कहमंतिमपएसे ? ॥२३४०॥

---

१ अथवा स जीवः कथं नादिम इति को वा विशेषहेतुस्तव ?। अथ पूरण इति बुद्धिरेकैक. पूरणस्तस्य ॥ २३३८ ॥

२ एव जीवबहुत्व प्रतिजीव सर्वथा वा तदभाव । इच्छा विपर्ययो वा विषमत्वं सर्वसिद्धिर्वा ॥ २३३९ ॥

३ यत् सर्वथा न विष्वक् सर्वेष्वपि तद् न रेणुतैलमिव। शेषेष्वसद्भूतो जीव. कथमन्तिमप्रदेशे ? ॥ २३४० ॥

[1]को जाणइ किं भत्तं किमओ किं पाणयं जलं मज्जं । किमलाबुं माणिक्कं किं सप्पो चीवरं हारो ? ॥ २३७० ॥

को जाणइ किं सुद्धं किमसुद्धं किं सजीव निज्जीवं । किं भक्खं किमभक्खं पत्तमभक्खं तओ सव्वं ॥२३७१॥

को जानाति किमिदं भक्तं कृमयो वा ? इत्याद्याशङ्कायां भक्तादावपि कृम्यादिभ्रान्त्यनिवृत्तेः सर्वमभक्ष्यमेव प्राप्तं भवतः । तथा, अलाबु-चीवरादौ मणि-माणिक्य-सर्पादिभ्रान्त्यनिवृत्तेः सर्वमभोग्यं च प्राप्तमिति ॥ २३७० ॥ २३७१ ॥

तथा,

[2]जइणा वि न संवासो सेओ पमया-कुसीलसंकाए। होज्ज गिही वि जइ त्ति य तस्सासीसा न दायव्वा ॥२३७२॥

न य सो दिक्खेयव्वो भव्वोऽभव्वो त्ति जेण को मुणइ । चोरु त्ति चारिउ त्ति य होइ जओ परदारगामि त्ति ?॥२३७३॥

को जाणइ को सीसो को व गुरू तो न तव्विसेसो वि । गज्झो न चोवएसो को जाणइ सच्चमलियं ति ? ॥२३७४॥

किं बहुणा सव्वं चिय संदिद्धं जिणमयं जिणिंदा य । परलोय-सग्ग-मोक्खा दिक्खाए किमत्थमारंभो ?॥२३७५॥

अह संति जिणवरिंदा तव्वयणाओ य सव्वपडिवत्ती । तो तव्वयणाउ च्चिय जइवंदणयं कहं न मयं ?॥२३७६॥

सर्वा अपि प्रकटार्थाः । नवरं 'जइणा वि न संवासो' इत्यादिनाऽभ्युपगमविरोधो दर्शितः । अथ सन्ति जिनवरेन्द्राः, तद्वचनसिद्धत्वात् तेषां, तद्वचनादेव च सर्वस्यापि परलोक-स्वर्ग-मोक्षादेः प्रतिपत्तिर्भवति; एवं तर्हि तद्वचनादेव यतिवन्दनमपि कस्माद् न संमतम् ? इति ॥ २३७२ ॥ २३७३ ॥ २३७४ ॥ २३७५ ॥ २३७६ ॥

---

१ को जानाति किं भक्तं कृमय. किं पानकं जलं मद्यम् । किमलाबु माणिक्य किं सर्पश्चीवरं हारः ? ॥ २३७० ॥
को जानाति किं शुद्ध किमशुद्धं किं सजीव निर्जीवम् । किं भक्ष्य किमभक्ष्य प्राप्तमभक्ष्यं ततः सर्वम् ॥ २३७१ ॥

२ यतिनापि न संवासः श्रेयः प्रमदा-कुशीलशङ्कया । भवेद् गृह्यपि यतिरिति च तस्मा आशीर्न दातव्या ॥ २३७२ ॥
न च स दीक्षितव्यो भव्योऽभव्य इति येन को जानाति ? । चौर इति चारिक इति च भवति यको परदारगामीति ? ॥ २३७३ ॥
को जानाति कः शिष्यः को वा गुरुस्ततो न तद्विशेषोऽपि । ग्राह्यो न चोपदेशः को जानाति सत्यमलीकमिति ? ॥ २३७४ ॥
किं बहुना सर्वमेव संदिग्धं जिनमतं जिनेन्द्राश्च । परलोक-स्वर्ग-मोक्षा दीक्षाया किमर्थमारम्भः ? ॥ २३७५ ॥
अथ सन्ति जिनवरेन्द्रास्तद्वचनाच्च सर्वप्रतिपत्ति । ततस्तद्वचनादेव यतिवन्दनकं कथं न मतम् ? ॥ २३७६ ॥

यद् विष्वगेकैकस्मिन्नवयवे सर्वथा नास्ति तत् सर्वेष्वप्यवयवेषु समुदितेषु न भवति, यथा रेणुकणेषु प्रत्येकमसत् तत्समुदाये तैलम्, नास्ति च प्रथमादिक एकैकस्मिन् प्रदेशे जीवत्वम्, ततः शेषेषु प्रथमादिप्रदेशेष्वसज्जीवत्वं परिणामादिना तुल्ये कथमकस्मादेवास्मिन्नेवान्त्यप्रदेशे समायातम्? इति ॥ २३४० ॥

पुनः परमतमाशङ्क्य परिहरन्नाह—

[1]अह देसओऽवसेसेसु तो वि किह सव्वहांतिमे जुत्तो। अह तम्मि व जो हेऊ स एव सेसेसु वि समाणो ॥२३४१॥

अथान्त्यादवशेषेषु प्रथमादिप्रदेशेषु देशतो जीवः समस्त्येव, अन्त्यप्रदेशे तु सर्वात्मनाऽसौ समस्तीति विशेषः। ततो '[2]जं सव्वहा न वीसुं' इत्येतदसिद्धमिति भावः। अत्रोत्तरमाह– तथापि कथमन्त्यप्रदेशे सर्वात्मना जीवो युक्तः? । ननु तत्रापि देशत एवासौ युज्यते, तस्यापि प्रदेशत्वात्, प्रथमादिप्रदेशवत्। अथान्त्यप्रदेशे संपूर्णो जीव इष्यते, तर्हि तत्र तद्भावे यो हेतुः स शेषेष्वपि प्रथमादिप्रदेशेषु समान एव, तुल्यधर्मकत्वात्। अतस्तेष्वपि प्रतिप्रदेशं संपूर्णजीवत्वमन्त्यप्रदेशवत् किं नेष्यते? इति ॥ २३४१ ॥

अथ प्रथमादिप्रदेशेषु जीवत्वं नेष्यते, तर्ह्यन्त्यप्रदेशेऽपि नेष्टव्यम्। कुतः? इत्याह—

[3]नेह पएसत्तणओ अन्तो जीवो जहाइमपएसो। आह सुयम्मि निसिद्धा सेसा न उन्तिमपएसो ॥२३४२ ॥

इहान्त्यप्रदेशोऽपि न जीवः, प्रदेशत्वात्, यथा प्रथमादिप्रदेश इति। आह— नन्वागमबाधितेयं प्रतिज्ञा, यतः पूर्वोक्तालापकरूपे श्रुते शेषाः प्रथमादिप्रदेशा जीवत्वेन निषिद्धाः, न पुनरन्त्यप्रदेशः, तस्य तत्र जीवत्वानुज्ञानात्। अतः कथं प्रथमादिप्रदेशवदन्त्यस्य जीवत्वनिषेधं मन्यामहे? इति ॥ २३४२ ॥

अत्रोत्तरमाह—

[4]नणु एगो त्ति निसिद्धो सो वि सुए जइ सुयं पमाणं ते। सुत्ते सव्वपएसा भणिया जीवो न चरिमो त्ति ॥२३४३॥

ननु सोऽप्यन्त्यप्रदेशः श्रुते जीवत्वेन निषिद्धः। कुतः? इत्याह– एक इति कृत्वा। तथाहि– तत्रैवेत्थमुक्तम्– "[5]एगे भन्ते!

1 अथ देशतोऽवशेषेषु ततोऽपि कथं सर्वथान्तिमे युक्तः। अथ तस्मिन् वा यो हेतुः स एव शेषेष्वपि समानः ॥ २३४१ ॥ 2 गाथा २३४०। 3 नेह प्रदेशत्वतोऽन्त्यो जीवो यथादिमप्रदेशः। आह श्रुते निषिद्धाः शेषा न त्वन्तिमप्रदेशः ॥ २३४२ ॥ 4 नन्वेक इति निषिद्धः सोऽपि श्रुते यदि श्रुतं प्रमाणं तव। सूत्रे सर्वप्रदेशा भणिता जीवो न चरम इति ॥ २३४३ ॥ 5 पृ० ९४६।

आपिच,

[1] जइ जिणमयं पमाणं मुणि त्ति तो बज्झकरणपरिसुद्धं । देवं पि वन्दमाणो विसुद्धभावो विसुद्धो त्ति ॥२३७७॥

यदि जिनमतं भवतां प्रमाणम्, तर्हि 'मुनिः' इत्यनया बुद्ध्या आलय-विहारादिबाह्यकरणपरिशुद्धं देवमपि- अमरमपि वन्दमानो विशुद्धभावो भवेद् दोषरहितो विशुद्ध एव । उक्तं चागमे—

"[2]परमरहस्समिसीणं समत्तगणिपिडगभवियसाराणं । परिणामियं पमाणं निच्छयमवलंबमाणाणं ॥ १ ॥"

इत्यादि ॥ २३७७ ॥

अथवा,

[3] जह वा सो जइरूवो दिट्ठो तह कित्तिया सुरा अन्ने । तुब्भेहिं दिट्ठपुव्वा सव्वत्थापच्चओ जं भे ॥२३७८॥

'वा' इत्यथवा, यथाऽऽर्याषाढदेवो यतिरूपधरोऽत्र दृष्टस्तथा कियन्तः सुरास्ततोऽन्ये भवद्भिर्दृष्टपूर्वाः, यदेतावन्मात्रेणापि सर्वत्राप्रत्ययो 'भे' भवताम् ?। न हि कदाचित् कथञ्चित् कचिदाश्चर्यकल्पे कस्मिंश्चित् तथाविधे दृष्टे सर्वत्र तथाभावाशङ्का युज्यत इति भावः। तस्माद् व्यवहारनयमाश्रित्य युक्तं भवतामन्योन्यवन्दनादिकम् । उक्तं च —

"[4]निच्छयओ दुन्नेयं को भावे कम्मि वट्टए समणो । संववहारो य जुज्जइ जो पुव्वट्ठिओ चरित्तम्मि ॥ १ ॥"

इत्यादि ॥ २३७८ ॥

एतदेव समर्थयन्नाह—

[5] छउमत्थसमयचज्जा ववहारनयाणुसारिणी सव्वा । तं तह समायरंतो सुज्झइ सव्वो विसुद्धमणो ॥ २३७९ ॥

---

१ यदि जिनमत प्रमाणं मुनिरिति ततो बाह्यकरणपरिशुद्धम् । देवमपि वन्दमानो विशुद्धभावो विशुद्ध इति ॥ २३७७ ॥
२ परमरहस्यमृषीणां समस्तगणिपिटकभव्यसाराणाम् । पारिणामिक प्रमाणं निश्चयमवलम्बमानानाम् ॥ १ ॥
३ यथा वा स यतिरूपो दृष्टस्तथा कियन्तः सुरा अन्ये ? । युष्माभिर्दृष्टपूर्वाः सर्वत्राप्रत्ययो यद् भवताम् ॥ २३७८ ॥
४ निश्चयतो दुर्ज्ञानं को भावे कस्मिन् वर्तते श्रमण. ? । व्यवहारतश्च युज्यते यः पूर्वस्थितश्चारित्रे ॥ १ ॥
५ छद्मस्थसमयचर्या व्यवहारनयानुसारिणी सर्वा । तां तथा समाचरन् शुध्यति सर्वो विशुद्धमनाः ॥ २३७९ ॥

जीवपएसे जीवे त्ति वत्तव्वं सिया ? । नो इणट्ठे समट्ठे " इति । ततो यदि श्रुतं तत्र प्रमाणम्, ततोऽन्त्यप्रदेशस्यापि जीवत्वं नेष्टव्यम्, एकत्वात्, प्रथमाद्यन्यतरप्रदेशवत् । किञ्च, यदि श्रुतं हन्त ! प्रमाणीकरोषि, तदा सर्वेऽपि जीवप्रदेशाः परिपूर्णा जीवत्वेन श्रुते भणिताः, न त्वेक एव चरमप्रदेशः । तथा च तत्रैवाभिहितम्– "[1]जम्हा णं कसिणे पडिपुन्ने लोगागासपएसतुल्ले जीवे त्ति वत्तव्वं सिया" । अतः श्रुतप्रामाण्यमिच्छता भवता नैक एवान्त्यप्रदेशो जीवत्वेनैष्टव्य इति ॥ २३४३ ॥

अमुमेवार्थं दृष्टान्तेन साधयन्नाह—

[2]तंतू पडोवयारी न समत्तपडो य समुदिया ते उ । सव्वे समत्तपडओ सव्वपएसा तहा जीवो ॥ २३४४ ॥

एकस्तन्तुर्भवति समस्तपटोपकारी, तमप्यन्तरेण समस्तपटस्याभावात् । परं स एकस्तन्तुः समस्तपटो न भवति, किन्तु ते तन्तवः सर्वेऽपि समुदिताः समस्तपटव्यपदेशं लभन्त इति प्रतीतमेव । तथा जीवप्रदेशोऽप्येको जीवो न भवति, किन्तु सर्वेऽपि जीवप्रदेशाः समुदिता जीव इति ॥ २४३४ ॥

ननु प्राग् यदुक्तम्– '[3]नेयमयमयाणमाणस्स दिट्ठिमोहो समुप्पण्णो' इति । तत् कस्य नयस्यैवं मतम् ? इत्येतद् व्यक्तीकरणपूर्वकमुपदेशमाह—

[4]एवंभूयनयमयं देस-पएसा न वत्थुणो भिन्ना । तेणावत्थु त्ति मया कसिणं चिय वत्थुमिट्ठं से ॥२३४५॥

जइ तं पमाणमेवं कसिणो जीवो अहोवयाराओ । देसे वि सव्वबुद्धी पवज्ज सेसे वि तो जीवं ॥२३४६॥

एवंभूतनयस्येदं मतं यदुत– देश-प्रदेशा न वस्तुनो भिन्नाः, तेन तावत्वस्तुरूपौ मतौ । अतो देश-प्रदेशकल्पनारहितं कृत्स्नं परिपूर्णमेव वस्तु 'से' तस्यैवंभूतनयस्येष्टम् । ततो यदि तदेवंभूतनयमतं प्रमाणं जानासि त्वम्, एवं तर्हि कृत्स्नः परिपूर्णो जीवो, न त्वन्त्यप्रदेशमात्रमिति प्रतिपद्यस्व । अथ 'ग्रामो दग्धः' 'पटो दग्धः' इत्यादिन्यायादेकदेशेऽपि सतस्तवस्तूपचारादन्त्यप्रदेशलक्षणे देशेऽपि समस्तजीवबुद्धिस्तत्र प्रवर्तते, तर्हि शेषे प्रथमादिप्रदेश उपचारतो जीवं प्रतिपद्यस्व, न्यायस्य समानत्वादिति ॥ २३४५ ॥ २३४६ ॥

---

१ पृ० ९४६ । २ तन्तुः पटोपकारी न समस्तपटश्च समुदितास्ते तु । सर्वे समस्तपटक. सर्वप्रदेशास्तथा जीव· ॥ २३४४ ॥

३ गाथा २३३५ । ४ एवंभूतनयमतं देश-प्रदेशौ न वस्तुनो भिन्नौ । तेनावस्त्विति मतौ कृत्स्नमेव वस्त्विष्टं तस्य ॥ २३४५ ॥
यदि तत् प्रमाणमेवं कृत्स्नो जीवोऽथोपचारात् । देशेऽपि सर्वबुद्धि· प्रपद्यस्व शेषानपि ततो जीवम् ॥ २३४६ ॥

संववहारो वि बली जमसुद्धं पि गहियं सुयविहीए। कोवेइ न सव्वण्णू वंदइ य कयाइ छउमत्थं ॥ २३८० ॥
निच्छयववहारनओवणीयमिह सासणं जिणिंदाणं। एगयरपरिच्चाओ मिच्छं संकादओ जे य ॥ २३८१ ॥
जह जिणमयं पवज्जह तो मा ववहारनयमयं मुयह। ववहारपरिच्चाए तित्थुच्छेओ जओऽवस्सं ॥ २३८२ ॥

चतस्रोऽपि सुगमाः। नवरं 'कोवेईत्यादि' न कोपयति नाप्रमाणीकरोति न परिहरति भुङ्क्ते इत्यर्थः। 'संकादउ इत्यादि' येऽपि शङ्का-काङ्क्षादयस्ते हि मिथ्यात्वमिति संबन्धः ॥ २३७९ ॥ २३८० ॥ २३८१ ॥ २३८२ ॥

एतावत्युक्ते ततः किं तत्र संजातम्? इत्याह—

इय ते नासग्गाहं मुयंति जाहे बहुं पि भण्णंता। ता संघपरिच्चत्ता रायगिहे निवतिणा नाउं ॥ २३८३ ॥
बलभद्देणग्घाया भणंति सावय वं तवस्सि त्ति। मा कुरु संकमसंकारुहेसु भणिए भणइ राया ॥ २३८४ ॥
को जाणइ के तुब्भे किं चोरा चारिआ अभिमर त्ति। संजयरूवच्छण्णा अज्जमहं भे विवाएमि ॥२३८५॥
नाण-चरियाहिं नज्जइ समणोऽसमणो व कीस जाणंतो। तं सावय! संदेहं करेसि भणिए निवो भणइ ॥२३८६॥
तुब्भं चिय न परुप्परं वीसंभो साहवो त्ति कह मज्झं। नाण-चरियाहिं जायइ चोराण वि किं न ता संति? ॥२३८७॥

संव्यवहारोऽपि बली यदशुद्धमपि गृहीतं श्रुतविधिना। कोपयति न सर्वज्ञो वन्दते च कदाचिच्छद्मस्थम् ॥ २३८० ॥
नैश्चयव्यवहारनयोपनीतमिह शासनं जिनेन्द्राणाम्। एकतरपरित्यागो मिथ्यात्वं शङ्कादयो ये च ॥ २३८१ ॥
यदि जिनमतं प्रपद्यध्व ततो मा व्यवहारनयमतं मुञ्चत। व्यवहारपरित्यागे तीर्थोच्छेदो यतोऽवश्यम् ॥ २३८२ ॥
इति ते नासद्ग्रहं मुञ्चन्ति यावद् बह्वपि भण्यमानाः। तावत् संघपरित्यक्ता राजगृहे नृपतिना ज्ञात्वा ॥ २३८३ ॥
बलभद्रेणाघ्राता भणन्ति श्रावक! वयं तपस्विन इति। मा कुरु शङ्कामशङ्कारुहेषु भणिते भणति राजा ॥ २३८४ ॥
को जानाति के यूयं किं चौराश्चारिका अभिमरा इति। संयतरूपच्छन्ना अद्याहं भवतो व्यापादयामि ॥ २३८५ ॥
ज्ञान-चर्याभ्यां ज्ञायते श्रमणोऽश्रमणो वा कस्माज्जानन्। त्वं श्रावक! संदेहं करोषि भणिते नृपो भणति ॥ २३८६ ॥
युष्माकमेव न परस्परं विस्रम्भः साधव इति कथं मम। ज्ञान-चर्याभ्यां जायते चौराणामपि किं न ते स्तः? ॥ २३८७ ॥

अथवा, अभ्युपगम्येदमुक्तम्, न चैकप्रदेशमात्रे सर्वजीवोपचारो युज्यत इति दर्शयन्नाह--

[1]जंत्तो व तदुवयारो देसूणे न उ पएसमेत्तम्मि। जह तंतूणम्मि पडे पडोवयारो न तंतुम्मि ॥२३४७॥

अथवा, उपचारादप्येक एवान्त्यप्रदेशो जीवो न भवति, किन्तु देशोन एव जीवे जीवोपचारो युज्यते, यथा तन्तुभिः कतिपयैरूने पटे पटोपचारो दृश्यते, न त्वेकस्मिंस्तन्तुमात्र इति ॥ २३४७ ॥

एवं गुरुणाऽभिहिते ततः किम्? इत्याह--

[2]इय पण्णविओ जाहे न पवज्जइ सो कओ तओ बज्झो। ततो आमलकप्पाए मित्तसिरिणा सुहोवायं ॥२३४८॥

भक्खण-पाण-वंजण-वत्थंतावयवलाभिओ भणइ। सावय! विधम्मिया म्हे कीस त्ति तओ भणइ सड्ढो ॥२३४९॥

नणु तुज्झं सिद्धंतो पज्जंतावयवमित्तओऽवयवी। जइ सच्चमिणं तो का विहम्मणा मिच्छमिहरा भे ॥२३५०॥

गतार्था एव। नवरमिति पूर्वोक्तप्रकारेण गुरुभिः प्रज्ञापितस्तिष्यगुप्तो यावद् न किञ्चित् प्रतिपद्यते तत उद्घाट्य बाह्यः कृतो विहरन्नामलकल्पां नगरीं गत्वाऽऽम्रसालवने स्थितः। तत्र मित्रश्रीश्रावकेण 'निह्नवोऽयम्' इति ज्ञात्वा तत्प्रतिबोधनार्थं गत्वा निमन्त्रितः- 'यद् मदीयगृहे प्रकरणमद्य तत्र भवद्भिः स्वयमागन्तव्यम्'। ततो गतास्ते तद्गृहे। तेन च तत्र तिष्यगुप्तमुपवेश्य महान्तं संभ्रममुपदर्शयता तत्पुरतो भक्ष्य-भोज्या-ऽन्न-पान-व्यञ्जन-वस्त्रादिवस्तुनिचया विस्तारिताः। ततस्तेषां मध्ये सर्वत्रान्त्यावयवान् गृहीत्वा प्रतिलाभितोऽसौ कूर-सिक्थादिना प्रतिलाभित इत्यर्थः। ततो भणत्यभिधत्ते- 'हे श्रावक! विधर्मिताः किमिति त्वया वयमित्थम्?'। ततः श्राद्धो भणति- 'नणु तुज्झमित्यादि'। 'मिच्छमिहरा भे त्ति' अन्यथा यदि नेदं सत्यम्, तदा सर्वमपि मिथ्या भवतां भाषितमिति ॥ २३४८ ॥ २३४९ ॥ २३५० ॥

अपि च,

१ यतो वा तदुपचारो देशोने न तु प्रदेशमात्रे। यथा तन्तूने पटे पटोपचारो न तन्तौ ॥ २३४७ ॥

२ इति प्रज्ञापितो यावद् न प्रपद्यते स कृतस्ततो बाह्यः। तत आमलकल्पायां मित्रश्रिया सुखोपायम् ॥ २३४८ ॥
भक्षण-पान व्यञ्जन-वस्त्रान्तावयवलाभितो भणति। श्रावक! विधर्मिता वयं कस्मादिति ततो भणति श्राद्धः ॥ २३४९ ॥
ननु तव सिद्धान्तः पर्यन्तावयवमात्रतोऽवयवी। यदि सत्यमिदं तत का विधर्मता मिथ्यात्वमितरथा भवताम् ॥ २३५० ॥

[1]उववत्तिओ भयाओ य पव्वण्णा सव्वमयमसग्गाहे। निवखामियाभिगंतुं गुरुमूलं ते पडिक्कंता ॥२३८८॥

सर्वा अप्युक्तार्थाः, सुगमाश्च। नवरं नृपतिना वलभद्रेण 'ते आगताः' इति ज्ञात्वाऽऽघ्राता आहूताः 'के यूयम्?' इति पृष्टाश्च भणन्ति– 'हे श्रावक! इत्यादि'। 'नाण-चरियाहिं ति' ज्ञान-क्रियाभ्यां यो भवतामपि 'साधवः' इति विस्रम्भः परस्परं नास्ति स ताभ्यां कथं मम जायते?। अपिच, किं ते कृत्रिमे ज्ञान-क्रिये चौराणामपि न स्तो– न भवतः? ॥ इति त्रयस्त्रिंशद्गाथार्थः ॥२३८३॥ २३८४ ॥ २३८५ ॥ २३८६ ॥ २३८७ ॥ २३८८ ॥

॥ इति तृतीयोऽव्यक्ताभिधाननिह्नववादः समाप्तः ॥

अथ चतुर्थवक्तव्यतामाह—

[2]वीसा दो वाससया तइया सिद्धिं गयस्स वीरस्स। सामुच्छेइयदिट्ठी मिहिलपुरीए समुप्पन्ना ॥२३८९॥

विंशत्युत्तरं वर्षशतद्वयं तदा सिद्धिं गतस्य वीरस्यासीत्। ततोऽत्रान्तरे सामुच्छेदिकदृष्टिर्मिथिलापुर्यां समुत्पन्नेति ॥२३८९॥

यथोत्पन्ना तथा दर्शयन्नाह—

[3]मिहिलाए लच्छिघरे महगिरि कोडिन्न आसमित्ते य। नेउणियाणुप्पवाए रायगिहे खंडरक्खा य ॥२३९०॥

मिथिलानगर्यां लक्ष्मीगृहे चैत्ये महागिरिसूरीणां कौण्डिन्यो नाम शिष्यः स्थितः। तस्याप्यश्वमित्रो नाम शिष्योऽनुप्रवादाभिधानपूर्वे नैपुणिकं नाम वस्तु पठति स्म। तत्र च्छिन्नच्छेदनकनयवक्तव्यतायामालापकाः समायाताः, तद्यथा– "[4]पडुप्पन्नसमयनेरइया सव्वे वोच्छिज्जिस्संति, एवं जाव वेमाणिय त्ति, एवं बीयाइसमएसु वि वत्तव्वं"। अत्र तस्य चिकित्सा जाता, तद्यथा– 'प्रत्युत्पन्नसमयनारकाः सर्वेऽपि तावद् व्यवच्छेदं प्राप्स्यन्ति, ततश्च कुतः सुकृत-दुष्कृतकर्मफलवेदनम्, उत्पादानन्तरं सर्वजीवानां नाशात्?' इति। एवमादि स्वमतिकल्पितं प्ररूपयन् वक्ष्यमाणभाष्ययुक्तिभिर्गुरुणा प्रज्ञाप्यमानोऽपि यावत् कथमपि न प्रज्ञाप्यते तत उद्घाट्य संघबाह्यः

---

१ उपपत्तितो भयाच्च प्रपन्नाः सर्वमतमसद्ग्राहे। नृपक्षामिता अभिगत्य गुरुमूलं ते प्रतिक्रान्ता ॥ २३८८ ॥
२ विंशत्या द्वे वर्षशते तदा सिद्धिं गतस्य वीरस्य। सामुच्छेदिकदृष्टिर्मिथिलापुर्यां समुत्पन्ना ॥ २३८९ ॥
३ मिथिलायां लक्ष्मीगृहे महागिरि कौण्डिन्य अश्वमित्रश्च। नैपुणिकमनुप्रवादे राजगृहे खण्डरक्षाश्च ॥ २३९० ॥
४ प्रत्युत्पन्नसमयनैरयिका. सर्वे व्यवच्छेत्स्यन्ति, एवं यावद् वैमानिका इति, एव द्वितीयादिसमयेष्वपि वक्तव्यम्।

[1]अंतोऽवयवो न कुणइ समत्तकज्जं ति जइ न सोऽभिमओ। संववहाराईए तो तम्मि कओऽवयविग्गाहो ?॥२३५१॥

यदि नामान्त्यावयवः समस्तस्याप्यवयविनो यत् साध्यं कार्यं तद् न करोति, इत्यतोऽसौ नाभिमतो भवताम्– कूर-पक्वान्न-वस्त्रादीनां सिक्थ-सुकुमारिकादिसूक्ष्मखण्डतन्त्वादिरूपोऽन्त्यावयवो यदि न परितोषकरो भवतामित्यर्थः, तर्हि संव्यवहारातीते तस्मिन्नन्त्यावयवे कुतः किल समस्तावयविग्रहो भवताम् ? इति ॥ २३५१ ॥

प्रमाणयन्नाह—

[2]अंतिमततू न पडो तक्कज्जाकरणओ जहा कुंभो। अह तयभावे वि पडो सो किं न घडो खपुप्फं व ?॥२३५२॥

अन्त्यतन्तुमात्रं न पटः, तस्य पटस्य कार्यं शीतत्राणादिकं तत्कार्यं तस्याकरणं तत्कार्याकरणं तस्मादिति। यथा कुम्भो घटः। अथ तदभावेऽपि पटकार्याभावेऽपि तन्तुः पट इष्यते, तर्हि किमित्यसौ पटो घटः खपुष्पं वा न भवति, पटकार्याकर्तृत्वस्याविशेषादिति ॥ २३५२ ॥

तथा[3],

[4]उवलंभव्ववहाराभावाओ नत्थि ते खपुप्फं व। अंतावयवेऽवयवी दिट्ठंताभावओ वावि ॥ २३५३ ॥

तवाभिमतोऽवयवी अन्त्यावयवे नास्ति, उपलब्धिलक्षणप्राप्तस्यानुपलब्धेः, व्यवहाराभावाच्च, खपुष्पवदिति। अथवा, 'अन्त्यावयवमात्रमवयवी, अवयविसंपूर्णहेतुत्वात्' इत्यत्र तावद् दृष्टान्ताभावाद् न साध्यसिद्धिरिति ॥ २३५३ ॥

यदि नाम नोपलभ्यते, नापि व्यवह्रियते, दृष्टान्ताभावाच्च नानुमीयते, ततः किम् ? इत्याह—

[5]पच्चक्खओऽणुमाणादागमओ वा पसिद्धी अत्थाणं। सव्वप्पमाणविसयाईयं मिच्छत्तमेवं भे ॥२३५४॥

प्रत्यक्षादिप्रमाणैरर्थानां सिद्धिः, तानि च त्वत्पक्षसाधकत्वेन न प्रवर्तन्ते। अतः सर्वप्रमाणविषयातीतं 'भे' भवतामभिमतं मिथ्यात्वमेवेति ॥ २३५४ ॥

---

१ अन्त्योऽवयवो न करोति समस्तकार्यमिति यदि न सोऽभिमतः। संव्यवहारातीते ततस्तस्मिन् कुतोऽवयविग्रहः ? ॥ २३५१ ॥

२ अन्तिमतन्तुर्न पटस्तत्कार्याकरणतो यथा कुम्भः। अथ तदभावेऽपि पटः स किं न घट· खपुष्प वा ? ॥ २३५२ ॥ ३ क. ग. 'थाहि'।

४ उपलम्भव्यवहाराभावाद् नास्ति तव खपुष्पमिव। अन्त्यावयवेऽवयवी दृष्टान्ताभावतो वापि ॥ २३५३ ॥

५ प्रत्यक्षतोऽनुमानादागमतो वा प्रसिद्धिरर्थानाम्। सर्वप्रमाणविषयातीतं मिथ्यात्वमेव भवताम् ॥ २३५४ ॥

कृतः समुच्छेदवादं प्ररूपयन् काम्पिल्यपुरनगरं राजगृहापरनामकं गतः। तत्र च खण्डरक्षाभिधानाः श्रावका आसन्, ते शुल्कपालाः। तैश्च ते निह्नवाः समागता विज्ञाता मारयितुं चारब्धाः। ततो भीतैरश्वमित्रादिभिस्ते प्रोक्ताः– 'वयं न जानीमः– श्रावका यूयम्, तत्किमस्मान् श्रमणान् सतो मारयथ ?'। ततस्तैरुक्तम्– 'ये श्रमणास्ते युष्मत्सिद्धान्तेन समुच्छिन्नाः, यूयं तु चौराद्यन्यतराः केचिदिति मारयामः'। ततस्तैर्भीतैर्मुक्तो निजाग्रहः, संबुद्धाश्च दत्तमिथ्यादुष्कृता गता गुरुपादमूल इति ॥ २३९० ॥

अस्य निर्युक्तिगाथाद्वयस्य भाष्यम्––

[1]नेउणमणुप्पवाए अहिज्जओ वत्थुमास मित्तस्स। एगसमयाइवोच्छेयसुत्तओ नासपडिवत्ती ॥२३९१॥

उप्पायाणंतरओ सव्वं चिय सव्वहा विणासि त्ति। गुरुवयणमेगनयमयमेयं मिच्छं न सव्वमयं ॥२३९२॥

अनुप्रवादपूर्वमध्यगतं नैपुणं वस्त्वधीयानस्याश्वमित्रस्य पूर्वोक्तादेकसमयादिव्यवच्छेदसूत्राद् नाशप्रतिपत्तिरुत्पन्ना। कोऽर्थः ? इत्याह– 'उत्पादानन्तरमेव सर्वं वस्तु सर्वथा विनश्वररूपम्' इत्येवंभूतो बोधः समुत्पन्नः। अत्र प्रतिविधानार्थं गुरुवचनम्– 'ननु प्रतिसमयविनाशित्वं वस्तूनाम्' इत्येतदेकस्यैव क्षणक्षयवादिन ऋजुसूत्रनयस्य मतम्, न तु सर्वनयमतम्, ततो मिथ्यात्वमेवेति॥२३९१॥२३९२॥

कुतः पुनरेतद् मिथ्यात्वम् ? इत्याह—

[2]न हि सव्वहा विणासोऽद्धापज्जायमेत्तनासम्मि। स-परपज्जायाणंतधम्मणो वत्थुणो जुत्तो ॥ २३९३ ॥

न हि सर्वथैव वस्तुनो विनाशो युक्तः। क सति ? इत्याह– अद्धापर्यायमात्रनाशे। तत्रेहाद्धा नारकादीनामुत्पत्तिप्रथमादिसमयः, स एव पर्यायमात्रं तस्य नाशोऽपगमस्तस्मिन् सति। कथंभूतस्य वस्तुनः ? इत्याह– स्व-परपर्यायानन्तधर्मकस्य। इदमुक्तं भवति– यस्मिन्नेव समये तद् नारकवस्तु प्रथमसमयनारकत्वेन समुच्छिद्यते तस्मिन्नेव समये द्वितीयसमयनारकत्वेनोत्पद्यते, जीवद्रव्यतया त्ववतिष्ठते। अतो यदि नामाद्धापर्यायमात्रमुच्छिन्नम्, ततः सर्वस्यापि वस्तुनः समुच्छेदे किमायातम्, अनन्तपर्यायात्मकस्य वस्तुन एकपर्यायमात्रोच्छेदे सर्वोच्छेदस्य दूरविरुद्धत्वात् ? इति ॥ २३९३ ॥

अत्र पराभिप्रायमाशङ्क्य परिहरति—

१ नैपुणमनुप्रवादेऽधीयानस्य वस्त्वश्वमित्रस्य। एकसमयादिव्यवच्छेदसूत्रतो नाशप्रतिपत्तिः ॥ २३९१ ॥
उत्पादानन्तरतः सर्वमेव सर्वथा विनाशीति। गुरुवचनमेकनयमतमेतद् मिथ्या न सर्वमतम् ॥ २३९२ ॥

२ न हि सर्वथा विनाशोऽद्धापर्यायमात्रनाशे। स्व-परपर्यायानन्तधर्मणो वस्तुनो युक्तः ॥ २३९३ ॥

तदेवं मित्रश्रीश्रावकेणोक्ते स किं कृतवान् ? इत्याह—

ईय चोइय संबुद्धो खामियपडिलाभिओ पुणो विहिणा। गंतुं गुरुपायमूलं ससीसपरिसो पडिक्कंतो ॥२३५५॥

इति प्रेरितः संबुद्धोऽसौ विहितक्षमितक्षामितेन मित्रश्रीश्रावकेण संपूर्णान्नप्रदानादिविधिना पुनरपि प्रतिलाभितो गुरुपादमूलं गत्वा शिष्यपरिषत्समेतो विधिना प्रतिक्रान्तः सम्यग् मार्गं प्रपन्नो गुर्वन्तिके विजहार ॥ इति त्रयोविंशतिगाथार्थः ॥ २३५५ ॥

॥ इति जीवप्रदेशवादी तिष्यगुप्तनामा द्वितीयो निह्नवः समाप्तः ॥

अथ तृतीयनिह्नववक्तव्यतामाह—

[2]चउदस दो वाससया तइआ सिद्धिं गयस्स वीरस्स। तो अव्वत्तयदिट्ठी सेयविआए समुप्पण्णा ॥२३५६॥

चतुर्दशाधिकवर्षशतद्वयं तदा श्रीमन्महावीरस्य सिद्धिगतस्यासीत् । ततोऽव्यक्ताभिधाननिह्नवानां दृष्टिर्दर्शनरूपा श्वेतविकायां नगर्यां समुत्पन्नेति ॥ २३५६ ॥

कथम् ? इत्याह—

[3]सेयविपोलासाढे जोगे तद्दिवसहिययसूले य। सोहम्मनलिणिगुम्मे रायगिहे मूरियबलभद्दे ॥२३५७॥

श्वेतविकाया नगर्याः पौलाषाढचैत्य आर्याषाढनामान आचार्याः स्थिताः। तेषां च बहवः शिष्या आगाढयोगान् प्रपन्नाः। अपरवाचनाचार्यासत्त्वे च त एवार्याषाढसूरयस्तेषां वाचनाचार्यत्वं प्रतिपन्नाः। तथाविधकर्मविपाकतश्च ते तत्रैव दिवसे रजन्यां हृदयशूलेन कालं कृत्वा सौधर्मदेवलोके नलिनीगुल्मविमाने देवत्वेनोत्पन्नाः। न च विज्ञाताः केनापि गच्छमध्ये। ततोऽवधिना प्राक्तनव्यतिकरं विज्ञाय साध्वनुकम्पया समागत्य तदेव शरीरमधिष्ठाप्योत्थाप्य च प्रोक्तास्तेन साधवः— यथा वैरात्रिककालं गृह्णीत। ततः कृतं साधुभिस्तथैव। श्रुतस्योद्देश-समुद्देशा-ऽनुज्ञाश्च तदग्रतः कृताः। एवं दिव्यप्रभावतस्तेन देवेन तेषां साधूनां कालभङ्गादिविघ्नं

१ इति चोदित संबुद्ध क्षामितप्रतिलाभित पुनर्विधिना। गत्वा गुरुपादमूल सशिष्यपरिषत् प्रतिक्रान्त ॥ २३५५ ॥
२ चतुर्दश द्वे वर्षशते तदा सिद्धिं गतस्य वीरस्य। ततोऽव्यक्तकदृष्टिः श्वेतविकायां समुत्पन्ना ॥ २३५६ ॥
३ श्वेतविकापौलाषाढे योगे तद्दिवसहृदयशूले च। सौधर्मनलिनीगुल्मे राजगृहे मौर्यबलभद्रः ॥ २३५७ ॥

अह सुत्ताउ त्ति मई सुत्ते नणु सासयंपि निद्दिट्ठं । वत्थुं दव्वट्ठाए असासयं पज्जयट्ठाए ॥ २३९४ ॥

अथ पूर्वोक्तालापकरूपात् सूत्रात् सूत्रप्रामाण्यात् प्रतिसमयं सर्वथा वस्तूच्छेदः प्रतिपाद्यत इति तव मतिः। ननु यदि सूत्रं तव प्रमाणम्, तर्हि सूत्रे द्रव्यार्थतया शाश्वतमपि वस्त्वन्यत्रोक्तमेव, पर्यायार्थतयैव चाशाश्वतम्; तथा च सूत्रम्– "नेरइया णं भंते ! किं सासया, असासया ?। गोयमा ! सिय सासया, सिय असासया। से केणट्ठेणं ?। गोयमा ! दव्वट्ठयाए सासया, भावट्ठयाए असासया" इति ॥ २३९४ ॥

अपिच,

एत्थ वि न सव्वनासो समयाइविसेसणं जओऽभिहियं । को पढमसमयनारगनासे बितिसमयनारगो नाम। न सुरो घडो अभावो व होइ जइ सव्वहा नासो ?॥२३९६॥ इहरा न सव्वनासे समयाइविसेसणं जुत्तं॥२३९५॥

अत्रापि– 'प्रथमसमयनारका व्यवच्छेदं यास्यन्ति' इति सूत्रे न सर्वनाशः सर्वात्मना नाशो गम्यते । कुतः ? इत्याह– यतो यस्मात् समयादिविशेषणमभिहितम्, ततो न सर्वथा नाशोऽत्र गम्यते, किन्तु प्रथमसमयनारका व्यवच्छेत्स्यन्ति । कोऽर्थः । प्रथमसमयनारकत्वेन विनङ्क्ष्यन्ति। एवं द्वितीयादिसमयनारका अपि द्वितीयादिसमयनारकत्वेनैव विनङ्क्ष्यन्ति न तु सर्वथा, द्रव्यार्थतया शाश्वतत्वात् । इतरथा सर्वनाशेऽभिप्रेते प्रथमसमयादिविशेषणं न युक्तं स्यादिति । कथमयुक्तम् ? इत्याह– 'को पढमेत्यादि' प्रथमसमयोत्पन्नानां हि नारकाणां सर्वथा विनाशे को नाम द्वितीय-तृतीयादिसमयनारकः ?। अनास्थितस्यैव हि कस्याचित् प्रथम-द्वितीय-तृतीयादिसमयोत्पन्नविशेषणं युज्यते । यदि तु सर्वथा नाशः, तर्हि प्रथमसमयोत्पन्ननारकस्य निरन्वयनाशेन नष्टत्वाद् द्वितीयसमयोत्पन्नो नारक इति व्यपदेष्टुं कथं युज्यते, यन्नारकात् सर्वथा विलक्षणत्वादसौ सुरो घटोऽभावो वा नोच्यते ?। सुरादिव्यपदेशे च न द्वितीयादिसमयनारकाः। तस्मात् प्रथम-द्वितीय-तृतीयादिसमयोत्पन्ना इति विशेषणं कथञ्चिदवस्थितस्यैव नारकादेर्युज्यत

१ अथ सूत्रादिति मतिः सूत्रे ननु शाश्वतमपि निर्दिष्टम्। वस्तु द्रव्यार्थतयाऽशाश्वतं पर्यायार्थतया ॥ २३९४ ॥
२ नैरयिका भगवन्! किं शाश्वता अशाश्वता ?। गौतम ! स्यात् शाश्वताः, स्यादशाश्वताः । तत् केनार्थेन ?। गौतम ! द्रव्यार्थतया शाश्वताः, भावार्थतया अशाश्वताः ।
३ अत्रापि न सर्वनाश समयादिविशेषण यतोऽभिहितम्। इतरथा न सर्वनाशे समयादिविशेषण युक्तम् ॥ २३९५ ॥
क प्रथमसमयनारकनाशे द्वितीयसमयनारको नाम । न सुरो घटोऽभावो वा भवति यदि सर्वथा नाश. ? ॥ २३९६ ॥

रक्षता शीघ्रमेव निस्तारिता योगाः। ततोऽनेन तच्छरीरं मुक्त्वा दिवं गच्छता प्रोक्ताः साधवो यथा क्षमणीयं भदन्तैर्यदसंयतेन सता मयाऽऽत्मनो वन्दनादि कारिताश्चारित्रिणो यूयम्। अहं ह्यमुकादिने कालं कृत्वा दिवं गतो युष्मदनुकम्पयाऽत्रागतः, निस्तारिताश्च भवतामागाढयोगाः। इत्याद्युक्त्वा क्षमयित्वा च स्वस्थानं गतः। ततस्ते साधवस्तच्छरीरकं परिष्ठाप्य चिन्तयन्ति– 'अहो! असंयतो बहुकालं वन्दितः। तदित्थमन्यत्रापि शङ्का, को जानाति– 'कोऽपि संयतः, कोऽप्यसंयतो देवः?। इति' सर्वस्याप्यवन्दनमेव श्रेयः, अन्यथा ह्यसंयतवन्दनं मृषावादश्च स्यात्। इत्थं तथाविधगुरुकर्मोदयात् तेऽपरिणतमतयः साधवोऽव्यक्तमतं प्रतिपन्नाः परस्परं न वन्दन्ते। ततः स्थविरैस्तेऽभिहिताः, यदि परस्मिन् सर्वत्र भवतां संदेहः, तर्हि येनोक्तम्– 'देवोऽहम्' इति, तत्रापि भवतां कथं न संदेहः?– किं स देवोऽदेवो वा? इति। यदि तेन स्वयमेव कथितं– 'अहं देवः' तथा, देवरूपं च प्रत्यक्षत एव दृष्टम्, इति न तत्र संदेहः। हन्त! यद्येवम्, तर्हि य एवं कथयन्ति– 'वयं साधवः' तथा, साधुरूपं प्रत्यक्षत एव दृश्यते, तेषु कः साधुत्वसंदेहः, येन परस्परं यूयं न वन्दध्वे?। न च साधुवचनाद् देववचनं सत्यमिति शक्यते वक्तुम्। देववचनं हि क्रीडाद्यर्थमन्यथापि संभाव्यते, न तु साधुवचनम्, तद्विरतत्वात् तेषामिति। एवं च युक्तिभिर्यावद् न प्रज्ञाप्यन्ते तावदुद्घाट्य बाह्याः कृताः। पर्यटन्तश्च राजगृहनगरं गताः। तत्र च मौर्यवंशसंभूतो बलभद्रो नाम राजा। स च श्राद्धः। ततस्तेन ते विज्ञाता यथाऽव्यक्तवादिनो निह्नवा इह समायाता गुणशिलकचैत्ये तिष्ठन्ति। ततः स्वपुरुषान् प्रेष्य राजकुल आनायितास्तेन ते। कटकमर्दनेन मारणार्थं चानुज्ञाताः। ततो हस्तिनि कटकेषु च तन्मर्दनार्थमानीतेषु तैः प्रोक्तम्– 'राजन्! वयं जानीमः– 'श्रावकस्त्वम्' तत् कथमस्मान् श्रमणानित्थं मारयसि?'। ततो राज्ञा प्रोक्तम्– 'युष्मत्सिद्धान्तेनैव को जानाति 'किं श्रावकोऽहं नवा?'। भवन्तोऽपि किं चौराः, चारिकाः, अभिमरा वा? इत्यपि को वेत्ति?। तैः प्रोक्तम्– 'साधवो वयम्'। यद्येवम्, अव्यक्तवादितया किमिति परस्परमपि यथाज्येष्ठं वन्दनादिकं न कुरुथ?। इत्यादिनिष्ठुरैर्मृदुभिश्च वचनैः प्रोक्तास्ते नरपतिना। ततः संबुद्धा लज्जिताश्च निःशङ्किताः सन्मार्गं प्रतिपन्नाः। ततो राज्ञा प्रोक्तम्– 'भवतां संबोधनार्थमिदं मया सर्वमपि विहितम्' इति क्षमणीयमिति ॥ २३५७ ॥

अमुमेवार्थं भाष्यकारः प्राह—

गुरुणा[1] देवीभूएण समणरूवेण वाइया सीसा। सब्भावे परिकहिए अव्वत्तयदिट्ठिणो जाया ॥ २३५८ ॥

गतार्था ॥ २३५८ ॥

1 गुरुणा देवीभूतेन श्रमणरूपेण वादिता. शिष्याः। सद्भावे परिकथितेऽव्यक्तकदृष्टयो जाताः ॥ २३५८ ॥



॥९५३॥

इत्यस्मिन्नपि सूत्रे न नारकादेः सर्वोच्छेदः प्रतिपाद्यते । इति निर्मूल एव निजाशुभकर्मविपाकजनितस्तवैष व्यामोह इति ॥ २३९५ ॥ २३९६ ॥

अथ पराशङ्कापरिहारार्थमाह—

[1]अहव समाणुप्पत्ती समाणसंताणओ मई होज्जा । को सव्वहा विणासे संताणो किं व सामण्णं ?॥२३९७॥

अथवैवंभूता मतिः परस्य भवेद् यदुत– नारकादीनां प्रतिसमयमपरापरसमानक्षणोत्पत्तिर्भवति । ततस्तया समानक्षणोत्पत्त्या यः समानक्षणसंततिरूपः संतानस्तस्मात् संतानात् संतानमाश्रित्य नारकादेः कथञ्चिद् ध्रौव्यमन्तरेणापि प्रथम-द्वितीयादिसमयोत्पन्नविशेषणमुपपद्यत एव । अत्रोत्तरमाह— 'को सव्वहेत्यादि' । ननु सर्वथा विनाशे समुच्छेदेऽङ्गीक्रियमाणे कः कस्य संतानः, किं वा कस्य समानम् ? इति निर्निबन्धनमेवेदमुच्यते । न हि निरन्वयविनाशेऽवस्थिताः केचनापि नारकादिक्षणाः सन्ति, यानाश्रित्येदमुच्यते– 'अयमेषां सन्तानः, इदं चास्य समानम्' इति ॥ २३९७ ॥

किञ्च,

[2]संताणिणो न भिण्णो जइ संताणो न नाम संताणो । अह भिण्णो न क्खणिओ खणिओ वा जइ न संताणो ॥२३९८॥

यदि सन्तानिभ्यो न भिन्नः किन्त्वभिन्नः संतानः, तर्हि न नामासौ संतानः, संतानिभ्योऽनर्थान्तरभूतत्वात्, तत्स्वरूपवत् । अथ संतानिभ्यो भिन्नः संतानः, तर्हि क्षणिकोऽसौ नेष्टव्यः, अवस्थितत्वाभ्युपगमात् । अथ क्षणिकोऽसाविष्यते, तर्हि नासौ संतानः, संतानिवत् । ततस्त एव संतानाभावपक्षोक्ता दोषा इति । तदेवं सर्वथोच्छेदेऽभ्युपगम्यमाने संतान उत्पद्यत इति भावितम् ॥ २३९८ ॥

अथ यदुक्तम्– '[3]किं व सामण्णं' इति । तद्भावनार्थमाह—

[4]पुव्वाणुगमे समया हुज्ज न सा सव्वहा विणासम्मि । अह सा न सव्वनासो तेण समं वा णणु खपुप्फं ॥२३९९॥

१ अथवा समानोत्पत्तिः समानसंतानतो मतिर्भवेत् । कः सर्वथा विनाशे संतानः किंवा सामान्यम् ? ॥ २३९७ ॥
२ संतानिनो न भिन्नो यदि संतानो न नाम संतानः । अथ भिन्नो न क्षणिकः क्षणिको वा यदि न संतानः ॥ २३९८ ॥ ३ गाथा २३९७ ।
४ पूर्वानुगमे समता भवेद् न सा सर्वथा विनाशे । अथ सा न सर्वनाशस्तेन समं वा ननु खपुष्पम् ॥ २३९९ ॥

कथमव्यक्तदृष्टयो जाताः ? इत्याह—

[1]को जाणइ किं साहू देवो वा तो न वंदणिज्जो त्ति । होज्जाऽसंजयनमणं होज्ज मुसावायमसुगो त्ति ॥२३५९॥

को जानाति– किमयं साधुवेषधारी साधुर्देवो वा ?– नास्त्येवात्र निश्चय इत्यर्थः । न च वक्तव्यम्– साधुरेवायम्, तद्वेष-समाचारदर्शनात्, भवानिव; आर्याषाढदेवेऽपि साधुवेष-समाचारदर्शनेनानैकान्तिकत्वात् । तस्माद् न कोऽपि वन्दनीयः, संशयविषयत्वात् । यदि पुनर्वन्द्यते तदाऽऽर्याषाढदेववन्दन इवासंयतवन्दनं स्यात् । तदमुको ब्रवीति– भाषणे च मृषावादः स्यादिति ॥ २३५९ ॥

अथ प्रतिविधानमाह—

[2]थेरवयणं जइ परे संदेहो किं सुरो त्ति साहु त्ति ? । देवे कहं न संका किं सो देवो न देवो त्ति ? ॥२३६०॥
तेण कहियं ति व मई देवोऽहं रूवदरिसणाओ य । साहु त्ति अहं कहिए समाणरूवम्मि का संका ? ॥२३६१॥
देवस्स व किं वयणं सच्चं ति न साहुरूवधारिस्स । न परोप्परं पि वन्दह जं जाणन्ता वि जयउ त्ति॥२३६२॥

तिस्रोऽप्युक्तार्थाः ॥ २३६० ॥ २३६१ ॥ २३६२ ॥

किञ्च, यदि प्रत्यक्षेष्वपि यतिषु भवतां शङ्का, तर्हि परोक्षेषु जीवादिषु सुतरामसौ प्राप्नोति, ततः सम्यक्त्वस्याप्यभाव इति दर्शयन्नाह—

[3]जीवाइपयत्थेसु य सुहुम-व्ववहिय-विगिट्ठरूवेसुं । अच्चंतपरोक्खेसु य किह न जिणाईसु भे संका? ॥२३६३॥

गतार्था ॥ २३६३ ॥

---

१ को जानाति किं साधुर्देवो वा ततो न वन्दनीय इति । भवेदसंयतनमन भवेद् मृषावादोऽमुक इति ॥ २३५९ ॥
२ स्थविरवचनं यदि परे सन्देह किं सुर इति साधुरिति ? । देवे कथं न शङ्का किं स देवो न देव इति ? ॥ २३६० ॥
तेन कथितमिति वा मतिर्देवोऽहं रूपदर्शनाच्च । साधुरिति कथं कथिते समानरूपे का शङ्का ? ॥ २३६१ ॥
देवस्य वा किं वचन सत्यमिति न साधुरूपधारिण । न परस्परमपीह वन्दध्वे यज्जानन्तोऽपि यतय इति ॥ २३६२ ॥
३ जीवादिपदार्थेषु च सूक्ष्म-व्यवहित-विकृष्टरूपेषु । अत्यन्तपरोक्षेषु च कथं न जिनादिषु भवतां शङ्का ? ॥ २३६३ ॥

यदि पूर्वक्षणस्योत्तरक्षणे केनापि रूपेणानुगमोऽन्वयो भवेत् तदा तत्रानुगमे पूर्वोत्तरक्षणयोः समता समानरूपता भवेत्। सर्वथा तु सर्वात्मना पूर्वक्षणस्य निरन्वयविनाशे न सा समतोत्तरक्षणस्य युज्यते । अथ सा समता तयोरभ्युपगम्यते, तर्हि तद्रूपस्य कथञ्चिदवस्थितत्वाद् न पूर्वक्षणस्य सर्वथा विनाशः । अथ सर्वथा विनाशेऽपि तस्य समताऽभ्युपगम्यते, हन्त ! तर्हि तेन सर्वथाऽभावीभूतेन पूर्वक्षणेन समं तुल्यं युज्यते यदि, परं खपुष्पम्, सर्वथाभावरूपतया द्वयोरपि तुल्यत्वादिति ॥ २३९९ ॥

किञ्च,

[1]अण्णविणासे अण्णं जइ सरिसं होइ होउ तेलुक्कं। तदसंबद्धं व मई सो वि कओ सव्वनासम्मि ?॥२४००॥

सर्वथा निरन्वयविनाशे घटात् पट इवोत्तरक्षणात् सर्वथाऽन्य एव पूर्वक्षणस्तस्माच्चान्य एवोत्तरक्षणः । ततः सर्वथाऽन्यस्य पूर्वक्षणस्य विनाशे तस्मात् सर्वथान्यदुत्तरक्षणरूपं यदि सदृशं भवतीत्यभ्युपेयते, तर्हि भवतु त्रैलोक्यमपि ततस्तत्सदृशम्, अनन्वयित्वेऽन्यत्वस्य सर्वत्र तुल्यत्वात् । अथ तत् त्रैलोक्यं प्रस्तुतपूर्वक्षणेन सह देशादिव्यवहितत्वादसंबद्धमिति न तत्सदृशम्, उत्तरक्षणस्तु तेन सह संबद्ध इति तत्सदृश इति परस्य मतिः स्यात् । ननु सोऽपि पूर्वोत्तरक्षणयोः संबन्धः पूर्वस्य सर्वथा विनाशे कुतः ?– न कुतश्चिदित्यर्थः, तत्संबन्धाभ्युपगमेऽन्यसंबन्धायोगेनान्वयाभ्युपगमप्रसङ्गादिति भावः ॥ २४०० ॥

अपि च, पर्यनुयुञ्ज्महे भवन्तम् । किम् ? इत्याह—

[2]किह वा सव्वं खणियं विण्णायं जइ मई सुयाउ त्ति । न उ पइसमयविणासे जेणिक्किक्कक्खरं चिय पयस्स । तदसंखसमयसुत्तत्थगहणपरिणामओ जुत्तं ॥२४०१॥ संखिज्जपयं वक्कं तदत्थगहणपरिणामओ हुज्जा । संखाईयसमइयं संखिज्जाइं पयं ताइं ॥२४०२॥ सव्वक्खणभंगनाणं तदजुत्तं समयनट्ठस्स ॥२४०३॥

'वा' इत्यथवा, पर्यनुयुज्यते भवान् । ननु 'सर्वं वस्तु क्षणिकम्' इत्येतत् कथं भवता विज्ञातमिति वक्तव्यम् ? । श्रुतादिति

१ अन्यविनाशेऽन्यद् यदि सदृशं भवति भवतु त्रैलोक्यम् । तदसंबद्धं वा मति सोऽपि कुत. सर्वनाशे ? ॥ २४०० ॥
२ कथं वा सर्वं क्षणिक विज्ञात यदि मति श्रुतादिति । तदसंख्यसमयसूत्रार्थग्रहणपरिणामतो युक्तम् ॥ २४०१ ॥
न तु प्रतिसमयविनाशे येनैकैकाक्षरमेव पदस्य । संख्यातीतसामयिक संख्यातानि पद तानि ॥ २४०२ ॥
संख्यातपद वाक्य तदर्थग्रहणपरिणामतो भवेत् । सर्वक्षणभङ्गज्ञान तदयुक्त समयनष्टस्य ॥ २४०३ ॥

अथ जिनवचनाज्जीवादिषु न शङ्का, तदेतदिहापि समानमित्याह—

[1]तव्वयणाओ व मई नणु तव्वयणे सुसाहुवित्तो त्ति । आलय-विहारसमिओ समणोऽयं वंदणिज्जो त्ति ॥२३६४॥

अथ तद्वचनाज्जिनवचनाद् न जीवाद्यर्थेषु शङ्का। ननु यद्येवम्, तद्वचन इदमप्यस्ति यदुत– शोभनं साधुवृत्तं श्रमणशीलं यस्यासौ सुसाधुवृत्त इति हेतोः 'श्रमणोऽयम्' इति निश्चयाद् वन्दनीयः । सुसाधुवृत्तोऽपि स कथं ज्ञायते ? इत्याह– 'आलय-विहारसमिओ' इति कृत्वा । उक्तं च—

"[2]आलयेणं विहारेणं ठाणा चंकमणेण य । सक्का सुविहियं नाउं भासावेणइएण य ॥ १ ॥"

इति ॥ २३६४ ॥

उपपत्त्यन्तरमाह—

[3]जह वा जिणिंदपडिमं जिणगुणरहियं ति जाणमाणा वि। परिणामविसुद्धत्थं वंदह तह किं न साहुं पि ? ॥२३६५॥

हुज्ज नवा साहुत्तं जइरूवे नत्थि चेव पडिमाए । सा कीस वंदणिज्जा जइरूवे कीस पडिसेहो ? ॥२३६६॥

सुगमे, नवरं प्रथमगाथायां प्रतिमायाः साधुरूपेण सह वन्दनीयत्वे साम्यमुक्तम् । द्वितीयगाथायां तु साधुरूपे विशेषं दर्शयति– यतिरूपे प्राणिनि साधुत्वं भवेद् नवा ? इति संदिग्धमेव । प्रतिमायां तु जिनत्वं नास्त्येवेति निश्चयः । ततः किमिति सा वन्दनीया ?, यतिरूपे च किमिति वन्दनप्रतिषेधः ? ॥ २३६५ ॥ २३६६ ॥

अत्रोत्तरमाह—

[4]असंजयजइरूवे पावाणुमई मई न पडिमाए । नणु देवाणुगयाए पडिमाए वि हुज्ज सो दोसो ॥२३६७॥

---

1 तद्वचनाद् वा मतिर्ननु तद्वचने सुसाधुवृत्त इति । आलय-विहारसमेतः श्रमणोऽयं वन्दनीय इति ॥ २३६४ ॥

2 आलयेन विहारेण स्थानाच्चङ्क्रमणेन च । शक्त्या सुविहितं ज्ञात्वा भाषावैनयिकेन च ॥ १ ॥

3 यथा वा जिनेन्द्रप्रतिमां जिनगुणरहितामिति जानन्तोऽपि । परिणामविशुद्ध्यर्थं वन्दध्वे तथा किं न साधुमपि ? ॥ २३६५ ॥
भवेद् नवा साधुत्वं यतिरूपे नास्त्येव प्रतिमायाम् । सा कस्माद् वन्दनीया यतिरूपे कस्मात् प्रतिषेधः ? ॥२३६६ ॥

4 असंयतयतिरूपे पापानुमतिर्मतिर्न प्रतिमायाम् । ननु देवानुगतायां प्रतिमायामपि भवेत् स दोषः ॥ २३६७ ॥

चेत् । ननु तत् श्रुतादर्थविज्ञानमसंख्येयसमयैर्निष्पन्नो यः सूत्रार्थग्रहणपरिणामस्तस्मादेव युक्तम्, न तु प्रतिसमयविनाशे । इदमुक्तं भवति– असंख्येयानेव समयान् यावच्चित्तस्यावस्थाने 'सर्वं क्षणिकम्' इति विज्ञानोपयोगो युज्यते, न तु प्रतिसमयोच्छेदे । अत्र कारणमाह– येन यस्मात् कारणात् पदस्य सावयवत्वात् तत्संबध्येकैकमप्यक्षरं संख्यातीतसामयिकमसंख्यातैः समयैर्निष्पद्यत इत्यर्थः, तानि चाक्षराणि संख्यातानि समुदितानि पदं भवति । संख्यातैश्च पदैर्वाक्यं निष्पद्यते, तदर्थग्रहणपरिणामाच्च वाक्यार्थग्रहणपरिणामादित्यर्थः, सर्वक्षणभङ्गज्ञानं भवेत् । तच्चोत्पत्तिसमयानन्तरमेव नष्टस्य समुच्छिन्नस्य मनसोऽयुक्तमेवेति ॥२४०१॥२४०२॥२४०३॥

अन्यदपि क्षणभङ्गवादे यद् नोपपद्यते तद् दर्शयति—

[1]तित्ती समो किलामो सारिक्ख-विवक्ख-पच्चयाईणि । अज्झयणं झाण भावणा य का सव्वनासम्मि ?॥२४०४॥

तृप्तिर्घ्राणिः, मार्गगमनादिप्रवृत्तस्य खेदः श्रमः, क्लमो ग्लानिः, सादृश्यं साधर्म्यम्, विपक्षो वैधर्म्यम्, प्रत्ययः प्रत्यभिज्ञानादि, आदिशब्दात् स्वनिहितप्रत्यनुमार्गण-स्मरणादिपरिग्रहः । अध्ययनं पुनः पुनर्ग्रन्थाभ्यासः, ध्यानमेकालम्बने मनःस्थैर्यम्, भावना पौनःपुन्येनानित्यत्वादिप्रकारतो भवनैर्गुण्यपरिभावनरूपा । एतानि सर्वाण्यप्युत्पत्त्यनन्तरमेव वस्तुनः सर्वनाशेऽङ्गीक्रियमाणे कथमुपपद्यन्ते ? इति ॥ २४०४ ॥

यथा च नोत्पद्यन्ते तथा दर्शयन्नाह—

[2]अण्णण्णो पइगासं भुत्ता अंते न सो वि का त्तित्ती ?। गंतादओ वि एवं इय संववहारवुच्छित्ती ॥२४०५॥

'ग्रसु ग्लसु अदने' ग्रसनं ग्रासः कवलक्षेपः, ग्रस्यत इति वा ग्रासः कवलः । ततश्च प्रतिग्रासं प्रतिकवलं भोक्ता देवदत्तः क्षणिकत्वादन्यश्चान्यश्च भवति, भोजनक्रियायाश्चान्ते पर्यन्ते सोऽपि भोक्ता सर्वथा न भवति, भुजिक्रियाविशेषणस्याभावे तद्विशिष्टस्य देवदत्तस्यापि सर्वथोच्छेदात् । ततश्चैकस्मिन्नन्त्यकवलप्रक्षेपे का तृप्तिः, भोक्तुश्चाभावात् कस्यासौ तृप्तिः ? । एवमुक्तानुसारेण गन्त्रादीनामपि श्रमाद्यभावः स्वबुद्ध्या भावनीय इति । एवं समस्तलोकव्यवहारोच्छेदप्रसक्तिरिति ॥ २४०५ ॥

अत्र परः प्राह—

१ तृप्तिः श्रमः क्लम. सादृश्य-विपक्ष-प्रत्ययादीनि । अध्ययनं ध्यानं भावना च का सर्वनाशे ? ॥ २४०४ ॥
२ अन्योऽन्य. प्रतिग्रासं भोक्ताऽन्ते न सोऽपि का तृप्तिः ? । गन्त्रादयोऽप्येवमिति संव्यवहारव्युच्छित्ति ॥ २४०५ ॥

अथैवंभूता मतिः परस्य भवेत्– असंयतदेवाधिष्ठिते यतिरूपे वन्द्यमाने तद्गतासंयमरूपपापानुमतिर्भवति, न त्वसौ प्रतिमायाम् । अत्रोच्यते– ननु देवताधिष्ठितप्रतिमायामप्ययमनुमतिलक्षणो दोषो भवेदेवेति ॥ २३६७ ॥

अथैवं ब्रूयात् परः । किम् ? इत्याह—

अह पडिमाए न दोसो जिणबुद्धीए नमओ विसुद्धस्स। तो जइरूवं नमओ जइबुद्धीए कहं दोसो ?॥२३६८॥

अथ प्रतिमायां नायमनुमतिलक्षणो दोषः। किं कुर्वतः ?। नमस्यतः । कया ? । जिनबुद्ध्या । कथंभूतस्य ? । विशुद्धस्य– विशुद्धाध्यवसायस्य । यद्येवम्, ततो यतिबुद्ध्या यतिरूपं विशुद्धस्य नमस्यतः को दोषः, येन भवन्तः परस्परं न वन्दन्ते ? । अत्रापरः कश्चिदाह–– यद्येवम्, लिङ्गमात्रधारिणं पार्श्वस्थादिकमपि यतिबुद्ध्या विशुद्धस्य नमस्यतो न दोषः। तदयुक्तम् । पार्श्वस्थादीनां सम्यग्यतिरूपस्याप्यभावात् । तदभावश्च "आलएणं विहारेण" इत्यादियतिलिङ्गस्यानुपलम्भात् । ततः प्रत्यक्षदोषवतः पार्श्वस्थादीन् वन्दमानस्य तत्सावद्यानुज्ञालक्षणो दोष एव । उक्तं च—

"जइचेलं बगलिंगं जाणंतस्स नमओ हवइ दोसो । निद्धंधसं य नाऊण वंदमाणे धुवो दोसो ॥ १ ॥"

इत्यादि । प्रतिमायास्तु दोषाचरणाभावात् तद्वन्दने सावद्यानुज्ञाऽभावतो न दोष इति ॥ २३६८ ॥

अत्र पुनरपि पराभिप्रायमाशङ्क्य परिहरन्नाह—

अह पडिमं पि न वंदह देवासंकाइ तो न घेत्तव्वा। आहारो-वहि-सज्जा मा देवकया भवेज्ज ण्हु ॥२३६९॥

अथ प्रतिमामपि न वन्दध्वे यूयम्, हन्त ! यद्येवं शङ्काचारी भवान्, तर्हि मा देवकृता भवेयुरित्याहारो-पधि-शय्यादयोऽपि न ग्राह्या इति ॥ २३६९ ॥

किञ्च, इत्थमतिशङ्कालुतायां समस्तव्यवहारोच्छेदप्रसङ्गः । कुतः ? इत्याह—

१ अथ प्रतिमाया न दोषो जिनबुद्ध्या नमतो विशुद्धस्य । ततो यतिरूप नमतो यतिबुद्ध्या कथं दोष ? ॥ २३६८ ॥ २ पृ० ५५५ ।
३ यतिचेल बकलिङ्ग जानतो नमतो भवेद् दोष । निद्धाध्वस च ज्ञात्वा वन्दमाने ध्रुवो दोष ॥ २३६९ ॥
४ अथ प्रतिमामपि न वन्दध्वे देवाशङ्कया ततो न ग्रहीतव्या । आहारो-पधि-शय्या मा देवकृता भवेयुर्नु ॥ २३७० ॥

[1]जेणं च्चिय पइगासं भिन्ना तित्ती अओ च्चिय विणासो । तित्तीए तित्तस्स य एवं च्चिय सव्वसंसिद्धी॥२४०६॥

येनैव यत एव प्रतिग्रासमन्योऽन्यश्च भोक्ता भवति, अपरापरा च तृप्तिमात्रा भवति, अत एव तृप्तेः, तृप्तस्य च प्रतिक्षणं विनाशोऽभ्युपगम्यतेऽस्माभिः, विशेषणभेदे विशेष्यस्याप्यवश्यं भेदात्, अन्यथा विशेषणभेदस्याप्ययोगात् । प्रतिक्षणविनाशित्वे तृप्त्याद्ययोगोऽभिहित एवेति चेत् । तदयुक्तम् । कुतः ? इत्याह– 'एवं च्चिय सव्वसंसिद्धी त्ति' एवमेव प्रतिक्षणविनाशित्व एव सर्वस्यापि तृप्ति-श्रम-क्रमादेर्लोकव्यवहारस्य संसिद्धिः । इदमुक्तं भवति– तृप्त्यादिवासनावासितः पूर्वपूर्वक्षणादुत्तरोत्तरक्षणः समुत्पद्यते तावत्, यावत् पर्यन्त उत्कर्षवन्तस्तृप्त्यादयो भवन्ति । एतच्च क्षणिकत्व एवोपपद्यते, न नित्यत्वे । नित्यस्याप्रच्युता-ऽनुत्पन्न-स्थिरैकस्वभावत्वेन सर्वदैव तृप्त्यादिसद्भावात्, सर्वदैव तदभावाद् वेति ॥ २४०६ ॥

अत्रोत्तरमाह—

[2]पुव्विल्लसव्वनासे वुड्ढी तित्ती य किंनिमित्ता तो ? । अह सा वि तेऽणुवत्तइ सव्वविणासो कहं जुत्तो ? ॥२४०७॥

'तो त्ति' यद्येवम्, ततः पूर्वक्षणस्य सर्वथा विनाश उत्तरोत्तरक्षणेषु तृप्त्यादीनां या क्रमेण वृद्धिरुत्कर्षवती पर्यन्ते तृप्तिः श्रमादिसंभूतिश्च, सा किंनिमित्ता किंकारणा ? इति वक्तव्यम् ? । पूर्वपूर्वक्षणेनोत्तरोत्तरक्षणस्य या तृप्त्यादिवासना जन्यते तन्निमित्तेति चेत् । न, तस्यास्तदनर्थान्तरत्वे पूर्वपूर्वक्षणनाशे नाशात् । अथोत्तरोत्तरक्षणेषु सानुवर्तत एवेति ते तवाभिप्रायः, तर्हि पूर्वपूर्वक्षणस्य सर्वविनाशः कथं युक्तो वक्तुम्, तदनर्थान्तरभूततृप्त्यादिवासनायाः समनुवर्तनात् ? इति ॥ २४०७ ॥

सर्वस्य क्षणिकत्वे दूषणान्तरमप्याह—

[3]दिक्खा व सव्वनासे किमत्थमहवा मई विमोक्खत्थं । सो जइ नासो सव्वस्स तो तओ किं व दिक्खाए ? ॥२४०८॥

दीक्षा वा क्षणानां सर्वनाशे किमर्थमिति वाच्यम् ?– निरर्थिकेयमिति भावः । अथ मोक्षार्थं दीक्षेति परस्य मतिः, तर्ह्यत्रापि वक्तव्यम्– स मोक्षो नाशरूपो वाऽभ्युपगम्यते, अनाशरूपो वा ? । तत्र 'सो जइ नासो त्ति' स मोक्षो यदि नाशरूप इति पक्षः, 'सव्वस्स

१ येनैव प्रतिग्रासं भिन्ना तृप्तिरत एव विनाशः । तृप्तेस्तृप्तस्य चैवमेव सर्वसंसिद्धिः ॥ २४०६ ॥
२ पूर्वसर्वनाशे वृद्धिस्तृप्तिश्च किंनिमित्ता ततः ? । अथ सापि तेऽनुवर्तते सर्वविनाशः कथं युक्तः ? ॥ २४०७ ॥
३ दीक्षा वा सर्वनाशे किमर्थमथवा मतिर्विमोक्षार्थम् । स यदि नाशः सर्वस्य ततः सक किं वा दीक्षया ? ॥ २४०८ ॥

गिण्हिज्ज सव्वभंगं जइ य मई सविसयाणुमाणाओ । तं पि न जओऽणुमाणं जुत्तं सत्ताइसिद्धीओ ॥ २७ ॥
जाणेज्ज वासणाओ सा वि हु वासित्त-वासणिज्जाणं । जुत्ता समेच्च दोण्हं न उ जम्माणंतरहयस्स ॥ २८ ॥
बहुविण्णाणप्पभवो जुगवमणेगत्थयाऽहवेगस्स । विण्णाणावत्था वा पडुच्चवित्तीविघाओ वा ॥ २९ ॥
विण्णाणखणविणासे दोसा इच्चादयो पसज्जंति । न उ ठिय-संभूय-च्चुयविण्णाणमयम्मि जीवम्मि ॥ ३० ॥
तस्स विचित्तावरणखओवसमजाइं चित्तरूवाइं । खणियाणि य कालंतरवित्तीणि य मइविहाणाइं ॥ ३१ ॥
निच्चो संताणो सिं सव्वावरणपरिसंखए जं च । केवलमुदियं केवलभावेणाणंतमाविगप्पं ॥ ३२ ॥
सो जइ देहादन्नो तो पविसंतो व निस्सरंतो वा । कीस न दीसइ, गोयम ! दुविहाऽणुवलद्धि उ सा य ॥३३॥
असओ खरसंगस्स व सओ वि दूराइभावओऽभिहिया । सुहुमा-ऽमुत्तत्तणओ कम्माणुगयस्स जीवस्स ॥ ३४ ॥
[1]देहाणण्णे व जिए जमग्गिहोत्ताइं सग्गकामस्स । वेयविहियं विहण्णइ दाणाइफलं च लोयम्मि ॥ ३५ ॥
विण्णाणघणाईणं वेयपयाणं तमत्थमविदंतो । देहाणण्णं मन्नासि ताणं च पयाणमयमत्थो ॥ ३६ ॥

छिन्नम्मि संसयम्मी जिणेण जरा-मरणविप्पमुक्केणं ।
सो समणो पव्वइओ पंचहिं सह खंडियसएहिं ॥ १५२ ॥
ते पव्वइए सोउं वियत्तु आगच्छइ जिणसगासं ।
वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ १५३ ॥
आभट्ठो य जिणेणं जाइ-जरा-मरणविप्पमुक्केणं ।

१ एतयोर्गाथयोः क्वचिद् व्यत्ययेन पाठ. । २ 'यम्मि अ जि' ।

नामेण य गोत्तेण य सव्वण्णू सव्वदरिसी णं ॥ १५४॥
किं मण्णे अत्थि भूया उदाहु नत्थि त्ति संसओ तुज्झ ।
वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥ १५५ ॥

भूएसु तुज्झ संका सुविणय-माओवमाइं होज्ज त्ति । न वियारिज्जंताइं भयंति जं सव्वहा जुत्तिं ॥ १ ॥
भूयाइसंसयाओ जीवाइसु का कह त्ति तं बुद्धी । तं सव्वसुण्णसंकी मन्नसि मायोवमं लोयं ॥ २ ॥
जह किर न सओ नोभयओ नावि अन्नओ सिद्धी । भावाणमवेक्खाओ वियत्त ! जह दीह-हस्साणं ॥ ३ ॥
अत्थित्त-घडेगाणेगया व सव्वेगयाइदोसाओ । सव्वेऽणभिलप्पा वा सुण्णा वा सव्वहा भावा ॥ ४ ॥
जाया-ऽजाओ-भयओ न जायमाणं च जायए जम्हा । अणवत्था-ऽभावो-भयदोसाओ सुण्णया तम्हा ॥ ५ ॥
हेऊ-पच्चयसामग्गि वीसु भावेसु नो व जं कज्जं । दीसइ सामग्गिमयं सव्वाभावे न सामग्गी ॥ ६ ॥
परभागादरिसणओ सव्वाराभागसुहमयाओ य । उभयाणुवलंभाओ सव्वाणुवलद्धिओ सुण्णं ॥ ७ ॥
मा कुरु वियत्त ! संसयमसइ न संसयसमुब्भवो जुत्तो । खकुसुम-खरसिंगेसु व, जुत्तो सो थाणु-पुरिसेसु ॥८॥
को वा विसेसहेऊ सव्वाभावे वि थाणु-पुरिसेसु । संका न खपुप्फाइसु विवज्जओ वा कहं न भवे ? ॥ ९ ॥
पच्चक्खओऽणुमाणादागमओ वा पसिद्धिरत्थाणं । सव्वप्पमाणविसयाभावे किह संसओ जुत्तो ? ॥ १० ॥
जं संसयादओ नाणपज्जया तं च नेयसंबद्धं । सव्वन्नेयाभावे न संसओ तेण ते जुत्तो ॥ ११ ॥
संति च्चिय ते भावा संसयओ सोम्म ! थाणु-पुरिससो व्व । अह दिट्ठंतमसिद्धं मण्णासि नणु संसयाभावो ॥१२॥

१ 'चयं' ।

तो तउ त्ति' ततस्तर्हि तकोऽसौ मोक्षः सर्वस्यापि वस्तुनः स्वरसतः प्रयत्नमन्तरेणापि त्वदभिप्रायेण सिद्ध एव, किं दीक्षाप्रयत्नेन ? इति ॥ २४०८ ॥

अथानाशरूपो नित्यो मोक्षस्तत्राह—

[1]अह निच्चो, न क्खणियं तो सव्वं अह मई ससंताणो। अहउ त्ति तओ दिक्खा निस्संताणस्स मुक्खो त्ति ॥२४०९॥

अथ नित्यो मोक्षः 'तो त्ति' ततस्तर्हि 'सर्वं वस्तु क्षणिकम्' इत्येतद् न भवति, मोक्षेणैव व्यभिचारात् । अथ स्व आत्मीयो विज्ञान-वेदना-संज्ञा-संस्कार-रूपात्मकस्कन्धस्य क्षणपरम्परारूपः संतानो नाद्यापि हतः, निःसंतानस्यैव च मोक्षः, अतो निःसंतानार्थं दीक्षा विधीयत इति ॥ २४०९ ॥

अत्रोत्तरमाह—

[2]छिण्णेणाछिण्णेण व किं संताणेण सव्वनट्ठस्स । किंचाभावीभूयस्स स-परसंताणचिंताए ?॥ २४१० ॥

सर्वनष्टस्य सर्वप्रकारैर्विनाशमापन्नस्य च्छिन्नेन, अच्छिन्नेन वा संतानेन किं प्रयोजनम्, येन संतानहननार्थं दीक्षां गृह्णीयात् ?। किञ्च, सर्वथाऽभावीभूतस्य क्षणभङ्गुरतया सर्वथा विनष्टस्य किमनया चिन्तया– अयं स्वसंतानः, अयं तु परसंतानः, अयं तु न हतः, येनोच्यते– '[3]ससंताणो अहउ त्ति तओ दिक्खा' इति ? ॥ २४१० ॥

अथ क्षणिकत्वसाधकपराभिमतप्रमाणमुपन्यस्य दूषणमाह—

[4]सव्वं पयं व खणियं पज्जंते नासदरिसणाउ त्ति । नणु इत्तो च्चिय न खणियमंते नासोवलद्धीओ ॥२४११॥

सर्वं वस्तु क्षणिकम्, पर्यन्ते नाशदर्शनात्, पयोवदिति । आह– ननु यदि वस्तूनां पर्यन्ते नाशो दृश्यते, तर्हि प्रतिक्षणविनाशित्वे किमायातम्, येन सर्वं क्षणिकमुच्यते ?। सत्यम्, किन्त्वयमिह तदभिप्रायः– पर्यन्तेऽपि घटादीनां विनाशस्तावद् निर्हेतुक एव भवति, मुद्गरादेर्विनाशहेतोरयोगात्; तथाहि– मुद्गरादिना किं घट एव क्रियते, कपालानि वा, तुच्छरूपोऽभावो वा ? इत्यादियुक्तितो

1 अथ नित्यो, न क्षणिकं तत सर्वमथ मति स्वसंतानः। अहत इति ततो दीक्षा नि संतानस्य मोक्ष इति ॥ २४०९ ॥
2 छिन्नेनाच्छिन्नेन वा किं संतानेन सर्वनष्टस्य । किञ्चाऽभावीभूतस्य स्व-परसंतानचिन्तया ?॥ २४१० ॥ 3 गाथा २४०९ ।
4 सर्वं पय इव क्षणिक पर्यन्ते नाशदर्शनादिति । नन्वित एव न क्षणिकमन्ते नाशोपलब्धे. ॥ २४११ ॥

यथैककाले द्वितीयोपयोगस्तथा बहवोऽपि भवन्त्विति भावः । इह च 'दव्वाओ असंखेज्जे संखेज्जे यावि पज्जवे लहइ' इति वचनादेकस्मिन्नर्थे समकालमवधिज्ञानिनः किलोत्कृष्टतोऽसंख्येया उपयोगाः प्राप्नुवन्ति, शेषज्ञानिनां त्वनन्ता इत्यभिप्रायवता प्रोक्तम्– 'पइवत्थुमसंखेज्ज'– इत्यादि ॥ २४३७ ॥

अत्र पराभिप्रायमधिकृत्य परिहारमाह—

[2]बहु-बहुविहाइगहणे नणुवओगबहुया सुएऽभिहिआ । तमणेगग्गहणं चिय उवओगाणेगया नत्थि ॥२४३८॥

ननु बहु-बहुविध-क्षिप्रा-ऽनिश्रिता-ऽसंदिग्ध-ध्रुव-सेतरवस्तुग्रहणे पूर्वमिहैवावग्रहादीनामनुज्ञाने एकस्मिन्नुपयोगबहुता श्रुतेऽभिहितैव, इति 'पइवत्थुमसंखेज्ज-' इत्यादि सिद्धसाधनमेव, इति परेणोक्ते सत्याह– 'तमणेगेत्यादि' । तद् बहु-बहुविधादिरूपं वस्तुनोऽनेकपर्यायाणां सामान्यरूपतया ग्रहणमात्रमेव ज्ञाने उपयोगयोग्यतामात्रव्यवस्थापनमेव, एकस्मिंस्तु वस्तुन्येककालमुपयोगानेकता क्वापि नास्ति, क्रमेणैवोपयोगानां भावादिति ॥ २४३८॥

यदुक्तम्–'तमणेगग्गहणं चिय' इति, तदुपजीव्य परः प्राह—

[3]समयमणेगग्गहणं जइ सीओसिणदुगम्मि को दोसो ?। केण व भणियं दोसो उवओगदुगे वियारोऽयं ॥२४३९॥

यद्याचार्य ! समकं युगपदनेकेषामर्थानां ग्रहणं त्वयाप्यनुज्ञायते तदा शीतोष्णद्वये गृह्यमाणे को दोषः, येन गङ्गाभ्युपगमो दूष्यते ?। सूरिराह– 'केण वेत्यादि' केन पुनर्भणितम्– 'हन्त ! यत् समकमनेकार्थग्रहणे दोषः ?, गृह्यन्ते युगपदपि सामान्यरूपतया सेना-वन-ग्राम-नगरादिवदनेकेऽर्था इति, एतद् न निवारयामो वयमित्यर्थः, केवलमिहोपयोगद्वये विचारोऽयं प्रस्तुतः । स च उपयोग एकदा एक एव भवति, न त्वनेक इति ॥ २४३९ ॥

पुनरपि परप्रश्नमाशङ्क्योत्तरमाह—

[3]समयमणेगग्गहणे एगाणेगोवओगभेओ को ?। सामण्णमेगजोगो खंधावारोवओगो व्व ॥ २४४० ॥

१ गाथा ७६० । २ बहु-बहुविधादिग्रहणे ननूपयोगबहुता श्रुतेऽभिहिता । तदनेकग्रहणमेवोपयोगानेकता नास्ति ॥ २४३८ ॥

२ समकमनेकग्रहणं यदि शीतोष्णद्विके को दोष ?। केन वा भणितं दोष उपयोगद्विके विचारोऽयम् ॥ २४३९ ॥

३ समकमनेकग्रहण एकानेकोपयोगभेद क. ? । सामान्यमेकयोगः स्कन्धावारोपयोग इव ॥ २४४० ॥

विनाशस्य निर्हेतुकत्वं प्रागत्रैव दर्शितम्। ततो निर्हेतुकोऽसौ भवन्नादित एव भवतु, अन्यथा पर्यन्तेऽपि तदभवनप्रसङ्गादिति पर्यन्ते नाशदर्शनाद् हेतोः क्षणिकत्वसिद्धिः।

अत्र सूरिः प्राह— नन्वेतस्मादेव पर्यन्ते नाशदर्शनलक्षणाद्धेतोरस्माभिरेतच्छक्यते वक्तुम्। किम्? इत्याह— न क्षणिकं न प्रतिक्षणं वस्तु विनश्यतीत्यर्थः, पर्यन्त एव तन्नाशोपलब्धेः, घटादिवत्। न च युक्तिबाधितत्वाद् भ्रान्तेयमुपलब्धिरिति शक्यते वक्तुम्, सर्वेषां सर्वत्रेत्थमेव प्रवर्तनात्, युक्तीनामेवानया बाधनात्, शून्यवादियुक्तिवदिति ॥ २४११ ॥

यदि पुनरादित एव वस्तूनां विनाशः स्यात् तदा किं भवेत्? इत्याह—

[1]ईहराइउ च्चिय तओ दीसेज्जंते व्व कीस व समाणो। सव्वविणासे नासो दीसइ अंते न सोऽन्नत्थ? ॥ २४१२ ॥

इतरथा यदि प्रतिक्षणं नाशो भवेत् तदा यथा पर्यन्ते सर्वेणापि भवन्नसौ दृश्यते, तथा आदित एवादि-मध्येषु सर्वत्र तकोऽसौ नाशो दृश्येत। अथ पर्यन्तेऽसौ दृश्यते नादि-मध्येषु, किं कुर्मः? । तर्हि प्रष्टव्योऽसि। किम्? इत्याह— 'कीस वेत्यादि' किमिति चासौ नाशो वस्त्वभावरूपतया सर्वत्र समानो निरवशेषस्वरूपोऽपि सन् सर्वविनाशे मुद्गरादिना विहिते दृश्यत उपलक्ष्यतेऽन्ते पर्यन्ते, न पुनरन्यत्रादि-मध्येषु सर्वत्र भवताऽभ्युपगतोऽप्यसौ भवन्नुपलक्ष्यत इत्यत्र कारणं वाच्यम्?, न पुनः पादप्रसारिका श्रेयस्करीति भावः ॥ २४१२ ॥

अपि च– पर्यन्ते नाशदर्शनरूपस्य हेतोः सिद्धत्वमभ्युपगम्य दूषणमुक्तं यावता जैनानां हेतुरप्ययमसिद्धः, पर्यन्तेऽपि घटादीनां सर्वथा नाशानभ्युपगमादिति दर्शयन्नाह—

[2]अंते व सव्वनासो पडिवण्णो केण जदुवलद्धीओ। कप्पेसि क्खणविणासं नणु पज्जायंतरं तं पि ॥ २४१३ ॥

यदिवा, भोः क्षणभङ्गवादिन्! अन्ते पर्यन्तेऽपि मुद्गरादिसंनिधाने घटादिवस्तुनः सर्वनाशः सर्वथा विनाशः केन प्रतिवादिना जैनेनाभ्युपगतः, यदुपलब्धेर्यद्दर्शनावष्टम्भेन त्वं क्षणभङ्गरूपं प्रतिक्षणविनाशं कल्पयसि घटादेः? । यदि मुद्गरादिसंनिधाने सर्वविनाशस्तस्य जैनैर्नाभ्युपगम्यते, तर्हि तदवस्थायां घटो न दृश्यते, कपालान्येव च दृश्यन्त इत्येतत् किमिष्यते? इत्याह—

1 इतरथादित एव सको दृश्येतान्ते इव कस्माद् वा समान। सर्वविनाशे नाशो दृश्यतेऽन्ते न सोऽन्यत्र?॥ २४१२ ॥
2 अन्ते वा सर्वनाशः प्रतिपन्नः केन यदुपलब्धे। कल्पयसि क्षणविनाशं ननु पर्यायान्तरं तदपि ॥ २४१३ ॥

[1]खंधारोऽयं सामण्णमेत्तमेगोवओगया समयं । पइवत्थुविभागो पुण जो सोऽणेगोवओग त्ति ॥ २४४१ ॥

ननु समकं युगपदनेकार्थग्रहणेऽभ्युपगम्यमाने कोऽयमेकानेकोपयोगभेदो नाम, येनोच्यते– 'उवओगाणेगया नत्थि' इति ? । अत्रोत्तरमाह– 'सामण्णमेगजोगो त्ति' यः सामान्योपयोगः स एकोपयोगोऽभिधीयते, स्कन्धावारोपयोगवदिति दृष्टान्तः । अमुमेवार्थं स्पष्टयति– 'खंधारोऽयमित्यादि' समकं युगपदेव 'स्कन्धावारोऽयम्' इत्येवं यत् सामान्यं सामान्यमात्रग्राहको य उपयोग इत्यर्थः, स एकोपयोगता भण्यते । यः पुनः प्रतिवस्तु 'एते हास्तिनः, अमी अश्वाः, इमे रथाः, एते पदातयः, एते खड्ग-कुम्भादयः, शिरस्त्राण-कवचादयः, पट-कुटिकाः, ध्वजाः, पताकाः, ढक्का-शङ्ख-काहलादयः, करभ-रासभादयश्च' इत्यादिको विभागो भेदाध्यवसायः सोऽनेकोपयोग इति ॥ २४४० ॥ २४४१ ॥

आह– एवमेकानेकोपयोगभेदे भवद्भिर्युगपत् किं निषिध्यते ? इत्याह–

[2]ते च्चिय न संति समयं सामण्णाणेगगहणमविरुद्धं । एगमणेगं पि तयं तम्हा सामण्णभावेणं ॥ २४४२ ॥

त एवानेकोपयोगाः समकं युगपद् न सन्ति न भवन्तीति निषिध्यन्तेऽस्माभिः । यत्तु सामान्येनानेकपामर्थानां युगपद् ग्रहणं तदविरुद्धमेव । 'तम्ह त्ति' तस्माद् युगपदनेकोपयोगनिषेधेन किमुक्तं भवति इत्याह– 'एगमणेगं पीत्यादि' यदिदं स्कन्धावारा-द्युपयोगे युगपदनेकार्थग्रहणमस्माभिरनुज्ञायते 'तयं ति' तदनेकमप्यनेकार्थग्रहणमपि सदित्यर्थः, 'एगं ति' एकमेव तत्त्वत एकार्थ-ग्रहणमेवेत्यर्थः । केन ? इत्याह– 'सामण्णभावेणं ति' सामान्यरूपतयेत्यर्थः । अयमत्र तात्पर्यार्थः– यदनेकार्थग्रहणमनुज्ञायते तत् सामान्यमेव रूपमाश्रित्य, विशेषरूपतया त्वनेकार्थग्रहणं नास्त्येव, एकस्मिन् काल एकस्यैव विशेषोपयोगस्य सद्भावादिति ॥२४४२॥

अमुमेवार्थं प्रकृते योजयन्नाह–

[3]उसिणेयं सीयेयं न विभागो नोवओगदुगमित्थं । होज्ज समं दुगगहणं सामण्णं वेयणा मे त्ति ॥२४४३॥

'उष्णेयं शीतेयं वेदना' इत्येवं योऽसौ विभागो भेदोऽसौ नेष्टः– शीतोष्णविभागे शीतोष्णविशेषरूपतया युगपद् ग्रहणं

1 स्कन्धावारोऽय सामान्यमात्रमेकोपयोगता समकम् । प्रतिवस्तुविभाग पुनर्यः सोऽनेकोपयोग इति ॥ २४४१ ॥ 2 गाथा २४३८ । 3 त एव न सन्ति समक सामान्यानेकग्रहणमविरुद्धम् । एकमनेकमपि तत् तस्मात् सामान्यभावेन ॥ २४४२ ॥
4 उष्णेय शीतेयं न विभागो नोपयोगद्विकमित्यम् । भवेद् सम द्विकग्रहण सामान्य वेदना ममेति ॥ २४४३ ॥

'नण्वित्यादि' नन्वहो ! मृद्रूपतयाऽवस्थितस्यैव घटद्रव्यस्य भूत भविष्यदनन्तपर्यायापेक्षया तदपि पर्यायान्तरं पर्यायविशेष एव कपालानि, न पुनस्तदानीं घटस्य सर्वथा विनाशः, मृद्रूपताया अप्यभावप्रसङ्गात्, तथा च कपालानाममृद्रूपतापत्तेरित्यसिद्धिः पर्यन्ते सर्वनाशस्येति ॥ २४१३ ॥

भवतु वा तत्सिद्धिः, तथापि नातः सर्वव्यापिनी क्षणिकत्वसिद्धिरिति दर्शयन्नाह—

[1]जेसिं व न पज्जंते विणासदरिसणमिहंबराईणं । तन्निच्चब्भुवगमओ सव्वक्खणविणासिमयहाणी ॥२४१४॥

घटादीनां तावत् पर्यन्ते सर्वनाशदर्शनात् प्रसङ्गेनादित एव प्रतिक्षणनश्वरतां साधयति भवान्, ततो येषामम्बरादीनां व्योम-काल-दिगादिनां पर्यन्ते विनाशदर्शनं कदाचिदपि नास्ति, तेष्वस्मात् प्रसङ्गसाधनात् प्रतिसमयनश्वरत्वं न सिध्यति। ततस्तेषां नित्यत्वमेवाभ्युपगन्तव्यम् । तन्नित्यत्वाभ्युपगमे च 'सर्वं क्षणिकम्' इति व्याप्तिपरं यद् मतं भवतस्तस्य हानिरघटमानतैव प्राप्नोतीति ॥ २४१४ ॥

भङ्ग्यन्तरेणापि स्थविरा अश्वमित्रं शिक्षयन्ति । कथम् ? इत्याह—

[2]पज्जायनयमयमिणं जं सव्वं विगम-संभवसहावं । दव्वट्ठियस्स निच्चं एगयरमयं च मिच्छत्तं ॥२४१५॥

पर्यायवादिन एव नयस्येदं मतं यत् त्वं ब्रूषे– सर्वमेव त्रिभुवनान्तरगतं वस्तु विगम-संभवस्वभावं– प्रतिक्षणमुत्पद्यते विनश्यति चेत्यर्थः । द्रव्यमेवार्थो यस्य न पर्याया स द्रव्यार्थिकस्तस्य तु द्रव्यार्थिकनयस्य तदेव सर्वं वस्तु नित्यं मतम् । एवं च स्थिते यद् भवानेकतरस्यैव पर्यायनयस्य प्रतिक्षणविनश्वरत्वलक्षणं मतमभ्युपगच्छति तद् मिथ्यात्वमेवेति मुञ्चेदमिति भावः ॥ २४१५ ॥

किमित्येतद् मिथ्यात्वम् ? इत्याह—

[3]जमणंतपज्जयमयं वत्थुं भुवणं व चित्तपरिणामं । ठिइ-विभव-भंगरूवं निच्चानिच्चाइ तोऽभिमयं ॥२४१६॥

यद् यस्माद् नैकान्ततः पर्यायमयं, नाप्येकान्तेन द्रव्यरूपम्, किन्त्वनन्तपर्यायं स्थित्युत्पाद-विनाशरूपत्वाद् भू-भवन-विमान-

---

१ येषां वा न पर्यन्ते विनाशदर्शनमिहाम्बरादीनाम् । तन्नित्याभ्युपगमतः सर्वक्षणविनाशिमतहानिः ॥ २४१४ ॥

२ पर्यायनयमतमिदं यत् सर्वं विगम-संभवस्वभावम् । द्रव्यार्थिकस्य नित्यमेकतरमतं च मिथ्यात्वम् ॥ २४१५ ॥

३ यदनन्तपर्यवमयं वस्तु भुवनमिव चित्रपरिणामम् । स्थिति-विभव-भङ्गरूप नित्यानित्यादि ततोऽभिमतम् ॥ २४१६ ॥

नेष्टमित्यर्थः। अत एव तद्विषयमुपयोगद्वयं युगपद् नेष्टम्। किं युगपद् वस्तुद्वयग्रहणं सर्वथा नेष्टम् ?। नैवम्। कुतः ? इत्याह– भवेत् समं युगपद् वस्तुद्वयग्रहणम्। किं विशेषरूपतया ?। न, इत्याह– सामान्यं सामान्यरूपतयेत्यर्थः। कथम् ?। 'वेदना मे मम वर्तते' इत्येवं युगपद् द्वयग्रहणं भवेत्, न तु शीतोष्णवेदनाविशेषरूपतयेत्यर्थः, युगपदुपयोगद्वयप्रसङ्गात्, तत्र च दोषाणामुक्तत्वादिति ॥ २४४३ ॥

आह– ननु यदा वेदनामात्रग्राहकं सामान्यज्ञानं, तदैवं शीतोष्णवेदनाविशेषग्राहकमपि तत् कस्माद् नेष्यते ? इत्याह—

[1]जं सामण्णविसेसा विलक्खणा तन्निबंधणं जं च। नाणं जं च विभिन्ना सुदूरओवग्गहा-ऽवाया ॥२४४४॥

जं च विसेसन्नाणं सामन्ननाणपुव्वयमवस्सं। तो सामण्णविसेसन्नाणाइं नेगसमयम्मि ॥ २४४५ ॥

'तो त्ति' तस्मात् सामान्यग्राहकं विशेषग्राहकं च ज्ञानं द्वे अपि नैकसमये नैककालं भवत इति द्वितीयगाथायां संबन्धः। कुतः ? इत्याह–'जं सामण्णेत्यादि' यद् यस्मात् सामान्य-विशेषौ परस्परमतीव विभिन्नलक्षणौ भिन्नजातीयौ, अतः कथं तावेककालमेकज्ञाने प्रतिभासेते, एकत्वप्रसङ्गात्, सामान्यतत्स्वरूपवत्, विशेषतत्स्वरूपवद् वा ?। मा भूत् तत्प्रतिभासः, तथापि तज्ज्ञाने युगपद् भविष्यत इत्याह– यस्माच्च तन्निबन्धनं सामान्यविशेषहेतुकं सर्वमपि ज्ञानं, तत् कथं तत्प्रातिभासमन्तरेणोत्पद्येत ?। सामान्य-विशेषज्ञानयोरेकत्वादेककालं ते भविष्यत इति चेत्। तदयुक्तम्। कुतः ? इत्याह– यस्माच्च सुदूरं विभिन्नौ सामान्य-विशेषज्ञानरूपाववग्रहा-ऽवायौ, इति कथं समकालं भवतः ?। यद् यस्माचावश्यकं सामान्यग्राहकज्ञानपूर्वकमेव विशेषग्राहकं ज्ञानम्, "नानवगृहीतमीह्यते, नानीहितं निश्चीयते" इत्यादिवचनात्। अतः कथं तयोर्युगपत् सम्भवः ? इति ॥ २४४४ ॥ २४४५ ॥

पुनरपि परः प्राह—

[2]होज्ज न विलक्खणाइं समयं सामण्ण-भेयनाणाइं। ब्रहुयाण को विरोहो समयम्मि विसेसनाणाणं ? ॥२४४६॥

नन्वाचार्य ! एवं तर्हि अस्तु यदुत– सामान्यवेदनामात्रग्राहकं सामान्यज्ञानं, शीतोष्णवेदनाविशेषग्राहकं विशेषज्ञानरूपं भेदज्ञानं

१ यत् सामान्य-विशेषौ विलक्षणौ तन्निबन्धनं यच्च। ज्ञान यच्च विभिन्नौ सुदूरतोऽवग्रहा-ऽवायौ ॥ २४४४ ॥
यच्च विशेषज्ञानं सामान्यज्ञानपूर्वकमवश्यम्। ततः सामान्य-विशेषज्ञाने नैकसमये ॥ २४४५ ॥
२ भवेतां न विलक्षणे समकं सामान्य-भेदज्ञाने। बहुकानां को विरोधः समये विशेषज्ञानानाम् ? ॥ २४४६ ॥

द्वीप-समुद्रादिरूपतया त्रिभुवनमिव समस्तमपि वस्तु नित्या-ऽनित्यादिरूपतया विचित्रपरिणाममनेकस्वरूपं भगवतामभिमतम्। अतोऽस्यै-कान्तविनश्वरलक्षणैकरूपाभ्युपगमो मिथ्यात्वमेवेति ॥ २४१६ ॥

अपिच,

सुह-दुक्ख-बंध-मुक्खा उभयनयमयाणुवट्टिणो जुत्ता। एगयरपरिच्चाए सव्वव्ववहारवोच्छित्ती ॥ २४१७ ॥[1]

भावितार्थैवेति ॥ २४१७ ॥

किमित्येकतरपरित्यागे सुखादिव्यवहाराभावः? इत्याशङ्क्य प्रमाणयन्नाह—

न सुहाइ पज्जयमए नासाओ सव्वहा मयस्सेव। न य दव्वट्ठियपक्खे निच्चत्तणओ नभस्सेव ॥२४१८॥[2]

एकस्मिन्नेव पर्यायनयमतेऽङ्गीक्रियमाणे न सुखादि जगतो घटत इति प्रतिज्ञा, सुख-दुःख-बन्ध-मोक्षादयो न घटन्त इत्यर्थः। उत्पत्त्यनन्तरं सर्वथा नाशादिति हेतुः। मृतस्येवेति दृष्टान्तः। न च द्रव्यार्थिकनयपक्षे केवले समाश्रीयमाणे सुखादि घटते, नित्यत्वेनाविचलितरूपत्वात्, नभस इवेति। तस्माद् द्रव्य-पर्यायोभयपक्ष एव सर्वमिदमुपपद्यत इत्ययमेव ग्राह्यः, केवलैकनयपक्षस्तु एकान्त-दोषलक्षकक्षीकृतत्वात् त्याज्य एवेति ॥ २४१८ ॥

पुनरप्यश्वमित्रमनुकम्पमानाः स्थविरास्तच्छिक्षामाहुः—

जइ जिणमयं पमाणं तो मा दव्वट्ठियं परिच्चयसु। सक्कस्स व होइ जओ तन्नासे सव्वनासो त्ति ॥२४१९॥[3]

पूर्वदर्शितसूत्रापालकभावार्थमजानन्नपि विभ्रमितचित्ततया तत्प्रामाण्यं पूत्कुर्वाणः किल जिनवचनप्रामाण्यावलम्बिनमात्मानं मन्यते भवान्। तद् यदि हन्त! सत्यमेव जिनमतं भवतः प्रमाणम्, ततः केवलपर्यायवादितया जिनमताभिमतमपि द्रव्यास्तिकनयं मा परित्याक्षीः— द्रव्यास्तित्वं मा प्रतिषेधयेत्यर्थः, यतो यस्मात् शाक्यस्य बौद्धस्येव तव तन्नाशे द्रव्यस्य सर्वथा विनाशे स्वीक्रियमाणे 'सव्वनासो त्ति' सर्वस्यापि तृप्ति-श्रमादेर्बन्ध-मोक्षादेश्च व्यवहारस्य नाशो भवति विलोपः प्राप्नोतीत्यर्थः ॥ २४१९ ॥

---

1 सुख-दु:ख-बन्ध-मोक्षा उभयनयमतानुवर्तिनो युक्ताः। एकतरपरित्यागे सर्वव्यवहारव्युच्छित्तिः ॥ २४१७ ॥
2 न सुखादि पर्यवमते नाशात् सर्वथा मृतस्येव। न च द्रव्यार्थिकपक्षे नित्यत्वतो नभस इव ॥ २४१८ ॥
3 यदि जिनमतं प्रमाणं ततो मा द्रव्यार्थिकं परित्याक्षीः। शाक्यस्येव भवति यतस्तन्नाशे सर्वनाश इति ॥ २४१९ ॥

च, इत्येते द्वे अपि सुदूरविलक्षणत्वात् समकं युगपद् न भवतः; बहूनां तु शीतोष्णादिविशेषज्ञानानां समय एकस्मिन् काले जायमानानां विशेषज्ञानरूपतया तेषां बहूनामपि तुल्यत्वेन वैलक्षण्याभावात् को विरोधः, येन शीतोष्णवेदनाविशेषज्ञाने युगपद् गङ्गस्य निषिध्येते ? इति ॥ २४४६ ॥

अत्रोत्तरमाह—

लक्खणभेयाउ च्चिय सामण्णं च जमणेगविसयं ति[1] । तमघेत्तुं न विसेसन्नाणाइं तेण समयम्मि ॥२४४७॥

तो सामन्नग्गहणाणंतरमीहियमवेइ तब्भेयं । इय सामन्नविसेसावेक्खो जावंतिमो भेओ ॥ २४४८ ॥

तेन कारणेन समय एकस्मिन् काले बहूनि विशेषज्ञानानि न भवन्ति । कुतः ? इत्याह— लक्षणं शीतोष्णादिविशेषणस्वरूपं तस्य परस्परं भेदाद् भिन्नत्वाद् न तद्ग्राहकाणि ज्ञानानि समकं भवन्ति, यस्माच्चानेकविषयमनेकाधारं सामान्यम्, इत्यतस्तदगृहीत्वा न विशेषज्ञानसंभूतिरस्तीति, अतोऽपि न युगपद् विशेषज्ञानानि । इदमुक्तं भवति— पूर्वं वेदनासामान्यं गृहीत्वा तत ईहां प्रविश्य 'शीतेयं पादयोर्वेदना' इति वेदनाविशेषं निश्चिनोति । शिरस्यपि प्रथमं वेदनासामान्यं गृहीत्वा तत ईहां प्रविश्य 'उष्णेयमिह वेदना' इत्यध्यवस्यति । न हि घटविशेषज्ञानादनन्तरमेव पटाश्रयसामान्यरूपेऽगृहीते पटविशेषज्ञानमुपजायते 'उग्गहो ईहअवाओ य' इत्यमुनैव क्रमेण घटादिविशेषज्ञानोत्पत्त्यभिधानात् । एवं च सति विशेषज्ञानादनन्तरमपि विशेषज्ञानं नोत्पद्यते, आस्तां पुनः समकालम्, सामान्यस्यानेकविशेषाश्रयत्वात् । तच्च पूर्वमगृहीत्वा विशेषज्ञानस्यासत्त्वादिति ।

यतश्चैवं सामान्येऽगृहीते नास्ति विशेषज्ञानम्, 'तो त्ति' ततः सामान्यग्रहणानन्तरमीहितं तद्भेदं सामान्यभेदं घटत्वादिसामान्याश्रयं घटादिविशेषमित्यर्थः, अवैति— 'घटादिरेवाऽयम्' इत्येवं निश्चिनोतीत्यर्थः । तत उत्तरभेदापेक्षया घट एव सामान्यम् । तस्मिंश्च गृहीते ईहित्वा 'धातुजोऽयम्, न मार्तः' इत्येवं निश्चिनोति । ततो धातुजोऽप्युत्तरभेदापेक्षया सामान्यम् । तस्मिंश्च गृहीते ईहित्वा 'ताम्रोऽयं न राजतादिः' इतीत्थं निश्चिनोतीति । एवं सामान्य-विशेषापेक्षा तावत् कर्तव्या यावदन्तिमो भेदः स कश्चिद् यदनन्तरमीहा न प्रवर्तते । ततश्चैवं न क्वचिद् विशेषज्ञानानां युगपत्प्रवृत्तिसंभवः, सामान्यरूपतया तु समकालमपि विशेषाणां ग्रहणं भवेत्, यथा सेना,

1 लक्षणभेदादेव सामान्य च यदनेकविषयमिति । तदगृहीत्वा न विशेषज्ञानानि तेन समये ॥ २४४७ ॥ तत सामान्यग्रहणानन्तरमीहितमवैति तद्भेदम् । इति सामान्यविशेषापेक्षा यावदन्तिमो भेदः ॥ २४४८ ॥ 2 गाथा १७८ ।

इत्यादियुक्तिप्रबन्धतः प्रज्ञाप्यमानोऽप्यसौ यावद् न किञ्चित् प्रतिपद्यते, ततस्तत्र किं संजातम् ? इत्याह–

इय पण्णविओ वि जओ न पवज्जइ सो कओ तओ बज्झो । विहरंतो रायगिहे नाउं तो खंडरक्खेहिं॥२४२०॥
गहिओ सीसेहिं समं एएऽहिमर त्ति जंपमाणेहिं । संजयवेसच्छण्णा, सज्झं सव्वे समाणेह ॥ २४२१ ॥
अम्हे सावय ! जयओ कत्थुप्पण्णा कहिं च पव्वइया । अमुगत्थ बेंति सड्ढा ते वोच्छण्णा तया चेव ॥२४२२॥
तुब्भे तव्वेसधरा भणिए भयओ सकारणं च त्ति । पडिवण्णा गुरुमूलं गंतूण तओ पडिक्कन्ता ॥ २४२३ ॥

उक्तार्था एव, नवरं 'भणिए भयओ सकारणं च त्ति' तैः खण्डरक्षश्रावकैरेवं पूर्वोक्ते भणिते सति भयतो भयात् सकारणं च सयुक्तिकं च समाकर्ण्यानुशास्तिरूपं तद्वचः प्रतिपन्नास्तेऽश्वमित्रप्रमुखा निह्नवसाधवः । इति पञ्चत्रिंशद्गाथार्थः ॥ २४२० ॥ ॥ २४२१ ॥ २४२२ ॥ २४२३ ॥

॥ इत्यश्वमित्रनामा चतुर्थः सामुच्छेदिकनिह्नवः समाप्तः ॥

अथ पञ्चमवक्तव्यतामभिधित्सुराह—

अट्ठावीसा दो वाससया तइआ सिद्धिं गयस्स वीरस्स । दोकिरियाणं दिट्ठी उल्लुगतीरे समुप्पण्णा ॥२४२४॥

अष्टाविंशत्यभ्यधिके द्वे वर्षशते तदा सिद्धिं गतस्य श्रीमन्महावीरस्यात्रान्तरे द्वैक्रियनिह्नवानां दृष्टिरुल्लुकातीरे समुत्पन्नेति ॥ २४२४ ॥

कथं पुनरियमुत्पन्ना ? इत्याह—

---

१ इति प्रज्ञापितोऽपि यतो न प्रपद्यते स कृतस्ततो बाह्य । विहरन् राजगृहे ज्ञात्वा ततः खण्डरक्षैः ॥ २४२० ॥
गृहीत. शिष्यै. सममेतेऽभिमरा इति जल्पद्भिः । संयतवेषच्छन्ना, सद्यः सर्वान् समानयेह ॥ २४२१ ॥
वयं श्रावक ! यतय कुत्रोत्पन्ना कदा वा प्रव्रजिता । अमुत्रक ब्रुवन्ति श्राद्धास्ते व्युच्छिन्नास्तदैव ॥ २४२२ ॥
यूयं तद्वेषधरा भणिते भयत सकारण चेति । प्रतिपन्ना गुरुमूलं गत्वा ततः प्रतिक्रान्ताः ॥ २४२३ ॥
२ अष्टाविंशत्या द्वे वर्षशते तदा सिद्धिं गतस्य वीरस्य । द्वैक्रियाणां दृष्टिरुल्लुकातीरे समुत्पन्ना ॥ २४२४ ॥

वनमित्यादि, न तु युगपदुपयोग इत्युक्तमेव। तथा च भिन्नकाले एव शीतोष्णविशेषज्ञाने। ततो भ्रान्तमेव समकालं शीतोष्ण-क्रियाद्वयवेदनं भवत इति ॥ २४४७ ॥ २४४८ ॥

इत्यादियुक्तिशतैः प्रज्ञापितोऽपि न स्वाग्रहं मुक्तवान् गङ्गः। ततः किम्? इत्याह—

इय पण्णविओ वि जओ न पवज्जइ तो तओ कओ बज्झो। तो रायगिहे समयं किरियाओ दो परूवंतो ॥२४४९॥[1]

मणिनागेणारद्धो भओववत्तिओ पडिबोहिओ वोत्तुं। इच्छामो गुरुमूलं गंतूण तओ पडिक्कंतो ॥२४५०॥

व्याख्यातार्थे एव ॥ इति सप्तविंशतिगाथार्थः ॥ २४४९ ॥ २४५० ॥

॥ इति गङ्गाख्यः पञ्चमो निह्नवः समाप्तः ॥

अथ षष्ठवक्तव्यतामभिधित्सुराह—

पंच सया चोयाला तइआ सिद्धिं गयस्स वीरस्स। पुरिमंतरंजियाए तेरासियदिट्ठी उप्पन्ना ॥२४५१॥[2]

पञ्च वर्षशतानि चतुश्चत्वारिंशदधिकानि तदा सिद्धिं गतस्य श्रीमन्महावीरस्य, अत्रान्तरेऽन्तरञ्जिकायां पुर्यां त्रैराशिकदृष्टि-रुत्पन्नेति ॥ २४५१ ॥

कथमुत्पन्ना? इत्याह—

पुरिमंतरंजि[3] भूयगिह बलसिरी सिरिगुत्त रोहगुत्ते य। परिवायपोट्टसाले घोसणपडिसेहणा वाए ॥२४५२॥

संग्रहगाथेयम्। अस्याश्च कथानकादर्थोऽवसेयः। तच्चेदम्– अन्तरञ्जिका नाम नगरी। तस्याश्च बहिर्भूतगृहं नाम चैत्यम्। तत्र च श्रीगुप्तनामाचार्यः स्थितः। तस्यां च नगर्यां बलश्रीर्नाम राजा। श्रीगुप्ताचार्याणां च रोहगुप्तो नाम शिष्योऽन्यत्र ग्रामे स्थित आसीत्। अतोऽसौ गुरुवन्दनार्थमन्तरञ्जिकायामागतः। तत्र चैकः परिव्राजको लोहपट्टकेनोदरं बद्ध्वा जम्बूवृक्षशाखया च हस्ते गृही-

---

१ इति प्रज्ञापितोऽपि यतो न प्रपद्यते ततः सको कृतो बाह्यः। ततो राजगृहे समकं क्रिये द्वे प्ररूपयन् ॥ २४४९ ॥
मणिनागेनारब्धो भयोपपत्तित- प्रतिबोधित उक्त्वा। इच्छामो गुरुमूलं गत्वा ततः प्रतिक्रान्त ॥ २४५० ॥

२ पञ्च शतानि चतुश्चत्वारिंशता तदा सिद्धिं गतस्य वीरस्य। पुर्यामन्तरञ्जिकायां त्रैराशिकदृष्टिरुत्पन्ना ॥ २४५१ ॥

३ पुर्यन्तरञ्जिका भूतगृहं बलश्रीः श्रीगुप्तो रोहगुप्तश्च। परिव्राजकपोट्टशालो घोषणप्रतिषेधना वाद ॥ २४५२ ॥

**नेइखेडजणवउल्लुग महगिरि धणगुत्त अज्जगंगे य। किरिया दो रायगिहे महातवोतीरमणिनाए ॥ २४२५॥**

उल्लुका नाम नदी तदुपलक्षितो जनपदोऽप्युल्लुका। उल्लुकानद्याश्चैकस्मिंस्तीरे धूलिप्राकारोपेतनगरविशेषरूपं खेटस्थानमासीत्, द्वितीये तूल्लुकातीरं नाम नगरम्। अन्ये त्वाहुः– एतदेवोल्लुकातीरं धूलिप्राकारोपेतत्वात् खेटमुच्यते। तत्र च महागिरिशिष्यो धनगुप्तो नाम। अस्यापि शिष्य आर्यगङ्गो नामाचार्यः। अयं च नद्याः पूर्वतटे, तदाचार्यस्त्वपरतटे। ततोऽन्यदा शरत्समये सूरिवन्दनार्थं गच्छन् गङ्गो नदीमुत्तरति। स च खल्वाटः। ततस्तस्योपरिष्टादुष्णेन दह्यते खल्ली। अधस्तात्तु नद्याः शीतलजलेन शैत्यमुत्पद्यते। ततोऽत्रान्तरे कथमपि मिथ्यात्वमोहनीयोदयादसौ चिन्तितवान्– अहो! सिद्धान्ते युगपत्क्रियाद्वयानुभवः किल निषिद्धः, अहं त्वेकस्मिन्नेव समये शैत्यमौष्ण्यं च वेदयामि, अतोऽनुभवविरुद्धत्वाद् नेदमागमोक्तं शोभनमाभाति। इति विचिन्त्य गुरुभ्यो निवेदयामास। ततस्तै-र्वक्ष्यमाणयुक्तिभिः प्रज्ञापितोऽसौ। यदा च स्वाग्रहग्रस्तबुद्धित्वाद् न किञ्चित् प्रतिपद्यते। तदोद्घाट्य बाह्यः कृतो विहरन् राजगृहनगरमागतः। तत्र च महातपस्तीरप्रभवनाम्नि प्रश्रवणे मणिनागनाम्नो नागस्य चैत्यमस्ति। तत्समीपे च स्थितो गङ्गः पर्षत्पुरस्सरं युगपत्क्रियाद्वय-वेदनं प्ररूपयति स्म। तच्च श्रुत्वा प्रकुपितो मणिनागस्तमत्रादीत्– अरे दुष्टशिक्षक! किमेवं प्रज्ञापयसि, यतोऽत्रैव प्रदेशे समवसृतेन श्रीमद्वर्धमानस्वामिनैकस्मिन् समये एकस्या एव क्रियाया वेदनं प्ररूपितम्। तच्चेह स्थितेन मयापि श्रुतम्। तत् किं ततोऽपि लष्टतरः प्ररूपको भवान्, येनैवं युगपत् क्रियाद्वयवेदनं प्ररूपयसि?। तत्परित्यजैतां कूटप्ररूपणाम्, अन्यथा नाशयिष्यामि त्वाम्। इत्यादि-तदुदितभयवाक्यैर्युक्तिवचनैश्च प्रबुद्धोऽसौ मिथ्यादुष्कृतं दत्त्वा गुरुमूलं गत्वा प्रतिक्रान्त इति ॥ २४२५ ॥

अत्र भाष्यम्—

**नइमुल्लुगमुत्तरओ सरए सीयजलमज्जगंगस्स। सूराभितत्तसिरसो सीउसिणवेयणोभयओ ॥ २४२६ ॥**

**लग्गोऽयमसग्गाहो जुगवं उभयकिरिओवओगो त्ति। जं दो वि समयमेव य सीउसिणवेयणाओ मे ॥२४२७॥**

गतार्थे, नवरमार्यगङ्गस्य लग्नोऽयमसद्ग्रहो यदुत– युगपत्क्रियाद्वयसंवेदनोपयोगोऽस्ति, यद् यस्माद् मे मम द्वे अपि शीतोष्ण-

[1] नरखेटजनपदोल्लुके महागिरिर्धनगुप्त आर्यगङ्गश्च। क्रिये द्वे राजगृहे महातपस्तीरमणिनाग. ॥ २४२५ ॥

[2] नदीमुल्लुकामुत्तरत शरदि शीतजलामार्यगङ्गस्य। सूराभितप्तशिरस' शीतोष्णवेदनोभयत' ॥ २४२६ ॥ लग्नोऽयमसद्ग्रहो युगपदुभयक्रियोपयोग इति। यद् द्वे अपि समकमेव च शीतोष्णवेदने मे ॥ २४२७ ॥

[1]बहुसो स भण्णमाणो गुरुणा, पडिभणइ किमवसिद्धंतो। जइ नाम जीवदेसो नोजीवो हुज्ज को दोसो ? ॥२४५९॥

व्याख्या– पोट्टशालपरिव्राजकं जित्वा गुरुचरणमूलमागत्य रोहगुप्तोऽपरनाम्ना तु षडुलूको भणति– स परिव्राजकाधमः समस्तनृपसभामध्ये यथा वादे मया विजितस्तथा शृणुत यूयं, कथयामीति। तदेवाह– राशिद्वयगृहीतपक्षः स परिव्राजको मया वादे विजित इति प्राक्तनेन संबन्धः। किं कृत्वा ? इत्याह– तृतीयं जीवराशिमादाय पक्षीकृत्य। कुतो दृष्टान्तादसौ पक्षीकृत्य ? इत्याह– गृहकोकिलादीनां पुच्छमेव छिन्नत्वाच्छेदस्तदुदाहरणतस्तद्दृष्टान्तादित्यर्थः। एवं रोहगुप्तेनाभिहिते गुरुर्भणति– सुष्ठु कृतं त्वया यदसौ जितः, किन्तु तत्रोत्तिष्ठता त्वया किमेतद् नाभिहितम् ?। किम् ? इत्याह– तृतीयो नोजीवराशिरित्ययं 'णे त्ति' नोऽस्माकमपसिद्धान्तः, जीवाऽजीवलक्षणराशिद्वयस्यैवाऽस्मत्सिद्धान्तेऽभिहितत्वादिति। तस्मादेवं गतेऽप्येतावत्यपि गत इत्यर्थः, तत्र परिषन्मध्ये गत्वा भण प्रतिपादय 'नायं णे त्ति' नोऽस्माकं नायं सिद्धान्तः, किन्तु स परिव्राजकस्तद्बुद्धिं परिभूय तिरस्कृत्य शमित उपशमं नीतो दर्पं त्याजित इत्यर्थः। एवं बहुशोऽनेकधा गुरुणा भण्यमानः स रोहगुप्तः प्रतिभणति प्रत्युत्तरयति– आचार्य ! किमयमपसिद्धान्तः ?। यदि हि नोजीवलक्षणतृतीयराश्यभ्युपगमे कोऽपि दोषः स्यात् तदा स्यादयमपसिद्धान्तः, न चैतदस्ति। कुतः ? इत्याह– यदि नाम गृहकोकिलापुच्छादिजीवदेशो नोजीवो भवेत्– नोजीवत्वेनाभ्युपगम्येत, तर्हि को दोषः स्यात् ? न कमपि दोषमत्र पश्याम इत्यर्थः। ततः किमित्यपसिद्धान्तत्वे दोषपरिहारार्थं पुनर्मां तत्र प्रेषयसि ? इति भावः ॥ २४५५ ॥ २४५६ ॥ २४५७ ॥ २४५८ ॥ २४५९ ॥

कस्माद् न दोषः ? इत्याह––

[2]जं देसनिसेहपरो नोसद्दो जीवदव्वदेसो य। गिहकोइलाइपुच्छं त्रिलक्खणं तेण नोजीवो ॥ २४६० ॥

यद् यस्माद् 'नोजीवः' इत्यत्र नोशब्दो देशनिषेधपरो न तु सर्वनिषेधपरः, नोजीवो जीवैकदेशो न तु सर्वस्यापि जीवस्याभाव इत्यर्थः। भवत्वेवं देशनिषेधको नोशब्दः, परं गृहकोकिलादिपुच्छं जीवदेशो न भविष्यतीत्याशङ्क्याह– जीवद्रव्यैकदेशश्च गृहकोकिलादिपुच्छम्, आदिशब्दाच्छिन्नपुरुषादिहस्तादयः परिगृह्यन्ते। कथंभूतं तद् गृहकोकिलादि पुच्छम् ? इत्याह– त्रिलक्षणं 'जीवा-ऽजीवेभ्यः' इति गम्यते; तथाहि– न तावद् गृहकोकालादिपुच्छं जीवत्वेन व्यपदेष्टुं शक्यते, तत्कायैकदेशत्वेन तद्विलक्षणत्वात्।

१ बहुश स भण्यमानो गुरुणा प्रतिभणति किमपसिद्धान्त। यदि नाम जीवदेश नोजीवो भवेत् को दोषः ? ॥ २४५९ ॥
२ यद् देशनिषेधपरो नोशब्दो जीवद्रव्यदेशश्च। गृहकोकिलादिपुच्छं विलक्षण तेन नोजीव. ॥ २४६० ॥

वेदने समकालमेव स्तः । प्रयोगश्चात्र– युगपदुभयक्रियासंवेदनमस्ति, अनुभवसिद्धत्वात्, मम पाद-शिरोगतशीतोष्णक्रियासंवेदनवदिति ॥ २४२६ ॥ २४२७ ॥

एवं गङ्गेनोक्ते किमभूत् ? इत्याह—

[1]तरतमजोगेणायं गुरुणाऽभिहिओ तुमं न लक्खेसि । समयाइसुहुमयाओ मणोऽतिचलसुहुमयाओ य ॥२४२८॥

गुरुणाऽभिहितोऽसौ– हन्त ! योऽयं युगपत्क्रियाद्वयानुभवस्त्वया गीयते स तरतमयोगेन क्रमेणैव भवतः संपद्यते न युगपत्, परं सदपि क्रमभवनमस्य त्वं न लक्षयसि, समया-ऽऽवलिकादेः कालस्य सूक्ष्मत्वात्, तथा मनसश्चातिचलत्वेनातिसूक्ष्मत्वेन चाशुसंचारित्वादिति । तस्मात् 'अनुभवसिद्धत्वात्' इत्यसिद्धोऽयं हेतुरिति ॥ २४२८ ॥

हेत्वसिद्धिमेव भावयति—

[2]सुहुमासुचरं चित्तं इंदियदेसेण जेण जं कालं । संबज्झइ तं तम्मत्तनाणहेउ त्ति नो तेण ॥२४२९॥

उवलभए किरियाओ जुगवं दो दूरभिण्णदेसाओ । पाय-सिरोगयसीउण्हवेयणाणुभवरूवाओ ॥२४३०॥

सूक्ष्ममाशुचरं च चित्तं मनः, तत्र सूक्ष्मं सूक्ष्मातीन्द्रियपुद्गलस्कन्धनिर्वृत्तत्वात्, आशुचरं तु शीघ्रसंचरणशीलत्वात् । ततश्च तदेवंभूतं चित्तं येन येन कायाद्याकारस्पर्शनादिद्रव्येन्द्रियसंबन्धिना देशेन सह यस्मिन् काले संबध्यते संयुज्यते तस्मिन् काले तस्य तन्मात्रज्ञानहेतुर्भवति– येन स्पर्शनादिद्रव्येन्द्रियदेशेन संबध्यते तज्जन्यस्यैव शीतादिविषयस्योष्णादिविषयस्य वैकतरविज्ञानस्य हेतुर्जायते, न तु येनेन्द्रियदेशेन सह तत्काले स्वयं तद् न संबद्धं तज्जन्यज्ञानस्यापि हेतुरित्यर्थः। इतिशब्दो वाक्यसमाप्त्यर्थः । येनैवम्, तेन कारणेन नो नैव दूरभिन्नदेशे द्वे क्रिये कोऽपि युगपदुपलभते संवेदयत इति संबन्धः । कथंभूते द्वे क्रिये ? इत्याह– पाद-शिरोगतशीतो-ष्णवेदनयोरनुभवनमनुभवस्तद्रूपे तदात्मिके । अत्र प्रयोगः– इह पाद-शिरोगतशीतो-ष्णवेदने युगपद् न कोऽपि संवेदयते, भिन्नदेशत्वात्, विन्ध्य-हिमवच्छिखरस्पर्शनक्रियाद्वयवदिति 'अनुभवसिद्धत्वात्' इत्यसिद्धोऽयं हेतुरिति ॥ २४२९ ॥ २४३० ॥

---

१ तरतमयोगेनायं गुरुणाऽभिहितस्त्वं न लक्षयसि । समयादिसूक्ष्मतातो मनोऽतिचलसूक्ष्मतातश्च ॥ २४२८ ॥

२ सूक्ष्माशुचरं चित्तमिन्द्रियदेशेन येन यस्मिन् काले । संबध्यते तत् तन्मात्रज्ञानहेतुरिति नो तेन ॥ २४२९ ॥
उपलभते क्रिये युगपद् द्वे दूर-भिन्नदेशात् । पाद-शिरोगतशीतो-ष्णवेदनानुभवरूपे ॥ २४३० ॥

नाप्यजीव इत्यभिधातुं पार्यते, स्फुरणादिभिस्तेभ्योऽपि विलक्षणत्वात्। येनैवम्, तेन कारणेन पारिशेष्याद् नोजीव एतदुच्यत इति ॥२४६०॥

सिद्धान्तेऽपि धर्मास्तिकायादिदेशवचनादुक्त एव नोजीवः। कथम्? इत्याह—

धम्माइदसविहादेसओ य देसो वि जं पिहुं वत्थुं। अपिहुब्भूओ किं पुण च्छिन्नं गिहकोलियापुच्छं? ॥२४६१॥

इच्छइ जीवपएसं नोजीवं जं च समभिरूढो वि। तेण त्थि तओ समए घडदेसो नोघडो जह वा ॥२४६२॥

व्याख्या– चकारस्य भिन्नक्रमत्वाद् यद् यस्मात् कारणाद् देशोऽपीत्यपिशब्दस्यापि भिन्नक्रमत्वाद् धर्मास्तिकायादिदेशिनः 'अपिहुब्भूओ त्ति' अपृथग्भूतोऽप्येकत्वमापन्नोऽपि देशः 'पिहं वत्थुं ति' सिद्धान्ते पृथग् वस्तु 'भणितः' इति शेषः, पृथग्वस्तुत्वेन निर्दिष्ट इत्यर्थः। किं पुनर्यच्छिन्नमात्मनः पृथग्भूतं कृतं तद् गृहकोकिलादिपुच्छं पृथग् वस्तु न भविष्यति?– भविष्यत्येवेति। तच्च जीवाच्छिन्नत्वेन पृथग्भूतत्वात्, स्फुरणादिना चाजीवविलक्षणत्वात् सामर्थ्याद् नोजीव एवेति भावः। कुतः पुनर्वचनादेष सिद्धान्ते पृथग् वस्तु भणितः? इत्याह–'धम्माइदसविहादेसउ त्ति' धर्मास्तिकायादीनाममूर्ताजीवानां दशविधादेशतो दशविधत्वभणनात्। एतदुक्तं भवति– अजीवप्ररूपणां कुर्वद्भिरुक्तं परममुनिभिः– "अजीवा दुविहा पण्णत्ता, तं जहा– रूविअजीवा य, अरूविअजीवा य। रूविअजीवा चउव्विहा पण्णत्ता, तं जहा– खंधा, देसा, पएसा, परमाणुपोग्गला। अरूविअजीवा दसविहा पण्णत्ता, तं जहा– धम्मत्थिकाए, धम्मत्थिकायस्स देसे, धम्मत्थिकायस्स पएसे, एवमधम्मत्थिकाए वि, आगासत्थिकाए वि, अद्धासमए"। तदेवं धर्मास्तिकायादीनां दशविधत्वभणनेन तद्देशस्य पृथग्वस्तुत्वमुक्तमेव, अन्यथा दशविधत्वानुपपत्तेः। यदा च धर्मास्तिकायादीनां देशस्तेभ्योऽपृथग्भूतोऽपि पृथग् वस्तूच्यते, तदा गृहकोकिलापुच्छादिकं छिन्नत्वेन जीवात् पृथग्भूतं सुतरां वस्तु भवति। तच्च जीवा-ऽजीवविलक्षणत्वाद् नोजीव इत्युक्तमेवेति। अपिच, यद् यस्मात् कारणाज्जीवप्रदेशं नोजीवं समभिरूढनयोऽपीच्छति, तेन तस्मात् तकोऽसौ नोजीवः समये सिद्धान्ते-

---

१ धर्मादिदशविधादेशतश्च देशोऽपि यत् पृथग् वस्तु। अपृथग्भूत' किं पुनश्छिन्नं गृहकोकिलापुच्छम्? ॥ २४६१॥

इच्छति जीवप्रदेशं नोजीवं यच्च समभिरूढोऽपि। तेनास्ति सकः समये घटदेशो नोघटो यथा वा ॥ २४६२ ॥

२ अजीवा द्विविधाः प्रज्ञप्ताः, तद्यथा– रूप्यजीवाश्च, अरूप्यजीवाश्च। रूप्यजीवाश्चतुर्विधा. प्रज्ञप्ता, तद्यथा– स्कन्धाः, देशा, प्रदेशाः, परमाणुपुद्गलाः। अरूप्यजीवा दशविधा. प्रज्ञप्ताः, तद्यथा– धर्मास्तिकायो धर्मास्तिकायस्य देशः, धर्मास्तिकायस्य प्रदेशः, एवमधर्मास्तिकायोऽपि, आकाशास्तिकायोऽपि अद्धासमयः।

किञ्च,

[1]उवओगमओ जीवो उवउज्जइ जेण जम्मि जं कालं । सो तम्मओवओगो होइ जहिंदोवओगम्मि ॥२४३१॥

उपयोगेनैव केवलेन निर्वृत्त उपयोगमयो जीवः । ततः स येन केनापि स्पर्शनादीन्द्रियदेशेन करणभूतेन यस्मिन् शीतोष्णाद्यन्यतरविषये 'जं कालं ति' यस्मिन् काल उपयुज्यते सावधानो भवति तन्मयोपयोगो भवति– यत्र शीताद्यन्यतरार्थ उपयुक्तस्तन्मयोपयोग एव भवति नान्यथोपयुक्त इत्यर्थः । उदाहरणमाह– 'जहिंदोवओगम्मि त्ति' यथेन्द्रोपयोगे वर्तमानो माणवकस्तन्मयोपयोग एव भवति, न पुनरर्थान्तरमयोपयोगः । इदमत्र तात्पर्यम्– एकस्मिन् काल एकत्रैवार्थ उपयुक्तो जीवः संभवति, न त्वर्थान्तरे, पूर्वोक्तसांकर्यादिदोषप्रसङ्गात् । ततश्च युगपत्क्रियाद्वयोपयोगानुभवोऽसिद्ध एवेति ॥ २४३१ ॥

एकस्मिन्नर्थ उपयुक्तः किमित्यर्थान्तरेऽपि नोपयुज्यते ? इत्याह—

[2]सो तदुवओगमेत्तोवउत्तसत्ति त्ति तस्समं चेव । अत्थंतरोवओगं जाउ कहं केण वंसेण ? ॥ २४३२ ॥

स जीवः 'तदुवओगमेत्तोवउत्तसत्ति त्ति' तस्य विवक्षितैकार्थस्योपयोगस्तदुपयोगः स एव तन्मात्रं तत्रोपयुक्ता व्यापृता निष्ठां गता शक्तिर्यस्य स तदुपयोगमात्रोपयुक्तशक्तिरिति कृत्वा कथं तत्समकालमेवार्थान्तर उपयोगं यातु ?– न कथञ्चिदित्यर्थः, सांकर्यादिप्रसङ्गात् । किञ्च, सर्वैरपि स्वप्रदेशैरेकस्मिन्नर्थ उपयुक्तो जीवः केनोद्वरितेनांशेनार्थान्तरोपयोगं व्रजतु ? । नास्त्येव हि स कश्चिदुद्वरितोंशो येन तत्समकमेवार्थान्तरोपयोगमसौ गच्छेदिति भावः ॥ २४३२ ॥

यदि समकालमेव क्रियाद्वयोपयोगो न भवति, तर्हि कथमहं तं संवेदयामि ? इत्याशङ्क्याह—

[3]समयाइसुहुमयाओ मन्नसि जुगवं च भिन्नकालं पि । उप्पलदलसयवेहं व जह व तदलायचक्कं ति ॥२४३३॥

समयावलिकादिकालकृतविभागस्य सूक्ष्मत्वाद् भिन्नकालमपि कालविभागेन प्रवृत्तमपि क्रियाद्वयसंवेदनमुत्पलपत्रशतवेधवद् युगपत् प्रवृत्तमिव मन्यसे त्वम् । न हि उत्पलपत्रशतमौत्तराधर्येण व्यवस्थापितं सुतीक्ष्णयापि सूच्या छेकेन समर्थेनापि च वेधकर्त्रा सम-

१ उपयोगमयो जीव उपयुज्यते येन यस्मिन् यस्मिन् काले । स तन्मयोपयोगो भवति यथेन्द्रोपयोगे ॥ २४३१॥
२ स तदुपयोगमात्रोपयुक्तशक्तिरिति तत्सममेव । अर्थान्तरोपयोग यातु कथं केन वाशेन ? ॥ २४३२ ॥
३ समयादिसूक्ष्मतातो मन्यसे युगपच्च भिन्नकालमपि । उत्पलदलशतवेधमिव यथा वा तदलातचक्रमिति ॥ २४३३ ॥

ऽप्यस्ति, न पुनर्मयैव केवलेनोच्यते; तथाचानुयोगद्वारेषु प्रमाणद्वारान्तर्गतं नयप्रमाणं विचारयता प्रोक्तम्– "समभिरूढो सद्दनयं भणइ– जइ कम्मधारएण भणसि तो एवं भणाहि– जीवे य से पएसे य से सपएसे नोजीवे" इति। तदनेन प्रदेशलक्षणो जीवैकदेशो नोजीव उक्तः, यथा घटैकदेशो नोघट इति । तस्मादस्ति नोजीवलक्षणस्तृतीयराशिः, युक्त्या-ऽऽगमसिद्धत्वात्, जीवा-ऽजीवादितत्त्ववदिति ॥ २४६१ ॥ २४६२ ॥

तदेवं षडुलूकेनोक्त आचार्यः प्रतिविधानमाह—

जइ ते सुयं पमाणं तो रासी तेसु तेसु सुत्तेसु । दो जीवाजीवाणं न सुए नोजीवरासि त्ति ॥२४६३॥

'धम्माइदसविहादेसओ य' इत्याद्युपन्यासात् सूत्रप्रामाण्यवादी किल लक्ष्यते भवान् । तद् यदि सत्यमेव तव सूत्रं प्रमाणम्, ततस्तर्हि तेषु तेषु सूत्रेषु जीवा-ऽजीवरूपौ द्वावेव राशी प्रोक्तौ, तथा च स्थानाङ्गसूत्रम्– "दुवे रासी पण्णत्ता, तं जहा– जीवा चेव अजीवा चेव" । तथा, अनुयोगद्वारसूत्रेऽप्युक्तम्– "कइविहा णं भन्ते ! दव्वा पण्णत्ता। गोयमा ! दुविहा पण्णत्ता, तं जहा– जीवदव्वा य अजीवदव्वा य" । तथा, उत्तराध्ययनसूत्रे चाभिहितम्– "जीवा चेव अजीवा य एस लोए वियाहिए" इत्याद्यन्येष्वपि सूत्रेषु द्रष्टव्यम् । नोजीवराशिस्तु तृतीयः श्रुते न क्वचिदप्यभिहितः, तत् कथं तत्सत्त्वप्ररूपणा न श्रुताशातना ? इति । न च धर्मास्तिकायादीनां देशस्तेभ्यो भिन्नः कोऽप्यस्ति, विवक्षामात्रेणैव तस्य भिन्नवस्तुत्वकल्पनात् ॥ २४६३ ॥

एवं पुच्छादिकमपि गृहकोकिलादिजीवेभ्योऽभिन्नमेव, तत्संबद्धत्वात्, अतो जीव एव तत्, न तु नोजीव इति दर्शयन्नाह—

गिहकोलियाइपुच्छे छिन्नम्मि तदंतरालसंबंधो । सुत्तेऽभिहिओ सुहुमामुत्तत्तणओ तदग्गहणं ॥२४६४॥

गृहकोकिलादीनां पुच्छादिकेऽवयवे छुरिकादिना छिन्नेऽपि तयोर्गृहकोकिल-पुच्छादिवस्तुनोर्यदन्तरालं विचालं तत्र जीवप्रदेशानां

---

१ समभिरूढ शब्दनय भणति– यदि कर्मधारयेण भणसि तत एव भण– जीवश्च स प्रदेशश्च तस्य स्वप्रदेशो नोजीवः ।
२ यदि ते श्रुतं प्रमाणं ततो राशी तेषु तेषु सूत्रेषु । द्वौ जीवा-ऽजीवानां न श्रुते नोजीवराशिरिति ॥ २४६३ ॥
३ द्वौ राशी प्रज्ञप्तौ, तद्यथा– जीवाश्चैव, अजीवाश्चैव ।
४ कतिविधानि भगवन् ! द्रव्याणि प्रज्ञप्तानि ? । गौतम ! द्विविधे प्रज्ञप्ते, तद्यथा– जीवद्रव्यं च अजीवद्रव्यं च ।
५ गृहकोकिलादिपुच्छे छिन्ने तदन्तरालसंबन्धः । सूत्रेऽभिहित सूक्ष्मा-ऽमूर्तत्वतस्तदग्रहणम् ॥ २४६४ ॥

कालमेव विध्यते, किन्तु कालभेदेन, उपर्युपरितनेऽविद्धेऽधोऽधोवर्तिनः पत्रस्य वेधायोगात् , अथ च वेधकर्ता युगपद् विहितमेव वेधं मन्यते, तद्वेधनकालभेदस्य सूक्ष्मत्वेन दुर्लक्षत्वात् । यथा वा तत् प्रसिद्धमलातचक्रं कालभेदेन दिक्षु भ्रमदपि भ्रमणकालभेदस्य सूक्ष्मत्वेन दुरवगमत्वाद् निरन्तरभ्रमणमेव लक्ष्यते । एवमिहापि शीतो-ष्णक्रियानुभवकालभेदस्य सूक्ष्मत्वेन दुरवसेयत्वाद् युगपदिव तदनुभवं मन्यते भवानिति ॥ २४३३ ॥

मनोऽपि शिरः-पादादिभिः स्पर्शनेन्द्रियदेशैरिन्द्रियान्तरैश्च युगपद् न संबध्यते किन्तु क्रमेणैव, केवलमाशुचारित्वेन सूक्ष्मत्वेन च तस्य क्रमसंबन्धो न लक्ष्यत इति दर्शयन्नाह—

[1]चित्तं पि नेंदियाइं समेइ सममह य खिप्पचारि त्ति । समयं व सुक्कसक्कुलिदसणे सव्वोवलद्धि त्ति ॥२४३४॥

चित्तमपि च नैवेन्द्रियाणि सममेव समेति—मनोऽपि नैवेन्द्रियैः सह युगपत् संबध्यत इत्यर्थः । उपलक्षणत्वाद् नापि शिरः-पादादिभिः स्पर्शनेन्द्रियदेशैर्युगपत् संबध्यते, अथ च क्षिप्रचारि शीघ्रसंचरणशीलं तदिति कृत्वा समकमिव युगपदिव 'सर्वैस्तैः संबद्धं लक्ष्यते' इति शेषः । दृष्टान्तमाह— 'समयं वेत्यादि' । 'समयं वा' इत्येतदनन्तरं योजितमप्यावृत्त्या पुनरपीह योज्यते । तत्र वाशब्दो यथार्थे । यथाशब्दश्च दृष्टान्तोपन्यासार्थे । यथा शुष्कशष्कुलिकादशने सर्वेषामपि शष्कुलिकागतरूप-रस-गन्ध-स्पर्श-शब्दानामुपलब्धिः सर्वोपलब्धिरसमकं प्रवृत्तापि समकं लक्ष्यते तथाऽत्रापि मनः शिरः पादादिभिः स्पर्शनेन्द्रियदेशैरिन्द्रियान्तरैश्च क्रमेण संबध्यमानमपि युगपत् संबध्यमानं लक्ष्यत इत्यर्थः । इदमत्र हृदयम्— इह दीर्घां शुष्कां च शष्कुलिकां कस्यचिद् भक्षयतस्तद्रूपं चक्षुषा वीक्षमाणस्य रूपज्ञानमुत्पद्यते, तद्गन्धं च घ्राणेनाऽऽजिघ्रतो गन्धज्ञानम् , तद्रसं च रसनयाऽऽस्वादयतो रसज्ञानम् , तत्स्पर्शं च स्पर्शनेन वेदयतः स्पर्शज्ञानम् , चर्वणोत्थं तच्छब्दं च शृण्वतः शब्दज्ञानमुपजायते । एतानि च पञ्चापि ज्ञानानि क्रमेणैव जायन्ते, अन्यथा सांकर्यादिदोषप्रसङ्गात् , मत्यादिज्ञानोपयोगकाले चावध्याद्युपयोगस्यापि प्राप्तेः, एकं च घटादिकमर्थं विकल्पयतोऽनन्तानामपि घटाद्यर्थविकल्पानां प्रवृत्तिप्रसङ्गात् । न चैतदस्ति । ततः क्रमेण जायमानान्यप्येतानि ज्ञानानि प्रतिपत्ता 'युगपदुत्पद्यन्ते' इति मन्यते, समया-ऽऽवलिकादिकालविभागस्य सूक्ष्मत्वात् । एवमिहापि शिरः-पादादिभिः स्पर्शनेन्द्रियदेशैरिन्द्रियान्तरैश्च क्रमेण संबध्यमानमपि मनः प्रतिपत्ता युगपत् संबध्यमानमध्यवस्यति । न तु तत्त्वतोऽसौ मनसः स्वभावः, तथा चोक्तम्— "[2]युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" इति । यदि चोक्तन्यायेन सर्वेन्द्रि-

१ चित्तमपि नेन्द्रियाणि समेति सममथ च क्षिप्रचारीति । समकमिव शुष्कशष्कुलीदशने सर्वोपलब्धिरिति ॥ २२३४ ॥ २ गौतमभाष्ये १,१,१६ ।

संवन्धः संयोगस्तदन्तरालसंबन्धः सूत्रेऽभिहित एव । तथा च 'भगवतीसूत्रम्- अहे भंते ! कुम्मा कुम्मावलिया, गोहा गोहावलिया, गोणे गोणावलिया, मणुसे मणुसावलिया, महिसे महिसावलिया, एएसिं णं दुहा वा, तिहा वा, असंज्जेखज्जहा वा छिन्नाणं जे अंतरा ते वि णं तेहिं जीवपएसेहिं फुडा?। हंता फुडा। पुरिसे णं भंते ! अंतरे हत्थेण वा, पाएण वा, अंगुलियाए वा, कट्ठेण वा, किलिंचेण वा, आमुसमाणे वा, संमुसमाणे वा, आलिहमाणे वा, विलिहमाणे वा, अण्णयरेण वा तिक्खेणं सत्थजाएणं आछिंदमाणे वा, विछिंदमाणे वा अगणिकाएणं समोडुहमाणे तेसिं जीवपएसाणं किंचि आवाहं वा विवाहं वा उप्पाएइ, विच्छेयं वा करेइ ?। नो इणट्ठे समट्ठे । नो खलु तत्थ सत्थं संकमइ" इति । यदि नामैवं सूत्रे जीवप्रदेशानां तदन्तरालसंवन्धोऽभिहितः, तर्हि तदन्तराले ते जीवप्रदेशाः किमिति नोपलभ्यन्ते ? इत्याह- 'सुहुमेत्यादि' कार्मणशरीरस्य सूक्ष्मत्वात्, जीवप्रदेशानां चामूर्तत्वादन्तराले तेषां जीवप्रदेशानां सतामप्यग्रहणं तदग्रहणमिति ॥ २४६४ ॥

ननु यथा देहे पुच्छादौ च स्फुरणादिभिर्लिङ्गैर्जीवप्रदेशा गृह्यन्ते, तथा सन्तोऽप्यन्तराले किमिति ते न गृह्यन्ते ? इत्याह—

[2]गेज्झा मुत्तिगयाओ नागासे जहा पईवरस्सीओ । तह जीवलक्खणाइं देहे न तदंतरालम्मि ॥२४६५ ॥

इह भू-कुड्य-वरण्डका-ऽन्धकारादीनि वस्तुन्येव मूर्तियोगाद् मूर्त्तिरुच्यन्ते । ततश्च यथा मूर्तिगता यथोक्तवस्तुगता एवेत्यर्थः, प्रदीपरश्मयो ग्राह्या भवन्ति, न तु केवल आकाशे प्रसृताः, तथा तेनैव प्रकारेण जीवो लक्ष्यते यैस्तानि जीवलक्षणानि भाषणो-च्छ्वास-निःश्वास-धावन-वलगन-स्फुरणादीनि देह एव गृह्यन्ते न तु तदन्तराल इति ॥ २४६५ ॥

यतश्चैवं ततः किम् ? इत्याह—

---

१ अथ भगवन् ! कूर्मः कूर्मावयवा., गोधा गोधावयवाः, गौर्गोऽवयवाः, मनुष्यो मनुष्यावयवाः, महिषो महिषावयवाः, एतेषां द्विधा वा त्रिधा वाऽसंख्येयप्रकारेण वा छिन्नानां येऽन्तरालेऽपि तैर्जीवप्रदेशैः स्फुटाः । हन्त ! स्फुटाः ?। पुरुषो भगवन् ! अन्तर्हस्तेन वा, पादेन वा, अङ्गुल्या वा, काण्डेन वा, किलिञ्चेन वाऽऽमृष्यमाणो वा, समृष्यमाणो वा, आलिह्यमानो वा, विलिह्यमानो वा, अन्यतरेण वा तीक्ष्णेन शस्त्रजातेनाच्छिद्यमानो वा विच्छिद्यमानो वाऽग्निकायेन समुद्दुह्यमाणस्तेषां जीवप्रदेशानां काञ्चिदाबाधां वा विबाधां वोत्पादयति, विच्छेदं वा करोति ?। नायमर्थः समर्थः, नो खलु तत्र शस्त्रं सङ्क्रामति ।

२ ग्राह्या मूर्तिगता नाकाशे प्रदीपरश्मय । तथा जीवलक्षणानि देहे न तदन्तराले ॥ २४६५ ॥

द्वारेणोत्पद्यमान उपलम्भे क्रमेण संचरतो मनसः संचारो दुर्लक्षः, तर्हि कथमेकस्यैव स्पर्शनेन्द्रियमात्रस्य शीतवेदनोपयोगादुष्णवेदनोपयोगरूप उपयोगान्तरे जन्ये तत्संचारः सुलक्षः स्यात्, अलक्ष्यमाणे च तत्क्रमसंचारे शीतो-ष्णक्रियाद्वयोपयोगविषयौ युगपदध्यवसायौ भवतः ? इति ॥ २४३४ ॥

एतदेवाह—

[1]सव्वेंदिओवलंभे जइ संचारो मणस्स दुल्लक्खो। एगेंदिओवओगंतरम्मि किह होउ सुलक्खो ? ॥२४३५॥

व्याख्यातार्थैव ॥ २४३५ ॥

यदि पुनरेकस्मिन्नर्थ उपयुक्तमपि मनोऽर्थान्तरेऽप्युपयोगं गच्छेत् तदा को दोषः स्यात् ? इत्याह—

[2]अन्नविणिउत्तमण्णविणिओगं लहइ जइ मणो तेणं। हत्थिं पि ठियं पुरओ किमण्णचित्तो न लक्खेइ ? ॥२४३६॥

अन्यस्मिन् शीतवेदनादिकेऽर्थे विनियुक्तमुपयुक्तमन्यविनियुक्तं मनो यदि 'अण्णं ति' अन्य उष्णवेदनादिकोऽर्थस्तद्विषयोपयोगोऽन्यस्तमन्यं विनियोगमुपयोगं लभते, 'तेणं ति' तर्हि किमित्यन्यचित्तोऽन्यार्थोपयुक्तचित्तो देवदत्तादिर्हस्तिनमपि पुरतो व्यवस्थितं न लक्षयति ? । तस्मादेकस्मिन्नर्थ उपयुक्तं मनो न कदाचिदन्यार्थोपयोगं लभत इति ॥ २४३६ ॥

यदि त्वेकोपयोगे उपयोगान्तरमपीष्यते तदैतदपि किं नेष्यते ? । किम् ? इत्याह—

[3]विणिओगन्तरलाभे व किं त्थ नियमेण तो समं चेव । पइवत्थुमसंखेज्जाऽणंता वा जं न विणिओगा?॥२४३७॥

एकोपयोगकाले विनियोगान्तरस्योपयोगान्तरस्य लाभे वेष्यमाणे 'तो त्ति' ततः किमत्र क्रियाद्वयोपयोगलक्षणेन नियमेन, 'जं ति' यत् प्रतिवस्त्वसंख्येया अनन्ता वा सममेव युगपदेव विनियोगा नेष्यन्ते ? । इदमुक्तं भवति– यदि शीतवेदनोपयोगकाले उष्णवेदनोपयोगोऽपीष्यते, तर्हि किमत्रानेन क्रियाद्वयोपयोगनैयत्येन, यदसंख्येया अनन्ता वा प्रतिवस्तु युगपदुपयोगा न भवन्ति,

1 सर्वेन्द्रियोपलम्भे यदि संचारो मनसो दुर्लक्षः । एकेन्द्रियोपयोगान्तरे कथं भवतु सुलक्षः ? ॥ २४३५ ॥
2 अन्याविनियुक्तमन्यविनियोगं लभते यदि मनस्तेन । हस्तिनमपि स्थित पुरत. किमन्याचित्तो न लक्षयति ? ॥ २४३६ ॥
3 विनियोगान्तरलाभे वा किमत्र नियमेन ततः सममेव । प्रतिवस्त्वसंख्येया अनन्ता वा यद् न विनियोगा ? ॥ २४३७ ॥

[1]देहरहियं न गिण्हइ निरतिसओ नातिसुहुमदेहं व । न य से होइ विबाहा जीवस्स भवन्तराले व्व ॥२४६६॥

देहाभावे जीवलक्षणानामभावाद् देहरहितं मुक्तात्मानं छिन्नपुच्छाद्यन्तरालवर्तिनं वा जीवं निरतिशयः केवलज्ञानाद्यतिशय-रहितो जन्तुर्न गृह्णाति । तथा, अतिसूक्ष्मो देहो यस्य तमतिसूक्ष्मदेहं निगोदादिजीवं कार्मणकाययोगिनं वा जन्तुं नासौ गृह्णाति । न च 'से' तस्य जीवस्यान्तरालवर्तिषु प्रदेशेष्वनन्तरदर्शितसिद्धान्तसूत्रोक्तयुक्त्या कुन्ता-ऽसि-सेल्लादिशस्त्रैरग्नि-जलादिभिर्वा विबाधा पीडा काचिद् भवति, भवान्तराले कार्मणशरीरवर्तिजीवप्रदेशवदिति ॥ २४६६ ॥

ननु गृहकोकिलादिजीवस्य च्छिन्नत्वात् पुच्छादिकं खण्डं नष्टम्, ततश्च तत् तस्मात् पृथग्भूतत्वाद् नोजीवः कस्माद् नोच्यते, यथा घटाच्छिन्नत्वात् पृथग्भूतं रथ्यापतितं घटखण्डं घटैकदेशत्वाद् नोघटः ? । तदयुक्तम् । कुतः ? इत्याह—

[2]दव्वामुत्ताकयभावादविकारदरिसणाओ य । अविणासकारणाहि य नभसो व्व न खंडसो नासो ॥२४६७॥

खण्डशो जीवस्य नाशो न भवतीति प्रतिज्ञा, अमूर्तद्रव्यत्वात्, अकृतकभावात्- अकृतकत्वादित्यर्थः, तथा, घटादेः कपाला-दिवद् विकारदर्शनाभावात्, अविनाशकारणत्वाच्च; विनाशकारणानामग्नि-शस्त्रादीनामभावाच्चेत्यर्थ इत्येते हेतवः । सर्वेषु 'नभस इव' इति दृष्टान्त इति ॥ २४६७ ॥

खण्डशो नाशे च जीवस्य दोषानाह—

[3]नासे य सव्वनासो जीवस्स नासो य जिणमयच्चाओ । तत्तो य अणिमुक्खो दिक्खावेफल्लदोसा य ॥२४६८॥

शस्त्रच्छेदादिना जीवप्रदेशस्य नाशे चेष्यमाणे क्रमशः सर्वनाशोऽपि कदाचित् तस्य भवेत्; तथाहि- यत् खण्डशो नश्यति तस्य सर्वनाशो दृष्टः, यथा घटादेः, तथा च त्वयेष्यते जीवः, ततः सर्वनाशस्तस्य प्राप्नोति । भवत्वेतदपि, किं नः क्षूयते ? इति चेत् । तदयुक्तम् । कुतः ? इत्याह- 'नासो येत्यादि' स च जीवस्य सर्वनाशो न युक्तः, यस्माज्जिनमतत्यागहेतुत्वाज्जिनमतत्यागो-

१ देहरहित न गृह्णाति निरतिशयो नातिसूक्ष्मदेहमिव । न च तस्य भवति विबाधा जीवस्य भवान्तराल इव ॥ २४६६ ॥
२ द्रव्यामूर्तत्वादकृतभावादविकारदर्शनाच्च । अविनाशकारणाच्च नभस इव न खण्डशो नाश ॥ २४६७ ॥
३ नाशे च सर्वनाशो जीवस्य नाशश्च जिनमतत्याग । ततश्चानिर्मोक्षो दीक्षावैफल्यदोषाश्च ॥ २४६८ ॥

सव्वाभावे वि मई संदेहो सिमिणए व्व, नो तं च । जं सरणाइनिमित्तो सिमिणो न उ सव्वहाभावो ॥१३॥
अणुभूय-दिट्ठ-चिंतिय-सुय-पयइवियार-देवया-ऽणूया । सिमिणस्स निमित्ताइं पुण्णं पावं च नाभावो ॥ १४ ॥
विण्णाणमयत्तणओ घडाविण्णाणं व सुमिणओ भावो । अहवा विहियनिमित्तो घडो व्व नेमित्तियत्ताओ ॥ १५ ॥
सव्वाभावे च्चं कओ सुमिणोऽसुमिणो त्ति सच्चमलियं ति । गंधव्वपुरं पाडलिपुत्तं तत्थोवयारो त्ति ? ॥ १६ ॥
कज्जं ति कारणं ति य सज्झमिणं साहणं ति कत्त त्ति । वत्ता वयणं वच्चं परपक्खोऽयं सपक्खोऽयं ? ॥ १७ ॥
किं चेह थिर-दवो-सिण-चलया-ऽरूवित्तणाइं निययाइं । सद्दादओ य गज्झा सोत्ताइयाइं गहणाइं ? ॥ १८ ॥
समया विवज्जओ वा सव्वागहणं व किं न सुण्णम्मि । किं सुण्णया व सम्मं सग्गाहो किं व मिच्छत्तं ? ॥१९॥
किह स-परो-भयबुद्धी कहं च तेसिं परोप्परमसिद्धी । अह परमईए भण्णइ स-परमइविसेसणं कत्तो ? ॥ २० ॥
जुगवं कमेण वा ते विण्णाणं होज्ज दीह-हस्सेसु । जह जुगवं कावेक्खा कमेण पुव्वम्मि काऽवेक्खा ? ॥२१॥
आइमविण्णाणं वा जं बालस्सेह तस्स काऽवेक्खा । तुल्लेसु व काऽवेक्खा परोप्परं लोयणदुगे व्व ? ॥ २२ ॥
किं हस्साओ दीहे दीहाओ चेव किं न दीहम्मि । कीस व न खपुप्फाउ किं न खपुप्फे खपुप्फाओ ? ॥ २३ ॥
किंवाऽविक्खाए चिय होज्ज मई वा सभाव एवायं । सो भावो त्ति सभावो वंज्झापुत्ते न सो जुत्तो ॥ २४ ॥
होज्जावेक्खाओ वा विण्णाणं वाभिहाणमेत्तं वा । दीह त्ति व हस्सं ति व न उ सत्ता सेसधम्मा वा ॥ २५ ॥
इहरा हस्साभावे सव्वविणासो हवेज्ज दीहस्स । न य सो, तम्हा सत्तादओऽणविक्खा घडाईणं ॥ २६ ॥
जावि अविक्खाऽविक्खणमविक्खगोऽविक्खणिज्जमणविक्खा । सा न मया सव्वेसु वि संतेसु न सुन्नया नाम॥२७॥
किंचि सओ तह परओ तदुभयओ किंचि निच्चासिद्धं पि । जलओ घडओ पुरिसो[1] नहं च ववहारओ नेयं॥२८॥

1 'सो तहं' ।

निच्छयओ पुण बाहिरनिमित्तमेत्तोवओगओ सव्वं । होइ सओ जंमभावो न सिज्झइ निमित्तभावे वि ॥ २९ ॥
अत्थित्त-घडेगाणेगया य पज्जायमेत्तचिंतेयं । अत्थि घडे पडिवन्ने, इहरा सा किं न खरसिंगे ? ॥ ३० ॥
घड-सुन्नयन्नयाए वि सुन्नया का घडाहिया सोम्म ! । एगत्ते घडओ च्चिय न सुण्णया नाम घडधम्मो ॥ ३१ ॥
विण्णाण-वयण-वाईणमेगया तो तदत्थिया सिद्धा । अण्णत्ते अण्णाणी निव्वयणो वा कहं वाई ? ॥ ३२ ॥
घडसत्ता घडधम्मो तत्तोऽणण्णो पडाइओ भिण्णो । अत्थि त्ति तेण भणिए को घड एवेति नियमोऽयं ? ॥३३॥
जं वा जदत्थि तं तं घडो त्ति सव्वघडयापसंगो को । भणिए घडो त्थि व कहं सव्वत्थित्तावरोहो त्ति ? ॥३४॥
अत्थि त्ति तेण भणिए घडोऽघडो वा घडो उ अत्थेव । चूओऽचूओ व दुमो चूओ उ जहा दुमो नियमा ॥३५॥
किं तं जायं ति मई जाया-ऽजाओ-भयं पि जदजायं । अह जायं पि न जायं किं न खपुप्फे वियारोऽयं ॥३६॥
जइ सव्वहा न जायं किं जम्माणंतरं तदुवलम्भो । पुव्वं वाऽणुवलंभो पुणो वि कालंतरहयस्स ? ॥ ३७ ॥
जह सव्वहा न जायं जायं सुण्णवयणं तहा भावा । अह जायं पि न जायं पयासिया सुण्णया केण ? ॥३८॥
जायइ जायमजायं जायाजायमह जायमाणं च । कज्जमिह विवक्खाए न जायए सव्वहा किंचि ॥ ३९ ॥
रूवि त्ति जाइ जाओ कुंभो संठाणओ पुणरजाओ । जायाजाओ दोहि वि तस्समयं जायमाणो त्ति ॥ ४० ॥
पुव्वकओ उ घडतया परपज्जाएहिं तदुभएहिं च । जायंतो य पडतया न जायए सव्वहा कुंभो ॥ ४१ ॥
वोमाइ निच्चजायं न जायए तेण सव्वहा सोम्म ! । इय दव्वतया सव्वं भयणिज्जं पज्जवगईए ॥ ४२ ॥
दीसइ सामग्गिमयं सव्वमिह त्थि न य सा, नणु विरुद्धं । घेप्पइ व न पच्चक्खं किं कच्छपरोमसामग्गी ? ॥४३॥
सामग्गिमओ वत्ता वयणं चत्थि जइ तो कओ सुण्णं । अह नत्थि केण भणिअं वयणाभावे सुयं केण ? ॥४४॥
जेणं चेव न वत्ता वयणं वा तो न संति वयणिज्जा । भावा तो सुण्णमिदं वयणमिदं सच्चमलियं वा ? ॥४५॥

ऽसौ। जिनमते हि जीवस्य सतः सर्वथा विनाशोऽसतश्च सर्वथोत्पादः सर्वत्र निषिद्ध एव; यदाह– "जीवा णं भंते! किं वड्ढंति हायंति, अवट्ठिया?। गोयमा! नो वड्ढंति, नो हायंति, अवट्ठिया" इत्यादि। अतो जीवस्य सर्वथा नाशेऽभ्युपगम्यमाने जिनमतत्याग एव स्यात्। तथा ततस्तत्सर्वनाशादनिर्मोक्षो मोक्षाभावः प्राप्नोति, मुमुक्षोः सर्वथा नाशात्। मोक्षाभावे च दीक्षादिकष्टानुष्ठानवैफल्यम्, क्रमेण च सर्वेषामपि जीवानां सर्वनाशे संसारस्य शून्यताप्राप्तिः, कृतस्य च शुभाशुभकर्मणो जीवस्य सर्वनाश एवमेव नाशात् कृतनाशप्रसङ्ग इत्यादि वाच्यमिति न जीवस्य खण्डशो नाशः। गृहकोकिलादीनां पुच्छादिखण्डस्य पृथग्भूतत्वेन प्रत्यक्षत एव नाशो दृश्यत इति चेत्। तदयुक्तम्। औदारिकशरीरस्यैव हि तत् खण्डमध्यक्षतो वीक्ष्यते, न तु जीवस्य, तस्यामूर्तत्वेन केनापि खण्डयितुमशक्यत्वादिति ॥ २४६८ ॥

अथात्रैव पराभिप्रायमाशङ्क्य दूषयति––

अह[2] खंधो इव संघाय-भेयधम्मा स तो वि सव्वेसिं। अवरोप्परसंकरओ सुहाइगुणसंकरो पत्तो ॥२४६९॥

अथ पुद्गलस्कन्ध इव सावयवत्वात् स जीवः संघात-भेदधर्माऽभ्युपगम्यते, यथा क्वचिद् विवक्षितपुद्गलस्कन्धेऽन्यस्कन्धगतं खण्डं समागत्य संहन्यते संबध्यते, तद्गतं च खण्डं भित्त्वाऽन्यत्र गच्छति, एवं जीवस्याप्यन्यजीवखण्डं संहन्यते, तद्गतं तु भिद्यत इत्येवं संघातभेदधर्मा जीव इष्यत इति। अतः खण्डशो नाशेऽपि संघातस्यापि सद्भावाद् न तस्य सर्वनाश इति परस्याभिप्रायः। अत्र दूषणमाह– 'तो वि सव्वेसिं इत्यादि' एवमपि च सति सर्वेषामपि सर्वलोकवर्तिनां जीवानां परस्परसंकरतः सुखादिगुणसंकरः प्राप्तः। इदमुक्तं भवति– यदैकं जीवसंबन्धिशुभाशुभकर्मान्वितं खण्डमन्यजीवस्य संबध्यते, अन्यसंबन्धि तु खण्डं तस्य संबध्यते, तदा तत्सुखादयोऽन्यस्य प्रसजन्ति, अन्यसुखादयस्तु तस्य, इत्येवं सर्वजीवानां परस्परं सुखादिगुणसांकर्यं स्यात्। तथैकस्य कृतनाशः, अन्यस्याकृताभ्यागम इत्यादि वाच्यमिति ॥ २४६९ ॥

अन्यमपि पराभिप्रायमाशङ्क्य दूषणान्तरमाह––

अह[3] अविमुक्को वि तओ नोजीवो तो पइप्पएसं ते। जीवम्मि असंखेज्जा नोजीवा नत्थि जीवो ते ॥२४७०॥

---

१ जीवा भगवन्! किं वर्धन्ते, हीयन्ते, अवस्थिताः?। गौतम! नो वर्धन्ते, नो हीयन्ते, अवस्थिताः।

२ अथ स्कन्ध इव सङ्घात-भेदधर्मा स ततोऽपि सर्वेषाम्। परस्परसंकरतः सुखादिगुणसकरः प्राप्त. ॥ २४६९ ॥

३ अथाविमुक्तोऽपि सको नोजीवस्तत. प्रतिप्रदेशं ते। जीवेऽसंख्येया नोजीवा नास्ति जीवस्ते ॥ २४७० ॥

समर्पयति, तथाऽत्रापि 'पृथिवीं देहि' इति भणिते सर्वस्या आनेतुमशक्यत्वात्, प्रायस्तया प्रयोजनाभावाच्च यथा तदेकदेशेऽपि पृथिव्येकांशेऽपि लेष्टौ देवस्य समर्पणमतिर्जायते। कुतः ? इत्याह— प्रकरणवशात्, 'अनेनापि तदेकदेशेन लेष्टुना प्रस्तुतार्थः सेत्स्यति' इत्येवं प्रस्तावशादित्यर्थः। प्रकृतमाह– 'तहा लेट्टुदेसे वि त्ति' यथा 'पृथिवीं देहि' इत्युक्ते सति प्रतिपादितन्यायेन तदेकदेशेऽपि लेष्टौ समर्पणमतिर्जायते तथा तेनैव प्रकारेण 'नोपृथ्वीं देहि' इत्युक्ते तत्खण्डरूपे तदेकदेशेऽपि समर्पणबुद्धिरुत्पद्यत इति ॥ २४९९ ॥ ॥ २५०० ॥

आह– ननु 'ईहरा पुढवि चिय सो लेट्टु व्व समाणजाइलक्खणओ' इति वचनाल्लेष्ट्वेकदेशः पूर्वं भवद्भिः पृथिवीत्वेनोक्तः स कथमिदानीं नोपृथिवी स्यात् ? इत्याशङ्क्याह—

[2]लेट्टुदव्वावेक्खाए तह वि तद्देसभावओ तम्मि। उवयारो नोपुढवि पुढवि च्चिय जाइलक्खणओ ॥२५०१॥

यद्यपि लेष्ट्वेकदेशः पृथिव्येव, तथापि 'उवयारो त्ति तस्मिन् लेष्ट्वेकदेशे नोपृथिवीत्वस्योपचारः क्रियत इत्यर्थः। कया ? इत्याह– लेष्टुद्रव्यापेक्षया लेष्टोः प्रागुक्तन्यायेन यत् पृथिवीद्रव्यत्वमारोपितं तदपेक्षयेत्यर्थः। कुतः ? इत्याह– तद्देशभावतो लेष्टुद्रव्यैकदेशत्वादित्यर्थः। प्रागुक्तन्यायेन तावल्लेष्टुरेवेह पृथ्वीद्रव्यं तदपेक्षया च तदेकदेशे नोपृथ्वीत्युपचर्यत इति भावः। परमार्थतस्त्वियं लेष्ट्वेकदेशलक्षणं नोपृथ्व्येव मन्तव्यम्, समानजातिलक्षणत्वादिति को वै न मन्यते, अस्माभिरेव प्रागुक्तत्वात्, इदीनीमपि च समर्थ्यमाणत्वात् ? इति ॥ २५०१ ॥

नोअकारोभयनिषेधपक्षमधिकृत्याह—

[3]पडिसेहदुगं पगइं गमेइ जं तेण नोअपुढवि त्ति। भणिए पुढवि त्ति गई देसनिसेहे वि तद्देसो ॥ २५०२ ॥

१ गाथा २४९७। २ लेष्टुद्रव्यापेक्षया तथापि तद्देशभावतस्तस्मिन्। उपचारो नोपृथिवी पृथिव्येव जातिलक्षणतः ॥ २५०१ ॥

३ प्रतिषेधद्विकं प्रकृतिं गमयति यत् तेन नोअपृथिवीति। भणिते पृथिवीति गतिर्देशनिषेधेऽपि तद्देशः ॥ २५०२ ॥

अथैतद्दोषभयाद् न जीवस्य च्छेदोऽभ्युपगम्यते, किन्त्वविमुक्तोऽप्यविच्छिन्नोऽपि जीवसंबद्धोऽपि तकोऽसौ जीवदेशो नोजीवस्त्वयेष्यते, यथा धर्मास्तिकायाद्येकदेशो नोधर्मास्तिकायादिः । ततस्तर्हि प्रतिप्रदेशं ते तव नोजीवसद्भावादेकैकस्मिन्नात्मन्यसंख्येया नोजीवाः प्राप्ताः, ततस्ते तव नास्ति क्वापि जीवसंभवः, सर्वेषामपि जीवानां प्रत्येकमसंख्येयनोजीवत्वप्राप्तेरिति ॥ २४७० ॥

दूषणान्तरमपि प्रसञ्जयन्नाह—

[1]एवमजीवा वि पइप्पएसभेएण नोअजीव त्ति। नत्थि अजीवा केइ कयरे ते तिन्नि रासि त्ति ? ॥२४७१॥

एवमजीवा अपि धर्मास्तिकायादयो द्व्यणुक-स्कन्धादयो घटादयश्च प्रतिप्रदेशभेदतोऽजीवैकदेशत्वाद् नोअजीवाः, घटैकदेशनोघटवदिति, अतोऽजीवाः केचनापि न सन्ति, परमाणूनामपि पुद्गलास्तिकायलक्षणाजीवैकदेशत्वेन नोअजीवत्वात् सर्वत्र नोअजीवानामेवोपपद्यमानत्वात् । ततश्च कतरे ते त्रयो राशयः– त्वया ये राजसभायां प्रतिष्ठिताः, उक्तन्यायेन नोजीव-नोअजीवलक्षणराशिद्वयस्यैव सद्भावात् ? इति । तस्माद् बहुदोषप्रसङ्गाद् न जीवश्छिद्यत इति स्थितम् ॥ २४७१ ॥

छिद्यतां वाऽसौ तथापि न नोजीवसिद्धिरिति दर्शयन्नाह—

[2]छिन्नो व होउ जीवो कह सो तल्लक्खणो वि नोजीवो ?। अह एवमजीवस्स वि देसो तो नोअजीवो त्ति ॥२४७२॥
एवं पि रासओ ते न तिन्नि चत्तारि संपसज्जंति । जीवा तहा अजीवा नोजीवा नो अजीवा य ॥२४७३॥

पुच्छाद्यवयवच्छेदेन च्छिन्नोऽपि भवतु गृहकोकिलादिजीवः, केवलं तस्य जीवस्य लक्षणानि स्फुरणादीनि यस्यासौ तल्लक्षणोऽपि सन्नसौ पुच्छादिदेशः कथं केन हेतुना नोजीवो भण्यते ?। इदमुक्तं भवति– संपूर्णोऽपि गृहकोकिलाजीवः स्फुरणादिलक्षणैरेव जीवो भण्यते, स्फुरणादीनि च लक्षणानि च्छिन्ने तदवयवेऽपि पुच्छादिके दृश्यन्ते, अतस्तल्लक्षणयुक्तोऽप्यसौ किमिति जीवो न भण्यते येन नोजीवकल्पनाऽत्र विधीयते ? इति । 'अह एवमिति' अथैवं जीवलक्षणैः सद्भिरपि पुच्छादिकस्तदवयवो नोजीव एवेष्यते, न पुनः स्वाग्रहस्त्यज्यत इत्यर्थः । अत्र सूरिराह– 'तो चि' ततस्तर्हि अजीवस्यापि घटादेर्देशो नोअजीवः प्राप्नोति, जीवैकदेशनोजीववदिति । अस्त्वेवं

१ एवमजीवा अपि प्रतिप्रदेशभेदेन नोअजीवा इति । न सन्त्यजीवाः केचित् कतरे ते त्रयो राशय इति ? ॥ २४७१ ॥
२ छिन्नो वा भवतु जीवः कथं स तल्लक्षणोऽपि नोजीवः । अथैवमजीवस्यापि देशस्ततो नोअजीव इति ॥ २४७२ ॥
एवमपि राशयस्ते न त्रयश्चत्वारः संप्रसजन्ति । जीवास्तथाऽजीवा नोजीवा नोअजीवाश्च ॥ २४७३ ॥

"द्वौ नञौ प्रकृतमर्थं गमयतः" इति वचनाद् नोकाराकारलक्षणं प्रतिषेधद्वयं यस्मात् प्रकृतिं गमयति- प्रकृतमेवार्थं प्रतिपादयतीत्यर्थः, तेन कारणेन 'नोअपृथ्वी' इति भणिते नोशब्दस्य सर्वनिषेधपरत्वात् पृथिवीगतिर्भवति- पृथिव्याः प्रतिपत्तिर्भवतीत्यर्थः । 'देसनिसेहे वि तद्देसो त्ति' देशनिषेधवाचके तु नोशब्दे तस्या जलादिरूपाया अपृथिव्या एवोत्तरपदे श्रूयमाणाया देशस्तद्देशो गम्यते, देशनिषेधके नोशब्दे नोअपृथिवीति याचिते जलादिरूपापृथिव्येकदेशं देवो ददातीत्यर्थः ॥ २५०२ ॥

अथ प्रस्तुतार्थतात्पर्यमाह—

उवयाराओ[1] तिविहं भुवमभुवं नोभुवं च सो देइ । निच्छयओ भुवमभुवं तह सावयवाइं सव्वाइं ॥ २५०३ ॥

स कुत्रिकापणदेवो याचितः सन् वस्तु ददाति । कतिविधम् ?, किं वा तत् ? इत्याह- त्रिविधं त्रिप्रकारम्, चतुर्थस्य नोअभूपक्षस्य प्रथमपक्ष एवान्तर्भावात् । तत्र भुवं लेष्टुम्, अभुवं जलादि, नोभुवं भूम्येकदेशं ददाति । कुतः ? इत्याह- उपचारात्- व्यवहारनयमताश्रयणादित्यर्थः, स एव हि देशदेशिव्यवहारं मन्यते, न तु निश्चय इति भावः । अत एवाह- 'निच्छयउ इत्यादि' निश्चयतस्तु भुवमभुवं चेत्येवं द्विविधमेव वस्तु ददाति, तृतीयस्य नोभूपक्षस्य देश-देशिव्यवहार एवोपपद्यमानत्वात्, तस्य च निश्चयनयेनानभ्युपगमादिति। तदेवं 'भू-जल-जलण'[2] इत्यादौ पृथिव्याः प्रथमं निर्दिष्टत्वात् तामधिकृत्योक्तम्। अथ शेषाणि जलादिवस्तून्यधिकृत्याह- 'तह सावयवाइं वि' न केवलमित्थं भुवं ददाति, तथा शेषाण्यपि जलादिवस्तूनि 'पगईए[3] अगारेणं' इत्यादि प्रकारेण विशेष्य याचितः सन् व्यवहारनयमतेन यथोक्तविधिना त्रिप्रकाराणि ददाति । कुतः ? इति चेत् । उच्यते- यतः सावयवानि सप्रदेशान्येतानि सर्वाण्यपि जलादिवस्तूनि । अतस्तृतीयोऽपि देशविषयो दानप्रकार एतेषु संभवतीति भावः । निश्चयनयमतेन तु देशदेशिव्यवहाराभावादेतान्यपि जलादीनि द्विप्रकाराण्येव ददातीति । तदेवं सावयवे वस्तुनि प्रकारत्रयेण प्रकारद्वयेन च यथोक्तरीत्या दानं संभवति ॥२५०३॥

अथ निरवयवे वस्तुनि प्रकारद्वयेनैव दानसंभव इति दर्शयन्नाह—

---

१ उपचारात् त्रिविधं भुवमभुवं नोभुवं च स ददाति । निश्चयतो भुवमभुवं तथा सावयवानि सर्वाणि ॥ २५०३ ॥ २ गाथा २४९० । ३ गाथा २४९४ ।

न किञ्चिद् मम विनश्यतीति चेत्। नैवम्। कुतः? इत्याह– 'एवं पीत्यादि' एवमप्यभ्युपगम्यमाने ये भवता त्रय एव राशय इष्यन्ते ते न घटन्ते, किन्तु चत्वारो राशयः संप्रसजन्ति, तद्यथा– जीवाः, तथाऽजीवाः, नोजीवाः, नोअजीवाश्चेति ॥२४७२॥२४७३॥

अत्र यः परस्य परिहारस्तस्य स्वपक्षेऽपि समानतां दिदर्शयिषुः सूरिराह—

[1]अह ते अजीवदेसो अजीवसामण्णजाइ-लिङ्गो त्ति। भिन्नो वि अजीवो च्चिय न जीवदेसो वि किं जीवो ?॥२४७४॥

अथ ते तवाजीवस्य जीवस्कन्धादेर्देश एकदेशो भिन्नोऽपि स्कन्धात् पृथग्भूतोऽप्यजीव एव न तु नोअजीवः। कुतः? इत्याह– अजीवेन सामान्ये जाति-लिङ्गे यस्यासावजीवसामान्यजाति-लिङ्ग इति कृत्वा। तत्राजीवत्वं जातिः, पुंलिङ्गलक्षणं च लिङ्गम्। एतच्च द्वयमप्यजीव-तद्देशयोः सामान्यमेव, ततस्तद्देशोऽप्यजीव एव। हन्त! यद्येवम्, तर्हि जीवदेशोऽपि किमिति जीवो नेष्यते, तस्यापि जीवेन समानजाति-लिङ्गत्वादिति ॥ २४७४ ॥

गाथाचतुर्थपादोक्तमेवार्थं प्रमाणेन द्रढयन्नाह—

[2]छिन्नगिहकोलिया वि हु जीवो तल्लक्खणेहिं सयलो व्व। अह देसो त्ति न जीवो अजीवदेसो त्ति नोऽजीवो ॥२४७५॥

छिन्नगृहकोकिलापि– छिन्नः पुच्छादिको गृहकोकिलादिजीवावयवोऽपीत्यर्थः। किम्? इत्याह– जीवः, इति प्रतिज्ञा। हेतुमाह– 'तल्लक्खणेहिं ति' तल्लक्षणैर्हेतुभूतैः– स्फुरणादितल्लक्षणयुक्तत्वादित्यर्थः। 'सयलो व्व त्ति' यथा सकलः परिपूर्णोऽच्छिन्नो गृहकोकिलादिजीव इत्यर्थः, एष दृष्टान्तः। अथ गृहकोकिलादेर्जीवस्य पुच्छादिकस्तदवयवो देश एवेति कृत्वा न जीव इष्यते, संपूर्णस्यैव जीवत्वात्। यद्येवम्, अजीवस्यापि घटादेर्देशो नो नैवाजीवः प्राप्नोति, संपूर्णस्यैवाजीवत्वात्। ततोऽयमजीवदेशोऽपि नोअजीव एव स्यात्, न त्वजीवः। तथा च सति स एव राशिचतुष्टयप्रसङ्ग इति ॥ २४७५ ॥

यदुक्तम्– '[3]इच्छइ जीवपएसं नोजीवं जं च समभिरूढो वि' इत्यादि। तत्राह—

[4]नोजीवं ति न जीवादण्णं देसमिह समभिरूढो वि। इच्छइ बेइ समासं जेण समाणाहिगरणं सो ॥२४७६॥

१ अथ तेऽजीवदेशोऽजीवसामान्यजाति-लिङ्ग इति। भिन्नोऽप्यजीव एव न जीवदेशोऽपि किं जीव. ? ॥ २४७४ ॥
२ छिन्नगृहकोकिलापि खलु जीवस्तल्लक्षणै सकल इव ! अथ देश इति न जीवोऽजीवदेश इति नोअजीवः ॥ २४७५ ॥ ३ गाथा २४६२ !
४ नोजीवमिति न जीवादन्य देशमिह समभिरूढोऽपि। इच्छति ब्रवीति समासं येन समानाधिकरणं स. ॥ २४७६ ॥

[1]जीवमजीवं दाउं नोजीवं जाइओ पुणरजीवं । देइ चरिमम्मि जीवं न उ नोजीवं स जीवदलं ॥ २५०४ ॥

'जीवं देहि' इति याचितः सुरो जीवं शुक-सारिकादिकं दत्त्वा 'अजीवं देहि' इति याचितस्त्वजीवमुपलखण्डादिकं दत्त्वा कृतार्थो जायते । नोजीवं याचितः पुनरजीवमुपलखण्डादिकमेव ददाति, नोशब्दस्य सर्वनिषेधपरत्वात्; चरमे तु नोअजीवलक्षणे विकल्पे जीवमेव शुकादिकं ददाति, द्वयोर्नञोः प्रकृतार्थगमकत्वात्, नोशब्दस्य च सर्वनिषेधकत्वादिति, न तु स कुत्रिकापणदेवो जीवं जीवदलं जीवखण्डरूपं कापि विकल्पे ददाति । इति जीवा-ऽजीवलक्षणौ द्वावेव राशी, न तु तृतीयः, असत्त्वात्, खरविषाणवदिति ॥२५०४॥

ततः किमभूत् ? इत्याह—

[2]तो निग्गहिओ छलुओ गुरू वि सक्कारमुत्तमं पत्तो । धिद्धिक्कारोवहओ छलुओ वि सभाहिं निच्छूढो ॥२५०५॥

ततो यदा कुत्रिकापणसुरेण जीवव्यतिरिक्तो नोजीवो न दत्तः, असत्त्वात्, तदा निगृहीतो निर्जितः षडुलूकः । गुरुरपि श्रीगुप्ताचार्यो नरनाथाल्लोकाच्च सत्कारमुत्तमं प्राप्तः । षडुलूकोऽपि गुरुप्रत्यनीकत्वाज्जनप्रयुक्तधिक्कारोपहतो राजसभातो निष्कासित इति ॥ २५०५ ॥

ततः किम् ? इत्याह—

[3]वाए पराजिओ सो निव्विसओ कारिओ नरिंदेण । घोसावियं च नयरे जयइ जिणो वद्धमाणो त्ति ॥२५०६॥
तेणाभिनिवेसाओ समइविगप्पियपयत्थमादाय । वइसेसियं पणीयं फाईकयमण्णमण्णेहिं ॥ २५०७ ॥

स रोहगुप्तो गुरुणा वादे पराजितः सन् नरपतिना निर्विषयः समाज्ञातः, पटहकेन च वाद्यमानेन घोषापितं समस्तनगरे 'जयति जिनः श्रीमान् वर्धमानः' इति । रोहगुप्तस्य च वादे निर्जितस्यापि प्रत्यनीकतोद्वेजितेन गुरुणा खेलमल्लकः शिरसि स्फोटितः ।

१ जीवमजीवं दत्त्वा नोजीवं याचितः पुनरजीवम् । ददाति चरमे जीवं न तु नोजीवं स जीवदलम् ॥ २५०४ ॥
२ ततो निगृहीतः षडुलूको गुरुरपि सत्कारमुत्तमं प्राप्तः । धिग्धिक्कारोपहतः षडुलूकोऽपि सभातो निष्कासितः ॥ २५०५ ॥
३ वादे पराजितः स निर्विषयः कारितो नरेन्द्रेण । घोषितं च नगरे जयति जिनो वर्धमान इति ॥ २५०६ ॥
तेनाभिनिवेशात् स्वमतिविकल्पितपदार्थमादाय । वैशेषिकं प्रणीतं स्फातीकृतमन्यान्यैः ॥ २५०७ ॥

[1]जीवे य से पएसे जीवपएसे एव नोजीवो । इच्छइ न य जीवदलं तुमं व गिहकोलियापुच्छं ॥ २४७७॥
न य रासिभेयमिच्छइ तुमं व नोजीवमिच्छमाणो वि । अन्नो वि नओ नेच्छइ जीवाजीवाहियं किं पि ॥२४७८॥

व्याख्या– इह "[2]जीवे य से पएसे य से सपएसे नोजीवे" इत्यत्रानुयोगद्वारोक्तसूत्रालापके समभिरूढनयोऽपि नोजीवमिति नेच्छतीति संबन्धः– नोजीवत्वेन नेच्छतीत्यर्थः । कं कर्मतापन्नम् ? । देशम् । कथंभूतम् ? । जीवादन्यं जीवाद् व्यतिरिक्तं देशं नोजीवं समभिरूढनयोऽपि नेच्छति– किन्त्वव्यतिरिक्तमेव तं तस्मादिच्छतीत्यर्थः। कुत एतद् विज्ञायते ? इत्याह– येन कारणेन देश-देशिनोः कर्मधारयलक्षणं समानाधिकरणमेव समासमसौ समभिरूढनयो ब्रवीत्यभ्युपगच्छति, न पुनर्नैगमादिरिव तत्पुरुषमित्यर्थः । समानाधिकरणसमासश्च नीलोत्पलादीनामिव विशेषण-विशेष्याणामभेद एव भवति । अतो ज्ञायते– जीवादनन्यरूपमेव देशं नोजीवमिच्छति समभिरूढ इति, एवं कथं तृतीयराशिः स्यात् ? इति । तदेव समभिरूढाभिमतं समानाधिकरणसमासं दर्शयति– 'जीवे य से इत्यादि' । जीवश्चासौ प्रदेशश्च जीवप्रदेशः स एव 'नोजीवो त्ति' स एव जीवादव्यतिरिक्तो जीवप्रदेशो नोजीव इत्येवमिच्छति समभिरूढनयः, न पुनर्जीवदलं जीवात् पृथग्भूतं तत्खण्डं नोजीवमिच्छत्यसौ, यथा गृहकोकिलादीनां पुच्छादिखण्डं नोजीवं त्वमिच्छसीति । अपि च, नोजीवमिच्छन्नपि समभिरूढनयो यथा त्वं तथा नोजीवराशेर्जीवाजीवराशिद्वयाद् भेदं नेच्छति, किन्तु जीवाजीवलक्षणं राशिद्वयमेवेच्छति, नोजीवस्यात्रैवान्तर्भावात् । तथाऽन्योऽपि नैगमादिर्नयो जीवा-ऽजीवेभ्योऽधिकं किमपि नोजीववस्तु नेच्छत्येव । ततस्त्वदीय एवायं नूतनः कश्चिद् मार्ग इति ॥ २४७६ ॥ २४७७ ॥ २४७८ ॥

तथाऽभ्युपगम्यापि सूरिराह—

[3]इच्छउ व समभिरूढो देसं नोजीवमेगनइयं तु । मिच्छत्तं सम्मत्तं सव्वनयमयोवरोहेणं ॥ २४७९॥

---

१ जीवश्च स प्रदेशो जीवप्रदेश एव नोजीव । इच्छति न च जीवदलं त्वमिव गृहकोकिलापुच्छम् ॥ २४७७ ॥
न च राशिभेदमिच्छति त्वमिव नोजीवमिच्छन्नपि । अन्योऽपि नयो नेच्छति जीवाजीवाधिकं किमपि ॥ २४७८ ॥

२ जीवश्च स प्रदेशश्च तस्य स्वप्रदेशो नोजीवः ।

३ इच्छतु वा समभिरूढो देश नोजीवमैकनयिकं तु । मिथ्यात्वं सम्यक्त्वं सर्वनयमतोपरोधेन ॥ २४७९॥

ततो भस्मखरण्डितवपुषा तेनाभिनिवेशात् स्वमतिकल्पितान् द्रव्यादिपदार्थानाश्रित्य वैशेषिकमतं प्रणीतम्। तच्चान्यान्यैस्तच्छिष्या-दिभिरियन्तं कालं यावत् ख्यातिमानीतमिति ॥ २५०६ ॥ २५०७ ॥

ननु रोहगुप्त इत्येवास्य नाम, तत् कथं षडुलूक इत्यसकृत् प्रागुक्तोऽसौ ? इत्याह—

[1]नामेण रोहगुत्तो गुत्तेण लप्पए स चोलूओ। दव्वाइछप्पयत्थोवएसणाओ छलूउ त्ति ॥ २५०८ ॥

नाम्नाऽसौ रोहगुप्तो गोत्रेण पुनरुलूकगोत्रसंभूतत्वादसावुलूक इत्यालप्यते— द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायलक्षणषट्पदार्थ-प्ररूपणेन षट्पदार्थप्रधान उलूकः षडुलूक इत्ययं व्यपदिश्यते ॥ इत्यष्टपञ्चाशद्गाथार्थः ॥ २५०८ ॥

॥ इति रोहगुप्तनामा षष्ठनिह्नवः समाप्तः ॥

अथ सप्तममभिधित्सुराह—

[2]पंच सया चुलसीया तइया सिद्धिं गयस्स वीरस्स। तो अबद्धियदिट्ठी दसउरनयरे समुप्पन्ना ॥ २५०९ ॥

पञ्च वर्षशतानि चतुरशीत्यधिकानि तदा सिद्धिं गतस्य महावीरस्य ततोऽबद्धिकनिह्नवदृष्टिर्दशपुरनगरे समुत्पन्नेति ॥ २५०९ ॥

कथं पुनरियमुत्पन्ना ? इत्याह—

[3]दसउरनगरुच्छुघरे अज्जरक्खिय पूसमित्ततिगयं च। गोट्ठामाहिल नवम-ट्ठमेसु पुच्छा य विंझस्स ॥२५१०॥

दशपुरनगर इक्षुगृहे आर्यरक्षितः 'दीक्षां जग्राह' इति शेषः। तस्य च घृतपुष्पमित्र-वस्त्रपुष्पमित्र-दुर्बलिकापुष्पमित्रलक्षणं शिष्यत्रयं बभूव। गोष्ठामाहिलश्च तच्छिष्योऽष्टमे कर्मप्रवादपूर्वे नवमे च प्रत्याख्यानपूर्वे व्याख्यायमाने कर्मबन्धविचारे प्रत्याख्यानविचारे च विप्रतिपन्नो विंध्यं प्रेरितवानिति ॥ २५१० ॥

---

१ नाम्ना रोहगुप्तो गोत्रेण कथ्यते स चोलूकः। द्रव्यादिषट्पदार्थोपदेशनात् षडुलूक इति ॥ ॥ २५०८ ॥
२ पञ्च शतानि चतुरशीत्यधिकानि तदा सिद्धिं गतस्य वीरस्य। ततोऽबद्धिकदृष्टिर्दशपुरनगरे समुत्पन्ना ॥ २५०९ ॥
३ दशपुरनगर इक्षुगृहे आर्यरक्षितः पुष्पमित्रत्रिककं च। गोष्ठामाहिलोऽष्टम-नवमयोः पृच्छा च विन्ध्यस्य ॥ २५१० ॥

[1]तं जइ सव्वनयमयं जिणमयमिच्छसि पवज्ज दो रासी। पयविप्पडिवत्तीए वि मिच्छत्तं किं नु रासीसु ?॥२४८०॥

इच्छतु वा समभिरूढनयस्त्वमिव जीवाद् भिन्नमपि तद्देशं नोजीवम्, तथाप्येकनयस्येदं मतमैकनयिकम्, मिथ्यात्वं चैतच्छाक्यमतवत्, इत्यतो न तत् प्रमाणीकर्तव्यम्। सम्यक्त्वं तु सर्वनयमतावरोधेन समस्तनयमतसंग्रहेणैव भवति। ततो यदि सर्वनयमयं जिनमतं प्रमाणमिच्छसि तदा प्रतिपद्यस्व जीवा-ऽजीवलक्षणौ द्वावेव राशी, अन्यथा—

"[2]पयमक्खरं पि एक्कं पि जो न रोएइ सुत्तनिद्दिट्ठं। सेसं रोयन्तोऽवि हु मिच्छद्दिट्ठी मुणेयव्वो ॥ १ ॥"

इत्यादिवचनात् पदविप्रतिपत्त्यापि मिथ्यात्वमापद्यते, किमुत सकलेषु राशिषु विप्रतिपत्त्या तद् न भविष्यति ? इति ॥२४८०॥

तदेवं युक्तिभिर्गुरुणा संबोध्यमाने रोहगुप्तेऽग्रतः किं संजातम् ? इत्याह—

[3]एवं पि भण्णमाणो न पव्वज्जइ सो जओ तओ गुरुणा। चिंतियमयं पणट्ठो नासिहई मा बहुं लोगं ॥२४८१॥

तो णं रायसभाए निग्गिण्हामि बहुलोगपच्चक्खं। बहुजणनाओऽवसिओ होही अगेज्झपक्खो त्ति ॥ २४८२ ॥

तो बलसिरिनिवपुरओ वायं नाओवणीयमग्गाणं। कुणमाणाणमईया सीसा-ऽऽयरियाण छम्मासा ॥२४८३॥

एक्को वि नावसिज्जइ जाहे तो भणइ नरवई नाहं। सत्तो सोउं सीयंति रज्जकज्जाणि मे भगवं ! ॥२४८४॥

गुरुणाऽभिहिओ भवओ सुणावणत्थमियमेत्तियं भणियं। जइ सि न सत्तो सोउं तो निग्गिण्हामि णं कल्लं ॥

1 तद् यदि सर्वनयमयं जिनमतमिच्छसि प्रपद्यस्व द्वौ राशी। पदविप्रतिपत्त्याऽपि मिथ्यात्वं किं नु राशिषु ? ॥ २४८० ॥

2 पदमक्षरमप्येकमपि यो न रोचयति सूत्रनिर्दिष्टम्। शेषं रोचयन्नपि च मिथ्यादृष्टिर्ज्ञातव्यः ॥ १ ॥

3 एवमपि भण्यमानो न प्रपद्यते स यतस्ततो गुरुणा। चिन्तितमयं प्रनष्टो नाशयतु मा बहुं लोकम् ॥ २४८१ ॥
ततो राजसभायां निगृह्णामि बहुलोकप्रत्यक्षम्। बहुजनज्ञातोऽवसितो भवेदग्राह्यपक्ष इति ॥ २४८२ ॥
ततो बलश्रीनृपपुरतो वादं न्यायोपनीतमार्गाणाम्। कुर्वतामतीताः शिष्याचार्याणां षड् मासाः ॥ ३४८३ ॥
एकोऽपि नावसद्यते यदा ततो भणाति नरपतिर्नाहम्। शक्त- श्रोतुं सीदन्ति राज्यकार्याणि मे भगवन् ! ॥ २४८४ ॥
गुरुणाऽभिहितो भवतः श्रावणार्थमिदमियद् भणितम्। यद्यसि न शक्तः श्रोतुं ततो निगृह्णामि कल्ये ॥ २४८५ ॥

अत्र भाष्यम्—

सोऊण कालधम्मं गुरुणो गच्छम्मि पूसमित्तं च। ठवियं गुरुणा किल गोट्ठमाहिलो मच्छरियभावो ॥ २५११ ॥

इह च सर्वासामपि गाथानां भावार्थ आर्यरक्षितकथानकादवसेयः। तच्च विस्तरतो मूलावश्यकादवगन्तव्यम्। संक्षेपतस्त्विहापि किञ्चिदुच्यते; तद्यथा—

दशपुरं नाम नगरम्। तत्र च सोमदेवो नाम ब्राह्मणः। तस्य च रुद्रसोमा नाम भार्या। सा च जिनवचनप्रतिबुद्धा श्राविका। तयोश्च रक्षितो नाम चतुर्दशविद्यास्थानपारगः पुत्रो बभूव। तेन च मातृप्रेरितेन तोसलिपुत्राचार्याणां समीपे दीक्षा प्रतिपन्ना। एकादशाङ्गानि दृष्टिवादोऽपि यावान् गुरुसमीप आसीत् तावान् सर्वोऽपि गृहीतः। शेषस्त्वार्यवैरस्वामिनः समीपेऽधीतो यावद् नव पूर्वाणि, तथा चतुर्विंशतियविकानि। ततः फल्गुरक्षितो नाम तद्बन्धुराकारणार्थं मात्रा प्रेषितः प्रव्राजितश्च। ततो द्वावपि मातापितृसमीपे समायातौ। ततश्चार्यरक्षितेन मातापितरौ तथा मातुलगोष्ठामाहिलप्रमुखः सर्वोऽपि स्वजनवर्गः प्रव्राजितः। एवमपरापरांश्च प्रव्राजयत आर्यरक्षितसूरेर्महान् गच्छो जातः। तत्र च गच्छे दुर्बलिकापुष्पमित्र-घृतपुष्पमित्र-वस्त्रपुष्पमित्रसंज्ञास्त्रयः पुष्पमित्रा आसन्। तत्र दुर्बलिकापुष्पमित्रेण नव पूर्वाण्यधीतानि। इह च गच्छे चत्वारः पुरुषाः प्रधानतराः, तद्यथा— दुर्बलिकापुष्पमित्रः, विन्ध्यः, फल्गुरक्षितः, गोष्ठामाहिलश्चेति। तत्रः सूरिभिर्दुर्बलिकापुष्पमित्रो विन्ध्यस्य वाचनां दापितः। तस्य च तां प्रयच्छतो गुणनाभावादात्मनो नवमपूर्वं गलति। ततः सूरिभिरेवंभूतस्यापि प्राज्ञस्य यदित्थं सूत्रार्थविस्मृतिः संपद्यते तदाऽशेषाणां सूत्राणां दुरुद्धरः सूत्रार्थः संपत्स्यते, इति विचिन्त्य पूर्वोक्तक्रमेणानुयोगः पार्थक्येन व्यवस्थापितः। नयाश्च प्रायो निगूहितविभागाः कृता इति। अन्यदा च ते आर्यरक्षितसूरयो विहारक्रमेण मथुरानगरीं गताः। तत्र च भूतगुहायां व्यन्तरगृहे स्थिताः।

इतश्च शक्रो महाविदेहे सीमन्धरस्वामितीर्थकरसमीपे निगोदवक्तव्यतां श्रुत्वा विस्मितः पृष्टवान्— किं भगवन्! भरतक्षेत्रेऽपि सांप्रतममुमतीव सूक्ष्मं निगोदविचारं कोऽपि बुध्यते प्ररूपयति च?। ततो भगवता प्रोक्तम्— प्ररूपयन्त्यार्यरक्षितसूरयः। एतच्च श्रुत्वा विस्मय-कौतुक-भक्तिभरपूर्यमाणमानसो देवेन्द्रः स्थविरब्राह्मणरूपं कृत्वा साधुषु भिक्षाचर्यां गतेष्वार्यरक्षितसमीपमुपययौ। ततस्तेनार्यरक्षितसूरयो वन्दित्वा पृष्टाः— भगवन्! महान् व्याधिर्वर्तते, तेनाहमनशनं कर्तुमिच्छामि; तत् कथयत मम कियदायुष्कम्? इति।

१ श्रुत्वा कालधर्मं गुरोर्गच्छे पुष्पमित्रं च। स्थापितं गुरुणा किल गोष्ठामाहिलो मत्सरितभावः ॥ २५११ ॥

प्रकटार्था एवैताः, नवरं 'बहुजणनाओऽवसिउ त्ति' बहुजनस्य ज्ञातो विदितोऽवसितो मया जितः सन्नग्राह्यवचनः सर्वस्यापि भविष्यति। 'तो वलसिरिनिवपुरउ त्ति' ततो बलश्रीनाम्नो राज्ञः पुरत इत्यर्थः। 'नाओवणीयमग्गाणं ति' नीयते संवित्तिं प्राप्यते वस्त्वनेन इति न्यायः प्रस्तुतार्थसाधकं प्रमाणं, येनोपन्यस्तेन सतोपनीतो ढौकितः प्रसङ्गेनागतः सकलस्यापि तर्कस्य मार्गो येषां ते तथा तेषां न्यायोपनीतमार्गाणां रोहगुप्त-श्रीगुप्तसूरीणामिति ॥ २४८१ ॥ २४८२ ॥ २४८३ ॥ २४८४ ॥ २४८५ ॥

ततो द्वितीयदिने किमभूत् ? इत्याह—

[1]बीयदिणे बेइ गुरू नरिंद ! जं मेइणीए सब्भूयं। तं कुत्तियावणे सव्वमत्थि सव्वप्पतीयमियं ॥ २४८६ ॥
तं कुत्तियावणसुरो नोजीवं देहि जइ न सो नत्थि। अह भणइ नत्थि तो नत्थि किंव हेउप्पबंधेणं ॥२४८७॥
तं मग्गिज्जउ मुल्लेण सव्ववत्थूणि किंत्थ कालेण,। इय होउ त्ति पवण्णे नरिंद-पइवाइ-परिसाहिं ॥ २४८८ ॥
सिरिगुत्तेणं छलुगो छम्मासा विकड्डिऊण वाए जिओ। अहरण कुत्तिआवण चोयालसएण पुच्छाणं॥२४८९॥

व्याख्या– द्वितीयदिने ब्रवीति गुरुः श्रीगुप्तसूरिः–नरेन्द्र ! पृथिवीपते !– इह मेदिन्यां पृथिव्यां यत् किमपि सद्भूतं विद्यमानं वस्तु तत् सर्वमपि कुत्रिकापणेऽस्तीति सर्वजनस्य भवतां च प्रतीतमेवेदम्। तत्र कूनां स्वर्ग-पाताल-मर्त्यभूमीनां त्रिकं कुत्रिकं तात्स्थ्यात् तद्व्यपदेश इति कृत्वा तत्स्थलोका अपि कुत्रिकमुच्यते, कुत्रिकमापणयति व्यवहरति यत्र हट्टेऽसौ कुत्रिकापणः। अथवा, धातु-जीव-मूललक्षणेभ्यस्त्रिभ्यो जातं त्रिजं सर्वमपि वस्त्वित्यर्थः, कौ पृथिव्यां त्रिजमापणयति व्यवहरति यत्र हट्टे स कुत्रिजापणः। अस्मिंश्च कुत्रिकापणे वणिजः कस्यापि मन्त्राद्याराधितः सिद्धो व्यन्तरसुरः क्रायकजनसमीहितं सर्वमपि वस्तु कुतोऽप्यानीय संपादयति। तन्मूल्यद्रव्यं तु वणिगेव गृह्णाति। अन्ये तु वदन्ति– 'वणिग्रहिताः सुराधिष्ठिता एव त आपणा भवन्ति। ततो मूल्यद्रव्यमपि स एव व्यन्तरसुरः

1 द्वितीयदिने ब्रवीति गुरुर्नरेन्द्र ! यद् मेदिन्यां सद्भूतम्। तत् कुत्रिकापणे सर्वमस्ति सर्वप्रतीतामिदम् ॥ २४८६ ॥
तत् कुत्रिकापणसुरो नोजीव देहि यदि न स नास्ति। अथ भणति नास्ति ततो नास्ति किं वा हेतु-प्रबन्धेन ? ॥ २४८७ ॥
तद् मार्ग्यन्तां मूल्येन सर्ववस्तूनि किमत्र कालेन ?। एव भवत्विति प्रपन्ने नरेन्द्र-प्रतिवादि परिपाद्भिः ॥ २४८८ ॥
श्रीगुप्तेन षडुलूकः षड् मासान् विकृष्य वादे जित। उदाहरणानां कुत्रिकापणे चतुश्चत्वारिंशता शतेन पृच्छानाम् ॥ २४८९ ॥ 2 क ग. 'मूलं जीव'

ततो यविकेष्वायुःश्रेणावुपयोगं दत्त्वा सूरिभिर्विज्ञातम्— नायं मनुष्यो व्यन्तरादिर्वा, किन्तु द्विसागरोपमस्थितिकोऽसौ सौधर्माधिपतिः। ततश्च वार्धक्येनाधःपतिते करेण भ्रुवावुत्क्षिप्य निरीक्ष्य च प्रोक्तम्— 'शक्रो भवान्'। एवं चाभिहिते तुष्टेन देवाधिपतिना निवेदितः सर्वोऽपि तीर्थकरसमीपनिगोदश्रवणादिव्यतिकरः। ततः पृष्टाः शक्रेण निगोदजीवाः। प्ररूपिताश्च विस्तरतः। ततस्तुष्टमानसेन सुरपतिना प्रणम्य 'व्रजामि' इति प्रोक्तेऽभिहितं गुरुभिः— तिष्ठत क्षणमेकं, यावत् साधवः समागच्छन्ति येन युष्माभिर्दृष्टैरिदानीमपि देवेन्द्रागमनमस्तीति विज्ञाय स्थैर्यमुत्पद्यते तेषामिति। ततस्त्रिदशपतिना प्रोक्तम्— भदन्त! करोम्येवम्, केवलं स्वाभाविकं मत्स्वरूपं दृष्ट्वाऽल्पसत्त्वा निदानं करिष्यन्ति। ततो गुरुणा प्रोक्तम्— तर्हि निजागमनसूचकं किमपि चिह्नं कृत्वा व्रजत। ततस्तस्योपाश्रयस्यान्यतोऽभिमुखं द्वारं कृत्वा गतस्त्रिदशपतिः। आगतैश्च साधुभिर्द्वारान्यत्वदर्शनविस्मितैः पृष्टे कथितं सर्वं सूरिभिरिति। अन्यदा च ते विहरन्तो दशपुरनगरमागताः।

इतश्च मथुरानगर्यां 'मातापित्रादिकमपि नास्ति' इत्यादिनास्तिकवादं प्ररूपयन् वादी समुत्थितः। तत्र च प्रतिवादिनः कस्यचिदभावात् संघेनार्यरक्षितसूरय एव सांप्रतं युगप्रधाना इति कृत्वा तत्समीपे प्रस्तुतव्यतिकरकथनाय साधुसङ्घाटकं प्रेषितम्। स्वयमतीव वृद्धत्वाद् गन्तुमशक्तैः 'वादलब्धिसंपन्नः' इति कृत्वा गोष्ठामाहिलो निरूपितः। तत्र च तेन गत्वा निगृहीतोऽसौ वादी। श्रावकैश्चायं तत्रैव वर्षाकालं कारितः।

इतश्चार्यरक्षितसूरिभिर्निजपट्टे दुर्वलिकापुष्पमित्रः स्थापयितुमध्यवसितः। शेषस्तु स्वजनभूतः साधुवर्गो गोष्ठामाहिलं फल्गुरक्षितं वा तमीहते। ततश्च सर्वमपि गच्छमुपवेश्य सूरयः संवोधयन्ति, तद्यथा— इह किल त्रयो घटा भृताः। तत्रैको वल्लानाम्, द्वितीयो तिलस्य, तृतीयस्तु घृतस्य। एतेषु चावाङ्मुखेषु कृतेषु वल्लाः सर्वेऽपि निर्गच्छन्ति। तैलं तु किञ्चिद् घटेऽपि लगति। घृतं तु वहुतरं तत्र लगति। तदहं दुर्वलिकापुष्पमित्रं प्रति सूत्रार्थौ समाश्रित्य वल्लघटकल्पः संजातः, मद्दत्तयोः समस्तयोरपि तयोस्तेन ग्रहणात्। फल्गुरक्षितं तु प्रति तिलघटकल्पोऽहं संपन्नः, सर्वयोरपि सूत्रा-ऽर्थयोस्तेनाग्रहणात्। गोष्ठामाहिलं तु प्रति घृतघटकल्पोऽहमभूवम्, वहुतरयोः सूत्रार्थयोर्ममापि पार्श्वेऽवस्थानात्। तस्माद् मद्दत्ताशेषसूत्रार्थसंपन्नत्वाद् दुर्वलिकापुष्पमित्र एव भवतां सूरिर्भवतु। ततः 'इच्छामः' इति भणित्वा तैः सर्वैरपि प्रतिपन्नमिदम्। सूरिभिरप्यभिहितो दुर्वलिकापुष्पमित्रो 'यथाऽहं वर्तितः फल्गुरक्षिते गोष्ठामाहिले च तथा भवतामपि वर्तितव्यम्'। गच्छोऽप्यभिहितः— 'यथा मया सार्धं भवद्भिर्वर्तितं तथाऽनेनापि सार्धं वर्तितव्यम्। अपि च, अहं कृतेऽकृते वा नारुष्यम्, अयं तु न सहिष्यति, ततः सुतरामस्य विनयेन वर्तितव्यम्'। इत्याद्यनुशास्ति पक्षद्वयस्यापि दत्त्वा भक्तं प्रत्याख्याय देवलोक-

स्वीकरोति'। एते च कुत्रिकापणाः प्रतिनियतेष्वेवोज्जयिनी-भृगुकच्छनगरादिस्थानेषु क्वापि कियन्तोऽप्यासन्, इत्यागमेऽभिहितम्। ततस्तस्मात् कुत्रिकापणसुरो यदि मूल्येन याचितः सन् नोजीवं जीवाजीवव्यतिरिक्तवस्तुरूपं कमपि ददाति तदाऽसौ न नास्त्यपि तु निर्विवादमस्त्येव। अथायमेव वदति— नास्ति तद्व्यतिरिक्तः कोऽपि नोजीवस्तदा नास्त्येवासौ, किं तन्नास्तित्वसाधनाय युष्मद्राज्यप्रयोजनक्षतिकारिणा क्लेशफलेन हेतुप्रबन्धोपन्यासेन? इति। तत् तस्माद् याच्यन्तां मूल्येन सर्ववस्तूनि कुत्रिकापणसुरः, किमत्र कालेन कालविलम्बेन? इत्यर्थः। एवं गुरुभिरुक्ते बलश्रीनरेन्द्रेण प्रतिवादिना रोहगुप्तेन सभ्यपर्षदा च युक्तियुक्तत्वात् 'एवं भवतु' इति प्रतिपन्ने श्रीगुप्ताचार्येण षडुलूको रोहगुप्तः पूर्वं षड् मासान् विकृष्यातिवाह्य वादे जितो निगृहीतः। केन? इत्याह— कुत्रिकापणे यानि वक्ष्यमाणभू-जल-ज्वलनाद्याहरणान्युदाहरणानि तद्विषयपृच्छानां चतुश्चत्वारिंशेन शतेन, प्राकृतशैल्या छन्दोऽनुलोम्यादार्षत्वादत्र व्यत्ययेन निर्देश इति ॥ २४८६ ॥ २४८७ ॥ २४८८ ॥ २४८९ ॥

कथं पुनरिदं चतुश्चत्वारिंशं शतं पृच्छानां भवति? इत्याह—

[1]भू-जल-जलणा-निल-नह-काल-दिसा-ऽऽया मणो य दव्वाइं। भण्णंति नवेयाइं सत्तरस गुणा इमे अण्णे॥२४९०॥
रूव-रस गंध-फासा संखा परिमाणमहमह-पुहुत्तं च। संजोग-विभाग-परा-ऽपरत्तबुद्धी सुहं दुक्खं ॥२४९१॥
इच्छा दोस-पयत्ता एत्तो कम्मं तयं च पंचविहं। उक्खेवण-वक्खेवण-पसारणाऽऽकुंचणं गमणं ॥ २४९२॥
सत्ता सामण्णं पिय सामण्णविसेसया विसेसो य। समवाओ य पयत्था छ छत्तीसप्पभेया य ॥ २४९३ ॥
पगईए अगारेण य नोगारोभयनिसेहओ सव्वे। गुणिआ ओयालसयं पुच्छाणं पुच्छिओ देवो ॥२४९४॥

1 भू-जल-ज्वलना-ऽनिल-नभः-काल-दिगा-ऽऽत्मानो मनश्च द्रव्याणि। भण्यन्ते नवैतानि सप्तदश गुणा इमेऽन्ये ॥२४९०॥
रूप रस-गन्ध-स्पर्शाः संख्या परिमाणमथ महत् पृथक्त्वे च। सयोग-विभाग-परा-ऽपरत्व-बुद्धयः सुख दुःखम् ॥ २४९१ ॥
इच्छा द्वेष-प्रयत्नावितः कर्म तच्च पञ्चविधम्। उत्क्षेपणाऽवक्षेपण प्रसारणा-ऽऽकुञ्चनानि गमनम् ॥ २४९२ ॥
सत्ता सामान्यमपि च सामान्यविशेषका विशेषश्च। समवायश्च पदार्थाः षट् षट्त्रिंशत्प्रभेदाश्च ॥ २४९३ ॥
प्रकृत्याऽकारेण च नोकारोभयनिषेधत. सर्वे। गुणितास्त्वेकचत्वारिंशता शतं पृच्छानां पृष्टो देवः ॥ २४९४ ॥

मुपगताः सूरयः ।

गोष्ठामाहिलेन च श्रुतमिदं यथा– 'गुरवः परलोकं गताः'। ततो मथुरातः समागतेन पृष्टमनेन यथा– 'को गणधरः स्वपदे सूरिभिर्निवेशितः ?'। ततः सर्वोऽपि वल्लादिघटप्ररूपणादिको व्यतिकरः समाकर्णितो लोकात्। तच्छ्रवणाच्चातीव दूनोऽसो स्थित्वा पृथक् प्रतिश्रये दुर्बलिकापुष्पमित्रोपाश्रये तच्चर्योपलम्भार्थं गतः। तैश्च सर्वैरप्यभ्युत्थितोऽसौ, भणितश्च यथा– तिष्ठत यूयमत्रैवोपाश्रये, किमिति पृथग् व्यवस्थिताः ?। तच्च नेच्छत्यसौ। पृथगुपाश्रयव्यवस्थितश्च दुर्बलिकापुष्पमित्रापवादग्रहणादिना व्युद्ग्राहयति साधून्, न च व्युद्ग्राहयितुं शक्नोति। दुर्बलिकापुष्पमित्रसमीपे चाभिमानतो न किञ्चित् शृणोति, किन्तु व्याख्यानमण्डलिकास्थितस्य चिन्तनिकां कुर्वतो विन्ध्यस्यान्तिके समाकर्णयति। अन्यदा चाष्टम-नवमपूर्वयोः कर्म-प्रत्याख्यानविचारेऽभिनिवेशाद् विप्रतिपन्नो वक्ष्यमाणनीत्या निह्नवो जात इति।

अथ प्रकृतगाथाक्षरार्थोऽनुश्रीयते– कालो मरणं तल्लक्षणो धर्मः पर्यायः कालधर्मस्तं गुरोरार्यरक्षितस्य श्रुत्वा, तथा पुष्पमित्रं च गच्छेऽधिपतिं स्थापितमाकर्ण्य गोष्ठामाहिलो मत्सरितभावः संजातः ॥ २५११ ॥

मत्सराध्यवसायः किलेदं चकार। किम् ? इत्याह—

[1]वीसु वसहीए ठिओ छिद्दन्नेसणपरो य स कयाए। विंझस्स सुणइ पासेऽणुभासमाणस्स वक्खाणं ॥२५१२॥

विष्वग्वसतौ स्थितश्छिद्रान्वेषणपरः स गोष्ठामाहिलः कदाचिद् विन्ध्यस्यानुभाषमाणस्य चिन्तनिकां कुर्वतः पार्श्वे व्याख्यानं शृणोतीति ॥ २५१२ ॥

ततः किम् ? इत्याह—

[2]कम्मप्पवायपुव्वे बद्धं पुट्ठं निकाइयं कम्मं। जीवपएसेहिं समं सूईकलावोवमाणाओ ॥ २५१३ ॥

उव्वट्टणमुक्करो संखोभो खवणमणुभवो वावि। अणिकाइयम्मि कम्मे निकाइए पायमणुभवणं ॥२५१४॥

1 विष्वग्वसतौ स्थितश्छिद्रान्वेषणपरश्च स कदाचित्। विन्ध्यस्य शृणोति पार्श्वेऽनुभाषमाणस्य व्याख्यानम् ॥ २५१२ ॥

2 कर्मप्रवादपूर्वे बद्धं स्पृष्टं निकाचितं कर्म। जीवप्रदेशैः समं सूचीकलापोपमानात् ॥ २५१३ ॥

अपवर्तनमुत्करः संक्षोभः क्षपणमनुभवो वापि। अनिकाचिते कर्मणि निकाचिते प्रायोऽनुभवनम् ॥ २५१४ ॥

इह द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायलक्षणाः षड् मूलपदार्थास्तेन षडुलूकेन कल्पिताः। तत्र द्रव्यं नवधा। कथम्? इत्याह– 'भू-जलेत्यादि' भूमिः, जलम्, ज्वलनः, अनिलः, नभः, कालः, दिक्, आत्मा, मनश्चेत्येतानि नव द्रव्याणि भण्यन्ते। गुणाः सप्तदश भवन्ति, तद्यथा–रूपं, रसः, गन्धः, स्पर्शः, संख्या, परिमाणम्, महत्त्वम्, पृथक्त्वम्, संयोगः, विभागः, परा-ऽपरत्वे, बुद्धिः, सुखम्, दुःखम्, इच्छा, द्वेषः, प्रयत्नश्चेति। इतः कर्म तत् पुनः पञ्चविधम्, तद्यथा– उत्क्षेपणम्, अवक्षेपणम्, आकुञ्चनम्, प्रसारणम्, गमनमिति। सामान्यं त्रिविधम्, तद्यथा – सत्ता, सामान्यम्, सामान्यविशेषश्चेति। तत्र द्रव्य-गुण-कर्मलक्षणेषु त्रिषु पदार्थेषु सद्बुद्धिहेतुः सत्ता, सामान्यं द्रव्यत्व-गुणत्वादि, सामान्यविशेषस्तु पृथिवीत्व-जलत्व-कृष्णत्व-नीलत्वाद्यवान्तरसामान्यरूप इति। अन्ये त्वित्थं सामान्यस्य त्रैविध्यमुपवर्णयन्ति–अविकल्पं महासामान्यम्, त्रिपदार्थसद्बुद्धिहेतुभूता सत्ता, सामान्यविशेषो द्रव्यत्वादि। महासामान्य-सत्तयोर्विशेषणव्यत्यय इत्यन्ये। द्रव्य-गुण-कर्मपदार्थत्रयसद्बुद्धिहेतुः सामान्यम्, अविकल्पा सत्तेत्यर्थः। सामान्यविशेषस्तु द्रव्यत्वादिरूप एव। इत्यलं प्रसङ्गेनेति। विशेषश्चान्त्यः। समवायपदार्थश्चेति।

तदेवमेते द्रव्यादयः षड् पदार्थाः षट्त्रिंशत्प्रभेदाः– नवानां द्रव्याणां, सप्तदशानां गुणानां, पञ्चानां कर्मणां, त्रयाणां सामान्यानाम्, विशेष-समवाययोश्च मीलने षट्त्रिंशद् विकल्पा भवन्तीत्यर्थः। एते च सर्वे प्रकृत्या, अकारेण, नोकारेण, उभयनिषेधतश्चेत्येतैश्चतुर्भिः प्रकारैर्गुणिताः सन्तो यच्चतुश्चत्वारिंशं शतं पृच्छानां भवति तत् पृष्टः कुत्रिकापणदेवः। इदमत्र हृदयम्– नञ्रहितं शुद्धं पदमिह प्रकृतिरुच्यते, तया शुद्धपदरूपया प्रकृत्या पृथिव्यादयः पदार्थाः पृच्छयन्ते, तद्यथा— 'पृथिवीं देहि' इत्यादि। तथा, लुप्तस्य नञः स्थाने योऽकारस्तेन चाकारेण संयुक्तया प्रकृत्या पृच्छा विधीयते, यथा 'अपृथिवीं देहि' इत्यादि। तथा नोकारेण संयुक्तया प्रकृत्या पृच्छा यथा– 'नो पृथ्वीं देहि' इत्यादि। तथा, नोकाराऽकारलक्षणं यदुभयं तेन योऽसौ प्रकृत्या निषेधस्तस्माच्च पृष्टः सुरो यथा– 'नोअपृथिवीं देहि' इत्यादि। एवं जलादिष्वपि प्रत्येकमेते प्रकृत्य-ऽकार-नोकारो-भयनिषेधलक्षणाश्चत्वारः पृच्छाप्रकारा वक्तव्या इति। एतदभिप्रायवता प्रोक्तम्— 'सव्वे गुणिआ' इति। आह– ननु 'पृथिवीं देहि' इत्यादिका याचना एव कथं पृच्छाः प्रोच्यन्ते? सत्यम्, किन्तु 'पृथिवीं देहि' इत्यादियाचनाद्वारेण पृथिव्याद्यस्तित्वमेवासौ देवः पृच्छयते, 'नोजीवं याचितो यद्यसौ जीवा-ऽजीवव्यतिरिक्तं तं दास्यति तदाऽयमस्ति, नान्यथा इत्येवमेव प्रतिज्ञातत्वात्। ततो याचना अप्येतास्तत्त्वतः पृच्छा एवेत्यदोषः ॥२४९०॥२४९१॥२४९२॥२४९३॥२४९४॥

सोउं भणइ सदोसं वक्खाणमिणं ति पावइ जओ भे। मोक्खाभावो जीवप्पएसकम्माविभागाओ ॥२५१५॥

इह कर्मप्रवादनाम्न्यष्टमे पूर्वे कर्मविचारे प्रस्तुते दुर्बलिकापुष्पमित्र एवं व्याख्यानयति, तद्यथा— जीवप्रदेशैः समं बद्धं बद्धमात्रमेव कर्म भवति, यथाऽकषायस्येर्यापथप्रत्ययं कर्म। तच्च कालान्तरस्थितिमप्राप्यैव जीवप्रदेशेभ्यो विघटते, शुष्ककुड्यापतितचूर्णमुष्टिवदिति। अन्यत्तु 'पुट्ठं ति' 'बद्धम्' इत्यत्रापि संबध्यते। ततश्च बद्धं स्पृष्टं चेत्यर्थः। तत्र बद्धं जीवेन सह संयोगमात्रमापन्नम्, स्पृष्टं तु जीवप्रदेशैरात्मीकृतम्। एतच्चेत्थं बद्धं सत् कालान्तरेण विघटते, आर्द्रलेपकुड्ये सस्नेहचूर्णवदिति। 'निकाइयं ति' 'बद्धं' स्पृष्टं च' इत्यत्रापि संबध्यते। ततश्चापरं किमपि कर्म बद्धं स्पृष्टं निकाचितं भवतीत्यर्थः। तत्र तदेव बद्धस्पृष्टं गाढतराध्यवसायेन बद्धत्वादपवर्तनादिकरणायोग्यतां नीतं निकाचितमुच्यते। इदं च कालान्तरेऽपि विपाकतोऽनुभवमन्तरेण प्रायो नापगच्छति, गाढतरबद्धत्वात्, आर्द्रकुड्याश्लेषितनिबिडचेटिकाहस्तकवदिति। अयं च त्रिविधोऽपि बन्धः सूचीकलापोपमानाद् भावनीयः; तद्यथा— गुणाऽऽवेष्टितसूचीकलापोपमं बद्धमुच्यते, लोहपट्टबद्धसूचीसंघातसदृशं तु बद्धस्पृष्टमित्यभिधीयते, बद्धस्पृष्टनिकाचितं त्वग्नितप्तघनाहतिक्रोडीकृतसूचीनिचयसंनिभं भावनीयमिति। नन्वनिकाचितस्य कर्मणः को विशेषः? इत्याह– 'उव्वट्टणेत्यादि' इह कर्मविषयाण्यष्टौ करणानि भवन्ति; उक्तं च—

"[2]बंधण-संकमणु-व्वट्टणा य उवट्टणा उईरणया। उवसावणा निवत्ती निकायणा च त्ति करणाइं ॥ १ ॥"

तत्र निकाचिते कर्मणि स्थित्यादिखण्डनरूपा 'उव्वट्टणं ति' अपवर्तना प्रवर्तते। तथा 'उक्केरो त्ति' स्थित्यादिवर्धनरूप उत्कोच उद्वर्तना। तथा 'संथोभो त्ति' असातादेः सातादौ क्षेपणरूपः संक्रमः। तथा 'खवणं ति' प्रकृत्यन्तरसंक्रमितस्य कर्मणः प्रदेशोदयेन निर्जरणं क्षपणम्। तथा 'अणुभवो त्ति' स्वेन स्वेन रूपेण प्रकृतीनां विपाकतो वेदनानुभवः। इदं चोपलक्षणमुदीरणादीनाम्। तदेतान्यपवर्तनादीनि सर्वाण्यनिकाचिते कर्मणि प्रवर्तन्ते, निकाचिते तु प्रायो विपाकेनानुभव एव प्रवर्तते, न पुनरपवर्तनादीनि, इत्यनयोर्विशेषः। समाकीर्णविकृष्टतपसामुत्कटाध्यवसायबलेन '[3]तवसा उ निकाइयाणं पि' इति वचनाद् निकाचितेऽपि कर्मण्यपवर्तनादिकरणप्रवृत्तिर्भवतीति प्रायोग्रहणम्।



१ श्रुत्वा भणति सदोष व्याख्यानमिदमिति प्राप्नोति यतो भवताम्। मोक्षाभावो जीवप्रदेशकर्माविभागात् ॥ २५१५ ॥
२ बन्धन-सक्रमणा-ऽपवर्तनाश्चोद्वर्तनोदीरणा। उपशावणा निवृत्तिर्निकाचना चेति करणानि ॥ १ ॥ ३ तपसा तु निकाचितानामपि।

कथं पुनरेताः कुत्रिकापणसुरस्य पृच्छाः कृताः ? इत्याशङ्क्य दिङ्मात्रोपदर्शनार्थमाद्यं पृथिवीलक्षणं भेदमधिकृत्याह—

[1]पुढवि त्ति देइ लेट्टुं देसो वि समाणजाइ-लिंगो त्ति । पुढवि त्ति सोऽपुढवीं देहि त्ति देइ तोयाइं ॥२४९५॥

पृथिवीं याचितः कुत्रिकापणसुरो लेष्टुं ददाति । आह— अप्रस्तुतमिदम्, अन्यस्मिन् याचितेऽन्यस्य प्रदानात् । नैवम् । कुतः ? इत्याह– 'देसो वीत्यादि' देशोऽपि लेष्टुलक्षणः 'पुढवि त्ति' पृथिव्येव मन्तव्या, पृथिवीत्वलक्षणाया जातेः स्त्रीलिङ्गलक्षणस्य लिङ्गस्य च समानत्वात् । इह यत्र पृथिवीत्वजातिः स्त्रीलिङ्गं च वर्तते तत् 'पृथिवी' इति व्यवहर्तव्यम्, यथा रत्नप्रभादि, तथा च लेष्टुः, तस्मात् पृथिवीति । 'अपृथिवीं देहि' इत्येवं याचितोऽसौ देवस्तोयादि प्रयच्छति ॥ २४९५ ॥

नोपृथिवीं याचितस्तर्हि किं ददाति ? इत्याह—

[2]देसपडिसेहपक्खे नोपुढवीं देइ लेट्टुदेसं सो । लेट्टुदव्वावेक्खो कीरइ देसोवयारो से ॥ २४९६ ॥

इहरा पुढवि च्चिय सो लेट्टु व्व समाणजाइलक्खणओ । लेट्टुदलं ति व देसो जइ तो लेट्टू वि भूदेसो ॥२४९७॥

नोशब्दस्य देशप्रतिषेधपक्षे नोपृथिवीं याचितोऽनन्तरमेव समस्तपृथ्वीत्वेनोपचरितस्य लेष्टोरेव देशं तत्खण्डरूपं ददात्यसौ देवः । आह– ननु देशनिषेधपक्षे नोपृथ्वी तद्देश एव गृह्यते, यस्तु लेष्टुदेशः स पृथ्वीदेशस्यापि देश एव, न तु पृथ्वीदेशः, तत् कथं नोपृथ्वीं याचितस्तं ददाति ? इत्याह– 'लेट्टुदव्वेत्यादि' लेष्टुद्रव्यापेक्षः 'से' तस्य लेष्टुदेशस्य देशोपचारः क्रियते । इदमुक्तं भवति– लेष्टौ तावदनन्तरोक्तयुक्तेः संपूर्णपृथ्वीद्रव्यत्वमारोपितम्, ततो लेष्टुलक्षणपृथ्वीद्रव्यापेक्षया तद्देशस्यापि पृथ्वीदेशत्वमुपचर्यते, इतरथाऽन्यथा पुनः परमार्थतो लेष्टुवत् समानजात्यादिलक्षणत्वादिति पूर्वोक्तहेतोः सोऽपि लेष्टुदेशः पृथ्व्येव मन्तव्या । अथ पराभिप्रायमाविष्कृत्य

१ पृथिवीति ददाति लेष्टुं देशोऽपि समानजाति-लिङ्ग इति । पृथिवीति सोऽपृथिवीं देहीति ददाति तोयादि ॥ २४९५ ॥

२ देशप्रतिषेधपक्षे नोपृथिवीं ददाति लेष्टुदेशं सः । लेष्टुद्रव्यापेक्षः क्रियते देशोपचारतस्तस्य ॥ २४९६ ॥

इतरथा पृथिव्येव स लेष्टुरिव समानजातिलक्षणत. । लेष्टुदलमिति वा देशो यदि ततो लेष्टुरपि भूदेश ॥ २४९७ ॥

तदत्र व्याख्याने क्षीरनीरन्यायेन वह्नितप्तायोगोलकन्यायेन वा जीवप्रदेशैः सह कर्म संबद्धमिति पर्यवसितं विन्ध्यसमीपे श्रुत्वा तथाविधकर्मोदयादभिनिवेशेन विप्रतिपन्नो गोष्ठामाहिलः प्रतिपादयति– ननु सदोषमिदं व्याख्यानम्, यस्मादेवं व्याख्यायमाने भवतां मोक्षाभावः प्राप्नोति, जीवप्रदेशैः सह कर्मणामविभागेन तादात्म्येनावस्थानादिति ॥२५१३॥२५१४॥२५१५॥

अमुमेवार्थं प्रमाणतः साधयन्नाह—

[1]न हि कम्मं जीवाओ अवेइ अविभागओ पएसो व्व। तदणवगमादमुक्खो जुत्तमिणं तेण वक्खाणं ॥२५१६॥

'न हि– नैव कर्म जीवादपैति' इति प्रतिज्ञा। अविभागात्– वह्न्ययोगोलकन्यायेन जीवेन सह तादात्म्यादित्यर्थः, एष हेतुः। 'पएसो व्व त्ति' जीवप्रदेशराशिवदित्यर्थः, एष दृष्टान्तः। इह यद् येन सहाविभागेन व्यवस्थितं न तत् ततो वियुज्यते, यथा जीवात् तत्प्रदेशनिकुरम्बम्, इष्यते चाविभागो जीव-कर्मणोर्भवद्भिः, इति न तत् तस्माद् वियुज्यते। ततस्तदनपगमात् तस्य कर्मणो जीवादनपगमादवियोगात् सर्वदैव जीवानां सकर्मकत्वाद् मोक्षाभावः। तेन तस्मादिदमिह मदीयं व्याख्यानं कर्तुं युक्तमिति ॥ २५१६ ॥

किं तत्? इत्याह—

[2]पुट्ठो जहा अबद्धो कंचुइणं कुंचुओ समन्नेइ। एवं पुट्ठमबद्धं जीवं कम्मं समन्नेइ ॥ २५१७ ॥

यथा स्पृष्टः स्पर्शनमात्रेण संयुक्तोऽबद्धः क्षीरनीरन्यायादलोलीभूत एव कञ्चुको विषधरनिर्मोकः कञ्चुकिनं विषधरं समन्वेति समनुगच्छति, एवं कर्मापि स्पृष्टं सर्पकञ्चुकवत् स्पर्शनमात्रेणैव संयुक्तमबद्धं वह्न्ययःपिण्डादिन्यायादलोलीभूतमेव जीवं समन्वेति, एवमेव मोक्षोपपत्तेरिति ॥ २५१७ ॥

तदेवं कर्मविचारे विप्रतिपत्तिमुपदर्श्येदानीं प्रत्याख्यानविषयां विप्रतिपत्तिमुपदर्शयन्नाह—

[3]सोऊण भन्नमाणं पच्चक्खाणं पुणो नवमपुव्वे। सो जावज्जीवविहियं तिविहं तिविहेण साहूणं ॥ २५१८ ॥

---

१ न हि कर्म जीवादपैत्यविभागतः प्रदेश इव। तदनपगमादमोक्षो युक्तमिदं तेन व्याख्यानम् ॥ २५१६ ॥

२ स्पृष्टो यथाऽबद्धः कञ्चुकिनं कञ्चुकः समन्वेति। एवं स्पृष्टमबद्धं जीवं कर्म समन्वेति ॥ २५१७ ॥

३ श्रुत्वा भण्यमानं प्रत्याख्यानं पुनर्नवमपूर्वे। स यावज्जीवविहितं त्रिविधं त्रिविधेन साधूनाम् ॥ २५१८ ॥

परिहारार्थमाह– 'लेट्ठुदलं ति व देसो जइ त्ति' यदि तु भोः पर ! त्वं मन्यसे– योऽयं लेष्टोर्देशः स दलं लेष्टोरेव खण्डमात्रम्, ततः समानजातिलक्षणत्वेऽपि नासौ पृथ्वीति । अत्र परिहारमाह– 'तो लेट्ठू वि भूदेसो त्ति' । ततस्तर्हि 'पुढवी त्ति देइ लेट्ठुं देसो वि' इत्यादौ यः पूर्वं लेष्टुः पृथ्वीत्वेनोक्तः सोऽपि भुवः पृथिव्या देश एव । ततस्त्वदभिप्रायेण सोऽपि पृथ्वीदलरूपत्वाद् न पृथ्वी, लेष्टुदेशवदिति ॥ २४९६ ॥ २४९७ ॥

अस्त्वेवमिति चेत् । तदयुक्तम् । कुतः ? इत्याह—

[1]देहि भुवं तो भणिए सव्वाणेया न यावि सा सव्वा । सक्का सक्केण वि याणेउं किमुयावसेसेणं ? ॥२४९८॥

यदि लेष्टुर्न पृथ्वी, ततस्तर्हि 'भुवं देहि' इत्युक्ते सर्वापि संपूर्णा साऽऽनेया प्रसज्यते, न च सा सर्वा शक्रेणाप्यानेतुं शक्या, किमुतावशेषेण कुत्रिकापणदेवादिमात्रेण ? इति । तर्हि किमत्र तत्त्वम् ? इति भवन्त एव कथयन्तु ? इति ॥ २४९८ ॥

इत्थं प्रेरके उपसन्ने दृष्टान्तोपन्यासद्वारेण सूरिः प्रस्तुतार्थनिर्णयमाह—

[2]जह घडमाणय भणिए न हि सव्वाणयणसंभवो किंतु । देसाइविसिट्ठं चिय तमत्थवसओ समप्पेइ ॥२४९९॥

पुढवि त्ति तहा भणिए तदेगदेसे वि पगरणवसाओ । लेट्ठुम्मि जायइ मई जहा तहा लेट्ठुदेसे वि ॥२५००॥

यथा सामान्येन 'घटमानय' 'पटमानय' इत्युक्तेऽपि न खलु सर्वस्यापि घटस्य सामान्यतयैवानयनसंभवोऽस्ति, किन्तु सर्वस्यानेतुमशक्यत्वात् प्रायः सर्वेण प्रयोजनाभावाच्च, अर्थवशात् सामर्थ्यत एव नियतदेशकालाद्यवच्छिन्नं विशिष्टमेव कञ्चिद् घटमानीय

१ देहि भुवं ततो भणिते सर्वानेया न चापि सा सर्वा । शक्या शक्रेणापि चानेतु किमुतावशेषेण ? ॥ २४९८ ॥

२ यथा घटमानय भणिते न हि सर्वानयनसंभव किन्तु । देशादिविशिष्टमेव तमर्थवशत' समर्पयति ॥ २४९९ ॥
पृथिवीति तथा भणिते तदेकदेशेऽपि प्रकरणवशात् । लेष्टौ जायते मतिर्यथा तथा लेष्टुदेशेऽपि ॥ २५०० ॥

स गोष्ठामाहिलः कर्मविचारे विप्रतिपन्नः पुनरन्यदा नवमपूर्वे "[1]करेमि भन्ते ! सामाइयं मव्वं सावज्जं जोगं पच्चक्खामि" इत्यादि यावज्जीवावधिकं साधूनां संबन्धि प्रत्याख्यानं भण्यमानं विन्ध्यसमीपे विचार्यमाणं शृणोति ॥ २५१८ ॥

तदेवं श्रुत्वा किं करोति ? इत्याह—

[2]जंपइ पच्चक्खाणं अपरिमाणाए होइ सेयं तु । जेसिं तु परिमाणं तं दुट्ठं आससा होइ ॥ २५१९ ॥

गोष्ठामाहिलो जल्पति,— ननु प्रत्याख्यानं सर्वमप्यपरिमाणतयाऽवधिरहितमेव क्रियमाणं श्रेयोहेतुत्वात् श्रेयः शोभनं भवति । येषां तु व्याख्याने यावज्जीवादिपरिमाणमवधिर्विधीयते, तेषां मतेन तत् प्रत्याख्यानमाशंसादोषदुष्टत्वाद् दुष्टं सदोषं प्राप्नोति ॥२५१९॥

अत्र भाष्यम्—

[3]आसंसा जा पुण्णे सेविस्सामि त्ति दूसियं तीए । जेण सुयम्मि वि भणियं परिणामाओ असुद्धं तु ॥२५२०॥

'आशंसातः प्रत्याख्यानं दुष्टम्' इत्युक्तम् । तत्राशंसा का ? इत्याह— 'ज त्ति' यैवंविधपरिणामरूपा । कथंभूतः परिणामः ? इत्याह— 'पूर्णे प्रत्याख्याने देवलोकादौ सुराङ्गनासंभोगादिभोगानहं सेविष्ये' इत्येवंभूतपरिणामरूपा च याऽऽशंसा तया प्रत्याख्यानं दूषितं भवति । कुतः ? इत्याह— येन श्रुतेऽप्यागमेऽपि भणितम्— दुष्टपरिणामाशुद्धेः प्रत्याख्यानमशुद्धं भवति; तथाचागमः—

"[4]सोही सद्दहणा जाणणा य विणएऽणुभासणा चेव । अणुपालणा विसोही भावविसोही भवे छट्ठो ॥ १ ॥"

तत्र "[5]पच्चक्खाणं सव्वन्नुदेसियं" इत्यादिना श्रद्धानादिषु व्याख्यातेषु भावविशुद्धेर्यद् व्याख्यानं तत् प्रकृतोपयोगीति दर्श्यते—

"[6]रागेण व दोसेण व परिणामेन व न दूसियं जं तु । त खलु पच्चक्खाणं भावविसुद्ध मुणेयव्वं ॥ १ ॥" इति ।

---

१ करोमि भगवन् ! सामायिकं सर्वं सावद्यं योगं प्रत्याख्यामि ।
२ जल्पति प्रत्याख्यानमपरिमाणतया भवति श्रेयस्तु । येषां तु परिमाण तद् दुष्टमाशंसा भवति ॥ २५१९ ॥
३ आशसा या पूर्णे सेविष्य इति दूषित तया । येन श्रुतेऽपि भणित परिणामादशुद्ध तु ॥ २५२० ॥
४ शुद्धिः श्रद्धानं ज्ञानज्ञा च विनयेऽनुभाषणा चैव । अनुपालना विशुद्धिर्भावविशुद्धिर्भवेत् षष्ठीः ॥ २५२१ ॥
५ प्रत्याख्यानं सर्वज्ञदेशितम् ।
६ रागेण दोषेण वा परिणामेन वा न दूषितं यत्तु । तत् खलु प्रत्याख्यानं भावविशुद्ध ज्ञातव्यम् ॥ २५२२ ॥

जइ सच्चं नाभावो अहालियं न प्पमाणमेयं ति । अब्भुवगयं ति व मई नाभावे जुत्तमेयं ति ॥ ४६ ॥
सिकयासु किं न तेल्लं सामग्गीउ तिलेसु वि किमत्थि ? । किंव न सव्वं सिज्झइ सामग्गीउ खपुप्फाणं ? ॥४७॥
सव्वं सामग्गिमयं नेगंतोऽयं जओऽणुरपएसो । अह सो वि सप्पएसो जत्थावत्था स परमाणू ॥ ४८ ॥
दीसइ सामग्गिमयं न याणवो संति नणु विरुद्धमिदं । किं वाणूणमभावे निप्फण्णमिणं खपुप्फेहिं ? ॥ ४९ ॥
देसस्साराभागो घेप्पइ न य सो त्ति नणु विरुद्धमिणं । सव्वाभावे वि न सो घेप्पइ किं खरविसाणस्स ? ॥५०॥
परभागादरिसणओ नाराभागो वि किमणुमाणं ति । आराभागग्गहणे किं व न परभागसंसिद्धी ? ॥ ५१ ॥
सव्वाभावे वि कओ आरा-पर-मज्झभागनामत्तं । अह परमईए भण्णइ स-परमइविसेसणं कत्तो ? ॥ ५२ ॥
आर-पर-मज्झभागा पडिवण्णा जइ न सुण्णया नाम । अप्पाडिवण्णेसु वि का विगप्पणा खरविसाणस्स ? ॥५३॥
सव्वाभावे वाराभागो किं दीसए न परभागो । सव्वागहणं व न किं किं वा न विवज्जओ होइ ? ॥ ५४ ॥
परभागदरिसणं वा फलिहाईणं ति ते धुवं संति । जइवा ते वि न संता परभागादरिसणम्हेऊ ॥ ५५ ॥
सव्वादरिसणउ च्चिय न भण्णइ कीस, भणइ तन्नाम । पुव्वब्भुवगयहाणी पच्चक्खविरोहओ चेव ॥ ५६ ॥
नत्थि पर-मज्झभागा अपच्चक्खत्तओ मई होज्जा । नणु अक्ख-त्थावत्ती अपच्चक्खत्तहाणी वा ॥ ५७ ॥
अत्थि अपच्चक्खं पि हु जह भवओ संसयाइविन्नाणं । अह नत्थि सुण्णया का कास व केणोवलद्धा वा ? ॥५८॥
पच्चक्खेसु न जुत्तो तुह भूमि-जला-ऽनलेसु संदेहो । अनिला-ऽऽगासेसु भवे सोऽवि न जुत्तोऽणुमाणाओ ॥५९॥
अत्थि अदिस्सापाइयफरिसणाईणं गुणी गुणत्तणओ । रूवस्स घडो व्व गुणी जो तेसिं सोऽनिलो नाम ॥६०॥
अत्थि वसुहाइभाणं तोयस्स घडो व्व मुत्तिमत्ताओ । जं भूयाणं भाणं तं वोमं वत्त ! सुव्वत्तं ॥ ६१ ॥

१ 'सावि' ।

एवं पच्चक्खाइपमाणसिद्धाइं सोम्म ! पडिवज्ज । जीव-सरीराहारोवओगधम्माइं भूयाइं ॥ ६२ ॥
किह सजीवाइं मई तल्लिङ्गाओऽनिलावसाणाइं । वोमं विमुत्तिभावादाधारो चेव न सजीवं ॥ ६३ ॥
जम्म-जरा-जीवण-मरण-रोहणा-हार-दोहला-मयओ । रोग-तिगिच्छाईहि य नारि व्व सचेयणा तरवो ॥ ६४ ॥
छिक्कपरोइया छिक्कमेत्तसंकोयओ कुलिंगो व्व । आसयसंचाराओ वियत्त ! वल्लीवियाणाइं ॥ ६५ ॥
सम्मादओ य साव-प्पबोह-संकोयणाइओऽभिमया । बउलादओ य सद्दाइविसयकालोवलंभाओ ॥ ६६ ॥
मंसंकुरो व्व सामाणजाइरूवंकुरोवलंभाओ । तरुगण-विद्दुम-लवणो-वलादओ सासयावत्था ॥ ६७ ॥
भूमिक्खयसाभावियसंभवओ दद्दुरो व्व जलमुत्तं । अहवा मच्छो ध सभाववोमसंभूयपायाओ ॥ ६८ ॥
अपरप्पेरियतिरियानियमियदिग्गमणओऽणिलो गो व्व । अनलो आहाराओ विद्धि-विगारोवलम्भाओ ॥ ६९ ॥
तणवोऽणब्भाइविगारमुत्तजाइत्तओऽणिलंताइं । सत्थासत्थहयाओ निज्जीव-सजीवरूवाओ ॥ ७० ॥
सिज्झंति सोम्म! बहुसो जीवा नवसत्तसंभवो नवि य । परिमियदेसो लोगो न संति चेगिंदिया जेसिं ॥७१॥
ते सिं भवविच्छित्ती पावइ नेट्ठा य सा जओ तेण । सिद्धमणंता जीवा भूयाहारा य तेऽवस्सं ॥ ७२ ॥
एवमहिंसाभावो जीवघणं ति य तं जओऽभिहिअं । सत्थोवहयमजीवं न य जीवघणं ति तो हिंसा ॥ ७३ ॥
न य घायउ त्ति हिंसो नाघायंतो त्ति निच्छियमहिंसो । न विरलजीवमहिंसो न य जीवघणं ति तो हिंसो ॥७४॥
अहणंतो वि हु हिंसो दुट्ठत्तणओ मओ अहिमरो व्व । बाहिंतो न वि हिंसो सुद्धत्तणओ जहा विज्जो ॥७५॥
पंचसमिओ तिगुत्तो नाणी अविहिंसओ न विवरीओ । होउ व संपत्ती से मा वा जीवोवरोहेणं ॥ ७६ ॥
असुभो जो परिणामो सा हिंसा सो उ बाहिरनिमित्तं । को वि अवेक्खेज्ज नवा जम्हाऽणेगंतियं बज्झं ॥ ७७ ॥

१ 'च प'। २ 'तो वि न हिं'।

तदेवं विप्रतिपन्नेन गोष्ठामाहिलेन यत् पूर्वपक्षीकृतं तद् विन्ध्येन गत्वा गुरोर्दुर्बलिकापुष्पमित्रस्य निवेदितम्। गुरुणा चोत्तरपक्षभूतं सर्वमपि प्रतिविधानं तस्योपदिष्टम्, तेनापि गत्वा गुरूपदेशेन सर्वं गोष्ठामाहिलस्य प्रतिपादितम्। स च मिथ्याभिमानाद् गाढमाविष्टो यावद् न किञ्चित् प्रतिपन्नवान्, तावद् गुरुणा स्वयमाभिमुख्येनोक्त इति ॥ २५२० ॥

एतदेवाह—

[1]विंझपरिपुच्छियगुरूवएसकहियं पि न पडिवन्नो सो। जाहे ताहे गुरुणा सयमुत्तो पूसमित्तेणं ॥ २५२१ ॥

गतार्था ॥ २५२१ ॥

किमुक्तः? इत्याह—

[2]किं कंचुओ व्व कम्मं पइप्पएसमह जीवपज्जंते। पइदेसं सव्वगयं तदंतरालाणवत्थाओ ॥ २५२२ ॥

अह जीवबहिं तो नाणुवत्तए तं भवंतरालम्मि। तदणुगमाभावाओ बज्झंगमलो व्व सुव्वत्तं ॥ २५२३ ॥

एवं सव्वविमुक्खो निक्कारणउ व्व सव्वसंसारो। भवमुक्काणं च पुणो संसरणमओ अणासासो ॥२५२४॥

व्याख्या—[3]'पुट्ठो जहा अबद्धो कंचुइणं' इत्यादिगाथायां कञ्चुकवत् स्पृष्टमेव जीवे कर्म न तु बद्धमिति यदुच्यते भवता, तद् विचार्यते— किं कञ्चुकवत् स्पृष्टं कर्म जीवस्य प्रतिप्रदेशं वृत्तं सदुच्यते, आहोस्विज्जीवपर्यन्ते त्वक्पर्यन्त एव वृत्तं स्पृष्टमिष्यते? इति द्वयी गतिः। तत्र यदि प्रतिदेशं वृत्तत्वात् स्पृष्टमिष्टम्, तर्हि जीवे सर्वगतं कर्म प्राप्नोति, नभोवत्। कुतः सर्वगतम्? इत्याह— "तदन्तरालेत्यादि' तस्य जीवस्यान्तरालं मध्यं तदन्तरालं तस्यानवस्थातः तस्य कर्माव्याप्तस्यानवस्थानादनुद्धारणादित्यर्थः। न हि प्रतिप्रदेशं वृत्ते कर्मणि जीवस्य कोऽपि मध्यप्रदेश उद्धरति। येन कर्मणस्तत्रासर्वगतत्वं स्यात्। तस्मादाकाशेनेव कर्मणा जीवस्य प्रतिदेशं व्याप्तत्वात् तस्य जीवे सर्वगतत्वं सिद्धमेव। एवं च सति साध्यविकलत्वात् कञ्चुकदृष्टान्तोऽसंबद्ध एव प्राप्नोति, साध्यस्य यथोक्तस्पर्शनस्य

१ विन्ध्यपरिपृष्टगुरूपदेशकथितमपि न प्रतिपन्नः सः। यदा तदा गुरुणा स्वयमुक्त पुष्पमित्रेण ॥ २५२१ ॥
२ किं कञ्चुक इव कर्म प्रतिप्रदेशमथ जीवपर्यन्ते। प्रतिदेशं सर्वगतं तदन्तरालानवस्थातः ॥ २५२२ ॥
अथ जीवबाहिस्ततो नानुवर्तते तद् भवान्तराले। तदनुगमाभावाद् बाह्याङ्गमल इव सुव्यक्तम् ॥ २५२३ ॥
एवं सर्वविमोक्षो निष्कारणको वा सर्वसंसारः। भवमुक्तानां च पुनः संसरणमतोऽनाश्वासः ॥ २५२४ ॥ ३ गाथा २५१७।

ईय पण्णविओ वि न सो जाहे सद्दहइ पूसमित्तेण । अन्नगणत्थेरेहि य काउं तो संघसमवायं ॥२५४६॥

आहूय देवयं बेइ जाणमाणो वि पच्चयनिमित्तं । वच्च जिणिंदं पुच्छसु गयाऽऽगया सा परिकहेइ ॥२५४७॥

संघो सम्मावाई गुरूपुरोगो त्ति जिणवरो भणइ । इयरो मिच्छावाई सत्तमओ निह्नवोऽयं ति ॥२५४८॥

एईसं सामत्थं कत्तो गंतुं जिणिंदमूलम्मि । बेई कडपूयणाए, संघेण तओ कओ बज्झो ॥२५४९॥

चतसृणामप्यासामक्षरार्थः सुगम एव, भावार्थस्तु कथानकशेषादवसेयः; तच्चेदम्– एवं युक्तिभिः प्रज्ञाप्यमानो यावदसौ न किमपि श्रद्धत्ते, तावत् पुष्पमित्राचार्यैरन्यगच्छगतबहुश्रुतस्थविराणामन्तिके नीतः । ततस्तैरप्युक्तोऽसौ यादृशं सूरयः प्ररूपयन्ति, आर्यरक्षितसूरिभिरपि तादृशमेव प्ररूपितम्, न हीनाधिकम् । ततो गोष्ठामाहिलेनोक्तम्– किं यूयमृषयो जानीथ ?, तीर्थकरैस्तादृशमेव प्ररूपितम्, यादृशमहं प्ररूपयामि । ततः स्थविरैरुक्तम्– मिथ्याभिनिविष्टो मा कार्षीस्तीर्थकराशातनाम्, न किमपि त्वं जानासि । ततः सर्वविप्रतिपन्ने तस्मिन् सर्वैरपि तैः संघसमवायः कृतः। सर्वेणापि च संघेन देवताह्वानार्थं कायोत्सर्गो विहितः। ततो भद्रिका काचिद् देवता समागता । सा वदति– संदिशत, किं करोमि ?। ततः संघः प्रस्तुतमर्थं जानन्नपि सर्वजनप्रत्ययनिमित्तं ब्रवीति–महाविदेहे गत्वा तीर्थकरमापृच्छस्व,– किं दुर्बलिकापुष्पमित्रप्रमुखः संघो यद् भणति तत् सत्यम्, उत यद् गोष्ठामाहिलो वदति ?। ततस्तया प्रोक्तम्– मम महाविदेहे गमनागमनं कुर्वत्याः प्रत्यूहप्रतिघातार्थमनुग्रहं कृत्वा कायोत्सर्गं कुरुत, येनाहं गच्छामि । ततस्तथैव कृतं संघेन। गता च सा। पृष्ट्वा च भगवन्तं प्रत्यागता कथयति यदुत–तीर्थकरः समादिशति,–'दुर्बलिकापुष्पमित्रपुरस्सरः संघः सम्यग्वादी, गोष्ठामाहिलस्तु मिथ्यावादी, सप्तमश्चायं निह्नवः' इति। तदेतत् श्रुत्वा गोष्ठामाहिलो ब्रवीति– नन्वल्पर्द्धिकेयं वराकी, का नामैतस्याः कडपूतनायास्तीर्थकरान्तिके गमनशक्तिः ? इति । एवमपि यावदसौ न किञ्चिद् मन्यते तावत् संघेनोद्घाट्य बाह्यः कृतः । अनालोचितप्रतिक्रान्तश्च कालं

1 इति प्रज्ञापितोऽपि न स यावत् श्रद्धत्ते पुष्पमित्रेण । अन्यगणस्थविरैश्च कृत्वा ततः संघसमवायम् ॥ २५४६ ॥
आहूय देवतां ब्रवीति जानन्नपि प्रत्ययनिमित्तम् । व्रज जिनेन्द्रं पृच्छ गताऽऽगता सा परिकथयति ॥ २५४७ ॥
सघः सम्यग्वादी गुरुपुरोग इति जिनवरो भणति । इतरो मृषावादी सप्तमको निह्नवोऽयमिति ॥ २५४८ ॥
ईदृश सामर्थ्यं कुतो गन्तुं जिनेन्द्रमूले । ब्रवीति कडपूतनायाः, संघेन ततः कृतो बाह्यः ॥ २५४९ ॥

कञ्चुकेऽभावादिति। द्वितीयविकल्पमधिकृत्याह– 'अहेत्यादि' अथ जीवस्य बहिस्त्वक्पर्यन्ते वृत्तत्वात् कञ्चुकवत् स्पृष्टं कर्मेष्यते, तर्हि भवाद् भवान्तरं संक्रामतोऽन्तराले तद् नानुवर्तते तदनुवृत्तिर्न प्राप्नोति, त्वक्पर्यन्ते वृत्तत्वेन तदनुगमाभावात्, बाह्याङ्गमलवदिति सुव्यक्तमेव, बालानामपि प्रतीतत्वादिति। भवत्वननुवृत्तिः कर्मणो भवान्तराले, को दोषः? इत्याह– 'एवमित्यादि' एवं कर्मणोऽननुवृत्तौ सत्यां सर्वेषामपि जीवानां विमोक्षः संसाराभावः प्राप्नोति, संसारकारणस्य कर्मणोऽभावात्। अथ निष्कारणोऽपि संसार इष्यते, तर्हि ये व्रत-तपो-ब्रह्मचर्यादिकष्टानुष्ठानानि कुर्वते तेषामपि सर्वेषां संसार एव स्यात्, निष्कारणत्वाविशेषात्। निष्कारणं च जायमानं भवमुक्तानामपि सिद्धानामपि पुनरपि संसरणं संसारः स्यादिति मुक्तावप्यनाश्वास इति ॥ २५२२ ॥ २५२३ ॥ २५२४ ॥

किञ्च, त्वक्पर्यन्तवर्तिनि कर्मणीष्यमाणेऽपरोऽपि दोषः। कः? इत्याह––

देहंतो जा वियणा कम्माभावम्मि किंनिमित्ता सा?। निक्कारणा वा जइ तो सिद्धो वि न वेयणारहिओ॥२५२५॥

जइ बज्झनिमित्ता सा तदभावे सा न हुज्ज तो अंतो। दिट्ठा य सा सुबहुसो बाहिं निव्वेयणस्सावि॥२५२६॥

जइवा विभिण्णदेसं पि वेयणं कुणइ कम्ममेवं तो। कहमण्णसरीरगयं न वेयणं कुणइ अण्णस्स?॥२५२७॥

व्याख्या– यदि कञ्चुकवद् बहिरेव वर्तते कर्म, तदा देहस्यान्तर्मध्ये या शूल-नालगुल्मादिवेदना सा किंनिमित्तेति वक्तव्यम्, मध्ये तत्कारणभूतस्य कर्मणोऽभावात्?। अथ निष्कारणापि देहान्तर्वेदनाऽभ्युपगम्यते, ततस्तर्हि सिद्धोऽपि न वेदनारहितः स्यात्, निष्कारणत्वाविशेषादिति। अथ बाह्यवेदनानिमित्ता साऽन्तर्वेदनाऽभ्युपगम्यते, बहिर्वेदना हि लगुडघातादिजन्या प्रादुर्भवन्ती मध्येऽपि वेदनां जनयत्येवेति यदि तवाभिप्रायः, तर्हि तदभावे लगुडघातादिजन्यवेदनाविरहे साऽन्तर्वेदना न भवेद् न जायेत। अस्त्वेवमिति चेत्। तदयुक्तम्, यतो दृष्टाऽसौ बहुशः शूलादिप्रभवान्तर्वेदना। कस्य? इत्याह– 'बाहिमित्यादि' बहिर्निर्वेदनस्यापि बहिर्लगुडादिघातजन्यवेदनारहितस्यापीत्यर्थः। यदि ह्ययं नियमः स्याद् यदुत– बहिर्लगुडघातादिवेदनासद्भाव एवान्तर्वेदनां प्रादुरस्तीति, तदा स्यादपि त्वदभिमतम्। न चैवम्, यतोऽनुभूयते दृश्यते च बहिर्वेदनाऽभावेऽपि यथोक्तान्तर्वेदना, ततस्तत्कारणभूतेन

१ देहान्तर्या वेदना कर्माभावे किंनिमित्ता सा?। निष्कारणा वा यदि तत सिद्धोऽपि न वेदनारहित ॥ २५२५॥
यदि बाह्यनिमित्ता सा तदभावे सा न भवेत् ततोऽन्त। दृष्टा च सा सुबहुशो बहिर्निर्वेदनस्यापि ॥ २५२६ ॥
यदिवा विभिन्नदेशामपि वेदनां करोति कर्मैवं तत। कथमन्यशरीरगता न वेदनां करोत्यन्यस्य? ॥ २५२७ ॥

गतः ॥ इत्येकचत्वारिंशद्गाथार्थः ॥ २५४६॥२५४७॥२५४८॥२५४९ ॥

॥ इति गोष्ठामाहिलनामा सप्तमो निह्नवः समाप्तः ॥



तदेवमुक्ता देशविसंवादिनः सप्त निह्नवाः । अथ सर्वविसंवादिनः '[1]बहुरय पएस अव्वत्त समुच्छा दुग तिग अबद्धिया चेव' इत्यादिगाथायां चशब्दसंगृहीतानष्टमान् बोटिकनिह्नवानाभिधित्सुराह—

[2]छ व्वाससयाइं नवुत्तराइं तइआ सिद्धिं गयस्स वीरस्स। तो बोडियाण दिट्ठी रहवीरपुरे समुप्पण्णा॥२५५०॥

सुबोधार्था ॥ २५५० ॥

अथ बोटिकोत्पत्तेरेवं[3] संग्रहगाथाद्वयमाह—

[4]रहवीरपुरं नगरं दीवगमुज्जाणमज्जकण्हे य । सिवभूइस्सुवहिम्मि पुच्छा थेराण कहणा य ॥ २५५१ ॥

बोडियसिवभूईओ बोडियलिंगस्स होइ उप्पत्ती । कोडिन्न-कोट्टवीरा परंपराफासमुप्पन्ना ॥ २५५२ ॥

एतद्भावार्थः कथानकगम्यः, तच्चेदम्– रथवीरपुरं नाम नगरम्। तद्बहिश्च दीपकाभिधानमुद्यानम्। तत्र चार्यकृष्णनामानः सूरयः समागताः। तस्मिंश्च नगरे सहस्रमल्लः शिवभूतिर्नाम राजसेवकः समस्ति। स च राजप्रसादाद् विलासान् कुर्वन् नगरमध्ये पर्यटति । रात्रेश्च प्रहरद्वयेऽतिक्रान्ते गृहमागच्छति। तत एतदीयभार्या तन्मातरं भणति– 'निर्वेदिताऽहं त्वत्पुत्रेण, न खल्वेष रात्रौ वेलायां कदाचिदप्यागच्छति। तत उज्जागरकेण बुभुक्षया च बाध्यमाना प्रत्यहं तिष्ठामि'। ततस्तया प्रोक्तम्– 'वत्से ! यद्येवं, तर्हि त्वमद्य स्वपिहि, स्वयमेवाहं जागरिष्यामि'। ततः कृतं वध्वा तथैव, इतरस्यास्तु जाग्रत्या रात्रिप्रहरद्वयेऽतिक्रान्ते समागत्य शिवभूतिना प्रोक्तम्– 'द्वारमुद्घाट्यत'। ततः प्रकुपितया मात्रा प्रोक्तम्– 'दुर्नयविधे ! यत्रैतस्यां वेलायां द्वाराण्युद्घाटितानि भवन्ति तत्र गच्छ, न पुनरेवं तव पृष्ठलग्नः कोऽप्यत्र मरिष्यति'। ततः कोपा-ऽहङ्काराभ्यां प्रेर्यमाणोऽसौ निर्गतः। पर्यटता चोद्घाटितद्वारः साधूपाश्रयो दृष्टः। तत्र च साधवः कालग्रहणं कुर्वन्ति। तेषां च पार्श्वे तेन वन्दित्वा व्रतं याचितम्। तैश्च 'राजवल्लभः, मात्रादिभिरमुत्कलितश्च' इति न दत्तम् । ततः

१ गाथा २३०० । २ षड् वर्ष शतानि नवोत्तराणि तदा सिद्धिं गतस्य वीरस्य । ततो बोटिकानां दृष्टी रथवीरपुरे समुत्पन्ना ॥ २५५० ॥ ३ ज 'व गा' ।
४ रथवीरपुर नगर दीपकमुद्यानमार्यकृष्णश्च । शिवभूतेरुपधौ पृच्छा स्थविराणा कथना च ॥ २५५१ ॥
बोटिकशिवभूतेर्बोटिकलिङ्गस्य भवत्युत्पत्ति । कौण्डिन्य-कोट्टवीरात् परम्परास्पर्शमुत्पन्ना ॥ २५५२ ॥

मध्ये कर्मणापि भाव्यमिति सिद्धोऽस्मत्पक्ष इति। अथैवं मन्यसे– बहिस्त्वक्पर्यन्तवर्त्यपि कर्म मध्येऽपि शूलादिवेदनां जनयति न पुनर्मध्ये कर्मास्ति। तदयुक्तम्, यतो यदि बहिर्वर्तिविभिन्नदेशस्थितमपि कर्मान्यस्मिन् मध्यलक्षणे देशान्तरे वेदनां करोतीत्यभ्युपगम्यते, एवं तर्हि कथं केन हेतुनाऽन्यशरीरगतं कर्मान्यस्य यज्ञदत्तादेर्वेदनां न करोति ?– ननु करोतु नाम, एवमपि देशान्तरत्वाविशेषादिति भावः ॥ २५२५ ॥ २५२६ ॥ २५२७ ॥

अत्र पराभिप्रायमाशङ्क्य परिहर्तुमाह––

अह तं संचरइ मई न बहिं तो कंचुगो व्व निच्चत्थं। जं च जुगवं पि वियणा सव्वम्मि वि दीसई देहे ॥२५२८॥

अथ भवतो मतिः– एकस्य देवदत्तशरीरस्य बहिरन्तश्च संचरति तत्कर्म, ततस्तत्र बहिरन्तश्च वेदनां जनयति, न शरीरान्तरे, स्वाधारशरीरे बहिरन्तश्च संचरणात्, अन्यशरीरे त्वसंचरणादिति। अत्रोच्यते– 'न बहिमित्यादि' ततस्तर्हि सर्पस्य कञ्चुकवज्जीवस्य बहिरेव कर्म नित्यं तिष्ठतीति नित्यस्थमिति यद् भवतो मतं तद् न प्राप्नोति, किन्तु कदाचिद् बहिः, कदाचित् त्वन्तः कर्मणः संचरणाभ्युपगमात् 'कञ्चुकवद् बहिरेव तिष्ठति' इति नियमस्याघटनात् प्लवत एव तदिति भावः। किञ्च, कर्मणः संचरणे बहिरन्तश्च क्रमेणैव वेदना स्यात्, न चैतदस्ति, लगुडाद्यभिघाते बहिरन्तश्च युगपदेव वेदनादर्शनात्, तस्माद् न कर्मणः संचरणमुपपद्यत इति ॥ २५२८ ॥

कर्मणः संचरणे दूषणान्तरमप्याह––

न भवंतरमण्णेइ य सरीरसंचारओ तदनिलो व्व। चलियं निज्जरियं च्चिय भणियमकम्मं च जं समए ॥२५२९॥

किञ्च, यदि संचरिष्णु कर्माभ्युपगम्यते, तर्हि मृतस्य तद् भवान्तरं नान्वेति– भवान्तरे तस्यानुगमनं न प्राप्नोतीत्यर्थः। शरीरे संचरणादिति हेतुः। अनिलवदिति दृष्टान्तः। इह यत् शरीरे बहिरन्तश्च संचरति न तद् भवान्तरमन्वेति, यथोच्छ्वास-निःश्वासानिलः, तथा च कर्म, तस्माद् न भवान्तरमन्वेतीति। आह– नन्वागमेऽपि "चलमाणे चलिए"[4] इति वचनात् कर्मणश्चलनमुक्तम्,

१ अथ तत् सचरति मतिर्न बहिस्तत कञ्चुक इव नित्यस्थम्। यच्च युगपदपि वेदना सर्वास्मिन्नपि दृश्यते ॥ २५२८ ॥
२ न भवान्तरमन्वेति च शरीरसंचारतस्तदनिल इव। चलितं निर्जीर्णमेव भाणितमकर्म च यत् समये ॥ २५२९ ॥
३ चल्यमानं चलितम्। ४ भगवत्यां प्रथमशतके प्रथमोद्देशे।

खेलमल्लकाद् दीक्षां गृहीत्वा स्वयमेव लोचः कृतः। साधुभिर्लिङ्गं समर्पितम्। विहृताश्च सर्वेऽप्यन्यत्र। कालान्तरेण पुनरपि च तत्रागताः। ततो राज्ञा शिवभूतेर्बहुमूल्यं कम्बलरत्नं दत्तम्। तत आचार्यैः शिवभूतिरुक्तः– 'किमनेन तव साधूनां मार्गादिष्वनेकानर्थहेतुना गृहीतेन ?'। ततस्तेन गुर्वप्रतिभासेनापि संगोप्य मूर्च्छया तद् विधृतम्। गोचरचर्याभिश्चागतः प्रत्यहं तदसौ संभालयति, न तु क्वचिदपि व्यापारयति। ततः 'गुरुभिर्मूर्च्छितोऽयमत्र' इति ज्ञात्वाऽन्यत्र दिने तमनापृच्छ्यैव वहिर्गतस्य परोक्षे तत् कम्बलरत्नं पाटयित्वा साधूनां पादप्रोञ्छनकानि कृतानि। ततो ज्ञातव्यतिकरः कषायितोऽसौ तिष्ठति। अन्यदा च सूरयो जिनकल्पिकान् वर्णयन्ति, तद्यथा—

"[1]जिणकप्पिया य दुविहा पाणिपाया पडिग्गहधरा य। पाउरणमपाउरणा इक्किका ते भवे दुविहा ॥ १ ॥
दुग तिग चउक्क पणगं नव दस एकारसेव बारसग। एए अट्ठ विगप्पा जिणकप्पे होंति उवहिस्स ॥ २ ॥"

इह केषाञ्चिज्जिनकल्पानां रजोहरणं, मुखवस्त्रिका चेति द्विविध उपधिः, अन्येषां तु कल्पेन सह त्रिविधः, कल्पद्वयेन तु सह चतुर्विधः, कल्पत्रयेण सह पञ्चविधः। केषाञ्चित्तु मुखवस्त्रिका, रजोहरणं च, तथा—

"[2]पत्तं पत्ताबंधो पायट्ठवणं च पायकेसरिया। पटलाइं रयत्ताणं च गोच्छओ पायनिज्जोगो ॥ १ ॥"

इति सप्तविधः पात्रनिर्योग इति, एवं च नवविधः। कल्पेन तु सह दशविधः, कल्पद्वयेन सहैकादशविधः, कल्पत्रयेण तु समं द्वादशविध उपधिः केषाञ्चिज्जिनकल्पिनामिति। तदेतत् श्रुत्वा शिवभूतिना प्रोक्तम्– 'यद्येवम्, तर्हि किमिदानीमौघिक औपग्रहिकश्चैतावानुपधिः परिगृह्यते ?। स एव जिनकल्पः किं न क्रियते ?'। ततो गुरुभिरुक्तम्– 'जम्बूस्वामिनि व्यवच्छिन्नोऽसौ, संहननाद्यभावात्, सांप्रतं न शक्यत एव कर्तुम्'। ततः शिवभूतिना प्रोक्तम्– 'मयि जीवति स किं व्यवच्छिद्यते ?, नन्वहमेव तं करोमि, परलोकार्थिना स एव निष्परिग्रहो जिनकल्पः कर्तव्यः, किं पुनरनेन कषाय-भय-मूर्च्छादिदोषविधिना परिग्रहानर्थेन ?। अत एव श्रुते निष्परिग्रहत्वमुक्तम्, अचेलकाश्च जिनेन्द्राः, अतोऽचेलतैव सुन्दरेति'। ततो गुरुणा प्रोक्तम्– 'हन्त ! यद्येवम्, तर्हि देहेऽपि कषाय-भय-मूर्च्छादयो दोषाः कस्यापि संभवन्ति, इति सोऽपि व्रतग्रहणानन्तरमेव त्यक्तव्यः प्राप्नोति। यच्च श्रुते निष्परिग्रह-

१ जिनकल्पिकाश्च द्विविधाः पाणिपात्रा प्रतिग्रहधराश्च। प्रावरणा-ऽप्रावरणा एकैकास्ते भवेयुर्द्विविधा ॥ १ ॥
द्विकं त्रिकं चतुष्कं पञ्चकं नव दशैकादशैव द्वादशकम्। एतेऽष्ट विकल्पा जिनजल्पे भवन्त्युपधे ॥ २ ॥
२ पात्रं पात्रबन्ध पात्रस्थापनं च पात्रकेसरिता। पटलादि रजस्त्राणं च गुच्छकः पात्रनिर्योगः ॥ १ ॥

चलनं च संचरणमेवोच्यते, तद् किमिति तदिह निषिध्यते ?। तदयुक्तम्, अभिप्रायापरिज्ञानादित्याह– 'चलियमित्यादि' ''[1]नेरईए जाव वेमाणिए जीवाउ चलियं कम्मं निज्जरइ'' इत्यादिवचनात्, तथा ''निर्जीर्यमाणं निर्जीर्णम्'' इति वचनाच्च यद् यस्मात् समये आगमे चलितं कर्म निर्जीर्णमुक्तं तदकर्मैव भणितम्, तच्च मध्ये गतमपि न वेदनां जनयितुमलम्, अकर्मणो नभः-परमाण्वादेरिव तत्सामर्थ्याभावात्। तस्मादित्थमनेकदोषदुष्टत्वादयुक्तं कर्मणः संचरणमिति। अतो मध्ये व्यवस्थितं कर्मास्तीति स्थितम् ॥२५२९॥

मध्ये कर्मावस्थानसाधनार्थमेव प्रमाणयन्नाह—

[2]अंतो वि अत्थि कम्मं वियणासब्भावओ तयाए व्व। मिच्छत्ताईपच्चयसब्भावओ य सव्वत्थ ॥ २५३० ॥

अन्तर्मध्येऽप्यस्ति कर्मेति प्रतिज्ञा। वेदनासद्भावादिति हेतुः। त्वचीवेति दृष्टान्तः। इह यत्र वेदनासद्भावस्तत्रास्ति कर्म, यथा त्वक्पर्यन्ते, अस्ति चान्तर्वेदना, ततः कर्मणापि तत्र भवितव्यमेवेति। किञ्च, मिथ्यात्वादिभिः प्रत्ययैः कर्म बध्यते, ते च जीवस्य यथा बहिस्तनप्रदेशेषु तथा मध्यप्रदेशेष्वपि, यथा मध्यप्रदेशेषु तथा बाह्यप्रदेशेष्वपि सर्वत्र सन्ति, तेषामध्यवसायविशेषरूपत्वात्, अध्यवसायस्य च समस्तजीवगतत्वादिति। तस्माद् मिथ्यात्वादीनां कर्मबन्धकारणानां जीवे सर्वत्र सद्भावात् तत्कार्यभूतं कर्मापि सर्वत्रैव तत्रास्ति, न पुनर्बहिरेव। तस्माद् वह्न्ययःपिण्ड-क्षीरनीरादिन्यायाज्जीवेन सहाविभागेनैव स्थितं कर्मेति प्रतिपद्यतां सत्पक्षः, त्यज्यतां मिथ्याभिमान इति ॥ २५३० ॥

आह– ननु यदि जीव-कर्मणोरविभागः, तर्हि तद्वियोगाभावाद् मोक्षाभाव इत्युक्तमेव दूषणमित्याशङ्क्याह—

[3]अविभागत्थस्स वि से विमोयणं कंचणो-वलाणं व। नाण-किरियाहिं कीरइ मिच्छत्ताईहिं चायाणं ॥ २५३१ ॥

'से' तस्य कर्मणो जीवेन सहाविभागेन स्थितस्यापि काञ्चनो-पलयोरिव विमोचनं वियोगो ज्ञान-क्रियाभ्यां क्रियते। तथा, तस्यैव कर्मणो मिथ्यात्वादिभिरादानं ग्रहणं जीवेन सह संयोगो विधीयत इत्यर्थः। इदमत्र हृदयम्– इह जीवस्याविभागेनावस्थानं द्विधा विद्यते– आकाशेन सह, कर्मणा च। तत्राकाशेन सह यदविभागावस्थानं तद् न वियुज्यत एव, सर्वाद्धमवथानात्। यत्तु

१ नैरयिका यावद् वैमानिका जीवाश्चलितं कर्म निर्जीर्यन्ति।

२ अन्तरप्यस्ति कर्म, वेदनासद्भावतस्त्वचीव। मिथ्यात्वादिप्रत्ययसद्भावाच्च सर्वत्र ॥ २५३० ॥

३ अविभागस्थस्यापि तस्य विमोचनं काञ्चनो-पलयोरिव। ज्ञान-क्रियाभ्यां क्रियते मिथ्यात्वादिभिश्चादानम् ॥ २५३१ ॥

त्वमुक्तं तदपि धर्मोपकरणेष्वपि मूर्च्छा न कर्तव्या, मूर्च्छाभाव एव निष्परिग्रहत्वमवसेयम् , न पुनः सर्वथा धर्मोपकरणस्यापि त्यागः। जिनेन्द्रा अपि न सर्वथैवाचेलकाः "सव्वे वि एगदूसेण निग्गया जिणवरा चउव्वीसं" इत्यादिवचनात्[1]। तदेवं गुरुणा स्थविरैश्च यथोक्ताभिर्वक्ष्यमाणाभिश्च युक्तिभिः प्रज्ञाप्यमानोऽपि तथाविधकषायमोहादिकर्मोदयाद् न स्वाग्रहाद् निवृत्तोऽसौ, किन्तु चीवराणि परित्यज्य निर्गतः। ततश्च बहिरुद्याने व्यवस्थितस्यास्योत्तरा नाम भगिनी वन्दनार्थं गता। सा च त्यक्तचीवरं तं भ्रातरमालोक्य स्वयमपि चीवराणि त्यक्तवती। ततो भिक्षार्थं नगरमध्ये प्रविष्टा गणिकया दृष्टा। तत इत्थं विवस्त्रां बीभत्सामिमां दृष्ट्वा 'मा लोकोऽस्मासु विराङ्क्षीत्' इत्यनिच्छन्त्यपि तया वस्त्रं परिधापिताऽसौ। तत एष व्यतिकरोऽनया शिवभूतेर्निवेदितः। ततोऽनेन 'विवस्त्रा योषिद् नितरां बीभत्साऽतिलज्जनीया च भवति' इति विचिन्त्य प्रोक्ताऽसौ– 'तिष्ठत्वित्थमपि, न त्यक्तव्यं त्वयैतद् वस्त्रम्। देवतया हि तवेदं प्रदत्तमिति'। ततः शिवभूतिना कौण्डिन्य-कोट्टवीरनामानौ द्वौ शिष्यौ दीक्षितौ।

गाथाक्षरार्थोऽपि किञ्चिदुच्यते– 'कोडिन्नेत्यादि' कौण्डिन्यश्च कोट्टवीरश्चेति 'सर्वो द्वन्द्वो विभाषयैकवद् भवति' इति वचनात् कौण्डिन्य-कोट्टवीरम्, तस्मात् कौण्डिन्य-कोट्टवीरात् परम्परास्पर्शमाचार्य-शिष्यसंबन्धलक्षणमधिकृत्योत्पन्ना संजाता 'बोटकदृष्टिः' इत्यध्याहारः। इत्येवं बोटिकाः समुत्पन्नाः ॥ २५५१ ॥ २५५२ ॥

अत्र भाष्यम्—

उवहिविभागं सोउं सिवभूई अज्जकण्हगुरुमूले। जिणकप्पियाइयाणं भणइ गुरुं कीस नेयाणिं? ॥२५५३॥

जिणकप्पोऽणुचरिज्जइ नोच्छिन्नो त्ति भणिए पुणो भणइ। तदसत्तस्सोच्छिज्जउ वुच्छिज्जइ किं समत्थस्स? ॥२५५४॥

पुच्छस्स पुव्वमणापुच्छछिण्णकंबलकसायकलुसिओ चेव। सो बेइ परिग्गहओ कसाय-मुच्छा-भयाईया॥२५५५॥

---

1 सर्वेऽप्येकदूष्येण निर्गता जिनवराश्चतुर्विंशति।

2 उपधिविभागं श्रुत्वा शिवभूतिरार्यकृष्णगुरुमूले। जिनकल्पिकादिकानां भणति गुरुं कस्माद् नेदानीम्? ॥ २५५३ ॥ जिनकल्पोऽनुचर्यते नोच्छिन्न इति भणिते पुनर्भणति। तदशक्तस्योच्छिद्यतां व्युच्छिद्यते कथं समर्थस्य? ॥ २५५४ ॥ पृष्टस्य पूर्वमनापृष्टच्छिन्नकम्बलकषायकलुषित एव। स ब्रवीति परिग्रहतः कषाय-मूर्च्छा-भयादिका ॥ २५५५ ॥

कर्मणा सहाविभागावस्थानं तदप्यभव्यानां न वियुज्यते। भव्यानां तु कर्मसंयोगस्तथाविधज्ञान-दर्शन-चारित्र-तपःसामग्रीसद्भावे वियुज्यते, वह्न्यौ-षध्यादिसामग्रीसत्त्वे काञ्चनो-पलसंयोगवदिति। तथाविधज्ञानादिसामग्र्यभावे तु भव्यानामपि कर्मसंयोगः कदापि न निवर्तते, "नो चेव णं भवसिद्धियविरहिए लोए भविस्स" इति वचनात्। तर्हि भव्याः कथं ते व्यपदिश्यन्ते ? इति चेत्। उच्यते– योग्यतामात्रेण। न च योग्यः सर्वोऽपि विवक्षितपर्यायेण युज्यते, प्रतिमादिपर्याययोग्यानामपि तथाविधदारु-पाषाणादीनां तद्विधसामग्र्यभावे केषाञ्चित् तदयोगादित्यलं विस्तरेण, प्रागेव गणधरवादेऽस्यार्थस्य विस्तरेणोक्तत्वात्। तस्मात् 'कर्म जीवाद् न वियुज्यते, अन्योन्याविभागेनावस्थितत्वात्, इत्यनैकान्तिकम्, उपायतो दृश्यमानवियोगैः क्षीरनीर-काञ्चनोपलादिभिर्व्यभिचारात्। ननु प्रस्तुतो जीव-कर्माविभागः केनोपायेन विघटत इति चेत्। नन्वभिहितमेव 'ज्ञान-क्रियोपायतः' इति। मिथ्यात्वादिभिर्हि जीव-कर्मसंयोगः क्रियते, मिथ्यात्वादिविपक्षभूताश्च सम्यग्ज्ञानादयः, अतस्तैस्तद्वियोगो युक्तियुक्त एव, अन्नभोजनादिविपक्षभूतैर्लङ्घनादिभिस्तज्जनिताजीर्णसंयोगवदिति॥२५३१॥

अथादेवादिषु देवादिबुद्ध्याऽभिगमन-वन्दनादिभिर्हिंसादिभिश्च क्रियाभिर्जीवस्य कर्मणा संयोग इष्यते, न तु दया-दान पालन-शील-समिति-गुप्त्यादिक्रियाभिस्तद्वियोग इत्याशङ्क्याह—

[2]कह वादाणे किरियासाफल्लं नेह तव्विघायम्मि। किं पुरिसगारसज्झं तस्सेवासज्झमेगं तो॥ २५३२॥

असुभो तिव्वाईओ जह परिणामो तदज्जणेऽभिमओ। तह तव्विहो च्चिय सुभो किं नेट्ठो तव्विओगे वि ?॥२५३३॥

वाशब्दो युक्तेरभ्युच्चये। कथं वा हन्त ! कर्मण आदाने ग्रहणे हिंसादिक्रियाणां साफल्यमिह त्वयेष्यते ?,– न तु दया-दानादिक्रियाणां तद्विघाते साफल्यमभिप्रेयते, किमत्र राज्ञामाज्ञा प्रभवति, न तु युक्तिः ?। किञ्च, इदमपि प्रष्टव्योऽसि, किं पापस्थानव्यापृतपुरुषकारसाध्यं 'एगं' इतीहापि संबध्यते, एकं कर्मण आदानमिष्यते, एकं तु यत् तस्य निर्जरणं तत् तस्यैव संयमादिस्थानविहितपुरुषकारस्यासाध्यमिष्यते ? इत्येतदपि व्यक्तमेवेश्वरचेष्टितं भवतः, स्वेच्छाप्रवृत्तेः। उपसंहरन्नाह– 'तो त्ति' तस्माद् यथा येन प्रकारेण तीव्र-मन्द-मध्यमभेदभिन्नोऽशुभः परिणामस्तदर्जने तस्य कर्मणोऽर्जनमुपादानं ग्रहणं तत्र हेतुर्भवतोऽभिमतः, तथा तेनैव

१ नो चैव भवसिद्धिकविरहितो लोके भविता।

२ कथं वाऽऽदाने क्रियासाफल्यं नेह तद्विघाते। किं पुरुषकारसाध्यं तस्यैवासाध्यमेकं, ततः॥ २५३२॥
अशुभस्तीव्रादिको यथा परिणामस्तदर्जनेऽभिमतः। तथा तद्विध एव शुभः किं नेष्टस्तद्वियोगेऽपि ?॥ २५३३॥

[1]दोसा जओ सुबहुया सुए य भणियमपरिग्गहत्तं ति। जमचेला य जिणिंदा तदभिहिओ जं च जिणकप्पो॥२५५६॥

जं च जियाचेलपरिसहो मुणी जं च तीहिं ठाणेहिं। वत्थं धरिज्ज नेगंतओ तओऽचेलया सेया ॥२५५७॥

सर्वा अप्युक्तार्था एव, नवरं 'जं च जिणाचेलेत्यादि' यस्माच्च 'जिताचेलपरिषहो मुनिः' इत्यागमेऽभिहितम्। जिताचेलपरिषहत्वं च किल त्यक्तवस्त्रस्यैव भवतीत्यभिप्रायः। यस्माच्च त्रिभिरेव स्थानैर्वस्त्रधरणमनुज्ञातमागमे नैकान्ततः, तथा चागमवचनम्– "[2]तिहिं ठाणेहिं वत्थं धरिज्जा– हीरिवत्तियं, दुगंच्छावत्तियं, परीसहवत्तियं"। तत्र ह्रीर्लज्जा संयमो वा प्रत्ययो निमित्तं यस्य धारणस्य तत् तथा, जुगुप्सा लोकविहिता निन्दा सा प्रत्ययो यस्य तत्तथा, एवं परीषहाः शीतोष्ण-दंशमशकादयः प्रत्ययो यत्र तत्तथा। उपसंहरन्नाह– ततस्तस्मादुक्तयुक्तिभ्योऽचेलतैव श्रेयस्करीति पूर्वपक्षः ॥२५५३॥२५५४॥२५५५॥२५५६॥२५५७॥

अत्रोत्तरपक्षमभिधित्सुराह—

[3]गुरुणाऽभिहिओ जइ जं कसायहेऊ परिग्गहो सो ते। तो सो देहो च्चिय ते कसायउप्पत्तिहेउ त्ति ॥२५५८॥

गुरुणाऽऽर्यकृष्णेनाभिहितः शिवभूतिः– यदि हन्त! यद् यत् कषायहेतुः, तत् तत् ते तव परिग्रहः, स च मुमुक्षुणा परिहर्तव्य एवेत्येकान्तः। 'तो सो इत्यादि' ततस्तर्हि स्वकीयो देह एव ते तव स्वस्यात्मनोऽपि कषायोत्पत्तिहेतुरिति परिग्रहः परिहरणीयश्च प्राप्नोति। अतोऽपरिग्रहत्वस्य परिग्रहाणां चोत्सन्ना कथेति॥ २५५८ ॥

अथवा, किमेको देह एव, ननु व्याप्त्यापि ब्रूमः, तद्यथा—

[4]अत्थि व किं किंचि जए जस्स व तस्स व कसायबीयं जं। वत्थुं न होज्ज एवं धम्मो वि तुमे न घेतव्वो ॥२५५९॥

---

१ दोषा यतः सुबहुकाः श्रुते च भणितमपरिग्रहत्वमिति। यदचेलाश्च जिनेन्द्रास्तदभिहितो यच्च जिनकल्पः ॥ २५५६ ॥
यच्च जिताचेलपरीषहो मुनिर्यच्च त्रिभि स्थानै। वस्त्रं धारयेद् नैकान्ततस्ततोऽचेलता श्रेयसी ॥ २५५७ ॥

२ त्रिभिः स्थानैर्वस्त्रं धारयेत्–ह्रीप्रत्ययम्, जुगुप्साप्रत्ययम्, परिषहप्रत्ययम्।

३ गुरुणाऽभिहितो यदि यत् कषायहेतु· परिग्रहः स ते। ततः स देह एव ते कषायोत्पत्तिहेतुरिति ॥ २५५८ ॥

४ अस्ति वा किं किञ्चिज्जगति यस्य वा तस्य वा कषायबीजं यत्। वस्तु न भवेदेवं धर्मोऽपि त्वया न ग्रहीतव्यः ॥ २५५९ ॥

प्रकारेण तद्विध एव तीव्रादिभेदभिन्नः शुभपरिणामोऽशुभविपक्षत्वात् कर्मार्जनविपक्षभूतैतद्वियोगेऽपि हेतुः किं नेष्टः ?– ननु युक्तियुक्तत्वादेष्टव्य एवेति भावः। तस्माज्जीवेन सहाविभागेन स्थितस्यापि कर्मणः सिद्धो वियोग इति । तदेवं निराकृता कर्मविचारविषया विप्रतिपत्तिः ॥ २५३२ ॥ २५३३ ॥

अथ प्रत्याख्यानविषयां तामपाकर्तुमाह—

[1]किमपरिमाणं सत्ती अणागयद्धा अहापरिच्छेओ ? । जइ जावदत्थि सत्ती तो नणु सच्चेय परिमाणं ॥२५३४॥

सत्ति-किरियाणुमेओ कालो सूरकिरियाणुमेओ व्व । नणु अपरिमाणहाणी आसंसा चेव तदवत्था ॥२५३५॥

यदुक्तम्–'प्रत्याख्यानपरिमाणमेव विधीयमानं श्रेयो भवति' इति। तत्र प्रतिविधीयते– किमिदं नामापरिमाणं ?– किं शक्तिर्यावच्छक्नोमीत्यपरिमाणम् ?, उत सर्वाऽप्यनागताद्धा, आहोस्विदपरिच्छेदः ? इति त्रयी गतिः। तत्र यदि 'यावदस्ति शक्तिस्तावदहमिदं न सेविष्ये' इत्यपरिमाणमिष्यते, ततस्तर्हि ननु सैव शक्तिः परिमाणमापन्नम् , अतो यदेव निषिध्यते तदेवाभ्युपगतमिति । कुतः ? इत्याह– 'सत्तीत्यादि' 'यावच्छक्नोमि तावदिदं न सेविष्ये' इत्येवंभूतया हि शक्तिक्रियया प्रत्याख्यानस्यावधिभूतः काल एवानुमीयते– यावन्तं कालं शक्तिस्तावन्तं कालमिदं न सेविष्य इत्यर्थः । दृष्टान्तमाह– यथा सूर्यादिगतिक्रियया समया-ऽऽवलिकादिः कालोऽनुमीयते तथाऽत्रापि शक्तिक्रियया प्रत्याख्यानावधिकाल इत्यर्थः । अस्त्वेवमिति चेत् । तदयुक्तम् , यतो नन्वेवं सति त्वया प्रतिज्ञातस्यापरिमाणपक्षस्य हानिः प्राप्नोति, शक्तिक्रियानुमितकालपरिमाणस्येदानीं स्वयमेवाभ्युपगमादिति । यदुक्तम्–'[2]तं दुट्ठं आससा होइ' इति, तत्राह– 'आसंसेत्यादि' ननु शक्तिरूपेऽपरिमाणेऽपि त्वयेष्यमाणे आशंसादोषस्तदवस्थ एव, 'शक्तेरुत्तरकालमिदं सेविष्ये' इत्याशंसायास्तदवस्थत्वादिति ॥ २५३४ ॥ २५३५ ॥

शक्तिरूपेऽपरिमाणेऽभ्युपगम्यमाने न केवलं भवतः स्वपक्षहानिः, किन्त्वन्येऽपि दोषाः । के ? इत्याह—

[3]जह न वयभंगदोसो मयस्स तह जीवओ वि सेवाए । वयभंगनिब्भयाओ पच्चक्खाणाणवत्था य॥२५३६॥

1 किमपरिमाण शक्तिरनागताद्धाऽथापरिच्छेद ? । यदि यावदस्ति शक्तिस्ततो ननु सैव परिमाणम् ॥ २५३४ ॥
शक्ति-क्रियानुमेयः काल सूरक्रियानुमेय इव । नन्वपरिमाणहानिराशंसा चैव तदवस्था ॥ २५३५ ॥

2 गाथा २५१७ ।

3 यथा न व्रतभङ्गदोषो मृतस्य तथा जीवतोऽपि सेवायाम् । व्रतभङ्गनिर्भयात् प्रत्याख्यानानवस्था च ॥ २५३६ ॥

[1]जेण कसायनिमित्तं जिणो वि गोसाल-संगमाईणं। धम्मो धम्मपरा वि य पडिणीयाणं जिणमयं च ॥२५६०॥

किं हि नामैतावति जगति तद् वस्तु, यद् यस्य वा तस्य वा कषायाणां वीजं कारणं न भवेत्? एवं च सति श्रुत-चारित्रभेदाभिन्नो धर्मोऽपि त्वया न ग्रहीतव्यः, तस्यापि कस्यचित् कषायहेतुत्वात्। कुतः? इत्याह–'जेणेत्यादि' येन यस्मादास्तां तत्प्रणीतो धर्मः, किन्तु स त्रिभुवनबन्धुर्निष्कारणवत्सलः सर्वसत्त्वानां जिनोऽपि भगवांस्तीर्थकरोऽपि क्लिष्टकर्मणां गोशालक-संगमकादीनां कषायनिमित्तं संजातः। एवं धर्मस्तत्प्रणीतः, तदुक्तधर्मपरा अपि तदेकनिष्ठाः साधवः, जिनमतं च द्वादशाङ्गीरूपम्, सर्वमप्येतद् गुरुकर्मणां दुःखैकरूपदीर्घभव-भ्रमणभाजां प्रत्यनीकानां जिनशासनप्रतिकूलवर्तिनां कषायनिमित्तमेव, इत्येतदप्यग्राह्यं प्राप्नोति, न चैतदस्ति। तस्मात् 'यत् कषायहेतुस्तत् परिहर्तव्यम्' इत्यनेकान्त एवेति ॥२५५९॥२५६०॥

अथैतद्दोषपरिजिहीर्षोः परस्याभिप्रायमाशङ्क्य परिहरन्नाह—

[2]अह ते न मोक्खसाहणमईए गंथो कसायहेऊ वि। वत्थाइ मोक्खसाहणमईए सुद्धं कहं गंथो? ॥२५६१॥

अथ मन्येथाः– ते देहादयो जिनमतान्ताः पदार्थाः कषायहेतवोऽपि सन्तो न ग्रन्थो न परिग्रहः, मोक्षसाधनमत्या गृह्यमाणत्वादिति। हन्त! यद्येवम्, तर्हि वस्त्र-पात्रादिकमप्युपकरणं शुद्धमेषणीयं मोक्षसाधनबुद्ध्या गृह्यमाणं कथं ग्रन्थः?– न कथञ्चिदित्यर्थः, न्यायस्य समानत्वादिति ॥ २५६१ ॥

तदेवं कषायहेतुत्वादग्राह्यं वस्त्रादिकमित्येतद् निराकृतम्। अथ मूर्च्छाहेतुत्वेन तत् परिहरणीयमित्येतदपाकर्तुमाह—

[3]मुच्छाहेऊ गंथो जइ तो देहाइओ कहमगंथो। मुच्छावओ, कहं वा गंथो वत्थादसंगस्स? ॥ २५६२ ॥
अह देहा-ऽऽहाराइसु न मोक्खसाहणमईए ते मुच्छा। का मोक्खसाहणेसुं मुच्छा वत्थाइएसुं तो? ॥२५६३॥

१ येन कषायनिमित्त जिनोऽपि गोशाल-सगमादीनाम्। धर्मो धर्मपरा अपि च प्रत्यनीकानां जिनमत च ॥ २५६० ॥
२ अथ ते न मोक्षसाधनमत्या ग्रन्थ कषायहेतवोऽपि। वस्त्रादि मोक्षसाधनमत्या शुद्ध कथं ग्रन्थ? ॥ २५६१ ॥
३ मूर्च्छाहेतुर्ग्रन्थो यदि ततो देहादिक कथमग्रन्थ। मूर्च्छावत., कथ वा ग्रन्थो वस्त्राद्यसङ्गस्य? ॥ २५६२ ॥
अथ देहा-ऽऽहारादिषु न मोक्षसाधनमत्या ते मूर्च्छा। का मोक्षसाधनेषु मूर्च्छा वस्त्रादिकेषु तत? ॥ २५६३ ॥

ईत्तियमित्ती सत्ति त्ति नाइयारो न यावि पच्छित्तं । न य सव्वव्वयनियमो एगेण वि संजयत्त त्ति॥२५३७॥

यथा मृतस्य पञ्चत्वमुपगतस्य सुरलोकादौ सुरकामिनीसंभोगादिभोगान् भुञ्जतोऽस्मत्पक्षे दोषो न भवति तथा शक्तिरूपमपरिमाणमभ्युपगच्छतस्तव मते जीवतोऽपि भोगोपसेवायां न दोषः प्राप्नोति, 'एतावत्येव मम शक्तिः, अतो मत्प्रत्याख्यानस्य पूर्णत्वाज्जीवन्नपि भुनज्मि भोगान्' इत्यभिप्रायवतस्तदभ्युपगमेन जीवतोऽपि भोगानासेवमानस्य दोषानुषङ्गो न स्यादित्यर्थः । न चैतद् दृष्टमिष्टं वा जिनशासने । किञ्च, इत्थमभ्युपगमे 'एतावती मम शक्तिः' इत्यवष्टम्भवतो व्रतभङ्गनिर्भयत्वात् प्रत्याख्यानानवस्थैव स्यात्, 'एतावती मम शक्तिः' इति भोगासेवनात् पुनः प्रत्याख्यानात्, पुनरप्यासेवनात् पुनः प्रत्याख्यानादिति । किञ्च, व्रतानामतिचारः, तदाचरणे च प्रायश्चित्तम्, एकव्रतभङ्गे सर्वव्रतभङ्गनियमेन सर्वाण्यपि व्रतानि पालनीयानि, इति यदागमरूढं तत् सर्वमपि भवदभिप्रायेण न प्राप्नोतीति सयुक्तिकं दर्शयन्नाह– 'इत्तियमित्तीत्यादि' 'एतावत्येव मम शक्तिर्नाधिका' इत्यध्यवसायेन प्रतिसेवां कुर्वतोऽपि साधोः शक्त्यपरिमाणवादिनो भवतोऽभिप्रायेण नातिचारः, न चापि व्रतभङ्गः, न चापि प्रायश्चित्तम्, तथा सर्वव्रतपरिपालननियमश्च न स्यात्, शक्त्यवष्टम्भात्, एकव्रतपरिपालनेनापि त्वदभिप्रायेण संयतत्वादिति ॥ २५३६ ॥ २५३७ ॥

अथ सर्वाप्यनागताद्धाऽपरिमाणमिति द्वितीयो विकल्प इष्यते, सोऽपि न युक्त इति दर्शयन्नाह--

अहवा[2] सव्वाणागयकालग्गहणं मयं अपरिमाणं । तेणापुण्णपइण्णो मओ वि भग्गवओ नाम ॥ २५३८ ॥

सिद्धो वि संजओ च्चिय सव्वाणागयद्धसंवरधरो त्ति । उत्तरगुण-संवरणाभावो च्चिय सव्वहा चेव ॥२५३९॥

व्याख्या– अथ सर्वस्याप्यनागतकालस्य ग्रहणमपरिमाणं भवतः, तेन तर्हि मृतोऽपि देवलोकादौ भोगानासेवमानः, 'नाम' इत्यामन्त्रणे, अहो ! भग्नव्रत एव साधुः, अपूर्णप्रतिज्ञत्वात्, सर्वमप्यनागतकालं तदपरिपालनादिति सुव्यक्तमेवेति । अपिच, एवं सिद्धोऽपि संयत एव प्राप्नोति, सर्वानागताद्धासंवरधरत्वात्, अस्यापि सर्वाद्धागृहीतप्रत्याख्यानकालाभ्यन्तरवर्तित्वादित्यर्थः, यावज्जीवगृहीतविर-

१ एतावन्मात्रा शक्तिरिति नातिचारो न चापि प्रायश्चित्तम् । न च सर्वव्रतनियम एकेनापि संयतत्वादिति ॥ २५३७ ॥
२ अथवा सर्वानागतकालग्रहणं मतमपरिमाणम् । तेनापूर्णप्रतिज्ञो मृतोऽपि भग्नव्रतो नाम ॥ २५३८ ॥
सिद्धोऽपि सयत एव सर्वानागताद्धा सवरधर इति । उत्तरगुणसंवरणाभाव एव सर्वथा चैवम् ॥ २५३९ ॥

अह कुणसि थुल्लवत्थाइएसु मुच्छं धुवं सरीरे वि । अक्केज्जदुल्लभयरे काहिसि मुच्छं विसेसेणं ॥ २५६४ ॥
वत्थाइगंथरहिया देहा-ऽऽहाराइमित्तमुच्छाए । तिरिय-सबरादओ णणु हवंति निरओवगा बहुसो ॥२५६५॥
अपरिग्गहा वि परसंतिएसु मुच्छा-कसाय-दोसेहिं । अविणिग्गहियप्पाणो कम्ममलमणंतमज्जंति ॥२५६६॥
देहत्थवत्थ-मल्ला-ऽणुलेवणा-ऽऽभरणधारिणो केइ । उवसग्गाइसु मुणओ निस्संगा केवलमुविंति ॥ २५६७ ॥

एताः सुगमा एव, नवरं यदि यो मूर्च्छाहेतुः स ग्रन्थः परिग्रहः, परिग्रहत्वादेव च त्याज्यः; ततस्तर्हि 'मुच्छावउ त्ति' मूर्च्छावतो वक्ष्यमाणयुक्त्या मूर्च्छायुक्तस्य देहा-ऽऽहारादिकस्तव हन्त ! कथमग्रन्थः ? अपि तु ग्रन्थ एव, ततः सोऽपि परित्याज्यः प्राप्नोति । कथं वा ममत्वमूर्च्छारहितत्वेनासङ्गस्य सङ्गविप्रमुक्तस्य साधोर्वस्त्रादिकं ग्रन्थो गीयते भवता ?– न भवत्येव तथाभूतस्य तद् ग्रन्थ इति । अथ देहा-ऽऽहारादिषु ते तव मूर्च्छा नास्ति, मोक्षसाधनमत्या तेषां ग्रहणात्, तर्हि मोक्षसाधनत्वेन तुल्येष्वपि वस्त्रादिषु तव हन्त ! का मूर्च्छा ? इति । अथ स्थूलेषु बाह्यत्वात्, क्षणमात्रेणैवाग्नि-तस्कराद्युपद्रवगम्यत्वात्, सुलभत्वात्, कतिपयदिनान्ते स्वयमेव विनाशधर्मकत्वात् शरीराद् नितरां निःसारेषु वस्त्रादिषु मूर्च्छां करोषि त्वम्, तर्हि ध्रुवं निश्चितं शरीरेऽपि विशेषतो मूर्च्छां करिष्यसि । कुतो विशेषेण तत्र तत्करणमित्याह– 'अक्केज्जदुल्लभयरे त्ति' विभक्तिव्यत्ययात् शरीरस्याक्रय्यत्वात् क्रयेणालभ्यत्वात् । न हि वस्त्रादिवत् शरीरं क्रयेण क्वापि लभ्यते । अत एव वस्त्राद्यपेक्षया दुर्लभतरत्वात्, तथा, तदपेक्षयैवान्तरङ्गत्वात्, वहुतरदिनावस्थायित्वात्, विशिष्टतरकार्यसाधकत्वाच्च विशेषेण शरीरे मूर्च्छां करिष्यसीति । अथ देहादिमात्रे या मूर्च्छा सा स्वल्पैव, वस्त्रादिग्रन्थमूर्च्छा तु वह्वी, ततो देहादिमात्रमूर्च्छासंभवेऽपि नग्नश्रमणकाः सेत्स्यन्ति, न भवन्तः, वहुपरिग्रहत्वादित्याह– 'वत्थाइ-' इत्यादि गाथात्रयम् । अयमिह संक्षेपार्थः– तिर्यक्-शबरादयोऽल्पपरिग्रहा अपि, तथा शेषमनुष्या अपि महादारिद्र्योपहताः क्लिष्टमनसोऽविद्यमानतथाविधपरिग्रहा अप्यनिविगृहीतात्मानो लोभादिकषायवर्गवशीकृताः परसत्केष्वपि विभवेषु मूर्च्छाकषायादिदोषैः कर्ममलमनन्तमर्जयन्ति,

१ अथ करोषि स्थूलवस्त्रादिकेषु मूर्च्छां ध्रुवं शरीरेऽपि । अक्रेयदुर्लभतरे करिष्यसि मूर्च्छां विशेषेण ॥ २५६४ ॥
वस्त्रादिग्रन्थरहिता देहा-ऽऽहारादिमात्रमूर्च्छया । तिर्यक् शबरादयो ननु भवन्ति निरयोपगा बहुशः ॥ २५६५ ॥
अपरिग्रहा अपि परसत्केषु मूर्च्छा-कषाय-दोषैः । अविनिगृहीतात्मानः कर्ममलमनन्तमर्जयन्ति ॥ २५६६ ॥
देहस्थवस्त्र माल्या-ऽनुलेपना-ऽऽभरणधारिणः केचित् । उपसर्गादिषु मुनयो निःसङ्गाः केवलमुपयन्ति ॥ २५६७ ॥

तिकालाभ्यन्तरवर्तिसाधुवदिति दृष्टान्तः स्वयमेव द्रष्टव्यः। भवतु सिद्धः संयतः, को दोषः? इति चेत्। तदयुक्तम्, "सिद्धे नो संजए नो असंजए, नो संजयासंजए" इति वचनादिति । अपि च, अन्योऽपि दोषः । कः? इत्याह– 'उत्तरगुणेत्यादि' उत्तरगुणः पौरुषी-पुरिमार्धै-कासनको-पवासादितपोरूपः, संवरणं बहुभिराकारैर्गृहीतस्यैकासनादिप्रत्याख्यानस्य भोजनानन्तरमाकारसंक्षेपेण स्वरूपम्, उत्तरगुणश्च संवरणं चोत्तरगुण-संवरणे तयोरेवं सर्वानागताद्धाप्रत्याख्यानपक्षेऽभ्युपगम्यमाने सर्वथैवाभावः प्राप्नोति, पौरुष्यादिषु सर्वानागताद्धाप्रत्याख्यानत्वानुपपत्तेः, एकासनादिषु पुनस्त्वदभिप्रायेण सर्वाद्धाप्रमाणेषु संवरणं कदाचिदपि न घटत इति व्यक्तमेवेति ॥ २५३८ ॥ २५३९ ॥

अथापरिच्छेदोऽपरिमाणमिति तृतीयपक्षमपाकर्तुमाह—

[2]अपरिच्छेए वि समाण एस दोसो जओ सुए तेणं। वयभंगभयाउ च्चिय जावज्जीवं ति निद्दिट्ठं ॥२५४०॥

यतोऽपरिच्छेदरूपेऽप्यपरिमाणेऽभ्युपगम्यमाने एष सर्वानागताद्धाप्रत्याख्यानोक्तदोषः समान एव; तथाहि— कालापरिच्छेदेनापि प्रत्याख्याने कृते किं घटिकादिमात्रं कञ्चित् कालं प्रतीक्ष्य प्रतिसेवां करोतु, आहोस्वित् सर्वमप्यनागताद्धाप्रत्याख्यानं पालयतु?। यद्याद्यः पक्षः, तर्ह्यनवस्था, यावद् हि घटिकां प्रतीक्षते तावद् द्वे अपि घटिके किं न प्रतीक्षते, यावच्च द्वे प्रतीक्षते तावत् तिस्रोऽपि किं न प्रतीक्षते? इत्यादि। अथ द्वितीयपक्षः, तर्हि मृतस्यापि भोगानासेवमानस्य व्रतभङ्ग एव, सिद्धस्यापि संयतत्वम्, उत्तरगुणसंवरणाभावश्चेति त एव दोषाः। उपसंहरन्नाह– 'सुए तेणेत्यादि' तेनैतानपरिमाणप्रत्याख्यानदोषानभिवीक्ष्य व्रतभङ्गभयादेव त्रिपक्षपरिहारेण श्रुत आगमे "[3]सव्वं सावज्जं जोगं पच्चक्खामि जावज्जीवाए" इत्यत्र साधुप्रत्याख्यानस्य "यावज्जीवम्' इति परिमाणमादिष्टम्। अतो मुच्यतामपरिमाणताग्रह इति ॥ २५४० ॥

आह– ननु सपरिमाणे प्रत्याख्याने मयाऽऽशंसालक्षणो दोष उक्त एव, स कथम्? इत्याह—

[4]नासंसा सेविस्सामि किंतु मा मे मयस्स वयभंगो। होही, सुरेसु को वा वयावगासो विमुक्कस्स? ॥२५४१॥

१ सिद्धो नो संयतः, नो असयत, नो सयतासंयतः।
२ अपरिच्छेदेऽपि समान एष दोषो यत श्रुते तेन। व्रतभङ्गभयादेव यावज्जीवमिति निर्दिष्टम् ॥२५४०॥ ३ सर्वं सावद्य जोगं प्रत्याख्यामि यावज्जीवम्।
४ नाशसां सेविष्ये किन्तु मा मे मृतस्य व्रतभङ्ग। भूत् सुरेषु, को वा व्रतावकाशो विमुक्तस्य? ॥२५४१॥

तद्- बहुशो निरयोपगा भवन्ति, न मोक्षप्रापकाः। अन्ये तु महामुनयः केनाचिदुपसर्गादिबुद्ध्या शरीरासञ्जितमहामुल्यवस्त्रा-ऽऽभरण-माल्य-विलेपनादिसंयुक्ता अपि सर्वसङ्गविनिर्मुक्ता निगृहीतात्मानो जितलोभादिकषायरिपवः समासादितविमलकेवलालोकाः सिद्धिमुपगच्छन्ति। तस्मादवश्यात्मनां क्लिष्टमनसां नाग्न्यमात्रमिदमकिञ्चित्करमेवेति ॥२५६२॥२५६३॥२५६४॥२५६५॥२५६६॥२५६७॥

अथ यदुक्तम्- 'भयहेतुत्वेन वस्त्रादयस्त्याज्याः' इति। तत्र प्रतिविधानमाह—

[1]जइ भयहेऊ गंथो तो नाणाईण तदुवघाईहिं। भयमिइ ताइं गंथो, देहस्स य सावयाईहिं ॥ २५६८ ॥
अह मोक्खसाहणमईए न भयहेऊ वि ताणि ते गंथो। वत्थाइ मोक्खसाहणमईए सुद्धं कहं गंथो ? ॥२५६९॥

यदि यद् भयहेतुस्तद् ग्रन्थः, तर्हि ज्ञान-दर्शन चारित्राणामपि तदुपघातकेभ्यः, देहस्य च श्वापदादिभ्यो भयमस्ति, इति तान्यपि ग्रन्थः प्राप्नुवन्ति। शेषं व्याख्यातप्रायम् ॥ २५६८ ॥ २५६९ ॥

अथ यदुक्तम्— 'परिग्गहओ कसाय-मूच्छा-भयाईय त्ति'। तत्रादिशब्दसंगृहीतं वस्त्रादीनां रौद्रध्यानहेतुत्वमभ्युपदर्श्य परिहरन्नाह—

[3]सारक्खणाणुबंधो रोद्दज्झाणं ति ते मई हुज्जा। तुल्लमियं देहाइसु पसत्थमिह तं तहेहावि ॥२५७०॥
जे जत्तिया पगारा लोए भयहेअवो अविरयाणं। ते चेव य विरयाणं पसत्थभावाण मोक्खाय ॥२५७१॥

व्याख्या- इहागमे रौद्रध्यानं चतुर्विधमुक्तम्, तद्यथा-"[4]से किं तं रोद्दज्झाणं ?। रोद्दज्झाणे चउव्विहे पन्नत्ते; तं जहा- हिंसाणुबंधी, मोसाणुबंधी, तेयाणुबंधी, सारक्खणाणुबंधी"। तत्र हिंसायाः सत्त्ववधादिरूपाया अनुबन्धः सातत्येन चिन्तनं यत्र तद् हिंसानुबन्धि।

---

१ यदि भयहेतुर्ग्रन्थस्ततो ज्ञानादीना तदुपघातिभ्य । भयमिति तानि ग्रन्थो देहस्य च श्वापदादिभ्य ॥ २५६८ ॥
अथ मोक्षसाधनमत्या न भयहेतवोऽपि तानि ते ग्रन्थ । वस्त्रादि मोक्षसाधनमत्या शुद्धं कथ ग्रन्थः ? ॥ २५६९ ॥ २ गाथा २५५५ ॥
३ संरक्षणानुवन्धो रौद्रध्यानामिति ते मतिर्भवेत्। तुल्यमिदं देहादिषु प्रशस्तमिह तत् तथेहापि ॥ २५७०॥
ये यावन्त. प्रकारा लोके भयहेतवोऽविरतानाम्। त एव च विरताना प्रशस्तभावानां मोक्षाय ॥ २५७१ ॥
४ अथ किं तद् रौद्रध्यानम् ?। रौद्रध्यान चतुर्विधं प्रज्ञप्तम्, तद्यथा- हिंसानुबन्धि, मृषानुबन्धि, स्तेयानुबन्धि, संरक्षणानुबन्धि।

यावज्जीवावधिना प्रत्याख्यानं कुर्वतः 'मरणानन्तरमहं भोगान् सेविष्ये' इत्येवंभूता हन्त ! न कचिदाशंसा वर्तते– नैवंभूतेन परिणामेन सावधिकं प्रत्याख्यानं करोतीत्यर्थः, किन्तु, 'मा मे मृतस्य– 'सुरेषूत्पन्नस्य सतो भोगानासेवमानस्य व्रतभङ्गो भविष्यति' इत्यध्यवसायेन मा मे व्रतभङ्गस्तत्र भूयात्' इत्येवंभूतेनैव शुभपरिणामेनेत्थंभूतं प्रत्याख्यानं करोतीत्यर्थः । अतस्तत्र काऽऽशंसा ? । स हि विरत्यावारककर्मणः क्षयोपशमावस्थत्वादत्र स्वायत्तः, सुरलोके त्ववश्यं तदुदयात् परायत्त इत्यतः शक्यत्वाद् यावज्जीवावधिना प्रत्याख्याति, परतस्त्वशक्यत्वाद् न प्रत्याख्याति, इति कथमाशंसादोषवानयम् ? इति । अथैवं ब्रूयास्त्वम्– किमितीत्थं व्रतभङ्गाद् बिभेत्यसौ ? । अयं हि मृतो मुक्तिं यास्यति, तत्र च कामभोगाभावाद् व्रतभङ्गासंभव एव, इति कस्तस्य व्रतभङ्गसंक्षोभः ? । तदयुक्तम्, सांप्रतमिह मुक्तिगमनासंभवात्, महाविदेहेष्वपि सर्वस्यापि तद्गमननिश्चयायोगादिति । अथ कोऽपि तावद् मुक्तिं गच्छति, तस्य च विमुक्तस्य मदभिमतेऽपरिमाणे प्रत्याख्याने गृह्यमाणे मुक्तावपि महाव्रतानुगमादपरिमाणप्रत्याख्यानस्य सफलता भविष्यतीति चेदित्यत्राह— 'को वा वयेत्यादि' योऽपि मुक्तिं गच्छति तस्यापि विमुक्तस्य निष्ठितार्थस्य को व्रतानामवकाशः ? किं व्रतानां साफल्यम् ?– तत्कार्यस्य सिद्धत्वाद् न किञ्चिदिति भावः । तस्माद् मुक्तिगामिनमपि प्रत्यसंगतमेवापरिमाणप्रत्याख्यानमिति । तदेवं मुग्धमभिज्ञं वा व्यक्त्याऽनपेक्ष्य सामान्येनैवापरिमाणप्रत्याख्याने दूषणान्युक्तानि ॥ २५४१ ॥

अथ निर्धार्य किञ्चिदभिज्ञं प्रति दूषणमाह—

जो[1] पुणरव्वयभावं मुणमाणोऽवस्सभाविनं भणइ । वयमपरिमाणमेवं पच्चक्खं सो मुसावाई ॥ २५४२ ॥

यः पुनरग्रेऽपि किञ्चित् शास्त्रपरिकर्मितमतिर्विज्ञो व्रतं गृह्णाति, विज्ञत्वादेव च 'चीर्णव्रतः सुरलोकमेव गच्छति' इत्यवबुध्यमानः सुरेषु चाव्रतभावमविरतिभावमवश्यंभाविनं मुणन् जानानोऽपि व्रतं प्रत्याख्यानमपरिमाणं यावज्जीवपरिमाणरहितं भणत्युच्चरति, स एवं ब्रुवाणः प्रत्यक्षं साक्षादेव मृषावादी, अन्यथा भणित्वाऽन्यथा करणादिति ॥ २५४२ ॥

अपि च,

भावो[2] पच्चक्खाणं सो जइ मरणपरओ वि तो भग्गं । अह नत्थि न निद्दिस्सइ जावज्जीवं ति तो कीस? ॥२५४३॥

भावश्चैतसिको विरतिपरिणामः प्रत्याख्यानमुच्यते, स च प्रत्याख्यातुर्यावज्जीवावधिमेवास्ति, उत मरणपरतोऽपीति वक्तव्यम् ? ।

१ य पुनरव्रतभाव जानन्नवश्यभाविन भणाति । व्रतमपरिमाणमेव प्रत्यक्षं स मृषावादी ॥ २५४२ ॥

२ भावः प्रत्याख्यानं स यदि मरणपरतोऽपि ततो भग्नम् । अथ नास्ति न निर्दिश्यते यावज्जीवमिति ततः कस्मात् ? ॥ २५४३ ॥

मृषाऽसत्यं तस्यानुबन्धो यत्र तत् तथा। स्तेयं चौर्यं तस्यानुबन्धो यत्र तत् तथा। संरक्षणं सर्वैर्मारणाद्युपायैस्तस्करादिभ्यो निजवित्तस्य संगोपनं तस्यानुबन्धः सातत्येन चिन्तनं यत्र रौद्रध्याने तत् तथा। एवं च सति संरक्षणानुबन्धो रौद्रध्यानस्य चतुर्थो भेदः। स च वस्त्रादौ गृहीते किलावश्यंभावी, रौद्रध्यानभेदत्वाच्च रौद्रध्यानमिति। एवं रौद्रध्यानहेतुत्वाद् वस्त्रादिकं दुर्गतिहेतुः, शस्त्रादिवत्, ततो न ग्राह्यमिति तव बुद्धिर्भवेत्; तर्हि यदुक्तयुक्त्या रौद्रध्यानं तदिदं देवानांप्रिय! देहादिष्वपि तुल्यम्, तेष्वपि जलज्वलन-मलिम्लुच-श्वापदा-ऽहि-विष-कण्टकादिभ्यः संरक्षणानुबन्धस्य तुल्यत्वात्। अतस्तेऽपि परित्याज्याः प्राप्नुवन्ति। अथेह देहादेर्मोक्षसाधनाङ्गत्वाद् यतनया तत्संरक्षणानुबन्धविधानं प्रशस्तं न दोषाय। यद्येवम्, तर्हि तथा तेनागमप्रसिद्धेन यतनाप्रकारेणेहापि वस्त्रादौ संरक्षणानुबन्धविधानं कथं न प्रशस्तम्?। ततः कथं वस्त्रादयोऽपि परित्याज्याः? इति। अथैवं ब्रूषे– वस्त्रादिपरिग्रह एव मूर्च्छादिदोषहेतुत्वाल्लोकस्य 'भवभ्रमणकारणम्' इत्येतदति प्रतीतं वस्त्रादिपरिग्रहवतः साधोरपि कथं न स्यात्? इत्याह— 'जे जत्तियेत्यादि'। इह ये यावन्तः शयन-पान-भोजन-गमना-ऽवस्थान-मनो-वाक्-कायचेष्टादयः प्रकारा अविरतानामसंयतानामप्रशस्ताध्यवसायवतां लोके भयहेतवो जायन्ते, त एव तावन्तः प्रकारा विरतानां संयतानां प्रशस्ताध्यवसायानां मोक्षायैव संपद्यन्ते। तस्माद् वस्त्रादिस्वीकारेऽपि नेतरजनवत् साधूनां मूलोच्छेदितलोभादिकषाय-भय-मोहनीयादिदोषाणां तदुद्भावितदोषः कोऽप्यनुषज्यत इति ॥ २५७० ॥ २५७१ ॥

अपिच, यदि वस्त्रादिकं ग्रन्थः, मूर्च्छादिहेतुत्वात्, कनकादिवदिति हेतु-दृष्टान्तोपन्यासमात्रेणैव वस्त्रादेर्ग्रन्थत्वं साधयति भवान्, तर्हि वयमपि तदुपन्यासमात्रेण कनकादेरप्यग्रन्थत्वं साधयामः। कथम्? इत्याह—

आहारो व्व न गंथो देहत्थं विसघायणट्ठाए। कणगं पि तहा जुवई धम्मंतेवासिणी मे त्ति ॥ २५७२ ॥

कनकं तथा युवतिश्च धर्मान्तेवासिनी मे ममेति बुद्ध्या परिगृह्णतो न ग्रन्थ इति संबन्धः, एषा किल प्रतिज्ञा। कुतः? इत्याह– देहार्थमिति कृत्वा, अयं च हेतुः, देहार्थत्वात्– देहप्रयोजनत्वात्– देहोपकारित्वादित्यर्थः। ननु युवतेर्देहोपकारित्वं किल प्रतीतम्, कनकस्य तु तत् कथम्? इत्याह— 'विसघायणट्ठाए त्ति' विषघातकत्वादित्यर्थः; उक्तं च—

"[2]विसघाय-रसायण-मंगल-च्छवि-णया-पयाहिणावत्ते। गुरुए अ डज्झकुट्ठे अट्ठ सुवण्णे गुणा होंति ॥ १ ॥"

१ आहार इव न ग्रन्थो देहार्थं विषघातनार्थतया। कनकमपि तथा युवतिर्धर्मान्तेवासिनी ममेति ॥ २५७२ ॥
२ विषघात रसायन-मङ्गल-च्छवि-नय-प्रदक्षिणावर्ताः। गुरुता च दग्धकुष्ठताऽष्ट सुवर्णे गुणा भवन्ति ॥ १ ॥

यद्यनन्तरपक्षः, तर्हि भग्नं तस्य प्रत्याख्यानम्, सुरलोकादौ भोगसेवनादवश्यंभावी तद्भङ्ग इत्यर्थः । अथाद्यः पक्षः, तर्हि वचनेनापि 'यावज्जीवम्' इति परिमाणं प्रगुणेन न्यायेन किं न निर्दिश्यते– किं न क्रियते, येनान्यच्चेतस्यन्यत्तु वचनेनोच्यते ? इति ॥ २५४३ ॥

अथ भावोऽन्यथा, वचनं त्वन्यथा प्रोच्यते; तर्हि मायैव केवलमिति दर्शयन्नाह—

जइ[1] अन्नहेव भावो चेयओ वयणमन्नहा माया। किं वाऽभिहिए दोसो भावाओ किं वओ गुरुयं ? ॥२५४४॥

हन्त ! यद्यन्यथैव यावज्जीवावधिक एव चेतसि भावः प्रत्याख्यानपरिणामः, अन्यथैव च यावज्जीवावधिपरिणामरहितमेव वचनम्, तर्ह्येतच्चेतयतो जानतः केवलैव माया निश्चीयते नान्यत् फलं दृश्यते, अन्यथा विचिन्त्यान्यथा भाषणादिति । अथवा, प्रष्टव्योऽसि त्वम्– किं भावे तथास्थितेऽपि 'यावज्जीवाए' इत्यभिहिते दोषः कश्चिद् वीक्ष्यते भवता, येन वचनेनापि नेदमभिधीयते ?। यदिवा, किं भावात् सकाशाद् 'वउ त्ति' वचनं गुरुकं प्रधानं पश्यसि त्वं, येन भावेऽन्यथास्थितेऽपि वचनमन्यथाऽभिदधासि ? । एतच्चायुक्तम्, आगमे भावस्यैव प्रामाण्येन, वचनस्य त्वप्रामाण्येनाभिधानादिति ॥ २५४४ ॥

कः पुनरयमागमः ? इत्याह—

अन्नत्थ[2] निवडिए वंजणम्मि जो खलु मणोगओ भावो। तं खलु पच्चक्खाणं, न पमाणं वंजणं छलणा ॥२५४५॥

इह केनापि त्रिविधाहारादिप्रत्याख्यानं कर्तुमध्यवसितम्, अधिकतरसंयमकरणाक्षिप्तचेतसा पुनः 'चतुर्विधमाहारं प्रत्याख्यामि' इत्यादि व्यञ्जनं शब्द उच्चरितः। एवं च मानसभावाननुवृत्त्या व्यञ्जने शब्देऽन्यत्र निपतितेऽन्यविषये समुच्चारिते यः खलु प्रत्याख्यानविषयानेकसूक्ष्मविवक्षातिक्रान्तः स्पष्टः प्रत्याख्यातुर्मनोगतो भावस्तदेव प्रत्याख्यानं प्रमाणं– स एव प्रत्याख्यातुर्विवक्षितप्रत्याख्यानविषयो मनोगतो भावः प्रमाणम्, न तु व्यञ्जनं शब्द इत्यर्थः। कुतो न व्यञ्जनं प्रमाणम् ?। यतश्छलना छलमात्रं तद् व्यञ्जनमतोऽप्रमाणम्, भावाननुरोधेन प्रवृत्तत्वात् । तदेवमागमेऽपि वचनस्याप्रामाण्येनोक्तत्वाद् यदि यावज्जीवावधिको मनसो भावस्त्वयेष्यते तदा वचनेनापि 'यावज्जीवम्' इत्युच्चार्यताम्, किं मिथ्याग्रहेण ? इति ॥ २५४५ ॥

एवं युक्तिभिः प्रज्ञापितोऽपि यावदसौ न किञ्चित् प्रतिपद्यते, ततः किं तत्र संजातम् ? इत्याह—

१ यद्यन्यथैव भावश्चेतयतो वचनमन्यथा माया । किं वाऽभिहिते दोषो भावात् किं वचो गुरुकम् ? ॥ २५४४ ॥

२ अन्यत्र निपतिते व्यञ्जने यः खलु मनोगतो भावः । तत् खलु प्रत्याख्यानं, न प्रमाणं व्यञ्जनं छलना ॥ २५४५ ॥

आहारवदिति दृष्टान्तः। कनक-युवत्यादयोऽपि न ग्रन्थः, देहार्थत्वात्, आहारवदिति तात्पर्यम् ॥ २५७२ ॥

अत्राह– ननु यद्येवम्, तर्हि समुच्छिन्ना ग्रन्था-ऽग्रन्थविभागकथा, ग्रन्थत्वेन प्रसिद्धस्य कनकादेस्त्वयाऽग्रन्थत्वसाधनात्, अग्रन्थत्वेन च ममाभिमतस्य देहस्य 'ग्रन्थो देहः, कषायादिहेतुत्वात्, कनकादिवत्' इत्येवं ग्रन्थत्वस्य साधनात्। ततो भवन्त एव कथयन्तु– को ग्रन्थः, कश्चाग्रन्थ इति ?। तदित्थमुपसन्नस्य परस्य वचनमाशङ्क्योपसंहारपूर्वकं ग्रन्था-ऽग्रन्थविभागमुपदिदर्शयिषुराह—

[1]तम्हा किमत्थि वत्थुं गंथोऽगंथो व सव्वहा लोए ?। गंथोऽगंथो व मओ मुच्छममुच्छाहिं निच्छयओ॥२५७३॥

वत्थाइं तेण जं जं संजमसाहणमराग-दोसस्स। तं तमपरिग्गहो च्चिय परिग्गहो जं तदुवघाइं ॥२५७४॥

व्याख्या— तस्मात् किं नाम तद् वस्त्वस्ति लोके यदात्मस्वरूपेण सर्वथा ग्रन्थोऽग्रन्थो वा ?– नास्त्येवैतदित्यर्थः। ततश्च "[2]मुच्छा परिग्गहो वुत्तो इइ वुत्तं महेसिणा" इत्यादिवचनाद् यत्र वसु-देहा-ऽऽहार-कनकादौ मूर्च्छा संपद्यते तद् निश्चयतः परमार्थतो ग्रन्थः। यत्र तु सा नोपजायते तदग्रन्थ इति। एतदेव व्यक्तीकरोति–'वत्थाइं तेणेत्यादि' तेन तस्मात्। शुषं सुगममिति ॥ २५७३॥२५७४ ॥

अथ परप्रश्नमाशङ्क्योत्तरमाह—

[3]किं संजमोवयारं करेइ वत्थाइं जइ मई सुणसु। सीयत्ताणं ताणं जलण-तणगयाण सत्ताणं ॥ २५७५ ॥

तह निसि चाउक्कालं सज्झाय-झाणसाहणमिसीणं। महि-महिया-वासो-सा-रयाइरक्खानिमित्तं च ॥२५७६॥

मयसंवरुज्झणत्थं गिलाणपाणोवगारि वाभिमयं। मुहपुत्तियाइ चेवं परूवणिज्जं जहाजोगं ॥ २५७७ ॥

संसत्तसत्तु-गोरस-पाणयपाणीयपाणरक्खत्थं। परिगलण-पाणघायण-पच्छाकम्माइयाणं च ॥ २५७८ ॥

---

१ तस्मात् किमस्ति वस्तु ग्रन्थोऽग्रन्थो वा सर्वथा लोके ?। ग्रन्थोऽग्रन्थो वा मतो मूर्च्छा-ऽमूर्च्छाभ्यां निश्चयत ॥ २५७३ ॥ वस्त्रादि तेन यद् यत् सयमसाधनमराग-द्वेषस्य। तत् तदपरिग्रह एव परिग्रहो यत् तदुपघाति ॥ २५७४ ॥ २ मूर्च्छा परिग्रह उक्त इत्युक्तं महर्षिणा। ३ किं सयमोपकार करोति वस्त्रादि यदि मतिः श्रृणु। शीतत्राण त्राण ज्वलन तृणगताना सत्त्वानाम् ॥ २५७५ ॥ तथा निशि चतुष्कालं स्वाध्याय-ध्यानसाधनमृपीणाम्। मही-महिका-वर्षो-स्र-रजआदिरक्षानिमित्त च ॥ २५७६ ॥ मृतसवरोज्झनार्थं ग्लानप्राणोपकारि चाभिमतम्। मुखवास्त्रिकादि चैवं प्ररूपणीय यथायोगम् ॥ २५७७ ॥ ससक्तसक्तु गोरस-पानक पानीयप्राणिरक्षार्थम्। परिगलन-प्राणघातन-पश्चात्कर्मादिकानां च ॥ २५७८ ॥

अमुभपरिणामहेऊ जीवाबाहो त्ति तो मयं हिंसा । जस्स उ न सो निमित्तं संतो वि न तस्स सा हिंसा ॥७८॥
सद्दादओ रइफला न वीयमोहस्स भावसुद्धीओ । जह, तह जीवाबाहो न सुद्धमणसो वि हिंसाए ॥ ७९ ॥

छिन्नम्मि संसयम्मी जिणेण जरा-मरणविप्पमुक्केणं ।
सो समणो पव्वइओ पंचहिं सह खंडियसएहिं ॥ १५६ ॥

ते पव्वइए सोउं सुहुम आगच्छइ जिणसगासं ।
वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ १५७ ॥

आभट्ठो य जिणेणं जाइ-जरा-मरणविप्पमुक्केणं ।
नामेण य गोत्तेण य सव्वण्णू सव्वदरिसी णं ॥ १५८ ॥

किं मन्ने जारिसो इहभवम्मि सो तारिसो परभवे वि ।
वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥ १५९ ॥

कारणसरिसं कज्जं बीयस्सेवङ्कुरो त्ति मण्णंतो । इहभवसरिसं सव्वं जमवेसि परे वि तमजुत्तं ॥ १
जाइ सरो सिंगाओ भूतणओ सासवाणुलित्ताओ । संजायइ गोलोमा-ऽविलोमसंजोगओ दुव्वा ॥ २ ॥
इति रुक्खायुव्वेदे जोणिविहाणे य विसरिसेहिंतो । दीसइ जम्हा जम्मं सुहम्म ! तो नायमेगंतो ॥ ३ ॥
अहवा जउ च्चिय बीयाणुरूवजम्मं मयं तओ चेव । जीवं गिण्ह भवाओ भवंतरे चित्तपरिणामं ॥ ४ ॥

१ 'यम्मि भ जि' । २ 'भवम्मि' ।

जेण भवंकुरबीयं कम्मं चित्तं च तं जओऽभिहियं । हेउविचित्तत्तणओ भवंकुरविचित्तया तेणं ॥ ५ ॥
जइ पडिवन्नं कम्मं हेउविचित्तत्तओ विचित्तं च । तो तप्फलं वि चित्तं पवज्ज संसारिणो सोम्म ! ॥ ६ ॥
चित्तं संसारित्तं विचित्तकम्मफलभावओ हेऊ । इह चित्तं चित्ताणं कम्माण फलं व लोगम्मि ॥ ७ ॥
चित्ता कम्मपरिणई पोग्गलपरिणामओ जहा बज्झा । कम्माण चित्तया पुण तद्धेउविचित्तभावाओ ॥ ८ ॥
अहवा इहभवसरिसो परलोगो वि जइ सम्मओ तेणं । कम्मफलं पि इहभवसरिसं पडिवज्ज परलोए ॥ ९ ॥
किं भणियमिह मणुया नाणाइगइकम्मकारिणो संति । जइ ते तप्फलभाजो परे वि तो सरिसया जुत्ता ॥१०॥
अह इह सफलं कम्मं न परे तो सव्वहा न सरिसत्तं । अकयागम-कयनासा कम्माभावोऽहवा पत्तो ॥ ११ ॥
कम्माभावे य कओ भवंतरं, सरिसया व तदभावे । निक्कारणओ य भवो जइ तो नासो वि तह चेव ॥१२॥
कम्माभावे वि मई को दोसो होज्ज जइ सभावोऽयं । जह कारणाणुरूवं घडाइ कज्जं सहावेणं ॥ १३ ॥
होज्ज सहावो वत्थुं निक्कारणया व वत्थुधम्मो वा ? । जइ वत्थुं णत्थि तओऽणुवलद्धीओ खपुप्फं व ॥१४॥
अच्चंतमणुवलद्धो वि अह तओ अत्थि नत्थि किं कम्मं । हेऊ व तदत्थित्ते जो नणु कम्मस्स वि स एव ॥१५॥
कम्मस्स वाभिहाणं होज्ज सहावो त्ति होउ को दोसो । निच्चं व सो सभावो सरिसो एत्थं च को हेऊ ? ॥१६॥
सो मुत्तोऽमुत्तो वा जइ मुत्तो तो न सव्वहा सरिसो । परिणामओ पयं पिव न देहहेऊ जइ अमुत्तो ॥ १७ ॥
उवगरणाभावाओ न य हवइ सुहम्म ! सो अमुत्तो वि । कज्जस्स मुत्तिमत्ता सुहसंवित्ती[2]दिओ चेव ॥ १८ ॥
अहवाऽकारणउ च्चिय सभावओ तो वि सरिसया कत्तो । किमकारणओ न भवे विसरिसया [3]किं व विच्छित्ती ? ॥१९॥
अहव सहावो धम्मो वत्थुस्स, न सो वि सरिसओ निच्चं । उप्पाय-ट्ठिइ-भंगा चित्ता जं वत्थुपज्जाया ॥ २० ॥

१ 'भवंतर' । २ 'त्ताहिओ' । ३ 'किंचि वि' ।

[1]परिहारत्थं पत्तं गिलाण-बालादुवग्गहत्थं च । दाणमयधम्मसाहणं समया चेवं परुप्परओ ॥ २५७९ ॥

व्याख्या– कं नाम संयमोपकारं करोति वस्त्रादिकम्? इति यदि तव मतिः, तर्हि कथ्यते शृणु– सौत्रिकौ-र्णिककल्पैस्तावत् शीता-र्तानां त्राणं साधूनामार्तध्यानापहरणं क्रियते । तथा ज्वलन-तृणादीन्धनगतानां सत्त्वानां त्राणं रक्षणं 'क्रियते' इतीहापि दृश्यम् । इदमुक्तं भवति– यदि कल्पा न भवेयुः, तदा शीतार्ताः साधवोऽग्नि तृणादीन्धनज्वलनं कुर्युः । तत्करणे चावश्यंभावी तद्गतसत्त्वोपघातः । कल्पैस्तु प्रावृतैरेष न भवत्येव, अग्नि-तृणादिज्वलनमन्तरेणापि शीतार्तिनिवृत्तेरिति । तथा "[2]कालचउक्कं उक्कोसए जहन्ने तियं तु बोधव्वं" इत्यादिवचनात् समस्तरात्रिजागरणं कुर्वद्भिः साधुभिश्चत्वारः काला ग्रहीतव्याः । तच्च हिमकणप्रवर्षिणि शीते पतति चतुष्कालं गृह्णतां तेषामृषीणां । कल्पाः प्रावृताः सन्तो निर्विघ्नं स्वाध्यायध्यानसाधनं कुर्वन्ति, शीतार्त्यपहरणादिति । तथा 'महि त्ति' महारात्रात्क्षिप्ता सचित्ता पृथिवी तस्याः पतन्त्या रक्षानिमित्तं प्रावृताः कल्पाः संजायन्ते, महिका धूमिका; 'वास त्ति' वर्षा वृष्टिः 'उस त्ति' अवश्यायः प्रतीतः, रजोऽपि सचित्तमीषदाताम्रनभसः पततीति प्रतीतमेव, आदिशब्दात् प्रदीप-तेजःप्रभृतीनां परिग्रहः । एतेषां च महिकादिगतानां सत्त्वानां रक्षानिमित्तं कल्पाः संजायन्त इति । तथा, मृतस्य संवरणं संवर आच्छादनम्, उज्झनं वहिर्नयनं तदर्थं वा श्वेतोज्ज्वलप्रच्छादनप-टिकादिवस्त्रमभिमतम् । ग्लानप्राणोपकारि च तदभिमतं परमगुरूणाम् । एवं मुखवस्त्रिका-रजोहरणादि चोपकरणं समयानुसारतः संयमोपकारित्वेन योज्यं भणनीयम्; तथा चोक्तं कल्पभाष्यादिपु—

"[3]कप्पा आयप्पमाणा अड्ढाइज्जाइवित्थडाहत्था । दो चेव सोत्तिया उन्निओ य तइओ मुणेयव्वो ॥ १ ॥

तणगहणाणलसेवानिवारणाधम्ममुक्कज्झाणट्ठा । दिट्ठं कप्पग्गहणं गिलाण मरणट्ठया चेव ॥ २ ॥

संपायमरयरेणुपमज्जणट्ठा वयति मुहपत्तिं । नासं च मुहं च बंधइ तीए वसहिं पमज्जंतो ॥ ३ ॥

आयाणे निक्खेवे ठाण निसीए सुयपट्टसंकोए । पुव्वं पमज्जणट्ठा लिंगट्ठा चेव रयहरणं ॥ ४ ॥

---

1 परिहारार्थं पात्रं ग्लान-बालाद्युपग्रहार्थं च । दानमयधर्मसाधनं समता चैव परस्परतः ॥ २५७९ ॥ 2 कालचतुष्कमुत्कृष्टे जघन्ये त्रिकं तु बोद्धव्यम् ।

3 कल्पा आत्मप्रमाणा अष्टादिध्यादिविस्तृतार्थाः । द्वावेव सौत्रिकावौर्णिकश्च तृतीयो ज्ञातव्य ॥ १ ॥

तृणग्रहणानलसेवानिवारणाधर्मशुक्लध्यानार्थम् । दिष्टं कल्पग्रहणं ग्लान-मरणार्थतया चैव ॥ २ ॥

संपातमरकरेणुप्रमार्जनार्थतया वदन्ति मुखवस्त्रम् । नासां च मुखं च बध्नाति तया वसतिं प्रमार्जयन् ॥ ३ ॥

आदाने निक्षेपे स्थाने निशायां श्रुतपट्टसंकोचे । पूर्वं प्रमार्जनार्थं लिङ्गार्थं चैव रजोहरणम् ॥ ४ ॥

'अणुवालेउमित्यादि' अशक्तोऽसमर्थो भवेत् । किं कर्तुम् ?। समस्तां परिपूर्णामेषणासमितिमनुपालयितुम् । कथंभूतः ? अपात्रः पात्रविरहितः । पुनर्निक्षेपादानसमित्या व्युत्सर्गसमित्या च समितो न भवेत्, उपलक्षणत्वाद् भाषासमित्यापि समितो न भवेत्, वस्त्राद्यभावे रजोहरण-मुखवस्त्रिकाद्यभावात्, तदभावे च यथोक्तसमितित्रयासिद्धेरिति ॥ २६०४ ॥ २६०५ ॥

एवं प्रज्ञापितोऽसौ किं कृतवान् ? इत्याह—

इय पण्णविओ वि बहुं सो मिच्छत्तोदयाकुलियभावो । जिणमयमसद्दहंतो छड्डियवत्थो समुज्जाओ ॥२६०६॥

तस्स भगिणी समुज्झियवत्था तह चेव तदणुरागेणं । संपत्थिया नियत्था तो गणियाए पुणो मुयइ ॥२६०७॥

तीए पुणो वि बद्धोरसेगवत्था पुणो विछड्डिंती । अच्छउ ते तेणं चिय समणुण्णाया धरेसी य ॥ २६०८॥

कोडिन्न-कोट्टवीरे पव्वावेसी य दोण्णि सो सीसे । तत्तो परंपराफासओऽवसेसा समुप्पन्ना ॥ २६०९ ॥

एताश्चतस्रोऽपि गतार्थाः, नवरं 'समुज्जाउ त्ति' त्यक्तवस्त्र उपाश्रयात् समुद्यातो निर्गतः । 'नियत्था त्ति' ततो गणिकया निवसिता वस्त्रं परिधापितेत्यर्थः । 'तीए त्ति' तया गणिकया 'बद्धोरसेगवत्थ त्ति' बद्धमुरस्येकं वस्त्रं यस्याः सा तथेति । 'तत्तो परंपरेत्यादि' ततः परम्परया योऽसौ स्पर्शो गुरुशिष्यसंबन्धस्तस्माद् बोटिकसंतानवर्तिनोऽवशेषा बोटिकाः समुत्पन्ना इति । एतासां च बोटिकव्यतिकरसंबद्धानां सर्वासामपि गाथानामर्थं संक्षिप्य 'इह यो यदर्थी न स तन्निमित्तोपादानं प्रत्यनादृतः, यथा घटार्थी मृत्पिण्डोपादानं प्रति, चारित्रार्थिनश्च यतयः, तन्निमित्तं च चीवरमिति, न चास्यासिद्धत्वम्' इत्यादिना सूत्र-वस्त्र-पात्रपरिग्रहविषयं वादस्थानकं वृद्धैर्विरचितमास्ते, तच्चोत्तराध्ययनेषु द्वितीये परिषहाध्ययने आचेलक्यपरीषहे बृहट्टीकायां तदर्थिनान्वेषणीयम् । तथा, 'इह खलु यस्य यत्रासंभवो न तस्य तत्र कारणावैकल्यम्, यथा शुद्धशिलायां शाल्यङ्कुरस्य, अस्ति च तथाविधस्त्रीषु मुक्तेः कारणावैकल्यम्, न

---

१ इति प्रज्ञापितोऽपि बहु स मिथ्यात्वोदयाकुलितभावः । जिनमतमश्रद्दधानश्छर्दितवस्त्रः समुद्यातः ॥ २६०६ ॥
तस्य भगिनी समुज्झितवस्त्रा तथैव तदनुरागेण । संप्रस्थिता निवसिता ततो गणिकया पुनर्मुञ्चति ॥ २६०७ ॥
तया पुनरपि बद्धोरएकवस्त्रा पुनश्छर्दयन्ती । तिष्ठतु ते तेनैव समनुज्ञाताऽधार्षीच्च ॥ २६०८ ॥
कौण्डिन्य-कोट्टवीरौ प्राव्राजयच्च द्वौ स शिष्यौ । ततः परम्परास्पर्शादवशेषाः समुत्पन्नाः ॥ २६०९ ॥

'वेउव्वेऽवायडे वाइए हीखद्दे पजणणे चेव । तोसिं अणुग्गहट्ठा लिंगुदयट्ठा य पट्टो ओ ॥ ५ ॥"

तत्र प्रजनने मेहने 'वेउव्वि त्ति' वैक्रिये विकृते; तथा, अप्रावृतेऽनावृते, वातिके चोत्सूनत्वभाजने, ह्रिया लज्जया सत्या खद्धे बृहत्प्रमाणे 'लिंगुदयट्ठ त्ति' स्त्रीदर्शने लिङ्गोदयरक्षणार्थं च पटश्चोलपट्टो मत इति ।

अथ पात्रस्य मात्रकस्य च संयमोपकारित्वं दर्शयन्नाह—'संसत्तेत्यादि'। संसक्तसक्तु-गोरस-द्राक्षादिपानक-पानीयगतसत्त्वप्राणरक्षणार्थं पात्रमिति संबन्धः । पात्राभावे हि संसक्तगोरसादयो हस्त एवानाभोगादिकारणाद् गृहीताः क क्रियेरन्?, तद्गतसत्त्वानां प्राणविपत्तिरेव स्यात् । पात्रे तु सति समयोक्तविधिना ते परिस्थाप्यन्ते । तथा च सति तद्गतसत्त्वप्राणरक्षा पात्रेण सिध्यतीति । तथा पात्राभावे पाणिपुट एव गृहीतानां घृतगोरसादिरसानां परिगलने सति यत् कुन्थु-कीटकादिप्राणघातनम्, ये च भाजन-धावनादिभिः पश्चात्कर्मादयो दोषास्तेषां परिहारार्थं च पात्रमिष्यते जगद्गुरुभिः। तथा, ग्लान-बाल-दुर्बल-वृद्धाद्युपग्रहार्थं च तदिष्यते। पात्रे हि सति गृहस्थेभ्यः पथ्यादिकं समानीय ग्लान-बालादीनामुपग्रह उपष्टम्भः क्रियते, तदभावे पुनरसौ न स्यादेवेति । अपरञ्च, पात्रे सति भक्तपानादिकं समानीयान्यस्य प्रयच्छतां साधूनां दानमयधर्मस्य साधनं सिद्धिर्भवति, पात्राभावे चैतद् न स्यात् । तदसत्त्वे कस्यापि केनचिद् भक्त-पानादिदानासंभवात् । 'समया चेवं परुप्परउ त्ति' एवं च पात्रे परिग्रहे सति लब्धिमतामलब्धिमतां च, शक्तानामशक्तानां च, वास्तव्यानां प्राघूर्णकानां च सर्वेषामपि साधूनां परस्परं समता स्वास्थ्यं तुल्यता भवति । पात्रे हि सति लब्धिमान् भक्त-पानादिकं समानीयालब्धिमते ददाति । एवं शक्तोऽशक्ताय, वास्तव्यः प्राघूर्णकाय तत् प्रयच्छति । इति सर्वेषां सौस्थ्यम्, पात्राभावे तु नैतत् स्यादिति ।

इह च पात्रग्रहणस्य गुणकथनेन मात्रकस्यापि तत्कथनं कृतमेव द्रष्टव्यम्, प्रायः समानगुणत्वात्; उक्तं च—

"छक्कायरक्खणट्ठा पायग्गहणं जिणेहिं पन्नत्तं । जे य गुणा संभोए हवंति ते पायगहणे वि ॥ १ ॥

अतरंत-बाल-वुड्ढा-सेहाएसा गुरू अ सहुवग्गा । साहारणुग्गहा अलद्धिकारणा पायगहणं तु ॥ २ ॥

---

१ वैक्रियेऽप्रावृते वातिके ह्रिया बृहति प्रजनने चैव । तेषामनुग्रहार्थो लिङ्गोदयार्थश्च पट्टस्तु ॥ ५ ॥

२ षट्कायरक्षणार्थं पात्रग्रहणं जिनैः प्रज्ञप्तम् । ये च गुणाः संभोगे भवन्ति ते पात्रग्रहणेऽपि ॥ १ ॥

अशक्त-बाल-वृद्ध-शैक्षादेशाद् गुरोश्च साधुवर्गात् । साधारणोद्ग्रहादलब्धिकारणात् पात्रग्रहणं तु ॥ २ ॥

चायमसिद्धो हेतुः' इत्यादिना विरचितं स्त्रीनिर्वाणविषयमपि वादस्थानकं तत्रैव षट्त्रिंशत्तमाध्ययने द्रष्टव्यम् ॥ इति षष्टिगाथार्थः ॥ २६०६ ॥ २६०७ ॥ २६०८ ॥ २६०९ ॥

॥ इति बोटिकाभिधानानामष्टमनिह्नवानां वादः परिसमाप्तः ॥

सांप्रतं निह्नववक्तव्यतां निगमयन्नाह—

[1]एवं एए भणिया उसप्पिणीए उ निण्हगा सत्त। वीरवरस्स पवयणे सेसाणं पवयणे नत्थि ॥ २६१० ॥

एवमुक्तेन प्रकारेणैतेऽनन्तरोक्ताः कथिताः प्रतिपादिता अवसर्पिण्यामेव निह्नवाः सप्त, अष्टमस्तु बोटिकश्चशब्दसमुच्चितादि-कारणाद् न विवक्षितः। वीरवरस्य प्रवचने तीर्थे। शेषाणामर्हतां प्रवचने 'न त्थि त्ति' न सन्ति, यद्वा नास्ति, 'निह्नवसत्ता' इति शेषः ॥

तत्र—

[2]मोत्तूणेत्तो एक्कं सेसाणं जावजीविया दिट्ठी। एक्केक्कस्स य एत्तो दो दो दोसा मुणेयव्वा ॥ २६११ ॥

मुक्त्वैषामेकं गोष्ठामाहिलं निह्नवाधमं शेषाणां जमालिप्रभृतीनां प्रत्याख्यानमङ्गीकृत्य यावज्जीविका दृष्टिः, नापरिमाणं प्रत्याख्यानं ते मन्यन्त इति भावना।

आह– ननु पूर्वोक्तानुसारत एवेदमवसीयते, किमर्थमस्योपन्यासः? इति। उच्यते– प्रत्यहमवश्यंकरणीयत्वेन प्रत्याख्यान-स्योपयोगित्वाद् मा कश्चित् तथैव प्रतिपद्येत, ततो ज्ञाप्यते– निह्नवानामपि प्रत्याख्याने यावज्जीविकैव दृष्टिः, अतो नापरिमाणं प्रत्या-ख्यानं विधेयमिति। 'एत्तो त्ति' अतोऽमीषां मध्य एकैकस्य निह्नवस्य द्वौ द्वौ दोषौ मुणितव्यौ ज्ञातव्यौ, सदोषस्यापि स्वमतस्याभ्युप-गमः, परमतस्य पुनरनभ्युपगम इति। इह च भावार्थं भाष्यकार एव वक्ष्यति ॥ इति निर्युक्तिगाथाद्वयार्थः ॥ २६११ ॥

अथ भाष्यम्—

१ एवमेते भणिता अवसर्पिण्यां तु निह्नवाः सप्त। वीरवरस्य प्रवचने शेषाणां प्रवचने न सन्ति ॥ २६१० ॥
२ मुक्त्वेतः एकं शेषाणां यावज्जीविका दृष्टिः। एकैकस्य चैतस्माद् द्वौ द्वौ दोषौ ज्ञातव्यौ ॥ २६११ ॥

आयरिए य गिलाणे पाहुणए दुल्लहे सहसदाणे । संसत्तभत्तपाणे मत्तगपरिभोगणुण्णा उ ॥ ३ ॥"

इति ॥ २५७५ ॥ २५७६ ॥ २५७७ ॥ २५७८ ॥ २५७९ ॥

यदुक्तम् 'सुए भणियमपरिग्गहत्तं' इति, तत्राह—

[3]अपरिग्गहया सुत्ते त्ति जा य मुच्छा परिग्गहोऽभिमओ । सव्वदव्वेसु न सा कायव्वा सुत्तसब्भावो ॥२५८०॥

या च "[4]सव्वाओ परिग्गहाओ वेरमणं" इत्यादिनाऽपरिग्रहता सूत्रे प्रोक्तेति त्वया गीयते, तत्रापि मूर्च्छैव परिग्रहस्तीर्थकृता-
मभिमतो नान्यः, सा च मूर्च्छा यथा वस्त्रे तथा सर्वेष्वपि शरीरा-ऽऽहारादिषु द्रव्येषु न कर्तव्येति सूत्रसद्भावः सूत्रपरमार्थः, न पुनस्त्व-
दभिमतः सर्वथा वस्त्रपरित्यागोऽपरिग्रहतेति सूत्राभिप्रायः । तस्मादपरिज्ञातसूत्रभावार्थो मिथ्यैव खिद्यसे त्वमिति हृदयम् ॥ २५८० ॥

यच्चोक्तम्— 'जेमचेला य जिणिंदा' इति, तत्प्रतिविधातुमाह—

[5]निरुपमधिइसंघयणा चउनाणाइसयसत्तसंपण्णा । अच्छिद्दपाणिपत्ता जिणा जियपरिसहा सव्वे ॥२५८१॥

तम्हा जहुत्तदोसे पावंति न वत्थ-पत्तरहिया वि । तदसाहणं ति तेंसि तो तग्गहणं न कुव्वंति ॥२५८२॥

तहवि गहिएगवत्था सवत्थतित्थोवएसणत्थं ति । अभिनिक्खमंति सव्वे तम्मि चुएऽचेलया हुंति ॥२५८३॥

व्याख्या– यस्माज्जिनास्तीर्थकराः सर्वेऽपि निरुपमधृतिसंहननाश्छद्मस्थावस्थायां चतुर्ज्ञानाः, अतिशयसत्त्वसंपन्नाः, तथा-ऽच्छिद्रः पाणिरेव पात्रं येषां तेऽच्छिद्रपाणिपात्रा जितसमस्तपरिषहाश्च, 'तम्ह त्ति' तस्माद् वस्त्राभावे ये संयमविराधनादयो दोषाः प्रोक्तास्तान् यथोक्तान् दोषांस्ते वस्त्र-पात्ररहिता अपि न प्राप्नुवन्ति, इत्यतस्तद्वस्त्रादिकं न साधनं न साधकं संयमस्य तेषां तीर्थ-कराणाम् । 'तो त्ति' तस्मादकिञ्चित्करत्वात् तस्यात्मगतसंयमस्यानुपकारिणो वस्त्रादेर्ग्रहणं न कुर्वन्ति तीर्थकरा इति । ननु

1 आचार्ये च ग्लाने प्राघूर्णके दुर्लभे सहसादाने । संसक्तभक्तपाने मात्रकपरिभोगानुज्ञा तु ॥ ३ ॥

2 गाथा २५५६ । 3 अपरिग्रहता सूत्रे इति या च मूर्च्छा परिग्रहोऽभिमतः । सर्वद्रव्येषु न सा कर्तव्या सूत्रसद्भाव ॥२५८०॥ 4 सर्वस्मात् परिग्रहाद् विरमणम् ।

5 निरुपमधृतिसंहननाश्चतुर्ज्ञाना अतिशयसत्त्वसपन्ना । अच्छिद्रपाणिपात्रा जिना जितपरीषहा सर्वे ॥ २५८१ ॥
तस्माद् यथोक्तदोषान् प्राप्नुवन्ति न वस्त्र-पात्ररहिता अपि । तदसाधनमिति तेषां ततस्तद्ग्रहणं न कुर्वन्ति ॥ २५८२ ॥
तथापि गृहीतैकवस्त्राः सवस्त्रतीर्थोपदेशनार्थमिति । अभिनिष्कामन्ति सर्वे तस्मिंश्च्युतेऽचेलका भवन्ति ॥ २५८३ ॥

[1]मोत्तूण गोट्ठमाहिलमन्नेसिं जावजीवसंवरणं । कम्मं च बद्धपुट्ठं खीरोदवदत्तणा समयं ॥ २६१२ ॥

मोत्तुं जमालिमन्ने बेंति कडं कज्जमाणमेवं तु । एक्केक्को एक्केक्कं नेच्छइ अबद्धिओ दोन्नि ॥२६१३॥

अवरोप्परं समेया दो दोसे देंति एक्कमेक्कस्स । परमयसंपडिवत्तिं विपडिवत्तिं च समयम्मि ॥ २६१४ ॥

व्याख्या– एतेषां मध्ये गोष्ठामाहिलं मुक्त्वा शेषाणां यावज्जीवं संवरणं यावज्जीवं प्रत्याख्यानं विधेयमित्यभ्युपगम इत्यर्थः । तथा, गोष्ठामाहिलादन्येषां कर्म च संमतम् । कथंभूतम्? आत्मना समकं जीवेन सह बद्धस्पृष्टम् । किंवत्? क्षीरोदकवदिति । गोष्ठामाहिलस्त्वेतद्द्वितयमपि न मन्यत इति । जमालिप्रभृतयस्तर्हि किं मन्यन्ते?, किंवा न मन्यन्ते? इत्याह–'मोत्तुं जमालिमित्यादि' जमालिं मुक्त्वाऽन्ये तिष्यगुप्तादयः क्रियमाणं कृतं मन्यन्ते, जमालिस्त्वेतद् न मन्यते, किन्तु कृतमेव कृतमभ्युपगच्छति । एवं तिष्यगुप्तं मुक्त्वा शेषाः परिपूर्णं जीवमिच्छन्ति, तिष्यगुप्तस्तु चरममेव प्रदेशं जीवं मन्यत इत्याद्यग्रेतनेष्वपि सुधियाऽभ्यूह्य वाच्यम् । एवं 'तु त्ति' तुशब्दस्य चशब्दार्थत्वादेवं च सति किं सिद्धम्? इत्याह– 'एक्केक्को इत्यादि' एकैको निह्नवः श्रीमज्जिनोक्तपदार्थानां मध्ये दर्शितन्यायेनैकैकं पदार्थं नेच्छति । अबद्धिकस्तु गोष्ठामाहिलः पूर्वदर्शितौ द्वौ पदार्थौ नेच्छति, उक्तशेषांस्तु पदार्थान् सर्वानपीच्छतीति । ततः किम्? इत्याह– 'अवरोप्परमित्यादि' एवं च सत्येकत्र समेता मिलिताः सर्वेऽपि निह्नवा विवदन्तः परस्परमेकैकस्य द्वौ द्वौ दोषौ ददति प्रयच्छन्ति । तत्र बहुरतादेः प्रादेशिकादिः परस्तस्य परस्य यद् मतं निजोऽभिप्रायस्तदभ्युपगमरूपा या संप्रतिपत्तिः सा परमतसंप्रतिपत्तिस्तां परस्परं दूषयन्ति; तथा, बहुरतादेः स्वस्यात्मनो यद् मतं तत्र या तदनभ्युपगमरूपा परस्य प्रादेशिकादेर्विप्रतिपत्तिस्तां दूषयन्ति । एवं च सत्येकैकस्य द्वौ द्वौ दोषौ संबध्येते ।

अयमत्र भावार्थः– बहुरतः प्रादेशिकं वक्ति, तत्र द्वौ दोषौ– एकं तावत् 'कृतमेव कृतम्' इति मदीयमतं निर्दोषमपि न मन्यसे, 'चरम एव प्रदेशो जीवः' इत्यात्मीयमतं तु सदोषमपि मन्यस इति । एवं प्रादेशिकोऽपि बहुरतस्य व्यत्ययेन द्वौ दोषौ ददाति ।

1 मुक्त्वा गोष्ठामाहिलमन्येषां यावज्जीवसवरणम् । कर्म च बद्धस्पृष्ट क्षीरोदकवदात्मना समकम् ॥ २६१२ ॥
मुक्त्वा जमालिमन्ये ब्रुवन्ति कृतं क्रियमाणमेवं तु । एकैक एकैकं नेच्छत्यबद्धिको द्वौ ॥ २६१३ ॥
परस्परं समेता द्वौ दोषौ ददति एकैकस्य । परमतसंप्रतिपत्तिं विप्रतिपत्तिं च स्वमते ॥ २६१४ ॥

यदि ते वस्त्रादेर्ग्रहणं न कुर्वन्तीत्युच्यते, तर्हि "सव्वे वि एगदूसेण निग्गया" इत्यादि विरुध्यत इत्याशङ्क्याह– 'तह वीत्यादि' यद्यपि तत्संयमस्यानुपकारि वस्त्रम्, तथापि सवस्त्रमेव तीर्थं 'सवस्त्रा एव साधवस्तीर्थे चिरं भविष्यन्ति' इत्यस्यार्थस्योपदेशनं ज्ञापनं तदर्थं गृहीतैकवस्त्राः सर्वेऽपि तीर्थकृतोऽभिनिष्क्रामन्तीति । तस्मिंश्च वस्त्रे च्युते क्वापि पतितेऽचेलका वस्त्ररहितास्ते भवन्ति, न पुनः सर्वदा । ततः 'अचेलकाश्च जिनेन्द्राः' इत्यैकान्तिकं यदुक्तं तद् भवतोऽनभिज्ञत्वसूचकमेवेति भावः ॥ २५८१ ॥ २५८२ ॥ २५८३ ॥

जिनकल्पिकादयस्तु सदैव सचेलका इति दर्शयन्नाह—

[2]जिणकप्पियादओ पुण सोवहओ सव्वकालमेगंतो । उवगरणमाणमेसिं पुरिसाविक्खाए बहुभेयं ॥२५८४॥

अयमत्राभिप्रायः– तीर्थकरदृष्टान्तावष्टम्भेन, जिनकल्पिकोदाहरणावष्टम्भेन च त्वमचेलकत्वं प्रतिपद्यसे। एतच्च सर्वं भवतो दुर्बोधविलसितमेव, यतस्तीर्थकरा अपि पूर्वोक्तन्यायेन न तावदेकान्ततोऽचेलकाः । जिनकल्पिक-स्वयंबुद्धादयः पुनः सर्वकालमेकान्तेन सोपधय एवेति । अत एव "[3]दुग तिग चउक्क पणगं" इत्यादिना पूर्वमेतेषामुपकरणमानं पुरुषापेक्षया बहुभेदमुक्तम्, न पुनः सर्वथा निरुपकरणता । तदयं यस्त्वया सर्वथोपकरणत्यागः कृतः स दृष्टान्तीकृतानां तीर्थकर-जिनकल्पिकादीनामपि न दृश्यते, केवलं नूतनः कोऽपि त्वदीय एवायं मार्ग इति ॥ २५८४ ॥

अथ प्रकारान्तरेण परमतमाशङ्क्य परिहरन्नाह—

[4]अरहंता जमचेला तेणाचेलत्तणं जइ मयं ते । तो तव्वयणाउ च्चिय निरतिसओ होहि माऽचेलो ॥२५८५॥

यद् यस्मादर्हन्तोऽचेलाश्चेलरहिता नाग्न्यधारिणस्तेन तस्मात् कारणादचेलत्वं नग्नत्वं यदि तव मतं संमतम्,

"[5]जारिसयं गुरुलिंगं सीसेण वि तारिसेण होयव्व । न हि होइ बुद्धसीसो सेयवडो नग्गखवणो वा ॥ १ ॥"

इति वचनादिति । ततस्तर्हि तद्वचनादेव तीर्थकरोपदेशादेव निरुपमधृति-संहननाद्यतिशयरहितोऽचेलो नग्नो मा भूस्त्वम् । इदमुक्तं भवति– यदि तीर्थकरशिष्यत्वात् तद्वेषस्तव प्रमाणम्, तर्हि तत एव हेतोस्तदुपदेशोऽपि भवतः प्रमाणमेव । न हि गुरूपदेश-

१ पृ० १०२२ । २ जिनकल्पिकादय पुन' सोपधय. सर्वकालमेकान्तः । उपकरणमानमेषा पुरुषापेक्षया बहुभेदम् ॥ २५८४ ॥ ३ पृ० १०२१ ।
४ अर्हन्तो यदचेलास्तेनाचेलत्वं यदि मत ते । ततस्तद्वचनादेव निरातिशयो भूर्माऽचेल ॥ २५८५ ॥
५ यादृशं गुरुलिङ्गं शिष्येणापि तादृशेन भवितव्यम् । न हि भवति बुद्धशिष्यः श्वेतपटो नग्नक्षपणो वा ॥ १ ॥

तथा, अयमेव प्रादेशिकोऽव्यक्तवादिनं वदति, तत्र द्वौ दोषौ– सदोषस्वमताभ्युपगमः, निर्दोषमदीयमतानभ्युपगमश्चेति । एवमन्यक्तोऽपि प्रादेशिकस्य व्यत्ययेन द्वौ दोषौ ददाति । एवं तावद् नेयं यावत् त्रैराशिकोऽबद्धिकं वक्ति द्वौ दोषौ– सदोषस्वमताभ्युपगमः, निर्दोषमदीयमतानभ्युपगमश्चेति । एवमबद्धिकोऽपि त्रैराशिकं व्यत्ययेन द्वौ दोषौ ददातीति । एवं बहुरतादयोऽव्यक्तादिभिरपि सह द्विकयोगेन क्रमशश्चारणीयाः, सर्वत्र च द्विकयोगे यथोक्तदोषद्वयप्रदानं परस्परतो वक्तव्यम् ।

आह– नन्वबद्धिकः स्पृष्टाबद्धं कर्म, परिमाणरहितं च प्रत्याख्यानमिति द्वौ पदार्थौ नेच्छतीति प्रागुक्तम् । ततश्चासौ प्रतियोगिनो निह्नवस्य त्रीन् दोषान् ददाति, प्रतियोग्यप्यस्य त्रीनेव दोषान् प्रयच्छतीति प्राप्नोति; तथाहि– अबद्धिको बहुरतं वक्ति– तव त्रयो दोषाः, एकं तावद् निर्दोषमपि मदभ्युपगतपदार्थद्वयं नेच्छसि, अपरं च स्वयं सदोषमपि स्वाभिमतं पदार्थं कल्पयसीति । एवं बहुरतोऽप्यबद्धिकस्य व्यत्ययेन दोषत्रयं ददातीति। एवमबद्धिकेन सह प्रतियोगिनां विचारे सर्वत्र दोषत्रयं प्राप्नोति, तत् कथं 'एकैकस्य द्वौ द्वौ दोषौ' इति व्याख्या प्रोच्यते ? । सत्यम्, यत्राबद्धिकस्य व्यक्तिविवक्षया पदार्थद्वयभेदेन भिन्नं मतं विवक्ष्यते, तदा यत् त्वं वदसि तत् तथैव मन्यामहे । यदा तु पदार्थद्वयभेदेन भिन्नमपि तस्य सामान्येनैकं मतमात्रं विवक्ष्यते तदा दर्शितन्यायेनैकैकस्य द्वौ द्वौ दोषाविति सर्वत्र न विरुध्यत इत्यलं विस्तरेणेति ॥ २६१२ ॥ २६१३ ॥ २६१४ ॥

इदं चाबद्धिकमाश्रित्य व्यक्तिविवक्षया दोषत्रयं भाष्यकृतोऽपि संमतम्, तथा चाह—

अबद्धियस्स दोसे दिंति तओ सो वि तिन्नि अन्नस्स । तिप्पभिई[1] तु समेया दोसे तिप्पभिइए दिंति ॥२६१५॥

'तउ त्ति' व्यक्तिविवक्षारूपेण पूर्वदर्शितविधिना त्रीन् दोषानबद्धिकस्य बहुरतादयः प्रत्येकं ददाति, सोऽप्यबद्धिकस्त्रीन् दोषानन्यस्य बहुरतादेः प्रत्येकं ददाति । तदेवं द्वयोः समुदितयोरेष विधिर्दर्शितः । यदा तु त्रिप्रभृतयः समुदिता भवन्ति तदा को विधिः ? इत्याह– 'तिप्पभिईत्यादि' त्रिप्रभृतयस्तु समुदितास्त्रिप्रभृतीन् दोषान् ददाति । इदमत्र हृदयम्– बहुरतादिषु त्रिषु समुदितेषु बहुरतःशेषान् वक्ति– ननु भवतस्त्रयो दोषाः– कुत्सितनिजनिजमतप्ररूपणाकृतौ द्वौ, निर्दोषमदीयमतविप्रतिपत्तिकृतस्त्वेक इति । एवं सर्वत्र त्रिकयोग उपयुज्य वक्तव्यम् । केवलमबद्धिकेन सह यस्त्रिकयोगस्तत्र व्यक्तिविवक्षायामेकदोषवृद्धेश्चत्वारो दोषा वक्तव्याः । तथा प्रभृतिग्रहणाच्चतुष्क-पञ्चक-षट्क-सप्तकयोगेष्वपि यथासंख्यं चतु-ष्पञ्च-षट्-सप्तदोषा उक्तानुसारतो भणनीयाः । केवलमबद्धिकेन सह

[1] अबद्धिकस्य दोषान् ददति तत सोऽपि त्रीनन्यस्य । त्रिप्रभृतयस्तु समेता दोषांस्त्रिप्रभृतीन् ददति ॥ २६१५ ॥

मतिक्रम्य प्रवर्तमानः शिष्योऽभीष्टार्थसाधको भवति । परमगुरूपदेशश्चैवं वर्तते– निरुपमधृतिसंहननाद्यतिशयरहितेनाचेलकेन नैव भवितव्यम् । तत् किं त्वमित्थं गुरूपदेशबाह्येन नाग्न्येनात्मानं विगोपयसीति ॥ २५८५ ॥

अथ यथा गुरोरुपदेशः कर्तव्यस्तथा तद्वेष-चरिते अप्यवश्यमाचरणीये । तदयुक्तम्, तदुपदेशानुष्ठानस्यैव कार्यसाधकत्वादिति दर्शयति—

[1]रोगी जहोवएसं करेइ वेज्जस्स होअरोगो य । न उ वेसं चरियं वा करेइ न य पउणइ करंतो ॥ २५८६ ॥

तह जिणवेज्जाएसं कुणमाणोऽवेइ कम्मरोगाओ । न उ तन्नेवत्थधरो तेसिमाएसमकरंतो ॥ २५८७ ॥

व्याख्या— इह यथा रोगी वैद्यस्योपदेशं करोति, तत्करणमात्रेणैव च रोगाद् विमुच्यते, न पुनरसौ तद्वेषं करोति, नापि तच्चरितमाचरति, न च तत् कुर्वाणोऽप्यसौ प्रगुणीभवति, प्रत्युत क्षपणकादौ वैद्ये नाग्न्यादिकं तद्वेषं कुर्वन् सर्वरसांश्च स्वेच्छया तद्वद् भुञ्जानस्तच्चरितानुष्ठायी संनिपातस्यैव भ्रियते । तस्माद् वैद्योपदेशानुष्ठानमेव रोगिणो रोगापगमहेतुः । प्रस्तुतयोजनामाह– 'तहेत्यादि' तथा तेनैव प्रकारेण जिनवैद्यस्यादेशं कुर्वाणस्तद्वेष-चरिते अनाचरन्नपि कर्मरोगादपैति वियुज्यते, न पुनस्तेषामादेशमकुर्वाणस्तन्नेपथ्य-चरिते बिभ्राणोऽपि तस्माद् वियुज्यते, केवलं तद्योग्यतारहितत्वात्तन्नेपथ्य-चरिताभ्यां प्रवर्तमान उन्मादादिभाजनमेव भवतीति॥२५८६॥२५८७॥

किञ्च, यदि तीर्थकरवेष-चरितानुष्ठानवर्ती भवान्, तर्हि किं सर्वथा तैः सह वेष-चरिताभ्यां साधर्म्यं भवतः, उत देशतः ?। यद्याद्यः पक्षः, तर्हि यत् ते कुर्वन्ति, तत् सर्वमपि भवता कर्तव्यं प्राप्नोति; किं पुनस्तत् ? इत्याह—

[2]न परोवएसवसया न य छउमत्था परोवएसं पि । दिंति, न य सीसवग्गं दिक्खंति जिणा जहा सव्वे ॥२५८८॥

तह सेसेहिं वि सव्वं कज्जं जइ तेहिं सव्वसाहम्मं । एवं च कओ तित्थं न चेदचेलो त्ति को गाहो ?॥२५८९॥

व्याख्या— यदि तैर्जिनैस्तीर्थकरैः सह लिङ्ग-चरिताभ्यां सर्वसाधर्म्यम्, तर्हि यथा ते स्वयंबुद्धत्वाद् न परोपदेशवशगाः– न

---

१ रोगी यथोपदेशं करोति वैद्यस्य भवत्यरोगश्च । न तु वेषं चरितं वा करोति न च प्रकरोति कुर्वन् ॥ २५८६ ॥
तथा जिनवैद्यादेशं कुर्वाणोऽपैति कर्मरोगात् । न तु तन्नेपथ्यधरस्तेषामादेशमकुर्वन् ॥ २५८७ ॥

२ न परोपदेशवशगा न च छद्मस्थाः परोपदेशमपि । ददति, न च शिष्यवर्गं दीक्षन्ते जिना यथा सर्वे ॥ २५८८ ॥
तथा शेषैरपि सर्वं कार्यं यदि तैः सर्वसाधर्म्यम् । एवं च कुतस्तीर्थं न चेदचेल इति को ग्रहः ? ॥ २५८९ ॥

चतुष्कादियोगे व्यक्तिविवक्षायामेकदोषवृद्ध्या पञ्चादयो दोषा वाच्याः ॥ इति गाथाचतुष्टयार्थः ॥ २६१५ ॥

नन्वेषां निह्नवानां दृष्टयः किं संसाराय, आहोस्विदपवर्गाय ? इत्याशङ्कानिवृत्त्यर्थमाह—

[1]सत्तेया दिट्ठीओ जाइ-जरा-मरणगब्भवसहीणं । मूलं संसारस्स उ हवंति निग्गंथरूवेण ॥ २६१६ ॥

सप्तैता दृष्टयः सप्त निह्नवदर्शनानि, बोटिकास्तु पूर्वोक्तकारणाद् न विवक्षिताः, मूलं कारणं भवतीति संबन्धः । कासाम् ? इत्याह– जाति-जरा-मरण-गर्भवसतीनाम् । जातिर्नारकादिषु यत् प्रसूतिमात्रं तद्रूपा गृह्यते, गर्भवसतिस्तु पञ्चेन्द्रियतिर्यग्-मनुष्येषु गर्भावास इति न पौनरुक्त्यम् । तथा, संसरणं नारकादिषु पुनःपुनर्भ्रमणं संसारस्तस्य च मूलमेताः सप्त निह्नवदृष्टयो निर्ग्रन्थरूपमात्रेण ॥ इति निर्युक्तिगाथार्थः ॥ २६१६ ॥

आह– एते निह्नवाः किं साधवः, उत तीर्थान्तरीयाः, आहोस्विद् गृहस्थाः ? । उच्यते– न साधवः, यस्मात् साधूनामेकस्यार्थाय कृतमशनादि शेषाणामकल्प्यम्, नैवं निह्नवानाम् ; तथा चाह—

[2]पवयणनिहूयाणं जं तेसिं कारियं जहिं जत्थ । भज्जं परिहरणाए मूले तह उत्तरगुणे य ॥ २६१७ ॥

'निहूय त्ति' देशीवचनमकिञ्चित्करार्थे, प्रवचने यथा भणितं क्रियाकलापं प्रत्यकिञ्चित्कराणां यदशनादि तेषां निह्नवानां कारितं यस्मिन् काले यस्मिन् क्षेत्रे, तद् भाज्यं विकल्पनीयम् । कया ? । परिहरणया वर्जनया । कदाचित् परिह्रियते वर्ज्यते, कदाचिद् नेति । यदि लोको न जानाति यथैते निह्नवाः साधुभ्यो भिन्नास्तदा परिह्रियते । अथ तु जानाति तदा न परिह्रियत इति । अथवा, परिहरणा परिभोगोऽभिधीयते, यत उक्तम्– "[3]धारणया उवभोगो परिहरणा तस्स होइ परिभोगो" इति । ततश्च कदाचित् परिह्रियते परिभुज्यते, कदाचिद् न, इत्येवं परिहरणा । किं पुनरित्थं भाज्यम् ? इत्याह– मूले मूलगुणविषयमाधाकर्मादि, तथा उत्तरगुणे चोत्तरविषयं क्रीत-कृतादि । ततो नैते निह्नवाः साधवः, तदर्थाय कृतस्यैकान्तेनाकल्प्यत्वात् । नापि गृहस्थाः, न वा तीर्थान्तरीयाः, तदर्थाय कृतस्यासाधूनामेकान्तेन कल्प्यत्वात् । तस्मादव्यक्ता एवैते ॥ इति निर्युक्तिगाथार्थः ॥ २६१७ ॥

१ सप्तैता दृष्टयो जाति-जरा-मरण-गर्भवसतीनाम् । मूलं संसारस्य तु भवन्ति निर्ग्रन्थरूपेण ॥ २६१६ ॥
२ प्रवचनाकिञ्चित्कराणां यत् तेषां कारितं यदा यत्र । भाज्यं परिहरणेन मूले तथोत्तरगुणे च ॥ २६१७ ॥
३ धारणयोपभोग परिहरणं तस्य भवति परिभोगः ।

परोपदेशेन वर्तन्ते, न च च्छद्मस्थावस्थायां प्रतिबोधार्थं परस्याप्युपदेशं ददति, न च शिष्यवर्गं दीक्षन्ते; तथा शेषैरपि तच्छिष्य-प्रशिष्यैः सर्वमेतत् त्वदभिप्रायेण कार्यं करणीयं प्राप्नोति। भवत्वेवं तर्हि, को दोषः ? इति चेत्। इत्याह— एवं च सति कुतस्तीर्थम्, कस्यापि प्रतिबोधाभावाद् दीक्षाद्यभावाच्च ?। 'न चेदिति' अथ न तैः सह सर्वसाधर्म्यमित्युच्यते, तर्हि 'अचेलो भवाम्यहम्' इति कस्तव ग्रहः ?, अचिन्त्यत्वात् तच्चरितस्येति ॥ २५८८ ॥ २५८९ ॥

अथ तीर्थकरैः सह सर्वसाधर्म्याभावेऽचेलताग्रहः किमिति न कर्तव्यः ? इत्याह—

जह न जिणिंदेहिं समं सेसाइसएहिं सव्वसाहम्मं। तह लिंगेणाभिमयं चारित्तेण वि किंचि साहम्मं ॥२५९०॥

यथा जिनेन्द्रैः सह 'निरुवमधिइसंघयणा चउनाणाइसयसत्तसंपण्णा' इत्यादिना ग्रन्थेन प्रतिपादितैर्लिङ्गाच्चरिताच्च शेषैरतिशयैः सर्वसाधर्म्यं नाभिमतं भवतः, किं तर्हि ? किञ्चित् साधर्म्यमेव, तथा तेनैव प्रकारेण लिङ्गेन चरितेन च किञ्चित् साधर्म्यमेव तैः सहाभिमतमस्माकम्, न तु सर्वसाधर्म्यम्, तच्च किञ्चित् साधर्म्यं लिङ्गतो लोचकरणमात्रेण न पुनरचेलत्वेन; चरित्रेण त्वेषणीयाहारपरिभोगा-ऽनियतवासादिना, न तु पाणिभोजित्वेन, निरतिशयत्वेन तदयोग्यत्वादस्मदादीनाम्। तस्मात् किञ्चित् साधर्म्यस्योक्तन्यायेनान्यथापि सिद्धेः कोऽचेलताद्याग्रहो भवतः ? इति ॥ २५९० ॥

यच्चोक्तम्— 'तदभिहिओ जं च जिणकप्पो' इति, तत्र को वै न मन्यते— 'तीर्थकरैरभिहितो जिनकल्पः' इति। केवलं यादृशानां पुरुषाणां येन विधिना तैरभिहितो जिनकल्पः, तदेतदाकर्णय। किं पुनस्तत् ? इत्याह—

उत्तमधिइसंघयणा पुव्वविदोऽतिसइणो सयाकालं। जिणकप्पिया वि कप्पं कयपरिकम्मा पवज्जंति ॥२५९१॥

तं जइ जिणवयणाओ पवज्जसि,पवज्ज तो स छिन्नो त्ति। अत्थि त्ति कहं पमाणं कह वुच्छिन्नो त्ति न पमाणं?॥२५९२॥

व्याख्या— उत्तमधृतिसंहननाः पूर्ववेदिनो जघन्यतोऽपि किञ्चिन्न्यूननवपूर्वपाठका इत्यर्थः सर्वदैव निरुपमशक्त्याद्यतिशयसंपन्ना जिनकल्पिका अपि "तवेण सुत्तेण सत्तेण" इत्यादि पूर्वोक्तविधिना कृतपरिकर्माण एव जिनकल्पं प्रतिपद्यन्ते, नान्यथेति न रथ्यापुरु-

[1] यथा न जिनेन्द्रै. सम शेषातिशयै. सर्वसाधर्म्यम्। तथा लिङ्गेनाभिमत चरितेनापि किञ्चित् साधर्म्यम् ॥ २५९० ॥ [2] गाथा २५८१। [3] गाथा २५५६। [4] उत्तमधृतिसहनना. पूर्वविदोऽतिशयिन' सदाकालम्। जिनकल्पिका अपि कल्पं कृतपरिकर्माण. प्रपद्यन्ते ॥ २५९१ ॥ तद् यदि जिनवचनात् प्रपद्यसे, प्रपद्यस्व तत. स च्छिन्न इति। अस्तीति कथं प्रमाणं कथं व्युच्छिन्न इति न प्रमाणम् ? ॥२५९२॥ [5] पृ० ११।

'भज्जं परिहरणाए' इत्यत्र कारणं भाष्यकारोऽप्याह—

[1]जत्थ विसेसं जाणइ लोगो तेसिं च कुणइ भत्ताइं। तं कप्पइ साहूणं सामन्नकयं पुनरकप्पं ॥२६१८॥

गतार्था, नवरं 'सामन्नकयं ति' निह्नवरूपतां विशेषेण तेषामज्ञात्वा सामान्येन यत् कृतं तदकल्प्यमित्यर्थः ॥ २६१८ ॥

आह— बोटिकानां यत् कारितम्, तत्र का वार्ता ? इत्याह—

[2]मिच्छादिट्ठियाणं जं तेसिं कारियं जहिं जत्थ। सव्वं पि तयं सुद्धं मूले तह उत्तरगुणे य ॥ २६१९ ॥

मिथ्यादृष्टीनां बोटिकानां यदशनादि तेषां कारितं यस्मिन् काले यत्र क्षेत्रे तद् मूलगुणविषयम्, उत्तरगुणविषयं च सर्वमपि शुद्धं साधूनां कल्पनीयम् ॥ इति निर्युक्तिगाथार्थः ॥ २६१९ ॥

भाष्यम्—

[3]भिन्नमय-लिंग-चरिया मिच्छद्दिट्ठि त्ति बोडियाऽभिमया। जं ते कयमुद्दिसिउं तं कप्पइ जं च जइजोग्गं ॥२६२०॥

मतं च लिङ्गं च भिक्षाग्रहणादिविषया चर्या च मत-लिङ्ग-चर्याः, भिन्ना मत-लिङ्ग-चर्या येषां ते तथाभूताः सन्तो बोटिका मिथ्यादृष्टयोऽभिमताः, भिन्नमतत्वादिकारणात् ते निर्युक्तिकृता मिथ्यादृष्टित्वेन निर्दिष्टा इत्यर्थः। यच्चाशनादि तानुद्दिश्य कृतं तत् साधूनां कल्पते। आह— ननु बोटिकानुद्दिश्य सचित्तं कर्कटिका-दाडिमाद्यपि क्रियते, अचित्तं चानन्तकाय-वृन्ताकाद्यपि संस्कृत्य विधीयते, तत् किं सर्वमपि साधूनां कल्पते ? । न, इत्याह— 'जं च जइजोग्गं ति' तानुद्दिश्य कृतमपि यदेव यतीनां साधूनां योग्यमुक्तं प्रासुकमेषणीयं, समये चानुज्ञातं, तदेव कल्पते नान्यत् ॥ इति गाथार्थः ॥ २६२० ॥

॥ तदेवमवसिता निह्नववक्तव्यता ॥

॥ तदवसाने चावसितं सप्रसङ्गं समवतारद्वारम् ॥

1 यत्र विशेषं जानाति लोकस्तेषां च करोति भक्तादि। तत् कल्पते साधूना सामान्यकृतं पुनरकल्प्यम् ॥ २६१८ ॥
2 मिथ्यादृष्टिकानां यत् तेषां कारित यदा यत्र। सर्वमपि तत् शुद्ध मूले तथोत्तरगुणे च ॥ २६१९ ॥
3 भिन्नमत-लिङ्ग चर्या मिथ्यादृष्टय इति बोटिका अभिमता.। यत् तान् कृतमुद्दिश्य तत् कल्पते यच्च यतियोग्यम् ॥ २६२० ॥

षकल्पानां भवादृशां जिनकल्पस्तीर्थकरैरनुज्ञात इति। तत् तस्माद् यदि जिनवचनादर्हदुपदेशाज्जिनकल्पं प्रतिपद्यसे त्वम्, ततस्तर्हि 'स जिनकल्पो व्यवच्छिन्नः' इतीदमपि प्रतिपद्यस्व। अथैतद् न प्रतिपद्यसे, तर्हि 'जिनकल्पोऽस्ति' इति कथं तीर्थकरवचनं तव प्रमाणम्?। कथं च 'व्यवच्छिन्नोऽसौ' इति न प्रमाणम्?। नन्वाग्रहपिशाचिकाग्रस्तचेष्टितमिदम्, स्वेच्छामात्रप्रवृत्तत्वादिति ॥ २५९१ ॥ २५९२ ॥

अथ जिनकल्पास्तित्वमागमे प्रतीतम्, तद्व्यवच्छेदस्तु केन वचनेन तीर्थकरैरुक्तः? इति चेत्; इत्याह—

[1]मण-परमोहि-पुलाए आहारग-खवग-उवसमे कप्पे। संजमतिय-केवलि-सिज्झणा य जंबुम्मि वुच्छिण्णा ॥२५९३॥

मनःपर्यायज्ञानम्, परमावधिः, पुलाकलब्धिः, आहारकशरीरम्, क्षपकश्रेणिः, उपशमश्रेणिः, जिनकल्पः, परिहारविशुद्धिक-सूक्ष्मसंपराय-यथाख्याततलक्षणं संयमत्रिकम्, केवली, मोक्षगमनलक्षणा सिद्धिश्चेति सर्वेऽप्येते पदार्था जम्बूस्वामिनि व्यवच्छिन्ना जम्बूस्वामिनं यावत् प्रवृत्ताः, न तूत्तरत्रेति ॥ २५९३ ॥

यच्चोक्तम् 'जं च जियाचेलपरिसहो मुणी' इत्यादि, तत्राह—

[2]जइ चेलभोगमेत्तादजिआचेलयपरीसहो तेण। अजियदिगिंछाइपरीसहो वि भत्ताइभोगाओ ॥ २५९४ ॥

एवं तुह न जियपरीसहा जिणिंदा वि सव्वहावन्नं। अहवा जो भत्ताइसु स विही चेले वि किं नेट्ठो ?॥२५९५॥

जह भत्ताइ विसुद्धं राग-द्दोसरहिओ निसेवंतो। विजियदिगिंछाइपरीसहो मुणी सपडियारो वि ॥२५९६॥

तह चेलं परिसुद्धं राग-द्दोसरहिओ सुयविहीए। होइ जियाचेलपरीसहो मुणी सेवमाणो वि ॥ २५९७ ॥

व्याख्या— जिताचेलपरीषहो मुनिर्भवतीति वयमपि मन्यामहे। केवलमिदं प्रष्टव्योऽसि— किं चेलभोगमात्रेणाप्यजिताचेल-परीषहत्वं भवति येन भवता सर्वथा वस्त्रपरित्यागः क्रियते, आहोस्विदनेषणीयादिदोपदुष्टवस्त्रपरिभोगेण?। तत्राद्यपक्षे दूषणमाह—

1 मन.-परमावधि-पुलाका आहारक-क्षपको-पशमाः कल्प'। संयमत्रिक-केवलि-सिद्धयश्च जम्बौ व्युच्छिन्नाः ॥ २५९३ ॥ २ गाथा २५५६।

2 यदि चेलभोगमात्रादजिताचेलकपरीषहस्तेन। अजितक्षुदादिपरीषहोऽपि भक्तादिभोगात् ॥ २५९४ ॥
एवं तव न जितपरीषहा जिनेन्द्रा अपि सर्वथापन्नम्। अथवा यो भक्तादिषु स विधिश्चेलेऽपि किं नेष्टः? ॥ २५९५ ॥
यथा भक्तादि विशुद्धं राग-द्वेषरहितो निषेवमाणः। विजितक्षुदादिपरीषहो मुनिः सप्रतीकारोऽपि ॥ २५९६ ॥
तथा चेलं परिशुद्धं राग-द्वेषरहितः श्रुतविधिना। भवति जिताचेलपरीषहो मुनिः सेवमानोऽपि ॥ २५९७ ॥

अथ यस्य नयस्य यत् सामायिकं मोक्षमार्गत्वेनानुमतम्, तद्दर्शनस्वरूपमनुमतद्वारं विभणिषुराह—

[1]तवसंजमोऽणुमओ नेग्गंथं पवयणं च ववहारो। सद्दु-ज्जुसुयाणं पुण निव्वाणं संजमो चेव ॥ २६२१॥

तापयतीति तपस्तत्प्रधानः संयमस्तपःसंयमश्चारित्रसामायिकमित्यर्थः। तथा, निर्ग्रन्थानामिदं नैर्ग्रन्थ्यमार्हतमिति भावना, प्रवचनं, श्रुतसामायिकमित्यर्थः। चशब्दोऽनुक्तसम्यक्त्वसामायिकपरिग्रहार्थः। एतानि त्रीण्यपि सामायिकानि मोक्षमार्गत्वेन ममानुमतानीति ब्रूते व्यवहारनयः। एतद्ग्रहणे चाधोवर्तिनौ नैगम-संग्रहावपि गृहीतौ द्रष्टव्यौ। ततश्चेदमुक्तं भवति— नैगम-संग्रह-व्यवहारास्त्रिविधमपि सामायिकं मोक्षमार्गतयाऽनुमन्यन्ते। शब्द-र्जुसूत्रयोः पुनर्निर्वाणं निर्वाणमार्गोऽभिमतः संयम एव चारित्रसामायिकमेवेत्यर्थः, नेतरे द्वे, सर्वसंवररूपचारित्रानन्तरमेव मोक्षप्राप्तेः॥ इति निर्युक्तिगाथासंक्षेपार्थः॥ २६२१॥

विस्तरार्थं भाष्यकारः प्राह—

[2]केस्स नयस्साणुमयं किं सामाइयमिह मोक्खमग्गो त्ति। भन्नइ नेगम-संगह-ववहाराणं तु सव्वाइं॥२६२२॥

तवसंजमो त्ति चरितं निग्गंथं पवयणं ति सुयनाणं। तग्गहणे सम्मत्तं चग्गहणाओ य बोद्धव्वं॥२६२३॥

गाथाद्वयमपि गतार्थम्, नवरं 'सव्वाइं ति' सम्यक्त्व-श्रुत-चारित्ररूपाणि त्रीण्यपि सामायिकानीत्यर्थः॥ ॥२६२२॥२६२३॥

अथ परप्रेर्यमाशङ्क्य परिहरन्नाह—

[3]तिन्नि वि सामइयाइं इच्छंता मोक्खमग्गमाइल्ला। किं मिच्छद्दिट्ठीया, वयंति जं समुइयाइं पि ॥२६२४॥

आह– नन्वाद्या नैगम-संग्रह-व्यवहारलक्षणास्त्रयो नया उक्तन्यायेन चारित्र-श्रुत-सम्यक्त्वरूपाणि सामायिकानि मोक्षमार्गत्वेनेच्छन्तः किमिति मिथ्यादृष्टयः?– किमिति नयमतमिदं गीयते?– संपूर्णं जिनमतमेव कस्मादेतद् न भवति? इत्यर्थः। न हि जैनैरपि ज्ञान-दर्शन-चारित्रेभ्योऽन्यदूनमधिकं वा किमपि मोक्षमार्गत्वेनेष्यते?। अत्रोत्तरमाह– 'वयंतीत्यादि' यद् यस्मादसमुदितान्यप्ये-

१ तपःसंयमोऽनुमतो नैर्ग्रन्थ्यं प्रवचन च व्यवहार'। शब्द-र्जुसूत्रयोः पुनर्निर्वाणं सयम एव ॥ २६२१ ॥

२ कस्य नयस्यानुमतं किं सामायिकमिह मोक्षमार्ग इति। भण्यते नैगम-संग्रह-व्यवहाराणां तु सर्वाणि ॥ २६२२ ॥

तप.संयम इति चरित्र नैर्ग्रन्थ्यं प्रवचनमिति श्रुतज्ञानम्। तद्ग्रहणे सम्यक्त्व चग्रहणाच्च बोद्धव्यम् ॥ २६२३ ॥

३ त्रीण्यपि सामायिकानीच्छन्तो मोक्षमार्गमाद्याः। किं मिथ्यादृष्टयो, वदन्ति यदसमुदितान्यपि ॥ २६२४ ॥

'जईत्यादि' यदि चेलभोगमात्रादपि तेन साधुनाऽऽचेलक्यपरीषहो न जित इति त्वया प्रोच्यते, तर्हि भक्तादिपरिभोगमात्रादजितदिगिंछादिपरीषहोऽपि त्वदभिप्रायेणैष साधुः स्यात्। एतदुक्तं भवति– इह देशीवचनत्वाद् दिगिञ्छाशब्देन क्षुत् प्रोच्यते, आदिशब्दात् पिपासादिपरिग्रहः। ततश्च यद्येषणीयादिगुणोपेतवस्त्र-पात्रपरिभोगाज्जिताचेलपरीषहो नेष्यते, तर्ह्येषणादिगुणसंपन्नभक्तपानादिपरिभोगाज्जितक्षुत्-पिपासादिपरीषहोऽपि न कश्चिज्जगति स्यात्। भवत्वेवम्, न किञ्चिद् नः क्षूयत इति चेत्। अत्राह– 'एवमित्यादि' एवं सति त्वदभिप्रायेण जिनेन्द्रा अपि भगवन्तो निरुपमधृतिसंहननाः सत्त्वैकनिधयो न जितपरीषहा इति सर्वप्रकारैरापन्नम्। अथोद्गमादिदोषविप्रमुक्तं विशुद्धमेषणीयं राग-द्वेषरहितो भक्त-पानादिकं सेवमानोऽपि जितक्षुत्-पिपासादिपरीषहो मुनिर्भवति, तर्हि योऽयं भक्तादिषु विधिरुच्यते स चेलेऽपि वस्त्रेऽपि भण्यमानः किं नष्टः क्वापि ?– ननु तदप्येषणीयं रागादिदोषरहितः परिभुञ्जानो जिताचेलपरीषहो मुनिः स्यादेवेति भावः। एतदेव व्यक्तीकुर्वन्नाह— 'जह–' इत्यादि गाथाद्वयं स्पष्टम्। नवरं 'सपडियारो वि त्ति' बुभुक्षा-पिपासा-शीतो-ष्णादीनां भक्त-पान-वस्त्रादिभिः सूत्रोक्तयतनया कृतः प्रतीकारः प्रतिविधानं येन स तथा। इदं च डमरुकमणिन्यायेन गाथाद्वयेऽपि संबध्यते। तस्मादनेषणीयादिदोषदुष्टवस्त्रपरिभोगेणैवाजिताचेलपरीषहत्वं भवति, न तु सूत्रविधिना तदुपभुञ्जत इति ॥ २५९४ ॥ २५९५ ॥ २५९६ ॥ २५९७ ॥

आह— ननु यदि वस्त्रं परिभुङ्क्ते साधुः, तर्हि तस्य कथमचेलपरीषहसहिष्णुत्वम्, चेलासत्त्व एव तदुपपत्तेः ?। तदयुक्तम्, सति, असति च चेलेऽचेलकत्वस्यागमे लोके च रूढकत्वात्; एतदेवाह—

सदसंतचेलगोऽचेलगो[1] य जं लोग-समयसंसिद्धो। तेणाचेला मुणओ संतेहिं, जिणा असंतेहिं ॥ २५९८ ॥

सच्चासच्च सदसती चेले यस्यासौ सदसच्चेलो यद् यस्माल्लोके समये चाचेलकः संसिद्धः प्रसिद्धः। चशब्दः प्रस्तावनायाम्। सा च कृतैव। तेन तस्मादिह मुनयः सामान्यसाधवः सद्भिरेव चेलैरुपचारतोऽचेला भण्यन्ते, जिनास्तु तीर्थकरा असद्भिश्चेलैर्मुख्यवृत्त्याऽचेला व्यपदिश्यन्ते। इदमुक्तं भवति– इहाचेलत्वं द्विविधम्– मुख्यम्, उपचरितं च। तत्रेदानीं मुख्यमचेलत्वं संयमोपकारि न भवति, अत औपचारिकं गृह्यते, मुख्यं तु जिनानामेवासीदिति ॥ २५९८ ॥

इदमेवौपचारिकमचेलत्वं भावयति—

1 सदसच्चेलकोऽचेलकश्च यल्लोक-समयसंसिद्ध । तेनाचेला मुनयः सद्भिः, जिना असद्भि ॥ २५९८ ॥

तानि मोक्षमार्गत्वेन वदन्ति नैगमादयः, न तु 'ज्ञानादित्रयादेव मोक्षः' इति नियमं कुर्वते, नयत्वहानिप्रसङ्गात्। अत एते मिथ्यादृष्टय इति ॥ २६२४ ॥

'सद्दु-ज्जुसुयाणं पुण'[1] इत्यादि गाथादलं व्याख्यातुमाह—

[2]उज्जुसुयाइमयं पुण निव्वाणपहो चरित्तमेवेगं। न हि नाण-दंसणाइं, भावे वि न तेसिं जं मोक्खो ॥२६२५॥

ऋजुसूत्रस्य, त्रयाणां च शब्दनयानां पुनश्चारित्रसामायिकमेवैकं निर्वाणमार्ग इति हि मतम्, हि शब्दः पुनरर्थे; न पुनः श्रुतज्ञानसामायिकं सम्यग्दर्शनसामायिकं च मोक्षमार्गस्तेषामनुमत इत्यर्थः, यद् यस्मात् तयोर्ज्ञान-दर्शनसामायिकयोः सद्भावेऽपि चारित्रमन्तरेण न मोक्षः। तस्मादन्वय-व्यतिरेकाभ्यां चारित्रसामायिकमेवैकं तन्मतेन मोक्षमार्ग इति ॥ २६२५ ॥

एतदेव भावयति—

[3]जं सव्वनाण-दंसणलंभे वि न तक्खणं चिय विमोक्खो। मोक्खो य सव्वसंवरलाभे मग्गो स एवाओ ॥२६२६॥

यद् यस्मात् सर्वं परिपूर्णं ज्ञानं सर्वज्ञानं क्षायिकं ज्ञानं केवलज्ञानमिति यावत्; तथा, सर्वं संपूर्णं दर्शनं सर्वदर्शनं क्षायिकसम्यक्त्वमित्यर्थः, तयोर्लाभेऽपि न तत्क्षणमेव विमोक्षो मुक्तिसद्भावः। भवति च मोक्षः, कदा? इत्याह– सर्वसंवररूपचारित्रसामायिकलाभे। अतोऽन्वय-व्यतिरेकाभ्यां स एव सर्वसंवररूपचारित्रलाभो मोक्षमार्ग इति ॥ २६२६ ॥

अत्र परः प्राह—

[4]आह ननु नाण-दंसणरहियस्सेव सव्वसंवरो दिट्ठो। तस्सहियस्सेव तओ तम्हा तितयं पि मोक्खपहो ॥२६२७॥

आह– ननु सोऽपि सर्वसंवररूपचारित्रलाभो ज्ञान-दर्शनरहितस्याकस्मादेवोपजायमानो न कस्यापि दृष्टः, किन्तु तत्सहितस्यैव प्रागुत्पन्नज्ञान-दर्शनस्यैव तको यथोक्तचारित्रलाभः संजायते। तस्मात् त्रितयमपीदं मोक्षमार्ग इति। अतोऽयुक्तमुक्तम्–"निव्वाणं संजमो चेव' इति ॥ २६२७ ॥

---

१ गाथा २६२१। २ ऋजुसूत्रादिमत पुनर्निर्वाणपथश्चारित्रमेवैकम्। न हि ज्ञान-दर्शने, भावेऽपि न तयोर्यद् मोक्षः ॥ २६२५ ॥
३ यत् सर्वज्ञान-दर्शनलाभेऽपि न तत्क्षणमेव विमोक्षः। मोक्षश्च सर्वसंवरलाभे मार्ग, स एवात. ॥ २६२६ ॥
४ आह ननु ज्ञान दर्शनरहितस्य न सर्वसंवरो दृष्ट.। तत्सहितस्यैव सकस्तस्मात् त्रितयमपि मोक्षपथ. ॥ २६२७ ॥

¹परिसुद्ध जुण्ण कुच्छिय थोवाऽनिययन्नभोगभोगेहिं । मुणओ मुच्छारहिया संतेहिं अचेलया होंति ॥ २५९९ ॥

मुनयः साधवो मूर्च्छारहिताः सद्भिरपि चेलैरुपचारतोऽचेलका भवन्ति । कथंभूतैश्चेलैः ? इत्याह— 'परिसुद्ध त्ति' लुप्तविभक्तिदर्शनात् परिशुद्धैरेषणीयैः, तथा जीर्णैर्बहुदिवसैः, कुत्सितैरसारैः, स्तोकैर्गणनाप्रमाणतो हीनैस्तुच्छैर्वा; 'अनिययन्नभोगभोगेहिं ति' अनियतभोगेन कादाचित्कासेवनेन भोगः परिभोगो येषां तानि तथा तैः । एवंभूतैश्चेलैः सद्भिरप्युपचारतोऽचेलका मुनयो भण्यन्ते । तथा, 'अन्नभोगभोगेहिं ति' एवमपि योज्यते । ततश्च लोकरूढप्रकारान्यप्रकारेण भोग आसेवनम्, प्रकारलक्षणस्य मध्यपदस्य लोपात्, अन्यभोगस्तेनान्यभोगेन भोगः परिभोगो येषां तानि तथा तैरप्येवंभूतैश्चेलैरचेलकत्वं लोके प्रसिद्धमेव, यथा कटीवस्त्रेण वेष्टिताशिरसो जलावगाढपुरुषस्य । साधोरपि कच्छाबन्धाभावात्, कूर्पराभ्यामग्रभाग एव चोलपट्टकस्य धरणात्, मस्तकस्योपरि प्रावरणाद्यभावाच्च लोकरूढप्रकारादन्यप्रकारेण चेलभोगो द्रष्टव्यः । तदेवं 'परिसुद्ध-जुण्ण-कुच्छिय'– इत्यादिविशेषणविशिष्टैः सद्भिरपि चेलैस्तथाविधवस्त्रकार्याकरणात् तेषु मूर्च्छाऽभावाच्च मुनयोऽचेलका व्यपदिश्यन्त इतीह तात्पर्यम् ॥ २५९९ ॥

आह– ननु चेलस्यान्यथा परिभोगेण किमचेलकत्वव्यपदेशः क्वापि दृष्टः ? इत्याशङ्क्य तदुपदर्शनार्थमाह—

²जह जलमवगाहंतो बहुचेलो वि सिरवेढियकडिल्लो । भण्णइ नरो अचेलो तह मुणओ संतचेला वि ॥२६००॥

गतार्था ॥ २६०० ॥

जीर्णादिभिरपि वस्त्रैरचेलकत्वं लोकरूढमेवेति भावयति—

³तह थोव-जुन्न-कुच्छियचेलेहि वि भन्नए अचेलो त्ति । जह त्तर सालिय ! लहुं दो पोत्तिं नग्गिया मो त्ति ॥२६०१॥

इयमपि सुगमा, नवरं 'जह त्तरेत्यादि' दृष्टान्तः, यथेह कापि योषित् कटीवेष्टितजीर्णबहुच्छिद्रैकसाटिका कञ्चित् कोलिकं वदति,– 'त्वरस्व भोः शालिक ! शीघ्रो भूत्वा मदीयपोत्तीं शाटिकां निर्वाप्य ददस्व समर्पय, नग्निका वर्तेऽहम्' । तादिह सवस्त्रायामपि

१ परिशुद्धैर्जीर्णैः कुत्सितैः स्तोकैरनियतभोगभोगैः । मुनयो मूर्च्छारहिताः सद्भिरचेलका भवन्ति ॥ २५९९ ॥
२ यथा जलमवगाहमानो बहुचेलोऽपि शिरोवेष्टितकटिक. । भण्यते नरोऽचेलस्तथा मुनयः सचेला अपि ॥ २६०० ॥
३ तथा स्तोक-जीर्ण-कुसितवस्त्रैरपि भण्यतेऽचेल इति । यथा त्वरस्व शालिक ! लघु ददस्व शाटिकां नग्निकाहमिति ॥ २६०१ ॥

एवं नैगमादिभिरुक्ते ऋजुसूत्र-शब्दावाहतुः—

जइ तेहिं विणा णत्थि त्ति संवरो तेण ताइं तस्सेव । जुत्तं कारणमिह न उ संवरसज्झस्स मोक्खस्स ॥२६२८॥

यदि 'ताभ्यां ज्ञान-दर्शनाभ्यां विना सर्वसंवररूपचारित्रलाभो नास्ति' इत्युच्यते भवता, 'तेण त्ति' तर्ह्येतावता हन्त ! 'ताइं ति' ते ज्ञान-दर्शने तस्यैव सर्वसंवरचारित्रस्य कारणमिह युक्तमभिधातुम्, न तु सर्वसंवररूपचारित्रसाध्यस्य मोक्षस्य, तदनन्तरमात्रभावित्वात्, ज्ञान-दर्शनद्वयानन्तरमभूतत्वाच्चेति ॥ २६२८ ॥

पुनरपि पराभिप्रायमाशङ्क्य परिहरन्नाह—

अह कारणोवगारि त्ति कारणं तेण कारणं सव्वं । भुवणं नाणाईणं जइणो नेयाइभावेणं ॥ २६२९ ॥

तह साहणभावेण वि देहाइ परंपराइबहुभेयं । निव्वाणकारणं ते नाणाइतियम्मि को नियमो ? ॥२६३०॥

अह पच्चासण्णतरं हेऊ नेयरमिहोवगारिं पि । तो सव्वसंवरमयं चारित्तं चेव मोक्खपहो ॥ २६३१ ॥

व्याख्या– अथ ब्रूषे– कारणस्य सर्वसंवरचारित्रस्योपकारिणी ज्ञान-दर्शने, इति ते तस्य कारणम्, 'तेण त्ति' तर्हि हन्त ! सर्वमपि भुवनं यतेर्ज्ञान-दर्शन-चारित्राणां कारणं प्राप्नोति, ज्ञेय-श्रद्धेयप्रवृत्ति-निवृत्तिभावेन सर्वस्यापि भुवनस्य तदुपकारित्वादिति । न केवलं ज्ञेयादिभावेनोपकारमात्रात् तथा, साधनभावेनापि साधकतमत्वेनापि देह-माता-पितृ-वस्त्र-पात्रा-ऽऽहार-भेषजादिकं परम्परया बहुभेदं बहुप्रकारं निर्वाणस्य मोक्षस्य कारणं विद्यते । ततस्ते तव ज्ञानादित्रिके को नियमः ?– 'ज्ञान-दर्शन-चारित्राणि मोक्षमार्गः' इत्येवंभूतः को निश्चयः ?, अन्यस्यापि परम्परया देहादेर्बहुप्रकारस्य तत्कारणस्य विद्यमानत्वादिति । अथ बहुप्रकारकारणसंभवेऽपि यदेव प्रत्यासन्नतरं कारणं तदेव मोक्षस्य हेतुरिष्यते, न पुनरितरद् देहादिकमपि परम्परयोपकारकमपि तद्धेतुतयाऽभिधीयते, ततो ज्ञानादित्रयमेव मोक्षहेतुरिति नियमः । अत्रोच्यते– यदि हन्त ! प्रत्यासन्नतया यदुपकुरुते तदेव मोक्षकारणम्, न व्यवहितम्,

१ यदि ताभ्यां विना नास्तीति संवरस्तेन ते तस्यैव । युक्तं कारणमिह न तु संवरसाध्यस्य मोक्षस्य ॥ २६२८ ॥
२ अथ कारणोपकारिणी इति कारणं तेन कारणं सर्वम् । भुवनं ज्ञानादीनां यतेर्ज्ञेयादिभावेन ॥ २६२९ ॥
तथा साधनभावेनापि देहादि परम्परादिबहुभेदम् । निर्वाणकारणं ते ज्ञानादित्रिके को नियमः ? ॥ २६३० ॥
अथ प्रत्यासन्नतरं हेतुर्नेतरदिहोपकार्यपि । ततः सर्वसंवरमयं चारित्रमेव मोक्षपथः ॥ २६३१ ॥

योषिति नाग्न्यवाचकशब्दप्रवृत्तेः "[1]जस्सट्ठा कीरइ नग्गभावो मुंडभावो अण्हायं, अदत्तवणयं" इत्याद्यपि न विरुध्यत इति ॥२६०१॥

अथ यदुक्तम्— [2]'जं च तीहिं ठाणेहिं वत्थं धरेज्ज' इत्यादि, तत्र प्रतिविधानमाह—

[3]विहियं सुए च्चिय जओ धरेज्ज तिहिं कारणेहिं वत्थं ति। तेणं चिय तदवस्सं निरतिसएणं धरेयव्वं॥२६०२॥

जिणकप्पाजोग्गाणं ह्री-कुच्छ-परीसहा जओऽवस्सं। ह्री लज्ज त्ति व सो संजमो तदत्थं विसेसेणं ॥२६०३॥

व्याख्या— ननु 'त्रिभिः कारणैर्वस्त्रं धरणीयम्' इत्यागमोक्तं दर्शयता भवताऽस्मत्पक्ष एव समर्थितो भवति, परं शून्यहृदयत्वाद् भवान् न लक्षयति; तथाहि— इदानीं वयमपि वक्तुं शक्नुमः—'त्रिभिः कारणैर्वस्त्रं धरेत्' इति सूत्रेऽपि विहितं प्रतिपादितं यतो यस्मात्, तेनैव प्रकारेण तद् वस्त्रं निरतिशयेन तथाविधधृतिसंहननादिरहितेन साधुनाऽवश्यं धरणीयमिति । कुतः ? इत्याह— यतो यस्माद् निरतिशयत्वेन जिनकल्पायोग्यानां साधूनां ह्री-कुत्सा-परीषहलक्षणं वस्त्रधरणकारणं पूर्वाभिहितस्वरूपमवश्यमेव संभवति । ततो धरणीयमेव वस्त्रम् । यदिवा, कुत्सा-परीषहार्थं तद् न ध्रियते तथापि ह्रीर्लज्जा, स च संयमस्तदर्थं तावद् विशेषेणैव वस्त्रं धरणीयम्, अन्यथाऽग्निज्वलनादिना बृहदसंयमापत्तेरिति ॥ २६०२ ॥ २६०३ ॥

अथोपसंहारपूर्वकं संक्षिप्योपदेशमाह—

[4]जइ जिणमयं पमाणं तुह तो मा मुयसु वत्थ-पत्ताइं। पुव्वुत्तदोसजालं लब्भिसि मा समिइघायं च॥२६०४॥

अणुवालेउमसत्तोऽपत्तो न समत्तमेसणासमिइं । वत्थरहिओ न समिओ निक्खेवादाणवोसग्गा ॥२६०५॥

यदि जिनमतं तव प्रमाणम्, ततो वस्त्र-पात्रादि मा मुञ्च मा त्याक्षीः। कुतः ? इत्याह— [5]'तणगहणानलसेवा-' इत्यादिना पूर्वमुक्तं दोषजालं मा लब्धाः । तथा, समितिघातं च तत्परित्यागे माऽऽप्नुहि त्वमिति । कस्याः पुनः समितेः पात्राद्यभावे विघातः ? इत्याह—

१ यस्यार्थं क्रियते नग्नभावो मुण्डभावोऽस्नाय, अदत्तवनकम् । २ गाथा २५५७ ।
३ विहितं श्रुत एव यतो धरेत् त्रिभि कारणैर्वस्त्रमिति । तेनैव तदवश्यं निरतिशयेन धर्तव्यम् ॥ २६०२ ॥ जिनकल्पायोग्यानां ह्री-कुत्सा-परीषहा यतोऽवश्यम् । ह्रीर्लज्जेति वा स संयमस्तदर्थं विशेषेण ॥ २६०३ ॥
४ यदि जिनमतं प्रमाणं तव ततो मा मुञ्च वस्त्र-पात्रादि । पूर्वोक्तदोषजालं लब्धा मा समितिघातं च ॥ २६०४ ॥ अनुपालयितुमशक्तोऽपात्रो न समस्तामेषणासमितिम् । वस्त्ररहितो न समितो निक्षेपादानव्युत्सर्गैः ॥ २६०५ ॥ ५ पृ० १०२९ ।

ततस्तर्हि सर्वसंवरात्मकं चारित्रमेव मोक्षमार्गो नान्यदिति प्रतिपद्यस्व, तस्यैवातिप्रत्यासन्नत्वादिति ॥२६२९॥२६३०॥२६३१॥

आह– ननु यद्येतदनन्तरोक्तं नैगमादिनयमतम्, तर्हि स्थितः पक्षः कः? इत्याह—

[1]इट्ठत्थसाहयाइं सद्दहणाइगुणओ समेयाइं । सम्मकिरियाउरस्य व इह पुण निव्वाणमिट्ठत्थो ॥२६३२॥

इह नैगमादय एकैकशो व्यस्तान्यपि त्रीणि सामायिकानि मोक्षकारणत्वेनेच्छन्ति, ऋजुसूत्रादयस्तु चारित्रमेवैकं तद्धेतुत्वेन प्रतिपद्यन्ते, इति तावद् नयमतं प्रतिपादितम्। स्थितपक्षे तु त्रीण्यपि ज्ञानादीनि सामायिकानि समुदितान्येवेष्टार्थसाधकानि, न त्वेकम्, व्यस्तानि वा; यथाऽऽतुरस्य वैद्य-भैषजा-ऽऽतुर-प्रतिचारकलक्षणसमुदितचतुरङ्गसम्यक्क्रिया । सम्यक्त्वेन हि सम्यक्त्वं श्रद्धत्ते, ज्ञानेन तु जानाति, चारित्रेण तु सर्वसावद्याद् विरमतीति । अतः 'सद्दहणाइगुणउ त्ति' श्रद्धानादिगुणयुक्तत्वात् समुदितेभ्य एव ज्ञानादिभ्य इष्टार्थसिद्धिर्नान्यथा । अत्र प्रयोगः– इहेष्टार्थस्य सामग्र्येव साधिका न त्वेकं किञ्चित्, तथैवोपलम्भात्, यथाऽऽतुरस्य चतुरङ्गसम्यक्क्रियासामग्री तदिष्टार्थस्य साधिका । स चेष्टार्थः पुनरिह प्रस्तुते निर्वाणं मोक्षो मन्तव्य इति ॥ तदेवमुक्तमनुमतद्वारम् ॥ तद्भणनेनैव समाप्ता 'उद्देसे निद्देसे य निग्गमे' इत्याद्युपोद्घातप्रथमद्वारगाथा ॥ २६३२ ॥

अथ '[3]किं कइविहं' इत्यादिद्वितीयद्वारगाथावयवभूतं प्रथमं 'किम्' इत्येतद् द्वारं व्याख्येयम् । अतस्तत्प्रतिपादकनिर्युक्तिगाथायाः प्रस्तावनां कुर्वन्नाह—

[4]किं सामइयं जीवो अजीवो दव्वमह गुणो होज्जा । किं जीवाजीवमयं होज्ज तदत्थंतरं व त्ति ? ॥२६३३॥

किं सामायिकं जीवः, उताजीवः ?, जीवाजीवत्वेऽपि किं द्रव्यं गुणो वा भवेत्, आहोस्विज्जीवाजीवमयमुभयम्, अथ जीवाऽजीवो-भयेभ्योऽर्थान्तरं खरविषाण-वन्ध्यापुत्रकल्पं किमपि तद् भवेत् ? ॥ इति द्वादशगाथार्थः ॥ २६३३ ॥

अनन्तरोक्ताशङ्कासंभवे सत्याह—

[5]आया खलु सामइयं पच्चक्खायं तओ हवइ आया । तं खलु पच्चक्खाणं आयाए सव्वदव्वाणं ॥२६३४॥

---

१ इष्टार्थसाधकानि श्रद्धानादिगुणत समेतानि । सम्यक्क्रियाऽऽतुरस्येवेह पुनर्निर्वाणमिष्टार्थः ॥ २६३२ ॥ २ गाथा १४८४ । ३ गाथा १४८५ ।
४ किं सामायिक जीवोऽजीवो द्रव्यमथ गुणो भवेत् । किं जीवाजीवमय भवेत् तदर्थान्तरं वेति ॥ २६३३ ॥
५ आत्मा खलु सामायिक प्रत्याचक्षाणस्ततो भवत्यात्मा । तत् खलु प्रत्याख्यानमापाते सर्वद्रव्याणाम् ॥ २६३४ ॥

कम्मस्स विं परिणामो सुहम्म! धम्मो स पोग्गलमयस्स। हेऊ चित्तो जगओ होइ सहावो त्ति को दोसो ?॥२१॥
अहवा सव्वं वत्थुं पइक्खणं चिय सुहम्म! धम्मेहिं। संभवइ वेइ केहिं वि केहि वि तदवत्थमच्चंतं ॥ २२ ॥
तं अप्पणो वि सरिसं न पुव्वधम्मेहिं पच्छिमिल्लाणं। सयलस्स तिहुअणस्स च सरिसं सामण्णधम्मेहिं ॥ २३ ॥
को सव्वहेव सरिसो असरिसो वा इहभवे परभवे वा ?। सरिसासरिसं सव्वं निच्चानिच्चाइरूवं च ॥ २४ ॥
जह नियएहिं वि सरिसो न जुवा भुवि बाल-वुड्ढधम्मेहिं। जगओ वि समो सत्ताइएहिं तह परभवे जीवो ॥२५॥
मणुओ देवीभूओ सरिसो सत्ताइएहिं जगओ वि। देवाईहिं विसरिसो निच्चानिच्चो वि एमेव ॥ २६ ॥
उक्करिसा-ऽवक्करिसा न समाणाए वि जेण जाईए। सरिसग्गाहे जम्हा दाणाइफलं विहा तम्हा ॥ २७ ॥
जं च सिगालो वइ एस जायए वेयविहियमिच्चाइं। सग्गीयं जं च फलं तमसंबद्धं सरिसयाए ॥ २८ ॥

छिन्नम्मि संसयम्मी जिणेण जरा-मरणविप्पमुक्केणं।
सो समणो पव्वइओ पंचहिं सह खंडियसएहिं ॥ १६० ॥
ते पव्वइए सोउं मंडिओ आगच्छइ जिणसगासं।
वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ १६१ ॥
आभट्ठो य जिणेणं जाइ-जरा-मरणविप्पमुक्केणं।
नामेण य गोत्तेण य सव्वण्णू सव्वदरिसी णं ॥ १६२ ॥
किं मन्ने बंध-मोक्खा संति न संति त्ति संसओ तुज्झं।

१ 'यम्मि अ जि'।

## वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥ १६३ ॥

तं मन्नसि जइ बंधो जोगो जीवस्स कम्मुणा समयं । पुव्वं पच्छा जीवो कम्मं व समं व ते होज्जा ? ॥ १ ॥
न हि पुव्वमहेऊओ खरसिंगं वायसंभवो जुत्तो । निक्कारणजायस्स य निक्कारणउ च्चिय विणासो ॥ २ ॥
अहवाऽणाइ च्चिय सो निक्कारणओ न कम्मजोगो से । अह निक्कारणओ सो, मुक्कस्स वि होहिइ स भुज्जो ॥३॥
होज्ज स निच्चमुक्को बंधाभावम्मि को व से मोक्खो ? । न हि मुक्कव्ववएसो बंधाभावे मओ नभसो ॥ ४ ॥
न य कम्मस्स वि पुव्वं कत्तुरभावे समुब्भवो जुत्तो । निक्कारणओ सो वि य तह जुगवुप्पत्तिभावे य ॥५॥
न हि कत्ता कज्जं ति य जुगवुप्पत्तीए जीव-कम्माणं । जुत्तो ववएसोऽयं जह लोए गोविसाणाणं ॥ ६ ॥
होज्जाणाईओ वा संबंधो तह वि न घडए मोक्खो । जेऽणाई सोऽणंतो जीव-नहाणं व संबंधो ॥ ७ ॥
इय जुत्तीए न घडइ सुव्वइ य सुईसु बंध-मोक्खा त्ति । तेण तुह संसओऽयं न य कज्जोऽयं जहा सुणसु ॥८॥
संताणोऽणाईओ परोप्परं हेउ-हेउभावाओ । देहस्स य कम्मस्स य मंडिय ! बीयं-कुराणं व ॥ ९ ॥
अत्थि स देहो जो कम्मकारणं जो य कज्जमण्णस्स । कम्मं च देहकारणमत्थि य जं कज्जमण्णस्स ॥ १० ॥
कत्ता जीवो कम्मस्स करणओ जह घडस्स घडकारो । एवं चिय देहस्स वि कम्मकरणसंभवाउ त्ति ॥ ११ ॥
कम्मं करणमसिद्धं व ते मई कज्जओ तयं सिद्धं । किरियाफलओ य पुणो पडिवज्ज तमग्गिभूइ व्व ॥ १२ ॥
जं संताणोऽणाई तेणाणंतोऽवि णायमेगंतो । दीसइ संतो वि जओ कत्थइ बीयं-कुराईणं ॥ १३ ॥
अण्णयरमणिव्वत्तियकज्जं बीयं-कुराण जं [2]विहयं । तत्थ हओ संताणो कुक्कुडि-अंडाइयाणं व ॥ १४ ॥
जह वेह कंचणो-वलसंजोगोऽणाइसंतइगओ वि । वोच्छिज्जइ सोवायं तह जोगो जीव-कम्माणं ॥ १५ ॥

१ 'भावा स'-। २ 'विहिय'।

इह सामायिकं कः ? इत्याह– 'आया खलु त्ति' आत्मैव जीव एव सामायिकम्, न त्वजीवादिरिति भावः 'पच्चक्खायं तओ हवइ आय त्ति' स चात्मा सावद्ययोगं प्रत्याचक्षाणस्तत्प्रत्याख्यानं कुर्वन् प्रत्याख्यानक्रियाकाले सामायिकं भवति, निश्चयनयमतेन 'क्रियमाणं कृतम्' इति क्रियाकाल-निष्ठाकालयोरभेदात् । न केवलं प्रत्याचक्षाणोऽसौ वर्तमानकाले सामायिकं भवति, किन्तूपलक्षणत्वात् कृतप्रत्याख्यानोऽपि सामायिकं भवतीति द्रष्टव्यम् । द्वितीयमात्मग्रहणं किमर्थम् ? इति चेत् । उच्यते– स एव सावद्ययोगप्रत्याख्यानयुक्तः परमार्थत आत्मा, श्रद्धान-ज्ञान-सावद्यनिवृत्तिलक्षणस्वस्वभावावस्थितत्वात्; शेषसंसारो पुनरात्मैव न भवति, प्रचुरघातिकर्मभिस्तस्य स्वाभाविकगुणतिरस्करणादिति ज्ञापनार्थं पुनरात्मग्रहणमिति । 'तं खलु पच्चक्खाणं ति' खलुशब्दः सामायिकस्य जीवपरिणतित्वज्ञापनार्थः । ततोऽयमर्थः– तच्च प्रत्याख्यानं जीवपरिणतिरूपत्वाद् विषयमाश्रित्य 'आवाए सव्वदव्वाणं ति' सर्वेषामपि जीवादिद्रव्याणामापाते आभिमुख्येन समवाये 'निष्पद्यते' इति शेषः । सर्वाणि जीवादिद्रव्याणि सामायिकप्रत्याख्यानस्य श्रद्धेय-ज्ञेय-प्रवृत्ति-निवृत्तिभावेनोपयुज्यन्ते, अतस्तत्समवाये तद् निष्पद्यत इत्यभिधीयते । न च सामायिकप्ररूपणे प्रस्तुते तद्विषयनिरूपणमसंबद्धमिति वक्तव्यम्, तदङ्गत्वात्, तत्स्वरूपवत् ॥ इति निर्युक्तिगाथार्थः ॥ २६३४ ॥

ननु कस्माज्जीव एव सामायिकं नाजीवादिः ? इत्याशङ्कायां भाष्यकारः प्राह—

[1]सद्दहइ जाणइ जओ पच्चक्खायं तओ जओ जीवो। नाजीवो नाभावो सो च्चिय सामाइयं तेण ॥२६३५॥

यतो यस्मात् सम्यक्त्व-श्रुतसामायिकाभ्यां श्रद्धत्ते जानाति च जीव एव, नाजीवादिः, प्रत्याचक्षाणश्च चारित्री यतो जीव एव भवति, नाजीवो नाप्यभावः, श्रद्धान-ज्ञान-प्रत्याख्यानानां प्रेक्षावत्येव संभवात्, अजीवा-ऽभावयोश्च प्रेक्षाऽभावात्, तेन तस्मात् स एव जीवः सामायिकं नाजीवादिरिति ॥ २६३५ ॥

'[2]तं खलु पच्चक्खाणं' इत्यादेर्व्याख्यानमाह—

[3]सामाइयभावपरिणइभावाओ जीव एव सामइयं।सद्धेय-नेय-किरिओवओगओ सव्वदव्वाइं ॥ २६३६ ॥

'खलुशब्दः सामायिकस्य जीवपरिणतित्वज्ञापनार्थः' इत्युक्तमेव । ततश्च सामायिकभावपरिणतिभावात् सामायिकपरिणामान- ॥१०४९॥

१ श्रद्धत्ते जानाति यतः प्रत्याचक्षाणः सको यतो जीवः । नाजीवो नाभावः स एव सामायिकं तेन ॥ २६३५ ॥ २ गाथा २६३४ ।
३ सामायिकभावपरिणतिभावाज्जीव एव सामायिकम् । श्रद्धेय-ज्ञेय-क्रियोपयोगतः सर्वद्रव्याणि ॥ २६३६ ॥

उप्पाय-भंगुरा जं गुणा य न य सो त्ति ते य तप्पभवा। न य सो तप्पभवो त्ति य जुज्जइ तं तदुवयाराओ॥

यद् यस्मादुत्पादभङ्गुरा गुणा उत्पद्यन्ते व्ययन्ते चेत्यर्थः। 'न य सो त्ति' न पुनरसौ संतान उत्पादभङ्गुरः, तस्य प्रवाहनित्यतया स्थितत्वात्, इत्येको गुण-संतानयोर्धर्मभेदः। तथा, 'ते य तप्पभवेत्यादि' ते सामायिकादयो नीलतादयो वा गुणास्तत्रैव संताने समुत्पन्नत्वात् तत्प्रभवास्तस्मात् संतानाल्लब्धात्मजन्मानः, न पुनरसौ संतानस्तत्प्रभवो गुणेभ्यो लब्धात्मलाभः, तस्य गुणसादृश्यनिबन्धनत्वात्। तदेवं कारणमेव संतानो न कार्यम्, कार्यमेव च गुणा न कारणम्, इत्येवमपि गुण-संतानयोर्धर्मभेदे युज्यते घटते तत्– जीवादिद्रव्यम्। कुतः?। तत्र गुणसंताने समानबुद्ध्यभिधाननिबन्धनत्वेनोपचारः कल्पना तदुपचारस्तस्मादिति। तदेवं पर्यायार्थिकनयमतं समर्थ्य पूर्वं 'तम्हा किं सामइयं हवेज्ज' इत्यादिनोपसंहारः कृतः॥ २६६३॥

अथ प्रकारान्तरेण तं कुर्वन्नाह—

[3]अहवोदासीणमयं दव्वनयं पइ न जीवओ भिन्नं। भिन्नमियरं पइ जओ नत्थि तदत्थंतरं जीवो॥२६६४॥

इदमत्र हृदयम्– तस्मात् 'किं सामायिकं द्रव्यं गुणो वा भवेत्?' इत्यस्यां चिन्तायामुक्तम्– '[4]दव्वट्ठियस्स दव्वं गुणो य तं पज्जवनयस्स' इति। अथवा, नास्यां द्रव्य-गुणचिन्तायामिदमुक्तम्, किन्तु 'किं सामायिकम्?' इति द्वारे प्रस्तुते उदासीनमतमिदम्– द्रव्य-पर्यायास्तिकयोरेकतरमतेऽभिनिविष्टवत उदासीनवृत्तिनाऽऽचार्येण शिष्यान् प्रत्यभिहितं युक्तिभिश्च समर्थितमिदमित्यर्थः। किम्? इत्याह– 'दव्वनयमित्यादि' द्रव्यनयं प्रति द्रव्यनयाभिप्रायेणेत्यर्थः, जीवात् सामायिकं न भिन्नम्, किन्तु जीव एव सामायिकम्, तदभिप्रायेण वक्ष्यमाणयुक्त्या जीवादेर्द्रव्यस्यैव सत्त्वात्, गुणानां तु तद्व्यतिरेकिणां परमार्थतोऽसत्त्वादिति। इतरं तु पर्यायार्थिकनयं प्रति पर्यायार्थिकनयाभिप्रायेण भिन्नं जीवद्रव्यात् सामायिकम्, यत्तो यस्मात् पूर्वोक्तयुक्तिभिर्नास्ति तेभ्यः सामायिकादिगुणेभ्योऽर्थान्तरं भिन्नो जीवः, तन्मतेन जीवादेर्द्रव्यस्य कल्पनामात्रेणैव सत्त्वादिति। तत्र 'पज्जायनमयमिणं' इत्यादिना ग्रन्थेन विस्तरतः पर्यायार्थिकनयमतमुपदर्शितम्॥ २६६४॥

---

१ उत्पाद-भङ्गुरा यद् गुणाश्च न च स इति ते च तत्प्रभवाः। न च स तत्प्रभव इति च युज्यते तत् तदुपचारात्॥ २६६३॥ २ गाथा २६५८। ३ अथवोदासीनमतं द्रव्यनय प्रति न जीवतो भिन्नम्। भिन्नमितरं प्रति यतो नास्ति तदर्थान्तरं जीव.॥ २६६४॥ ४ गाथा २६४६।

न्यत्वाज्जीव एव सामायिकम् । तस्य च जीवपरिणतिरूपस्य सामायिकस्य को विषयः ? इत्याह– सर्वद्रव्याणि । कुतः ? । 'सद्धेय-नेय-किरिओवओगउ त्ति' यथासंख्यं सम्यक्त्व-श्रुत-चारित्रसामायिकानां श्रद्धेयत्वेन, ज्ञेयत्वेन, प्रवृत्तिनिवृत्तिक्रियया च सर्वद्रव्याणामुपयोगात् ॥ इति गाथाद्वयार्थः ॥ २६३६ ॥

तत्रैकस्मिन्नपि तावद् महाव्रतात्मके चारित्रसामायिके निर्युक्तिकृदेव साक्षात् सर्वद्रव्योपयोगं दर्शयति—

पढमम्मि सव्वजीवा बीए चरिमे य सव्वदव्वाइं । सेसा महव्वया खलु तदेगदेसेण दव्वाणं ॥ २६३७ ॥

प्रथमे प्राणातिपातनिवृत्तिरूपे व्रते विषयद्वारेण चिन्त्यमाने सर्वजीवास्त्रस-स्थावर-सूक्ष्मे-तरभेदा विषयत्वेन द्रष्टव्याः, तदनुपालनरूपत्वात् तस्येति । तथा, द्वितीये मृषावादनिवृत्तिरूपे, चरमे च परिग्रहनिवृत्तिरूपे महाव्रते सर्वद्रव्याणि विषयत्वेन द्रष्टव्यानि । कथम् ? । 'नास्ति पञ्चास्तिकायात्मको लोकः' इति मृषावादस्य सर्वद्रव्यविषयत्वात्, तन्निवृत्तिरूपत्वाच्च द्वितीयव्रतस्य । तथा, मूर्च्छाद्वारेण परिग्रहस्यापि सर्वद्रव्यविषयत्वात्, चरमव्रतस्य च तन्निवृत्तिरूपत्वादशेषद्रव्यविषयतेति । 'सेसा इत्यादि' खलुशब्दोऽवधारणे, तस्य च व्यवहितसंबन्धः । ततश्च शेषाणि महाव्रतानि द्रव्याणां तदेकदेशेनैव 'भवन्ति' इति क्रियाध्याहारः । तेषां द्रव्याणामेकदेशस्तदेकदेशस्तेनैव हेतुभूतेन विषयत्वेन भवन्ति, न तु सर्वद्रव्यैरिति भावः । कथम् ? इति चेत् । उच्यते– तृतीयस्य ग्रहणीय-धारणीयद्रव्यादत्तादानविरतिरूपत्वात्, चतुर्थस्य तु "[२]रूवेसु वा रूवसहगेसु वा दव्वेसु" इत्यादिवचनाद् रूप-रूपसहगतद्रव्यसंबन्धब्रह्मविरतिरूपत्वात्, षष्ठस्य च रात्रिभोजनविरमणस्वरूपत्वादिति । एवममीषां सर्वद्रव्यैकदेशविषयता ॥ इति निर्युक्तिगाथार्थः ॥२६३७॥

कुतः पुनरेवम् ? इत्याशङ्क्य भाष्यकारोऽप्याह—

[३]जं सव्वजीवपालणविसयं पाणाइवायवेरमणं । मिच्छा-मुच्छोवरमा सव्वदव्वेसु विणिउत्ता ॥ २६३८ ॥
रूवेसु सहगएसु बंभवयं गहण-धारणिज्जेसु । तइयं, छट्ठवयं पुण भोयणविणिवित्तिवावारं ॥ २६३९ ॥

---

१ प्रथमे सर्वजीवा द्वितीये चरमे च सर्वद्रव्याणि । शेषाणि महाव्रतानि खलु तदेकदेशेन द्रव्याणाम् ॥ २६३७ ॥ २ रूपेषु वा रूपसहगेषु वा द्रव्येषु ।

३ यत् सर्वजीवपालनविषयं प्राणातिपातविरमणम् । मिथ्या-मूर्च्छोपरमौ सर्वद्रव्येषु विनियुक्तौ ॥ २६३८ ॥ रूपेषु सहगतेषु ब्रह्मव्रतं ग्रहणीय-धारणीयेषु । तृतीयं, षष्ठव्रतं पुनर्भोजनविनिवृत्तिव्यापारम् ॥ २६३९ ॥

अथ द्वितीयस्य द्रव्यार्थिकनयस्याभिप्रायं सविस्तरं दिदर्शयिषुराह—

बीयस्स दव्वमेत्तं नत्थि तदत्थंतरं गुणो नाम । सामन्नावत्थाणाभावाओ खरविसाणं व ॥ २६६५ ॥

आविब्भाव-तिरोभावमेत्तपरिणामि दव्वमेवेयं । निच्चं बहुरूवं पि य नडो व्व वेसंतरावन्नो ॥ २६६६॥

व्याख्या– प्रथमनिर्दिष्टपर्यायार्थिकनयापेक्षया द्वितीयस्य द्रव्यार्थिकनयस्य सर्वं सुवर्ण-रजतादिकं द्रव्यमात्रमेवास्ति, गुणस्तु रक्तत्व-श्वेतत्वादिकस्तदर्थान्तरभूतो नास्ति, तस्य सामान्यरूपतयाऽवस्थानाभावात्, खरविषाणवदिति । एतदेवाह– आविर्भावश्च कुण्डलादिरूपेण, तिरोभावश्च मुद्रिकादिभावेन, आविर्भाव-तिरोभावौ, तावेव तन्मात्रम्, तेन परिणन्तुं परिवर्तितुं शीलं यस्य तदाविर्भाव-तिरोभावमात्रपरिणामि सुवर्णादिकं द्रव्यमेवेदमस्ति, न तु तदतिरिक्ता गुणाः । कथंभूतं द्रव्यम् ? । नित्यमविचलितस्वभावम्, बहुरूपं च कङ्कणा-ऽङ्गद-कुण्डल-मुद्रिकादिबहुपरिणामम्, राम-रावण-भीमा-ऽर्जुनादिसंबन्धीनि वेषान्तराण्यापन्नः प्राप्तो नट इवेति । यथा हि बहून् वेषान् कुर्वन्नपि नटो निजं देवदत्तादिस्वभावं न जहाति, सर्वावस्थास्वपि तस्यैकस्वरूपत्वात्; एवं सुवर्णादिकं द्रव्यमपि कङ्कणादिबहुरूपाण्यापन्नमपि सुवर्णादिरूपतां न परित्यजतीति न तद्व्यतिरेकिणः केचनापि गुणाः ॥ इत्यष्टादशगाथार्थः ॥ २६६५ ॥ २६६६ ॥

अस्यैव द्रव्यार्थिकनयमतस्य समर्थनार्थं निर्युक्तिकारोऽप्याह—

जं[2] जं जे जे भावे परिणमइ पओग-वीससादव्वं । तं तह जाणाइ जिणो अपज्जवे जाणणा नत्थि ॥२६६७॥

प्रयोगश्चेतनावतो व्यापारः, विस्रसा स्वभावस्ताभ्यां निष्पन्नं द्रव्यं प्रयोग-विस्रसाद्रव्यमुच्यते । तत्र प्रयोगनिष्पन्नं घट-पटादि, विस्रसानिष्पन्नं त्वभ्रे-न्द्रधनुरादि । तत्र प्रयोग-विस्रसाद्रव्यं कर्तृ यान् यान् कृष्ण-रक्त-पीत-शुक्लत्वादीन् भावान् पर्यायान् परिणमति प्रतिपद्यते, 'तं तह त्ति' वीप्साप्रधानत्वाद् निर्देशस्य तत् तत् तथा तेन तेन रूपेण परिणमद् द्रव्यमेव जानाति, जिनः केवली, न पुनस्तदतिरिक्तान् पर्यायानिति भावः, तेषामुत्प्रेक्षामात्रेणैव सत्त्वात् । न हुत्फण विफण-कुण्डलिताद्यवस्थायामपि सर्पादिद्रव्यस्य

१ द्वितीयस्य द्रव्यमात्रं नास्ति तदर्थान्तरं गुणो नाम । सामान्यावस्थानाभावात् खरविषाणमिव ॥ २६६५ ॥
आविर्भाव-तिरोभावमात्रपरिणामि द्रव्यमेवेदम् । नित्यं बहुरूपमपि च नट इव वेषान्तरापन्नः ॥ २६६६ ॥

२ यद् यद् यान् यान् भावान् परिणमते प्रयोग-विस्रसाद्रव्यम् । तत् तथा जानाति जिनोऽपर्यवे ज्ञाना नास्ति ॥ २६६७ ॥

एवं चारित्तमयं सव्वदव्वविसयं तह सुयं पि । देसे देसोवरई सम्मत्तं सव्वभावेसु ॥ २६४० ॥

व्याख्या– यद् यस्मात् त्रस-स्थावर-सूक्ष्म-स्थूलसर्वजीवपालनविषयं प्राणातिपातविरतिव्रतम्, तस्मात् प्रथमे व्रते सर्वजीवा विषयत्वेन संगृहीताः । मिथ्या, अनृतम्, मृषेति पर्यायाः। मूर्च्छा, गृद्धिः, परिग्रह इत्येकार्थाः । उपरमणमुपरमो नियमः । अयं चोपरमशब्दः प्रत्येकमभिसंबध्यते । ततश्च मिथ्योपरमो मृषावादनियमो द्वितीयव्रतमित्यर्थः। मूर्च्छोपरमः परिग्रहनियमश्चरमव्रतमित्यर्थः । एतौ मिथ्योपरम-मूर्च्छोपरमौ द्वितीय-चरमव्रतविशेषौ सर्वद्रव्येषु विनियुक्तौ सर्वद्रव्याणि प्रत्येकं तयोर्विषय इत्यर्थः । कथम् ? इति चेत् । उच्यते– शून्यवादे सर्वद्रव्यापलापेन, अन्यथा प्ररूपणेन वा मृषावादस्य सर्वद्रव्यविषयत्वात्, द्वितीयव्रतस्य च तन्निवृत्तिरूपत्वात् सर्वद्रव्यविषयता । पञ्चमव्रतस्यापि 'त्रिभुवनाधिपतिरहम्' 'सर्वमपि मदीयम्' इत्येवंभूतमूर्च्छानिवृत्तिरूपत्वात् सर्वद्रव्यविषयतेति। रूपेषु तिर्यग्मनुष्य-देवस्त्री-पण्डकादिलक्षणेषु मूर्तवस्तुषु, रूपसहगतेषु च स्तन-नयन-जघनादिषु विषये तत्सेवानिवृत्तिरूपत्वेन ब्रह्मव्रतं चतुर्थव्रतं प्रवर्तते, न पुनः सर्वद्रव्येषु। तृतीयं त्वदत्तादानव्रतं ग्रहणीय-धारणीयेषु मूर्तेषु ग्रहण-धारणयोग्येषु हिरण्यद्रविणादिषु विषये तदपहारनिवृत्तिद्वारेण प्रवर्तते, न सर्वत्र । षष्ठमपि रात्रिभोजनविरमणव्रतं रात्रिभोजनविनिवृत्तिमात्रव्यापारपरतया न सर्वविषयम् । अतस्त्रयाणामप्येतेषां सर्वद्रव्यैकदेशविषयतेति । एवमुक्तप्रकारेणेदं चारित्रसामायिकं सामान्येन सर्वद्रव्यविषयं व्रतविभागविशेषविषयमवगन्तव्यम् । तथा, श्रुतसामायिकमपि "सर्वद्रव्येष्वसर्वपर्यायेषु श्रुतम्" इतिवचनात् सर्वद्रव्यविषयमवसेयम् । देशोपरतिर्देशविरतिसामायिकं तु तद्रूपत्वादेव देशे सर्वद्रव्यैकदेशविषयमेव मन्तव्यम् । सम्यक्त्वसामायिकं तु यथावस्थितसमस्तवस्तुस्तोमश्रद्धानरूपत्वात् सर्वद्रव्यविषयमेव बोद्धव्यम् । अतस्त्रीण्यपि सामायिकानि प्रत्येकं समुदितानि च सर्वद्रव्यविषयाणीति सिद्धम् । तत्सिद्धौ च सिद्धमिदम्– 'तं[2] खलु पच्चक्खाणं आवाए सव्वदव्वाणं' इति ॥ २६३८ ॥ २६३९ ॥ २६४० ॥

अथ परमतमाशङ्क्य परिहरन्नाह—

[3]किं तं ति पत्थुए किं थ विसयचिंताए, भण्णइ तओ वि । सामाइयंगभावं जाइ जओ तेण तग्गहणं ॥२६४१॥

'किं तत् सामायिकम् ?' इति ज्ञेयत्वेन प्रस्तुते किमत्र विषयचिन्तया ? इति प्रेर्ये भण्यते प्रतिविधीयते—तकोऽपि विषयः

१ एवं चारित्रमयं सर्वद्रव्यविषय तथा श्रुतमपि । देशे देशोपरति सम्यक्त्वं सर्वभावेषु ॥ २६४० ॥ २ गाथा २६३४ ।
३ किं तदिति प्रस्तुते किमत्र विषयचिन्तया, भण्यते सकोऽपि । सामायिकाङ्गभाव याति यतस्तेन तद्ग्रहणम् ॥ २६४१ ॥

स्वस्वरूपव्यतिरिक्तः कोऽपि पर्यायः संलक्ष्यते, सर्वावस्थास्वविचलितस्वरूपस्य सर्पादिद्रव्यस्यैव संलक्षणादिति । यदि पर्याया न विद्यन्ते, तर्हि कथमुच्यते 'जे जे भावे परिमणइ'? इत्याशङ्क्याह– 'अपज्जवे जाणणा नत्थि त्ति' अपर्याये पर्यायरहिते वस्तुनि केवलयादीनां परिज्ञा नास्तीति मन्यामहे, केवलमुत्प्रेक्षामात्रेणैव ते पर्यायाः, न पुनर्द्रव्यव्यतिरेकिणः केचनापि वास्तवास्ते विद्यन्ते । अतो द्रव्यमेव परमार्थसत् ॥ इति निर्युक्तिगाथार्थः ॥ २६६७ ॥

अथ भाष्येणैतां व्याचष्टे—

[1]जं जाहे जं भावं परिमणइ तयं तया तओऽणन्नं । परिणइमेत्तविसिट्ठं दव्वं चिय जाणइ जिणिंदो ॥२६६८॥

इह यद् घटे-न्द्रधनुरादि द्रव्यं यदा यस्मिन् काले यं रक्त-श्वेतादिभावं पर्यायं परिणमति प्राप्नोति तत् तदा ततः पर्यायादनन्यदभिन्नं सद् द्रव्यमेव, परिणतिमात्रविशिष्टमविचलितस्वरूपं जानाति जिनेन्द्रः केवलीति ॥ २६६८ ॥

ननु यदि पर्याया वस्तुसन्तो न भवन्ति, तर्हि कथमविशिष्टेऽपि सुवर्णादिद्रव्ये कुण्डला-ऽङ्गुलीयक-नूपुरादयो व्यपदेशाः प्रवर्तन्ते? । न चैते निर्निबन्धना एव, अतिप्रसङ्गादित्याशङ्क्याह—

[2]न सुवण्णादन्नं कुंडलाइ तं चेय तं तमागारं । पत्तं तव्ववएसं लभइ सरूवादभिन्नं ति ॥ २६६९ ॥

न सुवर्णादन्यो व्यतिरिक्तः कुण्डलादिरर्थोऽस्ति, येन सुवर्णादिद्रव्यव्यतिरेकिणः कुण्डलादिपर्याया भवेयुः; किन्तु तदेव सुवर्णादि द्रव्यं तं तं कुण्डल-कङ्कणाद्याकारं प्राप्तं सत् तस्य तस्य कुण्डलाद्याकारस्य व्यपदेशं लभते । कथंभूतम्? । पूर्वावस्थास्वरूपादुत्तरावस्थायामभिन्नमप्यविचलितस्वभावमपीति । ततश्च नैते सुवर्णादिद्रव्ये कुण्डल-कङ्कणादयो व्यपदेशा निर्निबन्धनाः, तत्तद्विशिष्टाकारनिबन्धनत्वात् । न च तदाकारस्य द्रव्याद् भिन्नत्वम्, द्रव्यस्य निराकारत्वप्रसङ्गात् । तस्मादनन्यत्वं गुणानामिति ॥ २६६९ ॥

अथान्यत्वमिष्यते, तत्राह—

[3]जइ वा दव्वादन्ने गुणादओ नूण सप्पएसत्तं । होज्ज व रूवाईणं विभिन्नदेसोवलंभो वि ॥ २६७० ॥

---

१ यद् यदा यं भावः परिणमते सत् तदा ततोऽनन्यत् । परिणतिमात्रविशिष्टं द्रव्यमेव जानाति जिनेन्द्रः ॥ २६६८ ॥

२ न सुवर्णादन्यत् कुण्डलादि तदेव सं तमाकारम् । प्राप्तं तद्व्यपदेश लभते स्वरूपादभिन्नमिति ॥ २६६९ ॥

३ यदि वा द्रव्यादन्ये गुणादयो नूनं सप्रदेशत्वम् । भवेद् वा रूपादीनां विभिन्नदेशोपलम्भोऽपि ॥ २६७० ॥

सामायिकस्याङ्गभावं हेतुभावं याति यस्मात्, तेन तस्य विषयस्य ग्रहणमिह प्ररूपणं कृतमिति न तस्याप्रस्तुतत्वमिति ॥ २६४१ ॥

अथ वक्ष्यमाणनिर्युक्तिगाथायाः प्रस्तावनामाह—

[1]दव्वं गुणो त्ति भइयं सामइयं सव्वनयमयाधारं। तं दव्व-पज्जवट्ठियनयमयमंगीकरेऊणं ॥२६४२ ॥

इह सामायिकं सर्वनयमताधारं सर्वनयविचारविषय इत्यर्थः, ततस्तन्मतेन भाज्यं भजनीयं द्रव्यं गुणो वा भवति। ततस्तद्द्रव्यार्थिक-पर्यायास्तिकनयद्वयमतमङ्गीकृत्य विचार्यते ॥ इति गाथापञ्चकार्थः ॥ २६४२ ॥

कथं विचार्यते? इत्याह—

[2]जीवो गुणपडिवन्नो नयस्स दव्वट्ठियस्स सामइयं। सो चेव पज्जवट्ठियनयस्स जीवस्स एस गुणो ॥२६४३॥

जीव आत्मा गुणैः प्रतिपन्न आश्रितः, द्रव्यमेवार्थो यस्य न तु पर्यायाः स द्रव्यार्थिकस्तस्य द्रव्यार्थिकस्य नयस्य मतेन सामायिकम्। इदमुक्तं भवति- गुणाः खल्वौपचारिकत्वादसन्त एव, द्रव्यव्यतिरेकेण तेषामनुपलम्भात्। ततश्च न्यग्भूतगुणग्रामो जीव एव मुख्यवृत्त्या सामायिकं न तु पर्याया इति द्रव्यार्थिकनयो मन्यते। आह— ननु रूपादयो गुणा यदि न सन्ति, तर्हि कथं लोकस्य द्रव्ये तत्प्रतिपत्तिः?। उच्यते- भ्रान्तैवेयम्, चित्रे निम्नोन्नतप्रतिपत्तिवत्। इत्यस्य नयस्याभिप्रायः। स एव सामायिकादिर्गुणः पर्यायार्थिकनयस्य परमार्थतोऽस्ति, न तु जीवद्रव्यम्, यस्माज्जीवस्यैष गुणः, जीव इति तत्पुरुषोऽयम्, स चोत्तरपदप्रधानः, यथा तैलस्य धारा तैलधारेति; न चात्र धारातिरिक्तं किमपि तैलमस्ति। एवं ज्ञानादिगुणातिरिक्तं जीवद्रव्यमपि नास्तीति पर्यायार्थिकनयाभिप्रायः॥ इति निर्युक्तिगाथार्थः ॥ २६४३ ॥

अत्र भाष्यम्—

[3]इच्छइ जं दव्वनओ दव्वं तच्चमुवयारओ य गुणे। सामइयगुणविसिट्ठो तो जीवो तस्स सामइयं॥२६४४॥

---

१ द्रव्य गुण इति भाज्य सामायिक सर्वनयमताधारम्। तद् द्रव्य-पर्यवास्तिकनयमतमङ्गीकृत्य ॥ २६४२ ॥

२ जीवो गुणप्रतिपन्नो नयस्य द्रव्यास्तिकस्य सामायिकम्। स एव पर्यवास्तिकनयस्य जीवस्यैष गुण ॥ २६४३ ॥

३ इच्छति यद् द्रव्यनयो द्रव्य तथ्यमुपचारतश्च गुणान्। सामायिकगुणविशिष्टस्ततो जीवस्तस्य सामायिकम् ॥ २६४४ ॥

यदि पुनर्द्रव्याद् रूपादयो गुणाः, आदिशब्दाद् नव-पुराणादयः पर्याया अन्ये व्यतिरेकिण इष्यन्ते, तदा नूनं निश्चितं गुणादीनां सप्रदेशत्वमेष्टव्यं भवता। इदमुक्तं भवति– द्रव्यप्रदेशा गुणादय इति रूढम्, यदा च ते द्रव्याद् भिन्ना इष्यन्ते, तदाऽनन्यशरणाः सन्तः स्वस्यात्मन एव प्रदेशा अवयवा भवेयुः। न चैतद् दृष्टम्, इष्टं वा, गुणादीनां सदैव पारतन्त्र्येण परप्रदेशत्वस्यैव रूढत्वात्। न हि वस्तु स्वात्मन एव स्वयमवयवो भवतीति क्वापि दृश्यते, युज्यते वेति। किञ्च, गुणादीनां द्रव्याद् भिन्नत्व इष्यमाणे रूप-रस-गन्धादीनां घटादिद्रव्याद् भिन्नेऽपि देश उपलब्धिः स्यात्; तथाहि– यद् यतो भिन्नं तत् ततो भिन्नदेश उपलभ्यते, यथा घटात् पटः, न चैवं रूपादयः, तस्मात् ते घटादिद्रव्यादभिन्ना एवेति द्रव्यमेवास्ति न पर्याय इति ॥ २६७० ॥

अथोपचारतस्तेऽपीष्यन्ते, तर्हि सिद्धसाध्यतेति दर्शयन्नाह—

जइ पज्जवोवयारो लय-प्पयासपरिणाममेत्तस्स। कीरइ तन्नाम न सो दव्वादत्थंतरब्भूओ ॥ २६७१ ॥[1]

लयः, लीनता, तिरोभाव इत्यनर्थान्तरम्। प्रकाशः, प्रकटत्वम्, आविर्भाव इत्यप्यभिन्नार्थम्। लयश्च प्रकाशश्च लय-प्रकाशौ पर्यायाणामाविर्भाव-तिरोभावौ लय-प्रकाशाभ्यां लय-प्रकाशरूपतया परिणमनं परिणामो लय-प्रकाशपरिणामः स एव तन्मात्रं तस्य यदि तत्तद्विशेषबुद्ध्यभिधाननिबन्धनत्वेन पर्यायोपचारः क्रियते, तदा तन्नामेति नामशब्दोऽभ्युपगमे, मन्यामेह तदित्यर्थः, केवलं नासौ पर्यायो वास्तवः कोऽपि द्रव्यादर्थान्तरभूतो विद्यत इत्येतदेव भुजमुत्क्षिप्य ब्रूम इति ॥ २६७१ ॥

यदि न वास्तवः पर्यायः किन्तु कल्पितः, तर्हि खरविषाणस्याप्यसौ कथं न भवति, कल्पनामात्रस्य तत्रापि सुकरत्वात्? इत्याह—

दव्वपरिणाममेत्तं पज्जाओ सो य न खरसिंगस्स। तदपज्जवं न नज्जइ जं नाणं नेयविसयं ति ॥ २६७२ ॥[2]

विशिष्टो द्रव्यपरिणाम एव द्रव्यपरिणाममात्रं पर्यायो नान्यः। स च न द्रव्याद् भिन्नः, तथाऽनुपलम्भात्। नाप्यसौ खरशृङ्गस्य, पर्यायस्य द्रव्यपरिणामत्वात्, खरशृङ्गस्य च द्रव्यत्वाभावात्। अत एव तत् खरशृङ्गमद्रव्यत्वादपर्यायं सद् न ज्ञायते केवलिना, यतो ज्ञानं ज्ञेयविषयं ज्ञेयग्राहित्वेन प्रवर्तते। तच्चेह ज्ञेयविषयं नास्ति, खरविषाणस्याभावरूपत्वात्। अत एव निर्युक्तिकृता प्रोक्तम्–'अपज्जवे जाणणा नत्थि' इति ॥ इति गाथापञ्चकार्थः ॥ २६७२ ॥ तदेवमवसितं सप्रसङ्गं 'किं सामायिकम्?'[3] इति द्वारम् ॥

१ यदि पर्यवोपचारो लय प्रकाशपरिणाममात्रस्य। क्रियते तन्नाम न स द्रव्यादर्थान्तरभूतः ॥ २६७१ ॥
२ द्रव्यपरिणाममात्रं पर्यायः स च न खरशृङ्गस्य। तदपर्यवं न ज्ञायते यज्ज्ञानं ज्ञेयविषयमिति ॥ २६७२ ॥ ३ गाथा २६६७।

[1]पज्जाओ च्चिय वत्थुं तच्चं दव्वं च तदुवयाराओ । पज्जवनयस्स जम्हा सामइयं तेण पज्जाओ ॥ २६४५ ॥

व्याख्या— यद् यस्माद् द्रव्यार्थिकनयस्तथ्यं सत्यं द्रव्यमेवेच्छति, गुणांस्तूपचारत एव मन्यते न तु सत्यान्; ततस्तस्मात् सामायिकगुणविशिष्ट-उपसर्जनीभूतसामायिकादिगुणो मुख्यतया जीव एव तस्य द्रव्यार्थिकनयस्य सामायिकमिति । यस्मात् पर्यायार्थिकनयस्य मतेन पर्याय एव तथ्यं निरुपचरितं वस्तु, द्रव्यं पुनस्तेष्वेव पूर्वापरीभूतपर्यायेषूपचारतो व्यवह्रियते, न तु परमार्थतस्तदस्ति, तेषु पर्यायेषूपचारस्तदुपचारस्तस्मादिति समासः । तेन तस्मात् कारणात् पर्याय एवास्य मुख्यतया सामायिकम्, न तु जीवद्रव्यमिति ॥ २६४४ ॥ २६४५ ॥

इदमेव पर्यायार्थिकनयमतं युक्तितः समर्थयन्नाह—

[2]पज्जायनयमयमिणं पज्जायत्थंतरं कओ दव्वं । उवलंभ-व्ववहाराभावाओ खरविसाणं व ? ॥ २६४६ ॥

जह रूवाइविसिट्ठो न घडो सव्वप्पमाणविरहाओ । तह नाणाइविसिट्ठो को जीवो नामणक्खेओ ? ॥२६४७॥

व्याख्या— पर्यायनयस्येदं मतम्– पर्यायेष्वेव पूर्वापरभावतः सदैव सातत्येन प्रवृत्तेषु भ्रान्त्या द्रव्योपचारः क्रियते, न पुनः पर्यायेभ्योऽर्थान्तरं भिन्नं द्रव्यमस्ति । प्रयोगः– नास्ति परकल्पितं द्रव्यम्, पर्यायेभ्योऽर्थान्तरत्वात्, खरविषाणवदिति । अथवा, नास्ति परपरिकल्पितं द्रव्यम्, पर्यायेभ्यो भेदेनानुपलभ्यमानत्वात्, व्यवहारेऽनुपयुज्यमानत्वाद् वा, खरविषाणवदिति, यथा वा रूप-रस-गन्ध-स्पर्शेभ्यो विशिष्टो भिन्नो घटो नास्ति, सर्वप्रमाणविरहात् सर्वप्रमाणैर्ग्रहणाभावादित्यर्थः, खरविषाणवदिति तथा तेनैव प्रकारेणानाख्येयः पर्यायविरहेण सर्वोपाख्यारहितो ज्ञानादिभ्यो विशिष्टो व्यतिरिक्तः को नाम जीवः ?, पूर्वोक्तेभ्य एव हेतुभ्यस्तद्व्यतिरिक्तो नास्ति कश्चनाप्यसाविति भावः ॥ इति गाथाचतुष्टयार्थः ॥ २६४६ ॥ २६४७ ॥

अथेदमेव पर्यायार्थिकमतं निर्युक्तिकारोऽपि किञ्चित् समर्थयन्नाह—

१ पर्याय एव वस्तु तथ्यं द्रव्यं च तदुपचारात् । पर्यवनयस्य यस्मात् सामायिकं तेन पर्यायः ॥ २६४५ ॥

२ पर्यायनयमतमिदं पर्यायार्थान्तरं कुतो द्रव्यम् ? । उपलम्भ-व्यवहाराभावात् खरविषाणमिव ॥ २६४६ ॥
यथा रूपादिविशिष्टो न घटः सर्वप्रमाणविरहात् । तथा ज्ञानादिविशिष्टः को जीवो नामानाख्येयः ? ॥ २६४७ ॥

अथ 'कतिविधं सामायिकम् ?' इति द्वारं व्याचिख्यासुराह—

[1] सामाइयं पि तिविहं सम्मत्त सुयं तहा चरित्तं च। दुविहं चेव चरित्तं अगारमणगारियं चेव ॥२६७३ ॥

त्रिविधं त्रिभेदं सामायिकम्, अनुस्वारलोपात् सम्यक्त्वं सम्यक्त्वसामायिकम्, श्रुतं श्रुतसामायिकम्, तथा चारित्रं चारित्रसामायिकम्। चशब्दः प्रत्येकं स्वगतानेकभेदसूचनार्थः। तत्र संक्षेपेण मूलभेदतश्चारित्रं चारित्रसामायिकं द्विविधमेव द्विभेदमेव; तद्यथा– अगा वृक्षास्तैः कृतमगारं गृहं तदस्यास्तीति मतुब्लोपादगारो गृहस्थस्तस्येदमगारिकं देशचारित्रसामायिकं देशविरतिसामायिकमिति यावत्। एतच्च पुनरप्यनेकभेदम्, देशविरतेश्चित्ररूपत्वात्। न विद्यतेऽगारं गृहं यस्यासावनगारः साधुस्तस्येदमनगारिकं सर्वचारित्रसामायिकं सर्वविरतिसामायिकमित्यर्थः। इदमपि स्वस्थानेऽनेकभेदमेवेति ॥ २६७३ ॥

श्रुतसामायिकस्यापि संक्षेपतो भेदकथनार्थमाह—

[2] अज्झयणं पि य तिविहं सुत्ते अत्थे अ तदुभए चेव। सेसेसु वि अज्झयणेसु होइ एसेव निज्जुत्ती ॥२६७४॥

अधीयते विनयादिक्रमेण गुरुसमीप इत्यध्ययनं सामान्येन श्रुतमिह गृह्यते श्रुतसामायिकमित्यर्थः, तदपि त्रिविधं त्रिभेदम्– 'सुत्तेत्यादि' सूत्रतः, अर्थतः, तदुभयतश्चेत्यर्थः। उपलक्षणत्वात्, अपिशब्दाद् वा सम्यक्त्वसामायिकमप्यौपशमिक-क्षायिक-क्षयोपशमभेदात् त्रिविधं द्रष्टव्यम्। अथ प्रक्रान्तोपोद्घातनिर्युक्तेरशेषाध्ययनव्यापितां दर्शयन्नाह— 'सेसेसु वीत्यादि' प्रस्तुतसामायिकाध्ययनात् शेषेष्वपि चतुर्विंशतिस्तवादिष्वन्येषु चाध्ययनेष्वेषैवोद्देश-निर्देशादिका निरुक्तिपर्यवसानोपोद्घातनिर्युक्तिर्भवति। एषैव सर्वत्र द्रष्टव्येत्यर्थः। आह— ननूपोद्घातनिर्युक्तौ सर्वस्यामपि समर्थितायामित्थमतिदेशो दातुं युज्यते, न चेयमद्यापि समर्थ्यते 'भवागरिस-फोसण-निरुत्ती' इति निरुक्तिद्वार एव तस्याः समर्थयिष्यमाणत्वात् ?। सत्यम्, किन्तूपोद्घातनिर्युक्तिमध्यमिदम्, मध्ये चातिदेशः कृतः पर्यन्तेऽपि लभ्यते, "मध्यग्रहण आद्यन्तयोर्ग्रहणम्" इति न्यायात् ॥ इति निर्युक्तिगाथाद्वयार्थः ॥ २६७४ ॥

अथ भाष्यकारः सम्यक्त्वादिसामायिकानां भेदनिरूपणार्थमाह—

---

१ सामायिकमपि त्रिविधं सम्यक्त्वं श्रुतं तथा चारित्रं च। द्विविधमेव चारित्रमगारिकमनगारिकं चैव ॥ २६७३ ॥
२ अध्ययनमपि च त्रिविधं सूत्रेऽर्थे च तदुभय एव। शेषेष्वप्यध्ययनेषु भवत्येषैव निर्युक्तिः ॥ २६७४ ॥ ३ गाथा १४८५।

[1]उप्पज्जंति वियंति य परिणमंति य गुणा न दव्वाइं। दव्वप्पभवा य गुणा न गुणप्पभवाइं दव्वाइं ॥२६४८॥

उत्पद्यन्ते व्ययन्ते च, तथा, अनेनोत्पाद-व्ययरूपेण परिणमन्ति गुणाः। चशब्द एवकारार्थः। तस्य चैवं प्रयोगः– गुणा एवोत्पाद-व्ययरूपेण परिणमन्ति, न तु द्रव्याणि, अतस्त एव सन्ति, उत्पाद-व्ययपरिणामवत्त्वात्, पत्रनीलरक्तादिवत्, तद्व्यतिरिक्तस्तु गुणी नास्त्येव, उत्पाद-व्यय-परिणामरहितत्वात्, वन्ध्यासुतादिवदिति। किञ्च, 'दव्वप्पभवा य गुणा न त्ति' द्रव्यात् प्रभवो येषां ते द्रव्यप्रभवा गुणा न भवन्ति। चशब्दोऽप्यर्थः। तस्य चैवं संबन्धः– नापि गुणेभ्यः प्रभवो येषां तानि गुणप्रभवानि द्रव्याणि भवन्ति, नकारस्योभयत्रापि संबन्धात्। ततश्च न कारणत्वम्, नापि कार्यत्वं द्रव्याणाम्, ततस्तेषामभावः, सतः कार्य-कारणरूपत्वादिति। अथवा, अन्यथा व्याख्यायते– द्रव्यप्रभवाश्च गुणा न भवन्ति, गुणप्रभवानि तु द्रव्याणि भवन्ति, पूर्वापरीभावेन प्रतीत्यसमुत्पादसमुत्पन्नगुणसमुदाये द्रव्योपचारप्रवृत्तेः। तस्माद् गुण एव सामायिकम् ॥ इति निर्युक्तिगाथार्थः ॥ २६४८ ॥

अत्र भाष्यम्—

[2]उप्पाय-विगमपरिणामओ गुणा पत्तनीलयाइ व्व। संति न उ दव्वमिट्ठं तव्विरहाओ खपुप्फं व ॥२६४९॥

ते जप्पभवा जं वा तप्पभवं होज्ज होज्ज तो दव्वं। न य तं ते चेय जओ परोप्परपच्चयप्पभवा॥२६५०॥

व्याख्या– गुणा एव सन्ति, उत्पाद-विगमपरिणामतः– उत्पाद-व्ययपरिणामवत्त्वात्, पत्रनीलतादिवदिति। अनभिमतप्रतिषेधमाह– 'न उ इत्यादि' 'सन्ति' इति बहुवचनव्यत्ययादेकवचनान्तमिहापि संबध्यते, न तु 'द्रव्यमस्ति' इत्यभीष्टं पर्यायार्थिकनयस्य, तद्विरहात्– उत्पाद-व्ययपरिणामाभावात्, खपुष्पवदिति। यदि हि यस्मात् प्रभवो येषां ते यत्प्रभवास्ते प्रसिद्धा नीलतादयो गुणाः, 'जं वा तप्पभवं ति' यद्वा तत्प्रभवं तेभ्यो गुणेभ्यः प्रभवो यस्य तत् तत्प्रभवं गुणेभ्यो व्यतिरिक्तं किमपि वस्तु 'होज्ज त्ति' भवेदित्यर्थः, 'होज्ज तो दव्वं ति' ततस्तदेव वस्तु पारमार्थिकं द्रव्यं भवेदिति; 'न य तमित्यादि' न च तद् गुणानां कारणभूतं कार्यभूतं वा गुणेभ्यो व्यतिरिक्तं किमपि वस्त्वस्ति, यतस्त एव नील-रक्ततादयो गुणाः पूर्वापरीभावतः सातत्येन प्रवृत्ता दृश्यन्ते, न पुनस्तदतिरिक्तं

१ उत्पद्यन्ते व्ययन्ते च परिणमन्ते च गुणा न द्रव्याणि। द्रव्यप्रभवाश्च गुणा न गुणप्रभवानि द्रव्याणि ॥ २६४८ ॥

२ उत्पाद-विगमपरिणामतो गुणा. पत्रनीलतादिरिव। सन्ति न तु द्रव्यमिष्टं तद्विरहात् खपुष्पमिव ॥ २६४९ ॥
ते यत्प्रभवा यद् वा तत्प्रभवं भवेत् भवेत् ततो द्रव्यम्। न च तत् त एव मताः परस्परप्रत्ययप्रभवाः ॥ २६५० ॥

किमपि द्रव्यमीक्ष्यते । कथंभूता गुणाः ? इत्याह– 'परोप्परेत्यादि' परस्परमन्योन्यं प्रत्ययः प्रत्ययभावः प्रत्ययत्वमित्यर्थः, तस्मात् प्रभवो जन्म येषां ते परस्परप्रत्ययप्रभवाः प्रतीत्यसमुत्पादेनोत्पन्ना इत्यर्थः । तस्माद् न गुणेभ्योऽतिरिक्तं द्रव्यमस्तीति ॥२६४९॥२६५०॥

अत्र कश्चिदाचार्यदेशीयः स्वात्मन्येव व्याख्यावेत्तृत्वमवगच्छन्नाह—

[1]आहावक्खाणमियं इच्छइ दव्वमिह पज्जवनओ वि। किंतच्चंतविभिन्ने मन्नइ सो दव्व-पज्जाए ॥२६५१॥

उप्पायाइसहावा पज्जाया जं च सासयं दव्वं। ते तप्पभवा न तयं तप्पभवं तेण ते भिन्ना ॥२६५२॥

जीवस्स य सामइयं पज्जाओ तेण तं तओ भिन्नं। इच्छइ पज्जायनओ वक्खाणमिणं जहत्थं ति ॥२६५३॥

व्याख्या– व्याख्यानिकाभासः कश्चिदाह– ननु पर्यायार्थिकनयमतेन यदिदं सर्वथा द्रव्याभावव्याख्यानं भवद्भिः कृतम्; तदयुक्तमेव, यत इह पर्यायनयोऽपि द्रव्यमिच्छत्येव, किन्तु परस्परमत्यन्तभिन्नावेव द्रव्य-पर्यायावसौ मन्यते न पुनः कथञ्चित्, इत्येतावता सिद्धान्तादस्य भेद इति । कुतः पुनः परस्परं द्रव्य-पर्याययोरत्यन्तं भेदः ? इत्यत्र युक्तिमाह– 'उप्पायेत्यादि' यस्मादुत्पाद-व्ययपरिणामस्वभावाः पर्यायाः, शाश्वतं नित्यं पुनर्द्रव्यम् । अपरं च, ते गुणास्तत्प्रभवा द्रव्याल्लब्धात्मलाभाः, न पुनस्तद् द्रव्यं तत्प्रभवं गुणेभ्यो लब्धात्मस्वरूपम्; तेन तस्मादुक्तन्यायेन परस्परं भिन्नस्वभावत्वाद् भिन्नास्ते द्रव्य-पर्याया अन्योन्यव्यतिरेकिण इति । यस्माच्च जीवस्य शाश्वतस्य तद् व्यतिरिक्तं सामायिकं पर्याया धर्मास्तेन तस्मात् सामायिकं ततो जीवादत्यन्तं भिन्नमिच्छति पर्यायनयः । अतो मदीयं व्याख्यानमिदं यथार्थं घटमानकमिति ॥ २६५१ ॥ २६५२ ॥ २६५३ ॥

अत्र सूरिरेतद् व्याख्यानमपाकुर्वन्नाह—

[2]जइ पज्जायनउ च्चिय संमन्नइ दो वि दव्वपज्जाए। दव्वट्ठिओ किमत्थं जइ व मई दो वि जमभिन्ने ॥२६५४॥

---

१ आहाव्याख्यानमिदमिच्छति द्रव्यमिह पर्यवनयोऽपि । किन्त्वत्यन्तविभिन्नौ मन्यते स द्रव्य-पर्यायौ ॥ २६५१ ॥
उत्पादादिस्वभावाः पर्याया यच्च शाश्वतं द्रव्यम् । ते तत्प्रभवा न तत् तत्प्रभवं तेन ते भिन्नाः ॥ २६५२ ॥
जीवस्य च सामायिकं पर्यायस्तेन तत् ततो भिन्नम् । इच्छति पर्यायनयो व्याख्यानमिद यथार्थमिति ॥ २६५३ ॥

२ यदि पर्यायनय एव समन्यते द्वावपि द्रव्य-पर्यायौ । द्रव्यास्तिकः किमर्थं यदिवा मतिर्द्वावपि यदभिन्नौ ॥ २६५४ ॥

"[1]दुविहं तिविहेण पढमओ दुविहं दुविहेण बीयओ होई। दुविहं एक्कविहेणं एगविहं चेव तिविहेणं ॥ १ ॥"

इत्यादिग्रन्थप्रतिपादितभङ्गजालेन हेतुभूतेनेत्यर्थः। 'वीसुं ति' एतेषां सामायिकानामेते पूर्वोक्ता भेदा विष्वगेकैकशश्चिन्त्यमानानां द्रष्टव्याः। यदा तु सर्वाण्यप्येतानि समुदितानि भेदतश्चिन्त्यन्ते तदा पर्यायतः पर्यायानाश्रित्यानन्तभेदानि द्रष्टव्यानि। संयमश्रेण्यामध्यवसायस्थानानामसंख्येयलोकाकाशप्रदेशप्रमाणत्वात्, एकैकस्य चाध्यवसायस्थानस्यानन्तपर्यायत्वादिति ॥ २६७५-७७ ॥

'[2]सेसेसु वि अज्झयणेसु' इत्यादेर्व्याख्यानमाह—

[3]चउवीसयत्थयाइसु सव्वज्झयणेसु याणुओगम्मि। एस च्चिय निज्जुत्ती उद्देसाई निरुत्तंता ॥ २६७८ ॥

शेषेष्वपि चतुर्विंशतिस्तवादिषु, चशब्दादन्येषु च शस्त्रपरिज्ञादिष्वध्ययनेष्वनुयोगे विधीयमान आदावेषैवोद्देशादिका निरुक्त्यन्तोपोद्घातनिर्युक्तिर्द्रष्टव्या ॥ इति गाथाचतुष्टयार्थः ॥ २६७८ ॥

सांप्रतं 'कस्य सामायिकं भवति ?' इति द्वारे प्रस्तुते यस्य तद् भवति तदभिधित्सया प्राह—

[4]जस्स सामाणिओ अप्पा संजमे नियमे तवे। तस्स सामाइयं होइ इई केवलिभासियं ॥ २६७९ ॥

जो समो सव्वभूएसु तसेसु थावरेसु य। तस्स सामाइयं होइ इई केवलिभासियं ॥ २६८० ॥

व्याख्या– यस्य सामानिकः संनिहितोऽप्रोषित इत्यर्थः, आत्मा जीवः। क ? । संयमे मूलगुणरूपे, नियम उत्तरगुणात्मके, तपसि–अनशनादिलक्षणे। तस्यैवंभूतस्याप्रमादिनः सामायिकं भवतीत्येवं केवलिभिर्भाषितमिति। तथा, यः समो मध्यस्थ आत्मानमिव परं पश्यतीत्यर्थः सर्वभूतेषु सर्वप्राणिषु त्रसेषु द्वीन्द्रियादिषु, स्थावरेषु च पृथिव्यादिषु तस्य सामायिकं भवतीत्येतच्च केवलिभिर्भाषितमिति ॥ २६७९ ॥ २६८० ॥

सांप्रतं फलप्रदर्शनद्वारेणास्य करणविधानं प्रतिपादयन्नाह—

---

१ द्विविधं त्रिविधेन प्रथमतो द्विविधं द्विविधेन द्वितीयतो भवति। द्विविधमेकविधेनैकविध चैव त्रिविधेन ॥ १ ॥ २ गाथा २६७४।

३ चतुर्विंशतिस्तवादिषु सर्वाध्ययनेषु चानुयोगे। एषैव निर्युक्तिरुद्देशादिर्निरुक्त्यन्ता ॥ २६७८ ॥

४ यस्य सामानिक आत्मा सयमे नियमे तपसि। तस्य सामायिकं भवतीति केवलिभाषितम् ॥ २६७९ ॥

यः सम सर्वभूतेषु त्रसेषु स्थावरेषु च। तस्य सामायिकं भवतीति केवलिभाषितम् ॥ २६८० ॥

इच्छइ[1] सो तेणोभयमुभयग्गाहे वि सयं पिहब्भूयं । मिच्छत्तमिहेगंतादेगत्तन्नत्तगाहाओ ॥ २६५५ ॥

व्याख्या– यदि भोः ! पर्यायनय एव द्रव्य-पर्यायौ द्वावपि समन्यतेऽभ्युपगच्छति, तर्हि द्रव्यार्थिकः किमर्थं 'द्रव्यपरिकल्पना त्वयेष्यते' इति शेषः, पर्यायनयाभ्युपगमेनापि द्रव्यस्य सिद्धत्वादिति ? । यदि वा, एवंभूता मतिः स्यात् परस्य । कथंभूता ? इत्याह–– द्वावपि द्रव्य-पर्यायौ यद् यस्मादभिन्नौ परस्परमेकत्वमापन्नाविच्छति स द्रव्यार्थिकनय इति संबन्धः, तेन तस्मादिदमुभयं द्रव्य-पर्यायार्थिकनयद्वयमुभयग्रहेऽपि सति प्रत्येकं द्रव्य-पर्यायाभ्युपगमेऽपि सतीत्यर्थः । किम् ? इत्याह— 'पिहब्भूयं ति' पृथग्भूतं भिन्नं– द्रव्यार्थिकात् पर्यायार्थिकः, तस्माच्च द्रव्यार्थिको भेदवान्, न पुनरनयोरेकतेति, एकस्य द्रव्य-पर्याययोरत्यन्तमभेदाभ्युपगमात्, अन्यस्य त्वत्यन्तं तयोर्भेदाभ्युपगमादिति । नापि प्रत्येकं द्रव्य-पर्यायाभ्युपगमेऽप्येतयोः समग्ररूपता, किन्तु मिथ्यात्वम् । द्वयोरपि मिथ्यादृष्टिरूपता कस्मात् ? । उच्यते– इहैकान्तादेकान्तेनैकत्वग्रहादन्यत्वग्रहाच्चेति । इदमत्र हृदयम्– द्रव्यार्थिको द्रव्य-पर्यायौ परस्परमभिन्नाविच्छति, द्रव्यादव्यतिरिक्तमेव पर्यायमिच्छति, अत एतस्य विशेषस्य प्राप्तये पर्यायार्थिकाद् द्रव्यार्थिको भिन्नः परिकल्पितः । पर्यायार्थिकस्तु द्रव्य-पर्यायौ परस्परं भिन्नावेव मन्यते, अतोऽसौ द्रव्यार्थिकाद् भिन्न इष्यते । मिथ्यादृष्टी च प्रत्येकमेतौ, द्रव्यार्थिको द्रव्य-पर्याययोरेकत्वग्रहात्, पर्यायार्थिकस्तु तयोरन्यत्वग्रहादिति ॥ २६५४ ॥ २६५५ ॥

एवंभूता यदि परस्य मतिस्तदा मतिर्विशीर्यते । कथम् ? इत्याह—

एगत्ते[2] नणु दव्वं गुणो त्ति पज्जायवयणमित्तमियं । तम्हा तं दव्वं वा गुणो व दव्वट्ठियग्गाहो ॥ २६५६ ॥

जइ भिन्नोभयगाही पज्जायनओ तदेगपक्खम्मि । अविरुद्धं चेव तयं किमओ दव्वट्ठियनएण ? ॥२६५७॥

व्याख्या– ननु द्रव्य-पर्याययोरेकत्वे त्वदभिप्रायतो द्रव्यार्थिकेनेष्यमाणे 'द्रव्यं' 'गुणः' इति ध्वनिद्वयमिदमेकार्थवाचकत्वादिन्द्र-पुरन्दरादिध्वनिवत् पर्यायवचनमात्रमेव स्यात् । तस्मात् तत् सामायिकं द्रव्यं वा गुणो वेति द्रव्यार्थिकनयग्रहः स्यात्, न पुनस्तद् द्रव्यमेवेति तद्ग्रहो भवेत्; न चैवमिष्यते, द्रव्यार्थिकनयमतेन द्रव्यरूपस्यैव तस्य प्रसिद्धेरिति । तथा, यदि परस्परमत्यन्तभिन्नस्य द्रव्य-

१ इच्छति स तेनोभयमुभयग्रहेऽपि सति पृथग्भूतम् । मिथ्यात्वमिहैकान्तादेकत्वान्यत्वग्रहात् ॥ २६५५ ॥

२ एकत्वे ननु द्रव्य गुण इति पर्यायवचनमात्रमिदम् । तस्मात् तद् द्रव्य वा गुणो वा द्रव्यास्तिकग्राहः ॥ २६५६ ॥

यदि भिन्नोभयग्राही पर्यायनयस्तदेकपक्षे । अविरुद्धमेव तत् किमतो द्रव्यार्थिकनयेन ? ॥ २६५७ ॥

पर्यायोभयस्य ग्राहकः पर्यायनयस्त्वयेष्यते, तदा हन्त ! एकस्मिन् द्रव्यपक्षे तत् सामायिकमविरुद्धमेव 'द्रव्यत्वेन' इति शेषः, 'द्रव्यं सामायिकम्' इति द्रव्यपक्षे पर्यायनयमतेनाप्यविरोधतः सिद्धमेवेत्यर्थः, अतः किं द्रव्यार्थिकनयेनोपन्यस्तेन ? इति ॥२६५६॥२६५७॥

तस्माद् यथाविहितमेव व्याख्यानं श्रेय इति दर्शयन्नाह—

तम्हा[1] किं सामइयं हवेज्ज दव्वं गुणो त्ति चिंतेयं। दव्वट्ठियस्स दव्वं गुणो य तं पज्जवनयस्स ॥ २६५८ ॥

इहरा जीवाणन्नं दव्वनयस्सेयरस्स भिन्नं ति । उभयनओभयगाहे घडेज्ज नेक्केक्कगाहम्मि ॥ २६५९ ॥

व्याख्या— तस्मात् किं द्रव्यं गुणो वा सामायिकम् ? इतीयं चिन्ताऽत्र प्रस्तुता । अस्यां तु चिन्तायामुच्यते— द्रव्यार्थिकनयस्याभिप्रायेण द्रव्यम्, पर्यायार्थिकनयस्य मतेन गुणश्च तत् सामायिकमिति । इतरथाऽन्यथा पुनर्द्रव्यार्थिकस्य जीवादनन्यत् सामायिकम्, इतरस्य तु पर्यायार्थिकस्य जीवाद् भिन्नं तत्, इत्येवमेकैकस्य नयस्य ग्रहेऽभ्युपगमे सति 'जइ पज्जायनउ च्चिय' इत्यादि पूर्वोक्तयुक्तिभ्यो न 'घटते' इति शेषः। कथं पुनस्तर्हि घटेत ? इत्याह— 'उभयनओभयगाहे घडेज्ज त्ति' उभयनयस्य द्रव्यार्थिकपर्यायार्थिकलक्षणस्य नयद्वयस्य मिलितस्य द्रव्य-गुणरूपसामायिकलक्षणस्योभयस्य ग्रहे सर्वं घटेत । इदमुक्तं भवति— यदि द्रव्यनयो द्रव्यरूपं, पर्यायनयस्तु पर्यायरूपं सामायिकमिच्छति, तदित्थमुभयोरपि नययोः समुदितयोर्यथोक्तोभयग्रहे सर्वं सुस्थं भवति, न पुनरेकैकस्य नयस्योभयग्रहे सतीति ॥ २६५८ ॥ २६५९ ॥

अथ यदुक्तम्— 'सो[3] चेव पज्जवट्ठियनयस्स जीवस्स एस गुणो' इति, एतदवष्टम्भेन पुनरपि परः प्राह—

नणु[4] भणियं पज्जायट्ठियस्स जीवस्स एस हि गुणो त्ति। छट्ठीए तओ दव्वं सो तं च गुणो तओ भिन्नो ॥२६६०॥

ननु 'सो चेव पज्जव-' इत्यादौ निर्युक्तिगाथोत्तरार्धे भणितं प्रतिपादितं निर्युक्तिकृता पर्यायार्थिकनयमतेन जीवस्यैष सामायिकलक्षणो गुण इति । हिर्यस्मादेवमुक्तम्, ततस्तस्माज्जीवस्यैव गुण इति षष्ठ्या षष्ठीनिर्देशादवसीयते— 'दव्वं सो त्ति' स जीवो द्रव्यं,

1 तस्मात् किं सामायिकं भवेद् द्रव्य गुण इति चिन्तेयम् । द्रव्यार्थिकस्य द्रव्यं गुणश्च तत् पर्यवनयस्य ॥ २६५८ ॥
इतरथा जीवानन्यद् द्रव्यनयस्येतरस्य भिन्नमिति । उभयनयोभयग्रहे घटेत नैकैकग्रहे ॥ २६५९ ॥ 2 गाथा २६५४ ।
3 गाथा २६४३ । 4 ननु भणित पर्यायार्थिकस्य जीवस्यैष हि गुण इति । षष्ठ्या ततो द्रव्य स तच्च गुणो ततो भिन्नः ॥ २६६० ॥

"दुविहं तिविहेण पढमओ दुविहं दुविहेण बीयओ होई । दुविहं एक्कविहेणं एगविहं चेव तिविहेणं ॥ १ ॥"

इत्यादिग्रन्थप्रतिपादितभङ्गजालेन हेतुभूतेनेत्यर्थः । 'वीसुं ति' एतेषां सामायिकानामेते पूर्वोक्ता भेदा विष्वगेकैकशश्चिन्त्यमानानां द्रष्टव्याः । यदा तु सर्वाण्यप्येतानि समुदितानि भेदतश्चिन्त्यन्ते तदा पर्यायतः पर्यायानाश्रित्यानन्तभेदानि द्रष्टव्यानि । संयमश्रेण्यामध्यवसायस्थानानामसंख्येयलोकाकाशप्रदेशप्रमाणत्वात्, एकैकस्य चाध्यवसायस्थानस्यानन्तपर्यायत्वादिति ॥ २६७५–७७ ॥

'[2]सेसेसु वि अज्झयणेसु' इत्यादेर्व्याख्यानमाह—

[3]चउवीसयत्थयाइसु सव्वज्झयणेसु याणुओगम्मि । एस च्चिय निज्जुत्ती उद्देसाई निरुत्तंता ॥ २६७८ ॥

शेषेष्वपि चतुर्विंशतिस्तवादिषु, चशब्दादन्येषु च शस्त्रपरिज्ञादिष्वध्ययनेष्वनुयोगे विधीयमान आदावेषैवोद्देशादिका निरुक्त्यन्तोपोद्घातनिर्युक्तिर्द्रष्टव्या ॥ इति गाथाचतुष्टयार्थः ॥ २६७८ ॥

सांप्रतं 'कस्य सामायिकं भवति ?' इति द्वारे प्रस्तुते यस्य तद् भवति तदभिधित्सया प्राह—

[4]जस्स सामाणिओ अप्पा संजमे नियमे तवे । तस्स सामाइयं होइ इई केवलिभासियं ॥ २६७९ ॥

जो समो सव्वभूएसु तसेसु थावरेसु य । तस्स सामाइयं होइ इई केवलिभासियं ॥ २६८० ॥

व्याख्या– यस्य सामानिकः संनिहितोऽप्रोषित इत्यर्थः, आत्मा जीवः । क ? । संयमे मूलगुणरूपे, नियम उत्तरगुणात्मके, तपसि–अनशनादिलक्षणे । तस्यैवंभूतस्याप्रमादिनः सामायिकं भवतीत्येवं केवलिभिर्भाषितमिति । तथा, यः समो मध्यस्थ आत्मानमिव परं पश्यतीत्यर्थः सर्वभूतेषु सर्वप्राणिषु त्रसेषु द्वीन्द्रियादिषु, स्थावरेषु च पृथिव्यादिषु तस्य सामायिकं भवतीत्येतच्च केवलिभिर्भाषितमिति ॥ २६७९ ॥ २६८० ॥

सांप्रतं फलप्रदर्शनद्वारेणास्य करणविधानं प्रतिपादयन्नाह—

१ द्विविधं त्रिविधेन प्रथमतो द्विविधं द्विविधेन द्वितीयतो भवति । द्विविधमेकविधेनैकाविध चैव त्रिविधेन ॥ १ ॥ २ गाथा २६७४ ।
३ चतुर्विंशतिस्तवादिषु सर्वाध्ययनेषु चानुयोगे । एषैव निर्युक्तिरुद्देशादिर्निरुक्त्यन्ता ॥ २६७८ ॥
४ यस्य सामानिक आत्मा सयमे नियमे तपसि । तस्य सामायिकं भवतीति केवलिभाषितम् ॥ २६७९ ॥
यः सम. सर्वभूतेषु त्रसेषु स्थावरेषु च । तस्य सामायिकं भवतीति केवलिभाषितम् ॥ २६८० ॥

तच्च सामायिकम्, 'गुणो तओ भिन्नो त्ति' स च सामायिकगुणस्ततो जीवद्रव्याद् भिन्नः, षष्ठीनिर्देशान्यथानुपपत्तेः । तस्मात् पर्यायनयमतेन भिन्नद्रव्य-पर्यायोभयसद्भावाद् मदीयमेव व्याख्यानं श्रेय इति परस्याकूतमिति ॥२६६०॥

अत्रोत्तरमाह—

उप्पाय-भंगुराणं पइक्खणं जो गुणाण संताणो । दव्वोवयारमेत्तं जइ कीरइ तम्मि तन्नाम ॥ २६६१ ॥

तब्भेयकप्पणाओ तं तस्स गुणो त्ति होउ सामइयं । पत्तस्स नीलया जह तस्संताणोदियत्थमिया ॥२६६२॥

व्याख्या— अत्र परं पृच्छामः— ननु पर्यायार्थिकनयमतेन द्रव्यं पारमार्थिकं त्वयेष्यते, कल्पनाशिल्पिनिर्मितं वा ? । यद्याद्यः पक्षः, स न युक्तः, 'जइ पज्जायनउ च्चिय' इत्यादिना प्रतिविहितत्वात् । अथ द्वितीयपक्षः, तत्रोच्यते— गुणानां यः संतानो गुणानां या सभागसंततावनवरतप्रवृत्तिः । किंविशिष्टानाम् ? । प्रतिक्षणमुत्पादभङ्गुराणाम् । तस्मिन् यदि समानबुद्ध्यभिधानहेतुत्वेन निबन्धनेन द्रव्योपचारमात्रं क्रियते षष्ठीवादिना भवता, तदा 'तन्नाम त्ति' 'नाम' इत्यभ्युपगमे, मन्यामहे तदित्यर्थः । न हि कल्पितसद्भावापादनेऽस्माकं किञ्चित् क्षूयत इति । ततश्च 'तब्भेयकप्पणाउ त्ति' तेन कल्पितद्रव्येण सह भेदस्तद्भेदस्तस्य कल्पनं तद्भेदकल्पनं तस्मात् सकाशात् तत् सामायिकं तस्य कल्पितजीवद्रव्यस्य गुणो भवतु, को निवारयिता ? । कस्य यथा को गुणः ? इत्याह— 'पत्तस्सेत्यादि' यथा गुणसमुदयव्यतिरिक्तस्य कल्पितस्य पत्रद्रव्यस्य नीलतादिर्गुणः । कथंभूता नीलता ? इत्याह— 'तस्संताणेत्यादि' तस्मिन्नेव पत्रसंतान उदिता समुत्पन्ना, अस्तमिता च विनष्टेति । इदमुक्तं भवति— यथा कल्पितस्य पत्रादेर्द्रव्यस्य नीलतादयो गुणा भिन्ना व्यपदिश्यन्ते तथा यद्यत्रापि परिकल्पितस्य जीवद्रव्यस्य सामायिकं गुण उच्यते तदा सिद्धसाध्यतैवेति । न च वक्तव्यम्— वास्तव एव संबन्धिवस्तुद्वये षष्ठी दृश्यते, यथा 'देवदत्तस्य गावः' इत्यादि, एवमत्रापि वास्तवयोरेव द्रव्य-गुणयोः संबन्धे षष्ठी युज्यते न तु द्रव्यस्य कल्पनायामिति; 'राहोः शिरः' 'शिलापुत्रकस्य शरीरम्' इत्यादिभिर्व्यभिचारादिति ॥ २६६१ ॥ २६६२ ॥

आह— ननु गुण-संतानयोरभेद एव तद्भेदनिबन्धनधर्मभेदाभावाद् घटते, तत्स्वरूपवत्, तत् कथं कल्पितस्यापि गुणव्यतिरेकिणो द्रव्यस्य सद्भावः ? । तदयुक्तम्, 'धर्मभेदाभावात्' इत्येतस्य हेतोरसिद्धत्वात् । कथम् ? इत्याह—

१ उत्पाद-भङ्गुराणां प्रतिक्षणं यो गुणानां संतानः । द्रव्योपचारमात्रं यदि क्रियते तस्मिंस्तन्नाम ॥ २६६१ ॥
तद्भेदकल्पनात् तत् तस्य गुण इति भवतु सामायिकम् । पत्रस्य नीलता यथा तत्सन्तानोदितास्तमिता ॥ २६६२ ॥

[1]सावज्जजोगपरिरक्खणट्ठा सामाइयं केवलियं पसत्थं ।
गिहत्थधम्मा परमं ति नच्चा कुज्जा बुहो आयहियं परत्था ॥ २६८१ ॥

सावद्ययोगपरिरक्षणार्थं सामायिकं केवलिकं परिपूर्णं प्रशस्तं पवित्रम्, एतदेव हि गृहस्थधर्मात् परमं प्रधानं ज्येष्ठम्, इत्येवं ज्ञात्वा कुर्याद् बुधो विद्वानात्महितमात्मोपकारकमिह लोके परत्र च। अथवा, परो मोक्षस्तदर्थं कुर्याद् न तु सुरलोकाद्यर्थम् ॥ इति निर्युक्तिरूपकत्रयार्थः ॥ २६८१ ॥

अथ भाष्यगाथा—

[2]केवलियं पडिपुन्नं परमं जेट्ठं गिहत्थधम्माओ । तं हियमिओ परत्था सिवं परं वा तदत्थं वा ॥२६८२॥

गतार्था। नवरं 'तं हियमिओ परत्थ त्ति' तत् सामायिकमात्मनो हितम् । क्व ? इत्याह– इत इहलोके, परत्र परलोके चेति ॥ २६८२ ॥

अथ वक्ष्यमाणगाथायाः प्रस्तावनां कुर्वन् भाष्यकार एवाह—

[3]गिहिणा वि सव्ववज्जं दुविहं तिविहेण छिन्नकालं तं। कायव्वमाह सव्वे को दोसो भण्णएऽणुमई ॥२६८३॥

इह परिपूर्णसामायिककरणशक्त्यभावे संपूर्णसंयमाङ्गीकारभावसामर्थ्याभावे गृहिणाऽपि गृहस्थेनाऽपि सता तत् सामायिकं छिन्नकालं द्विघटिकादिकालमानोपेतं सर्ववर्जं सर्वशब्दोच्चारणरहितं द्विविधं त्रिविधेन कर्तव्यमेव । अत्राह परः– सर्वे– सर्वशब्दोच्चारणे को दोषः, येन 'सर्ववर्जम्' इति विशिष्यते ? । भण्यतेऽत्रोत्तरम्– सर्वशब्दोच्चारणं कुर्वतस्तस्य सावद्ययोगानुमतिलक्षणो दोषः, तेन हि गृहादिषु प्रागनेक आरम्भाः प्रवर्तिताः सन्ति, तदनुमतिश्च सामायिके तिष्ठतस्तस्यानुवर्तत एव । ततः सर्वसावद्ययोगनिषेधं कुर्वतो गृहस्थस्य व्रतभङ्ग एव स्यादिति भावः ॥ इति गाथाद्वयार्थः ॥ २६८३ ॥

एतदेवाह—

1 सावद्ययोगपरिरक्षणार्थं सामायिकं केवलिक प्रशस्तम्। गृहस्थधर्मात् परममिति ज्ञात्वा कुर्याद् बुध आत्महितं परार्थम् ॥ २६८१ ॥
2 केवलिकं परिपूर्णं परम ज्येष्ठ गृहस्थधर्मात् । तद् हितमित' परत्र शिव परं वा तदर्थं वा ॥ २६८२ ॥
3 गृहिणापि सर्ववर्जं द्विविध त्रिविधेन च्छिन्नकाल तत् । कर्तव्यमाह सर्वे को दोषो भण्यतेऽनुमति ॥ २६८३ ॥

तो किं जीव-नहाण व अह जोगो कंचणो-वलाणं व ?। जीवस्स य कम्मस्स य भण्णइ दुविहो वि न विरुद्धो ॥१६॥
पढमोऽभव्वाणं चिय भव्वाणं कंचणो-वलाणं व। जीवत्ते सामण्णे भव्वोऽभव्वो त्ति को भेओ ? ॥ १७ ॥
होउ व जइ कम्मकओ न विरोहो नारगाइभेउ व्व। भणइ य भव्वा-ऽभव्वा सभावओ तेण संदेहो ॥ १८ ॥
दव्वाइत्ते तुल्ले जीव-नहाणं सभावओ भेओ। जीवा-ऽजीवाइगओ जह, तह भव्वे-यरविसेसो ॥ १९ ॥
एवं पि भव्वभावो जीवत्तं पिव सभावजाईओ। पावइ निच्चो तम्मि य तदवत्थे नत्थि निव्वाणं ॥ २० ॥
जह घडपुव्वाभावोऽणाइसहावो वि सनिहणो एवं। जइ भव्वत्ताभावो भवेज्ज किरियाए को दोसो ? ॥ २१ ॥
अणुदाहरणमभावो खरसंगं पिव मई न तं जम्हा। भावो च्चिय स विसिट्ठो कुंभाणुप्पत्तिमेत्तेणं ॥ २२ ॥
एवं भव्वुच्छेओ कोट्ठागारस्स वा अवचउ त्ति। तं नाणंतत्तणओऽणागयकालं-बराणं व ॥ २३ ॥
जं चातीता-ऽणागयकाला तुल्ला जओ य संसिद्धो। एक्को अणंतभागो भव्वाणमईयकालेणं ॥ २४ ॥
एस्सेण तत्तिउ जुत्तो जं तो वि सव्वभव्वाणं। जुत्तो न समुच्छेओ होज्ज मई कहमिणं सिद्धं ? ॥ २५ ॥
भव्वाणमणंतत्तणमणंतभागो व किह व मुक्को सिं। कालादओ व मंडिय ! मह वयणाओ व पडिवज्ज ॥ २६ ॥
सब्भूयमिणं गिण्हसु मह वयणाओऽवसेसवयणं व। सव्वण्णुताइओ वा जाणयमज्झत्थवयणं व ॥ २७ ॥
मण्णसि किह सव्वण्णू सव्वेसिं सव्वसंसयच्छेया। दिट्ठंताभावम्मि वि पुच्छउ जो संसओ जस्स ॥ २८ ॥
भव्वा वि न सिज्झिस्संति केइ कालेण जइ वि सव्वेण। णणु ते वि अभव्व च्चिय किंवा भव्वत्तणं तेसिं ?॥२९॥
भण्णइ भव्वो जोग्गो न य जोग्गत्तेण सिज्झए सव्वो। जह जोग्गम्मि वि दलिए सव्वम्मि न कीरए पडिमा॥३०॥
जह वा स एव पासाण-कणगजोगो विओगजोग्गो वि। न विजुज्जइ सव्वो च्चिय स विजुज्जइ जस्स संपत्ती॥३१॥ ॥१२९॥

१ 'तह भ'। २ 'भविज्ज'। ३ 'सिद्धा'। ४ 'सव्वसं'।

किं पुण जो संपत्ती सा जोग्गस्सेव न उ अजोग्गस्स । तह जो मोक्खो नियमा सो भव्वाणं न इयरेसिं ॥३२॥
कयगाइमत्तणाओ मोक्खो निच्चो न होइ कुंभो व्व । नो पद्धंसाभावो भुवि तद्धम्मा वि जं निच्चो ॥ ३३ ॥
अणुदाहरणमभावो एसो वि मई न तं जओ नियओ । कुंभविणासविसिट्ठो भावो च्चिय पोग्गलमओ य ॥३४॥
किं वेगंतेण कयं पोग्गलमेत्तविलयम्मि जीवस्स । किं निव्वत्तियमहियं नभसो घडमेत्तविलयम्मि ? ॥ ३५ ॥
सोऽणवराहो व्व पुणो न बज्झए बंधकारणाभावा । जोगो[1] य बंधहेऊ न य[2] ते तस्सासरीरो त्ति ॥ ३६ ॥
न पुणो तस्स पसूई बीयाभावादिहंकुरस्सेव । बीयं च तस्स कम्मं न य तस्स तयं तओ निच्चो ॥ ३७ ॥
दव्वामुत्तत्तणओ नहं व निच्चो मओ स दव्वतया । सव्वगयत्तावत्ती मइ त्ति तं नाणुमाणाओ ॥ ३८ ॥
को वा निच्चग्गाहो सव्वं चिय विभव-भंग-ट्ठिइमइयं । पज्जायंतरमेत्तप्पणादनिच्चाइववएसो ॥ ३९ ॥
मुत्तस्स कोऽवगासो सोम्म ! तिलोगसिहरं, गई किह से ? । कम्मलहुया तहागइपरिणामाईहिं भणियमिदं ॥ ४० ॥
किं सक्किरियमरूवं मंडिय ! भुवि चेयणं च किमरूवं ? । जह से विसेसधम्मो चेयन्नं तह मया किरिया ॥४१॥
कत्ताइत्तणओ वा सक्किरिओऽयं मओ कुलालो व्व । देहप्फंदणओ वा पच्चक्खं जंतपुरिसो व्व ॥ ४२ ॥
देहप्फंदणहेऊ होज्ज पयत्तो त्ति सो वि नाकिरिए । होज्जादिट्ठो व मई तदरूवत्ते नणु समाणं ॥ ४३ ॥
रूवित्तम्मि स देहो वच्चो तप्फंदणे पुणो हेऊ । पइनिययपरिप्फंदणमचेयणाणं न वि य जुत्तं ॥ ४४ ॥
होउ किरिया भवत्थस्स कम्मरहियस्स किंनिमित्ता सा ? । नणु तग्गइपरिणामा जह सिद्धत्तं तहा सा वि ॥४५॥
किं सिद्धालयपरओ न गई, धम्मत्थिकायविरहाओ । सो गइउवग्गहकरो लोगम्मि जमत्थि नालोए ॥ ४६ ॥
लोगस्स त्थि विवक्खो सुद्धत्तणओ घडस्स अघडो व्व । स घडाइ च्चिय मई न निसेहाओ तदणुरूवो ॥ ४७ ॥

---

1 'जोगा य'। 2 'य सो त'।

[1]सव्वं ति भाणिऊणं विरई खलु जस्स सव्विया नत्थि । सो सव्वविरइवाई चुक्कइ देसं च सव्वं च॥२६८४॥

'सव्वं ति' अस्योपलक्षणत्वात् 'सर्वं सावद्ययोगं प्रत्याख्यामि त्रिविधं त्रिविधेन' इत्येवं भणित्वाऽभिधाय विरतिः सावद्ययोगाद् निवृत्तिः खलु यस्य सार्विका सर्वा नास्ति, प्रवृत्तकर्मारम्भानुमतिसद्भावात् । स सर्वविरतिवादी 'चुक्कइ त्ति' नाशयति 'देसं च सव्वं च त्ति' देशविरतिं सर्वविरतिं च, प्रतिज्ञाताकरणात् ॥ इति निर्युक्तिगाथार्थः ॥ २६८४ ॥

अत्राक्षेप-परिहारौ भाष्यकारः प्राह—

[2]आहाणुमई व न सो किं पच्चक्खाइ त्ति, भन्नइ न सत्तो । पुव्वपउत्तसावज्जकम्मसाइज्जणं मोत्तुं ॥२६८५॥

वाशब्दोऽप्यर्थः, आह परः– ननु यथा सावद्ययोगस्य करण-कारणे तथाऽनुमतिमप्यसौ किमिति न प्रत्याख्याति ?। भण्यतेऽत्रोत्तरम्– नासौ गृही शक्तः समर्थः । किं कर्तुम् ?। मोक्तुम् । किं तत् ? इत्याह– पूर्वप्रयुक्तस्य प्राग् गृहादिषु प्रवर्तितस्य सावद्यकर्मणः सावद्ययोगस्य 'साइज्जणं ति' अभिष्वङ्गनं प्रतिबन्धविधानमित्यर्थः । शक्यमेव ह्यनुष्ठानं विधीयते नाशक्यम् । पूर्वप्रवृत्ते च सावद्ययोगे गृहस्थोऽभिष्वङ्गं मोक्तुं न शक्नोति । अतो न सावद्ययोगानुमतिमसौ प्रत्याख्याति, व्रतभङ्गप्रसङ्गादिति ॥ २६८५ ॥

पुनरपि पराभिप्रायमाशङ्क्य परिहरन्नाह—

[3]नणु तिविहं तिविहेणं पच्चक्खाणं सुयम्मि गिहिणो वि । तं थूलवहाईणं न सव्वसावज्जजोगाणं ॥ २६८६ ॥

ननु गृहस्थस्य सावद्ययोगानुमतिप्रत्याख्याननिषेधं कुर्वतस्तव श्रुतविरोधः, यतस्त्रिविधं त्रिविधेन प्रत्याख्यानं श्रुते गृहिणोऽपि 'भणितम्' इति शेषः, तथा च भगवत्यामुक्तम्– "[4]समणोवासगस्स णं भंते ! पुव्वमेव थूले पाणाइवाए अपच्चक्खाए भवइ, स णं

१ सर्वमिति भणित्वा विरतिः खलु यस्य सर्विका नास्ति । स सर्वविरतिवादी नाशयति देशं च सर्वं च ॥ २६८४ ॥

२ आहानुमतिमपि न स किं प्रत्याख्यातीति, भण्यते न शक्तः । पूर्वप्रयुक्तसावद्यकर्माभिष्वञ्जनं मोक्तुम् ॥ २६८५ ॥

३ ननु त्रिविधं त्रिविधेन प्रत्याख्यानं श्रुते गृहिणोऽपि । तत् स्थूलवधादीनां न सर्वसावद्ययोगानाम् ॥ २६८६ ॥

४ श्रमणोपासकस्य भगवन् ! पूर्वमेव स्थूलं प्राणातिपातमप्रत्याख्यातं भवति, स भगवन् ! पश्चात् प्रत्याख्यायमाने किं करोति ?। गौतम ! अतीतं प्रतिक्रामति, प्रत्युत्पन्नं संवृणोति, अनागतं प्रत्याख्याति । अतीतं प्रतिक्रामन् किं त्रिविधं त्रिविधेन प्रतिक्रामति, त्रिविधं द्विविधेन प्रतिक्रामति, त्रिविधमेकविधेन प्रतिक्रामति, यावदेकविधमेकविधेन प्रतिक्रामति ?। गौतम ! त्रिविधं त्रिविधेन प्रतिक्रामति, यावदेकविधमेकविधेन वा प्रतिक्रामति ।

प्रतिपद्यमानकः संभवति, पूर्वप्रतिपन्नस्त्वस्त्येव, चतुर्थे च प्रतिभागे चतुर्विधस्यापि सामायिकस्य प्रतिपद्यमानकः संभवति, पूर्वप्रतिपन्नस्तु विद्यत एव। बाह्यद्वीप-समुद्रेषु तु कालरहितेषु त्रयाणां सामायिकानां प्रतिपद्यमानकः संभवति, पूर्वप्रतिपन्नस्त्वस्त्येव, चरणस्यापि नन्दीश्वरादौ विद्याचारणादिगमने पूर्वप्रतिपन्नः संभवति ॥ इति निर्युक्तिगाथार्थः ॥ २७०८ ॥

अथ भाष्यम्—

तइयाइसु तिसु ओसप्पिणीए उस्सप्पिणीए दोसुं तु। नोउस्सप्पुसप्पिणिकाले तिसु सम्म-सुत्ताइं ॥२७०९॥
पलिभागम्मि चउत्थे चउव्विहं चरणवज्जियमकाले। चरणं पि हुज्ज गमणे सव्वं सव्वत्थ साहरणे ॥२७१०॥

व्याख्या— 'तइयाइसु तिसु ओसप्पिणीए त्ति' अवसर्पिण्यां तृतीयादिषु त्रिषु कालेषु सुषमदुःषमादिषु त्रिष्वरकेष्वित्यर्थः 'सर्वविरति-देशविरतिसामायिकयोः प्रतिपत्ता लभ्यते' इत्यध्याहारः। पूर्वप्रतिपन्नस्त्विह चतुर्णामस्त्येव। एवमुत्तरत्रापि पूर्वप्रतिपन्नो यथासंभवमभ्यूह्य वक्तव्य इति। 'उस्सप्पिणीए दोसुं ति' उत्सर्पिण्यां पुनर्द्वयोर्दुःषमसुषमा-सुषमदुःषमालक्षणयोः कालविशेषयोस्तत्प्रतिपत्ता प्राप्यते। 'नो इत्यादि' इह देवकुरू-त्तरकुरुषु सुषमसुषमाप्रतिभागः, हरिवर्ष-रम्यकेषु सुषमाप्रतिभागः, हैमवतै-रण्यवतेषु सुषमदुःषमाप्रतिभागः, पञ्चसु महाविदेहेषु दुःषमसुषमाप्रतिभागः। इह चतुर्ष्वपि स्थानेषूत्सर्पिण्य-ऽवसर्पिण्यभावाद् नोउत्सर्पिण्यवसर्पिणीकालोऽयमभिधीयते, यथाक्रमं च सुषमसुषमादिभिः कालविशेषैः सह प्रतिभागस्य साद‍ृश्यस्य विद्यमानत्वाच्चत्वारः सुषमसुषमादयः प्रतिभागा एते भण्यन्ते। तदस्मिन् प्रतिभागचतुष्टयलक्षणे नोउत्सर्पिण्यवसर्पिणीकाले चिन्त्यमाने 'तिसु त्ति' आद्येषु सुषमसुषमाप्रतिभागादिषु त्रिषु प्रतिभागेषु द्वे सम्यक्त्व-श्रुतसामायिके जीवः प्रतिपद्यते। 'पलिभागम्मि चउत्थे चउव्विहं ति' महाविदेहेषु चतुर्थे दुःषमसुषमाप्रतिभागे चतुर्विधमपि सामायिकं प्रतिपद्यते। 'चरणवज्जियमकाले त्ति' अकाले कालाभावे बाह्यद्वीप-समुद्रेषु चरणवर्जितमाद्यं सामायिकत्रयं मत्स्यादयः प्रतिपद्यन्ते। 'चरणं वि हुज्ज गमणे त्ति' नन्दीश्वरादौ विद्याचारणादीनां गमने चरणमपि पूर्वप्रतिपन्नं सर्वविरतिसामायिकमपि भवेदित्यर्थः। 'सव्वं सव्वत्थ साहरणे त्ति' देवादिना तु संहरणं प्रतीत्य सर्वं चतुर्विधमपि सामायिकं सर्वत्र निःशेषेऽपि काले प्राप्यते ॥ इति गाथाद्वयार्थः ॥ गतं कालद्वारम् ॥ २७०९ ॥ २७१० ॥



१ तृतीयादिषु त्रिष्ववसर्पिण्यामुत्सर्पिण्यां द्वयोस्तु। नोउत्सर्पिण्यवसर्पिणीकाले त्रिषु सम्यक्त्वश्रुते ॥ २७०९ ॥
प्रतिभागे चतुर्थे चतुर्विधं चरणवर्जितमकाले। चरणमपि भवेद् गमने सर्वं सर्वत्र संहरणे ॥ २७१० ॥

भंते! पच्छा पच्चाइक्खमाणे किं करेइ?। गोयमा! तीयं पडिक्कमइ, पडुप्पन्नं संवरेइ, अणागयं पच्चक्खाइ। तीयं पडिक्कममाणे किं तिविहं तिविहेण पडिक्कमइ, तिविहं दुविहेण पडिक्कमइ, तिविहं एगविहेण पडिक्कमइ, जाव एक्कविहं एक्कविहेण पडिक्कमइ?। गोयमा! तिविहं तिविहेणं पडिक्कमइ जाव एक्कविहं एक्कविहेण वा पडिक्कमइ"। तदेवमिह श्रुते त्रिविधं त्रिविधेनापि गृहस्थस्य प्रत्याख्यानमुक्तम्, तत् कथमस्य निषेधो भवता विधीयते? इति। सत्यम्, किन्तु त्रिविधं त्रिविधेन श्रुतोक्तं प्रत्याख्यानं स्थूलवध-मृषावादादीनामेव द्रष्टव्यम्, यथा कोऽपि सिंह-सरभ-गजादीनां वधादीनतिबादरांस्त्रिविधं त्रिविधेन प्रत्याख्याति; न पुनस्तत् सामान्येन सावद्ययोगविषयमवगन्तव्यमिति ॥ २६८६ ॥

अतो विशेषित एव क्वचिद् विवक्षितसावद्ययोगे त्रिविधं त्रिविधेनापि प्रत्याख्यानमदोषाय भवतीति दर्शयति—

जइ किंचिदप्पओयणमप्पप्पं वा विसेसियं वत्थुं। पच्चक्खेज्ज न दोसो सयंभूरमणाइमच्छु व्व ॥२६८७॥

जो वा निक्खमिउमणो पडिमं पुत्ताइसंतइनिमित्तं। पडिवज्जेज्ज तओ वा करेज्ज तिविहं पि तिविहेणं॥२६८८॥

जो पुण पुव्वारद्धाणुज्झियसावज्जकम्मसंताणो। तदणुमइपरिणइं सो न तरइ सहसा नियत्तेउं ॥ २६८९ ॥

व्याख्या— न विद्यते प्रयोजनं येन तदप्रयोजनं काकमांसादिकं विशेषितं वस्त्वाश्रित्य, अप्राप्यं वा मनुष्यक्षेत्राद् बहिर्दन्ति-दन्त-चित्रकचर्मादिकं किमपि विशिष्टं वस्त्वधिकृत्य यदि त्रिविधं त्रिविधेन प्रत्याचक्षीत तदा न कश्चिद् दोषः, यथा कश्चित् स्वयंभूरमणादिमत्स्यानधिकृत्य तद्वधं त्रिविधं त्रिविधेन प्रत्याचष्ट इति। यो वा व्रतं जिघृक्षुः पुत्रसन्तत्यादिनिमित्तं विलम्बमान एकादशीं प्रतिमां प्रतिपद्यते तको वाऽसौ त्रिविधं त्रिविधेनापि सावद्ययोगप्रत्याख्यानं कुर्याद् न दोष इति। यः पुनः पूर्वारब्धानुज्झितसावद्य-कर्मसंतानस्तदनुमतिपरिणतिं न शक्नोति सहसा निवर्तयितुम्, अतस्त्रिविधं त्रिविधेन नासौ प्रत्याख्याति ॥ इति गाथापञ्चकार्थः ॥ २६८७ ॥ २६८८ ॥ २६८९ ॥

तथापि गृहस्थसामायिकमपि परलोकार्थिना कार्यमेव, तस्यापि विशिष्टफलसाधकत्वादित्याह—

---

१ यदि किञ्चिदप्रयोजनमप्राप्यं वा विशेषित वस्तु। प्रत्याचक्षीत न दोषः स्वयंभूरमणादिमत्स्यानिव ॥ २६८७ ॥
यो वा निष्क्रान्तुमनाः प्रतिमां पुत्रादिसततिनिमित्तम्। प्रतिपद्येत सको वा कुर्यात् त्रिविध त्रिविधेन ॥ २६८८ ॥
यः पुन पूर्वारब्धानुज्झितसावद्यकर्मसतान,। तदनुमतिपरिणतिं स न शक्नोति सहसा निवर्तयितुम् ॥ २६८९ ॥

इदानीं गतिद्वारं विभणिषुराह—

चउसु[1] वि गईसु नियमा सम्मत्तसुयस्स होइ पडिवत्ती। मणुएसु होइ विरई विरयाविरई य तिरिएसु ॥२७११॥

चतसृष्वपि नारक-तिर्यग्-नरा-ऽमरगतिषु सम्यक्त्व-श्रुतसामायिकयोर्नियमात् प्रतिपत्तिर्भवति, न पुनर्न भवतीत्येवं नियमो द्रष्टव्यः, भवत्येव सदैव तत्प्रतिपत्तिरित्येवं तु न नियमः, कदाचिदन्तरस्यापि तत्प्रतिपत्तेरिहैव वक्ष्यमाणत्वादिति । पूर्वप्रतिपन्नास्तु सदैव लभ्यन्त इति। तथा, मनुष्येषु प्रतिपत्तिमङ्गीकृत्य भवति विरतिश्चारित्रात्मिका, नान्यगतिषु, पूर्वप्रतिपन्नास्तु तस्याः सदैवेह विद्यन्त इति। विरताविरतिश्च देशविरतिस्तिर्यक्षु 'भवति' इत्यनुवर्तते, इहापि संभवतस्तत्प्रतिपत्तिर्द्रष्टव्या, पूर्वप्रतिपन्नास्तु सदैव सन्तीति ॥ २७११ ॥

अथ भव्य-संज्ञिद्वारद्वयमभिधातुमाह—

भवसिद्धिओ[2] य जीवो पडिवज्जइ सो चउण्हमण्णयरं । पडिसेहो पुण असण्णि-मीसए सण्णि पडिवज्जे॥२७१२॥

भवा भाविनी सिद्धिर्यस्यासौ भव्यसिद्धिको भव्यो जीवः, स चतुर्णां सामायिकानामन्यतरत् सामायिकं प्रतिपद्यते । इदमुक्तं भवति- कदाचित् सम्यक्त्व-श्रुतसामायिके प्रतिपद्यते, कदाचिद् देशविरतिम्, कदाचित् सर्वविरतिमपि प्रतिपद्यत इति । पूर्वप्रतिपन्नास्तु नानाभव्याश्चतुर्णामपि सामायिकानां सदैव लभ्यन्त इति। एवं संज्ञ्यपि चतुर्णामपि सामायिकानां कदाचित् किञ्चित् प्रतिपद्यते। तथाचाह- 'सण्णि पडिवज्जे त्ति' पूर्वप्रतिपन्नास्तु संज्ञिनोऽपि भव्यवत् सदैव प्राप्यन्त इति । 'पडिसेहो इत्यादि' पूर्वप्रतिपन्नान् प्रतिपद्यमानकांश्चाश्रित्य चतुर्णामपि सामायिकानां प्रतिषेधः कार्यः। क ? इत्याह- असंज्ञिनि, मिश्रके, अभव्ये च "[3]सिद्धे नो सण्णी, नो असण्णी; नो भव्वे, नो अभव्वे" इति वचनाद् मिश्रकः सिद्धोऽभिधीयते । ततश्चैते त्रयोऽप्यसंज्य-ऽभव्य-मिश्रकाश्चतुर्णामपि सामायिकानां न पूर्वप्रतिपन्ना नापि प्रतिपद्यमानका लभ्यन्त इति भावार्थः । पुनःशब्दादसंज्ञी सास्वादनमाश्रित्य सम्यक्त्व-श्रुतसामायिकयोः पूर्वप्रतिपन्नो भवेदिति द्रष्टव्यम्, तथा मिश्रोऽपि भवस्थकेवली सम्यक्त्व-चारित्रसामायिकयोः पूर्वप्रतिपन्नो

---

१ चतसृष्वपि गतिषु नियमात् सम्यक्त्वश्रुतयोर्भवति प्रतिपत्तिः । मनुजेषु भवति विरतिर्विरताविरतिश्च तिर्यक्षु ॥ २७११ ॥

२ भवसिद्धिकश्च जीवः प्रतिपद्यते स चतुर्णामन्यतरत् । प्रतिषेधः पुनरसंज्ञि-मिश्रकयो. संज्ञी प्रतिपद्येत ॥ २७१२ ॥

३ सिद्धो नो संज्ञी, नो असंज्ञी, नो भव्य, नो अभव्य. ।

[1]सामाइयम्मि उ कए समणो इव सावओ हवइ जम्हा । एएण कारणेणं बहुसो सामाइयं कुज्जा ॥२६९०॥

कृते पुनर्गृहस्थसामायिकेऽपि श्रमण इव श्रावको भवति, यस्मात् प्रायोऽशुभयोगरहितत्वाद् बहुतरकर्मनिर्जरोऽसौ भवतीति भावः । अनेन कारणेन बहुशोऽनेकधा सामायिकं कुर्याद् मध्यस्थो भूयादिति ॥ २६९० ॥

मध्यस्थस्यैव लक्षणमाह—

[2]जो न विवट्टइ रागे नवि दोसे दोण्ह मज्झयारम्मि । सो होइ उ मज्झत्थो सेसा सव्वे अमज्झत्था ॥ २६९१ ॥

सुगता, नवरं मध्ये राग-द्वेषयोरन्तराले तिष्ठतीति मध्यस्थः, न रागेण स्पृश्यते, नापि द्वेषेणेति भावः ॥ इति निर्युक्तिगाथाद्वयार्थः ॥ २६९१ ॥

अथ 'क्व किं सामायिकम् ?' इति निरूपणार्थं द्वारगाथात्रयमाह—

[3]खेत्त-दिसि-काल-गई भविय-सन्नि-ऊसास-दिट्ठि-माहारे । पज्जत्त-सुत्त-जम्म-ट्ठिई वेय-सण्णा-कसाया-ऽऽउं॥२६९२॥

नाणे जोगु-वओगे सरीर-संठाण-संघयण-माणे । लेसापरिणामं वेयणा य समुग्घायकम्मे य ॥ २६९३ ॥

निव्वेट्ठणमुव्वट्टे आसवकरणं तहा अलंकारं । सयणा-सण-ट्ठाणट्ठे चंकमंते य किं कहियं ॥ २६९४ ॥

आसां समुदायार्थः क्षेत्र-दिक्-काल-गति-भव्य-संज्ञि-उच्छ्वास-दृष्टि-आहारकानङ्गीकृत्यालोचनीयं 'किं कहियं ति' 'किं क्व सामायिकम् ?' इति संबन्धः; तथा, पर्याप्त-सुप्त-जन्म-स्थिति-वेद-संज्ञा-कषाया-ऽऽयूंषि चेति । तथा, ज्ञानं योगो-पयोगौ, शरीर-संस्थान-संहनन-मानानि, लेश्यापरिणामं वेदनां समुद्घातकर्म चाश्रित्यालोचनीयं 'किं क्व सामायिकम् ?' इति । तथा, निर्वेष्टनो-द्वर्तने आश्रवकरणम्, तथाऽलङ्कारम्, शयना-ऽऽसन-स्थानस्थांश्चङ्क्रमतश्चाश्रित्य चिन्तनीयं 'किं क्व सामायिकम् ?' इति ॥२६९२॥२६९३॥२६९४॥

---

१ सामायिके तु कृते श्रमण इव श्रावको भवति यस्मात् । एतेन कारणेन बहुशः सामायिकं कुर्यात् ॥ २६९० ॥

२ यो न विवर्तते रागे नापि द्वेषे द्वयोर्मध्ये । स भवति तु मध्यस्थः शेषाः सर्वेऽमध्यस्थाः ॥ २६९१ ॥

३ क्षेत्र-दिक्-काल-गतीर्भविक-संज्ञि-उच्छ्वास-दृष्ट्या-ऽऽहारान् । पर्याप्त-सुप्त-जन्म-स्थितीर्वेद-सञ्ज्ञा कषाया-ऽऽयूंषि ॥ २६९२ ॥
ज्ञानं योगो-पयोगौ शरीर-संस्थान-संहनन-मानानि । लेश्यापरिणामं वेदनां च समुद्घातकर्म च ॥ २६९३ ॥
निर्वेष्टनमुद्वर्तनमास्रवकरणं तथाऽलङ्कारम् । शयना-ऽऽसन-स्थानस्थांश्चङ्क्रमतश्च किं क्व ? ॥ २६९४ ॥

भवेदित्यपि द्रष्टव्यम् । अयं च न संज्ञी नाप्यसंज्ञीति मिश्रता द्रष्टव्या । आह– यद्येवं सिद्धोऽपि सम्यक्त्वसामायिकस्य पूर्वप्रतिपन्नो लभ्यते, अतोऽस्यापि किमिति सर्वसामायिकनिषेधः क्रियते ? । सत्यम्, किन्तु सम्यक्त्ववर्जं सामायिकत्रयं संसारस्थानामेव संभवति, तत्साहचर्यात् सम्यक्त्वसामायिकमपि संसारिणां संबन्धि विचार्यते, तथाभूतं तु सिद्धे नास्तीति निषिध्यत इत्यदोषः ॥ इति निर्युक्तिगाथाद्वयार्थः ॥ २७१२ ॥

पुनःशब्दस्य व्याख्यानं भाष्यकारोऽप्याह—

[1]पुणसद्दादसण्णी सम्म-सुए होज्ज पुव्वपडिवन्नो । मीसो भवत्थकाले सम्मत्त-चारित्तपडिवन्नो ॥ २७१३ ॥

गतार्था ॥ २७१३ ॥

अथोच्छ्वासनिःश्वासक-दृष्टिद्वारद्वयाभिधित्सया प्राह—

[2]ऊसासय-नीसासय मीसे पडिसेहो दुविहपडिवण्णो। दिट्ठी य दो नया खलु ववहारो निच्छओ चेव ॥२७१४॥

उच्छ्वसितीत्युच्छ्वासकः, निःश्वसितीति निःश्वासक आनापानपर्याप्तिपरिनिष्पन्न इत्यर्थः । 'स चतुर्णामपि सामायिकानां प्रतिपद्यमानकः संभवति, पूर्वप्रतिपन्नकस्त्वस्त्येव' इति वाक्यशेषः । मिश्रः खल्वानापानपर्याप्त्यपर्याप्तो भण्यते । तत्र प्रतिपत्तिमङ्गीकृत्य प्रतिषेधः, नासौ चतुर्णामपि प्रतिपद्यमानकः संभवतीति भावना । 'दुविहपडिवण्णो त्ति' स एव द्विविधस्य सम्यक्त्व-श्रुतसामायिकस्य प्रतिपन्नः पूर्वप्रतिपन्नो भवति देवादिर्जन्मकाल इति । अथवा मिश्रः सिद्धः, तत्र चतुर्णामपि सामायिकानां पूर्वोक्तयुक्तेरुभयथापि प्रतिषेधः । 'दुविहपडिवण्णो त्ति' इह मिश्रः शरीररहितत्वाद् नोउच्छ्वास-निश्वासकत्वेन शैलेशीगतोऽयोगिकेवली गृह्यते, स द्विविधस्य सम्यक्त्व-चारित्रसामायिकस्य पूर्वप्रतिपन्नो भवति । दृष्टौ विचार्यमाणायां द्वौ नयौ खलु विचारकौ– व्यवहारो निश्चयश्चैव । तत्राद्यस्य यथा मतिज्ञानविचारेऽज्ञानी ज्ञानं प्रतिपद्यते, तथेहाप्यसामायिकी– असामायिकवान् सामायिकं प्रतिपद्यते, तथाऽसामायिकी दीर्घकालिकी तत्प्रतिपत्तिः । द्वितीयस्य तु यथा ज्ञानी ज्ञानं प्रतिपद्यते तथात्रापि सामायिकी सामायिकवान् सामायिकं प्रतिपद्यते, सामायिकी च तत्प्रतिपत्तिः, क्रियाकाल-निष्ठाकालयोरभेदात् ॥ इति निर्युक्तिगाथार्थः ॥ २७१४ ॥

---

१ पुनःशब्दादसंज्ञी सम्यक्त्व-श्रुतयोर्भवेत् पूर्वप्रतिपन्नः । मिश्रो भवस्थकाले सम्यक्त्व-चारित्रप्रतिपन्नः ॥ २७१३ ॥

२ उच्छ्वासक-निःश्वासको मिश्रे प्रतिषेधो द्विविधप्रतिपन्नः । दृष्टौ च द्वौ नयौ खलु व्यवहारो निश्चयश्चैव ॥ २७१४ ॥

इदानीमवयवार्थ उच्यते। तत्रोर्ध्वलोकादिक्षेत्रमङ्गीकृत्य सम्यक्त्वादिसामायिकानां लाभादिभावमभिधित्सुराह—

[1]सम्म-सुयाणं लाभो उड्ढं य अहे य तिरियलोए य। विरई मणुस्सलोए विरयाविरई य तिरिएसु ॥ २६९५ ॥

सम्यक्त्व-श्रुतसामायिकयोर्लाभः प्राप्तिरूर्ध्वं चाधश्च तिर्यग्लोके भवति, तत्रोर्ध्वलोके मेरु-सुरलोकादिषु निसर्गतोऽधिगमाद् वा सम्यक्त्वसामायिकस्य, तथा श्रुताज्ञानस्य तत्समकालमेव श्रुतज्ञानतया परिणामात् श्रुतसामायिकस्य च लाभो भवति। एवमधोलोकेऽप्यधोलौकिकग्रामेषु नरकेषु च ये सम्यक्त्वं प्रतिपद्यन्ते तेषां यथोक्तसामायिकद्वयलाभो वक्तव्यः। एवं तिर्यग्लोकेऽपि यथोक्तसामायिकद्वयलाभो वक्तव्यः। इह च त्रिष्वपि लोकेषु यथोक्तसामायिकद्वयं लभ्यत एवेतीत्थमवधारणीयम्, न पुनर्यथोक्तसामायिकद्वयमेव लभ्यत इति, यत आह– 'विरई मणुस्सलोए त्ति' तिर्यग्लोकविशेषभूतेऽर्धतृतीयद्वीप-समुद्रलक्षणे मनुष्यलोके विरतिः सर्वविरतिसामायिकमपि लभ्यते। इदं चेहैव लभ्यते नान्यत्रेति द्रष्टव्यम्, मनुष्या एवैतत्प्रतिपत्तारो नान्य इत्यर्थः। क्षेत्रनियमं तु विशिष्टश्रुतविदो विदन्ति। विरताविरतिश्च देशविरतिसामायिकलक्षणा लाभविचारे तिर्यक्षु भवति, मनुष्येषु च केषुचिदिति ॥२६९५॥

[2]पुव्वपडिवण्णया पुण तीसु वि लोएसु नियमओ तिण्हं। चरणस्स दोसु नियमा भयणिज्जा उड्ढलोगम्मि ॥२६९६॥

पूर्वप्रतिपन्नकास्तु त्रयाणां सामायिकानां नियमेन त्रिष्वपि लोकेषु विद्यन्ते। चतुर्थस्य सामायिकस्य द्वयोरेवाधोलोक-तिर्यग्लोकयोः पूर्वप्रतिपन्ना नियमतः सन्ति। ऊर्ध्वलोके पुनर्भाज्याः कदाचिद् भवन्ति कदाचिद् नेति ॥ गतं क्षेत्रद्वारम् ॥२६९६॥

अथ दिग्द्वारं प्रतिपिपादयिषुर्दिक्स्वरूपं तावद् निरूपयन्नाह—

[3]नामं ठवणा दविए खेत्त-दिसा तावखेत्त-पण्णवए। सत्तमिया भावदिसा परूवणा तस्स कायव्वा ॥२६९७॥

इह नाम-स्थापनादिक्, तथा, द्रव्य-क्षेत्रदिक् तापक्षेत्र-प्रज्ञापकविषया दिग् वक्तव्या। तथा, सप्तमी च भावदिग् वक्तव्या। तत्र तस्य नामादिगादिसप्तकस्य प्ररूपणा कर्तव्या ॥ इति निर्युक्तिगाथाषट्कार्थः ॥ २६९७ ॥

अथ नाम-स्थापने क्षुण्णे, द्रव्यादिक्स्वरूपविचारणार्थमाह—

1 सम्यक्त्व-श्रुतयोर्लाभ ऊर्ध्वं चाधश्च तिर्यग्लोके च। विरतिर्मनुष्यलोके विरताविरतिश्च तिर्यक्षु ॥ २६९५ ॥

2 पूर्वप्रतिपन्नका. पुनस्त्रिष्वपि लोकेषु नियमतस्त्रयाणाम्। चरणस्य द्वयोर्नियमाद् भजनीया ऊर्ध्वलोके ॥ २६९६ ॥

3 नाम स्थापना द्रव्ये क्षेत्रदिक् तापक्षेत्र-प्रज्ञापकयोः। सप्तमी भावदिक् प्ररूपणा तस्य कर्तव्या ॥ २६९७ ॥

मिश्रशब्दभावार्थं व्यवहार-निश्चयनयमतविचारं च भाष्यकारोऽप्याह—

मीसो नोउस्सासयनीसासो तेहिं जो अपज्जत्तो। हुज्ज पवण्णो दोन्नि उ सेलेसिगओ चरित्तं च ॥ २७१५ ॥

पढमस्सासामइगी पडिवज्जइ बिइयगस्स सामइगी । ववहार-निच्छयमयं नेयं मइनाणलाभो व्व ॥ २७१६ ॥

व्याख्या– इह मिश्रो नोउच्छ्वासक-निःश्वासकोऽयोगिकेवली गृह्यते । तथा, ताभ्यामुच्छ्वासनिःश्वासाभ्यामपर्याप्तकश्चेह मिश्रः । स चापर्याप्तको देवादिर्जन्मकाले द्विविधस्य सम्यक्त्वश्रुतसामायिकस्य पूर्वप्रतिपन्नो लभ्यते । यस्तु नोउच्छ्वासक-निःश्वासको मिश्रः शैलेशीगतोऽयोगिकेवली, स चारित्रसामायिकं चशब्दात् सम्यक्त्वसामायिकं चाश्रित्य पूर्वप्रतिपन्नः प्राप्यत इति । इष्टो नयविचारे प्रथमस्य व्यवहारनयस्यासामायिकी असामायिकवान् सामायिकं प्रतिपद्यते, द्वितीयस्य तु निश्चयनयस्य सामायिकी सामायिकवान् सामायिकं प्रतिपद्यत इत्येवमादि व्यवहार-निश्चयनयमतं मतिज्ञानलाभ इवात्रापि विज्ञेयम् ॥ इति गाथाद्वयार्थः ॥ २७१५ ॥ २७१६ ॥

अथाहारक-पर्याप्तकद्वारद्वयमाह—

आहारगो उ जीवो पडिवज्जइ सो चउण्हमण्णयरं । एमेव य पज्जत्तो सम्मत्त-सुए सिया इयरो ॥२७१७॥

आहारयतीत्याहारकस्तु यो जीवः स चतुर्णां सामायिकानां प्राग्वदन्यतरत् प्रतिपद्यते, पूर्वप्रतिपन्नस्त्वस्त्येव; षड्भिः पर्याप्तिभिः पर्याप्तकोऽप्येवमेव चतुर्णामन्यतरत् प्रतिपद्यते, पूर्वप्रतिपन्नस्त्वस्त्येव । 'सम्मत्त-सुए सिया इयरो त्ति' इतरोऽनाहारकोऽपर्याप्तकश्च; तत्रानाहारकोऽपान्तरालगतौ सम्यक्त्व-श्रुते अङ्गीकृत्य स्याद् भवेत् 'पूर्वप्रतिपन्नः, प्रतिपद्यमानस्तु नैव' इति वाक्यशेषः । केवली तु समुद्घात-शैलेश्यवस्थायामनाहारको दर्शन-चरण-सामायिकद्वयस्य पूर्वप्रतिपन्नो लभ्यते, अपर्याप्तोऽपि सम्यक्त्व-श्रुते अधिकृत्य स्यात् पूर्वप्रतिपन्नः ॥ इति निर्युक्तिगाथार्थः ॥ २७१७ ॥

अत्र भाष्यम्—

१ मिश्रो नो उच्छ्वासकनिःश्वासस्ताभ्यां योऽपर्याप्तः । भवेत् प्रपन्नो द्वे तु शैलेशीगतश्चरित्रं च ॥ २७१५ ॥
प्रथमस्यासामायिकी प्रतिपद्यते द्वितीयस्य सामायिकी । व्यवहार-निश्चयमतं ज्ञेयं मतिज्ञानलाभ इव ॥ २७१६ ॥
२ आहारकस्तु जीव प्रतिपद्यते स चतुर्णामन्यतरत् । एवमेव च पर्याप्तः सम्यक्त्व-श्रुतयोः स्यादितरः ॥ २७१७ ॥

[1]तेरसपएसियं जं जहण्णओ दसादिसागिई दव्वं। उक्कोसमणंतपएसियं च सा होइ दव्वदिसा ॥२६९८॥

द्रव्यमेव दशदिगुत्थानहेतुत्वाद् दिग् द्रव्यदिक्, द्रव्यप्रधाना द्रव्यविषया वा दिग् द्रव्यदिक्। तत्र जघन्यतस्त्रयोदशप्रदेशिकम्, उत्कृष्टतस्त्वनन्तप्रदेशिकं दशदिगाकृति दशदिक्स्थाननिबन्धनं यद् द्रव्यं सा द्रव्यदिग् भवति। इदमत्र हृदयम्– जघन्यतस्त्रयोदशप्रदेशावगाढात् त्रयोदशप्रदेशिकात्, उत्कृष्टतस्त्वसंख्येयप्रदेशावगाढादनन्तप्रदेशिकाद् द्रव्याद् दश दिश उत्तिष्ठन्ति। एतच्च द्रव्यं संपूर्णदशदिगुत्थानकारणत्वाद् द्रव्यदिगुच्यत इति ॥ २६९८ ॥

एतदेव भावयन्नाह––

[2]ऍक्केक्को विदिसासु मज्झे य दिसासुमायया दो दो। बिंति दसाणुगमण्णे दसादिसमेक्केक्कयं काउं ॥ २६९९ ॥

तं न दसादिसागारं जं चउरस्सं ति तन्न दव्वदिसा। खेत्तदिसट्ठपएसियरुयगाओ मेरुमज्झम्मि ॥ २७०० ॥

व्याख्या– 'एक्केक्को विदिसासु मज्झे य त्ति' एकः परमाणुर्मध्येऽवधौ व्यवस्थाप्यते, एकैकस्तु परमाणुश्चतसृष्वपि विदिक्षु स्थाप्यते; एवमेते पञ्च परमाणवः पञ्चसु प्रदेशेष्ववगाढाः। तथा, 'दिसासुमायया दो दो त्ति' अपरौ च तिसृष्वपि दिक्ष्वायतावववस्थितौ द्वौ द्वौ परमाणू स्थाप्येते। एवमेतत् त्रयोदशप्रदेशिकं स्कन्धरूपत्वेनैकपरिणाममापन्नं त्रयोदशसु नभःप्रदेशेष्ववगाढं दशदिगुत्थानहेतुत्वाद् दशादिकं द्रव्यं जघन्यतो द्रव्यदिगुच्यते। अत्र स्थापना––



1 त्रयोदशप्रदेशिकं यज्जघन्यतो दशदिगाकृति द्रव्यम्। उत्कृष्टमनन्तप्रदेशिकं च सा भवति द्रव्यादिक् ॥ २६९८ ॥

2 एकैको विदिक्षु मध्ये च दिक्ष्वायतौ द्वौ द्वौ। ब्रुवन्ति दशाणुगमन्ये दशदिक्कमेकैकं कृत्वा ॥ २६९९ ॥
तद् न दशदिगाकारं यच्चतुरस्रमिति तद् न द्रव्यदिक्। क्षेत्रदिगष्टप्रदेशिकरुचकाद् मेरुमध्ये ॥ २७०० ॥

[1]पुव्वपवण्णोऽणाहारगो दुगं सो भवंतरालम्मि । चरणं सेलेसाइसु इयरो त्ति दुगं अपज्जत्तो ॥ २७१८ ॥

गतार्था, नवरं 'चरणं सेलेसाइसु त्ति' आदिशब्दात् समुद्घातपरिग्रहः । ततश्च शैलेश्यां समुद्घाते च केवल्यनाहारकश्चरणस्योपलक्षणत्वात् सम्यक्त्वसामायिकं चारित्रसामायिकं चाश्रित्य पूर्वप्रतिपन्नः प्राप्यते । इतरस्त्वपर्याप्तको देवादिजन्मकाले सम्यक्त्व-श्रुतलक्षणसामायिकद्विकमाश्रित्य पूर्वप्रतिपन्नो लभ्यत इति ॥ २७१८ ॥

सांप्रतं सुप्त-जन्मद्वारद्वयव्याचिख्यासयेदमाह—

[2]निद्दाइ भावओ वि य जागरमाणो चउण्हमण्णयरं । अंडयं तह पोय-जरो-ववाइ दो तिण्णि चउरो वा॥२७१९॥

इह सुप्तो द्विविधः– द्रव्यसुप्तः, भावसुप्तश्च । एवं जाग्रदपीति । तत्र द्रव्यसुप्तो निद्रया, भावसुप्तस्तु मिथ्यादृष्टिः । तथा द्रव्यजागरो निद्रारहितः, भावजागरः सम्यग्दृष्टिः । तत्र निद्रया भावतोऽपि च जाग्रच्चतुर्णां सामायिकानामन्यतरत् प्रतिपद्यते । 'पूर्वप्रतिपन्नस्त्वस्त्येव' इत्यध्याहारः । अपिशब्दो विशेषणे । किं विशिनष्टि ? । भावजागरः सम्यग्दृष्टिर्द्वे आद्यसामायिके प्रतीत्य पूर्वप्रतिपन्न एव व्यवहारनयमतेन भवेत्, निश्चयनयमतेन तु तत्प्रतिपत्तापि भवति । चरणं देशविरतिं चाश्रित्य पूर्वप्रतिपन्नः प्रतिपद्यमानकश्च भवति । निद्रासुप्तस्तु चतुर्णामपि प्रतिपन्नो भवति, न तु प्रतिपद्यमानकः, निद्रासुप्तस्य तथाविधविशुद्ध्यादिसामग्र्यभावात् । भावसुप्तस्तूभयविकलः, तस्य मिथ्यादृष्टित्वात्; वक्ष्यति च– "मिच्छो उ भावसुत्तो न पवज्जइ"[3] इति । अथवा, नियमतो निश्चय-व्यवहारनयाभिप्रायात् स भावसुप्तः सम्यक्त्व-श्रुतसामायिकद्वयप्रतिपत्तिकाले सम्यग्दृष्टिर्वा मिथ्यादृष्टिर्वाऽभिहितः; तथा च वक्ष्यते– 'सोऽहवा[3] नयमयाओ, सम्मो वा मिच्छो वा निच्छय-ववहारओऽभिहिओ' इति । इदमुक्तं भवति– निश्चयनयस्य सम्यग्दृष्टिः सम्यक्त्वं प्रतिपद्यते, व्यवहारनयस्य तु मिथ्यादृष्टिः सम्यक्त्वं प्रतिपद्यते । अतो व्यवहारनयमतेन भावसुप्तो मिथ्यादृष्टिः सम्यक्त्वादिसामायिकद्वयस्य प्रतिपत्ता लभ्यत इति । जन्म चतुर्विधम्– अण्डजम्, पोतजम्, जरायुजम्, औपपातिकं चेति । तत्राण्डजा हंसादयः, पोतजा हस्त्यादयः, जरायुजा मनुष्याः, औपपातिका देव-नारकाः । एतेषां यथासंभवं द्वे, त्रीणि, चत्वारि वा सामायिकानि भवन्ति । तत्र हंसादयो द्वे त्रीणि वाऽऽद्यसामायिकानि कदाचित् प्रतिपद्यन्ते; पूर्वप्रतिपन्नास्त्वेषां ते नियमतः सन्त्येव । एवं पोतजा हस्त्यादयोऽपि वक्तव्याः । ॥१०८१॥

१ पूर्वप्रपन्नोऽनाहारको द्विक स भवान्तराले । चरणं शैलेश्यादिष्वितर इति द्विकमपर्याप्तः ॥ २७१८ ॥

२ निद्रया भावतोऽपि च जाग्रच्चतुर्णामन्यतरत् । अण्डजं तथा पोत-जरो-पपाता द्वे त्रीणि चत्वारि वा ॥ २७१९ ॥ ३ गाथा २७२१ ।

इह चैकैकपरमाणुस्थाने यदि द्व्यणुकादीनामनन्ताणुकपर्यन्तानां स्कन्धानामवगाहना क्रियते तदापि द्रव्यादिगियं भवति; दशादिगुत्थाननिबन्धनत्वात् । अत उक्तमुत्कृष्टमनन्तप्रदेशिकमिति । अस्यापि जघन्यतस्त्रयोदशस्वेव प्रदेशेष्ववगाहः, उत्कृष्टतस्त्वसंख्येयेष्वपि ॥

आह– नन्वत्र यतो द्रव्याद् दशानां दिशां प्रभव उन्मीलना भवति तद् द्रव्यं दिक्त्वेन विवक्षितम्, तदत्र पृच्छामः– तज्जघन्यतस्त्रयोदशभिरेव प्रदेशैर्भवति न हीनाधिकैरित्यत्र का युक्तिः? । अत्रोच्यते– इह मध्ये तावदेकपरमाणुरवधौ व्यवस्थाप्य एव, तमन्तरेण दिग्व्यवस्थायाः कर्तुमशक्यत्वात् । तस्य च चतसृष्वपि दिक्ष्वेकैकस्मिन् व्यवस्थापिते षण्णां दिशामेवोन्मीलना भवति, न विदिशाम्, एकस्मात् परमाणोर्विदिगुत्थानाभावात्, षड्दिक्संबन्धस्यैव परमाणोरभिधानात्, "एगपएसोगाढं सत्तपएसा य से फुसणा"[1] इति वचनात् । यदि हि परमाणोर्विदिक्संबन्धः स्यात् तदैकादशप्रदेशैव स्पर्शना स्यात्, न सप्तप्रदेशेति भावः । अतोऽन्येऽपि चतसृष्वपि दिक्षु चत्वारः परमाणवो व्यवस्थाप्यन्त इत्येवमेते नव भवन्ति । न चेत्थमपि विदिगुन्मीलना संपद्यते । येऽप्यपरेऽपि दिक्षु चत्वारो व्यवस्थापितास्तैः पुनरपि दिश एव उत्तिष्ठन्ति न विदिशः, कोणानामन्तर्निविष्टत्वात् । अतो विदिगुन्मीलनार्थमपरेऽपि चत्वारः कोणेषु व्यवस्थाप्यन्त इति दशादिक्प्रभवं क्षेत्रं जघन्यतस्त्रयोदशभिरेवाणुभिर्भवति, न हीनाधिकैरिति । स्थापनाप्यत्र परमार्थतश्चैतस्येवावधारणीया । यच्चेह तदुपदर्शनं तद् मुग्धविनेयजनानुग्रहार्थमेवावगन्तव्यम्, यथावदस्या दर्शयितुमशक्यत्वादित्यलं प्रसङ्गेन । प्रकृतं प्रस्तुमः– 'विंति दसाणुगमित्यादि' अन्ये तु व्याख्यातारो दशस्वपि दिक्ष्वेकैकं परमाणुं व्यवस्थाप्य जघन्यतो दशाणुकं द्रव्यं द्रव्यादिगिति ब्रुवते । तदेतद् न युक्तम्, यस्माद् दशदिगाकारं दशादिकं द्रव्यमनुयोगवेदिभिश्चतुरस्रमेव दृष्टम्, तच्च पूर्वदर्शितस्थापनानुसारतो भावनीयम् । यत्तु दशाणुकं द्रव्यं दशसु दिक्षु स्थाप्यते तद् वृत्ताकारमेव भवति, अतोऽचतुरस्रत्वात् तद् द्रव्यादिग् न भवति । किञ्च, यद्यवधौ परमाणुर्न व्यवस्थाप्यते तदा तन्निरपेक्षा दिक्कल्पना कर्तुं न शक्यते, तद्व्यवस्थापने त्वेकादशपरमाणुसंख्याप्राप्तेर्दशाणुकत्वहानिः प्राप्नोति । अतो यत् किञ्चिदेतदिति । तदेवमुक्ता द्रव्यदिक् ॥

सांप्रतं क्षेत्रदिशमभिधित्सुराह– 'खेत्तदिसेत्यादि' अथ क्षेत्रदिगुच्यते । सा च मेरुमध्येऽष्टप्रदेशिकरुचकाद् भावनीया; तथाहि[2]– तिर्यग्लोकस्य मध्यभागे आयाम-विष्कम्भाभ्यां प्रत्येकं रज्जुप्रमाणौ सर्वप्रतराणां क्षुल्लकौ द्वौ नभःप्रदेशप्रतरौ विद्येते । तयोश्च मेरुमध्यप्रदेशे मध्यं लभ्यते । तत्र च मध्य उपरितनप्रतरस्य ये चत्वारो नभःप्रदेशास्तथाऽधस्तनप्रतरस्य तु ये चत्वारो व्योमप्रदेशास्तेषाम्-

१ एकप्रदेशावगाढं सप्तप्रदेशा च तस्य स्पर्शना । २ ज. 'हि रत्नप्रभापृथिव्या मध्य' ।

जरायुजास्तु मनुष्याश्चत्वार्यपि सामायिकानि प्रतिपद्यन्ते, पूर्वप्रतिपन्नास्तु तेषां नियमतः सन्ति । देव-नारकाः पुनराद्ये द्वे सामायिके प्रतिपद्यन्ते, प्रतिपन्नास्त्वस्य सामायिकद्वयस्य ते नियमतः सन्ति । इह च मूलावश्यकनिर्युक्त्यामेवं पाठो दृश्यते– "अंडज-पोयज-जराउय तिग-तिग-चउरो भवे कमसो" इति; टीकायां तु तत्रैवं व्याख्यानमभिवीक्ष्यते– जन्म त्रिविधम्– अण्डज-पोतज-जरायुजभेद-भिन्नम् । तत्र यथासंख्यं 'तिग-तिग-चउरो भवे कमसो' । ततोऽण्डजादीनां त्रयाणामपि व्याख्याने कृते पश्चाद् व्याख्यातम्– 'औपपातिकास्तु प्रथमयोर्द्वयोरेव' इति । भाष्यटीकाकृताऽप्येतद् मूलावश्यकटीकागतं सर्वं प्रायस्तदवस्थमेव लिखितम् । भाष्ये तु गाथाया-मप्यौपपातिकानामुपादानं कृतं दृश्यते । ततोऽस्या गम्भीरोक्तेः समाधानं बहुश्रुता एव विदन्ति । अस्माभिस्तु यथा भाष्ये दृष्टं तथा व्याख्यातम्, संगतमसंगतं वेति पुनस्त एव जानन्ति ॥ इति निर्युक्तिगाथार्थः ॥ २७१९ ॥

अथ भाष्यव्याख्यानम्—

सम्मद्दिट्ठी[2] किर भावजागरो दुण्णि पुव्वपडिवन्नो । होज्ज पडिवज्जमाणो चरणं सो देसविरइं च ॥ २७२० ॥
मिच्छो उ भावसुत्तो न पवज्जइ सोऽहवा नयमयाओ। सम्मो वा मिच्छो वा निच्छय-ववहारओऽभिहिओ ॥२७२१॥
चउरो जराउजम्मे हुज्ज पवण्णो पवज्जमाणो वा । सेसे तिन्नि पवण्णो दोण्णि त ओवा पवज्जेज्ज ॥ २७२२ ॥

तिस्रोऽप्युक्तार्था एवेति । नवरं 'सेसे तिन्नि पवण्णो इत्यादि' इह शेषग्रहणेनाण्डज-पोतजलक्षणं जन्मद्वयमेव गृह्यते; औपपातिकास्तु पूर्वप्रतिपन्नाः प्रतिपद्यमानकाश्चाद्ययोर्द्वयोरेव भवन्तीति द्रष्टव्यमिति ॥ २७२०॥२७२१॥२७२२ ॥

अथ स्थितिद्वारमाह—

उक्कोसयट्ठिईए[3] पडिवज्जंते य नत्थि पडिवण्णो । अजहण्णमणुक्कोसे पडिवज्जे यावि पडिवण्णे ॥२७२३॥

---

१ अण्डजाः पोतजा जरायुजास्त्रीणि त्रीणि चत्वारि भवेयुः क्रमशः ।

२ सम्यग्दृष्टि किल भावजागरो द्वे पूर्वप्रतिपन्नः । भवेत् प्रतिपद्यमानश्चरणं स देशविरतिं च ॥ २७२० ॥
मिथ्यस्तु भावसुप्तो न प्रपद्यते सोऽथवा नयमतात् । सम्यग् वा मिथ्या वा निश्चय-व्यवहारतोऽभिहित ॥ २७२१ ॥
चत्वारि जरायुजन्मनि भवेत् प्रपन्न प्रपद्यमानो वा । शेषत्रीणि प्रपन्नो द्वे ते औपपातिका. प्रपद्येरन् ॥ २७२२ ॥

३ उत्कृष्टस्थितौ प्रतिपद्यमानश्च नास्ति प्रतिपन्न. । अजघन्यानुत्कृष्टे प्रतिपद्येत चापि प्रतिपन्न ॥ २७२३ ॥

मष्टानामपि प्रदेशानां समये रुचक इति परिभाषा। अयं चाष्टप्रदेशिको रुचकः समस्ततिर्यग्लोकमध्यवर्त्ती गोस्तनाकारः क्षेत्रतः षण्णामपि दिशां चतसृणामपि च विदिशां प्रभवो मन्तव्यः; उक्तं च—

"[1]अट्ठपएसो रुयगो तिरियलोयस्स मज्झयारम्मि। एस पभवो दिसाणं एसेव भवे अणुदिसाणं॥ १॥"

अस्माच्च रुचकाद् दिशो विदिशश्च यथा प्रभवन्ति तथोच्यते— यथोक्तरुचकाद् वहिश्चतसृष्वपि दिक्षु प्रत्येकमादौ द्वौ द्वौ नभःप्रदेशौ भवतः, तदग्रतश्चत्वारः, तत्पुरतः षट्, ततोऽप्यग्रतोऽष्टौ व्योमप्रदेशा इत्येवं द्व्यादिद्व्युत्तरश्रेण्या चतसृष्वपि दिक्षु पृथग् नेतव्यम्। तत एताः शकटोद्धिसंस्थानाः पूर्वादिका महादिशश्चतस्रो भवन्ति। एतासां च चतसृणामपि दिशां चतुर्ष्वन्तरालकोणेष्वेकैकनभःप्रदेशनिष्पन्ना अनुत्तरा यथोत्तरं वृद्धिरहिताश्छिन्नमुक्तावलीसंस्थिताश्चतस्र एव विदिशो भवन्ति। ऊर्ध्वं तु चतुरो नभःप्रदेशानादौ कृत्वा यथोत्तरं वृद्धिरहितत्वाच्चतुःप्रदेशिकैव रुचकनिभा च चतुरस्रदण्डाकारैकैव भवति, अधोऽप्येवंप्रकारा द्वितीयेति; उक्तं च—

"[2]दुपएसाइदुरुत्तर एगपएसा अणुत्तरा चेव। चउरो चउरो य दिसा चउरो य अणुत्तरा दोण्णि॥ १॥
सगडुद्धिसंठियाओ महादिसाओ हवंति चत्तारि। मुत्तावलीव चउरो दो चेव य होंति रुयगनिभा॥ २॥"

अत्र स्थापना—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ○ | | | | | | | ○ |
| | ○ | | | | | ○ | |
| | | ○ | | | ○ | | |
| | | | ○ | ○ | | | |
| | | | ○ | ○ | | | |
| | | ○ | | | ○ | | |
| | ○ | | | | | ○ | |
| ○ | | | | | | | ○ |

1 अष्टप्रदेशो रुचकस्तिर्यग्लोकस्य मध्ये। एष प्रभवो दिशामेष एव भवोऽनुदिशाम्॥ १॥

2 द्विप्रदेशादिद्व्युत्तरैकप्रदेशा अनुत्तरा चैव। चतस्रश्चतस्रश्च दिशश्चतुरश्चानुत्तरे द्वे॥ १॥
शकटोद्धिसंस्थिता महादिशो भवन्ति चतस्रः। मुक्तावलीव चतुरो द्वे एव च भवतो रुचकनिभे॥ २॥

-आयुर्वर्जानां ज्ञानावरणादिकर्मणां त्रिंशत्सागरोपमकोटीकोट्यादिकायामुत्कृष्टस्थितौ वर्तमानो जीवश्चतुर्णामपि सामायिकानां न प्रतिपद्यमानको न चापि पूर्वप्रतिपन्नः प्राप्यते, तस्यातिसंक्लिष्टत्वेन तदसंभवात् । आयुषस्त्रयस्त्रिंशत्सागरोपमलक्षणायामुत्कृष्टस्थितौ वर्तमानोऽनुत्तरसुरः पूर्वप्रथमसामायिकद्वयस्य प्रतिपन्नः प्राप्यते, सप्तमपृथिव्यप्रतिष्ठाननारकस्तु षण्मासावशेषायुस्तथाविधविशुद्धियुक्तत्वादस्यैव सामायिकद्वयस्य प्रतिपद्यमानकः पूर्वप्रतिपन्नश्च लभ्यते; तथा च वक्ष्यति– 'आउक्कोसे दोण्णि उ पवज्जमाणो पवण्णो वा' इति । जघन्यायां तु क्षुल्लकभवग्रहणलक्षणायामायुःस्थितौ वर्तमानो निगोदादिश्चतुर्णामपि न प्रतिपद्यमानको नापि पूर्वप्रतिपन्नः प्राप्यते, तस्याविशुद्धत्वेन तदयोग्यत्वादिति । शेषे तु ज्ञानावरणादिकर्मसप्तके जघन्यामन्तर्मुहूर्तादिकां स्थितिं बध्नन् दर्शनसप्तकातिक्रान्तोऽन्तकृत्केवलित्वं प्राप्स्यन् क्षपको देशविरतिवर्जितस्य सम्यक्त्व-श्रुत-सर्वविरतिलक्षणसामायिकत्रयस्य पूर्वप्रतिपन्नो लभ्यते, तस्यातिविशुद्धत्वेनातिजघन्यस्थितिबन्धकत्वात्, क्षपकस्य च देशविरतेरसंभवात्, सम्यक्त्वादिप्रतिपत्तेश्च पूर्वमेव संजातत्वादिति । जघन्यस्थितिकर्मबन्धकत्वेन चेह जघन्यस्थितिकत्वं गृह्यते, न तूपात्तकर्मसत्तापेक्षयेति, व्याख्यानतो विशेषप्रतिपत्तेरिति । 'अजहण्णमणुक्कोसे इत्यादि' अजघन्योत्कृष्टे तु कर्मण्यष्टानामपि कर्मणां मध्यमायां स्थितौ वर्तमानो जीव इत्यर्थः । चतुर्णामपि सामायिकानां प्रतिपद्यमानकः पूर्वप्रतिपन्नश्च लभ्यते ॥ इति निर्युक्तिगाथार्थः ॥ २७२३ ॥

अथ भाष्यम्—

[2]उक्कोसट्ठिइकम्मो न पवज्जंतो न यावि पडिवण्णो। आउक्कोसे दुण्णि उ पवज्जमाणो पवण्णो वा ॥२७२४॥

न जहण्णाउट्ठिईए पडिवज्जइ नेय पुव्वपडिवण्णो । सेसे पुव्वपवण्णो देसविरइवज्जिए होज्ज ॥ २७२५ ॥

व्याख्यातार्थं एव ॥ २७२४ ॥ २७२५ ॥

सांप्रतं वेद-संज्ञा-कषायद्वारत्रयं व्याचिख्यासुराह—

[3]चउरो वि तिविहवेए चउसु वि सण्णासु होइ पडिवत्ती । हेट्ठा जहा कसाएसु वण्णियं तह य इहयं पि ॥२७२६॥

१ क, ग घ. 'थिवीप्ता' । २ उत्कृष्टस्थितिकर्मा न प्रपद्यमानो न चापि प्रतिपन्नः । आयुरुत्कर्षे द्वे तु प्रपद्यमान प्रपन्नो वा ॥ २७२४ ॥
न जघन्यायु स्थितौ प्रतिपद्यते नैव पूर्वप्रतिपन्न । शेषे पूर्वप्रपन्नो देशविरतिवर्जिते भवेत् ॥ २७२५ ॥
३ चत्वार्यपि त्रिविधवेदे चतसृष्वपि संज्ञासु भवति प्रतिपत्तिः । अधो यथा कषायेषु वर्णितं तथा चेहापि ॥ २७२६ ॥

आसां च दशानामपि पूर्वादिदिशामेतानि नामानि भवन्ति; तद्यथा—

''[1]इंदग्गेइजम्मा य नेरई वारुणी य वायव्वा । सोमा ईसाणा च्चिय विमला य तवा य बोधव्वा ॥ १ ॥
इंदा विजयद्दाराणुसारओ सेसिया पइक्खणओ । अट्ठ वि तिरियदिसाओ उड्ढं विमला तवा चाहो ॥ २ ॥''

इदं च गाथाद्वयं भाष्येष्वपि बहु लिखितं दृश्यते, परं प्रक्षेपोऽसौ संभाव्यते, पूर्वटीकायां मूलावश्यकटीकायां चाव्याख्यातत्वात् ॥ इति गाथात्रयार्थः ॥ तदेवमुक्ता क्षेत्रदिक् ॥ २७०० ॥

इदानीं तापक्षेत्रादिगुच्यते– तत्र तपतीति ताप इह सविता गृह्यते, तदुपलक्षिता क्षेत्रदिक् तापक्षेत्रदिक् । सा चानियतेत्याह—

[2]जेसिं जत्तो सूरो उएइ तेसिं तई हवइ पुव्वा । तावक्खित्तदिसाओ पयाहिणं सेसियाओ सिं ॥२७०१॥

येषां भरतादिक्षेत्रनिवासिनां पुंसां यतो यस्यां दिशि सूर्य उदेत्युद्गच्छति सा तेषां पूर्वेति व्यपदिश्यते। इह च सूर्यमाश्रित्यैतद्व्यपदेशप्रवृत्तेस्तापक्षेत्रादिगियमुच्यते, । एतस्याश्च प्रदक्षिणतः शेषा अपि दक्षिणाद्या दिशोऽवगन्तव्याः; तद्यथा– दक्षिणभुजपक्षे दक्षिणा, पृष्ठतः पश्चिमा, वामभुजपक्षे पुनरुत्तरेति ॥ २७०१ ॥

'पण्णवए त्ति' प्रज्ञापयति सूत्रार्थं प्ररूपयति प्रज्ञापको व्याख्याता तदपेक्षा तमाश्रित्य दिक् प्रज्ञापकदिगुच्यते । तत्स्वरूपनिरूपणार्थमाह—

[3]पण्णवओ जदभिमुहो सा पुव्वा सेसिया पयाहिणओ । अट्ठारस भावदिसा जीवस्स गमागमो जेसु ॥२७०२॥

प्रज्ञापको यदभिमुखः सूत्रार्थं कथयति सा पूर्वा, शेषास्तु दक्षिणाद्याः पूर्ववत् प्रदक्षिणतो वाच्याः । अथ सप्तमीं भावदिशमभिधित्सुराह– 'अट्ठारसेत्यादि' येषु पृथिव्यादिस्थानेषु कर्मपरतन्त्रस्य जीवस्य गमा-ऽऽगमौ संपद्येते सा भावदिगुच्यते। सा पुनरष्टादशभेदा भवतीति ॥ २७०२ ॥

१ ऐन्द्री आग्नेयी यामी च नैऋती वारुणी च वायव्या । सौमीशान्येव विमला च तपा च बोद्धव्या ॥ १ ॥
ऐन्द्री विजयद्वारानुसारत शेषिका प्रदक्षिणत. । अष्टापि तिर्यग्दिश ऊर्ध्वं विमला तपा चाधः ॥ २ ॥
२ येषां यत सूर उदेति तेषां सा भवति पूर्वा । तापक्षेत्रदिश प्रदक्षिणं शेषिका अस्या ॥ २७०१ ॥
३ प्रज्ञापको यदभिमुख सा पूर्वा शेषिका प्रदक्षिणत. । अष्टादश भावदिशो जीवस्य गमा-ऽऽगमौ येषु ॥ २७०२ ॥

चत्वार्यपि सामायिकानि स्त्री-पुं-नपुंसकलक्षणे त्रिविधेऽपि वेदे प्राप्यन्ते। इदमुक्तं भवति– चत्वार्यपि सामायिकान्यधिकृत्य त्रिविधवेदे विवक्षिते काले प्रतिपद्यमानकः संभवति, पूर्वप्रतिपन्नस्त्वस्त्येव। अवेदस्तु देशविरतिरहितानां त्रयाणां पूर्वप्रतिपन्नः स्यात्, न तु प्रतिपद्यमानकः। तथा, चतसृष्वपि संज्ञास्वाहार-भय-मैथुन-परिग्रहरूपासु चतुर्विधस्यापि सामायिकस्य भवति प्रतिपत्तिः– प्रतिपद्यमानको भवति, न न भवतीत्यर्थः, पूर्वप्रतिपन्नकस्त्वस्त्येव। 'हेट्ठ त्ति' अधो यथा 'पढमिल्लुआण उदए नियमा संजोयणाकसायाणं, इत्यादिना कषायेषु वर्णितं तथेहापि वर्णयितव्यम्, सामान्येन तु सकषायी चतुर्णामपि प्रतिपद्यमानकः, पूर्वप्रतिपन्नश्च भवति। अकषायी तु च्छद्मस्थवीतरागो देशविरतिवर्जसामायिकत्रयस्य पूर्वप्रतिपन्नो भवति, न तु प्रतिपद्यमानक इति। गतं वेदादि द्वारत्रयम् ॥ २७२६ ॥

सांप्रतमायु-र्ज्ञानद्वारद्वयाभिधित्सया प्राह—

संखेज्जाऊ चउरो भयणा सम्म-सुएऽसंखवासाणं। ओहेण विभागेण य नाणी य पडिवज्जए चउरो॥२७२७॥

संख्यातवर्षायुर्जीवश्चत्वारि सामायिकानि प्रतिपद्यते, 'प्रतिपन्नस्त्वस्त्येव' इति शेषः। 'भयणेत्यादि' भजना विकल्पना सम्यक्त्व-श्रुतसामायिकयोरसंख्येयवर्षायुषाम्। इयमत्र भावना– विवक्षितकालेऽसंख्येयवर्षायुषां सम्यक्त्व-श्रुतयोः प्रतिपद्यमानकः संभवति पूर्वप्रतिपन्नस्त्वस्त्येवेति द्वारम्। 'ओहेणेत्यादि' ओघेन सामान्यतो निश्चयनयमतेन ज्ञानी चत्वार्यपि सामायिकानि प्रतिपद्यते, व्यवहारनयमतेन त्वज्ञानिन एव सम्यक्त्व-श्रुतप्रतिपत्तेः। पूर्वप्रतिपन्नस्तु ज्ञानी चतुर्णामप्यस्त्येव। विभागेन च भेदेन यदा ज्ञानी चिन्त्यते तदा मति-श्रुतज्ञानी द्वे सम्यक्त्व-श्रुतसामायिके युगपत् प्रतिपद्यते। देश-सर्वविरतिसामायिके तु भजनया प्रतिपद्यते। पूर्वप्रतिपन्नस्तु चतुर्णामप्यस्त्येव। अवधिज्ञानी तु सम्यक्त्व-श्रुतसामायिकयोः पूर्वप्रतिपन्न एव, न प्रतिपद्यमानकः। देशविरतिसामायिकं तु न प्रतिपद्यते। देव-नारक-यति-श्रावका हि चत्वारोऽवधिस्वामिनः। तत्राद्यत्रयस्य देशविरतिप्रतिपत्तेरसंभव एव, श्रावकोऽप्यवधिज्ञानं प्राप्य देशविरतिं प्रतिपद्यत इत्येवं न, किन्तु पूर्वमभ्यस्तदेशविरतिगुणः पश्चादवधिं प्रतिपद्यते, देशविरत्यादिगुणप्राप्तिपूर्वकत्वादवधिज्ञानप्रतिपत्तेरित्येतावद् गुरुभ्योऽस्माभिरवगतम्, तत्त्वं तु केवलिनो विदन्ति। सर्वविरतिसामायिकं तु प्रतिपद्यते। पूर्वप्रतिपन्नस्तु सर्वेषामप्यस्त्येव। मनःपर्यायज्ञानी तु देशविरतिरहितसामायिकत्रयस्य पूर्वप्रतिपन्न एव, न तु प्रतिपद्यमानः, युगपद्वा सह तेन वा चारित्रं

१ गाथा १२२६। २ सख्येयायुश्चत्वारि भजना सम्यक् श्रुतयोरसख्यवर्षाणाम्। ओघेन विभागेन च ज्ञानी च प्रतिपद्यते चत्वारि ॥२७२७॥

तानेव भावदिग्भेदान् दर्शयति—

¹पुढवि-जल-जलण-वाया मूला-खंध-ग्ग-पोरबीया य । बि-ति-चउ-पंचिंदिय-तिरिय-नारगा-देवसंघाया॥२७०३॥

संमुच्छिम-कम्मा-ऽकम्मभूमगनरा तहंतरदीवा । भावदिसा दिस्सइ जं संसारी निययमेयाहिं ॥२७०४॥

व्याख्या– पृथिवी-जल-ज्वलन-वायवः; वनस्पतिभेदास्तु बीजशब्दस्य प्रत्येकमभिसंबन्धाद् मूलं बीजं येषां ते मूलबीजा उत्पल-कन्दलादयः, स्कन्धो बीजं येषां ते स्कन्धबीजाः शल्लक्यादयः, अग्रं बीजं येषां तेऽग्रबीजाः कोरण्टकादयः, पर्व बीजं येषां ते पर्वबीजा इक्ष्वादयः । द्वि-त्रि-चतुरिन्द्रियाः कृमि-कीटक-भ्रमरादयः पञ्चेन्द्रियास्तु मीन-मकर-शरभ-सिंह-गो-महिष्य-ऽजा-हंस-चक्रवाकादितिर्यक्संघाताः, नारकसंघाताः, देवसंघाताः । मनुष्यभेदास्तु संमूर्च्छजाः, कर्मभूमिजाः, अकर्मभूमिजाः, अन्तर्द्वीपजाश्चेति एवमष्टादशविधा भावतः पृथिव्यादिपर्यायतः परमार्थतो वा भावदिग् भवति । कुतः ? इत्याह– 'दिस्सइ जमित्यादि' यद् यस्मात् 'अमुकोऽयं पृथिवीकायिकः, अप्कायिको वा' इत्यादिभिः पर्यायैः संसारी जीवो नियतं नैयत्येन दृश्यते व्यपदिश्यत एताभिः पृथिव्यादिपर्यायरूपाभिर्दिग्भिर्हेतुभूताभिः । तत एता एव भावदिशः ॥ इति निर्युक्तिगाथाचतुष्टयार्थः ॥ २७०३ ॥ २७०४ ॥

अथ भाष्यकारो वक्ष्यमाणनिर्युक्तिगाथायाः प्रस्तावनामाह—

²खेत्तदिसासुं पगयं सेसदिसाओ पसंगओऽभिहिया । संभवओ वा वच्चं सामइयं जत्थ जं हुज्जा ॥२७०५॥

इह दिग्द्वारे विचार्यमाणे रुचकादारभ्य या– पूर्वादिका दिशः प्ररूपितास्ताभिरेवेह प्रकृतं प्रयोजनम्, शेषास्तु नाम-स्थापनादिका दिशो दिक्साम्यात् प्रसङ्गतोऽभिहिताः । यदिवा, अशेषदिशां मध्ये यस्यां दिशि यत् सामायिकं संभवति तदभ्यूह्य वाच्यम्, मूलावश्यकाद् वाऽवसेयम् ॥ इति गाथार्थः ॥ २७०५ ॥

'इह क्षेत्रदिग्भिः प्रयोजनम्' इत्युक्तम्, किं पुनस्तत् ? इत्याह—

---

१ पृथिवी-जल-ज्वलन-वायवो मूल-स्कन्धा-ऽग्र-पर्वबीजाश्च । द्वि-त्रि-चतुष्पञ्चेन्द्रिय-तिर्यग्-नारक देवसंघाता ॥ २७०३ ॥
संमूर्च्छिम-कर्मा-ऽकर्मभूमिगनरास्तथान्तरद्वीपाः । भावदिग् दृश्यते यत् संसारी नियतमेताभिः ॥ २७०४ ॥

२ क्षेत्रदिग्भिः प्रकृतं शेषदिशः प्रसङ्गतोऽभिहिताः । संभवतो वा वाच्यं सामायिकं यत्र यद् भवेत् ॥ २७०५ ॥

प्रतिपद्यते तीर्थकृत्; उक्तं च– "पडिवन्नम्मि चरित्ते चउनाणी जाव छउमत्थो" इति । भवस्थकेवली सम्यक्त्व-चारित्रसामायिकयोः पूर्वप्रतिपन्नो भवति, न तु प्रतिपद्यमानकः ॥ इति निर्युक्तिगाथाद्वयार्थः ॥ २७२७ ॥

भाष्यम्–

[2]दोसु जुगवं चिय दुगं भयणा देसविरइए य चरणे य। ओहिम्मि न देसव्वयं पडिवज्जइ होइ पडिवन्नो ॥२७२८॥

देसव्वयवज्जं माणसे पवन्नो समं पि च चरित्तं। भवकेवले पवन्नो पुव्वं सम्मत्त-चारित्तं ॥ २७२९ ॥

उक्तार्थे एव, नवरं 'दोसु जुगवं चिय दुगं ति' द्वयोर्मतिज्ञान-श्रुतयोर्ज्ञानयोर्युगपदेव प्रतिपत्तिमाश्रित्य सम्यक्त्व-श्रुतसामायिकद्विकं प्राप्यत इति ॥ २७२८ ॥ २७२९ ॥

अथ योगो-पयोग-शरीरद्वारत्रयाभिधित्सया प्राह—

[3]चउरो तिविहजोए उवओगदुगम्मि चउरो पडिवज्जे। ओरालिए चउक्कं सम्म-सुय विउव्विए भयणा ॥२७३०॥

चत्वार्यपि सामायिकानि सामान्यतस्त्रिविधयोगे मनो-वाक्-कायलक्षणे सति प्रतिपत्तिमाश्रित्य विवक्षिते काले संभवन्ति, प्राक्प्रतिपन्नतां त्वधिकृत्य विद्यन्त एव। विशेषतस्त्वौदारिककाययोगवति योगत्रये चत्वार्युभयथापि लभ्यन्ते। वैक्रियसहिते तु योगत्रये सम्यक्त्व-श्रुते उभयथापि प्राप्येते, देश-सर्वविरती तु पूर्वप्रतिपन्ने लभ्येते । आहारकयुक्ते तु योगत्रये देशविरतिरहितानि त्रीणि पूर्वप्रतिपन्नानि भवन्ति । तैजस-कार्मणयोग एव केवलेऽपान्तरालगतावाद्यं सामायिकद्वयं प्राक्प्रतिन्नतामधिकृत्य प्राप्यते। केवलिसमुद्घाते तु सम्यक्त्व-चारित्रसामायिके पूर्वपतिपन्ने प्राप्येते । मनोयोगे केवले न किञ्चित्, तस्यैवाभावात्। एवं वाग्योगेऽपि । काय-वाग्योगद्वये द्वीन्द्रियादिषूत्पन्नमात्रस्य सास्वादनस्य पूर्वप्रतिपन्ने सम्यक्त्व-श्रुते प्राप्येते । इत्यलं विस्तरेण । 'उवओगेत्यादि' साकारा-ऽनाकारभेद उपयोगद्वये चत्वारि प्रतिपद्यते, प्राक्प्रतिपन्नस्तु विद्यत एव । अत्राक्षेप-परिहारौ भाष्यकार एव वक्ष्यति । 'ओरालिए इत्यादि' औदा-

१ प्रतिपन्ने चारित्रे चतुर्ज्ञानी जीवश्छद्मस्थः ।

२ द्वयोर्युगपदेव द्विकं भजना देशविरतौ च चरणे च । अवधौ न देशव्रतं प्रतिपद्यते भवति प्रतिपन्न' ॥ २७२८ ॥
देशव्रतवर्जं मानसे प्रपन्नः सममपि च चारित्रम् । भवकेवले प्रपन्न. पूर्वं सम्यक्त्व-चारित्रे ॥ २७२९ ॥

३ चत्वार्यपि त्रिविधयोगे उपयोगद्विके चत्वारि प्रतिपद्यते । औदारिके चतुष्कं सम्यक्-श्रुतयोर्वैक्रिये भजना ॥ २७३० ॥

पुंव्वाइयासु महादिसासु पडिवज्जमाणओ होइ । पुव्वपडिवण्णओ पुण अण्णयरीए दिसाए उ ॥२७०६॥

पूर्वाद्यासु शकटोद्धिसंस्थितासु पूर्वोक्तासु चतसृषु महादिक्षु विवक्षिते काले चतुर्णामपि सामायिकानां प्रतिपद्यमानको भवति, तत्संभवस्तास्वस्ति, न पुनर्भवत्येव, कदाचित् तस्य तासु भवनात् कदाचिदभवनादिति । पूर्वप्रतिपन्नकः पुनरन्यतरस्यां दिशि भवत्येव ॥ इति निर्युक्तिगाथार्थः ॥ २७०६ ॥

ऊर्ध्वा-ऽधोदिग्द्वये विदिक्षु च तर्हि का वार्ता ? इत्याशङ्क्य भाष्यकारः प्राह—

[2]छिण्णावलि-रुयगागीदिसासु सामाइयं न जं तासु । सुद्धासु नावगाहइ जीवो ताओ पुण फुसिज्जा ॥२७०७॥

एकप्रदेशिकत्वेन च्छिन्नमुक्तावलीकल्पासु चतसृष्वपि विदिक्षु 'रुयगागि त्ति' रुचकाकारयोः प्रत्येकं चतुष्प्रदेशिकयोरूर्ध्वा-ऽधोदिशोश्च 'सामाइयं न त्ति' सर्वमपि सामायिकं संपूर्णं न 'लभ्यते' इति शेषः । कुतः ? इत्याह-'जं तास्वित्यादि' यद् यस्मात् तासु शुद्धासु केवलासु षट्स्वपि जीवः संपूर्णो नावगाहते, तस्य जघन्यतोऽप्यसंख्येयप्रदेशावगाहित्वात्, एतासां चैकप्रदेशिकत्वेन चतुष्प्रदेशिकत्वेन चैतावत्प्रमाणावगाहासंभवात् । इतस्ततः संचरणादौ पुनः सामायिकवाञ्जीवस्ताः षडपि देशतः स्पृशेद् न विरोधः ॥ इति गाथार्थः ॥ उक्तं दिग्द्वारम् ॥ २७०७ ॥

सांप्रतं कालद्वारमभिधित्सुराह—

[3]सम्मत्तस्स सुयस्स य पडिवत्ती छव्विहे वि कालम्मि । विरइं विरयाविरइं पडिवज्जइ दोसु तिसु वावि ॥२७०८॥

सम्यक्त्वस्य श्रुतस्य च द्वयोरप्यनयोः सामायिकयोः प्रतिपत्तिः षड्विधेऽपि सुषमदुःषमादिके काले संभवति । पूर्वप्रतिपन्नकास्त्वनयोर्विद्यन्त एव । विरतिं समग्रचारित्रलक्षणां तां, तथा, विरताविरतिं देशचारित्रात्मिकां प्रतिपद्यते कश्चिदुत्सर्पिण्यां द्वयोः कालयोः दुःषमसुषमायां, सुषमदुःषमायां चेति ; अवसर्पिण्यां तु त्रिषु कालेषु सुषमदुःषमायां, दुःषमसुषमायाम्, दुःषमायां चेति । पूर्वप्रतिपन्नास्त्विह विद्यत एव । अपिशब्दात् संहरणं प्रतीत्य पूर्वप्रतिपन्नकः सर्वकालेष्वेव संभवति । प्रतिभागकालेषु तु त्रिषु सम्यक्त्व-श्रुतयोः

१ पूर्वादिकासु महादिक्षु प्रतिपद्यमानको भवति । पूर्वप्रतिपन्नकः पुनरन्यतरस्यां दिशि तु ॥ २७०६ ॥
२ छिन्नावली-रुचकाकृतिदिक्षु सामायिक न यत् तासु । शुद्धासु नावगाहते जीवस्ता पुन स्पृशेत् ॥ २७०७ ॥
३ सम्यक्त्वस्य श्रुतस्य च प्रतिपत्ति षड्विधेऽपि काले । विरतिं विरताविरतिं प्रतिपद्यते द्वयोस्तिसृषु वापि ॥ २७०८ ॥

रिकशरीरे सामायिकचतुष्कमुभयथाऽप्यसित। सम्यक्त्व-श्रुतयोर्वैक्रियशरीरे भजना विकल्पना कार्या- देवादि कदाचित् ते प्रतिपद्यते, कदाचिद् नेति। देशविरति-सर्वविरतिसामायिके तु वैक्रियशरीरिणस्तिर्यग्-मनुष्या अपि न प्रतिपद्यन्ते, विक्रियाप्रवृत्तित्वेन किल तेषां प्रमत्तत्वादिति। पूर्वप्रतिपन्नस्तु वैक्रियशरीरे चतुर्णामपि प्राप्यत एव। शेषशरीरविचारः प्रस्तुतगाथायामेवादौ निरूपितयोगद्वारानुसारत एव भावनीयः॥ इति निर्युक्तिगाथार्थः॥ २७३०॥

यदुक्तम् 'उवओगदुगम्मि चउरो पडिवज्जे' इति। तत्र भाष्यकारः प्रेर्यमुत्थापयन्नाह—

[1]सव्वाओ लद्धीओ जइ सागारोवओगभावम्मि। इह कहमुवओगदुगे लब्भइ सामाइयचउक्कं ?॥२७३१॥

आह- ननु, "सव्वाओ लद्धीओ सागारोवओगोवउत्तस्स भवंति" इत्यागमे प्रोक्तम्, ततो यद्येतस्मादागमात् सर्वा अपि लब्धयः साकारोपयोग एव भवन्ति; तर्हि कथमिह प्रोच्यते- 'उपयोगद्वयेऽपि सामायिकचतुष्टयं लभ्यते' इति ?॥ २७३१॥

अत्र परिहारमाह—

[3]सो किर निअमो परिवड्ढमाणपरिणामयं पइ, इहं तु। जोऽवट्ठियपरिणामो लभेज्ज स लभिज्ज बीए वि॥२७३२॥

'सव्वाओ लद्धीओ' इत्यादिको यस्त्वयाऽऽगमोक्तनियमोऽभिधीयते स किल परिवर्धमानपरिणामकं जीवं प्रति द्रष्टव्यः। इह च प्रस्तुते योऽवस्थितपरिणामो जीवः सामायिकानि लभते, स द्वितीयेऽप्यनाकारोपयोगे लभेत तानि, इति न विरोधः॥२७३२॥

आह- ननु यद्येवमनाकारोपयोगेऽपि लब्धौ सत्यां 'सव्वाओ लद्धीओ सागारोवओग-' इत्याद्यागमे साकारोपयोगस्यैव ग्रहणं किमर्थम् ? इत्याशङ्क्याह—

[4]पायं पवड्ढमाणो लभए सागारगहणया तेण। इयरो उ जइच्छाए उवसमसम्माइलाभम्मि॥ २७३३॥

प्रायो बाहुल्येन वर्धमानः प्रवर्धमानपरिणाम एव जीवो लब्धीर्लभते, तेनागमे साकारोपयोगस्यैव ग्रहणं कृतम्। इतरस्त्ववस्थितपरिणामो यदृच्छया सकृत् कदाचिदेवौपशमिकसम्यक्त्वादिलाभकाले प्राप्यते, इत्यनाकारोपयोगस्य स्वल्पत्वेन सतोऽ-

१ सर्वा लब्धयो यदि साकारोपयोगभावे। इह कथमुपयोगद्विके लभ्यते सामायिकचतुष्कम् ?॥ २७३१॥
२ सर्वा लब्धयः साकारोपयोगोपयुक्तस्य भवन्ति।
३ स किल नियम परिवर्धमानपरिणामकं प्रति, इह तु। योऽवस्थितपरिणामो लभेत स लभेत द्वितीयेऽपि॥ २७३२॥
४ प्राय. प्रवर्धमानो लभते साकारग्रहणं तेन। इतरस्तु यदृच्छयोपशमसम्यक्त्वादिलाभे॥ २७३३॥

तम्हा धम्मा-ऽधम्मा लोयपरिच्छेयकारिणो जुत्ता । इहरागासे तुल्ले लोगोऽलोगो त्ति को भेओ ? ॥ ४८ ॥
लोगविभागाभावे पडिघायाभावओऽणवत्थाओ । संववहाराभावो संबंधाभावओ होज्जा ॥ ४९ ॥
निरणुग्गहत्तणाओ न गई परओ जलादिव झसस्स । जो गमणाणुग्गहिया सो धम्मो लोगपरिमाणो ॥ ५० ॥
अत्थि परिमाणकारी लोगस्स पमेयभावओऽवस्सं । नाणं पिव नेयस्सालोगत्थित्ते य सोऽवस्सं ॥ ५१ ॥
पयणं पसत्तमेवं थाणाओ तं च नो जओ छट्ठी। इह कत्तिलक्खणेयं कत्तुरणत्थतरं थाणं ॥ ५२ ॥
नहनिच्चत्तणओ वा थाणविणासपयणं न जुत्तं से । तह कम्माभावाओ पुणक्कियाभावओ वा वि ॥ ५३ ॥
निच्चत्थाणाओ वा वोमाईणं पडणं पसज्जेज्जा । अह न मयमणेगंता थाणाओऽवस्स पडणं ति ॥ ५४ ॥
भवओ सिद्धो त्ति मई तेणाइमसिद्धसंभवो जुत्तो । कालाणाइत्तणओ पढमसरीरं व तदजुत्तं ॥ ५५ ॥
परिमियदेसेऽणंता किह माया मुत्तिविरहियत्ताओ । नियम्मि व नाणाई दिट्ठीओ वेगरूवम्मि ॥ ५६ ॥
न ह वइ ससरीरस्स प्पिय-ऽप्पियावहतिरेवमाईणं । वेयपयाणं च तुमं न सदत्थं सुणसि तो संका ॥ ५७ ॥
तुह बंधे मोक्खम्मि य, सा य न कज्जा जओ फुडो चेव । ससरीरे-यरभावो नणु जो सो बंध मोक्खो त्ति ॥ ५८ ॥

छिन्नम्मि संसयम्मी जिणेण जर-मरणविप्पमुक्केणं ।
सो समणो पव्वइओ अद्धुट्ठेहिं सह खंडियसएहिं ॥ १६४ ॥
ते पव्वइए सोउं मोरिओ आगच्छई जिणसगासं ।
वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ १६५ ॥

१ 'यम्मि अ जि' ।

आभट्ठो य जिणेणं जाइ-जरा-मरणविप्पमुक्केणं ।
नामेण य गोत्तेण य सव्वण्णू सव्वदरिसी णं ॥ १६६ ॥
किं मण्णे अत्थि देवा उयाहु न त्थि त्ति संसओ तुज्झ ।
वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥ १६७ ॥

तं मन्नसि नेरइया परतंता दुक्खसंपउत्ता य । न तरंतीहागंतुं सद्धेया सुव्वमाणा वि ॥ १ ॥
सच्छंदचारिणो पुण देवा दिव्वप्पभावजुत्ता य । जं न कयाइ वि दरिसणमुवेंति तो संसओ तेसु ॥ २ ॥
मा कुरु संसयमेए सुदूरमणुयाइभिन्नजाईए । पेच्छसु पच्चक्खं चिय चउव्विहे देवसंघाए ॥ ३ ॥
पुव्वं पि न संदेहो जुत्तो जं जोइसा सपच्चक्खं । दीसंति तक्कया वि य उवघाया-ऽणुग्गहा जगओ ॥ ४ ॥
आलयमेत्तं च मई पुरं व तव्वासिणो तह वि सिद्धा । जे ते देव त्ति मया न य निलया निच्चपरिसुण्णा ॥ ५ ॥
को जाणइ व किमेयं ति होज्ज निस्संसयं विमाणाइं । रयणमयनभोगमणादिह जह विज्जाहराईणं ॥ ६ ॥
होज्ज मई माएयं तहा वि तक्कारिणो सुरा जे ते । न य मायाइविगारा पुरं व निच्चोवलम्भाओ ॥ ७ ॥
जइ नारगा पवन्ना पगिट्ठपावफलभोइणो तेणं । सुबहुगपुण्णफलभुजो पवज्जियव्वा सुरगणा वि ॥ ८ ॥
संकंतदिव्वपिम्मा विसयपसत्ताऽसमत्तकत्तव्वा । अणहीणमणुयकज्जा नरभवमसुभं न एंति सूरा ॥ ९ ॥
नवरि जिणजम्म-दिक्खा-केवल-निव्वाणमहनिओगेणं । भत्तीए सोम्म ! संसयविच्छेयत्थं व एज्जहण्हा ॥१०॥
पुव्वाणुरागओ वा समयनिबंधा तवोगुणाओ वा । नरगणपीडा-ऽणुग्गह-कंदप्पाईहिं वा केई ॥ ११ ॥

१ 'इण्हं'।

प्यविवक्षितत्वात् सूत्रेऽग्रहणम्। आदिशब्दात् श्रुत-देश-सर्वविरतिसामायिकलाभपरिग्रहः। अयमत्र भावार्थः- यथा "सव्वाओ लद्धीओ सागारोवओग-" इत्यादिक आगमः, तथा 'उवओगदुगम्मि चउरो पडिवज्जे' इत्ययमप्यागम एव, अतः परस्परप्रतिस्पर्द्धि-सैद्धान्तिकवचसां व्यवस्था न्याय्या, सा चेयम्- याः सम्यक्त्वं लब्ध्वा मिथ्यात्वं गतानां पुनरपि कुतश्चित् शुभोदयात् प्रतिक्षणं प्रवर्धमानाध्यवसायवतां सम्यक्त्व-चारित्रादिलब्धयो भवन्ति, याश्चावध्यादिलब्धय उत्पद्यन्ते ताः सर्वाः साकारोपयोगोपयुक्तस्य द्रष्टव्याः। यास्तु प्रथमसम्यक्त्वलाभकालेऽन्तरकरणप्रविष्टस्यावस्थिताध्यवसायस्य सम्यक्त्वादिलब्धयो भवन्ति ता अनाकारोपयोगेऽपि भवन्ति न कश्चिद् दोषः। अन्तरकरणे च वर्तमानः सम्यक्त्व-श्रुतसामायिकलाभसमकालमेव कश्चिदतिविशुद्धत्वाद् देशविरतिम्, अपरस्त्वतिविशुद्धत्वात् सर्वविरतिमपि प्रतिपद्यते, इत्यौपशमिकसम्यक्त्वलाभकालेऽवस्थितपरिणामस्यानाकारोपयोगवर्तिनोऽपि चत्वार्यपि सामायिकानि भवन्ति, स्वल्पत्वाच्चैतदत्रागमे न विवक्षितमिति ॥ २७३३ ॥

कथं पुनरिदमौपशमिकसम्यक्त्वं जीवस्याभ्युपगन्तव्यम्? इत्याह—

[1]ऊसरदेसं दड्ढिल्लयं व विज्झाइ वणदवो पप्प। इय मिच्छस्स अणुदए उवसमसम्मं मुणेयव्वं ॥ २७३४ ॥

यथोषरदेशं पूर्ववदग्धप्रदेशं वा प्राप्य वनदवो विध्यायति, इत्येवमन्तरकरणं प्राप्य मिथ्यात्वस्यानुदये मिथ्यात्वोदयवह्नावुपशान्त औपशमिकं सम्यक्त्वं जीवस्य मुणितव्यमिति ॥ २७३४ ॥

कदा पुनरिदं भवति? इत्याह—

[2]उवसामगसेढिगयस्स होइ उवसामगं तु सम्मत्तं। जो वा अकयतिपुंजो अखवियमिच्छो लहइ सम्मं ॥२७३५॥

प्रागुक्तार्था ॥ २७३५ ॥

कथं पुनरस्यौपशमिकसम्यक्त्वलाभेऽवस्थितपरिणामत्वम्? इत्याह—

[3]जं मिच्छस्साणुदओ न हायए तेण तस्स परिणामो। जं पुण सयमुवसंतं न वड्ढए तेण परिणामो ॥२७३६॥

---

१ ऊपरदेशं दग्धमिव विध्यायति वनदवः प्राप्य। इति मिथ्यात्वस्यानुदय उपशमसम्यक्त्वं ज्ञातव्यम् ॥ २७३४ ॥

२ उपशमकश्रेणिगतस्य भवत्युपशामकमत्र सम्यक्त्वम्। यो वाऽकृतत्रिपुञ्जोऽक्षपितमिथ्यात्वो लभते सम्यक्त्वम् ॥ २७३५ ॥

३ यद् मिथ्यात्वस्यानुदयो न हीयते तेन तस्य परिणामः। यत् पुन. सदुपशान्तं न वर्धते तेन परिणामः ॥ २७३६ ॥

ननु पूर्वं किंद्वार एव '[1]तं खलु पच्चक्खाणं आवाए' इत्यादिना सामायिकानां विषयः प्ररूपित एव, इह पुनरपि '[2]सव्वगयं सम्मत्तं' इत्यादिना तद्विषयनिरूपणं कुर्वतः कथं न पुनरुक्तदोषो भवेत् ?, को वा विशेषोऽत्र, यमाश्रित्य पुनरप्येवमुच्यते ? इति ॥ २७५९ ॥

अत्रोत्तरमाह—

[3]किं तं ति जाइभावेण तत्थ इह नेयभावओऽभिहियं। इह विसय-विसइभेओ तत्थाभेओवयारो त्ति ॥२७६०॥

किं तत् सामायिकम् ? इति जातिभावेन विषय-विषयिणोरभेदं चेतसि विधाय सामायिकजातिमात्रमेव तत्र पूर्वं किंद्वारेऽपरेण जिज्ञासितम्, ततः '[1]आया खलु सामइयं' इत्यनेन तदेव मुख्यतया प्रोक्तम्, तद्विषयस्तु परेण जिज्ञासितोऽपि विषयिणि पृष्टे तदभिन्नत्वाद् गौणवृत्त्यैव प्रोक्तः। इह तु 'केषु' इति द्वारे विषय एव मुख्यतया परेण जिज्ञासितः, अतस्तस्यैव विषयस्य ज्ञेयभावेन ज्ञातव्यतयाऽभिहितं स्वरूपमित्युपस्कारः। पाठान्तरं वा 'अभिहिउ त्ति' तत्रायमर्थः– इह तु ज्ञेयभावेन ज्ञातव्यतया विषय एवाभिहितः। किमुक्तं भवति ? इत्याह– 'इहेत्यादि' इह 'केषु' इति द्वारे विषय-विषयिणोर्भेदो विवक्षित इत्यतो निष्कृष्य विषय एव ज्ञेयभावेनोक्तः; तत्र तु किंद्वारे विषय-विषयिणोरभेदोपचार इत्यतो विषयिभूतं सामायिकमेव ज्ञेयभावेन मुख्यतया निर्दिष्टम् ॥ इति गाथानवकार्थः ॥ २७६० ॥

सांप्रतं 'कथं सामायिकं लभ्यते ?' इतिद्वारे महाकष्टलभ्ये तल्लाभक्रमं दर्शयन्नाह– '[4]माणुस्स' इत्यादिकाः 'अब्भुट्ठाणे विणए' इति पर्यन्ता अष्टाविंशतिगाथाः। एताश्च पाठसिद्धा एव, क्वचिद् वैषम्यसंभवे मूलावश्यकटीकातो बोद्धव्या इति द्वारम्। 'कथम्' इति द्वारं गतम् ॥ २७६० ॥

सांप्रतं 'तदित्थं लब्धं कियच्चिरं कालं भवति ?' इति कालद्वारे जघन्योत्कृष्टं सामायिककालमभिधित्सुराह—

[5]सम्मत्तस्स सुयस्स य छावट्ठी सागरोवमाइं ठिई। सेसाण पुव्वकोडी देसूणा होइ उक्कोसा ॥२७६१॥

सम्यक्त्वस्य श्रुतस्य च लब्धिमङ्गीकृत्य '[6]दो वारे विजयाइसु' इत्यादिवक्ष्यमाणन्यायेन षट्षष्टिसागरोपमाणि पूर्वकोटीपृथक्त्वाधिकानि स्थितिर्भवति। शेषयोर्देशविरति-सर्वविरतिसामायिकयोः पूर्वकोटी देशोना भवति। 'उक्कोस त्ति' एषा सामायिकलब्धेरुत्कृष्टा स्थितिः ॥ इति निर्युक्तिगाथार्थः ॥ २७६१ ॥

---

१ गाथा २६३४। २ गाथा २७५१। ३ किं तदिति जातिभावेन तत्रेह ज्ञेयभावतोऽभिहितम्। इह विषय-विषयिभेदस्तत्राभेदोपचार इति ॥ २७६० ॥ ४ आ०नि०पृ०१५४-१५७। ५ सम्यक्त्वस्य श्रुतस्य च षट्षष्टिः सागरोपमाणि स्थितिः। शेषयोः पूर्वकोटिर्देशोना भवत्युत्कृष्टा ॥ २७६१ ॥ ६ ज. 'विजयाइसु दो वारे'।

यद् यस्मादन्तरकरणे मिथ्यात्वस्यानुदयस्तेन तस्माद् न हीयते तस्य परिणामः, हानिकारणाभावात् । यस्मात् पुनः सत्तागतं मिथ्यात्वमुपशान्तं विष्कम्भितोदयमपनीतमिथ्यास्वभावं च, तेनास्य परिणामो न वर्धते । यथा हि वनदवो दाह्याभावाद् न वर्धते किन्तु विध्यायति, इत्येवं वेद्यस्य मिथ्यात्वस्याभावात् तत्क्षपणायानिवृत्तिकरणवद् नौपशमिकसम्यग्दृष्टेः परिणामो वर्धते, किन्त्ववस्थित एवास्ते, अतोऽवस्थितपरिणामत्वमिति ॥ २७३६ ॥

'ओरालिए चउक्कं' इत्यादेर्व्याख्यानमाह—

[1]दुगपडिवत्ती वेउव्वियम्मि सव्वाइं पुव्वपडिवन्नो । देसव्वयवज्जाइं आहाराईसु तीसुं तु ॥ २७३७ ॥

उक्तार्था, नवरमाहारकशरीरे देशविरतिवर्जसामायिकत्रयं पूर्वप्रतिपन्नमवाप्यते, चतुर्दशपूर्वविदो देशविरतेरभावात्; शेषाणां तु पूर्वप्रतिपन्नत्वेन प्रतिपत्तेरसंभवादिति । तैजस-कार्मणयोस्तु केवलिसमुद्घाते चतुर्थ-पञ्चम-तृतीयसमयेषु सम्यक्त्व-चारित्रसामायिकस्य, विग्रहगतौ तु सम्यक्त्व-श्रुतयोः पूर्वप्रतिपन्नः प्राप्यते ॥ इति गाथासप्तकार्थः ॥ २७३७ ॥

अथ संस्थानादिद्वारत्रयमाह—

[2]सव्वेसु वि संठाणेसु लहइ एमेव सव्वसंघयणे । उक्कोसजहन्नं वज्जिऊण माणे लभे मणुओ ॥ २७३८ ॥

संस्थितिः संस्थानमाकारविशेषलक्षणं, तच्च '[3]समचउरंसे निग्गोहमंडले' इत्यादिभेदात् षोढा । तत्र सर्वेष्वपि संस्थानेषु लभते प्रतिपद्यते चत्वार्यपि सामायिकानि, 'प्राक् प्रतिपन्नोऽप्यस्ति' इत्यध्याहारः। 'एमेव सव्वसंघयणे त्ति' संहतिः संहननमास्थिसंचयविशेषः, तानि च वज्रर्षभनाराचादिभेदात् षड् भवन्ति। एतेषु च यथा संस्थानेष्वेवमेव निरवशेषो विचारः कर्तव्यः, पूर्वप्रतिपन्नानि प्रतिपद्यमानानि चैतेष्वपि चत्वारि लभ्यन्त इत्यर्थः । 'उक्कोसेत्यादि' मीयते इति मानं शरीरस्य प्रमाणमवगाहनेत्यर्थः । तत्र मनुष्यस्योत्कृष्टमानं त्रीणि गव्यूतानि, जघन्यं त्वङ्गुलासंख्येयभागः, एतदुत्कृष्टं जघन्यं च मानं वर्जयित्वा मध्यमशरीरमाने वर्तमानो मनुष्यो लभते प्रतिपद्यते 'चत्वार्यपि सामायिकानि' इति प्रक्रमाद् गम्यते । पूर्वप्रतिपन्नस्त्वस्त्येव । जघन्यावगाहस्तु गर्भजमनुष्यः सम्यक्त्व-श्रुतयोः पूर्वप्रतिपन्नः संभवति, न तु प्रतिपद्यमानकः । उत्कृष्टावगाहनस्तु त्रिगव्यूतः सम्यक्त्व-श्रुतयोर्द्विधाऽप्यस्ति । नारक-देवा अपि जघ-

1 द्विकप्रतिपत्तिर्वैक्रिये सर्वाणि पूर्वप्रतिपन्न.। देशव्रतवर्जान्याहारकादिषु त्रिषु तु ॥ २७३७ ॥
2 सर्वेष्वपि संस्थानेषु लभत एवमेव सर्वसंहनने । उत्कर्ष-जघन्ये वर्जयित्वा माने लभते मनुजः ॥ २७३८ ॥ 3 समचतुरस्रं न्यग्रोधमण्डलम् ।

भाष्यकारव्याख्या—

[1]दो वारे विजयाइसु गयस्स तिण्णच्चुए य छावट्ठी । नरजम्मपुव्वकोडीपुहुत्तमुक्कोसओ अहिअं ॥२७६२॥

इयं प्रागिहैव व्याख्याता ॥ २७६२ ॥

अथ चतुर्णामपि सामायिकानां जघन्यस्थितिं भाष्यकार एवाह—

[2]अंतोमुहुत्तमित्तं जहन्नयं चरणमेगसमयं तु । उवओगंतमुहुत्तं नानाजीवाण सव्वद्धं ॥ २७६३ ॥

जघन्यां तु लब्धिमाश्रित्याद्यसामायिकत्रयस्यान्तर्मुहूर्तं स्थितिः । सर्वविरतिसामायिकस्य तु समयम्, चारित्रपरिणामारम्भसमयानन्तरमेवायुष्कक्षयसंभवात् । देशविरतेरप्येवं कस्माद् न भवति ? इति चेत् । तदयुक्तम्, तस्याः प्रतिनियतप्राणातिपातादिनिवृत्तिरूपत्वात्, तदालोचनपरिणतेश्च जघन्यतोऽप्यान्तर्मौहूर्तिकत्वात् । तदेष लब्धेः स्थितिकालः । उपयोगतस्तु सर्वेषामन्तर्मुहूर्तं स्थितिः । नानाजीवानां तु सर्वाणि सर्वाद्धा ॥ इति गाथाद्वयार्थः ॥ २७६३ ॥

अथ कतिद्वारमुच्यते । तत्र सम्यक्त्वादिसामायिकानां विवक्षितसमये कति प्रतिपत्तारः, प्रतिपन्नाः, प्रतिपतिता वा भवन्ति ? इत्याह—

[3]सम्मत्त-देसविरया पलियस्स असंखभागमेत्ताओ । सेढीअसंखभागो सुए सहस्सग्गसो विरई ॥ २७६४ ॥

सम्यक्त्व-देशविरताः प्राणिनः क्षेत्रपल्योपमस्यासंख्येयभागमात्रा एव । इयमत्र भावना— क्षेत्रपल्योपमस्यासंख्येयभागे यावन्तः प्रदेशास्तावन्त एवोत्कृष्टतः सम्यक्त्व-देशविरतिसामायिकयोरेकदा प्रतिपत्तारो भवन्ति । किन्त्वयं विशेषः— देशविरतिप्रतिपत्तृभ्यः सम्यक्त्वप्रतिपत्तारोऽसंख्येयगुणा इति । जघन्यतस्त्वेको द्वौ वेति । 'सेढीअसंखभागो सुए त्ति' इह संवर्तितचतुरस्रीकृतलोकस्यैकप्रादेशिकी सप्तरज्जुप्रमाणा श्रेणिर्गृह्यते । श्रुतमपि सम्यग्-मिथ्याश्रुतभेदरहितं सामान्येनाक्षरात्मकमत्राङ्गीक्रियते । ततो यथोक्तायाः श्रेणेरसंख्याततमे भागे यावन्तो नभःप्रदेशास्तावन्तो विवक्षितकाले सामान्यश्रुतस्योत्कृष्टतः प्रतिपत्तारो लभ्यन्ते, जघन्यतस्त्वेको द्वौ वेति ।

१ द्वौ वारौ विजयादिषु गतस्य त्रीनच्युते च षट्षष्टि । नरजन्मपूर्वकोटीपृथक्त्वमुत्कर्षतोऽधिकम् ॥ २७६२ ॥ ज 'विजयाइसु दो वारे ग' ।
२ अन्तर्मुहूर्तमात्र जघन्यकं चरणमेकसमय तु । उपयोगोऽन्तर्मुहूर्तं नानाजीवानां सर्वाद्धा ॥ २७६३ ॥
३ सम्यक्त्व-देशविरता पल्यस्यासंख्यभागमात्रा । श्रेण्यसंख्यभाग. श्रुते सहस्राग्रशो विरति. ॥ २७६४ ॥

न्यावगाहनाः सम्यक्त्व-श्रुतयोः पूर्वप्रतिपन्नाः संभवन्ति, न तु प्रतिपद्यमानकाः । मध्यमो-त्कृष्टावगाहनास्त्वेतयोः प्रतिपद्यमानकाः संभवन्ति, पूर्वप्रतिपन्नास्तु सन्त्येव । तिर्यञ्चस्तु पञ्चेन्द्रिया जघन्यावगाहनाः सम्यक्त्व-श्रुतयोः पूर्वप्रतिपन्नाः संभवन्ति न तु प्रतिपद्यमानकाः, उत्कृष्टावगाहनास्तु षड्गव्यूतास्तयोर्द्विधापि लभ्यन्ते । मध्यमावगाहनास्तु द्वयोस्त्रयाणां वा सर्वविरतिवर्जितानां प्रतिपद्यमानकाः संभवन्ति पूर्वप्रतिपन्नास्तु त्रयाणां सन्त्येव ॥ इति निर्युक्तिगाथार्थः ॥ २७३८ ॥

अथ भाष्यम्—

[1]न जहन्नोगाहणओ पवज्जए, दोण्णि होज्ज पडिवन्नो । उक्कोसोगाहणगो दुहा वि दो तिन्नि उ तिरिक्खो ॥२७३९॥

जघन्यावगाहनो गर्भजमनुष्यस्तिर्यक् च न किञ्चित् प्रतिपद्यते, द्वयोस्त्वाद्ययोः पूर्वप्रतिपन्नो भवेत् । उत्कृष्टावगाहनस्त्वनयोर्द्विधापि पूर्वप्रतिपन्नः प्रतिपद्यमानकश्च भवति । मध्यमावगाहनो मनुष्यश्चतुर्णामपि सामायिकानां पूर्वप्रतिपन्नः प्रतिपद्यमानश्च लभ्यत इति द्रष्टव्यम् । पञ्चेन्द्रियतिर्यक् पुनर्द्वयोराद्ययोः, त्रयाणां वा सर्वविरतिवर्जितानां 'द्विधापि' इत्यत्रापि वर्तते, पूर्वप्रतिपन्नः प्रतिपद्यमानश्च भवति ॥ इति गाथार्थः ॥ २७३९ ॥

अथ लेश्याद्वारमाह—

[2]सम्मत्त सुयं सव्वासु लहइ सुद्धासु तीसु य चरित्तं । पुव्वपडिवन्नओ पुण अन्नयरीए उ लेसाए ॥२७४०॥

सम्यक्त्व-श्रुतसामायिके सर्वास्वपि कृष्णादिकासु शुक्लान्तासु षट्स्वपि लेश्यासु लभते प्रतिपद्यते नारकादिः । चारित्रं तु देश-सर्वविरतिलक्षणं शुद्धास्वेवोपरितनीषु तैजसी-पद्म-शुक्ललक्षणासु तिसृषु लेश्यासु प्रतिपद्यते । पूर्वप्रतिपन्नः पुनः षण्णामन्यतरस्यामपि लेश्यायां चारित्री सम्यग्दृष्टिश्च प्राप्यते ॥ इति निर्युक्तिगाथार्थः ॥ २७४० ॥

अथ भाष्यकारः प्रेर्यमुत्थापयन्नाह—

[3]नणु मइ-सुयाइलाभोऽभिहिओ सुद्धासु तीसु लेसासु । सुद्धासु असुद्धासु य कहमिह सम्मत्त-सुयलाभो? ॥२७४१॥

१ न जघन्यावगाहनक प्रपद्यते, द्वे भवेत् प्रतिपन्नः । उत्कृष्टावगाहनको द्विधापि द्वे त्रीणि तु तिर्यक् ॥ २७३९ ॥

२ सम्यक्त्व श्रुतं सर्वासु लभते शुद्धासु त्रिषु च चारित्रम् । पूर्वप्रतिपन्नकः पुनरन्यतरस्यां तु लेश्यायाम् ॥ २७४० ॥

३ ननु मति श्रुतादिलाभोऽभिहितः शुद्धासु तिसृषु लेश्यासु । शुद्धास्वशुद्धासु च कथमिह सम्यक्त्व-श्रुतलाभः ? ॥ २७४१ ॥

'सहस्सग्गसो विरइ त्ति' कदाचिद् विवक्षितकाले उत्कृष्टतः सहस्राग्रशः सहस्रपरिगणनया सहस्रपृथक्त्वं विरतेः प्रतिपत्तारो भवन्ति, जघन्यतस्त्वेको द्वौ वेति । तदेवमुक्ताः प्रतिपद्यमानकाः ॥ २७६४ ॥

अथ पूर्वप्रतिपन्नान् प्रतिपादयन्नाह—

[1]सम्मत्त-देसविरया पडिवण्णा संपई असंखेज्जा । संखेज्जा य चरित्ते तीसु वि पडिया अणंतगुणा ॥२७६५॥

सम्यक्त्व-देशविरताः पूर्वप्रतिपन्नाः-सांप्रतं वर्तमानसमये जघन्यत उत्कृष्टतश्चासंख्येयाः प्राप्यन्ते, किन्तु जघन्यपदादुत्कृष्टपदे विशेषाधिकाः । एते च प्रतिपद्यमानकेभ्योऽसंख्येयगुणाः । संख्येयाश्चारित्रे प्राक्प्रतिपन्नाः । एते तु स्वस्थाने प्रतिपद्यमानकेभ्यः संख्येयगुणाः । त्रिभ्योऽपि चरण-देश-सम्यक्त्वेभ्य एतानेव चरणगुणान् प्राप्य ये प्रतिपतितास्तेऽनन्तगुणाः । तत्र सम्यग्दृष्ट्यादिभ्यः प्रतिपद्यमानकेभ्यः पूर्वप्रतिपन्नेभ्यश्च चरणप्रतिपतिता अनन्तगुणाः, देशविरतिप्रतिपतितास्तु तेभ्योऽसंख्येयगुणाः, सम्यक्त्वप्रतिपतिताः पुनस्तेभ्योऽसंख्येयगुणा इति विशेषो द्रष्टव्य इति ॥ २७६५ ॥

तदेवमत्र श्रुतवर्जसामायिकत्रयस्य पूर्वप्रतिपन्नाः प्रतिपतिताश्चोक्ताः । अथ श्रुतमाश्रित्याह—

[2]सुयपडिवण्णा संपइ पयरस्स असंखभागमेत्ताओ । सेसा संसारत्था सुयपडिवडिया हु ते सव्वे ॥ २७६६ ॥

सम्यग्-मिथ्यारूपस्य सामान्यतोऽक्षरात्मकस्य श्रुतस्य ये पूर्वप्रतिपन्नास्ते सांप्रतं वर्तमानसमये प्रतरस्यासंख्येयभागमात्रा भवन्ति । घनसमचतुरस्रीकृतलोकप्रतरस्यासंख्येयभागवर्तिनीष्वसंख्येयासु श्रेणिषु यावन्तो नभःप्रदेशास्तावन्तो विवक्षितसमये सामान्यश्रुतस्य पूर्वप्रतिपन्ना लभ्यन्त इत्यर्थः । श्रुतप्रतिपन्न-प्रतिपद्यमानकेभ्यस्तु ये शेषाः संसारस्था जीवा भाषालब्धिरहिताः पृथिव्यादय इत्यर्थः, ते सर्वेऽपि भाषालब्धिं प्राप्य प्रतिपतितत्वात् सामान्यश्रुतात् प्रतिपतिता मन्तव्याः । न हि निरादिके संसारे भ्राम्यद्भिस्तैर्भाषालब्धिः पूर्वं न लब्धेति । ते च सम्यक्त्वादिप्रतिपतितेभ्योऽनन्तगुणा इति स्वयमेव द्रष्टव्यम् ॥ इति निर्युक्तिगाथात्रयार्थः ॥ २७६६ ॥

'[3]सेढीअसंखभागो सुए त्ति' इत्यस्य व्याख्यानं भाष्यकारः प्राह—

१ सम्यक्त्व-देशविरताः प्रतिपन्नाः संप्रत्यसंख्येयाः । सङ्ख्येयाश्च चारित्रे त्रिष्वपि पतिता अनन्तगुणाः ॥ २७६५ ॥

२ श्रुतप्रतिपन्नाः संप्रति प्रतरस्यासंख्यभागमात्राः । शेषाः संसारस्थाः श्रुतप्रतिपतिताः खलु ते सर्वे ॥ २७६६ ॥ ३ गाथा २७६४ ।

ननु पूर्वं ज्ञानपञ्चकविचारे मति-श्रुतादिज्ञानलाभः शुद्धास्वेव तैजसीप्रभृतिषु तिसृषु लेश्यास्वभिहितः, इह तु 'शुद्धास्वशुद्धासु च षट्स्वपि सम्यक्त्व-श्रुतलाभोऽभिधीयमानः कथं न विरुध्यते ? इति ॥ २७४१ ॥

अत्र परिहारमाह—

सुर-नेरइएसु दुगं लब्भइ य, दव्वलेसया सव्वे । नाणेसु भावलेसाऽहिगया इह दव्वलेसाओ ॥२७४२॥

इह तावत् सुर-नारकेष्वपि सम्यक्त्व-श्रुतसामायिकद्वयं लभ्यत एव । ते च सुर-नारकाः सर्वेऽप्यवस्थितद्रव्यलेश्या भवन्ति, यथासंभवं षडपि कृष्णादिद्रव्यलेश्यास्तेष्ववास्थिताः श्रुते प्रतिपाद्यन्त इत्यर्थः । भावलेश्यास्तु तेषां परावृत्त्या कस्यचित् काचिदेव भवति । तिर्यग्मनुष्याणां त्ववस्थिता द्रव्यलेश्या न भवन्ति, किन्तु द्रव्यलेश्या भावलेश्या च सर्वेषां परावर्तते । देव-नारकाणामपि द्रव्यलेश्यैवावस्थिता, भावलेश्या तु तेषामपि परावृत्त्या कदाचित् काचिदेव भवति । ततश्च सुर-नारका अपि यदा सम्यक्त्वादिकं लभन्ते तदा भावलेश्या तैजस्यादीनामन्यतरा शुद्धैव भवति, अशुद्धा तु नित्यावस्थितत्वात् तेषां द्रव्यलेश्यैव द्रष्टव्या न तु भावले-श्या । एवं च स्थिते ज्ञानेषु मत्यादिषु पूर्वं लाभचिन्तायां भावलेश्यैवाधिकृता– भावलेश्यामेवाङ्गीकृत्य शुद्धलेश्यात्रये तल्लाभ उक्त इत्यर्थः । इह तु सम्यक्त्व-श्रुतसामायिकलाभचिन्तायां देव-नारकानाश्रित्य द्रव्यलेश्या अधिकृताः, तेन शुद्धास्वशुद्धासु च सर्वासु लेश्यासु तल्लाभ उक्त इति भावः । भावलेश्यामङ्गीकृत्य पुनरिहापि शुद्धास्वेव तिसृषु तैजस्यादिलेश्यासु तल्लाभोऽवगन्तव्यः । इति न कश्चिद् विरोधः ।

आह—ननु यदि देव-नारकाणां कृष्णादिका अशुभा द्रव्यलेश्याः सदाऽवस्थिता भवन्ति तदा सम्यक्त्वादिलाभकाले कथं तेषां शुभभावलेश्यासंभवः ? । द्रव्यलेश्या हि भावलेश्या जनयन्ति । ततः कृष्णादिलेश्याद्रव्याण्यशुभानि कथं शुभभावलेश्या जनयेयुः, अशुभकारणात् शुभकार्यायोगात् ? इति । सत्यम् , किन्तु नारकादीनामपि सम्यक्त्वादिलाभकाले कथमपि यथाप्रवृत्तिकरणेन शुभानि तैजस्यादिद्रव्यलेश्याद्रव्याण्याक्षिप्यन्ते । ततो यथाऽऽदर्शः श्वेतोऽपि जपा-कुसुमादिवस्तुप्रतिबिम्बसंक्रान्तौ रक्तादिरूपतां प्रतिपद्यते तथा कृष्णाद्यशुभद्रव्याण्यपि तैजस्यादिशुभद्रव्यप्रतिबिम्बसंक्रमे निजरूपोत्कटतां परित्यज्य तदाभासतां प्रतिपद्यन्ते । ततो नारकादीनामपि कृष्णाद्यशुभद्रव्यानुभावं मन्दतां नीत्वा शुभानि तैजस्यादिद्रव्याणि शुभां भावलेश्यां जनयन्ति ।

१ सुर-नैरयिकेषु द्विकं लभ्यते च, द्रव्यलेश्यका. सर्वे । ज्ञानेषु भावलेश्या अधिकृता इह द्रव्यलेश्या ॥ २७४२ ॥

संवट्टियचउरसीकयस्स लोगस्स सत्त रज्जूओ। सेढी, तदसंखिज्जइभागो समए सुयं लहइ ॥२७६७॥

उक्तार्था ॥ २७६७ ॥

'सुयपडिवण्णा संपइ पयरस्स' इत्यादेर्व्याख्यानमाह—

सा[3] सेढी सेढीगुणा पयरं तदसंखभागसेढीणं। संखाईयाण पएसरासिमाणा सुयपवन्ना ॥ २७६८ ॥

इयमपि गतार्था, नवरं श्रेणिः श्रेण्या गुणिता प्रतरो मन्तव्यः ॥ २७६८ ॥

'सम्मत्त-देसविरया पलियस्स' इत्याद्युक्तम्, तत्र सम्यक्त्वप्रतिपद्यमानकादीनां संख्यातीतत्वस्य तुल्यत्वादल्पबहुत्वं पूर्वं न विज्ञातम्, तद् भाष्यकारः प्राह—

सइ[5] संखाईयत्ते थोवा देसविरया दुविण्हं पि। तदसंखगुणा सम्मद्दिट्ठी तत्तो य सुयसहिया ॥ २७६९ ॥

मीसे पवज्जमाणा सुयस्स सेसपडिवन्नएहिंतो। संखाईयगुण च्चिय तदसंखगुणा सुयपवन्ना ॥२७७०॥

व्याख्या—सम्यक्त्व-देशविरतानामुभयेषामपि प्रतिपद्यमानकानां पल्योपमासंख्येयभागवर्तित्वेन संख्यातीतत्वेऽसंख्येयत्वे तुल्येऽपि सति द्वयोरप्यनयो राश्योः स्तोका देशविरताः प्रतिपद्यमानकाः, सम्यग्दृष्टयः प्रतिपद्यमानकास्तेभ्योऽसंख्येयगुणाः, तेभ्यश्च प्रतिपद्यमानसम्यग्दृष्टिभ्यः श्रुतसहिताः सामान्यश्रुतप्रतिपद्यमानका असंख्येयगुणाः। मिश्रे मिलिते समुदितेऽपीत्यर्थः, सम्यग्दृष्टि-देशविरतराशिद्वयेऽवधौ व्यवस्थापिते सामान्यश्रुतस्य ये प्रतिपद्यमानकास्ते, शेषेभ्यः सम्यग्दृष्टि-देशविरतेभ्यो मिलितेभ्यः प्रतिपन्नकेभ्यः पूर्वप्रतिपन्नेभ्य इति भावः 'संखाईयगुण च्चिय त्ति' संख्यातीतगुणा एवासंख्यातगुणा एवेत्यर्थः। तदनेन श्रेणेरसंख्यातभागवृत्तित्वात् सामान्येन श्रुतप्रतिपद्यमानकानां प्राचुर्यं सूचितम्। एवं नाम ते सामान्यश्रुतप्रतिपद्यमानका बहवो येन शेषेभ्यः समुदितस-

१ सवर्तितचतुरस्रीकृतस्य लोकस्य सप्त रज्ज्व। श्रेणी, तदसंख्येयभाग: समये श्रुत लभते ॥ २७६७ ॥ २ गाथा २७६६।

३ सा श्रेणि: श्रेणिगुणा प्रतर तदसंख्यभागश्रेणीनाम्। सख्यातीतानां प्रदेशराशिमाना श्रुतप्रपन्ना ॥ २७६८ ॥ ४ गाथा २७६४।

५ सति सख्यातीतत्वे स्तोका देशविरता द्वयोरपि। तदसख्यगुणा सम्यग्दृष्टयस्ततश्च श्रुतसहिता ॥ २७६९ ॥ मिश्रे प्रपद्यमाना श्रुतस्य शेषप्रतिपन्नकेभ्य। सख्यातीतगुणा एव तदसख्यगुणा श्रुतप्रपन्ना ॥ २७७० ॥

अतोऽवस्थितायामपि कृष्णादिद्रव्यलेश्यायां नारक-देवानां सम्यक्त्वादिलाभकाले शुभभावलेश्यासंभवो न विरुध्यते। इत्यलं विस्तरेण। तदर्थिना तु "[1]से नूणं भंते! किण्हलेसा नीललेसं पप्प नो तारूवत्ताए, नो तावन्नत्ताए" इत्यादि प्रज्ञापनासूत्रं मूलावश्यकटीकादिलिखितमनुसरणीयम् ॥ इति गाथाद्वयार्थः ॥ २७४२ ॥

अथ परिणामद्वारमाह—

[2]वड्ढंते परिणामे पडिवज्जइ सो चउण्हमण्णयरं। एमेव वड्ढियम्मि वि हायंते न किंचि पडिवज्जे ॥२७४३॥

परिणामोऽध्यवसायविशेषः। तत्र शुभ-शुभतररूपतया वर्धमाने परिणामे प्रतिपद्यते स वर्धमानपरिणामो जीवश्चतुर्णां सम्यक्त्वादिसामायिकानामन्यतरदिति। एवमेव पूर्वोक्तन्यायेनान्तरकरणादाववस्थितेऽपि शुभे परिणामे प्रतिपद्यते स चतुर्णामन्यतरदिति। हीयमाने तु क्षीयमाणे शुभे परिणामे न किञ्चित् सामायिकं प्रतिपद्यते, संक्लिष्टत्वात्। प्राक्प्रतिपन्नस्तु त्रिष्वपि परिणामेषु भवतीति ॥ २७४३ ॥

अथ वेदना-समुद्घातकर्मद्वारद्वयमाह—

[3]दुविहाए वेयणाए पडिवज्जइ सो चउण्हमण्णयरं। असमोहओ वि एमेव पुव्वपडिवण्णए भयणा ॥२७४४॥

द्विविधायां वेदनायां साता-ऽसातरूपायां सत्यां प्रतिपद्यते स चतुर्णामन्यतरत्, प्राक्प्रतिपन्नश्च भवतीति द्वारम्। सम्– एकीभावे, उत्– प्राबल्ये, वेदना-कषायाद्यनुभवपरिणामेन सहैकीभावमापन्नस्य जन्तोर्वेदनीयादिकर्मपुद्गलानां प्राबल्येन हननं घातः समुद्घातः। स च केवलिसमुद्घातादिभेदात् सप्तविधः। उक्तं च—

"[4]केवलि-कसाय-मरणा वेयण-वेउव्वि-तेय-आहारे। सत्तविहसमुग्घाओ पन्नत्तो वीयरागेहिं ॥ १ ॥"

समुद्घात एव कर्म क्रिया समुद्घातकर्म तद्द्वारमितः प्रोच्यते। तत्र केवल्यादिसमुद्घातेन समवहतस्य विपक्षोऽसमवहतः। सो-

---

१ अथ नूनं भगवन्! कृष्णलेश्या नीललेश्यां प्राप्य नो तद्रूपतया, नो तद्वर्णतया।

२ वर्धमाने परिणामे प्रतिपद्यते स चतुर्णामन्यतरत्। एवमेव वर्धितेऽपि हीयमाने न किञ्चित् प्रतिपद्येत ॥ २७४३ ॥

३ द्विविधायां वेदनायां प्रतिपद्यते स चतुर्णामन्यतरत्। असमवहतोऽप्येवमेव पूर्वप्रतिपन्नके भजना ॥ २७४४ ॥

४ केवलि-कषाय-मरणानि वेदना वैक्रिय-तेज-आहाराः। सप्तविधसमुद्घातः प्रज्ञप्तो वीतरागैः ॥ १ ॥

म्यग्दृष्टि-देशविरतेभ्यः पूर्वप्रतिपन्नेभ्योऽप्यसंख्यातगुणाः। 'तदसंखगुणा सुयपवन्ना त्ति' तेभ्योऽपि श्रुतप्रतिपद्यमानकेभ्यस्तस्यैव श्रुतस्य ये पूर्वप्रतिपन्नास्तेऽसंख्यातगुणा इति ॥ २७७० ॥

अथ पूर्वप्रतिपन्नानां प्रतिपद्यमानकानां च सम्यग्दृष्ट्यादीनां स्वस्थानेऽल्प-बहुत्वमाह—

[1]सट्ठाणे सट्ठाणे पुव्वपवण्णा पवज्जमाणेहिं। हुंति असंखिज्जगुणा संखिज्जगुणा चरित्तस्स ॥ २७७१ ॥

सम्यक्त्वयुक्तश्रुत-देशविरतानां स्वस्थाने स्वस्थाने पूर्वप्रतिपन्नाः प्रतिपद्यमानकेभ्योऽसंख्येयगुणाः; चारित्रिणां तु विशेषः, तद्यथा— सर्वस्तोकाः स्वस्थाने चारित्रिणः प्रतिपद्यमानकाः, पूर्वप्रतिपन्नास्तु संख्येयगुणा इति ॥ २७७१ ॥

अथ सम्यक्त्वादिप्रतिपतितानामल्प-बहुत्वमाह—

[2]चरणपडिया अणंता तदसंखगुणा य देसविरईओ। सम्मादसंखगुणिया तओ सुयाओ अणंतगुणा॥२७७२॥

चारित्रं प्राप्य ये प्रतिपतितास्ते सम्यक्त्वादिप्रतिपद्यमान-पूर्वप्रतिपन्नकेभ्यः सर्वेभ्योऽप्यनन्ता अनन्तगुणाः, देशविरतिप्रतिपतितास्तेभ्योऽसंख्यातगुणाः, सम्यक्त्वप्रतिपतितास्तेभ्योऽसंख्यातगुणाः, तेभ्योऽपि श्रुतात् प्रतिपतिता अनन्तगुणा इति ॥ २७७२ ॥

'से[3]ढीअसंखभागो सुए' इत्यादि यदुक्तम् , तच्च किं सामान्यश्रुतं सम्यक्श्रुतं वेह गृह्यते, इत्याशङ्कायामाह—

[4]सामण्णं सुयगहणं ति तेण सव्वत्थ बहुतरा तम्मि। इहरा पइ सम्मसुयं सम्मत्तसमा मुणेयव्वा ॥२७७३॥

उक्तार्थप्राया, सुगमा चेति ॥ २७७३ ॥

इह सम्यक्त्व-श्रुत-देशविरतिचारित्रलक्षणेषु चतुर्ष्वपि सामायिकेषु पूर्वप्रतिपन्न-प्रतिपतितपदयोर्जघन्योत्कृष्टभेदाभिन्नत्वात् तद्विशेषप्रतिपादनार्थमाह—

[5]पडिय-पडिवन्नयाणं सट्ठाणे समहिअं जहन्नाओ। सव्वत्थुक्कोसपयं पवज्जइ जहण्णओ चेगो ॥ २७७४ ॥

---

१ स्वस्थाने स्वस्थाने पूर्वप्रपन्नाः प्रपद्यमानेभ्यः। भवन्त्यसंख्येयगुणा संख्येयगुणाश्चारित्रस्य ॥ २७७१ ॥

२ चरणपतिता अनन्तास्तदसंख्यगुणाश्च देशविरतेः। सम्यक्त्वादसंख्यगुणितास्ततः श्रुतादनन्तगुणा ॥ २७७२ ॥ ३ गाथा २७६४ ।

४ सामान्यं श्रुतग्रहणमिति तेन सर्वत्र बहुतरास्तस्मिन्। इतरथा प्रति सम्यक्श्रुतं सम्यक्त्वसमा ज्ञातव्या ॥ २७७३ ॥

५ पतित-प्रतिपन्नकानां स्वस्थाने समधिकं जघन्यात्। सर्वत्रोत्कृष्टपदं प्रपद्यते जघन्यतश्चैकः ॥ २७७४ ॥

ऽप्येवमेव वेदनावद् वाच्यः, चतुर्णां प्रतिपद्यमानकः पूर्वप्रतिपन्नश्च भवतीत्यर्थः। 'पुव्वपडिवण्णए भयण त्ति' इदं साध्याहारं व्याख्येयम्, तद्यथा– यस्तु केवल्यादिसप्तविधसमुद्घातेन समवहतः स न किञ्चित् सामायिकं प्रतिपद्यते। पूर्वप्रतिपन्नके तु भजना सेवना समर्थना विधिः कार्य इति यावत्। समवहतो हि सामायिकद्वयस्य त्रयस्य वा पूर्वप्रतिपन्नको भवति। तत्र केवलिसमुद्घाते सम्यक्त्व-चारित्र-सामायिकद्वयस्य पूर्वप्रतिपन्नको लभ्यते। शेषसमुद्घातेषु पुनर्देशविरतिवर्जसामायिकत्रयस्य चारित्रवर्जस्य वा सामायिकत्रयस्य पूर्वप्रतिपन्नः प्राप्यते॥ इति निर्युक्तिगाथार्थः॥ २७४४॥

निर्वेष्टनो-द्वर्तनद्वारद्वयमाह—

[1]दव्वेण य भावेण य निव्वेट्टंतो चउण्हमण्णयरं। नरएसु अणुव्वट्टे दुग तिग चउरो सिउव्वट्टे॥२७४५॥

द्रव्यतः सामान्येन सर्वकर्मप्रदेशान्, विशेषतस्तु तस्य चतुर्विधस्य सामायिकस्य यदावरणं ज्ञानावरण-मोहनीयलक्षणं तत्प्रदेशान् निर्वेष्टयन् निर्जरयन्, भावतस्तु क्रोधाद्यध्यवसायान् निर्वेष्टयन् हापयंश्चतुर्णामन्यतरत् प्रतिपद्यते, पूर्वप्रतिपन्नस्त्वस्त्येव। संवेष्टयंस्त्वनन्तानुबन्ध्यादीन् न प्रतिपद्यते, शेषकर्म त्वङ्गीकृत्योभयथाप्यस्ति। नरकेष्वधिकरणभूतेष्वनुद्वर्तयंस्तत्रस्थ एवेत्यर्थः, आद्यं सामायिकद्वयं प्रतिपद्यते, तदेव चाधिकृत्य पूर्वप्रतिपन्नो भवति। तत उद्वृत्तः स्यात् कदाचित् तिर्यक्षूत्पन्नः सर्वविरतिवर्जं सामायिकत्रयं प्रतिपद्यते, कदाचित्तु मनुष्येषूत्पन्नश्चत्वार्यपि प्रतिपद्यते, पूर्वप्रतिपन्नस्त्वस्त्येव॥ इति निर्युक्तिगाथार्थः॥ २७४५॥

भाष्यम्—

[2]कम्मं निव्वेट्टंतो पवज्जइ विसेसओ तदावरणं। दव्वं कम्मपएसे भावे कोहाइ हाविंतो॥ २७४६॥

उक्तार्थैव॥ २७४६॥

तदेवोद्वर्तनाद्वारं तिर्यगादीनधिकृत्याह—

[3]तिरिएसु अणुव्वट्टे तिगं चउक्कं सिया उ उव्वट्टे। मणुएसु अणुव्वट्टे चउरो बि तियं सिउव्वट्टे॥२७४७॥

1 द्रव्येण च भावेन च निर्वेष्टयंश्चतुर्णामन्यतरत्। नरकेष्वनुद्वर्तयन् द्वे त्रीणि चत्वारि स्यादुद्वृत्त॥ २७४५॥
2 कर्म निर्वेष्टयन् प्रपद्यते विशेषतस्तदावरणम्। द्रव्य कर्मप्रदेशान् भावे क्रोधादि जहत्॥ २७४६॥
3 तिर्यक्ष्वनुद्वृत्तस्त्रिक चतुष्क स्यात् तूद्वृत्ते। मनुजेष्वनुद्वृत्तश्चत्वारि द्विक त्रिक स्यादुद्वृत्ते॥ २७४७॥

इह सम्यक्त्वादिप्रतिपतितानां यज्जघन्यपदं तस्मात् स्वस्थाने यदुत्कृष्टपदं तत् सर्वत्र समधिकं विशेषाधिकमवगन्तव्यम्। एवं पूर्वप्रतिपन्नानामपि जघन्यपदादुत्कृष्टपदं विशेषाधिकमेव। प्रतिपद्यमानानां तर्हि का वार्ता ? इत्याह, 'पवज्जई'त्यादि' प्रतिपद्यते सम्यक्त्वादिगुणं जघन्यत एको द्वौ वा, उत्कृष्टतस्त्वाद्यसामायिकत्रयमसंख्याताः, चारित्रं तूत्कृष्टतः संख्याताः प्रतिपद्यन्ते। अत इह जघन्यपदादुत्कृष्टपदमसंख्येयगुणं संख्ययेगुणं वा द्रष्टव्यम् ॥ इति गाथाऽष्टकार्थः ॥ २७७४ ॥

अथ सान्तरद्वारमाह—

[1]कालमणंतं च सुए अद्धापरियट्टओ य देसूणो। आसायणबहुलाणं उक्कोसं अन्तरं होइ ॥ २७७५ ॥

इह जीव एकदा सम्यक्त्वादिसामायिकमवाप्य ततस्तत्परित्यागे यावता कालेन पुनरपि तदवाप्नोति सोऽपान्तरकालोऽन्तरमुच्यते। तच्च सामान्येऽक्षरात्मके श्रुते जघन्यतोऽन्तर्मुहूर्तम्, उत्कृष्टतस्त्वनन्तं कालं भवति। इदमुक्तं भवति— इह द्वीन्द्रियादिः कश्चित् श्रुतं लब्ध्वा मृतो यः पृथिव्यादिषूत्पद्य तत्रान्तर्मुहूर्तं स्थित्वा पुनरपि द्वीन्द्रियादिष्वागतः श्रुतं लभते तस्य जघन्यतोऽन्तर्मुहूर्तमन्तरं भवति। यस्तु द्वीन्द्रियादिर्मृतः पृथिव्य-ऽप्-तेजो-वायु-वनस्पतिषु पुनः पुनरुत्पद्यमानोऽनन्तं कालमवतिष्ठते, ततः पुनरपि द्वीन्द्रियादिष्वागत्य श्रुतं लभते, तस्यायमेकेन्द्रियावस्थितिकाललक्षणोऽनन्तकाल उत्कृष्टतोऽन्तरं भवति। अयं चासंख्यातपुद्गलपरावर्तमानो द्रष्टव्यः। शेषस्य तु सम्यक्त्व-देशविरति-सर्वविरतिसामायिकत्रयस्येति दृश्यम्— जघन्यतोऽन्तर्मुहूर्तम्, उत्कृष्टतस्तु देशोन उपार्धपुद्गलपरावर्तोऽन्तरं भवति। इदं चोत्कृष्टमन्तरमाशातनाबहुलानां जीवानां द्रष्टव्यम्; उक्तं च—

"[2]तित्थयर पवयण सुयं आयरिय गणहर महिड्ढीयं। आसायंतो बहुसो अणंतसंसारिओ होइ ॥ १ ॥"

इति निर्युक्तिगाथार्थः ॥ २७७५ ॥

भाष्यम्—

[3]मिच्छसुयस्स वणस्सइकालो सेसस्स सेससामण्णो। हीणं भिण्णमुहुत्तं सव्वेसिमिहेगजीवस्स ॥२७७६॥

१ कालमनन्तं च श्रुतेऽर्धपरावर्तकश्च देशोन। आशातनबहुलानामुत्कृष्टमन्तरं भवति ॥ २७७५ ॥
२ तीर्थकर प्रवचनं श्रुतमाचार्यं गणधरं महर्द्धिकम्। आशातयन् बहुशोऽनन्तसंसारको भवति ॥ १ ॥
३ मिथ्याश्रुतस्य वनस्पतिकालः शेषस्य शेषसामान्य.। हीन भिन्नमुहूर्तं सर्वेषामिहैकजीवस्य ॥ २७७६ ॥

[1]देवेसु अणुव्वट्टे दुग तिग चउरो सिया उ उव्वट्टे। उव्वट्टमाणओ पुण सव्वो वि न किंचि पडिवज्जे॥२७४८॥

व्याख्या— तिर्यक्षु गर्भजेष्वनुद्वृत्तः संज्ञिकमाद्यं सामायिकत्रयमधिकृत्य 'प्रतिपत्ता पूर्वप्रतिपन्नश्च भवति' इत्यध्याहारः। 'चउक्कमित्यादि' तिर्यग्भ्य उद्वृत्तो मनुष्यादिष्वायातः स्यात् कदाचिच्चतुष्कम्, स्याद्ग्रहणादिदमपि द्रष्टव्यम्— स्यात् त्रिकम्, स्याद् द्विकमधिकृत्योभयथापि भवतीति। 'मणुएसु अणुव्वट्टे चउरो त्ति' मनुष्येष्वनुद्वृत्तः संश्चत्वारि प्रतिपद्यते, प्राक्प्रतिपन्नश्च भवति। 'बि तियं सिउव्वट्टे' मनुष्येभ्य उद्वृत्तो देव-नारकेषूत्पन्नः प्रथमं सामायिकद्वयमधिकृत्योभयथापि लभ्यते। तिर्यक्षूत्पन्नः पुनः सर्वविरतिवर्जसामायिकत्रिकमाश्रित्य द्विधापि भवतीति। 'देवेसु अणुव्वट्टे दुग त्ति' देवेष्वनुद्वृत्तः सन्नाद्यं सामायिकद्वयमाश्रित्योभयथापि भवति। 'तिग चउरो सिया उ उव्वट्टे त्ति' देवेभ्य उद्वृत्तस्तिर्यक्ष्वायातः सर्वविरतिसामायिकत्रिकं, मनुष्येषु त्वायातः सामायिकचतुष्कमप्याश्रित्योभयथापि स्यादिति। उद्वर्तमानः पुनरपान्तरालगतौ सर्वोऽप्यमरादिर्न किञ्चित् प्रतिपद्यते, प्राक्प्रतिपन्नस्तु द्वयोर्भवतीति॥ २७४७॥ २७४८॥

आस्रवकरणद्वारमाह—

[2]नीसवमाणो जीवो पडिवज्जइ सो चउण्हमण्णयरं। पुव्वपडिवन्नओ पुण सिय आसवओ व नीसवओ॥२७४९॥

यत् सम्यक्त्वादिसामायिकं प्रतिपद्यते तदावारकं मिथ्यात्वमोहनीयादिकर्म निश्रावयन् निर्जरयन्नेव शेषकर्म तु बध्नन्नपि जीवः प्रतिपद्यते स चतुर्णामन्यतरदिति। यस्तु पूर्वप्रतिपन्नः सः, वाशब्दस्य व्यवहितसंबन्धात् स्यादाश्रावको बन्धक इत्यर्थः, निश्रावको वा निर्जरकः स्यात्। निर्वेष्टनद्वारोक्त एवार्थोऽत्र पर्यायान्तरेणोक्तः, परमार्थतस्त्वात्यन्तिकभेदाभावादिति॥ २७४९॥

अथालङ्कार-शयना-ऽऽसन-स्थान-चङ्क्रमणद्वारकदम्बकं व्याचिख्यासुराह—

[3]उम्मुक्कमणुमुक्के उम्मुच्चंते य केसलंकारे। पडिवज्जिज्जन्नयरं सयणाईसुं पि एमेव॥ २७५०॥

केशोपलक्षितकटक-केयूर-हार-कङ्कण-वस्त्र-ताम्बूलाद्यलङ्कारः केशालंकारस्तत्रोन्मुक्ते परित्यक्ते, अनुन्मुक्ते चापरित्यक्ते,

---

१ देवेष्वनुद्वृत्ते द्वे त्रीणि चत्वारि स्यात्तूद्वृत्ते। उद्वर्तमानकः पुन. सर्वोऽपि न किञ्चित् प्रतिपद्येत॥ २७४८॥

२ निश्रावयञ्जीव प्रतिपद्यते स चतुर्णामन्यतरत्। पूर्वप्रतिपन्नकः पुनः स्यादाश्रावको वा निश्रावकः॥ २७४९॥

३ उन्मुक्तेऽनुन्मुक्ते उन्मुञ्चंश्च केशालङ्कारम्। प्रतिपद्येतान्यतरत् शयनादिष्वप्येवमेव॥ २७५०॥

इह योऽयं वनस्पतिकालो वनस्पतेरुपलक्षणत्वादेकेन्द्रियकालोऽसंख्यातपुद्गलपरावर्तात्मकः श्रुतस्योत्कृष्टोऽन्तरं प्रोक्तः, स मिथ्याश्रुतस्य मिथ्याश्रुतमङ्गीकृत्य द्रष्टव्यः । 'सेसस्स सेससामण्णा त्ति' शेषस्य तु सम्यक्श्रुतस्य शेषैः सम्यक्त्वादिसामायिकैः सामान्यस्तुल्यो देशोनोपार्धपुद्गलपरावर्तलक्षण उत्कृष्टोऽन्तरकालो द्रष्टव्यः। 'हीणं ति' हीनं जघन्यमन्तरं सर्वेषामपि सम्यक्त्वादिसामायिकानां निर्युक्तिगाथायामनुक्तत्वाद् भिन्नमुहूर्तमन्तर्मुहूर्तं द्रष्टव्यम् । इदं च जघन्यमुत्कृष्टं चान्तरमेकजीवस्य मन्तव्यम्, नानाजीवानां सम्यक्त्वाद्यन्तराभावादिति गाथार्थः ॥ २७७६ ॥

सांप्रतमविरहितद्वारमाह—

सम्म-सुयागारीणं आवलियअसंखभागमेत्ताओ। अट्ठ समया चरित्ते सव्वेसिं जहण्ण दो समया ॥२७७७॥

सम्यक्त्व-श्रुता-ऽगारिणां सम्यक्त्व-श्रुत-देशविरतिसामायिकानामित्यर्थः, एकैकस्मिन् द्व्यादिषु वा प्रतिपत्तृषु प्रतिपद्यमानेष्वावलिकासंख्येयभागमात्राः समया अविरहितं नैरन्तर्येण प्रतिपत्तिर्भवति । इदमुक्तं भवति— सम्यक्त्व-श्रुत-देशविरतीनां सर्वस्मिन्नपि लोक उत्कृष्टत आवलिकाऽसंख्येयभागवर्तिनः समयानविरहितं नैरन्तर्येणैकैको द्व्यादयो वा प्रतिपत्तारः प्राप्यन्ते, ततः परं तत्प्रतिपत्तेरवश्यमुपरमाद् विरहकालो भवति। चारित्रे त्वष्टौ समयान् यावदेक-द्व्यादीनां निरन्तरं प्रतिपत्तिः, सर्वत्र ततः परं विरहकालः । जघन्यतस्तु सर्वेष्वपि सामायिकेषु द्वौ समयौ प्रतिपत्तिः । ततः परं विरहकाल इति ॥ २७७७ ॥

अविरहितकालस्य प्रतिपक्षभूतत्वाद् विरहकालो द्वारगाथायामनुपदिष्टोऽपि लभ्यते, अतः सम्यक्त्वादिप्रतिपत्तिविरहकालमाह—

सुय-सम्म सत्तयं खलु विरयाविरईय होइ बारसगं । विरईए पण्णरसगं विरहियकालो अहोरत्ता ॥२७७८॥

इह सम्यक्त्व-श्रुतयोः सर्वस्मिन्नपि लोक उत्कृष्टतः सप्ताहोरात्राणि प्रतिपत्तिविरहकालो भवति, एतावन्तं कालमनयोरुत्कृष्टतो लोके कोऽपि प्रतिपत्ता न लभ्यत इत्यर्थः, ततः परं कश्चिदवश्यं ते प्रतिपद्यते, एवमुत्तरत्रापि । विरताविरतेस्तु देशविरतेर्द्वादशाहोरात्राण्युत्कृष्टतः सर्वत्र विरहकालो भवति, विरतेस्तु चारित्रस्य पञ्चदशाऽहोरात्राण्युत्कृष्टतः प्रतिपत्तिविरहकालो भवति ॥

1 ज. 'काल. प्रतिपत्तव्य.' । २ सम्यक्त्व-श्रुता-ऽगारिणामावलिकासंख्यभागमात्राः । अष्ट समयाश्चारित्रे सर्वेषां जघन्यतो द्वौ समयौ ॥ २७७७ ॥

३ श्रुत-सम्यक्त्वयोः सप्तकं खलु विरताविरतेर्भवति द्वादशकम् । विरतेः पञ्चदशकं विरहितकालोऽहोरात्राणाम् ॥ २७७८ ॥

तथा, उन्मुञ्चंश्च केशाद्यलङ्कारं चतुर्णामन्यतरत् सामायिकं प्रतिपद्यते । अत्र च भरतचक्रवर्त्यादय उदाहरणं मन्तव्याः । एवं शयने, आसने, स्थाने, चङ्क्रमणे च परित्यक्तेऽपरित्यक्ते परित्यज्यमाने चैतासु तिसृष्वप्यवस्थासु चतुर्णामन्यतरत् प्रतिपद्यते । प्राक्प्रतिपन्नश्च सर्वत्र लभ्यते ॥ इति निर्युक्तिगाथाचतुष्टयार्थः ॥ तदेवमुक्तं विस्तरतः 'कहिं' इति द्वारम् ॥ २७५० ॥

अथ 'केषु' इति द्वारमभिधातुमाह—

[1]सव्वगयं सम्मत्तं सुय-चरित्ते न पज्जवा सव्वे । देसविरइं पडुच्चा दोण्ह वि पडिसेहणं कुज्जा ॥२७५१॥

अथ 'केषु द्रव्येषु पर्यायेषु च सामायिकम् ?' इति जिज्ञासायामुच्यते– सर्वद्रव्य-पर्यायगतं सम्यक्त्वम्, सर्वद्रव्य-पर्यायश्रद्धानरूपत्वात् तस्य । तथा, श्रुते श्रुतसामायिके, चारित्रे चारित्रसामायिके द्रव्याणि सर्वाण्यपि भवन्ति, विषयपर्यायास्तु न सर्वे तद्विषयः, श्रुतस्याभिलाप्यविषयत्वात्, पर्यायाणां चाभिलाप्या-ऽनभिलाप्यरूपत्वादिति ; चारित्रस्यापि 'पढमम्मि सव्वजीवा' इत्यादिना सर्वद्रव्या-ऽसर्वपर्यायविषयतायाः प्रतिपादितत्वादिति । देशविरतिं प्रतीत्य द्वयोरपि सकलद्रव्य-पर्याययोः प्रतिषेधनं कुर्यात्– न सर्वद्रव्यविषयम्, नापि सर्वपर्यायविषयं देशविरतिसामायिकमिति भावः ॥ इति निर्युक्तिगाथार्थः ॥ २७५१ ॥

अथ भाष्यकारव्याख्या—

[2]एगं पि असद्दहओ जं दव्वं पज्जवं च मिच्छत्तं । विणिउत्तं सम्मत्तं तो सव्वदव्व-भावेसु ॥ २७५२ ॥

नाणभिलप्पेसु सुयं जम्हा न य दव्वमणभिलप्पं ति । सव्वद्दव्वेसु तयं तम्हा न उ सव्वभावेसु ॥२७५३॥

बिइय-चरिमव्वयाइं पइ चारित्तमिह सव्वदव्वेसु । न उ सव्वपज्जवेसुं सव्वाणुवओगभावाओ ॥ २७५४ ॥

व्याख्या– यद् यस्मादेकमपि द्रव्यं पर्यायं वा जिनप्रणीतमश्रद्दधतः सतो मिथ्यात्वमुक्तम् । ततः सम्यक्त्वं विनियुक्तं सर्वद्रव्य-पर्यायेषु 'श्रद्धानभावेन' इति शेषः । यस्माच्च श्रुतज्ञानमनभिलाप्येषु न प्रवर्तते, अविषयत्वात् तेषाम्; किन्त्वभिलाप्येष्वेवार्थेषु तत्

१ सर्वगत सम्यक्त्व श्रुत-चारित्रे न पर्यवाः सर्वे । देशविरतिं प्रतीत्य द्वयोरपि प्रतिषेधन कुर्यात् ॥ २७५१ ॥ २ गाथा २६३७ ।

३ एकमप्यश्रद्दधतो यद् द्रव्यं पर्यवं च मिथ्यात्वम् । विनियुक्तं सम्यक्त्व ततः सर्वद्रव्य-भावेषु ॥ २७५२ ॥
नानभिलाप्येषु श्रुतं यस्माद् न च द्रव्यमनभिलाप्यमिति । सर्वद्रव्येषु तत् तस्माद् न तु सर्वभावेषु ॥ २७५३ ॥
द्वितीय चरमव्रते प्रति चारित्रमिह सर्वद्रव्येषु । न तु सर्वपर्यवेषु सर्वानुपयोगभावात् ॥ २७५४ ॥

इति निर्युक्तिगाथाद्वयार्थः ॥ २७७८ ॥

अथ भवद्वारमुच्यते । तत्र कियतो भवानेकजीवः सामायिकचतुष्टयमुत्कृष्टतः प्रतिपद्यते ? इत्याह—

[1]सम्मत्त-देसविरया पलियस्स असंखभागमेत्ताओ । अट्ठ भवा उ चरित्ते अणंतकालं च सुयसमए॥२७७९॥

सम्यग्दृष्टयो देशविरताश्च प्रत्येकं क्षेत्रपल्योपमासंख्येयभागमात्रान् भवान् यावद् भवन्ति । इदमुक्तं भवति– क्षेत्रपल्योपमस्यासंख्येयभागे यावन्तो नभःप्रदेशास्तावतो भवानुत्कृष्टतः सम्यक्त्वं देशविरतिं च प्रतिपद्यन्ते, जघन्यतस्त्वेकं भवम् । ततः परं सिध्यन्ति । इह च सम्यक्त्वभवासंख्येयकाद् देशविरतिभवासंख्येयकं लघुतरं द्रष्टव्यम् । चारित्रे तु विचार्येऽष्टौ भवानुत्कृष्टतस्तत् प्रतिपद्यते, उत्कृष्टतोऽष्टौ तस्यादानभवाः, जघन्यतस्त्वेकः, ततः सिध्यति । 'अणंतकालं च सुयसमए त्ति' अनन्तकालोऽनन्तभवरूपस्तमनन्तकालमेव प्रतिपत्ता भवत्युत्कृष्टतः सामान्यश्रुतसामायिके, जघन्यतस्त्वेकभवमेव, मरुदेवीवत् ॥ इति निर्युक्तिगाथार्थः ॥ २७७९ ॥

अथाकर्षद्वारमाह—

[2]तिण्हं सहस्सपुहत्तं सयपुहत्तं च होइ विरईए । एगभवे आगरिसा एवइया हुंति नायव्वा ॥२७८०॥

आकर्षणमाकर्षस्तत्प्रथमतया, मुक्तस्य वा ग्रहणमित्यर्थः । तत्र त्रयाणां सम्यक्त्व-श्रुत-देशविरतिसामायिकानामेकभवे सहस्रपृथक्त्वमाकर्षाणां भवति । विरतेस्तु चारित्रस्यैकभवे शतपृथक्त्वमाकर्षाणां भवतीति । एवमेत उत्कृष्टत एकभविका आकर्षाः प्रोक्ताः । जघन्यस्त्वेक एव, सर्वेषामाकर्ष इति ॥ २७८० ॥

नानाभवगतानाह—

[3]दोण्ह [4]पुहत्तमसंखा सहस्सपुहत्तं च होइ विरईए । नाणभवे आगरिसा सुए अणंता उ नायव्वा ॥२७८१॥

द्वयोः सम्यक्त्व-देशविरतिसामायिकयोर्नानाभवेषूत्कृष्टतोऽसंख्येयानि सहस्रपृथक्त्वान्याकर्षाणां संभवन्ति । एकं हि सहस्रपृथक्त्वमसंख्येयैस्तत्प्रतिपत्तिभवैर्गुणितमसंख्येयानि सहस्रपृथक्त्वानि भवन्ति । तथा, विरतेश्च चारित्रस्य नानाभवेष्वाकर्षाणां सहस्रपृथक्त्वं

१ सम्यक्त्व-देशविरताः पल्यस्यासंख्यभागमात्रान् । अष्ट भवास्तु चारित्रेऽनन्तकालं च श्रुतसामायिके ॥ २७७९ ॥
२ त्रयाणां सहस्रपृथक्त्वं शतपृथक्त्वं च भवति विरते. । एकभव आकर्षा एतावन्तो भवन्ति ज्ञातव्याः ॥ २७८० ॥
३ द्वयो. पृथक्त्वमसख्यानां सहस्रपृथक्त्व च भवति विरते । नानाभव आकर्षा· श्रुतेऽनन्तास्तु ज्ञातव्याः ॥ २७८१ ॥ ४ 'सहस्समसंखा' इति निर्युक्तौ ।

प्रवर्तते । न च द्रव्यं धर्माऽस्तिकायादिकमनभिलाप्यम्, किन्त्वभिलाप्यमेव । ततः सर्वद्रव्येषु श्रुतं प्रवर्तते, अभिलाप्यविषयत्वात् तस्य, न पुनः सर्वभावेषु सर्वपर्यायेषु, तेषामभिलाप्या-ऽनभिलाप्यत्वात्, श्रुतस्य चाभिलाप्यमात्रविषयत्वात्, अभिलाप्यानां चानभिलाप्येभ्योऽनन्तभागमात्रवृत्तित्वादिति । 'बिइयेत्यादि' द्वितीय-चरमव्रते– द्वितीयं मृषावादव्रतम्, चरमं तु परिग्रहव्रतमाश्रित्येह प्रक्रमे चारित्रं सर्वद्रव्येषु प्रवर्तते न तु सर्वपर्यायेष्वित्युक्तम्, मृषावादस्य वचनरूपत्वेन, परिग्रहस्य च मूर्च्छाविकल्पात्मकत्वेन द्रव्येष्वेव सर्वेषु प्रवृत्तेः, तेषामेवाभिलाप्यविषयत्वात्, पर्यायाणां त्वभिलाप्या-ऽनभिलाप्यत्वात् । अत एवाह– सर्वेषां पर्यायाणां चारित्रेऽनुपयोगभावात्; अनुपयोगश्चानभिलाप्यानाश्रित्य मन्तव्यः । शेषाणि तु त्रीणि महाव्रतानि सर्वद्रव्यविषयाण्यपि न भवन्ति, किमुत सर्वपर्यायविषयाणि ? । अतो द्वितीय-चरमव्रते एवाश्रित्य सर्वद्रव्यासर्वपर्यायविषयता चारित्रस्य भावितेति ॥ २७५२-५४ ॥

'सर्वपर्यायाणां चारित्रेऽनुपयोगभावात्' इति यदुक्तं तदुपजीव्य परः प्रेर्यमाह—

[1]नणु सव्वनहपएसाणंतगुणं पढमसंजमट्ठाणं । छव्विहपरिवड्ढीए छट्ठाणा संखया सेढी ॥ २७५५ ॥

अण्णे के पज्जाया जेऽणुवउत्ता चरित्तविसयम्मि । जे तत्तोऽणंतगुणा जेसिं तमणंतभागम्मि ॥ २७५६ ॥

अन्ने केवलिगम्म त्ति ते मई, ते वि के तदब्भहिया । एवं पि हुज्ज तुल्ला नाणंतगुणत्तणं जुत्तं ॥२७५७॥

व्याख्या, आह– ननु संयमश्रेण्यां सर्वजघन्यत्वेन यत् प्रथममाद्यं संयमस्थानं तदपि पर्यायानाश्रित्य सर्वनभःप्रदेशानन्तगुणमागमे प्रोक्तम्— यावन्तः सर्वस्यापि लोकालोकनभसः प्रदेशास्तदनन्तगुणपर्यायराशियुक्तं प्रथममपि संयमस्थानं श्रुतेऽभिहितमित्यर्थः। ततोऽन्यद् विशुद्धितोऽनन्तभागवृद्धम्, तदपरं त्वसंख्यातभागवृद्धम्, अन्यत्तु संख्यातभागवृद्धम्, तदपरं तु संख्यातगुणवृद्धम्, अन्यत् त्वसंख्यातगुणवृद्धम्, तदपरं त्वनन्तगुणवृद्धमित्येवं पुनः पुनः क्रियमाणया षड्विधपरिवृद्ध्याऽसंख्येयलोकाकाशप्रदेशप्रमाणैः षट्स्थानकैर्निष्पन्ना संयमश्रेणिर्भवतीति । ततश्च के नाम तेऽन्ये समाधिकाः पर्यायाः, ये 'सर्वानुपयोगभावात्' इति वचनाच्चारित्रविषयानुपयुक्ताः प्रतिपाद्यन्ते ?, ये च 'न उ सव्वपज्जवेसु' इत्युक्ताभिप्रायात् ततश्चारित्रादनन्तगुणाः, येषां च

---

1 ननु सर्वनभःप्रदेशानन्तगुणं प्रथमसंयमस्थानम् । षड्विधपरिवृद्ध्या षट्स्थाना संख्याता श्रेणिः ॥ २७५५ ॥
अन्ये के पर्याया येऽनुपयुक्ताश्चारित्रविषये । ये ततोऽनन्तगुणा येषां तदनन्तभागे ॥ २७५६ ॥
अन्ये केवलिगम्या इति ते मतिः, तेऽपि के तदभ्यधिकाः । एवमपि भवेयुस्तुल्या नानन्तगुणत्वं युक्तम् ॥ २७५७ ॥ २ गाथा २७५४ ।

भवति, श्रुते तु सामान्येनाक्षरात्मकेऽनन्तेषु भवेष्वनन्ता आकर्षा भवन्ति ॥ इति निर्युक्तिगाथाद्वयार्थः ॥ २७८१ ॥

स्पर्शनाद्वारमाह—

[1]सम्मत्त-चरणसहिया सव्वं लोगं फुसे निरवसेसं । सत्त य चोद्दसभागा पंच य सुय-देसविरईए ॥२७८२॥

सम्यक्त्व-चरणसहिताः सम्यक्त्व-चरणयुक्ताः प्राणिन उत्कृष्टतः सर्वं लोकं स्पृशन्ति । किं बहिर्व्याप्त्या ? नेत्याह— निरवशेषं प्रतिप्रदेशव्याप्त्याऽसंख्येयप्रदेशात्मकमपीत्यर्थः । एते च केवलिसमुद्घातावस्थायां केवलिनो द्रष्टव्याः । 'जघन्यतस्त्वसंख्येयभागं स्पृशन्ति' इति स्वयमेव द्रष्टव्यम् । 'सत्त य चोद्दसभागा पंच य सुय-देसविरइए त्ति' श्रुत-देशविरत्योरिति यथासंख्येन संबध्यते, तद्यथा— श्रुते श्रुतस्य सप्त चतुर्दशभागाः स्पर्शनीयाः, चशब्दात् पञ्च च; देशविरतौ देशविरतस्य पञ्च चतुर्दशभागाः स्पर्शनीयाः, चशब्दाद् व्याद-यश्चेति । इयमत्र भावना— कश्चित् तपोधनः श्रुतज्ञानी अनुत्तरसुरेष्विलिकागत्या समुत्पद्यमानो लोकस्य सप्त चतुर्दशभागान् स्पृशति, एका रज्जुर्लोकस्य चतुर्दशभाग उच्यते, ततश्च सप्त रज्जूः स्पृशतीत्युक्तं भवति । एवमुत्तरत्रापि भावार्थो विज्ञेयः । चशब्दात् कोऽपि सम्यग्दृष्टिः श्रुतज्ञानी पूर्वं नरके बद्धायुष्कः पश्चाद् विराधिता त्यक्तसम्यक्त्वः षष्ठपृथिव्यामिलिकागत्या समुत्पद्यमानो लोकस्य पञ्च चतुर्दशभागान् स्पृशति । देशविरतस्त्वच्युतसुरेष्विलिकागत्या समुत्पद्यमानो लोकस्य पञ्च चतुर्दशभागान् स्पृशति, चशब्दात् शेषसुरालयेष्विलिकागत्या समुत्पद्यमानो लोकस्य व्यादींश्चतुर्दशभागान् स्पृशति । आह— नन्वन्यत्र 'छेलच्चुए'[2] इति पठ्यते, तत् कथमिहाच्युते समुत्पद्यमानः पञ्चैव रज्जूः स्पृशतीति निगद्यते ? । सत्यम्, किन्त्वच्युत-ग्रैवेयकापान्तरालमपेक्ष्यान्यत्र षड् रज्जवः पठ्यन्ते, इह त्वच्युतदेवलोकमपेक्ष्य पञ्चेति वृद्धसंप्रदायः । अधस्तु घण्टालालान्यायेनापि तं परिणाममपरित्यज्य देशविरता न गच्छन्ति । अत ऊर्ध्वलोक एव तत्स्पर्शना दर्शिता नाधस्तादिति ॥ तदेवं क्षेत्रमधिकृत्य स्पर्शना प्रोक्ता ॥ २७८२ ॥

अथ भावमधिकृत्य तामुपदर्शयन्नाह—

[3]सव्वजीवेहिं सुयं सम्म-चरित्ताइं सव्वसिद्धेहिं । भागेहिं असंखिज्जेहि फासिया देसविरई उ ॥ २७८३ ॥

इह जीवा द्विविधाः— संसारस्थाः, सिद्धाश्च । संसारस्था अपि द्विविधाः— संव्यवहारराशिगताः, असंव्यवहारराशिगताश्च ।

१ सम्यक्त्व-चरणसहिता सर्वं लोकं स्पृशेद् निरवशेषम् । सप्त च चतुर्दशभागान् पञ्च च श्रुत-देशविरत्योः ॥ २७८२ ॥ २ षडच्युते ।
३ सर्वजीवैः श्रुतं सम्यक्त्व चारित्रे सर्वसिद्धैः । भागैरसंख्यैः स्पृष्टा देशविरतिस्तु ॥ २७८३ ॥

पर्यायाणां तच्चारित्रमनन्तभागेऽभिधीयते ? । अभिलाप्यपर्यायविषयं हि किल चारित्रम्, ते चानभिलाप्यानामनन्तभाग एव वर्तन्ते, अतो 'न उ सव्वपज्जवेसुं' इत्युक्तेऽनुपयुक्ताः पर्यायाश्चारित्रादनन्तगुणाः, चारित्रं तु तेषामनन्तभागे, इत्यनुक्तमपि सामर्थ्याद् गम्यत इति । एतच्च किल परो न मन्यते, सर्वजघन्यस्यापि संयमस्थानस्य सर्वनभःप्रदेशानन्तगुणपर्यायत्वात्, पर्यायाणां च त्रिभुवनेऽप्येतावन्मात्रत्वात्, चारित्रानुपयुक्तपर्यायाणामसंभवादिति । 'अन्ने इत्यादि' अत्राचार्य ! ते तवैवंभूता मतिर्भवेच्चारित्रोपयुक्तेभ्योऽन्येऽपि केवलज्ञानगम्या अनभिलाप्या अनन्तगुणाः पर्यायाः सन्ति, ये चारित्रादनन्तगुणाः, चारित्रं तु येषामनन्तभाग इति । परः प्राह– 'ते वि के तदब्भहिय त्ति' तेऽपि केवलज्ञानगम्या ज्ञेयगता अनभिलाप्याः पर्यायाः के तदभ्यधिकाः– तेभ्यश्चारित्रोपयुक्तेभ्योऽभ्यधिका अतिरिक्ताः स्युः ? न केचनेत्यर्थ, संयमस्थानपर्यायैः सर्वस्यापि त्रिजगत्पर्यायराशेः क्रोडीकृतत्वात् तदनुपयुक्तत्वासंभवादिति । किञ्च, एवमपि चारित्रपर्यायाः केवलज्ञानगम्यैर्ज्ञेयगतैः पर्यायैस्तुल्या एव भवेयुः, न पुनस्तेषां केवलज्ञानगम्यपर्यायाणामनन्तगुणत्वं युक्तम् । यावन्तो हि ज्ञेयस्य पर्यायास्तावन्तस्तदवभासकत्वेन ज्ञानस्याप्येष्टव्याः, अन्यथा तदवभासकत्वायोगात् । ततश्च ज्ञान-दर्शन-चारित्राध्यवसायात्मिकायाः संयमश्रेणेरन्तर्गतत्वात् केवलज्ञानस्य संयमश्रेण्यात्मकं चारित्रं पर्यायैः केवलज्ञानगम्यानां ज्ञेयगतपर्यायाणां तुल्यमेव युक्तं न हीनमिति ॥ २७५५ ॥ २७५६ ॥ २७५७ ॥

एवं परस्यातिप्रेर्यनिपुणत्वमवलोक्य सूरिरतिनिपुणमेव प्रतिविधानमाह—

[1]सेढीय नाण-दंसणपज्जाया तेण तप्पमाणा सा । इह पुण चरित्तमेत्तोवओगिणो तेण ते थोवा ॥ २७५८ ॥

श्रेण्यां ज्ञान-दर्शन-चारित्राध्यवसायात्मिकायां संयमश्रेणौ ज्ञान-दर्शनपर्याया मध्ये संलुलिता विवक्षिताः, तेन तत्प्रमाणासौ सर्वनभःप्रदेशानन्तगुणपर्यायराशिप्रमाणाऽसौ प्रोक्ता । इह तु ये चारित्रोपयोगिनस्त एव विवक्षिताः, ते च ग्रहण-धारणादिविषयभूता एव केचित्, तेन स्तोका इति न दोषः ॥ २७५८ ॥

अथान्यत् प्रेर्यमुत्थापयन्नाह—

[2]नणु सामाइयविसओ किंदारम्मि वि परूविओ पुव्विं । कह न पुणरुत्तदोसो होज्ज इहं को विसेसो वा ? ॥ २७५९ ॥

1 श्रेण्यां ज्ञान-दर्शनपर्यायास्तेन तत्प्रमाणा सा । इह पुनश्चारित्रमात्रोपयोगिनस्तेन ते स्तोकाः ॥ २७५८ ॥
2 ननु सामायिकविषयः किंद्वारेऽपि प्ररूपितः पूर्वम् । कथं न पुनरुक्तदोषो भवेदिह को विशेषो वा ॥ २७५९ ॥

तत्र संव्यवहारराशिगतैः सर्वैरपि जीवैः सामान्येनाक्षरात्मकं श्रुतं स्पृष्टम्, द्वीन्द्रियादिभावस्य सर्वैरपि तैः स्पृष्टत्वात्, तत्र च सामान्यश्रुतसद्भावात् । संव्यवहारराशिगतविशेषणं चेह पूर्वटीकाकारैः कृतम्, इति नास्माकं स्वमनीषिका संभावनीयेति । सम्यक्त्व-चारित्रे तु सर्वैरपि सिद्धैः पूर्वं स्पृष्टे, तत्स्पर्शनामन्तरेण सिद्धत्वायोगात् । देशविरतिस्तु सर्वसिद्धानां बुद्धिपरिकल्पितैरसंख्यातैर्भागैः पूर्वं स्पृष्टा, एकेन तु तदसंख्येयभागेनासौ माग् न स्पृष्टा, यथा मेरुदेवीस्वामिन्या । इह च सम्यक्त्वादयो जीवपर्यायत्वाद् भावाः, ततस्तेषां स्पर्शनाभावः स्पर्शनोच्यते ॥ इति निर्युक्तिगाथाद्वयार्थः ॥ २७८३ ॥

अथ निरुक्तिद्वारमुच्यते । चतुर्विधस्य सामायिकस्य क्रिया-कारकभेद-पर्यायैः शब्दार्थकथनं निर्वचनं निरुक्तिः । तत्र सम्यक्त्वसामायिकनिरुक्तिमभिधित्सुराह—

[1]सम्मद्दिट्ठी अमोहो सोही सब्भावदंसणं बोही । अविवज्जओ सुदिट्ठी एवमाई निरुत्ताइं ॥ २७८४ ॥

'सम्यग्' इति प्रशंसार्थः, दर्शनं दृष्टिः, सम्यगविपरीता दृष्टिः सम्यग्दृष्टिः 'अर्थानाम्' इति गम्यते । मोहनं मोहो वितथग्राहः, न मोहोऽमोहोऽवितथग्राहः । शोधनं शुद्धिर्मिथ्यात्वमलापगमात् सम्यक्त्वं शुद्धिरुच्यते । सत्– जिनाभिहितं प्रवचनं, तस्य भावः सद्भावः, तस्य दर्शनमुपलम्भः, सद्भावदर्शनम् । बोधनं बोधिरित्यौणादिक इन् परमार्थबोधः । अतस्मिंस्तदध्यवसायो विपर्ययो न विपर्ययोऽविपर्ययस्तत्त्वाध्यवसाय इत्यर्थः । सुशब्दः प्रशंसायाम्, शोभना दृष्टिः सुदृष्टिः । इत्येवमादीनि सम्यग्दर्शनस्य निरुक्तानीति ॥ २७८४ ॥

श्रुतसामायिकनिरुक्तिप्रदर्शनायाह—

[2]अक्खर सन्नी सम्मं साइयं खलु सपज्जवसियं च । गमियं अंगपविट्ठ सत्त वि एए सपडिवक्खा ॥२७८५॥

इयं च पीठे व्याख्यातत्वाद् न विव्रियते ॥ २७८५ ॥

देशविरतिसामायिकनिरुक्तिमाह—

[3]विरयाविरई संवुडमसंवुडे बालपंडिए चेव । देसिक्कदेसविरई अणुधम्मोऽगारधम्मो य ॥ २७८६ ॥

१ सम्यग्दृष्टिरमोह शुद्धि सद्भावदर्शन बोधि । अविपर्यय सुदृष्टिरेवमादीनि निरुक्तानि ॥ २७८४ ॥ २ गाथा ४५४ ।
३ विरताविरतिः संवृतासंवृतं बालपण्डित चैव । देशैकदेशविरतिरणुधर्मोऽगारधर्मश्च ॥ २७८६ ॥

जाइस्सरकहणाओ कासइ पच्चक्खदरिसणाओ य । विज्जा-मंतो-वायणसिद्धीओ गहविगाराओ ॥ १२ ॥
उक्किट्ठपुण्णसंचयफलभावाओऽभिहाणसिद्धीओ । सव्वागमसिद्धीउ य संति देव त्ति सद्धेयं ॥ १३ ॥
देव त्ति सत्थयमिदं सुद्धत्तणओ घडाभिहाणं व । अह व मई मणुउ च्चिय देवो गुण-रिद्धिसंपण्णो ॥ १४ ॥
तं न जउ तच्चत्थे सिद्धे उवयारओ मया सिद्धी । तच्चत्थसीह सिद्धे माणवसीहोवयारो व्व ॥ १५ ॥
देवाभावे विफलं जमग्गिहोत्ताइयाण किरियाणं । सग्गीयं जन्नाण य दाणाइफलं च तदजुत्तं ॥ १६ ॥
जम-सोम-सूर-सुरगुरु-सारज्जाईणि जयइ जण्णेहिं । मंतावाहणमेव य इंदाईणं विहा सव्वं ॥ १७ ॥

छिन्नम्मि संसयम्मी जिणेण जर-मरणविप्पमुक्केणं ।
सो समणो पव्वइओ अद्धुट्ठिहि सह खंडियसएहिं ॥ १६८ ॥
ते पव्वइए सोउं अकंपिउ आगच्छई जिणसगासं ।
वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ १६९ ॥
आभट्ठो य जिणेणं जाइ-जरा-मरणविप्पमुक्केणं ।
नामेण य गोत्तेण य सव्वण्णू सव्वदरिसी णं ॥ १७० ॥
किं मण्णे नेरइया अत्थि नत्थि त्ति संसओ तुज्झं ।
वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥ १७१ ॥

१ 'मिणं सु'। २ 'यम्मि अ जि'।

तं मन्नसि पच्चक्खा देवा चंदादओ तहन्ने[1] वि । विज्जा-मंतोवायणफलाइसिद्धीए गम्मंति ॥ १ ॥
जे पुण सुइमेत्तफला नेरइय त्ति किह ते गहेयव्वा । सक्खमणुमाणओ वाऽणुवलंभा भिन्नजाईया ? ॥ २ ॥
मह पच्चक्खत्तणओ जीवाई य व्व नारए गिण्ह । किं जं सपच्चक्खं तं पच्चक्खं नवरि इक्कं ? ॥ ३ ॥
जं कासइ पच्चक्खं पच्चक्खं तं पि घेप्पए लोए । जह सीहाइदरिसणं सिद्धं न य सव्वपच्चक्खं ॥ ४ ॥
अहवा जमिंदियाणं पच्चक्खं किं तदेव पच्चक्खं ? । उवयारमेत्तओ तं पच्चक्खमणिंदियं तत्थं ॥ ५ ॥
मुत्ताइभावओ नोवलद्धिमंतिंदियाइं कुंभो व्व । उवलंभदाराणि उ ताइं जीवो तदुवलद्धा ॥ ६ ॥
तदुवरमे वि सरणओ तव्वावारे वि नोवलंभाओ । इंदियभिन्नो नाया पंचगवक्खोवलद्धा वा ॥ ७ ॥
जो पुण अणिंदिउ च्चिय जीवो सव्वप्पिहाणविगमाओ । सो सुबहुयं वियाणइ अवणीयघरो जहा दट्ठा ॥ ८ ॥
न हि पच्चक्खं धम्मंतरेण तद्धम्ममेत्तगहणाओ । कयगत्तओ व सिद्धी कुंभाणिच्चत्तमेत्तस्स ॥ ९ ॥
पुव्वोवलद्धसंबंधसरणओ वानलो व्व धूमाओ । अहव निमित्तताओ निमित्तमक्खस्स करणाइं ॥ १० ॥
केवल-मणो-हिरहियस्स सव्वमणुमाणमेत्तयं जम्हा । नारगसब्भावम्मि य तदत्थि जं तेण ते संति ॥ ११ ॥
पावफलस्स पगिट्ठस्स भोइणो कम्मओऽवसेस व्व । सन्ति धुवं तेऽभिमया नेरइया, अह मई होज्जा ॥ १२ ॥
अच्चत्थदुक्खिया जे तिरिय-नरा नारग त्ति तेऽभिमया । तं न जओ सुरसोक्खप्पगरिससरिसं न तं दुक्खं ॥१३॥
सच्चं चेदमकंपिय ! मह वयणाओऽवसेसवयणं व । सव्वण्णुत्तणओ वा अणुमयसव्वण्णुवयणं व ॥ १४ ॥
भय-राग-दोस-मोहाभावाओ सच्चमणइवाइं च । सव्वं चिय मे वयणं जाणयमज्झत्थवयणं व ॥ १५ ॥
किह सव्वण्णु त्ति मई पच्चक्खं सव्वसंसयच्छेया । भय-राग-दोसरहिओ तल्लिंगाभावओ सोम्म ! ॥ १६ ॥

1 'हण्णे वि' ।

विरमणं विरतं, न विरतिरविरतिः, विरतं चाविरतिश्च यस्यां निवृत्तौ सा विरताविरतिः। संवृतासंवृताः स्थगितास्थगिताः परित्यक्तापरित्यक्ताः सावद्ययोगा यस्मिन् सामायिके तत् संवृतासंवृतम्। एवमुभयव्यवहारानुगतत्वाद् बाल-पण्डितम्। देशः प्राणातिपातादिः, एकदेशस्तु वृक्षच्छेदनादिस्तयोर्विरमणं विरतिर्यस्यां निवृत्तौ सा देशैकदेशविरतिः। बृहत्साधुधर्मापेक्षयाऽणुरल्पो धर्मोऽणुधर्मो देशविरतिलक्षणः। न गच्छन्तीत्यगा वृक्षास्तैः कृतमगारं गृहम्, तद्योगादगारो गृहस्थस्तद्धर्मश्चेति ॥ २७८६ ॥

सर्वविरतिसामायिकनिरुक्तिमुपदर्शयन्नाह—

सामाइयं समइयं सम्मावाओ समास संखेवो। अणवज्जं च परिन्ना पच्चक्खाणं च ते अट्ठा ॥ २७८७ ॥

समो राग-द्वेषरहितत्वाद् मध्यस्थः, अयनमयो गमनमित्यर्थः समस्यायः समायः स एव सामायिकमेकान्तप्रशमगमनमित्यर्थः। सामयिकमिति–'सम्' इति सम्यक्शब्दार्थे उपसर्गः, सम्यगयः समयः, सम्यग् दयापूर्वकं जीवेषु विषये गमनं प्रवर्तनमित्यर्थः, समयोऽस्यास्तीति सामयिकम्। 'सम्मावाउ त्ति' सम्यक्शब्देनेह राग-द्वेषविरह उच्यते, तेन तत्प्रधानो वादो वदनं सम्यग्वादो रागादिविरहेण यथावद् वदनमित्यर्थः। 'समास त्ति' संशब्दः प्रशंसायाम्, असु क्षेपणे, शोभनमसनं संसाराद् बहिर्जीवस्य जीवात् कर्मणो वा क्षेपणं समासः; अथवा, संशब्दः सम्यगर्थः, सम्यगासः समासः। रागद्वेषरहितस्य समस्य वा आसः समासः। 'संखेवो त्ति' संक्षेपणं संक्षेपः सामायिकमुच्यते, महार्थस्यापि स्तोकाक्षरत्वादस्येति। 'अणवज्जं ति' अवद्यं पापं नास्मिन्नवद्यमस्तीत्यनवद्यं सामायिकम्। 'परिण्ण त्ति' परितः समन्ताज्ज्ञानं पापपरित्यागेन परिज्ञा सामायिकम्। 'पच्चक्खाणं ति' प्रति हरणीयं वस्तु आख्यानं गुरुसाक्षिकं निवृत्तिकथनं प्रत्याख्यानम्। एतेऽष्टौ सामायिकपर्यायाः ॥ इति निर्युक्तिगाथाचतुष्टयार्थः ॥ २७८७ ॥

अथ 'सम्मदिट्ठी अमोहो' इत्यादिगाथां भाष्यकारो व्याचष्टे—

[२]तच्चा सम्म दिट्ठि त्ति दंसणं तेण सम्मदिट्ठि त्ति। मोहो वितहग्गाहो तदन्नहा दंसणममोहो ॥२७८८॥

मिच्छत्तमलावगमो सोही सब्भावया जिणाभिहियं। दंसणमिह तग्गाहो बोही तच्चत्थसंबोहो ॥२७८९॥

१ सामायिक सामयिकं सम्यग्वादः समास. संक्षेपः। अनवद्यं च परिज्ञा प्रत्याख्यानं च तेऽष्ट ॥ २७८७ ॥
२ तथ्या सम्यग् दृष्टिरिति दर्शन तेन सम्यग्दृष्टिरिति। मोहो वितथग्राहस्तदन्यथा दर्शनममोह ॥ २७८८ ॥
मिथ्यात्वमलापगमः शुद्धि. सद्भावता जिनाभिहितम्। दर्शनमिह तद्ग्राहो बोधिस्तथ्यार्थसंबोध ॥ २७८९ ॥

दरिसणपरत्थयाओ अइंदियत्थत्तओऽणवत्थाओ । संबंधनिच्चयाओ सद्दावत्थाणमणुमेअं ॥ २८१८ ॥

इह शब्दस्यावस्थानं सदावस्थितत्वं नित्यत्वमनुमेयं साध्यम् । 'दरिसणपरत्थयाउ त्ति' दर्शनं प्रकटनं शब्दस्योच्चारणं व्यापारणं प्रयोग इति यावत्, तस्य दर्शनस्य शब्दप्रयोगस्य परार्थत्वं परप्रत्यायकत्वं तस्माद् दर्शनपरार्थत्वादिति हेतुः । इदमुक्तं भवति– न खलु वक्तृभिः शब्दोत्पादनमात्रार्थमेव शब्दप्रयोगः क्रियते, किन्तु परार्थत्वात् परप्रत्यायननिमित्तत्वादिति; यच्च परार्थं व्यापार्यते तत् तद्व्यापारकालात् प्रागप्यस्ति, यथा वृक्षादिच्छेदनक्रियानिमित्तं व्यापार्यमाणः कुठारश्छेदनक्रियाव्यापारकालात् प्रागप्यस्ति । ततः शब्दः सदावस्थितत्वाद् नित्यः सिद्धः ।

अत्रैव द्वितीयं हेतुमाह– 'अइंदियत्थत्तउ त्ति' अतीन्द्रिया मेरु-स्वर्गादयोऽर्था अभिधेयत्वेन यस्यासावतीन्द्रियार्थस्तद्भावोऽतीन्द्रियार्थत्वम्, तस्मादतीन्द्रियार्थत्वाद् नित्यः शब्दः, केवलज्ञानवत् । इदमुक्तं भवति– य इन्द्रियग्राह्या घटादयोऽर्थास्तेषु संकेतवशात् कृतक एव किल वाच्यवाचकत्वसंबन्धः, अतस्तस्मात् शब्दस्य नित्यत्वं न सिध्यति; ये त्वतीन्द्रिया मेरु-स्वर्गादयोऽर्थास्तेषामतीन्द्रियत्वेनैव किल संकेतः कर्तुं न शक्यते, अतोऽनादिकार्यसंसिद्धोऽकृतक एव शब्दस्य तेषु वाच्यवाचकत्वसंबन्धः । अतोऽतीन्द्रियार्थैः सहानादिकालसंसिद्धादकृतकत्वेन नित्याद् वाच्यवाचकभावसंबन्धात् सिद्धं किल शब्दस्य नित्यत्वम् । न हि स्वयमनित्यस्यानादिकालसंसिद्धैर्नित्यैर्मेर्वादिभिरर्थैः सह वाच्यवाचकभावसंबन्धः सिध्यतीति भावः । तर्हि घटादिवाचकशब्दानां कथं नित्यत्वं सिध्यति? इति चेत् । उच्यते– मेर्वादिवाचकशब्दानां नित्यत्वे सिद्धे तेषामपि तत् साध्यते; तद्यथा– नित्या घटादिवाचकशब्दाः, शब्दत्वात्, मेर्वादिशब्दवदिति ।

अत्रैव तृतीयहेतुमाह– 'अणवत्थाउ त्ति' अयं च विपर्यये बाधक एव हेतुः । मूलहेतुस्त्वित्थं द्रष्टव्यः– नित्याः सर्वेऽपि घटादिवाचकशब्दाः, अनादिकालात् तद्वाचकत्वेन तेषां सिद्धत्वात्, इह यदनादिकालसिद्धं तद् नित्यं दृष्टम्, यथा चन्द्रा-ऽर्कविमानादयः, अनादिकालसिद्धाश्च घटादिवाचकशब्दाः, तस्माद् नित्या इति । ननु सांकेतिका एव घटादिवाचकशब्दास्ततोऽसिद्धममीषामनादिकालसिद्धत्वमिति चेत् । तदयुक्तम्, संकेतस्य कर्तुमशक्यत्वात् । कुतः? इत्याह– अनवस्थातः, अनवस्थाप्रसङ्गोऽत्र बाधकं प्रमाणमित्यर्थः, तथाहि– येन शब्देन संकेतः क्रियते, तत्रापि संकेतकारकं शब्दान्तरमपेक्षणीयम्, तत्राप्यन्यत्, पुनस्तत्राप्यपरम्,

१ दर्शनपरार्थतातोऽतीन्द्रियार्थत्वतोऽनवस्थात । सम्बन्धनित्यतातः शब्दावस्थानमनुमेयम् ॥ २८१८ ॥

[1]अविवरीयं अविवज्जओ सुदिट्ठि त्ति सोहणा दिट्ठी । सम्मत्तनिरुत्ताइं वच्चाणीहेवमाईणि ॥२७९०॥

तिस्रोऽपि गतार्थाः, नवरं 'तच्च त्ति' तथ्याऽविपरीतेति । 'सब्भावय त्ति' सद्भाव एव सद्भावतेति स्वार्थिकप्रत्ययोपादानात् सद्भाव एवेह प्रत्येतव्यः । स च कः ? इत्याह– जिनाभिहितं प्रवचनम्, दर्शनं तु तद्ग्राहः 'इदमेव प्रमाणम्' इत्यादिरूपेण तदुपलम्भ इत्यर्थः ॥ २७८८ ॥ २७८९ ॥ २७९० ॥

अथ शेषयोः श्रुत-देशविरतिसामायिकयोर्निरुक्तिव्याख्यानातिदेशमाह—

[2]एमेव सेससामाइयाण सव्वपरियायवयणाणं । वच्चाइं निरुत्ताइं निरुत्तसद्दत्थमग्गेण ॥ २७९१ ॥

सुगमा ॥ २७९१ ॥

[3]'सामाइयं समइयं' इत्यादिचारित्रनिरुक्तेस्तु व्याख्यानं साक्षादेवाह—

[4]राग-दोसविरहिओ समो त्ति, अयणं आउ त्ति गमणं ति । समयागमो समाओ स एव सामाइयं होइ ॥२७९२॥

सम्ममओ समउ त्ति य सम्मं गमणं ति सव्वभूएसु । सो जस्स तं समइयं जम्मि य भेओवयारेण ॥२७९३॥

रागाइरहो सम्मं वयणं वाओऽभिहाणमुत्ति त्ति । रागाइरहियवाओ सम्मावाओ त्ति सामइयं ॥२७९४॥

अप्पक्खरं समासो अहवाऽऽसोऽसण महासणं सव्वा । सम्मं समस्स वासो होइ समासो त्ति सामइयं ॥२७९५॥

संखिवणं संखेवो सो जं थोवक्खरं महत्थं च । सामइयं संखेवो चोद्दसपुव्वत्थपिंडो त्ति ॥२७९६॥

---

1 अविपरीतमविपर्ययः सुदृष्टिरिति शोभना दृष्टिः । सम्यक्त्वनिरुक्तानि वाच्यानीहैवमादीनि ॥ २७९० ॥

2 एवमेव शेषसामायिकानां सर्वपर्यायवचनानाम् । वाच्यानि निरुक्तानि निरुक्तशब्दार्थमार्गेण॥ २७९१ ॥

3 गाथा २७८७ ।

4 राग-द्वेषविरहितः सम इति, अयनमाय इति गमनमिति । समतागमः समायः स एव सामायिकं भवति ॥ २७९२ ॥ सम्यगयः समय इति च सम्यग् गमनमिति सर्वभूतेषु । स यस्य तत् सामयिकं यस्मिंश्च भेदोपचारेण ॥ २७९३ ॥ रागादिरहः सम्यग् वदन वादोऽभिधानमुक्तिरिति । रागादिरहितवादः सम्यग्वाद इति सामायिकम् ॥ २७९४ ॥ अल्पाक्षरं समासोऽथवाऽऽसोऽसनं महासनं सद् वा । सम्यक् समस्य वाऽऽसो भवति समास इति सामायिकम् ॥ २७९५ ॥ संक्षेपणं संक्षेपः स यत् स्तोकाक्षरं महार्थं च । सामायिकं संक्षेपश्चतुर्दशपूर्वार्थपिण्ड इति ॥ २७९६ ॥

एवमनवस्थाप्रसङ्गतोऽशक्यं संकेतकरणम् । अथ पर्यन्ते कश्चिदकृतसंकेतोऽपि ध्वनिरिष्यते, तर्हि प्राक्तना अपि सर्वे ध्वनयोऽकृतसंकेताः, शब्दत्वात्, पर्यन्तध्वनिवत् । इत्यसांकेतिकत्वात् सिद्धं घटादिवाचकशब्दानामनादिकालसिद्धत्वमिति ।

चतुर्थं हेतुमाह– 'संबंधनिच्चयाउ त्ति' नित्यः शब्दः, उक्तन्यायेन तस्य घटादिभिः सह वाच्यवाचकभावसंबन्धस्य नित्यत्वात् । तस्यानित्यत्वे वाच्य-वाचकभावसंबन्धनित्यत्वानुपपत्तेरिति । इत्थं च ज्ञानादीनां नित्यत्वे सिद्धे सिद्धोऽनुत्पन्नस्तदात्मको नमस्कार इत्याद्यनैगमाभिप्राय इति ॥ २८१८ ॥

अथ शेषनया एतैरेव जीवानन्यत्वादिहेतुभिर्ज्ञानादीनामनित्यत्वं साधयन्ति—

[1]जेणं चिय जीवाओऽणन्नं तेणेय नाणमुप्पाइं । उप्पज्जइ जं जीवो बहुहा देवाइभावेण ॥ २८१९ ॥

येनैव कारणेन जीवादनन्यदभिन्नं ज्ञानं तेनैव तदुत्पद्यते, यद् यस्माद् बहुधा जीवो देवादिभावेनोत्पद्यते, तदुत्पादे च ज्ञानस्याप्युत्पादादिति ॥ ॥ २८१९ ॥

यदुक्तम्– 'निच्चुग्घाडो य सुए' इति तत्राह—

[3]अविसिट्ठक्खरभागो सुत्तेऽभिहिओ न सम्मनाणं ति। कोऽवसरो तस्स इहं सम्मंनाणाहिगारम्मि ? ॥२८२०॥

अक्षरस्य योऽनन्ततमो भागो नित्योद्घाटः श्रुतेऽभिहितः, सोऽविशिष्ट एव सम्यग्-मिथ्याविशेषरहित एवोक्तः, न तु सम्यग्ज्ञानरूपः । ततः सम्यग्ज्ञानविचारेऽत्र प्रस्तुते कस्तस्याधिकारः ?। इदमुक्तं भवति- यद्यविशिष्टज्ञानरूपोऽक्षरानन्तभागो नित्योद्घाटत्वेन नित्यः, तर्हि नमस्काररूपस्य सम्यग्ज्ञानस्य नित्यत्वे किमायातम् ?, अतो यत् किञ्चिदेतदिति ॥ २८२० ॥

यदुक्तम्– 'अहवा अरूवगुणओ नाणं निच्चं' इत्यादि, तत्राह—

[5]अवगाहणादओ नणु गुणत्तओ चेव पत्तधम्म व्व। उप्पायाइसहावा तह जीवगुणा वि को दोसो ? ॥२८२१॥

१ येनैव जीवादनन्यत् तेनैव ज्ञानमुत्पादि । उत्पद्यते यज्जीवो बहुधा देवादिभावेन ॥ २८१९ ॥ २ गाथा २८१६ ।
३ अविशिष्टाक्षरभाग. सूत्रेऽभिहितो न सम्यग्ज्ञानमिति । कोऽवसरस्तस्येह सम्यग्ज्ञानाधिकारे ? ॥ २८२० ॥ ४ गाथा २८१७ ।
५ अवगाहनादयो ननु गुणत्वतश्चैव पत्रधर्म इव । उत्पादादिस्वभावास्तथा जीवगुणा अपि को दोषः ? ॥ २८२१ ॥

[1]पावमवज्जं सामाइयं अपावं ति तो तदणवज्जं । पावमणं ति व जम्हा वज्जिज्जइ तेण तदसेसं ॥२७९७॥

पावपरिच्चायत्थं परितो नाणं मया परिण्ण त्ति । पइवत्थुमिहक्खाणं पच्चक्खाणं निवित्ति त्ति ॥२७९८॥

सप्तापि व्याख्यातार्थाः, नवरं द्वितीयगाथायां 'सो जस्सेत्यादि' स यथोक्तसमयो यस्य यस्मिन् वा सामायिके तत् सामायिकम् । आह– ननु यथोक्तसमयादन्यसामायिकं न किमप्यस्ति, तत् कथमिह षष्ठी-सप्तमीभ्यां भेदनिर्देशः क्रियते ? इत्याह– 'भेओवयारेण त्ति' यथा 'राहोः शिरः' 'तरौ शाखा' इत्यादिष्वभेदेऽपि भेदोपचारस्तथेहापीति भावः । चतुर्थगाथायां 'अप्पक्खरं समासो त्ति' महार्थत्वेऽप्यल्पाक्षरत्वात् सामायिकं समास उच्यते । 'अहवाऽऽसोऽसण त्ति' 'अथवा, 'असु क्षेपणे' इत्यस्य धातोर्व्युत्पाद्यते; आकारश्चेह प्रश्लिष्टो द्रष्टव्यः, ततश्चासनमासो जीवात् कर्मणः क्षेप इत्यर्थः । णकारस्यानुस्वारश्चेह लुप्तो दृश्यः । समशब्दार्थमाह– 'महासणं सव्व त्ति' अव्ययानामनेकार्थत्वाद् महत् कर्मणोऽसनं समसनं समासः । 'वा' इत्यथवा, सत् शोभनमसनं समासः, कर्मक्षेपणस्य शोभनत्वादिति । अथवा, सम्यगर्थे समर्थे वा समृशब्दः । ततः किम् ? इत्याह– 'सम्मं समस्स वासो त्ति' सम्यक् समस्य वा रागद्वेषरहितस्याऽऽसः कर्मक्षेप इति कृत्वा सामायिकं समासो भवति । षष्ठगाथायां 'पावमणं ति वेत्यादि' 'वा' इत्यथवा, अणशब्दस्य कुत्सितार्थत्वादणन्ति कुत्सितानि करणानि शब्दयन्ति, अणन्त्यनेनेति व्युत्पत्तेर्वा अणं पापमुच्यते, तदशेषं सर्वमपि वर्ज्यते परिह्रियते यस्मात् तेन सामायिकेन, अणं वर्जयतीति वा, ततः सामायिकमणवर्जमिति 'उच्यते' इति शेषः । सप्तमगाथायां 'परितो नाणं ति' पापपरित्यागार्थं परितः समन्तात् सर्वेष्वपि हेयो-पादेयवस्तुषु ज्ञानं परिज्ञा मताऽभिप्रेता सामायिकमिति ॥ २७९२ ॥ २७९३ — २७९८ ॥

अथ [2]'सामाइयं समइयं सम्मावाओ' इत्यादिगाथोक्तानामष्टानामप्यर्थानां यथासंख्यमष्टावेव महात्मानो दृष्टान्तभूताननुष्ठातॄन् प्रतिपादयन्नाह—

[3]दमदंते मेयज्जे कालगपुच्छा चिलाय अत्तेय । धम्मरुइ इला तेयल समाइए अट्ठ उदाहरणा ॥२७९९॥

सामायिकार्थस्यानुष्ठाने दमदन्तो महर्षिर्दृष्टान्तः, सामायिकार्थानुष्ठाने तु मेतार्यः, सम्यग्वादे पुनः कालकाचार्यपृच्छा निदर्शनम्,

१ पापमवद्य सामायिकमपापमिति ततस्तदनवद्यम् । पापमणमिति यस्माद् वर्ज्यते तेन तदशेषम् ॥ २७९७ ॥
पापपरित्यागार्थं परितो ज्ञानं मता परिज्ञेति । प्रतिवस्त्विहाऽऽख्यानं प्रत्याख्यानं निवृत्तिरिति ॥ २७९८ ॥ २ गाथा २७८७ ।
३ दमदन्तो मेतार्यः कालकपृच्छा चिलातिरात्रेयः । धर्मरुचिरिला तैतलिः सामायिकेऽष्टोदाहरणानि ॥ २७९९ ॥

नन्ववगाहनादय उत्पादादिधर्मका एव, गुणत्वात्, पत्रनीलतादिगुणवत्; एवं 'जीवगुणा अपि नमस्कारादय उत्पादादिधर्मका एव, गुणत्वात्, पत्रधर्मवत्' इत्यपि त्वदुक्तविपरीतं ब्रुवतां को दोषः ?– न कश्चिदिति ॥ २८२१ ॥

किञ्च,

[1]अवगाढारं च विणा कुओऽवगाहो त्ति तेण संजोगो । उप्पाई सोऽवस्सं गच्चुवगारादओ चेवं ॥२८२२॥

अवगाढारं चावगाहकं जीव-परमाण्वादिकं विना विचार्यमाणः कुतोऽन्योऽवगाह इति वक्तव्यम् ?। तेनावगाह्येन नभसा सहावगाहकस्य जीवादेः, तेन वावगाहकेन जीवादिना सहावगाह्यस्य नभसः संयोगोऽवगाह इति चेत्। ननु यद्येवम्, जितमस्माभिः, यतोऽवश्यमुत्पाद्यसौ, संयोगत्वात्, व्यङ्गुलादिसंयोगवदिति। एवं गतेरुपकारो गत्युपकारः स आदिर्येषां स्थित्युपकारादीनां ते गत्युपकारादयो धर्मास्तिकायादिगुणास्तेऽप्येवमेवोत्पादवन्तो द्रष्टव्याः, गुणत्वात्, अवगाहगुणवदिति ॥ २८२२ ॥

अपिच, आकाश-परमाण्वादिदृष्टान्ततो भवता नित्यत्वं साध्यते, तच्चाकाशादीनां नित्यत्वमस्माकमसिद्धम्; कुतः ? इत्याह—

[2]न य पज्जवओ भिन्नं दव्वमिहेगंतओ जओ तेण । तन्नासम्मि कहं वा नहादओ सव्वहा निच्चा ?॥२८२३॥

न च पर्यायाद् घटादिसंयोग-वर्ण-गन्धादेः सकाशाद् यतो यस्माद् द्रव्यमेकान्ततो भिन्नम्, किन्त्वभिन्नमपि तत् तस्मादिष्यते, तेन तस्मात् कारणात् तन्नाशे पर्यायविनाशे कथं वा केन वा प्रकारेण नभः-परमाण्वादयः सर्वथा नित्याः ?। कथञ्चिद् यदि नित्या भवन्ति, तर्हि भवन्तु। यत्तु सर्वथा नित्यत्वं तत् तेषां न घटते, पर्यायविनाशे तद्रूपतया तेषामपि विनाशादिति भावः। तत एकान्तनित्यत्वे साध्ये नैतेषां दृष्टान्तत्वं युक्तमिति ॥ २८२३ ॥

यदुक्तम्– '[3]दरिसणपरत्थयाओ' इत्यादि, तत्र दूषणातिदेशमाह—

[4]निच्चत्तसाहणाणि य सद्दस्सासिद्धयाइदुट्ठाइं । संभवओ वच्चाइं पक्खो-दाहरणदोसा य ॥ २८२४ ॥

१ अवगाढारं च विना कुतोऽवगाह इति तेन संयोग । उत्पादी सोऽवश्यं गत्युपकारादयश्चैवम् ॥ २८२२ ॥
२ न च पर्यवतो भिन्नं द्रव्यमिहैकान्ततो यतस्तेन । तन्नाशे कथं वा नभआदयः सर्वथा नित्या ? ॥ २८२३ ॥ ३ गाथा २८१८ ।
४ नित्यत्वसाधनानि च शब्दस्यासिद्धतादिदुष्टानि । सम्भवतो वाच्यानि पक्षो-दाहरणदोषाश्च ॥ २८२४ ॥

समासे तु चिलातीसुतः, संक्षेपे आत्रेयः, अयं चोपलक्षणं कपिलादीनाम्, अनवद्ये धर्मरुचिः, परिज्ञायामिलापुत्रः, प्रत्याख्याने तु तेतलिसुतो निदर्शनम् ॥ इति निर्युक्तिगाथासंक्षेपार्थः । विस्तरार्थस्तु - दमदन्तादिमहर्षिकथानकसूचिकाभ्यो "निक्खंतो हत्थिसीसाओ" इत्यादिकाभ्यः 'पच्चक्खं दट्ठूणं' इत्यादिगाथापर्यन्ताभ्यः सप्तदशगाथाभ्यो मूलावश्यकलिखितविवरणसहिताभ्यो मन्तव्यः । इत्यवसितं निरुक्तिद्वारम्। तदवसाने च 'उद्देसे य निद्देसे निग्गमे' इत्यादिगाथाद्वयोक्तद्वारकलापात्मिकोपोद्घातनिर्युक्तिः समाप्ता ॥ २७९९ ॥

अथ सूत्रस्पर्शिका निर्युक्तिर्वक्तव्या; ततः पूर्वोक्तिमुपसंहरन्नुत्तरवक्तव्यसंबन्धनार्थं भाष्यकारः प्राह—

इइ एस उवग्घाओऽभिहिओ सामाइयस्स तस्सेव । अहुणा सुत्तप्फासिय निज्जुत्ती सुत्तवक्खाणं ॥२८००॥

इति पूर्वोक्तक्रमेणैष उपोद्घातोऽभिहितः सामायिकस्य । अथ तस्यैवाधुना सूत्रस्पर्शिका निर्युक्तिरुच्यते सूत्रव्याख्यानमभिधीयत इत्यर्थः ॥ २८०० ॥

ननु सूत्रस्पर्शकनिर्युक्त्या सूत्रं स्पृश्यते । तच्च क्व सति भवति ? इत्याह—

सुत्तं सुत्ताणुगमो तं च नमोक्कारपुव्वयं जेण । सो सव्वसुयक्खंधब्भंतरभूउ त्ति निद्दिट्ठो ॥ २८०१ ॥

'करेमि भंते ! सामाइयं' इत्यादि सूत्रं, सूत्रानुगम एतद्व्याख्यानरूपे प्रक्रान्ते सति भवति । तच्च नमस्कारपूर्वकमेव पठ्यते । कथम् ? इत्याह– येन यस्मात् स नमस्कारः सर्वश्रुतस्कन्धाभ्यन्तरभूतः पूर्वमिहैव निर्दिष्टः । ततो नमस्कारं व्याख्याय पश्चात् सामायिकसूत्रं व्याख्यास्यत इति भावः ॥ २८०१ ॥

अन्ये तु सामायिकसूत्रादिनमस्कारं न मन्यन्ते, किन्त्वन्यदेव किञ्चिद् ब्रुवते । किं पुनस्तत् ? इत्याह—

तं चावसाणमंगलमन्ने मन्नंति तं च सत्थस्स । सव्वस्स भणियमंते इयमाइए कहं जुत्तं ? ॥ २८०२ ॥

तं च नमस्कारमुपोद्घातनिर्युक्तिशास्त्रस्यावसानमङ्गलं केचिद् मन्यन्ते, न पुनः सूत्रादिम् । इदमुक्तं भवति– शास्त्रस्यादौ मध्ये-

---

१ आ० नि० पृ० १५९-१६१ । २ गाथा १४८४ ।
३ इत्येष उपोद्घातोऽभिहित सामायिकस्य तस्यैव । अधुना सूत्रस्पर्शीका निर्युक्तिः सूत्रव्याख्यानम् ॥ २८०० ॥
४ सूत्र सूत्रानुगमस्तच्च नमस्कारपूर्वक येन । स सर्वश्रुतस्कन्धाभ्यन्तरभूत इति निर्दिष्ट ॥ २८०१ ॥ ५ करेमि भगवन् ! सामायिकम् ।
६ त चावसानमङ्गलमन्ये मन्यन्ते तच्च शास्त्रस्य । सर्वस्य भणितमन्त इत्यादौ कथ युक्तम् ? ॥ २८०२ ॥

दर्शनपरार्थत्वादीनि शब्दस्य नित्यत्वसाधनानि यान्युक्तानि तानि न्यायमार्गानुसारिभिः स्वयमेवाभ्यूह्य यथासंभवमसिद्धतादिदोषदुष्टानि वाच्यानि; तथाहि– दर्शनपरार्थत्वादित्यसिद्धो हेतुः, स्वावबोधार्थमपि क्वचिच्छब्दप्रयोगदर्शनात्; तथाऽनैकान्तिकश्च, विपर्यये बाधकप्रमाणाभावात्। विरुद्धो वा, प्रयोगानन्तरमेव विशरारुत्वदर्शनात्; कृतकत्वाद् वा शब्देऽनित्यत्वस्यैव दर्शनात्। इत्यादिदूषणानि सर्वत्राभ्यूह्य वक्तव्यानि। तथा, पक्षो-दाहरणदोषाश्च वाच्याः, वयं तु साक्षाद् न ब्रूमः, ग्रन्थविस्तरभयात्। तत्र प्रत्यक्षादिबाधितः पक्षः, साध्यसाधनविकलमुदाहरणमित्यादिदोषाः स्वयमेव द्रष्टव्या इति ॥ २८२४ ॥

तदेवं नैगमोक्तं दूषयित्वा स्वपक्षसिद्ध्यर्थं शेषनयाः प्राहुः—

[1]धणिरुप्पाई इंदियगज्झत्ताओ पयत्तजत्ताओ। पुग्गलसंभूईओ पच्चयभेए य भेयाओ ॥ २८२५ ॥

उप्पाइ नाणमिट्ठं निमित्तसब्भावओ जहा कुंभो। तह सद्द-कायकिरिया तस्संजोगो य जोऽभिमओ ॥२८२६॥

व्याख्या– उत्पद्यत इत्युत्पादी ध्वनिरिति प्रतिज्ञा, इन्द्रियग्राह्यत्वात्, घटवदिति। तथा, प्रयत्नाज्जायत इति प्रयत्नजस्तद्भावः प्रयत्नजत्वं तस्मात् प्रयत्नजत्वात्। तथा, पुद्गलेभ्यः संभूतेः। तथा, ताल्वादिप्रत्ययभेदभेदित्वादुत्पादी शब्दो 'घटवत्' इति सर्वत्र द्रष्टव्यम्। यश्चोत्पादी स विनाशित्वादनित्य इति सिद्धमेवेति। तथा, उत्पादि ज्ञानं नमस्कारज्ञानमिष्टमिति प्रतिज्ञा। निमित्तसद्भावादिति हेतुः, जिनादिविषयाज्जायमानत्वादित्यर्थः। यथा कुम्भ इति दृष्टान्तः। न केवलं ज्ञानं तथा, शब्द-शिरोनमनादिका कायक्रिया, तेषां च ज्ञानादीनां यो द्विकादिसंयोगो नित्यत्वेनाभिमतः परस्य, एतत् सर्वमुत्पादि, निजनिजनिमित्ताज्जायमानत्वात्, यथा कुम्भः। ततो ज्ञानाद्यात्मको नमस्कार उत्पन्न इति सिद्धम्। तदेवं 'सेसाणं उप्पण्णो' इति व्याख्यातम् ॥२८२६॥

[2]'जइ कत्तो तिविहसामित्ता' इत्येतद् व्याचिख्यासुराह—

[3]उप्पत्तिमओऽवस्सं निमित्तमस्स उ नयत्तियं तिविहं। इच्छइ निमित्तमेत्तो जमण्णहा नत्थि संभूई ॥२८२७॥

यदि नामोत्पन्नो नमस्कारस्ततः किम्?। अत्रोच्यते– उत्पत्तिमतश्च वस्तुनोऽवश्यं निमित्तम् 'अस्ति' इति क्रियाध्याहारः

1 ध्वनिरुत्पादीन्द्रियग्राह्यत्वात् प्रयत्नजत्वात्। पुद्गलसभूतित' प्रत्ययभेदे च भेदात् ॥ २८२५ ॥
उत्पादि ज्ञानमिष्टं निमित्तसद्भावतो यथा कुम्भः। तथा शब्द-कायक्रिये तत्संयोगश्च योऽभिमत ॥ २८२६ ॥ 2 गाथा २८०६।
3 उत्पत्तिमतोऽवश्य निमित्तमस्य तु नयत्रिकं त्रिविधम्। इच्छति निमित्तमेतस्माद् यदन्यथा नास्ति संभूति ॥ २८२८ ॥

ऽवसाने च मङ्गलमिष्यते, तत्रोपोद्घातनिर्युक्तेरादौ नन्दिर्मङ्गलम्, मध्ये तु जिन-गणधरोत्पत्त्यादिगुणकीर्तनम्, अवसाने तु किलैष नमस्कारो मङ्गलमित्यन्येषां बुद्धिः। सा च न युक्ता। कुतः? इत्याह– 'तं च सत्थस्सेत्यादि' इयमत्र भावना– यत् शास्त्रस्यावसानमङ्गलं तैर्गीयते, तद्भणितमेव भद्रबाहुस्वामिना सर्वस्यापि षडध्ययनात्मकस्यावश्यकशास्त्रस्यान्ते प्रत्याख्यानलक्षणं मङ्गलम्। प्रत्याख्यानं हि तपः, तच्च "धम्मो मंगलमुक्कुट्टं" इत्यादिवचनाद् मङ्गलमेव। ततश्चेदं नमस्कारलक्षणं मङ्गलं सामायिकस्यादौ कथमभिधातुं युक्तम्, अप्रस्तुतत्वात्? । अप्रस्तुतत्वं चेहादि-मध्या-ऽवसानत्वाभावादिति ॥ २८०२ ॥

पुनरपि परमतमाशङ्क्य परिहरन्नाह—

[२]होज्जाइ मंगलं सो तं कयमाईए किं पुणो तेणं। अथवा कयं पि कीरइ कत्थावत्थाणमेवं ति? ॥२८०३॥

अथ सामायिकस्यादौ निर्दिष्टत्वादादिमङ्गलमसौ नमस्कारो भवेदित्युच्यते, तदयुक्तम्, यतस्तदादि मङ्गलं कृतमेवादौ नन्द्यभिधानतः, किं पुनरप्यत्र तेन विहितेन?। अथ कृतमप्यादिमङ्गलं पुनरपि क्रियते, तर्ह्येवं सति क्वावस्थानम्? पुनः पुनस्तत्करणप्रसङ्गादनवस्थाप्राप्तेर्न क्वचिदवस्थानं स्यादिति ॥ २८०३ ॥

तर्हि भवन्त एव कथयन्तु– किमिह नमस्कारव्याख्याने कारणम्? इत्युपसन्ने प्रेरके सूरिराह—

[३]तम्हा सो सुत्तं चिय तदाइभावादओ तयं चेव। पुव्वं वक्खाणेउं पच्छा वोच्छामि सामइयं ॥२८०४॥

तस्माद् नमस्कारस्तत्त्वतः सामायिकसूत्रमेव, तदादिभावात्– सामायिकादावुपन्याससद्भावात्, "करेमि भंते! सामाइयं" इत्यादिसामायिकसूत्रावयववदिति। अतः परमार्थेन सामायिकसूत्रत्वाद् न पुनर्मङ्गलार्थत्वात् तमेव नमस्कारं पूर्वमादौ व्याख्याय पश्चात् सामायिकार्थं वक्ष्यामि ॥ इति गाथापञ्चकार्थः ॥ २८०४ ॥

नमस्कारव्याख्यानं चोत्पत्त्याद्यनुयोगद्वारैर्विज्ञेयम्, तानि चामूनि—

[४]उप्पत्ती निक्खेवो पयं पयत्थो परूवणा वत्थुं। अक्खेव पसिद्धि कमो पओयण फलं नमुक्कारो ॥२८०५॥

---

१ धर्मो मङ्गलमुत्कृष्टम्। २ भवेद् मङ्गलं स तत् कथमादौ किं पुनस्तेन। अथवा कृतमपि क्रियते क्वावस्थानमेवमिति? ॥ २८०३ ॥
३ तस्मात् स सूत्रमेव तदादिभावादतस्तदेव। पूर्वं व्याख्याय पश्चाद् वक्ष्यामि सामायिकम् ॥ २८०४ ॥
४ उत्पत्तिर्निक्षेपः पदं पदार्थः प्ररूपणा वस्तु। आक्षेपः प्रसिद्धिः क्रमः प्रयोजनं फलं नमस्कारः ॥ २८०५ ॥

तथा च सत्यस्य नमस्कारस्योत्पत्तिमत्त्वादविशुद्धनैगम-संग्रह-व्यवहारलक्षणं प्रथमनयत्रिकं समुत्थान-वाचना-लब्धिस्वरूपं त्रिविधं निमित्तमिच्छति । कुतः ? इत्याह– 'एत्तो इत्यादि' यद् यस्माद् यतस्त्रिविधाद् निमित्तादन्यथाऽन्येन प्रकारेण नमस्कारस्य नास्ति संभूतिरुत्पत्तिरिति ॥ २८२७ ॥

तत्र समुत्थानलक्षणं निमित्तं व्याचिख्यासुराह—

[1]देहसमुत्थाणं चिय हेऊ भवपच्चयावहिस्सेव । पुव्वुप्पण्णस्स वि से इहभवभावो समुत्थाणं ॥२८२८॥

सम्यक् संगतं वोत्तिष्ठति जायतेऽस्मादिति समुत्थानम्, देह एव समुत्थानम्, तदेव तावद् हेतुर्निमित्तं 'से' तस्य नमस्कारस्य । आह– यदाऽयमन्यभव एव स्वावरणक्षयादुत्पन्नः स्यात् तदा कथमयं देहो हेतुः ? इत्याशङ्क्याह– 'पुव्वुप्पन्नस्स वि से इहभवभावो समुत्थाणं ति' प्राग्भव उत्पन्नस्यापि नमस्कारस्येहभवभाव इहभवशरीरं समुत्थानं कारणं भवति, एतद्भावभावित्वात् तस्य । दृष्टान्तमाह– 'भवपच्चयावहिस्सेव त्ति' यथा हि भवप्रत्ययोऽवधिस्तीर्थकरादिसंबन्धी प्रागुत्पन्नोऽप्येतद्भवशरीरमन्तरेण न भवति । ततश्चेहभवशरीरं तस्य समुत्थानमेवं नमस्कारस्यापीति। एतदुक्तं भवति– यथा पूर्वोत्पन्ना अपि घटादयो दीपेनाभिव्यज्यन्ते, एवं पूर्वोत्पन्नोऽपि नमस्कार इहभवदेहेनाभिव्यज्यते, इत्यसौ तस्य निमित्तं व्यपदिश्यत इति ॥ २८२८ ॥

अत्र परमतमाशङ्क्य परिहरन्नाह—

[2]अण्णे सयमुत्थाणं सविरियमन्नोवगारविमुहं ति । तदजुत्तं तदवत्थे चुयलद्धे लद्धिओ णण्णं ॥ २८२९ ॥

अन्ये सूरयः स्वकमुत्थानं स्वमुत्थानं स्ववीर्यमित्याचक्षते । कुतः ? इत्याह– 'अन्नोवगारविमुहं ति' अन्येनापान्तरालवर्तिना कारणान्तरेण कृत उपकारोऽन्योपकारस्तद्विमुखं तन्निरपेक्षं यतोऽनन्तरकारणमित्यर्थः, तस्मादन्योपकारविमुखत्वादनन्तरकारणत्वात् स्ववीर्यंनमस्कारस्य समुत्थानं कारणमिति । एतन्निरासार्थमाह– 'तदजुत्तं ति' तद् वीर्यमयुक्तम्, नमस्कारानन्तरकारणतया व्यभिचारित्वात् । कुतः ? इत्याह– 'तदवत्थे इत्यादि' यतस्तदवस्थेऽपि विद्यमाने वीर्ये कस्यापि लब्धोऽपि नमस्कारः स्वावरणोदयात् पुनरपि च्यवते भ्रंस्यति; च्युतोऽपि कदाचित् तदावरणक्षयोपशमात् पुनरपि लभ्यते । तत एवं तदवस्थेऽपि वीर्ये च्युतलब्धे नमस्कारे सति

1 देहसमुत्थानमेव हेतुर्भवप्रत्ययावधेरिव । पूर्वोत्पन्नस्यापि तस्येहभवभावः समुत्थानम् ॥ २८२८ ॥

2 अन्ये स्वकमुत्थानं स्ववीर्यमन्योपकारविमुखमिति । तदयुक्तं तदवस्थे च्युतलब्धे लब्धितो नान्यत् ॥ २८२९ ॥

उत्पदनमुत्पत्तिः प्रसूतिः, साऽस्य नमस्कारस्य नयानुसारेण चिन्त्या। तथा, निक्षेपणं निक्षेपो न्यासः, स चास्य कार्यः। पद्यते गम्यतेऽर्थोऽनेनेति पदं नामिकादि, तच्चेह चिन्तनीयम्। पदस्यार्थः पदार्थः, स चास्य वक्तव्यः। प्रकृष्टा रूपणा प्ररूपणा, सा चास्य द्विविधादिभेदतो विधेया। वसन्त्यस्मिन् गुणा इति वस्तु, तच्च नमस्कारार्हं वाच्यम्। आक्षेपणमाक्षेपः पूर्वपक्षो वाच्यः। प्रसिद्धिस्तत्परिहाररूपा वक्तव्या। क्रमोऽर्हदादिरभिधेयः। प्रयोजनमर्हदादिक्रमस्य कारणं वाच्यम्। अथवा, येन प्रयुक्तः प्रवर्तते तद् नमस्कारस्य प्रयोजनमपवर्गाख्यं वाच्यम्। तथा, फलं च नमस्करणादिक्रियानन्तरभावि स्वर्गादिकं निरूपणीयम्। अन्ये तु व्यत्ययेन प्रयोजन-फलयोरर्थं प्रतिपादयन्ति। 'नमुक्कारो त्ति' नमस्कारः खल्वेभिर्द्वारैश्चिन्तनीयः॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥२८०५॥

अथ निर्युक्तिकार एवोत्पत्तिद्वारं विस्तरेणाह—

उप्पन्नाणुप्पण्णो इत्थ नया णेगमस्सणुप्पण्णो। सेसाणं उप्पण्णो जइ कत्तो तिविहसामित्ता ॥ २८०६ ॥

समुट्ठाण-वायणा-लद्धिओ य पढमे नयत्तिए तिविहं। उज्जुसुय-पढमवज्जं सेसनया लद्धिमिच्छंति॥२८०७॥

व्याख्या– उत्पन्नश्चासावनुत्पन्नश्चेत्युत्पन्नानुत्पन्नो नमस्कारो मन्तव्यः। आह– कथमेक एवोत्पन्नोऽनुत्पन्नश्च भवति, विरोधात्? इत्याह– 'इत्थेत्यादि' अत्र नयाः प्रवर्तन्ते। ते च नैगमादयः सप्त। नैगमो द्विविधः– सर्वसंग्राही, देशसंग्राही च। तत्रादिनैगमस्य सामान्यमात्रावलम्बित्वात्, तस्य चोत्पाद-व्ययरहितत्वाद् नमस्कारस्यापि तदन्तर्गतत्वादनुत्पन्नः। 'सेसाणं उप्पण्णो त्ति'। शेषा विशेषग्राहिणस्तेषां शेषाणां विशेषग्राहित्वात्, तस्य चोत्पाद-व्ययवत्त्वात्, उत्पाद-व्ययशून्यस्य वान्ध्येयादिवदवस्तुत्वात्, नमस्कारस्य तु वस्तुत्वादुत्पन्न इति। 'जइ कत्तो त्ति' यद्युत्पन्नः, कुतः?, इत्याह– 'तिविहसामित्ता' त्रिविधं च तत् स्वामित्वं चेति समासस्तस्मात् त्रिविधस्वामित्वात् त्रिविधस्वामिभावात् त्रिविधकारणादित्यर्थः। तदेव त्रिविधस्वामित्वं दर्शयति– 'समुट्ठाणेत्यादि' समुत्थानतः, वाचनतः, लब्धितश्च 'नमस्कार उत्पद्यते' इति वाक्यशेषः। तत्र सम्यक् संगतं वोत्तिष्ठतेऽस्मादिति समुत्थानं निमित्तमित्यर्थः। किं पुनस्तदिह? इति। उच्यते– अन्यस्याश्रुतत्वात्, तदाधारतया प्रत्यासन्नत्वाद् देहोऽत्र परिगृह्यते; देहो हि नमस्कारकारणम्, तद्भावभावि-

२ उत्पन्नानुत्पन्नोऽत्र नया नैगमस्यानुत्पन्न। शेषाणामुत्पन्नो यदि कुतस्त्रिविधस्वामित्वात् ॥ २८०६ ॥
समुत्थान-वाचना-लब्धितश्च प्रथमे नयत्रिके त्रिविधम्। ऋजुसूत्र प्रथमवर्जं शेषनया लब्धिमिच्छन्ति ॥ २८०७ ॥

विज्ञायते– लब्धितो नान्यद् वीर्यं किमपि नमस्कारकारणमस्ति, व्यभिचारित्वात् । व्यभिचारित्वं च नमस्कारस्य तदन्वय-व्यतिरेकाननुविधायित्वात् । लब्धिस्तु तस्याव्यभिचारि कारणम्, तदन्वय-व्यतिरेकानुविधायित्वादिति ॥ २८२९ ॥

तदेवं समुत्थानं व्याख्याय वाचना-लब्धिस्वरूपं व्याचिख्यासुराह—

[1]परओ सवणमहिगमो परोवएसो त्ति वायणाऽभिमया । लद्धी य तयावरणक्खओवसमओ सयं लाभो ॥२८३०॥

परतो गुरुभ्यो यत् श्रवणं, तथाऽधिगमः, परोपदेशश्च, सा वासनाऽभिधीयते । लब्धिस्तु का ? इत्याह– परतो वाचनामन्तरेण नमस्कारस्य यः स्वयं लाभः । कुतः पुनर्या लब्धिः ? इत्याह– तदावरणक्षयोपशमात्– नमस्कारावरणकर्मक्षयोपशमादित्यर्थः । आह– ननु तदावरणक्षयोपशम एव लब्धिरन्यत्र प्रसिद्धा, तत् कथमिह तत्कार्यभूतो नमस्कारलाभो लब्धित्वेनोच्यते, नमस्कारकारणस्यैवेह चिन्तयितुं प्रस्तुतत्वाद् यथोक्ताया एव च लब्धेर्नमस्कारकारणत्वात् ? । सत्यम्, किन्तु तत्कार्यभूतोऽपि नमस्कारलाभोऽत्र लब्धिरुक्ता, कार्ये कारणोपचारादिति । एतदविशुद्धनैगम-संग्रह-व्यवहारनयमतेन त्रिविधं नमस्कारकारणं मन्तव्यमिति ॥२८३०॥

ऋजुसूत्रमतेन तु द्विविधमेव कारणमिति दर्शयन्नाह—

[2]उज्जुसुयणयमयमिणं पुव्वुप्पन्नस्स किं समुत्थाणं । अह संपइमुप्पज्जइ न वायणा लद्धिभिन्नं तं ॥२८३१॥

ऋजुसूत्रनयस्येदं मतम्– यदि पूर्वभवोत्पन्नो नमस्कारः, तदेहभवदेहलक्षणं समुत्थानं तस्य किं करोति ?– न किञ्चिदित्यभिप्रायः, उत्पन्नस्य कारणापेक्षाऽयोगात् । अथ सांप्रतमिहभवे समुत्पद्यते नमस्कारः, तर्हि यस्तस्य कारणं तद् वाचना-लब्धिभ्यां भिन्नं व्यतिरिक्तं न किञ्चित् पश्यामः । अत इदमेवं द्विविधं तस्य कारणमिति ॥ २८३१ ॥

इदमेव भावयन्नाह—

[3]परओ सयं व लाभो जइ परओ वायणा, सयं लद्धी । जं न परओ सयं वा तओ किमन्नं समुत्थाणं ?॥२८३२॥

नमस्कारस्य हि लाभो जायमानः परतोऽपि भवेत्, स्वयं वा ? इति द्वयी गतिः । तत्र यदि परत इति पक्षः, तर्हि 'वायण

१ परत· श्रवणमधिगमः परोपदेश इति वाचनाभिमता । लब्धिश्च तदावरणक्षयोपशमत स्वय लाभ ॥ २८३० ॥
२ ऋजुसूत्रनयमतमिद पूर्वोत्पन्नस्य किं समुत्थानम् । अथ सम्प्रत्युत्पद्यते न वाचना-लब्धिभिन्न तत् ॥ २८३१ ॥
३ परत स्वयं वा लाभो यदि परतो वाचना, स्वय लब्धि. । यद् न परत. स्वय वा तत किमन्यत् समुत्थानम् ? ॥ २८३२ ॥

त्वात्, बीजवदङ्कुरस्य, इत्येवं देहलक्षणात् समुत्थानाद् नमस्कार उत्पद्यते । तथा, वचनं वाचना गुरुभ्यः श्रवणमधिगम इत्यर्थः, तस्याश्च वाचनायाः सकाशाद् नमस्कारो जायते । तथा, लब्धिस्तदावरणक्षयोपशमलक्षणा तस्याश्चायमुपजायते । इत्येतत् त्रिविधं कारणं प्रथमे नैगम-संग्रह-व्यवहारलक्षणे त्रिके नैगमादिनयत्रयमतेनावगन्तव्यमित्यर्थः । तथा, ऋजुसूत्रस्य प्रथमवर्जं वाचना-लब्धिद्वयं नमस्कारस्य कारणम्, तच्छून्यस्य जन्तोर्देहमात्रसद्भावेऽपि नमस्काराख्यकार्योत्पत्तिव्यभिचारात् । शेषनयास्तु शब्दादयो लब्धिमेकां नमस्कारकारणत्वेनेच्छन्ति, वाचनाया अपि लब्धिशून्येष्वभव्यादिषु नमस्काराजनकत्वात्, लब्धियुक्तेषु तु प्रत्येकबुद्धादिषु तदभावेऽपि तत्सद्भावतो व्यभिचारित्वात् ॥ इति निर्युक्तिगाथाद्वयार्थः ॥ २८०६ ॥ २८०७ ॥

[1]'उप्पण्णाणुप्पन्नो' इत्यत्र भाष्यम्—

[2]सत्तामेत्तग्गाही जेणाइमनेगमो तओ तस्स । उप्पज्जइ नाभूयं भूयं न य नासए वत्थुं ॥ २८०८ ॥

तो तस्स नमोक्कारो वत्थुत्तणओ तहं च सो निच्चो। संतं पि न तं सव्वो मुणइ सरूवं ववरणाओ ॥२८०९॥

व्याख्या– येन यस्मात् कारणादाद्यनैगमः सत्तामात्रग्राही, ततस्तस्याद्यनैगमस्य मतेन सर्वं वस्तु नाभूतं नाविद्यमानम्, किन्तु सर्वदैव सर्वं सदेव । ततः किम् ? इत्याह– 'उप्पज्जइ न' इत्येवमिहापि नञ् संबध्यते, आवृत्तिव्याख्यानात् । इदमुक्तं भवति– यत् सर्वदैव सत् तद् नोत्पद्यते, यथा नभः, तस्याप्युत्पादाभ्युपगम उत्पन्नस्याप्युत्पादप्रसङ्गेनानवस्थाप्राप्तेः । तथा, यद् भूतं विद्यमानं सर्वदैव सद् वस्तु तद् न नश्यति, सर्वथा सर्वदैव सतो विनाशायोगादिति । यत एवम्, ततस्तस्याद्यनैगमस्य स नमस्कारो नित्य एव, वस्तुत्वात्, नभोवत्, नोत्पद्यते, नापि विनश्यतीत्यर्थः, अत एवैतन्मतेनानुत्पन्नोऽसावभिधीयते । आह— ननु यदि नमस्कारः सर्वदैव सन् तदा मिथ्यादृष्ट्यवस्थायां किमित्यसौ न लक्ष्यते ? इत्याह– 'संतं पीत्यादि' सर्वावस्थासु सन्तमपि नमस्कारमतिशयज्ञानिनं विहाय न सर्वोऽपि मुणति जानातीति प्रतिज्ञा । 'वरणाउ त्ति' आवरणकर्मसद्भावादिति हेतुः । आत्मनः स्वरूपवदिति दृष्टान्तः । इदमुक्तं भवति– मिथ्यादृष्ट्यवस्थायामपि द्रव्यरूपतया नमस्कारोऽस्ति, सर्वथाऽसतः खरविषाणस्येव पश्चादप्युत्पादायोगात्, केवलं ज्ञानावरणेनावृतत्वाच्छद्मस्थजन्तवस्तद्रूपतया सन्तमपि तं नमस्कारं न लक्षयन्ति, यथाऽऽत्मनः स्वरूपम् । न ह्यात्मनः स्वरूपं नास्ति,

1 गाथा २८०६ । 2 सत्तामात्रग्राही येनादिमनैगमस्ततस्तस्य । उत्पद्यते नाभूतं भूतं न च नश्यति वस्तु ॥ २८०८ ॥
ततस्तस्य नमस्कारो वस्तुत्वतस्तथा च स नित्यः । सन्तमपि न तं सर्वं जानाति स्वरूपमिवावरणात् ॥ २८०९ ॥

त्ति' गुरूपदेशलक्षणा वाचनैव तत्र कारणम् । अथ स्वयमिति पक्षः, तर्हि 'लद्धि त्ति' तदावरणक्षयोपशमलक्षणा लब्धिरेव तत्र कारणं नापरम् । यच्च परतः स्वयं वा नोत्पद्यते 'तत् खरविषाणकल्पमवस्त्वेव' इत्यध्याहारः, वस्तुन उत्पत्तौ यथोक्तप्रकारद्वयस्यैव संभवात्, अनुत्पन्नस्य चावस्तुत्वादिति । ततस्तस्माद् वाचना-लब्धिभ्यामन्यत् किं नाम समुत्थानम्, यत् स्वयं परतो वाऽनुत्पन्नस्यावस्तुनः कारणं भवेत् ? इति ॥ २८३२ ॥

अथ परभवे समुत्पन्नस्य नमस्कारस्येहभवे स्वतः परतो वाऽनुत्पन्नस्य तस्याभिव्यक्तिलक्षणाया उत्पत्तेः कारणं समुत्थानं भविष्यति । तदप्ययुक्तम् । कुतः ? इत्याह—

उप्पज्जइ नाईयं तक्किरिओवरमओ कयघडो व्व । अहवा कयं पि कीरइ कीरउ निच्चं कओ णिट्ठा ?॥२८३३॥

इहातीतोत्पादक्रियं वस्त्वतीतमभिप्रेतम् । तदेवंभूतं पूर्वभवेऽतीतोत्पादक्रियमतीतं नमस्कारलक्षणं वस्त्विहभवे पुनरपि नोत्पद्यत इति प्रतिज्ञा । 'तक्किरिओवरमउ त्ति' तस्य नमस्कारस्योत्पादलक्षणा क्रिया तत्क्रिया तस्या उपरमो विरामस्तत्क्रियोपरमस्तस्मादिति हेतुः । कृतघटवदिति दृष्टान्तः । इह यस्योत्पत्तिक्रियोपरता तत् पुनरपि नोत्पद्यते, यथा पूर्वकृतो घटः; उपरतोत्पत्तिक्रियश्च पूर्वभवोत्पन्नो नमस्कार इष्यते, तत इह भवे पुनरपि नोत्पद्यत इति । अथ पूर्वं कृतमपि पुनः क्रियते, तर्हि पुनः पुनर्नित्यमेव क्रियताम्, पूर्वकृतत्वाविशेषात् । तथा च सति कुतः करणक्रियाया निष्ठा ? इति । तदेवं य इहोत्पद्यते नासौ पूर्वोत्पन्न इति सामर्थ्यादुक्तम् ॥ २८३३ ॥

अथवा, भवतु पूर्वोत्पन्नः, तथापि मत्पक्षासिद्धिरिति दर्शयन्नाह—

होउ व पुव्वुप्पाओ तह वि न सो लद्धि-वायणाभिन्नो । जेण पुरा वि सयं वा परओ वा हुज्ज से लाभो॥२८३४॥

भवतु वा नमस्कारस्य पूर्वजन्मन्युत्पादः, तथापि न स तदुत्पादो लब्धि-वाचनाभ्यां भिन्नः— न लब्धि-वाचनालक्षणकारणद्वयव्यतिरेकेण समुत्थानलक्षणेन कारणेन नमस्कारो जन्यत इत्यर्थः । कुतः ? इत्याह– येन यस्मात् पुरा परभवेऽपि प्रष्टव्योऽसि त्वं– स्वयं वा परतो वा 'से' तस्य नमस्कारस्य लाभ इति वक्तव्यम् ? । यदि स्वयम्, तर्हि लब्धिरेव तत्कारणम् । अथ परतः, तर्हि वाचना तद्धेतुरिति न किमप्येतत् कारणद्वयव्यतिरिक्तं समुत्थानलक्षणं कारणं पश्याम इति ॥ २८३४ ॥



१ उत्पद्यते नातीत तत्क्रियोपरमतः कृतघट इव । अथवा कृतमपि क्रियते क्रियतां नित्यं कुतो निष्ठा ? ॥ २८३३ ॥

२ भवतु वा पूर्वोत्पादस्तथापि न स लब्धि-वाचनाभिन्नः । येन पुरापि स्वयं वा परतो वा भवेत् तस्य लाभः ॥२८३४॥

केवलममूर्तत्वात् सर्वदा सदपि तत् केवलिनं विहाय न कोऽपि लक्षयति। एवं नमस्कारोऽपि। इत्यतः सर्वदैव सत्त्वादसावादिनैगमाभिप्रायेणानुत्पन्न उच्यत इति ॥ २८०८ ॥ २८०९ ॥

[1]'सेसाणं उप्पण्णो' इत्येतद् व्याचिख्यासुराह—

[2]सेसमयं नत्थि तओऽणुप्पाय-विणासओ खपुप्फं व। जमिहत्थि तदुप्पाय-व्वय-धुवधम्मं जहा कुंभो ॥२८१०॥

शेषाणां विशेषवादिनयानामेतद् मतम्– तकोऽसौ पराभिमतो नमस्कारो नास्तीति प्रतिज्ञा। अनुत्पाद-विनाशात्– उत्पाद-विनाशाभावादिति हेतुः। खपुष्पवदिति दृष्टान्तः। इह यदस्ति तत् सर्वमुत्पाद-व्यय-ध्रुवधर्मकम्, यथा कुम्भः; यस्य पुनरुत्पादादयो न सन्ति तत् सदपि न भवति, यथा खरविषाणम्, उत्पाद-विनाशशून्यश्च परैर्नमस्कारोऽभ्युपगम्यते। ततो नास्त्यसावपि ॥२८१०॥

यदुक्तम्– आवरणात् सतोऽप्यस्याग्रहणम्, तत्राह—

[3]आवरणादग्गहणं नाभावाउ त्ति तत्थ को हेऊ?। भत्ती य नमोक्कारो कहमत्थि य सा न य ग्गहणं?॥२८११॥

नन्वावरणाज्ज्ञानावरणोदयात् सन्नपि नमस्कारः सर्वेण न गृह्यते, न पुनरभावादित्यत्र को हेतुः–किं नियामकम्?– न किञ्चिदित्यर्थः। अभावादेवायं सर्वेण सर्वदा न गृह्यते, न पुनरावरणोदयादिति शेषनयाभिप्रायः। किञ्च, तीर्थकरादिषु भक्तिर्नमस्कारोऽभिधीयते, सा च सर्वदास्ति, न च मिथ्यादृष्ट्यवस्थायां गृह्यत इति परस्परव्याहतमिदम्। तस्मादुत्पन्नोऽसौ गृह्यते, अनुत्पन्नस्तु न गृह्यते, इत्येतदेव सुन्दरम्, किमावरणादिकल्पनया? इत्यभिप्रायः ॥ २८११ ॥

अथाद्यनैगमनयमतमाशङ्क्य परिहरन्नाह—

[4]अह परसंतो त्ति तओ संतो, किं नाम कस्स नासंतं?। अहणाइव्ववएसो नेवं न य परधणाफलया ॥२८१२॥

अथैवं ब्रूषे– 'परसंतो त्ति तओ संतो त्ति' परसंताने सर्वदैवास्ति नमस्कारः, नानाजीवेषु तस्य सर्वकालमव्यवच्छेदात्। योऽयमत्र नोपलभ्यते तत्राप्यसौ 'संतो त्ति' सन्नुच्यते। अत्रोत्तरमाह– 'किं नाम कस्स नासंतं ति' यदि ह्यन्यसंतानवर्त्यपि वस्त्वन्यस्य

1 गाथा-२८०६। 2 शेपमत नास्ति सकोऽनुत्पाद-विनाशत खपुष्पमिव। यदिहास्ति तदुत्पाद-व्यय-ध्रुवधर्म यथा कुम्भ ॥ २८१० ॥
3 आवरणादग्रहण नाभावादिति तत्र को हेतु?। भाक्तिश्च नमस्कार' कथमस्ति च सा न च ग्रहणम्?॥ २८११ ॥
4 अथ परसन्निति सकः सन्, किं नाम कस्य नासत्?। अधनादिव्यपदेशो नैव न च परधनाफलता ॥ २८१२ ॥

अथ 'सेसनया लद्धिमिच्छंति' इत्येतद् व्याचिख्यासुराह[1]—

सद्दाइमयं[3] न लहइ जं गुरुकम्मा पवायणाए वि । पावइ य तयावरणक्खओवसमओ जओऽवस्सं ॥२८३५॥

तो हेऊ लद्धि च्चिय न वायणा जइ मइक्खओवसमो । तक्कारणो त्ति तम्मि वि ननु साऽणेगंतिगी दिट्ठा ॥२८३६॥

शब्द-समभिरूढै-वंभूतनयानामेतद् मतम्– यद् यस्मात् कारणाद् गुरुकर्मा प्राणी गुरुभ्यः प्रवाचनायां सत्यामपि नमस्कारं न लभते, लघुकर्मा तु वाचनामन्तरेणापि तदावरणकर्मक्षयोपशमाद् यतोऽवश्यमेव नमस्कारं प्राप्नोति । 'तो हेऊ लद्धि च्चिय त्ति' ततस्तस्माद् वाचनाया नमस्कारजनने व्यभिचारित्वात् तदावरणक्षयोपशमलक्षणा लब्धिरेव तद्धेतुर्न वाचनेति । यदि तु ऋजुसूत्रः कथमप्येवं ब्रूयात्– ननु मतिज्ञानावरणादिकर्मक्षयोपशमस्तत्कारणो वाचनाजन्यः, तथा च सति तत्क्षयोपशमजन्यस्य नमस्कारस्य पारम्पर्येण वाचनापि कारणं भवति । अत्रोच्यते– ननु तस्मिन्नपि मतिज्ञानावरणादिकर्मक्षयोपशमे जन्ये सा वाचनाऽनैकान्तिकी दृष्टा, गुरुकर्मणां वाचनातोऽपि यथोक्तक्षयोपशमादर्शनादिति ॥ २८३५ ॥ २८३६ ॥

अथ कस्यापि तावद् वाचनातः कर्मक्षयोपशमो भवन्नुपलभ्यते, तमाश्रित्य वाचना नमस्कारकारणं भविष्यति । तदप्ययुक्तम् । कुतः इत्याह—

जस्स[4] वि स तन्निमित्तो तस्स वि तम्मत्तकारणं होज्जा । न नमोक्कारस्स तई कम्मक्खओवसमलब्भस्स ॥ २८३७ ॥

यस्यापि जीवस्य स मतिज्ञानावरणादिकर्मक्षयोपशमस्तन्निमित्तो वाचनाहेतुको दृश्यते तस्यापि तन्मात्रकारणं यथोक्तक्षयोपशमनिमित्तं 'तइ त्ति' सा वाचना भवेत्, न तु नमस्कारस्य कारणं सा युज्यते । कथंभूतस्य ? । कर्मक्षयोपशमलभ्यस्य । इदमुक्तं भवति– एवमपि मतिज्ञानावरणादिक्षयोपशमादेवानन्तरं नमस्कार उत्पद्यते, न तु वाचनातः, ततोऽसावेव तत्कारणं युज्यते, न तु वाचना, तस्या यथोक्तक्षयोपशमजनकत्वेनान्यकारणत्वादिति ॥ २८३७ ॥

---

१ गाथा २८०७ । २ 'व्याख्यानार्थमाह' ।

३ शब्दादिमत न लभते यद् गुरुकर्मा प्रवाचनायामपि । प्राप्नोति च तदावरणक्षयोपशमतो यतोऽवश्यम् ॥ २८३५ ॥
ततो हेतुर्लब्धिरेव न वाचना यदि मतिक्षयोपशमः । तत्कारण इति तस्मिन्नपि ननु साऽनैकान्तिकी दृष्टा ॥ २८३६ ॥

४ यस्यापि स तन्निमित्तस्तस्यापि तन्मात्रकारणं भवेत् । न नमस्कारस्य सा कर्मक्षयोपशमलभ्यस्य ॥ २८३७ ॥

सदुच्यते, तर्हि किं नाम वस्तु धनाधिकं कस्य नासत्? –अपि तु सर्वं सर्वस्यासत् प्राप्नोति । अस्य चोपलक्षणत्वात् 'इत्थं सर्वं सर्वस्य सत् प्राप्नोति' इत्यपि द्रष्टव्यम्। ततश्चैवमीश्वरधनेन दरिद्राणामधनानामपि धनवत्त्वादधनव्यपदेशः कस्यापि न स्यात् । न चेत्थं परधनस्याफलता भवेत्, अन्यधनस्यान्यत्रापि सत्त्वात्, तथाच तत्फलस्यापि सद्भावादिति ॥ २८१२ ॥

ततः किं भवेत्? इत्याह—

सव्वधणं[1] सामन्नं पावइ भत्तीफलं व सेसं च । किरियाफलमेवं चाऽकयागमो कयविणासो य ॥ २८१३ ॥

एवं सति यदेकस्येश्वरस्य संबन्धि तत् सर्वेषां दरिद्राणामपि धनं सामान्यं साधारणं प्राप्नोति, यद्वा, यदेकस्य नमस्कारवतोऽर्हदादिभक्तिफलं तद् मिथ्यादृशामपि नमस्कारशून्यानां सामान्यं प्राप्नोति । तथा शेषं च यद् दान-ध्यान-हिंसा-मृषावादादिक्रियाफलं तत् सर्वेषां सामान्यं प्राप्नोति । एवं च सत्यकृतस्यापि पुण्य-पाप-सुख-दुःखादेरागमः, कृतस्यापि च पुण्य-पापादेर्विनाशः स्यादिति ॥ २८१३ ॥

पुनरपि नैगममतमाशङ्क्य परिजिहीर्षवः शेषनयाः प्राहुः—

अह[2] भत्तिमंतसंताणओ स निच्चो त्ति कहमणुप्पन्नो? । नणु संताणित्तणओ स होइ बीयंकुराइ व्व ॥२८१४॥

अथानुत्पन्ननमस्कारवादिन्! एवं ब्रूषे– भक्तिमतां सम्यग्दृष्टीनां यः सन्तानः प्रवाहस्तस्मात् तमाश्रित्य नित्यो नमस्कारः । सम्यग्दृष्टीनां हि संतानो न कदाचिद् व्यवच्छिद्यते । अव्यवच्छिन्नत्वाच्च नित्योऽसौ, यच्च नित्यं तदाकाशवद् नोत्पद्यते । ततः किलानुत्पन्नो नमस्कार इति परस्याकूतम् । अत्रोत्तरमाह– 'कहमणुप्पन्नो त्ति' नन्वेवमपि कथमनुत्पन्नो नमस्कारः, न कथञ्चिदित्यर्थः । कुतः? इत्याह– 'नणु इत्यादि' ननु यद्यपि सम्यग्दृष्टीनां संतानो नित्यः, तथापि सम्यग्दृष्टयः सन्तानिनोऽनित्या एव, मनुष्यादिभावेन तेषामुत्पाद-विनाशादिति । सम्यग्दृष्ट्यव्यतिरेकाच्च नमस्कारोऽपि संतानी, संतानित्वाच्च 'स होइ त्ति' स नमस्कारो भवत्युत्पद्यते, बीजाङ्करादिसंतानिवदिति । इह यः संतानी स उत्पद्यते, यथा बीजाङ्कुरादिः, सम्यग्दृष्टिसंतान्यव्यतिरेकात्, संतानी च नमस्कारः, इत्युत्पद्यत एव । ततः कथमनुत्पन्नोऽसौ? इति ॥ २८१४ ॥

---

१ सर्वधनं सामान्यं प्राप्नोति भक्तिफलं वा शेषं च। क्रियाफलमेवं चाकृतागम कृतविनाशश्च ॥ २८१३ ॥

२ अथ भक्तिमत्सतानतः स नित्य इति कथमनुत्पन्नः? । ननु संतानित्वतः स भवति बीजा-ङ्कुरादिरिव ॥२८१४ ॥

पुनरपि परमतमाशङ्क्य परिहरन्नाह—

[1]अह कारणोवगारि त्ति कारणं तेण कारणं सव्वं । पाएण बज्झवत्थुं को नियमो सद्दमेत्तम्मि ? ॥ २८३८ ॥

अह पच्चासण्णतरं कारणमेगंतियं तओ लद्धिं । पडिवज्ज, न चेदेवं, न वायणामित्तनियमो ते ॥ २८३९ ॥

अथ कारणस्य यथोक्तक्षयोपशमस्योपकारिणी वाचनेति, अतः कारणकारणत्वादसौ नमस्कारस्य कारणमिष्यते । अत्रोच्यते–'तेणेत्यादि' तेन तर्हि प्रायेण सर्वमपि क्षिति-शय्या-ऽऽसना-ऽऽहार-वस्त्र-पात्रादिकं बाह्यं वस्तु नमस्कारकारणस्य यथोक्तक्षयोपशमस्योपकारित्वात् परम्परया नमस्कारस्य कारणं प्राप्नोति। अतः को नाम वाचनालक्षणे शब्दमात्रे तत्कारणत्वनियमः? इति । अथ परम्परया सर्वस्य बाह्यवस्तुनो नमस्कारकारणोपकारित्वे सत्यपि यदेव प्रत्यासन्नतरं वाचनाक्षलणं वस्तु तदेवासन्नोपकारित्वाद् नमस्कारस्य कारणमिष्यते । ननु तथापि नमस्कारजनने तदनैकान्तिकमित्युक्तमेव । तत ऐकान्तिकमानन्तर्येणातिप्रत्यासन्नतरं लब्धिमेव तत्कारणं प्रतिपद्यस्व । न चेदेवं प्रतिपद्यसे, तर्हि न वाचनामात्रस्य नमस्कारकारणत्वनियमस्ते तव सिध्यति, क्षित्यादेरपि पूर्वोक्तनीत्या तत्कारणत्वप्राप्तेः । तदेवं प्रथमनयत्रयस्य त्रिविधं कारणम्, ऋजुसूत्रस्य द्विविधम्, शब्दनयास्तु लब्धिमेवैकां नमस्कारकारणमिच्छन्तीति स्थितम् ॥ इति द्वात्रिंशद्गाथार्थः ॥ तदेवमभिहितमुत्पत्तिद्वारम् ॥ २८३८ ॥ २८३९ ॥

इदानीं निक्षेपद्वारमुच्यते— तत्र नमस्कारस्य निक्षेपश्चतुर्धा– नामनमस्कारः, स्थापनानमस्कारः, द्रव्यनमस्कारः, भावनमस्कारश्चेति । तत्र नाम-स्थापने क्षुण्णे । ज्ञ-भव्यशरीरव्यतिरिक्तद्रव्यनमस्काराभिधित्सया पुनराह—

[2]निह्णाइ दव्व भावोवउत्त जं कुज्ज सम्मदिट्ठी उ । नेवाइयं पयं दव्व-भावसंकोयण पयत्थो ॥ २८४० ॥

नमस्कार-तद्वतोरभेदोपचाराद् निह्नवादिद्रव्यनमस्कारः, आदिशब्दाद् यो द्रव्यार्थं विद्या-मन्त्रदेवतादीनां नमस्कारः क्रियते सोऽपि द्रव्यनमस्कारः। निह्नवादिनमस्कारस्य च द्रव्यत्वमप्राधान्यात्, अप्राधान्यं च तेषां मिथ्यात्वादिकलुषितत्वादिति । भावनमस्कारस्त्वागमतः स विज्ञेयो यमुपयुक्तः सम्यग्दृष्टिरर्हदादीनां कुर्यादिति द्वारम् ॥

१ अथ कारणोपकारीति कारण तेन कारणं सर्वम् । प्रायेण बाह्यवस्तु को नियमः शब्दमात्रे ? ॥ २८३८ ॥
अथ प्रत्यासन्नतरं कारणमैकान्तिकं ततो लब्धिम् । प्रतिपद्यस्व, न चेदेवं, न वाचनामात्रनियमस्ते ॥ २८३९ ॥

२ निह्नवादि द्रव्यं भाव उपयुक्तो यं कुर्यात् सम्यग्दृष्टिस्तु । नैपातिकं पदं द्रव्य-भावसंकोचनं पदार्थः ॥ २८४० ॥

किञ्च,

[1]होज्जाहि नमोक्कारो णाणं सद्दो व कायकिरिया वा। अहवा तस्संजोगो न सव्वहा सो अणुप्पत्ती ॥२८१५॥

नमस्कारो हि ज्ञानं वा भवेत्, '[2]नमो अरिहंताणं' इत्यादिशब्दो वा, शिरोनमन-करकुड्मलमीलन-विवक्षितावयवसंकोचनादिलक्षणा कायक्रिया वा, द्विकादिको वा ज्ञानादिसंयोगो भवेदिति चत्वारः पक्षाः। किञ्चातः? इत्याह- 'न सव्वहा सो अणुपत्ति त्ति' सर्वथा सर्वैरपि प्रकारैर्नायमनुत्पत्तिर्नानुत्पन्नो घटत इत्यर्थः, ज्ञानादीनां चतुर्णामप्युत्पादादिधर्मकत्वादिति ॥२८१५॥

अथ नैगमः प्राह- ननु ज्ञानादीनामुत्पादादिधर्मकत्वमसिद्धम्, नित्यत्वात्, आकाशवत्। तत्र ज्ञानस्य तावद् नित्यत्वं साधयन्नाह—

[3]नणु जीवाओऽणन्नं नाणं, णिच्चो य सो तओ तं पि। निच्चुग्घाडो य सुए जमक्खराणंतभागो त्ति ॥२८१६॥

अहवा अरूवगुणओ नाणं निच्चं नहावगाहो व्व। लयण-प्पयासपरिणामओ य सव्वं जहा अणवो ॥२८१७॥

व्याख्या— ननु जीवादनन्यदभिन्नं ज्ञानम्, नित्यश्चासौ जीवः, ततस्तदव्यतिरेकात् तदपि 'नित्यम्' इति शेषः। ततो नोत्पादादिधर्मकं ज्ञानम्, नित्यत्वात्, नभोवदिति भावः। एवमुत्तरत्रापि भावार्थो वक्तव्यः। किञ्च, "[4]सव्वजीवाणं पि य णं अक्खरस्स अणंतभागो निच्चुग्घाडियओ" इति वचनाद् न क्षरति न विनश्यतीत्यक्षरं केवलज्ञानं, तस्यानन्तभागो नित्योद्घाटो नित्यावस्थितोऽनावृत एव सर्वदा तिष्ठतीति यद् यस्मात् श्रुतेऽभिहितम्, तस्माच्च नित्यं ज्ञानम्, नित्यानावृतत्वात्, नभोवदिति। अथवा, नित्यं ज्ञानम्, अरूपद्रव्यगुणत्वात्, यथा नभोद्रव्यस्यावगाहगुणः। अथवा, सर्वमपि ज्ञान-शब्दादिकं नित्यम्, लयन-प्रकाशपरिणामत्वात्, तिरोभावा-ऽऽविर्भावधर्मकत्वादित्यर्थः, यथा परमाणव इति ॥ २८१६ ॥ २८१७ ॥

अथ विशेषतोऽपि शब्दस्य नित्यत्वं साधयन्नाह—

---

१ भवेद् नमस्कारो ज्ञानं शब्दो वा कायक्रिया वा। अथवा तत्संयोगो न सर्वथा सोऽनुत्पत्तिः ॥ २८१५ ॥ २ नमोऽर्हद्भ्यः।

३ ननु जीवादनन्यज्ज्ञानं नित्यश्च स ततस्तदपि। नित्योद्घाटश्च श्रुते यदक्षरानन्तभाग इति ॥ २८१६ ॥

'अथवाऽरूपगुणतो ज्ञानं नित्यं नभोवगाह इव। लयन प्रकाशपरिणामतश्च सर्वं यथाऽणव.॥ २८१७॥

४ सर्वजीवानामपि चाक्षरस्यानन्तभागो नित्योद्घाटितः।

अथ पदद्वारमुच्यते । पद्यते गम्यतेऽर्थोऽनेनेति पदम् । तच्च पञ्चधा– नामिकम्, नैपातिकम्, औपसर्गिकम्, आख्यातिकम्, मिश्रं चेति । तत्र 'अश्वः' इति नामिकम्, 'खलु' इति नैपातिकम्, 'परि' इत्यौपसर्गिकम्, 'धावति' इत्याख्यातिकम्, 'संयतः' इति मिश्रम् । एवं नामिकादिपञ्चप्रकारपदसंभवे सत्याह— 'नेवाइयं पयं ति' निपतत्यर्हदादिपदानामादिपर्यन्तयोरिति निपातः, निपातादागतम्, तेन वा निर्वृत्तम्, स एव वा स्वार्थिकप्रत्ययविधानाद् नैपातिकं 'नमः' इति पदम् । इति पदद्वारम् ॥

अथ पदार्थद्वारमुच्यते— 'दव्व-भावसंकोयण पयत्थो त्ति' इह 'नमोऽर्हद्भ्यः' इत्यादिषु यद् 'नमः' इति पदं तस्य 'नमः' इति पदस्यार्थः पदार्थः, स च पूजालक्षणः । सा च का ? इत्याह– 'दव्वभावसंकोयण त्ति' द्रव्यसंकोचनम्, भावसंकोचनं च । तत्र द्रव्यसंकोचनं कर-शिरः-पादादिसंकोचः, भावसंकोचनं तु विशुद्धस्य मनसोऽर्हदादिगुणेषु निवेशः। अत्र च भङ्गचतुष्टयम्, तद्यथा– द्रव्यसंकोचो न भावसंकोचः, यथा पालकादीनाम्, भावसंकोचो न द्रव्यसंकोच इत्यनुत्तरसुरादीनाम्; द्रव्यसंकोचो भावसंकोचश्च यथा शम्बस्य; न द्रव्यसंकोचो न भावसंकोच इति शून्यः । इह च भावसंकोचप्रधानो द्रव्यसंकोचोऽपि तच्छुद्धिनिमित्तः ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ २८४० ॥

अथ नमस्कारस्य भाष्यकारो नामादिनिक्षेपं विस्तरतो व्याचिख्यासुराह—

नामाइचउब्भेओ[1] निक्खेवो मंगलं च सो नेओ । नामं नमोभिहाणं ठवणा नासोऽहवागारो ॥ २८४१ ॥

नाम-स्थापनादिचतुर्भेदो नमस्कारस्य निक्षेपः । स चाधस्तादुक्तमङ्गलस्येव विस्तरतो विज्ञेयः । संक्षेपतस्त्विहाप्युच्यते– 'नामं ति' नामनमस्कारो 'नमः' इत्यभिधानम् । स्थापनानमस्कारस्तु 'नमः' इत्यक्षरद्वयस्य विन्यासः । अथवा, नमस्कारकरणप्रवृत्तस्य संकोचितकरचरणस्य काष्ठ-पुस्तक-चित्रादिगतस्य साध्वादेराकारः स्थापनानमस्कार इति ॥ २८४१ ॥

द्रव्यनमस्कारमाह—

आगमओऽणुवउत्तो[2] अज्झेया दव्वओ नमोक्कारो । नोआगमओ जाणय-भव्वसरीराइरित्तोऽयं ॥२८४२ ॥

द्रव्यनमस्कारो द्वेधा– आगमतः, नोआगमतश्च । तत्रानुपयुक्तो नमस्कारस्याध्येता आगमतो द्रव्यनमस्कारः । नोआगमतोऽयं

1 नामादिचतुर्भेदो निक्षेपो मङ्गलं च स ज्ञेय । नाम नमोभिधान स्थापना न्यासोऽथवाकार ॥ २८४१ ॥
2 आगमतोऽनुपयुक्तोऽध्येता द्रव्यतो नमस्कारः । नोआगमतो ज्ञायक-भव्यशरीरातिरिक्तोऽयम् ॥ २८४२ ॥

छिन्नम्मि संसयंम्मी जिणेण जर-मरणविप्पमुक्केणं ।
सो समणो पव्वइओ तिहि ओ सह खंडियसएहिं ॥ १७२ ॥
ते पव्वइए सोउं अयलभाया आगच्छई जिणसगासं ।
वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ १७३ ॥
आभट्ठो य जिणेणं जाइ-जरा-मरणविप्पमुक्केणं ।
नामेण य गोत्तेण य सव्वण्णू सव्वदरिसी णं ॥ १७४ ॥
किं मण्णे पुण्ण-पावं अत्थि नत्थि त्ति संसओ तुज्झ ।
वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥ १७५ ॥

मण्णसि पुण्णं पावं साहारणमहव दो वि भिन्नाइं । होज्ज न वा कम्मं चिय सभावओ भवपवंचोऽयं ॥ १ ॥
पुण्णुक्करिसे सुभया तरतमजोगावगरिसओ हाणी । तस्सेव खए मोक्खो पत्थाहारोवमाणाओ ॥ २ ॥
पावुक्करिसेऽहमया तरतमजोगावगरिसओ सुभया । तस्सेव खए मोक्खो अपत्थभत्तोवमाणाओ ॥ ३ ॥
साहारणवण्णादि व अह साहारणमहेगमत्ताए । उक्करिसा-वगरिसओ तस्सेव य पुण्णपावक्खा ॥ ४ ॥
एवं चिय दो भिन्नाइं होज्ज, होज्ज व सभावओ चेव । भवसंभूई, भण्णइ न सभावाओऽजओऽभिमओ ॥५॥
होज्ज सभावो वत्थुं निक्कारणया व वत्थुधम्मो वा । जइ वत्थुं णत्थि तओऽणुवलद्धीओ खपुप्फं व ॥ ६ ॥

१ 'यम्मि अ त्ति' ।

अच्चंतमणुवलद्धो वि अह तओ अत्थि नत्थि किं कम्मं ?। हेऊ व तदत्थित्ते जो णणु कम्मस्स वि स एव ॥७॥
कम्मस्स वाभिहाणं होज्ज सभावो त्ति होउ को दोसो ?। पइनिययागाराओ न य सो कत्ता घडस्सेव ॥ ८ ॥
मुत्तो अमुत्तो व तओ जइ मुत्तो तोऽभिहाणओ भिन्नो । कम्म त्ति सहावो त्ति य जइ वाऽमुत्तो न कत्ता तो ॥९॥
देहाणं वोमं पिव, जुत्ता कज्जाइओ य मुत्तिमया । अह सो निक्कारणया तो खरसिंगादओ होंतु ॥ १० ॥
अह वत्थुणो स धम्मो परिणामो तो स कम्म-जीवाणं । पुन्ने-यराभिहाणो कारण-कज्जाणुमेओ सो ॥ ११ ॥
किरियाणं कारणओ देहाईणं च कज्जभावाओ । कम्मं मदभिहियं ति य पडिवज्ज तमग्गिभूइ व्व ॥ १२ ॥
तं चिय देहाईणं किरियाणं पि य सुभा-ऽसुभत्ताओ । पडिवज्ज पुण्णपावं सहावओ भिन्नजाईयं ॥ १३ ॥
सुह-दुक्खाणं कारणमणुरूवं कज्जभावओऽवस्सं । परमाणवो घडस्स व कारणमिह पुण्ण-पावाइं ॥ १४ ॥
सुह-दुक्खकारणं जइ कम्मं कज्जस्स तमणुरूवं च । पत्तमरूवं तं पि हु अह रूवि नाणुरूवं तो ॥ १५ ॥
नहि सव्वहाणुरूवं भिन्नं वा कारणं, अह मयं ते । किं कज्ज-कारणत्तणमहवा वत्थुत्तणं तस्स ? ॥ १६ ॥
सव्वं तुल्लातुल्लं जइ तो कज्जाणुरूवया केयं ? । जं सोम्म ! सपज्जाओ कज्जं परपज्जओ सेसो ॥ १७ ॥
किं जह मुत्तममुत्तस्स कारणं तह सुहाईणं कम्मं । दिट्ठं सुहाइकारणमन्नाइ जहेह तह कम्मं ? ॥ १८ ॥
होउ तयं चिय किं कम्मणा, न जं तुल्लसाहणाणं पि । फलभेदओ सोऽवस्सं सकारणओ कारणं कम्मं ॥ १९ ॥
एत्तो च्चिय तं मुत्तं मुत्तबलाहाणओ जहा कुंभो । देहाइकज्जमुत्ताइओ व्व भणिए पुणो भणइ ॥ २० ॥
तो किं देहाईणं मुत्तत्तणओ तयं हवइ मुत्तं । अह सुह-दुक्खाईणं कारणभावादरूवं ति । ॥ २१ ॥
न सुहाईणं हेऊ कम्मं चिय किन्तु ताणं जीवो वि । होइ समवाइकारणमियरं कम्मं ति को दोसो ? ॥ २२ ॥
इय रूवित्ते सुह-दुक्खकारणत्ते य कम्मुणो सिद्धे । पुण्णावगरिसमेत्तेण दुक्खबहुलत्तणमजुत्तं ॥ २३ ॥

द्रव्यनमस्कारो ज्ञशरीर-भव्यशरीर-तद्व्यतिरिक्तभेदात् त्रिविध इति ॥ तत्र ज्ञशरीर-भव्यशरीरवक्तव्यता क्षुण्णा ॥ २८४२ ॥

तद्व्यतिरिक्तं तु द्रव्यनमस्कारमाह—

[1]मिच्छोवहया जं भावओ वि कुव्वन्ति निण्हवाईया । सो दव्वनमोक्कारो सम्माणुवउत्तकरणं च ॥२८४३॥

मिथ्यात्वोपहता निह्नवादयो भावतोऽपि यं नमस्कारं कुर्वन्ति स ज्ञशरीर-भव्यशरीरव्यतिरिक्तोऽप्रधानत्वाद् द्रव्यनमस्कारः । तथा, सम्यग्दृष्टिरप्यनुपयुक्तो यं नमस्कारं करोति स तद्व्यतिरिक्तो द्रव्यनमस्कार इति ॥ २८४३ ॥

आह— ननु भावतोऽपि कुर्वतां निह्नवादीनां किमिति द्रव्यनमस्कारः ? । अत्रोच्यते— अज्ञानित्वात् । अज्ञानित्वं च तेषां मिथ्यादृष्टित्वात्, 'मिथ्यादृष्टेरज्ञानम्' इत्येतदपि कुतः ? इत्याह—

[2]सदसदविसेसणाओ भवहेऊ जदिच्छिओवलंभाओ । नाणफलाभावाओ मिच्छद्दिट्ठिस्स अन्नाणं ॥२८४४॥

प्रागसकृद् व्याख्यातार्था ॥ २८४४ ॥

प्रकारान्तरेणापि द्रव्यनमस्कारमाह—

[3]जो वा दव्वत्थमसंजयस्स व भयाइणाऽहवा सो वि । दव्वनमोक्कारो च्चिय कीरइ दमएण रण्णो व्व ॥२८४५॥

यो वा द्रव्यार्थं क्रियते स द्रव्यनमस्कारः । अथवा, द्रव्यलाभं विनापि योऽसंयतस्य राजादेर्भयादिकारणतो द्रमकादिना क्रियते सोऽपि तद्व्यतिरिक्तो द्रव्यनमस्कार इति ॥ २८४५ ॥

अथागमतो नोआगमतश्च द्विविधं भावनमस्कारमाह—

[4]आगमओ विन्नाया तच्चित्तो भावओ नमोक्कारो । नोआगमओ सो च्चिय सेसयकरणोवउत्तो त्ति ॥२८४६॥

तस्मिन् नमस्कारार्थे चित्तमुपयोगो यस्य नान्यत्र, असौ तच्चित्तो विज्ञाता आगमतो भावनमस्कारः, स एव मनस्करणेनोपयुक्तो

---

१ मिथ्यात्वोपहता यं भावतोऽपि कुर्वन्ति निह्नवादिका । स द्रव्यनमस्कारः सम्यगनुपयुक्तकरणं च ॥ २८४३ ॥ २ गाथा ११५ ।
३ यो वा द्रव्यार्थमसंयतस्य वा भयादिनाऽथवा सोऽपि । द्रव्यनमस्कार एव क्रियते द्रमकेण राज्ञ इव ॥ २८४५ ॥
४ आगमतो विज्ञाता तच्चित्तो भावतो नमस्कारः । नोआगमत. स एव शेषककरणोपयुक्त इति ॥ २८४६ ॥

जीवस्स सो जिणस्स व अजीवस्स उ जिणिंदपडिमाए। जीवाण जईणं पिव अजीवाणं तु पडिमाणं ॥२८७४॥[1]

जीवस्साजीवस्स य जइणो बिंबस्स चेगओ समयं। जीवस्साजीवाण य जइणो पडिमाण चेगत्थं ॥२८७५॥

जीवाणमजीवस्स य जईणं बिम्बस्स चेगओ समयं। जीवाणमजीवाण य जईण पडिमाण चेगत्थं ॥२८७६॥

तिस्रोऽपि गतार्थाः ॥ २८७४ ॥ २८७५ ॥ २८७६ ॥

अत्र परमतमाशङ्क्य परिहरन्नाह—

जीवो[2] त्ति नमोक्कारो नणु सव्वमयं कहं पुणो भेओ। इह जीवस्सेव सओ भण्णइ सामित्तचिंतेयं॥२८७७॥

ननु 'किं[3] जीवो तप्परिणओ' इत्यत्र पूर्वं जीवो नमस्कार इति सर्वनयसंमतं समानाधिकरणमुक्तम्, इह तु 'जीवस्स सो जिणस्स व' इत्यादि षष्ठीनिर्देशात् कथं भेदोऽभिधीयते ?। अत्रोच्यते— 'इहेत्यादि' इहास्यामष्टभङ्ग्यां जीवस्यैव सतो नमस्कारस्य तथैव समानाधिकरणभाजः सतो नमस्कारस्येत्यर्थः, किम् ? अत आह— स्वामित्वचिन्तेयं भण्यते— 'स जीवरूपो नमस्कारः किं नमस्कार्यस्य संबन्धी, नमस्कर्तुर्वा ?' इत्येतदिह चिन्त्यत इति भावः। एतच्च नैगम-व्यवहारनयमतेन चिन्तितम् ॥ २८७७ ॥

अथ संग्रहनयमतेन चिन्तयन्नाह—

सामण्णमेत्तगाही[4] स-परजिए-यरविसेसनिरवेक्खो। संगहनओऽभिमण्णइ तमिहेगस्साविसिट्ठस्स ॥२८७८॥

जीवस्साजीवस्स व सस्स परस्स व विसेसणेऽभिण्णो। न य भेयमिच्छइ सया स नमोसामण्णमेत्तस्स॥२८७९॥

1 जीवस्य स जिनस्येवाऽजीवस्य तु जिनेन्द्रप्रतिमायाः। जीवानां यतिनामिवाजीवानां तु प्रतिमानाम् ॥ २८७४ ॥
जीवस्याजीवस्य च यतिनो बिम्बस्य चैकत समकम्। जीवस्याजीवानां च यतिन प्रतिमानां चैकार्थम् ॥ २८७५ ॥
जीवानामजीवस्य च यतीनां बिम्बस्य चैकत. समकम्। जीवानामजीवानां च यतीनां प्रतिमानां चैकार्थम् ॥ २८७६ ॥

2 जीव इति नमस्कारो ननु सर्वमतं कथं पुनर्भेदः। इह जीवस्यैव सतो भण्यते स्वामित्वचिन्तेयम् ॥ २८७७ ॥ 3 गाथा २८६२।

4 सामान्यमात्रग्राही स्व-परजीवे-तरविशेषनिरपेक्षः। संग्रहनयोऽभिमन्यते तमिहैकस्याविशिष्टस्य ॥ २८७८ ॥
जीवस्याजीवस्य वा स्वस्य परस्य वा विशेषणेऽभिन्नः। न च भेदमिच्छति सदा स नमःसामान्यमात्रस्य ॥ २८७९ ॥

नमस्कारकर्ता यदा शेषकाभ्यामपि वाक्-कायकरणाभ्यामुपयुक्तो नमस्कारं करोति– वचनेन 'नमोऽर्हद्भ्यः' इति ब्रुवाणः, कायेन तु संकोचितकर-चरणो यदा नमस्कारं करोतीत्यर्थः, तदाऽसौ नोआगमतो भावनमस्कार उच्यते, उपयोगलक्षणस्यागमस्य वाक्-कायकरणक्रियामिश्रत्वात्, नोशब्दस्य चेह मिश्रवचनत्वादिति ॥ २८४६ ॥

अथामुं नामादिनिक्षेपमपि नयैर्विचारयन्नाह––

[1]भावं चिय सद्दनया सेसा इच्छंति सव्वनिक्खेवे । ठवणावज्जे संगह-ववहारा केइ इच्छंति ॥ २८४७ ॥

भावमेव भावनमस्कारमेवेच्छन्ति त्रयोऽपि शब्दनयाः, शुद्धत्वात् । शेषास्तु ऋजुसूत्रान्ताश्चत्वारो नयाः सर्वांश्चतुरोऽपि निक्षेपानिच्छन्ति, अविशुद्धत्वात् । केचित्तु व्याचक्षते– संग्रह-व्यवहारौ स्थापनावर्जांस्त्रीन्निक्षेपानिच्छतः, सद्भावा-ऽसद्भावस्थापनायाः किल सांकेतिकनामाभिधेयत्वेन नामनिक्षेप एवान्तर्भावादिति ॥ २८४७ ॥

तथा,

[2]दव्व-ट्ठवणावज्जे उज्जुसुओ, तं न जुज्जए जम्हा । इच्छइ सुयम्मि भणियं सो दव्वं किंतु न पुहत्तं ॥२८४८॥

द्रव्य-स्थापनावर्जौ शेषौ द्वावेव नाम-भावनिक्षेपाविच्छति ऋजुसूत्रः । तदेतद् व्याख्यानं न युज्यते, यस्मादसौ ऋजुसूत्रो द्रव्यमिच्छत्येव, केवलं पृथक्त्वं नेच्छति– बहूनि द्रव्यावश्यकादीनि नेच्छतीत्यर्थः । एतच्च सूत्रेऽनुयोगद्वारलक्षणे भणितं प्रतिपादितम्, तद्यथा– "[3]उज्जुसुयस्स एगे अणुवउत्ते आगमओ एगे दव्वावस्सए पुहत्तं नेच्छइ" इति ॥ २८४८ ॥

स्थापनेच्छामप्यस्याह—

[4]इच्छंतो थ स दव्वं तदणागारं तु भावहेउ त्ति । नेच्छेज्ज कहं ठवणं सागारं भावहेउ त्ति ? ॥ २८४९ ॥

इच्छंश्च ऋजुसूत्रस्तत्प्रसिद्धं सुवर्णादिकं द्रव्यं पिण्डावस्थायामनाकारं तथाविधकटक-केयूराद्याकाररहितं । विशिष्टेन्द्राद्या-

१ भावमेव शब्दनया शेषा इच्छन्ति सर्वनिक्षेपान् । स्थापनावर्जान् संग्रह व्यवहारौ केचिदिच्छन्ति ॥ २८४७ ॥
२ द्रव्य-स्थापनावर्जावृजुसूत्रस्तद् न युज्यते यस्मात् । इच्छति श्रुते भणित स द्रव्य किन्तु न पृथक्त्वम् ॥ २८४८ ॥
३ ऋजुसूत्रस्यैकोऽनुपयुक्त आगमत एक द्रव्यावश्यकं पृथक्त्वं नेच्छति ।
४ इच्छंश्च स द्रव्य तदनाकार तु भावहेतुरिति । नेच्छेत् कथ स्थापना साकारा भावहेतुरिति ? ॥ २८४९ ॥

[1]जीवो नमु त्ति तुल्लाऽहिगरणं बेइ न उ स जीवस्स । इच्छइ वाऽसुद्धयरो तं जीवस्सेव नन्नस्स ॥२८८०॥

व्याख्या– सामान्यमात्रग्राही संग्रहनयोऽभिमन्यते तमिह नमस्कारम्, संबन्धितया कस्य ? इत्याह– एकस्य । कथंभूतस्य ? । अविशिष्टस्य जीवाजीवविशेषणरहितस्यैकस्यैवाविशिष्टस्य सत्तामात्ररूपस्य संबन्धितया नमस्कारमसौ मन्यते, न तु द्वयोः, बहूनां चेत्यर्थः । अत्रोपपत्तिमाह— 'स-परजिए-यरविसेसनिरवेक्खो त्ति' स्वश्च परश्च स्व-परौ, स्वपरौ च तौ जीवौ च स्व-परजीवौ, तौ चेतरेऽजीवाश्च स्व-परजीवे-तराः, तेषां विशेषा एक-द्वि-त्र्यादयः स्व-परजीवे-तराश्च ते विशेषाश्च स्व-परजीवे-तरविशेषाः, तन्निरपेक्षो यतोऽसौ, ततस्तन्निरपेक्षत्वात् सामान्यमात्रस्यैव संग्रहो नमस्कारं मन्यत इति । एतदेव भावयति– 'जीवस्सेत्यादि' जीवस्याजीवस्य वा स्वस्य परस्य वा नमस्कारस्येत्येवं विशेषणे कर्तव्येऽभिन्नोऽभेदवानसौ एतैर्भेदैर्नमस्कारं न विशेषयति, किन्तु सामान्यमात्रग्राहित्वात् सामान्यमात्रस्यैव नमस्कारमसौ मन्यत इत्यर्थः । भवत्वेवम्, किन्तु नमःशब्दरूपं नमस्कारं स्वस्वरूपेणाधारादिभेदाद् भिन्नमसौ मन्यते, अभिन्नं वा ? इत्याशङ्क्याह– न च नमस्कारसामान्यमात्रस्याधारादिभेदेऽपि सदा सर्वकालं स संग्रहनयो भेदमिच्छति, सर्वतः सामान्यमात्रग्राहित्वादिति । अथवा जीवस्य नमस्कार इति षष्ठ्या भेदनिर्देशं मूलतः संग्रहो न मन्यत एव, किमनया तस्य स्वामित्वचिन्तया ? इति दर्शयन्नाह— 'जीवो इत्यादि' संग्रहो 'जीवो नमस्कारः' इति तुल्याधिकरणतां समानाधिकरणतामेव ब्रवीति, न तु पुनरसौ जीवस्य नमस्कार इति व्यधिकरणमिच्छति, जीव-नमस्काराद्यर्थानां सर्वेषामप्यभेदवादित्वादिति । किमयमेक एव प्रकारस्तस्य ? नेत्याह– 'इच्छईत्यादि' इच्छति वाऽशुद्धतरसंग्रहनयस्तं नमस्कारं संबन्धितया, कस्य ? जीवस्य– जीवसामान्यस्यैव, न पुनरन्यस्याद्यभङ्गरहितस्य शेषसप्तभङ्गीगतस्याजीवादेरिति ॥२८७८॥२८७९॥२८८०॥

अथ ऋजुसूत्रमधिकृत्याह—

[2]उज्जुसुयमयं नाणं सद्दो किरिया च जं नमोक्कारो । होज्ज नहि सव्वहा सो जुत्तो तक्कत्तुरन्नस्स॥२८८१॥
नाणं जीवाणन्नं तं कहमत्थंतरस्स पुज्जस्स । जीवस्स होउ कह वा पडिमाए जीवरहियाए ? ॥२८८२॥

१ जीवो नम इति तुल्याधिकरणं ब्रवीति न तु स जीवस्य । इच्छति वाऽशुद्धतरस्त जीवस्यैव नान्यस्य ॥ २८८० ॥
२ ऋजुसूत्रमत ज्ञान शब्द' क्रिया च यद् नमस्कार । भवेद् नहि सर्वथा स युक्तस्तत्कर्तुरन्यस्य ॥ २८८१ ॥
ज्ञानं जीवानन्यत् तत् कथमर्थान्तरस्य पूज्यस्य । जीवस्य भवतु कथ वा प्रतिमाया जीवरहितायाः ? ॥ २८८२ ॥

काररहितं वा। कुत इच्छन्? इत्याह– भावहेतुर्यतस्तत्– भविष्यत्कुण्डलादिपर्यायलक्षणभावहेतुत्वादित्यर्थः, कथं नाम नेच्छेत् स्थापनाम्?। कथंभूताम्?। साकारां विशिष्टेन्द्राद्याकारसहितामपीत्यर्थः। पुनरपि किंविशिष्टाम्? इत्याह– भावहेतुभूतां साकारत्वेन विशिष्टेन्द्राद्यभिप्रायकारणभूतामित्यर्थः। इदमुक्तं भवति– यो ह्यनाकारमपि भावहेतुत्वाद् द्रव्यमिच्छति ऋजुसूत्रः, स साकारामपि विशिष्टेन्द्रादिभावहेतुत्वात् स्थापनां किमिति नेच्छेत्?– इच्छेदेव, नात्र संशय इति ॥ २८४९ ॥

उपपत्त्यन्तरेणापि द्रव्य-स्थापनेच्छामस्य साधयन्नाह—

[1]नामं पि होज्ज सन्ना तव्वच्चं वा तदत्थपरिसुन्नं। हेउ त्ति तदिच्छंतो दव्व-ट्ठवणा कहं नेच्छे? ॥२८५०॥

अह नामं भावम्मि वि तो णेच्छइ तेण दव्व-ठवणा वि। भावस्सासन्नयरा हेऊ सद्दो उ बज्झयरो ॥२८५१॥

व्याख्या– ननु ऋजुसूत्रस्तावद् नाम निर्विवादमिच्छति। तच्च नामेन्द्रादिसंज्ञामात्रं वा भवेत्, तद्वाच्यं वा तदर्थपरिशून्यम्– इन्द्रशब्दवाच्यं वा, इन्द्रार्थरहितं वा गोपालदारकादि वस्तु भवेदिति द्वयी गतिः। इदं चोभयरूपमपि नाम हेतुर्भावकारणमिति कृत्वेच्छन्नसौ ऋजुसूत्रो द्रव्य-स्थापने कथं नाम नेच्छेत्?, भावकारणत्वाविशेषादिति भावः। अथेन्द्रादिकं नाम भावेऽपि भावेन्द्रेऽपि संनिहितमस्ति, तेन तस्मादिच्छति तदृजुसूत्रः। तेन तर्हि जितमस्माभिः, अस्य न्यायस्य द्रव्य-स्थापनापक्षे सुलभतरत्वात्; तथाहि— द्रव्य-स्थापने अपि भावस्येन्द्रपर्यायस्यासन्नतरौ हेतू, शब्दस्तु तन्नामलक्षणो बाह्यतर इति। एतदुक्तं भवति– इन्द्रमूर्तिलक्षणं द्रव्यं, विशिष्टतदाकाररूपा तु स्थापना, एते द्वे अपीन्द्रपर्यायस्य तादात्म्यसंबन्धेनावस्थितत्वात् संनिहिततरे, शब्दस्तु नामलक्षणो वाच्यवाचकभावसंबन्धमात्रेणैव स्थितत्वाद् बाह्यतर इति। अतो भावे संनिहितत्वाद् नामेच्छन्नृजुसूत्रो द्रव्य-स्थापने संनिहिततरत्वात् सुतरामिच्छेदिति। तदेवमृजुसूत्रस्य चतुर्विधनिक्षेपेच्छासाधनेनानन्तरोक्तत्वात् परिहृतं तद्विषयं दुर्व्याख्यानम् ॥ २८५० ॥ २८५१ ॥

अथ प्राग् यदुक्तम्— 'ठवणावज्जे[2] संगह-ववहारा' इत्यादि, तत् परिहरन्नाह—

[3]संगहिउ असंगहिओ सव्वो वा नेगमो ठवणमिच्छे। इच्छइ जइ संगहिओ तं नेच्छे संगहो कीस? ॥२८५२॥

---

१ नामापि भवेत् संज्ञा तद्वाच्यं वा तदर्थपरिशून्यम्। हेतुरिति तादिच्छन् द्रव्य-स्थापने कथं नेच्छेत्? ॥ २८५० ॥
अथ नाम भावेऽपि ततो नेच्छाति तेन द्रव्य-स्थापने अपि। भावस्यासन्नतरौ हेतू शब्दस्तु बाह्यतरः ॥ २८५१ ॥

२ गाथा २८४७। ३ संग्रहिकोऽसंग्रहिकः सर्वो वा नैगमः स्थापनामिच्छेत्। इच्छति यदि संग्रहिकस्तां नेच्छेत् संग्रहः कस्मात्? ॥ २८५२ ॥

[1]एवं सद्दो किरिया य सद्द-किरियावओ जओ धम्मो । न य धम्मो दव्वंतरसंचारी तो न पुज्जस्स ॥२८८३॥

व्याख्या– ऋजुसूत्रनयस्येदं मतम्– यद् यस्माज्ज्ञानमुपयोगरूपम्, शब्दो वा 'नमोऽर्हद्भ्यः' इत्यादिकः, क्रिया वा शिरोनमनादिरूपा नमस्कारो भवेत् ? इति त्रयी गतिः। ततो नहि नैव सर्वथा सर्वैरपि प्रकारैस्तत्कर्तारं विनाऽन्यस्य युक्तः स नमस्कारः। तस्माद् नमस्कर्तृस्वामिक एवासौ युज्यते, न तु नमस्कार्यस्वामिक इतीह भावार्थः। कुतः ? इत्याह– 'नाणमित्यादि' यदि ज्ञानं नमस्कारस्तदा गुणत्वेन तद् नमस्कर्तृजीवादनन्यदव्यतिरिक्तं वर्तते, तत् कथमर्थान्तरस्य पूज्यस्य नमस्कार्यस्यार्हदादेः संबन्धी वक्तुं युज्यते ? । यदि वा, अघटमानकमप्यभ्युपगम्य ब्रूमः– जीवस्य पूज्यस्यापि संबन्धी तद् भवतु, जीवरहितायास्त्वचेतनायाः प्रतिमायाः कथं वा केन प्रकारेण तद् भवेत् ?– तस्याः सर्वथा ज्ञानशून्यत्वेन कष्टतरं महासाहसमिदमित्यभिप्रायः । एवं शब्दः क्रिया च यस्माच्छब्दक्रियावतो नमस्कर्तुर्धर्मः, धर्मश्च न द्रव्यान्तरसंचारी, ततो न पूज्यस्य नमस्कार्यस्य नमस्कार इति ॥ २८८१ ॥ २८८२ ॥ २८८३ ॥

कुतः पुनर्धर्मो द्रव्यान्तरसंचारी न स्यात् ? इत्याह—

[2]एवं च कयविणासा-ऽकयागमे-गत्त-संगराईया । अन्नस्स नमोक्कारे दोसा बहवो पसज्जंति ॥२८८४॥

एवं ह्यनेन पूजकेन कृते नमस्कारेऽन्यस्य पूज्यस्याभ्युपगम्यमाने बहवो दोषाः प्रसजन्ति । के ? इत्याह– कृतनाशा-ऽकृतागमै-कत्व-संकरादयः । तत्र येन कृतस्तस्यानभ्युपगमात् कृतनाशः, येन च न कृतः पूज्येन, तत्स्वामित्वाभ्युपगमेऽकृतागमः । तथा, द्वयोरप्यभिन्ननमस्कारधर्मकत्वादेकत्वम्, संकरो वा । आदिशब्दात् सहोत्पत्ति-विनाशादय इति ॥ २८८४ ॥

नैगमादिनयवादी पूर्वपक्षयन्नाह—

[3]जइ सामिभावओ होज्ज पूयणिज्जस्स सो तो को दोसो ? । अत्थंतरभूयस्स वि जह गावो देवदत्तस्स ॥२८८५॥

यदि पूजकादर्थान्तरभूतस्यापि पूजनीयस्य पूजके स्थितोऽपि स्वामिभावेन स नमस्कारो भवेत्, तर्हि को दोषः स्यात् ?– धर्मस्य द्रव्यान्तरे संचरणाभ्युपगमाद् न कश्चिदित्यर्थः । यथाऽन्यत्र स्थितानामपि गवां देवदत्तः स्वामीति ॥ २८८५ ॥

---

१ एव शब्दः क्रिया च शब्द-क्रियावतो यतो धर्मः । न च धर्मो द्रव्यान्तरसचारी ततो न पूज्यस्य ॥ २८८३ ॥
२ एवं च कृतविनाशा-ऽकृतागमै-कत्व-संकरादिकाः । अन्यस्य नमस्कारे दोषा बहवः प्रसज्ज्यन्ते ॥ २८८४ ॥
३ यदि स्वामिभावतो भवेत् पूजनीयस्य स ततः को दोषः ? । अर्थान्तरभूतस्यापि यथा गावो देवदत्तस्य ॥ २८८५ ॥

[1]अहव मयमसंगहिओ तो ववहारो वि किं न तद्धम्मा । अह सव्वो तो तस्समधम्माणो दो वि ते जुत्ता ॥ २८५३ ॥

व्याख्या– इह संग्रहिकोऽसंग्रहिकः सर्वो वा नैगमस्तावद् निर्विवादं स्थापनामिच्छत्येव । तत्र संग्रहिकः संग्रहमतावलम्बी सामान्यवादीत्यर्थः, असंग्रहिकस्तु व्यवहारनयमतानुसारी विशेषवादीत्यर्थः, सर्वस्तु समुदितः । ततश्च यदि संग्रहिकः संग्रहमतावलम्बी नैगमस्तां स्थापनामिच्छति, तर्हि संग्रहस्तत्समानमतोऽपि तां किमिति नेच्छति– ? इच्छेदेवेत्यर्थः । 'अहव मयमित्यादि' 'अथवा' इत्यव्ययोऽथार्थे । अथ परस्य मतम्– यद्यपि सामान्येन सर्वो नैगमः स्थापनामिच्छति, तथापि व्याख्यानतो विशेषप्रतिपत्तेरसंग्रहिकोऽसौ तामिच्छतीति प्रतिपत्तव्यम्, 'न संग्रहिकः' इत्यध्याहारः, न ततः संग्रहस्य स्थापनेच्छा निषिध्यत इति भावः । अत्रोत्तरमाह– 'तो इत्यादि' तर्हि एकत्र संधित्सतोऽन्यत्र प्रच्यवते, एवं हि सति व्यवहारोऽपि स्थापनां किमिति 'नेच्छति' इति शेषः । कुतः ? इत्याह– यतस्तद्धर्माऽसौ— असंग्रहिकनैगमसमानधर्मा व्यवहारनयोऽपि वर्तते, विशेषवादित्वात् । ततश्चैषोऽपि स्थापनामिच्छदेवेति, निषिद्धा चास्यापि त्वया, '[2]ठवणावज्जे संगह-ववहारा' इति वचनादिति । अथ सर्वोऽखण्डः परिपूर्णो नैगमः स्थापनामिच्छति, न तु संग्रहिकोऽसंग्रहिको वेति भेदवान्, अतस्तद्दृष्टान्तात् संग्रह-व्यवहारयोर्न स्थापनेच्छा साधयितुं युक्तेति भावः । अत्रोच्यते– 'तो इत्यादि' ततस्तर्हि तत्समधर्माणौ नैगमसमानधर्माणौ द्वावपि समुदितौ ताविति संग्रह-व्यवहारौ युक्तावेव । इदमत्र हृदयम्– तर्हि प्रत्येकं तयोरेकतरनिरपेक्षयोः स्थापनाभ्युपगमो मा भूदिति समुदितयोस्तयोः संपूर्णनैगमरूपत्वात् तदभ्युपगमः केन वार्यते, अविभागस्थाद् नैगमात् प्रत्येकं तदेकैकताग्रहणात् ? इति ॥ २८५२ ॥ २८५३ ॥

इतश्च स्थापनाभ्युपगमः संग्रह-व्यवहारयोर्युक्तः । कुतः ? इत्याह—

[3]जं च पवेसो नेगमनयस्स दोसु बहुसो समक्खाओ । तो तम्मयं पि भिण्णं मयमियरेसिं विभिन्नाणं ॥२८५४॥

यच्च यस्मात् प्रवेशोऽन्तर्भावः '[4]जो सामन्नग्गाही सो नेगमो संगहं गओ' इत्यादिना ग्रन्थेन प्रागत्रान्यत्र च नैगमनयस्य द्वयोः संग्रह-व्यवहारयोर्बहुशोऽनेकधा समाख्यातः प्रतिपादितः । ततस्तन्मतमपि स्थापनाभ्युपगमलक्षणं नैगमनयमतमपीतरयोः संग्रह-व्यवहारयोर्विभिन्नयोर्भेदवतोर्भिन्नं पृथग् मतं संमतमिति । इदमुक्तं भवति– यथा विभिन्नयोः संग्रह-व्यवहारयोर्नैगमोऽन्तर्भूतस्तथा स्था-

1 अथवा मतमसंग्रहिकस्ततो व्यवहारोऽपि किं न तद्धर्मा । अथ सर्वस्ततस्तत्समधर्माणौ द्वावपि ते युक्तौ ॥ २८५३ ॥ 2 गाथा २८४७ । 3 यच्च प्रवेशो नैगमनयस्य द्वयोर्बहुशः समाख्यातः । ततस्तन्मतमपि भिन्नं मतमितरेषां विभिन्नानाम् ॥२८५४॥ 4 यः सामान्यग्राही स नैगमः संग्रहं गतः।

ऋजुसूत्र उत्तरमाह—

[1]अस्सेदं ववएसो हवेज्ज दव्वम्मि न उ गुणे जुत्तो। पडयस्स सुक्कभावो भन्नइ न हि देवदत्तस्स ॥२८८६॥

अन्यत्र स्थितेऽपि गवादिके द्रव्येऽन्यत्र स्थितस्यापि देवदत्तादेः 'अस्येदम्' इति स्वामित्वव्यपदेशो भवेद् युज्यते, गुणे त्वयं न्यायो न युक्तः; न हि पटस्य शुक्लभावः शुक्लगुणो देवदत्तस्य भण्यते, सांकर्यैकत्वादिदोषप्रसङ्गादिति ॥ २८८६ ॥

पुनरपि परः प्राह—

[2]ववएसाभावम्मि वि नणु सामित्तमणिवारियं चेव। अन्नाधाराणं पि हु सगुणाण व भोगभावाओ ॥२८८७॥

ननु गुणेष्वप्ययं न्यायो दृश्यत एव; तथाहि– अन्याधाराणामपि देवदत्तसंबन्धिपटादिगतानामपि 'शुक्लादिगुणानाम्' इति शेषः, 'देवदत्तस्यैते शुक्लादिगुणाः' इति व्यपदेशाभावेऽपि ननु तस्य तत्स्वामित्वमनिवारितमेव। कुतः? इत्याह– भोगभावादिति, निजपटादिगतशुक्लादिगुणानां देवदत्तेन भुज्यमानत्वादित्यर्थः। केषां यथा कस्य स्वामित्वम्? इत्याह– यथा स्वगुणानां रूपादीनां देवदत्तस्य स्वामित्वम्। ततः पूजके स्थितस्यापि नमस्कारस्य यदि पूज्यः स्वामी भवेत् तदा को दोषः? इति प्रकृतम् ॥ २८८७ ॥

ऋजुसूत्रः प्राह– तथापि पूज्यस्य नमस्कार इति न मन्यामहे। कुतः? इत्याह—

[3]एवं पि न सो पुज्जस्स तप्फलाभावओ परधणं व। जुत्तो फलभावाओ सधणं पिव पूजयंतस्स ॥२८८८॥

एवमपि न स नमस्कारः पूज्यस्य युक्तः, तत्फलस्य स्वर्गादेरभावात्, परधनवदिति। युक्तः पुनरसौ पूजकस्य, स्वर्गादेः फलस्य सद्भावात्, स्वधनवदिति ॥ २८८८ ॥

पुनरपि नैगमादिनयमतमाशङ्क्य ऋजुसूत्रः परिहरन्नाह—

[4]नणु पुज्जस्सेव फलं दीसइ पूजा न पूजयंतस्स। नाणुवजीवित्तणओ तं तस्स फलं जहा नभसो ॥२८८९॥

---

१ अस्येद व्यपदेशो भवेद् द्रव्ये न तु गुणे युक्त.। पटकस्य शुक्लभावो भण्यते न हि देवदत्तस्य ॥ २८८६ ॥
२ व्यपदेशाभावेऽपि ननु स्वामित्वमनिवारितमेव। अन्याधाराणामपि खलु स्वगुणानामिव भोगभावात् ॥ २८८७ ॥
३ एवमपि न स पूज्यस्य तत्फलाभावत परधनमिव। युक्त· फलभावात् स्वधनमिव पूजयत. ॥ २८८८ ॥
४ ननु पूज्यस्यैव फल दृश्यते पूजा न पूजयत। नानुपजीवित्वतस्तत् तस्य फल यथा नभस. ॥ २८८९ ॥

पनाऽभ्युपगमलक्षणं तन्मतमपि तयोरन्तर्भूतमेव; ततो भिन्नं भेदेन तौ तादिच्छत एव– स्थापनासामान्यं संग्रह इच्छति, स्थापनाविशेषांस्तु व्यवहार इत्येतदेव युक्तम्, तदनिच्छा तु सर्वथाऽनयोर्न युक्तेति ॥ २८५४ ॥

अत्रैवोपचयमाह—

[1]सामण्णाइविसिट्ठं बज्झं पि जमुज्जुसुत्तपज्जंता । इच्छंति वत्थुधम्मं तो तेसिं सव्वनिक्खेवो ॥ २८५५ ॥

यस्माच्च सामान्यादिविशिष्टं बाह्यमपि च विचित्रं बहुप्रकारमृजुसूत्रपर्यन्ता नया वस्तुधर्ममिच्छन्ति । ततस्तेषां सर्वेऽपि नामादयो निक्षेपाः संमता एवेति । अतः [2]'ठवणावज्जे संगह-ववहारा' इत्यादिना यत् केषाञ्चिद् मतं तदसंगतमेवेति ॥ २८५५ ॥

[3]'नेवाइयं पयं' इत्येतद् व्याचिख्यासुराह—

[4]निवयइ पयाइपज्जंतओ जओ तो नमो निवाउ त्ति । सो च्चिय निययत्थपरो पयमिह नेवाइयं नाम॥२८५६॥
पूयत्थमिणं सा पुण सिर-कर-पायाइदव्वसंकोओ । भावस्स य संकोओ मणसा सुद्धस्स विणिवेसो ॥२८५७॥

यतो यस्माद् निपतति पदादिपर्यन्तयोस्ततो 'नमः' इति पदं निपातो भण्यते । स एव 'नमः' इति निपातो निजकार्थपरः स्वार्थिकप्रत्ययोपादानो नैपातिकं पदमित्युच्यत इति । इदं च 'नमः' इति पदं पूजार्थम् । शेषं सुगमम् ॥ २८५६ ॥ २८५७ ॥

अत्र च भावसंकोचलक्षणं भावकरणमेव प्रधानमिति दर्शयन्नाह—

[5]एत्थं तु भावकरणं पहाणमेगंतियं ति तस्सेव । बज्झं सुद्धिनिमित्तं भावावेयं तु तं विफलं ॥ २८५८ ॥
जं जुज्जंतो वि तयं न तप्फलं लहइ पालगाइ व्व । तव्विरहिया लहंति य फलमिह जमणुत्तराईया ॥२८५९॥

---

१ सामान्यादिविशिष्टं बाह्यमपि यदृजुसूत्रपर्यन्ताः । इच्छन्ति वस्तुधर्मं ततस्तेषां सर्वनिक्षेप ॥२८५५॥ २ गाथा २८४७ । ३ गाथा २८४० ।
४ निपतति पदादिपर्यन्ततो यतस्ततो नमो निपात इति । स एव निजकार्थपर. पदमिह नैपातिकं नाम ॥ २८५६ ॥
पूजार्थमिदं सा पुन शिरः-कर-पादादिद्रव्यसंकोचः । भावस्य च संकोचो मनसः शुद्धस्य विनिवेशः ॥ २८५७ ॥
५ इत्थं तु भावकरणं प्रधानमैकान्तिकमिति तस्यैव । बाह्यं शुद्धिनिमित्तं भावापेतं तु तद् विफलम् ॥ २८५८ ॥
यद् युञ्जानोऽपि तद् न तत्फलं लभते पालकादिरिव । तद्विरहिता लभन्ते च फलमिह यदनुत्तरादिकाः ॥ २८५९ ॥

न[1] य दिट्ठफलत्थोऽयं जुत्तो पुज्जस्स वोवगाराय । किंतु परिणामसुद्धी फलमिट्ठं सा य पूजयओ ॥२८९०॥

कत्तुरहीणत्तणओ तग्गुणाओ तप्फलोवभोगाओ । तस्सक्खओवसमओ तज्जोगाओ य सो तस्स ॥२८९१॥

व्याख्या– ननु पूज्यस्यैव पूजालक्षणं फलं प्रत्यक्षतो दृश्यते न तु पूजकस्य, ततः 'तत्फलाभावात्' इत्यसिद्धो हेतुः । एवं नैगमादिवादिना प्रोक्त ऋजुसूत्रः प्राह– न तत् तस्य पूज्यस्य पूजालक्षणं फलम्, अनुपजीवित्वात्, यथा नभसः । इह यो यस्यानुपजीवी न तत् तस्य फलम्, यथा नभसो दह्यमानागुरु-कर्पूरादिधूमपटलप्रसरत्सुमनोगन्धादिफलं न भवति, किन्तु तदुपजीवकस्य देवदत्तादेरेव, अनुपजीवी च पूजाया वीतरागः, अतो न तस्य तत् फलम्, किन्तु पूजकस्यैवेति । न च दृष्टमेव प्रत्यक्षं पूजादिकं फलमर्थः प्रयोजनं यस्यासौ दृष्टफलार्थोऽयं नमस्कर्तुर्नमस्कारः, नापि च पूज्योपकारायासौ, किन्त्वनन्तरं परिणामविशुद्धिः फलमिष्टं नमस्कारस्य, परम्पराफलं तु स्वर्गा-ऽपवर्गादि । सा च परिणामशुद्धिः, तच्च स्वर्गप्राप्त्यादिकं फलं पूजयतः पूजकस्यैव भवति, न तु पूज्यस्येति । तस्मात् स नमस्कारस्तस्य नमस्कर्तुरेव न नमस्कार्यस्येति । ऋजुसूत्रनयप्रतिज्ञाहेतूनाह– कर्तुरेवाधीनत्वात्, तदधीनत्वं च तेनैव क्रियमाणत्वादिति । तथा, तद्गुणत्वात्, ज्ञान-शब्द-क्रियारूपत्वेन नमस्कारस्य कर्तुर्गुणत्वादित्यर्थः । तथा, तस्य नमस्कारस्य यत्फलं स्वर्गादिकं तदुपभोगादिति । तथा, तस्य नमस्कारस्य यः कारणभूतः कर्मक्षयोपशमस्तस्य कर्तर्येव सद्भावात्, कारणपरित्यागेन च कार्यस्यान्यत्रायोगादिति । तथा, तद्योगात्– तत्परिणामरूपत्वादिति । दृष्टान्तास्तु पञ्चस्वपि हेतुषु 'स्वधनवत्' इत्यादयः स्वयमभ्यूह्या इति ॥ २८८९ ॥ २८९० ॥ २८९१ ॥

अथ शब्दादिनयत्रयमतेन स्वामित्वचिन्तामाह—

जं[2] नाणं चेव नमो सद्दाईणं न सद्द-किरियाओ । तेण विसेसेण तयं बज्झस्स न तेऽणुमण्णंति ॥ २८९२ ॥

यस्माद् नमो नमस्कारः शब्दादिनयमतेनोपयोगरूपं ज्ञानमेव, न तु शब्द-क्रिये, शुद्धत्वेन ज्ञानवादित्वात् तेषामिति भावः । तेन विशेषत एव तं नमस्कारं ते शब्दादयो बाह्यस्य जिनेन्द्रादेस्तत्प्रतिमादेर्वा नानुमन्यन्ते नेच्छन्ति, किन्तु तदुपयोगवतोऽन्तरङ्गस्यैव

1 न च दृष्टफलार्थोऽयं युक्त पूज्यस्य वोपकाराय । किन्तु परिमाणशुद्धिः फलमिष्टं सा च पूजयतः ॥ २८९० ॥
कर्तुरधीनत्वतस्तद्गुणात् तत्फलोपभोगात् । तस्य क्षयोपशमतस्तद्योगाच्च स तस्य ॥ २८९१ ॥

2 यज्ज्ञानमेव नम. शब्दादीनां न शब्द-क्रिये । तेन विशेषेण तद् बाह्यस्य न तेऽनुमन्यन्ते ॥ २८९२ ॥

तह वि विसुद्धी पाएण बज्झसहियस्स जा न सा इहरा। संजायइ तेणोभयमिट्ठं संबस्स वा नमओ ||२८६०||

सुगमाः, गतार्थाश्च। नवरं भावापेतं भावरहितं तद् बाह्यकरणं विफलमेव ॥ इति विंशतिगाथार्थः ||२८५८||२८५९||२८६०||

अथ प्ररूपणाद्वारमाह—

[2]दुविहा परूवणा छप्पया य नवहा य छप्पयाइ णमो। किं कस्स केण व कहिं केवचिरं कइविहो व भवे?||२८६१||

द्विविधा द्विप्रकारा प्रकृष्टा प्रधाना प्रगता वा रूपणा वर्णना प्ररूपणेति। तदेव द्वैविध्यमाह— पट्पदा च षट्प्रकारा, नवधा च नवप्रकारा। चशब्दात् पञ्चपदा, चतुष्पदा च। तत्र षट्पदा— 'णमो' इति पदं किम्, कस्य, केन वा, क्व वा, कियच्चिरं, कतिविधो वा भवेद् नमस्कारः ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ २८६१ ॥

तत्र किंद्वारव्याख्यानार्थमाह —

[3]किं जीवो तप्परिणओ पुव्वपडिवण्णओ य जीवाणं। जीवस्स य जीवाण य पडुच्च पडिपज्जमाणं तु||२८६२||

किं वस्तु नमस्कारः? इत्याह— 'जीवो त्ति' सामान्येनाविशुद्धनैगमादिनयानां जीवस्तज्ज्ञानलब्धियुक्तो योग्यो वा नमस्कारः। शब्दादिशुद्धनयमतं त्वधिकृत्याह— 'तप्परिणउ त्ति' शब्दादिविशुद्धनयमतेन तु जीवस्तत्परिणतो नमस्कारपरिणामपरिणत एव नमस्कारो नापरिणत इति। उक्तं किंद्वारम्। अथ 'कस्य' इति द्वारमुच्यते। तत्र च यदा पूर्वप्रतिपन्नो नमस्कारश्चिन्त्यते, तदा जीवानामसौ विज्ञेयः, बहुजीवस्वामिक इत्यर्थः। प्रतिपद्यमानं तु नमस्कारं प्रतीत्य यदैको जीवस्तं प्रतिपद्यते तदा जीवस्यासौ विज्ञेयः, एकजीवस्वामिक इत्यर्थः, यदा तु बहवो जीवास्तं प्रतिपद्यन्ते तदा जीवानामेष ज्ञातव्यः, बहुजीवस्वामिक इत्यर्थः ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ २८६२ ॥

अथ किंद्वारविषयं भाष्यम्—

१ तथापि विशुद्धिः प्रायेण बाह्यसहितस्य या न सेतरथा। सञ्जायते तेनोभयमिष्टं शम्बस्येव नमतः ॥ २८६० ॥
२ द्विविधा प्ररूपणा षट्पदा च नवधा च षट्पदादिर्नमः। किं कस्य केन वा क्व कियच्चिरं कतिविधो वा भवेत्? ॥ २८६१ ॥
३ किं जीवस्तत्परिणतः पूर्वप्रतिपन्नकश्च जीवानाम्। जीवस्य च जीवानां च प्रतीत्य प्रतिपद्यमानं तु ॥ २८६२ ॥

[1]किं होज्ज नमोक्कारो जीवोऽजीवोऽहवा गुणो दव्वं। जीवो नो खंधो त्ति य तह नोगामो नमोक्करो ॥२८६३॥

किं वस्तु नमस्कारो भवेत् ?– जीवः, अजीवो वा । जीवाजीवत्वेऽपि किं गुणो द्रव्यं वा नमस्कारः ? इति प्रश्ने नैगमाद्यविशुद्धनयमतमङ्गीकृत्याह– जीवो नमस्कारः, नाजीवः । स च संग्रहनयापेक्षया मा भूदविशिष्टः पञ्चास्तिकायमयः स्कन्धः, यथाहुस्तन्मतावलम्बिनः– "पुरुष एवेदं ग्नि सर्वं यद् भूतं यच्च भाव्यं उतामृतत्वस्येशानो यदन्नेनातिरोहति" इत्यादि । तथा संग्रहनयविशेषापेक्षयैव मा भूदविशिष्टग्राम इति, अतो 'नोस्कन्धो नोग्रामः' इति निर्युक्तिगाथायां वाक्यशेषः, पञ्चास्तिकायमयस्कन्धैकदेशत्वाद् नोशब्दस्य च देशवचनत्वाद् नोस्कन्धो जीवो नमस्कारः, तथा, चतुर्दशविधभूतग्रामैकदेशत्वाद् नोशब्दस्य च देशवचनत्वाद् नोग्रामरूपः प्रतिनियतः कोऽपि जीवो नमस्कार इति ॥ २८६३ ॥

ननु कस्माज्जीवो नमस्कारो नाजीवः ? इत्याह—

[2]जं जीवो नाणमओऽणन्नो नाणं च जं नमोक्कारो। तो सो जीवो दव्वं गुणो त्ति सामाइएऽभिहियं ॥२८६४॥

यद् यस्माज्ज्ञानमयो जीवः, ज्ञानं च यस्मात् श्रुतज्ञानरूपो नमस्कारः । अनन्यश्चाव्यतिरिक्तश्च ज्ञानाज्जीवः । ततः स नमस्कारो 'जीवो त्ति' जीव एव, नाजीवः, तस्य ज्ञानशून्यत्वादिति । भवतु जीवो नमस्कारः, केवलं द्रव्यमसौ गुणो वा ? इति वक्तव्यमित्याह– 'द्रव्यं गुणो वा नमस्कारः' इत्येतत् सामायिके 'किं सामायिकम्' इति द्वारे—

'[3]जीवो गुणपडिवन्नो नयस्स दव्वट्ठियस्स सामइयं । सो चेव पज्जवट्ठियनयस्स जीवस्स एस गुणो ॥ १ ॥'

इत्यादिना ग्रन्थेनाभिहितमेव, केवलं सामायिकस्थाने नमस्कारो वाच्य इति ॥ २८६४ ॥

भवतु जीवो नमस्कारः, किन्तु नोस्कन्धो नोग्रामश्च कथमसौ ? इत्याह—

[4]सव्वत्थिमओ खन्धो तदेक्कदेसो य जं नमुक्कारो। देसपडिसेहवयणो नोसद्दो तेण नोखंधो ॥२८६५॥

---

१ किं भवेद् नमस्कारो जीवोऽजीवोऽथवा गुणो द्रव्यम् । जीवो नोस्कन्ध इति च तथा नोग्रामो नमस्कारः ॥ २८६३ ॥

२ यज्जीवो ज्ञानमयोऽनन्यो ज्ञानं च यद् नमस्कारः । तत स जीवो द्रव्यं गुण इति सामायिकेऽभिहितम् ॥ २८६४ ॥

३ गाथा २६४३ । ४ सर्वास्तिमयः स्कन्धस्तदेकदेशश्च यद् नमस्कारः । देशप्रतिषेधवचनो नोशब्दस्तेन नोस्कन्धः ॥ २८६५ ॥

[1] मइ-सुयनाणावरणं दंसणमोहं च तदुवघाईणि । तप्फड्डयाइं दुविहाइं सव्व-देसोवघाईणि ॥ २८९५ ॥
सव्वेसु सव्वघाइसु हएसु देसोवघाइयाणं च । भागेहिं मुच्चमाणो समए समए अणंतेहिं ॥ २८९६ ॥
पढमं लहइ नकारं एक्केक्कं वन्नमेवमन्नं पि । कमसो विसुज्झमाणो लहइ समत्तं नमोक्कारं ॥२८९७॥

तिस्रोऽपि गतार्थाः, नवरं मतिज्ञानावरणादिस्पर्धकानि तीव्र-मन्द-मध्यमादिभेदभिन्नरसविशेषरूपाणि स्थानान्तरादवसेयानीति ॥ २८९५ ॥ २८९६ ॥ २८९७ ॥

यदुक्तम्– 'कश्च क्षयोपशमः ?' इति, तत्राह—

[2] खीणमुइन्नं सेसयमुवसंतं भण्णइ खओवसमो । उदय-विघाय उवसमो जा समुइन्नस्स य विसुद्धी ॥२८९८॥

पूर्वार्धमेवोत्तरार्धेन व्याचष्टे– अनुदितस्योदयविघात उपशमः, समुदीर्णस्योदितस्य पुनर्या विशुद्धिः क्षपणं स 'क्षयः' इति शेषः, क्षयेणोपलक्षित उपशमः क्षयोपशम इति समासः ॥ २८९८ ॥

अथ मति-श्रुतावरणद्वयस्य दर्शनमोहनीयस्य च क्षयोपशम इह किमिति गृह्यते ? इत्याह—

[3] सो सुयनाणं मइमणुगयं च तं जं च सम्मदिट्ठिस्स । तो तल्लाभे जुगवं मइ-सुय-सम्मत्तलाभो त्ति ॥२८९९॥

स नमस्कारस्तावत् स्वयं श्रुतज्ञानम्, तच्च श्रुतज्ञानं '[4]मइपुव्वं जेण सुयं' इत्यादिवचनाद् मत्यनुगतं मतिपूर्वमेव भवति। एते च मति-श्रुते यस्मात् सम्यग्दृष्टेरेव भवतः। ततस्तल्लाभे नमस्कारलाभे युगपत् समकालं मति-श्रुत-सम्यक्त्वानां लाभो भवतीति। अतो मति-श्रुतज्ञानावरणीयद्वयस्य, दर्शनमोहनीयस्य च क्षयोपशमोऽत्र गृह्यत इति। तदेवं व्याख्यातं 'केन' इति द्वारम् ॥ २८९९ ॥

अथ 'कस्मिन्' इति द्वारं व्याचिख्यासुराह—

---

१ मति-श्रुतज्ञानावरणे दर्शनमोहश्च तदुपघातीनि । तत्स्पर्धकानि द्विविधानि सर्व-देशोपघातीनि ॥ २८९५ ॥
सर्वेषु सर्वघातिषु हतेषु देशोपघातिकानां च । भागैर्मुच्यमान. समये समयेऽनन्तैः ॥ २८९६ ॥
प्रथमं लभते नकारमेकैकं वर्णमेवमन्यमपि । क्रमशो विशुध्यमानो लभते समस्तं नमस्कारम् ॥ २८९७ ॥

२ क्षीणमुदीर्णं शेषकमुपशान्तं भण्यते क्षयोपशम । उदयविघात उपशमो या समुदीर्णस्य च विशुद्धि. ॥ २८९८ ॥

३ स श्रुतज्ञानं मत्यनुगतं च तद् यच्च सम्यग्दृष्टे. । ततस्तल्लाभे युगपद् मति-श्रुत-सम्यक्त्वलाभ इति ॥ २८९९ ॥

४ मतिपूर्वं येन श्रुतम् ।

भूयग्गामो गामो तदेक्कदेसो तउ त्ति नोगामो । देसो त्ति सो किमेक्कोऽणेगो नेओ नयमयाओ ॥२८६६॥

व्याख्या– सर्वे पञ्चास्तिकायास्तन्मयस्तैर्निर्वृत्तः परिपूर्णः स्कन्ध उच्यते, तदेकदेशश्च यस्माद् नमस्कारवान् जीवः, नमस्कार-तद्वतोश्चाभेदोपचाराद् नमस्कारोऽपि तदेकदेशः । देशप्रतिषेधवचनश्च नोशब्दः, तेन तस्मात् स्कन्धैकदेशो जीवः, अभेदोपचाराद् नमस्कारश्च नोस्कन्ध इति । तथा,

"एगेंदिय सुहुमियरा सन्नियरपणिंदिया सबि-ति-चऊ । पज्जत्ताऽपज्जत्ता भेएण चउदस ग्गामा ॥ १ ॥"

इति वचनाच्चतुर्दशविधो भूतग्रामो ग्राम उच्यते । तदेकदेशश्च यस्मात् तकोऽसौ नमस्कारवान् देव-मनुष्यादिजीवोऽभेदोपचाराद् नमस्कारोऽपि तदेकदेश इत्यतोऽसौ नोग्रामोऽभिधीयते । 'देसो त्ति' पृच्छति विनेयः– भूतग्रामस्य देशः सन् स नमस्कारः किमेकोऽनेको वा ? इति वक्तव्यम् । गुरुराह– ज्ञेयो नयमतात्– एकत्वमनेकत्वं च तस्य नयमताद् विज्ञेयमित्यर्थः । तदेतावता 'किं जीवो' इति व्याख्यातम् ॥ २८६५ ॥ २८६६ ॥

अथ 'तप्परिणओ' इत्येतद् व्याचिख्यासुराह—

तप्परिणउ च्चिय जया सद्दाईणं तया नमोक्कारो । सेसाणमणुवउत्तो वि लद्धिसहिओऽहवा जोग्गो ॥२८६७॥

तत्परिणत एव नमस्कारपरिणामपरिणत एव यदा जीवो भवति तदाऽसौ शब्दादिनयत्रयमतेन नमस्कारोऽभिधीयते । शेषाणां तु नैगमादिनयानामनुपयुक्तोऽपि नमस्कारो जीवो नमस्कार उच्यते । किं सर्वः ? नेत्याह– लब्धिसहितस्तदावरणकर्मक्षयोपशमयुक्तः, अथवा, योग्यो भव्यशरीरादिको राज्यार्हकुमारराजवदिति ॥ २८६७ ॥

अथ कथं पुनर्नयमतेन नमस्कारस्यैकत्वमनेकत्वं च ज्ञेयम् ? इत्याह—

संगहनओ नमोक्कारजाइसामण्णओ सया एगं । इच्छइ ववहारो पुण एगमिहेगं बहू बहवो ॥२८६८॥

---

१ भूतग्रामो ग्रामस्तदेकदेश· सक इति नोग्राम, । देश इति स किमेकोऽनेको ज्ञेयो नयमतात् ॥ २८६६ ॥

२ एकेन्द्रियाः सूक्ष्मेतराः सञ्ज्ञीतरपञ्चेन्द्रिया सद्वि-त्रि चतुरिन्द्रिया । पर्याप्ता ऽपर्याप्ता भेदेन चतुर्दश ग्रामा ॥ १ ॥

३ तत्परिणत एव यदा शब्दादनिा तदा नमस्कार· । शेषाणामनुपयुक्तोऽपि लब्धिसहितोऽथवा योग्य ॥ २८६७ ॥

४ सग्रहनयो नमस्कारजातिसामान्यत सदैकम् । इच्छति व्यवहार पुनरेकमिहैक बहून् बहून् ॥ २८६८ ॥

[1]कंम्हि नमोक्कारोऽयं बाहिरवत्थुम्मि कत्तुराहारो । नेगम-ववहारमयं जीवादावट्ठभेयम्मि ॥ २९०० ॥
जं सो जीवाणन्नो तेण तओ जत्थ सो वि तत्थेव । एगम्मि अणेगेसु य जीवाजीवोभएसुं च ॥२९०१॥

व्याख्या—- कस्मिन् वस्तुन्याधारभूते नमस्कारोऽयं भवतीति विनेयेन पृष्टे गुरुराह– नैगम-व्यवहारमतं तावदिदम्– अष्टभेदे पूर्वोक्तभङ्गाष्टकनिर्दिष्टे नमस्कर्तृजीवस्याधारभूते जीवादौ बाह्यवस्तुनि नमस्कारो भवतीति । कस्मात् पुनर्नमस्कर्तृजीवाधारे वस्तुन्ययं भवति ? इत्याह– 'जमित्यादि' यस्मादसौ नमस्कारो नमस्कर्तृजीवादनन्यस्तेन तस्मात् तकोऽसौ नमस्कर्तृजीवो यत्रैकस्मिञ्जीवे, अजीवे, उभये वा; अनेकेषु जीवेषु, अजीवेषु, उभयेषु वा भवति, सोऽपि नमस्कारस्तत्रैव स्यात्, अन्यथाऽभेदायोगादिति ॥२९००॥२९०१॥

एवमुक्ते पूर्वापरविरोधमुद्भावयन्नाह—-

[2]नणु नेगमाइवयणं पुज्जस्स तओ कहं न तत्थेव । तस्स य न य तम्मि तओ धन्नं व नरस्स खेत्तम्मि॥२९०२॥

ननु नैगमादिवचनं पूर्वमेवं व्याख्यातम्– पूज्यस्य संबन्धी तकोऽसौ नमस्कारः, तत् कथमसौ तत्रैव पूज्ये न भवति ? । सत्यम्,'तस्स य त्ति' तस्यैव पूज्यस्य नैगमादिमतेन नमस्कार इति मन्यामहे, न हि किञ्चिद् विस्मृतमिदम्, केवलं 'न य तम्मि तउ त्ति' तस्मिन्नेव पूज्ये तकोऽसौ नमस्कार इति न नियमः । न हि यद् यस्य संबन्धि तस्य स एवाधारः, अन्यथापि दर्शनात्, यथा धान्यं भवति देवदत्तादिनरस्य संबन्धि, न च तत् तत्रैव, किन्तु क्षेत्र आधारभूते तदिति ॥ २९०२ ॥

संग्रहमतेन नमस्कारस्याधारमाह—

[3]सामन्नमेत्तगाही स-परजिए-यरविसेसनिरवेक्खो । संगहनओऽभिमन्नइ आहारे तमविसिट्ठम्मि ॥२९०३॥

व्याख्या– पूर्ववत्, नवरमविशिष्टे सामान्ये आधारे संग्रहस्तं नमस्कारं मन्यत इति ॥ २९०३ ॥

एतदेव भावयति—

---

1 कस्मिन् नमस्कारोऽयं बाह्यवस्तुनि कर्तुराधार । नैगम-व्यवहारमतं जीवादावष्टभेदे ॥ २९०० ॥
यत् स जीवानन्यस्तेन सको यत्र सोऽपि तत्रैव । एकस्मिन्ननेकेषु च जीवा-ऽजीवो-भयेषु च ॥ २९०१ ॥
2 ननु नैगमादिवचन पूज्यस्य तत' कथं न तत्रैव । तस्य च न च तस्मिन् सको धान्यमिव नरस्य क्षेत्रे ॥ २९०२ ॥
3 सामान्यमात्रग्राही स्व परजीवे तरविशेषनिरपेक्ष । सग्रहनयोऽभिमन्यत आधारे तदविशिष्टे ॥ २९०३ ॥

उज्जुसुयाईणं[1] पुण जेण सयं संपयं व वत्थुं ति । पत्तेयं पत्तेयं तेण नमोक्कारमिच्छंति ॥ २८६९ ॥

द्वे अपि सुगमे । नवरं व्यवहारनयः पुनरेकं नमस्कारवन्तं जीवमेकं नमस्कारमिच्छति, वहूंस्तद्वतो वहून् नमस्कारानिच्छति, लोकव्यवहारपरत्वात्, लोके चेत्थं दर्शनादिति । ऋजुसूत्रादयस्तु वहुत्वं नेच्छन्ति, वर्तमानसमयवर्तिनः स्वकीयस्यैवैकस्य प्रत्येकं प्रत्येकमभ्युपगमादिति ॥ व्याख्यातं 'किम्' इति प्ररूपणाद्वारम् ॥ २८६८ ॥ २८६९ ॥

अथ 'कस्य' इति द्वारे 'पुव्वपडिवण्णओ य जीवाणं'[2] इत्यादिव्याचिख्यासया प्राह—

पडिवज्जमाणओ[3] पुण एगोऽणेगे व संगहं मोत्तुं । इट्ठो सेसनयाणं पडिवन्ना णियमओऽणेगे ॥ २८७० ॥

प्रतिपद्यमानको नमस्कारस्यैकोऽनेके वा जीवा भवन्तीत्ययं पक्षः संग्रहनयं मुक्त्वा शेषनयानामिष्टः संमतः, पूर्वप्रतिपन्नास्तु नियमेनानेके तेषामिष्टाः, गतिचतुष्टयेऽपि पूर्वप्रतिपन्नस्य सम्यग्दृष्टीनामसंख्येयानां सदैव लाभात् । संग्रहनयस्तु वहुत्वं सर्वत्र नेच्छतीति तद्वर्जनमिति ॥ तदेवं 'कस्य नमस्कारः ?' इति पृष्टे एकानेकजीवस्वामिको नमस्कार इति निर्णीतम् ॥ २८७० ॥

अथ जीवस्वामिके सत्यपि 'किं नमस्कार्यजीवस्वामिको नमस्कारः, नमस्कर्तृजीवस्वामिको वा ?' इति जिज्ञासायां नयैर्निर्णयमाह—

कस्स[4] त्ति नमुक्कारो पुज्जस्स य संपयाणभावाओ । नेगम-ववहारमयं जह भिक्खा कस्स जइणो त्ति ॥२८७१॥

कस्य नमस्कारः– किंस्वामिकोऽसौ ? इति पृष्टे गुरुराह– नैगम-व्यवहारनयमतमिदम्– पूज्यस्य नमस्कार्यस्य नमस्कारः, न पुनस्तत्कर्तुः । कुतः ? । तेन पूज्यस्यैव संप्रदीयमानत्वात् । लोकेऽपि वक्तारो भवन्ति– कस्य भिक्षा ?, 'यतेः' इति, न पुनस्तद्दातुः ॥ २८७१ ॥

हेत्वन्तरेणापि नमस्कार्यस्वामिकत्वं नमस्कारस्यैतौ समर्थयतः । कथम् ? इत्याह—

---

१ ऋजुश्रुतादीनां पुनर्येन स्वकं सांप्रतं वा वस्त्विति । प्रत्येकं प्रत्येकं तेन नमस्कारमिच्छन्ति ॥ २८६९ ॥ २ गाथा २८६२ ।

३ प्रतिपद्यमानकः पुनरेकोऽनेके वा संग्रहं मोक्तुम् । इष्टः शेषनयानां प्रतिपन्ना नियमतोऽनेके ॥ २८७० ॥

४ कस्येति नमस्कारः पूज्यस्य च संप्रदानभावात् । नैगम-व्यवहारमत यथा भिक्षा कस्य यतिन इति ॥ २८७१ ॥

[१]जीवम्मि अजीवम्मि व सम्मि परम्मि व विसेसणेऽभिन्नो । न य भेयमिच्छइ सया नमोसामन्नमेत्तस्स ॥२९०४॥

आधारस्य जीवादिविशेषणे कर्तव्ये सामान्यवादित्वाद् यस्मादभिन्नोऽभेदतत्परोऽसौ, तस्मादविशिष्टे आधारे नमस्कारं मन्यत इति । न चाधारादिभेदेन नमस्कारसामान्यमात्रस्यापि सदा भेदमिच्छत्यसौ, किन्त्वभेदमेवेच्छति, सामान्यवादित्वादेवेति ॥ २९०४ ॥

अथवा, अन्योऽन्यत्र वर्तत इति व्यधिकरणं संग्रहो मूलत एव नेच्छति, इच्छति वा कोऽप्यशुद्धतरो नमस्कारं जीव एव, नाजीवे, इत्येतद् दर्शयन्नाह—

[२]जीवो नमो त्ति तुल्लाहिगरणयं बेइ न उ स जीवम्मि । इच्छइ वाऽसुद्धयरो तं जीवे चेव नन्नम्मि ॥२९०५॥

गतार्था ॥ २९०५ ॥

अथ ऋजुसूत्रनयमतेनाधारचिन्तामाह—

[३]उज्जुसुयमयं नाणं सद्दो किरिया च जं नमोक्कारो । होज्ज न हि सव्वहा सो मओ तदत्थंतरब्भूओ ॥२९०६॥

प्रागुक्तार्था, नवरं न खलु सर्वथासौ नमस्कारस्तस्मात् कर्तुरर्थान्तरभूतो मतः, किन्तु कर्तर्येवाधारे नमस्कार इति भावः ॥२९०६॥

एतदेव समर्थयति—

[४]सगुणिम्मि नमोक्कारो तग्गुणओ नीलया व पत्तम्मि । इहरा गुणसंकरओ सव्वेगत्तादओ दोसा ॥२९०७॥

स्वस्यात्मनो गुणी स्वगुणी तस्मिन् स्वगुणिनि कर्तरि नमस्कारः, नान्यत्रेति प्रतिज्ञा । तद्गुणत्वादिति हेतुः । पत्रे नीलतावदिति दृष्टान्तः । विपर्यये बाधकमाह— इतरथा— अन्यगुणस्यान्यत्र गमने, गुणानां परस्परं सांकर्यात्, गुणिनां सर्वेषामपि सांकर्यै-कत्वादयो दोषा भवेयुरिति ॥ २९०७ ॥

१ जीवेऽजीवे वा स्वस्मिन् परस्मिन् वा विशेषणेऽभिन्नः । न च भेदमिच्छति सदा नमःसामान्यमात्रस्य ॥ २९०४ ॥
२ जीवो नम इति तुल्याधिकरणतां ब्रवीति न तु स जीवे । इच्छति वाऽशुद्धतरस्तं जीव एव नान्यस्मिन् ॥ २९०५ ॥
३ ऋजुसूत्रमतं ज्ञानं शब्दः क्रिया च यद् नमस्कारः । भवेद् न हि सर्वथा स मतस्तदर्थान्तरभूतः ॥ २९०६ ॥
४ स्वगुणिनि नमस्कारस्तद्गुणतो नलितेव पत्रे । इतरथा गुणसंकरतः सर्वैकत्वादयो दोषाः ॥ २९०७ ॥

पुज्जस्सेव पज्जाओ तप्पच्चयओ घडायधम्म व्व । तद्धेउभावओ वा घडविण्णाणाभिहाणं व ॥ २८७२ ॥

अथवा, पूज्यस्यैव पर्यायो नमस्कार इति प्रतिज्ञा। 'तप्पच्चयउ त्ति' पूज्ये 'पूज्योऽयम्' इति प्रत्ययजनकत्वादिति हेतुः। 'घडायधम्म व्व त्ति' घटस्यात्मीयरूपादिवदिति दृष्टान्तः, यथा घटे घटप्रत्ययजनकत्वात् तद्रूपादयस्तत्पर्याया इत्यर्थः। अथवा, अस्यामेव प्रतिज्ञायां 'तद्धेतुभावात्' इति हेतुः– नमस्कारोत्पत्तिहेतुत्वादित्यर्थः। घटविज्ञाना-ऽभिधानवदिति दृष्टान्तः। इयमत्र भावना– नमस्कार्येऽर्हदादौ दृष्टे भव्यजन्तोर्विशिष्टोल्लासो नमस्कारकरणाऽभिप्राय उत्पद्यते, ततस्तन्नमस्कारस्य नमस्कार्यो हेतुः, ततस्तद्धेतुभावाद् नमस्कार्यस्यैव पूज्यस्यैव पर्यायो नमस्कारः; यथा घटविषयविज्ञाना-ऽभिधाने घटहेतुकत्वाद् घटपर्यायाविति ॥ २८७२ ॥

किञ्च, युक्त्यन्तरेणापि पूज्यस्वामिक एव नमस्कारः; कथम्? इत्याह—

अहवा[2] स करिंतो चेव तस्स जं भिच्चभावमावन्नो । का तस्स नमोक्कारे चिंता दासखरोवम्मे ॥२८७३॥

अथवा, यद् यस्मात् स नमस्कारकर्ता नमस्कारं कुर्वाण एव तस्य नमस्कार्यस्यार्हदादेर्भृत्यभावं दासत्वमापन्नः। ततस्तस्य नमस्कारकर्तुर्नमस्कारे का चिन्ता?– किं ममत्वम्?। ननु नमस्कारस्तावद् दूरे तिष्ठतु, तस्यात्मापि नात्मीयः, पूज्यस्य भृत्यभावेन समर्पणात्। किंविशिष्टे नमस्कारे चिन्ता न विधेया? इत्याह– 'दासखरोवम्मे त्ति' दाससंबन्धिना खरेणौपम्यमुपमानं यस्य तस्मिंस्तथाभूते। इदमुक्तं भवति– "दासेण[3] से खरो कीओ दासो वि से खरो वि से" इति सिद्धान्तोक्तन्यायाद् दासकल्पो नमस्कारकर्ता खरकल्पस्तु नमस्कारः, द्वावप्येतौ नमस्कार्यस्यार्हदादेरेव, न पुनर्नमस्कारकर्तुः किञ्चिदिति किं तस्य चिन्तया? इति। तदेवं पूज्यस्यैव नमस्कार इति नैगम-व्यवहारनयमतेन प्रतिष्ठितम् ॥ २८७३ ॥

पूज्यं च वस्तु द्विविधम्– जीवरूपं जिनादि, अजीवरूपं च तत्प्रतिमादि। अस्य च जीवाजीवपदद्वयस्यैकवचन-बहुवचनाभ्यामष्टौ भङ्गा भवन्ति, तद्यथा– जीवस्य, अजीवस्य, जीवानाम्, अजीवानाम्, जीवस्याजीवस्य च, जीवस्याजीवानां च, जीवानामजीवस्य च, जीवानामजीवानां च। इमामेवाष्टभङ्गीं सोदाहरणां भाष्यकारः प्राह—

१ पूज्यस्यैव पर्यायस्तत्प्रत्ययतो घटात्मधर्म इव। तद्धेतुभावतो वा घटविज्ञानाभिधानमिव ॥ २८७२ ॥
२ अथवा स कुर्वन्नेव तस्य यद् भृत्यभावमापन्न। का तस्य नमस्कारे चिन्ता दासखरौपम्ये? ॥ २८७३ ॥
३ दासेन तस्य खर. क्रीतो दासोऽपि तस्य खरोऽपि तस्य।

अत्र कश्चित् प्रेरयति—

[1]भिन्नाधारं पिच्छइ नणु रिउसुत्तो जहा वसइ खम्मि । दव्वं तत्थाहिगयं गुण-गुणिसंबंधचिंतेयं ॥२९०८॥

ननु भिन्नाधारमप्यन्यस्यान्यमप्याधारमृजुसूत्र इच्छत्येव, यथाऽनुयोगद्वारेषु वसतिदृष्टान्तमृजुसूत्रमतेनाभिदधता प्रोक्तम्– 'क वसति भवान् ?' 'खे आकाशे वसामि' इति । तत् कथमिह भिन्नाधारता निषिध्यते ? इति । अत्रोत्तरमाह– 'दव्वमित्यादि' इदमत्र हृदयम्– द्रव्यं देवदत्तादिकं द्रव्यान्तर आकाशे वर्तत इति मन्यत एव ऋजुसूत्रः । इह तु गुण-गुणिसंबन्धचिन्ता प्रस्तुता । ततोऽन्यगुणोऽन्यत्र वर्तत इतीहासौ न मन्यत इति न कश्चिद् विरोध इति ॥ २९०८ ॥

एतदेव व्यक्तीकरोति—

[2]सो संमन्नइ न गुणं निययाहारं तया सयं इहरा । को दोसो जइ दव्वं हवेज्ज दव्वंतराहारं ? ॥२९०९॥

गतार्था, नवरं निजादाधारादाधारान्तरमाश्रयो यस्य स तथा, तमेवभूतं गुणं न संमन्यतेऽसाविति ॥ २९०९ ॥

शब्दादिनयमतमधिकृत्याह—

[3]जं नाणं बेइ य नमो सद्दाई णं न सद्द-किरिया वि । तेण विसेसेण तयं बज्झम्मि न तेऽनुमन्नंति ॥२९१०॥

इच्छइ अवि उज्जुसुओ किरियं पि स तेण तस्स काए वि । इच्छंति न सद्दनया नियमा तो तेसिं जीवम्मि॥२९११॥

व्याख्या– यस्मात् शब्दादिमतेन नमो नमस्कारो ज्ञानमेव, न तु शब्द-क्रिये अपि, तेन विशेषत एव तं नमस्कारं तत्कर्तुर्जीवाद् बाह्ये वस्तुनि ते शब्दादयो नानुमन्यन्त इति । तर्हि ऋजुसूत्रात् शब्दादीनां न कश्चिद् भेदः, सर्वैरपि कर्तरि नमस्कारस्याभ्युपगमात् । तदयुक्तम्, यत इच्छत्यपि ऋजुसूत्रः 'किरियं पि' क्रियारूपमपि, अपिशब्दात् शब्दरूपमपि नमस्कारम्, तेन तस्य मते 'नमोऽर्हद्भ्यः' इत्यादिशब्दमुच्चारयतः शिरोनमनादिक्रियां च कुर्वतः कर्तुः कायेऽपि स नमस्कारो भवति । शब्दनयास्तु शब्द-क्रियारूपं नमस्कारं

1 भिन्नाधारमपीच्छति ननु ऋजुसूत्रो यथा वसति खे । द्रव्यं तत्राधिकृतं गुण गुणिसंबन्धचिन्तेयम् ॥ २९०८ ॥
2 स समन्यते न गुणं निजकाधारं तदा स्वकमितरथा । को दोषो यदि द्रव्यं भवेद् द्रव्यान्तराधारम् ? ॥ २९०९ ॥
3 यज्ज्ञानं ब्रुवन्ति च नमः शब्दादयो न शब्द-क्रिये अपि । तेन विशेषेण त बाह्ये न तेऽनुमन्यन्ते ॥ २९१० ॥
इच्छत्यपि ऋजुश्रुत. क्रियामपि स तेन तस्य कायेऽपि । इच्छन्ति न शब्दनया नियमात् ततस्तेषां जीवे ॥ २९११ ॥

कम्मप्पगरिसजणियं तदवस्सं पगरिसाणुभूईओ। सोक्खप्पगरिसभूई जह पुण्णप्पगरिसप्पभवा ॥ २४ ॥
तह बज्झसाहणप्पगरिसंगभावादिहण्णहा न तयं। विवरीयबज्झसाहणबलप्पगारिसं अवेक्खेज्जा ॥ २५ ॥
देहो नावचयकओ पुण्णुक्करिसे व मुत्तिमत्ताओ। [1]होज्ज व स हीणतरओ कहमसुभयरो महल्लो य ?॥ २६ ॥
एवं चिय विवरीयं [2]जोएज्जा सव्वपावपक्खे वि। न य साहारणरूवं कम्मं तक्कारणाभावा ॥ २७ ॥
कम्मं जोगनिमित्तं सुभोऽसुभो वा स एगसमयम्मि। होज्जा न उ उभयरूवो कम्मं पि तओ तयणुरूवं ॥२८॥
नणु मण-वइ-काओगा सुभासुभा वि समयम्मि दीसंति। दव्वम्मि मीसभावो भवेज्ज न उ भावकरणम्मि ॥२९॥
झाणं सुभमसुभं वा न उ मीसं जं च झाणविरमे वि। लेसा सुभाऽसुभा वा सुभमसुभं वा तओ कम्मं ॥ ३० ॥
पुव्वगहियं च कम्मं परिणामवसेण मीसयं [3]नेज्जा। इयरेयरभावं वा सम्मा-मिच्छाइं न उ गहणे ॥ ३१ ॥
मोत्तूण आउयं खलु दंसणमोहं चरित्तमोहं च। सेसाणं पगईणं उत्तरविहिसंकमो भज्जो ॥ ३२ ॥
सोहणवण्णाइगुणं सुभाणुभावं च जं तयं पुण्णं। विवरीयमओ पावं न बायरं नाइसुहुमं च ॥ ३३ ॥
गिण्हइ तज्जोगं चिय रेणुं पुरिसो जहा कयब्भंगो। एगक्खेत्तोगाढं जीवो सव्वप्पएसेहिं ॥ ३४ ॥
अविसिट्ठपोग्गलघणे लोए थूणतणुकम्मपविभागो। जुज्जेज्ज, गहणकाले सुभा-सुभविवेयणं कत्तो ? ॥ ३५ ॥
अविसिट्ठं चिय तं सो परिणामा-ऽऽसयसभावओ खिप्पं। कुरुए सुभमसुभं वा गहणे जीवो जहाहारं ॥ ३६ ॥
परिणामा-ऽऽसयवसओ धेणुए जहा पओ विसमहिस्स। तुल्लो वि तहाहारो तह पुण्णा-ऽपुण्णपरिणामो ॥ ३७ ॥
जह वेगसरीरम्मि वि सारा-ऽसारपरिणामयामेइ। अविसिट्ठो वाहारो तह कम्मसुभा-ऽसुभविभागो ॥ ३८ ॥
सायं सम्मं हासं पुरिस-रइ-सुभाउ-नाम-गोत्ताइं। पुण्णं, सेसं पावं नेयं सविवागमविवागं ॥ ३९ ॥

१ 'हुज्ज'। २ 'जोइज्जा'। ३ 'निज्जा'।



॥१३७॥

असइ बहि पुण्णपावे जमग्गिहुत्ताइं सग्गकामस्स । तदसंबद्धं सव्वं दाणाइफलं च लोअम्मि[1] ॥ ४० ॥

छिन्नम्मि संसयम्मी[2] जिणेण जर-मरणविप्पमुक्केणं ।
सो समणो पव्वइओ तिहिं ओ सह खंडियसएहिं ॥ १७६ ॥

ते पव्वइए सोउं मेअज्जो आगच्छई जिणसयासं[3] ।
वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ १७७ ॥

आभट्ठो य जिणेणं जाइ-जरा-मरणविप्पमुक्केणं ।
नामेण य गोत्तेण य सव्वण्णू सव्वदरिसी णं ॥ १७८ ॥

किं मन्ने परलोओ[4] अत्थि नत्थि त्ति संसओ तुज्झ ।
वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥ १७९ ॥

मन्नसि जइ चेयण्णं मज्जंगमउ व्व भूयधम्मो त्ति । तो नत्थि परलोगो तन्नासे जेण तन्नासो ॥ १ ॥
अह वि तदत्थंतरया न य निच्चत्तणमओ वि तदवत्थं । अनलस्स वाऽरणीओ भिन्नस्स विणासधम्मस्स ॥ २ ॥
अह एगो सव्वगओ निक्किरिओ तहवि नत्थि परलोओ । संसरणाभावाओ वोमस्स व सव्वपिंडेसु ॥ ३ ॥
इहलोगाओ व परो सुराइलोगो न सो वि पच्चक्खो । एवं पि न परलोगो सुव्वइ य सुईसु तो संका ॥ ४ ॥
भूइंदियाइरित्तस्स चेयणा सो य दव्वओ निच्चो । जाइस्सरणाईहिं पडिवज्जसु वाउभूइ व्व ॥ ५ ॥

१ 'लोगम्मि' । २ 'यम्मि अ जि' । ३ 'सगासं' । ४ 'लोगो अ' ।

नेच्छन्त्येव । किन्तूपयोगरूपं ज्ञानमेव तामिच्छन्ति । अतस्तेषां मतेन नियमात् तदुपयोगवति कर्तृजीव एव नमस्कारो न काय इति विशेषः ॥ इत्यष्टादशगाथार्थः ॥ व्याख्यातं 'कस्मिन्' इति द्वारम् ॥ २९१० ॥ २९११ ॥

अथ कियच्चिरं कालं नमस्कारो भवतीति द्वारम्, तत्राह—

[1]उवओग पडुच्चंतोमुहुत्त लद्धीए उ होइ जहन्ना । उक्कोसाहिया छावट्ठि सागरा, अरिहाइ पंचविहो ॥२९१२॥

उपयोगं प्रतीत्य जघन्यत उत्कृष्टतश्च नमस्कारस्यान्तर्मुहूर्तं स्थितिर्भवति । लब्धेस्तु तदावरणक्षयोपशमरूपाया जघन्या अन्तर्मुहूर्तमेव स्थितिः । उत्कृष्टतस्तु साधिकानि षट्षष्टिः सागरोपमाणि स्थितिर्भवति । इयं च 'दो[2] वारे विजयाइसु' इत्यादिना मतिज्ञानादीनामिव भावनीयेति द्वारम् । अथ कतिविधो नमस्कार इति द्वारमाह– 'अरिहाईत्यादि' अर्हत्-सिद्धादिपञ्चपदानामादौ नम इति पदस्य निपातात् पञ्चविधो नमस्कारः ॥ इति निर्युक्तिगाथार्थः ॥ २९१२ ॥

अत्र भाष्यम्—

[3]सो कइविहो त्ति भणिए पंचविहो भणइ नणु पुराभिहियं । इक्कं नमोऽभिहाणं केण विहाणेण पंचविहं ? ॥२९१३॥

स नमस्कारः कतिविधः ? इति भणिते पृष्टे गुरुराह– पंचविध इति । अत्र भणति प्रेरकः– ननु पुरा पूर्वं 'नेवाइयं पयं' इत्यत्राभिहितं प्रतिपादितमेकमेव 'नमः' इत्यभिधानम् । तत् केन विधानेन केन भेदेन पञ्चविधमुच्यते ? इति ॥ २९१३ ॥

अत्रोत्तरमाह—

[5]एगं नमोऽभिहाणं तदरुहयाइयसंनिवायाओ । जायइ पंचविगप्पं पंचविहत्थोवओगाओ ॥ २९१४ ॥

सत्यम्, एकविधमेव नमोऽभिधानम्, किन्त्वर्हदादिपञ्चपदानामादौ संनिपातात् पञ्चविधेऽर्हदादिकेऽर्थे उपयोगाद् नमस्करणक्रिययोपयुज्यमानत्वात् पञ्चविकल्पं पञ्चभेदं जायत इति ॥ २९१४ ॥

अथवा, 'एकं नमोऽभिधानम्' इत्यसिद्धं नैपातिकमिति, सान्वर्थाभिधानेनैव प्रागपि तस्यानेकविधत्वसूचनादिति दर्शयन्नाह—

१ उपयोग प्रतीत्यान्तर्मुहूर्तं लब्धेस्तु भवति जघन्या । उत्कृष्टतोऽधिकाः षट्षष्टिः सागरा अर्हदादिः पञ्चविधः ॥ २९१२ ॥ २ गाथा २७६२ ।
३ स कतिविध इति भणिते पञ्चविधो भणति ननु पुराभिहितम् । एक नमोऽभिधानं केन विधानेन पञ्चविधम् ? ॥ २९१३ ॥ ४ गाथा २८४० ।
५ एकं नमोऽभिधानं तदर्हदादिपदसंनिपातात् । जायते पञ्चविकल्पं पञ्चविधार्थोपयोगात् ॥ २९१४ ॥

ते पञ्चविधवस्तुरूपा अर्हत्-सिद्धादयो ज्ञेया ये ज्ञानादिगुणसमूहमयत्वाद् मूर्त्तज्ञानादिगुणा इव गुणार्थिनां ज्ञानादिगुणाभिलाषिणां भव्यजीवानां पूज्या इति । तदत्रार्हदादीनां पूज्यत्वे 'गुणमयत्वात्' इति हेतुरुक्तः ॥ २९४२ ॥

अथवा, हेत्वन्तरमप्याह—

[1]मोक्खत्थिणो व जं मोक्खहेयवो दंसणादितियगं व । तो तेऽभिवंदणिज्जा जइ व मई हेयवो कह ते ? ॥२९४३॥

यस्माद् वा मोक्षार्थिनो भव्यसत्त्वस्य मोक्षहेतवोऽर्हदादयस्ततस्तेऽभिवन्दनीयाः पूज्याः, मोक्षहेतुत्वात्, दर्शनादित्रिकवदिति । यदि वेहैवंभूता परस्य मतिः स्यात्– कथं केन हेतुना ते मोक्षहेतवः ?, तदा तमपि हेतुं कथयामः ॥ इति सप्तदशगाथार्थः ॥२९४३॥

यथा[2] ते हेतवस्तथा[3]ह—

[4]मग्गो अविप्पणासो आयारे विणयया सहायत्तं । पञ्चविहनमोक्कारं करोमि एएहिं हेऊहिं ॥ २९४४ ॥

'मग्गे त्ति' अर्हतां नमस्कारार्हत्वे मार्गः सम्यग्दर्शनादिलक्षणो हेतुः, यस्मादसौ तैः प्रदर्शितः, तस्माच्च मुक्तिः, ततश्च पारम्पर्येण मुक्तिहेतुत्वात् पूज्यास्त इति । 'अविप्पणासो त्ति' सिद्धानां तु नमस्कारार्हत्वेऽविप्रणाशः शाश्वतत्वं हेतुः, तथाहि–तदविप्रणाशमवगम्य प्राणिनः संसारवैमुख्येन मोक्षाय घटन्त इति । 'आयारे त्ति' आचार्याणां तु नमस्कारार्हत्वे आचार एव हेतुः, तथाहि–तानाचारवत आचारख्यापकांश्च प्राप्य प्राणिन आचारस्य विज्ञातारोऽनुष्ठातारश्च भवन्तीति । 'विणयय त्ति' उपाध्यायानां तु नमस्कारार्हत्वे विनयता विनयो हेतुः, यतस्तान् स्वयं विनीतान् प्राप्य कर्मविनयनसमर्थस्य ज्ञानादिविनयस्यानुष्ठातारो भवन्ति । 'सहायत्तं त्ति' साधूनां तु नमस्कारार्हत्वे सहायत्वं हेतुः, यतस्ते सिद्धिवधूसंगमैकलालसानां जन्तूनां तदवाप्तिक्रियासाहाय्यमनुतिष्ठन्तीति । अत एवाह–पञ्चविधनमस्कारं करोम्येभिर्हेतुभिः ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ २९४४ ॥

विस्तरार्थं त्वाभिधित्सुर्भाष्यकारः प्राह—

[5]मग्गोवएसणाओ अरिहंता हेयवो हि मुक्खस्स । तब्भावे भावाओ तयभावेऽभावओ तस्स ॥ २९४५ ॥

---

१ मोक्षार्थिनो वा यद् मोक्षहेतवो दर्शनादित्रिकमिव । ततस्तेऽभिवन्दनीया यदिवा मतिर्हेतवः कथं ते ? ॥ २९४३ ॥ २ ज. 'था हे' । ३ 'ज. था चाह' । ४ मार्गोऽविप्रणाश आचारो विनयः सहायत्वम् । पञ्चविधनमस्कारं करोम्येतैर्हेतुभिः ॥ २९४४ ॥ ५ मार्गोपदेशनादर्हन्तो हेतवो हि मोक्षस्य । तद्भावे भावात् तदभावेऽभावतस्तस्य ॥ २९४५ ॥

अहवन्नपयाइनिवायणाहि नेवाइयं च ताइं च । पञ्चारुहयाईणि पयाणि तं निवयए जेसु ॥ २९१५ ॥

अथवा, अन्यपदानामादौ निपतनाद् नैपातिकं पदमिदं प्रागुक्तम् । तच्च येष्वन्यपदेष्वादौ निपतति तान्यर्हत्-सिद्धादीनि पञ्च पदानि । अतः पञ्चानामन्यपदानामादौ निपतनाद् नैपातिकमित्यन्वर्थत एव पञ्चविधमिदं सामर्थ्यात् प्रागप्युक्तम् । अत्र तु कतिविधो नमस्कार इति द्वारे स एवार्थो व्यक्तीकृत इति ॥ २९१५ ॥

अथवा, पूर्वं पदद्वार एव पञ्चविधो नमस्कार उक्तः, इह तु कतिविधो भवेत् ? इति द्वारे पञ्चविधानामर्हदादिपदानामर्थः कथ्यत इत्येतद् दर्शयन्नाह—

[2]अहवा नेवाइयपयपयत्थमेत्ताभिहाणओ पुव्वं । इहमरिहदाइपञ्चविधपयपयत्थोवदेसणया ॥ २९१६ ॥

अथवा, नैपातिकं यत् पदं तस्य यत् पदार्थमात्रं पञ्चानामर्हदादिपदानामादौ निपतनाद् नैपातिकमित्येव स्वरूपं तस्य यदभिधानं कथनं तस्माद् नैपातिकपदपदार्थमात्राभिधानात् पूर्वमेव पदद्वारे सामर्थ्यात् 'पञ्चविधो नमस्कार उक्तः' इति शेषः । इह तु 'कतिविधो नमस्कारः ?' इति द्वारे तेषामेव पञ्चानामर्हदादिपदानां 'नमोऽर्हद्भ्यः' 'नमः सिद्धेभ्यः' 'नम आचार्येभ्यः' इत्यादिको यः पदार्थस्तस्यैवोपदेशना कथना कार्या, तस्या एव प्रागनुक्तत्वादिति ॥ २९१६ ॥

अत्र परस्य प्रेर्यमाशङ्क्य परिहरन्नाह—

[3]नणु वत्थुम्मि पयत्थो न जओ तच्चकहणं तहिं जुत्तं । तह वि पयत्थं तत्थेव लाघवत्थं पवोच्छिहिइ ॥२९१७॥

नन्वग्रे वस्तुद्वारेऽर्हदादिपदानामर्थो वक्ष्यते, तत् कथमुच्यते— 'इहार्हदादिपदानामर्थोपदेशना' इति ? । तदेतत् परोक्तं न, यतो यस्मादिह 'नमोऽर्हद्भ्यः' इत्यादिके पदार्थे कथिते सति ततस्तत्र वस्तुद्वारेऽर्हदादीनां

[4]'देवासुर-मणुएसुं अरिहा पूयंसुरुत्तमा जम्हा । अरिणो हंता रयं हंता अरिहंता तेण वुच्चंति ॥ १ ॥'

---

१ अथवान्यपदादिनिपातनाद् नैपातिकं च तानि च । पञ्चार्हदादीनि पदानि तद् निपतति येषु ॥ २९१५ ॥
२ अथवा नैपातिकपदपदार्थमात्राभिधानत पूर्वम् । इहार्हदादिपञ्चविधपदपदार्थोपदेशना ॥ २९१६ ॥
३ ननु वस्तुनि पदार्थो न यतस्तत्त्वकथनं तत्र युक्तम् । तथापि पदार्थं तत्रैव लाघवार्थं प्रवक्ष्यते ॥ २९१७ ॥
४ देवा-ऽसुर-मनुजेष्वर्हन्तः पुरुषोत्तमा यस्मात् । अरीन् हन्तारो रजो हन्तारोऽर्हन्तस्तेनोच्यन्ते ॥ १ ॥

अर्हन्तो यस्माद् मोक्षहेतवस्तस्मात् पूज्या इति प्रक्रमः । सम्यग्दर्शनादेस्तन्मार्गस्योपदेशनादिति हेतुः । 'श्रुतज्ञानवत्' इति दृष्टान्तः स्वयं द्रष्टव्यः । यदि नाम ते तन्मार्गमुपदिशन्ति तथापि कथं मोक्षहेतवः ? इत्याह– 'तब्भावे इत्यादि' तस्य सम्यग्दर्शनादिमार्गस्य भावे भावात्, तदभावे चाभावात् तस्य मोक्षस्येति ॥ २९४५ ॥

यद्येवम्, तर्हि सम्यग्दर्शनादिमार्ग एव मोक्षहेतुः, तदन्वय-व्यतिरेकानुविधायित्वात् तस्य; ये तु तदुपदेशकत्वेन तस्य मार्गस्य हेतवोऽर्हन्तस्ते कथं मोक्षहेतवो युक्ताः ? इत्येतत् प्रेर्यमाशङ्क्य परिहरन्नाह—

[1]मग्गो च्चिय सिवहेऊ जुत्तो तद्धेयवो कहं जुत्ता ? । तदहीणत्तणओऽहव कारण कज्जोवयाराओ ॥२९४६॥

प्रेरकोपन्यस्तं पूर्वार्धमुक्तार्थमेव । उत्तरमाह— 'तदहीणत्तणओ इत्यादि' । सत्यम्, मार्ग एव मोक्षहेतुः, केवलमर्हन्तोऽपि तद्धेतव एव, तस्यापि मार्गस्य तदुपदेशज्ञेयत्वेन तदधीनत्वादिति । अथवा, मोक्षहेतवोऽर्हन्तः, कारणेऽर्हल्लक्षणे मार्गलक्षणकार्यधर्मस्य मोक्षहेतुत्वस्योपचारादध्यारोपादिति ॥ २९४६ ॥

आह– नन्वेतावता मार्गस्योपदेशकत्वेनोपकारिणोऽर्हन्तस्ततो मार्गजन्यस्य मोक्षस्य तेऽपि हेतवोऽभिधीयन्त एव इत्युक्तम्, एवं चातिप्रसङ्गः । कथम् ? इत्याह—

[2]मग्गोवयारिणो जइ पुज्जा गिहिणो वि तो तदुवगारी । तस्साहणदाणाओ सव्वं पुज्जं परंपरया ॥२९४७॥

'तस्साहणदाणाउ त्ति' तस्य मार्गस्य साधनानि यानि वस्त्र-पात्रा-ऽऽहार-शय्या-ऽऽसनादीनि तद्दानादिति । शेषं सुगमम् ॥

अत्रोत्तरमाह—

[3]जं पच्चासन्नतरं कारणमेगंतियं च नाणाइं । मग्गो तद्दायारो सयं च मग्गो त्ति ते पुज्जा ॥ २९४८ ॥

सत्यपि विश्वत्रयस्य परम्परया मार्गोपकारित्वे यत् प्रत्यासन्नतरमैकान्तिकं च मोक्षस्य कारणं ज्ञानादित्रयं मोक्षस्य मार्ग इति तस्य दातारस्तावदर्हन्त एव न तु गृहस्थाः, नापि वस्त्रा-ऽऽहार-शय्या-ऽऽसनादीनि तत्साधनानि, तेषामर्हद्भ्यो लब्धस्य

१ मार्ग एव शिवहेतुर्युक्तस्तद्धेतव कथ युक्ता ? । तदधीनत्वतोऽथवा कारणे कार्योपचारात् ॥ २९४६ ॥
२ मार्गोपकारिणो यदि पूज्या गृहिणोऽपि ततस्तदुपकारिण । तत्साधनदानात् सर्वं पूज्य परम्परया ॥ २९४७ ॥
३ यत् प्रत्यासन्नतर कारणमैकान्तिकं च ज्ञानादि । मार्गस्तद्दातार स्वय च मार्ग इति ते पूज्या ॥ २९४८ ॥

इत्यादिकम्, 'तच्चकहणं ति' तत्त्वकथनं स्वरूपनिर्वेदनं युक्तं भवति । क्रियतां तर्ह्येवम्, कथ्यतामत्र पदार्थ इति चेत् । अत्राह— 'तह वीत्यादि' यद्यप्यत्र पदार्थे कथिते सति तत्र स्वरूपकथनं युज्यते, तथापि नेह पदार्थः कथ्यते किन्तु ग्रन्थलाघवार्थं तत्रैव वस्तु- द्वारे पदार्थं वक्ष्यतीति; अन्यथा ह्यत्रार्हदादिपदानामर्थः, तत्र त्वर्हदादीनां स्वरूपकथनमिति ग्रन्थगौरवमेव स्यात् । इति गाथापञ्चकार्थः॥ तदेवमुक्ता षड्विधप्ररूपणा ॥ २९१७ ॥

अथ नवविधां तामभिधित्सुराह—

[1]संतपयपरूवणया दव्वपमाणं च खेत्त फुसणा य । कालो य अंतरं भाग-भाव-अप्पाबहुं चेव ॥२९१८॥

इति द्वारगाथा । एतैः सत्पदप्ररूपणतादिभिर्नवभिर्द्वारैर्नमस्कारस्य नवविधेयं प्ररूपणा प्रोच्यते ॥ २९१८ ॥

तत्र प्रथमद्वारमधिकृत्याह—

[2]संतपयं पडिवन्ने पडिवज्जंते य मग्गणा गईसु । इंदिय काए जोए वेए य कसाय-लेसासु ॥ २९१९ ॥

सम्मत्त-नाण-दंसण-संजय-उवओगओ य आहारे। भासग-परित्त-पज्जत्त-सुहुम-सण्णी य भवचरिमे ॥२९२०॥

सच्च तत्पदं च सत्पदं विद्यमानार्थं पदमित्यर्थः । तच्चेह नमस्कारलक्षणम् । तस्य नमस्कारलक्षणस्य सत्पदस्य पूर्वप्रतिपन्नान् प्रतिपद्यमानकांश्चाश्रित्य 'मग्गण त्ति' मार्गणाऽन्वेषणा कर्तव्या । कासु ? । चतसृष्वपि गतिषु; तद्यथा— नमस्कारः किमस्ति नवा ? । अस्तीति ब्रूमः । तत्र चतुष्प्रकारायामपि गतौ नमस्कारस्य पूर्वप्रतिपन्ना नियमतो विद्यन्ते, प्रतिपद्यमानास्तु विवक्षितकाले भाज्याः— कदाचिद् भवन्ति, कदाचिद् नेति । एवमिन्द्रियादिष्वपि चरमान्तेषु द्वारेषु यथा पीठिकायां मतिज्ञानस्य सत्पदप्ररूपणता कृता तथा नमस्कारस्यापि कर्तव्या, तयोरभिन्नस्वामित्वेनैकवक्तव्यत्वादिति ॥ तदेवं गतं सत्पदप्ररूपणताद्वारम् ॥ २९१९ ॥ २९२० ॥

अथ द्रव्यप्रमाणद्वारमुच्यते । तत्र नमस्कारवज्जीवद्रव्यप्रमाणं वक्तव्यम्- एकस्मिन् समये कियन्तो नमस्कारं प्रतिपद्यन्ते, सर्वे वा कियन्त इति । क्षेत्रमिति क्षेत्रं वक्तव्यम्- कियति क्षेत्रे नमस्कारः संभवति ? । स्पर्शना च वक्तव्या–कियद्भुवं नमस्कारवन्तः स्पृश-

१ सत्पदप्ररूपणता द्रव्यप्रमाण च क्षेत्रं स्पर्शना च । कालश्चान्तर भाग-भावा-ऽल्प-बहुत्वानि चापि ॥ २९१८ ॥

२ सत्पदं प्रतिपन्नान् प्रतिपद्यमानांश्च मार्गणा गतिषु । इन्द्रिये काये योगे वेदे च कषाय-लेश्यासु ॥ २९१९ ॥

सम्यक्त्व-ज्ञान-दर्शन-संयतो-पयोगेषु चाहारे । भाषक-परीत-पर्याप्त-सूक्ष्मसंज्ञिषु च भव-चरमयोः ॥ २९२० ॥

ज्ञानादित्रयस्योपकारित्वमात्र एव वर्तनादिति। स्वयमपि च मोक्षस्य मार्गोऽर्हन्तः, दर्शनमात्रेणैव भव्यजन्तूनां तत्प्राप्तिहेतुत्वात्। अतो ज्ञानादिमार्गदातृत्वात्, स्वयमपि च मार्गत्वात् तेऽर्हन्त एव पूज्या न तु गृहस्थादय इति नातिप्रसङ्गः ॥ २९४८ ॥

एतदेवाह—

भत्ताई बज्झयरो हेऊ न य नियमओ सिवस्सेव। तद्दायारो गिहिणो सयं न मग्गो त्ति नो पुज्जा ॥२९४९॥[1]

भक्त-पान-वस्त्रादिभिर्बाह्यतरो दूरवर्ती परम्परया मोक्षस्य हेतुः। न च ज्ञानादित्रयवदसावेव नियमतः शिवस्य मोक्षस्य हेतुः, तमन्तरेणाप्यन्तकृत्केवल्यादीनां तत्सिद्धेः। अतस्तस्य बाह्यतरानैकान्तिकहेतोर्भक्त-पानादेर्दातारस्तद्दातारो गृहिणो न पूज्याः, अर्हतामिव तेषामन्तरङ्गै-कान्तिकमोक्षहेतुज्ञानादित्रयदातृत्वाभावादिति। न च तेऽर्हन्त इव स्वयं मोक्षमार्गः, तद्दर्शनादिना मुक्त्यनवाप्तेः, इत्यतोऽपि न ते पूज्या इति ॥ २९४९ ॥

अथाविप्रणाशलक्षणं सिद्धनमस्कारार्हत्वहेतुं व्याचिख्यासुराह—

मग्गेणाणेण सिवं पत्ता सिद्धा जमविप्पणासेणं। तेण कयत्थत्तणओ ते पुज्जा गुणमया जं च ॥२९५०॥[2]

यद् यस्मात् सिद्धाः संप्राप्तनिर्वाणसुखा अनेन मार्गेण ज्ञान-दर्शन-चारित्रलक्षणेन शिवं मोक्षं प्राप्ताः। कथम्?। अविप्रणाशेनानुच्छिन्नसंतानभावेन। तस्मात् कृतार्थत्वात् ते पूज्याः। अत्र प्रयोगः— पूज्याः सिद्धाः, अविप्रणाशबुद्धिजनकत्वेन मार्गोपकारित्वात्, जिनेन्द्रवदिति। 'गुणमया जं च त्ति' इतश्च ते पूज्याः— ज्ञानादिगुणसमूहात्मकत्वात्, जिना ऽऽचार्यादिवदिति ॥२९५०॥

अत्र प्रेरकः प्राह—

गुणपूयामेत्ताओ फलं ति तप्पूयणं पवज्जामो। जं पुण जिणु व्व मग्गोवयारिणो ते तयं कत्तो? ॥२९५१॥[3]

गुणानां सम्यग्ज्ञानादीनां पूजामात्रतोऽपि फलं विशिष्टं स्वर्गा-ऽपवर्गादिकमस्तीति तत्पूजनं तेषां गुणवतां सिद्धानां पूजनं प्रतिपद्यामहे। यत् पुनरुच्यते— 'जिनवत् ते सिद्धा अपि मार्गोपकारिणः' इति, तत् तेषां सिद्धानां कुतः? न मन्यामह एतदित्यर्थः,

---

१ भक्तादिर्बाह्यतरो हेतुर्न च नियमतः शिवस्यैव। तद्दातारो गृहिणः स्वयं न मार्ग इति नो पूज्याः ॥ २९४९ ॥

२ मार्गेणानेन शिवं प्राप्ता सिद्धा यदविप्रणाशेन। तेन कृतार्थत्वतस्ते पूज्या गुणमया यच्च ॥ २९५० ॥

३ गुणपूजामात्रात् फलमिति तत्पूजन प्रपद्यामहे। यत् पुनर्जिन इव मार्गोपकारिणस्ते तत् कुत ? ॥ २९५१ ॥

न्ति । इदं च द्वारत्रयमधिकृत्याह—

पलियमसंखेज्जइमो पडिवन्नो होज्ज खित्त लोगस्स । सत्तसु चोद्दसभागेसु होज्ज फुसणा वि एमेव ॥२९२१॥

'पलियेत्यादि' इह सूचनात् सूत्रस्यायमर्थः- नमस्कारस्य प्रतिपत्तिमङ्गीकृत्य लोके कदाचिद् भवन्ति कदाचिद् नेति । यदि भवन्ति जघन्यत एको द्वौ त्रयो वा, उत्कृष्टतस्तु सूक्ष्मक्षेत्रे पल्योपमासंख्येयभागप्रदेशराशितुल्या इति । पूर्वप्रतिपन्नास्तु जघन्यतः सूक्ष्मक्षेत्रपल्योपमासंख्येयभागप्रदेशराशिपरिमाणा एव, उत्कृष्टतस्त्वेभ्यो विशेषाधिका इति ॥ 'खेत्त त्ति' क्षेत्रद्वारमुच्यते– तत्र नमस्कारवान् जीव ऊर्ध्वमनुत्तरसुरेषु गच्छँल्लोकस्य सप्तसु चतुर्दशभागेषु भवति, अधस्तु षष्ठपृथिव्यां गच्छन् पञ्चसु चतुर्दशभागेषु भवतीति द्रष्टव्यम् । स्पर्शनाद्वारमप्येवं वक्तव्यम् । क्षेत्र-स्पर्शनयोस्तु प्रागुक्तो विशेष इति ॥ २९२१ ॥

काला-ऽन्तर-भावलक्षणं द्वारत्रयमधिकृत्याह—

एगं पडुच्च हेट्ठा जहेव नाणाजियाण सव्वद्धा । अंतरं पडुच्चमेगं जहन्नमंतोमुहुत्तं तु ॥ २९२२ ॥

उक्कोसणंतकालं अवड्ढपरियट्टगं च देसूणं । णाणाजीवे णत्थि ओ भावे य भवे खओवसमे ॥ २९२३ ॥

एकं नमस्कारवन्तं जीवं 'हेट्ठा जहेव त्ति' यथैवाधस्तादनन्तरमिहैव 'उवओग पडुच्चंतोमुहुत्तलद्धीए उ होइ जहन्ना' इत्यादिना काल उक्तस्तथेहापि वक्तव्यः । नानाजीवानां तु नमस्कारः सर्वाद्धा सर्वकालं भवति, लोके तस्य सर्वदाऽविच्छेदादिति । प्रतिपतितस्य पुनर्लाभेऽन्तरमप्येकं जीवं प्रतीत्य जघन्यतोऽन्तर्मुहूर्तं भवति, उत्कृष्टतस्त्वपार्धपुद्गलपरावर्तलक्षणोऽनन्तकाल इति । नानाजीवांस्तु प्रतीत्य नास्त्यन्तरम्, तदविच्छित्तेरेवेति । भावे तु क्षायोपशमिके नमस्कारो भवेदिति प्राचुर्यमङ्गीकृत्यैतदुक्तम्, अन्यथा क्षायिकौपशमिकयोरप्येके वदन्ति, क्षायिके यथा श्रेणिकादीनाम्, औपशमिके श्रेण्यन्तर्गतानामिति ॥ २९२२ ॥ २९२३ ॥

भागद्वारमाह—

जीवाणणंतभागो पडिवन्नो सेसगा अणंतगुणा । वत्थुं तरहंताई पंच भवे तेसिमो हेऊ ॥ २९२४॥

१ पल्यासंख्याततमः प्रतिपन्नो भवेत् क्षेत्र लोकस्य । सप्तसु चतुर्दशभागेषु भवेत् स्पर्शनाप्येवमेव ॥ २९२१ ॥
२ एक प्रतीत्याधस्ताद् यथैव नानाजीवाना सर्वाद्धा । अन्तरं प्रतीत्यैकं जघन्यमन्तर्मुहूर्तमिति ॥ २९२२ ॥
उत्कृष्टमनन्तकालमपार्धपरिवर्तकं च देशोनम् । नानाजीवान् नास्ति तु भावे च भवेत् क्षयोपशमे ॥ २९२३ ॥ ३ गाथा २९१२ ।
४ जीवानामनन्तभाग. प्रतिपन्न. शेषका अनन्तगुणाः । वस्तु तदर्हदादयः पञ्च भवेयुस्तेषामयं हेतुः ॥ २९२४ ॥

इह तेषामभावात्, असतश्चोपकारायोगादित्यभिप्रायः ॥ २९५१ ॥

अत्रोत्तरमाह—

जइ तग्गुणपूयाओ फलं पवन्नं नणूवगारो सो । तेहिंतो तदभावे का पूया किं फलं वा से ? ॥२९५२॥

यदि तद्गुणपूजातो गुणवत्सिद्धगुणपूजनात् फलमस्तीति त्वया प्रतिपन्नम्, तर्हि नन्वसावेव तेभ्यः सिद्धेभ्य उपकारस्त्वयापि प्रतिपन्नः, अन्यथा तदभावे सिद्धाभावे का तेषां पूजा, किं वा 'से' तस्य पूजकस्य फलम् ? । एवं च सति निर्वृतावविप्रणाशबुद्धिरपि सिद्धाभावे न भवतीत्ययमुपकारस्तेभ्यः किं नेष्यते ? इति ॥ २९५२ ॥

अथवा, 'अविप्रणाशबुद्धिहेतुत्वाद् मार्गोपकारिणः सिद्धाः' इत्ययमर्थोऽन्यथापि साध्यते । कथम् ? इत्याह—

गंतुरणासाओ वा सम्मग्गोऽयं जहिच्छियपुरस्स । सिद्धो सिद्धेहिंतो तदभावे पच्चओ कत्तो ? ॥२९५३॥

अथवा, अयं सम्यग्दर्शन-ज्ञान-चारित्रलक्षणो मार्गो यथेप्सितपुरस्य मोक्षनगरस्य सन्मार्ग इत्येवं सिद्धेभ्य एव सिद्धो निश्चितः, नान्यस्मात् । कुतः ? इत्याह– 'गंतुरणासाउ त्ति 'मोक्षपुरं गन्तुर्मुमुक्षोरपायाभावतोऽनाशादविप्रणाशात् । तदनाशे च सन्मार्गोऽयं सम्यग्दर्शनादिको मोक्षपुरस्य मार्ग इत्येवं मुमुक्षूणां प्रत्ययोत्पादात्, तदभावे तु सिद्धविप्रणाशे कुतोऽयं प्रत्ययः स्यात् ?– न कुतश्चिदित्यर्थः । इदमत्र हृदयम्– यथा पाटलिपुत्रादिनगरमार्गः कश्चिद् यथेप्सितपुरं गन्तुः सार्थवाहस्य निरपायगमनेनाविप्रणाशात् 'सन्मार्गोऽयम्' इति निश्चीयते । एवं सम्यग्दर्शनादिको मोक्षपुरमार्गोऽपि तदभीष्टं मोक्षपुरं गन्तुर्भव्यजन्तुसार्थस्य निरपायगमनेनाविप्रणाशात् 'सन्मार्गोऽयम्' इति निश्चीयते । अत एवंभूतनिश्चयजनकत्वाद् मार्गोपकारिणः सिद्धाः, ततः पूज्या इति ॥ २९५३ ॥

अपि च,

मग्गम्मि रुई तदविप्पणासओ तप्फलोवलंभाओ । जं जायइ तेहिंतो नेयरहा तदुवगारो से ॥२९५४॥

१ यदि तद्गुणपूजात· फलं प्रपन्न ननूपकार सः । तेभ्यस्तदभावे का पूजा किं फल वा तस्य ? ॥ २९५२ ॥
२ गन्तुरनाशाद् वा सन्मार्गोऽयं यथेप्सितपुरस्य । सिद्ध· सिद्धेभ्यस्तदभावे प्रत्ययः कुत ? ॥ २९५३ ॥
३· मार्गे रुचिस्तदविप्रणाशतस्तत्फलोपलम्भात् । यज्जायते तेभ्यो नेतरथा तदुपकारस्तस्य ॥ २९५४ ॥

जीवानामनन्ततमो भागो नमस्कारस्य प्रतिपन्नः प्राप्यते। शेषकास्तु तमप्रतिपन्ना मिथ्यादृष्टयोऽनन्तगुणाः। इदं च भागद्वारं गाथायां भावद्वारात् पूर्वमुपन्यस्तमपि व्यत्ययेन निर्दिष्टम्, विचित्रत्वात् सूत्रगतेः। अल्प-बहुत्वद्वारमपि नेह विवृतम्। पीठिकायां मतिज्ञानस्येव च भावनीयमिति ॥

सांप्रतं चशब्दाक्षिप्तां पञ्चविधादिप्ररूपणामनभिधाय वस्तुद्वारं तावदाह— 'वत्थुमित्यादि' वस्तु द्रव्यं दलिकं नमस्कारस्य योग्यमर्हमित्यनर्थान्तरम्, तच्चेह नमस्कारार्हाः पञ्चार्हदादयो मन्तव्याः। तेषां च वस्तुत्वेन नमस्कारार्हत्वेऽयं वक्ष्यमाणलक्षणो हेतुः॥ इति निर्युक्तिगाथासप्तकार्थः॥ २९२४ ॥

इह 'एगं पडुच्च हेट्ठा जहेव' इत्यादिना नमस्कारस्य कालद्वारं निरूपितम्। अथवा, अन्यथा तच्चिन्तनीयम्, कथम्? इत्याह भाष्यकारः—

अहवोसप्पु-सप्पिणिकालो नियओ य तव्विसिट्ठो य। तत्थत्थि नमोक्कारो नव त्ति नेयं जहा सुत्तं ॥२९२५॥

अथवा, अत्रोत्सर्पिण्य-ऽवसर्पिणीलक्षणः कालो गृह्यते। स च भरतै-रवतेषु नियतः प्रतिनियतेन निजस्वरूपेण वर्तते, हैमवत-हरिवर्ष-देवकुरू-त्तरकुरु-महाविदेह-रम्यकै-रण्यवतेषु पुनस्तद्विशिष्टः। तस्मादुत्सर्पिण्य-ऽवसर्पिणीकालाद् विशिष्टो विशेषितस्तत्प्रतिभागरूप एव कालोऽस्ति। तत्र द्विविधेऽपि काले नमस्कारोऽस्ति न वा? इति चिन्तायां यथा श्रुतं श्रुतसामायिकं पूर्वमुक्तम्, तथाऽत्रापि ज्ञेयम्, नमस्कारस्यापि श्रुतविशेषरूपत्वादिति ॥ २९२५ ॥

इह च 'संतपयपरूवणया' इत्यादिनवद्वाराणां किञ्चिद् व्याख्यातम्, किञ्चिद् नेति, अतो भाष्यकारोऽतिदेशमाह—

मइ-सुयनाणं नवहा नंदीए जह परूवियं पुव्वं। तह चेव नमोक्कारो सो वि सुयब्भंतरो जम्हा ॥२९२६॥

सुगमा ॥ २९२६ ॥

अथ चशब्दसूचितां पञ्चविधप्ररूपणामाह—

---

१ गाथा २९२२। २ अथवोत्सर्पिण्य-ऽवसर्पिणिकालो नियतश्च तद्विशिष्टश्च। तत्रास्ति नमस्कारो नवेति ज्ञेय यथा सूत्रम् ॥ २९२५ ॥ ३ गाथा २९१८। ४ मति-श्रुतज्ञानं नवधा नन्द्यां यथा प्ररूपितं पूर्वम्। तथैव नमस्कार. सोऽपि सूत्राभ्यन्तरो यस्मात् ॥ २९२६ ॥

यद् यस्मात् सम्यग्दर्शनादिको मोक्षमार्गो 'यथावदयम्' इत्येवं रुचिः प्रीतिर्जायत उत्पद्यते भव्यजन्तूनां 'तेहिंतो त्ति' तेभ्यः सिद्धेभ्य एव, नेतरथा नान्यथा। कुतः? इत्याह- तदविप्रणाशात्- तेषां सिद्धानां शाश्वतभावोपगमात्; तथा, तत्फलोपलम्भात्- तेषामेव सिद्धानां शाश्वतानुपमसुखलक्षणस्य फलस्योपलम्भात्। ततस्तदुपकारोऽसौ मार्गे रुच्याविर्भावलक्षणः सिद्धकृतोऽसावुपकार इति ॥ २९५४ ॥

अत्र परमतमाशङ्क्य परिहरन्नाह—

[1]णणु जिणवयणाउ च्चिय तदत्थिया तप्फलोवलंभो य। सच्चं तहावि तप्फलसब्भावाओ रुई होइ॥२९५५॥

ननु जिनवचनाज्जिनोपदेशादेव तदर्थिता तत्र मार्गे रुचिलक्षणार्थिता, तस्य मार्गस्य यत् फलं सिद्धिसुखलक्षणं तदुपलम्भश्च सर्वमिदं जायते, तत् किमविप्रणाशहेतूपन्यासेन?। सत्यम्, तथापि तस्य मार्गस्य यत् फलं सिद्धत्वप्राप्तिलक्षणं तस्य सद्भावादविप्रणाशात् शाश्वतभावाद् विशेषिततरा मार्गे रुचिर्भवतीति। अतो वक्तव्य एव सिद्धानामविप्रणाशलक्षणो हेतुरिति ॥ २९५५ ॥

पुनरपि परमतमाशङ्क्य परिहरन्नाह—

[2]अप्प च्चिय सिवमग्गो निच्छयओ तह रुई सम्मत्तं ति। मग्गोवयारिणो जह जिणा तहा खीणसंसारा॥२९५६॥

ननु '[3]दुप्पत्थिओ अमित्तं अप्पा सुपत्थिओ हवइ मित्तं' इत्यादिवचनाद् निश्चयतो निश्चयनयमतेनात्मैव शिवमार्गो मोक्षमार्गः, तथा, रुचिश्च सम्यक्त्वमात्मैव नापर इति, अतः किमत्र बाह्येनाविप्रणाशहेतुनोपन्यस्तेन?। सत्यम्, तथापि व्यवहारनयमतेन यथा मार्गोपदेशनाज्जिनास्तीर्थकरा मार्गोपकारिण उच्यन्ते तथा क्षीणसंसारा अपि सिद्धा अविप्रणाशेन मार्गोपकारिणोऽभिधीयन्त इति न दोषः ॥ २९५६ ॥

अथाचार्याणामुपाध्यायानां च नमस्कारार्हहेतुत्वं व्याचिख्यासुराह—

[4]आयारदेसणाओ पुज्जा परमोवगारिणो गुरवो। विणयाइगाहणा वा उवज्झाया सुत्तया जं च ॥२९५७॥

1 ननु जिनवचनादेव तदर्थिता तत्फलोपलम्भश्च। सत्यं तथापि तत्फलसद्भावाद् रुचिर्भवति ॥ २९५५ ॥

2 आत्मैव शिवमार्गो निश्चयतस्तथा रुचिः सम्यक्त्वमिति। मार्गोपकारिणो यथा जिनास्तथा क्षीणसंसाराः॥२९५६॥

3 दुष्प्रार्थितोऽमित्रमात्मा सुप्रार्थितो भवति मित्रम्। 4 आचारदेशनात् पूज्याः परमोपकारिणो गुरवः। विनयादिग्राहणाद् वोपाध्यायाः सूत्रदा यच्च ॥ २९५७ ॥

[1]आरोयणा य भयणा पुच्छा तह दायणा य निज्जवणा। एसा व पंचविहा परूवणा रोवणा तत्थ ॥२९२७॥

आरोपणा च भजना, पृच्छा तथा दायना दर्शना दापना वा, निर्यापना वक्ष्यमाणरूपा, एषा वा प्ररूपणा पञ्चविधा ज्ञेयेति ॥ २९२७ ॥

तत्रारोपणा का? इत्याह—

[2]किं जीवो होज्ज नमो नमो व जीवो त्ति जं परोप्परओ। अज्झारोवणमेसो पज्जणुजोगो मया रुवणा ॥२९२८॥

किं जीव एव भवेद् नमस्कारः, नमस्कार एव वा जीव इति यत् परस्परावधारणादध्यारोपणं पर्यनुयोजनमेष पर्यनुयोग आरोपणा मता संमतेति ॥ २९२८ ॥

भजनाव्याख्यानमाह—

[3]जीवो नमोऽनमो वा नमो उ निअमेण जीव इति भयणा। जह चूओ होइ दुमो दुमो उ चूओऽचूओ वा॥२९२९॥

जीवस्तावदनवधारित एव नमो नमस्कारो वा स्यात् सम्यग्दृष्टिः, अनमोऽनमस्कारो वा स्याद् मिथ्यादृष्टिः । नमो नमस्कारस्त्ववधारितो नियमेन जीव एव भवति, अजीवस्य नमस्कारासंभवात् । यथा चूतो द्रुम एव भवति, द्रुमस्तु चूतोऽचूतो वा खादिरादिः स्यादिति । एवैकपदव्यभिचाराद् भजनेति ॥ २९२९ ॥

पृच्छास्वरूपमाह—

[4]तो जइ सव्वो जीवो न नमोक्कारो तो मया पुच्छा। सो होज्ज किंविसिट्ठो को वा जीवो नमोक्कारो? ॥२९३०॥

ततो यदि सर्वोऽपि जीवो न नमस्कारः, किं तर्हि?, कश्चिदेव । ततः पृच्छा मता पृच्छामो भवतः— यो जीवो नमस्कारः स किंविशिष्टो भवेदिति कथ्यताम्, को वा जीवो नमस्कारः? इत्यपि निवेद्यतामिति । एषा पृच्छेति ॥ २९३० ॥

---

1 आरोपणा च भजना पृच्छा तथा दापना च निर्यापना। एषा वा पञ्चविधा प्ररूपणा तत्र कर्तव्या ॥ २९२७ ॥
2 किं जीवो भवेद् नमो नमो वा जीव इति यत् परस्परतः। अध्यारोपणमेष पर्यनुयोगो मताऽऽरोपणा ॥ २९२८ ॥
3 जीवो नमोऽनमो वा नमस्तु नियमेन जीव इति भजना। यथा चूतो भवति द्रुमो द्रुमस्तु चूतोऽचूतो वा ॥ २९२९ ॥
4 ततो यदि सर्वो जीवो न नमस्कारस्ततो मता पृच्छा। स भवेत् किंविशिष्टः को वा जीवो नमस्कार? ॥ २९३० ॥

पूज्याः परमोपकारिणो गुरवः, स्वयमाचारपरत्वात्, परेभ्यश्चाचारदेशनादिति । तथा, पूज्या उपाध्यायाः, स्वयं विनयवत्त्वात्, शिष्याणां च विनयग्राहणाद् विनयशिक्षणात् । यतश्च सूत्रपाठदास्ते, अतोऽपि पूज्या इति ॥ २९५७ ॥

अथ साधूनां पूजार्हत्वकारणम्, तथा, पञ्चानामप्यर्हदादीनां सामान्यं तत्कारणमुपदर्शयन्नाह—

[1]आयार-विणय-साहणसाहज्जं साहवो जओ दिंति । तो पुज्जा ते पंच वि तग्गुणपूयाफलनिमित्तं ॥२९५८॥

ततः साधवः पूज्याः; यतः किम्? इत्याह– 'आयारेत्यादि' आचारवत्त्वात्, विनयवत्त्वात्, मोक्षसाधने साहाय्यदानात् पूज्यास्त इति भावार्थः । तथा, सामान्येन पञ्चाप्यर्हदादयः पूज्याः, तद्गुणानां ज्ञानादीनां या पूजा तस्या यत् फलं स्वर्गा-ऽपवर्गादिकं तन्निमित्तं ते भवन्तीति कृत्वा, तद्गुणपूजाफलनिमित्तत्वादित्यर्थः ॥ इति चतुर्दशगाथार्थः ॥ २९५८ ॥

एवं तावत् समासेनार्हदादीनां नमस्कारार्हत्वद्वारेण मार्गदेशकत्वादयो गुणा उक्ताः । सांप्रतं संसाराटवीमार्गदेशकत्व-भवसमुद्रनिर्यामकत्व-षड्विधजीवनिकायगोपनत्वप्ररूपणादिना प्रपञ्चेनार्हतां गुणानुपदर्शयन्नाह—

[2]अडवीए देसयत्तं तहेव निज्जामया समुद्दम्मि । छक्कायरक्खणट्ठा महागोवा तेण वुच्चंति ॥ २९५९ ॥

भवाटव्यां देशकत्वं मार्गोपदेशकत्वं कृतमर्हद्भिः, तथैव निर्यामकाः संसारसमुद्रे भगवन्त एव षट्कायरक्षणार्थं यतः प्रयत्नं चक्रुर्महागोपास्तेनोच्यन्ते ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ २९५९ ॥

अथ 'जह निव्वुइपुरमग्गं' इत्यादिका विस्तरार्थप्रतिपादनपराः सप्तदश गाथाः सुगमाः । सति च वैषम्ये मूलावश्यकटीकानुसारतो भावनीया इति न प्रतिपादिताः ॥

तदेवमुक्तप्रकारेणार्हतां नमस्कारार्हत्वे हेतवो गुणाः, सांप्रतं तु प्रकारान्तरेण तद्धेतुभूतानेव गुणान् प्रतिपादयन्नाह—

[3]राग-द्दोस-कसाए य इंदियाणि य पंच वि । परीसहे उवसग्गे नामयंता नमोरिहा ॥ २९६० ॥

राग-द्वेष-कषायान्, इन्द्रियाणि च पञ्चापि, परीषहान्, उपसर्गान् नमयन्तोऽर्हन्तो नमोऽर्हाः ॥ इति निर्युक्तिगाथासंक्षे-

१ आचार-विनय-साधनसाहाय्यं साधवो यतो ददति । ततः पूज्यास्ते पञ्चापि तद्गुणपूजाफलनिमित्तम् ॥ २९५८ ॥
२ अटव्यां देशकत्वं तथैव निर्यामकाः समुद्रे । षट्कायरक्षणार्थं महागोपास्तेनोच्यन्ते ॥ २९५९ ॥
३ राग द्वेष-कषायाश्चेन्द्रियाणि च पञ्चापि । परीषहानुपसर्गान् नमयन्तो नमोऽर्हाः ॥ २९६० ॥

दापना-निर्यापनयोर्व्याख्यानमाह—

अह दायणा नमोक्कारपरिणओ जो तओ नमोक्कारो। निज्जवणाए सो च्चिय जो सो जीवो नमोक्कारो॥२९३१॥[1]

अथानन्तरोक्तप्रश्नस्य निर्वचनरूपा दापनोच्यते। किं पुनस्तद् निर्वचनम्? यो नमस्कारपरिणतो जीवस्तकोऽसौ नमस्कारः, यस्तु तदपरिणतः स खल्वनमस्कार इति निर्यापनायां स एव नमस्कारपरिणत एव योऽसौ जीवः स एव नमस्कारः, नमस्कारोऽपि जीवपरिणाम एव नाजीवपरिणाम इति ॥ २९३१ ॥

अथ दापना-निर्यापनयोः को विशेषः? इत्याह—

दायण-निज्जवणाणं को भेओ दायणा तयत्थस्स। वक्खाणं निज्जवणा पच्चब्भासो निगमणं ति॥२९३२॥[2]

दापना-निर्यापनयोः को भेदः कः प्रतिविशेषः?। अत्रोच्यते– दापना तदर्थस्य 'सो होज्ज किंविसिट्ठो को वा जीवो नमोक्कारो'[3] इत्येवं पृच्छापृष्टस्य नमस्कारस्यार्थस्तदर्थो भण्यते, यथा 'नमोक्कारपरिणओ जो तओ नमोक्कारो'[4] इति। निर्यापना तु दापनादर्शितस्यैवार्थस्य प्रत्याभ्यासः प्रत्युच्चारणं निगमनम्, यथा– स एव नमस्कारपरिणत एव योऽसौ जीवः स एव नमस्कारः, नमस्कारोऽपि जीवपरिणाम एव नाजीवपरिणाम इति। एवं च निगमनीयम्। निगमनकृत एव च दापना-निर्यापनयोर्भेदः, न त्वात्यन्तिक इति भावनीयम् ॥ २९३२ ॥

अथवा, अन्यथाऽनयोर्भेदो दर्श्यते। कथमित्याह—

तप्परिणय एव जहा जीवो अवहिओ वा तहा भुज्जो। तप्परिणओ स एव हि निज्जवणाए मओऽणन्नो ॥२९३३॥[5]

अथवा, यथा दापनायां जीवो 'अवहिउ त्ति' जीवोऽवधृतो नियमितः, तद्यथा– तत्परिणत एव नमस्कारपरिणत एव जीवो नमस्कारो नान्य इति। 'तहा भुज्जो त्ति' तथा तेनैव प्रकारेण निर्यापनायां भूयोऽपि प्रकारान्तरतोऽवधार्यते। कथम्? इत्याह– 'तप्परिणओ स एव हि त्ति' यथा दापनायां नमस्कारपरिणत एव जीवो नमस्कार इत्यवधृतम्, तथाऽत्र निर्यापनायां तत्परिणतो

१ अथ दापना नमस्कारपरिणतो य सको नमस्कारः। निर्यापनायां स एव य· स जीवो नमस्कारः ॥२९३१॥

२ दापना-निर्यापनयोः को भेदो दापना तदर्थस्य। व्याख्यानं निर्यापना प्रत्यभ्यासो निगमनमिति ॥ २९३२ ॥ ३ गाथा २९३० । ४ गाथा २९३१। ५ तत्परिणत एव यथा जीवोऽवधृतो वा तथा भूयः। तत्परिणतः स एव हि निर्यापनायां मतोऽनन्यः ॥ २९३३ ॥

पार्थः ॥ २९६० ॥

विस्तरार्थमभिधित्सुस्तावद् रागस्वरूपं विवृणोति—

[1]रंज्जंति तेण तम्मि व रंजणमहवा निरूविओ राओ । नामाइ चउब्भेओ दव्वे कम्मेयरविभिण्णो ॥२९६१॥

रज्यन्ते तेन, तस्मिन् वा सति क्लिष्टसत्त्वाः प्राणिनः स्त्र्यादिष्विति रागः । अथवा, रञ्जनं रागः । स च नामादिचतुर्भेदः स्थानान्तरे निरूपितो रागः । तत्र नाम-स्थापना-ज्ञशरीरभव्यशरीरद्रव्यरागविचारः सुज्ञेय एव । ज्ञ-भव्यशरीरव्यतिरिक्ते तु द्रव्ये विचार्ये को रागः ? इत्याह— 'कम्मेयरविभिन्नो त्ति' कर्मद्रव्यरागः, नोकर्मद्रव्यरागश्चेत्यर्थः ॥ २९६१ ॥

तत्र 'कर्मद्रव्यरागं व्याचिख्यासुराह—

[2]जुग्गा बद्धा बज्झंतया य पत्ता उईरणावलियं। अह कम्मदव्वराओ चउव्विहा पोग्गला हुंति ॥२९६२॥

'अह त्ति' अथैतद्व्याख्यानमुच्यते— तत्र कर्मद्रव्यरागश्चतुर्विधाः पुद्गला भवन्ति; तद्यथा— योग्या बन्धपरिणामाभिमुखाः, बध्यमानाः प्रारब्धबन्धक्रियाः, बद्धा उपरतबन्धक्रियाः । गाथाबन्धानुलोम्याच्च व्यत्ययेनोपन्यासः । तथा, उदीरणाकरणेनाकृष्योदीरणावलिकां प्राप्ता यावदद्याप्युदयं न गच्छन्ति, उदयेन वेद्यमानानां भावरागत्वेन वक्ष्यमाणत्वादिति ॥ २९६२ ॥

नोकर्मद्रव्यरागमाह—

[3]नोकम्मदव्वराओ पओगओ सो कुसुंभरागाई । बीओ य वीससाए नेओ संझब्भरागाई ॥ २९६३ ॥

नोकर्मद्रव्यरागस्तु द्विविधः–प्रयोगतः, विस्रसातश्च । तत्र प्रयोगतः कुसुम्भरागादिः, विस्रसातस्तु सन्ध्याभ्ररागादिरिति॥२९६३॥

भावरागमाह—

[4]जं रायवेयणिज्जं समुइण्णं भावओ तओ राओ । सो दिट्ठि-विसय-नेहाणुरायरूवो अभिस्संगो ॥२९६४॥

---

१ रज्यन्ते तेन तस्मिन् वा रञ्जनमथवा निरूपितो राग । नामादिश्चतुर्भेदो द्रव्ये कर्मेतरविभिन्नः ॥ २९६१ ॥

२ योग्या बद्धा बध्यमानाश्च प्राप्ता उदीरणावलिकाम् । अथ कर्मद्रव्यरागश्चतुर्विधाः पुद्गला भवन्ति ॥ २९६२ ॥

३ नोकर्मद्रव्यरागः प्रयोगतः स कुसुम्भरागादिः । द्वितीयश्च विस्रसातो ज्ञेयः सन्ध्याभ्ररागादि ॥ २९६३ ॥

४ यद् रागवेदनीयं समुदीर्णं भावतः सको रागः । स दृष्टि-विषयस्नेहा-ऽनुरागरूपोऽभिष्वङ्गः ॥ २९६४ ॥

नमस्कारपरिणतो जीवः स एव मतो नमस्कार एव मत इति भूयोऽवधार्यते। कुतः ? इत्याह— अनन्य इति कृत्वाऽनन्यत्वादभिन्नत्वादित्यर्थः। इदमुक्तं भवति— यथाऽग्न्युपयुक्तो माणवकस्तदुपयोगानन्यत्वादग्निरेव भवति तथा नमस्कारपरिणतो जीवस्तदुपयोगानन्यत्वाद् नमस्कार एव निर्यापनायां भवति। इति दापना-निर्यापनयोर्विशेष इति। तदेवमभिहिता पञ्चविधापि प्ररूपणा ॥ २९३३ ॥

अथवा, चतुर्विधा प्ररूपणा सा। कथम् ? इत्याह—

[1]पयईए अगारेण य नोगारो-भयनिसेहओ वावि। इह चिन्तिज्जइ भुज्जो को होज्ज तओ नमोक्कारो ? ॥२९३४॥

प्रकृत्या स्वभावेन, अकारेण च प्रतिषेधवाचकेन, नोकारेण, निषेधोभयेन च सहितोऽत्र भूयोऽपि नमस्कारश्चिन्त्यते। तत्र प्रकृतिपक्षे नमस्कारः, अकारसहितस्त्वनमस्कारः, नोकारयुक्तस्तु नोनमस्कारः, निषेधोभयसहितस्तु नोअनमस्कार इति। एवं च चिन्त्यमाने ततः कः किं वस्तु नमस्कारो भवेत् ?। उपलक्षणं चेदम्, को वाऽनमस्कारः, कश्च नोनमस्कारः, को वा नोअनमस्कार इत्यपि द्रष्टव्यमिति ॥ २९३४ ॥

एवं च जिज्ञासिते सति भाष्यकारः प्राह—

[2]पयइ त्ति नमोक्कारो जीवो तप्परिणओ स चाभिहिओ। अनमोक्कारो परिणइरहिओ तल्लद्धिरहिओ वा॥२९३५॥

प्रकृतिस्तावद् नमस्कारः। स च कः ? इति यदि पृच्छ्यते, तदासौ जीवस्तत्परिणतो नमस्कारपरिणतो नमस्कार इति प्रागभिहितमेव। अनमस्कारस्तु परिणतिरहितो नमस्कारपरिणातिवर्जितोऽनुपयुक्तः सम्यग्दृष्टिः। तल्लब्धिविरहितो वा नमस्कारकारणकर्मक्षयोपशमशून्यो वा मिथ्यादृष्टिरिति ॥ २९३५ ॥

नोनमस्कारस्तर्हि कः ? इत्याह—

[3]नोपुव्वो तप्परिणयदेसो देसपडिसेहपक्खम्मि। पुणरनमोक्कारो च्चिय सो सव्वनिसेहपक्खम्मि ॥ २९३६ ॥

नोपूर्वस्तु नोशब्दोपपदो नमस्कारो नोनमस्कार इत्यर्थः 'तप्परिणयदेसो त्ति' देशप्रतिषेधवचने नोशब्दे तत्परिणतस्य नमस्कार-

1 प्रकृत्याऽकारेण च नोकारो भयनिषधतो वापि। इह चिन्त्यते भूय को भवेत् सको नमस्कार ? ॥ २९३४ ॥
2 प्रकृतिरिति नमस्कारो जीवस्तत्परिणत स चाभिहित'। अनमस्कार परिणतिरहितस्तल्लब्धिरहितो वा ॥ २९३५ ॥
3 नोपूर्वस्तत्परिणतदेशो देशप्रतिषेधपक्षे। पुनरनमस्कार एव स सर्वनिषेधपक्षे ॥ २९३६ ॥

[1]कुप्पवयणेसु पढमो बिइओ सद्दाइएसु विसएसु। विसयादनिमित्तो वि हु सिणेहराओ सुयाईसु ॥२९६५॥

यद् रागेण वेद्यत इति रागवेदनीयं माया-लोभलक्षणं कर्म समुदीर्णमुदयप्राप्तं विपाकेन वेद्यते, तज्जनितश्च जीवपरिणामरूपोऽभिष्वङ्गस्तकोऽसौ भावतो रागो भावरागः । स च त्रिविधाभिष्वङ्गरूपः, तद्यथा– दृष्ट्यनुरागः विषयानुरागः, स्नेहानुरागश्चेति । तत्र प्रथमः कुप्रवचनेषु द्रष्टव्यः, द्वितीयस्तु शब्दादिविषयेषु, स्नेहरागस्तु विषयाद्यनिमित्तोऽविनीतेष्वपि सुत-बान्धवादिष्विति ॥ २९६४ ॥ २९६५ ॥

अथ दोषस्य द्वेषस्य वा व्याख्यानमाह—

[2]दूसंति तेण तम्मि व दूसणमह देसणं व देसो त्ति । देसो च सो चउद्धा दव्वे कम्मेयरविभिन्नो॥२९६६॥

'दुष वैकृत्ये' दुष्यन्ति विकृतिं भजन्ति' तेन तस्मिन् वा प्राणिन इति दोषः । दूषणं वा 'दोषः' इति स्वयमेव द्रष्टव्यम्। अथवा, 'द्विष अप्रीतौ' द्विषन्ति– अप्रीतिं भजन्ति तेन तस्मिन् वा प्राणिन इति द्वेषः । द्वेषणं वा 'द्वेषः' इत्यपि स्वयमेव दृश्यम् । कुतः पुनरिदं दृश्यत इत्याह– 'अह देसणं व देसो त्ति' अथवा द्वेषणं द्वेष इति भावसाधनपक्षोपन्यासादनन्तरोक्तः स्वयमेव दृश्यते । 'देसो व सो चउद्ध त्ति' स च द्वेषः, वाशब्दाद् दोषो वा नामादिभेदाच्चतुर्धा द्रष्टव्यः । तत्र ज्ञ भव्यशरीरव्यतिरिक्ते द्रव्ये विचार्ये 'कम्मेयरविभिन्नो त्ति' कर्मद्रव्यदोषः, नोकर्मद्रव्यदोषश्च भवतीत्यर्थः ॥ २९६६ ॥

अस्य च द्विविधस्यापि स्वरूपमाह—

[3]जुग्गा बद्धा बज्झंतगा य पत्ता उदीरणावलियं । अह कम्मदव्वदोसो इयरो दुट्ठव्वणाईओ ॥ २९६७ ॥

पूर्ववच्चतुर्विधाः पुद्गलाः कर्मद्रव्यदोषः, नोकर्मद्रव्यदोषस्तु दुष्टव्रणादिरिति ॥ २९६७ ॥

भावदोषं भावद्वेषं वा प्राह—

---

१ कुप्रवचनेषु प्रथमो द्वितीय शब्दादिकेषु विषयेषु । विषयाद्यनिमित्तोऽपि खलु स्नेहराग सुतादिषु ॥ २९६५ ॥
२ दुष्यन्ति तेन तस्मिन् वा दूषणमथ द्वेषण वा द्वेष इति । द्वेषश्च स चतुर्धा द्रव्य कर्मेतरविभिन्न ॥ २९६६ ॥
३ योग्या बद्धा बध्यमानाश्च प्राप्ता उदीरणावलिकाम् । अथ कर्मद्रव्यदोष इतरो दुष्टव्रणादिक ॥ २९६७ ॥

परिणामयुक्तस्य सम्यग्दृष्टिजीवस्य देश एकदेशो भण्यते । सर्वनिषेधवचने तु नोशब्दे स नोनमस्कारः पुनरप्यनमस्कार एव गम्यत इति ॥ २९३६ ॥

नोअनमस्कारः कः ? इत्याह—

[1]नोअनमोक्कारो पुण दुनिसेहपगइगमयभावाओ । होइ नमोक्कारो च्चिय, देसनिसेहम्मि तद्देसो ॥२९३७॥

नोअनमस्कारः पुनर्नोशब्दस्य सर्वनिषेधपक्षे नमस्कार एव भवति, द्वयोर्निषेधयोः प्रकृतिगमकभावात् "द्वौ नञौ प्रकृत्यर्थं गमयतः" इति न्यायादित्यर्थः । देशनिषेधवचने तु नोशब्दे तस्य पूर्वोक्तस्वरूपस्य नमस्कारस्यैकदेशः प्रतीयत इति ॥ २९३७ ॥

इह च 'नमस्कारः' 'अनमस्कारः' इत्यादिभङ्गचतुष्टये यदुपचरितं यच्च वास्तवम्, तद् निर्धारयन्नाह—

[2]उवयारदेसणाओ देस पएस त्ति नोनमोक्कारो । नोअनमोक्कारो वा पयइनिसेहाउ सब्भूया ॥ २९३८ ॥

'देस पएस त्ति' इह यथासंख्येन संबन्धः । तृतीयभङ्गे यो देशो नमस्कारैकदेशो 'नोनमोक्कारो त्ति' नोनमस्कार उक्तः, यश्च चतुर्थभङ्गे प्रदेशोऽनमस्कारैकदेशो 'नोअनमोक्कारो त्ति' नोअनमस्कार उक्तः, स उपचारदेशनादिति संबन्धः । औपचारिकत्वं चेह नोनमस्काररूपस्य नोअनमस्काररूपस्य च देशप्रतिषेधवचने नोशब्दे संपूर्णस्य वस्तुनोऽभावादिति । अथ सद्भूतभङ्गकप्रतिपादनार्थमाह— 'पयईत्यादि' प्रकृतिः प्रथमो भङ्गः, निषेधस्तु द्वितीयभङ्गः, एतौ द्वावपि सद्भूतौ निरुपचरितौ, एतद्भङ्गवाच्यस्य नमस्कारानमस्काररूपस्य वस्तुनः संपूर्णस्य सद्भावादिति । तुशब्दादुपरिमावपि द्वौ भङ्गौ सर्वनिषेधवचने नोशब्दे सति सद्भूतावेवेति द्रष्टव्यम्, तद्वाच्यस्यापि नमस्कारानमस्काररूपस्य वस्तुनः संपूर्णस्य सद्भावादिति ॥ २९३८ ॥

अथैतांश्चतुरो भङ्गान् नयैर्निरूपयन्नाह—

[3]सव्वो वि नमोक्कारो अनमोक्कारो य वंजणनयस्स । होउं चउरूवो वि हु सेसाणं सव्वभेया वि ॥२९३९॥

इह शब्दनयास्त्रयोऽपि शुद्धत्वादखण्डं संपूर्णं देश-प्रदेशरहितमेव वस्त्विच्छन्ति । शेषास्तु नैगमादयोऽविशुद्धत्वाद् देश-प्रदेश-

---

१ नोअनमस्कारः पुनर्द्विनिषेधप्रकृतिगमकभावात् । भवति नमस्कार एव देशनिषेधे तद्देशः ॥ २९३७ ॥

२ उपचारदेशनाद् देशः प्रदेश इति नोनमस्कारः । नोअनमस्कारो वा प्रकृति-निषेधौ सद्भूतौ ॥ २९३८ ॥

३ सर्वोऽपि नमस्कारोऽनमस्कारश्च व्यञ्जननयस्य । भूत्वा चतूरूपोऽपि खलु शेषाणां सर्वभेदा अपि ॥ २९३९ ॥

[1]जं दोसवेयणिज्जं समुइण्णं एस भावओ दोसो । वत्थुविकिइस्सहावोऽनिच्छियमप्पीइलिंगो वा ॥२९६८॥

यद् दोषवेदनीयं द्वेषवेदनीयं वा कर्म समुदीर्णमुदयप्राप्तमेष भावदोषो भावद्वेषो वा। अयं च स्वभावस्थस्य वस्तुनः शरीरदेशादेर्विकृतिस्वभावः कार्ये कारणोपचारात् प्रकृत्यन्यथाभावरूपः। तत्र भावदोषोऽनीप्सितलिङ्गोऽनिष्टदुष्टव्रणादिकार्यगम्यः। भावद्वेषस्त्वप्रीतिलिङ्ग इति ॥ २९६८ ॥

अत्र च क्रोध-मानयोः कोऽपि मिश्रपरिणामोऽप्रीतिजातिसामान्यतः संग्रहमतेन द्वेषः, माया-लोभौ तु प्रीतिजातिसामान्यतः स एव रागमिच्छतीति दर्शयन्नाह––

[2]कोहं माणं वाऽपीइजाईओ बेइ संगहो दोसं । माया-लोभे य स पीइजाइसामण्णओ रागं ॥ २९६९ ॥

गतार्था ॥ २९६९ ॥

व्यवहारनयमाश्रित्याह––

[3]मायं पि दोसमिच्छइ ववहारो जं परोवघायाय । नाओवादाणे च्चिय मुच्छा लोभो त्ति तो रागो ॥२९७०॥

न केवलं क्रोध-मानौ, किन्तु मायामपि द्वेषमिच्छति व्यवहारनयः, यस्मादियमपि परोपघाताय परवञ्चनायैव विधीयते। ततो माया द्वेषः, परोपघातहेतुत्वात्, क्रोध-मानवदिति । न्यायेन नीत्या मायामन्तरेणोपादीयत उपार्ज्यत इति न्यायोपादानं तस्मिन् न्यायोपादानेऽपि वित्ते यतो मूर्च्छा भवति, ततस्तदात्मको लोभो रागः। अन्यायोपात्ते तु वित्ते मायादिकषायसंभवेन द्वेष एव स्यादिति न्यायोपादानविशेषणमिति भावः ॥ २९७० ॥

ऋजुसूत्रमताह––

[4]उज्जुसुयमयं कोहो दोसो सेसाणमयमणेगंतो। रागो त्ति व दोसो त्ति व परिणामवसेण उ वसेओ ॥२९७१॥

१ यद् दोषवेदनीयं समुदीर्णमेष भावतो दोषः। वस्तुविकृतिस्वभावोऽनीप्सिता-ऽप्रीतिलिङ्गो वा ॥ २९६८ ॥

२ क्रोधं मानं वाऽप्रीतिजातीयो ब्रवीति संग्रहो दोषम्। माया-लोभौ च स प्रीतिजातिसामान्यतो रागम् ॥ २९६९ ॥

३ मायामपि दोषमिच्छति व्यवहारो यत् परोपघाताय। न्यायोपादानेऽपि मूर्च्छा लोभ इति ततो रागः ॥ २९७० ॥

४ ऋजुश्रुतमतं क्रोधो दोषः शेषाणां मतमनेकान्तः। राग इति वा द्वेष इति वा परिणामवशेन त्ववसेय ॥ २९७१ ॥

रूपमपि मन्यन्त इति । एवं च स्थिते व्यञ्जननयस्य त्रिविधस्यापि शब्दनयस्य भङ्गकप्ररूपणामात्रेण प्रकृत्य-ऽकार-नोकार-तदुभययोगाच्चतूरूपोऽपि नमस्कारो भूत्वा परिशिष्टः सर्वोऽपि नमस्कारोऽनमस्कारश्चेति द्विरूप एवावशिष्यते प्रथम-द्वितीयभङ्गवाच्य एवावतिष्ठते । तृतीय-चतुर्थभङ्गकौ तु तन्मतेन शून्यावेव, तद्वाच्यस्य देशस्य प्रदेशस्य चाऽसत्त्वादिति । शेषाणां तु नैगमादिनयानां सर्वे चत्वारोऽपि भङ्गरूपा भेदाः सद्भूतार्था एव, तन्मतेन देशस्य प्रदेशस्य च सत्त्वादिति । तदेवमुक्ता चतुर्विधापि प्ररूपणा, तद्भणने च गतं सप्रसङ्गं प्ररूपणाद्वारम् ॥ २९३९ ॥

अथ यदुक्तम्– 'वत्थुं तरहंताई पंच भवे तेसिमो हेऊ' इति, तदेतत् प्ररूपणायामसमर्थितायामन्तराले प्रागुपन्यस्तत्वात् सांन्यासिकं कृतमासीत् । तत्रेदानीं प्ररूपणायाः समर्थितत्वाद् यथावसरायातं वस्तुद्वारं विस्तरेण व्याचिख्यासुराह—

[2]वत्थुं अरहा पुज्जा जोग्गा के जे नमोऽभिहाणस्स । संति गुणरासओ ते पंचारुहयाइजाईया ॥ २९४० ॥

वस्तु दालिकम्, अर्हाः पूज्या योग्या नमोऽभिधानस्य के ? इति पृष्टे गुरुराह– ये नमोऽभिधानस्य योग्यास्ते पञ्च सन्तीति संबन्धः। किंविशिष्टास्ते ? गुणराशयो गुणसमूहाः । पुनः किंप्रकाराः ? इत्याह– अर्हदादिजातीया अर्हदादिप्रकाराः– अर्हत्-सिद्धाऽऽचार्यो-पाध्याय-साधव इत्यर्थः । तदेवमत्र वस्त्वर्हदादयो गुणराशयः सन्ति, इति गुण-गुणिनोरभेद उक्तः ॥ २९४० ॥

अथ तयोर्भेदोपचारादिदमाह—

[3]भेओवयारओ वा वसन्ति नाणादओ गुणा जत्थ । तं वत्थुमसाहारणगुणालओ पञ्चजाईयं ॥ २९४१ ॥

सुबोधा, नवरं 'घटे रूपादयः' इत्यादिष्विव गुण-गुणिनोर्भेदोपचारादिदमुच्यते– वसन्ति ज्ञानादयो गुणा यत्र तत् पञ्चप्रकारं वस्त्वस्तीति ॥ २९४१ ॥

अथ तानेव विशेषेणाह—

[4]ते अरिहंता य सिद्धा-यरिओ-वज्झाय-साहवो नेया। जे गुणमयभावाओ गुणा व्व पुज्जा गुणत्थीणं ॥२९४२॥

१ गाथा २९२४ । २ वस्त्वर्हन्त पूज्या योग्या के ये नमोऽभिधानस्य । सन्ति गुणराशयस्ते पञ्चार्हदादिजातीयाः ॥ २९४० ॥
३ भेदोपचारतो वा वसन्ति ज्ञानादयो गुणा यत्र । तद् वस्त्वसाधारणगुणालयं पञ्चजातीयम् ॥ २९४१ ॥
४ तेऽर्हन्तश्च सिद्धा-ऽऽचार्यो-पाध्याय साधवो ज्ञेया । ये गुणमयभावाद् गुणा इव पूज्या गुणार्थिनाम् ॥ २९४२ ॥

ऋजुनयस्येदं मतम्– क्रोधः प्रथमकषायो द्वेषः, अप्रीत्यात्मकत्वात्। शेषाणां तु मान-माया-लोभानां राग-द्वेषत्वविचारं प्रत्येतत् तस्य मतम्; किम्? इत्याह– अनेकान्तोऽनिश्चयः। एतदेव व्याचष्टे– शेषे मानादिकषायत्रयवर्गे कोऽपि रागः, कोऽपि वा द्वेषः, इत्ययं परिणामवशेनैवावसेयो निश्चयो नान्यथेति ॥ २९७१ ॥

कुतः? इत्याह––

[1]संपयगाहि त्ति नओ न उवओगदुगमेगकालम्मि। अप्पीइ-पीइमेत्तोवओगओ तं तहा दिसइ ॥२९७२॥

यतः सांप्रतग्राही वर्तमानैकक्षणवस्तुग्राही तकोऽसौ ऋजुसूत्रः। ततः क्रोध-मानौ द्वेषः, माया-लोभौ तु राग इत्येवमसौ न मन्यते, मानादिक्षणकाले क्रोधादिक्षणाभावात्; तदभावश्च तयोः क्रमभावित्वात्, प्राक्तनस्य चोत्पत्त्यनन्तरमेव विनाशादिति। स एव च मानो द्वेषो भवति, कदा? परगुणेषु यो द्वेषोऽप्रीतिस्तदुपयोगे तदध्यवसायपरिणतिकाल इत्यर्थः। अस्तु वा, क्रोध-मानादीनां समकालभाविता, तथाप्युपयोगद्वयमसावेककालं न मन्यत इति कथं मिश्रकषायद्वयोपयोगाद् द्वेषो रागो वा स्यात्?। एतदेवाह– 'न उवओगदुगमेगकालम्मि त्ति' न च कषायद्वयोपयोगमेककालमसौ मन्यते, येन क्रोध-मानौ द्वेषो माया-लोभौ तु रागः स्यादिति। तर्हि किमसौ मन्यते? इत्याह– 'अप्पीईत्यादि' अप्रीति-प्रीतिमात्रोपयोगतस्तं तं मानादिकषायं तथा तथा व्यपादिशति ॥२९७२॥

एतदेव भावयति–

[2]माणो रागो त्ति मओ साहंकारोवओगकालम्मि। सो च्चिय होइ दोसो परगुणदोसोवओगम्मि ॥२९७३॥

माया लोभो चेवं परोवघाओवओगओ दोसो। मुच्छोवओगकाले रागोऽभिस्संगलिंगो त्ति ॥ २९७४ ॥

व्याख्या– मानो राग इति ऋजुसूत्रस्य संमतः। क? साहंकारोपयोगकाले– स्वस्मिन्नात्मनि 'अहो अहम्' 'नमो मह्यम्' इत्येवं योऽसावहङ्कारो निजगुणेषु बहुमानोऽभिष्वङ्गस्तदुपयोगकाले तदुपयोगसमय इत्यर्थः, एवं परोपघाताय व्याप्रियमाणौ माया-लोभौ द्वेषः, स्वशरीर-स्वधन-स्वजनादिषु मूर्च्छोपयोगकाले तु तावेव रागः। कुतः? इत्याह– अभिष्वङ्गलिङ्ग इति कृत्वा। अभिष्वङ्गो हि रागः, यश्च स्वस-

१ साम्प्रतग्राहीति नयो नोपयोगद्विकमेककाले। अप्रीति-प्रीतिमात्रोपयोगतस्तं तथा दिशति ॥ २९७२ ॥
२ मानो राग इति मतः साहंकारोपयोगकाले। स एव भवति दोष परगुणदोषोपयोगे ॥ २९७३ ॥
माया लोभश्चैव परोपघातोपयोगतो दोष.। मूर्च्छोपयोगकाले रागोऽभिष्वङ्गलिङ्ग इति ॥ २९७४ ॥

न य एगो सव्वगओ निक्किरिओ लक्खणाइभेआओ । कुंभादउ व्व बहवो पडिवज्ज तमिंदभूइ व्व ॥ ६ ॥
इहलोगाओ य परो सोम्म ! सुरा नारगा य परलोओ । पडिवज्ज मोरिआ-ऽकंपिउ व्व विहियप्पमाणाओ ॥७॥
जीवो विण्णाणमओ तं चाणिच्चं ति तो न परलोगो । अह विण्णाणादण्णो तो अणभिण्णो जहागासं ॥ ८ ॥
इत्तो च्चिय न स कत्ता भोत्ता य अओ वि नत्थि परलोगो । जं च न संसारी सो अण्णाणा-ऽमुत्तिओ खं व ॥९॥
मन्नसि विणासि चेओ उप्पत्तिमदादिओ जहा कुंभो । नणु एयं चिय साहणमविणासित्ते वि से सोम्म ! ॥१०॥
अहवा वत्थुत्तणओ विणासि चेओ न होइ कुंभो व्व । उप्पत्तिमदादित्ते कहमविणासी घडो, बुद्धी ? ॥ ११ ॥
रूव-रस-गंध-फासा संखा-संठाण-दव्व-सत्तीओ । कुंभो त्ति जओ तओ पसूइ-विच्छित्ति-धुवधम्मा ॥ १२ ॥
इह पिण्डो पिण्डागार-सत्तिपज्जायविलयसमकालं । उप्पज्जइ कुंभागार-सत्तिपज्जायरूवेण ॥ १३ ॥
रूवाइं दव्वयाए न जाइ न य वेइ तेण सो निच्चो । एवं उप्पाय-व्वय-धुवस्सहावं मयं सव्वं ॥ १४ ॥
घडचेयणया नासो पडचेयणया समुब्भवो समयं । संताणेणावत्था तहेह-परलोअ-जीवाणं ॥ १५ ॥
मणुएहलोगनासो सुराइपरलोगसंभवो समयं । जीवतयाऽवत्थाणं नेहभवो [2]नेय परलोओ ॥ १६ ॥
असओ नत्थि पसूई, होज्ज व जइ, होउ खरविसाणस्स । न य सव्वहा विणासो सव्वुच्छेयप्पसंगाओ ॥१७॥
तोऽवत्थियस्स केणवि विलओ धम्मेण भवणमन्नेण । सव्वुच्छेओ न मओ संववहारोवरोहाओ ॥ १८ ॥
असइ व परम्मि लोए जमग्गिहोत्ताइं सग्गकामस्स । तदसंबद्धं सव्वं दाणाइफलं च [3]लोअम्मि ॥ १९ ॥

**छिन्नम्मि संसयम्मी जिणेण जर-मरणविप्पमुक्केणं ।**
**सो समणो पव्वइओ तिहिं ओ सह खण्डियसएहिं ॥ १८० ॥**

१ 'एव चि' । २ 'नेह प' । ३ 'लोयम्मि' । ४ 'यम्मि अ जि' ।

ते पव्वइए सोउं पहासो आगच्छई जिणसयासं ।
वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ १८१ ॥
आभट्ठो य जिणेणं जाइ-जरा-मरणविप्पमुक्केणं ।
नामेण य गोत्तेण य सव्वण्णू सव्वदरिसी णं ॥ १८२ ॥
किं मन्ने निव्वाणं अत्थि नत्थि त्ति संसओ तुज्झ ।
वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥ १८३ ॥

मन्नसि किं दीवस्स व नासो निव्वाणमस्स जीवस्स । दुक्खक्खयाइरूवा किं होज्ज व से सओऽवत्था ॥ १ ॥
अहवाऽणाइत्तणओ खस्स व किं कम्म-जीवजोगस्स । अविओगाओ न भवे संसाराभाव एव त्ति ? ॥ २ ॥
पडिवज्ज मण्डिओ इव वियोगमिह कम्म-जीवजोगस्स । तमणाइणो वि कंचण-धाऊण व णाण-किरियाहिं॥३॥
जं नारगाइभावो संसारो नारगाइभिण्णो य । को जीवो तं मन्नसि तन्नासे जीवनासो त्ति ॥ ४ ॥
न हि नारगाइपज्जायमेत्तनासम्मि सव्वहा नासो । जीवद्दव्वस्स मओ मुद्दानासे व हेमस्स ॥ ५ ॥
कम्मकओ संसारो तन्नासे तस्स जुज्जए नासो । जीवत्तमकम्मकयं तन्नासे तस्स को नासो ? ॥ ६ ॥
न विगाराणुवलंभादागासं पिव विणासधम्मो सो । इह नासिणो विगारो दीसइ कुंभस्स वाऽवयवा ॥ ७ ॥
कालंतरनासी वा घडो व्व कयगाइओ मई होज्जा । नो पद्धंसाभावो भुवि तद्धम्मा वि जं निच्चो ॥ ८ ॥
अणुदाहरणमभावो खरसंगं पिव मई न तं जम्हा । कुंभविणासविसिट्ठो भावो च्चिय पोग्गलमओ सो ॥ ९ ॥
किंवेगंतेण कयं पोग्गलमेत्तविलयम्मि जीवस्स । किं निव्वत्तियमहियं नभसो घडमेत्तविलयम्मि ? ॥ १० ॥

रीरादिषु मूर्च्छोपयोगः स व्यक्तोऽभिष्वङ्ग इति युक्तमस्य रागत्वमिति भावः ॥ २९७३ ॥ २९७४ ॥

अथ शब्दादिनयत्रयमतमाह—

सद्दाइमयं माणे मायाए चियं गुणोवगाराय । उवओगो लोभो च्चिय जओ स तत्थेव अवरुद्धो ॥२९७५॥

सेसंसा कोहो वि य परोवघायमइय त्ति तो दोसो । तल्लक्खणो य लोभो अह मुच्छा केवलो रागो ॥२९७६॥

मुच्छाणुरंजणं वा रागो संदूसणं ति तो दोसो । सद्दस्स व भयणेयं इयरे एक्केक्कट्ठियपक्खा ॥ २९७७ ॥

व्याख्या–शब्दादिनयानामिदं मतम्– माने मायायां च स्वगुणोपकाराय आत्मन उपकाराय व्याप्रियमाणायां य उपयोगः स लोभ एव, यतः स स्वगुणोपकारोपयोगः स्वात्मनि मूर्च्छात्मकत्वात् तत्रैव लोभेऽवरुद्धोऽन्तर्भूतः । तथा च सति स मान-माययोः स्वगुणोपकारोपयोगः स्वात्मनि मूर्च्छात्मकत्वाल्लोभ इव राग इत्यभिप्रायः । शेषास्तु परोपघातोपयोगरूपा मान-माययोरंशाः, क्रोधश्च सर्वः, एते सर्वे परोपघातमयास्ततो द्वेष इति मन्तव्याः । न केवलमेते तथा लोभोऽपि द्वेषः । किं सर्वः ? । नेत्याह– यतस्तल्लक्षणः– परोपघातोपयोगरूपः । अथ परानुपघातोपयोगरूपो मूर्च्छोपयोगात्मको लोभः पृच्छ्यते तत्राह– केवलो राग एवासाविति । अथवा, किं बहुनोक्तेन ?, संक्षिप्य ब्रूमः । किम् ? इत्याह–'मुच्छेत्यादि' इह सर्वेष्वपि क्रोधव्यतिरिक्तेषु मान-माया-लोभकषायेषु यद् मूर्च्छात्मकमनुरञ्जनं यः कश्चिद् मूर्च्छोपयोग इत्यर्थः स रागो मन्तव्यः । अथ संदूषणममीत्युपयोगस्ततोऽसौ द्वेषो ज्ञातव्यः । शब्दनयस्येयं भजना विकल्पना । वाशब्दादृजुसूत्रस्य च । शेषौ तु संग्रह-व्यवहारनयौ, नैगमस्यानयोरेवान्तर्भावात्, एकैकस्थितपक्षौ– एकैकः स्थितो नियमितः पक्षो ययोस्तावेकैकस्थितपक्षौ; तथाहि– संग्रहनयः क्रोध-मानौ द्वेषमेवेच्छति, माया-लोभौ तु रागम् । व्यवहारनयोऽपि लोभं रागमेव मन्यते, शेषकषायत्रयं तु द्वेषमेवेति । अतः शब्दादिनया भजनाभ्युपगमपरत्वादेकैकास्थितपक्षवादिभ्यां ताभ्यां भिन्ना इति ॥ तदेवं व्याख्यातौ राग-द्वेषौ ॥ २९७५॥२९७६॥२९७७ ॥

अथ कषायान् व्याचिख्यासुराह—

---

१ शब्दादिमतं माने मायायामेव गुणोपकाराय । उपयोगो लोभ एव यत स तत्रैवावरुद्धः ॥ २९७५ ॥
शेषांशा क्रोधोऽपि च परोपघातमय इति ततो दोषः । तल्लक्षणश्च लोभोऽथ मूर्छा केवलो रागः ॥ २९७६ ॥
मूर्च्छानुरञ्जनं वा राग संदूषणमिति ततो दोष. । शब्दस्य वा भजनेयमितर एकैकस्थितपक्षौ ॥ २९७७ ॥

[1]एगम्मि वि जम्मि पए संवेगं कुणइ वीयरायमए। तं तस्स होइ नाणं जेण विरागत्तणमुवेइ ॥ ३०२० ॥

एकम्मि वि जम्मि पए संवेगं कुणइ वीयरायमए। सो तेण मोहजालं छिंदइ अज्झप्पओगेणं ॥ ३०२१ ॥

ववहाराओ मरणे तं पयमेक्कं मयं नमुक्कारो। अन्नं पि निच्छयाओ तं चेव य बारसंगत्थो ॥ ३०२२ ॥

गतार्था एव, नवरं किं पुनः प्रस्तुते तदेकं पदम्? इत्याह– 'ववहाराउ इत्यादि' यथा लोकव्यवहारे 'सांप्रतमल्पस्तन्दुलः, प्रचुरो गोधूमः, संपन्नो यवः' इत्यादावनेकमप्येकमुच्यते, तथा मरणसमये क्रियमाणः 'पंच नमोक्कारो' अनेकपदात्मकोऽपि व्यवहारत एकं पदमात्रमभिमतः। निश्चयनयमतेन तदन्यदपि सुबन्तं तिङन्तं वा लघ्वपि यत् संवेगकरं निर्जराफलं पदं तदेतद् द्वादशाङ्गार्थ इति ॥ ३०२० ॥ ३०२१ ॥ ३०२२ ॥

यदुक्तं निर्युक्तिकृता– 'अभिक्खणं कीरई बहुसो' इति। तत्र किं कारणम्? इत्याशङ्क्याह—

[3]जं सोऽतिनिज्जरत्थो पिंडयत्थो वन्निओ महत्थो वि। कीरइ निरंतरमभिक्खणं तु बहुसो बहुवारा ॥३०२३॥

यद् यस्मादसौ नमस्कारोऽतिनिर्जरार्थः, तथा द्वादशाङ्गगणिपिटकार्थो महार्थश्चोक्तप्रकारेण वर्णितः, तस्मादभीक्ष्णं निरन्तरं बहुशो बह्व्यो वाराः क्रियते ॥ इति गाथाष्टकार्थः ॥ ३०२३ ॥

अथ निर्युक्तिकृदुपसंहरन्नाह—

[4]अरहंतनमोक्कारो सव्वपावप्पणासणो। मंगलाणं च सव्वेसिं पढमं होइ मंगलं ॥ ३०२४ ॥

अत्र 'सव्वपावप्पणासणो' इत्यस्य व्याख्यानमाह—

---

१ एकस्मिन्नपि यस्मिन् पदे संवेगं करोति वीतरागमते। तत् तस्य भवति ज्ञानं येन विरागत्वमुपैति ॥ ३०२० ॥
एकस्मिन्नपि यस्मिन् पदे संवेगं करोति वीतरागमते। स तेन मोहजालं छिनत्त्यध्यात्मयोगेन ॥ ३०२१ ॥
व्यवहाराद् मरणे तत् पदमेकं मतं नमस्कारः। अन्यदपि निश्चयात् तदेव च द्वादशाङ्गार्थः ॥ ३०२२ ॥ २ गाथा ३०१५।

३ यत् सोऽतिनिर्जरार्थः पिण्डकार्थो वर्णितो महार्थोऽपि। क्रियते निरन्तरमभीक्ष्णं तु बहुशो बहुवारान् ॥ ३०२३ ॥

४ अर्हन्नमस्कारः सर्वपापप्रणाशनः। मङ्गलानां च सर्वेषां प्रथमं भवति मङ्गलम् ॥ ३०२४ ॥

[1]कम्मं कस भवो वा कसमाओ सिं जओ कसाया तो। कसमाययंति व जओ गमयंति कसं कसाय त्ति ॥२९७८॥

आउ व उवायाणं तेण कसाया जओ कसस्साया। जीवपरिणामरूवा जेण उ नामाइनियमोऽयं ॥२९७९॥

व्याख्या– 'कष शिष' इत्यादिर्हिंसार्थो दण्डकधातुः, कष्यन्ते बाध्यन्ते प्राणिनोऽनेनेति कषं कर्म भवो वा, तदायो लाभ एषां यतस्ततः कषायाः क्रोधादयः। अथवा, यथोक्तं कषमयधातोरिनन्तस्यायन्ति गमयन्ति प्रापयन्ति यतस्ततः कषाया इति। अथवा, आय उपादानं हेतुः, पूर्वोक्तस्य कषस्याया उपादानहेतवो यस्मात् ततः कषायाः, ते तु जीवपरिणामरूपाः क्रोधादयस्तेषां च कषायाणां सामान्येन येन यस्माद् नामादिकोऽष्टविधत्वानियमोऽयमन्यत्र प्रसिद्धस्तेनासौ 'उच्यते' इति शेषः ॥ २९७८ ॥ २९७९ ॥

कः? इत्याह—

[2]नामं ठवणा दविए उप्पत्ती पच्चए य आएसे। रस-भाव-कसाए वि य परूपणा तेसिमा होइ ॥२९८०॥

अत्र नाम-स्थापने क्षुण्णे। द्रव्यकषायविचारोऽपि सुकरः, नवरं ज्ञ-भव्यशरीरव्यतिरिक्तद्रव्यकषायमाह—

[3]दुविहो दव्वकसाओ कम्मदव्वे य नो य कम्मम्मि। कम्मदव्वकसाओ चउव्विहा पोग्गलाणुइया ॥२९८१॥

ज्ञ-भव्यशरीरव्यतिरिक्तो द्विविधो द्रव्यकषायः– कर्मद्रव्यकषायः, नोकर्मद्रव्यकषायश्च। तत्र कर्मद्रव्यकषायः '[4]जुग्गा बद्धा बज्झंतगा य' इत्यादिना प्रागुक्ता अनुदिताश्चतुर्विधाः पुद्गला ज्ञातव्याः ॥ २९८१ ॥

नोकर्मद्रव्यकषायमुत्पत्तिकषायं चाह—

[5]सज्जकसायाइओ नोकम्मदव्वओ कसाओऽयं। खेत्ताइ सम्मुप्पत्ती जत्तो प्पभवो कसायाणं ॥ २९८२ ॥

---

1 कर्म कष भवो वा कषमाय एषा यत. कषायास्ततः। कषमाययन्ति वा यतो गमयन्ति कषं कषाया इति ॥ २९७८ ॥ आयो वोपादान तेन कषाया यत. कषस्यायाः। जीवपरिणामरूपा येन तु नामादिनियमोऽयम् ॥ २९७९ ॥

2 नाम स्थापना द्रव्ये उत्पत्तिः प्रत्ययश्चादेशः। रस-भाव कषाया अपि च प्ररूपणा तेषामिय भवति ॥ २९८० ॥

3 द्विविधो द्रव्यकषाय. कर्मद्रव्ये च नोकर्मद्रव्ये। कर्मद्रव्यकषायश्चतुर्विधा पुद्गला अनुदिता ॥ २९८१ ॥ 4 गाथा २९६२।

5 सर्जकषायादिको नोकर्मद्रव्यतः कषायोऽयम्। क्षेत्रादि समुत्पत्तिर्यत. प्रभवः कषायाणाम् ॥ २९८२ ॥

[1]पंसेइ पिबइ व हियं पाइ भवे वा जियं तओ पावं । तं सव्वमट्ठसामन्नजाइभेयं पणासेइ ॥ ३०२५ ॥

पांशयति मलिनयति जीवमिति पापम्, पिबति वा हितमिति पापम्, पाति वा भव एव रक्षति जीवं, न पुनस्तस्माद् निःसर्तुं ददातीति पापम्; तच्च सर्वं कर्मेहाभिमेतम् । कथंभूतम्? इत्याह– 'अट्ठसामन्नजाइभेयं ति' अष्टौ सामान्येन ज्ञानावरणीयादयो जातिभेदा यस्य तदष्टसामान्यजातिभेदं मणाशयत्युच्छेदयतीति सर्वपापमणाशन इति ॥ ३०२५ ॥

'[2]मंगलाणं च सव्वेसिं' इत्यादेर्व्याख्यानमाह—

[3]नामाइमंगलाणं पढमं ति पहाणमहव पंचण्हं । पढमं पहाणतरयं व मंगलं पुव्वभणियत्थं ॥ ३०२६ ॥

अर्हन्नमस्कारलक्षणं मङ्गलं नाम-स्थापनादिमङ्गलानां मध्ये मथमं प्रधानम्, मोक्षलक्षणमधानपुरुषार्थसाधकत्वात् । अथवा, मस्तुतानामेव पञ्चानामर्हत्-सिद्धादिभावमङ्गलानामेतत् मथममाद्यम्, आदावेव निर्दिष्टत्वात् । अथवा, मधानतरं मथमम्, सिद्धाद्यपेक्षयाऽर्हतां मधानतरपरोपकारार्थसाधकत्वादिति । '[4]मंगालयइ भवाओ' इत्यादिना च मङ्गलं पूर्वभणितशब्दार्थमेव ॥ इति गाथात्रयार्थः ॥ ३०२६ ॥

॥ इत्यर्हन्नमस्कारः समाप्तः ॥

अथ सिद्धनमस्कारं व्याचिख्यासुराह—

[5]सिद्धो जो निप्फन्नो जेण गुणेण स य चोद्दसाविगप्पो । नेओ नामाईओ ओयणासिद्धाइओ दव्वे ॥ ३०२७ ॥

इह 'सिद्धः' इति कोऽर्थः? । उच्यते– 'षिध संराद्धौ' 'राध साध संसिद्धौ' 'षिधू शास्त्रे माङ्गल्ये च' सिध्यति स्म सिद्धो यो येन गुणेन निष्पन्नः परिनिष्ठितः, न पुनः साधनीय इत्यर्थः । स च सिद्धः सामान्यतो नामसिद्धादिभेदाच्चतुर्दशविधो ज्ञेयः । तत्र नाम-स्थापनासिद्धौ सुगमौ । द्रव्यासिद्धस्तु सिद्धो निष्पन्न ओदनः, आदिशब्दात् पाकोत्तीर्णघटादिर्गृह्यते, अस्यौदनादेर्निष्पन्नत्वगुणेन परिनिष्ठितत्वात्, अप्रधानत्वेन च द्रव्यत्वात् ॥ इति गाथार्थः ॥ ३०२७ ॥

---

1 पांशयति पिबति वा हितं पाति भवे वा जीवं तत पापम् । तत् सर्वमष्टसामान्यजातिभेदं प्रणाशयति ॥ ३०२५ ॥ 2 गाथा ३०२४ ।
3 नामादिमङ्गलानां प्रथममिति प्रधानमथवा पञ्चानाम् । प्रथमं प्रधानतरक वा मङ्गलं पूर्वभणितार्थम् ॥ ३०२६ ॥ 4 गाथा २४ ।
5 सिद्धो यो निष्पन्नो येन गुणेन स च चतुर्दशविकल्प. । ज्ञेयो नामादिक ओदनसिद्धादिको द्रव्ये ॥ ३०२७ ॥

नोकर्मद्रव्यतोऽयं कषायः। कः ? इत्याह– सर्जकषायादिकः सर्ज-बिभीतक-हरीतक्यादयो वनस्पतिविशेषा नोकर्मद्रव्यकषया इत्यर्थः। क्षेत्रादिकं वस्तु 'समुप्पत्ति त्ति' उत्पत्तिकषायः। किं सर्वम् ? नेत्याह– यतः क्षेत्रादेः कषायाणां प्रभवः। इदमुक्तं भवति– यतः क्षेत्रादादिशब्दाद् द्रव्यादेर्वा सकाशात् कषायोत्पत्तिर्भवति तत् क्षेत्रद्रव्यादिकं वस्तु कषायोत्पत्तिहेतुत्वादुत्पत्तिकषाय उच्यते। भवति च द्रव्यादेः सकाशात् कषायोत्पत्तिः; उक्तं च—

"[1]किं एत्तो कट्ठयरं जं मूढो खाणुगम्मि अप्फडिओ। खाणुस्स तस्स रूसइ न अप्पणो दुप्पओगस्स ॥ १ ॥"

इति ॥ २९८२ ॥

प्रत्ययकषायमाह—

[2]होइ कसायाणं बंधकारणं जं स पच्चयकसाओ। सद्दाइउ त्ति केई न समुप्पत्तीए भिन्नो सो ॥ २९८३॥

कषायाणां यदन्तरङ्गमविरत्या-ऽऽस्रवादिकं बन्धकारणं सोऽन्तरङ्गकषायकारणरूपः प्रत्ययकषायो भवति। अन्ये तु केचिद् बहिरङ्ग एव शब्द-रूपादिविषयग्रामः प्रत्ययकषाय इति व्याचक्षते। तच्चायुक्तम्, यत उत्पत्तिकषायान्नासौ भिद्यते, द्रव्यादेरिव तस्मादपि बहिरङ्गात् कषायोत्पत्तेरिति ॥ २९८३ ॥

आदेशकषायमाह–

[3]आएसओ कसाओ कइयवकयभिउडीभंगुरागारो। केई चित्ताइगओ ठवणाणत्थंतरो सोऽयं ॥ २९८४ ॥

योऽन्तरङ्गकषायमन्तरेणापि 'कुपितोऽयम्' इत्यादिरूपेणादिश्यते स आदेशकषायः। स चेह कैतवकृतभ्रुकुटिभङ्गुराकारो नटादिर्द्रष्टव्यः। केचित् 'तद्रूपधरश्चित्रादिगतो जीव आदेशकषायः' इति व्याचक्षते। तच्चायुक्तम्, स्थापनानर्थान्तरत्वात् तस्येति ॥ २९८४ ॥

रस-भावकषायावाह—

१ किमितः कष्टतरं यद् मूढः स्थाणुक आस्फालितः। स्थाणवे रुष्यति नात्मनो दुष्प्रयोगस्य ॥ १ ॥
२ भवति कषायाणां बन्धकारणं यत् स प्रत्ययकषायः। शब्दादिक इति केचित् न समुत्पत्तेर्भिन्न स ॥ २९८३ ॥
३ आदेशतः कषायः कैतवकृतभ्रुकुटिभङ्गुराकार.। केचिच्चित्रादिगतः स्थापनानर्थान्तरः सोऽयम् ॥ २९८४॥

शेषानेकादशसिद्धभेदानाह—

कम्मे सिप्पे य विज्जाए मंते जोगे य आगमे । अत्थ-जत्ता-अभिप्पाए तवे कम्मक्खए इय ॥ ३०२८ ॥

कर्मसिद्ध-शिल्पसिद्धौ, विद्यासिद्धः, मन्त्रसिद्धः योगसिद्धः, आगमसिद्धः, अर्थसिद्धः, यात्रासिद्धः, अभिप्रायो बुद्धिपर्यायस्ततो बुद्धिसिद्धः, तपःसिद्धः, कर्मक्षयसिद्धः ॥ इति निर्युक्तिश्लोकसमासार्थः ॥ ३०२८ ॥

एतेषां च कर्मादिसिद्धानां स्वरूपप्रतिपादनपराः 'कम्मं जमणाईओ' इत्यादिकाः 'न किलम्मइ जो तवसा' इतिगाथापर्यन्ता एकचत्वारिंशद् गाथाः सकथानकभावार्था मूलावश्यकटीकातोऽवसेया इति ॥

अथ कर्मक्षयसिद्धमेव प्रपञ्चतो निरुक्तविधिना प्रतिपादयन्नाह—

दीहकालरयं जं-तु-कम्मं से-सियमट्ठहा । सियं धंतं ति सिद्धस्स सिद्धत्तमुवजायइ ॥ ३०२९ ॥

व्याख्या– दीर्घः संतानापेक्षयाऽनादित्वात् स्थितिबन्धकालो यस्य तद् दीर्घकालम्, निसर्गनिर्मलजीवस्यानुरञ्जनाद् मालिन्यापादनाद् रजः, अथवा, स्नेहेन बन्धनयोग्यं भवतीति साम्याद् रजः, सूक्ष्मत्वसाम्याद् वा रज इति कर्मण एव विशेषणम्, दीर्घकालं च तद् रजश्चेति दीर्घकालरजः; 'जं तु कम्मं ति' दीर्घकालरजोरूपं यत् कर्म दीर्घकालस्थितिकं रजोरूपं यत् कर्मेत्यर्थः; एतच्चैवंविधं कर्म, तुशब्दस्य विशेषणार्थत्वादत्र भव्यस्य संबन्धि गृह्यते, नाभव्यस्य, तस्य वक्ष्यमाणध्मातत्वायोगात् । अथवा, भव्यसंबन्धित्वमिह कर्मणो ध्मातत्वसामर्थ्यादेव लभ्यते । यच्छब्दोऽपि साक्षादुपात्ते कर्मणि न तथाविधं साफल्यमनुभवतिः अतः 'जंतुकम्मं' इत्येतदन्यथा व्याख्यायते– जन्तुर्जीवस्तस्य कर्म जन्तुकर्म । अनेनावद्धकर्मव्यवच्छेदमाह– बद्धं यत् कर्मेत्यर्थः । कथंभूतं यत् कर्म जन्तुकर्म वा ? इत्याह–'से सियमट्ठह त्ति' ज्ञानावरणाद्यष्टप्रकारैः पूर्वं 'से' तस्य सितं बद्धमित्यर्थः । अथवा, 'से सियं ति' अनाभोगनिर्वर्तितयथाप्रवृत्तकरणेन सम्यग्ज्ञानाद्युपायतश्च क्रमेण शेषितं शेषं कृतं स्थित्य-ऽनुभवादिभिरल्पीकृतमित्यर्थः । तद् दीर्घकालस्थितिकं रजोरूपं भव्यस्य संबन्धि यत्कर्म जन्तुकर्म वा पूर्वमष्टधा बद्धं तत् क्रमेण शेषितं सत् किम् ? इत्याह–'सियं धंतं ति त्ति' सितमित्थं बद्धं ध्मातं तीव्रध्यानानलेन दग्धं क्षपितं महाग्निना लोहमलवदस्येति सिद्ध इति निरुक्तिः । एवं च कर्मदहना-

१ कर्मणि, शिल्पे च विद्यायां मन्त्रे योगे चागमे । अर्थ-यात्रा-ऽभिप्रायेषु तपसि कर्मक्षय इति ॥ ३०२८ ॥

२ दीर्घकालरजो यत्तु कर्म तस्य सितमष्टधा । सितं ध्मातमिति सिद्धस्य सिद्धत्वमुपजायते ॥ ३०२९ ॥

[1]रसओ रसो कसाओ कसायकम्मोदओ य भावम्मि । सो कोहाइ चउद्धा नामाइ चउव्विहेक्केक्को ॥२९८५॥

हरीतक्यादीनां यो रसः स रसतः कषायो रसकषायः । भावकषायस्तु मोहनीयकर्मोदयः , तज्जनितश्च कषायपरिणामः । स च क्रोधादिभेदाच्चतुर्धा । क्रोधादिरपि प्रत्येकं नामादिभेदाच्चतुर्विध इति ॥ २९८५ ॥

अथ नामादिकषायाणां को नयः कमिच्छति? इत्याह—

[2]भावं सद्दाइनया अट्ठविहमसुद्धनेगमाईया । आएसुप्पत्तीओ सेसा जं पच्चयविगप्पा ॥ २९८६ ॥

भावकषायमेव शुद्धत्वात् शब्दनया इच्छन्ति, न नामादिकषायान् । शेषास्तु ऋजुसूत्रवर्जा नैगमादिनयाः द्विधा— शुद्धा अशुद्धाश्च । तत्राविशुद्धा अष्टविधमपि नामादिकषायमिच्छन्ति । ये तु विशुद्धाः, तथा ऋजुसूत्रनयश्चैते सर्वेऽप्यादेशो-त्पत्तिकषायौ नेच्छन्ति । कुतः? इत्याह— 'जं पच्चयविगप्प त्ति' यद् यस्मादेतौ द्वावपि प्रत्ययकषायविकल्पौ प्रत्ययकषायाद् न भिद्येते: तथाहि— उत्पत्तिकषायः कषायो-त्पत्तौ प्रत्यय इत्युक्तमेव; तथा, आदेशकषायोऽपि कैतवकृतोऽप्यन्यकषायोत्पत्तौ प्रत्ययो भवत्येवेति न तस्मात् तौ भिन्नाविति ॥२९८६॥

अथ नामादिके द्रव्यक्रोधे ज्ञशरीर-भव्यशरीरव्यतिरिक्तं द्रव्यक्रोधमाह—

[3]दुविहो व दव्वकोहो कम्मदव्वे य नोयकम्मम्मि । कम्मदव्वे कोहो तज्जोग्गा पोग्गला णुइया ॥ २९८७ ॥

नोकम्मदव्वकोहो नेओ चम्मारनीलिकोहाई । जं कोहवेयणिज्जं समुइण्णं भावकोहो सो ॥ २९८८ ॥

व्याख्या— ज्ञ-भव्यशरीरव्यतिरिक्तः द्रव्यक्रोधो द्विधा— कर्मद्रव्यक्रोधः, नोकर्मद्रव्यक्रोधश्च । तत्र योग्यादयोऽनुदिताश्चतुर्विधाः पुद्गलाः कर्मद्रव्यक्रोधः । नोकर्मद्रव्यक्रोधस्तु 'कोहो त्ति' प्राकृतशब्दमाश्रित्य चर्मकारचर्मकोथो नीलकोथादिश्च ज्ञेयः । भावक्रोधमाह— यत् क्रोधवेदनीयं कर्मविपाकतः समुदीर्णमुदयमागतं तज्जनितश्च क्रोधपरिणामः स भावक्रोध इति । एवं मानादयोऽपि नामादिभेदाद् यथा-योगं चतुर्विधा वाच्याः ॥ २९८७ ॥ २९८८ ॥

---

१ रसतो रस· कषायः कषायकर्मोदयश्च भावे । स क्रोधादिश्चतुर्धा नामादिश्चतुर्विध एकैक ॥ २९८५ ॥

२ भावं शब्दादिनया अष्टविधमशुद्धनैगमादिका· । आदेशोत्पत्ती शेषा यत् प्रत्ययविकल्पौ ॥ २९८६ ॥

३ द्विविधो वा द्रव्यक्रोधः कर्मद्रव्ये च नोकर्मद्रव्ये । कर्मद्रव्ये क्रोधस्तद्योग्या· पुद्गला अनुदिता ॥ २९८७ ॥ नोकर्मद्रव्यक्रोधो ज्ञेयश्चर्मकार-नीलिकोथादि· । यत् क्रोधवेदनीय समुदीर्णं भावक्रोध स. ॥ २९८८ ॥

नन्तरं सिद्धस्यैव सतः सिद्धत्वमुपजायते नासिद्धस्य, 'नेरइएसु उववज्जइ' इत्यादिनिश्चयनयमताश्रयणादिति । उपजायत इति तदात्मनः स्वाभाविकं सत्सिद्धत्वमनादिकर्मावृतं तदावरणविगमेनाविर्भवत्येव, न पुनरसदुपजायत इति प्रतिपत्तव्यम्, असतः खरविषाणस्येव जन्मायोगादिति । अथवा सिद्धस्य सिद्धत्व सद्भावरूपमुपजायते, न तु प्रदीपनिर्वाणकल्पमभावरूपमिति । एवं नयमतान्तरव्यवच्छेदार्थमेतत् । तथा चाहुरेके—

"दीपो यथा निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम् । दिशं न काञ्चिद् विदिशं न काञ्चित् स्नेहक्षयात् केवलमेति शान्तिम् ॥१॥

जीवस्तथा निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम् । दिशं न काञ्चिद् विदिशं न काञ्चित स्नेहक्षयात् केवलमेति शान्तिम् ॥२॥"

इत्यादि । एवंविधासिद्धाभ्युपगमे दीक्षादिप्रयासवैयर्थ्यात्; निरन्वयक्षणभङ्गस्य चाघटमानत्वादिति ।

अथवा 'दीहकालरयं ति' एतदन्यथा व्याख्यायते– रयो वेगश्चेष्टाविशेषः, फलम्, अनुभव इत्यनर्थान्तरम् । ततश्च संतानेनानुभूयमानत्वाद् दीर्घकालोऽनुभवो यस्य तद् दीर्घकालरयं यद् भव्यकर्म जन्तुकर्म वा । तथा 'सेसियं ति' एतदप्यन्यथा व्याख्यायते– लेश्याविशेषाश्लेषितं वह्न्ययोगोलकन्यायाज्जीवेन सह संश्लेषमुपगतम् । अट्ठधा सितमित्यादि तु तथैव ॥ इति निर्युक्तिश्लोकसंक्षेपार्थः ॥ ३०२९ ॥

आह– ननु यच्छेषितं भवोपग्राहि चतुर्विधं कर्म तद् यदि पर्यन्ते समस्थितिकं भवति तदा समकालमेव क्षपयित्वा मोक्षं गच्छतीत्यर्थादवगम्यते; यदा तु विषमस्थितिकं तद् भवति तदा किं करोति? इत्याह—

[1]नाऊण वेयणिज्जं अइबहुयं आउगं च थोवागं । गंतूण समुग्घायं खवेइ कम्मं निरवसेसं ॥ ३०३० ॥

सम्यग्–अपुनर्भावेन, उत्– प्राबल्येन कर्मणां हननं घातः प्रलयो यस्मिन् प्रयत्नविशेषेऽसौ समुद्घातः ॥ ३०३० ॥

तत्स्वरूपमेवाह—

[2]दंड कवाडे मंथंतरे य [3]सोहणया सरीरत्थे । भासाजोगनिरोहे सेलेसी सिज्झणा चेव ॥ ३०३१ ॥

नन्वेवंभूतः समुद्घातगतानां विशिष्टः कर्मक्षयोपशमो भवतीति कोऽत्र हेतुरिति ? । अत्रोच्यते– प्रयत्नविशेषः । किं पुनरत्र

१ ज्ञात्वा वेदनीयमतिबहुकमायुष्कं च स्तोकम् । गत्वा समुद्घातं क्षपयति कर्म निरवशेषम् ॥ ३०३० ॥
२ दण्डे कपाटे मथान्तरे च साधनया शरीरस्थे । भाषायोगनिरोधे शैलेशी सेधना चैव ॥ ३०३१ ॥ ३ क ग. घ 'साहारणा स' ।

अथवा, पृथगनन्तानुबन्ध्यादिभेदात् सर्वेऽपि क्रोधादयश्चतुर्विधा ज्ञेया इति दर्शयन्नाह—

[1]माणादओ वि एवं नामाई चउव्विहा जहाजोग्गं । नेया पिहप्पिहा वा सव्वेऽणंताणुबन्धाई ॥२९८९॥

गतार्था ॥ २९८९ ॥

तत्रानन्तानुबन्ध्य-ऽप्रत्याख्यानावरण-प्रत्याख्यानावरण-संज्वलनस्वरूपाणां क्रोधादीनां पश्चानुपूर्व्या प्रत्येकं स्वरूपमाह—

[2]जल-रेणु-भूमि-पव्वयराईसारिसो चउव्विहो कोहो । तिणिसलया-कट्ठ-ट्ठियसेलत्थंभोवमो माणो ॥२९९०॥

मायावलेहि-गोमुत्ति-मेढसिंग-घणवंसिमूलसमा । लोहो हरिद्द-खंजण-कद्दम-किमिरागसामाणो ॥२९९१॥

पक्ख-चउम्मास-वच्छर-जीवज्जीवाणुगामिणो कमसो। देव-नर-तिरिय-नारयगइसाहणहेयवो नेया ॥२९९२॥

एताः स्थानान्तरेष्वतिमतीतार्थत्वाद् नेह व्याख्यायन्त इति ॥ उक्तं कषायस्वरूपम् ॥ २९९० ॥ २९९१ ॥ २९९२ ॥

अथेन्द्रियस्वरूपं विवरीषुराह—

[3]इंदो जीवो सव्वोवलद्धिभोगपरमेसरत्तणओ । सोत्ताइभेयमिंदियमिह तल्लिंगाइभावाओ ॥ २९९३ ॥

'इदि परमैश्वर्ये' इन्दनात् परमैश्वर्ययोगादिन्द्रो जीवः; परमैश्वर्यमस्य कुतः ? इत्याह– 'सव्वो इत्यादि' आवरणाभावे सर्वस्यापि वस्तुन उपलम्भात्, नानाभवेषु सर्वस्यापि त्रिजगद्गतस्य वस्तुनः परिभोगाच्च परमेश्वरो जीव इति तस्य परमैश्वर्यम् । तस्येन्द्रस्य जावस्य लिङ्गं चिह्नं तेन दृष्टं सृष्टं वा निपातनादिहेन्द्रियमुच्यते, अत एवाह– इन्द्रियमिह तल्लिङ्गादिभावादिति । तच्च श्रोत्रादिभेदं श्रोत्र-नयन-घ्राण-रसन-स्पर्शनभेदात् पञ्चविधमित्यर्थः ॥ २९९३ ॥

तदपि नामादिभेदाच्चतुर्विधमिति दर्शयन्नाह—

---

१ मानादयोऽप्येवं नामादयश्चतुर्विधा यथायोग्यम्। ज्ञेयाः पृथक् पृथग् वा सर्वेऽनन्तानुबन्ध्यादयः ॥ २९८९ ॥

२ जल-रेणु-भूमि-पर्वतराजि (रेखा) सदृशश्चतुर्विधः क्रोधः । तिनिसलता-काष्ठा-ऽस्थिक-शैलस्तम्भोपमो मानः ॥ २९९० ॥
मायावलेखिका-गोमूत्रिका-मेषशृङ्ग-घनवंशीमूलसमा । लोभो हरिद्रा-खञ्जन-कर्दम-कृमिराग-सामानः ॥ २९९१ ॥
पक्ष-चतुर्मास-वत्सर-यावज्जीवानुगामिनः क्रमशः । देव-नर-तिर्यग्-नारकगतिसाधनहेतवो ज्ञेयाः ॥ २९९२ ॥

३ इन्द्रो जीवः सर्वोपलब्धिभोगपरमेश्वरत्वतः । श्रोत्रादिभेदमिन्द्रियमिह तल्लिङ्गादिभावात् ॥ २९९३ ॥

निदर्शनम् ? इत्यत्राह—

[1]जह उल्ला साडीया आसुं सुक्कइ विरल्लिया संती । तह कम्मलहुयसमए वच्चंति जिणा समुग्घायं॥३०३२॥

एता अपि तिस्रो निर्युक्तिगाथाः ॥ ३०३२ ॥

अथ '[2]दीहकालरयं' इत्यादेर्भाष्यकारो व्याख्यामाह—

[3]संताणओ अणाई दीहो ठिइकाल एव बंधाओ । जीवाणुरंजणाओ रउ त्ति जोगो त्ति सुहुमो वा ॥३०३३॥

सो जस्स दीहकालो कम्मं तं दीहकालरयमुत्तं । अइदीहकालरंजणमहवा चेट्ठाविसेसत्थं ॥ ३०३४ ॥

व्याख्या– 'बंधाउ त्ति' बन्धमाश्रित्य संतानतः संतानभावेनानादित्वाद् दीर्घः स्थितेः कालो यस्य तद् दीर्घकालम्, जीवस्यानुरञ्जनाद् मालिन्यापादनाद् रजः, अथवा 'जोगो त्ति' स्नेहेन वन्धनयोग्यो भवतीति साम्याद् रजः; अथवा, 'सुहुमो त्ति' सूक्ष्मत्वसाम्याद् रजः कर्म भण्यते, 'सो जस्स' इत्यादिना समासः, स च विहित एव । किमुक्तं भवति ? इत्याह– अइदीहेत्यादि' अतिदीर्घकालं जीवस्य रञ्जनं मालिन्यापादनं रज इति । अथवा, रय इत्येतत् पदं चेष्टाविशेषार्थम् । ततश्च दीर्घकालो रयो वेगश्चेष्टाविशेषो जीवेऽनुभवो यस्य तद् दीर्घकालरयमित्यर्थः ॥ ३०३३ ॥ ३०३४ ॥

किं पुनस्तत् ? इत्याशङ्क्य 'जंतुकम्मं' इत्यस्य व्याख्यानमाह—

[4]जं कम्मं ति तुसद्दो विसेसणे पूरणेऽहवा जीवो । जंतु त्ति, तस्स जंतो कम्मं से जं सियं बद्धं ॥३०३५॥

यद् दीर्घकालरजोरूपं दीर्घकालरयं वा कर्मेति। तुशब्दो विशेषणे । तेन विशेषतो भव्यस्य संबन्धि तद् गृह्यते । अथ ध्मातत्वप्रस्तावादेव भव्यसंबन्धित्वं कर्मणो लभ्यते, तर्हि पूरयतीति पूरणस्तुशब्दः पूरणार्थः । अथवा, जीवो जन्तुस्तस्य जन्तोः कर्म जन्तुकर्मेत्येवं व्याख्यायते । '[2]से-सियं' इत्यस्य व्याख्यामाह– 'से' तस्य जीवस्य यत् सितं बद्धं, 'षिञ् वन्धने' इत्यस्य धातोर्निष्ठान्तस्य

१ यथाऽऽर्द्रा शाटिकाऽऽशु शुष्यति वितता सती । तथा कर्मलघुतासमये व्रजन्ति जिनाः समुद्घातम् ॥ ३०३२ ॥ २ गाथा ३०२९ ।

३ सन्तानतोऽनादिर्दीर्घं स्थितिकाल एव बन्धात् । जीवानुरञ्जनाद् रज इति योग इति सूक्ष्मो वा ॥ ३०३३ ॥
स यस्य दीर्घकालः कर्म तद् दीर्घकालरज उक्तम् । अतिदीर्घकालरञ्जनमथवा चेष्टाविशेषार्थम् ॥ ३०३४ ॥

४ यत् कर्मेति तुशब्दो विशेषणे पूरणेऽथवा जीवः । जन्तुरिति, तस्य जन्तोः कर्म तस्य यत् सितं बद्धम् ॥ ३०३५ ॥

[1]तं नामाइ चउद्धा दव्वं निव्वित्ति उवगरणं व । आगारो निव्वित्ति चित्ता बज्झा इमा अंतो ॥२९९४॥
पुप्फं फलंबुयाए-धन्नमसूराइमुत्तचंदो य । होइ खुरप्पो नाणागिई य सोइंदियाईणं ॥ २९९५ ॥
विसयग्गहणसमत्थं उवगरणं इदियंतरं तंपि । जं नेह तदुवघाए गिण्हइ निव्वत्तिभावे वि ॥ २९९६ ॥

व्याख्या– तद् नामेन्द्रियं स्थापनेन्द्रियमित्यादिभेदाच्चतुर्धा । तत्र ज्ञ-भव्यशरीरव्यतिरिक्तं द्रव्यं द्रव्येन्द्रियं निर्वृत्तिरुपकरणं चेति द्विभेदम् । तत्र कर्णशष्कुलिकादिराकारो निर्वृत्तिरुच्यते । सापि बाह्या-ऽऽन्तरभेदात् पुनरपि द्विभेदा । तत्र बाह्या निर्वृत्तिश्चित्रा नानाप्रकारा मनुष्याऽ-श्व-शशकादेः कस्यापि कीदृक्स्वरूपेत्यर्थः । अन्तर्निर्वृत्तिस्त्वियम्; का ? इत्याह– 'पुप्फमित्यादि' श्रोत्रस्यान्तर्निर्वृत्तिः कदम्बपुष्पाकारमांसगोलकरूपा द्रष्टव्या, चक्षुषस्तु धान्यमसूराकारा, घ्राणस्यातिमुक्तककुसुमचन्द्रकाकारा, रसनस्य क्षुरप्राकारा, स्पर्शनं तु नानाकृति द्रष्टव्यमिति। एष श्रोत्रादीनां तन्निर्वृत्तेराकार इति । तस्या एव कदम्बपुष्पाकृतिमांसगोलकरूपायाः श्रोत्राद्यन्तर्निर्वृत्तेर्यद् विषयग्रहणसमर्थं शक्तिरूपमुपकरणं तदुपकरणं द्रव्येन्द्रियम् 'उच्यते' इति शेषः; यथा खड्गस्य च्छेत्री शक्तिः, वह्नेर्वा दाहादिका शक्तिस्तथेदमपि श्रोत्राद्यन्तर्निर्वृत्तेर्विषयग्रहणसमर्थशक्तिरूपं द्रष्टव्यम् । तर्ह्यन्तर्निर्वृत्तिरेव तत्, तच्छक्तिरूपत्वात्, न पुनर्भेदान्तरमित्याशङ्क्याह–तदपीन्द्रियान्तरं द्रव्येन्द्रियस्य भेदान्तरमित्यर्थः । कुतः ? इत्याह–'जमित्यादि' यस्मादिह कदम्बपुष्पाद्याकृतेर्मांसगोलकाकारायाः श्रोत्राद्यन्तर्निर्वृत्तेर्या शब्दादिविषयपरिच्छेत्री शक्तिस्तस्या वात-पित्तादिनोपघाते विनाशे सति यथोक्तान्तर्निर्वृत्तिसद्भावेऽपि न शब्दादिविषयं गृह्णाति जीवः, इत्यतो ज्ञायते– अस्त्यन्तर्निर्वृत्तिशक्तिरूपमुपकरणेन्द्रियं द्रव्येन्द्रियस्य द्वितीयो भेद इति ॥२९९४॥२९९५॥२९९६॥

भावेन्द्रियमाह–

[2]लद्धु-वओगा भाविंदियं तु लद्धि त्ति जो खओवसमो । होइ तदावरणाणं तल्लाभे चेव सेसंपि ॥२९९७॥

लब्ध्यु-पयोगौ भावेन्द्रियम् । तत्र यदावरणानां तेषामिन्द्रियाणामावारककर्मणां क्षयोपशमो भवति जीवस्य स लब्धिः ।

1 तद् नामादि चतुर्धा द्रव्यं निर्वृत्तिरुपकरणं च । आकारो निर्वृत्तिश्चित्रा बाह्येयमन्त ॥ २९९४ ॥
कदम्बपुष्पाकारो धान्यमसूरातिमुक्तचन्द्रश्च । भवति क्षुरप्रो नानाकृतिश्च श्रोत्रेन्द्रियादीनाम् ॥ २९९५ ॥
विषयग्रहणसमर्थमुपकरणमिन्द्रियान्तरं तदपि । यद् नेह तदुपघाते गृह्णाति निर्वृत्तिभावेऽपि ॥ २९९६ ॥
2 लब्ध्यु-पयोगौ भावेन्द्रियं तु लब्धिरिति य क्षयोपशमः । भवति तदावरणानां तल्लाभ एव शेषमपि ॥ २९९७ ॥

प्रयोगादिति ॥ ३०३५ ॥

अथ 'से-सियं' इत्यस्यापराण्यपि व्याख्यानान्तराण्याह—

[1]अहवा से सियमसियं गहियं वत्तमइसंसिलिट्ठं वा । जं वा विसेसियमट्ठह त्ति खयसेसियं व त्ति ॥३०३६॥

अथवा, 'से' तस्य जीवस्य सर्वमपि कर्म संसारानुबन्धित्वादसितं कृष्णमशुभमित्यर्थः । अथवा, 'षो अन्तःकर्मणि' 'गहियं वत्तं त्ति' जीवेन गृहीतं व्याप्तं व्याप्तिमानीतामिति सितम् । अथवा 'सेसियं ति' लेश्याविशेषात् श्लेषितं जीवेन श्लेषविशेषमानीतामिति संश्लिष्टं बाधकं कृतमिति संश्लेषितम् । 'जं वा विसेसियमट्ठह त्ति' अथवा, एकदेशेन समुदायस्य गम्यमानत्वाद् यदष्टधा विशेषितं व्यवच्छिन्नं तत् शेषितं विशेषितमिहोच्यते । अथवा, क्षयेण क्षपणया क्रमशः शेषितं स्थित्यनुभवादिनाऽल्पीकृतमित्यर्थः ॥३०३६॥

अथ सितं ध्मातमस्येति सिद्ध इति निरुक्तविधिमुपदर्शयन्नाह—

[2]नेरुत्तियं सियं धंतमस्स तवसा मलो व लोहस्स । इय सिद्धस्सेय सओ सिद्धत्तं सिज्झणा समए ॥३०३७॥

उवजायइ त्ति ववहारदेसणमभावयानिसेहो वा । पज्जायंतरविगमे तप्पज्जायंतरं सिद्धो ॥ ३०३८ ॥

[3]द्वे अपि गतार्थे । नवरं 'अभावयानिसेहो व त्ति' निर्वाणप्रदीपकल्पत्वादभावरूपं सिद्धत्वमिति यत् कैश्चिदुच्यते, तदाभिमताया अभावरूपतायाः 'सिद्धत्वमुपजायते' इत्यनेन निषेधो वा क्रियते, सिद्धत्वं भावरूपमुपजायते, न पुनः पूर्वपर्यायस्य भाव एव भवतीत्यर्थः ॥ ३०३७ ॥ ३०३८ ॥

अथ 'नाऊण वेयणिज्जं' इत्यादिगाथायाः प्रस्तावनार्थमाह—

[4]कम्मचउक्कं कमसो समं ति खयमेइ तस्स भणियम्मि । समयं ति कए भासइ कत्तो तुल्लट्ठिईनियमो ? ॥३०३९॥

भवोपग्राहि कर्मचतुष्टयं तस्य मुमुक्षोर्मोक्षगमनसमये क्रमशः क्षयमेति, समकं वा युगपदिति कथ्यताम् ? । एवं भणिते परेण

१ अथवा तस्य सितमासित गृहीत व्याप्तमतिसंश्लिष्ट वा । यद्वा विशेषितमष्टधेति क्षयशेषित वेति ॥ ३०३६ ॥

२ नैरुक्तिकं सित ध्मातमस्य तपसा मल इव लोहस्य । इति सिद्धस्यैव सतः सिद्धत्व सेधना समये ॥ ३०३७ ॥ ३ गाथा ३०३० । उपजायत इति व्यवहारदेशनमभावतानिषेधो वा । पर्यायान्तरविगमे तत्पर्यायान्तरं सिद्धः ॥ ३०३८ ॥

४ कर्मचतुष्कं क्रमशः सममिति क्षयमेति तस्य भणिते । समकमिति कृते भाषते कुतस्तुल्यस्थितिनियमः ? ॥ ३०३९ ॥

शेषमपि द्रव्येन्द्रियं तल्लाभ एव लब्धिमात्रावेव भवतीति द्रष्टव्यमिति ॥ २९९७॥

उपयोगः कः? इत्याह—

जो सविसयवावारो सो उवओगो स चेगकालम्मि। एगेण चेय तम्हा उवओगेगिंदिओ सव्वो ॥२९९८॥

यः श्रोत्रादीन्द्रियस्य स्वविषये शब्दादौ परिच्छेदो व्यापारः स उपयोगः। स चैकस्मिन् काले देवादीनामप्येकेनैव श्रोत्राद्यन्यतरेणेन्द्रियेण भवति, न तु द्व्यादिभिः। तस्मादुपयोगमाश्रित्य सर्वोऽपि जीव एकेन्द्रिय एव, सर्वस्मिन् काले देवादीनामप्येकस्यैव श्रोत्राद्यन्यतरेन्द्रियोपयोगस्य सद्भावादिति ॥ २९९८ ॥

यद्युपयोगतः सर्वोऽपि जीव एकेन्द्रियः, तर्हि एकेन्द्रियो द्वीन्द्रिय इत्यादिर्भेदः कथमागमे निर्दिष्टः? इत्याह—

एगेंदियाइभेया पडुच्च सेसेंदियाइं जीवाणं। अहवा पडुच्च लद्धिंदियं पि पंचेंदिया सव्वे ॥ २९९९ ॥

अतो जीवानामेकेन्द्रियादयो भेदाः शेषाणि निर्वृत्त्यु-पकरण-लब्धीन्द्रियाणि प्रतीत्य द्रष्टव्याः। तानि यस्य यावन्ति तावद्भिर्व्यपदेश इति, न तूपयोगतः। अथवा, लब्धीन्द्रियमप्याश्रित्य वक्ष्यमाणयुक्तितः सर्वे पृथिव्यादयोऽपि जीवाः पञ्चेन्द्रिया एवेति ॥२९९९॥

कुतः सर्वे पञ्चेन्द्रियाः? इत्याह—

जं[3] किर बउलाईणं दीसइ सेसेंदिओवलंभो वि। तेण त्थि तदावरणखओवसमसंभवो तेसिं ॥ ३००० ॥

यस्मात् किल बकुल-चम्पक-तिलक-विरहकादीनां वनस्पतिविशेषाणां स्पर्शनात् शेषाणि यानि रसन-घ्राण-चक्षुः-श्रोत्रलक्षणानीन्द्रियाणि तत्संबन्ध्युपलम्भो दृश्यते, तेन ज्ञायते- तेषामपि बकुलादीनां तदावरणक्षयोपशमसंभवो रसनादीन्द्रियावारककर्मक्षयोपशमस्य या च यावती मात्राऽस्तीति। अन्यथा हि बकुलस्य शृङ्गारितकामिनीवदनार्पितचारुमदिरागण्डूषेण, चम्पकस्यातिसुरभिगन्धोदकसेकेन, तिलकस्य कामिनीकटाक्षविक्षेपेण, विरहकस्य पञ्चमोद्गारश्रवणेन पुष्पपल्लवादिसंभवो न घटते ॥ ३००० ॥

अत्र प्रयोगमाह—

---

१ यः स्वविषयव्यापार स उपयोग· स चैककाले। एकेनैव तस्मादुपयोगैकेन्द्रिय सर्वः ॥ २९९८ ॥

२ एकेन्द्रियादिभेदाः प्रतीत्य शेषेन्द्रियाणि जीवानाम्। अथवा प्रतीत्य लब्धीन्द्रियमपि पञ्चेन्द्रियाः सर्वे ॥ २९९९ ॥

३ यत् किल बकुलादीनां दृश्यते शेषेन्द्रियोपलम्भोऽपि। तेनास्ति तदावरणक्षयोपशमसंभवस्तेषाम् ॥ ३००० ॥

पृष्टे सूरिराह– 'समयं ति त्ति' समकं युगपत् तस्य तत् कर्मचतुष्कं क्षयमेति न तु क्रमश इति। एवं च सूरिणोत्तरे कृते पुनरपि भाषते परः–कुतः कर्मचतुष्कस्य तुल्यस्थितिनियमः, विषमनिबन्धनत्वेन विषमस्थितिकत्वस्यैव युज्यमानत्वात्? इति ॥ २०३९ ॥

अथ विषमस्थितिकमपि समकं क्षपयति। तदयुक्तम्। कुतः? इत्याह—

[1]कह व अपुन्नट्ठिइयं खवेउ कत्तो व तस्समीकरणं। कयनासाइभयाउ तो तस्स कमक्खओ जुत्तो ॥२०४०॥

कथं वा स मुमुक्षुरपूर्णस्थितिकमायुष्कापेक्षया दीर्घस्थितिकं वेदनीय-नाम-गोत्रकर्मत्रयं ह्रस्वस्थितिकायुष्कानुरोधेन क्षपयतु ह्रस्वीकरोतु, कृतनाशप्रसङ्गात्?। कृतनाशश्चैवमेवाधिकस्य खण्डयित्वा नाशनात्। अथायुष्कं वृद्धिमुपनीय वेदनीयादिभिः सह समस्थितिकं कृत्वा समकमेव क्षपयतीत्याशङ्क्याह– 'कत्तो वेत्यादि' कुतो वाऽऽयुष्कस्य वेदनीयादिभिः सह समीकरणं समस्थितिकत्वापादनम्, अकृताभ्यागमप्रसङ्गात्?। तत्प्रसङ्गश्च ह्रस्वस्यायुषो दीर्घत्वापादनात्। ततस्तस्य मुमुक्षोर्वेदनीयादिकर्मणां क्रमक्षय एव युक्तः प्रथममायुषस्ततः शेषाणामिति ॥ २०४० ॥

अत्र गुरुरुत्तरमाह—

[2]भण्णइ कम्मखयम्मी जयाउमाईए तस्स निट्ठेज्जा। तो कहमत्थउ स भवे सिज्झउ व कहं सकम्मंसो? ॥२०४१॥

भण्यतेऽत्रोत्तरम्— कर्मक्षये मुक्तिगमनसमयवर्तिनि कर्मक्षयकाले, पाठान्तरतः क्रमक्षये वा यद्यायुरादावेव तस्य निस्तिष्ठेत्–निष्ठां यायात्, क्षीयेतेत्यर्थः, शेषाणि तु क्रमशः पश्चात्; ततः कथमसौ क्षीणायुष्कः शेषकर्मक्षपणार्थं भवे तिष्ठतु, तदवस्थाननिबन्धनस्यायुष्कस्याभावात्?। अथ तदभावात् सिध्यत्वसौ, किं निवार्यते?। तदयुक्तम्, यत आयुषि क्षीणेऽपि सह वेदनीयादिकर्मांशैर्वर्तत इति सकर्मांशः कथं सिध्यतु, 'सकलकर्मक्षयादेव मोक्षः' इति वचनात्? इति ॥ २०४१ ॥

तर्हि किमत्र युक्तम्? इत्याह—

[3]तम्हा तुल्लट्ठिइयं कम्मचउक्कं सभावओ जस्स। सोऽकयसमुग्घाओ सिज्झइ जुगवं खवेऊणं ॥२०४२॥

१ कथं वाऽपूर्णस्थितिकं क्षपयतु कुतो वा तत्समीकरणम्। कृतनाशादिभयात् ततस्तस्य क्रमक्षयो युक्तः ॥ २०४० ॥
२ भण्यते कर्मक्षये यद्यायुरादावेव तस्य निस्तिष्ठेत्। ततः कथं तिष्ठतु स भवे सिध्यतु वा कथं सकर्मांशः? ॥ २०४१ ॥
३ तस्मात् तुल्यस्थितिकं कर्मचतुष्कं स्वभावतो यस्य। सोऽकृतसमुद्धातः सिध्यति युगपत् क्षपयित्वा ॥ २०४२ ॥

तिर्यङ् भयात्, प्रद्वेषात्, आहारार्थम्, अपत्यनीड-गुहादिस्थानरक्षणार्थमुपसर्गं कुर्यादिति । आत्मसंवेदनीयस्तूपसर्गो नेत्रपतितकणिकादिघट्टनात्, अङ्गानां वा स्तम्भनात् स्तब्धताभावात्, गर्तादौ वा प्रपतनात्, विगुणितबाह्वाद्यङ्गानां वा लेशनात् परस्परं श्लेषणाद् भवति ॥ इति सप्तचत्वारिंशद्गाथार्थः ॥ ३००६ ॥ ३००७ ॥

अथ रागादीनां यथाक्रममुदाहरणान्याह । तत्र च रागे 'रहदत्ता' इत्यादिषड्गाथाः । आसां चार्थः सकथानको मूलावश्यकादवसेय इति ॥

अथ 'नामयंता नमोरिहा' इत्येतद् व्याचिख्यासुराह—

पहवीकरणं नामणमहवा नासणमओ जहाजोगं । नेयं रागाईणं तन्नामाओ नमोऽरहा ॥ ३००८ ॥

रागादीनां प्रह्वीकरणं वश्यभावापादनं नमनमुच्यते, मूलतो नाशनं वा । अतो रागादीनामेवंविधं नमनं यथायोगं यथाघटमानकं ज्ञेयम् । तन्नमनाच्च नमो नमस्कारस्यार्हा अर्हन्त इति ॥ ३००८ ॥

सांप्रतं प्राकृतशैल्या अनेकधाऽर्हच्छब्दनिरुक्तसमय इति दर्शयन्नाह—'इंदिय' इत्यादिचतस्रो गाथाः, एया अपि तथैव ॥

इदानीममोघताख्यापनार्थमपान्तरालिकं नमस्कारफलमुपदर्शयति—

अरहंतनमोक्कारो जीवं मोएइ भवसहस्साओ । भावेण कीरमाणो होइ पुणो बोहिलाभाए ॥ ३००९ ॥

इह नाम-स्थापना-द्रव्य-भावलक्षणनमस्कारश्चतुर्विधो गृहीतः। तत्रार्हच्छब्देन बुद्धिस्था अर्हदाकारवती स्थापना गृह्यते, तस्या नमस्कारः स्थापनानमस्कार इति व्युत्पत्त्या स्थापनानमस्कारः संगृहीतः । 'नमोक्कारो त्ति' इत्यनेन नामनमस्कारः । 'कीरमाणो त्ति' अञ्जलिप्रग्रहादिना क्रियमाण इत्यनेन द्रव्यनमस्कारः । 'भावेण त्ति' अनेन तु भावनमस्कार इति । तत्रार्हन्नमस्कारः क्रियमाणो जीवं मोचयति भवसहस्रात् प्रस्तावादनन्तभवेभ्य इत्यर्थः । अनन्तभवमोचनाच्च मोक्षं प्रापयतीत्युक्तं भवति । यद्यपि च कांश्चित् तद्भव एव मोक्षं न प्रापयति तथापि भावेनोपयोगविशेषेण क्रियमाणो भावनाविशेषत एवान्यस्मिन्नपि जन्मनि पुनरपि बोधिलाभाय भवति । बोधिलाभश्च निश्चितोऽचिराद् मोक्षहेतुरिति । एवं बाह्याभ्यन्तरेण नामादिचतुर्विधविधानेन नमस्कारः क्रियमाणो जीवं भवाद्

१ गाथा २९६० । २ प्रह्वीकरण नमनमथवा नाशनमतो यथायोग्यम् । ज्ञेय रागादीनां तन्नामाद् नमोऽर्हा ॥ ३००८ ॥
३ अर्हन्नमस्कारो जीव मोचयति भवसहस्रात् । भावेन क्रियमाणो भवति पुनर्बोधिलाभाय ॥ ३००९ ॥

[1]जस्स पुण थोवमाउं हवेज्ज सेसं तयं च बहुतरयं । तं तेण समीकुरुए गंतूण जिणो समुग्घायं ॥३०४३॥

द्वे अपि सुगमे । नवरं 'तेण त्ति' तत् शेषकर्मत्रिकमपवर्तनातः खण्डयित्वा तेनायुष्केण समं कुरुत इति ॥ ३०४२ ॥ ३०४३ ॥
नन्वेवं कृतनाशादिदोष उक्तः स कथं परिहर्तव्यः ? इत्याह—

[2]कयनासाइविघाओ कओ पुरा जह य नाण-किरियाहिं । कम्मस्स कीरइ खओ न चेदमोक्खादओ दोसा॥३०४४॥

कृतनाशादिदोषाणां विघातः परिहारः कृतोऽस्माभिः । क्व ? पुरा पूर्वमुपक्रमकालविचारे,

'[3]न हि दीहकालियस्स विनासो तस्साणुभूइओ खिप्प । बहुकालाहारस्स व दुयमग्गियरोगिणो भोगो ॥ १ ॥'

इत्यादिना ग्रन्थेन। यथा च ज्ञान-क्रियाभ्यां चिरकालस्थितिकस्यापि कर्मणः क्षिप्रमेव क्षयः क्रियते, तथा प्रागपि '[4]सज्झमुवक्कामिज्जइ एत्तो च्चिय सज्झरोगो व्व' इत्यादिनाऽनेकशः प्रोक्तम् । न चेदुपक्रम इष्यते, तर्ह्यमोक्षादयो दोषा इत्यपि '[5]जइ ताणुभूइउ च्चिय खविज्जए कम्ममन्नहा न मयं' इत्यादिना प्रागुक्तमेव । तदेवमेतावता '[6]नाऊण वेयणिज्जं' इत्यादिनिर्युक्तिगाथा व्याख्यातेति ॥३०४४॥

अथ परप्रेर्यमाशङ्क्य परिहरन्नाह—

[7]असमट्ठिईण निअमो को थोवं आउयं न सेसं ति । परिणामसभावाओ अद्धुवबंधो व्व तस्सेव ॥३०४५॥

'असमस्थितिकानां कर्मणां स्तोकमायुरेव, न शेषं वेदनीयादिकम्' इति कोऽयं नियमः, येनोच्यते— '[6]नाऊण वेयणिज्जं अइबहुयं आउगं च थोवागं' इति ? । इदमपि कस्माद् नोच्यते— 'नाऊणं आउयं खलु अइबहुयं थोवयं च वेयणियं' इति ? । अत्रोच्यते— बन्धपरिणामस्वाभाव्यात्; एवंभूतो ह्यायुषः कोऽपि बन्धपरिणामो वर्तते, येन पर्यन्ते वेदनीयाद्यपेक्षया समं स्तोकं वा भवति, न त्वधिकमिति । अत्र दृष्टान्तमाह—यथा बन्धपरिणामस्वाभाव्यादध्रुवबन्धस्तस्यैवायुषो भवति, अन्तर्मुहूर्तमात्रबन्धकालत्वात्; न तु वेदनीयादेः, तस्य ध्रुवबन्धित्वात्; एवमत्रापि स्तोकत्वमायुष एव, न तु वेदनीयादेरिति ॥ ३०४५ ॥

---

१ यस्य पुन स्तोकमायुर्भवेत् शेष तच्च बहुतरकम् । तत् तेन समीकुरुते गत्वा जिन समुद्घातम् ॥ ३०४३ ॥
२ कृतनाशादिविघात. कृत पुरा यथा च ज्ञान-क्रियाभ्याम् । कर्मण क्रियते क्षयो न चेदमोक्षादयो दोषाः ॥ ३०४४ ॥
३ गाथा २०४८ । ४ गाथा २०५६ । ५ गाथा २०५२ । ६ गाथा ३०३० ।
७ असमस्थितीनां नियम. क स्तोकमायुष्क न शेषमिति । परिणामस्वभावादध्रुवबन्ध इव तस्यैव ॥ ३०४५ ॥

मोचयति, पुनर्बोधिबीजं च जायते ॥ इति निर्युक्तिगाथार्थः ॥ ३००९ ॥

अत्र भाष्यम्—

[1] अरहंतागारवई ठवणा नामं मयं नमोक्कारो । भावेणं ति य भावो दव्वं पुण कीरमाणो त्ति ॥३०१०॥

इय नामाइचउव्विहबज्झब्भंतरविहाणकरणाओ । सो मोएइ भवाओ होइ पुणो बोहिबीयं च ॥ ३०११ ॥

गतार्थे ॥ ३०१० ॥ ३०११ ॥

तथा चाह—

[2] अरहंतनमोक्कारो धन्नाण भवक्खयं करंताणं । हिययं अणुमुयंतो विसोत्तियावारओ होइ ॥ ३०१२ ॥

धनं ज्ञान-दर्शन-चारित्रलक्षणमर्हन्तीति धन्याः साध्वादयस्तेषां भवक्षयं तद्भवजीवितक्षपणं कुर्वतां यावज्जीवं हृदयमनुमुञ्चन् विस्रोतिकाया विमार्गगमनस्यापध्यानस्य चावारकोऽर्हन्नमस्कारो भवति ॥ इति निर्युक्तिगाथार्थः ॥ ३०१२ ॥

भाष्यम्—

[3] धन्ना नाणाइधणा परित्तसंसारिणो पयणुकम्मा । भवजीवियं पुणब्भवो तस्सेहक्खयं करिंताणं ॥३०१३॥

इह विस्सोओगमणं चित्तस्स विस्सोत्तिया अवज्झाणं। अरहंतनमोक्कारो हिययगओ तं निवारेइ ॥३०१४॥

गतार्थे ॥ ३०१३ ॥ ३०१४ ॥

अथार्हन्नमस्कारस्यैव महार्थतां दर्शयति—

---

१ अर्हदाकारवती स्थापना नाम मतं नमस्कारः । भावेनेति च भावो द्रव्यं पुनः क्रियमाण इति ॥ ३०१० ॥
इति नामादिचतुर्विधबाह्या-ऽऽभ्यन्तरविधानकरणात् । स मुच्यते भवाद् भवति पुनर्बोधिबीजं च ॥ ३०११ ॥

२ अर्हन्नमस्कारो धन्यानां भवक्षयं कुर्वताम् । हृदयमनुमुञ्चन् विस्रोतिकावारको भवति ॥ ३०१२ ॥

३ धन्या ज्ञानादिधना परीतसंसारिणः पदानुकर्माणः । भवजीवितं पुनर्भवस्तस्येह क्षयं कुर्वताम् ॥ ३०१३ ॥
इह विस्रोतोगमनं चित्तस्य विस्रोतिकाऽपध्यानम् । अर्हन्नमस्कारो हृदयगतस्तं निवारयति ॥ ३०१४ ॥

आह– ननु समुद्घातगतो जन्तुर्वेदनीयादिकर्मणः किं करोति ? इत्याह—

[1]विसमं स करेइ समं समोहओ बंधणेहिं ठिईए य । कम्मदव्वाइं बंधणाइं कालो ठिई तेसिं ॥ ३०४६ ॥

स समवहतः केवलिसमुद्घातगतो जीव आयुष्कादधिकत्वेन विषमं वेदनीयादिकर्मत्रयमपवर्तमानः खण्डयित्वा आयुष्केण समं करोति । कैः कृत्वा समं करोति ? इत्याह– बध्यते जीवो यैस्तानि बन्धनानि तैर्बन्धनैः कर्मद्रव्यैः, स्थित्या च काललक्षणया । अत एवाह– कर्मद्रव्याणि बन्धनानि भण्यन्ते, कालस्तु स्थितिस्तेषां वेदनीयादीनामिति । समीकुर्वंश्चैतद्विशिष्टदलिकनिषेकेणान्तर्मुहूर्तस्थितिकं सर्वं करोति ॥ ३०४६ ॥

कथम् ? इत्याह—

[2]आउयसमयसमाए गुणसेढीए तदसंखगुणियाए । पुव्वरइयं खवेहिइ जह सेलेसीए पइसमयं ॥ ३०४७ ॥

वेद्यमानस्यायुषो यावन्तः समयाः शेषा अवतिष्ठन्ते तत्समयसमानयाऽन्तर्मुहूर्तप्रमाणयेत्यर्थः, दलिकमाश्रित्यासंख्येयगुणया, प्रथमसमयनिक्षिप्तदलिकाद् द्वितीयसमयनिषिक्तमसंख्येयगुणम्, ततोऽपि तृतीयसमयनिषिक्तमसंख्येयगुणम्, एवं यावच्चरमसमयनिषिक्तमसंख्येयगुणमिति; एवमसंख्यगुणया स्थानान्तरप्रसिद्धया गुणश्रेण्या तद् वेदनीयादिकर्मत्रयं केवलज्ञानाभोगेनाकलय्य तथा रचयति यथाऽनन्तरोक्तप्रकारेण पूर्वरचितं तदेतत् शैलेश्यां प्रतिसमयं क्षपयंश्चरमसमये सर्वमसौ क्षपयिष्यति । अत्र गुणश्रेणिस्थापना—



आयुषस्तु गुणश्रेणिर्न भवति, किन्तु यथाबद्धमेव तद् वेद्यते । अतस्तस्यैवं स्थापना—



1 विषमं स करोति समं समवहतो बन्धनैः स्थित्या च । कर्मद्रव्याणि बन्धनानि कालः स्थितिस्तेषाम् ॥ ३०४६ ॥

2 आयुष्कसमयसमया गुणश्रेण्या तदसंख्यगुणितया । पूर्वरचितं क्षपयिष्यति यथा शैलेश्यां प्रतिसमयम् ॥ ३०४७ ॥

अरहंतनमोक्कारो एवं खलु वण्णिओ महत्थो त्ति । जो मरणम्मि उवग्गे अभिक्खणं कीरइ बहुसो ॥३०१५॥

अर्हन्नमस्कार एवं खलु वर्णितो महार्थ इति महानर्थो यस्य स महार्थोऽल्पाक्षरोऽपि द्वादशाङ्गार्थसंग्राहित्वाद् महार्थः । कथं पुनरेतदेवम् ? इत्याह– यो नमस्कारो मरणे प्राणोपरमलक्षणे उपाग्रे समीपभूतेऽभीक्ष्णमनवरतं क्रियते बहुशोऽनेकशः । ततश्च महत्यामापदि द्वादशाङ्गीं मुक्त्वा तत्स्थानेऽनुस्मरणाद् महार्थः ॥ इति निर्युक्तिगाथार्थः ॥ ३०१५ ॥

कथं पुनर्द्वादशाङ्गार्थो नमस्कारः ? इत्याशङ्क्य युक्तिमाह भाष्यकारः—

जलणाइभए सेसं मोत्तुं पगरणं महामोल्लं । जुधि वातिभए घेप्पइ अमोहमत्थं जह तहेह ॥ ३०१६ ॥

मोत्तुं पि बारसंगं मरणाइभएसु कीरए जम्हा । अरहंतनमोक्कारो तम्हा सो बारसंगत्थो ॥ ३०१७ ॥

सव्वं पि बारसंगं परिणामविसुद्धिहेउमित्तागं । तक्कारणभावाओ कहं न तयत्थो नमोक्कारो ? ॥ ३०१८ ॥

न हु तम्मि देसकाले सक्को बारसविहो सुयक्खंधो । सव्वो[3] अणुचिंतेउं धंतं पि समत्थचिंतेणं ॥ ३०१९ ॥

चतस्रोऽपि सुगमाः, नवरं 'देसकाले त्ति' देशः प्रस्तावस्तद्रूपकालो देशकालस्तस्मिन् मरणलक्षणे देशकाल इति । 'धंतं पि त्ति' धनितमत्यर्थमिति ॥ ३०१६ ॥ ३०१७ ॥ ३०१८ ॥ ३०१९ ॥

एकस्मिन्नपि यत्र वीतरागोक्ते पदे सति जीवः संवेगं गच्छति, 'येन च पदेन विरागत्वं भवति निर्वेदमुपैति, तत् तस्यैकमपि पदं समस्तमोहजालोच्छेदहेतुत्वात् संपूर्णद्वादशाङ्गरूपं ज्ञानमेव भवति, तत्कार्यकर्तृत्वात्, किं पुनरनेकपदात्मको नमस्कारः संपूर्णद्वादशाङ्गज्ञानं न भविष्यति ? इत्यनया भङ्ग्या नमस्कारस्य द्वादशाङ्गरूपतां साधयन्नाह—

---

१ अर्हन्नमस्कार एवं खलु वर्णितो महार्थ इति । यो मरण उपाग्रेऽभीक्ष्ण क्रियते बहुशः ॥ ३०१५ ॥
२ ज्वलनादिभये शेषं मुक्त्वा प्रकरणं महामूल्यम् । युधि वातिभये गृह्यतेऽमोघमस्त्र यथा तथेह ॥ ३०१६ ॥
मुक्त्वापि द्वादशाङ्गीं मरणादिभयेषु क्रियते यस्मात् । अर्हन्नमस्कारस्तस्मात् स द्वादशाङ्गार्थः ॥ ३०१७ ॥
सर्वामपि द्वादशाङ्गीं परिणामविशुद्धिहेतुमात्रकाम् । तत्कारणभावात् कथं न तदर्थो नमस्कारः ? ॥ ३०१८ ॥
न खलु तस्मिन् देशकाले शक्यो द्वादशविधः श्रुतस्कन्धः । सर्वोऽनुचिन्तयितुमत्यर्थमपि समर्थचिन्तेन ॥ ॥ ३०१९ ॥ ३ ज. 'व्वो य त्ति'।

'जह उल्ला साडीया' इत्यादिगाथायाः पूर्वार्धं सुगमत्वाद् न व्याख्यातम् । उत्तरार्धं तु यदुक्तम्– 'तह कम्मलहुयसमए त्ति' । तत्र कर्मलघुतायाः समयः कः ? इत्याह––

कम्मलहुयाए[2] समओ भिन्नमुहुत्तावसेसओ कालो । अन्ने जहन्नमेयं छम्मासमुक्कोसमिच्छंति ॥ ३०४८ ॥

कर्मण आयुषो लघुतायाः समयोऽत्र भिन्नमुहूर्तावशेषकालो जघन्यतः, उत्कृष्टतश्चान्तर्मुहूर्तावशेषं निजमायुर्विज्ञाय तदधिकवेद्नीयादिकर्मस्थितिविघातार्थं केवली समुद्घातमारभत इत्यर्थः । अन्ये तु सूरय एतं भिन्नमुहूर्तलक्षणं जघन्यमेव कालं मन्यन्ते, उत्कृष्टं तु षड् मासानिच्छान्ति– जघन्यतोऽन्तर्मुहूर्तशेषायुष्क उत्कृष्टतस्तु षण्मासावशेषायुः समुद्घातं करोतीति केचिद् मन्यन्त इत्यर्थः ॥ ३०४८ ॥

तदेतदन्यमतमयुक्तमिति दर्शयन्नाह––

तं[3] नाऽणन्तरसेलेसिवयणओ जं च पाडिहेराणं । पच्चप्पणमेव सुए इहरा गहणं पि होज्जाहि ॥३०४९॥

तदेतदन्यमतं न युक्तम्, आगमविरोधात् । तद्विरोधश्च समुद्घातानन्तरं तत्र शैलेशीप्रतिपत्तिवचनात्, शैलेश्यनन्तरं च सिद्धिगमनात्; कुतः षण्मासविशेषायुष्कत्वम् ? । आनन्तर्यं षड्भिरपि मासैर्विवक्षया घटत एवेति चेत् ? इत्याशङ्क्याह– 'जं चेत्यादि' यस्माच्च समुद्घाताद् निवृत्य शरीरस्थस्य प्रातिहारक-पीठफलकादीनां "कायजोगं[4] जुंजमाणे आगच्छेज्जा वा, चिट्ठेज्जा वा, निसीएज्जा वा, अनुयट्टिज्जा वा, उल्लंघेज्जा वा, पाडिहारीयं, पीढफलगं, संथारगं पच्चप्पिणिज्ज" इति प्रज्ञापनासूत्ररूपे श्रुते प्रत्यर्पणमेवोक्तम्, इतरथा षण्मासावशेषायुष्कत्वेन चिरजीवित्वे तेषां ग्रहणमपि स्यात्, न च तत्रोक्तम् । तस्मादन्तर्मुहूर्तावशेषायुरेव समुद्घातं करोतीति ॥३०४९॥

अथ समुद्घातशब्दार्थं समुद्घातारम्भात् पूर्वव्यापारनिरूपणार्थं चाह––

तत्थाउयसेसाहियकम्मसमुग्घायणं[5] समुग्घाओ । तं गन्तुमणो पुव्वं आवज्जीकरणमज्झेइ ॥ ३०५० ॥

---

१ गाथा ३०३२। २ कर्मलघुतायाः समयो भिन्नमुहूर्तावशेषकः कालः । अन्ये जघन्यमेतत् षड् मासानुत्कृष्टमिच्छन्ति ॥ ३०४८ ॥
३ तद् नानन्तरशैलेशीवचनतो यच्च प्रातिहारकाणाम् । प्रत्यर्पणमेव श्रुते इतरथा ग्रहणमपि भवेत् ॥ ३०४९ ॥
४ काययोगं युञ्जान आगच्छेद् वा, तिष्ठेद् वा, निषीदेत् वा, अनुवर्तेत वा, उल्लङ्घेत वा, प्रातिहारकं पीठफलकं, संस्तारकं प्रत्यर्पयेत् ।
५ तत्रायुष्कशेषाधिककर्मसमुद्घातनं समुद्घातः । तद् गन्तुमनाः पूर्वमावर्जीकरणमभ्येति ॥ ३०५० ॥

दव्वामुत्तत्तणओ मुत्तो निच्चो नभं व दव्वतया । नणु विभुयाइपसंगो एवं सइ, नाणुमाणाओ ॥ ११ ॥
को वा निच्चग्गाहो सव्वं चिय विभव-भङ्ग-ठिइमइयं । पज्जायंतरमेत्तप्पणादनिच्चाइववएसो ॥ १२ ॥
न य सव्वहा विणासोऽणलस्स परिणामओ पयस्सेव । कुंभस्स कवालाण व तहाविगारोवलंभाओ ॥ १३ ॥
जइ सव्वहा न नासोऽणलस्स किं दीसए न सो सक्खं ? । परिणामसुहुमयाओ जलयविगारंजणरउ व्व ॥१४॥
होऊण इंदियंतरगज्झा पुणरिंदियंतरग्गहणं । खंधा एंति न एंति य पोग्गलपरिणामया चित्ता ॥ १५ ॥
एगेगेंदियगज्झा जह वायव्वादओ तहग्गेया । होउं चक्खुग्गज्झा घाणिंदियगज्झयोमेंति ॥ १६ ॥
जह दीवो निव्वाणो परिणामन्तरमिओ तहा जीवो । भण्णइ परिनिव्वाणो पत्तोऽणाबाहपरिणामं ॥ १७ ॥
मुत्तस्स परं सोक्खं णाणाणाबाहओ जहा मुणिणो । तद्धम्मा पुण विरहादावरणा-ऽऽबाहहेऊणं ॥ १८ ॥
मुत्तो करणाभावादण्णाणी खं व, नणु विरुद्धोऽयं । जमजीवया वि पावइ एत्तो च्चिय भणइ तन्नाम ॥१९॥
दव्वा-ऽमुत्तत्त सहावजाइओ तस्स दूरविवरीयं । न हि जच्चंतरगमणं जुत्तं नभसो व्व जीवत्तं ॥ २० ॥
मुत्ताइभावओ नोवलद्धिमंतिंदियाइं कुंभो व्व । उवलंभद्दाराणि उ ताइं जीवो तदुवलद्धा ॥ २१ ॥
तदुवरमे वि सरणओ तव्वावारे वि नोवलंभाओ । इंदियभिन्नो आया पंचगवक्खोवलद्धा वा ॥ २२ ॥
नाणरहिओ न जीवो सरूवओऽणु व्व मुत्तिभावेणं । जं तेण विरुद्धमिदं अत्थि य सो नाणरहिओ य ॥२३॥
किह सो नाणसरूवो नणु पच्चक्खाणुभूइओ नियए । परदेहम्मि वि गज्झो स पवित्ति-निवित्तिलिंगाओ ॥२४॥
सव्वावरणावगमे सो सुद्धयरो भवेज्ज सूरो व्व । तम्मयभावाभावादण्णाणित्तं न जुत्तं से ॥ २५ ॥
एवं पगासमइओ जीवो छिद्दावभासयत्ताओ । किंचिम्मेत्तं भासइ छिद्दावरणपईवो व्व ॥ २६ ॥



१ 'यामिंति' । २ 'मियं अ' ।

सुबहुयरं वियाणइ मुत्तो सव्वप्पिहाणविगमाओ । अवणीयघरो व्व नरो विगयावरणप्पईवो व्व ॥ २७ ॥
पुण्णा-ऽपुण्णकयाइं जं सुह-दुक्खाइं तेण तन्नासे । तन्नासाओ मुत्तो निस्सुह-दुक्खो जहागासं ॥ २८ ॥
अहवा निस्सुह-दुक्खो नभं व देहें-दियादभावाओ । आधारो देहो च्चिय जं सुह-दुक्खोवलद्धीणं ॥ २९ ॥
पुण्णफलं दुक्खं चिय कम्मोदयओ फलं व पावस्स । नणु पावफले वि समं पच्चक्खविरोहिआ चेव ॥ ३० ॥
जत्तो च्चिय पच्चक्खं सोम्म! सुहं नत्थि दुक्खमेवेदं । तप्पडियारविभत्तं तो पुण्णफलं ति दुक्खं ति ॥ ३१ ॥
विसयसुहं दुक्खं चिय दुक्खपडियारओ तिगिच्छ व्व । तं सुहमुवयाराओ न उवयारो विणा तच्चं ॥ ३२ ॥
तम्हा जं सुत्तमुहं तं तच्चं दुक्खसंखएऽवस्सं । मुणिणोऽणाबाहस्स व णिप्पडियारप्पसूईओ ॥ ३३ ॥
जह वा नाणमओऽयं जीवो नाणोवघाइ चावरणं । करणमणुग्गहकारिं सव्वावरणक्खए सुद्धी ॥ ३४ ॥
तह सोक्खमओ जीवो पावं तस्सोवघाइयं नेयं । पुण्णमणुग्गहकारिं सोक्खं सव्वक्खए सयलं ॥ ३५ ॥
जह वा कम्मक्खयओ सो सिद्धत्ताइपरिणइं लभइ[1] । तह संसाराईयं पावइ तत्तो च्चिय सुहं ति ॥ ३६ ॥
साया-ऽसायं दुक्खं तव्विरहम्मि य सुहं जओ तेणं । देहिं-दिएसु दुक्खं सोक्खं देहिं-दियाभावे[2] ॥ ३७ ॥
जो वा देहिं-दियजं सुहमिच्छइ तं पडुच्च दोसोऽयं । संसाराईयमिदं धम्मंतरमेव सिद्धिसुहं ॥ ३८ ॥
कह नणु मेयं ति मई नाणा-ऽणाबाहउ त्ति नणु भणियं । तदणिच्चं णाणं पि य चेयणधम्मो त्ति रागो व्व ॥३९॥
कयगाइभावओ वा नावरणा-ऽऽबाहकारणाभावा । उप्पाय-ट्ठिइ-भङ्गस्सहावओ वा न दोसोऽयं ॥ ४० ॥
नह वइ ससरीरस्स प्पिय-ऽप्पियावहतिरेवमादि[3] व जं । तदमोक्खो नासम्मि व सोक्खाभावम्मि व न जुत्तं ॥४१॥
नट्ठो असरीरो च्चिय सुह-दुक्खाइं पिय-ऽप्पियाइं च । ताइं न फुसंति नट्ठं फुडमसरीरं ति को दोसो ? ॥४२॥

१ 'लहइ' । २ 'भावो' । ३ 'माइ य जं' ।

[1]आवज्जणमुवओगो वावारो वा तदत्थमाईए । अंतोमुहुत्तमेत्तं काउं कुरुए समुग्घायं ॥ ३०५१ ॥

व्याख्या– तत्रायुःशेषाणामधिकस्थितिकानां वेदनीयादिकर्मणां समुद्घातनं समुद्घातः । तं च गन्तुमनाः प्रारिप्सुः पूर्वमावर्जीकरणमभ्येति विदधाति । कथंभूतं तत् ? इति । उच्यते– तदर्थं समुद्घातकरणार्थमादौ केवलिन उपयोगो 'मयाऽधुनेदं कर्तव्यम्' इत्येवंरूपः, उदयावलिकायां कर्मप्रक्षेपरूपो व्यापारो वाऽऽवर्जनमुच्यते। तथाभूतस्य करणमावर्जीकरणं तदन्तर्मुहूर्तमात्रं कालं कृत्वा ततः समुद्घातं कुरुत इति ॥ ३०५० ॥ ३०५१ ॥

कथंभूतं तदित्याशङ्क्य '[2]दंड कवाडे' इत्यादिगाथां व्याचिख्यासुराह—

[3]उद्धाहायलोगंतगामिणं सो सदेहविक्खंभं । पढमसमयम्मि दंडं करेइ बिइयम्मि य कवाडं ॥३०५२॥

तइयसमयम्मि मंथं चउत्थए लोगपूरणं कुणइ । पडिलोमं साहरणं काउं तो होइ देहत्थो ॥ ३०५३ ॥

व्याख्या– ऊर्ध्वमधश्चायतं दीर्घमुभयतोऽपि लोकान्तगामिनं स्वदेहप्रमाणविष्कम्भं केवली केवलज्ञानाभोगतः प्रथमसमये जीवप्रदेशसंघातात्मकं दण्डं करोति । द्वितीयसमये तु तमेव दण्डं पूर्वापरदिग्द्वयप्रसारणादुभयपार्श्वतो लोकान्तगामिनं कपाटमिव कपाटं करोति । तृतीयसमये तमेव कपाटं दक्षिणोत्तरदिग्द्वयप्रसारणेन मन्थसदृशत्वाल्लोकान्तप्राप्तमेव मन्थानं करोति । एवं च लोकस्य प्रायो बहु पूरितं भवति मन्थान्तराणि त्वपूरितानि तिष्ठन्ति, जीव-पुद्गलयोरनुश्रेणि गमनात् । ततश्चतुर्थसमये तान्यपि मन्थान्तराणि सह निष्कुटैः पूरयति । ततश्च सकललोकः पूरितो भवतीति । 'सोहारणा' इत्यादेर्व्याख्यामाह– 'पडिलोममित्यादि' इदमत्र हृदयम्– लोकपूरणानन्तरमेव पञ्चमे समये यथोक्तक्रमात् प्रतिलोमं मन्थान्तराणि संहरति, जीवप्रदेशान् सकर्मकान् संकोचयति, षष्ठे समये मन्थानमुपसंहरति, घनतरसंकोचात्; सप्तमसमये तु कपाटमुपसंहरति, दण्डात्मनि संकोचात्; अष्टमे तु समये दण्डमप्युपसंहृत्य शरीरस्थ एव भवतीति ॥ ३०५२ ॥ ३०५३ ॥

आह– ननु समुद्घातगतस्य मनो-वाक्-काययोगेषु मध्ये को योगः कस्मिन् समये व्याप्रियते ? इत्याशङ्क्याह—

---

१ आवर्जनमुपयोगो व्यापारो वा तदर्थमादौ । अन्तर्मुहूर्तमात्र कृत्वा कुरुते समुद्घातम् ॥ ३०५१ ॥ २ गाथा ३०३१ ।

३ ऊर्ध्वाऽधआयतलोकान्तगामिनं स स्वदेहविष्कम्भम् । प्रथमसमये दण्डं करोति द्वितीये च कपाटम् ॥ ३०५२ ॥

तृतीयसमये मन्थान चतुर्थके लोकपूरणं करोति । प्रतिलोमं संहरणं कृत्वा ततो भवति देहस्थः ॥ ३०५३ ॥

तदविशेषे हि बहवो दोषाः, के ? इत्याह—

[1]पत्तेयावरणत्तं इहरा बारसविहोवओगो य । नाणं पंचवियप्पं चउव्विहं दंसणं कत्तो ? ॥ ३०९३ ॥

इतरथा केवलज्ञान-केवलदर्शनयोरेकत्वे प्रत्येकावरणत्वं– केवलज्ञानावरणं, केवलदर्शनावरणं चेति प्रत्येकमावरणं तयोः कुतो घटेत ? । न ह्येकस्य द्वे आवरणे युज्येते । ततः प्रत्येकावरणनिर्देशात् केवलज्ञान-दर्शनयोर्भेद एवेति भावः । तथा, साकारोऽष्टधा, अनाकारस्तु चतुर्धा, इत्येवं यो द्वादशविध उपयोगः श्रुतेऽभिहितः, यच्च ज्ञानं पञ्चविधम्, चतुर्विधं च दर्शनं प्रोक्तम्, तदेतत् सर्वमपि केवलज्ञान-दर्शनयोरेकत्वे कुत उपपद्यते ?– न कुतश्चिदिति ॥ ३०९३ ॥

अपिच,

[2]भणियमिहेव य केवलनाणुवउत्ता मुणंति सव्वं ति । पासंति सव्वउ त्ति य केवलदिट्ठीहिणंताहिं ॥३०९४॥

इहैव पुरतो भणितम्– केवलज्ञानोपयुक्ताः सिद्धाः सर्वं मुणन्ति जानन्तिः, तथा पश्यन्ति च सर्वतः केवलदृष्टिभिरनन्ताभिः, यद् वक्ष्यति—

'[3]केवलनाणुवउत्ता जाणन्ती सव्वभावगुणभावे । पासंति सव्वओ खलु केवलदिट्ठीहिणंताहिं ॥ १ ॥' इति ॥

तस्माद् नैतयोरेकत्वमिति भावः ॥ ३०९४ ॥

पुनरपि परः प्राह—

[4]आह पिहभावम्मि वि उवउत्ता दंसणे य णाणे य । भणियं तो जुगवं सो नणु भणियमिणं पि तं सुणसु॥३०९५॥

आह परः– नन्वपृथग्भावेऽपि केवलज्ञान-दर्शनयोर्न दोषाः, यतः '[5]असरीरा जीवघणा उवउत्ता दंसणे य नाणे य' इत्यत्र दर्शने च ज्ञाने च युगपदुपयुक्ता इति भणितम् । ततो युगपदेव केवलज्ञान-दर्शनोपयोगः सिद्धः । सूरिराह– ननु यदि भणितनार्थ-

१ प्रत्येकावरणत्वमितरथा द्वादशविधोपयोगश्च । ज्ञान पञ्चविकल्पं चतुर्विध दर्शन कुत ? ॥ ३०९३ ॥
२ भणितमिहैव च केवलज्ञानोपयुक्ता जानन्ति सर्वमिति । पश्यन्ति सर्वत इति च केवलदृष्टिभिरनन्ताभि ॥ ३०९४ ॥
३ केवलज्ञानोपयुक्ता यावन्तो जानन्ति सर्वभावगुणभावान् । पश्यन्ति सर्वतः खलु केवलदृष्टिभिरनन्ताभिः ॥ १ ॥
४ आहापृथग्भावेऽप्युपयुक्ता दर्शने च ज्ञाने च । भणितं ततो युगपत् स ननु भणितमिदमपि तत् शृणु ॥ ३०९५ ॥ ५ पृ० ११९८ ।

[1] न किर समुग्घायगओ मण-वइजोगप्पओयणं कुणइ। ओरालियजोगं पुण जुंजइ पढम-ट्ठमे समए ॥३०५४॥
उभयव्वावाराओ तम्मीसं बीय-छट्ठ-सत्तमए। ति-चउत्थ-पंचमे कम्मयं तु तम्मत्तचेट्ठाओ ॥३०५५॥

व्याख्या– किलशब्द आप्तोक्तौ। इह समुद्घातगतः केवली मनो-वाग्योगयोः प्रयोजनं व्यापारणं तावद् न करोत्येव, प्रयोजनाभावात्। औदारिककाययोगं पुनः प्रथमा-ष्टमसमययोर्युनक्ति व्यापारयति, दण्डकरणादिक्रियायां तत्प्रयत्नविधानात्। द्वितीय-षष्ठ-सप्तमसमयेषु तु तन्मिश्रम्- औदारिकं कार्मणेन मिश्रं व्यापारयति, उभयप्रयत्नसद्भावात्। तृतीय-चतुर्थ-पञ्चमसमयेषु पुनः 'कम्मयं ति' कार्मणकाययोगमेव व्यापारयति, तन्मात्रचेष्टनादिति ॥ ३०५४ ॥ ३०५५ ॥

समुद्घाताद् निवृत्तः किमसौ करोति? इत्याह—

[2] विणिवत्तसमुग्घाओ तिन्नि वि जोए जिणो पउंजेज्ज। सच्चमसच्चामोसं च सो मणं तह वईजोगं ॥३०५६॥
ओरालियकाओगं गमणाई पाडिहारियाणं वा। पच्चप्पणं करेज्जा जोगनिरोहं तओ कुरुए ॥ ३०५७ ॥

व्याख्या– इह समुद्घातगतस्तावद् न कोऽपि सिध्यति, निवृत्तसमुद्घातोऽप्यन्तर्मुहूर्तं भव एव केवली तिष्ठति। तत्र च तिष्ठन्नसौ मनो-वाक्-कायलक्षणांस्त्रीनपि योगान् प्रयुञ्जीत। तत्र मनोयोगं, वाग्योगं च सत्यमसत्यामृषं च प्रयुङ्क्ते, असत्य-मिश्रयोस्तस्यासंभवात्। काययोगं त्वौदारिकं प्रयुञ्जानो गमनागमनादिकं प्रत्याहरणीयगृहीतपीठफलकादिप्रत्यर्पणं वा कुर्यात्, तत एतेषां योगानां निरोधं करोतीति ॥ ३०५६ ॥ ३०५७ ॥

अत्र परप्रश्नमाशङ्क्योत्तरमाह—

[3] किं न सजोगो सिज्झइ स बंधहेउ त्ति जं सजोगो य। न समेइ परमसुक्कं स निज्जराकारणं झाणं ॥३०५८॥

---

१ न किल समुद्घातगतो मनो-वाग्योगप्रयोजन करोति। औदारिकयोग पुनर्युनक्ति प्रथमाष्टमे समये ॥ ३०५४ ॥
उभयव्यापारात् तन्मिश्रं द्वितीय षष्ठ-सप्तमेषु। तृतीय-चतुर्थ पञ्चमेषु कार्मण तु तन्मात्रचेष्टातः ॥ ३०५५ ॥
२ विनिवृत्तसमुद्घातस्त्रीनपि योगान् जिन॰ प्रयुञ्जीत। सत्यमसत्यामृषं च स मनस्तथा वाग्योगम् ॥ ३०५६ ॥
औदारिककाययोग गमनादि प्रत्याहार्याणा वा। प्रत्यर्पण कुर्याद् योगनिरोधं ततः कुरुते ॥ ३०५७ ॥
३ किं न सयोगः सिध्यति स बन्धहेतुरिति यत् सयोगश्च। न समेति परमशुक्लं स निर्जराकारणं ध्यानम् ॥ ३०५८ ॥

सिद्धिस्तव, तर्हीदमपि भणितं वर्तते, तत् शृणु ॥ ३०९५ ॥

किं पुनस्तत् ? इत्याह—

नाणम्मि[1] दंसणम्मि य एत्तो एगयरयम्मि उवउत्तो । सव्वस्स केवलिस्सा जुगवं दो नत्थि उवओगा ॥३०९६॥

एतदिहैव व्यक्तं पुरस्ताद् वक्ष्यति । ततोऽस्यां गाथायां भद्रबाहुस्वामिभिर्व्यक्तेऽपि युगपदुपयोगे निषिद्धे तद्यौगपद्याभिमानोऽद्यापि न त्यज्यते ? इति भावः ॥ ३०९६ ॥

अत्र परस्य व्याख्यान्तरकल्पनामाशङ्क्य परिहारमाह—

अह[2] सव्वस्सेव न केवलिस्स दो किंतु कासइ हवेज्ज । सो य जिणो सिद्धो वा तं च न सिद्धाहिगाराओ ॥३०९७॥

अथैवं व्याख्यायते परेण– न सर्वस्यैव केवलिनो युगपद् द्वावुपयोगौ, किन्तु कस्यापि द्वौ भवेताम्, कस्यचिदेकः । स च केवली जिनः सिद्धो वा भवेत्– भवस्थकेवली सिद्धकेवली वा भवेदित्यर्थः । ततश्च भवस्थकेवलिनोऽद्यापि सकर्मकत्वादेकदैक एवोपयोगः, सिद्धकेवलिनस्तु सर्वथा कर्ममलकलङ्कविप्रमुक्तत्वाद् युगपद् द्वावुपयोगौ भवत इति परस्याकूतम् । तच्च न युक्तम्, इह सिद्धाधिकारात् । इदमुक्तं भवति– 'सव्वस्स[3] केवलिस्सा' इत्यादिना सिद्धाधिकारे सिद्धस्यैव भद्रबाहुस्वामिभिर्युगपद् द्वावुपयोगौ निषिद्धौ, अतो न किञ्चित् त्वत्कृता व्याख्यान्तरकल्पनेह फलवतीति भावः ॥ ३०९७ ॥

सूरिः समाधानान्तरमाह—

अहवा[4] पुव्वद्धेणव सिद्धमिक्को ति किंथ बिइएणं । इत्तो च्चिय पच्छद्धे वि गम्मई सव्वपडिसेहो ॥३०९८॥

अथवा, 'नाणम्मि दंसणम्मि य एत्तो एगयरम्मि उवउत्तो' इत्यनेन पूर्वार्धेनैवैकदा एक उपयोगः सिद्धः, ततः किं द्वितीयेन पश्चार्धेनोक्तेन ?, उक्तं चेदम्, ततः 'इत्तो च्चिय त्ति' इत एव 'सव्वस्स[3] केवलिस्सा' इत्यादिपश्चार्धोपन्यासात् सर्वप्रतिषेधो गम्यते, यथा– सर्वस्य केवलिनोऽपि युगपद् द्वावुपयोगौ न स्तः, किमुताकेवलिनः ? इति ॥ ३०९८ ॥

१ ज्ञाने दर्शने चेत एकतरस्मिन्नुपयुक्त । सर्वस्य केवलिनो युगपद् द्वौ न स्त उपयोगौ ॥ ३०९६ ॥
२ अथ सर्वस्यैव न केवलिनो द्वौ किन्तु कस्यचिद् भवेताम् । स च जिन. सिद्धो वा तच्च न सिद्धाधिकारात् ॥ ३०९७ ॥ ३ गाथा ३०९६ ।
४ अथवा पूर्वार्धेनैव सिद्धमेक इति किमत्र द्वितीयेन । इत एव पश्चार्धेऽपि गम्यते सर्वप्रतिषेधः ॥ ३०९८ ॥

ननु किमिति योगनिरोधं करोति, सयोग एवासौ किं न सिध्यति ? इति परेण पृष्टे सत्याह— यस्मात् स त्रिविधोऽपि योगः कर्मणो बन्धहेतुः, कर्मसंबन्धश्च संसारनिबन्धनमेव, इति कथं सयोगः सिध्यति ?। किञ्च, पर्यन्ते सकलकर्मनिर्जरायाः परमशुक्लध्यानमेव कारणम्, तच्च सयोगः सन् जन्तुर्न समेति न प्राप्नोति, सयोगस्य सक्रियत्वात्, परमशुक्लध्यानस्य च समुत्थाताशेषक्रियारूपत्वात्, इति कुतः सयोगः सिध्यतीति ?। तस्माद् योगनिरोधः कर्तव्यः ॥ ३०५८ ॥

कथं पुनस्तं करोति ? इत्याह—

[1]पज्जत्तमित्तसन्निस्स जत्तियाइं जहन्नजोगिस्स । होंति मणोदव्वाइं तव्वावारो य जम्मत्तो ॥ ३०५९ ॥
तदसंखगुणविहीणं समए समए निरुंभमाणो सो । मणसो सव्वनिरोहं करे असंखेज्जसमएहिं ॥३०६०॥
पज्जत्तमेत्तबिंदियजहन्नवइजोगपज्जया जे उ । तदसंखगुणविहीणे समए समए निरुंभंतो ॥ ३०६१ ॥
सव्ववइजोगरोहं संखाईएहिं कुणइ समएहिं । तत्तो य सुहुमपणयस्स पढमसमओववन्नस्स ॥ ३०६२ ॥
जो किर जहन्नजोगो तदसंखेज्जगुणहीणमेक्केक्के । समए निरुंभमाणो देहतिभागं च मुंचंतो ॥३०६३॥
रुंभइ स कायजोगं संखाईएहिं चेव समएहिं । तो कयजोगनिरोहो सेलेसीभावयामेइ ॥ ३०६४ ॥

पाठसिद्धा एव ॥ ३०५९ ॥ ३०६० ॥ ३०६१ ॥ ३०६२ ॥ ३०६३ ॥ ३०६४ ॥

शैलेशीशब्दव्युत्पत्तिमाह—

---

१ पर्याप्तमात्रसंज्ञिनो यावन्ति जघन्ययोगिनः । भवन्ति मनोद्रव्याणि तद्व्यापारश्च यन्मात्र ॥ ३०५९ ॥
तदसंख्यगुणविहीनं समये समये निरुन्धानः स । मनसः सर्वनिरोध कुर्यादसंख्येयसमयैः ॥ ३०६० ॥
पर्याप्तमात्रद्वीन्द्रियजघन्यवाग्योगपर्याया ये तु । तदसंख्यगुणविहीनान् समये समये निरुन्धानः ॥ ३०६१ ॥
सर्ववाग्योगरोध संख्यातीतै करोति समयैः । ततश्च सूक्ष्मपनकस्य प्रथमसमयोपपन्नस्य ॥ ३०६२ ॥
यः किल जघन्ययोगस्तदसंख्येयगुणहीनमेकैकस्मिन् । समये निरुन्धानो देहत्रिभाग च मुञ्चन् ॥ ३०६३ ॥
रुणद्धि स काययोग संख्यातीतैरेव समयैः । ततः कृतयोगनिरोधः शैलेशीभावतामेति ॥ ३०६४ ॥

[1]तो कहमिहेव भणियं उवउत्ता दंसणे य नाणे य ? । समुदायवयणमेयं उभयनिसेहो य पत्तेयं ॥३०९९॥

यदि न युगपदुपयोग इष्यते, तत आचार्य ! कथमिहैव भणितम् ?– तथाचेहैव भणिष्यतीत्यर्थः । किं तत् ? इत्याह– 'उवउत्ता दंसणे य नाणे य त्ति' दर्शने ज्ञाने च युगपदुपयुक्ता इह किल भणिता इति परस्याभिप्रायः । अयं च मिथ्याभिमानापहृतसद्बोधकत्वात् कदभिप्राय एवेति दर्शयति— 'समुदायवयणमेयं ति' समुदायविषयमेवेदम्– न तु युगपदुपयोगप्रतिपादनपरमित्यर्थः । अनन्ता हि सिद्धाः, तत्समुदाये च 'केऽपि ज्ञान उपयुक्ताः, केचित्तु दर्शने' इत्ययमत्रार्थः। प्रत्येकविवक्षायां पुनः '[2]पत्तेयावरणत्तं' इत्याद्यभिहितयुक्तेर्युगपदुभयोपयोगनिषेध एव मन्तव्य इति ॥ ३०९९ ॥

पुनरपि प्रेर्य-परिहारौ प्राह—

[4]जमपज्जंताइं केवलाइं तेणोभओवओगो त्ति । भण्णइ नायं निअमो संतं तेणोवओगो त्ति ॥ ३१०० ॥

साद्यपर्यवसितत्वाद् यस्मादपर्यन्ते अविनाशिनी सदावस्थिते केवलज्ञान-दर्शने, तेन तस्माद् युगपदुपयोग इष्यतेऽस्माभिः । इह हि यद् बोधस्वभावं सदावस्थितं च तस्योपयोगेनापि सदा भवितव्यमेव, अन्यथोपलशकलकल्पत्वेन बोधस्वभावत्वानुपपत्तेः, सदोपयोगे च द्वयोर्युगपदुपयोगः सिद्ध एवेति परस्याभिप्रायः । आचार्य आह– भण्यतेऽत्रोत्तरम्– नायं नियमः, सर्वदा यल्लब्धिमाश्रित्य सद् विद्यमानं केवलज्ञानं केवलदर्शनं च, तेन तयोरुपयोगेनापि सर्वदा भवितव्यमिति ॥ ३१०० ॥

कुतः पुनर्नायं नियमः ? इत्याह—

[5]ठिइकालं जह सेसदंसण-नाणाणमणुओगे वि । दिट्ठमवत्थाणं तह न होइ किं केवलाणं पि ? ॥ ३१०१ ॥

यथा केवलज्ञान-दर्शनाभ्यां शेषाणि यानि ज्ञानानि दर्शनानि च तेषां निजनिजस्थितिकालं यावदनुपयोगेऽपि उपयोगाभावेऽपि सत्त्वस्यावस्थानं दृष्टम्, तथा केवलज्ञान-दर्शनयोरपि निजस्थितिकालं यावदनुपयोगेऽपि सत्त्वस्यावस्थानं किमिति न भवति ? । भवति चेत्, तर्हि 'सतो ज्ञानस्य दर्शनस्य चोपयोगेन भवितव्यम्' इत्यनैकान्तिकमेव । इयमत्र भावना– शेषज्ञान-दर्शनानां

१ ततः कथमिहैव भणितमुपयुक्ता दर्शने च ज्ञाने च । समुदायवचनमेतदुभयनिषेधश्च प्रत्येकम् ॥ ३०९९ ॥ २ ज. 'णमियं' ।
३ गाथा ३०९३ । ४ यदपर्यन्ते केवले तेनोभयोपयोग इति । भण्यते नाय नियम. सत् तेनोपयोग इति ॥ ३१०० ॥
५ स्थितिकालं यथा शेषदर्शन-ज्ञानयोरनुपयोगेऽपि । दृष्टमवस्थानं तथा न भवति किं केवलयोरपि ? ॥ ३१०१ ॥

[1]सेलेसो किल मेरू सेलेसी होइ जा तदचलया । होउं व असेलेसो सेलेसीहोइ थिरयाए ॥ ३०६५ ॥
अहवा सेलु व्व इसी सेलेसीहोइ सोऽतिथिरयाए । से व अलेसी होइ सेलेसीहोअलोवाओ ॥ ३०६६ ॥
सीलं व समाहाणं निच्छयओ सव्वसंवरो सो य । तस्सेसो सीलेसो सेलेसी होइ तदवत्था ॥ ३०६७ ॥

व्याख्या– शैलेशो मेरुस्तस्येवाऽचलता स्थिरताऽस्यामवस्थायां सा शैलेशी। अथवा, अशैलेशः शैलेश इव स्थिरतया भवति शैलेशी 'भवति' इत्यध्याहारः। अथवा, प्राकृतसंज्ञामाश्रित्य स्थिरतया 'सेलु व्व इसी महरिसी' तस्य संबन्धिनी स्थिरतावस्थाप्युपचारतः शैलेशी। अथवा, प्राकृतत्वादेव "[2]से भिक्खू वा भिक्खुणी वा" इत्यादिन्यायतः 'से त्ति सो महरिसी' अलेश्यो लेश्यारहितो भवति यस्यामवस्थायां सा शैलेशी, अकारलोपादिति। अथवा, शीलं समाधानं, तच्च निश्चयतः प्रकर्षप्राप्तसमाधानरूपत्वात् सर्वसंवरः, ततस्तस्य सर्वसंवररूपस्य शीलेस्येशः शीलेशस्तस्येयमवस्था शैलेशीति ॥ ३०६५ ॥ ३०६६ ॥ ३०६७ ॥

शैलेशीकालप्रमाणमाह—

[3]हस्सक्खराइं मज्झेण जेण कालेण पंच भण्णंति । अत्थइ सेलेसिगओ तत्तियमेत्तं तओ कालं ॥३०६८॥

नातिशीघ्रैर्न चाप्यतिस्थिरैः किन्तु मध्यमभङ्ग्या यावता कालेन 'अ इ उ ऋ ऌ' इत्येतानि पञ्च ह्रस्वाक्षराणि भण्यन्ते, एतावन्तं कालं शैलेशीगतस्तकोऽसौ तिष्ठतीति ॥ ३०६८ ॥

किं पुनस्तत्र ध्यानं ध्यायति ? इत्याह—

[4]तणुरोहारंभाओ झायइ सुहुमकिरियानियट्टिं सो । वुच्छिन्नकिरियमप्पडिवाइं सेलेसिकालम्मि ॥ ३०६९ ॥

ततः काययोगस्य निरोधारम्भसमयात् प्रभृति सूक्ष्मक्रियानिवृत्तिरूपं शुक्लध्यानमसौ ध्यायति। ततः सर्वयोगनिरोधादूर्ध्वं

---

१ शैलेश किल मेरु शैलेशी भवति या तदचलता । भूत्वा वाऽशैलेश शैलेशीभवति स्थिरतया ॥ ३०६५ ॥
अथवा शैल इव ऋषि शैलेशीभवत्यतिस्थिरतया । स वाऽलेश्यो भवति शैलेशीभवत्यलोपात् ॥ ३०६६ ॥
शील वा समाधान निश्चयत. सर्वसवर स च । तस्येश शीलेश शैलेशीभवति तदवस्था ॥ ३०६७ ॥ २ स भिक्षुर्वा भिक्षुकी वा ।
३ ह्रस्वाक्षराणि मध्येन येन कालेन पञ्च भण्यन्ते । तिष्ठति शैलेशीगतस्तावन्मात्र सक कालम् ॥ ३०६८ ॥
४ तनुरोधारम्भाद् ध्यायति सूक्ष्मक्रियानिवृत्ति स । व्युच्छिन्नक्रियमप्रतिपाति शैलेशीकाले ॥ ३०६९ ॥

प्रज्ञापनायां कायस्थितौ दीर्घस्थितिकाल उक्तः, तद्यथा– "[1]मइनाणी णं, भंते ! मइनाणि त्ति कालओ केचिरं होइ ? । गोयमा ! जहन्नेणं अंतोमुहुत्तेणं, उक्कोसेणं छावट्ठिं सागरोवमाइं साइरेगाइं । एवं सुयनाणी वि । ओहीनाणी वि एवं चेव, नवरं जहन्नेणं एक्कं समयं । मणपज्जवनाणी जहन्नेणं एक्कं समयं, उक्कोसेणं देसूणं पुव्वकोडिं (यदा विभङ्गज्ञानं सम्यक्त्वलाभे समयमेकमत्रावधिज्ञानं भूत्वा प्रतिपतति तदावधिज्ञानस्य जघन्यतः समयं स्थितिकालो मन्तव्यः, मनःपर्यायज्ञानस्य तूत्पत्त्यनन्तरं तद्वतो मरणादिति) चक्खुदंसणी जहन्नेणं अन्तोमुहुत्तं, उक्कोसेणं सागरोवमसहस्सं साइरेगं । अचक्खुदंसणी अणाइए वा सपज्जवसिए, अणाइए अपज्जवसिए वा । ओहिदंसणी जहा ओहिनाणि त्ति" इति । तदेवमेतेषां निजनिजस्थितिकालं यावत् सत्त्वमुक्तम्, उपयोगस्त्वान्तर्मौहूर्तिकत्वाद् नैतावन्तं कालं भवति । अतः 'सतोऽवश्यमुपयोगेन भवितव्यम्' इति कथं नानैकान्तिकम् ? । अथ लब्धित एवैतान्येतावन्तं कालं भवन्ति, न तु बोधात्मनेति चेत् । तदिदं हन्त ! केवलज्ञान-दर्शनयोरपि समानम्, तयोरपि लब्धित एवापर्यन्तत्वात् । उपयोगतस्तु सामयिकत्वादिति ॥ ३१०१ ॥

पुनरप्यतिस्वाग्रहग्रस्तत्वात् परः प्राह —

[2]नणु सानिहणत्तमेवं मिच्छावरणक्खओ त्ति व जिणस्स । इयरेयरावरणया अहवा निक्कारणावरणं ॥३१०२॥
एगयराणुवउत्ते तदसव्वन्नु-दरिसणत्तण न तं च । भण्णइ छउमत्थस्स वि समाणमेगन्तरे सव्वं ॥३१०३॥

व्याख्या– ननु यद्येकस्मिन् समये केवलज्ञानोपयोगः, अन्यस्मिंस्तु समये केवलदर्शनोपयोग इष्यते, तर्ह्येवं क्रमोपयोगत्वे केवलज्ञान-दर्शनयोः सनिधनत्वं प्रतिसमयं सान्तत्वं प्राप्नोति । तथा च सति तयोः समयोक्तमपर्यवसितत्वं हीयते । अथवा, यः कष्टशतानि कृत्वा ज्ञानावरणादिक्षयो विहितः स मिथ्या निरर्थको जिनस्य भगवतः प्राप्नोति, समयात् समयादूर्ध्वं केवलज्ञान-दर्शनोपयोगयोः पुनरप्यभावात् । न ह्यपनीतावरणौ द्वौ प्रदीपौ क्रमेण प्रकाशं प्रकाशयतः । अथवा, केवलज्ञान-दर्शनयो-

1 मतिज्ञानी, भगवन् ! मतिज्ञानीति कालतः कियच्चिरं भवति ? । गौतम ! जघन्येनान्तर्मुहूर्तमुत्कर्षेण षष्टिं सागरोपमाणि सातिरेकाणि । एव श्रुतज्ञान्यपि । अवधिज्ञान्यप्येवमेव, नवरं जघन्येनैक समयम्, उत्कर्षेण देशोनां पूर्वकोटिम् । चक्षुर्दर्शनी जघन्येनान्तर्मुहूर्तम्, उत्कर्षेण सागरोपमसहस्रं सातिरेकम् । अचक्षुर्दर्शनोऽनादिको वा सपर्यवसित, अनादिकोऽपर्यवसितो वा । अवधिदर्शनी यथाऽवधिज्ञानीति ।

2 ननु सनिधनत्वमेवं मिथ्यावरणक्षय इति वा जिनस्य । इतरेतरावरणताऽथवा निष्कारणावरणम् ॥ ३१०२ ॥
एकतरानुपयुक्ते तदसर्वज्ञ-दर्शनत्वं न तच्च । भण्यते छद्मस्थस्यापि समानमेकान्तरे सर्वम् ॥ ३१०३ ॥

शैलेशीकाले समुच्छिन्नक्रियमप्रतिपाति शुक्लध्यानं ध्यायतीति ॥ ३०६९ ॥

अत्र प्रेर्यमाशङ्क्य परिहरन्नाह—

[1]झाणं मणोविसेसो तदभावे तस्स संभवो कत्तो । भण्णइ भणियं झाणं समए तिविहेवि करणंमि ॥३०७०॥

ननु 'ध्यै चिन्तायाम्' इति वचनाद् मनोविशेषो मनसः कापि निश्चला चिन्तावस्थैव ध्यानमुच्यते। मनश्च "अमनस्काः केवलिनः" इति वचनात् तस्य नास्ति। ततस्तदभावे मनसोऽसत्त्वे तस्य ध्यानस्य केवलिनः कुतः संभवः ? । अतः 'तनुरोहारंभाओ'[2] इत्याद्यघटमानमेवेति । सूरिराह– भण्यतेऽत्रोत्तरम्– 'भङ्गियसुयं गुणंतो वट्टइ तिविहे वि झाणम्मि'[3] इत्यादिवचनात् त्रिविधेऽपि मनो-वाक्-कायलक्षणे करणे समये सिद्धान्ते ध्यानं भणितमेव। ततो मनोविशेष एव ध्यानमित्यनैकान्तिकम्, वाक्-कायव्यापारेऽपि ध्यानस्योक्तत्वादिति भावः ॥ ३०७० ॥

यतः परिभाषा—

[4]सुदढपयत्तवावारणं निरोहो व विज्जमाणाणं । झाणं करणाण मयं न उ चित्तनिरोहमित्तागं ॥३०७१॥

यतश्च मनो-वाक्-कायलक्षणानां करणानां सुदृढप्रयत्नेन व्यापारणम्, विद्यमानानां पूर्वोक्तक्रमेण निरोधो वा ध्यानं भगवतां मतम्, न पुनश्चित्तनिरोधमात्रकम्, ध्यैधातोरनेकार्थत्वात्, करणनिरोधार्थेऽपि वर्तनादिति ॥ ३०७१ ॥

ततश्च—

[5]होज्ज न मणोमयं वाइयं च झाणं जिणस्स तदभावे । कायनिरोहपयत्तस्सभावमिहं को निवारेइ ? ॥३०७२॥

तदभावे मनसोऽभावे केवलिनो मनोमयं मनोविशेषरूपम्, तथा, मनःपूर्वकत्वाद् विशिष्टवचसो वाचिकं च ध्यानं न भवेत्, तद् मा भूत्, यत् पुनः कायनिरोधप्रयत्नस्वभावं ध्यानमिह, तत् तस्य को निवारयति ?– न कोऽपीति ॥ ३०७२ ॥

---

१ ध्यानं मनोविशेषस्तदभावे तस्य संभवः कुतः । भण्यते भणितं ध्यानं समये त्रिविधेऽपि करणे ॥ ३०७० ॥

२ गाथा ३०६९ । ३ भङ्गिकमुपगुणयन् वर्तते त्रिविधेऽपि ध्याने ।

४ सुदृढप्रयत्नव्यापारणं निरोधो वा विद्यमानानाम् । ध्यानं करणानां मतं न तु चित्तनिरोधमात्रकम् ॥ ३०७१ ॥

५ भवेद् न मनोमयं वाचिकं च ध्यानं जिनस्य तदभावे । कायनिरोधप्रयत्नस्वभावमिह को निवारयति ? ॥ ३०७२ ॥

रितरेतरावरणता परस्परमावारकत्वं प्राप्नोति, कर्मावरणाभावेऽप्यन्यतरसद्भावेऽन्यतराभावादिति । अथेतरेतरावरणता नेष्यते, तर्ह्यन्यतरोपयोगकालेऽन्यतरस्य निष्कारणमेवावरणं स्यात् । तथा च सति 'नित्यं सत्त्वमसत्त्वं वा' इत्यादि प्रसज्यत इति । तथा, एकतरस्मिन् ज्ञाने दर्शने वानुपयुक्तस्तस्मिन्नेकतरानुपयुक्ते केवलिनीष्यमाणे ज्ञानानुपयोगकाले तस्य केवलिनोऽसर्वज्ञत्वं प्राप्नोति, दर्शनानुपयोगकाले त्वसर्वदर्शित्वं प्रसजति । अनुस्वारश्चेह लुप्तो द्रष्टव्यः । तच्चासर्वज्ञत्वमसर्वदर्शित्वं च नेष्टं जैनानाम्, सर्वदैव केवलिनि सर्वज्ञत्व-सर्वदर्शित्वाभ्युपगमादिति । सूरिराह– भण्यतेऽत्रोत्तरम्– ननु च्छद्मस्थस्यापि दर्शन-ज्ञानयोरेकान्तर उपयोगे सर्वमिदं दोषजालं समानमेव । अत्रापि हि शक्यत एव वक्तुम्– ज्ञानानुपयोगे तस्याज्ञानित्वम्, दर्शनानुपयोगे पुनरदर्शनित्वम्; तथा मिथ्यावरणक्षयः, इतरेतरावरणता वा, निष्कारणावरणत्वं वेत्यादि ॥ ३१०२ ॥ ३१०३ ॥

पुनरप्यनिर्विण्णस्य परस्याशङ्कामाह—

[1]सव्वक्खीणावरणो अह मन्नसि केवली न छउमत्थो। उभओवओगविग्घो तो छउमत्थस्स न जिणस्स ॥३१०४॥

अथैवं मन्यसे– सर्वक्षीणावरणः क्षपितनिःशेषावरणः केवली, न तु च्छद्मस्थः, ततो युगपज्ज्ञान-दर्शनाभयोपयोगविघ्नश्छद्मस्थस्यैव भवति, सावरणत्वात्; न तु जिनस्य केवलिनः, सर्वथा निरावरणत्वादिति ॥ ३१०४ ॥

अत्रोत्तरमाह—

[2]देसक्खए अजुत्तं जुगवं कसिणोभओवओगित्तं। देसोभओवओगो पुणाइ पडिसिज्जए किं सो? ॥३१०५॥

इह यद्यपि च्छद्मस्थः क्षीणनिःशेषावरणो न भवति, तथापि देशतस्तस्याप्यावरणक्षयो लभ्यते । ततस्तस्यावरणक्षये सति युगपत् कृत्स्नोभयोपयोगित्वं युगपत् सर्ववस्तुविषयज्ञान-दर्शनोभयोपयोगभवनमयुक्तम्, इत्येतावन्मात्रं मन्यामहे वयम्। यस्तु देशतोऽसर्ववस्तुविषयज्ञान-दर्शनोभयोपयोगः स हन्त! 'से' तस्य च्छद्मस्थस्य किं प्रतिषिध्यते?– न तु युक्तस्तत्प्रतिषेध इत्यर्थः। न चास्य युगपदुभयोपयोगो भवति, ततोऽसौ केवलिनोऽपि न युक्त इतीह भावार्थः ॥ ३१०५ ॥

पुनरपि पराशङ्कां परिहारं चाह—



1 सर्वक्षीणावरणोऽथ मन्यसे केवली न च्छद्मस्थः । उभयोपयोगविघ्नस्ततश्छद्मस्थस्य न जिनस्य ॥ ३१०४ ॥

2 देशक्षयेऽयुक्तं युगपत् कृत्स्नोभयोपयोगित्वम् । देशोभयोपयोगः पुनः प्रतिषिध्यते किं सः? ॥ ३१०५ ॥

अपि च,

[1]जइ छउमत्थस्स मणोनिरोहमेत्तपयत्तयं झाणं । कह कायजोगरोहप्पयत्तयं होइ न जिणस्स ? ॥३०७३॥

प्रकटार्था ॥ ३०७३ ॥

पुनरपि परः प्राह—

[2]आहाभावे मणसो छउमत्थस्सेव तं न झाणं से । अह तदभावे वि मयं झाणं तं किं न सुत्तस्स ? ॥३०७४॥

आह परः– मनसोऽभावे 'से' तस्य केवलिनश्छद्मस्थस्यैकेन्द्रियादेरिव तत् सूक्ष्मक्रियानिवृत्त्यादिकं ध्यानं न घटते । अथ तदभावेऽपि मतं ध्यानम्, ततः सुप्तस्य तत् किं नेष्यते, मनोऽसत्त्वस्य तुल्यत्वात् ? इति ॥ ३०७४ ॥

पर एवाचार्यमतमाशङ्क्याह—

[3]अहवा मई सुत्तस्स हि न कायरोहप्पयत्तसब्भावो । एवं चित्ताभावे कत्तो य तओ जिणस्सावि ? ॥३०७५॥

होज्ज व किंचिम्मेत्तं चित्तं सुत्तस्स सव्वहा न जिणे । जइ सुत्तस्स न झाणं जिणस्स तं दूरयरएणं ॥३०७६॥

व्याख्या– अथवा, आचार्यस्य मतिः– सुप्तस्य स्फुटमेव ज्ञायते न कायनिरोधप्रयत्नसद्भावः, किन्तु तदभाव एव, तत् कुतस्तस्य ध्यानम् ?, जिने त्वस्त्यसाविति तस्य ध्यानं भवत्येव । अत्रोच्यते– नन्वेवं तर्ह्यमनस्कत्वाच्चित्ताभावे जिनस्यापि केवलिनः कुतस्तकोऽसौ कायनिरोधप्रयत्नसद्भावः ?। भवेद् वाऽद्यापि किञ्चिन्मात्रं चित्तं सुप्तस्यापि, जिने तु केवलिन्यमनस्कत्वात् तत् सर्वथा नास्ति; ततश्च सुप्तस्य यदि न ध्यानमिष्यते, तर्हि जिनस्य तद् दूरतरकेण दूरतरेण नेष्टव्यम्, सर्वथा चित्ताभावेन कायनिरोधप्रयत्नाभावादिति ॥ ३०७५ ॥ ३०७६ ॥

सूरिः प्रतिविधानमाह—

१ यदि छद्मस्थस्य मनोनिरोधमात्रप्रयत्नकं ध्यानम् । कथं काययोगरोधप्रयत्नकं भवति न जिनस्य ? ॥ ३०७३ ॥
२ आहाभावे मनसश्छद्मस्थस्येव तद् न ध्यानं तस्य । अथ तदभावेऽपि मतं ध्यानं तत् किं न सुप्तस्य ? ॥ ३०७४ ॥
३ अथवा मतिः सुप्तस्य हि न कायरोधप्रयत्नसद्भावः । एवं चित्ताभावे कुतश्च सको जिनस्यापि ? ॥ ३०७५ ॥
भवेद् वा किञ्चिन्मात्रं चित्तं सुप्तस्य सर्वथा न जिने । यदि सुप्तस्य न ध्यानं जिनस्य तद् दूरतरकेण ॥ ३०७६ ॥

अह जम्मि नोवउत्तो तं नत्थि तओ न दंसणाइतिगे। अत्थि जुगवोवओगो त्ति होउ साहू कहं विगलो ?॥३१०६॥

अथैवं मन्यसे- क्रमोपयोगित्वेऽभ्युपगम्यमाने केवली यस्मिन्ज्ञाने दर्शने वोपयुक्तस्तदस्ति, यस्मिंस्तु नोपयुक्तस्तत् तदा नास्त्येव, अनुपलभ्यमानत्वात्, खरविषाणवत्। ततस्तर्हि दर्शनादित्रिके दर्शन-ज्ञान-चारित्रत्रये छद्मस्थस्य सर्वेषां युगपदुपयोगो नास्ति, छद्मस्थस्य युगपदुपयोगाभावस्य त्वयाभ्युपगतत्वात्। ततो दर्शनादित्रिके यत्राप्यनुपयुक्तस्तदपि त्वदभिप्रायेण नास्ति। अतस्तद्विकल एकेनापि दर्शनादिना रहितः कथं साधुर्भवतु ?- न प्राप्नोत्येव साधुत्वं तस्य त्वदभिप्रायेणेति भावः। भण्यते चासौ समये लोके सर्वदैव साधुः। ततो नेदमपि क्रमोपयोगे दूषणमिति ॥ ३१०६ ॥

'यत्रानुपयुक्तस्तदसत्' इत्यत्र दूषणान्तराण्यप्याह—

[2]ठिइकालविसंवाओ नाणाणं न विय ते चउन्नाणी। एवं सइ छउमत्थो अत्थि न य तिदंसणी समए॥३१०७॥

इह ज्ञानानां दर्शनानां चोपयोग आन्तर्मौहूर्तिक एव समये प्रोक्तः। तस्माच्च परतस्त्वदभिप्रायेण किल ज्ञानं दर्शनं वा नास्ति। एवं सति ज्ञानानामुपयोगलक्षणत्वाद् दर्शनानां च यः सातिरेकषट्षष्टिसागरोपमादिको दीर्घः स्थितिकालः समये प्रोक्तस्तस्य विसंवादो विघटनं प्राप्नोति। यश्च चतुर्ज्ञानी केवलदर्शनवर्जदर्शनत्रययुक्तत्वात् त्रिदर्शनी च छद्मस्थो गौतमादिः प्रसिद्धः, सोऽपि त्वदभिप्रायेण तद्रूपः सर्वदा न भवति, एकदैकोपयोगस्यैव संभवात्, अनुपयोगवतश्चासत्त्वादिति ॥ ३१०७ ॥

अथ सिद्धान्तावष्टम्भेन पुनरपि परः प्राह—

[3]आह भणियं नणु सुए केवलिणो केवलोवओगेण। पढम त्ति तेण गम्मइ सओवओगोभयं तेसिं ॥ ३१०८ ॥

आह- ननु भणितं भगवत्यामष्टादशशतकप्रथमोद्देशलक्षणे श्रुते- "[4]केवली णं भन्ते ! केवलोवओगेणं किं पढमा अपढमा ?। गोयमा ! पढमा नो अपढम त्ति" इति। इह च यो येन भावेन पूर्वं नासीत्, इदानीं च जातः, स तेन भावेन प्रथम उच्यते। ततश्च केवलिनः केवलोपयोगेन प्रथमाः। अयमर्थः- केवलयोः केवलज्ञान-केवलदर्शनयोरुपयोगः केवलोपयोगस्तेन केवलिनः प्रथमाः, न त्वप्रथ-

1 अथ यस्मिन् नोपयुक्तस्तद् नास्ति ततो न दर्शनादित्रिके। अस्ति युगपदुपयोग इति भवतु साधु कथ विकल ? ॥ ३१०६ ॥
2 स्थितिकालविसंवादो ज्ञानाना नापि च ते चतुर्ज्ञान। एव सति छद्मस्थोऽस्ति न च त्रिदर्शन समये ॥ ३१०७ ॥
3 आह भणित ननु श्रुते केवलिन केवलोपयोगेन। प्रथमा इति तेन गम्यते सदोपयोगोभय तेषाम् ॥ ३१०८ ॥
4 केवलिनो भगवन् ! केवलोपयोगेन किं प्रथमा अप्रथमा ?। गौतम ! प्रथमा, नो अप्रथमा.।

[1]जुत्तं जं छउमत्थस्स करणमेत्ताणुसारिनाणस्स । तदभावम्मि पयत्ताभावो न जिणस्स सो जुत्तो ॥ ३०७७ ॥

छउमत्थस्स मणोमेत्तविहियजत्तस्स जइ मयं झाणं । कह तं जिणस्स न मयं केवलविहियप्पयत्तस्स ? ॥३०७८॥

व्याख्या– युक्तं यच्छद्मस्थस्य करणमत्र मनः, तन्मात्रानुसारिज्ञानस्य तदभावे सुप्तावस्थायां मनःकरणाभावे कायनिरोधप्रयत्नाभावः । जिनस्य पुनरसौ न युक्तः, मनोज्ञानाभावेऽपि केवलज्ञानसद्भावादिति । किञ्च, यदि मनोमात्रविहितयत्नस्य छद्मस्थस्य साध्वादेर्मतं ध्यानम्, तर्हि कथं जिनस्य केवलिनः सकललोकावलोकविलोकनस्वभावकेवलज्ञानविहितप्रयत्नस्य तद् ध्यानं नाभिमतम् ? इति ॥ ३०७७ ॥ ३०७८ ॥

अपि च,

[2]पुव्वपओगओ वि य कम्मविणिज्जरणहेउओ वा वि । सद्दत्थबहुत्ताओ तह जिणचंदागमाओ य ॥३०७९॥

चिंताभावे वि सया सुहुमोवरयकिरियाइं भन्नंति । जीवोवओगसब्भावओ भवत्थस्स झाणाइं ॥ ३०८० ॥

व्याख्या– भवस्थस्य केवलिनश्चिन्ताया अभावेऽपि सदा सूक्ष्मक्रियानिवृत्त्युपरतक्रियाप्रतिपातिलक्षणे द्वे ध्याने भण्येते इति संबन्धः, इयं च प्रतिज्ञा । हेतुमाह– जीवोपयोगस्वाभाव्यात्– तज्जीवोपयोगस्य तस्यामवस्थायामेवंविधस्वभावत्वादित्यर्थः॥ तथा, पूर्वप्रयोगात्– पूर्वविहितध्यानसंस्कारादित्यर्थः । तथा, कर्मनिर्जरणहेतुत्वात् ते ध्याने अभिधीयेते, छद्मस्थस्य धर्मध्यानवदिति । तथा, शब्दस्यार्थानां बहुत्वात्– ध्यैधातोरनेकार्थत्वादित्यर्थः । तथा, जिनागमे भणितत्वादिति ॥ ३०७९ ॥ ३०८० ॥

अथ प्रेर्यं परिहारं चाह—

[3]जइ अमणस्स वि झाणं केवलिणो कीस तं न सिद्धस्स ?। भण्णइ जं न पयत्तो तस्स जओ न य निरुद्धव्वं ॥३०८१॥

---

१ युक्तं यच्छद्मस्थस्य करणमात्रानुसारिज्ञानस्य । तदभावे प्रयत्नाभावो न जिनस्य स युक्तः ॥ ३०७७ ॥
छद्मस्थस्य मनोमात्रविहितयत्नस्य यदि मतं ध्यानम् । कथं तज्जिनस्य न मतं केवलविहितप्रयत्नस्य ? ॥ ३०७८ ॥

२ पूर्वप्रयोगतोऽपि च कर्मविनिर्जरणहेतुतो वापि । शब्दार्थबहुत्वात् तथा जिनचन्द्रागमाच्च ॥ ३०७९ ॥
चिन्ताऽभावेऽपि सदा सूक्ष्मोपरतक्रिये भण्येते । जीवोपयोगसद्भावतो भवस्थस्य ध्याने ॥ ३०८० ॥

३ यद्यमनसोऽपि ध्यानं केवलिनः कस्मात् तद् न सिद्धस्य ? । भण्यते यद् न प्रयत्नस्तस्य यतो न च निरोद्धव्यम् ॥ ३०८१ ॥

मा:, तस्याप्राप्तपूर्वत्वात्, प्राप्तस्य च पुनर्ध्वंसाभावात्। तेन तस्मात् गम्यते ज्ञायते सदैवोपयोगोभयं तेषां प्रवर्तते। यदि पुनः क्रमेणोपयोगः स्यात्, तदा भूत्वा भूत्वा विनाशात्, पुनः पुनरपि चोत्पादात्, केवलोपयोगेनाप्रथमत्वमपि तेषां भवेदिति भावः ॥ ३१०८ ॥

सूरिराह—

[1]उवओगग्गहणाओ इह केवलनाण-दंसणग्गहणं। जइ तदणत्थंतरया हवेज्ज सुत्तम्मि को दोसो ? ॥३१०९॥

यदि 'केवलोवओगेणं' इत्यत्रोपयोगग्रहणात् 'केवलयोरुपयोगः केवलोपयोगः' इति समासाक्षिप्तयोः केवलज्ञान-केवलदर्शनयोर्ग्रहणमिष्यते, तर्हि तदनर्थान्तरता, तयोः केवलज्ञान-केवलदर्शनयोरेकस्मादुपयोगादव्यतिरिक्तत्वात् परस्परमनर्थान्तरता— ज्ञानं च दर्शनं चैकमेव वस्तु, एकरूपभावादिति। परः प्राह— 'सुत्तम्मि को दोसो त्ति' भवतु तयोरनर्थान्तरता, को ह्येवं सति 'केवलोवओगेणं' इति सूत्रे दोषः स्यात् ?— न कश्चित्, अस्माकं सिद्धसाधनादिति ॥ ३१०९ ॥

आचार्यः प्राह— यदि दोषपरिज्ञाने तव कुतूहलम्, तर्हि शृणु तम्, इत्याह—

[2]तग्गहणे किमिह फलं नणु तदणत्थंतरोवएसत्थं। तह वत्थुविसेसत्थं सयसो सुत्ताइं समयम्मि ॥३११०॥

तेग्गहणे किमिह फलं नणु तदणत्थंतरोवएसत्थं। — अनर्थान्तरत्वे सति किमर्थमुभयग्रहणम् ?, पुनन्विह सूत्रे तयोः केवलयोर्ग्रहणं तस्मिंस्तद्ग्रहणे सति किं फलं सिध्यति— अनर्थान्तरत्वे सति किमर्थमुभयग्रहणम् ?, पुनरुक्तदोषप्रसङ्गादिति भावः। पर आह— तयोः केवलज्ञान-दर्शनयोः परस्परमनर्थान्तरतोपदेशार्थमेवेदम्। तथा, वस्तुनः केवलस्य केवलज्ञान-केवलदर्शनपर्यायध्वनिभ्यां विशेषणार्थं चेदम्। एकमेव हि केवलवस्तु केवलज्ञान-केवलदर्शनलक्षणपर्यायध्वनिद्वयेन विशेषितं भवतीत्यर्थः। न केवलमिदं मयैवोच्यते, किन्त्वेकस्यैव वस्तुनोऽनेकपर्यायध्वनिभिर्विशेषणार्थं समये सिद्धान्तेऽपि सूत्राणि शतशोऽनेकशः सन्तीति ॥ ३११० ॥

एतदेव पर उपदर्शयति—

[3]सिद्धो काइय-नोसंजयाइपज्जायओ स एवेगो। सुत्तेसु विसेसिज्जइ जहेह तह सव्ववत्थूणि ॥ ३१११ ॥

1. उपयोगग्रहणादिह केवलज्ञान-दर्शनग्रहणम्। यदि तदनर्थान्तरता भवेत् सूत्रे को दोषः ? ॥ ३१०९ ॥
2. तद्ग्रहणे किमिह फलं ननु तदनर्थान्तरोपदेशार्थम्। तथा वस्तुविशेषार्थं शतशः सूत्राणि समये ॥ ३११० ॥
3. सिद्धोऽकायिक नोसंयतादिपर्यायतः स एवैकः। सूत्रेषु विशेष्यते यथेह तथा सर्ववस्तूनि ॥ ३१११ ॥

यद्यमनस्कस्यापि केवलिनो ध्यानमिष्यते, तर्हि सिद्धस्य किमिति नाभ्युपगम्यते ? । भण्यतेऽत्रोत्तरम्– यद् यस्मात् तस्य सिद्धस्य कारणाभावेन प्रयत्नो नास्ति, न च योगलक्षणं निरोद्धव्यमस्ति । अतः प्रयत्नाभावात् प्रयोजनाभावाच्च न सिद्धस्य ध्यानमिति ॥ ३०८१ ॥

भवतु-केवलिनो ध्यानम्, किन्तु शैलेश्यां वर्तमानः किमसौ करोति ? इत्याह—

तदसंखेज्जगुणाए गुणसेढीए रइयं पुरा कम्मं । समए समए खवियं कमसो सेलेसिकालेणं ॥ ३०८२ ॥

सव्वं खवेइ तं पुण निल्लेवं किंचिदुवरिमे समए । किंचिच्चा होइ चरिमे सेलेसीए य तं वोच्छं ॥३०८३॥

मणुयगइ-जाइ-तस-बायरं च पज्जत्त-सुभयमाएज्जं । अन्नयरवेयणिज्जं नराउमुच्चं जसोनामं ॥३०८४॥

संभवओ जिणनामं नराणुपुव्वी य चरिमसमयम्मि । सेसा जिणसंता ओ हु चरिमसमयम्मि निट्ठंति ॥३०८५॥

पाठसिद्धा एव, नवरं तदिति वेदनीयादिकर्म । 'जिणनामं ति' तीर्थकरनाम । इदं च तीर्थकरस्यैव संभवति, अतः 'संभवतः' इत्युक्तम् । सामान्यकेवली तु शेषा मनुष्यगति-पञ्चेन्द्रियजात्यादिका द्वादशैव प्रकृतीश्चरमसमये क्षपयतीति ॥ ३०८२ ॥ ३०८३ ॥ ३०८४ ॥ ३०८५ ॥

अन्यदपि तत्र किमसौ करोति ? इत्याह—

ओरालियाहि सव्वाहिं चयइ विप्पजहणाहिं जं भणियं । निस्सेसतया न जहा देसच्चाएण सो पुव्वं ॥३०८६॥

औदारिक-तैजस-कार्मणशरीरत्रयं सर्वाभिरेव विशेषवतीभिः प्रकृष्टाभिस्त्यजनाभिस्त्यजत्यसौ । किमुक्तं भवति ? इत्याह–'जं भणियमित्यादि' निःशेषतयैवौदारिकादिशरीरत्रयं तदा त्यजति, न तु यथा पूर्वं भवे भ्राम्यन् संघात-परिसाटाभ्यां देहत्यागेन त्यक्त-

तदसंख्येयगुणाया गुणश्रेण्या रचित पुरा कर्म । समये समये क्षपित क्रमशः शैलेशिकालेन ॥ ३०८२ ॥
सर्वं क्षपयति तत् पुनर्निर्लेपं किञ्चिदुपरिमे समये । किञ्चिच्च भवति चरमे शैलेश्यां च तद् वक्ष्ये ॥ ३०८३ ॥
मनुजगति-जाति-त्रस बादराणि च पर्याप्त सुभगा-देयानि । अन्यतरवेदनीय नरायुरुच्च यशोनाम ॥ ३०८४ ॥
सभवतो जिननाम नरानुपूर्वी चरमसमये । शेषा जिनसन्तस्तु चरमसमये निस्तिष्ठन्ति ॥ ३०८५ ॥
औदारिकादि सर्वाभिस्त्यजति विप्रत्यजनाभिर्यद् भणितम् । निःशेषतया न यथा देशत्यागेन स पूर्वम् ॥ ३०८६ ॥

'सुत्तेसु विसेसिज्जइ जह त्ति' यथा तेषु तेषु सिद्धान्तसूत्रेषु स एवैको मुक्तात्मा सिद्धा-ऽकायिक-नोसंयतादिपर्यायैर्विशेष्यते प्रतिपाद्यते । आदिशब्दाद् नोभव्य-नोबादर-नोपर्याप्त-नोपरीत-नोसंज्ञि-परिनिष्ठितादिपर्यायैरपि विशेष्य कचित् प्रतिपाद्यते । 'इह तह त्ति' तथेहापि क्षायिकज्ञानवस्त्वेकमेव केवलज्ञान-केवलदर्शनपर्यायध्वनिभ्यां विशेष्यते । एवमन्यान्यपि सर्वाणि पुरन्दर-पट-वृक्षादि-वस्तूनि निजानिजपर्यायशब्दैः समये लोके च विशेष्यन्त एवेति क इह प्रद्वेषः ? इति ॥ ३१११ ॥

अथैवं सूरिः परं दुरभिनिवेशममुञ्चन्तमवलोक्य युगपदुपयोगद्वयपक्षं मूलत एवोन्मूलयितुं क्रमोपयोगसाधकं व्यक्तमेव सिद्धान्तोक्तमादर्शयन्नाह—

भणियं[1] पि य पन्नत्ती-पन्नवणाईसु जह जिणो समयं । जं जाणइ न वि पासइ तं अणु-रयणप्पभाईणि ॥३११२॥

ननु प्रज्ञप्त्यां भगवत्याम्, प्रज्ञापनायां च स्फुटं भणितमेवोक्तमेव यथा— जिनः केवली परमाणु-रत्नप्रभादीनि वस्तूनि 'समयं जं जाणइ त्ति' यस्मिन् समये जानाति, 'न वि पासइ तं ति' तस्मिन् समये नैव पश्यति, किन्त्वन्यस्मिन् समये जानाति, अन्यस्मिंस्तु पश्यति । इयमत्र भावना— इह भगवत्यां तावदष्टादशशतस्याष्टमोद्देशके स्फुटमेवोक्तम्; तद्यथा— "छउमत्थे[2] णं भंते ! मणुस्से परमाणुपोग्गलं किं जाणइ न पासइ, उताहो न जाणइ न पासइ ? । गोयमा ! अत्थेगइए जाणइ, न पासइ; अत्थेगइए न जाणइ, न पासइ; एवं जाव असंखिज्जपए-सिए खंधे ( इह च्छद्मस्थो निरतिशय गृह्यते, तत्र श्रुतज्ञानी श्रुतज्ञानेन परमाणुं जानाति न तु पश्यति, श्रुते दर्शनाभावात्; अपरस्तु न जानाति- न पश्यति ) एवं ओहिए वि । परमोहिए णं भंते ! मणूसे परमाणुपोग्गलं जं समयं जाणइ तं समयं पासइ, जं समयं पासइ तं समयं जाणइ ? । नो इणट्ठे समट्ठे । से केण ट्ठेणं भंते ! एवं वुच्चइ ? । गोयमा ! सागारे से नाणं भवइ, अणगारे से दंसणे भवइ, तेण ट्ठेणं एवं वुच्चइ" इत्यादि । एवं प्रज्ञापनोक्तमपि द्रष्टव्यम् । तदेवं सिद्धान्ते स्फुटाक्षरैर्युगपदुपयोगे निषिद्धेऽपि किमिति सर्वानर्थमूलं तदभिमानमुत्सृज्य क्रमोपयोगो नेष्यते ? इति ॥ ३११२ ॥

---

१ भणितमपि च प्रज्ञप्ति-प्रज्ञापनादिषु यथा जिन. समये । यस्मिन् जानाति न हि पश्यति तस्मिन्नणु-रत्नप्रभादीनि ॥ ३११२ ॥

२ छद्मस्थो भगवन् ! मनुष्य परमाणुपुद्गल जानाति न पश्यति, उताहो न जानाति न पश्यति ? । गौतम ! अस्त्येको जानाति, न पश्यति, अस्त्येको न जानाति, न पश्यति, एवं यावदसङ्ख्येयप्रदेशिकान् स्कन्धान् । एवमवधावपि । परमावधिको भगवन् ! मनुष्य परमाणुपुद्गलं यस्मिन् समये जानाति तस्मिन् समये पश्यति, यस्मिन् समये पश्यति तस्मिन् समये जानाति ? । नायमर्थः समर्थ । अथ केनार्थेन भगवन् ! एवमुच्यते ? । गौतम ! साकार तस्य ज्ञानं भवति, अनाकारं तस्य दर्शनम्, तेनार्थेनैवमुच्यते ॥

वानीति यदुक्तं भवति- एतदिह तात्पर्यमित्यर्थः ॥ ३०८६ ॥

अपरं च तदा तस्य किं निवर्तते किं वा न? इति दर्शयन्नाह—

[1]तस्सोदइयाईया भव्वत्तं च विणिवत्तए समयं । सम्मत्त-नाण-दंसण-सुह-सिद्धत्ताइं मोत्तूणं ॥ ३०८७ ॥

तस्य सिद्धिं गच्छत औदयिकादयो भावा भव्यत्वं च समकं युगपद् विनिवर्तते । भवा भाविनी सिद्धिर्यस्यासौ हि भव्य उच्यते, न च सा तस्य भाविनी, साक्षात्संजातत्वात्, ततोऽसौ न भव्य इति भव्यत्वं निवर्तते; उक्तं च- "[2]सिद्धे नो भव्वे नो अभव्वे" इति । सम्यक्त्वादीनि तु सिद्धावपि भवन्ति, अतस्तन्निवृत्तिवर्जनम् ॥ इति पञ्चपञ्चाशद्गाथार्थः ॥ ३०८७ ॥

नन्वौदारिकादिशरीराणां कथं सर्वथा त्यागः, कर्मशरीरसन्तानस्यानादित्वात्, अनादेश्चानन्तत्वात्? इत्याशङ्क्योत्तरम्, प्रासङ्गिकम्[3]न्यदपि चाह- 'नणु सन्ताणोऽणाई' इत्यादिद्वाविंशतिगाथाः । एताश्च पूर्वं षष्ठगणधरे प्रायो लिखिताः, व्याख्याताश्चेति नेह लिख्यन्त इति ॥

कियता कालेन पुनरसौ सिध्यति? इत्याह—

[4]रिउसेढीपडिवन्नो समयपएसंतरं अफुसमाणो । एगसमएण सिज्झइ अह सागारोवउत्तो सो ॥३०८८॥

सुबोधा, नवरं 'समयेत्यादि' एकसमयादन्यत् समयान्तरमस्पृशन्नवगाढप्रदेशेभ्योऽपराकाशप्रदेशांस्त्वस्पृशन्नचिन्तया शक्त्या सिद्धिं गच्छतीति भावार्थः ॥ ३०८८ ॥

कथं पुनरसौ साकारोपयोग एव सिध्यति? इत्याह—

[5]सव्वाओ लद्धीओ जं सागारोवओगलाभाओ । तेणेह सिद्धलद्धी उप्पज्जइ तदुवउत्तस्स ॥ ३०८९ ॥

प्रतीतार्थैव । एतच्च 'साकारोपयोगे वर्तमानः सिध्यति' इति विशेषणं प्रज्ञापनायां विहितम् । अनेन चात्र केवलसाकारोपयोगे ये विप्रतिपद्यन्ते, साकारा-ऽनाकारोपयोगयोः सिद्धस्य युगपदभ्युपगमात्, ते निरस्ताः ॥ ३०८९ ॥

---

१ तस्यौदयिकादिका भव्यत्व च विनिवर्तते समकम् । सम्यक्त्व-ज्ञान दर्शन-सुख-सिद्धत्वानि मुक्त्वा ॥ ३०८७ ॥

२ सिद्धो नो भव्यः, नो अभव्य । ३ क ग 'मपि किञ्चिदन्यदाह' ।

४ ऋजुश्रेणिप्रतिपन्नः समयप्रदेशान्तरमस्पृशन् । एकसमयेन सिध्यत्यथ साकारोपयुक्तः सः ॥ ३०८८ ॥

५ सर्वा लब्धयो यत् साकारोपयोगलाभात् । तेनेह सिद्धलब्धिरुत्पद्यते तदुपयुक्तस्य ॥ ३०८९ ॥

तदेवं बुभुक्षिता जरद्गवीव बुशगृहे प्रविशन्ती निबिडयुक्तिलगुडादिघातैर्निवार्यमाणापि परस्य दुराग्रहबुद्धिर्न निवर्तते । तत- श्चक्षुषी निमील्य धृष्टतया पुनरप्याह—

इवसद्द-मतुप्पच्चयलोवा[1] तं केइ बिंति छउमत्थो । अन्ने पुण परतित्थियवत्तव्वमिणं ति जंपंति ॥३११३॥

यस्य केवलिनो भगवत्यां युगपदुपयोगो निषिद्धस्तं केचित् 'छद्मस्थोऽसौ' इति ब्रुवते । कथं पुनः केवली छद्मस्थो भण्यते ? इत्याह–'केवली इव केवली' इति वाक्ये इवशब्दलोपात्; अथवा 'केवली शास्ताऽस्येति केवलिमान्' इति वाक्ये मतुप्रत्ययस्य लोपाच्छद्मस्थोऽसौ न तु केवली, तस्य च युगपदुपयोगनिषेधो मयापीष्यत एवेति परस्याभिप्रायः । पर एवाह– अन्ये तु केचित् परतीर्थिकवक्तव्यताविषयमिदं केवलिनो युगपदुपयोगनिषेधसूत्रं भगवत्यां केनापि प्रसङ्गेन लिखितमिति नास्माकं तत् प्रमाणमिति जल्पन्ति, अतो न केवलिनः क्रमोपयोग इति ॥ ३११३ ॥

अथ परस्य विभ्रमापहरणार्थं समस्तभूतग्रामानुग्रहशीलः पुनरपि सूरिराह—

जं[2] छउमत्थो-होहिय-परमावहिणो विसेसिउं कमसो । निद्दिसइ केवलिं तो एयस्स छउमत्थया नत्थि ॥३११४॥

यस्माद् भगवत्यामष्टादशशताष्टमोद्देशके छद्मस्थमाधोवधिकं परमावधिकं चेत्येतान् त्रीनपि क्रमशः प्रथमं विशेष्य विशेषतो निर्दिश्य ततः पर्यन्ते केवलिनं निर्दिशति । तेन तस्मात् तस्य केवलिनः स्वजल्पितवद्धमिथ्यावष्टम्भेन युक्तिविकलधाष्ट्र्यसामर्थ्यादिव-मतुप्रत्ययलोपात् त्वयोपनीयमाना छद्मस्थता नास्ति किन्तु निरुपचरितकेवल्येवासौ । यदि पुनरयं छद्मस्थोऽभिप्रेतः स्यात् तदा किमनेन व्याजनिर्देशेन ? यत् किमपि च्छद्मस्थस्य भणनीयं तत् प्रथमं छद्मस्थोपन्यासकाल एव सर्वमुक्तं स्यादिति ॥ ३११४ ॥

किञ्च,

न[3] य पासइ अणुमन्नो छउमत्थो मोत्तुमोहिसंपन्नं । तत्थ वि जो परमावहिनाणी तत्तो य किंचूणो ? ॥३११५॥

ते दो वि विसेसेउं अन्नो छउमत्थकेवली को सो । जो पासइ परमाणुगहणमिणं जस्स होज्जाहि ? ॥३११६॥

१ इवशब्द-मतुप्रत्ययलोपात् त केचिद् ब्रुवन्ति च्छद्मस्थः । अन्ये पुनः परतीर्थिकवक्तव्यमिदमिति जल्पन्ति ॥ ३११३ ॥

२ यच्छद्मस्था-ऽऽधोवधिक-परमावधीन् विशेष्य क्रमश । निर्दिशति केवलिनं तत एतस्य च्छद्मस्थता नास्ति ॥ ३११४ ॥

३ न च पश्यत्यणुमन्यश्छद्मस्थो मुक्त्वावाधिसंपन्नम् । तत्रापि य. परमावधिज्ञानी ततश्च किञ्चिदूनः ॥ ३११५ ॥
तौ द्वावपि विशेष्यान्यश्छद्मस्थ. कवली क. स. । य पश्यति परमाणुग्रहणमिदं यस्य भवेत् ॥ ३११६ ॥

अत एवाह—

एवं च गम्मइ धुवं तरतमजोगोवओगया तस्स । जुगवोवओगभावे सागरविसेसणमजुत्तं ॥ ३०९० ॥

एवं च साकारोपयोगविशेषणाद् लभ्यते; किम्?, अत आह– ध्रुवं निश्चितं तरतमयोगोपयोगता सिद्धस्य– अन्यस्मिन् काले तस्य साकारोपयोगः, अन्यत्र चानाकारोपयोग इति । अन्यथा बाधामाह– युगपदुपयोगभावे साकारविशेषणं प्रज्ञापनोक्तमयुक्तमेव स्यादिति ॥ ३०९० ॥

अत्र परमतमाशङ्क्य परिहरन्नाह—

[2]अहव मई सव्वं चिय सागारं से तओ अदोसो त्ति। नाणं ति दंसणं ति च न विसेसो तं च नो जम्हा ॥३०९१॥

सागारमनागारं लक्खणमेयं ति भणियमिह चेव । तह नाण-दंसणाइं समए वीसुं पसिद्धाइं ॥ ३०९२ ॥

अथ मतिः परस्य– सर्वमेव 'से' तस्य सिद्धस्य ज्ञानं दर्शनं वा साकारम् । ततः साकारोपयोगविशेषणेऽदोष एव, स्वरूपविशेषणत्वात् तस्य । यदपि केवलज्ञानं केवलदर्शनं च तस्योच्यते, तत्रापि तयोर्न विशेष इत्यभिप्रायवता प्रोक्तं स्तुतिकारेण—

"एवं कल्पितभेदमप्रतिहतं सर्वज्ञतालाञ्छन सर्वेषां तमसां निहन्तृ जगतामालोकनं शाश्वतम् ।
नित्य पश्यति बुध्यते च युगपद् नानाविधानि प्रभो ! स्थित्यु-त्पत्ति विनाशवन्ति विमलद्रव्याणि ते केवलम् ॥१॥"

तच्च न युक्तम्, यस्मात् साकारमनाकारं च लक्षणं सिद्धानामितीहैव पुरतो भणितं वर्तते, यद् वक्ष्यति—

'[3]असरीरा जीवघणा उवउत्ता दंसणे य नाणे य । सागारमणागारं लक्खणमेयं तु सिद्धाणं ॥१॥'

इति । तदनयोः साकारा-ऽनाकारलक्षणयोर्भेदेनोक्तत्वात् कथमुच्यते– 'सर्वमेव तस्य साकारम्?' इति भावः । तथा, समये सिद्धान्ते विष्वक् पार्थक्येन ज्ञान-दर्शने सिद्धानां तेषु स्थानेषु प्रसिद्धे, अतः कथं तयोरविशेष उच्यते? इति हृदयम् ॥३०९१॥३०९२॥

१ एव च गम्यते ध्रुव तरतमयोगोपयोगता तस्य । युगपदुपयोगभावे साकारविशेणमयुक्तम् ॥ ३०९० ॥
२ अथवा मतिः सर्वमेव साकार तस्य ततोऽदोष इति । ज्ञानमिति दर्शनमिति च नो विशेषस्तच्च नो यस्मात् ॥ ३०९१ ॥
साकारमनाकारं लक्षणमेतदिति भणितमिहैव । तथा ज्ञान-दर्शने समये विष्वक् प्रसिद्धे ॥ ३०९२ ॥
३ अशरीरा जीवघना उपयुक्ता दर्शने च ज्ञाने च । साकारमनाकार लक्षणमेतत् तु सिद्धानाम् ॥ १ ॥

व्याख्या–"[1]केवली णं भंते! परमाणुपोग्गलं जं समयं जाणइ" इत्यादि भगवत्यामुक्तम्, तं च परमाणुमवधिज्ञानिनं मुक्त्वाऽन्यश्छद्मस्थो न पश्यति। तत्रापि सर्वोऽप्यवधिज्ञानी न तं पश्यति, किन्तु यः परमावधिज्ञानी, तस्माच्च परमावधेर्यः किञ्चिन्न्यूनावधिराधोवधिकः स एव तं पश्यति। तौ चाधोवधिक-परमावधिज्ञानिनौ द्वावपि केवलिनः प्रथममेव निर्दिष्टौ, ततस्तयोर्द्वयोरपि विशेषतो निर्धार्य निर्दिष्टत्वात् कोऽन्यो हन्त! छद्मस्थः केवली योऽसौ परमाणुपुद्गलं पश्यति, यस्य च्छद्मस्थस्य केवलिन इदं त्वत्कल्पनया भगवत्यां ग्रहणं भवेत्? इति ॥ ३११५ ॥ ३११६ ॥

अपिच, आगमे स्थानान्तरेऽपि च्छद्मस्थादिभ्य उपरि च्छद्मातीत एव केवली निर्दिष्टः, न त्विवादिलोपकल्पनया छद्मस्थ इति दर्शयन्नाह—

[2]तेसिं चिय छउमत्थाइयाण मग्गिज्जए जहिं सुत्ते। केवलसंवर-संजम-बंभाईएहिं निव्वाणं ॥ ३११७ ॥
तिन्नि वि पडिसेहेउं तीसु वि कालेसु केवली तत्थ। सिज्झिंसु सिज्झइ त्ति य सिज्झिस्सइ वा विनिद्दिट्ठो ॥३११८॥

व्याख्या– तेषामेव च्छद्मस्थादीनामादिशब्दादाधोवधिक-परमावधि केवलज्ञानिनां यत्र भगवतीप्रथमशतचतुर्थोद्देशकसूत्रे केवलसंवर-संयम-ब्रह्मचर्यादिभिर्निर्वाणं मोक्षो मृग्यते चिन्त्यते। तत्रापि सूत्रे त्रीनपि च्छद्मस्था-ऽऽधोवधिक-परमावधिज्ञानिनः प्रतिषेध्य तदुपरि केवली भूत-भवद्-भविष्यल्लक्षणेषु त्रिष्वपि कालेष्वसिध्यत्, सिध्यति, सेत्स्यतीति निर्दिष्टः। यदि पुनरयमपि त्वत्कल्पनया छद्मस्थो भवेत्, तदाऽस्यापि प्रथमनिर्दिष्टच्छद्मस्थस्येव केवलसंवरादिभिः सिद्धिर्न भवेदिति। किं पुनस्तत् सूत्रम्? उच्यते– "[3]छ-

---

१ पृ० १२०६। २ तेषामेव च्छद्मस्थादिकानां मृग्यते यत्र सूत्रे। केवलसंवर-संयम-ब्रह्मादिभिर्निर्वाणम् ॥ ३११७ ॥ त्रीनपि प्रतिपिध्य त्रिष्वपि कालेषु केवली तत्र। असिध्यत् सिध्यति च सेत्स्यति वा विनिर्दिष्टः ॥ ३११८ ॥

३ छद्मस्थो भगवन्! मनुष्योऽतीतमनन्तं शाश्वतं समय केवलेन संवरेण, केवलेन संयमेन, केवलेन ब्रह्मचर्यवासेन, केवलाभि प्रवचनमातृभिरसिध्यदबुध्यत यावत् सर्वदु खानामन्तमकार्षीत्?। गौतम! नायमर्थ. समर्थः। अथ केनार्थेन भगवन्! एवमुच्यते, तदेव यावदन्तमकार्षीत्?। गौतम! ये केऽप्यन्तकरा वा, अन्तिमशरीरिका वा, सर्वदु खानामन्तमकार्षुर्वा, कुर्वन्ति वा, करिष्यन्ति वा, सर्वे त उत्पन्नज्ञान दर्शनधरा अर्हन्तो जिनाः केवलिनो भूत्वा तत. पश्चात् सिध्यन्ति, बुध्यन्ते, मुच्यन्ते, परिनिर्वान्ति, सर्वदु खानामन्तमकार्षुर्वा, कुर्वन्ति वा, करिष्यन्ति वा; तेनार्थेन गौतम! यावत् सर्वदु खानामन्तमकार्षुः। प्रत्युत्पन्ना अप्येवमेव, नवरं 'सिध्यन्ति' भणितव्यम्। अनागता अप्येवमेव, नवर 'सेत्स्यन्ति' भणितव्यम्। यथा छद्मस्थस्तथाऽऽधोवधिकः, परमावधिकोऽपि, इति त्रय आलापका भणितव्याः। केवलिनो भगवन्! मनुष्या अतीतमनन्त शाश्वतं समयं यावदन्तमकार्षु.?। हन्त! असिध्यन्, यावदन्तमकार्षुः। एते त्रय आलापका भणितव्याश्छद्मस्थो यथा, नवरं 'असिध्यन्' 'सिध्यन्ति' 'सेत्स्यन्ति' इति ॥

वेयपयाण य अत्थं न सुट्ठु जाणसि इमाण तं सुणसु । असरीरव्ववएसो अधणो व्व सओ निसेहाओ ॥४३॥
ननिसेहओ य अन्नम्मि तव्विहे चेव पच्चओ जेण । तेणासरीरग्गहणे जुत्तो जीवो न खरसिंगं ॥ ४४ ॥
जं व वसंतं संतं तमाह वासद्दओ सदेहं पि । न फुसेज्ज[1] वीयरायं जोगिणमिट्ठे-यरविसेसा ॥ ४५ ॥
वाव त्ति वा निवाओ वासद्दत्थो भवंतमिह संतं । बुज्झाऽव त्ति व संतं नाणाइविसिट्ठमहवाहं ॥ ४६ ॥
न वसंतं अवसंतं ति वा मई नासरीरगहणाओ । फुसणाविसेसणं पि य जओ मयं संतविसयं ति ॥ ४७ ॥
एवं पि होज्ज मुत्तो निस्सुह-दुक्खत्तणं तु तदवत्थं । तं नो पिय-ऽप्पियाइं जम्हा पुण्णे-यरकयाइं ॥ ४८
नाणाऽबाहत्तणाओ न फुसंति वीयराग-दोसस्स । तस्स प्पियमप्पियं वा मुत्तसुहं को पसंगोऽत्थ ? ॥ ४९ ॥

**छिन्नम्मि संसयम्मी[2] जिणेण जर-मरणविप्पमुक्केणं ।**
**सो समणो पव्वइओ तिहि ओ सह खंडियसएहिं ॥ १८४ ॥**
**खेत्ते काले जम्मे गोत्तमगार-छउमत्थपरियाए ।**
**केवलिय आउ आगम परिनिव्वाणे तवे चेव ॥ १८५ ॥**

जिण-गणहरनिग्गमणं भणियमओ खित्तनिग्गमावसरो । कालंतरंगदरिसणहेओ तु विवज्जओ तह वि ॥ १ ॥
जं वत्तणाइरूवो वत्तुरणत्थंतरं मओ कालो । आहारमित्तमेव उ खेत्तं तेणंतरंगं सो ॥ २ ॥
कलणं पज्जायाणं कलिज्जए तेण वा जओ वत्थुं । कलयंति तयं तम्मि व समयाइकलासमूहो वा ॥ ३ ॥
सो वत्तणाइरूवो कालो दव्वस्स चेव पज्जाओ । किंचिम्मेत्तविसेसेण दव्वकालाइववएसो ॥ ४ ॥

१ 'फुसिज्ज' । २ 'यम्मि अ जि' ।

दव्वे अद्ध अहाउ य उवक्कमे देस-कालकाले य ।
तह य पमाणे वन्ने भावे, पगयं तु भावेणं ॥ १८६ ॥
चेयणमचेयणस्स य दव्वस्स ठिई उ जा चउविगप्पा ।
सा होइ दव्वकालो अहवा दवियं तयं चेव ॥ १८७ ॥

दव्वस्स वत्तणा जा स दव्वकालो तदेव वा दव्वं । न हि वत्तणाइरित्तं जम्हा दव्वं जओऽभिहिअं ॥ १ ॥
सुत्ते जीवा-ऽजीवा समया-ऽऽवलियादओ पवुच्चंति । दव्वं पुण सामन्नं भणइ दव्वट्ठयामेत्तं ॥ २ ॥
सुर-सिद्ध-भव्वा-ऽभव्वा साइ-सपज्जवसियादओ जीवा । खंधाणागयतीया नभादओ चेयणारहिया ॥ ३ ॥
सूरकिरियाविसिट्ठो गोदोहाइकिरियासु निरवेक्खो । अद्धाकालो भणइ समयखेत्तम्मि समयाई ॥ ४ ॥

समया-ऽऽवलि-मुहुत्ता दिवसमहोरत्त-पक्ख-मासा य ।
संवच्छर-जुग-पलिया सागर-ओसप्पि-पलियट्टा ॥ १८८ ॥

आउयमेत्तविसिट्ठो स एव जीवाण वत्तणाइमओ । भण्णइ अहाउकालो वत्तइ जो जच्चिरं जेण ॥ १ ॥

नेरइय-तिरिय-मणुआ-देवाण अहाउयं तु जं जेणं ।
निव्वत्तियमन्नभवे पालंति अहाउकालो उ ॥ १८९ ॥

जेणोवक्कामिज्जइ समीवमाणिज्जए जओ जं तु । स किलोवक्कमकालो किरियापरिणामभूइट्ठो ॥ १ ॥

दुविहोवक्कमकालो सामायारी अहाउयं चेव ।

उमत्थे णं भंते ! मणूसे तीयमणंतं सासयं समयं केवलेणं संवरेणं, केवलेणं संजमेणं, केवलेणं बंभचेरवासेणं, केवलाहिं पवयणमायाहिं सिज्झिसु, बुज्झिसु, जाव सव्वदुक्खाणमंतं करिंसु ? । गोयमा ! नो इणट्ठे समट्ठे । से केणट्ठेणं भंते ! एवं वुचइ तं चेव जाव अंतं करिंसु ? । गोयमा ! जे के वि अंतकरा वा, अंतिमसरीरया वा, सव्वदुक्खाणमंतं करेंसु वा, करेंति वा, करिस्संति वा, सव्वे ते उप्पन्ननाण-दंसणधरा अरहा जिणा केवली भवित्ता तओ पच्छा सिज्झंति, बुज्झंति, मुच्चंति, परिनिव्वायंति, सव्वदुक्खाणमंतं करेंसु वा, करेंति वा, करिस्संति वा, से तेणट्ठेणं गोयमा[1] ! जाव सव्वदुक्खाणमंतं करिंसु । पडुप्पन्ने वि एवं चेव, नवरं 'सिज्झंति' भाणियव्वं । अणागए वि एवं चेव, नवरं 'सिज्झिस्संति' भाणियव्वं । जह छउमत्थो तहा अहोहिओ परमोहिओवि, त्ति तिन्नि आलावगा भाणियव्वा । केवली णं भंते ! मणूसे तीयमणंतं सासयं समयं जाव अंतं करिंसु । हंता ! सिज्झिसु, जाव अंतं करिंसु । एए तिन्नि आलावगा भाणियव्वा छउमत्थे जहा, नवरं 'सिज्झिसु' 'सिज्झंति' 'सिज्झिस्संति' ति । तस्मादियमत्र रीतिः सिद्धान्ते छद्मस्थादिभ्य उपरि यः 'केवली' इति भण्यते स निरुपचरित एव, न पुनरिवादिलोपकल्पनया च्छद्मस्थोऽसौ; अन्यथाऽनन्तरसूत्रोक्तसिद्धिगमनानुपपत्तेरिति ॥ ३११७ ॥ ३११८ ॥

अथ यदुक्तम्— 'अन्ने पुण परतित्थियवत्तव्वं' इत्यादि, तेनासमञ्जसभाषितेनोद्वेजितः परानुकम्पया सखेदं सूरिराह—

एवं[2] विसेसियम्मि वि परमयमेगंतरोवओगो त्ति । न पुणरुभओवओगो परवत्तव्वं ति का बुद्धी ? ॥३११९॥

उवओगो एगयरो पणुवीसइमे सए सिणायस्स । भणिओ वियडत्थो च्चिय छट्ठुद्देसे विसेसेउं ॥३१२०॥

एवं फुडवियडम्मि वि सुत्ते सव्वन्नुभासिए सव्वे । कह तीरइ परतित्थियवत्तव्वमिणं ति वोत्तुं जे ? ॥ ३१२१॥

व्याख्या— एवमुक्तप्रकारेण विशेषितेऽपि व्यक्तेऽपि क्रमोपयोगसाधके सिद्धान्तसूत्रे सति योऽयमेकान्तरोपयोगः स परमतम्, युगपदुभयोपयोगसूत्रं तु यदसदपि भवता किमपि कल्प्यते, तत्र 'परतीर्थिकवक्तव्यता' इति स्ववचासि पक्षपातं परित्यज्य चिन्त्यताम् 'केयं विपर्यासबुद्धिः ?' इति । किञ्च, भगवत्यां पञ्चविंशतितमे शते षष्ठोद्देशके– "सिणाए[3] णं भंते ! किं सागरोवउत्ते होज्जा, अण-

१ गाथा ३११३ । २ एवं विशेषितेऽपि परमतमेकान्तरोपयोग इति । न पुनरुभयोपयोग परवक्तव्यमिति का बुद्धिः ? ॥ ३११९ ॥
उपयोग एकतर. पञ्चविंशतितमे शते स्नातकस्य । भणितो विकटार्थ एव षष्ठोद्देशे विशिष्य ॥ ३१२० ॥
एवं स्फुटविकटेऽपि सूत्रे सर्वज्ञभाषिते सर्वस्मिन् । कथं शक्यते परतीर्थिकवक्तव्यमिदमिति वक्तुम् ? ॥ ३१२१ ॥
३ स्नातको भगवन् ! किं साकारोपयुक्तो भवेदनाकारोपयुक्तो भवेत् ? । गौतम ! साकारोपयुक्तोऽपि भवेत्, अनाकारोपयुक्तोऽपि भवेत् ।

अत्रोत्तरमाह—

[1]अलोए पडिहया सिद्धा लोयग्गे य पइट्ठिया । इहं बोंदिं चइत्ताणं तत्थ गंतूण सिज्झइ ॥ ३१५९ ॥

एतद् निर्युक्तिश्लोकद्वयं सुबोधम्, तथापि नयविचारं किञ्चिद् भाष्यकारः प्राह—

[2]जमिहं बोंदिच्चाओ तदेव सिद्धत्तणं च जं चेहं । तस्साहणं ति तो पुव्वभावनयओ इदं सिद्धी ॥३१६०॥

जेण उ न बोंदिकाले सिद्धो चायसमए य जं गमणं । पच्चुप्पण्णनयमयं सिज्झइ गंतूण तेणेह ॥३१६१॥

व्याख्या— यस्मादिह मनुष्यक्षेत्रे बोन्द्याः शरीरस्य त्यागस्तदेव च सिद्धत्वं यः शरीरत्यागः, यस्माच्चेहैव तस्य सिद्धत्वस्य साधनं कारणं सम्यक्त्वप्रतिपत्त्यादि शैलेशीपर्यवसानं तत्साधनमस्ति, ततस्तस्माद् यः सिद्धिगमनसमयात् पूर्वमेव भावं मन्यते स पूर्वभावनयो व्यवहारनयविशेषः कश्चित् । ततः पूर्वभावनयतः पूर्वभावनयमतेनेहैव सिद्धिरिति । येन यस्मात् पुनर्बोन्दिकाल उपान्त्यसमये न नैव सिद्धः, यस्माच्च त्यागसमये गमनम्, य एव बोन्द्यास्त्यागसमयः 'परभवपढमे साडणं' इत्यादिवचनात्, स एव सिद्धिगमनसमय इत्यर्थः, तेन तस्मात् कारणात् प्रत्युत्पन्ननयमतमृजुसूत्रादिनिश्चयनयमतमाश्रित्य सिद्धिक्षेत्रं गत्वा सिध्यति, बोन्दित्यागसमयसिद्धिगमनसमययोरेतन्मतेनैकत्वात् । अत एव तन्मतेनैवेहोक्तम्— 'तत्थ गंतूण सिज्झइ' इति ॥ ३१६० ॥ ३६११ ॥

अथ 'किं सिद्धालयपरओ' इत्याद्याः 'भवओ सिद्धो त्ति मई' इति पर्यन्ताः सप्तदश गाथाः पूर्वं षष्ठगणधरे लिखिताः, व्याख्याताश्च; इति नेह लिख्यन्त इति ॥

किं पुनस्तत् स्थानं यत्र गत्वा सिध्यति ? इत्याह—

[3]अत्थीसीयज्झारोवलक्खियं मणुयलोगपरिमाणं । लोगग्गनभोभागो सिद्धिक्खेत्तं जिणक्खायं ॥३१६२॥

प्रकटार्था ॥ ३१६२ ॥

---

१ अलोके प्रतिहता सिद्धा लोकाग्रे च प्रतिष्ठिताः । इह शरीरं त्यक्त्वा तत्र गत्वा सिध्येयुः ॥ ३१५९ ॥

२ यदिह शरीरत्यागस्तदेव सिद्धत्वं च यच्चेह । तत्साधनमिति तत पूर्वभावनयत इह सिद्धिः ॥ ३१६० ॥
येन तु न शरीरकाले सिद्धस्त्यागसमये च यद् गमनम् । प्रत्युत्पन्ननयमतं सिध्यति गत्वा तेनेह ॥ ३१६१ ॥

३ अस्त्यूर्ध्वप्राग्भारोपलक्षितं मनुजलोकपरिमाणम् । लोकाग्रनभोभागः सिद्धिक्षेत्रं जिनाख्यातम् ॥ ३१६२ ॥

गारोवउत्ते होज्जा ? । गोयमा ! सागरोवउत्ते वि होज्जा, अणगारोवउत्ते वि होज्जा" इत्यनेन सूत्रेण विशिष्य नामग्राहं स्नातकस्य केवलिनो विकटार्थः प्रकटार्थ एव भणितः प्रतिपादित एकस्मिन् समय एकतरः साकारोऽनाकारो वोपयोग इति । एवं स्फुटे सूत्रतः, विकटे प्रकटे चार्थतः, सर्वज्ञभाषिते सूत्रे सिद्धे कथं सकर्णविज्ञानैः 'परतीर्थिकवक्तव्यतेयम्' इति तीर्यते शक्यते वक्तुम् ? । 'जे' इति वाक्यालङ्कारार्थ इति ॥ ३११९ ॥ ३१२० ॥ ३१२१ ॥

अपि च,

[2]सव्वत्थ सुत्तमत्थि य फुडमेगयरोवउत्तसत्ताणं । उभओवउत्तसत्ता वुत्ता सुत्ते न कत्थइ वि ॥ ३१२२ ॥
कस्सइ वि नाम कत्थइ काले जइ होज्ज दो वि उवओगा । उभओवउत्तसत्ताण सुत्तमेगं पि तो होज्जा ॥३१२३॥

व्याख्या— एकतरोपयोगोपयुक्तानां सत्त्वानां प्रतिपादकं सूत्रं सर्वत्र सिद्धान्ते स्फुटमस्ति, तच्च किञ्चिद् दर्शितम्, दर्शयिष्यते च । युगपदुभयोपयोगोपयुक्तसत्त्वास्तु सूत्रे क्वचिदप्युक्ताः प्रतिपादिता न दृश्यन्त इति । यदि नाम कस्यापि भवस्थकेवलिनः सिद्धकेवलिनो वा क्वचिदपि काले युगपद् द्वावुपयोगौ भवेताम्, ततस्तर्हि युगपदुभयोपयोगोपयुक्तसत्त्वानां प्रतिपादकमेकमपि सूत्रं क्वचिदपि भवेत्, न तु क्वापि तत् पश्यामः, इत्यतो निरालम्बनाग्रहमात्रभ्रमित एव भ्राम्यति भवानिति ॥ ३१२२ ॥ ३१२३ ॥

अपि च,

[3]दुविहाणं पि य जीवाण भणियमप्पाबहुं च समयम्मि । सागारणगाराण य न भणियं उभओवउत्ताणं ॥३१२४॥
जइ केवलीण जुगवं उवओगा होज्ज, होज्ज तो एवं । सागार-ऽणगारय-मीसाण य तिण्हमप्पबहुं ॥ ३१२५ ॥

व्याख्या— साकारोपयोगवतामनाकारोपयोगवतां च द्विविधानामेव जीवानामल्पबहुत्वं समये सिद्धान्ते प्रज्ञापनाल्पबहुत्वपदे

---

१ घ. ज. 'विशेष्य' । २ सर्वत्र सूत्रमस्ति च स्फुटमेकतरोपयुक्तसत्त्वानाम् । उभयोपयुक्तसत्त्वा उक्ताः सूत्रे न क्वचिदपि ॥ ३१२२ ॥
कस्यापि नाम क्वचित् काले यदि भवेतां द्वावप्युपयोगौ । उभयोपयुक्तसत्त्वानां सूत्रमेकमपि ततो भवेत् ॥ ३१२३ ॥
३ द्विविधानामपि च जीवानां भणितमल्पबहुत्वं च समये । साकारा ऽनाकाराणां च, न भणितमुभयोपयुक्तानाम् ॥ ३१२४ ॥
यदि केवलिनां युगपदुपयोगौ भवेतां, भवेत् तत एवम् । साकाराऽनाकारक-मिश्राणां च त्रयाणामल्पबहुत्वम् ॥ ३१२५ ॥

एतदेवाह—

'ईसी' इत्यादिका 'ओगाहणाई सिद्धे' इत्यादिगाथापर्यन्ताः पञ्चदश प्रायो निर्युक्तिगाथाः सुगमाः, मूलावश्यकटीकातश्च बोद्धव्या इति ॥



किमित्यवगाहनया सिद्धा भगवन्तोऽवगाहनायास्त्रिभागन्यूना भवन्ति ? इत्याह—

[1]देहत्तिभागो सुसिरं तप्पूरणओ तिभागहीणो त्ति । सो जोगनिरोहे च्चिय जाओ सिद्धो वि तदवत्थो ॥३१६३॥

देहस्य हृदयोदराद्यन्तः सच्छिद्रत्वात् तत्रिभागः शुषिरो वर्तते, जीवप्रदेशैस्तत्पूरणाच्च निविडताऽऽपादनात् सिद्धो भगवान् अवगाहनातास्त्रिभागेन न्यूनो भवति। स च पूर्वं योगनिरोधकाल एवेत्थंभूतो जातः, ततः सिद्धोऽपि तदवस्थ एवेति ॥३१६३॥

अथ प्रेर्यं परिहारं चाह—

[2]संहारसंभवाओ पएसमेत्तम्मि किं न संठाइ ?। सामत्थाभावाओ सकम्मयाओ सहावाओ ॥ ३१६४ ॥

ननु यद्यसौ स्वप्रदेशान् संहृत्य घनीभवति, तर्हीत्थं संहारसंभवात् तथा किं न संहरति यथैकस्मिन्नाकाशप्रदेशे संतिष्ठते ? । अत्रोत्तरमाह— तथाविधसामर्थ्याभावात्, तथा, योगनिरोधकालेऽद्यापि सकर्मकत्वात् जीवस्वाभाव्याच्च नोक्तादधिकं संहरतीति ॥ ३१६४ ॥

तर्हि पूर्वं सकर्मकत्वाद् मैवं संहरतु, सिद्धः सन् । किं तथा न संहरति ? इत्याह—

[3]सिद्धो वि देहरहिओ सपयत्ताभावओ न संहरइ । अपयत्तस्स किह गई, नणु भणियाऽसंगयाईहिं ॥३१६५॥

सिद्धोऽपि देहाभावे स्वप्रयत्नाभावाद् नैवं संहरति । अप्रयत्नस्य कथं सिद्धक्षेत्रं यावद् गतिः ? इति चेत् । ननु भणितमत्रोत्तरम्— 'असङ्गत्वादिकारणैरसौ भवति' इति ॥ ३१६५ ॥

'तिन्नि सया तेत्तीसा' इत्यादिना योत्कृष्टाद्यवगाहना भणिता, सा कस्य द्रष्टव्या ? इत्याह—

1 देहत्रिभागः शुषिरं तत्पूरणतास्त्रिभागहीन इति । स योगनिरोध एव जातः सिद्धोऽपि तदवस्थः ॥ ३१६३ ॥

2 संहारसंभवात् प्रदेशमात्रे किं न संतिष्ठते ? । सामर्थ्याभावात् सकर्मकत्वात् स्वभावात् ॥ ३१६४ ॥

3 सिद्धोऽपि देहरहितः स्वप्रयत्नाभावतो न संहरति । अप्रयत्नस्य कथं गतिर्ननु, भणिताऽसङ्गतादिभिः ? ॥ ३१६५ ॥

भणितम्; तद्यथा— "एएसि णं भंते जीवाणं सागारोवउत्ताणं अणगारोवउत्ताणं य कयरे कयरेहिंतो अप्पा वा, बहुया वा, तुल्ला वा, विसेसाहिया वा ? । गोयमा ! सव्वत्थोवा जीवा अणगारोवउत्ता, सागारोवउत्ता संखिज्जगुणा" । युगपदुभयोपयोगोपयुक्तानां तु मिश्राणां तृतीयानामिहाल्पबहुत्वं न भणितम्। यदि पुनः केवलिनां युगपदुपयोगद्वयं भवेत्, तदैवं सति साकारा-ऽनाकार-मिश्रोपयोगवतां त्रयाणामेव पदानामल्पबहुत्वं भवेत्, न द्वयोरिति ॥ ३१२४ ॥ ३१२५ ॥

अत्र परशङ्कां परिहारं चाह—

[2]अहव मई छउमत्थे पडुच्च सुत्तमिणं तो न केवलिणो । तं पि न जुज्जइ जं सव्वसत्तसंखाहिगारोऽयं ॥३१२६॥

सुगमा, नवरं व्याप्त्या सर्वजीवसंख्याधिकारे निर्दिष्टत्वाद् नेदं सूत्रं छद्मस्थविषयं वक्तुं युज्यत इति ॥ ३१२६ ॥

अथ सर्वजीवाधिकारोऽयं न भवति, तत्राह—

[3]काउं सिद्धग्गहणं बहुवत्तव्वयपदेसु सव्वेसु । इह केवलमग्गहणं जइ तो तं कारणं वच्चं ? ॥३१२७ ॥

यदि सर्वजीवाधिकारोऽयं न भवति, तर्हि 'गइ इंदिए य काए जोए वेए कसाय-लेसासु' इत्यादिष्वन्येष्वल्पबहुवक्तव्यताविचारविषयभूतेषु पदेषु सिद्धिगतिकान् इन्द्रिय-काय-योग-कषाय-लेश्या-नोसंयत-नोपरीतादिपदैः पृथक् सिद्धग्रहणं कृत्वा केवलमिहैवोपयोगपदे पृथक् तदग्रहणं करोति, ततस्तत्र कारणं वाच्यम् ?। यदि हि च्छद्मस्थाधिकारत्वादिह तदग्रहणमित्युच्यते, तर्हि शेषपदेषु सिद्ध-केवलिग्रहणमयुक्तं स्यात् । तस्मात् सर्वजीवाधिकार एवायम्, केवलमाहारकाऽनाहारकऽभाषकाभाषकादिपदद्वयेनेवानेन साकारा-ऽनाकारोपयोगपदद्वयेन सिद्धकेवलिनां गृहीतत्वादिह पृथक् तदग्रहणमिति ॥ ३१२७ ॥

आगमान्तरतोऽप्यत्र च्छद्मस्थाधिकारशङ्कां निवर्तयन्नाह—

[4]अहवा विसेसियं चिय जीवाभिगमम्मि एयमप्पबहुं। दुविह त्ति सव्वजीवा सिद्धासिद्धाइआ जत्थ ॥३१२८॥

---

1 एतेषां भगवन् ! जीवानां साकारोपयुक्तानामनाकारोपयुक्तानां च कतरे कतरेभ्योऽल्पा वा, बहुका वा, तुल्या वा, विशेषाधिका वा ? । गौतम ! सर्वस्तोका जीवा अनाकारोपयुक्ताः, साकारोपयुक्ताः संख्येयगुणाः ।

2 अथवा मतिश्छद्मस्थान् प्रतीत्य सूत्रमिदं ततो न केवलिनः । तदपि न युज्यते यत् सर्वसत्त्वसंख्याधिकारोऽयम् ॥ ३१२६ ॥

3 कृत्वा सिद्धग्रहणं बहुवक्तव्यतापदेषु सर्वेषु । इह केवलमग्रहणं यदि ततस्तत् कारणं वाच्यम् ? ॥ ३१२७ ॥

4 अथवा विशेषितमेव जीवाभिगम एतदल्पबहुत्वम् । द्विविधा इति सर्वजीवाः सिद्धा-ऽसिद्धादिका यत्र ॥ ३१२८ ॥

[1]जेट्ठा उ पंचसयधणुस्स मज्झा य सत्तहत्थस्स । देहत्तिभागहीणा जहन्निया जा विहत्थस्स ॥ ३१६६ ॥

पाठसिद्धा ॥ ३१६६ ॥

अत्र विनेयप्रश्नमुत्तरं चाह—

[2]केह मरुदेवीमाणं नाभीओ जेण किंचिदूणा सा । तो किर पंच सय च्चिय अहवा संकोयओ सिद्धा ॥३१६७॥

ननु मरुदेवीसिद्धस्य कथं 'तिन्नि सया तेत्तीसा' इत्यादि मानं घटते ? । सा हि नाभिकुलकरपत्नी, नाभेश्च पञ्चविंशत्यधिकानि पञ्चधनुःशतानि प्रमाणमागमे प्रोक्तम्, यदेव चास्य मानं तदेव मरुदेवाया अपि "[3]संघयणं संठाणं उच्चत्तं चेव कुलकरेहिं समं" इति वचनात् । ततस्तस्या देहमानस्य त्रिभागे पतिते सिद्धावस्थायां सार्धानि त्रीणि धनुःशतान्यवगाहना प्राप्नोतीति पृच्छतोऽभिप्रायः । अत्रोत्तरमाह— येन यस्माद् नाभिकुलकरमानात् प्रमाणतोऽसौ किञ्चिद् न्यूना । ततः किल पञ्चधनुःशतमानैवेत्यदोषः । 'कुलकरेहिं समं' इत्यतिदेशोऽपि न बाधकः, कियतापि न्यूनाधिक्येऽप्यतिदेशानामागमे दर्शनादिति । अथवा, हस्तिस्कन्धाधिरूढत्वात् संकोचतः संकुचिताङ्गी सिद्धेयमिति न यथोक्तावगाहनाविरोध इति ॥ ३१६७ ॥

अथ जघन्यावगाहनायां प्रेर्यं परिहारं चाह—

[4]सत्तूसिएसु सिद्धी जहन्नओ कहमिहं विहत्थेसु ? । सो किर तित्थयरेसुं सेसाणं सिज्झमाणाणं ॥३१६८॥

ननु जघन्यपदे सप्तहस्तोच्छ्रितेषु सिद्धिः सिद्धान्ते निर्दिष्टा, इह तु '[5]एगाइ होइ रयणी' इत्यादिवचनात् कथं द्विहस्तेष्वसौ प्रोच्यते ? । अत्र निर्वचनमाह– या सिद्धान्ते सप्तहस्तानां सिद्धिरुक्ता सा किल महावीरादितीर्थकरेषु द्रष्टव्या, इह तु द्विहस्तानां सिद्धिः शेषाणां सामान्यकेवलिनां सिध्यतां मन्तव्येति ॥ ३१६८ ॥

के पुनर्द्विहस्ताः सिध्यन्ति ? इत्याह—

---

१ ज्येष्ठा तु पञ्चशतधनुषो मध्या च सप्तहस्तस्य । देहत्रिभागहीना जघन्यिका सा द्विहस्तस्य ॥ ३१६६ ॥

२ कथ मरुदेवीमानं नाभितो येन किञ्चिदूना सा । ततः किल पञ्च शतान्येवाथवा संकोचतः सिद्धा ॥ ३१६७ ॥

३ संहननं संस्थानमुच्चत्वं चैव कुलकरैः समम् ।

४ सप्तोच्छ्रितेषु सिद्धिर्जघन्यतः कथमिह विहस्तेषु ? । स किल तीर्थकरेषु शेषाणां सिध्यताम् ॥ ३१६८ ॥ ५ एकादिर्भवति हस्तः ।

अथवा छद्मस्थाधिकारशङ्कानिवर्तकत्वाद् विशेषितमेवैतत् साकारा-ऽनाकारोपयोगयोः पदद्वयस्याल्पबहुत्वं जीवाभिगमे 'प्रोक्तम्' इति शेषः । क्व सूत्रे ? इत्याह– सिद्धा-ऽसिद्धादिभेदेन द्विविधा एव सर्वे जीवा यत्र सूत्रे प्रतिपाद्यन्त इति ॥ ३१२८ ॥

तदेव सूत्रं गाथयोपनिबध्य दर्शयन्नाह—

[1]सिद्ध सइंदियकाए जोए वेए कसाय लेसा य । नाणुवओगाहारय-भासय-ससरीर-चरिमे य ॥ ३१२९ ॥

सिद्धा असिद्धाश्च, सेन्द्रिया अनिन्द्रियाश्च, सकाया अकायाश्चेत्यादिभेदेन सर्वे जीवाः संगृह्य यत्र सूत्रे जीवाभिगमे प्रतिपाद्यन्ते तत्र सूत्रे विशेषितमेवेदमल्पबहुत्वं प्रतिपादितमिति ॥ ३१२९ ॥

युक्त्यन्तरेणापि युगपदुपयोगद्वयपक्षं निराचिकीर्षुराह—

[2]अंतोमुहुत्तमेव य कालो भणिओ तहोवओगस्स । साई अपज्जवसिउ त्ति नत्थि कत्थइ विणिद्दिट्ठो ॥३१३०॥

तथा, ज्ञाना-ऽज्ञान-दर्शनानामुपयोगस्यागमे सर्वत्रान्तर्मुहूर्तमेव कालो भणितः, साद्यपर्यवसितस्तूपयोगकालः क्वापि नास्ति विनिर्दिष्टः । यदि हि साकारा-ऽनाकारोपयोगरूपो मिश्रः सिद्धानामुपयोगः स्यात् तदा तेषामिव तस्यापि साद्यपर्यवसातित्वं स्यात् । न चैतत् सिद्धान्ते क्वापि भणितं दृश्यते । तस्माद् नास्ति युगपदुपयोगद्वयमिति ॥ ३१३० ॥

एतदेवाह—

[3]जह सिद्धाइयाणं भणियं साईअपज्जवसियत्तं । तह जइ उवओगाणं हवेज्ज तो होज्ज ते जुगवं ॥३१३१॥

यथा सिद्धादीनाम्, आदिशब्दादनिन्द्रिया-ऽकायादीनां साद्यपर्यवसितत्वं भणितम्, तथा यद्युपयोगानामपि तद् भणितं भवेत्, ततस्तौ साकारा-ऽनाकारोपयोगौ युगपद् भवेताम्, न चैवम् । तस्माद् न युगपदुपयोगद्वयमिति ॥ ३१३१ ॥

तदेवं सूरिः परस्याभिनिवेशं निराकृत्यात्मनि तदाशङ्कां निराकर्तुमाह—

१ सिद्धा सेन्द्रियकाया योगे वेदे कषाये लेश्यायां च । ज्ञानोपयोगा-हारक भाषक-सशरीर-चरमाश्च ॥ ३१२९ ॥

२ अन्तर्मुहूर्तमेव च कालो भणितस्तथोपयोगस्य । सादिरपर्यवसित इति नास्ति क्वचिद् विनिर्दिष्ट ॥ ३१३० ॥

३ यथा सिद्धादिकानां भणित साद्यपर्यवसितत्वम् । तथा यद्युपयोगानां भवेत, ततो भवेतां तौ युगपत् ॥ ३१३१ ॥

[1]ते पुण होज्ज विहत्था कुम्मापुत्तादओ जहन्नेणं । अन्ने संवट्टियसत्तहत्थसिद्धस्स हीण त्ति ॥ ३१६९॥

ते जघन्यतो द्विहस्ताः कूर्मापुत्रादयो द्रष्टव्याः । अन्ये तु वदन्ति– 'सप्तहस्तोऽपि यन्त्रपीलनादिना संवर्तितः समाक्रोडितो यः सिध्यति तस्यात्र हीना जघन्यावगाहना प्रोक्तेति ॥ ३१६९ ॥

अथवा समाधानान्तरमाह—

[2]बाहुल्लाउ सुत्तम्मि सत्त पंच य जहन्नमुक्कोसं । इहरा हीणब्भहियं होज्जंगुल-धणुपुहत्तेहिं ॥ ३१७० ॥
अच्छेरयाइं किंचि वि सामन्नसुए न देसिअं सव्वं । होज्ज व अणिबद्धं चिय पंचसयाएसवयणं व ॥३१७१॥

व्याख्या– अथवा, बाहुल्यात् प्राचुर्याश्रयणात् सूत्रे सप्त हस्ताः सिद्धिं गच्छतो जघन्यं मानमुक्तम्, उत्कृष्टं तु पञ्च धनुःशतानि प्रमाणमभिहितम्; इतरथा कादाचित्कं जघन्यपदेऽङ्गुलपृथक्त्वैः, उत्कृष्टपदे धनुष्पृथक्त्वैर्हीनमभ्यधिकं वा तद् भवेदेवेति न कूर्मापुत्र-मरुदेव्यादिभिः कश्चिद् विरोध इति । आश्चर्यादिकं च किञ्चित् सामान्यश्रुते सर्वं न देशितं न भणितम्, यथेदमेव सिद्धिं गच्छतां द्विहस्तमानं सपादपञ्चधनुःशतमानं चेति, अथ च श्रुतेऽनिबद्धमपि तदस्तीति श्रद्धेयम्, पञ्चशतादेशवचनवदिति ॥ ११७० ॥ ३१७१ ॥

यदुक्तम्– '[3]संठाणमणित्थंथं' इति, तद्व्याख्यानमाह—

[4]सुसिरपरिपूरणाओ पुव्वागारन्नहाववत्थाओ । संठाणमणित्थंथं जं भणियं अणिययागारं ॥ ३१७२ ॥
एत्तो च्चिय पडिसेहो सिद्धाइगुणेसु दीहयाईणं । जमणित्थंथं पुव्वागारावेक्खाए नाभावो ॥ ३१७३ ॥

व्याख्या– शुषिरपरिपूरणात्, पूर्वाकारस्यान्यथाऽव्यवस्थापनात् सिद्धसंस्थानमित्थमनेन प्रकारेण तिष्ठतीति इत्थंस्थं न

१ ते पुनर्भवेयुर्द्विहस्ताः कूर्मापुत्रादयो जघन्येन । अन्ये संवर्तितसप्तहस्तसिद्धस्य हीनेति ॥ ३१६९ ॥
२ बाहुल्यात् सूत्रे सप्त पञ्च च जघन्यमुत्कृष्टम् । इतरथा हीनमधिकं भवेदङ्गुल-धनुष्पृथक्त्वै ॥ ३१७० ॥
आश्चर्यादि किञ्चिदपि सामान्यश्रुते न देशित सर्वम् । भवेद् वाऽनिबद्धमेव पञ्चशतादेशवचनमिव ॥ ३१७१ ॥ ३ नि० गा० ।
४ शुषिरपरिपूरणात् पूर्वाकारान्यथाऽव्यवस्थातः । सस्थानमनित्थंस्थं यद् भणितमनियताकारम् ॥ ३१७२ ॥
एतस्मादेव प्रतिषेधः सिद्धादिगुणेषु दीर्घतादीनाम् । यदनित्थंस्थ पूर्वाकारापेक्षया नाभाव. ॥३१७३ ॥

केस्स व नाणुमयमिणं जिणस्स जइ हुज्ज दो वि उवओगा। नूणं न हुंति जुगवं जओ निसिद्धा सुए बहुसो ॥३१३२॥

नवि अभिनिवेसबुद्धी अम्हं एगंतरोवओगम्मि। तह वि भणिमो न तीरइ जं जिणमयमन्नहा काउं ॥३१३३॥

पाठसिद्धे एव ॥ ३१३२ ॥ ३१३३ ॥

अथ परपृच्छामुत्तरं चाह—

[2]जइ नन्नुन्नावरणं नाकारणया कहं तदावरणं। एगंतरोवओगे जिणस्स तं भण्णइ सहावो ॥ ३१३४ ॥

ननु यदि '[3]नणु सनिहणत्तमेवं' इत्यादिगाथायां यद् मया 'इयरेयरावरणया अहवा निक्कारणावरणं' इत्यादि दूषणमुक्तम्, तद् यदि प्रागुक्तेनैव प्रकारेण त्वया नेष्यते, तर्हि कथं जिनस्य केवलिन एकान्तरोपयोगेऽभ्युपगम्यमाने तस्यायुगपदुपयोगप्रवृत्तेरावरणं तदावरणमिति कथ्यताम् ? । सूरिराह— भण्यतेऽत्रोत्तरम्— तदावरणमिह स्वभावो द्रष्टव्यः; ईदृश एव जीवस्य स्वभावो येन क्रमेणैवोपयोगः प्रवर्तते, न युगपत्। न च स्वभावः पर्यनुयोगमर्हति, 'अग्निर्दहति नाकाशम्' इत्यादिष्वपि तत्प्रसङ्गादिति ॥३१३४॥

एतदेव समर्थयति—

[4]परिणामियभावाओ जीवत्तं पिव सहाव एवायं। एगंतरोवओगो जीवाणमणण्णहेउ त्ति ॥ ३१३५ ॥

यथा जीवस्य जीवत्वमनन्यहेतुकम्, पारिणामिकभावत्वात्; एवमेकान्तरोपयोगोऽपि पारिणामिकत्वात् तस्य स्वभाव एव। ततो नास्यान्यो हेतुरन्वेषणीय इति ॥

तदेवमवसितं प्रासङ्गिकवादस्थानकम्। तदवसाने च व्याख्याता '[5]दंड कवाडे' इत्यादिगाथा। इयं च गाथा '[6]जह उल्ला साडीया' इत्यादिगाथायाः पूर्वं पठितापि पश्चाद् व्याख्याता, 'भासाजोगनिरोहे सेलेसी सिज्झणा चेव, इत्यस्योत्तरग्रन्थेन सह संबन्धानुकूल्यादिति ॥ ३१३५ ॥

---

१ कस्य वा नानुमतमिदं जिनस्य यदि भवेतां द्वावप्युपयोगौ। नूनं न भवतो युगपद् यतो निषिद्धौ श्रुते बहुशः ॥ ३१३२ ॥
नाप्यभिनिवेशबुद्धिरस्माकमेकान्तरोपयोगे। तथापि भणामो न शक्यते यज्जिनमतमन्यथा कर्तुम् ॥ ३१३३ ॥

२ यदि नान्योन्यावरणं नाकारणता कथं तदावरणम्। एकान्तरोपयोगे जिनस्य यद् भण्यते स्वभावः ॥ ३१३४ ॥ ३ गाथा ३१०३।

४ पारिणामिकभावाज्जीवत्वमिव स्वभाव एवायम्। एकान्तरोपयोगो जीवानामनन्यहेतुरिति ॥ ३१३५ ॥ ५ गाथा ३०३१। ६ गाथा ३०३२।

तथाऽनित्थस्थंमनियताकारमिति यदुक्तं भवति अनियताकारमित्युक्तं भवतीत्यर्थः। अत एव सिद्धस्यादेरारभ्य गुणाः सिद्धादिगुणास्तेषु प्रतिपाद्यमानेषु "से[1] न दीहे न हस्से न वट्टे" इत्यादिवचनेनागमे दीर्घत्वादीनां प्रतिषेधः कृतः। आह– यद्येवम्, सिद्धसंस्थानमभावः प्राप्नोति, दीर्घत्वादिगुणैर्व्यपदेष्टुमशक्यत्वात्, खरविषाणवदिति। नैतदेवम्, यस्मात् तदनित्थंस्थं पूर्वाकारापेक्षया भण्यते, स हि मूर्तत्वाद् दीर्घादिगुणैर्व्यपदिश्यते, न तु सिद्धजीवः, अमूर्तत्वात्। न चैतावता तत्संस्थानमभावः, मूर्तगुणानां दीर्घत्वादीनामभावेऽप्यमूर्तगुणानां ज्ञानादीनां तत्र सद्भावादिति॥ ३१७२॥ ३१७३॥

अत्र प्रेर्य-परिहारौ प्राह—

नामुत्तस्सागारो[2] विन्नाणस्सेव, न कुंभनभसो व्व। दिट्ठो परिणामवओ नेयागारं च विन्नाणं॥ ३१७४॥

ननु यदि सिद्धजीवोऽमूर्तस्तर्हि तस्यानित्थंस्थसंस्थानरूपो यः कोऽप्याकारो भवद्भिरिष्यते स न प्राप्नोति, अमूर्तत्वादेव, विज्ञानस्येवेति। सूरिराह– नैतदेवम्, यतो दृष्टः परिणामवतोऽमूर्तस्याप्याकारः, यथा कुम्भनभसः– घटाकाशस्येत्यर्थः। इह यत् परिणामवत् तस्याकारो दृष्टः, यथा घटपरिच्छिन्नस्याकाशस्य, घटाकारपरिणामवांश्च सिद्धजीवः, ततस्तस्याप्यनन्तरभवशरीरपरिच्छिन्नस्यास्त्युपाधिमात्रेण शरीराकारः। विज्ञानस्यापि दृष्टान्तत्वेनोपन्यस्तस्य निराकारत्वमसिद्धम्, यतो ज्ञेयाकारं विज्ञानमिष्यत एव, अन्यथा नीलज्ञानादपि पीतादिसमस्तवस्तुपरिच्छेदप्रसङ्गात्, नीलस्यापि वाऽपरिच्छेदापत्तेः, निराकारत्वाविशेषादिति॥ ३१७४॥

इतोऽपि ज्ञानं साकारम्। कुतः? इत्याह—

जीवाणन्नं[3] च जओ देहागारो य सो तहा तं पि। परिमियवत्थुत्तणओ जुत्तं कुंभो व सागारं॥३१७५॥

यतश्च यस्माद् जीवादनन्यदभिन्नं विज्ञानम्, स च जीवो देहेन सर्वतः परिच्छिन्नत्वाद् देहाकार एष्टव्यः, तथा तेनैव प्रकारेण तदपि विज्ञानं परिमितवस्तुत्वाद् देहपरिच्छिन्नवस्तुत्वात् कुम्भवत् साकारं युक्तम्, न तु निराकारमिति॥ ३१७५॥

ननु यत्रैकः सिद्धस्तत्र किमन्येऽपि भवन्ति, उत देशभेदतास्तिष्ठन्ति? इत्यत्र निर्युक्तिकारः प्राह—

१ स न दीर्घो न ह्रस्वो न वृत्तः।
२ नामूर्तस्याकारो विज्ञानस्येव, न कुम्भनभस इव। दृष्टः परिणामवतो ज्ञेयाकारं च विज्ञानम्॥ ३१७४॥
३ जीवानन्यच्च यतो देहाकारश्च स तथा तदपि। परिमितवस्तुत्वतो युक्तं कुम्भ इव साकारम्॥ ३१७५॥

अथ 'लोउ य' इत्यादिवक्ष्यमाणगाथायाः प्रस्तावनां रचयन्नाह—

गंतूण[2] सिज्झइ त्ति य भणिए सुत्तम्मि कहमकम्मस्स । आह गमणं ति, भण्णइ सकम्मगमणे व को हेऊ?॥३१३६॥

'सिज्झणा चेव' इत्यनन्तरगाथायामुक्तम्, वक्ष्यमाणसूत्रे च "तत्थ गंतूण सिज्झइ" इति वक्ष्यति । एतस्मिंश्च भणिते प्रेरकः प्राह— कथमकर्मणः क्षपितकर्मकस्य देशोनसप्तरज्जूर्यावत् सिद्धिगमनं संभवति?, पूर्वं संसारे सकर्मकस्यैव गमनादिक्रियादर्शनादिति भावः । सूरिराह— भण्यतेऽत्रोत्तरम्— ननु सकर्मकस्यापि गमने को हेतुः? इति वक्तव्यम् ॥ ३१३६ ॥

कर्मैवेति चेत्, तत्राह—

कम्मं[3] पुग्गलमइयं निज्जीवं तस्स नयणसामत्थे । को हेऊ पडिवण्णो जइव सहावो इह स एव ॥३१३७॥

ननु कर्म तावत् पुद्गलमयम्, तन्मयत्वाच्च निर्जीवम्, निर्जीवस्य च तस्य जीवस्य सिद्धिं यावद् नयने को हेतुस्त्वया प्रतिपन्नः? । यदि च स्वभावस्तत्र हेतुरित्युच्यते, नन्विहापि निष्कर्मकजीवगमने स एव स्वभावो हेतुः केन वार्यते? इति ॥ ३१३७ ॥

पुनरप्याक्षेप-परिहारावाह—

सक्किरियं[4] किमरूवं भण्णइ भुवि चेयणं च किमरूवं? । जह से विसेसधम्मो चेयण्णं तह मया किरिया ॥३१३८॥

जं वेह जेण किरियाकारणमब्भुवगयं तहिं एसो । तुल्लोवालंभो च्चिय जं न सहावो सरणमिक्को ॥३१३९॥

व्याख्या— ननु जीवद्रव्यमरूपममूर्तम्, तत् किं केन कारणेन सक्रियं सिद्धिगमनक्रियावदिष्यते ?, अरूपस्याकाशस्येव क्रियानुपपत्तेरिति भावः । सूरिराह— भण्यतेऽत्रोत्तरम्— ननु पर ! त्वमपि प्रष्टव्योऽसि, अरूपममूर्तं जीवद्रव्यं चेतनमपि किं कस्माद्धेतोरिष्यते, अमूर्तस्याकाशस्येव चेतनत्वस्याप्यघटनात् ? । अथामूर्तस्यापि जीवद्रव्यस्य स्वभावादेव चैतन्यमाकाशापेक्षया विशेषधर्म इष्यते, तर्हि यथाऽस्यायं स्वभावादिष्यते तथा क्रियापि गमनलक्षणा विशेषधर्मोऽस्य मता परमगुरूणामिति । यद्वा, स्वभा-

१ गाथा ३१४१ । २ गत्वा सिध्यतीति च भणिते सूत्रे कथमकर्मणः । आह गमनमिति, भण्यते सकर्मगमने वा को हेतु ? ॥ ३१३६ ॥

३ कर्म पुद्गलमयं निर्जीव तस्य नयनसामर्थ्ये । को हेतु॰ प्रतिपन्नो यद्विवा स्वभाव इह स एव ॥ ३१३७ ॥

४ सक्रियं किमरूपं भण्यते भुवि चेतन च किमरूपम् ? । यथा तस्य विशेषधर्मश्चैतन्यं तथा मता क्रिया ॥ ३१३८ ॥

यद्वेह येन क्रियाकारणमभ्युपगत तर्ह्येषः । तुल्य उपालम्भ एव यद् न स्वभाव॰ शरणमेकः ॥ ३१३९ ॥

[1]जत्थ य एगो सिद्धो तत्थ अणंता भवक्खयविमुक्का । अन्नोन्नसमोगाढा पुट्ठा सव्वे वि लोगंते ॥३१७६॥

पाठसिद्धा ॥ ३१७६ ॥

स्पर्शना तेषां परस्परं कथम् ? इत्यत्र प्रश्ने निर्युक्तिकार एवाह—

[2]फुसइ अणंते सिद्धे सव्वपएसेहिं नियमसो सिद्धो । ते वि असंखिज्जगुणा देसपएसेहिं जे पुट्ठा ॥ ३१७७ ॥

स्पृशत्यनन्तान् सिद्धान् सर्वप्रदेशैरात्मसंबन्धिभिर्नियमात् सिद्ध इति । तथा तेऽपि सर्वप्रदेशस्पृष्टेभ्योऽसंख्येयगुणा वर्तन्ते देशप्रदेशैर्ये स्पृष्टाः, कथम् ? इति चेत् । उच्यते— सर्वप्रदेशैस्तावदनन्ताः स्पृष्टाः एवमेकैकेनापि जीवस्य देशेन प्रदेशेन चानन्ताः स्पृष्टाः, जीवश्चासंख्येयदेशप्रदेशात्मकः, ततश्च मूलानन्तकं सकलजीवदेश-प्रदेशाऽसंख्येयकेन गुणितं यथोक्तमेव भवतीति ॥ ३१७७ ॥

अथ यदुक्तम्— '[3]संठाणमणित्थंथं जरामरणविप्पमुक्काणं' इति, तत्र परः प्राह—

[4]न जरा-मरणविमुक्का जीवत्तणओ मइ मणुस्सो व्व । नहि जीवणाविरहाओ न जीवणं कम्माविरहाओ ॥३१७८॥

न जरा-मरणविमुक्ताः सिद्धा इति प्रतिज्ञा, जीवत्वादिति हेतुः, मनुष्यवदिति दृष्टान्तः'मइ त्ति' इति परस्य मतिर्भवेत् । सूरिराह— नहि—नैवेदम्, हेतोरसिद्धत्वात् । तदसिद्धत्वं च प्राणधारणलक्षणस्य जीवनस्य तेषु विरहादभावात्; जीवनाभावश्च कर्मविरहादिति ॥ ३१७८ ॥

इति परोपन्यस्तहेतुं निराकृत्य स्वपक्षसिद्ध्यर्थं युक्तिमाह—

[5]वयसो हाणीह जरा पाणच्चाओ य मरणमाइट्ठं । सइ देहम्मि तदुभयं तदभावे तं न खस्सेव ॥ ३१७९ ॥

'जॄ वयोहानौ' इति धातुपाठाद् वयसो हानिरिह जरा प्रसिद्धा, प्राणत्यागश्च मरणमादिष्टम् । इदं च द्वितयमपि देहे सत्ये-

1 यत्र चैकः सिद्धस्तत्रानन्ता भवक्षयविमुक्ताः । अन्योन्यसमवगाढाः स्पृष्टाः सर्वेऽपि लोकान्ते ॥ ३१७६ ॥
2 स्पृशत्यनन्तान् सिद्धान् सर्वप्रदेशैर्नियमतः सिद्धः । तेऽप्यसंख्येयगुणा देशप्रदेशैर्ये स्पृष्टाः ॥ ३१७७ ॥ 3 नि० गा० ।
4 न जरा मरणविमुक्ता जीवत्वतो मतिर्मनुष्य इव । नहि जीवनविरहाद् न जीवनं कर्मविरहात् ॥ ३१७८ ॥
5 वयसो हानिरिह जरा प्राणत्यागश्च मरणमादिष्टम् । सति देहे तदुभयं तदभावे तद् न खस्येव ॥ ३१७९ ॥

वादन्यदिष्टादृष्टमीश्वरादिकं येन वादिना जीवस्य गमनादिक्रियाकारणमभ्युपगतम्, तत्रापीश्वरादिकारण एष जीवस्य सिद्धिगमनक्रियाविषय उपालम्भस्तुल्य एव; तथाहि— तत्रापि शक्यत एवं वक्तुम्– ईश्वरादिरपि कथं तत्क्रियायां प्रवर्तयति ? । अथ तस्याप्यन्यत् कारणम्, पुनस्तस्याप्यपरमित्यनवस्था । ततः पर्यन्ते यदि स्वभाव एवैकः शरणं नेष्यते, तर्हि नेयं निवर्तते। इष्यते चेत्, तर्हि स एव जीवस्य सिद्धिगमनक्रियायां कारणमिष्यताम्, किमन्येन ? इति ॥ ३१३८ ॥ ३१३९ ॥

किञ्च, कारणमपि गतिक्रियायां किञ्चिदुच्यते—

अविय असंगत्तणओ बंधच्छेय परिणामभावाओ । पुव्वप्पओगउ च्चिय तस्स गई तत्थ दिट्ठंता ॥३१४०॥[1]

लाउ य एरंडफले अग्गी धूमे य उसु धणुविमुक्के । गई पुव्वपओगेणं एवं सिद्धाण वि गई ओ ॥ ३१४१ ॥

व्याख्या— अपि च, यथाऽलाबुकस्य तुम्बकस्य दर्भान्तरितशुष्काऽष्टमृल्लेपलिप्तस्य नद्यादिजले प्रक्षिप्तस्य मृल्लेपसङ्गापगमात् स्वभावत एवोर्ध्वं गतिः प्रवर्तते, न तिर्यग्, नापि जलोपरिमतलादपि परतः, तथा तस्यापि सिद्धस्य कर्मसंयोगाभावादूर्ध्वमेव गतिः प्रवर्तते, नान्यप्रकारेण, नापि लोकोपरिमभागादपि परतः । यथा वा, एरण्डफलस्यैरण्डमिञ्जिकायां बन्धनच्छेदेनातपशुष्ककोशकविगमनेन तथाविधस्वभावादूर्ध्वमेव गतिः, एवं विगतकर्मबन्धनस्य जीवस्यापीति । यथा वा, अग्नेर्धूमस्य वा 'परिणामभावाउ त्ति' तथाविधपरिणामभावादूर्ध्वमेव गतिः प्रवर्तते तथा मुक्तजीवस्यापि । यथा वा, धनुषा पुरुषप्रयत्नप्रेरितस्येषोर्गतिकारणविगमेऽपि पूर्वप्रयोगाद् गतिः प्रवर्तते, एवं तस्यापि सिद्धस्य। तत्र चालाबुप्रभृतयो दृष्टान्ताः, यथाऽलाबुप्रभृतीनामसङ्गत्वादिभिर्गतयः प्रवर्तन्ते, एवं सिद्धानामपीति ॥ ३१४० ॥ ३१४१ ॥

इयं च निर्युक्तिगाथा, ततोऽस्या व्याख्यानमाह—

जह मिल्लेवावगमादलाबुणोऽवस्समेव गइभावो । उड्ढं च नियमओ नण्णहा नवा जलतलादुड्ढं ॥३१४२॥[2]

तह कम्मलेवविगमे गइभावोऽवस्समेव सिद्धस्स । उड्ढं च नियमओ नण्णहा नवा लोगपरउ त्ति॥३१४३॥

1 अपिचासङ्गत्वतो बन्धच्छेदात् परिणामभावात् । पूर्वप्रयोगत एव तस्य गतिस्तत्र दृष्टान्ता ॥ ३१४० ॥
अलाबु चैरण्डफलमग्निर्धूमश्चेपुर्धनुर्विमुक्तः । गतिः पूर्वप्रयोगेणैवं सिद्धानामपि गतिस्तु ॥ ३१४१ ॥

2 यथा मृल्लेपापगमादलाबुनोऽवश्यमेव गतिभावः । ऊर्ध्वं च नियमतो नान्यथा नवा जलतलादूर्ध्वम् ॥ ३१४२ ॥
तथा कर्मलेपविगमे गतिभावोऽवश्यमेव सिद्धस्य । ऊर्ध्वं च नियमतो नान्यथा नवा लोकपरत इति ॥ ३१४३ ॥

व दृष्टम् । ततश्च तदभावे तदुभयमपि खस्याकाशस्येव सिद्धानां नास्तीति ॥ ३१७९ ॥

अथ 'फुसइ अणंते सिद्धे' इत्यादिगाथाभावनामाह—

[1]एगक्खेत्तेऽणंता पएसपरिवुड्ढि-हाणिओ तत्तो । होंति असंखेज्जगुणासंखपएसो जमवगाहो ॥ ३१८० ॥

एकस्य सिद्धस्य यदवगाहनाक्षेत्रं तत्रैकस्मिन्नपि परिपूर्णेऽवगाढा अन्येऽप्यनन्ताः सिद्धाः प्राप्यन्ते, अपरे तु ये तस्य क्षेत्रस्यैकैकं प्रदेशमाक्रम्यावगाढास्तेऽपि प्रत्येकमनन्ताः । एवं द्वि-त्रि-चतु-ष्पञ्चादिप्रदेशवृद्ध्या येऽवगाढास्तेऽपि प्रत्येकमनन्ताः । तथा, तस्य मूलक्षेत्रस्यैकैकं प्रदेशं परित्यज्य येऽवगाढास्तेऽपि प्रत्येकमनन्ताः । एवं द्वि-त्रि-चतु-ष्पञ्चादिप्रदेशहान्या येऽवगाढास्तेऽपि प्रत्येकमनन्ताः । एवं च सति प्रदेशपरिवृद्धि-हानिभ्यां ये समवगाढास्ते 'तत्तो त्ति' तेभ्यः परिपूर्णैकक्षेत्रावगाढेभ्योऽसंख्येयगुणा भवन्ति, यद् यस्मादसंख्येयप्रदेशात्मक एकस्य सिद्धस्यावगाहः, प्रतिप्रदेशं चानन्ताः समवगाढा इति दर्शितमेव । ततो मूलानन्तकेऽसंख्येयैः प्रदेशैर्गुणिते समस्तानामसंख्येयगुणत्वं सिद्धम् ॥ ३१८० ॥

अत्राक्षेप-परिहारावाह—

[3]एगक्खेत्तेऽणंता किह माया, मुत्तिविरहियत्ताओ । नेयम्मि व नाणाइं दिट्ठीओ वेगरूवम्मि ॥ ३१८१ ॥

मुत्तिमयाणवि य समाणदेसया दीसए पईवाणं । गम्मइ परमाणूण य मुत्तिविमुक्केसु का संका ? ॥ ३१८२॥

प्रकटार्थे, नवरं 'मुत्तिमयेत्यादि' मूर्तिमतामपि प्रदीपप्रभापुद्गलानामित्यर्थः ॥ इति विंशतिगाथार्थः ॥ ३१८१ ॥ ३१८२ ॥

'असरीर–' इत्यादि निर्युक्तिगाथात्रयं सुगमम्, प्रायो गतार्थं च । 'मुत्तो करणाभावे–' इत्यादिकास्तु 'सुवहुयतरं' इत्यादिगाथापर्यन्ता नव गाथाः पूर्वमेकादशगणधरे व्याख्याता इति नेह लिख्यन्ते । 'न वि अत्थि माणुसाणं' इत्यादिकास्तु 'इय सव्वकाल–' इत्यादिगाथापर्यन्ताः सप्त निर्युक्तिगाथाः सुगमाः, आवश्यके व्याख्याताश्चेति ॥

---

१ गाथा ३१७७ । २ एकक्षेत्रेऽनन्ताः प्रदेशपरिवृद्धि-हानितस्ततः । भवन्त्यसंख्येयगुणा असंख्यप्रदेशो यदवगाहः ॥ ३१८० ॥

३ एकक्षेत्रेऽनन्ता कथं माताः, मूर्त्तिविरहितत्वात् । ज्ञेय इव ज्ञानानि दृष्टयो वैकरूपे ॥ ३१८१ ॥

मूर्तिमतामपि च समानदेशता दृश्यते प्रदीपानाम् । गम्यते परमाणूनां च मूर्तिविमुक्तेषु का शङ्का ? ॥ ३१८२ ॥

एरंडाइफलं जह बंधच्छेएरियं दुयं जाइ । तह कम्मबंधणच्छेयणेरिओ जाइ सिद्धो वि ॥ ३१४४ ॥
उड्ढंगइपरिणामो जह जलणस्स जह वेह धूमस्स । उड्ढंगइपरिणामो सहावओ तह विमुक्कस्स ॥३१४५॥
जह तेसलाभकाले चेव तहा गइसभावयामिंति । परिणमइ तग्गइं वा लेवावगमे जहालाबुं ॥३१४६॥
तह तग्गइपरिणामं परिणमइ सरूवलाभ एवेह । सिद्धो सिद्धत्तं पिव सकम्मपरिणामनिरवेक्खं ॥३१४७॥
जह धणुपुरिसपयत्तेरिएसुणो भिण्णदेसगमणं तु । गइकारणविगमम्मिवि सिद्धं पुव्वप्पओगाओ ॥३१४८॥
बंधच्छेयणकिरियाविरमे वि तहा विमुच्चमाणस्स । तस्सा लोगंताओ गमणं पुव्वप्पओगाओ ॥३१४९॥
जहवा कुलालचक्कं किरियाहेउविरमे वि साक्किरियं । पुव्वप्पओगओ च्चिय तह किरिया मुच्चमाणस्स ॥३१५०॥

गतार्था एव, नवरं 'जह ते सलाभकाले त्ति' यथा तावग्नि-धूमौ स्वस्यात्मनो लाभः स्वलाभः, स्वकाल एवोर्ध्वगतिपरिणामस्वभावमुपगतौ; यथा वा, लेपापगमानन्तरं तथोर्ध्वादिगतिपरिणाममापद्यतेऽलाबु, 'तह तग्गइपरिणामं ति' तथा तस्य सिद्धस्योर्ध्वगतिगमनपरिणतिलक्षणो गतिपरिणामस्तद्गतिपरिणामम् । 'सिद्धत्तं पिव त्ति' यथा सिद्धत्वं स्वहेतुभूतकर्मपरिणामनिरपेक्षं कर्मक्षयानन्तरमेव सिद्धः स्वभावत एव प्राप्नोति, तथा तद्गतिपरिणाममप्यसौ स्वभावत एव परिणमतीति ॥३१४२॥३१४३॥३१४४॥ ॥३१४५॥३१४६॥३१४७॥३१४८॥३१४९॥३१५०॥

अत्राक्षेप-परिहारौ प्राह—

१ एरण्डादिफलं यथा बन्धच्छेदेरित द्रुत याति । तथा कर्मबन्धनच्छेदेरितो याति सिद्धोऽपि ॥ ३१४४ ॥
ऊर्ध्वगतिपरिणामो यथा ज्वलनस्य यथा वेह धूमस्य । ऊर्ध्वगतिपरिणाम स्वभावतस्तथा विमुक्तस्य ॥ ३१४५ ॥
यथा तौ स्वलाभकाल एव तथा गतिस्वभावता यन्ति । परिणमते तद्गतिं वा लेपापगमे यथाऽलाबु ॥ ३१४६ ॥
तथा तद्गतिपरिणामं परिणमते स्वरूपलाभ एवेह । सिद्धः सिद्धत्वमिव स्वकर्मपरिणामनिरपेक्षम् ॥ ३१४७ ॥
यथा धनु पुरुषप्रयत्नेरितेषोर्भिन्नदेशगमनं तु । गतिकारणविगमेऽपि सिद्ध पूर्वप्रयोगात् ॥ ३१४८ ॥
बन्धच्छेदनक्रियाविरमेऽपि तथा विमुच्यमानस्य । तस्याऽऽलोकान्ताद् गमन पूर्वप्रयोगात् ॥ ३१४९ ॥
यथावा कुलालचक्र क्रियाहेतुविरमेऽपि सक्रियम् । पूर्वप्रयोगत एव तथा क्रिया मुच्यमानस्य ॥ ३१५० ॥

अथ 'जइ सव्वकामगुणियं' इत्यादिगाथायां सिद्धसुखे यत् पुरुषोदाहरणमुक्तम्, तत्राह—

[1]तेसिं सिद्धत्तं पिव सोक्खमसाहारणं तओऽणुवमं । देसोवणयाओ पुण पुरिसोदाहरणमक्खायं ॥ ३१८३ ॥

सुगमा ॥ ३१८३ ॥

[2]जइवा संसारे च्चिय होज्ज तयं किंत्थ मोक्खचिंताए । तव्विहमच्चंतसुहं जत्थ व सोक्खेण संसारो ? ॥ ३१८४॥

यदि पुनः संसारेऽपि कस्यापि सर्वथा तत् सिद्धसुखसदृशं सुखं भवेत्, तत् किमत्र मोक्षचिन्तया, तत्सुखस्येहापि प्राप्तेः ? । अथवा, यत्र तद्विधं सिद्धसुखप्रकारमात्यन्तिकं सुखं प्राप्यते स केन हेतुना संसारो भण्यते ? ननु मोक्ष एवासौ, न चैवम् । तस्माद् देशसाम्येनैव पुरुषोदाहरणं द्रष्टव्यमिति ॥ ३१८४ ॥

तस्माद् निरुपममेव सिद्धिसुखमिति दर्शयन्नाह—

[3]अतुलमणन्नसरिसयं निव्वाणं निव्वुई परं सोक्खं । अन्नेसिं निव्वाणं दीवस्स व सव्वहा नासो ॥ ३१८५ ॥

अतुलमनन्यसदृशं निर्वाणं निर्वृतिः परं प्रकर्षप्राप्तं सौख्यमुच्यते, न पुनस्तस्य दृष्टान्तः कोऽप्यस्तीति भावः । अन्येषां तु मतेन दीपस्येव जीवस्य सर्वथा नाशो निर्वाणमुच्यत इति, सर्वथा नष्टे प्रदीपे निर्वाणशब्दरूढेर्जीवस्य सर्वथा नाशो निर्वाणमन्येषामभिमतम् ॥ ३१८५ ॥

युक्तिं च तेऽत्र प्राहुः—

[4]जं च तणु-कम्मसंतइनासो बीयंकुराण वा मोक्खो । अन्नो न य संताणी संताणाओ तओ नासो ॥ ३१८६ ॥

जं नारगाइभावो भवो व न य नारगाइओ भिन्नो । कोई जीवो तो नारगाइनासम्मि तन्नासो ॥ ३१८७ ॥

---

१ तेषां सिद्धत्वमिव सौख्यमसाधारणं ततोऽनुपमम् । देशोपनयात् पुन पुरुषोदाहरणमाख्यातम् ॥ ३१८३ ॥
२ यदि वा ससार एव भवेत् तत् किमत्र मोक्षचिन्तया । तद्विधमनन्तसुखं यत्र वा सौख्येन संसारः ? ॥ ३१८४ ॥
३ अतुलमनन्यसदृशकं निर्वाणं निर्वृतिं परं सौख्यम् । अन्येषां निर्वाणं दीपस्येव सर्वथा नाशः ॥ ३१८५ ॥
४ यच्च तनु-कर्मसंततिनाशो बीजा-ऽङ्कुरयोरिव मोक्ष । अन्यो न च संतानी संतानात् ततो नाशः ॥ ३१८६ ॥
यद् नारकादिभावो भव एव न च नारकादितो भिन्न । कोऽपि जीवस्ततो नारकादिनाशे तन्नाश ॥ ३१८७ ॥

[1]नालाबुगादिसाहम्ममत्थि सिद्धस्स मुत्तिमत्ताओ। तन्नो तग्गइपरिणामदेससाहम्मओ तेसिं ॥३१५१॥
जइव न देसोवणओ दिट्ठंतो तो न सव्वहा सिद्धो। जं नत्थि वत्थुणो वत्थुणा जए सव्वसाहम्मं ॥३१५२॥

अलाबुकादिभिः सार्धं सिद्धस्य साधर्म्यं नास्ति, तेषां मूर्तत्वात्, सिद्धस्य चामूर्तत्वात्; तत् कथं ते दृष्टान्तत्वेनोच्यन्ते ?, इति परस्याभिप्रायः। सूरिराह— तदेतद् न, तस्य सिद्धस्योर्ध्वगमनलक्षणो गतिपरिणामस्तद्गतिपरिणामस्तन्मात्रेण देशसाधर्म्यं तद्गतिपरिणामदेशसाधर्म्यं तस्मात् तेषामलाबुकादीनां दृष्टान्तत्वं युज्यत इति। यदि पुनर्देशत उपनयो नेष्यते किन्तु सर्वत एव, ततस्तर्हि सर्वथा सर्वैरपि प्रकारैः समानधर्मदृष्टान्तः कोऽपि क्वचिदपि सिद्धो नास्ति, अतस्तदभाव एव प्राप्नोति, यस्मात् कस्यापि वस्तुनः केनापि वस्त्वन्तरेण सार्धं जगति सर्वसाधर्म्यं नास्ति, वस्त्वन्तरत्वाभावप्रसङ्गादिति ॥ ३१५१ ॥ ३१५२ ॥

तस्मात् किं स्थितम् ? इत्याह—

[2]उड्ढगइहेउउ च्चिय नाहो-तिरियगमणं नवाचलया। सविसेसपच्चयाभावओ य सव्वन्नुमयओ य ॥३१५३॥

मुक्तात्मनो नाधस्तिर्यग् वा गमनम्, नाप्यत्रैवाचलता, किन्तूर्ध्वमेवासौ गच्छति। कुतः ? इत्याह— ऊर्ध्वगतिहेतुत्वात् तत्स्वभावस्य। सह विशेषेण वर्तत इति सविशेषः, स चासौ प्रत्ययश्च तस्याभावाच्चोर्ध्वमेव गच्छति। इदमुक्तं भवति— पूर्वं हि संसारे भ्राम्यतस्तस्याधस्तिर्यग् वा गमनमभूत्, सविशेषप्रत्ययस्य नरकानुपूर्व्यादिकर्मणः सद्भावात्; इदानीं त्वसौ नास्ति, ततश्चोर्ध्वमेव गच्छति; सर्वज्ञवचनप्रामाण्याच्चेति ॥ ३१५३ ॥

पुनरपि प्रकारान्तरेणाक्षेप-परिहारौ प्राह—

[3]गइमत्तओ विणासी केसी गच्चागमी य मणुउ व्व। होइ गइपज्जयाओ नासी न उ सव्वहाणु व्व ॥३१५४॥
केसनिमित्तं कम्मं न गई तदभावओ तओ कत्तो। अह गइ एव निमित्तं किमजीवाणं तओ नत्थि ?॥३१५५॥

---

1 नालाबुकादिसाधर्म्यमस्ति सिद्धस्य मूर्तिमत्त्वात्। तद् नो तद्गतिपरिणामदेशसाधर्म्यतस्तेषाम् ॥ ३१५१ ॥
यदिवा न देशोपनयो दृष्टान्तस्ततो न सर्वथा सिद्धः। यद् नास्ति वस्तुनो वस्तुना जगति सर्वसाधर्म्यम् ॥ ३१५२ ॥

2 ऊर्ध्वगतिहेतुत एव नाधस्तिर्यग्गमनं नवाऽचलता। सविशेषप्रत्ययाभावतश्च सर्वज्ञमततश्च ॥ ३१५३ ॥

3 गतिमत्त्वतो विनाशी क्लेशी गत्यागमी च मनुज इव। भवति गतिपर्यायाद् नाशी न तु सर्वथाऽणुरिव ॥ ३१५४ ॥
क्लेशनिमित्तं कर्म न गतिस्तदभावतः सकः कुतः। अथ गतिरेव निमित्तं किमजीवानां सको नास्ति ? ॥ ३१५५ ॥

व्याख्या- यस्माच्च बीजाऽङ्कुरयोरिव तनुकर्मणोर्या संततिः संतानस्तन्नाशो मोक्ष इष्यते भवद्भिः, न चास्मात् संतानाद् व्यतिरिक्तः संतानी जीवो दृश्यते । ततश्च ननु कर्मसंततिविनाशे जीवस्यापि तद्वदेव नाशात् सर्वनाश एव मोक्षो युज्यत इति । 'भवो व त्ति' वाशब्दश्चशब्दार्थे । यस्माद् भवश्च संसारो नारक-तिर्यग्-नरा-ऽमररूपेण भाव एवोच्यते नापरः, न च नारकादिभ्यो भिन्नो जीवः कोऽपि दृश्यते, ततो नारकादिनाशे नारकादिभावरूपभवविनाश इत्यर्थः, 'तन्नासो त्ति' नारकाद्यव्यतिरिक्तत्वात् तस्यापि जीवस्य सर्वथा नाश एव युज्यत इत्यर्थः ॥ ३१८६ ॥ ३१८७ ॥

अमुमेवार्थं दृष्टान्तोपन्यासेन समर्थयन्नाह—

जह तंतुमओ पडओ तंतुविणासम्मि सव्वहा नत्थि । तह नारगाइमइओ जीवो तदभावओ नत्थि ॥३१८८॥

प्रकटार्था ॥ इति गाथाषट्कार्थः ॥ ३१८८ ॥

'न हि नारगाइ' इत्यादिकास्तु 'कयगाइभावओ' इत्यादिगाथापर्यन्ता एकोनत्रिंशद्गाथाः पूर्वमेकादशादिगणधरवादे व्याख्याताः ॥ 'सिद्ध त्ति य' इत्यादिकास्तु षड् निर्युक्तिगाथाः, सुगमाश्चेति ॥

॥ इति सिद्धनमस्कारः समाप्तः ॥

अथाचार्यनमस्कारमभिधित्सुराह—

नामं ठवणा दविए भावे य चउव्विहो य आयरिओ । दव्वम्मि एगभवियाइ लोईए सिप्पसत्थाई ॥३१८९॥
पंचविहं आयारं आयरमाणा तहा पयासेंता । आयारं दंसेता आयरिया तेण वुच्चंति ॥ ३१९० ॥

इह नाम-स्थापने सुगमे ॥ ३१८९ ॥ ३१९० ॥

द्रव्यविचारे पुनराह—

१ यथा तन्तुमयः पटकस्तन्तुविनाशे सर्वथा नास्ति । तथा नारकादिमयो जीवस्तदभावतो नास्ति ॥ ३१८८ ॥
२ नाम स्थापना द्रव्ये भावे च चतुर्विधश्चाचार्यः । द्रव्य एकभविकादिर्लौकिके शिल्पशास्त्रादिः ॥ ३१८९ ॥
पञ्चविधमाचारमाचरन्तस्तथा प्रभाषमाणाः । आचारं दर्शयन्त आचार्यास्तेनोच्यन्ते ॥ ३१९० ॥

[1]केसो त्ति जीवधम्मो होज्ज मई होउ कहमजीवस्स। कह वा भवत्थधम्मो होउ भवाओ विमुक्कस्स ? ॥३१५६॥

व्याख्या— नन्वेवं तर्हि गतिमत्त्वाद् मुक्तात्मा विनाशी, क्लेशी, गत्यागमी च प्राप्नोति, मनुष्यवदिति दृष्टान्तः। सूरिराह— गतिपर्यायाद् गतिपर्यायमाश्रित्य भवतु मुक्तात्मा विनाशी, न नः काचित् क्षतिः, पर्यायरूपतया सर्ववस्तुविनाशित्वस्याभ्युपगतत्वात्। सर्वथा तु विनाशी गतिमत्त्वे सत्यपि न भवत्यसौ, परमाणुवदिति। क्लेशी तु न भवत्येवासौ, यतः क्लेशानां निमित्तं कर्मैव, न तु गतिः, ततस्तदभावात् कर्माभावात् तको रागादिक्लेशः कुतः ?। अथ गतिरेव क्लेशनिमित्तमिष्यते, तर्हि किमजीवानां परमाण्वादीनां गतिमत्त्वे सत्यपि तकः क्लेशो न भवति ?। तस्मादनैकान्तिकोऽयं हेतुरिति। अथ परस्य मतिर्भवेत्— जीवस्यैव धर्मः क्लेशः स कथमजीवस्य परमाण्वादेर्भवेत् ?, तर्हि हन्त ! गतिमत्त्वे सति यः क्लेशित्वधर्मो भवस्थस्य मनुष्यादेर्दृष्टः स कथं भवात् संसाराद् विमुक्तस्य भवेत् ?– न भवत्येवेत्यर्थः। एवं गत्यागमित्वमपि कर्मनिमित्तमेव, ततस्तदपि कर्मविमुक्तस्य गतिमत्त्वे सत्यपि न भवतीति स्वयमेव द्रष्टव्यम्। समयमेकं च गतिर्यत् कर्माभावेऽपि भवति, तत्र 'कोउ य' इत्यादिना कारणमुक्तम्, इत्यलं बहुभाषितेनेति ॥ ३१५४ ॥ ३१५५ ॥ ३१५६ ॥

अथ वक्ष्यमाणस्य प्रस्तावनामाह—

[3]जं गइमओ विघाओऽवस्सं तक्कारणं च जदवस्सं। विहियस्सावत्थाणं जओ य गमणं तओ पुच्छा ॥३१५७॥

यद् यस्माद् गतिमतोऽवश्यं क्वचिदपि गतेर्विघातो भवति, तस्य च गतिविघातस्यावश्यमेव कारणं किमपि यद् यस्माद् भवति, न तु निर्हेतुकोऽसौ जायते, अतिप्रसङ्गात्। विहितस्य च निषिद्धगतेश्च तस्य नियमेनावस्थानं भवति। यत्र चावस्थानं तत्र यतो यस्मात् स्थानात् तस्य गमनं भवति 'तदवश्यं वक्तव्यम्' इति शेषः। ततस्तस्मात् पृच्छा विधीयते ॥ इति सप्ततिगाथार्थः ॥३१५७॥

केयं पुनः पृच्छा ? इत्याह—

[4]कहिं पडिहया सिद्धा कहिं सिद्धा पइट्ठिया। कहिं बोंदिं चइत्ताणं कत्थ गंतूण सिज्झइ ? ॥ ३१५८ ॥

१ क्लेश इति जीवधर्मो भवेद् मतिर्भवतु कथमजीवस्य। कथ वा भवस्थधर्मो भवतु भवाद् विमुक्तस्य ? ॥ ३१५६ ॥ २ गाथा ३१४१।
३ यद् गतिमतो विघातोऽवश्य तत्कारणं च यदवश्यम्। विहितस्यावस्थानं यतश्च गमन तत. पृच्छा ॥ ३१५७ ॥
४ कुत्र प्रतिहता. सिद्धा. कुत्र सिद्धा प्रतिष्ठिता। कुत्र शरीरं त्यक्त्वा कुत्र गत्वा सिध्येयु ? ॥ ३१५८ ॥

[1]आगमदव्वायरिओ आयारवियाणाउ अणुवउत्तो । नोआगमओ जाणय-भव्वसरीराइरित्तोऽयं ॥ ३१९१ ॥
भविओ बद्धाऊ अभिमुहो य मूलाईनिम्मिओ वावि । अहवा दव्वब्भूओ दव्वनिमित्तायरणओ वा ॥३१९२॥

व्याख्या– ज्ञशरीर-भव्यशरीरव्यतिरिक्तस्त्वाचार्योऽयम् । कः ? इत्याह— 'भविओ इत्यादि' एकभविको बद्धायुष्कोऽभिमुखनाम-गोत्रश्चेत्यर्थः; 'मूलाईनिम्मिओ वावि त्ति' तथा, मूलगुणनिर्मित उत्तरगुणनिर्मितश्च तद्व्यतिरिक्तो द्रव्याचार्यो मन्तव्यः । तत्र मूलगुणनिर्मित आचार्यशरीरनिर्वर्तनयोग्यानि द्रव्याणि, उत्तरगुणनिर्मितस्तु तान्येव तदाकारपरिणतानीति । अथवा, द्रव्यभूतोऽप्रधान आचार्यस्तद्व्यतिरिक्तो द्रव्याचार्यः प्रतिपाद्यते । यो वा द्रव्यनिमित्तेनाचरति चेष्टते स द्रव्यनिमित्ताचरणाद् द्रव्याचार्यः । स च लौकिको लौकिकमार्गे शिल्पशास्त्रादिविज्ञेयः, यः शिल्पानि निमित्तादिशास्त्राणि च ग्राहयति स इहोपचारतः शिल्पशास्त्रादिरुक्तः । अन्ये त्विमं शिल्पशास्त्राचार्यं लौकिकं भावाचार्यं व्याचक्षते । शेषं सुगममिति ॥ ३१९१ ॥ ३१९२ ॥

'पंचविहं' इत्यादिना लोकोत्तरो भावाचार्य उक्तः, तत्स्वरूपव्याख्यानार्थमाह—

[2]आ मज्जायावयणो चरणं चारो त्ति तीए आयारो । सो होइ नाण-दंसण-चरित्त-तव-वीरियवियप्पो ॥३१९३॥
तस्सायरण-पभासण-देसणओ देसिया विमोक्खत्थं । जे ते भावायरिया भावायारोवउत्ता य ॥ ३१९४ ॥
अहवायरंति जं सयमायारेंति व जमायरिज्जंति । मज्जाययाभिगम्मंति जमुत्तं तेणमायरिआ ॥ ३१९५ ॥

पाठसिद्धा एव, नवरं 'तीए त्ति' तया मर्यादया चरणमाचारः । 'तस्सेत्यादि' तस्य पञ्चविधस्याचारस्य स्वयमाचरणतः, परेषां च प्रभाषणतः, तथा, विनेयानां वस्तुप्रत्युपेक्षणादिक्रियाविधेर्दर्शनतो ये परात्मनो मोक्षार्थं 'देसिय त्ति' देशितारस्ते भावाचारोपयुक्तत्वाद् भावाचार्या इति । अथवा, स्वयं यस्मादाचरन्ति सदनुष्ठानम्, आचरयन्ति चान्यैः, अथवा, आचर्यन्ते

1 आगमद्रव्याचार्य आचारविज्ञानादनुपयुक्तः । नोआगमतो ज्ञायक-भव्यशरीरातिरिक्तोऽयम् ॥ ३१९१ ॥
भविको बद्धायुरभिमुखश्च मूलादिनिर्मितो वापि । अथवा द्रव्यभूतो द्रव्यनिमित्ताचरणतो वा ॥ ३१९२ ॥
2 आ मर्यादावचनश्चरण चार इति तयाऽऽचारः । स भवति ज्ञान-दर्शन-चारित्र-तपो-वीर्यविकल्पः ॥ ३१९३ ॥
तस्याचरण-प्रभापण-देशनतो देशितारो विमोक्षार्थम् । ये ते भावाचार्या भावाचारोपयुक्ताश्च ॥ ३१९४ ॥
अथवाचरन्ति यत् स्वयमाचारयन्ति वा यदाचर्यन्ते । मर्यादयाऽभिगम्यन्ते यदुक्त तेनाचार्याः ॥ ३१९५ ॥

सामायारी तिविहा ओहे दसहा पयविभागे ॥ १९० ॥
अज्झवसाण निमित्ते आहारे वेयणा पराघाए ।
फासे आणापाणू सत्तविहं भिज्जए आउं ॥ १९१ ॥
दंड-कस-सत्थ-रज्जू अग्गी उदगपडणं विसं वाला ।
सीउण्हं अरइ भयं खुहा पिवासा य वाही य ॥ १९२ ॥
मुत्त-पुरीसनिरोहे जिन्नाजिन्ने[1] य भोयणे बहुसो ।
[2]घंसण-घोलण-पीलण आउस्स उवक्कमा एए ॥ १९३ ॥

जेणोवरिमसुयाओ सामायारिसुयमाणियं हेट्ठा । ओहाइतिविह एसो उवक्कमो समयचज्जाए ॥ १ ॥
जं जीवियसंवट्टणमज्झवसाणाइहेउसंजणियं । सोवक्कमाउयाणं स जीविओवक्कमणकालो ॥ २ ॥
सव्वपगईणमेवं परिणामवसादुवक्कमो होज्जा । पायमनिकाइयाणं तवसा उ निकाइयाणं पि ॥ ३ ॥
कम्मोवक्कामिज्जइ अपत्तकालं पि जइ-तओ पत्ता । अकयागम-कयनासा मोक्खाणासासया दोसा ॥ ४ ॥
न हि दीहकालियस्स विनासो तस्साणुभूइओ खिप्पं । बहुकालाहारस्स व दुयमग्गियरोगिणो भोगो ॥ ५ ॥
सव्वं च पएसतया भुज्जइ कम्ममणुभावओ भइयं । तेणावस्साणुभवे के कयनासादओ तस्स ? ॥ ६ ॥
उदय-खय-खओवसमो-वसमा जं च कम्मणो[3] भणिया । दव्वाइपंचयं पइ जुत्तमुवक्कामणमओ वि ॥ ७ ॥
पुण्णा-ऽपुण्णकयं पि हु सायासायं जहोदयाईए । बज्झबलाहाणाओ देइ तहा पुण्ण-पावं पि ॥ ८ ॥

1 'जिण्णाजिण्णे य' । 2 'घस घोलण पीलणया आ' । 3 'कम्मुणो' ।

जइ ताणुभूइउ च्चिय खविज्जए कम्ममन्नहा न मयं । तेणासंखभवज्जियनाणागइकारणत्तणओ ॥ ९ ॥
नाणाभवाणुभवणाभावादेक्कम्मि पज्जएणं वा । अणुभवओ बंधाओ मोक्खाभावो स चाणिट्ठो ॥ १० ॥
नणु तन्न जहोवच्चियं तहाणुभवओ कयागमाईया । तप्पाओगं तं च्चिय तेण च्चियं सज्झरोगो व्व ॥ ११ ॥
अणुवक्कमओ नासइ कालेणोवक्कमेण खिप्पं ति । कालेणं वाऽसज्झो सज्झासज्झं तहा कम्मं ॥ १२ ॥
सज्झासज्झं कम्मं किरियाए दोसओ जहा रोगो । सज्झमुवक्कामिज्जइ एत्तो च्चिय सज्झरोगो व्व ॥ १३ ॥
सज्झामयहेऊओ सज्झनियाणासओऽहवा सज्झं । सोवक्कमणमयं पिव देहो देहाइभावाओ ॥ १४ ॥
किंचिदकाले वि फलं पाइज्जइ पच्चए य कालेणं । तह कम्मं पाइज्जइ कालेण विपच्चए वण्णं ॥ १५ ॥
भिण्णो जहेह कालो तुल्ले वि पहम्मि गइविसेसाओ । सत्थे व गहणकालो मइ-मेहाभेयओ भिन्नो ॥ १६ ॥
तह तुल्लम्मि वि कम्मे परिणामाइकिरियाविसेसाओ । भिण्णोऽणुभवणकालो [1]जेट्ठो मज्झो जहन्नो य ॥ १७ ॥
जह वा दीहा रज्जू डज्झइ कालेण पुंजिया खिप्पं । वियओ पडो व सुस्सइ पिंडीभूओ य कालेणं ॥ १८ ॥
भागो य निरोवट्टो हीरइ कमसो जहण्णहा खिप्पं । किरियाविसेसओ वा समे वि रोगे चिगिच्छाए ॥ १९ ॥
जो जस्स जयाऽवसरो कज्जस्स सुभासुभस्स सोपायं । भण्णइ स देसकालो देहोऽवसरो त्ति थक्को त्ति ॥२०॥

निद्धूमगं च गामं महिलाथूभं च सुण्णयं दट्ठुं ।
नीयं च काया ओलिंति जाया भिक्खस्स हरहरा ॥ १९४ ॥
निम्मच्छियं महुं पायडो निही खज्जगावणो सुन्नो ।

१ 'जिट्ठो' ।

मर्यादयाऽभिगम्यन्ते यतो मुमुक्षुभिरिति यदुक्तम्- एतत् तात्पर्यमित्यर्थः, तेनाचार्याः ॥ इति गाथासप्तकार्थः ॥ ३१९३-९५ ॥

'आयरिया' इत्यादिचतस्रो निर्युक्तिगाथाः प्रागुक्तानुसारेण व्याख्येयाः ॥

॥ इत्याचार्यनमस्कारः समाप्तः ॥

अथोपाध्यायनमस्कारमभिधित्सुराह—

[1]नामं ठवणा दविए भावे य चउव्विहो उवज्झाओ । दव्वे लोइयसिप्पा धम्मे तह अन्नतित्थीया ॥३१९६॥

नाम-स्थापनोपाध्यायौ सुबोधौ । द्रव्योपाध्यायांस्तु ज्ञ-भव्यशरीरव्यतिरिक्तावाह- 'द्रव्य इत्यादि' द्रव्ये विचार्ये तद्व्यतिरिक्त उपाध्यायः शिल्पाद्युपदेष्टा; तथा, 'धम्मे त्ति' निजनिजधर्मोपदेष्टारोऽन्यतीर्थिकाश्च संसारनिबन्धनत्वेनाप्रधानभूतत्वात् तद्व्यतिरिक्त-द्रव्योपाध्याया मन्तव्या इति ॥ ३१९६ ॥

भावोपाध्यायानाह—

[2]बारसंगो जिणक्खाओ सज्झाओ कहिओ बुहे । तं उवइसंति जम्हा उवज्झाया तेण वुच्चंति ॥ ३१९७ ॥

यो द्वादशाङ्गः स्वाध्यायः प्रथमतो जिनैराख्यातः, ततो 'बुहे त्ति' प्राकृतत्वाद् बुधैर्गणधरादिभिः कथितः पारम्पर्येणोपदिष्टः, तं स्वाध्यायं सूत्रतः शिष्याणामुपदिशन्ति यस्मात्, तेनोपाध्याया उच्यन्ते । अत एव 'इङ् अध्ययने' उपेत्य सूत्रमधीयते येभ्यः शिष्यैस्ते उपाध्याया भण्यन्त इति ॥ ३१९७ ॥

सांप्रतमागमशैल्याऽक्षरार्थमधिकृत्योपाध्यायशब्दार्थमाह—

[3]उत्ति उवओगकरणे ज्झत्ति य ज्झाणस्स होई निद्देसे । एएण होइ उज्झा एसो अण्णो वि पज्जाओ ॥३१९८॥

'उ' इत्येतदक्षरमुपयोगकरणे वर्तते 'ज्ञा' इति चेदं ध्यानस्य निर्देशे । ततश्च प्राकृतशैल्यैतेन कारणेन भवन्ति 'उज्झा' उपयोगपुरस्सरं ध्यानकर्तार इत्यर्थः । एषोऽनन्तरोक्तोपाध्यायशब्दापेक्षयाऽन्योऽपि पर्याय इति ॥ ३१९८ ॥

---

१ नाम स्थापना द्रव्ये भावे च चतुर्विध उपाध्याय. । द्रव्ये लौकिकशिल्पाद् धर्मे तथाऽन्यतीर्थीयाः ॥ ३१९६ ॥

२ द्वादशाङ्गो जिनाख्यातः स्वाध्यायः कथितो बुधैः । तमुपदिशन्ति यस्मादुपाध्यायास्तेनोच्यन्ते ॥ ३१९७ ॥

३ उरित्युपयोगकरणे झेति च ध्यानस्य भवति निर्देशे । एतेन भवत्युज्झा एषोऽन्योऽपि पर्यायः ॥ ३१९८ ॥

अत्र प्रतिविधानमाह—

[1]जिण-सिद्धा दिंति फलं पूयाए केण वा पवण्णामिणं। धम्मा-ऽधम्मानिमित्तं फलमिह जं सव्वजीवाणं ॥३२३०॥

ते य जओ जीवगुणा तओ न देया न वा समादेया। कयनासा-ऽकयसंभोग-संकरे-गत्तदोसाओ ॥३२३१॥

व्याख्या—नन्वयमनुक्तोपालम्भः सर्वोऽपि पूर्वोक्तः, यस्मात् 'जिन-सिद्धाः पूजायाः फलं ददति' इति केनेदं प्रपन्नम् ? । धर्मा-ऽधर्मनिमित्तमेव हि यस्मात् स्वर्ग-नरकादिकं फलमिह सर्वजीवानामिति । तौ च धर्मा-धर्मौ यतो जीवगुणौ ततो न कस्यापि देयौ दातव्यौ, नापि कुतश्चित् समादेयौ ग्राह्यौ, ज्ञानादिगुणवत्। कुतः ? इत्याह— 'कयनासेत्यादि' यदि ह्येते जिन-सिद्धाः कुपिताः सन्तः कस्यापि धर्ममपहरेयुः, अधर्मं च प्रयच्छेयुः, तदा कोपविषयभूतस्य प्राणिनः कृतस्य धर्मस्य नाशः, अकृतस्य चाधर्मस्यागमः स्यात्, प्रसन्ना वा यदि कस्याप्याकस्मिकं धर्मं प्रयच्छेयुः, अधर्मं चापहरेयुः, तदाऽकृतस्य धर्मस्यागमः, कृतस्य चाधर्मस्य नाशो भवेदिति। एवं यदा ते प्रसन्नाः कुपिता वा कस्यापि सम्बन्धिनौ धर्मा-ऽधर्मावाच्छिद्यान्यस्य दद्युः, अन्यस्य सम्बन्धिनौ चापरस्य, तदा प्राणिनां परस्परं धर्मा-ऽधर्मयोः संकरः, एकत्वं वा स्यात्। एवं स्वर्ग-नरकादिके धर्मा-ऽधर्मफलेऽपि कृतनाशादिभावना कार्येति ॥ ३२३० ॥ ३२३१ ॥

अपि च,

[2]नाणाणाबाहसुहं मुक्खो पूयाफलं जओऽभिमयं। तं नायपज्जयाओ देयं जीवाइभावो व्व ॥ ३२३२ ॥

ज्ञाने सत्यनाबाधस्य यत् सुखं तद्रूपो यो मोक्षः स एव यस्माद् नमस्कारलक्षणायाः पूजायाः परमार्थतो मुख्यं फलमभिमतम्, स्वर्गादेरानुषङ्गिकफलत्वात्। तच्च यथोक्तं सुखं न कस्यापि देयं दातुं शक्यम्, आत्मपर्यायत्वात्, जीव-चैतन्यादिभाववत्। ततश्च पूजाफलदाननिषेधे सिद्धसाधनमेवेति ॥ ३२३२ ॥

यदि पूजाफलं न देयं तर्हि किं देयमिह भवेत् ? इत्याह—

1 जिन-सिद्धा ददति फलं पूजायाः केन वा प्रपन्नमिदम्। धर्मा-ऽधर्मनिमित्तं फलमिह यत् सर्वजीवानाम् ॥ ३२३० ॥
• ते च यतो जीवगुणास्ततो न देया नवा समादेया.। कृतनाशा-ऽकृतसंभोग-संकरै-कत्वदोषेभ्यः ॥ ३२३१ ॥
२ ज्ञानानाबाधसुखं मोक्षः पूजाफल यतोऽभिमतम्। तद् नात्मपर्यायाद् देय जीवादिभाव इव ॥ ३२३२ ॥

अथोपाध्यायशब्दार्थं भाष्यकारः प्राह—

[1]उवगम्म जओऽहीयइ जं चोवगयमज्झयाविंति । जं चोवायज्झाया हियस्स तो ते उवज्झाया ॥ ३१९९ ॥

उपगम्योपेत्य यतो येभ्योऽधीयते पठन्ति शिष्यास्त उपाध्यायाः, यच्च यस्मादुप समीपे गतं प्राप्तं शिष्यमध्यापयन्ति तत उपाध्यायाः, यस्माच्च स्वपरहितस्योपायध्यायका उपायचिन्तकास्ततस्त उपाध्याया इति ॥ ३१९९ ॥

आचार्यो-पाध्याययोर्भाष्यकारो विशेषमाह—

[2]आयारदेसणाओ आयरिया विणयणादुवज्झाया । अत्थपदायगा वा गुरवो सुत्तस्सुवज्झाया ॥ ३२०० ॥

प्रकटार्थैव । इति गाथापञ्चकार्थः ॥ ३२०० ॥

'उवज्झाया' इत्यादिचतस्रो गाथाः पूर्ववत् ॥

॥ इत्युपाध्यायनमस्कारः समाप्तः ॥

साधुनमस्कारे दश निर्युक्तिगाथाः सुगमाः, गतार्थाश्चेति ॥

॥ तदेवमवसितं वस्तुद्वारम् ॥

अथाक्षेपद्वारं वक्तव्यम्, तत्र परः प्राह—

[3]नवि संखेवो न वित्थारो संखेवो दुविहो सिद्ध-साहूणं। वित्थरओऽणेगविहो पंचविहो न जुज्जए तम्हा ॥३२०१॥

इह किल सूत्रं संक्षेप-विस्तरावतिक्रम्य न वर्तते । तत्र संक्षेपवद् यथा सामायिकसूत्रम्, विस्तरवद् यथा चतुर्दश पूर्वाणि । इदं पुनर्नमस्कारसूत्रमुभयातीतम्, यतोऽत्र न संक्षेपो नापि विस्तरः; तथा 'संखेवो दुविहो त्ति' यद्ययं संक्षेपः स्यात् ततस्तस्मिन् सति द्विविध एव नमस्कारो भवेत् सिद्ध-साधुभ्यामिति, परिनिर्वृतार्हदादीनां सिद्धशब्देन ग्रहणात्, संसारिणां तु साधुशब्देनेति । संसारिणो ह्यर्हदा-ऽऽचार्यादयो न साधुत्वमतिवर्तन्ते । अथाऽयं विस्तरतः, तदप्युक्तम्, यतो विस्तरतोऽनेकविधो

1 उपगम्य यतोऽधीयते यच्चोपगतमध्यापयन्ति । यच्चोपायध्यायका हितस्य ततस्त उपाध्यायाः ॥ ३१९९ ॥
2 आचारदेशनादाचार्या विनयनादुपाध्यायाः । अर्थप्रदायका वा गुरवः सूत्रस्योपाध्यायाः ॥ ३२०० ॥
3 नापि संक्षेपो न विस्तरः संक्षेपो द्विविधः सिद्ध-साधुभ्याम् । विस्तरतोऽनेकविध. पञ्चविधो न युज्यते तस्मात् ॥ ३२०१ ॥

[1]भत्ताइ होज्ज देयं न तदत्थो पूयणप्पयत्तोऽयं । तंपि सकओदयं चिय बज्झनिमित्तं परो नवरं ॥ ३२३३ ॥

शाल्योदनादिरूपं भक्तादिकं परस्मै देयं भवेत्, स्थूलपुद्गलस्कन्धमयत्वात्, घटादिवत् । केवलं तदर्थो भक्ताद्यर्थोऽयं पूजनप्रयत्नो न भवति, किन्तु मोक्षार्थः । किञ्च, तदपि भक्तादिकं स्वकृतात् कर्मण उदय उत्पत्तिर्यस्य तत् स्वकृतोदयं स्वकृतकर्मजनितमेवेत्यर्थः । यस्तु परः कश्चिद् दाता दृश्यते स केवलं बाह्यनिमित्तमात्रमेव । निश्चयतस्तु बाह्यो न कोऽपि कस्यापि दाताऽपहर्ता चेति ॥ ३२३३ ॥

एतदेव समर्थयन्नाह—

[2]कम्मं सुहाइहेऊ बज्झयरं कारणं जया देहो । सद्दाइ बज्झतरयं जइ दायारे कहा का णु ? ॥ ३२३४ ॥

तम्हा सकारणं चिय सुहाइ बज्झं निमित्तमेत्तायं। को कस्स देइ हरइ व निच्छयओ का कहा सिद्धे ?॥३२३५॥

व्याख्या— यदि हन्त ! सुख-दुःखानामन्तरङ्गं कर्मैव हेतुः, देहस्तु यदा तेषां बाह्यतरं कारणम्, शब्द-रूपादिकं तु शुभाशुभमपि बाह्यतरं कारणम्, तदाऽतिबाह्यतरादपि परभूते दातरि काऽत्र किल कारणत्वकथा ? इति । तस्मात् स्वमात्मीयं कर्मैव कारणं यस्य तत् स्वकारणमेव सुखादि, बाह्यं तु देह-शब्द-रूपादिकं निमित्तमात्रकमेव । ततो निश्चयतः कः कस्मै ददाति, अपहरति वा ? न कश्चिदित्यर्थः । तथा च सति क्षीणराग-द्वेषे सिद्धे का नमस्कारफलदातृत्वकथा ? इति ॥ ३२३४ ॥ ३२३५ ॥

अत्र परप्रेर्यं परिहारं चाह—

[3]जइ सव्वं सकयं चिय न दाण-हरणाइफलमिहावन्नं । नणु जत्तो च्चिय सकयं तत्तो च्चिय तप्फलं जुत्तं ॥३२३६॥

दाणाइपराणुग्गहपरिणामविसेसओ सओ चेव । पुण्णं हरणाइ-परोवघायपरिणामओ पावं ॥ ३२३७ ॥

---

१ भक्तादि भवेद् देयं न तदर्थः पूजनप्रयत्नोऽयम् । तदपि स्वकृतोदयमेव बाह्यनिमित्तं परो नवरम् ॥ ३२३३ ॥
२ कर्म सुखादिहेतुर्बाह्यतरं कारणं यदा देह । शब्दादि बाह्यतरकं यदि दातरि कथा का नु ? ॥ ३२३४ ॥
तस्मात् स्वकारणमेव सुखादि वाह्यं निमित्तमात्रकम् । क. कस्य ददाति हरति वा निश्चयतः का कथा सिद्धे ? ॥ ३२३५ ॥
३ यदि सर्वं स्वकृतमेव न दान-हरणादिफलमिहापन्नम् । ननु युक्त एव स्वकृतं तत एव तत्फलं युक्तम् ॥ ३२३६ ॥
दानादिपरानुग्रहपरिणामविशेषत स्वत एव । पुण्य हरणादि-परोपघातपरिणामत. पापम् ॥ ३२३७ ॥

नमस्कारः प्राप्नोति; तथाहि– ऋषभा-ऽजित-संभवादिभ्यो नामग्राहं सर्वतीर्थकरेभ्यः, तथा, सिद्धेभ्योऽप्येक-द्वि-त्रि-चतु-ष्पञ्चादिसमय-सिद्धेभ्यो यावदनन्तसमयसिद्धेभ्यः, तथा, तीर्थ-लिङ्ग-प्रत्येकबुद्धादिविशेषणविशिष्टेभ्य इत्यादिभिर्भेदैर्विस्तरतोऽनन्तभेदो नमस्कारः प्राप्नोति । यतश्चैवम्, तस्मादमुं पक्षद्वयमप्यङ्गीकृत्य पञ्चविधोऽयं नमस्कारो न युज्यते ॥ ३२०१ ॥

॥ तदेवमुक्तमाक्षेपद्वारम् ॥

अथ प्रसिद्धिद्वारम् । तत्र प्रसिद्धिराक्षेपस्य प्रतिविधानमभिधीयते । इह चेदं प्रतिविधानम्– 'न संक्षेपो नापि विस्तरतः' इत्येतदसिद्धम्, संक्षेपत्वादस्य । अथ संक्षेपकारणवशात् कृतार्था-ऽकृतार्थपरिग्रहेण सिद्ध-साधुमात्रक एवोक्त इति चेत् । तदयुक्तम्, कारणान्तरस्यापि सद्भावात्; तथा चाह—

[1]अरिहंताई नियमा साहू साहू उ तेसु भएयव्वा । तम्हा पंचविहो खलु हेउनिमित्तं हवइ सिद्धो ॥३२०२ ॥

इहार्हदादयो नियमात् साधवः, तद्गुणानामपि तत्र भावात्; साधवस्तु तेष्वर्हदादिषु भक्तव्या विकल्पनीयाः, यतस्ते न सर्वेऽप्यर्हदादयः, किं तर्हि ?; केचिदर्हन्तः, येषां तीर्थकरनामकर्मोदयोऽस्ति, केचित् तु सामान्यकेवलिनः, अन्ये त्वाचार्या विशिष्टसूत्रार्थदेशकाः, अपरे तूपाध्यायाः सूत्रपाठकाः, अन्ये त्वेतदविशिष्टाः सामान्यसाधव एव शिक्षकादयो न पुनरर्हदादयः । तदेवं साधूनामर्हदादिषु व्यभिचारात् तन्नमस्करणेऽपि नार्हदादिनमस्कारसाध्यस्य विशिष्टस्य फलसिद्धिः । ततश्च संक्षेपेण द्विविधनमस्करणमयुक्तमेव, अव्यापकत्वादिति; अत्र प्रयोगः— साधुमात्रनमस्कारो विशिष्टोऽर्हदादिगुणनमस्कृतिफलप्रापणसमर्थो न भवति,तत्सामान्याभिधाननमस्कारकृत्त्वात्, मनुष्यमात्रनमस्कारवत्, जीवमात्रनमस्कारवद् वेति । तस्मात् संक्षेपतोऽपि पञ्चविध एव नमस्कारो न तु द्विविधः, अव्यापकत्वात्; विस्तरस्तु नमस्कारो न विधीयते, अशक्यत्वात् । तथा, 'मग्गे अविप्पणासो' इत्यादिको यः पूर्वं पञ्चविधो हेतुरुक्तस्तन्निमित्तमप्ययं पञ्चविधः सिद्धो भवति ॥ इति निर्युक्तिगाथाद्वयार्थः ॥ ३२०२ ॥

अथ भाष्यकार आक्षेपविवरणमाह—

[2]निव्वुय-संसारिकयाकयत्थलक्खणविहाणओ जुत्तो । संखेवनमुक्कारो दुविहोऽयं सिद्ध-साहूणं ॥३२०३॥

---

१ अर्हदादयो नियमात् साधव साधवस्तु तेषु भक्तव्याः । तस्मात् पञ्चविध खलु हेतुनिमित्तं भवतु सिद्धः ॥ ३२०२ ॥
२ निर्वृत-संसारिकृताकृतार्थलक्षणविधानतो युक्तः । सक्षेपनमस्कारो द्विविधोऽयं सिद्ध-साधूनाम् ॥ ३२०३ ॥

[1]तं पुण्णं पावं वा ठियमत्तणि बज्झपच्चयाविक्खं। कालंतरपागाओ देइ फलं न परओ लब्भं ॥३२३८॥

व्याख्या— यद्युक्तप्रकारेण यल्लोकः शुभमशुभं वा फलमनुभवति तत् सर्वं स्वकृतमेवेष्यते, न पुनः कोऽपि कस्यापि किमपि ददात्यपहरति वा; तर्हि दाना-ऽपहरणादीनामिह दातुरपहर्तुर्वा न किञ्चित् फलमित्यापन्नम्, स्वकृतस्यैव फलेन तस्य प्राप्तत्वादिति। सूरिराह— ननु यत एव तत् स्वकृतम्, तत एव तत्फलं दातुरपहर्तुश्च युक्तम्। दाता हि दानसमये परानुग्रहपरिणामविशेषात् स्वत एव पुण्यं बध्नाति, अपहर्ता तु परोपघातपरिणामात् स्वत एव पाप बध्नाति। अतस्तयोस्तत् पुण्य-पापलक्षणं फलं स्वकृतमेवेति कथं न युक्तम्? युक्तमेवेति। एतदेवाह— 'दाणाईत्यादि' आदिशब्दाद् दयादिपरिग्रहः। 'सओ चेव त्ति' स्वत एव स्वकृतमेव दातुः पुण्यम्, स्वत एव चापहर्तुः पापम्। शेषं गतार्थमिति। तच्च पुण्यं पापं वा स्वपरिणामजनितमात्मन्येव स्थितम्, किन्तु बाह्यनिमित्त-मात्रापेक्षं कालान्तरे विपाकात् शुभमशुभं वा फलं ददातीति 'परकृतम्' इति व्यपदिश्यते, न पुनः परमार्थतस्तत् पुण्य-पापफलं परतो लभ्यमिति ॥ ३२३६ ॥ ३२३७ ॥ ३२३८ ॥

ननु परतस्तल्लाभे को दोषः? इत्याह—

[2]जइवा परलहियव्वं तत्तो च्चिय जेण तप्परिग्गहियं। तो तम्मि सिवं पत्ते कुगइगए वा कुओ लब्भं? ॥३२३९॥

स्पष्टा ॥ ३२३९ ॥

अपि च, यदि येन यद् दत्तं तस्मै तद् देयम्, यस्य चापहृतमसावपि तस्याहरति, तर्हीदं दूषणम्। किं तत्? इत्याह—

[3]लहइ अहिंतो वा कओ साहू जं दिज्ज पुव्वदायस्स?। कत्तोऽवहारिणो तं जं पडिहीरिज्ज से धणिणो? ॥३२४०॥
अहव मई जं तेण वि दिण्णं अण्णस्स तं तओ लद्धुं। पडिदेइ तहाहारी हारीओ अण्णओ लद्धुं ॥ ३२४१ ॥

---

१ तत् पुण्यं पाप वा स्थितमात्मनि बाह्यप्रत्ययापेक्षम्। कालान्तरपाकाद् ददाति फलं न परतो लभ्यम् ॥ ३२३८ ॥
२ यदिवा परलब्धव्यं तत एव येन तत्परिगृहीतम्। ततस्तस्मिन् शिवं प्राप्ते कुगतिगते वा कुतो लभ्यम्? ॥ ३२३९ ॥
३ लभतेऽददद् वा कुतः साधुर्यद् दद्यात् पूर्वदातुः?। कुतोऽपहारिणस्तद् यत् प्रतिह्रियते तस्य धनिनः? ॥ ३२४० ॥
अथवा मतिर्यत् तेनापि दत्तमन्यस्य तत् ततो लब्ध्वा। प्रतिदद्यात् तदाहारी हारिणोऽन्यतो लब्ध्वा ॥ ३२४१ ॥

उसभाईणमणंतरसिद्धाईणं जिणाइयाणं च। वित्थरओ पंचविहो नवि संखेवो न वित्थारो॥ ३२०४ ॥

गतार्थे ॥ ३२०३ ॥ ३२०४ ॥

अथ प्रसिद्धिविवरणमाह—

जइवि जइग्गहणाओ होइ कयं गहणमरुहयाईणं। तह वि न तग्गुणपूया जइगुणसामण्णपूयाओ ॥३२०५॥
परिणामसुद्धिहेऊं व पयत्तो सा य बज्झवत्थूओ। पायं गुणाहिआओ जा सा न तदूणगुणलब्भा ॥३२०६॥
जह मणुयाइगहणे होइ कयं गहणमरुहयाईणं। न य तव्विसेसबुद्धी तह जइसामण्णगहणम्मि ॥३२०७॥
जइ एवं वित्थरओ जुत्तो तदणंतगुणविहाणाओ। भण्णइ तदसज्झमओ पंचविहो हेउभेयाओ ॥ ३२०८ ॥
मग्गोवएसणाई सोऽभिहिओ तप्पभेयओ भेओ। जह लावगाइभेओ दिट्ठो लवणाइकिरिआओ ॥ ३२०९ ॥

एता अपि गतार्था एव, नवरं 'तह जईत्यादि' तथा तेनैव प्रकारेण यतः साधोः सामान्यं तद्ग्रहणे सति नार्हदादिविशेषवती बुद्धिरुत्पद्यत इति। 'तदणंतगुणेत्यादि, तेषामर्हदादीनां येऽनन्ता गुणाः प्रत्येकं क्षेत्र-काल-जाति-गोत्र-प्रमाणा-ऽऽकृति-वयः-संयमादि-विशेषरूपा उपाधयस्तैः कृत्वा विधानाद् नमस्कारस्य करणादिति। 'जइ लावगाईत्यादि' यथा लावक-प्लावक-पाचक-पाठक-याचकादीनां लवन-प्लवन-पचन-पठन-याचनादिक्रियातो भेदो दृष्टः॥ इति गाथासप्तकार्थः ॥ ३२०५–३२०९ ॥

अथ क्रमद्वारविचारमाह—

---

* ऋषभादीनामनन्तरसिद्धादीनां जिनादिकाना च। विस्तरत पञ्चविधो नापि संक्षेपो न विस्तार ॥ ३२०४ ॥
यद्यपि यतिग्रहणाद् भवति कृतं ग्रहणमर्हदादीनाम्। तथापि न तद्गुणपूजा यतिगुणसामान्यपूजात. ॥ ३२०५ ॥
परिणामशुद्धिहेतोर्वा प्रयत्न सा च बाह्यवस्तुन.। प्रायो गुणाधिकाद् या सा न तदूनगुणलभ्या ॥ ३२०६ ॥
यथा मनुजादिग्रहणे भवति कृत ग्रहणमर्हदादीनाम्। न च तद्विशेषबुद्धिस्तथा यतिसामान्यग्रहणे ॥ ३२०७ ॥
यद्येव विस्तरतो युक्तस्तदनन्तगुणविधानात्। भण्यते तदसाध्यमतः पञ्चविधो हेतुभेदात् ॥ ३२०८ ॥
मार्गोपदेशनादि सोऽभिहितस्तत्प्रभेदतो भेद। यथा लावकादिभेदो दृष्टो लवनादिक्रियात. ॥ ३२०९ ॥

व्याख्या– वाऽथवा, इह निर्ग्रन्थत्वेन साधुर्दानमददद्प्रयच्छन् मृत्वा भवान्तरं प्राप्तः पूर्वमदत्तत्वात् कुतः कस्मादाहारादिकं तल्लभते यत् पूर्वभवसंबन्धिन आहारादिदातुस्तदानीं दद्यात् ? इति; यो वा पूर्वभवे कस्यापि संबन्धिनमपहृत्य मृतो जन्मान्तरे निःस्वो जातः 'से' तस्य परधनापहारिणः कुतस्तद् धनं यत् पूर्वभवधनिना प्रतिह्रियते ? इति । अथ मतिः परस्य भवेत्– तेनापि साधुना यदनेकभवेष्वन्यस्याहारादिकं दत्तं तत् ततो लब्ध्वा पूर्वभवदातुः प्रतिददाति; तथा, योऽपि पूर्वभवे परधनमपहृत्येहभवे निःस्वो जातस्तस्यापि संबन्धिनं नानाभवेष्वन्येनान्येन वाऽपहृतमास्ते, ततश्चासौ ततः स्वधनापहारिणोऽन्यतः सकाशात् स्वापहृतं लब्ध्वा यस्य सत्कं तेन पूर्वमपहृतं तस्मै 'प्रतिदद्यात्' इति शेषः ॥ ३२४० ॥ ३२४१ ॥

तदेतत् सर्वमयुक्तम्, कुतः ? इत्याह—

एवं होउणवत्था दाण-ग्गहणाणमपरिभोगो य । जइ परओ लद्धव्वं दिण्णं वा तस्स तं चेव ॥ ३२४२ ॥[1]

यदि दानादिविषयस्वपरिणामवशात् पुण्य-पापे नेष्येते, किन्तु यद् यस्मै दत्तं तत् तस्मादेव परतो लभ्यमित्यभ्युपगम्यते; यस्माद् वा यदाहारादिकं कदापि लब्धं तस्यैवान्यदा दत्तं न पुनर्दायकेन ग्राहकस्य किमप्याधिकं कृतमिति चेष्यते; तदेवं सति दान-ग्रहणयोरनवस्था प्राप्नोति; यस्मै दानं तस्मात् पुनर्ग्रहणम्, पुनरपि चान्यस्मै दानम्, पुनरपि तस्माद् ग्रहणमित्यादि । ततश्च दान-ग्रहणपरम्पराव्यापृतस्य मोक्षाभावप्रसङ्गः, दानफलस्य च स्वयमपरिभोगः प्राप्नोति, अन्योन्यदान-ग्रहणाभ्यामाय-व्ययविशुद्धत्वादिति ॥ ३२४२ ॥

तदेवं तीर्थिकविशेषाणां सौस्नातिकादीनां मतमपाकृत्योपसंहारपूर्वकं स्वाभिमतमुपदर्शयन्नाह—

तम्हा स-पराणुग्गहपरिणामाओ सुपत्तविणिओगा । दाया पुण्णं पावइ जं तत्तो से फलं होइ ॥ ३२४३ ॥[2]

तस्मात् स्व-परानुग्रहपरिणामेन सुपात्रेषु वित्तविनियोगाद् दाता यत् पुण्यं प्राप्नोति, ततः 'से' तस्य दातुः फलं स्वर्गादिकं भवतीति ॥ ३२४३ ॥

तदेवमुक्तनीत्या दाता स्वत एवेदं स्वर्गादिफलं लभते, न तु परतः, ग्रहीताप्येवमेव द्रष्टव्य इति दर्शयन्नाह—

---

१ एव भवत्वनवस्था दान-ग्रहणयोरपरिभोगश्च । यदि परतो लब्धव्यं दत्त वा तस्मै तदेव ॥ ३२४२ ॥

२ तस्मात् स्व-परानुग्रहपरिणामात् सुपात्रविनियोगात् । दाता पुंण्य प्राप्नोति यत् ततस्तस्य फलं भवति ॥ ३२४३ ॥

पुव्वाणुपुव्वि न कमो नेव य पच्छाणुपुव्विए स भवे । सिद्धाईआ पढमा बीयाए साहुणो आई ॥ ३२१० ॥

इह क्रमस्तावद् द्विविधः– पूर्वानुपूर्वी वा, पश्चानुपूर्वी वेति । अनानुपूर्वी किल क्रम एव न भवति, असमञ्जसत्वात् । तत्राय-मर्हदादिक्रमः पूर्वानुपूर्वी न भवति, सिद्धानामादावनभिधानात्, एकान्तकृतकृत्यत्वेन, तथा, 'सिद्धाणं नमोक्कारं काऊणमभिग्गहं तु सो गिण्हे' इति वचनादर्हन्नमस्कार्यत्वेन च सिद्धानां प्रधानत्वात्, प्रधानस्य चाभ्यर्हितत्वेन पूर्वाभिधानादिति भावार्थः । तथा, नैव च पश्चानुपूर्व्येष क्रमो भवेत्, साधूनां प्रथममनभिधानात् । इहाप्रधानत्वात् सर्वपाश्चात्या हि साधवः । ततश्च तानादौ प्रतिपाद्य यदि पर्यन्ते सिद्धाभिधानं स्यात् तदा भवेत् पश्चानुपूर्वी । तस्मात् प्रथमायाः सिद्धादित्वात्, द्वितीयायास्तु साध्वादित्वाद् नेयं पूर्वानुपूर्वी, नापि पश्चानुपूर्वी ॥ इति निर्युक्तिगाथार्थः ॥ ३२१० ॥

एतदेव भाष्यकारः प्राह—

[3]जेण कयत्था सिद्धा न जिणा, सिद्धाइओ कमो जुत्तो । पच्छक्कमो व जइ संजयाइसिद्धावसाणा तो ॥३२११॥

जं च जिणाण वि पुज्जा सिद्धा जं तेसिं निक्कमणकाले । कयसिद्धनमुक्कारा करिंति सामाइयं सव्वे॥३२१२॥

गतार्थे ॥ ३२११ ॥ ३२१२ ॥

अत्रोत्तरमाह—

[4]अरहंतुवएसेणं सिद्धा नज्जंति तेण अरहाई । न वि कोइ परिसाए पणमित्ता पणमइ रन्नो ॥ ३२१३ ॥

इह तावदयं पूर्वानुपूर्वीक्रम एव । यदप्युक्तं 'सिद्धादिरयं प्राप्नोति' । तदयुक्तम्, यतोऽर्हदुपदेशेनैव सिद्धा अपि ज्ञायन्ते, प्रत्यक्षादिगोचरातीतत्वेनागमगम्यत्वात् तेषाम् । तेन तस्मादर्हदादिरेव पूर्वानुपूर्वीक्रम इति गम्यते । अत एव चार्हतामभ्यर्हिततरमव-

१ पूर्वानुपूर्वी न क्रमो नैव च पश्चानुपूर्व्यां स भवेत् । सिद्धादिका प्रथमा द्वितीयायां साधव आदौ ॥ ३२१० ॥

२ सिद्धानां नमस्कारं कृत्वाऽभिग्रहं तु स गृह्णीयात् ।

३ येन कृतार्था. सिद्धा न जिनाः, सिद्धादिक क्रमो युक्तः । पश्चात्क्रमो वा यदि संयतादिसिद्धावसाना तत ॥ ३२११ ॥
यच्च जिनानामपि पूज्याः सिद्धा यत् तेषां निष्क्रमणकाले । कृतसिद्धनमस्काराः कुर्वन्ति सामायिकं सर्वे ॥ ३२१२ ॥

४ अर्हदुपदेशेन सिद्धा ज्ञायन्ते तेनार्हदादिः । नापि कश्चित् परिषदे प्रणम्य प्रणमति राज्ञे ॥ ३२१३ ॥

[1]जह सो पत्ताणुग्गहपरिणामाओ फलं सओ लहइ । तह गिण्हंतो वि फलं तदणुग्गहओ सओ लहइ ॥३२४४॥

गतार्था ॥ ३२४४ ॥

एवं परधनापहार्यपि स्वत एव वध-बन्धन-नरकादिकं पापफलं लभते, न परत इति दर्शयति—

[2]हारी वि हरणपरिणामदूसिओ बज्झपच्चयाविक्खं । पावो पावं पावइ जं तत्तो से फलं होइ ॥ ३२४५ ॥

इयमप्युक्तार्थप्राया ॥ ३२४५ ॥

अथ प्रकृतयोजनामाह—

[3]जह सायत्तं दाणे परिणामाओ फलं तहेहावि । नियपरिणामउ च्चिय सिद्धं जिण-सिद्धपूयाए ॥ ३२४६ ॥

प्रकटार्थप्राया ॥ ३२४६ ॥

अथ जिनादिपूजाप्रतिष्ठार्थं प्रमाणयन्नाह—

[4]कज्जा जिणाइपूया परिणामविसुद्धिहेउओ निच्चं । दाणादउ व्व मग्गप्पभावणाओ य कहणं व ॥३२४७॥

कार्या नित्यं जिनादिपूजेति प्रतिज्ञा, स्वपरिणामविशुद्धिहेतुत्वादिति हेतुः, दानादिवदिति दृष्टान्तः । अथवा, कार्या नित्यमेव जिनादिपूजा, मोक्षमार्गप्रभावकत्वात्, धर्मकथनवदिति ॥ ३२४७ ॥

'कोप-प्रसादरहितत्वात्' इति परोक्तहेतोरनैकान्तिकतां दर्शयन्नाह—

[5]कोव-प्पसायरहियं पि दीसए फलदमण्ण-पाणाइं । कोव-प्पसायरहियं ति निष्फलं तो अणेगंतो ॥३२४८॥

पूर्वार्धं सुबोधम् । ततः 'कोप-प्रसादरहितं वस्तु निष्फलम्' इत्यनेकान्तः, अन्न-पानादिभिर्व्यभिचारादिति ॥ ३२४८ ॥

---

१ यथा स पात्रानुग्रहपरिणामात् फलं स्वतो लभते । तथा गृह्णन्नपि फलं तदनुग्रहतः स्वतो लभते ॥ ३२४४ ॥
२ हार्यपि हरणपरिणामदूषितो बाह्यप्रत्ययापेक्षम् । पाप. पापं प्राप्नोति यत् ततस्तस्य फलं भवति ॥ ३२४५ ॥
३ यथा स्वायत्तं दाने परिणामात् फलं तथेहापि । निजकपरिणामत एव सिद्धं जिन-सिद्धपूजायाः ॥ ३२४६ ॥
४ कार्या जिनादिपूजा परिणामविशुद्धिहेतुतो नित्यम् । दानादय इव मार्गप्रभावनातश्च कथनमिव ॥ ३२४७ ॥
५ कोप-प्रसादरहितमपि दृश्यते फलदमन्न-पानादि । कोप-प्रसादरहितमिति निष्फलं ततोऽनेकान्तः ॥ ३२४८ ॥

सेयम् । कृतकृत्यमप्यल्पकालव्यवहितत्वात् प्रायः समानमेव । तथा नमस्कार्यत्वमप्यसाधकमेव, अर्हन्नमस्कारपूर्वकमेव सिद्धत्वप्राप्तेरर्हतामपि वस्तुतः सिद्धनमस्कार्यत्वादिति । आह- यद्येवम्, तर्ह्याचार्यादिभिः क्रमः प्राप्तः, अर्हतामप्याचार्योपदेशेन परिज्ञानादिति । तदयुक्तम्, यस्मादर्हत्-सिद्धयोरेवायं वस्तुतस्तुल्यबलयोर्विचारः श्रेयान्, परमनायकपदवर्तित्वात् तयोः । आचार्यास्त्वर्हतां परिषत्कल्पा एव वर्तन्ते । नापि कश्चित् परिषदे प्रणम्य नामं कृत्वा ततः प्रणमति राज्ञे । इत्यतोऽप्रेर्यमेवेदम् ॥ इति निर्युक्तिगाथार्थः॥३२१३॥

भाष्यकारः प्राह—

जइ एवं आयरिओवएसओ जं जिणाइपडिवत्ती । तेणायरियाई कमो जुत्तो नो चेदणेगंतो ॥३२१४॥

यद्यर्हदुपदेशेन सिद्धा ज्ञायन्त इत्यर्हतामादौ नमस्कारः, तर्ह्येवं सत्याचार्योपदेशत एव यस्माज्जिनादीनामर्हदादीनां प्रतिपत्तिर्भव्यलोकस्योपजायते, तस्मादाचार्यादिरेव क्रमो युक्तः, न चेदेवमिष्यते, तर्ह्यनेकान्तोऽयं यदुपदेशेन यो ज्ञायते तस्य प्राधान्यमितरस्य च गुणभाव इति ॥ ३२१४ ॥

पर एवाह—

जुत्तो व गणहराणं जिणाइओ जं जिणोवएसेणं । जाणंति ते विसेसे, सेसा उ गुरूवएसेणं ॥ ३२१५॥

काका वदति- युक्तो वा गणधराणां गौतमादीनामयं जिनादिरर्हदादिः क्रमः, यस्मात् ते गौतमादयो जिनस्यार्हत एवोपदेशेनावशेषान् सिद्धा-ऽऽचार्यादीन् जानन्ति, शेषास्तु गणधरशिष्य-प्रशिष्यादयो निजनिजगुरूपदेशेन सिद्धादीनर्हतश्च जानन्ति । ततः केषाञ्चिदर्हदादिः, केषाञ्चिदाचार्यादिः क्रमस्त्वदभिप्रायतोऽनियमेन भवत्विति ॥ ३२१५ ॥

तथा पर एवाह—

अहवा आयरिउ च्चिय सो तेसिं मई तओ पसत्तो भे । आयरियाइउ च्चिय एवं सइ सव्वसाहूणं॥३२१६॥

१ यद्येवमाचार्योपदेशतो यज्जिनादिप्रतिपत्तिः । तेनाचार्यादिः क्रमो युक्तो नो चेदनेकान्तः ॥ ३२१४ ॥

२ युक्तो वा गणधराणां जिनादिको यज्जिनोपदेशेन । जानन्ति ते विशेषान् शेषास्तु गुरूपदेशेन ॥ ३२१५ ॥

३ अथवाऽऽचार्य एव स तेषां मतिस्ततः प्रसक्तो भवताम् । आचार्यादिक एवैवं सति सर्वसाधूनाम् ॥ ३२१६ ॥

अपिच, विरुद्धोऽप्ययं हेतुरिति दर्शयन्नाह—

[1]कोवाइविरहियं चिय सव्वं जमणुग्गहोवघायाय । दीसइ तेण विरुद्धं फलमिह कोव-प्पसायाओ॥३२४९॥

इहाकाशा-ऽन्नपान-पीयूष-विष-चिन्तामण्य-ऽन्धोपल-कल्पद्रुम-विषवृक्ष-गुड-नागर-हरीतकी-मरीचाद्यौषधादिकं सर्वमपि वस्तु कोप-प्रसादविरहितमेव यस्मादनुग्रहोपघातयोः प्रवर्तमानं दृश्यते, तेन तस्मादिह कोप-प्रसादतः सकाशात् फलमुच्यमानं विरुद्धमेव संलक्ष्यते; तथाहि—कोपादिरहितादेवाकाशादेर्व्रेण उपघातः, पट्टकबन्धादेस्त्वनुग्रहः; हितमितान्नपानादेरनुग्रहः, तस्माद् विपरीतात् पुनरुपघातः; एवं पीयूष-विषादेरपि सकाशात् कोपादिविरहितादेवानुग्रहो-पघातौ दृश्येते । ततो विरुद्धोऽयं हेतुः, विपक्ष एव वृत्ति-दर्शनादिति ॥ ३२४९ ॥

अथ राजादीनां हरण-प्रदानहेतवः कोप-प्रसादा भवन्तीति प्रत्यक्षत एव दृष्टमिति परस्य मतिर्भवेत्; ननु तदपि सर्वस्वाहरणं प्रदानं वा स्वपाप पुण्यकृतमेव । यस्तु परः, स तत्र केवलं निमित्तमात्रमेवेति प्रागेव भणितमिति दर्शयन्नाह—

[2]हरण-प्पयाणहेऊ हवेज्ज कोवादओ मई तं पि । णणु सकयं चिय भणियं निमित्तमेत्तं परो नवरं॥३२५०॥

गतार्था ॥ ३२५० ॥

अथवा, अपहरण-प्रदानादिकं स्वकृतं नेष्यते, तत्राह —

[3]जइवा न सकयहेउं तं तो कोव-प्पसाययं राया । सो सव्वसेवयाणं समाणफलदो कहं न भवे ? ॥३२५१॥

पाठसिद्धा ॥ ३२५१ ॥

अपि च,

[4]दीसइ य विसमफलदो विफलो य समाणसेवयाणं पि । भण्णइ य सुकयपुण्णो तो से रायप्पसाउ त्ति ॥३२५२॥

---

१ कोपादिविरहितमेव सर्वं यदनुग्रहो-पघातयोः । दृश्यत तेन विरुद्ध फलमिह कोप-प्रसादाभ्याम् ॥ ३२४९ ॥

२ हरण-प्रदानहेतवो भवेयुः कोपादयो मतिस्तदपि । ननु स्वकृतमेव भणितं निमित्तमात्रं परो नवरम् ॥ ३२५० ॥

३ यदिवा न स्वकृतहेतु तत् तत कोप-प्रसादवान् राजा । स सर्वसेवकानां समानफलदः कथं न भवेत् ? ॥ ३२५१ ॥

४ दृश्यते च विषमफलदो विफलश्च समानसेवकानामपि । भण्यते च सुकृतपुण्यस्ततस्तस्य राजप्रसाद इति ॥ ३२५२ ॥

अथवा मतिः– स जिनो भगवानाचार्य एव तेषां गणधराणामाचारप्रवर्तकत्वमाश्रित्येति भावः। ततश्चैवं सति 'भे' भवतामाचार्यादिरेव सर्वसाधूनां गणधरादीनां क्रमः प्रसक्तः प्राप्त इति ॥ ३२१६ ॥

अत्र सूरिरुत्तरमाह—

[1]पढमोवएसगहणं तं चारुहओ न सेसएहिंतो। गुरवो वि तदुवइट्ठस्स चेव अणुभासया नवरं ॥३२१७॥

अरहंत-गुरू-वज्झायभावओ तस्स गणहराणं पि। जुत्तो तयाइउ च्चिय न गुरु त्ति तओ जिणो न भवे ॥३२१८॥

स जिणो जिणाइसयओ सो चेव गुरू गुरूवएसाओ। करणाइविणयणाओ सो चेव मओ उवज्झाओ॥३२१९॥

व्याख्या– इह यद्यप्याचार्यादयोऽप्यर्हदादीनुपदिशन्ति तथापि यत् प्रथममुपदेशग्रहणं गणधराणां तदधिकृत्योच्यते। तच्चार्हत एव सकाशात्, न शेषेभ्य आचार्यो-पाध्यायादिभ्यः। येऽपि गुरव आचार्यादयोऽर्हदादीनुपदिशन्ति तेऽपि तदुपदिष्टस्यार्हदुपदिष्टस्यैव केवलमनुभाषका न पुनः स्वातन्त्र्येण देशका इति। अथवा, यद्यप्याचार्याद्युपदेशेनार्हन्तो ज्ञायन्त इत्यभ्युपगम्यते, तथाप्यर्हदादिरेव क्रमः। कुत इत्याह– 'अरहंतेत्यादि' गणधराणाम्, अपिशब्दाच्छेषाचार्यादीनामपि तदादिरर्हदादिरेव क्रमो युक्तः। कुतः? इत्याह– तस्यार्हत एवार्हद्गुरूपाध्यायभावतः। स एव हि महावीरादिभगवानष्टमहाप्रातिहार्याद्यतिशययोगादर्हन्, स एव तत्त्वोपदेशादिभ्यो गुरुराचार्यः, स एव चेन्द्रिय-कषाय-योगादिविनयनादुपाध्यायः। ततश्चाचार्यादिक्रमेऽपि परेणापाद्यमाने सामर्थ्यादर्हदादिरेव क्रमः संपद्यत इति भावः। न चायं गुरुराचार्य इत्यतो जिनोऽर्हन् न भवेत्, किन्तु भवेदेव, जिनातिशययोगादिति। एतदेवाह– 'स जिणो इत्यादि' गतार्था ॥ ३२१७ ॥ ३२१८ ॥ ३२१९ ॥

अथ यदुक्तम्– '[2]जं च जिणाण वि पुज्जा सिद्धा' इत्यादि, तत्राह—

[3]जइ सिद्धनमोक्कारं छउमत्थो कुणइ न य तदाईओ। तं पइ तया न दोसो न हि सो तक्कालमरुहंतो ॥३२२०॥

---

1 प्रथमोपदेशग्रहणं तच्चार्हतो न शेषकेभ्यः। गुरवोऽपि तदुपादिष्टस्यैवानुभाषका नवरम् ॥ ३२१७ ॥
अर्हद्-गुरू-पाध्यायभावतस्तस्य गणधराणामपि। युक्तस्तदादिक एव न गुरुरिति सको जिनो न भवेत् ॥ ३२१८ ॥
स जिनो जिनातिशयतः स एव गुरुर्गुरूपदेशात्। करणादिविनयनात् स एव मत उपाध्यायः ॥ ३२१९ ॥ 2 गाथा ३२१२।
3 यदि सिद्धनमस्कारं छद्मस्थः करोति न च तदादिकः। तं प्रति तदा न दोषो न हि स तत्कालमर्हन् ॥ ३२२० ॥

समानसेवकानामपि विषमफलदः केषाञ्चिद् विफलश्च दृश्यते राजा । ततो ज्ञायते—स्वकृतपुण्य-पापकृतमेवेदं सर्वमपि वैचित्र्यम्, राजादिस्तु तत्र निमित्तमात्रमेवेति । अपरं च, लोकेऽपि भण्यते लोकेऽप्येवं वक्तारो भवन्ति— 'सुकृतपुण्यः स देवदत्तादिः 'तो से त्ति' ततः 'से' तस्यैव राजप्रसादो जातः' इति । तत एवमादिलोकोक्तेश्च स्वकृतपुण्य-पापानुमानं प्रवर्तत इति ॥ ३२५२ ॥

अपि च,

[1]कोवप्पसायहेउं च जं फलं नहि तदत्थमारंभो । न परप्पसायणत्थं किन्तु निययप्पसायत्थं ॥ ३२५३ ॥

कोप-प्रसादहेतुकं च यत् किमपि फलं तदर्थो नैवायमस्माकमर्हदादिनमस्कारपूजारम्भः, नापि परप्रसादनार्थम्, किन्तु निजकचित्तस्य यः प्रसादः प्रसत्तिरर्हदादिगुणबहुमानेन शुभरूपता तदर्थोऽयमारम्भ इति ॥ ३२५३ ॥

परप्रसादनार्थं नारम्भ इत्याह—

[2]धम्मा-ऽधम्मा न परप्पसाय-कोवाणुवत्तिणो जम्हा । तो न परो त्ति पसण्णो धम्मो कुविउ त्ति वाऽधम्मो ॥३२५४॥

धर्मार्थो ह्ययमारम्भः । धर्मा-ऽधर्मौ च यस्माद् न परप्रसाद-कोपानुवर्तिनौ, किं तर्हि ?, जीवगतशुभा-ऽशुभपरिणामानुयायिनौ । ततः 'परः प्रसन्नः' इत्येतावता न धर्मः, नापि 'परः कुपितः' इत्येतावन्मात्रेणाधर्मः, किन्तु निजशुभा-ऽशुभपरिणामवशाद् धर्मा-ऽधर्मौ । तत्र च शुभा-ऽशुभ-परिणामस्यालम्बनमर्हदादादयो नमस्क्रियमाणाः संपद्यन्ते । शुभपरिणामाच्च धर्मः । तस्माच्चार्थ-कामादयः, स्वर्गा-ऽपवर्गौ च भवतः । इति संपद्यत एवार्हन्नमस्कारस्य यथोक्तं फलमितीह तात्पर्यमिति ॥ ३२५४ ॥

यदि परप्रसाद-कोपानुवर्तिनौ धर्मा-धर्मौ स्याताम्, ततः को दोषो भवेत् ? इत्याह—

[3]तस्साहणसुण्णस्स वि जइवा धम्मो परप्पसायाओ । तो जो जस्स पसन्नो स तस्स दिज्जा जगद्धम्मं॥३२५५॥

---

१ कोपप्रसादहेतु च यत् फल नहि तदर्थ आरम्भः । न परप्रसादनार्थं किन्तु निजकप्रसादार्थम् ॥ ३२५३ ॥

२ धर्मा-ऽधर्मौ न परप्रसाद-कोपानुवर्तिनौ यस्मात् । ततो न पर इति प्रसन्नो धर्मः कुपित इति वाऽधर्मः ॥ ३२५४ ॥

३ तत्साधनशून्यस्यापि यदिवा धर्मः परप्रसादात् । ततो यो यस्य प्रसन्नः स तस्य दद्याज्जगद्धर्मम् ॥ ३२५५ ॥

यदि निष्क्रमणकाले भगवांश्छद्मस्थो गुणाधिकानां सिद्धानां नमस्कारं करोति, करोतु नाम तदा, न कश्चिद् दोषः। कं प्रति न दोषः? इत्याह— तं छद्मस्थतीर्थङ्करं प्रति। न ह्यसौ तत्कालमर्हन्, केवलोत्पत्तावेव तद्भावादिति। यदि च्छद्मस्थतीर्थकरापेक्षया गुणाधिकाः सिद्धा भवद्भिरपीष्यन्ते, तर्हि कथं छद्मस्थतीर्थकरादिर्नमस्कारः? इति चेत्। तदयुक्तम्। कुतः? इत्याह— न च तदादिश्छद्मस्थतीर्थकरादिर्नमस्कार इष्यतेऽस्माभिः, किन्तु समुत्पन्नकेवलज्ञानाऽर्हदादिरेव। स च केवल्यर्हन् सिद्धादिवस्तुस्तोमस्वरूपोपदेशदानतः सिद्धेभ्यो गुणाधिक इत्युक्तमेवेति। अतोऽर्हदादिरेव नमस्कार इति ॥ ३२२० ॥

अत्राक्षेप-परिहारौ प्राह—

ऐवमकयत्थकाले सिद्धाई होउ, भण्णइ तयावि। अण्णे संतरुहंता तओ तयाई तओ निच्चं ॥ ३२२१ ॥

यदि च्छद्मस्थतीर्थकरापेक्षया गुणाधिकाः सिद्धाः, तर्ह्येवं सत्यकृतार्थच्छद्मस्थतीर्थकरकाले सिद्धादिर्नमस्कारो भवतु, न्यायोपपन्नत्वादिति। भण्यतेऽत्रोत्तरम्— हन्त! यदाऽत्र भरतादौ च्छद्मस्थतीर्थकरस्तदापि महाविदेहेष्वन्ये केवलिनोऽर्हन्तः सन्ति। ततस्तदादिरर्हदादिरेव तकोऽसौ नमस्कारो नित्यं सर्वदा॥ इति गाथाष्टकार्थः॥ ३२२१ ॥

॥ तदेवमुक्तं क्रमद्वारम् ॥

अथ प्रयोजन-फलयोर्दर्शनार्थमाह—

ऐत्थ य पओयणमिणं कम्मक्खय मंगलागमो चेव। इहलोय-पारलोइयदुविहफलं तत्थ दिट्ठंता ॥३२२२॥

अत्र च नमस्कारकरणे प्रयोजनमिदं यदुत— करणकाल एवाक्षेपेण ज्ञानावरणादिकर्मक्षयः, अनन्तकर्मपुद्गलापगममन्तरेण भावतो नमस्कारस्याप्यप्राप्तेरित्युक्तमेव; तथा, मङ्गलागमश्चैव यः करणकालभावीति; तथा, कालान्तरभावि पुनरैहलौकिक-पारलौकिकभेदभिन्नं द्विविधं फलम्। तत्र दृष्टान्ता वक्ष्यमाणलक्षणा इति॥ ३२२२ ॥

तदेव द्विविधं फलं तावद् विवृण्वन्नाह—

१ एवमकृतार्थकाले सिद्धादिर्भवतु, भण्यते तदापि। अन्ये सन्त्यर्हन्तस्ततस्तदादिः सको नित्यम् ॥ ३२२१ ॥
२ अत्र च प्रयोजनमिदं कर्मक्षयो मङ्गलागमश्चैव। ऐहलौकिक-पारलौकिकद्विविधफलं तत्र दृष्टान्ता ॥ ३२२२ ॥

कुविओ हरेज्ज सव्वं दिज्जा धम्मं व तहय पावं ति । अकयागम-कयनासा मोक्खगयाणं पि चापडणं॥३२५६॥

व्याख्या– वाशब्दः प्रस्तावनायाम्, सा च कृतैव । तस्य धर्मस्य दया-दान-प्रशम-ब्रह्मचर्याऽर्हदादिपूजादीनि साधनानि, तैः शून्यस्यापि यदि धर्मः परप्रसादमात्रादेवेष्यते, ततस्तर्हि य ईश्वरादिर्यस्य देवदत्तादेः प्रसन्नः स ईश्वरादिर्जगतोऽपि संबन्धिनं धर्ममपहृत्य तस्यैवैकस्य देवदत्तादेः सर्वं दद्यात्; तथा, कुपितः स एव तस्य देवदत्तादेः संबन्धिनं सर्वं धर्ममपहरेत्, अधर्मं वा सर्वमपि प्रयच्छेत् । तथा च सत्यकृतागम-कृतनाशौ प्राप्नुतः, एकस्याकृतयोरपि धर्मा-ऽधर्मयोरागमात्; अन्येषां तु स्वयं कृतयोरपि तयोर्नाशादिति । मोक्षगतानामपि च सिद्धानामेवं पतनं स्यात्, तदीयपूर्वसुकृतस्यान्यत्र संचरणात्, अन्यदीयाधर्मस्य च तेषु प्रक्षेपादिति ॥ ३२५५ ॥ ३२५६ ॥

किञ्च, परकीयकोप-प्रसादाभावेऽपि धर्मा-ऽधर्मौ तवापि प्रसिद्धौ । कथमित्याह—

जइ वीयराग-दोसं मुणिमक्कोसिज्ज कोइ दुट्ठप्पा । कोव-प्पसायरहिओ मुणि त्ति किं तस्स नाधम्मो ? ॥३२५७॥

सवओ तस्साधम्मो जइ वंदंतस्स तो धुवं धम्मो । कोवप्पसायरहिए तह जिण-सिद्धे वि को दोसो ? ॥३२५८॥

व्याख्या–वीतावपगतौ राग-द्वेषौ यस्य तं वीतराग-द्वेषं मुनिं यदि दुष्टात्मा कश्चिदाक्रोशेत्, तदा 'वीतराग-द्वेषत्वात् कोपप्रसादरहितः स मुनिः' इत्येतावन्मात्रेण किं तस्याक्रोष्टुर्नाधर्मः स्यात् ?–ननु स्यादेवासौ, सकलशास्त्र लोकप्रतीतत्वादिति । ततश्च 'सवउ त्ति' मुनिं शपमानस्य तस्याक्रोष्टुर्यद्यधर्मोऽभ्युपगतस्त्वया, ततस्तर्ह्यन्यस्य कस्यापि शुभपरिणामस्य तमेव मुनिं वन्दमानस्य ध्रुवं निश्चितं धर्मोऽप्येष्टव्य एव, स्वपरिणाममात्रनिबन्धनत्वस्येहापि समानत्वादिति । यदि नामैवं ततः प्रकृते किम् ? इत्याह– तथा तेनैवोक्तप्रकारेण कोप-प्रसादरहिते जिने सिद्धे च नमस्कर्तुर्निजशुभपरिणामवशाद् यथोक्तफलप्राप्तौ को दोषः ?–न कश्चिदिति॥३२५७॥३२५८॥

दृष्टान्तान्तरेणाप्यर्हदादिभ्यः फलप्राप्तिं समर्थयन्नाह—

---

१ कुपितो हरेत् सर्वं दद्याद् धर्ममिव तथा च पापमिति । अकृतागमकृतनाशौ मोक्षगतानामपि चापतनम् ॥ ३२५६ ॥

२ यदि वीतराग-द्वेष मुनिमाक्रोशेत् कोऽपि दुष्टात्मा । कोप-प्रसादरहितो मुनिरिति किं तस्य नाधर्मः ? ॥ ३२५७ ॥
शपमानस्य तस्याधर्मो यदि वन्दमानस्य ततो ध्रुव धर्मः । कोप-प्रसादरहितयोर्जिन-सिद्धयोरपि को दोषः ? ॥ ३२५८ ॥

[1]ईहलोए अत्थ-कामा आरोग्गं अभिरई य निप्फत्ती । सिद्धी य सग्ग-सुकुलपज्जायाई य परलोए ॥३२२३॥

इहलोके नमस्कारादर्थ-कामौ भवतः, आरोग्यं निरुजत्वमुपजायते । एते चार्थादयः शुभविपाकिनोऽस्माद् भवन्ति; तथा चाह– आभिमुख्येन रतिरभिरतिः, सा चेहलोकेऽप्यर्थादिभ्यो भवति, परलोकविषया तु तेभ्य एव, शुभानुबन्धित्वात्; निष्पत्तिः 'पुण्यस्य' इति गम्यते; अथवा, 'अभिरतेश्च निष्पत्तिः' इत्येकवाक्यतैव । तथा, सिद्धिश्च मुक्तिश्च, स्वर्गः, सुकुलप्रत्ययादिश्च परलोके इत्यस्यामुष्मिकफलमिति ॥ ३२२३ ॥

अथात्र द्विविधेऽपि फले पूर्वोपक्षिप्तान् दृष्टान्तानाह—

[2]ईहलोगम्मि तिदंडी सा दिव्वं माउलुंगवणमेव । परलोए चंडपिंगल हुंडियजक्खो य दिट्ठंता ॥ ३२२४ ॥

इयं सकथानकभावार्था मूलावश्यकटीकातोऽवसेया ॥ इति निर्युक्तिगाथार्थः ॥ ३२२४ ॥

अथ भाष्यकारः प्रयोजन-फलयोर्विवरणमाह—

[3]सययओवओगकिरियागुणलाभो तप्पओयणमिहेव । कालंतरनिप्फत्ति फलमिह-परलोग-मुक्खेसु ॥३२२५॥

कम्मक्खओऽणुसमयं तल्लाभे चेव तदुवओगाओ । सव्वत्थेसु य मंगलमविग्घहेऊ नमोक्कारो ॥ ३२२६ ॥

व्याख्या– तस्य नमस्कारस्य प्रयोजनं तत्प्रयोजनमिहैवेहलोक एव । किमिति ? । अत्रोच्यते– तद्विषयसततोपयोगक्रियया यः कर्मक्षय-क्षयोपशमादिगुणस्य लाभः । फलं तु नमस्कारस्य 'कालंतरनिप्फत्ति त्ति' कालान्तरे निष्पत्तिर्यस्य तत् कालान्तर-निष्पत्ति कालान्तरभावीत्यर्थः । तच्च 'इह त्ति' इहलोकेऽर्थ-कामादिकम्, 'परलोए त्ति' परलोके स्वर्गादिकम्, मोक्षे तु जरा-मरणाभावादिकमिति । तदेवं सामान्यतः प्रयोजनं फलं चोपदर्शितम् । अथ प्रयोजनं विशेषतो दर्शयति– 'कम्मेत्यादि' 'तल्लाभे चेव त्ति' तस्य नमस्कारस्य लाभकाल एव तदुपयोगाद् नमस्कारोपयोगादनुसमयं कर्मक्षयो भवति; तथा, सर्वार्थेषु च सर्वकार्येषु प्रवृत्तानां

१ इहलोकेऽर्थ-कामावारोग्यमभिरतिश्च निष्पत्ति । सिद्धिश्च स्वर्ग-सुकुलपर्यायादिश्च परलोके ॥ ३२२३ ॥

२ इहलोके त्रिदण्डी सा दिव्यं मातुलुङ्गवनमेव । परलोके चण्डपिङ्गलो हुण्डिकयक्षश्च दृष्टान्तौ ॥ ३२२४ ॥

३ सततोपयोगक्रियागुणलाभस्तत्प्रयोजनमिहैव । कालान्तरनिष्पत्ति फलमिह-परलोक-मोक्षेपु ॥ ३२२५ ॥
कर्मक्षयोऽनुसमयं तल्लाभ एव तदुपयोगात् । सर्वार्थेपु च मङ्गलमविघ्नहेतुर्नमस्कारः ॥ ३२२६ ॥

हिंसामि मुसं भासे हरामि परदारमाविसामि त्ति । चिंतेज्ज कोइ न य चिंतियाण कोवाइसंभूई ॥३२५९॥

तहवि य धम्मा-ऽधम्मोदयाइ संकप्पओ तहेहावि । वीयकसाए सवओऽधम्मो धम्मो य संथुणओ॥३२६०॥

व्याख्या–'हिनस्मि हरिणादीन्, मृषां भाषेऽहम्, तद्भाषणाच्च वञ्चयामि देवदत्तादीन्, धनमपहरामि, तेषामेव परदारानाविशामि निषेवेऽहम्' इत्यादि कश्चिच्चिन्तयेत् । न च तेषां चिन्तितानां हिंसादिचिन्ताविषयभूतानां हरिणादीनां तत्कालं कोपादिसंभूतिः कोपादिसंभवोऽस्ति; तथापि हिंसादिचिन्तकस्याधर्मः, दयादिसंकल्पतस्तु तद्वतो धर्मो भवति । इत्यावयोरविगानेन प्रसिद्धमेव, तथेहापि प्रस्तुते वीतकषायानप्यर्हत्-सिद्धादीन् शपमानस्याधर्मः, संस्तुवतस्तु धर्म इति किं नेष्यते ? इति ॥ ३२५९ ॥ ३२६० ॥

अथोपसंहारपूर्वकं प्रस्तुतमुपदर्शयन्नाह—

तम्हा[2] धम्मा-ऽधम्मा जुत्ता निययप्पसाय-कोवाओ । धम्मत्थिणा पयत्तो कज्जो तो सप्पसायम्मि ॥३२६१॥

सो य निययप्पसाओऽवस्सं जिण-सिद्धपूयणाउ त्ति । जस्स फलमप्पमेयं तेण तयत्थो पयत्तोऽयं॥३२६२॥

सुगमे, नवरं यस्य निजमनःप्रसादस्याप्रमेयमनन्तं फलं येनानन्तफलोऽसौ, तेन कारणेन तदर्थो निजमनःप्रसादार्थं एवार्[3]हदादिनमस्कारप्रयत्न इति ॥ ३२६१ ॥ ३२६२ ॥

अस्यैवार्थस्य साधनार्थं प्रमाणयन्नाह—

नाणाइमयत्ते[4] सइ पुज्जा कोव-प्पसायविरहाओ । निययप्पसायहेउं नाणाइतियं व जिण-सिद्धा ॥३२६३॥

निजमनःप्रसादहेतोः पूज्या जिन-सिद्धा इति प्रतिज्ञा, ज्ञानादिमयत्वे सति कोप-प्रसादविरहादिति हेतुः, ज्ञानादित्रिकवदिति दृष्टान्तः । कोपादिविरहिता लेष्टु-काष्ठादयोऽपि विद्यन्ते, अतस्तद्व्यवच्छेदार्थं 'ज्ञानादिमयत्वे सति, इति हेतोर्विशेषणमिति ॥३२६३॥

---

१ हिनस्मि मृषां भाषे हरामि परदारानाविशामीति । चिन्तयेत् कोऽपि न च चिन्तितानां कोपादिसभूतिः ॥ ३२५९ ॥
तथापि च धर्मा-ऽधर्मौदयादि सकल्पतस्तथेहापि । वीतकषायान् शपमानस्याधर्मो धर्मश्च संस्तुवत. ॥ ३२६० ॥

२ तस्माद् धर्मा-ऽधर्मौ युक्तौ निजकप्रसाद-कोपाभ्याम् । धर्मार्थिना प्रयत्नः कार्यस्ततः स्वप्रसादे ॥ ३२६१ ॥
स च निजकप्रसादोऽवश्यं जिन सिद्धपूजनादिति । यस्य फलमप्रमेयं तेन तदर्थः प्रयत्नोऽयम् ॥ ३२६२ ॥

३ 'क. ग. एवमर्ह' ।

४ ज्ञानादिमयत्वे सति पूज्याः कोप-प्रसादविरहात् । निजकप्रसादहेतोर्ज्ञानादित्रिकमिव जिन-सिद्धाः ॥ ३२६३ ॥

मङ्गलमविघ्नहेतुर्नमस्कारः संपद्यत इति ॥ ३२२५ ॥ ३२२६ ॥

अत्र कश्चिदाह– 'ननु नमस्कारोपयोगात् कर्मक्षयो भवति' इत्येतत् कुतः ? इत्याह—

[1]सुयमागमो त्ति तओ सुओवओगप्पओयणो तं च । आयहियपरिण्णाभावसंवराई बहुविगप्पं ॥ ३२२७ ॥

तकोऽसौ नमस्कारः श्रुतमागम इत्यर्थः, स च श्रुतोपयोगप्रयोजनः श्रुतोपयोगः प्रयोजनं फलमस्येति कृत्वा । तच्च श्रुतोपयोगप्रयोजनमात्महितभावसंवरादिभेदेन बहुविकल्पं बहुभेदम्; उक्तं च—

"[2]आयहियपरिण्णाभावसंवरो नवनवो य संवेगो । निक्कपया तवो निज्जरा य परदेसियत्तं च ॥ १ ॥"

इत्यादि । अतो नमस्कारस्य श्रुतरूपत्वाद् भवत्येव तदुपयोगात् कर्मक्षय इति ॥ ३२२७ ॥

अत्र प्रेरकः प्राह—

[3]पूयाफलप्पया नहि नहं व कोव-प्पसायविरहाओ। जिण-सिद्धा, दिट्ठंतो वइधम्मेणं निवाईया ॥३२२८॥

नमस्कारलक्षणायाः पूजायाः फलं पूजाफलं तत्प्रदौ नहि नैव जिन-सिद्धौ, कोप-प्रसादरहितत्वात्, नभोवदिति । ये तु पूजाफलदास्ते कोप-प्रसादरहिता न भवन्ति, यथा नृपादय इत्येष वैधर्म्येण दृष्टान्त इति ॥ ३२२८ ॥

एतदेव समर्थयन्नाह—

[4]पूयाणुवगाराओ अपरिग्गहाओ विमुत्तिभावाओ । दूराइभावओ वा विफला सिद्धाइपूय त्ति ॥ ३२२९ ॥

विफला सिद्धादिपूजेति प्रतिज्ञा । हेतूनाह– पूजाया अनुपक्रियमाणत्वात्, तदपरिग्राहित्वात्, अमूर्तत्वात्, दूरादिभावात्, नभोवदिति ॥ ३२२९ ॥

१ श्रुतमागम इति सक श्रुतोपयोगप्रयोजनस्तच्च । आत्महितपरिज्ञाभावसंवरादि बहुविकल्पम् ॥ ३२२७ ॥
२ आत्महितपरिज्ञाभावसंवरो नवनवश्च संवेगः । निष्कम्पता तपो निर्जरा च परदेशितत्वं च ॥ १ ॥
३ पूजाफलप्रदौ नहि नभ इव कोप प्रसादविरहात् । जिन-सिद्धौ, दृष्टान्तो वैधर्म्येण नृपादिकाः ॥ ३२२८ ॥
४ पूजानुपकारादपरिग्रहाद् विमूर्तिभावात् । दूरादिभावतो वा विफला सिद्धादिपूजेति ॥ ३२२९ ॥

परः प्राह—

[1]पुज्जा जिणाइवज्जा नहि मोक्खत्थं सराग-दोस त्ति । अकयत्थभावओ वि य दव्वट्ठाए दरिद्द व्व॥३२६४॥

जिन-सिद्धान् वर्जयित्वा शेषा आचार्यो-पाध्याय-साधवो नहि नैव मोक्षार्थं पूजा इति प्रतिज्ञा, सराग-द्वेषत्वात्, अत एवाकृतार्थभावाच्च, द्रव्यार्थं दरिद्रा इवेति ॥ ३२६४ ॥

अत्र प्रतिविधानमाह—

[2]कलुसफलेण न जुज्जइ किं चित्तं तत्थ जं विगयरागो । संते वि जो कसाए न गिण्हइ सो वि तत्तुल्लो॥३२६५॥

किं तत्र चित्रं किमाश्चर्यं यद् विगतरागः कलुषफलेन कषायजनितेन चित्तकालुष्येन न युज्यते, विगतकषायोदयत्वात् तस्य । ननु सोऽपि तत्तुल्यो वीतरागसमान एव यः सतोऽपि कषायान् न गृह्णाति । ततश्चास्मात् परमगुरुवचनादाचार्यादयोऽपि वीतरागतुल्या एव, सतामपि कषायाणां निग्रहात् । ततः 'सराग-द्वेषत्वात्' इत्यसिद्धो हेतुरिति भावः । इयं च गाथा केषुचिदादर्शेषु न दृश्यते, पूर्वटीकाकारैरपि न व्याख्याता; अस्माभिस्तु बहुष्वादर्शेषु दर्शनात् सोपयोगत्वाच्च लिखितेति ॥ ३२६५ ॥

'अकृतार्थत्वात्' इत्ययमपि हेतुरनैकान्तिकः, अकृतार्थत्वे सत्यपि कारणान्तरतोऽपि पूजासंभवादिति दर्शयन्नाह—

[3]न परोवयारओ च्चिय धम्मो न परोवयारहेउं च । पूयारंभो नणु सपरिणामसुद्धत्थमक्खाओ ॥ ३२६६ ॥

'अकृतार्थभावात्' इति ब्रुवतस्तत्र किलायमभिप्रायः—'स्वयमकृतार्थाः सन्त आचार्यादयो न परोपकारक्षमाः, अतस्तदसमर्था दरिद्रा इव न ते नमस्करणीयाः' इति । एतच्चायुक्तम्, यतो न परस्मादर्हदादेरुपकारत एव धर्मो नमस्कर्तुः, नापि परस्यार्हदादेरुपकारहेतोस्तस्य नमस्कारपूजारम्भः । ननु स्वपरिणामशुद्ध्यर्थमाख्यातोऽसौ । ततः किञ्चिदकृतार्थत्वे सत्यपि स्वशुभपरिणामनिबन्धनत्वात् पूज्या एवाचार्यादय इति ॥ ३२६६ ॥

अथ पञ्चानामपि पूज्यत्वसमर्थनार्थं प्रमाणमाह—

---

१ पूज्या जिनादिवर्जा नहि मोक्षार्थं सराग-द्वेषा इति । अकृतार्थभावतोऽपि च द्रव्यार्थं दरिद्रा इव ॥ ३२६४ ॥
२ कलुषफलेन न युज्यते किं चित्रं तत्र यद् विगतरागः । सतोऽपि यः कषायान् न गृह्णाति सोऽपि तत्तुल्यः ॥ ३२६५ ॥
३ न परोपकारत एव धर्मो न परोपकारहेतोश्च । पूजारम्भो ननु स्वपरिणामशुद्ध्यर्थमाख्यातः ॥ ३२६६ ॥

जा वंगणे पसुत्ता पउत्थवइया य मत्ता य ॥ १९५ ॥

कालो त्ति मयं मरणं जहेह मरणं गउ त्ति कालगओ । तम्हा स कालकालो जो जस्स मओ स मरणकालो ॥१॥

कालेण कओ कालो अम्हं सज्झायदेसकालम्मि ।
तो तेण हओ कालो अकाले कालं करंतेणं ॥ १९६ ॥

अद्धाकालविसेसो पत्थयमाणं व माणुसे खित्ते । सो संववहारत्थं पमाणकालो अहोरत्तं ॥ १ ॥

दुविहो पमाणकालो दिवसपमाणं च होइ राई य ।
चउपोरिसिओ दिवसो राई चउपोरिसी चेव ॥ १९७ ॥

पोरिसिमाणमनिययं दिवस-निसावुड्ढि-हाणिभावाओ । हीणं तिन्नि मुहुत्तद्धपंचमा माणमुक्कोसं ॥ १ ॥
वुड्ढी बावीसुत्तरसयभागो पइदिणं मुहुत्तस्स । एवं हाणी वि मया अयणदिणभागओ नेया ॥ २ ॥
उक्कोस-जहण्णाणं जदंतरालमिह पोरिसीणं तं । तेसीयसयविभत्तं वुड्ढिं हाणिं च जाणाहि ॥ ३ ॥

पंचण्हं वण्णाणं जो खलु वन्नेण कालओ वण्णो ।
सो होइ वण्णकालो वण्णिज्जइ जो व जं कालं ॥ १९८ ॥

पज्जायकालभेओ वण्णो कालो त्ति वण्णकालोऽयं । नणु एस नामउ च्चिय कालो नानियमतो तस्स ॥ १ ॥

साई सपज्जवसिओ चउभंगविभागभावणा एत्थं[2] ।

१ 'कालका' । २ 'एत्थ' ।





ओदइयाईयाणं तं जाणसु भावकालं तु ॥ १९९ ॥

साई संतोऽणंतो एवमणाई वि एस चउभंगो । ओदइयाईयाणं होइ जहाजोगमाउज्जो ॥ १ ॥
जो नारगाइभावो तह मिच्छत्तादओ वि भव्वाणं । ते चेवाभव्वाणं ओदइओ बितियवज्जोऽयं ॥ २ ॥
सम्मत्त-चरित्ताइं साई संतो य ओवसमिओऽयं । दाणाइलद्धिपणगं चरणं पि य खाइओ भावो ॥ ३ ॥
सम्मत्त-नाण-दंसण-सिद्धत्ताइं तु साइओऽणंतो । नाणं केवलवज्जं साई संतो खओवसमो ॥ ४ ॥
मइअन्नाणाईया भव्वा-ऽभव्वाण तइयचरमोऽयं । सव्वो पोग्गलधम्मो पढमो परिणामिओ होइ ॥ ५ ॥
भव्वत्तं पुण तइओ जीवा-ऽभव्वाइं चरमभंगो उ । भावाणमयं कालो भावावत्थाणओऽणण्णो ॥ ६ ॥

एत्थं पुण अहिगारो पमाणकालेण होइ नायव्वो ।
खेत्तम्मि कम्मि कालम्मि भासियं जिणवरिंदेण ? ॥ २०० ॥
वइसाहसुद्धइक्कारसीए पुव्वण्हदेसकालम्मि ।
महसेणवणुज्जाणे अणंतरं परंपरं सेसं ॥ २०१ ॥
खइयम्मि वट्टमाणस्स भगवओ निग्गयं जिणिंदस्स ।
भावे खओवसमियम्मि वट्टमाणेहि तं गहियं ॥ २०२ ॥

[2]किह पगयं भावेणं कहमहिगारो पमाणकालेणं ? । खाइयभावेऽरुहया पमाणकालेण जं भणियं ॥ १ ॥
अहवा पमाणकालो वि भावकालो त्ति जं च सेसा वि । किंचिम्मेत्तविसिट्ठा सव्वे च्चिय भावकाल त्ति ॥ २ ॥ [1]



१ 'णत्थो'। २ 'कह'।

पूया[1] परोवयाराभावे वि सिवाय जिणवराईणं । परिणामसुद्धिहेउं सुभकिरियाओ य बंभं व ॥३२६७॥

शिवाय मोक्षार्थं भवति पूजा, परोपकाराभावेऽपि पञ्चानामपि जिनवरादीनामिति साध्यम्, पूजकपरिणामशुद्धिहेतुत्वात्, तन्नमस्कारक्रियायाश्च ज्ञानादिगुणविषयबहुमानत्वेन निरवद्यत्वेन च शुभत्वात्, ब्रह्मचर्यादिवदिति ॥३२६७॥

अथ सुप्रसिद्धदृष्टान्तोपदर्शनेनापि जिनादिपूजा परोपकाराभावेऽपि शिवायेति समर्थयन्नाह—

परहिययगया[2] मेत्ती करेइ भूयाण कमुवयारं सा । अवयारं दूरत्थो कं वा हिंसाइसंकप्पो ? ॥३२६८॥

धम्माधम्मनिमित्तं तहावि तहवेह निरुवगारो वि । पूयासुहसंकप्पो धम्मनिमित्तं जिणाईणं ॥३२६९॥

परहृदयगता साधुहृदयस्थिता सर्वभूतेषु या मैत्री सा तेषां पृथिव्यादिभूतानां कमुपकारं करोति ? न कञ्चित्, तथा, कं वा देवदत्तादिहृदयगतो दूरस्थहरिणादिभूतग्रामविषयो दूरस्थहरिणाद्यपेक्षया दूरस्थो हिंसा स्तेयादिसंकल्पोऽपकारं कुर्यात् ?–न कञ्चित्; तथापि मैत्री हिंसादिसंकल्पश्च भूतानामुपकारा-ऽपकाराविरहेऽपि द्वावपि यथासंख्यं धर्मा-ऽधर्मनिमित्तं भवत एव। तथा चैवं चोक्तप्रकारेण निरुपकारोऽपि जिनादीनामुपकारमकुर्वन्नपि भूतानां साधुगतमैत्रीसंकल्पवाज्जिनादीनां पूजाशुभसंकल्पः पूजकस्य धर्मनिमित्तं भवतीति ॥ ३२६८ ॥ ३२६९ ॥

आह—ननु यथा दानं साध्वादीनामुपकारं करोति, नैवं जिनादीनां नमस्कारपूजा, तत् कथमसौ धर्मनिमित्तं भवति ? इत्याशङ्क्याह—

दाणे[3] वि पराणुग्गहलक्खणसंकप्पमेत्तओ चेव । फलमिह न उ पच्छा तक्कओवगारा-ऽवगाराओ ॥३२७०॥

इहरोवउत्तभत्ताजिन्नाइ वहम्मि दक्खिणेयस्स । दिन्तस्स वहावत्ती तेणादाणप्पसंगोऽयं ॥३२७१॥

---

१ पूजा परोपकाराभावेऽपि शिवाय जिनवरादीनाम् । परिणामशुद्धिहेतोः शुभक्रियायाश्च ब्रह्मवत् ॥ ३२६७ ॥

२ परहृदयगता मैत्री करोति भूतानां कमुपकारं सा । अपकारं दूरस्थः कं वा हिंसादिसंकल्पः ? ॥ ३२६८ ॥
धर्माधर्मनिमित्तं तथापि तथावेह निरुपकारोऽपि । पूजाशुभसंकल्पो धर्मनिमित्त जिनादीनाम् ॥ ३२६९ ॥

३ दानेऽपि परानुग्रहलक्षणसंकल्पमात्रतश्चैव । फलमिह न तु पश्चात् तत्कृतोपकारा-ऽपकाराभ्याम् ॥ ३२७० ॥
इतरथोपयुक्तभक्ताजीर्णादिना वधे दाक्षिणेयस्य । ददतो वधापत्तिस्तेनादानप्रसङ्गोऽयम् ॥ ३२७१ ॥

क्रियते तस्मिन्नित्यधिकरणसाधनः । तत्र कर्म-करणा-ऽधिकरणपक्षेषु द्रव्यं च तत् करणं चेति कर्मधारय एव समास इत्येतत् स्वयमेव द्रष्टव्यम् । 'संभवओ व किरिया मया करणं ति' अथवा, संभवतो यथासंभवमपरं षष्ठीतत्पुरुषादिकं समासमपेक्ष्य क्रियैव मतं करणम्, सर्वकारकनिष्पाद्यत्वाद् धात्वर्थस्येति । तमेव षष्ठीतत्पुरुषादिकं समासं दर्शयति-द्रव्यस्य करणं द्रव्यकरणम्, द्रव्येण वा करणं द्रव्यकरणम्, द्रव्ये वा करणं द्रव्यकरणमिति । अस्य च द्रव्यकरणस्यागमतो नोआगमतश्चेत्यादिविचारः सुकर एव तावद् यावज्ज्ञशरीरभव्यशरीर व्यतिरिक्तं द्रव्यकरणं द्विधा—संज्ञाकरणं, नोसंज्ञाकरणं च ॥ ३३०३ ॥

तत्र संज्ञाकरणमाह—

दव्वकरणं तु सण्णाकरणं पेलुकरणाइयं बहुहा । सण्णा नामं ति मई तं नो नामं जमभिहाणं ॥३३०४॥

जं वा तदत्थविगले कीरइ दव्वं तु दव्वपरिणामं । पेलुकरणाइ न हि तं तदत्थसुन्नं नवा सद्दो ॥३३०५॥

जइ न तदत्थविहीणं तो किं दव्वकरणं जओ तेणं । दव्वं कीरइ सण्णाकरणं ति य करणरूढीओ ॥३३०६॥

व्याख्या—द्रव्यकरणं तु यत् तावत् संज्ञाकरणं तत् पेलुकरणादिकं बहुभेदम् । तत्र लाटदेशे रूतसंबन्धिनी या 'पूणिका' इति प्रसिद्धा सैव महाराष्ट्रकविषये 'पेलुः' इत्युच्यते, तस्याः करणं निर्वर्तकं वंशादिमयी शलाका पेलुकरणम्, आदिशब्दात् कटकरणं पाइल्लकादि, तथा वार्ताकरणं बालानामधीयानानां वर्तनकम्, तथा काण्डकारणमुपकरणविशेषरूपं काण्डकरणं परिगृह्यते । एवमन्यदपि लोकप्रसिद्धं लोकसंज्ञाविशिष्टं करणं संज्ञाकरणं वेदितव्यम् । ननु संज्ञा नामैवोच्यते, ततश्च संज्ञाकरण-नामकरणयोर्विशेषो न प्राप्नोतीति परस्य मतिर्भवेत्, तदेतद् नो नैव युक्तम्, यस्मात् 'करणम्' इत्यक्षरत्रयात्मकमभिधानमात्रमेव नाम, न तु द्रव्यम्; अथवा यत् तदर्थविकले करणार्थविकले वस्तुनि संकेतमात्रतः 'करणम्' इति नाम क्रियते तद् नामकरणमुच्यते; संज्ञाकरणं तु पेलुकरणादिकं पूणिकावलनकशलाकादि द्रव्यम्; तेन तेन पूणिकाकरणरूपेण यद् द्रवणं गमनं तत्परिणामं तत्स्वभावमभिधीयते, हि यस्माद् न तत् पेलुकरणादि द्रव्यं तदर्थशून्यं करणशब्दार्थविकलम्, पूणिकादिकरणपरिणामान्वितत्वात्, नापि शब्दः करणाभिधानमात्ररूपः,

१ द्रव्यकरण तु संज्ञाकरणं पेलुकरणादिकं बहुधा । संज्ञा नामेति मतिस्तद् नो नाम यदभिधानम् ॥ ३३०४ ॥
यद् वा तदर्थविकले क्रियते द्रव्यं तु द्रव्यपरिणामम् । पेलुकरणादि न हि तत् तदर्थशून्य न वा शब्दः ॥ ३३०५ ॥
यदि न तदर्थविहीनं तत् किं द्रव्यकरणं यतस्तेन । द्रव्यं क्रियते संज्ञाकरणमिति च करणरूढेः ॥ ३३०६ ॥

व्याख्या—साध्वादिदानेपि परानुग्रहलक्षणसंकल्पमात्रत एवेह दातुः फलनिष्पत्तिः, न पुनः पश्चात् तत्कृतनाद् दानकृतनादुपकारादपकाराद् वेति, इतरथोपयुक्ते साध्वादिना भुक्ते योऽजीर्णादिदोषस्तेन दाक्षिणेयस्य दक्षिणा दानं तद्विषयभूतस्य साध्वादेर्वधे मरणे सति दातुर्वधापत्तिर्हिंसादिदोषसमापत्तिः । तेन च हिंसादिदोषेणादानप्रसङ्गोऽयं प्राप्नोति; अनिष्टं चैतत्, दातुर्विशुद्धपरिणामत्वात् । न हि तेन साध्वादिजिघांसया दानं दत्तम्, किन्तु तद्गुणबहुमानादिपरिणामेन । न चैवं विशुद्धपरिणामस्यापि पापसम्बन्धो घटते, अन्यथा मातुस्तन्यपानादजीर्णाद् बालस्य मरणे मातुस्तद्वधकृतपापप्रसङ्गादिति । तदेव प्राग् यदुक्तम्—'पूयाऽणुवगाराओऽपरिग्गहाओ' इत्यादि, तत्र 'पूजानुपकारात्' इत्ययं हेतुरपाकृतः ॥ ३२७० ॥ ३२७१ ॥

अथ 'अपरिग्रहात्' इत्यमुं निराचिकीर्षुराह—

[1]न परपरिग्गहउ च्चिय धम्मो किंतु परिणामसुद्धीओ । पूयाअपरिग्गहम्मि वि सा य धुवा तो तदारंभो ॥३२७२॥

न खलु पूजायाः परेण पूज्येन परिग्रहादेव धर्मः, किन्तु स्वपरिणामशुद्धितः, सा च परिणामशुद्धिः पूजायाः परेणापरिग्रहेऽपि ध्रुवा निश्चिता स्वसंवेदनसिद्धा समस्ति, ततस्तदारम्भो नमस्कारपूजारम्भ इति ॥३२७२॥

किञ्च, दानस्यापरिग्रहत्वमभ्युपगम्योक्तम्, वस्तुतस्तु तद् नास्त्येवेति दर्शयन्नाह—

[2]इह चोयगमणुमोयगमणिसेहगमेव संपयाणं ति । बहु-मुणि-पडिमाइ जओ न दाणमपरिग्गहं तेण ॥३२७३॥

इह यतो यस्मात् सत्कृत्य सम्यग् वा प्रदीयते यस्मै तत् संप्रदानम् । तच्च त्रिविधम्; तद्यथा-'दीयतां मह्यम्, बहुफलं भवतां भविष्यति' इत्यादिवचनप्रपञ्चेन किञ्चित् प्रेरकम्, यथा बटुर्ब्राह्मणः; अपरं त्वित्थमप्रेरकमपि दानस्य ग्रहणपरिभोगाभ्यामनुमोदकं भवति, यथा मुनिः साधुः; अन्यत्तु पुष्पाद्यनिषेधादनिषेधकम्, यथाऽर्हत्प्रतिमादि, सर्वत्र संप्रदानार्थस्य विद्यमानत्वात् । तेन तस्माद् न क्वचिद् दानमपरिग्रहमस्तीति ॥३२७३॥

अपि च, किमनया दानस्य परिग्रहापरिग्रहचिन्तया, कार्यस्यान्यथैव स्थितत्वात्; कथम् ? इत्याह—

---

१ न परपरिग्रहत एव धर्मः किन्तु परिणामशुद्धितः । पूजाऽपरिग्रहेऽपि सा च ध्रुवा ततस्तदारम्भः ॥३२७२॥
२ इह चोदकमनुमोदकमनिषेधकमेव संप्रदानमिति । बटु-मुनि-प्रतिमादि यतो न दानमपरिग्रहं तेन ॥३२७३॥

इति नामकरण-संज्ञाकरणयोर्भेद इति । आह—ननु यदि तदर्थविहीनं करणशब्दार्थरहितं संज्ञाकरणं न भवति, ततस्तर्हि किं कस्माद् द्रव्यकरणमेतत् ?–किमिति द्रव्यविचारे इदं पठ्यते ?—ननु भावकरणमेवास्त्वित्यभिप्रायः । उच्यते—यतस्तेन पेलुकरणादिना संज्ञाकरणेन द्रव्यं पूणिकादिकं क्रियते निर्वर्त्यते, अतो 'द्रव्यस्य करणं द्रव्यकरणम्' इति व्युत्पत्त्यर्थमाश्रित्य द्रव्यकरणमिदमुच्यते । संज्ञाकरण त्विदं करणरूढितो भण्यते, करणसंज्ञाया लोकेऽस्य रूढत्वादित्यर्थः ॥ ३३०४ ॥ ३३०५ ॥ ३३०६ ॥

अथ नोसंज्ञाकरणमाह—

[1]नोसन्नाकरणं पुण दव्वस्सारूढकरणसण्णं पि । तक्किरियाभावाओ पओगओ वीससाओ य ॥ ३३०७ ॥
साइयमणाइयं वा अजीवदव्वाण वीससाकरणं । धम्मा-ऽधम्म-नहाणं अणाइ संघायणाकरणं ॥ ३३०८ ॥

व्याख्या—नोसंज्ञाकरणं तु द्रव्यस्य प्रयोगतो विस्रसातश्च भवति । कथंभूतम् ? इत्याह—अरूढकरणसंज्ञमपि–अरूढा अप्रसिद्धा 'करणम्' इति संज्ञा यत्र तदरूढकरणसंज्ञमपि, अत एव करणसंज्ञायास्तत्राभावाद् नोसंज्ञाकरणमुच्यते–अरूढकरणसंज्ञं करणमिदमित्यर्थः । यदि करणसंज्ञा तत्र नास्ति तर्हि करणमपि कथमुच्यते ? इत्याह—'तक्किरियाभावाउ त्ति' सा चासौ करणलक्षणा क्रिया च तत्क्रिया तस्याः सद्भावादिति । इदमुक्तं भवति—यद्यपि शरीरा-ऽभ्रे-न्द्रधनुरादौ करणसंज्ञा नास्ति तथापि प्रयोग-विस्रसाजनितकरणक्रिया विद्यते, अतस्तदपेक्षमेतेषां करणत्वं न विरुध्यत इति । तत्राजीवद्रव्याणां विस्रसाकरणं साद्यनादि च भवति। तत्र धर्मा-ऽधर्मास्तिकाय नभसां संघातनाकरणं प्रदेशानां परस्परसंहत्यवस्थानरूपं करणमनादिरूपं विज्ञेयमिति ॥३३०७॥३३०८॥

अत्र परः प्राह—

[2]नणु करणमणाइयं च विरुद्धं भण्णए न दोसोऽयं । अन्नोन्नसमाहाणं जमिहं करणं न निव्वत्ती ॥ ३३०९ ॥

ननु कृतिर्निर्वृत्तिर्वस्तुनः करणमुच्यते, तच्च साद्येव भवति, घट-कट-शकटादिकरणवत् । ततश्च करणमनादि चेत्युच्यमानं विरु-

१ नोसंज्ञाकरण पुनर्द्रव्यस्यारूढकरणसंज्ञमपि । तत्क्रियाभावात् प्रयोगतो विस्रसातश्च ॥ ३३०७ ॥ सादिकमनादिकं वाऽजीवद्रव्याणां विस्रसाकरणम् । धर्मा-ऽधर्म-नभसामनादि संघातनाकरणम् ॥ ३३०८ ॥
२ ननु करणमनादिक च विरुद्ध भण्यते न दोषोऽयम् । अन्योन्यसमाधानं यदिह करणं न निर्वृत्तिः ॥ ३३०९ ॥

[1]दाणमपरिग्गहम्मि वि धम्मो नियपरिणामसुद्धीओ । अपरिग्गहे वि जइ सा को नाम परिग्गहग्गाहो ? ॥३२७४॥

किंच परहिययनियया मेत्ती भूएहिं संपरिग्गहिआ । हिंसासंकप्पो वा जं धम्माधम्महेउ त्ति ॥३२७५॥

एवं जिणाइपूया सद्धासंवेगसुद्धिहेऊओ । अपरिग्गहा वि धम्माय होइ सीलव्वयाइं व ॥३२७६॥

तिस्रोऽपि व्यक्तार्थाः ॥३२७४॥३२७५॥३२७६॥

अथ 'विमूर्तिभावात्' इत्यस्य हेतोर्निरासार्थमाह—

[2]जं चिय मुत्तिविउत्ता मुत्ता गुणरासओ विसेसेणं । तेणं चिय ते पुज्जा नाणाइतियं व मोक्खत्थं ॥३२७७॥

यस्मादेव मूर्तिवियुक्ता अमूर्ता मुक्ताः सिद्धास्तेनैव ते शरीरसंबन्धजनितसकलक्लेशविमुक्तत्वाद् गुणराशयः सन्तो विशेषेण मोक्षार्थं पूज्याः, ज्ञानादित्रिकवदिति ॥३२७७॥

अपि च,

[3]मुत्तिमओ वि न मुत्ती पूइज्जइ किन्तु जे गुणा तस्स । ते मुत्तिविउत्त च्चिय नणु सिद्धगुणा विसेसेणं ॥३२७८॥

मूर्तिमतोऽपि संबन्धिनी मूर्तिर्न पूज्यते, किन्तु गुणाः, ते च मूर्तिवियुक्ता एवामूर्ता एव । ततश्च 'न पूज्याः सिद्धाः, अमूर्तत्वात्, नभोवत्' इति त्वदुक्तप्रमाणे विरुद्धाव्यभिचारित्वाद् विरुद्धो हेतुः, तथा ह्येतदपि शक्यते वक्तुम्–पूज्याः सिद्धाः, अमूर्तत्वात्, मूर्तसाधुसंबन्ध्यमूर्तज्ञानादिगुणवदिति । अथ सिद्धगुणा अमूर्ता न भवन्तीति चेदित्याह— ननु सिद्धगुणा विशेषेणैवामूर्ताः; मूर्तसाधुगुणा हि ज्ञानादयो मूर्तादव्यतिरिक्तत्वात् कथञ्चिद् मूर्ता अपि शक्यन्ते वक्तुम्; सिद्धगुणास्तु नैवम्, ततो विशेषेण तेऽमूर्ता एव; इति न तेषां पूजाविरोध इति ॥ ३२७८ ॥

---

१ दानमपरिग्रहेऽपि धर्मो निजकपरिणामशुद्धेः । अपरिग्रहेऽपि यदि सा को नाम परिग्रहग्राहः ? ॥३२७४॥
किञ्च परहृदयनियता मैत्री भूतैः संपरिगृहीता । हिंसासंकल्पो वा यद् धर्माऽधर्महेतू इति ॥३२७५॥
एवं जिनादिपूजा श्रद्धासंवेगशुद्धिहेतुभ्यः । अपरिग्रहापि धर्माय भवति शीलव्रतादिरिव ॥३२७६॥

२ यदेव मूर्तिवियुक्ता मुक्ता गुणराशयो विशेषेण । तेनैव ते पूज्या ज्ञानादित्रिकमिव मोक्षार्थम् ॥३२७७॥

३ मूर्तिमतोऽपि न मूर्तिः पूज्यते किन्तु ये गुणास्तस्य । ते मूर्तिवियुक्ता एव ननु सिद्धगुणा विशेषेण ॥ ३२७८ ॥

द्धमेव, 'माता मे वन्ध्या' इत्यादिवचनवदिति । भण्यतेऽत्रोत्तरम्-नायं दोषः, यस्माद् धर्मास्तिकायादिप्रदेशानामन्योन्यं परस्परं यत् सम्यगाधानं समाधानमनादिकालात् संहत्यावस्थानम्, धातूनामनेकार्थत्वात्, तदेवेहाभिप्रेतं करणम्, न पुनरपूर्वा निर्वृत्तिः । धर्मास्तिकायादिप्रदेशराशेश्च यत् संहत्यावस्थानं तस्यानादित्वं न किञ्चिद् विरुध्यते, अनादिकालीनत्वादस्येति ॥ ३३०९ ॥

अथवा, धर्मा-ऽधर्म-नभसां सादिकमपि करणं भवतीति दर्शयन्नाह—

[1]अहवा परपच्चयाओ संजोगाइ करणं नभाईणं । साइयमुवयाराओ पज्जायादेसओ वावि ॥ ३३१० ॥

अथवा, उपचाराद् नभःप्रभृतीनां करणं सादिकं विज्ञेयम् । उपचारोऽपि कुतः ? इत्याह-परप्रत्ययात्, घटादिवस्तून्याश्रित्येत्यर्थः । कथंभूतं करणम् ? संयोगादि, आदिशब्दाद् विभागादिपरिग्रहः । इदमुक्तं भवति—आकाशादीनां घटादिसंयोगादयः सादयः सपर्यवसानाश्च । ततो यत् तेषां घटादिभिः सह संयोगादिकरणं तत् सादिकं भवत्येव । अथवा, पर्यायरूपतया सर्वमपि वस्तु जैनानां सादि सपर्यवसितमेव भवति । अतः पर्यायादेशतः पर्यायानाश्रित्य नभःप्रभृतीनामपि करणं सादिकं बोद्धव्यमिति । तदेवमरूपिणामजीवद्रव्याणां साद्यनादि च विस्रसाकरणमुक्तम् ॥ ३३१० ॥

अथ रूप्यजीवद्रव्याण्याश्रित्याह—

[2]चक्खुसमचक्खुसं चिय साईअं रूविवीससाकरणं । अब्भाणुप्पभिईणं बहुहा संघाय-भेयकयं ॥ ३३११ ॥

इहाभ्रे-न्द्रधनुः-परमाणुप्रभृतीनां रूप्यजीवानां विस्रसाकरणं चक्षुर्भ्यां दृश्यत इति चाक्षुपमभ्रादीनाम्, चक्षुर्गोचरातीतमचाक्षुषं परमाणु-द्व्यणुकादीनाम् । एतद् द्विविधमपि संघात-भेदकृतं बहुधा बहुभेदं सादिकं भवति । अभ्रादीनां केचित् पुद्गलाः संहन्यन्ते, केचित्तु भिद्यन्ते, ततस्तेषां नानारूपता भवति । एवं द्व्यणुकादिस्कन्धेष्वपि वाच्यम्, परमाणोस्तु स्कन्धाद् भेदकृतमेव करणम्, "भेदादणुः" (तत्त्वा० ५, २७) इति वचनादिति । करणं चेह कृतिः स्वभावत एव निर्वृत्तिर्गृह्यते, न पुनः क्रियत इति करणमिति । उक्तं विस्रसाकरणम् ॥ ३३११ ॥

---

१ अथवा परप्रत्ययात् संयोगादि करणं नभआदीनाम् । सादिकमुपचारात् पर्यायादेशतो वापि ॥ ३३१० ॥
२ चाक्षुषमचाक्षुषमेव सादिकं रूपिविस्रसाकरणम् । अभ्रा-ऽणुप्रभृतीनां बहुधा संघात-भेदकृतम् ॥ ३३११ ॥

अथ परमतमाक्षिप्य परिहरन्नाह—

[1]अहव मई मुत्तिमओ गुणपूया होइ मुत्तिपूयाओ । तग्गुणसंबंधाओ सिद्धगुणाणं तु सा नत्थि ॥ ३२७९ ॥

पूया मुत्ति-गुणाणं संबंधे फलमितीह को हेऊ ? । अन्नो परिणामाओ तस्स य को केण संबंधो ? ॥ ३२८० ॥

नियत्थो परिणामो वज्झत्थालंबणनिमित्तमित्तागो । देइ फलं सव्वो च्चिय सिद्धगुणालंबणो चेवं ॥ ३२८१ ॥

सुगमाः, नवरं 'पूयेत्यादि' परिहारवचनम्, पूजा च मूर्तिश्च गुणाश्च तेषां पूजा-मूर्ति-गुणानां त्रयाणामपि, संबन्ध एवाभिमतं फलमवाप्यत इतीह स्वगतविशुद्धपरिणामादन्यः को हेतुः ? न कोऽपीति । तस्य च स्वगतपरिणामस्य कः संबन्धः केनचिद् बाह्येन ? न कश्चिदिति; केवलं निजहृदयस्थशुभपरिणामो यथा बाह्यार्हदाद्यालम्बननिमित्तमात्रकः सर्वोऽपि ददात्यभिमतफलमेवममूर्तसिद्धगुणालम्बनोऽपीति ॥ ३२७९ ॥ ३२८० ॥ ३२८१ ॥

अथ यदुक्तम् –'दुराइभावओ वा विफला सिद्धाइपूया' इति, तत्र 'दूराभावात्' इत्यस्य हेतोर्निराकरणार्थमाह—

[2]जह दूरत्थे वि धिई बंधुम्मि सरीरपुट्ठिबलहेऊ । तणुदोब्बलाइफलो कत्थइ सोगाइसंकप्पो ॥ ३२८२ ॥

तह परिणामो सुद्धो धम्मफलो हि दूरसंथे वि । अविसुद्धो पावफलो दूरासन्नं ति को भेओ ? ॥ ३२८३ ॥

अहवायसभावोऽयं परिणामो तेण सव्वमेवेह । दूरमहालंबणओ तस्सासन्नं तओ सव्वं ॥ ३२८४ ॥

---

१ अथवा मतिर्मूर्तिमतो गुणपूजा भवति मूर्तिपूजातः । तद्गुणसबन्धात् सिद्धगुणानां तु सा नास्ति ॥ ३२७९ ॥
पूजा-मूर्ति-गुणानां संबन्धे फलमितीह को हेतुः ? । अन्यः परिणामात् तस्य च कः केन संबन्धः ? ॥ ३२८० ॥
निजार्थः परिणामो बाह्यार्थालम्बननिमित्तमात्रकः । ददाति फलं सर्व एव सिद्धगुणालम्बनश्चैवम् ॥ ३२८१ ॥

२ यथा दूरार्थेऽपि धृतिर्बन्धौ शरीरपुष्टि-बलहेतुः । तनुदौर्बल्यादिफलः कचित् शोकादिसंकल्पः ॥ ३२८२ ॥
तथा परिणामः शुद्धो धर्मफलो हि दूरसस्थेऽपि । अविशुद्धः पापफलो दूरासन्नमिति को भेदः ? ॥ ३२८३ ॥
अथवाऽऽत्मस्वभावोऽयं परिणामस्तेन सर्वमेवेह । दूरमथालम्बनतस्तस्यासन्नं ततः सर्वम् ॥ ३२८४ ॥

अथ प्रयोगकरणमाह—

होई प्पओगो जीवव्वावारो तेण जं विणिम्माणं । सज्जीवमजीवं वा पओगकरणं तयं बहुहा ॥ ३३१२ ॥
सज्जीवं मूलुत्तरकरणं मूलकरणं जमाईयं । पंचण्हं देहाणं उत्तरमाइत्तियस्सेव ॥ ३३१३ ॥

व्याख्या—प्रयोजनं प्रयोगो भवति । कः ? इत्याह—जीवव्यापारः, तेन यद् विनिर्माणं विनिर्मापनं तत् प्रयोगकरणं भण्यते, तच्च सज्जीवमजीवं च बहुधा भवति । इह च सन् विद्यमानो जीवो यत्र तत् सज्जीवं प्रयोगकरणं पञ्चानामौदारिकादिशरीराणां द्रष्टव्यम् । इदं च मूलकरणो-त्तरकरणभेदाद् द्विविधम् । अत एवाह-'सज्जीवं मूलो-त्तरकरणं ति' सज्जीवं प्रयोगकरणं द्विभेदम्; तद्यथा—मूलकरणम्, उत्तरकरणं च । तत्र मूलकरण 'जमाईयं ति' पञ्चानामपि शरीराणां यदाद्यं पुद्गलसंघातकरणं तद् मूलकरणं वेदितव्यम् । 'उत्तरमाइतियस्सेव त्ति' उत्तरकरणं त्वादीत्रिकस्यैव, आद्यानामेवौदारिक-वैक्रिया-ऽऽहारकशरीराणां भवति, न तु तैजस-कार्मणयोरित्यर्थः ॥ ३३१२ ॥ ३३१३ ॥

नन्वस्याद्यशरीरत्रयस्य शिर-उरःप्रभृतीन्यङ्गानि, कर-चरणाङ्गुल्यादीनि चोपाङ्गानि भवन्ति, तत्रापि कियदिह मूलकरणम्, कियच्चोत्तरकरणम् ? इति विभागेन कथ्यतामित्यत्राह—

मूलकरणं[2] सिरो-रु पिट्ठी-बाहो-दरो-रुनिम्माणं । उत्तरमवसेसाणं करणं केसाइकम्मं व ॥ ३३१४ ॥

इहौदारिकादिशरीरत्रये यच्छिर-उरः-पृष्ठि-बाहुद्वयो दरो रुद्वयलक्षणानामष्टानामङ्गानां निर्माणं निष्पादनं तत् मूलकरणम्, अवशेषाणां तु कर-चरणाङ्गुल्यादीनामुपाङ्गानां यद् निर्माणं तदुत्तरकरणम्, तथौदारिक-वैक्रियशरीरयोः केश-नख-दशनादिसंस्कारूपं यत् केशादिकर्म तदपि तयोरुत्तरकरणमिति ॥ ३३१४ ॥

अपरमप्यौदारिक-वैक्रियशरीरयोरुत्तरकरणं दर्शयन्नाह—

१ भवति प्रयोगो जीवव्यापारस्तेन यद् विनिर्माणम् । सज्जीवमजीवं वा प्रयोगकरणं तद् बहुधा ॥ ३३१२ ॥
सज्जीवं मूलोत्तरकरण मूलकरणं यदाद्यम् । पञ्चानां देहानामुत्तरमादित्रिकस्यैव ॥ ३३१३ ॥
२ मूलकरण शिर-उरः-पृष्ठि-बाहू-दरो-रुनिर्माणम् । उत्तरमवशेषाणां करणं केशादिकर्मेव ॥ ३३१४ ॥

व्याख्या—यथा दूरस्थेऽपि बन्धौ बान्धवजने सुखिनि श्रुते तत्सुखवार्तासंकल्पजनिता धृतिः कस्यापि तद्बान्धवस्य दूरस्थस्यापि शरीरपुष्टि बलहेतुर्भवति, क्वचित्तु प्रस्तावे तस्मिन्नपि दुःखिनि श्रुते शोकादिसंकल्पस्तनुदौर्बल्यादिफलः संपद्यते, तथा तेनैव प्रकारेण दूरसंस्थेऽपि सिद्धाद्यालम्बने तद्गुणबहुमानरूपत्वात् शुद्धपरिणामः सद्धर्मफलोऽविशुद्धस्तु पापफलः संजायते। अतो दूरस्थमासन्नं वा सिद्धाद्यालम्बनामिति को भेदः? केयं निष्फला तद्भेदचिन्ता? इत्यर्थः। अथवा, आत्मस्वभावोऽयं तद्गुणबहुमानलक्षणशुभपरिणामस्तेन तस्मादिह यदनात्मस्वभावं किमपि वस्तु तत् सर्वमप्यस्य विपरीतरूपत्वाद् दूरस्थमेव। अथालम्बनत आलम्बनभावमाश्रित्य चिन्त्यते, ततस्तर्हि सर्वमप्यर्हत्-सिद्धादिकं वस्तु तस्य यथोक्तात्मपरिणामस्यासन्नमेवेति। अतः का सिद्धेषु दूरस्थता? इति ॥ ३२८२॥ ३२८३ ॥ ३२८४ ॥

अत्राक्षेप-परिहारावाह—

जइ सपरिणामउ च्चिय धम्मोऽधम्मो व्व किंत्थ बज्झेण। जं बज्झालंबणओ सो होइ तओ तदत्थं तं ॥३२८५॥

ननु यदि स्वगतपरिणामादेव धर्मोऽधर्मश्च भवति, तर्हि किमत्र बाह्येनार्हत् सिद्धाद्यालम्बनेनापेक्षितेन, स्वपरिणामत एव कार्यसिद्धेस्तदपेक्षाया निष्फलत्वात्? इति। सूरिराह—यस्मात् सोऽपि परिणामो बाह्यालम्बनत एव भवति, नान्यथा, ततस्तदर्थं स्वपरिणामोत्पादनार्थं तद् बाह्यालम्बनमपेक्ष्यत इति ॥ ३२८५ ॥

एतदेव भावयति—

परिणामो बज्झालंबणो सया चेव चित्तधम्मो त्ति। विण्णाणं पिव तम्हा सुहबज्झालंबणपयत्तो ॥ ३२८६ ॥

शुभोऽशुभो वा परिणामः सदैव बाह्यालम्बनत एव प्रवर्तते, चित्तधर्मत्वात्, विज्ञानवदिति, यथा विज्ञानं बाह्यं नील-पीतादिकं वस्तु विना न प्रवर्तत एवं परिणामोऽपीति भावः। तस्मादिह मोक्षाधिकारे शुभबाह्यालम्बनप्रयत्नो मोक्षार्थिनामिति ॥ ३२८६ ॥

अत्र परः प्राह—

१ यदि स्वपरिणामत एव धर्मोऽधर्म इव किमत्र बाह्येन?। यद् बाह्यालम्बनतः स भवति ततस्तदर्थं तत् ॥ ३२८५ ॥
२ परिणामो बाह्यालम्बनः सदैव चित्तधर्म इति। विज्ञानमिव तस्मात् शुभबाह्यालम्बनप्रयत्नः ॥ ३२८६ ॥

**संठवणमणेगविहं दुण्हं पढमस्स भेसएहिं पि । वण्णाईणं करणं परिकम्मं तइयए नत्थि ॥ ३३१५ ॥**

विनष्टकरणाद्यवयवसंधानादिरूपमौदारिके, केशाद्युपरचनरूपं तु संस्थापन वैक्रिय इत्येवं द्वयोराद्यशरीरयोः संस्थापनं संस्करणमनेकाविधं भवति, प्रथमस्य पुनरौदारिकशरीरस्यान्योऽपि विशेषः । कः ? इत्याह—भेषजैरपि लक्षपाकतैलादिभिर्यद् वर्णादीनां विशेषोपादानं तत् तस्योत्तरकरणम् । तृतीये त्वाहारकशरीरे केश-नख दन्तादिपरिकर्म नास्त्येव, स्वरूपेणैव विशिष्टत्वात्, मयोजनाभावाच्चेति ॥३३१५॥

अथवा, प्रकारान्तरेणापि त्रिविधं जीवप्रयोगकरणं विज्ञेयम् । कथम् ? इत्याह—

**संघायण परिसाडणमुभयं करणमहवा सरीराणं । आदाणमुयणसमओ तदंतरालं च कालो सिं ॥ ३३१६ ॥**

अथवा, औदारिकादिशरीराणां संघातनं, परिशाटनं, संघात-परिशाटोभयलक्षणमुभयं चेत्येवं त्रिविधं करणं विज्ञेयम् । तत्र पूर्वभविकमौदारिकादिशरीरं परित्यज्याग्रेतनभवे पुनरपि तद्गतौ यत् पुद्गलानां संघातन संग्रहणं स संघातः, यस्तु तदेवौदारिकशरीरं परित्यजतश्चरमसमये सर्वथा तत्पुद्गलानां परित्यागः 'शट रुजा-विशरण गत्य-ऽवसादनेषु' इति धातोः पुद्गलानां परिशाटनमवसादनं परिशाटः । संघात-परिशाटसमययोश्चापान्तरालसमयेषु सर्वेष्वपि संघात-परिशाटोभयं द्रष्टव्यम्, सर्वत्र पूर्वपरिगृहीतपुद्गलानां मोचनात्, अन्येषां च ग्रहणादिति । तत्राद्यशरीरत्रयस्य संघात-परिशाटो-भयलक्षणं त्रिविधमपि करणं भवति, तैजस-कार्मणयोस्तु संघातो न भवत्येव, परित्यक्तयोस्तयोः पुनर्ग्रहणाभावादिति । अथ संघातादीनां कालपरिमाणमभिधित्सुराह—'सिं ति' एतेषां संघात-परिशाटोभयानां कालोऽभिधीयते । कियान् ? इत्याह—'आयाणमुयणसमउ त्ति' आदानमौदारिकादिशरीरपुद्गलानां प्रथमं ग्रहणं संघातनं संघात इत्यर्थः, अयमेकमेव समयं भवति, ततः परं संघात-परिशाटोभयप्रवृत्तेः, मोचनं पुद्गलानां परिशाटनं परिशाटः सोऽप्येकसमयमेव भवति, तदन्तरालं संघातपरिशाटोभयलक्षणमिह गृह्यते, तस्य कालो 'वक्ष्यते' इति शेषः । चशब्दात् 'संघातादीनामन्तरालकालश्च वक्ष्यते' इति दृश्यमिति ॥ ३३१६ ॥

---

१ संस्थापनमनेकाविधं द्वयोः प्रथमस्य भेषजैरपि । वर्णादीनां करणं परिकर्म तृतीयके नास्ति ॥ ३३१५ ॥

२ संघातनं परिशाटनमुभय करणमथवा शरीराणाम् । आदान-मोचनसमयस्तदन्तरालं च काल एषाम् ॥ ३३१६ ॥

जंत्तो तत्तो व सुभो होइ किमालंबणप्पभेएण । जह नाणालंबणओ विवरीयाओ वि मो न तहा ॥ ३२८७ ॥

नन्नु यतस्ततो वाऽऽलम्बनात् शुभपरिणामो भवतु, किमिह शुभाशुभभेदत आलम्बनप्रभेदेन-किमिति शुभालम्बनादेव शुभः परिणाम इष्यते ? इति भावः । गुरुराह—'जह नाणालंबणउ त्ति' यथाऽनालम्बन आलम्बनरहितः शुभपरिणामो न प्रवर्तते तथा विपरीतादप्यशुभालम्बनादसौ न भवति, अन्यथा नीलादेरपि शुक्लादिज्ञानोत्पत्तिप्रसङ्गादिति ॥ ३२८७ ॥

यदि विपरीतालम्बनाद् न शुभः परिणामः, तर्हि कुतोऽसौ भवति ? इत्याह—

[2]किंतु सुभालंबणओ पाएण सुभो वि धम्मओ इयरो । जं होइ तं पयत्तो सुभासुभादाणवोसग्गो ॥३२८८॥

सुगमा, नवरं शुभस्यालम्बनस्यादाने, अशुभस्य तु तस्य व्युत्सर्गे शुभपरिणामार्थिना प्रयत्नः कर्तव्य इति ॥ ३२८८ ॥

प्रायोग्रहणस्य व्यवच्छेद्यमाह—

[3]अन्नाणिणो मुणिम्मि वि न सुभो दिट्ठो सुभो य निस्सीयले। जइ परिणामाउ च्चिय फलमिह किं पत्तचिंताए ? ॥३२८९॥

अज्ञानिनोऽभव्यस्य दूरभव्यस्य वा शुभालम्बनरूपे मुनावपि न शुभपरिणामो दृष्टः, शुभश्चासौ तस्य निःशीले नास्तिकादौ दृष्टः, ततोऽनन्तरगाथायां 'सुभालंबणओ पाएण सुभो वि' इत्यत्र 'प्रायेण' इत्युक्तमिति भावः । प्रेरकः प्राह—यद्येवम्, तर्ह्यन्यत् प्रेर्यमापन्नम्, परिणामादेव भवद्भिस्तावत् फलमिष्यते, ततः किं पात्राऽपात्रचिन्तया ? इति । अयमत्र भावार्थः—यदि निःशीलेऽपि पात्रे शुभपरिणामो दृष्टः, 'शुभपरिणामाच्च शुभं फलं भवति' इति भवद्भिरपि प्रागसकृत् समर्थितम्, ततः किं सुशील-निःशीलचिन्तया, निःशीलेऽपि पात्रे शुभपरिणामदर्शनात्, तस्माच्च शुभफलभावात् ? इति ॥ ३२८९ ॥

अत्रोत्तरमाह—

[4]सुहपरिणामनिमित्तं होज्ज सुहं जइ तओ सुहो होज्ज । उम्मत्तस्स व न ओ सो सुहो विवज्जासभावाओ ॥३२९०॥

१ यतस्ततो वा शुभो भवति किमालम्बनप्रभेदेन ? । यथा ज्ञानालम्बनतो विपरीतादपि स न तथा ॥ ३२८७ ॥

२ किन्तु शुभालम्बनतः प्रायेण शुभोऽपि धर्मत इतरः । यद् भवति तत् प्रयत्नः शुभाशुभादानव्युत्सर्गे ॥ ३२८८ ॥

३ अज्ञानिनो मुनावपि न शुभो दृष्टः शुभश्च निःशीले । यदि परिणामादेव फलमिह किं पात्रचिन्तया ? ॥ ३२८९ ॥

४ शुभपरिणामनिमित्तं भवतु शुभं यदि ततः शुभो भवेत् । उन्मत्तस्येव न तु स शुभो विपर्यासभावात् ॥ ३२९० ॥

तत्रौदारिकशरीरस्य संघात-परिशाटोभयकालमाह—

[1]खुड्डागभवग्गहणं तिसमयहीणं जहन्नमुभयस्स । पल्लतियं समओणं उक्कोसोंतरालकालोऽयं ॥ ३३१७ ॥

अत्र संघात-परिशाटोभयस्य जघन्यकाले प्रतिपाद्ये विग्रहेणोत्पादनीयः; अत एवाह—

[2]दो विग्गहम्मि समया समओ संघायणाइ तेहूणं । खुड्डागभवग्गहणं सव्वजहण्णाट्ठिईकालो ॥ ३३१८ ॥

इह यत् पञ्चाशदधिकावलिकाशतद्वयमानमायुषो जघन्यस्थितिरूप क्षुल्लकभवग्रहणमुच्यते, तथा च वृद्धोक्तम्—

"[3]दो य सया छप्पन्ना आवलियाण तु खुड्डभवमाणं । जियराग दोस-मोहेहिं जिणवरेहिं विणिद्दिट्ठं ॥ १ ॥"

इदं च क्षुल्लकभवग्रहणं द्वाभ्यां विग्रहसमयाभ्यामेकेन संघातसमयेन न्यूनं संघात-परिशाटलक्षणस्योभयस्य जघन्यं स्थितिमानं जघन्यतोऽपि संघात-परिशाटोभयमेतावन्तं कालं भवतीत्यर्थः ।

अत्राह कश्चित्—ननु

"[4]विदिसाओ दिसिं पढमे बीए पविसेइ लोगमज्झम्मि । तइए उप्पिं धावइ नाडीवाहिं जायइ चउत्थे ॥१॥"

इति वचनाद् यदाऽधस्त्रसनाड्या बहिर्देशादूर्ध्वलोके त्रसनाड्या बहिरेव निगोदादिजीवश्चतुर्भिः समयैरुत्पद्यते, तदा विग्रहगतावपान्तरालगतावाद्यास्त्रयः समयाः, चतुर्थस्तु संघातसमयः, इत्येवं चतुर्भिरपि समयैर्न्यूनं क्षुल्लकभवग्रहणं संघात-परिशाटोभयस्य जघन्यकालः प्राप्यते, तत् किमितीह त्रिभिरेव समयैर्न्यूनं क्षुल्लकभवग्रहणं जघन्यस्तत्काल उक्तः ? । सत्यम्, किन्त्वस्यां चतुःसमयायां विग्रहगतौ य आद्यसमयः स इह परभवप्रथमसमयो न विवक्षितः, किन्तु पूर्वभवचरमसमय एव, पूर्वभवशरीरस्य तत्र मुच्यमानत्वात्, मुच्यमानं च मुक्तमिति व्यवहारनयमताश्रयणादिति । अथवा, त्रसजीवसंबन्धिन्येवेहापान्तरालगतिर्विवक्षिता, त्रसजीवाश्चोत्कृष्टतोऽपि तृतीयसमये उत्पत्तिस्थानं प्राप्नुवन्तीत्यदोष इति तावद् वयमवगच्छामः । तत्त्वं तु बहुश्रुता एव विदन्तीति । इह चैतानि क्षुल्लकभव-

१ क्षुल्लकभवग्रहणं त्रिसमयहीनं जघन्यमुभयस्य । पल्यत्रिकं समयोनं उत्कृष्टोऽन्तरालकालोऽयम् ॥ ३३१७ ॥
२ द्वौ विग्रहे समयौ समयः संघातनादि तैरूनम् । क्षुल्लकभवग्रहणं सर्वजघन्यस्थितिकाल ॥ ३३१८ ॥
३ द्वे च शते षट्पञ्चाशदावलिकाना तु क्षुल्लभवग्रहणम् । जितराग-द्वेष-मोहैर्जिनवरैर्विनिर्दिष्टम् ॥ १ ॥
४ विदिशो दिशं प्रथमे द्वितीये प्रविशति लोकमध्ये । तृतीये उपरि धावति नाडीबहिर्जायते चतुर्थे ॥ १ ॥

नन्नु तस्य मिथ्यादृष्टेः शुभपरिणामनिमित्तं शुभपरिणामहेतुकं शुभं फलं स्वर्गादिकं भवेत्, को वै न मन्यते, यदि तस्यादित एव तकोऽसौ निःशीलपात्रविषयपरिणामः शुभो भवेत् ?। नचोन्मत्तस्येव तस्यासौ शुभः। कुतः ? इत्याह—विपर्यासभावात्—निःशीलेऽपि सुशीलाध्यवसायादिति कुतस्तस्य फलं शुभम् ? इति। यदप्यस्माभिरुक्तम्–'सुभो य निस्सीले' इति, तदपि तदपेक्षयैव। स हि मिथ्यादृष्टिस्तं शुभपरिणामं मन्यते, तत्त्ववेदिनस्तु तस्य शुभत्वं नेच्छन्त्येव, विपर्यासादिति ॥ ३२९० ॥

पुनरपि परः प्राह—

नणु[1] मुणिवेसच्छन्ने निस्सीले वि मुणिबुद्धीए देंतो। पावइ मुणिदाणफलं तह किं न कुलिंगदायावि ॥३२९१॥

ननु मुनेर्वेषो मुनिवेषस्तेन च्छन्नोऽविज्ञातो य उदायिनृपमारकादिस्तस्मिन् निःशीलेऽपि मुनिबुद्ध्या दानं ददद् दाता मुनिदानफलं स्वर्गादिकं प्राप्नोति, इत्येतद् भवतामपि तावत् संमतम्; तथा तेनैव प्रकारेण कुत्सितलिङ्गी कुलिङ्गी सरजस्कादिस्तस्मै दाता कुलिङ्गदाता, सोऽपि किं न मुनिफलं प्राप्नोति, मुनिबुद्धेस्तस्यापि तत्र सद्भावात् ? इति ॥ ३२९१ ॥

गुरुराह—

जं[2] थाणं मुणिलिंगं गुणाण सुन्नं पि तेण पडिमव्व। पुज्जं थाणमईए वि कुलिंगं सव्वहाऽजुत्तं ॥ ३२९२ ॥

यस्माद् मुनिलिङ्गं ज्ञानादिगुणानां स्थानमाश्रयः, तेन तस्मात् कस्यापि मायाविनः संबन्धि तत् शून्यमपि गुणैरविज्ञातं पाषाणादिनिर्मिताऽर्हत्प्रतिमावत् स्थानमत्यापि पूज्यम्। कुलिङ्गं सर्वथा पूजयितुं न युक्तम्, ज्ञानादिगुणानां सर्वथैवानाश्रयत्वादिति ॥३२९२॥

पुनरपि परः प्राह—

नणु[3] केवलं कुलिंगे वि होइ तं भावलिंगओ न तओ। मुणिलिंगमंगभावं जाइ जओ तेण तं पुज्जं ॥३२९३॥

ननु केवलं केवलज्ञानं कुलिङ्गेऽपि वर्तमानानामन्यतीर्थिकानां भवतीत्यागमे श्रूयते, तत् किमिति स्थानबुद्ध्या तत् पूज्यं नेष्यते ? गुरुराह—तत् केवलज्ञानं भावलिङ्गतो भवति, न पुनस्ततः कुलिङ्गात्, तस्य केवलज्ञानानङ्गत्वात्। मुनिलिङ्गं पुनर्यस्मादङ्गभावं केवल-

१ ननु मुनिवेषच्छन्ने निःशीलेऽपि मुनिबुद्ध्या ददत्। प्राप्नोति मुनिदानफलं तथा किं न कुलिङ्गदातापि ? ॥ ३२९१ ॥

२ यत् स्थानं मुनिलिङ्गं गुणानां शून्यमपि तेन प्रतिमेव। पूज्यं स्थानमत्यापि कुलिङ्गं सर्वथाऽयुक्तम् ॥ ३२९२ ॥

३ ननु केवलं कुलिङ्गेऽपि भवति तद् भावलिङ्गतो न ततः। मुनिलिङ्गमङ्गभावं याति यतस्तेन तत् पूज्यम् ॥ ३२९३ ॥

ग्रहणान्येकस्मिन्नुच्छ्वासनिःश्वासे सातिरेकाणि सप्तदश मन्तव्यानि; यत उक्तम्-"खुड्डागभवग्गहणा सत्तरस हवंति आणुपाणम्मि" इत्यादि ॥ ३३१८ ॥

अथ 'पल्लतियं' इत्याद्युत्कृष्टसंघात-परिशाटोभयकालभावनामाह—

उक्कोसो[2] समऊणो जो सो संघायणासमयहीणो । किह न दुसमयविहीणो साडणसमएऽवणीयम्मि ॥३३१९॥

इह यो देवकुर्वादिषूत्पन्न औदारिकशरीरस्य प्रथमसमये संघातं कृत्वा त्रीणि च पल्योपमानि उत्कृष्टमायुः परिपाल्य म्रियते, तस्य संघातसमयन्यूनानि त्रीणि पल्योपमान्युत्कृष्टः संघात-परिशाटोभयकालः प्राप्यते । अत्राह—ननु कथमेकेनैव समयेन न्यूनोऽयमभिधीयते, यावता यथा शरीरग्रहणप्रथमसमये सर्वसंघातस्तथा तन्मोक्षसमये सर्वपरिशाटोऽपि भवति । ततस्तस्मिन् परिशाटसमयेऽपनीते समयद्वयहीन एवासौ प्राप्नोतीति ॥ ३३१९ ॥

अत्र प्रतिविधित्सुराह—

भण्णइ[3] भवचरिमम्मि वि समए संघायसाडणे चेव । परभवपढमे साडणमओ तदूणो न कालो त्ति ॥३३२०॥

भण्यतेऽत्रोत्तरम्—भवस्य चरमेऽपि समये संघात-परिशाटोभयमेव प्रवर्तते । यत्तु शरीरपुद्गलानां केवलं परिशाटनमेव, तत् परभवस्य प्रथमसमय एव मन्तव्यम्, 'परभवपढमे साडणं' इति निश्चयनयमताश्रयणात् । अतस्तेन परिशाटसमयेन न्यूनः संघातपरिशाटोभयकालो न भवतीति ॥३३२०॥

अत्र व्यवहारनयवादी प्रेरयति—

जइ[4] परपढमे साडो निव्विग्गहओ य तम्मि संघाओ । नणु सव्वसाड-संघायणाओ समए विरुद्धाओ ॥३३२१॥

१ क्षुल्लकभवग्रहणानि सप्तदश भवन्ति प्राणापानयोः ( श्वासोच्छ्वासे )
२ उत्कृष्टः समयोनो यः स सघातनासमयहीनः । कथं न द्विसमयविहीनः शाटनसमयेऽपनीते ? ॥ ३३१९ ॥
३ भण्यते भवचरमेऽपि समये संघात-शाटने एव । परभवप्रथमे शाटनमतस्तदूनो न काल इति ॥ ३३२० ॥
४ यदि परप्रथमे शाटो निर्विग्रहतश्च तस्मिन् संघातः । ननु सर्वशाट-संघातने समये विरुद्धे ॥३३२१॥

ज्ञानस्य कारणतां याति, तेनं तस्मात् तत् पूज्यमिति ॥ ३२९३ ॥

तदेव कोप-प्रसादविरहादीन् पश्चापि परोपन्यस्तहेतून् निराकृत्योपसंहरन्नाह—

तेणं[1] सुहालंबणओ परिणामविसुद्धिमिच्छया निच्चं । कज्जा जिणाइपूया भव्वाणं बोहणत्थं च ॥३२९४॥

येनैवम्, तेन तस्मात् परिणामविशुद्धिमिच्छता कार्या विधेया जिनादीनां नित्यमेव पूजा। कुतः? इत्याह—शुभालम्बनतः शुभालम्बनरूपत्वात् । न केवलं स्वपरिणामविशुद्धिनिमित्तम्, भव्यजनाववोधनार्थं च विधेया जिनादिपूजा । तद्दर्शने ह्यनेके भव्याः प्रतिबुध्यन्ते, जिनधर्ममासादयन्ति, समासादिते च स्थिरीभवन्ति । अत एव तत्करण-कारणा-ऽनुमोदनादिप्रवृत्तसंवेगातिशयात् क्षपितकर्मणोऽन्तकृत्केवलिनो भूत्वाऽनन्तेन कालेनानन्ताः सिद्धान्ते सिद्धाः श्रूयन्ते ॥ इति सप्ततिगाथार्थः ॥ ३२९४ ॥

॥ तदेवमवसितः पञ्चनमस्कारः ॥

॥ तदवसाने च नमस्कारनिर्युक्तिः समाप्ता ॥

अथ सामायिकसूत्रविषयां सूत्रस्पर्शकनिर्युक्तिमभिधित्सुराह—

कयपंचनम्मोक्कारो[2] करेइ सामाइयं तु सोऽभिहिओ । सामाइयंगमेव य जं सो सेसं अओ वोच्छं ॥ ३२९५ ॥

कृतपञ्चनमस्कार एव शिष्यः सामायिकं करोतीत्यागमस्थितिः प्रागुक्तयुक्त्या सामायिकाङ्गमेव यस्मादसौ, ततः स पञ्चनमस्कारोऽभिहितः प्रतिपादितः, अतः परं शेषं सामायिकसूत्रं वक्ष्ये व्याख्यास्यामि ॥ इति निर्युक्तिगाथार्थः ॥ ३२९५ ॥

भाष्यकारः प्राह—

इत्थ[3] य सुत्ताणुगमो सुत्तालावयकओ य निक्खेवो । सुत्तप्फासियनिज्जुत्ती नया य पइसुत्तमाउज्जा ॥३२९६॥

अत्र च सूत्रव्याख्याने सूत्रानुगमोऽनुगमप्रथमभेदः, तथा सूत्रालापककृतश्च निक्षेपो निक्षेपतृतीयभेदः, तथा निर्युक्त्यनुगमतृतीयभेदरूपा सूत्रस्पर्शकनिर्युक्तिः सूत्रस्पर्शकनिर्युक्त्यनुगम इत्यर्थः, नयाश्च प्रतिसूत्रमायोज्या इति ॥ ३२९६ ॥

---

१ तेन शुभालम्बनतः परिणामविशुद्धिमिच्छता नित्यम् । कार्या जिनादिपूजा भव्यानां बोधनार्थं च ॥ ३२९४ ॥

२ कृतपञ्चनमस्कारः करोति सामायिकं तु सोऽभिहितः । सामायिकाङ्गमेव च यत् स शेषमतो वक्ष्ये ॥ ३२९५ ॥

३ अत्र च सूत्रानुगमः सूत्रालापककृतश्च निक्षेपः । सूत्रस्पर्शकनिर्युक्तिर्नयाश्च प्रतिसूत्रमायोज्याः ॥ ३२९६ ॥

भो निश्चयनयवादिन् ! यदि परभवप्रथमसमये शाटोऽभ्युपगम्यते, निर्विग्रहतश्च ऋजुश्रेण्या चोत्पद्यमानस्य तस्मिन्नेव समये संघात इष्यते, तदा नन्वहो सर्वशाटसंघातौ युगपदेकस्मिन्नेव समये विरुद्धौ तौ प्राप्नुतः, सर्वशाटस्य पूर्वभवशरीरसंबन्धित्वात्, सर्वसंघातस्य च भवान्तरगतशरीरविषयत्वात्, भवद्वयशरीरयोश्च युगपत्सत्त्वस्य दूरविरुद्धत्वादिति ॥ ३३२१ ॥

निश्चयनयवादी प्रतिविधानमाह—

[1]जम्हा विगच्छमाणं विगयं उप्पज्जमाणमुप्पण्णं । तो परभवाइसमए मुक्खा-दाणाण न विरोहो ॥३३२२॥

यस्मात् पूर्वभवशरीरं परभवाद्यसमये विगच्छद् विगतम्, उत्पद्यमानं त्वग्रेतनभवशरीरमुत्पन्नम्, क्रियाकाल निष्ठाकालयोरभेदात् । ततस्तत्र मोक्षा-ऽऽदानयोरिष्यमाणयोर्न कश्चिद् विरोधः, मुच्यमानस्य मुक्तत्वेनैकस्यैवाग्रेतनभवशरीरस्य तत्र सद्भावादिति ॥

अपि च, मरणसमयः परभवाद्यसमयत्वेनाभ्युपगन्तव्य एव, अन्यथा दोषसंभवादित्याह—

[2]चुइसमए नेहभवो इहदेहविमोक्खओ जहाऽतीए । जइ न परभवो वि तहिं तो सो को होउ संसारी ? ॥३३२३॥

च्युतिसमये इहभवशरीरा-ऽऽयुःपुद्गलसर्वपरिशाटसमये तावदिहभवो न भवति, इहभवदेहस्यायुषश्च मुच्यमानत्वात्, मुच्यमानस्य च सर्वथा विमोक्षात्, क्रियाकाल-निष्ठाकालयोरभेदादिति । 'जहाऽतीए त्ति' यथाऽतीतजन्मनीहभवो नास्ति, अत्रत्यदेहाभावात्, तथा च्युतिसमयेऽप्यसौ न भवत्येव, इहभवदेहाभावस्याविशेषादित्यर्थः । एवं च सति यदि यस्मिंश्च्युतिसमये परभवोऽपि भवता नाभ्युपगम्यते तदाऽसौ संसारी जीवः को भवतु, इहभवत्वस्य भवद्युक्तित एव निषेधात्, परभवत्वस्य तु त्वयाऽप्यनभ्युपगम्यमानत्वात् ? । संसारित्वेन च मुक्तव्यपदेशाभावाद् निर्व्यपदेश एवासौ स्यादिति ॥ ३३२३ ॥

व्यवहारनयवादी प्राह—

[3]नणु जह विग्गहकाले, देहाभावे वि परभवग्गहणं । तह देहाभावम्मि वि होज्जेहभवो वि को दोसो ? ॥३३२४॥

ननु यथा विग्रहकाले विग्रहेण परभवगमनकाले पारभविकदेहाभावेऽपि जीवस्य परभवग्रहणं नारकादिपारभविकव्यपदेशः,

---

१ यस्माद् विगच्छद् विगतमुत्पद्यमानमुत्पन्नम् । ततः परभवादिसमये मोक्षा-ऽऽदानयोर्न विरोधः ॥ ३३२२ ॥
२ च्युतिसमये नेहभव इहदेहविमोक्षतो यथाऽतीते । यदि न परभवोऽपि तर्हि तत स को भवतु संसारी ? ॥ ३३२३ ॥
३ ननु यथा विग्रहकाले देहाभावेऽपि परभवग्रहणम् । तथा देहाभावेऽपि भवेदिहभवोऽपि को दोषः ? ॥ ३३२४ ॥

कथं पुनः सूत्रानुगमो विधेयाः ? इत्याह–

[1]अणुगंतव्वं सुत्तं सुत्ताणुगमाणुसारओ तं च। सुत्तं करेमि भंते ! सामाइयमेवमाईयं ॥ ३२९७ ॥

अनुयोगद्वारोक्तसूत्रानुगमानुसारतो हीनाक्षरमनत्यक्षरमव्याविद्धाक्षरमस्खलितममिलितमित्यादिरूपं सूत्रमनुगन्तव्यं व्याख्येयम्। तच्च सूत्रं 'करेमि भंते ! सामाइयं सव्वं सावज्जं जोगं' इत्याद्युच्चारणीयम्। तस्य चार्थो मूलावश्यकटीकातोऽवसेयः। अत्रापि प्रतिपदं व्याख्यानं वक्ष्यत इति ॥ ३२९७ ॥

ननु तस्योच्चारितस्य सूत्रस्य किमिह वाच्यम् ? इत्याह–

[2]तस्स कयपयन्नासो सुत्तप्फासं भणामि तत्थेव। सुत्तालावन्नासं नए य वुच्छामि संभवओ ॥ ३२९८ ॥

तस्य च सूत्रस्य कृतपदन्यासोऽहं सूत्रस्पर्शं भणामि–पदान्युच्चार्य ततः सूत्रस्पर्शं भणिष्यामीत्यर्थः, तथा, तत्रैव सूत्रे सूत्रालापकानां न्यासं निक्षेपम्, नयांश्च यथासंभवं वक्ष्यामि ॥ इति गाथात्रयार्थः ॥ ३२९८ ॥

तत्र पदानि विच्छिद्य दर्शयन्नाह–

[3]करणे भए य अंते सामाइय सव्वए य वज्जे य। जोगे पच्चक्खाणे जावज्जीवाइ तिविहेणं ॥ ३२९९ ॥

इयं च निर्युक्तिगाथा ॥ ३२९९ ॥

अत्र कश्चिदाह—ननु 'करेमि भंते सामाइयं' इत्यादिके सूत्रे 'करेमि' इति पदमादौ वर्तते, तत् कथं 'करणे' इति दर्शितम् ? इत्याशङ्क्य भाष्यकार आह—

[4]सुत्तं करेमि भणिए धाऊ विहिओ जओ डुकिकयं करणे। तेण करेमिवयणओ गम्मइ करणं तदत्थो त्ति ॥३३००॥

---

१ अनुगन्तव्यं सूत्रं सूत्रानुगमानुसारतस्तच्च। सूत्रं करोमि भदन्त ! सामायिकमेवमादिकम् ॥ ३२९७ ॥
२ तस्य कृतपदन्यासः सूत्रस्पर्शं च भणामि तत्रैव। सूत्रालापकन्यासं नयांश्च वक्ष्यामि संभवतः ॥ ३२९८ ॥
३ करणं भयं चान्तः ( भदन्तः ) सामायिकं सर्वकश्च वर्जश्च ( वर्ज्यं च )। योगः प्रत्याख्यानं यावज्जीवादि त्रिविधेन ॥ ३२९९ ॥
४ सूत्रं करोमि भणिते धातुर्विहितो यतो डुकृंग् करणे। तेन करोमिवचनतो गम्यते करणं तदर्थ इति ॥ ३३०० ॥

तथा च्युतिसमयेऽपीहभवशरीराभावेऽपीहभवोऽपि यदि भवेत्– इहव्यपदेशोऽपि यदि स्यात्, तर्हि को दोषः ?–न कश्चित्, न्यायस्य समानत्वादिति ॥ ३३२४ ॥

निश्चयवादी प्रतिविधानमाह—

[1]जं चिय विग्गहकालो देहाभावे वि तो परभवो सो । चुइसमए उ न देहो न विग्गहो जइ स को होउ ? ॥३३२५॥

हन्त ! यत एवापान्तरालगतो जीवस्य विग्रहकालो न तु पूर्वभवकालः, तत एव देहाभावेऽप्यसौ परभवः परभवसंबन्धित्वेन व्यपदेश्यः, परभवायुष उदीर्णत्वात्, पूर्वभवायुषस्तु प्रागेव निर्जीर्णत्वात्, निरायुषश्च जीवस्य संसारेऽसंभवादिति । च्युतिसमये तु न पूर्वभवदेहः, तस्य त्यक्तत्वात्; नापि विग्रहः, वक्राभावात् । यद्येवम्, तर्हि स च्युतिसमय इहत्य-पारभाविकभवसमयानां मध्यात् को भवतु ? इति कथ्यताम् । ननु प्रोक्तं मया, यथा विग्रहकाले परभवदेहाभावेऽपि परभवस्तथा च्युतिसमये इहत्यदेहाभावेऽपीहभवोऽस्तु, को दोषः ? । सत्यमुक्तमिदं त्वया, न तु युक्तम्, दृष्टान्त-दार्ष्टान्तिकयोर्वैषम्यात्, यथा हि च्युतिसमय इहत्यदेहाभावस्तथेहत्यायुषोऽप्यभाव एव, तस्यापि निर्जीर्यमाणस्य निर्जीर्णत्वात्, ततः कथमसौ च्युतिसमय इहभवो भवतु, इहत्यायुष्कोदयाभावात् ? । विग्रहकाले तु युक्तं परभवत्वम्, परभवायुष्कोदयसद्भावादिति । तस्मात् परभवश्च्युतिसमयः परभवायुष्कोदयात्, विग्रहकालवत्, अन्यथा तस्य निर्व्यपदेश्यत्वप्रसङ्गात् । अतः '[2]परभवपढमे साडणं' इति स्थितम् । तदेवमौदारिकसंघात-परिशाटो-भयानां काल उक्तः ॥३३२५॥

अथ तेषामेवान्तरकालमभिधित्सुः संघातस्य तावज्जघन्यमन्तरकालमाह—

[3]संघायंतरकालो जहन्नओ खुड्डयं तिसमऊणं । दो विग्गहम्मि समया तइओ संघायणासमओ ॥ ३३२६ ॥

तेहूणं खुड्डभवं धरिउं परभवमविग्गहेणेव । गंतूण पढमसमए संघायाओ स विन्नेओ ॥ ३३२७ ॥

---

१ यदेव विग्रहकालो देहाभावेऽपि ततः परभवः सः । च्युतिसमये तु न देहो न विग्रहो यदि स को भवतु ? ॥३३२५॥ २ गाथा ३३२० ।

३ संघातान्तरकालो जघन्यतः क्षुल्लकं त्रिसमयोनम् । द्वौ विग्रहे समयौ तृतीयः संघातनासमयः ॥ ३३२६ ॥

त्रैरूनं क्षुल्लभवं धृत्वा परभवमविग्रहेणैव । गत्वा प्रथमसमये संघातात् स विज्ञेयः ॥ ३३२७ ॥

सूत्रं यदुच्चारितं तत्र 'करोमि' इति भणिते यतो धातुः 'डुकृञ् करणे' करणार्थे विहितः पठितस्तेन तस्मात् 'करोमि' इति वचनतस्तदर्थभूतं करणमत्र गम्यते । अतस्तदादौ करणं पदमिह दर्शितमिति ॥ ३३०० ॥

तत्रास्य करणपदस्य शब्दार्थं भेदांश्चाह—

[1]करणं किरिया भावो संभवओ वेह छव्विहं तं च । नामं ठवणा दविए खित्ते काले य भावे य ॥ ३३०१ ॥

करणं क्रियेति भावो वा भावमात्रमिह वाच्यम्, 'संभवओ वेह त्ति' अथवा, संभवतो यथासंभवमिह शब्दार्थो वक्तव्यः; यद्यथा-क्रियते तदिति करणम्, क्रियतेऽनेनेति करणम्, क्रियतेऽस्मादिति करणम्, क्रियतेऽस्मिन्निति वा करणमित्यादि । तच्च करणं नामादिभेदात् षड्विधमिति ॥ ३३०१ ॥

तत्र नाम स्थापनाकरणमाह—

[2]नामं नामस्स व नामओ व करणं ति नामकरणं ति । ठवणा करणन्नासो करणागारो व जो जस्स ॥३३०२॥

'नामं ति' नामैव करणं नामकरणमिति सामानाधिकरण्य द्रष्टव्यम् । अथवा, नाम्नः करण नामकरणम्, नामतो वा करणं नामकरणम्, 'करणं ति' अयं करणशब्दः प्रत्येकं योजनीयः, स च योजित एव । 'नामकरणं' इति द्वारपरामर्शः । 'ठवण त्ति' स्थापनाकरणमुच्यत इत्यर्थः । किं तत् ? इत्याह—करणस्य करणशब्दस्य न्यासः करणन्यासः, अथवा, यो यस्य करणस्य दात्रादेराकारः काष्ठादौ विन्यस्तः स स्थापनाकरणमिति ॥ ३३०२ ॥

अथ द्रव्यकरणमभिधित्सुर्द्रव्यकरणशब्दस्य व्युत्पादनार्थमाह—

[3]तं तेण तस्स तम्मि व संभवओ व किरिया मया करणं । दव्वस्स व दव्वेण व दव्वम्मि व दव्वकरणं ति ॥ ३३०३ ॥

क्रियते तदिति करणमिति करणशब्दः कर्मसाधनः, क्रियतेऽनेनेति करणसाधनः, तस्य द्रव्यस्य कृतिः करणमिति भावसाधनः,

१ करणं क्रिया भावः सभवतो वेह षाड्विध तच्च । नाम स्थापना द्रव्यं क्षेत्रं कालश्च भावश्च ॥ ३३०१ ॥

२ नाम नाम्नो वा नामतो वा करणमिति नामकरणमिति । स्थापना करणन्यासः करणाकारो वा यो यस्य ॥ ३३०२ ॥

३ तत् तेन तस्य तस्मिन् वा संभवतो वा क्रिया मता करणम् । द्रव्यस्य वा द्रव्येण वा द्रव्ये वा द्रव्यकरणमिति ॥ ३३०३ ॥

व्याख्या—एकदौदारिकशरीरस्य संघातं कृत्वा पुनस्तत्संघातं कुर्वतस्त्रिभिः समयैर्न्यूनं क्षुल्लकभवग्रहणं जघन्योऽन्तरकालः प्राप्यते । स च यदा कश्चिदेकेन्द्रियादिर्जीवो मृतः समयद्वयं विग्रहे कृत्वा क्षुल्लकभवग्रहणायुष्केषु पृथिव्यादिषूत्पन्नस्तृतीयसमये औदारिकस्य संघातं कृत्वा यथोक्तैस्त्रिभिः समयैर्न्यूनं क्षुल्लकभवग्रहणं संघात-परिशाटोभयं विधाय मृतो निर्विग्रहेणैव च ऋजुश्रेण्याग्रेतनभवे पृथिव्यादिषूत्पन्न औदारिकशरीरस्य संघातं करोति, तदा तस्य जन्तोरौदारिकशरीरसंघातस्य च त्रिसमयन्यूनक्षुल्लकभवग्रहणलक्षणो जघन्योऽन्तरकालो विज्ञेयः । इह च जघन्यान्तरकालस्य प्रतिपादयितुं प्रस्तुतत्वात् प्रथमं विग्रहेण, अग्रेतनभवे तु निर्विग्रहेणोत्पादितः, अन्यथा मध्यमान्तरकालप्रसङ्गादिति ॥ ३३२६ ॥ ३३२७ ॥

अथौदारिकस्यैवोत्कृष्टं संघातान्तरकालमाह—

उक्कोसं तेत्तीसं समयाहियपुव्वकोडिसाहियाइं । सो सागरोवमाइं अविग्गहेणेव संघायं ॥ ३३२८ ॥
काऊण पुव्वकोडिं धरिउं सुराजिट्ठमाउयं तत्तो । भोत्तूण इहं तइए समए संघाययओ तस्स ॥ ३३२९ ॥

व्याख्या—'सागरोपमाणि' इत्यस्य व्यवहितः संबन्धः । ततश्च त्रयस्त्रिंशत् सागरोपमाणि समयाधिकपूर्वकोट्यभ्याधिकानि 'औदारिकसंघातान्तरमुत्कृष्टं भवति' इति गम्यते । कदा पुनरयं संघातान्तरकालो लभ्यते ? इत्याह-स उक्तलक्षणः काल इह तृतीयसमये संघातयत औदारिकशरीरस्य संघातं कुर्वतो लभ्यत इति द्वितीयगाथायां संटङ्कः । किं कृत्वा ? इत्याह—कुतश्चित् पूर्वभवादविग्रहेणेह तावद् मनुष्यभवे समागत्य प्रथमसमये संघातं कृत्वा पूर्वकोटिं विधृत्य पूर्वकोटिप्रमाणमिहायुष्कं परिपाल्य ततश्च ज्येष्ठमायुष्कं त्रयस्त्रिंशत्सागरोपमलक्षणमनुत्तरसुरेष्वनुभूय ततश्च्युत्वा समयद्वयं विग्रहे विधायेति । अत्र च विग्रहसत्कसमयद्वयमध्यादेकः प्राक्तनपूर्वकोट्यां प्रक्षिप्यते । एवं च सति त्रयस्त्रिंशत् सागरोपमाणि समयाधिकपूर्वकोट्याधिकानि उत्कृष्टमौदारिकशरीरसंघातान्तरं सिद्धं भवति । अस्य चोपलक्षणत्वात् पूर्वकोट्यायुषो मत्स्यस्याप्रतिष्ठाननरके समुत्पद्येत्थं पुनर्मत्स्येषूत्पन्नस्येदमन्तरं मन्तव्यमिति ॥३३२८-२९॥

अथौदारिकस्यैव संघात-परिशाटोभयस्य जघन्यमुत्कृष्टं चान्तरकालमाह—

१ उत्कृष्ट त्रयस्त्रिंशत समयाधिकपूर्वकोटिसाहितानि । स सागरोपमाण्यविग्रहेणैव संघातम् ॥ ३३२८ ॥
कृत्वा पूर्वकोटिं धृत्वा सुरज्येष्ठमायुष्कं ततः । भोक्त्वेह तृतीये समये संघातयतस्तस्य ॥ ३३२९ ॥

आहिक्केणं[1] कज्जं पमाणकालेण जंमहिगारो त्ति। सेसा वि जहासंभवमाउज्जा निग्गमे काला ॥ ३ ॥
खेत्तं मयमागासं सव्वदव्वावगाहणालिंगं। तं दव्वं चेव निवासमेत्तपज्जायओ खेत्तं ॥ ४ ॥
तं च महासेणवणोवलक्खियं जत्थ निग्गयं पुव्वं। सामाइयमन्नेसु य परंपरविणिग्गमो तस्स ॥ ५ ॥

दव्वा-ऽभिलाव-चिंधे वेए धम्म-त्थ-भोग-भावे य।
भावपुरिसो उ जीवो भावे पगयं तु भावेणं ॥ २०३ ॥

आगमओऽणुवउत्तो इयरो दव्वपुरिसो तहा तइओ। एगभवियाइतिविहो मूलुत्तरनिम्मिओ वावि ॥ १ ॥
अभिलावो पुंलिंगाभिहाणमेत्तं घडो व्व चिंधे उ। पुरिसागिई नपुंसो वेओ वा पुरिसवेसो वा ॥ २ ॥
वेयपुरिसो तिलिंगो वि पुरिसवेयाणुभूइकालम्मि। धम्मपुरिसो तयज्जणवावारपरो जहा साहू ॥ ३ ॥
अत्थपुरिसो तयज्जणपरायणो मम्मणो व्व निहिपालो। भोगपुरिसो समज्जियविसयसुहो चक्कवट्टि व्व ॥ ४ ॥
भावपुरिसो उ जीवो सरीरपुरि सयणओ निरुत्तवसा। अहवा पूरण-पालणभावाओ सव्वभावाणं ॥ ५ ॥
दव्वपुरिसाइभेया वि जं च तस्सेव होंति पज्जाया। तेणेह भावपुरिसो सुद्धो जीवो जिणिंदो व्व ॥ ६ ॥
पगयं विसेसओ तेण वेयपुरिसेहिं गणहरेहिं च। विसेसा वि जहासंभवमाउज्जा उभयवग्गे वि ॥ ७ ॥

निक्खेवो कारणम्मी चउव्विहो दुविहु होइ दव्वम्मि।
तद्दव्वमन्नदव्वे अहवा वि निमित्त-नेमित्ती ॥ २०४ ॥
समवाइ असमवाई छव्विह कत्ता य करण कम्मं च।

1 'क्केण कज्जेणं प'।

तत्तो य संपयाणापयाण तह संनिहाणे य ॥ २०५ ॥







तद्दव्वकारणं तंतवो पडस्सेह जेण तम्मयया। विवरीयमन्नकारणमिट्ठं वेमादओ तस्स ॥ १ ॥
जइ तं तस्सेव मयं हेऊ नणु कज्जकारणेगत्तं। न य तं जुत्तं ताइं जओऽभिहाणाइभिन्नाइं ॥ २ ॥
तुल्लोऽयमुवालंभो भेए वि न तंतवो घडस्सेव। कारणमेगंते वि य जओऽभिहाणादओ भिन्ना ॥ ३ ॥
जं कज्ज-कारणाइं पज्जाया वत्थुणो जओ ते य। अन्नेऽणन्ने य मया तो कारण-कज्जभयणेयं ॥ ४ ॥
नत्थि पुढवीविसिट्ठो घडो त्ति जं तेण जुज्जइ अणन्नो। जं पुण घडो त्ति पुव्वं न आसि पुढवी तओ अन्नो ॥५॥
जह तंतवो निमित्तं पडस्स वेमादओ तहा तेसिं। जं चेट्ठाइनिमित्तं तो ते पडयस्स नेमित्तं ॥ ६ ॥
समवाइकारणं तंतवो पडे जेण ते समवयंति। न समेइ जओ कज्जे वेमाइ तओ असमवाई ॥ ७ ॥
वेमादओ निमित्तं संजोगा असमवाई केसिंचि। ते जेण तन्तुधम्मा पडो य दव्वंतरं जेण ॥ ८ ॥
दव्वंतरधम्मस्स य न जओ दव्वंतरम्मि समवाओ। समवायम्मि य पावइ कारण-कज्जेगया जम्हा ॥ ९ ॥
जह तंतूणं धम्मा संजोगा तह पडो वि सगुणा व्व। समवायाइत्तणओ दव्वस्स गुणादओ चेवं ॥ १० ॥
अभिहाण-बुद्धि-लक्खणभिन्ना वि जहा सदत्थओऽणन्ने। दिक्-कालाइविसेसा तह दव्वाओ गुणाईआ ॥ ११ ।
उवयारमेत्तभिन्ना ते चेव जहा तहा गुणाईआ। तह कज्जं कारणओ भिन्नमभिन्नं च को दोसो ? ॥ १२ ॥
कारणमहवा छद्धा तत्थ सतंतो त्ति कारणं कत्ता। कज्जपसाहगतमं करणम्मि उ पिंड-दंडाई ॥ १३ ॥
कम्मं किरिया कारणमिह निच्चिट्ठो जओ न साहेइ। अहवा कम्मं कुंभो स कारणं बुद्धिहेउ त्ति ॥ १४ ॥
भव्वो त्ति व जोग्गो त्ति व सक्को त्ति व सो सरूवलाभस्स। कारणसंनिज्झम्मि वि जं नागासत्थमारंभो ॥१५॥

[4]उभयंतरं जहण्णं समओ निव्विग्गहेण संघाए । परमं सतिसमयाइं तित्तीसं उयहिनामाइं ॥ ३३३० ॥

संघात-परिशाटोभयस्यैकः समयो जघन्यमन्तरं भवति । क ? । निर्विग्रहेण संघाते सति । इदमुक्तं भवति — इहौदारिकशरीरी आयुष्पर्यन्तं यावत् संघात-परिशाटोभयं कृत्वाऽग्रेतनभवेऽविग्रहेणोत्पद्यौदारिकस्यैव संघातं कृत्वा पुनरपि तदुभयमारभते । तस्य स एवैकः संघातसमयो जघन्यमुभयान्तरं भवति । परमं तूत्कृष्टमेतदन्तरं सह त्रिभिः समयैर्वर्तन्ते सत्रिसमयानि त्रयस्त्रिंशदुदधिनामानि सागरोपमाणि भवन्तीत्यर्थः ॥ ३३३० ॥

कदा पुनरेतानि प्राप्यन्ते ? इत्याह —

[2]अणुभविउं देवाइसु तेत्तीसमिहागयस्स तइयम्मि । समए संघाययओ दुविहं साडंतरं वुच्छं ॥ ३३३१ ॥

देवादिषु, आदिशब्दादप्रतिष्ठाने च त्रयस्त्रिंशत्सागरोपमाण्यनुभूयेहागतस्य तृतीयसमये संघातयतो लभ्यते । अयमत्र भावार्थः— इह कश्चिद् मनुष्यादिः स्वभवचरमसमये संघात-परिशाटोभयं कृत्वाऽनुत्तरसुरेष्वप्रतिष्ठाने वा यदा त्रयस्त्रिंशत्सागरोपमाण्यनुभूय पुनरपीह समयद्वयविग्रहेणागत्य तृतीयसमये औदारिकसंघातं कृत्वा तत उभयमारभते, तदा द्वौ विग्रहसमयावेकश्च संघातसमयो देवादिभवसंबन्धीनि च त्रयस्त्रिंशत्सागरोपमाण्युत्कृष्टोभयान्तरे प्राप्यन्त इति । तदेवमौदारिकविषयस्य संघातस्योभयस्य च जघन्यमुत्कृष्टं चान्तरमुक्तम् । अथ परिशाटस्य तदभिधित्सुराह — 'दुविहमित्यादि' द्विविधं जघन्यमुत्कृष्टं च शाटस्यान्तरं वक्ष्यत इति ॥ ३३३१ ॥

यथाप्रतिज्ञातमेवाह—

[3]खुड्डागभवग्गहणं जहन्नमुक्कोसयं च तेत्तीसं । तं सागरोवमाइं संपुण्णा पुव्वकोडी य ॥ ३३३२ ॥

इहौदारिकशाटस्य चान्तरे जघन्यतः क्षुल्लकभवग्रहणं भवति । उत्कृष्टं तु तत् शाटान्तरं पूर्वकोट्यधिकानि त्रयस्त्रिंशत्सागरोपमाणि भवन्ति । अत्राह—नन्वेतद् नावगच्छामः, जघन्यपक्षे समयोनक्षुल्लकभवग्रहणप्राप्तेरुत्कृष्टपक्षेऽपि समयोनपूर्वकोट्यधिकत्रयस्त्रिंशत्सागरोपमावाप्तेरिति, तथाहि-यः क्षुल्लकभवग्रहणायुष्केषु वनस्पत्यादिषूत्पद्यते स 'परभवपढमे साडणं' इति वचनात् तस्य क्षुल्लकभव-

१ उभयान्तर जघन्यं समयो निर्विग्रहेण संघाते । परमं सत्रिसमयानि त्रयस्त्रिंशदुदधिनामानि ॥ ३३३० ॥
२ अनुभूय देवादिषु त्रयस्त्रिंशतमिहागतस्य तृतीये । समये संघातयतो द्विविधं शाटान्तरं वक्ष्ये ॥ ३३३१ ॥
३ क्षुल्लकभवग्रहणं जघन्यमुत्कृष्टकं च त्रयस्त्रिंशत् । तत् सागरोपमाणि संपूर्णा पूर्वकोटिश्च ॥ ३३३२ ॥ ४ गाथा ३३२० ।

लोए अणिबद्धाइं अड्डिय-पच्चड्डियाइं करणाइं । पंचादेससयाइं मरुदेवाईणि उत्तरिए ॥ ३३५७ ॥

लोकेऽनिबद्धान्युपदेशमात्ररूपाणि, न पुनः शास्त्रनिबद्धानि मल्लानां करणविशेषरूपाण्यड्डिका-प्रत्यड्डिकादीनि विज्ञेयानि । लोकोत्तरे त्वनिबद्धानि पञ्च शतान्यादेशानां बोद्धव्यानि । 'मरुदेवाईणि त्ति' मरुदेव्यादेश आदौ येषां तानि मरुदेव्यादीनि पञ्चादेशशतानि यथाऽत्यन्तस्थावरानादिवनस्पतिकायादुद्वृत्य मरुदेवी प्रथमजिनमाता सिद्धेति ॥ ३३५७ ॥

यदुक्तम्—'उत्तो ओ सद्दकरणं' इत्यादि, तत्र प्रेर्यं परिहारं चाह—

भावकरणाहिगारे किमिहं सद्दाइदव्वकरणेणं । भण्णइ तत्थवि भावो विवक्खिओ तव्विसिट्ठो उ ॥ ३३५८ ॥

नन्विह भावकरणाधिकारे किमप्रस्तुतेन शब्दादिद्रव्यकरणोपन्यासेन ? । आदिशब्दः शब्दगतानेकभेदसंग्राहकः । भण्यतेऽत्रोत्तरम्—तत्रापि शब्दद्रव्यकरणे भाव एव भावश्रुतमेव विवक्षितम् । कथंभूतो भावः ? तद्विशिष्टः शब्दाविशिष्टः । अयमभिप्रायः—प्रकाशपाठाद्दिके शब्दकरणेऽपि न केवलशब्द एव विवक्षितः, किन्तु यत् तस्य कारणरूपं कार्यरूपं च भावश्रुतं तदेव शब्दविशिष्टमिह विवक्षितमित्यदोष इति ॥ ३३५८ ॥ उक्तं श्रुतकरणम् ॥

अथ नोश्रुतकरणमाह—

नोसुयकरणं दुविहं गुणकरणं जुंजणाभिहाणं च । गुणकरणं तव-संजमकरणं मूलुत्तरगुणा वा ॥ ३३५९ ॥

नोशब्दस्य सर्वनिषेधवचनात् श्रुतव्यतिरिक्तं यत् तपः संयमादिरूपस्य जीवभावस्य करणं तद् नोश्रुतभावकरणम् । तच्च द्विविधम्—गुणकरणम्, तथा, 'जुंजणाभिहाणं ति' युज्यन्त इति योगा मनःप्रभृतयस्तेषां यत् करणं तद् योजनाभिधानं करणमिति । तत्र गुणकरणं तपः-संयमयोः करणम्, अथवा, मूलगुणकरणम्, उत्तरगुणकरणं च गुणकरणमुच्यत इति ॥ ३३५९ ॥

अथ योगकरणव्याख्यानमाह—

---

१ लोकेऽनिबद्धानि अड्डिक-प्रत्यड्डिकानि करणानि । पञ्चादेशशतानि मरुदेवादीनि उत्तरस्मिन् ॥ ३३५७ ॥

२ भावकरणाधिकारे किमिह शब्दादिद्रव्यकरणेन । भण्यते तत्रापि भावो विवक्षितस्तद्विशिष्टस्तु ॥ ३३५८ ॥

३ नोश्रुतकरणं द्विविधं गुणकरणं योजनाभिधानं च । गुणकरणं तपः-संयमकरणं मूलो-त्तरगुणा वा ॥ ३३५९ ॥

ग्रहणस्यादिसमये प्राक्तनौदारिकशरीरस्य सर्वशाटं करोति, ततः क्षुल्लकभवग्रहणपर्यन्ते मृतः पुनरपि परभवाद्यसमये औदारिकस्य सर्वशाटं विधत्ते, इत्येवमौदारिकशाटस्यावान्तरे जघन्यतः समयोनं क्षुल्लकभवग्रहणं प्राप्नोति, उत्कृष्टपक्षेऽपि संयतमनुष्यः कश्चिद् मृतो देवभवाद्यसमये औदारिकस्य सर्वशाटं कृत्वा त्रयस्त्रिंशत्सागरोपमाण्यनुत्तरसुरेष्वायुरतिवाह्य पूर्वकोट्यायुष्केषु मनुष्येषूत्पद्य मृतो यदा पुनरपि परभवाद्यसमय औदारिकस्य सर्वशाटं करोति, पूर्वकोटिमध्याच्च समयो देवभवायुष्के क्षिप्यते, तदौदारिकस्य शाटस्यावान्तरे उत्कृष्टतः समयोनपूर्वकोट्यधिकानि त्रयस्त्रिंशत् सागरोपमाणि लभ्यन्ते, ततः कथमिदं नेतव्यम्? इति। सत्यमुक्तम्, किन्त्विह क्षुल्लकभवग्रहणाद्यसमये परिशाटो नेष्यते, किन्तु पूर्वभवचरमसमये 'विगच्छद् विगतम्' इति व्यवहारनयमताश्रयणाद् देवभवाद्यसमयेऽपि परिशाटो न क्रियते, किन्तु संयतचरमसमये, अत्रापि व्यवहारनयमताश्रयणात् तत एव जघन्यपदे उत्कृष्टपदे चादौ व्यवहारनयमताश्रयणे, पर्यन्ते तु निश्चयनयमताङ्गीकारे सर्वमपि भाष्यकारोक्तमविरोधेन गच्छतीति वृद्धा व्याचक्षते, तत्त्वं तु गम्भीरभाषितानां परमगुरव एव विदन्ति । तदेवमौदारिकसघात-परिशाटोभयानां कालोऽन्तरं चोक्तम् ॥ ३३३२ ॥

अथ वैक्रियशरीरस्य जघन्यं संघातकालमाह—

वेउव्वियसंघाओ समओ सो पुण विउव्वणाईए । ओरालियाणमहवा देवाईणाइगहणम्मि ॥३३३३॥

वैक्रियशरीरस्य संघातो जघन्यत एकसमयः, स च 'ओरालियाणं ति' औदारिकशरीरिणामुत्तरवैक्रियलब्धिमतां तिर्यग्मनुष्याणां विकुर्वणमुत्तरवैक्रियकरणं तस्यादिर्विकुर्वणादिस्तस्मिन् विज्ञेयः—तिरश्चो मनुष्यस्य वोत्तरवैक्रियं कुर्वत एकस्मिन् प्रथमसमये संघातो भवतीत्यर्थः । अथवा, देवादीनां देव-नारकाणां वैक्रियशरीरग्रहणस्यादावेकस्मिन् समये सघातो भवतीति ॥ ३३३३॥

अथोत्कृष्टं वैक्रियसंघातकालमाह—

उक्कोसो समयदुगं जो समयं विउव्विउं मओ बिइए । समए सुरेसु वच्चई निव्विग्गहओ तयं तस्स ॥३३३४॥

उत्कृष्टसंघातकालः समयद्वयं भवति । 'तयं तस्स त्ति' तच्च समयद्वयं तस्य भवति य औदारिकशरीरी समयमेकमुत्तरवैक्रियं

१ वैक्रियसघातः समयः स पुनर्विकुर्वणादौ । औदारिकाणामथवा देवादीनामादिग्रहणे ॥ ३३३३ ॥

२ उत्कृष्टः समयद्विकं यः समयं विकुर्व्य मृतो द्वितीये । समये सुरेषु व्रजति निर्विग्रहतस्तत् तस्य ॥ ३३३४ ॥

मण-वयण-कायकिरिया पन्नरसविहा उ जुंजणाकरणं । सामाइयकरणमिणं किं नामाईण होज्जाहि ? ॥३३६०॥

सत्यादिभेदतश्चतुर्विधं मनः, चतुर्विधं वचनम्, औदारिकामिश्रादिभेदात् सप्तविधः काय इत्येवमेतत्क्रियापि पञ्चदशविधा योजनकरणत्वेनावगन्तव्या । तदेवमवसितं भावकरणम् । तदवसाने चोक्तं नामादिभेदतः षड्विधमपि करणमिति । अथ विनेयः पृच्छति–ननूक्तस्वरूपाणां नामादीनां षण्णां करणभेदानां मध्ये सामायिककरणमिदं किं भवेत् ?–कस्मिन् भेदेऽवतरेत् ? इत्यर्थः ॥३३६०॥

अत्र गुरुराह—

सव्वं पि जहाजोगं नेयं भावकरणं विसेसेणं । सुय-बद्ध-सद्दकरणं सुयसामाइयं न चारित्तं ॥ ३३६१ ॥

इदं सामायिककरणं सर्वमपि षड्विधमपि नामादिकरणं ज्ञेयम्—सर्वेष्वपि नामादिभेदेष्ववतरेदित्यर्थः । कथं ? यथायोगं यथासंभवम् । तत्र सम्यक्त्व-श्रुत-तपः-संयमादिगुणानां जीवद्रव्यपर्यायत्वात्, पर्यायस्य च द्रव्यानन्यत्वाद् द्रव्यकरणमिदं भवत्येव । एवं नामादिकरणताप्यस्य यथासंभवं भावनीया । भावकरणं त्विदं विशेषतो भवति, सम्यक्त्वादिसामायिकानां जीवभावत्वादिति । आह–ननु भावकरणं पूर्वं बहुभेदमुक्तम्, तत् किं सर्वेष्वपि भावकरणभेदेषु सर्वमपि सामायिकमवतरति ? । नेत्याह–'सुएत्यादि' श्रुतकरणं, तथा बद्धश्रुतकरणं, शब्दकरणं च श्रुतसमायिकमेव भवति, तस्यैवैतद्भेदरूपताघटनात्, न तु चारित्रसामायिकम्, तस्यैतद्रूपासंभवादिति ॥ ३३६१ ॥

चारित्रसामायिकं तर्हि कस्मिन् भावकरणभेदेऽवतरति ? इत्याह—

गुणकरणं चारित्तं तव-संजमगुणमयं ति काऊणं । संभवओ सुयकरणं सुपसत्थं जुंजणाकरणं ॥ ३३६२ ॥

कयाकयं केण कयं केसु व दव्वेसु कीरई वावि । काहे व कारओ नयओ करणं कइविहं कहं व ? ॥३३६३॥

१ मनो-वचन-कायक्रिया पञ्चदशविधा तु योजनाकरणम् । सामायिककरणमिदं किं नामादीना भवेत् ॥ ३३६० ॥
२ सर्वमपि यथायोगं ज्ञेयं भावकरणं विशेषेण । श्रुत-बद्ध-शब्दकरण श्रुतसामायिकं न चारित्रम् ॥ ३३६१ ॥
३ गुणकरण चारित्रं तपः-संयमगुणमयमिति कृत्वा । संभवतः श्रुतकरण सुप्रशस्तं योजनाकरणम् ॥३३६२॥
कृताकृत केन कृतं केषु वा द्रव्येषु क्रियते वापि । कदा वा कारको नयतः करणं कतिविध कथं वा ? ॥ ३३६३ ॥

कृत्वा मृतो द्वितीयसमये निर्विग्रहेण ऋजुगत्या सुरेषु व्रजति । तत्र च प्रथमसमये वैक्रियस्य संघातं करोति । तस्यैको वैक्रियसंघातसमयोऽत्र्यः, द्वितीयस्तु देवसंबन्धीति ॥ ३३३४ ॥

अथ वैक्रियस्यैव जघन्यमुत्कृष्टं च संघातपरिशाटोभयकालमाह —

उभयजहन्नं समओ सो पुण दुसमयविउव्वियमयस्स । परमयराइं संघायसमयहीणाइं तेत्तीसं ॥३३३५॥

वैक्रियसंघात-परिशाटोभयं जघन्यतः समयो भवति । स च समयद्वय वैक्रियं कृत्वा मृतस्य द्रष्टव्यः । इदमुक्तं भवति—केनचिदौदारिकशरीरिणोत्तरवैक्रियमारब्धम् । स च तत्र प्रथमसमये संघातम्, द्वितीयसमये तु संघातपरिशाटोभयं कृत्वा यदा म्रियते तदा तस्य संघात-परिशाटोभयस्य समयलक्षणो जघन्यकालः प्राप्यत इति । परमुत्कृष्टमुभयं स्वास्थितिमानं तरीतुं लङ्घयितुमशक्यान्यतराणि सागरोपमाण्येकेन संघातसमयेन हीनानि त्रयस्त्रिंशदनुत्तरसुरेष्वप्रतिष्ठाननरके वा बोद्धव्यानीति । तदेवं वैक्रियसंघातस्योभयस्य च काल उक्तः, परिशाटनस्य त्वेकसमयलक्षणः कालः स्वयमेव द्रष्टव्यः ॥ ३३३५ ॥

अथ वैक्रियसंघातस्य जघन्यमन्तरकालमाह—

संघायंतरसमओ समयविउव्वियमयस्स तइयम्मि । सो दिवि संघायओ तइए व मयस्स तइयम्मि ॥३३३६॥

वैक्रियसंघातस्य च जघन्यमन्तरं समयो भवति । स चौदारिकशरीरिणः समयमेकमुत्तरवैक्रियं कृत्वा मृतस्य द्वितीयं समयं विगृहे विधाय तृतीयसमये दिवि देवलोके संघातयतो वैक्रियशरीरसंघातं कुर्वतो विज्ञेयः । अत्र हि प्राक्तनोत्तरवैक्रियसंघातस्य देववैक्रियसंघातस्य च विग्रहसमयोऽन्तरं भवति । अथवा, तस्यौदारिकशरीरिणः समयद्वयमुत्तरवैक्रियं कृत्वा तृतीयसमये मृतस्य निर्विग्रहेण च दिवि समुत्पन्नस्य तस्मिन्नेव तृतीयसमये देववैक्रियसंघातं कुर्वत एकः संघात-परिशाटोभयसमयः संघातान्तरं भवतीति ॥३३३६॥

अथ वैक्रियसंघात-परिशाटोभयस्य शाटस्य च जघन्यमन्तरकालमाह—

उभयस्स चिर विउव्विय मयस्स देवेसु विग्गहगयस्स । साडस्संतमुहुत्तं तिण्ह वि तरुकालमुक्कोसं ॥३३३७॥

१ उभयजघन्य समयः स पुनर्द्विसमयविकुर्वितमृतस्य । परमतराणि संघातसमयहीनानि त्रयस्त्रिंशत् ॥ ३३३५ ॥

२ संघातान्तरसमयः समयविकुर्वितमृतस्य तृतीये । स दिवि संघातयतस्तृतीये वा मृतस्य तृतीये ॥ ३३३६ ॥

३ उभयस्य चिरं विकुर्व्य मृतस्य देवेषु विग्रहगतस्य । शाटस्यान्तर्मुहूर्तं त्रयाणामपि तरुकालमुत्कृष्टम् ॥ ३३३७ ॥

गुणकरणं चारित्रसामायिकं गुणकरणलक्षणे नोश्रुतभावकरणे प्रथमभेद एतदवतरतीत्यर्थः, तपः-संयमगुणात्मकमिति कृत्वा, संभवतो यथासंभवं श्रुतकरणमप्येतद् भवति । प्रशस्तवाग्रूपायाश्चारित्रभेदभूताया वाक्समितेरत्रावतारादिति । तथा, सुप्रशस्तं योजनाकरणमिति नोश्रुतभावकरणद्वितीयभेदेऽप्येतदवतरतीत्यर्थः, सुप्रशस्तमनो-वाक्-कायरूपत्वाच्चारित्रस्य ॥ इति चतुःषष्टिगाथार्थः ॥३३६२॥

इह च 'करणे भए य अंते' इत्यादिगाथायाः समनन्तरं 'नामं ठवणा दविए' इत्यादिका बह्व्यो गाथा निर्युक्तौ दृश्यन्ते, ताश्च भाष्यकारेण प्रक्षेपरूपत्वादिना केनापि कारणेन प्रायो न लिखिताः, केवलं तदर्थ एव भाष्यगाथाभिर्लिखितः, तदत्र कारणं स्वधियाऽभ्यूह्यमिति । तदेवं व्याख्यातं 'करणे भए य अंते' इत्यादिगाथायाः करणलक्षणं प्रथमं पदम् । करणं चेह सामायिकस्यैव प्रस्तुतम्, 'करोमि भदन्त ! सामायिकम्' इति संबन्धात् । अतस्तदेव सामायिककरणमव्युत्पन्नविनेयवर्गव्युत्पादनार्थं सप्तभिरनुयोगद्वारैः कृताकृतादिभिर्निरूपयन्नाह—'कयाकयमित्यादि' । ननु करणक्रियायाः पूर्वं सामायिकं किं कृतं क्रियते, अकृतं वा ? उभयथापि वक्ष्यमाणदोषः । अत्रोत्तरमाह—'कयाकयं ति' नैकान्तेन कृतं क्रियते, नाप्यकृतम्, किन्तु कृताकृतं क्रियत इति । तथा, केन कृतमिति वक्तव्यम् । तथा, केषु द्रव्येष्विष्टादिषु क्रियते । कदा वा कारकोऽस्य भवति । 'नयउ त्ति' नैगमादिनयमतेनात्रोत्तरं वक्तव्यम् । तथा, करणं कतिभेदमिति वाच्यम् । तथा, कथं केन प्रकारेणेदं सामायिकरणं लभ्यते इति चाभिधानीयम् ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ ३३६३ ॥

विस्तरार्थं तु भाष्यकार आह—

[1]किं कयमकयं कीरइ किंचातो भणइ सव्वहा दोसो । कयमिह सब्भावाओ न कीरए चिरकयघडु व्व ॥३३६४॥

निच्चकिरियापसंगो किरियावेफल्लमपरिणिट्ठा वा । अकय-कय-कज्जमाणव्ववएसाभावया निच्चे ॥ ३३६५ ॥

व्याख्या—किं कृतं क्रियते सामायिकम्, अकृतं वा ? । किञ्चातः ?—किमनेन प्रश्नेन ? इति गुरुणा प्रोक्ते भणति परः, सर्वथा पक्षद्वयेऽपि दोषः ; तथाहि—कृतं तावद् न क्रियते, सद्भावादग्रेऽपि विद्यमानत्वात्, चिरकृतघटवदिति । कृतस्य च करणे नित्यं क्रियायाः करणस्य प्रसङ्गः, क्रियायाश्च वैफल्यम्, कृतत्वादेवेति । अथ कृतमपि क्रियते, तर्हि करणस्यापरिनिष्ठा, कृतत्वाविशेषादिति ।

१ किं कृतमकृतं क्रियते किञ्चातो भणति सर्वथा दोषः । कृतमिह सद्भावाद् न क्रियते चिरकृतघट इव ॥ ३३६४ ॥
नित्यक्रियाप्रसङ्गः क्रियावैफल्यमपरिनिष्ठा वा । अकृत-कृत-क्रियमाणव्यपदेशाभावता नित्ये ॥ ३३६५ ॥

उभयस्य वैक्रियस्य संबन्धिनः संघात-परिशाटलक्षणस्य 'समय एको जघन्यमन्तरं भवति' इत्यध्याहारः। कस्य जन्तोरिदमवाप्यते ? इत्याह—चिरमन्तर्मुहूर्तमानं कालं विकुर्व्य वैक्रियवपुषि स्थित्वा मृतस्य देवेष्वविग्रहगतस्य जन्तोः संघातसमयोऽन्तरे प्राप्यते। अयमत्र भावार्थः—य औदारिकशरीरी वैक्रियलब्धिमानुपकल्पितवैक्रियशरीरः परिपूर्णं तिर्यग्मनुष्यवैक्रियस्थितिकालं यावत् सघात-परिशाटौ विधाय म्रियते, अविग्रहेण च सुरालये समुत्पद्य प्रथमसमये वैक्रियसंघातं करोति, द्वितीयादिसमयेषु तु संघात-परिशाटौ, तत्संबन्धिन उभयस्य चान्तरे स एवोक्तः संघातसमयो भवतीति। ननु यद्येवम्, 'चिर विउव्विय मयस्स' इत्यत्र चिरग्रहणमपार्थकम्, इह हि मनुष्यादिषु यश्चिरं स्तोकं वा कालं वैक्रियसंघात-परिशाटौ कृत्वाऽविग्रहेण दिवि समुत्पद्यते, तेनैव प्रयोजनम्, किं चिरशब्दविशेषणेन ?। सत्यम्, किन्तु प्रथमसमये मरणनिषेधार्थमित्थमुक्तम्। यद्वाऽनन्तरं वैक्रियसंघातान्तरं भावयता सप्रयोजनत्वाद् द्वितीयादिसमयेष्वाकस्मिकसमाप्तवैक्रियस्यापि मरणमुक्तम्, अत्र त्वसमाप्तवैक्रियस्यापि मरणोपदर्शनेन किञ्चित् प्रयोजनमिति ख्यापनार्थं चिरग्रहणेन परिपूर्णान्तर्मौहूर्तिकमनुष्यादिवैक्रियस्थितिकालानुज्ञामपि कृतवानाचार्य इत्यदोषः। 'साऽस्सान्तमुहुत्तं ति' एकदा वैक्रियसर्वशाटं कृत्वा पुनरपि तत्सर्वशाटं कुर्वतोऽन्तर्मुहूर्तं जघन्यमन्तरं भवति। कथमिति चेत्। उच्यते—कश्चिदौदारिकशरीरी वैक्रियलब्धिमान् क्वचित् प्रयोजने वैक्रियशरीरं कृत्वा सर्वकार्यपर्यन्ते तस्य सर्वपरिशाटं विधाय पुनरौदारिकशरीरमाश्रयति। तत्र चान्तर्मुहूर्तं स्थित्वा पुनरप्युत्पन्नप्रयोजनो वैक्रियं करोति, अन्तर्मुहूर्तं च तत्र स्थित्वा पुनरप्यौदारिकमागच्छन् वैक्रियस्य सर्वशाटं करोति। एवं च सति वैक्रियशरीरशाटस्य (?) चान्तरे औदारिक-वैक्रियशरीरगतमन्तर्मुहूर्तद्वयं भवति। अनेन चान्तर्मुहूर्तद्वयेनापि बृहत्तरमेकमेवान्तर्मुहूर्तं विवक्षितम्। अतो युज्यते जघन्यवैक्रियशाटान्तरमन्तर्मुहूर्तमिति। तदेवं वैक्रियसंघातोभयशाटानां जघन्योऽन्तरकाल उक्तः। अथ त्रयाणामप्येतेषामुत्कृष्टमन्तरकालमाह—'तिण्ह वीत्यादि' इह यदा कश्चिज्जीवो वैक्रियशरीरस्य संघातादित्रयं कृत्वा वनस्पतिषूत्पद्यते, तत्र चानन्तकालमतिवाह्य तत उद्धृतः पुनरपि क्वचिद् वैक्रियशरीरमासाद्य तत्संघातादित्रयं करोति, तदा तत्संबन्धिनः संघात-परिशाटोभयलक्षणस्य त्रयस्यापि स एवानन्तोत्सर्पिण्यवसर्पिणीरूपो वनस्पतिकालोऽन्तरे भवतीति ॥ ३३३७ ॥

अथाहारकशरीरसंघात-परिशाट-तदुभयानां कालोऽन्तरं च वक्तव्यम्, तत्राह—

आहारोभयकालो दुविहोऽन्तरंतियं जहन्नं ति। अंतोमुहुत्तमुक्कोसमद्धपरियट्टमूणं च ॥ ३३३८ ॥

१ आहारकोभयकालो द्विविधाऽन्तरात्रिकं जघन्यमिति। अन्तर्मुहूर्तमुत्कृष्टमर्धपरावर्त ऊनश्च ॥ ३३३८ ॥

अपिच, 'कृतं क्रियते' इत्युच्यमाने वस्तुनः सर्वदैव सत्त्वमभ्युपगतं भवति, यच्च सर्वदा सत् तदाकाशवद् नित्यम्, नित्ये च वस्तुन्य-कृतमिदम्, कृतं वा, क्रियमाणं वा इत्यादिव्यपदेशो न भवति, अनित्यत्वप्रसङ्गादिति ॥३३६४॥३३६५॥

अकृतपक्षमङ्गीकृत्याह—

[1]अकयं पि नेय कीरइ अच्चंताभावओ खपुप्फं व। निच्चकिरियाइदोसा सविसेसयरा व सुत्तम्मि ॥ ३३६६ ॥

स्पष्टा ॥ ३३६६ ॥

अथ क्रियमाणं क्रियते, तत्राह—

[2]सदसदुभयदोसाओ सव्वं कीरइ न कज्जमाणं पि। इह सव्वहा न कीरइ सामाइयमओ कओ करणं?॥३३६७॥

तत् क्रियमाणं वस्तु सद्वाऽसद् वा परिकल्प्येत?। यदि सत्, तर्हि कृतपक्षोक्ताः सर्वेऽपि दोषाः प्रसजन्ति। असत्त्वपक्षे त्वकृतपक्षदोषानुषङ्गः। अथ सदसत् क्रियमाणमिष्यते, तदप्ययुक्तम्, उभयपक्षोक्तदोषप्रसङ्गादिति। एवं सर्वथा सर्वप्रकारैः सामायिक न क्रियते। अतः कस्मात् तस्य करणम्? इति ॥ ३३६७ ॥

अत्रोत्तरमाह—

[3]नणु सव्वहा न कीरइ पडिसेहम्मि वि समाणमेवेदं। पडिसेहस्साभावे पडिसिद्धं केण सामइयं? ॥ ३३६८ ॥

अह कयमकयं न कयं न कज्जमाणं कहं तहावि कयं। पडिसेहवयणमेयं तह सामइयं पि को दोसो?॥३३६९॥

व्याख्या—ननु सर्वथा सर्वप्रकारैः सामायिकं न क्रियत इत्येव यस्त्वया प्रतिषेधो विधीयते, तत्रापि प्रतिषेधे समानमेवेदम्-किमसौ कृतः क्रियते, अकृतः, क्रियमाणो वेत्याद्युक्तन्यायेन सोऽपि सर्वथा न क्रियते। अतः प्रतिषेधाभावे केन प्रतिषिद्धं सामायिकम्?

---

१ अकृतमपि नैव क्रियतेऽत्यन्ताभावत' खपुष्पमिव। नित्यक्रियादिदोषा' सविशेषतरा वा सूत्रे ॥ ३३६६ ॥
२ सदसदुभयदोषेभ्यः सर्वं क्रियते न क्रियमाणमपि। इह सर्वथा न क्रियते सामायिकमतः कुतः करणम्? ॥ ३३६७ ॥
३ ननु सर्वथा न क्रियते प्रतिषेधेऽपि समानमेवेदम्। प्रतिषेधस्याभावे प्रतिषिद्धं केन सामायिकम् ॥ ३३६८ ॥
अथ कृतमकृतं न कृतं न क्रियमाणं कथं तथापि कृतम्। प्रतिषेधवचनमेवेदं तथा सामायिकमपि को दोषः? ॥ ३३६९ ॥

आहारकशरीरसंघातः परिशाटश्च प्रत्येकं सामायिको भवति । स च सुगमत्वाद् गाथायां न लिखितः, स्वयमेव तु द्रष्टव्य इति । संघात-परिशाटोभयकालस्तु द्विविधः— उत्कृष्टतो जघन्यतश्च । संघात-परिशाटोभयानां यदन्तरत्रिकमन्तरकालत्रयं जघन्यम्, तदेतत् सर्वमन्तर्मुहूर्तकालमानमवगन्तव्यम्; केवलं तदेवान्तर्मुहूर्तं लघु बृहच्च तारतम्येनावसेयमिति । आहारकशरीरं ह्यन्तर्मुहूर्तकालस्थितिकमेव भवति ; अतस्तत्संबन्धिनः संघात-परिशाटोभयस्य जघन्यत उत्कृष्टतश्चान्तर्मुहूर्तकालभावित्वं सिद्धमेवेति । एकदा कृतं चाहारकशरीरं प्रयोजनसिद्धौ परित्यज्य चतुर्दशपूर्वधरो जघन्यतोऽन्तर्मुहूर्तात् पुनरप्युत्पन्न-प्रयोजनस्तत् करोति, अतस्तद्गतसंघात-परिशाटोभयानां भवति जघन्यमन्तर्मुहूर्त्तमिति । उत्कृष्ट त्वन्तरं त्रयाणामपि संघात-परिशाटो-भयानां किञ्चिन्न्यूनार्धपुद्गलपरावर्तरूपं भवति । इदं च यच्चतुर्दशपूर्वधर आहारकशरीरं कृत्वा प्रमादात् प्रतिपातितो वनस्पत्यादिषु यथोक्तकालं स्थित्वा पुनरपि चतुर्दशपूर्वधरत्वमवाप्याहारकशरीरं करोति तस्य द्रष्टव्यमिति ॥ ३३३८ ॥

अथ तैजस-कार्मणविषयं संघातादिविचारं चिकीर्षुराह—

[1]तेया-कम्माणं पुण संताणोऽणाइओ न संघाओ । भव्वाण होज्ज साडो सेलेसीचरिमसमयम्मि ॥ ३३३९ ॥
उभयमणाइ-निहणं संतं भव्वाण होज्ज केसिंचि । अंतरमणाइभावा अच्चंतविओगओ णेसिं ॥ ३३४० ॥

व्याख्या— तैजस-कार्मणयोः पुनः संघातस्तावद् न भवत्येव, तयोरनादिकालात् संतानेन प्रवृत्तत्वात्, संघातस्य तु गृह्यमाणशरीरप्रथमसमयविषयत्वादिति प्रागप्युक्तम् । सर्वपरिशाटोऽपि तैजस-कार्मणयोरभव्यानां न भवत्येव, तस्य त्यज्यमानशरीरविषयत्वात्, तेषां च तत्त्यागासंभवात् । भव्यानां तु केषाञ्चित् शैलेशीचरमसमये भवेत् शाटः । स च सामायिको द्रष्टव्यः । उभयं तु संघात-परिशाटलक्षणम्, आदिश्च निधनं चादि-निधने, न विद्येते आदि-निधने यस्य तदनादि निधनमेवाभव्यानां भवति, तत्त्यागाभावात् । भव्यानां तु केषाञ्चित् सिद्धिगमनसमये सान्तमुभयं भवेत्, तदानीं सर्वथा तत्त्यागादन्तरं 'णेसिं ति' एतयोर्न भवत्येव, अभव्यानामनादिनिधनत्वात् तयोः, भव्यानां तु सनिधनत्वेऽप्यत्यन्तवियोगेन त्यागात् पुनस्तद्ग्रहणाभावात्, त्यक्तस्य पुनर्ग्रहणे चान्तरकालसंभवादिति ॥ ३३३९ ॥ ३३४० ॥ संघात-परिशाटवक्तव्यता समाप्ता ॥ तदेवमुक्तं सज्जीवप्रयोगकरणम् ॥

---

१ तैजस-कार्मणयो· पुनः संतानोऽनादिको न संघात. । भव्यानां भवेत् शाटः शैलेशीचरमसमये ॥ ३३३९ ॥
उभयमनादि-निधनं सान्तं भव्यानां भवेत् केषाञ्चिदपि । अन्तरमनादिभावादत्यन्तवियोगतो नैतयोः ॥ ३३४० ॥

न केनचित्; अतः क्रियत एवैतदिति । अथैवं ब्रूषे प्रतिषेधवचनमेतत् कृतं वा सत्, अकृतं वा सद् न कृतम्, नापि क्रियमाणं कृतम्, तथापि कृतं तावत् केनाप्युच्चारणादिना प्रकारेण । हन्त ! यथा केनापि प्रकारेण त्वयैतत् कृतं तथा सामायिकमपि केनापि प्रकारेण कृतम्, अतस्तत्रापि को दोषस्त्वया दीयते ? इति ॥ ३३६८ ॥ ३३६९ ॥

अथ कृताकृतपक्षं नयमतेनोपदर्श्य सिद्धान्तपक्षमुपदर्शयन्नाह—

अकयमसुद्धनयाणं निच्चत्तणओ नभं व सामइयं । सुद्धाण कयं घड इव कयाकयं समयसब्भावो ॥३३७०॥

[1]अकृतमशुद्धनयानां नैगम-संग्रह-व्यवहाराणामकृतं सामायिकम्, नित्यत्वात्, नभोवदिति । शुद्धानां तु निश्चय-द्रव्यार्थिकरूपाणामशुद्धनयानां ... नैकान्तेन कृतं सामायिकं क्रियते, नाप्यकृतम्, किन्तु कृताकृतं नयरूपाणामृजुसूत्रादीनां कृतं तत्, घटवदिति । समयसद्भावस्त्वयम्- नैकान्तेन कृतं सामायिकं क्रियते, नाप्यकृतम्, किन्तु कृताकृतं क्रियत इति ॥ ३३७० ॥

यदि वा, सिद्धान्तस्थित्या विवक्षावशात् कृतादिभिश्चतुर्भिर्भङ्गैः किञ्चिद् वस्तु क्रियते, किञ्चित् त्वेतैश्चतुर्भिरपि भङ्गैर्न क्रियत एवेति दर्शयन्नाह—

कीरइ कयमकयं वा कयाकयं वेह कज्जमाणं वा । कज्जमिह विवक्खाए न कीरए सव्वहा किंचि ॥३३७१॥

[2]इह किञ्चित् कार्यं केनापि रूपेण कृतं क्रियते, केनचिद्रूपेणाकृतं क्रियते, केनापि तु रूपेण कृताकृतं क्रियते, केनचित् प्रकारेण क्रियमाणं वा किञ्चित् क्रियते; अन्यत्तु किञ्चिद् विवक्षया सर्वैरपि कृतादिभिः प्रकारैर्न क्रियत इति ॥ ३३७१ ॥

अत्र यथासंख्यमुदाहरणम्—

[3]रूवि त्ति कीरइ कओ कुंभो संठाणसत्तिओ अकओ । दोहि वि कयाकओ सो तस्समयं कज्जमाणो त्ति ॥३३७२॥

पुव्वकओ उ घडतया परपज्जाएहिं तदुभएहिं च । कज्जंतो य पडतया न कीरए सव्वहा कुंभो ॥३३७३॥

१ अकृतमशुद्धनयानां नित्यत्वतो नभ इव सामायिकम् । शुद्धानां कृतं घट इव कृताकृतं समयसद्भाव ॥ ३३७० ॥

२ क्रियते कृतमकृतं वा कृताकृतं वेह क्रियमाणं वा । कार्यमिह विवक्षया न क्रियते सर्वथा किञ्चित् ॥ ३३७१ ॥

३ रूपीति क्रियते कृतः कुम्भः संस्थानशक्तितोऽकृतः । द्वाभ्यामपि कृताकृतः स तत्समयं क्रियमाण इति ॥ ३३७२ ॥

पूर्वकृतस्तु घटतया परपर्यायैस्तदुभयैश्च । क्रियमाणश्च पटतया न क्रियते सर्वथा कुम्भः ॥ ३३७३ ॥

अथाजीवप्रयोगकरणमभिधित्सुराह—

[1]अजीवाणं करणं नेयं पड-संख-सगड-थूणाणं । संघायण-पडिसाडणमुभयं तह नोभयं चेव ॥ ३३४१ ॥

अजीवानां करणं ज्ञेयम् । किं तत्? इत्याह—संघातनं तन्तूनां पटे, परिशाटनमेव केवलं श्लक्ष्णीकरणं शङ्खस्य, उभयं संघात-परिशाटलक्षणं तक्षण-कीलिकादियोगात् शकटस्य, 'नोभयं ति' संघात-परिशाटोभयनिषेधः स्थूणायाः, केवलोर्ध्वकरणादिभावेन तदभावादिति ॥ ३३४१ ॥

एवमन्यदपि यज्जीवप्रयोगादजीवानां क्रियते तत् सर्वमजीवकरणमिति दर्शयन्नाह—

[2]जं जं निज्जीवाणं कीरइ जीवप्पओगओ तं तं । वन्नाइ रूव-कम्माइं वावि तदजीवकरणं ति ॥ ३३४२ ॥

एवं यद्यदजीवानां वस्त्र-काष्ठ-पाषाणादीनां जीवप्रयोगाज्जीवव्यापारेण कुसुम्भ-माञ्जिष्ठादिभिर्वर्णादि क्रियते, पुत्तलिकादिकं रूपकर्मादि विधीयते, तत् सर्वमजीवकरणमिति । तदेवमुक्तं द्रव्यकरणम् ॥ ३३४२ ॥

अथ क्षेत्रकरणमभिधित्सुराह—

[3]इह दव्वं चेव निवासमेत्तपज्जायभावओ खेत्तम् । भन्नइ नभं न तस्स य करणं निव्वत्तिओऽभिहियं ॥३३४३॥

होज्ज व पज्जायाओ पज्जाओ जेण दव्वओऽणन्नो । उवयारमेत्तओ वा जह लोए सालिकरणाई ॥३३४४॥

खेत्ते व जत्थ करणं ति खित्तकरणं तयं जहा सिद्धं । खित्तं पुण्णमिणं पुण्णकरणसंबंधमेत्तेणं ॥ ३३४५ ॥

व्याख्या—इह द्रव्यमेव सद् नभः क्षेत्रं भण्यते । कुत इत्याह—'निवासेत्यादि' मात्रशब्दस्य व्यवहितः प्रयोगः, निवासपर्यायभावमात्रत इत्यर्थः । इदमुक्तं भवति—'क्षि निवास-गत्योः' इति 'क्षियन्ति निवसन्ति जीवा अजीवाश्चात्र' इत्यौणादिके त्रप्रत्यये क्षेत्रम्,

---

१ अजीवानां करण ज्ञेयं पट-शङ्ख-शकट-स्थूणानाम् । संघातन-परिशाटनमुभयं तथा नोभयं चैव ॥ ३३४१ ॥
२ यद् यद् निर्जीवानां क्रियते जीवप्रयोगतस्तत् तत् । वर्णादि रूपकर्मादि वापि तदजीवकरणमिति ॥ ३३४२ ॥
३ इह द्रव्यमेव निवासमात्रपर्यायभावतः क्षेत्रम् । भण्यते नभो न तस्य च करणं निर्वृत्तितोऽभिहितम् ॥ ३३४३ ॥
भवेद् वा पर्यायात् पर्यायो येन द्रव्यतोऽनन्यः । उपचारमात्रतो वा यथा लोके शालिकरणादि ॥ ३३४४ ॥
क्षेत्रे वा यत्र करणमिति क्षेत्रकरणं तद् यथा सिद्धम् । क्षेत्रं पुण्यमिदं पुण्यकरणसंबन्धमात्रेण ॥ ३३४५ ॥

व्याख्या–'रूपी' इति कृत्वा पूर्वं कृत एव कुम्भस्तद्रूपतया क्रियते, मृत्पिण्डावस्थायामपि रूपादीनां सद्भावादिति । संस्थान-जलाहरणशक्तिभ्यां पूर्वमकृतः क्रियते । रूपतया संस्थानशक्तितश्चेति रूपद्वयेनापि विवक्षितोऽसौ पूर्वं कृताकृतः क्रियते । तत्समयमुत्पत्तिसमये क्रियमाणोऽसौ क्रियत इति । पूर्वकृतस्तु पूर्वं निष्पन्नो घटो घटतया घटपर्यायेण न क्रियते, परपर्यायैस्तु पटादिधर्मैः पूर्वमकृतो घटो न क्रियते, परपर्यायैर्वस्तुनः कर्तुमशक्यत्वात्; तदुभयैस्तु स्व-परपर्यायैर्विवक्षितः कृताकृतोऽसौ न क्रियते, स्वपर्यायाणां पूर्वमेव कृतत्वात्; परपर्यायाणां तु पूर्वमप्यकृतानां कर्तुमशक्यत्वात्। क्रियमाणश्चोत्पत्तिसमये कुम्भः पटतया न क्रियते, अशक्यत्वात्। तदेवं सर्वथा सर्वैरपि कृतादिप्रकारैः कुम्भो न क्रियते, यथोक्तविवक्षया कृतोऽकृतः कृताकृतः क्रियमाणश्च कुम्भो न क्रियत इत्यर्थः । तदेवं यथाभिहितविवक्षया क्रियमाणत्वमक्रियमाणत्वं च वस्तुनः प्रोक्तम् ॥ ३३७२ ॥ ३३७३ ॥

अथवा, विवक्षान्तरेण सर्ववस्तूनां क्रियमाणत्वमक्रियमाणत्वं च दर्शयितुमाह—

वोमाइ निच्चयाओ न कीरइ दव्वयाइ वा सव्वं । कीरइ य कज्जमाणं समए सव्वं सपज्जयओ ॥ ३३७४ ॥

इह व्योमा-ऽऽत्म काल-दिगादिकं वस्तु न क्रियते, नित्यत्वात् । अथवा, व्याप्त्या सर्वमपि व्योमादि घट-विद्युद्-वन-कुसुमादि च वस्तु न क्रियते, द्रव्यतया सर्वस्य सर्वदाऽवस्थितत्वात् । पर्यायतया तु प्रतिसमयं सर्वं वस्तु क्रियमाणं क्रियते, सर्वस्यापि समये समयेऽपरापरस्वपर्यायाणामुत्पादादिति ॥ ३३७४ ॥

समयसद्भावव्यक्तीकरणपूर्वकं प्रकृतयोजनामाह—

उप्पाय-ट्ठिई-भंगस्सभावओ इय कयाकयं सव्वं । सामाइयं पि एवं उप्पायाइस्सहावं ति ॥ ३३७५ ॥

उत्पाद-स्थिति-भङ्गस्वभावत्वादित्युक्तप्रकारेण सर्वमपि वस्तु कृताकृतस्वरूपम्, एवं सामायिकमप्युत्पादादिस्वभावत्वात् कृताकृतस्वरूपं द्रष्टव्यम् । अतः 'कृताकृतं क्रियते' इति स्थितम् ॥ ३३७५ ॥

अत्र परः प्राह—

---

१ व्योमादि नित्यतातो न क्रियते द्रव्यतया वा सर्वम् । क्रियते च क्रियमाणं समये सर्वं स्वपर्ययतः ॥ ३३७४ ॥
२ उत्पाद-स्थिति-भङ्गस्वभावत इति कृताकृत सर्वम् । सामायिकमप्येवमुत्पादादिस्वभावमिति ॥ ३३७५ ॥

इत्यस्मादन्वर्थाद् द्रव्यमपि नभः क्षेत्रमुच्यते । तस्य च नभसो निर्वृत्तितो निष्पादनेन करणं नाभिहितम्, अकृत्रिमत्वादस्येति । यदि तस्य करणं नास्ति, तर्हि करणभेदेषु पाठः किमर्थः ? इत्याशङ्क्याह—'होज्ज वेत्यादि' भवेद् वा क्षेत्रस्यापि करणं 'पज्जायाउ त्ति' घट-पटादिसंयोग वियोगादिपर्यायानाश्रित्येत्यर्थः । पर्याया हि सर्वेषामपि वस्तूनामनित्या इत्यतस्तेषां करणमपि संभवति । यदि नाम पर्यायाणां करणं संभवति, तर्हि द्रव्यस्य किमायातम् ? इत्याह—पर्यायो येन द्रव्यादनन्योऽभिन्नस्तेन पर्यायस्य करणं द्रव्यस्यापि करणं भवत्येवेति । उपचारतो वा क्षेत्रकरणं भण्यते । 'जह लोए सालिकरणाइ त्ति' यथा लोके वक्तारो भवन्ति—'शालिक्षेत्रमिक्षुक्षेत्रं वा मया कृतम्' इत्यादि । अथवा 'क्षेत्रस्य करणम्' इति षष्ठीतत्पुरुषो न क्रियते, किन्तु क्षेत्रे करणं क्षेत्रकरणं सप्तमीतत्पुरुष इति दर्शयन्नाह—'खेत्ते वेत्यादि' अथवा, यत्र क्षेत्रे करणं पुण्यादेस्तत् क्षेत्रकरणम्; यथा लोकेऽपि सिद्धमेतत्—'पुण्यमिदमुज्जयन्त-शत्रुञ्जयादिक्षेत्रं, पुण्यकरणसंबन्धमात्रेण, तत्र हि ये दाना-ऽनशनादिकं कुर्वन्ति, तेषां महत् पुण्यं भवति, इत्यतः पुण्यस्य तत्र करणात् पुण्यं क्षेत्रं तादिति । उक्तं क्षेत्रकरणम् ॥३३४३॥३३४४॥३३४५॥

अथ कालकरणं वाच्यम् । तत्र कालस्याप्यकृत्रिमत्वात् करणं नास्ति, द्रव्यपर्यायत्वविवक्षया तस्य तद् भवेद् वेति दर्शयति—

[1]जं वत्तणाइरूवो कालो दव्वस्स चेव पज्जाओ । तो तेण तस्स तम्मि व न विरुद्धं सव्वहा करणं ॥ ३३४६ ॥

यस्मात् प्रागुक्तस्वरूपो वर्तमानादिरूपः कालो द्रव्यस्यैव पर्यायः, पर्यायश्च द्रव्यादभिन्नः, ततो यथा द्रव्यस्य तथा तस्यापि करणं न विरुद्धम् । कथमित्याह—तेन कालेन, तस्य वा, तस्मिन् वेत्यादिभिः सर्वथा सर्वैरपि प्रकारैरिति ॥ ३३४६ ॥

अथवा, ज्योतिष्कमार्गप्रसिद्धमेवेह कालकरणं गृह्यत इति दर्शयति—

[2]अहवेह कालकरणं बवाइ जोइसियगइविसेसेणं । सत्तविहं तत्थ चरं चउव्विहं थिरमक्खायं ॥ ३३४७ ॥

अथवा, बव-बालवादिरूपं चन्द्रा-ऽऽदित्यादिज्यौतिषिकदेवगतिविशेषेण यद् भवति तादिह कालकरणं गृह्यते । तत्र च बवादिरूपे कालकरणं सप्तविधं चरम्, अन्यान्यतिथिषु भावात्; चतुर्विधं तु स्थिरमाख्यातम्, नियतास्वेव तिथिषु भावादिति ॥ ३३४७ ॥

तत्र यत् सप्तविधं चरं तदाह—

१ यद् वर्तनादिरूपः कालो द्रव्यस्यैव पर्यायः । ततस्तेन तस्य तस्मिन् वा न विरुद्धं सर्वथा करणम् ॥ ३३४६ ॥

२ अथवेह कालकरणं बवादि ज्योतिषिकगतिविशेषेण । सप्तविधं तत्र चरं चतुर्विधं स्थिरमाख्यातम् ॥ ३३४७ ॥

[1]नणु दव्वमणत्थंतरपज्जायंतरविसेसणेहिं जुज्जेज्ज । उप्पायाइसहावं न उ सामाइयं गुणो जम्हा ॥ ३३७६ ॥
सो उप्पण्णो उप्पण्ण एव विगओ य विगय एवेह । किं सेसमस्स जेणिह कयाकयादेसया होज्जा ? ॥३३७७ ॥

ननु द्रव्यमनर्थान्तरभूतपर्यायान्तरविशेषणैरुत्पादादिस्वभावं युज्येत, न तु सामायिकम्, 'गुणो जम्ह त्ति' गुणमात्ररूपत्वादिति। स हि गुण उत्पन्नः समुत्पन्न एव, न तु विगतोऽवस्थितो वा; यदा तु विगतस्तदा विगत एव, न तूत्पन्नोऽवस्थितो वा। अतः किं शेषमस्योद्धृतम्, येनेह कृताकृतादेशता कृताकृतरूपता स्यात् ? इति ॥ ३३७६ ॥ ३३७७ ॥

सूरिरुत्तरमाह—

[2]जं चिय दव्वाणन्नो पज्जाओ तं च तिविहसब्भावं । तो सो वि तिरूवो च्चिय तत्तो य कयाकयसहावो ॥३३७८॥

यस्मादेव पर्यायो द्रव्यानन्यः, तच्च द्रव्यमुत्पाद-व्यय-ध्रौव्यलक्षणत्रिविधस्वभावम्, ततो द्रव्यानन्यत्वात् सोऽपि पर्यायस्त्रिरूप एव, अतश्च द्रव्यवत् कृताकृतस्वभावः स्यादेवेति ॥ ३३७८ ॥

अथवा, स्वतन्त्रस्यापि सामायिकगुणस्य त्रिरूपता घटत एवेति। कथम् ? इत्याह—

[3]जहवा रूवंतरओ विगमुप्पाए वि रूवसामण्णं । निच्चं कयाकयमओ रूवं परपज्जयाओ वा ॥ ३३७९ ॥
तह परिणामंतरओ वय-विभवे वि परिणामसामण्णं । निच्चं कयाकयमओ सामइयं परगुणाओ वा ॥ ३३८० ॥

यथा वा घटादौ रक्तत्वादिरूपाच्छुक्लत्वादिरूपान्तरोत्पत्तौ पूर्वरूपस्य विगमे उत्तररूपस्योत्पादेऽपि रूपसामान्यं नित्यमवतिष्ठते, अतो रूपगुणस्य त्रिरूपता; अस्माच्च त्रैरूप्यात् कृताकृतं रूपं युज्यते। परपर्यायाद् वा परपर्यायमाश्रित्य कृताकृतं युज्यत इति।

---

१ ननु द्रव्यमनर्थान्तरपर्यायान्तरविशेषणैर्युज्येत । उत्पादादिस्वभावं न तु सामायिकं गुणो यस्मात् ॥ ३३७६ ॥
स उत्पन्न उत्पन्न एव विगतश्च विगत एवेह । किं शेषमस्य येनेह कृताकृतादेशता भवेत् ? ॥ ३३७७ ॥

२ यदेव द्रव्यानन्यः पर्यायस्तच्च त्रिविधसद्भावम् । ततः सोऽपि त्रिरूप एव ततश्च कृताकृतस्वभावः ॥ ३३७८ ॥

३ यथावा रूपान्तरतो विगमोत्पादयोरपि रूपसामान्यम् । नित्यं कृताकृतमतो रूपं परपर्ययाद् वा ॥ ३३७९ ॥
तथा परिणामान्तरतो व्यय-विभवयोरपि परिणामसामान्यम् । नित्यं कृताकृतमतः सामायिकं परगुणाद् वा ॥३३८०॥

[1]बवं च बालवं चेव कोलवं तीइलो य णं। गरो हि वणियं चेव विट्ठी हवइ सत्तमा ॥ ३३४८ ॥

अस्य सप्तविधस्यापि चरस्य करणस्यानयनोपायमाह—

[2]पक्खतिहओ दुगुणिया दुरूवरहिया य सुक्कपक्खम्मि। सत्तहिए देवसियं तं चिय रूवाहियं रत्तिं ॥ ३३४९ ॥

कृष्णस्य शुक्लस्य वा प्रस्तुतपक्षस्य यास्तिथयोऽतिक्रान्तास्ता द्विगुणीक्रियन्ते। ततश्चागतराशेः सप्तभिर्भागो ह्रियते। एवं च कृते यत् करणमागच्छति तत् प्रस्तुततिथौ कृष्णपक्षे दैवसिकं विज्ञेयम्, रूपाधिकं तु तदेव रात्रौ; यथा कृष्णदशम्यां द्विगुणितायां विंशतिर्भवति। ततः सप्तभिर्भागे हृते षडवशेषा भवन्ति। तथा चेदं षष्ठं वणिजभिधानं दैवसिकं करणं लब्धम्, रूपे तत्र प्रक्षिप्ते रात्रिगतं विष्ट्यभिधानं सप्तमं करणं लभ्यते। एवमन्यत्रापि कृष्णपक्षे द्रष्टव्यम्। शुक्लपक्षे विशेषमाह—'दुरूवरहिया य सुक्कपक्खम्मि त्ति' शुक्लपक्षे द्विगुणिततिथिराशेर्द्वौ पात्येते, ततो दैवसिकं करणमागच्छति, रूपाधिकं तु रात्रिगतं भवति; यथा शुक्लचतुर्थ्यां द्विगुणितायामष्टौ भवन्ति, द्वयोश्च पातितयोः षड् भवन्ति, सप्तभिश्च भागो न पूर्यते, ततस्तदेव दैवसिकं षष्ठं करणं लब्धम्, रूपे तु प्रक्षिप्ते सप्तमं विष्ट्यभिधानं रात्रिगतं करणं लभ्यते। एवमन्यत्रापि शुक्लपक्षे भावनीयम्। इह च लोकप्रसिद्धकरणानयनोपायोऽन्योऽपि विद्यते, तद्यथा—"[3]तिहि दुगुणी, एकिहिं ऊणी, सत्तहिं हरणं, सेसं करणं" इति। अयमपि युक्तः, केवलमिह मास-तिथयो द्विगुणयितव्याः, यच्चेहागच्छति तद् रात्रिकरणम्, रूपे तु पातिते दिवसगतं द्रष्टव्यमिति ॥ ३३४९ ॥

अथ चतुर्विधं स्थिरकरणमाह—

[4]सउणि चउप्पय नागं किंसुग्घं च करणं थिरं चउहा। बहुलचउद्दसिरत्तिं सउणं सेसं तियं कमसो ॥३३५०॥

कृष्णचतुर्दशीरात्रौ सदावस्थितं शकुनिनामकं करणं भवति, अमावास्यायां दिवसे चतुष्पदम्, रात्रौ नागम्, प्रतिपदि दिवा किंस्तुघ्नम्। शेषरजनी-दिनयोर्यथोक्तोपायतश्चरं करणमवसेयमिति ॥ ३३५० ॥

१ ववं च बालवं चैव कौलवस्तैतिलश्च। गरो हि वणिजश्चैव विष्टिर्भवति सप्तमी ॥ ३३४८ ॥
२ पक्षतिथयो द्विगुणिता द्विरूपरहिताश्च शुक्लपक्षे। सप्तहृते दैवसिकं तदेव रूपाधिकं रात्रौ ॥ ३३४९ ॥
३ तिथिर्द्विगुणा, एकेनोना, सप्तभिर्हरणं, शेषं करणम्।
४ शकुनिश्चतुष्पादो नागः किंस्तुघ्नश्च करणं स्थिरं चतुर्धा। बहुलचतुर्दशीरात्रौ शकुनिः शेषं त्रिकं क्रमशः ॥ ३३५० ॥

तथोत्तरोत्तरशुद्ध्या परिणमतः सामायिकगुणस्य परिणामान्तरात् परिणामोत्पत्तौ पूर्वपरिणामस्य व्यये विगमे, उत्तरपारिणामस्य तु विभवेऽप्युत्पादेऽपि परिणामसामान्यं नित्यमवतिष्ठते। ततः सामायिकगुणस्य त्रिरूपता। अस्माच्च त्रैरूप्यात् तस्य कृताकृतत्वम्; परगुणत्वाद् वा परगुणमाश्रित्य कृताकृतत्वमिति ॥३३७९॥३३८०॥

अथवा, अन्यथापि सामायिकस्य कृताकृतत्वं वक्तव्यम्, कथम्? इत्याह—

[1]दव्वाइचउक्कं वा पडुच्च कयमकयमहव सामइयं। एगपुरिसाइओ कयमकयं नाणानराईहिं ॥ ३३८१ ॥

अथवा, द्रव्यादिचतुष्कं द्रव्य-क्षेत्र-काल-भावचतुष्टयं प्रतीत्य कृतमकृतं च सामायिकं भावनीयम्; तथाहि—एकं विवक्षितं पुरुषद्रव्यं प्रतीत्य कृतं सामायिकम्, सादिसपर्यवसितत्वात्; नानापुरुषद्रव्याण्याश्रित्य पुनरकृतम्, अनाद्यपर्यवसितत्वादिति। आदिशब्दाद् भरतैरावतक्षेत्राणि प्रतीत्य कृतम्, महाविदेहक्षेत्रेष्वकृतम्, अवच्छिन्नप्रवाहत्वेन नित्यत्वादिति। तथा, उत्सर्पिण्य-ऽवसर्पिणीकालमाश्रित्य कृतम्, व्यवच्छिद्यमानत्वेनाऽनित्यत्वात्। नोउत्सर्पिण्यवसर्पिणीकालं त्वाश्रित्याकृतम्, अव्यवच्छिन्नत्वेन नित्यत्वात्। भावं त्वेकपुरुषोपयोगं प्रतीत्य कृतम्, नानापुरुषोपयोगानाश्रित्य पुनरकृतम्। इत्येवं वा कृताकृतं सामायिकमिति ॥ ३३८१ ॥ तदेवमुक्तं कृताकृतद्वारम् ॥

अथ 'केन कृतम्' इति द्वारं विवरीषुराह—

[2]केण कयं ति य ववहारओ जिणिंदेण गणहरेहिं च। तस्सामिणा उ निच्छयनयस्स तत्तो जओऽणन्नं ॥३३८२॥

पाठसिद्धा ॥ ३३८२ ॥

अत्राक्षेप-परिहारौ प्राह—

[3]ननु निग्गमे कयं चिय केण कयं तं ति का पुणो पुच्छा?। भण्णइ, स बज्झकत्ता इहंतरंगो विसेसेणं ॥३३८३॥

---

१ द्रव्यादिचतुष्कं वा प्रतीत्य कृतमकृतमथवा सामायिकम्। एकपुरुषादितः कृतमकृतं नानानरादिभिः ॥ ३३८१ ॥
२ केन कृतमिति च व्यवहारतो जिनेन्द्रेण गणधरैश्च। तत्स्वामिना तु निश्चयनयस्य ततो यतोऽनन्यत् ॥ ३३८२ ॥
३ ननु निर्गमे कृतमेव केन कृतं तदिति का पुनः पृच्छा?। भण्यते, स बाह्यकर्ता इहान्तरङ्गो विशेषेण ॥ ३३८३ ॥

अथ भावकरणमाह—

भावस्स व भावेण व भावे करणं ति भावकरणं ति । तं जीवाजीवाणं पज्जायविसेसओ बहुहा ॥ ३३५१ ॥

भावस्य पर्यायस्य करणं भावकरणम्, भावेन वा करणम्, भावे वा करणं भावकरणम् । तच्च जीवा-ऽजीवानां पर्यायविशेषतः पर्यायविशेषानाश्रित्य बहुधा बहुभेदं भवतीति ॥ ३३५१ ॥

तत्राल्पवक्तव्यत्वादजीवकरणं तावदाह—

अवरप्पओगजं जं अजीवरूवाइपज्जयावत्थं । तमजीवभावकरणं तप्पज्जायप्पणाविक्खं ॥ ३३५२ ॥

परप्रयोगाज्जातं परप्रयोगजं न परप्रयोगजमपरप्रयोगजं स्वाभाविकमित्यर्थः । यदपरप्रयोगजं तदजीवभावकरणमिति संबन्धः। कथंभूतम् ? इत्याह—'अजीवरूवाइपज्जयावत्थं ति' अजीवानामभ्रेन्द्रधनुरादीनां रूपादिपर्याया अजीवरूपादिपर्यायास्त एवावस्था स्वरूपं यस्याजीवभावकरणस्य तदजीवरूपादिपर्यायावस्थम् । परप्रयोगमन्तरेणैव यदभ्राद्यजीवानां स्वाभाविकं रूप-रस-गन्ध-स्पर्शसंस्थानादिपर्यायकरणं तदजीवभावकरणमित्यर्थः । तर्हि द्रव्यविस्रसाकरणादस्य को भेदः ? इत्याशङ्क्याह—' तप्पज्जायप्पणाविक्खं ति ' तेषामजीवानां पर्याया रूपादयस्तत्पर्यायास्तेषामर्पणं प्राधान्येन विवक्षणं तत्पर्यायार्पणं, तस्यापेक्षा यत्र तत् तत्पर्यायार्पणापेक्षम् । इदमुक्तं भवति— पूर्वं द्रव्यप्राधान्यविवक्षया द्रव्यविस्रसाकरणमिदमुक्तं भवति, इह तु रूपादिपर्यायप्राधान्यमपेक्ष्यैतदेव भावकरणमभिहितमिति ॥ ३३५२ ॥

इदं च 'तप्पज्जायप्पणाविक्खं' इत्यनेन दत्तमप्युत्तरमनवगच्छतः परस्य मतमाशङ्क्याह—

को दव्ववीससाकरणओ विसेसो इमस्स नणु भणियं । इह पज्जायावेक्खा दव्वट्ठियनयमयं तं च ॥३३५३॥

गतार्था ॥ ३३५३ ॥

---

१ भावस्य वा भावेन वा भावे करणमिति भावकरणमिति । तज्जीवाजीवानां पर्यायविशेषतो बहुधा ॥ ३३५१ ॥
२ अपरप्रयोगजं यदजीवरूपादिपर्ययावस्थम् । तदजीवभावकरण तत्पर्यायार्पणापेक्षम् ॥ ३३५२ ॥
३ को द्रव्यविस्रसाकरणतो विशेषोऽस्य ननु भणितम् । इह पर्यायापेक्षा द्रव्यास्तिकनयमत तच्च ॥ ३३५३ ॥

आह—ननु 'उद्देसे निद्देसे य निग्गमे' इत्यत्र सामायिकस्य निर्गमे भण्यमाने 'महावीरात् तन्निर्गतम्' इत्यादिप्रतिपादनेन 'केन कृतं तत्' इत्येतद् गतमेवोक्तार्थमेव, पुनरपीह का पृच्छा ?। भण्यतेऽत्रोत्तरम्—स तीर्थकरादिः सामायिकस्य बाह्यकर्ता तत्रोक्तः, इह तु विशेषणान्तरङ्गकर्ता जिज्ञासितः। स च नैश्चयिकः सामायिकानुष्ठाता साध्वादिर्द्रष्टव्यः, सामायिकपरिणामानन्यत्वादिति ॥३३८३॥

परिहारान्तरमाह—

अहवा सतंतकत्ता तत्थेह पउज्जकारगोऽभिमओ । अहवेह सव्वकारगपरिणामाणन्नरूवो त्ति ॥ ३३८४ ॥

अथवा, तत्र निर्गमे भगवांस्तीर्थकरः स्वयंबुद्धत्वात् स्वतन्त्रकर्ताऽभिहितः, इह तस्यैव भगवतस्तीर्थकरस्य यः प्रयोज्यः प्रवोधनीयः सन् कारकः साध्वादिः स कर्ताऽभिमतः। अथवा, इह कर्ता सर्वकारकपरिणामानन्यरूपोऽभिमतः, स च साध्वादिरेव सामायिकानुष्ठाता मन्तव्यः; तथाहिसामायिकं कुर्वन्नसौ कर्ता, क्रियमाणत्वेन च कर्मरूपात् सामायिकादनन्यत्वात् कर्म, सामायिकं येनाध्यवसायेन करणभूतेनासौ करोति तस्मादनन्यत्वात् करणम्। गुरुणा चास्मै सामायिकं प्रदीयत इति संप्रदानम्, सामायिकं चास्मात् शिष्य-प्रशिष्यपरम्परया प्रवर्तिष्यत इत्यपादानम्, स्वपरिणामे च सामायिकमव्यवच्छिन्नं धरतीत्यधिकरणमित्येवं सर्वकारकपरिणामानन्यरूपः कर्ता भवत्यसाविति। आह—ननु यद्यन्तरङ्गः प्रयोज्यः सर्वकारकपरिणामानन्यरूपश्च कर्ता साध्वादिरिह विवक्षितः, तर्हि 'जिनेन्द्रेण गणधरैश्च कृतं तत्' इति कस्मादुक्तम्, जिनेन्द्र-गणधराणामिहाविवक्षितत्वात् ?। सत्यम्, किन्तु जिनेन्द्रस्यापि सामायिकस्यान्तरङ्गकर्तृत्वं सर्वकारकपरिणामानन्यरूपकर्तृत्वं प्रायो न विरुध्यते, तेनापि तस्यानुष्ठितत्वात्, गणधराणां तु प्रयोज्यकर्तृत्वमपि युज्यत एव, जिनेन्द्रप्रयोज्यत्वात् तेषामिति। अतो जिनेन्द्र-गणधराणामप्युपन्यासोऽत्र न विरुध्यत इति ॥३३८४॥

गतं 'केन कृतम्' इति द्वारम् ॥

अथ 'केषु द्रव्येषु तत् क्रियते' इति द्वारमभिधित्सुराह—

[2]दव्वेसु केसु कीरइ सामइयं नेगमो मणुण्णेसु । सयणाइएसु भासइ मणुण्णपरिणामकारणओ ॥ ३३८५ ॥

१ अथवा स्वतन्त्रकर्ता तत्रेह प्रयोज्यकारकोऽभिमतः। अथवेह सर्वकारकपरिणामानन्यरूप इति ॥ ३३८४ ॥
२ द्रव्येषु केषु क्रियते सामायिकं नैगमो मनोज्ञेषु। शयनादिकेषु भाषते मनोज्ञपरिणामकारणतः ॥ ३३८५ ॥

अथ जीवभावकरणमाह—

[1] इह जीवभावकरणं सुयकरणं सुयाभिहाणं च । सुयकरणं दुवियप्पं लोइय लोउत्तरं चेव ॥ ३३५४ ॥

बद्धाबद्धं च पुणो सत्थासत्थोवएसभेयाओ । एक्केक्कं सद्दनिसीहकरणभेयं मुणेयव्वं ॥ ३३५५ ॥

व्याख्या—जीवस्य भावो जीवभावस्तस्य करणं जीवभावकरणम् । तच्च द्विविधम्-श्रुतज्ञानभावकरणं, श्रुताभिधानं च—नोश्रुतज्ञानभावकरणं चेत्यर्थः । आह-ननु यथा श्रुतज्ञानं जीवस्य भावस्तथा शेषज्ञानान्यपि विद्यन्ते, ततो मत्यादिज्ञानभावकरणमपि कस्माद् नोक्तम् ? । सत्यम्, किन्तु यथा परायत्तत्वाद् गुरूपदेशादिना श्रुतज्ञानं क्रियते, नैवं शेषज्ञानानि, तेषां स्वावरणक्षयोपशम-क्षयाभ्यां स्वत एव जायमानत्वात् । एवं सम्यक्त्वादयोऽपि जीवभावा नैकान्तेन परायत्ताः, तेषां नारकादिष्वन्यथा भावादिति । श्रुतज्ञानकरणमपि द्विविधम्—लौकिकं लोकोत्तरं च । पुनरप्येकैकं द्विधा—बद्धमबद्धं च । तत्र गद्यपद्यरूपतया रचितं बद्धम्, इदं च शास्त्रोपदेशरूपं भवति । यत् पुनरशास्त्रोपदेशरूपं कण्ठादेव श्रूयते, तदबद्धम् । इदं च बद्धमबद्धं चैकैकं द्विधा भवति—शब्दकरणम्, निशीथकरणं चेति ॥ ३३५४ ॥ ३३५५ ॥

अथ शब्दकरणस्य निशीथकरणस्य च व्याख्यानमाह—

[2] उत्ती ओ सद्दकरणं पगासबाढं च सरविसेसो वा । गूढत्थं तु निसीहं रहस्ससुत्तत्थमहवा जं ॥३३५६॥

'उत्ती ओ सद्दकरणं ति' उक्तिविशेषः शब्दकरणम्, अथवा, प्रकाशपाठं शब्दकरणम्, यदिवा, उदात्तादिस्वरविशेषः शब्दकरणमुच्यत इति । गूढो गुप्तोऽनवगम्यमानोऽर्थो यस्य तद् गूढार्थं पुनर्निशीथकरणमुच्यते; अथवा, यद् रहस्यसूत्रार्थं तद् निशीथकरणमभिधीयते यथा निशीथाध्ययनम् । रहस्यमप्रकाश्यं सूत्रमर्थश्च यस्य तद् रहस्यसूत्रार्थमिति समासः ॥३३५६॥

किं पुनस्तल्लौकिकं लोकोत्तरं चाबद्धश्रुतम् ? इत्याह—

---

१ इह जीवभावकरणं श्रुतकरणं श्रुताभिधानं च । श्रुतकरणं द्विविकल्पं लौकिकं लोकोत्तर चैव ॥ ३३५४ ॥
बद्धाबद्धं च पुनः शास्त्राशास्त्रोपदेशभेदात् । एकैक शब्दनिशीथकरणभेदं ज्ञातव्यम् ॥ ३३५५ ॥

२ उक्तिस्तु शब्दकरणं प्रकाशगाढं च स्वरविशेषो वा । गूढार्थं तु नैशीथं रहस्यसूत्रार्थमथवा यत् ॥ ३३५६ ॥

[1]नेगंतेण मणुन्नं मणुन्नपरिणामकारणं दव्वं । वभिचाराओ, सेसा बिंति तओ सव्वदव्वेसु ॥ ३३८६ ॥

व्याख्या— केषु द्रव्येषु व्यवस्थितस्य सामायिकं क्रियते निर्वर्त्यते ?। अत्र नैगमनयो भाषते-मनोज्ञेषु शयनाऽऽसनादिषु स्थितस्य तत् क्रियते, मनोज्ञपरिणामकारणत्वात्। तथा च कैश्चिदुक्तम्—

"[2]मणुन्नं भोयणं भोच्चा मणुन्नं सयणासणं। मणुन्नम्मि अगारम्मि मणुन्न झायए मुणी ॥ १ ॥"

इत्यादि। शेषास्तु संग्रहादयो ब्रुवते—नैकान्तेन मनोज्ञं द्रव्यं मनोज्ञपरिणामकारणं भवति, व्यभिचारात्, मनोज्ञेऽपि कस्यापि स्वाभिप्रायेणामनोज्ञपरिणामभावात्, अमनोज्ञेऽपि च कस्यापि मनोज्ञपरिणामसद्भावात्। ततः सर्वद्रव्येषु व्यवस्थितस्य सामायिकं क्रियते ॥ ३३८५ ॥ ३३८६ ॥

अत्राक्षेप-परिहारावाह—

[3]नणु भणियमुवग्घाए केसु त्तीहं कओ पुणो पुच्छा?। केसु त्ति तत्थ विसओ इह केसु ठिअस्स तल्लाभो ॥३३८७॥

ननूपोद्घाते 'किं कइविहं' इत्यादिगाथायां 'केषु सामायिकं भवति' इति भणितमेव, इह कुतः पुनरपि पृच्छावसरः ?। नैवम्, तत्र हि केषु द्रव्यपर्यायाः सामायिकस्य विषये भवन्तीत्युक्तम्; तथा च तत्र निर्वचनम्-'सव्वगयं सम्मत्तं' इत्यादि। इह तु केषु द्रव्येषु स्थितस्य सामायिकलाभो भवतीत्युच्यत इति महान् भेद इति ॥ ३३८७ ॥

यदि न पौनरुक्त्यम्, तर्ह्यन्यदूषणम्। किं तत् ? इत्याह—

[4]तो किह सव्वदव्वावत्थाणं जाइमित्तवयणाओ। धम्माइसव्वदव्वाधारो सव्वो जओऽवस्सं ॥ ३३८८ ॥

ततस्तर्हि कथं सर्वद्रव्येष्ववस्थानं संभवति, येनोच्यते—'सेसा बिंति तओ सव्वदव्वेसु' इति। न हि सर्वेष्वाकाशादिद्रव्येषु

---

१ नैकान्तेन मनोज्ञं मनोज्ञपरिणामकारणं द्रव्यम्। व्यभिचारात्, शेषा ब्रुवन्ति ततः सर्वद्रव्येषु ॥३३८६॥

२ मनोज्ञं भोजनं भुक्त्वा मनोज्ञं शयनासनम्। मनोज्ञेऽगारे मनोज्ञ ध्यायति मुनिः ॥ १ ॥

३ ननु भणितमुपोद्घाते केष्विंतीह कुतः पुनः पृच्छा ?। केष्विति तत्र विषय इह केषु स्थितस्य तल्लाभः ॥ ३३८७ ॥

४ ततः कथं सर्वद्रव्यावस्थानं जातिमात्रवचनात्। धर्मादिसर्वद्रव्याधारः सर्वो यतोऽवश्यम् ॥ ३३८८ ॥

बज्झनिमित्तावेक्खं कज्जं वि य कज्जमाणकालम्मि। होइ सकारणमिहरा विवज्जया-ऽभावया होज्जा ॥ १६ ॥
देओ स जस्स तं संपयाणमिह तं पि कारणं तस्स। होइ, तदत्थित्ताओ न कीरए तं विणा जं सो ॥ १७ ॥
भूपिंडावायाओ पिंडो वा सक्करादवायाओ। चक्कमहावाओ वाऽपादाणं कारणं तं पि ॥ १८ ॥
वसुहाऽऽगासं चक्कं सरूवमिच्चाइ संनिहाणं जं। कुंभस्स तं पि कारणमभावओ तस्स जदसिद्धी ॥ १९ ॥

भावम्मि होइ दुविहं अपसत्थ पसत्थयं च अपसत्थं।
संसारस्सेगविहं दुविहं तितिहं च नायव्वं ॥ २०६ ॥
असंजमो य एक्को अन्नाणं अविरई य दुविहं चं।
मिच्छत्तं अन्नाणं अविरई चेव तिविहं तु ॥ २०७ ॥
होइ पसत्थं मोक्खस्स कारणमेगविह दुविह तिविहं च।
तं चेव य विवरीयं अहिगार पसत्थएणेत्थं ॥ २०८ ॥
तित्थयरो किंकारणं भासइ सामाइयं तु अज्झयणं ?।
तित्थयरनामगोत्तं बद्धं मे वेइअव्वं ति ॥ २०९ ॥
तं च कहं वेइज्जइ अगिलाए धम्मदेसणाईहिं।
बज्झइ तं तु भगवओ तइयभवोसक्कइत्ता णं ॥ २१० ॥

१ 'त्ताविक्ख'। २ 'जं चिय'। ३ 'जहसि'। ४ 'वा'।

नियमा मणुयगईए इत्थी पुरिसेयरो व सुहलेसो ।
आसेवियबहुलेहिं वीसाए अन्नयरएहिं ॥ २११ ॥
गोयममाई सामाइयं तु किंकारणं निसामेंति ।
नाणस्स तं तु सुन्दर-मङ्गुलभावाण उवलद्धी ॥ २१२ ॥
होइ पवित्ति-निवित्ती संजम-तव पावकम्मअग्गहणं ।
कम्मविवेगो य तहा कारणमसरीरया चेव ॥ २१३ ॥
कम्मविवेगो असरीरयाइ असरीरयाऽणबाहाए ।
होअणबाहनिमित्तं अवेयणु अणाउलो निरुओ ॥ २१४ ॥
निरुयत्ताए अयलो अयलत्ताए य सासओ होइ ।
सासयभावमुवगओ अव्वाबाहं सुहं लहइ ॥ २१५ ॥

तित्थयरनामकम्मक्खयस्स कारणमिदं जिणिंदस्स । सामाइयाभिहाणं नाणस्स उ गोयमाईणं ॥ १ ॥
तं पि सुभेयरभावोवलद्धिए सा पवित्ति-नियमाणं । एवं नेयं कमसो पुव्वं पुव्वं परनिमित्तं ॥ २ ॥

पच्चयनिक्खेवो खलु दव्वम्मी तत्तमासगाईओ ।
भावम्मि ओहिमाई तिविहो पगयं तु भावेणं ॥ २१६ ॥
केवलनाणि त्ति अहं अरिहो सामाइयं परिकहेइ ।

कोऽप्यत्रतिष्ठत इति ?। उच्यते—जातिमात्रवचनात् सर्वद्रव्यमात्रस्येह विवक्षणात्, जातिमात्रं च सर्वद्रव्यैकदेशेऽपि प्राप्यत इति। ननु देशतोऽपि किं सर्वद्रव्याधारः कोऽपि प्राप्यते ?। उच्यते—प्राप्यत एव, यतो धर्मास्तिकाया-ऽधर्मास्तिकाया-ऽऽकाशास्तिकाय-जीव-पुद्गलाधारः सर्वोऽप्यवश्यं जीवलोक इति परिहृतं प्रासङ्गिकं दूषणम् ॥ २३८८ ॥

अथ प्रस्तुतमेवास्य परिहारान्तरमाह—

[1]विसओ व उवग्घाए केसु त्ति इहं स एव हेउ त्ति। सद्धेय-नेय-किरियानिबंधणं जेण सामइयं ॥ २३८९ ॥

अथवा, उपोद्घाते सर्वद्रव्याणि सामायिकस्य विषये भवन्तीत्युक्तम्। इह तु स एव सामायिकलाभः सर्वद्रव्येषु हेतुभूतेषु भवतीत्युच्यत इति। कथं पुनः सर्वाण्यपि द्रव्याणि सामायिकस्य हेतुर्भवन्ति ? इत्याह—'सद्धेयेत्यादि' श्रद्धेयानि च ज्ञेयानि च चारित्रक्रियाहेतुभूतानि च यानि द्रव्याणि तन्निबन्धनं तद्धेतुकं येन सामायिकम्। न च श्रद्धेयादिभ्योऽन्यानि सर्वद्रव्याणीति, नापि विषयहेत्वोरेकत्वमवगन्तव्यम्, विषयस्य गोचररूपत्वात्, जीवघातनिवृत्तेः सर्वजीववद्धेतोरुपष्टम्भकत्वात्, अन्नादिवदिति॥२३८९॥

अन्यदपि परिहारान्तरमाह—

[2]अहवा कयाकयाइसु कज्जं केण व कयं च कत्ता त्ति। केसु त्ति करणभावो तइयत्थे सत्तमिं काउं ॥ २३९० ॥

अथवा, कृताकृतादिद्वारेषु प्रथमे कृताकृतद्वारे कर्त्रा यत् क्रियते तत् कार्यं सामायिकमुक्तम्, 'केन कृतम्' इति च द्वितीयद्वारे सामायिकस्यैव कर्ता निर्दिष्टः, 'केषु' इति तृतीयद्वारे तु तृतीयार्थे सप्तमीं कृत्वा करणमभिहितम्, कैर्द्रव्यैः करणभूतैः सामायिकं क्रियत इति नोपोद्घातेन सह पौनरुक्त्यमिति ॥ २३९० ॥

अथ 'कदा कारको भवति' इति नयैर्निरूपयन्नाह—

[3]उद्दिट्ठे च्चिय नेगमनयस्स कत्ताऽणहिज्जमाणो वि। जं कारणमुद्देसो तम्मि य कज्जोवयारो त्ति ॥ २३९१ ॥

१ विषयो वोपोद्घाते केष्विति इह स एव हेतुरिति। श्रद्धेय-ज्ञेय-क्रियानिबन्धनं येन सामायिकम् ॥ २३८९ ॥
२ अथवा कृताकृतादिषु कार्यं केन वा कृतं कर्तेति। केष्विति करणभावस्तृतीयार्थे सप्तमीं कृत्वा ॥ २३९० ॥
३ उद्दिष्ट एव नैगमनयस्य कर्ताऽनधीयानोऽपि। यत् कारणमुद्देशस्तस्मिंश्च कार्योपचार इति ॥ २३९१ ॥

आह—ननु 'कयाकयं' इत्यादिगाथायां 'केन कृतम्' इति द्वितीयद्वारे 'कर्त्रा' इति भणितमत्र, तत्र का पुनरपीह कर्तुः पृच्छा ?। सत्यम्, 'केन कृतम्' इत्यत्र कर्तरि करणे च तृतीया संभवति, अतस्तद्विवरणमेवेदम्-'केन' इत्यत्र कर्तरि तृतीया, मा भूत् करणमिति ॥ ३४२२ ॥

अथवा, तेष्वेव कृताकृतादिद्वारेषु सामायिकस्य कर्तारं कर्म करणभावं च श्रुत्वा कुलाल घट दण्डानामिव प्रस्तुते कर्तृ कर्म-करणानां प्रविभागमपश्यन् पृच्छति—कः कारकः सामायिकस्य ? इत्यत्रोत्तरं कुर्वन्नयमस्य कारकः; किं पुनः कर्म ? इत्यत्रोत्तरम्—यत् तेन कर्त्रा क्रियते; तुशब्दाद् मनःप्रभृति करणं च द्रष्टव्यम्। एतदेवाह—

[1]अहवा कयाकयाइसु कत्तारं कम्म करणभावं च। सामाइयस्स सोउं कुलाल-घड-दण्डगाणं व ॥ ३४२३ ॥

पविभागमपेच्छंतो पुच्छइ को कारओ करेंतोऽयं। किं कम्मं जं कीरइ तो तेण सद्देण करणं च ॥ ३४२४ ॥

द्वे अपि गतार्थे ॥ ३४२३ ॥ ३४२४ ॥

अत्राक्षेपमाह—

[2]किं कारओ य करणं च होइ कम्मं च ते चसद्दाओ। अन्नमणन्नं, भण्णइ किंचाह न सव्वहा जुत्तं ॥३४२५॥

कारकः करणं चशब्दात् कर्म च ते तव सूरे ! परस्परं किमन्यद् भिन्नम्, अनन्यदभिन्नमिति ?। भण्यतेऽत्रोत्तरम्- किंचातः ?- किमनेन तव पृष्टेन ? इति। अत्राह परः-अन्यत्वमनन्यत्वं वेति द्वयोरेकमपि सर्वथा न युक्तमिति ॥ ३४२५ ॥

अत्रान्यत्वे तावद् दूषणमाह—

[3]अन्नत्ते समभावाभावाओ तप्पओयणाभावो। पावइ मिच्छस्स व से सम्मा-मिच्छाऽविसेसोऽयं ॥ ३४२६ ॥

---

१ अथवा कृताकृतादिषु कर्तारं कर्म करणभावं च। सामायिकस्य श्रुत्वा कुलाल-घट-दण्डकानामिव ॥ ३४२३ ॥
प्रविभागमपश्यन् पृच्छति कः कारकः कुर्वन्नयम्। किं कर्म यत् क्रियते ततस्तेन शब्देन करणं च ॥ ३४२४ ॥

२ किं कारकश्च करणं च भवति कर्म च ते चशब्दात्। अन्यदनन्यत्, भण्यते किञ्चाह न सर्वथा युक्तम् ॥ ३४२५ ॥

३ अन्यत्वे समभावाभावात् तत्प्रयोजनाभावः। प्राप्नोति मिथ्यादृष्टेरिव तस्य सम्यग्-मिथ्याऽविशेषोऽयम् ॥ ३४२६ ॥

इहोद्दिष्ट एव गुरुणा सामायिके नैगमनयस्यानधीयानोऽपि शिष्यस्तत्कर्ता भवति । आह—ननु कार्यस्य कर्ता भवति, कार्यं च सामायिकमुद्देशस्थले नास्ति, तत् कथं तस्यासौ कर्ता भवति ? इत्याह—'जमित्यादि' यस्मात् सामायिककारणमुद्देशः, तस्मिंश्चोद्देशलक्षणे कारणे कार्यस्य सामायिकस्योपचारः क्रियत इति सामायिकस्य कर्तासौ भवतीति ॥ ३३९१ ॥

संग्रह व्यवहारनयमतमाह—

संगह-ववहाराणं पच्चासन्नयरकारणत्तणओ । उद्दिट्ठम्मि तदत्थं गुरुपामूले समासीणो ॥ ३३९२ ॥

संग्रह व्यवहारयोरुद्दिष्टे सामायिके तत्पठनार्थं गुरुपादमूले समासीनः शिष्यः प्रत्यासन्नतरकारणत्वात् पूर्ववत् तत्र सामायिककार्योपचारतः कर्ता भवतीति ॥ ३३९२ ॥

ऋजुसूत्रमतमाह—

उज्जुसुयस्स पढंतो तं कुणमाणो वि निरुवओगो वि । आसन्नासाहारणकारणओ सद्द-किरियाणं ॥ ३३९३ ॥

ऋजुसूत्रस्यानुपयुक्तोऽपि सामायिकं पठन्, तथा कुर्वंस्तदर्थक्रियामनुतिष्ठन् सामायिकस्य कर्ता भवति, सामायिकासन्नतरासाधारणकारणत्वात् तद्विषयशब्द-क्रिययोरिति ॥ ३३९३ ॥

शब्दादिमतमाह—

सामाइओवउत्तो कत्ता सद्द-किरियाविउत्तो वि । सद्दाईण मणुन्नो परिणामो जेण सामइयं ॥ ३३९४ ॥

शब्दादिनयानां सामायिकोपयुक्तः शब्द-क्रियावियुक्तोऽपि सामायिककर्ता भवति, येन यस्माद् मनोज्ञो विशुद्धपरिणाम एव तेषां सामायिकमिति ॥ ३३९४ ॥

अथ पूर्वोक्तमुपसंहरन्नुत्तरग्रन्थसंबन्धनार्थमाह—

---

१ संग्रह-व्यवहारयोः प्रत्यासन्नतरकारणत्वतः । उद्दिष्टे तदर्थं गुरुपादमूले समासीनः ॥ ३३९२ ॥

२ ऋजुसूत्रस्य पठंस्तत्कुर्वाणोऽपि निरुपयोगोऽपि । आसन्नासाधारणकारणतः शब्द-क्रिययोः ॥ ३३९३ ॥

३ सामायिकोपयुक्तः कर्ता शब्द-क्रियावियुक्त इति । शब्दादीनां मनोज्ञः परिणामो येन सामायिकम् ॥ ३३९४ ॥

कर्मभूतस्य सामायिकस्य कर्तुर्जीवादन्यत्वे मिथ्यादृष्टेरिव 'से' तस्य कर्तृजीवस्य सामायिकजन्यसमभावाभाव एव स्यात्, अन्यत्वाविशेषात् । ततश्च तत्प्रयोजनभूतस्य मोक्षसुखस्याभाव एव प्राप्नोति । अपरं च, अयं कृतसामायिकः सम्यग्दृष्टिः, अयं तु मिथ्यादृष्टिः, इत्ययमविशेष एव स्यात्, उभयोरपि सामायिकस्यान्यत्वाविशेषादिति ॥ ३४२६ ॥

पर एवाचार्यमाशङ्कते—

[1]अहवा मई भिन्नेण वि धणेण सधणो त्ति होई ववएसो । सधणो य धणाभागी जह तह सामाइयस्सामी ॥३४२७॥

अथवा, अत्र सूरे ! तवेयं मतिः स्यात्– भिन्नेनापि धनेन 'सधनः' इति व्यपदेशो लोके भवति, अपरं चासौ सधनो धनाभागी धनफलभोक्ता यथा दृश्यते तथा भिन्नस्यापि सामायिकस्य स्वामी सामायिककर्तास्तत्फलभोक्ता भविष्यति, न्यायस्य समानत्वादिति ॥३४२७॥

तदेतत् परः परिहरति—

[2]तं न जओ जीवगुणो सामाइयं तेण विफलया तस्स । अन्नत्तणओ जुत्ता परसामाइयस्स वाऽफलया ॥३४२८॥

तदेतत् सूरे ! त्वदुक्तं न, यतो जीवगुणः सामायिकम्, तेन जीवगुणस्य सामायिकस्य गुणिनो जीवादन्यत्वे विफलता निष्फलता युक्ता, धनं तु धनिनो गुणो न भवति, तेन तस्य भिन्नस्यापि सफलताऽस्त्विति भावः, यथा परसामायिकस्य विवक्षितजीवमपेक्ष्यान्यत्वादफलतेति ॥ ३४२८ ॥

अपि च,

[3]जइ भिन्नं तब्भावे वि तओ तस्सभावरहिउ त्ति । अन्नाणी च्चिय निच्चं अंधो व समं पईवेण ॥ ३४२९ ॥

यदि कर्तुर्जीवादभिन्नं सामायिकम्, तदा तद्भावेऽपि भिन्नसम्यक्त्वादिसामायिकप्रस्तावेऽपि तकोऽसौ कर्तृजीवस्तत्स्वभावरहितः सम्यक्त्वादिसामायिकस्वभावराहित इति कृत्वाऽज्ञान्येव स्यात्, यथा भिन्नेन प्रदीपेन समं वर्तमानोऽपि स्वस्वभावभूतचक्षु-

१ अथवा मतिर्भिन्नेनापि धनेन सधन इति भवति व्यपदेशः । सधनश्च धनाभागी यथा तथा सामायिकस्वामी ॥ ३४२७ ॥
२ तद् न यतो जीवगुणः सामायिकं तेन विफलता तस्य । अन्यत्वतो युक्ता परसामायिकस्येवाफलता ॥ ३४२८ ॥
३ यदि भिन्नं तद्भावेऽपि सकस्तत्स्वभावराहित इति । अज्ञान्येव नित्यमन्ध इव समं प्रदीपेन ॥ ३४२९ ॥

[1]कत्ता नयओऽभिहिओ अहवा नयउ त्ति नीइओ नेओ । सामाइयहेउपउज्जकारओ सो नओ य इमो ॥३३९५॥

तदेवं सामायिकस्य कर्ता नयतो नयैरभिहितः । अथवा, 'कदा वा कारकः' इत्यस्माद् नय इति पृथगेव द्वारम् । तत्र चायमर्थः—नयतो नीतितो विधिना सामायिकस्य हेतुः कर्ता सामायिकस्य प्रयोज्यकारको ज्ञेयः । कः पुनरसौ नय इत्याह—स चायम् ॥ इति द्वात्रिंशद्गाथार्थः ॥ ३३९५ ॥

अत्रापि 'उप्पणाणुप्पन्नं कयाकयं इत्थ जइ नमोक्कारे' इत्यादिनिर्युक्तिगाथानामग्रहणे कारणं पूर्वोक्तमेव द्रष्टव्यम् । एवमुत्तरत्रापीति ॥

अथ तमेव नयमष्टप्रकारमाह—

[2]आलोयणा य विणए खित्त दिसाभिग्गहे य काले य । रिक्ख-गुणसंपदा विय अभिवाहारे य अट्ठमए ॥३३९६॥

इहाभिमुख्येन गुरोरात्मदोषप्रकाशनमालोचना, विनयश्च बाह्य आसनदानाऽभ्युत्थानादिः, अन्तरङ्गस्तु बहुमानादिः, तथा, क्षेत्रमिक्षुक्षेत्रादि, तथा, दिगभिग्रहश्च वक्ष्यमाणलक्षणः, कालश्च दिवसादिः, तथा, ऋक्षसंपद् नक्षत्रसंपदिति, गुणाः प्रियधर्मत्वादयस्तत्संपत् प्राप्तिरिति, अभिव्याहरणमभिव्याहारः कालिकादिश्रुतविषय उद्देश-समुद्देशादिरिति । अयं चाष्टमो नयः ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ ३३९६ ॥

अथालोचनानयं भाष्यकारो विवृण्वन्नाह—

[3]सामाइयत्थमुवसंपया गिहत्थस्स होज्ज जइणो वा । उभयस्स पउत्तालोइयस्स सामाइयं देज्जा ॥३३९७॥

तत्र गृहस्थे—

[4]आलोइयम्मि दिक्खारुहस्स गिहिणो चरित्तसामइयं । बालाइदोसरहियस्स देज्ज नियमा न सेसाणं ॥३३९८॥

१ कर्ता नयतोऽभिहितोऽथवा नयत इति नीतितो ज्ञेयः । सामायिकहेतुप्रयोज्यकारकः स नयश्चायम् ॥ ३३९५ ॥
२ आलोचना च विनयः क्षेत्रं दिगभिग्रहश्च कालश्च । ऋक्ष-गुणसंपदे अपि चाभिव्याहारश्चाष्टमकः ॥ ३३९६ ॥
३ सामायिकार्थमुपसंपद् गृहस्थस्य भवेद् यतेर्वा । उभयस्य प्रयुक्तालोचितस्य सामायिकं दद्यात् ॥ ३३९७ ॥
४ आलोचिते दीक्षार्हस्य गृहिणश्चारित्रसामायिकम् । बालादिदोषरहितस्य दद्याद् नियमाद् न शेषाणाम् ॥ ३३९८ ॥

विकलोऽन्ध इति ॥ ३४२९ ॥

अथानन्यत्वपक्षं दूषयन्नाह—

एकत्ते[1] तन्नासे नासो जीवस्स संभवे भवणं । कारगसंकरदोसो तदिक्कया कप्पणा वावि ॥ ३४३० ॥

सामायिक-तद्वतोरेकत्वेऽनन्यत्वे तन्नाशे सामायिकनाशे सामायिकवतो जीवस्यापि नाशः प्राप्नोति, घटस्वरूपनाशे घटस्येव, संभवे वोत्पत्तौ वा सामायिकस्य, जीवस्यापि भवनमुत्पत्तिमत्त्वं स्यात् । न च तस्य तदिष्यते, नित्यत्वात्; तथा, कर्तृ कर्म-करणकारकाणां संकरदोषः, तदेकता वा स्यात्, कल्पनामात्ररूपता वा कारकाणां भवेदिति ॥ ३४३० ॥

अत्राचार्य उत्तरमाह—

आया[2] हु कारओ मे सामाइयकम्म करणमाया य । तम्हा आया सामाइयं च परिणामओ इक्कं ॥ ३४३१ ॥

आत्मैव तावत् सामायिकस्य कारकः कर्ता मे मम, सामायिकमेव क्रियमाणत्वात् कर्म सामायिककर्म तदप्यात्मैव, न पुनस्तद्व्यतिरिक्तमन्यत् किञ्चिदिति, चशब्दाद् मनःप्रभृतिकं करणमप्यात्मैव । तस्मादात्मा सामायिकं चशब्दात् करणं चेति त्रितयमप्येतदेकमेव । कथम् ? । परिणामतः—आत्मपरिणामरूपत्वात् । न हि सामायिकं मनःप्रभृति करणं चात्मपरिणामरूपत्वमतिक्रम्य वर्तते । अतस्त्रितयमपि परिणामरूपतयैकमेवेदमिति ॥ ३४३१ ॥

एतदेव व्याचिख्यासुराह—

जं[3] नाणाइसभावं सामाइयं जोगमाह करणं च । उभयं च सपरिणामो परिणामाणन्नया जं च ॥ ३४३२ ॥

यस्मात् सामायिकं सामान्येन ज्ञान-दर्शन-चारित्रस्वभावम्, करणमपि मनःप्रभृतिकं योगमाह परमगुरुः, उभयं चैतदात्मनः स्वपरिणामः, परिणाम-तद्वतोश्च यस्मादनन्यरूपतैवेति ॥ ३४३२ ॥

ततः किम् ? इत्याह—

---

१ एकत्वे तन्नाशे नाशो जीवस्य संभवे भवनम् । कारकसंकरदोषस्तदेकता कल्पना वापि ॥ ३४३० ॥

२ आत्मा खलु कारको मे सामायिककर्म करणमात्मा च । तस्मादात्मा सामायिकं च परिणामत एकम् ॥ ३४३१ ॥

३ यज्ज्ञानादिस्वभावं सामायिकं योगमाह करणं च । उभयं च स्वपरिणामः परिणामानन्यता यच्च ॥ ३४३२ ॥

स्पष्टे, नवरं आलोचिते आलोकिते विज्ञाते यथा द्रव्यतो ज्ञातोऽसौ न नपुंसकादिः, क्षेत्रतस्तु विज्ञातो यथा नायमनार्यः, कालस्त्ववगतो यथा शीतो-ष्णादिना न क्लाम्यति, भावतस्त्ववबुद्धो यथा नीरोगानलसादिरूपः। ततश्चैवमालोकिते निश्चिते च दीक्षार्हस्य वालादिदोषरहितस्य गृहिणश्चारित्रसामायिकं दद्यादिति ॥ ३३९७ ॥ ३३९८ ॥

ननु गृहस्थस्य सामायिकसूत्रार्थमुपसंपादित्यवगम्यते, श्रमणस्य तु व्रतग्रहणकाल एवाधीतसामायिकत्वात् कथं तदर्थमुपसंपद् भवेत् ? इत्याह—

सामाइयत्थसवणोवसंपया साहुणो हवेज्जाहि। वाघायमेसकालं च पइ सुयत्थं पि होज्जाहि ॥ ३३९९ ॥

यदा गुरुः सूत्रमात्रविदेव भवति, सूत्रं चादत्त्वा परलोकीभूतो भवेत्, तदा तच्छिष्यस्य साधोः सामायिकार्थश्रवणनिमित्तमन्यत्रोपसंपद् भवेत्। अथवा, 'सुयत्थं पि होज्जाहि त्ति' व्याघातमेष्यत्कालं वा प्रति तौ प्रतीत्येत्यर्थः सूत्रमात्रार्थमपि साधोरन्यत्रोपसंपद् भवेत्। इदमुक्तं भवति-ग्लानभावेन व्यन्तरोपसर्गादिना वा व्याघातेन पतिते विस्मृते सामायिकसूत्रे, एष्यति वा दुःषमाकाले प्रज्ञामान्द्यादसमाप्तसामायिकसूत्रमात्रा अपि साधवो भविष्यन्तो निजगुर्वभावीभवनादिना कारणेन सर्वस्यापि सामायिकसूत्रस्य पठनार्थम्, असमाप्तस्य वा समाप्त्यर्थमन्यत्र साधोरुपसंपद् भवेदिति ॥ ३३९९ ॥ तदेवं चारित्रसामायिकमङ्गीकृत्य तदर्थश्रवणार्थं तत्सूत्रमात्रपठनार्थं वा साधोरन्यत्रोपसंपदुक्ता ॥

अथवा, श्रुतसामायिकमङ्गीकृत्य समस्तद्वादशाङ्गसूत्रार्थोभयार्थमप्युपसंपद् भवेदिति दर्शयन्नाह—

सव्वं व बारसंगं सुयसामइयं ति तदुभयत्थं ति। होज्जालोइयभावस्स देज्ज सुत्तं तदत्थं वा ॥ ३४०० ॥

अथवा, सर्वमपि द्वादशाङ्गं श्रुतसामायिकं भण्यते, अतस्तदुभयार्थं समस्तद्वादशाङ्गसूत्रार्थोभयनिमित्तमप्युपसंपद् भवेत्; अत आलोचितभावस्य दत्तविशुद्धालोचनस्य सूत्रमर्थं वा दद्यादिति ॥ ३४०० ॥ उक्तमालोचनाद्वारम् ॥

अथ विनयद्वारमभिधित्सुराह—

---

१ सामायिकार्थश्रवणोपसंपत् साधोर्भवेत्। व्याघातमेष्यत्कालं च प्रति सूत्रार्थमपि भवेत् ॥ ३३९९ ॥
२ सर्वं वा द्वादशाङ्गं श्रुतसामायिकमिति तदुभयार्थमिति। भवेदालोचितभावस्य दद्यात् सूत्रं तदर्थं वा ॥ ३४०० ॥

[1]तेणाया सामइयं करणं चसद्दओ न भिन्नाइं। नणु भणियमणण्णत्ते तन्नासे जीवनासो त्ति ॥ ३४३३ ॥

तेन तस्मादात्मा सामायिकं, चशब्दात् करणं च मनःप्रभृति, न परस्परमेतानि भिन्नानि। आह—नन्वेवमनन्यत्वे 'तन्नाशे जीवनाशः' इत्यादिकं दूषणं भणितमेवेति ॥ ३४३३ ॥

अत्र सूरिराह—

[2]जइ तप्पज्जयनासो को दोसो होइ सव्वहा नत्थि। जं सो उप्पाय-व्वय-धुवधम्माणंतपज्जाओ ॥ ३४३४ ॥

स चासौ सामायिकादिरूपः पर्यायश्च तत्पर्यायस्तत्पर्यायेण तत्पर्यायरूपेण नाशो जीवस्य तत्पर्यायनाशो यदि भवति, तदा भवतु नाम, को दोषः ?। यस्तु पर्यायविनाशे जीवस्य सर्वथा नाशः स नास्ति नेष्यते, यस्मादसौ जीव उत्पाद-व्यय-ध्रौव्यधर्माऽनन्तपर्यायः। ततश्चैकस्य सामायिकादिपर्यायस्य नाशेऽपि कथं तस्य सर्वथा नाशः, शेषानन्तपर्यायैर्विशिष्टस्य तस्य सर्वदाऽवस्थानात् ? इति ॥ ३४३४ ॥

न केवलमात्मा, किन्तु सर्वमपि वस्तु जैनानामुत्पाद-व्यय-नित्यतास्वरूपमेवेति दर्शयन्नाह—

[3]सव्वं चिय पइसमयं उप्पज्जइ नासए य निच्चं च। एवं चेव य सुह-दुक्ख-बंध-मोक्खाइसब्भावो ॥ ३४३५ ॥

प्रागसकृद् भावितार्थैवेति ॥ ३४३५ ॥

यदप्युक्तम्—'कारकैकत्वम्—कारकैकता प्राप्नोति' अत्राप्याह—

[4]एक्कं चेव य वत्थुं परिणामवसेण कारगंतरयं। पावइ तेणादोसो विवक्खया कारगं जं च ॥ ३४३६ ॥

एकमेव हि वस्तु परिणामवशेन कारकान्तरतां प्राप्नोति; तथाहि—एक एव देवदत्तः कटादिकर्तृत्वेन परिणतः कर्ता, स एव

---

१ तेनात्मा सामायिकं करणं चशब्दतो न भिन्नानि। ननु भणितमनन्यत्वे तन्नाशे जीवनाश इति ॥ ३४३३ ॥

२ यदि तत्पर्ययनाशः को दोषो भवति सर्वथा नास्ति। यत् स उत्पाद-व्यय-ध्रुवधर्मानन्तपर्यायः ॥ ३४३४ ॥

३ सर्वमेव प्रतिसमयमुत्पद्यते नश्यति च नित्यं च। एवमेव च सुख-दुःख-बन्ध-मोक्षादिसद्भावः ॥ ३४३५ ॥

४ एकमेव च वस्तु परिणामवशेन कारकान्तरताम्। प्राप्नोति तेनादोषो विवक्षया कारकं यच्च ॥ ३४३६ ॥

[1]आलोयणसुद्धस्स वि देज्ज विणीयस्स नाविणीयस्स । न हि दिज्जइ आहरणं पलियच्चिअकन्नहत्थस्स ॥३४०१॥

सुगमा ॥ ३४०१ ॥

किमिति विनीतस्यैव दीयते ? इत्याह—

[2]अणुरत्तो भत्तिगओ अमुई अणुअत्तओ विसेसन्नू । उज्जुत्तो अपरितंतो इच्छियमत्थं लहइ साहू ॥ ३४०२ ॥

सुबोधा, नवरं 'अमुइ त्ति' अमोचकः, उद्युक्त उद्यमपरः, अपरितंतो—अनिर्विण्ण इति ॥ ३४०२ ॥

क्षेत्रद्वारमभिधित्सुराह—

[3]विणयवओ विय कयमंगलस्स तदविग्घपारगमणाए । देज्ज सुकओवओगो खित्ताईसु सुपसत्थेसु ॥ ३४०३ ॥

उच्छुवणे सालिवणे पउमसरे कुसुमिए व वणसंडे । गंभीर साणुणाए पयाहिणजले जिणहरे वा ॥ ३४०४ ॥

दिज्ज न उ भग्ग-[5]भामिय-मसाण-सुन्नामणुन्नगेहेसु । छारंगारक्खयारामेज्झाइदव्वदुट्ठेसु ॥ ३४०५ ॥

तिस्रोऽपि सुगमाः, नवरमिक्षुवणादीनां समीपे दद्यात् सामायिकम्, न तु भग्न-भ्रामितगृहादिप्रदेशे । द्राक्षा-चन्दनलताद्याच्छादितप्रदेशो गम्भीरः । यत्र जल्पतां प्रतिशब्द उत्तिष्ठते स प्रदेशः सानुनाद इति ॥ ३४०३ ॥ ३४०४ ॥ ३४०५ ॥

दिगभिग्रहद्वारमाह—

[4]पुव्वाभिमुहो उत्तरमुहो व दिज्जाहवा पडिच्छेज्जा । जाए जिणादओ वा दिसाइ जिणचेइयाइं वा ॥ ३४०६ ॥

---

१ आलोचनशुद्धायापि दद्याद् विनीताय नाविनीताय । न हि दीयते आहरणं पलितत्रिककर्णहस्ताय ॥ ३०४१ ॥

२ अनुरक्तो भक्तिगतोऽमोचकोऽनुवर्तको विशेषज्ञः । उद्युक्तोऽपरितान्त इष्टमर्थं लभते साधुः ॥ ३४०२ ॥

३ विनयवतेऽपि च कृतमङ्गलाय तदाविघ्नपारगमनाय । दद्यात् सुकृतोपयोगः क्षेत्रादिषु सुप्रशस्तेषु ॥ ३४०३ ॥

इक्षुवणे शालिवने पद्मसरसि कुसुमिते वा वनखण्डे । गम्भीरे सानुनादे प्रदक्षिणजले जिनगृहे वा ॥ ३४०४ ॥

दद्याद् न तु भग्न-भ्रान्त-श्मशान-शून्या-ऽमनोज्ञगेहेषु । क्षाराङ्गारावस्करामेध्यादिद्रव्यदुष्टेषु ॥ ३४०५ ॥ क. ग. 'ज्झामि' ।

५ क. ग. 'ध्यामि' । ४ पूर्वाभिमुख उत्तरमुखो वा दद्यादथवा प्रतीच्छेत् । यस्यां जिनादयो वा दिशि जिनचैत्यानि वा ॥ ३४०६ ॥

यन्नदत्तादिप्रयोजककरणतया परिणतत्वात् करणम्, दिदृक्षूणां दृश्यमानतया परिणतत्वात् कर्म, ताम्बूलादिदानग्रहणतया परिणतत्वात् संप्रदानम्, स एव निष्पन्नकटस्य मोचनेन परिणतत्वादपादानम्, कटक्रियाधारत्वेन च परिणतत्वादधिकरणमिति । एवमन्यत्रापि भावनीयम् । तेन कारकसंकरादिको न दोषः, विवक्षातश्च यस्मात् कारकाणि भवन्ति, तस्मात् कल्पनायामप्यदोष एवेति ॥ ३४३६ ॥

तथाहि—

कुंभो विसिज्जमाणो कत्ता कम्मं स एव करणं च । नाणाकारयभावं लहइ जहेगो विवक्खाए ॥ ३४३७ ॥

जह वा नाणाणन्नो नाणी नियओवओगकालम्मि । एगो वि तिसहावो सामाइयकारओ एवं ॥ ३४३८ ॥

व्याख्या—कुम्भो विशीर्यमाणो विशरणक्रियायाः कर्तृत्वेन विवक्षितः कर्ता भवति । स एव च विशरणक्रियाव्याप्यत्वेन विवक्ष्यमाणः कर्म संपद्यते, 'तेन घटपर्यायेण कृत्वा विशीर्यते' इति करणत्वेन विवक्ष्यमाणः स एव करणं संज्ञायते । एवं यथैकोऽपि पदार्थो विवक्षया नानाकारकभावं लभते, यथा वा मत्यादिज्ञानादनन्योऽभिन्नो ज्ञानी जीवो निजकात्मविषयः स्वसंवेदनरूपो य उपयोगस्तत्काल एकोऽपि त्रिस्वभावो भवति; तथाहि—स्वोपयोग उपयुज्यमानोऽसौ कर्ता भवति, संवेद्यमानत्वेन तु कर्म, करणभूतज्ञानानन्यत्वाच्च करणमिति । एवं सामायिककारक एकोऽपि विवक्षया कर्तृ-कर्म-करणस्वभावो द्रष्टव्य इति ॥ ३४३७ ॥ ३४३८ ॥ तदेवं करणं व्याख्यातम्, तद्व्याख्याने च 'करोमि' इति सामायिकस्य प्रथमावयवो व्याख्यातः ॥

अथ 'भदन्त !' इति द्वितीयावयवं व्याचिख्यासुराह—

भेदि कल्लाण-सुहत्थो धाऊ तस्स य भदंतसद्दोऽयं । स भदंतो कल्लाणो सुहो य कल्लं किलारुग्गं ॥ ३४३९ ॥

तं तच्चं निव्वाणं कारण कज्जोवयारओ वावि । तस्साहणमणसद्दो सद्दत्थो अहव गच्चत्थो ॥ ३४४० ॥

१ कुम्भो विशीर्यमाणः कर्ता कर्म स एव करणं च । नानाकारकभावं लभते यथैको विवक्षया ॥ ३४३७ ॥
यथा वा ज्ञानानन्यो ज्ञानी निजकोपयोगकाले । एकोऽपि त्रिस्वभावः सामायिककारक एवम् ॥ ३४३८ ॥
२ भदि कल्याण-सुखार्थो धातुस्तस्य च भदन्तशब्दोऽयम् । स भदन्तः कल्याणः सुखश्च कल्यं किलारोग्यम् ॥ ३४३९ ॥
तत् तथ्यं निर्वाणं कारणे कार्योपचारतो वापि । तत्साधनमणशब्दः शब्दार्थोऽथवा गत्यर्थः ॥ ३४४० ॥

पाठसिद्धा ॥ ३४०६ ॥

कालद्वारमाह—

[1]चाउद्दासिं पण्णरसिं वज्जेज्ज अट्ठमिं च नवमिं च । छट्ठिं च चउत्थिं बारसिं च सेसासु देज्जाहि ॥ ३४०७ ॥

सुबोधा ॥ ३४०७ ॥

ऋक्षद्वारमाह—

[2]मियसिर अद्दा पुस्से तिन्नि य पुव्वाइं मूलमस्सेसा । हत्थो चित्ता य तहा दस विद्धिकराइं नाणस्स ॥३४०८॥

संझागयं रविगयं विड्डेरं सग्गहं वा विलंबं वा । राहुहयं गहभिण्णं च वज्जए सत्त नक्खत्ते ॥ ३४०९ ॥

मृगशिरःप्रभृतिषु नक्षत्रेषु दद्यात् सामायिकम्, संध्यागतादीनि तु वर्जयेत् । तत्र संध्यागतं यत्र रविः स्थास्यति । 'यत्र नक्षत्रे सूर्यस्तिष्ठति तस्माच्चतुर्दशं पञ्चदशं वा नक्षत्रं संध्यागतम्' इत्यन्ये । रविगतं यत्र रविस्तिष्ठति । पूर्वद्वारिकेषु नक्षत्रेषु पूर्वदिशा गन्तव्येऽपरया गच्छतो विड्डेरम्, सग्रहं च ग्रहाधिष्ठितम्, विलम्बि यद् भास्वता परिभुज्य मुक्तम्, राहुहतं यत्र ग्रहणमभूदिति । ग्रहभिन्नं ग्रहविदारितमिति ॥ ३४०८ ॥ ३४०९ ॥

गुणसंपद्द्वारमाह—

[3]पियधम्मो दढधम्मो संविग्गोऽवज्जभीरु असढो य । खंतो दंतो गुत्तो थिरव्वय जिइंदिओ उज्जू ॥३४१० ॥

असढो तुलासमाणो समिओ तह साहुसंगइरओ य । गुणसंपओववीओ जुग्गो सेसो अजुग्गो य ॥३४११॥

---

१ चतुर्दशीं पञ्चदशीं वर्जयेदष्टमीं च नवमीं च । षष्ठीं च चतुर्थीं च द्वादशीं च शेषेषु दद्यात् ॥ ३४०७ ॥

२ मृगशिर आर्द्रा पुष्य त्रीणि च पूर्वाणि मूलमश्लेषा । हस्तश्चित्रा च तथा दश वृद्धिकराणि ज्ञानस्य ॥ ३४०८ ॥
संध्यागतं रविगतं विड्डरं सग्रहं विलम्बि वा । राहुहतं ग्रहभिन्नं च वर्जयेत् सप्त नक्षत्राणि ॥ ३४०९॥

३ प्रियधर्मो दृढधर्मः संविग्नोऽवद्यभीरुरशठश्च । क्षान्तो दान्तो गुप्तः स्थिरव्रतो जितेन्द्रिय ऋजुः ॥ ३४१० ॥
अशठस्तुलासमानः समितस्तथा साधुसङ्गतिरतश्च । गुणसंपदुपवीतो योग्यः शेषोऽयोग्यश्च ॥ ३४११ ॥

[1]कल्लमणइ त्ति गच्छइ गमयइ व बुज्झइ व बोहयइ व त्ति। भणइ भणावेइ व जं तो कल्लाणो स चायरिओ ॥३४४१॥

व्याख्या — 'भदि कल्याणे सुखे च' इति भदिधातुः कल्याणार्थः सुखार्थश्च। तस्य भदिधातोर्भदन्त इत्यौणादिकप्रत्यये भदन्तशब्दोऽयं निष्पद्यते। ततः स्थितमिदं स भदन्तः कल्याणः सुखश्च। तत्र कल्याणशब्दव्युत्पादनार्थमाह—'कल्लं किलारुग्गं' उच्यत इति। तच्चारोग्यं तथ्यं निरुपचरितं निर्वाणमेवावगन्तव्यम्; अथवा, कारणे कार्योपचारात् तत्साधनं दर्शन-ज्ञान-चारित्रलक्षणं निर्वाणकारणमवसेयम्। अणशब्दस्तु अणधातोरुभयार्थत्वात् शब्दार्थो गत्यर्थो वा द्रष्टव्य इति। ततश्च कल्यं यथोक्तमारोग्यमणति गच्छत्यन्तर्भूतण्यर्थत्वेनापरान् गमयति, बुध्यते स्वयं, बोधयति वा परान्। शब्दार्थत्वेऽपि कल्यमणति स्वयं भणति, परैश्च भाणयति यस्मात् तस्मात् कल्याणः। स चेहाचार्यो गुरुर्बोद्धव्य इति॥ ३४३९॥ ३४४०॥ ३४४१॥

अथवा, कलधातुः शब्दार्थः संख्यानार्थो वा, 'कल शब्द-संख्यानयोः' इति धातुपाठात्, तस्य 'कल्यम्' इति निपात्यते। ततश्च कल्यं शब्दं शब्दशास्त्रं संख्यानं वा गणितं यस्मादणति शब्दयति प्रतिपादयते बुध्यते बोधयति वा, तेन तस्मात् कल्याणो गुरुरित्येतदेवाह—

[2]अहवा कल सद्दत्थो संखाणत्थो य तस्स कल्लं ति। सद्दं संखाणं वा जमणइ तेणं च कल्लाणो ॥३४४२॥

गतार्था॥ ३४४२॥

सुखस्तर्हि कथमाचार्यः? इत्याह—

[3]सुं पसंसत्थो खाणिंदियाणि सुद्धिंदिओ सुहोऽभिमओ। वसिंदिओ जमुत्तं असुहो अजिइंदिओऽभिमओ ॥३४४३॥

सुहमहवा निव्वाणं तच्चं सेसमुवयारओऽभिमयं। तस्साहणं गुरु त्ति य सुहमन्ने पाणसण्ण व्व॥ ३४४४॥

---

1 कल्यमणतीति गच्छति गमयति वा बुध्यते वा बोधयति वेति। भणति भाणयति वा यत् ततः कल्याणः स आचार्य. ॥३४४१॥

2 अथवा कल शब्दार्थः संख्यानार्थश्च तस्य कल्यमिति। शब्दं संख्यानं वा यदणति तेन च कल्याणः॥ ३४४२॥

3 सु प्रशंसार्थं खानीन्द्रियाणि शुद्धेन्द्रियः सुखोऽभिमतः। वश्येन्द्रियो यदुक्तमसुखोऽजितेन्द्रियोऽभिमतः॥ ३४४३॥
सुखमथवा निर्वाणं तथ्यं शेषमुपचारतोऽभिमतम्। तत्साधनं गुरुरिति च सुखमन्ये प्राणसञ्ज्ञेव॥ ३४४४॥

सुगमे ॥ ३४१० ॥ ३४११ ॥

अथाष्टममभिव्यवहारनयमाह—

[1]नेओऽभिव्वाहारोऽभिव्वाहरणमहमस्स साहुस्स । इयमुद्दिस्सामि सुत्तत्थोभयओ कालियसुयम्मि ॥३४१२॥

गुण-दव्व-पज्जवेहिं भूयावायम्मि गुरुसमाइट्ठे । बेउद्दिट्ठमियं मे इच्छामणुसासणं सीसो ॥ ३४१३ ॥

व्याख्या—अभिव्याहरणमभिव्याहारः सामायिकश्रुतोद्देशादिविषयो गुरुशिष्ययोरुक्ति-प्रत्युक्तिविशेषो ज्ञेयः, तद्यथा—अहमस्य साधोः कालिकश्रुते इदमङ्गं श्रुतस्कन्धमध्ययनमुद्देशकं वा 'उद्दिस्सामि' वाचयामि । कथम् ? इत्याह—सूत्रतः, अर्थतः, तदुभयतश्चेति । इह च सूचनात् सूत्रस्य, इयं भावना द्रष्टव्या—'इदमङ्गादिकं ममोद्दिशत' इति शिष्येणोक्ते गुरुर्वदति—'उद्दिशामि' । ततः शिष्यो भणति—'संदिशत किं भणामि ?' । गुरुराह—'वन्दित्वा प्रवेदय' । ततः शिष्यो वदति—'भवद्भिर्ममेदमङ्गादिकमुपादिष्टम्' । गुरुराह—'उद्दिष्टं क्षमाश्रमणानां हस्तेन सूत्रेण, अर्थेन, तदुभयेन च । ततः शिष्य आह—'इच्छामोऽनुशास्तिम्' । ततश्च गुरुराह—'सम्यग् योगः कर्तव्यः' इति । अत्रेच्छाकार-क्षमाश्रमणदान-प्रतिपात-कायोत्सर्गकरणादिकः शेषो विधिः स्वयमेव द्रष्टव्यः । समुद्देशाऽनुज्ञयोरप्ययमेव विधिः, नवरं तयोर्यथासंख्यं 'सम्यग् धारय' 'अन्येषां च प्रवेदय' इति गुरुवचनं द्रष्टव्यमिति। भूतवादो दृष्टिवादः, तत्राप्ययमेवोद्देशादिविधिः, केवलं द्रव्येण, गुणैः, पर्यायैश्च 'उद्दिष्टमिदम्' इति गुरुः समादिशति । एवं च गुरुसमादिष्टे शिष्यो वदति—'उद्दिष्टमिदं मे, इच्छाम्यनुशास्तिम्' इत्यादीति । तदेवं व्याख्यातोऽभिव्याहारनयः, तद्व्याख्याने च व्याख्याता 'आलोयणा य विणए' इत्यादिप्रतिद्वारगाथा ॥ ३४१२ ॥ ३४१३ ॥

अथ मूलद्वारगाथायां यदुक्तम्—'करणं कतिविधम् ?' इति, तत्राह—

[2]करणं तव्वावारो गुरु-सीसाणं चउव्विहं तं च । उद्देसो वायणिआ तह समुद्देसणमणुन्ना ॥ ३४१४ ॥

---

१ ज्ञेयोऽभिव्याहारोऽभिव्याहरणमहमस्य साधोः । इदमुद्दिशामि सूत्रार्थोभयतः कालिकश्रुते ॥ ३४१२॥
गुण-द्रव्य-पर्यायैर्भूतवादे गुरुसमादिष्टे । ब्रवीत्युद्दिष्टमिदं मे इच्छाम्यनुशासनं शिष्यः ॥ ३४१३ ॥

२ करणं तद्व्यापारो गुरु-शिष्ययोश्चतुर्विधं तच्च । उद्देशो वाचनिका तथा समुद्देशनमनुज्ञा ॥ ३४१४ ॥

सुशब्दः प्रशंसार्थो निपातः, खानीन्द्रियाणि; शोभनानि खानि यस्यासौ सुखः शुद्धेन्द्रियोऽभिमतः। किमुक्तं भवति ?—वश्येन्द्रियो निर्विकारेन्द्रिय इति यदुक्तं भवति; अजितेन्द्रियस्त्वसुखोऽभिमत इति। अथवा, सुखयतीति सुखं तथ्यं निरुपचरितं निर्वाणमुच्यते, शेषं तु सांसारिकमुपचारतः सुखमभिमतम्। ततोऽस्य द्विविधस्यापि सुखस्य साधनं कारणं गुरुरित्यसौ सुखम्, कारणे कार्योपचारात्, अन्ने भक्ते प्राणसंज्ञावदिति, 'अन्नं प्राणाः' 'वृष्टिस्तन्दुलाः' इत्यादिवद् यथोक्तोभयरूपसुखहेतुत्वात् सुखो गुरुरित्यर्थः ॥ ३४४३॥३४४४ ॥

अथवा, अन्यथा सुखशब्दार्थमाह—

जं च सियं खेहिंतोऽणुग्गहरूवं तओ सुहं तं च। अभयाइं तप्पयाया सुहमिह तब्भत्तिभावाओ ॥ ३४४५ ॥[1]

यद्वा, सुष्ठु इतं प्राप्तं स्वितं खेभ्य इन्द्रियेभ्यः स्वैरिन्द्रियैः करणभूतैरित्यर्थः, निपातनात् सुखमुच्यते। तत् कुतः प्राप्तम् ? इत्याह—ततो गुरुसकाशात्। तच्च 'सर्वे जीवा न हन्तव्याः' इत्यादिगुरुकृतानुग्रहरूपमभयप्रदानादि द्रष्टव्यम्। आदिशब्दाज्ज्ञानादिपरिग्रहः। गुरुप्रदत्तेनाभयप्रदानादिना जीवाः पञ्चभिरपीन्द्रियैः सुखमनुभवन्ति। अतस्तत्प्रदाताऽभयादिप्रदाता गुरुरपीह सुखम्, तद्भक्तिभावात् सुखोपचारात्—कारणे कार्योपचारादित्यर्थः ॥ ३४४५ ॥

तदेवं 'करोमि भदन्त !' इति व्याख्यातम्। अथवा 'भन्ते' इति नेदं 'भदन्त' इत्यामन्त्रणम्, किन्तु 'भदन्त' इति कया व्युत्पत्त्या ? इत्याह—

अहवा भय सेवाए तस्स भयंतो त्ति सेवए जम्हा। सिवगइणो सिवमग्गं सेव्वो य जओ तदत्थीणं ॥३४४६॥[2]

अथवा, 'भज-श्रिञ् सेवायाम्' इति भजधातुः, तस्य भजते सेवत इति भजन्तः, तस्य संबोधनं हे भजन्त गुरो !। स चेह कस्मात् ?। उच्यते—यस्मात् सेवते। कान् ?। शिवगतीन् सिद्धिगतिं प्राप्तान्; अथवा, दर्शन-ज्ञान-चारित्रलक्षणं शिवमार्गं मोक्षमार्गम्। अथवा, सेव्यश्च यस्मादसौ तदर्थिनां मोक्षमार्गार्थिनाम्, तस्माद् भज्यते सेव्यत इति भजन्त इत्युच्यत इति ॥ ३४४६ ॥

---

१ यच्च स्वितं खेभ्योऽनुग्रहरूपं ततः सुखं तच्च। अभयादि तत्प्रदाता सुखमिह तद्भक्तिभावात् ॥ ३४४५ ॥

२ अथवा भज सेवायां तस्य 'भयन्तो' इति सेवते यस्मात्। शिवगतीन् शिवमार्गं सेव्यश्च यतस्तदर्थिनाम् ॥ ३४४६ ॥

गुरु शिष्ययोस्तद्विषयः सामायिकविषयो-व्यापारः करणम् । स च गुरु-शिष्ययोस्तद्व्यापारश्चतुर्विधः, तच्चातुर्विध्यात् तत्स्वरूपं करणमपि चतुर्विधम्; तद्यथा—'वाचयामि' इति गुरुप्रतिज्ञारूप उद्देशः, ततस्तत्प्रदत्तैव सूत्रस्य परिपाटीरूपा वाचना, तथा, समुद्देशः, अनुज्ञा चेति ॥ ३४१४ ॥

अत्राक्षेप-परिहारावाह—

नेणु भणियमणेगविहं पुव्वं करणमिह किं पुणो गहणं । तं पुव्वगाहियकरणं इदमिह दाणग्गहणकाले ॥३४१५॥

ननु पूर्वं नामादिभेदतोऽनेकविधं करणमुक्तम्, इह किं पुनरपि भेदकथनगर्भं करणग्रहणम् ? । अत्रोच्यते—तत् प्रागुक्तं पूर्वगृहीतस्य दानग्रहणकालादुत्तीर्णस्य सामायिकस्य सिद्धं करणमुक्तम्, इदं त्विह गुरु-शिष्ययोर्दान-ग्रहणकाले उद्देशादिविधिना साध्यं करणमुच्यत इति विशेषः ॥ ३४१५ ॥

विशेषान्तरमाह—

पुव्वमविसेसियं वा इह गुरु-सीसकिरियाविसेसाओ । करणावसरो वायं णेगंतत्थं तु वच्चासो ॥ ३४१६ ॥

अथवा, पूर्वमविशेषितं करणमुक्तम्, इह तु तदेव गुरु-शिष्योक्तिक्रियाविशेषाद् विशेषितमुच्यते । अथवा, अयमेव गुरु-शिष्योक्ति-प्रत्युक्तिकाले सामायिककरणस्य भणनावसरः । तत्र तर्हि किमित्युक्तम् ? इति चेत् । उच्यते—अनेकान्तार्थं व्यत्यासोऽस्थानभणनम् । न ह्ययं नियमो यदन्यत्र वक्तव्यं तदत्र नोच्यते, विचित्रा च भगवतः सूत्रस्य कृतिरिति ॥ ३४१६ ॥ गतं 'करणं कतिविधम् ?' इति द्वारम् ॥

इदानीं 'कथम् ?' इति द्वारमभिधित्सुराह—

लैब्भइ कहं ति भणिए सुयसामइयं जहा नमोक्कारो । सेसाइं तदावरणक्खयओ समओऽहवोभयओ ॥३४१७॥

'कथं सामायिकं लभ्यते ?' इति भणिते सत्युच्यते—श्रुतसामायिकं तावद् यथा नमस्कारः पूर्वमुक्तस्तथा लभ्यते, नमस्कार-

१ ननु भणितमनेकाविधं पूर्वं करणमिह किं पुनर्ग्रहणम् । तत् पूर्वगृहीतकरणमिदमिह दानग्रहणकाले ॥ ३४१५ ॥
२ पूर्वमविशेषितं वेह गुरु-शिष्यक्रियाविशेषात् । करणावसरो वायमनेकान्तार्थं तु व्यत्यासः ॥ ३४१६ ॥
३ लभ्यते कथमिति भणिते श्रुतसामायिकं यथा नमस्कारः । शेषाणि तदावरणक्षयतः शमतोऽथवोभयतः ॥ ३४१७ ॥

अथवा, भान्तो भ्राजन्तो वा गुरुरुच्यते, कथम्? इत्याह—

[1]अहवा भा भाजो वा दित्तीए होइ तस्स भंतो त्ति । भाजंतो चायरिओ सो नाण-तवोगुणजुईए ॥ ३४४७ ॥

अथवा, भाधातुर्भ्राजधातुर्वा 'दित्तीए त्ति' दीप्तौ पठ्यते, तस्य भान्तो भ्राजन्त इति वा भवति । स चैवंभूतः कः? इत्याह—आचार्यः । स च कथं भाति भ्राजते वा? इत्याह—ज्ञान-तपोगुणदीप्त्येति ॥ ३४४७ ॥

अथवा, भ्रान्तो भगवान् वाऽसाविति दर्शयन्नाह—

[2]अहवा भंतोऽवेओ जं मिच्छत्ताइबंधहेऊओ । अहवेसरियाइभगो विज्जइ से तेण भगवंतो ॥ ३४४८ ॥

अथवा, 'भ्रम अनवस्थाने' इत्यस्य धातोर्भ्रान्त इत्युच्यते, यस्मादपेतोऽसौ मिथ्यात्वादिबन्धहेतुभ्य इति । अथवा, ऐश्वर्यादिकः षड्विधो भगो विद्यते 'से' तस्य, तेन भगवान् गुरुरिति ॥ ३४४८ ॥

अथवा, भवान्तो भयान्तो वाऽयमित्यादर्शयन्नाह—

[3]नेरयाइभवस्स व अंतो जं तेण सो भवंतो त्ति । अहवा भयस्स अंतो होइ भयंतो भयं तासो ॥ ३४४९ ॥

अथवा, यस्माद् नारकादिभवस्यान्तहेतुत्वादन्तोऽसौ तेन भवान्त इति । अथवा, भयस्यान्तो भयान्तो भवति, भयं च त्रास उच्यत इति ॥ ३४४९ ॥

अथ भयं विशेषतोऽपि व्याचिख्यासुराह—

[4]नामाइ छव्विहं तं भावभयं सत्तहेहलोगाई । इहलोगजं सभवओ परलोगभयं परभवाओ ॥ ३४५० ॥

---

१ अथवा भा भ्राजो वा दीप्तौ भवति तस्य 'भतो' इति । भ्राजंश्चाचार्यः स ज्ञान-तपोगुणद्युत्या ॥ ३४४७ ॥
२ अथवा 'भतो' अपेतो यद् मिथ्यात्वादिबन्धहेतुभ्यः । अथवैश्वर्यादिभगो विद्यते तस्य तेन 'भगवतो' ॥ ३४४८ ॥
३ नैरयिकादिभवस्य वाऽन्तो यत् तेन स 'भवंतो' इति । अथवा भयस्यान्तो भवति 'भयंतो' भयं त्रासः ॥ ३४४९ ॥
४ नामादि षड्विधं तद् भावभयं सप्तेहलोकादि । इहलोकज स्वभवत. परलोकभयं परभवात् ॥ ३४५० ॥

स्यापि श्रुतान्तर्गतत्वात् । नमस्कारलाभश्च पूर्वमित्थमुक्तः—

'[1]मइ सुयनाणावरणं दंसणमोहं च तदुवघाईणि । तप्फड्डयाइं दुविहाइं सव्व-देसोवघाईणि ॥ १ ॥

सव्वेसु सव्वघाइसु हएसु देसोवघाइयाणं च । भाएहिं मुंचमाणो समए समए अणंतेहिं ॥ २ ॥

पढमं लहइ नकारं इक्किक्कं वण्णमेवमण्णं पि । कमसो विसुज्झमाणो लहइ समत्त नमोक्कारं ॥ ३ ॥'

इह च सम्यग्दृशामेव नमस्कारो भवतीत्येतावन्मात्रेणैव दर्शनमोहनीयस्य क्षयोपशम उक्तः, मुख्यवृत्त्या तु नमस्कारस्य श्रुतरूपत्वात्, तदावरणक्षयोपशमादेवासौ लभ्यत इत्युक्तं द्रष्टव्यम् । एवं श्रुतसामायिकमपि मति श्रुतक्षयोपशमाल्लभ्यत इति दृश्यम् । शेषाणि तु सम्यक्त्व-देशविरति-सर्वविरतिसामायिकानि तदावरणस्य यथासंभवं क्षयतः शमतः—उपशमत इत्यर्थः, अथवोभयतः क्षयोपशमाद् भवन्तीति द्रष्टव्यमिति ॥ ३४१७ ॥

अत्राक्षेप-परिहारावाह —

[2]नणु भणियमुवक्कमया खओवसमओ पुणो उवग्घाए । लब्भइ कहं ति भणियं इहं कहं का पुणो पुच्छा ? ॥३४१८॥

आह—ननु पूर्वमत्रैवोपक्रमतोपक्रमप्रस्तावे '[3]भावे खओवसमिए दुवालसंगं पि होई सुयनाणं' तथा, '[4]बीयकसायाणुदए अप्पच्चक्खाणनामधिज्जाणं' तथा, '[5]तइयकसायाणुदए पच्चक्खाणावरणनामधिज्जाणं, देसिक्कदेसविरइं' तथा, '[6]बारसविहे कसाए खविए उवसामिए व जोएहिं लब्भइ चरित्तलंभो' इत्यादिवचनात् तदावरणस्य क्षयोपशमात् क्षयादिभ्यश्च सम्यक्त्वादिसामायिकानि लभ्यन्त इति भणितम्; पुनरपि चोपोद्घाते 'किं कइविहं' इत्यादिगाथायां 'कथं सामायिकं लभ्यते ?' 'मानुष्यादिभ्यः' इति

---

१ मति-श्रुतज्ञानावरणं दर्शनमोहं च तदुपघातीनि । तत्फड्डकानि द्विविधानि सर्व-देशोपघातीनि ॥ १ ॥
सर्वेषु सर्वघातिषु हतेषु देशोपघातिकानां च । भागैर्मुच्यमानः समये समयेऽनन्तैः ॥ २ ॥
प्रथमं लभते नकारमेकैकं वर्णमेवमन्यमपि । क्रमशो विशुध्यमानो लभते समस्तं नमस्कारम् ॥ ३ ॥

२ ननु भणितमुपक्रमता क्षयोपशमतः पुनरुपोद्घाते । लभ्यते कथमिति भणितमिह कथं का पुनः पृच्छा ? ॥ ३४१८ ॥

३ भावे क्षायोपशमिके द्वादशाङ्गमपि भवति श्रुतज्ञानम् । ४ द्वितीयकषायाणामुदयेऽप्रत्याख्याननामधेयानाम् । ५ तृतीयकषायाणामुदये प्रत्याख्यानावरणनामधेयानां देशैकदेशविरतिम् । ६ द्वादशविधे कषाये क्षपिते औपशमिके वा योगैर्लभ्यते चारित्रलाभः ।

[1]किंचणमादाणं तब्भयं तु नासहरणाइओ नेयं । बज्झनिमित्ताभावा जं भयमाकम्हिमं तं ति ॥ ३४५१ ॥

असिलोगभयमजसओ दुज्जीवमाजीवियाभयं नाम । पाणपरिच्चायभयं मरणभयं नाम सत्तमयं ॥ ३४५२ ॥

व्याख्या—नाम-स्थापना-द्रव्य-क्षेत्र-काल-भावभेदात् तत् षड्विधं भयम् । तत्राद्याः पञ्च भेदाः सुव्याख्येयाः । भावभयं त्विह "[2]इह परलोयायाणमकम्हा आजीव मरणमसिलोए" इति वचनात् सप्तधा भवति, तथा चाह-'इहलोगाइ त्ति' । तत्रेहलोकजं भयं स्वभवतः स्वभवात्, यथा मनुष्यस्य मनुष्यात्, तिरश्चस्तिर्यग्भ्य इत्यादि । परलोकभयं तु परभवात्, यथा मनुष्यादेस्तिर्यगादिभ्यः । किञ्चनं [3]द्रव्यादानमुच्यते तद्भयं तु न्यासहरणादिभ्यो ज्ञेयम् । यत्र तु बाह्यनिमित्ताभावादकस्मादेव भवति तदाकस्मिकम् । अश्लोकोऽश्लाघा तद्भयं त्वयश इति । आजीविकाभयं तु दुर्जीविकाभयम् । मरणं तु नाम यत् सप्तमं भयं तत् प्राणपरित्यागभयमिति ॥ ३४५० ॥ ३४५१ ॥ ३४५२ ॥

अथान्तशब्दव्युत्पादनार्थमाह—

[4]अम गच्चाइसु तस्सेह अमणमंतोऽवसाणमेगत्थं । अमइ व जं तेणं तो भयस्स अंतो भयंतो त्ति ॥ ३४५३ ॥

अम रोगे वा अंतो रोगो भंगो विणासपज्जाओ । जं भवभयभंगो सो तओ भवंतो भयंतो य ॥ ३४५४ ॥

व्याख्या—अमधातुर्गत्यादिष्वर्थेषु पठ्यते, तस्येहान्त इति रूपं भवति, अमनमन्तोऽवसानमित्येकार्थम् । अमतीति वा यस्मात् तेनान्त इति कर्तरि साध्यते, भयस्यान्तो भयान्त इति । अथवा, 'अम रोगे' रोगो भङ्गे, ततश्चान्तो रोगो भङ्गो विनाश इति पर्यायशब्दा एत इत्यर्थः । एवं च सति यस्माद् भवस्य भयस्य च भङ्गहेतुत्वाद् भङ्गोऽसौ गुरुस्ततो भवान्तो भयान्तश्चेति ॥ ३४५३ ॥ ३४५४ ॥

ननु भवद्भिर्व्युत्पादितानां भदन्तादिशब्दानां स्थाने कथं 'भंते' इति निष्पद्यते ? इत्याह—

---

१ किञ्चनमादानं तद्भय तु न्यासहरणादितो ज्ञेयम् । बाह्यनिमित्ताभावाद् यद् भयमाकस्मिकं तदिति ॥ ३४५१ ॥
अश्लोकभयमयशो दौर्जीवमाजीविकाभयं नाम । प्राणपरित्यागभयं मरणभयं नाम सप्तमकम् ॥ ३४५२ ॥

२ इह-परलोका-ऽऽदानान्यकस्मादाजीविका मरणमश्लोक । ३ ज. 'द्रव्यमादा' ।

४ अम गत्यादिषु तस्येहामनमन्तोऽवसानमेकार्थम् । अमति वा यत् तेनान्तो भयस्यान्तो 'भयंतो' इति ॥ ३४५३ ॥
अम रोगे वा अन्तो रोगो भङ्गो विनाशपर्याय. । यद् भवभयभङ्गः स ततो 'भवंतो' 'भयंतो' च ॥ ३४५४ ॥

भणितम्; ततश्चेह 'कथं सामायिकं लभ्यते' इति का पुनः पृच्छा ?—पुनरुक्तत्वाद् नेयमिह युज्यत इति भावः ॥ ३४१८ ॥

परिहारमाह—

[1]भणिए खओवसमओ स एव लब्भइ कहमुवग्घाए। सो चेव खओवसमो इह केसिं होज्ज कम्माणं? ॥३४१९॥

'भावे खओवसमिए' इत्यादिनोपक्रमे 'क्षयोपशमादिहेतोः सामायिकं लभ्यते' इति भणिते पुनरुपोद्घाते 'स एव क्षयोपशमादिहेतुः कथं लभ्यते ?' 'मानुष्यादिसामग्रीतः' इत्युक्तम्। इह तु 'स एव क्षयोपशमादिः केषां कर्मणां भवेत् ?' इति विचिन्त्यत इति स्थानत्रयभणनस्यापि विषयविभाग इति ॥ ३४१९ ॥ तदेवं व्याख्यातं कृताकृतादिद्वारैः करणम् ॥ ३४१९ ॥

अथ 'करोमि भदन्त ! सामायिकम्' इत्यत्र विनेयपृच्छामाशङ्क्योत्तरमाह—

[2]को कारओ करिंतो किं कम्मं जं तु कीरई तेणं। किं कारओ य करणं च होइ अन्नं अणन्नं ते? ॥३४२०॥

कोऽत्र तावत् कारकः ? इति कथ्यताम्। सूरिराह—स्वतन्त्रत्वात् कुर्वन् समायिकस्य कर्ता। कर्म तर्हि किमत्र ? इत्याह—यत् तेन क्रियते। तुशब्दात् किं करणम् ?। उच्यते—मनःप्रभृति। एवमुक्ते सत्याह – ते तव सूरे ! किं कारकः करणं च, चशब्दात् कर्म चेत्येतत्त्रयं परस्परमन्यद् भिन्नम्, अनन्यद् वाऽभिन्नं भवति ? इति ॥ ३४२० ॥

एतदेव विवृण्वन्नाह —

[3]को कारउ त्ति भणिए होइ करेंतो त्ति भण्णए गुरुणा। किं कम्मं ति य भणिए भण्णइ जं कीरए तेणं ॥३४२१॥

गतार्था ॥ ३४२१ ॥

अत्र 'कः कारकः ?' इत्यादित एव प्रश्नमक्षममाणः परस्तावदाह—

[4]केणं कयं ति य कत्ता नणु भणियं तत्थ का पुणो पुच्छा ?। तव्विवरणं चिय इमं केणं ति व होज्ज मा करणं ॥३४२२॥

1 भणिते क्षयोपशमतः स एव लभ्यते कथमुपोद्घाते। स एव क्षयोपशम इह केषां भवेत् कर्मणाम् ? ॥३४१९॥
2 क. कारकः कुर्वन् किं कर्म यत्तु क्रियते तेन। किं कारकश्च करण च भवत्यन्यदनन्यत ते? ॥३४२०॥
3 कः कारक इति भणिते भवति कुर्वन्निति भण्यते गुरुणा। किं कर्मेति च भणिते भण्यते यत् क्रियते तेन ॥३४२१॥
4 केन कृतमिति च कर्ता ननु भणितं तत्र का पुनः पृच्छा। तद्विवरणमेवेद केनेति वा भूद् मा करणम् ॥ ३४२२ ॥

ऐत्थ भयंताईणं पागयवागरणलक्खणगईए । संभवओ पत्तेयं द-य-ग-वगाराइलोवाओ ॥ ३४५५ ॥
हस्सेकारंतादेसओ य भंते त्ति सव्वसामण्णं । गुरुआमंतणवयणं विहियं सामाइयाईए ॥ ३४५६ ॥

व्याख्या—अत्र भदन्तादीनाम्, आदिशब्दाद् भजन्त-भान्त-भ्राजन्त भ्रान्त-भगवन्त-भवन्त-भयान्तपरिग्रहः, प्राकृतव्याकरण-लक्षणगत्या यथासंभवं प्रत्येकं द-य-ग-वकाराद्यक्षरलोपात्, तथा ह्रस्वैकारान्तादेशतश्च 'भंते त्ति' सर्वसामान्यं पदं 'निष्पद्यते' इति शेषः । तत्र 'भदन्त' इत्यत्र दकारस्य, 'भयान्त' इत्यत्र यकारस्य, 'भगवन्त' इत्यत्र गवकारयोर्लोपः कर्तव्यः, आदिशब्दाद् 'भजन्त' इत्यादिषु जकाराद्यक्षराणां लोपो द्रष्टव्यः, 'भांत' इत्यादिषु भादीनां ह्रस्वत्वादेशः, 'भंत' इति पदेऽवस्थिते अन्त एकारादेशः कर्तव्य इति । 'भन्ते' इत्येतच्च पदं गुर्वामन्त्रणवचनं सामायिकसूत्रस्यादौ विहितमिति ॥ ३४५५ ॥ ३४५६ ॥

'भदन्त' इति पदस्यामन्त्रणवचनतामेव भावयति—

आमंतेइ करेमि भंते सामाइयं ति सीसोऽयं । आहामंतणवयणं गुरुणो किंकारणमिणं ति ? ॥ ३४५७ ॥

'करेमि भंते ! सामाइयं' इत्येवं शिष्योऽयमामन्त्रयति गुरुम् । आह परः—ननु गुरोरामन्त्रणवचनमिदमादौ विहितम्, इत्यत्र किं कारणम् ? इत्येतत् कथ्यतामिति ॥ ३४५७ ॥

सूरिराह—

भण्णइ गुरुकुलवासे वसं गहत्थं जहा गुणत्थीह । निच्चं गुरुकुलवासी हविज्ज सीसो जओऽभिहियं ॥३४५८॥
नाणस्स होइ भागी थिरतरओ दंसणे चरित्ते य । धन्ना आवकहाए गुरुकुलवासं न मुंचंति ॥३४५९॥

१ अत्र भदन्तादीनां प्राकृतव्याकरणलक्षणगत्या । सभवतः प्रत्येकं द-य-ग-वकारादिलोपात् ॥ ३४५५ ॥
ह्रस्वैकारान्तादेशतश्च 'भंते' इति सर्वसामान्यम् । गुर्वामन्त्रणवचनं विहितं सामायिकादौ ॥ ३४५६ ॥
२ आमन्त्रयति 'करोमि भगवन् ! सामायिकम्' इति शिष्योऽयम् । आहामन्त्रणवचन गुरोः किंकारणमिदमिति ? ॥ ३४५७ ॥
३ भण्यते गुरुकुलवासे वसन् ग्रहार्थं यथा गुणार्थीह । नित्यं गुरुकुलवासी भवेत् शिष्यो यतोऽभिहितम् ॥ ३४५८ ॥
ज्ञानस्य भवति भागी स्थिरतरको दर्शने चारित्रे च । धन्या यावत्कथां गुरुकुलवास न मुञ्चन्ति ॥ ३४५९ ॥

**तेसिं पि पच्चओ खलु सव्वण्णू तो निसामिंति ॥ २१७ ॥**

दव्वस्स दव्वओ वा दव्वेण व दव्वपच्चओ नेओ । तव्विवरीओ भावे सा वि हु नाणाइओ तिविहो ॥ १ ॥
केवलनाणित्तणओ अप्प च्चिय पच्चओ जिणिंदस्स । तप्पच्चक्खत्तणओ तत्तो च्चिय गोयमाईणं ॥ २ ॥
जेणाइंदियमिट्ठं सामइयं तोऽवहाइविसयं तं । न उ मइ-सुयपच्चक्खं जं ताइं परोक्खविसयाइं ॥ ३ ॥
जुत्तमिह केवलं चेव पच्चओ नोहि-माणसं नाणं । पोग्गलमेत्तविसयओ सामाइयारूवया जं च ॥ ४ ॥
जं लेसापरिणामो पायं सामाइयं भवत्थस्स । तप्पच्चक्खत्तणओ तेसिं तो तं पि पच्चक्खं ॥ ५ ॥
ओहाइपच्चयं चिय जइ तं न सुयं पि पच्चओ पत्तो । पच्चक्खनाणिवज्जस्स तेण वयणं न सद्धेयं ॥ ६ ॥
सुयमिह सामइयं चिय पच्चइयं तं जओ य तव्वयणं । पच्चक्खनाणिणो च्चिय पच्चायणमेत्तवावारं ॥ ७ ॥
ओहाइपच्चओ त्ति य भणिए तो तं पि पच्चओऽभिहियं । ओहाइतिगं च कहं तदभावे पच्चओ होज्जा ? ॥८॥
आया गुरवो सत्थं ति पच्चया वादिमो च्चिय जिणस्स । सपच्चक्खत्तणओ सीसाण उ तिप्पयारो वि ॥ ९ ॥
एस गुरू सव्वण्णू पच्चक्खं सव्वसंसयच्छेया । भय-राग-दोसरहिओ तल्लिंगाभावओ जं च ॥ १० ॥
अणुवकयपराणुग्गहपरो पमाणं च जं तिहुयणस्स । सामाइयउवएसे तम्हा सद्धेयवयणो त्ति ॥ ११ ॥
सत्थं च सव्वसत्तोवगारिं पुव्वावराविरोहीदं । सव्वगुणादाणफलं सव्वं सामाइयज्झयणं ॥ १२ ॥
बुज्झामो णं निजमिव विण्णाणं संसयादभावाओ । कम्मक्खओवसमओ य होइ सप्पच्चओ तेसिं ॥ १३ ॥

**नामं ठवणा दविए सरिसे सामन्नलक्खणा-ऽऽगारे ।**
**गइरागइ-नाणत्ती निमित्त उप्पाय-विगई य ॥ २१८ ॥**

१ 'एसो त' ।

वीरियभावे य तहा लक्खणमेयं समासओ भणियं ।
अहवा वि भावलक्खण चउव्विहं सद्दहणमाई ॥ २१९ ॥
सद्दहण जाणणा खलु विरई मीसं च लक्खणं कहए ।
ते वि निसामिंति तहा चउलक्खणसंजुअं चेव ॥ २२० ॥

लक्खणमिह जं नामं जस्स व लक्खिज्जए व जो जेणं । ठवणागारविसेसो विण्णासो लक्खणाणं वा ॥ १ ॥
लक्खिज्जइ जं जेणं दव्वं तं तस्स लक्खणं तं च । गच्चुवगाराईयं वहुहा धम्मत्थियाईणं ॥ २ ॥
किंचिम्मित्तविसिट्ठं एयं चिय सेसलक्खणविसेसा । जं दव्वलक्खणं चिय भावो वि स दव्वधम्मो त्ति ॥ ३ ॥
तुल्लागारदरिसणं सरिसं दव्वस्स लक्खणं तं पि । जह घडतुल्लागारो घडो त्ति तह सव्वमुत्तीसु ॥ ४ ॥
सामण्णमप्पियमणप्पियं च तत्थंतिमं जहा सिद्धो । सिद्धस्स होइ तुल्लो सव्वो सामण्णधम्मेहिं ॥ ५ ॥
एगसमयाइसिद्धत्तणेण पुणरप्पिओ स तस्सेव । तुल्लो सेसोऽतुल्लो सामण्ण-विसेसधम्मो त्ति ॥ ६ ॥
बाहिरचिट्ठागारो लक्खिज्जए तेण माणसाकूयं । आहारादिच्छा हत्थ-वयण-नेत्ताइसण्णाहिं ॥ ७ ॥
अवरोप्परं पयाणं विसेसणविसेसणिज्जया जत्थ । गच्चागई य दोण्हं गच्चागइलक्खणं तं तु ॥ ८ ॥
पुव्वा-वरो-भएसु वाहयमव्वाहयं च तं तत्थ । जीवो देवो देवो जीवो त्ति विगप्पनियमोऽयं ॥ ९ ॥
जीवइ जीवो जीवो जीवइ नियमो मओ विगप्पो य । देवो भव्वो भव्वो देवो त्ति विगप्पमो दो वि ॥ १० ॥
जीवो जीवो जीवो जीवो त्ति दुगे वि गम्मए नियमो । जीवो जहोवओगो तहोवओगो य जीवो त्ति ॥ ११ ॥

१ 'मंस' । २ 'वरुप्प' ।

[1]गीयावासो रई धम्मे अणाययणवज्जणं । निग्गहो य कसायाणं एयं धीराण सासणं ॥ ३४६० ॥

रूपकत्रयं पाठसिद्धम् ॥ ३४५८ ॥ ३४५९ ॥ ३४६० ॥

अपिच,

[2]आवस्सयं पि निच्चं गुरुपामूलम्मि देसियं होइ । वीसुं पि हु संवसओ कारणओ जदभिसेज्जाए ॥ ३४६१ ॥

अनेन गुर्वामन्त्रणवचनेनावश्यकं प्रतिक्रमणं गुरुपादमूल एव नित्यं कर्तव्यमिति दर्शितं भवति, यद् यस्मादभिशय्यायां द्वितीयवसतावित्यर्थः कारणतः कारणवशाद् विष्वगपि पृथगपि संवसतः साधोः 'कल्पग्रन्थे इयं सामाचारी प्रोक्ता' इति शेषः । का पुनरियं कल्पसामाचारी ? इति । उच्यते—"जइ खुड्डुलगा वसही तो अन्नत्थ गंतूण कयपया साहुणो वसंति"। तत्राचार्यसमीपे "पडिक्कमिउं पाउसियकालग्गहणोत्तरं कालं" सूत्रग्रहणार्थपौरुषीं कृत्वाऽन्यस्यां गच्छन्तिः अथान्तरा श्वापदादिभयम्, ततोऽर्थपौरुषीं दापयन्ति ; ततः सूत्रपौरुषीमपि कालमपि तथा चरमं कायोत्सर्गं द्वितीयमाद्यं यावत् तिष्ठन्त्यपि सहस्ररश्मौ तत्र यान्तीति ॥३४६१॥

न केवलं प्रतिक्रमणम्, किन्त्वेवमेव शेषाण्यपि सर्वाणि साधोरवश्यं कर्तव्यान्यावश्यकानि गुरूनापृच्छ्य कर्तव्यानीत्येतज्ज्ञापितमामन्त्रणवचनात्, येन सर्वेषामप्यावश्यकानां सामायिकमेवादौ मतम्, भदन्तश्च यस्मात् तदादौ निर्दिष्टस्तेनानुवर्तते तकोऽसौ सर्वेष्वप्यावश्यकेषु । कथम् ? इत्याह—इदमिदं च करोमि भदन्त ! इति । एतदेवाह—

[3]एवं चिय सव्वावस्सयाइं आपुच्छिऊण कज्जाइं । जाणावियमामंतणवयणाओ जेण सव्वेसिं ॥ ३४६२ ॥

सामाइयमाइमयं भदंतसद्दो य जं तदाईए । तेणाणुवत्तइ तओ करेमि भंते त्ति सव्वेसु ॥ ३४६३ ॥

गतार्थे ॥ ३४६२ ॥ ३४६३ ॥

---

१ गीतावासो रतिर्धर्मेऽनायतनवर्जनम् । निग्रहश्च कषायाणामेतद् धीराणां शासनम् ॥ ३४६० ॥

२ आवश्यकमपि नित्य गुरुपादमूले देशितं भवति । विष्वगपि खलु संवसतः कारणतो यदभिशय्यायाम् ॥ ३४६१ ॥

३ एवमेव सर्वावश्यकान्यापृच्छ्य कार्याणि । आज्ञापितमामन्त्रणवचनाद् येन सर्वेषाम् ॥ ३४६२ ॥
सामायिकमादिमकं भदन्तशब्दश्च यत् तदादौ । तेनानुवर्तते सकः 'करेमि भंते' इति सर्वेषु ॥ ३४६३ ॥

अथ प्रत्याख्यानमेव भेदतो निरूपयन्नाह—

[1]नामं ठवणा दविए अइत्थपडिसेहभावओ तं च । नामाभिहाणमुत्तं ठवणागारक्खनिक्खेवा ॥ ३५०२ ॥

तच्च प्रत्याख्यानं नाम-स्थापना-द्रव्या-ऽदित्था-प्रतिषेध-भावतः षोढा, तत्र प्रत्याख्यानमिति यदभिधानं तद् नामरूपं प्रत्याख्यानं नामप्रत्याख्यानमुच्यते । 'अगार त्ति' बहिर्मुखहस्ताकारकरणमूर्ध्वाङ्गुलिकम्पमानहस्ताकारकरणं वा, अक्षादौ निक्षेपो वा स्थापनाप्रत्याख्यानम् ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ ३५०२ ॥

द्रव्यप्रत्याख्यानस्वरूपं भाष्यकारः प्राह—

[2]दव्वस्स व दव्वाण व दव्वब्भूयस्स दव्वहेउं वा । दव्वं पच्चक्खाणं निण्हाईणं व सव्वं पि ॥ ३५०३ ॥

द्रव्यस्य वा सचित्तादेः, द्रव्याणां वा सचित्तादीनां प्रत्याख्यानं द्रव्यप्रत्याख्यानं द्रव्यभूतस्य वा भावरहितस्याभव्यादेः प्रत्याख्यानं द्रव्यप्रत्याख्यानम् । अथवा, द्रव्यहेतुकं द्रव्यलाभार्थं प्रत्याख्यानं द्रव्यप्रत्याख्यानम् । अथवा, निह्नवादीनां यत् प्रत्याख्यानं, तत् सर्वमपि द्रव्यप्रत्याख्यानमुच्यत इति ॥३५०३॥

अदित्थाप्रत्याख्यानं प्रतिषेधप्रत्याख्यानं चाह—

[3]भिक्खअदाणमइत्था पडिसेहो रोगिणो व्व किरियाए । सिद्धं पच्चक्खाओ जह रोगी सव्वविज्जेहिं ॥३५०४॥

भिक्षाचराणां भिक्षायामतिगच्छेति वचनात्, अदित्थावचनाद् वाऽदानमातिगच्छप्रत्याख्यानमादित्थाप्रत्याख्यानं चेति । असाध्यरोगिणः क्रियायाः प्रत्याख्यानं प्रतिषेधः प्रतिषेधप्रत्याख्यानमुच्यते । सिद्धं चैतल्लोकेऽपि, यथा वक्तारस्तत्र भवन्ति—'प्रत्याख्यातोऽयं रोगी सर्ववैद्यैः' इति । अस्य स्थाने निर्युक्तौ क्वचिद् निर्विषयाज्ञानरूपं क्षेत्रप्रत्याख्यानं दृश्यत इति ॥ ३५०४ ॥

भावप्रत्याख्यानमाह—

---

१ नाम-स्थापना-द्रव्या-ऽदित्था-प्रतिषेध-भावतस्तच्च । नामाभिधानमुक्तं स्थापनाऽऽकाराक्षनिक्षेपौ ॥ ३५०२ ॥
२ द्रव्यस्य वा द्रव्याणां वा द्रव्यभूतस्य वा द्रव्यहेतोर्वा । द्रव्यप्रत्याख्यानं निह्नवादीनां वा सर्वमपि ॥ ३५०३ ॥
३ भिक्षाऽदानमदित्था प्रतिषेधो रोगिण इव क्रियायाः । सिद्धं प्रत्याख्यातो यथा रोगी सर्ववैद्यैः ॥ ३५०४ ॥

किमिति गुरूनापृच्छ्यैव सर्वावश्यकानि कर्तव्यानि ? इत्याह—

[1]किच्चाकिच्चं गुरवो विदंति विणयपाडिवत्तिहेउं च । उस्सासाइं पमोत्तुं तदणापुच्छाइं पडिसिद्धं ॥ ३४६४ ॥

पाठसिद्धा ॥ ३४६४ ॥

यत्र तर्हि गुरुर्न भवति तत्र किं विधेयम् ? इत्याह—

[2]गुरुविरहम्मि य ठवणा गुरूवएसोवदंसणत्थं च । जिणविरहम्मि व जिणबिंबसेवणामंतणं सफलं ॥ ३४६५ ॥

रन्नो व परोक्खस्स वि जह सेवा मंतदेवयाए वा । तह चेव परुक्खस्स वि गुरुणो सेवा विणयहेऊ ॥३४६६॥

अहवा गुरुगुणनाणोवओगओ भावगुरुसमाएसो । इह विणयमूलधम्मोवएसणत्थं जओऽभिहियं ॥ ३४६७ ॥

विणओ सासणे मूलं विणीओ संजओ भवे । विणया उ विप्पमुक्कस्स कओ धम्मो कओ तवो ? ॥ ३४६८ ॥

विणओवयारमणस्स भंजणा पूयणा गुरुजणस्स । तित्थयराण य आणा सुयधम्माराहणा किरिया ॥ ३४६९ ॥

पाठसिद्धा एवेति ॥ ३४६५ ॥ ३४६६ ॥ ३४६७ ॥ ३४६८ ॥ ३४६९ ॥

अथवा, नेदं गुरोरामन्त्रणम्, किन्त्वात्मन एवेति दर्शयति—

[3]आयामंतणमहवाऽवसेसकिरियाविसग्गओ तं च । सामाइएगकिरियानिमायगं तदुवओगाओ ॥ ३४७० ॥

---

१ कृत्याकृत्यं गुरवो विदन्ति विनयप्रतिपत्तिहेतोश्च । उच्छ्वासादि प्रमोक्तुं तदनापृच्छादि प्रतिषिद्धम् ॥ ३४६४ ॥

२ गुरुविरहे च स्थापना गुरूपदेशोपदर्शनार्थं च । जिनविरहे इव जिनबिम्बसेवणामन्त्रणं सफलम् ॥ ३४६५ ॥
राज्ञ इव परोक्षस्यापि यथा सेवा मन्त्रदेवताया वा । तथैव परोक्षस्यापि गुरोः सेवा विनयहेतुः ॥ ३४६६ ॥
अथवा गुरुगुणज्ञानोपयोगतो भावगुरुसमादेशः । इह विनयमूलधर्मोपदेशनार्थं यतोऽभिहितम् ॥ ३४६७ ॥
विनयः शासने मूल विनीत' संयतो भवेत् । विनयात्तु विप्रमुक्तस्य कुतो धर्मः कुतस्तपः ? ॥ ३४६८ ॥
विनयोपचारमनसो भजना पूजना गुरुजनस्य । तीर्थकराणां चाज्ञा श्रुतधर्माराधना क्रिया ॥ ३४६९ ॥

३ आत्मामन्त्रणमथवाऽवशेषक्रियाविसर्गतस्तच्च । सामायिकैकक्रियानियामकं तदुपयोगात् ॥३४७०॥

भावस्स भावओ भावहेउमह भाव एव वाभिमयं। पच्चक्खाणं दुविहं तं सुयमिह नोसुयं चेव ॥ ३५०५ ॥
पुव्वं नोपुव्वसुयं पच्चक्खाणं ति पुव्वसुयमुत्तं। आउरपच्चक्खाणाइयं च नोपुव्वसुयमुत्तं ॥ ३५०६ ॥
नोसुयपच्चक्खाणं मूलुत्तरगुणविहाणओ दुविहं। सव्वे देसे य मयं इह सव्वं सव्वसद्दाओ ॥ ३५०७ ॥

व्याख्या – भावस्य सावद्ययोगपरिणामस्य प्रत्याख्यानं भावप्रत्याख्यानं, भावतो वा शुभपरिणामोत्पादात् प्रत्याख्यानं भावप्रत्याख्यानम्, भावहेतोर्वा सर्वकर्मक्षयार्थं, भाव एव वा सावद्ययोगविरतिलक्षणे प्रत्याख्यानं भावप्रत्याख्यानमभिमतम्। तच्च द्विविधम् – श्रुतभावप्रत्याख्यानम्, नोश्रुतभावप्रत्याख्यानं चेति। श्रुतभावप्रत्याख्यानं पुनरपि द्विविधम्–'पुव्वं ति' पूर्वश्रुतप्रत्याख्यानम्, 'नोपुव्वसुयं ति' नोपूर्वश्रुतप्रत्याख्यानं चेति। तत्र 'पच्चक्खाणं ति' इहैकदेशेन समुदायस्य गम्यमानत्वाद् यत् प्रत्याख्यानसंज्ञितं नवमं पूर्वं तत् पूर्वश्रुतप्रत्याख्यानमुक्तम्, आतुरप्रत्याख्यानादिकं तु श्रुत नोपूर्वश्रुतप्रत्याख्यानमुक्तम्, तस्य पूर्वगतबाह्यत्वेन पूर्वश्रुतत्वायोगादिति। यत्तु श्रुतनिषेधरूपं नोश्रुतप्रत्याख्यानं तदपि मूलोत्तरगुणविधानाद् मूलोत्तरगुणभेदाद् द्विविधम्—मूलगुणप्रत्याख्यानम्, उत्तरगुणप्रत्याख्यानं चेत्यर्थः। इदमप्येकैकं द्विविधं मतम्–सर्वतो देशतश्च। इह च सर्वं सर्वमूलगुणप्रत्याख्यानं सर्वोत्तरगुणप्रत्याख्यानं चाधिकृतम्। कुतः? इत्याह–'सव्वसद्दाउ त्ति' 'सव्वं सावज्जं जोगं' इत्यत्र सर्वशब्दोपादानादित्यर्थः ॥३५०५॥३५०६॥३५०७॥

अथ 'यावज्जीवया' इति पदं व्याचिख्यासुराह—

जीवो त्ति जीवणं पाणधारणं जीवियं ति पज्जाया। गहियं न जीवदव्वं गहियं वा पज्जयविसिट्ठं ॥३५०८॥

इह 'यावज्जीवो यस्यां प्रत्याख्यानक्रियायां सा यावज्जीवा तया सर्वं सावद्यं योगं प्रत्याख्यामीति किलायमर्थोऽभिप्रेत इति। जीव इति किमुच्यते? इत्याह—जीवनमिति, जीवन प्राणधारणं जीवितमिति च पर्यायाः। यथाश्रुतसंबन्धेन तु 'जीवति' इति जीव इति जीवद्रव्यमिह न गृहीतम्, वक्ष्यमाणदोषसंभवात्। गृहीत वा जीवद्रव्यमपि। किं निर्विशिष्टम्?। नेत्याह—पर्यायविशिष्टम्—

१ भावस्य भावतो भावहेतोरथ भाव एव वाभिमतम्। प्रत्याख्यानं द्विविध तत् श्रुतमिह नोश्रुतं चैव ॥ ३५०५ ॥
पूर्वं नोपूर्वश्रुतं प्रत्याख्यानमिति पूर्वश्रुतमुक्तम्। आतुरप्रत्याख्यानादिकं च नोपूर्वश्रुतमुक्तम् ॥ ३५०६ ॥
नोश्रुतप्रत्याख्यान मूलोत्तरगुणविधानतो द्विविधम्। सर्वतो देशतश्च मतमिह सर्वं सर्वशब्दात् ॥ ३५०७ ॥
२ जीव इति जीवनं प्राणधारणं जीवितमिति पर्यायाः। गृहीतं न जीवद्रव्यं गृहीतं वा पर्यायविशिष्टम् ॥ ३५०८ ॥

अथवा, आत्मन आत्मजीवस्यामन्त्रणमिदम्—हे भो जीव ! सामायिकं करोम्यहम् । कथम् ? । अशेषक्रियाविसर्गतः सर्वा अपि क्रिया विसृज्येत्यर्थः । तथात्मामन्त्रणं सामायिकैकक्रियाया नियामकं नियमार्थम्, तदुपयोगात् तस्यामेवैकस्यां सामायिकक्रियायामुपयोगादिति ॥ ३४७० ॥

एवं च सति किमुक्तं भवति ? इत्याह—

ऍवं च सव्वकिरियाऽसंवन्नया तदुवउत्तकरणं च । वक्खायं होइ निसीहियाओ किरिओवओगु व्व ॥३४७१॥

एवं च सति सर्वासामपि प्रत्युपेक्षणादिक्रियाणां परस्परमसंपन्नताऽन्योन्यमनाबाधता, तस्यामेव प्रारब्धैकक्रियायामुपयुक्तकरणं चात्मामन्त्रणेन व्याख्यातं विशेषेण कथितं भवति, यथा नैषेधिक्या नैषेधिकरणेन बाह्यक्रियानिषेधतो वसत्यभ्यन्तरक्रियोपयोग एव कथितो भवत्येवमिहापीति ॥ ३४७१ ॥

अथवा, जिन-सिद्धाद्यामन्त्रणार्थोऽयं भदन्तशब्द इति दर्शयति—

अहवा जहसंभवओ भदंतसद्दो जिणाइसक्खीणं । आमंतणाभिधाई तस्सक्खिज्जे थिरव्वयया ॥ ३४७२ ॥

गहियं जिणाइसक्खं मइ त्ति तल्लज्ज-गोरव-भयाओ । सामाइयाइयारे परिहरओ तं थिरं होइ ॥ ३४७३ ॥

व्याख्या—अथवा, यथासंभवतो ये केचनातिशयज्ञानिनो जिन-सिद्धादयः संभवन्ति, तेषां जिनादीनां साक्षिणामामन्त्रणाभिधायी भदन्तशब्दः, 'भो भो जिनादयो भदन्ताः ! युष्मत्साक्षिकं करोम्यहं सामायिकम्' इति । तत्साक्षिकत्वे च सामायिककर्तुः स्थिरव्रतता भवतीति । कथम् ? इत्याह—जिनादिसाक्षिकं गृहीतं मया सामायिकम्, अतः परिपालनीयमेवेदम्, इत्यनया वासनया सामायिकातिचारान् परिहरतस्तस्य तत् सामायिकव्रतं स्थिरं भवति । कुतः ? इत्याह—'तल्लज्जेत्यादि' तेषां जिनादीनां सत्का या लज्जा, तेषु च यद् गौरवं यो बहुमानः, यच्च तदीयं भयं तस्मादिति ॥ ३४७२ ॥ ३४७३ ॥

---

१ एवं च सर्वक्रियासंपन्नता तदुपयुक्तकरणं च । व्याख्यातं भवति नैषेधिक्या क्रियोपयोग इव ॥ ३४७१ ॥

२ अथवा यथासंभवतो भदन्तशब्दो जिनादिसाक्षिणाम् । आमन्त्रणाभिधायी तत्साक्ष्ये स्थिरव्रतता ॥ ३४७२ ॥

गृहीतं जिनादिसाक्ष्ये मतिरिति तल्लज्जा-गौरव-भयात् । सामायिकातिचारान् परिहरतस्तत् स्थिरं भवति ॥ ३४७३ ॥

इहभवजीवितपर्यायविशेषितमित्यर्थः—यावदिहभवजीवितविशिष्टो जीवस्तिष्ठति तावत् प्रत्याख्याम्यहम्, न त्विहभवजीवितेऽपगत इति भावः ॥ ३५०८ ॥

जीवद्रव्यग्रहणे तु को दोषः स्यात् ? इत्याह—

[1]इहरा जीवज्जीवं ति जीवदव्वग्गहणे मयस्सावि । पच्चक्खाणं पावइ गहियमओ जीवियं तं च ॥ ३५०९ ॥

इतरथा 'यावज्जीवम्' इत्यत्राविशेषितजीवग्रहणे मृतस्यापि प्रत्याख्यानं प्राप्नोति, अविशेषितजीवद्रव्यस्य सर्वदैव भावात्। अतो जीवशब्देन जीवितमिह गृहीतम् । तच्च नामादिभेदभिन्नमित्युत्तरेण संबन्ध इति ॥ ३५०९ ॥

तानेव जीवितस्य नामादिभेदानाह—

[2]नामं ठवणा दविए ओहे भव तब्भवे य भोगे य । संजम-जसम-ऽसंजमजीवियमिह तव्विभागोऽयं ॥३५१०॥

नामजीवितम्, स्थापनाजीवितम्, द्रव्यजीवितम्, ओघजीवितम्, भवजीवितम्, तद्भवजीवितम्, भोगजीवितम्, संयमजीवितम्, यशोजीवितम्, असंयमजीवितम्, इत्येष तस्य जीवितस्य विभागो भेदः ॥ इति द्वारगाथासंक्षेपार्थ इति ॥३५१०॥

अत्र नाम-स्थापनाजीविते सुगमे, अतो द्रव्यजीवितस्वरूपं विवरीपुराह—

[3]दव्वे हिरण्ण-भेसज्ज-भत्त-पुत्ताइं जीवियानिमित्तं । जं दव्वजीवियं तं दव्वस्स व जीवियमवत्था ॥ ३५११ ॥

'दव्वे त्ति' द्रव्यजीविते विचार्ये तद् द्रव्यजीवितं, यत् किम् ? इत्याह—'जं ति' यत् कनक-भेषज-भक्त-पुत्रादिकं जीवितनिमित्तं जीवितोपष्टम्भकारकम् । अथवा, सचित्ता ऽचित्तभेदभिन्नस्य द्रव्यस्यैव ययाऽवस्थया 'जीवति पारदः' 'जीवति विषम्' 'जीवत्यभ्रकम्' 'जीवति लोहम्' इत्येवं ताम्र-सुवर्णादिष्वपि वाच्यम्, 'न पुनरेतदद्यापि मृतम्' इत्यादिव्यपदेशः प्रवर्तते सा विशिष्टा काचिदवस्था द्रव्यजीवितमुच्यत इति ॥ ३५११ ॥

१ इतरथा यावज्जीवमिति जीवद्रव्यग्रहणे मृतस्यापि । प्रत्याख्यानं प्राप्नोति गृहीतमतो जीवितं तच्च ॥ ३५०९ ॥

२ नाम स्थापना द्रव्यमोघो भवस्तद्भवश्च भोगश्च । सयम-यशो-ऽसयमजीवितमिति तद्विभागोऽयम् ॥ ३५१० ॥

३ द्रव्ये हिरण्य-भैषज्य-भक्त-पुत्रादि जीवितनिमित्तम् । यद् द्रव्यजीवितं तद् द्रव्यस्य वा जीवितमवस्था ॥ ३५११ ॥

अथवा, भदन्तशब्दोऽयं नामन्त्रणार्थः, किन्तु सामायिकस्यैव विशेषणार्थ इति दर्शयन्नाह—

अहवा[1] भंतं च तयं सामइयं चेइ भंतसामइयं। पत्तमलक्खणमेवं भंतेसामाइयं तं च॥ ३४७४॥

भदन्तं च तत् सामायिकं च भदन्तसामायिकं करोम्यहम्-कल्याणप्रापकं सुखावहं च यत् सामायिकं तदहं करोमि नान्यदित्यर्थः। 'भंतेसामाइयं' इत्यत्र तु यदेवमेकारान्तत्वं तदेतदलक्षणमलाक्षणिकमतो लुप्यत इति। 'तं च त्ति' तच्च किमर्थमेवं विशिष्यते? ॥ ३४७४॥

किमन्यदपि सामायिकं विद्यते? इत्याह—

नामाइवुदासत्थं[2] नणु सो सावज्जजोगविरईओ। गम्मइ भण्णइ न जओ तत्थवि नामाइसब्भावो॥ ३४७५॥

नाम-स्थापनादिसामायिकव्युदासार्थमिदमेवं विशिष्यते, नामादिसामायिकानां कल्याणप्रापकत्व-सुखावहत्वाभावात्, भदन्तविशेषणाद् भावसामायिकमिह गृह्यत इति भावः। आह—नन्वसौ नामादिव्युदासः 'सावज्जं जोगं पच्चक्खामि' इत्यादिवचनात् सावद्ययोगविरतिर्गम्यते। न हि सावद्ययोगविरतिरूपाणि नामादिसामायिकानि भवन्तीति। भण्यतेऽत्रोत्तरम्-'न त्ति' न त्वद्वचो युज्यते, तत्रापि सावद्ययोगविरतौ नाम-स्थापनादिरूपसंभवात्। इदमुक्तं भवति-यदि भावसावद्ययोगविरतिरसौ गृह्यते, तदा भवेत् साध्यसिद्धिः, न चैतदस्ति, नियामकाभावात्; भदन्तविशेषणे तु सामायिकस्येयमपि भावरूपा गम्यते, नामादिरूपसावद्ययोगविरतेर्भदन्तसामायिकरूपत्वायोगादिति॥ ३४७५॥

अथवा, 'भंते' शब्दात् षष्ठी द्रष्टव्येति दर्शयन्नाह—

भंतस्स[3] व सामइयं भंतेसामाइयं जिणाभिहियं। न परप्पणीयसामाइयं ति भंतेविसेसणओ॥ ३४७६॥

अथवा, 'करेमि भंतेसामाइयं' इत्यत्र भदन्तस्य भगवतः संबन्धि सामायिकमहं करोमीत्येवं च द्रष्टव्यम्। ततश्च 'भंते' इति

---

१ अथवा भदन्तं च तत् सामायिकं चेति भदन्तसामायिकम्। प्राप्तमलक्षणमेवं 'भंते'सामायिक तच्च॥ ३४७४॥

२ नामादिव्युदासार्थं ननु स सावद्ययोगविरतिस्तु। गम्यते भण्यते न यतस्तत्रापि नामादिसद्भावः॥ ३४७५॥

३ भदन्तस्य वा सामायिक भन्तेसामायिक जिनाभिहितम्। न परप्रणीतसामायिकमिति भदन्तविशेषणतः॥ ३४७६॥

अथौघ--भवजीवितयोर्विवरणमाह—

ओउस्सदव्वतया सामन्नं पाणधारणमिहोहो। भवजीवियं चउद्धा नेरइयाईण जावत्था ॥ ३५१२ ॥

आयुष आयुर्मात्ररूपस्य कर्मणः संबन्धीनि यानि सन्ति जीवस्य सत्तावर्तीनि द्रव्याणि तान्यायुःसद्द्रव्याणि तद्भाव आयुःसद्द्रव्यता तयाऽऽयुःसद्द्रव्यतया संसारे परिभ्रमतो जीवस्य यत् सामान्यं प्राणधारणं यदाश्रित्य सिद्धा एव मृता उच्यन्ते, न संसारिणः, तदिह संसारिणां जीवितसामान्यमात्ररूपमोघ ओघजीवितमुच्यत इति। भवन्ति प्राणिनोऽस्मिन्निति भवः संसारस्तत्रावस्थितिहेतुभूतं भवजीवितम्, तच्चतुर्धा। किं पुनस्तत्? इत्याह—नारकादीनां या जन्मनः प्रथमसमयाच्चरमसमयं यावदवस्थाऽवस्थितिरवस्थानं तद्धेतुत्वात्-सा भवजीवितमिति ॥ ३५१२ ॥

तद्भवजीवितं भोगजीवितं चाह—

तब्भवजीवियमोरालियाण जं तब्भवोववन्नाणं। चक्कहराईणं भोगजीवियं सुरवराणं च ॥ ३५१३ ॥

पुनः पुनस्तत्रैव विवक्षिते भवे उत्पन्नास्तद्भवोत्पन्नास्तेषां तद्भवोत्पन्नानां यज्जीवितं तत् तद्भवजीवितमुच्यते। तच्चौदारिकशरीरिणां तिर्यग्-मनुष्याणामेवावगन्तव्यम्। तत्रैकेन्द्रियाणां पुनः पुनस्तत्रैवैकेन्द्रियभव उत्पद्यमानानामनन्तानि भवग्रहणान्येतदुत्कृष्टतोऽवसेयम्। द्वीन्द्रियाणां तु संख्यातानि भवग्रहणानि। पञ्चेन्द्रियतिरश्चां मनुष्याणां च सप्ताष्टौ वा भवग्रहणानीति मन्तव्यम्। जघन्यतस्तु सर्वत्र द्वे भवग्रहणे। वैक्रियशरीरिणां तु देव-नारकाणामिदं न संभवत्येव, पुनः पुनस्तत्रैवोत्पत्त्यभावादिति। चक्रधरादीनां तु भोगपुरुषाणां सुरवराणां च देवानां जीवितं भोगजीवितमिति ॥ ३५१३ ॥

शेषजीवितानि तु त्रीण्याह—

संजमजीवियमिसीणं असंजमजीवियमविरयाणं। जसजीवियं जसोनामओ जिणाईण लोगम्मि ॥३५१४॥

---

१ आयुःसद्द्रव्यतया सामान्यं प्राणधारणमिहौघः। भवजीवितं चतुर्धा नैरयिकादीनां यावस्था ॥ ३५१२ ॥

२ तद्भवजीवितमौदारिकाणां यत् तद्भवोपपन्नानाम्। चक्रधरादीनां भोगजीवितं सुरवराणं च ॥ ३५१३ ॥ ३ क. ग. ज. 'रगणाणं'।

४ संयमजीवितमृषीणामसंयमजीवितमविरतानाम्। यशोजीवितं यशोनामतो जिनादीनां लोके ॥ ३५१४ ॥

विशेषणाज्जिनाभिहितं सामायिकं करोम्यहम्, न पुनः परप्रणीतं कुतीर्थिकप्ररूपितमिति ॥ ३४७६ ॥ तदेवं 'करणे भए य अंते' इति पदत्रयं व्याख्यातम् ॥

अथ 'सामायिकम्' इति चतुर्थपदं व्याचिख्यासुराह —

[1]राग-दोसविरहिओ समो त्ति अयणं अयो त्ति गमणं ति । समगमणं ति समाओ स एव सामाइयं नाम ॥३४७७॥

अहवा भवं समाए निव्वत्तं तेण तम्मयं वावि । जं तप्पओयणं वा तेण व सामाइयं नेयं ॥ ३४७८ ॥

अहवा समाइं सम्मत्त-नाण-चरणाइं तेसु तेहिं वा । अयणं अओ समाओ स एव सामाइयं नाम ॥ ३४७९ ॥

अहवा समस्स आओ गुणाण लाभो त्ति जो समाओ सो । अहवा समाणमाओ नेओ सामाइयं नाम ॥३४८०॥

प्रागपि निरुक्तिद्वारे प्रायश्चर्चितार्थाः, सुगमाश्चेति ॥ ३४७७ ॥ ३४७८ ॥ ३४७९ ॥ ३४८० ॥

अथवा, अन्यथा व्युत्पत्तिरित्याह —

[2]अहवा सामं मित्ती तत्थ अओ तेण सामाओ । अहवा सामस्साओ लाभो सामाइयं नाम ॥ ३४८१ ॥

सम्ममओ वा समओ सामाइयमुभयविड्ढिभावाओ । अहवा सम्मस्साओ लाभो सामाइयं होइ ॥ ३४८२ ॥

अथवा, सर्वजीवेषु मैत्री साम भण्यते, तत्र साम्नि अयो गमनं, साम्ना वाऽयो गमनं वर्तनं सामायः, अथवा, साम्न आयो लाभः सामायः स एव सामायिकं नामेति । अथवा, सम्यगर्थसंशब्दपूर्वकोऽयधातुः, सम्यगयनं वर्तनं समयः, समय एव स्वार्थि-

१ राग-द्वेषविरहितः सम इत्ययनमय इति गमनमिति । समगमनमिति समाय. स एव सामायिकं नाम ॥ ३४७७ ॥
अथवा भवं समाये निर्वृत्तं तेन तन्मयं वापि । यत् तत्प्रयोजन वा तेन वा सामायिकं ज्ञेयम् ॥ ३४७८ ॥
अथवा समानि सम्यक्त्व-ज्ञान-चरणानि तेषु तैर्वा । अयनमयः समायः स एव सामायिकं नाम ॥ ३४७९ ॥
अथवा समस्यायो गुणानां लाभ इति यः समायः सः । अथवा समानामायो ज्ञेयः सामायिकं नाम ॥ ३४८० ॥
२ अथवा साम मैत्री तत्रायस्तेन सामायः । अथवा साम्न आयो लाभः सामायिकं नाम ॥ ३४८१ ॥
३ सम्यगयो वा समयः सामायिकमुभयवृद्धिभावात् । अथवा साम्यस्यायो लाभः सामायिकं भवति ॥ ३४८२ ॥

पाठसिद्धा, नवरं 'इसीणं ति' ऋषीणां यतीनामिति । 'जसनामउ त्ति' यशोनामकर्मोदयादित्यर्थः ॥ ३५१४ ॥

नन्वेषां मध्यात् किं जीवितमिहाधिकृतम् ? इत्याह—

नरभवजीवियमहिगयं विसेसओ, सेसयं जहाजोगं । जावज्जीवामि तयं ता पच्चक्खामि सावज्जं ॥ ३५१५ ॥

भवजीवितरूपं नरभवजीवितं मनुष्यभवजीवितं विशेषतोऽत्राधिकृतम्, मनुष्याणामेव चारित्रसामायिकाधिकारात्, शेषं नामादिजीवितं यथायोगं यद् यत्र युज्यते तत् तत्र योजनीयम् । ततश्च स एव मनुष्यः प्रतिजानीते—यावदनेन नरभवजीवितेन जीवामि तावत् तकं सावद्ययोगं प्रत्याख्यामीति ॥ ३५१५ ॥

अथवा, यावच्छब्दस्यार्थमाह—

जावदयं परिमाणे मज्जायाएऽवधारणे चेइ । जावज्जीवं जीवणपरिमाणं जत्तियं मि त्ति ॥ ३५१६ ॥

जावज्जीवमिहारेण मरणमज्जायओ न तं कालं । अवधारणे वि जावज्जीवणमेवेह न ओ परओ ॥ ३५१७ ॥

व्याख्या—इह यावदयं शब्दस्त्रिष्वर्थेषु वर्तते; तद्यथा—परिमाणे, मर्यादायाम्, अवधारणे चेति। तत्र परिमाणार्थे तावदाह—यावज्जीवमिति । किमुक्तं भवति ?। यावद् मे जीवनपरिमाणमिहभवायुष्कस्य परिमाणं तावन्तं कालं प्रत्याचक्ष इति । मर्यादार्थमाह-यावज्जीवमित्यादि । अत्र यावज्जीवामिति किमुक्तं भवति ? । आरेण मरणमर्यादाया अर्वाक् प्रत्याचक्षे, न पुनस्तत्कालं प्रत्याख्यानग्रहणकाल एव, किन्तु मरणसीमां यावत् प्रत्याख्यामीति । अवधारणेऽपि—यावदिहभवजीवितं तावदेव प्रत्याचक्षे, न तु परतः, देवाद्यवस्थायामविरतत्वे प्रत्याख्यानभङ्गप्रसङ्गात् । 'परतो मुत्कलम्' इति विधिरपि न कर्त्तव्यः, भोगाशंसादोषानुषङ्गादिति स्वयमेव द्रष्टव्यमिति ॥ ३५१६ ॥ ३५१७ ॥

अत्राक्षेप-परिहारावाह—

---

१ नरभवजीवितमधिगतं विशेषतः, शेषकं यथायोगम् । यावज्जीवामि तत् तावत् प्रत्याख्यामि सावद्यम् ॥ ३५१५ ॥

२ यावदयं परिमाणे मर्यादायामवधारणे चेति । यावज्जीवं जीवनपरिमाणं यावद् मे इति ॥ ३५१६ ॥

यावज्जीवमिहारेण मरणमर्यादातो न तत्कालम् । अवधारणेऽपि यावज्जीवनमेवेह न तु परतः ॥३५१७॥

केकप्रत्ययोपादानादुभयत्र वृद्धिभावाच्च सामायिकम्; अथवा, सम्यगायो लाभः समायः, स एव सामायिकम्; अथवा समस्य भावः साम्यम्, साम्यस्यायो निपातनात् सामायः, स एव सामायिकमिति ॥ ३४८१ ॥ ३४८२ ॥

अथवा, अन्यथा निरुक्तविधिरुच्यत इत्याह—

[1]अहवा निरुत्तविहिणा सामं सम्मं समं च जं तस्स । इकमप्पए पवेसणमेयं सामाइयं नेयं ॥ ३४८३ ॥

अथवा, निरुक्तविधिना बहुव्युत्पत्तिकमेतत् सामायिकं ज्ञेयं ज्ञातव्यमिति । कथम् ? इति । अत्रोच्यते— इकशब्दो देशीवचनः क्वापि प्रवेशार्थे वर्तते । आत्मोपमया परेषां दुःखस्याकरणं सामेह गृह्यते, तस्य साम्न इकं यदात्मनि प्रवेशनम्, नकारस्यायादेशनिपातनात्, तत् सामायिकम् । तथा, सम्यग्दर्शन-ज्ञान-चारित्रत्रयस्य परस्परं योजनं सम्यगिहोच्यते, निर्वाणसाधकत्वेन तद्योगस्यैव परमार्थतः सम्यग्रूपत्वात्, तस्य सम्यग्दर्शनादिरूपस्य 'सम्यग्' इत्येतस्यात्मनि यदिकं प्रवेशनं, यकारादेरयादेशनिपातने सकारस्य च दीर्घत्वे, तत् सामायिकम् । तथा, राग-द्वेषमाध्यस्थ्यमात्मनः सर्वत्र तुल्यरूपेण वर्तनं सममुच्यते, तस्य समस्यात्मनि यदिकं प्रवेशनम्, समशब्दादयागमे सकारस्य दीर्घत्वे, तत् सामायिकमिति ॥ ३४८३ ॥

अथ सर्वशब्दं व्याचिख्यासुराह—

[2]किं पुण तं सामइयं सव्वसावज्जजोगविरइ त्ति । सियए स तेण सव्वो तं सव्वं कइविहं सव्वं ? ॥३४८४॥

किं पुनस्तद् यथोक्तशब्दार्थं सामायिकम् ? इत्यत्राह—सर्वसावद्ययोगविरतिरिति । अथ सर्व इति कः शब्दार्थः ? । उच्यते- 'सृ गतौ' इत्यस्य धातोः स्रियते स इति, स्रियतेऽनेनेति वौणादिके वप्रत्यये सर्वः पदार्थो, वस्तुनि तु वाच्ये तत् सर्वं वस्त्विति भवति । कतिविधं पुनरिदं सर्वं भवति ? ॥ इत्यष्टाशीतिगाथार्थः ॥ ३४८४ ॥

अथ 'कतिविधं सर्वम् ?' इति प्रश्नोत्तरमाह—

[3]नामं ठवणा दविए आएसे चेव निरवसेसं च । तह सव्वधत्तासव्वं च भावसव्वं च सत्तमयं ॥३४८५॥

---

१ अथवा निरुक्तविधिना साम सम्यक् समं च यत् तस्य । इकमात्मनि प्रवेशनमेतत् सामायिकं ज्ञेयम् ॥ ३४८४ ॥
२ किं पुनस्तत् सामायिकं सर्वसावद्ययोगविरतिरिति । स्रियते स तेन सर्वस्तत् सर्वं कतिविधं सर्वम् ? ॥ ३४८५ ॥
३ नाम स्थापना द्रव्यमादेशश्चैव निरवशेषं च । तथा सर्वघत्तासर्वं च भावसर्वं च सप्तमकम् ॥ ३४८५ ॥

[1]जावज्जीवं पत्ते जावज्जीवाए लिंगवच्चासो । भावप्पच्चयओ वा जा जावज्जीवया-ताए ॥ ३५१८ ॥

ननूक्तन्यायेन यावज्जीवमिति निर्देशे प्राप्ते 'यावज्जीवया' इति निर्देशः किमर्थं भगवता सूत्रकृता विहितः ?' इति शेषः । अत्र परिहारमाह—'लिंगवच्चासो त्ति' लिङ्गव्यत्ययोऽत्र भगवतोऽभिमतः, तेनेत्थं निर्देशः कृत इत्यर्थः । अथवा, यावज्जीवशब्दाद् भावप्रत्यय उत्पाद्यते, ततश्चेत्थं भावप्रत्यये उत्पादिते या 'यावज्जीवता' इति निष्पद्यते, तया यावज्जीवतया 'प्रत्याख्यामि' इति संबध्यत इति ॥ ३५१८ ॥

नन्वित्थमपि 'यावज्जीवतया' इति प्राप्ते 'यावज्जीवया' इति कथं भवति ? इत्याह—

[2]जावज्जीवतया इति जावज्जीवाए वण्णलोवाओ । जावज्जीवो जीसे जावज्जीवाहवा सा उ ॥ ३५१९ ॥

'यावज्जीवतया' इति निर्देशे प्राप्ते यत् 'यावज्जीवया' इत्युक्तम्, तत् तकारलक्षणवर्णलोपादिति द्रष्टव्यम् । तृतीयं परिहारमाह—अथवा, जीवनं जीवो यावज्जीवो यस्यां सा यावज्जीवेति बहुव्रीहिस्तया 'यावज्जीवया' इत्येवं द्रष्टव्यमिति ॥ ३५१९ ॥

अत्र विनेयपृच्छामुत्तरं चाह—

[3]का पुण सा संबज्झइ पच्चक्खाणकिरिया तया सव्वं । जावज्जीवाएऽहं पच्चक्खामीति सावज्जं ॥ ३५२० ॥

का पुनः पूर्वोक्तबहुव्रीहावन्यपदार्थे सबध्यते ? इत्याह—प्रत्याख्यानक्रियेति । तया यावज्जीवया प्रत्याख्यानक्रियया सर्वं सावद्ययोगमहं 'प्रत्याख्यामि' इति संबन्ध इति ॥ ३५२० ॥

परिहारान्तरमाह—

[4]जीवणमहवा जीवा जावज्जीवा पुरा व सा नेया । तीए पाययवयणे जावज्जीवाइ तइएयं ॥३५२१॥

---

१ यावज्जीवं प्राप्ते 'यावज्जीवया' लिङ्गव्यत्यासः । भावप्रत्ययतो वा या यावज्जीवता तया ॥ ३५१८ ॥
२ यावज्जीवतयेति 'यावज्जीवया' वर्णलोपात् । यावज्जीवो यस्यां यावज्जीवाऽथवा सा तु ॥ ३५१९ ॥
३ का पुन सा संबध्यते प्रत्याख्यानक्रिया तया सर्वम् । यावज्जीवयाऽहं प्रत्याख्यामीति सावद्यम् ॥ ३५२० ॥
४ जीवनमथवा जीवा यावज्जीवा पुरेव सा ज्ञेया । तया प्राकृतवचने यावज्जीवया तृतीयेयम् ॥ ३५२१ ॥

नामसर्वम्, स्थापनासर्वम्, द्रव्यसर्वम्, आदेशसर्वम्, निरवशेषसर्वम्, तथा, सर्वधत्तासर्वम्, भावसर्वं च सप्तमम् । इति निर्युक्तिगाथार्थः ॥ ३४८५ ॥

तत्र नाम-स्थापनासर्वे सुगमम्, द्रव्यसर्वं तु ज्ञ भव्यशरीरव्यतिरिक्तं व्याचिख्यासुराह—

[1]कसिणं दव्वं सव्वं तद्देसो वा विवक्खयाभिमओ । दव्वे तद्देसम्मि य सव्वासव्वे चउब्भंगो ॥ ३४८६ ॥

सव्वासव्वे दव्वे देसम्मि य नायमंगुलिदव्वं । संपुण्णं देसोणं पव्वं पव्वेगदेसो य ॥ ३४८७ ॥

व्याख्या—इहाङ्गुल्यादिद्रव्यं यदा कृत्स्नं सर्वैरपि निजावयवैः परिपूर्णं विवक्ष्यते तदा सर्वमुच्यते । एवं तस्याङ्गुल्यादिद्रव्यस्य पर्वादिको देशो निजावयवपरिपूर्णत्वविवक्षया सर्वोऽभिमतः । वाशब्दोऽत्रापिशब्दार्थे व्याख्यातः । एतदेव चाङ्गुल्यादिद्रव्यं तद्देशो वा यदाऽपरिपूर्णतया विवक्ष्यते तदा प्रत्येकमसर्वत्वं द्रष्टव्यम् । ततश्च द्रव्ये तद्देशे च सर्वासर्वत्वेन विवक्षिते चतुर्भङ्गो भङ्गचतुष्टयं भवति; तद्यथा—द्रव्यं सर्वं देशोऽपि सर्वः, द्रव्यं सर्वं देशोऽसर्वः, देशः सर्वो द्रव्यमसर्वम्, देशोऽसर्वो द्रव्यमप्यसर्वमिति । अत्र द्रव्यस्य सर्वत्वेऽसर्वत्वे च देशस्यापि सर्वत्वेऽसर्वत्वे च यथाक्रमं ज्ञातमुदाहरणम्; तद्यथा—अङ्गुलिद्रव्यं संपूर्णं विवक्षितं द्रव्यसर्वमुच्यते, तदेव देशोनं विवक्षितं द्रव्यासर्वमभिधीयते, पर्व पुनः संपूर्णं विवक्षितं देशसर्वं विवक्षितम्, पर्वैकदेशस्तु देशासर्वमिति ॥ ३४८६ ॥ ३४८७ ॥ उक्तं द्रव्यसर्वम् ॥

अथादेशसर्वमाह—

[2]आएसो उवयारो सो बहुतरए पहाणतरए वा । देसे वि जहा सव्वं भत्तं भुत्तं गओ गामो ॥ ३४८८ ॥

आदेश उपचारः, स च बहुतरे प्रधानतरे वा देशोऽपि सर्वतया प्रवर्तते, तद्यथा-परिगृहीतभक्तमध्याद् बहुतरे भुक्ते सत्यादिश्यते—'सर्वमनेन भुक्तम्' इति । प्रधानतरादेशे च कतिपयपुरुषेषु गतेषु शेषेष्ववतिष्ठमानेष्वप्यादिश्यते लोके यथा 'गतः सर्वो ग्रामः' इति ॥ ३४८८ ॥

---

१ कृत्स्नं द्रव्यं सर्वं तद्देशो वा विवक्षयाभिमतः । द्रव्ये तद्देशे च सर्वासर्वे चतुर्भङ्गी ॥ ३४८६ ॥
सर्वासर्वे द्रव्ये देशे च ज्ञातमङ्गुलिद्रव्यम् । संपूर्णं देशोनं पर्व पर्वैकदेशश्च ॥ ३४८७ ॥

२ आदेश उपचारः स बहुतरके प्रधानतरके वा । देशेऽपि यथा सर्वं भक्तं भुक्तं गतो ग्रामः ॥ ३४८८ ॥

अथवा, जीवनं जीवेति स्त्रीलिङ्गाभिधायक एवायं शब्दः साध्यते, न तु जीव इति पुंलिङ्गाभिधायकः। ततश्च यथा पुरा पूर्वं तथाऽत्राप्यर्थत्रयवृत्तिना यावच्छब्देन सह समासे सा यावज्जीवा ज्ञेया; तद्यथा—यावत्परिमाणा जीवा यावज्जीवा, एवं मर्यादा-ऽवधारणयोरपि समासः कार्यः, तया यावज्जीवया प्रत्याख्यामि; प्राकृतवचने च पर्यन्त एकारनिर्देशेन तृतीयेयमवसेयेति ॥ ३५२१ ॥

अथ 'त्रिविधं त्रिविधेन' इत्यस्य व्याख्यानार्थमाह—

[1]पच्चक्खामि त्ति मओ उत्तमपुरिसेगवयणओ कत्ता। तिण्णि विहा जस्स तओ तिविहो जोगो मओऽहिगओ॥३५२२॥

तं तिविहं बिइयाए पच्चक्खेयमिह कम्मभावाओ। तिण्णि विहा जस्स तयं तिविहं तिविहेण तेणं ति ॥३५२३॥

व्याख्या—इह 'प्रत्याख्यामि' इति वर्तमानाया उत्तमपुरुषैकवचननिर्देशात् कर्ताऽभिमतः। तिस्रो विधा विधानानि भेदा यस्य तकोऽसौ त्रिविधो मनो वाक्-कायव्यापारलक्षणो योग इहाधिकृतो मन्तव्य इति। तं त्रिविधं योगमिह सूत्रे प्रत्याख्येयत्वेन कर्मभावाद् द्वितीयया विभक्त्या 'निर्दिशति' इति शेषः। तदनेन 'त्रिविधम्' इति व्याख्यातम्। अथ 'त्रिविधेन' इति व्याचिख्यासुराह—'तिण्णी त्यादि' तिस्रो विधा भेदा यस्य तत् त्रिविधं 'करणम्' इति गम्यते, तेन त्रिविधेन करणेन 'प्रत्याख्यामि' इति प्रक्रमः॥३५२२॥३५२३॥

ननु 'तेन' इत्येतावन्मात्रनिर्देशात् 'करणेन' इति कथं लभ्यते? इत्याह—

[2]तेणेति साधकतमं करणं तइयाभिहाणओऽभिमयं। केण तिविहेण भणिए मणेण वायाए काएणं ॥३५२४॥

'तेन' इति तृतीयाविभक्त्यभिधानात् साधकतमं करणमाभिमतम्। अतस्तेन 'त्रिविधेन करणेन' इत्यनन्तरगाथायां व्याख्यातम्। केन पुनस्त्रिविधेन करणेन? इति विनेयेन भणिते पृष्टे सति सूत्रावयवमाह—'मणेण वायाए काएणं' इति ॥३५२४॥

अत्र मनःकरणव्याख्यानमाह—

[3]मणणं व मन्नए वाऽणेण मणो तेण दव्वओ तं च। तज्जोग्गपोग्गलमयं भावमणो भण्णए मंता ॥३५२५॥

१ प्रत्याख्यामीति मत उत्तमपुरुषैकवचनत कर्ता। तिस्रो विधा यस्य सकस्त्रिविधो योगो मतोऽधिकृतः ॥ ३५२२ ॥
तत् त्रिविधं द्वितीयया प्रत्याख्येयमिह कर्मभावात्। तिस्रो विधा यस्य तत् त्रिविधं त्रिविधेन तेनेति ॥३५२३॥
२ तेनेति साधकतमं करणं तृतीयाभिधानतोऽभिमतम्। केन त्रिविधेन भणिते मनसा वाचा कायेन ॥३५२४॥
३ मननं वा मन्यते वानेन मनस्तेन द्रव्यतस्तच्च। तद्योग्यपुद्गलमयं भावमनो भण्यते मन्ता ॥३५२५॥

निरवशेषसर्वमाह—

[1]दुविहं तु निरवसेसं सव्वासेसं तदेक्कदेसो य । सव्वासेसं सव्वे अणिमिसनयणा जहा देवा ॥ ३४८९ ॥

तद्देसापरिसेसं सव्वे असुरा जहा असियवण्णा । जह जोइसालया वा सव्वे किर तेउलेस्सागा ॥ ३४९० ॥

व्याख्या—निरवशेषं पुनर्द्विविधम्—विवक्षितसर्ववस्तुनिरवशेषं, तद्देशनिरवशेषं च । तत्र सर्वनिरवशेषं यथा सर्वेऽनिमिषनयना देवाः । इहानिमिषनयनत्वमपरिशेषेष्वपि देवेषु वर्तते, सानिमिषत्वस्य तेष्वभावादिति । तद्देशापरिशेषं तु यथा—सर्वेऽप्यासितवर्णाः कृष्णा असुराः, यथा वा ज्योतिष्कालया देवाः सर्वे किल तेजोलेश्याकाः । इहासुरा ज्योतिष्कालयाश्च देवाः समस्तदेवानां प्रत्येकमेकदेशे वर्तन्ते, तेषु सर्वेषु यथासंख्यं कृष्णवर्णत्वं तेजोलेश्यायुक्तत्वं च वर्तत इति देशापरिशेषं मन्तव्यमिति ॥३४८९॥३४९०॥

अथ सर्वधत्तासर्वमाह—

[2]जीवाजीवा सव्वं तं धत्ते तेण सव्वधत्त त्ति । सव्वे वि सव्वधत्तासव्वं जमओ परं णन्नं ॥ ३४९१ ॥

इह सर्वस्मिन्नपि लोके यदस्ति तत् सर्वं जीवाश्चाजीवाश्च, तत् सर्वं धत्ते धारयति येन कारणेन तेन सा विवक्षा निपातनात् सर्वधत्ता, सैव चेह जीवाजीवरूपा विवक्षा सर्वधत्तासर्वमुच्यते, यस्मादतो जीवाजीवराशिद्वयात् परं नान्यत् किञ्चिदस्तीति ॥३४९१॥

आह—ननु द्रव्यसर्वस्यादेशसर्वस्य निरवशेषसर्वस्य सर्वधत्तासर्वस्य च कः प्रतिविशेषः ? इत्याह—

[3]अह दव्वसव्वमेगं दव्वाधारं ति भिन्नमन्नेहिं । एगाणेगाधारोवयारभेएण चादेसं ॥ ३४९२ ॥

भिण्णमसेसं जमिहेगजाइविसयं ति सव्वधत्ताओ । भिन्ना य सव्वधत्ता सव्वाधारो त्ति सव्वेसिं ॥३४९३॥

१ द्विविधं तु निरवशेष सर्वाशेषं तदेकदेशश्च । सर्वाशेषं सर्वेऽनिमिषनयना यथा देवाः ॥ ३४८९ ॥ तद्देशापरिशेष सर्वेऽसुरा यथाऽसितवर्णाः । यथा ज्योतिरालया वा सर्वे किल तेजोलेश्याकाः ॥ ३४९० ॥

२ जीवाजीवाः सर्वं तद् धत्ते तेन सर्वधत्तेति । सर्वस्मिन्नपि सर्वधत्तासर्वं यदतः परं नान्यत् ॥ ३४९१ ॥

३ अथ द्रव्यसर्वमेकं द्रव्याधारमिति भिन्नमन्यैः । एकानेकाधारोपचारभेदेन चादेशः ॥ ३४९२ ॥ भिन्नमशेषं यदिहैकजातिविषयमिति सर्वधत्तातः । भिन्ना च सर्वधत्ता सर्वाधार इति सर्वेभ्यः ॥ ३४९३ ॥

'मन ज्ञाने' 'मनु बोधने' वा, मननम्, मन्यते वाऽनेनेति मनस्तेन मन उच्यते। तच्च द्रव्यतो द्रव्यमनस्तद्योग्यपुद्गलमयं द्रष्टव्यम्। भावमनस्तु मन्ता जीवो भण्यते। इदमुक्तं भवति–मनो द्विविधम्–द्रव्यमनः, भावमनश्च। तत्र यत् तद्योग्यैर्मननयोग्यैर्मनोवर्गणाभ्यो गृहीतैरनन्तैः पुद्गलैर्निर्वृत्तं तद् द्रव्यमनो भण्यते। यत्तु तज्जन्य मनन चिन्तनं तद् भावमनोऽभिधीयते, इह तु तदव्यतिरिक्तत्वाद् मन्ता जीवो भावमनस्त्वेनोक्त इति ॥३५२५॥

वाक्करणमाह—

वयणं वागुच्चए वाऽणए त्ति वाय त्ति दव्वओ सा य। तज्जोग्गपोग्गला जे गाहिया तप्परिणया भावो ॥३५२६॥

वचनं वाग्, उच्यते वाऽनयेति वाग्। सा च द्रव्यतो द्रव्यवागेतद्योग्या भावयोग्या भाषावर्गणाभ्यो गृहीताः पुद्गला इति। ये तु तत्परिणता भाषात्वेन परिणता उच्यमानाः पुद्गलाः सा भावो भाववागिति ॥३५२६॥

कायकरणमाह—

जीवस्स निवासाओ पोग्गलचयओ य सरणधम्माओ। काओऽवयवसमाहाणओ य दव्व-भावमओ ॥३५२७॥

तज्जोग्गपुग्गला जे मुक्का य पओगपरिणया जाव। सो होइ दव्वकाओ बद्धा पुण भावओ काओ ॥३५२८॥

व्याख्या—'चिञ् चयने' इति धातोश्चयनं कायः चीयतेऽनेनेति वा कायो निवास-चिति-शरीरो-पसमाधानेषु, "आदेश्च कः" इत्यनेनादेरिह ककारः, अत एवाह—जीवस्य काये निवासात्, पुद्गलानां चयात्, प्रतिक्षणं च विशरणधर्मकत्वात्, शिर-उरो-बाहाद्यवयवानामिह सम्यगाधानाच्च कत्वविधानहेतवो निवासादयोऽर्था मन्तव्याः। स च कायो द्रव्य-भावमयो बोद्धव्यः—द्रव्यकायः, भावकायश्चेत्यर्थः। तत्र य औदारिकादिवर्गणागतास्तद्योग्या औदारिकादिकाययोग्या औदारिककायपरिणतेरभिमुखतां प्राप्ता जीवेन पुनरद्याप्यगृहीताः पुद्गलाः स द्रव्यकायः, न केवलं त एव, किन्तु य औदारिकादिकायरूपतया परिणमय्य जीवेन मुक्तास्त्यक्ताः

१ वचनं वागुच्यते वाऽनयेति वागिति द्रव्यतः सा च। तद्योग्यपुद्गला ये गृहीतास्तत्परिणता भावः ॥३५२६॥
२ जीवस्य निवासात् पुद्गलचयतश्च शरणधर्मात्। कायोऽवयवसमाधानतश्च द्रव्य-भावमयः ॥३५२७॥
तद्योग्यपुद्गला ये मुक्ताश्च प्रयोगपरिणता यावत्। स भवति द्रव्यकायो बद्धाः पुनर्भावतः कायः ॥ ३५२८ ॥

व्याख्या—अथ 'द्रव्यसर्वादीनां भेद उच्यते' इति शेषः। तत्र द्रव्यसर्वं तावदेकद्रव्याधारमुक्तमित्यन्येभ्यो भिन्नम्, तेषां तद्रूपत्वाभावात्। आदेशसर्वं त्वेकानेकद्रव्याधारमिति कृत्वा तथोपचारभेदेन च 'भिन्नमन्येभ्यः' इति वर्तत इति। अशेषसर्वमपि सर्वधत्तासर्वस्मात् पूर्वोक्ताभ्यां च भिन्नम्, यस्मादेकजातिविषयं तदिति। सर्वधत्तापि सर्वेभ्यः पूर्वेभ्यो भिन्ना, सर्ववस्त्वाधारत्वादिति ॥ ३४९२–९३ ॥

अथ भावसर्वमाह—

[1]कम्मोदयस्सहावो सव्वो असुहो सुहो य ओदइओ। मोहोवसमसहावो सव्वो उवसामिओ भावो ॥३४९४॥

कम्मक्खयस्सहावो खइओ सव्वो य मीसओ मीसो। अह सव्वदव्वपरिणइरूवो परिणामिओ सव्वो ॥३४९५॥

सुगमे ॥ ३४९४ ॥ ३४९५ ॥

ननु सप्तविधसर्वमध्यात् केनात्राधिकारः? इत्याह—

[2]अहिगयमसेससव्वं विसेसओ सेसयं जहाजोगं। गरहियमवज्जमुत्तं पावं सह तेण सावज्जं ॥ ३४९६ ॥

इह 'सर्वं सावद्यं योगं प्रत्याख्यामि' इति संबन्धाद् निरवशेषसर्वं विशेषतोऽधिकृतम्, शेषकं तु षड्विधं सर्वं यथायोगं यद् यत्र युज्यते तत् तत्र योजनीयमिति। तदेवं 'करणे भए य अंते सामाइय सव्वए' इत्यादिमूलद्वारगाथायाः पञ्च पदानि व्याख्यातानि। अथ षष्ठं सावद्यपदं व्याचिख्यासुराह—'गरहियमित्यादि' गर्हितं निन्द्यं वस्त्ववद्यमुक्तम्, तच्चेह पापम्, सह तेनावद्येन वर्तत इति सावद्यस्तं सावद्यं योगं 'प्रत्याख्यामि' इति वक्ष्यमाणं गम्यत इति ॥ ३४९६ ॥

अथवा, अन्यथा सावद्यशब्दो व्युत्पाद्यत इत्याह—

[3]अहवेह वज्जणिज्जं वज्जं पावं ति सहसकारस्स। दिग्घत्तादेसाओ सह वज्जेणं ति सावज्जं ॥ ३४९७ ॥

---

१ कर्मोदयस्वभाव. सर्वोऽशुभः शुभश्चौदायिकः। मोहोपशमस्वभावः सर्व औपशमिको भावः ॥ ३४९४ ॥
कर्मक्षयस्वभावः क्षायिकः सर्वश्च मिश्रको मिश्रः। अथ सर्वद्रव्यपरिणतिरूपः पारिणामिकः सर्वः ॥ ३४९५ ॥

२ अधिगतमशेषसर्वं विशेषतः शेषकं यथायोगम्। गर्हितमवद्यमुक्तं पापं सह तेन सावद्यम् ॥ ३४९६ ॥

३ अथवेह वर्जनीयं वर्ज्यं पापमिति सहसकारस्य। दीर्घत्वादेशात् सह वर्ज्येनेति सवर्ज्यम् ॥ ३४९७ ॥

पुद्गलाः सोऽपि द्रव्यकायो भवति । किं सर्वदा ? । नेत्याह-यावत् प्रयोगपरिणता यावत्तं जीवप्रयोगपरिणामं न मुञ्चन्तीत्यर्थः । तं च जीवप्रयोगपरिणामं ते मुक्ताः पुद्गला जघन्यतोऽन्तर्मुहूर्तम्, उत्कृष्टतस्त्वसंख्येयं कालं न मुञ्चन्ति, ततः परं त्ववश्यं परित्यजन्ति तमिति । ये पुनर्जीवेन बद्धा औदारिकादिकायपरिणतिमापन्नाः पुद्गलास्ते भावतः कायो भावकाय इत्यर्थः ॥३५२७॥३५२८॥

तदेवं मनःप्रभृति त्रिविधं करणं व्याख्याय प्रस्तुतयोजनामाह—

[1]तेण तिविहेण मनसा वाया काएण किं तयं तिविहं । पुव्वाहिगयं जोगं न करेमिच्चाइ सावज्जं ॥३५२९॥

तेन यथोक्तस्वरूपेण त्रिविधेन करणेन मनसा वाचा कायेन मनो-वाक्-कायलक्षणेनेत्यर्थः । किम् ? अत आह-तकं पूर्वाधिकृतं त्रिविधं सावद्यं योगं न करोमीत्यादि संबध्यते-न करेमि, न कारवेमि, करंतंपि अण्णं ण समणुजाणामि, इति संबध्यत इत्यर्थः ॥३५२९॥

अथवा, अन्यथा संबन्धयन्नाह—

[2]पुव्वं व जमुद्दिट्ठं तिविहं तिविहेण तत्थ करणस्स । तिविहत्तणं विवरीयं मणेण वायाए काएणं ॥३५३०॥

तिविहमियाणिं जोगं पच्चक्खेयमणुभासए सुत्तं । किं पुणरुक्कमिऊणं जोगं करणस्स निद्देसो ? ॥३५३१॥

तो न जहुद्देसं चिय निद्देसो भण्णए निसामेहि । जोगस्स करणतंतोवदरिसणत्थं विवज्जासो ॥३५३२॥

देसियमेवं जोगो करणवसो निययमप्पहाणो त्ति । तब्भावे भावाओ तदभावे वप्पभावाओ ॥ ३५३३ ॥

व्याख्या—अथवा, पूर्वं सूत्रे यदुद्दिष्टं 'त्रिविधं त्रिविधेन' इति, तत्र करणस्य त्रिविधत्वम्—'मणेणं, वायाए, काएणं' इति सूत्रगतेनैवावयवेन विवृतं व्याख्यातमिति । इदानीं तु त्रिविधं प्रत्याख्येयं योगं सूत्रमनुभाषते विवृणोति—'न करेमि, न कारवेमि'

---

१ तेन त्रिविधेन मनसा वाचा कायेन किं तत् त्रिविधम् । पूर्वाधिकृतं योगं न करोमीत्यादि सावद्यम् ॥ ३५२९ ॥

२ पूर्वं वा यदुद्दिष्टं त्रिविधं त्रिविधेन तत्र करणस्य । त्रिविधत्वं विवृतं मनसा वाचा कायेन ॥ ३५३० ॥

त्रिविधमिदानीं योगं प्रत्याख्येयमनुभाषते सूत्रम् । किं पुनरुत्क्रम्य योगं करणस्य निर्देशः ? ॥ ३५३१ ॥

ततो न यथोद्देशमेव निर्देशो भण्यते निशमय । योगस्य करणतन्त्रोपदर्शनार्थं विपर्यासः ॥ ३५३२ ॥

देशितमेवं योगः करणवशो नियतमप्रधान इति । तद्भावे भावात् तदभावे वाप्यभावात् ॥ ३५३३ ॥

अथवा, इह वर्जनीयं वर्ज्यत इति वर्ज्यं पापमुच्यते, सह वर्ज्येन वर्तत इति सहस्य सभावात् सवर्जसकारस्य च प्राकृतत्वेन दीर्घत्वविधानात् सावर्ज्यमित्युक्तं सवर्ज्यः सपापो योगस्तं सवर्ज्यमिति ॥ ३४९७ ॥

योगपदव्याख्यानार्थमाह—

[1]जोगो जोयणमायकिरिया समाधाणमायवावारो । जीवेण जुज्जए वा जओ समाहिज्जए सो त्ति ॥ ३४९८ ॥

जं तेण जुज्जए वा स कम्मुणा जं च जुज्जए तम्मि । तो जोगो सो य मओ तिविहो कायाइवावारो ॥३४९९॥

व्याख्या—'युजि योगे' 'युज समाधौ वा' योजनं योग आत्मकर्मसंबन्ध इत्यर्थः । अथवा, आत्मनश्चलन-स्पन्दनादिक्रियया सम्यगाधानं योजनं योगः सकर्मक आत्मव्यापार इत्यर्थः । अथवा, जीवेन सह युज्यते समाधीयते संबध्यते स यस्मात्, ततो योगो जीवव्यापार एवेति । अथवा, स आत्मा तेन कृत्वा कर्मणा सह युज्यते यस्मात् ततो योगः । अथवा, यस्मात् तस्मिन् योगे सत्यात्मा कर्मणा युज्यते ततो योगः । स च त्रिविधः कायादिव्यापारो मतः—मनो-वाक्-कायव्यापार इत्यर्थः ॥ ३४९८ ॥ ३४९९ ॥

अथ सर्वादिपदानां क्रियया सह संबन्धं कुर्वन्नाह--

[2]सव्वो सावज्जो त्ति य जोगो संबज्झए तयं सव्वं । सावज्जं जोगं ति य पच्चक्खामि त्ति वज्जेमि ॥३५००॥

सर्वो निरवशेषः सावद्ययोग इति संबध्यते । तं सर्वं सावद्ययोगं प्रत्याख्यामीति क्रिया प्रत्याचक्षे वा वर्जयामीत्यर्थः॥३५००॥

इह प्रत्याख्यामि प्रत्याचक्षे चेति क्रियाद्वयेऽपि सावद्ययोगस्य प्रत्याख्यानं गम्यते, अतस्तदेव प्रत्याख्यानं व्याचिख्यासुराह—

[3]पइसद्दो पडिसेहे अक्खाणं खावणाऽभिहाणं वा । पडिसेहस्सक्खाणं पच्चक्खाणं निवित्ति त्ति ॥ ३५०१ ॥

प्रतिशब्दोऽत्र प्रतिषेधे वर्तते, आख्यानं त्वाभिमुख्येन वाऽऽदरेण वा ख्यापना प्रकथनं, चक्षिपक्षेऽभिधानं वा, प्रतिषेधस्याख्यानं प्रत्याख्यानं निवृत्तिः ॥ इति गाथाषोडशकार्थः ॥ ३५०१ ॥

---

१ योगो योजनमात्मक्रिया समाधानमात्मव्यापारः । जीवेन युज्यते वा यत समाधीयते स इति ॥ ३४९८ ॥
यत् तेन युज्यते वा स कर्मणा यच्च युज्यते तस्मिन् । ततो योगः स च मतस्त्रिविधः कायादिव्यापारः ॥ ३४९९ ॥

२ सर्वः सावद्य इति च योगः संबध्यते तत् सर्वम् । सावद्यं योगमिति च प्रत्याख्यामीति वर्जयामि ॥ ३५०० ॥

३ प्रतिशब्दः प्रतिषेधे आख्यानं ख्यापनाऽभिधानं वा । प्रतिषेधस्याख्यानं प्रत्याख्यानं निवृत्तिरिति ॥ ३५०१ ॥

इत्यादिनैव सूत्रावयवेन। अत्राह परः—ननु यद्येवम्, तर्हि किं पुनः कारणम्, येन योगमुत्क्रम्यातिलङ्घ्य करणस्य प्रथमं निर्देशः कृतः ?। उद्देशकाले हि प्रथमं 'त्रिविधम्' इत्युद्देशाद् योग एव प्रथममुद्दिष्टः, तदनन्तरं 'त्रिविधेन' इत्यभिधानात् पश्चात् करणस्योद्देशः कृतः। एवं च सति 'यथोद्देशं निर्देशः' इति न्यायादिह निर्देशोऽपि प्रथमं योगस्य, पश्चात् करणस्य प्राप्नोति, तद्यथा—'न करेमि, न कारवेमि, करंतं पि अण्णं ण समणुज्जाणामि मणेणं वायाए काएणं' इति। न चैवं निर्दिष्टम्, व्यत्ययाभिधानादिति। 'तो त्ति' ततो न यथोद्देशमेव निर्देशोऽत्र संजातः, तत् किमत्र कारणमिति वाच्यम् ?। गुरुराह-निशमयाकर्णय, भण्यतेऽत्र कारणम्-करणादिलक्षणस्य योगस्य करणतन्त्रोपदर्शनार्थं मनो-वाक् कायलक्षणकरणायत्ततोपदर्शनार्थमयं व्यत्यासः कृत इति। एतदेव भावयति-देशितमुपदिष्टमेतं व्यत्यासकरणेन भगवता सूत्रकृता-योऽयं करणकरणादिव्यापारलक्षणो योगः स मनःप्रभृतिकरणवशस्तदायत्त इति नियतं निश्चितं स्वयमप्रधानः, तद्भावे करणभाव एव भावात्, तदभावेऽपि च करणाभावेऽवश्यमभावादिति ॥३५३०॥३५३१॥३५३२॥३५३३॥

किमिति योगः करणभाव एव भवति, तदभावे तु न भवति ? इत्याह—

तस्स[1] तदाधाराओ तक्कारणओ य तप्परिणईओ। परिणंतुरणत्थंतरभावाओ करणमेव तओ ॥ ३५३४ ॥

तस्य योगस्य तदाधारत्वात् करणाधारत्वात्, तथा, तद् मनःप्रभृति करणमेव कारणं यस्य स तत्कारणस्तद्भावस्तत्त्वं तस्मात्, कारणत्वात् तस्य योगस्य, तथा, तत्परिणतित्वात् करणपरिणतिरूपत्वात् तस्य; तथा, परिणन्तुः करणस्याऽनर्थान्तरत्वादनन्यत्वात् तस्य, यतः करणमेव तकोऽसौ योगः, ततस्तदात्मकत्वात् तद्भाव एव भवति, तदभावे तु न भवति। आह—यद्येवम्, उद्देशोऽप्येवं कस्माद् न कृतः ?। उच्यते—योगस्यापि प्रत्याख्येयत्वेन प्राधान्यख्यापनार्थमिति। तदेवं योगस्य करणात्मकत्वं दर्शितम् ॥३५३४॥

अथ करण-योगयोः पुनः समुदितयोर्जीवात्मकत्वं दर्शयन्नाह—

एत्तो[2] च्चिय जीवस्स वि तम्मयया करण-जोगपरिणामा। गम्मइ नयंतराओ कयाइ, समए जओऽभिहियं ॥३५३५॥

यत एव परिणन्तुः परिणामोऽनर्थान्तरमुक्तम्, अत एव जीवस्यापि तन्मयता स्वपरिणामरूपकरणयोगात्मता गम्यते। कुत इत्याह—'करणजोगपरिणाम त्ति' करणं च योगश्च करण-योगौ तौ परिणामः स्वभावौ यस्यासौ करणयोगपरिणामस्तद्भावस्तत्त्वं

१ तस्य तदाधारात् तत्कारणतश्च तत्परिणतितः। परिणन्तुरनर्थान्तरभावात् करणमेव सकः ॥ ३५३४ ॥

२ एतस्मादेव जीवस्यापि तन्मयता करणयोगपरिणामात्। गम्यते नयान्तरात् कदाचित्, समये यतोऽभिहितम् ॥ ३५३५ ॥

जीवो सचेयणो त्ति य विगप्पनियमादओ सिद्धा ॥१२॥
रूवी घडो त्ति चूओ दुमो त्ति नीलुप्पलं च लोयम्मि । असमाणाण णेओ समाणसंखाणमविसेसो ॥ १३ ॥
नाणत्ति त्ति विसेसो सो दव्व-क्खेत्त-काल-भावेहिं । असमाणाणं तह खेत्त-काल-भावप्पभेयाणं ॥ १४ ॥
परमाणु-दुयणुयाणं जह नाणत्तं तहावसेसाणं । भोमाई तदट्ठविहं तिकालविसयं जिणाभिहियं ॥ १५ ॥
लक्खिज्जइ सुभासुभमणेण तो लक्खणं निमित्तं ति । उप्पाओ संभवओ तह चेव विगच्छओ विगमो ॥ १६ ॥
नाणुप्पन्नं लक्खिज्जए जओ वत्थु लक्खणं तेणं । विगमो वि लक्खणमओ विगच्छओ वत्थुणोऽणण्णो॥१७॥
लक्खिज्जइ जं विगयं विगमेण विणा व जं न संभूई । लक्खिज्जइ नेयरहा तह सव्वे दव्वपज्जाया ॥ १८ ॥
अङ्गुलिरिजुता निययप्पसूइ-वक्कत्तणासओ समयं । नासोवलक्खियं वा वत्थुं न भावो खपुप्फं व ॥ १९ ॥
उप्पायस्स हि जुत्ता लक्खणया नासओ विणासस्स । अहव समुप्पाओ इव वत्थुप्पभवाइभावाओ ॥ २० ॥
नासो भावो संभूइहेऊओ वत्थुणो धुवत्तं व । आह नणु पत्तमेव भावाभावोभयसभावं ॥ २१ ॥
नासोवलक्खियं चिय तदभावो च्चिय तदन्नहा भावो । भावे व सव्वहा सव्वसंकरे-गत्त-णिच्चाइं ॥ २२ ॥
एवं चिय तं वत्थुं सव्वाभावे व तं खपुप्फं व । तं चिय पज्जायंतरविसेसियमहप्पियं नाम ॥ २३ ॥
उप्पन्नं विगयं वाऽणप्पियमविसेसियं सधम्मेहिं । दव्वस्स चित्तरूवं जह वीरियमहोसहाईणं ॥ २४ ॥
वीरियं ति बलं जीवस्स लक्खणं जं व जस्स सामत्थं । तं भावलक्खणं खलु तत्थुदओ पोग्गलविवागो ॥ २५ ॥
जमिहोदइयाईणं भावाणं लक्खणं तं एवहवा । उदयविघाय उवसमो उवसम एवोवसमिउ त्ति ॥ २६ ॥
उदए सइ जो तेण व निव्वत्तो उदय एव ओदईओ । उभयसहावो मीसो खओवसमिओ तहेवायं ॥ २७ ॥
खय इह कम्माभावो तब्भावे खाइओ स एवहवा ।

१ 'नाणित्ति' । २ 'द्व य अ' ।

सव्वत्तो किर नामो परिणामोऽभिमुहया स एवेह । परिणामिउ त्ति सुद्धो जो जीवा-जीवपरिणामो ॥ २८ ॥
सम्मत्त-चरित्ताइं मीसो-वसम-क्खयस्सहावाइं । सुय-देसोवरईओ खओवसमभावरूवाओ ॥ २९ ॥
सामाइएसु एवं संभवओ सेसलक्खणाइं पि । जोएज्ज भावओ वा वइसेसियलक्खणं चउहा ॥ ३० ॥
सद्दहणाइसहावं जह सामाइयं जिणो परिकहेइ । तल्लक्खणं चिय तयं परिणमए गोयमाईणं ॥ ३१ ॥
एगेण वत्थुणोऽणेगधम्मुणो जमवधारणेणेव । नयणं धम्मेण तओ होइ नओ सत्तहा सो य ॥ ३२ ॥

नेगम संगह ववहार उज्जुसुए चेव होइ बोधव्वा ।
सद्दे य समभिरूढे एवंभूए य मूलनया ॥ २२१ ॥
णेगेहिं माणेहिं मिणइ त्ती णेगमस्स नेरुत्ती ।
सेसाणं पि नयाणं लक्खणमिणमो सुणह, वोच्छं ॥ २२२ ॥
संगहियपिंडियत्थं संगहवयणं समासओ बिंति ।
वच्चइ विणिच्छियत्थं ववहारो सव्वदव्वेसु ॥ २२३ ॥
पच्चुप्पन्नग्गाही उज्जुसुओ नयविही मुणेअव्वो ।
इच्छइ विसेसियतरं पच्चुप्पन्नं नओ सद्दो ॥ २२४ ॥
वत्थुओ संकमणं होइ अवत्थू नए समभिरूढे ।
वंजण-अत्थ-तदुभए एवंभूओ विसेसेइ ॥ २२५ ॥

तस्मात् करण योगपरिणामत्वाज्जीवस्य । स हि करण-योगपरिणामेन परिणमति । परिणामश्च परिणन्तुरनर्थान्तरम् । अतः करण-योगात्मता जीवस्य गम्यते, कदाचित् कथञ्चिद् नयान्तराद् निश्चयलक्षणं नयान्तरमाश्रित्येति; यतः समये सिद्धान्तेऽभिहितम् ॥३५३५॥

किम् ? इत्याह—

[1]आया चेव अहिंसा आया हिंस त्ति निच्छओ एस । जो होइ अप्पमत्तो अहिंसओ, हिंसओ इयरो ॥३५३६॥

इहात्मा मनःप्रभृतिना करणेन हनन-घातना-ऽनुमतिलक्षणां हिंसां तन्निवृत्तिरूपामहिंसां च करोतीति व्यवहारः । अस्यां च गाथायां निश्चयनयमतेनात्मैव हननादिलक्षणा हिंसा, स एव च तन्निवृत्तिरूपाऽहिंसेत्युक्तम् । तदनेनात्मनः करणस्य योगलक्षणस्य कर्मणश्चैकत्वमुक्तं भवतीति ॥ ३५३६ ॥

अत्र परप्रेर्यमाशङ्क्य परिहरन्नाह—

[2]आहेगत्ते कत्ता कम्मं करणं ति को विभागोऽयं । भण्णइ पज्जायंतरविसेसणाओ न दोसो त्ति ॥३५३७॥

आह परः—नन्वेवं त्रितयस्याप्येकत्वे कर्ता, कर्म, करणं चेति को विभागः ?—को भेदः ? । भण्यतेऽत्रोत्तरम्—पर्यायान्तरेण विशेषणं पर्यायान्तरविशेषणं तस्माददोषः । इदमुक्तं भवति-एक एव कर्ताऽऽत्मा व्यतिरिक्तैः कथञ्चिद् भिन्नैः कर्म-करणादिपर्यायान्तरैर्विशिष्यत इति नोक्तदोष इति ॥ ३५३७ ॥

पूर्वं भावितमपीदं पुनरपि स्मारयन्नाह—

[3]एक्कं पि सव्वकारगपरिणामाणण्णभावयामेइ । नाया नाणाणन्नो जह विण्णेयाइपरिणामं ॥ ३५३८ ॥

एकमपि घटादिकं वस्तु सर्वकारकपरिणामलक्षणमन्यान्यभावतामन्यान्यरूपतामेति, यथा ज्ञाता जीवो ज्ञानानन्यः सन् विज्ञेयादिपरिणाममेति । स एव हि स्वज्ञान उपयुज्यमानः कर्ता, करणभूतज्ञानानन्यत्वात् स एव च करणं, स्वयं संवेद्यमानस्तु स एव विज्ञेय इति सविस्तरेण प्रागुक्तमिति ॥ ३५३८ ॥

---

१ आत्मैवाहिंसाऽऽत्मा हिंसेति निश्चय एषः । यो भवत्यप्रमत्तोऽहिंसकः, हिंसक इतरः ॥ ३५३६ ॥
२ आहैकत्वे कर्ता कर्म करणमिति को विभागोऽयम् ? । भण्यते पर्यायान्तरविशेषणाद् न दोष इति ॥ ३५३७ ॥
३ एकमपि सर्वकारकपरिणामानन्यभावतामेति । नात्मा ज्ञानानन्यो यथा विज्ञेयादिपरिणामम् ॥ ३५३८ ॥

अथवा, अस्मिन्नेव सामायिकसूत्रे निरवशेषवचनोऽपि सर्वशब्दः प्रतिनियतत्वेन व्यवस्थापित इति दर्शयन्नाह—

[1]अहवा जावज्जीवग्गहणाओऽणागयावरोहोऽयं । संपइकालग्गहणं न करोमिच्चाइगहणाओ ॥ ३५५५ ॥

भूयस्स पडिक्कमणाइणा य तेणेह सव्वसद्दोऽयं । नेओ विसेसविसओ जओ य सुत्तंतरेऽभिहियं ॥ ३५५६ ॥

व्याख्या—अथवा, सूत्र एव यावज्जीवग्रहणादनागतकालस्यायमवरोधः—सुदीर्घोऽप्यनागतकालो यावज्जीवग्रहणाद् नैयत्य-विधानेन विशेषे व्यवस्थापित इत्यर्थः । 'न करेमि न कारवेमि' इत्यादिवचनात् तु सांप्रतकालग्रहणमिति । 'तस्स भंते ! पडिक्कमामि' इत्यादिसूत्रावयवे च भूतस्यातीतस्य सावद्ययोगस्य प्रतिक्रमणादिना, आदिशब्दाद् निन्दा-गर्हाविधानेन च विशेषविषयतागर्भमतीतकालग्रहणमिति शेषः । येनैवम्, तेनेह निरवशेषवचनोऽप्ययं सर्वशब्दो विशेषविषयो ज्ञेयः । ततश्च भविष्यत्कालसावद्ययोग इहजीवितभवपर्यन्त एव निरवशेषसर्वशब्देन गृहीतः, अतीतसावद्ययोगोऽप्यनुमतिमात्रक एव निरवशेषस्तेन क्रोडीकृत इति भावः । पूर्वमुत्सर्गतः कालत्रयगतः समस्तसावद्ययोगविषयं सर्वशब्दं कृत्वाऽपवादेन बाधा प्रोक्ता, इह तु सामायिकसूत्रे नियन्त्रणाद्वारेण प्रथमत एव देशतो निरवशेषविषयता सर्वसब्दस्य दर्शिता, इत्येतावन्मात्रो व्याख्याद्वयस्य विशेषोऽवसेय इति ॥ ३५५५ ॥ ३५५६ ॥

इत्थं चैतदङ्गीकर्तव्यम्, यतः सूत्रान्तरेऽप्यभिहितम्, किम् ? इत्याह—

[2]समईयं पडिक्कमए पच्चुप्पण्णं च संवरेइ त्ति । पच्चक्खाइ अणागयमेवं इहइं पि विन्नेयं ॥ ३५५७ ॥

सुबोधा, नवरमतीतप्रतिक्रमणेन तदनुमतिमात्रप्रत्याख्यानमुक्तम् । 'पच्चक्खाइ अणागयं' इत्यत्र 'यावज्जीवम्' इति शेषः । ततश्च देशतो निरवशेषविषयः सर्वशब्दः सिद्ध इति ॥ ३५५७ ॥

'तस्स भंते !' इत्यादेर्व्याख्यानार्थमाह—

---

१ अथवा यावज्जीवग्रहणादनागतावरोधोऽयम् । सम्प्रतिकालग्रहण न करोमीत्यादिग्रहणात् ॥ ३५५५ ॥
भूतस्य प्रतिक्रमणादिना च तेनेह सर्वशब्दोऽयम् । ज्ञेयो विशेषविषयो यतश्च सूत्रान्तरेऽभिहितम् ॥ ३५५६ ॥
२ समतीतं प्रतिक्रमति प्रत्युत्पन्नं संवृणोतीति । प्रत्याख्यात्यनागतमेवमिहापि विज्ञेयम् ॥ ३५५७ ॥

ननु 'सर्वं सावद्यं योगं प्रत्याख्यामि' इत्युक्तम्, कः पुनरसौ सावद्यो योगः ? इत्याह—

**सो य सावज्जो जोगो हिंसाईओ तयं सयं सव्वं । न करोमि न कारेमि य न याणुजाणे करेंतंपि ॥३५३९॥**

स च सावद्यो योगो हिंसा-ऽनृत-स्तेयादिको मन्तव्यः, तकं सर्वमपि स्वयं न करोमि, न कारयाम्यन्यैः,[1] एवं नानुजानामि कुर्वन्तमपीति ॥ ३५३९ ॥

अथेदं प्रत्याख्यानं यति-गृहस्थयोर्भेदेन व्यवस्थापयन्नाह—

**करणतिगेणेक्किक्कं कालतिगे तिघणसंखियमिसीणं । सव्वं ति जओ गहियं सीयालसयं पुण गिहीणं ॥३५४०॥**

अत्र 'न करोमि न कारयामि' इत्यादिकमेकैकं योगं मनःप्रभृतिना करणत्रयेण सह कालत्रिके चारयेत् । ततश्च त्रयाणां यो घनः सप्तविंशतिलक्षणस्तत्संख्यकं भङ्गकसंख्यामाश्रित्य तत्संख्याप्रमाणमृषीणां साधूनाम् 'अवबुध्यते' इति शेषः । कस्मात् ? इत्याह— यतः 'सर्वं सावद्यं योगं प्रत्याख्यामि' इति साधोः प्रत्याख्यानं गृहीतम्, ततस्तत्प्रत्याख्यानभङ्गकानामेतत्संख्याप्रमाणता । असर्वसावद्ययोगप्रत्याख्यायिनां पुनर्गृहिणां प्रत्याख्यानस्य सप्तचत्वारिंशदधिकं भङ्गकशतं विज्ञेयमिति । इयमत्र भावना—'त्रिविधं त्रिविधेन' इत्यनेन सर्वसावद्ययोगप्रत्याख्यानादर्थतः साधुप्रत्याख्यानस्य सप्तविंशतिर्भङ्गाः सूचिताः, ते चैवं भवन्ति—यद् न करोति तद् मनसा वाचा कायेन, एवं न कारयत्यपि मनसा वाचा कायेन, एवं न समनुजानीते च मनसा वाचा कायेन, इत्येवं वर्तमानकाले नव भङ्गा भवन्ति, एवमतीतेऽपि नव भविष्यन्ति, भविष्यत्यपि नव, इत्येवं सप्तविंशतिर्भङ्गाः साधुप्रत्याख्यानस्य भवन्ति। गृहिणस्तर्हि कथं सप्तचत्वारिंश भङ्गकशतमिति चेत् । उच्यते—गृही सावद्यं योगं न करोति, न कारयति, नान्यं समनुजानीते मनसा वाचा कायेन चेत्येको भङ्गः; अथवा, न करोति न कारयति नानुजानीते मनसा वचसा च; अथवा, मनसा कायेन च; अथवा, वचसा कायेन च; अथवा, न करोति न कारयति, नानुजानीते मनसा; अथवा, वचसा; अथवा, कायेन; अथवा, न करोति, न कारयति मनसा वाचा कायेन; अथवा, न करोति नानुजानीते त्रिभिरपि करणैः; अथवा, न कारयति नानुजानीते त्रिभिरपि करणैः; अथवा, न करोति न कारयति मनसा वचसा; अथवा, मनसा कायेन च; अथवा, वचसा कायेन च; अथवा, न करोति नानुजानीते मनसा वचसा;

1 स च सावद्यो योगो हिंसादिकस्तत् स्वयं सर्वम् । न करोमि न कारयामि च न चानुजानामि कुर्वन्तमपि ॥ ३५३९ ॥
2 करणत्रिकेणैकैकं कालत्रिके त्रिघनसंख्यातमृषीणाम् । सर्वमिति यतो गृहीतं सप्तचत्वारिंशच्छतं पुनर्गृहिणाम् ॥३५४०॥

षयत्वात्—आसेवितसावद्ययोगविषयत्वात् किमिह सामान्यसावद्ययोगसंबन्धेनेति । प्रायोग्रहणं चेह मिथ्यादुष्कृतदानादेर्वर्तमानसावद्ययोगविषयत्वादपीति । तथा, 'तीयं पडिक्कमइ, पडुप्पण्णं संवरेइ, अणागयं पच्चक्खाइ' इत्यादावतीतस्यैव प्रतिक्रमणोक्तेर्नेह त्रैकाल्यसामान्यसावद्ययोगसंबन्धः, पौनरुक्त्यादिदोषप्रसङ्गाच्च । सामान्यसावद्ययोगो हि 'सव्वं सावज्जं जोगं पच्चक्खामि' इत्यनेनैव मत्वाख्यातः, किं 'तस्य' इत्यत्र पुनरपि ग्रहणेन ? इति भाव इति ॥ ३५६० ॥ ३५६१ ॥

उपसंहरन्नाह—

[1]तम्हा पडिक्कमामि त्ति तस्सावस्सं कमामिसद्दस्स । भव्वमिह कम्मणा तं च भूअसावज्जओऽणन्नं ॥ ३५६२ ॥

तस्मात् तस्य 'प्रतिक्रमामि' इत्यस्य शब्दस्यावश्यं कर्मणा भाव्यम् । ततः प्रकृते किम् ? इत्याह—तच्च कर्म पूर्वोक्तविवक्षया तस्यातीतसामान्यसावद्ययोगस्यावयवभूताद् भूतसावद्ययोगादुक्तन्यायेनान्यद् न संभवति । तस्मादिहातीतस्यैव सावद्ययोगस्य संबन्धो नेतरयोः ॥ इति त्रिषष्टिगाथार्थः ॥ ३५६२ ॥

अथ 'तिविहं तिविहेण' इत्यत्राक्षेप-परिहारावाह—

[2]तिविहेणं ति न जुत्तं पइपयविहिणा समाहिअं जेण । अत्थविगप्पणयाए गुणभावणय त्ति को दोसो ?॥३५६३॥

आह—ननु 'त्रिविधेन' इति न युक्तम्—'त्रिविधं त्रिविधेन' इति यत् सूत्रे प्रथममुदिष्टं तद् न युक्तमित्यर्थः । कुतः ? इत्याह—येन यस्मात् प्रतिपदविधिनैवैतत् समाहितं समापितं—'मणेणं वायाए काएणं न करेमि कारवेमि करेंतं पि अण्णं न समणुजाणामि' इत्यनेनैव प्रतिपदनिर्देशेन सिद्धमेतादित्यर्थः । अत्र परिहारमाह—अर्थविकल्पनयाऽर्थभेदोपदर्शनाद् गुणभावनया वा गुणभावनातः को दोषो न कश्चिदित्यर्थः । इयमत्र भावना—एवं ह्युक्ते सामान्य-विशेषभेदरूपत्वं सर्वस्याप्यर्थस्य दर्शितं भवति, 'तिविहं तिविहेणं' इत्यनेनैव वस्तुनः सामान्यरूपतादर्शनात्, 'मणेणं वायाए' इत्यादिना तु तस्य विशेषरूपताप्रकाशनादिति । अन्यच्च, एवमिह पुनरभिहिते सामायिकलक्षणो यो गुणस्तस्य संबन्धिनी भावना निबिडवासनात्मन्यारोपिता भवतीति न कश्चिद् दोषः ॥ इति निर्युक्तिगाथार्थः ॥ ३५६३ ॥

१ तस्मात् प्रतिक्रमामीति तस्यावश्य क्रमामिशब्दस्य । भाव्यमिह कर्मणा तच्च भूतसावद्यतोऽनन्यत् ॥ ३५६२ ॥
२ त्रिविधेनेति न युक्तं प्रतिपदविधिना समाहितं येन । अर्थविकल्पनया गुणभावनयेति को दोषः ? ॥ ३५६३ ॥

अथवा, मनसा कायेन; अथवा, वचसा कायेन; अथवा, न कारयति नानुजानीते मनसा वचसा; अथवा, मनसा कायेन; अथवा, वचसा कायेन; अथवा, न करोति न कारयति मनसा; अथवा, वचसा; अथवा, कायेन; अथवा न करोति नानुजानाति मनसा; अथवा, वचसा; अथवा, कायेन; अथवा, न कारयति मनसा; अथवा, वचसा; अथवा, कायेन; अथवा, न करोति मनसा वचसा कायेन; अथवा, न कारयति; अथवा नानुजानीते; अथवा, न करोति मनसा वचसा; अथवा, मनसा कायेन; अथवा, वचसा कायेन; अथवा, न कारयति मनसा, वचसा; अथवा, मनसा कायेन; अथवा, वचसा कायेन; अथवा, नानुजानीते मनसा वचसा; अथवा, मनसा कायेन; अथवा, वचसा कायेन; अथवा, न करोति मनसा; अथवा, वचसा; अथवा, कायेन; अथवा, न कारयति मनसा; अथवा, वचसा; अथवा, कायेन; अथवा, नानुजानीते मनसा; अथवा, वचसा; अथवा, कायेन। एवमेते वर्तमानकाल एकोनपञ्चाशद् भङ्गा दर्शिताः, एवमतीते भविष्यति च प्रत्येकमेते द्रष्टव्याः। ततः सर्वेऽपि सप्तचत्वारिंशं शतं भङ्गानां भवति॥

अत्र चायं भावार्थः—

"[1]तिविहं तिविहेणं पढमो तिविहं दुविहेण विइओ होइ। तिविहं एक्कविहेणं दुविहं तिविहेणं ति चउत्थो॥ १॥

दुविहं दुविहेण पचम दुविहेक्कविहेण छट्ठओ होइ। एकदुविहं तिविहेणं दुविहेण य सत्तमट्ठमओ॥ २॥

एक्कविहमेक्कविहेणं नवमो पढमम्मि एक्कमंगो य। सेसेसु तिन्नि तिन्नि य तिन्नि य नव नव य तह तिन्नि॥ ३॥

नव नव य होंति कमसो एए सव्वे वि एगुणवन्ना। कालतिएणं गुणिया सीयालसयं तु भंगाणं॥ ४॥

आह कहं पुण मणसा करणं कारावणं अणुमई य। जह वइ-तणुजोगेहिं करणाइं तह भवे मणसा॥ ५॥

---

१ त्रिविधं त्रिविधेन प्रथमस्त्रिविधं द्विविधेन द्वितीयो भवति। त्रिविधमेकविधेन द्विविधं त्रिविधेनेति चतुर्थः॥ १॥
द्विविध द्विविधेन पञ्चमो द्विविधमेकविधेन षष्ठको भवति। एकद्विविधं त्रिविधेन द्विविधेन च सप्तमाष्टमौ॥ २॥
एकविधेनैकविधेन नवमः प्रथम एकभङ्गश्च। शेषेषु त्रयस्त्रयश्च त्रयश्च नव नव च तथा त्रयः॥ ३॥
नव नव च भवन्ति क्रमश एते सर्वेऽप्येकोनपञ्चाशत्। कालत्रिकेण गुणिता सप्तचत्वारिंशच्छतं तु भङ्गानाम्॥ ४॥
आह कथं पुनर्मनसा करणं कारणा चानुमतिश्च। यथा वाक्-तनुयोगाभ्यां करणादि तथा भवेद् मनसा॥ ५॥

समाधानान्तरमाह—

[3]अहवा मणसा वाया काएणं मा भवे जहासंखं । न करेमि न कारवेमि य न याणुजाणे य पत्तेयं ॥३५६४॥

अथवा, 'मणेणं वायाए' इत्यादिमात्रक एवोक्ते 'मनसा न करोमि, वाचा न कारयामि, कायेन नानुजानामि' इत्येवंभूतमनिष्टं यथासंख्यं मा भूदिति 'तिविहं तिविहेण' इत्यभिहितम्, यतश्च 'मनसा न करोमि, न कारयामि, नानुजानामि' इत्येवं वाचा कायेन सह योगत्रयस्य प्रत्येकं संबन्धोऽभिमतः स नाभविष्यादिति ॥ ३५६४ ॥

ततः किम्? इत्याह—

[2]तो तिविहं तिविहेणं भण्णइ पइपयसमापणाहेउं । न करेमि त्ति पडिपयं जोगविभागेण वा सज्झं ॥३५६५॥

ततः 'त्रिविधं त्रिविधेन' इति भण्यते । किमर्थम्? इत्याह—प्रतिपदसमापनहेतोः मनसा न करोमि, न कारयामि, नानुजानामि, एवं वाचा कायेन च सह योगत्रयस्य प्रत्येकं संबन्धहेतोरित्यर्थः । 'त्रिविधं त्रिविधेन' इत्यस्याभावे दूषणान्तरमप्याह—'न करोमि' इत्यादि । अथवा, 'त्रिविधं त्रिविधेन' इत्यस्याभावे 'न करोमि' इत्यादि प्रातिपदं योगानां करण-कारणा-ऽनुमतिलक्षणानां यो विभागो विच्छेदस्तेन प्रस्तुताभिमतं वस्तु साध्यं स्यात् । तथा च सति प्रतिपत्तिगौरवं स्यादिति शेषः । इदमुक्तं भवति—'त्रिविधं त्रिविधेन' इत्येतस्याभावे 'न करेमि मणेणं वायाए काएणं, न कारवेमि मणेणं वायाए काएणं, नाणुजाणामि मणेणं वायाए काएणं' इत्येवमेकैकयोगविच्छेदेन करणत्रयसंबन्धे यथासंख्यनिराकरणेन प्रस्तुताभिमतोऽर्थः साध्यो भवेत् । एवं च सति प्रतिपत्तिगौरवं स्यात् । अतः सुखप्रतिपत्त्यर्थं कर्तव्यं 'त्रिविधं त्रिविधेन' इति ॥ ३५६५ ॥

समाधानान्तरमाह—

[3]अहवा करेंतमण्णं न समणुजाणे विसद्दओ नेयं । अत्थविगप्पणयाए विसेसओ तो समाजोज्जं ॥३५६६॥

अथवा, 'करेंतं पि अन्नं न समणुजाणामि' इत्यत्रापिशब्दात् यत् पूर्वं त्रिकालविषयं ज्ञेयमुक्तम् । 'तो त्ति' विभक्तिव्यत्यया-

---

१ अथवा मनसा वाचा कायेन मा भूद् यथासंख्यम् । न करोमि न कारयामि च न चानुजानामि च प्रत्येकम् ॥ ३५६४ ॥

२ ततस्त्रिविधं त्रिविधेन भण्यते प्रतिपदसमापनाहेतोः । न करोमीति प्रातिपदं योगविभागेन वा साध्यम् ॥ ३५६५ ॥

३ अथवा कुर्वन्तमन्यं न समनुजानाम्यपिशब्दतो ज्ञेयम् । अर्थविकल्पनया विशेषतस्ततः समायोज्यम् ॥ ३५६६ ॥

तदहीणत्ता वय तणुकरणाईणमहव मणकरणं । सावज्जजोगमणणं पन्नत्तं वीयरागेहिं ॥ ६ ॥
कारवणं पुण मणसा चिंतइ कारओ एस सावज्जं । चिंतइ जं च करओ सुट्ठु कयं अणुमई होइ ॥ ७ ॥"

इत्यलं विस्तरेण । तदर्थिना तु प्रज्ञप्त्यादिग्रन्थाः समनुसरणीया इति ॥ ३५४० ॥

एते च भङ्गा यस्यार्थतोऽवगताः स एव सामायिकप्रत्याख्यानकुशल इति दर्शयन्नाह—

[2]सीयालं भंगसयं पच्चक्खाणम्मि जस्स उवलद्धं । सो सामाइयकुसलो सेसा सव्वे अकुसला उ ॥३५४१॥

गतार्था ॥ ३५४१ ॥

अत्र 'त्रिविधं त्रिविधेन' इति गृहस्थप्रत्याख्यानस्य प्रथमं भङ्गमाश्रित्याक्षेप परिहारावाह—

[3]केई भणंति गिहिणो तिविहं तिविहेण त्ति संवरणं । तं न जओ निद्दिट्ठं पन्नत्तीए विसेसेउं ॥ ३५४२ ॥

तो कह निप्फत्तीएऽणुमइनिसेहो त्ति सो सविसयम्मि । सामण्णेणन्नत्थ ओ तिविहं तिविहेण को दोसो ? ॥३५४३॥

पुत्ताइसंतइनिमित्तमित्तमेक्कारसिं पवण्णस्स । जंपंति केइ गिहिणो दिक्खाभिमुहस्स तिविहं ति ॥३५४४॥

एतास्तिस्रोऽपि पूर्वमुपोद्घाते 'किं कइविहं' इत्यादिगाथायां 'कस्य सामायिकं भवति' इति द्वारे विस्तरेण व्याख्याता एव; नवरं सामान्येन स्वविषयबहिर्भागे चिन्तामुत्सृज्य प्रत्याख्याने क्रियमाणे निर्युक्तावनुमतिनिषेध उक्तः, अन्यत्र तु विशेषतो विषयबहिर्भागे 'त्रिविधं त्रिविधेन' इति न दोष इति ॥ ३५४२ ॥ ३५४३ ॥ ३५४४ ॥

अपरस्त्वाह—

---

१ तदधीनत्वाद् वच-स्तनुकरणादीनामथवा मनःकरणम् । सावद्ययोगमननं प्रज्ञप्तं वीतरागैः ॥ ६ ॥
कारणा पुनर्मनसा चिन्तयति कारक एष सावद्यम् । चिन्तयति यच्च कुर्वतः सुष्ठु कृतमनुमतिर्भवति ॥ ७ ॥

२ सप्तचत्वारिंशं भङ्गशतं प्रत्याख्याने यस्योपलब्धम् । स सामायिककुशलः शेषाः सर्वेऽकुशलास्तु ॥ ३५४१ ॥

३ केचिद् भणन्ति गृहिणस्त्रिविध त्रिविधेनेति संवरणम् । तद् न यतो निर्दिष्टं प्रज्ञप्तौ विशिष्य ॥ ३५४२ ॥
ततः कथं निष्पत्तावनुमतिनिषेध इति स स्वविषये । सामान्येनान्यत्र तु त्रिविधं त्रिविधेन को दोष. ? ॥ ३५४३ ॥
पुत्रादिसततिनिमित्तमात्रमेकादशीं प्रपन्नस्य । जल्पन्ति केचिद् गृहिणो दीक्षाभिमुखस्य त्रिविधमिति ॥ ३५४४ ॥

दिहानयार्थविकल्पनया विशेषतः समायोज्यम्। कथम्? इति चेत्। उच्यते—अतीते कृतस्य कारितस्यानुमतस्य च संबन्धिनी अनुमतिरिदानीं प्रत्याख्यायते, न तु करण-कारणे, तयोः कृतकारितत्वात्। इतरकालद्वये तु करण-कारणाऽनुमतयः प्रत्याख्येयत्वेन न वार्यन्ते, अविरुद्धत्वात्। इत्यस्याप्यर्थस्य दर्शनार्थं 'त्रिविधं' इत्यादि कर्तव्यमिति ॥ ३५६६ ॥

'भंते' इत्यतिदेशयन्नाह—

भंति त्ति पुव्वभणियं तेणं चिय भणइ किं पुणो भणियं। सव्वत्थ सोऽणुवत्तइ भणियं चादिप्पउत्तो त्ति ॥३५६७॥

अणुवत्तणत्थमेव य तग्गहणं नाणुवत्तणादेव। अणुवत्तंते विधओ जमिह कया किंतु जत्तेणं ॥ ३५६८ ॥

'भंते' इति पदं पूर्वमेव भणितं व्याख्यातम्, इति नेह व्याख्यायते। तेनैव कारणेन तेनैव हेतुना तर्हि परो भणति—यदि पूर्वमेवेदं भणितम्, तर्हि किं पुनरपीह भणितं सूत्रकृता?—ननु सर्वत्र सूत्रान्तं यावदनुवर्तते एवासौ, भणितं चान्यत्र—'आदौ प्रयुक्तोऽर्थः सर्वत्रानुवर्तते' इति। गुरुराह—सत्यमेवैतत्, सूत्रान्तं यावदनुवर्तनार्थमेव तस्य भदन्तशब्दस्य ग्रहणं तद्ग्रहणमादौ कृतम्, केवलं नानुवर्तनादेव नानुवर्तनमात्रादेव यस्मादधिकृता विधयोऽनुवर्तन्ते भवन्ति, किन्तु यत्नेन कृतेन ते भवन्ति, तथा चोक्तं परिभाषासु—'अनुवर्तन्ते च नामविधयो न चानुवर्तनादेव भवन्ति, किं तर्हि? यत्नाद् भवन्ति'। स चायं यत्नः, यत् तस्यानुस्मरणार्थं पुनरुच्चारणमिति॥

अथवा, पुनस्तद्ग्रहणे समाधानान्तरत्रयमाह—

अहवा समत्तसामाइयकिरिओ तव्विसोहणत्थाए। तस्साईआरनिवत्तणाइकिरियंतराभिमुहो ॥ ३५६९ ॥

जं च पुरा निद्दिट्ठं गुरुं जहावासयाइं सव्वाइं। आपुच्छिउं करिज्जा तयणेण समत्थियं होइ ॥ ३५७० ॥

सामाइयपच्चप्पणवयणो वायं भदंतसद्दो त्ति। सव्वकिरियावसाणे भणियं पच्चप्पणमणेणं ॥ ३५७१ ॥

---

१ भदन्तेति पूर्वभणितं तेनैव भणति किं पुनर्भणितम्। सर्वत्र सोऽनुवर्तते भणितं चादिप्रयुक्त इति ॥ ३५६७ ॥
अनुवर्तनार्थमेव च तद्ग्रहणं नानुवर्तनादेव। अनुवर्तन्ते विधयो यदिह कृताः किन्तु यत्नेन ॥ ३५६८ ॥
२ अथवा समाप्तसामायिकक्रियस्तद्विशोधनार्थम्। तस्यातिचारनिवर्तनादिक्रियान्तराभिमुखः ॥ ३५६९ ॥
यच्च पुरा निर्दिष्टं गुरुं यथावश्यकानि सर्वाणि। आपृच्छ्य कुर्यात् तदनेन समर्थितं भवति ॥ ३५७० ॥
सामायिकप्रत्यर्पणवचनो वाऽयं भदन्तशब्द इति। सर्वक्रियावसाने भणितं प्रत्यर्पणमनेन ॥ ३५७१ ॥

[1]जुत्तं संपयमिस्सं संवरणं कहमतीयविसयं तु। कहमउणवण्णभेयं कए व न कहं मुसावाओ ? ॥ ३५४५ ॥

युक्तं सांप्रतै-ष्यतोः कालयोः सावद्ययोगस्य संवरणं प्रत्याख्यानम्, तयोस्तस्याद्याप्यनासेवितत्वात्; अतीतकालविषयं तु तत् कथं युक्तम्, पूर्वमेव तस्यासेवितत्वात् ?। कथं च तदतीतसावद्ययोगप्रत्याख्यानमेकोनपञ्चाशद्भेदं वक्तुं युज्यते, मूलत एवासंभवात् ?। कृते वा तस्मिन्नतीतसावद्यप्रत्याख्याने कथं न मृषावादः, असद्भूतविषयत्वात् ? इति ॥ ३५४५ ॥

अत्र परिहारमाह—

[2]निंदणमईयविसयं न करेमिच्चाइवयणओऽभिहियं। अणुमइसंवरणं वातीतस्स करेमि जं भणियं ॥३५४६॥

अतीतसावद्ययोगं 'न करोमि न कारयामि' इत्यादिवचनतोऽतीतकृतसावद्ययोगविषयं निन्दनमहमिदानीं करोमीत्यभिहितम्। 'सुष्ठु तदा सावद्ययोगासेवनं मया कृतम्' इत्येवंरूपाया अनुमतेर्वा संवरणं अतीतस्य सावद्ययोगासेवनस्येदानीं 'करोमि' इति यद् भणितं भवति — 'न करोमि' इत्यादिनाऽतीतस्य संवरणं करोमि' इत्येतदुक्तं भवतीत्यर्थः ॥ ३५४६ ॥

परिहारान्तरमाह—

[3]अहवा तयविरईओ विरमे संपयमईयविसयाओ। संपइसावज्जा इव पवज्जओ को मुसावाओ ? ॥ ३५४७ ॥

अथवा, तस्मात् सावद्ययोगादविरतिस्तदविरतिस्तस्यास्तदविरतेरतीतविषयायाः सांप्रतसावद्यादिव विरमामि सांप्रतमहमित्येवमतीतकालविषयप्रत्याख्यानं प्रपद्यमानस्य को मृषावादः ?—न कश्चिदिति ॥ ३५४७ ॥

आह—ननु 'न करेमि न कारवेमिं न समणुजाणामि' इत्येतावतैव विवक्षितार्थसिद्धेः 'करंतं पि अन्नं' इत्येतत् किमर्थमुक्तम् ? इत्याशङ्क्याह—

---

१ युक्तं सांप्रतै-ष्यतोः संवरणं कथमतीतविषयं तु। कथमेकोनपञ्चाशद्भेदं कृते वा न कथं मृषावादः ? ॥ ३५४५ ॥
२ निन्दनमतीतविषयं न करोमीत्यादिवचनतोऽभिहितम्। अनुमतिसंवरणं वातीतस्य करोमि यद् भणितम् ॥ ३५४६ ॥
३ अथवा तदविरतेर्विरमे सांप्रतमतीतविषयायाः। संप्रतिसावद्यादिव प्रपद्यमानस्य को मृषावादः ? ॥ ३५४७ ॥

व्याख्या—अथवा, समाप्तप्रस्तुतसामायिकप्रतिपत्तिक्रियस्तन्मालिन्यविशुद्धिहेतोस्तस्य सामायिकस्य येऽतिचारा मालिन्यप्रकारास्तेषां यद् निवर्तनादिरूपं क्रियान्तरम्, आदिशब्दाद् निन्दागर्हाक्रियान्तरपरिग्रहः, तदभिमुखः पुनरपि भदन्तशब्दमुच्चारयति 'विनेयः' इति शेषः। यच्चेहैव पुरा पूर्वं निर्दिष्टं यथा गुरुमापृच्छ्य सर्वाण्यावश्यकानि कुर्याद् विनेयः। तदनेन पुनरपि भदन्तशब्दोच्चारणेन समर्थितं भवति। पूर्वं ह्यनेन भदन्तशब्दोच्चारणाद् गुरुमापृच्छ्य सामायिकावश्यकं प्रतिपन्नम्, इदानीं तु तदतीचारप्रतिक्रमणावश्यकं पुनरपि तदुच्चारणात् तमापृच्छ्य कुर्वता यथोक्तार्थः समर्थितो भवतीति। अथवा, 'भवतः पृष्ट्वा यत् पूर्वं कर्तुमारब्धं सामायिकं तदिदानीं कृतं समार्पितं भदन्त! मया, इत्येवं सामायिकक्रियाप्रत्यर्पणवचनोऽयं भदन्तशब्दः। अनेन च गुरुमापृच्छ्यारब्धानां सर्वासामपि क्रियाणामवसाने गुरोः प्रत्यर्पणं निवेदनमवश्यं विधेयमित्येतद् भणितं भवति ॥३५६९।३५७०।३५७१॥

अथ 'पडिक्कमामि' इत्यादिक्रियाव्याख्यानार्थमाह—

[1]नेयं पडिक्कमामि त्ति भूयसावज्जओ निवत्तामि। तत्तो य जा निवत्ती तदणुमईओ विरमणं जं ॥३५७२॥
निंदामि त्ति दुगुंछे गरिहामि तदेव तो कओ भेओ ?। भण्णइ सामण्णत्थाभेए इट्ठो विसेसत्थो ॥३५७३॥
जह गच्छइ त्ति गो सप्पइ त्ति सप्पो समे वि गच्छत्थे। गम्मइ विसेसगमणं तह निंदा-गरहणत्थाणं ॥३५७४॥

व्याख्या—'प्रतिक्रमामि' इत्यस्य व्याख्यानं ज्ञेयम्। किम्? इत्याह—'भूतसावद्ययोगाद् निवर्तेऽहम्' इति। प्रेरकः पृच्छति—भूतसावद्ययोगस्यासेवितत्वात् का नामेदानीं ततो निवृत्तिः? इत्याह—यत् तदनुमतेर्विरमणम्, न पुनस्तत्करण-कारणाभ्याम्, तयोरासेवितत्वेन विरमणायोगादिति। 'निन्दामि' इति कोऽर्थः? 'जुगुप्से' आत्मानमतीतसावद्ययोगकारिणम्' इति संबन्धं वक्ष्यति। 'गरहामि' इत्यनेनाप्येतदेवोक्तं जुगुप्स इति। आह—ततस्तर्हि कुतो निन्दा-गर्हयोरर्थतो भेदः, द्वयोरपि जुगुप्सार्थत्वात्? भण्यतेऽत्रोत्तरम्, सामान्यार्थाभेदेऽपि विशेषार्थो विशेषवदर्थाभिधायक इष्टो गर्हाशब्द इति। यथा गच्छतीति गौः, सर्पतीति सर्पः, इत्यनयोः समानेऽपि गत्यर्थे द्वयोरपि विशेषवदेवं गमनं गम्यते प्रतीयते तथा निन्दा-गर्हार्थयोरपि विशेषरूपत्वं वक्ष्यतीति ॥३५७२॥३५७३॥३५७४॥

---

१ ज्ञेयं प्रतिक्रमामीति भूतसावद्यतो निवर्ते। ततश्च या निवृत्तिस्तदनुमतेर्विरमणं यत् ॥ ३५७२ ॥
निन्दामीति जुगुप्से गर्हामि तदेव ततः कुतो भेदः?। भण्यते सामान्यार्थाभेदे इष्टो विशेषार्थः ॥ ३५७३ ॥
यथा गच्छतीति गौः सर्पतीति सर्पः समेऽपि गत्यर्थे। गम्यते विशेषगमनं तथा निन्दा-गर्हार्थयोः ॥ ३५७४ ॥

न[1] समणुजाणं ति गए करेंतमण्णं पि जं सुएऽभिहियं । संभावणेऽविसद्दो तदिहोभयसद्दमज्झत्थो ॥३५४८॥

'न करेमि न कारवेमि न समणुजाणामि' इत्येतावतैव गते सिद्धे यत् 'करेंतंपि अन्नं' इति प्रस्तुतसामायिकश्रुतेऽभिहितम्, तदिह 'करेंतमन्नं' इत्युभयशब्दयोर्मध्यस्थो मध्ये वर्तमानोऽपिशब्दः संभावने यथा स्यादित्येतदर्थमवगन्तव्यमिति ॥ ३५४८ ॥

किं पुनरयमाधिकं संभावयति ? इत्याह—

न[2] करेंतं पि त्ति न कारवेंतमवि नावि याणुजाणंतं । न समणुजाणेमि न कारयामि अवि नाणुजाणामि॥३५४९॥

अण्णं पि अप्पयं पिव सहसाकाराइणा पयत्तंतं । इह सव्वो संगहिओ कत्ता-किरियापरंपरओ ॥ ३५५० ॥

व्याख्या—यथाऽऽत्मानं सहसाकारादिना सावद्ययोगे प्रवर्तमानं 'सुष्ठु कृतम्' इत्येवं न समनुजानामि, किन्तु मिथ्यादुष्कृतदानादिना ततो निवर्तयामि, इत्येवं कुर्वन्तमपिशब्दात् कारयन्तमपि अनुजानन्तमप्यन्यं न समनुजानामि; यथा चान्यं कुर्वन्तं न कारयामि, एवमपिशब्दात् कारयन्तमप्यन्यं न कारयामीत्याह; यथा चान्यं नानुजानामीत्येवमपिशब्दादनुजानन्तमप्यन्यं नानुजानामि, इत्यादिप्रकारेण संभवन् सर्वोऽपि कर्तृ क्रियापरम्परकोऽपिशब्देनेह संगृहीत इति ॥ ३५४९ ॥ ३५५० ॥

अथवा, त्रिकालोपसंग्रहार्थमपिशब्द इति दर्शयन्नाह—

न[3] करिंतं वा भणिए अविसद्दा न कयवंतमिच्चाई । समईयमागमिस्सं तह न करिस्सं तमिच्चाई ॥ ३५५१ ॥

अथवा, 'कुर्वन्तमप्यन्यं न समनुजानामि' इति वर्तमानकालमाश्रित्य भणितेऽपिशब्दात् समतीतमपि कालमनुसृत्य तद् द्रष्टव्यम्, कृतवन्तमप्यादिशब्दात् कारितवन्तमप्यनुज्ञातवन्तमप्यन्यं नानुजानामीति । तथा, आगमिष्यन्तमपि कालमङ्गीकृत्यादिशब्दादेतद् दृश्यम्, करिष्यन्तमप्यादिशब्दात् कारयिष्यन्तमप्यनुज्ञास्यन्तमप्यन्यं नानुजानामीति ॥ ३५५१ ॥

---

१ न समनुजानामीति गते कुर्वन्तमन्यमपि यत् श्रुतेऽभिहितम् । संभावनेऽपिशब्दस्तदिहोभयशब्दमध्यस्थः ॥ ३५४८ ॥

२ न कुर्वन्तमपीति न कारयन्तमपि नापि चानुजानन्तम् । न समनुजानामि न कारयाम्यपि नानुजानामि॥ ३५४९ ॥
अन्यमप्यात्मानमिव सहसाकारादिना प्रवर्तमानम् । इह सर्वा संगृहीता कर्तृ-क्रियापरम्परा ॥ ३५५० ॥

३ न कुर्वन्तं वा भणितेऽपिशब्दाद् न कृतवन्तमित्यादि । समतीतमागमिष्यन्तं तथा न करिष्यन्तमित्यादि ॥ ३५५१ ॥

तदेवाह—

सप्पच्चक्खदुगंछा तह निंदामि त्ति गम्मए समए। गुरुपच्चक्खदुगंछा गम्मइ गरिहामिसद्देणं ॥ ३५७५ ॥

'तह त्ति' यथा गो सर्पयोर्गमनस्य सामान्यतोऽभेदेऽपि विशेषतो भेदो दृष्टस्तथा निन्दा-गर्हाभिधेयस्यापि जुगुप्सार्थस्य विशेषतो भेदोऽस्ति, तथाहि—या स्वप्रत्यक्षाऽऽत्मसाक्षिकी जुगुप्सा सा समये सिद्धान्ते 'निन्दामि' इत्यनेन गम्यतेऽवबुध्यते, या तु गुरुप्रत्यक्षा गुरुसाक्षिकी जुगुप्सा सा 'गर्हामि' इत्यनेन शब्देन गम्यत इति ॥ ३५७५ ॥

अथवा, एकार्थयोरपि निन्दा-गर्हयोर्ग्रहणं भृशा-ऽऽदरार्थमिह न विरुध्यत इति दर्शयन्नाह—

[2]एगत्थोभयगहणं भिसादरत्थं च जमुदियं होइ। कुच्छामिं कुच्छामिं तदेव निंदामि गारिहामि ॥३५७६॥

भिसमायरओ व पुणो पुणो व कुच्छामि जमुदियं होइ। पुणरुत्तमणत्थं वेह नाणुवादादराईसु ॥३५७७॥

व्याख्या—एकार्थं च तदुभयं च निन्दा-गर्हालक्षणमेकार्थोभयं तस्य ग्रहणमेकार्थोभयग्रहणं तदपि चेह भृशादरार्थं न विरुध्यते। ततश्च 'कुच्छामि कुच्छामि' इत्यनेन यदुक्तं भवति 'निंदामि गरहामि' इत्यनेनापि तदेवोक्तं भवतीति भृशमत्यर्थम्, आदरतो वा पुनः पुनरेव 'कुच्छामि' इति यदुक्तं भवति इदमुक्तं भवतीत्यर्थः। न चेहानुवादादरादिषु पुनः पुनरपि प्रयुक्तमपि वचः पुनरुक्तमनर्थकं वा भवतीति ॥ ३५७६ ॥ ३५७७ ॥

अथ 'निंदामि गरिहामि' इत्यनयोः कर्मपदसंबन्धनार्थमाह—

[3]किं कुच्छामप्पाणं अईयसावज्जकारिणमसग्घं। अत्ताणमयणमहवा सावज्जमईयजोगं ति ॥ ३५७८ ॥

किं 'कुच्छामि'—जुगुप्से? इत्याह—आत्मानं निजजीवम्। कथंभूतम्? अतीतसावद्ययोगकारिणम्। अत एवाश्लाघ्यमप्रशं-

[1] स्वप्रत्यक्षजुगुप्सा तथा निन्दामीति गम्यते समये। गुरुप्रत्यक्षजुगुप्सा गम्यते गर्हामिशब्देन ॥ ३५७५ ॥

[2] एकार्थोभयग्रहणं भृशादरार्थं च यदुदितं भवति। जुगुप्से जुगुप्से तदेव निन्दामि गर्हामि ॥ ३५७६ ॥
भृशमादरतो वा पुनः पुनर्वा जुगुप्से यदुदितं भवति। पुनरुक्तमनर्थं वेह नानुवादादरादिषु ॥ ३५७७ ॥

[3] किं जुगुप्स आत्मानमतीतसावद्यकारिणमश्लाघ्यम्। अत्राणमतनमथवा सावद्यमतीतयोगामिति ॥ ३५७८ ॥

अथवा, अन्यथा त्रिकालोपसंग्रह इत्याह—

[1]सव्वं पच्चक्खामि त्ति वा तिकालोवसंगहोऽभिमओ । अविसद्दाओ तस्सेव कत्त-किरियाभिहाणं ति ॥३५५२॥

अथवा, 'सर्वं सावद्ययोगं प्रत्याख्यामि' इत्यनेन सामान्याभिधानेन त्रिकालसंग्रहोऽभिमतः, अस्मादेव सामान्याभिधानादतीते संप्रति भविष्यति च काले सर्वं सावद्ययोगं प्रत्याख्यामीति गम्यत इत्यर्थः, इदानीं तु 'करेंतं पि अन्नं' इत्यत्रापिशब्दात् तस्यैव कालत्रयस्य संबन्धे कर्तृ-क्रियाभिधानमभिहितम्, यथा वर्तमानेकालेऽहं न करोमि, न कारयामि, कुर्वन्तमन्यं न समनुजानामि तथाऽपिशब्दादतीते भविष्यति च काले न करोमि न कारयामि कुर्वन्तमप्यन्यं न समनुजानामीति प्रत्येकमवगन्तव्यमिति ॥ ३५५२ ॥

अत्राक्षेपं परिहारं चाह—

[2]एवं सव्वस्सासेसविसयओऽतीयणागएसुं पि । पावइ सव्वनिसेहो भण्णइ तं नाववायाओ ॥ ३५५३ ॥

नन्वेवमुक्तप्रकारेणातीतेऽनागते च सर्वस्मिन्नपि काले आसेवितस्यासेविष्यमाणस्य च सर्वस्यापि सावद्ययोगस्य निषेधः प्राप्नोति । कुतः ? इत्याह—'सव्वस्सेत्यादि' सर्वस्य सर्वशब्दस्याशेषविषयत्वादशेषविषयत्वेन पूर्वमिहैव व्याख्यातत्वादित्यर्थः । न चैतद् युक्तम्, अतीतसावद्ययोगस्यासेवितत्वात्, आसेवितस्य च प्रत्याख्याने मृषावादादिदोषप्रसङ्गात्, भविष्यतश्च तस्य सर्वस्यापि प्रत्याख्यानदोषानुषङ्गादिति । भण्यतेऽत्रोत्तरम्—तदेतद् न प्राप्नोति । कुतः ? इत्याह-अपवादात्-अपवादबाधितत्वादिति ॥३५५३॥

तमेव चापवादं दर्शयति—

[3]भूयस्स पडिक्कमणाभिहाणओऽणुमइमेत्तमागहियं । जावज्जीवग्गहणा एस्सस्स य मरणमज्जाया ॥ ३५५४ ॥

'तस्स भंते ! पडिक्कमामि' इत्यादिना प्रस्तुत एव सामायिकसूत्रे प्रतिक्रमणस्याभिधानतो भूतस्यातीतसावद्ययोगस्यानुमतिमात्रमेव प्रत्याख्येयत्वेनागृहीतम्, न पुनः सर्वोऽपि सावद्ययोगः, तदनुमतेश्च प्रत्याख्याने न कश्चिद् मृषावाद इत्यनन्तरमेव प्रागुक्तम् । यावज्जीवग्रहणात् पुनरेष्यतोऽपि सर्वसावद्ययोगस्य प्रत्याख्याने मरणमर्यादाऽपवादः, यावज्जीवमेव तं प्रत्याचक्षे न परत इति॥३५५४॥

१ सर्वं प्रत्याख्यामीति वा त्रिकालोपसंग्रहोऽभिमत । अपिशब्दात् तस्यैव कर्तृ-क्रियाभिधानमिति ॥ ३५५२ ॥

२ एवं सर्वस्याशेषविषयतोऽतीतानागतयोरपि । प्राप्नोति सर्वनिषेधो भण्यते तद् नापवादात् ॥ ३५५३ ॥

३ भूतस्य प्रतिक्रमणाभिधानतोऽनुमतिमात्रमागृहीतम् । यावज्जीवग्रहणादेष्यतश्च मरणमर्यादा ॥ ३५५४ ॥

सनीयम् । अथवा, अत्राणं संसारे निपततामशरणम्, अतनं वाऽनादिकालात् सातत्यभवनमतत्त्वमतीतसावद्ययोगं 'कुच्छामि' जुगुप्से, भवहेतुत्वात्, सर्वविरतिसामायिकस्यैव भवाब्धौ निमज्जतां त्राणत्वादिति ॥ ३५७८ ॥

अथ 'व्युत्सृजामि' इति सूत्रस्य चरमावयवं संबन्धयन्नाह—

[1]विविहं विसेसओ वा भिसं सिरामि त्ति वोसिरामि त्ति । छड्डेमि त्ति जमुत्तं तमेव समईयसावज्जं ॥३५७९॥

विशब्दो विविधार्थो विशेषार्थो वा, उत्शब्दस्तु भृशार्थः, ततश्च विविधं विशेषतो वा भृशमत्यर्थं 'सृज विसर्गे' सृजामि त्यजामीति यदुक्तं भवति । कम् ? इत्याह—तमेवातीतसावद्ययोगम् । 'व्यवसृजामि' इति वाऽवशब्दोऽधःशब्दार्थे, विशेषेणाधः सृजामि क्षिपामि व्यवसृजामीति ॥ ३५७९ ॥

आह—नन्वेवं सावद्ययोगपरित्यागात् 'करोमि भदन्त ! सामायिकम्' इति सावद्ययोगनिवर्तनमुच्यते, तदनन्तरं 'व्युत्सृजामि' इत्युक्ते 'तत्सावद्ययोगनिवर्तनं त्यजामि' इति वैपरीत्यमापद्यते । तन्न । कुतः ? इत्याह—

[2]मंसाइविरमणाओ जहेह भणियम्मि वोसिरामि त्ति । तप्पडिवक्खच्चाओ गम्मइ सामाइए वेवं ॥३५८०॥

यथेह मांसादिविरमणादनन्तरं 'व्युत्सृजामि' इति भणिते तत्प्रतिपक्षत्यागो मांसभक्षणनिवृत्तिरूपो गम्यतेऽवसीयते, तथासंव्यवहारदर्शनात्, प्रस्तुतसामायिकेऽप्येवमेवावगन्तव्यम् । इदमुक्तं भवति—यथा '[3]मंससुराइयं पच्चक्खामि जावज्जीवाए चउव्विहं तिविहेणं मणेणं वायाए काएणं न भुंजेमि, न भुंजावेमि, वोसिरामि' इति मांसविरमणादनन्तरं 'व्युत्सृजामि' इत्युक्ते 'मांसादिभक्षणरूपं तद्विपक्षं त्यजामि' इति गम्यते, एवमिहापि 'तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं' इत्येतत्पर्यन्तेन सूत्रेण यत् सर्वसावद्ययोगप्रत्याख्यानमुक्तम्, तदनन्तरं 'व्युत्सृजामि' इत्युक्ते 'तद्विपक्षरूपं सावद्ययोगाविरमणं त्यजामि' इति गम्यत इति ॥३५८०॥

अथ कः पुनः सर्वसावद्ययोगप्रत्याख्यानरूपस्य सामायिकस्य विपक्षः ? इत्याशङ्क्य तदुपदर्शनार्थमाह—

---

१ विविधं विशेषतो वा भृशं सृजामीति विसृजामीति । त्यजामीति यदुक्तं तदेव समतीतसावद्यम् ॥ ३५७९ ॥

२ मांसादिविरमणाद् यथेह भणिते विसृजामीति । तत्प्रतिपक्षत्यागो गम्यते सामायिकेऽप्येवम् ॥ ३५८० ॥

३ मांस-सुरादिकं प्रत्याख्यामि यावज्जीवं चतुर्विधं त्रिविधेन । मनसा वचसा कायेन न भुञ्जे न भोजयामि विसृजामि ।

अथवा, अस्मिन्नेव सामायिकसूत्रे निरवशेषवचनोऽपि सर्वशब्दः प्रतिनियतत्वेन व्यवस्थापित इति दर्शयन्नाह—

अहवा जावज्जीवग्गहणाओऽणागयावरोहोऽयं । संपइकालग्गहणं न करोमिच्चाइगहणाओ ॥ ३५५५ ॥

भूयस्स पडिक्कमणाइणा य तेणेह सव्वसद्दोऽयं । नेओ विसेसविसओ जओ य सुत्तंतरेऽभिहियं ॥ ३५५६ ॥

व्याख्या—अथवा, सूत्र एव यावज्जीवग्रहणादनागतकालस्यायमवरोधः—सुदीर्घोऽप्यनागतकालो यावज्जीवग्रहणाद् नैयत्यविधानेन विशेषे व्यवस्थापित इत्यर्थः । 'न करेमि न कारवेमि' इत्यादिवचनात् तु सांप्रतकालग्रहणमिति । 'तस्स भंते ! पडिक्कमामि' इत्यादिसूत्रावयवे च भूतस्यातीतस्य सावद्ययोगस्य प्रतिक्रमणादिना, आदिशब्दाद् निन्दा-गर्हाविधानेन च विशेषविषयतागर्भमतीतकालग्रहणमिति शेषः । येनैवम्, तेनेह निरवशेषवचनोऽप्ययं सर्वशब्दो विशेषविषयो ज्ञेयः । ततश्च भविष्यत्कालसावद्ययोग इहजीवितभवपर्यन्त एव निरवशेषसर्वशब्देन गृहीतः, अतीतसावद्ययोगोऽप्यनुमतिमात्रक एव निरवशेषस्तेन कोडीकृत इति भावः । पूर्वमुत्सर्गतः कालत्रयगतः समस्तसावद्ययोगविषयं सर्वशब्दं कृत्वाऽपवादेन बाधा प्रोक्ता, इह तु सामायिकसूत्रे नियन्त्रणाद्वारेण प्रथमत एव देशतो निरवशेषविषयता सर्वसब्दस्य दर्शिता, इत्येतावन्मात्रो व्याख्याद्वयस्य विशेषोऽवसेय इति ॥ ३५५५ ॥ ३५५६ ॥

इत्थं चैतदङ्गीकर्तव्यम्, यतः सूत्रान्तरेऽप्यभिहितम्, किम् ? इत्याह—

समईयं पडिक्कमए पच्चुप्पण्णं च संवरेइ त्ति । पच्चक्खाइ अणागयमेवं इहइं पि विन्नेयं ॥ ३५५७ ॥

सुबोधा, नवरमतीतप्रातिक्रमणेन तदनुमतिमात्रप्रत्याख्यानमुक्तम् । 'पच्चक्खाइ अणागयं' इत्यत्र 'यावज्जीवम्' इति शेषः । ततश्च देशतो निरवशेषविषयः सर्वशब्दः सिद्ध इति ॥ ३५५७ ॥

'तस्स भंते !' इत्यादेर्व्याख्यानार्थमाह—

---

१ अथवा यावज्जीवग्रहणादनागतावरोधोऽयम् । सम्प्रतिकालग्रहणं न करोमीत्यादिग्रहणात् ॥ ३५५५ ॥
भूतस्य प्रतिक्रमणादिना च तेनेह सर्वशब्दोऽयम् । ज्ञेयो विशेषविषयो यतश्च सूत्रान्तरेऽभिहितम् ॥ ३५५६ ॥
२ समतीतं प्रतिक्रमति प्रत्युत्पन्नं संवृणोतीति । प्रत्याख्यात्यनागतमेवमिहापि विज्ञेयम् ॥ ३५५७ ॥

सम्मत्ताइमयं तं मिच्छत्ताईणि तव्विवक्खो य । ताण विवक्खो गम्मइ पभासिए वोसिरामि त्ति ॥३५८१॥

तच्च सामायिकं 'सामाइयं च तिविहं सम्मत्त सुयं तहा चरित्तं च' इति वचनात् सम्यक्त्वश्रुताद्यात्मकम् । ततश्च मिथ्यात्वा-ऽज्ञाना-ऽविरतयस्तद्विपक्षोऽवसेयः । ततः 'व्युत्सृजामि' इति प्रभाषिते तेषां मिथ्यात्वादीनां विसर्गस्त्यागो गम्यत इति ॥३५८१॥

तदेवं 'निन्दामि गर्हामि व्युत्सृजामि' इति क्रियात्रयस्य विषयविभागो दर्शितः, अथवा, अतीतसावद्ययोगप्रायश्चित्तसंग्रहार्थमिदं क्रियात्रयमिति दर्शयन्नाह—

अहवा[2] तिच्छियसावज्जजोगपच्छित्तसंगहत्थाय । संखेवओ विहाणं निंदामिच्चाइसुत्तम्मि ॥ ३५८२ ॥

निंदा-गरहग्गहणादालोयण-पडिक्कमोभयग्गहणं । होइ विवेगाईणं छेयंताणं विसग्गाओ ॥ ३५८३ ॥

अथवा, अतिक्रान्तसावद्ययोगप्रायश्चित्तस्य संक्षेपतः संग्रहार्थं 'निन्दामि' इत्यादिसूत्रेऽभिधानमिति । तच्च प्रायश्चित्तं

"आलोयण[3]-पडिक्कमणे मीस विवेगे तहा विउसग्गे । तव छेय मूल अणवट्ठया य पारंचिए चेव ॥ १ ॥"

इति वचनाद् दशविधम् । तत्र निन्दा-गर्हयोर्ग्रहणादालोचन-प्रतिक्रमणोभयलक्षणस्याद्यप्रायश्चित्तत्रयस्य ग्रहणम्, 'व्यवसृजामि' इति विसर्गग्रहणात् पुनर्विवेकादीनां छेदान्तानां चतुर्णां प्रायश्चित्तभेदानां ग्रहणं भवति । मूलादयस्तु त्रयः प्रायश्चित्तभेदा इह न संभवन्ति, तेषां चारित्रोत्तीर्णजन्तुविषयत्वात् । इह तु प्रतिपन्नचारित्रसत्त्वप्रक्रमादिति तावद् वयमवगच्छामः, तत्त्वं तु केवलिनो बहुश्रुता वा विदन्तीति ॥ ३५८२ ॥ ३५८३ ॥

॥ तदेवं व्याख्यातं सामायिकसूत्रम् । तद्व्याख्याने चावसितोऽनुगमः ॥

ततः पूर्वोक्तमुपसंहरन्नुत्तरनयद्वारसंबन्धनार्थमाह—

---

१ सम्यक्त्वादिमयं तद् मिथ्यात्वादीनि तद्विपक्षश्च । तेषां विपक्षो गम्यते प्रभाषिते विसृजामीति ॥ ३५८१ ॥

२ अथवाऽतिक्रान्तसावद्ययोगप्रायश्चित्तसंग्रहार्थाय । संक्षेपतो विधानं निन्दामीत्यादिसूत्रे ॥ ३५८२ ॥

निन्दा-गर्हाग्रहणादालोचन-प्रतिक्रमणोभयग्रहणम् । भवति विवेकादीनां छेदान्तानां विसर्गात् ॥ ३५८३ ॥

३ आलोचन-प्रतिक्रमणे मिश्र विवेकस्तथा व्युत्सर्गः । तपश्छेदो मूलमनवस्थाप्यता च पाराञ्चितकं चैव ॥ १ ॥

॥१३३७॥ रात् 'तम्' इत्यभिधेये वक्तव्ये किमिह षष्ठीनिर्देशात् तस्यान्यत्वम्? इति ॥ ३५५८ ॥

गुरुराह—

[2]संबंधलक्खणाए छट्ठीएऽवयवलक्खणाए वा । समतीयं सावज्जं संबज्झावेइ न उ सेसं ॥ ३५५९ ॥

इह संबन्धलक्षणयाऽवयवलक्षणया वा षष्ठ्या समतीतकालविषयमेव सावद्यं योगं संबन्धयति । इदमुक्तं भवति—तस्य त्रिकालगतयोगस्य संबन्धिनं तदवयवभूतं वाऽतीतसावद्ययोगं प्रतिक्रमामीति सामान्येन संबन्धलक्षणयाऽवयवलक्षणया वा षष्ठ्या 'तस्य' इत्यत्रातीतसावद्ययोगं संबन्धयति सूत्रकारः, न तु शेषं वर्तमानमेष्यन्तं वा, तस्य संव्रियमाणत्वात्, प्रत्याख्यायमानत्वाच्च, प्रतिक्रमणस्य चातीतविषयत्वादिति ॥ ३५५९ ॥

अत्र केषाञ्चिद् मतमुपन्यस्य दूषयन्नाह—

[3]अविसिट्ठं सावज्जं संबज्झाविंति केइ छट्ठीए । तत्त प्पओयणाभावओ तहा गंथगुरुयाओ ॥ ३५६० ॥

पच्छित्तस्स पडिक्कमणओ य पायं व भूयविसययाओ । तीयपडिक्कमणाओ पुणरुत्ताइप्पसंगाओ ॥ ३५६१ ॥

व्याख्या—इह केचनाप्याचार्यदेशीयाः 'तस्य' इत्यत्र षष्ठ्या अविशिष्टमेव त्रैकालिकं सावद्ययोगं संबन्धयन्ति । तदेतद् न युक्तम्, अविशिष्टत्रैकालिकसावद्ययोगसंबन्धस्येह प्रयोजनाभावात्, तदभावश्चातीतस्यैव प्रतिक्रमणसंभवात् । अथ सामान्ययोगं संबध्य पश्चाद् विशेषेणातीतस्यैव तस्य प्रतिक्रमणं व्याख्यास्यत इत्याशङ्क्याह—तथा सति ग्रन्थगुरुताप्रसङ्गादिति । किञ्च, 'पच्छित्तेत्यादि' प्रायश्चित्तस्यैव प्रतिक्रमणरूपत्वात्, प्रायश्चित्तरूपमेव हि प्रतिक्रमणं नान्यदित्यर्थः । ततः किम्? इत्याह—प्रायश्चित्तस्य च प्रायो भूतवि-

1 तस्येति च संबध्यते योगः सावद्य एव योऽधिकृतः । तमिति द्वितीयाधिकारादभिधेये किमिह तस्येति? ॥ ३५५८ ॥

2 संबन्धलक्षणया षष्ठ्याऽवयवलक्षणया वा । समतीतं सावद्यं संबन्धयति न तु शेषम् ॥ ३५५९ ॥

3 अविशिष्टं सावद्यं संबन्धयन्ति केचित् षष्ठ्या । तत्र प्रयोजनाभावतस्तथा ग्रन्थगुरुतातः ॥ ३५६० ॥ ॥१३३७॥

प्रायश्चित्तस्य प्रतिक्रमणतश्च प्रायो वा भूतविषयतातः । अतीतप्रतिक्रमणात् पौनरुक्त्यादिप्रसङ्गात् ॥ ३५६१ ॥

एवं सुत्ताणुगमो सुत्तन्नासो सुयत्थजुत्ती य। भणिया नयाणुजोगदारावसरोऽधुणा, ते य ॥ ३५८४ ॥

अत्थाणुगमंगं चिय तेण जहासंभवं तहिं चेव। भणिया तहावि पत्थुयदारासुन्नत्थमुण्णेहं ॥ ३५८५ ॥

व्याख्या—एवमुक्तप्रकारेण सूत्रानुगमः, सूत्रालापकानां च न्यासो निक्षेपः, सूत्रार्थयुक्तिश्च सूत्रस्पर्शकनिर्युक्तिश्चेत्यर्थः, भणिताः प्रतिपादिताः। अधुना नयलक्षणचतुर्थानुयोगद्वारस्यावसरः। ते च नया अर्थानुगमाङ्गमेव। तेन यथासंभवं तत्रैकार्थानुगमे तत्र तत्र स्थाने भणिताः, तथापि प्रस्तुतद्वाराशून्यार्थं तावत् किञ्चिदुन्नेष्ये भणिष्याम्यहमिति ॥ ३५८४ ॥ ३५८५ ॥

तत्र नैगमनयस्य संग्रह-व्यवहारयोरन्तर्भावात् शेषाणां संग्रहादीनां षण्णां नयानां संक्षिप्य मतं तावदुपदर्शयन्नाह—

सामन्नमह विसेसो पच्चुप्पण्णं च भावमेत्तं च। पइसद्दं च जहत्थं च वयणमिह संगहाईणं ॥ ३५८६ ॥

इह सामान्यमेवास्ति न विशेषा इति संग्रहस्य वचनम्। विशेषा एव सन्ति न सामान्यमिति व्यवहारस्य वचः। प्रत्युत्पन्नं च वर्तमानमेव वस्त्वस्ति न त्वतीतमनागतं चेति ऋजुसूत्रस्य वचनम्। नामादिनिक्षेपाणां मध्ये भावेन्द्रादिकं भावनिक्षेप एवास्ति, न नामादिनिक्षेपा इति शब्दनयस्य वचः। इन्द्र-शक्र-पुरन्दरादिशब्दानां प्रतिशब्दमन्यान्य एवार्थो वाच्यः, न त्वेक एवेति समभिरूढस्य वचः। यथार्थमेव स्वाभिधायकशब्दवाच्यमर्थं कुर्वदेव घटादिकं वस्तु भवति, नान्यथा, इत्येवंभूतनयस्य वचनम्। इत्युक्तप्रकारं संग्रहादीनां वचनं मतं संक्षेपेणावगन्तव्यमिति ॥ ३५८६ ॥

ततः किम्? इत्याह—

एयाण समोयारो दव्वट्ठिय-पज्जवट्ठियदुगम्मि। सेसेसु य संभवओ ताणं च परोप्परं कज्जो ॥ ३५८७ ॥

एतेषां च संग्रहादिनयानां द्रव्यार्थिक-पर्यायार्थिकनयद्वये समवतारोऽन्तर्भावः कार्यः। उक्तं च—

१ एवं सूत्रानुगमः सूत्रन्यासः सूत्रार्थयुक्तिश्च। भणिता नयानुयोगद्वारावसरोऽधुना, ते च ॥ ३५८४ ॥
अर्थानुगमाङ्गमेव तेन यथासंभवं तत्रैव। भणितास्तथापि प्रस्तुतद्वाराशून्यार्थमुन्नेष्ये ॥ ३५८५ ॥
२ सामान्यमथ विशेषः प्रत्युत्पन्नं च भावमात्रं च। प्रतिशब्दं च यथार्थं च वचनमिह संग्रहादीनाम् ॥ ३५८६ ॥
३ एतेषां समवतारो द्रव्यास्तिक-पर्यवास्तिकद्विके। शेषेषु च संभवतस्तेषां च परस्परं कार्यः ॥ ३५८७ ॥

तस्स च्चि स संबज्झइ जोगो सावज्ज एव जोऽहिगओ। तमिति बिइयाइगारादभिधेए किमिह तस्स त्ति?॥३५५८॥

'तस्स' इत्यत्रासावधिकृत एव सावद्यो योगः संबध्यते। अत्र परः प्राह—ननु 'प्रतिक्रमामि' इति क्रियायोगतो द्वितीयाधिकारात् 'तम्' इत्यभिधेये वक्तव्ये किमिह षष्ठीनिर्देशात् तस्यान्यत्वम्? इति ॥ ३५५८ ॥

गुरुराह—

संबंधलक्खणाए छट्ठीएऽवयवलक्खणाए वा। समतीयं सावज्जं संबज्झावेइ न उ सेसं ॥ ३५५९ ॥

इह संबन्धलक्षणयाऽवयवलक्षणया वा षष्ठ्या समतीतकालविषयमेव सावद्यं योगं संबन्धयति। इदमुक्तं भवति—तस्य त्रिकालगतयोगस्य संबन्धिनं तदवयवभूतं वाऽतीतसावद्ययोगं प्रतिक्रमामीति सामान्येन संबन्धलक्षणयाऽवयवलक्षणया वा षष्ठ्या 'तस्य' इत्यत्रातीतसावद्ययोगं संबन्धयति सूत्रकारः, न तु शेषं वर्तमानमेष्यन्तं वा, तस्य संव्रियमाणत्वात्, प्रत्याख्यायमानत्वाच्च, प्रतिक्रमणस्य चातीतविषयत्वादिति ॥ ३५५९ ॥

अत्र केषाञ्चिद् मतमुपन्यस्य दूषयन्नाह—

अविसिट्ठं सावज्जं संबज्झाविंति केइ छट्ठीए। तन्न प्पओयणाभावओ तहा गंथगुरुयाओ ॥ ३५६० ॥

पच्छित्तस्स पडिक्कमणओ य पायं व भूयविसययाओ। तीयपडिक्कमणाओ पुणरुत्ताइप्पसंगाओ ॥ ३५६१ ॥

व्याख्या—इह केचनाप्याचार्यदेशीयाः 'तस्य' इत्यत्र षष्ठ्या अविशिष्टमेव त्रैकालिकं सावद्ययोगं संबन्धयन्ति। तदेतद् न युक्तम्, अविशिष्टत्रैकालिकसावद्ययोगसंबन्धस्येह प्रयोजनाभावात्, तदभावश्चातीतस्यैव प्रतिक्रमणसंभवात्। अथ सामान्ययोगं संबध्य पश्चाद् विशेषेणातीतस्यैव तस्य प्रतिक्रमणं व्याख्यास्यत इत्याशङ्क्याह—तथा सति ग्रन्थगुरुताप्रसङ्गादिति। किञ्च, 'पच्छित्तेत्यादि' प्रायश्चित्तस्यैव प्रतिक्रमणरूपत्वात्, प्रायश्चित्तरूपमेव हि प्रतिक्रमणं नान्यादित्यर्थः। ततः किम्? इत्याह—प्रायश्चित्तस्य च प्रायो भूतवि-

---

१ तस्येति च संबध्यते योगः सावद्य एव योऽधिकृतः। तमिति द्वितीयाधिकारादभिधेये किमिह तस्येति? ॥ ३५५८ ॥

२ संबन्धलक्षणया षष्ठ्याऽवयवलक्षणया वा। समतीतं सावद्यं संबन्धयति न तु शेषम् ॥ ३५५९ ॥

३ अविशिष्टं सावद्यं संबन्धयन्ति केचित् षष्ठ्या। तन्न प्रयोजनाभावतस्तथा ग्रन्थगुरुतातः ॥ ३५६० ॥

प्रायश्चित्तस्य प्रतिक्रमणतश्च प्रायो वा भूतविषयतातः। अतीतप्रतिक्रमणात् पौनरुक्त्यादिप्रसङ्गात् ॥ ३५६१ ॥

“ [1]तित्थयरवयणसंगहविसेसपत्थायमूलवायरणी । दव्वट्ठिओ य पज्जवणओ य सेसा वियप्पा सिं ॥ १ ॥”

तथा, तेषामेव संग्रहादिनयानां शेषेषु निश्चयनय-व्यवहार-ज्ञान क्रियादिनयेषु पूर्वोक्तेषु वा सप्तसु नयशतेषु समवतारो विधेयः। तथा 'ताणं च त्ति' तेषामेव संग्रहादिनयानां परस्परं संभवतो यथासंभवं समवतारः कार्यः; तद्यथा—ऋजुसूत्रः पर्यायादिवादित्वसाम्यात् शब्दनये समवतरति, शब्दनयोऽपि भावाद्यभ्युपगमसाम्यात् समभिरूढे, सोऽपि प्रतिशब्दमन्यान्यार्थवाचित्वादिनैवंभूते । एवमन्यथापि यथासंभवं परस्परमेषामन्तर्भावो वाच्य इति ॥ ३५८७ ॥

अथ द्रव्य-पर्यायार्थिकयोर्यद् मतं तद् दर्शयन्नाह—

[2]दव्वट्ठिअस्स दव्वं वत्थुं पज्जवनयस्स पज्जाओ । अप्पियमयं विसेसो सामन्नमणप्पियनयस्स ॥ ३५८८ ॥

द्रव्यार्थिकस्य द्रव्यमेव वस्तु, न तु पर्यायाः, तेषां तन्मतेनावस्तुत्वात् । अत एव द्रव्यमर्थोऽस्येति द्रव्यार्थिकोऽयमुच्यते । पर्यायनयस्य तु पर्याय एव वस्तु, न तु द्रव्यम्, तस्य तन्मतेनावस्तुत्वात् । अत एव पर्यायोऽर्थोऽस्येति पर्यायार्थिकोऽसावुच्यते । तथा, अर्प्यते विशेष्यत इत्यर्पितो विशेषस्तद्वादी नयोऽर्पितनयः समयप्रसिद्धो ज्ञेयः। तन्मतं विशेष एवास्ति न सामान्यम् । अनर्पितमविशेषितं सामान्यमुच्यते तद्वादी नयोऽनर्पितनयः, सोऽपि समयप्रसिद्ध एव वोद्धव्यः, तन्मतं तु सामान्यमेवास्ति न विशेषः । अत्राप्यर्पिताऽनर्पितनयद्वये संग्रहादीनां समवतारो द्रष्टव्य इति ॥ ३५८८ ॥

अथवा, व्यवहार-निश्चयनयद्वये तेषां समवतारः, अतस्तस्यैव व्यवहार-निश्चयनयद्वयस्य स्वरूपमुपदर्शयन्नाह—

[3]लोगव्ववहारपरो ववहारो भणइ कालओ भमरो । परमत्थपरो मण्णइ निच्छइओ पंचवण्णो त्ति ॥ ३५८९ ॥

लोकव्यवहाराभ्युपगमपरो नयो व्यवहारनय उच्यते । स च कालवर्णस्यैवोत्कटत्वेन लोके व्यवह्रियमाणत्वाद् भणति प्रतिपादयति 'कालको भ्रमरः' इति । परमार्थपरस्तु पारमार्थिकार्थवादी नैश्चयिको निश्चयनय उच्यते । स पुनर्मन्यते-'पञ्चवर्णो भ्रमरः' बादरस्कन्धत्वेन तच्छरीरस्य पञ्चवर्णपुद्गलैर्निष्पन्नत्वात्, शुक्लादीनां च न्यग्भूतत्वेनानुपलक्षणादिति ॥ ३५८९ ॥

---

१ तीर्थङ्करवचनसंग्रहविशेषपदार्थातममूलव्याकरणी । द्रव्यार्थिकश्च पर्यवनयश्च शेषा विकल्पा अनयोः ॥ १ ॥

२ द्रव्यास्तिकस्य द्रव्यं वस्तु पर्यवनयस्य पर्यायः । अर्पितमतं विशेष सामान्यमनर्पितनयस्य ॥ ३५८८ ॥

३ लोकव्यवहारपरो व्यवहारो भणति कालको भ्रमरः । परमार्थपरो मन्यते नैश्चयिकः पञ्चवर्ण इति ॥ ३५८९ ॥

णेगाइं माणाइं सामन्नो-भय-विसेसनाणाइं। जं तेहिं मिणइ तो णेगमो णओ णेगमाणो त्ति ॥ १ ॥
लोगत्थनिबोहा वा निगमा तेसु कुसलो भवो वाऽयं। अहवा जं नेगगमोऽणेगपहो णेगमो तेणं ॥ २ ॥
सो कमविसुद्धभेओ लोगपसिद्धिवसओऽणुगंतव्वो। विहिणा निलयण-पत्थय-गामोवम्माइसंसिद्धो ॥ ३ ॥
सामन्नमन्नदेव हि हेऊ सामन्नबुद्धि-वयणाणं। तस्स विसेसो अन्नो विसेसमइ-वयणहेउ त्ति ॥ ४ ॥
सदिति भणिएऽभिमन्नइ दव्वादत्थंतरं ति सामन्नं। अविसेसओ मईए सव्वत्थाणुप्पवित्तीए ॥ ५ ॥
गोत्तादओ गवाइसु निययधाराणुवित्तिबुद्धीओ। परओ य निवित्तीओ सामन्नविसेसनामाणो ॥ ६ ॥
तुल्लागइ-गुण-किरिएगदेसतीयाएऽणुदव्वम्मि। अन्नत्तबुद्धिकारणमंत विसेसो त्ति से बुद्धी ॥ ७ ॥
नणु दव्व-पज्जवट्ठियनयावलंबि त्ति नेगमो चेव। सम्मद्दिट्ठी साहु व्व कीस मिच्छत्तभेओऽयं ? ॥ ८ ॥
जं सामन्नविसेसे परोप्परं वत्थुओ य सो भिन्ने। मन्नइ अच्चंतमओ मिच्छद्दिट्ठी कणादो व्व ॥ ९ ॥
दोहिं वि नएहिं नीयं सत्थमुलूएण तह वि मिच्छत्तं। जं सविसयप्पहाणत्तणेण अन्नोन्ननिरवेक्खा ॥ १० ॥
जइ सामन्नं सामन्नबुद्धिहेउ त्ति तो विसेसा वि। सामन्नमन्नसामन्नबुद्धिहेउ त्ति को भेओ ? ॥ ११ ॥
जइ जेण विसेसिज्जइ स विसेसो तेण जं पि सामण्णं। तं वि विसेसोऽवस्सं सत्ताइविसेसयत्ताओ ॥ १२ ॥
सत्ताजोगादसओ सओ वं सत्तं हैवेज्ज[1] दव्वस्स। असओ न खपुप्फस्स व सओ व किं सत्तया कज्जं ? ॥१३॥
पइवत्थुं सामन्नं जइ तो णेगं न यावि सामन्नं। अह दव्वेसु तदेगं तह वि सदेसं न सामन्नं ॥ १४ ॥
अह पइवत्थुमिहेगं च तहवि तं नत्थि खरविसाणं व। न य तदुवलक्खणं तं सव्वगयत्तओ खं व ॥ १५ ॥
सामन्नविसेसकयं जइ नाणं तेसु किंनिमित्तं तो। अह तत्तो च्चिय तम्हा तं परहेउ त्ति णेगंतो ॥ १६ ॥

1 'हविज्ज'।

तम्हा वत्थूणं चिय जो सरिसो पज्जवो स सामन्नं । जो विसरिसो विसेसो स मओऽणत्थंतरं तत्तो ॥ १७ ॥
संगहणं संगिण्हइ संगिज्झंते व तेण जं भेया । तो संगहो त्ति संगहियपिंडियत्थं वओ जस्स ॥ १८ ॥
संगहियमागहीयं संपिंडियमेगजाइमाणीयं । संगहियमणुगमो वा वइरेगो पिंडियं भणियं ॥ १९ ॥
अहव महासामन्नं संगहियपिंडियत्थमियरं ति । सव्वविसेसानन्नं सामन्नं सव्वहा भणियं ॥ २० ॥
एगं निच्चं निरवयवमक्कियं सव्वगं च सामन्नं । निस्सामन्नत्ताओ नत्थि विसेसो खपुप्फं व ॥ २१ ॥
सदिति भणियम्मि जम्हा सव्वत्थाणुप्पवत्तए बुद्धी । तो सव्वं तम्मत्तं नत्थि तदत्थंतरं किंचि ॥ २२ ॥
कुंभो भावाणन्नो जइ तो भावो अहन्नहाऽभावो । एवं पडादओ वि हु भावाणन्न त्ति तम्मत्तं ॥ २३ ॥
तम्मत्तमिह विसेसा सामन्नं पिव पमेयभावाओ । सव्वत्थ सम्मईओ वभिचाराभावओ वावि ॥ २४ ॥
चूओ वणस्सइ च्चिय मूलाइगुणो त्ति तस्समूहो व्व । गुम्मादओ वि एवं सव्वे न वणस्सइविसिट्ठा ॥ २५ ॥
सामन्नाओ विसेसोऽणन्नोऽणन्नो व नत्थि जइ अन्नो । निस्सामन्नत्ताओऽणन्नो सामन्नमेत्तं सो ॥ २६ ॥
ववहरणं ववहरए स तेण व वहीरए व सामन्नं । ववहारपरो व जओ विसेसओ तेण ववहारो ॥ २७ ॥
सदिति भणियम्मि गच्छइ विणिच्छयं सदिति किं तदन्नं ति । होज्ज विसेसेहिंतो संववहारादवेतं जं ? ॥ २८ ॥
उवलंभव्ववहाराभावाओ निव्विसेसभावाओ । तं नत्थि खपुप्फं पिव संति विसेसा सपच्चक्खं ॥ २९ ॥
जं च विसेसेहिं चिय संववहारो वि कीरए सक्खं । जम्हा तम्मत्तं चिय फुडं तदत्थंतरमभावो ॥ ३० ॥
अन्नमणन्नं व मयं सामन्नं जइ विसेसओऽणन्नं । तम्मत्तमन्नमहवा नत्थि तयं निव्विसेसं ति ॥ ३१ ॥
तह चूयाइविरहिओ अन्नो को सो वणस्सई नाम । अवणस्सइ च्चिय तओ घडो व्व चूयाइभावाओ ॥ ३२ ॥
तो ववहारो गच्छइ विणिच्छयं को वणस्सई चूओ ? । होज्ज व वउलाइरूवो तह सव्वदव्वभेएसु ॥ ३३ ॥

अथवा, प्रकारान्तरेण व्यवहार-निश्चयनयस्वरूपमवसेयम्। कथम् ? इत्याह—

[1]अहवेगनयमयं चिय ववहारो जं न सव्वहा सव्वं। सव्वनयसमूहमयं विणिच्छओ जं जहाभूयं ॥३५९०॥

अथवा, यत् किमप्येकैकस्यैव नयस्य मतं तद् व्यवहारः प्रतिपद्यते, नान्यत्। कुतः ? इत्याह—'जमित्यादि' यस्मात् सर्वथा सर्वैरपि प्रकारैर्विशिष्टं सर्वनयमतसमूहमयं वस्त्वसौ प्रतिपत्तुं न शक्नोतीति शेषः, स्थूलदर्शित्वादिति। विनिश्चयस्तु निश्चयनयो यद् यथाभूतं परमार्थतो वस्तु तत् तथैव प्रतिपद्यत इति ॥ ३५९० ॥

अथवा, ज्ञान-क्रियानयद्वये संग्रहादीनां समवतारः, अतस्तत्स्वरूपमाह—

[2]नाणाहीणं सव्वं नाणनओ भणइ किंव किरियाए ?। किरियाए करणनओ तदुभयगाहो य सम्मत्तं ॥३५९१॥

ज्ञानाधीनमेव सर्वमैहिकामुष्मिकं सुखं, किमत्र क्रियया कर्तव्यम् ?। युक्तिश्चेहानन्तरमेव वक्ष्यति। करणनयस्तु क्रियानयो वक्ष्यमाणयुक्तेरेव सर्वमैहिकामुष्मिकं सुखं क्रियाया एवाधीनमिति भणति। उभयग्राहश्चेह सम्यक्त्वं स्थितपक्ष इति ॥३५९१॥

एतदेवाह निर्युक्तिकारः—

[3]नायम्मि गिण्हियव्वे अगिण्हियव्वम्मि चेव अत्थम्मि। जइयव्वमेव इइ जो उवएसो सो नओ नाम ॥३५९२॥

ज्ञाननयमतेन तावदियं गाथा व्याख्यायते। तत्र 'नायम्मि त्ति' ज्ञाते सम्यक् परिच्छिन्ने ग्रहीतव्ये उपादेये, अग्रहीतव्येऽनुपादेये हेय इत्यर्थः, चशब्दो द्वयोरपि ग्रहीतव्या-ऽग्रहीतव्ययोर्ज्ञातत्वानुकर्षणार्थे, उपेक्षणीयसमुच्चयार्थे वा। 'एव' इति गाथालङ्कारमात्रे। 'अत्थम्मि त्ति' अर्थत इत्यर्थः। स च द्विविधः—ऐहिक आमुष्मिकश्चेति। तत्रैहिकस्त्रिविधः—ग्राह्यः, अग्राह्यः, उपेक्षणीयश्च। तत्र ग्राह्यः स्रक्-चन्दना-ऽङ्गनादिः, अग्राह्योऽहिविष-कण्टकादिः, उपेक्षणीयस्तु तृण-पांशु-शर्करादिः। एवमामुष्मिकोऽपि ग्राह्यादिभेदात् त्रिविधः। तत्र ग्राह्यः सम्यग्दर्शन-चारित्रादिः, अग्राह्यो मिथ्यात्वा-ऽज्ञाना-ऽविरत्यादिः, उपेक्षणीयस्तु स्वर्गविभूत्यादिः। एवंभूतेऽर्थे यतितव्यमेव, इत्यत्रैवकारोऽवधारणे। तस्य च व्यवहितः प्रयोगः, यथा ज्ञात एवेति। तदयमर्थः—ग्राह्याऽग्राह्यो-पेक्षणीयेऽर्थे ज्ञात एव

१ अथवैकनयमतमेव व्यवहारो यद् न सर्वथा सर्वम्। सर्वनयसमूहमयं विनिश्चयो यद् यथाभूतम् ॥ ३५९० ॥

२ ज्ञानाधीनं सर्वं ज्ञाननयो भणति किंवा क्रियया। क्रियायाः करणनयस्तदुभयग्रहश्च सम्यक्त्वम् ॥ ३५९१ ॥

३ ज्ञाते ग्रहीतव्येऽग्रहीतव्ये चैवार्थे। यतितव्यमेवेति य उपदेशः स नयो नाम ॥ ३५९२ ॥

वच्छलघातितया संचूर्णयितुमारब्धं तदुद्वारकपाटसंपुटम्। ततो मया ससंभ्रमेण निपुणं तत्प्रतिविधानोपायं चिन्तयित्वा विरचयितुमारब्धं तदुद्वारपिधानहेतोर्विशेषावश्यकविवरणाभिधानं वज्रमयमिव नूतनकपाटसंपुटम् । ततश्चाभयकुमारगणि धनदेवगणि जिनभद्रगणि-लक्ष्मणगणि-विबुधचन्द्रादिमुनिवृन्द-श्रीमहानन्द-श्रीमहत्तरावीरमतीगणिन्यादिसाहाय्याद् 'रे रे निश्चितमिदानीं हता वयम्, यद्येतद् निष्पद्यते, ततो धावत धावत, गृह्णीत गृह्णीत, लगत लगत' इत्यादि पूत्कुर्वतां सर्वात्मशक्त्या युगपत् प्रहरतां हाहारवं कुर्वतां च मोहादिचरटानां चिरात् कथं कथमपि विरचय्य तदुद्वारे निवेशितमेतदिति । ततः शिरो हृदयं च हस्ताभ्यां कुट्टयन् विषण्णो मोहमहाचरटः, समस्तमपि विलक्षीभूतं तत्सैन्यम्, निलीनं च सनायकमेव । ततः क्वचित् क्षेमेण शिवरत्नद्वीप प्रतिगन्तुं प्रवृत्तं तद् यानपात्रमिति ॥

क्व श्रीजिनभद्रगणेः पूज्यस्यैतानि भाष्यवचनानि । तर्कव्यतिकरदुर्गाण्यतिगम्भीराणि ललितानि ॥१॥

विवृतानि स्वयमेव हि कोट्याचार्यैश्च बुधजनप्रवरैः । संगच्छते क्व पुनरपि ममापि वृत्तेः प्रयासोऽत्र ॥२॥

ऋजुभणितिमिच्छतामिह तथापि मत्तोऽपि मन्दबुद्धीनाम् । उपकारः केषाञ्चित् समीक्ष्यते शिष्टलोकानाम् ॥३॥

तेनात्म-परोपकृतिं संभाव्य मयापि भाष्यवृत्तिरियम् । विहिता श्रुतेऽतिभक्तिं शुभविनोदं च चिन्तयता ॥४॥

यच्चेह किमपि वितथं लिखितमनाभोगतः कुबोधाद् वा । तत् सर्वं मध्यस्थैर्मय्यनुकम्पापरैः शोध्यम् ॥ ५ ॥

कृत्वा च विवरणमिदं यत् पुण्यमुपार्जितं मया किञ्चित् । तेना भवक्षयादस्तु जिनमते प्रीत्यविच्छेदः ॥ ६ ॥

ग्रन्थाग्रं प्रत्यक्षरं गणनया सहस्राणि । २८०००॥

श्रीमत्तपोगणगगनाङ्गणगगनमणिप्रभैः स्वपुण्यार्थम् । विजयानन्दमुनीन्द्रैश्चित्कोशेऽसौ प्रतिर्मुमुचे ॥ १ ॥



१ क-ख—'विपन्नो'।

तत्प्राप्ति-परिहारो-पेक्षार्थिना यतितव्यम्—प्रवृत्त्यादिलक्षणः प्रयत्नः कार्य इति। एवंभूतः सर्वव्यवहाराणां ज्ञाननिबन्धनत्वप्रतिपादनपरो य उपदेशः सः। किम्? इत्याह—'नयः' इति प्रस्तावाज्ज्ञाननयः। नामेति शिष्यामन्त्रणे। इत्यक्षरघटना। भावार्थस्त्वयम्—इह ज्ञाननयो ज्ञानप्राधान्यख्यापनार्थं प्रतिपादयति—नन्वैहिका-ऽऽमुष्मिकफलार्थिना तावत् सम्यग्विज्ञात एवार्थे प्रवर्तितव्यम्, अन्यथा प्रवृत्तौ फलविसंवाददर्शनात्, तथा चान्यैरप्युक्तम्—

"विज्ञप्तिः फलदा पुंसां न क्रिया फलदा मता। मिथ्याज्ञानात् प्रवृत्तस्य फलासंवाददर्शनात् ॥ १ ॥

तथा चागमेऽप्युक्तम्—"पढमं नाणं तओ दया" इत्यादि "ज अन्नाणी कम्मं खवेइ" इत्यादि। तथाऽपरमप्युक्तम्—

"[1]पावाओ विणिवत्ती पवत्तणा तह कुसलपक्खम्मि। विणयस्स पडिवत्ती तिन्नि वि नाणे समप्पंति ॥ १ ॥"

इतश्च ज्ञानस्यैव प्राधान्यम्, यतस्तीर्थंकर गणधरैरगीतार्थानां केवलानां विहारोऽपि निषिद्धः; तथा च तद्वचनम्—

"[2]गीयत्थो य विहारो बीओ गीयत्थमीसओ भणिओ। एत्तो तइयाविहारो नाणुन्नाओ जिणवरेहिं ॥ १ ॥"

न यस्मादन्धेनान्धः समाकृष्यमाणः सम्यक्पन्थानं प्रतिपद्यत इति भावः। एवं तावत् क्षायोपशमिकं ज्ञानमधिकृत्योक्तम्। क्षायिकमप्यङ्गीकृत्य विशिष्टफलसाधकत्वं तस्यैव ज्ञेयम्, यस्मादर्हतोऽपि भवाम्भोधेस्तटस्थस्य दीक्षाप्रतिपन्नस्योत्कृष्टतप-श्चरणवतोऽपि न तावदपवर्गप्राप्तिः संजायते, यावदखिलजीवादिवस्तुस्तोमसाक्षात्करणदक्षं केवलज्ञानं नोत्पन्नम्। तस्माज्ज्ञानमेव पुरुषार्थसिद्धेर्निबन्धनम्। प्रयोगश्चात्र—यद् येन विना न भवति तद् तन्निबन्धनमेव, यथा जीवाद्यविनाभावी तन्निबन्धन एवाङ्कुरः, ज्ञानाविनाभाविनी च सकलपुरुषार्थसिद्धिरिति। ततश्चायं नयश्चतुर्विधसामायिके सम्यक्त्व[3]श्रुतसामायिके एवाभ्युपगच्छति, ज्ञानात्मकत्वेन तयोरेव मुख्यमुक्तिकारणत्वात्। देश सर्वविरतिसामायिके तु नेच्छति, ज्ञानकार्यत्वेन गौणत्वात् तयोरिति। तदेवं ज्ञाननयमतेनेयं गाथा व्याख्याता।

अथेयमेव क्रियानयमतेन व्याख्यायते। तत्र क्रियानयो वदति—इह ज्ञातेऽवबुद्धे ग्रहीतव्यादिकेऽर्थे सर्वामपि पुरुषार्थसिद्धिम-

१ पापाद् विनिवृत्तिः प्रवर्तना तथा कुशलपक्षे। विनयस्य प्रतिपत्तिस्त्रीण्यपि ज्ञानं समर्पयन्ति ॥ १ ॥
२ गीतार्थश्च विहारो द्वितीयो गीतार्थमिश्रको भणित.। एतस्मात् तृतीयविहारो नानुज्ञातो जिनवरैः ॥ १ ॥
३ ज 'क्त्वसामायिकश्रु'।

# प्रशस्तिः ।

श्रीप्रश्नवाहनकुलाम्बुनिधिप्रसूतः क्षोणीतलप्रथितकीर्तिरुदीर्णशाखः ।
विश्वप्रसाधितविकल्पितवस्तुरुच्चैश्छायाश्रितप्रचुरनिर्वृतभव्यजन्तुः ॥ १ ॥

ज्ञानादिकुसुमनिचितः फलितः श्रीमन्मुनीन्द्रफलवृन्दैः । कल्पद्रुम इव गच्छः श्रीहर्षपुरीयनामास्ति ॥२॥

एतस्मिन् गुणरत्नरोहणगिरिर्गाम्भीर्यपाथोनिधिस्तुङ्गत्वानुकृतक्षमाधरपतिः साम्यत्वतारापतिः ।
सम्यग्ज्ञानविशुद्धसंयमतपःस्वाचारचर्यानिधिः शान्तः श्रीजयसिंहसूरिरभवद् निःसङ्गचूडामणिः ॥ ३ ॥

रत्नाकरादिवैतस्मात् शिष्यरत्नं बभूव तत् । स वागीशोऽपि नो मन्ये यद्गुणग्रहणे प्रभुः ॥ ४ ॥

श्रीवीरदेवविबुधैः सन्मन्त्राद्यतिशयप्रवरतोयैः । द्रुम इव यः संसिक्तः कस्तद्गुणकीर्तने विबुधः ? ॥ ५ ॥

तथाहि—

आज्ञा यस्य नरेश्वरैरपि शिरस्यारोप्यते सादरं यं दृष्ट्वापि मुदं व्रजन्ति परमं प्रायोऽतिदुष्टा अपि ।
यद्वक्त्राम्बुधिनिर्यदुज्ज्वलवचःपीयूषपानोद्यतैर्गीर्वाणैरपि दुग्धसिन्धुमथने तृप्तिर्न लेभे जनैः ॥ ६ ॥

कृत्वा येन तपः सुदुश्चरतरं विश्वं प्रबोध्य प्रभोस्तीर्थं सर्वविदः प्रभावितमिदं तैस्तैः स्वकीयैर्गुणैः ।
शुक्लीकुर्वदशेषविश्वकुहरं भव्यैर्भि""""स्पृहं यस्याशास्वनिवारितं विचरति श्वेतांशगौरं यशः ॥ ७ ॥

यमुनाप्रवाहविमलश्रीमन्मुनिचन्द्रसूरिसंपर्कात् । उ/ रसरितेव सकलं पवित्रितं येन भुवनतलम् ॥ ८ ॥

भिलषता यतितव्यमिति प्रवृत्त्यादिलक्षणा क्रियैव कर्तव्या, इत्येवमत्र व्याख्याने एवकारः स्वस्थान एव योज्यते। एवं च सति ज्ञातेऽप्यर्थे क्रियैव साध्या। ततो ज्ञानं क्रियोपकरणत्वाद् गौणम्। इत्यतः सकलस्यापि पुरुषार्थस्य क्रियैव प्रधानं कारणम्। इत्ययमेवोपदेशः स नयमस्तावात् क्रियानयः। शेषं पूर्ववत्। अयमपि स्वपक्षसिद्धये युक्तीरुद्भावयति–ननु क्रियैव प्रधानं पुरुषार्थसिद्धिकारणम्, प्रयत्नादिक्रियालक्षणविरहेण ज्ञानवतोऽप्यभिलाषितार्थसंप्राप्त्यदर्शनात्; तथा चान्यैरप्युक्तम्—

"क्रियैव फलदा पुंसां न ज्ञानं फलदं मतम्। यतः स्त्रीभक्ष्यभोगज्ञो न ज्ञानात् सुखितो भवेत् ॥ १ ॥"

तथाऽऽगमेऽपि तीर्थकर-गणधरैः क्रियाविकलानां ज्ञानं निष्फलमेवोक्तम्;—

सुबहुं पि सुयमहीयं किं काही चरणविप्पमुक्कस्स। अंधस्स जह पलित्ता दीवसयसहस्सकोडी वि ॥ १ ॥

नाणं सविसयनिययं न नाणमेत्तेण कज्जनिप्फत्ती। मग्गण्णू दिट्ठंतो होइ सचेट्ठो अचेट्ठो य ॥ २ ॥

जाणंतो वि य तरीउं काइयजोगं न जुंजइ जो उ। सो वुड्डइ सोएणं एवं नाणी चरणहीणो ॥ ३ ॥

जहा खरो चंदणभारवाही'

इत्यादि। एवं तावत् क्षायोपशमिकीं चरणक्रियामङ्गीकृत्य प्राधान्यमुक्तम्। अथ क्षायिकीमप्याश्रित्य तस्या एव प्राधान्यमत्रेयम्; यस्मादर्हतोऽपि भगवतः समुत्पन्नकेवलज्ञानस्यापि न तावद् मुक्त्यवाप्तिः संपद्यते, यावदाखिलकर्मेन्धनानलज्वालाकलापकल्पा शैलेश्यवस्थायां सर्वसंवररूपचारित्रक्रिया न प्राप्नोति। तस्मात् क्रियैव प्रधानं सर्वपुरुषार्थसिद्धिकारणम्। प्रयोगश्चात्र—यद् यत्समनन्तरभावि तत् तत्कारणम्, यथाऽन्त्यावस्थाप्राप्तपृथिव्यादिसामग्र्यनन्तरभावी तत्कारणोऽङ्कुरः। क्रियानन्तरभाविनी च सकल-पुरुषार्थसिद्धिरिति। ततश्चैष चतुर्विधसामायिके देशविरति-सर्वविरतिसामायिके एव मन्यते, क्रियारूपत्वेन प्रधानमुक्तिकारणत्वात्; सम्यक्त्व-श्रुतसामायिके तु तदुपकारित्वमात्रतो गौणत्वाद् नेच्छतीति ॥ ३५९२ ॥

ननु पक्षद्वयेऽपि युक्तिदर्शनात् किमिह तत्त्वम्? इति न जानीम इति शिष्यजनसंमोहमाशङ्क्य ज्ञान-क्रियानयमतदर्शनानन्तरं

---

१ सुबह्वपि श्रुतमधीतं किं करिष्यति चरणविप्रमुक्तस्य। अन्धस्य यथा प्रदीप्ता दीपशतसहस्रकोटिरपि ॥ १ ॥
ज्ञानं स्वविषयानियतं न ज्ञानमात्रेण कार्यनिष्पत्तिः। मार्गज्ञो दृष्टान्तो भवति सचेष्टोऽचेष्टश्च ॥ २ ॥
जानन्नपि च तरीतुं कायिकयोगं न युनक्ति यस्तु। स ब्रुडति श्रोतसा एवं ज्ञानी चरणहीनः ॥ ३ ॥
यथा खरश्चन्दनभारवाही।

विस्फूर्जत्कलिकालदुस्तरतमःसंतानलुप्तस्थितिः सूर्येणेव विवेकभूधराशिरस्यासाद्य येनोदयम् ।
सम्यग्ज्ञानकरैश्चिरन्तनमुनिक्षुण्णः समुद्द्योतितो मार्गः सोऽभयदेवसूरिरभवत् तेभ्यः प्रसिद्धो भुवि ॥ ९ ॥
तच्छिष्यलवप्रायैरगीतार्थैरपि शिष्टजनतुष्ट्यै । श्रीहेमचन्द्रसूरिभिरियमनुरचिताप्रकृतवृत्तिः ॥१०॥
शरदां च पञ्चसप्तत्यधिकैकादशशतेष्वतीतेषु । कार्तिकसितपञ्चम्यां श्रीमज्जयसिंहनृपराज्ये ॥ ११ ॥



स्थितपक्षमाह निर्युक्तिकारः—

सव्वेसिं पि नयाणं बहुविहवत्तव्वयं निसामित्ता । तं सव्वनयविसुद्धं जं चरण-गुणट्ठिओ साहू ॥ ३५९३ ॥

न केवलमनन्तरोक्तनयद्वयस्य, किं तर्हि ? सर्वेषामपि स्वतन्त्रसामान्यविशेषवादिनां नाम-स्थापनादिवादिनां वा नयानां वक्तव्यतां परस्परविरोधिनीं प्रोक्तां निशम्य श्रुत्वा तदिह सर्वनयविशुद्धं सर्वनयसंमतं सर्वरूपतया ग्राह्यं यत्, किम् ? इत्याह—यच्चरण-गुणस्थितः साधुश्चरणं चारित्रक्रिया, गुणोऽत्र ज्ञानम्, तयोः स्थितश्चरण-गुणस्थितः ज्ञान-क्रियाभ्यां द्वाभ्यामपि युक्त एव साधुर्मुक्तिसाधको न पुनरेकेन केनचिदिति भावः ; तथाहि यत् तावज्ज्ञानवादिना प्रोक्तम्—'यद् येन विना न भवति तत् तन्निवन्धनमेव' इत्यादि, तत्र तदविनाभावित्वलक्षणो हेतुरसिद्ध एव, ज्ञानमात्राविनाभाविन्याः पुरुषार्थसिद्धेः क्वाप्यदर्शनात् । न हि दाह पाकाद्यर्थिनां दहनादिपरिज्ञानमात्रादेव तत्सिद्धिर्भवति, किन्तु तदानयन-संधुक्षण-ज्वलनादिक्रियानुष्ठानादपि । न च तीर्थकरोऽपि केवलज्ञानमात्राद् मुक्तिं साधयति, किन्तु यथाख्यातचारित्रक्रियातोऽपि । तस्मात् सर्वत्र ज्ञान-क्रियाऽविनाभाविन्येव पुरुषार्थसिद्धिः । ततस्तदविनाभावित्वलक्षणो हेतुर्यथा पुरुषार्थसिद्धेर्ज्ञाननिवन्धनत्वं साधयति तथा क्रियानिवन्धनत्वमपि, तामप्यन्तरेण तदसिद्धेः, इत्यनैकान्तिकोऽप्यसाविति । एवं क्रियावादिना 'यद् यत्समनन्तरभावि तत् तत्कारणम्' इत्यादिप्रयोगे यस्तदनन्तरभावित्वलक्षणो हेतुरुक्तः, सोऽप्यसिद्धः, अनैकान्तिकश्च; तथाहि—स्त्रीभक्ष्यभोगादिक्रियाकालेऽपि ज्ञानमप्यस्ति, तदन्तरेण तत्र प्रवृत्तेरेवायोगात्, एवं शैलेश्यवस्थायां सर्वसंवररूपक्रियाकालेऽपि केवलज्ञानमस्ति, तदन्तरेण तस्या एवाप्राप्तेः । तस्मात् केवलक्रियानन्तरभावित्वेन पुरुषार्थस्य क्वाप्यसिद्धेरसिद्धो हेतुः । यथा च तदनन्तरभावित्वलक्षणो हेतुः क्रियाकारणत्वं मुक्त्यादिपुरुषार्थस्य साधयति तथा ज्ञानकारणत्वमपि, तदप्यन्तरेण तस्य कदाचिदप्यभावादित्यनैकान्तिकताप्यस्येति । तस्माज्ज्ञान-क्रियोभयसाध्यैव मुक्त्यादिसिद्धिः; उक्तं च प्रागिहापि—

'हयं नाणं कियाहीणं हया अन्नाणिणो किया । पासंतो पंगुलो दड्ढो धावमाणो य अंधओ ॥ १ ॥
संजोगसिद्धीइ फलं वयंति न हु एगचक्केण रहो पयाइ । अंधो य पंगू य वणे समेच्चा ते संपउत्ता नगरं पविट्ठा ॥२॥

---

१ सर्वेषामपि नयानां बहुविधवक्तव्यतां निशम्य । तत् सर्वनयविशुद्धं यच्चरण-गुणास्थितः साधुः ॥ ३५९३ ॥
२ हतं ज्ञानं क्रियाहीनं हताऽज्ञानस्य क्रिया । पश्यन् पङ्गुर्दग्धो धावंश्चान्धकः ॥ १ ॥
संयोगसिद्ध्या फलं वदन्ति न खल्वेकचक्रेण रथः प्रयाति । अन्धश्च पङ्गुश्च वने समेत्य तौ सम्प्रयुक्तौ नगरं प्रविष्टौ ॥ २ ॥

इत्यादि । अत्राह—नन्वेवं ज्ञान-क्रिययोर्मुक्त्यवापिका शक्तिः प्रत्येकमसती समुदायेऽपि कथं स्यात् ? । न हि यद् येषु प्रत्येकं नास्ति तत् तेषु समुदितेष्वपि भवति, यथा प्रत्येकमसत् समुदितेष्वपि सिकताकणेषु तैलम्, प्रत्येकमसती च ज्ञान-क्रिययोर्मुक्त्यवापिका शक्तिः, तथा चेहापि प्रागुक्तम्—

'[1]पत्तेयमभावाओ निव्वाणं समुदिआसु वि न जुत्तं । नाण-किरियासु वोत्तुं सिकयासमुदायतेल्लं व ॥ १ ॥'

उच्यते—स्यादेतद् यदि सर्वथा प्रत्येकं तयोर्मुक्त्यनुपकारिताऽभिधीयते । यदा तु तयोः प्रत्येकं देशोपकारिता, समुदाये तु संपूर्णोपकारिता, तदा न कश्चिद् दोषः । तथाचेहापि प्रागिदमप्युक्तम्—

'[2]वीसुं न सव्वह च्चिय सिकयातेल्लं व साहणाभावो । देसोवगारिया जा सा समवायम्मि संपुन्ना ॥ १ ॥

अतः स्थितमिदम्—ज्ञान-क्रिये समुदिते एव मुक्तिकारणम्, न प्रत्येकमिति । तद्युक्तश्च भावसाधुः सर्वैरपि नयैरिष्यत एव । तस्माद् व्यवस्थितमिदम्—तत् सर्वनयविशुद्धं यच्चरण-गुणास्थितः साधुरिति ॥ ३५९३ ॥

अमुमेव गाथाद्वयार्थं कश्चिद् भाष्यकार एवाह—

[3]नाओ त्ति परिच्छिन्नो गेज्झो जो कज्जसाहओ होइ । अग्गेज्झोऽणुवगारी अत्थो दव्वं गुणो वावि ॥ ३५९४ ॥

जइअव्वं ति पयत्तो कज्जो गेज्झम्मि गिण्हियव्वे त्ति । अगिज्झोऽणादेओऽवहारणे चेवसद्दोऽयं ॥ ३५९५ ॥

इति जो त्ति एवमिह जो उवएसो जाणणा नओ सो त्ति । सो पुण सम्मद्दंसणसुयसामइयं ति बोद्धव्वो ॥३५९६॥

तिस्रोऽपि गतार्थाः । नवरं 'नायम्मि" इत्यस्य व्याख्या ज्ञात इति परिच्छिन्नः । 'गिण्हियव्वे' इत्यादेर्व्याख्यानं 'गेज्झो' इत्यादि । 'अर्थः' इत्यस्य विवरणं 'द्रव्यं गुणो वा' इति । 'जाणणा नओ सो ति' ज्ञाननयः स इत्यर्थः । अस्योपलक्षणत्वाद् दर्शित-

1 प्रत्येकमभावाद् निर्वाणं समुदितयोरपि न युक्तम् । ज्ञानं-क्रिययोर्वक्तुं सिकतासमुदायतैलमिव ॥ १ ॥

2 विष्वग् न सर्वथैव सिकतातैलमिव साधनाभावः । देशोपकारिता या सा समवाये संपूर्णा ॥ १ ॥

3 ज्ञात इति परिच्छिन्नो ग्राह्यो यः कार्यसाधको भवति । अग्राह्योऽनुपकारी अर्थो द्रव्यं गुणो वापि ॥ ३५९४ ॥
यतितव्यमिति प्रयत्नः कार्यो ग्राह्ये ग्रहीतव्य इति । अग्राह्योऽनादेयोऽवधारणे चैवशब्दोऽयम् ॥ ३५९५ ॥
इति य इत्येवमिह य उपदेशो ज्ञाननयः स इति । स पुनः सम्यक्त्वदर्शनश्रुतसामायिकमिति बोद्धव्यः ॥ ३५९६ ॥

व्याख्यासंबन्धेन क्रियानयोऽपि योजनीयः, केवलं देश-सर्वविरतिसामायिकरूपोऽसावित्यादि सर्वं प्रोक्तं स्वयमेवानुसरणीयमिति ॥ ३५९४ ॥ ३५९५ ॥ ३५९६ ॥

'सव्वेसिं पि नयाणं' इत्यस्य व्याख्यामाह—

सव्वे त्ति मूल-साह-प्पसाहभेया विसद्दओ तेसिं । किं पुण मूलनयाणं अहवा किमुताविसुद्धाणं ? ॥३५९७॥

'सव्वेसिं पि' इति कोऽर्थः ? इत्याह—'मूल त्ति' मूलनयानां नैगमादिनयानामपिशब्दात् शाखा-प्रशाखारूपाः । 'तेसिं ति' तेषामेव मूलनयानामुत्तरभेदा गृह्यन्ते तेषा सर्वेषामपि, किं पुनः केवलानां मूलनयानाम्, अथवा, किमुताविशुद्धानां द्रव्यार्थिकादीनामिति ॥ ३५९७ ॥

'बहुविहवत्तव्ययं' इत्यादेर्व्याख्यानमाह—

सामन्नविसेसोभयभेया वत्तव्वया बहुविह त्तिं । अहवा नामाईणं इच्छइ को कं नओ साहुं ॥ ३५९८ ॥

सोउं सद्दहिऊण य नाऊण य तं जिणोवएसेणं । तं सव्वनयाविसुद्धं ति सव्वनयसम्मयं जं तु ॥ ३५९९ ॥

चरणगुणसुट्ठिओ होइ साहू एस किरियानओ नाम । चरणगुणसुट्ठियं जं चरणनया बिंति साहु त्ति ॥ ३६०० ॥

सो जेण भावसाहू सव्वनया जं च भावमिच्छंति । नाण-किरियानओभयजुत्तो य जओ सया साहू ॥३६०१॥

एता अपि गतार्थाः, नवरं 'अहवा नामाईणमित्यादि' अथवा, नाम स्थापना-द्रव्य-भावसाधूनां मध्ये को नयः कं साधुमिच्छति ? इत्यादिकां वक्तव्यतां श्रुत्वा श्रद्धाय ज्ञात्वा चावबुध्येत्यर्थः । 'एस किरियानओ नाम त्ति' एष ज्ञानाविनाभूतक्रियालक्षणो नयोनीतिपक्षः स्थितपक्ष इत्यर्थः, यस्माच्चरणनयाश्चरणवृत्तयः परमगुनयश्चरणगुणसुस्थितमेव साधुं ब्रुवते, नापरं, स च येन यस्माद्

१ सर्वे इति मूलशाखा-प्रशाखाभेदा अपिशब्दतस्तेषाम् । किं पुनर्मूलनयानामथवा किमुताविशुद्धानाम् ? ॥ ३५९७ ॥

२ सामान्यविशेषोभयभेदा वक्तव्यता बहुविधेति । अथवा नामादीनामिच्छति कः कं नयः साधुम् ॥ ३५९८ ॥

श्रुत्वा श्रद्धाय च ज्ञात्वा च तज्जिनोपदेशेन । तत् सर्वनयविशुद्धमिति सर्वनयसंमतं यत्तु ॥ ३५९९ ॥

चरणगुणसुस्थितो भवति साधुरेष क्रियानयो नाम । चरणगुणसुस्थितं यच्चरणनया ब्रुवन्ति साधुरिति ॥ ३६०० ॥

स येन भावसाधुः सर्वनया यच्च भावमिच्छन्ति । ज्ञान-क्रियानयोभययुक्तश्च यतः सदा साधुः ॥ ३६०१ ॥

तो भावु च्चिय वत्थुं विसेसियमभिण्णलिंग-वयणं पि । बहुपज्जायं पि मयं सद्दत्थवसेण सद्दस्स ॥ ५० ॥
जं जं सण्णं भासइ तं तं चिय समभिरोहए जम्हा । सण्णंतरत्थविमुहो तओ तओ समभिरूढो त्ति ॥ ५१ ॥
दव्वं पज्जाओ वा वत्थुं वयणंतराभिधेयं जं । न तदन्नवत्थुभावं संकमए संकरो मा भू ॥ ५२ ॥
न हि सद्दंतरवच्चं वत्थुं सद्दंतरत्थतामेइ । संसय-विवज्जए-गत्त-संकराइप्पसंगाओ ॥ ५३ ॥
घड-कुंडसद्दत्थाणं जुत्तो भेओऽभिहाणभेआओ । घड-पडसद्दत्थाण व तओ न पज्जायवयणं ति ॥ ५४ ॥
धणिभेयाओ भेओऽणुमओ जइ लिंग-वयणभिन्नाणं । घड-पडवच्चाणं पिव घड-कुडवच्चाण किमणिट्ठो ? ॥५५॥
आगासे वसइ त्ति य भणिए भणइ किह अन्नमन्नम्मि । मोत्तूणायसहावं वसेज्ज वत्थुं विहम्मम्मि ? ॥ ५६ ॥
वत्थुं वसइ सहावे सत्ताओ चेयणा व जीवम्मि । न विलक्खणत्ताओ भिन्ने छायातवे चेव ॥ ५७ ॥
माणं पमाणमिट्ठं नाणसहावो स जीवओऽणन्नो । कह पत्थयाइभावं वएज्ज मुत्ताइरूवं सो ? ॥ ५८ ॥
न हि पत्थाइ पमाणं घडो व्व भुवि चेयणाइविरहाओ । केवलमिव तन्नाणं पमाणमिट्ठं परिच्छेओ ॥ ५९ ॥
पत्थादओ वि तक्कारणं ति माणं मई न तं तेसु । जमसंतेसु वि बुद्धी कासइ संतेसु वि न बुद्धी ॥ ६० ॥
तक्कारणं ति वा जइ पमाणसिद्धं तओ पमेयं पि । सव्वं पमाणमेवं किमप्पमाणं पमाणं वा ? ॥ ६१ ॥
देसी चेव य देसो नो वत्थुं वा न वत्थुणो भिन्नो । भिन्नो व न तस्स तओ तस्स व जइ तो न सो भिन्नो॥६२॥
एत्तो चेव समाणाहिगरणया जुज्जए पयाणं पि । नीलुप्पलाइयाणं न रायपुरिसाइसंसग्गो ॥ ६३ ॥
घडकारविवक्खाए कत्तुरणत्थंतरं जओ किरिया । न तदत्थंतरभूए समवाओ तो मओ तीसे ॥ ६४ ॥
कुंभम्मि वत्थुपज्जायसंकराइप्पसंगदोसाओ । जो जेण जं व कुरुए तेणाभिन्नं तयं सव्वं ॥ ६५ ॥

'कुंभत्था' ।

भावसाधुरिह गृह्यते । सर्वनयाश्च यस्माद् भावसाधुमिच्छन्ति, ज्ञान-क्रियानयोभययुक्तश्च यतः सर्वदैव भावसाधुरुच्यते । तस्माज्ज्ञान-क्रियासुस्थितः साधुरित्ययं सम्यक्पक्ष इति ॥ ३५९८ ॥ ३५९९ ॥ ३६०० ॥ ३६०१ ॥

अथ प्रकृतोपसंहारार्थमात्मन औद्धत्यपरिहारार्थं च श्रीजिनभद्रगणिक्षमाश्रमणपूज्याः प्राहुः—

इय[1] परिसमापियमियं सामाइयमत्थओ समासेण । वित्थरओ केवलिणो पुव्वविओ वा पहासंति ॥ ३६०२ ॥

इत्युक्तप्रकारेण सर्वेणापि भाष्येणावश्यकग्रन्थस्य प्रथममध्ययनं सामायिकं समासेन संक्षेपेणार्थतः परिसमापितं संक्षेपेणास्यार्थः कथितः, संक्षेपभणनमात्रशक्तिकत्वाद् मम । विस्तरतस्त्वशेषविस्तरेणातिगम्भीरार्थत्वादिदं केवलिनः पूर्वविदो वा प्रभाषन्त इति ॥३६०२॥

अथैतद् भाष्यं श्रुत्वा विनेयानां यदिहैव फलं भवति तदुपदर्शनार्थमाह—

सव्वाणुओगमूलं[2] भासं सामाइअस्स सोऊण । होइ परिकम्मिअमई जोग्गो सेसाणुओगस्स ॥ ३६०३ ॥

इदं च सर्वानुयोगमूलं सर्वानुयोगकारणं सामायिकस्य भाष्यं विवरणं श्रुत्वा निशम्यैतत्परिकर्मितमतिः सन् विनेयः शेषशास्त्रानुयोगस्य योग्यः कुशलः क्षमो भवति ॥ इति चत्वारिंशद्गाथार्थः ॥ ३६०३ ॥

पूर्वं चाध्यवसानपर्यन्तव्याख्यातगाथानां ॥२८०३॥ उभयं व्याख्यातभाष्यगाथानां ॥३६०३॥ शेषाणि तु चतुर्दशाधिकसप्तशतान्यतिदेशेनैव गतानि, न तु व्याख्यातानि, इति नेह गणितानि ॥

## ॥ इत्येषा शिष्यहिता नाम विशेषावश्यकवृत्तिः समाप्ता ॥

१ इति परिसमाप्तमिदं सामायिकमर्थतः समासेन । विस्तरतः केवलिनः पूर्वविदो वा प्रभाषन्ते ॥ ३६०२ ॥
२ सर्वानुयोगमूलं भाष्यं सामायिकस्य श्रुत्वा । भवति परिकर्मितमतिर्योग्यः शेषानुयोगस्य ॥ ३६०३ ॥

न समेन्ति न य समेया सम्मत्तं नेव वत्थुणो गमगा । वत्थुविघायाय नया विरोहओ वेरिणो चेव ॥ २ ॥
सव्वे समयंति सम्मं चेगवसाओ नया विरुद्धा वि । निच्च-ववहारिणो इव राओदासीणवसवत्ती ॥ ३ ॥
देसगमगत्तणाओ गमग च्चिय वत्थुणो सुयाइ व्व । सव्वे समत्तगमगा केवलमिव सम्मभावम्मि ॥ ४ ॥
जमणेगधम्मणो वत्थुओ तदंसे च सव्वपडिवत्ती । अन्ध व्व गयावयवे तो मिच्छद्दिट्ठिणो वीसुं ॥ ५ ॥
जं पुण समत्तपज्जायवत्थुगमग त्ति समुदिया तेणं । सम्मत्तं चक्खुमओ सव्वगयावयवगहणे व्व ॥ ६ ॥
न समत्तवत्थुगमगा वीसुं रयणावलीए मणउ व्व । सहिया समत्तगमगा मणओ रयणावलीए व्व ॥ ७ ॥
एवं सविसयसच्चे परविसयपरंमुहतए नाउं । नेएसु न संमुज्झइ न य समयासायणं कुणइ ॥ ८ ॥
अत्थं जो न समिक्खइ निक्खेव-नय-प्पमाणओ विहिणा । तस्साजुत्तं जुत्तं जुत्तमजुत्तं व पडिहाइ ॥ ९ ॥
परसमएगनयमयं तप्पडिवक्खनयओ निवत्तेज्जा । समए व परिग्गहियं परेण जं दोसबुद्धीए ॥ १० ॥

एएहिं दिट्ठिवाए परूवणा सुत्त-अत्थकहणाए ।
इह पुण अणब्भुवगमो अहिगारो तीहिं ओसन्नं ॥ २२७ ॥

पायं संववहारो ववहारंतेहिं तिहिं य जं लोए । तेण परिकम्मणत्थं कालियसुत्ते तदहिगारो ॥ १ ॥

नत्थि नएहिं विहूणं सुत्तं अत्थो य जिणमए किंचि ।
आसज्ज उ सोयारं नए नयविसारओ बूया ॥ २२८ ॥

भासिज्ज वित्थरेण वि नयमयपरिणामणासमत्थम्मि । तदसत्ते परिकम्मणमेगनएणं पिं वा कुज्जा ॥ १ ॥



१ 'धम्मुणो' ।

नाऊण रक्खियज्जो मइ-मेहा-धारणासमग्गं पि । किच्छेण धरेमाणं सुयण्णवं पूसमित्तं पि ॥ १ ॥
अइसयकओवओगो मइ-मेहा-धारणाइपरिहीणे । नाऊणमेस्सपुरिसे खेत्तं-कालाणुरूवं च ॥ २ ॥
साणुग्गहोऽणुओगे वीसुं कासी य सुयविभागेण । सुहगहणाइनिमित्तं नए य सुनिगूहियविभागे ॥ ३ ॥
सविसयमसद्दहंता नयाण तम्मत्तयं च गिण्हंता । मण्णंता य विरोहं अपरिणामातिपरिणामा ॥ ४ ॥
गच्छेज्ज मा हु मिच्छं परिणामा य सुहुमाइबहुभेए । होज्जाऽसत्ते घेत्तुं न कालिए तो नयविभागो ॥ ५ ॥

कालियसुयं च इसिभासियाइं तइओ य सूरपन्नत्ती ।
सव्वो य दिट्ठिवाओ चउत्थओ होइ अणुओगो ॥ २३३ ॥
जं च महाकप्पसुयं जाणिअ सेसाणि छेयसुत्ताणि ।
चरणकरणाणुओगो त्ति कालियत्थे उवगयाणि ॥ २३४ ॥

एवं विहियपुहत्तेहिं रक्खियज्जेहिं पूसमित्तम्मि ठविए । गणिम्मि[1] किर गोट्ठमाहिलो पडिनिवेसेण ॥ १ ॥
सो मिच्छत्तोदयओ सत्तमओ निण्हवो समुप्पण्णो । के अन्ने छ भणिए पसंगओ निण्हउप्पत्ती ॥ २ ॥
अहवा चोएइ नयाणुओगनिण्हवणओ कहं गुरवो । न हि निण्हेव त्ति, भण्णइ जओ न जंपंति नत्थि त्ति ॥३॥
न य मिच्छभावणाए वयंति[2] जो पुण पयं पि निण्हवइ । मिच्छाभिनिवेसाओ स निण्हवो बहुरयाइ व्व ॥ ४ ॥

बहुरय पएस अव्वत्त सामुच्छा दुग तिग अबद्धिआ चेव ।
एएसिं निग्गमणं वोच्छामि अहाणुपुव्वीए ॥ २३५ ॥

१ 'गणम्मि' । २ 'पदय त्ति' ।

नमः श्रीमदर्हद्भ्यः। इह गम्भीरापारजन्म-जरा-मरणसलिलसंचयसंपूर्णे, अनवरतभ्राम्यन्महामोहावर्तभीमे, विविधविस्रोतसिकावेलाव्यतिकरदुरतिक्रमे, निःसंख्यकुविकल्पकल्लोलमालाकुले, प्रसरदज्ञानमहामेघदुर्दिनान्धकारानिकुरम्बभीषणे, अनेकापद्विद्युन्निपातसंपादितमहाभये, राग-द्वेषदुर्वातसंततिसंजनितहृदयोत्कम्पे, अविश्रान्तसंज्वलितक्रोधातिरौद्रवडवामुखे, अमानमानशैलस्खलनदुर्गीकृतगमागमव्यतिकरे, मायावल्लीवितानगुप्यत्सत्त्वसंघाते, विभवसलिलातिदुष्पूरलोभमहोदरे, विविधव्याधिसंबन्धमत्स्य-कच्छपपृष्ठपुच्छच्छटाटोपग्राह-नक्रादिप्रचुरजलचरसंचरणसंजनितविषमसंचारे शारीर-मानसानन्तदुःखप्रदापारसंसारवारांनिधौ मां निमग्नं विकलं निःशरणं दीनमवलोक्य कोऽपि करुणापरीतमानसः सद्गुणगुरुर्महापुरुषः सम्यग्दर्शनातिदृढमहाप्रतिष्ठानमष्टादशशीलाङ्गसहस्रविचित्रफलकनिबिडघटनाविराजितं सम्यग्ज्ञाननिर्यामकान्वितम्, सुसाधुसंसर्गकार्यसूत्रनिविडबन्धनबद्धम्, संवरकीलप्रभग्ननिःशेषास्रवद्वारम्, सूत्रितसामायिक-च्छेदोपस्थानीयभेदभिन्नरम्यभूमिकाद्वयम्, तदुपर्युपकल्पितसाधुसमाचारकरणरणमण्डपम्, समन्ततो गुप्तित्रयप्रखरागुप्तम्, असंख्यशुभाध्यवसायसंनद्धदुर्योधयोधसहस्रदुरवलोकम्, सर्वतो निवेशितसद्गुरूपदेशावल्लिकानिकुरम्बम्, मध्यव्यवस्थापितस्थिरतरातिसरलसद्बोधकूपस्तम्भम्, तद्विन्यस्तप्रकृष्टशुभभावमयमहासितपटम्, तदग्रसमारूढप्रौढसदुपयोगपञ्जरदौवारिकम्, तदवबद्धाप्रमादनगरनिकरसमायुक्तमित्यादिसर्वाङ्गसंपूर्णतया प्रवणं चारित्रमयं महायानपात्रं समर्पयामास, भणितवांश्च—भो महाभाग! समधिरोह त्वमस्मिन् यानपात्रे। समारूढश्चात्र मदीयशिक्षां कुर्वाणस्त्वमक्षेपेणैव दुस्तरमप्यमुं भवजलधिमुत्तीर्य प्राप्स्यसि निःशेषदुःखातिक्रान्तमनन्तसुखमयं शिवरत्नद्वीपम्। ततश्च तद्वचनेनाश्वासितोऽहमारूढस्तत्र। समर्पितं च मम तेन महापुरुषेण सद्भावनामञ्जूषायां प्रक्षिप्य शुभमनोनामकं महारत्नम्। अभिहितं च मां प्रति 'रक्षणीयमिदं प्रयत्नतो भद्र! तिष्ठति ह्यस्मिन् महाप्रभावे शुभमनोरत्ने एतद् यानपात्रं, यथोक्तो निर्यामकः, कूपस्तम्भः, योधाः, पञ्जरदौवारिकं सर्वं क्रमेणावतिष्ठमानमभीष्टदेशं त्वां प्रापयति, एतदभावे तु सर्वमेतत् प्रलयमुपयाति। अत एव तव पृष्ठतः सर्वादरेणैतदपहरणार्थं लगिष्यन्ति ते मोहराजादयो दुष्टतस्कराः।' तेभ्यश्च त्वयेदमित्थं रक्षणीयम्। सद्भावनामञ्जूषाङ्गानां चाग्रतो नानाभङ्गसंभवेऽन्यान्यमूनि च तदङ्गानि तस्यां निवेशनीयानि। इत्यादिशिक्षां प्रयच्छन् मयापि समं दूरदेशं गत्वा ततोऽन्तर्हितः संजातः। श्रुतश्चायं सर्वोऽपि व्यतिकरः प्रमादपरताभिधानां महापल्लीं समाश्रितेन दुष्टतस्कराधिपतिना मोहराजेन। ततो 'रे रे तस्कराधमाः! हता वयम्, यतः केनाप्यस्मद्वैरिणा निजयानपात्रमारोप्यास्मदविषयभूतं शिवरत्नद्वीपं नेतुमारब्धः सोऽमुकसंसारिजीवः, स च न केवलं चलितः, किन्त्वन्यानपि यथादर्शमात्मना सहानेकान् नयन् तिष्ठति,

सक्खं चिय संथारो न कज्जमाणो कउ त्ति मे जम्हा । बेइ ज्जमाली सव्वं न कज्जमाणं कयं तम्हा ॥ १ ॥
जस्सेह कज्जमाणं कयं ति तेणेह विज्जमाणस्स । करणकिरिया पवन्ना तहा य बहुदोसपडिवत्ती ॥ २ ॥
कयमिह न कज्जमाणं सब्भावाओ चिरंतनघडो व्व । अहवा कयं पि कीरइ कीरउ निच्चं न य समत्ती ॥ ३ ॥
किरियावेफल्लं ति य पुव्वमभूयं च दीसए होंतं । दीसइ दीहो य जओ किरियाकालो घडाईणं ॥ ४ ॥
नारंभे च्चिय दीसइ न सिवादद्धाए दीसइ तदंते । तो नहि किरियाकाले जुत्तं कज्जं तदंतम्मि ॥ ५ ॥
थेराण मयं नाकयमभावओ कीरए खपुप्फं व । अह व अकयं पि कीरइ कीरउ तो खरविसाणं पि ॥ ६ ॥
निच्चकिरियाइदोसा[1] नणु तुल्ला असइ कट्ठतरगा वा । पुव्वमभूयं च न ते दीसइ किं खरविसाणं पि ? ॥ ७ ॥
पइसमउप्पन्नाणं परोप्परविलक्खणाण सुबहूणं । दीहो किरियाकालो जइ दीसइ किं त्थ कुंभस्स ? ॥ ८ ॥
अन्नारंभे अन्नं किह दीसउ जह घडो पडारंभे । सिवकादओ न कुंभो किह दीसए सो तदद्धाए ? ॥ ९ ॥
अंते च्चिय आरद्धो जइ दीसइ तम्मि चेव को दोसो ?। अकयं व संपइ गए कह कीरउ कह व एस्सम्मि ?॥१०॥
पइसमयकज्जकोडीनिरवेक्खो घडगयाहिलासो सि । पइसमयकज्जकालं थूलमई ! घडम्मि लाएसि ॥ ११ ॥
को चरमसमयनियमो पढमे च्चिय तो न कीरए कज्जं ? । नाकारणं ति कज्जं तं चेवं तम्मि से समए ॥१२॥
तेणेह कज्जमाणं नियमेण कयं कयं तु भयणिज्जं । किंचिदिह कज्जमाणं उवरयकिरियं च हुज्जाहि ॥ १३ ॥
जं जत्थ नभोदेसे अत्थुव्वइ जत्थ जत्थ समयम्मि । तं तत्थ तत्थमत्थुयमत्थुव्वंतं पि तं चेव ॥ १४ ॥
बहुवत्थत्तरणविभिण्णदेसकिरियाइकज्जकोडीणं । मण्णसि दीहं कालं जइ, संथारस्स किं तस्स ? ॥ १५ ॥
पइसमयकज्जकोडीविमुहो संथारयाहिकयकज्जो । पइसमयकज्जकालं कहं संथारम्मि लाएसि ? ॥ १६ ॥

१ 'दोसे न' ।

तद् यावदेतदस्मदीयसंसारनाटकं सर्वशून्यं न करोति तावद् धावत धावत' इति ब्रुवाणःससंभ्रममुत्थाय महादुष्टो दुर्बुद्धिनामिकां महानावमारूढः। कुवासनाभिधाननौवृन्दादिरूढाशेषतस्करनिकरसहित एव प्रधावितः सत्वरम्। समागतश्च यानपात्रदेशम्। ततः पूत्कृतं पञ्जरदौवारिकेण—भो भोः! समायाता एतास्तास्तस्करचेटिकाः, प्रगुणीभवत यूयम्। तदेतत् श्रुत्वा निर्यामकोत्साहितास्तदुपदिष्टविधिनैव रणमण्डपमारूढाः सज्जीभूताश्चारित्रधर्मनृपतिसैन्येन सह पूर्वोक्तरूपा योधाः। गृहीतानि च सर्वैरपि पञ्जरदौवारिकादिभिर्यथोचितं जीवादितत्त्वचिन्तनादिरूपाणि नाराचनादिप्रहरणानि। मोहराजेनापि निरूपितो मिथ्यादर्शनमन्त्री, उत्साहिताः कषायचरटाः, तर्जितं हास्यादिषट्कलुण्टाकवृन्दम्, पुरस्कृतः पुरुषवेदादिपरिवृतकाममहातस्करः, व्यापारिता निद्रा-तन्द्रादयः, प्रेरिताश्चक्षुर्दर्शनावरणादयः, अग्रेसरीकृतं रोगाद्यसातवेदनीयसैन्यम्, प्रवर्तिताजराऽन्तरायादयः, स्वयमपि च निजतनयरागकेसरिद्वेषगजेन्द्रादितलवर्गान्वितेन मोहचरटाधिपेन वेष्टितं समन्ततोऽनन्तगुणपरिपाट्या यानपात्रम्। प्रहर्तुमारब्धं चाक्षेपेण सर्वैरपि समकालम्। ततश्च सदागमसेनाधिपोत्साहितेन सम्यग्दर्शनमन्त्रिणा समाक्षिप्तो मिथ्यादर्शनमन्त्री, प्रशम-मार्दवा-ऽऽर्जवादिमहायोधैरपि लीलयैव निरुद्धाः क्रोधादिकपायचरटाः, वैराग्य ब्रह्मव्रतादिमहासुभटैरपि दूरमुत्त्रासितो हास्यादिनिजतलवर्गानुगतः काममहालुण्टाकः, अप्रमादमहारथिनापि श्रुतोपयोगोद्यमादिनाराचैस्ताडिताः शिरसि निद्रा-तन्द्रादयः, तदावरणक्षयोपशमवीरेणाप्यधरीकृताश्चक्षुर्दर्शनावरणादयः, सद्धर्मानुष्ठानोद्दीपितसातोदयसैनिकेनापि विलक्षीकृतं रागाद्यसातवेदनीयसैन्यम्, पुण्योदयमहाबलराजपुत्रेणापि निष्प्रभावीकृता जरा-ऽन्तरायादयः। एवमन्येषामप्यनन्तानां चारित्रधर्मराजसैनिकानां निजनिजप्रतिपक्षेण सह महासमरसंमर्दे प्रवृत्ते निजसैन्यं किञ्चिद् नश्यमानमवलोक्य 'रे रे तस्कराधमाः! किमेतदारब्धम्, स्थिरीभूय लगत लगत सर्वात्मना' इति ब्रुवाणो मोहचरटचक्रवर्ती ससैन्य एवारब्धो युगपत् प्रहर्तुम्। केचित् त्वतीव च्छलघातिनो मोहसैनिकाः केनापि पक्षेण समारोहन्ति तद् यानपात्रम्, विप्रतारयितुमुपक्रमन्ते माम्, प्रविशन्ति रणमण्डपस्यान्तः, प्रहरन्ति च्छन्नीभूताः, समाहत्य जर्जरयन्ति सद्भावनामञ्जूपाङ्गानि। ततो मया तस्य परमपुरुषस्योपदेशं श्रुत्वा विरचय्य झटिति निवेशितमावश्यकटिप्पनिकाभिधानं सद्भावनामञ्जूपायां नूतनफलकम्, ततोऽपरमपि शतकविवरणनामकम्, अन्यदप्यनुयोगद्वारवृत्तिसंज्ञितम्, ततोऽपरमप्युपदेशमालासूत्राभिधानम्, अपरं तु तद्वृत्तिनामकम्, अन्यच्च जीवसमासविवरणनामधेयम्, अन्यत्तु भवभावनासूत्रसंज्ञितम्, अपरं तु तद्विवरणनामकम्, अन्यच्च झटिति विरचय्य तस्याः सद्भावनामञ्जूपाया अङ्गभूतं निवेशितं नन्दिटिप्पनकनामधेयं नूतनदृढफलकम्। एतैश्च नूतनफलकैर्निवेशितैर्वज्रमयीव संजाताऽसौ मञ्जूपा तेषां पापानामगम्या। ततस्तैरती-

अहव स जीवो कह नाइमो त्ति को वा विसेसहेऊ ते ? । अह पूरणो त्ति बुद्धी इक्केक्को पूरणो तस्स ॥ ४ ॥
एवं जीवबहुत्तं पइजीवं सव्वहा व तदभावो । इच्छा विवज्जओ वा विसमत्तं सव्वसिद्धी वा ॥ ५ ॥
जं सव्वहा न वीसुं सव्वेसु वि तं न रेणुतेल्लं व । सेसेसु असब्भूओ जीवो कहमंतिमपएसे ? ॥ ६ ॥
अह देसओऽवसेसेसु तो वि किह सव्वहंतिमे जुत्तो । अह तम्मि व जो हेऊ स एव सेसेसु वि समाणो ॥७॥
नेह पएसत्तणओ अन्तो जीवो जहाइमएसो । आह सुयम्मि निसिद्धा सेसा न उन्तिमपएसो ॥ ८ ॥
नणु एगो त्ति निसिद्धो सो वि सुए जइ सुयं पमाणं ते । सुत्ते सव्वपएसा भणिया जीवो न चरिमो त्ति ॥९॥
तंतू पडोवयारी न समत्तपडो य समुदिया ते उ । सव्वे समत्तपडओ सव्वपएसा तहा जीवा ॥ १० ॥
एवंभूयनयमयं देस-पएसा न वत्थुणो भिन्ना । तेणावत्थु त्ति मया कसिणं चिय वत्थुमिट्ठं से ॥ ११ ॥
जइ तं पमाणमेवं कसिणो जीवो अहोवयाराओ । देसे वि सव्वबुद्धी पवज्ज सेसे वि तो जीवं ॥ १२ ॥
जत्तो व तदुवयारो देसूणे न उ पएसमेत्तम्मि । जह तंतूणम्मि पडे पडोवयारो न तंतुम्मि ॥ १३ ॥
इय पण्णविओ जाहे न पवज्जइ सो कओ तओ बज्झो । ततो आमलकप्पाए मित्तसिरिणा सुहोवायं ॥ १४ ॥
भक्खण-पाण-वंजण-वत्थंतावयवलाभिओ भणइ । सावय ! विधम्मिया म्हे कीस त्ति तओ भणइ मड्ढो ॥१५॥
नणु तुज्झं सिद्धंतो पज्जंतावयवमित्तओऽवयवी । जइ सच्चामिणं तो को विहम्मणा मिच्छमिहरा भे ॥ १६ ॥
अंतोऽवयवो न कुणइ समत्तकज्जं ति जइ न सोऽभिमओ । संववहाराईए तो तम्मि कओऽवयविगाहो ? ॥१७॥
अंतिमतंतू न पडो तक्कज्जाकरणओ जहा कुंभो । अह तयभावे वि पडो सो किं न पडो खपुप्फं व ? ॥ १८ ॥
उवलंभव्ववहाराभावाओ नत्थि ते खपुप्फं व । अंतावयवेऽवयवी दिट्ठंताभावओ वावि ॥ १९ ॥

१ 'हा वि त'। २ 'कह वि'।

अहिगो चउ त्ति वा निच्छओ त्ति सामन्नमस्स ववहारो । वच्चइ विणिच्छयत्थं जाइ विसामन्नभावं ति ॥३४॥
भमराइपंचवण्णाइं निच्छए जत्थ वा जणवयस्स । अत्थे विणिच्छओ सो विणिच्छयत्थो त्ति सो गज्झो ॥३५॥
बहुतरउ त्ति य तं चिय गमेइ संते वि सेसए मुयए । संववहारपरतया ववहारो लोगमिच्छंतो ॥ ३६ ॥
उज्जं रुजुं सुयं नाणमुज्जुसुयस्स सोऽयमुज्जुसुओ । सुत्तयइ वा जमुज्जुं वत्थुं तेणुज्जुसुत्तो त्ति ॥ ३७ ॥
पच्चुप्पन्नं संपयमुप्पन्नं जं च जस्स पत्तेयं । तं रुजु तदेव तस्स त्थि उ वक्कमन्नं ति जमसंतं ॥ ३८ ॥
न विगयमणागयं वा भावोऽणुवलंभओ खपुप्फं व । न य निप्पओयणाओ परकीयं परधणमिव त्थि ॥ ३९ ॥
जइ न मयं सामन्नं संववहारोवलद्धिरहियं ति । नणु गयमेस्सं च तहा परक्कमवि निप्फलत्तणओ ॥ ४० ॥
तम्हा निययं संपइकालीणं लिंग-वयणभिन्नं पि । नामाइभेयविहियं पडिवज्जइ वत्थुमुज्जुसुओ ॥ ४१ ॥
सवणं संपइ स तेणं व सप्पए वत्थुं जं तओ सद्दो । तस्सत्थपरिग्गहओ नओ वि सद्दो त्ति हेउ व्व ॥ ४२ ॥
तं चिय रिउसुत्तमयं पच्चुप्पन्नं विसेसिययरं सो । इच्छइ भावघडं चिय जं न उ नामादए तिन्नि ॥ ४३ ॥
नामादओ न कुंभा तक्कज्जाकरणओ पडाइ व्व । पच्चक्खविरोहाओ तल्लिंगाभावओ वा वि ॥ ४४ ॥
जइ विगया-णुप्पन्ना पओयणाभावओ न ते कुंभा । नामादओ किमिट्ठा पओयणाभावओ कुंभा ? ॥ ४५ ॥
अहवा पच्चुप्पन्नो रिउसुत्तस्साविसेसिओ चेव । कुंभो विसेसिययरो सब्भावाईहिं सद्दस्स ॥ ४६ ॥
सब्भावा-सब्भावो-भयप्पिओ स-पररपज्जओ-भयओ । कुंभा-ऽकुंभा-ऽवत्तव्वोभयरूवाइभेओ सो ॥ ४७ ॥
वत्थुमविसेसओ वा जं भिन्नाभिन्नलिंग-वयणं पि । इच्छइ रिउसुत्तनओ विसेसिययरं तयं सद्दो ॥ ४८ ॥
धणिभेयाओ भेओ त्थी-पुंलिङ्गाभिहाणवच्चाणं । पड-कुंभाणं व जओ तेणाभिन्नत्थमिट्ठं तं ॥ ४९ ॥

१ 'राइ पं' । २ 'ण्णाइ नि' ।

अह पडिमाए न दोसो जिणबुद्धीए [1]नमओ विसुद्धस्स । तो जइरूवं नमओ जइबुद्धीए कहं दोसो ? ॥ ११ ॥
अह पडिमं पि न वंदह देवासंकाइ तो न घेत्तव्वा । आहारो-वहि-सेज्जा मा देवकया भवेज्ज ण्हु ॥ १२ ॥
को जाणइ किं भत्तं किमओ किं पाणयं जलं मज्जं । किमलाबुं माणिक्कं किं सप्पो चीवरं हारो ? ॥ १३ ॥
को जाणइ किं सुद्धं किमसुद्धं किं सजीव निज्जीवं । किं भक्खं किमभक्खं पत्तमभक्खं तओ सव्वं ॥ १४ ॥
जइणा वि न संवासो सेओ पमया-कुसीलसंकाए । होज्ज गिही वि जइ त्ति य तस्सासीसा न दायव्वा ॥ १५ ॥
न य सो दिक्खेयव्वो भव्वोऽभव्वो त्ति जेण को मुणइ ? । चोरु त्ति चारिउ त्ति य होइ जओ परदारगामि त्ति ? ॥१६॥
को जाणइ को सीसो को व गुरू तो न तव्विसेसो वि । गज्झो न चोवएसो को जाणइ सच्चमलियं ति ? ॥१७॥
किं बहुणा सव्वं चिय संदिद्धं जिणमयं जिणिंदा य । [3]परलोय-सग्ग-मोक्खा दिक्खाए किमत्थमारंभो ? ॥ १८ ॥
अह संति जिणवरिंदा तव्वयणाओ य सव्वपडिवत्ती । तो तव्वयणाउ च्चिय जइवंदणयं कहं न मयं ? ॥ १९ ॥
जइ जिणमयं पमाणं मुणि त्ति तो बज्झकरणपरिसुद्धं । देवं पि वन्दमाणो विसुद्धभावो विसुद्धो त्ति ॥ २० ॥
जह वा सो जइरूवो दिट्ठो तह कित्तिया सुरा अन्ने । तुब्भेहिं दिट्ठपुव्वा सव्वत्थापच्चओ जं भे ॥ २१ ॥
छउमत्थसमयचज्जा ववहारनयाणुसारिणी सव्वां । तं तह समायरंतो सुज्झइ सव्वो विसुद्धमणो ॥ २२ ॥
संववहारो वि बली जमसुद्धं पि गहियं सुयविहीए । कोवेइ न सव्वण्णू वंदइ य कयाइ छउमत्थं ॥ २३ ॥
निच्छयववहारनओवणीयमिह सासणं जिणिंदाणं । एगयरपरिच्चाओ मिच्छं संकादओ जे य ॥ २४ ॥
जह जिणमयं पवज्जह तो मा ववहारनयमयं मुयह । ववहारपरिच्चाए तित्थुच्छेओ जओऽवस्सं ॥ २५ ॥
इय ते नासग्गाहं मुयंति जाहे बहुं पि भण्णंता । तो संघपरिच्चत्ता रायगहे निवतिणा नाउं ॥ २६ ॥

१ 'माइ न' । २ 'णमओ' । ३ 'लोगस' ।

एवं जह सद्दत्थो संतो भूओ तदन्नहाऽभूओ । तेणेवंभूयनओ सद्दत्थपरो विसेसेणं ॥ ६६ ॥
वंजणमत्थेणत्थं च वंजणेणोभयं विसेसेइ । जह घडसद्दं चेट्ठावया तहा तं पि तेणेव ॥ ६७ ॥
सद्दवसादभिधेयं तप्पच्चयओ पईव-कुम्भो व्व । संसय-विवज्जए-गत्त-संकराइप्पसंगाओ ॥ ६८ ॥
सद्दपरिणामओ जइ घड-कुडसद्दत्थभेयपडिवत्ती । तो निच्चेट्ठो वि कहं घडसद्दत्थो घडोऽभिमओ ? ॥ ६९ ॥
जइ वत्थुसंकमो वा निट्ठो चिट्ठावओ य संकन्ती । तो नहि निच्चिट्ठतया जुत्ता हाणी व समयस्स ॥७०॥
एवं जीवं जीवो संसारी पाणधारणाणुभवो । सिद्धो पुणरजीवो जीवपरिणामरहिउ त्ति ॥ ७१ ॥
जइ देसि च्चिय देसो पत्ता पज्जायवयणपडिवत्ती । पुणरुत्तमणत्थं वत्थुसंकमो वा ण [1]चेट्ठं ते ॥ ७२ ॥
अह भिण्णो तस्स तओ न होइ न य वत्थुसंकमभयाओ । देसी च्चेव य देसो न वा पएसी पएसो त्ति ॥७३॥
नोसद्दो वि समत्तं देसं व भणिज्ज जइ समत्तं तो । तस्स पओगोऽणत्थो अह देसो तो न सो वत्थुं ॥ ७४ ॥
नीलुप्पलाइसद्दाहिगरणमेगं च जं मयं तत्थ । णणु पुणरुत्ता-ऽणत्थय-समयविघाया पुहत्तं वा ॥ ७५ ॥
तो वत्थुसंकराइप्पसंगओ सव्वमेव पडिपुन्नं । वत्थुं सेसमवत्थुं विलक्खणं खरविसाणं व ॥ ७६ ॥
अत्थप्पवरं सद्दोवसज्जणं वत्थुमुज्जुसुत्तंता । सद्दप्पहाणमथोवसज्जणं सेसया बिंति ॥ ७७ ॥
इय नेगमाइसंखेवलक्खणं मूलजाइभेएणं । एवं चिय वित्थरओ विण्णेयं तप्पभेएणं ॥ ७८ ॥

**इक्किक्को य सयविहो सत्त नयसया हवंति एमेव ।**
**अन्नो वि य आएसो पंचेव सया नयाणं तु ॥ २२६ ॥**

जावन्तो वयणपहा तावन्तो वा नया विसद्दाओ । ते चेव य परसमया सम्मत्तं समुदिया सव्वे ॥ १ ॥

1 'चिट्ठ' ।

अहव समाणुप्पत्ती समाणसंताणओ मई होज्जा । को सव्वहा विणासे संताणो किं व सामण्णं? ॥ ७ ॥
संताणिणो न भिण्णो जइ संताणो न नाम संताणो । अह भिण्णो न क्खणिओ खणिओ वा जइ न संताणो ॥ ८ ॥
पुव्वाणुगमे समया हुज्ज न सा सव्वहा विणासम्मि । अह सा न सव्वनासो तेण समं वा नणु खपुप्फं ॥ ९ ॥
अण्णविणासे अण्णं जइ सरिसं होइ होउ तेलुक्कं । तदसंबद्धं व मई सो वि कओ सव्वनासम्मि ? ॥ १० ॥
[1]किह वा सव्वं खणियं विण्णायं जइ मइ सुयाउ त्ति । तदसंखसमयसुत्तत्थगहणपरिणामओ जुत्तं ॥ ११ ॥
न उ पइसमयविणासे जेणिक्किक्कक्खरं चिय पयस्स । संखाईयसामइयं संखिज्जाइं पयं ताइं ॥ १२ ॥
संखिज्जपयं वक्कं तदत्थग्गहणपरिणामओ हुज्जा । सव्वक्खणभंगनाणं तदजुत्तं समयनट्ठस्स ॥ १३ ॥
तित्ती समो किलामो सारिक्ख-विवक्ख-पच्चयाईणि । अज्झयणं झाणं भावणा य का सव्वनासम्मि ? ॥ १४ ॥
अण्णण्णो पइगासं भुत्ता अंते न सो वि को तित्ती ? । गंतादओ वि एवं इय संववहारवुच्छित्ती ॥ १५ ॥
जेणं चिय पइगासं भिन्ना तित्ती अओ चिय विणासो । तित्तीए तित्तस्स य एवं चिय सव्वसंसिद्धी ॥ १६ ॥
पुव्विल्लसव्वनासे वुड्ढी तित्ती य किंनिमित्ता तो ? । अह सा वि तेऽणुवत्तइ सव्वविणासो कहं जुत्तो ? ॥ १७ ॥
दिक्खा व सव्वनासे किमत्थमहवा मई विमोक्खत्थं । सो जइ नासो सव्वस्स तो तओ किं व दिक्खाए ? ॥१८॥
अह निच्चो, न क्खणियं तो सव्वं अह मई ससंताणो । अहउ त्ति तओ दिक्खा निस्संताणस्स मुक्खो त्ति ॥१९॥
छिण्णेणाछिण्णेण व किं संताणेण सव्वनट्ठस्स ? । किंचाभावीभूयस्स स-परसंताणचिंताए ? ॥ २० ॥
सव्वं पयं व खणियं पज्जंते नासदरिसणाउ त्ति । नणु इत्तो च्चिय न खणियमंते नासोवलद्धीओ ॥ २१ ॥
इहराउ च्चिय तओ दीसेज्जंते व्व कीस व समाणो । सव्वविणासे नासो दीसइ अंते न सोऽन्नत्थ ? ॥ २२ ॥

1 'कह' ।

मूढनइयं सुयं कालियं तु न नया समोयरंति इहं।
अपुहत्ते समोयारो नत्थि पुहत्ते समोयारो ॥ २२९ ॥

अविभागत्था मूढा नय त्ति मूढनइयं सुयं तेण। न समोयरंति संता पइपयं जं न भण्णंति ॥ १ ॥
अपुहत्तमेगभावो सुत्ते सुत्ते सवित्थरं जत्थ। भण्णंतणुओगा चरण-धम्म-संखाण-दव्वाणं ॥ २ ॥
तत्थेव नयाणं पि हु पइवत्थुं वित्थरेण सव्वेसिं। देसिंति समोयारं गुरवो, भयणा पुहत्तम्मि ॥ ३ ॥
एगो च्चिय देसिज्जइ जत्थणुओगो न सेसआ तिण्णि। सन्ता वि तं पुहत्तं तत्थ नया पुरिसमासज्ज ॥ ४ ॥

जावं ति अज्जवइरा अपुहत्तं कालियाणुओगस्स।
तेणारेण पुहत्तं कालियसुय दिट्ठिवाए य ॥ २३० ॥

अपुहत्तमासि वइरा जावं ति पुहत्तमारओऽभिहिए। के ते आसि कया वा पसंगओ तेसिमुप्पत्ती ॥ १ ॥

अपुहत्तेऽणुओगो चत्तारि दुवार भासई एगो।
पुहत्ताणुओगकरणे ते अत्थ तओ वि वोच्छिन्ना ॥ २३१ ॥

किं वइरेहिं पुहत्तं कयमह तदणंतरेहिं भणियम्मि। तदणंतरेहिं तदभिहियगाहियसुत्तत्थसारेहिं ॥ १ ॥

देविंदवंदिएहिं महाणुभावेहिं रक्खियज्जेहिं।
जुगमासज्ज विभत्तो अणुओगो तो कओ चउहा[2] ॥ २३२ ॥

---

१ 'विच्छि'। २ इतः परं "माया य रुद्दसोमा पिया य नामेण सोमदत्तु त्ति। भाया य फग्गुरक्खिय तोसलिपुत्ता य आयरिया ॥ १ ॥ तिज्जवण भद्दगुत्ते वीसु पढणं च तस्स पुव्वगयं। पव्वाइओ य भाया रक्खिअखमणेहिं जणओ य ॥ २ ॥" इति निर्युक्तिगाथाद्वयं भाष्यमूलादर्शे।

नइमुल्लुगमुत्तरओ सरए सीयजलमज्जगंगस्स । सूराभितत्तसिरसो सीउसिणवेयणोभयओ ॥ १ ॥
लग्गोऽयमसग्गाहो जुगवं उभयकिरिओवओगो त्ति । जं दो वि समयमेव य सीउसिणवेयणाओ मे ॥ २ ॥
तरतमजोगेणायं गुरुणाऽभिहिओ तुमं न लक्खेसि । समयाइसुहुमयाओ मणोऽतिचलसुहुमयाओ य ॥ ३ ॥
सुहुमासुचरं चित्तं इंदियदेसेण जेण जं कालं । संबज्झइ तं तम्मत्तनाणहेउ त्ति नो तेण ॥ ४ ॥
उवलभए किरियाओ जुगवं दो दूरभिण्णदेसाओ । पाय-सिरोगयसीउण्हवेयणाणुभवरूवाओ ॥ ५ ॥
उवओगमओ जीवो उवउज्जइ जेण जम्मि जं कालं । सो तम्मओवओगो होइ जहिंदोवओगम्मि ॥ ६ ॥
सो तदुवओगमेत्तोवउत्तसत्ति त्ति तस्समं चेव । अत्थंतरोवओगं जाउ कहं केण वंसेण ? ॥ ७ ॥
समयाइसुहुमयाओ मन्नसि जुगवं च भिन्नकालं पि । उप्पलदलसयवेहं व जह व तदलायचक्कं ति ॥ ८ ॥
चित्तं पि नेंदियाइं समेइ सममह य खिप्पचारि त्ति । समयं व सुक्कसक्कुलिदसणे सव्वोवलद्धि त्ति ॥ ९ ॥
सव्वेंदिओवलंभे जइ संचारो मणस्स दुल्लक्खो । एगेंदिओवओगंतरम्मि किह होउ सुलक्खो ? ॥ १० ॥
अन्नविणिउत्तमण्णविणिओगं लहइ जइ मणो तेणं । हत्थिं पि ठियं पुरओ किमण्णचित्तो न लक्खेइ ? ॥११॥
विणिओगन्तरलाभे व किं त्थ नियमेण तो समं चेव । पइवत्थुमसंखेज्जाऽणंता वा जं न विणिओगा ? ॥१२॥
बहु-बहुविहाइगहणे नणूवओगबहुया सुएऽभिहिआ । तमणेगग्गहणं चिय उवओगाणेगया नत्थि ॥ १३ ॥
समयमणेगग्गहणं जइ सीओसिणदुगम्मि को दोसो ?। केण व भणियं दोसो उवओगदुगे वियारोऽयं ॥ १४ ॥
समयमणेगग्गहणे एगाणेगोवओगभेओ को ? । सामण्णमेगजोगो खंधावारोवओगो व्व ॥ १५ ॥
खंधारोऽयं सामण्णमेत्तमेगोवओगया समयं । वइवत्थुविभागो पुण जो सोऽणेगोवओग त्ति ॥ १६ ॥

१ 'यदोसे' । २ 'वओगस' ।

बहुरय जमालिपभवा जीवपएसा य तीसगुत्ताओ ।
अव्वत्ताऽऽसाढाओ सामुच्छेओ असमित्ताओ ॥ २३६ ॥
गंगाओ दोकिरिया छलुगा तेरासिआण उप्पत्ती ।
थेरा य गोट्ठमाहिल पुट्ठमबद्धं परूविंति ॥ २३७ ॥
सावत्थी उसभपुरं सेअम्बिआ मिहिल उल्लुगातीरं ।
पुरमंतरंजि दसेउर रहवीपुरं च नयराइं ॥ २३८ ॥
चोद्दस सोलस वासा चोद्दस-वीसुत्तरा य दुण्णि सया ।
अट्ठावीसा य दुवे पंचेव सया य चोआला ॥ २३९ ॥
पंच सया चुलसीओ छच्चेव सया नवुत्तरा हुंति ।
नाणुप्पत्तीए दुवे उप्पन्ना निव्वुए सेसा ॥ २४० ॥
चोद्दस वासाणि तया जिणेण उप्पाडियस्स नाणस्स ।
तो बहुरयाण दिट्ठी सावत्थीए समुप्पन्ना ॥ २४१ ॥
जिट्ठा सुदंसण जमालिणोज्ज सावत्थीतिंदुगुज्जाणे ।
पंच सया य सहस्सं ढंकेण जमालि मोत्तूणं ॥ २४२ ॥

१ 'भास' । २ 'सपुर' ।

मोरी नउली बिराली वग्घी सिही य उलुगि उवाई।
एआओ विज्जाओ गिण्ह परिव्वायमहणीओ ॥ २५५ ॥

जेऊण पोट्टसालं छलूओ भणइ गुरुमूलमागंतुं। वायम्मि मए विजिओ सुणह जहा सो सहामज्झे ॥ १ ॥
रासिदुगगहियपक्खो तइयं नोजीवरासिमादाय। गिहकोकिलाइपुच्छच्छेओदाहरणओऽभिहिए ॥ २ ॥
भणइ गुरू सुट्ठु कयं किं पुण जेऊण कीस नाभिहियं। अयमवसिद्धंतो णे तइओ नोजीवरासि त्ति ?॥ ३॥
एवं गए वि गंतुं परिसामज्झम्मि भणसु नायं णे। सिद्धंतो किंतु मए बुद्धिं परिभूय सो समिओ ॥ ४ ॥
बहुसो स भण्णमाणो गुरुणा, पडिभणइ किमवसिद्धंतो। जइ नाम जीवदेसो नोजीवो हुज्ज को दोसो ?॥५॥
जं देसनिसेहपरो नोसद्दो जीवदव्वदेसो य। गिहकोइलाइपुच्छं विलक्खणं तेण नोजीवो ॥ ६ ॥
धम्माइदसविहादेसओ य देसो वि जं पिहुं वत्थुं। अपिहुब्भूओ किं पुण च्छिन्नं गिहकोलियापुच्छं ? ॥ ७ ॥
इच्छइ जीवपएसं नोजीवं जं च समभिरूढो वि। तेण त्थि तओ समए घडदेसो नोघडो जह वा ॥ ८ ॥
जइ तं सुयं पमाणं तो रासी तेसु तेसु सुत्तेसु। दो जीवाजीवाणं न सुए नोजीवरासि त्ति ॥ ९ ॥
गिहकोलियाइपुच्छे छिन्नम्मि तदंतरालसंबंधो। सुत्तेऽभिहिओ सुहुमामुत्तत्तणओ तदग्गहणं ॥ १० ॥
गज्झा मुत्तिगयाओ नागासे जहा पईवरस्सीओ। तह जीवलक्खणाइं देहे न तदंतरालम्मि ॥ ११ ॥
देहरहियं न गिण्हइ निरतिसओ नातिसुहुमदेहं व। न य से होइ विबाहा जीवस्स भवन्तराले व्व ॥ १२ ॥
दव्वामुत्तत्ताकयभावादविकारदरिसणाओ य। अविणासकारणाहि य नभसो व्व न खंडसो नासो ॥ १३ ॥
नासे य सव्वनासो जीवस्स नासो य जिणमयच्चाओ। तत्तो य अणिमुक्खो दिक्खावेफल्लदोसा य ॥ १४ ॥

१ 'कोइला'। २ 'कोलियाइ'। ३ 'न्ने व त'।

सो उज्जुसुयनयमयं अमुणंतो न पडिवज्जए जाहे । ताहे समणा केई उवसंपण्णा जिणं चेव ॥ १७ ॥
पियदंसणा वि पइणोऽणुरागओ तम्मयं चिय पवण्णा । ढंकोवहियागणिदड्ढवत्थदेसा तयं भणइ ॥ १८ ॥
सावय ! संघाडी मे तुमए दड्ढ त्ति सो वि य तमाह । नणु तुज्झ डज्झमाणं दड्ढं ति मओ न सिद्धंतो ॥१९॥
दड्ढं न डज्झमाणं जइ विगएऽणागए व का संका । काले तयभावाओ संघाडी कम्मि ते दड्ढा ? ॥ २० ॥
अहवा न डज्झमाणं दड्ढं दाहकिरियासमत्तीए । किरियाऽभावे दड्ढं जइ दड्ढं किं न तेलुक्कं ? ॥ २१ ॥
उज्जुसुयनयमयाओ वीरजिणिंदवयणावलंबीणं । जुज्जेज्ज डज्झमाणं दड्ढं वोत्तुं न तुज्झ त्ति ॥ २२ ॥
समए समए जो जो देसोऽगणिभावमेइ डज्झमाणस्स । तं तम्मि डज्झमाणं दड्ढं पि तमेव तत्थेव ॥ २३ ॥
नियमेण डज्झमाणं दड्ढं दड्ढं तु होइ भयणिज्जं । किंचिदिह डज्झमाणं उवरयदाहं च हुज्जाहि ॥ २४ ॥
इच्छामो संबोहणमज्जो ! पियदंसणादओ ढंकं । वोत्तुं जमालिमेक्कं मोत्तूण गया जिणसगासं ॥ २५ ॥

**सोलस वासाणि तया जिणेण उप्पाडियस्स नाणस्स ।**
**जीवपएसियदिट्ठी तो उसभपुरे समुप्पण्णा ॥ २४३ ॥**
**रायगिहे गुणसिलए वसु चउदसपुव्वि तीसगुत्ते य ।**
**आमलकप्पा नयरी मित्तसिरी कूर-पिउडाई ॥ २४४ ॥**

आयप्पवायपुव्वं अहिज्जमाणस्स तीसगुत्तस्स । नयमयमयाणमाणस्स दिट्ठिमोहो समुप्पण्णो ॥ १ ॥
एगादओ पएसा नो जीवो नो पएसहीणो वि । जं तो स जेण पुण्णो स एव जीवो पएसो त्ति ॥ २ ॥
गुरुणाऽभिहिओ जइ ते पढमपएसो न संमओ जीवो । तो तप्परिणामो च्चिय जीवो कहमंतिमपएसो ? ॥३॥

गुरुणाऽभिहिओ भवओ सुणावणत्थमियमेत्तियं भणियं । जइ सि न सत्तो सोउं तो निग्गिण्हामि णं कल्लं ॥३१॥
बीयदिणे बेइ गुरू नरिंद ! जं मेइणीए सब्भूयं । तं कुत्तियावणे सव्वमत्थि सव्वप्पतीयमियं ॥ ३२ ॥
तं कुत्तियावणसुरो नोजीवं देहि जइ न सो नत्थि । अह भणइ नत्थि तो नत्थि किंव हेउप्पबंधेणं ? ॥ ३३ ॥
तं मग्गिज्जउ मुल्लेण सव्ववत्थूणि किंत्थ कालेण । इय होउ त्ति पवण्णे नरिंद-पइवाइ-परिसाहिं ॥ ३४ ॥

सिरिगुत्तेण छलुगो छम्मासा विकड्ढिऊण वाए जिओ ।
आहरण कुत्तिआवण चोयालसएण पुच्छाणं ॥ २५६ ॥
भू-जल-जलणा-निल-नह-काल-दिसा-ऽऽया मणो य दव्वाइं ।
भण्णंति नवेयाइं सत्तरस गुणा इमे अण्णे ॥ २५७ ॥
रूव-रस-गंध-फासा संखा परिमाणमहमह-पुहुत्तं च ।
संजोग-विभाग-परा-ऽपरत्तबुद्धी सुहं दुक्खं ॥ २५८ ॥
इच्छा दोस-पयत्ता-एत्तो कम्मं तयं च पंचविहं ।
उक्खेवण-वक्खेवण-पसारणाऽऽकुंचणं गमणं ॥ २५९ ॥
सत्ता सामण्णं पिय सामण्णाविसेसया विसेसो य ।
समवाओ य पयत्था छ छत्तीसप्पभेया य ॥ २६० ॥

१ 'मन्नवि' ।

पच्चक्खओऽणुमाणादागमओ वा पसिद्धी अत्थाणं । सव्वप्पमाणविसयाईयं मिच्छत्तमेवं भे ॥ २० ॥
इय चोइय संबुद्धो खामियपडिलाभिओ पुणो विहिणा । गंतुं गुरुपायमूलं ससीसपरिसो पडिक्कंतो ॥ २१ ॥

**चउदस दो वाससया तइआ सिद्धिं गयस्स वीरस्स ।**
**तो अव्वत्तयदिट्ठी सेयंविआए समुप्पण्णा ॥ २४५ ॥**
**सेयविपोलासाढे जोगे तद्दिवसहिययसूले य ।**
**सोहम्मनलिणिगुम्मे रायगिहे मूरियबलभद्दे ॥ २४६ ॥**

गुरुणा देवीभूएण समणरूवेण वाइया सीसा । सब्भावे परिकहिए अव्वत्तयदिट्ठिणो जाया ॥ १ ॥
को जाणइ किं साहू देवो वा तो न वंदणिज्जो त्ति । होज्जाऽसंजयनमणं होज्ज मुसावायममुगो त्ति ॥ २ ॥
थेरवयणं जइ परे संदेहो किं सुरो त्ति साहु त्ति ? । देवे कहं न संका किं सो देवो न देवो त्ति ? ॥ ३ ॥
तेण कहियं ति व मई देवोऽहं रूवदरिसणाओ य । साहु त्ति अहं कहिए समाणरूवम्मि का संका ? ॥ ४ ॥
देवस्स व किं वयणं सच्चं ति न साहुरूवधारिस्स । न परोप्परं पि वन्दह जं जाणन्ता वि जयउ त्ति ॥ ५ ॥
जीवाइपयत्थेसु य सुहुम-व्ववहिय-विगिट्ठरूवेसुं । अच्चंतपरोक्खेसु य किह न जिणाईसु भे संका ? ॥ ६ ॥
तव्वयणाओ व मई नणु तव्वयणे सुसाहुवित्तो त्ति । आलय-विहारसमिओ समणोऽयं वंदणिज्जो त्ति ॥ ७ ॥
जह वा जिणिंदपडिमं जिणगुणरहियं ति जाणमाणा वि । परिणामविसुद्धत्थं वंदह तह किं न साहुं पि ? ॥८॥
हुज्ज नवा साहुत्तं जइरूवे नत्थि चेव पडिमाए । सा कीस वंदणिज्जा जइरूवे कीस पडिसेहो ? ॥ ९ ॥
असंजयजइरूवे पावाणुमई मई न पडिमाए । नणु देवाणुगयाए पडिमाए वि हुज्ज सो दोसो ॥ १० ॥

वाए पराजिओ सो निव्विसओ कारिओ नरिंदेण ।
घोसावियं च नयरे जयइ जिणो वद्धमाणु त्ति ॥ २६४ ॥

तेणाभिनिवेसाओ समइविगप्पियपयत्थमादाय । वइसेसियं पणीयं फाईकयमण्णमण्णेहिं ॥ १ ॥
नामेण रोहगुत्तो गुत्तेण लप्पए स चोलूओ । दव्वाइछप्पयत्थोवएसणाओ छलूउ त्ति ॥ २ ॥

पंच सया चुलसीया तइया सिद्धिं गयस्स वीरस्स ।
तो अबद्धियदिट्ठी दसउरनयरे समुप्पन्ना ॥ २६५ ॥
दसउरनगरुच्छुघरे अज्जरक्खिय पूसमित्ततिगयं च ।
गोट्ठामाहिल नवम-ट्ठमेसु पुच्छा य विंझस्स ॥ २६६ ॥

सोऊण कालधम्मं गुरुणो गच्छम्मि पूसमित्तं च । ठवियं गुरुणा किल गोट्ठमाहिलो मच्छरियभावो ॥१॥
वीसु वसहीए ठिओ छिद्दन्नेसणपरो य स कयाए । विंझस्स सुणइ पासेऽणुभासमाणस्स वक्खाणं ॥ २ ॥
कम्मप्पवायपुव्वे बद्धं पुट्ठं निकाइयं कम्मं । जीवपएसेहिं समं सूईकलावोवमाणाओ ॥ ३ ॥
उव्वट्टणमुक्करो संथोभो खवणमणुभवो वावि । अ[1]णिकाइयम्मि कम्मे निकाइए पायमणुभवणं ॥ ४ ॥
सोउं भणइ सदोसं वक्खाणमिणं ति पावइ जओ भे । मोक्खाभावो जीवप्पएसकम्माविभागाओ ॥ ५ ॥
न हि कम्मं जीवाओ अवेइ अविभागओ पएसो व्व । तदणवगमादमुक्खो जुत्तमिणं तेण वक्खाणं ॥ ६ ॥

पुट्ठो जहा अबद्धो कंचुइणं कंचुओ समन्नेइ ।

१ 'माणो त्ति' । २ 'अनिका' ।

बलभद्देणग्घाया भणंति सावय! वयं तवस्सि त्ति । मा कुरु संकमसंकारुहेसु भणिए भणइ राया ॥ २७ ॥
को जाणइ के तुब्भे किं चोरा चारिआ अभिमर त्ति । संजयरूवच्छण्णा अज्जमहं भे विवाएमि ॥ २८ ॥
नाण-चरियाहिं नज्जइ ससणोऽसमणो व कीस जाणंतो । तं सावय ! संदेहं करेसि भणिए [2]निवो भणइ ॥२९॥
तुब्भं चिय न परुप्परं वीसंभो साहवो त्ति कह मज्झं । नाण-चरियाहिं जायइ चोराण वि किं न ता संति ?॥३०॥
उववत्तिओ भयाओ य पव्वण्णा सव्वभयमसग्गाहे । निवखामियाभिगंतुं गुरुमूलं ते पडिक्कंता ॥ ३१ ॥

वीसा दो वाससया तइया सिद्धिं गयस्स वीरस्स ।
सामुच्छेइयदिट्ठी मिहिलपुरीए समुप्पन्ना ॥ २४७ ॥
मिहिलाए लच्छिघरे महगिरि कोडिन्न आसमित्ते य ।
नेउणियणुप्पवाए रायगिहे खंडरक्खा य ॥ २४८ ॥

नेउणमणुप्पवाए अहिज्जओ वत्थुमासमित्तस्स । एगसमयाइवोच्छेयसुत्तओ नासपडिवत्ती ॥ १ ॥
उप्पायाणंतरओ सव्वं चिय सव्वहा विणासि त्ति । गुरुवयणमेगनयमयमेयं मिच्छं न सव्वमयं ॥ २ ॥
न हि सव्वहा विणासो अद्धापज्जायमेत्तनासम्मि । स-परपज्जायाणंतधम्मणो वत्थुणो जुत्तो ॥ ३ ॥
अह सुत्ताउ त्ति मई [3]सुत्ते नणु सासयं पि निद्दिट्ठं । वत्थुं दव्वट्ठाए असासयं पर्ज्जयट्ठाए ॥ ४ ॥
एत्थ वि न सव्वनासो समयाइविसेसणं जओऽभिहियं । इहरा न सव्वनासे समयाइविसेसणं जुत्तं ॥ ५ ॥
को पढमसमयनारगनासे बितिसमयनारगो नाम ?। न सुरो घडो अभावो व होइ जइ सव्वहा नासो ? ॥६॥

१ 'किरि'। २ 'पुणो'। ३ 'नणु सुत्ते'। ४ 'जवट्ठा'।

कह वादाणे किरियासाफल्लं नेह तव्विघायम्मि । किं पुरिसगारसज्झं तस्सेवासज्झमेगंतो ॥ १३ ॥
असुभो तिव्वाईओ जह परिणामो तदज्जणेऽभिमओ । तह तव्विहो च्चिय सुभो किं नेट्ठो तव्विओगे वि ? ॥१४॥
किमपरिमाणं सत्ती अणागयद्धा अहापरिच्छेओ ? । जइ जावदत्थि सत्ती तो नणु सच्चेय परिमाणं ॥ १५ ॥
सत्ति-किरियाणुमेओ कालो सूरकिरियाणुमेओ व्व । नणु अपरिमाणहाणी आसंसा चेव तदवत्था ॥ १६ ॥
जह न वयभङ्गदोसो मयस्स तह जीवओ वि सेवाए । वयभङ्गनिब्भयाओ पच्चक्खाणाणवत्था य ॥ १७ ॥
इत्तियमित्ती सत्ति त्ति नाइयारो न यावि पच्छित्तं । न य सव्वव्वयनियमो एगेण वि संजयत्त त्ति ॥ १८ ॥
अहवा सव्वाणागयकालग्गहणं मयं अपरिमाणं । तेणापुण्णपइण्णो मओ वि भग्गवओ नाम ॥ १९ ॥
सिद्धो वि संजओ च्चिय सव्वाणागयद्धसंवरधरो त्ति । उत्तरगुण-संवरणाभावो च्चिय सव्वहा चेव ॥ २० ॥
अपरिच्छए वि समाण एव दोसो जओ सुए तेणं । वयभंगभयाउ च्चिय जावज्जीवं ति निद्दिट्ठं ॥ २१ ॥
नासंसा सेविस्सामि किंतु मा मे मयस्स वयभङ्गो । होही, सुरेसु को वा वयावगासो विमुक्कस्स ? ॥ २२ ॥
जो पुणरव्वयभावं मुणमाणोऽवस्सभाविनं भणइ । वयमपरिमाणमेवं पच्चक्खं सो मुसावाई ॥ २३ ॥
भावो पच्चक्खाणं सो जइ मरणपरओ वि तो भग्गं । अह नात्थि न निद्दिस्सइ जावज्जीवं ति तो कीस ? ॥२४॥
जइ अन्नहेव भावो चेयओ वयणमन्नहा माया । किं वाऽभिहिए दोसो भावाओ किं वओ गुरुयं ? ॥ २५ ॥
अन्नत्थ निवडिए वंजणम्मि जो खलु मणोगओ भावो । तं खलु पच्चक्खाणं, न पमाणं वंजणं छलणा ॥ २६ ॥
इय पण्णविओ वि न सो जाहे सद्दहइ पूसमित्तेण । अन्नगणत्थेरेहि य काउं तो संघसमवायं ॥ २७ ॥
आहूय देवयं बेइ जाणमाणो वि पच्चयनिमित्तं ।[1] वच्च जिणिंदं पुच्छसु गयाऽऽगया सा परिकहेइ ॥ २८ ॥

१ 'सुहो'। २ 'याओ'।

नामं ठवणा दविए आएसे चेव निरवसेसं च ।
तह सव्वधत्तासव्वं च भावसव्वं च सत्तमयं ॥ ४०४ ॥

कसिणं दव्वं सव्वं तद्देसो वा विवक्खयाभिमओ । दव्वे तद्देसम्मि य सव्वासव्वे चउब्भंगो ॥ १ ॥
सव्वासव्वे दव्वे देसम्मि य नायमंगुलिदव्वं । संपुण्णं देसोणं पव्वं पव्वेगदेसो य ॥ २ ॥
आएसो उवयारो सो बहुतरए पहाणतरए वा । देसे वि जहा सव्वं भत्तं भुत्तं गओ गामो ॥ ३ ॥
दुविहं तु निरवसेसं सव्वासेसं तदेक्कदेसो य । सव्वासेसं सव्वे अणिमिसनयणा जहा देवा ॥ ४ ॥
तद्देसापरिसेसं सव्वे असुरा जहा असियवण्णा । जह जोइसालया वा सव्वे किर तेउलेस्सागा ॥ ५ ॥
जीवाजीवा सव्वं तं धत्ते तेण सव्वधत्त त्ति । सव्वे वि सव्वधत्तासव्वं जमओ परं णन्नं ॥ ६ ॥
अह दव्वसव्वमेगं दव्वाधारं ति भिन्नमन्नेहिं । एगाणेगाधारोवयारभेएण चादेसं ॥ ७ ॥
भिण्णमसेसं जमिहेगजाइविसयं ति सव्वधत्ताओ । भिन्ना य सव्वधत्ता सव्वाधारो त्ति सव्वेसिं ॥ ८ ॥
कम्मोदयस्सहावो सव्वो असुहो सुहो य ओदइओ । मोहोवसमसहावो सव्वो उवसामिओ भावो ॥ ९ ॥
कम्मक्खयस्सहावो खइओ सव्वो य मीसओ मीसो । अह सव्वदव्वपरिणइरूवो परिणामिओ सव्वो ॥ १० ॥
अहिगयमसेससव्वं विसेसओ सेसयं जहाजोगं । गरहियमवज्जमुत्तं पावं सह तेण सावज्जं ॥ ११ ॥
अहवेह वज्जणिज्जं वज्जं पावं ति सहसकारस्स । दिग्घत्तादेसाओ सह वज्जेणं ति सावज्जं ॥ १२ ॥
जोगो जोयणमायकिरिया समाधाणमायवावारो । जीवेण जुज्जए वा जओ समाहिज्जए सो त्ति ॥ १३ ॥

१ "भिन्न" ।

यिकाध्ययननिर्युक्तिं विशेषत एवातिबहुविचारदुर्विज्ञेयार्थामतिशयोपकारिणीं चावगम्य केवलामृतरसस्यन्दिवाग्विलासैः श्रीमज्जिनभद्रगणिक्षमाश्रमणपूज्यैस्तदर्थव्याख्याऽऽत्मकमेव 'कयपवयणप्पणामो' इत्यादिगाथासमूहस्वरूपं भाष्यमकारि। तस्य च यद्यपि श्रीजिनभद्रगणिक्षमाश्रमणपूज्यैः, श्रीकोट्याचार्यैश्च वृत्तिर्विहिता वर्तते, तथाऽप्यतिगम्भीरवाक्यात्मकत्वात्, किञ्चित्संक्षेपरूपत्वाच्च दुःषमानुभावतः प्रज्ञादिभिरपचीयमानानां किमपिविस्तराभिधानरुचीनां शिष्याणां नाऽसौ तथाविधोपकारं सांप्रतमाधातुं क्षमा; इति विचिन्त्य मुत्कलतरवाक्यप्रबन्धरूपा किमपिविस्तरवती च मन्दमतिनाऽपि मया मन्दतममतिशिष्यावबोधार्थं, श्रुताभ्याससंपादनार्थं च वृत्तिरियमारभ्यते।

तत्र चादौ तावद् विघ्नविनायकोपशमहेतोर्मङ्गलार्थं, शिष्यप्रवृत्तिनिमित्तमभिधेयाद्यभिधानार्थं चाह भाष्यकारः—

[2]कयपवयणप्पणामो वोच्छं चरण-गुणसंगहं सयलं। आवस्सयाणुओगं गुरूवएसाणुसारेणं ॥ १ ॥

व्याख्या— 'वोच्छं' इति क्रिया, वक्ष्येऽभिधास्य इत्यर्थः। कम्? इत्याह— 'आवस्सयाणुओगं ति' अवश्यं कर्तव्यमावश्यकं सामायिकादिरूपम्, क्वचित् 'आवासयाणुओगं' इति पाठः, तत्राऽपि आ समन्ताज्ज्ञानादिगुणैः शून्यं जीवं वासयति तैर्युक्तं करोतीत्यावासकं सामायिकादिरूपमेव, तस्य वक्ष्यमाणशब्दार्थोऽनुयोगो व्याख्यानं विधि-प्रतिषेधाभ्यामर्थप्ररूपणमित्यर्थः, तम्। किंविशिष्टः सन्? इत्याह— 'कयपवयणप्पणामो त्ति' प्रोच्यन्तेऽनेन, अस्मात्, अस्मिन् वा जीवादयः पदार्था इति प्रवचनम्; अथवा प्रशब्दस्याऽव्ययत्वे-नाऽनेकार्थद्योतकत्वात् प्रगतं जीवादिपदार्थव्यापकं, प्रधानं, प्रशस्तम्, आदौ वा वचनं प्रवचनं द्वादशाङ्गं गणिपिटकम्; आदित्वं चाऽस्य विवक्षिततीर्थकरापेक्षया द्रष्टव्यम्, "नमस्तीर्थाय" इति वचनात् तीर्थकरेणाऽपि तन्नमस्करणादिति। अथवा जीवादितत्त्वं प्रवक्तीति प्रवचनमिति व्युत्पत्तेर्द्वादशाङ्गम्, गणिपिटकोपयोगानन्यत्वाद् वा चतुर्विधश्रीश्रमणसङ्घोऽपि प्रवचनमुच्यते। कृतो विहितो यथोक्तप्रवचनस्य प्रणामो नमस्कारो येन मया सोऽहं कृतप्रवचनप्रणामः। किंस्वरूपमावश्यकानुयोगम्? इत्याह— 'चरण-गुणसंगहं ति' चर्यते मुमुक्षुभिरासेव्यत इति चरणम्, अथवा चर्यते गम्यते प्राप्यते भवोदधेः परकूलमनेनेति चरणं व्रत-श्रमणधर्मादयो मूलगुणाः, गुण्यन्ते संख्यायन्त इति गुणाः पिण्डविशुद्ध्याद्युत्तरगुणरूपाः, चरणं च गुणाश्च चरणगुणाः; अथवा चरणशब्देन सर्वतो देशतश्च चारित्रमिह विवक्षितम्, गुणशब्देन तु दर्शनज्ञाने, ततश्च चरणं च गुणौ च चरणगुणाः, तेषां संग्रहीतिः संग्रहश्चरणगुणसंग्रहः, तम्। स च देशतोऽपि भवती-त्याह— सकलं परिपूर्णम् ॥

१ ख 'भव्यानां'। २ कृतप्रवचनप्रणामो वक्ष्ये चरणगुणसंग्रहं सकलम्। आवश्यकानुयोगं गुरूपदेशानुसारेण ॥ १ ॥

तब्भवजीवियमोरालियाण जं तब्भवोववन्नाणं। चक्कहराईणं भोगजीवियं सुरवराणं च ॥ ११ ॥
संजमजीवियमिसीणं असंजमजीवियमविरयाणं। जसजीवियं जसोनामओ जिणाईण लोगम्मि ॥ १२ ॥
नरभवजीवियमहिगयं विसेसओ, सेसयं जहाजोगं। जावज्जीवामि तयं ता पच्चक्खामि सावज्जं ॥ १३ ॥
जावदयं परिमाणे मज्जायाएऽवधारणे चेइ। जावज्जीवं जीवणपरिमाणं जत्तियं मि त्ति ॥ १४ ॥
जावज्जीवमिहारेण मरणमज्जायओ न तं कालं। अवधारणे वि जावज्जीवणमेवेह न ओ परओ ॥ १५ ॥
जावज्जीवं पत्ते जावज्जीवाए लिंगवच्चासो। भावप्पच्चयओ वा जा जावज्जीवया ताए ॥ १६ ॥
जावज्जीवतया इति जावज्जीवाए वण्णलोवाओ। जावज्जीवो जीसे जावज्जीवाहवा सा उ ॥ १७ ॥
का पुण सा संबज्झइ पच्चक्खाणकिरिया तया सव्वं। जावज्जीवाएऽहं पच्चक्खामीति सावज्जं ॥ १८ ॥
जीवणमहवा जीवा जावज्जीवा पुरा व सा नेया। तीए पाययवयणे जावज्जीवाइ तइएयं ॥ १९ ॥
पच्चक्खामि त्ति मओ उत्तमपुरिसेगवयणओ कत्ता। तिण्णि विहा जस्स तओ तिविहो जोगो मओऽहिगओ ॥ २० ॥
तं तिविहं बिइयाए पच्चक्खेयमिह कम्मभावाओ। तिण्णि विहा जस्स तयं तिविहं तिविहेण तेणं ति ॥ २१ ॥
तेणेति साधकतमं करणं तइयाभिहाणओऽभिमयं। केण तिविहेण भणिए मणेण वायाए काएणं ॥ २२ ॥
मणणं व मन्नए वाऽणेण मणो तेण दव्वओ तं च। तज्जोग्गपोग्गलमयं भावमणो भण्णए मंता ॥ २३ ॥
वयणं वागुच्चए वाऽणए त्ति वायत्ति दव्वओ सा य। तज्जोग्गपोग्गला जे गाहिया तप्परिणया भावो ॥ २४ ॥
जीवस्स निवासाओ पोग्गलचयओ य सरणधम्माओ। काओऽवयवसमाहाणओ य दव्व-भावमओ ॥ २५ ॥

१ "तिन्नि"। २ "मणणए"।

श्यकत्वात्, तस्य चेह व्याख्यायमानत्वादावश्यकानुयोगरूपता भाष्यस्य न विहन्यते; इत्यलं विस्तरेण ॥

अस्याश्च गाथायाः प्रथमपादेन विघ्नसंघातविघातार्थं[1] मङ्गलहेतुत्वादिष्टदेवतानमस्कारः कृतः, शेषपादत्रयेण त्वभिधेय-प्रयोजन-संबन्धाभिधानमकारि। तत्रावश्यकानुयोगं वक्ष्य इति ब्रुवताऽऽवश्यकानुयोगोऽस्य शास्त्रस्याऽभिधेय इति साक्षादेवोक्तम्। प्रयोजन-संबन्धौ तु सामर्थ्यादुक्तौ[2], तथाहि—संपूर्णचरण-गुणसंग्राहकत्वं दर्शयता ज्ञान-दर्शन-चारित्राधारताऽस्य शास्त्रस्य दर्शिता भवति, तद्रूपाणि च शास्त्राणि पठन-श्रवणादिभिरनुशील्यमानानि स्वर्गा-ऽपवर्गप्राप्तिनिवन्धनानि भवन्तीति प्रतीतमेव, अतः स्वर्ग-मोक्षफलावाप्तिरस्य शास्त्रस्य प्रयोजनमिति सामर्थ्यादुक्तं भवति। अभिधेया-ऽभिधायकयोश्च वाच्य-वाचकभावलक्षणः संबन्धोऽप्यर्थादभिहितो भवति। अस्यां च संबन्ध-प्रयोजना-ऽभिधेयादिचर्चायां[3] बह्वपि वक्तव्यमस्ति, केवलं बहुषु शास्त्रेष्वतिचर्चितत्वेन सुप्रतीतत्वात्, तथाविधसाध्यशून्यत्वाच्च नेहोच्यते। अनेन चाभिधेयाद्यभिधानेन शास्त्रश्रवणादौ शिष्यप्रवृत्तिः साधिता भवति, अन्यथा हि न श्रवणादियोग्यमिदम्, निरभिधेयत्वात्, काकदन्तपरीक्षावत्; इत्याशङ्क्य नेह कश्चित् प्रवर्तते। उक्तं च—

“ सीसपवित्तिनिमित्त अभिधेयपओयणाइ सबधो। वत्तव्वाइ सत्थे तस्सुन्नत्त सुणिज्जिहरा ” ॥ १ ॥[4]

एवं मङ्गलाद्यभिधाने व्यवस्थापिते कश्चिदाह— नन्वर्हदादय एवेष्टदेवतात्वेन प्रसिद्धाः, तत्किमिति तान् विहाय ग्रन्थकृता प्रवचनस्य नमस्कारः कृतः? इति। अत्रोच्यते— “नमस्तीर्थाय” इति वचनादर्हदादीनामपि प्रवचनमेव नमस्करणीयम्, अपरं चार्हदादयोऽप्यस्मदादिभिः प्रवचनोपदेशेनैव ज्ञायन्ते, तीर्थमपि च चिरकालं प्रवचनावष्टम्भेनैव प्रवर्तते, इत्यादिविवक्षयाऽर्हदादिभ्योऽपि प्रवचनस्य प्रधानत्वात्, ज्ञानादिगुणात्मकत्वाच्चेष्टदेवतात्वं न विरुध्यते। प्रवचननमस्कारं च कुर्वद्भिः पूज्यैः सिद्धान्ततत्त्वावगमरसानुरञ्जितहृदयत्वादात्मनः प्रवचनभक्त्यतिशयः प्रख्यापितो भवति, इत्यलमतिविस्तरेण। मङ्गलादिविचारविषये ह्याक्षेपपरिहारादिकमिहैव ग्रन्थकारोऽपि न्यक्षेण वक्ष्यतीति ॥

तदेवमियं गाथा, सर्वोऽपि चायं ग्रन्थो महामतिभिः पूर्वसूरिभिर्गम्भीरवाक्यप्रबन्धैर्व्युत्पन्नभणितिप्रकारेण च व्याख्यातः। तच्च व्याख्यानमित्थं युक्तमपि “गौराङ्ग्यां गौरत्वपाण्डुरोग-” न्यायेन मतिमान्द्यात् सांप्रतकालीनशिष्याणां न तथाविधार्थावगमहेतुतां प्रतिपद्यते, इत्याकलय्य मन्दमतिनाऽपि मया तेषां मन्दतरमतीनां शिष्याणामर्थावगमनिमित्तममुना ऋजुभणितिप्रकारेणेयं गाथा व्या-

१ ख. ‘व्यपोहार्थं’। २ ख. ‘सामर्थ्यतो गम्यौ’। ३ क. ग ‘चर्याया’।
४ शिष्यप्रवृत्तिनिमित्तमभिधेय-प्रयोजने सम्बन्धः। वक्तव्यानि शास्त्रे तच्छून्यत्वं शृणुयादितरथा ॥ १ ॥

तो कह निष्फत्तीएऽणुमइनिसेहो त्ति सो सविसयम्मि । सामण्णेणन्नत्थ ओ तिविहं तिविहेण को दोसो ? ॥ ४१ ॥
पुत्ताइसंतइनिमित्तामित्तमेक्कारसिं पवण्णस्स । जंपंति केइ गिहिणो दिक्खाभिमुहस्स तिविहं ति ॥ ४२ ॥
जुत्तं संपयमिस्स संवरणं कहमतीयविसयं तु । कहमउणवण्णभेयं कए व न कहं मुसावाओ ? ॥ ४३ ॥
निंदणमईयविसयं न करेमिच्चाइवयणओऽभिहियं । अणुमइसंवरणं वातीतस्स करेमि जं भणियं ॥ ४४ ॥
अहवा तयविरईओ विरमे संपयमईयविसयाओ । संपइसावज्जा इव पवज्जओ को मुसावाओ ? ॥ ४५ ॥
न समणुजाणं ति गए करितमण्णं पि जं सुएऽभिहियं । संभावणेऽविसद्दो तदिहोभयसद्दमज्झत्थो ॥ ४६ ॥
न करेंतं पि त्ति न कारवेंतमवि नावि याणुजाणंतं । न समणुजाणेमि न कारयामि अवि नाणुजाणामि ॥ ४७ ॥
अण्णं पि अप्पयं पिव सहसाकाराइणा पयत्तंतं । इह सव्वो संगहिओ कत्ता-किरियापरंपरओ ॥ ४८ ॥
न करितं वा भणिए अविसद्दा न कयवंतमिच्चाई । समईयमागामिस्सं तह न करिस्सं तमिच्चाई ॥ ४९ ॥
सव्वं पच्चक्खामि त्ति वा तिकालोवसंगहोऽभिमओ । अविसद्दाओ तस्सेव कत्त किरियाभिहाणं ति ॥ ५० ॥
एवं सव्वस्सासेसविसयओऽतीयणागएसुं पि । पावइ सव्वनिसेहो भण्णइ तं नाववायाओ ॥ ५१ ॥
भूयस्स पडिक्कमणाभिहाणओऽणुमइमेत्तमागहियं । जावज्जीवग्गहणा एस्सस्स य मरणमज्जाया ॥ ५२ ॥
अहवा जावज्जीवग्गहणाओऽणागयावरोहोऽयं । संपइकालग्गहणं न करोमिच्चाइगहणाओ ॥ ५३ ॥
भूयस्स पडिक्कमणाइणा य तेणेह सव्वसद्दोऽयं । नेओ विसेसविसओ जओ य सुत्तंतरेऽभिहियं ॥ ५४ ॥
समईयं पडिक्कमए पच्चुप्पण्णं च संवरेइ त्ति । पच्चक्खाइ अणागयमेवं इहइं पि विन्नेयं ॥ ५५ ॥
तस्स त्ति स संबज्झइ जोगो सावज्ज एव जोऽहिगओ । तमिति बिइयाइगारादभिधेए किमिह तस्स त्ति ? ॥ ५६ ॥

निक्षिप्तमनुगम्यत इत्यादि । तथोपक्रमादिद्वाराणामेव प्रयोजनं शास्त्रोपकाररूपं नगरदृष्टान्तेन वाच्यम्, यथा सप्राकारं महानगरं किमप्यकृतद्वारं लोकस्याऽनाश्रयणीयं भवति, एकादिद्वारोपेतमपि दुःखनिर्गमप्रवेशं जायते, चतुर्द्वारोपेतं तु सर्वजनाभिगमनीयं सुखनिर्गमप्रवेशं च संपद्यते; एवं शास्त्रमप्युपक्रमादिचतुर्द्वारयुक्तं सुबोधम्, सुखाचिन्तन-धारणादिसंपन्नं च भवतीति । एवमुपक्रमादिद्वाराणां सुखाववोधादिरूपः शास्त्रोपकारः प्रयोजनमिह वक्ष्यत इति भावः । भेदश्च निरुक्तं च क्रमश्च प्रयोजनं चेति द्वन्द्वं कृत्वा पश्चात् तेषामुपक्रमादिद्वाराणां भेद-निरुक्त-क्रम-प्रयोजनानीत्येवं षष्ठीतत्पुरुषसमासो विधेयः । चः समुच्चये । वाच्यानीति यथायोगमर्थतः सर्वत्र योजितमेव । इति द्वारगाथासंक्षेपार्थः ॥ २ ॥

विस्तरार्थं तु भाष्यकार एव दिदर्शयिषुः "यथोद्देशं निर्देशः" इति कृत्वा प्रेक्षावतां प्रवृत्त्यर्थमावश्यकानुयोगफलप्रतिपादिकां तावद् गाथामाह—

नाण-किरियाहिं मोक्खो तम्मयमावस्सयं जओ तेण । तव्वक्खाणारम्भो कारणओ कज्जसिद्धि त्ति ॥ ३ ॥

व्याख्या—ज्ञानं च सम्यगवबोधरूपम्, क्रिया च तत्पूर्वकसावद्या-ऽनवद्ययोगनिवृत्ति-प्रवृत्तिरूपा ज्ञानक्रिये, ताभ्यां तावद् मोक्षोऽशेषकर्ममलकलङ्काभावरूपः साध्यते, इति सर्वेषामपि शिष्टानां प्रमाणसिद्धमेव, दर्शनस्य ज्ञान एवाऽन्तर्निहितत्वादिति । यदि नाम ज्ञान-क्रियाभ्यां मोक्षः, तर्हि आवश्यकानुयोगस्य किमायातम्, येन फलवत्तया प्रेक्षावतां तत्र प्रवृत्तिः स्यात् ?; इत्याह—तन्मयमावश्यकम्—ताभ्यां ज्ञान-क्रियाभ्यां निर्वृत्तं तन्मयं ज्ञान-क्रियास्वरूपमावश्यकम्, तत्कारणत्वात्; इति भावः । यथा ह्यायुर्वृद्धिकारणत्वेनोपचाराल्लोके घृतमायुरुच्यते, नड्वलोदकं पादरोगः कारणत्वात् तथैवाऽभिधीयते, एवं प्रस्तुतानुयोगविषयीकृतं सामायिकादिषडध्ययनसूत्रात्मकमावश्यकमपि सम्यग्ज्ञान-क्रियाकारणत्वात् तत्स्वरूपमेव, तदध्ययन-श्रवण-चिन्तन-तदुक्ताचरणप्रवृत्तानामवश्यं सम्यग्ज्ञान-क्रियाप्राप्तेः। तस्मादुक्तन्यायेन ज्ञान-क्रियाऽऽत्मकं यत आवश्यकम्, अतस्तस्याऽऽवश्यकस्य व्याख्यानमनुयोगस्तद्व्याख्यानं तस्याऽऽरम्भः प्रेक्षावता क्रियमाणो न विरुध्यते, आवश्यकात् सम्यग्ज्ञान-क्रियाप्राप्तिद्वारेण मोक्षलक्षणफलसिद्धेः ॥

नन्वित्थं तर्हि आवश्यकात् सम्यग्ज्ञान-क्रियाप्राप्तिः, ताभ्यां च मोक्षलक्षणफलसिद्धिः, इत्येवमावश्यकस्यैव पारम्पर्येण मोक्षात्मकं फलं स्यात्, न पुनस्तदनुयोगस्य; फलचिन्ता त्वस्यैवेह प्रस्तुता, इति चेत् । सत्यम्, किन्त्वावश्यकं व्याख्येयम्, तद्व्याख्यानं चानुयोगः, व्याख्याने च व्याख्येयगत एव सर्वोऽभिप्रायः प्रकटीक्रियते; अतो व्याख्येयस्य यत्फलम्, व्याख्यानस्य तत् ॥ ६ ॥

१ ज्ञानक्रियाभ्यां मोक्षस्तन्मयमावश्यक यतस्तेन । तद्व्याख्यानारम्भ. कारणतः कार्यसिद्धिरिति ॥ ३ ॥

निंदामि त्ति दुगुंछे गरिहामि तदेव तो कओ भेओ ?। भण्णइ सामण्णत्थाभेए इट्ठो विसेसत्थो ॥ १० ॥
जह गच्छइ त्ति गो सप्पइ त्ति सप्पो समे वि गच्छत्थे । गम्मइ विसेसगमणं तह निंदा-गरहणत्थाणं ॥ ११ ॥
सप्पचक्खदुगंछा तह निंदामि त्ति गम्मए समए । गुरुपच्चक्खदुगंछा गम्मइ गरिहामिसद्देणं ॥ १२ ॥
एगत्थोभयगहणं भिसादरत्थं च जमुदियं होइ । कुच्छामि कुच्छामि तदेव निंदामि गरिहामि ॥ १३ ॥
भिसमायरओ व पुणो पुणो व कुच्छामि जमुदियं होइ । पुणरुत्तमणत्थं वेह नाणुवादादराईसु ॥ १४ ॥
किं कुच्छामप्पाणं अईयसावज्जकारिणमसग्घं । अत्ताणमयणमहवा सावज्जमईयजोगं ति ॥ १५ ॥
विविहं विसेसओ वा भिसं सिरामि त्ति वोसिरामि त्ति । छड्डेमि त्ति जमुत्तं तमेव समईयसावज्जं ॥ १६ ॥
मंसाइविरमणाओ जहेह भणियम्मि वोसिरामि त्ति । तप्पडिवक्खच्चाओ गम्मइ सामाइए वेवं ॥ १७ ॥
सम्मत्ताइमयं तं मिच्छत्ताईणि तव्विवक्खो य । ताण विवक्खो गम्मइ पभासिए वोसिरामि त्ति ॥ १८ ॥
अहवा तिच्छियसावज्ज जोगपच्छित्तसंग्गहत्थाय । संखेवओ विहाणं निंदामिच्चाइसुत्तम्मि ॥ १९ ॥
निंदा-गरहग्गहणादालोयण-पडिक्कमोभयग्गहणं । होई विवेगाईणं छेयंताणं विसग्गाओ ॥ २० ॥
एवं सुत्ताणुगमो सुत्तन्नासो सुयंत्थजुत्ती य । भणिया नयाणुजोगदारावसरोऽधुणा, ते य ॥ २१ ॥
अत्थाणुगमंगं चिय तेण जहासंभवं तहिं चेव । भणिया तहावि पत्थुयदारासुन्नत्थमुण्णेहं ॥ २२ ॥
सामन्नमह विसेसो पच्चुप्पण्णं च भावमेत्तं च । पइसद्दं च जहत्थं च वयणमिह संगहाईणं ॥ २३ ॥
एयाण समोआरो दव्वट्ठिय-पज्जवट्ठियदुगम्मि । सेसेसु य संभवओ ताणं परोप्परं कज्जो ॥ २४ ॥

१ "भन्नइ"। २ 'इप्परं"।

चार्याः, आहोस्विदन्योऽपि तत्र कश्चिद् विधिरपेक्षणीयः ?। इति शिष्यवचनमाशङ्क्याऽस्मिन्नेव योगद्वारे तद्दानविधानादि किञ्चिल्लेशतः प्रासङ्गिकमभिधित्सुराह—

कैयपंचनमोक्कारस्स दिन्ति सामाइयाइयं विहिणा । आवासयमायरिया कमेण तो सेसयसुयं पि ॥ ५ ॥

व्याख्या— भव्यादिविशेषणविशिष्टस्यापि शिष्यस्य कृतपञ्चनमस्कारस्य चतुर्थ्यर्थे षष्ठी— कृतपञ्चनमस्काराय मङ्गलार्थमुच्चारितपञ्चनमस्कृतिमङ्गलायेत्यर्थः । सामायिकादिकमावासकं विधिना प्रशस्तं द्रव्य-क्षेत्र-काल-भावरूपेण, प्रशस्तादिगभिमुखव्यवस्थापनादिरूपेण च समयोक्तेन ददत्याचार्याः, न पुनर्योग्यमित्येतावन्मात्रकमेव ज्ञात्वेति भावः । तत ऊर्ध्वमस्मै किं न किञ्चिद् ददाति ?, इत्याह— क्रमेण ततः शेषकमप्याचारादि श्रुतं प्रयच्छन्ति यावच्छ्रुतोदधेः पारम् ॥ इति गाथार्थः ॥ ५ ॥

आवश्यकानुयोगप्रदानेऽप्ययमेव विधिरित्यावेदयितुमाह—

तेंणेव याऽणुओगं कमेण तेणेव याऽहिगारोऽयं । जेण विणेयहियत्थाय थेरकप्पक्कमो एसो ॥ ६ ॥

चकारोऽपिशब्दार्थः, भिन्नक्रमश्च; ततस्तेनैव पञ्चनमस्कारकरणादिना क्रमेणाऽनुयोगमपि सूत्रव्याख्यानरूपम्, ददत्याचार्या इति वर्तते, अनयोश्च सूत्रप्रदानक्रमा-ऽनुयोगप्रदानक्रमयोर्मध्ये तेनैव प्रस्तुतगाथाप्रक्रान्तेनाऽनुयोगप्रदानक्रमेणाऽयमस्मदभिमतोऽधिकारः, अनुयोगस्यैवेह प्रस्तुतत्वात्, इति भावः । कुतः पुनरिहानुयोगप्रदानक्रमेणैवाऽधिकारः ?, इत्याह— येन कारणेन विनेयहितार्थं शिष्यवर्गस्योत्तरोत्तरगुणप्राप्तिमपेक्ष्येत्यर्थः, स्थविराणां गच्छवासिनां साधूनां योऽसौ कल्पः समाचारविशेषस्तस्यैषोऽनन्तरगाथावक्ष्यमाणलक्षणः क्रमः परिपाटीरूपः, तेन कारणेनाऽनुयोगप्रदानक्रमेणैवेहाऽधिकारोऽयमिति ॥ ६ ॥

कः पुनरसौ स्थविरकल्पक्रमः ? इत्याह—

पैव्वज्जा-सिक्खावयम-ऽत्थग्गहणं च अनिअओ वासो । निप्फत्ती य विहारो सामायारीठिई चेव ॥ ७ ॥

इह स्थविराणामयं क्रमो यदुत—प्रथमं तावद् योग्याय विनीतशिष्याय विधिवद्दापिताऽऽलोचनाय प्रशस्तेषु द्रव्यादिषु स्वयं

१ कृतपञ्चनमस्काराय ददति सामायिकादिक विधिना । आवासकमाचार्या क्रमेण तत शेषकश्रुतमपि ॥ ५ ॥
२ तेनैव चानुयोग क्रमेण तेनैव चाऽधिकारोऽयम् । येन विनेयहितार्थं स्थविरकल्पक्रम एष ॥ ६ ॥
३ प्रव्रज्या—शिक्षापदम-ऽर्थग्रहण चानियतो वासः । निष्पत्तिश्च विहार. सामाचारीस्थितिश्चैव ॥ ७ ॥

चरणगुणसुट्ठिओ होइ साहू एस किरियानओ नाम । चरणगुणसुट्ठियं जं चरणनया बिंति साहु त्ति ॥ ७ ॥
सो जेण भावसाहू सव्वनया जं च भावमिच्छंति । नाण-किरियानओभयजुत्तो य जओ सया साहू ॥ ८ ॥
इय परिसमावियमियं सामाइयमत्थओ समासेण । वित्थरओ केवलिणो पुव्वविओ वा पहासंति ॥ ९ ॥
सव्वाणुओगमूलं भासं सामाइअस्स सोऊण । होइ परिकम्मिअमई जोग्गो सेसाणुओगस्स ॥ १० ॥

॥ इति मूलभागसहितं विशेषावश्यकभाष्यमूलं समाप्तम् ॥

तीर्थो द्वादश वर्षाणि यावद् नानादेशदर्शनं नियमेन कार्यत इत्यर्थः, आचार्यपदानर्हस्य त्वनियमः । आचार्यपदार्होऽपि किमिति देशदर्शनं कार्यते ? इति चेत् । उच्यते– स हि नानादेशेषु पर्यटंस्तीर्थकराणां जन्मादिभूमीः पश्यति; ताश्च दृष्ट्वाऽत्र जाताः, इह दीक्षां प्रतिपन्नाः, अस्मिंश्च देशे निर्वृता भगवन्तः, इत्याद्यध्यवसायतो हर्षातिरेकात् तस्य सम्यक्त्वस्थैर्यं भवति, अन्येषां च स पश्चात् तत्स्थिरतामुत्पादयति, श्रुताद्यतिशायिनश्चाचार्यादीन् नानास्थानेषु पश्यतः सूत्रार्थेषु सामाचार्यां चाऽस्य विशेषोपलम्भो भवति, नानादेशभाषासमाचारांश्चैष बुध्यते, ततश्च तत्तद्देशजानामपि विनेयानां तत्तद्भाषया धर्मं कथयति, ततः प्रतिबोध्य तान् प्रव्राजयति, पूर्वप्रव्रजितास्तु तदुपसंपदं प्रतिपद्यन्ते, निःशेषास्मद्भाषासमाचारकुशलोऽयमिति शिष्याणां तदुपरि प्रीतियोगश्च जायते, इत्यादिगुणदर्शनादानियतवासः । 'निप्फत्ती य त्ति' एवं चानियतवासेन द्वादश वर्षाणि पर्यटतस्तस्याऽऽचार्यपदार्हशिष्यत्वेनाऽऽत्मनो निष्पत्तिर्भवति, अन्येषां च प्रभूतशिष्याणां तदन्तिके निष्पत्तिर्जायत इति । 'विहारो त्ति' एवं शिष्यत्वेन निष्पत्तौ, सूरिपदे च प्राप्ते, स्वपरोपकारकरणेन दीर्घे च पर्याये परिपालिते, अन्यस्मिंश्च योग्यशिष्ये आचार्यपदे व्यवस्थापिते, ततोऽनन्तरं विहरणं विशेषेण भगवदभिहितमार्गे पराक्रमणं विहारो विशेषानुष्ठानरूपोऽनेन कर्तव्यः । स च द्विविधः– भक्तपरिज्ञे-ङ्गिनी-पादपोपगमनलक्षणमभ्युद्यतमरणम्, जिनकल्प-परिहारविशुद्धिककल्प-यथालन्दिककल्पप्रतिपत्तिर्वा । अस्मिंश्च द्विविधेऽपि विहारे सामाचारी ज्ञात्वाऽनुष्ठेया । सा चाऽऽद्ये मरणलक्षणे विहारे–

"निप्फाइआ[1] य सीसा सउणी जह अण्डय पयत्तेण । वारससवच्छरिय सो सलेह अह करेइ ॥ १ ॥
चत्तारि विचित्ताइ विगईनिज्जूहिआइ चत्तारि । संवच्छरे उ दोन्नि उ एगन्तरियं च आयामं ॥ २ ॥
नाइविगिट्ठो य तवो छम्मासे परिमियं च आयामं । अन्ने वि य छम्मासे होइ विगिट्ठं तवो कम्मं ॥ ३ ॥
वास कोडिसहिअं आयामं कट्टु आणुपुव्वीए । गिरिकदर तु गंतुं पायवगमणं अह करेइ " ॥ ४ ॥

इत्यादिका ज्ञातव्या । द्वितीये तु विहारे जिनकल्पादिप्रतिपत्तौ सामाचारी निर्दिश्यते–तत्र जिनकल्पादि प्रतिपित्सुनाऽऽदावेव पूर्वापररात्रकाले तावदिदं चिन्तनीयम्–विशुद्धचारित्रानुष्ठानेन कृतं मयाऽऽत्महितम्, शिष्याद्युपकारतः परहितं च, निष्पन्नाश्चेदानीं मम

1 निष्पादिताश्च शिष्याः शकुनी यथाऽण्डकं प्रयत्नेन । द्वादशसांवत्सरिकं स संलेखमथ करोति ॥ १ ॥
चत्वारि विचित्राणि विकृतिनिर्यूहितानि चत्वारि (वर्षाणि) । संवत्सरौ तु द्वौ त्वेकान्तरित चाऽऽयामम् ॥ २ ॥
नातिविकृष्टं च तप षण्मासान् परिमितं चाऽऽयामम् । अन्यानपि च षण्मासान् भवति विकृष्टं तपः कर्म ॥ ३ ॥
वर्षं कोटिसहित आयामं कृत्वाऽऽनुपूर्व्या । गिरिकन्दरां तु गत्वा पादपगमनमथ करोति ॥ ४ ॥

॥ अर्हम् ॥

श्रीविजयधर्मसूरिगुरुभ्यो नमः ।

# श्रीविशेषावश्यकभाष्यम् ।

## शिष्यहिताख्यया बृहद्व्याख्यया समुल्लसितम् ।



श्रीसिद्धार्थनरेन्द्रविश्रुतकुलव्योमप्रवृत्तोदयः सद्बोधांशुनिरस्तदुस्तरमहामोहान्धकारास्थितिः ।
ध्वस्ताशेषकुवादिकौशिककुलप्रीतिप्रणोदक्षमो जीयादस्खलितप्रतापतरणिः श्रीवर्धमानो जिनः ॥ १ ॥

येन क्रमेण कृपया श्रुतधर्म एष आनीय मादृशजनेऽपि हि संप्रणीतः ।
श्रीमत्सुधर्मगणभृत्प्रमुखं नतोऽस्मि तं सूरिसङ्घमनघं स्वगुरूंश्च भक्त्या ॥ २ ॥

आवश्यकप्रतिनिबद्धगभीरभाष्यपीयूषजन्मजलधिर्गुणरत्नराशिः ।
ख्यातः क्षमाश्रमणतागुणतः क्षितौ यः सोऽयं गणिर्विजयते जिनभद्रनामा ॥ ३ ॥

यस्याः प्रसादपरिवर्धितशुद्धबोधाः पारं व्रजन्ति सुधियः श्रुततोयराशेः ।
सानुग्रहा मयि समीहितसिद्धयेऽस्तु सर्वज्ञशासनरता श्रुतदेवताऽसौ ॥ ४ ॥

इह चरणकरणक्रियाकलापतरुमूलकल्पं सामायिकादिषडध्ययनात्मकश्रुतस्कन्धरूपमावश्यकं तावदर्थतस्तीर्थकरैः, सूत्रतस्तु गणधरैर्विरचितम् । अस्य चातीव गम्भीरार्थतां सकलसाधु-श्रावकवर्गस्य नित्योपयोगितां च विज्ञाय चतुर्दशपूर्वधरेण श्रीमद्भद्रबाहुस्वामिनैतद्व्याख्यानरूपा " आभिणिबोहिअनाणं सुयनाणं चेव ओहिनाणं च " इत्यादिप्रसिद्धग्रन्थरूपा निर्युक्तिः कृता । तन्मध्ये च सामा-

---

१ ख. 'रूपात्' । २ ख. 'गभीरा' । ३ आभिनिबोधिकज्ञानं ( मतिज्ञानं ) श्रुतज्ञानं चैवाऽवधिज्ञानं च ४ घ, 'स्वरूपा' ।

"संसट्ठमसंसट्ठा उद्धड तह होइ अप्पलेवा य। उग्गहिआ पग्गहिआ उज्झिअधम्मा य सत्तमिया" ॥ १ ॥

एतासां सप्तानां पिण्डैषणानां मध्ये आद्यद्वयवर्जं शेषपञ्चानां मध्यादन्यतरैषणाद्वयाभिग्रहेणाऽऽहारं गृह्णाति— एकया भक्तम्, अपरया त्वेषणया पानकमिति । एवमाद्यागमोक्तविधिना गच्छान्तर्गतः पूर्वमेवाऽऽत्मानं परिकर्म्य ततो जिनकल्पं प्रतिपित्सुः सङ्घं मीलयति, तदभावे स्वगणं तावदवश्यमाह्वयते। ततस्तीर्थकरसमीपे, तदभावे गणधरसंनिधाने, तदसत्त्वे चतुर्दशपूर्वधरान्तिके, तदसंभवे दशपूर्वधराभ्यर्णे, तदलाभे तु वटा-ऽश्वत्था-ऽशोकवृक्षादीनामासत्तौ जिनकल्पमभ्युपगच्छति । निजपदव्यवस्थापितं सूरिम्, सबालवृद्धं गच्छम्, विशेषतः पूर्वविरुद्धांश्च क्षमयति, तद्यथा—

"जइ[2] किंचि पमाएणं न सुट्ठु भे वट्टिअं मए पुव्विं। तं भे ! खामेमि अहं निस्सल्लो निक्कसाओ य ॥ १ ॥
आणंदंसुपायं कुणमाणा ते वि भूमिगयसीसा। खामंति ते जहरिहं जहारिहं खामिआ तेणं ॥ २ ॥
खामेंतस्स गुणा खलु निस्सल्लयविणयदीवणा मग्गे। लाघवियं एगत्तं अप्पडिबन्धो अ जिणकप्पो" ॥ ३ ॥

निजपदस्थापितसूरिप्रभृतीनामनुशास्तिं प्रयच्छति, तद्यथा—

"पालेज्ज[3] सगणमेय अप्पडिबद्धो य होज्ज सव्वत्थ। एसो हु परंपरओ तुमं पि अते कुणसु एवं" ॥ १ ॥

---

१ संसृष्टासंसृष्टे उद्धृता तथा भवत्यल्पलेपा च। उद्गृहीता प्रगृहीता उज्झितधर्मा च सप्तमी ॥ १ ॥
संसृष्टाभ्यां तत्खरण्टिताभ्यां हस्तपात्राभ्या भिक्षा ससृष्टा, असंसृष्टाभ्यां तु ताभ्यामसंसृष्टा, स्थाल्यादिभ्य स्वार्थं भोजनाय उत्क्षिप्ता उद्धृता, निर्लेपं पृथुकादि तत्स्वरूपाऽल्पलेपा, भोजनकाले शरावाद्याहितभोज्यवस्तुमध्यादुत्पाटिता, भोजनार्थं करोपात्तभोज्यमध्याद् दातुमिष्टा प्रगृहीता, अन्याऽनभिलष्यमाणा परित्यज्यमानभक्ताद्यन्नरूपा उज्झितधर्मा इति।

२ यदि किञ्चित् प्रमादेन न सुष्ठु युष्माक वर्तितं मया पूर्वम्। तं भगवन्! क्षमयाम्यह नि शल्यो निष्कषायश्च ॥ १ ॥
आनन्दाश्रुपात कुर्वाणास्तेऽपि (साधव) भूमिगतशीर्षा॰। क्षमयन्ति ते यथार्हं यथार्हं क्षमितास्तेन ॥ २ ॥
क्षमयतश्च गुणा॰ खलु नि शल्यकविनयदीपना मार्गे। लाघवमेकत्वमप्रतिबन्धश्च जिनकल्प. ॥ ३ ॥

३ पालये स्वगणमेतमप्रतिबद्धश्च भवे॰ सर्वत्र। एष खलु परम्परकस्त्वमप्यन्ते कुर्या एवम् ॥ १ ॥

४ "एष च परम्परकः शिष्याचार्यक्रमो यदव्यवच्छित्तिकारकं शिष्यं निष्पाद्य शक्तौ सत्यामभ्युद्यतविहार. प्रतिपत्तव्य., त्वमप्यन्ते शिष्यनिष्पादनादिकार्यपर्यवसाने एवमेव कुर्या." इति बृहत्कल्पभाष्यटीकाया श्रीक्षेमकीर्तिसूरि.।

आह– नन्वावश्यकानुयोगस्तावदावश्यकव्याख्यानम्, चरण-गुणसंग्रहस्तु ज्ञान-दर्शन-चारित्रसंगृहीतिरूपः, ततोऽत्यन्तं भिन्नाधिकरणत्वात् कथमनयोः सामानाधिकरण्यम्?। सत्यम्, किन्तु "सामाइअं च तिविहं सम्मत्तं सुअं तहा चारित्तं च" इत्यादिवक्ष्यमाणवचनादेकोऽपि सामायिकानुयोगस्तावत् संपूर्णचरण-गुणसंग्राहकः, किं पुनः सकलावश्यकानुयोगः?। ततश्च संपूर्णचरण-गुणसंग्रहयुक्तत्वादावश्यकानुयोगोऽपि संपूर्णचरण-गुणसंग्रहत्वेनोक्तः, यथा दण्डयोगाद् दण्डः पुरुषः; इत्यदोषः। अथवा चरण-गुणानां संग्रहो यत्रावश्यकानुयोगेऽसौ चरण-गुणसंग्रह इति बहुव्रीहिपक्षे प्रेर्यमेव नास्ति, केवलमस्मिन् पक्षे सकलमिति विशेषणमावश्यकानुयोगस्य चरण-गुणसंग्रहसंपूर्णत्वापेक्षयैव द्रष्टव्यमिति, एतच्च कष्टगम्यमित्युपेक्ष्यते॥

आह–ननु यदि "सामाइअं च तिविहं" इत्यादिवक्ष्यमाणवचनात् सामायिकस्य संपूर्णचरण-गुणसंग्राहकत्वम्, तर्हि तदनुयोगस्य तद्रूपत्वे किमायातम्?। नैतदेवम्, सामायिकं हि व्याख्येयम्, अनुयोगस्तु व्याख्यानम्, व्याख्येय-व्याख्यानयोश्चैकाभिप्रायत्वादिहाऽभेदेन विवक्षितत्वाददोषः; इत्यलमतिचर्चयेति॥

अनेन च संपूर्णचरण-गुणसंग्रहलक्षणेन स्वरूपविशेषणेनाऽऽवश्यकानुयोगस्य महार्थतां दर्शयति भाष्यकारः॥

आह– ननु यदि त्वयाऽऽवश्यकानुयोगः स्वमनीषिकया वक्ष्यते, तदाऽनादेय एवायं प्रेक्षावताम्, छद्मस्थत्वे सति स्वतन्त्रतयाऽभिधीयमानत्वात्, रथ्यापुरुषवाक्यवत्; इति परवचनमाशङ्क्य तदुपन्यस्तहेतोरसिद्धतामुपदर्शयन्नाह– 'गुरूवएसाणुसारेणं ति' गृणन्ति तत्त्वमिति गुरवस्तीर्थकर–गणधरादयः, तेषामुपदेशो भणनम्, तदनुसारेण तत्पारतन्त्र्येणाऽऽवश्यकानुयोगमहं वक्ष्ये, न तु स्वमनीषिकया; अतः स्वतन्त्रतयाऽभिधीयमानत्वादित्यसिद्धो हेतुरिति भावः। यो हि च्छद्मस्थः सन् परमगुरूपदेशानपेक्षं स्वतन्त्रमेव वक्ति रथ्यापुरुषस्येव, तस्य वचोऽनादेयमिति वयमपि मन्यामहे, केवलं तदिह नास्ति, परमगुरूपदेशानुसारेणैवाऽऽवश्यकानुयोगस्य मयाऽभिधीयमानत्वादिति। तदेवं कृतप्रवचनप्रणामो गुरूपदेशनिश्रया सकलचरण-गुणसंग्रहरूपमावश्यकानुयोगमहं वक्ष्य इति पिण्डार्थः॥

आह–ननु श्रीमद्भद्रबाहुप्रणीता सामायिकनिर्युक्तिरिह भाष्ये व्याख्यास्यते, तत्कथमिदमावश्यकानुयोगोऽभिधीयते?। नैतदेवम्, अभिप्रायाऽपरिज्ञानात्, तथाहि–सामायिकस्य षड्विधावश्यकैकदेशत्वादावश्यकरूपता तावद् न विरुध्यते, तन्निर्युक्तिस्तु तद्व्याख्यानरूपैव, व्याख्येय-व्याख्यानयोश्चैकाभिप्रायत्वादेकत्वमित्यनन्तरमेवोक्तम्। तस्मात् सामायिकस्य तन्निर्युक्तेश्च सर्वस्याऽप्याव-

१ सामायिकं च त्रिविधं सम्यक्त्वं श्रुत तथा चारित्रं च।

२ "अत्राऽनुस्वारलोप, आर्षत्वात्" इत्यावश्यकनिर्युक्तिटीकायामस्यां एव गाथाया विवरणे श्रीमन्मलयगिरिसूरि। ३ घ. 'स्याप्यस्या'।

इति वचनात् परिकर्मरहितायां वसतौ तिष्ठति, यद्युपविशति तदा नियमादुत्कुडुक एव, न तु निषद्यायाम्, औपग्रहिकोपकरणस्यैवाऽभावादिति । मत्तकरि-व्याघ्र-सिंहादिके च संमुखे समापतत्युन्मार्गगमनादिना ईर्यासमितिं न भिनत्ति, इत्याद्यन्याऽपि जिनकल्पिकानां सामाचारी समयसमुद्रादवगन्तव्या । 'ठिई चेव त्ति' तथा पूर्वोक्ते द्विविधेऽपि विहारे स्थितिः श्रुतसंहननादिका ज्ञातव्या, तथाहि– जिनकल्पिकस्य तावज्जघन्यतो नवमस्य पूर्वस्य तृतीयमाचारवस्तु, उत्कर्षतस्त्वसंपूर्णानि दश पूर्वाणि श्रुतं भवति। प्रथमसंहननो वज्रकुड्यसमानाऽवष्टम्भश्चायं भवति । स्वरूपेण पञ्चदशस्वपि कर्मभूमिषु, संहृतस्त्वकर्मभूमिष्वपि भवति । उत्सर्पिण्यां व्रतस्थस्तृतीयचतुर्थारकयोरेव; जन्ममात्रेण तु द्वितीयारकेऽपि, अवसर्पिण्यां तु जन्मना तृतीयचतुर्थारकयोरेव, व्रतस्थस्तु पञ्चमारकेऽपि; संहरणेन तु सर्वस्मिन्नपि काले प्राप्यते। प्रतिपद्यमानकः सामायिक-च्छेदोपस्थापनीयचारित्रयोः, पूर्वप्रतिपन्नस्तु सूक्ष्मसंपराय– यथाख्यातचारित्रयोरप्युपशमश्रेण्यामवाप्यते । प्रतिपद्यमानानामुत्कृष्टतः शतपृथक्त्वम्, पूर्वप्रतिपन्नानां तु सहस्रपृथक्त्वं जिनकल्पिकानां लभ्यते । जिनकल्पिकः प्रायोऽपवादं नाऽऽसेवते, जङ्घाबलपरिक्षीणस्त्वविहरमाणोऽप्याराधकः । आवश्यिकी–नैषेधिकी–मिथ्यादुष्कृत–गृहिविषयपृच्छो-पसंपल्लक्षणाः पञ्च सामाचार्योऽस्य भवन्ति, न त्विच्छादयः। अन्ये त्वाहुः–आवश्यिकी–नैषेधिकी–गृहस्थोपसंपल्लक्षणास्तिस्र एव भवन्ति, आरामादिनिवासिन ओघतः पृच्छादीनामप्यसंभवादिति । लोचं चाऽसौ नित्यमेव करोति, इत्येवमाद्यपराऽपि स्थितिर्जिनकल्पिकानामागमादवसेया। परिहारविशुद्धिककल्प-सामाचार्यादिवक्तव्यताऽत्रैव ग्रन्थे पुरस्ताद् वक्ष्यते। यथालन्दिकानां तु "तवेण सत्तेण सुत्तेण" इत्यादिका भावनादिवक्तव्यता यथा जिनकल्पिकानाम्; यस्तु विशेषः स लेशतः प्रोच्यते–तत्रोदकार्द्रः करो यावता शुष्यति, तत आरभ्योत्कृष्टतः पञ्च रात्रिन्दिवानि यावत्कालोऽत्र समयपरिभाषया लन्दमित्युच्यते । ततश्च पञ्चरात्रिन्दिवलक्षणस्योत्कृष्टस्य लन्दस्यानतिक्रमेण चरन्तीति यथालन्दिकाः। पञ्चको हि गणोऽमुं कल्पं प्रतिपद्यते, ग्रामं च गृहपङ्क्तिरूपाभिः षड्भिर्वीथीभिर्जिनकल्पिकवत् परिकल्पयन्ति, किन्त्वेकैकस्यां वीथ्यां पञ्च पञ्च दिनानि पर्यटन्तीत्युत्कृष्टलन्दिचारिणो यथालन्दिका उच्यन्ते । एते च प्रतिपद्यमानका जघन्यतः पञ्चदश भवन्ति; उत्कृष्टतस्तु सहस्रपृथक्त्वम्; पूर्वप्रतिपन्नास्तु जघन्यतः कोटिपृथक्त्वम्, उत्कृष्टतोऽपि कोटिपृथक्त्वं भवन्ति। एते च यथालन्दिका द्विविधा भवन्ति–गच्छे प्रतिबद्धाः, अप्रतिबद्धाश्च; गच्छे च प्रतिबन्धोऽमीषां कारणतः, किञ्चिदश्रुतस्याऽर्थस्य श्रवणार्थमिति मन्तव्यमिति। पुनरेकैकशो द्विविधाः– जिनकल्पिकाः, स्थविरकल्पिकाश्च। ये जिनकल्पं प्रतिपत्स्यन्ते ते जिनकल्पिकाः, ये तु पुनरपि स्थविरकल्पं समाश्रयिष्यन्ते ते स्थविरकल्पिकाः। एतेषां च स्थविरकल्पिक-जिनकल्पिकभेदाभिन्नानां यथालन्दिकानां परस्परमयं विशेषः, यदाह–

१ ख. ग. 'दुत्कुडक'।

ख्याता, सर्वोऽपि च ग्रन्थोऽयमनेनोल्लेखेन व्याख्यास्यत इति प्रतिपत्तव्यम् । न च वक्तव्यम्—येषां महामतिपूर्वपुरुषवचनैरर्थाववोधो न संपद्यते, तेषां मन्दबुद्धेर्भवतो वचनेन कुतोऽयं संपत्स्यते ? इति; यतो जायत एव समानशीलवचनैः समानशीलानामर्थप्रतिपत्तिः, यदाह—

"[1]गांमिल्लुआण गामिल्लुएहिं मिच्छाण [2]हौन्ति मिच्छेहिं । सम्मं [3]पंडिवत्तीउ अत्थस्स न [4]विवुहभणिएहिं ॥ १ ॥

निअभासाए भणते समाणसीलम्मि अत्थपडिवत्ती । जायइ मंदस्स वि न उण विविहसक्कयपवंधेहिं" ॥ २ ॥

इत्यलमतिबहुभाषितेन ॥ इति गाथार्थः ॥ १ ॥

आवश्यकानुयोगोऽत्राऽभिधास्यत इत्युक्तम्, किं पुनरस्य फलादिकं, यदवगम्य वयं तच्छ्रवणादौ प्रवर्तामहे ?; इति प्रेक्षावच्छिष्यवचनमाशङ्क्याऽऽवश्यकानुयोगस्य फलादीन्यभिधित्सुस्तत्संग्रहपरां द्वारगाथामाह—

[5]तस्स फल-जोग-मंगल-समुदायत्था तहेव दाराइं । तब्भेय-निरुत्त-क्कम-पओयणाइं च वच्चाइं ॥ २ ॥

व्याख्या—तस्येत्यावश्यकानुयोगस्य, प्रेक्षावतां प्रवृत्तिनिमित्तं फलं मोक्षप्राप्तिलक्षणं तावदत्र ग्रन्थे वक्तव्यम् । ततोऽस्य योगः शिष्यप्रदाने संबन्धोऽवसरः प्रस्तावो वाच्यः । आवश्यकानुयोगे च क्रियमाणे किं मङ्गलमित्येतदपि निरूपणीयम् । सामायिकाद्यध्ययनानां '[6]सावज्जजोगविरई उक्कित्तण गुणवओ य पडिवत्ती' इत्यादिगाथया समुदायार्थश्च सावद्ययोगविरत्यादिकोऽभिधानीयः । फलं च योगश्च मङ्गलं च समुदायार्थश्चेति समासः । 'तहेव दाराइं ति' तथा द्वाराणि चोपक्रमनिक्षेपादीनि कथनीयानि । तेषां द्वाराणां भेदो वक्तव्यः, तद्यथा—आनुपूर्वी-नाम-प्रमाण-वक्तव्यता-ऽर्थाधिकार-समवतारभेदादुपक्रमः षोढा, ओघनिष्पन्न-नामनिष्पन्न-सूत्रालापकनिष्पन्न-भेदाद् निक्षेपस्त्रिधा, सूत्र-निर्युक्तिभेदादनुगमो द्विधा, नैगमादिभेदाद् नयाः सप्तविधा इत्यादि । उपक्रमणमुपक्रमः, निक्षेपणं निक्षेप इत्यादि । निरुक्तं च शब्दव्युत्पत्तिरूपं भणनीयम् । तथा 'कम त्ति' तेषामुपक्रमादिद्वाराणां प्रथममुपक्रम एव ततो यथाक्रमं निक्षेपादय एव, इत्येवंरूपो योऽसौ नियतः क्रमः स युक्त्याऽभिधानतो निर्देष्टव्यः, युक्तिं चात्रैव वक्ष्यति; तद्यथा—नानुपक्रान्तं निक्षिप्यते, नाऽ-

१ ग्रामीणानां ग्रामीणैर्म्लेच्छाना भवन्ति म्लेच्छैः । सम्यक् प्रतिपत्तयोऽर्थस्य न विबुधभाणितैः ॥ १ ॥
निजभाषया भणति समानशीलेऽर्थप्रतिपत्तिः । जायते मन्दस्यापि न पुनर्विविधसंस्कृतप्रबन्धैः ॥ २ ॥

२ घ. 'हुन्ति' । ३ घ. 'पडिवत्तीओ' । ४ घ 'विवुह' ।

५ तस्य फल-योग-मङ्गल-समुदायार्थास्तथैव द्वाराणि । तद्भेद-निरुक्त-क्रम-प्रयोजनानि च वाच्यानि ॥ २ ॥

६ सावद्ययोगविरतिरुत्कीर्तनं गुणवतश्च प्रतिपत्तिः ।

स्य, आदिशब्दो भिन्नक्रमे, आवश्यकादिश्रुतस्कन्धानुयोगग्रहणगृहीतोऽनुयोगोऽपि, न केवलमावश्यकादिश्रुतस्कन्धग्रहणेन तदन्तर्गतत्वाद् नमस्कारः स्वरूपेण गृह्यते, किन्त्वावश्यकादिश्रुतस्कन्धानुयोगग्रहणेन नमस्कारानुयोगोऽपि गृह्यत इत्यपिशब्दार्थः, ततश्चावश्यकानुयोगं वक्ष्य इत्युक्तेन नमस्कारानुयोगोऽपि भणनीयत्वेन प्रतिज्ञातो द्रष्टव्य इति भावः ॥ इति गाथार्थः ॥ ९ ॥

कथं पुनर्नमस्कारस्य सर्वश्रुतस्कन्धाभ्यन्तरता विज्ञायते ?, इत्याह–

तस्स[1] पुणो सव्वसुयब्भंतरया पढममंगलग्गहणा । जं च पिहो न पढिज्जइ नंदीए सो सुयक्खंधो ॥१०॥

तस्य च नमस्कारस्य, सर्वाणि च तानि श्रुतानि चाऽऽवश्यकश्रुतस्कन्धादीनि तदभ्यन्तरता प्रतीयते । कुतः ?, इत्याह– सकलमाङ्गलिकवस्तुनः प्रथमं च तन्मङ्गलं च प्रथममङ्गलं तदध्यवसायेन सर्वश्रुतस्यादौ ग्रहणं प्रथममङ्गलग्रहणं तस्मात्; इदमुक्तं भवति– "मङ्गलाणं[2] च सव्वेसिं पढमं हवइ[3] मङ्गलं" इति वचनात् प्रथममङ्गलत्वाभिप्रायेण सर्वश्रुतानामादौ नमस्कारस्य ग्रहणात् तदभ्यन्तरता प्रतीयत एव । कारणान्तरमप्याह– 'जं चेत्यादि' यद् यस्माच्चाऽसौ नमस्कारो नन्द्यध्ययने आवश्यक-दशवैकालिकादिश्रुतस्कन्धवत् तेभ्यः पृथक् 'सुअक्खंधो त्ति' श्रुतस्कन्धत्वेन न पठ्यते, येनाऽस्य पृथक् तेभ्यः श्रुतस्कन्धरूपता स्यात्, श्रुतरूपश्चाऽसौ, ततः पृथक् श्रुतस्कन्धत्वाभावे सामर्थ्यात् सर्वश्रुताभ्यन्तरतैवाऽस्य न्याय्या । तस्माद् नन्द्यध्ययनेऽप्यस्य श्रुतस्कन्धत्वेन पृथगनुपादानं सर्वश्रुताभ्यन्तरताज्ञापनार्थमेव ॥ इति गाथार्थः ॥ १० ॥

यतश्चैवं नन्द्यां श्रुतस्कन्धत्वेन पृथगनुपादानात् सर्वश्रुताभ्यन्तरत्वेन ज्ञापितोऽसौ नमस्कारः, तत एवैतत् कृतं भद्रबाहुस्वामिना । किम् ?, इत्याह–

तेणं[4] चिय सामाइयसुत्ताणुगमाइओ नमोक्कारं । वक्खाणेउं गुरवो वयंति सामाइयसुयत्थं ॥ ११ ॥

येनैवोक्तन्यायेन नन्द्यामसौ सर्वश्रुताभ्यन्तरतया ज्ञापितः, तेनैव कारणेन सामायिकसूत्रानुगमस्यादौ नमस्कारं व्याख्याय गुरवो भद्रबाहुस्वामिनो वदन्ति-अर्थव्याख्यानद्वारेण प्रकटयन्ति सामायिकश्रुतार्थम् । यदि हि पृथगसौ श्रुतस्कन्धः स्यात् तदा "आवस्सयस्स[5]

१ तस्य पुनः सर्वश्रुताभ्यन्तरता प्रथममङ्गलग्रहणात् । यच्च पृथग् न पठ्यते नन्द्या स श्रुतस्कन्ध ॥ १० ॥
२ मङ्गलाना च सर्वेषा प्रथम भवति मङ्गलम् । ३ क. घ छ 'होइ' ।
४ तेनैव सामायिकसूत्रानुगमादितो नमस्कारम् । व्याख्यानय्य (व्याख्याय) गुरवो वदन्ति सामायिकसूत्रार्थम् ॥ ११ ॥
५ आवश्यकस्य दशवैकालिकस्य तथोत्तराध्ययाना-ऽऽचाराङ्गयोः, सूत्रकृताङ्गे निर्युक्तिम् ॥

सुतरामवसेयम् , तयोरेकाभिप्रायत्वात् । तस्माद् मोक्षलक्षणं फलमभिवाञ्छताऽऽवश्यकानुयोगेऽवश्यं प्रवर्तितव्यमेव, ततोऽपि ज्ञान-क्रियाप्राप्तेः, ताभ्यां च मोक्षफलसिद्धिरिति ॥

यदि नामावश्यकानुयोगतो ज्ञान-क्रियाऽवाप्तिः, ताभ्यां च मोक्षसिद्धिः, तथापि किमिति तत्र प्रवर्तितव्यम् , न पुनर्यत्र कुत्रचित् षष्टितन्त्रादौ ?; इत्याह– कारणात् कार्यसिद्धिः, नाऽकारणादिति कृत्वा; कारणे हि सुविवेचिते प्रवर्तमानाः प्रेक्षावन्तः समीहितमप्रतिहतं कार्यमासादयन्ति; नाऽकारणे, अन्यथा तृणादपि हिरण्य-मणि-मौक्तिकाद्यवाप्तेः सर्वं विश्वमदरिद्रं स्यात् । कारणं च पारम्पर्येणावश्यकानुयोग एव मोक्षस्य, न षष्टितन्त्रादिकम् , ज्ञान-क्रियाजननद्वारेण तस्य मोक्षसंसाधकत्वात् , इतरस्य तु पारम्पर्येणाऽपि तदसाधकत्वात् ॥ इति गाथार्थः ॥ उक्तं फलद्वारम् ॥ ३ ॥

अथ योगद्वारमभिधित्सुराह—

भव्वस्स[1] मोक्खमग्गाहिलासिणो ठियगुरूवएसस्स । आईए जोग्गमिणं बाल-गिलाणस्स वाऽऽहारं ॥ ४ ॥

व्याख्या—यदादौ प्रतिज्ञातम्– शिष्यप्रदानेऽस्य योगोऽवसरो वाच्य इति । तत्राऽऽह– समस्तद्वादशाङ्ग्यध्ययनकालस्यादौ प्रथममिदं षड्विधमावश्यकं योग्यमुपदिशन्ति मुनयः, शेषसमग्रश्रुतप्रदानकालस्यादौ प्रथममेवाऽऽवश्यकप्रदानस्याऽवसर इति भावः । कस्य पुनरिदमावश्यकं योग्यमादिशन्ति मुनयः ?, इत्याह– भव्यस्य मुक्तिगमनयोग्यस्य जन्तोः । स च कश्चिद् दूरभव्योऽसंजातमोक्षमार्गाभिलाषोऽपि भवति, तद्व्यवच्छेदार्थमाह– मोक्षमार्गः सम्यग्ज्ञान-दर्शन-चारित्ररूपस्तमुत्तरोत्तरविशुद्धिरूपमभिलषितुं शीलमस्य स तथा तस्य । अयं चैवंविधोऽपरिणतगुरूपदेशोऽपि स्यात् , तन्निरासार्थमाह– स्थितः कर्तव्यतया परिणतो गुरूपदेशो यस्याऽसौ स्थितगुरूपदेशस्तस्य । किं यथायोग्यमुपदिशन्ति ?, इत्याह– बालग्लानयोरिवाऽऽहारं यथोपदिशन्ति, भिषज इति गम्यते । इदमुक्तं भवति– यथाऽऽदौ बालस्य कोमल–मधुरादिकम् , ग्लानस्य च पेया-मुद्ग-यूषादिकं तत्कालोचितमुत्तरोत्तरबलपुष्ट्यादिहेतुमाहारं योग्यं भिषजः समुपदिशन्ति, तथेहापि भव्यादिविशेषणविशिष्टस्य जन्तोरादाविदमेवाऽऽवश्यकमुत्तरोत्तरगुणवृद्धिहेतुभूतं योग्यमुपदिशन्ति तीर्थकर-गणधरा इति । आवश्यकस्य चादौ शिष्यप्रदानावसरे प्रतिपादिते तदनुयोगस्याऽसौ प्रतिपादित एव द्रष्टव्यः, तयोरेकत्वस्याऽनन्तरमेवाऽऽख्यातत्वात् ॥ इति गाथार्थः ॥ ४ ॥

आह– ननु यस्य भव्यादिविशेषणविशिष्टस्याऽऽदौ योग्यमिदमावश्यकम् , तस्मै योग्यमित्येतावन्मात्रमेव ज्ञात्वा तद् ददत्या-

१ भव्यस्य मोक्षमार्गाभिलाषिणः स्थितगुरूपदेशस्य । आदौ योग्यमिदं बाल–ग्लानयोरिवाऽऽहारम् ॥ ४ ॥

अत्राह—

[1]मंगलकरणा सत्थं न मंगलं, अह च मंगलस्सावि । मंगलमओऽणवत्था न मंगलममंगलत्ता वा ॥१५॥

प्रेरकः प्राह— भो आचार्य ! त्वदीयं शास्त्रं न मङ्गलं प्राप्नोति । कुतः ?, इत्याह— मङ्गलकरणात् अमङ्गले हि मङ्गलमुपादीयते, यत्तु स्वयमेव मङ्गलं तत्र किं मङ्गलविधानेन ?, न हि शुक्लं शुक्लीक्रियते, नापि स्निग्धं स्नेह्यते; तस्माद् तन्मङ्गलोपादानान्यथानुपपत्तेः शास्त्रं न मङ्गलम् । अथ मङ्गलं शास्त्रम्, मङ्गलस्याऽपि सतस्तस्याऽन्यद् मङ्गलं क्रियत इत्यभ्युपगम्यते; अत एवं सति तर्ह्यनवस्था— मङ्गलानामवस्थानं न क्वचित् प्राप्नोति, तथाहि— यथा मङ्गलस्याऽपि सतः शास्त्रस्याऽन्यद् मङ्गलमुपादीयते, तथा मङ्गलस्याऽपि तद्रूपस्य सतोऽन्यद् मङ्गलमुपादेयम्, तस्याऽप्यन्यत्, अपरस्याऽप्यन्यत्, इत्येवमनवस्था आपतन्ती केन वार्यते ? । अथ शास्त्रे यदुपात्तं मङ्गलं तस्यान्यमङ्गलकरणाभावत इयं नेष्यते । तत्र दूषणमाह— ' न मङ्गलमिति ' शास्त्रमङ्गलीकरणार्थमुपात्तमङ्गलस्याऽनवस्थाभयेनाऽन्यमङ्गलाकरणेन तद् मङ्गलं न स्यात्, अन्यमङ्गलाभावात्, शास्त्रवत्, इत्यर्थः; इदमुक्तं भवति— यदि मङ्गलस्याऽपरमङ्गलविधानाभावेनाऽनवस्था नेष्यते, तर्हि यथा मङ्गलमपि शास्त्रमन्यमङ्गलेऽकृते मङ्गलं न भवति, तथा मङ्गलमप्यन्यमङ्गलेऽविहिते मङ्गलं न भवेत्, न्यायस्य समानत्वात् । तथा च किमनिष्टं स्यात् ?, इत्याह— अमङ्गलता मङ्गलाभावः— शास्त्रे यद् मङ्गलमुपात्तं तदन्यमङ्गलशून्यत्वाद् न मङ्गलम्, तस्य च मङ्गलत्वाभावे शास्त्रमपि न मङ्गलम्, इति व्यक्त एव मङ्गलाभाव इति भावः ।वाशब्दः पक्षान्तरसूचकः— अनवस्था, मङ्गलाभावो वेत्यर्थः ॥ इति गाथार्थः ॥ १५ ॥

अत्रोत्तरमाह—

[2]सत्थत्थन्तरभूयम्मि मंगले होज्ज कप्पणा एसा । सत्थम्मि मंगले किं अमंगलं काऽणवत्था वा? ॥ १६ ॥

शास्त्रादावश्यकादेरर्थान्तरभूते भेदवति मङ्गले उपादीयमाने भवेद् घटेत परेण विधीयमाना '[3]मंगलकरणा सत्थं न मंगलं ' इत्यादिका कल्पना दोषोत्प्रेक्षालक्षणा; शास्त्रे त्वावश्यकादिके परममङ्गलस्वरूपेऽभ्युपगम्यमाने, तद्भिन्ने मङ्गले चाऽनुपादीयमाने हन्त ! किममङ्गलम्, का वाऽनवस्था त्वया प्रेर्यते ? । तस्मादाकाशरोमन्थनमेव परस्य दोषोद्भावनमिति भावः । आह— यदि शास्त्रं स्वयमेव

१ मङ्गलकरणाच्छास्त्रं न मङ्गलम्, अथ च मङ्गलस्याऽपि । मङ्गलमतोऽनवस्था न मङ्गलममङ्गलत्वाद् वा ॥ १५ ॥

२ शास्त्रार्थान्तरभूते मङ्गले भवेत् कल्पनैषा । शास्त्रे मङ्गले (मङ्गलरूपे) किममङ्गलं काऽनवस्था वा ? ॥ १६ ॥ ३ गाथा १५ ।

गुणसुस्थितेन गुरुणा विधिनैव प्रव्रज्या प्रदातव्या। ततः शिक्षापदमिति शिक्षायाः पदं स्थानं शिक्षापदम्, शिक्षैव वा पदं स्थानं शिक्षापदम्; विधिना प्रव्रजितस्य शिष्यस्य ततः शिक्षाऽधिकारो भवतीत्यर्थः। सा च शिक्षा द्विविधा–ग्रहणशिक्षा, आसेवनाशिक्षा च। तत्र द्वादश वर्षाणि यावत् सूत्रं त्वयाऽध्येतव्यमित्युपदेशो ग्रहणशिक्षा, आसेवनाशिक्षा तु प्रत्युपेक्षणादिक्रियोपदेशः। आह च–

" सा पुण दुविहा सिक्खा गहणे आसेवणे य नायव्वा। गहणे सुत्ताहिज्झण आसेवण तिप्पकप्पाई " ॥ १ ॥

अन्ये तु– शिक्षाशब्दाद् व्रतमिति पदं पृथक् कृत्वा व्रतमिति कोऽर्थः ?–शिक्षाऽनन्तरं रात्रिभोजनविरमणषष्ठेषु पञ्चसु महाव्रतेषूपस्थाप्यते शिष्यः, इत्येतदपि द्वितीयं व्याख्यानं कुर्वन्ति। एतच्च कल्पचूर्ण्यां चिरन्तनटीकायां च न दृष्टम्, इत्यस्माभिरुपेक्षितम्। ततः सूत्रेऽधीते यद् विनेयः कार्यते, तदाह–'अत्थग्गहणं च त्ति' द्वादश वर्षाण्यधीतसूत्रः सन्नसावर्थग्रहणं कार्यते–तस्य पूर्वाधीतसूत्रस्य द्वादश वर्षाणि यावदेषोऽर्थं ग्राह्यत इत्यर्थः। यथा हि हलारघट्टगन्त्यादेर्मुक्तो बुभुक्षितो बलीवर्दः प्रथमं तावच्छोभनमशोभनं वा तृणादिकमास्वादमनवगच्छन्नपि सर्वमभ्यवहरति; पश्चाच्च रोमन्थावस्थायां तदास्वादमवगच्छति; एवं विनेयोऽर्थमनवबुध्यमानोऽपि द्वादश वर्षाणि सर्वं सूत्रमधीते, अर्थावगमाभावे च तत् तस्याऽनास्वादं भवति; अर्थग्रहणावस्थायां तु तदवगमात् सुस्वादमाप्यायकं च जायते, अतोऽधीतसूत्रेण द्वादश वर्षाण्यवश्यमर्थः श्रोतव्यः। यथा वा कृषीवलः शाल्यादिधान्यं प्रथमं वपति, ततः पालयति, लुनाति, मलति, पुनीते, गृहमानयति, पश्चात्तु निराकुलचित्तस्तदुपभोगं करोति, तदभावे वपनादिपरिश्रमस्य निष्फलत्वप्रसङ्गात्; एवं शिष्योऽपि सूत्रमधीत्य यदि तदर्थं न शृणुयात्, तदा तदध्ययनप्रयासो विफल एव स्यात्; तस्मात् सूत्राध्ययनानन्तरमवश्यमेव द्वादश वर्षाणि तदर्थः श्रोतव्यः। तस्माद् यत एवं स्थविरकल्पक्रमो यदुत–प्रथमं प्रव्रज्या, ततः सूत्राध्ययनम्, ततोऽप्यर्थग्रहणमिति; अतोऽनुयोगप्रदानक्रमेणैवेहाऽधिकार इत्येवं प्रस्तुतमभिसंबध्यते। सूत्राध्ययनानन्तरभावी हि तदर्थव्याख्यानरूपः स्थविरकल्पक्रमदृष्टोऽनुयोग एवावश्यकस्य शास्त्रकृता वक्तुमारब्धः, अतः सूत्राध्ययनकालस्यातिक्रान्तत्वेनेह विवक्षितत्वादनुयोगस्यैवाऽभिधित्सितत्वात् तत्प्रदानक्रमेणैवाऽधिकार इति भावः। एतावच्चाऽस्यां गाथायां प्रकृतोपयोगि। यत्पुनरन्यद् व्याख्यास्यते– ' अनिअओ वासो निप्फत्ती य विहारो' इत्यादि, तत् प्रासङ्गिकमित्यवगन्तव्यम्। तत्र 'अनिअओ वासो त्ति' ततोऽस्य गृहीतसूत्रार्थस्य शिष्यस्याऽनियतो वासः क्रियते, ग्रामनगरसंनिवेशादिष्वनियतनिवासेनैष गृहीतसूत्रार्थः शिष्यो यद्याचार्यपदयोग्यः, तदा जघन्यतोऽपि सहायद्वयं दत्त्वाऽऽत्मतृ-

१ क. 'गुणस्वस्थितेन'। ख ग 'गुणस्थितेन'।

२ सा पुनर्द्विविधा शिक्षा ग्रहणमासेवनं च ज्ञातव्ये। ग्रहणं सूत्राध्ययनमासेवनं तृप्रकल्पादि ॥ १ ॥ ३ क ख. ग. ततो।

आचार्यः प्राह–

[1]संत्थे तिहा विहत्ते तदन्तरालपरिकप्पणं कत्तो ?। सव्वं च निज्जरत्थं सत्थमओऽमंगलमजुत्तं ॥१९॥

बुद्ध्या शास्त्रे त्रिधा विभक्ते तस्य शास्त्रस्यान्तरालं तदन्तरालं तस्य परिकल्पनं कुतः संभवति ?– न कुतश्चिदित्यर्थः । यथा हि संपूर्णे मोदकादिवस्तुनि त्रिखण्डे विकल्पितेऽन्तरालं न संभवति; तथाऽत्रापि, इति कस्याऽमङ्गलता स्यात् ? इति । यदि नाम शास्त्रं त्रिधा विभक्तम्, तथापि कथं तस्य सर्वस्याऽपि मङ्गलता ? इत्याह– सर्वं चावश्यकादि शास्त्रं निर्जरार्थं कर्मापगमरूपा निर्जरा अर्थः प्रयोजनमस्येति निर्जरार्थम्; तथा च सति तपोवत् स्वयमेव मङ्गलमिदमिति सामर्थ्याद् गम्यते । यदि नाम निर्जरार्थत्वात् तपोवत् स्वयमेवाऽऽवश्यकादिशास्त्रं मङ्गलम्; ततः किम् ?, इत्याह–अतोऽमङ्गलमयुक्तम्, यतः सर्वमेव शास्त्रं मङ्गलम्, अतो मङ्गलात्मनि तस्मिंस्त्रिधा विभक्ते यदुच्यते 'अपान्तरालद्वयममङ्गलम्' तदयुक्तमित्यर्थः । यदि हि शास्त्रं स्वयं मङ्गलं न भवेत् तदाऽन्यमङ्गलाऽव्याप्तत्वात् क्वापि तदमङ्गलं भवेत्, यदा तु सर्वमपि स्वयमेव तद् मङ्गलम्, तदा क्वापि तस्याऽमङ्गलता न युक्तेति भावः ॥ इति गाथार्थः ॥ १९ ॥

अथ प्रेरकः प्राह—

[2]जइ मंगलं सयं चिय सत्थं तो किमिह मंगलग्गहणं ?। सीसमइमंगलपरिग्गहत्थमेत्तं तदभिहाणं ॥२०॥

यदि हि स्वयमेव शास्त्रं मङ्गलमिष्यते तदा '[3]तं मंगलमाईए मज्झे' इत्यादिवचनात् किमिह मङ्गलग्रहणं क्रियते ?, स्वत एव मङ्गले मङ्गलविधानस्याऽनर्थकत्वादिति भावः । इति परेण प्रेरिते गुरुराह– 'सिस्सेत्यादि' शिष्यस्य मतिः शिष्यमतिस्तस्या मङ्गलपरिग्रहः सोऽर्थः प्रयोजनमस्य तत् तथा तदर्थमेव शिष्यमतिमङ्गलपरिग्रहार्थमात्रं तदभिधानं मङ्गलाभिधानमित्यर्थः; इदमुक्तं भवति– शास्त्रादनर्थान्तरभूतमेव मङ्गलमुपादीयते, नाऽर्थान्तरमिति प्रागेवोक्तम्, नन्दिर्हि मङ्गलत्वेनाऽभिधास्यते, सा च पञ्चज्ञानात्मिका, ततः शास्त्राण्यावश्यकादीनि सर्वाण्यपि श्रुतज्ञानरूपतया नन्द्यन्तर्गतान्येव, नन्दिरपि श्रुतरूपत्वेनाऽऽवश्यकादिशास्त्रान्तर्गतैव । तस्माद् नन्देर्मङ्गलत्वेनाऽभिधाने शास्त्रान्तर्गतमेव मङ्गलमभिहितं भवति । तत्रापि नाऽमङ्गलस्य सतः शास्त्रस्य मङ्गलताऽऽपादनार्थं तदभिधानम्,

१ शास्त्रे त्रिधा विभक्ते तदन्तरालपरिकल्पनं कुतः ?। सर्वं च निर्जरार्थं शास्त्रमतोऽमङ्गलमयुक्तम् ॥ १९ ॥
२ यदि मङ्गलं स्वयमेव शास्त्रम्, तदा किमिह मङ्गलग्रहणम् ?। शिष्यमतिमङ्गलपरिग्रहार्थमात्रं तदभिधानम् ॥ २०॥ ३ गाथा १३ ।

गच्छपरिपालनक्षमाः शिष्याः, ततो विशेषेणैव सांप्रतं ममाऽऽत्महितमनुष्ठातुमुचितमिति। विचिन्त्य चेदं सति परिज्ञाने आत्मीयमायुःशेषं स्वयमेव पर्यालोचयति, तदभावेऽन्यमतिशयिनमाचार्यादिकं पृच्छति; तत्र स्तोके स्वायुषि भक्तपरिज्ञादीनामन्यतरद् मरणं प्रतिपद्यते। अथ दीर्घमायुः, केवलं जङ्घावलपरिक्षीणः, तदा वृद्धवासं स्वीकुरुते; पुष्टायां तु शक्तौ जिनकल्पादिप्रतिपत्तिमुररीकरोति। तत्र जिनकल्पं प्रतिपित्सुना प्रथममेव तावत् पञ्चभिस्तुलनाभिरात्मा तोलनीयः, तद्यथा–

"तवेण[1] सत्तेण सुत्तेण एगत्तेण बलेण य। तुलणा पंचहा वुत्ता जिणकप्पं पडिवज्जओ" ॥ १ ॥

तुलना, भावना, परिकर्म चेत्येकार्थानि। तत्राऽऽचार्यो-पाध्याय-प्रवर्तक-स्थविर-गणावच्छेदकलक्षणाः प्रायः पञ्चैव जनाः प्रशस्ताभिरेताभिः पञ्चभिर्भावनाभिर्जिनकल्पं प्रतिपित्सवः प्रथममेवाऽऽत्मानं भावयन्ति। अप्रशस्तास्तु-कन्दर्प-देवकिल्बिषका–ऽऽभियोगिका–ऽसुर-संमोहस्वरूपाः पञ्च भावनाः सर्वथा दूरतः परित्यजन्ति। तत्र तपसाऽऽत्मानं भावयंस्तथा बुभुक्षां पराजयते यथा देवाद्युपसर्गादिनाऽनेषणादिकरणतो यदि षण्मासान् यावदाहारं न लभते, तथापि न बाध्यते। सत्त्वभावनया तु भयं पराजयते, तत्र भयजयार्थं रात्रौ सुप्तेषु शेषसाधुषूपाश्रय एव कायोत्सर्गं कुर्वतः प्रथमा सत्त्वभावना भवति, द्वितीयादिकास्तूपाश्रयबाह्यादिप्रदेशेषु। आह च–

"पढमा[2] उवस्सयम्मि बीया बाहिं तइया चउक्कम्मि। सुण्णहरम्मि[3] चउत्थी अह पंचमिया मसाणम्मि" ॥ १ ॥

सूत्रभावनया तु स्वनामवत् सूत्रं परिचितं तथा करोति यथा रात्रौ दिवा चोच्छ्वासप्राणस्तोकलवमुहूर्तादिकं कालं सूत्रपरावर्तनानुसारेणैव सर्वं सम्यगवबुध्यते। एकत्वभावनया चाऽऽत्मानं भावयन् सङ्घाटिकसाध्वादिना सह पूर्वप्रवृत्तानालाप-सूत्रार्थ-सुखदुःखादिप्रश्न–मिथःकथादिव्यतिकरान् सर्वानपि परिहरति, ततो बाह्यममत्वे मूलत एव व्यवच्छेदिते पश्चाद् देहो-पध्यादिभ्योऽपि भिन्नमात्मानं पश्यन् सर्वथा तेष्वपि निरभिष्वङ्गो भवति। बलभावनायां बलं द्विविधम्– शारीरम्, मानसधृतिबलं[4] च। तत्र शारीरमपि बलं जिनकल्पार्हस्य शेषजनातिशायिकमेष्टव्यम्[5], तपःप्रभृतिभिस्त्वपकृष्यमाणस्य यद्यपि शारीरं बलं तथाविधं न भवति, तथापि धृतिबलेनाऽऽत्मा तथा भावयितव्यो यथा महद्भिरपि परीषहोपसर्गैर्न बाध्यते। एताभिः पञ्चभिर्भावनाभिर्भाविताऽऽत्मा जिनकल्पिकप्रतिरूपो गच्छेऽपि प्रतिवसन्नाहारादि परिकर्म प्रथममेव करोति, तत्राहारे तृतीयपौरुष्यामवगाढायां वल्ल-चणकादिकमन्तं प्रान्तं रूक्षं च–

१ तपसा सत्त्वेन सूत्रेणैकत्वेन बलेन च। तुलना पञ्चधोक्ता जिनकल्पं प्रतिपद्यमानस्य ॥ १ ॥

२ प्रथमा उपाश्रये द्वितीया बहिस्तृतीया चतुष्के। शून्यगृहे चतुर्थी अथ पञ्चमी श्मशाने ॥ १ ॥

३ ग. 'सुन्नअगारे'। ४ ख. घ. छ. 'मनोधृतिबलम्'। ५ क. ग, 'जनातिशायक'।

धर्मोपादानहेतुरित्यर्थः ॥ इति गाथार्थः ॥ २२ ॥

अहवा[1] निवायणाओ मंगलमिट्ठत्थपगइपच्चयओ । सत्थे सिद्धं जं जह तयं जहाजोगमाओज्जं ॥ २३ ॥

अथवा निपातनाद् मङ्गलमिति साध्यते । कथम् ?, इत्याह–इष्टार्थप्रकृतिप्रत्ययतः, तत्रेष्टो विवक्षितोऽर्थो यासां ता इष्टार्थाः प्रकृतयः; तद्यथा–'मकि मण्डने' 'मन ज्ञाने' 'मदी हर्षे' 'मुद मोद-स्वप्न-गतिषु' 'मह पूजायाम्' इत्येवमादिः प्रत्ययस्त्वेतासां प्रकृतीनां सर्वत्र 'अलच्' एव विधीयते, ततो मङ्गलमिति रूपं निपात्यते । व्युत्पत्तिस्त्वेवम्–मङ्क्यतेऽलंक्रियते शास्त्रमनेनेति मङ्गलम्, तथा मन्यते ज्ञायते निश्चीयते विघ्नाभावोऽनेन, तथा माद्यन्ति हृष्यन्ति मदमनुभवन्ति, मोदन्ते, शेरते विघ्नाभावेन निष्प्रकम्पतया सुप्ता इव जायन्ते, शास्त्रस्य पारं गच्छन्त्यनेनेति, तथा मह्यन्ते पूज्यन्तेऽनेनेति मङ्गलमिति । एवमादि व्याकरणशास्त्रे यद् यथा निपातनं सिद्धम्, तद् यथायोगं यथासंबन्धमत्र स्वधियाऽऽयोज्यं लक्षणज्ञैः ॥ इति गाथार्थः ॥ २३ ॥

मं[2] गालयइ भवाओ मंगलमिहेवमाइ नेरुत्ता । भासंति सत्थवसओ नामाइ चउव्विहं तं च ॥ २४ ॥

अथवा मां गालयति भवादिति मङ्गलं संसारादपनयतीत्यर्थः । इह मङ्गलविचारे एवमादि नैरुक्ताः शब्दविदः शास्त्रवशतो व्याकरणानुसारेण भाषन्ते मङ्गलशब्दार्थं व्याचक्षते । आदिशब्दात् शास्त्रस्य मा भूद् गलो विघ्नोऽस्मादिति मङ्गलम्, अथवा शास्त्रस्य मा भूद् गलो नाशोऽस्मिन्निति मङ्गलम्, सम्यग्दर्शनादिमार्गलयनाद् वा मङ्गलमित्यादि द्रष्टव्यम्, इत्यलं विस्तरेण । इह तत्त्व-पर्याय-भेदैर्व्याख्या, तत्र तत्त्वं शब्दार्थरूपम्, तत्तावद् निर्णीतम्। पर्यायास्तु मङ्गलं, शान्तिः, विघ्नविद्रावणमित्यादयः स्वयमेव द्रष्टव्याः। भेदांस्तु स्वयमेव निरूपयितुमाह–'नामाइ चउव्विहं तं चेति, तच्च मङ्गलं नामादिभेदतश्चतुर्विधं भवति । तद्यथा–नाममङ्गलम्, स्थापनामङ्गलम्, द्रव्यमङ्गलम्, भावमङ्गलं च ॥ इति गाथार्थः ॥ २४ ॥

तत्र नाम किमुच्यते ? इत्याशङ्क्य सामान्येन नाम्नस्तावल्लक्षणमाह—

पज्जायाऽणभिधेयं[3] ठिअमण्णत्थे तयत्थनिरवेक्खं । जाइच्छिअं च नामं जावदव्वं च पाएण ॥ २५ ॥

1 अथवा निपातनाद् मंगलमिष्टार्थप्रकृतिप्रत्ययतः । शास्त्रे सिद्धं यद् यथा तद् यथायोगमायोज्यम् ॥ २३ ॥

2 मां गालयति भवाद् मङ्गलमिहैवमादि नैरुक्ताः । भाषन्ते शास्त्रवशतो नामादि चतुर्विधं तच्च ॥ २४ ॥

3 पर्यायाऽनाभिधेय स्थितमन्यार्थे (अन्वर्थे वा) तदर्थनिरपेक्षम् । यादृच्छिकं च नाम यावद्द्रव्यं च प्रायेण ॥ २५ ॥

पुंव्वपउत्तं विणयं मा हु पमाएहि विणयजोग्गेसु । जो जेण पगारेणं उवजुज्जइ तं च जाणाहि ॥ २ ॥
ओमो समराइणिओ अप्पतरसुओ य मा एणं तुब्भे । परिभवह एस तुम्हवि विसेसओ सपयं पुज्जो ॥ ३ ॥

-इत्यादिशिक्षां दत्त्वा गच्छाद् विनिर्गते चक्षुर्गोचरातीते तस्मिन्नानन्दिताः साधवः प्रतिनिवर्तन्ते । उक्तं च–

"पैक्खीव पत्तसहिओ सभंडगो वच्चए निरवइक्खो । धीरो घणवन्दाओ च नीहरिओ विज्जुपुंजो व्व ॥ १ ॥
सीहम्मि व मन्दरकन्दराओ गच्छा विणिग्गए तम्मि । चक्खुविसयमइगए अ इंति आणंदिआ साहू ॥ २ ॥
आभोएउं खेत्त निव्वाघाएण मासनिव्वाहिं । गन्तूण तत्थ विहरे साहू पडिवन्नजिणकप्पो" ॥ ३ ॥

एवं च प्रतिपन्नजिनकल्पो यत्र ग्रामे मासकल्पं चतुर्मासकं वा करिष्यति, तत्र षड् भागान् कल्पयति। ततश्च यत्र भागे एकस्मिन् दिने गोचरचर्यायां हिण्डितस्तत्र पुनरपि सप्तम एव दिवसे पर्यटति, भिक्षाचर्यां ग्रामान्तरगमनं च तृतीयपौरुष्यामेव करोति । चतुर्थपौरुषी च यत्राऽवगाहते, तत्र नियमादवतिष्ठते । भक्तं पानकं च पूर्वोक्तैषणाद्वयाभिग्रहेणाऽलेपकृदेव गृह्णाति । एषणादिविषयं मुक्त्वा न केनापि सार्धं जल्पति, एकस्यां च वसतौ यद्यप्युत्कृष्टतः सप्त जिनकल्पिकाः प्रतिवसन्ति, तथापि परस्परं न भाषन्ते । उपसर्गपरीषहान् सर्वानपि सहत एव, रोगेषु चिकित्सां न कारयत्येव, तद्वेदनां तु सम्यगेव विषहते, आपातसंलोकादिदोषरहित एव स्थण्डिले उच्चारादीन् करोति, नाऽस्थण्डिले;

"[3]अममत्तअपरिकम्मा नियमा जिणकप्पियाण वसहीओ । एमेव य थेराणं मोत्तूण पमज्जणं एक्कं" ॥ १ ॥

---

१ पूर्वप्रवृत्तं विनयं मा खलु प्रमादयेर्विनययोग्येषु । यो येन प्रकारेण उपयुज्यते तं च जानीहि ॥ १ ॥
अवम. समरान्निकोऽल्पतरश्रुतश्च मा एनं यूयम् । परिभवत एष युष्माकमपि सांप्रतं पूज्यः ॥ ३ ॥

" ये च ते बहुश्रुतपर्यायज्येष्ठादयो विनययोग्या गौरवार्हास्तेषु पूर्वप्रवृत्तं यथोचितं विनयं मा प्रमादये.–प्रमादेन परिहारयेः, यश्च साधुर्येन तपःस्वाध्याय–वैयावृत्त्यादिना प्रकारेणोपयुज्यते–निर्जरां प्रत्युपयोगमुपयाति, तं च जानीहि–त तथैव प्रवर्तयेरित्यर्थः । अथ साधूनामनुशिष्टिं प्रयच्छति–"ओमो" अवमोऽयं, समरान्निकोऽयम्, अल्पश्रुतो वाऽयमस्मदपेक्षया, अतः किमर्थमस्याऽऽज्ञानिर्देशं वयं कुर्महे ? इति मा यूयमेनं परिभवत, यत एष युष्माकं साम्प्रतमस्मत्स्थानीयत्वाद् गुरुतरगुणाधिकत्वाच्च विशेषतः पूज्य., न पुनरवज्ञातुमुचित इति भावः " इति बृहत्कल्पस्यैतस्या एव गाथाद्वयाष्टीकायां श्रीक्षेमकीर्तिसूरिः ।

२ पक्षीव पत्रसहित. सभाण्डकः ( सपात्रक ) व्रजति निरपेक्ष । धीरो घनवृन्दाच्च निःसृतो विद्युत्पुञ्ज इव ॥ १ ॥
सिंह इव मन्दरकन्दराया गच्छाद् विनिर्गते तस्मिन् । चक्षुर्विषयमतिगते च यान्त्यानन्दिता. साधव ॥ २ ॥
आभोग्य ( विज्ञाय ) क्षेत्रं निर्व्याघातेन ( विघ्नाभावेन ) मासनिर्वाहि ( मासनिर्वहणसमर्थं ) । गत्वा तत्र विहरेत् साधुः प्रतिपन्नजिनकल्प. ॥ ३ ॥

३ अममत्वाऽपरिकर्माणो नियमाज्जिनकल्पिकानां वसतयः । एवमेव च स्थविराणां मुक्त्वा प्रमार्जनमेकम् ॥ १ ॥

सा स्थापनाऽभिधीयते, यत् किम् ?, इत्याह–यत् क्रियते इन्द्रादिस्थापनारूपतया विधीयते वस्तु, पुनःशब्दो नामलक्षणात् स्थापनालक्षणस्य वैसदृश्यद्योतकः । केन ?, इत्याह– तदभिप्रायेण तस्य सद्भूतेन्द्रस्याऽभिप्रायोऽध्यवसायस्तेन । कथंभूतं तद् वस्तु ?, इत्याह– तदर्थशून्यं स चाऽसावर्थश्च तदर्थः सद्भूतेन्द्रलक्षणस्तेन शून्यं तदर्थशून्यम् । पुनरपि कथंभूतम् ?, तादृशाकारं सद्भूतेन्द्रसमानाकारम्, वाशब्दस्य भिन्नक्रमत्वाद् निराकारं वा सद्भूतेन्द्राकारशून्यमित्यर्थः, चित्र-लेप्य-काष्ठ-पाषाणादिषु तादृशाकारं भवति, अक्षादिषु तु निराकारमित्यर्थः । पुनः किंभूतम् ?, इत्वरम्–अल्पकालीनम्, इतरद्वा यावत्कथिकम् । तत्रेत्वरं चित्राक्षादिगतम्, यावत्कथिकं तु नन्दीश्वरचैत्यप्रतिमादि; तदपि हि 'तिष्ठतीति स्थापना' इति स्थापनात्वेन समये निर्दिष्टमेव । तदिदमिह तात्पर्यम्–यद् वस्तु सद्भूतेन्द्रार्थशून्यं सत् तद्बुद्ध्या तादृशाकारं निराकारं वा, स्तोककालं यावत्कथिकं वा स्थाप्यते सा स्थापनेति । प्रकृते योजना त्वित्थं क्रियते–चित्रकर्मादिगतः परममुनिः स्थापनं स्थापना तया मङ्गलम्, स्थाप्यत इति वा स्थापना तया मङ्गलं स्थापनामङ्गलमिति व्यपदिश्यते ॥ इति गाथार्थः ॥ २६ ॥

अथ भाष्यकारः स्वयमेव नाम-स्थापनामङ्गलयोरुदाहरणमुपदर्शयन्नाह—

जह मंगलमिह नामं जीवा-ऽजीवो-भयाण देसीओ । रूढं जलणाईणं ठवणाए सोत्थिआईणं ॥ २७ ॥

यथाशब्द उदाहरणोपन्यासार्थः । क यथा ?, इत्याह– जीवा-ऽजीवोभयानां ज्वलनादीनां देशीतो देशीभाषया मङ्गलमिति नाम रूढम्, तत्र जीवस्याऽग्नेर्मङ्गलमिति नाम रूढम्, सिन्धुविषयेऽजीवस्य दवरकवलनकस्य मङ्गलमिति नाम रूढम्, लाटदेशे जीवाजीवोभयस्य तु मङ्गलमिति नाम रूढं वन्दनमालायाः, दवरिकादीनामिहाऽचेतनत्वात्, पत्रादीनां तु सचेतनत्वाज्जीवाजीवोभयत्वं भावनीयम् । स्वस्तिकादीनां तु या स्थापना लोके तस्या रूढं स्थापनामङ्गलत्वमिति शेषः ॥ इति गाथार्थः ॥ २७ ॥

अथ द्रव्यलक्षणमाह–

दवए दुयए दोरवयवो विगारो गुणाण संदावो । दव्वं भव्वं भावस्स भूअभावं च जं जोग्गं ॥ २८ ॥

'दु द्रु गतौ' इति धातुः, ततश्च द्रवति तांस्तान् स्वपर्यायान् प्राप्नोति मुञ्चति वेति तद् 'द्रव्यम्' इत्युत्तरार्धादानीय सर्वत्र संवध्यते, तथा द्रूयते स्वपर्यायैरेव प्राप्यते मुच्यते चेति द्रव्यम्, यान् किल पर्यायान् द्रव्यं प्राप्नोति तैस्तदपि प्राप्यते, यांश्च मुञ्चति तैस्तदपि

१ यथा मङ्गलमिह नाम जीवा-ऽजीवो-भयानां देशीतः । रूढं ज्वलनादीना स्थापनाया. स्वस्तिकादीनाम् ॥ २७ ॥
२ द्रवति द्रूयते द्रोरवयवो विकारो (वा) गुणानां सद्भावः । द्रव्यं भव्य भावस्य भूतभावं च यद् योग्यम् ॥ २८ ॥

"[1]थेराणं नाणत्तं अंतरंतं अप्पिणन्ति गच्छस्स । गच्छे निरवज्जेणं करेन्ति सव्वं पि परिकम्मं ॥ १ ॥
एक्केक्कपडिग्गहगा सप्पाउरणा हवंति थेरा उ । जेसिं उण जिणकप्पे न य तेसिं वत्थपायाणि ॥ २ ॥
निप्पडिकम्मसरीरा अवि अच्छिमलं पि नेअ अवर्णिति । विसहंति जिणा रोगं कारिंति कयाइ न तिगिच्छं ॥ ३ ॥

इत्यलं विस्तरेण, तदर्थिना तु कल्पग्रन्थोऽन्वेषणीय इति । तस्माद् यतः प्रव्रज्या-शिक्षापदानन्तरमर्थग्रहणं विधेयम्, ततोऽर्थ-व्याख्यारूपेणाऽनुयोगेनाऽयमधिकारः सूत्राध्ययनकालस्यातिक्रान्तत्वेन तस्यैवेह प्रस्तुतत्वादिति स्थितम् ॥ इति गाथार्थः ॥ ७ ॥

आह– कृतपञ्चनमस्काराय शिष्याय सामायिकादिश्रुतं ददत्याचार्याः, तेनैव च क्रमेणाऽनुयोगमित्युक्तम्, यदि नामैवमुक्तं ततः किम् ?, इत्याह–

आईए[2] नमोक्कारो जइ पच्छाऽऽवासयं तओ पुव्वं । तस्स भणिएऽणुओगे जुत्तो आवसयस्स तओ ॥ ८ ॥

यदीत्यभ्युपगमे, यद्यादौ नमस्कारो दीयते ततः पश्चात् सामायिकाद्यावश्यकम्, ततस्तर्ह्येतदनेन न्यायेनाऽऽपतितं यदुत– पूर्वं प्रथमं तस्य नमस्कारस्य भणिते कृतेऽनुयोगे व्याख्याने ततो युक्तः कर्तुमावश्यकस्याऽनुयोगः; व्याख्येयाऽनुरोधेनैव हि व्याख्यानं प्रवर्तते, व्याख्येयस्य चावश्यकस्यादौ नमस्कारो देयत्वेन भवद्भिरभ्युपगम्यते, अतस्तस्यानुयोगे कृते आवश्यकस्याऽसौ कर्तुमुचितः, तत आद्यगाथायां 'नमोक्काराणुओगपुव्वयं[3] आवस्सयाणुओगं वोच्छं' इति वक्तुं युक्तमिति भावः ॥ इति गाथार्थः ॥ ८ ॥

अत्रोत्तरमाह–

सो[4] सव्वसुअक्खन्धब्भन्तरभूओ जओ तओ तस्स । आवासयाणुओगादिगहणगाहिओऽणुओगो वि ॥९॥

स नमस्कारः सर्वेषामप्यावश्यक–दशवैकालिको–त्तराध्ययनादिश्रुतस्कन्धानामभ्यन्तर्भूतोऽन्तर्गतो यतः, ततस्तस्य नमस्कार-

---

१ स्थविराणां नानात्वमशक्नुवन्तमर्पयन्ति गच्छस्य । गच्छे निरवद्येन कुर्वन्ति सर्वमपि परिकर्म ॥ १ ॥
एकैकप्रतिग्रहका सप्रावरणा भवन्ति स्थविरास्तु । येषां पुनर्जिनकल्पो न च तेषां वस्त्रपात्राणि ॥ २ ॥
निष्प्रतिकर्मशरीरा अप्यक्षिमलमपि नैवाऽपनयन्ति । विषहन्ते जिनाः (जिनकल्पिकाः) रोगं कारयन्ति न कदापि चिकित्साम् ॥ ३ ॥
२ आदौ नमस्कारो यदि पश्चादावश्यकं ततः पूर्वम् । तस्य भणितेऽनुयोगे युक्त आवश्यकस्य ततः ॥ ८ ॥
३ नमस्कारानुयोगपूर्वकमावश्यकानुयोगं वक्ष्ये ।
४ स सर्वश्रुतस्कन्धाभ्यन्तरभूतो यतस्ततस्तस्य । आवश्यकानुयोगादिग्रहणगृहीतोऽनुयोगोऽपि ॥ ९ ॥

इह नामादिविचारे प्रक्रान्ते भाव एव वस्तु, विवक्षितार्थक्रियासाधकत्वात्, उभयसंमतवस्तुवत्; न हि भावेन्द्रवद् विवक्षितार्थसाधनसमर्था गोपालदारकाद्या नामेन्द्रादयः, अतः किमत्र शेषैर्भावार्थशून्यैर्नामादिभिः ? न किञ्चिदित्यर्थः । अत्रोत्तरमाह–'नामादओ इत्यादि' इदमुक्तं भवति– यदि सामान्येनैव भावो वस्तुत्वेनाऽभ्युपगम्यते, तदा सिद्धसाध्यता, यतो नामादयोऽपि, आदिशब्दात् स्थापना–द्रव्यपरिग्रहः, भावाः भावविशेषा इत्यर्थः । कुतः ?, इत्याह– यद् यस्मात् तेऽपि नामादयो वस्तुनः पर्याया धर्माः, तथाहि– अविशिष्टे इन्द्रवस्तुन्युच्चरिते नामादिकं भेदचतुष्टयमपि प्रतीयते– किमनेन नामेन्द्रो विवक्षितः, आहोस्वित् स्थापनेन्द्रः, द्रव्येन्द्रः, भावेन्द्रो वा ? इति । ततः सामान्यस्येन्द्रवस्तुनश्चत्वारोऽप्यमी पर्यायाः, इति नामादयोऽपि भावविशेषा एव, इति भावस्य वस्तुत्वसाधने न किञ्चिद् नः क्षूयते; पर्यायः, भेदः, भाव इत्यनर्थान्तरत्वात् । अथ विशिष्टार्थक्रियासाधकं भावेन्द्रादिकं भावमाश्रित्य वस्तुत्वं साध्यते, तथापि न काचित् क्षतिः, यतो भावेन्द्रादेर्भावस्य विशिष्टार्थक्रियानिर्वर्तकत्वे नामेन्द्रादिपर्यायाणामपि तद् द्रष्टव्यमेव, द्रव्यरूपतया पर्यायाणां परस्परमभेदात् ॥ इति गाथार्थः ॥ ५५ ॥

अथवा भावमङ्गलादिकारणत्वाद् नामादीन्यपि भावमङ्गलादिरूपाण्येव, इति दर्शयन्नाह—

अहवा[1] नामं--ठवणा--दव्वाइं भावमङ्गलंगाइं । पाएण भावमङ्गलपरिणामनिमित्तभावाओ ॥ ५६ ॥

अथवा नाम–स्थापना–द्रव्याणि भावमङ्गलस्यैवाऽङ्गानि कारणानि । कुतः ?, इत्याह– 'पाएण इत्यादि' भावमङ्गलपरिणामो भावमङ्गलोपयोगो भावमङ्गलसाध्वादिपरिणतिरूपो वा, तन्निमित्तभावात् तत्कारणत्वादित्यर्थः । यच्च यस्य कारणं तत् तद्व्यपदेशं लभत एव, यथा 'आयुर्घृतम्' 'रूपको भोजनम्' इत्यादि । क्लिष्टकर्मणां केषाञ्चिद् नामादीनि भावमङ्गलकारणानि न भवन्त्यपि, इति प्रायो ग्रहणम् । मङ्गलविचारश्चेह प्रक्रान्तः; तेन भावमङ्गलकारणानि नामादीन्युक्तानि, यावता भावेन्द्रादेरपि तानि कारणत्वेन द्रष्टव्यान्येव । तस्माद् भावमङ्गलादिकारणत्वाद् नामादीन्यपि तद्रूपाण्येव, इति भावस्य वस्तुत्वसाधने नामादीनामपि तत्कारणत्वात् तद् न क्षूयते ॥ इति गाथार्थः ॥ ५६ ॥

अथ नामादीनां भावमङ्गलकारणत्वे उदाहरणान्याह—

जह[2] मङ्गलाभिहाणं सिद्धं विजयं जिणिंदनामं च । सोऊण, पेच्छिऊण य जिणपडिमालक्खणाईणि॥५७॥



१ अथवा नाम–स्थापना–द्रव्याणि भावमङ्गलाङ्गानि । प्रायेण भावमङ्गलपरिणामनिमित्तभावात् ॥ ५६ ॥

२ यथा मङ्गलाभिधानं सिद्धं विजयं जिनेन्द्रनाम च । श्रुत्वा, प्रेक्ष्य च जिनप्रतिमालक्षणादीनि ॥ ५७ ॥

" नत्थि नएहिं विहूणं सुत्तं अत्थो अ जिणमए किंचि । आसज्ज उ सोआरं नएण य विसारओ बूया "

इति वचनाज्जिनमते सर्वं वस्तु प्रायो नयैर्विचार्यते, अतो नाम-स्थापनादीनपि प्रस्तुतान् नयैर्विचारयन्नाह—

नामाइतियं[2] दव्वट्ठियस्स भावो य पज्जवनयस्स । संगह--व्ववहारा पढमगस्स सेसा य इयरस्स ॥ ७५ ॥

एतेषु नामादिषु मध्ये नाम स्थापना-द्रव्यनिक्षेपत्रयं द्रव्यास्तिकनयस्यैवाऽभिमतं न पर्यायास्तिकस्य, नामादिनिक्षेपत्रयस्य विवक्षितभावशून्यत्वात्; पर्यायास्तिकस्य तु भावग्राहित्वादिति । 'भावो' भावनिक्षेपः पुनः पर्यायास्तिकनयस्याऽभिमतो नेतरस्य, तस्य द्रव्यमात्रग्राहित्वेन भावाऽनवलम्बित्वादिति । आह– ननु नया नैगमादयः प्रसिद्धाः, ततस्तैरेवाऽयं विचारो युज्यते, अथ तेऽत्रैव द्रव्य-पर्यायास्तिकनयद्वयेऽन्तर्भवन्ति, तर्ह्युच्यतां कस्य कस्मिन्नन्तर्भावः ?, इत्याशङ्क्याह– ' संगहेत्यादि ' नैगमस्तावत् सामान्यग्राही संग्रहेऽन्तर्भवति, विशेषग्राही तु व्यवहारे; संग्रहव्यवहारौ तु प्रस्तुतनयद्वयस्य मध्ये प्रथमकस्य द्रव्यास्तिकस्य मतमभ्युपगच्छतः– द्रव्यास्तिकमतेऽन्तर्भवत इति तात्पर्यम् । शेषास्तु ऋजुसूत्रादय इतरस्य द्वितीयस्य पर्यायास्तिकस्य मतमभ्युपगच्छन्तोऽत्रैवाऽन्तर्भवन्तीति हृदयम् । आचार्यसिद्धसेनमतेन चेह ऋजुसूत्रस्य पर्यायास्तिकेऽन्तर्भावो दर्शितः, सिद्धान्ताभिप्रायेण तु संग्रह व्यवहारवद् ऋजुसूत्रस्याऽपि द्रव्यास्तिक एवाऽन्तर्भावो द्रष्टव्यः, तथा चोक्तं सूत्रे–

" उजुसुयस्स[3] एगे अणुवउत्ते आगमओ एगं दव्वावस्सयं पुहत्तं नेच्छइ " इति ।

तदनेनाऽस्य द्रव्यवादित्वं दर्शितम्, इति कथं पर्यायास्तिकेऽन्तर्भावः स्यात् ? ॥ इति गाथार्थः ॥ ७५ ॥

आह–ननु संग्रहादिनया नामनिक्षेपं सर्वमप्येकत्वेनेच्छन्ति; भेदेन वा ?, एवं स्थापनादिनिक्षेपेष्वपि प्रत्येकं वक्तव्यम्, इत्याशङ्क्याह—

जं[4] सामन्नग्गाही संगिण्हइ तेण संगहो निययं । जेण विसेसग्गाही ववहारो तो विसेसेइ ॥ ७६ ॥

---

१ पृष्ठ २६ । २ नामादित्रिक द्रव्यास्तिकस्य भावश्च पर्यवनयस्य । सग्रह-व्यवहारौ प्रथमकस्य शेषाश्चेतरस्य ॥ ७५ ॥

३ ऋजुसूत्रस्यैकोऽनुपयुक्त आगमत एक द्रव्यावश्यकं पृथक्त्व नेच्छति । अनुयोगद्वारसूत्रस्थोऽयं पाठः, तट्टीका चेयम्- " उजुसुयस्सेत्यादि–ऋजु अतीता-ऽनागत-परकीयपरिहारेण प्राञ्जलं वस्तु सूत्रयत्यभ्युपगच्छतीति ऋजुसूत्र , अय हि वर्तमानकालभाव्येव वस्तु अभ्युपगच्छति, नाऽतीतम्, विनष्टत्वात्, नाऽप्यनागतम्, अनुत्पन्नत्वात् ; वर्तमानकालभाव्यपि स्वकीयमेव मन्यते, स्वकार्यसाधकत्वात्, स्वधनवत्; परकीय तु नेच्छति स्वकार्याऽप्रसाधकत्वात्, परधनवत् । तस्मादेको देवदत्तादिरनुपयुक्तोऽस्य मते आगमत एक द्रव्यावश्यकमिति । ' पुहत्तं नेच्छइ त्ति ' अतीता-ऽनागतभेदत. परकीयभेदतश्च पृथक्त्व पार्थक्य नेच्छत्यसौ, किं तर्हि ? वर्तमानकालीनं स्वकमेव चाऽभ्युपैति, तच्चैकमेवेति" ।

४ यत् सामान्यग्राही सगृह्णाति तेन संग्रहो नियतम् । येन विशेषग्राही व्यवहारस्तस्माद् विशेषयति ॥ ७६ ॥

ततन्तुसन्तानः पट इत्यादि। स्थापना पुनर्यस्तस्यैव सर्वस्य वस्तुनो निज आकारः। भाविकपालादिकार्यापेक्षया तु या 'से' तस्य सर्वस्यापि वस्तुनः कारणता हेतुता तद् द्रव्यम्, "भूतस्य भाविनो वा भावस्य हि कारणं तु यल्लोके, तद् द्रव्यम्" इति वचनात्। मृत्पिण्डादिवस्तुनस्तु कार्यापन्नं जन्यत्वापन्नं तदेव घटादिकं सर्वं वस्तु भावोऽभिधीयते, भवनं भाव इति कृत्वा। इत्थं सर्वं वस्तु चतूरूपाऽविनाभूतं दृष्टम्, एवमेव सम्यग्दर्शनव्यवस्थानात्, सर्वनयसमूहात्मकत्वाज्जिनमतस्य। तदेवं सर्वस्यापि वस्तुनश्चतूरूपतायां किमुच्यते 'इह भावो च्चिय वत्थुं तयत्थसुन्नेहिँ किं व सेसेहिं' इत्यादि ?; न ह्येकस्मिन्नेव वस्तुन्येककालं विद्यमानानां पर्यायाणां मध्ये 'अयं वस्तु' 'अपरस्त्ववस्तु' इति वक्तुं शक्यते, द्रव्यरूपतया सर्वेषामपि तेषामेकत्वादिति भावः॥ इति गाथार्थः ॥६०॥

अस्मिंश्च नामादिरूपचतुष्टये नामनयः प्रधानं नामैव मन्यते। तत्र ये सुगतमतानुसारिणो "न ह्यर्थे शब्दाः सन्ति" इत्यादिवचनाद् नाम्नो वस्तुधर्मत्वमेव नेच्छन्ति, तान् प्रति नामनयः प्राह—

वत्थुसरूवं नामं तप्पच्चयहेउओ सधम्म व्व। वत्थुं नाऽणभिहाणा होज्जाऽभावो व्विवाऽवच्चो ॥६१॥

नामनयस्याऽयमभिप्रायः–वस्तुनः स्वरूपं नाम, तत्प्रत्ययहेतुत्वात्, स्वधर्मवत्, इह यद् यस्य प्रत्ययहेतुस्तत् तस्य धर्मः, यथा घटस्य स्वधर्मा रूपादयः, यच्च यस्य धर्मो न भवति न तत् तस्य प्रत्ययहेतुः, यथा घटस्य धर्माः पटस्य, संपद्यते च घटाभिधानाद् घटे संप्रत्ययः, तस्मात् तत् तस्य धर्मः; सिद्धश्च हेतुरावयोः, घटशब्दात् पटादिव्यवच्छेदेन घट इति प्रतिपत्त्यनुभूतेः। सर्वं च वस्तु नामरूपतां न व्यभिचरतीति दर्शयन्नाह–'वत्थुमित्यादि' यदि वस्तुनो नामरूपता न स्यात् तदा तद् वस्त्वेव न भवेदिति संबन्धः। कुतः ?, इत्याह–अनभिधानादभिधानरहितत्वादित्यर्थः। अवाच्योऽभिधानरहितत्वेनाऽनभिधेयो योऽसावभावः षष्ठभूतादिलक्षणस्तद्वदिति दृष्टान्तः, इह यदभिधानरहितं तद् वस्त्वेव न भवति, यथाऽभिधानरहितत्वेनाऽवाच्यः षष्ठभूतलक्षणोऽभावः; अभिधानरहितं च वस्त्वभ्युपगम्यते परैः, ततोऽवस्तुत्वमेवाऽस्य भवेद्, अवस्तुत्वे च कुतस्तत्प्रत्ययहेतुत्वलक्षणस्य हेतोर्वृत्तिः, येनाऽनैकान्तिकता स्यात् ?। तत्र तद्वृत्तौ वा तस्याऽपि वस्तुत्वमेव भवेत्, स्वप्रत्ययजनकत्वात्, घटादिवदिति। विपक्ष एव वृत्तेरभावाद् विरुद्धताऽप्यसंभविनीति। तस्माद् वस्तुधर्म एव नामेति स्थितम्। न च 'नद्यास्तीरे गुडभृतशकटम्' इत्यादिशब्दात् प्रवृत्तस्य कदाचिद् वस्त्वप्राप्तेरवस्तुधर्मता तस्येत्याशङ्कनीयम्, प्रत्यक्षादिप्रमाणानामपि तत्प्रसङ्गात्– तेभ्योऽपि हि प्रवृत्तस्य कदाचिद् वस्त्वप्राप्तेः। अबाधितेभ्यस्तेभ्यः प्रवृत्तौ भवत्येवा-

१ घ. छ. 'हेतुभूतता'। २ गाथा ५५। ३ वस्तुस्वरूपं नाम तत्प्रत्ययहेतुतः स्वधर्म इव। वस्तु नाऽनभिधानाद् भवेदभाव इवाऽवाच्य. ॥ ६१ ॥
४ ख. ग. 'यस्य हेतु'। ५ नाम्नि। ६ तत्प्रत्ययहेतुत्वलक्षणहेतुप्रवर्तने। ७ नाम्नोऽपि।

मङ्गलमहवा नन्दी चउव्विहा मङ्गलं च सा नेया। दव्वे तूरसमुदओ भावम्मि य पञ्च नाणाइं ॥७८॥

सूत्रस्य सूचकत्वाद् नोआगमतो भावमलङ्गस्यैव च प्रस्तुतत्वाद् मङ्गलशब्देनेह नोआगमतो भावमङ्गलमिति द्रष्टव्यम्। अथवा-शब्दस्तु पूर्वोक्तपक्षत्रयापेक्षया विकल्पार्थः, ततश्चायमर्थः– यदि वा नोआगमतो भावमङ्गलमन्यद् द्रष्टव्यम्। किं तत्?, इत्याह– 'नंदी' नन्दनं नन्दी, नन्दन्ति समृद्धिमवाप्नुवन्ति भव्यप्राणिनोऽनयेति वा नन्दी, इयं च सूत्रे सामान्योक्तावपि व्याख्यानतो विशेषप्रतिप्रत्तेरिह ज्ञानपञ्चकरूपा गृह्यते। सामान्यरूपेण तु चिन्त्यमानाऽसौ मङ्गलवद् नामादिचतुर्विधा भवति। एतदेवाह–'चउव्विहेत्यादि' तत्र 'नन्दी' इति यत् कस्यचिद् नाम क्रियते सा नामनन्दी। अक्षादिषु स्थापिता स्थापनानन्दी। द्रव्यनन्दी तु द्विविधा– आगमतः, नोआगमतश्च। तत्राऽऽगमतो नन्दीपदार्थज्ञोऽनुपयुक्तः, नोआगमतस्तु ज्ञ-भव्यशरीरोभयव्यतिरिक्ता द्रव्यनन्दी द्वादशप्रकारस्तूर्यसमुदयः, तद्यथा–

"[२]भंभा-मुगुन्द-मद्दल-कडंब-झल्लरि-हुडुक-कंसाला। काहल-तलिमा वंसो संखो पणवो य बारसमो" ॥ १ ॥

इह च 'दव्वे तूरसमुदओ' इत्यनेन ज्ञ-भव्यशरीरव्यतिरिक्ता द्रव्यनन्दी सूत्रेऽपि दर्शिता, नामनन्द्यादिस्वरूपं तु पूर्वोक्तनाममङ्गलाद्यनुसारेण सुज्ञेयत्वाद् नोक्तमिति। भावनन्द्यपि द्विधा– आगमतः, नोआगमतश्च। आगमतो नन्दिपदार्थज्ञस्तत्रोपयुक्तः। नोआगमतस्त्वाह–' भावम्मि येत्यादि ' भावे भावनन्द्यां विचार्यमाणायां पुनः ' नोआगमतो भावनन्दी ' इति शेषः। का पुनरियम्?, इत्याह– पञ्च ज्ञानानि आगमस्य ज्ञानपञ्चकैकदेशत्वात् नोशब्दस्य चेहाप्येकदेशवाचित्वादिति भावः। इयमेव चेह नोआगमतो भावमङ्गलत्वेन प्रस्तुतगाथादौ निर्दिष्टा ॥ इति गाथार्थः ॥ ७८ ॥

कानि पुनस्तानि पञ्च ज्ञानानि?, इत्याह–

[३]आभिणिबोहियनाणं सुयनाणं चेव ओहिनाणं च। तह मणपज्जवनाणं केवलनाणं च पंचमयं ॥ ७९ ॥

आभिनिबोधिकज्ञानम्, श्रुतज्ञानम्, अवधिज्ञानम्, मनःपर्ययज्ञानम्, केवलज्ञानमिति पञ्च ज्ञानानि। एतानि च भाष्यकारो विस्तरतः स्वयमेव व्याख्यास्यति ॥ ७९ ॥

१ मङ्गलमथवा नन्दी चतुर्विधा मङ्गलं च सा ज्ञेया। द्रव्ये तूर्यसमुदयो भावे च पञ्च ज्ञानानि ॥ ७८ ॥
२ भम्भा-मुकुन्द-मर्दल-कदम्ब-झल्लरी-हुडुक-कंसालाः। काहल-तलिमो वंशः सङ्खः पणवश्च द्वादश ॥ १ ॥
३ आभिनिबोधिकज्ञानं श्रुतज्ञानं चैवाऽवधिज्ञानं च। तथा मनःपर्यवज्ञानं केवलज्ञानं च पञ्चमकम् ॥ ७९ ॥

णपरिणतत्वादाकारवती, तदनाकारवत्त्वे तु 'नीलस्येदं संवेदनं न पीतादेः' इति नैयत्यं न स्यात्, नियामकाभावात्; नीलाद्याकारो हि नियामकः, यदा च स नेष्यते तदा 'नीलग्राहिणी मतिर्न पीतादिग्राहिणी' इति कथं व्यवस्थाप्यते ?, विशेषाभावात्, तस्मादाकारवत्येव मतिरभ्युपगन्तव्या । शब्दोऽपि पौद्गलिकत्वादाकारवानेव । घटादिकं वस्त्वाकारवत्त्वेन प्रत्यक्षसिद्धमेव । क्रियाऽप्युत्क्षेपणा-ऽवक्षेपणादिका क्रियावतोऽनन्यत्वादाकारवत्येव । फलमपि कुम्भकारादिक्रियासाध्यं घटादिकं मृत्पिण्डादिवस्तुपर्यायरूपत्वादाकारवदेव । अभिधानमपि शब्दः, स च पौद्गलिकत्वादाकारवानित्युक्तमेव । तस्माद् यदस्ति तत् सर्वमाकारमयमेव; यत्त्वनाकारं तद् नास्त्येव, वन्ध्यापुत्रादिरूपत्वात् तस्य ॥ इति गाथार्थः ॥ ६४ ॥

अथ प्रयोगद्वारेणाऽनाकारं वस्तु निराचिकीर्षुराह–

न[1] पराणुमयं वत्थु आगाराऽभावओ खपुप्फं व । उवलंभ-व्ववहाराऽभावाओ नाणगारं च ॥ ६५ ॥

परस्याऽऽकारवद्वस्तुनिषेधकस्याऽनुमतमभिप्रेतं सामर्थ्याद् यदनाकारं वस्तु तद् नास्ति, आकाराभावात्, खपुष्पवत् । अपरमपि हेतुद्वयमाह–'उवलंभेत्यादि' 'नाणागारमिति' नास्त्यनाकारं वस्तु, सर्वथैवाऽनुपलभ्यमानत्वात्, तेनाऽणीयसोऽपि व्यवहारस्याऽभावाच्च, इति पर्यन्तवर्ती चकारोऽत्र योजनीयः, खपुष्पवदिति दृष्टान्तो हेतुद्वयेऽपि स एव ॥ इति गाथार्थः ॥ ६५ ॥

तदेवं स्थापनानयेनोक्ते द्रव्यनयः प्राह–

द[2]व्वपरिणाममित्तं मोत्तूणाऽऽगारदरिसणं किं तं ? । उप्पायव्वयरहिअं दव्वं चिय निव्वियारं तं ॥६६॥

को हि नाम स्थापनानयस्याऽऽकारग्रहः ?, यस्माद् द्रवतीति द्रव्यमनादिमदुत्प्रेक्षितपर्यायशृङ्खलाधारं मृदादि पूर्वपर्यायमात्रतिरोभावेऽग्रेतनपर्यायमात्राऽऽविर्भावः परिणामो द्रव्यस्य परिणामो द्रव्यपरिणामः स एव तन्मात्रं तद् मुक्त्वा किमन्यदाऽऽकारदर्शनम्, येनोच्यते '[3]आगारो च्चिय मइ-सद्द-वत्थु-' इत्यादि ?। ननु द्रव्यमेव तत् । किंविशिष्टम् ?, उत्पाद–व्ययरहितं, निर्विकारं– उत्फण–विफण-कुण्डलिताकारसमन्वितसर्पद्रव्यवद् विकाररहितम्; किं हि नाम तत्राऽपूर्वमुत्पन्नम्, विद्यमानं वा विनष्टम्, येन विकारः स्यात् ?, इति भावः ॥ इति गाथार्थः ॥ ६६ ॥

१ न परानुमतं वस्तु आकाराऽभावात् खपुष्पमिव । उपलम्भ–व्यवहाराऽभावाद् नाऽनाकारं च ॥ ६५ ॥
२ द्रव्यपरिणाममात्रं मुक्त्वाऽऽकारदर्शनं किं तत् ? । उत्पादव्ययरहितं द्रव्यमेव निर्विकारं तत् ॥ ६६ ॥ ३ गाथा ६४ ।

तओ तम्मि ' इत्यादि व्युत्पत्त्यन्तरमस्ति, ततोऽपि कारणात् तदाभिनिवोधिकमुच्यत इत्यर्थः । नन्वात्म-क्षयोपशमयोराभिनिवोधिकशब्दवाच्यत्वे ज्ञानेन सह कथं समानाधिकरणता स्यात् ? । सत्यम्, किन्तु ज्ञानस्याऽऽत्माश्रयत्वात्, क्षयोपशमस्य च ज्ञानकारणत्वादुपचारतोऽत्रापि पक्षे आभिनिंवोधिकशब्दो ज्ञाने वर्तते, ततश्चाऽऽभिनिवोधिकं च तज्ज्ञानं चाभिनिवोधिकज्ञानमिति समानाधिकरणसमास इत्यदोषः ॥

अथ श्रुतव्युत्पत्तिमाह– ' तं तेणेत्यादि ' श्रूयत आत्मना तदिति श्रुतं शब्दः, अथवा श्रूयतेऽनेन श्रुतज्ञानावरणक्षयोपशमेन, श्रूयते तस्मात् क्षयोपशमात्, श्रूयते तस्मिन् क्षयोपशमे सतीति श्रुतं क्षयोपशमः । 'सुणेइ सो व त्ति'ति शृणोतीति श्रुतम्, असावात्मेति वा व्युत्पत्तिरित्यर्थः । 'सुयं तेणेति' येनैवं व्युत्पत्तिस्तेन कारणेन श्रुतमुच्यत इत्यर्थः । इह च शब्दस्य श्रुतज्ञानकारणत्वात् क्षयोपशमस्य तद्धेतुत्वादात्मनश्च कथञ्चित् तदव्यतिरेकादुपचारतः श्रुतं च तज्ज्ञानं च श्रुतज्ञानम् ॥ इति गाथार्थः ॥ ८१ ॥

अथाऽवधेर्व्युत्पादनार्थमाह–

[1]तेणाव हीयए तम्मि वाऽवहाणं तओऽवही सो य मज्जाया । जं तीए दव्वाइ परोप्परं मुणइ तओऽवहित्ति॥८२॥

ततः कारणादवधिरित्युच्यते । यतः किम् ?, इत्याह– ' तेणाव हीयए त्ति ' अवशब्दस्याऽव्ययत्वेनाऽनेकार्थत्वादधोऽधो विस्तृतं धीयते परिच्छिद्यते रूपि वस्तु तेन ज्ञानेनेत्यवधिः, अथवा अव-मर्यादया एतावत्क्षेत्रं पश्यन्, एतावन्ति द्रव्याणि, एतावन्तं कालं पश्यतीत्यादिपरस्परनियमितक्षेत्रादिलक्षणया धीयते परिच्छिद्यते रूपि वस्तु तेनेत्यवधिः । 'तम्मि व त्ति' अथवा अवशब्दस्यार्थद्वयं तथैवाऽवधीयते जीवेन तस्मिन् सति वस्त्वित्यवधिः, अकारस्य लुप्तस्याऽदर्शनात् 'अवहाणं' ति वा शब्दोऽनुवर्तते; ततश्चाऽथवाऽवधानमवधिः साक्षादर्थपरिच्छेदनमित्यर्थः, अथवाऽवधीयते तस्माज्जीवेन साक्षाद् वस्त्वित्यवधिरित्युपलक्षणव्याख्यानात् स्वयमेव द्रष्टव्यम् । 'सो य मज्जाय त्ति' स चोक्तस्वरूपोऽवधिर्मर्यादयाऽर्थपरिच्छेदने प्रवर्तमानत्वादुपचारतो मर्यादा । एतदेवाह–'जं तीए इत्यादि' पुंलिङ्गोऽप्यवधिशब्दः प्राकृतत्वात् स्त्रीत्वेन निर्दिष्टः, ततश्च यद् यस्मात् कारणात् तेनाऽनन्तरोक्तेनाऽवधिना जीवो द्रव्यादि ' मुणति ' जानाति । कथंभूतं सत् ?, इत्याह– परस्परं नियामितमिति शेषः । वक्ष्यति च–

" [2]अंगुलमावलिआणं भागमसंखेज्ज दोसु संखेज्जा । अंगुलमावलिअन्तो आवलिआ अंगुलपुहत्तं " ॥ १ ॥

१ तेनाऽव धीयते तस्मिन् वाऽवधान ततोऽवधि· स च मर्यादा । यत् तेन द्रव्यादि परस्परं जानाति ततोऽवधिः ॥ ८२ ॥
२ अङ्गुलावलिकयोर्भागमसंख्येय द्वयो· सङ्ख्येयौ । अङ्गुलावलिकान्तरावलिका अङ्गुलपृथक्त्वम् ॥ १ ॥

नैवम्, आविर्भाव-तिरोभावमात्र एव कार्योपचारात्, उपचारस्य चाऽवस्तुत्वात् । इति स्वपक्षं व्यवस्थाप्य परपक्षं दूषयितुमाह–'आगारेत्यादि' द्रव्यमात्रं विहाय स्थापनादिनयैर्यदाऽऽकारादिकमभ्युपगम्यते, तत् सर्वमवस्तु । कुतः ?, इत्याह– निष्कारणत्वात् कारणमात्ररूपतयाऽनभ्युपगमात्, तदभ्युपगमे त्वस्मत्पक्षवर्तित्वप्रसङ्गात्, इह यत् कारणं न भवति तद् न वस्तु, यथा गगनकुसुमम्, अकारणं च परैरभ्युपगम्यते सर्वमाकारादिकम्, अतोऽवस्तु ॥ इति गाथार्थः ॥ ६८ ॥

तदेवं द्रव्यनयेन स्वपक्षे व्यवस्थापिते भावनयः प्राह–

[1]भावत्थंतरभूअं किं दव्वं नाम भाव एवायं । भवनं पइक्खणं चिय भावावत्ती विवत्ती य ॥ ६९ ॥

भावेभ्यः पर्यायेभ्योऽर्थान्तरभूतं भिन्नं किं नाम द्रव्यम्, येनोच्यते–'दव्वपरिणाममित्तमित्यादि'[2]। ननु भाव एवाऽयं यदिदं दृश्यते त्रिभुवनेऽपि वस्तुनिकुरम्बमिति । यदि हि किञ्चिदनादिकालीनमवस्थितं सद् वस्तु वस्त्वन्तरारम्भे व्याप्रियेत तदा न्याय्या स्यादियं कल्पना, यावता प्रतिक्षणं भवनमेवाऽनुभूयते । किमुक्तं भवति ?, इत्याह– भावस्यैकस्य पर्यायस्याऽऽपत्तिरुद्भूतिः, अपरस्य तु विपत्तिर्विनाशः ।

"[3]न निहाणगया भग्गा पुञ्जो नत्थि अणागए । निव्वुया नेय चिट्ठंति आरग्गे सरसवोवमा" ॥ १ ॥

इति वचनात् पूर्वस्य क्षणस्य निवृत्तिः, अपरस्य तूत्पत्तिरित्यर्थः ॥ इति गाथार्थः ॥ ६९ ॥

आह–ननु ये भावस्याऽऽपत्ति-विपत्ती प्रोच्येते ते तावद्धेत्वन्तरमपेक्ष्य भवतः, यच्च हेत्वन्तरमपेक्षते तदेवाऽवस्थितं कारणं, तदेव द्रव्यम्, अतो 'भावत्थंतरभूअं किं दव्वं'[4] इत्यादिनाऽयुक्तमेव द्रव्यमपाक्रियते, इत्याशङ्क्याह–

[5]न य भावो भावन्तरमवेक्खए किन्तु हेउनिरवेक्खं । उप्पज्जइ तयणन्तरमवेइ तमहेउअं चेव ॥ ७० ॥

न च भावो घटादिरुत्पद्यमानो भावान्तरं मृत्पिण्डादिकमपेक्षते, किन्तु निरपेक्ष एवोत्पद्यते । अपेक्षा हि विद्यमानस्यैव भवति । न च मृत्पिण्डादिकारणकाले घटादि कार्यमस्ति, अविद्यमानस्य चाऽपेक्षायां खरविषाणस्याऽपि तथाभावप्रसङ्गात् । यदि चोत्पत्तिक्षणात् प्रागपि घटादिरस्ति, तर्हि किं मृत्पिण्डाद्यपेक्षया ?, तस्य स्वत एव विद्यमानत्वात् । अथोत्पन्नः सन् घटादिः पश्चाद्

१ भावार्थान्तरभूतं किं द्रव्यं नाम, भाव एवाऽयम् । भवनं प्रतिक्षणमेव भावापत्तिर्विपत्तिश्च ॥ ६९ ॥ २ गाथा ६६ ।
३ न निधानगता भग्ना पुञ्जो नास्त्यनागते । निर्वृता नैव तिष्ठन्ति आराग्रे सर्षपोपमाः ॥ १ ॥ ४ गाथा ६९ ।
५ न च भावो भावान्तरमपेक्षते किन्तु हेतुनिरपेक्षम् । उत्पद्यते तदनन्तरमपैति तदहेतुकं चैव ॥ ७० ॥

केवलमिति व्याख्येयं पदम् । ततः केवलमिति कोऽर्थः ?, इत्याह-- एकमसहायमिन्द्रियादिसाहाय्यानपेक्षित्वात्, तद्भावे शेषच्छाद्मस्थिकज्ञाननिवृत्तेर्वा शुद्धं निर्मलं सकलावरणमलकलङ्कविगमसंभूतत्वादिति । सकलं परिपूर्णं संपूर्णज्ञेयग्राहित्वात्, असाधारणमनन्यसदृशं तादृशाऽपरज्ञानाभावात्, अनन्तम्, अप्रतिपातित्वेनाऽविद्यमानपर्यन्तत्वात्, इत्येकादिष्वर्थेषु केवलशब्दोऽत्र वर्तते, केवलं च तज्ज्ञानं च केवलज्ञानमिति समासः । आह-- नन्वाभिनिबोधिकादीनि ज्ञानवाचकानि नामान्येव भाष्यकृता " अत्थाभिमुहो नियओ " इत्यादौ सर्वत्र व्युत्पादितानि, ज्ञानशब्दस्तु न क्वचिदुपात्तः, स कथं लभ्यते ?, इत्याशङ्क्याह-- ' पायं चेत्यादि ' प्रक्रमलब्धो ज्ञानशब्द आभिनिबोधिक-श्रुतादिभिर्ज्ञानाभिधायकैर्नामभिः समानाधिकरणः स्वयमेव योजनीयः, स च योजित एव, तद्यथा-- आभिनिबोधिकं च तज्ज्ञानं च, श्रुतं च तज्ज्ञानं चेत्यादि । क्वचिद् वैयधिकरण्यसमासोऽपि संभवतीति प्रायोग्रहणम् । स च मनःपर्यायज्ञाने दर्शित एव, अन्यत्राऽपि च यथासंभवं द्रष्टव्यः ॥ इति गाथार्थः ॥ ८४ ॥

तदेवं ज्ञानपञ्चकस्याप्यभिधानार्थे कथिते आह कश्चित्-- नन्वादौ मतिश्रुतोपन्यासः किमर्थः ? इति । अत्राऽऽचार्यः प्राह--

जं सामि--काल-कारण-विसय-परोक्खत्तणेहिं तुल्लाइं । तब्भावे सेसाणि य तेणाईए मइ-सुयाइं ॥ ८५ ॥

तेन कारणेनादौ मति-श्रुते निर्दिष्टे । येन, किम् ?, इत्याह-- 'जं सामीत्यादि' इति संटङ्कः । मतिशब्दोऽत्राऽऽभिनिबोधिकसमानार्थो द्रष्टव्यः, आभिनिबोधिकं ह्यौत्पत्तिक्यादिमतिप्रधानत्वाद् मतिरित्यप्युच्यते। यद् यस्मात् कारणात् स्वामि--काल--कारण--विषय--परोक्षत्वैस्तुल्ये समानस्वरूपे मति-श्रुते, तेनाऽऽदौ निर्दिष्टे इत्यर्थः । तत्र स्वामी तावदनयोरेक एव " जत्थ मइनाणं तत्थ सुयनाणं " इत्याद्यागमवचनादिति । कालोऽपि द्विधा-- नानाजीवापेक्षया, एकजीवापेक्षया च । स चाऽयं द्विविधोऽप्यनयोस्तुल्य एव, नानाजीवापेक्षया द्वयोरपि सर्वकालमनुच्छेदाद्; एकजीवापेक्षया तूभयोरपि निरन्तरसातिरेकसागरोपमषट्षष्टिस्थितिकत्वेनाऽत्रैवाऽभिधास्यमानत्वादिति । कारणमपीन्द्रिय-मनोलक्षणं स्वावरणक्षयोपशमस्वरूपं च द्वयोरपि समानम् । उभयस्याऽपि सर्वद्रव्यादिविषयत्वाद् विषयतुल्यता । परनिमित्तत्वाच्च परोक्षत्वसमता। ननु यद्येवमनयोः परस्परं तुल्यता, तर्ह्येकत्र द्वयोरप्युपन्यासोऽस्तु, आदावेव तु तदुपन्यासः कथम् ?, इत्याह--'तब्भावे इत्यादि' तद्भावे मति--श्रुतज्ञानसद्भाव एव शेषाण्यवध्यादीनि ज्ञानान्यवाप्यन्ते; नान्यथा, न हि स कश्चित् प्राणी भूतपूर्वः, अस्ति, भविष्यति वा, यो मति--श्रुतज्ञाने अनासाद्य प्रथममेवाऽवध्यादीनि शेषज्ञानानि प्राप्तवान्, प्राप्नोति, प्राप्स्यति वेति भावः । ततस्तदवाप्तौ शेषज्ञानाऽवाप्तेश्चादौ मति-श्रुतोपन्यासः ॥ इति गाथार्थः ॥ ८५ ॥

1 यद् स्वामि--काल--कारण--विषय--परोक्षत्वैस्तुल्यानि । तद्भावे शेषाणि च तेनाऽऽदौ मति--श्रुते ॥ ८५ ॥

घटाद्युपमर्दनाऽभावो जायते, अतो घटादिनिवृत्तिः,
सारमप्यसौ स्यात्, विशेषाभावात्; तथा च सति स एव घटादेस्तादवस्थ्यप्रसङ्गः। घटाद्युपमर्दनाऽभावो जायते, अतो घटादिनिवृत्तिः, तद्भावे घटादेस्तादवस्थ्य-
इति चेत्। ननु कोऽयमुपमर्दो नाम ?। न तावद् घटादिः, तस्य स्वहेतुत एवोत्पत्तेः। नापि कपालादयः, तद्भावे घटादेस्तादवस्थ्य-
प्रसङ्गात्। नापि तुच्छरूपोऽभावः, एवं हि सति घटाद्यभावेन घटाद्यभावो जायत इत्युक्तं स्यात्, न चैतदुच्यमानं हास्यं न जनयति,
आत्मनैवाऽऽत्मभवनानुपपत्तेः। तस्माद् मुद्गरादिसहकारिकारणवैसदृश्याद् विसदृशः कपालादिक्षण उत्पद्यते, घटादिस्तु क्षणिकत्वेन
निर्हेतुकः स्वरसत एव निवर्तते, इत्येतावन्मात्रमेव शोभनम्। अतो हेतुव्यापारनिरपेक्षा एव समुत्पन्ना भावाः क्षणिकत्वेन स्वरसत-
एव विनश्यन्ति, न हेतुव्यापारात्, इति स्थितम्। तस्माज्जन्म-विनाशयोर्न किञ्चित् केनचिदपेक्ष्यते, अपेक्षणीयाभावाच्च न किञ्चित्
कस्यचित् कारणम्। तथा च सति न किञ्चिद् द्रव्यम्, किन्तु पूर्वापरीभूताऽपरापरक्षणरूपाः पर्याया एव सन्त इति। अत्र बहु वक्त-
व्यम्, तत्तु नोच्यते, ग्रन्थगहनताभयात्, सुगतशास्त्रेषु विस्तरेणोक्तत्वाच्च ॥ इति गाथार्थः ॥ ७० ॥

यदपि द्रव्यवादिना 'पिंडो[2] कारणमिट्ठं पयं व परिणामओ' इत्याद्युक्तम्, तत्राऽस्माभिरप्येतद् वक्तुं शक्यत एवेति। किम् ?,
इत्याह—

[3]पिण्डो कज्जं पइसमयभावाउ जह दहिं तहा सव्वं। कज्जाभावाउ नत्थि कारणं खरविसाणं व ॥ ७१ ॥

मृदादिपिण्डः कार्यमेव, न तु कारणम्। कुतः ?, इत्याह— प्रतिसमयमपरापरक्षणरूपेण भावात्, दध्यादिवदिति। प्रतिस-
मयमपरापरक्षणभवनमसिद्धमिति चेत्। न, वस्तूनां पुराणादिभावाऽन्यथानुपपत्तेः। उक्तं च—

"प्रतिसमयं यदि न भवेदपरापररूपतेह वस्तूनाम्। न स्यात् पुराणभावो न युवत्वं नापि वृद्धत्वम् ॥ १ ॥
जन्मानन्तरसमये न स्याद् यद्यपररूपताऽर्थानाम्। तर्हि विशेषाभावाद् न शेषकालेऽपि सा युक्ता" ॥ २ ॥

किं पिण्ड एव कार्यम् ?। न, इत्याह— तथा सर्वं, यथा प्रतिसमयं भावात् पिण्डः कार्यं तथा सर्वमपि घटपटादिकं वस्तुनि-
कुरम्बम्, तत एव हेतोः कार्यत्वमपि द्रष्टव्यमित्यर्थः। अनभिमतप्रतिषेधमाह— 'कज्जाभावाउ इत्यादि' पराभ्युपगतं कारणं कार-
णाख्यं वस्तु नास्ति। कुतः ?, इत्याह— कार्याभावात् तत्र कार्यत्वाऽभ्युपगमाभावात् प्रतिसमयभवनानभ्युपगमादित्यर्थः। इह यत्
प्रतिसमयमपरापररूपेण न भवति तद् वस्तु नास्ति, यथा खरविषाणम्, प्रतिसमयमभवन्तश्चाऽभ्युपगम्यन्ते परैर्मृत्पिण्डादयः, तस्माद्
न सन्तीति भावः ॥ इति गाथार्थः ॥ ७१ ॥

१ स्वभावात्। २ गाथा ६८। ३ पिण्डः कार्यं प्रतिसमयभावाद् यथा दधि तथा सर्वम्। कार्याभावाद् नास्ति कारणं खरविषाणमिव ॥ ७१ ॥

अथ केवलज्ञानस्य सर्वोपरिनिर्देशे कारणमाह—

अन्ते[1] केवलमुत्तम-जइसामित्तावसाणलाभाओ। एत्थं च मइ-सुयाइं परोक्खमियरं च पच्चक्खं ॥ ८८ ॥

अन्ते सर्वज्ञानानामुपरि केवलज्ञानमभिहितम्। कुतः?, इत्याह— भावप्रधानत्वाद् निर्देशस्य—उत्तमत्वात्, सर्वोत्तमं हि केवलज्ञानम्, अतीता–ऽनागत–वर्तमाननिःशेषज्ञेयस्वरूपावभासित्वादिति । यथा च मनःपर्यायज्ञानस्य यतिरेव स्वामी, तथा केवलज्ञानस्यापि, ततो यतिस्वामित्वसाम्याद् मनःपर्यायज्ञानानन्तरं केवलज्ञानमभिहितम् । तथा समस्तापरज्ञानानामवसान एवाऽस्य लाभादवसान एव निर्देश इति। तदेवमुपन्यासक्रमे समर्थिते सत्याह कश्चित्—नन्वेतानि पञ्च ज्ञानानि किं परोक्षस्वरूपाणि, आहोस्वित् प्रत्यक्षाणि? इति। अत्राह— 'एत्थं चेत्यादि' एतेषु पञ्चसु ज्ञानेषु मध्ये मति–श्रुते परोक्षे, इतरत् त्ववध्यादि ज्ञानत्रयं प्रत्यक्षम् ॥ इति गाथार्थः ॥ ८८ ॥

तत्र प्रत्यक्षस्य लक्षणमाह—

जीवो[2] अक्खो अत्थव्वावण-भोयणगुणण्णिओ जेण। तं पइ वट्टइ नाणं जं पच्चक्खं तयं तिविहं ॥८९॥

अक्षस्तावज्जीव उच्यते। केन हेतुना?, इत्याह— 'अत्थव्वावणेत्यादि' अर्थव्यापन-भोजनगुणान्वितो येन, तेनाऽक्षो जीवः, इदमुक्तं भवति— 'अशू व्याप्तौ' अश्नुते ज्ञानात्मना सर्वार्थान् व्याप्नोतीत्युणादिनिपातनादक्षो जीवः, अथवा 'अश भोजने' अश्नाति समस्तत्रिभुवनाऽन्तर्वर्तिनो देवलोकसमृद्ध्यादीनर्थान् पालयति भुङ्क्ते वेति निपातनादक्षो जीवः, अश्नातेर्भोजनार्थत्वाद्, भुजेश्च पालनाऽभ्यवहारार्थत्वादिति भावः। इत्येवमर्थव्यापन-भोजनगुणयुक्तत्वेन जीवस्याऽक्षत्वं सिद्धं भवति। तमक्षं जीवं प्रति साक्षाद्गतमिन्द्रियनिरपेक्षं वर्तते यज्ज्ञानं तत् प्रत्यक्षम्। तच्चाऽवधि-मनःपर्याय-केवलज्ञानभेदात् त्रिविधं त्रिप्रकारम्, तस्यैव साक्षादर्थपरिच्छेदकत्वेन जीवं प्रति साक्षाद् वर्तमानत्वात् ॥ इति गाथार्थः ॥ ८९ ॥

अथ परोक्षज्ञानस्वरूपमाह—

अक्खस्स[3] पोग्गलकया जं दव्विन्दिय-मणा परा तेणं। तेहिं तो जं नाणं परोक्खमिह तमणुमाणं व ॥९०॥

---

१ अन्ते केवलमुत्तम–यतिस्वामित्वा–ऽवसानलाभात्। अत्र च मति-श्रुते परोक्षमितरच्च प्रत्यक्षम् ॥ ८८ ॥

२ जीवोऽक्षोऽर्थव्यापन-भोजनगुणान्वितो येन। त प्रति वर्तते ज्ञान यत् प्रत्यक्ष तकत् त्रिविधम् ॥ ८९ ॥

३ अक्षस्य पुद्गलकृतानि यद् द्रव्येन्द्रिय-मनांसि पराणि तेन। तैस्तस्माद् यज्ज्ञान परोक्षमिह तदनुमानमिव ॥ ९० ॥

मर्योदयोपलब्धरात्रिन्दिवादिवस्तूनां बाधकसंभावनयाऽन्यथात्वकल्पनासंगतिमावहति । न चेहापि दर्शना-ऽदर्शने विहायाऽन्यद् निश्चायकं प्रमाणमुपलभामहे । तस्मादेकत्वपरिणत्यापन्ननामादिभेदेष्वेव शब्दादिपरिणतिदर्शनात् सर्वं चतुष्पर्यायं वस्त्विति स्थितम् ॥ इति गाथार्थः ॥ ७३ ॥

आह– ननु यदि नामादिचतुष्पर्यायं सर्वं वस्तु, तर्हि किं नामादीनां भेदो नास्त्येव ?, इत्याह–

ईय सव्वभेअसंघायकारिणो भिन्नलक्खणा एते । उप्पाया इति यं पिव धम्मा पइवत्थुमाउज्जा ॥ ७४ ॥

इत्येवं ये पूर्वं भिन्नलक्षणा भिन्नस्वरूपा धर्मा नामादयः प्रोक्तास्ते प्रतिवस्त्वायोज्या आयोजनीया इति संबन्धः । कथंभूताः सन्तः ?, इत्याह– भेदश्च संघातश्च भेदसंघातौ, सर्वस्य स्वाश्रयभूतवस्तुनो भेदसंघातौ तौ कर्तुं शीलं येषां ते सर्वभेदसंघातकारिणो निजाश्रयस्य सर्वस्याऽपि वस्तुनः कथञ्चिद् भेदकारिणः, कथञ्चित्त्वभेदकारिण इत्यर्थः, तथाहि– केनचिदिन्द्र इत्युच्चरितेऽन्यः प्राह– किमनेन नामेन्द्रो विवक्षितः, आहोस्वित् स्थापनेन्द्रः, द्रव्येन्द्रः, भावेन्द्रो वा ? । नामेन्द्रोऽपि द्रव्यतः किं गोपालदारकः, हालिकदारकः, क्षत्रियदारकः, ब्राह्मणदारकः, वैश्यदारकः, शूद्रदारको वा ? इत्यादि । तथा क्षेत्रतोऽपि नामेन्द्रः किं भारतः, ऐरवतः, महाविदेहजो वा ? इत्यादि । कालतोऽपि किमतीतकालसंभवी, वर्तमानकालभावी, भविष्यन् वा ? इत्यादि; अतीतकालभाव्यपि किमितोऽनन्ततमसमयभावी, असंख्याततमसमयभावी, संख्याततमसमयभावी वा ? इत्यादि । भावतोऽपि किं कृष्णवर्णः, गौरवर्णः, दीर्घः, मन्थरो वा ? इत्यादि । तदेवमेकोऽपि नामेन्द्रस्याऽऽश्रयभूतोऽर्थस्तावद् द्रव्य-क्षेत्र-काल-भावभेदाधिष्ठितोऽनन्तभेदत्वं प्रतिपद्यते । तथा स्थापना-द्रव्य-भावाश्रयस्याऽप्युक्तानुसारतः प्रत्येकमनन्तभेदत्वमनुसरणीयम् । इत्येवमेते नामादयो भेदकारिणः । अभेदकारिणस्तर्हि कथम् ? इति चेत् । उच्यते– यदैकस्मिन्नपि वस्तुनि नामादयश्चत्वारोऽपि प्रतीयन्ते तदाऽभेदविधायिनः, तथाहि– एकस्मिन्नपि शचीपत्यादौ 'इन्द्र' इति नाम, तदाकारस्तु स्थापना, उत्तरावस्थाकारणत्वं तु द्रव्यत्वम्, दिव्यरूप–संपत्ति-कुलिशधारण-परमैश्वर्यादिसंपन्नत्वं तु भाव इति चतुष्टयमपि प्रतीयते । तस्मादेवं सर्वस्य स्वाऽऽश्रयभूतस्य वस्तुनो भेद-संघातकारिणो भिन्नलक्षणा एते नामादयो धर्मा उत्पाद-व्यय-ध्रौव्यत्रिकवत् प्रतिवस्तु आयोजनीयाः परस्पराऽविनाभाविनः प्रतिवस्तु द्रष्टव्या इति तात्पर्यम् ॥ इति गाथार्थः ॥ ७४ ॥

इह च–

१ अन्वयव्यतिरेकापरपर्यायौ प्रत्यक्षानुपलम्भावित्यर्थः । ख 'पि दर्शनं विहाय' ।

२ इति सर्वभेदसंघातकारिणो भिन्नलक्षणा एते । उत्पादा इति यदिव धर्मा प्रतिवस्त्वायोज्याः ॥७४॥ ३ घ. छ 'कालभावी वर्तमानकालसंभवी' ।

पलब्धा दृष्टः, यथा गृहगवाक्षोपलब्धानामर्थानां तद्विगमेऽप्यनुस्मर्ता देवदत्तादिः, अनुस्मरति चेन्द्रियविगमेऽपि तदुपलब्धमर्थमात्मा, तस्मात् स एवोपलब्धा, यदि पुनरिन्द्रियाण्युपलम्भकानि स्युः, तदा तद्विगमे कस्याऽनुस्मरणं स्यात् ? । न ह्यन्येनोपलब्धेऽर्थेऽन्यस्य स्मरणं युक्तम्, अतिप्रसङ्गात्, अस्ति चाऽनुस्मरणम् । तस्माद् 'न जानन्तीन्द्रियाणि' इति स्थितेयं प्रतिज्ञा, तद्बाधकत्वेनोक्तस्याऽनुभवप्रत्यक्षस्य यथोक्तानुमानबाधितत्वेन भ्रान्तत्वादिति ॥

अत्राह–कस्येदं दर्शनं यत् स्वतन्त्राणीन्द्रियाण्युपलब्धिमन्ति ?, वयं हि ब्रूमः– यदिन्द्रिय-मनोनिमित्तमात्मनो ज्ञानमुत्पद्यते तत् प्रत्यक्षम् "आत्मा मनसा युज्यते, मन इन्द्रियेण, इन्द्रियं चार्थेन" इति वचनादिति । हन्त ! एवं सति परनिमित्तत्वादनुमानवत् परोक्षत्वमस्य प्रागेव 'अक्खस्स पोग्गलकया जं दव्विंदिय-मणा परा तेणं' इत्यादिग्रन्थेनोक्तम्, इति कुतस्तस्य प्रत्यक्षता ? । अथ ज्ञानशून्येऽपीन्द्रियज्ञाननिमित्तत्वेन साक्षाद् व्याप्रियमाणत्वादुपचारेण 'अक्षमिन्द्रियं प्रति वर्तते' इति प्रत्यक्षता प्रोच्यते । हन्त ! तर्हि 'इन्द्रियोपलब्धिः प्रत्यक्षम्' इत्येतल्लक्षणमिह न घटते, जीवोपलब्धित्वादस्याः । संव्यवहारमात्रेण तु प्रत्यक्षत्वमस्याऽस्माभिरप्यनन्तरमभ्युपगंस्यते, इति सिद्धसाध्यतैव ॥ इति गाथार्थः ॥ ९२ ॥

तदेवमिन्द्रिय-मनोनिमित्तज्ञानस्य परोक्षतां प्रतिपाद्य प्रयोगोपन्यासेन तामेव द्रढयन्नाह—

इंदिय-मणोनिमित्तं परोक्खमिह संसयादिभावाओ । तक्कारणं परोक्खं जहेह साभासमणुमाणं ॥ ९३ ॥

यदिन्द्रिय-मनोनिमित्तं ज्ञानमुपजायते तदात्मनः परोक्षम् । कुतः?, इत्याह– संशयादिभावादिति, आदिशब्दाद् विपर्यया-ऽनध्यवसाय-निश्चयपरिग्रहः । तत्कारणमिति तानीन्द्रिय-मनांसि कारणं यस्य साभासानुमानस्य सम्यगनुमानस्य च तत् तत्कारणं ज्ञानमन्यत्राऽपि परोक्षं दृष्टम्, यथा साभासमनुमानं सम्यगनुमानं चेत्येवं लुप्तचकारस्य दर्शनाद् दृष्टान्तद्वयमिह द्रष्टव्यम् । तत्र संशय-विपर्ययाऽनध्यवसायसंभवलक्षणे हेतौ प्रथमो दृष्टान्तः, निश्चयसंभवस्वरूपे तु हेतौ द्वितीयो दृष्टान्तः, तथाहि प्रयोगः–यदिन्द्रिय-मनोनिमित्तं ज्ञानं तत् परोक्षम्, संशय-विपर्यया ऽनध्यवसायानां तत्र संभवात्, इन्द्रिय-मनोनिमित्ताऽसिद्धा-ऽनैकान्तिक-विरुद्धानुमानाभासवत्, इति प्रथमः प्रयोगः; यदिन्द्रिय-मनोनिमित्तं ज्ञानं तत् परोक्षम्, तत्र निश्चयसंभवात्, धूमादेरग्न्याद्यनुमानवत्, इति द्वितीयः; यत् पुनः प्रत्यक्षं तत्र संशय-विपर्यया-ऽनध्यवसाय-निश्चया न भवन्त्येव, यथाऽवध्यादिषु, इति विपर्ययः । ननु निश्चयसंभवलक्षणो हेतुरवध्यादिष्वपि वर्तत

१ गाथा ९०। २ ख 'मस्सा'। ३ इन्द्रिय-मनोनिमित्त परोक्षमिह संशयादिभावात् । तत्कारण परोक्ष यथेह साभासमनुमानम् ॥ ९३ ॥

सद्दुज्जुसुया पज्जायवायगा भावसंगहं बेंति । उवरिमया विवरीआ भावं भिंदंति तो निययं ॥ ७७ ॥

यद् यस्मात् कारणात् संग्रहनयः सामान्यग्राही सामान्यवादी, तेन कारणेन संगृह्णात्येकत्वेनाऽध्यवस्यति प्रत्येकं त्रितयं नाम-स्थापना-द्रव्यनिक्षेपलक्षणं यानि कानिचिद् नाममङ्गलानि तत् सर्वमप्येकं नाममङ्गलम्, तथा स्थापनामङ्गलान्यशेषाण्यप्येकं स्थापनामङ्गलम्, एवं द्रव्यमङ्गलान्यपरिशिष्टान्यप्येकं द्रव्यमङ्गलमित्यर्थः । व्यवहारनयस्तु येन कारणेन विशेषग्राही, ततो नामादिनिक्षेपान् विशेषयति भेदेनेच्छति– नाममङ्गलानि सर्वाण्यपि पृथग् नाममङ्गलत्वेनेच्छति, एवं स्थापनादिनिक्षेपेष्वपि वाच्यम् । 'सद्दुज्जुसुयेत्यादि' शब्द-र्जुसूत्रनयौ पुनः पर्यायैरेकार्थभिन्नाभिधानैर्वस्तु वक्तुं शीलं ययोस्तौ पर्यायवाचिनौ सन्तौ नाम-स्थापना-द्रव्यनिक्षेपपरिहारेणैकस्यैव भावस्य भावनिक्षेपस्य संगृहीतिः संग्रहोऽभिन्नत्वमेकत्वं भावसंग्रहस्तं ब्रूतः प्रतिपादयतः; इदमुक्तं भवति– ऋजुसूत्र-शब्दनयौ पूर्वनयेभ्यो विशुद्धत्वाद् नाम-स्थापना-द्रव्यनिक्षेपं तावद् नेच्छतः, किन्त्वेकमेव भावनिक्षेपमभ्युपगच्छतः, केवलं समभिरूढै-वंभूतनयाऽपेक्षयाऽविशुद्धत्वाद् विभिन्नानेकपर्यायाभिधेयत्वेऽपि भावनिक्षेपस्य संग्रहमेकत्वमेव प्रतिपद्यते, न भिन्नत्वमिति भावः । ततश्चैतन्मतेन यदेव मङ्गलशब्दवाच्यं भावमङ्गलं प्रत्यूहोपशमका-ऽनिष्टविघातकृद्-विघ्नापहरणादिशब्दानामपि तदेव वाच्यम्, न भिन्नम्, इति तात्पर्यम् । 'उवरिमया विवरीएत्यादि' उपरितनौ तु समभिरूढै-वंभूतौ नयौ ऋजुसूत्र-शब्दनयाऽपेक्षया विपरीतौ भिन्नानेकपर्यायाऽभिधेयस्य भावस्यैकत्वं नेच्छतः, किन्तु भिन्नत्वमभ्युपगच्छतः, तथाहि– समभिरूढमतेनाऽन्यदेव मङ्गलशब्दवाच्यं भावमङ्गलम्, अन्यच्च प्रत्येकं प्रत्यूहोपशमकादिपर्यायवाच्यम् । एवम्भूतस्याऽप्येवमेव, केवलमयं पूर्वस्माद् विशुद्धत्वादेकपर्यायाभिधेयमपि भावमङ्गलं भावमङ्गलकार्यं कुर्वदेव मन्यते, नाऽन्यदा, यथा धर्मोपकरणान्वितः सम्यक्चारित्रोपयोगे वर्तमानः साधुरिति । तदेवमृजुसूत्र-शब्दनयाऽभ्युपगमापेक्षया विपरीताभ्युपगमपरत्वाद् विपरीतावेतौ । 'तो त्ति' तस्माद् भावं भावमङ्गलादिकमर्थं नियतं निश्चितं पर्यायभेदाद् भिन्तः–भेदेनेच्छत इत्यर्थः, यदि हि पर्यायभेदेऽपि वस्तुनो न भेदः, तर्हि घट-पटादीनामपि स न स्यादित्यादियुक्तेः पर्यायभेदेन भिन्नमेव भावमङ्गलमभ्युपगच्छत इति भावः ॥ इति गाथाद्वयार्थः ॥ ७६ ॥ ७७ ॥

तदेवमवसितं प्रासङ्गिकम् । प्रकृतमुच्यते, तच्चेदम्– पूर्वं नोआगमतो भावमङ्गलं नोशब्दस्य सर्वनिषेधवचनत्वे विशुद्धः क्षायिकादिर्भाव उक्तः, मिश्रवचनत्वे तस्य ज्ञान-दर्शन-चारित्रोपयोगः, एकदेशवचने पुनस्तस्याऽर्हन्नमस्कारादिज्ञान-क्रियाविमिश्रपरिणामः प्रोक्तः । सांप्रतं नोशब्दस्यैकदेशवाचित्वे नोआगमतो भावमङ्गलं ज्ञानपञ्चकरूपा नन्द्यपि भवतीति दर्शयन्नाह–

१ शब्द-र्जुसूत्रौ पर्यायवाचकौ भावसंग्रहं ब्रूतः । उपरितनौ विपरीतौ भावं भिन्तस्तस्माद् नियतम् ॥ ७७ ॥

आह–ननु भाष्यकारेणाऽपि कुत एतल्लब्धं यदुत–इन्द्रियमनोभवं ज्ञानं संव्यवहारत एव प्रत्यक्षम्, न परमार्थतः ?; न ह्यत्र सूत्रे किमप्येवं विशेषतः प्रोक्तमस्ति 'इन्द्रियप्रत्यक्षम्' इति सामान्येनैव निर्देशात् । सत्यम्, किन्तु प्रदेशान्तरे प्रोक्तम्–"[1]परोक्खं दुविहं पन्नत्तं, तं जहा– आभिणिबोहिअनाणं परोक्खं च, सुयनाणं परोक्खं च" इति । न चाऽऽभिनिबोधिक-श्रुताभ्यामन्यदिन्द्रियनिमित्तं ज्ञानमस्ति यत् परमार्थतः प्रत्यक्षं स्यादिति ॥

आह–यद्येवम्, तर्हि यल्लिङ्गमन्तरेणैव साक्षादिन्द्रियनिमित्तं ज्ञानमुत्पद्यते तत् परमार्थतः प्रत्यक्षमस्तु, यत्तु धूमादिलिङ्गादग्न्या-
दिविषयं लैङ्गिकं ज्ञानं तत् परोक्षस्वरूपे आभिनिबोधिक-श्रुते इष्यताम्, इत्यागमस्य प्रदेशद्वयोक्तमपि समर्थितं भवति । तदयुक्तम्,
धूमादिलिङ्गादग्न्यादिविषयलैङ्गिकज्ञानस्येन्द्रियनिमित्तत्वाभावात्, इन्द्रियं हि प्रत्युत्पन्नकालमात्रभाव्येव वस्तु गृह्णाति, लिङ्गात् तु वक्ष्या-
दिरर्थस्त्रिकालविषयोऽप्यनुमीयते । तस्माल्लैङ्गिकं ज्ञानं मनोनिमित्तमेव भवति, नेन्द्रियनिमित्तम्, इन्द्रिय-मनोनिमित्ते च मति-श्रुते अत्रैव
वक्ष्येते, इति कथं केवलमनोविषयस्य लैङ्गिकज्ञानस्यैव मति-श्रुतरूपता स्यात् ? । किञ्च, इन्द्रियजज्ञानस्य मति-श्रुताभ्यां पार्थक्ये षष्ठज्ञा-
नप्रसङ्गः स्यात् । तस्मादिन्द्रियजज्ञानस्य मति-श्रुतयोरेवाऽन्तर्भावः, तथा च सति मति-श्रुतयोः परोक्षत्वे तस्याऽपि पारमार्थिकं परोक्ष-
त्वमेव, मनोनिमित्तस्यापि ज्ञानस्य परनिमित्तत्वादनुमानवत् परोक्षत्वं प्रागेवोक्तम् । न च वक्तव्यम्–आगमे तत् तस्य न क्वचिद् विशे-
षतोऽभिहितम्, यतो मति-श्रुतयोरागमे परोक्षत्वस्य विशेषतोऽभिधानात्, मनोनिमित्तस्याऽपि च ज्ञानस्य तदन्तःपातित्वादिन्द्रियज-
ज्ञानस्येव परोक्षत्वं सिद्धमेव ॥

आह–ननु "इंदियपच्चक्खं च नोइंदियपच्चक्खं च" इत्यत्र मनोनिमित्तज्ञानस्य सिद्धान्ते प्रत्यक्षत्वमुक्तम्, यतो नोइन्द्रियं तत्र मन उच्यते, तस्येन्द्रियैकदेशवृत्तित्वात्, नोशब्दस्य चैकदेशवचनत्वात्; ततश्च नोइन्द्रियनिमित्तं प्रत्यक्षं नोइन्द्रियप्रत्यक्षमिति व्युत्पत्त्या मनोनिमित्तज्ञानस्य प्रत्यक्षतैव स्यात्, कथ परोक्षता ? इति । तदयुक्तम्, आगमार्थाऽपरिज्ञानात्, तत्र हि नोशब्दः सर्वनिषेधवचनः, ततश्चेन्द्रियाभाव एव नोइन्द्रियमुच्यते, तथा च सति नोइन्द्रियेणेन्द्रियाभावेनाऽऽत्मनः प्रत्यक्षं नोइन्द्रियप्रत्यक्षमिति समासः, सर्वथेन्द्रि-
यप्रवृत्तिरहितानि चाऽऽत्मनः प्रत्यक्षाण्यवधि-मनःपर्याय-केवलान्येव भवन्ति, न पुनर्मनोनिमित्तं ज्ञानम् । यदि पुनर्नोइन्द्रियं तत्र मनो
व्याख्यायेत, तदा नोइन्द्रियनिमित्तं प्रत्यक्षमिति मनोनिमित्तमेवाऽवध्यादि ज्ञानं प्रत्यक्षं स्यात्, तथा च सति मनःपर्याप्त्याऽपर्याप्तस्य
मनुष्य-देवादेरवधिज्ञानं न स्यात्, मनसोऽभावात्, तच्चाऽयुक्तम्, "[3]चुएमि त्ति जाणइ" इति वचनेन सिद्धान्ते तस्याऽवधिज्ञानाभ्युपगमा-

१ नन्दीसूत्रस्येति गम्यते । २ परोक्ष द्विविध प्रज्ञप्तम्, तद्यथा-- आभिनिबोधिकज्ञान परोक्ष च श्रुतज्ञानं परोक्षं च । ३ च्यवे इति जानाति ।

तत्राऽऽभिनिबोधिकज्ञानशब्दार्थं दर्शयन्नाह–

अत्थाभिमुहो नियओ बोहो जो सो मओ अभिनिबोहो । सो चेवाऽऽभिणिबोहिअमहव जहाजोगमाउज्जं॥८०॥

बोधनं बोधः, 'ऋ गतौ' अर्यते गम्यते ज्ञायत इत्यर्थः, तस्याभिमुखस्तद्ग्रहणप्रवणः–अर्थबलाऽऽयातत्वेन तन्नान्तरीयकोद्भव इत्यर्थः, अयमभिशब्दस्याऽर्थो दर्शितः, एवंभूतश्च बोधः क्षयोपशमाद्यपाटवेऽनिश्चयात्मकोऽपि स्यात्, अतो नियतो निश्चित इति निशब्देन विशिष्यते– रसाद्यपोहेन 'रूपमेवेदं' इत्यवधारणात्मक इत्यर्थः । उक्तं च "एवमवग्रहोऽपि निश्चितमवगृह्णाति, कार्यत उपलब्धेः" अन्यथाऽवग्रहकार्यभूतोऽपायोऽपि निश्चयात्मको न स्यादिति भावः । आह– ननु नियतोऽर्थाभिमुख एव भवति, ततो नियतत्वविशेषणमेवाऽस्तु, किमाभिमुख्यविशेषणेन ? । तदयुक्तम्, द्विचन्द्रज्ञानस्य तैमिरिकं प्रति नियतत्वे सत्यप्यर्थाभिमुख्याभावादिति । एवं च सति अर्थाभिमुखो नियतो यो बोधः स तीर्थकर-गणधरादीनामभिनिबोधो मतोऽभिप्रेतः । 'सो चेवाभिणिबोहियमिति' स एवाऽभिनिबोध एवाऽऽभिनिबोधिकम्,विनयादिपाठादभिनिबोधशब्दस्य "विनयादिभ्यष्ठक्"[पा०-५।४।३४]इत्यनेन स्वार्थ एव ठक्प्रत्ययः; यथा विनय एव वैनयिकमिति । 'अहव जहाजोगमाउज्जं ति' अथवा नेह स्वार्थिकप्रत्ययो विधीयते, किन्तु यथायोगं यथासंबन्धमायोजनीयं– घटमानसंबन्धानुसारेण स्वयमेव वक्तव्यमित्यर्थः, तद्यथा– अर्थाभिमुखे नियते बोधे भवमाभिनिबोधिकम्, तेन वा निर्वृत्तं, तन्मयं वा, तत्प्रयोजनं वाऽऽभिनिबोधिकम्, तच्च तज्ज्ञानं चाऽऽभिनिबोधिकज्ञानम् ॥ इति गाथार्थः ॥ ८० ॥

तदेवमाभिनिबोधिकशब्दवाच्यं ज्ञानमुक्तम् । अथवा ज्ञानम्, क्षयोपशमः, आत्मा वा तद्वाच्य इति दर्शयन्नाह–

तं तेण तओ तम्मि व सो वाऽभिणिबुज्झए तओ वा तं । तं तेण तओ तम्मि व सुणेइ सो वा सुअं तेणं ॥८१॥

'तं ति' आभिमुख्येन निश्चितत्वेनाऽवबुध्यते संवेदयते आत्मा तदित्याभिनिबोधोऽवग्रहादिज्ञानं, स एवाऽऽभिनिबोधिकम्; अथवा आत्मा तेन प्रस्तुतज्ञानेन, तदावरणक्षयोपशमेन वा करणभूतेन घटादि वस्त्वभिनिबुध्यते, तस्माद् वा प्रकृतज्ञानात्, क्षयोपशमाद्वाऽभिनिबुध्यते; तस्मिन् वाऽधिकृतज्ञाने, क्षयोपशमे वा सत्यभिनिबुध्यतेऽवगच्छतीत्यभिनिबोधो ज्ञानं, क्षयोपशमो वा । 'सो वाऽभिणिबुज्झए त्ति' अथवाऽभिनिबुध्यते वस्त्वभिगच्छतीत्यभिनिबोधः । असावात्मैव, ज्ञान-ज्ञानिनोः कथञ्चिदव्यतिरेकादिति, स एवाऽऽभिनिबोधिकम् । 'तओ वा तमिति' न केवलं 'अत्थाभिमुहो नियओ' इत्यादिव्युत्पत्त्याऽऽभिनिबोधिकमुक्तम्; किन्तु यतः 'तं तेण

१ अर्थाभिमुखो नियतो बोधो यः स मतोऽभिनिबोधः । स चैवाभिनिबोधिकमथवा यथायोगमायोज्यम् ॥ ८० ॥

२ तत् तेन ततस्तस्मिन् वा स वाऽभिनिबुध्यते ततो वा तत् । तत् तेन ततस्तस्मिन् वा शृणोति स वा श्रुतं तेन ॥ ८१ ॥ ३ गाथा ८० ।

भेदः । तथा ' भेअ त्ति ' विभागशब्दोऽत्रापि योज्यते, ततश्च भेदानां विभागो विशेषो भिन्नत्वं भेदविभागः, तस्मादपि मति-श्रुतयोर्भेदः, अवग्रहादिभेदादष्टाविंशत्यादिभेदं हि मतिज्ञानं वक्ष्यते ' अक्खर सन्नी सम्मं ' इत्यादि वक्ष्यमाणवचनाच्चतुर्दशादिभेदं च श्रुतज्ञानम्, इति भेदविभागात् तयोर्भेद इति भावः । ' इंदियविभाग त्ति ' तत्त्वतः श्रोत्रविषयमेव श्रुतज्ञानम्, शेषेन्द्रियविषयमपि मतिज्ञानम्, इत्येवं वक्ष्यमाणादिन्द्रियविभागाच्च तयोर्भेदः । 'वागेत्यादि' वल्कश्चाऽक्षरं च मूकं च वल्कादिप्रतिपक्षभूतानीतराणि च वल्का-ऽक्षर मूकेतराणि तैर्योऽसौ भेदस्तस्मादपि मति-श्रुतयोर्भेद इत्यर्थः, तथाहि– " अन्ने मगंति मई वगसमा सुंबसरिसयं तु सुत्तं " इत्यादिना ग्रन्थेन कारणत्वाद् वल्कसदृशं मतिज्ञानं, सुंबसदृशं तु श्रुतज्ञानं कार्यत्वादित्यत्रैव वक्ष्यते । तत्र वल्कः पलाशादित्वग्रूपः, शुम्बं त्वितरशब्देनेहोपात्तं तज्जनिता दवरिकोच्यते । ततश्चायमभिप्रायः– यथा वलनादिसंस्कृतो विशिष्टावस्थापन्नः सन् वल्को ' दवरिका ' इत्युच्यते, तथा परोपदेशार्हद्वचनसंस्कृतं विशिष्टावस्थाप्राप्तं सदं मतिज्ञानं श्रुतमभिधीयते, इत्येवं वल्केतरभेदाद् मति-श्रुतयोर्भेदः । तथा–

' अन्ने अणक्खर क्खरविसेसओ मइ-सुयाइ भिन्दन्ति । ज मइनाणमणक्खरमक्खरमियरं च सुयनाण ' ॥ १ ॥

इत्यादिग्रन्थेन वक्ष्यमाणादक्षरेतरभेदात् तयोर्भेदः । तथा–

' सपरप्पच्चायणओ भेओ मूये-यराण वाऽभिहिओ । जं सुयं मइनाणं सपरप्पच्चायगं सुत्तं ' ॥ १ ॥

इत्याद्यभिधास्यमानवचनाद् मूकेतरभेदाद् मति-श्रुतयोर्भेदः । इति गाथासंक्षेपार्थः, विस्तरार्थं तु भाष्यकारः स्वत एव वक्ष्यति। इयं च गाथा बहुष्वादर्शेषु न दृश्यते, केवलं क्वचिदादर्शेऽपि दृष्टा, अतीव सोपयोगा च, इत्यस्माभिः किञ्चिद् व्याख्यातेति॥९७॥

तत्र "यथोद्देशं निर्देशः" इति कृत्वा लक्षणभेदं तावदाह–

जमभिनिबुज्झइ तमभिनिबोहो जं सुणइ तं सुयं भणियं । सद्दं सुणइ जइ तओ नाणं तो नाऽऽयभावो तं॥९८॥

यज्ज्ञानं कर्तृ, वस्तु कर्मताऽऽपन्नमभिनिबुध्यतेऽवगच्छति तज्ज्ञानमभिनिबोधस्तदाभिनिबोधिकं तद् मतिज्ञानमिति यावत्, 'जं सुणईत्यादि' यत् पुनर्जीवः शृणोति तच्छ्रुतम्, इत्येवं सूत्रोक्तलक्षणभेदाद् मति–श्रुतयोर्भेदः । तथा च सूत्रम्– "जइ वि सामित्ताईहिं अविसेसो, तह वि पुणोऽत्थाऽऽयरिआ नाणत्तं पण्णवयंति, तं जहा– अभिनिबुज्झइ त्ति आभिणिबोहियं, सुणेइ त्ति सुयं "

१ अक्षरं संज्ञि सम्यक् । २ गाथा १५४ । ३ गाथा १६२ । ४ गाथा १७१ ।
५ यदभिनिबुध्यते तदभिनिबोधः, यत् शृणोति तत् श्रुतं भणितम् । शब्दं शृणोति यदि सको ज्ञान ततो नात्मभावस्तत् ॥ ९८ ॥
६ यद्यपि स्वामित्वादिभिरविशेषः, तथापि पुनरत्राऽऽचार्या नानात्वं प्रज्ञपयन्ति, तद्यथा– अभिनिबुध्यते इत्याभिनिबोधिकम्, शृणोतीति श्रुतम् ।

[1]हत्थम्मि मुहुत्तन्तो दिवसंतो गाउयम्मि बोधव्वे " इत्यादि ॥

तस्मादनया परस्परोपनिबन्धलक्षणया मर्यादया यतो जीवस्तेनाऽवधिना द्रव्यादिकं 'मुणति' (जानाति), ततोऽवधिरप्युपचाराद् मर्यादेति भावः। अवधिश्चासौ ज्ञानं चेत्यवधिज्ञानम्, इति प्रक्रमलब्धेन ज्ञानशब्देन समासः ॥ इति गाथार्थः ॥ ८२ ॥

अथ मनःपर्यायज्ञानविषयां व्युत्पत्तिमाह–

[2]पज्जवणं पज्जयणं पज्जाओ वा मणम्मि मणसो वा । तस्स व पज्जायादि[3]न्नाणं मणपज्ज[4]वं नाणं ॥ ८३ ॥

'पज्जवणं ति' 'अव गत्यादिषु' इति वचनादवनं गमनं वेदनमित्यवः, परिः सर्वतोभावे, पर्यवनं समन्तात् परिच्छेदनं पर्यवः। क्वाऽयम्?, इत्याह–'मणम्मि मणसो व त्ति' मनसि मनोद्रव्यसमुदाये ग्राह्ये, मनसो वा ग्राह्यस्य संबन्धी पर्यवो मनःपर्यवः, स चासौ ज्ञानं च मनःपर्यवज्ञानम्। अथवा 'पज्जयणं ति' 'अय वय मय'- इत्यादिदण्डकधातुः, अयनं गमनं वेदनमित्ययः, परिः सर्वतोभावे, पर्ययनं सर्वतः परिच्छेदनं पर्ययः। क्व पुनरसौ?, इत्याह–'मणम्मि मणसो व त्ति' मनसि ग्राह्ये, मनसो वा ग्राह्यस्य संबन्धी पर्ययो मनःपर्ययः स चासौ ज्ञानं च मनःपर्ययज्ञानम्। 'पज्जाओ व त्ति' अथवा 'इण् गतौ' अयनं, आयः, लाभः, प्राप्तिरिति पर्यायाः, परिस्तथैव, समन्तादायः पर्यायः। क्व?, इत्याह– 'मणम्मि मणसो व त्ति' मनसि ग्राह्ये, मनसो वा ग्राह्यस्य पर्यायो मनःपर्यायः, स चासौ ज्ञानं च मनःपर्यायज्ञानम्। एवं तावज्ज्ञानशब्देन सह सामानाधिकरण्यमङ्गीकृत्योक्तम् ॥

अथ वैयधिकरण्यमङ्गीकृत्याह– 'तस्स वेत्यादि' वाशब्दः पक्षान्तरसूचकः, तस्येति मनसः, पर्यायाः, पर्यवाः, पर्ययाः, धर्मा इत्यनर्थान्तरमिति; आदिशब्दात् पर्यव–पर्ययपरिग्रहः, ततश्चायमर्थः– अथवा तस्य मनसो ग्राह्यस्य संबन्धिनो बाह्यवस्तुचिन्तनानुगुणा ये पर्यायाः, पर्यवाः, पर्ययास्तेषां तेषु वा 'इदमित्थंभूतमनेन चिन्तितम्' इत्येवंरूपं ज्ञानं मनःपर्यायज्ञानं, मनःपर्यवज्ञानं, मनःपर्ययज्ञानं चेति ज्ञानशब्देन सह व्यधिकरणः समासः। अत एव " पायं च नाणसद्दो नामसमाणाहिगरणोऽयं " इत्यत्र प्रायोग्रहणं करिष्यति ॥ इति गाथार्थः ॥ ८३ ॥

अथ केवलज्ञानविषयं शब्दार्थमाह–

[5][6]केवलमेगं सुद्धं सगलमसाहारणं अणन्तं च । पायं च नाणसद्दो नामसमाणाहिगरणोऽयं ॥ ८४ ॥

१ हस्ते मुहूर्तान्तर्दिवसान्तर्गव्यूते बोद्धव्य.। २ पर्यवनं पर्ययनं पर्यायो वा मनसि मनसो वा। तस्य वा पर्यायादिज्ञानं मन.पर्यव ज्ञानम् ॥८३॥
३ ख ग 'दि ना'। ४ घ छ 'ज्जवन्नाणं' ॥ ५ गाथा ८४। ६ केवलमेकं शुद्धं सकलमसाधारणमनन्तं च। प्रायश्च नामशब्दो नामसमानाधिकरणोऽयम् ॥८४॥

संयोज्य 'घटो घटः' इत्याद्यन्तर्जल्पाकारमन्तःशब्दोल्लेखान्वितमिन्द्रियादिनिमित्तं यज्ज्ञानमुदेति तच्छ्रुतज्ञानमिति । तच्च कथंभूतम् ?, इत्याह– 'निजकाऽर्थोक्तिसमर्थमिति' निजकः स्वस्मिन् प्रतिभासमानो योऽसौ घटादिरर्थस्तस्योक्तिः परस्मै प्रतिपादनं तत्र समर्थं क्षमं निजकाऽर्थोक्तिसमर्थम्, अयमिह भावार्थः– शब्दोल्लेखसहितं विज्ञानमुत्पन्नं स्वप्रतिभासमानार्थप्रतिपादकं शब्दं जनयति, तेन च परः प्रत्याय्यते, इत्येवं निजकाऽर्थोक्तिसमर्थमिदं भवति, अभिलाप्यवस्तुविषयमिति यावत् । स्वरूपविशेषणं चैतत्, शब्दानुसारेणोत्पन्नज्ञानस्य निजकार्थोक्तिसामर्थ्याऽव्यभिचारादिति । 'मई सेसं ति' शेषमिन्द्रिय-मनोनिमित्तमश्रुतानुसारेण यदवग्रहादिज्ञानं, तद् मतिज्ञानमित्यर्थः ॥

अत्राह कश्चित्– ननु यदि शब्दोल्लेखसहितं श्रुतज्ञानमिष्यते, शेषं तु मतिज्ञानम्, तदा वक्ष्यमाणस्वरूपोऽवग्रह एव मतिज्ञानं स्यात्, न पुनरीहा-ऽपायादयः, तेषां शब्दोल्लेखसहितत्वात्; मतिज्ञानभेदत्वेन चैते प्रसिद्धाः, तत् कथं श्रुतज्ञानलक्षणस्य नाऽतिव्याप्तिदोषः ?, कथं च न मतिज्ञानस्याऽव्याप्तिप्रसङ्गः ?। अपरं च, अङ्गा-ऽनङ्गप्रविष्टादिषु "अक्खर सन्नी सम्मं साईअं खलु सपज्जवसियं च" इत्यादिषु च श्रुतभेदेषु मतिज्ञानभेदस्वरूपाणामवग्रहे-हादीनां सद्भावात् सर्वस्यापि तस्य मतिज्ञानत्वप्रसङ्गात्, मतिज्ञानभेदानां चेहा–ऽपायादीनां साभिलापत्वेन श्रुतज्ञानत्वप्राप्तेरुभयलक्षणसंकीर्णतादोषश्च स्यात् ॥ अत्रोच्यते–यत् तावदुक्तम्– अवग्रह एव मतिज्ञानं स्यात्, न त्वीहादयः, तेषां शब्दोल्लेखसहितत्वात् । तदयुक्तम्, यतो यद्यपीहादयः साभिलापाः, तथापि न तेषां श्रुतरूपता, श्रुतानुसारिण एव साभिलापज्ञानस्य श्रुतत्वात् । अथाऽवग्रहादयः श्रुतानिश्रिता एव सिद्धान्ते प्रोक्ताः, युक्तितोऽपि चेहादिषु शब्दाभिलापः सङ्केतकालाद्याकर्णितशब्दानुसरणमन्तरेण न सङ्गच्छते, अतः कथं न तेषां श्रुतानुसारित्वम् ?। तदयुक्तम्, पूर्वं श्रुतपरिकर्मितमतेरेवैते समुपजायन्त इति श्रुतनिश्रिता उच्यन्ते, न पुनर्व्यवहारकाले श्रुतानुसारित्वमेतेष्वस्ति, वक्ष्यते च– 'पुव्वं सुयपरिकम्मियमइस्स जं संपयं सुयाईयं, तं सुयनिस्सियं' इत्यादि । यदपि युक्तितोऽपि चेत्याद्युक्तम्, तदपि न समीचीनम्, संकेतकालाद्याकर्णितशब्दपरिकर्मितबुद्धीनां व्यवहारकाले तदनुसरणमन्तरेणाऽपि विकल्पपरम्परापूर्वकविविधवचनप्रवृत्तिदर्शनात्, न हि पूर्वप्रवृत्तसंकेताः, अधीतश्रुतग्रन्थाश्च व्यवहारकाले प्रतिविकल्पन्ते– एतच्छब्दवाच्यत्वेनैतत्पूर्वं मयाऽवगतमित्येवंरूपं संकेतम्, तथाऽमुकस्मिन् ग्रन्थे एतदित्थमभिहितमित्येवं श्रुतग्रन्थं चाऽनुसरन्तो दृश्यन्ते, अभ्यासपाटववशात् तदनुसरणमन्तरेणाऽप्यनवरतं विकल्पभाषणप्रवृत्तेः । यत्र तु श्रुतानुसारित्वं तत्र श्रुतरूपताऽस्माभिरपि न निषिध्यते । तस्मात् श्रुतानुसारित्वाभावेन श्रुतत्वाभावादीहा–ऽपाय-धारणानां सामस्त्येन मतिज्ञानत्वाद् न मतिज्ञानलक्षणस्याऽव्याप्तिदोषः, श्रुतरूपतायाश्च श्रुतानुसारिष्वेव साभिलापज्ञानविशेषेषु भावाद् न श्रुतज्ञानलक्षणस्याऽतिव्याप्तिकृतो दोषः। अपरं चाङ्गा-ऽनङ्गप्रविष्टादिश्रुतभेदेषु मतिपूर्वमेव श्रुतमिति वक्ष्यमाणवचनात् प्रथमं शब्दाद्यवग्रहणकालेऽवग्रहादयः समुपजायन्ते, एते

१ ख. घ छ 'नुसारिणो ज्ञा'। २ अक्षर साज्ञि सम्यक् सादिक खलु सपर्यवसित च। ३ पूर्वं श्रुतपरिकर्मितमतेर्यत् साम्प्रत श्रुतातीतम्, तत् श्रुतनिश्रितम्।

भवतु तर्ह्यादौ मति-श्रुतोपादानम्, केवलं पूर्वं मतिः, पश्चात्तु श्रुतमित्यत्र किं कारणम्, यावता विपर्ययोऽपि कस्माद् न भवति ?, इत्याह—

मइपुव्वं[1] जेण सुयं तेणाईए मई, विसिट्ठो वा । मइभेओ चेव सुयं तो मइसमणंतरं भणियं ॥ ८६ ॥

मतिः पूर्वं प्रथममस्येति मतिपूर्वं येन कारणेन श्रुतज्ञानं, तेन श्रुतस्यादौ मतिः, तीर्थकर-गणधरैरुक्तेति शेषः, न ह्यवग्रहादिरूपे मतिज्ञाने पूर्वमप्रवृत्ते क्वापि श्रुतप्रवृत्तिरस्तीति भावः । 'विसिट्ठो वा मइभेओ चेव सुयं ति' यदि वा इन्द्रियाऽनिन्द्रियनिमित्तद्वारेणोपजायमानं सर्वं मतिज्ञानमेव, केवलं परोपदेशादागमवचनत्वाच्च भवन् विशिष्टः कश्चिद् मतिभेद एव श्रुतं; नान्यत् । ततो मूलभूताया मतेरादौ विन्यासः, तद्भेदरूपं तु श्रुतज्ञानं तत्समनन्तरं भणितमित्यदोषः । 'मइपुव्वं जेण सुयं' इत्यादिकश्चाऽर्थः पुरतः प्रपञ्चेन भणिष्यते ॥ इति गाथार्थः ॥ ८६ ॥

अथ मतिश्रुतानन्तरमवधेः, तत्समनन्तरं च मनःपर्यायज्ञानस्योपन्यासे कारणमाह—

काल[2]-विवज्जय-सामित्त-लाभसाहम्मओऽवही तत्तो । माणसमित्तो छउमत्थ-विसय-भावादिसामण्णा ॥८७॥

ततो मति-श्रुताभ्यामनन्तरमवधिर्निर्दिष्टः । कुतः ?, इत्याह– काल–विपर्यय–स्वामित्वलाभसाधर्म्यात् । तत्र नानाजीवापेक्षया, एकजीवापेक्षया च मति-श्रुताभ्यां सहाऽवधेः समानस्थितिकालत्वात् कालसाधर्म्यम् । यथा च मिथ्यात्वोदये मति–श्रुतज्ञाने अज्ञानरूपं विपर्ययं प्रतिपद्येते, तथाऽवधिरपि, इति विपर्ययसाधर्म्यम् । य एव च मति–श्रुतयोः स्वामी स एवाऽवधेरपि, इति स्वामिसाधर्म्यम् । लाभोऽपि कदाचित् कस्यचिदमीषां त्रयाणामपि ज्ञानानां युगपदेव भवति, इति लाभसाधर्म्यम् । 'माणसमित्तो इत्यादि' इतोऽवधेरनन्तरं मनोविषयत्वाद् मनसि भवं मानसं मनःपर्यायज्ञानं युक्तम् । कुतः ?, इत्याह– छद्मस्थ–विषय–भावादिसामान्यात्; आदिशब्दात् प्रत्यक्षत्वादिसामान्यं गृह्यते, समानस्य भावः सामान्यं साम्यं तस्मादित्यर्थः । तत्र यथाऽवधिज्ञानं छद्मस्थस्यैव भवति तथा मनःपर्यायज्ञानमपीति च्छद्मस्थसाम्यम् । उभयोरपि पुद्गलमात्रविषयत्वाद् विषयसाम्यम् । द्वयोरपि क्षायोपशमिकभाववृत्तित्वाद् भावसाम्यम् । द्वितयस्याऽपि साक्षाद्दर्शित्वात् प्रत्यक्षत्वसाम्यम् । एवमन्यापि प्रत्यासत्तिरभ्यूह्या ॥ इति गाथार्थः ॥ ८७ ॥



१ मतिपूर्वं येन श्रुतं तेनादौ मतिः, विशिष्टो वा । मतिभेदश्चैव श्रुतं तस्माद् मतिसमनन्तरं भणितम् ॥ ८६ ॥

२ काल–विपर्यय–स्वामित्व–लाभसाधर्म्यतोऽवधिस्ततः । मानसमितः छद्मस्थ–विषय- भावादिसामान्यात् ॥ ८७ ॥

त्वाद्, वल्ल्यादिष्वाहार-भय-परिग्रह-मैथुनसंज्ञादेस्तल्लिङ्गस्य दर्शनाच्चेति ॥

आह– ननु सुप्तयतिलक्षणदृष्टान्तेऽपि तावद् भावश्रुतं नावगच्छामः, तथाहि– श्रुतोपयोगपरिणत आत्मा शृणोतीति श्रुतम्,
श्रूयते तदिति वा श्रुतमित्यनयोर्मध्ये कया व्युत्पत्त्या सुप्तसाधोः श्रुतमभ्युपगम्यते ? । तत्राद्यः पक्षो न युक्तः, सुप्तस्य श्रुतोपयोगाऽसं-
भवात् । द्वितीयोऽपि न संगतः, तत्र शब्दस्य वाच्यत्वात्, तस्याऽपि च स्वपतोऽसंभवादिति । सत्यम्, किन्तु शृणोत्यनेन, अस्माद्,
अस्मिन् वेति व्युत्पत्तिरिहाश्रीयते, एवं च श्रुतज्ञानावरणक्षयोपशमो वाच्यः संपद्यते, स च सुप्तयतेः, एकेन्द्रियाणां चाऽस्तीति न किञ्चित्
परिहीयते ॥ इति गाथार्थः ॥ १०१ ॥

अथ दृष्टान्त-दार्ष्टान्तिकयोर्वैषम्याऽऽपादनेनैकेन्द्रियाणां श्रुतसद्भावं विघटयन्नाह–

[1]भावसुयं भासा-सोयलद्धिणो जुज्जए न इयरस्स । भासाभिमुहस्स जयं सोऊण य जं हवेज्जाहि ॥१०२॥

भावश्रुतं युज्यत इति संबन्धः । कस्य युज्यते ?, इत्याह– भाषा-श्रोत्रलब्धिमतः भाषालब्धिमतः, श्रवणेन्द्रियलब्धिमतश्चेत्यर्थः ।
कथंभूतं यद्भावश्रुतम् ?, इत्याह– भाषाभिमुखस्य शब्दमभिधित्सोः 'प्रथममेव मध्ये एतत् प्रतिपादयामि' इत्युपयोगरूपं यद् भवेत्, श्रुत्वा
वा परोदीरितां भाषां यद् भवेत् 'एतदनेन प्रतिपादितम्' इति; इह च यथासंख्यमवगन्तव्यम्– भाषालब्धिमतः प्रथमं भवेत्, श्रवणे-
न्द्रियलब्धिमतस्तु द्वितीयं भवेदिति । 'न इयरस्स त्ति' इतरस्य तु भाषा-श्रोत्रलब्धिरहितस्य भावश्रुतं न युज्यते, अयमभिप्रायः– यस्य
सुप्तसाधोर्भाषा-श्रोत्रलब्धिरस्ति, तस्योत्थितस्य परप्रतिपादन-परोदीरितशब्दश्रवणादिलक्षणं भावश्रुतकार्यं दृश्यते, तद्दर्शनाच्च सुप्तावस्था-
यामपि तस्य लब्धिरूपतया तदाऽऽसीदित्यनुमीयते, यस्य त्वेकेन्द्रियस्य भाषा-श्रोत्रलब्धिराहितत्वेन कदाचिदपि भावश्रुतकार्यं नोपल-
भ्यते, तस्य कथं तदस्तीति प्रतीयेत ? ॥ इति गाथार्थः ॥ १०२ ॥

अत्रोत्तरमाह–

[2]जह सुहुमं भाविंदियनाणं दव्विंदियावरोहे वि । तह दव्वसुयाभावे भावसुयं पत्थिवाईणं ॥ १०३ ॥

इह केवलिनो विहाय शेषसंसारिजीवानां सर्वेषामप्यतिस्तोक-बहु-बहुतर-बहुतमादितारतम्यभावेन द्रव्येन्द्रियेष्वसत्स्वपि
लब्धीन्द्रियपञ्चकावरणक्षयोपशमः समस्त्येवेति परममुनिवचनम् । ततश्च यथा येन प्रकारेण पृथिव्यादीनामेकेन्द्रियाणां श्रोत्र-चक्षु घ्राण-

१ भावश्रुतं भाषा-श्रोत्रलब्धिमतो युज्यते नेतरस्य । भाषाभिमुखस्य यत् श्रुत्वा च यद् भवेताम् ॥ १०२ ॥

२ यथा सूक्ष्मं भावेन्द्रियज्ञानं द्रव्येन्द्रियावरोधेऽपि । तथा द्रव्यश्रुताभावे भावश्रुतं पृथ्व्यादीनाम् ॥ १०३ ॥

यद् यस्माद् द्रव्येन्द्रियाणि द्रव्यमनश्च, अक्षस्य जीवस्य पराणि भिन्नानि वर्तन्ते । कथंभूतानि पुनर्द्रव्येन्द्रिय-द्रव्यमनांसि ?, इत्याह–पुद्गलकृतानि पुद्गलस्कन्धनिचयनिष्पन्नानि, हेतुद्वारेण चेदं विशेषणं द्रष्टव्यम्–पुद्गलकृतत्वाद्, येन द्रव्येन्द्रिय-मनांसि जीवस्य परभूतानि, तेन तेभ्यो यद् मति-श्रुतलक्षणं ज्ञानमुत्पद्यते, तत् तस्य साक्षादनुत्पत्तेः परोक्षम्, अनुमानवदिति । इदमुक्तं भवति– अपौद्गलिकत्वादमूर्तो जीवः, पौद्गलिकत्वात् तु मूर्तानि द्रव्येन्द्रिय-मनांसि, अमूर्ताच्च मूर्तं पृथग्भूतम्, ततस्तेभ्यः पौद्गलिकेन्द्रिय-मनोभ्यो यद् मति-श्रुतलक्षणं ज्ञानमुपजायते, तद् धूमादेरग्न्यादिज्ञानवत् परनिमित्तत्वात् परोक्षमिह जिनमते परिभाष्यते ॥ इति गाथार्थः ॥९०॥

ये तु वैशेषिकादयोऽक्षमिन्द्रियं प्रति गतं प्रत्यक्षम्, शेषं तु परोक्षमिति मन्यन्ते, तद्दर्शनमपाकर्तुमाह—

[1]केसिंचि इंदिआइं अक्खाइं, तदुवलद्धि पच्चक्खं । तन्नो, ताइं जमचेअणाइं जाणंति न घडो व्व ॥ ९१ ॥

केषांचिद् वैशेषिकादीनां मतेनाऽक्षाणि स्पर्शनादीनीन्द्रियाण्युच्यन्ते, न जीव इति भावः । 'तदुवलद्धि पच्चक्खं ति' तेषामिन्द्रियाणां येयं साक्षाद्धटाद्यर्थोपलब्धिर्घटादिज्ञानं तत् प्रत्यक्षम्, अन्यत् तु परोक्षमिति । अङ्गीक्रियतां तर्हि तन्मतमित्याह–' तन्नो इत्यादि ' तदेतद् वैशेषिकादिमतं न युक्तम्, यतस्तानीन्द्रियाण्यचेतनानि, ततश्च न जानन्ति न वस्तुस्वरूपमुपलभन्ते, घटवत्, तथाहि– यदचेतनं तत् सर्वमपि न जानाति, यथा घटादि, अचेतनानि चेन्द्रियाणि, इति कुतस्तेषामुपलब्धिः ? या प्रत्यक्षं स्यादिति भावः । तथा इन्द्रियाणां ज्ञानशून्यत्वे मूर्तिमत्त्व-स्पर्शादिमत्त्वादयोऽपि हेतवो वाच्याः ॥ इति गाथार्थः ॥ ९१ ॥

नन्विन्द्रियाणि न जानन्ति, इति प्रत्यक्षविरोधिनी प्रतिज्ञा, तेषां साक्षात्कारेणाऽर्थोपलब्धेरनुभवप्रत्यक्षेण प्रतिप्राणि प्रसिद्धत्वात्, इत्याशङ्क्याह—

[2]उवलद्धा तत्थाऽऽया तव्विगमे तदुवलद्धसरणाओ । गेहगवक्खोवरमे वि तदुवलद्धाऽणुसरिया वा ॥ ९२ ॥

' तत्थ त्ति ' तत्र चक्षुरादीन्द्रिये करणतया व्याप्रियमाणे उपलब्धा वस्तूनां बोद्धा आत्मैव द्रष्टव्यः, न त्विन्द्रियम् । कुतः ?, इत्याह– ' तव्विगमेत्यादि ' तस्य चक्षुरादीन्द्रियस्य विगमेऽभावेऽपीत्यर्थः, तदुपलब्धस्य पराभ्युपगमेनेन्द्रियोपलब्धस्याऽर्थस्य स्मरणात् । क इव ?, इत्याह–तेन गृहगवाक्षेण करणभूतेनोपलब्धस्य योषिदाद्यर्थस्य योऽनुस्मर्ता देवदत्तादिः स इव, वाशब्दस्येवाऽर्थत्वात् । क्व सति ?, इत्याह– गृहगवाक्षस्योपरमेऽप्यभावेऽपि सतीत्यर्थः । अत्र प्रयोगः– इह यो येषूपरतेष्वपि तदुपलब्धानर्थाननुस्मरति स तत्रो-

१ केषाचिदिन्द्रियाणि अक्षाणि, तदुपलब्धि प्रत्यक्षम् । तन्न, तानि यदचेतनानि जानन्ति न घट इव ॥ ९१ ॥
२ उपलब्धा तत्राऽऽत्मा तद्विगमे तदुपलब्धस्मरणात् । गेहगवाक्षोपरमेऽपि तदुपलब्धाऽनुस्मर्ता वा ( इव ) ॥ ९२ ॥

तथा पुस्तक-पत्रादिन्यस्तमपि तत्कारणत्वाद् द्रव्यश्रुतमित्यर्थः। तद् मुक्त्वा शेषं शेषचक्षुरादीन्द्रियोपलब्धिरूपं मतिज्ञानम्।'भावसुयमक्खराणमित्यादि' न केवलं श्रोत्रेन्द्रियोपलब्धिः श्रुतम्, यश्च श्रुतानुसारित्वाद् भावश्रुतं भावश्रुतरूपः शेषेषु चक्षुरादीन्द्रियेष्वक्षराणां लाभः परोपदेशार्हद्वचनानुसारिण्यक्षरोपलब्धिरित्यर्थः, सोऽपि श्रुतम्, इत्येवं मूलगाथायां संवन्धः कार्य इति हृदयम्, स च प्राग् वृत्तौ कृत एव। तस्माचाक्षरलाभाचक्षुरादीन्द्रियेषु यच्छेषमश्रुतानुसार्यवग्रहे-हाद्युपलब्धिरूपं, तद् मतिज्ञानम्, इत्येवमिहाऽप्येतत् संवध्यते ॥ इति गाथार्थः ॥ १२४ ॥

अथ परः पूर्वापरविरोधमुद्भावयन्नाह–

जइ[1] सुयमक्खरलाभो न नाम सोओवलद्धिरेव सुयं। सोओवलद्धिरेवक्खराइं सुइसंभवाउ त्ति ॥ १२५ ॥

इयमपि प्राग् मूलगाथावृत्तौ दर्शितार्थैव, तथापि विस्मरणशीलानामनुग्रहार्थं किञ्चिद् व्याख्यायते। ननु यद्युक्तन्यायेन शेषेन्द्रियाक्षरलाभोऽपि श्रुतम्, तर्हि 'श्रोत्रेन्द्रियोपलब्धिरेव श्रुतम्' इति यदवधारणं कृतं, तदसङ्गतं प्राप्नोति, शेषेन्द्रियाक्षरलाभस्यापि श्रुतत्वात्। अत्रोत्तरमाह–'सोओवलद्धिरेवेत्यादि' यद्यसौ शेषेन्द्रियाक्षरलाभोऽपि श्रोत्रेन्द्रियोपलब्धिर्न स्यात्, तदा स्यादेवाऽवधारणमसंगतम्, तच्च नास्ति, यतः शेषेन्द्रियद्वाराऽऽयातज्ञानेऽपि प्रतिभासमानान्यक्षराणि श्रोत्रेन्द्रियोपलब्धिरेव ॥

अहो! महदाश्चर्यं, यतो यदि शेषेन्द्रियाक्षरलाभः, कथं श्रोत्रोपलब्धिः ?; सा चेत्, कथं शेषेन्द्रियाक्षरलाभः ?, इत्याशङ्क्याह–'सुइसंभवाउ त्ति' शेषेन्द्रियज्ञानप्रतिभासभाञ्जि अक्षराणि श्रोत्रोपलब्धिरेव। कुतः ?, इत्याह– तेषां श्रुतेः श्रवणस्य संभवात्, इदमुक्तं भवति– अभिलापरूपाणि ह्येतान्यक्षराणि, अभिलापश्च तस्मिन् वा विवक्षिते काले, अन्यदा वा; तत्र वा विवक्षिते पुरुषे, अन्यत्र वा श्रवणयोग्यत्वाच्छ्रोत्रेणोपलभ्यते। अतः श्रोत्रोपलम्भयोग्यत्वेन श्रुतिसंभवात् सर्वोऽप्यभिलापः श्रोत्रोपलब्धिरेव; इति न किञ्चिदवधारणं विरुध्यते ॥ इति गाथार्थः ॥ १२५ ॥

किं सर्वोऽपि शेषेन्द्रियाक्षरलाभः श्रुतम्, आहोस्वित् कश्चिदेव ?, इत्याह–

सोऽवि[2] हु सुयक्खराणं जो लाभो तं सुयं मई सेसा। जइ वा अणक्खरच्चिय सा सव्वा न प्पवत्तेज्जा ॥१२६॥

१ यदि श्रुतमक्षरलाभो न नाम श्रोत्रोपलब्धिरेव श्रुतम्। श्रोत्रोपलब्धिरेवाऽक्षराणि श्रुतिसंभवादिति ॥ १२५ ॥

२ सोऽपि खलु श्रुताक्षराणां यो लाभस्तत् श्रुतं मतिः शेष.। यदि वाऽनक्षरैव सा सर्वा न प्रवर्तेत ॥ १२६ ॥

गुणहीन एव प्राप्नोति, इति न तावत् परस्थाने षट्स्थानपतितत्वम् । स्वस्थानेऽपि श्रुतज्ञानी अन्यस्मात् श्रुतज्ञानिनः संख्यातेनैव हीनोऽधिको वा स्यात्, न त्वसंख्यातेन, अनन्तेन वा, भाषकचतुर्दशपूर्वविदां संख्येयवर्षायुष्कत्वेनाऽसंख्येयस्याऽनन्तस्य वा भाषणस्यैवाऽसंभवादिति । अस्यैव च विशेषणदूषणस्याऽभिधानार्थं पुनरत्रेदं मतान्तरमुपन्यस्तम्, अन्यथा हि '[1]केई बुद्धिद्दिट्ठे मइसहिए भासओ सुयं' इत्यादिना सर्वमिदं प्रागभिहितमेव ॥ इति गाथार्थः ॥ १४६ ॥

तदेवं '[2]बुद्धिद्दिट्ठे अत्थे' इत्यादिपूर्वगतगाथा श्रुतस्वरूपाभिधायिना प्रकारेण व्याख्याता, मति-श्रुतयोश्च भेदस्य व्याख्येयत्वेन प्रस्तुतत्वात् तदभिधायकत्वेनापि मतान्तरेण व्याख्याता, तच्च व्याख्यानमयुक्तत्वाद् दूषितम् । अथाऽऽत्माभिमतेन निरवद्यमति-श्रुतभेदप्रकारणैतां व्याख्यातुमाह–

[3]सामन्ना वा बुद्धी मइ-सुयनाणाइं तीए जे दिट्ठा । भासइ, संभवमेत्तं गहियं न उ भासणमेत्तं ॥१४७॥

मइसहियं भावसुयं तं निययमभासओ वि मइरन्ना । मइसहियं ति जमुत्तं सुओवउत्तस्स भावसुयं ॥ १४८ ॥

स्वविहितप्रथमव्याख्यानापेक्षया वाशब्दो यदिवेत्यर्थः, 'बुद्धिद्दिट्ठे अत्थे' इत्यत्र येयं बुद्धिः, असौ सामान्या गृह्यते ; ततः किम् ? इत्याह–'मइ-सुयनाणाइं ति' मति-श्रुतज्ञाने द्वे अपि बुद्धिरिहेत्यर्थः, तया मतिश्रुतज्ञानात्मिकया बुद्ध्या ये दृष्टा भावास्तेषु मध्ये यान् भाषते तद् भावश्रुतमित्युत्तरगाथायां संबन्धः । भाषत इत्यत्र च भाषणस्य संभवमात्रं गृहीतम्, न तु भाषणमात्रम् । ततश्चेदमुक्तं भवति– तत्राऽन्यत्र वा देशे, तदाऽन्यदा वा काले, स चाऽन्यो वा पुरुषः, सति सामग्रीसंभवे निश्चयेनैतान् भाषत एव, इत्येवं यान् भावानन्तर्विकल्पे प्लवमानान् भाषणयोग्यतायां व्यवस्थापयति, तेऽभाष्यमाणा अपि भाषणयोग्याः सन्तो भावश्रुतं भवन्ति, न तु भाष्यमाणा एवेति भावः । एवं च सति मत्युपलब्धानामनभिलाप्यानामर्थानां भाषणायोग्यत्वाद् भावश्रुतत्वमपाकृतं भवति, भाषणयोग्यानां त्वभाष्यमाणानामपि सर्वेषां विकल्पप्रतिभासिनामर्थानां भावश्रुतत्वमावेदितं भवति । अत एव पर्यवसितमर्थं द्वितीयगाथयाऽऽह– नियतं निश्चितं तद् भावश्रुतमभाषमाणस्यापि भवति, योग्यतामात्रेणैव भाषणस्य गृहीतत्वादिति भावः ॥

आह– ये सामान्यबुद्धिदृष्टा अर्था ये भाषणयोग्याः, यदि तेषां भावश्रुतत्वम्, तर्हि मतिज्ञानान्तर्वर्त्यपायविकल्पावभासिनामपि तत्प्रसङ्गः, न हि तेऽपि न भाषणयोग्याः; इत्याशङ्क्याह–'मतिसहितमिति' । अस्य व्याख्यानमाह–'मइसहियं तीत्यादि' मतिसहितमिति

१ गाथा १३२ । २ गाथा १२८ । ३ सामान्या वा बुद्धिर्मति-श्रुतज्ञाने तया ये दृष्टा । भाषते, सम्भवमात्रं गृहीतं न तु भाषणामात्रम् ॥ १४७ ॥
मतिसहितं भावश्रुतं तद् नियतमभाषमाणस्याऽपि मतिरन्या । मतिसहितमिति यदुक्तं श्रुतोपयुक्तस्य भावश्रुतम् ॥ १४८ ॥

श्रुतात्मकबुद्ध्युपलब्धानर्थांस्तदुपयुक्तस्यैव वदतो द्रव्यश्रुतभावश्रुतरूपमुभयश्रुतं भवति, तच्छ्रुतमित्युक्तेऽपि सामर्थ्यादुभयश्रुतं लभ्यते 'जे भासइ' इत्यनेन शब्दरूपस्य द्रव्यश्रुतस्य सूचितत्वात्, 'बुद्धिद्दिट्ठे अत्थे' इत्यनेन, 'मईसहियं' इत्यनेन च भावश्रुतस्याऽभिधित्सितत्वादिति। तदेतावता 'सोइंदिओवलद्धी' इत्यादिगाथोक्तस्योभयश्रुतस्य स्वरूपमुक्तम्; यान् पुनः प्रथमं श्रुतबुद्ध्या दृष्टानपि पश्चादभ्यासबलादेवाऽनुपयुक्तो वक्ति तद् द्रव्यश्रुतम्, इत्येतावद् गाथायामनुक्तमपि सामर्थ्याद् गम्यते; तथा यान् श्रुतबुद्ध्या पश्यत्येव, न तु मनसि स्फुरतोऽपि भाषते तद् भावश्रुतम्, इतीदमपि स्वयमेवाऽवगन्तव्यम्। तदेतावता किं तद् द्रव्यादिश्रुतम्?, कथं वा तद् भवति?, इत्येवं चिन्तितम्। अथ 'को वा भावसुयंसो' इत्यादि चिन्त्यते– तत्र भावश्रुतमुभयश्रुताद् द्रव्यश्रुताच्चाऽनन्तगुणम्, एतस्मात्तूभयश्रुतं द्रव्यश्रुतं चानन्ततमे भागे वर्तत इति भावनीयम्, वाचः क्रमवर्तित्वात्, आयुषश्च परिमितत्वात् सर्वेषामपि भावश्रुतविषयभूतानामर्थानामनन्ततममेव भागं वक्ता भाषत इति भावः। ततश्च भावश्रुतस्याऽनन्ततम एव भागो द्रव्यश्रुतत्वेनोभयश्रुतत्वेन च परिणमतीत्युक्तं भवति। एतच्च सर्वमनन्तरमेव भाष्यकारः स्वयमेव विस्तरतो भणिष्यतीत्यलं विस्तरेण॥

आह– ननु यानुपयुक्तो भाषते तदुभयश्रुतम्, यांस्त्वनुपयुक्तो वक्ति तद् द्रव्यश्रुतमित्युक्तम्; यांस्तर्हि न भाषते, केवलं श्रुतबुद्ध्या पश्यत्येव, तत्रापि द्रव्यश्रुतरूपता, उभयश्रुतरूपता च किमिति नेष्यते?; इत्याशङ्क्याह–'इयरत्थ वीत्याद्युत्तरार्धं' 'जे भासइ तं सुयं' इत्युक्ते तत्प्रतियोगिस्वरूपमभाषमाणावस्थाभावि भावश्रुतमेव इतरत्र शब्दवाच्यं भवति। ततश्चायमर्थः–द्रव्यश्रुतोभयश्रुताभ्यामितरत्रापि भावश्रुते भवेत् श्रुतं–द्रव्यश्रुतरूपता, उभयश्रुतरूपता वा भवेदित्यर्थः। यदि किं स्यात्?, इत्याह–उपलम्भनमुपलब्धिस्तत्समं तत्प्रमाणं यदि भणेत्–यावद् वस्तुनिकुरम्बमुपलभते तावत्सर्वमुपयुक्तोऽनुपयुक्तो वा यदि वदेदित्यर्थः; एतच्च नास्ति, श्रुतोपलब्ध्या उपलब्धानामर्थानामनन्तत्वात्, वाचः क्रमवर्तित्वात्, आयुषश्च परिमितत्वादिति। तस्मादभिलाप्यानां श्रुतोपलब्ध्या समुपलब्धानां भावानां मध्यात् सर्वेणाऽपि जन्मनाऽनन्ततममेव भागं भाषते वक्ता, अतस्तत्रैवाऽनुपयुक्तस्य वदतो द्रव्यश्रुतरूपता, उपयुक्तस्य तु वदत उभयश्रुतरूपता भवेत्, नेतरत्र भावश्रुते, भाषणस्यैवाऽसंभवात्॥ इति पूर्वगतगाथार्थः॥ १२८॥

तदेवं व्याख्याताऽस्माभिरियं गाथा, सांप्रतं भाष्यकारस्तद्व्याख्यानमाह—

[3]जे सुयबुद्धिद्दिट्ठे सुयमइसहिओ पभासई भावे। तं उभयसुयं भन्नइ दव्वसुयं जे अनुवउत्तो॥ १२९॥

गतार्थैव, नवरं सुखार्थं किञ्चिद् व्याख्यायते–श्रुतरूपा यका बुद्धिस्तया दृष्टाः पर्यालोचिता ये भावास्तन्मध्याद् '[4]मईसहियं'



१ गाथा ११७। २ गाथा १२७। ३ यान् श्रुतबुद्धिदृष्टान् श्रुतमतिसहितः प्रभाषते भावान्। तदुभयश्रुतं भण्यते द्रव्यश्रुतं याननुपयुक्तः॥ १२९॥ ४ गाथा १२८।

अथ यथोक्तव्याख्यानलब्धमति-श्रुतभेदोपदर्शनपूर्वकमुपसंहरन्नाह[1]–

एवं धणिपरिणामं सुयनाणं उभयहा मइन्नाणं। जं भिन्नसहावाइं ताइं तो भिन्नरूवाइं ॥ १५० ॥

एवं प्रागुक्तप्रकारेण केवलाऽभिलाप्यार्थविषयत्वात्[3] सर्वमपि श्रुतज्ञानं ध्वनिपरिणाममेव, ध्वनेः शब्दस्य परिणमनं विपरिवर्तनं परिणामो यत्र तद् ध्वनिपरिणामं[4] भवत्येव, श्रुतानुसारित्वेनोत्पन्नमेव ह्येतदिष्यते, श्रुतं च संकेतकालभाविपरोपदेशरूपः, श्रुतग्रन्थरूपश्च द्विविधः शब्दोऽत्राऽधिकृतः, तदनुसारेण चोत्पन्ने ज्ञाने ध्वनिपरिणामो भवत्येवेति। मतिज्ञानं तूभयथाऽपि भवति– शब्दपरिणामम्, अशब्दपरिणामं च, अभिलाप्यानभिलाप्यपदार्थविषयं ह्येतत्। ततश्च श्रुतानपेक्षस्वमत्यैव विकल्प्यमानेष्वभिलाप्येषु ध्वनिपरिणामोऽस्मिन्नपि प्राप्यते। अनभिलाप्यविषयतायां तु नासौ तत्र लभ्यते, अनभिलाप्यपदार्था हि स्वयमेव बुध्यमाना अपि वाचकध्वनेरभावाद् विकल्पयितुं, परस्मै प्रतिपादयितुं वा न शक्यन्ते, यथा नालिकेरद्वीपाऽऽयातस्य वह्न्यादयः क्षीरे-क्षु-गुड-शर्करादिमाधुर्यतारतम्यादयो वा; इति कुतस्तद्विषयतायां ध्वनिपरिणामः?। अभिलाप्यपदार्थेभ्योऽनन्तगुणाश्चाऽनभिलाप्याः सन्ति। ततोऽभिलाप्या-ऽनभिलाप्यवस्तुविषयत्वाच्छब्दा-ऽशब्दपरिणामं मतिज्ञानमिति स्थितम्। अथोपसंहरति–'तो त्ति' तस्मात् ते मतिश्रुते स्वामि-कालादिभिरविशेषेऽपि भिन्नरूपे भेदवती मन्तव्ये। कुतः? इत्याह– यद् यस्मात् कारणाद् द्वे अपि भिन्नस्वभावे- उक्तन्यायेनैकस्य ध्वनिपरिणामित्वात्, अपरस्य तूभयस्वभावत्वात् ॥ इति गाथार्थः ॥ १५० ॥

तदेवं मूलगाथायां 'बुद्धिद्दिट्ठे[5] अत्थे जे भासइ तं सुयं मईसहियं' इत्येतत् पूर्वार्धं 'सामण्णा[6] वा बुद्धी' इत्यादिना व्याख्यातम्। अथ 'ईयरत्थ वि होज्ज सुयं उवलद्धिसमं जइ भणेज्जा' इत्येतदुत्तरार्धं व्याचिख्यासुराह–

ईयर[7] त्ति मइन्नाणं तओ वि जइ होइ सद्दपरिणामो। तो तम्मि वि किं न सुयं भासइ जं नोवलद्धिसमं? ॥१५१॥

'ईयरत्थ वि होज्ज सुयं' इति मूलगाथोत्तरार्धे इतरशब्दस्य किं वाच्यम्?, इत्याह– इतरदिति मतिज्ञानं तत्राऽभिसंबध्यते, इत्याचार्येणोक्ते परः प्राह–'तओ वि जइ होइ सद्दपरिणामो तो तम्मि वि किं न सुयं ति' तत इति सप्तम्यन्तात् तस्प्रत्ययः, ततश्च

१ ख घ छ 'हारमाह'। २ एवं ध्वनिपरिणाम श्रुतज्ञानमुभयथा मतिज्ञानम्। यद् भिन्नस्वभावे ते ततो भिन्नरूपे ॥ १५० ॥
३ क ग 'षयित्वात्'। ४ घ छ 'णामं श्रुता'। ५ गाथा १२८। ६ गाथा १४७।
७ इतरदिति मतिज्ञान ततोऽपि यदि भवति शब्दपरिणाम.। ततस्तस्मिन्नपि किं न श्रुतं भाषते यद् नोपलब्धिसमम्? ॥ १५१ ॥

[1]केई बुद्धिदिट्ठे मइसहिए भासओ सुयं, तत्थ । किं सद्दो मइरुभयं भावसुयं सव्वहाऽजुत्तं ॥ १३२ ॥

इह केचनाऽप्याचार्या मति-श्रुतयोर्भेदं प्रतिपिपादयिषवो 'बुद्धिदिट्ठे अत्थे जे भासइ' इत्यादिमूलगाथायां 'बुद्धिः श्रुतबुद्धिः' इति न व्याख्यानयन्ति, किन्तु 'बुद्धिर्मतिः' इति व्याचक्षते। ततश्च बुद्ध्या मत्या दृष्टेषु बहुष्वर्थेषु मध्ये कांश्चित् तद्दृष्टानर्थान् मतिसहितान् भाषमाणस्य श्रुतं भवति ॥

आह– ननु मतिज्ञान्येव मतिसहितो भवति, तत् कथमर्थानां मतिसहितत्वं विशेषणम् ?। सत्यम्, किन्तु मूलगाथायां 'मईसहियं' इति वचनाद् मत्युपयोगे वर्तमानोऽत्र वक्ता गृह्यते, अतस्तस्य मत्युपयोगसहितत्वादर्थानामप्युपचारतस्तत्सहितत्वमुच्यते। तस्माद् मतिज्ञानदृष्टानर्थांस्तदुपयुक्तस्यैव भाषमाणस्य श्रुतं भवतीति तात्पर्यम्; अनुपयुक्तस्य तु वदतो द्रव्यश्रुतम्, पारिशेष्यादभाषमाणस्य पदार्थपर्यालोचनमात्ररूपं मतिज्ञानम्, इति मति-श्रुतयोर्भेदः। तदेवं कैश्चिद् मूलगाथायाः पूर्वार्धे व्याख्याते सूरिर्दूषणमाह–'तत्थ किं सद्दो इत्यादि' तत्र तैरेवं व्याख्याते भावश्रुतं सर्वथैवाऽयुक्तं स्यात् सर्वथा तदभावः प्राप्नोतीत्यर्थः, तथाहि– किं भाष्यमाणः शब्दो भावश्रुतम्, मतिर्वा, उभयं वा ? इति त्रयी गतिः। अस्य च त्रितयस्य मध्ये नैकमपि भावश्रुतं युक्तमिति भावः॥इति गाथार्थः॥१३२॥

कथम् ?, इत्याह–

[3]सद्दो ता दव्वसुयं मइराभिणिबोहियं नवा उभयं। जुत्तं, उभयाभावे भावसुयं कत्थ तं किंवा ? ॥१३३॥

मत्युपयुक्तस्य शब्दमुदीरयतो यस्तावच्छब्दः स द्रव्यश्रुतमेव, इति कथं भावश्रुतं स्यात् ?, मतिस्त्वाभिनिबोधिकज्ञानम्। भवतु तर्हि मति-शब्दलक्षणमुभयं समुदितं भावश्रुतम्, इत्याह– 'नवा उभयं जुत्तं ति' नैव यथोक्तमुभयं समुदितमपि भावश्रुतं युक्तम्, प्रत्येकावस्थायां तद्भावाभावात्, न हि प्रत्येकं सिकताकणेष्वसत् तैलं समुदितावस्थायामपि भवतीति भावः। तदेवमुभयस्य स्वतन्त्रस्याऽस्वतन्त्रस्य वा भावश्रुतत्वेनाऽभावे सति तद् भावश्रुतं क्व शब्दादौ ?, किंवा तत् ?, न किञ्चिदिति भावः ॥ इति गाथार्थः ॥ १३३ ॥

अथ भाषापरिणतिकाले मतेः किमप्याधिक्यमुपजायते, इत्युभयस्य श्रुतत्वं न विरुध्यते; इत्याह–

१ केचिद् बुद्धिदृष्टान् मतिसहितान् भाषमाणस्य श्रुतं, तत्र। किं शब्दो मतिरुभय भावश्रुत सर्वथाऽयुक्तम् ॥ १३२ ॥
२ गाथा १२८। ३ शब्दस्तावद् द्रव्यश्रुत मतिराभिनिबोधिकं नवोभयम्। युक्तं, उभयाभावे भावश्रुतं क्व तत् किंवा ? ॥ १३३ ॥

सांप्रतं तु मतिज्ञानी श्रुतोपलब्ध्या तुल्यं समं न भाषत इत्येवमुपलब्धिसमत्वाभावमुपदर्शयन्नाह–'न सुओवलद्धीत्यादि' वाशब्दः प्रकारान्तरद्योतकः, ततश्च न श्रुतोपलब्ध्या तुल्यं मतिज्ञानी भाषत इति वा, यतो यस्मात् कारणाद् नोपलब्धिसमं मतिज्ञानिनो भाषणम्, तस्माद् न तत्र श्रुतरूपता, इदमुक्तं भवति– श्रुतोपलब्धौ परोपदेशा–र्हद्वचनलक्षणश्रुतानुसारेणोपलब्धानर्थान् भाषते, मत्युपलब्धौ तु तदुपलब्धानेव, इत्यतो न मतिज्ञानिनो भाषणं श्रुतोपलब्धिसमम्। ततश्च न तत्र श्रुतसंभवः ॥ इति गाथार्थः ॥ १५३ ॥

तदेवं ''सोइंदिओवलद्धी होइ सुयं' इत्यादिर्मूलगाथया तत्त्वतः श्रोत्रेन्द्रियविषयमेव श्रुतज्ञानम्, सर्वेन्द्रियविषयं च मतिज्ञानमित्येवं मति–श्रुतयोर्भेदः प्रतिपादितः; तत्प्रतिपादनक्रमे च 'बुद्धिदिट्ठे अत्थे जे भासइ' इत्यादिगाथा समायाता, सा च द्रव्य–भावोभय-श्रुतरूपाऽभिधायकत्वेन मति–श्रुतयोर्भेदाभिधानपरतया च व्याख्याता, तद्व्याख्याने चाऽवसिते इन्द्रियविभागादपि मति- श्रुतयोर्भेदः। सांप्रतं वल्क–शुम्बोदाहरणात् तमभिधित्सुराह–

अन्ने मन्नंति मई वग्गसमा सुंबसरिसयं सुत्तं। दिट्ठन्तोऽयं जुत्तिं जहोवणीओ न संसहइ ॥ १५४ ॥

अन्ये केचनाऽप्याचार्या मन्यन्ते। किम्?, इत्याह– वल्कसमा वल्कसदृशी मतिः, ततः सैव यदा शब्दतया संदर्भिता भवति–तज्जनितो यदा शब्द उत्तिष्ठतीत्यर्थः, तदा तदुत्थशब्दसहिता श्रुतमुच्यते, तच्च शुम्बसदृशं वल्कजनितदवरिकातुल्यं श्रुतं भवति, एवं तदभ्युपगमः शोभन इति चेत्। नैवमित्याह– 'दिट्ठंतोऽयमित्यादि' अयं वल्कशुम्बदृष्टान्तो यथा तैरुपनीतः– उक्तप्रकारेण प्रकृते योजितः, तथा युक्तिं न सहते– न क्षमते, अन्यथा त्वस्मदभिमतवक्ष्यमाणप्रकारेणोपनीयमान एषोऽपि युक्तिक्षमो भविष्यतीति भावः ॥ इति गाथार्थः ॥ १५४ ॥

कुतो न संसहते? इत्याह–

भावसुयाभावाओ संकरओ निव्विसेसभावाओ। पुव्वुत्तलक्खणाओ सलक्खणावरणभेयाओ ॥१५५॥

नैष दृष्टान्तो युक्तिं क्षमत इति सर्वत्र साध्यम्, मतेरनन्तरं शब्दमात्रस्यैव भावेन भावश्रुतस्याऽभावप्रसङ्गात्। अथ मतिसहितोऽयं

१ गाथा ११७। २ ख 'सूत्रगा'। ३ गाथा १२८। ४ ख 'णतस्तम'।
५ अन्ये मन्यन्ते मतिर्वल्कसमा शुम्बसदृशं श्रुतम्। दृष्टान्तोऽय, युक्तिं यथोपनीतो न संसहते ॥ १५४ ॥
६ ख 'गमे शोभन'। ७ भावश्रुताभावात् सकरतो निर्विशेषभावात्। पूर्वोक्तलक्षणात् स्वलक्षणा-ऽऽवरणभेदात् ॥ १५५ ॥

अहव मई दव्वसुयत्तमेउ भावेण सा विरुज्झेज्जा । जो असुयक्खरलाभो तं मइसहिओ पभासेज्जा ॥१३६॥

अथवा मतिर्द्रव्यश्रुतत्वमेतु- आगच्छतु न तत्र वयं निषेद्धारः, केवलमेतदेव निर्बन्धेनाऽभिदध्मो यदुत- भावेन भावश्रुतत्वेन सा मतिर्विरुध्येत दर्शितन्यायेन विरोधमनुभवेत्, इदमुक्तं भवति- 'केई बुद्धिद्दिट्ठे मइसहिए भासओ सुयं' इत्यत्र गाथार्धे योऽसौ श्रुतशब्दः स यदि द्रव्यश्रुतवाचित्वेन व्याख्यायते तदा विरोधो न भवति । कथम् ?, इति चेत् । उच्यते- बुद्धिर्मतिस्तद्दृष्टान् मत्युपयोगसहितानर्थान् भाषमाणस्य सा मतिः शब्दलक्षणस्य द्रव्यश्रुतस्य कारणत्वाद् द्रव्यश्रुतम्, अभाषमाणस्य तु मतिज्ञानम्, इत्येवं मति-द्रव्यश्रुतयोर्भेदः प्रोक्तो भवति, न तु मति-श्रुतज्ञानयोः केवलं विरोधपरिहारमात्रमित्थमुपकल्पितं भवति ॥

अत्राह कश्चित्- ननु यदि मत्युपयोगे वर्तमानो भाषेत कश्चित्, तदा द्रव्यश्रुतकारणत्वाद् मतिः स्याद् द्रव्यश्रुतम्, एतच्च न भविष्यति; इत्याह- 'जो असुयेत्यादि' योऽश्रुतानुसार्यक्षरलाभः, तं मत्युपयोगे वर्तमानो भाषेत वक्ता, नात्र कश्चित् संदेहः; यस्तु श्रुतानुसार्यक्षरलाभस्तं श्रुतोपयोगे एव वर्तमानो भाषेत, अतो न तच्छब्दस्य मतिः कारणम्, श्रुतपूर्वत्वात् तस्येति भावः; इदमुक्तं भवति- यः परोपदेशार्हद्वचनलक्षणं श्रुतमनुसृत्याऽक्षरलाभोऽन्तः स्फुरति तं श्रुतोपयोगे एव वर्तमानो भाषते, यस्त्वश्रुतानुसारी स्वमत्यैव पर्यालोचित ईहा-ऽपायेषु स्फुरत्यक्षरलाभः, तं यदा मत्युपयोगसहित एव भाषते, तदा तस्य शब्दलक्षणस्य द्रव्यश्रुतस्य कारणत्वाद् भवत्येव मतिर्द्रव्यश्रुतम् ॥ इति गाथार्थः ॥ १३६ ॥

अथाऽस्मिन्नेव मतेर्द्रव्यश्रुतत्वपक्षे 'ईयरत्थ वि होज्ज सुयं' इत्यादौ मूलगाथाया उत्तरार्धे योऽर्थः संपद्यते तमाचार्यः प्रदर्शयन्नाह—

ईयरम्मि वि मइनाणे होज्ज तयं तस्समं जइ भणेज्जा । न य तरइ तात्तियं सो जमणेगगुणं तयं तत्तो ॥१३७॥

भाषमाणस्य मतिर्द्रव्यश्रुतमित्युक्तम्, अतोऽभाषमाणावस्थाभावि मतिज्ञानमितरत्रशब्दवाच्यं भवति । ततश्चेतरत्राप्यभाषमाणावस्थाभाविनि मतिज्ञाने भवेत् तद् द्रव्यश्रुतं यदि तत्समं मतिज्ञानोपलब्धिसमं भणेत्, यावद् मतिज्ञानेनोपलभते तावत् सर्वं वदेदित्यर्थः; एतच्च नास्ति । कुतः ? इत्याह- न च नैव 'तरति' शक्नोति स यावद् मतिज्ञानेनोपलभते तावद् वक्तुम् । कुतः ? इत्याह—

१ अथवा मतिर्द्रव्यश्रुतत्वमेतु भावेन सा विरुध्येत । योऽश्रुताक्षरलाभस्तं मतिसहितः प्रभाषेत ॥ १३६ ॥ २ गाथा १३२ ।
३ गाथा १२८ । ४ इतरस्मिन्नपि मतिज्ञाने भवेत् तत् तत्समं यदि भणेत् । न च तरति ( शक्नोति ) तावत् स यदनेकगुणं तत् तत ॥ १३७ ॥

पर्युदासाश्रयणादश्रुतानुसारिणा शब्देनैवाऽन्विता गृह्यते, न तु शब्दपरिणामरहिताऽवग्रहरूपा, तस्याः शब्दजनकत्वाभावेनाऽनन्तरं शुम्बसदृशद्रव्यश्रुताभावादिति ॥

अत्रोत्तरमाह– 'किं पुण तेसिं विसेसेणं ति' किं पुनस्तयोर्यथोक्तमति-द्रव्यश्रुतयोर्विशेषेण भेदेनोक्तेन ?– अप्रस्तुतत्वाद् न किञ्चिदित्यर्थः। श्रुतज्ञानेनैव सहाऽत्र मतेर्भेदो विचारयितुं प्रक्रान्तः,इत्यतः किं द्रव्यश्रुतेन सह तच्चिन्तया ? इति भावः ॥इति गाथार्थः॥१५७॥

एतदेव भावयन्नाह–

[2]इहइं जेणाहिकओ नाणविसेसो न दव्व-भावाणं । न य दव्व-भावमेत्ते वि जुज्जए सोऽसमंजसओ ॥ १५८ ॥

इहास्मिन् प्रक्रमे येन कारणेन ज्ञानयोरेव मति-श्रुतलक्षणयोर्विशेषो भेदोऽधिकृतो न तु द्रव्य-भावयोर्मतिज्ञान-द्रव्यश्रुतलक्षणयोः, इत्यतः किं तद्भेदाऽभिधानेन ? इति । नच यथोक्तद्रव्य-भावयोरप्यसौ युज्यते । कुतः ? इत्याह– असमञ्जसतो दृष्टान्त-दार्ष्टान्तिकयोर्वैसदृश्यात् ॥ इति गाथार्थः ॥ १५८ ॥

तथाहि–

[3]जह वग्गा सुंबत्तणमुवेंति सुंबं च तं तओऽणण्णं । न मई तहा धणित्तणमुवेइ जं जीवभावो सा ॥१५९॥

यथा वल्काः शुम्बत्वमुपयान्ति-आत्माऽव्यतिरिक्तशुम्बपरिणामापन्नाः शुम्बमित्युच्यन्ते, न तु शुम्बाद् व्यतिरिक्ताः; तदपि च शुम्बं तेभ्यो वल्केभ्योऽनन्यरूपमव्यतिरिक्तम् ; न तथा मतिर्ध्वनित्वमुपैति, यद् यस्मात् कारणात् सा मतिराभिनिबोधिकज्ञानत्वेन जीवभावो जीवपरिणामः, शब्दस्तु मूर्तत्वाद् न जीवभावः, इत्यतः कथममूर्तपरिणामा मतिर्मूर्तध्वनिपरिणाममुपगच्छेत् ? अमूर्तस्य मूर्तपरिणामविरोधात् । तस्माद् दृष्टान्त-दार्ष्टान्तिकयोर्वैषम्यादिदमपि व्याख्यानमुपेक्षणीयम् ॥ इति गाथार्थः ॥ १५९ ॥

पुनः परवचनमाशङ्क्य तस्यैव शिक्षणार्थमाह–

[4]अह उवयारो कीरइ पभवइ अत्थंतरं पि जं जत्तो । तं तम्मयं ति भण्णइ, तो मइपुव्वं जओ भणियं ॥१६०॥

---

१ ख 'न्तयेत् ? इति'। २ इह येनाऽधिकृतो ज्ञानविशेषो न द्रव्य-भावयो । न च द्रव्य-भावमात्रेऽपि युज्यते सोऽसमञ्जसत. ॥ १५८ ॥
३ यथा वल्का शुम्बत्वमुपयान्ति शुम्ब च तत् ततोऽनन्यत् । न मतिस्तथा ध्वनित्वमुपैति यज्जीवभाव सा ॥ १५९ ॥
४ अथोपचार क्रियते प्रभवत्यर्थान्तरमपि यद् यस्मात् । तत् तन्मयमिति भण्यते, ततो मतिपूर्वं यतो भाणितम् ॥ १६० ॥

श्रुतस्याऽपि बहुत्वलक्षणो हेतुः प्रागुक्त एव, किमितीह पुनरप्युच्यते ? इति चेत् । सत्यम्, किन्तु श्रुतोपलब्धा बहुत्वात्, शेषोपलब्धास्तु तत्स्वाभाव्याद् न शक्यन्तेऽभिधातुम्, इति विषयविभागदर्शनार्थं तस्येह पुनरुपन्यासः ॥

अपरस्त्वाह— ननु मत्याद्युपलब्धानामपि केषाश्चिदभिलाप्यत्वात् किमुच्यते ' सेसोवलद्धभावा साभव्वत्ति ' ? । सत्यम्, किन्तु तेषां श्रुताविषयत्वेनैवाऽभिधानाशक्यत्वस्योक्तत्वाददोषः ॥ इति गाथार्थः ॥ १३९ ॥

विनेयः पृच्छति—

कित्तो[1] एत्तियमेत्ता भावसुय-मईण पज्जया जेसिं ? । भासइ अणंतभागं, भण्णइ जम्हा सुएऽभिहियं ॥१४०॥

कुतः पुनरेतावन्तो भावश्रुत-मत्योः पर्याया उपलब्धार्थविषया विशेषाः, येषां सर्वेणापि जन्मनाऽनन्तभागमेव भाषत इति प्रागुक्तम् ?। अत्र गुरुराह—भण्यतेऽत्रोत्तरम्— यस्मात् सूत्रे आगमे वक्ष्यमाणमभिहितम्, तस्मात्तयोरेतावन्तः पर्यायाः ॥ इति गाथार्थः॥ १४०॥

किं तत् सूत्रेऽभिहितम् ? इत्याह—

पण्णवणिज्जा[2] भावा अणंतभागो उ अणभिलप्पाणं । पण्णवणिज्जाणं पुण अणंतभागो सुयनिबद्धो ॥१४१॥

प्रज्ञाप्यन्ते प्ररूप्यन्त इति प्रज्ञापनीया वचनपर्यायत्वेन श्रुतज्ञानगोचरा इत्यर्थः । के ?, भावा ऊर्ध्वाधस्तिर्यग्लोकान्तर्निविष्टभू-भवन-विमान-ग्रह-नक्षत्र-तारका-ऽर्केन्द्रादयस्ते सर्वेऽपि मिलिताः । किम् ? इत्याह—अनन्ततम एव भागे वर्तन्ते । केषाम् ?, अत्राह— अनभिलाप्यानामर्थपर्यायत्वेनाऽवचनगोचरापन्नानामित्यर्थः, अनभिलाप्यवस्तुराशेरभिलाप्यपदार्थसार्थः सर्वोऽप्यनन्ततम एव भागे वर्तत इत्यर्थः । प्रज्ञापनीयपदार्थानां पुनरनन्तभाग एव चतुर्दशपूर्वलक्षणे श्रुते निबद्धो भगवद्भिर्गणधरैः साक्षाद् ग्रथितः ॥ इति गाथार्थः ॥१४१॥

कुतः पुनरेतद् विज्ञायते यदुत— प्रज्ञापनीयानामनन्तभाग एव श्रुतनिबद्धः ?, इत्याह—

जं[3] चोद्दसपुव्वधरा छट्ठाणगया परोप्परं होंति । तेण उ अणंतभागो पण्णवणिज्जाण, जं सुत्तं ॥१४२॥

यद् यस्मात् कारणाच्चतुर्दशपूर्वधराः षट्स्थानपतिताः परस्परं भवन्ति, हीनाधिक्येनेति शेषः, तथाहि— सकलाभिलाप्यवस्तु-

१ कुत एतावन्मात्रा भावश्रुत-मत्योः पर्याया येषाम् ? । भाषतेऽनन्तभागं, भण्यते यस्मात् श्रुतेऽभिहितम् ॥ १४० ॥
२ प्रज्ञापनीया भावा अनन्तभागस्तु अनभिलाप्यानाम् । प्रज्ञापनीयाना पुनरनन्तभागः श्रुतनिबद्ध. ॥ १४१ ॥
३ यच्चतुर्दशपूर्वधराः षट्स्थानगता. परस्पर भवन्ति । तेन तु अनन्तभाग. प्रज्ञापनीयानां, यत् सूत्रम् ॥ १४२ ॥

दिके वस्तुनि ईहादयो न प्रवर्तेरन् । ततः किम् ?, इत्युच्यते— तस्यां मतावनक्षरत्वेन स्थाण्वादिविकल्पाभावात् 'स्थाणुरयं पुरुषो वा' इत्यादिपर्यायाणां वस्तुधर्माणां विवेको वितर्कोऽन्वय-व्यतिरेकादिना परिच्छेदो न स्यात्, तथाहि— यदनक्षरं ज्ञानं न तत्र स्थाणु-पुरुषपर्यायादिविवेकः, यथाऽवग्रहे, तथा चेहादयः, तस्मात् तेष्वपि नासौ प्राप्नोति ॥ इति गाथार्थः ॥ १६३ ॥

अथ विश्रान्तस्य परस्योत्तरमाह—

सुयनिस्सियवयणाओ अह सो सुयओ मओ न बुद्धीओ । जइ सो सुयवावारो तओ किमन्नं मइन्नाणं?॥१६४॥

आगमे मतिज्ञानं द्विधा प्रोक्तम्— श्रुतनिश्रितमवग्रहे-हादिचतुष्कम्, अश्रुतनिश्रितं चौत्पत्तिक्यादिबुद्धिचतुष्टयम् । ततश्च सूरिरित्थं पराभिप्रायमाशङ्कते— अथैवं परो ब्रूयात्— आगमे श्रुतनिश्रितत्वेनापि मतिज्ञानस्य भणनात् श्रुतात् श्रुततोऽक्षरात्मकादसौ स्थाणु-पुरुषादिपर्यायविवेको मतः, न बुद्धेर्न मतेः सकाशात्, तस्याः स्वयमनक्षररूपत्वात् । अत्रोत्तरमाह— 'जइ सो इत्यादि' यदि हन्त ! स स्थाणु-पुरुषादिपर्यायविवेकः श्रुतव्यापारः, तर्ह्यवग्रहं मुक्त्वा किमन्यद् मतिज्ञानम् ? न किञ्चिदित्यर्थः । यदि स्थाणु-पुरुषादिपर्यायविवेकोऽक्षरात्मकत्वात् श्रुतव्यापार इष्यते, तदेहा-ऽपायादयो मतिभेदाः सर्वेऽप्यक्षरात्मकत्वात् श्रुतत्वमापन्नाः, इत्यतोऽक्षराऽभिलापरहितमवग्रहं मुक्त्वा शेषस्येहादिभेदभिन्नस्य सर्वस्याऽपि मतिज्ञानस्याऽभावप्रसङ्ग इति भावः ॥ इति गाथार्थः ॥ १६४ ॥

अथाऽन्यथा परस्य वचनमाशङ्क्य दूषयितुमाह—

अह सुयओ वि विवेगं कुणओ न तयं सुयं सुयं नत्थि । जो जो सुयवावारो अन्नो वि तओ मई जम्हा ॥१६५॥

अथ श्रुतादपि स्थाणु-पुरुषादिविवेकं कुर्वतः प्रमातुर्न तत् श्रुतम्, किन्तु मत्यभावभीत्या मतित्वेनाऽभ्युपगम्यते; हन्त ! तर्ह्येकत्र संधित्सतोऽन्यतः प्रच्यवते, यत एवं सति श्रुतं क्वचिदपि नास्ति— श्रुताभावः प्राप्नोतीत्यर्थः । कुतः ? इत्याह— यो यश्चरणकरणादिप्रतिपादनलक्षणोऽन्योऽपि श्रुतस्याऽऽचारादेर्व्यापारः सकोऽसौ यस्माद् मतिज्ञानमेव, अक्षरात्मकत्वात्, स्थाणु-पुरुषादिपर्यायविवेकवत् ॥ इति गाथार्थः ॥ १६५ ॥

अथ स्थाणु-पुरुषादिपर्यायविवेको मतिश्च, श्रुतं च भविष्यति; अतो नैकस्याऽप्यभावप्रसङ्ग इत्याह—

२ श्रुतनिश्रितवचनादथाऽसौ श्रुततो मतो न बुद्धे. । यदि स श्रुतव्यापारस्तत किमन्यद् मतिज्ञानम् ? ॥ १६४ ॥
३ अथ श्रुततोऽपि विवेक कुर्वतो न तच्छ्रुत श्रुत नास्ति । यो य. श्रुतव्यापारोऽन्योऽपि सको मतिर्यस्मात् ॥ १६५ ॥

चतुर्दशपूर्वलक्षणश्रुतानुसारित्वेन यदेतद् मतिविशेषाणां तदन्तर्भावित्वमुक्तम्, तदेव समर्थयन्नाह--

[1]जे अक्खराणुसारेण मईविसेसा तयं सुयं सव्वं । जे उण सुयनिरवेक्खा सुद्धं चिय तं मइन्नाणं ॥१४४॥

येऽक्षरानुसारेण श्रुतग्रन्थमनुसृत्य जायन्ते मतिविशेषास्तत् सर्वं श्रुतमेव, इत्यसकृदुक्तम् । ये तु यथोक्तश्रुतनिरपेक्षाः स्वयमेवोत्प्रेक्षितवस्तुतत्त्वा मतिविशेषाः समुत्पद्यन्ते तच्छुद्धं मतिज्ञानमेव, इत्येतदप्यनेकधा प्रागप्यभिहितम् । तस्माच्चतुर्दशपूर्वगताक्षरानुसारेण जायमानाः प्रस्तुतमतिविशेषाः सर्वे श्रुतमेव ॥ इति गाथार्थः ॥ १४४ ॥

तदेवं द्रव्यश्रुतादिश्रुतस्वरूपप्रतिपादनप्रकारेण '[2]बुद्धिद्दिट्ठे अत्थे जे भासइ' इत्यादिमूलगाथां व्याख्याय '[3]केई बुद्धिद्दिट्ठे मइसहिए भासओ' इत्यादिना दर्शितमपि विशेषदूषणाभिधित्सया पुनरपि मतान्तरमुपदर्शयन्नाह—

[4]केइ अभासिज्जन्ता सुयमणुसरओ वि जे मइविसेसा । मन्नंति ते मइच्चिय भावसुयाभावओ, तन्नो ॥१४५॥

केचिद् व्याख्यातारः 'मन्नंति ते मइ च्चियत्ति' तान् मतिविशेषान् श्रुतमनुसरतोऽपि मतिरेवेति मन्यन्ते । ये किम्? इत्याह— येऽभाष्यमाणा येषु शब्दप्रवृत्तिर्नास्तीत्यर्थः, श्रुतानुसारिणोऽपि मतिविशेषा ये शब्दप्रवृत्तिरहिताः केवलं हृद्येव विपरिवर्तन्ते[5] ते मतिज्ञानमेवेति केचिद् मन्यन्त इति भावः । तदेतद् न । कुतः?, इत्याह— भावश्रुताभावप्रसङ्गात्, तदभावश्च '[6]किं सद्दो मइरुभयं भावसुयं सव्वहाऽजुत्तं' '[7]सद्दो ता दव्वसुयं मइराभिणिबोहियं नवा उभयं' इत्यादिपूर्वोक्तग्रन्थाद् भावनीयम् ॥ इति गाथार्थः ॥ १४५ ॥

किञ्च,

[8]किह मइ-सुयनाणविऊ छट्ठाणगया परोप्परं होज्जा? । भासिज्जंतं मोत्तुं जइ सव्वं सेसयं बुद्धी ॥ १४६ ॥

यदि भाष्यमाणं मुक्त्वा शेषकं सर्वमपि बुद्धिर्मतिज्ञानमित्यर्थः, तर्हि मति-श्रुतज्ञानाभ्यां विदन्तीति मति-श्रुतज्ञानवेदिनः परस्परं स्वस्थाने परस्थाने च कथं षट्स्थानपतिताः स्युः? न कथञ्चिदित्यर्थः, तथाहि-सर्वेणाऽपि जन्मना मति-श्रुतोपलब्धानामर्थानामनन्तभाग एव भाष्यत इति प्रागिहैवोक्तम् । ततश्च मतिज्ञानी श्रुतज्ञानिनः सकाशात् सदैवाऽनन्तगुणाधिकः, श्रुतज्ञानी त्वितरस्माद् नित्यमनन्त-

१ येऽक्षरानुसारेण मतिविशेषास्तत् श्रुत सर्वम् । ये पुन. श्रुतनिरपेक्षाः शुद्धमेव तद् मतिज्ञानम् ॥ १४४ ॥ २ गाथा १२८ । ३ गाथा १३२ । ४ केचिदभाष्यमाणा श्रुतमनुसरतोऽपि ये मतिविशेषा· । मन्यन्ते तान् मतिरेव, भावश्रुताभावत·, तद् न ॥१४५॥ ५ क ग 'न्ते मति' । ६ गाथा १३२ । ७ गाथा १३३ । ८ कथ मति-श्रुतज्ञानविदः षट्स्थानगताः परस्परं भवेयुः? । भाष्यमाण मुक्त्वा यदि सर्वं शेषक बुद्धि· ॥ १४६ ॥

रेण भणितम् ?– मतिः स्वयमनक्षरैव, यस्त्विहाऽक्षरोपलम्भः स यदि श्रुतनिश्रितो नेष्यते, तर्हि कथमन्यथाऽसौ घटिष्यते ?। इति विस्मयभयाऽऽपूरितहृदयस्य परस्याऽयं प्रश्न इति भावः ॥

अत्रोच्यते– ननु भवानेव प्रष्टव्यो योऽसमीक्षितमित्थं प्रभाषते– योऽक्षरोपलम्भः स सर्वोऽपि श्रुतनिश्रयेति । अथ न ज्ञायते भवता, तर्हि वयमेव ब्रूमः, श्रूयताम्– 'जं सुयेत्यादि' श्रुतं द्विविधम्– परोपदेशः, आगमग्रन्थश्च । व्यवहारकालात् पूर्वं तेन श्रुतेन कृत उपकारः संस्काराधानरूपो यस्य तत् कृतश्रुतोपकारं, यज्ज्ञानमिदानीं तु व्यवहारकाले तस्य पूर्वप्रवृत्तस्य संस्काराधायकश्रुतस्याऽनपेक्षमेव प्रवर्तते तत् श्रुतनिश्रितमुच्यते, न त्वक्षराभिलापयुक्तत्वमात्रेणेति भावः ॥ इति गाथार्थः ॥ १६८ ॥

एतदेव भावयन्नाह–

पुव्वं सुयपरिकम्मियमइस्स जं संपयं सुयाईयं । तं निस्सियमियरं पुण अणिस्सियं मइचउक्कं तं ॥ १६९ ॥

व्यवहारकालात् पूर्वं यथोक्तरूपेण श्रुतेन परिकर्मिता– आहितसंस्कारा मतिर्यस्य स तथा तस्य साध्वादेर्यत् सांप्रतं व्यवहारकाले श्रुतातीतं श्रुतनिरपेक्षं ज्ञानमुपजायते तच्छ्रुतनिश्रितमवग्रहादिकं सिद्धान्ते प्रतिपादितम् । इतरत् पुनरश्रुतानिश्रितम्, तच्चौत्पत्तिक्यादिमतिचतुष्कं द्रष्टव्यम्, श्रुतसंस्कारानपेक्षया सहजत्वात् तस्य ॥

अत्राह– ननु

" भरनित्थरणसमत्था तिवग्गसुत्तत्थगहियपेयाला । उभओलोगफलवई विणयसमुत्था हवइ बुद्धी " ॥ १ ॥

इत्यादिवचनात् तत्रापि मतिचतुष्के वैनयिकी मतिः श्रुतनिश्रिता समस्ति । सत्यम्, किन्तु सकृच्छ्रुतनिश्रितत्वे सत्यपि बाहुल्यमङ्गीकृत्याऽश्रुतनिश्रितं तदुच्यत इत्यदोषः*। तस्माद् यदुक्तम्–'[3]जं मइनाणमणक्खरमक्खरमियरं च सुयनाणं' इति । तदयुक्तम्, मतेरनक्षरत्वे

१ पूर्वं श्रुतपरिकर्मितमतेर्यत् साम्प्रत श्रुतातीतम् । तद् निश्रितमितरत् पुनरनिश्रित मतिचतुष्क तत् ॥ १६९ ॥

२ भरनिस्तरणसमर्था त्रिवर्गसूत्रार्थगृहीतप्रमाणा । उभयलोकफलवती विनयसमुत्था भवति बुद्धि ॥ १ ॥ ३ गाथा १६२ ।

* इममेवाऽभिप्रायं नन्द्यध्ययनेऽस्या एव गाथाया विवरणस्थले श्रीमन्मलयगिरिसूरिरप्याह–तथाहि–"नन्वश्रुतनिश्रिता बुद्धयो वक्तुमभिप्रेताः, ततो यद्यस्यास्त्रिवर्गसूत्रार्थगृहीतसारत्वम्, ततोऽश्रुतनिश्रितत्वे नोपपद्यते, न हि श्रुताभ्यासमन्तरेण त्रिवर्गसूत्रार्थगृहीतसारत्व सभवति । अत्रोच्यते—इह प्रायोवृत्तिमाश्रित्याऽश्रुतनिश्रितत्वमुक्तम्, तत स्वल्पश्रुतभावेऽपि न कश्चिद्दोष " इति ।

"इहातिगुरुकार्यं दुर्निर्वहत्वाद् भर इव भरस्तन्निस्तरणे समर्था भरनिस्तरणसमर्था, त्रयो वर्गास्त्रिवर्गा लोकरूढ्या धर्मा-ऽर्थ-कामास्तदर्जनोपायप्रतिपादकं यत् सूत्र यश्च तदर्थस्तौ त्रिवर्गसूत्रार्थौ, तयोर्गृहीत पेयाल प्रमाण सारो वा यया सा तथाविधा" इति नन्दिटीकाया व्याख्यातोऽस्या अर्थ. ॥

यदुक्तं तस्य कः तात्पर्यार्थः ? इत्याह– श्रुतोपयुक्तस्यैव भाषमाणस्याभाषमाणस्य वा भावश्रुतं भवति, नाऽन्यस्य ; इदमुक्तं भवति– मतिसहितमिति श्रुतमतिसहितं यथा भवति, एवं यान् भाषते त एव भावश्रुतम् , नाऽन्ये । ततश्च श्रुतोपयुक्तस्यैव भाषणयोग्यानर्थान् विकल्पयतो भावश्रुतं सिद्ध भवति । एवं च सति श्रुतानुसारित्वाभावेन श्रुतोपयुक्तत्वस्याऽसंभवाद् मतिविकल्पस्य भाषणयोग्यत्वे सत्यपि कुतो भावश्रुतत्वम् ? इति ॥

आह– ननु सामान्या बुद्धिरिह गृहीता, श्रुतोपयुक्तत्वे च गृह्यमाणे कथं मतिदृष्टत्वमर्थानां संभवति ?, श्रुतबुद्धिदृष्टत्वस्यैव तत्र संभवात् । नैतदेवम् , मतिपूर्वं हि श्रुतम् , ततो यत्र श्रुतबुद्धिदृष्टत्वं तत्र मतिदृष्टत्वमस्त्येव, इति न काचित् क्षतिः, इत्यलमतिचर्चितेन ।

तदेवं श्रुतज्ञानोपयुक्तः सामान्यबुद्धिदृष्टानर्थान् संभवतो यान् भाषते तद् भावश्रुतमिति स्थितम् । नन्वर्थानां कथं भावश्रुतत्वम् ? ज्ञानस्यैव तत्संभवात् । सत्यम्, किन्तु विषय-विषयिणोरभेदोपचाराद् भावश्रुते प्रतिभासमाना अर्था अपि भावश्रुतम् , इत्यदोषः । 'मइरन्नत्ति' यथोक्ताद् भावश्रुतादन्या व्यतिरिक्ता मतिर्द्रष्टव्या, इदमुक्तं भवति– येऽभिलाप्या अपि सन्तो घटादयः श्रुतानुसारित्वाभावेन श्रुतोपयुक्तैर्न विकल्प्यन्ते, ये चाऽर्थपर्यायत्वेन वाचकध्वनेरभावाद् मूलत एवाऽभिलपितुमशक्या अनभिलाप्याः, ते यस्यां विज्ञप्तौ प्रतिभासन्ते, सा मतिरित्यवगन्तव्या, न तु श्रुतम् , अभिलाप्यवस्तुविषयायां श्रुतानुसारित्वाभावात् , अनभिलाप्यवस्तुविषयायां तु भाषणायोग्यत्वात् ॥ इति गाथाद्वयार्थः ॥ १४७ ॥ १४८ ॥

अथेष्टतोऽवधारणविधिमुपदर्शयन्नाह—

[1]जे भासइ चेय तयं सुयं तु न उ भासओ सुयं चेव । केई मईए वि दिट्ठा जं दव्वसुयत्तमुवयंति ॥१४९॥

'बुद्धिदिट्ठे[2] अत्थे जे भासइ' इत्यत्र यान् कदाचित् संभवमात्रेण भाषत एव तच्छ्रुतमित्येवमेवावधारणीयम् , न तु भाषमाणस्य श्रुतमेवेति यान् भाषते तच्छ्रुतमेवेत्येवं[3] नावधार्यत इत्यर्थः । कुतः ? इत्याह–यद् यस्मात् कारणात् केचिदभिलाप्याः पदार्था मत्याऽपि दृष्टा अवग्रहेणाऽवगृहीताः,ईहया त्वीहिताः, अपायविकल्पेन तु निश्चिता इत्यर्थः, द्रव्यश्रुतत्वमुपयान्ति शब्दलक्षणेन द्रव्यश्रुतेन भाष्यन्त इत्यर्थः । यदि च भाषमाणस्य श्रुतमेवेत्यवधार्येत, तदैषामपि श्रुतत्वं स्यात् , न चैतदिष्यते, श्रुतानुसारित्वाभावेन श्रुतोपयुक्तत्वस्य तेष्वसंभवात् , तस्माद् यथोक्तमेवाऽवधारणम् ॥ इति गाथार्थः ॥ १४९ ॥

१ यान् भाषत एव तत् श्रुत तु न तु भाषमाणस्य श्रुतमेव । केचिद् मत्याऽपि दृष्टा यद् द्रव्यश्रुतत्वमुपयान्ति ॥१४९॥ २ गाथा १२८ । ३ ख. 'तमित्येतदवधा'।

[1]स-परप्पच्चायणओ भेओ मूअेयराण वाऽभिहिओ। जं मूयं मइनाणं स-परप्पच्चायगं सुत्तं ॥ १७१ ॥

अन्यैस्तु कैश्चिदाचार्यैः स्व-परप्रत्यायनतो मति-श्रुतयोर्भेदोऽभिहितः। कयोरिव ? इत्याह– मूके-तरयोरिव– यथा हि मूकः स्वमात्मानमेव प्रत्याययति प्रतीतिपथं नयति, न तु परम्, तत्प्रत्यायनहेतुवचनाभावात्; इतरस्त्वमूकः स्वं परं च प्रत्याययति, वचनसद्भावात्। तथा च सति यथा मूक–मुखरयोर्भेदः, एवं मति–श्रुतयोरपि, यद् यस्मात् परप्रत्यायनहेतुद्रव्याक्षराभावाद् मूकं मतिज्ञानम्, मुखरं तु श्रुतज्ञानम्, कुतः ?, स्व-परप्रत्यायकत्वात्– द्रव्याक्षरसद्भावेन परप्रत्यायकत्वस्याऽपि तत्र लभ्यमानत्वादिति भावः॥ इति गाथार्थः॥ १७१ ॥

एतदाचार्यो मति-श्रुतयोस्तुल्यताऽऽपादनेन किञ्चिद् दूषयितुमाह—

[2]सुयकारणं ति सद्दो सुयमिह सो य परबोहणं कुणइ। मइहेयवो वि हि परं बोहेंति कराइचिट्ठाओ ॥ १७२ ॥

इह तावद् भवन्तं पृच्छामः– हन्त ! शब्दः श्रुतमुच्यते, उपलक्षणत्वात् पुस्तकादिन्यस्ताऽक्षरविन्यासश्च श्रुतमभिधीयते 'सुयकारणं ति' श्रुतकारणत्वात्– कारणे कार्योपचारादिति भावः। स च शब्दः, पुस्तकादिन्यस्ताक्षरविन्यासश्च परबोधनं परप्रत्यायनं करोतीत्येवं परतः श्रुतज्ञानं परप्रत्यायकमुच्यते, न तु स्वतः; इति तावद् भवतोऽभिप्रायः। एतच्च मतिज्ञानेनाऽपि समानम्। कुतः ? इत्याह– हि यस्माद् मतिहेतवोऽपि मतिजनका अपि करादिचेष्टाविशेषाः परं बोधयन्त्येव, तथाहि– अक्षरात्मकत्वात् किल शब्दः, पुस्तकादिन्यस्ताक्षरविन्यासश्च श्रुतस्य कारणम्, कर-शीर्षादिचेष्टास्तु अक्षररहितत्वात् किल मतिज्ञानस्य हेतवः– कर-वक्त्रसंयोगे हि कृते भुजिक्रियाविषया किल मतिरुत्पद्यते, शीर्षे च धूनिते निवृत्ति-प्रवृत्तिविषया सा समुपजायते, इत्येवं मतिहेतवः करादिचेष्टा अपि परप्रबोधिका एव॥ इति गाथार्थः॥ १७२ ॥

यदि मतिहेतवोऽपि परं प्रबोधयन्ति, ततः किम् ? इत्याह–

[3]न परप्पबोहयाइं जं दो वि सरूवओ मइ-सुयाइं। तक्कारणाइं दोण्ह वि बोहेंति तओ न भेओ सिं ॥१७३॥

---

१ स्व–परप्रत्यायनतो भेदो मूके-तरयोरिवाऽभिहित। यद् मूकं मतिज्ञान स्व–परप्रत्यायकं श्रुतम्॥ १७१ ॥

२ श्रुतकारणमिति शब्द श्रुतमिह स च परबोधनं करोति। मतिहेतवोऽपि हि पर बोधयन्ति करादिचेष्टा ॥ १७२ ॥

३ न परप्रबोधके यद् द्वे अपि स्वरूपतो मति-श्रुते। तत्कारणानि द्वयोरपि बोधयन्ति ततो न भेदोऽनयो. ॥ १७३ ॥

'उभयहा मइनाणं' इति वचनाद् यदि तस्मिन्नपि मतिज्ञाने शब्दपरिणामो भवति, ततस्तस्मिन्नपि किं न श्रुतं-तदपि भावश्रुतरूपतां किं न प्रतिपद्यते ? इत्यर्थः, शब्दपरिणामस्य श्रुतत्वेनोक्तत्वादिति भावः । अत्राऽऽचार्य उत्तरमाह-' भासइ जं नोवलद्धिसमं ति ' यद् यस्मात् कारणादुपलब्धिसमं मतिज्ञानी न भाषते, ततो न मतिज्ञानस्य श्रुतरूपता ॥ इति गाथार्थः ॥ १५१ ॥

कथं पुनरुपलब्धिसममसौ न भणति ? इत्याह-

[3]अभिलप्पा-ऽणभिलप्पा उवलद्धा तस्समं च नो भणइ । तो होउ उभयरूवं उभयसहावं ति काऊण॥१५२॥

प्रागुक्तन्यायेनाऽभिलाप्या-ऽनभिलाप्याः पदार्था मतिज्ञानोपलब्धाः, एवंभूतोपलब्ध्या च समं भणितुं न शक्नोत्येव, अनभिलाप्यानां सर्वथैव वक्तुमशक्यत्वादिति भावः ॥

अत्र परः प्राह-' तो होउ इत्यादि ' ततस्तर्हि भवतु मतिज्ञानमुभयरूपं श्रुत-मतिरूपम् । कुतः ?, इत्याह- उभयस्वभावमिति कृत्वा, अभिलाप्या-ऽनभिलाप्यवस्तुविषयत्वेन द्विस्वभावत्वादित्यर्थः; इदमुक्तं भवति- यदभिलाप्यपदार्थानुपलभते भाषते च, तत् श्रुतज्ञानमस्तु ; अनभिलाप्यपदार्थास्तु भाषणाऽयोग्यान् यदवगच्छति, तद् मतिज्ञानं भवति ॥ इति गाथार्थः ॥ १५२ ॥

अत्रोत्तरमाह-

[3]जं भासइ तं पि जओ न सुयादेसेण किन्तु समईए । न सुओवलद्धितुल्लं ति वा जओ नोवलद्धिसमं॥१५३॥

यदपि किञ्चिदभिलाप्यवस्तूपलब्धं मतिज्ञानी भाषते तदपि यतो न श्रुतादेशेन, किन्तु स्वमत्या, अतो न तत् श्रुतमिति । इदमुक्तं भवति- परोपदेशः, श्रुतग्रन्थश्च श्रुतमिहोच्यते, तदादेशेन तु तदनुसारेण विकल्प्य यदा भाषते, तदा श्रुतोपयुक्तस्य भाषणात् श्रुतमुपपद्यत एव ; यत्र तु स्वमत्यैव पर्यालोच्य भाषते न तु श्रुतानुसारेण, तत्र श्रुतोपयुक्तत्वाभावाद् मतिज्ञानमेव । तदेवं '[4]भासइ जं नोवलद्धिसमं ' इत्यस्य गाथावयवस्य '[5]अभिलप्पा-णभिलप्पा उवलद्धा' इत्यादिना व्याख्यानं कुर्वताऽऽचार्येण मतिज्ञानी मतिज्ञानोपलब्ध्या समं न भाषते, अतस्तत्रोपलब्धिसमं भाषणं न भवति, इत्यतो न मतिज्ञाने श्रुतरूपतेत्युक्तम् ; श्रुतज्ञानी त्वभिलाप्यानुपलभते, तांश्च भाषते, अतस्तत्रैवोपलब्धिसमत्वस्य सद्भावात् श्रुतरूपतेति भावः ॥

---

१ गाथा १५० । २ अभिलाप्या-ऽनभिलाप्या उपलब्धास्तत्समं च न भणति । ततो भवतूभयरूपमुभयस्वभावमिति कृत्वा ॥ १५२ ॥

३ यद् भाषते तदपि यतो न श्रुतादेशेन किन्तु स्वमत्या । न श्रुतोपलब्धितुल्यमिति वा यतो नोपलब्धिसमम् ॥१५३॥ ४ गाथा १५१ । ५ गाथा १५२ ।

न संभवति, अतो विशिष्टपरप्रबोधाभावाद् न ताः परप्रबोधिकाः, तथा च सति न तद्द्वारेणाऽपि मतिज्ञानं परप्रबोधकम् । इति सूत्रस्य सूचकत्वात् सोपस्कारः पूर्वार्धस्याऽर्थोऽवसेयः ॥

अथोत्तरार्धस्य व्याख्या प्रस्तूयते– 'रूढं ति वेत्यादि' वेत्यथवा, भवतु मतिज्ञानस्य कारणं करादिचेष्टा, तथापि सा 'द्रव्यमतिः' इत्येवमागमे क्वचिदपि न रूढा; द्रव्यश्रुतं पुनः पूर्वोक्तस्वरूपं 'श्रुतं' इत्येवं सर्वत्र रूढम् । ततश्च यद्यपि करादिचेष्टा मतिज्ञानस्य कारणं, परप्रबोधिका च; तथापि द्रव्यमतित्वेनाऽरूढत्वात् कारणे कार्योपचारतो मतिरूपतया न व्यवह्रियते । अतो मतिज्ञानात् तस्याः पृथग्भूतत्वाद् न तद्द्वारेण तस्य परप्रबोधकत्वम् , द्रव्यश्रुतं तु कारणे कार्योपचारतः श्रुतज्ञानत्वेन प्ररूप्यते, इति तद्द्वारेणाऽस्य परप्रबोधकत्वमुपपद्यत एव । इति युक्तो मूके-तरभेदाद् मति-श्रुतयोर्भेदः । ततश्च 'तं[1] कारणाइं दोण्ह वि बोहेंति तओ न भेओ सिं' इत्येतदपास्तं भवति ॥ इति गाथार्थः ॥ १७४ ॥

तदेवं करादिचेष्टाया मतिकारणत्वमभ्युपगम्योक्तम् , सांप्रतं सा मतेः कारणमेव न भवति, किन्तु श्रुतस्येति दर्शयन्नाह—

सा[3] वा सद्दत्थो च्चिय तया वि जं तम्मि पच्चओ होइ। कत्ता वि हु तदभावे तदभिप्पाओ कुणइ चिट्ठं॥१७५॥

यदिवा सा करादिचेष्टा कर-वक्त्रसंयोगादिलक्षणा । किम् ? इत्याह– शब्दार्थ एव शब्दो वक्तृसमुदीरितवचनरूपस्तस्याऽर्थः शब्दार्थः श्रोतृगतज्ञाने प्रतिभासमानतदभिधेयवस्तुरूपः श्रुतज्ञानमिति तात्पर्यम्[4] । किमित्यसौ शब्दार्थ एव ? इत्याह– यद् यस्मात् कारणात् तयाऽपि कर्त्रा विहितया तस्मिन् शब्दार्थे भोजनेच्छादिलक्षणे प्रतिपत्तुः प्रत्ययो भवति । तथा कर्तापि तदभावे शब्दाभावे जिह्वारोगादिसद्भावात् शब्दोदीरणसामर्थ्याभाव इत्यर्थः, 'तदभिप्पाउ त्ति' तस्मिन् शब्दार्थे भोजनेच्छादिलक्षणे परस्मै प्रतिपादयितव्येऽभिप्रायो मनोविकल्पो यस्याऽसौ तदभिप्रायः करोति चेष्टां कर-वक्त्रसंयोगादिलक्षणाम् ; इदमुक्तं भवति– यद्यपि करादिचेष्टाऽनन्तरभावेनाऽवग्रहादीन् जनयति, तथापि शब्दार्थ एव सा श्रुतज्ञानमेवेत्यर्थः, यस्मात् तयापि विहितया तत्र शब्दार्थप्रत्ययो भवति । अतः शब्दार्थप्रत्ययजनकत्वात् कारणे कार्योपचारात् शब्दार्थप्रत्यय एव सा, न पुनर्मतिः; तथा कर्तापि 'भोक्तुमिच्छत्यसौ' इत्यादि प्रतिपत्ता जानात्वित्यभिप्रायवानेव भाषणशक्त्यभावे करादिचेष्टां करोति । ततश्च कर्त्राऽपि[5] शब्दार्थद्योतनाभिप्रायेण क्रियमाणत्वात् करादिचेष्टा शब्दार्थ एव । ततश्चैषाऽपि श्रुतकारणत्वात् श्रुत एवान्तर्भवति, शब्दवत् , न मतौ,

१ क 'अतोऽपि वि'। २ गाथा १७३ । ३ सा वा शब्दार्थं एव तयाऽपि यत् तस्मिन् प्रत्ययो भवति । कर्तापि खलु तदभावे तदभिप्राय करोति चेष्टाम् ॥१७५॥
४ क ग. 'तात्पर्यार्थ'। ५ क. ग. 'कर्त्रा ए'।

शब्दो न केवल इति तत्र भावश्रुतत्वं भविष्यति । तदयुक्तम् । कुतः ? इत्याह– संकरः सांकर्यं, संकीर्णत्वम्, मिश्रत्वमिति यावत्, मति-श्रुतयोस्तस्य प्राप्तेः । निर्विशेषभावाद् वा– यदेव मतिज्ञानम्, तदेव भावश्रुतमिति प्रतिपादनादेकमेव किञ्चित् स्यात्, नोभयमिति भावः । अस्तु विशेषाभाव इति चेद् । नैवम् । कुतः ? इत्याह– स्वलक्षणावरणभेदात् । कथंभूतात् ? इत्याह– पूर्वोक्तलक्षणात् '[1]किह व सुयं होइ मई सलक्खणावरणभेयाओ' इति पूर्वाभिहितगाथावयवोक्तस्वरूपात्, इदमुक्तं भवति– अभिनिबुध्यत इत्याभिनिबोधिकम्, श्रूयत इति श्रुतम्, इत्यादिकं मति-श्रुतयोर्यत् स्वकीयं स्वकीयं लक्षणम्, आवारकं च कर्म, तयोर्भेदात् पूर्वाभिहितस्वरूपाद् मति-श्रुतयोर्निर्विशेषभावो न युज्यते । यदि हि तयोर्निर्विशेषता-एकत्वं स्यात्, तदा लक्षणभेदः, आवरणभेदश्च पूर्वोक्तस्वरूपो न स्यादिति भावः ॥ इति गाथार्थः ॥ १५५ ॥

अथ द्रव्य–भावश्रुतयोरनेन दृष्टान्तेन भेदः प्रतिपाद्यते, सोऽपि न युक्त इति दर्शयन्नाह—

[2]कप्पेज्जेज्ज व सो भाव-दव्वसुत्तेसु तेसु वि न जुत्तो । मइ-सुयभेयावसरे जम्हा किं सुयविसेसेणं ? ॥ १५६ ॥

यदि वा भाव-द्रव्यश्रुतयोः सः–वल्क-शुम्बोदाहरणाद्भेदः कल्प्येत–भावश्रुतं हि कारणत्वात् किल वल्कसदृशं, शब्दलक्षणं तु द्रव्यश्रुतं कार्यत्वात् शुम्बप्रतिमम्, इत्येवमनयोर्भेद इष्येतेति भावः । तयोरप्यसौ न युक्तः । कुतः ? इत्याह– यस्माद् मति-श्रुतयोर्भेदाभिधानेऽवसरप्राप्ते 'किं सुयविसेसेणं ति' श्रुतयोर्द्रव्य-भावश्रुतलक्षणयोर्विशेषो भेदः श्रुतविशेषस्तेनाऽभिहितेन किं ?– असंबद्धत्वाद् न किञ्चिदित्यर्थः ॥ इति गाथार्थः ॥ १५६ ॥

अथाऽन्यथा पराभिप्रायमाशङ्कमानः प्राह—

[3]अंसुयक्खरपरिणामा व जा मई वग्गकप्पणा तम्मि । दव्वसुयं सुम्बसमं किं पुण तेसिं विसेसेणं ? ॥१५७॥

श्रुतानुसार्यक्षरपरिणामो यस्यां सा श्रुतानुसार्यक्षरपरिणामा न तथा– श्रुतानुसारित्वरहितशब्दमात्रपरिणामाऽन्विता या मतिरित्यर्थः, तस्यां वा वल्ककल्पना क्रियते, तज्जनितशब्दरूपं तु द्रव्यश्रुतं शुम्बसदृशम्, अतस्तयोः प्रस्तुतोदाहरणाद् भेदो युक्तियुक्तो भविष्यति । श्रुतानुसार्यक्षरपरिणामा मतिर्भावश्रुतमेव स्यात्, अतः पूर्वस्माद् न विशिष्येत, इत्यश्रुताक्षरपरिणामित्वं विशेषणम् । सा च

१ गाथा १३५ । २ कल्प्येत वा स भाव-द्रव्यश्रुतयोस्तयोरपि न युक्तः । मति-श्रुतभेदावसरे यस्मात् किं श्रुतविशेषेण ? ॥१५६॥
३ अश्रुताक्षरपरिणामा वा या मतिर्वल्ककल्पना तस्याम् । द्रव्यश्रुतं शुम्बसमं किं पुनस्तयोर्विशेषेण ? ॥ १५७ ॥

निश्रिता उच्यन्ते । औत्पत्तिक्यादिषु त्वीहाद्यभिलापस्य तथाविधकर्मक्षयोपशमजत्वात् परोपदेशाद्यन्तरेणाऽप्युपपत्तेरिति भावः ॥ इति गाथार्थः ॥ १७७ ॥

तत्र श्रुतनिश्रितानवग्रहादींस्तावद् निर्युक्तिकारः माह—

[1]उग्गहो ईहअवाओ य धारणा एव होंति चत्तारि । आभिणिबोहियनाणस्स भेयवत्थू समासेणं ॥ १७८ ॥

रूप-रसादिभेदैरनिर्देश्यस्याऽव्यक्तस्वरूपस्य सामान्यार्थस्याऽवग्रहणं परिच्छेदनमवग्रहः । तेनाऽवगृहीतस्यार्थस्य भेदविचारणं वक्ष्यमाणगत्या विशेषान्वेषणमीहा । तयेहितस्यैवाऽर्थस्य व्यवसायस्तद्विशेषनिश्चयोऽपायः । चशब्दोऽवग्रहादीनां पृथक् पृथक् स्वातन्त्र्यप्रदर्शनार्थः, तेनैतदुक्तं भवति– अवग्रहादेरीहादयः पर्याया न भवन्ति, पृथग्भेदवाचकत्वादिति । निश्चितस्यैव वस्तुनोऽविच्युत्यादिरूपेण धरणं धारणा । एवकारः क्रमद्योतनपरः, अवग्रहादीनामुपन्यासस्याऽयमेव क्रमो नान्यः, अवगृहीतस्यैवेहनात्, ईहितस्यैव निश्चयात्, निश्चितस्यैव धारणादिति । एवमेतान्याभिनिबोधिकज्ञानस्य चत्वार्येव भेदवस्तूनि समासेन संक्षेपेण भवन्ति, विस्तरतस्त्वष्टाविंशत्यादिभेदभिन्नमिदं वक्ष्यत इति भावः । तत्र भिद्यन्ते परस्परमिति भेदा विशेषास्त एव वस्तूनि भेदवस्तूनीति समासः ॥ इति गाथार्थः ॥१७८॥

अथ निर्युक्तिकार एवाऽवग्रहादीन् व्याख्यानयन्नाह—

[2]अत्थाणं उग्गहणं अवग्गहं तह वियालणं ईहं । ववसायं च अवायं धरणं पुण धारणं बेंति ॥ १७९ ॥

अर्थानां रूपादीनां प्रथमं दर्शनानन्तरमेवाऽवग्रहणमवग्रहं ब्रुवत इति संबन्धः । तथा विचारणं पर्यालोचनं 'अर्थानाम्' इति वर्तते, ईहनमीहा तां ब्रुवते; इदमुक्तं भवति– अवग्रहादुत्तीर्णोऽपायात् पूर्वं सद्भूतार्थविशेषोपादानाभिमुखोऽसद्भूतार्थविशेषत्यागसंमुखश्च प्रायः काकनिलयनादयः स्थाणुधर्मा अत्र वीक्ष्यन्ते, न तु गिरःकण्डूयनादयः पुरुषधर्मा इति मतिविशेष ईहेति । विशिष्टोऽवसायो व्यवसायो निश्चयस्तं व्यवसायम्, 'अर्थानाम्' इतीहापि वर्तते, अवायमपायं वा ब्रुवते; एतदुक्तं भवति– स्थाणुरेवाऽयमित्यवधारणात्मकः प्रत्ययोऽवायः, अपायो वेति; चशब्द एवकारार्थः, व्यवसायमेवाऽवायम्, अपायं वा ब्रुवत इत्यर्थः । धृतिर्धरणम्, 'अर्थानाम्' इति वर्तते, अपायेन विनिश्चितस्यैव वस्तुनोऽविच्युति-स्मृति-वासनारूपं धरणमेव धारणां ब्रुवत इत्यर्थः । पुनःशब्दस्याऽवधारणार्थत्वाद् ब्रुवत इत्यनेन शास्त्रस्य

1 अवग्रह ईहाऽपायश्च धारणैव भवन्ति चत्वारि । आभिनियोधिकज्ञानस्य भेदवस्तूनि समासेन ॥ १७८ ॥
2 अर्थानामवग्रहणमवग्रहं तथा विचारणमीहाम् । व्यवसायं चाऽपायं धरणं पुनर्धारणां ब्रुवते ॥ १७९ ॥

भावसुयं, तेण मई वग्गसमा सुंबसरिसयं तं च। जं चिंतिऊण तया तो सुयपरिवाडिमणुसरइ ॥ १६१॥

अथोपचारः क्रियते–उपचारविधिराश्रीयते, ततश्चाऽर्थान्तरमपि यद् यस्माद् प्रभवति तत् तन्मयमिति भण्यते, यथा "तदपथ्यमियन्तं विक्रियाविस्तरमुपगतम्" "तदेकं वचनमेतावन्तं विपाकमापन्नम्" इत्यादि; ततश्चाऽतन्मयेऽपि ध्वनौ मतिगता ज्ञानमयतोपचर्यते। तथा च सति वल्क–शुम्बसादृश्येन मति–श्रुतयोरयं भेदः सिद्धो भवति ॥

एवमुक्ते आचार्यः सुहृद् भूत्वा परं शिक्षयति– 'तो मइपुव्वमित्यादि' हन्त! यद्युपचारवादी भवान्, ततो मतिपूर्वं भावश्रुतं यस्मादागमे भणितं, तेन कारणेन मतिर्वल्कसमा, तच्च भावश्रुतं शुम्बसदृशम्, इत्येवं दृष्टान्तोपनयं कुरु, येनोपचारमन्तरेणाऽपि सर्वं सुस्थं भवति, यथा हि वल्काः शुम्बकारणं, तथा मतिरपि भावश्रुतस्य, यथा च शुम्बं वल्कानां कार्यं तथा भावश्रुतमपि मतेः। कुतः? इत्याह– यद् यस्मात् कारणात् तया मत्या चिन्तयित्वा ततः श्रुतपरिपाटिमनुसरति– वाच्यवाचकभावेन परोपदेशश्रुतग्रन्थयोजनां वस्तुनि करोति; तस्माद् मतिश्रुतयोर्वल्कशुम्बयोरिव कार्यकारणभावाद् भेदसिद्धिः, इत्येवं दृष्टान्तोपनयो युक्तिं संसहते, न तु परोक्तप्रकारेण ॥ इति गाथाद्वयार्थः ॥ १६० ॥ १६१ ॥

तदेवं वल्क-शुम्बोदाहरणादप्यभिहितो मति-श्रुतयोर्भेदः; सांप्रतं त्वक्षरा-ऽनक्षरभेदात् तमभिधित्सुः पराभिप्रायं तावदुपन्यस्यन्नाह–

अन्ने[3] अणक्खर-ऽक्खरविसेसओ मइ-सुयाइं भिंदंति। जं मइनाणमणक्खरमक्खरमियरं च सुयनाणं ॥१६२॥

अन्ये केचनापि सूरयोऽनक्षरा-ऽक्षरवद्विशेषतो मति-श्रुते भिन्दन्ति, यद् यस्मात् किल मतिज्ञानमनक्षरम्, श्रुतज्ञानं त्वक्षरवद् भवति, इतरच्चाऽनक्षरवदुच्छ्वसितादीत्यर्थः ॥ इति गाथार्थः ॥ १६२ ॥

अत्राचार्यो दूषणमाह–

जइ[4] मइरणक्खरच्चिय भवेज्ज नेहादओ निरभिलप्पे। थाणु-पुरिसाइपज्जायविवेगो किह णु होज्जाहि? ॥१६३॥

यदि हन्त! मतिरनक्षरैव स्यात्–अक्षराभिलापरहितैव भवताऽभ्युपगम्यते, तर्हि निरभिलाप्येऽप्रतिभासमानाभिलापे स्थाण्वा-

१ भावश्रुतं, तेन मतिर्वल्कसमा शुम्बसदृशं तच्च। यच्चिन्तयित्वा तया तत श्रुतपरिपाटिमनुसरति ॥ १६१ ॥ २ ख 'मुपेतम्'।
३ अन्येऽनक्षरा-ऽक्षरविशेषतो मति-श्रुते भिन्दन्ति। यद् मतिज्ञानमनक्षरमक्षरमितरच्च श्रुतज्ञानम् ॥ १६२ ॥
४ यदि मतिरनक्षरैव भवेद् नेहादयो निरभिलाप्ये। स्थाणु-पुरुषादिपर्यायविवेकः कथं नु भवेत्? ॥ १६३ ॥

शार्ङ्गो वा शब्दः ?। शार्ङ्गश्चेत् किं महिषीशृङ्गोद्भवः, महिषशृङ्गजो वा ?। महिषीशृङ्गसंभवश्चेत्, किं प्रसूतमहिषीशृङ्गसंभवः, अप्रसूतमहिषीशृङ्गसमुद्भूतो वा ? इत्यादि । यतश्चानन्तरमित्थं विमर्शेनेहाप्रवृत्तिर्न भवति, अन्तप्राप्तेः, क्षयोपशमाभावाद् वा, स पुनरपायः ॥

तदेतत् परोक्तं दूषयितुमाह-'तं नो इत्यादि' तदेतत् परोक्तं न । कुतः ? इत्याह- बहवश्च ते दोषाश्च तेषां भाव उपनिपातस्तस्मात्, एवं हि सर्वायुषाऽप्यपायप्रवृत्तिर्न स्यात्, यथोक्तविमर्शप्रवृत्तेरनिष्ठितत्वात् । न च पूर्वमनीहिते प्रथमोऽपि शब्दनिश्चयो युक्तः, यतश्च पूर्वमीहा प्रवर्तते नाऽसाववग्रहः, किन्त्वपाय एवेत्यादि सर्वं पुरस्ताद् वक्ष्यते ॥ इति गाथार्थः ॥ १८१ ॥

अन्ये त्वीहायां विप्रतिपद्यन्ते, तन्मतमुपन्यस्य दूषयन्नाह-

[1]ईहा संसयमेत्तं केई, न तयं तओ जमन्नाणं । मइनाणंसा चेहा कहमन्नाणं तई जुत्तं ? ॥ १८२ ॥

किमयं स्थाणुः, आहोस्वित् पुरुषः ? इत्यनिश्चयात्मकं संशयमात्रं यदुत्पद्यते तदीहेति केचित् प्रतिपद्यन्ते । तदेतद् न घटते । कुतः ? इत्याह- यद् यस्मात् कारणात् । 'तउ त्ति' असौ संशयोऽज्ञानम् । भवतु तर्ह्यज्ञानमपीहा, इति चेत्, इत्याह- 'मईत्यादि' मतिज्ञानांशश्च मतिज्ञानभेदश्चेहा वर्तते । न च ज्ञानभेदस्याऽज्ञानरूपता युज्यते; एतदेवाह- ' कहमित्यादि ' कथं केन प्रकारेणाऽज्ञानं युक्तम् ? न कथञ्चिदित्यर्थः । केयमित्याह-'तई ति' असौ मतिज्ञानांशरूपेहा, संशयस्य वस्त्वप्रतिपत्तिरूपत्वेनाऽज्ञानात्मकत्वात्, ईहायास्तु ज्ञानभेदत्वेन ज्ञानस्वभावत्वात्; ज्ञाना-ऽज्ञानयोश्च परस्परपरिहारेण स्थितत्वाद् नाऽज्ञानरूपस्य संशयस्य ज्ञानांशात्मकेहारूपत्वं युक्तमिति भावः ॥ इति गाथार्थः ॥ १८२ ॥

आह- ननु संशये-हयोः किं कश्चिद् विशेषोऽस्ति, येनेहारूपत्वं संशयस्य निषिध्यते ? इत्याशङ्क्य तयोः स्वरूपभेदमुपदर्शयन्नाह-

[2]जमणेगत्थालंबणमपज्जुदासपरिकुंठियं चित्तं । सेय इव सव्वप्पयओ तं संसयरूवमन्नाणं ॥ १८३ ॥

तं चिय सयत्थहेऊ-ववत्तिवावारतप्परममोहं । भूया-ऽभूयविसेसायाण-च्चायाभिमुहमीहा ॥ १८४ ॥

१ ईहा संशयमात्रं केचित्, न तत् सको यदज्ञानम् । मतिज्ञानांशश्चेहा कथमज्ञानं सा युक्तम् ? ॥ १८२ ॥

२ यदनेकार्थालम्बनमपर्युदासपरिकुण्ठितं चित्तम् । शेत इव सर्वात्मतस्तत् संशयरूपमज्ञानम् ॥ १८३ ॥

तदेव सदर्थहेतूपपत्तिव्यापारतत्परममोघम् । भूता-ऽभूतविशेषाऽऽदान-त्यागाभिमुखमीहा ॥ १८४ ॥

[1]मइकाले वि जइ सुयं तो जुगवं मइ-सुओवओगा ते। अह नेवं एगयरं पवज्जओ जुज्जए न सुयं ॥१६६॥

स्थाणु-पुरुषादिपर्यायविवेकलक्षणे मतिकालेऽपि यदि श्रुतव्यापार इष्यते, ततो युगपदेव मति-श्रुतोपयोगौ ते तव प्रसज्येते, न चैतद् युक्तम्, समकालं ज्ञानद्वयोपयोगस्य निषिद्धत्वात्। अथैतद्दोषभयाद् नैवमुपयोगद्वयं युगपदभ्युपगम्यते, तर्ह्येकतरं प्रतिपद्यमानस्य– स्थाणु-पुरुषादिपर्यायविवेककाले मतिज्ञानं श्रुतज्ञानं वेच्छतो भवत इत्यर्थः, किम् ? इत्याह– 'जुज्जए न सुयं ति' श्रुतमिह प्रतिपत्तुं न युज्यते, किन्तु मतिज्ञानमेव, इदमुक्तं भवति– "सावकाशा-ऽनवकाशयोरनवकाशो विधिर्बलवान्" इति न्यायादन्यत्राऽनवकाशं मतिज्ञानमेवैकं तवैकतरं प्रतिपद्यमानस्येह प्रतिपत्तुं युज्यते; न तु श्रुतम्, तस्याऽन्यत्र श्रुतानुसारिण्याचारादिज्ञानविशेषे सावकाशत्वात्। एवं च सति स्थाणु-पुरुषादिपर्यायविवेको मतेरेव, न तु श्रुतात्, स चाऽक्षराभिलापसमनुगत एव, इति नैकान्तेन मतिज्ञानमनक्षरमिति भावः ॥ इति गाथार्थः ॥ १६६ ॥

किञ्च, अक्षरानुगतत्वमात्रमुपलभ्य स्थाणु-पुरुषादिपर्यायविवेको भवताश्रुतनिश्रित उक्तः, एवं चातिप्रसङ्गः प्राप्नोतीति दर्शयति–

[2]जइ सुयनिस्सियमक्खरमणुसरओ तेण मइचउक्कं पि। सुयनिस्सियमावन्नं तुह तं पि जमक्खरप्पभवं॥१६७॥

यदि स्थाणु-पुरुषादिपर्यायविवेकविधानेनाऽक्षरमनुसरतः प्रमातुर्ज्ञानं श्रुतनिश्रितं भवता प्रोच्यते, तेन तर्ह्यौत्पत्तिक्यादिमतिचतुष्कमपि तव श्रुतनिश्रितमापन्नम्, यस्मात् तदप्यक्षरप्रभवं वर्णाऽऽलिङ्गितमित्यर्थः– तदपि हि नेहादिविरहेण जायते, ईहादयश्च न वर्णाभिलापमन्तरेण संभवन्ति। तस्माद् मतिचतुष्कमपि त्वदभिप्रायेण श्रुतनिश्रितमायातम्, न चैतदस्ति, आगमेऽश्रुतनिश्रितत्वेन तस्याऽभिधानात्। तस्माद् देवानांप्रियेणाऽद्यापि श्रुतनिश्रितस्य स्वरूपमेव नाऽवगम्यते, तत् किं वयं ब्रूमः ? ॥ इति गाथार्थः ॥ १६७ ॥

तदेवं श्रुतनिश्रितवचनश्रवणमात्राद् विभ्रान्तस्तत्स्वरूपमजानानः परो युक्तिभिर्निराकृतोऽपि विलक्षीभूतः प्राह–

[3]जइ तं सुएण न तओ जाणइ सुयनिस्सियं कहं भणियं ?। जं सुयकओवयारं पुव्विं इण्हिं तयणवेक्खं ॥ १६८॥

यदि तं स्थाणु-पुरुषादिपर्यायसंघातं श्रुतेन न जानाति सकोऽसौ ज्ञानी, तर्हि श्रुतनिश्रितमेवावग्रहादिकं सूत्रे कथं केन प्रका-

१ मतिकालेऽपि यदि श्रुतं ततो युगपद् मति-श्रुतोपयोगौ ते। अथ नैवमेकतर प्रपद्यमानस्य युज्यते न श्रुतम् ॥ १६६ ॥

२ यदि श्रुतनिश्रितमक्षरमनुसरतस्तेन मतिचतुष्कमपि। श्रुतनिश्रितमापन्नं तव तदपि यदक्षरप्रभवम् ॥ १६७ ॥

३ यदि तत् श्रुतेन न सको जानाति, श्रुतनिश्रितं कथं भणितम् ?। यत् श्रुतकृतोपचार पूर्वमिदानीं तदनपेक्षम् ॥ १६८ ॥

[1]केई तयण्णविसेसावणयणमेत्तं अवायमिच्छन्ति । सब्भूयत्थविसेसावधारणं धारणं बेंति ॥ १८५ ॥

तच्छब्दस्याऽनन्तरगाथोक्तो भूतोऽर्थः संबध्यते, तस्मात् तत्र भूताद् विद्यमानात् स्थाण्वादेर्योऽन्यस्तत्प्रतियोगी तत्राऽविद्यमानः पुरुषादिस्तद्विशेषाः शिरःकण्डूयन-चलन-स्पन्दनादयस्तेषां पुरोवर्तिनि सद्भूतेऽर्थेऽपनयनं निषेधनं तदन्यविशेषापनयनं तदेव तन्मात्रम्, अपायमिच्छन्ति, केचनाऽपि व्याख्यातारः– अपायनमपनयनमपाय इति व्युत्पत्त्यर्थविभ्रमितमनस्का इति भावः। अवधारणं धारणा इति च व्युत्पत्त्यर्थभ्रमितास्ते धारणां ब्रुवते । किं तत् ? इत्याह– सद्भूतार्थविशेषावधारणं सद्भूतस्तत्र विवक्षितप्रदेशे विद्यमानः स्थाण्वादिरर्थविशेषस्तस्य 'स्थाणुरेवाऽयं' इत्यवधारणं सद्भूतार्थविशेषावधारणमिति समासः ॥ इति गाथार्थः ॥ १८५ ॥

तदेतद् दूषयितुमाह–

[2]कासइ तयन्नवइरेगमेत्तओऽवगमणं भवे भूए । सब्भूयसमण्णयओ तदुभयओ कासइ न दोसो ॥ १८६ ॥

'भूए त्ति' तत्र विवक्षितप्रदेशे भूते विद्यमानेऽर्थे स्थाण्वादौ 'कासइ त्ति' कस्यचित् प्रतिपत्तुस्तदन्यव्यतिरेकमात्रादवगमनं निश्चयो भवति– तस्मात् स्थाण्वादेर्योऽन्यः पुरुषादिरर्थस्तस्य व्यतिरेकः स एव तदन्यव्यतिरेकमात्रं तस्मात् स्थाण्वाद्यर्थनिश्चयो भवतीत्यर्थः; तद्यथा– यतो नेह शिरःकण्डूयनादयः पुरुषधर्मा दृश्यन्ते; ततः स्थाणुरेवाऽयमिति। कस्यापि सद्भूतसमन्वयतः– सद्भूतस्तत्र प्रदेशे विद्यमानः स्थाण्वादिरर्थस्तस्य समन्वयतोऽन्वयधर्मघटनाद् भूतेऽर्थेऽवगमनं निश्चयो भवेत्, यथा स्थाणुरेवाऽयम्, वल्ल्युत्सर्पण-वयोनिलयनादिधर्माणामिहाऽन्वयादिति । कस्यचित् पुनस्तदुभयादन्वय-व्यतिरेकोभयात् तत्र भूतेऽर्थेऽवगमनं भवेत्; तद्यथा– यस्मात् पुरुषधर्माः शिरःकण्डूयनादयोऽत्र न दृश्यन्ते, वल्ल्युत्सर्पणादयस्तु स्थाणुधर्माः समीक्ष्यन्ते, तस्मात् स्थाणुरेवाऽयमिति । न चैवमन्वयात्, व्यतिरेकात्, उभयाद् वा निश्चये जायमाने कश्चिद् दोषः, परव्याख्याने तु वक्ष्यमाणन्यायेन दोष इति भावः ॥ इति गाथार्थः ॥ १८६ ॥

कथं पुनस्तद्व्याख्याने न दोषः ?, इत्याह–

[3]सव्वो वि य सोऽवाओ भेए वा होंति पंच वत्थूणि । आहेवं चिय चउहा मई तिहा अन्नहा होइ ॥१८७॥

---

१ केचित् तदन्यविशेषापनयनमात्रमपायमिच्छन्ति । सद्भूतार्थविशेषावधारण धारणा ब्रुवते ॥ १८५ ॥
२ कस्यचित् तदन्यव्यतिरेकमात्रतोऽवगमन भवेद् भूते । सद्भूतार्थसमन्वयतस्तदुभयत कस्यचिद् न दोषः ॥ १८६ ॥
३ सर्वोऽपि च सोऽपायो भेदे वा भवन्ति पञ्च वस्तूनि । आहैवमेव चतुर्धा मतिस्त्रिधाऽन्यथा भवति ॥ १८७ ॥

स्थाणु-पुरुषादिपर्यायविवेकाभावप्रसङ्गात्, श्रुतनिश्रितत्वस्य चाऽन्यथा समर्थितत्वादिति स्थितम् ॥ इति गाथार्थः ॥ १६९ ॥

यद्यनक्षरा मतिर्न भवति, तर्हि 'लक्खणभेया हेऊफलभावओ' इत्यादिगाथायां मतिज्ञातोऽक्षरा-ऽनक्षरभेदाद् मति- श्रुतयोर्भेदः कथं गमनीयः ? इत्याह—

उभयं भावक्खरओ अणक्खरं होज्ज वंजणक्खरओ।[3] मइनाणं सुत्तं पुण उभयं पि अणक्खरक्खरओ॥१७०॥

इहाऽक्षरं तावद् द्विविधम्-द्रव्याक्षरम्, भावाक्षरं च । तत्र द्रव्याक्षरं पुस्तकादिन्यस्ताऽकारादिरूपम्, ताल्वादिकारणजन्यः शब्दो वा; एतच्च व्यज्यतेऽर्थोऽनेनेति व्यञ्जनाक्षरमप्युच्यते । भावाक्षरं त्वन्तःस्फुरदकारादिवर्णज्ञानरूपम् । एवं च सति 'भावक्खरओ त्ति' भावाक्षरमाश्रित्य मतिज्ञानं भवेत् । कथंभूतम् ? इत्याह- 'उभयं ति' उभयरूपम्- अक्षरवत्, अनक्षरं चेत्यर्थः; मतिज्ञानभेदे ह्यवग्रहे भावाक्षरं नास्तीति तदनक्षरमुच्यते, ईहादिषु तु तद्भेदेषु तदस्तीति मतिज्ञानमक्षरवत् प्रतिपाद्यत इति भावः । 'अणक्खरं होज्ज वंजणक्खरओ त्ति' व्यञ्जनाक्षरं द्रव्याक्षरमित्यनर्थान्तरम्, तदाश्रित्य मतिज्ञानमनक्षरं भवेत्, न हि मतिज्ञाने पुस्तकादिन्यस्ताकारादिकं शब्दो वा व्यञ्जनाक्षरं विद्यते, तस्य द्रव्यश्रुतत्वेन रूढत्वात्, द्रव्यमतित्वेनाऽप्रसिद्धत्वादिति । 'सुत्तं पुणेत्यादि' सूत्रं श्रुतज्ञानं, पुनरुभयमपि- द्रव्यश्रुतम्, भावश्रुतं चेत्यर्थः, प्रत्येकमनक्षरतः, अक्षरतश्च भवेत्; इदमुक्तं भवति—

"ऊससियं नीससियं निच्छूढं खासियं च छीयं च । निस्सिंघियमणुसारं अणक्खरं छेलियाईअं" ॥ १ ॥

इत्यादिवचनाद् द्रव्यश्रुतमनक्षरम्- पुस्तकादिन्यस्ताक्षररूपम्, शब्दरूपं च; तदेव साक्षरं भावश्रुतमपि श्रुतानुसार्यकारादिवर्णविज्ञानात्मकत्वात् साक्षरम्, पुस्तकादिन्यस्ताकाराद्यक्षररहितत्वाच्छब्दाभावाच्च तदेवाऽनक्षरम्, पुस्तकादिन्यस्ताक्षरस्य शब्दस्य च द्रव्यश्रुतान्तःपातित्वेन भावश्रुतेऽसत्त्वात्; तदेवं मतेर्भावश्रुतस्य च साक्षरा-ऽनक्षरकृतो नास्ति विशेषः, प्रत्येकं द्वयोरप्यक्षरानक्षररूपत्वेनोक्तत्वात्; केवलं सामान्येन 'श्रुतं' इत्युक्ते तन्मध्ये द्रव्यश्रुतं लभ्यत इति कृत्वा तत्र द्रव्यश्रुतमाश्रित्य द्रव्याक्षरमस्ति, मतौ तु तन्नास्ति, तस्या द्रव्यमतित्वेनाऽरूढत्वादिति । एवमनयोर्द्रव्याक्षरापेक्षया साक्षरा-ऽनक्षरत्वकृतो भेदः ॥ इति गाथार्थः ॥ १७० ॥

तदेवमक्षरे-तरभेदाद् मति-श्रुतयोर्भेदमभिधाय मूके-तरभेदात् तमभिधित्सुराह—

१ गाथा ९७ । २ उभय भावाक्षरतोऽनक्षरं भवेद् व्यञ्जनाक्षरत. । मतिज्ञानं सूत्रं पुनरुभयमपि अनक्षरा-ऽक्षरत. ॥ १७० ॥
३ उच्छ्वसित नि.श्वसित निक्षिप्तं कासितं च क्षुत च । नि.सिङ्घितमनुस्वारमनक्षरं सेण्टितादिकम् ॥ १ ॥

रूगेयं वा कालं वासनाऽभ्युपगम्यते, 'इदं तदेव' इतिलक्षणा स्मृतिश्चाङ्गीक्रियते, सा मत्यंशरूपा धारणा न भवति, मत्युपयोगस्य प्रागेवोपरतत्वात् । पुनरपि कालान्तरोपयोगे धारणा भविष्यतीति चेत्, इत्याह—'पुणो इत्यादि' कालान्तरे पुनर्जायमानोपयोगेऽपि याऽन्वयमुखोपजायमानाऽवधारणरूपा धारणा मयेष्यते, सा यतोऽपाय एव भवताऽभ्युपगम्यते 'सव्वो वि य सोऽवाओ' इत्यादिवचनात्; ततस्तत्रापि नास्ति धृतिर्धारणा, पुनरप्युपयोगोपरमेऽपि पूर्वोक्तयुक्त्यैव तदभावः; तस्मादुपयोगकालेऽन्वयमुखाऽवधारणरूपाया धारणायास्त्वयाऽनभ्युपगमात्, उपयोगोपरमे च मत्युपयोगाभावात्, तदंशरूपाया धारणाया अघटमानकत्वात् त्रिधैव भवदभिप्रायेण मतिः प्राप्नोति, न चतुर्धा, इति पूर्वपक्षाभिप्रायः ॥

अत्रोत्तरमाह— 'भण्णईत्यादि' भण्यतेऽत्र प्रतिविधानम् । किम् ?, इत्याह— 'इदं वस्तु तदेव यत् प्रागुपलब्धं मया' इत्येवंभूता कालान्तरे या स्मृतिरूपा बुद्धिरुपजायते, नन्विह सा पूर्वप्रवृत्तादपायाद् निर्विवादमभ्यधिकैव, पूर्वप्रवृत्ताऽपायकाले तस्या अभावात्; सांप्रतापायस्य तु वस्तुनिश्चयमात्रफलत्वेन पूर्वापरदर्शनानुसंधानाऽयोगात् । ततश्च साऽनन्यरूपत्वाद् धृतिर्धारणा नामेति पर्यन्ते संबन्धः । यतश्च यस्माच्च वासनाविशेषात्— पूर्वोपलब्धवस्त्वाहितसंस्कारलक्षणात् तद्विज्ञानावरणक्षयोपशमसान्निध्यादित्यर्थः, सा 'इदं तदेव' इतिलक्षणा स्मृतिर्भवति । साऽपि वासनाऽपायादभ्यधिकेति कृत्वा धृतिर्नाम, इतीहापि संबन्धः । 'जा याऽवायेत्यादि' या चाऽपायादनन्तरमविच्युतिः प्रवर्तते साऽपि धृतिर्नाम । इदमुक्तं भवति— यस्मिन् समये 'स्थाणुरेवाऽयम्' इत्यादिनिश्चयस्वरूपोऽपायः प्रवृत्तः, ततः समयादूर्ध्वमपि 'स्थाणुरेवाऽयम्, स्थाणुरेवाऽयम्' इत्यविच्युता याऽन्तर्मुहूर्तं क्वचिदपायप्रवृत्तिः साऽप्यपायाऽविच्युतिः प्रथमप्रवृत्तापायादभ्यधिकेति धृतिर्धारणा नामेति । एवमविच्युति-वासना-स्मृतिरूपा धारणा त्रिधा सिद्धा भवति ॥

अत्राह कश्चित्— नन्वविच्युति-स्मृतिलक्षणौ ज्ञानभेदौ गृहीतग्राहित्वाद् न प्रमाणम्, द्वितीयादिवारा प्रवृत्ताऽपायसाध्यस्य वस्तुनिश्चयलक्षणस्य कार्यस्य प्रथमवारा प्रवृत्तापायेनैव साधितत्वात् । न च निष्पादितक्रिये कर्मणि तत्साधनायैव प्रवर्तमानं साधनं शोभां बिभर्ति, अतिप्रसङ्गात्- कुठारादिभिः कृतच्छेदनादिक्रियेष्वपि वृक्षादिषु पुनस्तत्साधनाय तेषां प्रवृत्त्यासेः । स्मृतेरपि पूर्वोत्तरकालभाविज्ञानद्वयगृहीत एव वस्तुनि प्रवर्तमानतया कुतः प्रामाण्यम् ? । न च वक्तव्यं पूर्वोत्तरदर्शनद्वयाऽनधिगतस्य वस्त्वेकत्वस्य ग्रहणात् स्मृतिः प्रमाणम्, पूर्वोत्तरकालदृष्टस्य वस्तुनः कालादिभेदेन भिन्नत्वात्, एकत्वस्यैवाऽसिद्धत्वादिति । वासना तु किंरूपा ? इति वाच्यम् । संस्काररूपेति चेत् । कोऽयं नाम संस्कारः ?— स्मृति-ज्ञानावरणक्षयोपशमो वा, तज्ज्ञानजननशक्तिर्वा, तद्वस्तुविकल्पो वा ? इति

१ गाथा १८७ । २ घ. छ ज 'च्युत्या या' ।

मतिहेतूनामपि परप्रबोधकत्वे सति 'न भेओ सिं' अनयोर्मति-श्रुतयोर्न भेदः । कुतः ? इत्याह– 'तउ त्ति' ततस्तस्मात् कारणात्। कस्मात् ? इत्याह–यद् यस्माद् द्वे अप्येते मति-श्रुते स्वरूपतो विज्ञानाऽऽत्मना न परप्रबोधके, विज्ञानस्य मूकत्वेन परप्रबोधकत्वायोगात्, अवध्यादिवदिति । अथ श्रुतस्य यत् कारणं शब्दादिकं तत् परप्रबोधकम्, इत्येतावता मतिज्ञानाद् विशिष्यते श्रुतज्ञानम्। नन्वेतद् मतिज्ञानेऽपि समानम्, तत्कारणस्याऽपि करचेष्टादेः परावबोधकत्वादिति । एतदेवाह– तानि च तानि पूर्वोक्तरूपाणि कारणानि च तत्कारणानि द्वयोरपि मति-श्रुतज्ञानयोर्यथासंख्यं शब्दादीनि, करचेष्टादीनि च परं बोधयन्त्येव, इति कोऽनयोर्विशेषः ?, न कश्चिदित्यर्थः । इति किमुच्यते– मूके-तरभेदाद् भेदः ? ॥ इति गाथार्थः ॥ १७३ ॥

तदेवं परोक्ते व्यभिचारिते ततो निरुत्तरं विलक्षीभूतं तूष्णीम्भावमापन्नं परमवलोक्य संजातकारुण्यः स्वयमेव सूरिरुत्तरमाह–

दंव्वसुयमसाहारणकारणओ परविबोहयं होज्जा । रूढं ति व दव्वसुयं सुयं ति रूढा न दव्वमई ॥ १७४ ॥

द्रव्यश्रुतं पुस्तकन्यस्ताक्षरशब्दरूपं श्रुतज्ञानस्यैव कारणम्, न तु मतेः, इति श्रुतज्ञानं प्रत्यसाधारणकारणत्वाद् द्रव्यश्रुतं परप्रबोधकं भवेत्, न तु करादिचेष्टाः, तासां मति-श्रुतोभयकारणत्वेन साधारणकारणत्वादिति भावः; इदमुक्तं भवति– पुस्तकादिन्यस्ताक्षररूपं, शब्दात्मकं च द्रव्यश्रुतम्, श्रुतज्ञानस्य मतिपूर्वकत्वाद् यद्यप्यानन्तर्येणाऽवग्रहे-हादीन् जनयति, तथाऽप्यक्षररूपत्वाद् मुख्यतया श्रुतज्ञानस्यैव किलाऽसाधारणं कारणमुच्यते, कारणत्वेनोपचारतः श्रुतज्ञानेऽन्तर्भवति, परप्रबोधकत्वेन च तत् सर्वस्याऽपि विदितमिति । एवं कारणस्य परप्रबोधकत्वाच्छ्रुतज्ञानं परप्रबोधकं घटते, करादिचेष्टास्तु मतिज्ञानस्याऽसाधारणकारणं न भवन्ति, श्रुतज्ञानहेतुत्वादपि कर-वक्त्रसंयोगादिकायां हि करचेष्टायां दृष्टायां न केवलं तद्विषया अवग्रहादय उत्पद्यन्ते, किन्तु 'भोक्तुमिच्छत्ययम्' इत्यादिश्रुतानुसारिविकल्पात्मकं श्रुतज्ञानमप्युपजायत इति । अतोऽसाधारणकारणत्वाभावात् करादिचेष्टाः परमार्थतो मतिज्ञानस्य कारणमेव न संभवन्ति, ततश्च न तत्रान्तर्भवन्ति; तथा च सति न मतिज्ञानं परप्रबोधकम् । अथवा 'दव्वसुयमसाहारणकारणउ त्ति' द्रव्यश्रुतं पुस्तकादिन्यस्ताऽऽचारादिग्रन्थाक्षररूपम्, गुरुजनोदीरितदेशनाशब्दस्वरूपं च परप्रबोधकं भवेत् । कुतः ? इत्याह– असाधारणस्य मोक्षं प्रत्यनन्यसाधारणकारणस्य क्षायिकज्ञान-दर्शन-चारित्रलक्षणस्य वस्तुकलापस्य कारणत्वाद् हेतुत्वात्; ततश्च तद्द्वारेण श्रुतज्ञानमपि परप्रबोधकं घटते; करादिचेष्टास्तु यद्यपि मतिज्ञानस्य कारणम्, तथापि यथोक्तो विशिष्टः परप्रबोधस्तासु प्रायो ॥१०५॥

१ द्रव्यश्रुतमसाधारणकारणतः परविबोधकं भवेत् । रूढमिति वा द्रव्यश्रुतं श्रुतमिति रूढा न द्रव्यमतिः ॥ १७४ ॥

तर्हि वक्तव्यम्– ज्ञानम्, अज्ञानं वा ?। न तावदज्ञानम्, चिद्रूपतयाऽनुभूयमानत्वात्। अथ ज्ञानम्, तदपि मति-श्रुता-ऽवधि-मनःपर्याय-केवलेभ्यो ज्ञानान्तरस्याऽभावात् तेषां मध्ये कतमत् ? इति वाच्यम्। न तावत् श्रुतादिचतुष्टयरूपम्, अनभ्युपगमात्, तल्लक्षणाऽयोगाच्च। मतिज्ञानं चेत्, तदपि नाऽवग्रहे-हा-ऽपायरूपम्, तल्लक्षणासंभवात् 'णणु साऽवायऽभहिया' इत्यादिनाऽपायाभ्यधिकत्वेन साधितत्वाच्च। तस्मादन्वय-व्यतिरेकाभ्यां निश्चयः सर्वोऽप्यपायः, अविच्युति-स्मृति-वासनारूपा तु पारिशेष्यद्वारेणैव, इति स्थितम्॥ इति गाथार्थः॥ १९०॥

तदेवं निरुत्तरीकृतोऽप्यविलक्षिततयाऽन्येन प्रकारेणाह[1][2]–

तुज्झं[3] बहुयरभेया भणइ मई होई धिइबहुत्ताओ। भणणइ न जाइभेओ इट्ठो मज्झं जहा तुज्झं॥ १९१॥

अत्र प्रेरको भणति। किम् ?, इत्याह– 'तुज्झमित्यादि' इत्यमाचार्य ! तव बहुतरभेदा मतिर्भवति। कुतः ?, इत्याह– धृतेर्धारणाया बहुत्वाद् बहुभेदत्वादित्यर्थः– धारणाया एकस्या अप्यविच्युति-वासना-स्मृतिलक्षणभेदत्रययुक्तत्वादवग्रहे-हा-ऽपायैः सह षड्भेदा मतिः प्राप्नोतीति भावः। अत्र प्रतिविधानमाह– 'भणणईत्यादि' भण्यतेऽत्रोत्तरम्– जातेर्भेदो जातिभेदो व्यक्तिपक्ष इत्यर्थः, स इह धारणाविचारे मम नेष्टो नाभिमेतः, किन्तु धारणासामान्यरूपा जातिरेव ममाऽभिमेता। कस्य यथा?, इत्याह– यथा तव 'अवग्रहविषये' इति शेषः; इदमुक्तं भवति– यथाऽवग्रहो व्यञ्जना-ऽर्थावग्रहभेदादुभयरूपोऽवग्रहसामान्यादेकस्त्वयाऽपीष्टः, अन्यथा मतेः पञ्चविधत्वप्रसङ्गात्; तथा त्रिरूपाऽपि धारणा तत्सामान्यादेकरूपैव; इति चतुर्विधैव मतिः, न बहुतरभेदा॥ इति गाथार्थः॥ १९१॥

एतदेव भावयन्नाह–

सा[4] भिन्नलक्खणाऽवि हु धिइसामन्नेण धारणा होइ। जह उग्गहो दुरूवो उग्गहसामन्नओ एक्को॥१९२॥

सा धारणा, अविच्युति-वासना-स्मृतीनां भिन्नस्वरूपत्वेन भिन्नलक्षणाऽपि सती धारणासामान्याव्यतिरेकादेकैव भवति; यथाऽवग्रहो व्यञ्जना-ऽर्थावग्रहभेदाद् द्विरूपोऽप्यवग्रहसामान्याव्यतिरेकादेकः' परस्याऽपि सिद्धः, अन्यथा मतेः पञ्चविधत्वापत्तेः॥ इति गाथार्थः॥ १९२॥

---

१ गाथा १८९। २ घ छ ज 'कारणेनाह'। ३ तव बहुतरभेदा भणति मतिर्भवति धृतिबहुत्वात्। भण्यते न जातिभेद इष्टो मम यथा तव॥१९१॥
४ सा भिन्नलक्षणाऽपि खलु धृतिसामान्येन धारणा भवति। यथाऽवग्रहो द्विरूपोऽवग्रहसामान्यत एक.॥ १९२॥

तथा च सत्येषा परमार्थतो मतेः कारणमेव न भवति, अतः कारणद्वारेणाऽपि न परप्रत्यायकं मतिज्ञानम्, श्रुतं तु तद्द्वारेण परावबोधकम्। इति युक्तो मूके-तरभेदाद् मति-श्रुतयोर्भेदः ॥ इति गाथार्थः ॥ १७५ ॥

॥ मति-श्रुतयोर्भेदचिन्ताधिकारः समाप्तः ॥

तदेवं स्वामि-काल-कारणादिभिरभेदेऽपि लक्षण-भेद-हेतुफलभावादिभिर्मति-श्रुतयोर्विस्तरतो भेदमभिधायोपसंहरन्नाह—

[1]मइ-सुयनाणविसेसो भणिओ तल्लक्खणाइभेएणं। पुव्वं आभिणिबोहियमुद्दिट्ठं तं परूवेस्सं ॥ १७६ ॥

मति-श्रुतज्ञानयोर्विशेषो भेदो भणितः। केन ? इत्याह— तयोर्लक्षणादिभिर्भेदः, अथवा स चासौ अनन्तरोक्तो लक्षणादिभेदश्च तल्लक्षणादिभेदस्तेन। सांप्रतं त्वाभिनिबोधिकज्ञानं प्ररूपयिष्ये विस्तरतो व्याख्यास्यामि। शेषश्रुतादिपरिहारेण किमित्याभिनिबोधिकं प्रथमं प्ररूप्यते ? इत्याह— यस्माज्ज्ञानपञ्चके पूर्वमादौ तदुद्दिष्टमुपन्यस्तम्, तस्माद् "यथोद्देशं निर्देशः" इति कृत्वा तत् प्रथमं व्याख्यास्यामि ॥ इति गाथार्थः ॥ १७६ ॥

तत्त्व-भेद-पर्यायैश्च व्याख्या, तत्र तत्त्वं लक्षणम्, तच्च प्रागेवोक्तम्। अथ तद्भेदनिरूपणार्थमाह—

[2]इन्दिय-मणोनिमित्तं तं सुयनिस्सियमहेयरं च पुणो। तत्थेक्केक्कं चउभेयमुग्गहो-प्पत्तियाईयं ॥ १७७ ॥

इन्द्रिय-मनोनिमित्तं यत् प्रागुक्तमाभिनिबोधिकज्ञानम्, तद् द्विभेदं भवति— श्रुतनिश्रितम्, इतरच्चाऽश्रुतनिश्रितम्। अथशब्दो वाक्यालङ्कारार्थः। तत्र श्रुतं संकेतकालभावी परोपदेशः, श्रुतग्रन्थश्च, पूर्वं तेन परिकर्मितमतेर्व्यवहारकाले तदनपेक्षमेव यदुत्पद्यते तत् श्रुतनिश्रितम्; यत्तु श्रुतापरिकर्मितमतेः सहजमुपजायते तदश्रुतनिश्रितम्। तत्र तयोः श्रुतनिश्रिता-ऽश्रुतनिश्रितयोर्मध्ये एकैकं चतुर्भेदम्। कथम् ? इत्याह— यथासंख्यमवग्रहादिकम्, औत्पत्तिक्यादिकं च— अवग्रहे-हा-ऽपाय-धारणाभेदात् श्रुतनिश्रितं चतुर्विधम्, औत्पत्तिकी-वैनयिकी-कर्मजा-पारिणामिकीलक्षणबुद्धिभेदात्त्वश्रुतनिश्रितं चतुर्भेदमित्यर्थः। यद्यप्यौत्पत्तिक्यादिबुद्धिचतुष्टयेऽप्यवग्रहादयो विद्यन्ते, तथापि '[3]पुव्वमदिट्ठमसुयमवेइ य तक्खणविसुद्धगहियत्था' इत्यादिवक्ष्यमाणवचनात् परोपदेशाद्यनपेक्षत्वात् ते श्रुतनिश्रिता न भवन्ति, शेषास्त्ववग्रहादयः पूर्वं श्रुतपरिकर्मणाऽनन्तरेण न संभवन्ति, ईहादिगताभिलापस्य परोपदेशाद्यन्तरेणाप्युपपत्तेः, इति ते श्रुत-

१ मति-श्रुतज्ञानविशेषो भणितस्तल्लक्षणादिभेदेन। पूर्वमाभिनिबोधिकमुद्दिष्टं तत् प्ररूपयिष्ये ॥ १७६ ॥

२ इन्द्रिय-मनोनिमित्त तच्छ्रुतनिश्रितमथेतरच्च पुनः। तत्रैकैकं चतुर्भेदमवग्रहौ-त्पत्तिक्यादिकम् ॥ १७७ ॥ ३ पूर्वमदृष्टमश्रुतमवैति च तत्क्षणविशुद्धगृहीतार्था।

नमभिधीयत इति। एवमुपलक्षणव्याख्यानात् त्रितयमपि यथोक्तं व्यञ्जनमवगन्तव्यम्। ततश्चेन्द्रियलक्षणेन व्यञ्जनेन शब्दादिपरिणतद्रव्यसंबन्धस्वरूपस्य व्यञ्जनस्याऽवग्रहो व्यञ्जनावग्रहः, अथवा तेनैव व्यञ्जनेन शब्दादिपरिणतद्रव्यात्मकानां व्यञ्जनानामवग्रहो व्यञ्जनावग्रहः; इत्युभयत्राऽप्येकस्य व्यञ्जनशब्दस्य लोपं कृत्वा समासः ॥ इति गाथार्थः ॥ १९४ ॥

अत्राऽऽक्षेपं, परिहारं चाभिधित्सुराह–

अण्णाणं[1] सो बहिराइणं व तक्कालमणुवलंभाओ। न तदंते तत्तो च्चिय उवलंभाओ तओ नाणं ॥१९५॥

स व्यञ्जनावग्रहोऽज्ञानं ज्ञानं न भवति, तस्योपकरणेन्द्रिय-शब्दादिपरिणतद्रव्यसंबन्धस्य कालस्तत्कालस्तस्मिन् ज्ञानस्यानुपलम्भात् स्वसंवेदनेनाऽसंवेद्यमानत्वात्; बधिरादीनामिव– यथा हि बधिरादीनामुपकरणेन्द्रियस्य शब्दादिविषयद्रव्यैः सह संबन्धकाले न किमपि ज्ञानमनुभूयते, अननुभूयमानत्वाच्च तन्नास्ति, तथेहाऽपीति भावः ॥ अत्रोत्तरमाह– 'न तदंते इत्यादि' नासौ जडरूपतया ज्ञानरूपेणाऽननुभूयमानत्वादज्ञानम्, किं तर्हि?, सकोऽसौ व्यञ्जनावग्रहो ज्ञानमेव। कुतः?, तदन्ते- तस्य व्यञ्जनावग्रहस्यान्ते, तत एव ज्ञानात्मकस्याऽर्थावग्रहोपलम्भस्य भावात्, तथाहि– यस्य ज्ञानस्यान्ते तज्ज्ञेयवस्तूपादानात् तत एव ज्ञानमुपजायते तज्ज्ञानं दृष्टम्, यथाऽर्थावग्रहपर्यन्ते तज्ज्ञेयवस्तूपादानत ईहासद्भावादर्थावग्रहो ज्ञानम्, जायते च व्यञ्जनावग्रहस्य पर्यन्ते तज्ज्ञेयवस्तूपादानात् तत एवाऽर्थावग्रहज्ञानम्, तस्माद् व्यञ्जनावग्रहो ज्ञानम् ॥ इति गाथार्थः ॥ १९५ ॥

तदेवं व्यञ्जनावग्रहे यद्यपि ज्ञानं नानुभूयते, तथापि ज्ञानकारणत्वादसौ ज्ञानम्, इत्येवं व्यञ्जनावग्रहे ज्ञानाभावमभ्युपगम्योक्तम्। सांप्रतं ज्ञानाभावोऽपि तत्राऽसिद्ध एवेति दर्शयन्नाह—

तेक्कालम्मि[2] वि नाणं तत्थत्थि तणुं ति तो तमव्वत्तं। बहिराईणं पुण सो अन्नाणं तदुभयाभावा ॥१९६॥

तत्कालेऽपि तस्य व्यञ्जनसंबन्धस्य कालेऽपि तत्राऽनुपहतेन्द्रियसंबन्धिनि व्यञ्जनावग्रहे ज्ञानमस्ति, केवलमेकतेजोऽवयवप्रकाशवत् तनु– अतीवाऽल्पमिति; अतोऽव्यक्तं स्वसंवेदनेनापि न व्यज्यते। यद्यव्यक्तम्, कथं तदस्तीति ज्ञायते? इति चेत्। मा त्वरिष्ठाः, '[3]जइ वण्णाणमसंखेज्जसमइसद्दाइदव्वसब्भावे' इत्यादिनाऽनन्तरमेव तदस्तित्वयुक्तेर्वक्ष्यमाणत्वात्। दृष्टान्ते तु ज्ञानाभावेऽविप्रतिपत्ति-

१ अज्ञान स बधिरादीनामिव तत्कालमनुपलम्भात्। न तदन्ते तत एवोपलम्भात् सको ज्ञानम् ॥ १९५ ॥
२ तत्कालेऽपि ज्ञान तत्राऽस्ति तनु इत्यतस्तदव्यक्तम्। बधिरादीना पुन. सोऽज्ञानं तदुभयाभावात् ॥ १९६ ॥ ३ गाथा २०० ।

पारतन्त्र्यमुक्तम्– इत्थं तीर्थकर-गणधरा ब्रुवत इति ॥

अन्ये त्वेवं पठन्ति– " अत्थाणं उग्गहणम्मि उग्गहो " इत्यादि, तत्राऽर्थानामवग्रहणे सत्यवग्रहो नाम मतिभेद इत्येवं ब्रुवते, एवमीहादिष्वपि योज्यम् ; भावार्थस्तु पूर्ववदेव । अथवा प्राकृतशैल्याऽर्थवशाद् विभक्तिपरिणाम इति सप्तमी द्वितीयार्थे द्रष्टव्या ॥ इति गाथार्थः ॥ १८० ॥

अथैतदेवाऽवग्रहादिस्वरूपं भाष्यकारो विवृण्वन्नाह–

सामण्णत्थावग्गहणमुग्गहो भेयमग्गणमहेहा । तस्सावगमोऽवाओ अविच्चुई धारणा तस्स ॥ १८० ॥[1]

अन्तर्भूताऽशेषविशेषस्य केनापि रूपेणाऽनिर्देश्यस्य सामान्यस्याऽर्थस्यैकसामयिकमवग्रहणं सामान्यार्थावग्रहणम्, अथवा सामान्येन सामान्यरूपेणाऽर्थस्याऽवग्रहणं सामान्यार्थावग्रहणमवग्रहो वेदितव्यः। अथाऽनन्तरमीहा प्रवर्तते। कथम्भूतेयम् ? इत्याह– भेदमार्गणम्– भेदा वस्तुनो धर्मास्तेषां मार्गणमन्वेषणं विचारणं प्रायः काकानिलयनादयः स्थाणुधर्मा अत्र वीक्ष्यन्ते, न तु शिरःकण्डूयनादयः पुरुषधर्मा इत्येवं वस्तुधर्मविचारणमीहेत्यर्थः । तस्यैवेहयेहितस्य वस्तुनस्तदनन्तरमवगमनमवगमः स्थाणुरेवाऽयमित्यादिरूपो निश्चयोऽवायोऽपायो वेति । तस्यैव निश्चितस्य वस्तुनोऽविच्युति-स्मृति-वासनारूपं धरणं धारणा; सूत्रेऽविच्युतेरुपलक्षणत्वात् ॥ इति गाथार्थः ॥१८०॥

अत्र चाऽवग्रहादारभ्य परैः सह विप्रतिपत्तयः सन्ति, इत्यवग्रहविषयां तां तावद् निराकर्तुमाह–

सामण्णविसेसस्स वि केई उग्गहणमुग्गहं बेंति । जं मइरिदं तयं ति च, तं नो बहुदोसभावाओ ॥ १८१ ॥[2]

सामान्यं चासौ विशेषश्च सामान्यविशेषस्तस्याऽपि, न केवलं सामान्यार्थस्य, इत्यपिशब्दः, अवग्रहणमवच्छेदनं केचन व्याख्यातारोऽवग्रहं ब्रुवते। किंकारणम् ? इत्याह– 'जं मइरिदं तयं ति चेति' यद् यस्मात् कारणादमुतः शब्दादिलक्षणसामान्यविशेषग्राहकाऽवग्रहादनन्तरं इदं, तदिति च, इति विमर्शलक्षणा मतिरनुधावति– ईहा प्रवर्तत इत्यर्थः, यदनन्तरं चेहादिप्रवृत्तिः सोऽवग्रह एव, यथा व्यञ्जनावग्रहानन्तरभावी अव्यक्ताऽनिर्देश्यसामान्यमात्रग्राही अवग्रहः, प्रवर्तते च शब्दादिसामान्यविशेषग्राहकाऽवग्रहानन्तरमीहादिः, तस्मादवग्रह एवाऽयम् ; तथाहि– दूरात् शङ्खादिसंबन्धिनि शब्दे सामान्यविशेषात्मके रूपादिभ्यो भिन्ने[3] गृहीते प्रवर्तत एवायं विमर्शः– किमयं शाङ्खः, ॥१०९॥

१ सामान्यार्थावग्रहणमवग्रहो भेदमार्गणमथेहा । तस्यावगमोऽपायोऽविच्युतिर्धारणा तस्य ॥ १८० ॥

२ सामन्यविशेषस्याऽपि केचिदवग्रहणमवग्रह ब्रुवते । यद् मतिरिद तदिति च, तद् नो बहुदोषभावात् ॥ १८१ ॥ ३ क. 'भिन्नेऽवगृ'।

[1]जग्गन्तो वि न जाणइ छउमत्थो हिययगोयरं सव्वं । जं तज्झवसाणाइं जमसंखेज्जाइं दिवसेण ॥१९९॥

हृदयं मनो गोचरः स्थानं यस्य तद् हृदयगोचरं 'अध्यवसायनिकुरम्बं' इति गम्यते, तज्जाग्रदपि च्छद्मस्थः सर्वमपरिशेषं न जानाति- न संवेदयते; आस्तां पुनः सुप्तः । कुतः ?, इत्याह- अध्यवसानानि- अध्यवसायस्थानरूपाणि केवलिगम्यानि सूक्ष्माणि यत एकेनाऽप्यन्तर्मुहूर्तेनाऽसंख्येयानि यान्यतिक्रामन्ति, किं पुनः सर्वेणापि दिवसेन ? । न चैतानि च्छद्मस्थः सर्वाण्यपि संवेदयते । ततश्च यथैतानि च्छद्मस्थैरसंवेद्यमानान्यपि केवलिदृष्टत्वात् सत्त्वेनाऽभ्युपगम्यन्ते, तथा व्यञ्जनावग्रहज्ञानमपि[2] ॥ इति गाथार्थः ॥ १९९ ॥

आह- ननु सुप्तादीनां ज्ञानं वचनादिचेष्टाभ्यो गम्यत इत्युक्तम्, तत्तावदभ्युपगच्छामः, व्यञ्जनावग्रहे तु ज्ञानरूपतागमकं लिङ्गं न किञ्चिदुपलभामहे, अतो जडरूपत्वाद् नासौ ज्ञानमिति ब्रूमः, इत्याशङ्क्याह-

[3]जइ व ण्णाणमसंखेज्जसमइमद्दाइदव्वसब्भावे । किह [4]चरमसमयसद्दाइदव्वविण्णाणसामत्थं ? ॥ २०० ॥

वाशब्दः पातनासूचकः, सा च कृतैव । ततश्च हन्त ! यद्यज्ञानं व्यञ्जनावग्रहः । क सति ?, इत्याह- असंख्येयसमयशब्दादिद्रव्यसद्भावेऽपि सति, इत्यपिशब्दो गम्यते । कथं तर्हि चरमसमयशब्दादिद्रव्याणां विज्ञानजननसामर्थ्यम् ? न कथञ्चिदित्यर्थः । इदमुक्तं भवति- व्यञ्जनावग्रहे तावत् प्रतिसमयमसंख्येयान् समयान् यावच्छ्रोत्रादीन्द्रियैः सह शब्दादिविषयद्रव्याणि संवध्यन्ते। ततश्च यद्यसंख्येयसमयान् यावच्छ्रोत्रादीन्द्रियैः सह शब्दादिविषयद्रव्यसंबन्धसद्भावेऽपि सति व्यञ्जनावग्रहरूपं ज्ञानं नाभ्युपगम्यते, कथं तर्हि चरमसमये श्रोत्रादीन्द्रियैः सह संवद्धानां शब्दादिविषयद्रव्याणां परेणाऽप्यर्थावग्रहलक्षणविज्ञानजननसामर्थ्यमिष्यते ?, तदभ्युपगन्तुं न युज्यत इति भावः । यदि हि शब्दादिविषयद्रव्याणां श्रोत्रादीन्द्रियैः सह संवन्धे आद्यसमयादेवाऽऽरभ्य ज्ञानमात्रा काचित् प्रतिसमयमाविर्भवन्ती नाभ्युपगम्यते, तर्हि चरमसमयेऽप्येकस्मादेवैषा न युज्यते, तथा च सत्यर्थावग्रहादिज्ञानानामप्यनुदयप्रसङ्गः ॥ इति गाथार्थः ॥ २०० ॥

---

१ जाग्रदपि न जानाति च्छद्मस्थो हृदयगोचरं सर्वम् । यत् तदध्यवसानानि यदसख्येयानि दिवसेन ॥ १९९॥

२ एके तु यथा जलकणैर्द्वित्रि सिक्तोऽप्यभिनव शरावो नार्द्रीभवति, पुन पुन सिच्यमानस्तु शनैस्तिम्यति, एवमिन्द्रियैरर्था गृह्यमाणा द्व्यादिसमयेपु न व्यक्तीभवन्ति, पुन. पुनरवग्रहे तु तथा स्यु, इति व्यक्तावग्रहात् प्रागव्यक्तावग्रह , स एव व्यञ्जनावग्रह., अव्यक्तं वस्तु च व्यञ्जनम्, इति साधयन्ति । एतच्च न युक्तम्, सर्वविषयिविषयाणा व्यक्ता-ऽव्यक्तत्वात्, तथा च दर्शनवत् सर्वेन्द्रियेभ्योऽपि व्यञ्जनावग्रह स्यात्, न चैतत् साम्प्रतम्, "न चक्षुरनिन्द्रियाभ्याम्" ( तत्त्वार्थ० १-१९ ) इति सूत्रेण तस्य सर्वेन्द्रियाजन्यत्वात्, इत्यपि द्रष्टव्यम् ॥

३ यदि वाऽज्ञानमसख्येयसमयशब्दादिद्रव्यसद्भावे । कथं चरमसमयशब्दादिद्रव्यविज्ञानसामर्थ्यम् ? ॥ २०० ॥ ४ घ छ ज 'चरिम' ।

यच्चित्तं यन्मनोऽनेकार्थालम्बनमनेकार्थप्रतिभासाऽऽन्दोलितम्, अत एव पर्युदसनं पर्युदासो निषेधो न तथाऽपर्युदासोऽनिषेधस्तेन, तथोपलक्षणत्वादविधिना च परिकुण्ठितं जडीभूतं सर्वथाऽवस्तुनिश्चयरूपतामापन्नम्, किं बहुना ? 'सेय इवेत्यादि' शेत इव स्वापितीव सर्वात्मना न किञ्चिच्चेतयते, वस्त्वप्रतिपत्तिरूपत्वात्, तदेवंविधं चित्तं संशय उच्यत इत्यर्थः, तच्चाऽज्ञानम्, वस्त्ववबोधरहितत्वादिति। यत् पुनस्तदेव चेतो वक्ष्यमाणस्वरूपं तदीहेति संबन्धः। कथंभूतं सत् ? इत्याह– 'भूया-भूयेत्यादि' भूतः क्वचिद् विवक्षितप्रदेशे स्थाण्वादिरर्थः, अभूतस्तत्राऽविद्यमानः पुरुषादिः, तावेव पदार्थान्तरेभ्यो विशिष्यमाणत्वाद् विशेषौ, तयोरादान-त्यागाभिमुखं– भूतार्थविशेषोपादानस्याऽभिमुखम्, अभूतार्थत्यागस्याऽभिमुखमिति यथासंख्येन संबन्धः। यतः कथंभूतम् ? इत्याह– सदर्थहेतूपपत्तिव्यापारतत्परं हेतुद्वारेणेदं विशेषणम्– सदर्थहेतूपपत्तिव्यापारतत्परत्वाद् भूता-ऽभूतविशेषादान-त्यागाभिमुखमिति भावः, तत्र हेतुः साध्यार्थगमकं युक्तिविशेषरूपं साधनम्, उपपत्तिः संभवघटनम्– विवक्षितार्थस्य संभवव्यवस्थापनम्। ततश्च हेतुश्चोपपत्तिश्च हेतूपपत्ती सदर्थस्य विवक्षितप्रदेशेऽरण्यादौ विद्यमानस्य स्थाण्वादेरर्थस्य हेतू-पपत्ती सदर्थहेतूपपत्ती तद्विषयो व्यापारो घटनं चेष्टनं सदर्थहेतू-पपत्तिव्यापारस्ततस्तत्परं तन्निष्ठमिति समासः। अत एवाऽमोघमर्थबलायातत्वेनाऽविफलमामिथ्यास्वरूपम्, तदेवंभूतं चेतः 'ईहा' इति संबन्धः कृत एव; इदमुक्तं भवति- केनचिदरण्यदेशं गतेन सवितुरस्तमयसमये ईषदवकाशमासादयति तमिस्रे दूरवर्ती स्थाणुरुपलब्धः, ततोऽस्य विमर्शः समुत्पन्नः–किमयं स्थाणुः, पुरुषो वा ? इति। अयं च संशयत्वादज्ञानम्। ततोऽनेन तस्मिन् स्थाणौ दृष्ट्वा वल्ल्यारोहणम्, प्रविलोक्य काक-कारण्डव-कादम्ब-क्रौञ्च-कीरशकुन्तकुलनिलयनम्, कृतश्चेतासि हेतुव्यापारः, यथा स्थाणुरयम्, वल्ल्युत्सर्पण-काकादिनिलयनोपलम्भात्। तथा संभवपर्यालोचनं च व्यधायि, तद् यथा– अस्ताचलान्तरिते सवितरि, प्रसरति चेपत्तमिस्रे महारण्येऽस्मिन् स्थाणुरयं संभाव्यते, न पुरुषः, शिरःकण्डूयन-कर-ग्रीवाचलनादेस्तद्व्यवस्थापकहेतोरभावात्; ईदृशे च प्रदेशेऽस्यां वेलायां प्रायस्तस्याऽसंभवात्। तस्मात् स्थाणुनाऽत्र सद्भूतेन भाव्यम्, न पुरुषेण। तदुक्तम्–

"अरण्यमेतत् सविताऽस्तमागतो न चाऽधुना संभवतीह मानवः। प्रायस्तदेतेन खगादिभाजा भाव्यं स्मरारातिसमाननाम्ना" ॥ १ ॥

एतच्चेदृशं चित्तं 'ईहा' इत्युच्यते, निश्चयाभिमुखत्वेन संशयादुत्तीर्णत्वात्, सर्वथानिश्चयेऽपायत्वप्रसङ्गेन निश्चयादधोवर्तित्वाच्च। इति संशये-हयोः प्रतिविशेषः॥ इति गाथाद्वयार्थः॥ १८३ ॥ १८४ ॥

अथाऽपाय-धारणागतविप्रतिपत्तिनिराचिकीर्षया परमतमुपदर्शयन्नाह—

१ घ. छ. ज. 'चित्तं संशयरूपं सं'।

शब्दादिद्रव्योपादानात्, व्यञ्जनावग्रहाऽऽद्यसमयवदिति। स्यादेतत्, चरमसमयेऽर्थावग्रहज्ञानमनुभवप्रत्यक्षेणाऽप्यनुभूयते, ततः प्रत्यक्षविरोधिनीयं प्रतिज्ञा। तदयुक्तम्, 'चरमसमय एव समग्रं ज्ञानमुत्पद्यते' इतिभवत्प्रतिज्ञातस्यैव प्रत्यक्षविरोधात्, चरमतन्तौ समस्तपटोत्पादवचनवत्। तथा, सर्वेष्वपि शब्दादिद्रव्यसंबन्धसमयेषु ज्ञानमस्तीत्यादिपूर्वोक्तानुमानाविरोधश्च भवत्पक्षस्य॥ इति गाथार्थः॥ २०२॥

तस्मात् किमिह स्थितम्?, इत्याह—

[1]तंतू पडोवगारी न समत्तपडो य, समुदिया ते उ। सव्वे समत्तपडओ तह नाणं सव्वसमएसु॥ २०३॥

यथैकस्तन्तुः पटोपकारी वर्तते, तमन्तरेणाऽपि समग्रस्य तस्याऽभावात्, न चासौ तन्तुरेतावता समस्तः पटो भवति, पटैकदेशत्वात् तस्य, समुदिताः पुनस्ते तन्तवः सर्वे समस्तपटव्यपदेशभाजो भवन्ति; तथाऽत्रापि सर्वेष्वपि समुदितेषु समयेषु ज्ञानं भवति, नैकस्मिंश्चरमसमये। ततश्चार्थावग्रहसमयात् पूर्वसमयेषु तदेव ज्ञानमतीवाऽस्फुटं व्यञ्जनावग्रह उच्यते; चरमसमये तु तदेव किञ्चित्स्फुटतरावस्थामापन्नमर्थावग्रह इति व्यपदिश्यते। अतो यद्यपि सुप्त-मत्त-मूर्च्छितादिज्ञानस्येव व्यक्तं तथाविधं व्यञ्जनावग्रहज्ञानसाधकं लिङ्गं नास्ति, तथापि यथोक्तयुक्तितो व्यञ्जनावग्रहे सिद्धं ज्ञानम्॥ इति गाथार्थः॥ २०३॥

तत्त्व-भेद-पर्यायैर्व्याख्या, तत्र तत्त्वं व्यञ्जनावग्रहस्य स्वरूपमुक्तम्। अथ तस्य भेदान् निरूपयितुमाह—

[3]नयण-मणोवज्जिंदियभेयाओ वंजणोग्गहो चउहा। उवघाया-णुग्गहओ जं ताइं पत्तकारीणि॥ २०४॥

स च व्यञ्जनावग्रहश्चतुर्धा भवति। कुतः?, इत्याह– नयन-मनोवर्जेन्द्रियभेदात्। इदमुक्तं भवति– विषयस्य, इन्द्रियस्य च यः परस्परं संबन्धः प्रथममुपश्लेषमात्रम्; तद्व्यञ्जनावग्रहस्य विषयः। स च विषयेण सहोपश्लेषः प्राप्यकारिष्वेव स्पर्शन-रसन-घ्राण-श्रोत्रलक्षणेषु चतुरिन्द्रियेषु भवति, न तु नयन-मनसोः। अतस्ते वर्जयित्वा शेषस्पर्शनादीन्द्रियचतुष्टयभेदाच्चतुर्विध एव व्यञ्जनावग्रहो भवति। नन्विन्द्रियत्वे तुल्येऽपि केयं मुखपरीक्षिका– यच्चतुर्षु स्पर्शनादीन्द्रियेषु सोऽभ्युपगम्यते,नान्यत्र?, इत्याह– 'उवघायेत्यादि' यद् यस्मात् तान्येव स्पर्शन-रसन-घ्राण-श्रोत्रलक्षणानि चत्वारीन्द्रियाणि प्राप्तकारीणि, न तु नयन-मनसी। ततो यथोक्तेन्द्रियचतुष्कभेदाच्चतुर्विध एवाऽसौ भवति, इति काऽत्र मुखपरीक्षिका? इति। तत्र विषयभूतं शब्दादिकं वस्तु प्राप्तं संश्लेषद्वारेणाऽऽसादितं कुर्वन्ति परिच्छिन्द-

१ तन्तु पटोपकारी न समस्तपटश्च, समुदितास्ते। सर्वे समस्तपटकस्तथा ज्ञानं सर्वसमयेषु॥ २०३॥ २ ज 'सर्वेऽपि स'। ३ नयन-मनोवर्जेन्द्रियभेदाद् व्यञ्जनावग्रहश्चतुर्धा। उपघाता-ऽनुग्रहतो यत् तानि प्राप्तकारीणि॥ २०४॥ ४ घ छ 'यत्वतुल्यत्वेऽपि'।

यस्माद् व्यतिरेकाद्, अन्वयाद्, उभयाद् वा भूतार्थविशेषावधारणं कुर्वतो योऽध्यवसायः स सर्वोऽप्यपायः प्रस्तुतस्थाण्वादि-वस्तुनिश्चयः, न तु सद्भूतार्थविशेषावधारणं धारणेति भावः, तस्माद् न दोषः ॥

आह— ननु यथा मया व्याख्यायते— सद्भूतार्थविशेषावधारणं धारणा, तथा किं कश्चिद् दोषः समुपजायते, येनाऽऽत्मीयव्याख्यानपक्षे इदमित्थमभिधीयते 'न दोषः' इति ?। एतदाशङ्क्याह— 'भेए वेत्यादि' वाशब्दः पातनायां गतार्थः, व्यतिरेकोऽपायः, अन्वयस्तु धारणा, इत्येवं मतिज्ञानतृतीयभेदस्याऽपायस्य भेदेऽभ्युपगम्यमाने पञ्च वस्तूनि पञ्च भेदा भवन्ति, 'आभिनिबोधिकज्ञानस्य' इति गम्यते; तथाहि— अवग्रहे-हा-ऽपाय-धारणालक्षणाश्चत्वारो भेदास्तावत् त्वयैव पूरिताः, पञ्चमस्तु भेदः स्मृतिलक्षणः प्राप्नोति— अविच्युतेः स्वसमानकालभाविन्यपायेऽन्तर्भूतत्वात्, वासनायास्तु स्मृत्यन्तर्गतत्वेन विवक्षितत्वात्, स्मृतेरनन्यशरणत्वाद् मतेः पञ्चमो भेदः प्रसज्यत इति भावः ॥

'आहेत्यादि' पुनरप्याह परः— ननु यथैव मया व्याख्यायते— व्यतिरेकमुखेन निश्चयोऽपायः, अन्वयमुखेन तु धारणा, इत्येवमेव चतुर्धा चतुर्विधा मतिर्भवति युक्तितो घटते । अन्यथा तु व्याख्यायमाने— अन्वय-व्यतिरेकयोर्द्वयोरप्यपायत्वेऽभ्युपगम्यमाने इत्यर्थः । किम् ?, इत्याह— त्रिधा- अवग्रहे-हा-ऽपायभेदतस्त्रिभेदा मतिर्भवति, न पुनश्चतुर्धा, धारणाया अघटमानकत्वादिति भावः ॥ इति गाथार्थः ॥ १८७ ॥

कथं पुनर्धारणाऽभावः ?, इत्याह—

[1]काऽणुवओगम्मि धिई पुणोवओगे य सा जओऽवाओ ?। तो नत्थि धिई, भण्णइ इदं तदेवेति जा बुद्धी॥१८८॥
नणु साऽवायब्भहिया जओ य सा वासणाविसेसाओ । जा याऽवायाणन्तरमविच्चुई सा धिई नाम ॥१८९॥

अनुपयोगे उपयोगोपरमे सति का धृतिः— का नाम धारणा ? न काचिदित्यर्थः, इदमुक्तं भवति— इह तावद् निश्चयोपायमुखेन घटादिके वस्तुनि अवग्रहे-हा-ऽपायरूपतयाऽन्तर्मुहूर्तप्रमाण एवोपयोगो जायते । तत्र चाऽपाये जाते या उपयोगसातत्यलक्षणाऽविच्युतिर्भवताऽभ्युपगम्यते, साऽपाय एवाऽन्तर्भूता, इति न ततो व्यतिरिक्ता। या तु तस्मिन् घटाद्युपयोगे उपरते सति संख्येयमसं-

१ काऽनुपयोगे धृतिः पुनरुपयोगे च सा यतोऽपायः ?। ततो नास्ति धृतिर्भण्यते इदं तदेवेति या बुद्धिः ॥ १८८ ॥
ननु साऽपायाऽभ्यधिका यतश्च सा वासनाविशेषात् । या चाऽपायानन्तरमविच्युतिः सा धृतिर्नाम ॥ १८९ ॥

इति प्रतिज्ञा। अनभिमतप्रकारप्रतिषेधमाह– 'गंतुं सयं न गिण्हंति त्ति' 'ताइं' इत्यत्रापि संवध्यते। ततश्च ते श्रोत्र-घ्राणे कर्तृभूते पुनः स्वयं शब्द-गन्धदेशं गत्वा न गृह्णीतः 'शब्द-गन्धौ' इति विभक्तिव्यत्ययेन संवध्येते, आत्मनोऽवाह्यकरणत्वात् श्रोत्र-घ्राणयोः, स्पर्शन-रसनवदिति। ननु शब्द-गन्धावपि श्रोत्र-घ्राणे कुतः प्राप्नुतः ?, इत्याह– 'जं ते पोग्गलमइया सक्किरिय त्ति' यद् यस्मात्कारणात् तौ शब्द-गन्धौ सक्रियौ गत्यादिक्रियावन्तौ, तस्मादन्यत आगत्य श्रोत्र-घ्राणे प्राप्नुतः। कथम्भूतौ सन्तौ सक्रियौ तौ ?, इत्याह– पुद्गलमयौ। यदि पुनरपौद्गलिकत्वादमूर्तौ स्याताम्, तदा यथा जैनमतेन सक्रियेष्वाकाशादिषु गतिक्रिया नास्ति, तथैतयोरपि न स्यात्, इत्यालोच्य पुद्गलमयत्वविशेषणमकारि, पुद्गलमयत्वे सति सक्रियाविति भावः ; यच्चैवम्भूतम्, तत्र गतिक्रियाऽस्त्येव, यथा पुद्गलस्कन्धेष्विति ॥ आह– ननु पुद्गलमयत्वेऽपि सति शब्द-गन्धयोर्गतिक्रियाऽस्तीति कुतो निश्चीयते ?, इत्याह– 'वाउवहणाओ धूमो व्व त्ति' वायुना वहनं नयनं वायुवहनं तस्मात्। इदमुक्तं भवति– यथा पवनपटलेनोह्यमानत्वाद् धूमो गतिक्रियावान्, एवं शब्द-गन्धावपि तेनोह्यमानत्वात् तद्वन्तौ। तथा, संहरणतो गृहादिषु पिण्डीभवनाद् धूमवदेव क्रियाभाजौ तौ। तथा, विशेषेण द्वारानुविधानतस्तोयवत् तद्वन्तावेतौ। तथा, पर्वतनितम्बादिषु प्रतिघातात् प्रतिस्खलनाद् वायुवदेतौ गतिक्रियाऽऽश्रयौ ॥ इति गाथाद्वयार्थः ॥२०६॥२०७॥

हेत्वन्तरेणाऽपि शब्द-गन्धयोः सयुक्तिकं गतिक्रियावत्त्वं समर्थयन्नाह—

[2]गिण्हंति पत्तमत्थं उवघाया-णुग्गहोवलद्धीओ। बाहिज्ज-पूइ-नासारिसादओ कहमसंबद्धे ? ॥ २०८ ॥

प्राप्तमन्यत आगत्यात्मना सह संवद्धं शब्द-गन्धलक्षणमर्थं गृह्णीतः 'श्रोत्र-घ्राणेन्द्रिये' इति गम्यते। एतेन शब्द-गन्धयोरागमनक्रिया प्रतिज्ञाता भवति। कुतः प्राप्तमेव गृह्णीतः ?, इत्याह– उपघातश्चानुग्रहश्चोपघाता-ऽनुग्रहौ तयोरुपलब्धेः, तथाहि– भेर्यादिमहाशब्दप्रवेशे श्रोत्रस्य वाधिर्यरूप उपघातो दृश्यते, कोमलशब्दश्रवणे त्वनुग्रहः ; घ्राणस्याऽप्यशुच्यादिगन्धप्रवेशे पूतिरोगा-ऽर्शोव्याधिरूप उपघातोऽवलोक्यते, कर्पूरादिगन्धप्रवेशे त्वनुग्रहः। शब्द-गन्धासंवन्धेऽपि श्रोत्र-घ्राणयोरेतावनुग्रहो-पघातौ भविष्यत इति चेत्, इत्याह– 'वाहिज्जेत्यादि' वाधिर्यं च पूतिश्च नासाकोथलक्षणो रोगविशेषः, नासार्शांसि च, तानि आदिर्येषां शेषोपघाता-ऽनुग्रहाणां ते तथाभूताः कथं घटामुपगच्छेयुः ?। क सति ?, इत्याह– असंवद्धे स्वहेतुभूते शब्द-गन्धलक्षणे 'वस्तुनि' इति गम्यते। इदमुक्तं भवति–श्रोत्र-घ्राणाभ्यां सह संवद्धा एव शब्द-गन्धाः स्वकार्यभूतं वाधिर्याद्युपघातम्, अनुग्रहं वा जनयितुमलम्, नाऽन्यथा, सर्वस्याऽपि तज्जननप्राप्तेरतिप्रसङ्गात् ॥ इति गाथार्थः ॥ २०८ ॥

१. ज 'था जिन'। २ गृह्णीत. प्राप्तमर्थमुपघाता-नुग्रहोपलब्धेः। वाधिर्य-पूति-नासार्शआदयः कथमसंबद्धे ? ॥ २०८ ॥

त्रयी गतिः। तत्राद्यपक्षद्वयमयुक्तम्, ज्ञानरूपत्वाभावात्, तद्भेदानां चेह विचार्यत्वेन प्रस्तुतत्वात्। तृतीयपक्षोऽप्ययुक्त एव, संख्येयमसंख्येयं वा कालं वासनाया इष्टत्वात्, एतावन्तं च कालं तद्वस्तुविकल्पाऽयोगात्। तदेवमविच्युति-स्मृति-वासनारूपायास्त्रिविधाया अपि धारणाया अघटमानत्वात् त्रिधैव मतिः प्राप्नोति, न चतुर्धा ॥

अत्रोच्यते—यत् तावद् गृहीतग्राहित्वादविच्युतेरप्रामाण्यमुच्यते, तदयुक्तम्, गृहीतग्राहित्वलक्षणस्य हेतोरसिद्धत्वात्, अन्यकालविशिष्टं हि वस्तु प्रथमप्रवृत्ताऽपायेन गृह्यते, अपरकालविशिष्टं च द्वितीयादिवारा प्रवृत्ताऽपायेन। किञ्च, स्पष्ट-स्पष्टतर-स्पष्टतमभिन्नधर्मकवासनाजनकत्वादप्यविच्युतिप्रवृत्तद्वितीयाद्यपायविषयं वस्तु भिन्नधर्मकमेव, इति कथमविच्युतेर्गृहीतग्राहिता ?। स्मृतिरपि पूर्वोत्तरदर्शनद्वयानधिगतं वस्त्वेकत्वं गृह्णाना न गृहीतग्राहिणी। न च वक्तव्यं कालादिभेदेन भिन्नत्वाद् वस्तुनो नैकत्वम्, कालादिभिन्नत्वेऽपि सत्त्व-प्रमेयत्व-संस्थानरूपादिभिरेकत्वात्। वासनापि स्मृति-विज्ञानावरणकर्मक्षयोपशमरूपा, तद्विज्ञानजननशक्तिरूपा चेष्यते। सा च यद्यपि स्वयं ज्ञानरूपा न भवति, तथापि पूर्वप्रवृत्ताऽविच्युतिलक्षणज्ञानकार्यत्वात्, उत्तरकालभाविस्मृतिरूपज्ञानकारणत्वाच्चोपचारतो ज्ञानरूपाऽभ्युपगम्यते। तद्वस्तुविकल्पपक्षस्त्वनभ्युपगमादेव निरस्तः। तस्मादविच्युति-स्मृति-वासनारूपाया धारणायाः स्थितत्वाद् न मतेस्त्रैविध्यम्, किन्तु चतुर्धा सेति स्थितम् ॥ इति गाथाद्वयार्थः ॥ १८८ ॥ १८९ ॥

अथैतां स्वाभिमतां धारणां व्यवस्थाप्य परं प्रत्याह—

तं इच्छंतस्स तुहं वत्थूणि य पंच, नेच्छमाणस्य। किं होउ सा अभावो भावो नाणं व तं कयरं? ॥१९०॥

अस्मदभिमतामनन्तरप्रतिष्ठितस्वरूपां तां धारणामिच्छतस्तव पञ्च वस्तूनि— पञ्चाऽऽभिनिबोधिकज्ञानभेदाः प्राप्नुवन्ति, अपायस्यैकस्याऽपि भेदद्वयरूपताभ्युपगमेन भेदचतुष्टयस्य त्वयाऽपि पूरितत्वात्, पञ्चमस्य तु मदुक्तस्य धारणालक्षणस्य प्रसङ्गादिति भावः। अथास्मदभ्युपगता धारणा त्वया नेष्यते, तर्हि 'नेच्छमाणस्स किं होउ इत्यादि' तां मदभ्युपगतां धारणामनिच्छतोऽप्रतिपद्यमानस्य तव सा मदभ्युपगता धारणा किं भवतु- अभावो- अवस्तु, आहोस्विद् भावो- वस्तु ? इति विकल्पद्वयम्। किञ्चातः ? न तावदभावः, भावत्वेनाऽनुभूयमानत्वात्। न च तथाऽनुभूयमानस्याऽभावत्वमाधातुं शक्यते, अतिप्रसङ्गात्— घटादिष्वपि तथात्वप्राप्तेः; तेऽपि ह्यनुभववशेनैव भावरूपा व्यवस्थाप्यन्ते। यदि चाऽनुभवोऽप्यप्रमाणम्, तदा घटादिष्वपि भावरूपतायामनाश्वास इति भावः। अथ भावोऽसौ;

१ तामिच्छतस्तव वस्तूनि च पञ्च, नेच्छत.। किं भवतु साऽभावो भावो ज्ञानं वा तत् कतरत् ? ॥ १९० ॥

घृत-चन्द्रादिकं वस्तु, तस्मिंश्चिरमवलोकिते उवघाताभावादनुग्रहमिव मन्येत चक्षुः, ' को दोषः ? ' इत्यत्राऽपि संबध्यते, न कश्चिदित्यर्थः ॥ इति गाथार्थः ॥ २१० ॥

आह– यद्युक्तन्यायेनोपघातका-ऽनुग्राहकवस्तुन्युपघाता-ऽनुग्रहाभावं चक्षुषो न ब्रूषे, तर्हि यद् ब्रूषे तत् कथय, इत्याशङ्क्याह–

गंतुं न रूवदेसं पासइ पत्तं सयं व नियमोऽयं । पत्तेण उ मुत्तिमया उवघाया-णुग्गहा होज्जा ॥ २११ ॥

अयं नियमः– इदमेवाऽस्माभिर्नियम्यत इत्यर्थः । किं तत् ?, इत्याह– रूपस्य देशो रूपदेश आदित्यमण्डलादिसमाक्रान्तप्रदेशरूपस्तं गत्वोत्प्लवनतस्तं समाश्लिष्य चक्षुर्न पश्यति न परिच्छिनत्ति, अन्यस्याऽश्रुतत्वाद् 'रूपम्' इति गम्यते । 'पत्तं सयं व त्ति' स्वयं वाऽन्यत आगत्य चक्षुर्देशं प्राप्तं समागतं रूपं चक्षुर्न पश्यति, किन्त्वप्राप्तमेव योग्यदेशस्थं विषयं तत् पश्यति ॥ अत्राह परः– नन्वनेन नियमेनाऽप्राप्यकारित्वं चक्षुषः प्रतिज्ञातं भवति । न च प्रतिज्ञामात्रेणैव हेतूपन्यासमन्तरेण समीहितवस्तुसिद्धिः। अतो हेतुरिह वक्तव्यः। ' [2]जंमणुग्गहाइसुण्णं ति ' इत्यनेन पूर्वोक्तगाथावयवेन विषयकृतानुग्रहो-पघातशून्यत्वलक्षणोऽयमभिहित एवेति चेत् । अहो ! जराविधुरितस्येवं [3]सूरेर्विस्मरणशीलता, यतो ' जंमणुग्गहाइसुण्णं ति ' इत्यनेन विषयादनुग्रहो-पघातौ चक्षुषो निषेधयति, ' [4]डॅज्जेज्ज पाविउं रविकराइणा फरिसणं व ' इत्यादिना तु पुनरपि ततस्तौ तस्य समनुजानीते, अतो न विघ्नः, कोऽप्येष वचनक्रम इति । नैतदेवम्, अभिप्रायाऽपरिज्ञानात्, यतः प्रथमत एव विषयपरिच्छेदमात्रकालेऽनुग्रहो-पघातशून्यता हेतुत्वेनोक्ता, पश्चात्तु चिरमवलोकयतः प्रतिपत्तुः प्राप्तेन रविकरादिना, चन्द्रमरीचि-नीलादिना वा मूर्तिमता निसर्गत एव केनाऽप्युपघातकेन, अनुग्राहकेण च विषयेणोपघाता-ऽनुग्रहौ भवेतामपीति । एतदेवाह– 'पत्तेण उ मुत्तिमयेत्यादि' अनेनाऽभिप्रायेण तौ पुनरपि समनुज्ञायेते, न पुनर्विस्मरणशीलतया । यदि पुनर्विषयपरिच्छित्तिमात्रमपि तमप्राप्य चक्षुर्न करोतीति नियम्यते, तदा वह्नि-विष-जलधि-कण्टक-करवाल-करपत्र-सौवीराञ्जनादिपरिच्छित्तावपि तस्य दाह-स्फोट-क्लेद-पाटन-नीरोगतादिलक्षणोपघाता-ऽनुग्रहप्रसङ्गः । न हि समानायामपि प्राप्तौ रविकरादिना तस्य भवन्ति दाहादयः, न वह्न्यादिभिः। तस्माद् व्यवस्थितमिदम्–विषयमप्राप्यैव चक्षुः परिच्छिनत्ति, अञ्जन-दहनादिकृताऽनुग्रहो-पघातशून्यत्वात्, मनोवत् । परिच्छेदानन्तरं तु पश्चात्प्राप्तेन केनाऽप्युपघातकेन, अनुग्राहकेण वा मूर्तिमता द्रव्येण तस्योपघाता-ऽनुग्रहौ न निषिध्येते, विष शर्करादिभक्षणे मूर्च्छा-स्वास्थ्यादय इव मनस इति ॥

अत्राऽपरः प्राह– नयनाद् नायना रश्मयो निर्गत्य प्राप्य च रविबिम्बरश्मय इव वस्तु प्रकाशयन्तीति नयनस्य प्राप्यकारिता

१ गत्वा न रूपदेश पश्यति प्राप्त स्वयं वा नियमोऽयम् । प्राप्तेन तु मूर्तिमतोपघाता-ऽनुग्रहौ भवेताम् ॥ २११ ॥ २ गाथा २०९ । ३ घ छ. 'व पुनर्वि'। ४ गाथा २१० ।

तदेवमवग्रहादिभेदचतुष्टयविषया निराकृताः सर्वा अपि परविप्रतिपत्तयः, तन्निराकरणप्रक्रमे चानन्तरमवग्रहो द्विरूपः प्रोक्तः। स च कथं द्विरूपो भवति ?, इत्याशङ्क्य तद्द्विरूपताकथनव्याजेन पूर्वं यान्याभिनिबोधिकज्ञानस्याऽवग्रहादीनि चत्वारि भेदवस्तून्युक्तानि, तेष्वेव मध्येऽवग्रहं तावद् व्याचिख्यासुराह–

[2]तत्थोग्गहो दुरूवो गहणं जं होइ वंजण-त्थाणं। वंजणओ य जमत्थो तेणाईए तयं वोच्छं ॥ १९३ ॥

तत्राऽवग्रहणमवग्रहो द्विरूपो यथा भवति, तथा प्रोच्यते। कथम् ?, इत्याह– यद् यस्माद् ग्रहणं व्यञ्जना-ऽर्थयोरेव भवेत्, अन्यस्य ग्राह्यस्याऽभावात्। ततश्च विषयद्वैविध्यादवग्रहो द्विविध इति भावः। अपरं च, यद्यस्मात् कारणाद् वक्ष्यमाणन्यायेन प्राप्यकारिष्विन्द्रियेषु व्यञ्जनतो- व्यञ्जनावग्रहादनन्तरमेव, अर्थो- अर्थावग्रहो भवति, तेनाऽऽदौ प्रथमतस्तकं व्यञ्जनावग्रहमेव वक्ष्ये ॥ इति गाथार्थः ॥ १९३ ॥

तत्र व्यञ्जनं तावत् किमुच्यते ?, इत्याह–

[3]वंजिज्जइ जेणत्थो घडो व्व दीवेण वंजणं तं च। उवगरणिंदियसद्दाइपरिणयदव्वसंबंधो ॥ १९४ ॥

व्यज्यते प्रकटीक्रियतेऽर्थो येन, दीपेनेव घटः, तद् व्यञ्जनम्। किं पुनस्तत् ?, इत्याह– 'तं चेत्यादि' तच्च व्यञ्जनमुपकरणेन्द्रियशब्दादिपारिणतद्रव्यसंबन्धः– इन्द्रियं द्विविधम्- द्रव्येन्द्रियं, भावेन्द्रियं च। तत्र निर्वृत्त्यु-पकरणे द्रव्येन्द्रियम्, लब्ध्यु-पयोगौ भावेन्द्रियम्। निर्वृत्तिश्च द्विधा– अङ्गुलासंख्येयभागादिमानां कदम्बकुसुमगोलक-धान्यमसूर-काहला-क्षुरप्राकारमांसगोलकरूपा, शरीराकारा च श्रोत्रादीन्द्रियाणां पञ्चानामपि यथासंख्यमन्तर्निर्वृत्तिः; कर्णशष्कुलिकादिरूपा तु बहिर्निर्वृत्तिः। तत्र कदम्बकुसुमगोलकाकारमांसखण्डादिरूपाया अन्तर्निर्वृत्तेः शब्दादिविषयपरिच्छेदहेतुर्यः शक्तिविशेषः स उपकरणेन्द्रियम्, शब्दादिश्च श्रोत्रादीन्द्रियाणां विषयः, आदिशब्दाद् रस-गन्ध-स्पर्शपरिग्रहः; तद्भावेन परिणतानि च तानि भाषावर्गणादिसंबन्धीनि द्रव्याणि च शब्दादिपरिणतद्रव्याणि, उपकरणेन्द्रियं च शब्दादिपरिणतद्रव्याणि च, तेषां परस्परं संबन्ध उपकरणेन्द्रिय-शब्दादिपरिणतद्रव्यसंबन्धः; एष तावद् व्यञ्जनमुच्यते। अपरं चेन्द्रियेणाऽप्यर्थस्य व्यज्यमानत्वात् तदपि व्यञ्जनमुच्यते। तथा शब्दादिपरिणतद्रव्यनिकुरम्बमपि व्यज्यमानत्वाद् व्यञ्ज-

१ छ 'कथं हि द्वि'। २ तत्राऽवग्रहो द्विरूपो ग्रहण यद्भवति व्यञ्जना-ऽर्थयो.। व्यञ्जनतश्च यदर्थस्तेनादौ तकं वक्ष्ये ॥ १९३ ॥
३ व्यज्यते येनाऽर्थो घट इव दीपेन व्यञ्जनं तच्च। उपकरणेन्द्रियशब्दादिपरिणतद्रव्यसंबन्धः ॥ १९४ ॥ ४ ज 'मानक'।

अत्रोत्तरमाह–

[1]नाणुग्गहो-वघायाभावाओ लोयणं व, सो इहरा । तोय-जलणाइचिन्तणकाले जुज्जेज्ज दोहिं पि ॥ २१४ ॥

न 'ज्ञेयेन सह संपृच्यते मनः' इति गम्यते । कुतः ?, इत्याह–'अणुग्गहो-वघायाभावाउ त्ति' ज्ञेयकृतानुग्रहो-पघाताभावात्, लोचनवत् । यदि तस्य ज्ञेयेन सह संपर्कः स्यात् तदा किं स्यात् ?, इत्याह– 'सो इहर त्ति' तद् मन इतरथा– ज्ञेयसंपर्केऽभ्युपगम्यमाने, तोय-ज्वलनादिविषयचिन्तनकाले द्वाभ्यामप्यनुग्रहो-पघाताभ्यां युज्येत– तोय-चन्दनादिचिन्तनकाले शैत्याद्यनुभवनेन स्पर्शनवदनुगृह्येत, दहन-विष-शस्त्रादिचिन्तनसमये तु तद्वदेवोपहन्येतेति भावः; न चैवम् । तस्माल्लोचनवदप्राप्यकार्येव मनः ॥ इति गाथार्थः ॥२१४॥

किञ्च, मनसः प्राप्यकारितावादिनः प्रष्टव्याः । किम् ?, इत्याह–

[2]दव्वं भावमणो वा वएज्ज जीवो य होइ भावमणो । देहव्वावित्तणओ न देहबाहिं तओ जुत्तो ॥ २१५ ॥

इह मनस्तावद् द्विधा– द्रव्यमनः, भावमनश्चेति । अतः सूरिः परं पृच्छति– ' दव्वं ति ' द्रव्यमनः, भावमनो वा व्रजेद् गच्छेत् 'मेर्वादिविषयसन्निधौ' इति गम्यते । किमनेन पृष्टेन ? इति चेत् । उभयथाऽपि दोषः, तथाहि– भावमनसश्चिन्ताज्ञानपरिणामरूपत्वात्, तस्य च जीवादव्यतिरिक्तत्वाज्जीव एव भावमनो भवति । जीवश्चेति चकारः 'तओ' इत्यस्याऽनन्तरं संबन्धनीयः । ततोऽयमर्थः– सकश्च स च भावमनोरूपो जीवो देहमात्रव्यापित्वाद् न देहाद् बहिर्निःसरन् युक्तः; इह ये देहमात्रवृत्तयः, न तेषां बहिर्निःसरणमुपपद्यते, यथा तद्गतरूपादीनाम्, देहमात्रवृत्तिश्च जीवः ॥ इति गाथार्थः ॥ २१५ ॥

देहमात्रव्यापित्वस्याऽसिद्धिं मन्यमानस्य परस्य मतमाशङ्कमानः सूरिराह–

[3]सव्वगउ त्ति च बुद्धी, कत्ताभावाइदोसओ तण्ण । सव्वा-सव्वग्गहणप्पसंगदोसाइओ वा वि ॥ २१६ ॥

अथ स्याद् बुद्धिः परस्य– सर्वगत आत्मा, न तु देहमात्रव्यापी, अमूर्तत्वात्, आकाशवदिति । अत्र गुरुराह– तदेतन्न । कुतः ?, इत्याह– भावप्रधानत्वान्निर्देशस्य कर्तृत्वाभावादिदोषत इति– सर्वगतत्वे सत्यात्मनः कर्तृत्वादयो गोपाङ्गनादिप्रतीता अपि

१ न, अनुग्रहो-पघाताभावाद् लोचनमिव, तादितरथा । तोय-ज्वलनादिचिन्तनकाले युज्येत द्वाभ्यामपि ॥ २१४ ॥

२ द्रव्य भावमनो वा व्रजेद् जीवश्च भवति भावमन॰ । देहव्यापित्वाद् न देहबहिस्ततो युक्त. ॥ २१५ ॥

३ सर्वगत इति च बुद्धि॰, कर्त्रभावादिदोषतस्तन्न । सर्वा-सर्वग्रहणप्रसङ्गदोषादितो वाऽपि ॥ २१६ ॥

रिति दर्शयन्नाह– बधिरादीनाम्, आदिशब्दादुपहतघ्राणादीन्द्रियाणां पुनः स व्यञ्जनावग्रहोऽज्ञानं ज्ञानं न भवतीत्यत्राऽविप्रतिपत्तिरेव। कुतः ?, इत्याह– तच्च तदुभयं च तदुभयं तस्याऽभावाज्ज्ञानकारणत्वाभावात्, अव्यक्तस्याऽपि च ज्ञानस्याऽभावात् ॥ इति गाथार्थः ॥ १९६ ॥

अथ पुनरप्याक्षेपं, परिहारं चाभिधित्सुराह—

[1]कहमव्वत्तं नाणं च सुत्त-मत्ताइसुहुमबोहो व्व। सुत्तादओ सयं वि य विन्नाणं नावबुज्झंति ॥ १९७ ॥

परः सासूयमाह– ननु कथं 'ज्ञानम्, अव्यक्तं च' इत्युच्यते ? तमः-प्रकाशाद्यभिधानवद् विरुद्धत्वाद् नेदं वक्तुं युज्यत इति भावः। अत्रोत्तरमनन्तरमेवोक्तम्– एकतेजोऽवयवप्रकाशवत् सूक्ष्मत्वादव्यक्तम्। अथ पुनरप्युच्यते– सुप्त-मत्त-मूर्च्छितादीनां सूक्ष्मबोधवदव्यक्तं ज्ञानमुच्यत इति न दोषः। सुप्तादीनां तदात्मीयज्ञानं स्वसंविदितं भविष्यतीति चेत्। नैतदेवमित्याह– सुप्तादयः स्वयमपि तदात्मीयविज्ञानं नाऽवबुध्यन्ते न संवेदयन्ति, अतिसूक्ष्मत्वात् ॥ इति गाथार्थः ॥ १९७ ॥

आह– यदि तैरपि सुप्तादिभिस्तदात्मीयज्ञानं न संवेद्यते, तर्हि तत् तेषामस्तीत्येतत् कथं लक्ष्यते ?, इत्याह—

[2]लक्खिज्जइ तं सिमिणायमाणवयणदाणाइचिट्ठाहिं। जं नामइपुव्वाओ विज्जंते वयणचिट्ठाओ ॥ १९८ ॥

तत् सुप्तादीनां ज्ञानमस्तित्वेन लक्ष्यते। कुतः ?, स्वप्नायमानवचनदानादिचेष्टाभ्यः, सुप्तादयोऽपि हि स्वप्नायमानाद्यवस्थायां केचित् किमपि भाषमाणा दृश्यन्ते, शब्दिताश्चौघतो वाचं प्रयच्छन्ति, संकोच-विकोचा-ऽङ्गभङ्ग-जृम्भित-कूजित-कण्डूयनादिचेष्टाश्च कुर्वन्ति, न च तास्ते तदा वेदयन्ते, नापि च प्रबुद्धाः स्मरन्ति। तर्हि कथं तच्चेष्टाभ्यस्तेषां ज्ञानमस्तीति लक्ष्यते ?, इत्याह– 'जमित्यादि' यद् यस्मात् कारणाद् नाऽमतिपूर्वास्ता वचनादिचेष्टा विद्यन्ते, किन्तु मतिपूर्विका एव, अन्यथा काष्ठादीनामपि तत्प्रसङ्गात्; अतस्ताभ्यस्तत् तेषामस्तीति लक्ष्यत एव, धूमादग्निरिव ॥ इति गाथार्थः ॥ १९८ ॥

आह– नन्वात्मीयमपि चेष्टितं किं कश्चिद् न जानाति, येन सुप्तादीनां स्वचेष्टिताऽसंवेदनमुच्यते ?, इत्याशङ्क्याह–

१ कथमव्यक्तं ज्ञान च सुप्त-मत्तादिसूक्ष्मबोध इव। सुप्तादय. स्वयमपि च विज्ञान नावबुध्यन्ते ॥ १९७ ॥

२ लक्ष्यते तत् स्वप्नायमानवचनदानादिचेष्टाभ्य.। यद् नाऽमतिपूर्वा विद्यन्ते वचनचेष्टाः ॥ १९८ ॥

शरीराद् बहिर्निःसरणमुपपद्यत इति स्थितम् ॥ इति गाथार्थः ॥ २१६ ॥

अथ द्रव्यमनो विषयदेशं व्रजतीति ब्रूयात्, तत्राऽप्याह–

[1]दव्वमणो विण्णाया न होइ गंतुं च किं तओ कुणउ ? । अह करणभावओ तस्स, तेण जीवो वियाणेज्जा ॥२१७॥

काययोगसहायजीवगृहीत-चिन्ताप्रवर्तकमनोवर्गणान्तःपातिद्रव्यसमूहात्मकं द्रव्यमनः स्वयं विज्ञातृ न भवत्येव, अचेतनत्वात्, उपलशकलवत्, इत्यतो गत्वाऽपि मेर्वादिविषयदेशं किं तद् वराकं करोतु ?, तत्र गतादपि तस्मादर्थावगमाभावादिति भावः ॥ पराभिप्रायमाशङ्कते– 'अह करणेत्यादि' अथ मन्यसे– यद्यपि द्रव्यमनः स्वयं न किञ्चिज्जानाति, तथापि करणभावः करणत्वं तस्य द्रव्यमनसः प्रदीपादेरिव वस्तुनि प्रकाशयितव्ये समस्ति। ततो जीवः कर्ता तेन द्रव्यमनसा करणभूतेन विजानीयादवबुध्येत मेर्वादिकं वस्त्विति । अत्र प्रयोगः– बहिर्निर्गतेन द्रव्यमनसा प्राप्य विषयं जानाति जीवः, करणत्वात्, प्रदीप-मणि-चन्द्र-सूर्यादिप्रभयेव ॥इति गाथार्थः ॥२१७॥

अत्रोत्तरमाह–

[2]करणत्तणओ तणुसंठिएण जाणिज्ज फरिसणेणं व । एत्तो च्चिय हेऊओ न नीइ बाहिं फरिसणं व ॥२१८॥

को वै न मन्यते, यदुत– अर्थपरिच्छेदे कर्तव्ये आत्मनो द्रव्यमनः करणम् ? । किन्तु करणं द्विधा भवति– शरीरगतमन्तःकरणम्, तद्बहिर्भूतं बाह्यकरणं च । तत्रेदं द्रव्यमनोऽन्तःकरणमेवाऽऽत्मनः । ततश्च 'करणत्तणउ त्ति' सूत्रस्य सूचामात्रत्वात्, एकदेशेन समुदायस्य गम्यमानत्वाच्चान्तःकरणत्वादित्यर्थः; तनुसंस्थितेन शरीराद् बहिरनिर्गतेन जीवस्तेन जानीयाद् मेर्वादिविषयम्, स्पर्शनेन्द्रियेणेव कमलनालादिस्पर्शम् । प्रयोगः– यदन्तःकरणं तेन शरीरस्थेनैव विषयं जीवो गृह्णाति, यथा स्पर्शनेन, अन्तःकरणं च द्रव्यमनः । प्रदीप-मणि-चन्द्र-सूर्यप्रभादिकं तु बाह्यकरणमात्मन इति साधनविकलः परोक्तदृष्टान्तः । आह— ननु शरीरस्थमपि तत् पद्मनालतन्तुन्यायेन बहिर्द्रव्यमनः किं न निःसरति ?, इत्याह– 'एत्तो चियेत्यादि' इत एवान्तःकरणत्वलक्षणाद्धेतोर्बहिर्न निर्गच्छति द्रव्यमनः, स्पर्शनवत् । प्रयोगः– यदन्तःकरणं तच्छरीराद् बहिर्न निर्गच्छति, यथा स्पर्शनम् ॥ इति गाथार्थः ॥ २१८ ॥

तदेवं भावमनसो द्रव्यमनसश्च बहिश्चारिताद्यभावादप्राप्यकार्येव मन इत्युक्तम् । सांप्रतं '[3]नाणुग्गहो-वघायाभावाओ लोयणं व'

१ द्रव्यमनो विज्ञातृ न भवति गत्वा च किं ततः करोतु ? । अथ करणभावतस्तस्य, तेन जीवो विजानीयात् ॥ २१७ ॥
२ करणत्वतस्तनुसंस्थितेन जानीयात् स्पर्शनेनेव । इत एव हेतोर्न निर्गच्छति बहिः स्पर्शनमिव ॥ २१८ ॥ ३ गाथा_२१४ ।

तथाहि—

जं सव्वहा न वीसुं सव्वेसु वि तं न रेणुतेल्लं व । पत्तेयमणिच्छंतो कहमिच्छसि समुदए नाणं ? ॥२०१॥

यद् वस्तु सर्वथा सर्वप्रकारैर्विष्वक् पृथग् नास्ति तत् समुदायेऽपि नाऽभ्युपगन्तव्यम् , यथा रेणुकणनिकरे प्रतिरेणुकमविद्यमानं तैलम् ; एवं चेत् , तर्हि त्वमपि प्रत्येकमनिच्छन् कथं समुदये ज्ञानमिच्छसि ? । इदमुक्तं भवति– यदीन्द्रियविषयसंबन्धस्य प्रथमसमयादारभ्य व्यञ्जनावग्रहसंबन्धिनोऽसंख्येयान् समयान् यावत् प्रतिसमयं पुष्टिमाविभ्रतीं ज्ञानमात्रां काञ्चिदपि नेच्छसि, तर्हि चरमसमयशब्दादिविषयद्रव्यसंबन्धेन संपूर्णे समुदायेऽपि कथं तामिच्छसि ?– चरमसमयशब्दादिविषयद्रव्यसंबन्धे यदर्थावग्रहज्ञानमभ्युपगम्यते, तदपि प्रत्येकमसच्चरमासिकताकणे तैलवद् न प्राप्नोतीति भावः । तस्मात् तिलेषु तैलवत् सर्वेष्वपि समयेषु प्रत्येकं यच्च यावच्च ज्ञानमस्तीति प्रतिपत्तव्यम् ॥ इति गाथार्थः ॥ २०१ ॥

किञ्च—

समुदाए[3] जइ णाणं देसूणे समुदए कहं नत्थि ? । समुदाए वाऽभूयं कह देसे होज्ज तं सयलं ? ॥२०२॥

समुदायज्ञानवादिन् ! यदि विषयद्रव्यसंबन्धसमयानामसंख्येयानां समुदाये ज्ञानमर्थावग्रहलक्षणमभ्युपगम्यते, तर्हि चरमसमयलक्षणो योऽसौ देशस्तेन न्यूने समुदाये– चरमैकसमयोनेष्वसंख्यातेषु समयेष्वित्यर्थः, तत् कथं नास्ति?, समस्त्येव,प्रमाणोपपन्नत्वात्; तथाहि– सर्वेष्वपि शब्दादिद्रव्यसंबन्धसमयेषु ज्ञानमस्तीति प्रतिजानीमहे, ज्ञानोपकारिशब्दादिद्रव्यसंबन्धसमयसमुदायैकदेशत्वादिति हेतुः, अर्थावग्रहसमयवदिति दृष्टान्तः॥ अत्राह– ननु शब्दादिविषयोपादानसमयसमुदाये ज्ञानं केनाऽभ्युपगम्यते, येन समुदायैकदेशत्वात् प्रथमादिसमयेषु सर्वेष्वपि तत् प्रतिज्ञायते ?; मया ह्येकस्मिन्नेव चरमसमये शब्दादिद्रव्योपादाने ज्ञानप्रसव इष्यते, इत्याशङ्क्याह– 'समुदाए वाऽभूयमित्यादि ' चशब्दो वाशब्दो वा पातनायाम् , सा च कृतैव । तत्र यद्येकस्मिन्नेव चरमसमये ज्ञानमभ्युपगम्यते , तदाऽसौ सर्वसमयसमुदायापेक्षया तावदेकदेश एव । ततश्चानेनैकदेशेनोने शेषसमयसमुदाये यदभूतं ज्ञानं तत्कथं हन्त ! चरमसमयलक्षणे देशेऽकस्मादेव सकलमखण्डं भवेत् , अप्रमाणोपपन्नत्वात् ?; तथाहि– नैकस्मिंश्चरमशब्दादिद्रव्योपादानसमये ज्ञानमुपजायते, एकसमयमात्र-

१ यत् सर्वथा न विष्वक् सर्वेष्वपि तद् न रेणुतैलमिव । प्रत्येकमनिच्छन् कथमिच्छसि समुदये ज्ञानम् ? ॥ २०१ ॥ २ क छ 'व्दादिद्र' ।
३ समुदाये यदि ज्ञानं देशोने समुदये कथं नास्ति ? । समुदाये वाऽभूतं कथं देशे भवेत् तत् सकलम् ? ॥ २०२ ॥

आह– नन्वलौकिकमिदं, यद्– द्रव्यमनसा जीवस्य देहोपचय-दौर्बल्यादिरूपावनुग्रहो-पघातौ क्रियेते, तथाप्रतीतेरेवाभावात्, इत्याशङ्क्याह–

ईट्ठा-णिट्ठाहारब्भवहारे होन्ति पुट्ठि-हाणीओ । जह, तह मणसो ताओ पोग्गलगुणउ त्ति को दोसो? ॥२२१॥

ननु किमिहाऽलौकिकम्?, यतो भवतो लोकस्य च सबालगोपालस्य तावत्प्रतीतमिदं यदुत– इष्टो मनोऽभिरुचितो य आहारस्तस्याऽभ्यवहारे जन्तूनां शरीरस्य पुष्टिर्भवति, यस्त्वनिष्टोऽनभिमत आहारस्तस्याऽभ्यवहारे हानिर्भवतीति । ततश्च 'जह त्ति' यथा इष्टा-ऽनिष्टाहाराभ्यवहारे तत्पुद्गलानुभावात् पुष्टि-हानी भवतः; 'तह त्ति' तथा यदि द्रव्यमनोलक्षणात् मनसोऽपि सकाशात् 'ताउ त्ति' ते पुष्टि-हानी पुद्गलगुणतः पुद्गलानुभावाद् भवतः, तर्हि को दोषः? न कश्चिदित्यर्थः । यथाऽऽहार इष्टा-ऽनिष्टपुद्गलमयत्वात् तदनुभावाज्जन्तुशरीराणां पुष्टि-हानी जनयति, तथा द्रव्यमनोऽपि तन्मयत्वाद् यदि तेषां ते[2] निर्वर्तयति, तदा किं क्षूयते, येन पुद्गलमयत्वे समानेऽपि भवतोऽत्रैवाऽक्षमा? इति भावः । तथा चोक्तम्– "चिन्तया वत्स! ते जातं शरीरकमिदं कृशम्" इति । चिन्तैव तर्हि कार्श्याद्युपघातादिजनिकेति चेत् । न, तस्या अपि द्रव्यमनःप्रभवत्वात्, अन्यथा चिन्ताया ज्ञानरूपत्वात्, ज्ञानस्य चाऽमूर्तत्वात्, अमूर्तस्य च नभस इवोपघातादिहेतुत्वायोगात्, 'जैमणुग्गहो-वघाया जीवाणं पोग्गलेहिंतो' इति वक्ष्यमाणत्वाच्च ॥ इति गाथार्थः॥२२१॥

अथोपसंहारगर्भं प्रस्तुतार्थविषये स्वाभिप्रायपरमार्थं दर्शयन्नाह—

[4]नीउं आगसिउं वा न नेयमालंबइ त्ति नियमोऽयं । तण्णेयकया जेऽणुग्गहो-वघाया य ते नत्थि ॥२२२॥

इह न शरीराद् 'निर्गन्तुं' (निर्गत्य) द्रव्यमनो मेर्वादिकं ज्ञेयमर्थमालम्बते गृह्णाति, नापि तच्छरीरस्थमेव 'आगसिउं ति' 'आक्रष्टुं' (आकृष्य) हठात् समाकृष्याऽऽत्मनः समीपमानीय ज्ञेयमालम्बत इति, अयं नियमोऽस्माभिर्भुजमुत्क्षिप्य विधीयते– प्राप्यकारीदं न भवतीति नियम्यत इति तात्पर्यम् । 'तण्णेयकया जेऽणुग्गहो-वघाय त्ति' यौ च तज्ज्ञेयकृतौ– तच्च तज्ज्ञेयं च तज्ज्ञेयं तत्कृतौ, मनसोऽनुग्रहो-पघातौ परैरिष्येते, तौ तस्य न स्त एवेति च नियम्यते ॥ इति गाथार्थः ॥ २२२ ॥

किं पुनर्न नियम्यते?, इत्याह–

१ इट्ठा-ऽनिट्ठाहाराभ्यवहारे भवत पुष्टि-हानी । यथा, तथा मनसस्ते पुद्गलगुणत इति को दोष.? ॥ २२१ ॥ २ पुष्टि हानी । ३ गाथा २२३ ।
४ निर्गत्याकृष्य वा न ज्ञेयमालम्बत इति नियमोऽयम् । तज्ज्ञेयकृतौ यावनुग्रहो-पघातौ च तौ न स्त. ॥ २२२ ॥

न्तीति प्राप्तकारीणि प्राप्यकारीणि स्पृष्टार्थग्राहिणीत्यर्थः । कुतः पुनरेतान्येव प्राप्यकारीणि ?, इत्याह– उपघातश्चानुग्रहश्चोपघाताऽनुग्रहौ तयोर्दर्शनात्– कर्कशकम्बलादिस्पर्शने, त्रिकटुकाद्यास्वादने, अशुच्यादिपुद्गलाऽऽघ्राणे, भेर्यादिशब्दश्रवणे, त्वक्क्षणनाद्युपघातदर्शनात्; चन्दना-ऽङ्गना-हंसतूलादिस्पर्शने, क्षीर-शर्कराद्यास्वादने,कर्पूरपुद्गलाद्याघ्राणे, मृदु-मन्द्रशब्दाद्याकर्णने तु शैत्याद्यनुग्रहदर्शनादित्यर्थः। नयनस्य तु निशितकरपत्र-सेल्ल-भल्लादिवीक्षणेऽपि पाटनाद्युपघातानवलोकनात्, चन्दना-ऽगुरु-कर्पूराद्यवलोकनेऽपि शैत्याद्यनुग्रहाननुभवात्; मनसस्तु वह्नयादिचिन्तनेऽपि दाहाद्युपघाताऽदर्शनात्, जल-चन्दनादिचिन्तायामपि च पिपासोपशमाद्यनुग्रहासंभवाच्च ॥ इति गाथार्थः ॥२०४॥

अत्र परः प्राह—

[1]जुज्जइ पत्तविसयया फरिसण-रसणे न [2]सोत्त-घाणेसु । गिण्हंति सविसयमिओ जं ताइं भिन्नदेसं पि ॥२०५॥

प्राप्तः स्पृष्टो विषयो ग्राह्यवस्तुरूपो ययोस्ते प्राप्तविषये तयोर्भावः प्राप्तविषयता सा युज्यते घटते । कस्मिन्?, इत्याह– स्पर्शनं च रसनं चेति समाहारद्वन्द्वस्तस्मिन्, स्पर्शन-रसनेन्द्रियद्वय इत्यर्थः । अनभिमतप्रतिषेधमाह– न श्रोत्र-घ्राणयोः प्राप्तविषयता युज्यते, यद् यस्मात् कारणादितो विवक्षितात् स्वदेशाद् भिन्नदेशमपि स्वविषयमेते गृह्णीतः, अस्याऽर्थस्याऽनुभवसिद्धत्वात् , न हि शब्दः कश्चिच्छ्रोत्रेन्द्रिये प्रविशन्नुपलभ्यते, नापि श्रोत्रेन्द्रियं शब्ददेशे गच्छत् समीक्ष्यते । न चाभ्यामन्येनाऽपि प्रकारेण विषयस्पर्शनं घटते, 'दूर एष कस्याऽपि शब्दः श्रूयते' इत्यादिजनोक्तिश्च श्रूयते । [3]कर्पूर-कुसुम-कुङ्कुमादीनां तु दूरस्थानामपि गन्धो निर्विवादमनुभूयते, दृश्यते च । तस्माच्छ्रोत्र-घ्राणयोः प्राप्तविषयता न युज्यत एव ॥ इति गाथार्थः ॥ २०५ ॥

अत्रोच्यते—

[4]पावंति सद्द-गन्धा ताइं गंतुं सयं न गिण्हन्ति । जं ते पोग्गलमइया सक्किरिया वाउवहणाओ ॥२०६॥

धूमो व्व, संहरणओ दाराणुविहाणओ विसेसेणं । तोयं व नियंबाइसु पडिघायाओ य वाउ व्व ॥२०७॥

व्याख्या– 'पावंति सद्द-गन्धा ताइं ति' शब्द-गन्धौ कर्तृभूतौ, ते श्रोत्र-घ्राणेन्द्रिये कर्मतापन्ने, अन्यत आगत्य प्राप्नुतः स्पृशत

१ युज्यते प्राप्तविषयता स्पर्शन-रसने न श्रोत्र-घ्राणयो. । गृह्णीतः स्वविषयमितो यत् ते भिन्नदेशमपि ॥२०५॥ २ घ छ ज 'सोय-घा'। ३ क ग 'कुङ्कुम-कुसुमादी'।
४ प्राप्नुत. शब्द-गन्धौ ते गत्वा स्वय न गृह्णीत. । यत् तौ पुद्गलमयौ सक्रियौ वायुवहनात् ॥ २०६ ॥
धूम इव, संहरणतो द्वारानुविधानतो विशेषेण । तोयमिव नितम्बादिषु प्रतिघाताच्च वायुरिव ॥ २०७ ॥

वा' इति मया प्रागेवोक्तम् , इत्याशङ्क्य स्वप्नेऽपि मनसः प्राप्यकारितामपाकर्तुमाह–

सिमिणो न तहारूवो वभिचाराओ अलायचक्कं व । वभिचारो य सदंसणमुवघाया-णुग्गहाभावा ॥२२४॥[1]

इह 'मदीयं मनोऽमुत्र गतम्' इत्यादिरूपो यः सुप्तैरुपलभ्यते स्वप्नः, स यथोपलभ्यते न तथारूप एव, स्वप्नोपलब्धमोदकस्तथाविधपरमाचार्यैरिव परैर्न सत्य एव मन्तव्य इत्यर्थः । कुतः ?, इत्याह– व्यभिचारात्– अन्यथात्वदर्शनात् । किंवद्– यथा न सत्यम् ?, इत्याह– अलातचक्रमिव- अलातमुल्मुकं तद्वृत्ताकारतया आशु भ्रम्यमाणं भ्रान्तिवशादचक्रमपि चक्रतया प्रतिभासमानं यथा न सत्यम् , अचक्ररूपताया एव तत्राऽवितथत्वात् , भ्रमणोपरमे स्वभावस्थस्य तथैव दर्शनात् ; एवं स्वप्नोऽपि न सत्यः, तदुपलब्धस्य मनोमेरुगमनादिकस्याऽर्थस्याऽसत्यत्वात् । तदसत्यत्वं च प्रबुद्धस्य स्वप्नोपरमे तदभावात् । तदभावश्च तदवस्थायां देहस्थस्यैव मनसोऽनुभूयमानत्वादिति ॥ आह– ननु स्वप्नावस्थायां मेर्वादौ गत्वा जाग्रदवस्थायां निवृत्तं तद् भविष्यति, इति 'व्यभिचारात्' इत्यसिद्धो हेतुः; इत्याशङ्क्याह– 'वभिचारो येत्यादि' यो मया व्यभिचारो हेतुत्वेनोक्तः, स चेत्थं सिद्धः । कथम् ?, इत्याह– 'सदंसणमिति' विभक्तिव्यत्ययात् स्वदर्शनादित्यर्थः, स्वस्याऽऽत्मनो मेर्वादिस्थितजिनगृहादिगतस्य दर्शनं स्वदर्शनं तस्मादिति ; एतदुक्तं भवति– यथा कदाचिदात्मीयं मनः स्वप्ने मेर्वादौ गतं कश्चित् पश्यति, तथा कोऽपि शरीरमात्मानमपि नन्दनतरुकुसुमावचयादि कुर्वन्तं तद्गतं पश्यति, न च तत् तथैव, इहस्थितैः सुप्तस्य तस्याऽत्रैव दर्शनात् , द्वयोश्चात्मनोरसंभवात् , कुसुमपरिमलाद्यध्वजनितपरिश्रमाद्यनुग्रहो-पघाताभावाच्च ॥ इति गाथार्थः ॥ २२४ ॥

एतदेव भावयन्नाह—

इह[2] पासुत्तो पेच्छइ सदेहमन्नत्थ, न य तओ तत्थ । न य तग्गयोवघाया-णुग्गहरूवं विबुद्धस्स ॥२२५॥

इह जगति प्रसुप्तः कश्चित् स्वदेहमन्यत्र नन्दनवनादौ गतं स्वप्ने पश्यति । न च तकोऽसौ देहस्तत्र नन्दनवनादावुपपद्यते, इहस्थितैरन्यैस्तस्याऽत्रैवोपलम्भात् , इत्याद्यनन्तरोक्तयुक्तेः । न च विबुद्धस्य सतस्तद्गतयोरन्यत्र गमनगतयोरन्यत्र गमनविषययोरनुग्रहोपघातयो रूपं कुसुमपरिमल-मार्गपरिश्रमादिकं स्वरूपमुपलभ्यते । तस्मात् स्वापावस्थायामपि नाऽन्यत्र मनसो गमनम् , देहगमनदर्शनेन व्यभिचारात् ॥ इति गाथार्थः ॥ २२५ ॥

१ स्वप्नो न तथारूपो व्यभिचारादलातचक्रमिव । व्यभिचारश्च स्वदर्शनादुपघाता-ऽनुग्रहाभावात् ॥२२४॥ २घ छ ज 'स्वप्नद' ।

३ इह प्रसुप्त. प्रेक्षते स्वदेहमन्यत्र न च सकस्तत्र । न च तद्गतोपघाता-नुग्रहरूप विबुद्धस्य ॥ २२५ ॥

तदेवं स्पर्शन-रसन-घ्राण-श्रोत्राणां प्राप्यकारित्वं समर्थितम्; सांप्रतं 'नयण–मणोवज्जिंदियभेयाओ' इत्यादिना सूचितं नयन-मनसोरप्राप्यकारित्वमभिधित्सुर्नयनस्य तावदाह—

[2]लोयणमपत्तविसयं मणो व्व जमणुग्गहाइसुण्णं ति । जल-सूरालोयाइसु दीसंति अणुग्गह-विघाया ॥२०९॥

अप्राप्तोऽसंबद्धोऽसंश्लिष्टो विषयो ग्राह्यवस्तुरूपो यस्य तदप्राप्तविषयं लोचनम्, अप्राप्यकारीत्यर्थः, इति प्रतिज्ञा। कुतः?, इत्याह– यद् यस्मादनुग्रहादिशून्यम्, आदिशब्दादुपघातपरिग्रहः- ग्राह्यवस्तुकृतानुग्रहो-पघातशून्यत्वादित्यर्थः, अयं च हेतुः। मनोवदिति दृष्टान्तः। यदि हि लोचनं ग्राह्यवस्तुना सह संबध्य तत्परिच्छेदं कुर्यात्, तदाऽग्न्यादिदर्शने स्पर्शनस्येव दाहाद्युपघातः स्यात्; कोमलतुल्याद्यवलोकने त्वनुग्रहो भवेत्, न चैवम्, तस्मादप्राप्यकारि लोचनमिति भावः। मनस्यप्राप्यकारित्वं परस्याऽसिद्धम्, इति कथं तस्य दृष्टान्तत्वेनोपन्यासः? इति चेत्। सत्यम्, किन्तु वक्ष्यमाणयुक्तिभिस्तत्र तत् सिद्धम्, इति निश्चित्य तस्येह दृष्टान्तत्वेन प्रदर्शनम्, इत्यदोषः। अथ परो हेतोरसिद्धतामुद्भावयन्नाह– 'जल-सूरेत्यादि' आदिशब्दः, आलोकशब्दश्च प्रत्येकमभिसंबध्यते। ततश्च जलादीनामालोके लोचनस्याऽनुग्रहो दृश्यते, सूरादीनां त्वालोके उपघात इति। अतो 'अनुग्रहादिशून्यत्वात्' इत्यसिद्धो हेतुरित्यर्थः। इदमुक्तं भवति– जल-घृत-नीलवसन-वनस्पती-न्दुमण्डलाद्यवलोकनेन नयनस्य परमाश्वासलक्षणोऽनुग्रहः समीक्ष्यते; सूर-सितभित्त्यादिदर्शने तु जलविगलनादिरूप उपघातः संदृश्यत इति। अतः किमुच्यते–'जमणुग्गहाइसुण्णं ति'?॥ इति गाथार्थः॥ २०९॥

अत्रोत्तरमाह–

[3]डज्झेज्ज पाविउं रविकराइणा फरिसणं व को दोसो?। मणेज्ज अणुग्गहं पिव उवघायाभावओ सोम्मं॥२१०॥

अयमत्र भावार्थः– अस्मदभिप्रायाऽनभिज्ञोऽप्रस्तुताभिधायी परः, न हि वयमेतद् ब्रूमो यदुत– चक्षुषः कुतोऽपि वस्तुनः सकाशात् कदाचित् सर्वथैवानुग्रहो-पाघातौ न भवतः। ततो रविकरादिना दाहाद्यात्मकेनोपघातवस्तुना परिच्छेदानन्तरं पश्चाच्चिरमवलोकयतः प्रतिपत्तुश्चक्षुः प्राप्य समासाद्य स्पर्शनेन्द्रियमिव दह्येत– दाहादिलक्षणस्तस्योपघातः क्रियेतेत्यर्थः। एतावता चाऽप्राप्यकारिचक्षुर्वादिनामस्माकं को दोषः? न कश्चित्, दृष्टस्य बाधितुमशक्यत्वादिति भावः। तथा यत् स्वरूपेणैव सौम्यं शीतलं शीतरश्मि वा जल-

१ गाथा २०४। २ लोचनमप्राप्तविषय मन इव यदनुग्रहादिशून्यामिति। जल-सूरालोकादिषु दृश्येते अनुग्रह-विघातौ॥ २०९॥

३ दह्येत प्राप्य रविकरादिना स्पर्शनमिव को दोषः?। मन्येताऽनुग्रहमिवोपघाताभावतः सौम्यम्॥ २१०॥

फलं तृप्त्यादिकं तत् पुनः स्वप्नविज्ञानाद् नास्त्येव, इति ब्रूमः । तदेव क्रियाफलं दर्शयति— 'तित्तीत्यादि' तत्र तृप्तिर्बुभुक्षाद्युपरमलक्षणा, मदः सुरापानादिजनितविक्रियारूपः, वधः शिरश्छेदादिसमुद्भूतपीडास्वरूपः, बन्धो निगडादिनियन्त्रणस्वभावः; आदिशब्दाज्जल-ज्वलनादिप्रवेशात् क्लेद-दाहादिपरिग्रहः । यदि ह्येतत् तृप्त्यादिकं भोजनादिक्रियाफलं स्वप्नविज्ञानाद् भवेत्, तदा विषयप्राप्तिरूपा प्राप्यकारिता मनसो युज्येत, न चैतदस्ति, तथोपलम्भस्यैवाभावात् ॥ इति गाथार्थः ॥२२७॥

अथ स्वप्नानुभूतक्रियाफलं जाग्रदवस्थायामपि परो दर्शयन्नाह—

[1]सिमिणे वि सुरयसंगमकिरियासंजणियवंजणविसग्गो । पडिबुद्धस्स वि कस्सइ दीसइ सिमिणाणुभूयफलं॥२२८॥

स्वप्नेऽपि सुरतार्था याऽसौ कामिनः कामिनीजनेन, कामिन्या वा कामिजनेन सह संगमक्रिया तत्संजनितो व्यञ्जनस्य शुक्र-पुद्गलसंघातस्य विसर्गो निसर्गः स्वप्नानुभूतसुरतसंगमक्रियाफलरूपः प्रतिबुद्धस्याऽपि कस्यचित् प्रत्यक्ष[2] एव दृश्यते, तद्दर्शनाच्च स्वप्ने योषित्संगमक्रियाऽनुमीयते, तथाहि— यत्र व्यञ्जनविसर्गस्तत्र योषित्संगमेनापि भवितव्यम्, यथा वासभवनादौ, तथा च स्वप्ने, ततोऽत्रापि योषित्प्राप्त्या भवितव्यम्; इति कथं न प्राप्तकारिता मनसः ? इति भावः ॥ इति गाथार्थः ॥ २२८ ॥

अथ योषित्संगमे साध्ये व्यञ्जनविसर्गहेतोरनैकान्तिकतामुपदर्शयन्नाह—

[3]सो अज्झवसाणकओ जागरओ वि जह तिव्वमोहस्स । तिव्वज्झवसाणाओ होइ विसग्गो तहा सुमिणे ॥२२९॥

स्वप्ने योऽसौ व्यञ्जनविसर्गः स तत्प्राप्तिमन्तरेणाऽपि— 'तां कामिनीमहं परिषजामि' इत्यादिस्वमत्युत्प्रेक्षिततीव्राध्यवसायकृतो वेदितव्यः । कस्येव ?, इत्याह— जाग्रतोऽपि तीव्रमोहस्य प्रबलवेदोदययुक्तस्य कामिनीं स्मरतश्चिन्तयतो दृढं ध्यायतः प्रत्यक्षामिव पश्यतो बुद्ध्या परिषजतः परिभुक्तामिव मन्यमानस्य यत् तीव्राध्यवसानं तस्माद् यथा व्यञ्जनविसर्गो भवति, तथा स्वप्नेऽपि नितम्बिनी-प्राप्तिमन्तरेणाऽपि स्वयमुत्प्रेक्षिततीव्राध्यवसानादसौ मन्तव्यः; अन्यथा तत्क्षण एव प्रबुद्धः सन्निहितां प्रियतमामुपलभेत, तत्कृतानि च स्वप्नोपलब्धानि नख-दन्त-पदादीनि पश्येत्, न चैवम्; तस्मादनैकान्तिकता हेतोः ॥ इति गाथार्थः ॥ २२९ ॥

किञ्च,

---

१ स्वप्नेऽपि सुरतसंगमक्रियासजनितव्यञ्जनविसर्ग । प्रतिबुद्धस्यापि कस्यचिद् दृश्यते स्वप्नानुभूतफलम् ॥ २२८ ॥ २ घ छ ज 'क्षत ए' ।

३ सोऽध्यवसानकृतो जाग्रतोऽपि यथा तीव्रमोहस्य । तीव्राध्यवसानाद् भवति विसर्गस्तथा स्वप्ने ॥ २२९ ॥

प्रोच्यते । सूक्ष्मत्वेन, तैजसत्वेन च तेषां वह्न्यादिभिर्दाहादयो न भवन्ति, रविरश्मिषु तथादर्शनात् ॥ तदेतदयुक्ततरम्, तेषां प्रत्यक्षादिप्रमाणाग्राह्यत्वेन श्रद्धातुमशक्यत्वात्, तथाविधानामप्यास्तित्वकल्पनेऽतिप्रसङ्गात् । वस्तुपरिच्छेदाऽन्यथानुपपत्तेस्ते सन्तीति विकल्प्यन्त इति चेत् । न, तानन्तरेणाऽपि तत्परिच्छेदोपपत्तेः, न हि मनसो रश्मयः सन्ति; न च तदप्राप्तं वस्तु न परिच्छिनत्ति, वक्ष्यमाणयुक्तितस्तस्य तत्सिद्धेः । न च रविरश्म्युदाहरणमात्रेणाऽचेतनानां नयनरश्मीनां वस्तुपरिच्छेदो युज्यते, नख-दन्त-भाल-तलादिगतशरीरश्मीनामपि स्पर्शविषयवस्तुपरिच्छेदप्रसङ्गात् । इत्यलं विस्तरेण ॥ इति गाथार्थः ॥ २११ ॥

तदेवमञ्जन-ज्वलनादिविषयविहितानुग्रहो-पघातशून्यत्वलक्षणहेतोरप्राप्यकारितां चक्षुषः प्रसाध्य हेत्वन्तरेणापि तस्य तां प्रसाधयितुमाह–

जइ पत्तं गेण्हेज्ज उ, तग्गयमंजण-रओ-मलाईयं । पेच्छेज्ज, जं न पासइ अपत्तकारिं तओ चक्खुं ॥२१२॥[1]

यदि तु प्राप्तं विषयं चक्षुर्गृह्णीयादित्युच्यते, तदा तद्गतमात्मसंबद्धमञ्जन-रजो-मल-शलाकादिकं पश्येदवगच्छेत्, तस्य निर्विवादमेव तत्प्राप्तत्वेनोपलब्धेः; यस्माच्च तद् न पश्यति, ततोऽप्राप्तकारि चक्षुरिति स्थितम् । यद्यप्राप्यकारि चक्षुः, तर्ह्यप्राप्तत्वाविशेषात् सर्वस्याऽप्यर्थस्याऽविशेषेण ग्राहकं स्यात्, न प्रतिनियतस्येति चेत् । न, ज्ञान-दर्शनावरणादेस्तत्प्रतिबन्धकस्य सद्भावात्, मनसा व्यभिचाराच्च, तथाहि–अप्राप्यकारित्वे सत्यपि नाऽविशेषेण सर्वार्थेषु मनः प्रवर्तते, इन्द्रियाद्यप्रकाशितेषु सर्वथाऽदृष्टा-ऽश्रुतार्थेषु तत्प्रवृत्त्यदर्शनात् । इत्यलं प्रसङ्गेन ॥ इति गाथार्थः ॥ २१२ ॥

तदेवं व्यवस्थापिता चक्षुषोऽप्राप्यकारिता । अथ दृष्टान्तीकृतस्य मनसस्तदसिद्धतां परो मन्येत, इत्यतस्तस्यापि तां सिसाधयिषुः पूर्वपक्षमुत्थापयन्नाह–

गंतुं नेएण मणो संबज्झइ जग्गओ व सिमिणे वा । सिद्धमिदं लोयम्मि वि अमुगत्थगओ मणो मे त्ति ॥२१३॥[2]

'गंतुं' देहाद् निर्गत्य ज्ञेयेन मेरुशिखरस्थजिनप्रतिमादिना संबध्यते संश्लिष्यते मनः । कस्यामवस्थायाम् ?, इत्याह–जाग्रतः, स्वप्ने वा । अनुभवसिद्धं चैतत्, न च ममैव, किन्तु सिद्धमिदं लोकेऽपि, यतस्तत्राऽप्येवं वक्तारो भवति– अमुत्र मे मनो गतमिति । अतः प्राप्यकारि मनः ॥ इति प्रेरकगाथार्थः ॥ २१३ ॥

१ यदि प्राप्तं गृह्णीयात्, तद्गतमञ्जन-रजो-मलादिकम् । पश्येत्, यद् न पश्यति अप्राप्तकारि ततश्चक्षुः ॥ २१२ ॥
२ गत्वा ज्ञेयेन मनः सबध्यते जाग्रतो वा स्वप्ने वा । सिद्धमिदं लोकेऽपि अमुकार्थगतं मनो मे इति ॥ २१३ ॥

यत्पुनः स्वप्ने जिनस्नात्रदर्शनादिकं विज्ञानं, यच्च स्वप्ने विबुद्धमात्रस्य च हर्षादिकं तत्फलं, तदनुभवादिसिद्धत्वात्को निवारयति ?, तथा, यो भविष्यत्फलापेक्षया स्वप्नस्य निमित्तभावः स्वप्ननिमित्तभावस्तं च को वा निवारयति ?, यच्च तस्मात् स्वप्ननिमित्तादवश्यंभावि भविष्यत्फलं तदपि को निवारयति ? । यदेव हि मेरुगमनक्रियादिकं युक्त्या नोपपद्यते तदेव निषिध्यते, न त्वेतानि विज्ञानादीनि, युक्त्युपपन्नत्वात् । न चैतैरभ्युपगतैरपि मनसः प्राप्यकारिता काचित् सिध्यतीति भावः ॥ इति गाथार्थः ॥ २३२ ॥

किमिति पुनः स्वप्नस्य निमित्तभावो न निवार्यते ?, इत्याशङ्क्याह–

[1]देहप्फुरणं सहसोइयं च सिमिणो य काइयाईणि । सगयाइं निमित्ताइं सुभा-सुभफलं निवेएंति ॥२३३॥

स्वस्मिन्नात्मनि गतानि स्थितानि स्वगतानि निमित्तानि, एतानि शास्त्रे, लोकेऽपि च प्रसिद्धानि भविष्यच्छुभा-शुभफलं निवेदयन्ति । कानि पुनस्तानि ?, इत्याह– कायिकम्, आदिशब्दाद् वाचिकं, मानसं च । एतान्येव क्रमेण दर्शयति– कायिकं बाह्वादौ देहस्फुरणं भविष्यच्छुभा-ऽशुभफलं निवेदयति, वाचिकं तु सहसोदितं– सहसाऽकस्मादेवोदितं सहसोदितं सहसैव [2]तत् किमपि वदत आगच्छति यत्, भविष्यच्छुभा-ऽशुभफलमावेदयति, मानसं तु निमित्तं स्वप्ने, इत्येतानि को निवारयति ?, लोक-शास्त्रप्रसिद्धस्य, युक्त्युपपन्नस्य च निषेद्धुमशक्यत्वात् ॥ इति गाथार्थः ॥ २३३ ॥

आह– ननु स्त्यानर्द्धिनिद्रोदये वर्तमानस्य द्विरददन्तोत्पाटनादिप्रवृत्तस्य स्वप्ने मनसः प्राप्यकारिता, तत्पूर्वको व्यञ्जनावग्रहश्च सिद्ध्यति, तथाहि– स तस्यामवस्थायां 'द्विरद[3]दन्तोत्पाटनादिकं सर्वमिदमहं स्वप्ने पश्यामि' इति मन्यते, इत्ययं स्वप्नः, मनोविकल्पपूर्विकां च दशनाद्युत्पाटनक्रियामसौ करोति । इति मनसः प्राप्यकारिता, तत्पूर्वकश्च मनसो व्यञ्जनावग्रहो भवत्येव, इत्याशङ्क्याह–

[4]सिमिणमिव मन्नमाणस्स थीणगिद्धिस्स वंजणोग्गहया । होज्ज व, न उ सा मणसो सा खलु सोइंदियाईणं ॥२३४॥

'होज्ज व' इत्यत्र वाशब्दः पुनरर्थे, तस्य च व्यवहितः संबन्धः कार्यः, तद्यथा– अनन्तरोक्तयुक्तिभ्यः स्वप्नावस्थायामपि विषयप्राप्त्यभावाद् मनसो व्यञ्जनावग्रहो नास्ति, स्त्यानगृद्धेः पुनः स्त्यानगृद्धिनिद्रोदये पुनर्वर्तमानस्य जन्तोरित्यर्थः, मांसभक्षण-दशनोत्पाटनादि कुर्वतो गाढनिद्रोदयपरवशीभूतत्वेन स्वप्नमिव मन्यमानस्य भवेद् व्यञ्जनावग्रहता-- स्याद् व्यञ्जनावग्रह इत्यर्थः, न वयं तत्र

१ देहस्फुरण सहसोदित च स्वप्नश्च कायिकादीनि । स्वगतानि निमित्तानि शुभा-ऽशुभफलं निवेदयन्ति ॥ २३३ ॥ २ क. ग 'तत कि' ।
३ घ छ ज. 'दशनोत्पा' ४ स्वप्नमिव मन्यमानस्य स्त्यानगृद्धेर्व्यञ्जनावग्रहता । भवेद् वा, न तु सा मनस. सा खलु श्रोत्रेन्द्रियादीनाम् ॥२३४॥

धर्मो न घटेरन्निति भावः; तथाहि– न कर्ताऽऽत्मा, सर्वगतत्वात्, आकाशवत् । आदिशब्दादभोक्ता, असंसारी, अज्ञः, न सुखी, न दुःखी आत्मा; तत एव हेतोः, तद्वदेव, इत्याद्यपि द्रष्टव्यम् ॥ आह परः– नन्वात्मनो निष्क्रियत्वात् कर्तृत्वाद्यभावः सांख्यानां न वाधायै कल्पते; तथा च तैरुक्तम्–"अकर्ता निर्गुणो भोक्ताऽऽत्मा" इत्यादि । एतदप्ययुक्तम्, तस्य निष्क्रियत्वे प्रत्यक्षादिप्रमाणोपलब्धभोक्तृत्वादिक्रियाविरोधप्रसङ्गात्। प्रकृतेरेव भोगादिकरणक्रिया, न पुरुषस्य, आदर्शप्रतिविम्बोदयन्यायेनैव तत्र क्रियाणामिष्टत्वादिति चेत् । एतदप्यसङ्गतम्, प्रकृतेरचेतनत्वात् "चैतन्यं पुरुषस्य स्वरूपम्" इति वचनात्; अचेतनस्य च भोगादिक्रियाऽयोगात्, अन्यथा घटादीनामपि तत्प्रसङ्गादिति । न केवलं कर्तृत्वाद्यभावतः सर्वगतत्वमात्मनो न युक्तम्, किन्तु सर्वा-ऽसर्वग्रहणप्रसङ्गतोऽपि च तदसङ्गतम् । इदमुक्तं भवति– आत्मनः समग्रत्रिभुवनगतत्वे, प्राप्यकारित्वेनाऽभ्युपगतस्य तदव्यतिरिक्तस्य भावमनसोऽपि सर्वगतत्वात् सर्वार्थप्राप्तेः सर्वग्रहणप्रसङ्गः; तथा च सर्वस्य सर्वज्ञत्वप्रसक्तिः । अथोक्तन्यायेन प्राप्तानपि सर्वार्थानभिहितदोषभयाद् न गृह्णातीत्युच्यते। तर्हि सर्वार्थाग्रहणप्रसङ्गः– ग्राह्यत्वेनेष्टानप्यर्थान् मा ग्रहीद् भावमनः, प्राप्तत्वाविशेषात्, अग्राह्यत्वेनेष्टार्थवदिति भावः। अथ प्राप्तत्वाविशिष्टत्वेऽपि कांश्चिदर्थानेतद् गृह्णाति, कांश्चिद् नेत्युच्यते । तर्हि व्यक्तमीश्वरचेष्टितम्; न चैतद् युक्तिविचारे क्वचिदप्युपयुज्यत इति । आदिशब्दात् सर्वगतत्व आत्मनोऽन्यदपि दूषणमभ्यूह्यम्, तथाहि– यथाऽङ्गुष्ठादौ दहनदाहादिवेदनायां मस्तकादिष्वप्यसावनुभूयते, तथा सर्वत्रापि तत्प्रसङ्गः, न च भवति, तथाऽनुभवाभावात्, अननुभूयमानाया अपि भावाभ्युपगमेऽतिप्रसङ्गात् । किञ्च, सर्वगतत्वे पुरुषस्य नानादेशगतस्रक्-चन्दना-ङ्गनादिसंस्पर्शेऽनवरतसुखासिकाप्रसङ्गः, वह्नि-शस्त्र-जलादिसंवन्धे तु निरन्तरदाह-पाटन-क्लेदनादिप्रसङ्गश्च । यत्रैव शरीरं तत्रैव सर्वमिदं भवति, नाऽन्यत्रेति चेत् । कुतः ?, इति वक्तव्यम् । आज्ञामात्रादेवेति चेत् । न, तस्येहाविषयत्वात् । सहकारिभावेन तस्य तदपेक्षणीयमिति चेत् । न, नित्यस्य सहकार्यपेक्षाऽयोगात्; तथाहि– अपेक्ष्यमाणेन सहकारिणा तस्य कश्चिद् विशेषः क्रियते, नवा ?। यदि क्रियते, स किमर्थान्तरभूतः, अनर्थान्तरभूतो वा ?। यद्याद्यः पक्षः, तर्हि तस्य न किञ्चित् कृतं स्यात् । अथापरः, तर्हि तत्करणे तदव्यतिरिक्तस्याऽऽत्मनोऽपि करणप्रसङ्गात्, कृतस्य चाऽनित्यत्वात् तस्याऽनित्यत्वप्रसङ्गः। अथ मा भूदेष दोष इति 'न क्रियते' इत्यभ्युपगम्यते। हन्त ! न तर्हि स तस्य सहकारी, विशेषाकरणात् । अथ विशेषमकुर्वन्नपि सहकारीष्यते । तर्हि सकलत्रैलोक्यस्यापि सहकारिताप्राप्तिः, विशेषाकरणस्य तुल्यत्वात्, इति[1] व्यर्था शरीरमात्रापेक्षा, इत्याद्यत्र वहु वक्तव्यम्, तत्तु नोच्यते, ग्रन्थगहनताप्रसङ्गात् । तस्माच्छरीरमात्रवृत्तिरेवाऽऽत्मा, न सर्वगत इति। अतस्तदव्यतिरिक्तस्य भावमनसो न



१ ग. 'ति दृथा श'।

सुरभिस्निग्धमधुरमनोज्ञान् मोदकानद्राक्षीत्। तेन चाध्वस्थितेन ते सुचिरमुद्वीक्षिताः। न च किमपि तन्मध्याल्लब्धम्। ततः सोऽप्यविच्छिन्नतदभिलाष एव सुष्वाप। स्त्यानर्द्धिनिद्रोदये च रजन्यां तद्गृहं गत्वा, स्फोटयित्वा कपाटानि, मोदकान् स्वेच्छया भक्षयित्वा, उद्धरितांस्तु पतद्ग्रहके क्षिप्त्वोपाश्रयमागत्य पतद्ग्रहकं स्थाने मुक्त्वा प्रसुप्तः। उत्थितेन च तथैवाऽऽलोचितं गुरूणाम्। ततः प्रत्युपेक्षणासमये भाजनादि[1] प्रत्युपेक्षमाणेन[2] साधुना पतद्ग्रहके दृष्टास्ते मोदकाः। ततो गुर्वादिभिर्ज्ञातोऽस्य स्त्यानर्द्धिनिद्रोदयः। तथैव च संघेन लिङ्गपाराञ्चिकं दत्त्वाऽयमपि विसर्जितः॥ २॥

दन्तोदाहरणं तृतीयमुच्यते, यथा– एकः साधुर्दैवा द्विरदेन खेदितः कथमपि पलाय्योपाश्रयमागतः। तं च दन्तिनं प्रत्यविच्छिन्नकोप एव निशि प्रसुप्तः। स्त्यानर्द्धिनिद्रोदयश्च जातः। तदुदये च वज्रऋषभनाराचसंहननवतः केशवार्धवलसंपन्नता समये निगद्यते। अतो नगरकपाटानि भङ्क्त्वा मध्ये गत्वा तं हस्तिनं व्यापाद्य दन्तद्वयमुत्पाट्य स्वोपाश्रयद्वारे क्षिप्त्वा सुप्तः। प्रबुद्धेन च 'स्वप्नोऽयम्' इत्यालोचितम्। दन्तदर्शने च ज्ञातः स्त्यानर्द्धिनिद्रोदयः। तथैव च लिङ्गं गृहीत्वा संघेन विसर्जितः॥ ३॥

फरुसगशब्देन समयप्रसिद्धया कुम्भकारोऽभिधीयते, तदुदाहरणं चतुर्थमुच्यते– एकः कुम्भकारो महति गच्छे प्रव्रजितः। अन्यदा च[3] सुप्तस्याऽस्य स्त्यानर्द्धिनिद्रोदयो जातः। ततोऽसौ पूर्वं यथा मृत्तिकापिण्डानत्रोटयत्, तथा तदभ्यासादेव साधूनां शिरांसि त्रोटयित्वा कबन्धैः सहैवैकान्ते उज्झाञ्चकार। ततः शेषाः केचन साधवोऽपसृताः। प्रभाते च ज्ञातं सम्यगेव सर्वं तच्चेष्टितम्। संघेन तथैव विसर्जितः॥ ४॥

अथ वटशाखाभञ्जनोदाहरणं पञ्चममुच्यते, यथा– कोऽपि साधुर्ग्रामान्तराद् गोचरचर्यां विधाय प्रतिनिवृत्तः। स चौष्ण्याऽभिहतो भृतभाजनस्तृषितो बुभुक्षितश्छायार्थी मार्गस्थो वटवृक्षस्याऽधस्तादागच्छन्नतिनीचैर्वर्तिन्या तच्छाखया मस्तके घट्टितः, गाढं च परितापितः, अव्यवच्छिन्नकोपश्च प्रसुप्तः। स्त्यानर्द्धिनिद्रोदये रात्रौ गत्वा वटशाखां भङ्क्त्वोपाश्रयद्वारे क्षिप्त्वा पुनः प्रसुप्तः। 'स्वप्नो दृष्टः' इत्यालोचिते, स्त्यानर्ध्युदये च ज्ञाते लिङ्गापनयनतः संघेन विसर्जित इति॥५॥ एतान्युदाहरणानि विशेषतो निशीथादवसेयानि॥ इति गाथार्थः॥ २३५॥

तदेवं '[4]गंतुं नेएण मणो संवज्झइ जग्गओ व सिमिणे वा' इत्यादिपूर्वपक्षगाथायाः प्रथमार्धमपाकृतम्। सांप्रतं 'सिद्धमियं लोयम्मि वि अमुग्गत्थगओ मणो मे त्ति' एतदुत्तरार्धमपाकुर्वन्नाह—

1 घ 'नानि प्र'। 2 ग. घ. छ. जु. न तेन सा'। 3 ज. 'च प्रसुप्तस्य स्त्या' घ छ. 'च सुप्तस्य स्त्या'। 4 गाथा २१३।

इत्यादिना मनसोऽप्राप्यकारितायाम् 'अनुग्रहो-पघाताभावात्' इति यः पूर्वं हेतुरुक्तः, तस्य परोऽसिद्धिं समुद्भावयन्नाह—

[1]नज्जइ उवघाओ से दोबल्लो-रक्खयाइलिंगेहिं । जमणुग्गहो य हरिसाइएहिं तो सो उभयधम्मो ॥२१९॥

इह मृत-नष्टादिकं वस्तु चिन्तयतः, अत्यार्त-रौद्रध्यानप्रवृत्तस्य च 'से' तस्य मनस उपघातो ज्ञायतेऽनुमीयते । कैः ?, इत्याह— दौर्बल्यो-रःक्षतादिलिङ्गैः— दौर्बल्यं देहापचयरूपम्, उरःक्षतमुरोविघातः, हृदयबाधेति यावत्; आदिशब्दाद् वातप्रकोप-वैकल्यादिपरिग्रहः। अनुग्रहश्च— यद्यस्मात् तस्येष्टसंगम-विभवलाभादिकं वस्तु चिन्तयतो हर्षादिभिरनुमीयते । तत्र वदनविकाश-रोमाञ्चोद्गमादिचिह्नगम्यो मानसः प्रीतिविशेषो हर्षः, आदिशब्दाद् देहोपचयो-त्साहादिपरिग्रहः । तत् तस्मात्कारणात् तद् मन उपघाता-नुग्रहलक्षणोभयधर्मकमेव । अयमत्र भावार्थः— यः शोकाद्यतिशयाद् देहोपचयरूपः, आर्तादिध्यानातिशयाद् हृद्रोगादिस्वरूपश्चोपघातः; यश्च पुत्रजन्माद्यभीष्टप्राप्तिचिन्तासमुद्भूतहर्षादिरनुग्रहः, स जीवस्य भवन्नपि चिन्त्यमानविषयाद् मनसः किल परो मन्यते, तस्य जीवात् कथञ्चिदव्यतिरिक्तत्वात् ।, ततश्चैवं मनसोऽनुग्रहो-पघातयुक्तत्वात् तच्छून्यत्वलक्षणो हेतुरसिद्धः ॥ इति गाथार्थः ॥ २१९ ॥

तदेतत् सर्वं परस्याऽसंबद्धभाषितमेवेति दर्शयन्नाह—

[2]जइ दव्वमणोऽतिबली पीलिज्जा हिदिनिरुद्धवाउ व्व । तयणुग्गहेण हरिसादउ व्व नेयस्स किं तत्थ?॥२२०॥

यदि नाम द्रव्यमनो मनस्त्वपरिणतानिष्टपुद्गलसमूहरूपमतिशयबलिष्ठमिति कृत्वा शोकादिसमुद्भूतपीडया जीवं कर्मतापन्नं देहदौर्बल्याद्यापादनेन पीडयेत्, हृन्निरुद्धवायुवत्— हृदयदेशाश्रितनिविडमरुद्ग्रन्थिवदित्यर्थः । यदि च तस्यैव द्रव्यमनसो मनस्त्वपरिणतेष्टपुद्गलसंघातस्वरूपस्याऽनुग्रहेण जीवस्य हर्षादयो भवेयुः, तर्हि ज्ञेयस्य चिन्तनीयमेर्वादेर्मनसोऽनुग्रहो-पघातकरणे किमायातम् ?। इदमत्र हृदयम्— मनस्त्वपरिणतानिष्टपुद्गलनिचयरूपं द्रव्यमनोऽनिष्टचिन्ताप्रवर्तनेन जीवस्य देहदौर्बल्याद्यापत्त्या हृन्निरुद्धवायुवदुपघातं जनयति, तदेव च शुभपुद्गलपिण्डरूपं तस्याऽनुकूलचिन्ताजनकत्वेन हर्षाद्याभिनिर्वृत्त्या भेषजवदनुग्रहं विधत्त इति । अतो जीवस्यैतावनुग्रहो पघातौ द्रव्यमनः करोति, न तु मन्यमानमेर्वादिकं ज्ञेयं मनसः किमप्युपकल्पयति । अतो द्रव्यमनसः सकाशादात्मन एवानुग्रहो-पघातसद्भावात्, मनसस्तु ज्ञेयात् तद्गन्धस्याऽप्यभावाद् मस्तकाघातविह्वलीभूतेनेवाऽसंबद्धभाषिणा परेण हेतोरसिद्धिरुद्भाविता ॥ इति गाथार्थः ॥ २२० ॥

१ ज्ञायते उपघातस्तस्य दौर्बल्यो-र क्षतादिलिङ्गैः । यदनुग्रहश्च हर्षादिभिस्ततः स उभयधर्मा ॥ २१९ ॥
२ यदि द्रव्यमनोऽतिबलि पीडयेद् हृन्निरुद्धवायुरिव । तदनुग्रहेण हर्षादय इव ज्ञेयस्य किं तत्र ? ॥ २२० ॥

देहादणिग्गयस्स[1] वि सकायहिययाइयं विचिंतयओ । नेयस्स वि संबंधे वंजणमेवं पि से जुत्तं ॥ २३९ ॥

देहाच्छरीरादनिर्गतस्यापि मेर्वाद्यर्थमगतस्यापि स्वस्थानस्थितस्यापीत्यर्थः, स्वकाये, स्वकायस्य वा हृदयादिकमतीव संनिहितत्वादतिसंवद्धं विचिन्तयंतो मनसो योऽसौ ज्ञेयेन स्वकायस्थितहृदयादिना संवन्धस्तत्प्राप्तिलक्षणस्तस्मिन्नपि ज्ञेयसंवन्धे, न केवलं 'विसयमसंपत्तस्स[2] वि संविज्जइ' इत्याद्यनन्तरसमर्थितन्यायेन, इत्यपिशब्दार्थः । किम् ?, इत्याह– व्यञ्जनं व्यञ्जनावग्रहः 'से' तस्य मनसो युक्तं घटमानकं, एवमप्यनयाऽपि प्राप्यकारित्वभङ्ग्या ॥ इति गाथार्थः ॥ २३९ ॥

तदेवं प्रकारद्वयेन मनसः परेण व्यञ्जनावग्रहे समर्थिते, आचार्यः प्रथमपक्षे तावत् प्रतिविधानमाह–

गिज्झस्स[3] वंजणाणं जं गहणं वंजणोग्गहो स मओ । गहणं मणो, न गिज्झं को भागो वंजणे तस्स? ॥ २४० ॥

इह 'विसयमसंपत्तस्स वि संविज्जइ' इत्यादि यत्परेणोक्तम्, तद् निजाऽसत्पक्ष[4]-परकीयसत्पक्षविषयप्रसर्पन्महाराग-द्वेषग्रहग्रस्तचेतोविह्वलतासूचकमेवावगन्तव्यम्, असंवद्धत्वात्, तथाहि– श्रोत्र-घ्राण-रसन-स्पर्शनेन्द्रियचतुष्टयग्राह्यस्य शब्द-गन्धादिविषयस्य संबन्धिनां व्यञ्जनानां तद्रूपपरिणतद्रव्याणां यद् ग्रहणमुपादानं स व्यञ्जनावग्रहोऽस्माकं संमत इति परोऽपि जानात्येव, प्रागसकृत्प्रतिपादितत्वादिति । मनोद्रव्याण्यपि तर्हि मनसो ग्राह्याणि भविष्यन्ति, ततस्तस्याऽपि श्रोत्रादेरिव व्यञ्जनावग्रहो भविष्यति; अतः किमसंवद्धम् ?, इत्याह– 'गहणं मणो न गिज्झं ति' चिन्ताद्रव्यरूपं मनो न ग्राह्यम्, किन्तु ग्रहणं गृह्यतेऽवगम्यते शब्दादिरर्थोऽनेनेति ग्रहणम्– अर्थपरिच्छेदे करणमित्यर्थः । ग्राह्यं तु मेरुशिखरादिकं मनसः सुप्रतीतमेव । अतः को भागः कोऽवसरस्तस्य करणभूतस्य मनोद्रव्यराशेर्व्यञ्जने व्यञ्जनावग्रहेऽधिकृते ?, न कोऽपीत्यर्थः । ग्राह्यवस्तुग्रहणे हि व्यञ्जनावग्रहो भवति । न च मनोद्रव्याणि ग्राह्यरूपतया गृह्यन्ते, किन्तु करणरूपतया, इत्यसंवद्धमेव परोक्तम्[5] ॥ इति गाथार्थः ॥ २४० ॥

या च 'देहादणिग्गयस्स[6] वि सकायहिययाइयं' इत्यादिना मनसः प्राप्यकारिता प्रोक्ता, साऽपि न युक्ता, स्वकायहृदयादिको हि मनसः स्वदेश एव, यच्च यस्मिन् देशेऽवतिष्ठते, तत् तेन संवद्धमेव भवति, कस्तत्र विवादः ?, किं हि नाम तद् वस्त्वस्ति, यदात्मदेशेनाऽसंवद्धम् ? । एवं हि प्राप्यकारितायामिष्यमाणायां सर्वमपि ज्ञानं प्राप्यकार्येव, सर्वस्याऽपि तस्य जीवेन संवद्धत्वात् । तस्मात्

१ देहादनिर्गतस्याऽपि स्वकायहृदयादिकं विचिन्तयत । ज्ञेयस्याऽपि सवन्धे व्यञ्जनमेवमपि तस्य युक्तम् ॥ २३९ ॥ २ गाथा २३७ ।
३ ग्राह्यस्य व्यञ्जनानां यद् ग्रहणं व्यञ्जनावग्रह स मत. । ग्रहणं मन,, न ग्राह्य को भागो व्यञ्जने तस्य ?॥२४०॥ ४ घ छ.'क्षवि'। ५ क.ग.ज. 'परेणोक्त'। ६ गाथा२३९।

सो पुण सयमुवघायण-मणुग्गहं वा करेज्ज को दोसो ? । जमणुग्गहो-वघाया जीवाणं पोग्गलेहिंतो ॥२२३॥

'से' इति प्राकृतत्वात् पुंलिङ्गनिर्देशः, एवं पूर्वमुत्तरत्राऽपि च यथासंभवं द्रष्टव्यम् । तद् द्रव्यमनः पुनः स्वयमात्मना शुभा-ऽशुभकर्मवशत इष्टा-ऽनिष्टपुद्गलसंघातघटितत्वादनुग्रहो-पघातौ मन्तुः कुर्यात्, को दोषः ?– न वयं तत्र निषेद्धारः, ज्ञेयकृतयोरेव तस्य तयोरस्माभिर्निषिध्यमानत्वादिति भावः । जीवस्याऽपि तौ द्रव्यमनःकृतौ किमिति न निषिध्येते ?, इत्याह– 'जमणुग्गहो इत्यादि' यद्यस्मात्कारणादनुग्रहो-पघातौ जीवानां पुद्गलेभ्य इति युक्तमेव, इष्टा-ऽनिष्टशब्द-रूप-रस-गन्ध-स्पर्शोपभोगादिषु तथादर्शनेनाऽस्याऽर्थस्य निषेद्धुमशक्यत्वादित्यर्थः ॥ आह– ननु शब्दादय इष्टा-ऽनिष्टपुद्गलात्मका इति प्रत्यक्षादिप्रमाणसिद्धत्वात् प्रतीमः, द्रव्यमनस्तु यदिदं किमपि भवद्भिरुद्घुष्यते, तदिष्टा-ऽनिष्टपुद्गलमयमस्तीति कथं श्रद्दध्मः ? इति । अत्रोच्यते- योगिनस्तावदिदं प्रत्यक्षत एव पश्यन्ति; अर्वाग्दर्शिनस्त्वनुमानात्, तथाहि– यदन्तरेण यद् नोपपद्यते तद्दर्शनात् तदस्तीति प्रतिपत्तव्यम्, यथा स्फोटदर्शनाद् दहनस्य दाहिका शक्तिः, नोपपद्यते चेष्टा-ऽनिष्टपुद्गलसंघातात्मकद्रव्यमनोव्यतिरेकेण जन्तूनामिष्टा-ऽनिष्टवस्तुचिन्तने समुपलब्धौ वदनप्रसन्नता-देहदौर्वल्याद्यनुग्रहो-पघातौ, ततस्तदन्यथानुपपत्तेरस्ति यथोक्तरूपं द्रव्यमनः । चिन्तनीयवस्तुकृतावेतौ भविष्यत इति चेत् । न, जल-ज्वलनौदनादिचिन्तने क्लेद-दाह-बुभुक्षोपशमादिप्रसङ्गादिति । " चिन्तया वत्स ! ते जातं शरीरकमिदं कृशम् " इत्यादिलोकोक्तेश्चिन्ताज्ञानकृतौ ताविति चेत् । तदप्ययुक्तम्, तस्याऽमूर्तत्वात्, अमूर्तस्य च कर्तृत्वायोगात्, आकाशवत्, इत्युक्तत्वात्; " चिन्तया वत्स ! " इत्यादिलोकोक्तेश्च कार्ये कारणशक्त्यध्यारोपेणौपचारिकत्वात् । खेदादेस्तदुद्भूतिरिति चेत् । कोऽयं नाम खेदादिः ? । किं तान्येव मनोद्रव्याणि, चिन्तादिज्ञानं वा ? । आद्यपक्षे, सिद्धसाध्यता । द्वितीयपक्षस्तु विहितोत्तर एव । न च निर्हेतुकावेतौ, सर्वदा भवना-ऽभवनप्रसङ्गात्,

" नित्य सत्त्वमसत्त्व वा हेतोरन्यानपेक्षणात् । अपेक्षातो हि भावानां कादाचित्कत्वसंभवः " ॥१॥ इति ।

न च जीवादिक एवाऽन्यः कोऽपि तयोर्हेतुः, तस्य सदावस्थितत्वेन तत एव सर्वदा भवना-ऽभवनप्रसङ्गात् । एवमन्यदपि सुधिया स्वबुद्ध्या समाधानमिह वाच्यम्, इत्यलमतिविस्तरेण । तस्मादुक्तयुक्तिसिद्धं पुद्गलमयं द्रव्यमनो मन्तुः स्वयं कुर्यादनुग्रहो-पघातौ, ज्ञेयकृतौ तु तौ मनसो न स्त एव, इति न तत्प्राप्यकारि ॥ इति गाथार्थः ॥ २२३ ॥

आह–ननु जाग्रदवस्थायां मा भूद् मनसो विषयप्राप्तिः, स्वापावस्थायां तु भवत्वसौ, अनुभवसिद्धत्वात्, तथाहि– 'अमुत्र मेरुशिखरादिगतजिनायतनादौ मदीयं मनो गतम्' इति सुप्तैः स्वप्नेऽनुभूयत एव, तथा च '[3]गंतुं नेएण मणो संवज्झइ जग्गओ व सिमिणे



१ तत्पुनः स्वयमुपघाता-नुग्रहौ वा कुर्यात् को दोषः ? । यदनुग्रहो-पघातौ जीवानां पुद्गलेभ्य. ॥ २२३ ॥ २ चिन्ताज्ञानस्य । ३ गाथा २१३ ।

नास्ति, अतो न मनसो व्यञ्जनावग्रहसंभव इति भावः ॥ आह– नन्वपवरकादिव्यवस्थितो यदेन्द्रियव्यापाररहितः केवलेन मनसाऽर्थान् पर्यालोचयति, तदा मा भूद् मनसो व्यञ्जनावग्रहः, यस्तु श्रोत्रादीन्द्रियव्यापारे मनसोऽपि व्यापारस्तत्र प्रथममनुपलब्धिकालस्य भवद्भिरपीष्यमाणत्वात् किमिति[1] व्यञ्जनाद् मनसो व्यञ्जनावग्रहो नेष्यते ?, इत्याशङ्क्याह– 'जं चिंदिओवओगे वि वंजणावग्गहेऽतीते होइ मणोवावारो त्ति' यच्च यस्माच्च कारणादिन्द्रियस्य श्रोत्रादेरुपयोगेऽपि शब्दाद्यर्थग्रहणकालेऽपीत्यर्थः । किम् ?, इत्याह– व्यञ्जनावग्रहेऽतीते सति मनसो व्यापारो भवति । इदमुक्तं भवति– न केवलं मनसः केवलावस्थायां प्रथममर्थावग्रह एव व्यापारः, किन्तु श्रोत्रादीन्द्रियोपयोगकालेऽपि तथैव, तथाहि– श्रोत्रादीन्द्रियोपयोगकाले व्याप्रियते मनः, केवलमर्थावग्रहादेवाऽऽरभ्य, न तु व्यञ्जनावग्रहकाले । अर्थाऽनवबोधस्वरूपो हि व्यञ्जनावग्रहः, तदवबोधकारणमात्रत्वात् तस्य, मनस्त्वर्थावबोधरूपमेव, मनुतेऽर्थान्, मन्यन्तेऽर्था अनेनेति वा मन इति सान्वर्थाभिधानाभिधेयत्वात् । किञ्च, यदि व्यञ्जनावग्रहकाले मनसो व्यापारः स्यात् तदा तस्याऽपि व्यञ्जनावग्रहसद्भावादष्टाविंशतिभेदभिन्नता मतेर्विशीर्येत । तस्मात् प्रथमसमयादेव तस्याऽर्थग्रहणमेष्टव्यम् । अन्यथा किमत्र बाधकम् ?, इत्याह– 'तदण्णहा न प्पवत्तेज्ज त्ति' यदि हि प्रथमसमयादेव मनसोऽर्थग्रहणं[2] नेष्यते तदा तस्य मनस्त्वेन प्रवृत्तिरेव न स्यादनुत्पत्तिरेव स्यादित्यर्थः । यथा हि स्वाभिधेयानर्थान् भाषमाणैव भाषा भवति, नान्यथा; यथा च स्वविषयभूतानर्थानवबुध्यमानान्येवाऽवध्यादिज्ञानान्यात्मलाभं लभन्ते, अन्यथा तेषाममवृत्तिरेव स्यादिति; एवं स्वविषयभूतानर्थान् प्रथमसमयादारभ्य मन्वानमेव मनो भवति, अन्यथाऽवध्यादिवत् तस्य प्रवृत्तिरेव न स्यात्[3] । तस्मात् तस्याऽनुपलब्धिकालो नास्ति, तथा च न व्यञ्जनावग्रह इति स्थितम् । न चैतत् स्वमनीषिकया युक्तिमात्रमुच्यते, आगमेऽपि व्यञ्जनावग्रहेऽतीत एवेन्द्रियोपयोगे मनसो व्यापाराभिधानात्, तथा चोक्तं कल्पभाष्ये–

" अत्थाणंतरचारी चित्त नियमं तिकालविसयं ति । अत्थे उ पडुप्पण्णे विणिओग इंदियं लहइ " ॥ १ ॥

अत्र व्याख्या– अर्थे शब्दादौ श्रोत्रादीन्द्रियव्यञ्जनावग्रहेण गृहीतेऽनन्तरमर्थावग्रहादारभ्य चरति प्रवर्तते, इत्यर्थानन्तरचारि मनः, न तु व्यञ्जनावग्रहकाले तस्य प्रवृत्तिरिति भावः, त्रिकालविषयं चित्तं, सांप्रतकालविषयं त्विन्द्रियम् । इत्यलं विस्तरेण ॥ इति गाथार्थः ॥ २४२ ॥ २४३ ॥

अमुमेव मनसोऽनुपलब्धिकालासंभवं सयुक्तिकं भावयन्नाह–

१ क ग 'ति म'। २ क. ग 'ऽर्थाग्रहो न'। ३ क ग 'स्यान त'। ४ क ग 'लोऽस्ति'।
५ अर्थानन्तरचारि चित्तं नियतं त्रिकालविषयमिति । अर्थे तु प्रत्युत्पन्ने विनियोगमिन्द्रियं लभते ॥ १ ॥

अत्र विबुद्धस्य सतस्तद्गतानुग्रहो-पघातानुपलम्भादित्यस्य हेतोरसिद्धतोद्भावनार्थं परः प्राह—

[1]दीसंति कासइ फुडं हरिस-विसादादयो विबुद्धस्स । सिमिणाणुभूयसुह-दुक्ख-रागदोसाइलिंगाइं ॥२२६॥

इह कस्यचित् पुरुषस्य स्वप्नोपलम्भानन्तरं विबुद्धस्य सतः स्फुटं व्यक्तं दृश्यन्ते हर्ष-विषादादयः, आदिशब्दादुन्माद-माध्यस्थ्यादि-परिग्रहः। कथंभूता ये हर्ष-विषादादयः ? इत्याह—'सिमिणेत्यादि' स्वप्ने जिनस्नात्रदर्शनादौ यदनुभूतं सुखं, समीहिताऽर्थाऽलाभादौ यदनुभूतं दुःखं, तयोर्विषये यथासंख्यं यौ राग-द्वेषौ तयोर्लिङ्गानि चिह्नानि— हर्षः स्वप्नानुभूतसुखं रागस्य लिङ्गं, विषादस्तु तदनुभूत-दुःखद्वेषस्य लिङ्गमिति भावः। तत्र—

"स्वप्ने दृष्टो मयाद्य त्रिभुवनमहितः पार्श्वनाथः शिशुत्वे द्वात्रिंशद्भिः सुरेन्द्रैरहमहमिकया स्नाप्यमानः सुमेरौ ।
तस्माद् मत्तोऽपि धन्यं नयनयुगमिदं येन साक्षात् स दृष्टो द्रष्टव्यो, यो महीयान् परिहरति भयं देहिनां संस्मृतोऽपि" ॥ १ ॥

इत्यादिस्वप्नानुभूतसुखरागलिङ्गं हर्षः, तथा—

"प्राकारत्रयतुङ्गतोरणमणिप्रेङ्खत्प्रभा[2]व्याहता नष्टाः क्वापि रवेः करा द्रुततरं यस्यां प्रचण्डा अपि ।
तां त्रैलोक्यगुरोः सुरेश्वरवतीमास्थायिकामेदिनीं हा ! यावत् प्रविशामि तावदधमा निद्रा क्षयं मे गता" ॥ १ ॥

इत्यादिकः स्वप्नानुभूतदुःखद्वेषलिङ्गं विषादः, अत्यन्तकामोद्रेकादिलिङ्गमुन्मादः, मुनेस्तु माध्यस्थ्यम्; इति "विबुद्धस्याऽनुग्रहो-पघातानुपलम्भात्" इत्यसिद्धो हेतुः ॥ इति गाथार्थः ॥२२६॥

अत्रोत्तरमाह—

[4]न सिमिणविण्णाणाओ हरिस-विसासादयो विरुज्झंति। किरियाफलं तु तित्ती-मद-वह-बंधादओ नत्थि ॥२२७॥

स्वप्ने सुखानुभवादिविषयं विज्ञानं स्वप्नविज्ञानं तस्मादुत्पद्यमाना हर्ष-विषादादयो न विरुध्यन्ते- न तान् वयं निवारयामः, जाग्रद-वस्थाविज्ञानहर्षादिवत्, तथाहि- दृश्यन्ते जाग्रदवस्थायां केचित् स्वप्नुत्प्रेक्षितसुखानुभवादिज्ञानाद् हृष्यन्तः, द्विषन्तो वा । ततश्च दृष्टस्य निषेद्धुमशक्यत्वात् स्वप्नविज्ञानादपि नैतन्निषेधं ब्रूमः। तर्हि किमुच्यते भवद्भिः ?, इत्याह—'किरियेत्यादि' क्रिया भोजनादिका तस्याः

१ दृश्यन्ते कस्यचित् स्फुट हर्ष-विषादादयो विबुद्धस्य । स्वप्नानुभूतसुख-दुःख-राग-दोषादिलिङ्गानि ॥ २२६ ॥ २ घ छ क 'यानपह' ।
३ ग. ज. 'भाभ्याह' ४ न स्वप्नविज्ञानाद् हर्ष-विषादादयो विरुध्यन्ते । क्रियाफल तु तृप्ति-मद-वध-बन्धादयो न सन्ति ॥२२७॥

विषयस्य ग्राह्यस्य परिमाणमनियतमपरिमितं प्राप्नोति तस्य चक्षुष इति प्रतिज्ञा। हेतुमाह– अप्राप्तविषयमिति कृत्वा। मनस इवेति दृष्टान्तः। प्रयोगः– यदप्राप्तमपि विषयं परिच्छिनत्ति, न तस्य तत्परिमाणं युक्तं, यथा मनसः, अप्राप्तं च विषयमवगच्छति चक्षुः, तस्माद् न तस्य तत्परिमाणं युक्तमिति। अथेह प्रयोगे दृष्टान्तस्य साध्यवैकल्यं सूरिरुपदर्शयति- मनसो दृष्टान्तीकृतस्याऽप्राप्यकारिणो विषयानियमो 'अस्त्येव' इति शेषः। कुतः ?, इत्याह– यतः 'स त्ति' तदपि मनः सर्वेष्वप्यर्थेषु न क्रामति न प्रसरति॥ इति गाथार्थः॥ २४६॥

तथाहि—

अत्थग्गहणेसु मुज्झइ सन्तेसु वि केवलाइगम्मेसु। तं किंकयमग्गहणं अपत्तकारित्तसामन्ने ?॥ २४७॥

अर्था एव मतेर्दुष्प्रवेशत्वाद् गहनानि अर्थगहनानि तेष्वनन्तेषु सत्स्वपि विद्यमानेष्वपि। कथंभूतेषु ? इत्याह– केवलं केवलज्ञानमादिर्येषामवधिज्ञाना-ऽऽगमादीनां तानि केवलादीनि तैर्गम्यन्ते ज्ञायन्ते केवलादिगम्यानि तेषु। एवंभूतेष्वर्थगहनेषु सत्स्वपि कस्यचिद् मन्दमतेर्जन्तोर्मनो मुह्यति कुण्ठीभवति तदवगमाय न प्रभवति– तान् गहनभूतान् केवलादिगम्यान् सतोऽप्यर्थान् न गृह्णातीति तात्पर्यम्। तदत्राहमपि भवन्तं पृच्छामि– तदेतद् मनसोऽग्रहणमर्थानां किंकृतं किंनिबन्धनम् ?, अप्राप्तकारित्वसामान्येऽप्राप्तकारित्वे तुल्येऽपीत्यर्थः। तस्माद् मनसोऽपि विषयपरिमाणसद्भावादनन्तरगाथोक्तः साध्यविकलो दृष्टान्त इति स्थितम्॥ इति गाथार्थः॥२४७॥

तत् किंकृतमग्रहणमर्थानाम् ?, इत्यत्र पराभिप्रायमाशङ्कमानः प्राह–

कम्मोदयओ व्व सहावओ व्व नणु लोयणे वि तं तुल्लं। तुल्लो व उवालंभो एसो संपत्तविसए वि॥२४८॥

यत् केषांचिदर्थानां मनसोऽग्रहणं तत् 'तदावरणकर्मोदयाद् वा, स्वभावाद् वा' इति परो ब्रूयात्। नन्वेतल्लोचनेऽपि तुल्यम्, यतस्तदप्यप्राप्यकारित्वे तुल्येऽपि कर्मोदयात्, तत्स्वाभाव्याद् वा कांश्चिदेवाऽर्थान् गृह्णाति न सर्वानिति। तदेवं नयनस्याऽप्राप्यकारित्वेऽतिप्रसङ्गलक्षणं प्राप्तकारिवादिना यद् दूषणमुक्तं तत्परिहृतम्। अथवा यो नयन-मनसोः प्राप्यकारित्वमभ्युपगच्छति, तस्याऽप्येतद् दूषणमापतत्येव, यच्च द्वयोर्दूषणं न तदेकस्य दातुमुचितम्, इत्येतच्चेतासि निधाय प्राह– 'तुल्लो वेत्यादि' वेत्यथवा, एषोऽतिप्रसङ्गलक्षण उपालम्भस्तुल्यः समानः। क्व ?, इत्याह– संप्राप्तविषयत्वेऽपि नयन-मनसोरभ्युपगम्यमाने, तथाहि– अत्रापि शक्यते वक्तुम्– यदि

१ घ. ज 'सोऽपि ह'। २ अर्थगहनेषु मुह्यति सत्स्वपि केवलादिगम्येषु। तत् किंकृतमग्रहणमप्राप्तकारित्वसामान्ये ?॥ २४७॥
३ कर्मोदयतो वा स्वभावतो वा लोचनेऽपि ननु तत् तुल्यम्। तुल्यो वोपालम्भ एष सम्प्राप्तविषयेऽपि॥ २४८॥

सुरयपडिवत्ति-रइसुह-गब्भाहाणाइँ इहरहा होज्जा । सुमिणसमागमजुवईए, न य जओ ताइं तो विफला ॥२३०॥

इतरथा– स्वप्ने सुरतक्रियया योऽसौ व्यञ्जनविसर्गः स यदि योषित्प्राप्त्यव्यभिचारी स्यात् , तदा सुरतोपभुक्तयुवतेरपि 'सुरतक्रियाऽमुकेन सह मयाऽनुभूता' इत्येवंरूपा सुरतप्रतिपत्तिः स्यात् , तथा, रतिसुखं , गर्भाऽऽधानादिकं च भवेत् ; आदिशब्दादुदरवृद्धि-दोहद-पुत्रजन्मादिपरिग्रहः । यतश्च नैतानि तस्याः समुपलभ्यन्ते, अतो विफलैव सा स्वप्नसुरतक्रिया, विशिष्टस्य परिभुक्तकामिनीगर्भाधानादिफलस्याभावात् । इदमुक्तं भवति– न स्वप्ने योषित्प्राप्तिपूर्विका विशिष्टा सुरतक्रिया, नापि विशिष्टं गर्भाऽऽधानादिकं तत्फलं; या तु तीव्रवेदोदयाविर्भूताऽध्यवसायमात्रकृता निधुवनाक्रिया सा व्यञ्जनविसर्गमात्ररूपेणैव फलेन फलवती, न विशिष्टेन, इति तदपेक्षया सा 'विफला' इत्युच्यते । अतो यथोक्तविशिष्टफलाभावात् फलमात्राद् योषित्प्राप्त्यसिद्धेश्च न प्राप्यकारिता मनस इति भावः ॥ इति गाथार्थः ॥ २३० ॥

पुनरप्याह परः–

नणु सिमिणओ वि कोई सच्चफलो फलइ जो जहा दिट्ठो । ननु सिमिणम्मि निसिद्धं किरिया किरियाफलाइं च ॥२३१॥

ननु स्वप्नोऽपि कश्चित् सत्यं फलं यस्याऽसौ सत्यफलो दृश्यते । कः ?, इत्याह– यो यथा येन प्रकारेण राज्यलाभादिना दृष्टस्तेनैव फलति– राज्यादिफलदायको भवतीत्यर्थः, तत् किमिति स्वप्नोपलब्धं मनसो मेरुगमनादिकं सत्यतया नेष्यते ? इति भावः । अत्रोत्तरमाह– 'नन्वित्यादि' नन्वयुक्तोपालम्भोऽयम् , सर्वथास्वप्नसत्यत्वस्याऽस्माभिरनिषिध्यमानत्वात् । तर्हि किं निषिध्यते ?, इत्याह– स्वप्ने क्रिया मेरुगमनादिका, अध्वश्रम-कुसुमपरिमलादीनि क्रियाफलानि च, इत्येतद्द्वयमस्माभिः प्रागुक्तयुक्तेः सत्यतया निषिद्धम् ॥ इति गाथार्थः ॥ २३१ ॥

तर्हि किं तत्, यत् स्वप्ने भवद्भिर्न निषिध्यते ?, इत्याह–

जं पुण विण्णाणं तप्फलं च सिमिणे विबुद्धमेत्तस्स । सिमिणयनिमित्तभावं फलं च तं को निवारेइ ? ॥२३२॥

---

१ सुरतप्रतिपत्ति-रतिसुख-गर्भाधानादीतरथा भवेत् । स्वप्नसमागमयुवतेः, न च यतस्तान्यतो विफला ॥ २३० ॥ २ घ छ. ज 'द्विदौहृद' । ३ ननु स्वप्नकोऽपि कश्चित् सत्यफल. फलति यो यथा दृष्टः । ननु स्वप्ने निषिद्धं क्रिया क्रियाफलानि च ॥२३१॥ ४ घ. छ. 'कुत' । ५ क ग 'तत कि' । ६ क. 'स्वप्ने या क्रि' ज 'स्वप्नेऽपि क्रि' । ७ यत्पुनर्विज्ञानं तत्फलं च स्वप्ने विबुद्धमात्रस्य । स्वप्नकनिमित्तभाव फलं च तत् को निवारयति ? ॥ २३२ ॥

" [1]वंजणोग्गहस्स परूवणं करिस्सामि पडिबोहगदिट्ठंतेणं, मल्लगदिट्ठंतेण य। से किं तं पडिबोहगदिट्ठंतेणं ?। पडिबोहगदिट्ठंतेणं से– जहानामए केइ पुरिसे कंचि पुरिसं सुत्तं पडिबोहेज्जा-अमुग! अमुग! त्ति। तत्थ य चोयए पण्णवगं एवं वयासी– किं एगसमयपविट्ठा पोग्गला गहणमागच्छंति, जाव संखेज्ज-असंखेज्जसमयपविट्ठा पोग्गला गहणमागच्छंति ?। एवं वयतं चोयगं पन्नवए एवं वयासी– नो एगसमयपविट्ठा पोग्गला गहणमागच्छंति, जाव नो संखेज्जसमयपविट्ठा पोग्गणा गहणमागच्छंति, असंखेज्जसमयपविट्ठा पोग्गला गहणमागच्छंति, सेत्तं पडिबोहगदिट्ठतेणं। से किं तं मल्लगदिट्ठतेणं ?। मल्लगदिट्ठतेण से– जहानामए केइ पुरिसे आवागसीसाओ मल्लगं गहाय तत्थेगं उदगबिंदुं पक्खिवेज्जा, से नट्ठे। अन्ने वि पक्खित्ते, से वि नट्ठे। अन्ने वि पक्खित्ते, से वि नट्ठे। एव पक्खिप्पमाणेसु पक्खिप्पमाणेसु होही से उदगबिंदू जे णं तं मल्लगं रावेहिति। होही से उदगबिंदू जे णं तसि मल्लगसि ठाइति। होही से उदगबिंदू जे णं तं मल्लगं भरेहिति। होही से उदगबिन्दू जे ण तासि मल्लगसि न ठाहिहिति। होही से उदगबिंदू जे णं तं मल्लग पवाहेहिति। एवामेव पक्खिप्पमाणेहिं अणतेहिं पोग्गलेहिं जाहे तं वंजण पूरिय होइ, ताहे हुं ति करेइ, नो चेव णं जाणइ के वेस सद्दाइ " इत्यादि।

इदं सूत्रं नन्दिविवरण एवेत्थं व्याख्यातम्, तद्यथा–

" प्रतिबोधक-मल्लकदृष्टान्ताभ्यां व्यञ्जनावग्रहस्य प्ररूपणं करिष्यामि। तत्र प्रतिबोधयतीति प्रतिबोधकः स एव दृष्टान्तस्तेन, तद्यथा नाम कश्चिदनिर्दिष्टस्वरूपः पुरुष कञ्चिदन्यमनिर्दिष्टस्वरूपमेव पुरुषं सुप्तं सन्तं प्रतिबोधयेत्। कथम् ?, इत्याह– अमुक! अमुक! इति। तत्र प्रेरकः प्रज्ञापकमेवमवादीत्[3]– किमेकसमयप्रविष्टा इत्यादि। एव वदन्त प्रेरकं प्रज्ञापक एवमुक्तवान्– नो एकसमयप्रविष्टा इत्यादि, प्रकटार्थं, यावद् नोसख्येयसमयप्रविष्टाः पुद्गला ग्रहणमागच्छन्ति। नवरमय प्रतिषेधः शब्दविज्ञानग्राह्यतामधिकृत्य वेदितव्यः, शब्दविज्ञानजनकत्वेनेत्यर्थः, अन्यथा संबन्धमात्रमधिकृत्य प्रथमसमयादारभ्य पुद्गला ग्रहणमागच्छन्त्येव। ' असखेज्ज इत्यादि ' प्रतिसमयप्रवेशेनाऽऽदित आरभ्याऽसख्येयसमयैः प्रविष्टा असंख्येय-

---

1 व्यञ्जनावग्रहस्य प्ररूपणां करिष्यामि प्रतिबोधकदृष्टान्तेन, मल्लकदृष्टान्तेन च। अथ केयं प्रतिबोधकदृष्टान्तेन ?। प्रतिबोधकदृष्टान्तेन सा– यथानामा कश्चित् पुरुष कञ्चित् पुरुषं सुप्त प्रतिबोधयेत्– अमुक! अमुक! इति। तत्र च चोदक प्रज्ञापकमेवमवादीत्– किमेकसमयप्रविष्टा पुद्गला ग्रहणमागच्छन्ति, यावत्संख्येया-ऽसंख्येयसमयप्रविष्टा पुद्गला ग्रहणमागच्छन्ति ?। एव वदन्त चोदकं प्रज्ञापक एवमवादीत्– नो एकसमयप्रविष्टाः पुद्गला ग्रहणमागच्छन्ति यावद् नो संख्येयसमयप्रविष्टा पुद्गला ग्रहणमागच्छन्ति, असख्येयसमयप्रविष्टा पुद्गला ग्रहणमागच्छन्ति, सेय प्रतिबोधकदृष्टान्तेन। अथ केयं मल्लकदृष्टान्तेन ?। मल्लगदृष्टान्तेन सा– यथानामा कश्चित् पुरुष आपाकशिरसो मल्लकं गृहीत्वा तत्रैकमुदकबिन्दु प्रक्षिपेत्, स नष्ट.। अन्योऽपि प्रक्षिप्त, सोऽपि नष्ट। अन्योऽपि प्रक्षिप्त. सोऽपि नष्ट। एवं प्रक्षिप्यमाणेषु प्रक्षिप्यमाणेषु भविष्यति स उदकबिन्दुर्यस्त मल्लकमार्द्रतां नेष्यति। भविष्यति स उदकबिन्दुर्यस्तस्मिन् मल्लके स्थास्यति। भविष्यति स उदकबिन्दुर्यस्तं मल्लकं भरिष्यति। भविष्यति स उदकबिन्दुर्यस्तस्मिन् मल्लके न स्थास्यति। भविष्यति स उदकबिन्दुर्यस्त मल्लकं प्लावयिष्यति। एवमेव प्रक्षिप्यमाणैरनन्तै पुद्गलैर्यदा तद् व्यञ्जन पूरितं भवति तदा 'हुं' इति करोति, नो चेव जानाति क एप शब्दादिः ?॥ 2 देश्योऽयं शब्द आर्द्रीकरणार्थे। 3 क. ग. 'व सम'।

निषेद्धारः। सिद्धं तर्हि परस्य समीहितम्। सिध्येत्, यदि सा व्यञ्जनावग्रहता मनसो भवेत्; न पुनः सा तस्य। कस्य तर्हि सा ?, इत्याह– सा खलु प्राप्यकारिणां श्रोत्रादीन्द्रियाणां श्रवण-रसन-घ्राण-स्पर्शनानामित्यर्थः, इदमुक्तं भवति– स्त्यानर्द्धिनिद्रोदये प्रेक्षणकरङ्गभूम्यादौ गीतादिकं शृण्वतः श्रोत्रेन्द्रियस्य व्यञ्जनावग्रहो भवति, कर्पूरादिकं जिघ्रतो घ्राणेन्द्रियस्य, आमिष-मोदकादिकं भक्षयतो रसनेन्द्रियस्य, कामिनीतनुलतादि स्पृशतः स्पर्शनेन्द्रियस्य व्यञ्जनावग्रहः संपद्यते; न तु नयन-मनसोः, वह्नि-क्षुरिकादिविषयकृतदाहपाटनादिप्रसङ्गेन तयोर्विषयप्राप्त्यभावात्, तामन्तरेण च व्यञ्जनावग्रहासंभवादिति भावः ॥ इति गाथार्थः ॥ २३४ ॥

आह– ननु स्त्यानर्द्धिनिद्रोदये स्वप्नमिव मन्यमानः किं कोऽपि चेष्टां काञ्चित् करोति, येन तत्करणे व्यञ्जनावग्रहः स्यात् ?, इत्याशङ्क्य स्त्यानर्द्धिनिद्रोदयोदाहरणान्याह–

[1]पोग्गल-मोयग-दन्ते फरुसग-वडसालभंजणे चेव। थीणद्धियस्स एए आहारणा होंति नायव्वा ॥ २३५ ॥

स्त्यानर्द्धिनिद्रोदयवर्तिन[2] एतानि पौद्गलादीन्युदाहरणानि ज्ञातव्यानि भवन्ति। तद्यथा– 'पोग्गलेत्यादि' तत्र समयपरिभाषया पौद्गलं मांसमुच्यते, तदुदाहरणं यथा– एकस्मिन् ग्रामे कुटुम्बिकः कोऽप्यासीत्, स च मांसगृद्ध आमानि, पक्वानि, तलितानि, केवलानि, तीमनादिमध्यप्रक्षिप्तानि च मांसानि भक्षयति। अन्यदा च गुणातिशायिभिः स्थविरैः कैश्चित्[3] प्रतिबोधितो दीक्षां कक्षीकृतवान्। तेन च ग्रामा-ऽनुग्रामं विहरता कदाचित् क्वचित् प्रदेशे मांसलुब्धैः कैश्चिद् विकृत्यमानो महिषः समीक्षाञ्चक्रे। तं च[4] संवीक्ष्य तदामिषभक्षणे तस्याऽप्यभिलाषः समजायत। स चाऽभिलाषोऽस्य भुञ्जानस्य विचारभूमीं गतस्य चरमां सूत्रपौरुषीं, प्रतिक्रमणक्रियां, प्रादोषिकपौरुषीं च कुर्वतो न निवृत्तः[5]; किं बहुना ?, तदभिलाषवत्येव प्रसुप्तोऽसौ। ततः स्त्यानर्द्धिनिद्रोदयो जातः। तदुदये चोत्थाय ग्रामाद् बहिर्महिषमण्डलमध्ये गत्वाऽन्यं महिषमेकं विनिहत्य तदामिषं भक्षितवान्। तदुद्धरितशेषं च समानीयोपाश्रयोपरि क्षिप्त्वा प्रसुप्तः। समुत्थितश्च प्रत्युषसि स 'मयेत्थंभूतः स्वप्नो दृष्टः' इत्येवं गुर्वन्तिक आलोचयामास। साधुभिश्चोपाश्रयोपरि तदामिषमदृश्यत। ततः 'स्त्यानर्द्धिनिद्रोदयोऽस्याऽस्ति' इति ज्ञातम्। तथा च संघेन लिङ्गमपहृत्य विसर्जितोऽसौ ॥ इति स्त्यानर्द्धिनिद्रोदये प्रथममुदाहरणमिति ॥ १ ॥

अथ द्वितीयं मोदकोदाहरणमुच्यते, यथा– एकः कोऽपि साधुर्भिक्षां पर्यटन् क्वचिद् गृहे पटलकादिव्यवस्थापितानतिप्रचुरान्

१ पौद्गल-मोदक-दन्ताः कुलाल-वटशालभञ्जने चैव। स्त्यानर्द्धेरेतान्युदाहरणानि भवन्ति ज्ञातव्यानि ॥ २३५ ॥

२ ज 'र्त्तिनि ए'। ३ घ, छ ज. 'श्चित् क्व'। ४ क. ग 'च समीक्ष्य'। ५ घ. छ. 'नपि प्र'।

त्विन्द्रियमितीन्द्रियं व्यञ्जनमधिक्रियते तदा " जाहे तं वंजणं पूरियं होइ " इति किमुक्तं भवति ?, इत्याह–'आपूरियं ति' आपूरितं व्याप्तं भृतं वासितमित्यर्थः। तथा, 'दोण्हं ति' द्वयोः श्रोत्रादीन्द्रिय-शब्दादिपरिणतद्रव्ययोः संबन्धो यदि व्यञ्जनमधिक्रियते तदा "जाहे तं वंजणं पूरियं होइ', इति किमुक्तं भवति ?, इत्याह–'अवरोप्परसंसग्गो त्ति' सम्यक् सर्गो योगः संसर्गः सम्यक् संबन्ध इत्यर्थः, इदमत्र हृदयम्–अस्मिन् पक्षे यदा तयोरिन्द्रिय-द्रव्ययोः परस्परमतीव संयुक्तताऽनुषक्तताऽङ्गाङ्गिभावेन परिणामो भवति, तदा प्रस्तुत-संबन्धलक्षणं व्यञ्जनमापूरितं भवतीत्युच्यत इति। 'जया तया गिण्हइ तमत्थं ति' एवं यदा त्रिविधमपि व्यञ्जनं प्रकारत्रयेणाऽऽपूरितं भवति, तदा तं विवक्षितं शब्दादिकमर्थमव्यक्तं नाम-जात्यादिकल्पनारहितं गृह्णाति। एतच्च "तांहे हुं ति करेइ" इत्यस्य व्याख्यानम्। अर्थावग्रहश्चाऽयमेकसामयिको विज्ञेयः, इतरस्तु पूर्वमन्तर्मुहूर्तं द्रव्यप्रवेशादिरूपो व्यञ्जनावग्रहोऽवसेयः ॥ इति गाथार्थः ॥ २५१ ॥

किंविशिष्टं पुनस्तमर्थं गृह्णाति ?, इत्याशङ्क्य स्वत एव भाष्यकारस्तत्स्वरूपमाह–

सामन्नमणिद्देसं सरूव-नामाइकप्पणारहियं। जइ एवं जं तेणं गहिए सद्दे त्ति तं किह णु ? ॥ २५२ ॥

ग्राह्यवस्तुनः सामान्य-विशेषात्मकत्वे सत्यप्यर्थावग्रहेण सामान्यरूपमेवाऽर्थं गृह्णाति, न विशेषरूपम्, अर्थावग्रहस्यैकसामयिकत्वात्, समयेन च विशेषग्रहणायोगादिति। सामान्यार्थश्च कश्चिद् ग्राम-नगर-वन-सेनादिशब्देन निर्देश्योऽपि भवति, तद्व्यवच्छेदार्थमाह–अनिर्देश्यं केनापि शब्देनाऽनभिलप्यम्। कुतः पुनरेतत् ?, इत्याह– यतः स्वरूप-नामादिकल्पनारहितम्, आदिशब्दाज्जाति-क्रिया-गुण-द्रव्यपरिग्रहः। तत्र रूप-रसाद्यर्थानां य आत्मीयचक्षुरादीन्द्रियगम्यः प्रतिनियतः स्वभावस्तत् स्वरूपम्। रूप-रसादिकस्तु तदभिधायको ध्वनिर्नाम, रूपत्व-रसत्वादिका तु जातिः। प्रीतिकरमिदं रूपं, पुष्टिकारोऽयं रस इत्यादिकस्तु शब्दः क्रियाप्रधानत्वात् क्रिया। कृष्ण-नीलादिकस्तु गुणः। पृथिव्यादिकं पुनर्द्रव्यम्। एषां स्वरूप-नाम-जात्यादीनां कल्पना अन्तर्जल्पारूपितज्ञानरूपा तया रहितमेवाऽर्थम-र्थावग्रहेण गृह्णाति यतो जीवः, तस्मादनिर्देश्योऽयमर्थः प्रोक्तः, तत्कल्पनारहितत्वेन स्वरूप-नाम-जात्यादिप्रकारेण केनापि निर्देष्टुमश-क्यत्वादिति। एवमुक्ते सति परः प्राह– 'जइ एवमित्यादि' यदि स्वरूप-नामादिकल्पनारहितोऽर्थोऽर्थावग्रहस्य विषय इत्येवं व्याख्या-यते भवद्भिः, तर्हि 'जं ति' यन्नन्द्यध्ययनसूत्रे प्रोक्तं। किम् ?, इत्याह– "तेणं गहिए सद्दे त्ति" उपलक्षणत्वादित्थं संपूर्णं द्रष्टव्यम्– " से जहा नामए केइ पुरिसे अव्वत्तं सद्दं सुणेज्जा, तेणं सद्दे त्ति उग्गहिए, न उण जाणइ के वेस सद्दाइ त्ति। ' तं किह णु त्ति '

१ यदा तद्व्यञ्जनं पूरितं भवति। २ तदा 'हुं' इति करोति।
३ सामान्यमनिर्देश्यं स्वरूप-नामादिकल्पनारहितम्। यदेव यत् 'तेन गृहीतः शब्दः' इति तत् कथं नु ? ॥ २५२ ॥ ४ क.ग. 'सद्दि त्ति'।
५ तद्यथानामा कश्चित् पुरुषोऽव्यक्तं शब्दं शृणुयात्। तेन शब्द इत्यवगृहीतः, न पुनर्जानाति क एष शब्द इति ॥

जहं देहत्थं चक्खुं जं पइ चंदं गयं ति, न य सच्चं । रूढं मणसो वि तहा न य रूढी सच्चिया सव्वा ॥२३६॥

यथा देहस्थं देहादनिर्गतमपि चक्षुः 'चन्द्रं गतम्' इति जल्पति लोकः, न च तत् सत्यम्, चक्षुषो वह्न्यादिदर्शनेन तत्कृतदाहादिप्रसङ्गात्; तथा तेनैव प्रकारेण मनसोऽपि निर्निबन्धनं रूढमिदं यदुत– 'अमुत्र गतं मे मनः' इति । रूढिरपि सत्या भविष्यति, इत्याह– न च रूढिः सर्वाऽपि सत्या,

" वटे वटे वैश्रवणश्चत्वरे चत्वरे शिवः । पर्वते पर्वते रामः सर्वगो मधुसूदनः " ॥ १ ॥

इत्यादिकाया असत्याया अपि दर्शनात् ॥ इति गाथार्थः ॥ २३६ ॥

तदेवं विषयप्राप्तौ निषिद्धायां मनसोऽसद्ग्रहममुञ्चन् परः प्रकारान्तरेणाऽपि तस्य व्यञ्जनावग्रहं प्रतिपादयन्नाह—

[२]विसयमसंपत्तस्स वि संविज्जइ वंजणोग्गहो मणसो । जमसंखेज्जसमइओ उवओगो जं च सव्वेसु ॥२३७॥

समएसु मणोदव्वाइं गिण्हए वंजणं च दव्वाइं । भणियं संबंधो वा तेण तयं जुज्जए मणसो ॥ २३८ ॥

विषयं मेरुशिखरादिकं, जला-ऽनलादिकं वा, असंप्राप्तस्याऽपि– अप्राप्य गृह्णतोऽपीत्यर्थः । किम् ?, इत्याह– संविद्यते युज्यते व्यञ्जनावग्रहो मनसः । कुतः ?, इत्याह– 'जमसंखेज्जसमइओ उवओगो' यद् यस्मात् कारणात् " च्यवमानो न जानाति" इत्यादिवचनात् सर्वोऽपि च्छद्मस्थोपयोगोऽसंख्येयैः समयैर्निर्दिष्टः सिद्धान्ते, न त्वेक-द्व्यादिभिः । 'जं च सव्वेसु समयेसु मणोदव्वाइं गिण्हए त्ति' यस्माच्च तेषूपयोगसंबन्धिष्वसंख्येयेषु समयेषु सर्वेष्वपि प्रत्येकमनन्तानि मनोद्रव्याणि मनोवर्गणाभ्यो गृह्णाति जीवः; द्रव्याणि च, तत्संबन्धो वा प्रागत्रैव भवद्भिर्व्यञ्जनमुक्तम्, तेन कारणेन तत् तादृशं द्रव्यं, तत्संबन्धो वा व्यञ्जनं व्यञ्जनावग्रह इति हृदयम्, युज्यते घटते मनसः । यथा हि श्रोत्रादीन्द्रियेणाऽसंख्येयान् समयान् यावद् गृह्यमाणानि शब्दादिपरिणतद्रव्याणि, तत्संबन्धो वा व्यञ्जनावग्रहः, तथाऽत्राऽप्यसंख्येयसमयान् यावद् गृह्यमाणानां मनोद्रव्याणां, तत्संबन्धस्य वा किमिति पक्षपातं परित्यज्य मध्यस्थैर्भूत्वाऽसौ नेष्यते ?, इति किल परस्याभिप्रायः ॥ इति गाथाद्वयार्थः ॥ २३७ ॥ २३८ ॥

तदेवं विषयासंप्राप्तावपि भङ्ग्यन्तरेण मनसो व्यञ्जनावग्रहः किल परेण समर्थितः, सांप्रतं विषयसंप्राप्त्यापि तस्य तं समर्थयन्नाह–

१ यथा देहस्थं चक्षुर्यत् प्रति चन्द्रं गतमिति, न च सत्यम् । रूढं मनसोऽपि तथा न च रूढिः सत्यिका (सत्या) सर्वा ॥ २३६ ॥ २ क, घ. छ. ज. 'म इ' ।
३ विषयमसंप्राप्तस्यापि संविद्यते व्यञ्जनावग्रहो मनसः । यदसंख्येयसमयिक उपयोगो यच्च सर्वेषु ॥ २३७ ॥
समयेषु मनोद्रव्याणि गृह्णाति व्यञ्जन च द्रव्याणि । भणितं संबन्धो वा तेन तद् युज्यते मनसः ॥ २३८ ॥

क्षणस्य तदाद्यभेदस्याऽभावप्रसङ्गः, प्रथमत एवाऽवग्रहमतिक्रम्याऽपायाभ्युपगमात् । कथं पुनः शब्दज्ञानमपायः ?, इति चेत् । उच्यते– तस्याऽपि विशेषग्राहकत्वात्, विशेषज्ञानस्य च भवताऽप्यपायत्वेनाऽभ्युपगतत्वात् । ननु 'शाङ्ख एवाऽयं शब्दः' इत्यादिकमेव तदुत्तरकालभावि ज्ञानं विशेषग्राहकं, शब्दज्ञाने तु शब्दसामान्यस्यैव प्रतिभासनात् कथं विशेषप्रतिभासः, येनाऽपायप्रसङ्गः स्यात् ?, इत्याह– 'नणु इत्यादि' नन्वित्यक्षमायां, परामन्त्रणे वा, ननु 'शब्दोऽयं नाशब्दः' इति विशेषोऽयं विशेषप्रतिभास एवाऽयमित्यर्थः । कथं पुनर्नाऽशब्द इति निश्चीयते ?, इत्याह– न च रूपादिरिति, चशब्दो हिशब्दार्थे, आदिशब्दाद् गन्ध-रसस्पर्शपरिग्रहः । ततश्चेदमुक्तं भवति– यस्माद् न रूपादिरयम्, तेभ्यो व्यावृत्तत्वेन गृहीतत्वात्, अतो 'नाऽशब्दोऽयं' इति निश्चीयते ; यदि तु रूपादिभ्योऽपि व्यावृत्तिर्गृहीता न स्यात्, तदा 'शब्दोऽयम्' इति निश्चयोऽपि न स्यादिति भावः । तस्मात् 'शब्दोऽयं नाशब्दः' इति विशेषप्रतिभास एवाऽयम् । तथा च सत्यस्याऽप्यपायप्रसङ्गतोऽवग्रहाभावप्रसङ्ग इति स्थितम् ॥ इति गाथार्थः ॥ २५४ ॥

अथ परोऽवग्रहा-ऽपाययोर्विषयविभागं दर्शयन्नाह–

थोवमियं नाऽवाओ संखाइविसेसणमवाओ त्ति । तब्भेयावेक्खाए नणु थोवमियं पि नावाओ ॥ २५५ ॥

इदं शब्दबुद्धिमात्रकं शब्दमात्रस्तोकविशेषावसायित्वात् स्तोकं स्तोकविशेषग्राहकम्, अतोऽपायो न भवति, किन्त्ववग्रह एवाऽयमिति भावः । कः पुनस्तर्ह्यपायः ?, इत्याह– 'संखाईत्यादि' शाङ्खोऽयं शब्द इत्यादिविशेषणविशिष्टं यज्ज्ञानं तदपायः बृहद्विशेषावसायित्वादिति हृदयम् । हन्त ! यदि यद् यत् स्तोकं तत् तद् नाऽपायः, तर्हि निवृत्ता सांप्रतमपायज्ञानकथा, उत्तरोत्तरार्थविशेषग्रहणापेक्षयां पूर्वपूर्वार्थविशेषावसायस्य स्तोकत्वात् । एतदेवाह– 'तब्भेयेत्यादि' तस्य शाङ्खशब्दस्य ये उत्तरोत्तरभेदा मन्द्र-मधुरत्वादयः, तरुण-मध्यम-वृद्ध-स्त्री-पुरुषसमुत्थत्वादयश्च तदपेक्षायां सत्यामिदमपि 'शाङ्खोऽयं शब्दः' इत्यादि ज्ञानं ननु स्तोकं– स्तोकविशेषग्राहकमेव, इति नाऽपायः स्यात् । एवमुत्तरोत्तरविशेषग्राहिणामपि ज्ञानानां तदुत्तरोत्तरभेदापेक्षया स्तोकत्वादपायत्वाभावो भावनीयः ॥ इति गाथार्थः ॥ २५५ ॥

तमेवाऽपायाभावं स्फुटीकुर्वन्नाह–

ईय[3] सुबहुणा वि कालेण सव्वभेयाऽवहारणमसज्झं । जम्मि हवेज्ज अवाओ सव्वो च्चिय उग्गहो नाम ॥२५६॥

---

१ स्तोकमिद नाऽपाय शाङ्खादिविशेषणमपाय इति । तद्भेदाऽपेक्षायां ननु स्तोकमिदमपि नाऽपाय. ॥ २५५ ॥ २ घ ज 'श्च तदपेक्षया त' ।
३ इति सुबहुनाऽपि कालेन सर्वभेदाऽवधारणमसाध्यम् । यस्मिन् भवेदपायः सर्व एवाऽवग्रहो नाम ॥ २५६ ॥

पारिशेष्याद् बाह्यार्थापेक्षयैव प्राप्यकारित्वा-ऽप्राप्यकारित्वचिन्ता युक्ता । स च मनसाऽप्राप्त एव गृह्यते, इति न तत्र व्यभिचारः । भवतु वा मनसः स्वकीयहृदयादिचिन्तायां प्राप्यकारिता, तथापि न तस्य व्यञ्जनावग्रहसंभव इति दर्शयन्नाह–

[1]तद्देसचिन्तणे होज्ज वंजणं जइ तओ न समयम्मि । पढमे चेव तमत्थं गेण्हेज्ज न वंजणं तम्हा ॥२४१॥

स चासौ स्वकायहृदयादिदेशश्च तस्य चिन्तनं तस्मिन् सति स्याद् मनसो व्यञ्जनं व्यञ्जनावग्रहः । यदि किम् ?, इत्याह– 'जइ तओ न समयम्मि पढमे चेव तमत्थं गेण्हेज्ज त्ति' यदि तद् मनः प्रथम एव समये तं स्वकीयहृदयादिकमर्थं न गृह्णीयाद् नावगच्छेदिति । एतच्च नास्ति, यस्माद् मनसः प्रथमसमय एवार्थाऽवग्रहः समुत्पद्यते, न तु श्रोत्रादीन्द्रियस्येव प्रथमं व्यञ्जनावग्रहः, तस्य हि क्षयोपशमापाटवेन प्रथममर्थानुपलब्धिकालसंभवाद् युक्तो व्यञ्जनावग्रहः, मनसस्तु पटुक्षयोपशमत्वाचक्षुरिन्द्रियस्येवाऽर्थानुपलम्भकालस्यासंभवेन प्रथममेवाऽर्थावग्रह एवोपजायते । अत्र प्रयोगः– इह यस्य ज्ञेयसंवन्धे सत्यप्यनुपलब्धिकालो नास्ति न तस्य व्यञ्जनावग्रहो दृष्टः, यथा चक्षुषः, नास्ति चार्थसंवन्धे सत्यनुपलब्धिकालो मनसः, तस्माद् न तस्य व्यञ्जनावग्रहः; यत्र त्वयमभ्युपगम्यते न तस्य ज्ञेयसबन्धे सत्यनुपलब्धिकालासंभवः, यथा श्रोत्रस्येति व्यतिरेकः । तदेवं परोक्तपक्षद्वयेऽपि मनसो व्यञ्जनावग्रहं निराकृत्योपसंहरति– 'न वंजणं तम्ह त्ति' तस्मादुक्तप्रकारेण मनसो न व्यञ्जनावग्रहसंभवः ॥ इति गाथार्थः ॥ २४१ ॥

कस्माद् न मनसो व्यञ्जनावग्रह इत्याशङ्क्याऽत्रार्थे विशेषवतीमुपपत्तिमाह–

[2]समए समए गिण्हइ दव्वाइं जेण मुणइ य तमत्थं । जं चिंदिओपओगे वि वंजणावग्गहेऽतीते ॥२४२॥

होइ मणोवावारो पढमाओ चेव तेण समयाओ । होइ तदत्थग्गहणं तदण्णहा न प्पवत्तेज्जा ॥ २४३ ॥

'समए समए त्ति' प्रतिसमयमित्यर्थः, इदमुक्तं भवति– मनोद्रव्यग्रहणशक्तिसंपन्नो जीवः कस्यचिदर्थस्य चिन्तावसरे प्रतिसमयं मनोद्रव्याणि गृह्णाति, तं च चिन्तनीयमर्थं प्रतिसमयं 'मुणइ त्ति' जानाति येन कारणेन, तेन प्रथमसमयादेव भवति तस्य चिन्तनीयार्थस्य ग्रहणमिति द्वितीयगाथायां संबन्धः, प्रथमसमयादेवाऽर्थावबोधः प्रवर्तत इत्यर्थः, अर्थानुपलब्धिकालस्त्वेकोऽपि समयो

१ तद्देशचिन्तने भवेद् व्यञ्जन यदि ततो न समये । प्रथम एव तमर्थं गृह्णीयाद् न व्यञ्जनं तस्मात् ॥ २४१ ॥

२ समये समये गृह्णाति द्रव्याणि येन जानाति च तदर्थम् । यच्चेन्द्रियोपयोगेऽपि व्यञ्जनावग्रहेऽतीते ॥ २४२ ॥
भवति मनोव्यापारः प्रथमादेव तेन समयात् । भवति तदर्थग्रहणं तदन्यथा न प्रवर्तेत ॥ २४३ ॥

मीहायाः पूर्वं गृहीतं, यदीहमानस्य 'शब्दः' इति निश्चयज्ञानमुत्पद्यते ॥ इति गाथार्थः ॥ २५८ ॥

अथेहायाः पूर्वं सामान्यग्रहणे परेणेष्यमाणे सूरिः स्वसमीहितसिद्धिमुपदर्शयन्नाह–

अत्थोग्गहओ पुव्वं होयव्वं तस्स गहणकालेणं । पुव्वं च तस्स वंजणकालो सो अत्थपरिसुण्णो ॥ २५९ ॥

नन्वीहायाः पूर्वं यत् सामान्यं गृह्यते, तस्य तावद् ग्रहणकालेन भवितव्यम् । स चाऽस्मदभ्युपगतसामयिकार्थावग्रहकालरूपो न भवति, अस्मदभ्युपगताङ्गीकारप्रसङ्गात्, किं तर्हि ?, अस्मदभ्युपगतार्थावग्रहात् पूर्वमेव भवदभिप्रायेण तस्य सामान्यस्य ग्रहणकालेन भवितव्यम्, पूर्वं च तस्याऽस्मदभ्युपगतार्थावग्रहस्य व्यञ्जनकाल एव वर्तते, व्यञ्जनानां शब्दादिद्रव्याणामिन्द्रियमात्रेणाऽऽदानकालो मध्यपदलोपाद् व्यञ्जनकालः । भवत्वेवम्, तथापि तत्र सामान्यार्थग्रहणं भविष्यति, इत्याशङ्क्याह– स च व्यञ्जनकालोऽर्थपरिशून्यः, न हि तत्र सामान्यरूपः, विशेषरूपो वा कश्चनाऽप्यर्थः प्रतिभाति, तदा मनोरहितेन्द्रियमात्रव्यापारात्, तत्र चार्थप्रतिभासाऽयोगात् । तस्मात् पारिशेष्यादस्मदभ्युपगतार्थावग्रह एव सामान्यग्रहणमिति गाथायामनुक्तमपि स्वयमेव द्रष्टव्यम् । तदनन्तरं चाऽन्वय-व्यतिरेक-धर्मपर्यालोचनरूपा ईहा, तदनन्तरं च 'शब्द एवाऽयम्' इति निश्चयज्ञानमपायः, इति सर्वं सुस्थं भवति ॥ इति गाथार्थः ॥ २५९ ॥

अथ प्रथममेवाऽर्थावग्रहज्ञानेन[3] शब्दाग्रहणे परः पुनरपि दोषमाह–

जइ[4] सद्दो त्ति न गहियं न उ जाणइ जं क एस सद्दो त्ति । तमजुत्तं सामण्णे गहिए मग्गिज्जइ विसेसो ॥२६०॥

यद्यर्थाववोधसमये प्रथममेव 'शब्दोऽयम्' इत्येवं तद् वस्तु न गृहीतं, तर्हि "नं उग्गं जाणइ के वेस सद्दे त्ति" जं ति' यत् सूत्रे निर्दिष्टम्, तदयुक्तं प्राप्नोति, यस्माच्छब्दसामान्ये रूपादिव्यावृत्ते गृहीते सति पश्चाद् मृग्यतेऽन्विष्यते विशेषः–'किमयं शब्दः शाङ्खः, उत शार्ङ्गः ?' इति । इदमुक्तं भवति– "नं उग्गं जाणइ के वेस सद्दे त्ति" अस्मिन् नन्दिसूत्रे 'न पुनर्जानाति कोऽप्येष शाङ्ख-शार्ङ्गाद्यन्यतरः शब्दः' इति विशेषस्यैवाऽपरिज्ञानमुक्तम्, शब्दसामान्यमात्रग्रहणं त्वनुज्ञातमेव, तदग्रहणे तु 'क एष शब्दः, किं शाङ्खः, शार्ङ्गो वा ?' इत्येवं विशेषमार्गणमसंगतमेव स्यात्, विशेषजिज्ञासायाः सामान्यज्ञानपूर्वकत्वात्, शब्दसामान्ये गृहीत एव तद्विशेषमार्गणस्य युज्यमानत्वात् ॥ इति गाथार्थः ॥ २६० ॥

१ अर्थावग्रहत. पूर्वं भवितव्य तस्य ग्रहणकालेन । पूर्वं च तस्य व्यञ्जनकाल सोऽर्थपरिशून्य. ॥ २५९ ॥ २ क ग 'तस्मादस्म' । ३ ग 'नं श'।
४ यदि शब्द इति न गृहीत न तु जानाति यत् क एष शब्द इति । तदयुक्तं सामान्ये गृहीते मृग्यते विशेष. ॥२६०॥ ५ न पुनर्जानाति क एष शब्द इति ।
६ क ग घ.छ.ज 'णं जा' ।

नेयाउ च्चिय जं सो लहइ सरूवं पईव-सद्द व्व । तेणाजुत्तं तस्सासंकप्पियव्वंजणग्गहणं ॥२४४॥

प्रतिसमयं मनोद्रव्योपादानं ज्ञेयार्थावगमश्च मनसो भवत्येव, न पुनस्तस्यानुपलब्धिकालः संभवति । कुतः ?, इत्याह– यद् यस्मात् कारणात् 'सो' इति प्राकृतशैल्या नपुंसकमपि मनः संबध्यते, ज्ञायत इति ज्ञेयं चिन्तनीयं वस्तु तस्मादेव, स्वरूपमात्मसत्तास्वभावं लभते, नाऽन्यतः । ततो यदि तदेव ज्ञेयं नावगच्छेत्, तर्हि तस्मादुत्पत्तिरप्यस्य कथं स्यात् ? । इदमुक्तं भवति– सान्वर्थक्रियावाचकशब्दाभिधेया हि मनःप्रभृतयः, तद्यथा–मनुते मन्यते वा मनः, प्रदीपयतीति प्रदीपः, शब्दयति भाषत इति शब्दः, दहतीति दहनः, तपतीति तपनः । एतानि च विशिष्टक्रियाकर्तृत्वप्रधानानि मनःप्रभृतिवस्तूनि यदि तामेवाऽर्थमनन-प्रदीपन-भाषणादिकामर्थक्रियां न कुर्युः, तदा तेषां स्वरूपहानिरेव स्यात् । तस्माद् यथा प्रदीपनीय-शब्दनीयवस्त्वपेक्षया प्रदीप-शब्दाभिधानप्रवृत्तेः प्रदीप-शब्दयोरर्थयोरप्रदीपनमशब्दनं चायुक्तम्; तथा मनसोऽपि मननीयवस्तुमननादेव मनोऽभिधानप्रवृत्तेस्तदमननं न युक्तम् । ततः किम् ?, इत्याह–येनैवम्, तेनाऽसंकल्पितान्यनालोचितानि, अनवगतानीति यावत्, असंकल्पितानि च तानि शब्दादिविषयभावेन परिणतद्रव्यरूपाणि व्यञ्जनानि च तेषां ग्रहणमसंकल्पितव्यञ्जनग्रहणं तस्य मनसोऽयुक्तम्, किन्तु संकल्पितानामेवाऽर्थावग्रहद्वारेणाऽवगतानामेव तेषां शब्दादिद्रव्याणां ग्रहणं युक्तम् । तस्माद् न मनसोऽनुपलब्धिकालोऽस्ति, तथा च न व्यञ्जनावग्रहसंभव इति स्थितम् ॥ इति गाथार्थः ॥ २४४ ॥

तदेवं नयन-मनसोर्विस्तरेणाऽप्राप्यकारितायां साधितायां नयनपक्षेऽद्यापि दूषणशेषमुत्पश्यन् परः प्राह–

जइ[3] नयणिन्दियमपत्तकारि सव्वं न गिण्हए कम्हा ? । गहणा-गहणं किंकयमपत्तविसयत्तसामन्ने? ॥२४५॥

यद्युक्तयुक्तिभ्यो नयनेन्द्रियमप्राप्तकारि, तर्हि सर्वमपि त्रिभुवनान्तर्वर्तिवस्तुनिकुरम्बं कस्माद् न गृह्णाति, अप्राप्तत्वाविशेषात् ? । एतदेव व्यक्तीकरोति– अप्राप्तो विषयो यस्य तदप्राप्तविषयं तद्भावोऽप्राप्तविषयत्वं तस्मिन् सामान्येऽविशिष्टेऽपि सति यदिदं कस्यचिदर्थस्य ग्रहणं, कस्यचिदग्रहणं, तत् किंकृतं किंनिबन्धनम् ?, नेह किञ्चिद् निबन्धनमुत्पश्याम इति भावः ॥ इति गाथार्थः ॥ २४५ ॥

तस्माद् भो आचार्य ! तस्य चक्षुषो विषयपरिमाणाऽनैयत्यमाप्नोति, इत्येतदेवाह–

वि[4]सयपरिमाणमानियमपत्तविसयं ति तस्स मणसो व्व । मणसो वि विसयानियमो न क्कमइ जओ स सव्वत्थ ॥२४६॥

१ ज्ञेयादेव मत् तल्लभते स्वरूप प्रदीप-शब्दाविव । तेनाऽयुक्त तस्याऽसंकल्पितव्यञ्जनग्रहणम् ॥ २४४ ॥ २ घ छ ज 'णं म' ।

३ यदि नयनेन्द्रियमप्राप्तकारि, सर्वं न गृह्णाति कस्मात्? । ग्रहणा-ऽग्रहणं किंकृतमप्राप्तविषयत्वसामान्ये ?॥ २४५ ॥

४ विषयपरिमाणमानियतमप्राप्तविषयमिति तस्य मनस इव । मनसोऽपि विषयनियमो न क्रामति यतः स सर्वत्र ॥ २४६ ॥

अथ परस्य मतिः स्यात् । केयम् ?, इत्याह– सोऽव्यक्तोऽनिर्देश्यादिस्वरूपः शब्दोऽर्थावग्रहात् पूर्वमेव व्यञ्जनावग्रहे तेन श्रोत्रा गृहीतः, तत् किमित्यर्थावग्रहेऽपि तद्ग्रहणमुद्घुष्यते ?। कथमिदं पुनर्ज्ञायते यदुत- असौ व्यञ्जनावग्रहे गृहीतः ?, इत्याह– 'जमित्यादि' यद् यस्माद् व्यञ्जनावग्रहेऽपि भवद्भिरव्यक्तं विज्ञानमुक्तम् , अव्यक्तविषयग्रहण एव चाव्यक्तत्वं तस्योपपद्यत इतिभावः ॥इति गाथार्थः॥२६३॥

अत्रोत्तरमाह—

[1]अत्थि तयं अव्वत्तं न उ तं गिण्हइ सयं पि सो भणियं। न उ[2] अग्गहियम्मि जुज्जइ सद्दो त्ति विसेसणंबुद्धी॥२६४॥

अस्ति तदव्यक्तं श्रोतुर्व्यञ्जनावग्रहे ज्ञानम् , न तस्याऽस्माभिरपलापः क्रियते, न पुनरसौ श्रोताऽतिसौक्ष्म्यात् तत् स्वयमपि गृह्णाति संवेदयते । एतच्च प्रागपि भणितम्। 'सुत्त-मत्ताइसुहुमबोहो व्व' इति वचनात् , तथा, 'सुत्तादओ सयं वि य विन्नाणं नाववुज्झन्ति" इति वचनाच्च । तस्माद् व्यञ्जनमात्रस्यैव तत्र ग्रहणम् , न शब्दस्य, व्यञ्जनावग्रहत्वान्यथानुपपत्तेरेवेति । न च सामान्यरूपतयाऽव्यक्ते शब्देऽगृहीतेऽकस्मादेव 'शब्दः' इति विशेषणबुद्धिर्युज्यते, अनुस्वारस्याऽलाक्षणिकत्वाद् विशेषबुद्धिरित्यर्थः । अस्यां च विशेषबुद्धौ प्रथममेवेष्यमाणायामादावेवाऽर्थावग्रहकालेऽप्यपायप्रसङ्गः, इत्यसकृदेवोक्तम् ॥ इति गाथार्थः ॥ २६४ ॥

ननु यदि व्यञ्जनावग्रहेऽप्यव्यक्तशब्दग्रहणं भवेत् तदा को दोषः स्यात् ?, इत्याह—

[3]अत्थो त्ति विसयग्गहणं जइ तम्मिवि सो न वंजणं नाम।अत्थोग्गहो च्चिय तओ अविसेसो संकरो वावि ॥२६५॥

अर्थावग्रहे 'अर्थः' इत्यनेन तावद् विषयग्रहणमभिप्रेतं– रूपादिभेदेनाऽनिर्धारितस्याऽव्यक्तस्य शब्दादेर्विषयस्य ग्रहणं तत्राऽभिप्रेतमित्यर्थः । यदि च तस्मिन्नपि व्यञ्जनावग्रहेऽसावव्यक्तशब्दः प्रतिभासत इत्यभ्युपगम्यते, तदा न व्यञ्जनं नाम व्यञ्जनावग्रहो न प्राप्नोतीत्यर्थः । ततश्चेदानीं निवृत्ता तत्कथा, व्यञ्जनमात्रसंबन्धस्यैव तत्रोक्तत्वात् , भवता च तदतिक्रान्तस्याऽव्यक्तार्थग्रहणस्येहाभिधीयमानत्वादिति । तर्ह्यव्यक्तार्थग्रहणे किमसौ स्यात् ?, इत्याह– अर्थावग्रह एवाऽसौ, अव्यक्तार्थावग्रहणात् , ततश्च नास्ति व्यञ्जनं व्यञ्जनावग्रहः । अथाऽस्याऽपि सूत्रे प्रोक्तत्वादस्तित्वं न परिह्रियते, तर्हि द्वयोरप्यविशेषः– सोऽप्यर्थावग्रहः, सोऽपि व्यञ्जनावग्रहः प्राप्नोतीति भावः; मेचकमणिप्रभावत् संकरो वा स्यादित्थम् ॥ इति गाथार्थः ॥ २६५ ॥

1 अस्ति तदव्यक्त न तु तद् गृह्णाति स्वयमप्यसौ भणितम् । न त्वगृहीते युज्यते शब्द इति विशेषणबुद्धि ॥-२६४॥ 2 घ छ ज 'य अ'।
3 गाथा १९७। ४ अर्थ इति विषयग्रहणं यदि तस्मिन्नप्यसौ न व्यञ्जन नाम । अर्थावग्रह एव ततोऽविशेषः संकरो वाऽपि ॥ २६५ ॥ 5 घ. छ. ज. 'हे सोऽव्य'।

प्राप्तमर्थं गृह्णाति चक्षुः, तर्हि अतिसंप्राप्तानप्यञ्जन-रजो-मल-शलाकादीन् कस्माद् न गृह्णाति ?। मनोऽपि प्राप्तान् सर्वानपि किमिति न गृह्णाति ?। गृह्णात्येवेति चेत्। न, ग्रहणाऽनवस्थानप्रसङ्गात्- यावद्धि घटं गृह्णाति, तावत् पटं, शङ्खं, शुक्तिकादीन् वा किमिति न गृह्णातीति ?। घटप्राप्तिकाले पटादयो न प्राप्ता एवेति चेत्। न, तदप्राप्तौ हेत्वभावात्, तथाहि- न तावत् कैट-कुड्यादयस्तेषामावारकाः, तैरन्तरितानामपि मेर्वादीनां मनसा परिच्छेदानुभवात्। कर्मोदयात्, स्वभावाद् वा प्रतिनियतमेव मनः प्राप्नोतीति चेत्। नन्वेतदप्राप्यकारिणो नयनस्यापि समानम्॥ इति गाथार्थः॥ २४८॥

तस्मात् किमिह स्थितम् ?, इत्याह-

[3]सामत्थाभावाओ मणो व्व विसयपरओ न गिण्हेइ। कम्मक्खओवसमओ साणुग्गहओ य सामत्थं॥२४९॥

चक्षुः सिद्धान्तनिर्दिष्टनियतविषयपरिमाणात् परतो न गृह्णातीति प्रतिज्ञा, चक्षुषश्चेह कर्तृत्वं प्रक्रमाद् गम्यते, सामर्थ्याभावादिति हेतुः, मनोवदिति दृष्टान्तः। सामर्थ्याभावोऽपि नयनस्य कुतः ?, इत्याह- 'कम्मक्खओ इत्यादि' तदावरणकर्मक्षयोपशमात्, स्वानुग्रहतश्चाऽप्राप्तेष्वपि केषुचिद् योग्यदेशावस्थितेष्वर्थेषु परिच्छेदे कर्तव्ये लोचनस्य सामर्थ्यं भवति। इदमुक्तं भवति- अप्राप्तत्वे समानेऽपि येष्वर्थेषु ग्रहणविषये कर्मक्षयोपशमो भवति, तथा, स्वस्याऽऽत्मनो रूपा-ऽऽलोक-मनस्कारादिसामग्र्याः सकाशादनुग्रहो भवति, तेष्वर्थेषु कर्मक्षयोपशमसद्भावात्, शेषसामग्र्यनुग्रहाच्च चक्षुषो ग्रहणसामर्थ्यं भवति। येषु त्वर्थेषु ग्रहणविषये कर्मक्षयोपशमः, शेषसामग्र्यनुग्रहश्च नास्ति, तेषु तस्य सामर्थ्याभाव इत्यर्थापत्तित एव गम्यते। तस्माद् व्यवस्थितमप्राप्यकारित्वं नयन-मनसोः। ततश्च स्पर्शन-रसन-घ्राण-श्रोत्रभेदाच्चतुर्विध एव व्यञ्जनावग्रह इति स्थितम्॥ इति गाथार्थः॥ २४९॥

तदेवं '[4]नयण-मणोवज्जिंदियभेयाओ वंजणोग्गहो चउहा' इत्येतत् समर्थितम्। अथ प्रकृतमुच्यते-

'[5]तत्थोग्गहो [6]दुरूवो गहणं जं होइ[7] वंजण-त्थाणं। वंजणओ य जमत्थो तेणाईए तयं वोच्छं'॥ १॥

इत्यादिना ग्रन्थेन प्रतिज्ञातव्यञ्जनावग्रहस्वरूपप्रतिपादनं चेह प्रकृतम्। तस्य च व्यञ्जनावग्रहस्य स्वरूपं नन्द्यध्ययनागमसूत्रे प्रतिबोधक-मल्लकोदाहरणाभ्यां प्रतिपादितम्, तद्यथा-

---

१ क. ग. 'हणेऽन'। २ घ छ. ज. 'घट'। ३ सामर्थ्याभावाद् मन इव विषयपरतो न गृह्णाति। कर्मक्षयोपशमतः सानुग्रहतश्च सामर्थ्यम्॥ २४९॥
४ गाथा २०४। ५ गाथा १९३। ६ क. ग. घ. छ. ज 'दुभेओ ग' ७ क. ग. घ. छ. ज. 'होज्ज व'।

विशेषा धर्माः श्रोत्रग्राह्यत्वादयः, चक्षुरादिवेद्यत्वादयश्च, तद्विषयेहा तदन्यविशेषेहा, किमत्र श्रोत्रग्राह्यत्वादयो धर्मा उपलभ्यन्ते, आहोस्विच्चक्षुरादिवेद्यत्वादयः ? इत्येवंरूपो विमर्श इत्यर्थः, तदनन्तरं तु वर्जनं च तत्राऽविद्यमानरूपादिगतानां हेयधर्माणां चक्षुर्वेद्यत्वादीनां, परिग्रहणं च तत्र गृहीतशब्दसामान्यगतानामुपादेयधर्माणां श्रोत्रग्राह्यत्वादीनाम्, इति वर्जन-परिग्रहणे त्यागा-ऽऽदाने; सामान्यं च तदन्यविशेषेहा च वर्जन-परिग्रहणे च सामान्य-तदन्यविशेषेहा-वर्जन-परिग्रहणानि तेभ्यस्ततः। 'से' तस्य श्रोतुः। अर्थावग्रहैकसमयेऽप्युपयोगबाहुल्यमापन्नं प्राप्तम्। तथाहि– प्रथमः सामान्यग्रहणोपयोगः, यथोक्तेहोपयोगस्तु द्वितीयः, हेयधर्मवर्जनोपयोगस्तृतीयः, उपादेयधर्मपरिग्रहणोपयोगश्चतुर्थः, इत्येवमर्थावग्रहैकसमयमात्रेऽपि बहव उपयोगाः प्राप्नुवन्ति। न चैतद् युक्तम्, समयविरुद्धत्वात्। तस्माद् नार्थावग्रहे शब्दविशेषबुद्धिः, किन्तु 'सद्दे त्ति भणइ वत्ता' इत्यादि स्थितम्॥ इति गाथार्थः॥ २६७॥

अथाऽस्मिन्नेवाऽर्थावग्रहेऽपरवाद्यभिप्रायं निराचिकीर्षुराह–

[2]अण्णे सामण्णग्गहणमाहु बालस्स जायमेत्तस्स। समयम्मि चेव परिचियविसयस्स विसेसविन्नाणं॥ २६८॥

अन्ये वादिनः केचिदेवमाहुः– यदेतत्सर्वविशेषविमुखस्याऽव्यक्तस्य सामान्यमात्रस्य वस्तुनो ग्रहणमालोचनं, तद् बालस्य शिशोस्तत्क्षणजातमात्रस्य भवति, नाऽत्र विप्रतिपत्तिः, अव्यक्तो ह्यसौ संकेतादिविकलोऽपरिचितविषयः। यस्तर्हि परिचितविषयः, तस्य किम् ?, इत्याह– समय एवाऽऽद्यशब्दश्रवणसमय एव विशेषविज्ञानं जायते, स्पष्टत्वात् तस्य। ततश्चाऽमुमाश्रित्य-"[3]तेण सद्दे त्ति उग्गहिए" इत्यादि यथाश्रुतमेव व्याख्यायते, न कश्चिद् दोष इति भावः॥ इति गाथार्थः॥ २६८॥

अत्रोत्तरमाह–

[4]तदवत्थमेव तं पुव्वदोसओ तम्मि चेव वा समये। संख-महुराइसुबहुयविसेसगहणं पसज्जेज्जा॥ २६९॥

'[5]जेणत्थोग्गहकाले' इत्यादिना ग्रन्थेन '[6]सामण्ण-तयण्णविसेसेहा' इत्यादिना च ग्रन्थेन यद् दूषितं या तस्याऽवस्था

१ गाथा २५३। २ अन्ये सामान्यग्रहणमाहुर्बालस्य जातमात्रस्य। समये एव परिचितविषयस्य विशेषविज्ञानम्॥ २६८॥ ३ तेन शब्द इत्यवगृहीतः। ४ तदवस्थमेव तत् पूर्वदोषतस्तस्मिन्नेव वा समये। शाङ्ख-मधुरादिसुबहुकविशेषग्रहणं प्रसज्येत॥२६९॥ ५ गाथा २६६। ६ गाथा २६७।

समयप्रविष्टाः पुद्गलाः शब्दद्रव्यविशेषा ग्रहणमागच्छन्ति– अर्थावग्रहज्ञानहेतवो भवन्तीति भावः । इह च चरमसमयप्रविष्टा एव विज्ञानजनकत्वेन ग्रहणमागच्छन्ति, तदन्ये त्विन्द्रियक्षयोपशमोपकारिण इति सर्वेषां सामान्येन ग्रहणमुक्तम् । सेय प्रतिबोधकदृष्टान्तेन ' व्यञ्जनावग्रहप्ररूपणा ' इति वाक्यशेषः ॥ अथ केयं मल्लकदृष्टान्तेन प्ररूपणा ?। तद्यथा नाम कश्चित् पुरुष आपाकशिरसो मल्लकं शरावं गृहीत्वा, रूक्षमिदं भवतीत्यस्य ग्रहणम् । तत्र मल्लके एकमुदकबिन्दुं प्रक्षिपेत् स नष्टः, तत्रैव तद्भावपरिणतिमापन्न इत्यर्थः । शेषं सुबोधं यावद् ' जेणं तं मल्लग ' । ' रावेहिति ' आर्द्रतां नेष्यति । शेषं सुबोधम् । नवरं ' पवाहेहिति ' प्लावयिष्यतीति । एवामेवेत्यादि । अतिबहुत्वात् प्रतिसमयमनन्तैः शब्दपुद्गलैर्यदा तद् व्यञ्जनं पूरितं भवति, तदा 'हुं' इति करोति तमर्थं गृह्णातीत्युक्त भवति । किंविशिष्ट ?, नाम-जात्यादिकल्पनारहितम् । अत एवाऽऽह– 'नो चेव णं जाणइ के वेस सद्दाइ त्ति' न पुनरेव जानाति क एष शब्दादिः ? इत्यर्थः । एव च सति सामयिकत्वादर्थावग्रहस्य, अर्थावग्रहात् पूर्व सर्वो व्यञ्जनावग्रहः " ॥

तदेवमस्य व्यञ्जनावग्रहस्वरूपप्रतिपादकस्य नन्दिसूत्रस्य शेषं प्रायः सुगममिति मन्यमानो भाष्यकारः "जाहे[1] तं वंजणं पूरियं होइ" इत्येतद् व्याचिख्यासुराह—

तोएण[2] मल्लगं पिव वंजणमापूरियं ति जं भणियं । तं दव्वमिंदियं वा तस्संजोगो व न विरुद्धं ॥ २५०॥

'जं भणियं' यदुक्तं नन्दिसूत्रकारेण । किं तत् ?, इत्याह– व्यञ्जनमापूरितमिति । केन किंवत् ?, इत्याह– तोयेन जलेन मल्लकं शरावं तद्वदिति । तस्मिन् सूत्रकारभणिते व्यञ्जनं द्रव्यं गृह्यते, इन्द्रियं वा, तयोर्वा द्रव्ये-न्द्रिययोः संयोगः संबन्धः, इति सर्वथाऽप्यविरोधः। इदमुक्तं भवति– व्यञ्जनशब्देन शब्दादिविषयपरिणतपुद्गलसमूहरूपं द्रव्यं, श्रोत्रादीन्द्रियं वा, द्रव्ये-न्द्रिययोः संबन्धो वा गृह्यते, न कैश्चिद्[3] विरोधः, व्यज्यते प्रकटीक्रियते विवक्षितोऽर्थोऽनेनेति व्यञ्जनमित्यस्या व्युत्पत्तेः सर्वत्र घटनात् ॥ इति गाथार्थः ॥ २५० ॥

केवलं द्रव्यादिषु त्रिष्वपि व्यञ्जनशब्दवाच्येषु प्रत्येकमापूरितत्वे विशेषो द्रष्टव्यः । कः पुनरसौ ?, इत्याह–

दव्वं[4] माणं पूरियमिंदियमापूरियं तहा दोण्हं । अवरोप्परसंसग्गो जया तया गिण्हइ तमत्थं ॥ २५१ ॥

'दव्वं ति' यदा द्रव्यं व्यञ्जनमधिक्रियते तदा "जाहे[1] तं वंजणं पूरियं होइ" इति कोऽर्थः ? इत्याह–'माणं पूरियं ति' मानं तस्य शब्दादिद्रव्यस्य प्रमाणं प्रतिसमयप्रवेशेन प्रभूतीकृतत्वात् स्वप्रमाणमानीतं प्रकर्षमुपनीतं स्वग्राहकज्ञानजनने समर्थीकृतमिति यावत् । यदा

1 यदा तद्व्यञ्जनं पूरितं भवति । 2 तोयेन मल्लकमिव व्यञ्जनमापूरितमिति यद् भणितम् । तद् द्रव्यमिन्द्रियं वा तत्संयोगो वा न विरुद्धम् ॥२५०॥
3 जं. 'कदाचिद्' । 4 द्रव्यं मानं पूरितमिन्द्रियमापूरित तथा द्वयोः । परस्परसंसर्गो यदा तदा गृह्णाति तमर्थम् ॥ २५१ ॥

'[1]सामण्ण-तयणण्विसेसेहा' इत्यादिना प्रागुक्तं समयोपयोगबाहुल्यं प्राप्नोति । अथवेत्यग्रतोऽप्यनुवर्तते। ततश्चाऽथवा परिचितविषयस्य विशेषज्ञानेऽभ्युपगम्यमाने परिचिततरविषयस्य तस्मिन्नेव समये सर्वविशेषग्रहणमनन्तरोक्तं प्राप्नोति । अथवाऽवग्रहमात्रादपि विशेषपरिच्छेदेऽङ्गीक्रियमाणे ईहादीनामनुत्थानमेव। ततश्च सर्वोऽपि मतिरवग्रहो ग्राह्यः– सर्वस्यापि मतेरवग्रहरूपतैव प्राप्नोतीत्यर्थः। अथवा सर्वोऽपि मतिरपाय एवैकः प्राप्नोति, अर्थावग्रहे विशेषज्ञानस्याऽऽश्रयणात्, तस्य च निश्चयरूपत्वात्, निश्चयस्य चाऽपायत्वादिति । समयमात्रे चाऽस्मिन्नपाये सिद्धे "[2]ईहा-वाया मुहुत्तमन्तं तु" इति विरुध्यते। अथवाऽर्थेऽवगृहीते, ईहिते च, अपायः सिद्धान्ते निर्दिश्यते "[3]उग्गहो ईहा अवाओ य" इति क्रमनिर्देशात्, यदि चाऽऽद्यसमयेऽपि विशेषज्ञानाऽभ्युपगमादपाय इष्यते, तर्ह्यनवगृहीतेऽनीहिते च तस्मिन्नसौ प्राप्तः। 'वा' इत्यथवा, यदि तृतीयस्थाननिर्दिष्टोऽप्यपायः '[4]समयम्मि चेव परिचियविसयस्स विण्णाणं' इति वचनात् पटुत्ववैचित्र्येण प्रथममभ्युपगम्यते, तर्हि तस्मादेव पाटववैचित्र्यादवग्रहे-हा-ऽपाय-धारणानां ध्रुवं निश्चितमुत्क्रम-व्यतिक्रमौ स्याताम्। तत्र पश्चानुपूर्वीभवनमुत्क्रमः, अनानुपूर्वीभावस्तु व्यतिक्रमः, तथाहि– यथा शक्तिवैचित्र्यात् कश्चित् प्रथममेवाऽपायो भवताऽभ्युपगम्यते, तथा तत एव कस्याऽपि प्रथमं धारणा स्यात्, ततोऽपायः, ततोऽपीहा, तदनन्तरं त्ववग्रह इत्युत्क्रमः; अन्यस्य कस्यचित्पुनरवग्रहमुल्लङ्घ्य प्रथममेवेहा समुपजायेत, अपरस्य तु तामप्यतिक्रम्याऽपायः, अन्यस्य तु तमप्यतिवृत्त्य धारणा स्यात्, इत्यादिर्व्यतिक्रमः। न चेह वयं युक्तिमाप्रच्छनीयाः, भवदभ्युपगतस्य शक्तिवैचित्र्यस्यैव पुष्टहेतोः सद्भावात् । न चैतावुत्क्रम-व्यतिक्रमौ युक्तौ "[5]उग्गहो ईहा अवायो य धारणा एव होन्ति चत्तारि" इति [6]परममुनिनिर्दिष्टक्रमस्याऽन्यथाकर्तुमशक्यत्वादिति। तथा, यदि यत् प्रथमसमये गृह्यते स विशेषः, तर्हि 'सामण्णं च विसेसो त्ति' यत् सामान्यं तदपि विशेषः प्राप्तः, प्रथमसमये हि सर्वस्याऽपि वस्तुनोऽव्यक्तं सामान्यमेव रूपं गृह्यते, ततोऽस्मिन्नप्यर्थावग्रहसमये सामान्यमेव गृह्यत इति परमार्थः। यदिवाऽत्र विशेषबुद्धिर्भवताऽभ्युपगम्यते, तर्हि यदिह वस्तुस्थित्या सामान्यं स्थितं तदपि भवदभिप्रायेण विशेषः प्राप्तः। चशब्दो दूषणसमुच्चयार्थः । 'सो वा सामण्णं ति' स वा भवदभिप्रेतो विशेषो वस्तुस्थितिसमायातं सामान्यं प्राप्नोतीति । 'उभयमुभयं व त्ति' अथवा, सामान्य-विशेषलक्षणमुभयमप्येतत्प्रत्येकमुभयं प्राप्नोति– एकैकमुभयरूपं स्यादित्यर्थः; तथाहि– अव-ईषत् सामान्यं गृह्णातीत्यवग्रह इतिव्युत्पत्त्या वस्तुस्थितिसमायातं यत्सामान्यं तत् स्वरूपेण तावत् सामान्यम्, भवदभ्युपगमेन तु विशेषः, इत्येकस्याऽपि सामान्यस्योभयरूपता; तथा योऽपि भवदभ्यु-

१ गाथा २६७। २ ईहा-ऽपायौ मुहूर्तान्तस्तु। ३ अवग्रह, ईहा, अपायश्च। ४ गाथा-२६८। ५ अवग्रह ईहाऽपायश्च धारणा एव भवन्ति चत्वारि। ६ श्रीभद्रबाहुस्वामिभिः।

तदेतत् कथमविरोधेन नीयते ?– युष्मद्व्याख्यानेन सह विरुध्यते एवेदमित्यर्थः, तथाहि– अस्मिन्नन्दिसूत्रेऽयमथः प्रतीयते– यथा तेन प्रतिपत्त्राऽर्थावग्रहेण शब्दोऽवगृहीत इति। भवन्तस्तु शब्दाद्युल्लेखरहितं सर्वथाऽमुं प्रतिपादयन्ति, ततः कथं न विरोधः ?, इति भावः इति गाथार्थः ॥ २५२ ॥

अत्रोत्तरमाह–

सद्दे त्ति भणइ वत्ता तम्मत्तं वा न सद्दबुद्धीए। जइ होइ सद्दबुद्धी तोऽवाओ चेव सो होज्जा ॥ २५३ ॥

शब्दस्तेनावगृहीत इति यदुक्तं, तत्र 'शब्दः' इति वक्ता प्रज्ञापकः, सूत्रकारो वा भणति प्रतिपादयति, अथवा तन्मात्रं शब्दमात्रं रूप-रसादिविशेषव्यावृत्त्या-ऽनवधारितत्वाच्छब्दतयाऽनिश्चितं गृह्णातीति। एतावतांशेन शब्दस्तेनावगृहीत इत्युच्यते, न पुनः शब्दबुद्ध्या–'शब्दोऽयं' इत्यध्यवसायेन तच्छब्दवस्तु तेनाऽवगृहीतम्, शब्दोल्लेखस्याऽऽन्तर्मुहूर्त्तिकत्वात्, अर्थावग्रहस्य त्वेकसामयिकत्वादसंभव एवाऽयमिति भावः। यदि पुनस्तत्र शब्दबुद्धिः स्यात्, तर्हि को दोषः स्यात् ?, इत्याशङ्क्य सूत्रकारः स्वयमेव दूषणान्तरमाह– 'जईत्यादि' यदि पुनरर्थावग्रहे शब्दबुद्धिः शब्दनिश्चयः स्यात्, तदाऽपाय एवाऽसौ स्यात्, न त्वर्थावग्रहः, निश्चयस्याऽपायरूपत्वात्। ततश्चार्थावग्रहे-हाभाव एव स्यात्, न चैतद् दृष्टम्, इष्टं च ॥ इति गाथार्थः ॥ २५३ ॥

अत्राह परः– ननु प्रथमसमय एव रूपादिव्यपोहेन 'शब्दोऽयम्' इति प्रत्ययोऽर्थावग्रहत्वेनाऽभ्युपगम्यताम्, शब्दमात्रत्वेन सामान्यत्वात्; उत्तरकालं तु प्रायो माधुर्यादयः शङ्खशब्दधर्मा इह घटन्ते, न तु शार्ङ्गधर्माः खर-कर्कशत्वादय इति विमर्शबुद्धिरीहा, तस्माच्छाङ्ख एवाऽयं शब्द इति तद्विशेषस्त्वपायोऽस्तु। तथा च सति "[2]तेणं सद्दे त्ति उग्गहिए" इदं यथाश्रुतमेव व्याख्यायते। "नो[3] चेव णं जाणइ के वेस सद्दाइ, तओ ईहं पविसइ" इत्याद्यपि सर्वमविरोधेन गच्छतीति। तदेतत् परोक्तं सूरिः प्रत्यनुभाष्य दूषयति, तद्यथा–

जइ सद्दबुद्धिमेत्तयमवग्गहो तव्विसेसणमवाओ। णणु सद्दो नासद्दो न य रूवाइ विसेसोऽयं ॥ २५४ ॥

भोः पर ! यदि शब्दबुद्धिमात्रं 'शब्दोऽयम्' इति निश्चयज्ञानमपि भवताऽर्थावग्रहोऽभ्युपगम्यते, तद्विशेषणं तु तस्य शब्दस्य विशेषणं विशेषः 'शाङ्ख एवाऽयं शब्दः' इत्यादिविशेषज्ञानमित्यर्थः, अपायो मतिज्ञानतृतीयो भेदोऽङ्गीक्रियते। हन्त ! तर्हि अवग्रहल-

१ शब्द इति भणति वक्ता तन्मात्रं वा, न शब्दबुद्ध्या। यदि भवति शब्दबुद्धिस्ततोऽपाय एव स भवेत् ॥ २५३ ॥
२ तेन शब्द इत्यवगृहीतः। ३ नो चेव जानाति क एष शब्दादिः, तत ईहां प्रविशति।
४ यदि शब्दबुद्धिमात्रमवग्रहस्तद्विशेषणमवायः। ननु शब्दो नाऽशब्दो न च रूपादि विशेषोऽयम् ॥ २५४ ॥

[1]तं वंजणोग्गहाओ पुव्वं पच्छा स एव वा होज्जा । पुव्वं तदत्थवंजणसंबंधाभावओ नत्थि ॥ २७४ ॥

यमनुपहतस्मरणवासनासन्तानस्तदर्थावग्रहात् पूर्वं व्यञ्जनावग्रहो भवतीति यदुक्तं प्राक्, तद् भवानपि स्मरति । ततः किम्?, इति चेत् । उच्यते– यदेतद् भवदभ्युपेक्षितं सामान्यग्राहकमालोचनं तत् तस्माद् व्यञ्जनावग्रहात् पूर्वं वा भवेत्, पश्चाद् वा भवेत्, स एव वा व्यञ्जनावग्रहोऽप्यालोचनं भवेत् ?, इति त्रयी गतिः, अन्यत्र स्थानाभावात् । किञ्चाऽतः ?, इत्याह– पूर्वं तद् नास्तीति संबन्धः । कुतः?, इत्याह– अर्थव्यञ्जनसंबन्धाभावादिति– अर्थः शब्दादिविषयभावेन परिणतद्रव्यसमूहः, व्यञ्जनं तु श्रोत्रादि, अर्थश्च व्यञ्जनं चाऽर्थ-व्यञ्जने तयोः संबन्धस्तस्याऽभावात्, सति ह्यर्थ-व्यञ्जनसंबन्धे सामान्यार्थालोचनं स्यात्, अन्यथा सर्वत्र सर्वदा तद्भावप्रसङ्गात् । व्यञ्जनावग्रहाच्च पूर्वमर्थव्यञ्जनसंबन्धो नास्ति, तद्भावे च व्यञ्जनावग्रहस्यैवेष्टत्वात् तत्पूर्वकालता न स्यादिति भावः ॥ इति गाथार्थः ॥२७४॥

द्वितीयविकल्पं शोधयन्नाह–

[2]अत्थोग्गहो वि जं वंजणोग्गहस्सेव चरमसमयम्मि । पच्छा वि तो न जुत्तं परिसेसं वंजणं होज्जा ॥२७५॥

तथा, अर्थावग्रहोऽपि यद् यस्माद् व्यञ्जनावग्रहस्यैव चरमसमये भवति, इति प्रागिहापि निर्णीतम् । तस्मात् पश्चादपि व्यञ्जनावग्रहादालोचनज्ञानं न युक्तम्, निरवकाशत्वात् । न हि व्यञ्जना-ऽर्थावग्रहयोरन्तरे कालः समस्ति, यत्र तत् त्वदीयमालोचनज्ञानं स्यात्, व्यञ्जनावग्रहचरमसमय एवाऽर्थावग्रहसद्भावात् । तस्मात् पूर्वं पश्चात्कालयोर्निषिद्धत्वात् पारिशेष्याद् मध्यकालवर्ती तृतीयविकल्पोपन्यस्तो व्यञ्जनं व्यञ्जनावग्रह एव भवताऽऽलोचनाज्ञानत्वेनाऽभ्युपगतो भवेत् । एवं च न कश्चिद् दोषः, नाममात्र एव विवादात् ॥ इति गाथार्थः ॥ २७५ ॥

क्रियतां तर्हि प्रेरकवर्गेण वर्धापनकम्, त्वदभिप्रायाविसंवादलाभात्, इति चेत् । नैवम्, विकल्पद्वयस्येह सद्भावात्, तथाहि– तद्व्यञ्जनावग्रहकालेऽभ्युपगम्यमानमालोचनं किमर्थस्यालोचनं, व्यञ्जनानां वा ?, इति विकल्पद्वयम् । तत्र प्रथमविकल्पमनूद्य दूषयन्नाह–

[4]तं च समालोयणमत्थदरिसणं जइ, न वंजणं तो तं । अह वंजणस्स तो कहमालोयणमत्थसुण्णस्स ? ॥२७६॥

1 तद् व्यञ्जनावग्रहात् पूर्वं पश्चात् स एव वा भवेत् । पूर्वं तदर्थव्यञ्जनसम्बन्धाभावतो नास्ति ॥ २७४ ॥ 2 क ग 'तन्द्भावे तु व्य' ज. 'तद्भावे तु व्य' ।
3 अर्थावग्रहोऽपि यद् व्यञ्जनावग्रहस्यैव चरमसमये । पश्चादप्यतो न युक्तं परिशेषं व्यञ्जनं भवेत् ॥ २७५ ॥
4 तच्च समालोचनमर्थदर्शनं यदि, न व्यञ्जनं तत् । अथ व्यञ्जनस्य ततः कथमालोचनमर्थशून्यस्य ? ॥ २७६ ॥

इतिशब्द उपप्रदर्शनार्थः, ततश्चेदमुक्तं भवति– यथा 'शाङ्खोऽयं शब्दः' इत्यस्यां बुद्धौ शब्दगतभेदाऽवधारणं सांप्रतमसाध्यम्, मन्द्र-मधुरत्वादितदुत्तरोत्तरभेदबाहुल्यसंभवात्। तथाच सति स्तोकत्वाद् नेयं बुद्धिरपायः, किन्त्वर्थावग्रह इत्येवं सुबहुनाऽपि कालेन सर्वेणाऽपि पुरुषायुषेण शब्दगतमन्द्र-मधुरत्वाद्युत्तरोत्तरभेदावधारणमसाध्यं तद्भेदानामनन्तत्वादशक्यमित्यर्थः, यस्मिन् भेदावधारणे, किम्?, इत्याह– यस्मिन् अपायो भवेदन्यभेदाकाङ्क्षानिवृत्तेर्यस्मिन् भेदावधारणज्ञानेऽपायत्वं व्यवस्थाप्येतेति भावः। तस्मात् सर्वोऽपि भेदप्रत्यय उत्तरोत्तरापेक्षया त्वदभिप्रायेण स्तोकत्वादर्थावग्रह एव प्राप्नोति, नाऽपायः, शब्दज्ञानवत् ॥ इति गाथार्थः ॥ २५६ ॥

किञ्च, 'शब्द एवायम्' इति ज्ञानं स्तोकत्वाद् यदर्थावग्रहत्वेन भवताऽभिमतम्। तत् पूर्वमीहामन्तरेण न संभवति, तत्पूर्वकत्वे च तस्याऽर्थावग्रहत्वासंभव इति दर्शयन्नाह–

[4]किं सद्दो किमसद्दो त्तणीहिए सद्द एव किह जुत्तं?। अह पुव्वमीहिऊणं सद्दो त्ति मयं, तई पुव्वं ॥२५७॥

'किं शब्दोऽयम्' आहोस्वित् 'अशब्दो रूपादिः' इत्येवं पूर्वमनीहिते यत् 'शब्द एव' इति निश्चयज्ञानम्, तदकस्मादेव जायमानं कथं युक्तम्?, विमर्शपूर्वकत्वमन्तरेण नेदं घटत इत्यर्थः। इदमुक्तं भवति– शब्दगतान्वयधर्मेषु, रूपादिभ्यो व्यावृत्तौ च गृहीतायां 'शब्द एव' इति निश्चयज्ञानं युज्यते, तद्ग्रहणं च विमर्शमन्तरेण नोपपद्यते, विमर्शश्चेहा, तस्मादीहामन्तरेणाऽयुक्तमेव 'शब्द एव' इति निश्चयज्ञानम्। अथ निश्चयकालात् पूर्वमीहित्वा भवतोऽपि 'शब्द एवाऽयम्' इति निश्चयज्ञानमभिमतम्। हन्त! तर्हि निश्चयज्ञानात् पूर्वं 'तई' असावीहा भवद्वचनतोऽपि सिद्धा ॥ इति गाथार्थः ॥ २५७ ॥

यदि नाम निश्चयज्ञानात् पूर्वमीहा सिद्धा, ततः किम्?, इत्याह–

[5]किं तं पुव्वं गाहियं जमीहओ सद्द एव विण्णाणं। अह पुव्वं सामण्णं जमीहमाणस्स सद्दो त्ति ॥२५८॥

हन्त! यदि निश्चयज्ञानमीहापूर्वकं त्वयाऽभ्युपगम्यते, तर्हि प्रष्टव्योऽसि- नन्वीहायाः पूर्वं किं तद् वस्तु प्रमात्रा गृहीतम्, यदीहमानस्य तस्य 'शब्द एवाऽयम्' इति निश्चयज्ञानमुपजायते?, न हि कश्चिद् वस्तुन्यगृहीतेऽकस्मात् प्रथमत एवेहां कुरुत इति भावः। क्षुभितस्य परस्योत्तरप्रदानासामर्थ्यमालोक्य स्वयमेव तन्मतमाशङ्कते– अथ ब्रूयात् परः– सामान्यं नाम-जात्यादिकल्पनारहितं वस्तुमात्र-

1 ज. 'पद'। 2 क. 'द् यदर्थो'। 3 क.ग 'तत पू'। 4 किं शब्दः किमशब्द इत्यनीहिते शब्द एव कथं युक्तम्?। अथ पूर्वमीहित्वा शब्द इति मतं, सा पूर्वम् ॥२५७॥ 5 किं तत् पूर्वं गृहीतं यदीहमानस्य शब्द एव विज्ञानम्। अथ पूर्वं सामान्य यदीहमानस्य शब्द इति ॥ २५८ ॥

अथाऽर्थावग्रहसमये शब्दाद्यवगमेन सहैवेहा भविष्यतीति मन्यसे, तत्राऽऽह—

अत्थावग्गहसमए वीसुमसंखेज्जसमइया दो वि । तक्का-वगमसहावा ईहा-ऽवाया कहं जुत्ता ? ॥ २७९ ॥

अर्थावग्रहसंबन्धिन्येकस्मिन् समये कथमीहा-ऽपायौ युक्तौ ?, इति संबन्धः । कथंभूतावेतौ ? यतः, इत्याह— तर्का-ऽवगमस्वभावौ, तर्को विमर्शस्तत्स्वभावेहा, अवगमो निश्चयस्तत्स्वभावोऽपायः; द्वावपि चैतौ पृथगसंख्येयसमयनिष्पन्नौ । एतदुक्तं भवति— यदिदमर्थावग्रहे विशेषज्ञानं त्वयेष्यते सोऽपायः, स चाऽवगमस्वभावो निश्चयस्वरूप इत्यर्थः; या च तत्समकालमीहाऽभ्युपेयते सा तर्कस्वभावा, अनिश्चयात्मिकेत्यर्थः । तत एतावीहा-ऽपायावनिश्चयेतरस्वभावौ कथमर्थावग्रहे युगपदेव युक्तौ; निश्चया-ऽनिश्चययोः परस्परपरिहारेण व्यवस्थितत्वात्, एकत्रैकदाऽवस्थानाभावेन सहोदयाऽनुपपत्तेः ? इति । एषा तावद् विशेषावगमे-हयोः सहभावे एकाऽनुपपत्तिः । अपरं च समयमात्रकालोऽर्थावग्रहः, ईहा-ऽपायौ तु "[2]ईहा-वाया मुहुत्तमंतं तु" इति वचनात् प्रत्येकमसंख्येयसमयनिष्पन्नौ कथमेकस्मिन्नर्थावग्रहसमये स्याताम्, अत्यन्तानुपपन्नत्वात् ? । इति द्वितीयाऽनुपपत्तिः । तस्मादत्यन्तासंबद्धत्वाद् यत् किञ्चिदेतत्, इत्युपेक्षणीयम् ॥ इति गाथार्थः ॥ २७९ ॥

तदेवं युक्तिशतैर्निराकृतानामपि प्रेरकाणां निःसंख्यातत्वात् केषांचित् प्रेर्यशेषमद्यापि सूरिराशङ्कते—

[3]खिप्पे-यराइभेओ जमोग्गहो तो विसेसविण्णाणं । जुज्जइ विगप्पवसओ सद्दो त्ति सुयम्मि जं केइ ॥ २८० ॥

'केइ त्ति' इहाऽर्थावग्रहे विशेषज्ञानसमर्थनाऽऽग्रहममुमुक्षवोऽद्यापि केचिद् वादिनो मन्यन्ते । किम् ?, इत्याह— क्षिप्रे-तरादिभेदो यस्मादवग्रहो ग्रन्थान्तरे भणितः 'अत्रापि च विस्तरेण भणिष्यते' इति गम्यते । ततः 'शब्दः' इति विशेषविज्ञानं युज्यते घटते 'अर्थावग्रहे' इति प्रस्तावादेव लभ्यते । यत् किम् ?, इत्याह— 'सुयम्मि जं ति' "तेणं सद्दे त्ति उग्गहिए" इत्यादिवचनात् यत् 'सूत्रे निर्दिष्टम्' इति शेषः । कुतः पुनरिदं विशेषविज्ञानं युज्यते ?, इत्याह— विकल्पवशतोऽन्यत्रोक्तनानात्ववशतः, इत्यक्षरघटना ॥

एतच्चाऽत्र हृदयम्— "क्षिप्रमवगृह्णाति, चिरेणाऽवगृह्णाति, बह्ववगृह्णाति, अबह्ववगृह्णाति, बहुविधमवगृह्णाति, अबहुविधमवगृह्णाति, एवमनिश्रितम्, निश्रितं, असंदिग्धं, संदिग्धम्, ध्रुवम्, अध्रुवमवगृह्णाति" इत्यादिना ग्रन्थेनाऽवग्रहादयः शास्त्रान्तरे द्वादशभिर्विशेषणैर्विशेषिताः । अत्राऽपि च पुरस्तादयमर्थो वक्ष्यते । ततः 'क्षिप्रं चिरेण वाऽवगृह्णाति' इतिविशेषणान्यथानुपपत्तेर्ज्ञायते—

१ अर्थावग्रहसमये विष्वगसंख्येयसामयिकौ द्वावपि । तर्का-ऽवगमस्वभावावीहा-ऽपायौ कथं युक्तौ ? ॥ २७९ ॥ २ ईहा-ऽपायौ मुहूर्तान्तस्तु । ३ क्षिप्रे तरादिभेदो यदवग्रहस्ततो विशेषविज्ञानम् । युज्यते विकल्पवशतः शब्द इति सूत्रे यत् केचित् ॥ २८० ॥

अत्रोत्तरमाह–

[1]सव्वत्थ देसयंतो सद्दो सद्दो त्ति भासओ भणइ । इहरा न समयमेत्ते सद्दो त्ति विसेसणं जुत्तं ॥ २६१ ॥

सर्वत्र पूर्वस्मिन्, अत्र च सूत्रावयवे, अवग्रहस्वरूपं देशयन् प्ररूपयन् 'शब्दः शब्दः' इति भाषकः प्रज्ञापक एव वदति, न तु तत्र ज्ञाने शब्दप्रतिभासोऽस्ति । इत्थं चैतत्, अन्यथा न समयमात्रेऽर्थावग्रहकाले 'शब्दः' इति विशेषणं युक्तम्, आन्तर्मुहूर्तिकत्वाच्छब्दनिश्चयस्येति प्रागेवोक्तम् । सांव्यवहारिकाऽर्थावग्रहापेक्षं वा सूत्रमिदं व्याख्यास्यते, इति मा त्वरिष्ठाः ॥ इति गाथार्थः ॥ २६१ ॥

अथ सूत्रावष्टम्भवादिनं परं दृष्ट्वा सौत्रमेव परिहारमाह–

[2]अहव सुए च्चिय भणियं जह कोइ सुणेज्ज सद्दमव्वत्तं । अव्वत्तमणिद्देसं सामण्णं कप्पणारहियं ॥ २६२ ॥

अथवा यदि तव गाढः श्रुतावष्टम्भः, तदा तत्राप्येतद् भणितं यदुत–प्रथममव्यक्तस्यैव शब्दोल्लेखरहितस्य शब्दमात्रस्य ग्रहणम् । केन पुनः सूत्रावयवेनेदमुक्तम्?, इत्याह–'जह कोइ सुणेज्ज सद्दमव्वत्तं ति' अयं च सूत्रावयवो नन्द्यध्ययने इत्थं द्रष्टव्यः– "[3]से जहानामए केइ पुरिसे अव्वत्तं सद्दं सुणेज्ज त्ति"। [4]अत्राऽव्यक्तमिति कोऽर्थः?, इत्याह– अनिर्देश्यं 'शब्दोऽयं' 'रूपादिर्वा' इत्यादिना प्रकारेणाऽव्यक्तमित्यर्थः । ननु यदि शब्दादिरूपेणाऽनिर्देश्यम्, तर्हि किं तत्?, इत्याह– सामान्यम् । किमुक्तं भवति?, इत्याह– नाम-जात्यादिकल्पनारहितम् । न च वक्तव्यं– शाङ्ख-शार्ङ्गभेदापेक्षया शब्दोल्लेखस्याऽप्यव्यक्तत्वे घटमाने कुत इदं व्याख्यानं लभ्यते? इति; अवग्रहस्याऽनाकारोपयोगरूपतया सूत्रेऽधीतत्वात्, अनाकारोपयोगस्य च सामान्यमात्रविषयत्वात्, प्रथममेवाऽपायप्रसत्त्याऽवग्रहेहाऽभावप्रसङ्ग इत्याद्युक्तत्वाच्च ॥ इति गाथार्थः ॥ २६२ ॥

अथ सूरिरेव पराभिप्रायमाशिशङ्कयिषुराह–

[5]अह व मई, पुव्वं चिय सो गहिओ वंजणोग्गहे तेणं । जं वंजणोग्गहम्मि वि भणियं विण्णाणमव्वत्तं ॥२६३॥

१ सर्वत्र देशयन् शब्दः शब्द इति भाषको भणति । इतरथा न समयमात्रे शब्द इति विशेषणं युक्तम् ॥ २६१ ॥
२ अथवा श्रुत एव भणितं यथा कश्चित् शृणुयाच्छब्दमव्यक्तम् । अव्यक्तमनिर्देश्यं सामान्यं कल्पनारहितम् ॥ २६२ ॥
३ तद्यथानामा कश्चित् पुरुषोऽव्यक्तं शब्दं शृणुयादिति । ४ घ. छ ज. 'तत्रा' ।
५ अथ वा मति', पूर्वमेव स गृहीतो व्यञ्जनावग्रहे तेन । यद् व्यञ्जनावग्रहेऽपि भणित विज्ञानमव्यक्तम् ॥ २६३ ॥

न्त्वपायस्य कारणमवग्रहादयः, कारणे च योग्यतया कार्यस्वरूपमस्ति, इत्युपचारतस्तेऽपि बह्वादिग्राहकाः प्रोच्यन्ते, इत्यदोषः। यद्येवम्, तर्हि वयमप्यपायगतं विशेषज्ञानमर्थावग्रहेऽप्युपचरिष्याम इति। एतदेवाह– 'अहेत्यादि' अथोक्तन्यायेनोपचारं कृत्वा विशेषग्राहकोऽर्थावग्रहः प्रोच्यते। नैतदेवम्, यतो मुख्याभावे सति प्रयोजने निमित्ते चोपचारः प्रवर्तते। न चैवमुपचारे किञ्चित् प्रयोजनमस्ति। "[1]तेणं सद्दे त्ति उग्गहिए" इत्यादिसूत्रस्य यथाश्रुतार्थनिगमनं प्रयोजनमिति चेत्। न, 'सद्दे[2] त्ति भणइ वत्ता' इत्यादिप्रकारेणाऽपि तस्य [3]निगमितत्वात्। सामर्थ्यव्याख्यानमिदम्, न यथाश्रुतार्थव्याख्येति चेत्। तर्हि यत्नुपचारेणाऽपि श्रौतोऽर्थः सूत्रस्य व्याख्यायत इति तवाभिप्रायः, तर्हि यथा युज्यत उपचारः, तथा कुरु, न चैवं क्रियमाणोऽसौ युज्यते, यतः 'सिंहो माणवकः'' 'समुद्रस्तडागः' इत्यादाविव किञ्चित्साम्ये सत्ययं विधीयमानः शोभते। न चैतत्सामायिकेऽर्थावग्रहेऽसंख्येयसामायिकं विशेषग्रहणं कथमप्युपपद्यते। तर्हि कथमयमुपचारः क्रियमाणो घटते ?, इति चेत्। अहो ! सुचिरादुपसन्नोऽसि। ततः शृणु समाकर्णयाऽवहितेन मनसा, सोऽपि यथा युज्यते तथा कथयामि– 'सद्दे त्ति भणइ वत्ता' इत्यादिप्रकारेण तावद् व्याख्यातं सूत्रम्। यदि चौपचारिकेणाऽप्यर्थेन भवतः प्रयोजनम्, तर्हि सोऽपि यथा घटमानकस्तथा कथ्यत इत्यपिशब्दाभिप्रायः॥ इति गाथार्थः॥ २८१॥

यथामतिज्ञातमेव संपादयन्नाह–

[4]सामण्णमेत्तग्गहणं नेच्छइओ समयमोग्गहो पढमो। तत्तोऽणंतरमीहियवत्थुविसेसस्स जोऽवाओ॥ २८२॥

सो पुणरीहाऽवायावेक्खाओ वग्गहो त्ति उवयरिओ। एस्सविसेसावेक्खं सामण्णं गेण्हए जेणं॥ २८३॥

तत्तोऽणंतरमीहा तत्तोऽवाओ य तव्विसेसस्स। इय सामण्ण-विसेसावेक्खा जावंतिमो भेओ॥ २८४॥

व्याख्या– इहैकसमयमात्रमानो नैश्चयिको निरुपचरितः प्रथमोऽर्थावग्रहः। कथंभूतः ?, इत्याह– सामान्यमात्रस्याऽव्यक्तानिर्देश्यस्य वस्तुनो ग्रहणं सामान्यवस्तुमात्रग्राहक इत्यर्थः, सामयिकानि हि ज्ञानादिवस्तूनि परमयोगिन एव निश्चयवेदिनोऽवगच्छन्तीति

१ तेन शब्द इत्यवगृहीतः। २ गाथा २५३। ३ क ग. 'निर्गमि' घ. 'निमित्तत्वा'।

४ सामान्यमात्रग्रहणं नैश्चयिकः समयमवग्रहः प्रथमः। ततोऽनन्तरमीहितवस्तुविशेषस्य योऽपायः॥ २८२॥ स पुनरीहाऽपायापेक्षातोऽवग्रह इत्युपचरितः। एष्यविशेषापेक्षं सामान्यं गृह्यते येन॥ २८३॥ ततोऽनन्तरमीहा ततोऽपायश्च तद्विशेषस्य। इति सामान्य-विशेषापेक्षा यावदन्तिमो भेदः॥ २८४॥

तदेवं व्यञ्जनावग्रहे व्यञ्जनसंबन्धमात्रमेव, अर्थावग्रहे त्वव्यक्तशब्दाद्यर्थग्रहणं, न व्यक्तशब्दाद्यर्थसंवेदनम्, इति प्रतिपादितम् । सांप्रतमुपपत्त्यन्तरेणाऽप्यर्थावग्रहे व्यक्तशब्दाद्यर्थसंवेदनं निराचिकीर्षुराह–

[1]जेणत्थोग्गहकाले गहणे-हा-वायसंभवो नत्थि । तो नत्थि सद्दबुद्धी, अहत्थि नावग्गहो नाम ॥ २६६ ॥

पूर्वं तावदर्थस्य ग्रहणमात्रं, ततश्चेहा, तदनन्तरं त्वपायः, इत्येवं मतिज्ञानस्योत्पत्तिक्रमः । न चैतत्त्रितयं प्रथममेव शब्दा[2]र्थेऽवगृहीते समस्तीति । एतदेवाह– येनार्थावग्रहकालेऽर्थग्रहणे-हा-ऽपायानां संभवो नास्ति, ततोऽर्थावग्रहे नास्ति 'शब्दः' इतिविशेषबुद्धिः, अर्थग्रहणे-हा-पूर्वकत्वात् तस्याः । अथाऽस्त्यसौ तत्र, तर्हि नाऽयमर्थावग्रहः, किन्त्वपाय एव स्यात्, नैतद् युज्यते, तदभ्युपगमेऽर्थावग्रहे-हयोरभावप्रसङ्गात् ॥ इति गाथार्थः ॥ २६६ ॥

अपि च, अर्थावग्रहे 'शब्दः' इति विशेषबुद्धाविष्यमाणायां दोषान्तरमप्यस्ति । किं तत् ?, इत्याह–

[3]सामण्ण-तयण्णविसेसेहा-वज्जण-परिग्गहणओ से । अत्थोग्गहेगसमओवओगबाहुल्लमावण्णं ॥ २६७ ॥

इह येयमर्थावग्रहैकसमये 'शब्दः' इति विशेषबुद्धिर्भवताऽभ्युपगम्यते, सा तावद् निश्चयरूपा, निश्चयश्चाकस्मादेव न युज्यते, किन्तु क्रमेण, तथाहि– प्रथमं तावद् रूपादिभ्योऽव्यावृत्तमव्यक्तं शब्दसामान्यं ग्रहीतव्यम्, ततस्तद्विशेषविषया, तदपररूपादिविशेषविषया च । एतैरेतैश्च धर्मैः 'किमयं शब्दः, आहोस्विद् रूपादिः' इत्येवंरूपेहा, तदनन्तरं च गृहीतशब्दसामान्यविशेषाणां ग्रहणम्, अन्येषां तु रूपादिविशेषाणां तत्राऽविद्यमानानां परिवर्जनम्, इत्येवंभूतेन क्रमेण निश्चयोत्पत्तिः । तथाच सति श्रोतुरर्थावग्रहैकसमयेऽपि सामान्यग्रहणादिभिः प्रकारैरुपयोगबहुत्वमापद्यते, एकस्मिंश्च समये बहव उपयोगाः सिद्धान्ते निषिद्धाः, इति नार्थावग्रहे शब्दादिविशेषबुद्धिः ॥ इति गाथाभावार्थः ॥

अक्षरार्थस्तूच्यते– सामान्यमिह श्रूयमाणशब्दसामान्यं गृह्यते, 'तयण्णविसेसेह त्ति' तच्छब्देनाऽनन्तरोक्तं शब्दसामान्यमनुकृष्यते, अन्यशब्देन तु तत्रा-ऽविद्यमाना रूपादयः परिगृह्यन्ते । ततश्च तच्चाऽन्ये च तदन्ये– शब्दसामान्यं, रूपादयश्चेत्यर्थः; तेषां

1 येनाऽर्थावग्रहकाले ग्रहणे-हा-ऽपायसंभवो नास्ति । ततो नास्ति शब्दबुद्धिः, अथास्ति नावग्रहो नाम ॥ २६६ ॥ 2 ज 'व्दाद्यर्थे'।
3 सामान्य-तदन्यविशेषेहा-वर्जन-परिग्रहणतस्तस्य । अर्थावग्रहैकसमयोपयोगबाहुल्यमापन्नम् ॥ २६७ ॥

सर्वत्र विषयपरिच्छेदे कर्तव्ये निश्चयतः परमार्थत ईहा-ऽपायौ भवतः, 'ईहा, पुनरपायः, पुनरीहा, पुनरप्यपायः' इत्येवं क्रमेण यावदन्त्यो विशेषः, तावदीहा-ऽपायावेव भवतः, नाऽर्थावग्रह इत्यर्थः,। किं सर्वत्रैवमेव ?, न, इत्याह– 'मोत्तुमाइसामण्णं ति' आद्यमव्यक्तं सामान्यमात्रालम्बनमेकं सामयिकं ज्ञानं मुक्त्वाऽन्यत्रेहा-ऽपायौ भवतः, इदं पुनर्नेहा, नाऽप्यपायः, किन्त्वर्थावग्रह एवेति भावः । संव्यवहारार्थं व्यावहारिकजनमतीत्यपेक्षं पुनः सर्वत्र यो योऽपायः स स उत्तरोत्तरेहा-ऽपायापेक्षया, एष्यविशेषापेक्षया चोपचारतोऽर्थावग्रहः । एवं च तावद् नेयम्, यावत्तारतम्येनोत्तरोत्तरविशेषाकाङ्क्षा प्रवर्तते ॥ इति गाथार्थः ॥ २८५ ॥

तरतमयोगाभावे तु किं भवति ?, इत्याह–

[1]तरतमजोगाभावेऽवाउ च्चिय धारणा तदंतम्मि । सव्वत्थ वासणा पुण भणिया कालं[2]तरे वि सई ॥२८६॥

तरतमयोगाभावे ज्ञातुरग्रेतनविशेषाकाङ्क्षानिवृत्तावपाय एव भवति, न पुनस्तस्याऽवग्रहत्वमिति भावः, तन्निमित्तानां पुनरीहादीनामभावादिति । यद्यग्रत ईहादयो न भवन्ति, तर्हि किं भवति ?, इत्याह– तदन्तेऽपायान्ते धारणा तदर्थोपयोगाऽप्रच्युतिरूपा भवति । शेषस्य वासना-स्मृतिरूपस्य धारणाभेदद्वयस्य क संभवः ?, इत्याह– 'सव्वत्थ वासणा पुणेत्यादि' वासना वक्ष्यमाणरूपा, तथा कालान्[3]तरे स्मृतिः, सा च सर्वत्र भणिता । अयमर्थः– अविच्युतिरूपा धारणाऽपायपर्यन्त एव भवति, वासना-स्मृती तु सर्वत्र कालान्तरेऽप्यविरुद्धे ॥ इति गाथार्थः ॥ २८६ ॥

एवं चाऽभिहितस्वरूपव्यावहारिकाऽर्थावग्रहाऽपेक्षया यथाश्रुतार्थव्याख्यानमपि सूत्रस्याविरुद्धमेव, इति दर्शयन्नाह–

[4]सद्दो त्ति व सुयभणियं विगप्पओ जइ विसेसविण्णाणं । घेप्पेज्ज तं पि जुज्जइ संववहारोग्गहे सव्वं ॥ २८७ ॥

वाशब्दोऽथवार्थे, ततश्चायमभिप्रायः– '[5]सद्दे त्ति भणइ वत्ता' इत्यादिप्रकारेण तावद् व्याख्यातं "[6]तेणं सद्दे त्ति उग्गहिए" इत्यादि सूत्रम् । अथवा 'शब्दः' इति यत्सूत्रभणितम्– "शब्दस्तेनाऽवगृहीतः" इति यत् सूत्रे प्रतिपादितम्, तद् यदि विकल्पतो विवक्षावशतो विशेषविज्ञानं गृह्यते, तदपि सर्वं युज्यते । कस्मिन् ?, इत्याह–यथोक्त औपचारिके सांव्यवहारिकाऽर्थावग्रहे गृह्यमाणे

१ तरतमयोगाभावेऽपाय एव धारणा तदन्ते । सर्वत्र वासना पुनर्भणिता कालान्तरेऽपि स्मृतिः ॥ २८६ ॥ २ घ छ ज 'तरसई य'। ३ घ.छ.ज. 'न्तरे स्मृति कालान्तरस्मृ'। ४ शब्द इति वा श्रुतभणित विकल्पतो यदि विशेषविज्ञानम् । गृह्येत तदपि युज्यते सव्यवहारावग्रहे सर्वम् ॥२८७॥ ५ गाथा २५३ । ६ तेन शब्द इत्यवगृहीतः ।

यत् तस्य स्वरूपम्— 'समयम्मि चेव परिचियविसयस्स विसेसविन्नाणं' इति, तदेतत्परोक्तमपि तदवस्थमेव, न पुनः किञ्चिदूनाधिकावस्थम् । कुतः ?, इत्याह— 'पुव्वदोसउ त्ति' 'जेणत्थोग्गहकाले' इत्यादिना, 'सामण्ण-तयण्ण—' इत्यादिना च यः पूर्वं दोषोऽभिहितस्तस्मात् पूर्वदोषात्— पूर्वदोषाऽनतिवृत्तेः, तेदतत्परोक्तं तदवस्थमेव, इति नान्यदूषणाऽभिधानप्रयासो विधीयत इति भावः । अथवाऽपूर्वमपि दूषणमुच्यते । किं तत् ?, इत्याह— 'तम्मि चेवेत्यादि' वा इत्यथवा, तस्मिन्नेव स्पष्टविज्ञानस्य व्यक्तस्य जन्तोर्विशेषग्राहिणि समये 'शाङ्खः, शार्ङ्गो वाऽयं शब्दः, स्निग्धः, मधुरः, कर्कशः, स्त्री-पुरुषाद्यन्यतरवाद्यः' इत्यादि सुबहुकविशेषग्रहणं प्रसज्येत । इदमुक्तं भवति— यदि व्यक्तस्य परिचितविषयस्य जन्तोरव्यक्तशब्दज्ञानमुल्लङ्घ्य तस्मिन्नर्थावग्रहैकसमयमात्रे शब्दनिश्चयज्ञानं भवति, तदाऽन्यस्य कस्यचित् परिचिततरविषयस्य पटुतरावबोधस्य तस्मिन्नेव समये व्यक्तशब्दज्ञानमप्यतिक्रम्य 'शाङ्खोऽयं शब्दः' इत्यादिसंख्यातीतविशेषग्राहकमपि ज्ञानं भवदभिप्रायेण स्यात्, दृश्यन्ते च पुरुषशक्तीनां तारतम्यविशेषाः । भवत्येव कस्यचित् प्रथमसमयेऽपि सुबहुविशेषग्राहकमपि ज्ञानमिति चेत् । न, "न उण जाणइ के वेस सद्दे" इत्यस्य सूत्रावयवस्याऽगमकत्वप्रसङ्गात् । विमध्यमशक्तिपुरुषविषयमेतत् सूत्रमिति चेत् । न, अविशेषेणोक्तत्वात्, सर्वविशेषविषयत्वस्य च युक्त्यनुपपन्नत्वात्; न हि प्रकृष्टमतेरपि शब्दधर्मिणमगृहीत्वोत्तरोत्तरबहुसुधर्मग्रहणसंभवोऽस्ति, निराधारधर्माणामनुपपत्तेः ॥ इति गाथार्थः ॥ २६९ ॥

किञ्च, समयमात्रेऽपि 'शब्दः' इति विशेषविज्ञानमभ्युपगच्छतोऽन्येऽपि समयविरोधादयो दोषाः । के पुनस्ते ?, इत्याह—

अत्थोग्गहो न समयं अहवा समओवओगबाहुल्लं । सव्वविसेसग्गहणं सव्वमई वोग्गहो गिज्झो ॥२७०॥

एगो वाऽवाओ च्चिय अहवा सोऽगाहिय-णीहिए पत्तो । उक्कम-वइक्कमा वा पत्ता धुवमोग्गहाईणं ॥२७१॥

सामण्णं च विसेसो वा सामण्णमुभयमुभयं वा । न य जुत्तं सव्वमियं वा सामण्णालंबनं मोत्तुं ॥ २७२॥

व्याख्या— "उग्गहो एक्कं समयं" इत्यादिवचनादर्थावग्रहः सिद्धान्ते सामयिको निर्दिष्टः, यदि चाऽर्थावग्रहे विशेषविज्ञानमभ्युपगम्यते तदा सामयिकोऽसौ न प्राप्नोति, विशेषज्ञानस्याऽसंख्येयसामायिकत्वात् । अथ समयमात्रेऽप्यस्मिन् विशेषज्ञानमिष्यते, तर्हि

१ गाथा २६८ । २ गाथा २६६ । ३ गाथा २६७ । ४ न पुनर्जानाति क एष शब्दः ।
५ अर्थावग्रहो न समयमथवा समयोपयोगबाहुल्यम् । सर्वविशेषग्रहणं सर्वमतिऽर्वावग्रहो ग्राह्य. ॥ २७० ॥
एको वाऽपाय एवाऽथवा सोऽगृहीता-ऽनीहितः प्राप्तः । उत्क्रम-व्यतिक्रमौ वा प्राप्तौ ध्रुवमवग्रहादीनाम् ॥२७१॥
सामान्यं च विशेषो वा सामान्यमुभयमुभयं वा । न च युक्त सर्वमिदं वा सामान्यालम्बनं मुक्त्वा ॥ २७२ ॥ ६ अवग्रह एकं समयम् ।

विशेषः सोऽप्यपेक्षया सामान्यम् , यत्सामान्यं तदप्यपेक्षया विशेष इति व्यवह्रियते, तथाहि– 'शब्द एवाऽयम्' इत्येवमध्यवसितोऽर्थः पूर्वसामान्यापेक्षया विशेषः, 'शाङ्खोऽयम्' इत्युत्तरविशेषापेक्षया तु सामान्यम्, इत्येवं यावदन्त्यो विशेष इति प्रागप्युक्तम् । अयं चोपर्युपरिज्ञानप्रवृत्तिरूपेण संतानेन लोके रूढः सामान्य-विशेषव्यवहार औपचारिकावग्रहे सत्येव घटते, नान्यथा, तदनभ्युपगमे हि प्रथमापायानन्तरमीहाऽनुत्थानम् , उत्तरविशेषाग्रहणं चाऽभ्युपगतं भवति, उत्तरविशेषाग्रहणे च प्रथमापायव्यवसितार्थस्य विशेषत्वमेव, न सामान्यत्वम् ; इति पूर्वोक्तरूपो लोकप्रतीतः सामान्य-विशेषव्यवहारः समुच्छिद्येत । अथ प्रथमापायानन्तरमभ्युपगम्यत ईहोत्थानम् , उत्तराविशेषग्रहणं च ; तर्हि सिद्धं तदपेक्षया प्रथमापायव्यवसितार्थस्य सामान्यत्वम्, यश्च सामान्यग्राहकः, यदनन्तरं चेहादिप्रवृत्तिः सोऽर्थावग्रहः, नैश्चयिकाऽऽद्यर्थावग्रहवत् , इत्युक्तमेव । इति सिद्धो व्यावहारिकार्थावग्रहः, तत्सिद्धौ च सन्तानप्रवृत्त्याऽन्त्यविशेषं यावत् सिद्धः सामान्य-विशेषव्यवहारः ॥ इति गाथार्थः ॥ २८८ ॥

॥ इति मतिज्ञानाऽऽद्यभेदलक्षणो द्विभेदोऽप्यवग्रहः समाप्त इति ॥

अथ तद्द्वितीयभेदलक्षणामीहां व्याचिख्यासुराह–

ईय सामण्णग्गहणाणंतरमीहा सदत्थवीमंसा । किमिदं सद्दोऽसद्दो को होज्ज व संख-संगाणं ?॥ २८९ ॥

इतिशब्द उपप्रदर्शने, इत्येवं प्रागुक्तेन प्रकारेण नैश्चयिकाऽर्थावग्रहे यत् सामान्यग्रहणं रूपाद्यव्यावृत्त्याऽव्यक्तवस्तुमात्रग्रहणमुक्तम् , तथा व्यवहारार्थावग्रहेऽपि यदुत्तरविशेषापेक्षया शब्दादिसामान्यग्रहणमभिहितम् । तस्मादनन्तरमीहा प्रवर्तते । कथंभूतेयम् ?, इत्याह– सतस्तत्र विद्यमानस्य गृहीतार्थस्य विशेषविमर्शद्वारेण मीमांसा विचारणा । केनोल्लेखेन ?, इत्याह– किमिदं वस्तु मया गृहीतं– शब्दः, अशब्दो वा रूप-रसादिरूपः ?; इदं च निश्चयार्थावग्रहाऽनन्तरभाविन्या ईहायाः स्वरूपमुक्तम् । अथ व्यवहारार्थावग्रहानन्तरसंभविन्याः स्वरूपमाह–'को होज्ज वेत्यादि' वा इत्यथवा, व्यवहारावग्रहेण शब्दे गृहीत इत्थमीहा प्रवर्तते- शाङ्ख-शार्ङ्गयोर्मध्ये कोऽयं भवेत् शब्दः– शाङ्खः, शार्ङ्गो वा ? इति । ननु 'किं शब्दः, अशब्दो वा ?' इत्यादिकं संशयज्ञानमेव कथमीहा भवितुमर्हति ?। सत्यम्, किन्तु दिङ्मात्रमेवेदमिह दर्शितम् , परमार्थतस्तु व्यतिरेकधर्मनिराकरणपरः, अन्वयधर्मघटनप्रवृत्तश्चाऽपायाऽभिमुख एव बोध ईहा द्रष्टव्या, तद्यथा–

१ इति सामान्यग्रहणानन्तरमीहा सदर्थमीमांसा । किमिद शब्दोऽशब्दः को भवेद् वा शाङ्ख-शार्ङ्गाणाम् ? ॥ २८९ ॥

पगतो विशेषः सोऽपि त्वदभिप्रायेण विशेषः, वस्तुस्थित्या तु सामान्यम्, इति विशेषस्याऽप्येकस्योभयस्वभावता। भवत्वेवमिति चेत्। इत्याह– न च युक्तं सर्वमिदम्। किं कृत्वा ?, इत्याह– सामान्यमालम्बनं ग्राह्यं मुक्त्वा 'अर्थावग्रहस्य' इति शेषः। इदमुक्तं भवति– अर्थावग्रहस्याऽव्यक्तं सामान्यमात्रमालम्बनं परिहृत्य यदन्यद् विशेषरूपमालम्बनमिष्यते, तदभ्युपगमे च ' सामण्णं च विसेसो वा सामण्णं ' इत्यादि यदापतति, तत् सर्वमयुक्तम्, अघटमानकत्वात्। इह च गाथात्रये बहुषु दूषणेषु मध्ये यत् प्रागुक्तमपि किञ्चिद् दूषणमुक्तं, तत् प्रसङ्गायातत्वात्, इति न पौनरुक्त्यमाशङ्कनीयम्॥ इति गाथात्रयार्थः॥ २७०॥ २७१॥ २७२॥

प्रस्तुत एवार्थेऽपरमपि मतान्तरमुपन्यस्य निराकुर्वन्नाह–

[1]केइदिहालोयणपुव्वमोग्गहं [2]बेंति तत्थ सामण्णं। गहियमहत्थावग्गहकाले सद्दे त्ति निच्छिण्णं॥ २७३॥

केचिद् वादिन इहाऽस्मिन् प्रक्रमेऽवग्रहं ब्रुवतेऽर्थावग्रहं व्याचक्षते। किंविशिष्टम् ?, इत्याह– आलोचनपूर्वं सामान्यवस्तुग्राहि ज्ञानमालोचनं तत् पूर्वं प्रथमं [3]यत्र स तथा तम्, प्रथममालोचनज्ञानं ततोऽर्थावग्रह इत्यर्थः, तथा च तैरुक्तम्–

" अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम्। बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् "॥ १॥ इति।

किं पुनस्तत्राऽऽलोचनज्ञाने गृह्यते ?, इत्याह–' तत्थेत्यादि ' तत्रालोचनज्ञाने सामान्यमव्यक्तं वस्तु गृहीतं ' प्रतिपत्त्रा ' इति गम्यते, अथाऽनन्तरमर्थावग्रहकाले ' तदेव गृहीतम् ' इत्यनुवर्तते। कथंभूतं सत् ?, इत्याह– निच्छिन्नं पृथक्कृतं रूपादिभ्यो व्यावृत्तमित्यर्थः। केनोल्लेखेन गृहीतम् ?, इत्याह– ' सद्दे त्ति ' शब्दविशेषणविशिष्टमित्यर्थः। ततश्च " [4]से जहानामए केइ पुरिसे अव्वत्तं सद्दं सुणेज्ज " इत्येतदालोचनज्ञानापेक्षया नीयते, " [5]तेणं सद्दे त्ति उग्गहिए " एतत्त्वार्थावग्रहापेक्षया, इति सर्वं सुस्थतामनुभवति। न चातः परं भवतोऽप्याचार्य ! किञ्चिद् वक्तव्यमस्ति; यदि हि युक्त्यनुभवासिद्धेनाऽर्थेन सूत्रे विषयविभागव्यवस्थापितेऽपि वादी जयं न प्राप्स्यति, तदा तूष्णीमाश्रयन्तु विपश्चितः, विचारचर्यामार्गस्य स्वाग्रहतत्परेण त्वयैव लुप्तत्वात्॥ इति गाथार्थः॥ २७३॥

तदत्र सूरिः परस्यैषद्गर्वानुविद्धा[6]मज्ञतामवलोकयन् मार्गा[7]वतारणाय विकल्पयन्नाह–

---

१ केचिदिहालोचनपूर्वमवग्रहं ब्रुवन्ति तत्र सामान्यम्। गृहीतमथाऽर्थावग्रहकाले शब्द इति निच्छिन्नम्॥ २७३॥ २ क ग. 'बिंति'। ३ क. ग. 'यत स'।
४ तद्यथानामा कश्चित् पुरुषोऽव्यक्तं शब्दं श्रृणुयादिति। ५ तेन शब्द इत्यवगृहीतः। ६ ज 'मज्ञातता'। ७ घ 'वतर'।

अपि प्रागेव निराकृताः ॥ इति गाथार्थः ॥ २९१ ॥

तदेवं "[1]से जहानामए केइ पुरिसे अव्वत्तं सद्दं सुणेज्ज" इत्यादिसूत्रानुरोधेन शब्दमाश्रित्याऽवग्रहादयो भाविताः । अथ सूत्रकारेणैव यदुक्तम्– "[2]एवं एएणं अभिलावेणं अव्वत्तं रूवं रसं गंधं फासं" इत्यादि, तच्चेतासि निधाय भाष्यकारोऽप्यतिदेशमाह–

[3]सेसेसु वि रूवाइसु विसएसु होंति रूवलक्खाइं । पायं पच्चासन्नत्तणेणमीहाइवत्थूणि ॥२९२ ॥

यथा शब्दे, एवं शेषेष्वपि रूपादिविषयेषु साक्षादनुक्तान्यपि रूपलक्षाणि कथितानुसारप्रसरत्प्रज्ञानां चतुरचेतसां सुज्ञेयानि भवन्ति । कानि ?, इत्याह–ईहादीन्याभिनिबोधिकज्ञानस्य भेदवस्तूनि । केन रूपल[4]क्षाणि ?, इत्याह– प्रायः प्रत्यासन्नत्वेन चक्षुरादिना गृह्यमाणस्य स्थाण्वादेः, तत्राऽगृह्यमाणेन पुरुषादिना सह प्रायो बहुभिर्धर्मैर्यत् प्रत्यासन्नत्वं या प्रत्यासत्तिः सादृश्यमिति यावत्, तेनेहादीनि ज्ञेयानि, न पुनरत्यन्तवैलक्षण्ये स्थाण्वादेरुष्ट्रादिना सहेत्यर्थः, इदमुक्तं भवति– अवग्रहे तावत् सामान्यमात्रग्राहकत्वाद् द्वितीयवस्त्वपेक्षाऽपि न विद्यते, ईहा पुनरुभयवस्त्ववलम्बिनी, तत्र पुरोदृश्यमानस्य वस्तुनो यत् प्रतिपक्षभूतं वस्तु तत्प्रायो बहुभिर्धर्मैः प्रत्यासन्नं ग्राह्यम्, न पुनरत्यन्तविलक्षणम्; पुरो हि मन्दमन्दप्रकाशे दूराद् दृश्यमाने स्थाण्वादौ 'किमयं स्थाणुः, पुरुषो वा' इत्येवमेवेहा प्रवर्तते, ऊर्ध्वस्थानारोह-परिणाहतुल्यतादिभिः प्रायो बहुभिर्धर्मैः पुरुषस्य स्थाणुप्रत्यासन्नत्वादिति । 'किमयं स्थाणुः, उष्ट्रो वा ?' इत्येवं तु न प्रवर्तते, उष्ट्रस्य स्थाण्वपेक्षया प्रायोऽत्यन्तविलक्षणत्वात् । अत एव सामान्यमात्रग्राह्यवग्रहोऽत्रादौ न कृतः, किन्तु 'ईहादीनि' इत्येवमेवोक्तम्, उभयवस्त्ववलम्बित्वेनेहाया एव 'पायं पच्चासन्नत्तणेण' इतिविशेषणस्य सफलत्वात् । अपायस्याऽपि 'स्थाणुरेवाऽयं, न पुरुषः' इत्यादिरूपेण प्रवृत्तेः किञ्चिद् विशेषणस्य सफलत्वादादिशब्दोऽप्यविरुद्धः ॥ इति गाथार्थः ॥ ॥ २९२ ॥

इह 'किं शब्दः, अशब्दो वा ?' इति श्रोत्रेन्द्रियस्य प्रत्यासन्नवस्तूपदर्शनं कृतमेव । अथाऽशेषचक्षुरादीन्द्रियाणां विषयभूतानि प्रत्यासन्नवस्तूनि क्रमेण प्रदर्शयति–

[5]थाणु-पुरिसाइ-कुट्ठु-प्पलाइ-संभियकरिल्ल-मंसाइं । सप्पु-प्पलनालाइव्व समाणरूवाइविसयाइं ॥ २९३ ॥

'ईहादिवस्तूनि रूपलक्षाणि' इत्युक्तम् । कथंभूतानि सन्ति पुनस्तानि रूपलक्षाणि ?, इत्याह– समानः समानधर्मा रूप-

१ तद्यथानामा कश्चित् पुरुषोऽव्यक्तं शब्दं श्रृणुयात् । २ एवमेतेनाऽभिलापेनाऽव्यक्तं रूपं रस गन्ध स्पर्शम् ।
३ शेषेष्वपि रूपादिषु विषयेषु भवन्ति रूपलक्षाणि । प्रायः प्रत्यासन्नत्वेनेहादिवस्तूनि ॥ २९२ ॥ ४ ग 'लक्ष्याणि' ।
५ स्थाणु पुरुषादि कुष्ठो-त्पलादि-सम्भृतकरील मासादि । सर्पो-त्पलनालादिवत् समानरूपादिविषयाणि ॥ २९३ ॥

तत् समालोचनं यदि सामान्यरूपस्याऽर्थस्य दर्शनमिष्यते, ततस्तर्हि न व्यञ्जनं व्यञ्जनावग्रहात्मकं भवति, व्यञ्जनावग्रहस्य व्यञ्जनसंबन्धमात्ररूपत्वेनाऽर्थशून्यत्वात्, तथाच प्रागपि 'पुव्वं च तस्स वंजणकालो सो अत्थपरिसुण्णो' इत्यादिना साधितमेवेदम्। अतोऽर्थदर्शनरूपमालोचनं कथमर्थशून्यव्यञ्जनावग्रहात्मकं भवितुमर्हति ?, विरोधात्। अथ द्वितीयविकल्पमङ्गीकृत्याह– अथ व्यञ्जनस्य शब्दादिविषयपरिणतद्रव्यसंबन्धमात्रस्य तत् समालोचनमिष्यते, तर्हि कथमालोचनं– कथमालोचकत्वं तस्य घटते ?, इत्यर्थः। कथंभूतस्य सतः ?, इत्याह– अर्थशून्यस्य व्यञ्जनसंबन्धमात्रान्वितत्वेन सामान्यार्थालोचकत्वानुपपत्तेरित्यर्थः॥ इति गाथार्थः॥ २७६॥

ननु शास्त्रान्तरप्रसिद्धस्याऽऽलोचनज्ञानस्य वराकस्य तर्हि का गतिः ?, इत्याह–

आलोयँण त्ति नामं हवेज्ज तं वंजणोग्गहस्सेव। होज्ज कहं सामण्णग्गहणं तत्थत्थसुण्णम्मि ?॥ २७७॥

तस्मादालोचनमिति यन्नाम तदन्यत्र निर्गतिकं सत् पारिशेष्याद् व्यञ्जनावग्रहस्यैव द्वितीयं नाम भवेत्। न च विवक्षामात्रप्रवृत्तेषु वस्तूनां बहुष्वपि नामसु क्रियमाणेषु कोऽपि विवादमाविष्करोति ?। अत एतदपि नामान्तरमस्तु, को दोषः ? इति। नैतदेवम्, यस्मादिदं सामान्यग्राहकमालोचनज्ञानं भविष्यति, अर्थावग्रहस्तु विशेषग्राहक इति; एवमप्यस्माकं समीहितसिद्धिर्भविष्यतीति चेत्। इत्याह– 'होज्जेत्यादि' व्यञ्जनावग्रहस्यैव पारिशेष्यादालोचनज्ञानत्वमापन्नम्, तत्र च प्रागुक्तयुक्तिभिरर्थशून्ये कथं सामान्यग्रहणं भवेत्, येन भवतः समीहितसिद्धिप्रमोदः ? इति। तस्मादर्थावग्रह एव सामान्यार्थग्राहकः, न पुनरेतस्मादपरमालोचनाज्ञानम्। अत एव यदुक्तम्– "अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम्" इत्यादि, तदप्यर्थावग्रहाश्रयमेव यदि, घटते, नान्याविषयम्॥ इति गाथार्थः॥ २७७॥

अथ 'दुर्बलं वादिनं दृष्ट्वाऽभ्युपगमोऽपि कर्तव्यः' इतिन्यायप्रदर्शनार्थमाह–

गहियं व होउ तहियं सामण्णं कहमणीहिए तम्मि। अत्थावग्गहकाले विसेसणं एस सद्दो त्ति ?॥२७८॥

अथवा भवतु तस्मिन् व्यञ्जनावग्रहे सामान्यं गृहीतम्, तथापि कथमनीहितेऽविमर्शिते तस्मिन्नकस्मादेवाऽर्थावग्रहकाले 'शब्द एषः' इति विशेषणं विशेषज्ञानं युक्तम्, 'शब्द एवैषः' इत्ययं हि निश्चयः, न चायमीहामन्तरेण झगित्येव युज्यते, इत्यसकृदेवोक्तमायम्। अतो नार्थावग्रहे 'शब्दः' इत्यादिविशेषबुद्धिर्युज्यते॥ इति गाथार्थः॥ २७८॥

१ गाथा २५९। २ क ग घ छ ज 'च वजणोग्गहका'। ३ आलोचनेति नाम भवेत् तद् व्यञ्जनावग्रहस्यैव। भवेत् कथ सामान्यग्रहणं तत्राऽर्थशून्ये ?॥ २७७॥
४ क ग 'यण ति ना'। ५ गृहीतं वा भवतु तास्मिन् सामान्यं कथमनीहिते तास्मिन्। अर्थावग्रहकाले विशेषणमेष शब्द इति ?॥ २७८॥

आह– नन्वेतेऽवग्रहादय उत्क्रमेण, व्यतिक्रमेण वा किमिति न भवन्ति, यद्वा, ईहादयस्त्रयः, द्वौ, एको वा किं नाऽभ्युपगम्यन्ते, यावत् सर्वेऽप्यभ्युपगम्यन्ते ?, इत्याशङ्क्याह—

[1]उक्कमओऽइक्कमओ एगाभावे वि वा न वत्थुस्स । जं सब्भावाहिगमो, तो सव्वे नियमियक्कमा य ॥ २९५ ॥

एषामवग्रहादीनामुत्क्रमेणोत्क्रमतः, अतिक्रमेणाऽतिक्रमतः, अपिशब्दस्य भिन्नक्रमत्वादेकैकस्याऽप्यभावे वा यस्माद् न वस्तुनः सद्भावाऽधिगमः, तस्मात् सर्वे चत्वारोऽप्येष्टव्याः, तथा नियमितक्रमाश्च– सूत्रनिर्दिष्टपरिपाट्यन्विताश्च 'भवन्त्येतेऽवग्रहादयः' इति प्रक्रमाल्लभ्यते ॥ इत्यक्षरयोजना ॥

भावार्थस्तूच्यते— तत्र पश्चानुपूर्वीभवनमुत्क्रमः, अनानुपूर्वीभवनं त्वतिक्रमः, कदाचिदवग्रहमतिक्रम्येहा, तामप्यतिलङ्घ्याऽपायः, तमप्यतिवृत्य धारणेति, एवमनानुपूर्वीरूपोऽतिक्रम इत्यर्थः। एताभ्यामुत्क्रम-व्यतिक्रमाभ्यां तावदवग्रहादिभिर्वस्तुस्वरूपं नावगम्यते । तथा, एषां मध्ये एकस्याऽप्यन्यतरस्याऽभावे वैकल्येन वस्तुस्वभावावबोध इत्यसकृदुक्तप्रायमेव । ततः सर्वेऽप्यमी एष्टव्याः, न त्वेकः, द्वौ, त्रयो वेत्यर्थः । तथा ' उग्गहो ईह अवाओ य धारणा एव होंति चत्तारि ' इत्यस्यां गाथायां यथैवकारेण पूर्वमेतेषां नियमितः क्रमः, तथैवैते नियमितक्रमा भवन्ति, नोत्क्रमा-ऽतिक्रमाभ्यामिति भावः ॥ इति गाथार्थः ॥ २९५ ॥

अथोत्क्रमा-ऽतिक्रमयोः, एकादिवैकल्ये चावग्रहादीनां वस्त्वधिगमाभावे युक्तिमाह–

[3]ईहिज्जइ नाऽगहियं नज्जइ नाणीहियं न याऽनायं । धारिज्जइ जं वत्थुं तेण कमोऽवग्गहाई उ ॥२९६ ॥

यस्मादवग्रहेणाऽगृहीतं वस्तु नेह्यते– न तत्रेहा प्रवर्तते, ईहाया विचाररूपत्वात् , अगृहीते च वस्तुनि निरास्पदत्वेन विचाराऽयोगादिति भावः। तदनेन कारणेनाऽऽदाववग्रहं निर्दिश्य पश्चादीहा निर्दिष्टा । न चाऽनीहितमविचारितं ज्ञायते– अपायविषयतां याति, अपायस्य निश्चयरूपत्वात् , निश्चयस्य च विचारपूर्वकत्वादिति हृदयम् । एतदभिप्रायवता चाऽपायस्याऽऽदावीहा निर्दिष्टेति । न चाऽज्ञातम्– अपायेनाऽनिश्चितं, धार्यते धारणाविषयीभवति, वस्तुधारणाया अर्थावधारणरूपत्वात् , अवधारणस्य च निश्चयमन्तरेणाऽयोगादित्यभिप्रायः। ततश्च धारणादावपायः। ततः किम् ?, इत्याह– तेनाऽवग्रहादिरेव क्रमो न्याय्यः, नोत्क्रमा-ऽतिक्रमौ, यथोक्तन्यायेन वस्त्ववगमाभावप्रसङ्गात् ॥ इति गाथार्थः ॥ २९६ ॥

१ उक्कमतोऽतिक्रमत एकाभावेऽपि वा न वस्तुन । यत् स्वभावाधिगम , तत सर्वे नियमितक्रमाश्च ॥२९५॥ २ अवग्रह ईहाऽपायश्च धारणैव भवन्ति चत्वारि । ३ ईह्यते नाऽगृहीत ज्ञायते नाऽनीहित न चाऽज्ञातम् । धार्यते यद् वस्तु तेन क्रमोऽवग्रहादिस्तु ॥ २९६ ॥ ४ क. ग. 'स्त्वधिग' ।

नैकसमयमात्रमान एवाऽर्थावग्रहः, किन्तु चिरकालिकोऽपि; न हि समयमात्रमानतयैकरूपे तस्मिन् क्षिप्र-चिरग्रहणविशेषणमुपपद्यत इति भावः। तस्मादेतद्विशेषणबलादसंख्येयसमयमानोऽप्यर्थावग्रहो युज्यते । तथा, बहूनां श्रोतॄणामविशेषेण प्राप्तिविषयस्थे शङ्ख-भेर्यादिबहुतूर्यनिर्घोषे क्षयोपशमवैचित्र्यात् कोऽप्यबहु अवगृह्णाति, सामान्यं समुदिततूर्यशब्दमात्रमवगृह्णातीत्यर्थः । अन्यस्तु बह्ववगृह्णाति, शङ्ख-भेर्यादितूर्यशब्दान् भिन्नान् बहून् गृह्णातीत्यर्थः । अन्यस्तु स्त्री-पुरुषादिवाद्यत्व-स्निग्ध-मधुरत्वादिबहुविधविशेषविशिष्टत्वेन बहुविधमवगृह्णाति, अपरस्त्वबहुविधविशेषविशिष्टत्वादबहुविधमवगृह्णाति । अत एतस्माद् बहु-बहुविधाद्यनेकविकल्पनानात्ववशादवग्रहस्य क्वचित् सामान्यग्रहणम्, क्वचित् तु विशेषग्रहणम्, इत्युभयमप्यविरुद्धम् । अतो यत् सूत्रे "[1]तेणं सद्दे त्ति उग्गहिए" इति वचनात् 'शब्दः' इति विशेषविज्ञानमुपदिष्टम्, तदप्यर्थावग्रहे युज्यत एव, इति केचित् ॥ इति गाथार्थः ॥ २८० ॥

अत्रोत्तरमाह—

[2]से किमोग्गहो त्ति भण्णइ गहणे-हा-ऽवायलक्खणत्ते वि ? । अह उवयारो कीरइ तो सुण जह जुज्जए सो वि ॥२८१॥

इह पूर्वमनेकधा प्रतिविहितमप्यर्थं पुनः पुनः प्रेरयन्तं प्रेरकमवलोक्याऽन्तर्विस्फुरदसूयावशात् साक्षेपं काक्वा सूरिः पृच्छति—'किमोग्गहो त्ति भण्णइ त्ति' किंशब्दः क्षेपे, यो बहु-बहुविधादिविशेषणवशाद् विशेषावगमः स किमबुधचक्रवर्तिन्! अवग्रहोऽर्थावग्रहो भण्यते ?। क्व सत्यपि ?, इत्याह—'गहणे-हित्यादि' ग्रहणं च सामान्यार्थस्य, ईहाऽवगृहीतस्य, अपायश्चेहितार्थस्य ग्रहणे-हा-ऽपायास्तैर्लक्ष्यते प्रकटीक्रियते यः स तथा तद्भावस्तत्त्वं तस्मिन् सत्यपि, बहु-बहुविधादिग्राहको हि विशेषावगमो निश्चयः, स च सामान्याऽर्थग्रहणं, ईहां च विना न भवति, यश्च तदविनाभावी सोऽपाय एव, कथमर्थावग्रह इति भण्यते ? इति । एतत्पूर्वमसकृदेवोक्तमपि हन्त! विस्मरणशीलतया, जडतया, बद्धाभिनिवेशतया वा पुनः पुनरस्मान् भाणयसीति किं कुर्मः ?, पुनरुक्तमपि ब्रूमः, यद् यस्मादायासेनाऽपि कश्चिद् मार्गमासादयतीति । ननु ग्रहणम्, ईहा च विशेषावगमस्य लक्षणं भवतु, ताभ्यां विना तदभावात्; अपायस्तु कथं तल्लक्षणम्, तत्स्वरूपत्वादेवाऽस्य ?। सत्यम्, किन्तु स्वरूपमपि भेदविवक्षया लक्षणं भवत्येव, यदाह—

"विषा-ऽमृते स्वरूपेण लक्ष्येते कलशादिवत् । एवं च स्वस्वभावाभ्यां व्यज्येते खल-सज्जनौ" ॥ १ ॥

आह— यदि बहु-बहुविधादिग्राहकोऽपाय एव भवति, तर्हि कथमन्यत्राऽवग्रहादीनामपि बह्वादिग्रहणमुक्तम् ? । सत्यम्, कि-

१ तेन शब्द इत्यवगृहीतः। २ स किमवग्रह इति भण्यते ग्रहणे-हा-ऽपायलक्षणत्वेऽपि ?। अथोपचारः क्रियते ततः शृणु यथा युज्यते सोऽपि ॥२८१॥

ऽप्यपाय एव लक्ष्यतेऽनुभूयते निर्विवादमशेषैरपि जन्तुभिः, यथा 'असौ पुरुषः' इति । अन्यत्र पुनः क्वचित् पूर्वोपलब्धे सुनिश्चिते दृढवासने विषयेऽवग्रहे-हा-ऽपायानतिलङ्घ्य स्मृतिरूपा धारणैव लक्ष्यते, यथा 'इदं तद् वस्तु यदस्माभिः पूर्वमुपलब्धम्' इति । तत् कथमुच्यते- उत्क्रमा-ऽतिक्रमाभ्याम्, एकादिवैकल्ये च न वस्तुसद्भावाधिगमः ?– इदं च कथमभिधीयते–'ईहिज्जइ नागहियं' इत्यादि ? इति प्रेरकाऽभिप्रायः ॥ इति गाथार्थः ॥ २९८ ॥

भ्रान्तोऽयमनुभव इति दर्शयन्नाह–

उप्पलदलसयवेहे व्व दुव्विभावत्तणेण पडिहाइ । समयं व सुक्कसक्कुलिदसणे विसयाणमुवलद्धी ॥ २९९॥

'क्वचित् प्रथममेवाऽपायः, क्वचित्तु धारणैव' इति यत् त्वया प्रेर्यते, तत् 'प्रतिभाति' इत्यनन्तरगाथोक्तेन संबन्धः । केनैतत् प्रतिभाति ?, इत्याह– दुःखेन विभाव्यते दुर्विभावो दुर्लक्षस्तद्भावस्तत्त्वं तेन दुर्विभावत्वेन- दुर्लक्षत्वेन 'अवग्रहादिकालस्य' इति गम्यते। कस्मिन्निव ?, इत्याह– उत्पलं पद्मं तस्य दलानि पत्राणि तेषां शतं तस्य सूच्यादिना वेधनं वेधस्तस्मिन्निव । इदमुक्तं भवति– यथा तरुणः समर्थपुरुषः पद्मपत्रशतस्य सूच्यादिना वेधं कुर्वाण एवं मन्यते– मयैतानि युगपद् विद्धानि, अथ च प्रतिपत्रं तानि कालभेदेनैव भिद्यन्ते, न चाऽसौ तं कालमतिसौक्ष्म्याद् भेदेनाऽवबुध्यते, एवमत्राऽप्यवग्रहादिकालस्याऽतिसूक्ष्मतया दुर्विभावनीयत्वेनाऽप्रतिभासः, न पुनरसत्त्वेन, ईहादयो ह्यन्यत्र क्वचित् तावत् स्फुटमेवाऽनुभूयन्ते, यत्राऽपि स्वसंवेदनेन नाऽनुभूयन्ते, तत्राऽपि "ईहिज्जइ नागहियं नज्जइ नाणीहियं' इत्यादि प्रागसकृदभिहितयुक्तिकलापादवसेयाः । तस्मादुत्पलदलशतवेधोदाहरणेन भ्रान्त एवाऽयं प्रथमत एवाऽपायादिप्रतिभासः । अथोदाहरणान्तरेणाऽप्यस्य भ्रान्ततामुपदर्शयति– 'समयं वेत्यादि' 'वा' इत्यथवा, यथा शुष्कशष्कुलीदशने समयं युगपदेव सर्वेन्द्रियविषयाणां शब्द-रूप-रस-गन्ध-स्पर्शानामुपलब्धिः प्रतिभाति, तथैषोऽपि प्राथम्येनाऽपायादिप्रतिभासः । एतदुक्तं भवति– यथा कस्यचिच्छुष्कां दीर्घां शष्कुलिकां भक्षयतः, तच्छब्दोत्थानाच्छब्दविज्ञानमुपजायते, अत एव शुष्कत्वविशेषणम्, मृद्व्यामेतस्यां शब्दानुत्थानादिति । शब्दश्रवणसमकालमेव च दीर्घत्वात् तस्या दृष्ट्या तद्रूपदर्शनं चाऽयमनुभवति, अत एव च दीर्घत्वविशेषणम्, अतिह्रस्वत्वे मुखमविष्टायास्तस्याः शब्दश्रवणसमकालं रूपदर्शनानुभवाभावादिति । रूपदर्शनसमकालं च तद्गन्धज्ञानमनुभवति, अत एव शष्कुलीग्रहणं, गन्धोत्कटत्वात् तस्याः, इक्षुखण्डादिषु तु दीर्घेष्वपि तथाविधगन्धाभावादिति । गन्धादिज्ञानसमकालं च तद्रस-स्पर्शज्ञाने अनुभवति । तदेवं पञ्चानामपीन्द्रियविषयाणामुपलब्धिर्युगपदेवाऽस्य प्रतिभाति । न चेयं सत्या, इन्द्रियज्ञा-

१ गाथा २९६ । २ उत्पलदलशतवेध इव दुर्विभावत्वेन प्रतिभाति । समय वा शुष्कशष्कुलीदशने विषयाणामुपलब्धि ॥ २९९ ॥

नैश्चयिकोऽयमुच्यते । अथ च्छद्मस्थव्यवहारिभिरपि-यो व्यवह्रियते, तं व्यावहारिकमुपचारितमर्थावग्रहं दर्शयति– 'तत्तो इत्यादि' ततो नैश्चयिकार्थावग्रहादनन्तरमीहितस्य वस्तुविशेषस्य योऽपायः स पुनर्भाविनीहाम्, अपायं चाऽपेक्ष्योपचारितोऽवग्रहोऽर्थावग्रह इति द्वितीयगाथायां संवन्धः । उपचारस्यैवाऽस्य निमित्तान्तरमाह– 'एस्सेत्यादि' एष्यो भावी योऽन्यो विशेषस्तदपेक्षया येन कारणेनाऽयमपायोऽपि सन् सामान्यं गृह्णाति, यश्च सामान्यं गृह्णाति सोऽर्थावग्रहो यथा प्रथमो नैश्चयिकः । एतदिह तात्पर्यम्– प्रथमं नैश्चयिकेऽर्थावग्रहे रूपादिभ्योऽव्यावृत्तमव्यक्तं शब्दादिवस्तुसामान्यं गृहीतं, ततस्तस्मिन्नीहिते सति 'शब्द एवाऽयम्'इत्यादिनिश्चयरूपोऽपायो भवति। तदनन्तरं तु 'शब्दोऽयं किं शाङ्खः, शार्ङ्गो वा' इत्यादिशब्दविशेषविषया पुनरीहा प्रवर्तिष्यते, 'शाङ्ख एवाऽयं शब्दः'इत्यादिशब्दविशेषविषयोऽपायश्च यो भविष्यति तदपेक्षया 'शब्द एवाऽयम्' इति निश्चयः प्रथमोऽपायोऽपि सन्नुपचारादर्थावग्रहो भण्यते, ईहा-ऽपायापेक्षात इति, अनेन चोपचारस्यैकं निमित्तं सुचितम् । 'शाङ्खोऽयं शब्दः, इत्याद्येष्यविशेषापेक्षया येनाऽसौ सामान्यशब्दरूपं सामान्यं गृह्णातीति, अनेन तूपचारस्यैव द्वितीयं निमित्तमावेदितम्; तथाहि– यदनन्तरमीहा-ऽपायौ प्रवर्तेते, यश्च सामान्यं गृह्णाति, सोऽर्थावग्रहः, यथाऽऽद्यो नैश्चयिकः, प्रवर्तते च 'शब्द एवाऽयम् इत्याद्यपायाऽनन्तरमीहा-ऽपायौ, गृह्णाति च 'शाङ्खोऽयं' इत्यादिभाविविशेषापेक्षयाऽयं सामान्यम् । तस्मादर्थावग्रह एष्यविशेषापेक्षया सामान्य गृह्णातीत्युक्तम् । ततस्तदनन्तरं किं भवति ?, इत्याह तृतीयगाथायाम्– 'तत्तोऽणन्तरमित्यादि' ततः सामान्येन शब्दनिश्चयरूपात् प्रथमापायादनन्तरं 'किमयं शब्दः शाङ्खः, शार्ङ्गो वा ?' इत्यादिरूपेहा प्रवर्तते । ततस्तद्विशेषस्य शङ्खप्रभवत्वादेः शब्दविशेषस्य 'शाङ्ख एवाऽयम्' इत्यादिरूपेणाऽपायश्च निश्चयरूपो भवति। अयमपि च भूयोऽन्यतद्विशेषाकाङ्क्षावतः प्रमातुर्भाविनीमीहामपायं चाऽपेक्ष्य, एष्यविशेषापेक्षया सामान्यालम्बनत्वाच्चाऽर्थावग्रह इत्युपचर्यते । इयं च सामान्य-विशेषापेक्षा तावत् कर्तव्या, यावदन्त्यो वस्तुनो भेदो विशेषः । यस्माच्च विशेषात् परतो वस्तुनोऽन्ये विशेषा न संभवन्ति सोऽन्त्यः, अथवा संभवत्स्वपि अन्यविशेषेषु यतो विशेषात् परतः प्रमातुस्तज्जिज्ञासा निवर्तते सोऽन्त्यः, तमन्त्यं विशेषं यावद् व्यावहारिकाऽर्थावग्रहे-हा-ऽपायार्थं सामान्य-विशेषाऽपेक्षा कर्तव्या ॥ इति गाथात्रयार्थः ॥ २८२ ॥ २८३ ॥ २८४ ॥

इह च गाथात्रयेऽपि यः पर्यवसितोऽर्थो भवति, तमाह–

सव्वत्थे-हा-वाया[1] निच्छयओ मोत्तुमाइसामण्णं । संववहारत्थं पुण सव्वत्थाऽवग्गहोऽवाओ ॥ २८५ ॥

[1] सर्वत्रेहा-पायौ निश्चयतो मुक्त्वाऽऽदिसामान्यम् । संव्यवहारार्थं पुनः सर्वत्राऽवग्रहोऽपायः ॥ २८५ ॥

अन्ये त्वेतानष्टाविंशतिभेदानन्यथा पूरयन्ति, तन्मतमुपदर्शयति– 'केइ त्तित्यादि' केचित् पुनराचार्या एतस्मिन्नेव श्रुतनिश्रिते मतिज्ञानभेदसमुदाये व्यञ्जनावग्रहभेदचतुष्टयवर्जे " उप्पत्तिया, वेणइया, कम्मिया, पारिणामिया " इत्यादिनाऽन्यत्र, प्रागत्रापि च प्रतिपादितस्वरूपमश्रुतनिश्रितमौत्पत्तिक्यादि बुद्धिचतुष्टयं क्षिप्त्वा मीलयित्वा, एवमष्टाविंशतिविधं सर्वमपि मतिज्ञानमिति भाषन्ते । अयं हि तेषामभिप्रायः– मतिज्ञानस्य संपूर्णस्येह भेदाः प्रतिपादयितुं प्रक्रान्ताः, यदि चाऽश्रुतनिश्रितं बुद्धिचतुष्टयं न गण्यते तदा श्रुतनिश्रितरूपस्य मतिज्ञानदेशस्यैवैतेऽष्टाविंशतिभेदाः प्रोक्ता भवन्ति, न तु सर्वस्यापि; यदा तूक्तन्यायेन श्रुतनिश्रितम्, अश्रुतनिश्रितं च मील्यते तदा सर्वस्याऽपि तस्य भेदाः सिद्धा भवन्ति । ननु साधूक्तं तैः, केवलमेवं सति व्यञ्जनावग्रहचतुष्टयं क्व क्रियताम् ?, न ह्येतदपि विक्रीयमाणं खलखण्डमात्रेण क्रीतम्, किन्त्विदमपि मतिज्ञानान्तर्गतमेव । ततोऽस्माद् निष्काश्यमानं वराकमिदं काऽवस्थितिं बध्नातु ?, इत्याशङ्क्याह– 'जमवग्गहो इत्यादि' यद् यस्माद् व्यञ्जना-ऽर्थावग्रहभेदतो योऽयमवग्रहो द्विभेदः प्रागुक्तः सोऽवग्रहसामान्येन गृहीतोऽवग्रहसामान्येऽन्तर्भावितः, भवति च विशेषाणां सामान्येऽन्तर्भावः, यथा सेनायां गजादीनाम्, वनादौ च धव-खदिरादीनाम् । अतोऽवग्रहस्य सामान्यरूपतयैकत्वादवग्रहे-हा-ऽपाय-धारणानामिन्द्रिय-मनोभेदेन प्रत्येकं षड्विधत्वाच्छ्रुतनिश्रितमतिज्ञानस्य चतुर्विंशतिरेव भेदाः, अश्रुतनिश्रितस्य तु बुद्धिचतुष्टयलक्षणाश्चत्वारः, इत्येवं सर्वं मतिज्ञानमष्टाविंशतिभेदं सिध्यति । इति केषांचिद् मतम् ॥ इति गाथात्रयार्थः ॥ ३०० ॥ ३०१ ॥ ३०२ ॥

एतच्च तन्मतमयुक्तम् । कुतः ?, इत्याह–

चउवइरित्ताभावा जम्हा न तमोग्गहाईओ । भिन्नं तेणोग्गहाइसामण्णओ तयं तग्गयं चेव ॥ ३०३ ॥

चतुर्भ्योऽवग्रहे-हा-ऽपाय-धारणावस्तुभ्यो व्यतिरिक्तं चतुर्व्यतिरिक्तं तस्य चतुर्व्यतिरिक्तस्याश्रुतनिश्रितस्याभावात् कारणाद् यस्माद् यतो न तदश्रुतनिश्रितमवग्रहादिभ्यो भिन्नम् । ततः किम् ?, इत्याह– तेन कारणेनावग्रहादिसामान्यादवग्रहादिसामान्यमाश्रित्य 'तयं तग्गयं चेव त्ति' तेष्ववग्रहादिसंबन्धिष्वष्टाविंशतिभेदेष्वन्तर्गतं प्रविष्टमन्तर्भूतं तदन्तर्गतमेवाऽश्रुतनिश्रितं बुद्धिचतुष्टयम् । अतः किमिति व्यञ्जनावग्रहचतुष्टयं पातयित्वाऽश्रुतनिश्रितं बुद्धिचतुष्टयं पुनरपि प्रक्षिप्यते ?, इत्यभिप्रायः । इदमुक्तं भवति–'सोइंदियाइभेएण छव्विहा

१ घ छ ज 'दये' । २ औत्पत्तिकी, वैनयिकी, कार्मिकी, पारिणामिकी । ३ नन्द्यध्ययनसूत्रे ।
४ चतुर्व्यतिरिक्ताभावाद् यस्माद् न तदवग्रहादय । भिन्न तेनाऽवग्रहादिसामान्यतस्तद् तद्गतमेव ॥३०३॥ ५ क ग 'य तं त' घ. 'गय त' । ६ गाथा ३००।

सति; अत्र हि 'शब्दः' इति विशेषाविज्ञानं युज्यते, सर्वग्रहणात् तदनन्तरमीहादयश्चोपपद्यन्ते, पूर्वोक्तयुक्तेः । ततश्च "से[1] जहानामए केइ पुरिसे अव्वत्तं सद्दं सुणेज्जा, तेणं सद्दे त्ति उग्गहिए, न उण जाणइ के वेस सद्दे, तओ ईहं पविसइ, तओ अवायं गच्छइ" इत्यादि सर्वं सुस्थं भवति। यद्येवम्, अयमेवाऽर्थावग्रहः कस्माद् न गृह्यते, येन सर्वोऽपि विवादः शाम्यति ? इति चेत्। नैवम्, 'शब्द एवाऽयम्' इत्याद्यपायरूपोऽयमर्थावग्रहः, अपायश्च सामान्यग्रहणे-हाभ्यामन्तरेण न संभवति, इत्याद्यसकृत् पूर्वमभिहितमेव। इति प्राक्तनमेव व्याख्यानं मुख्यम्। इत्यलं विस्तरेण ॥ इति गाथार्थः ॥ २८७ ॥

व्यावहारिकाऽर्थावग्रहा[2]भ्युपगमे यो गुणस्तं सविशेषमुपदर्शयन्नाह–

[3]खिप्पे-यराइभेओपुव्वोइयदोसजालपरिहारो । जुज्जइ संताणेण य सामण्ण-विसेसववहारो ॥ २८८ ॥

क्षिप्रे-तरादिभेदं यत् पूर्वोदितदोषजालं तस्य परिहारो युज्यते 'अस्मिन् व्यावहारिकेऽर्थावग्रहे सति' इति प्रक्रमाद् गम्यते। इदमुक्तं भवति– एकसामयिकनैश्चयिकाऽर्थावग्रहव्याख्यातारं प्रति प्राग् यदुक्तम्– यद्यसावेकसामायिकः, तर्हि कथं क्षिप्र-चिरग्रहणविशेषणमस्योपपद्यते; तथा यद्यसौ सामान्यमात्रग्राहकः, तर्हि बहु-बहुविधादिविशेषणोक्तं विशेषग्रहणं कथं घटते ?; तथाऽर्थावग्रहस्य विशेषग्राहकत्वे यत् समयोपयोगबाहुल्यमुक्तम्; इत्यादिकस्य दोषजालस्य परिहारो व्यावहारिकेऽर्थावग्रहे सति युज्यते, तथाहि–नैश्चयिकावग्रहवादिनेदानीं शक्यमिदं वक्तुं यदुत- क्षिप्रे-तरादिविशेषणानि यावहारिकावग्रहविषयाण्येतानि,असंख्येयसमयनिष्पन्नत्वेनाऽस्य क्षिप्र-चिरग्रहणस्य युज्यमानत्वात्, विशेषग्राहकत्वेन बहु-बहुविधादिग्रहणस्याऽपि घटमानकत्वादिति। '[4]सामण्ण-तयण्णविसेसेहा' इत्यादिना प्रागभिहितं समयोपयोगबाहुल्यमप्यस्मिन् निरास्पदमेव, सामान्यग्रहणे-हापूर्वकत्वेन, असंख्येयसामयिकत्वेन चैकसमयोपयोगबाहुल्यस्याऽत्राऽसंवध्यमानत्वादिति। ननु नैश्चयिकावग्रहे किं क्षिप्रे-तरादिविशेषणकलापो न घटते, येन व्यावहारिकावग्रहापेक्षः प्रोच्यते ?। सत्यम्, मुख्यतया व्यवहारावग्रहे एव घटते, कारणे कार्यधर्मोपचारात् पुनर्नैश्चयावग्रहेऽपि युज्यते, इति प्रागप्युक्तम्, वक्ष्यते च; विशिष्टादेव हि कारणात् कार्यस्य वैशिष्ट्यं युज्यते, अन्यथा त्रिभुवनस्याऽप्यैश्वर्यादिप्रसङ्गः, काष्ठखण्डादेरपि रत्नादिनिचयाऽवाप्तेः, इत्यलं प्रसङ्गेन। प्रकृतमुच्यते– संतानेन च योऽसौ सामान्य-विशेषव्यवहारो लोके रूढः, सोऽपि 'व्यवहारावग्रहे सति युज्यते' इतीहापि संबध्यते। लोकेऽपि हि यो

१ तद्यथानामा कश्चित् पुरुषोऽव्यक्तं शब्दं श्रृणुयात्, तेन शब्द इत्यवगृहीतः, न पुनर्जानाति क एष शब्दः, तत ईहां प्रविशति, ततोऽपायं गच्छति।
२ ज. 'हाऽर्थाभ्यु'। ३ क्षिप्रे-तरादिभेदपूर्वोदितदोषजालपरिहारः। युज्यते संतानेन च सामान्यविशेषव्यवहारः ॥ २८८ ॥ ४ गाथा २६७।

निश्रितमतिज्ञानसंवन्धिष्ववग्रहादिगताऽष्टाविंशतिभेदेष्ववग्रहादिसाम्येन बुद्धिचतुष्टयस्याऽन्तर्भावो भावनीयः । ततो न युक्तं व्यञ्जनावग्रहचतुष्टयाऽपगमेन पुनर्बुद्धिचतुष्टयप्रक्षेपणम्, इति स्थितम् ॥ इति गाथार्थः ॥ ३०४ ॥

आह– ननु यद्यवग्रहादिसाम्येनाऽश्रुतनिश्रितं श्रुतनिश्रिताऽवग्रहादिष्वन्तर्भवति, तर्हि "आभिणिवोहियनाणं दुविहं पन्नत्तं, तं जहा– सुयनिस्सियं, अस्सुयनिस्सियं च" इत्येवमागमे यः श्रुतनिश्रितादश्रुतनिश्रितस्य भेद उक्तः, स विशीर्यत एव, इत्याशङ्क्याह–

जह उग्गहाइसामण्णउ वि सोइंदियाइणा भेओ । तह उग्गहाइसामण्णओ वि तमणिस्सिया भिन्नं ॥३०५॥

यथेहाऽवग्रहादीनामवग्रहादिसामान्ये सत्यपि, अवग्रहादित्वे तुल्येऽपि सतीत्यर्थः । किम् ?, इत्याह– श्रोत्रेन्द्रियादिना भेदः, तथाहि– एके श्रोत्रेन्द्रियसंवन्धिनोऽवग्रहादयः, यावदन्ये स्पर्शनेन्द्रियसंवन्धिनः, अपरे तु मनःसंवन्धिनः; तथा तेनैव प्रकारेणावग्रहादिसामान्ये सत्यपि तदश्रुतनिश्रितं भिन्नं, 'श्रुतनिश्रितात्' इति शेषः । कस्माद्धेतोर्भिन्नम् ?, इत्याह– 'अणिस्सिय त्ति' भावप्रधानोऽयं निर्देशः, अनिश्रितत्वात्– श्रुतानिश्रितत्वादित्यर्थः । एतदुक्तं भवति– अष्टाविंशतिभेदविचारप्रक्रमेऽवग्रहादिमत्त्वं सामान्यं धर्ममाश्रित्याऽश्रुतनिश्रितस्य श्रुतनिश्रित एवाऽन्तर्भावो विवक्ष्यते, श्रुता-ऽश्रुतनिश्रितविचारप्रस्तावे त्वश्रुतनिश्रितत्वं विशिष्टं धर्ममुररीकृत्य श्रुतनिश्रितादश्रुतनिश्रितं पृथगेवेष्यते, इत्यागमोक्तस्तयोर्भेदोऽपि न किञ्चिद् विशीर्यते । न च वक्तव्यम्– कथमेकस्यैवैकस्मादेव भेदश्चाऽभेदश्च, विरोधात् ? इति; यतो यदि तेनैव धर्मेण भेदः, अभेदश्चेष्येत, स्यात् तदा विरोधः, धर्मान्तरनिवन्धनौ तु भेदा-ऽभेदौ न विरुध्येते । किं हि नाम तद् वस्त्वस्ति, यस्य वस्त्वन्तराद् भेदा-ऽभेदौ न स्तः ? । घटादयोऽपि हि घटादित्वसामान्येन परस्परमभेदिनोऽपि स्वद्रव्य-क्षेत्र-कालादिमत्त्वेन भिन्ना इति । अत्र वहु वक्तव्यम्, तत्तु नोच्यते, ग्रन्थगहनताप्रसङ्गात्, अनेकान्तजयपताकादिषु विस्तरेणोक्तत्वाच्च ॥ इति गाथार्थः ॥ ३०५ ॥

स्यादेतत्, किमेतावता कष्टेन ?, मदीयव्याख्यापक्ष एव सुखावहः, श्रुता-ऽश्रुतनिश्रितयोरभेदापत्तेरभावात्, समस्तमतिज्ञानभेदभणनाच्चेति । तदेतदयुक्तम्, सिद्धान्ताभिप्रायवहिर्भूतत्वात् । एतदेवोपसंहारपूर्वकमाह—

अट्ठावीसइभेयं सुयनिस्सियमेव केवलं तम्हा । जम्हा तम्मि समत्ते पुणरस्सुयनिस्सियं भणियं ॥ ३०६ ॥

---

१ घ 'सामान्येन' २ आभिनिबोधिकज्ञान द्विविध प्रज्ञप्तम्, तद्यथा– श्रुतनिश्रितम्, अश्रुतनिश्रित च । ३ श्रीनन्दीसूत्रे ।
४ यथाऽवग्रहादिसामान्यतोऽपि श्रोत्रेन्द्रियादिना भेद. । तथाऽवग्रहादिसामान्यतोऽपि तदनिश्रिता(तत्वा)द् भिन्नम् ॥३०५॥ ५ घ छ ज 'तद्यथा' ।
६ क.ग. 'श्रुतनिश्रिता' । ७ अष्टाविंशतिभेद श्रुतनिश्रितमेव केवल तस्मात् । यस्मात् तस्मिन् समाप्ते पुनरश्रुतनिश्रितं भणितम् ॥ ३०६ ॥

"अरण्यमेतत् सविताऽस्तमागतो न चाधुना संभवतीह मानवः । प्रायस्तदेतेन खगादिभाजा भाव्यं स्मरारातिसमाननाम्ना" ॥ १ ॥ इति ।

एतच्च प्रागुक्तमपि मन्दमतिस्मरणार्थं पुनरप्युक्तम् ॥ इति गाथार्थः ॥ २८९ ॥

अथ मतिज्ञानतृतीयभेदस्याऽपायस्य स्वरूपमाह–

महुराइगुणत्तणओ[2] संखस्सेव त्ति जं न संगस्स । विण्णाणं सोऽवाओ अणुगम-वइरेगभावाओ ॥ २९० ॥

'मधुर-स्निग्धादिगुणत्वात् शङ्खस्यैवाऽयं शब्दः, न शृङ्गस्य' इत्यादि यद् विशेषविज्ञानम्, सोऽपायो निश्चयज्ञानरूपः । कुतः ?, इत्याह– पुरोवर्त्यर्थधर्माणामनुगमभावादस्तित्वनिश्चयसद्भावात्, तत्राऽविद्यमानार्थधर्माणां तु व्यतिरेकभावाद् नास्तित्वनिश्चयसत्त्वात् । अयं च व्यवहारार्थावग्रहानन्तरभावी अपाय उक्तः, निश्चयावग्रहानन्तरभावी तु स्वयमपि द्रष्टव्यः; तद्यथा– श्रोत्रग्राह्यत्वादिगुणतः 'शब्द एवाऽयं, न रूपादिः' इति । ईहा-ऽपायविषयाश्च विप्रतिपत्तयः प्रागपि निराकृताः, इति नेहोक्ताः ॥ इति गाथार्थः ॥ २९० ॥

अथ चतुर्थो मतिज्ञानभेदो धारणा, इयं चाऽविच्युति-वासना-स्मृतिभेदात् त्रिधा भवति, अतः सभेदामपि तामाह–

तयणंतरं[3] तयत्थाविच्चवणं जो य वासणाजोगो । कालंतरे य जं पुणरणुसरणं धारणा सा उ ॥ २९१ ॥

तस्मादपायादनन्तरं तदनन्तरं यत्, तदर्थादविच्यवनम्– उपयोगमाश्रित्याऽभ्रंशः, यश्च वासनाया जीवेन सह योगः संबन्धः, यच्च तस्याऽर्थस्य कालान्तरे पुनरिन्द्रियैरुपलब्धस्य, अनुपलब्धस्य वा, एवमेव मनसाऽनुस्मरणं स्मृतिर्भवति, सेयं पुनस्त्रिविधाऽप्यर्थस्याऽवधारणरूपा धारणा विज्ञेया ॥ इति गाथाक्षरघटना ॥

भावार्थस्त्वयम्– अपायेन निश्चितेऽर्थे तदनन्तरं यावदद्यापि तदर्थोपयोगसातत्येन वर्तते, न तु तस्माद् निवर्तते, तावत् तदर्थोपयोगादविच्युतिर्नाम सा धारणायाः प्रथमभेदो भवति । ततस्तस्याऽर्थोपयोगस्य यदावरणं कर्म तस्य क्षयोपशमेन जीवो युज्यते, येन कालान्तरे इन्द्रियव्यापारादिसामग्रीवशात् पुनरपि तदर्थोपयोगः स्मृतिरूपेण समुन्मीलति । सा चेयं तदावरणक्षयोपशमरूपा वासना नाम द्वितीयस्तद्भेदो भवति । कालान्तरे च वासनावशात्[4] तदर्थस्येन्द्रियैरुपलब्धस्य, अथवा तैरनुपलब्धस्याऽपि मनसि या स्मृतिराविर्भवति, सा तृतीयस्तद्भेद इति । एवं त्रिभेदा धारणा विज्ञेया । तुशब्दोऽवग्रहादिभ्यो विशेषद्योतनार्थः । विप्रतिपत्तयस्त्वेतद्विषया

१ क ग घ छ ज 'रतिप्रियतमारिस' । २ मधुरादिगुणत्वत शङ्खस्यैवेति यद् न शृङ्गस्य । विज्ञान सोऽपायोऽनुगम-व्यतिरेकभावात् ॥ २९० ॥
३ तदनन्तरं तदर्थाऽविच्यवनं यश्च वासनायोग । कालान्तरे च यत् पुनरनुस्मरणं धारणा सा तु ॥ २९१ ॥ ४ ज. 'तद्वास' ।

खिप्पमचिरेण तं चिय सरूवओ जं अणिस्सियमलिङ्गं । निच्छियमसंसयं जं धुवमच्चंतं न उ कयाई ॥३०९॥

इह श्रवणयोग्यदेशस्थे तूर्यसमुदाये युगपद् वाद्यमाने कोऽपि श्रोता तस्य तूर्यसंघातस्य संबन्धिनं पटह-ढक्का-शङ्ख-भेरि-भाणकादिनानाशब्दसमूहमाकर्णितं सन्तं क्षयोपशमविशेषाद् बहुमवग्रहादिना 'मुणति' जानाति । कोऽर्थः ?, इत्याह– पृथग् भिन्नजातीयम्, एतावन्तोऽत्र भेरिशब्दाः, एतावन्तो भाणकशब्दाः, एतावन्तस्तु शङ्ख-पटहादिशब्दाः, इत्येवं पृथगेकैकशो भिन्नजातीयत्वेन तं नानाशब्दसमूहं बुध्यत इत्यर्थः । अन्यस्त्वल्पक्षयोपशमत्वात् तत्समानदेशोऽप्यबहुं 'मुणति'– सामान्येन 'नानातूर्यशब्दोऽयम्' इत्यादिमात्रकमेव जानातीति प्रतिपक्षः । एवमुत्तरगाथायामतिदेक्ष्यमाणा प्रतिपक्षभावना सर्वत्राऽवबोद्धव्या । अन्यस्तु क्षयोपशमवैचित्र्याद् बहुविधं 'मुणति' । कोऽर्थः ?, इत्याह– अनेकभेदम्, इदमपि व्याचष्टे– एकैकं शङ्ख-भेर्यादिशब्दं स्निग्धत्व-मधुरत्व-तरुण-मध्यम-वृद्धपुरुषवाद्यत्वादिबहुविधधर्मोपेतं जानातीत्यर्थः । अन्यस्त्वबहुविधं स्निग्ध-मधुरत्वादिस्वल्पधर्मान्वितमेव पृथग् भिन्नजातीयं नानाशब्दसमूहं जानाति । अन्यस्तु क्षिप्रम् । कोऽर्थः ?, इत्याह– अचिरेण शीघ्रमेव परिच्छिनत्ति, न तु चिरेण विमृश्येत्यर्थः । अन्यस्त्वक्षिप्रं चिरविमर्शितं जानाति । तथा 'तं चिय सरूवओ जं अणिस्सियमिति' तमेव नानाशब्दसमूहं कोऽप्यनिश्रितं 'मुणति' इति संबन्धः । यं किम् ?, इत्याह– यं स्वरूपतो जानाति । कोऽर्थः ?, इत्याह– अलिङ्गं पताकादिलिङ्गाऽनिश्रितमित्यर्थः । इदमुक्तं भवति– तमेव शब्दसमूहं 'देवकुलमत्र, तथाविधपताकादर्शनात्' इत्येवं लिङ्गनिश्रामकृत्वा स्वरूपत एव यमवगच्छति, तमनिश्रितं 'मुणति' इत्युच्यत इति । तमेव लिङ्गनिश्रया जानानो निश्रितं 'मुणति' इच्युच्यते । तथा 'निच्छियमसंसयं जं ति' यमसंशयमवच्छिनत्ति तं निश्चितं 'मुणति' । निश्चितं तावदित्थमेतद् मया, परं न जाने, तथा वा स्यात्, अन्यथा वा, इत्येवं संदेहानुविद्धं तु जानन्ननिश्चितं 'मुणति' । 'धुवमित्यादि' ध्रुवम्, कोऽर्थः ?– अत्यन्तं, न तु कदाचिदिति । इदमुक्तं भवति– यथैकदा बह्वादिरूपेणाऽवगतं सर्वदैव तथाऽवबुध्यमानो ध्रुवं 'मुणति' इत्युच्यते । यस्तु कदाचिद् बह्वादिरूपेण, कदाचित् त्वबह्वादिरूपेण, सोऽध्रुवं 'मुणति' ॥ इति गाथाद्वयार्थः ॥ ३०८ ॥ ३०९ ॥

इतरशब्दं व्याचिख्यासुराह–

एँत्तो च्चिय पडिवक्खं साहिज्जा, निस्सिए विसेसो वा । परधम्मेहि विमिस्सं निस्सियमाविणिस्सियं इयरं॥३१०॥

---

१ क्षिप्रमचिरेण तमेव स्वरूपतो यमनिश्रितमलिङ्गम् । निश्चितमसंशयं य ध्रुवमत्यन्त न तु कदाचित् ॥ ३०९ ॥ २ क घ 'मुदये' । ३ क ग. 'देश्यमाना प्र' । ४ एतस्मादेव प्रतिपक्षं कथयेद् निश्रिते विशेषो वा । परधर्मैर्विमिश्रं निश्रितमाविनिश्रितमितरत् ॥ ३१० ॥

रसादिर्विषयो येषामीहादीनां तानि समानरूपादिविषयाणीति पूर्वगाथायां संबन्धः । कः पुनरमीषां समानधर्मा रूपादिविषयः ?, इत्याह– स्थाणु-पुरुषादिवदिति पर्यन्ते निर्दिष्टोऽपि विषयोपदर्शनाभिद्योतको वच्छब्दः सर्वत्र योज्यते । ततश्चक्षुरिन्द्रियप्रभवस्येहादेः स्थाणु पुरुषादिवत् समानधर्मा रूपविषयो द्रष्टव्यः ; आदिशब्दात् 'किमियं शुक्तिका, रजतखण्डं वा ?' 'मृगतृष्णिका, पयःपूरो वा ?' 'रज्जुः, विषधरो वा ?' इत्यादिपरिग्रहः । घ्राणेन्द्रियप्रभवस्येहादेः कुष्ठो-त्पलादिवत् समानगन्धो विषयः, तत्र कुष्ठं गन्धिकहट्टविक्रेयो वस्तुविशेषः, उत्पलं पद्मम् ; अनयोः किल समानो गन्धो भवति । तत ईदृशेन गन्धेन 'किमिदं कुष्ठम्, उत्पलं वा ?' इत्येवमीहाप्रवृत्तिः, आदिशब्दात् 'किमत्र सप्तच्छदाः, मत्तकरिणो वा ?' 'कस्तूरिका, वनगजमदो वा ?' इत्यादिपरिग्रहः । रसनेन्द्रियप्रभवस्येहादेः संभृतकरील-मांसादिवत् समानरसो विषयः । तत्र संभृतानि संस्कृतानि संधानीकृतान्युद्धृतानि यानि वंशजालिसंबन्धीनि करीलानि, तथा मांसम्, अनयोः किलाऽऽस्वादः समानो भवति । ततोऽन्धकारादावन्यतरस्मिन् जिह्वाग्रप्रदत्ते भवत्येवम्–'किमिदं संभृतवंशकरीलम्, आमिषं वा ?' इति ; आदिशब्दाद् 'गुडः, खण्डं वा ?' 'मृद्वीका, शुष्कराजादनं वा ?' इत्यादिपरिग्रहः । स्पर्शनेन्द्रियप्रभवस्येहादेः सर्पो-त्पलनालादिवत् समानस्पर्शो विषयः, सर्पो-त्पलनालयोश्च तुल्यस्पर्शत्वेनेहाप्रवृत्तिः सुगमैव, आदिशब्दात् स्त्री-पुरुष-लेष्टू-पलादिसमानस्पर्शवस्तुपरिग्रहः ॥ इति गाथार्थः ॥ २९३ ॥

अथ यदुक्तं सूत्रे– "[2]से जहानामए केइ पुरिसे अव्वत्तं सुमिणं पासेज्जा" इत्यादि, तदनुसृत्य स्वप्ने मनसोऽप्यवग्रहादीन् दर्शयन्नाह–

[3]एवं चिय सुमिणाइसु मणसो सद्दाइएसु विसएसु । होंतिंदियवावाराभावे वि अवग्गहाईया ॥ २९४ ॥

एवमेवोक्तानुसारेणेन्द्रियव्यापाराभावेऽपि स्वप्नादिषु, आदिशब्दाद् दत्तकपाट-सान्धकाराऽपवरकादीनीन्द्रियव्यापाराभाववन्ति स्थानानि गृह्यन्ते, तेषु केवलस्यैव मनसो मन्यमानेषु शब्दादिविषयेष्ववग्रहादयोऽवग्रहे-हा-ऽपाय-धारणा भवन्तीति स्वयमभ्यूह्याः, तथाहि– स्वप्नादौ चित्तोत्प्रेक्षामात्रेण श्रूयमाणे गीतादिशब्दे प्रथमं सामान्यमात्रोत्प्रेक्षायामवग्रहः, 'किमयं शब्दः, अशब्दो वा?' इत्याद्युत्प्रेक्षायां त्वीहा, शब्दनिश्चये पुनरपायः, तदनन्तरं तु धारणा । एवं देवतादिरूपे, कर्पूरादिगन्धे, मोदकादिरसे, कामिनीकुचकलशादिस्पर्शे चोत्प्रेक्ष्यमाणेऽवग्रहादयो मनसः केवलस्य भावनीयाः ॥ इति गाथार्थः ॥ २९४ ॥

१ ज 'न्युत्थिता' । २ तद्यथानामा काश्चित् पुरुषोऽव्यक्तं स्वप्नं पश्येत् ।
३ एवमेव स्वप्नादिषु मनसः शब्दादिषु विषयेषु । भवन्तीन्द्रियव्यापाराभावेऽप्यवग्रहादयः ॥ २९४ ॥

भिहितमवगन्तव्यम् । एतदेव च मतिज्ञानं यथोक्तनिमित्तद्वयस्य किञ्चिन्मात्रभेदाद् भिद्यमानं पुनरनन्तमपि भवतीति प्रतिपत्तव्यम्, सामान्येन मतिज्ञानमात्रवतां जीवानामनन्तत्वात्, तेषां च क्षयोपशमादिभेदेन मतेर्भिन्नत्वादिति भावः ॥ इति गाथार्थः ॥ ३११ ॥

अत्राह कश्चित्– नन्ववग्रहादयो ज्ञानमेव न भवन्ति, स्पष्टार्थनिर्भासाद्यभावात्, संशयादिवत्, इति कथममी मतिज्ञानभेदाः ?, इत्याशङ्क्यैतेषां ज्ञानत्वसाधनायाह–

[1]ईह संसयादणंतभावाउ वग्गहादयो नाणं । अणुमाणमिवाह न संसयाइसब्भावउ तेसुं ॥ ३१२ ॥

अवग्रहादयो ज्ञानमिति प्रतिज्ञा, संशयादिष्वनन्तर्भावादिति हेतुः, आदिशब्दाद् विपर्यया-ऽनध्यवसायपरिग्रहः ; अनुमानवदिति दृष्टान्तः । इह संशयाद्यनन्तर्भूतैर्वर्ण-गन्धादिभिः पुद्गलैर्द्रव्यैर्व्यभिचारसंभवात्[2], सूत्रस्य च सूचकत्वात् 'आत्मधर्मत्वे सति संशयाद्यनन्तर्भावात्' इति सविशेषणो हेतुर्द्रष्टव्यः । अत्राह परः– ननु सविशेषणे हेतावनैकान्तिकता मा भूत्, असिद्धता त्वनिवार्यैवेति । एतदेवाह– 'न संसयाईत्यादि' सूरे ! न तद् भवदीयं वचः । कुतः ?, इत्याह– संशयादिसद्भावतस्तेष्ववग्रहादिषु, तेषां संशयादिरूपत्वात् संशयाद्यनन्तर्भावात्, इत्यसिद्धो हेतुरिति भावः ॥ इति गाथार्थः ॥ ३१२ ॥

कथं पुनस्तेषु संशयादिसद्भावः ?, इत्याह–

[3]ननु संदिद्धे संसय-विवज्जया संसओ ह चेहा वि । वच्चासो वा निस्सियमवग्गहोऽणज्झवसियं तु ॥ ३१३ ॥

ननु '[4]खिप्पमचिरेण 'इत्यादिगाथायां तु यदुक्तम्- 'निच्छियमसंसयं जं ति' तत्प्रतिपक्षे यदुच्यते– 'कोऽपि संदिग्धं मुणाति' इति, तत्र संदिग्धे ज्ञायमाने संशयस्तावद् व्यक्त एव, यत्र च संशयस्तत्र संदिहानस्य कदाचिद् विपर्ययोऽपि स्यात्; इत्येवं संदिग्धे संशय-विपर्ययौ तावदनिवारितावेव । अथवा, किमनेनोत्तरभेदरूपे संदिग्धे दूषणप्रदानेन ?, हन्त ! येयं मूलभेदरूपेहा साऽपि संशय एव, निश्चयत्वे तस्या अपायत्वप्रसङ्गादिति । अथवा '[6]परधम्मेहि विमिस्सं निस्सियं' इत्यत्र यद् निश्रितमुक्तं, तदपि गवादिकमश्वादिरूपेण गृह्णद् विपर्यास एव । न हि नृत्यन् विपर्यासो भवति, किन्त्वन्यस्यान्यरूपेण ग्रहणमेवेति भावः । नैश्चयिकार्थावग्रहरूपोऽवग्रहः पुनरनध्यवसितमनध्यवसाय एव, अनिर्देश्यसामान्यमात्रग्राहित्वात्, न ह्यत्र कस्याऽप्यर्थस्य[5] संवन्ध्यध्यवसायोऽस्तीति कृत्वा ।

१ इह सशयाद्यनन्तर्भावादवग्रहादयो ज्ञानम् । अनुमानमिवाऽऽह– न, सशयादिसद्भावतस्तेषु ॥ ३१२ ॥ २ क. ग घ छ 'लधमैर्व्यं' ।
३ ननु संदिग्धे सशय विपर्ययौ सशय इह चेहाऽपि । व्यत्यासो वा निश्रितमवग्रहोऽनध्यवसित तु ॥ ३१३ ॥ ४ गाथा ३०९ ।
५ घ ज. 'कस्याचि' । ६ गाथा ३१० ।

तदेवं निराकृतौ सयुक्तिकमुत्क्रमा-ऽतिक्रमौ । अथ यदुक्तम्– 'एगाभावे वि वा न वत्थुस्स जं सब्भावाहिगमो तो सव्वे' त्ति, तत्रापीयमेव युक्तिरिति दर्शयन्नाह–

एंतो च्चिय ते सव्वे भवंति भिन्ना य णेव समकालं । न वइक्कमो य तेसिं न अन्नहा नेयसब्भावो ॥२९७॥

यत एव 'नाऽगृहीतमीह्यते' इत्याद्युक्तम्, एतस्मादेव च तेऽवग्रहादयः सर्वे चत्वारोऽप्येष्टव्या भवन्ति, उक्तन्यायाद् नैक-वैकल्येऽपि मतिज्ञानं संपद्यत इत्यर्थः । 'पूर्वमवगृहीतमीह्यते' इत्याद्युक्तेरेव च ते भिन्नाः– परस्परमसंकीर्णाः, उत्तरोत्तराऽपूर्वभिन्नवस्तुपर्यायग्रहणादिति । 'नाऽगृहीतमीह्यते' इत्याद्युक्तेरेव च न ते समकालं, भिन्नाः सिद्धास्तेऽवग्रहादयः समकालमपि नैव भवन्ति, युगपन्न जायन्त इत्यर्थः, 'पूर्वमवगृहीतमेवोत्तरकालमीह्यते, ईहोत्तरकालमेव च निश्चीयते' इत्याद्युक्तन्यायेनैवाऽवग्रहादीनामुत्पत्तिकालस्य भिन्नत्वाद् न युगपत् संभव इति भावः । उक्तयुक्तेरेव च तेषां न व्यतिक्रमः, उपलक्षणत्वाद् 'नाऽप्युत्क्रमः' इत्यपि द्रष्टव्यम् । एतच्च 'तेण कमोऽवग्गहाई उ' इत्यनन्तरगाथाचरमपादेन सामर्थ्यादुक्तमपि प्रस्तावात् पुनरपि साक्षादुक्तम्, इत्यदोषः । तदेवं 'ईहिज्जइ नागहियं' इत्यादियुक्तेर्यथोक्तधर्मका एवाऽवग्रहादयः, न विपर्ययधर्माण इति साधितम् । अथ ज्ञेयवशेनाऽप्येषां यथोक्तधर्मकत्वं सिसाधयिषुरिदमाह– 'न अन्नहा नेयसब्भावो त्ति' ज्ञेयस्याऽप्यवग्रहादिग्राह्यस्य शब्द-रूपादेर्नान्यथा स्वभावोऽस्ति, येनाऽवग्रहादयस्तद्ग्राहका यथोक्तरूपतां परित्यज्याऽन्यथा भवेयुरित्यर्थः । इदमुक्तं भवति– ज्ञेयस्याऽपि शब्दादेः स स्वभावो नास्ति, य एतैरवग्रहादिभिरेकादिविकलैरभिन्नैः, समकालभाविभिः, उत्क्रमाऽतिक्रमवद्भिश्चाऽवगम्येत; किन्तु शब्दादिज्ञेयस्वभावोऽपि तथैव व्यवस्थितो यथाऽमीभिः सर्वैर्भिन्नैः, असमकालैः, उत्क्रमा-ऽतिक्रमरहितैश्च संपूर्णो यथावस्थितश्चाऽवगम्यते, अतो ज्ञेयवशेनाऽप्येते यथोक्तरूपा एव भवन्ति । तदेवं 'उक्कमओऽइक्कमओ एगाभावे वि वा' इत्यादिगाथोक्तं प्रसङ्गतोऽन्यदपि भिन्नत्वम्, असमकालत्वं च समर्थितम् ॥ इति गाथार्थः॥२९७॥

अत्र परः प्राह–

अब्भत्थेऽवाओ च्चिय कत्थइ लक्खिज्जई इमो पुरिसो । अन्नत्थ धारण च्चिय पुरोवलद्धे इमं तं ति ॥ २९८ ॥

स्वभ्यस्तेऽनवरतं दृष्टपूर्वे, विकल्पिते, भाषिते च विषये पुनः क्वचित् कदाचिदवलोकितेऽवग्रहे-हाद्वयमतिक्रम्य प्रथमतो-

१ गाथा २९५ । २ एतस्मादेव ते सर्वे भवन्ति भिन्नाश्च नैव समकालम् । न व्यतिक्रमश्च तेषां नाऽन्यथा ज्ञेयसद्भावः ॥ २९७ ॥ ३ क. ग घ छ 'नाऽगृ' । ४ गाथा २९६ । ५ अभ्यस्तेऽपाय एव क्वचिल्लक्ष्यतेऽसौ पुरुषः । अन्यत्र धारणैव पुरोपलब्धे इदं तदिति ॥ २९८ ॥

केवलमश्व इव प्रतिभाति' इति। एतावन्मात्रेणैव चेयं विपर्ययोपलब्धिरवगन्तव्या; न तु सर्वथा विपर्ययधर्मनिश्चयात्, सर्वथा विपर्यये तत्राऽश्वादिसत्त्वप्रसङ्गात्। न च वक्तव्यम्– एवं सतीदमनिश्चिताद् न भिद्येत; तत्र परधर्मनिश्चितत्वाभावात्, विवक्षितवस्त्वभावशङ्कामात्रस्यैव सद्भावादिति। न च विपर्ययधर्मशङ्कामात्रेणाऽप्यज्ञानता, वस्तुप्राप्तिविघाताभावादिति। यदप्युक्तम्– 'अवग्रहोऽनध्यवसायः' इति। तदप्ययुक्तम्, तत्र ह्यध्यवसायः साक्षादेव नास्ति, योग्यतया पुनरस्त्येव, अन्यथा तत्कार्येष्वपायादिष्वपि तदभावप्रसङ्गात्, इत्युक्तमेव। अतिमत्त-मूर्च्छितानामेव हि ज्ञानमनध्यवसाय उच्यते, तत्र योग्यतयाऽप्यध्यवसायस्य वक्तुमशक्यत्वात्, तत्कार्यभूतस्याऽपायाद्यध्यवसायस्याऽप्यलक्षणत्वात्। तदेवमवग्रहादीनामसिद्धं संशयादित्वम्। तथापि 'अभ्युपगन्तुं'अङ्गीकृत्याऽपि तेषां संशयादिरूपतां ब्रूमः– ज्ञानमेव संशयादयः संशय-विपर्यया-ऽनध्यवसायाः। ततश्च संशयादिरूपत्वेऽपि नावग्रहादीनां मतिज्ञानभेदत्वं विरुध्यत इति भावः। इदमुक्तं भवति– नास्माभिः 'समीहितवस्तुप्रापकं ज्ञानम्, इतरदज्ञानम्' इत्येवं व्यवहारिणां प्रमाणा-ऽप्रमाणभूते ज्ञाना-ऽज्ञाने विचारयितुमुपक्रान्ते, किन्तु 'ज्ञायते येन किमपि, तत् सम्यग्दृष्टिसंबन्धि ज्ञानम्' इत्येतावन्मात्रकमेव व्याख्यातुमभिप्रेतम्; वस्तुपरिज्ञानमात्रं तु संशयादिष्वपि विद्यते, इति न तेषामपि सम्यग्दृष्टिसंबन्धिनां ज्ञानत्वहानिः॥ इति गाथार्थः॥ ३१४॥

कथं पुनः संशयादयो ज्ञानम्?, इत्याह–

[2]वत्थुस्स देसगमगत्तभावओ परमयप्पमाणं व। किह वत्थुदेसवि[3]ण्णाणहेयवो, सुणसु तं वोच्छं॥ ३१५॥

ज्ञानमेव संशयादयः, इति प्राक्तनी प्रतिज्ञा; वस्तुनो गवादेः स्व-परपर्यायैरनन्तधर्माध्यासितस्य यो देश एकदेशस्तस्य गमकत्वभावात्, इति हेतुः; पराभिमतं प्रमाणं निश्चयज्ञानरूपं तद्वदिति दृष्टान्तः। इह यद् वस्त्वेकदेशस्य गमकं तज् ज्ञानं दृष्टं, यथा परमतं निश्चयरूपं प्रमाणम्, वस्त्वेकदेशगमकाश्च संशयादयः, ततस्ते ज्ञानम्, इति। अत्र हेतोरसिद्धतां मन्यमानः परः पृच्छति– कथं वस्त्वेकदेशविज्ञानहेतवः संशयादयः?, वस्तुनो निरंशत्वेन देशस्यैवाऽभावाद् न त एकदेशग्राहिणो घटन्त इति परस्याऽभिप्रायः। आचार्यः प्राह– यत् त्वया पृष्टं तद् वक्ष्ये भणिष्याम्यहम्, शृणु समवहितः समाकर्णय त्वम्॥ इति गाथार्थः॥ ३१५॥

यथाप्रतिज्ञातमेवाह–

[4]ईह वत्थुमत्थ-वयणाइपज्जयाणंतसत्तिसंपन्नं। तस्सेगदेसविच्छेयकारिणो संसयाईया॥ ३१६॥

---

१ क ग 'नम्'। २ वस्तुनो देशगमकत्वभावत. परमतप्रमाणमिव। कथ वस्तुदेशविज्ञानहेतव, शृणु तद् वक्ष्ये॥ ३१५॥ ३ घ छ ज 'न्ना'।
४ इह वस्त्वर्थ-वचनादिपर्यायाऽनन्तशक्तिसपन्नम्। तस्यैकदेशविच्छेदकारिण. संशयादयः॥ ३१६॥

नानां युगपदुत्पादायोगात्, तथाहि– मनसा सह संयुक्तमेवेन्द्रियं स्वविषयज्ञानमुत्पादयति, नान्यथा, अन्यमनस्कस्य रूपादिज्ञानानुपलम्भात् । न च सर्वेन्द्रियैः सह मनो युगपत् संयुज्यते, तस्यैकोपयोगरूपत्वात्, एकत्र ज्ञातरि एककालेऽनेकैः संयुज्यमानत्वाऽयोगात् । तस्माद् मनसोऽत्यन्ताऽऽशुसंचारित्वेन कालभेदस्य दुर्लक्षत्वाद् युगपत् सर्वेन्द्रियविषयोपलब्धिरस्य प्रतिभाति । परमार्थतस्त्वस्यामपि कालभेदोऽस्त्येव । ततो यथाऽसौ भ्रान्तैर्नोपलक्ष्यते, तथाऽवग्रहादिकालेऽपीति प्रकृतम् । दीर्घत्वविशेषणं च शष्कुलिकाया गाथायामनुक्तमप्युपलक्षणत्वाद् विहितमिति परिभावनीयम् । तदेवमवग्रहादीनां नैकादिवैकल्यम्, नाऽप्युत्क्रमातिक्रमौ, इति स्थितम् ॥ इति गाथार्थः ॥ २९९ ॥

'उग्गहो ईहअवाओ य' इत्यादिगाथायाम् 'आभिनिबोधिकज्ञानस्य चत्वारि भेदवस्तूनि समासतः' इत्युक्तम्, तत् किं व्यासतो बहुभेदमप्याभिनिबोधिकज्ञानं भवति ?, इत्याशङ्क्य तद्भेदबहुविधत्वदर्शनात् 'समासेन' इति विशेषणस्य सफलत्वमाह—

सोइंदियाइभेएण छव्विहा वग्गहादओऽभिहिआ । ते होंति चउव्वीसं चउव्विहं वंजणोग्गहणं ॥ ३०० ॥
अट्ठावीसइभेयं एयं सुयनिस्सियं समासेणं । केइ त्तु वंजणोग्गहवज्जे च्छोढूणमेयम्मि ॥ ३०१ ॥
अस्सुयनिस्सियमेवं अट्ठावीसइविहं ति भासंति । जमवग्गहो दुभेओऽवग्गहसामण्णओ गहिओ ॥ ३०२॥

श्रोत्रेन्द्रियादीनां पञ्चानामिन्द्रियाणां मनःषष्ठानां यो भेदस्तेनाऽवग्रहादयः प्रत्येकं षड्विधाश्चत्वारोऽप्यभिहिताः । ततस्तैः षड्भिश्चत्वारो गुणिताश्चतुर्विंशतिर्भवन्ति । अन्यच्च स्पर्शन-रसन-घ्राण-श्रोत्रेन्द्रियचतुष्टयभेदाद् व्यञ्जनावग्रहणं व्यञ्जनावग्रहश्चतुर्विधो भवति । एवमेतच्छ्रुतनिश्रितमाभिनिबोधिकज्ञानं सर्वमप्यष्टाविंशतिविधं संपद्यते । एतदपि भेदाभिधानं वक्ष्यमाणबहुतरभेदकलापापेक्षयाऽद्यापि समासेन संक्षेपेण द्रष्टव्यम् ॥

१ ग ज 'स्य स्वरू' । २ ज 'कैः सह यु' । ३ गाथा १७८ ।
४ श्रोत्रेन्द्रियादिभेदेन षड्विधा अवग्रहादयोऽभिहिता. । ते भवन्ति चतुर्विंशतिश्चतुर्विधं व्यञ्जनावग्रहणम् ॥ ३०० ॥
अष्टाविंशतिभेदमेतत् श्रुतनिश्रितं समासेन । केचित्तु व्यञ्जनावग्रहवर्जे क्षिप्त्वैतस्मिन् ॥ ३०१ ॥
अश्रुतनिश्रितमेवमष्टाविंशतिविधमिति भाषन्ते । यदवग्रहो द्विभेदोऽवग्रहसामान्यतो गृहीतः ॥ ३०२ ॥ ५ घ.छ.ज. 'श्रवणेन्द्रि' ।

ज्ञानं मतिज्ञानम्' इत्येवं सामान्येनैव सम्यग्दृष्टिसंबन्धि मतिज्ञानमिह विचार्यते । तस्य च संशयादिरूपस्य, निर्णयरूपस्य वा सम्यग्दृष्टिसंबन्धिनो ज्ञानता न विरुध्यते, 'ज्ञायतेऽनेनेति ज्ञानम्' इत्यस्यार्थस्य सर्वत्रोपपद्यमानत्वादिति । ननु यदि संशयादयोऽपि मतिज्ञानम्, तर्हि चतुर्भेदत्वमतिक्रम्य सप्तभेदत्वं तस्य प्रसज्यते, इति चेत् । नैतदेवम्, यतोऽनध्यवसायस्तावत्सामान्यमात्रग्राहित्वेनाऽवग्रहेऽन्तर्भवति, संशयोऽपि पूर्वोक्तस्वरूपेहाप्रकारत्वात्, तत्कारणत्वाच्च तस्यामेवाऽन्तर्विशति, यदपि संशयस्य पूर्वमीहात्वमपाकृतं तदपि व्यवहारिजनानुवृत्त्या, न तु सर्वथेति; विपर्यासस्तु निश्चयरूपत्वात् साक्षादपाय एव, इति कुतश्चतुर्भेदातिक्रमः ? । इत्थं चैतदङ्गीकर्तव्यम्, अन्यथा सम्यग्दृष्टिसंबन्धिनः संशयादयो मतिज्ञानादतिरिच्यमानाः काऽन्तर्भवेयुः ? । अज्ञान इति चेत् । नैवम्, "[1]सम्मदिट्ठी णं भंते ! किं नाणी अन्नाणी ? गोयमा ! नाणी, नो अन्नाणी" इत्याद्यागमवचनात् सम्यग्दृष्टेः सदैव ज्ञानित्वादिति । भवत्वेवम्, तथापि सम्यग्दृष्टिसंबन्ध्येव मतिज्ञानमिह विचार्यत इति कुतो लभ्यते ? इति चेत् । उच्यते– ज्ञानपञ्चकमेवेह विचारयितुमुपक्रान्तम्, ज्ञानं च सम्यग्दृष्टेरेव भवति, अतस्तत्संबन्ध्येव मतिज्ञानमिह विचार्यते, सम्यग्दृष्टिसंबन्धिनां च संशयादीनां ज्ञानता साध्यते । इत्यलं विस्तरेण ॥ इति गाथार्थः ॥ ३१७ ॥

अत्राऽतिप्रसक्तिं मन्यमानः परः प्राह–

[3]जइ एवं तेण तुहं अन्नाणी को वि नत्थि संसारी[4] । मिच्छद्दिट्ठीणं ते अन्नाणं नाणमियरेसिं ॥ ३१८ ॥

यद्येवमुक्तप्रकारेण संशयादयोऽपि ज्ञानम्, तेन तव 'अज्ञानी नास्ति कोऽपि संसारी जीवः' इति प्राप्तम्; मोक्षे सर्वस्याऽपि ज्ञानं परेणाऽभ्युपगम्यत इति संसारिणामेवाऽयमतिप्रसङ्गलक्षणो दोषः, इत्यभिप्रायवता 'संसारी' इति विशेषणमकारि । एतदुक्तं भवति– 'संशयादयोऽज्ञानम्, निर्णयस्त्वबाधितो ज्ञानम्' इति तावल्लोकव्यवहारस्थितिः। यदि च भवता संशयादीनामपि ज्ञानरूपता व्यवस्थाप्यते, तर्हि समुच्छन्नोऽयमज्ञानव्यवहारः, ततः कथं नाऽतिप्रसङ्गः ?। दृश्यते च लोकेऽज्ञानव्यवहारः; स कथं नीयते ? इति। अत्रोत्तरमाह– 'मिच्छद्दिट्ठीणमित्यादि' मिथ्यादृष्टीनां संबन्धिनस्ते संशय-विपर्यया-ऽनध्यवसायाः, निर्णयश्चाज्ञानम्, इतरेषां तु सम्यग्दृष्टीनां संबन्धिनस्ते ज्ञानम्, इति नाऽज्ञानव्यवहारोच्छेदः। अयमभिप्रायः– लोकव्यवहाररूढो ज्ञाना-ऽज्ञानव्यवहारोऽत्र न विवक्षितः, किन्त्वागमाभिप्रायरूढो

१ सम्यग्दृष्टयो भगवन् ! किं ज्ञानिनः, अज्ञानाः ?, गोयमा ! ज्ञानिन, नो अज्ञानाः । २ 'भगवती' इतिनाम्ना प्रसिद्धे व्याख्याप्रज्ञप्तिसूत्रे ।
३ यद्येव तेन तवाऽज्ञान. कोऽपि नास्ति ससारी । मिथ्यादृष्टीना तेऽज्ञान ज्ञानमितरेपाम् ॥ ३१८ ॥ '४ क ग. छ ज. 'री आमि' ।

वग्गहादओ' इत्यादिना प्रतिपादितैरवग्रहादिसंबन्धिभिरष्टाविंशतिभेदैः किलासंगृहीतत्वाद् व्यञ्जनावग्रहचतुष्टयापगमं कृत्वाऽश्रुतनिश्रितं बुद्धिचतुष्टयं मतान्तरवादिभिः प्रक्षिप्यते; एतच्चाऽयुक्तम् , यतः 'सोइंदियाइभेएण' इत्यादिनाऽवग्रहादीनामेवाऽष्टाविंशतिर्भेदाः प्रोक्ताः, अवग्रहादयश्च बुद्धिचतुष्टयेऽपि सन्ति, अतोऽवग्रहादिभणनद्वारेण तदप्यश्रुतनिश्रितं बुद्धिचतुष्टयमेतेष्वष्टाविंशतिभेदेषु संगृहीतमेव, इति किमिति तैः पुनरपि प्रक्षिप्यते ? ॥ इति गाथार्थः ॥ ३०३ ॥

तत्रैतत् स्यात् प्रष्टव्यं परस्य– 'कथमौत्पत्तिक्यादिबुद्धिचतुष्टयेऽवग्रहादयः संभवन्ति ?'। तदत्र यथा ते भवन्ति, तथा दर्शयन्नाह–

[2]कि[3]हँ पडिकुक्कुडहीणो जुज्झे बिंबेण वग्गहो, ईहा। किं सुसिलिट्ठमवाओ दप्पणसंकंतबिंबं ति ॥ ३०४ ॥

इह किल[4]ऽऽगमे–

"[5]भरह-सिल-मिं[6]ढ-कुक्कुड-तिल-वालुय-हत्थि-अगड-वणसडे। पायस अइआ-पत्ते खाडहिला पञ्च पियरो य" ॥ १ ॥

इत्यादिनौत्पत्तिक्यादिबुद्धीनां बहून्युदाहरणान्युक्तानि, तन्मध्याच्छेषोपलक्षणार्थं कुर्कुटोदाहरणमाश्रित्यौत्पत्तिक्यां बुद्धाववग्रहादयो भाव्यन्ते– राज्ञा नटकुमारकस्य भरतस्य किल बुद्धिपरीक्षणार्थमादिष्टं यदुत– अयं मदीयकुर्कुटो द्वितीयकुर्कुटमन्तरेणैकैक एव योधनीयः। ततस्तेन जिज्ञासितं मनसि 'कथमयं प्रतिकुर्कुटहीनः प्रतिपक्षभूतद्वितीयकुर्कुटवर्जितो युध्येत ?'। एतच्च जिज्ञासमानस्य तस्य झगित्येव स्फुरितं चेतसि। किम् ?, इत्याह– बिम्बेनेति आत्मीयेन प्रतिबिम्बेन पुरो वीक्षितेन दर्पाध्मातत्वादयं युध्यत इत्यवगृहीतमित्यर्थः। एतच्च किम् ?, इत्याह– अवग्रहसामान्येनैव बिम्बमात्रावग्रहणादवग्रहो मतिप्रथमभेद इत्यर्थः। ईहा तर्हि का ?, इत्याह– 'ईहा किं सुसिलिट्ठमिति' किं पुनस्तत् प्रतिबिम्बमस्य योधनाय सुश्लिष्टं सुष्ठु युज्यमानकं भवेत्– किं तडागपयःपूरादिगतम्, आहोस्विद् दर्पणगतम् ?, इत्यादिबिम्बविशेषान्वेषणमीहेत्यर्थः। अपायमुपदर्शयति– 'अवाओ दप्पणसंकंतबिंबं ति' कल्लोलादिभिः प्रतिक्षणमपनीयमानत्वात्, अस्पष्टत्वाच्च जलादिगतबिम्बमिह न युक्तम्; ततः स्थिरत्वेन, स्पष्टादित्वेन च चरणाऽऽघातादिविषयत्वाद् दर्पणसंक्रान्तमेव तदत्र युज्यते, इत्येवं बिम्बविशेषनिश्चयोऽपाय इत्यर्थः। एवमन्येष्वपि बुद्ध्युदाहरणेष्ववग्रहादयो भावनीयाः। तस्माद् बुद्धिचतुष्टयेऽप्येषां सद्भावाच्छ्रुत-

१ गाथा ३०० । २ कथं प्रतिकुर्कुटहीनो युध्येत बिम्बेनाऽवग्रह, ईहा। किं सुश्लिष्टमपायो दर्पणसंक्रान्तबिम्बमिति ॥ ३०४ ॥ ३ घ. 'कह'। ४ श्रीनन्दीसूत्रे।
५ भरत शिला मेढू-कुर्कुट-तिल-वालुका-हस्ति-अवट-वनखण्डानि। पायसा-ऽऽगमन-पत्राणि तरुमर्कटिका ('ख्रीसकोली' इति भाषायाम्) पञ्च पितरश्च ॥१॥ ६ घ 'ढि'।

तद्परिज्ञाने तद्यावृत्तत्वमेव बोद्धुं शक्यत इति । नन्वेवंविधपरिज्ञानं तर्हि केवलिन एव भवति, नाऽन्यस्य, तस्य सूक्ष्माऽतीत-व्यवहिता-ऽमूर्तादिसमस्तवस्तुग्रहणासमर्थत्वात् । सत्यम्, साक्षादित्थं केवल्येव जानाति, तद्वचनश्रद्धानद्वारेण पुनर्भावतोऽन्योऽपि सम्यग्दृष्टिः सर्वं एकैकं वस्तु सर्वमयं जानाति । आगमे हि केवलिनैतत् प्रणीतम्, तद्यथा– "जे एगं जाणइ से सव्वं जाणइ, जे सव्वं जाणइ से एगं जाणइ त्ति" । सम्यग्दृष्टेश्च सर्वस्याऽप्ययमागमः प्रमाणमेव, अन्यथा सम्यग्दृष्टित्वायोगात् । ततश्च यद्यपि सर्वः सम्यग्दृष्टिरित्थं सर्वं सर्वमयं वस्तु न जानाति, तथापि यथोक्तागमश्रद्धानद्वारेण भावतो जानात्येवेति । अतः सर्वदैवाऽयं ज्ञानी भण्यते, केवलिदृष्टयथावस्थितवस्तुस्वरूपस्य प्रमाणताभ्युपगमद्वारेण सर्वदैव तेन ज्ञायमानत्वात् ॥ इति गाथाभावार्थः ॥

अक्षरार्थस्तूच्यते– एकं वस्तु जानन् सर्वं वस्तु जानाति, सर्वं च वस्तु जानन्नेकं जानातीति 'एवंभूतमागमं सम्यग्दृष्टिस्तावत् सर्वदैव प्रमाणतयाऽभ्युपगच्छति' इति शेषः । इत्यतः परमाण्वादिकं यत् किमपि वस्त्वस्ति, तत्सर्वमप्युक्तन्यायेन स्व-परपर्यायैः सर्वमयं सम्यग्दृष्टिज्ञानगोचरः । अतः सर्वदैवाऽयं ज्ञानी भण्यते, जाग्रतः, स्वपतः, तिष्ठतः, चलतश्चाऽस्य परमगुरुप्रणीतयथोक्तवस्तुस्वरूपाभ्युपगमस्य चेतसि सर्वदैवाऽविचलनात् ॥ इति गाथार्थः ॥ ३२० ॥

ननु यद्येवं, तर्हि निश्चयरूपं सम्यग्दृष्टेर्ज्ञानमस्तु, संशयादयस्तु बालानामप्यज्ञानत्वेन लोके रूढाः, तस्याऽपि कथमिव ज्ञानं स्युः ?, इत्याह–

[2]जे संसयादिगम्मा धम्मा वत्थुस्स ते वि पज्जाया । तदहिगमत्तणओ ते नाणं चिय संसयाईया ॥ ३२१ ॥

इह ये संशयादिगम्या धर्मास्तेऽपि वस्तुनस्तावत् पर्याया एव । ततस्तदधिगमहेतुत्वात् ते सम्यग्दृष्टिसंबन्धिनः संशयादयो ज्ञानमेव । एतदुक्तं भवति– इह लोकव्यवहाररूढं संशयादित्वमज्ञानभावस्य निबन्धनत्वेन तावन्नाधिकृतमेव, किन्तु मिथ्यादृष्टिसंबन्धित्वमित्युक्तमेव, तच्च सम्यग्दृष्टिसंबन्धिनां संशयादीनां नास्ति, तत्कथं न ते ज्ञानं भवेयुः ? । ज्ञायते येन किञ्चित् तज्ज्ञानं भवति, न च संशयादिभिः किमपि ज्ञायते, इति चेत् । नैवम्, तेषामपि वस्तुपर्यायगमकत्वात्, तथाहि– पुरतः स्थाणौ व्यवस्थिते योऽसौ 'किमयं स्थाणुः, पुरुषो वा ?' इति संशय उदेति, तत्र यत् स्थाणुत्वं, पुरुषत्वं च प्रतिभाति, तदुभयमपि स्थाणौ पर्यायरूपतया

१ य एकं जानाति स सर्वं जानाति, य सर्वं जानाति स एकं जानातीति ।

२ ये संशयादिगम्या धर्मा वस्तुनस्तेऽपि पर्यायाः । तदधिगमत्वतस्ते ज्ञानमेव संशयादयः ॥ ३२१ ॥

तस्मादवग्रहादिसाम्यादश्रुतानिश्रितस्य श्रुतनिश्रितेऽन्तर्भावं कृत्वा केवलं श्रुतनिश्रितमेव मतिज्ञानमष्टाविंशतिभेदं व्याख्यातुमुचितम्, न तु परोक्तनीत्या व्यञ्जनावग्रहापगमेन श्रुता-ऽश्रुतनिश्रितामिति । कुतः ?, इत्याह– 'जम्हा इत्यादि' यतः "[1]से किं तं सुयनिस्सियं?" इत्येवमागमे तस्मिन् श्रुतनिश्रिते समाप्ते निष्ठां नीते सति पुनः पश्चात् "[3]से किं तं अस्सुयनिस्सियं?" इत्यादिना ग्रन्थेनाऽश्रुतनिश्रितं भणितम्। अयमभिप्रायः– श्रुतनिश्रितं सभेदमप्यभिधाय पश्चादेवाऽश्रुतनिश्रितमुक्तम्। अतः कथं तत्तत्र प्रक्षिप्यते ? । तस्मात् समयाभिप्रायेण श्रुतनिश्रितस्यैवाऽष्टाविंशतिभेदा इति । अतो न भवव्द्याख्यानं श्रेय इति । तदेवं '[4]चउवइरित्ताभावा' इत्यादिगाथा मूलटीकाभिप्रायेण व्याख्याताः। अन्ये त्वन्यथाऽपि व्याख्यानयन्ति, तदभिप्रायं त्वतिगम्भीरत्वाद् न विद्मः ॥ इति गाथार्थः ॥ ३०६ ॥

तदेवमष्टाविंशतिविधत्वं मतिज्ञानस्योपदर्श्य विवक्षान्तरेण बहुतरभेदमप्येतद् भवतीति दर्शयन्नाह–

[5]जं बहु-बहुविह-खिप्पा-ऽनिस्सिय-निच्छिय-धुवे-यराविभिन्ना। पुणरुग्गहादओ तो तं छत्तीसत्तिसयभेयं ॥३०७॥

यद् यस्माद् बहु-बहुविध-क्षिप्रा-ऽनिश्रित-निश्चित-ध्रुवैः सेतरैः सप्रतिपक्षैरेकैकशो विभिन्ना भेदभाजः पुनरप्यवग्रहादय इष्यन्ते । ततस्तदेवाऽष्टाविंशतिविधमाभिनिवोधिकज्ञानमेतैर्द्वादशभिर्भेदैः प्रत्येकं भिद्यमानत्वात् षट्त्रिंशदधिकत्रिशतभेदं भवति । इदमुक्तं भवति– अनन्तरवक्ष्यमाणन्यायेन, संक्षेपतः प्रागभिहितयुक्त्या च श्रोत्रादिभिः कश्चिद् बह्ववगृह्णाति, कश्चित्त्वबहु, अपरस्तु बहुविधम्, अन्यस्त्वबहुविधम्; एवं यावदन्यो ध्रुवम्, अपरस्त्वध्रुवमवगृह्णातीति । एवमीहा-ऽपाय-धारणास्वपि सप्रभेदासु प्रत्येकममी द्वादश भेदा योजनीयाः । नवरमीहते, निश्चिनोति, धारयति, इत्याद्यभिलापः कार्यः। ततश्चाऽष्टाविंशतौ द्वादशभिर्गुणितायां षट्त्रिंशदधिकानि त्रीणि शतानि भेदानां भवन्ति ॥ इति गाथार्थः ॥ ३०७ ॥

अथ शब्दलक्षणं विषयमाश्रित्य तावद् बह्वादीनामर्थं व्याख्यातुमाह–

[7]नाणासद्दसमूहं बहुं पिहं [8]मुणइ भिन्नजाईयम्। बहुविहमणेगभेयं एक्केक्कं निद्ध-महुराइं ॥ ३०८ ॥

१ अथ किं तत् श्रुतनिश्रितम्?। २ श्रीनन्दीसूत्ररूपे। ३ अथ किं तदश्रुतनिश्रितम्?। ४ गाथा ३०३।
५ यद् बहु-बहुविध-क्षिप्रा-ऽनिश्रित-निश्चित-ध्रुवे-तरविभिन्नाः। पुनरवग्रहादयस्ततस्तत् षट्त्रिंशत्त्रिशतभेदम् ॥ ३०७ ॥ ६ ज 'कं त्रि'।
७ नानाशब्दसमूहं बहुं पृथग् जानाति भिन्नजातीयम्। बहुविधमनेकभेदमेकैकं स्निग्ध-मधुरादिम् ॥ ३०८ ॥ ८ क ग. 'सुण'।

मिथ्यादृष्टेरप्येवं भविष्यति, इति चेत् । न, इत्याह–

[1]निण्णयकाले वि जओ न तहारूवं विदंति ते वत्थुं । मिच्छद्दिट्ठी, तम्हा सव्वं चिय तेसिमण्णाणं ॥ ३२३ ॥

आस्तां संशयादिकाले, निर्णयो निश्चयस्तत्कालेऽपि यतस्ते मिथ्यादृष्टयो न यथा परमगुरुभिर्दृष्टं तथारूपमनन्तपर्यायं वस्तु विदन्ति, केवलिदृष्टयथावस्थितवस्त्वभ्युपगमस्य तेषां कदाचिदप्यभावात्; अन्यथा मिथ्यादृष्टित्वायोगात् । अतस्तेषां निश्चयरूपं, संशयादिरूपं च सर्वमज्ञानमेव, ज्ञाननिबन्धनस्य भुवनगुरुनिर्णीतयथावस्थितवस्त्वभ्युपगमस्य कदाचिदप्यसत्त्वात् ॥ इति गाथार्थः ॥३२३॥

अथवा नाज्ञानमात्रमेव तेषाम्, किन्त्वद्याप्याधिक्यं किञ्चित्, इति दर्शयन्नाह–

[2]कट्ठयरं वन्नाणं विवज्जओ चेव मिच्छदिट्ठीणं । मिच्छाभिणिवेसाओ सव्वत्थ घडे व्व पडबुद्धी ॥ ३२४ ॥

संशया-ऽनध्यवसाय-विपर्ययान् किलाऽज्ञानत्वेन सामान्यतो वदति भवान्, मिथ्यादृष्टेस्त्वतिदुःसहमहादुःखहेतुत्वात् कष्टतरं विशेषिततरमज्ञानम् । कुतः ?, इत्याह– यस्माद् विपर्ययो विपर्यास एव तस्य सर्वज्ञोक्ते यथावस्थिते वस्तुनि, न तु संशया-ऽनध्यवसायाविति भावः । अतः संशया-ऽनध्यवसायवद्भ्यो विशेषिततरमस्याऽज्ञानम् । कुतः पुनरस्य विपर्यय एव ?, इत्याह–मिथ्याभिनिवेशात्, सर्वत्रेति– सर्वत्र मोक्षे, तत्साधने संसारे, तत्साधने च नारकादिवस्तुनि वा, तस्य मिथ्याभिनिवेशात् सर्वज्ञोक्तविपरीताध्यवसायात्, घटे पटबुद्धिवत् ॥ इति गाथार्थः ॥ ३२४ ॥

तदेवं सर्वज्ञोक्तयथावस्थितानन्तपर्यायवस्त्वभ्युपगमस्य सर्वदैव भावात् सम्यग्दृष्टेर्ज्ञानं समर्थितम् । अथ प्रकारान्तरेणाऽपि तत् तस्य समर्थयन्नाह–

[3]अहवा जहिंदनाणोवओगओ तम्मयत्तणं होइ । तह संसयाइभावे नाणं नाणोवओगाओ ॥ ३२५ ॥

अथवा यथेन्द्रज्ञानोपयोगात् तदुपयोगवतो ज्ञातुर्देवदत्तादेः परमैश्वर्याद्यभावेऽपि तन्मयत्वमिन्द्रमयत्वं भवति, भावेन्द्र एवाऽयं व्यपदिश्यत इत्यर्थः; तथा सम्यग्दृष्टेरपि सम्यग्दर्शनलाभकाल एव मत्यादिज्ञानलाभाज्ज्ञानपरिणामरूपस्य ज्ञानोपयोगमात्रस्य सर्वदैव[4] भावात्, अन्यथा मिथ्यादृष्टित्वप्रसङ्गात्, सदैव ज्ञानमभ्युगन्तव्यम्, तदुपयुक्तस्य तन्मयत्वात्, इन्द्रोपयुक्तदेवदत्तेन्द्रवदिति । इदमुक्तं

१ निर्णयकालेऽपि यतो न तथारूप विदन्ति ते वस्तु । मिथ्यादृष्टय , तस्मात् सर्वमेव तेषामज्ञानम् ॥ ३२३ ॥

२ कष्टतर वाऽज्ञान विपर्यय एव मिथ्यादृष्टीनाम् । मिथ्याभिनिवेशात् सर्वत्र घट इव पटबुद्धि ॥ ३२४ ॥

३ अथवा यथेन्द्रज्ञानोपयोगतस्तन्मयत्व भवति । तथा सशयादिभावे ज्ञान ज्ञानोपयोगात् ॥ ३२५ ॥ ४ ज. 'सर्वदै' ।

एतस्मादेवोक्तस्वरूपाद् बह्वादिपदषट्कसमूहात् प्रतिपक्षमेतद्विपर्ययमबहु-बहुविधा-ऽक्षिप्र-निश्रिता-ऽनिश्रिता-ऽध्रुवपदषट्कलक्षणं साधयेत् स्वयमेव ब्रूयाद् मेधावी । स च लाघवार्थं बह्वादिविचार एव साधितः । तदेवं व्याख्याता द्वादशापि बह्वादयो भेदाः । अथवा निश्रिते सप्रतिपक्षेऽपि व्याख्यानान्तरलक्षणो विशेषो वक्तव्यः । कः ?, इत्याह— परधर्मैरश्वादिवस्तुधर्मैर्विमिश्रं युक्तं गवादिवस्तु गृह्णानस्य निश्रितं भवति— गामश्वादिरूपेण गृह्णतो येयं विपर्ययोपलब्धिः, तन्निश्रितमित्यर्थः । इतरत्तु यत्परधर्मैर्विमिश्रं वस्तु न गृह्णाति, किन्तु यथावस्थितमेव तत्सद्भूतोपलब्धिरूपमनिश्रितं गवादिकं वस्तु गवादिरूपेणैव गृह्णतो येयमविपर्ययोपलब्धिस्तदनिश्रितमित्यर्थः ॥

अत्राह— ननु बहु-बहुविधपरिज्ञानादीनि विशेषणानि स्पष्टार्थग्राहकेष्वपायादिषु भवन्तु, व्यञ्जनावग्रह-निश्चयार्थावग्रहयोस्तु कथं तत्संभवः ?, तथाहि— 'सामन्नमणिद्देसं सरूव-नामाइकप्पणारहियं' इत्यादिवचनान्निश्चयार्थावग्रहे शब्दादिविशेषमात्रग्रहणमपि नास्ति, कुतो यथोक्तबह्वादिपरिज्ञानसंभवः ? । अथ व्याख्यानाद् व्यवहारार्थावग्रहोऽत्र गृह्यते, तस्मिंश्च विशेषग्राहित्वाद् बहुपरिज्ञानादिविशेषणान्युपपद्यन्त एव । भवत्वेवम्, तथाऽप्यष्टाविंशतिभेदमध्यसंगृहीतस्य व्यञ्जनावग्रहस्य कथमेतद्विशेषणसंभवः ? । तत्र हि सामान्यार्थग्रहणमात्रमपाकृतम्, बह्वादिपरिज्ञानं तु दूरोत्सारितमेवेति ॥

सत्यमेतत्, किन्तु व्यञ्जनावग्रहादयः कारणमपायादीनाम्, तानन्तरेणाऽपायाद्यभावात् । ततश्चाऽपायादिगतं बह्वादिपरिज्ञानं तत्कारणभूतेषु व्यञ्जनावग्रहादिष्वपि योग्यतयाऽभ्युपगन्तव्यम् । न हि सर्वथाऽविशिष्टात् कारणाद् विशिष्टं कार्यमुत्पत्तुमर्हति, कोद्रवबीजादेरपि शालिफलादिप्रसवप्रसङ्गात्, इति प्रागप्युक्तप्रायम् । इत्यलमतिचर्चितेन ॥ इति गाथार्थः ॥ ३१० ॥

ननु कथमेकस्याऽपि मतिज्ञानस्यैतावन्तो भेदाः ?, इत्याशङ्क्य निर्दिष्टभेदानां कारणम्, अन्येषामपि बहुतरभेदानां सहेतुकं संभवं चोपसंहारगर्भमाह—

एवं[2] बज्झ-ज्झंतरनिमित्तवइचित्तओ मइबहुत्तं । किंचिम्मेत्तविसेसेण भिज्जमाणं पुणोऽणंतं ॥ ३११ ॥

एवं तावद् बाह्या-ऽऽभ्यन्तरनिमित्तवैचित्र्याद् मतिबहुत्वमुक्तम् । तत्र बाह्यं निमित्तं मतिज्ञानस्य कारणमालोक-विषयादिकम् । तस्य च स्पष्टा-ऽव्यक्त-मध्यमा-ऽल्प-महत्त्व-संनिकर्ष-विप्रकर्षभेदाद् वैचित्र्यम् ? । आभ्यन्तरनिमित्तं पुनरावरणक्षयोपशमो-पयोगो-पकरणेन्द्रियाणि । अस्याऽपि वैचित्र्यं शुद्धा-ऽशुद्ध-मध्यमभेदात् । ततश्चैतस्माद् बाह्या-ऽऽभ्यन्तरनिमित्तवैचित्र्याद् मतिज्ञानस्य यथोक्तभेदबहुत्वम-

१ गाथा २५२ । २ एव बाह्या-ऽऽभ्यन्तरनिमित्तवैचित्र्यतो मतिबहुत्वम् । किञ्चिन्मात्रविशेषेण भिद्यमानं पुनरनन्तम् ॥ ३११ ॥

बाधकं भवेत्; किन्तु ज्ञाना-ऽज्ञानादिरूपा सामान्येन मतिरेव विचार्यते, इति दर्शयन्नाह–

[1]अहवा जह सुयनाणावसरे सामण्णदेसणं भणियं । तह मइनाणावसरे सव्वमइनिरूवणं कुणति ॥ ३२८ ॥

अथवा यथा श्रुतज्ञानविचारावसरे ज्ञानरूपस्य, अज्ञानरूपस्य च श्रुतस्य सामान्यदेशनं भणितम्, तथा मतिज्ञानावसरे सर्वस्या अपि निर्णयरूपायाः, संशय-विपर्यासा-ऽनध्यवसायात्मिकायाश्च; ज्ञानरूपायाः, अज्ञानरूपायाश्च मतेर्निरूपणं करोत्याचार्यः ॥ इति गाथाक्षरार्थः ॥

भावार्थस्त्वयम्– इहादौ ‘[2]आभिणिबोहियनाणं सुयनाणं’ इत्यादिगाथायां श्रुतज्ञानं तावज्ज्ञाना-ज्ञानोभयरूपमपि भणितम्, न पुनः सम्यक्श्रुतमेव । कथं पुनरिदं ज्ञायते ?, इति चेत् । उच्यते– ‘[3]अक्खर सन्नी सम्मं’ इत्यादिगाथयाऽभिधास्यमानानां चतुर्दशानां श्रुतभेदानामिह संग्रहात्, तेषु च मध्ये मिथ्याश्रुतस्याऽपि पठनात् । ततश्च यथा लाघवार्थमिह ज्ञाना-ऽज्ञानोभयरूपमपि श्रुतज्ञानमुक्तम्, तथेहापि मतिज्ञानप्रतिपादनावसरे संशय-विपर्यासा-ऽनध्यवसाय-निर्णय-ज्ञाना-ऽज्ञानात्मिकायाः सर्वस्या अपि मतेः सामान्येनैव निरूपणं क्रियते, न तु ज्ञानपञ्चकाधिकारात् सम्यग्दृष्टिसंबन्धिन्या एव, व्यवहारिजनप्रमाणा-ऽप्रमाणचिन्तया निर्णयरूपाया एव वा, इति भावः। ततश्चाऽवग्रहादयः संशयादिरूपा वा भवन्तु, निर्णयरूपा वा, ज्ञानं [4]वा भवन्तु, अज्ञानं वा, न नः किञ्चित् क्षूयते; श्रुतवल्लाघवार्थं ‘मननं मतिः’ इति मतिमात्रस्यैवेह विचारयितुमिष्टत्वात्, तस्य च संशयादिष्वपि घटनात् । ततश्च ‘[5]न[6]नु संदिद्धे संसय-विवज्जया’ इत्यादि यदुक्तं तत्सर्वमस्माकमबाधकमेवेति भावः ॥ इति गाथार्थः ॥ ३२८ ॥

ननु भवतु सामान्येन सर्वस्या अपि मतेर्निरूपणमिदम्, किन्तु ज्ञाना-ऽज्ञानचिन्तायां किमिह ज्ञानम् ?, किं चाऽज्ञानम् ?, इति निवेद्यताम्, इत्याशङ्क्याह–

[7]एसा सम्माणुगया सव्वा नाणं विवज्जए इयरं । अविसेसिआ मइ च्चिय जम्हा निद्दिट्ठमाईए ॥ ३२९ ॥

एषा सामान्येन निर्दिष्टा मतिः सम्यक्त्वानुगता सम्यग्दृष्टेः संबन्धिनी सर्वाऽपि संशयादिरूपा, निश्चयरूपा वा ज्ञानमेव । विपर्यये त्वज्ञानम्– मिथ्यादृष्टिसंबन्धिनी सर्वाऽप्यज्ञानमित्यर्थः । कुतः पुनरिदं ज्ञायते ?, इत्याह– ‘जम्हा निद्दिट्ठमाईए त्ति’ यस्मादादावव-

1 अथवा यथा श्रुतज्ञानावसरे सामान्यदेशन भणितम् । तथा मतिज्ञानावसरे सर्वमतिनिरूपण करोति ॥३२८॥ 2 गाथा ७९ । 3 अक्षर संज्ञि सम्यक् । 4 क. ग. ‘वा अ’ । 5 गाथा ३१३ । 6 घ.छ ज ‘णु’। 7 एषा सम्यगनुगता सर्वा ज्ञान विपर्यय इतरत् । अविशेषिता मतिरेव यस्माद् निर्दिष्टमादौ ॥ ३२९ ॥

तदेवं संशयादिरूपत्वाद् नाऽवग्रहादयो ज्ञानमिति । अतो न[1] ते मतिज्ञानभेदाः । तद्भेदत्वे वा मतिज्ञानमपि न किञ्चित्, दोषशतजर्जरावग्रहाद्यात्मकत्वात् ॥ इति गाथार्थः ॥ ३१३ ॥

अत्राऽऽचार्यः प्राह–

इह[2] सज्झमोग्गहाईण संसयाइत्तणं तहवि नाम । अब्भुवगंतुं भण्णइ नाणं चिय संसयाईया ॥ ३१४ ॥

इह यदवग्रहादीनां संशयादित्वं त्वयोद्भावितं तदद्यापि साध्यं साधनीयं वर्तते, त्वदुक्तनिर्युक्तिकवाङ्मात्रेणैव मदुक्तहेतोरसिद्ध[3]त्वाभावादिति मन्तव्यम्, न पुनरेतावतैव जाता त्वत्समीहितासिद्धिः, इति प्रमुदितेन न भाव्यमिति भावः । तथाहि– यदुक्तम् 'संदिग्धे संशय-विपर्ययौ[4]' इति । तदयुक्तम्, अभिप्रायापरिज्ञानात्, न ह्यस्माभिस्तथाविधं वस्त्वप्रापकं संदिग्धत्वं विवक्षितम्, येन वस्त्वप्रापणात्, विपर्ययप्रापणाद् वा तत्र संशय-विपर्ययौ स्याताम्; किन्तु कृतेऽपि वस्तुप्रापकेऽवितथे निश्चये यत्र तथाविधक्षयोपशमवैचित्र्याद् मनसि किञ्चिदल्पं शङ्कामात्रं न निवर्तते 'सम्यग् न जाने, तथैव स्यादन्यथा वा' इति, तच्चेह संदिग्धत्वं विवक्षितम् । न चैतावन्मात्रेणैवाऽज्ञानता युक्ता, व्यवहारोच्छेदप्रसङ्गात् । न खलु धूम-बलाकादेः सकाशात् सम्यग् दहन-जलादौ निश्चितेऽपि मुखेन तन्निश्चयं ब्रुवतामपि सर्वेषां प्रमातॄणां चेतसि शङ्कामात्रं विनिवर्तते । न च ते सर्वेऽपि निश्चितं वस्तु न प्राप्नुवन्ति । न च क्वापि संशय-विपर्ययत्वेनाऽज्ञानता तेषां दृष्टा । यदप्युच्यते– 'ईहाऽपि संशय एव' । तदप्यसंगतम्, न हि 'किमयं स्थाणुः, पुरुषो वा' इत्यादिरूपः संशय ईहाऽभ्युपगम्यते; किन्तु यदनन्तरमेव निश्चयोऽवश्यं भवति, स एवान्वयधर्मघटन-व्यतिरेकधर्मनिराकरणाभ्यां निश्चयाभिमुखो बोध ईहा, इत्यसकृदेव पूर्वमावेदितम् । न चायं संशयः, निश्चयाभिमुखत्वात् । नापि निश्चयः, तत्प्रत्यासत्तिमात्रप्राप्तत्वात् । न च वक्तव्यम्– निश्चयादन्यस्य सर्वस्य संशयत्वादज्ञानतैवेति; निश्चयोपादानक्षणस्याऽपि सर्वथाऽज्ञानत्वप्रसङ्गात् । तथा च सति निश्चयस्याऽप्यज्ञानताप्राप्तिः । "न ह्यविशिष्टात् कारणाद् विशिष्टकार्योत्पत्तिः" इत्युक्तत्वादिति । यदप्युक्तम्– 'निश्रितं विपर्यासः' इति । तदप्ययुक्तम्, 'लिङ्गाश्रितं निश्रितम्' इत्यस्मिन् व्याख्यानेऽस्य दोषस्य सर्वथैवाऽसंबध्यमानत्वात्, 'पैरधम्मेहि[5] विमिस्सं निस्सियं' इत्यस्य च व्याख्यानान्तरमात्रत्वात् । भवतु तदपि व्याख्यानम्, तथापि व्याख्यानात् परधर्मास्तास्मिन्नाशङ्किता एव द्रष्टव्याः, न तु निश्चिताः, यथा 'गौरेवाऽत्र,

१ च. छ ज 'न म' । २ इह साध्यमवग्रहादीनां संशयादित्वं तथापि नाम । अभ्युपगम्य भण्यते ज्ञानमेव सशयादय. ॥ ३१४ ॥ ३ क ग. 'त्वादि' ।
४ गाथा ३१० । ५ घ छ ज. 'तु च त' ।

अथ पुनरपि मिथ्यादृष्टेः सम्यग्दृष्टितुल्यतामाशङ्क्य निराकुर्वन्नाह–

जइ सो वि तस्स धम्मो किं विवरीयत्तणं ति, तं न भवे। धम्मो वि जओ सव्वो न साहणं किंतु जो जोग्गो॥३३१॥

यो मिथ्याज्ञान-विपरीतक्रियालक्षणो धर्मो मिथ्यादृष्टिना मोक्षसाधकत्वेनाऽभ्युपगतः, यदि सोऽपि तस्य सम्यग्ज्ञानादिरूपस्य सम्यग्दृष्ट्यभ्युपगतस्य मोक्षसाधनस्य धर्मः, तर्हि मिथ्यादृष्टेः किं विपरीतत्वम् ? न किञ्चिदित्यर्थः। अयमत्र भावार्थः– 'ईय सव्व-मयं सव्वं समद्दिट्ठिस्स जं वत्थुं' इति वचनात् 'सर्वमयं सर्वमेव वस्तु' इति भवतां सिद्धान्तः। ततश्च सम्यग्ज्ञान-दर्शन-चारित्रसमुदायरूपस्य साधनस्य यथा सम्यग्ज्ञानादिको धर्मः, तथा मिथ्याज्ञानादिकोऽपि, अन्यथा सर्वस्य सर्वमयत्वत्यागप्रसङ्गात्। अतः सम्यग्दृष्टिना मोक्षसंसिद्धये यस्य साधनस्य धर्मोऽङ्गीकृतः, मिथ्यादृष्टिनाऽपि तत्सिद्धये तस्यैव धर्मः स्वीकृतः, धर्मग्रहणद्वारेण च कथञ्चित् तस्य धर्मिणो ग्रहणम्। अतः किं नाम मिथ्यादृष्टेर्विपरीतत्वम् ?। इति परेणोक्ते आचार्यः प्राह– 'तं न भवे त्ति' तदेतत् त्वदुक्तं न भवेद् न युज्यते। कुतः ?, इत्याह– 'धम्मो वि जओ इत्यादि' इदमुक्तं भवति– अनन्तधर्माध्यासितस्यापि वस्तुनो न सर्वेऽपि धर्मा एक-मर्थं साधयन्ति, किन्तु योग्यतानुरूपेण कोऽपि कश्चिदेवेति। यथा हि कलश-मल्लक-कपाल-भुंम्भलकादीनां साधारणेऽपि मृद्धर्मत्वे न कलशवद् भुंम्भलकादयोऽपि मङ्गल-जलधारणादिकार्येषु व्याप्रियन्ते, नापि सुवर्णधर्मत्वे समानेऽपि कुण्डलवद् नूपुरमपि कर्णालङ्कर-णाय नियुज्यते, न चापि शालि-दालि-घृतादिधर्मत्वे तुल्येऽपि रसवद् गन्धादयोऽपि तृप्ति-देहपुष्ट्यादीनि साधयन्ति। एवं यद्यपि मोक्षादिसाधनस्य मिथ्याज्ञानादिकोऽपि व्यावृत्तिरूपतया धर्मः, तथापि नासौ मोक्षं साधयति, किन्तु तद्विपक्षभूतं संसारादिकमेव, मोक्षादिकं तु यत्साधनयोग्यः सम्यग्ज्ञानादिको धर्मः स एव साधयति। ततः सम्यग्दृष्टिगृहीतेऽप्यनन्तधर्माध्यासिते मोक्षादि-साधने वस्तुनि योग्यमेव सम्यग्ज्ञानादिकं धर्मं तत्साधनाय व्यापारयति, नाऽयोग्यं मिथ्याज्ञानादिकम्। मिथ्यादृष्टिस्तु मिथ्यात्वोदय-तिमिरतिरस्कृतभावदृष्टित्वेन तत्र तस्याऽयोग्यतामपश्यंस्तमेव व्यापारयतीति। अतः साधनविपर्ययं करोति, इत्यज्ञानमेव तस्य॥ इति गाथार्थः॥ ३३१॥

एतदेव भावयन्नाह–

जोग्गा-जोग्गाविसेसं अमुणंतो सो विवज्जयं कुणइ। सम्मद्दिट्ठी उण कुणइ तस्स सट्ठाणविणिओगं॥ ३३२॥

१ यदि सोऽपि तस्य धर्मः किं विपरीतत्वमिति, तद् न भवेत्। धर्मोऽपि यत सर्वो न साधनं किन्तु यो योग्यः॥ ३३१॥ २ गाथा ३२०।
३ घ.ज 'भुम्भुल'। ४ क.ग 'धनव'। ५ योग्यायोग्यविशेषमजानन् स (मिथ्यादृष्टिः) विपर्ययं करोति। सम्यग्दृष्टिः पुनः करोति तस्य स स्थानविनियोगम्॥३३२॥

इह वस्तुनो घटादेर्मृन्मयत्व-पृथुबुध्नत्व-वृत्तत्व-कुण्डलायतग्रीवायुक्तत्वादयोऽर्थरूपाः पर्याया अर्थपर्याया अनन्ता भवन्ति । घट-कुट-कुम्भ-कलशादयस्तु वचनरूपाः पर्याया वचनपर्यायास्तेऽप्यनन्ता भवन्ति; आदिशब्दात् परव्यावृत्तिरूपा अप्यनन्ता गृह्यन्ते । ततश्चेत्थं समासः कर्तव्यः– अर्थश्च, वचनानि च, आदिशब्दात् परव्यावृत्तयश्च तद्रूपाः पर्याया अर्थ-वचनादिपर्यायाः, ते च तेऽनन्ताश्च त एव शक्तयः, ताभिः संपन्नं युक्तं यतो वस्तु भवति, अतस्तस्यैकदेशविच्छेदकारिणः संशयादयो ज्ञेयाः । इदमुक्तं भवति– न खलु वयं निरंशवस्तुवादिनः, किन्तु यथोक्तानन्तधर्मलक्षणवस्तुनोऽनन्ता एव देशाः सन्तीति वयं मन्यामहे, तन्मध्याच्चैकैकदेशग्राहिणः संशयादयोऽपि भवन्त्येव, इति कथं न ते ज्ञानम् ? । यदि पुनस्ते किमपि न गृह्णीयुः, तदा तेषामनुत्थानमेव स्यात्, सर्वथा निर्विषयज्ञानस्य प्रसवायोगात्, गगननलिनज्ञानवत् । ततश्च 'ज्ञायतेऽनेनेति ज्ञानम्' इति व्युत्पत्त्यर्थात् संशयादीनामपि ज्ञानता न विरुध्यते ॥ इति गाथार्थः ॥ ३१६ ॥

अथ समस्तवस्तुरूपग्राह्येव ज्ञानं, नैकदेशग्राहकम्, इत्येतदाशङ्क्य निराकुर्वन्नाह–

अहवा[1] न सव्वधम्मावभासया तो न नाणमिट्ठं ते । नणु निण्णओ वि तद्देसमेत्तगाहि त्ति अन्नाणं ॥ ३१७ ॥

अथवा– अथ चेदेवं ब्रूयात् परः । किम् ?, इत्याह– न सर्वधर्मावभासका न कात्स्न्र्येन गवादिवस्तुसमग्रधर्मग्राहिणः, ततो न ज्ञानमिष्टं ते संशयादयः, संपूर्णवस्तुस्वरूपग्राहिण एव ज्ञानत्वात् । अत्रोत्तरमाह– ननु भवता ज्ञानत्वेनाऽङ्गीकृतस्तर्हि निर्णयोऽप्यज्ञानमेव प्राप्नोति । कुतः ?, इत्याह–तस्य गवादिवस्तुन एकदेशमात्रग्राहीति कृत्वा; तथाहि– 'गौरयं, घटोऽयं, पटोऽयम्' इत्यादिभिर्निर्णयैरपि गोत्व-घटत्वादिको वस्त्वेकदेश एव गृह्यते, अतस्तेऽपि कथं ज्ञानरूपतां भजेयुः ? । अथ देशस्य देशिनमन्तरेण कदाचिदप्यभावात् तद्ग्रहणद्वारेण सर्वमपि वस्तु निर्णयेन गृहीतम्, इत्यतो ज्ञानमेवाऽसौ । तदेतत् संशयादिष्वपि समानम्; तथाहि– 'किमयं स्थाणुः, पुरुषो वा' इत्यादिरूपः संशयोऽपि स्थाणुत्वादिकं वस्त्वेकदेशं जानाति, विपर्यासोऽपि विपर्ययवस्त्वेकदेशमवबुध्यते, अनध्यवसायोऽपि सामान्यमात्ररूपं वस्त्वेकदेशमवगृह्णाति । ततश्च संशयादयोऽप्येकदेशपरिज्ञानद्वारेण समग्रमपि वस्तु जानन्त्येव, इति तेषामपि ज्ञानता केन वार्यते ? । अथ गृह्यते संशयादिभिर्वस्त्वेकदेशः, केवलं संशयेन संदिग्धः, विपर्यासेन विपर्यस्तः, अनध्यवसायेन त्वविशिष्ट इति चेत् । ननु प्रतिविहितमप्यदः किं विस्मरसि ?, यतो 'ज्ञायतेऽनेनेति ज्ञानम्, मतिरूपं

[1] अथवा न सर्वधर्मावभासकास्ततो न ज्ञानमिष्टं ते । ननु निर्णयोऽपि तद्देशमात्रग्राहीत्यज्ञानम् ॥ ३१७ ॥

च प्रत्येकमन्तर्मुहूर्तं भवत इति द्रष्टव्यम् । क्वचित् 'मुहुत्तमद्धं तु' इति पाठः, तत्राऽपि मुहूर्तार्धशब्देनाऽन्तर्मुहूर्तमेव मन्तव्यम् । तुशब्दोऽपि तथैव । कलनं कालः, न विद्यते संख्या पक्ष-मास-ऋतु-अयन-संवत्सरादिका यस्याऽसावसंख्यः पल्योपमादिलक्षणस्तं कालमसंख्यम्, तथा संख्यायत इति संख्यः– पक्ष-मास-ऋतु-अयनादिप्रमित इत्यर्थः, तं संख्यम्, चशब्दादन्तर्मुहूर्तं च धारणा प्रागभिहितस्वरूपा भवति ज्ञातव्या । इदमुक्तं भवति– अविच्युति-स्मृति-वासनाभेदाद् धारणा त्रिविधा । तत्राऽविच्युतिरूपा, स्मृतिरूपा च प्रत्येकमन्तर्मुहूर्तं भवति । या तु तदर्थज्ञानावरणक्षयोपशमरूपा स्[1]मृतिवीज[2]रूपा वासनाख्या धारणा, सा संख्येयवर्षायुषां सत्त्वानां संख्येयं कालम्, असंख्येयवर्षायुषां तु पल्योपमादिजीविनामसंख्येयं कालं भवति ॥ इति निर्युक्तिगाथार्थः ॥ ३३३ ॥

अथैनां भाष्यकारो व्याख्यानयति–

[3]अत्थोग्गहो जहन्नो समयं सेसोग्गहादओ वीसुं । अंतोमुहुत्तमेगं तु वासनाधारणं मोत्तुं ॥ ३३४ ॥

अवग्रह इत्यस्य व्याख्यानमर्थावग्रह इति, अयमपि निश्चय-व्यवहारभेदतो द्विधा, ततो व्यवहारार्थावग्रहव्यवच्छेदार्थमाह– 'जहन्न इति' अतिस्तोककालत्वेन जघन्यो नैश्चयिकोऽर्थावग्रहो नेतर इत्यर्थः, अयमेकसमयं भवति । शेषास्त्वेकां वासनारूपां धारणां मुक्त्वा येऽवग्रहादयो व्यञ्जनावग्रह-व्यावहारिकार्थावग्रहे-हा-ऽपाया-ऽविच्युति-स्मृतिरूपा मतिभेदास्ते सर्वेऽपि विष्वक् पृथगेकमेवाऽन्तर्मुहूर्तं भवन्ति । वासनाधारणायास्तु निर्युक्तिगाथोक्तमेव कालमानमवगन्तव्यम्, इत्यभिप्रायः ॥ इति गाथार्थः ॥ ३३४ ॥

अथ '[4]पुट्ठं सुणेइ सद्दं' इत्यादिनिर्युक्तिगाथाया भाष्यकारः संबन्धमुपदर्शयन् परां गाथामाह–

[5]सोत्ताईणं पत्ताइविसयया पुव्वमत्थओ भणिया । इह कंठा सट्ठाणे भण्णइ, विसयप्पमाणं च ॥ ३३५ ॥

श्रोत्रादीनां प्राप्ता-ऽप्राप्तविषयता पूर्वमर्थतोऽर्थव्याख्यानद्वारेणाऽऽयाता मया विस्तरेणाऽभिहिता । इह तु स्वस्थाने स्वस्थानत्वाद् निर्युक्तिकारेण कण्ठाद् गाथासूत्रेण स्वयमेवासौ भण्यते । एतदुक्तं भवति– '[6]उग्गहो ईह अवाओ य' इत्यादिनिर्युक्तिगाथाया व्याख्यानं कुर्वता मया '[7]नयण-मणोवज्जिंदियभेयाओ वंजणोग्गहो चउहा' इत्यादिना भाष्येण व्यञ्जनावग्रहव्याख्याप्रस्तावे श्रोत्रादीनां प्राप्ता-प्राप्तविषयता प्रोक्ता । इह तु कण्ठाद् निर्युक्तिगाथायाः स्वस्थानत्वाद् निर्युक्तिकारस्तां वक्ति । नन्वत्र कथं तस्याः स्वस्थानत्वम् ?,

१ घ ज 'स्मृतेर्वा' । २ घ ज. 'जभूता वा'। ३ अर्थावग्रहो जघन्यः समय शेषाऽवग्रहादयो विष्वक् । अन्तर्मुहूर्तमेक तु वासनाधारणां मुक्त्वा ॥३३४॥ ४ गाथा ३३६ । ५ श्रोत्रादीना प्राप्तादिविषयता पूर्वमर्थतो भणिता । इह कण्ठात् स्वस्थाने भण्यते, विषयप्रमाण च ॥३३५॥ ६ गाथा १७८ । ७ गाथा २०४ ।

नैश्चयिकः । आगमे च संशयादिरूपं, निश्चयरूपं वा मिथ्यादृष्टेः सर्वमप्यज्ञानम्; सम्यग्दृष्टेस्तु तदेव सर्वं ज्ञानम्; इत्येवं ज्ञाना-ऽज्ञानव्यवहारो रूढः । ततश्च यदादौ संशयादित्वेनाऽवग्रहादीनामज्ञानत्वं प्रेरितम्, तदयुक्तम्; न हि संशयादित्वमज्ञानभावस्य निमित्तमागमविचारे, किन्तु मिथ्यादृष्टिसंबन्धित्वम्, तच्चेह नास्ति, सम्यग्दृष्टिसंबन्धिनामेवाऽवग्रहादीनामिह विचारयितुमुपक्रान्तत्वात्, इति भावः ॥ इति गाथार्थः ॥ ३१८ ॥

कः पुनर्मिथ्यादृष्टिनाऽपराधः कृतः, येन तत्संबन्धि सर्वमप्यज्ञानम्?, इत्याह–

सदसदविसेसणाओ भवहेउजहिच्छिओवलम्भाओ । नाणफलाभावाओ मिच्छद्दिट्ठिस्स अण्णाणं ॥ ३१९ ॥

एषा पूर्वमिहाऽपि व्याख्यातैवेति[1] ॥ ३१९ ॥

सम्यग्दृष्टेस्तर्हि को विशेषः, येन तस्य सर्वमपि ज्ञानम्?, इत्याह–

एगं[2] जाणं सव्वं जाणइ सव्वं च जाणमेगं ति । इय सव्वमयं सव्वं सम्मद्दिट्ठिस्स जं वत्थुं ॥ ३२० ॥

इह परमाण्वादिकमेकैकं वस्तु स्व-परपर्यायैः समस्तत्रिभुवनगतवस्तुमयम्, तथाहि– परमाणौ तावदेकगुणकालत्वादयो[3]ऽनन्ता वर्ण-गन्ध-रसादिकाः स्वपर्याया भवन्ति । अपरं च, असौ विवक्षितः परमाणुरन्येभ्यः परमाणु-द्व्यणुक-त्र्यणुकादिसमस्तवस्तुभ्यः क्षेत्र-कालादिभिर्व्यावृत्तः, इत्यतस्तद्व्यावृत्तिलक्षणा अनन्ताः परपर्याया भवन्ति । एवं च सति येभ्योऽन्यवस्तुभ्योऽसौ परमाणुर्व्यावृत्तः, तेषां सर्वेषामपि तत्र परमाणौ प्रत्येकमभावो वर्तते, इति सामर्थ्यात् सिद्धम्; अन्यथा तस्य तेभ्यो व्यावृत्त्यसिद्धेः; अभावश्चाऽभाववतो धर्मः, यत्र धर्मः, तत्र धर्मिणा कथञ्चिद् भवितव्यमेव, अन्यथा तस्य तद्धर्मत्वायोगात्; ततश्च सर्वाण्यप्यन्यवस्तूनि तत्र परमाणौ स्वाभाववृत्तिद्वारेण वर्तन्त इति पर्यवसितम् । ततश्च परमाणुः सर्ववस्तुमयः सिद्धः । एवं द्व्यणुकादिष्वपि भावनीयम्, तेषामपि प्रत्येकं परेभ्यो व्यावृत्तत्वात् । ततश्च सर्वमपि वस्तु सर्वमयमिति स्थितम् । इह च य एकं विवक्षितं वस्तु जानाति, स शेषाण्यपि सर्ववस्तूनि जानाति, समस्तवस्तुपरिज्ञाननान्तरीयकत्वादेकवस्तुपरिज्ञानस्य । येभ्योऽपि हि शेषवस्तुभ्यो व्यावृत्तं तद् विवक्षितं वस्तु, तानि सर्वाण्यपि ज्ञातव्यानि, तत्परिज्ञानाभावे तेभ्यो व्यावृत्तत्वस्याऽवगन्तुमशक्यत्वादिति । यश्च सर्ववस्तूनि जानाति स विवक्षितमप्येकं किमपि वस्तु जानाति, तत्परिज्ञानाविनाभावात् समस्तवस्तुज्ञानस्य । तानि हि सर्ववस्तूनि विवक्षितैकवस्तुनो व्यावृत्तान्यवबोद्धव्यानि । न च

१ गाथा ११५ । २ एकं जानन् सर्वं जानाति सर्वं च जानन्नेकमिति । इति सर्वमय सर्वं सम्यग्दृष्टेर्यद् वस्तु ॥ ३२० ॥ ३ क ख ग 'रुकत्वा'।

अथैतद्व्याख्यानाय भाष्यम्–

पुट्ठं[1] रेणुं व तणुम्मि बद्धमप्पीकयं पएसेहिं । छिक्काइं चिय गिण्हइ सद्ददव्वाइं जं ताइं ॥ ३३७ ॥

बहु-सुहुम-भावुगाइं जं पडुयरं च सोत्तविण्णाणं । गंधाईदव्वाइं विवरीयाइं जओ ताइं ॥ ३३८ ॥

फरिसाणंतरमत्तप्पएससमीसीकयाइं घेप्पंति । पडुयरविण्णाणाइं जं च न घाणाइकरणाइं ॥ ३३९ ॥

'स्पृष्टं' इत्यस्य व्याख्यानं 'पुट्ठं रेणुं व तणुम्मि त्ति' यथा रेणोस्तनौ संबन्ध इत्येतावन्मात्रेण यद् वस्तु संबद्धं तदिह स्पृष्टमुच्यत इति भावः। 'बद्धमित्यादि' यदात्मीकृतमात्मना गाढतरमागृहीतम्, आत्मप्रदेशैस्तप्तलग्नतोयवद् मिश्रीभूतं तद् बद्धमुच्यत इत्यर्थः। तत्र 'छिक्काइं चिय त्ति' स्पृष्टान्येव शब्दद्रव्याणि गृह्णाति श्रोत्रम्, यतस्तानि बहूनि, सूक्ष्माणि, भावुकानि च वासकानि चेत्यर्थः। पटुतरं च श्रोत्रविज्ञानम्। गन्धादिद्रव्याणि तु विपरीतानि स्तोक-बादरा-ऽभावुकानि यतः, अतस्तानि स्पर्शानन्तरमात्मप्रदेशैर्मिश्रीकृतानि स्पृष्ट-बद्धानि गृह्यन्ते घ्राणादिभिः; पटुतरविज्ञानानि च न भवन्ति यतो घ्राणादिकरणानि ॥ इति गाथात्रयार्थः ॥ ३३७ ॥ ३३८ ॥ ३३९ ॥

अथ 'रूवं पुण पासइ अपुट्ठं तु' इत्यत्रोपपत्तिमाह–

अप्पत्तकारि[2] नयणं मणो य नयणस्स विसयपरिमाणं । आयंगुलेण लक्खं अइरित्तं जोयणाणं तु ॥ ३४० ॥

प्रागुक्तयुक्त्या अप्राप्तकारि– अप्राप्तस्यैव वस्तुनः परिच्छेदकारि यतो नयनं, मनश्च; ततोऽस्पृष्टमेव रूपं पश्यति नयनेन्द्रियम्। ननु यद्यप्राप्तं रूपमेतत् पश्यति, तर्हि लोकान्तादर्वाग् यदस्ति तत् सर्वं पश्यतु, अप्राप्तत्वाविशेषात्, इत्याशङ्क्य, यदिन्द्रियाणां विषयपरिमाणं भणनीयत्वेन प्राक् प्रतिज्ञातं, तत्र चक्षुषस्तावत् तदाह– 'नयणस्सेत्यादि' नयनेन्द्रियस्याऽऽगमे आत्माङ्गुलेन सातिरेकं योजनलक्षमुत्कृष्टतोऽपि विषयपरिमाणमभिहितम्, तेनाऽप्राप्तकारित्वाविशेषेऽपि परतो न पश्यतीति भावः। इह च 'आत्माङ्गुलेन' इति वदतः कोऽभिप्रायः ? । उच्यते– अङ्गुलमिह तावत् त्रिविधं भवति– आत्माङ्गुलम्, उच्छ्रयाङ्गुलं, प्रमाणाङ्गुलं चेति । तत्राऽऽद्यम्–

१ स्पृष्टं रेणुरिव तनौ बद्धमात्मीकृत प्रदेशैः । स्पृष्टान्येव गृह्णाति शब्दद्रव्याणि यत् तानि ॥ ३३७ ॥
बहु-सूक्ष्म-भावुकानि यत् पटुतरं च श्रोत्रविज्ञानम् । गन्धादिद्रव्याणि विपरीतानि यतस्तानि ॥ ३३८ ॥
स्पर्शानन्तरमात्मप्रदेशमिश्रीकृतानि गृह्यन्ते । पटुतरविज्ञानानि यच्च न घ्राणादिकरणानि ॥ ३३९ ॥ २ गाथा ३३६ ।
३ अप्राप्तकारि नयनं मनश्च नयनस्य विषयपरिमाणम् । आत्माङ्गुलेन लक्षमतिरिक्तं योजनानां तु ॥ ३४० ॥

प्राप्यते, स्थाणुत्वस्याऽनुगतत्वेन सत्त्वात्, पुरुषत्वस्य त्वभावरूपतयाऽसद्भावात् । अथवा, स्थाणुत्वं स्थाणोः पर्यायः, पुरुषत्वं तु पुरुषस्येति । यश्च स्थाणौ 'पुरुष एवाऽयम्' इति विपर्यासः प्रादुरस्ति, तत्रापि पुरुषत्वं व्यावृत्तिरूपतया स्थाणोरपि पर्यायः, अनुगतत्वेन तु पुरुषस्येति; अनध्यवसायप्रतिभासि तु सामान्यमविवादेन स्थाण्वादिवस्तुपर्याय एव । तदेवं संशयादिभिर्वस्तुपर्यायाणां ज्ञायमानत्वात्, सम्यग्दृष्टिसंबन्धिनां च तेषामिहाऽधिकृतत्वेन मिथ्यादृष्टिसंबन्धित्वस्याऽभावात्, लोकरूढस्य च संशयादित्वस्याऽज्ञाननिबन्धनत्वेनेहाऽनधिकृतत्वाज्ज्ञानमेव ते सम्यग्दृष्टिसंबन्धिनः संशयादयः ॥ इति गाथार्थः ॥ ३२१ ॥

नन्वनन्तपर्यायं सर्वमपि वस्तु, इति भवद्भिरुक्तम् । तस्य च घटादिवस्तुन एकस्मिन् काल एकमेव कञ्चिद् घटत्वादिपर्यायं सम्यग्दृष्टिरपि गृह्णाति । अतोऽनन्तपर्यायमपि वस्त्वेकपर्यायतया गृह्णतस्तस्याऽपि कथं ज्ञानं स्यात्, अन्यथास्थितस्याऽन्यथा ग्रहणात्?, इत्याशङ्क्याह–

पज्जायमासयंतो एक्कं पि तओ पओयणवसाओ । तत्तियपज्जायं चिय तं गिण्हइ भावओ वत्थुं ॥ ३२२ ॥

'तउ त्ति' तकोऽसौ सम्यग्दृष्टिरेकमपि घटादिवस्तुनो घटत्वादिपर्यायं प्रयोजनवशादाश्रयन् गृह्णंस्तावन्तः प्रागुक्तप्रकारेणाऽनन्ताः पर्याया यस्य तत् तावत्पर्यायमेव भावतः परमार्थतो वस्तु घटादिकं गृह्णाति । एतदुक्तं भवति– भावत आगमप्रामाण्याभ्युपगमाभिप्रायतः सम्यग्दृष्टिना यथाऽवस्थितमनन्तपर्यायं वस्तु सदैव गृहीतमेवाऽऽस्ते, केवलं प्रयोजनवशादेकं पर्यायमाश्रयति, तथाहि– सौवर्णे घटे दृष्टे यस्य घटमात्रेण प्रयोजनं भवति स 'घटोऽयम्' इति घटत्वमध्यवस्यति। यस्य तु सुवर्णेन, स 'सुवर्णमिदम्' इति सुवर्णत्वं व्यवस्यति । यस्य तु जलक्षेपादिना, स 'जलादिभाजनमिदम्' इति जलादिभाजनत्वमध्यवस्यति । उपलक्षणं च प्रयोजनम्, अन्येऽप्यभ्यासपाटव-प्रत्यासत्त्यादयो गृह्यन्ते; तथाहि– ब्राह्मणे द्वारि दृष्टे कोऽप्यभ्यासवशाद् 'भिक्षुकोऽयम्' इत्याचष्टे, अन्यस्तु पाटववशाद् 'ब्राह्मणोऽयम्' इति, अपरस्तु यस्तत्समीपेऽधीते स प्रत्यासत्तिवशाद् 'मदीयोपाध्यायोऽसौ' इत्याद्यनया दिशा भावनीयम् । ततश्च प्रयोजनादिवशादेकपर्यायतया वस्तु गृह्णानोऽप्यसौ भावतः परिपूर्णाऽनन्तपर्यायमेव गृह्णाति । अतः सर्वदैव भावतः प्रतिपन्नयथावस्थितवस्तुस्वरूपस्य संशयादिकालेऽपि सम्यग्दृष्टेर्ज्ञानमेव ॥ इति गाथार्थः ॥ ३२२ ॥

१ क-ग- 'घटादित्वप' । २ पर्यायमाश्रयन्नेकमपि सकः प्रयोजनवशात् । तावत्पर्यायमेव तद् गृह्णाति भावतो वस्तु ॥ ३२२ ॥

[1]जं तेण पंचधणुसयनराइविसयववहारवोच्छेओ । पावइ, सहस्सगुणियं जेण पमाणंगुलं तत्तो ॥३४२॥

यद् यस्मात् तेनोच्छ्रयाङ्गुलेनेन्द्रियविषयपरिमाणेऽभ्युपगम्यमाने, आदिशब्दस्य व्यवहितसंबन्धात् पञ्चा-ऽर्धपञ्चमधनुःशतादि-प्रमाणानां भरत-सगरादिनराणां योऽसौ श्रोत्रादिभिः शब्दादिविषयग्रहणव्यवहारः प्रसिद्धस्तस्य व्यवच्छेदः प्राप्नोति । कुतः ?, इत्याह– येन भरतचक्रवर्त्यङ्गुलरूपं यत् प्रमाणाङ्गुलं तदेतत् ततस्तस्मादुच्छ्रयाङ्गुलात् सहस्रगुणमुक्तं "उस्सेहंगुलमेगं हवइ, पमाणंगुलं सहस्सगुणं" इतिवचनात् । भरतादीनां चाऽवध्यादिनगर्यः, स्कन्धावारश्चात्माङ्गुलेन द्वादशयोजनायामतया सिद्धान्ते निर्णीतः । उत्सेधाङ्गुलेन पुनरनेकानि योजनसहस्राणि भवन्ति । अतस्तत्राऽऽयुधशालादिषु ताडितभेर्यादिशब्दश्रवणं सर्वेषां त्वदभिप्रायेण न प्राप्नोति, श्रोत्रं हि '[3]बारसहिं जोअणेहिं सोयं अभिगिण्हए सद्दं" इत्यादिवचनाद् द्वादशभ्य एव योजनेभ्यः समागतं शब्दं शृणोति, न परतः । एतानि च द्वादश योजनानि त्वदभिप्रायेण किलोच्छ्रयाङ्गुलेन मीयन्ते, अत उच्छ्रयाङ्गुलनिष्पन्नेभ्योऽनेकयोजनसहस्रेभ्यः समागतं भेर्यादिशब्दं कथं श्रोत्रं गृह्णीयात् ? । इष्यते च भरतादिनगरी-स्कन्धावारेषु तच्छ्रवणम् । अत आत्माङ्गुलेनैवेन्द्रियाणां विषयपरिमाणं, नोत्सेधाङ्गुलेन ॥ इति गाथार्थः ॥ ३४२ ॥

अपि-च, यानि देहस्याऽऽत्मभूतान्येवेन्द्रियाणि, तान्यपि तावत् सर्वाण्युच्छ्रयाङ्गुलेन न मीयन्ते, किं पुनरिन्द्रियविषयपरिमाणम् ?, इति दर्शयति–

[4]इंदियमाणे वि तयं भयणिज्जं जं ति गाउआईणं । जिब्भिंदियाइमाणं संववहारे विरुज्झेज्जा ॥ ३४३ ॥

इन्द्रियाणि श्रोत्रादीनि, तानि चेह "[5]कायंबपुप्फ-गोलय-मसूर-अइमुत्तयकुसुमं व" इत्यादिना प्रोक्तानि द्रव्येन्द्रियाणि गृह्यन्ते । तेषां मानं प्रमाणमङ्गुलाऽसंख्येयभागादिकं, तत्रापि कर्तव्ये ग्रहीतव्ये बोद्धव्ये वा तदुच्छ्रयाङ्गुलं भजनीयं– क्वापि व्यापार्यते, क्वापि नेत्यर्थः, स्पर्शनेन्द्रियमेकं तेन मीयते, शेषाणि त्वात्माङ्गुलेनैवेति भावः । कुतः ?, इत्याह–'जमित्यादि' यद् यस्मात् त्रिगव्यूतादि-

१ यत्तेन पञ्चधनु शतनरादिविषयव्यवहारव्यवच्छेद । प्राप्नोति, सहस्रगुणित येन प्रमाणाङ्गुल तत. ॥ ३४२ ॥
२ घ छ 'त्रेन्द्रियादि'। ३ द्वादशभिर्योजनै श्रोत्रमभिगृह्णाति शब्दम् ।
४ इन्द्रियमानेऽपि तद् भजनीय यदिति क्रोशादीनाम् । जिह्वेन्द्रियादिमानं सव्यवहारे विरुध्येत ॥ ३४३ ॥
५ कादम्बपुष्प गोलका-ऽतिमुक्तककुसुममिव ।

भवति– सम्यग्दर्शनसद्भावेऽस्य सर्वदैव ज्ञानोपयोगमात्रं तावदस्ति। ततश्च संशयादिकालेऽपि मौलज्ञानोपयोगतो ज्ञान्येवाऽसौ, यथा दारिद्र्यादिसद्भावेऽपीन्द्रज्ञानोपयोगतो ज्ञाता इन्द्र एव, यथा वा रसकूपिकायां महारसे निपतितं तृणादिकमपि तद्रूपतामेवोपगच्छति ॥ इति गाथार्थः ॥ ३२५ ॥

अथ मिथ्यादृष्टेरप्येवं भविष्यति, इत्याशङ्क्य निराकुर्वन्नाह–

[1]तुल्लमियं मिच्छस्स वि सो सम्मत्ताइभावसुन्नो त्ति। उवओगम्मि वि तो तस्स निच्चमन्नाणपरिणामो॥ ३२६ ॥

ननु यत्सम्यग्दृष्टेर्ज्ञानोपयोगतो ज्ञानमुक्तम्, तदिदं मिथ्यादृष्टेरपि तुल्यं समानम्, तस्याऽपि ज्ञानोपयोगसद्भावात्। तदयुक्तम्। कुतः?, इत्याह– यतः स मिथ्यादृष्टिः सम्यक्त्वादिभावशून्यः– सम्यक्त्वादयो ये भावाः पदार्थाः, आदिशब्दाद् मति-श्रुतज्ञानादिपरिग्रहः, तैः शून्यो विरहित इत्यर्थः, इति कुतोऽस्य ज्ञानोपयोगः?, सम्यक्त्वादिभावमन्तरेण तस्याऽभावात्, तद्भावे च मिथ्यादृष्टित्वायोगात्। ततस्तस्य मिथ्यादृष्टेरुपयोगेऽपि नित्यमज्ञानपरिणाम एव, महाविषादप्यतिक्रान्तरूपमज्ञानपरिणामं विहाय नान्यः कोऽप्यस्योपयोगोऽस्तीति भावः। अतोऽस्य सदैवाऽज्ञानपरिणामः, सम्यग्दृष्टेस्तु ज्ञानपरिणामः, इति कुत उभयोस्तुल्यता? ॥ इति गाथार्थः ॥ ३२६ ॥

एतदेव भावयति–

[2]जं निन्नओवओगे वि तस्स विवरी[3]अवत्थुपडिवत्ती। तो संसयाइकाले कत्तो नाणोवओगो से? ॥ ३२७ ॥

यतो निर्णयोपयोगकालेऽपि तस्य मिथ्यादृष्टेः सर्वज्ञोक्तविपरीतवस्तुप्रतिपत्तिरेवोपजायते। ततो निर्णयकालेऽप्यनुपजातो ज्ञानपरिणामः संशयादिकाले कुतस्तस्य वराकस्य भविष्यति?। अतो मुधैव सम्यग्दृष्टेरिव मिथ्यादृष्टेरपि संशयादीनां ज्ञानत्वापादनाय खिद्यसे त्वमिति भावः ॥ इति गाथार्थः ॥ ३२७ ॥

तदेवं सम्यग्दृष्टिसंबन्ध्येव मतिज्ञानमिह विचार्यत इति चेतासि निधाय '[4]अब्भुवगंतुं भण्णइ नाणं चिय संसयाईया' इत्यादिना ग्रन्थेन साधितं संशयादीनां ज्ञानत्वम्। ततश्च संशयादिभावेऽपि नाऽवग्रहादीनामज्ञानतेति स्थितम्। यदि वा संशयादिभावेनाऽवग्रहादीनां यदज्ञानत्वं परेण प्रेर्यते, तदभिप्रायापरिज्ञानादाकाशरोमन्थनमेव; न ह्यस्माभिर्ज्ञानमेवेह विचारयितुमारब्धं, येनाऽज्ञानत्वापादनं

१ तुल्यमिदं मिथ्या( दृष्टेः )अपि स सम्यक्त्वादिभावशून्य इति। उपयोगेऽपि ततस्तस्य नित्यमज्ञानपरिणामः ॥ ३२६ ॥

२ यन्निर्णयोपयोगेऽपि तस्य विपरीतवस्तुप्रतिपत्तिः। ततः संशयादिकाले कुतो ज्ञानोपयोगस्तस्य? ॥ ३२७ ॥ ३ घ.छ.ज. 'रीयव'। ४ गाथा ३१४।

लक्खेहिं एक्कवीसाए साइरेगेहिं पुक्खरद्धम्मि । उदये पेच्छंति नरा सूरं उक्कोसए दिवसे ॥ ३४५ ॥
नयणिंदियस्स तम्हा विसयपमाणं जहा सुए भिहियं । आ उस्सेहपमाणंगुलाण एक्केण वि ण जुत्तं ॥३४६॥

ननु पुष्करवरद्वीपस्य मानुषोत्तरपर्वतद्विधाकृतस्याऽर्वाग्भागवर्तिन्यर्धे मानुषोत्तरसंनिधावुत्कृष्टे दिवसे कर्कटकसंक्रान्त्यामुदये, उपलक्षणत्वादस्तमयसमये च नरा मनुष्याः सूरमादित्यं पश्यन्ति– अवलोकयन्ति । कियद्दूरं व्यवस्थितम् ?, इत्याह– सातिरेकैरेकविंशतिलक्षैर्योजनानाम् । एतदुक्तं भवति–

"[२]सीयालीससहस्सा दो य सया जोयणाण ते वैद्धा । एगवीससट्ठिभागा कक्कडमाइम्मि पेच्छ नरा" ॥ १ ॥

इतिवचनाद् यथाऽत्र कर्कसंक्रान्तावुत्कृष्टे दिवसे एतावति दूरे व्यवस्थितं सूर्यं मनुष्याः पश्यन्ति, तथा पुष्करार्धेऽपि मानुषोत्तरसमीपे प्रमाणाङ्गुलनिष्पन्नैः सातिरेकैरेकविंशतियोजनलक्षैर्व्यवस्थितमादित्यं तत्र दिने तन्निवासिनो लोकाः समवलोकयन्ति । तत्र भ्रमितिबाहुल्यात्, सूर्याणां च शीघ्रतरगतित्वात्; उक्तं च–

"एंगवीसं खलु लक्खा चउंतीस चेव तह सहस्साइं । तह पंच सया भणिया सत्तत्तीसाए अइरित्ता ॥ १ ॥
इति नयणविसयमाण पुक्खरदीवद्धवासिमणुआण । पुव्वेण य अवरेण य पिह पिह होइ नायव्व" ॥ २ ॥

इत्यादि । तस्माद् नयनेन्द्रियस्य सातिरेकयोजनलक्षस्वरूपं विषयपरिमाणं यथा श्रुते प्रज्ञापनादिकेऽभिहितम्, तथा तेन प्रकारेणाऽऽत्माङ्गुलो-त्सेधाङ्गुल-प्रमाणाङ्गुलानामेकेनापि गृह्यमाणं न युक्तं, प्रमाणाङ्गुलनिष्पन्नस्यापि योजनलक्षस्य तन्निष्पन्नसातिरेकैकविंशतियोजनलक्षेभ्य एकविंशतितमभागवर्तित्वेन बृहदन्तरत्वात् । तस्मादेकत्र सातिरेकं लक्षम्, अन्यत्र तु सातिरेकैकविंशतिलक्षाणि योजनानां नयनस्य विषयप्रमाणं ब्रुवतः श्रुतस्य पूर्वापरविरोधः । इति परस्याऽऽकूतम् ॥ इति गाथाद्वयार्थः ॥ ३४५ ॥ ३४६ ॥

१ लक्षैरेकविंशत्या सातिरेकैः पुष्करार्धे । उदये पश्यन्ति नरा सूरमुत्कृष्टे दिवसे ॥ ३४५ ॥
नयनेन्द्रियस्य तस्मात् विषयप्रमाण यथा श्रुतेऽभिहितम् । आ उत्सेधप्रमाणाङ्गुलानामेकेनापि न युक्तम् ॥ ३४६ ॥
२ षट्चत्वारिंशत्सहस्राणि द्वे च शते योजनानां तान् बद्धान् । एकविंशतिषष्टिभागान् कर्कटादौ पश्यन्ति नराः ॥ १ ॥ ३ घ छ 'वद्धा' । ४ क.ग 'भ्रमति' ।
५ एकविंशतिः खलु लक्षाणि चतुस्त्रिंशच्च तथा सहस्राणि । तथा पञ्च शतानि भणितानि सप्तत्रिंशताऽतिरिक्तानि ॥ १ ॥
इति नयनविषयमानं पुष्करद्वीपार्धवासिमनुजानाम् । पूर्वेण चाऽपरेण च पृथक् पृथग् भवति ज्ञातव्यम् ॥ २ ॥ ६ घ. 'उवीसं' । ७ घ छ 'यप्रमा' ।

ग्रहादिभेदनिरूपणात् पूर्वमेव निर्दिष्टं नन्द्यध्ययनसूत्रकारेण । किं निर्दिष्टम् ?, इत्याह– 'अविसेसिया मइ च्चिय त्ति' सूचकत्वात् सूत्रस्य, अनेनाऽऽलापकः सर्वोऽपि सूचितो द्रष्टव्यः, तद्यथा–" अविसेसिआ[1] मई मइनाणं च, मइअन्नाणं च, विसेसिआ मई– सम्मदिट्ठिस्स मई मइनाणं, मिच्छदिट्ठिस्स मई मइअन्नाणं " इति । ततो यस्मादागम एवमुक्तम्, तस्मात् सम्यग्दृष्टेः सर्वापि मतिर्ज्ञानं, मिथ्यादृष्टेस्त्वज्ञानम् ॥ इति गाथार्थः ॥ ३२९ ॥

अथ 'सदसद्-'[3] इत्यादिना प्रागुक्तामपि सम्यग्दृष्टेर्ज्ञानत्वे, मिथ्यादृष्टेरज्ञानत्वे पुनरपि युक्तिमाह–

[4]विवरीअवत्थुगहणे जं सो साहणविवज्जयं कुणइ । तो तस्स अन्नाणफलं सम्मादिट्ठिस्स नाणफलं[6] ॥३३०॥

इह मिथ्यादृष्टिस्तावद् मिथ्यात्वोदयविपर्यस्तत्वात् त्रिभुवनगुरुप्रणीतवस्तु विपरीतं सर्वमेव गृह्णाति । ततोऽसौ विपरीतवस्तुग्रहणे विपरीतवस्तुग्रहणशीलतयेत्यर्थः, यस्मात् साधनविपर्ययं करोति– साध्यन्ते मोक्षादयोऽनेनेति साधनं ज्ञान-दर्शन-चारित्रादि तस्य विपर्ययं व्यत्ययं करोति, अज्ञान-मिथ्यात्वा-ऽविरत्यादीन्यपि मोक्षादिसाधकत्वेनेच्छतीत्यर्थः । ततस्तस्य ज्ञानमज्ञानफलमेव, अज्ञानस्यैव फलं नरकप्राप्त्यादिकं यस्मात् तदज्ञानफलम्, अज्ञानवद् वा फलति नरकादिदुःखं प्रसूत इत्यज्ञानफलम्; तत्फलत्वाच्चाज्ञानमेवेति भावः । सम्यग्दृष्टेस्तु ज्ञानं ज्ञानफलमेव, ज्ञानस्यैव फलं यस्मात्, ज्ञानवद् वा फलति स्वर्गादिसुखमिति ज्ञानफलं, तत्फलत्वाच्च ज्ञानमेवेति हृदयम् । इदमुक्तं भवति– विपरीतवस्तुग्राही मिथ्यादृष्टिर्मोक्षादेः साधनं सम्यग्ज्ञान-क्रियारूपं विपरीतं मन्यते– "वेदविहिता हिंसा न दोषाय "

" षट् शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि । अश्वमेधस्य वचनाद् न्यूनानि पशुभिस्त्रिभिः " ॥ १ ॥

" हत्वा भूतसहस्राणि कृत्वा पापशतानि च । स्नात्वा गङ्गाजले पूते यान्ति जीवा. शिवालयम् " ॥ १ ॥

इत्यादिभूतघातनिबन्धनत्वेन संसारहेतोर्मिथ्याज्ञानस्य मोक्षादिसाधकत्वेनाऽभ्युपगमात्, जलस्नान-पशुवध-पुत्रसन्ततिनिबन्धनमैथुनादिक्रियायां च तत्साधकत्वेन प्रवर्तनात् । अतस्तस्य ज्ञानमप्यज्ञानफलत्वेनाऽज्ञानमेव । सम्यग्दृष्टेस्तु सम्यग्ज्ञान-क्रियासंयोगेन मोक्षादौ प्रवृत्तेर्ज्ञानफलत्वेन ज्ञानमेव ॥ इति गाथार्थः ॥ ३३० ॥

१ अविशेषिता मतिर्मतिज्ञान च, मत्यज्ञान च, विशेषिता मति·– सम्यग्दृष्टेर्मतिर्मतिज्ञानम्, मिथ्यादृष्टेर्मतिर्मत्यज्ञानम् । २ घ. छ ज 'सिया म' । ३ गाथा ३१९ । ४ विपरीतवस्तुग्रहणे यत् स साधनविपर्ययं करोति । ततस्तस्याऽज्ञानफलं सम्यग्दृष्टेर्ज्ञानफलम् ॥ ३३० ॥ ५ घ. ज. 'रीयव' । ६ क ग. 'णाण' ।

केनचिद् गृह्यत एव । तथाच वक्तारो भवन्ति– 'कटुकस्य, तीक्ष्णादेर्वा वस्तुनः संबन्धी अयं गन्धः' इति । यच्चेह कटुकत्वं, तीक्ष्णादित्वं चोच्यते, तद् रसस्यैव धर्मः । ततश्च ज्ञायते– जिह्वासंबन्धे तेषां कटुकादिको रसोऽपि गृहीत इति । स्पर्शोऽपि शीतादिर्दूरादपि शिशिरपद्मसरः-सरित्-समुद्रादेर्मध्येनाऽऽयातस्य वातादेरनुभूयत एवेति ॥ ३४८ ॥

यद्येवम्, द्वादश-नवयोजनेभ्यः परतोऽप्यायाताः शब्द-गन्धादयः किमिति न गृह्यन्ते ?, इत्याह–

[1]दव्वाण मंदपरिणामयाए परओ न इंदियबलं पि । अवरमसंखेज्जंगुलभागाओ नयणवज्जाणं ॥ ३४९ ॥

द्वादश-नवयोजनेभ्यः परतः समायातानां शब्द-गन्धादिद्रव्याणां मन्दपरिणामत्वात् । न खलु परतः समायातानां तेषां तथाविधः परिणामो भवति, येन श्रोत्र-घ्राणादिविज्ञानं जनयेयुः, श्रोत्रादीन्द्रियाणामपि च तथाविधं बलं न भवति, येन परतः समायातानि शब्दादिद्रव्याणि गृहीत्वा स्वविज्ञानं जनयन्ति । तदेवमुक्तमिन्द्रियाणामुत्कृष्टं विषयपरिमाणम् । अथ जघन्यं तद् विभणिषुराह– 'अवरमित्यादि' अपरं जघन्यं विषयप्रमाणमुच्यते । किम् ?, इत्याह– असंख्याततमादङ्गुलासंख्येयभागादागतं गन्धादिकं घ्राणादीनि गृह्णन्तीति । किमेतत् सर्वेषामपीन्द्रियाणां जघन्यं विषयप्रमाणम् ?, न, इत्याह– नयनवर्जानाम् ॥ ३४९ ॥

नयनस्य तर्हि का वार्ता ?, इत्याह–

[2]संखेज्जइभागाओ नयणस्स, मणस्स न विसयप[3]माणं । पोग्गलमित्तानिबंधाभावाओ केवलस्सेव ॥३५०॥

अङ्गुलसंख्येयभागात्– अङ्गुलसंख्येयभागमवधौ कृत्वा नयनस्य जघन्यं विषयपरिमाणम्, अतिसंनिकृष्टस्याऽञ्जनशलाका-रजो-मलादेस्तेनाऽनुपलम्भादिति भावः । मनसस्तु क्षेत्रतो नास्त्येव विषयप्रमाणं, अनियमेन दूरे, आसन्ने च तत् प्रवर्तत इत्यर्थः । कुतः ?, इत्याह– पुद्गलमात्रस्य निबन्धो नियमस्तस्याऽभावात्, मूर्ता-ऽमूर्तसमस्तवस्तुविषयत्वेन 'पुद्गलेष्वेवेदं प्रवर्तते' इत्येवंभूतस्य नियमस्याऽभावात्, केवलस्येवेत्यर्थः । इह यत् पुद्गलमात्रनिबन्धनियतं न भवति, न तस्य विषयपरिमाणमस्ति, यथा केवलस्य, पुद्गलमात्रनिबन्धनियतं च मनः, ततो नाऽस्य विषयपरिमाणम्; यस्य तु विषयपरिमाणं तत्पुद्गलमात्रनिबन्धरहितमपि न भवति, यथाऽवधि-मनःपर्यायज्ञाने इति ॥ अत्राह– नन्वनैकान्तिकोऽयं हेतुः, मति-श्रुतज्ञानाभ्यां व्यभिचारात्; तथाहि– मूर्ता-ऽमूर्त-

१ द्व्याणा मन्दपरिणामतया परतो नेन्द्रियबलमपि । अपरमसंख्येयाङ्गुलभागाद् नयनवर्जानाम् ॥ ३४९ ॥
२ सख्येयभागाद् नयनस्य, मनसो न विषयप्रमाणम् । पुद्गलमात्रनिबन्धाभावात् केवलस्येव ॥ ३५० ॥ ३ घ छ. 'परिमा' ।

व्याख्यातार्थैव, नवरं सम्यग्दृष्टिर्योग्यमयोग्यं च साधनधर्म जानाति, ज्ञात्वा च स्थाने व्यापारयति । तथा च सम्यगाराधको भूत्वा समीहितफलभाग् भवति । उक्तं च–

"[1]काले सिक्खइ नाणं जिणभणिअं परमभत्तिराएणं । दंसणपभावगाणि अ सिक्खइ सत्थाइं कालम्मि ॥ १ ॥
काले य भत्तपाणं गवेसए सयलदोसपरिसुद्ध । आयरियाईणट्ठा पवयणमायासु उवउत्तो ॥ २ ॥
एवं समायरंतो काले कालं विसुद्धपरिणामो । असवन्तजोगकारी सलाहणिज्जो य भुवणम्मि ॥ ३ ॥
सयलसुरा-सुरपणमिअजिण-गणहरभणियकिरियविहिकुसलो । आराहिऊण सम्मत्त-नाण-चरणाइं परमाइं ॥ ४ ॥
सत्तट्ठभवग्गहणब्भ[3]तरकालम्मि केवल[4]न्नाणं । उप्पाडिऊण गच्छइ विहुयमलो सासयं मोक्खं ॥ ५ ॥
तत्थ य जर-जम्मण-मरण-रोग-तण्हा-छुहा-भय-विमुक्को । साइ अपज्जवसाणं कालमणंतं सुहं लहइ" ॥ ६ ॥

इत्येवमादि ॥ इति गाथार्थः ॥ ३३२ ॥

तदेवं चालना-प्रत्यवस्थानादिभिर्व्याख्याता अवग्रहादयः । अथ तेषामेव कालनिरूपणार्थमाह निर्युक्तिकारः–

[5]उग्गहो एक्कं समयं ईहा-वाया मुहुत्तमंतं तु । कालमसंखं संखं च धारणा होइ नायव्वा ॥ ३३३ ॥

अवग्रह इति व्याख्यानाद् नैश्चयिकोऽर्थावग्रहो द्रष्टव्यः । स किम् ?, इत्याह– सर्वजघन्यः कालविशेषः समयः, तमेकं समयं भवति, न परतः । ईहा-ऽपायौ प्रागुनिर्णीतस्वरूपौ 'मुहुत्तमंतं त्विति' अन्तःशब्दो मध्यवचनः, ततश्च जघन्यतः, उत्कृष्टतश्च मुहूर्तान्तर्भिन्नं मुहूर्तं ज्ञातव्यौ भवतः– अन्तर्मुहूर्तमित्यर्थः । तुश्चकारार्थः । चकारश्चानुक्तसमुच्चये । ततश्च व्यञ्जनावग्रह-व्यावहारिकार्थावग्रहौ

---

१ काले शिक्षते ज्ञानं जिनभणित परमभक्तिरागेण । दर्शनप्रभावकाणि च शिक्षते शास्त्राणि काले ॥ १ ॥
काले च भक्तपानं गवेषते सकलदोषपरिशुद्धम् । आचार्यादीनामर्थाय प्रवचनमातृपूपयुक्त· ॥ २ ॥
एवं समाचरन् काले काले विशुद्धपरिणाम· । आस्रवान्तयोगकारी श्लाघनीयश्च भुवने ॥ ३ ॥
सकलसुरा-ऽसुरप्रणतजिन-गणधरभणितक्रियाविधिकुशलः । आराध्य सम्यक्त्व-ज्ञान-चरणानि परमाणि ॥ ४ ॥
सप्ता-ऽष्टभवग्रहणाभ्यन्तरकाले केवलज्ञानम् । उत्पाद्य गच्छति विधुतमल· शाश्वतं मोक्षम् ॥ ५ ॥
तत्र च जरा-जन्म-मरण-रोग-तृष्णा-क्षुद्-भय-विमुक्त. । साद्यपर्यवसान कालमनन्तं सुखं लभते ॥ ६ ॥
२ क ग 'णं' । ३ घ 'तरे का' । ४ क ग. 'लं नाणं' ।
५ अवग्रह एकं समयमीहा-ऽपायौ मुहूर्तान्तस्तु । कालमसंख्यं संख्यं च धारणा भवति ज्ञातव्या ॥ ३३३ ॥

समयेषु भाषाद्रव्यैर्वासितत्वात् तेषां भाषात्वं द्रष्टव्यम् । अत्राह– ननु यदि वक्तृनिसृष्टानि भाषाद्रव्याणि प्रथमसमये दिक्ष्वेव गच्छन्ति, समयानन्तरं च नावतिष्ठन्ते, तर्हि तद्वासितद्रव्याणि द्वितीयसमये विदिक्षु गच्छन्ति, ततश्च दिग्-विदिग्व्यवस्थितयोः समयभेदेन शब्द-श्रवणं प्राप्नोति, अविशेषेणैव सर्वोऽपि शब्दं शृण्वन्नुपलभ्यते । नैष दोषः, समयादिकालभेदस्यातिसूक्ष्मत्वेनाऽलक्षणादिति । भवत्वेवं, तथापि "भाष्यमाणैव भाषा" इतिवचनाद् निसर्गसमयवर्तिन्येव भाषा, ततो 'विश्रेणिस्थो द्वितीयसमयेऽभाषां शृणोति' इत्या-यातम् । नैतदेवम्, भाषाद्रव्यैर्वासितानामपि द्रव्याणां तदविशेषत्वाद् भाषात्वं न विरुध्यते । अत एव 'वीसेढी पुण सद्दं' इत्यत्र पुनरपि यच्छब्दग्रहणं तत् पराघातवासितद्रव्याणामपि तथाविधशब्दपरिणामख्यापनार्थं कृतम्, इति तावद् वयमवगच्छामः, तत्त्वं बहु-श्रुतादयो विदन्तीति । घ्राणादीन्यपीन्द्रियाणि गन्धादिद्रव्याणि मिश्राण्याददते । तेषां चानुश्रेणिगमननियमो नास्ति, बादरत्वात्, वातायनोपलभ्यमानरेणुवद्, इति वृद्धटीकाकारः ॥ इति निर्युक्तिगाथार्थः ॥ ३५१ ॥

अत्र भाष्यम्—

[1]सेढी पएसपंती वदतो सव्वस्स छद्दिसिं ताओ । जासु विमुक्का धावइ भासा[2] समयम्मि पढमम्मि॥३५२॥

इह श्रेणिराकाशप्रदेशपङ्क्तिरभिधीयते, लोकमध्ये च वदतो भाषमाणस्य सर्वस्य वक्तुस्ताः पूर्वा-ऽपर-दक्षिणो-त्तरो-र्ध्वा-ऽधोरू-पासु षट्स्वपि दिक्षु सन्त्येव । भाषकेण विमुक्ता निसृष्टा सती भाषा यासु प्रथमसमयेऽपि लोकान्तमनुधावति ॥ ३५२ ॥

ततः किम् ?, इत्याह–

[3]भासासमसेढिठिओ तब्भासामीसियं सुणइ सद्दं । तद्दव्वभावियाइं [4]अण्णाइं सुणइ विदिसत्थो ॥ ३५३ ॥

'भाषासमश्रेणीतः' इति किमुक्तं भवति ?, इत्याह– भाषासमश्रेणिस्थितः । स किम् ?, इत्याह– तस्य भाषकस्य, शङ्ख-भेर्यादेर्वा भाषा तद्भाषा तद्रूपेणोत्सृष्टः पुद्गलसमूहस्तन्मिश्रितं शब्दं शृणोति । विदिग्व्यवस्थितः पुनः श्रोता तद्द्रव्यभावितान्यपराण्येव द्रव्याणि शृणोति, न पुनस्तानि ॥ ३५३ ॥

कुतः ?, इत्याह–

---

१ श्रेणि प्रदेशपङ्क्तिर्वदत सर्वस्य षड्दिक्षु ता । यासु विमुक्ता धावति भाषा समये प्रथमे ॥ ३५२ ॥ २ घ छ. 'सा पढमम्मि समयम्मि' ।
३ भाषासमश्रेणिस्थितस्तद्भाषामिश्रितं शृणोति शब्दम् । तद्द्रव्यभावितान्यन्यानि शृणोति विदिक्स्थः ॥ ३५३ ॥ ४ घ. छ. 'अन्नाइं' ।

इति चेत्। उच्यते– नन्द्यध्ययनागमेऽत्रान्तरे तस्याः प्रतिपादितत्वादिह स्वस्थानत्वमिति। न केवलमसावेवाभिधास्यते, किन्तु प्रसङ्गतः सर्वेन्द्रियाणां विषयप्रमाणं चाहं भणिष्यामि ॥ इति गाथार्थः ॥ ३३५ ॥

कया पुनर्गाथया निर्युक्तिकृताऽसौ भण्यते ?, इत्याह–

पुट्ठं[1] सुणेइ सद्दं रूवं पुण पासइ अपुट्ठं तु। गंधं रसं च फासं च बद्धपुट्ठं वियागरे ॥ ३३६ ॥

श्रोत्रेन्द्रियं कर्तृ, शब्दं कर्मतापन्नं शृणोति। कथंभूतम् ?, इत्याह– स्पृश्यत इति स्पृष्टस्तं स्पृष्टं तनौ रेणुवदालिङ्गितमात्रमेवेत्यर्थः। इदमुक्तं भवति– स्पृष्टमात्राण्येव शब्दद्रव्याणि श्रोत्रमुपलभते, यतो घ्राणेन्द्रियविषयभूतद्रव्येभ्यस्तानि सूक्ष्माणि, बहूनि, भावुकानि च, पटुतरं च श्रोत्रेन्द्रियं विषयपरिच्छेदे घ्राणेन्द्रियादिगणादिति। श्रोत्रेन्द्रियस्य चेह कर्तृत्वं शब्दश्रवणान्यथानुपपत्तेर्लभ्यते। एवं घ्राणेन्द्रियादिष्वपि वाच्यम्। तानि पुनः कथं गन्धादिकं गृह्णन्ति ?, इत्याह– गन्ध्यत इति गन्धस्तमुपलभते घ्राणेन्द्रियम्, रस्यत इति रसस्तं च गृह्णाति रसनेन्द्रियम्, स्पृश्यत इति स्पर्शस्तं च जानाति स्पर्शनेन्द्रियम्। कथम्भूतं गन्धादिकम् ?, इत्याह– बद्धस्पृष्टम्। तत्र स्पृष्टमिति पूर्ववदेव, बद्धं तु गाढतरमाश्लिष्टमात्मप्रदेशैस्तोयवदात्मीकृतमित्यर्थः। ततश्च गन्धादिद्रव्यसमूहं प्रथमं स्पृष्टमालिङ्गितम्, ततश्च स्पर्शनानन्तरं बद्धमात्मप्रदेशैर्गाढतरमागृहीतमेवोपलभते घ्राणेन्द्रियादिकमिति। एवं व्यागृणीयात् प्ररूपयेत् प्रज्ञापकः, यतो घ्राणेन्द्रियादिविषयभूतानि गन्धादिद्रव्याणि शब्दद्रव्यापेक्षया स्तोकानि, बादराणि, अभावुकानि च, विषयपरिच्छेदे श्रोत्रापेक्षयाऽपटूनि च घ्राणादीनि; अतो बद्धस्पृष्टमेव गन्धादिद्रव्यसमूहं गृह्णन्ति, न पुनः स्पृष्टमात्रमिति भावः। ननु यदि स्पर्शानन्तरं बद्धं गृह्णाति, तर्हि 'पुट्ठबद्धं' इति पाठो युक्तः, इति चेत्। उच्यते– विचित्रत्वात् सूत्रगतेरित्थं निर्देशः, अर्थतस्तु यथा त्वयोक्तं तथैव द्रष्टव्यम्। अपरस्त्वाह– यद् बद्धं तत् स्पृष्टं भवत्येव, विशेषबन्धे सामान्यबन्धस्याऽन्तर्भावात्, ततः किं स्पृष्टग्रहणेन ? इति। तदयुक्तम्, सकलश्रोतृसाधारणत्वाच्छास्त्रारम्भस्य, प्रपञ्चितज्ञाऽनुग्रहार्थमर्थापत्तिगम्यार्थाभिधानेऽप्यदोषादिति ॥

चक्षुरिन्द्रियं त्वप्राप्तमेव विषयं गृह्णाति, इत्याह– 'रूवं पुण पासई अपुट्ठं त्विति' रूपं कर्मतापन्नं चक्षुरस्पृष्टमप्राप्तमेव पश्यति। पुनःशब्दस्य विशेषणार्थत्वादस्पृष्टमपि योग्यदेशस्थमेव पश्यति, नाऽयोग्यदेशस्थं सौधर्मादि, कट-कुट्यादिव्यवहितं वा घटादि ॥ इति निर्युक्तिगाथार्थः ॥ ३३६ ॥

---

1 स्पृष्टं शृणोति शब्दं रूपं पुनः पश्यत्यस्पृष्टं तु। गन्धं रसं च स्पर्शं च बद्धस्पृष्टं व्यागृणीयात् ॥ ३३६ ॥

[1]अह सो तणुसंरंभो निसिरइ तो काइएण वत्तव्वं । तणुजोगविसेस च्चिय मण-वइजोग त्ति जमदोसो ॥ ३५८ ॥

अत्र परः प्राह– ननु 'गिण्हइ य काइएणं' इति यदुक्तं तद् मन्यामहे, यतो गृह्णीयात् कायिकेन योगेन वाग्द्रव्याणि भाषकः, नेदमयुक्तम्, कायव्यापारमन्तरेण तद्ग्रहणाऽयोगात् । यत् पुनरुक्तम्– '[2]निसिरइ तह वाइएण जोएणं' इति, तदेतद् नावगच्छामः, यतः कथं नाम निसृजति वाचिकेन योगेन ?, गृह्यमाणाया वाचो जीवव्यापाररूपयोगाभावाद् नैतद् घटत इत्यर्थः । इति संक्षेपेणोक्त्वा विस्तराभिधित्सया प्राह– 'को वाऽयमित्यादि' वेत्यथवा, किमनेन संक्षेपेण ?, विस्तरेणाऽपि पृच्छामः– कोऽयं नाम वाग्योगः, येन निसृजतीत्युक्तम् ?। 'किं वाय त्ति' वागेव निसृज्यमानभाषापुद्गलसमूहरूपो वाग्योगः, किंवा कायसंरम्भः कायव्यापारस्तन्निसर्गहेतुर्वाग्योगः ?, इति विकल्पद्वयम् । तत्र प्रथमविकल्पपक्षं निराकुर्वन्नाह– 'वाया न जीवजोगो इत्यादि' योगोऽत्र शरीरजीवव्यापारः प्रस्तुतः, स च वाग् न भवति, पुद्गलपरिणामत्वात् तस्याः, रस-गन्धादिवत्; यस्तु जीवव्यापाररूपो योगः स पुद्गलपरिणामोऽपि न भवति, यथा जीवाधिष्ठितकायव्यापारः । अपि च, 'न य ताए त्ति' न च तया वाचा किञ्चिद् निसृज्यते, तस्या एव निसृज्यमानत्वात्; न च कर्मैव करणं भवति । अतो वागेव वाग्योग इति प्रथमविकल्पो न घटते । अथ द्वितीयमधिकृत्याह– 'अहेत्यादि' अथाऽसौ वाग्योगस्तनुसंरम्भः कायव्यापारः, ततः 'कायिकेन निसृजति' इत्येवमेव वक्तव्यं स्यात्, अतः किमुक्तम्– '[2]निसिरइ तह वाइएण जोएणं' इति ?। अत्रोत्तरमाह– 'तणु इत्यादि' ननु द्वितीयविकल्प एवाऽत्राऽङ्गीक्रियते, केवलमविशिष्टः काययोगो वाग्योगतया नाऽस्माभिरिष्यते, किन्तु तनुयोगविशेषावेव कायव्यापारविशेषावेव मनो-वाग्योगाविष्येते यद् यस्मात्; ततोऽयमदोषः । न हि कायिको योगः कस्यांचिदप्यवस्थायां शरीरिणां जन्तूनां निवर्तते, अशरीरिणां सिद्धानामेव तन्निवृत्तेरिति, अतो वाग्निसर्गादिकालेऽपि सोऽस्त्येवेति भावः ॥ ३५६ ॥ ३५७ ॥ ३५८ ॥

तर्हि समुच्छिद्यतां मनो-वाग्योगकथा । न, इत्याह–

[3]किं पुण तणुसंरंभेण जेण मुंचइ स वाइओ जोगो । मण्णइ य स माणसिओ तणुजोगो चेव य विभत्तो ॥३५९॥

'किं पुण' इति 'तथापि' इत्यस्याऽर्थे । ततश्चेदमुक्तं भवति– यद्यपि काययोगः सर्वत्राऽनुगतोऽस्ति, तथापि येन मनो वाग्द्रव्याणामुपादानं करोति स कायिको योगः, येन तु संरम्भेण तान्येव मुञ्चति स वाचिकः, येन तु मनोद्रव्याणि चिन्तायां व्यापारयति

१ अथ स तनुसरम्भो निसृजति तत. कायिकेन वक्तव्यम् । तनुयोगविशेष एव मनो-वाग्योगाविति यददोष ॥३५८॥
२ गाथा ३५५। ३ किं पुनस्तनुसरम्भेण येन मुञ्चति स वाचिको योग.। मन्यते च स मानसिकस्तनुयोग एव च विभक्त ॥ ३५९ ॥

"[1]जेणं जया मणूसा तेसिं जं होइ माणरूवं तु । तं भणियमिहायंगुलमणिययमाणं पुण इमं तु" ॥ १ ॥

द्वितीयं तु–

"[2]परमाणू तसरेणू रहरेणू अग्गयं च वालस्स । लिक्खा जूया य जवो अट्ठगुणविवड्ढिया कमसो" ॥ १ ॥

इत्यादिग्रन्थोक्तम् । तृतीयं तु–

"[3]उस्सेहंगुलमेग हवइ, पमाणंगुलं सहस्सगुणं । तं चेव दुगुणियं खलु वीरस्सायंगुलं भणियं ॥ १ ॥

आयगुलेण वत्थुं, उस्सेहपमाणओ मिणसु देह । नग-पुढवि-विमाणाइं मिणसु पमाणगुलेणं ति" ॥ २ ॥

एवं स्थिते आत्माङ्गुलेनेदं चक्षुषो विषयपरिमाणं, न शेषाङ्गुलाभ्याम् ॥ इति गाथार्थः ॥ ३४० ॥

अत्र प्रेरकः प्राह–

[5]नणु भणियमुस्सयंगुलपमाणओ जीवदेहमाणाइ । देहपमाणं चिय तं न उ इंदिय-विसयपरिमाणं ॥३४१॥

ननु "उस्सेहपमाणओ मिणे देहं" इतिवचनाद् अन्यत्र भणितमुक्तम् । किं तत् ?, इत्याह– "नारकादिजीवदेहमानादि केन ?" इत्याह–"उच्छ्रयाङ्गुलप्रमाणतः" देहग्रहणस्योपलक्षणार्थत्वादिन्द्रियं, इन्द्रियविषयपरिमाणं च तत्र गृह्यते, इति मन्यमानेन परेणाऽऽदिशब्दः कृतः; इन्द्रियं हि देहस्थत्वाद् देहग्रहणेनैव गृह्यते, तद्विषयपरिमाणमप्यासन्नत्वात् तद्ग्रहणेन गृह्यत इति भावः । ततश्च देहस्य, इन्द्रियाणां, तद्विषयपरिमाणस्य चोच्छ्रयाङ्गुलमेयत्वात् किमितीह चक्षुषो विषयपरिमाणमात्माङ्गुलेनोच्यते ? इति ॥

अत्रोत्तरमाह–'देहेत्यादि' यदुच्छ्रयाङ्गुलमेयत्वेनाऽन्यत्रोक्तम्, तद्देहप्रमाणमात्रमेव बोद्धव्यं, न त्विन्द्रिय-विषयपरिमाणमपि, तस्यात्माङ्गुलमेयत्वात् ॥ इति गाथार्थः ॥ ३४१ ॥

कथं पुनरेतद् विज्ञायते ?, इत्याह–

---

१ येन यदा मनुष्यास्तेषां यद् भवति मानरूप तु । तद् भणितमिहाऽऽत्माऽङ्गुलमनियतमानं पुनरिदं तु ॥ १ ॥

२ परमाणुस्त्रसरेणू रथरेणुरग्रकं च वालस्य । लिक्षा यूका च यवोऽष्टगुणविवर्धिताः क्रमशः ॥ १ ॥

३ उत्सेधाङ्गुलमेकं भवति, प्रमाणाङ्गुलं सहस्रगुणम् । तदेव द्विगुणितं खलु वीरस्याऽऽत्माऽङ्गुलं भणितम् ॥ १ ॥
आत्माङ्गुलेन वस्तु, उत्सेधप्रमाणतो मिनुयाद् देहम् । नग-पृथिवी-विमानानि मिनुयात् प्रमाणाङ्गुलेनेति ॥ २ ॥ ४ क.ग. 'गुलस' ।

५ ननु भणितमुच्छ्रयाङ्गुलप्रमाणतो जीवदेहमानादि । देहप्रमाणमेव तद् न त्विन्द्रिय-विषयपरिमाणम् ॥ ३४१ ॥

कायक्रिया कायव्यापारः, तदतिरिक्तं तदभ्यधिकं प्राणा-ऽपानफलं न किमपि दृश्यते, यथा वाचो मनसश्च स्फुटं तद् दृश्यते। इदमुक्तं भवति– यथा वाचः स्वाध्यायविधान-परप्रत्यायनादिकं, मनसश्च धर्मध्यानादिकं विशिष्टं स्फुटं कायक्रियातिरिक्तं फलमुपलभ्यते, नैवं प्राणा-ऽपानयोः, इति तनुयोगाभ्यन्तरवर्त्येवाऽसौ प्राणा-ऽपानव्यापारो व्यवह्रियते, न पृथक्। न च वक्तव्यम्– 'जीवत्यसौ' इति प्रतीतिजननादिकं प्राणा-ऽपानफलमप्युपलभ्यत एवेति; एवंभूतस्य प्रयोजनमात्रस्य सर्वत्र विद्यमानत्वाद् धावन-वल्गनादिव्यापारस्याऽपि पृथग्योगत्वप्रसङ्गात्। तस्माद् विशिष्टव्यवहाराङ्गभूतपरप्रत्यायनादिफलत्वाद् वाग्-मनोयोगावेव पृथक् कृतौ, न प्राणा-ऽपानयोग इति ॥ ३६२ ॥

तदेवं तनुयोगो वाग्निसर्गविषये व्याप्रियमाणो वाग्योगः, मनने तु व्याप्रियमाणो मनोयोगः; वाग्विषयो योगो वाग्योगः, मनोविषयो योगो मनोयोग इति कृत्वा। इत्येवं 'तनुयोगविशेषावेव वाग्-मनोयोगौ' इत्येतद् दर्शितम्। अथवा 'स्वतन्त्रावेवैतौ' इति दर्शयन्नाह–

अहवा[1] तणुजोगाहिअवइदव्वसमूहजीववावारो। सो वइजोगो भण्णइ वाया निसिरिज्जए तेणं ॥३६३॥

तह तणुवावाराहिअमणदव्वसमूहजीववावारो। सो मणजोगो भण्णइ मण्णइ नेयं जओ तेणं ॥ ३६४ ॥

अथवा तनुयोगेन कायव्यापारेणाऽऽहृतो गृहीतो योऽसौ वाग्द्रव्यसमूहस्तेन सहकारिकारणभूतेन तन्निसर्गार्थं जीवस्य व्यापारः स वाग्योगो भण्यते, वाचा सहकारिकारणभूतया जीवस्य योगो वाग्योग इति कृत्वा। किं पुनस्तेन क्रियते ?, इत्याह– सैव वाक् तेन जीवव्यापारेण निसृज्यते परप्रत्यायनार्थमुच्यत इति ॥ तथा, तनुव्यापारेणाऽऽहृतो योऽसौ मनोद्रव्यसमूहस्तेन सहकारिकारणभूतेन वस्तुचिन्तनाय योऽसौ जीवस्य व्यापारः स मनोयोगो भण्यते, मनसा सहकारिकारणभूतेन जीवस्य योगो मनोयोग इति व्युत्पत्तेः। कुतः पुनरयं मनोयोगः ?, इत्याह– यतस्तेन ज्ञेयं जिनमूर्त्यादिकं मन्यते चिन्त्यते, अतस्तस्य मनोयोगत्वमिति ॥

तदेवमत्र पक्षे वाग्द्रव्यनिसर्गादिकाले तनोर्व्यापारः सन्नपि न विवक्षितः, किन्तु वाग्-मनोद्रव्यसचिवस्य जीवस्य, इति स्वतन्त्रावेव वाग्-मनोयोगौ, न तु तनुयोगविशेषभूताविति भावः। आना-ऽपानद्रव्यसाचिव्यात् तन्मोचने जन्तोस्तद्योगोऽपि स्वतन्त्रः पृथक् प्राप्नोति, इति चेत्। न, 'भण्णइ[2] ववहारासिद्धत्थं' इत्यादिना प्रतिविहितत्वात् ॥ इति गाथानवकार्थः ॥ ३६३ ॥ ३६४ ॥

1 अथवा तनुयोगाऽऽहृतवाग्द्रव्यसमूहजीवव्यापारः। स वाग्योगो भण्यते वाचा निसृज्यते तेन ॥ ३६३ ॥
तथा तनुव्यापाराऽऽहृतवाग्द्रव्यसमूहजीवव्यापारः। स मनोयोगो भण्यते मन्यते ज्ञेय यतस्तेन ॥ ३६४ ॥ 2 गाथा ३६१।

मानानां युगलधर्मिणां जिह्वेन्द्रियादिमानं यद्युच्छ्रयाङ्गुलेन गृह्येत, तदा संव्यवहारे कल्पद्रुमरसादिपरिज्ञानलक्षणे विरुध्येत न घटेतेत्यर्थः । इदमुक्तं भवति–"[1]बाहल्लओ य सव्वाइं अंगुलअसंखभागं, एमेव [2]पुहुत्तओ, नवरं अंगुलपुहुत्त रसणं" इत्यादिवचनादङ्गुलपृथक्त्वविस्तरं जिह्वेन्द्रियं निर्णीतम् । त्रिगव्यूतादिमानानां च जन्तूनां तदनुसारितया विशालानि मुखानि, जिह्वा च । ततो यद्युच्छ्रयाङ्गुलेन तेषां क्षुरप्राकारतयोक्तस्य जिह्वेन्द्रियस्याऽङ्गुलपृथक्त्वलक्षणो विस्तरो गृह्येत, तदाऽत्यल्पतया सर्वामपि जिह्वां न व्याप्नुयात्; ततश्च सर्वयाऽपि तया रसवेदनलक्षणो व्यवहारो न घटेत । तस्मादात्माङ्गुलेनैव जिह्वादिमानं घटते । ततश्च देहात्मभूतानीन्द्रियाण्यपि सर्वाण्युच्छ्रयाङ्गुलेन यदा न मीयन्ते, तदेन्द्रियविषयपरिमाणस्य दूरे वार्ता, इति भावः ॥ इति गाथार्थः ॥ ३४३ ॥

तदेवं "[3]उस्सेहपमाणओ मिणे देहं" इत्यत्र पारिशेष्याद् देहशब्देन यल्लभ्यते, तद् दर्शयन्नाह–

[4]तणुमाणं च्चिय तेणं [5]हविज्ज भणियं सुए वि तं चेव । एएण देहमाणाइं नार[6]याईणमि[7]ज्जंति ॥ ३४४ ॥

तस्मादिन्द्रियपरिमाणे, इन्द्रियविषयपरिमाणे चैकान्तेनोच्छ्रयाङ्गुलेनेष्यमाणे दोषस्य दर्शितत्वात् पारिशेष्यात् तनुमानमेव तेनोत्सेधाङ्गुलेन भवेत्, न पुनरिन्द्रियपरिमाणं, तद्विषयपरिमाणं चेति भावः। युगलधर्मिणां रसवेदनव्यवहारस्य, चक्रवर्तिभरतनगर्यादिषु भेर्यादिशब्दश्रवणव्यवहारस्य चाभावप्रसङ्गस्य दर्शितत्वादिति । किञ्च, इन्द्रियपरिमाणं, तद्विषयपरिमाणं चोच्छ्रयाङ्गुलेन परः स्वमनीषिकयाऽर्थापत्त्यैव ब्रूते, न पुनः श्रुते साक्षादेतत् काऽप्यभिहितम् । किं पुनस्तर्हि साक्षात् तत्राभिहितम् ?, इत्याह–'भणियं सुए वि तं चेवेत्यादि' श्रुतेऽपि तदेव देहमानमेवोच्छ्रयाङ्गुलेन भणितं, नाऽन्यदिति । केन पुनर्ग्रन्थेनैतच्छ्रुतेऽभिहितम् ?, इत्याह– 'एएणेत्यादि' अर्थनिर्देश एवाऽयं, सूत्रालापकस्त्वेष द्रष्टव्यः, तद्यथा– "[8]इच्चेएणं उस्सेहंगुलप्पमाणेणं नेरइअ-तिरिक्खजोणिय-मणुस्स-देवाणं सरीरोगाहणाउ मिज्जंति"। तदस्मिन् सूत्रे शरीरावगाहनैवोच्छ्रयाङ्गुलमेयत्वेनोक्ता, न त्विन्द्रियविषयपरिमाणात्; ततस्तदात्माङ्गुलेनैव द्रष्टव्यम्, इति स्थितम् ॥ इति गाथार्थः ॥ ३४४ ॥

अथ परः सिद्धान्तस्य पूर्वापरविरोधमुद्भावयन्नाह–

---

१ बाहुल्यतश्च सर्वाण्यङ्गुलासंख्यभागम्, एवमेव पृथक्त्वतः, नवरमङ्गुलपृथक्त्वं रसनम् । २ घ. 'पुहत्त' । ३ उत्सेधप्रमाणतो मिनुयाद् देहम् । ४ तनुमानमेव तेन भवेद् भणितं सूत्रेऽपि तदेव । एतेन देहमानानि नारकादीनां मीयन्ते ॥ ३४४ ॥ ५ घ छ 'हवेज्ज' । ६ घ छ. 'रगाई' । ७ क.ग. 'मिच्छंति' । ८ इत्येतेनोत्सेधाङ्गुलप्रमाणेन नैरयिक-तिर्यग्योनिक-मनुष्य-देवानां शरीरावगाहना मीयन्ते ।

अत्रोत्तरमाह–

[1]अणुसमयमणंतरियं गहणं भणियं जओ वि[2]मुक्खो वि । जुत्तो निरंतरो च्चिय, भणइ, कह संतरो भणिओ ? ॥३६८॥

आचार्यः प्राह– हन्त ! तावद् ग्रहणमनुसमयमनन्तरितमव्यवहितं प्राक्तनसूत्रेण भणितं प्रतिपादितमिति भवतोऽपि प्रतीतम् । यत एवम्, अतो विमोक्षोऽपि निसर्गोऽपि निरन्तर एव युक्तः, गृहीतस्याऽवश्यमेवाऽनन्तरसमये निसर्गादिति । प्रेरकः पुनरपि भणति । किम् ?, इत्याह– 'कह संतरो भणिउ त्ति' इदमुक्तं भवति– अहमपि जानामि यतः सूत्रे ग्रहणं निरन्तरमुक्तं, परं यस्तत्रैव निसर्गः सान्तर उक्तः स कथं नीयते ? इति भवानपि निवेदयतु । सत्यम्, किन्तु विषयविभागोऽत्र द्रष्टव्यः ॥ ३६८ ॥

कः पुनरयम् ?, इति गुरुराह–

[3]गहणावेक्खाए तओ निरन्तरं जम्मि जाइं गहियाइं । न वि तम्मि चेव निसिरइ जह पढमे निसिरणं नत्थि ॥३६९॥

तकोऽसौ निसर्गो ग्रहणापेक्षया भाषाद्रव्योपादानापेक्षया पूर्वं पूर्वं ग्रहणमपेक्ष्येत्यर्थः, 'सान्तर उक्तः' इति शेषः । ननु समयापेक्षया तस्य नैरन्तर्येणैव प्रवृत्तेः कथं पुनर्ग्रहणापेक्षया सान्तरत्वम् ?, इत्याह– 'निरन्तरमित्यादि' यतो यस्मिन् प्रथमादिसमये यानि भाषाद्रव्याणि गृहीतानि, न तानि तस्मिन्नेव ग्रहणसमये नैरन्तर्येण निसृजति, किन्तु ग्रहणसमयादनन्तरसमये निसृजति, यथा प्रथमसमयगृहीतानां न तस्मिन्नेव समये निसर्जनं निसर्गः, किन्तु द्वितीयसमये; एवं द्वितीयसमयगृहीतानां तृतीयसमये, तृतीयसमयगृहीतानां चतुर्थसमये निसर्ग इत्यादि सर्वसमयेष्वपि भावनीयम् । तदेवं ग्रहणापेक्षया निसर्गः सान्तर एव, अगृहीतानां निसर्गायोगात् । समयापेक्षया त्वसौ निरन्तर एव, द्वितीयादिषु सर्वेष्वपि समयेषु निरन्तरं तद्भावादिति ॥ ३६९ ॥

आह– यद्येवम्, ग्रहणमपि निसर्गापेक्षया सान्तरमेवाऽस्तु । नैवम्, ग्रहणस्य स्वतन्त्रत्वात्, निसर्गस्य तु ग्रहणपरतन्त्रत्वात् । कुतः ?, इत्याह–

[4]निसिरिज्जइ नागहियं गहणंतरियं ति संतरं तेणं । न निरंतरं ति न समयं न जुगवमिह [5]होंति पज्जाया ॥३७०॥

---

१ अनुसमयमनन्तरितं ग्रहणं भणित यतो विमोक्षोऽपि । युक्तो निरन्तर एव, भणति, कथ सान्तरो भणितः ? ॥ ३६८ ॥ २ घ 'विमोक्खो' ।
३ ग्रहणापेक्षया सको निरन्तरं यस्मिन् यानि गृहीतानि । नापि तस्मिन्नेव निसृजति यथा प्रथमे निसर्जनं नास्ति ॥ ३६९ ॥
४ निसृज्यते नाऽगृहीत ग्रहणान्तरितमिति सान्तर तेन । न निरन्तरमिति न समकं न युगपदिह भवन्ति पर्यायाः ॥ ३७० ॥ ५ घ. 'हुंति' ।

तदेतत् परिहरति–

[1]सुत्ताभिप्पाओऽयं पयासणिज्जे तयं न उ पयासे । वक्खाणओ विसेसो न हि संदेहादलक्खणया ॥३४७॥

सातिरेकयोजनलक्षं नयनविषयप्रमाणं ब्रुवतः सूत्रस्याऽयमभिप्राय इयं विवक्षा यदुत– स्वयं तेजोरूपप्रकाशरहितत्वात् परमकाशनीयं यद् वस्तु पर्वत-गर्तादिकं तत्रैव तत् सातिरेकयोजनलक्षं नयनविषयप्रमाणतया द्रष्टव्यम्, न तु स्वयमेव तेजोयुक्तत्वेन प्रकाशे चन्द्राऽर्कादिके प्रकाशके वस्तुनि । एतदुक्तं भवति– कश्चिद् निर्मलचक्षुर्जीवः सातिरेकयोजनलक्षे स्थितं पर्वतादिकं वीक्षते, इति प्रकाशनीये पर्वत-गर्तादिके वस्तुनि नयनस्य तद्विषयप्रमाणमुक्तम्, प्रकाशके त्वादित्यादिकेऽनियमः । कुतः पुनरयं सूत्राभिप्रायो गम्यते ?, इत्याह– व्याख्यानतो विशेषप्रतिपत्तिः कर्तव्या, न तु संदेहादुभयपक्षोक्तिलक्षणात् सूत्रस्य सर्वज्ञप्रणीतस्याऽलक्षणता– असमञ्जसाभिधायिता व्यवस्थापनीया- व्याख्यानात् सूत्रं विषयविभागेन धरणीयं, न तूभयपक्षोक्तिमात्रभ्रमितैस्तद्विरोध उद्भावनीय इत्यर्थः ।

उक्तं च–

" [2]जं जह सुत्ते भणियं तहेव जइ तं, वियालणा नत्थि । किं कालियाणुओगो दिट्ठो दिट्ठिप्पहाणेहिं ?" ॥ १ ॥

इति गाथार्थः ॥ ३४७ ॥

तदेवमप्राप्तकारिताविचारप्रक्रमेण नयनस्य विषयप्रमाणमुक्तम्; अथ प्रसङ्गतः शेषेन्द्रियाणामपि तदाह–

[3]बारसहिंतो सोत्तं सेसाइं नवहिं जोयणेहिंतो । गिण्हंति पत्तमत्थं एत्तो परओ न गिण्हंति ॥ ३४८ ॥

मेघगर्जितादिशब्दमुत्कृष्टतो द्वादशयोजनेभ्यः समायातं गृह्णाति श्रोत्रम् । उक्तशेषाणि त्विन्द्रियाणि घ्राण-रसन-स्पर्शनलक्षणानि गन्ध-रस-स्पर्शलक्षणमर्थमुत्कर्षतो नवयोजनेभ्यः प्राप्तं गृह्णन्ति, अतः परतोऽप्यायातं शब्दादिकमेतानि न गृह्णन्ति । ननु मेघगर्जितादिविषयः शब्दः प्रथमप्रावृषि, प्रथममेघवृष्टौ सत्यां मृत्तिकादिगन्धश्च दूरादप्यायातो गृह्यमाणः समनुभूयते; रस-स्पर्शौ तु कथम् ?, इति चेत् । उच्यते– दूरादागतानां गन्धद्रव्याणां रसोऽपि तावत् कश्चिद् भवत्येव । स च तेषां जिह्वासंबन्धे सति यथासंभवं कदाचित्

1 सूत्राभिप्रायोऽयं प्रकाशनीये तद् न तु प्रकाशे । व्याख्यानतो विशेषो नहि संदेहादलक्षणता ॥ ३४७ ॥
2 यद् यथा सूत्रे भणितं तथैव यदि तत्, विचारणा नास्ति । किं कालिका(सिद्धान्ता)ऽनुयोग आदिष्टो दृष्टिप्रधानैः ? ॥ १ ॥
3 द्वादशभ्यः श्रोत्रं शेषाणि नवभ्यो योजनेभ्यः । गृह्णन्ति प्राप्तमर्थमेतस्मात् परतो न गृह्णन्ति ॥ ३४८ ॥

द्विसमयमानत्वात्; ग्रहणमात्रं तु केवलं 'भाष्यत इति भाषा' इति व्युत्पत्त्यर्थस्यैवाऽघटनाद् भाषा न भवत्येवेति । यदि चेह भाषा पृथग् न गृहीता स्यात्, तदोभयस्याऽपि कश्चिद् भाषात्वं प्रतिपद्येत, ग्रहणेऽपि योग्यतया भाषात्वसद्भावात्, ततश्च "[1]भासिज्जमाणा भासा" इत्यागमविरोधः स्यात् । तर्हि मोक्षग्रहणमपनीय तत्स्थाने भाषैव चोपादीयताम्, भाषा-मोक्षयोरेकार्थत्वादिति चेत् । सत्यम्, किन्तु 'निसर्गस्य कालमानं नोक्तम्' इति मन्दधीः प्रतिपद्येत, इति तदनुग्रहार्थमिह मोक्ष-भाषयोः पृथग् ग्रहणम् । इत्यलं विस्तरेण । इति ग्रहणं, मोक्षो, भाषा, इत्येतानि त्रीणि, तथा ग्रहण-निसर्गोभयं च सर्वाण्यप्युत्कृष्टतः प्रत्येकमन्तर्मुहूर्तमात्रं कालं भवन्ति, परतो योगान्तरमुपगच्छति, म्रियते वेति भावः । एतेषां च ग्रहणादीनामन्तर्मुहूर्तस्य प्रयत्नभेदेन भेदो भवति, इति महाप्रयत्नस्य तदेवाऽन्तर्मुहूर्तं लघु भवति, अल्पप्रयत्नस्य तु तदेव बृहत्प्रमाणं भवतीति ॥ ३७१ ॥ ३७२ ॥

तदत्र प्रथमसमये यत् केवलं ग्रहणमेव, पर्यन्तवर्तिनि तु समये यः केवलो निसर्गः पूर्वमुक्तः, स भवतु; मध्यमसमयेषु तु यौ ग्रहण-निसर्गौ, तयोरयुक्तत्वमुत्पश्यन्नाह परः–

[3]गेहण-विसग्गपयत्ता परोप्परविरोहिणो कहं समए ? । समए दो उवओगा न होज्ज, किरियाण को दोसो ? ॥३७३॥

निरन्तरग्रहणे, विसर्गे चेष्यमाणे द्वितीयसमयादारभ्योपान्तसमयं यावद् ग्रहण-विसर्गप्रयत्नौ प्रतिसमयं युगपदापततः । एतौ च परस्परविरोधिनौ कथमेकस्मिन् समये युक्तौ ? नैव युक्तावित्यर्थः ॥ अत्रोच्यते– ग्रहण-विसर्गयोर्विरोध एवाऽत्र तावदसिद्धः । यदि हि येषामेव द्रव्याणां ग्रहणं, तेषामेव तस्मिन्नेव ग्रहणसमये निसर्ग इष्येत, तदा स्यादसौ, एतच्च नास्ति, प्राक्समयगृहीतानामेवाऽग्रेतनसमये निसर्गात्, तत्र चाऽपूर्वाणामेव ग्रहणात् । अथाऽविरोध्यपि युगपदेकत्र समये उपयोगद्वयवत् क्रियाद्वयं नेष्यते, तदाह– 'समये दो इत्यादि' एकस्मिन् समये द्वावुपयोगौ न भवेतामिति युक्तम्, "[4]जुगवं दो नत्थि उवओगा" इति वचनात् तयोरागमे निषेधात् । क्रियाणां बह्वीनामप्येकस्मिन् समये को दोषः ? न कश्चिदित्यर्थः, तथाहि– आगमे "[5]भंगियसुयं गणंतो वट्टइ तिविहे वि ज्झाणम्मि" इत्यादिवचनाद् वाङ्-मनः-कायक्रियाणामेकत्र समये प्रवृत्तिरभ्युपगतैव । तथा, अङ्गुल्यादिसंयोग-विभागक्रिययोः, संघातपरिसाटक्रिययोः, उत्पाद-व्ययक्रिययोश्चैकत्र समयेऽनेकस्थानेषु तत्राऽनुज्ञा विहितैव, इति को दोषः ? । तथा, वामहस्तेन घण्टिकां चलयति, दक्षि-

१ भाष्यमाणा भाषा । २ श्रीभगवतीसूत्रम् ।
३ ग्रहण-विसर्गप्रयत्नौ परस्परविरोधिनौ कथं समये ? । समये द्वावुपयोगौ न भवेतां, क्रियाणां को दोषः ? ॥ ३७३ ॥
४ युगपद् द्वौ न स्त उपयोगौ । ५ भङ्गिकश्रुतं गणयन् वर्तते त्रिविधेऽपि ध्याने ।

समस्तवस्तुविषयत्वेन तावद् नैते पुद्गलमात्रनिबन्धनियते, अथ च दृश्यते श्रोत्रादीन्द्रियप्रभवयोस्तयोर्द्वादशयोजनादिकं क्षेत्रतो विषयप्रमाणमिति । तदेतदसमीक्षिताभिधानमेव, यत इन्द्रियप्रभवयोरेव तयोरिदं विषयपरिमाणम्, इन्द्रियाणि च पुद्गलमात्रनिबन्धनियतान्येव, इति कुतो व्यभिचारः ?, मनःप्रभवयोस्तु तयोरस्ति पुद्गलमात्रनिबन्धाभावः, केवलं तयोः क्षेत्रतो विषयपरिमाणमपि नास्ति, अतः कुतोऽनैकान्तिकता ? इत्यलं विस्तरेण ॥ इति गाथात्रयार्थः ॥ ३५० ॥

आह– ननु 'पुट्ठं सुणेइ सद्दं' इत्युक्तं भवद्भिः, तत्र च किं शब्दप्रयोगोत्सृष्टान्येव केवलानि शब्दद्रव्याणि शृणोति, उताऽन्यान्येव तद्वासितानि, आहोस्विद् मिश्राणि ? इति । अत्रोच्यते– केवलानि तावद् न शृणोति, वासकस्वभावत्वाच्छब्दद्रव्याणाम्, तद्योग्यद्रव्याकुलत्वाच्च लोकस्य, मिश्राणि तु श्रूयेरन्, वासितानि वाऽन्यानि, यत आह—

भासासमसेढीओ सद्दं जं सुणइ मीसयं सुणइ । वीसेढी पुण सद्दं सुणेइ नियमा पराघाए ॥ ३५१ ॥

भाष्यत इति भाषा, वक्त्रा शब्दतयोत्सृज्यमाना द्रव्यसंहतिरित्यर्थः, तस्याः समाः प्राञ्जलाः श्रेणय आकाशप्रदेशपङ्क्तयो भाषासमश्रेणयः, समग्रहणं विश्रेणिव्यवच्छेदार्थं, भाषासमश्रेणीषु इतो गतः स्थित इत्यनर्थान्तरं, भाषासमश्रेणीतः । इदमुक्तं भवति– भाषकस्य, अन्यस्य वा भेर्यादेः समश्रेणिव्यवस्थितः श्रोता यं शब्दं, पुरुषाश्च भेर्यादिसंबन्धिनं ध्वनिं शृणोति, तं मिश्रकं शृणोतीत्यवगन्तव्यम्, भाषकादुत्सृष्टशब्दद्रव्याणि, तद्वासिताऽपान्तरालस्थद्रव्याणि च, इत्येवं मिश्रं शब्दद्रव्यराशिं शृणोति, न तु वासकमेव, वास्यमेव वा केवलमित्यर्थः । 'विसेढी पुणेत्यादि' 'मञ्चाः क्रोशन्ति' इतिन्यायाद् विश्रेणिव्यवस्थितः श्रोताऽपि विश्रेणिरुच्यते, स विश्रेणिः पुनः श्रोता शब्दं नियमाद् नियमेन पराघाते वासनायां सत्यां शृणोति । इदमुक्तं भवति– यानि भाषकोत्सृष्टानि[4], भेर्यादिशब्दद्रव्याणि वा तैः पराघाते वासनाविशेषे सति यानि वासितानि समुत्पन्नशब्दपरिणामानि द्रव्याणि तान्येव विश्रेणिस्थः शृणोति, न तु भाषकाद्युत्सृष्टानि, तेषामनुश्रेणिगामित्वेन विदिग्गमनाऽसंभवात् । न च कुड्यादिप्रतिघातस्तेषां विदिग्गतिनिमित्तं संभवति, लेष्ट्वादिबादरद्रव्याणामेव तत्संभवात्, एषां च सूक्ष्मत्वात् । न च वक्तव्यम्– द्वितीयादिसमयेषु तेषां स्वयमपि विदिक्षु गमनसंभवात् तत्स्थस्याऽपि मिश्रशब्दश्रवणसंभव इति; निसर्गसमयानन्तरं समयान्तरेषु तेषां भाषापरिणामेनाऽनवस्थानात् "भाष्यमाणैव भाषा, भाषासमयानन्तरं भाषाऽभाषैव" इतिवचनात् । यदपि 'चउहिं समयेहिं लोगो भासाए निरंतरं तु होइ फुडो' इति वक्ष्यति, तत्रापि द्वितीयादि-

१ गाथा ३३६ । २ घ 'अत'। ३ भाषासमश्रेणीत. शब्द यं शृणोति मिश्रकं शृणोति । विश्रेणिः पुनः शब्दं शृणोति नियमात्पराघाते ॥ ३५१ ॥
४ घ छ. 'नि श' । ५ गाथा ३७५।

अथाऽत्र विषमपदव्याख्यानाय भाष्यम्—

[1]सच्चा हिया सयामिह संतो मुणओ गुणा पयत्था वा । तव्विवरीआ मोसा मीसा जा तदुभयसहावा॥३७६॥

अणहिगया जा तीसु वि सद्दो च्चिय केवलो असच्चमुसा । एया सभेयलक्खणसोदाहरणा जहा सुत्ते ॥ ३७७ ॥

इह सद्भ्यो हिताऽऽराधिका यथावस्थितवस्तुप्रत्यायनफला च सत्या भाषा प्रोच्यते । तत्र के सन्त उच्यन्ते येषां सा हिता ?, इत्याह— सन्त इह मुनयः साधव उच्यन्ते, तेभ्यो हिता— इह-परलोकाराधकत्वेन मुक्तिप्रापिकेत्यर्थः, अथवा सन्तो मूलोत्तरगुणरूपा गुणाः, पदार्था वा जीवादयः प्रोच्यन्ते, तेभ्योऽसौ हिता— अविपरीतयथावस्थितस्वरूपप्ररूपणेन सत्या । विपरीतस्वरूपा तु मृषाभाषाऽभिधीयते । मिश्रा तु सत्यामृषा । का ?, इत्याह— या तदुभयस्वभावा सत्या-मृषात्मिकेति । या पुनः सत्या-मृषो-भयात्मकामुक्तलक्षणासु तिसृष्वपि भाषास्वनधिकृता तल्लक्षणानन्तर्भाविनी, आमन्त्रणाज्ञापनादिविषयो व्यवहारपतितः शब्द एव केवलः, साऽसत्यमृषा चतुर्थी भाषा । एताश्चतस्रोऽपि भाषाः सभेदाः सलक्षणाः सोदाहरणाश्च यथा दशवैकालिकसूत्र–निर्युक्त्यादिकसूत्रे आगमे भणितास्तथा तत्रैव बोद्धव्याः; इह तु भाषाद्रव्यग्रहण-निसर्गादिविचारस्यैव प्रस्तुतत्वात् ॥ इति गाथाद्वयार्थः ॥ ३७६ ॥ ३७७ ॥

औदारिकादिशरीरवान् भाषां गृह्णाति, मुञ्चति चेत्युक्तम् । सा पुनर्मुक्ता सती कियत् क्षेत्रं व्याप्नोति ? इति वक्तव्यम् । उच्यते— समस्तमपि लोकम् । आह— यद्येवम्—

[2]केईहिं समएहिं लोगो भासाए निरंतरं तु होइ फुडो । लोगस्स य कइभाए कइभाओ होइ भासाए ॥३७८॥

अथवा द्वादशभ्यो योजनेभ्यः परतो न शृणोति शब्दं मन्दपरिणामत्वाद् द्रव्याणामित्युक्तम् । तत्र किं परतोऽपि शब्दद्रव्याणामागतिरस्ति ? यथा च विषयाभ्यन्तरे नैरन्तर्येण तद्वासनासामर्थ्यम्, एवं बहिरप्यस्ति, उत न ? इति । उच्यते— अस्ति केषांचित् कृत्स्नलोकव्याप्तिः । आह— यद्येवम्, 'कईहिं०' । इत्येवं संबन्धद्वयसमायातेयं गाथा व्याख्यायते— लोक्यत इति लोकश्च-

1 सत्या हिता सद्भ्यः, इह सन्तो मुनयो गुणाः पदार्थाश्च । तद्विपरीता मृषा, मिश्रा या तदुभयस्वभावा ॥३७६॥ अनधिकृता या तिसृष्वपि शब्द एव केवलोऽसत्यमृषा । एषा सभेद-लक्षण-सोदाहरणा यथा सूत्रे ॥ ३७७ ॥

2 कतिभिः समयैर्लोको भाषया निरन्तरं तु भवति स्पृष्टः । लोकस्य च कतिभागे कतिभागो भवति भाषायाः ? ॥ ३७८ ॥

[1]अणुसेढीगमणाओ पडिघायाभावओऽनिमित्ताओ । समयंतराणवत्थाणओ य मुक्काइं न सुणेइ ॥ ३५४ ॥

तेषामनुश्रेणिगमनात् । अनुश्रेणिगमने प्रवृत्तानामपि प्रतिघाताद् विश्रेणिगमनं भविष्यतीति चेत्, इत्याह– प्रतिघातस्य स्खलनस्याऽभावात् । एतदपि कुतः ?, इत्याह– अनिमित्तात् कुड्यादेस्तन्निमित्तस्याऽसंभवात्, बादरद्रव्याणामेव तत्संभवात्, [2]एषां च सूक्ष्मत्वादिति भावः । न च वक्तव्यं– द्वितीयादिसमयेषु तेषां स्वयमपि विदिक्षु गमनात् तत्स्थस्याऽपि मिश्रशब्दश्रवणसंभव इति । कुतः ?, इत्याह– 'समयंतरेत्यादि' निसर्गसमयानन्तरं द्वितीयादौ समयान्तरे श्रवणसंस्कारजनकशक्तिसंपन्नतया तेषां भाषकाद्युत्सृष्टद्रव्याणामनवस्थानात्, इति प्रागुक्तमेव । इति मुक्तानि भाषकाद्युत्सृष्टानि द्रव्याणि विदिग्व्यवस्थितो न शृणोति ॥ इति गाथात्रयार्थः ॥ ३५४ ॥

आह– केन पुनर्योगेनाऽमीषां वाग्द्रव्याणामादानम् ?, उत्सर्गो वा कथम् ?, इत्याह–

[3]गिण्हइ य काइएणं निसिरइ तह वाइएण जोएणं । एगंतरं च गिण्हइ निसिरइ एगंतरं चेव ॥ ३५५ ॥

कायेन निर्वृत्तः कायिकः, योजनं योगो व्यापारः, कर्म, क्रिया, इत्यनर्थान्तरम् । तत्र सर्व एव वक्ता कायिकेन योगेन शब्दद्रव्याणि गृह्णाति । चशब्दस्त्वेवकारार्थः, तस्य च व्यवहितसंबन्धात् कायिकेनैवेति द्रष्टव्यम् । निसृजति, उत्सृजति, मुञ्चति, इति पर्यायाः । तथेति ग्रहणानन्तरमित्यर्थः । उक्तिर्वाक् तया निर्वृत्तो वाचिकस्तेन वाचिकेन योगेन निसृजति । किमनुसमयमेव गृह्णाति, निसृजति वा; उताऽन्यथा ?, इत्याशङ्क्याह– एकान्तरमेव गृह्णाति, निसृजत्येकान्तरं चैव । अयमत्र भावार्थः– प्रतिसमयं गृह्णाति, मुञ्चति च । कथम् ?, यथा ग्रामादन्यो ग्रामो ग्रामान्तरं, पुरुषाद् वाऽन्यः पुरुषो निरन्तरोऽपि सन् पुरुषान्तरम्, एवमेकैकस्मात् समयादेकैक एवैकान्तरोऽनन्तरसमय एवेत्यर्थः ॥ इति निर्युक्तिगाथासंक्षेपार्थः, विस्तरार्थस्तु भाष्यादवसेयः ॥ ३५५ ॥

तच्चेदम्—

[4]गिण्हिज्ज[5] काइएणं किह निसिरइ वाइएण जोएणं ? । को वाऽयं जोगो किं वाया कायसंरंभो ? ॥ ३५६ ॥

वाया न जीवजोगो पोग्गलपरिणामओ रसाइ व्व । न य ताए निसिरिज्जइ[6] स च्चिय निसिरिज्जए[7] जम्हा ॥ ३५७ ॥

---

1 अनुश्रेणिगमनात् प्रतिघाताभावतोऽनिमित्तात् । समयान्तराऽनवस्थानतश्च मुक्तानि न शृणोति ॥ ३५४ ॥ 2 क.ग. 'तेषां' ।

3 गृह्णाति च कायिकेन निसृजति तथा वाचिकेन योगेन । एकान्तरं च गृह्णाति निसृजत्येकान्तरमेव ॥ ३५५ ॥

4 गृह्णीयात् कायिकेन कथं निसृजति वाचिकेन योगेन ? । को वाऽयं योगः किं वाक् कायसंरम्भः ? ॥ ३५६ ॥ 5 घ. 'गेण्हेज्ज' ।

वाग् न जीवयोगः पुद्गलपरिणामतो रसादिरिव । न च तया निसृज्यते सैव निसृज्यते यस्मात् ॥ ३५७ ॥ 6 क.ग 'एण' । 7 क.ग. 'सिरज्ज' ।

द्रव्यस्कन्धाश्रयभूतक्षेत्रविशेषरूपाणां वर्गणा समुदायस्ता अवगाहनावर्गणाः खल्वसंख्येया गत्वा ततो मन्दप्रयत्नवक्तृनिसृष्टान्यभिन्नानि भाषाद्रव्याणि भिद्यन्ते खण्डीभवन्ति। संख्येयानि च योजनानि गत्वा ध्वंसन्ते शब्दपरिणामं विजहतीत्यर्थः। उक्तं च प्रज्ञापनायां भाषापदे– "जाइं अभिन्नाइं निसिरइ, ताइं असंखेज्जाओ ओगाहणाओ गत्ता भेयमावज्जंति, संखिज्जाइं जोयणाइं गत्ता विद्धंसमागच्छंति" । यानि तु महाप्रयत्नो वक्ता प्रथमत एव भिन्नानि निसृजति तानि सूक्ष्मत्वाद् बहुत्वाच्चाऽनन्तगुणवृद्ध्या वर्धमानानि षट्सु दिक्षु लोकान्तमाप्नुवन्ति; शेषं तु तत्पराघातवासनाविशेषाद् वासितया भाषयोत्पन्नभाषापरिणामद्रव्यसंहतिरूपया सर्वं लोकं निरन्तरमापूरयन्ति "वक्ष्यमाणन्यायेन त्र्यादिभिः समयैः" इति वाक्यशेषः । उक्तं च– "जाइं भिन्नाइं निसिरइ ताइं अणंतगुणपरिवड्ढीए परिवड्ढमाणाइं लोयंतं फुसंति" ॥३८१ ॥ ३८२ ॥

अथ यदुक्तम्– "चउहिं समयेहिं लोगो" इत्यादि। तत्राह–

जैइणसमुग्घायगईए केई भासंति चउहिं समएहिं। पूरइ सयलो लोगो अण्णे उण तीहिं समएहिं ॥३८३॥

रागादिजेतृत्वाज्जिनः केवली तस्याऽयं जैनः स चासौ समुद्घातश्च जैनसमुद्घातः केवलिसमुद्घात इत्यर्थः, तस्य गतिः प्रवृत्तिः क्रम इति यावत्, तया जैनसमुद्घातगत्या

"दण्ड प्रथमे समये कपाटमथ चोत्तरे तथा समये। मन्थानमथ तृतीये लोकव्यापी चतुर्थे च" ॥ १ ॥

इत्यादिग्रन्थेनोक्तेन केवलिसमुद्घातक्रमेण चतुर्भिः समयैः सर्वोऽपि लोको भाषाद्रव्यैरापूर्यत इति केचिद् भाषन्ते। अयं चाऽनादेश एव, पुरस्ताद् निराकरिष्यमाणत्वादिति। अन्ये पुनस्त्रिभिः समयैः सर्वोऽपि लोकः पूर्यत इति ब्रुवत इति ॥ ३८३ ॥

किं वाङ्मात्रेण ?, न, इत्याह–

पैढमसमए च्चिय जओ मुक्काइं जंति छद्दिसिं ताइं। बितियसमयम्मि ते च्चिय छ दंडा होंति छ म्मंथा॥३८४॥

---

१ यान्यभिन्नानि निसृजति, तान्यसंख्येया अवगाहना गत्वा भेदमापद्यन्ते, सङ्ख्येयानि योजनानि गत्वा विध्वंसमागच्छन्ति।

२ यानि भिन्नानि निसृजति तान्यनन्तगुणपरिवृद्ध्या परिवर्धमानानि लोकान्तं स्पृशन्ति। ३ गाथा ३७९।

४ जैनसमुद्घातगत्या केचिद् भाषन्ते चतुर्भिः समयैः। पूर्यते सकलो लोकोऽन्ये पुनस्त्रिभिः समयैः ॥ ३८३ ॥

५ प्रथमसमय एव यतो मुक्तानि यान्ति षड्दिक्षु तानि। द्वितीयसमये त एव षड् दण्डा भवन्ति षड् मन्थान ॥ ३८४ ॥

स मानसिकः, इत्येवं तनुयोग एवैक उपाधिभेदात् त्रिधा विभक्त इति; एतावन्मात्रभेदेन त्रयोऽप्यमी योगा व्यवह्रियन्ते । परमार्थतस्तु एक एव सर्वत्र कायिको योग इति ॥ ३५९ ॥

तथाच प्रमाणयन्ति–

[1]तणुजोगो च्चिय मण-वइजोगा काएण दव्वगहणाओ। आणापाणं[2]व्व, न चे, तओ वि जोगंतरं होज्जा ॥ ३६० ॥

तनुयोग एव मनो-वाग्योगौ– तदन्तर्गतावेवैतावित्यर्थः, इयं प्रतिज्ञा; कायेनैव तद्द्रव्यग्रहणादिति हेतुः, प्राणा-ऽपानवदिति दृष्टान्तः; यथा कायेन द्रव्यग्रहणात् प्राणा-ऽपानव्यापारः कायिकयोगाद् न भिद्यते, एवं मनो-वाग्योगावपीति भावः । न चेदेवं– न चेत् त्वया प्राणा-ऽपानव्यापारस्तनुयोगतया-ऽभ्युपगम्यते, तर्हि तकोऽपि सोऽपि प्राणा-ऽपानव्यापारो योगान्तरं स्यात्, ततो योगचतुष्टयप्रसङ्गः, अनिष्टं चैतत्, तस्मात् कायिकयोग एवाऽयमिति ॥ ३६० ॥

अत्र परः प्राह–

[3]तुल्ले तणुजोगत्ते कीस व जोगंतरं तओ न कओ ?। मण-वइजोगा व कया, भण्णइ ववहारसिद्धत्थं ॥३६१॥

ननु त्वदुक्तयुक्त्यैव सर्वेषां तुल्ये तनुयोगत्वे मनो-वाग्योगवत् किमिति तकोऽसौ प्राणा-ऽपानव्यापारः कायिकयोगाद् योगान्तरं न कृतः, किमिति चतुर्थो योग न कृतः ? इत्यर्थः । अथ नैवं क्रियते, तर्हि तुल्येऽपि तनुयोगत्वे मनो-वाग्योगौ काययोगात् किमिति पृथक् कृतौ ?। तस्मात् तनुयोगत्वस्य सर्वत्र तुल्यत्वादेक एव काययोगः क्रियताम्, उपाधिभेदेन तु चत्वारो वा योगाः क्रियन्ताम्; अन्यथा पक्षपातमात्रमेव स्यात्, न युक्तिः, इति भावः ॥ अत्रोत्तरमाह– 'भण्णईत्यादि' भण्यतेऽत्रोत्तरम् । किं तत् ?, इत्याह– व्यवहारस्य लोक-लोकोत्तररूढस्य सिद्ध्यर्थं प्रसिद्धिनिमित्तं मनो-वाग्योगावेव पृथक् कृतौ, न प्राणा-ऽपानयोग इति ॥ ३६१ ॥

व्यवहारोऽपि किमितीत्थं प्रवृत्तः ?, इत्याह–

[4]कायकिरियाइरित्तं [5]नाणा-पाणफलं जह वईए । दीसइ मणसो य फुडं तणुजोगब्भंतरो तो सो ॥ ३६२ ॥

१ तनुयोग एव मनो-वाग्योगौ कायेन द्रव्यग्रहणात् । आना-ऽपानाविव, न चेत्, सकोऽपि योगान्तरं भवेत् ॥ ३६०॥ २ झ 'णु व्व' क.ग. 'णं व' ।
३ तुल्ये तनुयोगत्वे कस्माद् वा योगान्तरं सको न कृतः ? । मनो-वाग्योगौ वा कृतौ, भण्यते व्यवहारसिद्ध्यर्थम् ॥ ३६१ ॥
४ कायक्रियातिरिक्तं नाऽऽना-ऽपानफलं यथा वाचः । दृश्यते मनसश्च स्फुटं तनुयोगाभ्यन्तरस्ततः सः ॥ ३६२ ॥ ५ क. 'णाणा' ।

'ति-पंचगहणमिति' आद्यन्तवर्तिनां त्रयाणां पञ्चानां च समयानां ग्रहणमिह निर्युक्तिकृता विहितमेव द्रष्टव्यम् । क सति?, इत्याह– चतुःसमयरूपस्य मध्यस्य ग्रहणे कृते सति । ननु किमन्यत्रापि मध्यग्रहणे सत्याद्यन्तग्रहणं कापि दृष्टम् ?, इत्याह– 'तुलाईत्यादि' यथा तुलादीनाम्, आदिशब्दाद् नाराच-यष्ट्यादीनां मध्यस्य ग्रहणे कृते पर्यन्तयोराद्यन्तलक्षणयोर्ग्रहणं पर्यन्तग्रहणं कृतमेव भवति, एवमिहाऽपीति । नन्वयं न्यायः काऽप्यागमे दृश्यते, येनैवमुच्यते ?, इत्याह– चित्रा च भगवतः सूत्रस्य गतिः प्रवृत्तिर्दृश्यते ॥ ३८७ ॥

तथाहि—

[1]कत्थइ देसग्गहणं कत्थइ घेप्पंति निरवसेसाइं । उक्कम-कमजुत्ताइं कारणवसओ निउत्ताइं ॥ ३८८ ॥

कापि सूत्रे देशस्यैकपक्षलक्षणस्य ग्रहणं, यथाऽत्रैव चतुःसमयलक्षणस्य । कचित् सूत्रे निरवशेषाण्यपि पक्षान्तराणि गृह्यन्ते । अपरं च, कानिचित् सूत्राणि कुतोऽपि कारणवशादुत्क्रम-युक्तानि नियुक्तानि निबद्धानि दृश्यन्ते, कानिचित्तु क्रमयुक्तानीति । एवं विचित्रा सूत्रगतिः ॥ ३८८ ॥

अथ प्रस्तुतार्थस्यैव शास्त्रान्तरसंवादकारिणं दृष्टान्तमाह—

[2]चउसमयविग्गहे सति महल्लबंधम्मि तिसमओ जह वा । मोत्तुं ति-पंचसमये तह चउसमओ इह निबद्धो ॥३८९॥

यथा वा भगवत्यामष्टमशते महाबन्धादेशके सत्यपि चतुःसामयिके विग्रहे त्रिसामायिकोऽयमुपनिबद्धः, तथाऽत्रापि त्रीन्, पञ्च च समयान् मुक्त्वा चतुःसामयिक एव लोकव्याप्तिपक्ष उपनिबद्ध इत्यदोष इति ॥ ३८९ ॥

यदुक्तम्– '[3]लोगस्स य कइभाए कइभाओ होइ भासाए' एतद्व्याचिख्यासुराह—

[4]होइ असंखेज्जइमे भागे लोगस्स पढम-बिईएसु । भासाअसंखभागो भयणा सेसेसु समयेसु ॥ ३९० ॥

चतुर्दशरज्जूच्छ्रितस्य लोकस्याऽसंख्याततमे भागे भाषाया अपि समस्तलोकव्यापिन्या असंख्याततम एव भागो भवति । कदा ?, इत्याह— प्रथम-द्वितीयसमययोः । इदमुक्तं भवति– त्रिसमयव्याप्तौ, चतुःसमयव्याप्तौ, पञ्चसमयव्याप्तौ च प्रथमसमय-

१ कुत्रापि देशग्रहणं कुत्रापि गृह्यन्ते निरवशेषाणि । उत्क्रम-क्रमयुक्तानि कारणवशतो नियुक्तानि ॥ ३८८ ॥
२ चतुःसमयविग्रहे सति महाबन्धे त्रिसमयो यथा वा । मोक्तुं त्रि-पञ्चसमयांस्तथा चतु समय इह निबद्धो ॥ ३८९ ॥ ३ गाथा ३७८ ।
४ भवत्यसङ्ख्येयतमे भागे लोकस्य प्रथम-द्वितीययो. । भाषाऽसंख्यभागो भजना शेषेषु समयेषु ॥ ३९० ॥

अथ 'एंगंतरं च गिण्हइ' इत्यादि व्याचिख्यासुराह–

[2]जह गामाओ गामो गामंतरमेवमेग एगाओ । एगंतरं ति भण्णइ समयाओणंतरो समओ ॥ ३६५ ॥

यथैकस्माद् ग्रामादन्यो ग्रामोऽनन्तरितोऽपि लोकरूढ्या ग्रामान्तरमुच्यते, पुरुषाद् वाऽन्यः पुरुषोऽनन्तरोऽपि पुरुषान्तरमभिधीयते; एवमिहापि एकस्मात् समयाद् योऽयमन्यः समयः सोऽयमनन्तरोऽपि सन्नेकान्तरमित्यभिधीयते । ततः किमुक्तं भवति ?, इत्याह– एकस्मात् समयादनन्तरः समय एकान्तरमिति, एवं चाऽनुसमय एव गृह्णाति, मुञ्चति चेति पर्यवसितं भवति ॥ ३६५ ॥

अन्ये तु 'एकान्तरम्' इत्येकैकेन समयेनाऽन्तरितं ग्रहणं, निसर्गं चेच्छन्ति, इति दर्शयति–

[3]केई एगंतरियं मण्णन्ते गंतरं ति, तेसिं च । विच्छिन्नावलिरूवो होइ धणी, सुयविरोहो य ॥ ३६६ ॥

इह केचिद् व्याख्यातारो मन्यन्ते– ग्रहणं, निसर्जनं चैकैकेन समयेनाऽन्तरितमेकान्तरमुच्यते । एतच्चाऽयुक्तम्, यतस्तेषामेवं व्याख्यातॄणामन्तरान्तरविच्छिन्नरत्नावलीरूपो ध्वनिः प्राप्नोति, अन्तरान्तरग्रहणसमयेषु सर्वेष्वप्यश्रवणात् । तथा, श्रुतविरोधश्च, यत उक्तं श्रुते "[4]अणुसमयमविरहिअं निरंतरं गिण्हइ" इति; तथाहि– इदं सूत्रं प्रतिसमयग्रहणप्रतिपादकत्वात् प्रतिसमयनिसर्गप्रतिपादकमपि द्रष्टव्यम्, गृहीतस्य द्वितीयसमयेऽवश्यं निसर्गादिति ॥ ३६६ ॥

[5]अत्र परः प्राह–

[6]आह, सुए च्चिय निसिरइ संतरियं न उ निरंतरं भणियं । एगेण जओ गिण्हइ समयेणेगेण सो मुयइ ॥३६७॥

परः प्राह– ननु यथा स्वपक्षसमर्थकं सूत्रं त्वया दर्शितं, तथा श्रुत एवाऽस्मत्पक्षसमर्थकमपि तद् भणितमेव । किं तत् ?, इत्याह– 'निसिरईत्यादि' इदं प्रज्ञापनोक्तसूत्रं गाथायामुपनिबद्धं, तच्चेदम्– "[7]संतरं निसिरइ, नो निरंतरं निसिरइ; एगेणं समयेणं गिण्हइ, एगेणं समयेणं निसिरइ" इत्यादि । तदनेन सूत्रेण निसर्गस्य सान्तरस्योक्तत्वाद् मद्व्याख्यानमुपपन्नमेव । इति परस्याभिप्रायः ॥ ३६७ ॥

---

१ गाथा ३५५ । २ यथा ग्रामाद् ग्रामो ग्रामान्तरमेवमेक एकस्मात् । एकान्तरमिति भण्यते समयादनन्तर. समय ॥ ३६५ ॥

३ केचिदेकान्तरितं मन्यन्त एकान्तरमिति, तेषां च । विच्छिन्नावलिरूपो भवति ध्वनिः, श्रुतविरोधश्च ॥ ३६६ ॥

४ अनुसमयमविरहितं निरन्तरं गृह्णाति । ५ क ग 'अप' ।

६ आह, श्रुत एव निसृजति सान्तरितं न तु निरन्तरं भणितम् । एकेन यतो गृह्णाति समयेनैकेन स मुञ्चति ॥ ३६७ ॥

७ सान्तरं निसृजति, नो निरन्तरं निसृजति; एकेन समयेन गृह्णाति, एकेन समयेन निसृजति ।

लोकव्याप्तिः। पञ्चसामयिक्यां तु व्याप्तौ चतुर्थसमये लोकसंख्येयभागे भाषासंख्येयभागः, तस्यां तस्य मथिसमयत्वात्, तत्र च संख्येयभागवर्तित्वस्य प्रागेव भावितत्वादिति। पञ्चमसमये तु पञ्चसामयिक्यां व्याप्तौ [1]मन्थान्तरालपूरणात् समस्तलोकव्याप्तिरिति ॥

एवं तृतीय-चतुर्थ-पञ्चमसमयेषु भाविता भजना, तद्भावने च व्याख्यातं 'भयणा सेसेसु समएसु' इति। एतच्च महाप्रयत्नवक्तृनिसृष्टद्रव्यापेक्षयैवोक्तम्, मन्दप्रयत्नवक्तृनिसृष्टानि तु लोकासंख्येयभाग एव वर्तन्ते, दण्डादिक्रमेण तेषां लोकपूरणाऽसंभवादिति॥२९०॥

अथ यदुक्तम्– '[2]लोगस्स य चरिमंते चरिमंतो होइ भासाए'। तदेतद् भावयन्नाह—

[3]आपूरियम्मि लोगे दोण्ह वि लोगस्स तह य भासाए। चरिमंते चरिमन्तो चरिमे समयम्मि सव्वत्थ॥३९१॥

त्र्यादिसमयैरापूरिते लोके द्वयोरपि लोक-भाषयोश्चरमान्ते चरमान्तो भवति। क ?, इत्याह– चरमे समये। केषु विषये योऽसौ चरमसमयः ?, इत्याह– सर्वत्र सर्वेष्वपि त्र्यादिसमयव्याप्तिपक्षेषु। इदमुक्तं भवति– त्रिभिश्चतुर्भिः पञ्चभिश्च समयैर्भाषया पूरिते लोके तेषामेव त्र्यादीनां लोकापूरकसमयानां यथास्वं योऽसौ चरमः समयस्तत्र लोकस्य चरमः पर्यन्तवर्ती अन्तो भवति– भाषायाश्च चरमः पर्यन्तवर्ती अन्तो भवति, त्र्यादिसमयानां चरमसमये लोके निष्ठां गते भाषाऽपि निष्ठां याति, न पुनः परतोऽप्यलोके गच्छतीति भावः, जीव-पुद्गलानां तत्र गतेरेवाऽभावादिति। इह च विवक्षयाऽऽदिरप्यन्तो भवति, तद्व्यवच्छेदार्थं चरमग्रहणं चरमः पर्यन्तवर्ती अन्तो न पुनरादिभूत इत्यर्थ इति ॥ ३९१ ॥

तदेवं '[4]कईहिं समएहिं लोगो' इत्यादिनिर्युक्तिगाथाद्वयव्याख्यानेन निराकुलीकृत्य 'जैइणसमुग्घायगईए केई भासंति' इत्यादिना यदादेशान्तरमुक्तं, सोऽनादेश एव, इति ख्यापनार्थम्। तत्र दूषणमाह—

[5]न समुग्घायगईए मीसयसवणं, मयं च दंडम्मि। जइ तो वि तीहिं पूरइ समएहिं जओ पराघाओ॥३९२॥

'न समुग्घायगईए त्ति' जैनसमुद्घातगत्या भाषया लोकपूरणे इष्यमाणे न प्राप्नोति। किम् ?, इत्याह– मिश्रस्य शब्दस्य श्रवणं मिश्रश्रवणं 'सर्वासु दिक्षु' इति शेषः। इदमुक्तं भवति— जैनसमुद्घाते ऊर्ध्वा-ऽधोदिग्द्वयगाम्येव प्रथमसमये दण्डो भवति, तद्यदि भाषाद्रव्येष्वप्येवमिष्यते, तर्हि ऊर्ध्वा-ऽधोदिग्द्वय एव मिश्रशब्दश्रवणं प्राप्नोति, न पूर्व-पश्चिम-दक्षिणो-त्तरदिक्षु, तासु विदिक्ष्विव वक्तृनिसृष्टद्रव्याणामगमनेन पराघातवासिततद्द्रव्याणामेव श्रवणादिति; अविशेषेण तु '[6]भासासमसेढीओ सद्दं जं सुणइ मीसयं सुणइ' इत्यनेन

1 'मथ्यन्तरालपू'। 2 गाथा ३७९। 3 आपूरिते लोके द्वयोरपि लोकस्य तथा च भाषायाः। चरमान्ते चरमान्तश्चरमे समये सर्वत्र ॥ ३९१ ॥ 4 गाथा ३७८। 5 न समुद्घातगत्या मिश्रकश्रवण, मत च दण्डे। यदि ततोऽपि त्रिभिः पूर्यते समयैर्यत पराघातः ॥ ३९२ ॥ 6 गाथा ३५१।

नाऽगृहीतं कदापि निसृज्यत इति नियम एवाऽयम्। 'संतरं तेणं ति' तेन कारणेन निसर्जनं प्रज्ञापनायां सान्तरमुक्तम्। कुतः ?, इत्याह– 'गहणंतरियं ति' ग्रहणान्तरितमिति कृत्वा। 'नाऽनिसृष्टं गृह्यते' इत्ययं तु नियमो नास्ति, प्रथमसमये निसर्गमन्तरेणाऽपि ग्रहणसद्भावात्; अतः स्वतन्त्रं ग्रहणं, परतन्त्रस्तु निसर्गः, इत्ययमेव सान्तर उक्त इति भावः। तदेवं "[1]संतरं निसिरइ" इति प्रज्ञापनायाः सूत्रावयवो विषयविभागे व्यवस्थापितः। अथ '[2]नो निरंतरं निसिरइ' इति तदवयवस्यैव भावार्थमाह– 'न निरंतरं तीत्यादि' किमुक्तं भवति ?– न निरन्तरं निसृजति, न समकं, न युगपदिति पर्यायाः। ततश्च किमिह तात्पर्यमिति ?। उच्यते– न ग्रहणसमकालं निसृजति। किं तर्हि ?, पूर्वं पूर्वं गृहीतमुत्तरोत्तरसमयेषु निसृजतीति। ननु "[3]एगेणं समयेणं गिण्हइ, एगेणं समयेणं निसिरइ" इत्येतस्य भावार्थो नाद्याप्युक्तः। सत्यम्, किन्तूक्तानुसारेण स्वयमप्ययमवगन्तव्यः– तत्राद्येनैकेन समयेन गृह्णात्येव, न निसृजति, द्वितीयादिसमयादारभ्यैव निसर्गस्य प्रवृत्तेः; पर्यन्तवर्तिना त्वेकेन समयेन निसृजत्येव, न तु गृह्णाति, भाषाभिप्रायोपरमादिति; मध्यमसमयेषु तु ग्रहण-निसर्गाविति। अथवा, एकेन पूर्व-पूर्वसमयेन गृह्णाति, एकेनोत्तरोत्तरसमयेन निसृजति, इत्यादि स्वधिया भावनीयम्। तदेवं समस्तमपि सूत्रं व्यवस्थापितं विषये ॥ ३७० ॥

अथ ग्रहणादेर्जघन्यं, उत्कृष्टं च कालमानमाह–

[4]गहणं मोक्खो भासा समयं गह-निसिरणं च दो समया। [5]होंति जहण्णंतरओ तं तस्स च बीयसमयम्मि॥३७१॥

गहणं मोक्खो भासा गहण-विसग्गा य होंति उक्कोसं। अंतोमुहुत्तमेत्तं पयत्तभेएण भेयो सिं ॥३७२॥

इह वाग्द्रव्याणां ग्रहणं, तथा तेषामेव गृहीतानां मोक्षो निसर्ग एवोच्यते, भाष्यत इति भाषा, एतानि त्रीण्यपि जघन्यतः प्रत्येकमेव समयं भवन्ति, ग्रहण-निसर्जनलक्षणं तूभयमनन्तरदर्शितन्यायेन ग्रहणसमयाद् द्वितीयसमये निसर्गं कृत्वा म्रियमाणस्य, तिष्ठतो वा वचनव्यापारादुपरतस्य जघन्यतो द्वौ समयौ भवतः। आह– ननु मोक्षो निसर्ग एवोच्यते, भाष्यत इति भाषाऽपि निसर्ग एवाऽभिधीयते, ततः किमिति मोक्षात् पृथग् भाषायाः कालमानाभिधानार्थमुपादानम् ?। सत्यम्, किन्त्वनेनैव भाषायाः पृथग्ग्रहणेन ज्ञापयति यदुत– भाष्यमाणैव भाषा निसर्गमात्रमेव भाषेत्यर्थः, तस्यैव जघन्यतः समयमानत्वात्; न तूभयं भाषा, तस्य जघन्यतो

1 सान्तरं निसृजति। 2 नो निरन्तरं निसृजति। 3 एकेन समयेन गृह्णाति, एकेन समयेन निसृजति।
4 ग्रहणं मोक्षो भाषा समयं ग्रह-निसर्जनं च द्वौ समयौ। भवन्ति जघन्याऽन्तरतस्तत् तस्य च द्वितीयसमये ॥ ३७१ ॥
ग्रहणं मोक्षो भाषा ग्रहण-विसर्गौ च भवन्त्युत्कृष्टतः। अन्तर्मुहूर्तमात्रं प्रयत्नभेदेन भेद एषाम् ॥ ३७२ ॥ 5 घ. 'हुंति' क 'होइ ज'।

[1]खंधो वि वीससाए न पराघाओ य तेण चउसमओ । अह होज्ज पराघाओ हविज्ज तो सो वि तिसमइओ॥३९४॥

स्कन्धोऽचित्तमहास्कन्धः सोऽपि विस्रसया केवलेन विस्रसापरिणामेन भवति, न तु जीवप्रयोगेण । विस्रसापरिणामश्च विचित्रत्वाद् न पर्यनुयोगमर्हति । किञ्च, न तत्र पराघातोऽस्ति– नान्यद्रव्याणामात्मपरिणाममसौ जनयतीत्यर्थः, किन्तु स निजपुद्गलैरेव लोकं पूरयति । ततोऽसौ चतुःसमयो भवति । अथ तत्रापि पराघातो भवेत्, ततः सोऽपि त्रिसामयिको भवेत्– त्रिभिरेव समयैर्लोकमापूरयेदित्यर्थः, न चैवं, सिद्धान्ते चतुःसमयत्वेन तस्योक्तत्वात् । तस्माद् नास्ति तत्र पराघातः, अत्र त्वस्त्यसौ, इति वैषम्यमिति॥३९४॥

अथाऽनादेशप्रस्तावादपरमपि मतमुपन्यस्य दूषयति–

[2]एगादिसमाइसमये दंडं काऊण चउहिं पूरेइ । अन्ने भणंति, तं पि य नागम-जुत्तिक्खमं होइ ॥ ३९५ ॥

अन्ये केचिद् भाषन्ते– आदिसमये एकदिकं दण्डं कृत्वा चतुर्भिः समयैर्लोकमापूरयति । एतदुक्तं भवति– प्रथमसमये तावदूर्ध्वदिशि दण्डं करोति, द्वितीयसमये तत्र मन्थानं, अधोदिशि पुनर्दण्डं; तृतीयसमये ऊर्ध्वदिश्यन्तरालपूरणम्, अधोदिशि तु मन्थानं करोति; चतुर्थसमये तु तत्राऽप्यन्तरालपूरणात् समस्तमपि लोकं भाषाद्रव्यैः पूरयति । तदेतदपि नाऽऽगमक्षमम्, क्वचिदप्यागम एवमश्रवणात् । नापि युक्तिक्षमम् । का ह्यत्र युक्तिः, यदनुश्रेणिगमनस्वभावानां पुद्गलानामेकया दिशा गमनं भवति, नाऽन्यया ? । वक्तृमुखताल्वादिप्रयत्नप्रेरणमत्र युक्तिरिति चेत् । नैवम्, यतो वक्ता कदाचिद् विश्रेण्यभिमुखस्तदभिमुखानपि भाषापुद्गलान् प्रेरयेत्, ततश्च विदिश्यपि तेषां गमनप्रसङ्गः । किञ्च, एवं सति पटहादिशब्दपुद्गलानां चतुःसमयाऽनियम एव स्यात्, वक्तृप्रयत्नस्य तेष्वभावात् । तस्माद् युक्त्या-ऽऽगमविरुद्धत्वादुपेक्षणीयमेवेदम् ॥ इति गाथाषोडशकार्थः ॥ ३९५ ॥

तत्त्व-भेद-पर्यायैर्व्याख्या, तत्र तत्त्वतो भेदतश्च सप्रसङ्गं निरूपितमाभिनिबोधिकम् । अथ नानादेशजविनेयानुग्रहार्थं तत्पर्यायानभिधित्सुराह–

[6]ईहा अपोह वीमंसा मग्गणा य गवेसणा । सण्णा सई मई पण्णा सव्वं आभिणिबोहियं ॥ ३९६ ॥

१ स्कन्धोऽपि विस्रसया न पराघातश्च तेन चतु समयः । अथ भवेत् पराघातो भवेत् तत सोऽपि त्रिसामयिकः ॥ ३९४ ॥
२ एकदिकमादिसमये दण्ड कृत्वा चतुर्भि. पूरयति । अन्ये भणन्ति, तदपि च नाऽऽगम-युक्तिक्षम भवति ॥३९५॥ ३ घ 'उहि पू' ।
४ क.ग.'न्यथा' । ५ क.ग 'मुरान' । ६ ईहाऽपोहो विमर्शो मार्गणा च गवेषणा । सञ्ज्ञा स्मृतिर्मतिः प्रज्ञा सर्वमाभिनिबोधिकम् ॥ ३९६ ॥

णेन धूपमुद्ग्राहयति, दृशा तीर्थंकरप्रतिमादिवदनं वीक्षते, मुखेन वृत्तं पठति, इत्यादिबह्वीनामपि क्रियाणां युगपत्प्रवृत्तिरध्यक्षतोऽपि वीक्ष्यते ॥ इति गाथानवकार्थः ॥ ३७३ ॥

'गृह्णाति कायिकेन' इत्युक्तम्, तत्र यद्यप्यौदारिकादिशरीरपञ्चकभेदात् कायः पञ्चविधः, तथापि त्रिविधेनैव कायेन वाग्द्रव्य-ग्रहणमवसेयम्, इति दर्शयन्नाह—

[1]तिविहम्मि सरीरम्मि जीवपएसा[2] हवंति जीवस्स । जेहि उ गेण्हइ गहणं तो भासइ भासओ भासं ॥३७४॥

औदारिकादिशरीराणां मध्यात् त्रिविधे त्रिप्रकारे शरीरे जीवस्याऽऽत्मनः प्रदेशा जीवप्रदेशा भवन्ति, नान्यत्र। एतावति चोच्यमाने 'भिक्षोः पात्रम्' इत्यादौ षष्ठ्या भेदेऽपि दर्शनाद् मा भूज्जीवात् प्रदेशानां भेदसंप्रत्यय इत्यत आह– जीवस्येति, त्रिविधेऽपि शरीरे जीवप्रदेशा जीवस्याऽऽत्मभूता भवन्ति, न तु भेदिन इत्यर्थः। तदनेन निष्प्रदेशात्मवादनिराकरणमाह, निष्प्रदेशत्वस्य युक्त्यनुपपत्तेः; तथाहि– पादतलसंबद्धानां जीवप्रदेशानां शिरःसंबद्धजीवदेशैः सह भेदः, अभेदो वा ? इति वक्तव्यम्। यदि भेदः, तर्हि कथं न सप्रदेशो जीवः ?। अथाभेदः, तर्हि सर्वेषामपि शरीरावयवानामेकत्वप्रसङ्गः, अभिन्नैर्जीव[3]प्रदेशैः संबन्धेनैकत्र क्रोडीकृतत्वात्, इत्यादि तर्कशास्त्रेभ्योऽनुसरणीयम्। यैर्जीवप्रदेशैः किं करोति ?, इत्याह– यैस्तु गृह्णाति । तुशब्दो विशेषणार्थः । किं विशिनष्टि ?– न सर्वदैव गृह्णाति, किन्तु भाषणाभिप्रायादिसामग्रीपरिणामे सति । किं पुनर्गृह्णाति ?, इत्याह– गृह्यत इति कर्मणि ल्युट्प्रत्यये ग्रहणं वाग्द्रव्यनिकुरम्बमित्यर्थः। ततो भाषको भाषां भाषते, न त्वभाषकोऽपर्याप्तावस्थायां, इच्छाद्यभावतो वेति । 'भाषको भाषते' इत्यनेनैव गतार्थत्वात् 'भाष्यमाणैव भाषा, न पूर्वं, नापि पश्चात्' इति ज्ञापनार्थमेव भाषाग्रहणमिति ॥ ३७४॥

आह— ननु कतमत् तत् त्रिविधं शरीरं, यद्गतैर्जीवप्रदेशैर्वाग्द्रव्याणि गृहीत्वा भाषको भाषते ?, इत्याह—

[4]ओरालिय-वेउव्विय-आहारओ गेण्हइ मुयइ भासं । सच्चं सच्चामोसं मोसं च असच्चमोसं च ॥ ३७५ ॥

इहौदारिकशब्देन शरीर-तद्वतोरभेदोपचारात्, मत्वर्थीयलोपाद् वौदारिकशरीरवान् जीव एव गृह्यते; एवं वैक्रियवान् वैक्रियः, आहारकवानाहारकः। तदयमेवौदारिक-वैक्रिया-ऽऽहारकशरीरी जीवो गृह्णाति, मुञ्चति च भाषां पुद्गलसंहतिरूपाम्। भाषां कथंभूताम् ?, इत्याह– सत्यां, सत्यामृषां, मृषां च, असत्यमृषां च ॥ इति निर्युक्तिगाथाद्वयार्थः ॥ ३७५ ॥

१ त्रिविधे शरीरे जीवप्रदेशा भवन्ति जीवस्य । यैस्तु गृह्णाति ग्रहण ततो भाषते भाषको भाषाम् ॥ ३७४ ॥ २ घ छ 'पदेसा'। ३ क. ग. 'वदे'।
४ औदारिक-वैक्रिया-ऽऽहारको गृह्णाति मुञ्चति भाषाम् । सत्यां सत्यमृषां मृषां चाऽसत्यमृषा च ॥ ३७५ ॥

त्वात्। ततश्चात्रेहा-ऽपोहादय आभिनिवोधिकज्ञानस्यैवाऽर्थपर्यायाः, मति-प्रज्ञाशब्दौ तु तस्यैव वचनपर्यायौ। अतः सर्वमेवेदं सामान्येनाऽऽभिनिवोधिकज्ञानमेवेति स्थितम्। अथवा, सर्वेषामपि वस्तूनामभिलापवाचकाः शब्दा वचनरूपापन्ना वचनपर्यायाः, ये तु तेषामेव वाचकशब्दानामभिधेयार्थस्याऽऽत्मभूता भेदाः, यथा कनकस्य कटक-केयूरादयः, ते सर्वेऽप्यर्थपर्याया भण्यन्ते। ततश्च प्रस्तुतस्याऽऽभिनिवोधिकज्ञानस्य मति-प्रज्ञा-ऽवग्रहे-हादयः सर्वेऽपि वाचका ध्वनयो वचनपर्याया एव, तदभिधेयास्त्वाभिनिवोधिकस्याऽऽत्मभूता भेदा अर्थपर्याया इत्यवसेयमिति। इह पूर्वं मति-प्रज्ञादिशब्दानां सर्वमप्याभिनिवोधिकज्ञानं वाच्यम्, अवग्रहे-हादिशब्दानां तु तदेकदेशा एवाऽभिधेया इति दर्शितम् ॥ ३९८ ॥

अथाऽवग्रहे-हादिभिरपि शब्दैरन्वर्थवशात् सर्वमप्याभिनिवोधिकमभिधीयते, इति दर्शयति—

सव्वं[1] वाऽभिणिबोहियमिहो-ग्गहाइवयणेण संगहियं। केवलमत्थविसेसं पइ भिन्ना उग्गहाईया ॥ ३९९ ॥

'वा' इत्यथवा, इह सर्वमाभिनिवोधिकज्ञानमवग्रहे-हादिवचनेन संगृह्यते, न पुनस्तदेकदेश एव। तर्ह्यवग्रहादिशब्दानां सर्वेषामेकरूपता प्राप्नोति, एकाभिधेयत्वात्, वहुपुरुषोच्चारितघटाद्येकशब्दवत्, इत्याशङ्क्याह— 'केवलमित्यादि' केवलं नवरमर्थविशेषं प्रत्यवग्रहादयः शब्दा भिन्नाः। इदमुक्तं भवति— अवग्रहशब्दोऽवग्रहलक्षणेनाऽर्थेन सर्वमाभिनिवोधिकं संगृह्णाति, ईहाशब्दस्तु चेष्टालक्षणेन, अपायस्त्ववगमनलक्षणेन, धारणा तु धरणलक्षणेनेत्यादि। ततोऽमुमवग्रहणादिलक्षणमर्थविशेषमात्रमपेक्ष्याऽवग्रहादिशब्दा भिन्नाः, तत्त्वतस्त्वभिधेयं सर्वेषामाभिनिवोधिकज्ञानमेव।

अथवा, आह— ननु यदि सर्वमप्याभिनिवोधिकमवग्रहादिवचनेन संगृह्यते, तर्ह्यवग्रहे-हा-ऽपायधारणानां तद्भेदानां सर्वेषामपि संकरः प्राप्नोति, अनन्तरवक्ष्यमाणव्युत्पत्तितः प्रत्येकमेषां सर्वेषामप्यवग्रहादिरूपत्वात्; इत्याशङ्क्याह— 'केवलमत्थविसेसमित्यादि' केवलं नवरमर्थविशेषं प्रत्यवग्रहादयो भिन्नाः। इदमुक्तं भवति— यद्यप्यर्थावग्रहणे-हना-ऽवगमन-धारणमात्रस्य सामान्यस्य प्रत्येकं सर्वेष्वपि विद्यमानत्वादेकैकशो[3]ऽप्यवग्रहादिशब्देनोच्यन्तेऽवग्रहादयः, तथाऽप्यर्थविशेषमाश्रित्यैते भिन्ना एव; तथाहि— यथाभूतमवग्रहे सामान्यमात्रार्थस्यावग्रहणं, न तथाभूतमेवेहायां, किन्तु विशिष्टं; विशिष्टतरं विशिष्टतमं चाऽपाय-धारणयोः; यथाभूता चेहायां मतिचेष्टा, न तथाभूताऽन्यत्र, किन्तु विशिष्टा, विशिष्टतरा चाऽपाय-धारणयोः, अविशिष्टतरा चाऽवग्रहे; अर्थावगमनमप्यपायाद् विशिष्टं धारणा-

१ सर्वं वाऽऽभिनिबोधिकमिहाऽवग्रहादिवचनेन सगृहीतम्। केवलमर्थविशेष प्रति भिन्ना अवग्रहादय. ॥ ३९९ ॥ २ घ, छ. 'नु स'। ३ घ छ. 'शोऽव'।

तुर्दशरज्ज्वात्मकः क्षेत्रलोकोऽत्र परिगृह्यते । स कतिभिः कियत्संख्यैः समयैर्भाषया भाषाद्रव्यैर्निरन्तरमेव भवति स्पृष्टो व्याप्तः ?, तस्य च लोकस्य कतिभागे कतिभागो भवति भाषाद्रव्याणाम् ? इति ॥ ३७८ ॥

अत्रोच्यते—

[1]चउहिं समयेहिं लोगो भासाए निरंतरं तु होइ फुडो । लोगस्स य चरिमंते चरिमंतो होइ भासाए॥३७९॥

चतुर्भिः समयैर्लोको भाषया कस्याचित् संबन्धिन्या निरन्तरमेव पूर्णो भवति । लोकस्य च चरमान्तः पर्यन्तवर्ती भागोऽसंख्येयभाग इत्यर्थः, तस्मिंश्चरमान्तेऽसंख्येयभागे भाषाया अपि समस्तलोकव्यापिन्याश्चरमान्तोऽसंख्येयभागो भवति ॥ इति निर्युक्तिगाथाद्वयार्थः ॥ ३७९ ॥

आह– किं सर्वस्याऽपि भाषा लोकं व्याप्नोति ?, नैतदेवम्, इति दर्शयन्नाह भाष्यकारः—

[2]कोई मंदपयत्तो निसिरइ सयलाइं सव्वदव्वाइं । अन्नो तिव्वपयत्तो सो मुंचइ भिंदिउं ताइं ॥ ३८० ॥

कोऽप्युरःक्षताद्युपेतत्वेन मन्दप्रयत्नो वक्ता[3] सर्वाण्यपि भाषाद्रव्याणि प्रथमं सकलानि संपूर्णान्यखण्डानि, अभिन्नानीति यावत्, निसृजति मुञ्चति; अन्यस्तु नीरोगतादिगुणयुक्तस्तीव्रप्रयत्नो भवति, स पुनस्तान्यादान-निसर्गप्रयत्नाभ्यां भित्त्वैव खण्डशः कृत्वा सूक्ष्मखण्डीकृत्य मुञ्चति ॥ ३८० ॥

तत्रोभयेषामप्यग्रतो यद् भवति, तद्दर्शयति[4]–

[5]गंतुमसंखेज्जाओ अवगाहणवग्गणा अभिन्नाइं । भिज्जंति धंसंति य संखिज्जे जोअणे गंतुं ॥ ३८१ ॥

भिन्नाइं सुहुमयाए अणंतगुणवड्ढिआइं लोगंतं । पावंति पूरयंति य भासाए निरंतरं लोगं ॥ ३८२ ॥

अवगाहोऽवगाहना एकैकस्य भाषाद्रव्यस्कन्धस्याऽऽधारभूताऽसंख्येयप्रदेशात्मकक्षेत्रविभागरूपा, तासामवगाहनानामनन्तभाषा-

---

१ चतुर्भिः समयैर्लोको भाषया निरन्तरं तु भवति स्पृष्ट । लोकस्य च चरमान्ते चरमान्तो भवति भाषायाः ॥ ३७९ ॥
२ कोऽपि मन्दप्रयत्नो निसृजति सकलानि सर्वद्रव्याणि । अन्यस्तीव्रप्रयत्नः स मुञ्चति भित्त्वा तानि ॥३८०॥ ३ घ.छ 'क्ता भा'। ४ क.'यन्नाह–'।
५ गत्वाऽसंख्येया अवगाहनावर्गणा अभिन्नानि । भिद्यन्ते ध्वंसन्ते च संख्येयानि योजनानि गत्वा ॥ ३८१ ॥
भिन्नानि सूक्ष्मतयाऽनन्तगुणवर्धितानि लोकान्तम् । प्राप्नुवन्ति पूरयन्ति च भाषया निरन्तरं लोकम् ॥ ३८२ ॥

तत् पुनराभिनिबोधिकज्ञानं चतुर्विधं चतुर्भेदम्। नन्ववग्रहादिभेदेन भेदकथनं प्रागस्य कृतमेव, किमिह पुनरपि भेदोपन्यासः ?। सत्यम्, ज्ञेयमेवेह द्रव्यादिभेदेन चतुर्भेदं, ज्ञानस्य तु तद्भेदादेव भेदोऽत्राभिधीयते, सूत्रे तथैवोक्तत्वात्। तथा च नन्दिसूत्रम्—"[1]तं समासओ चउव्विहं पण्णत्तं, तं जहा– दव्वओ, खेत्तओ, कालओ, भावओ। तत्थ दव्वओ णं आभिणिबोहियनाणी आदेसेणं सव्वदव्वाइं जाणइ, न पासइ" इत्यादि। ज्ञेयभेदादपि तत् कथं चतुर्विधम् ?, इत्याह– 'जं तदुवउत्तो इत्यादि' यद् यस्मात् कारणात् तेनाऽऽभिनिबोधिकज्ञानेन सर्वं द्रव्यादि मुणति इति संबन्धः। कथंभूतम् ?, इत्याह– चतुर्विधं चतुर्भेदं द्रव्य-क्षेत्र-काल-भावभेदभिन्नमित्यर्थः। कथंभूतः सन् मुणति ?, इत्याह– तस्मिन्नाभिनिबोधिकज्ञाने उपयुक्तस्तदुपयुक्तः। केन ?, इत्याह– आदेशेनेति ॥ ४०२ ॥

कोऽयमादेशः ?, इत्याह–

[2]आएसो त्ति पगारो ओहादेसेण सव्वदव्वाइं। धम्मत्थिआइयाइं जाणइ न उ सव्वभेएण ॥ ४०३ ॥

इहाऽऽदेशो नाम ज्ञातव्यवस्तुप्रकारः। स च द्विविधः– सामान्यप्रकारः, विशेषप्रकारश्च। तत्रौघादेशेन सामान्यप्रकारेण द्रव्यसामान्येनेत्यर्थः, सर्वद्रव्याणि धर्मास्तिकायादीनि जानाति– 'असंख्येयप्रदेशात्मको लोकव्यापकोऽमूर्तः प्राणिनां पुद्गलानां च गत्युपष्टम्भहेतुर्धर्मास्तिकायः' इत्यादिरूपेण कियत्पर्यायविशिष्टानि षडपि द्रव्याणि सामान्येन मतिज्ञानी जानातीत्यर्थः। अनभिमतप्रकारप्रतिषेधमाह– न तु सर्वभेदेन, न [3]सर्वैर्विशेषैर्न सर्वैरपि पर्यायैः केवलिदृष्टैर्विशिष्टानि[4] द्रव्याण्यसौ जानातीत्यर्थः, केवलज्ञानगम्यत्वादेव सर्वपर्यायाणामिति भावः ॥ ४०३ ॥

धर्मास्तिकायादिभेदेन कथितं सामान्येन द्रव्यम्। अथ क्षेत्रादिस्वरूपं विशेषतः प्राह—

[5]खेत्तं लोगा-लोगं कालं सव्वद्धमहव तिविहं ति। पंचोदइयाईए भावे जं नेयमेव इयं ॥ ४०४ ॥

क्षेत्रमपि लोकालोकस्वरूपं सामान्यादेशेन कियत्पर्यायविशिष्टं सर्वमपि जानाति, न तु विशेषादेशेन सर्वपर्यायैर्विशिष्टमिति। एवं कालमपि सर्वाऽद्धारूपम्, अतीता-ऽनागत-वर्तमानभेदतास्त्रिविधं वेत्त्येक एवाऽर्थः। भावतस्तु सर्वभावानामनन्तभागं जानाति, औदयिकौ-पशमिक-क्षायिक-क्षायिकौपशमिक-पारिणामिकान् वा पञ्च भावान् सामान्येन जानाति, न परतः। कुतः ?, इत्याह– यद् यस्मा-

१ तत् समासतश्चतुर्विधं प्रज्ञप्तम्, तद्यथा– द्रव्यत , क्षेत्रतः, कालत, भावत । द्रव्यत आभिनिबोधिकज्ञानी आदेशेन सर्वद्रव्याणि जानाति न पश्यति।
२ आदेश इति प्रकार ओघादेशेन सर्वद्रव्याणि। धर्मास्तिकायादीनि जानाति न तु सर्वभेदेन ॥ ४०३ ॥ ३ घ छ. 'सर्वैरपि वि'। ४ क 'नि तानि द्र'।
५ क्षेत्र लोका-लोकं कालं सर्वाद्धाऽथवा त्रिविधमिति। पञ्चौदयिकादीन् भावान् यद् ज्ञेयमेवेदम् ॥ ४०४ ॥

[1]मंथंतरेहिं तईए समये पुन्नेहिं पूरिओ लोगो । चउहिं समएहिं पूरइ लोगंते भासमाणस्स ॥ ३८५ ॥

यतो लोकमध्यस्थितेन महाप्रयत्नभाषकेण मुक्तानि तानि भाषाद्रव्याणि प्रथमसमय एव षट्सु दिक्षु लोकान्तमाप्नुवन्ति, जीव-सूक्ष्मपुद्गलानामनुश्रेणि गमनात् । ततो द्वितीयसमये त एव षड् दण्डाश्चतुर्दिशमेकैकशोऽनुश्रेण्या वासितद्रव्यैः प्रसरन्तः षड् मन्थानो भवन्ति । तृतीयसमये तु मन्थान्तरैः पूरितैः पूरितो भवति सर्वोऽपि लोकः, स्वयम्भूरमणपरतटवर्तिनि लोकान्तेऽलोकस्यात्यन्तं निकटीभूय भाषमाणस्य भाषकस्य त्रसनाड्या बहिर्वा चतसृणां दिशामन्यतमस्यां दिशि भाषमाणस्य तस्येति स्वयमपि द्रष्टव्यम्, चतुर्भिः समयैर्लोकः सर्वोऽपि पूर्यत इति ॥ ३८४ ॥ ३८५ ॥

कथम् ?, इत्याह—

[2]दिसि विदिट्ठियस्स पढमोऽतिगमे ते चेव सेसया तिन्नि । विदिसि ट्ठियस्स समया पंचातिगमम्मि जं दोण्णि ॥३८६॥

त्रसनाड्या बहिश्चतसृणां दिशामन्यतमस्यां दिशि व्यवस्थितस्य भाषकस्य प्रथमः समयोऽतिगमे नाडीमध्यप्रवेशे भवति । शेषसमयत्रयभावना तु 'होइ[3] असंखेज्जइमे भागे' इत्यादिवक्ष्यमाणगाथावृत्तौ 'कथमिति च' इत्यादिना वक्ष्यते । लोकान्तेऽपि स्वयंभूरमणपरतटवर्तिनि चतसृणां दिशामन्यतरस्यां दिशि व्यवस्थितस्य भाषकस्योर्ध्वा-ऽधोलोकस्खलितत्वाद् भाषाद्रव्याणां प्रथमः समयोऽतिगमे लोकमध्यप्रवेशे, त्रयस्तु समयाः शेषास्तथैव । त्रसनाडीबहिर्विदिग्व्यवस्थितस्य तु भाषकस्य भाषाद्रव्यैः सर्वलोकापूरणे पञ्च समया लगन्तीति विशेषः । कुतः ?, इत्याह— 'अतिगमम्मि जं दोण्णि त्ति' विदिशः सकाशाद् भाषाद्रव्याणि लोकनाडीबहिरेव प्रथमे समये दिशि समागच्छन्ति, द्वितीये तु लोकनाडीमध्ये प्रविशन्ति, इत्येवं यस्मादतिगमे नाडीमध्यप्रवेशे द्वौ समयौ लगतः, शेषास्तु त्रयः समयाश्चतुःसमयव्याप्तिवद् द्रष्टव्याः, इत्येवं पञ्च समयाः, सर्वेऽपि च लोकापूरणे प्राप्यन्त इति ॥ ३८६ ॥

ननु यद्युक्तन्यायेन त्रिभिः, चतुर्भिः, पञ्चभिश्च समयैर्लोको वाग्द्रव्यैः पूर्यते, तर्हि किमिति निर्धार्य निर्युक्तिकृता चतुःसमयग्रहणमेव कृतम् ?, इत्याशङ्क्याह—

[4]चउसमयमज्झगहणे ति-पंचगहणं तुलाइमज्झस्स । जह गहणे पज्जंतगहणं चित्ता य सुत्तगई ॥ ३८७ ॥

---

१ मन्थान्तरैस्तृतीये समये पूर्णैः पूरितो लोकः । चतुर्भिः समयैः पूर्यते लोकान्ते भाषमाणस्य ॥ ३८५ ॥

२ दिशि व्यवस्थितस्य प्रथमोऽतिगमे ते एव शेषकास्त्रयः । विदिशि स्थितस्य समयाः पञ्चातिगमे यद् द्वौ ॥ ३८६ ॥ ३ गाथा ३९० ।

४ चतुःसमयमध्यग्रहणे त्रि-पञ्चग्रहणं तुलादिमध्यस्य । यथा ग्रहणे पर्यन्तग्रहणं चित्रा च सूत्रगतिः ॥ ३८७ ॥

पेक्षयाऽल्प-बहुत्वमभिधानीयम्, भागस्तु शेषज्ञानापेक्षया चिन्तनीय इति विशेषः ॥ इति निर्युक्तिगाथाद्वयार्थः। विस्तरार्थं तु भाष्यकार एव वक्ष्यति ॥ ४०६ ॥

अथ सत्पदप्ररूपणता किमुच्यते ?, इत्याह–

[1]संतं ति विज्जमाणं एयस्स पयस्स जा परूवणया। गइयाईएसु वत्थुसु संतपयपरूवणा सा उ ॥ ४०७ ॥

जीवस्स च जं संतं जम्हा तं तेहिं तेसु वा पयति। तो संतस्स पयाइं ताइं तेसुं परूवणया ॥ ४०८ ॥

गत्यादिद्वारेषु सत्त्वेन चिन्त्यमानत्वात् पदं सदुच्यते। ततश्च सतो विद्यमानस्य पदस्य या वक्ष्यमाणेषु गत्यादिद्वारेषु प्ररूपणता सा सत्पदप्ररूपणतोच्यते। अथवा, जीवस्य यत् सज्ज्ञान-दर्शनादिकं तत् तैः कारणभूतैः, तेषु वाऽधिकरणभूतेषु यस्मात् 'पयति त्ति' पद्यतेऽनुगम्यते विचार्यते, ततस्तस्मात् सतः पदानि सत्पदानि तानि गत्यादीनि द्वाराण्युच्यन्ते तैः, तेषु वा प्ररूपणता 'मत्यादेः' इति गम्यते, सत्पदप्ररूपणता ॥ इति गाथाद्वयार्थः ॥ ४०७ ॥ ४०८ ॥

तान्येव सत्पदानि गत्यादिद्वाराणि दर्शयति–

[3]गइ-इंदिए य काए जोए वेए कसाय-लेसासु। सम्मत्त-नाण-दंसण-संजय-उवओग-आहारे ॥ ४०९ ॥

भासग-परित्त-पज्जत्त-सुहुम-सण्णी य भविय-चरिमे य। पुव्वपडिवन्नए वा पडिवज्जंते य मग्गणया॥४१०॥

एतेषु गत्यादिषु द्वारेषु मतिज्ञानस्य पूर्वप्रतिपन्नाः, प्रतिपद्यमानकाः, तदुभयम्, उभयाभावश्च, इत्येतच्चतुष्टयं चिन्त्यते॥४०९॥४१०॥

तत्र येषु स्थानेषु मतिज्ञानिनो न प्रतिपद्यमानकाः, नापि पूर्वप्रतिपन्नाः, किन्तूभयाभावः, तान्यपोद्धृत्य दर्शयति–

[4]एगिंदियजाईओ सम्मामिच्छो य जो य सव्वन्नू। अपरित्ता अभव्वा अचरिमा य एए सया सुण्णा॥४११॥

इह सर्वेष्वपि गत्यादिद्वारेषु यावान् कोऽप्येकेन्द्रियजातीय एकेन्द्रियप्रकार एकेन्द्रियभेद इत्यर्थः, एष सर्वोऽपि मतिज्ञानेन

१ सदिति विद्यमानमेतस्य पदस्य या प्ररूपणता। गत्यादिषु वस्तुषु सत्पदप्ररूपणा सा तु ॥ ४०७ ॥ जीवस्य च यत् सद् यस्मात् तत् तैस्तेषु वा पद्यते। ततः सतः पदानि तानि तेषु प्ररूपणता ॥ ४०८ ॥ २ घ छ 'माणासु गत्यादिषु प्र'।

३ गती-न्द्रिययोश्च काये योगे वेदे कषाय-लेश्ययोः। सम्यक्त्व-ज्ञान-दर्शन-सयमो-पयोगा-हारेषु ॥ ४०९ ॥ भाषक-परीत्त-पर्याप्त-सूक्ष्म-संज्ञिषु च भव्य-चरमयोश्च। पूर्वप्रतिपन्ना वा प्रतिपद्यमानाश्च मार्गणया ॥ ४१० ॥

४ एकेन्द्रियजातीय सम्यग्मिथ्य. (थ्यादृष्टि) च यश्च सर्वज्ञ.। अपरीत्ता अभव्या अचरमाश्चैते सदा शून्याः ॥ ४११ ॥'

द्वितीयसमययोस्तावद् नियमेन सर्वत्र लोकासंख्येयभागे भाषाऽसंख्येयभागलक्षण एव विकल्पः संभवति, नाऽन्यः। त्रिसमयव्याप्तौ हि प्रथमसमये दण्डषट्कं भवति, द्वितीयसमये तु षड् मन्थानः संपद्यन्ते। एते च दण्डादयो दैर्घ्येण यद्यपि लोकान्तस्पर्शिनो भवन्ति, तथापि वक्तृमुखविनिर्गतत्वात् तत्प्रमाणानुसारतो बाहल्येन चतुरङ्गुलादिमाना एव भवन्ति, चतुरादीनि चाऽङ्गुलानि लोकासंख्येयभागवर्तीन्येव। इति सिद्धस्त्रिसमयव्याप्तौ प्रथम-द्वितीयसमययोर्लोकासंख्येयभागे भाषाऽसंख्येयभागः। चतुःसमयव्याप्तावप्येतदित्थमवगम्यत एव, प्रथमसमये लोकमध्यमात्र एव प्रवेशात्; द्वितीयसमये तु वक्ष्यमाणगत्या दण्डानामेव सद्भावादिति। पञ्चसमयव्याप्तिपक्षे तु सुबोधमेव, प्रथमसमये भाषाद्रव्याणां विदिशो दिश्येव गमनात्, द्वितीयसमये तु लोकमध्यमात्र एव प्रवेशात्। तस्मात् त्र्यादिसमयव्याप्तौ सर्वत्र प्रथम-द्वितीयसमययोर्लोकासंख्येयभागे भाषाया असंख्येयभाग एव भवति। 'भयणा सेसेसु समएसु त्ति' उक्तशेषेषु तृतीय-चतुर्थ-पञ्चमसमयेषु भजना विकल्परूपा बोद्धव्या— क्वापि लोकासंख्येयभागे स एव भाषाऽसंख्येयभाग एव भवति, क्वचित् पुनर्लोकस्य संख्येयभागे भाषासंख्येयभागः, क्वापि समस्तलोकव्याप्तिः; तथाहि— त्रिसमयव्याप्तौ तृतीयसमये भाषायाः समस्तलोकव्याप्तिः चतुःसमयव्याप्तितृतीयसमये तु लोकसंख्येयभागे भाषासंख्येयभागः। कथम्?, इति चेत्। उच्यते— स्वयम्भूरमणपश्चिमपरतटवर्तिनि लोकान्ते, त्रसनाडीबहिर्वा पश्चिमदिशि स्थित्वा ब्रुवतो भाषकस्य प्रथमसमये चतुरङ्गुलादिबाहल्यो रज्जुदीर्घो दण्डस्तिरश्चीनं गत्वा स्वयम्भूरमणपूर्वपरतटवर्तिनि लोकान्ते लगति। ततो द्वितीयसमये तस्माद् दण्डादूर्ध्वाऽधश्चतुर्दशरज्जूच्छ्रितः पूर्वापरतस्तिरश्चीनैरज्जुविस्तृतः पराघातवासितद्रव्याणां दण्डो निर्गच्छति। लोकमध्ये तु दक्षिणतः, उत्तरतश्च पराघातवासितद्रव्याणामेव चतुरङ्गुलादिबाहल्यं रज्जुविस्तीर्णदण्डद्वयं विनिर्गत्य स्वयम्भूरमणदक्षिणोत्तरवर्तिलोकान्तयोर्लगति। एवं च सति चतुरङ्गुलादिबाहल्यं सर्वतोऽपि रज्जुविस्तीर्णं लोकमध्ये वृत्तच्छत्वरं सिद्धं भवति। तृतीयसमये तूर्ध्वाधोव्यवस्थितदण्डाच्चतुर्दिशं प्रसृतः पराघातवासितद्रव्यसमूहो मन्थानं साधयति, लोकमध्यव्यवस्थितसर्वतोरज्जुविस्तीर्णच्छत्वरादूर्ध्वाधःप्रसृतः पुनः स एवं त्रसनाडीं समस्तामपि पूरयति। एवं च सति सर्वापि त्रसनाडी ऊर्ध्वाधोव्यवस्थितदण्डमन्थिभावेन तदधिकं च लोकस्य पूरितं भवति। एतच्चैतावत् क्षेत्रं तस्य संख्याततमो भागः। तथा च सति चतुःसामयिक्या व्याप्तेस्तृतीयसमये लोकस्य संख्याततमे भागे भाषाया अपि समस्तलोकव्यापिन्याः संख्याततमो भाग इति स्थितम् ॥

पञ्चसामयिक्यास्तु व्याप्तेस्तृतीयसमये लोकाऽसंख्येयभागे भाषाऽसंख्येयभागः। कुतः?, इति चेत्। उच्यते— तस्यां तस्य दण्डसमयत्वात्, तत्र च संख्येयभागवर्तित्वस्य प्रागेव भावितत्वादिति। चतुर्थसमये चतुःसामायिक्यां व्याप्तौ मन्थान्तरपूरणात् समस्त-

१ क. 'दिश्येवाग' घ. छ. 'दिशो दिशो वा ग'। २ घ. 'त र'। ३ घ.छ. 'मध्यन्तरालस्थू'।

सम्यक्त्वसहचरितचारित्रलाभे तु मतिसहचरितं मनःपर्यायज्ञानं नोत्पद्यत एव, अत एव वचनात्, अन्यथाऽवधिज्ञानीव मनःपर्यायज्ञान्यपि निश्चयनयमतेन प्रतिपद्यमानकः स्यादिति। आहारकद्वारे, अनाहारकाः केचिद् देवादयः पूर्वभवाद् गृहीतसम्यक्त्वा मनुष्यादिषूत्पद्यमाना मतेः पूर्वप्रतिपन्ना भवन्ति, न तु प्रतिपद्यमानकाः, तथाविधविशुद्ध्यभावात्। संज्ञाद्वारे, असंज्ञिनो विकलेन्द्रियवद् भावनीयाः। उपयोगद्वारे, अनाकारोपयोगिनः केचित् पूर्वप्रतिपन्ना भवन्ति, न तु प्रतिपद्यमानकाः, मतिज्ञानस्य लब्धित्वात्, तदुत्पत्तेश्चाऽनाकारोपयोगे प्रतिषिद्धत्वादिति।

उक्तशेषास्तु– गतिद्वारे नारकादयः, इन्द्रियद्वारे तु पञ्चेन्द्रियाः, कायद्वारे तु त्रसकायिकाः, इत्येवमादयो जातिमपेक्ष्य पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमानकास्तु भजनीयाः– कदाचिद् भवन्ति, कदाचिद् नेति। अतिव्याप्तिनिषेधार्थमाह— 'भयणा पुव्वपवन्ना इत्यादि' कषायद्वारेऽकषायाः, वेदद्वारे त्ववेदका भजनया पूर्वप्रतिपन्नयैव भवन्ति, छद्मस्थाः पूर्वप्रतिपन्ना मतेर्भवन्ति, न तु केवलिनः, प्रतिपद्यमानकास्त्वमी न भवन्त्येव, पूर्वप्रतिपन्नमतिज्ञानानामेव क्षपकोपशमश्रेणिप्रतिपत्तेः॥ इति गाथाद्वयार्थः॥ ४१२ ॥ ४१३ ॥

तदेवं संक्षेपतो गत्यादिद्वारेषु भाष्यकृता मतिज्ञानस्य कृता सत्पदप्ररूपणा। अथ विनेयानुग्रहार्थं किञ्चिद् विस्तरतोऽप्यसौ विधीयते— तत्र मतिज्ञानं किमस्ति, न वा?। यद्यस्ति, क तत्?। गत्यादिस्थानेषु। तत्र नारक-तिर्यग्-नरा ऽमरभेदाद् गतिश्चतुर्धा। तत्र चतुर्विधायामपि गतौ मतिज्ञानस्य पूर्वप्रतिपन्ना नियमात् सन्ति, प्रतिपद्यमानकास्तु भाज्याः— विवक्षितकाले कदाचिद् भवन्ति, कदाचित्तु नेत्यर्थः। आभिनिबोधिकप्रतिपत्तिप्रथमसमये प्रतिपद्यमानका उच्यन्ते, द्वितीयादिसमयेषु तु पूर्वप्रतिपन्ना इत्यनयोर्विशेषः।

इन्द्रियद्वारे— एकेन्द्रियेषूभयाभावः सैद्धान्तिकमतेन। कार्मिकग्रन्थिकास्तु— लब्धिपर्याप्तबादरपृथिवी-अब्-वनस्पतीन् करणापर्याप्तान् पूर्वप्रपन्नानिच्छन्ति, सास्वादनस्य तेषूत्पत्तेः। विकलेन्द्रियास्तूभयमतेनाऽपि करणापर्याप्ताः सास्वादनमेव पूर्वभवायातमङ्गीकृत्य पूर्वप्रतिपन्ना लभ्यन्ते, न तु प्रतिपद्यमानकाः, पञ्चेन्द्रियास्तु सामान्येन पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमानकास्तु भजनीयाः।

कायद्वारे— पृथिवी-अप्-तेजो-वायु-वनस्पति-त्रसकायभेदात् षोढा कायः। तत्राऽऽद्यकायपञ्चके उभयाभावः। त्रसकाये तु पञ्चेन्द्रियवद् वाच्यम्। योगद्वारे– काय-वाङ्-मनोभेदात् त्रिधा योगः, स एष त्रिविधोऽपि समुदितो येषामस्ति तेषां पञ्चेन्द्रियवद् वाच्यम्, मनोरहितवाग्योगिनां विकलेन्द्रियवत्, केवलकाययोगिनां त्वेकेन्द्रियवदिति। वेदद्वारे— स्त्री-पुं-नपुंसकभेदात् त्रिविधेऽपि वेदे पञ्चेन्द्रियवद् भावनीयम्। कषायद्वारे तु चतुर्ष्वनन्तानुबन्धिषु सास्वादनमङ्गीकृत्य पूर्वप्रतिपन्नो लभ्यते, न प्रतिपद्यमानकः; शेषेषु द्वादशसु कषायेषु पञ्चेन्द्रियवदेव। लेश्याद्वारे– भावलेश्यामङ्गीकृत्य कृष्णादिकासु तिसृष्वप्रशस्तलेश्यासु पूर्वप्रतिपन्नाः संभवन्ति, न त्वितरे;

१ क. 'रेत्र'।

दिक्षु मिश्रशब्दश्रवणमुक्तम्। अथवा, व्याख्यानतो विशेषप्रतिपत्तेर्यदि तव मतं संमतं— ऊर्ध्वा-ऽधोदिग्द्वयवर्तिदण्ड एव मिश्रशब्दश्रवणं, शेषदिक्षु पराघातवासितद्रव्यश्रवणेऽप्यदोषादिति। भवत्वेवम्, 'नो वि' तथापि त्रिभिः समयैः पूर्यते लोको न चतुर्भिः, यतो भाषाद्रव्येषु पराघातोऽस्ति। यदि नाम तेषु पराघातस्ततः किम् ?, इति चेत्। उच्यते— स खलु दण्ड ऊर्ध्वा-ऽधो गच्छन्नविशेषेण चतुर्दिशमपि शब्दप्रायोग्यद्रव्याणि पराहन्ति, वासयित्वा शब्दपरिणामवन्ति करोति, ततस्तानि द्वितीयसमये मन्थानं साधयन्ति, तृतीयसमये तु तदन्तरालपूरणात् पूर्यते लोक इति। एवं त्रिभिः समयैर्लोकपूरणं प्राप्नोति ॥ ३९२ ॥

ननु यथा जैनसमुद्घातश्चतुर्भिः समयैर्लोकमापूरयति, तथा भाषाऽपि तैस्तमापूरयिष्यति, को दोषः ?, इत्याशङ्क्याह—

जइणे[1] न पराघाओ स जीवजोगो य तेण चउसमओ। हेऊ होज्जाहिं तहिं इच्छा कम्मं सहावो वा ॥३९३॥

इह जैनसमुद्घाते जीवप्रदेशाः स्वरूपेणैव लोकमापूरयन्ति, न पुनस्तत्र कस्याऽपि पराघातोऽस्ति। ततो न द्वितीयसमये मन्थाः, किन्तु कपाट एव भवति। किञ्च, स केवलिसमुद्घातो जीवस्य संबन्धी योगो व्यापारस्तेन लोकव्याप्तिमपेक्ष्याऽयं चत्वारः समयाः, यत्र चतुःसमयो भवति। यदि नाम जीवयोगस्तथापि कथं तस्य चतुःसमयता ?, इत्याह— तत्र तस्मिन् जीवव्यापारलक्षणे केवलिसमुद्घाते द्वितीयसमये मथ्यभावे हेतुर्भवेत्। कः ?, इत्याह— 'इच्छेत्यादि' तथाहि— तत्रैतच्छक्यते वक्तुम्— केवलज्ञानरूपा येयमिच्छाऽभिप्रायस्तद्वशाद् गुण-दोषौ पर्यालोच्य केवली द्वितीयसमये मन्थानं न करोति। भवोपग्राहिकर्मवशाद् वा, स्वभावाद् वाऽसौ तदा तं न करोति। ततो द्वितीयसमये कपाट एव, तृतीयसमये मन्थाः, चतुर्थे त्वन्तरालपूरणम्, इति युज्यते जैनसमुद्घाते चतुःसमयता। भाषापुद्गलानां त्वनुश्रेणि गमनं, पराघातस्वभावश्च[3] लोकव्याप्तौ हेतुः, तत्र च प्रथमे समये ऊर्ध्वा-ऽधो दण्डे कृते द्वितीयसमये चतसृष्वपि दिक्ष्वनुश्रेणि गमनं संभवत्येव, इति किं ते मन्थानं न साधयन्ति ?, पराघातो हि ऊर्ध्वा-ऽधोगतदण्डादन्यद्रव्याणां सिद्ध एव, स्वभावतस्तु सर्वत्र सुलभ एव, इत्यशक्यप्रतिषेध एव द्वितीयसमये मथिभावः। ततस्तृतीयसमयेऽन्तरालपूरणात् समस्तलोकपरिपूर्तेस्त्रिसमयतैवाऽत्र, न चतुःसमयतेति ॥ ३९३ ॥

यद्येवम्, अचित्तमहास्कन्धिजीवयोगत्वाभावेऽपि कथं द्वितीयसमये कपाटमात्रस्यैव भावात् प्रज्ञापनादिषु चतुःसमयता प्रोक्ता ?, इत्याशङ्क्याह—

१ जैने न पराघातः स जीवयोगश्च तेन चतुःसमयः। हेतुर्भवेत् तत्रेच्छा कर्म स्वभावो वा ॥ ३९३ ॥ २ घ. छ. 'रापू'। ३ छ. 'परोपघा'। ४ क.ग. 'थमस'।

घटादिकार्यं भवज्जायमानं दृश्यते। अतः कथमुच्यते– 'सदुत्पद्यते' इति ?। यस्मिन्नेव समये प्रारभ्यते तस्मिन्नेव निष्पद्यते, अतो निष्पन्नमेव तत् क्रियते, क्रियाकाल-निष्ठाकालयोरभेदादिति चेत्। नैवम्। कुतः ?, इत्याह– 'दीसईत्यादि' दीर्घोऽसंख्येयसामयिको घटादीनामुत्पद्यमानानां क्रियाकालो लगन्नालोक्यते यस्मात्, ततो न यस्मिन्नेव समये घटादि प्रारभ्यते तस्मिन्नेव समये निष्पद्यते, मृदानयन-तत्पिण्डविधान-चक्रारोपण-शिवकादिविधानादिचिरकालेनैव तदुत्पत्तेरिति ॥ ४१६ ॥

भवतु दीर्घक्रियाकालः, कार्यं त्वारम्भसमयेऽप्युपलभ्यते, इत्याह–

[1]नारंभे च्चिय दीसइ न सिवादद्धाए, दीसइ तदंते। इय न सवणाइकाले नाणं जुत्तं तदंतम्मि ॥४१७॥

यदि क्रियाप्रथमसमय एव कार्यं निष्पद्येत तदा तत् तत्रैवोपलभ्येत। न चाऽऽरम्भसमय एव तद् दृश्यते, नापि शिवकाद्यद्धायां शिवक-स्थास-कोश-कुशूलादिकाले। क्व तर्हि दृश्यते ?, इत्याह– दृश्यते घटादि कार्यं तस्य दीर्घक्रियाकालस्याऽन्तः परिसमाप्तिस्तदन्तस्तस्मिन्निति। तस्मात् क्रियाकालपर्यन्त एव तस्य सत्त्वं युज्यते, न तु पूर्वम्, अनुपलभ्यमानत्वात्। यस्मादेवम्, इत्यतो न गुरुसंनिधाने सिद्धान्तश्रवण-चिन्तने-हनादिक्रियाकाले ज्ञानमाभिनिबोधिकं युक्तम्; किन्तु तस्य श्रवणादिक्रियाकालस्याऽन्तस्तदन्तस्तस्मिन्नेव तद् युक्तम्, तत्रैवोपलभ्यमानत्वादिति प्रस्तुतोपयोगः।

तदेवं न क्रियाकाले कार्यमस्ति, अनुपलभ्यमानत्वात्; किन्तु तन्निष्ठाकाल एव तदस्ति, तत्रैवोपलभ्यमानत्वात्। ततो न प्रतिपद्यमानं प्रतिपन्नं कार्यं, क्रियाकाल एव तस्य प्रतिपद्यमानत्वात्, निष्ठाकाल एव च प्रतिपन्नत्वात्, क्रियाकाल-निष्ठाकालयोश्चाऽत्यन्तं भेदात्। तस्माद् मिथ्यादृष्टिः, अज्ञानी च सम्यक्त्व-ज्ञाने प्रतिपद्यते, न सम्यग्दृष्टिः, ज्ञानी[2] च ॥ इति व्यवहारनयः ॥ ४१७॥

[3]अत्र निश्चयनयः प्रतिविधानमाह–

[4]निच्छइओ नाऽजायं जाय अभावत्तओ खपुप्फं व। अह च अजायं जायइ, जायउ तो खरविसाणं पि ॥४१८॥

निश्चये भवो नैश्चयिको नयः प्राह–यथा 'जातं न जायते, कृतघटवत्' इति भवताऽसत्कार्यवादिनाऽभिधीयते, तथा वयमपि सत्कार्यवादिनो ब्रूमः– नाऽजातं जायते, "अचोऽचि" इतीकारलोपः, नाऽविद्यमानमुत्पद्यत इति प्रतिज्ञा, अभावत्वात्– अविद्यमानत्वादिति हेतुः, खपुष्पवदिति दृष्टान्तः। अयमपि विपर्ययबाधामाह– अथाऽजातमपि जायते, जायतां ततः खरविषाणमपि, अभावाविशेषादिति ॥४१८॥

1 नारम्भ एव दृश्यते न शिवाद्यद्धाया, दृश्यते तदन्ते। इति न श्रवणादिकाले ज्ञान युक्त तदन्त' ॥४१७॥ 2 क घ छ 'नी इ'। 3 घ छ 'अथ नि'। 4 नैश्चयिको नाऽजातं जायतेऽभावत्वात् खपुष्पमिव। अथ चाऽजात जायते, जायता ततः खरविषाणमपि ॥ ४१८ ॥

ईह चेष्टायाम्, ईहनमीहा– सतामन्वयिनां, व्यतिरेकिणां चाऽर्थानां पर्यालोचना। अपोहनमपोहो निश्चयः। विमर्शनं विमर्शः, अपायात् पूर्वं ईहायाश्चोत्तरः 'प्रायः शिरःकण्डूयनादयः पुरुषधर्मा इह घटन्ते' इति संप्रत्ययः। तथा, मार्गणमन्वयधर्मान्वेषणं मार्गणा। चशब्दः समुच्चयार्थः। गवेषणं व्यतिरेकधर्मालोचनं गवेषणा। तथा, संज्ञानं संज्ञा, अवग्रहोत्तरकालभावी मतिविशेष एव। स्मरणं स्मृतिः पूर्वाऽनुभूतार्थालम्बनः प्रत्ययः। मननं मतिः कथञ्चिदर्थपरिच्छित्तावपि सूक्ष्मधर्मालोचनरूपा बुद्धिः। तथा, प्रज्ञानं प्रज्ञा, विशिष्टक्षयोपशमजन्या प्रभूतवस्तुगतयथाऽवस्थितधर्मालोचनरूपा मतिः। सर्वमिदमाभिनिबोधिकम्– कथञ्चित् किञ्चिद् भेददर्शनेऽपि तत्त्वतः सर्वं मतिज्ञानमेवेदमित्यर्थः॥ इति-निर्युक्तिश्लोकार्थः॥ ३९६॥

अत्रैतद्व्याख्यानाय भाष्यम्–

होइ[2] अपोहोऽवाओ सई धिई सव्वमेव मइ-पण्णा। ईहा सेसा, सव्वं इदमाभिणिबोहियं जाण॥ ३९७॥

अपोहस्तावत् किमुच्यते ?, इत्याह– अपोहो भवत्यपायः– योऽयमपोहः स मतिज्ञानतृतीयभेदोऽपायो[3] निश्चय उच्यत इत्यर्थः, स्मृतिः पुनर्धृतिर्धारणोच्यते, धारणाभेदत्वेनावयवे समुदायोपचारादिति। मति-प्रज्ञे– मतिप्रज्ञाशब्दाभ्यां सर्वमपि[4] मतिज्ञानमुच्यते। 'ईहा सेस त्ति' शेषाभिधानानि त्वीहा-विमर्श-मार्गणा-गवेषणा-संज्ञालक्षणानि सर्वाण्यपि ईहा– ईहान्तर्भावीनि द्रष्टव्यानीत्यर्थः। एवं विशेषतः कथञ्चिद् भेदसद्भावेऽपि सामान्यतः सर्वमिदमाभिनिबोधिकज्ञानमेव जानीहि, यत ईहा-ऽपोहादयः सर्वेऽप्यमी आभिनिबोधिकज्ञानस्यैव पर्यायाः, केषाञ्चिद् वचनपर्यायत्वात्, केषाञ्चित्त्वर्थपर्यायत्वादिति॥ ३९७॥

एतदेव दर्शयति–

मइ-पन्ना-भिणिबोहिय-बुद्धीओ होंति[5] वयणपज्जाया। जा उग्गहाइसण्णा ते सव्वे अत्थपज्जाया॥ ३९८॥

इह ये शब्दाः किल सर्वं वस्तु संपूर्णं प्रतिपादयन्ति ते वचनरूपा वस्तुनः पर्याया वचनपर्याया उच्यन्ते। ये तु तदेकदेशमभिदधति तेऽर्थैकदेशप्रतिपादकाः पर्याया अर्थपर्याया उच्यन्ते। तत्र मति-प्रज्ञा-ऽऽभिनिबोधिक-बुद्धयो वचनपर्याया भवन्ति– मति-प्रज्ञा-ऽऽभिनिबोधिक-बुद्धिलक्षणाश्चत्वारः शब्दा आभिनिबोधिकज्ञानस्य ज्ञानपञ्चकाद्यभेदलक्षणस्य वचनपर्याया द्रष्टव्या इत्यर्थः, संपूर्णस्याऽपि तस्याऽमीभिः प्रतिपाद्यमानत्वात्। ये त्ववग्रहे-हादिकाः संज्ञाविशेषास्ते सर्वेऽप्यर्थपर्यायाः, तदेकदेशप्रतिपादक-

१ क ग. 'स्वनप्र'। २ भवत्यपोहोऽपाय स्मृतिर्धृतिः सर्वमेव मति-प्रज्ञे। ईहा शेषाः, सर्वमिदमाभिनिबोधिकं जानीहि॥ ३९७॥ ३ घ छ. 'यो भे'।
४ घ छ. 'मेव म'। ५ मति प्रज्ञा-ऽऽभिनिबोधिक-बुद्धयो भवन्ति वचनपर्यायाः। या अवग्रहादिसंज्ञास्ते सर्वेऽर्थपर्यायाः॥ ३९८॥

[1]अण्णारंभे अण्णं कह दीसइ, जह घडो पडारंभे ?। सिवकादओ न घडओ किह दीसइ सो तदद्धाए ? ॥४२१॥

इह 'नारंभे च्चिय दीसइ' इत्यत्र भवतोऽयमभिप्रायो यदुत–मृच्चक्र-चीवर-कुम्भकारादिसामग्र्याः प्रथमेऽपि[3] प्रवृत्तिसमये घटः किं नोपलभ्यते ?, अनुपलम्भाच्चाऽयमसंस्तत्र पश्चादुत्पद्यते। एतच्चाऽयुक्तमेव, यतो न प्रथमे प्रारम्भसमये घटः प्रारब्धः, किन्तु चक्रमस्तकमृत्पिण्डारोपणादीन्येवाऽऽरब्धानि। अन्यारम्भे चाऽन्यत् कथं दृश्यते ? न दृश्यत एवेत्यर्थः, यथा पटारम्भे घटः। यदुक्तम्– 'न[2] सिवादद्धाए' इति; तत्राह– 'सिवकादओ इत्यादि' शिवकादिकाले घटो न दृश्यत इत्युक्तम्, तदेतद् युक्तमेव, यतो शिवकादयो घटो न भवन्ति। अतो यत एव शिवकादिकालोऽसौ, अत एव तदद्धायां तत्काले कथमसौ घटो दृश्यताम् ?, अन्यारम्भकालेऽन्यस्य दर्शनानुपपत्तेरिति ॥ ४२१ ॥

यदुक्तम्– '[2]दीसइ तदंते' तत्राह–

[4]अन्ति च्चिय आरद्धो जइ दीसइ तम्मि चेव को दोसो ?। अकयं व संपइ गए किह कीरइ, किह व एसम्मि॥४२२॥

अन्त्य एव क्रियाक्षण आरब्धो घटो यदि तस्मिन्नेव दृश्यते, तर्हि को दोषः ?- न कश्चिदित्यर्थः। अतः किमुच्यते– 'यतोऽन्त्यसमय एवोपलभ्यते, नाऽन्यत्र, ततोऽयं पूर्वस्मिन्नेव क्रियत इति' ?। स हि पूर्वं प्रथमादिक्रियाक्षणेषु नारब्धः, न च दृश्यते, अन्त्ये तु क्रियाक्षणे प्रारब्धः, दृश्यते च। स च तस्मिन् क्रियासमये क्रियमाणः कृत एव, समयस्य निरंशत्वात्। यच्च कृतं तत् सदेव। ततः सदेव क्रियते नासत्, यच्च सत् तदुपलभ्यत एवेति स्थितम्।

अथ यस्मिन् समये क्रियमाणं तस्मिन्नेव कृतं नेष्यते, तत्राह— 'अकयं वेत्यादि' अकृतं वा संप्रतिसमये क्रियमाणसमये यदीष्यते, तर्हि तद्गतेऽतीते समये कथं क्रियतां, तस्य विनष्टत्वेनाऽसत्त्वात् ?। कथं वा एष्यति भविष्यत्यनन्तरागामिनि समये क्रियताम्, तस्याऽप्यनुत्पन्नत्वेनाऽसत्त्वादेव ?।

अथ व्यवहारवादी ब्रूयात्– क्रियासमयः सर्वोऽपि क्रियमाणकालः। तत्र च क्रियमाणं वस्तु नास्त्येव। उपरतायां तु क्रियायां योऽनन्तरसमयः स कृतकालः, तत्रैव कार्यनिष्पत्तेः। अतः कृतमेव कृतमुच्यते, न क्रियमाणमिति। साध्वेतत्, किन्त्विदं प्रष्टव्योऽसि– किं भवतः क्रियया कार्यं क्रियते, अक्रियया वा ?। यदि क्रियया, तर्हि कथमियमन्यत्र, कार्यं त्वन्यत्रेति ?। न हि 'खदिरे च्छेदनक्रिया,

१ अन्यारम्भेऽन्यत् कथं दृश्यते यथा घट पटारम्भे ?। शिवकादयो न घटक. कथं दृश्यते स तदद्धायाम् ? ॥ ४२१ ॥ २ गाथा ४१७। ३ क. 'पि त्र्' । ४ अन्त्य एवाऽऽरब्धो यदि दृश्यते तस्मिन्नेव, को दोष. ?। अकृतं वा सम्प्रति गते कथ क्रियते, कथं वैष्यति ? ॥४२२॥ ५ घ. छ. 'तत'।

याम्; अविशिष्टम्, अविशिष्टतरं चेहा-ऽवग्रहयोः; अर्थधारणमप्यवग्रहे-हा-ऽपायेभ्यः सर्वप्रकृष्टं धारणायाम्, इत्येवमवग्रहणादिमात्रे सर्वेषां सामान्ये सत्यप्यर्थविशेषं ग्राह्यमाश्रित्य भिन्ना एवावग्रहादयः। स चाऽर्थविशेषोऽमीषां ग्राह्यः प्राग् विस्तरेण दर्शित एव, इत्येवं वोत्तरार्धमिदं व्याख्यायते। इदमेव च व्याख्यानं वृद्धसंमतं लक्ष्यते, युक्तया तु प्राक्तनमपि घटते। इत्यलं विस्तरेणेति ॥ ३९९ ॥

कथं पुनरवग्रहादिवचनेन सर्वमप्याभिनिवोधिकं संगृह्यते ?, इत्याह—

[1]उग्गहणमोग्गहो त्ति य अविसिट्ठमवग्गहो तयं सव्वं। ईहा जं मइचेट्ठा मइवावारो तयं सव्वं ॥४००॥

अवग्रहणं तावदवग्रह उच्यत इति कृत्वाऽविशिष्टं तत् सर्वमपीहादिभेदभिन्नमाभिनिवोधिकज्ञानमवग्रह एव। इदमुक्तं भवति– अवग्रहणमवग्रह इति व्युत्पत्तिमाश्रित्य सर्वमप्याभिनिवोधिकज्ञानमवग्रहो भवति, यथा ह्यवग्रहः कमप्यर्थमवगृह्णाति, एवमीहाऽपि कमप्यर्थमवगृह्णात्येव, एवमपाय-धारणे अपि; इति सर्वमप्याभिनिबोधिकज्ञानं सामान्येनावग्रहः। तथा यद् यस्मात् 'ईह चेष्टायाम्, ईहनमीहा' इति व्युत्पत्तेरीहाऽपि मतेश्चेष्टा मतिचेष्टा वर्तते, तस्मात् सर्वमपि तदाभिनिवोधिकमविशिष्टं मतिव्यापार ईहेत्यर्थः, अवग्रहा-ऽपाय-धारणानामपि सामान्येन मतिचेष्टारूपत्वादिति भावः ॥ ४०० ॥

तथा—

[2]अवगमणमवाउ त्ति य अत्थावगमो तयं हवइ सव्वं। धरणं च धारण त्ति य तं सव्वं धरणमत्थस्स ॥ ४०१ ॥

यतश्चावगमनमवायो भण्यते, अतोऽनया व्युत्पत्त्या सर्वमपि तदाभिनिवोधिकमर्थस्याऽवायः, अवग्रहे-हा-धारणास्वपि सामान्येनाऽर्थावगमस्य विद्यमानत्वात्। तथा, धरणं धारणा यतो भण्यते, अतोऽनया व्युत्पत्त्या तत् सर्वमप्याभिनिवोधिकमर्थधरणरूपत्वाद् धारणा, अवग्रहे-हा ऽपायेष्वप्यविशिष्टस्याऽर्थधरणस्य विद्यमानत्वादिति। संकरप्राप्तिश्चैवमवग्रहादीनां प्राक् '[3]केवलमत्थविसेसं पइ' इत्यादिना परिहृतैव ॥ इति गाथापञ्चकार्थः ॥ ४०१ ॥

तदेवं तत्त्व-भेद-पर्यायैराभिनिवोधिकज्ञानं व्याख्याय सांप्रतं तद्विषयनिरूपणार्थमाह—

[4]तं पुण चउव्विहं नेयभेयओ तेण जं तदुवउत्तो। आदेसेणं सव्वं दव्वाइचउव्विहं मुणइ ॥ ४०२ ॥

---

१ अवग्रहणमवग्रह इति चाविशिष्टमवग्रहस्तत् सर्वम्। ईहा यद् मतिचेष्टा मतिव्यापारस्तत् सर्वम् ॥ ४०० ॥

२ अवगमनमवाय इति चार्थावगमस्तद् भवति सर्वम्। धरणं च धारणेति च तत् सर्वं धरणमर्थस्य ॥ ४०१ ॥ ३ गाथा ३९९।

४ तत् पुनश्चतुर्विधं ज्ञेयभेदतस्तेन यत् तदुपयुक्तः। आदेशेन सर्वं द्रव्यादिचतुर्विधं जानाति ॥ ४०२ ॥

त्पद्यमानानि त्वं नावबुध्यसे, घटोत्पत्तिनिमित्तभूतैवेयं सर्वाऽपि मृत्-चक्र-चीवरादिसामग्री, इत्येवं केवलघटाभिलापयुक्तत्वात्, ततस्तन्निरपेक्ष एव स्थूलमतितया सर्वमपि तत्कालं घटे लगयसि । ततश्च प्राक्तनक्रियाक्षणेष्वनुत्पन्नत्वाद् घटमदृष्ट्वैवं ब्रूषे– 'क्रियाकाले घटलक्षणं कार्यमहं न पश्यामि'। इदं तु नावगच्छसि यदुत– चरमक्रियाक्षण एव घटः प्रारभ्यते, प्राक्तनक्रियाकाले तु शिवकादय एवारभ्यन्ते, अन्यारम्भे चाऽन्यद् न दृश्यत एवेति ॥ ४२३ ॥

व्यवहारवादी प्राह—

[2]को चरिमसमयनियमो पढमे च्चिय तो न कीरए कज्जं । नाकारणं ति कज्जं तं चेवं तम्मि से समए ॥४२४॥

प्रथमसमयादारभ्य यद्यपरापराणि कार्याण्यारभ्यन्ते, तर्हि कोऽयं चरमसमयनियमः, येन विवक्षितं कार्यं प्रथमसमय एव न क्रियते, अकरणे च ततस्तत् तत्र न दृश्यते ?– नन्वाद्यकार्यवद् विवक्षितमपि तत्रैव क्रियतां, दृश्यतां चेति भावः । अत्र निश्चयः प्रत्युत्तरमाह– नाऽकारणं क्वचित् कार्यमुत्पद्यते, नित्यं सद-सत्त्वप्रसङ्गात् । न च तत् कारणं 'से' तस्य विवक्षितकार्यस्य तदन्त्यसमय एवाऽस्ति, न प्रथमादिसमयेषु, अतो न तेषूत्पद्यते, नापि दृश्यत इति ॥ ४२४ ॥

तदेवं 'क्रियाकाल एव कार्यं भवति, न पुनस्तदुपरमे' इत्युक्तम् । अथैवं नेष्यते, तर्हि प्रस्तुतमाभिनिबोधिकज्ञानमेवाऽधिकृत्योच्यते—

[3]उप्पाए वि न नाणं जइ तो सो कस्स होइ उप्पाओ ? । तम्मि य जइ अण्णाणं तो नाणं कम्मि कालम्मि ? ॥४२५॥

उत्पादनमुत्पादः कार्यस्योत्पत्तिहेतुभूतः क्रियाविशेषस्तत्रापि यदि मतिज्ञानं नेष्यते भवता– क्रियमाणावस्थायामपि यदि कार्यं त्वया नाभ्युपगम्यत इति भावः, तर्हि उत्पद्यमानस्याऽसत्त्वात् स कस्योत्पादो भवेत् ? इति कथ्यताम् । न ह्यविद्यमानस्य खरविषाणस्येवोत्पादो युक्तः । यदि च तस्मिन्नुत्पादकालेऽप्यज्ञानम्, तर्हि ज्ञानं कस्मिन् काले भविष्यति ? इति निवेद्यताम् । उत्पादोपरम इति चेत् । न, कथमन्यत्रोत्पादः, अन्यत्र तूत्पन्नमिति ? । उत्पादोपरमे च भवत् कार्यमुत्पादात् प्रागपि कस्माद् न भवति, अविशेषात् ? इत्याद्युक्तमेवेति ॥ ४२५ ॥

१ घ 'त्-ची'। २ कश्चरमसमयनियमः प्रथम एव ततो न क्रियते कार्यम् । नाऽकारणमिति कार्यं तथैव तस्मिंस्तस्य समये ॥ ४२४ ॥
३ उत्पादेऽपि न ज्ञान यदि तत. स कस्य भवत्युत्पादः ? । तस्मिंश्च यद्यज्ञान ततो ज्ञानं कस्मिन् काले ? ॥ ४२५ ॥

देतावदेव ज्ञेयमस्ति, नान्यदिति। इह क्षेत्र-कालौ सामान्येन द्रव्यान्तर्गतावेव, केवलं भेदेन रूढत्वात् पृथगुपादानमवसेयमिति ॥४०४॥

आदेशस्य व्याख्यान्तरमाह–

[1]आएसो त्ति व सुत्तं सुउवलद्धेसु तस्स मइनाणं। पसरइ तब्भावणया विणा वि सुत्तानुसारेण ॥४०५॥

अथवाऽऽदेशाः सूत्रमुच्यते, तेन सूत्रादेशेन सूत्रोपलब्धेष्वर्थेषु तस्य मतिज्ञानिनः सर्वद्रव्यादिविषयं मतिज्ञानं प्रसरति। ननु श्रुतोपलब्धेष्वर्थेषु यज्ज्ञानं तच्छ्रुतमेव भवति, कथं मतिज्ञानम्?, इत्याह– 'तब्भावणया इत्यादि' तद्भावनया श्रुतोपयोगमन्तरेण तद्वासनामात्रत एव यद् द्रव्यादिषु प्रवर्तते, तत् सूत्रादेशेन मतिज्ञानमिति भावः। एतच्च पूर्वमपि '[2]पुव्वं सुयपरिकम्मियमइस्स जं संपयं सुयाईयं' इत्यादिप्रक्रमे प्रोक्तमेव ॥ इति गाथाचतुष्टयार्थः ॥ ४०५ ॥

तदेवं तत्त्व-भेद-पर्यायैर्मतिज्ञानं व्याख्याय, विषयं च द्रव्यादिकमस्य निरूप्य, सांप्रतमिदमेव सत्पदप्ररूपणतादिभिर्नवभिरनुयोगद्वारैर्विचारयितुमाह–

[3]संतपयपरूवणया दव्वपमाणं च खित्त-फुसणा य। कालो य अंतरं भाग-भाव-अप्पा-बहुं चेव ॥ ४०६ ॥

सच्च तत् पदं च सत्पदं तस्य प्ररूपणं सत्पदप्ररूपणं गत्यादिद्वारेषु विचारणं तद्भावः सत्पदप्ररूपणता– 'कस्मिन् गत्यादिके द्वारे इदं सत्?' इत्येवं सतो विद्यमानस्याऽऽभिनिबोधिकज्ञानस्य गत्यादिद्वारेषु प्ररूपणा कर्तव्येत्यर्थः। तथा, द्रव्यप्रमाणमिति 'मतिज्ञानिजीवद्रव्याणामेकस्मिन् समये कियन्तो मतिज्ञानं प्रतिपद्यन्ते, सर्वे वा कियन्तस्ते?' इत्येवं प्रमाणं वक्तव्यमित्यर्थः। चशब्दः समुच्चये। तथा, क्षेत्रमिति 'कियति क्षेत्रे तत् संभवति?' इत्येवं मतिज्ञानस्य क्षेत्रं वक्तव्यम्। तथा 'कियत् क्षेत्रं मतिज्ञानिनः स्पृशन्ति?' इत्येवं स्पर्शना वक्तव्या। यत्रावगाढस्तत् क्षेत्रं, पार्श्वतोऽपि च स्पर्शना, इत्येवं क्षेत्र-स्पर्शनयोर्विशेषः। चः समुच्चये। तथा, कालः स्थितिलक्षणो मतिज्ञानस्य वाच्यः। चस्तथैव। 'एकदा प्रतिपद्य वियुक्तः कियता कालेन पुनरपि प्रतिपद्यते' इत्येवमन्तरं च तस्य वक्तव्यम्। तथा 'मतिज्ञानिनः शेषज्ञानिनां कतिभागे वर्तन्ते?' इत्येवं भागोऽस्य वक्तव्यः। तथा 'कस्मिन् भावे मतिज्ञानिनो वर्तन्ते?' इत्येवं भावो भणनीयः। तथा, अल्प-बहुत्वं वक्तव्यम्। भागद्वारादपि तल्लब्धमिति चेत्। नैवम्, यतोऽत्र मतिज्ञानिनां स्वस्थान एव पूर्वप्रतिपन्न-प्रतिपद्यमानका-

1 आदेश इति वा सूत्रं श्रुतोपलब्धेषु तस्य मतिज्ञानम्। प्रसरति तद्भावनया विनाऽपि सूत्रानुसारेण ॥ ४०५ ॥ 2 गाथा १६९।
3 सत्पदप्ररूपणता द्रव्यप्रमाण च क्षेत्र-स्पर्शने च। कालश्चान्तरं भाग-भावा-ऽल्प-बहु (त्व) चैव ॥ ४०६ ॥

क्त्वद्वारे एतन्मतेन सम्यग्दृष्टिराभिनिवोधिकस्य पूर्वप्रतिपन्न एव भवति, न तु प्रतिपद्यमानकः, सम्यक्त्व-ज्ञानयोर्युगपल्लाभात्, तत्काले च क्रियाया अभावात्, तदभावे च प्रतिपद्यमानकत्वायोगादिति। निश्चयनयमतेन तु सम्यग्दृष्टेराभिनिवोधिकस्य पूर्वप्रतिपन्नः, प्रतिपद्यमानकश्च लभ्यते, क्रियायाः कार्यनिष्ठायाश्च युगपद्भावस्य समर्थितत्वात्। इत्यलमतिविस्तरेण॥ इति गाथात्रयोदशकार्थः॥

ज्ञानद्वारे– मति-श्रुता-ऽवधि-मनःपर्याय-केवलभेदात् पञ्चधा ज्ञानम्। व्यवहारनयमतेन मति-श्रुता-ऽवधि-मनःपर्यायज्ञानिन आभिनिवोधिकस्य पूर्वप्रतिपन्ना भवन्ति, न तु प्रतिपद्यमानकाः, ज्ञानिनो मतिज्ञानप्रतिपत्त्ययोगस्यैतन्मतेन प्रागुक्तत्वात्। केवलिनां तूभयाभावः, तेषां क्षायोपशमिकज्ञानातीतत्वात्। मत्यज्ञान-श्रुताज्ञान-विभङ्गज्ञानवन्तस्तु प्रतिपद्यमानकाः कदाचिद् भवन्ति, युक्तेर्दर्शितत्वात्, न[1] तु प्रतिपन्नाः। निश्चयनयमतेन[2] तु मति-श्रुता-ऽवधिज्ञानिनः पूर्वप्रतिपन्ना नियमतः सन्ति, प्रतिपद्यमानका अपि भजनीयाः, ज्ञानिनो ज्ञानप्रतिपत्तेः समर्थितत्वात्। मनःपर्यायज्ञानिनस्तु पूर्वप्रतिपन्ना एव भवन्ति, न तु प्रतिपद्यमानकाः, पूर्वसम्यक्त्वलाभकाले प्रतिपन्नमतिज्ञानस्यैव पश्चादन्त्यावस्थायां मनःपर्यायज्ञानसद्भावात्। केवलिनां तूभयाभावः[3]। एवं मत्याद्यज्ञानवतामप्युभयाभाव एव, ज्ञानिन एव ज्ञानप्रतिपत्तेः।

दर्शनद्वारे– चक्षु-रचक्षु-रवधि-केवलदर्शनभेदाद् दर्शनं चतुर्धा। अत्राऽऽद्यदर्शनत्रये लब्धिमङ्गीकृत्य पूर्वप्रतिपन्ना नियमतः प्राप्यन्ते, प्रतिपद्यमानकास्तु भजनीयाः, तदुपयोगं त्वाश्रित्य पूर्वप्रतिपन्ना एव, न तु प्रतिपद्यमानकाः, मतिज्ञानस्य लब्धित्वात्, लब्ध्युत्पत्तेश्च दर्शनोपयोगे निषिद्धत्वात् "[4]सव्वाओ वि लद्धीओ सागरोवउत्तस्स उववज्जंति" इति वचनादिति। केवलदर्शनिनां तूभयाभावः।

संयतद्वारे– संयतादयं[5] आभिनिवोधिकस्य पूर्वप्रतिपन्ना नियमाल्लभ्यन्ते, प्रतिपद्यमाना अपि भजनया प्राप्यन्ते। ननु सम्यक्त्वलाभावस्थायामेव मतिज्ञानस्य प्रतिपन्नत्वात् संयतः कथं प्रतिपद्यमानकोऽवाप्यते?। सत्यम्, किन्तु योऽतिविशुद्धिवशात् सम्यक्त्वं, चारित्रं च युगपत् प्रतिपद्यते, स तस्यामवस्थायां प्रतिपद्यमानस्य संयमस्य प्रतिपन्नत्वात् संयतो मतेः प्रतिपद्यमानको भवति; उक्तं चाऽऽवश्यकचूर्णौ– "[6]नत्थि चरित्तं सम्मत्तविहूणं दंसणं तु भयणिज्जं"। भजनामेवाह– "[7]सम्मत्त-चरित्ताइं जुगवं, पुव्वं च सम्मत्तं"।

उपयोगद्वारे– उपयोगो द्विधा– पञ्च ज्ञानानि, त्रीणि चाऽज्ञानानि साकारोपयोगः; चत्वारि दर्शनानि अनाकारोपयोगः। तत्र साकारोपयोगे पूर्वप्रतिपन्ना नियमात् सन्ति, प्रतिपद्यमानकास्तु भजनीयाः। अनाकारोपयोगे तु प्रतिपन्ना एव, न तु प्रतिपद्यमानकाः,

---

१ क ग. 'न पूर्वप्र'। २ क ग 'न म'। ३ घ छ 'य म' क. 'व एव म'। ४ सर्वा अपि लब्धयः साकारोपयुक्तस्योपपद्यन्ते। ५ क ग. 'यश्चाभि'। ६ नास्ति चारित्रं सम्यक्त्वविहीनं, दर्शनं तु भजनीयम्। ७ सम्यक्त्व-चारित्रे युगपत्, पूर्वं च सम्यक्त्वम्।

शून्यः, न तत्र मतिज्ञानस्य प्रतिपद्यमानकः, नापि पूर्वं प्रतिपन्नः संभवतीत्यर्थः "[1]उभयाभावो एगिंदिएसु सम्मत्तलद्धीए" इति वचनादिति । कः पुनरेकेन्द्रियजातीयः ?, इति चेत् । उच्यते[2]– इन्द्रियद्वारे तावदेकेन्द्रिय एव, कायद्वारे पृथिवी-अप्-तेजो-वायु-वनस्पतयः, सूक्ष्मद्वारे तु सूक्ष्म इत्यादि । तथा, सम्यग्-मिथ्यादृष्टिरपि सम्[3]यक्त्वद्वारे मतिज्ञानशून्यः । "[4]सम्मा-मिच्छदिट्ठी णं भंते ! किं नाणी, अन्नाणी ?। गोयमा ! नो नाणी, अन्नाणी" इत्यादिवचनादिति । यश्च क्वापि द्वारे सर्वज्ञः केवली संभवति, सोऽपि तच्छून्य एव; तद्यथा– गतिद्वारे सिद्धिगतौ सिद्धः, इन्द्रियद्वारेऽतीन्द्रियः, कायद्वारेऽकायः, योगद्वारेऽयोगः, लेश्याद्वारेऽलेश्यः, ज्ञानद्वारे केवलज्ञानी, दर्शनद्वारे केवलदर्शनी; तथा, संयम-परीत्त-पर्याप्त-सूक्ष्म-संज्ञि-भव्यद्वारेषु यथासंख्यं नोसंयत-नोपरीत्त-नोपर्याप्त-नोसूक्ष्म-नोसंज्ञि-नोभव्या इति। एते सर्वेऽपि सर्वज्ञत्वाद् मतिज्ञानशून्याः, छद्मस्थस्यैव तत्संभवादिति भावः । तथा, परीत्त-भव्य-चरमद्वारेष्वपरीत्ता-ऽभव्या-ऽचरमा अपि मिथ्यादृष्टित्वाद् मतिज्ञानशून्याः । तदेवमेते सर्वे सर्वदैव मतिज्ञानशून्या मन्तव्याः, उभयाभावात् ॥ इति गाथार्थः ॥ ४११ ॥

अथ गत्यादिद्वारेष्वेव पूर्वप्रतिपन्न-प्रतिपद्यमानकचिन्तां कुर्वन्नाह–

[5]वियला अविसुद्धलेसा मणपज्जवणाणिणो अणाहारा । असण्णी अणगारोवओगिणो पुव्वपडिवन्ना ॥४१२॥

सेसा पुव्वपवण्णा नियमा पडिवज्जमाणया भइया । भयणा पुव्वपवण्णा अकसाया ऽवेयया होंति॥४१३॥

विकला द्वि-त्रि-चतुरिन्द्रियलक्षणा विकलेन्द्रियाः, तथाऽविशुद्धलेश्या भावलेश्यामङ्गीकृत्य कृष्ण-नील-कापोतलेश्यावृत्तयः, तथा मनःपर्यायज्ञानिनः, अनाहारकाः, असंज्ञिनः, अनाकारोपयुक्ताः; एते सर्वेऽपि मतिज्ञानस्य यदि भवन्ति तदा पूर्वप्रतिपन्ना एव, न तु प्रतिपद्यमानकाः; तथाहि— इन्द्रियद्वारे केचिद् विकलेन्द्रिया ये सास्वादनसम्यक्त्वेन सह पूर्वभवादागच्छन्ति, तेषां पूर्वमतिपत्तिमङ्गीकृत्य स्याद् मतिज्ञानम्, प्रतिपद्यमानकास्त्वस्य विकलेन्द्रियाः सर्वेऽपि न भवन्त्येव, तथाविधविशुद्ध्यभावात् । तथा, लेश्याद्वारेऽविशुद्धलेश्या अपि पूर्वप्रतिपन्नाः केचिद् भवन्ति, न तु प्रतिपद्यमानकाः, विशुद्धभावलेश्यानामेव तत्प्रतिपत्तेः । ज्ञानद्वारे मनःपर्यायज्ञानिनः सर्वेऽपि पूर्वप्रतिपन्ना भवन्त्येव, न तु प्रतिपद्यमानकाः, सम्यक्त्वसहचरितप्राप्तमतिज्ञानस्यैव पश्चादप्रमत्तसंयतावस्थायां मनःपर्यायज्ञानोत्पत्तेः;

१ उभयाभाव एकेन्द्रियेषु सम्यक्त्वलब्धौ । २ घ छ 'ते– एकेन्द्रि' । ३ घ छ. 'म्यग्द्वा' ।
४ सम्यग्-मिथ्यादृष्टयो भगवन् ! किं ज्ञानिनः, अज्ञानिनः ?। गौतम ! नो ज्ञानिनः, अज्ञानिनः ।
५ विकला अविशुद्धलेश्या मनःपर्यायज्ञानिनोऽनाहाराः । असंज्ञिनोऽनाकारोपयोगिनः पूर्वप्रतिपन्नाः ॥ ४१२ ॥
शेषाः पूर्वप्रपन्ना नियमात् प्रतिपद्यमानका भाज्याः । भजना पूर्वप्रपन्ना अकषाया अवेदका भवन्ति ॥ ४१३ ॥

त्याह– प्रतिपद्येरन्, नवेति । इदमुक्तं भवति– यदि प्रतिपद्यमानकानां प्रमाणं पृच्छसि, तदा प्रतिपद्यमानकास्तस्य विवक्षितसमये प्राप्यन्ते नवा । तत्र प्रतिपद्यमानप्राप्तिपक्षे जघन्यत एकः प्रतिपद्येत, उत्कृष्टतस्तु सर्वलोके क्षेत्रपल्योपमासंख्येयभागः प्रतिपद्येत । अथ पूर्वप्रतिपन्नानां तेषां प्रमाणमिच्छसि ज्ञातुं, तर्हि पूर्वप्रतिपन्ना द्वयोरपि पक्षयोर्जघन्यो-त्कृष्टलक्षणयोः क्षेत्रपल्योपमासंख्येयभागप्रदेश-राशिप्रमाणाः प्राप्यन्ते, केवलं जघन्यपदादुत्कृष्टं विशेषाधिकम् ॥ इति गाथाद्वयार्थः ॥ ४२८ ॥ ४२९ ॥

अथ क्षेत्रद्वारमधिकृत्याह—

[1]खेत्तं हवेज्ज चोद्दसभागा सत्तोवरिं, अहे पंच । इलिआगईए विग्गहगयस्स गमणेऽहवाऽऽगमणे ॥ ४३० ॥

नानाजीवानपेक्ष्य सर्वेऽप्याभिनिबोधिकज्ञानिनः पिण्डिता लोकासंख्येयभागमेव [3]व्याप्नुवन्ति । एकजीवस्य तु क्षेत्रं भवेत् कियत् ?, इत्याह– सप्त चतुर्दशभागाः– चतुर्दशभागीकृतस्य लोकस्य सप्त भागाः सप्त रज्जव इत्यर्थः, उपरि ऊर्ध्वमिलिकागत्या विग्रहगतस्य निरन्तराऽपान्तरालस्पर्शिनोऽनुत्तरविमानेषु गमने, तत आगमने वा । अधस्त्वनयैव गत्या षष्ठनरकपृथ्वीगमने, आगमने वा पञ्च चतुर्दशभागाः पञ्च रज्जवः प्राप्यन्ते । इदमुक्तं भवति– यदाऽत्राभिनिबोधिकज्ञानी मृत्वेलिकागत्याऽनुत्तरसुरेषूत्पद्यते, तेभ्यो वाऽत्र मनुष्यो जायते, तदाऽस्य जीवप्रदेशो दण्डसप्तरज्जुप्रमाणे क्षेत्रे भवति, अधस्त्वनयैव गत्या षष्ठनरकपृथिव्यां गच्छतः, तत आगच्छतो वा पञ्चरज्जुप्रमाणक्षेत्रेऽसौ लभ्यत इति । विराधितसम्यक्त्वो हि षष्ठपृथ्वीं यावद् गृहीतेनाऽपि सम्यक्त्वेन सैद्धान्तिक-मतेन कश्चिदुत्पद्यते, कार्मग्रन्थिकमतेन तु वैमानिकदेवेभ्योऽन्यत्र तिर्यङ्, मनुष्यो वा तेनैव क्षायोपशमिकसम्यक्त्वेनोत्पद्यते, न गृहीतेन; सप्तमपृथिव्यां पुनरुभयमतेनाऽपि वान्तेनैव तेनोपजायते ॥ ४३० ॥

आह– भवत्वेवम्, किन्तु यः सप्तमपृथिव्या गृहीतसम्यक्त्वोऽत्राऽऽगच्छति, तस्याऽधः षट् चतुर्दशभागाः किमिति न लभ्यन्ते ?, इत्याह–

[4]आगमणं पि निसिद्धं चरिमाउ एइ जं तिरिक्खेसु । सुर-नारगा य सम्मद्दिट्ठी जं यंति मणुएसु ॥४३१ ॥

चरमायाः सप्तमपृथिव्या न केवलं गमनं, अपि त्वागमनमपि गृहीतसम्यक्त्वस्याऽऽगमे निषिद्धं, यतस्तस्या उद्धृत्य सर्वोऽप्ये-

१ क्षेत्रं भवेच्चतुर्दशभागाः सप्तोपरि, अधः पञ्च । इलिकागत्या विग्रहगतस्य गमनेऽथवाऽऽगमने ॥ ४३० ॥ २ घ छ 'वे चो' । ३ घ छ,'प्राप्नु' । ४ आगमनमपि निषिद्धं चरमादेति यत् तिर्यक्षु । सुर-नारकाश्च सम्यग्दृष्टयो यद् यान्ति मनुजेषु ॥ ४३१ ॥

प्रशस्ते तु लेश्यात्रये पञ्चेन्द्रियवदेव ।

सम्यक्त्वद्वारे निश्चय-व्यवहारनयाभ्यां विचारः । तत्र व्यवहारनयो मन्यते— मिथ्यादृष्टिरज्ञानी च सम्यक्त्व-ज्ञानयोः प्रतिपद्यमानको भवति, न तु सम्यक्त्व-ज्ञानसहितः । निश्चयनयस्तु ब्रूते– सम्यग्दृष्टिर्ज्ञानी च सम्यक्त्व-ज्ञाने प्रतिपद्यते, न तु मिथ्यादृष्टिः, अज्ञानी च । तथाचाऽऽह भाष्यकारः—

[1]सम्मत्त-नाणरहियस्स नाणमुप्पज्जइ त्ति ववहारो । नेच्छइयनओ भासइ उप्पज्जइ तेहिं सहिअस्स ॥४१४॥

पोतनयैव व्याख्याता ॥ ४१४ ॥

अत्र तावद् व्यवहारो निश्चयस्य[2] दूषणमाह—

[4]ववहारमयं जायं न जायए भावओ कयघडो व्व । अहवा कयं पि कज्जइ कज्जउ निच्चं न य समत्ती॥४१५॥

यदि हन्त ! 'सम्यग्दृष्टिर्ज्ञानी च सम्यक्त्व-ज्ञाने प्रतिपद्यते' इति त्वयाऽभ्युपगम्यते; तर्हि जातमपि तत् सम्यक्त्वं ज्ञानं चाऽसौ पुनरप्युत्पादयतीति सामर्थ्यादापन्नम् । न च जातं विद्यमानं पुनरपि जायते– न केनाऽपि ततः क्रियत इत्यर्थः । कुतः, इत्याह– भावतो विद्यमानत्वात्, पूर्वनिष्पन्नघटवत् । इत्येतद्[3] व्यवहारनयमतम्, असत्कार्यवादित्वात् तस्य । प्रमाणयति चासौ– यद् विद्यमानं तद् न केनचित् क्रियते, यथा पूर्वनिष्पन्नो घटः, विद्यमाने च सम्यग्दृष्टेः सम्यक्त्व-ज्ञाने, अतो न तत्करणमुपपद्यते । अथ कृतमपि क्रियते, तर्हि क्रियतां नित्यमपि, इति क्रियाऽनुपरमप्रसङ्गः, न चैवं सत्येकस्याऽपि कदापि कार्यस्य परिसमाप्तिः । इति प्रस्तुतस्याऽऽभिनिबोधिकस्याऽपि प्रतिपत्त्यनवस्थेति ॥ ४१५ ॥

अपि च, यदि कृतमपि क्रियते, तदाऽन्येऽपि दोषाः । के ?, इत्याह–

[5]किरियावे[6]फल्लं चिय पुव्वमभूयं च दीसए होंतं । दीसइ दीहो य जओ किरियाकालो घडाईणं ॥४१६॥

यदि 'कृतमपि क्रियते' इत्यभ्युपगम्यते, तर्हि घटादिकार्ये उत्पाद्ये क्रियायाश्चक्रभ्रमणादिकाया वैफल्यं निरर्थकता प्राप्नोति, कार्यस्य प्रागेव सत्त्वात् । किञ्च, अध्यक्षविरोधः सत्कार्यवादे, यतः पूर्वं मृत्पिण्डावस्थायामभूतमविद्यमानं, पश्चात्तु कुम्भकारादिव्यापारे

१ सम्यक्त्व-ज्ञानरहितस्य ज्ञानमुत्पद्यत इति व्यवहार. । नैश्चयिकनयो भाषते उत्पद्यते ताभ्यां सहितस्य ॥ ४१४ ॥ २ अवतरणिकया ।
३ क 'यदू' । ४ व्यवहारमतं जातं न जायते भावत कृतघट इव । अथवा कृतमपि क्रियते क्रियतां नित्यं न च समाप्ति ॥ ४१५ ॥
५ क्रियावैफल्यमेव पूर्वमभूतं च दृश्यते भवत् । दृश्यते दीर्घश्च यत क्रियाकालो घटादीनाम् ॥ ४१६ ॥ ६ क ग. ङ 'याइवे' ।

एगस्स अणेगाण व उवओगंतोमुहुत्ताओ ॥ ४३४ ॥

द्विधा मतिज्ञानस्य कालश्चिन्तनीयः– उपयोगतः, लब्धितश्च । तत्रैकजीवस्य तदुपयोगो जघन्यत उत्कृष्टतश्चान्तर्मुहूर्तमेव भवति, परत उपयोगान्तरगमनादिति । सर्वलोकवर्तिनामनेकाभिनिबोधिकजीवानामपीदमेवोपयोगकालमानं, केवलमिदमन्तर्मुहूर्तमपि बृहत्तरमवसेयम् ॥ ४३४ ॥

लब्धिमङ्गीकृत्य कालमानमाह—

लद्धी[3] वि जहन्नेणं एगस्सेवं परा इमा होइ । अह सागरोवमाइं छावट्ठिं सातिरेगाइं ॥ ४३५ ॥

आभिनिबोधिकज्ञानलब्धिरपि तदावरणक्षयोपशमरूपाऽवाप्तसम्यक्त्वस्यैकजीवस्य जघन्यत एवमिति–एवमेवाऽन्तर्मुहूर्तमेवेत्यर्थः, परतो मिथ्यात्वगमनात्, केवलावाप्तेर्वा । परा तूत्कृष्टा तल्लब्धिरेकजीवस्येयमनन्तरवक्ष्यमाणा भवति । अथ सैवोच्यते– सातिरेकाणि पट्षष्टिसागरोपमानि ॥ ४३५ ॥

कथं पुनरेतानि भवन्ति ?, नानाजीवानां च कियाँल्लब्धिकालः ?, इत्याह–

दो[4] वारे विजयाईसु गयस्स तिन्नच्चुए अहव ताइं । अइरेगं नरभवियं, नाणाजीवाण सव्वद्धं ॥ ४३६ ॥

इह कश्चित् साधुर्मत्यादिज्ञानान्वितो देशोनां पूर्वकोटीं यावत् प्रव्रज्यां परिपाल्य विजय-वैजयन्त-जयन्ता-ऽपराजितविमानानामन्यतरविमाने उत्कृष्टं त्रयस्त्रिंशत्सागरोपमलक्षणदेवायुरनुभूय पुनरप्रतिपतितमत्यादिज्ञान एव मनुजेषूत्पन्नो देशोनां पूर्वकोटीं प्रव्रज्यां विधाय तदैव विजयादिषूत्कृष्टमायुः संप्राप्य पुनरप्रतिपतितमत्यादिज्ञान एव मनुष्यो भूत्वा पूर्वकोटीं जीवित्वा सिद्ध्यतीति । एवं विजयादिषु वारद्वयं गतस्य; अथवाऽच्युतदेवलोके द्वाविंशतिसागरोपमस्थितिकेषु देवेषु त्रीन् वारान् गतस्य तानि पट्षष्टिसागरोपमानि अधिकानि भवन्ति । अधिकं चेह नरभवसंबन्धि देशोनं पूर्वकोटित्रयं चतुष्टयं वा द्रष्टव्यम् । नानाजीवानां तु सर्वाद्धं सर्वकालं मतिज्ञानस्य स्थितिः ॥ इति गाथापञ्चकार्थः ॥४३६ ॥

१ एकस्यानेकानां वोपयोगोऽन्तर्मुहूर्तम् ॥ ४३४ ॥ २ क ग 'हुत्तमित्तो उ' ।
३ लब्धिरपि जघन्येनैकस्यैवं परेयं भवति । अथ सागरोपमानि पट्षष्टिं सातिरेकाणि ॥ ४३५ ॥
४ द्वौ वारौ विजयादिषु गतस्य त्रीनच्युतेऽथवा तानि । अतिरिक्तं नरभाविक, नानाजीवानां सर्वाद्धम् ॥ ४३६ ॥

अपि च,

[1]निच्चकिरियाइदोसा नणु तुल्ला, असइ कट्ठतरगा वा। पुव्वमभूयं च न ते दीसइ किं खरविसाणं पि?॥४१९॥

ननु नित्यकरणादयः सत्कार्यवादे ये दोषाः प्रदत्ताः, तेऽसति कार्येऽसत्कार्यवादेऽपीत्यर्थः[2], तुल्याः समानाः, तथाहि– अत्रापि शक्यते वक्तुम्–यद्यसत् क्रियते, तर्हि क्रियतां नित्यमेव, असत्त्वाविशेषात्, न चैवमेकस्याऽपि कार्यस्य निष्पत्तिर्युज्यते; खरविषाणकल्पे चाऽसति कार्ये समुत्पाद्ये क्रियावैफल्यमित्यादि। किं तुल्या एवाऽसति कार्येऽमी दोषाः?, न, इत्याह– कष्टतरा वा दुष्परिहार्यतरा वा, सतो हि कार्यस्य केनापि पर्यायविशेषेण करणं संभवत्यपि, लोकेऽपि सतामाकाशादीनां पर्यायविशेषाऽऽधानापेक्षया करणस्य रूढत्वात्। तथाच तत्र वक्तारः समुपलभ्यन्ते– 'आकाशं कुरु, पृष्ठं कुरु, पादौ कुरु' इत्यादि। खरविषाणकल्पे त्वसति कार्ये न केनाऽपि प्रकारेण करणं संभवति। ततः कष्टतरास्तत्राऽमी दोषा इति भावः। यदुक्तम्– '[3]पुव्वमभूयं च दीसए होंतं' इति, तत्राह– 'पुव्वमित्यादि' उत्पत्तेः पूर्वं च यद्यभूतं सर्वथाऽविद्यमानं कार्यमुत्पद्यत इतीष्यते, तर्हि ते तव मतेन किं खरविषाणमपि पूर्वमभूतं पश्चादुत्पद्यमानं न दृश्यते, प्रागसत्त्वाविशेषात्? इति॥ ४१९॥

यदुक्तम्– '[3]दीसइ दीहो य जओ किरियाकालो' इति। तत्राह–

[4]पइसमउप्पण्णाणं परोप्परविलक्खणाण सुबहूणं। दीहो किरियाकालो जइ दीसइ किं च कुंभस्स?॥४२०॥

समयं समयं प्रत्युत्पन्नानां परस्परविलक्षणानां सुबहूनामसंख्येयानां 'मृत्खनन-संहरण-पिटक-रासभपृष्ठारोपणा-ऽवतारणा-ऽम्भःसेचन-परिमर्दन-पिण्डविधान-भ्रमण-चक्रारोपण-शिवक-स्थास-कोश-कुशूलादिकार्याणाम्' इति शेषः, यदि दीर्घो द्राघीयान् क्रियाकालो दृश्यते, तर्हि किमत्र हन्त! कुम्भस्य घटस्याऽऽयातम्?। इदमुक्तं भवति– प्रतिसमयं भिन्ना एव क्रियाः, भिन्नान्येव च मृत्पिण्ड-शिवकादीनि कार्याणि, घटस्तु चरमैकक्रियाक्षणमात्रभाव्येव। ततश्च प्रतिसमयभिन्नानामनेककार्याणां यदि दीर्घः क्रियाकालो भवति, तर्हि चरमैकक्रियाक्षणमात्रभाविनि घटे दीर्घक्रियाकालप्रेरणं परस्याऽज्ञतामेव सूचयतीति॥ ४२०॥

यदुक्तम्– '[5]नारंभे च्चिय दीसइ' इत्यादि। तत्राह–

१ नित्यक्रियादिदोषा ननु तुल्याः, असति कष्टतरका (रा) वा। पूर्वमभूतं च न तव दृश्यते किं खरविषाणमपि?॥ ४१९॥

२ असत्कार्यवादे। ३ गाथा ४१६।

४ प्रतिसमयोत्पन्नानां परस्परविलक्षणानां सुबहूनाम्। दीर्घः क्रियाकालो यदि दृश्यते किं च कुम्भस्य?॥ ४२०॥ ५ गाथा ४१७।

[1]नेहत्थओ विसेसो भाग-प्पबहूण तेण तस्सेव । पडिवज्जमाण-पडिवन्नगाणमप्पा-बहुं जुत्तं ॥ ४४० ॥

गतार्थैव ॥ ४४० ॥

अथ-यदेव युक्तं तदेवाह–

[2]थोवा पवज्जमाणा असंखगुणिया पवन्नयजहण्णा । उक्कोसए य पवन्ना होंति विसेसाहिया तत्तो ॥४४१॥

आभिनिवोधिकस्य "[3]जहन्नेणं एक्को वा, दो वा, तिन्नि वा; उक्कोसेणं असंखेज्जा" इत्येवं प्रतिपद्यमानकाः प्रोच्यन्ते ते सर्वस्तोकाः । तेभ्यो जघन्यपदवर्तिनः पूर्वप्रतिपन्नास्तेऽसंख्यातगुणाः, चिरकालसंकलितत्वात्, प्रतिपद्यमानकानां तु विवक्षितैकसमयमात्रभावादिति । उत्कृष्टपदवर्तिनस्तु पूर्वप्रतिपन्नास्तेभ्योऽपि विशेषाधिका इति ॥ ४४१ ॥

प्रकारान्तरमप्यल्प-बहुत्वे दर्शयति—

[4]अहवा मइनाणीणं सेसयनाणीहिं नाणरहिएहिं । कज्जं सहोभएहि य अहवा गच्चाइभेएण ॥ ४४२ ॥

अथवा मतिज्ञानिनां शेषज्ञानिभिः सहाल्प-बहुत्वं प्रथमं वाच्यम्[5], यथा– '[6]मइनाणी सेसाणं जीवाणमणंतभागम्मि' इति । ततो द्वितीयस्थाने 'नाणरहिएहिं' इति, ज्ञानानि– व्याख्यानादिह मतिज्ञानादन्यानि गृह्यन्ते, तै रहिता वियुक्ताः पूर्वप्रतिपन्न-प्रतिपद्यमानकमतिज्ञानिन एव केवला इत्यर्थः, तैः सहितं मतिज्ञानिनामल्प-बहुत्वं स्वस्थान एव वक्तव्यम्, यथा '[7]थोवा पवज्जमाणा असंखगुणिया पवन्नयजहण्णा' इत्यादि । ततस्तृतीयस्थाने उभयैः शेषज्ञानिभिश्च समुदितैः सहाऽल्प-बहुत्वं तेषां कर्तव्यं, तद्यथा– '[8]सव्वथोवा मणपज्जवनाणी, ओहिनाणी असंखेज्जगुणा, मइनाणी सुयनाणी य दोवि सट्ठाणे तुल्ला मज्झिल्लेहिंतो विसेसाहिया, केवलनाणी अणंतगुणा'। एवं पूर्वप्रतिपन्न-प्रतिपद्यमानकविभागेनाऽप्यल्प-बहुत्वमिह स्वधियाऽभ्यूह्यमिति । अथवा गत्यादिभेदेन तत् कार्यम्, यथा–सर्वस्तोका मतिज्ञानिनो मनुष्याः, नारका असंख्यातगुणाः, ततस्तिर्यञ्चः, ततो देवा इति । एवं संभवतः सर्वत्र वाच्यमिति ॥ ४४२ ॥

१ नेहार्थतो विशेषो भागाल्प बहोस्तेन तस्यैव । प्रतिपद्यमानक प्रतिपन्नकानामल्पबहु (त्व) युक्तम् ॥ ४४० ॥
२ स्तोका प्रपद्यमाना असख्यगुणिता. प्रपन्नकजघन्या. । उत्कृष्टतश्च प्रपन्ना भवन्ति विशेषाधिकास्तत. ॥ ४४१ ॥
३ जघन्येनैको वा, द्वौ वा, त्रयो वा, उत्कृष्टतोऽसंख्येया. ।
४ अथवा मतिज्ञानिना शेषज्ञानिभिर्ज्ञानरहितै· । कार्यं सहोभयैश्चाथवा गत्यादिभेदेन ॥ ४४२ ॥ ५ घ छ 'वक्तव्यम्' ।
६ गाथा ४३८ । ७ गाथा ४४१ । ८ सर्वस्तोका मन पर्यवज्ञानिनः, अवधिज्ञानिनोऽसख्येयगुणा., मतिज्ञानिनः श्रुतज्ञानिनश्च द्वावपि स्वस्थाने तुल्या मध्यमाभ्यां विशेषाधिका·,केवलज्ञानिनोऽनन्तगुणा. । ९ घ छ. 'विकल्पेना' ।

पलाशे तु तत्कार्यभूतश्छेदः' इत्युच्यमानं शोभां बिभर्ति । किञ्च, क्रियाकाले कार्यं न भवति, पश्चात्तु भवति, इत्यनेनैतदापद्यते यदुत— क्रियैव हतका सर्वाऽनर्थमूलमेषा, कार्यस्योत्पित्सोर्विघ्नहेतुत्वात्, यावद् ह्येषा प्रवर्तते तावद् वराकं कार्यं नोत्पद्यते, अतः प्रत्युताऽसौ तस्य विघ्नभूतैव, ततस्त्वदभिप्रायेण विपर्यस्ततयैव प्रेक्षावन्त एतां प्रारभन्त इति । क्रियैव कार्यं करोति, केवलं तद्विरामे तद् निष्पद्यत इति चेत् । तर्हि हन्त ! कस्तयाऽस्य विरोधः, येन तत्कुर्वत्या अप्यस्यास्तत्कालमतिवाह्य पश्चाद् निष्पद्यते, न पुनस्तत्कालेऽपि ? । क्रियोपरमेऽपि च जायमानं कार्यं तदनारम्भेऽपि कस्माद् न भवति, क्रियाऽनारम्भ-तदुपरमयोरर्थतोऽभिन्नत्वात् ? इति । अथाऽक्रिययेति द्वितीयः पक्षः, तर्हि हिमवद्-मेरु-समुद्रादिवद् घटादयोऽप्यकृतका एव प्राप्ताः, तद्वत् तेषामपि कारणभूतक्रियामन्तरेणैव प्रवृत्तेः; तपः-स्वाध्यायादिक्रियाविधानं च मोक्षादीन् प्रति साध्वादीनामनर्थकमेव स्यात्, क्रियामन्तरेणैव सर्वकार्योत्पत्तेः । अतस्तूष्णीभावमास्थाय निष्परिस्पन्दनानि निराकुलानि तिष्ठन्तु त्रीण्यपि भुवनानि, क्रियारम्भविरहेणाऽप्यैहिका-ऽऽमुष्मिकसमस्तसमीहितसिद्धेः । न चैवम् । तस्मात् क्रियैव कार्यस्य कर्त्री, तत्काले एव च तद् भवति, न पुनस्तदुपरमे । अतः क्रियमाणमेव कृतमिति स्थितम् ॥ ४२२ ॥

आह— ननु यदि क्रियासमयेऽपि कार्यं भवति, तर्हि तत् तत्र कस्माद् न दृश्यते ? । दृश्यत एवेति चेत् । नन्वहमपि किमिति तद् न पश्यामि ?, इत्याशङ्क्याह—

पइसमयकज्जकोडीनिरविक्खो[3] घडगयाहिलासो सि । पइसमयकज्जकालं थूलमइ ! घडम्मि लाएसि ॥४२३॥

इह यद् यस्मिन् समये प्रारभ्यते, तत् तत्र निष्पद्यते दृश्यते च, केवलं स्थूला सूक्ष्मेक्षिकावहिर्भूतत्वाद् बादरदर्शिनी मतिर्यस्य तत्संबोधनं हे स्थूलमते ! त्वं घटे लगयसि । किम् ?, इत्याह— प्रतिसमयोत्पन्नानां कार्यकोटीनां कालः प्रतिसमयकार्यकालस्तं सर्वमपि 'घटस्यैवाऽयं समस्तोऽपि मृत्पिण्डविधान-चक्रभ्रमणादिक उत्पत्तिकालः' इत्येवमेकस्मिन्नेव घटे संबन्धयसीत्यर्थः । कथंभूतः सन् ?, इत्याह— प्रतिसमयोत्पद्यमानासु मृत्पिण्ड-शिवक-स्थास-कोशादिकासु, सिद्ध-केवलिप्रभृतीनां ज्ञानजननादिकासु च कार्यकोटिषु निरपेक्षः । कुतः पुनरेतत् ?, इत्याह— यतो घटगताभिलाषोऽसि त्वं, घटोऽस्यां मृद्-दण्ड-चक्र-चीवरादिसामग्र्यामुत्पत्स्यत उत्पत्स्यत इत्येवं केवलघटाभिलाषयुक्तत्वाद् भवत इत्यर्थः । इदमुक्तं भवति— प्रतिसमयमपरा-ऽपराण्येव शिवकादीनि कार्याण्युत्पद्यन्ते, दृश्यन्ते च, तानि च तथो-

१ घ छ 'ततः स्वा'। २ घ छ 'व त'।

३ प्रतिसमयकार्यकोटिनिरपेक्षो घटगताभिलाषोऽसि । प्रतिसमयकार्यकालं स्थूलमते ! घटे लगयसि ॥ ४२३ ॥ ४ घ. छ 'रवेक्खो' ।

योगाः ?, इत्याह– तेषामकार-ककाराद्यक्षराणाम् । कथंभूतानाम् ?, इत्याह– संयुक्ता-ऽसंयुक्तानाम् । तत्र संयुक्तैकाक्षरसंयोगो यथा-ऽग्निप्राप्त इत्यादि । असंयुक्तैकाक्षरसंयोगो यथा– घटः, पट इत्यादि । एते चाक्षरसंयोगा अनन्ताः । एकैकश्च संयोगः स्व-परपर्यायैः पूर्वाभिहितन्यायेनाऽनन्तपर्याय इति ॥ ४४५ ॥

अत्र परमतमाशङ्क्योत्तरमाह—

[1]संखिज्जक्खरजोगा होंति अणंता कहं, जमभिधेयं । पंचत्थिकायगोयरमन्नोन्नविलक्खणमणंतं ॥ ४४६ ॥

संख्येयानि च तान्यकाराद्यक्षराणि[2] च संख्येयाक्षराणि तेषां योगाः[3] संयोगाः कथमनन्ता भवन्ति ?— न घटन्त एवेति भावः । अत्रोत्तरमाह– यद् यस्मात् संख्येयानामप्यक्षराणामभिधेयमनन्तम् । कथंभूतम् ?, इत्याह– अन्योन्यविलक्षणं परस्परविसदृशम् । किंविषयम् ?, इत्याह– पञ्चास्तिकायगोचरं पञ्चास्तिकायगतस्कन्ध-देश-प्रदेश-परमाणु-द्व्यणुकादिकम् । अभिधेयानन्त्याच्चाभिधानस्याऽप्यानन्त्यमवसेयमिति ॥ ४४६ ॥

एतदेव भावयति—

[4]अणुओ पएसवुड्ढीए भिन्नरूवाइं धुवमणंताइं । जं कमसो दव्वाइं इह हवंति भिन्नाभिहाणाइं ॥ ४४७ ॥

इह यस्मादणुतः[5] परमाणुतः प्रारभ्य क्रमशः प्रदेशवृद्ध्या पुद्गलास्तिकायेऽपि ध्रुवं सर्वदैवाऽनन्तानि भिन्नरूपाणि द्रव्याणि प्राप्यन्ते, भिन्नाभिधानानि चैतानि, यथा– परमाणुः,द्व्यणुकः, त्र्यणुकः, चतुरणुको यावदनन्तप्रदेशिक इति । प्रत्येकं चानेकाभिधानान्येतानि, तद्यथा– अणुः, परमाणुः, निरंशः, निर्भेदः, निरवयवः, निष्प्रदेशः, अप्रदेश इत्यादिः तथा, द्व्यणुकः, द्विप्रदेशिकः, द्विभेदः, द्व्यवयव इत्यादि सर्वद्रव्य-सर्वपर्यायेष्वायोजनीयम् ॥ ४४७ ॥

यस्माच्चैवमभिधेयमनन्तं विसदृशरूपं भिन्नाभिधानं च; तस्मात् किम् ?, इत्याह—

[6]तेणाभिहाणमाणं अभिधेयाणंतपज्जवसमाणं । जं च सुयम्मि वि भणियं अणंतगम-पज्जयं सुत्तं ॥ ४४८ ॥

---

१ संख्येयाक्षरयोगा भवन्त्यनन्ता कथं, यदभिधेयम् । पञ्चास्तिकायगोचरमन्योन्यविलक्षणमनन्तम् ॥ ४४६ ॥ २ क ख ग. णि ते' । ३ घ छ. 'गाः क' ।
४ अणुत. प्रदेशवृद्ध्या भिन्नरूपाणि ध्रुवमनन्तानि । यत् क्रमशो द्रव्याणीह भवन्ति भिन्नाभिधानानि ॥ ४४७ ॥ ५ क. 'तः प्रा' ।
६ तेनाभिधानमानमभिधेयानन्तपर्यवसमानम् । यच्च श्रुतेऽपि भणितमनन्तगम-पर्यय सूत्रम् ॥ ४४८ ॥

यदुक्तम्– 'ईय न सवणाइकाले नाणं' इति; तत्राह–

[3]को व सवणाइकालो उप्पाओ जम्मि होज्ज से नाणं। नाणं च तदुप्पाओ य दो वि चरिमम्मि समयम्मि ॥४२६॥

वाशब्दश्चशब्दार्थे । कश्च श्रवणादिकालो व्यवहारवादिन् ! भवतोऽभिप्रेतः, यत्र ज्ञानं निषेधयसि ? । हन्त ! त्वया मतिज्ञानस्योत्पादसमय एव श्रवणादिकालोऽवगन्तव्यः, यत्र 'से' तस्य शिष्यस्य मतिज्ञानं भवेत्, नाऽपरः । अथाऽऽदित आरभ्य गुरुसंनिधाने धर्मश्रवणादय एव मतिज्ञानस्योत्पादकालः, नापरोऽवगम्यत इति चेत् । नैवम्, इत्याह– 'नाणमित्यादि' ज्ञानं च मतिज्ञानलक्षणं, तदुत्पादश्च तस्योत्पत्तिहेतुभूतः क्रियालक्षणः, एतौ द्वावपि धर्मश्रवणादिक्रियासमयराशेश्चरमसमय एव भवतः, न प्रथमादिसमयेषु, तेष्वपरापराणामेव धर्मावबोधादिकार्याणामुत्पत्तेः । न च तद्बोधादिमात्रादपि सम्यग्ज्ञानोत्पत्तिर्युज्यते, अभव्येष्वपि तत्सद्भावात् । तस्माद् विशिष्ट एव कस्मिंश्चिद् धर्मश्रवणादीनां चरमसमये मतिज्ञानं, तदुत्पादश्च; अतो युक्तमुक्तम्– 'जुत्तं तदंतम्मि' इति, अस्माभिरपि क्रियाकालस्याऽन्तसमय एव तस्येष्यमाणत्वात् । तस्माद् न सर्वेषु धर्मश्रवणादिक्रियासमयेषु मतिज्ञानम्, नापि सर्वेषामपि तेषामुपरमे, किन्त्वेकस्मिंस्तच्चरमसमये तदारभ्यते, निष्पद्यते च । अतः क्रियमाणमेव कृतम् ।

यदि कृतमपि क्रियते निश्चयवादिन् !, तर्हि पुनः पुनरपि क्रियतां, कृतत्वाविशेषात्, अतः करणानवस्थेति चेत् । नैवम्, क्रियाकाल-निष्ठाकालयोरभेदात् । यदि हि तदुत्पादयित्री क्रिया प्रारब्धा सती उत्तरसमयेष्वपि प्राप्येत, तदा स्यात्पुनरपि तत्करणम्, एतच्च नास्ति, यतोऽसौ तदुत्पादयित्री क्रिया न पूर्वं, नाप्युत्तरत्राऽस्ति, किन्तु तस्मिन्नेव चरमसमये प्रारभ्यते, निष्ठां च याति, इति कुतः पुनरपि कार्यकरणम् ?, अतो न तत्करणानवस्थेति । तस्मात् 'ईय न सवणाइकाले नाणं' इत्यनेन यदि सर्वेष्वपि धर्मश्रवणादिसमयेषु मतिज्ञानं निषिध्यते, तदा सिद्धसाध्यता । अथ चरमक्रियासमयेऽपि तद् निवार्यते, तदयुक्तम्, तत्र तस्य प्रसाधितत्वादिति । तस्मिंश्च धर्मश्रवणादिक्रियाचरमसमये सम्यक्त्वं ज्ञानं च प्रतिपद्यमानं प्रतिपन्नमेवेति । अतः सम्यग्दृष्टिर्ज्ञानी च सम्यक्त्व-ज्ञाने प्रतिपद्यते । इति निश्चयनयमततात्पर्यम् ।

व्यवहारनयस्तु ब्रूते– तस्मिंश्चरमसमये सम्यक्त्व-ज्ञानयोरद्याप्यसौ प्रतिपद्यमानकः, प्रतिपद्यमानं चाऽप्रतिपन्नमेव । अतो मिथ्यादृष्टिः, अज्ञानी च सम्यक्त्व-ज्ञाने प्रतिपद्यते । उत्तरत्र क्रियानिष्ठासमये तु सम्यक्त्व-ज्ञाने युगपदेव लभते । अतः प्रस्तुते सम्य-

१ गाथा ४१७ । २ को वा श्रवणादिकाल उत्पादो यस्मिन् भवेत् तस्य ज्ञानम् । ज्ञानं च तदुत्पादश्च द्वावपि चरमे समये ॥ ४२६ ॥
३ क.ग. 'गन्तव्य इ' । ४ घ.छ 'याक्ष' । ५ क.ग. 'त्रापि कि' ।

एतदेव भावयति—

जीवंतो वयणपहा सुयाणुसारेण केइ लब्भंति । ते सव्वे सुयनाणं ते याणंता मइविसेसा ॥ ४५१ ॥

इह यावन्तः केचन श्रुतानुसारेण संकेताः श्रुतग्रन्थानुसारेण लभ्यन्ते प्राप्यन्ते वचनस्य पन्थानो मार्गा मतिज्ञानविशेषा इति तात्पर्यम्, ते सर्वेऽपि श्रुतज्ञानमिति । एवं 'ते[2] वि य मईविसेसे सुयनाणब्भंतरे जाण' इत्यादिमति-श्रुतभेदविचारे पूर्वं प्रतिपादिताः, ते च श्रुतानुसारिणो मतिविशेषा अनन्ता इति । ननु यदि मतिविशेषाः कथं श्रुतज्ञानम्?, इति तु न प्रेर्यम्, श्रुतानुसारिणो विशिष्टस्य मतिविशेषस्यैव श्रुतत्वात् । एतच्च पूर्वं विस्तरेण समर्थितमेवेति ॥ ४५१ ॥

यदि नामाऽनन्ताः श्रुतभेदास्तथापि ते वक्तुं शक्यन्त एव, इत्याशङ्क्याह—

उक्कोससुयन्नाणी[3] वि जाणमाणो वि ते भिलप्पे वि । न तरइ सव्वे वोत्तुं न पहुप्पइ जेण कालो से ॥४५२॥

उत्कृष्टश्रुतज्ञानलब्धिसंपन्नोऽपि चतुर्दशपूर्वधरो जानन्नपि, अभिलप्यानपि तान् श्रुतज्ञानविशेषाननन्तान् सर्वानपि वक्तुं न शक्नोति । कुतः?, इत्याह– येन कारणेन 'से' तस्योत्कृष्टश्रुतज्ञानिनो वदतः कालो न प्रभवति न पूर्यते, आयुषः परिमितत्वात्, वाचश्च क्रमवर्तित्वात् । यदा चोत्कृष्टः श्रुतधरोऽपि सर्वान् श्रुतभेदान् वक्तुं न शक्नोति, तदाऽन्यस्याऽस्मदादेः का वार्ता? इति भावः ॥४५२॥

'चोद्दसविहनिक्खेवं'[4] इत्याद्युत्तरार्धं व्याचिख्यासुराह—

नाणम्मि[5] सुए चोद्दसविहं चसद्देण तह य अन्नाणे । अविसद्देणुभयम्मि वि किंचि जहासंभवं वोच्छं ॥४५३॥

सम्यक्श्रुतादौ श्रुतज्ञाने चतुर्दशविधं निक्षेपं चशब्देन श्रुताज्ञाने च मिथ्याश्रुतादौ, अपिशब्दादुभयरूपे च दर्शन-परिग्रहविशेषादक्षरा[6]-ऽनक्षरादिश्रुते किंचिद् यथासंभवं निक्षेपं वक्ष्ये ॥ इति गाथाचतुष्टयार्थः ॥ ४५३ ॥

तमेव चतुर्दशविधं निक्षेपमाह—

अक्खर[7] सण्णी सम्मं साईयं खलु सपज्जवसियं च[8] । गमियं अंगपविट्ठं सत्त वि एए सपडिवक्खा ॥४५४॥

१ यावन्तो वचनपथाः श्रुतानुसारेण केऽपि लभ्यन्ते । ते सर्वे श्रुतज्ञानं ते चाऽनन्ता मतिविशेषाः ॥ ४५१ ॥ २ गाथा १४३ ।
३ उत्कृष्टश्रुतज्ञान्यपि जानन्नपि तानभिलप्यानपि । न शक्नोति सर्वान् वक्तुं न प्रभवति येन कालस्तस्य ॥ ४५२ ॥
४ गाथा ४४९ । ५ ज्ञाने श्रुते चतुर्दशविधं चशब्देन तथा चाऽज्ञाने । अपिशब्देनोभयस्मिन्नपि किञ्चिद् यथासंभवं वक्ष्ये ॥४५३॥ ६ घ छ 'रादि' ।
७ अक्षर संज्ञि सम्यक् सादिकं खलु सपर्यवसितं च । गमिकमङ्गप्रविष्टं सप्ताऽप्येते सप्रतिपक्षाः ॥ ४५४ ॥ ८ क ग 'तु' ।

अनाकारोपयोगे लब्ध्युत्पत्तेः प्रतिषिद्धत्वादिति । आहारकद्वारे– आहारकाः साकारोपयोगवत्। अनाहारकास्त्वपान्तरालगतौ प्रतिपन्नाः संभवन्ति, प्रतिपद्यमानकास्तु न भवन्त्येव ॥ ४२६ ॥

भाषकद्वारे भाष्यकार एवाह–

[1]भासासलद्धिओ लभइ भासमाणो अभासमाणो वा । पुव्वपडिवन्नओ वा उभयं पि अलद्धिए नत्थि ॥४२७॥

भाषालब्ध्या सह वर्तत इति भाषासलब्धिकः– भाषालब्धिमांश्चेद् भवतीत्यर्थः, तदा भाषमाणोऽभाषमाणो वा लभते प्रतिपद्यते कश्चिद् मतिज्ञानम्, पूर्वप्रतिपन्नो वा भवति–भाषालब्धियुक्तो मनुष्यादिजात्यपेक्षया पूर्वप्रतिपन्नो नियमाल्लभते, प्रतिपद्यमानकोऽपि भजनयेति तात्पर्यम् । अलब्धिके भाषालब्धिशून्ये पुनरुभयमपि नास्ति, स ह्येकेन्द्रिय एव, तस्य च प्रागुक्तवदुभयाभाव एवेत्यर्थः ॥ इति गाथार्थः ॥

परीत्तद्वारे– परीत्ताः प्रत्येकशरीरिणः, परीत्तीकृतसंसारा वा स्तोकावशेषभवा इत्यर्थः । एत उभयेऽपि पूर्वप्रतिपन्ना नियमाल्लभ्यन्ते, प्रतिपद्यमानकास्तु भजनीयाः । अपरीत्तास्तु साधारणशरीरिणः, अपार्धपुद्गलपरावर्तादप्युपरिवर्तिसंसारा वा; मिथ्यादृष्टित्वादुभयेऽप्युभयविकलाः । पर्याप्तद्वारे– षट्पर्याप्तिभिः पर्याप्ताः परीत्तवद् वाच्याः । तदपर्याप्तास्तु प्रतिपन्ना एव, न त्वितरे । सूक्ष्मद्वारे–सूक्ष्मा उभयविकलाः । बादरास्तु पर्याप्तकवद् वाच्याः । संज्ञिद्वारे– दीर्घकालिकोपदेशेन संज्ञिनो गृह्यन्ते, ते च बादरवद् भावनीयाः । असंज्ञिनस्त्वपर्याप्तवदिति । भवद्वारे– भवसिद्धिकाः संज्ञिवत् । अभवसिद्धिकास्तूभयशून्याः । चरमद्वारे– चरमो भवो भविष्यति येषां तेऽभेदोपचाराच्चरमा भव्यवत् । अचरमास्त्वभव्यवदिति । तदेवं कृता गत्यादिद्वारेषु भाष्ये वृत्तौ च सत्पदप्ररूपणता ॥ ४२७ ॥

अथ द्रव्यप्रमाणमाह–

[4]किमिहाभिणिबोहियनाणिजीवदव्वपमाणमिगसमए । पडिवज्जेज्जं तु नवा पडिवज्जे जहन्नउ एगो ॥४२८॥

खेत्तपलिओवमासंखभाग उक्कोसओ पवज्जेज्जा । पुव्वपवन्ना दोसु वि पलियासंखेज्जईभागो ॥ ४२९ ॥

किमिहाऽस्मिँल्लोके आभिनिबोधिकज्ञानपरिणामापन्नजीवद्रव्याणां प्रमाणमेकस्मिन् विवक्षितसमये ? । एवं शिष्येण पृष्टे स-

१ भाषासलब्धिको लभते भाषमाणोऽभाषमाणो वा । पूर्वप्रतिपन्नको वोभयमप्यलब्धिके नास्ति ॥ ४२७ ॥ २ घ. छ 'षासल' ।
३ क. ग. 'सकद्वा' । ४ किमिहाऽऽभिनिबोधिकज्ञानिजीवद्रव्यप्रमाणमेकसमये ? । प्रतिपद्येरंस्तु नवा प्रतिपद्यते जघन्यत एकः ॥ ४२८ ॥
क्षेत्रपल्योपमासंख्यभाग उत्कृष्टतः प्रपद्येत । पूर्वप्रतिपन्ना द्वयोरपि पल्यासंख्येयभागः ॥ ४२९ ॥

यदि न क्षरतीत्यक्षरमुच्यते, एवं सति सर्वं पञ्चप्रकारमपि ज्ञानमविशुद्धनयमतेनाऽक्षरमेव, सर्वस्याऽपि ज्ञानस्य स्वरूपाविचलनात्। यतश्चाऽविशेषितं सूत्रेऽप्यभिहितमित्युपस्कारः, तद्यथा– "सव्वजीवाणं पि य णं अक्खरस्स अणंतभागो निच्चुग्घाडियओ"[1] इति। तत्र ह्यक्षरशब्देनाऽविशेषितमेव ज्ञानमभिप्रेतम्, न पुनः श्रुतज्ञानमेव। अपरं च, सर्वेऽपि भावा अविशुद्धनयाभिप्रायेणाऽक्षरा एव, ततोऽत्र श्रुतज्ञाने कः प्रतिविशेषः, येनोच्यते– 'अक्षरश्रुतम्, अनक्षरश्रुतम्' इति? ॥ ४५८ ॥

अत्रोत्तरमाह–

[2]जइ वि हु सव्वं चिय नाणमक्खरं तह वि रूढिओ वन्नो। भण्णइ अक्खरमिहरा न खरइ सव्वं सभावाओ॥४५९॥

यद्यप्यविशुद्धनयाभिप्रायेण सर्वमपि ज्ञानमक्षरं, तथा सर्वेऽपि भावा अक्षरास्तथापि रूढिवशाद् वर्ण एवेहाऽक्षरं भण्यते, इतरथा तु यथा त्वं भणसि, तथैवाऽशुद्धनयमतेन सर्वमपि वस्तु स्वभावाद् न क्षरत्येवेति। इदमुक्तं भवति– यथा गच्छतीति गौः, पङ्के जातं पङ्कजं, इत्याद्यविशिष्टार्थप्रतिपादका अपि शब्दा रूढिवशाद् विशेष एव वर्तन्ते, तथाऽत्राप्यक्षरशब्दो वर्ण एव वर्तते। वर्णश्च श्रुतमेवेति, अतस्तदेवाक्षरा-ऽनक्षररूपमुच्यत इति ॥ ४५९ ॥

अथास्य श्रुतरूपस्य वर्णस्य निरुक्तमाह—

[3]वण्णिज्जइ जेणत्थो चित्तं वण्णेण वाऽहवा दव्वं। वण्णिज्जइ दाइज्जइ भण्णइ तेणक्खरं वण्णो ॥ ४६० ॥

वर्ण्यते प्रकाश्यतेऽर्थोऽनेनेति वर्णोऽकार-ककारादिः। येन यथा किम्?, इत्याह— 'चित्तं वण्णेण व त्ति' यथा चित्रं भित्त्याद्यालेख्यं वर्णेन कृष्ण-नीलादिवर्णकेन प्रकाश्यते। 'अहवा दव्वं वण्णिज्जईत्यादि' अथवा यथा द्रव्यं गवादिकं वर्णेन श्वेतादिगुणेन दर्श्यते, एवं येन द्रव्यं वर्ण्यते दर्श्यतेऽभिलप्यतेऽसौ वर्णोऽक्षरमुच्यत इति ॥ ४६० ॥

वर्णश्च स्वर-व्यञ्जनभेदेन द्विधा भवति, अतः स्वर-व्यञ्जनशब्दयोरप्यर्थमाह—

[4]अक्खरसरणेण सरा वंजणमवि वंजणेण अत्थस्स। अत्थे य खरइ न य जेण खिज्जइ अक्खरं तेणं ॥ ४६१ ॥

१ सर्वजीवानामपि चाक्षरस्याऽनन्तभागो नित्योद्घाटितः।

२ यद्यपि खलु सर्वमेव ज्ञानमक्षरं तथापि रूढितो वर्ण.। भण्यतेऽक्षरमितरथा न क्षरति सर्वं स्वभावात् ॥ ४५९ ॥

३ वर्ण्यते येनाऽर्थश्चित्रं वर्णेन वाऽथवा द्रव्यम्। वर्ण्यते, दर्श्यते भण्यते तेनाऽक्षरं वर्ण.॥ ४६० ॥

४ अक्षरस्वरणेन स्वरा व्यञ्जनमपि व्यञ्जनेनाऽर्थस्य। अर्थे च क्षरति न च येन क्षीयतेऽक्षरं तेन ॥ ४६१ ॥

त्यागच्छति तिर्यक्ष्वेव न मनुष्येषु "[1]सत्तममहिनेरइया तेऊ-वाऊ-अणंततरुव्वट्टा, न[2] य पावे माणुस्सं" इतिवचनादिति । सुर-नारकाश्च सम्यक्त्वसहिता यस्माद् मनुष्येष्वेवाऽऽयान्ति, अतः सामर्थ्यात् तिर्यग्गतिगामिनः सप्तमपृथ्वीनारका मिथ्यात्वसहिता एवाऽऽगच्छन्ति ॥ इति गाथाद्वयार्थः ॥ ४३१ ॥

अथ स्पर्शनाद्वारम्– तत्र क्षेत्र-स्पर्शनयोर्विशेषादिधीर्षया माह–

[3]अवगाहणाइरित्तं पि फुसइ बाहिं जहाऽणुणोऽभिहियं । एगपएसं खेत्तं सत्तपएसा य से फुसणा ॥४३२॥

इह यत्रावगाढस्तत् क्षेत्रमुच्यते, यत्त्ववगाहनातो बहिरप्यतिरिक्तं क्षेत्रं स्पृशति सा स्पर्शनाऽभिधीयते, इति क्षेत्र-स्पर्शनयोर्विशेषः, यथा परमाणोः, आगमे यत्रैकस्मिन् प्रदेशेऽवगाढः, तदेकप्रदेशं क्षेत्रमभिहितम्, सप्तप्रदेशा तु 'से' तस्य स्पर्शना प्रोक्ता, यत्रैकस्मिन् प्रदेशेऽवगाढस्तं, अन्यांश्च षड्दिक्संबन्धिनः षड् नभःप्रदेशान् परमाणुः स्पृशतीति कृत्वेति ॥ ४३२ ॥

प्रकारान्तरेणाऽपि क्षेत्र-स्पर्शनयोर्भेदमाह–

[4]अहवा जत्थोगाढो तं खेत्तं, विग्गहे मया फुसणा । खेत्तं च देहमेत्तं संचरओ होइ से फुसणा ॥४३३॥

पाठसिद्धैव ॥ ४३३ ॥

अथ नानाजीवानधिकृत्य क्षेत्र-स्पर्शने माह–

[5]होंतिं असंखेज्जगुणा नाणाजीवाण खेत्तफुसणाओ ।

एकस्याऽऽभिनिवोधिकज्ञानिजीवस्य ये क्षेत्र-स्पर्शने, ताभ्यां सकाशाद् नानाभिनिवोधिकजीवानां याः क्षेत्रस्य स्पर्शनास्ता असंख्येयगुणाः, नानाभिनिवोधिकजीवानां सर्वेषामसंख्येयत्वादिति भावः ॥

कालद्वारमधिकृत्याह–

१ सप्तममहीनैरयिका तेजो-वायु-अनन्ततरुवर्तिनः, न च प्राप्नुयुर्मानुष्यम् । २ घ छ 'न वि पा' ।
३ अवगाहनातिरिक्तमपि स्पृशति बहिर्यथाऽणोरभिहितम् । एकप्रदेश क्षेत्रं सप्तप्रदेशा च तस्य स्पर्शना ॥ ४३२ ॥
४ अथवा यत्रावगाढस्तत् क्षेत्र, विग्रहे मता स्पर्शना । क्षेत्रं च देहमात्रं संचरतो भवति तस्य स्पर्शना ॥ ४३३ ॥
५ भवन्त्यसंख्येयगुणा नानाजीवानां क्षेत्रस्पर्शनाः ।

तदेवमक्षरं वर्ण इति पर्यायौ सामान्यवर्णवाचकौ, स्वरो व्यञ्जनमित्येतौ तु प्रत्येकं वर्णविशेषवाचकाविति । तत्र रूढिवशादक्षरं वर्ण इत्युक्तम् । तच्च त्रिविधं भवतीति दर्शयति–

[1]तं सण्णा-वंजण-लद्धिसण्णियं तिविहमक्खरं, तत्थ । सुबहुलिविभेयनिययं सण्णक्खरमक्खरागारो ||४६४||

तदक्षरं त्रिविधं भवति, तद्यथा– संज्ञाक्षरं, व्यञ्जनाक्षरं, लब्ध्यक्षरं चेति । तत्र सुबह्वयो या एता अष्टादश लिपयः शास्त्रेषु श्रूयन्ते, तद्यथा—

"[2]हंसलिवी भूयलिवी जक्खी तह रक्खसी य बोधव्वा । उड्डी जवणि तुरुक्की कीरी दविडी य सिंधवीया ॥ १ ॥
मालविणी नडि नागरी लाडलिवी पारसी य बोधव्वा । तह अनिमित्ती य लिवी चाणक्की मूलदेवी य ॥ २ ॥"

तद्भेदनियतमेतद्भेदसंबद्धसंज्ञाक्षरमक्षराकाररूपं, तच्च लिपिभेदादेवाऽनेकप्रकारं, यथा कस्मिंश्चिल्लिपिविशेषेऽर्धचन्द्राकृतिष्टकारः[3], [4]घंटाकृतिष्ठकार इत्यादि ॥ ४६४ ॥

अथ व्यञ्जनाक्षरमाह–

[5]वंजिज्जइ जेणत्थो घडो व्व दीवेण वंजणं तो तं । भण्णइ भासिज्जंतं सव्वकाराइ तक्कालं ॥ ४६५ ॥

व्यज्यतेऽनेनाऽर्थः प्रदीपेनेव घट इति, अतस्तद् व्यञ्जनं भण्यते, व्यञ्जनं च तदक्षरं च व्यञ्जनाक्षरं, तच्चेह सर्वमेव भाष्यमाणमकारादि हकारान्तम् । तस्या भाषायाः कालो यत्र तत् तत्कालं वेदितव्यं, भाष्यमाणः शब्दो व्यञ्जनाक्षरमिति हृदयम्, अर्थाभिव्यञ्जकत्वाच्छब्दस्येति ॥ ४६५ ॥

अथ लब्ध्यक्षरमाह–

[6]जो अक्खरोवलंभो सा लद्धी, तं च होइ विण्णाणं । इंदिय-मणोनिमित्तं जो यावरणक्खओवसमो ||४६६||

१ तत् सज्ञा-व्यञ्जन-लब्धिसज्ञित त्रिविधमक्षरं, तत्र । सुबहुलिपिभेदनियत सज्ञाक्षरमक्षराकार. ॥ ४६४ ॥
२ हसलिपिर्भूतलिपिर्याक्षी तथा राक्षसी च बोद्धव्या । उड्डी यवनी तुरुष्की कीरी द्राविडी च सिन्धवीया ॥ १ ॥ मालविनी नटी नागरी लाटलिपि. पारसी च बोद्धव्या । तथाऽनिमित्ती च लिपिश्चाणाकी मौलदेवी च ॥२॥ ३ घ छ 'र इ' । ४ क. 'घयाकृ' ख 'पयाकृ' ।
५ व्यज्यते येनाऽर्थो घट इव दीपेन व्यञ्जनं ततस्तत् । भण्यते भाष्यमाणं सर्वमकारादि तत्कालम् ॥ ४६५ ॥
६ योऽक्षरोपलम्भ. सा लब्धिः, तच्च भवति विज्ञानम् । इन्द्रिय-मनोनिमित्तं यश्चावरणक्षयोपशमः ॥ ४६६ ॥

अथाऽन्तरद्वारमाश्रित्याह–

[1]एगस्स जहन्नेणं अंतरमन्तोमुहुत्तमुक्कोसं । पोग्गलपरि[2]अट्टद्धं देसूणं दोसबहुलस्स ॥ ४३७ ॥

इह कश्चिज्जीवः सम्यक्त्वसहितं मतिज्ञानमवाप्य प्रतिपत्य चान्तर्मुहूर्तं मिथ्यात्वे स्थित्वा यदि पुनरपि सम्यक्त्वसहितं तदेव प्राप्नोति, तदेतद् मतिज्ञानस्य जघन्यमन्तर्मुहूर्तमन्तरं प्राप्तिविरहकालरूपं भवति। आशातनादिदोषबहुलस्य तु जीवस्य सम्यक्त्वात् प्रतिपातितस्य देशोनपुद्गलपरावर्तार्धरूपमुत्कृष्टमन्तरं भवति, एतावता कालेन पुनरपि सम्यक्त्वा-ऽऽभिनिबोधिकलाभात्। इत्येकजीवस्योक्तमन्तरम् ॥ ४३७ ॥

अथ नानाजीवानां तदभिधित्सुः, भागद्वारं च विभणिषुराह–

[3]जमसुन्नं तेहिं तओ नाणाजीवाणमन्तरं नत्थि । मइनाणी सेसाणं जीवाणमणन्तभागम्मि ॥ ४३८ ॥

यद् यस्मात् तैराभिनिबोधिकज्ञानिभिरशून्यं सर्वदैव नारकादिगतिचतुष्टयान्वितं त्रिभुवनमिदम्, ततस्तस्माद् नानाजीवानाश्रित्य नास्ति मतिज्ञानस्याऽन्तरकालः। तथा, मतिज्ञानिनः शेषज्ञानवतां जीवानामनन्ततमे भागे वर्तन्ते, शेषज्ञानिनो हि केवलिसहितत्वादनन्ताः, आभिनिबोधिकज्ञानिनस्तु सर्वलोकेऽप्यसंख्याता एवेति भावः ॥ इति गाथाद्वयार्थः ॥ ४३८ ॥

अथ भावद्वारम्, अल्प-बहुत्वद्वारं चाभिधित्सुराह–

[5]भावे खओवसमिए मइनाणं नत्थि सेसभावेसु । थोवा मइनाणविऊ सेसा जीवा अणंतगुणा ॥ ४३९ ॥

मतिज्ञानावरणे हि कर्मण्युदीर्णे क्षीणे, अनुदीर्णे तूपशान्ते मतिज्ञानमुपजायते, अतः क्षायोपशमिक एव भावे तद् वर्तते, न तु शेषेष्वौदयिक-क्षायिकादिभावेष्विति । मतिज्ञानेन विदन्तीति मतिज्ञानविदः स्तोकाः, शेषज्ञानयुक्तास्तु सिद्ध-केवल्यादयो जीवा अनन्तगुणा इति ॥ ४३९ ॥

एवमपि तावदल्प-बहुत्वं भवति, केवलमिहैवमुच्यमाने भागा-ऽल्पबहुत्वद्वारयोरर्थतः परमार्थतो न कश्चिद् विशेषो भेदो दर्शितो भवति। तेन तस्यैवाभिनिबोधिकस्य पूर्वप्रतिपन्न-प्रतिपद्यमानकानाश्रित्याऽल्प-बहुत्वं वक्तुमुचितम्, पौनरुक्त्याभावादिति। एतदेवाह–

१ एकस्य जघन्येनाऽन्तरमन्तर्मुहूर्तमुत्कृष्टम्। पुद्गलपरावर्तार्धं देशोनं दोषबहुलस्य ॥ ४३७ ॥ २ घ.छ. 'रियट्टद्धते दे'। ३ घ.छ. यदा पु'। ४ यदशून्य तैस्ततो नानाजीवानामन्तरं नास्ति। मतिज्ञानिनः शेषाणां जीवानामनन्तभागे ॥ ४३८ ॥ ५ भावे क्षायोपशमिके मतिज्ञान नास्ति शेषभावेषु। स्तोका मतिज्ञानविदः शेषा जीवा अनन्तगुणाः ॥ ४३९ ॥

[1]पंचक्खमिंदिय-मणेहिं लभइ लिंगेण चक्खरं कोइ । लिंगमणुमाणमण्णे सारिक्खाई पभासंति ॥ ४६९ ॥

तच्चाक्षरं लब्ध्यक्षरं कश्चित् प्रत्यक्षं लभते– प्रत्यक्षरूपतयैव कस्यचिदुत्पद्यत इत्यर्थः । काभ्यां कृत्वा ?, इत्याह– इन्द्रिय-मनोभ्याम्– इन्द्रिय-मनोनिमित्तं यद् व्यवहारप्रत्यक्षं तत्र कस्यचिल्लब्ध्यक्षरं श्रुतज्ञानरूपमुपजायत इत्यर्थः । अन्यस्य तु लिङ्गेन धूमादिना तदुत्पद्यते– धूमादिलिङ्गं दृष्ट्वाऽग्न्यादिरूपं तत् कस्यचिदुपजायत इत्यर्थः । लिङ्गं किमुच्यते ?, इत्याह– अनुमानमिति । ननु लिङ्गग्रहण-संबन्धस्मरणाभ्यामनु पश्चाद् मानमनुमानं लिङ्गजं ज्ञानमुच्यते, कथं लिङ्गमेवाऽनुमानमिति चेत् ?। सत्यम्, किन्तु कारणे कार्योपचारात् तदप्यनुमानं, यथा प्रत्यक्षज्ञानजनको घटोऽपि प्रत्यक्ष इति । [2]तदेतदिह तात्पर्यम्– लब्ध्यक्षरं श्रुतज्ञानमुच्यते, तच्चेन्द्रिय-मनोनिमित्तं प्रत्यक्षं वा स्यात्, अनुमानं वा स्यात्, नान्यत्, शेषस्याऽऽत्मप्रत्यक्षस्यावध्यादिरूपत्वादिति भावः । 'अण्णे सारिक्खाई पभासंति त्ति' सादृश्यादिभ्यो जायमानत्वात् तदनुमानं पञ्चविधमिति केचित् प्रभाषन्ते ॥ ४६९ ॥

एतदेवाह—

[3]सारिक्ख-विवक्खो-भय-मुवमा-गममेव सव्वमणुमाणं । किंचिम्मत्तविसेसेण वा न तं पंचहा ठाइ ॥ ४७० ॥

सादृश्यादन्यस्मिन् प्रत्यक्षेऽप्यर्थे स्मृतिज्ञानमुपजायते, यथा सदृशे एकस्मिन् भ्रातरि क्वापि दृष्टेऽन्यस्मिंस्तत्सदृश्येतद् भ्रातरि पूर्वदृष्टे सादृश्यात् 'स पूर्वदृष्टोऽस्य भ्राता' इति स्मृतिज्ञानमुत्पद्यते । विपक्षादप्युरगादेस्तद्विपक्षे नकुलादौ स्मृतिज्ञानमुपजायते । उभयस्मादुभयरूपाद् वेगसरात् खरा-ऽश्वयोः स्मृतिज्ञानमाविर्भवतीत्यादि । उपमानाद् गवादेर्गवयादौ, आगमात् स्वर्गादौ ज्ञानमुत्पद्यते । एवं सादृश्यादिभेदेनाऽनुमानं पञ्चविधम् ।

अत्र सूरिराह– सर्वमेवेदमनुमानम्– अनुमानाद् नातिरिच्यते, संबन्धादन्यतो विवक्षितार्थाप्रतिपत्तेः । अथ किञ्चिद्भेदेन भेदो विवक्ष्यते, तत्राह– 'न तं पंचहा ठाइ त्ति' तदनुमानं पञ्चधा नावतिष्ठते– नाऽनेन भेदपञ्चकमात्रेण सर्वतद्भेदसंग्रहो भवतीत्यर्थः, धूमादग्निज्ञानस्य, बलाकादेर्जलाद्यनुमानस्य च सकललोकप्रतीतस्याऽनेनाऽसंग्रहादिति । अत्रान्तरे '[4]भायअहियस्स' इत्यादिगाथा काचिद् दृश्यते, सा च प्रक्षेपरूपा मूलटीकयोरगृहीतत्वादुपेक्ष्यते ॥ ४७० ॥

१ प्रत्यक्षमिन्द्रिय-मनोभ्यां लभते लिङ्गेन चाक्षरं कोऽपि । लिङ्गमनुमानमन्ये सादृश्यादि प्रभाषन्ते ॥ ४६९ ॥ २ क ख ग 'तदि' । ३ सादृश्य-विपक्षो-भयमुपमा-ऽऽगममेव सर्वमनुमानम् । किञ्चिन्मात्रविशेषेण वा न तत् पञ्चधा तिष्ठति ॥ ४७० ॥ ४ भागाधिकस्य ।

अथोपसंहरन्नाह—

[1]लक्खण-विहाण-विसया-णुओगदारेहिँ वण्णिया बुद्धी । तयणंतरमुद्दिट्ठं सुयनाणमओ परूविस्सं ॥ ४४३ ॥

लक्षणमाभिनिवोधिकशब्दव्युत्पत्तिः, विधानं भेदोऽवग्रहादिः, विषयो द्रव्यक्षेत्रादिः, अनुयोगद्वाराणि सत्पदप्ररूपणतादीनि, एतैः सर्वैरपि यथोक्तक्रमेणाभिनिवोधिकज्ञानलक्षणा वर्णिता व्याख्याता बुद्धिः । ततस्तदनन्तरोद्दिष्टं श्रुतज्ञानं प्ररूपयिष्ये ॥ इति गाथापञ्चकार्थः ॥ ४४३ ॥

॥ तदेवमाभिनिबोधिकज्ञानं समाप्तमिति ॥

अथ श्रुतज्ञानमारभ्यते । अत्र चान्तरे 'आभिणिवोहियनाणे अट्ठावीसं[2]' इत्यादिगाथा निर्युक्तौ[3] दृश्यते, तां च सुगमां, उक्तार्थां वा मन्यमानोऽतिक्रम्य विहितसंवन्धामेवाऽग्रेतनगाथामाह—

[4]पत्तेयमक्खराइं अक्खरसंजोग जत्तिया लोए । एवइया सुयनाणे पयडीओ होंति नायव्वा ॥ ४४४ ॥

एकमेकं प्रति प्रत्येकमक्षराण्यकारादीन्यनेकभेदानि, यथा— अकारः सानुनासिकः, निरनुनासिकश्च; पुनरेकैकस्त्रिधा— ह्रस्वः, दीर्घः, प्लुतश्चेति; पुनरेकैकस्त्रिविधः— उदात्तः, अनुदात्तः, स्वरितश्चेति । एवमकारोऽष्टादशभेदः । एवमिकारादिष्वपि यथासंभवं भेदजालमभिधानीयमिति । तथा, अक्षराणां संयोगा अक्षरसंयोगा द्व्यादयो यावन्तो लोके, यथा— घटः, पट इत्यादि, व्याघ्रः, स्त्रीत्यादि । एवमेतेऽनन्ताः संयोगाः, तत्राप्येकैकः स्वपर्यायापेक्षयाऽनन्तपर्यायः । अत एतावत्यः श्रुतज्ञाने प्रकृतयो भेदा ज्ञातव्याः ॥ इति निर्युक्तिगाथार्थः ॥ ४४४ ॥

अथ भाष्यम्—

[5]संजुत्ता-संजुत्ताण ताणमेकक्खराइसंजोगा । होंति अणंता तत्थ वि एक्केकोऽणंतपज्जाओ ॥ ४४५ ॥

एकमक्षरमादिर्येषां द्व्यादीनां तान्येकाक्षरादीनि तेषां संयोगा एकाक्षरादिसंयोगास्तेऽनन्ता भवन्ति । केषां ये एकाक्षरादिसं-

---

१ लक्षण-विधान-विषया-ऽनुयोगद्वारैर्वर्णिता बुद्धिः । तदनन्तरमुद्दिष्टं श्रुतज्ञानमतः प्ररूपयिष्ये ॥ ४४३ ॥ २ आभिनिबोधिकज्ञानेऽष्टाविंशतिः ।
३ निर्युक्तौ गाथा १६ । ४ प्रत्येकमक्षराणि अक्षरसयोगा यावन्तो लोके । एतावत्य श्रुतज्ञाने प्रकृतयो भवन्ति ज्ञातव्या. ॥ ४४४ ॥
५ सयुक्ता ऽसंयुक्ताना तेषामेकाक्षरादिसंयोगा. । भवन्त्यनन्तास्तत्राप्येकैकोऽनन्तपर्याय. ॥ ४४५ ॥

या त्रिविधाऽनुपलब्धिः कैश्चित् प्रकल्प्यते, तद्यथा— अत्यन्तानुपलब्धिः खरविषाणादीनाम्, सामान्यानुपलब्धिर्यथा— रूपलक्षितस्यापि माषकणादेर्महति माषकणादिराशौ प्रक्षिप्तस्यानुपलब्धिः, विस्मृत्यनुपलब्धिः— विस्मृत्या 'अयं सः' इत्यनुसंधानमकुर्वतो विज्ञेया। सैषा त्रिविधाऽप्यनुपलब्धिर्नेहाधिकृता, अक्षरोपलब्ध्यधिकारेऽनुपलब्धेरप्रस्तुतत्वात्। अथोपलब्धिविपक्षोऽनुपलब्धिः, अतो विपक्षत्वेन साऽप्यत्राधिकृता। साध्वेतत्, केवलं त्रैविध्यनियमोऽयमयुक्तः अतिसंनिकृष्टा-ऽतिविप्रकृष्टानुपलब्ध्यादिकाया अप्यनुपलब्धेः प्रसिद्धत्वात्। ततः सर्वाऽप्यसौ साक्षात्, आदिग्रहणेन वा वक्तव्या, न तु तस्यास्त्रैविध्यनियमो युक्तः। सर्वाऽपि तर्ह्युच्यतामिति चेत्। नैवम्, ग्रन्थविस्तरप्रसङ्गात्, अन्यत्रोक्तत्वात्, प्रत्यक्षा-ऽनुमानान्तर्भावाच्चेति। अत्र यत् प्रक्षेपगाथान्तरं दृश्यते तत् स्वधिया भावनीयम्, उपेक्षणीयं वेति ॥ ४७३ ॥

तदेवं तत्त्व-भेद-पर्यायैर्व्याख्यातमक्षरम्। सांप्रतमक्षरश्रुताधिकारादेव यदुक्तं सूत्रे— "[2]अक्खरलद्धिअस्स लद्धिअक्खरं समुप्पज्जइ" इति तत्र प्रेर्यमुत्थापयन्नाह—

[3]अक्खरलंभो सण्णीण होज्ज पुरीसाइवण्णविण्णाणं। कत्तो असण्णीणं भणियं च सुयम्मि तेसिं पि ॥४७४॥

पुरुष स्त्री-नपुंसक-घट-पटादिवर्णविज्ञानरूपोऽक्षरलाभः संज्ञिनां समनस्कजीवानां भवेत्, श्रद्दध्महे एतत्, असंज्ञिनां त्वमनस्कानां कुत एतद्वर्णविज्ञानं संभवति ?— न कुतश्चिदित्यर्थः, अक्षरलाभस्य परोपदेशजत्वात्; मनोविकलानां तु तदसंभवात्। मा भूत् तेषां तर्हि तदिति चेत्, इत्याह— भणितं च वर्णविज्ञानं श्रुते तेषामप्येकेन्द्रियाद्यसंज्ञिनां— "[6]एगिंदिया णं मइअन्नाणी सुयअन्नाणी य" इत्यादिवचनात्। न हि श्रुताज्ञानमक्षरमन्तरेण संभवति, तदेतत् कथं श्रद्धातव्यम् ? इति ॥ ४७४ ॥

अत्रोत्तरमाह—

[7]जह चेयण्णमकित्तिममसण्णीणं तहोहनाणं पि। थोवं ति नोवलब्भइ जीवत्तमिविंदियाईणं ॥ ४७५ ॥

१ घ छ. 'त् परिक' । - २ अक्षरलब्धिकस्य लब्ध्यक्षरं समुत्पद्यते ।
३ अक्षरलाभ. संज्ञिनां भवेत् पुरुषादिवर्णविज्ञानम् । कुतोऽसंज्ञिनां भणितं च श्रुते तेषामपि ॥ ४७४ ॥
४ क ग. 'नं भ' । ५ क ख. ग 'तदभावात्' । ६ एकेन्द्रिया मत्यज्ञाना', श्रुताज्ञानाश्च ।
७ यथा चैतन्यमकृत्रिममसंज्ञिनां तथौघज्ञानमपि । स्तोकमिति नोपलभ्यते जीवत्वमिवेन्द्रियादीनाम् ॥ ४७५ ॥

यतोऽभिधेयमनन्तं, भिन्नरूपं, भिन्नाभिधानं; तेन कारणेनाऽक्षरसंयोगरूपाणामभिधानानां यत् संख्यारूपं मानं परिमाणं तदपि भवति । कियत् ?, इत्याह— अभिधेयगताऽनन्तपर्यायराशितुल्यं यत्परिमाणमभिधेयं तत्परिमाणमभिधानमपि भवतीत्यर्थः, अभिधेयभेदेनाऽभिधानस्याऽपि भेदात् । न हि येनैव रूपेण घटादिशब्देऽकारादिवर्णाः संयुक्तास्तेनैव रूपेण पटादिशब्देऽपि, अभिधेयैकत्वप्रसङ्गात्, एकरूपशब्दाभिधेयत्वात्, घट-तत्स्वरूपवदिति । अतोऽभिधेयानन्त्यादभिधानानन्त्यमिति । यद् यतः सूत्रेऽप्याभिहितम्— "[2]अणंता गमा अणंतपज्जवा" इति । अतः स्थितमेतत्– '[3]संजुत्ता-संजुत्ताणं' इत्यादि ॥ इति गाथाचतुष्टयार्थः ॥ ४४८ ॥

यत एवमनन्ताः श्रुतज्ञानप्रकृतयो भवन्ति, अतः—

[4]कत्तो मे वण्णेउं सत्ती सुयनाणसव्वपयडीओ ? । चोद्दसविहनिक्खेवं सुयनाणे आवि वोच्छामि ॥४४९॥

कुतो मे शक्तिः सामर्थ्यम् ?, नास्त्येवेत्यर्थः । किं कर्तुं ?, वर्णयितुम् । काः ?, श्रुतज्ञानसर्वप्रकृतीः सर्वांस्तद्भेदान् । ततश्चतुर्दशविधश्चासौ निक्षेपश्च चतुर्दशविधनिक्षेपो न्यासस्तं वक्ष्यामि भणिष्यामि, श्रुतज्ञाने श्रुतविषयं, चशब्दात् श्रुताज्ञानविषयं च, आपिशब्दादुभयविषयं च । तत्र श्रुतज्ञाने सम्यक्श्रुते, श्रुताज्ञाने असंज्ञि-मिथ्याश्रुते, उभयश्रुते दर्शनपरिग्रहविशेषादक्षरा-ऽनक्षरादिश्रुते ॥ इति निर्युक्तिगाथार्थः ॥ ४४९ ॥

[5]अथैतद्भाष्यम्–

[6]पयडि त्ति जो तदंसो हेऊ वा तस्स, तस्स भावो वा । ते याणंता सव्वे तओ न तीरंति वोत्तुं जे ॥४५०॥

इह प्रकृतिरिति किमुच्यते ?, इत्याह– यस्तदंशः श्रुतज्ञानांशस्तद्भेदोऽङ्गप्रविष्टादिरित्यर्थः । हेतुर्वा बाह्याऽऽभ्यन्तरभेदभिन्नो यः श्रुतज्ञानस्य स प्रकृतिः । तत्र बाह्यो हेतुः श्रुतज्ञानस्य पत्र[7]लिखिताक्षरादिः, आन्तरस्तु तद्धेतुः क्षयोपशमवैचित्र्यं, तस्य श्रुतस्य स्वभावो वैकेन्द्रियादीनां चतुर्दशपूर्वधरान्तानां जीवानां तारतम्येन भिन्नरूपः प्रकृतिः प्रोच्यते । एते चांशाः, हेतवः, स्वभावाश्चाऽनन्ताः सर्वेऽपि; अत आयुषः परिमितत्वाद् वाचश्च क्रमवर्तित्वाद् न शक्यन्ते वक्तुम् । 'जे' इति निपातोऽलङ्कारार्थ इति ॥ ४५० ॥

---

१ घ छ 'यतश्च सू' क ख 'यत् तत.' । २ अनन्ता गमा अनन्तपर्यवा. । ३ गाथा ४४५ ।
४ कुतो मे वर्णयितुं शक्ति. श्रुतज्ञानसर्वप्रकृतीः ?। चतुर्दशविधनिक्षेप श्रुतज्ञाने चापि वक्ष्यामि ॥४४९ ॥ ५ क. 'अत्रैत' ।
६ प्रकृतिरिति यस्तदंशो हेतुर्वा तस्य, तस्य भावो वा । ते चानन्ताः सर्वे ततो न शक्यन्ते वक्तुम् ॥ ४५० ॥ ७ ख. 'त्रलक्षिता' ।

सहस्रम् । तत्रैकस्याऽकारपदार्थस्य सर्वद्रव्यगतलक्षपर्यायराशिमध्यादस्तित्वेन संबद्धाः किल शतप्रमाणाः स्वपर्यायाः, शेषास्तु नास्तित्वेन संबद्धाः सर्वेऽपि परपर्यायाः । एवमिकारादेः, परमाणु-द्व्यणुकादेश्चैकैकद्रव्यस्य वाच्यमिति ॥ ४७७ ॥

आह– के पुनः स्वपर्यायाः, के च परपर्यायाः ?, इत्याह–

[1]जे लभइ केवलो से सवन्नसहिओ व पज्जवेऽयारो । ते तस्स सपज्जाया सेसा परपज्जया सव्वे ॥४७८॥

याननुदात्ता-ऽनुदात्त-सानुनासिक-निरनुनासिकादीनात्मगतान् पर्यायान् केवलोऽन्यवर्णेनाऽसंयुक्तः, अन्यवर्णसंयुक्तो वाऽकारो लभतेऽनुभवति ते तस्य स्वपर्यायाः प्रोच्यन्ते, आस्तित्वेन संबद्धत्वात् , ते चाऽनन्ताः, तद्वाच्यस्य विष्णु-परमाण्वादिद्रव्यस्याऽनन्तत्वात् , तद्द्रव्यप्रतिपादनशक्तेश्चाऽस्य भिन्नत्वात् , अन्यथा तत्प्रतिपाद्यस्य सर्वस्याऽप्येकत्वप्रसङ्गात् , एकरूपवर्णवाच्यत्वात् । शेषास्त्विकारादिसंबन्धिनः, घटादिगताश्चाऽस्य परपर्यायाः, तेभ्यो व्यावृत्तत्वेन नास्तित्वेन संबन्धात् । एवमिकारादीनामपि भावनीयम् , अक्षरविचारस्यैवेह प्रक्रान्तत्वात् ॥ ४७८ ॥

एकैकमक्षरं सर्वद्रव्य-पर्यायराशिमानमुच्यते, अन्यथाऽन्येषामपि परमाणु-द्व्यणुक-घटादिद्रव्याणामिदमेव पर्यायमानं द्रष्टव्यमिति । एवमुक्ते सति परः प्राह–

[2]जइ ते परपज्जाया न तस्स, अह तस्स, न परपज्जाया । जं तम्मि असंबद्धा तो परपज्जायववएसो ॥४७९॥

इह स्वपर्यायाणामेव तत्पर्यायता युक्ता, ये त्वमी परपर्यायास्ते यदि घटादीनां, तर्हि नाक्षरस्य । अथाऽक्षरस्य ते, तर्हि न घटादीनाम् । ततश्च यदि परस्य पर्यायाः तर्हि तस्य कथम् ?; तस्य चेत् , परस्य कथम् ? इति विरोधः । तदयुक्तम् , अभिप्रायाऽपरिज्ञानात् , यस्मात् कारणात् तस्मिन्नकारे-काराद्यक्षरे घटादिपर्याया आस्तित्वेनाऽसंबद्धाः, ततस्तेषां परपर्यायव्यपदेशः, अन्यथा व्यावृत्तेन रूपेण तेऽपि संबद्धा एव, इत्यतस्तेषामपि व्यावृत्तरूपतया पारमार्थिकं स्वपर्यायत्वं न विरुध्यते । अस्तित्वेन तु घटादिपर्याया घटादिष्वेव संबद्धाः, इत्यक्षरस्य ते परपर्याया व्यपदिश्यन्त इति भावः । द्विविधं हि वस्तुनः स्वरूपम्— अस्तित्वं नास्तित्वं च । ततो ये यत्राऽस्तित्वेन प्रतिबद्धास्ते तस्य स्वपर्याया उच्यन्ते, ये तु यत्र नास्तित्वेन संबद्धास्ते तस्य परपर्यायाः

१ याँल्लभते केवलस्तस्य सवर्णसहितो वा पर्यवानकार । ते तस्य स्वपर्यायाः शेषा. परपर्यया सर्वे ॥ ४७८ ॥

२ यदि ते परपर्याया न तस्य, अथ तस्य, न परपर्याया. । यद तस्मिन्नसंबद्धास्तत. परपर्यायव्यपदेश. ॥ ४७९ ॥

अक्षरादीनि सप्त द्वाराण्यनक्षरादिप्रतिपक्षसहितानि चतुर्दश भवन्ति ॥ ॥ ४५४ ॥

तत्राद्यद्वारं व्याचिख्यासुराह–

[1]न क्खरइ अणुवओगे वि अक्खरं सो य चेयणाभावो । अविसुद्धनयाण मयं सुद्धनयाण क्खरं चेव ॥४५५॥

'क्षर संचलने' न क्षरति न चलति– अनुपयोगेऽपि न प्रच्यवत इत्यक्षरं, स च चेतनाभावो जीवस्य ज्ञानपरिणाम इत्यर्थः । एतच्च नैगमादीनामविशुद्धनयानां मतम् । शुद्धानां तु ऋजुसूत्रादीनां ज्ञानं क्षरमेव, न त्वक्षरमिति ॥ ४५५ ॥

कुतः ?, इत्याह–

[2]उवओगे वि य नाणं सुद्धा इच्छंति जं न तव्विरहे । उप्पाय-भंगुरा वा जं तेसिं सव्वपज्जाया ॥४५६॥

यद् यस्माच्छुद्धनया उपयोग एव सति ज्ञानमिच्छन्ति, नानुपयोगे, घटादेरपि ज्ञानवत्त्वप्रसङ्गात् । अथवा, यद् यस्मात् तेषां शुद्धनयानां सर्वेऽपि मृदादिपर्याया घटादयो भावा उत्पाद-भङ्गुरा उत्पत्तिमन्तो विनश्वराश्चेत्यर्थः, न पुनः केचिद् नित्यत्वादक्षरा इति भावः । अतो ज्ञानमप्युत्पाद-भङ्गुरत्वेन क्षरमेवेति प्रकृतम् । अशुद्धनयानां तु सर्वभावानामप्यवस्थितत्वाज्ज्ञानमप्यक्षरमिति ॥ ४५६ ॥

एवं तावदभिलापहेतोर्विज्ञानस्याऽक्षरता, अनक्षरता चोक्ता, इदानीं साभिलापविज्ञानविषयभूतानामभिलाप्यार्थानामप्यक्षराऽनक्षरते नयविभागेनाह—

[3]अभिलप्पा वि य अत्था सव्वे दव्वट्ठियाए जं निच्चा । पज्जायेणानिच्चा तेण क्खरा अक्खरा चेव ॥ ४५७ ॥

अभिलप्या अप्यर्था घट-व्योमादयः सर्वेऽपि द्रव्यास्तिकनयाभिप्रायेण नित्यत्वादक्षराः, पर्यायास्तिकनयाभिप्रायेण त्वनित्यत्वात् क्षरा एवेति ॥ ४५७ ॥

अथ परोऽतिव्याप्तिमुद्भावयन्नाह—

[4]एवं सव्वं चिय नाणमक्खरं जमविसेसियं सुत्ते । अविसुद्धनयमएणं को सुयनाणे पइविसेसो ? ॥ ४५८ ॥

---

१ न क्षरत्यनुपयोगेऽप्यक्षरं स च चेतनाभावः । अविशुद्धनयानां मतं, शुद्धनयानां क्षरमेव ॥ ४५५ ॥
२ उपयोगेऽपि च ज्ञानं शुद्धा इच्छन्ति यद् न तद्विरहे । उत्पाद-भङ्गुरा वा यत् तेषां सर्वपर्यायाः ॥ ४५६ ॥
३ अभिलप्या अपि चार्थाः सर्वे द्रव्यास्तिकेन यद् नित्याः । पर्यायेणाऽनित्यास्तेन क्षरा अक्षरा एव ॥ ४५७ ॥
४ एवं सर्वमेव ज्ञानमक्षरं यदविशेषितं सूत्रे । अविशुद्धनयमतेन क. श्रुतज्ञाने प्रतिविशेष. ? ॥ ४५८ ॥

यदि घटादिपर्यायास्तत्राऽक्षरेऽसंबद्धत्वेन परपर्याया व्यपदिश्यन्ते, तर्हि ते तस्य कथमुच्यन्ते ?, इत्याह—

[1]चाय-सपज्जायविसेसणाइणा तस्स जमुवउज्जंति । सधणमिवासंबद्धं भवंति तो पज्जया तस्स ॥ ४८० ॥

ततस्तस्माद् घटादिपर्याया अपि तस्याऽक्षरस्य पर्याया भवन्ति, यतोऽक्षरस्याऽपि त उपयुज्यन्ते– उपयोगं यान्ति । केन ?, इत्याह– त्याग-स्वपर्यायविशेषणादिना— त्यागेन स्वपर्यायविशेषणेन चोपयोगादित्यर्थः। इदमुक्तं भवति– घटादिपर्यायाः सत्त्वेनाऽक्षरेऽसंबद्धा अपि तत्पर्याया भवन्ति, त्यागेनाऽभावेनोपयुज्यमानत्वात् । यदि हि तत्र तेषामभावो न भवेत् तर्हि तदक्षरं घटादिभ्यो व्यावृत्तं न सिद्ध्येत्, तत्रापि घटादिपर्यायाणां भावात्, इत्यतोऽक्षरस्य त्यागेनाऽभावेनोपयोगाद् घटादिपर्यायास्तस्य भवन्ति। तथा, स्वपर्यायाणां विशेषणेन विशेषव्यवस्थापकत्वेन परपर्याया अपि तस्य भवन्ति। न हि परपर्यायेष्वसत्सु स्वपर्यायाः केचिद् भेदेन सिद्ध्यन्ति, स्व-परशब्दयोरापेक्षिकत्वात् । प्रयोगः– इह यद्यस्योपयुज्यते तद् भेदवर्त्यपि तस्येति व्यपदिश्यते, यथा देवदत्तादेः स्वधनम्, उपयुज्यन्ते च त्याग-स्वपर्यायविशेषणादिभावेन घटादिपर्याया अप्यक्षरस्य, अतस्ते तस्याऽपि भवन्ति । एवमक्षरपर्याया अपि घटादेर्वाच्या इति॥४८०॥

एतदेव भावयति—

[2]सधणमसंबद्धं पि हु चेयण्णं पिव नरे जहा तस्स । उवउज्जइ त्ति सधणं भण्णइ तह तस्स पज्जाया॥४८१॥

इह देवदत्तादिके नरे चैतन्यं यथाऽऽत्मनि संबद्धं, तथा स्वधनमसंबद्धमपि स्वधनं तस्य लोके भण्यते । कुतः ?, उपयुज्यत इति कृत्वा । तथाऽक्षरेऽसंबद्धा अपि घटादिपर्यायास्तस्याऽक्षरस्य पर्याया भवन्ति ॥ ४८१ ॥

अमुमेवाऽर्थं दृष्टान्तान्तरेण साधयति–

[3]जह दंसण-नाण-चरित्तगोयरा सव्वदव्वपज्जाया । सद्धेय-नेय-किरियाफलोवओगि त्ति भिन्ना वि ॥४८२॥

जइणो सपज्जाया इव सकज्जनिप्फायग त्ति सधणं व । आयाण-च्चायफला तह सव्वेसं पि वण्णाणं॥४८३॥

इह यथा सर्वद्रव्य-पर्याया भिन्ना अपि सन्तो यतेरेते भवन्ति– यतेः संबन्धिनो व्यपदिश्यन्ते । कुतः ?, इत्याह– स्वकार्य-

---

१ त्याग–स्वपर्यायविशेषणादिना तस्य यदुपयुज्यन्ते। स्वधनमिवाऽसबद्धं, भवन्ति तत. पर्यायास्तस्य ॥ ४८० ॥
२ स्वधनमिवाऽसबद्धमपि खलु चैतन्यमिव नरे यथा तस्य । उपयुज्यत इति स्वधन, भण्यते तथा तस्य पर्यायाः ॥ ४८१ ॥
३ यथा दर्शन-ज्ञान-चारित्रगोचरा सर्वद्रव्य पर्याया । श्रद्धेय-ज्ञेय-क्रियाफलोपयोगिन इति भिन्ना अपि ॥ ४८२ ॥
यतेः स्वपर्याया इव स्वकार्यनिष्पादका इति स्वधनमिव । आदान-त्यागफलास्तथा सर्वेषामपि वर्णानाम् ॥ ४८३ ॥

'स्वृ शब्दो-पतापयोः' अक्षराणां व्यञ्जनानां स्वरणेन संशब्दनेन स्वरा अकारादयः प्रोच्यन्ते । अथवा, अक्षरस्य चैतन्यस्य स्वरणात् संशब्दनात् स्वराः, शब्दोच्चारणमन्तरेणाऽन्तर्विज्ञानस्य बोद्धुमशक्यत्वात्, शब्दे च स्वरसद्भावादिति । व्यञ्जनमपि कादिक-मुच्यते केन ?, इत्याह— व्यञ्जनेन व्यक्तीकरणेन प्रकटनेनाऽर्थस्य । अक्षरशब्दः पूर्वं ज्ञानवाचकत्वेन व्युत्पादितः, सांप्रतं वर्णवाचकत्वेन व्युत्पादयति— 'अत्थे य इत्यादि' अर्थान्— आभिधेयान् क्षरति संशब्दयतीति निरुक्तिविधिना थकारलोपादक्षरम् । अथवा, क्षीयत इति क्षरं, न क्षरमक्षरम्, अन्यान्यवर्णसंयोगेऽनन्तानर्थान् प्रतिपादयति, न च स्वयं क्षीयते येन, तेनाऽक्षरमिति भावः ॥ ४६१ ॥

संक्षेपेण स्वरव्यञ्जनशब्दार्थौ दर्शितौ; अथ विशेषतस्तमुपदर्शयति—

सुद्धा वि सरंति सयं सारंति य वंजणाइं जं तेणं । होंति सरा न कयाइ वि तेहिं विणा वंजणं सरइ ॥४६२॥

वंजिज्जइ जेणत्थो घडो व्व दीवेण वंजणं तो तं । अत्थं पायेण सरा वंजंति न केवला जेणं ॥४६३॥

शुद्धाः केवला व्यञ्जनरहिता अप्यकारादयः स्वराः स्वयमेव स्वरन्ति शब्दयन्ति विष्णुप्रमुखं वस्तु, व्यञ्जनानि चैते संयुक्ताः सन्तः स्वरयन्ति उच्चारणयोग्यानि कुर्वन्ति यतः, तेन कारणेन स्वरा भवन्त्येते । न हि क्वापि तैः स्वरैर्विना व्यञ्जनस्य स्वरणमर्थप्रतिपादनं दृश्यते । नापि परगमने पिण्डीभूतानि व्यञ्जनानि स्वरैर्विनोच्चारयितुं शक्यन्ते, अतो व्यञ्जनस्वरणादप्येते स्वरा उच्यन्त इति भावः । व्यज्यते प्रकटीक्रियते प्रदीपेनेव घटादिरर्थोऽनेनेति कृत्वा व्यञ्जनमभिधीयते, व्यञ्जनसाहाय्यविरहिता यतः केवलाः स्वराः प्रायो न कदाचिद् बाह्यमर्थं व्यञ्जयन्ति, अपनीतव्यञ्जनं हि वाक्यं न विवक्षितार्थप्रतिपादनायाऽलं दृश्यते, यथा 'सम्यगदर्शन-ज्ञान-चारित्राणि' इत्यत्र वाक्ये व्यञ्जनापगमे एते स्वराः समवतिष्ठन्ते— 'अ-अ-अ-अ-अ-आ-अ-आ-इ-आ-इ'। न चैते विवक्षितमर्थं प्रतिपादयितुं समर्थाः । अकारे-कारादयः केवला अपि विष्णु-मन्मथादिकमर्थं प्रतिपादयन्तीति प्रायोग्रहणम् ।

अत्राह— नन्वकारादयो विष्णुप्रभृतीनां संज्ञा एव । एवं च सति यथा केवलेन स्वरेण संज्ञा, तथा संकेतवशात् केवलेन व्य-ञ्जनेनाप्यसौ भविष्यति, तत्कथं पूर्वगाथायामुक्तम्— 'न कयावि तेहिं विणा वंजणं सरइ' इति ? । सत्यम्, तत्राऽयमभिप्रायः— स्वरैः केवलैरपि काचित् क्वचित् संज्ञा दृश्यते, व्यञ्जनैस्तु सर्वथा तद्रहितैर्न काचित् संज्ञा वीक्ष्यत इति ॥ ४६२ ॥ ४६३ ॥

---

१ क.ख.ग. 'तो वि' । २ शुद्धा अपि स्वरन्ति स्वयं स्वरयन्ति च व्यञ्जनानि यत् तेन । भवन्ति स्वरा न कदाचिदपि तैर्विना व्यञ्जनं स्वरति ॥ ४६२ ॥ व्यज्यते येनार्थो घट इव दीपेन व्यञ्जन ततस्तत् । अर्थं प्रायेण स्वरा व्यञ्जन्ति न केवला येन ॥ ४६३ ॥ ३ क.ख.ग. 'व सर' ।

[1]जेसु अनाएसु तओ न नज्जए, नज्जए य नाएसु । किह तस्स ते न धम्मा घडस्स रूवाइधम्म व्व ? ॥४८५॥

तत् तस्माद् येषु घटादिपर्यायेष्वज्ञातेषु यदेकं प्रस्तुतमक्षरं न ज्ञायते, ज्ञातेषु च ज्ञायते, ते घटादिपरपर्यायाः कथं न तस्य धर्माः ? अपि तु धर्मा एव, यथा घटस्य रूपादयः । प्रयोगः— येषामनुपलब्धौ यद् नोपलभ्यते, उपलब्धौ चोपलभ्यते, तस्य ते धर्मा एव, यथा घटस्य रूपादयः, नोपलभ्यते च प्रस्तुतमेकमक्षरं समस्तघटादिपरपर्यायाणामनुपलब्धौ, उपलभ्यते च तदुपलब्धौ, इति ते तस्य धर्मा इति ॥ ४८५ ॥

इह चाक्षरं विचारयितव्यं 'प्रस्तुतम्' इत्येतावन्मात्रेणैव तत्सर्वद्रव्य-पर्यायराशिप्रमाणं साधितम् । न चैतदेव केवलमित्थंभूतं द्रष्टव्यम्, किन्त्वस्ति यत् किमपि वस्तु, तत् सर्वमित्थंभूतमेव, सर्वस्याऽपि व्यावृत्तिरूपतया परपर्यायसद्भावात्, इत्याह—

[2]न हि नवरमक्खरं सव्वदव्व-पज्जायमाणमण्णं पि । जं वत्थुमत्थि लोए तं सव्वं सव्वपज्जायं ॥४८६॥

गतार्थैव ॥ ४८६ ॥

यद्येवम्, किमक्षरमेवाऽङ्गीकृत्येदं पर्यायमानमुक्तम् ?, इति भाष्यकार एवोत्तरमाह—

[4]इहक्खराहिगारो पण्णवणिज्जा य जेण तव्विसओ । ते चिंतिज्जंतेवं कइभागो सव्वभावाणं ? ॥४८७॥

इहाऽक्षराधिकारो यस्मात् प्रस्तुतः, अतस्तस्यैवेदं पर्यायमानमुक्तं द्रष्टव्यम्, उपलभ्यते च सर्वं वस्त्वित्थमेव । भवत्वेवम्, किन्तु प्रस्तुतस्याक्षरस्य के स्वपर्यायाः, के च परपर्यायाः ?, इत्यादि निवेद्यताम्, इत्याह—'पण्णवणिज्जेत्यादि' तस्य सामान्येनाऽकाराद्यक्षरस्य स्वपर्यायतया विषयस्तद्विषयः । येन यतः के ?, इत्याह— प्रज्ञापनीया अनभिलाप्याः पर्यायाः, न पुनरभिलाप्याः । अतस्त एव चिन्त्यन्ते विचार्यन्ते । कथम् ?, इत्याह— कतिथो भागस्ते भवन्ति । केषाम् ?, सर्वभावानां सर्वेषामभिलाप्या-ऽनभिलाप्यपर्यायाणां समुदितानामित्यर्थः । इदमुक्तं भवति— अभिलाप्यं वस्तु सर्वमक्षरेणोच्यते । अतस्तदभिधानशक्तिरूपाः सर्वेऽपि तस्याऽभिलाप्याः प्रज्ञापनीयाः स्वपर्याया उच्यन्ते । शेषास्त्वनभिलाप्याः परपर्यायाः । अतस्तेऽभिलाप्याः [6]स्वपर्यायाः सर्वपर्यायाणां कतिथो भागो भवति, इत्येवं विचिन्त्यत इति ॥ ४८७ ॥

---

१ येष्वज्ञातेषु ततो न ज्ञायते, ज्ञायते च ज्ञातेषु । कथ तस्य ते न धर्मा घटस्य रूपादिधर्मा इव ? ॥ ४८५ ॥ २ स.घ.छ. 'ते तस्य ध' ।

३ न हि नवरमक्षर सर्वद्रव्य-पर्यायमानमन्यदपि । यद् वस्त्वस्ति लोके तत् सर्वं सर्वपर्यायम् ॥ ४८६ ॥

४ इहाक्षराधिकार. प्रज्ञापनीयाश्च येन तद्विषयः । ते चिन्त्यन्त एवं कतिभाग. सर्वभावानाम् ? ॥४८७॥ ५ घ.छ 'तदभि' । ६ घ छ. 'स्व-परप' ।

योऽक्षरस्योपलम्भो लाभः सा लम्भनं लब्धिः– तल्लब्ध्यक्षरमित्यर्थः। तच्च किम्?, इत्याह– इन्द्रिय-मनोनिमित्तं श्रुतग्रन्थानुसारि विज्ञानं श्रुतज्ञानोपयोग इत्यर्थः, यश्च तदावरणक्षयोपशम इति– यः श्रुतज्ञानोपयोगः, यश्च तदावरणकर्मक्षयोपशमः, एतौ द्वावपि लब्ध्यक्षरमिति भावार्थः ॥ उक्तं त्रिविधमक्षरम् ॥ ४६६ ॥

अथाऽत्र किं द्रव्यश्रुतं, किंवा भावश्रुतम्?, इत्याह–

[2]दव्वसुयं सण्णा-वंजणक्खरं, भावसुत्तमियरं तु। मइ-सुयविसेसणम्मि वि मोत्तूणं दव्वसुत्तं ति ॥ ४६७ ॥

संज्ञाक्षरं, व्यञ्जनाक्षरं चैते द्वे अपि भावश्रुतकारणत्वाद् द्रव्यश्रुतं, इतरत्तु लब्ध्यक्षरं भावश्रुतम्। अत्र विनेयः प्राह– ननु पूर्वं [3]मति-श्रुतभेदविचारे येयं गाथा प्रोक्ता—

[4]'सोइंदिओवलद्धी होइ सुयं सेसयं तु मइनाणं। मोत्तूणं दव्वसुयं अक्खरलंभो य सेसेसु' ॥ १ ॥ इति।

अस्यां किमस्य त्रिविधस्याऽक्षरस्य संग्रहोऽस्ति नवा, श्रुतविचारस्य तत्रापि प्रस्तुतत्वात्?। यद्यस्ति, तर्हि दर्श्यतां कथमसौ?। अथ नास्ति, तर्ह्यत्रापि किमनेनाऽप्रस्तुतेन?। इत्याशङ्क्य सूरिः पूर्वापरग्रन्थसंवादं दिदर्शयिषुस्तत्राऽप्यस्याक्षरत्रयस्य संग्रहमुपदर्शयति–'मइ-सुयेत्यादि' मति-श्रुतविशेषणेऽपि मति-श्रुतभेदविचारेऽपि 'सोइंदिओवलद्धी' इत्यादिगाथायां 'मोत्तूणं दव्वसुयं' इत्यनेन गाथावयवेन॥४६७॥

किम्?, इत्याह—

[5]दव्वसुयं सण्णक्खरमक्खरलंभो त्ति भावसुयमुत्तं। सोउवलद्धिवयणेण वंजणं भावसुत्तं च ॥ ४६८ ॥

संज्ञाक्षरमुक्तम्। कथंभूतम्?, इत्याह— द्रव्यश्रुतं भावकारणत्वाद् द्रव्यश्रुतरूपम्। 'अक्खरलंभो य सेसेसु' इत्यनेन त्ववयवेन लब्ध्यक्षरमुक्तमिति शेषः। कथंभूतम्?, इत्याह– भावश्रुतं विज्ञानात्मकत्वाद् भावश्रुतरूपम्। 'सोइंदिओवलद्धी होइ सुयं' इत्यनेन त्ववयवेन श्रोत्रेन्द्रियेणोपलब्धिर्यस्य शब्दस्येति बहुव्रीहिसमासाश्रयणाद् व्यञ्जनं व्यञ्जनाक्षरमुक्तम्, श्रोत्रेन्द्रियस्योपलब्धिर्विज्ञानमिति षष्ठीसमासाङ्गीकरणेन तु पुनरपि लब्ध्यक्षरं भावश्रुतरूपमभिहितम्, इत्येवं न पूर्वा-परविसंवादः ॥ ४६८ ॥

ननु लब्ध्यक्षरं कथं प्रमाता लभते?, इत्याह–

१ घ.छ. 'णक्ष'। २ द्रव्यश्रुतं संज्ञा-व्यञ्जनाक्षरं भावश्रुतामितरत् तु। मति-श्रुतविशेषणेऽपि मुक्त्वा द्रव्यसूत्रमिति ॥ ४६७ ॥ ३ क. 'तिपूर्वश्रु'।
४ गाथा ११७। ५ द्रव्यश्रुतं सञ्ज्ञाक्षरमक्षरलाभ इति भावश्रुतमुक्तम्। श्रोत्रोपलब्धिवचनेन व्यञ्जनं भावसूत्रं च ॥ ४६८ ॥

त्यर्थः; इह तु "[1]तं सव्वदव्व-पज्जायरासिमाणं मुणेयव्वं" इत्यत्र किमिति सर्वद्रव्य-पर्यायमानग्रहणं कृतम् ? । इदमुक्तं भवति– "सव्वागासप-
एसग्गं सव्वागासपएसेहिं अणंतगुणियं पज्जवक्खरं निप्फज्जइ" इति नन्दिसूत्रे प्रोक्तम् । एतच्च वृत्तौ तत्र व्याख्यातम्, तद्यथा–
"सर्वं च तदाकाशं लोका-लोकाकाशमित्यर्थः, तस्य च प्रदेशा निर्विभागा भागास्तेषामग्रं परिमाणं सर्वाकाशप्रदेशाग्रं, सर्वाकाशप्रदेशैः, किं ?,
अनन्तगुणितमनन्तशो गुणितमनन्तगुणितम्, एकैकस्मिन्नाकाशप्रदेशेऽनन्तानामगुरुलघुपर्यायाणां सद्भावात्, पर्यायाक्षरं पर्यायपरिमाणाक्षर निष्पद्यते"[2]
इति ।

तदेवमागमे केवलसर्वाकाशप्रदेशपर्यायराशिप्रमाणमक्षरपर्यायमानमुक्तम्, अत्र तु धर्मा-ऽधर्मा-ऽऽकाश-पुद्गल-जीवास्तिकाय-काल-
लक्षणसर्वद्रव्य-पर्यायराशिप्रमाणं तदुच्यते, इति कथं न विरोधः ? इति ॥ ४८९ ॥

अत्रोत्तरमाह–

[3]थोव त्ति न निद्दिट्ठा इहरा धम्मत्थियाइपज्जाया । के स-परपज्जयाणं हवंतु[4], किं होतु वाऽभावो ? ॥४९०॥

स्तोका आकाशपर्यायेभ्योऽनन्तभागवर्तिन इति कृत्वा नन्दिसूत्रे धर्मास्तिकायादीनां पञ्चद्रव्याणां पर्याया न निर्दिष्टा नाभि-
हिताः साक्षात्, किन्तु य एव तेभ्योऽतिबहवोऽनन्तगुणास्त एव सर्वाकाशपर्यायाः साक्षादुक्ताः, अर्थतस्तु धर्मास्तिकायादिपर्याया अपि
नन्दिसूत्रे प्रोक्ता द्रष्टव्याः, इतरथा– यद्येतद् नाभ्युपगम्यते, तदा ते धर्मास्तिकायादिपर्याया अक्षरस्य स्व-परपर्यायाणां मध्यात् के
भवन्तु– किं स्वपर्याया भवन्तु ?, परपर्याया वा ?, किंवाऽभावः खरविषाणरूपो भवतु ?, इति त्रयी गतिः । त्रिभुवने हि ये पर्यायास्तैः
सर्वैरप्यक्षरादेर्वस्तुनः स्वपर्यायैर्वा भवितव्यम्, परपर्यायैर्वा, अन्यथाऽभावप्रसङ्गात्; तथाहि– ये केचन क्वचित् पर्यायाः सन्ति तेऽक्ष-
रादिवस्तुनः स्व-परपर्यायान्यतररूपा भवन्त्येव, यथा रूपादयः, ये त्वक्षरादेः स्वपर्यायाः परपर्याया वा न भवन्ति, ते न सन्त्येव,
यथा खरविषाणतैक्ष्ण्यादयः । तस्माद् धर्मास्तिकायादिपर्यायाः सूत्रे स्तोकत्वेनाऽनुक्ता अपि "[5]जे एगं जाणइ से सव्वं जाणइ" इत्यादि-
सूत्रप्रामाण्यादर्थतोऽक्षरस्य परपर्यायत्वेनोक्ता द्रष्टव्या इति ॥ ४९० ॥

अथान्यत् प्रेरयति–

1 गाथा ४७७ । 2 सर्वाकाशप्रदेशाग्रं सर्वाकाशप्रदेशैरनन्तगुणितं पर्यवाक्षरं निष्पद्यते ।
3 स्तोका इति न निर्दिष्टा इतरथा धर्मास्तिकायादिपर्यायाः । के स्व परपर्ययाणां भवन्तु, किं भवतु वाऽभावः ? ॥ ४९० ॥
4 घ. छ. 'वति किं' । 5 य एकं जानाति स सर्वं जानाति ।

इन्द्रिय-मनोनिमित्तमपि ज्ञानं तत्त्वतोऽनुमानमेवेति दर्शयति–

[1]इंदिय-मणोनिमित्तं पि नाणुमाणाहि भिज्जए, किंतु। नाविक्खइ लिंगंतरमिइ पच्चक्खोवयारो त्थ ॥४७१॥

इह यदिन्द्रिय-मनोनिमित्तं साक्षात्पुरोवस्थितं घटाद्यर्थं दृष्ट्वा ज्ञानमुत्पद्यते तदपि तावदनुमानमेव, अपरस्मादुत्पत्तेः, धूमाग्निज्ञानवदिति। इन्द्रिय-मनोद्वारेणोत्पन्नत्वादेतदात्मनः परोक्षम्, अतस्तत्त्वतोऽनुमानाद् नातिरिच्यते। यानि त्विन्द्रियाणामप्यसाक्षाद्भूतार्थानि सादृश्यादेर्लिङ्गाज्ज्ञानान्युपजायन्ते, तेषामनुमानत्वे कः संदेहः ? इति भावः। आह– नन्विन्द्रिय-मनोनिमित्तं यत् साक्षादर्थं दृष्ट्वा ज्ञानमुत्पद्यते तद् यद्यनुमानं भवता प्रोच्यते, तर्हि कथं प्रत्यक्षतया लोके रूढम् ?, इत्याह– किन्त्विन्द्रिय-मनोमात्रादेव निमित्तादिदमुत्पद्यते, न पुनर्धूमादि लिङ्गान्तरमपेक्षते, अतः प्रत्यक्षोपचारोऽत्र क्रियते– प्रत्यक्षमिव प्रत्यक्षं, इन्द्रियसाक्षाद्भूतार्थत्वात्; परमार्थतस्त्वनुमानमेवेति ॥ ४७१ ॥

अथ तत्रापि किञ्चिद्भेदाद् भेदोऽनुमानस्याभिधीयते, तथाऽप्येतत्पञ्चभेदत्वमयुक्तमिति दर्शयति–

[2]नापुणरुत्ता न समत्तलिङ्गसंगाहिया न य गुणाय। नियमियपरिमाणाए किं च विसेसोवलद्धीए ॥ ४७२ ॥

येयं पञ्चविधाऽनुमानोपलब्धिः परिकल्प्यते केनापि, सा नाऽपुनरुक्ता– न पौनरुक्त्यदोषरहिता, सादृश्यो-पमानादिषु सर्वत्र सादृश्याविशेषात् पुनरुक्तदोषदुष्टैवेयमित्यर्थः, अत्यन्तपरोक्षेण च स्वर्गादिनोपमाने विधीयमाने आगमाविशेषाच्च पौनरुक्त्यम्। न च समस्तलिङ्गसंग्राहिकेयम्, सकललोकप्रतीतानामपि कार्यस्वभावादिरूपाणां धूम-कृतकत्वादिलिङ्गानामनयाऽसंग्रहात्। अथाऽत्रापि केनाऽप्यंशेन सादृश्यमस्ति, तर्ह्येकमेवेदमस्तु, किं बहुभेदोपन्यासेन, सर्वलिङ्गेष्वपि केनाऽप्यंशेन सादृश्यस्यैव गमकत्वात् ? इति। न चेयं पञ्चविधोपलब्धिर्गुणाय– उक्तन्यायेन दूषणमेवाऽस्यां दृश्यते, न पुनः कश्चिद् गुण इत्यर्थः। अतः किमनया नियमितपरिमाणया विशेषोपलब्ध्या, अनुमानतयैव सर्वसंग्रहात् ? इति ॥ ४७१ ॥

भवत्वेवम्, तथाऽप्यनुमानात् पृथगेव या त्रिविधाऽनुपलब्धिरन्यत्र प्रसिद्धा, इत्याशङ्क्याह–

[3]नाहिगयाऽणुवलद्धी न वा विवक्खो त्ति वा तओ सव्वा। सक्खाइगहणेण वा न उ जुत्तो तिविहनियमो से॥४७३॥

१ इन्द्रिय-मनोनिमित्तमपि नानुमानाद् भिद्यते, किन्तु। नापेक्षते लिङ्गान्तरमिति प्रत्यक्षोपचारोऽत्र ॥ ४७१ ॥
२ नाऽपुनरुक्ता न समस्तलिङ्गसंग्राहिका न च गुणाय। नियमितपरिमाणया किं च विशेषोपलब्ध्या ? ॥ ४७२ ॥
३ नाऽधिकृताऽनुपलब्धिर्न वा विपक्ष इति वा ततः सर्वा। साक्षादादिग्रहणेन वा न तु युक्तस्त्रिविधनियमस्तस्य ॥ ४७३ ॥

श्रुताक्षरम्, सकलद्वादशाङ्गविदां संपूर्णस्याऽपि श्रुताक्षरस्य सद्भावात्, 'सर्वजीवानामक्षरस्याऽनन्तभागो नित्योद्घाटः' इत्यस्याऽर्थस्या-
ऽनुपपत्तेः। अहो ! असमीक्षिताभिधानम्, यत एवं सति केवलाक्षरमपि तत्र नोपपद्यते, केवलिनां संपूर्णस्याऽपि केवलाक्षरस्य सद्भावात्,
'सर्वजीवानामक्षरस्याऽनन्तभागो नित्योद्घाटः' इत्यस्याऽर्थस्यानुपपत्तेरेव। अथ मनुषे— तत्राऽविशेषेण सर्वजीवग्रहणे सत्यपि प्रकरणात्,
अपिशब्दाद् वा केवलिनो विहायाऽन्येषामेवाऽक्षरस्याऽनन्तभागो नित्योद्घाट इति केवलाक्षरग्रहणेऽविरोधः। हन्त ! तदेतत् श्रुताक्षर-
ग्रहणेऽपि समानम्, यतस्तत्राऽविशेषेण सर्वजीवग्रहणे सत्यपि प्रकरणात्, अपिशब्दाद् वा समस्तद्वादशाङ्गीविदो विहायाऽन्येषामेवा-
ऽस्मदादीनामक्षरस्याऽनन्तभागो नित्योद्घाट इतीहापि शक्यत एव वक्तुम्। तस्मात् तत्र, इह च श्रुताक्षरमकाराद्येव गम्यते ॥ ४९२ ॥

यदि वाऽत्र श्रुताक्षरं तत्र केवलाक्षरमपि भवतु, न च श्रुताक्षरस्य केवलपर्यायतुल्यमानता विरुध्यते। कथम् ?, इत्याह—

[1]सयपज्जवेहिं तं केवलेण तुल्लं न होज्ज न परेहिं। स-परपज्जाएहि उ तुल्लं तं केवलेणेव ॥४९३॥

स्वकाः स्वकीया अकारे-कारो-कारादयोऽनुगताः श्रुतज्ञानस्य स्वपर्याया इत्यर्थः, तैरनुगतैः स्वपर्यायैस्तत् श्रुताक्षरं केवलेन केवलाक्षरेण
तुल्यं न भवेत्, सर्वपर्यायानन्तभागवर्तित्वाच्छ्रुतज्ञानस्वपर्यायाणाम्; केवलज्ञानं तु सर्वद्रव्य-पर्यायराशिप्रमाणं, सर्वेष्वपि तेषु व्यापा-
रात्, तथाहि—लोके समस्तद्रव्याणां पिण्डितः पर्यायराशिरनन्तानन्तस्वरूपोऽप्यसत्कल्पनया किल लक्षम्, एतन्मध्याच्छ्रुतज्ञानस्य स्व-
पर्यायाणां किल शतम्, तदूनलक्षं तु परपर्यायाः, केवलज्ञाने त्वेतल्लक्षमपि पर्यायाणामुपलभ्यते, सर्वोपलब्धिस्वभावात् तस्य। ते चोपल-
ब्धिविशेषाः सर्वेऽपि केवलस्य पर्यायाः स्वभावाः, ज्ञेयोपलब्धिस्वभावत्वात् ज्ञानस्य। एवं च सति लक्षपर्यायं केवलं, श्रुतस्य तु शतं स्व-
पर्यायाणाम्। अतस्तैस्तत्केवलपर्यायराशितुल्यं न भवेदिति स्थितम्। तर्हि परपर्यायैस्तत् तस्य तुल्यं भविष्यतीत्याह— न परैः— नापि
परपर्यायैस्तत् केवलेन तुल्यं भवेत्; तथाहि— घटादिव्यावृत्तिरूपाः परपर्यायास्तस्य विद्यन्तेऽनन्तानन्ताः, कल्पनया तु शतोनलक्ष-
मानाः, तथापि सर्वद्रव्य-पर्यायराशितुल्या न भवन्ति, सर्वपर्यायानन्तभागेन कल्पनया शतरूपेण सद्भावतस्त्वनन्तात्मकेन स्वपर्या-
यराशिना न्यूनत्वात्, केवलस्य तु संपूर्णसर्वपर्यायराशिमानत्वादिति। स्व-परपर्यायैस्तु तत् केवलपर्यायतुल्यमेव, केवलवत् तस्यापि
सर्वद्रव्य-पर्यायप्रमाणत्वादिति ॥ ४९३ ॥

आह—यद्येवम्, केवलेन सहाऽस्य को विशेषः ?। उच्यते अस्ति विशेषः, यतः—

[1] स्वकपर्यवैस्तत् केवलेन तुल्यं न भवेद् न परैः। स्व-परपर्यायैस्तु तुल्यं तत् केवलेनैव ॥ ४९३ ॥

यथा चैतन्यं जीवत्वमकृत्रिमस्वभावमाहारादिसंज्ञाद्वारेणाऽसंज्ञिनामवगम्यते, तथा लब्ध्यक्षरात्मकसमूहाज्ञानमपि तेषामवगन्तव्यम्, स्तोकत्वात् स्थूलदर्शिभिस्तद् नोपलक्ष्यते, जीवत्वमिव पृथिव्याद्येकेन्द्रियाणाम्। एकशब्दस्य चेह लोपः 'भामा सत्यभामा' इत्यादिदर्शनादिति। यदपि परोपदेशजत्वमक्षरस्योच्यते, तदपि संज्ञा-व्यञ्जनाक्षरयोरेवाऽवसेयम्। लब्ध्यक्षरं तु क्षयोपशमे-न्द्रियादिनिमित्तमसंज्ञिनां न विरुध्यते। तदेव च मुख्यतयेह प्रस्तुतं, न तु संज्ञा-व्यञ्जनाक्षरे, श्रुतज्ञानाधिकारादिति ॥ ४७५ ॥

दृष्टान्तान्तरमाह—

[1]जह वा सण्णीणमणक्खराण असइ नरवण्णविण्णाणे। लद्धक्खरं ति भण्णइ किंपि त्ति तहा असण्णीणं ॥४७६॥

यथा[2] वा संज्ञिनामपि परोपदेशाभावेनाऽनक्षराणां केषांचिदतीव मुग्धप्रकृतीनां[3] पुलीन्द्रबाल-गोपाल-गवादीनामसत्यपि नरादिवर्णविशेषविषये विज्ञाने लब्ध्यक्षरं किमपेक्ष्यते[4], नरादिवर्णोच्चारणे तच्छ्रवणात्, अभिमुखनिरीक्षणादिदर्शनाच्च। गौरपि हि शबला-बहुलादिशब्देनाऽऽकारिता सती स्वनाम जानीते, प्रवृत्ति-निवृत्त्यादि च कुर्वती दृश्यते। न चैषां गवादीनां तथाविधः परोपदेशः समस्ति। अथवा, अस्ति लब्ध्यक्षरं, नरादिविज्ञानसद्भावात्, एवमसंज्ञिनामपि[5] किमपि तदेष्टव्यमिति ॥ ४७६ ॥

तदेवं साधितमेकेन्द्रियादीनामपि यच्च यावच्च लब्ध्यक्षरम्। अथैकैकस्याऽकाराद्यक्षरस्य यावन्तः पर्याया भवन्ति, तदेतद् विशेषतो दर्शयति—

[6]एक्केक्कमक्खरं पुण स-परपज्जायभेयओ भिन्नं। तं सव्वदव्व-पज्जायरासिमाणं मुणेयव्वं ॥ ४७७ ॥

इह भिन्नं पृथगेकैकमपि तदकाराद्यक्षरं पुनः स्व-परपर्यायभेदतः सर्वाणि यानि धर्मास्तिकायादीनि द्रव्याणि तत्पर्यायराशिमानं मुणितव्यम्। इदमुक्तं भवति— इह समस्तत्रिभुवनवर्तीनि यानि परमाणु-द्व्यणुकादीनि, एकाकाशप्रदेशादीनि च यानि द्रव्याणि, ये च सर्वेऽपि वर्णाः, तदभिधेयाश्चार्थाः, तेषां सर्वेषामपि पिण्डितो यः पर्यायराशिर्भवति स एकैकस्याऽप्यकाराद्यक्षरस्य भवति, तन्मध्ये ह्यकारस्य केचित् स्तोकाः स्वपर्यायास्ते चाऽनन्ताः, शेषास्त्वनन्तानन्तगुणाः परपर्यायाः, इत्येवं सर्वसंग्रहः। अयं च सर्वोऽपि सर्वद्रव्य-पर्यायराशिः सद्भावतोऽनन्तानन्तस्वरूपोऽप्यसत्कल्पनया किल लक्षं, पदार्थाश्चाऽकारे-कारादयो धर्मास्तिकायादयः सर्वाकाशप्रदेशसहिताः सर्वेऽपि किल

1 यथा वा संज्ञिनामनक्षराणामसति नरवर्णविज्ञाने। लब्ध्यक्षरमिति भण्यते किमपीति तथाऽसंज्ञिनाम् ॥ ४७६ ॥

2 क ग 'था सं'। 3 घ छ.'प्रभृती'। 4 घ.छ. 'पीष्यते'। 5 क.घ छ 'पि त'।

6 एकैकमक्षरं पुनः स्व-परपर्यायभेदतो भिन्नम्। तत् सर्वद्रव्य-पर्यायराशिमानं ज्ञातव्यम् ॥ ४७७ ॥

अन्ये तु व्याचक्षते– सर्वद्रव्यगतान् सर्वानपि पर्यायान् केवलज्ञानं जानाति, येन च स्वभावेनैकं पर्यायं जानाति न तेनैवाऽपरमपि, किन्तु स्वभावभेदेन, अन्यथा सर्वद्रव्य-पर्यायैकत्वप्रसङ्गात् । तस्मात् सर्वद्रव्य-पर्यायराशितुल्याः स्वभावभेदलक्षणाः केवलज्ञानस्य स्वपर्यायाः, सर्वद्रव्य-पर्यायास्तु परपर्यायाः, इत्येवं स्वपर्यायाः, परपर्यायाश्चोभयेऽपि परस्परं तुल्याः केवलस्येति ॥ ४९५ ॥

एवं च सति किं स्थितम् ?, इत्याह–

अविसेसियं[1] पि सुत्ते अक्खरपज्जायमाणमाइट्ठं । सुय-केवलक्खराणं एवं दोण्हं पि न विरुद्धं ॥ ४९६ ॥

एवं सत्यविरुद्धम्– एवं सत्यविशिष्टमपि नन्दिसूत्रे यत्सर्वाकाशप्रदेशाग्रमनन्तगुणितमक्षरप्रमाणमादिष्टम् । तत् श्रुतस्य, केवलस्य वा न विरुद्धम्, श्रुताक्षरस्य केवलस्य चोक्तन्यायेनाऽर्थतो द्वयोरपि समानपर्यायत्वात्; तथाहि– श्रुतस्य, केवलस्य च परपर्याया निर्विवादं तुल्या एव, स्वपर्यायास्तु यद्यपि 'अन्ये तु व्याचक्षते' इत्यादिनाऽनन्तरमेव केवलस्य भूयांसः प्रोक्ताः, तथापि तेभ्यो व्यावृत्तत्वात् तावन्तः श्रुतस्य परपर्याया वर्धन्त इति । तदेवं द्वयोरपि सामान्यतः पर्यायसमानत्वम्, इत्युभयोरपि ग्रहणे सूत्रे न किमपि क्षूयत इति॥४९६॥

नन्वेतत् सर्वपरिमाणमक्षरं किं सर्वमपि ज्ञानावरणकर्मणाऽऽव्रियते, न वा ?, इत्याह–

तस्स[3] उ[4] अणंतभागो निच्चुग्घाडो य सव्वजीवाणं । भणियो सुयम्मि केवलिवज्जाणं तिविहभेओ वि॥४९७॥

तस्य च सामान्येनैव सर्वपर्यायपरिमाणाऽक्षरस्याऽनन्तभागो नित्योद्घाटितः सर्वदैवाऽनावृतः केवलिवर्जानां सर्वजीवानां जघन्य-मध्यमो-त्कृष्टत्रिविधभेदोऽपि श्रुते भणितः प्रतिपादित इति ॥ ४९७ ॥

तत्र सर्वजघन्यस्याऽक्षरानन्तभागस्य स्वरूपमाह–

सो[5] पुण सव्वजहन्नो चेयण्णं नावरिज्जइ कयाइ । उक्कोसावरणम्मि वि जलयच्छन्नक्कभासो व्व ॥ ४९८ ॥

स पुनः सर्वजघन्योऽक्षरानन्तभाग आत्मनो जीवत्वनिबन्धनं चैतन्यमात्रं, तच्च तावन्मात्रमुत्कृष्टावरणेऽपि सति जीवस्य कदाचिदपि नाव्रियते न तिरस्क्रियते, अजीवत्वप्रसङ्गात्, यथा सुष्ठ्वपि जलदच्छन्नस्याऽर्कस्याऽऽदित्यस्य भासः प्रकाशो दिन-रात्रिविभागनिबन्धनं किञ्चित्प्रभामात्रं[6] कदापि[7] नाऽऽव्रियते, एवं जीवस्याऽपि चैतन्यमात्रं कदाचिद् नाव्रियत इति भाव इति ॥ ४९८ ॥

१ घ छ 'लस्य' । २ अविशेषितमपि सूत्रेऽक्षरपर्यायमानमादिष्टम् । श्रुत केवलाक्षरयोरेव द्वयोरपि न विरुद्धम् ॥ ४९६ ॥
३ तस्य त्वनन्तभागो नित्योद्घाटश्च सर्वजीवानाम् । भणितः श्रुते केवलिवर्जाना त्रिविधभेदोऽपि ॥ ४९७ ॥ ४ घ छ 'उण अ' ।
५ 'स पुनः सर्वजघन्यश्चैतन्य नाव्रियते कदापि । उत्कृष्टावरणेऽपि जलदच्छन्नार्कभास इव ॥ ४९८ ॥ ६ घ. छ 'त्रं मा' । ७ घ छ. 'दापि ना' ।

प्रतिपाद्यन्ते, इति निमित्तभेदख्यापनपरावेव स्व-परशब्दौ, न त्वेकेषां तत्र सर्वथा संबन्धनिराकरणपरौ । अतोऽक्षरे घटादिपर्याया अस्तित्वेनाऽसंबद्धा इति परपर्याया उच्यन्ते, न पुनः सर्वथा ते तत्र न संबद्धाः, नास्तित्वेन तत्रापि संबन्धात् । न चैकस्योभयत्र संबन्धो न युक्तः, एकस्याऽपि हिमवदादेरंशद्वयेन पूर्वापरसमुद्रादिसंबन्धात् । यदि ह्येकेनैव रूपेणैकस्योभयत्र संबन्ध इष्येत तदा स्याद् विरोधः, एतच्च नास्ति, रूपद्वयेन घटादिपर्यायाणां तत्र, अन्यत्र च संबन्धात्, सत्त्वेन तत्र संबन्धात्, असत्त्वेन त्वक्षरादिषु । असत्त्वमभावत्वाद् वस्तुनो रूपमेव न भवति, खरविषाणवत्, इति चेत् । तदयुक्तम्, खरविषाणकल्पत्वस्य वस्त्वभावेऽसिद्धत्वात् । न हि प्रागभाव-प्रध्वंसाभाव-घटाभाव-पटाभावादिवस्त्वभावविशेषणवत् खरविषाणादिष्वपि विशेषणं संभवति, तेषां सर्वोपाख्याविरहलक्षणे निरभिलप्ये षष्ठभूतवद् नीरूपेऽत्यन्ताभावमात्र एव व्यवहारिभिः संकेतितत्वात् । न च षष्ठभूतवद् वस्त्वभावोऽप्यस्माभिर्नीरूपोऽभ्युपगम्यते, नीरूपस्य निरभिलप्यत्वेन प्रागभावादिविशेषणानुपपत्तेः; किन्तु यथैव मृत्पिण्डादिपर्यायो भाव एव सन् घटाकारादिव्यावृत्तिमात्रात् प्रागभाव इति व्यपदिश्यते, यथा वा कपालादिपर्यायो भाव एव सन् घटाकारोपरममात्रात् प्रध्वंसाभावोऽभिधीयते, तद्वत् पर्यायान्तरापन्नोऽक्षरादिर्भाव एव घटादिवस्त्वभावः प्रतिपाद्यते, न तु सर्वथैवाऽभावः, तस्य सर्वथा नकिञ्चिद्रूपस्यानभिलप्यत्वात् । न च वक्तव्यं– खरविषाणादिशब्देन सोऽप्यभिलप्यत एव, इति तस्य सर्वथा निरभिलप्यताख्यापनार्थमेव; संकेतमात्रभाविनां खरविषाणादिशब्दानां व्यवहारिभिस्तत्र निवेशात् ।

किञ्च, यदि घटादिपर्यायाणामक्षरे नास्तित्वेन संबन्धो नेष्यते, तर्ह्यस्तित्व-नास्तित्वयोरन्योन्यव्यवच्छेदरूपत्वादस्तित्वेन तेषां तत्र संबन्धः स्यात्, तथाच सत्यक्षरस्यापि घटादिरूपतैव स्यात्, एवं च सति सर्वं विश्वमेकरूपतामेवाऽऽसादयेत्, ततश्च सहोत्पत्त्यादिप्रसङ्गः । न च वक्तव्यम्– घटादिपर्यायाणां घटादौ व्यवस्थितानां नास्तित्वलक्षणं रूपं कथमक्षरे प्राप्तम्, रूपिणमन्तरेण रूपायोगात् ?, अथ तेऽपि तत्र सन्ति, तर्हि विश्वैकत्वमिति; घटादिपर्यायाणां घटादीन् विहायाऽन्यत्र नास्तित्वेन व्याप्तेरिष्टत्वात्, अन्यथा स्व-परभावायोगात् । अत एव कथञ्चिद् विश्वैकताऽप्यबाधितैव, द्रव्यादिरूपतया तदेकत्वस्याऽप्यभ्युपगमात् । अतो गम्भीरमिदं स्थिरबुद्धिभिः परिभावनीयम् । तस्माद् घटादिपर्याया नास्तित्वेनाऽक्षरेऽपि संबद्धा इति । तत्पर्याया अप्येतेऽस्तित्वेन घटादावेव संबद्धाः, न त्वक्षरे, इति परपर्यायताव्यपदेश इति स्थितमिति ॥ ४७९ ॥

त्कृष्टोऽक्षरलाभः संपूर्णश्रुतज्ञानवतो लभ्यते, तथा केवलाक्षरमङ्गीकृत्योत्कृष्टोऽसौ केवलिनोऽपि लभ्यत एव, किं तद्वर्जनस्य[1] फलम्? । क्षमाश्रमणपूज्यैश्च 'थीणद्धि'[2] इत्यादिगाथायामित्थं व्याख्यातम्– "स च किल जघन्यतोऽनन्तभागः" इत्यादि । अथ सामान्यमक्षरं नेह प्रक्रमे गृह्यते, किन्तु श्रुताक्षरमेवेति । तदयुक्तम्, चिरन्तनटीकाद्वयेऽप्यक्षरस्य सामान्यस्यैव व्याख्यानात् । किञ्च, विशेषतोऽत्र श्रुताक्षरे गृह्यमाणे 'तस्य श्रुताक्षरस्याऽनन्तभागः सर्वजीवानां नित्योद्घाटः' इति व्याख्यानमापद्यते । एतच्चाऽयुक्तम्, संपूर्णश्रुतज्ञानिनां, ततोऽनन्तभागादिहीनश्रुतज्ञानवतां च श्रुताक्षरानन्तभागवत्त्वानुपपत्तेः । किञ्च, (सो उण) 'केवलिवज्जाणं[3] तिविहभेओ वि' इत्येतदसंबद्धमेव स्यात्, केवलिनः सर्वथैव श्रुताक्षरस्याऽसंभवेन तद्वर्जनस्याऽऽनर्थक्यप्रसङ्गादिति । परमार्थं चेह केवलिनः, बहुश्रुता वा विदन्ति, इत्यलं प्रसङ्गेन ।

विमध्यममक्षरानन्तभागमाह– ततस्तस्मादुत्कृष्टश्रुतज्ञानविदोऽवशेषाणामेकेन्द्रिय-संपूर्णश्रुतज्ञानिनोर्मध्ये वर्तमानानां षट्स्थानपतितानामनन्तभागादिगतानां प्रायेण विमध्यो[4] मध्यमोऽक्षरानन्तभागो भवति । एकस्मादुत्कृष्टश्रुतज्ञानिनोऽवशेषाः केचित् श्रुतमाश्रित्य तुल्या अपि भवन्ति, अत उक्तम्– प्रायेणावशेषाणां विमध्यम इति । अयमर्थः– विवक्षितादेकस्मादुत्कृष्टश्रुतज्ञानिनोऽवशेषाणामपि केषाञ्चिदुत्कृष्टश्रुतज्ञानवतां तत्तुल्य एवाऽक्षरानन्तभागो भवति, न तु विमध्यम उत्कृष्ट इत्यर्थः ॥ इति सप्तचत्वारिंशद्गाथार्थः ॥ ५०० ॥

॥ इत्यक्षरश्रुतं समाप्तमिति ॥

अथ तत्प्रतिपक्षभूतमनक्षरश्रुतमाह–

ऊसासियं[5] नीससियं निच्छूढं खासिअं च छीयं च । निस्सिंघियमणुसारं अणक्खरं छेलियाईयं ॥५०१॥

उच्छ्वसनमुच्छ्वसितं, भावे निष्ठाप्रत्ययः । तथा, निःश्वसनं निःश्वसितम् । निष्ठीवनं निष्ठ्यूतम् । कासनं कासितम् । क्षवणं क्षुतम् । निःसिङ्घनं निःसिङ्घितम् । अनुस्वारवदनुस्वारम्, अक्षरमपि यदनुस्वारवदुच्चार्यत इत्यर्थः । एतदुच्छ्वसिताद्यनक्षरश्रुतम् । न केवलमेतत्, किन्तु सेण्टनं सेण्टितम्, एतदादि चाऽनक्षरश्रुतमिति प्राक्तनसमुच्चयार्थचशब्दयोरेकोऽत्र योज्यते । आदिशब्दात्[6] फूत्कृत-सीत्कारादिपरिग्रहः ॥ इति निर्युक्तिगाथार्थः ॥ ५०१ ॥

---

१ घ छ 'नफ' । २ गाथा ४९९ । ३ गाथा ४९७ । ४ घ छ 'मध्यमो म' ।
५ उच्छ्वासित नि.श्वसित निष्ठ्यूत कासितं च क्षुत च । नि सिङ्घितमनुस्वारमनक्षरं सेण्टितादिकम् ॥५०१॥ ६ घ छ. 'दिप्र' ।

निष्पादका इति हेतोः। एतदपि कुतः ?, इत्याह– श्रद्धेय-ज्ञेय-क्रियाफलोपयोगिनो यतेरिति कृत्वा– श्रद्धेयत्वेनोपयोगात्, ज्ञेयत्वेनोपयोगात्, त्यागा-ऽऽदानादिक्रियारूपं यच्छ्रद्धान-ज्ञानफलं तदुपयोगित्वाच्चेति। कथंभूतास्ते सर्वद्रव्य-पर्यायाः ?, इत्याह– दर्शन-ज्ञान-चारित्रगोचराः सम्यग्दर्शन-ज्ञान-चारित्राविषयभूताः, ते हि सम्यग्दर्शनेन श्रद्धीयन्ते, ज्ञानेन तु ज्ञायन्ते, चारित्रस्याऽप्याहार-वस्त्र-पात्राद्युपकरण-भेषज-शिष्यादिद्वारेणोपष्टम्भहेतवो बहवो भवन्ति "अव्ववहारओ नेरइया" इति वचनात्। अथवा,

" पढमम्मि सव्वजीवा बीए चरिमे य सव्वदव्वाइं। सेसा महव्वया खलु तदिक्कदेसेण दव्वाणं " ॥ १ ॥

इति वचनात्। एते सर्वेऽपि ज्ञान-दर्शन-चारित्रगोचराः, व्रतानां चारित्रात्मजत्वात्, चारित्रस्य च ज्ञान-दर्शनाभ्यां विनाऽभावात्। अत एवैते श्रद्धेयत्वाद्युपयोगिनः, एतानन्तरेण श्रद्धानाद्ययोगात्, विषयमन्तरेण विषयिणोऽनुपपत्तेः। के यथा स्वकार्यनिष्पादकाः सन्तो यतेर्भवन्ति ?, इत्याह– यथा ज्ञान-दर्शनादिरूपाः स्वपर्यायाः, स्वधनं वा यथा भिन्नमपि देवदत्तादेर्भवति, तथा सर्वेऽपि द्रव्य-पर्यायास्त्यागा-ऽऽदानफलत्वात् प्रत्येकं सर्वेषामप्यकारादिवर्णानाम्, उपलक्षणत्वाद् घटादीनां च भिन्ना अपि भवन्तीति ॥४८२॥४८३॥

न चैतदुत्सूत्रम्, इति दर्शयति–

एगं जाणं सव्वं जाणइ सव्वं च जाणमेगं ति। इय सव्वमजाणंतो नागारं सव्वहा मुणइ ॥ ४८४ ॥

इह सूत्रेऽप्युक्तम्–"जे एगं जाणइ से सव्वं जाणइ, जे सव्वं जाणइ से एगं जाणइ" इति। किमुक्तं भवति– एकं किमपि वस्तु सर्वैः स्व-परपर्यायैर्युक्तं जानन्नवबुध्यमानः सर्वं लोका-ऽलोकगतं वस्तु सर्वैः स्व-परपर्यायैर्युक्तं जानाति, सर्ववस्तुपरिज्ञाननान्तरीयकत्वादेकवस्तुज्ञानस्य। यश्च सर्वं सर्वपर्यायोपेतं वस्तु जानाति स एकमपि सर्वपर्यायोपेतं जानाति, एकपरिज्ञानाऽविनाभावित्वात् सर्वपरिज्ञानस्य। एतच्च प्रागपि भावितमेवेति। अतः सर्वं सर्वपर्यायोपेतं वस्त्वजानानो नाकाररूपमक्षरं सर्वथा सर्वप्रकारैः सर्वपर्यायोपेतं जानाति। तस्माच्छेषसमस्तवस्तुपरिज्ञानैरेवैकमक्षरं ज्ञायते, नाऽन्यथेति भावः ॥ ४८४ ॥

यदि नामैवम्, तथापि प्रस्तुते घटादिपर्यायाणामक्षरपर्यायत्वे किमायातम् ?, इत्याह–

१ अव्यवहारिणो नैरयिकाः। २ प्रथमे सर्वजीवा द्वितीये चरमे च सर्वद्रव्याणि। शेषा महाव्रताः खलु तदेकदेशेन द्रव्याणाम् ॥ १ ॥
३ घ छ. 'तदेक्क'। ४ एकं जानन् सर्वं जानाति सर्वं च जानन्नेकमिति। इति सर्वमजानन् नाऽकारं सर्वथा जानाति ॥ ४८४ ॥
५ य एकं जानाति स सर्वं जानाति, यः सर्वं जानाति स एकं जानाति। ६ घ.छ. 'नात्थेव, ए'।

संज्ञिश्रुतं तावत् तदेवाऽभिधीयते यत् संज्ञिनः संबन्धि । सोऽपि संज्ञी स एव यस्याऽसौ संज्ञा समस्ति । सा च संज्ञा त्रिविधा भवति– दीर्घशब्दलोपाद् दीर्घकालिकोपदेशेन, हेतुवादोपदेशेन, दृष्टिवादोपदेशेन चेति ॥ ५०४ ॥

अत्र परः प्राह–

जइ सण्णासंबंधेण सण्णिणो, तेण सण्णिणो सव्वे । एगिंदियाइयाण वि जं सण्णा दसविहा भणिया ॥५०५॥

संज्ञा विद्यते येषां ते संज्ञिनः, इत्येवं संज्ञासंबन्धाद् यदि संज्ञिन इष्यन्ते, तदा तेन संज्ञासंबन्धेन सर्वेऽप्येकेन्द्रियादयो जीवाः संज्ञिनः प्राप्नुवन्ति, न पुनः केऽप्यसंज्ञिनः, इत्येवमतिव्याप्तिप्रसङ्गः, यतः सर्वजीवानामेकेन्द्रियादीनामपि प्रज्ञापनादिषु संज्ञा दशविधा भणिता, तद्यथा– "[2]एगिंदियाणं भंते ! कइविहा सण्णा पन्नत्ता ? । गोयमा ! दसविहा, तं जहा– आहारसण्णा, भयसण्णा, मेहुणसण्णा, परिग्गहसण्णा, कोहसण्णा, माणसण्णा, मायासण्णा, [3]लोहसण्णा, ओहसण्णा, लोगसण्णा" एवं द्वीन्द्रियादीनामपि वाच्यम् । तत् के नामेत्थमसंज्ञिनः ?, प्रोक्ताश्चैतेऽनेकशस्तेषु तेषु प्रदेशेष्वागमे, ततः कथमेतत् ? इति ॥ ५०५ ॥

अत्र परिहारमाह–

[4]थोवा न सोहणा वि य जं सा तो नाहिकीरए इहइं । करिसावणेण धणवं न रूववं मुत्तिमेत्तेण ॥ ५०६ ॥

जह बहुदव्वो धणवं पसत्थरू[5]वो अ रूववं होइ । महईए सोहणाए य तह सण्णी नाणसण्णाए ॥ ५०७ ॥

यद् यस्मात् कारणात् सा दशविधा संज्ञा काचित् तावदोघसंज्ञात्मिका स्तोका इति स्वल्पा, ततोऽत्र नाधिक्रियते– न तया संज्ञी वक्तुं युज्यत इति भावः । न हि कार्षापणमात्रास्तित्वेन लोकेऽपि धनवानुच्यते । आहार-भय-परिग्रह-मैथुनादिसंज्ञात्मिकाऽपि च भूयस्यपीह नाधिक्रियते, तामप्याश्रित्य न 'संज्ञी' इति निर्दिश्यत इत्यर्थः, यतो नाऽसौ शोभना– मोहादिजन्यत्वेन नासौ विशिष्टेत्यर्थः । न चाऽविशि-

१ यदि संज्ञासंबन्धेन संज्ञिनः, तेन संज्ञिनः सर्वे । एकेन्द्रियादिकानामपि यत् संज्ञा दशविधा भणिता ॥ ५०५ ॥
२ एकेन्द्रियाणां भगवन् ! कतिविधा संज्ञा प्रज्ञप्ता ? । गौतम ! दशविधा, तद्यथा– आहारसंज्ञा, भयसंज्ञा, मैथुनसंज्ञा, परिग्रहसंज्ञा, क्रोधसंज्ञा, मानसंज्ञा, मायासंज्ञा, लोभसंज्ञा, ओघसंज्ञा, लोकसंज्ञा । ३ घ. छ 'लोभस' ।
४ स्तोका न शोभनाऽपि च यत् सा ततो नाऽधिक्रियत इह । कार्षापणेन धनवान् न रूपवान् मूर्तिमात्रेण ॥ ५०६ ॥
यथा बहुद्रव्यो धनवान् प्रशस्तरूपश्च रूपवान् भवति । महत्या शोभनया च तथा संज्ञी ज्ञानसंज्ञया ॥ ५०७ ॥ ५ घ छ 'वो य रू' ।

कथम् ?, इत्याह—

[1]पण्णवणिज्जा भावा वण्णाण सपज्जया तओ थोवा । सेसा परपज्जाया तोऽणंतगुणा निरभिलप्पा ॥४८८॥

यतः प्रज्ञापनीया अभिलाप्या भावाः सामान्येन वर्णानामकारादीनां स्वपर्यायास्ततः स्तोका अनन्तभागवर्तिनः । शेषास्तु निरभिलाप्याः प्रज्ञापयितुमशक्याः सर्वेऽपि परपर्याया इति; अतः स्वपर्यायेभ्योऽनन्तगुणाः । सर्वस्याऽपि हि वस्तुनो लोका-ऽलोकाकाशं विहाय स्तोकाः स्वपर्यायाः, परपर्यायास्त्वनन्तगुणाः । लोका-ऽलोकाकाशस्य तु केवलस्याऽप्यनन्तगुणत्वात्, शेषपदार्थानां तु समुदितानामपि तदनन्तभागवर्तित्वाद् विपरीतं द्रष्टव्यम्— स्तोकाः परपर्यायाः, स्वपर्यायास्त्वनन्तगुणाः ।

अत्र विनेयानुग्रहार्थं स्थापना काचिद् निदर्श्यते, तद्यथा— सर्वाकाशप्रदेशराशेरन्ये सर्वेऽपि धर्मास्तिकाय[2]-प्रदेश-परमाणु-द्व्यणुकादयः पदार्थाः सद्भावतोऽनन्ता अपि कल्पनया किल दश, सर्वाकाशप्रदेशपदार्थास्तु केवला अपि किल शतम्, प्रतिपदार्थं च पञ्च पञ्च स्वपर्यायाः । एवं च सति धर्मास्तिकायप्रदेशादीनां सर्वेषामपि पदार्थानां पञ्चाशदेव स्वपर्यायाः, ते च नभसः परपर्यायाः, स्तोकाश्च; स्वपर्यायाणां तु पञ्च शतानि, वहवश्चामी परपर्यायेभ्यः । तस्माच्छेषपदार्थानां सर्वेषामपि नभसोऽनन्ततमभागवर्तित्वात्, नभसस्तु केवलस्याऽपि तेभ्योऽनन्तगुणत्वात् स्वपर्यायाऽल्प-बहुत्ववैपरीत्यं द्रष्टव्यमिति । नभसोऽन्यपदार्थानां त्वनेनैव निदर्शनेन स्वपर्यायाणां स्तोकत्वं, परपर्यायाणां तु बहुत्वं परिभावनीयम्, तथाहि— किलैकस्मिन् धर्मास्तिकायप्रदेशे पञ्च स्वपर्यायाः, परपर्यायाणां तु पञ्चचत्वारिंशदधिकानि पञ्च शतानि । एवमक्षर-परमाण्वादावपि वाच्यम् । इत्यलं विस्तरेणेति ॥ ४८८ ॥

अत्र परो भाष्यस्याऽऽगमेन सह विरोधमुद्भावयति—

[3]नणु सव्वागासपएसपज्जाया वण्णमाणमाइट्ठं । इह सव्वदव्व-पज्जायमाणगहणं किमत्थं ति ? ॥ ४८९ ॥

'ननु' इत्यसूयायाम्, सर्वस्य लोका-ऽलोकवर्तिन आकाशस्य प्रदेशास्तेषां मीलिता ये सर्वेऽपि पर्यायास्ते, वर्णस्य पर्यायाणां सूत्रे मानं परिमाणमादिष्टम्— सर्वाकाशप्रदेशानां यावन्तः सर्वेऽपि पर्यायास्तावन्त एकस्याऽक्षरस्य पर्याया भवन्ति, इत्येतावदेवाऽऽगमे प्रोक्तमि-

१ प्रज्ञापनीया भावा वर्णानां स्वपर्ययास्ततः स्तोकाः । शेषाः परपर्यायास्ततोऽनन्तगुणा निरभिलाप्याः ॥ ४८८ ॥ २ घ.छ. 'यादिप्र'।

३ ननु सर्वाकाशप्रदेशपर्याया वर्णमानमादिष्टम् । इह सर्वद्रव्यपर्यायमानग्रहणं किमर्थमिति ? ॥ ४८९ ॥

यथा रूपे घट-पटादिसंबन्धिनि चक्षुष्मतो लोचनयुक्तस्य जन्तोरुपलब्धिश्चक्षुर्विज्ञानमुत्पद्यते । कथंभूते रूपे ?, दार्शिते प्रदीपादिप्रकाशेन, तथा तेनैव प्रकारेण मनोविज्ञानावरणकर्मक्षयोपशमवतो जीवस्य चिन्ताप्रवर्तकमनस्त्वपरिणतमनोद्रव्यप्रकाशिते शब्दरूपादिकेऽर्थे मनःषष्ठेन्द्रियपञ्चकभेदात् षड्विधोपयोगस्त्रिकालविषयोऽपि समुपजायत इति ॥ ५१० ॥

अत्र विनेयः पृच्छति–

नन्वसंज्ञिनः किं सर्वथैवेन्द्रियोपलब्धिर्न भवति ?, इत्याह–

अविसुद्धचक्खुणो[1] जह नाइपयासम्मि रूवविण्णाणं । असण्णिणो तहत्थे थोवमणोदव्वलद्धिमओ ॥५११॥

यथाऽविशुद्धचक्षुषो नातिप्रकाशे मन्दमन्दप्रकाशान्वितप्रदेशेऽस्पष्टा रूपोपलब्धिर्भवति, एवमसंज्ञिनः सन्मूर्च्छनजपञ्चेन्द्रियस्य स्वल्पमनोविज्ञानक्षयोपशमवशादतिस्तोकमनोद्रव्यग्रहणशक्तेः शब्दाद्यर्थेऽस्पष्टैवोपलब्धिर्भवतीति ॥ ५११ ॥

यदि सन्मूर्च्छनजपञ्चेन्द्रियस्यैवंभूतमस्पष्टं ज्ञानं भवति, तर्ह्येकेन्द्रियादीनां तत् कथंभूतं भवति ?, इत्याह–

जह[3] मुच्छियाइयाणं अव्वत्तं सव्वविसयविण्णाणं । एगेंदियाण एवं, सुद्धयरं बेइंदियाईणं ॥ ५१२ ॥

यथा[4] मूर्च्छितादीनां सर्वेष्वप्यर्थेष्वव्यक्तमेव ज्ञानं भवति, एवमतिप्रकृष्टावरणोदयादेकेन्द्रियाणामपि, ततः शुद्धतरं शुद्धतमं द्वीन्द्रियादीनामापञ्चेन्द्रियसन्मूर्च्छजेभ्यः, ततः सर्वस्पष्टतमं संज्ञिनामिति । आह– कुतः पुनश्चैतन्ये समानेऽपि जन्तूनामिदमुपलब्धिनानात्वम् ? । उच्यते– सामर्थ्यभेदात्, स च क्षयोपशमवैचित्र्यात् ॥ ५१२ ॥

एतदेवाह–

तुल्ले[5] छेयगभावे जं सामत्थं तु चक्करयणस्स । तं तु जहक्कमहीणं न होइ सरपत्तमाईणं ॥ ५१३ ॥

ईय मणोविसईणं जा पडुया होइ उग्गहाईसु । तुल्ले चेयणभावे असण्णीणं न सा होइ ॥ ५१४ ॥

१ अविशुद्धचक्षुषो यथा नातिप्रकाशे रूपविज्ञानम् । असञ्ज्ञिनस्तथाऽर्थे स्तोकमनोद्रव्यलब्धिमत ॥ ५११ ॥ २ क. ग 'थं भ' ।
३ यथा मूर्च्छितादीनामव्यक्त सर्वविषयविज्ञानम् । एकेन्द्रियाणामेव, शुद्धतरं द्वीन्द्रियादीनाम् ॥ ५१२ ॥ ४ घ. छ 'था सन्मू' ।
५ घ छ 'त' । ६ तुल्ये छेदकभावे यत् सामर्थ्यं तु चक्ररत्नस्य । तत्तु यथाक्रमहीनं न भवति शरपत्रादीनाम् ॥ ५१३ ॥
इति मनोविषयाणां या पटुता भवत्यवग्रहादिषु । तुल्ये चेतनभावेऽसञ्ज्ञिनां न सा भवति ॥ ५१४ ॥

[1]किमणंतगुणा भणिया जमगुरुलहुपज्जया पएसम्मि । एक्केक्कम्मि अणंता पण्णत्ता वीयरागेहिं ॥ ४९१ ॥

ननु "[2]सव्वागासपएसग्गं सव्वागासपएसेहिं अणंतगुणियं" इत्यत्र किमित्याकाशप्रदेशाः सूत्रेऽनन्तगुणा भणिताः ? । अत्रोत्तरमाह– 'जमित्यादि' यद् यस्मात्कारणात् एकैकस्मिन्नाकाशप्रदेशेऽगुरुलघुपर्याया वीतरागैस्तीर्थकर-गणधरैरनन्ताः प्रज्ञप्ताः प्ररूपिताः । ततश्चाऽयमभिप्रायः– इह निश्चयनयमतेन बादरं वस्तु सर्वमपि गुरुलघु, सूक्ष्मं त्वगुरुलघु । तत्राऽगुरुलघुवस्तुसंबन्धिनः पर्याया अप्यगुरुलघवः समयेऽभिधीयन्ते, आकाशप्रदेशाश्चाऽगुरुलघवः, अतस्तत्पर्याया अप्यगुरुलघवो भण्यन्ते । ते च तेषु प्रत्येकमनन्ताः सन्ति । अतः सर्वाकाशप्रदेशाग्रं सर्वाकाशप्रदेशैरनन्तगुणमुक्तमिति भाव इति ॥ ४९१ ॥

प्रकारान्तरेण प्रेरयन्नाह–

[3]तत्थाविसेसियं नाणमक्खरं इह सुयक्खरं पगयं । तं किह केवलपज्जायमाणतुल्लं हविज्जाहि ? ॥४९२॥

तत्रेति– "[4]सव्वागासपएसग्गं सव्वागासपएसेहिं अणंतगुणियं पज्जवक्खरं निप्फज्जइ" इत्यत्र सूत्रे नन्द्यध्ययनेऽविशेषितं सामान्येनैव 'नाणमक्खरं ति' ज्ञानमक्षरं प्रतिपादितम्, अविशेषाभिधाने च केवलज्ञानस्य महत्त्वात् तदेव तत्राऽक्षरं गम्यते, इह तु श्रुतज्ञानविचाराधिकारात्[5] श्रुताक्षरमकाराद्येवाऽक्षरशब्दवाच्यत्वेन प्रकृतं प्रस्तुतम् । ततः को दोषः ?, इत्याह– तच्चाऽकारादि श्रुताक्षरं कथं केवलपर्यायमानतुल्यं भवेत् ?– न कथञ्चिदित्यर्थः । अयमभिप्रायः– केवलस्य सर्वद्रव्य-पर्यायवेत्तृत्वाद् भवतु सर्वद्रव्य-पर्यायमानता, श्रुतस्य तु तदनन्तभागविषयत्वात् कथं तत्पर्यायमानतुल्यता ? इति ॥

अत्रोच्यते– ननु तत्रापि '[6]अक्खर सण्णी सम्मं साइयं खलु' इत्यादिमक्रमेऽपर्यवसितश्रुते विचार्यमाणे "सव्वागासपएसग्गं" इत्यादि सूत्रं पठ्यते, ततो यथेह, तथा तत्रापि श्रुताधिकारादक्षरमकाराद्येव गम्यते न तु केवलाक्षरम् । अथ ब्रूषे– तत्र द्वितीयमनन्तरं सूत्रं यत् पठ्यते "[7]सव्वजीवाणं पि य णं अक्खरस्स अणंतभागो निच्चुग्घाडियओ" इति, एतस्मात् केवलाक्षरं तत्र गम्यते, न तु

१ किमनन्तगुणा भणिता यदगुरुलघुपर्यायाः प्रदेशे । एकैकस्मिन्ननन्ताः प्रज्ञप्ता वीतरागैः ॥ ४९१ ॥
२ सर्वाकाशप्रदेशाग्रं सर्वाकाशप्रदेशैरनन्तगुणितम् ।
३ तत्राविशेषितं ज्ञानमक्षरमिह श्रुताक्षर प्रकृतम् । तत् कथं केवलपर्यायमानतुल्यं भवेत् ? ॥ ४९२ ॥
४ सर्वाकाशप्रदेशाग्रं सर्वाकाशप्रदेशैरनन्तगुणितं पर्यवाक्षरं निष्पद्यते । ५ घ. छ 'रात् श्रु' ।
६ गाथा ४५४ । ७ सर्वजीवानामपि चाऽक्षरस्याऽनन्तभागो नित्योद्घाटितः ।

ज्ञाने हि तस्य विशिष्टतराऽसौ प्राप्यते । ततस्तद्वृत्तिरप्यसौ किं नाङ्गीक्रियते, येनोच्यते– 'संते नाणे खउवसमियम्मि' इति ? । एतदाशङ्क्य पूर्वमुत्तरमाह–

[1]खयनाणी किं सण्णी न होइ होइ व खउवसमनाणी ? । सण्णा सरणमणागयाचिंता य न सा जिणे जम्हा ॥५१८॥

आवरणस्य सर्वथैव क्षयेण ज्ञानी क्षयज्ञानी, केवलीत्यर्थः, असौ संज्ञी किमिति न भवति ?, किमर्थं च क्षायोपशमिकज्ञानी संज्ञी भवतीति व्याख्यायते भवता ?। एवं परेणोक्ते सत्याह– 'सण्णेत्यादि' केवली संज्ञी न भवति, यतोऽतीतार्थस्य स्मरणम्, अनागतस्य च चिन्ता[2] संज्ञोच्यते, सा च जिने केवलिनि नास्तीति, सर्वदा सर्वार्थावभासकत्वेन केवलिनां स्मरण-चिन्ताद्यतीतत्वात् । इति क्षायोपशमिकज्ञान्येव सम्यग्दृष्टिः संज्ञीति ॥ ५१८ ॥

पुनरपि प्रकारान्तरेणाऽऽह परः

[3]मिच्छो हिया-हियविभागनाणसण्णासमण्णिओ कोइ । दीसइ, सो किमसण्णी, सण्णा जमसोहणा तस्स ॥५१९॥

ननु मिथ्यादृष्टिरपि कश्चिदैहिकाद्यर्थविषयहिता-ऽहितविभागज्ञानात्मकस्पष्टसंज्ञासमन्वित एव दृश्यते, ततः किमित्यसौ संज्ञी न भवति, येन दृष्टिवादोपदेशेनाऽयमसंज्ञी प्रोच्यते ? इति । गुरुराह– यद् यस्मादशोभना कुत्सिता तस्य मिथ्यादृष्टेः संज्ञा, तेन सत्याऽपि तयाऽयमसंज्ञीति ॥ ५१९ ॥

आह– ननु यद्यप्यशोभनाऽस्य संज्ञा, तथापि कथं तस्या अभावः ?, इत्याह–

[4]जह दुव्वयणमवयणं कुच्छियसीलं असीलमसईए । भण्णइ तह नाणं पि हु मिच्छद्दिट्ठिस्स अण्णाणं ॥५२०॥

यथा दुर्वचनं कुत्सितं वचनं सदप्यवचनं लोके भण्यते, असत्याश्च संबन्धि कुत्सितं शीलं विद्यमानमप्यशीलं यथाऽभिधीयते, तथा मिथ्यादृष्टेर्ज्ञानमपि मिथ्यादर्शनोदयपरिग्रहादज्ञानं वम्भण्यते, संज्ञाऽप्यसंज्ञोच्यत इत्यर्थः ॥ ५२० ॥

कस्मात् पुनस्तस्य ज्ञानमप्यज्ञानं भवति ?, इत्याह–

---

१ क्षयज्ञानी किं सञ्ज्ञी न भवति, भवति क्षयोपशमज्ञानी ? । सञ्ज्ञा स्मरणमनागतचिन्ता च न सा जिने यस्मात् ॥ ५१८ ॥ २ क ग. 'न्ता सञ्ज्ञानं सं' ।
३ मिथ्यो ( मिथ्यादृष्टि. ) हिता-ऽहितविभागज्ञानसंज्ञासमन्वित. कोऽपि । दृश्यते, स किमसंज्ञी, संज्ञा यदशोभना तस्य ॥ ५१९ ॥
४ यथा दुर्वचनमवचनं कुत्सितशीलमशीलमसत्याः । भण्यते तथा ज्ञानमपि खलु मिथ्यादृष्टेरज्ञानम् ॥ ५२० ॥

[1]अविसेसकेवलं पुण सयपज्जाएहिं चेव तत्तुल्लं । जं नेयं पइ तं सव्वभावव्वावारविणिउत्तं ॥ ४९४ ॥

उभयत्र सर्वद्रव्य-पर्यायराशिप्रमाणत्वे तुल्येऽपि श्रुत-केवलयोरस्ति विशेष इत्येवं पुनः शब्दोऽत्र विशेषद्योतनार्थः । कः पुनरसौ विशेषः ?, इत्याह— अविशेषेण पर्यायसामान्येन युक्तं केवलमविशेषकेवलं स्व-परविशेषरहितैः सामान्यत एवाऽनन्तपर्यायैर्युक्तं केवलज्ञानमविशेषकेवलमित्यर्थः । तदेवंभूतं केवलं स्वपर्यायैरेव तत्तुल्यं— तेन प्रक्रमानुवर्तमानसर्वद्रव्य-पर्यायराशिना तुल्यं तत्तुल्यं, श्रुतज्ञानं तु समुदितैरेव स्व-परपर्यायैस्तत्तुल्यमिति विशेष इति भावः । कथं पुनः केवलज्ञानस्य तावन्तः पर्यायाः ?, इत्याह— 'जं नेयमित्यादि' यद् यस्मात् केवलज्ञानं सर्वद्रव्य-पर्यायलक्षणं ज्ञेयं प्रति सर्वभावेषु निःशेषज्ञातव्यपदार्थेषु योऽसौ परिच्छेदलक्षणो व्यापारस्तत्र विनियुक्तं प्रतिसमयं प्रवृत्तिमदित्यर्थः । इदमुक्तं भवति— केवलज्ञानं सर्वानपि सर्वद्रव्य-पर्यायान् जानाति, ते च तेन ज्ञायमाना ज्ञानवादिनयमतेन तत्स्वरूपतया परिणताः, ततो ज्ञानमयत्वात् ते केवलस्य स्वपर्याया एव भवन्ति, अतः केवलज्ञानं तैरेव सर्वद्रव्य-पर्यायराशितुल्यं भवति । श्रुतादिज्ञानानि तु सर्वद्रव्य-पर्यायराशेरनन्ततममेव भागं जानन्ति । अतस्तेषां स्वपर्याया एतावन्त एव भवन्ति, अतो न श्रुतज्ञानं स्वपर्यायैस्तत्तुल्यं, तदनन्तभागवर्तिस्वपर्यायमानत्वात्, इति श्रुत-केवलयोर्विशेषः । अत्र पक्षे केवलस्य परपर्यायविवक्षा न कृता । ये हि केवलस्य निःशेषज्ञेयगता विषयभूताः पर्यायास्ते ज्ञानाद्वैतवादिनयमतेन ज्ञानरूपत्वादर्थापत्त्यैव स्वपर्यायाः प्रोक्ताः, न तु परपर्यायापेक्षया, इत्यविशेषकेवलत्वविरोधो नाशङ्कनीय इति ॥ ४९४ ॥

तदेवं ज्ञानवादिनयमतविवक्षयैव केवलस्य परपर्यायाभावः प्रोक्तः, वस्तुस्थित्या पुनरिदमपि स्व-परपर्यायान्वितमेवेति दर्शयति—

[2]वत्थुसहावं पइ तं पि स-परपज्जायभेयओ भिन्नं । तं जेण जीवभावो भिन्ना य तओ घडाईया ॥४९५॥

वस्तुस्वभावं प्रति यथावस्थित[3]वस्तुस्वरूपमाश्रित्य तदपि केवलज्ञानमकाराद्यक्षरवत् स्व-परपर्यायभेदतो भिन्नमेव, न तु यथोक्तनीत्या स्वपर्यायान्वितमेवेति भावः । कुतः ?, इत्याह— येन कारणेन तत्केवलज्ञानं जीवभावः प्रतिनियतो जीवपर्यायो न घटादिस्वरूपं तत्, नापि घटादयस्तत्स्वभावाः, किंतु ततो भिन्नाः । इति तेन ज्ञायमाना अपि कथं तस्य स्वपर्याया भवेयुः, सर्वसंकरैकत्वादिप्रसङ्गात् ?। तस्मादमूर्तत्वाचेतनवत्त्व-सर्ववेत्तृत्वा-ऽप्रतिपातित्व-निरावरणत्वादयः केवलज्ञानस्य स्वपर्यायाः, घटादिपर्यायास्तु व्यावृत्तिमाश्रित्य परपर्यायाः ।

१ अविशेषकेवलं पुनः स्वकपर्यायैरेव तत्तुल्यम् । यज्ज्ञेयं प्रति तत् सर्वभावव्यापारविनियुक्तम् ॥ ४९४ ॥
२ वस्तुस्वभावं प्रति तदपि स्व-परपर्यायभेदतो भिन्नम् । तद् येन जीवभावो भिन्नाश्च ततो घटादिकाः ॥ ४९५ ॥ ३ क.ख ग. 'त व' ।

केन्द्रियाणामाहार-क्रोधादिका संज्ञा दशविधा समये प्रोक्ता, तत्कथमेकैवोहसंज्ञाऽत्रैषामुक्ता ? । सत्यम् , वल्ल्यादिष्वियं व्यक्तैवोपलभ्यते किञ्चिदिति शेषोपलक्षणार्थमेषैव निर्दिष्टा, इत्यलं प्रसङ्गेनेति । द्वि-त्रि-चतुरिन्द्रिय-सम्मूर्छनजपञ्चेन्द्रियाणां तु हेतुवादसंज्ञा प्राप्यते । देव-नारकाणां गर्भजतिर्यङ्-मनुष्याणां च कालिकी संज्ञेति । दृष्टिवादोपदेशेन च्छद्मस्थजन्तूनां सम्यग्दृष्टीनामेव संज्ञा प्राप्यते । ततश्च 'तेषां यच्छ्रुतज्ञानं तत् संज्ञिश्रुतं भवति' इत्यध्याहारः । एवं च सति स्मरण-चिन्तादिमति-श्रुतव्यापाररहिता भवस्थाः, [1]सिद्धिं गताश्च केवलिन एव संज्ञातीताः संज्ञारहिताः, शेषजन्तूनां केषांचित् कस्याश्चित् संज्ञाया उक्तत्वादिति भाव इति ॥ ५२३ ॥ ५२४ ॥

अत्राह परः—

[2]मोत्तूण हेउ-कालिय-सम्मत्तकमं जहुत्तरविसुद्धं । किं कालिओवएसो कीरइ आईए सुत्तम्मि ? ॥ ५२५ ॥

नन्वविशुद्धत्वात् प्रथमं हेतुवादसंज्ञा, ततो विशुद्धत्वात् कालिकसंज्ञा, ततोऽपि विशुद्धतरत्वाद् दृष्टिवादसंज्ञा; इत्येव यथोत्तर-विशुद्धममुं क्रमं मुक्त्वा किं कालिकसंज्ञोपदेश आदौ प्रथमं सूत्रे नन्दिलक्षणे क्रियते ? । तथा च भवताऽपि तदनुरोधेन पूर्वमुक्तम्– '[3]सा सण्णा होइ तिहा कालिय-हेउ-दिट्ठिवाओवएसेण' इति ॥ ५२५ ॥

अत्रोत्तरमाह–

[4]सण्णि त्ति असण्णि त्ति य सव्वसुए कालिओवएसेणं । पायं संववहारो कीरइ तेणाईए स कओ ॥५२६॥

इह सर्वस्मिन्नपि श्रुते आगमे योऽयं 'संज्ञा' इति व्यवहारः स सर्वोऽपि प्रायो बाहुल्येन कालिकोपदेशेनैव क्रियते । तेनाऽऽदौ स एव कालिकोपदेशः कृतः । इदमुक्तं भवति– यतः स्मरण-चिन्तादिदीर्घकालिकज्ञानसहितः समनस्कपञ्चेन्द्रियः संज्ञीत्यागमे व्यव-ह्रियते, असंज्ञी तु प्रसह्यप्रतिषेधमाश्रित्य यद्यप्येकेन्द्रियादिरपि लभ्यते, तथापि समनस्कसंज्ञी तावत् पञ्चेन्द्रिय एव भवति । ततः पर्युदासाश्रयणादसंज्ञ्यप्यमनस्कसम्मूर्च्छनजपञ्चेन्द्रिय एवाऽऽगमे प्रायो व्यवह्रियते । तदेवंभूतः संज्ञा-संज्ञिव्यवहारो दीर्घकालिकोपदेशे-नैवोपपद्यते । अतः प्रथमं स एव सूत्रे, तदनुरोधेनाऽत्र च निर्दिष्टः ॥ इति त्रयोविंशतिगाथार्थः ॥ ५२६ ॥

॥ इति संज्ञ्य-संज्ञिश्रुतं समाप्तमिति ॥

---

१ घ छ 'सिद्धिग' । २ मुक्त्वा हेतु-कालिक-सम्यक्त्वक्रम यथोत्तरविशुद्धम् । किं कालिकोपदेश क्रियत आदौ सूत्रे ? ॥ ५२५ ॥ ३ गाथा ५०४ । ४ सञ्ज्ञीति, असञ्ज्ञीति च सर्वश्रुते कालिकोपदेशेन । प्रायः सव्यवहार. क्रियते तेनादौ स कृत. ॥ ५२६ ॥ ५ घ. छ 'सेण' ।

केषां पुनरसौ सर्वजघन्योऽक्षरानन्तभागः प्राप्यते ?, इत्याह–

थीणद्धिसहियनाणावरणोदयओ स पत्थिवाईणं । बेइंदियाइयाणं परिवड्ढए[2] कमविसोहीए ॥ ४९९ ॥

स्त्यानर्धिमहानिद्रोदयसहितोत्कृष्टज्ञानावरणोदयादसौ सर्वजघन्योऽक्षरानन्तभागः पृथिव्याद्येकेन्द्रियाणां प्राप्यते । ततः क्रमविशुद्ध्या द्वीन्द्रियादीनामसौ क्रमेण वर्धत इति ॥ ४९९ ॥

तर्ह्युत्कृष्टः, मध्यमश्चैष केषां मन्तव्यः ?, इत्याह–

उक्कोसो[3] उक्कोसयसुयणाणविओ, तओऽवसेसाणं[4] । होइ विमज्झो मज्झे छट्ठाणगयाण पाएण ॥ ५०० ॥

स एवाऽक्षरानन्तभाग उत्कृष्टो भवत्युत्कृष्टश्रुतज्ञानविदः संपूर्णश्रुतज्ञानस्येत्यर्थः । अत्राह– नन्वस्य कथमक्षरानन्तभागः, यावता श्रुतज्ञानाक्षरं संपूर्णमप्यस्य प्राप्यत एव ?। सत्यम्, किन्तु संलुलितसामान्यश्रुत-केवलाक्षरापेक्षयैवाऽस्याऽक्षरानन्तभागो विवक्षितः 'केवलिवज्जाणं तिविहभेओ वि'[5] इत्यनन्तरवचनात्, अन्यथा हि यथा केवलिनः संपूर्णकेवलाक्षरयुक्तत्वेनाऽक्षरानन्तभागस्त्रिविधोऽपि न संभवति, इति तद्वर्जनं कृतम्, एवं संपूर्णश्रुतज्ञानिनोऽपि समस्तश्रुताक्षरयुक्तत्वेनाऽक्षरानन्तभागस्त्रिविधोऽपि न संभवतीति तद्वर्जनमपि कृतं स्यात् । तस्मादसंमिलितसामान्याक्षरापेक्षयैवाऽस्याऽक्षरानन्तभागः प्रोक्तः । सामान्ये चाऽक्षरे विवक्षिते केवलाक्षरापेक्षया श्रुतज्ञानाक्षरस्य संपूर्णस्याऽप्यनन्तभागवर्तित्वं[6] युक्तमेव, केवलज्ञानस्वपर्यायेभ्यः श्रुतज्ञानस्वपर्यायाणामनन्तभागवर्तित्वात्, तस्य परोक्षविषयत्वेनाऽस्पष्टत्वाच्चेति । यच्च समुदितस्व-परपर्यायापेक्षया श्रुत-केवलाक्षरयोस्तुल्यत्वं तदिह न विवक्षितमेवेति ।

अन्ये तु– 'सो पुण सव्वजहन्नो चेयण्णं'[7] इत्यादिगाथायां " स पुनरक्षरलाभः " इति व्याचक्षते । इदं चानेकदोषान्वितत्वात्, जिनभद्रगणिक्षमाश्रमणपूज्यटीकायां चादर्शनादसंगतमेव लक्षयामः; तथाहि– ' तस्स उ अणंतभागो निच्चुग्घाडो ' इत्याद्यनन्तरगाथायामक्षरानन्तभाग एव प्रकृतः, अक्षरलाभस्त्वनन्तरपरामर्शिना तच्छब्देन कुतो लब्धः ?, किमाकाशात् पतितः ? । किञ्च, यद्यक्षरलाभ इतीह व्याख्यायते, तर्हि 'केवलिवज्जाणं तिविहभेओ वि ' इत्यत्र किमिति केवलिनो वर्जनं कृतम् ? । यथा हि श्रुताक्षरमाश्रित्यो-

१ स्त्यानर्धिसहितज्ञानावरणोदयतः स पृथिव्यादीनाम् । द्वीन्द्रियादिकानां परिवर्धते क्रमविशुद्ध्या ॥ ४९९ ॥ २ घ. छ. 'ड्ढइ क' ।

३ उत्कृष्ट उत्कृष्टश्रुतज्ञानविदः, ततोऽवशेषाणाम् । भवति विमध्यो मध्ये षट्स्थानगतानां प्रायेण ॥ ५०० ॥

४ घ. छ. ज्ञ 'ओ विसे' । ५ गाथा ४९७ । ६ क. 'स्याऽन' । ७ गाथा ४९८ ।

उपशमश्रेणिगतस्य दर्शनसप्तके उपशमं नीते औपशमिकं सम्यक्त्वं भवति। किमुपशमश्रेणिगतस्यैवैतद् भवति ?, न, इत्याह– 'जो वेत्यादि' यो वा जन्तुरनादिमिथ्यादृष्टिः सन्नकृतत्रिपुञ्जो मिथ्यात्वमोहनीयस्याऽविहितशुद्धा-ऽशुद्ध-मिश्रपुञ्जत्रयविभागोऽक्षपितमि-थ्यात्वो लभते सम्यक्त्वं, तस्याऽपान्तरकरणप्रविष्टस्यौपशमिकं सम्यक्त्वमवाप्यते। क्षपितमिथ्यात्वपुञ्जोऽप्यविद्यमानत्रिपुञ्जो भवति, अतस्तद्व्यवच्छेदार्थमुक्तम्– अक्षपितमिथ्यात्वः सन् योऽत्रिपुञ्जः सम्यक्त्वं लभते, तस्यैवौपशमिकं सम्यक्त्वमवाप्यते, क्षपितमि-थ्यात्वः क्षायिकसम्यक्त्वमेव लभत इति भावः। कथं पुनः पुञ्जत्रयं क्रियते ? इति चेत्। उच्यते– इह कश्चिदनादिमिथ्यादृष्टिस्तथा-विधगुर्वादिसामग्रीसद्भावेऽपूर्वकरणेन मिथ्यात्वपुञ्जकात् पुद्गलान् शोधयन् अर्धविशुद्धपुद्गललक्षणं मिश्रपुञ्जं करोति, तथा शुद्धपुद्ग-ललक्षणं सम्यक्त्वपुञ्जं विदधाति, तृतीयस्त्वविशुद्ध एवाऽऽस्ते। इत्येवं मदन-कोद्रवशोधनोदाहरणेन पुञ्जत्रयं कृत्वा सम्यक्त्वपुञ्ज-पुद्गलान् विपाकतो वेदयन् क्षायोपशमिकसम्यग्दृष्टिर्भण्यते। तथा चाऽत्र पूर्वविद्वत्प्रणीतश्लोकाः –

" तद्यथेह प्रदीपस्य स्वच्छाभ्रपटलैर्गृहम्। न करोत्यावृतिं काञ्चिदेवमेतद् रवेरपि ॥ १ ॥"

एतदपि शोधितमिथ्यात्वपुञ्जपुद्गलवेदनमित्यर्थः।

" एकपुञ्जी द्विपुञ्जीव त्रिपुञ्जीवाऽननुक्रमात्। दर्शन्युभयवांश्चैव मिथ्यादृष्टिश्च कीर्तितः ॥ १ ॥"

अननुक्रमादिति पश्चानुपूर्व्येत्यर्थः। अत्र त्रिपुञ्जी दर्शनी सम्यग्दर्शनीत्यर्थः। सम्यक्त्वपुञ्जे तूद्वलिते द्विपुञ्जी सन्नुभयवान् सम्यग्-मिथ्यादृष्टिर्भवतीत्यर्थः। मिश्रपुञ्जेऽप्युद्वलिते मिथ्यात्वपुञ्जस्यैवैकस्य वेदनादेकपुञ्जी मिथ्यादृष्टिर्भवति। एतदेवाह–

" यस्त्रिपुञ्जी स सम्यक्त्वमेवं भुङ्क्ते विपाकतः। द्विपुञ्ज्यपि च मिश्राख्यमेकपुञ्ज्यपि चेतरत् ॥ १ ॥" इति।

इतरद् मिथ्यात्वमित्यर्थः, इत्यलं प्रसङ्गेन ॥ ५२९ ॥

प्रकृतमुच्यते– अकृतत्रिपुञ्जस्तर्हि कथमौपशमिकं सम्यक्त्वं लभते ?, कियत्कालमानं च तद् भवति ?, इत्याह–

[1]खीणम्मि उइण्णम्मि य अणुदिज्जंते य सेसमिच्छत्ते। अंतोमुहुत्तमेत्तं उवसमसम्मं लहइ जीवो ॥५३०॥

इहाऽनादिमिथ्यादृष्टिः कश्चिदायुर्वर्जसप्तकर्मप्रकृतिषु यथाप्रवृत्तकरणेन क्षपयित्वा प्रत्येकमन्तःसागरोपमकोटीकोटिप्रमाणतां नीतास्वपूर्वकरणेन ग्रन्थिभेदं कृत्वाऽनिवृत्तिकरणं प्रविशति। उक्तं च कल्पभाष्ये—

1 क्षीण उदीर्णे चानुदीयमाने च शेषमिथ्यात्वे। अन्तर्मुहूर्तमात्रमुपशमसम्यक्त्व लभते जीवः ॥ ५३० ॥

अथ भाष्यम्–

[1]ऊससियाई दव्वसुयमेत्तमहवा सुओवउत्तस्स । सव्वो च्चिय वावारो सुयमिह तो किं न चेट्ठा वि ? ॥५०२॥

इहोच्छ्वसिताद्यनक्षरश्रुतं द्रव्यश्रुतमात्रमेवाऽवगन्तव्यम् , शब्दमात्रत्वात् ; शब्दश्च भावश्रुतस्य कारणमेव, यच्च कारणं तद् द्रव्यमेव भवतीति भावः । भवति च तथाविधोच्छ्वसित-निःश्वसितादिश्रवणे 'सशोकोऽयं' इत्यादि ज्ञानम् । एवं विशिष्टाभिसन्धिपूर्वकानिष्ठ्यूत-कासित क्षुतादिश्रवणेऽप्यात्मज्ञानादि ज्ञानं वाच्यमिति । अथवा, श्रुतज्ञानोपयुक्तस्यात्मनः सर्वात्मनैवोपयोगात् सर्वोऽप्युच्छ्वसितादिको व्यापारः श्रुतमेवेह प्रतिपत्तव्यम् , इत्युच्छ्वसितादयः श्रुतं भवन्त्येवेति । आह– यद्येवम्, ततो गमना-ऽऽगमन[2]-चलन-स्पन्दनादिकाऽपि चेष्टा व्यापार एव । ततः श्रुतोपयुक्तस्य संबन्धिन्येषाऽपि किं श्रुतं न भवति ? । उच्यते– कः किमाह ?– प्राप्नोत्यनेन न्यायेन साऽपि श्रुतम् ॥ ५०२ ॥

किन्तु–

[3]रूढी[4] य तं सुयं सुव्वइ त्ति चेट्ठा न सुव्वइ कयाइ । अहिगमया वण्णा इव जमणुस्साराइओ तेणं ॥५०३॥

उक्तन्यायेन श्रुतत्वप्राप्तौ समानायामपि तदेवोच्छ्वसितादि श्रुतम् , न शिरोधूनन-करचलनादिचेष्टा, यतः शास्त्रज्ञलोकप्रसिद्धा रूढिरियम् । तत उच्छ्वसिताद्येव श्रुतं रूढं, न चेष्टेत्यर्थः ' श्रूयते इति श्रुतमिति चान्वर्थवशात् तदेवोच्छ्वसितादि श्रुतम्, न चेष्टा ' इत्येवं चशब्दः पक्षान्तरसूचकः, भिन्नक्रमश्च । करादिचेष्टा तु दृश्यत्वात् कदापि न श्रूयते, इति कथमसौ श्रुतं स्यात् ? इत्यर्थः । अनुस्वारादयस्त्वकारादिवर्णा इवाऽर्थस्याऽधिगमका एवेति । तेन कारणेन ते निर्विवादमेव श्रुतम् ॥ इति गाथाद्वयार्थः ॥ ५०३ ॥

॥ इत्यनक्षरश्रुतमिति ॥

अथ संज्ञिश्रुतमभिधित्सुराह–

[5]सण्णिस्स सुयं जं तं सण्णिसुयं सो य जस्स सा सण्णा । होइ तिहा कालिय-हेउ-द्दिट्ठिवाओवएसेण ॥५०४॥

१ उच्छ्वसितादि द्रव्यश्रुतमात्रमथवा श्रुतोपयुक्तस्य । सर्व एव व्यापारः श्रुतमिह ततः किं न चेष्टापि ? ॥ ५०२ ॥ २ क. 'न-स्प' ।
३ रूढिश्च तत् श्रुत श्रूयत इति चेष्टा न श्रूयते कदापि । अधिगमका वर्णा इव यदनुस्वारादयस्तेन ॥ ५०३ ॥ ४ घ. छ 'ढी तं' ।
५ संज्ञिन. श्रुतं यत् तत् संज्ञिश्रुतं स च यस्य सा संज्ञा । भवति त्रिधा कालिक-हेतु-दृष्टिवादोपदेशेन ॥ ५०४ ॥

साखादनसम्यक्त्वं पूर्वोक्तशब्दार्थं भवतीति ॥ ५३१ ॥

अथ क्षायोपशमिकमाह–

[1]मिच्छत्तं जमुइण्णं तं खीणं अणुइयं च उवसंतं। मीसीभावपरिणयं वेइज्जंतं खओवसमं ॥ ५३२ ॥

यदुदीर्णमुदयमागतं मिथ्यात्वं तद् विपाकोदयेन वेदितत्वात् क्षीणं निर्जीर्णं, यच्च शेषं सत्तायामनुदयागतं वर्तते तदुपशान्तम्[2]। उपशान्तं नाम विष्कम्भितोदयमुपनीतामिथ्यास्वभावं च शेषमिथ्यात्वं, मिथ्यात्व-मिश्रपुञ्जावाश्रित्य विष्कम्भितोदयं, शुद्धपुञ्जावाश्रित्य[3] पुनरपनीतमिथ्यास्वभावमित्यर्थः। आह– यद्येवम्, अशुद्ध-मिश्रपुञ्जद्वयरूपस्य विष्कम्भितोदयस्यैवोपशान्तस्याऽनुदीर्णता युज्यते, न तु शुद्धपुञ्जलक्षणस्यापनीतामिथ्यात्वस्वभावस्य, तस्य विपाकेन साक्षादनुभूयमानत्वादिति; भवद्भिस्तु 'अणुइयं च उवसंतं' इति वचनाद् द्विस्वभावमप्युपशान्तमनुदीर्णमुक्तम्, तदेतत् कथम्? इति। अत्रोच्यते– सत्यमेतत्, किन्त्वपनीतमिथ्यात्वस्वभावत्वात् स्वरूपेणाऽनुदयात् तस्याऽप्यनुदीर्णतोपचारः क्रियते। अथवा, अनुदीर्णत्वम[4]विशुद्धमिश्रपुञ्जद्वयरूपस्य मिथ्यात्वस्यैव योज्यते, न तु सम्यक्त्वस्य, तस्यापनीतमिथ्यात्वस्वभावत्वलक्षणमुपशान्तत्वमेव योज्यत इत्यर्थः। कथम्?, इति चेत्। उच्यते– मिथ्यात्वं यदुदीर्णमुदयमागतं तत् क्षीणं, शेषं त्[5]वविशुद्ध-मिश्रपुञ्जद्वयलक्षणं मिथ्यात्वमनुदीर्णं 'अणुइयं च' इति चशब्दस्य व्यवहितप्रयोगात् शुद्धपुञ्जलक्षणं तदुपशान्तं चेति– अपनीतमिथ्यात्वस्वभावमित्यर्थः, इत्येवं सर्वं सुस्थं भवति।

तदेवमुदीर्णस्य मिथ्यात्वस्य क्षयः, अनुदीर्णस्य च य उपशमः, एतत्स्वभावद्वयस्य योऽसौ मिश्रीभाव एकत्वमिथ्यात्वलक्षणे धर्मिणि भवनरूपस्तमापन्नं मिश्रीभावपरिणतं वेद्यमानमनुभूयमानं त्रुटितरसं शुद्धपुञ्जलक्षणं मिथ्यात्वमपि क्षयोपशमाभ्यां निर्वृत्तत्वात् क्षायोपशमिकं सम्यक्त्वमुच्यते। शोधिता हि मिथ्यात्वपुद्गला अतिस्वच्छवस्त्रमिव दृष्टेर्यथावस्थिततत्त्वरुच्यध्यवसायरूपस्य सम्यक्त्वस्याऽऽवारका न भवन्ति। अतस्तेऽप्युपचारतः सम्यक्त्वमुच्यत इति।

अत्राह– ननूदीर्णस्य मिथ्यात्वस्य क्षये, अनुदीर्णस्य चोपशमे क्षायोपशमिकं सम्यक्त्वमिहोक्तम्, प्रागुक्तमौपशमिकमपि तदेवंविधमेव, तत् कोऽनयोर्विशेषः?। तदेतदसमीक्षिताभिधानम्, यतो 'मीसीभावपरिणयं वेइज्जंतं खओवसमं' इति वचनादत्र क्षायोपशमि-

1 मिथ्यात्व यदुदीर्णं तत् क्षीणमनुदितं चोपशान्तम्। मिश्रीभावपरिणतं वेद्यमानं क्षायोपशमिकम् ॥ ५३२ ॥

2 क. ग. 'शान्त ना'। 3 घ. छ. 'त्य विष्कम्भितोदयं पु'। 4 क. ग. 'मशु'। 5 क.ग. 'त्वशु'।

ष्टया संज्ञया 'संज्ञी' इत्यभिधातुं युज्यते। न हि लोकेऽप्यविशिष्टेन मूर्तिमात्रेण 'रूपवान्' इत्यभिधीयते। तर्हि, कीदृश्या संज्ञयाऽत्र संज्ञी प्रोच्यते ?, इत्याह– यथा लोके बहुद्रव्य एव धनवानभिधीयते, प्रशस्तरूपश्च रूपवान् भवति, तथाऽत्रापि महत्या शोभनया च ज्ञानावरणकर्मक्षयोपशमजन्यमनोज्ञानसंज्ञयैव संज्ञा व्यपदिश्यते– संज्ञानं संज्ञा मनोविज्ञानमित्यर्थः, तद्रूपा महती, शोभना च संज्ञेहाऽधिक्रियते, नान्येति भावः। ततश्चैषा मनोज्ञानरूपा संज्ञा येषामस्ति ते संज्ञिनः, नान्य इति ॥ ५०६ ॥ ५०७ ॥

पूर्वं संज्ञायास्त्रैविध्यं यदुक्तं, तत्र दीर्घकालिकीस्वरूपं तावदाह–

[1]इह दीहकालिगी कालिगित्ति सण्णा जया सुदीहं पि। संभरइ भूयमिस्सं चिंतेइ य किह णु कायव्वं ?॥५०८॥

इह दीर्घशब्दस्य लुप्तदर्शनाद् दीर्घकालिकी 'कालिकी' इत्युच्यते, कालिकी चासौ संज्ञा च पुंवद्भावात् 'कालिकसंज्ञा' इति द्रष्टव्यम्। यया सुदीर्घमपि कालं भूतमतीतमर्थं स्मरति, एष्यच्च भविष्यद्वस्तु चिन्तयति– 'कथं नु नाम कर्तव्यम् ?' इत्येषा चिन्तामाश्रित्य दीर्घोऽतीता-ऽनागतवस्तुविषयः कालो यस्यां सा दीर्घकालिकी कालिकसंज्ञोच्यत इत्यर्थः ॥ ५०८ ॥

एषा च संज्ञा यस्याऽस्त्यसौ कालिकसंज्ञी, स च यो भवति, एतद् दर्शयति–

[2]कालियसण्णि त्ति तओ जस्स तई सो य जो मणोजोग्गे। खंधेणंते घेत्तुं मन्नइ तल्लद्धिसंपण्णो ॥५०९॥

'तउ त्ति' तकोऽसौ 'कालिकसंज्ञी' इत्यभिधीयते। यस्य किम् ?, इत्याह– 'जस्स तइ त्ति' यस्याऽसौ कालिकसंज्ञा प्राप्यते। स च को विज्ञेयः ?, इत्याह– 'सो य जो मणोजोग्गेत्यादि' स च कालिकसंज्ञी विज्ञेयो यो यः कश्चिद् मनोज्ञानावरण[3]कर्मक्षयोपशमाद् मनोलब्धिसंपन्नो मनोयोग्याननन्तान् स्कन्धान् मनोवर्गणाभ्यो गृहीत्वा मनस्त्वेन परिणमय्य मन्यते चिन्तनीयं वस्त्विति। स च गर्भजस्तिर्यङ् मनुष्यो वा; देवः, नारकश्चेति ॥ ५०९ ॥

[4]अस्य चैवंभूतस्य संज्ञिनः किं भवति ?, इत्याह–

[5]रूवे जहोवलद्धी चक्खुमओ दंसिए पयासेणं। तह छव्विहोवओगो मणदव्वपयासिए अत्थे ॥ ५१० ॥

१ इह दीर्घकालिकी कालिकीति संज्ञा यया सुदीर्घमपि। स्मरति भूतमेष्यांश्चिन्तयति च कथं नु कर्तव्यम् ? ॥ ५०८ ॥
२ कालिकसंज्ञीति सको यस्य सा स च यो मनोयोग्यान्। स्कन्धानन्तान् गृहीत्वा मन्यते तल्लब्धिसंपन्नः ॥ ५०९ ॥ ३ घ. छ 'णक्ष'।
४ घ. छ. 'अस्यैवं'। ५ रूपे यथोपलब्धिश्चक्षुष्मतो दर्शिते प्रकाशेन। तथा षड्विधोपयोगो मनोद्रव्यप्रकाशितेऽर्थे ॥ ५१० ॥

चोद्दस दस य अभिन्ने नियमा सम्मत्तं सेसए भयणा । मइ-ओहिविवज्जासे वि होइ मिच्छं न उण सेसे ॥५३४॥

चतुर्दशपूर्वेभ्यः समारभ्य यावत् संपूर्णदशपूर्वाणि तावद् नियमात् सम्यक्श्रुतमेव भवति, न मिथ्याश्रुतम्– एतावच्छ्रुतसद्भावे सम्यग्दृष्टिरेव भवति न मिथ्यादृष्टिरिति भावः । 'सेसए भयण त्ति' शेषे भिन्नदशपूर्वादिके सामायिकपर्यन्ते श्रुते भजना विकल्पना– एतच्छ्रुतसद्भावे कोऽपि सम्यग्दृष्टिः, कश्चित्तु मिथ्यात्वोदयाद् विपर्यस्तो मिथ्यादृष्टिरपि भवति । ततश्चैतत् श्रुतं सम्यक्त्वपरिग्रहात् सम्यक्श्रुतं, मिथ्यात्वोदयाद् मिथ्याश्रुतमपि स्यादिति भावः । मत्य-वधिविपर्यासेऽपि मिथ्यात्वं मिथ्यात्वोदयो भवति, न पुनः शेषे– मनःपर्याय-केवलज्ञानद्वये । इदमुक्तं भवति– मिथ्यात्वोदयाद् मतिज्ञानं विपर्यस्तं सद् मत्यज्ञानं भवति, अवधिरपि तदुदयाद् विपर्यासमापन्नो विभङ्गपदव्यपदेशं लभते, मनःपर्याय-केवलज्ञाने तु कदापि मिथ्यात्वोदयाद् विपर्यासं न गच्छतः, तत्सद्भावे तदुदयस्यैवाऽसंभवात् । मनःपर्यायज्ञानं हि चारित्रिण एव भवति, केवलज्ञानं तु क्षीणघातिचतुष्टयस्य, इति कुतस्तद्भावे मिथ्यात्वोदयः ? इति । एतच्चेह मिथ्यात्वोदयसंभवा-ऽसंभवप्रस्तावादनुपङ्गत एवोक्तम्, प्रस्तुतं पुनरत्र सम्यग्-मिथ्याश्रुतमेवेति ॥ ५३४ ॥

अत्र किल परः किंचित् प्रेरयति–

तत्तावगमसहावे सइ सम्म-सुयाण को पइविसेसो[3] ? । जह नाण-दंसणाणं भेओ तुल्लेऽवबोहम्मि ॥५३५॥

नाणमवाय-धिईओ दंसणमिट्ठं जहोग्गहे-हाओ । तह तत्तरुई सम्मं रोइज्जइ जेण तं नाणं ॥ ५३६ ॥

उभयत्रापि तत्त्वावगमस्वभावत्वे तुल्ये सति कः सम्यक्त्व-श्रुतयोः प्रतिविशेषः, येनोच्यते– 'सम्यक्त्वपरिग्रहात् सम्यक्श्रुतम्' इति ? । इदमुक्तं भवति– 'रागादिदोषरहित एव देवता, तदाज्ञापारतन्त्र्यवृत्तय एव गुरवः, जीवादिकमेव तत्त्वम्, जीवोऽपि नित्याऽनित्याद्यनेकस्वभावः, कर्ता, भोक्ता, मिथ्यात्वादिहेतुभिः कर्मणा बध्यते, तपः-संयमादिभिस्तु ततो मुच्यते' इत्यादिबोधात्मकमेव सम्यक्त्वमुच्यते, श्रुतमप्येवमाद्यभिलापात्मकमेव, तदनयोः को विशेषः, येनोच्यते– 'सम्यक्त्वपरिगृहीतं सम्यक्श्रुतम्' इति ? । अत्रोत्तरमाह– 'जहेत्यादि' यथा वस्त्ववबोधरूपत्वे तुल्येऽपि कथंचिज्ज्ञान-दर्शनयोर्भेदः, तथा तत्त्वावगमस्वभावे तुल्येऽपि सम्यक्त्व-श्रु-

---

१ चतुर्दश दश चाभिन्नानि (पूर्वाणि) नियमात् सम्यक्त्वं, शेषके भजना । मत्य वधिविपर्यासेऽपि भवति मिथ्यात्वं न पुनः शेषे ॥५३४॥ २ क.ग 'यवि' ।
३ तत्त्वावगमस्वभावे सति सम्यक्त्व-श्रुतयोः कः प्रतिविशेषः ? । यथा ज्ञान-दर्शनयोर्भेदस्तुल्येऽवबोधे ॥ ५३५ ॥
ज्ञानमपाय-धृती दर्शनमिष्टं यथावग्रहे-हे । तथा तत्त्वरुचिः सम्यक्त्वं रोच्यते येन तज्ज्ञानम् ॥ ५३६ ॥

इह यथा तुल्येऽपि च्छेदकभावे चक्रवर्तिसंबन्धिनश्चक्ररत्नस्य यच्छेदनसामर्थ्यं तदन्येषां खड्ग-दात्र-शरपत्रादीनां छेदकवस्तूनां न भवत्येव। कुतः ?, इत्याह– यतो यथाक्रमहीनं क्रमशो हीयमानमेव तत् तेष्विति। प्रकृते योजयन्नाह–'ईय त्ति' दीर्घत्वं प्राकृतत्वात्, इत्येवं चैतन्ये तुल्येऽपि मनोविषयिणां संज्ञिनामवग्रहेहादिषु यावत्स्वबोधपटुता भवति सा तथाविधक्षयोपशमविकलानां यथोक्तदीर्घकालिकसंज्ञारहितानां सन्मूर्छजपञ्चेन्द्रिय-विकलेन्द्रियै-केन्द्रियाणामसंज्ञिनां न भवत्येव, क्रमशो हीनत्वादिति ॥ ५१३ ॥ ५१४ ॥

तदेवं कालिकसंज्ञाविषय उपदेशो भणनं प्ररूपणं कालिकोपदेशस्तेन प्रोक्तः संज्ञी। सांप्रतं हेतुः, निमित्तं, कारणम्, इत्यनर्थान्तरं, तस्य वदनं वादस्तद्विषय उपदेशः प्ररूपणं हेतुवादोपदेशस्तेन संज्ञिनमसंज्ञिनं चाभिधित्सुराह–

[1]जे पुण संचिंतेउं इट्ठा-णिट्ठेसु विसयवत्थूसु। वट्टंति निवट्टंति य सदेहपरिपालणाहेउं ॥ ५१५ ॥

पाएण संपए च्चिय कालम्मि न याइदीहकालण्णा। ते हेउवायसण्णी निच्चेट्ठा होंति अस्सण्णी ॥५१६॥

ये पुनः संचिन्त्य संचिन्त्य इष्टा-ऽनिष्टेषु च्छाया-ऽऽतपा-ऽऽहारादिविषयवस्तुषु मध्ये स्वदेहपरिपालनाहेतोरिष्टेषु वर्तन्ते, अनिष्टेभ्यस्तु तेभ्य एव निवर्तन्ते, प्रायेण च सांप्रतकाल एव, न त्वतीता-ऽनागतकालावलम्बिनः, प्रायोग्रहणात् केचिदतीता-ऽनागतावलम्बिनोऽपि नातिदीर्घकालानुसारिणः, ते द्वीन्द्रियादयो हेतुवादोपदेशेन संज्ञिनो विज्ञेयाः, तथाहि– संज्ञिनो द्वीन्द्रियादयः, संचिन्त्य[2] संचिन्त्य हेयो-पादेयेषु निवृत्ति-प्रवृत्तेः, देवदत्तादिवदिति। तदेवं हेतुवादिनोऽभिप्रायेण निश्चेष्टाः पृथिव्यादय एवाऽसंज्ञिन इति॥५१५॥४१६॥

अथ दृष्टिर्दर्शनं सम्यक्त्वादि तस्य वदनं वादस्तद्विषय उपदेशः प्ररूपणं तेन संज्ञिनमसंज्ञिनं च प्ररूपयन्नाह–

[3]सम्मदिट्ठी सण्णी संते नाणे खउवसमियम्मि। असण्णी मिच्छत्तम्मि दिट्ठिवाओवएसेण ॥ ५१७ ॥

दृष्टिवादोपदेशेन क्षायोपशमिकज्ञाने वर्तमानः सम्यग्दृष्टिरेव संज्ञी, विशिष्टसंज्ञायुक्तत्वात्; मिथ्यादृष्टिस्त्वसंज्ञी, विपर्यस्तत्वेन वस्तुतः संज्ञारहितत्वादिति ॥ ५१७ ॥

आह– यदि विशिष्टसंज्ञायुक्तत्वात् सम्यग्दृष्टिः संज्ञीष्यते, तर्हि किमिति क्षायोपशमिकज्ञाने वर्तमानोऽसौ गृह्यते ?। क्षायिक-

१ ये पुनः संचिन्त्येष्टा-ऽनिष्टेषु विषयवस्तुषु। वर्तन्ते निवर्तन्ते च स्वदेहपरिपालनाहेतोः ॥ ५१५ ॥
प्रायेण सांप्रत एव काले न चातिदीर्घकालज्ञाः। ते हेतुवादसंज्ञिनो निश्चेष्टा भवन्त्यसंज्ञिन ॥ ५१६ ॥ २ क. ग. 'न्त्य हे'।
३ सम्यग्दृष्टिः संज्ञी सति ज्ञाने क्षायोपशमिके। असंज्ञी मिथ्यात्वे दृष्टिवादोपदेशेन ॥ ५१७ ॥

अपर्यन्तता च । ततः श्रुतस्याऽपि तत्पर्यायभूतस्य तदव्यतिरेकात् तद्रूपतैव । न हि सर्वथाऽसत् क्वाप्युत्पद्यते, सिकतास्वपि तैलाद्युत्पत्तिप्रसङ्गात् । नापि सतोऽत्यन्तोच्छेदः, सर्वशून्यतापत्तेः । यदि हि यद् यदेव-नारकादिकं घट-पटादिकं च विनश्यति तत् तद्यदि सर्वथा निरन्वयमपैति, तदा कालस्याऽपर्यवसितत्वात् क्रमेण सर्वस्याऽपि जीवपुद्गलराशेर्व्यवच्छेदात् सर्वमेव विश्वं शून्यं स्यात् । तस्माच्छ्रुताधारद्रव्याणां सर्वदैव सत्त्वात् तदव्यतिरेकिणस्तस्यापि तद्रूपतैवेति स्थितम् । इतरस्य व्यवच्छित्तिनयस्याऽनित्यवादिनः पर्यायास्तिकस्य मतेन सादि, सपर्यन्तं च श्रुतम्, अनित्यत्वाज्जीवस्य, नारकादिगतिपर्यायवत्; तथाहि– श्रुतज्ञानिनां निरन्तरमपरापरे द्रव्याद्युपयोगाः प्रसूयन्ते, प्रलीयन्ते च । न च तेभ्योऽन्यत् किमपि श्रुतमस्ति, तत्कार्यभूतस्य जीवादितत्त्वाववोधस्याऽन्यत्राऽदर्शनात्, तदनुपलम्भेऽपि तत्कल्पनायामतिप्रसङ्गात् । द्रव्यादिषु च श्रुतोपयोगः सादिः सपर्यवसित एवेति ॥ ५३७ ॥

अथवा, नयविचारमुत्सृज्य द्रव्य-क्षेत्र-काल-भावानाश्रित्येदं साद्यादिस्वरूपं चिन्त्यत इति । एतदाह–

दव्वाइणा व साइयमणाइयं संतमंतरहियं वा । दव्वम्मि एगपुरिसं पडुच्च साइं सानिहणं च ॥ ५३८ ॥[1]

द्रव्यादिना वा द्रव्य-क्षेत्र-काल-भावैर्वा श्रुतं सादिकमनादिकं, सान्तमनन्तं च भवति । इह च द्रव्यतः श्रुतमेकं बहूनि च पुरुषद्रव्याण्याश्रित्य चिन्तनीयम् । तत्रैकपुरुषं द्रव्यमङ्गीकृत्य तावदाह– 'दव्वम्मीत्यादि' द्रव्यत एकपुरुषं प्रतीत्य सादि सनिधनं च श्रुतं भवति ॥ ५३८ ॥

कथम् ?, इति चेत् । ईत्याह–[2]

चोद्दसपुव्वी मणुओ देवत्ते तं न संभरइ सव्वं । देसम्मि होइ भयणा सट्ठाणभवे वि भयणा उ ॥ ५३९ ॥[3]

इह कश्चिच्चतुर्दशपूर्वधरः साधुर्भूत्वा देवलोकं गतः । तत्र च देवत्वे तत् पूर्वाधीतं श्रुतं न स्मरति । कियद् न स्मरति ?, इत्याह– सर्वं कृत्स्नं, अशेषमिति यावत् । 'देशे पुनरेकाङ्गलक्षणे' इति कल्पचूर्णिः, कोट्याचार्यव्याख्यानं तु 'देशे सूत्रार्धे सूत्रमात्रादौ चेति । इदं च पूर्वगतसूत्रापेक्षं संभाव्यते, अन्यथा कल्पेन सह विरोधप्राप्तेः, भजना विकल्पना भवति– यथोक्तं देशं स्मरति, न स्मरत्यपीत्यर्थः । किं देवत्वमाप्तस्यैवेत्थं श्रुतस्य प्रतिपातः, आहोस्विदिहभवेऽपि ?, इत्याह– स्वस्थाने मनुष्यत्वे योऽसौ भवो जन्म तत्रापि तिष्ठतो भजना

१ द्रव्यादिना वा सादिकमनादिकं सान्तमनन्तरहितं वा । द्रव्य एकपुरुषं प्रतीत्य सादि सनिधनं च ॥ ५३८ ॥ २ क.ख.ग. 'आह' ।
३ चतुर्दशपूर्वी मनुजो देवत्वे तद् न स्मरति सर्वम् । देशे भवति भजना स्वस्थानभवेऽपि भजना तु ॥ ५३९ ॥

[1]सदसदविसेसणाओ भवहेउजदिच्छिओवलंभाओ । नाणफलाभावाओ मिच्छदिट्ठिस्स अण्णाणं ॥ ५२१ ॥

प्राग् व्याख्यातार्थैव ॥ ५२१ ॥

आह– ननु देव-नारक-गर्भजतिर्यङ्-मनुष्यलक्षणो मिथ्यादृष्टिर्दीर्घकालिकीं संज्ञामाश्रित्य दृष्टिवादोपदेशसंज्ञाविचारेऽपि संज्ञी कस्माद् नोच्यते ?, इत्याह—

[2]ऊहो न हेउए, हेउई न कालम्मि भण्णइ सण्णा । जह कुच्छियत्तणाओ, तह कालो दिट्ठिवायम्मि॥५२२॥

यथा ऊहः पृथिव्यादीनां संबन्धिनी ओघमात्रसंज्ञेत्यर्थः, न 'हेऊए त्ति' हेतुवादसंज्ञायां विचार्यमाणायां कुत्सितत्वात्[3] संज्ञा भण्यते, यथा वा 'कालम्मि त्ति' दीर्घकालिकसंज्ञायां विचार्यमाणायां कुत्सितत्वेन हैतुकी संज्ञा न भण्यते, तथा 'कालो त्ति' दीर्घकालिक्यपि[4] संज्ञा दृष्टिवादोपदेशसंज्ञायां विचार्यमाणायां कुत्सितत्वादेव संज्ञा न भण्यते। अतो नेह देवादिरपि मिथ्यादृष्टिः संज्ञीति भावः ॥५२२॥

तदेवं दीर्घकालिक-हेतुवाद-दृष्टिवादोपदेशेन त्रिविधां संज्ञां निरूप्य, अथैतासां मध्ये कस्य जन्तोः का भवति ?, इति निरूपयितुमाह—

[5]पंचण्हमूहसंण्णा हेउसण्णा बेइंदियाईणं । सुर-नारय-गब्भुब्भवजीवाणं कालिगी सण्णा ॥ ५२३ ॥

छउमत्थाणं सण्णा सम्मदिट्ठीण होइ सुयनाणं । मइवावारविमुक्का सण्णाईआ उ केवलिणो ॥ ५२४ ॥

पञ्चानां पृथिव्य-प्-तेजो-वायु-वनस्पतीनामूहसंज्ञा वृत्त्यारोहणाद्यभिप्रायरूपौघसंज्ञा भवति । आह– ननु त्रिविधसंज्ञामध्येऽत्रेयमूहसंज्ञा नोक्तैव, अत एवैकेन्द्रिया इह सर्वथैवाऽसंज्ञिन एव, तुच्छत्वात् कुत्सितत्वाच्च तत्संज्ञायाः, इति भवतैवोक्तमत्र प्राक्, तत्कथमत्र स्वामित्वप्ररूपणायामियमेतेषां संज्ञा प्रोक्ता ? । सत्यम् , किन्त्वेकेन्द्रियाणामेषैवोहसंज्ञा भवति, न तु हेतुवादादिसंज्ञा, इत्येवमेतत्संज्ञात्रयनिषेधप्रधानोऽयं निर्देशो द्रष्टव्यो न तु विधिप्रधानः । एतस्याश्चोहसंज्ञाया यथा संज्ञात्वं तथा प्रागेवोक्तमिति । भवत्वेवम् , तथाऽप्ये-

१ गाथा ११५ । २ ऊहो न हेतौ, हैतुकी न काले भण्यते संज्ञा । यथा कुत्सितत्वात्, तथा कालो दृष्टिवादे ॥ ५२२ ॥ ३ घ. छ 'त्वादेव सं' ।
४ घ. 'लिकाऽपि' । ५ पञ्चानामूहसंज्ञा हेतुसंज्ञा द्वीन्द्रियादीनाम् । सुर-नारक-गर्भोद्भवजीवानां कालिकी संज्ञा ॥ ५२३ ॥
छद्मस्थानां संज्ञा सम्यग्दृष्टीनां भवति श्रुतज्ञानम् । मतिव्यापारविमुक्ताः संज्ञातीतास्तु केवलिनः ॥ ५२४ ॥

तत् तावत् श्रुतज्ञानं नियमाज्जीवो जीवस्वभावमेव भवति, नाऽजीवस्वभावम् । जीवः पुनस्तदेव केवलं न भवति । कुतः ?, इत्याह– यस्मादसौ तद्वा श्रुतज्ञानं स्यात् , तदज्ञानं वा श्रुताज्ञानं, केवलज्ञानं वा स भवेत् । वाशब्दाद् मतिज्ञानम् , अवधिज्ञानं, मनःपर्यायज्ञानं, मत्यज्ञानं, विभङ्गो वाऽसौ भवेज्जीव इति ॥ ५४२ ॥

'तं ता नियमा जीवो' इति यदुक्तं, तदुपजीव्य परः प्राह–

[1]तं जइ जीवो नासे तण्णासो होउ सव्वसो नत्थि । जं सो उप्पाय-व्वय-धुवधम्माणंतपज्जाओ ॥ ५४३ ॥

तच्छ्रुतं यदि जीवो जीवस्वभावभूतं तत्, तदा जीवात् तदव्यतिरिक्तमिति सामार्थ्यादेव भवद्भिरभ्युपगतम् , युक्तं चैतत्, एवं हि सति युज्यते– जीवस्य तत्कृतवस्त्ववबोधो ज्ञानित्वं केवलं नाशे प्रतिपाते तस्य 'श्रुतस्य' इति प्रक्रमाल्लभ्यते, तस्य जीवस्य नाशस्तन्नाशो भवत्वस्तु । यतो हि यदव्यतिरिक्तं तस्य विनाशे तद् विनश्यत्येव, यथा घटस्वरूपविनाशे घटवस्त्विति । अत्र सूरिरुत्तरमाह– 'भवतु' इतीहापि योज्यते, अस्तु श्रुतस्य नाशे जीवस्य तत्पर्यायविशिष्टतामात्रान्वितस्य नाशः, किन्तु सर्वशः सर्वात्मना पर्यायान्तरविशिष्टस्यापि तस्य नाशो नास्ति । यद् यस्मादसौ जीव उत्पाद-व्यय-ध्रौव्यधर्मा, अनन्तपर्यायश्च वर्तते । ततो यदैवाऽसौ श्रुतपर्यायेण विनश्यति, तदैव श्रुताज्ञानानादिपर्यायेणोत्पद्यते । सचेतनत्वा-ऽमूर्तत्व-सत्त्व-प्रमेयत्वादिभिरनुगतैरन्यव्यावृत्तैश्चानन्तैः पर्यायैर्विशिष्टोऽसौ सर्वावस्थास्ववतिष्ठते । अतः कथं श्रुतपर्यायमात्रविनाशे तस्य सर्वथा विनाशः स्यात् ?। यदि हि तस्याऽयमेवैकः पर्यायो भवेत् तदा तद्विनाशे तस्य सर्वनाशः स्यात् । एतच्च नास्ति, श्रुतपर्यायमात्रेण विनष्टस्यापि तस्य श्रुताज्ञानादिपर्यायेणोत्पादात् । यथोक्तैश्चानन्तपर्यायैर्विशिष्टस्य सर्वदैवाऽवस्थानादिति ॥ ५४३ ॥

न चात्मैव केवल-उत्पाद-व्यय-ध्रौव्यधर्मा, किन्तु सर्वमपि वस्त्वीदृशमेव, इति दर्शयति–

[2]सव्वं चिय पइसमयं उप्पज्जइ नासए य निच्चं च । एवं चेव य सुह-दुक्ख-बंध-मोक्खाइसब्भावो ॥ ५४४ ॥

सर्वमेव हि स्तम्भ-कुम्भ-भवनादिवस्तु प्रतिसमयं पुराणादिपर्यायेणोत्पद्यते, नवादिपर्यायेण तु विनश्यति, द्रव्यतया पुनर्नित्यं च ध्रुवं सर्वदैवाऽवतिष्ठते । एवमेव च सुख-दुःख-बन्ध-मोक्षादिसद्भावो घटते, नान्यथा; सुखादिसद्भावो हि स्रक्-चन्दना-ऽङ्गना-

१ तद् यदि जीवो नाशे तन्नाशो भवतु सर्वशो नास्ति । यत् स उत्पाद-व्यय-ध्रौव्यधर्मा-ऽनन्तपर्यायः ॥ ५४३ ॥
२ सर्वमेव प्रतिसमयमुत्पद्यते नश्यति च नित्यं च । एवमेव च सुख-दुःख बन्ध-मोक्षादिसद्भावः ॥ ५४४ ॥

अथ 'अक्खर सण्णी सम्मं' इत्यादिनिर्युक्तिगाथाक्रममाश्रित्य सम्यक्श्रुतं, तत्प्रतिपक्षभूतं मिथ्याश्रुतं चाह–

[2]अंगा-णंगपविट्ठं सम्मसुयं लोइयं तु मिच्छसुयं । आसज्ज उ सामित्तं लोइय-लोउत्तरे भयणा ॥५२७॥

इहाङ्गप्रविष्टमाचारादि श्रुतं, अनङ्गप्रविष्टं त्वावश्यकादि श्रुतम्, एतद्द्वितयमपि स्वामिचिन्तानिरपेक्षं स्वभावेन सम्यक् श्रुतम्, लौकिकं तु भारतादि प्रकृत्या मिथ्याश्रुतम् । स्वामित्वमासाद्य स्वामित्वचिन्तायां पुनर्लौकिके भारतादौ, लोकोत्तरे चाऽऽचारादौ भजना विकल्पनाऽवसेया, सम्यग्दृष्टिपरिगृहीतं भारताद्यपि सम्यक्श्रुतं, सावद्यभाषित्व-भवहेतुत्वादियथावस्थिततत्त्वस्वरूपबोधतो विषयविभागेन योजनात्; मिथ्यादृष्टिपरिगृहीतं त्वाचाराद्यपि मिथ्याश्रुतं, अयथावस्थितबोधतो वैपरीत्येन योजनादिति भावार्थ इति ॥५२७॥

सम्यक्त्वपरिगृहीतं सर्वं भारताद्यपि सम्यक्श्रुतमिति यदुक्तम्, तथा तच्च सम्यक्त्वं पञ्चधा भवति– औपशमिकं, सास्वादनं, क्षयोपशमजं, वेदकं, क्षायिकं च, इत्येतदुभयमपि दर्शयन्नाह—

[3]सम्मत्तपरिग्गहियं सम्मसुयं, तं च पंचहा सम्मं । ओवसमियं सासाणं खयसमजं वेययं [4]खइयं ॥ ५२८ ॥

गतार्थैव, नवरमुपशमनमुपशमः– मिथ्यात्वमोहनीये कर्मण्युदीर्णे क्षीणे शेषस्याऽनुदयावस्थापादनमित्यर्थः; तस्मादुपशमात्, तेन वा निर्वृत्तमौपशमिकम् । 'सासाणं ति' निरुक्तविधिना वर्णलोपोऽत्र द्रष्टव्यः । ततश्च सहेषत्तत्त्वश्रद्धानरसास्वादनेन वर्तत इति सास्वादनं सम्यक्त्वं, अद्यापि मिथ्यात्वोदयाभावादनन्तानुबन्ध्युदयकलुषिततत्त्वश्रद्धानरसास्वादमात्रान्वितमित्यर्थः, अथवा, आ समन्तात् शातयति मुक्तिमार्गाद् भ्रंशयति आशातनम्– अनन्तानुबन्धिकषायवेदनम्, सहाऽऽशातनेन वर्तत इति साशातनं सम्यक्त्वमिति । मिथ्यात्वमोहनीयस्योदीर्णस्य क्षयः, अनुदीर्णस्य तूपशमः, ताभ्यां निर्वृत्तं क्षायोपशमिकं सम्यक्त्वम् । विहितप्रायदर्शनसप्तकक्षयेण जन्तुना वेद्यते चरमतत्पुद्गलग्रासमात्रं यत्र तद् वेदकम् । दर्शनसप्तकस्य क्षयेण निर्वृत्तं क्षायिकम् । एष तावत् संक्षेपार्थः ॥ ५२८ ॥

विस्तरार्थं त्वभिधित्सुर्भाष्यकार एवौपशमिकं सम्यक्त्वं तावदाह—

[5]उवसामगसेढीगयस्स होइ उवसामियं तु सम्मत्तं । जो वा अकयतिपुंजो अखवियमिच्छो लहइ सम्मं ॥५२९॥

---

१ गाथा ४५४ । २ अङ्गा-ऽनङ्गप्रविष्ट सम्यक्श्रुत, लौकिकं तु मिथ्याश्रुतम् । आसाद्य तु स्वामित्वं लौकिक-लोकोत्तरयोर्भजना ॥ ५२७ ॥
३ सम्यक्त्वपरिगृहीत सम्यक्श्रुत, तच्च पञ्चधा सम्यक् । औपशमिक सास्वादन क्षयशमज वेदक क्षायिकम् ॥ ५२८ ॥ ४ क. ग. 'खईयं' ।
५ उपशमकश्रेणिगतस्य भवत्यौपशमिकं तु सम्यक्त्वम् । यो वाऽकृतत्रिपुञ्जोऽक्षपितमिथ्यः (थ्यात्वः) लभते सम्यक् (त्वम्) ॥ ५२९ ॥

इह श्रुतस्य साद्यादिप्ररूपणायां चतुर्भङ्गी संभवति, तद्यथा– सादि सपर्यवसितमित्येको भङ्गः, सादि अपर्यवसितमिति द्वितीयः, अनादि सपर्यवसितमिति तृतीयः, अनादि अपर्यवसितमिति चतुर्थः। तत्र द्रव्यत एकं पुरुषद्रव्यमङ्गीकृत्य निरूपितः प्रथमो भङ्गः। द्वितीयस्तु प्ररूपणामात्रं, क्वचिदप्यसंभवात्। अतो भव्याऽभव्यौ समाश्रित्य तृतीय-चतुर्थभङ्गकावाह–

[3]अहवा सुत्तं निव्वाणभाविणोऽणाइयं सपज्जंतं। जीवत्तं पिव निययं सेसाणमणाइ-पज्जंतं ॥ ५४५ ॥

इह सम्यग्-मिथ्याभावेनाऽविशेषितं श्रुतसामान्यमात्रं गृह्यते। अथवाशब्दो भङ्गान्तरसूचकः। निर्वाणे भविष्यतीति निर्वाणभावी भव्यस्तस्यैतच्छ्रुतमात्रं भव्यत्ववदनादिकालादारभ्य भावादनादि, केवलोत्पत्तौ पुनरवश्यं न भविष्यतीति सपर्यन्तम्। शेषाणामनिर्वाणभाविनामभव्यानां जीवत्ववदभव्यत्ववद् वा नियतं निश्चितमनादि-अपर्यन्तम्, अभव्यस्य संसारे कदाचिदपि श्रुतमात्राऽव्यवच्छेदादिति। इह द्रव्यत एकं जीवद्रव्यमाश्रित्य निरूपितः प्राक् सादिसपर्यवसितत्वलक्षणः श्रुतस्य प्रथमभङ्गः, नानाजीवद्रव्याणि त्वाश्रित्य तस्यैव चतुर्थभङ्गः पुरस्ताद् भणिष्यते ॥ ५४५ ॥

अथ क्षेत्र-काल-भावैः प्रथमं भङ्गमेव तस्य दर्शयन्नाह–

[4]खेत्ते भरहे-रवया काले उ समाउ दोण्णि तत्थेव। भावे पुण पण्णवगं पण्णवणिज्जे व आसज्ज ॥ ५४६॥

प्राग् यदुक्तम्– 'दव्वम्मि एगपुरिसं पडुच्च साइं सनिहणं च' इति, तदिह प्रकृतं स्मर्यते। ततश्च क्षेत्रे चिन्त्यमाने भरतै-रावतक्षेत्राण्याश्रित्य सम्यक्श्रुतं सादि सनिधनं च भवति। एतेषु हि क्षेत्रेषु प्रथमतीर्थकरकाले तद् भवतीति सादित्वं, चरमतीर्थकृत्तीर्थान्ते त्ववश्यं व्यवच्छिद्यत इति सपर्यवसितत्वमिति। काले त्वधिक्रियमाणे द्वे समे उत्सर्पिण्य-वसर्पिण्यौ समाश्रित्य तत्रैव तेष्वेव भरतै-रावतेष्वेतत् सादि सपर्यवसितं भवति, द्वयोरपि समयोस्तृतीयारके प्रथमं भावात् सादित्वम्; उत्सर्पिण्यां चतुर्थस्यादौ, अवसर्पिण्यां तु पञ्चमस्यान्तेऽवश्यं व्यवच्छेदात् सपर्यवसितत्वम्। भावे पुनर्विचार्यमाणे प्रज्ञापकं गुरुं श्रुतमज्ञापनीयांश्चार्थानासाद्येदं सादि सपर्यवसितं स्यादिति॥५४६॥

कथं पुनः प्रज्ञापकं, प्रज्ञापनीयांश्चार्थानाश्रित्येदं साद्यादिरूपम्?, इत्याह–

---

१ घ छ 'को भेद सा'। २ अथवा सूत्रं निर्वाणभाविनोऽनादिकं सपर्यन्तम्। जीवत्वमिव नियत शेषाणामनादि-पर्यन्तम् ॥ ५४५ ॥
३ घ छ 'थमभ' ४ क्षेत्रे भरतै-रावते काले तु समे द्वे तत्रैव। भावे पुन. प्रज्ञापक प्रज्ञापनीयान् वाऽऽसाद्य ॥ ५४६ ॥ ५ गाथा ५३८।

"जा गंठी ता पढमं गठिं समइच्छओ हवइ बीयं । अनियट्टीकरणं पुण सम्मत्तपुरक्खडे जीवे ॥ १ ॥ " इति ।

ततस्तत्राऽनिवृत्तिकरणे यदुदीर्णमुदयमागतं मिथ्यात्वं तस्मिन्ननुभवेनैव क्षीणे निर्जीर्णे, शेषे तु सत्तावर्तिनि मिथ्यात्वेऽनुदीयमाने परिणामविशुद्धिविशेषादुपशान्ते विष्कम्भितोदयेऽन्तर्मुहूर्तमुदयमनागच्छतीत्यर्थः । किम् ?, इत्याह— अन्तर्मुहूर्तमात्रं कालमौपशमिकसम्यक्त्वं लभते जीवः । अस्माच्चौपशमिकसम्यक्त्वादतिक्रान्तो मिथ्यात्वपुञ्जस्यैवोदयाद् मिथ्यात्वमेव गच्छति, शेषपुञ्जद्वयस्याऽकृतत्वेनाऽविद्यमानत्वादिति । इदमत्र हृदयम्— सैद्धान्तिकानां तावदेतद् मतं यदुत— अनादिमिथ्यादृष्टिः कोऽपि तथाविधसामग्रीसद्भावेऽपूर्वकरणेन पुञ्जत्रयं कृत्वा शुद्धपुञ्जपुद्गलान् वेदयन्नौपशमिकं सम्यक्त्वमलब्ध्वैव प्रथमत एव क्षायोपशमिकसम्यग्दृष्टिर्भवति । अन्यस्तु यथाप्रवृत्त्यादिकरणत्रयक्रमेणान्तरकरणे औपशमिकं सम्यक्त्वं लभते, पुञ्जत्रयं त्वसौ न करोत्येव । ततश्चौपशमिकसम्यक्त्वाच्च्युतोऽवश्यं मिथ्यात्वमेव गच्छति, उक्तं च कल्पभाष्ये—

" आलंबणमलहंती जह सट्ठाणं न मुचए इलिया । एवं अकयतिपुंजी मिच्छं चिय उवसमी एइ ॥ १ ॥ "

यथा गात्रे समुत्क्षिप्ते सतीलिकाऽपरमग्रेतनस्थानलक्षणमालम्बनमलभमाना प्राक्तनस्थानलक्षणं स्वस्थानं न मुञ्चति— पुनरपि संकुच्य प्राक्तनस्थान एव तिष्ठतीत्यर्थः, एवमुपशमसम्यग्दृष्टिरौपशमिकसम्यक्त्वाच्च्युतोऽकृतत्रिपुञ्जत्वाद् मिश्र-शुद्धपुञ्जलक्षणं स्थानान्तरमलभमानः पुनस्तदेव मिथ्यात्वमागच्छतीत्यर्थः । कार्मग्रन्थिकास्त्विदमेव मन्यन्ते यदुत— सर्वोऽपि मिथ्यादृष्टिः प्रथमसम्यक्त्वलाभकाले यथाप्रवृत्त्यादिकरणत्रयपूर्वकमन्तरकरणं करोति, तत्र चौपशमिकं सम्यक्त्वं लभते, पुञ्जत्रयं चाऽसौ विदधात्येव । अत एवौपशमिकसम्यक्त्वाच्च्युतोऽसौ क्षायोपशमिकसम्यग्दृष्टिः, मिश्रः, मिथ्यादृष्टिर्वा भवति । इत्यलं प्रपञ्चेनेति ॥ ५३० ॥

अथ सास्वादनसम्यक्त्वमाह—

उवसमसम्मत्ताओ चयओ मिच्छं अपावमाणस्स । सासायणसम्मत्तं तयंतरालम्मि छावलियं ॥ ५३१ ॥

इहान्तरकरणे औपशमिकसम्यक्त्वाद्धायां जघन्यतः समयशेषायां, उत्कृष्टतस्तु षडावलिकावशेषायां वर्तमानस्य कस्यचिदनन्तानुबन्धिकषायोदयेनौपशमिकसम्यक्त्वाच्च्यवमानस्य मिथ्यात्वमद्याप्यप्राप्नुवतोऽत्रान्तरे जघन्यतः समयं, उत्कृष्टतस्तु षडावलिका

१ यो ग्रन्थि· स प्रथमं (यथाप्रवृत्तकरणं) ग्रन्थि समतिगच्छतो भवति द्वितीयम् (अपूर्वकरण)। अनिवृत्तिकरण पुन. पुरस्कृतसम्यक्त्वे जीवे ॥ १ ॥
२ घ. छ. 'र्तमाग'। ३ आलम्बनमलभमाना यथा स्वस्थान न मुञ्चतीलिका । एवमकृतत्रिपुञ्जी मिथ्यात्वमेवोपशम्येति ॥ १ ॥
४ उपशमसम्यक्त्वाच्च्यवमानस्य मिथ्यात्वमप्राप्नुवत. । सास्वादनसम्यक्त्वं तदन्तराले षडावलिकम् ॥ ५३१ ॥

अथ षष्ठं सप्रतिपक्षं गमिकश्रुतद्वारमाह—

[1]भंगगणियाइं गमियं जं सरिसगमं च कारणवसेण। गाहाइ अगमियं खलु कालियसुयं दिट्ठिवाए वा ॥५४९॥

गमा भङ्गका गणितादिविशेषाश्च तद्बहुलं तत्संकुलं गमिकम्। अथवा, गमाः सदृशपाठास्ते च कारणवशेन यत्र बहवो भवन्ति तद् गमिकं, तच्चैवंविधं प्रायः 'दृष्टिवादे' इत्येवं पर्यन्ते दृष्टिवादपदमत्र संबध्यते। यत्र प्रायो गाथा-श्लोक-वेष्टकाद्यसदृशपाठात्मकं तदगमिकं, तच्चैवंविधं प्रायः कालिकश्रुतम् ॥ इति गाथार्थः ॥ ५४९ ॥

॥ इति सप्रतिपक्षं गमिकद्वारम् ॥

अथ सप्तमं सप्रतिपक्षमङ्गप्रविष्टद्वारमाह—

[2]गणहर-थेरकयं वा आएसा मुक्कवागरणओ वा। धुव-चलविसेसओ वा अंगा-णंगेसु नाणत्तं ॥ ५५० ॥

अङ्गा-ऽनङ्गप्रविष्टश्रुतयोरिदं नानात्वमेतद् भेदकारणम्। किम् ?, इत्याह— गणधरा गौतमस्वाम्यादयः, तत्कृतं श्रुतं द्वादशाङ्गरूपमङ्गप्रविष्टमुच्यते। स्थविरास्तु भद्रबाहुस्वाम्यादयस्तत्कृतं श्रुतमावश्यकनिर्युक्त्यादिकमनङ्गप्रविष्टमङ्गबाह्यमुच्यते। अथवा, वारत्रयं गणधरपृष्टस्य तीर्थकरस्य संबन्धी य आदेशः प्रतिवचनमुत्पाद-व्यय-ध्रौव्यवाचकं पदत्रयमित्यर्थः, तस्माद् यद् [3]निष्पन्नं तदङ्गप्रविष्टं द्वादशाङ्गमेव, मुत्कं मुत्कलमप्रश्नपूर्वकं च यद् व्याकरणमर्थप्रतिपादनं, तस्माद् निष्पन्[4]नमङ्गबाह्यमभिधीयते, तच्चावश्यकादिकम्। वाशब्दो-ऽङ्गा-ऽनङ्गप्रविष्टत्वे पूर्वोक्तभेदकारणादन्यत्वसूचकः। तृतीयं भेदकारणमाह— 'धुव-चलविसेसओ व त्ति' ध्रुवं सर्वतीर्थकरतीर्थेषु नियतं निश्चयभावि श्रुतमङ्गप्रविष्टमुच्यते द्वादशाङ्गमिति। यत् पुनश्चलमनियतमनिश्चयभावि तत् तन्दुलवैकालिकप्रकीर्णादि श्रुतमङ्गबाह्यम्। वाशब्दोऽत्रापि भेदकारणान्तरत्वसूचकः। इदमुक्तं भवति— गणधरकृतं, पदत्रयलक्षणतीर्थकरादेशनिष्पन्नं, ध्रुवं च यच्छ्रुतं तदङ्गप्रविष्टमुच्यते, तच्च द्वादशाङ्गीरूपमेव। यत्पुनः स्थविरकृतं, मुत्कलार्थाभिधानं, चलं च तदावश्यकप्रकीर्णादि श्रुतमङ्गबाह्यमिति ॥ ५५० ॥

आह— ननु '[5]पूर्वं पूर्वाण्येवोपनिबध्नाति गणधरः' इत्यागमे श्रूयते, पूर्वकरणादेव चैतानि पूर्वाण्यभिधीयन्ते। तेषु च

१ भङ्ग-गणितादि गमिकं यत्सदृशगमं च कारणवशेन। गाथाद्यगमिक खलु कालिकश्रुतं दृष्टिवादे वा ॥ ५४९ ॥
२ गणधर-स्थविरकृत वाऽऽदेशाद् मुत्कव्याकरणतो वा। ध्रुव-चलविशेषतो वाऽङ्गा-ऽनङ्गयोर्नानात्वम् ॥ ५५० ॥
३ घ छ. 'द् यद् नि'। ४ घ छ. 'न्नं तदङ्ग'। ५ क. ख. ग. 'प्रथमं पू'।

कसम्यक्त्वे शुद्धपुञ्जपुद्गलवेदनमुक्तम्, औपशमिके तु तत् सर्वथैव नास्ति, इति महान् विशेषः। किञ्च, औपशमिकसम्यक्त्वे मिथ्यात्वं प्रदेशोदयेनाऽपि न वेद्यते, अत्र तु प्रदेशोदयेन तदपि वेद्यते। इत्यलं प्रसङ्गेनेति ॥ ५३२ ॥

अथोक्तशेषं वेदकं, क्षायिकं च सम्यक्त्वमेकगाथया प्राह–

[1]वेययसम्मत्तं पुण सव्वोइयचरमपोग्गलावत्थं। खीणे दंसणमोहे तिविहम्मि वि खाइयं होइ ॥५३३॥

वेदयत्यनुभवति सम्यक्त्वपुद्गलानिति वेदकोऽनुभविता, तदनर्थान्तरभूतत्वात् तत्सम्यक्त्वमपि वेदकम्। अथवा, यथा आह्रियत इत्याहारकम्, तथा वेद्यत इति वेदकम्, जीवादिवस्तुबोधं प्रति समिति सम्यग् अवैपरीत्येन, अञ्चति प्रवर्तत इति सम्यक्, तस्य भावः सम्यक्त्वं, वेदकं च तत् सम्यक्त्वं च वेदकसम्यक्त्वम्। तत् पुनः क्षपकश्रेणिं प्रतिपन्नस्याऽनन्तानुबन्धिकषायचतुष्टयमिथ्यात्वमिश्र-पुञ्जेषु क्षपितेषु, सम्यक्त्वपुञ्जमप्युदीर्योदीर्याऽनुभूय निर्जरयतो निष्ठितोदीरणीयस्य सर्वोदितचरमपुद्गलावस्थं भवति। सर्वे च ते उदिताश्च ते च ते चरमपुद्गलाश्च सर्वोदितचरमपुद्गलास्तेऽवस्था स्वरूपं यस्य तत् तथा। इदमुक्तं भवति– क्षपितप्रायदर्शनसप्तकस्य सम्यक्त्वपुञ्जचरमपुद्गलग्रासमात्रमनुभवतो वेदकसम्यक्त्वं भवति।

अत्राह– नन्वेवं सति क्षायोपशमिकेन सहाऽस्य को विशेषः, सम्यक्त्वपुञ्जपुद्गलानुभवस्योभयत्रापि समानत्वात्?। सत्यम्, किन्त्वेतदशेषोदितपुद्गलानुभूतिमतः प्रोक्तम्, इतरत्तूदिता-ऽनुदिततत्पुद्गलस्य, एतन्मात्रकृतो विशेषः; परमार्थतस्तु क्षायोपशमिकमेवेदम्, चरमग्रासशेषाणां पुद्गलानां क्षयात्; चरमग्रासवर्तिनां तु मिथ्यात्वस्वभावापगमलक्षणस्योपशमस्य सद्भावादिति। अवश्यं चेदमङ्गीकर्तव्यम्, स्थानान्तरेषु बहुशः क्षायिकौ-पशमिक-क्षायोपशमिकलक्षणस्य त्रिविधस्यैव सम्यक्त्वस्याऽभिधानात्। तत्र च वेदकस्य क्षायोपशामिक एवाऽन्तर्भावः, कियन्मात्रभेदेन च भेद एवाऽङ्गीक्रियमाणे औदयिकसम्यक्त्वस्याऽपि प्राप्तेरतिप्रसङ्गः स्यादिति। अनन्तानुबन्धिकषायचतुष्टयक्षयान्तरं मिथ्यात्व-मिश्रसम्यक्त्वपुञ्जलक्षणे त्रिविधेऽपि दर्शनमोहनीये सर्वथा क्षीणे क्षायिकं सम्यक्त्वं भवतीति। तदेवमेतत्सम्यक्त्वपञ्चकपरिग्रहात् सम्यक्श्रुतम्, मिथ्यात्वपरिग्रहात्तु मिथ्याश्रुतं भवतीति प्रतिपत्तव्यमिति ॥ ५३३ ॥

अत्राह– ननु कियत् सम्यक्श्रुतमेव भवति?, कियच्च मिथ्याश्रुतम्?, शेषस्य च मत्यादिज्ञानचतुष्टयस्य मध्ये मिथ्यात्वोदयात् कस्य विपर्यासो भवति?, कस्य च न?, इत्याशङ्क्याह–

१ वेदकसम्यक्त्व पुनः सर्वोदितचरमपुद्गलावस्थम्। क्षीणे दर्शनमोहे त्रिविधेऽपि क्षायिकं भवति ॥ ५३३ ॥ २ घ छ 'मव'।

दर्शनेन पश्यति, तस्य तदसंभवात्; यथा हि मनःपर्यायज्ञानं स्वभावेनैव स्पष्टार्थग्राहकं, इति न तत्र दर्शनम्, एवं श्रुतज्ञानेऽपि; तदपि ह्यर्थविकल्पनावस्थायामन्तर्जल्पाकारत्वाद् विशेषमेव गृह्णाति न सामान्यमिति भावः। तथा च नान्दिसूत्रम्– "[1]तं समासओ चउव्विहं पण्णत्तं, तं जहा— दव्वओ खेत्तओ, कालओ, भावओ। दव्वओ णं सुयनाणी उवउत्तो सव्वदव्वाइं जाणइ न पासइ, एवं सव्वखेत्तं, सव्वकालं, सव्वभावे जाणइ न पासइ" इति। अन्ये तु नञः पाठं न मन्यन्ते। ततश्च "जाणइ पासइ" इति पठन्ति। अतः 'श्रुतज्ञान्यपि दर्शनेन पश्यति' इति ते मन्यन्ते, यच्चासौ दर्शनेन पश्यति तदचक्षुर्दर्शनेनेति मन्यन्ते। इदमत्र हृदयम्– यस्य श्रुतज्ञानं तस्य मतिज्ञानमवश्यमेव भवति। मति-श्रुतज्ञानस्य च चक्षुरचक्षुर्दर्शनभेदाद् द्विभेदं दर्शनमुक्तम्। तत्र किल चक्षुर्दर्शनेन मतिज्ञानं पश्यति, अचक्षुर्दर्शनेन पुनः श्रुतज्ञानमिति ॥ ५५३ ॥

एतत् तेषां मतमसमीक्षिताभिधानत्वाद् यदृच्छावादमात्रमिति दर्शयन्नाह–

[2]तेसिमचक्खुदंसणसामण्णओ कहं न मइनाणी। पासइ, पासइ व कहं सुयनाणी किंकओ भेओ? ॥५५४॥

तेषां नञः पाठमनभ्युपगच्छतां मतिज्ञान-श्रुतज्ञानयोरिन्द्रिय-मनोनिमित्ततासाम्यादचक्षुर्दर्शने समानेऽपि कथं हन्त! तेनाऽचक्षुर्दर्शनेन मतिज्ञानी न पश्यति?, कथं वा तेन श्रुतज्ञानी पश्यति?। यदि हि श्रुतज्ञानी तेन पश्यति तर्हि मतिज्ञान्यपि पश्यतु। अथासौ न पश्यति, तर्हीतरोऽपि मा पश्यतु। ननु किंकृतोऽयं भेदो, यदचक्षुर्दर्शने समानेऽपि तेनैकं ज्ञानं पश्यति, अपरं तु न पश्यति?। स्वेच्छाभाषितत्वमात्रं विहाय नापरमत्र कारणं पश्याम इति भावः। तस्मात् "जाणइ न पासइ" इति स्थितमिति ॥ ५५४ ॥

अथवा प्रज्ञापनोक्तां पश्यत्तामाश्रित्य श्रुतज्ञानेऽपि पश्यत्ता युक्ता। ततश्च "जाणइ पासइ" इत्यपि पाठो युक्त इति दर्शयन्नाह–

[3]मइभेयमचक्खुदंसणं च वज्जित्तु पासणा भणिया। पण्णवणाए उ फुडा तेण सुए पासणा जुत्ता ॥५५५॥

---

1 तत् समासतश्चतुर्विधं प्रज्ञप्तम्, तद्यथा– द्रव्यतः, क्षेत्रतः, कालतः, भावतः। द्रव्यतः श्रुतज्ञान्युपयुक्तः सर्वद्रव्याणि जानाति, न पश्यति। एवं सर्वक्षेत्रं, सर्वकालं, सर्वभावान् जानाति न पश्यति।

2 तेषामचक्षुर्दर्शनसामान्यतः कथं न मतिज्ञानी। पश्यति, पश्यति वा कथं श्रुतज्ञानी, किंकृतो भेदः? ॥ ५५४ ॥

3 मतिभेदमचक्षुर्दर्शनं च वर्जयित्वा पश्यत्ता भणिता। प्रज्ञापनायां तु स्फुटा तेन श्रुते पश्यत्ता युक्ता ॥ ५५५ ॥

तयोरिहाऽपि कथञ्चिद्भेदः। कथं पुनर्ज्ञान-दर्शनयोरन्यत्र तावद् भेद उक्तः[1], इति चेत्। इत्याह– 'नाणेत्यादि' यथाऽपायश्च धृतिश्चाऽपाय-धृती, एते वचनपर्यायग्राहकत्वेन विशेषाववोधस्वभावत्वाज्ज्ञानमिष्टं; अवग्रहश्चेहा चाऽर्थपर्यायविषयत्वेन सामान्यावबोधाद् दर्शनम्; तथाऽत्रापि जीवादितत्त्वविषया रुचिः श्रद्धानं सम्यक्त्वं भण्यते, येन पुन[2]स्तज्जीवादितत्त्वं रोच्यते श्रद्धीयते तज्ज्ञानम्। अयमत्राभिप्रायः– दर्शन-मोहनीयकर्मक्षयोपशमादिना या तत्त्वश्रद्धानात्मिका तत्त्वरुचिरुपजायते, तया तत्त्वश्रद्धानात्म[3]कं जीवादितत्त्वरोचकं विशिष्टं श्रुतं जन्यते, ततस्तत् श्रुताज्ञानव्यपदेशं परिहृत्य श्रुतज्ञानसंज्ञां समासादयति। एवं च सति परो मन्यते– विशिष्टतत्त्वावगमस्वरूपं श्रुतमेव सम्यक्त्वं, न पुनस्ततोऽतिरिक्तं किञ्चिदुपलभ्यते, इति कथमुच्यते– 'सम्यक्त्वपरिग्रहात् सम्यक्श्रुतम्' इति?। सिद्धान्तवादी तु मन्यते– यथा ज्ञानदर्शनयोर्वस्त्ववबोधरूपतयैकत्वेऽपि विशेष-सामान्[4]यवस्तुग्राहकत्वेन भेदः, तथाऽत्रापि शुद्धतत्त्वावगमरूपे श्रुते तत्त्वश्रद्धानांशः सम्यक्त्वं, तद्विशिष्टं तु तत्त्वरोचकं श्रुतज्ञानमित्यनयोर्भेदः। एतयोश्च सम्यक्त्व-श्रुतयोर्युगपल्लाभेऽपि कार्य-कारणभावाद् भेदः। उक्तं च–

"[5]कारण-कज्जविभागो दीव-पगासाण जुगवजम्मे वि। जुगवुप्पन्नं पि तहा हेऊ नाणस्स सम्मत्तं ॥ १ ॥

जुगव पि समुप्पन्न सम्मत्तं अहिगमं विसोहेइ। जह कयगमंजणाइजलवुट्ठीओ विसोहिंति ॥ २ ॥"

अतो युक्तमुक्तम् 'सम्यक्त्वपरिगृहीतं सम्यक्श्रुतं, विपर्ययात्तु मिथ्याश्रुतम्' ॥ इति गाथादशकार्थः ॥ ५३५ ॥ ५३६ ॥

॥ सप्रतिपक्षं सम्यकश्रुतं समाप्तमिति ॥

इदानीं सादि सपर्यवसितं च श्रुतं सप्रतिपक्षमुच्यते–

[6]अत्थित्तिनयस्सेयं अणाइपज्जंतमत्थिकाय व्व। इयरस्स साइ संतं गइपज्जाएहिं जीवो व्व ॥ ५३७ ॥

अस्तीतिनयो नित्यवादी द्रव्यास्तिकस्तस्याभिप्रायेणेदं द्वादशाङ्गश्रुतमनादि, अपर्यन्तं च; नित्यत्वात्, पञ्चास्तिकायवत्; तथाहि– यैर्जीवद्रव्यैः श्रुतमिदमधीतं, यान्यधीयन्ते, यानि चाध्येष्यन्ते, तानि तावद् न कदापि व्यवच्छिद्यन्ते, इति तेषामनादिता,

१ घ. छ. 'नर्जा'। २ घ छ. 'तत्र र'। ३ क. ग 'कं वि'। ४ घ. छ. 'न्यग्रा'।
५ कारण-कार्यविभागो दीप-प्रकाशयोर्युगपज्जन्मन्यपि। युगपदुत्पन्नमपि तथा हेतुर्ज्ञानस्य सम्यक्त्वम् ॥ १ ॥
युगपदपि समुत्पन्नं सम्यक्त्वमधिगमं विशोधयति। यथा कनकमञ्जनादिजलवृष्टयो विशोधयन्ति ॥ २ ॥
६ अस्तीतिनयस्येदमनादिपर्यन्तमस्तिकाय इव। इतरस्य सादि सान्तं गतिपर्यायैर्जीव इव ॥ ५३७ ॥

तमचक्खुदंसणेणं' इति वचनादचक्षुर्दर्शनमाश्रित्य श्रुतज्ञाने या पश्यत्ता प्रोक्ता सा, इत्यतोऽप्ययुक्ता। कुतः ?, इत्याह– येन प्रज्ञापनायां मतिभेदौ, अचक्षुर्दर्शनं च वर्जयित्वैव पश्यत्ता प्रोक्ता। अतोऽचक्षुर्दर्शनमाश्रित्याऽयुक्तैव श्रुतज्ञाने पश्यत्ता। ततो "जाणइ न पासइ" इति पाठ इति स्थितम्। इयं च गाथा पूर्वटीकाकारैर्गृहीता, 'कण्ठ्या' इति च निर्दिष्टा, न तु व्याख्याता; अस्माभिस्तु यथावबोधं किञ्चिद् विवृता, सुधिया त्वन्यथाऽप्याविरोधतो व्याख्येयेति। तदेवं भेदतो विषयतश्च निरूपितं श्रुतज्ञानम् ॥ ५५५ ॥

सांप्रतं सत्पदप्ररूपणतादिभिर्नवभिरनुयोगद्वारैर्गत्यादिमार्गणास्थानेषु तद् गमनयिम्। एतच्चाभिन्नस्वामित्वात् पूर्वोक्तमतिज्ञानेन समानम्, इत्यतिदिशन्नाह–

जह[1] नवहा मइनाणं संतपयपरूवणाइणा गमियं। तह नेयं सुयनाणं जं तेण समाणसामित्तं ॥ ५५६ ॥

गतार्थैव ॥ ५५६ ॥

अथोत्तरानिर्युक्तिगाथा[2]संबन्धनायाह–

सव्वाइसयानिहाणं[3] तं पाएणं जओ पराहीणं। तेण विणेयहियत्थं गहणोवाओ इमो तस्स ॥ ५५७ ॥

तच्च श्रुतज्ञानं यतो यस्मादनेकातिशयनिधानं प्रायः पराधीनं च गुर्वायत्तम्, तेन कारणेन तस्य श्रुतज्ञानस्याऽयं वक्ष्यमाणो ग्रहणोपायो ग्रहणविधिः 'तीर्थकर-गणधरैरुक्तः' इति शेषः ॥ इति गाथापञ्चकार्थः ॥ ५५७ ॥

कः पुनर्ग्रहणोपायः ?, इत्याह–

आगमसत्थग्गहणं[4] जं बुद्धिगुणेहिं अट्ठहिं दिट्ठं। बेंति सुयनाणलंभं तं पुव्वविसारया धीरा ॥ ५५८ ॥

पूर्वेषु विशारदा विपश्चितो धीरा व्रतानुपालनस्थिराः श्रुतज्ञानस्य लाभं ब्रुवते प्रतिपादयन्ति। किं तत् ?, इत्याह– 'तं ति' तदेवागमशास्त्रग्रहणं। यत् किम् ?, इत्याह– यद्बुद्धिगुणैर्वक्ष्यमाणस्वरूपैरष्टभिर्दिष्टं शास्त्रे, इत्यक्षरयोजना। अयमर्थः– शिष्यते शिक्ष्यते बोध्यतेऽनेनेति शास्त्रं तच्चाविशेषितं सामान्येन सर्वमपि मत्यादिज्ञानमुच्यते, सर्वेणापि ज्ञानेन जन्तूनां बोधनात्। अतो विशेषे स्थापयि-

---

१ यथा नवधा मतिज्ञानं सत्पदप्ररूपणादिना गमितम्। तथा ज्ञेयं श्रुतज्ञानं यत् तेन समानस्वामित्वम् ॥ ५५६ ॥ २ ख.घ.छ 'थां संबन्धयन्नाह'।
३ सर्वातिशयनिधान तत् प्रायेण यत. पराधनिम्। तेन विनेयहितार्थं ग्रहणोपायोऽयं तस्य ॥ ५५७ ॥
४ आगमशास्त्रग्रहणं यद् बुद्धिगुणैरष्टभिर्दिष्टम्। ब्रुवते श्रुतज्ञानलाभं तत् पूर्वविशारदा धीराः ॥ ५५८ ॥

विकल्पना— मिथ्यात्वगमनादिभिः कारणैः कस्यचित् प्रतिपतति श्रुतम्, कस्यचिद् नेति ॥ ५३९ ॥

तान्येव मिथ्यात्वगमनादीनि श्रुतप्रतिपातकारणानि सामान्येनाह—

[1]मिच्छ-भवंतर-केवल-गेलन्न-पमायमाइणा नासो । आह किमत्थं नासइ किं जीवाओ तयं भिण्णं ?॥५४०॥

इहभवेऽपि तिष्ठतः कस्यचिद् मिथ्यात्वगमनेन श्रुतस्य नाशो भवति, कस्यचिद् भवान्तरगमनेन। एतच्च '[2]चोदसपुव्वी मणुओ' इत्यादिना दर्शितमेव । न चेह पुनर्भणने पौनरुक्त्यमाशङ्कनीयम्, सामान्येन श्रुतप्रतिपातकारणभणनप्रक्रमायातत्वेन पुनरत्र भणनात् । केवलज्ञानोत्पत्तौ च कस्यचिदिहभवेऽपि श्रुतं नश्यति, "[3]नट्ठम्मि उ छाउमत्थिए नाणे" इति वचनात् । अपरस्य तु ग्लानावस्थायां, अन्यस्य पुनः प्रमादादिनेहभवेऽपि तस्य नाशो भवति । ततो लाभकाले तस्य सादित्वम्, प्रतिपाते तु सान्तत्वमिति । अत्र परः प्राह— किमर्थं श्रुतं लब्धं सद् नश्यति, किं जीवाद् भिन्नं व्यतिरिक्तं वर्तते ?— जीवे तिष्ठत्यपि श्रुतस्य भिन्नस्यैव नाशो युज्यते नाऽभिन्नस्येति भावः ॥ ५४० ॥

भिन्नमेव तत् तस्मादिति चेत् । अत्र दूषणमाह—

[4]जइ भिन्नं तब्भावे वि तो तओ तस्सब्भावरहिउ त्ति । अण्णाणि च्चिय निच्चं अंध व्व समं पईवेण ॥५४१॥

यदि जीवाद् भिन्नं श्रुतमभ्युपगम्यते, 'तो त्ति' ततस्तद्भावेऽपि श्रुतसद्भावेऽपि तकोऽसौ जीवोऽज्ञान्येव नित्यं स्यात् । कुतः ?, इत्याह— तत्स्वभावरहित इति कृत्वा । श्रुतं हि जीवाद् भिन्नमिष्टम्, ततो जीवः श्रुतस्वभावरहितत्वादज्ञान्येव स्यात्— श्रुतप्रकाश्यमर्थं न पश्येदित्यर्थः । यथाऽन्धश्चक्षुर्विकल आत्मव्यतिरिक्तेन हस्तगतेनाऽपि प्रदीपेन तत्प्रकाश्यमर्थं न पश्यतीति ॥ ५४१ ॥

अत्र सूरिरुत्तरमाह—

[5]तं ता नियमा जीवो जीवो न तदेव केवलं जम्हा । तं च तदण्णाणं वा केवलनाणं व सो होज्जा ॥५४२॥

---

१ मिथ्या-भवान्तर-केवल-ग्लान-प्रमादादिना नाश. । आह किमर्थं नश्यति किं जीवात् तद् भिन्नम् ? ॥ ५४० ॥

२ गाथा ५३९ ।    ३ नष्टे तु च्छाद्मस्थिके ज्ञाने ।

४ यदि भिन्न तद्भावेऽपि ततः सकस्तत्स्वभावरहित इति । अज्ञान एव नित्यमन्ध इव सम प्रदीपेन ॥ ५४१ ॥

५ तत् तावद् नियमाज्जीवो जीवो न तदेव केवल यस्मात् । तच्च तदज्ञानं वा केवलज्ञानं वा स भवेत् ॥ ५४२ ॥

अथ भाष्यम्–

[1]सुस्सूसइ उ सोउं सुयमिच्छइ सविणओ गुरुमुहाओ। पडिपुच्छइ तं गहियं पुणो वि नीसंकियं कुणइ ॥५६२॥

सुणइ तदत्थमहीउं गहणे-हा-ऽवाय-धारणा तस्स। सम्मं कुणइ सुयाणं अन्नं पि तओ सुयं लहइ ॥५६३॥

द्वितीयं व्याख्यानमाह–

[2]सुस्सूसइ वा जं जं गुरवो जंपंति पुव्वभणिओ य। कुणइ पडिपुच्छिऊणं सुणेइ सुत्तं तदत्थं वा ॥ ५६४ ॥

तिस्रोऽपि व्याख्यातार्था एव। नवरं द्वितीयगाथायां शृणोति तदर्थं श्रुतार्थम्, एवं च सूत्रतोऽर्थतश्च 'अहीउं ति' अधीत्य श्रुतं, ततस्तस्य श्रुतस्य ग्रहणेहा-ऽपाय-धारणाः सम्यक् 'करोति' इत्यत्र संबध्यते। तथा, 'सुयाणं ति' श्रुताज्ञां श्रुतोक्तानुष्ठानं 'सम्यक् करोति' इत्यावृत्त्याऽत्रापि संबध्यते। एवं च कुर्वाणोऽन्यदपि श्रुतं लभत इति। तृतीयगाथायां 'सुस्सूसइ पडिपुच्छइ सुणेइ' इत्येतावान् निर्युक्तिगाथावयवो व्याख्यातः। गृह्णातीत्यादेस्त्वर्थः प्राक् कथितः स्वयमेव द्रष्टव्य इति ॥ ५६४ ॥

'शुश्रूषते' इत्युक्तम्, अतः श्रवणविधिमाह–

[3]मूयं हुंकारं वा बाढक्कार-पडिपुच्छ-वीमंसा। तत्तो पसंगपारायणं च परिणिट्ठ सत्तमए ॥ ५६५ ॥

मूकमिति मूकं शृणुयात्। इदमुक्तं भवति– प्रथमवारा श्रवणे संयतगात्रः संस्तूष्णीमाश्रितः सर्वमवधारयेत्। द्वितीयवारायां तु हुङ्कारं दद्याद् वदनं कुर्यादित्यर्थः। तृतीये श्रवणे बाढङ्कारं कुर्यात्– एवमेतद् नाऽन्यथेति ब्रूयादित्यर्थः। चतुर्थे तु गृहीतपूर्वापरसूत्राभिप्रायो मनाक् प्रतिपृच्छां कुर्यात्– 'कथमेतत्?' इति। पञ्चमे तु मीमांसां विदध्यात्, तत्र मातुमिच्छा मीमांसा, प्रमाणजिज्ञासेति यावत्। ततः षष्ठे तदुत्तरोत्तरगुणप्रसङ्गः, पारगमनं चाऽस्य भवति। सप्तमे श्रवणे परिनिष्ठा भवति। एतदुक्तं भवति– गुरुवदनुभाषत एव सप्तमवारायामिति। तदेवं शिष्यगतः श्रवणविधिरुक्तः ॥ ५६५ ॥

---

१ शुश्रूषते तु श्रोतु श्रुतमिच्छति सविनयो गुरुमुखात्। प्रतिपृच्छति तद् गृहीत पुनरपि निःशङ्कितं करोति ॥ ५६२ ॥
शृणोति तदर्थमधीत्य ग्रहणे-हा-ऽपाय-धारणास्तस्य। सम्यक् करोति श्रुताज्ञामन्यदपि ततः श्रुतं लभते ॥ ५६३ ॥

२ शुश्रूषते वा यद् यद् गुरवः कथयन्ति पूर्वभणितश्च। करोति प्रतिपृच्छ्य शृणोति सूत्रं तदर्थं वा ॥ ५६४ ॥

३ मूकं हुङ्कारं वा बाढङ्कार-प्रतिपृच्छा-मीमांसाः। ततः प्रसङ्गपारायणं च परिनिष्ठा सप्तमके ॥ ५६५ ॥

ऽहि-विषादिसहकारिकारणसद्भावे युज्यते, अन्यथा सर्वदैव तद्भावाऽभावप्रसङ्गात् । न चैकान्तनित्यस्य तावत्सहकार्यपेक्षा युज्यते । तथाहि– अपेक्ष्यमाणेन सहकारिणा तस्य कश्चिदतिशयः क्रियते, नवा ? इति वक्तव्यम् । यदि क्रियते, स किमर्थान्तरभूतः, अनर्थान्तरभूतो वा ? इति वाच्यम् । यद्याद्यः पक्षः, तर्हि तस्य किमायातम् ? । तस्याऽसौ विशेषकारक इति चेत् । न, अनवस्थाप्रसङ्गात्; तथाहि– सोऽपि विशेषस्ततो भिन्नः, अभिन्नो वा ? इत्यादि तदेवाऽऽवर्तत इत्यनवस्था । अथाऽनर्थान्तरभूत इति द्वितीयः पक्षः, स किं विद्यमानः, अविद्यमानो वा ? । यदि विद्यमानः, किमिति क्रियते ?, करणे वाऽनवस्थाप्रसङ्गः । अथाऽविद्यमानः, ननु व्याहतमेतत्– ततोऽनर्थान्तरभूतः, अविद्यमानश्चेति । अविद्यमानस्य च खरविषाणस्येव कथं करणोत्पत्तिः ?, करणे वा वस्तुनोऽनित्यत्वप्रसङ्गः, तदव्यातिरिक्तत्वेन तत्करणे वस्तुनोऽपि करणात् । अथ मा भूदेष दोष इति न क्रियत इत्यभ्युपगम्यते, न तर्हि स तस्य सहकारी, अतिशयाकरणात्; इत्थमपि सहकारित्वेऽतिप्रसङ्गः, तथाहि– यदि कंचन विशेषमकुर्वन्नपि सहकार्याश्रीयते, तर्हि सर्वभावानामपि तत्सहकारित्वप्रसङ्गः, विशेषाकरणस्य समानत्वात्, इति कथं प्रतिनियतसहकारिकल्पना ? । अथैवंभूत एवाऽस्य वस्तुनः स्वभावः, येन विशेषाकारकमपि प्रतिनियतमेव सहकारिणमपेक्ष्य कार्यं जनयति । नन्वेतदपि मनोरथमात्रम्, तद्धि यदाऽभीष्टसहकारिसंनिधौ कार्यं जनयति, तदा तस्य तदपेक्षालक्षणस्वभावो व्यावर्तते नवेति वाच्यम् । यदि व्यावर्तते, तर्ह्यनित्यत्वप्रसङ्गः, स्वभावनिवृत्तौ स्वभाववतोऽपि तदव्यातिरेकेण तद्वदेव निवृत्तेः । अथ न व्यावर्तते, तर्हि कार्याजननप्रसङ्गः, तत्स्वभावानिवृत्तेः, पूर्ववदिति । य एव हि तस्य कार्याजननावस्थायां स्वभावः, स एव जननावस्थायामपि, इति कथं जनयेत् ? । जनने वा सर्वदा जननप्रसङ्गः, तत्स्वभावस्य सर्वदाऽवस्थितत्वादिति । सहकारिकारणान्यपि नित्यत्वात् सर्वदैव संभूयोपकुर्वीरन्, विपर्ययो वा, नित्यस्यैकस्वभावत्वात् । ततश्च कार्यस्य सर्वदैव भावः, अभावो वा स्यादिति ।

अथैकान्तानित्यं क्षणस्थितिधर्मकं वस्त्वभ्युपगम्यते। एतदप्ययुक्तम्, यतः क्षणस्थितिधर्मकं क्षणभावस्वभावमभिधीयते, ततोऽर्थादेवाऽस्य द्वितीयादिक्षणे स्वभाव इत्यकामेनाऽपि प्रतिपत्तव्यम्, तयोश्च भावा-ऽभावयोः परस्परमन्यत्वम्, अनन्यत्वं चेति वक्तव्यम् ? । यद्यन्यत्वम्, तत् किं सर्वथा, उत कथञ्चित् ? । यदि सर्वथा, तर्हि द्वितीयादिक्षणेष्वपि भावप्रसङ्गः, प्रथमक्षणभावस्य द्वितीयादिक्षणाभावभिन्नत्वान्यथानुपपत्तेः; न ह्येकान्तभिन्नादभावाद् भावस्य निवृत्तिर्युज्यते, पटाभावादपि घटभावनिवृत्तिप्रसङ्गात् । अथ कथञ्चित् । तदयुक्तं, अनेकान्तवादाभ्युपगमप्रसङ्गात्। अथाऽनन्यत्वम्। तदपि सर्वथोत कथञ्चित्। यदि सर्वथा, तर्हि प्रथमक्षणभाव एव द्वितीयादि- 

१ घ. छ. 'थं नि' । २ घ छ. 'रिकारण' ।

न्यत आवलिकाऽसंख्येयभागादारभ्य समयोत्तरया वृद्ध्योत्कृष्टतोऽसंख्येयोत्सर्पिण्यवसर्पिणीलक्षणो विषय इत्यभिधास्यते। एवं च 'विषयभेदाद् विषयिणोऽपि भेदः' इति न्यायात् क्षेत्र-काललक्षणविषयस्याऽसंख्येयभेदत्वादवधेरप्यसंख्येया भेदा भवन्ति। खलुशब्दश्चेह विशेषणार्थः। किं विशिनष्टि ?, इति चेत्। उच्यते– क्षेत्र-कालावेवाऽङ्गीकृत्यावधेरसंख्येयाः प्रकृतयो भवन्ति। द्रव्य-भावौ त्वाश्रित्याऽनन्ता अपि तास्तस्य प्राप्यन्ते; तथाहि– "तेया-भासादव्वाणमंतरा एत्थ लभइ पट्ठवओ" इत्यादिवचनात् तैजस-भाषाद्रव्यापान्तरालवर्त्यनन्तप्रदेशिकाद् द्रव्यादारभ्य विचित्रवृद्ध्या सर्वमूर्तद्रव्याण्युत्कृष्टविषयपरिमाणमवधेर्वक्ष्यते। प्रतिवस्तुगताऽसंख्येयपर्यायरूपं च भावतो विषयमानमभिधास्यते। अतः सर्वमपि पुद्गलास्तिकायं, अवधिग्राह्यांश्च तत्पर्यायानाश्रित्यानन्तोऽवधिविषयः सिद्धो भवति, ज्ञेयभेदाच्च ज्ञानभेदः, इति द्रव्य-भावलक्षणविषयापेक्षयाऽवधेरनन्ता अपि प्रकृतयो भवन्ति। तर्हि 'संखाईयाओ खलु' इति विरुध्यते, इति चेत्। नैवम्, अनन्तस्यापि संख्यातीतत्वाऽव्यभिचारात्। अतः संख्यातीतशब्देनाऽसंख्याता अनन्ताश्च प्रकृतयो गृह्यन्त इत्यविरोधः। एतासु च प्रकृतिषु मध्ये काश्चनाऽन्यतमा भवप्रत्ययाः– भवो नारकादिजन्म स पक्षिणां गगनोत्पतनलब्धिरिवोत्पत्तौ प्रत्ययः कारणं यासां ता भवप्रत्ययाः, ताश्च नारका-ऽमराणामेव। काश्चन पुनरन्यतमाः क्षयोपशमेन निर्वृत्ताः क्षायोपशमिक्यः, तपःप्रभृतिगुणपरिणामाविर्भूतक्षयोपशमप्रत्यया इत्यर्थः; एताश्च तिर्यङ्-मनुष्याणामिति। आह– क्षायोपशमिकभावेऽवधिज्ञानं पठ्यते, नारकादिभावश्चौदयिकः, स कथं तत्प्रकृतीनां प्रत्ययः स्यादिति ?। अत्रोच्यते– मुख्यतस्ता अपि क्षयोपशमनिबन्धना एव, केवलं सोऽपि क्षयोपशमस्तस्मिन् नारका-ऽमरभवे सत्यवश्यं भवति, इति कृत्वा भवप्रत्ययास्ता उक्ता इति ॥ ५६८ ॥

अथ सामान्यरूपतयोद्दिष्टानां संख्यातीतानामवधिप्रकृतीनां, वाचः क्रमवर्तित्वात्, आयुषश्चाल्पत्वाद् यथावद्भेदेन प्रतिपादनसामर्थ्यमात्मनोऽपश्यन्नाह–

कैत्तो मे वण्णेउं सत्ती ओहिस्स सव्वपयडीओ ?। चउदसविहनिक्खेवं इड्ढीपत्ते य वोच्छामि ॥५६९॥

कुतो मम वर्णयितुं शक्तिरवधेः सर्वप्रकृतीः, आयुषः परिमितत्वात्, वाचः क्रमवर्तित्वाच्च ?, तथापि विनेयगणानुग्रहार्थं चतुर्दशविधश्चासौ निक्षेपश्च चतुर्दशविधनिक्षेपस्तमवध्यादिकं चतुर्दशविधनिक्षेपं वक्ष्यामि; आमर्षौषध्यादिका ऋद्धिः प्राप्ता यैस्ते प्राप्तर्द्धयस्तांश्च वक्ष्यामि। इह गाथाभङ्गभयाद् व्यत्ययः, अन्यथा निष्ठान्तस्य बहुव्रीहौ पूर्वनिपात एव भवति ॥ इति निर्युक्तिगाथाद्वयार्थः ॥ ५६९ ॥

१ गाथा ६२६। २ कुतो मे वर्णयितु शक्तिरवधे. सर्वप्रकृती. ?। चतुर्दशविधनिक्षेपमृद्धिप्राप्तांश्च वक्ष्यामि ॥ ५६९ ॥

उवओग-सर-पयत्ता थाणविसेसा य होंति पण्णवए । गइ-ट्ठाण-भेय-संघाय-वण्ण-सद्दाइभावेसु ॥ ५४७ ॥

उपयोग आन्तरः श्रुतपरिणामः, स्वरो ध्वनिः, प्रयत्नस्ताल्वादिव्यापारविषयो यत्नः, स्थानविशेषा आसनविशेषाः, प्रज्ञापके गुरौ व्याख्यानादि कुर्वति सत्येते भावा धर्मा भवन्ति । एते चाऽनित्यत्वात् सादि-सपर्यवसिताः । ततश्चैतानाश्रित्य वक्तुरनन्यत्वाच्छ्रुतमपि सादि-सपर्यवसितं भवति । प्रज्ञापनीयार्थगतान् भावानाह— 'गईत्यादि' गतिरण्वादीनां गमनपरिणामः, स्थानं तेषामेव स्थितिपरिणामः, भेदस्तेषामेवाऽन्यसंयुक्तानां विघटनम्, संघातस्त्वन्यैः सह संयोगः, वर्णः कृष्णादिः, शब्दो मन्द्र-मधुरादिः, आदिशब्दाद् रस-गन्ध-स्पर्श-संस्थानादिपरिग्रहः । एते गति-स्थित्यादयो भावाः पर्यायधर्मा भावेषु प्रज्ञापनीयेषु परमाण्वादिषु भवन्ति । ततोऽनित्यत्वादमी सादि-सपर्यवसिताः । एते च श्रुतस्य ग्राह्याः, ग्राहकं च ग्राह्यनिबन्धनं भवति, अतः श्रुतमपि सादि-सपर्यवसितमिति भावः । तदेवं द्रव्य-क्षेत्र-काल-भावानाश्रित्य सादि-सपर्यवसितत्वलक्षणो दर्शितः प्रथमभङ्गः ॥ ५४७ ॥

अथैतानेवाऽऽश्रित्य पूर्वमभव्यश्रुतदर्शितमपि पुनरेतेष्वपि क्रमायातेषु संभवदर्शनार्थमनाद्यपर्यवसितत्वलक्षणं चतुर्थभङ्गमुपदर्शयन्नाह—

दव्वे नाणापुरिसे खेत्ते विदेहाई कालो जो तेसु । खय-उवसमभावम्मि य सुयनाणं वट्टए सययं ॥५४८॥

द्रव्ये द्रव्यविषये नानापुरुषान् नारक-तिर्यङ्-मनुष्य-देवगतान् नानासम्यग्दृष्टिजीवानाश्रित्य श्रुतज्ञानं सम्यक्श्रुतं सततं वर्तते— अभूत्, भवति, भविष्यति च, न तु कदाचिद् व्यवच्छिद्यते । ततस्तानाश्रित्येदमनादि, अपर्यवसितं च स्यादिति भावः । क्षेत्रे पुनः पञ्च महाविदेहलक्षणान् विदेहानङ्गीकृत्य, काले तु यस्तेष्वेव विदेहेषु कालोऽनवसर्पिण्युत्सर्पिणीरूपस्तमाश्रित्य । भावे तु क्षायोपशमिके श्रुतज्ञानं सततं सर्वदैव वर्तते; अतोऽनादि अपर्यवसितम् । सामान्येन हि महाविदेहेषूत्सर्पिण्यवसर्पिण्यभावरूपनिजकालविशिष्टेषु द्वादशाङ्गश्रुतं कदापि न व्यवच्छिद्यते, तीर्थकर-गणधरादीनां तेषु सर्वदैव भावात् ॥ इति गाथाद्वादशकार्थः ॥ ५४८ ॥

॥ तदेवं समाप्तिपक्षं सादि-सपर्यवसितं श्रुतं समाप्तम् ॥

---

१ उपयोग-स्वर-प्रयत्ना स्थानविशेषाश्च भवन्ति प्रज्ञापके । गति-स्थान-भेद-संघात-वर्ण-शब्दादिभावेषु ॥ ५४७ ॥ २ घ. छ. 'मधुर-मन्द्रादि-' ।
३ द्रव्ये नानापुरुषान् क्षेत्रे विदेहान् कालो यस्तेषु । क्षयोपशमभावे च श्रुतज्ञानं वर्तते सततम् ॥ ५४८ ॥

अथाऽऽक्षेप-परिहारावाह—

[1]ओही खओवसमिए भावे भणिओ भवो तहोदईए। तो किह भवपच्चइओ वोत्तुं जुत्तोऽवही दोण्हं ? ॥५७३॥
सो वि हु खओवसमओ किंतु स एव खओवसमलाभो। तम्मि सइ हो अवस्सं भण्णइ भवपच्चओ तो सो॥५७४॥

व्याख्यातार्थे एव। नवरम् 'दोण्हं ति' सुर-नारकाणां सोऽपि सुर-नारकाणामवधिः। 'खओवसमउ त्ति' क्षयोपशमादेव। स च तस्मिन् सुर-नारकभवे सत्यवश्यं भवति, अतोऽसौ सुर-नारकावधिर्भवप्रत्ययो भण्यते ॥५७३॥५७४॥

ननु कर्मणः क्षयोपशमादयः किं भवादिनिमित्ता भवन्ति ?, इत्याह—

[2]उदय-खय-खओवसमो-वसमा जं च कम्मुणो भणिया। दव्वं खित्तं कालं भवं च भावं च संपप्प॥५७५॥

यतः स्रक्-चन्दना-ऽहि-विषादिद्रव्यादीनि प्राप्य प्राणिनां सुख-दुःखोदयादयस्तीर्थंकर-गणधरैरागमे भणिताः, प्रत्यक्षतो दृश्यन्ते च। अतः सुर-नारकाणां तद्भवमपेक्ष्याऽवधिः क्षायोपशमिकोऽप्यवश्यं भवतीति ॥ ५७५ ॥

अथ द्वितीयनिर्युक्तिगाथाव्याख्यानभाष्यम्—

[3]इय सव्वपयडिमाणं कह कमवसवण्णवत्तिणी वाया। वोच्छि त्ति सव्वं सव्वाउणा वि संखिज्जकालेणं ?॥५७६॥

गतार्थैव ॥ इति गाथासप्तकार्थः ॥ ५७६ ॥

अथ यदुक्तम्– 'चतुर्दशविधनिक्षेपं वक्ष्यामि' इति। तदाह–

[4]ओही खेत्तपरिमाणे संठाणे आणुगामिए। अवट्ठिए चले तिव्व-मंदपडिवाउप्पयाई य ॥ ५७७ ॥
नाण-दंसणविब्भंगे देसे खित्ते गई इय। इड्ढीपत्ताणुओगे य एमेया पडिवत्तीओ ॥ ५७८ ॥

---

1 अवधिः क्षायोपशमिके भावे भणितो भवस्तथौदयिके। ततः कथं भवप्रत्ययितोः वक्तुं युक्तोऽवधिर्द्वयोः ?॥ ५७३ ॥
सोऽपि खलु क्षयोपशमतः किन्तु स एव क्षयोपशमलाभः। तस्मिन् सति भवत्यवश्यं भण्यते भवप्रत्ययस्ततः सः ॥ ५७४ ॥
2 उदय-क्षय-क्षयोपशमो-पशमा ये च कर्मणो भणिताः। द्रव्यं क्षेत्रं कालं भवं च भावं च सम्प्राप्य ॥ ५७५ ॥
3 इति सर्वप्रकृतिमानं कथं क्रमवशवर्णवर्तिनी वाचा। वक्ष्यतीति सर्वं सर्वायुषाऽपि सङ्ख्येयकालेन ? ॥ ५७६ ॥
4 अवधिः क्षेत्रपरिमाणं संस्थानमानुगामिकः। अवस्थितश्चलस्तीव्र-मन्द-प्रतिपातोत्पादादिश्च ॥ ५७७ ॥
ज्ञान दर्शन-विभङ्गा देशः क्षेत्रं गतिरिति। ऋद्धिप्राप्तानुयोगश्चैवमेताः प्रतिपत्तयः ॥ ५७८ ॥

निःशेषमपि वाङ्मयमवतरति । अतश्चतुर्दशपूर्वात्मकं द्वादशमेवाऽङ्गमस्तु, किं शेषाङ्गविरचनेन, अङ्गबाह्यश्रुतरचनेन वा ?, इत्याशङ्क्याह–

[1] जइवि य भूयावाए सव्वस्स वओमयस्स ओयारो । निज्जूहणा तहावि हु दुम्मेहे पप्प इत्थी य ॥ ५५१ ॥

अशेषविशेषान्वितस्य समग्रवस्तुस्तोमस्य भूतस्य सद्भूतस्य वादो भणनं यत्रासौ भूतवादः, अथवाऽनुगत-व्यावृत्तापरिशेषधर्मकलापान्वितानां सभेद-प्रभेदानां भूतानां प्राणिनां वादो यत्राऽसौ भूतवादो दृष्टिवादः, दीर्घत्वं च तकारस्याऽऽर्षत्वात्। तत्र यद्यपि दृष्टिवादे सर्वस्याऽपि वाङ्मयस्याऽवतारोऽस्ति, तथापि दुर्मेधसां तदवधारणाद्ययोग्यानां मन्दमतीनां, तथा श्रावकादीनां स्त्रीणां चानुग्रहार्थं निर्यूहणा विरचना शेषश्रुतस्येति ॥ ५५१ ॥

ननु स्त्रीणां दृष्टिवादः किमिति न दीयते ?, इत्याह–

[2] तुच्छा गारवबहुला चलिंदिया दुब्बला धिईए य । इय अइसेसज्झयणा भूयावाओ य नो त्थीणं ॥५५२॥

यदि हि दृष्टिवादः स्त्रियाः कथमपि [3] दीयेत तदा तुच्छादिस्वभावतया 'अहो ! अहं या दृष्टिवादमपि पठामि' इत्येवं गर्वाऽऽध्मातमानसाऽसौ पुरुषपरिभवादिष्वपि प्रवृत्तिं विधाय दुर्गतिमभिगच्छेत् । अतो निरवधिकृपानीरनीरधिभिः परानुग्रहप्रवृत्तैर्भगवद्भिस्तीर्थंकरैरुत्थान-समुत्थानश्रुतादीन्यतिशयवन्त्यध्ययनानि, दृष्टिवादश्च स्त्रीणां नानुज्ञातः । अनुग्रहार्थं पुनस्तासामपि किञ्चिच्छ्रुतं देयमित्येका[5]दशाङ्गादिविरचनं सफलम् ॥ इति गाथात्रयार्थः ॥ ५५२ ॥

॥ इत्यङ्गा-ऽनङ्गप्रविष्टं श्रुतद्वारम् ॥

तदेवं निरूपितं चतुर्दशविधमपि श्रुतमर्थतः । अथ कियांस्तद्विषयः ?, इति निरूपयितुमाह–

[4] उवउत्तो सुयनाणी सव्वं दव्वाइं जाणइ जहत्थं । पासइ य केइ सो पुण तमचक्खुदंसणेणं ति ॥ ५५३ ॥

उपयुक्तो दत्तोपयोगः श्रुतज्ञानी सर्वं द्रव्यादि यथार्थं यथावद् यथा सर्वज्ञेनोक्तं तथा जानाति– द्रव्यतः पञ्चास्तिकायद्रव्याणि, क्षेत्रं लोका-ऽलोकाकारं, कालमतीतादिरूपं, भावानौदयिकादीन् जानाति– स्पष्टावभासिना श्रुतज्ञानेनाऽवबुध्यते, न तु सामान्यग्राहिणा

१ यद्यपि च भूतवादे सर्वस्य वाङ्मयस्याऽवतार. । निर्यूहणा तथापि खलु दुर्मेधस' प्राप्य स्त्रियश्च ॥ ५५१ ॥
२ तुच्छा गर्वबहुला चलेन्द्रिया दुर्बला धिया च । इत्यतिशेषाध्ययना भूतवादश्च नो स्त्रीणाम् ॥ ५५२ ॥ ३ घ. छ 'दीयते त' ।
४ उपयुक्तः श्रुतज्ञानी सर्वं द्रव्यादि जानाति यथार्थम् । पश्यति च केचित् स पुनस्तदचक्षुर्दर्शनेनेति ॥ ५५३ ॥ ५ क. ख. घ. छ. 'काशं का' ।

प्रकृतीनामेव चतुर्दशविधो निक्षेप उक्तः। अविरुद्धं चैतदपि व्याख्यानम्। अत्र च पक्षेऽत्रावधिशब्दः सर्वत्र विशेषणतयैव योजनीयः— अवधेः क्षेत्रपरिमाणम्, अवधेः संस्थानमित्यादि ॥ इति गाथाद्वयार्थः ॥ ५७९ ॥ ५८० ॥

अथ प्रथमव्याख्याभिमताऽऽद्यद्वारव्याचिख्यासया प्राह—

नामं[2] ठवणा दविए खेत्ते काले भवे य भावे य। एसो खलु ओहिस्सा निक्खेवो होइ सत्तविहो ॥ ५८१ ॥

नाम-स्थापना-द्रव्य-क्षेत्र-काल-भव-भावभेदादेष खल्ववधिनिक्षेपः सप्तविधो भवति ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ ५८१ ॥

अथ विस्तरार्थं विभणिषुर्भाष्यकारः प्राह—

अवहि[3] त्ति जस्स नामं जह मज्जायाऽवहि त्ति लोयम्मि। ठवणावहिनिक्खेवो होइ जह क्खाइविन्नासो ॥५८२॥

यस्य जीवादिपदार्थस्याऽवधिरिति नाम क्रियते, असौ नाम्ना नाममात्रेणावधिर्नामावधिरुच्यते, यथा लोके मर्यादाऽवधिरभिधीयते। स्थापनया स्थापनमात्रेणावधिः स्थापनावधिर्भवति। कोऽयम्?, इत्याह— निक्षेपो विन्यासोऽवधेरेव 'वस्त्वन्तरे' इति गम्यते। क यथा?, इत्याह— यथाऽक्षादौ विन्यासो निक्षेपोऽवधिरक्षादिविन्यास इति ॥ ५८२ ॥

प्रकारान्तरेण नाम-स्थापनावधी प्राह—

अहवा[4] नामं तस्सेव जमभिहाणं सपज्जओ तस्स। ठवणागारविसेसो तद्दव्व-खेत्त-सामीणं ॥ ५८३ ॥

अथवा 'नामं ति' नामावधिरुच्यते। यत् किम्?, इत्याह— तस्यैव प्रकृतस्यावधिज्ञानस्य यत् 'अवधिः' इतिवर्णावलीमात्ररूपमभिधानं संज्ञेति, नामैवावधिर्नामावधिरिति कृत्वा। तच्चावधिरित्यभिधानं तस्याऽवधिज्ञानस्य वचनरूपः स्वपर्याय इति मन्तव्यम्। स्थापनावधिस्त्वाकारविशेषो भण्यते। केषाम्?, इत्याह— तस्यावधिज्ञानस्य यद् द्रव्यं विषयभूतं भू-भूधरादि, क्षेत्रं तु भरतादि, स्वामी त्वाधारभूतसाध्वादिः, एतेषामाकारविशेषः स्थापनाऽवधिः, विषय-विषयिभावादिसंबन्धित्वेनैतेषामाकारेऽवधिः स्थाप्यत इति भावः।

---

१ घ. छ. 'याह'। २ नाम स्थापना द्रव्य क्षेत्र कालो भवश्च भावश्च। एष खल्ववधेर्निक्षेपो भवति सप्तविध. ॥ ५८१ ॥

३ अवधिरिति यस्य नाम यथा मर्यादाऽवधिरिति लोके। स्थापनावधिनिक्षेपो भवति यथाऽक्षादिविन्यासः ॥ ५८२ ॥

४ अथवा नाम तस्यैव यदभिधानं स्वपर्ययस्तस्य। स्थापनाकारविशेषस्तद्द्रव्य-क्षेत्र-स्वामिनाम् ॥ ५८३ ॥

मतेर्भेदो मतिभेदो मतिज्ञान-मत्यज्ञानलक्षणस्तं, तथाऽचक्षुर्दर्शनं च वर्जयित्वा[1] येन कारणेन प्रज्ञापनायां त्रिंशत्तमपदे पश्यत्ता स्फुटा व्यक्ता भणिता, तेन श्रुते श्रुतज्ञानेऽपि पश्यत्ता युक्ता "जाणइ पासइ" इति पाठो युक्त इत्यर्थः। तथाच प्रज्ञापनात्रिंशत्तमपद-सूत्रम्- "कइविहा णं भंते! पासणया पण्णत्ता?। गोयमा! दुविहा, तं जहा- सागारपासणया[3] य, अणागारपासणया य। सागार-पासणया णं भन्ते! कइविहा पण्णत्ता?।गोयमा! छव्विहा पण्णत्ता, तं जहा- सुयनाणसागारपासणया, ओहि-मणपज्जव-केवलनाण-सागारपासणया, सुयअन्नाण-विभंगनाणसागारपासणया य। अणागारपासणया णं भंते! कइविहा पण्णत्ता?। गोयमा! तिविहा पण्णत्ता, तं जहा- चक्खुदंसण-ओहिदंसण-केवलदंसणअणागारपासणया" इति।

अथ 'पासणया' इति कः शब्दार्थः?। उच्यते- पश्यतो भावः पश्यत्तोपयोग इत्यर्थः, यथोपयोगशब्देन साकारानाकारभेदभिन्न उपयोगोऽभिधीयते तथा पश्यत्ताशब्देनापीत्यर्थः। आह- यद्येवम्, पर्यायशब्दावेतौ, तत् किमित्युपयोगात् पश्यत्ता पृथगधीता?। सत्यम्, किन्तु साकारोपयोगोऽष्टधा प्रोक्तः, साकारपश्यत्ता तु षोढा, मतिज्ञान-मत्यज्ञानयोस्तदभणनात्; अनाकारोपयोगोऽपि चतुर्धा प्रोक्तः, अनाकारपश्यत्ता पुनस्त्रिधा, अचक्षुर्दर्शनस्य तदनभिधानात्; पश्यत्ताशब्दो हि 'दृशिर् प्रेक्षणे' अस्य धातोर्निष्पद्यते, प्रकृष्टं चेक्षणं त्रिकाल-विषये शीघ्रमेवाऽर्थपरिच्छेदनपटिष्ठेऽवबोधे भवति। मतिज्ञान-मत्यज्ञाने च प्रायः सांप्रतकालविषये एव, इति न तयोः पश्यत्ता। शीघ्रं चाऽर्थप-रिच्छेदो यथा चक्षुषः, न तथा शेषाणां श्रोत्र-घ्राणादीन्द्रियाणां, चक्षुरुपयोगापेक्षया तदुपयोगस्येन्द्रियपदे दीर्घ-दीर्घतरत्वेनाऽभिधानात्। मनसस्तु शीघ्रार्थपरिच्छेदेऽप्यनाकारपश्यत्ता न विवक्षिता, उपयोगमात्रस्यैव तत्र विवक्षणात्। अतोऽचक्षुर्दर्शनेऽपि न पश्यत्ता। तदेवं श्रुता-ऽवधि-मनःपर्याय-केवलज्ञान-श्रुताज्ञान-विभङ्गज्ञानभेदात् षोढा साकारपश्यत्ता, अष्टधा तु साकारोपयोगः; चक्षु-रवधि-केवलदर्शनभेदात् तु त्रिधाऽनाकारपश्यत्ता, चतुर्धा त्वनाकारोपयोगः; इत्युपयोग-पश्यत्तयोर्भेदः। तदेवं मतिभेदौ, अचक्षुर्दर्शनं च वर्जयित्वा श्रुतज्ञानादिषु प्रज्ञापनायां पश्यत्ता प्रोक्ता, तामाश्रित्य श्रुते युक्ता पश्यत्तेति स्थितम्।

केषुचित्तु पुस्तकेषु 'तेण सुए पासणाऽजुत्ता' इत्येवमकारप्रश्लेषो दृश्यते, तत्राऽयमर्थः- पूर्वगाथायां '[4]पासइ य केइ सो पुण

---

१ क ग 'त्वा यथा ये' ख. 'त्वा तथा ये'।

२ कतिविधा भगवन्! पश्यत्ता प्रज्ञप्ता?। गौतम! द्विविधा, तद्यथा- साकारपश्यत्ता च, अनाकारपश्यत्ता च। साकारपश्यत्ता भगवन्! कतिविधा प्रज्ञप्ता?। गौतम! षड्विधा प्रज्ञप्ता, तद्यथा- श्रुतज्ञानसाकारपश्यत्ता, अवधि-मनःपर्यव-केवलज्ञानसाकारपश्यत्ता, श्रुताज्ञान-विभङ्गज्ञानसाकारपश्यत्ता च। अनाकारपश्यत्ता भगवन्! कतिविधा प्रज्ञप्ता?। गौतम! त्रिविधा प्रज्ञप्ता, तद्यथा- चक्षुर्दर्शना-ऽवधिदर्शन-केवलदर्शनाऽनाकारपश्यत्ता। ३ घ. छ. 'या अ'। ४ गाथा ५५३।

कालावस्थितानि द्रव्याणि पश्यत्यसौ, इत्युच्यते ?, किं क्षेत्र-कालावेव साक्षादेव न पश्यति, इत्याशङ्क्याह– न तु पश्यति क्षेत्र-कालावसौ, तयोरमूर्तत्वात्। अवधेश्च मूर्तविषयत्वात्। वर्तनारूपं तु कालं पश्येत्, द्रव्यपर्यायत्वात् तस्येति ॥ ५८५ ॥

अथ भव-भावावधी निरूपयितुमाह–

[1]जम्मि भवे उप्पज्जइ वट्टइ पेच्छइ व जं भवोही सो। एमेव य भावोही वट्टइ य तओ खओवसमे ॥५८६॥

यस्मिन् नारकादिभवेऽवधिरवश्यमुत्पद्यते, यत्र वा भव उत्पन्नोऽसाववधिर्वर्तते नारकादिभव एव, यं वा स्वकीयं परकीयं वाऽतीतमनागतं वा, एकादिकमसंख्याततमान्तं भवं पश्यति स भवावधिः, भवे आधारभूते विषयभूते वाऽवधिर्भवावधिरिति कृत्वा। एवमेव भावावधिरपि वक्तव्यः– यस्मिन् क्षायोपशमिके भावेऽवधिरुत्पद्यते, यत्र वा क्षायोपशमिक एव भावे उत्पन्नोऽसौ वर्तते, यं वौदयिकादिभावपञ्चकान्यतरभावं, सर्वान् वा तान् पश्यति स भावावधिरित्यर्थः, भावेऽवधिर्भावावधिरिति कृत्वा। स त्ववधिः क भावे वर्तते ? इति कथ्यताम्, इत्याह– वर्तते च तकोऽसौ अवधिः क्षायोपशमिके भाव इति। तदेवं प्रथमव्याख्याने द्वारतया समायातस्यावधेर्नामादिनिक्षेपोऽयमुक्तः, द्वितीयव्याख्याने तु विशेषणतया समायातस्याऽस्यैषोऽभिहित इति ॥ ५८६ ॥

अथाऽवधेः क्षेत्रपरिमाणमभिधित्सुर्भाष्यकार एव प्रस्तावनामाह–

[4]ओहिस्स खेत्तमाणं जहण्णमुक्कोस्स-मज्झिमं तत्थ। पाएण तदाईए जं तेण जहन्नयं वोच्छं ॥५८७॥

अवधेरिद्द विषयभूतं क्षेत्रं तस्य मानं प्रमाणं जघन्यम्, उत्कृष्टं मध्यमं च भवति। तत्र प्रायो यद् यस्मादादौ प्रथमतस्तज्जघन्यं क्षेत्रं भवति, जघन्यक्षेत्रविषयोऽवधिः प्रायेणाऽऽदौ समुत्पद्यते, तेन कारणेन जघन्यमेव क्षेत्रप्रमाणमादौ वक्ष्ये ॥ इति गाथापद्कार्थः ॥ ५८७ ॥

यथाप्रतिज्ञातमेवाह–

[5]जावइया तिसमयाहारगस्स सुहुमस्स पणगजीवस्स। ओगाहणा जहण्णा ओहीखेत्तं जहण्णं तु ॥५८८॥

---

१ यस्मिन् भव उत्पद्यते वर्तते प्रेक्षते वा यद् भवावधिः स.। एवमेव च भावावधिर्वर्तते च सकः क्षयोपशमे ॥ ५८६ ॥ २ घ. छ. 'नन्वव'। ३ क. ग 'वधिक्षेत्रप्रमा'। ४ अवधे. क्षेत्रमान जघन्यमुत्कृष्टं मध्यमं तत्र। प्रायेण तदादौ यत् तेन जघन्यकं वक्ष्ये ॥ ५८७ ॥ ५ यावती त्रिसमयाहारकस्य सूक्ष्मस्य पनकजीवस्य। अवगाहना जघन्या अवधिक्षेत्रं जघन्य तु ॥ ५८८ ॥

तुमाह— आगमरूपं शास्त्रमागमशास्त्रं श्रुतज्ञानमित्यर्थः, तस्य ग्रहणं गुरुसकाशादादानं तदेव श्रुतलाभं ब्रुवते, यद् बुद्धिगुणैरष्टभिः शास्त्रे दिष्टं, नान्यदिति— वक्ष्यमाणशुश्रूषादिगुणाष्टकक्रमेणैव श्रुतज्ञानं ग्राह्यं, नान्यथेति तात्पर्यम् ॥ इति निर्युक्तिगाथार्थः ॥ ५५८ ॥

अत्र भाष्यम्—

[1]सासिज्जइ जेण तयं सत्थं तं चाऽविसेसियं नाणं । आगम एव य सत्थं आगमसत्थं तु सुयनाणं ॥५५९॥

तस्सायाणं गहणं दिट्ठं जं मइगुणेहिं सत्थम्मि । बेंति तयं सुयलाभं गुणा य सुस्सूसणाईया ॥ ५६० ॥

गतार्थे एव ॥ ५५९ ॥ ५६० ॥

ते चाऽमी अष्टौ बुद्धिगुणाः—

[2]सुस्सूसइ पडिपुच्छइ सुणेइ गिण्हइ य ईहए चावि । ततो अपोहए वा धारेइ करेइ वा सम्मं ॥ ५६१ ॥

विनययुक्तो गुरुमुखात् श्रोतुमिच्छति शुश्रूषते, पुनः पृच्छति प्रतिपृच्छति— तदधीतं श्रुतं निःशङ्कितं करोतीत्यर्थः । तच्चाधीतं श्रुतमर्थतः शृणोति, श्रुत्वाऽवग्रहेण गृह्णाति, गृहीत्वा चेहयेहते पर्यालोचयति— किमिदमित्थं, उतान्यथा ? इति । चशब्दः समुच्चयार्थः । अपिशब्दात् पर्यालोचयन् किञ्चित् स्वबुद्ध्याऽप्युत्प्रेक्षते । ततस्तदनन्तरमपोहते च— एवमेतद् यदादिष्टं गुरुभिरेवं निश्चिनोति । निश्चिते चार्थे सदैव चेतसि धारयति, करोति च सम्यक् तदुक्तानुष्ठानम्, श्रुताज्ञानुष्ठानस्यापि तदावरणक्षयोपशम-गुरुचित्ताऽऽवर्जनादिहेतुत्वेन श्रुतप्राप्त्युपायत्वादिति ।

अथवा, यद् यदाज्ञापयति कार्यजातं गुरुः, तत्तत् सम्यगनुग्रहं मन्यमानः श्रोतुमिच्छति शुश्रूषते । पूर्वनिरूपितश्च कार्यकरणकाले पुनः पृच्छति प्रतिपृच्छति । इत्थं चाराधितस्य गुरोरन्तिके सूत्रं, तदर्थं वा सम्यक् शृणोति । श्रुतं चावग्रहेण गृह्णाति, इत्यादि पूर्ववत् । अन्ये तु व्याचक्षते— प्रतिपृष्टेन गुरुणा पुनरादिष्टश्च संस्तद्वचः सम्यक् शृणोति, श्रुतं चावग्रहेण सम्यग् गृह्णातीत्यादि तथैव, यावत् करोति च गुरुभणितं सम्यगिति । एवं गुर्वाराधनविषयत्वेनाऽष्टावपि गुणा व्याख्यायन्ते, श्रुतावाप्तौ मूलोपायत्वाद् गुर्वाराधनायाः ॥ इति निर्युक्तिगाथार्थः ॥ ५६१ ॥

१ शिष्यते येन तत् शास्त्र तच्चाऽविशेषितं ज्ञानम् । आगम एव च शास्त्रमागमशास्त्रं तु श्रुतज्ञानम् ॥ ५५९ ॥
तस्याऽऽदानं ग्रहणं दिष्टं यद् मतिगुणैः शास्त्रे । ब्रुवते तत् श्रुतलाभं गुणाश्च शुश्रूषादिकाः ॥ ५६० ॥
२ शुश्रूषते प्रतिपृच्छति शृणोति गृह्णाति चेहते चापि । ततोऽपोहते वा धारयति करोति वा सम्यक् ॥ ५६१ ॥

भवति। अस्मादुत्पादसमयात् तृतीयसमये यद् देहमानमेतस्य पनकस्य। तत् किम् ?, इत्याह– 'ओहिक्खित्तं जहन्नं तं ति' तज्जघन्यमवधेर्विषयभूतं क्षेत्रम्। किंस्वरूपम् ?, तज्ज्ञेयद्रव्यभाजनं तस्यावधेर्ज्ञेयानि ग्राह्याणि यानि द्रव्याणि तेषां भाजनमाधारभूतम्। एतेन तज्ज्ञेयद्रव्याधारत्वेनैव क्षेत्रमवधेर्विषय उच्यते, न तु साक्षात्, तस्याऽमूर्तत्वात्, अवधेस्तु मूर्तविषयत्वादिति। एतद्गाथात्रयव्याख्यातार्थसंवादि चोक्तं वृद्धैः—

"योजनसहस्रमानो मत्स्यो मृत्वा स्वकायदेशे यः। उत्पद्यते हि सूक्ष्मः पनकत्वेनेह स ग्राह्यः ॥ १ ॥
संहृत्य चाद्यसमये स ह्यायाम करोति च प्रतरम्। संख्यातीताख्याङ्गुलविभागबाहल्यमान तु ॥ २ ॥
स्वकतनुपृथक्त्वमात्रं दीर्घत्वेनापि जीवसामर्थ्यात्। तमपि द्वितीयसमये संहृत्य करोत्यसौ सूचिम् ॥ ३ ॥
संख्यातीताख्याङ्गुलविभागविष्कम्भमाननिर्दिष्टाम्। निजतनुपृथक्त्वदैर्घ्यां तृतीयसमये तु संहृत्य ॥ ४ ॥
उत्पद्यते च पनकः स्वदेहदेशे स सूक्ष्मपरिणामः। समयत्रयेण तस्यावगाहना यावती भवति ॥ ५ ॥
तावज्जघन्यमवधेरालम्बनवस्तुभाजन क्षेत्रम्। इदमित्थमेव मुनिगणसुसंप्रदायात् समवसेयम् ॥ ६ ॥"

अत्र परः पृच्छति—

[1]किं मच्छो अतिमहल्लो किं तिसमयओ व कीस वा सुहुमो। गहिओ कीस व पणओ किंव जहण्णावगाहणओ ?॥५९२॥

किमिति मत्स्योऽतिमहान् गृह्यते ?, किंवा त्रिसमयाहारकः– तृतीये समये निजशरीरदेशोत्पत्तिमान् वा गृह्यते ?, किंवा सूक्ष्मः ?, किमिति वा पनको, जघन्यावगाहनको वा गृहीतः ? इति ॥ ५९२ ॥

अत्रोत्तरमाह—

[2]मच्छो महल्लकाओ संखित्तो जो य तीहिं समयेहिं। सो किर पयत्तविसेसेण सण्हमोगाहणं कुणइ ॥५९३॥
सण्हयरा सण्हयरो सुहुमो पणओ जहण्णदेहो य। सुबहुविसेसविसिट्ठो सण्हयरो सव्वदेहेसु ॥ ५९४ ॥

---

१ किं मत्स्योऽतिमहान् किं त्रिसमयको वा कस्माद् वा सूक्ष्म। गृहीत कस्माद् वा पनक किंवा जघन्यावगाहनक ? ॥ ५९२ ॥
२ मत्स्यो महाकाय संक्षिप्तो यश्च त्रिभिः समयै। स किल प्रयत्नविशेषेण सूक्ष्मामवगाहनां कुरुते ॥ ५९३ ॥
श्लक्ष्णतरात् श्लक्ष्णतर सूक्ष्मः पनको जघन्यदेहश्च। सुबहुविशेषविशिष्ट सूक्ष्मतरः सर्वदेहेषु ॥ ५९४ ॥

अथ गुरुगतं व्याख्यानविधिमाह–

[1]सुत्तत्थो खलु पढमो बीओ निज्जुत्तिमी[2]सिओ भणिओ । तईओ य निरवसेसो एस विही होइ अणुओगे॥५६६॥

सूत्रस्याऽर्थो यत्रासौ सूत्रार्थः । खलुरवधारणे। ततश्च सूत्रार्थ एव सूत्रार्थमात्रप्रतिपादनपर एव प्रथमः प्रथमवारायामनुयोगो गुरुणा कर्तव्यः । द्वितीयस्तु द्वितीयवारायां सूत्रस्पर्शकनिर्युक्तिमिश्रकः कर्तव्यतया भणितस्तीर्थकर-गणधरैः । तृतीयस्तु तृतीयवारायां प्रसक्तानुप्रसक्तमप्युच्यते यस्मिन्, स एवंलक्षणो निरवशेषो भणितः । एष उक्तलक्षणो विधानं विधिर्भवति । क ?, इत्याह– सूत्रस्य निजेनाभिधेयेन सार्धमनुकूलो योगोऽनुयोगः सूत्रस्यार्थान्वाख्यानमित्यर्थः, तस्मिन्ननुयोगेऽनुयोगविषये ॥ इति निर्युक्तिगाथाद्वयार्थः ॥५६६॥

॥ तदेवं श्रुतज्ञानस्य ग्रहण-श्रवणव्याख्यानविधिः प्रतिपादितः । तत्प्रतिपादिते च श्रुतज्ञानं समाप्तमिति ॥

अथ पूर्वोदितसंबन्धायातमवधिज्ञानमभिधित्सुः प्रस्तावनामाह–

[3]भणियं परोक्खमहुणा पच्चक्खं तं च तिविहमोहाइं । पुव्वोइयसंबंधं तत्थावहिमाइओ वोच्छं ॥ ५६७ ॥

मति-श्रुतलक्षणं परोक्षज्ञानं तावद् भणितं प्रतिपादितम् । इदानीं प्रत्यक्षमभिधानीयम्, तच्चाऽवधि-मनःपर्याय-केवलभेदात् त्रिविधम् । तत्रादितः प्रथमं पूर्वोदितसंबन्धमवधिज्ञानं वक्ष्येऽभिधास्य इति ॥ ५६७ ॥

तत्रावधिभेदास्तावत् संख्यातीता भवन्तीति दर्शयति–

[4]संखाईयाओ खलु ओहीनाणस्स सव्वपयडीओ । काई भवपच्चइया खओवसमियाओ काओ वि ॥५६८॥

संख्यानं संख्या तामतीता अतिक्रान्ताः संख्यातीता असंख्येया इत्यर्थः, प्रकृतयो भेदा अंशाः, सर्वाश्च ताः प्रकृतयश्च सर्वप्रकृतयः । ततश्च पूर्वोक्तशब्दार्थस्याऽवधिज्ञानस्य क्षेत्रकालौ विषयभूतावाश्रित्य सर्वा अप्यसंख्येयाः प्रकृतयो भेदा भवन्ति, तथाहि– अवधेर्जघन्यतोऽङ्गुलासंख्येयभागादारभ्य प्रदेशोत्तरया वृद्ध्योत्कृष्टतोऽलोकेऽपि लोकप्रमाणान्यसंख्येयखण्डानि क्षेत्रविषय इति वक्ष्यते । कालोऽपि जघ-

---

१ सूत्रार्थः खलु प्रथमो द्वितीयो निर्युक्तिमिश्रको भणितः । तृतीयश्च निरवशेष एष विधिर्भवत्यनुयोगे ॥ ५६६ ॥ २ क.ख.ग. 'मीसिओ' ।
३ भणितं परोक्षमधुना प्रत्यक्षं तच्च त्रिविधमवध्यादि । पूर्वोदितसंबन्धं तत्रावधिमादितो वक्ष्ये ॥ ५६७ ॥
४ संख्यातीताः खल्ववधिज्ञानस्य सर्वप्रकृतयः । काश्चिद् भवप्रत्ययिताः क्षायोपशमिक्यः का अपि ॥ ५६८ ॥ ५ क.ग.'तयोंशा भेदाः स ' ।

समयाहारगस्स सुहुमस्स पणगजीवस्स' इति निर्युक्तिकारवचनमाराधितं भवति। किञ्च, इह यथा सूक्ष्मः सूक्ष्मतरोऽसौ भवति तथा कर्तव्यम्, एतच्चास्मिन् व्याख्यानेऽतिसविशेषं सिध्यतीति दर्शयति– 'उववाए चेवेत्यादि' उत्पादसमय एव यतो यस्मात् तकोऽसौ पनकजीवो 'जघन्यः' इति जघन्यावगाहनो भवति, न शेषेषु समयेषु, द्वितीयादिष्वीषन्महत्त्वात्, जघन्यावगाहनश्च निर्युक्तौ प्रोक्तः। ततोऽतिसूक्ष्मत्वसिद्धेस्तस्यानन्तरोक्तस्वरूपस्य पनकस्य देहस्तद्देहस्तत्समानमेव किलावधिविषयभूतं जघन्यं क्षेत्रं भवतीति।

अत्र भाष्यगाथामन्तरेणापि पूर्वटीकाकारलिखितं प्रतिविधानमुच्यते, तच्चैवम्– न युक्तमिदं केषांचिद् व्याख्यानम्, त्रिसमयाहारकत्वस्य पनकविशेषणत्वेनोक्तत्वात्, मत्स्यसमयद्वयस्य च पनकसमयत्वायोगात्। योऽपीत्थमतिजघन्यावगाहनालाभलक्षणो गुण उद्भाव्यते, सोऽपि न युक्तः, यस्माद् नेहाऽतिसूक्ष्मेणाऽतिमहता वा किञ्चित् प्रयोजनम्। किं तर्हि?, योग्येन, योग्यश्च स एव तद्वृत्तृभिर्दृष्टः, यः प्रथमं जघन्यावगाहनः संस्तस्मिन्नेव भवे समयत्रयमाहारं गृह्णाति, इत्यलमतिविस्तरेण। इति गाथानवकार्थः। तदेवमवधिविषयभूतस्य जघन्यक्षेत्रस्य परिमाणमुक्तम् ॥ ५९६ ॥ ५९७ ॥

अथोत्कृष्टस्य तस्य तदाह–

सव्वबहुअगणिजीवा[3] निरंतरं जत्तियं भरिज्जंसु। खेत्तं सव्वदिसागं परमोही खेत्तनिद्दिट्ठो ॥ ५९८ ॥

सर्वेभ्यो विवक्षितकालावस्थायिभ्योऽनलजीवेभ्य एव बहवः सर्वबहवः, न तु भूत-भाविभ्यः, नापि च शेषजीवेभ्यः; कुतः?, असंभवादेवेति; अग्नयश्च ते जीवाश्चाग्निजीवाः, सर्वबहवश्च तेऽग्निजीवाश्च सर्वबह्वग्निजीवाः, निरन्तरं संततं नैरन्तर्येणेत्यर्थः, यावदिति यत्प्रमाणं क्षेत्रमाकाशं वक्ष्यमाणविशिष्टसूचीरचनया रचिताः सन्तो भृतवन्तो व्याप्तवन्तः भूतकालनिर्देशश्च 'अजितस्वामिकाल एव वक्ष्यमाणयुक्त्या प्रायः सर्वबहवोऽनलजीवा भवन्त्यस्यामवसर्पिण्याम्' इत्यस्याऽर्थस्य ख्यापनार्थः। इदं चानन्तरोक्तविशेषणं क्षेत्रमेकादिक्कमपि भवति, अत आह– 'सव्वदिसागं ति' सर्वा दिशो यत्र तत् सर्वदिक्कम्। अनेन वक्ष्यमाणन्यायेन सर्वतः सूचीभ्रमणप्रमितं तदाह। परमश्चासाववधिश्च परमावधिः; क्षेत्रमनन्तरव्यावर्णितं प्रभूतानलजीवप्रमितमङ्गीकृत्य निर्दिष्टः प्रतिपादितो महामुनिभिः। ततश्चावधेः पर्यायेणैतावत् क्षेत्रमुत्कृष्टतो विषय इत्युक्तं भवति ॥ इति निर्युक्तिगाथाक्षरार्थः ॥ ५९८ ॥

भावार्थं तु सांप्रदायिकार्थप्रतिपादकभाष्यमुखेन भाष्यकार एवाह–

---

१ क. ख ग. 'स दे'। २ क. ग. 'तद्वेतुभि'। ३ सर्वबह्वग्निजीवा निरन्तरं यावदभार्षुः। क्षेत्र सर्वदिक्क परमावधि. क्षेत्रनिर्दिष्ट. ॥ ५९८ ॥

अथ प्रथमगाथापूर्वार्धव्याख्यानार्थं भाष्यम्—

[1]तस्स जमुक्कोसयखेत्त-कालसमयप्पएसपरिमाणं । तण्णेय परिच्छिन्नं तं चिय से पयडिपरिमाणं ॥ ५७०॥

संखाईयमणंतं च तेणमणंतपयडिपरिमाणं । पेच्छइ पोग्गलकायं जमणंतपएस-पज्जायं ॥ ५७१ ॥

तस्याऽवधेरसंख्येयाः प्रकृतयः । कुतः ?, इत्याह— यतः 'तं चिय से पयडिपरिमाणं ति' 'से' तस्याऽवधेस्तदेव प्रकृतीनां भेदानां परिमाणम् । यत् किम् ?, इत्याह— यदुत्कृष्टं क्षेत्रप्रदेशपरिमाणं, यच्चोत्कृष्टं कालसमयपरिमाणं, इत्येवं यथासंभवं संबन्धः, क्षेत्रस्यैव प्रदेशानां युज्यमानत्वात् । गाथाभङ्गभयाच्च समयनिर्देशादनन्तरं प्रदेशनिर्देशः । आह— ननूत्कृष्टं क्षेत्रप्रदेश-कालसमयपरिमाणमनन्तमपि भवति । न, इत्याह— 'तण्णेयपरिच्छिन्नं' भावप्रधानोऽयं निर्देशः, ततश्च तस्यावधेर्ज्ञेयं तद्भावस्तज्ज्ञेयत्वं तेन परिच्छिन्नं नैयत्ये व्यवस्थापितम्, तच्च वक्ष्यमाणप्रकारेणाऽङ्गुलासंख्येयभागादारभ्य यावदसंख्येयलोकाकाशप्रदेशान्, तथाऽऽवलिकाऽसंख्येयभागादारभ्य यावदसंख्येयोत्सर्पिण्यवसर्पिणीसमयानिति । एतच्च क्षेत्रप्रदेश-कालसमयानामसंख्येयपरिमाणम्, अतः क्षेत्र-काललक्षणज्ञेयापेक्षयाऽवधेरसंख्येयाः प्रकृतय इति । अथ खलुशब्देन विशेषणार्थेन सूचितास्तस्याऽनन्ताः प्रकृतीर्दर्शयति— 'संखाईत्यादि' संख्यातीतं न केवलमसंख्येयमुच्यते, किं तर्हि ?, अनन्तं च, तस्याऽपि संख्यातीतत्वाऽव्यभिचारात् । तेन तदवधिज्ञानमनन्तप्रकृतिपरिमाणमपि भवति, यद् यस्मात् तत् प्रेक्षते पश्यति समस्तमपि पुद्गलास्तिकायम् । कथंभूतम् ?, इत्याह— अनन्तप्रदेशम्, अनन्तपर्यायं च । एवं च सत्यनन्तद्रव्य-पर्यायलक्षणज्ञेयापेक्षयाऽवधेरनन्ताः प्रकृतय इति ॥ ५७० ॥ ५७१ ॥

अथ प्रथमनिर्युक्तिगाथाया उत्तरार्धं व्याचिख्यासुराह—

[2]भवपच्चइया नारय-सुराण पक्खीण वा नभोगमणं । गुणपरिणामनिमित्ता सेसाण खओवसमियाओ॥५७२॥

गतार्थैव, नवरं 'पक्खीण वा' इति वाशब्द इवार्थे, नभोगमनमिव, इत्यत्र संबध्यते ॥ ५७२ ॥

१ तस्य यदुत्कृष्टक्षेत्र-कालसमय-प्रदेशपरिमाणम् । तज्ज्ञेय(त्व)परिच्छिन्नं तदेव तस्य प्रकृतिपरिमाणम् ॥ ५७० ॥
संख्यातीतमनन्तं च तेनाऽनन्तप्रकृतिपरिमाणम् । प्रेक्षते पुद्गलकाय यदनन्तप्रदेश-पर्यायम् ॥ ५७१ ॥

२ भवप्रत्ययिता नारक-सुराणां पक्षिणां वा नभोगमनम् । गुणपरिणामनिमित्ताः शेषाणां क्षायोपशमिक्यः ॥ ५७२ ॥

तैः सर्वैरप्यग्निजीवैः समचतुरस्रो घनो यतो द्विभेदः स्थाप्यते। कथम् ?, इत्याह– एकैकाकाशप्रदेश एकैकाग्निजीवरचनया स्वावगाहे चं देहासंख्येयाकाशप्रदेशलक्षण एकैकाग्निजीवरचनयेति। अत्र स्थापना–

| | | |
|---|---|---|
| ० | ० | ० |
| ० | ० | ० |
| ० | ० | ० |

एतेषां नवानामग्निजीवानां प्रत्येकमेकैकाकाशप्रदेशैर्व्यवस्थापितानामधस्तादुपरिष्टाच्चाऽन्येऽपि नव नव जीवा इत्थमेव स्थाप्यन्ते। एष कल्पनया सप्तविंशत्या, सद्भावतस्त्वसंख्येयैरग्निजीवैरेकैकाकाशप्रदेशव्यवस्थापितैर्घनो मन्तव्यः। द्वितीयोऽपि घन इत्थमेव द्रष्टव्यः, केवलमिहासंख्येयाकाशप्रदेशेष्वेकैकजीवो व्यवस्थाप्यते। एवमेकैकाकाशप्रदेशे एकैकजीवस्थापनयाऽसंख्येयप्रदेशात्मकस्वावगाहस्थापनया च प्रतरोऽपि द्विभेदः। सूचिरपि द्विभेदा। तत्र घन-प्रतरपक्षश्चतुर्भेदः; पञ्चमश्चैकैकाकाशप्रदेशस्थापितैकैकजीवलक्षणसूचिपक्षोऽपि न ग्राह्यः, दोषद्वयानुषङ्गात्, तथाहि– पञ्चविधयाऽप्यनया स्थापनया स्थापिता अग्निजीवाः षट्स्वपि दिक्ष्ववधिज्ञानिनोऽसत्कल्पनया भ्रम्यमाणाः स्तोकमेव क्षेत्रं स्पृशन्तीत्येको दोषः, एकैकाकाशप्रदेशे एकैकजीवस्थापनायामागमविरोधश्च द्वितीयदोषः, असंख्येयाकाशप्रदेशानन्तरेणाऽऽगमे जीवावगाहनिषेधात्। असत्कल्पनया प्रदेशावगाहोऽप्यस्त्विति चेत्। नैवम्, कल्पनाऽपि सति संभवेऽविरोधिन्येव कर्तव्या, किं विरोधेन ?, इत्यालोच्याह– 'छट्ठो सुयाएसो त्ति' असंख्येयाकाशप्रदेशलक्षणे स्वावगाहे पङ्क्त्या एकैकजीवस्थापनेन यः सूचिलक्षणः षष्ठपक्षः, अयं श्रुते आदिष्टत्वाद् ग्राह्यः; शेषास्तु पञ्चाऽनादेशाः संभवोपदर्शनमात्रेणोक्तत्वात् परिहार्याः। इयं हि यथोक्ता सूचिरेकैकजीवस्यासंख्येयाकाशप्रदेशावगाहे व्यवस्थापितत्वाद् बहुतरं क्षेत्रं स्पृशति, इत्येको गुणः; अवगाहविरोधाभावस्तु द्वितीयः। ततश्चैषाग्निजीवसूचिरवधिज्ञानिनः षट्स्वपि दिक्ष्वसत्कल्पनया भ्रामिता सती अलोके लोकप्रमाणान्यसंख्येयखण्डानि स्पृशति। अत एतावदुत्कृष्टक्षेत्रमवधेर्विषय इत्युक्तं भवति; इत्यादि स्वयमेव वक्ष्यतीति ॥ ६०१ ॥

अत्र कश्चिदाह–

घण-पयरसेढिगणियं नणु तुल्लं चिय, विगप्पणा कीस। छद्धा कीरइ, भणणइ पुरिसपरिक्खेवओ भेओ ॥६०२॥

१ घ छ. 'चास'। २ घन-प्रतरश्रेणिगणितं ननु तुल्यमेव, विकल्पना कस्मात्। षोढा क्रियते, भण्यते पुरुषपरिक्षेपतो भेदः ॥ ६०२ ॥

इहावध्यादीनि गतिपर्यन्तानि चतुर्दश द्वाराणि, ऋद्धिस्तु चशब्दसमुच्चितत्वात् पञ्चदशी चतुर्दशविधनिक्षेपस्योपरिष्टात् पश्चाद् वक्ष्यते। तत्रावधिर्नाम-स्थापनाभेदाभिन्नो वक्तव्यः। तथा 'अर्थवशाद् विभक्तिपरिणामः' इत्यवधेर्जघन्य-मध्यमो-त्कृष्टभेदाभिन्नं क्षेत्रपरिमाणं वक्तव्यम्। तथा, अवधेः संस्थानं वाच्यम्। तथा, अनुगमनशील आनुगामिकोऽवधिः सप्रतिपक्षो वाच्यः। तथा, द्रव्यादिषु कियन्तं कालमप्रतिपतितः सन्नुपयोगतो लब्धितश्चाऽऽस्ते ?, इत्येवमवस्थितोऽवधिर्वक्तव्यः। तथा, वर्धमानतया हीयमानतया च चलोऽनवस्थितोऽवधिर्वक्तव्यः। तथा, तीव्रो मन्दो मध्यमश्चावधिर्वक्तव्यः। तत्र तीव्रो विशुद्धो, मन्दोऽविशुद्धः, इतरस्तूभयप्रकृतिः। तथा, द्रव्याद्यपेक्षयैककाले प्रतिपातो-त्पादाववधेर्वक्तव्यौ। तथा, ज्ञान-दर्शन-विभङ्गा वाच्याः– किमत्र ज्ञानं, किं वा दर्शनं ?, को वा विभङ्गः; परस्परतश्चामीषामल्प-बहुत्वं चिन्तनीयम्, ततश्च ज्ञान-दर्शन-विभङ्गैर्द्वारत्रयम्। तथा 'देसे त्ति' कस्य देशविषयः सर्वत्रिषयो वाऽवधिर्भवतीति निरूपणीयम्। तथा, संबद्धा-ऽसंबद्ध-संख्येया-ऽसंख्येया-ऽपान्तरालक्षेत्रद्वारेण क्षेत्रविषयोऽवधिर्वक्तव्यः। गतिरिति च। तत्र इतिशब्द आद्यर्थः। ततश्च 'गइ-इंदिए काये' इत्यादिद्वारकलापोऽवधिर्वक्तव्यः। तथा, प्राक्तर्द्ध्यनुयोगश्च व्याख्यानरूपः कार्यः। एवमनेन प्रकारेणैता अनन्तरोक्ताः प्रतिपत्तयः प्रतिपादनानि परिच्छित्तय इत्यर्थः। ततश्चावधिप्रकृतय एव प्रतिपत्तिहेतुत्वात् प्रतिपत्तय उच्यन्ते॥ इति निर्युक्तिरूपकद्वयपिण्डार्थः॥ ५७७॥ ५७८॥

कथं पुनरस्यायं निक्षेपश्चतुर्दशविधः ?, इत्याह भाष्यकारः–

गइपज्जंता[3] चोद्दस रिद्धी चसमुच्चिय त्ति पंचदसी। ओहिपयं पि व मोत्तुं सेयरमणुगामियं काउं॥ ५७९॥

केई चोद्दसभेयं भणंति ओहि त्ति न पयडी जम्हा। पयडी न य निक्खेवो जं भणिओ चोद्दसविहो त्ति॥५८०॥

अवध्याद्या गतिपर्यन्ताश्चतुर्दश निक्षेपाः। ऋद्धिस्तु चतुर्दशविधनिक्षेपमध्ये न भवति। किं तर्हि ?, 'ईड्ढीपत्ते[4] य वोच्छामि' इत्यत्र चसमुच्चितत्वात् पृथग्भूता पञ्चदशी। अथवा 'ओही खेत्त-परिमाणे' इत्यत्राद्यमवधिपदं मुक्त्वाऽनुगमनशीलमनुगामुकं सेतरं सप्रतिपक्षं कृत्वा– अनुगामुकमननुगामुकसहितमर्थतो गमयित्वेत्यर्थः, केचनाप्याचार्याश्चतुर्दशविधनिक्षेपं पूरयन्ति। किमिति त एवं व्याख्यानयन्ति ?, इत्याह– 'ओहीत्यादि' अवधिर्यस्माद् न प्रकृतिः, किन्त्ववधेरेवेह प्रकृतयो विचारयितुं प्रक्रान्ताः। कुतः?, इत्याह– यतः

१ गाथा ४०९। २ गतिपर्यन्ताश्चतुर्दश ऋद्धिश्चसमुच्चितेति पञ्चदशी। अवधिपदमपि वा मोक्तु सेतरमनुगामुकं कृत्वा॥ ५७९॥ केचिच्चतुर्दशभेदं भणन्ति अवधिरिति न प्रकृतिर्यस्मात्। प्रकृतिर्न च निक्षेपो यद् भणितश्चतुर्दशविध इति॥ ५८०॥ ३ गाथा ५६९। ४ गाथा ५७७।

न्याकाशखण्डानि' इति गम्यते, अतीत्य गत्वा स्पृष्ट्वा वेति, तिष्ठत्युपरमते । इदमवधेरुत्कृष्टं क्षेत्रं विषय इति ॥ ६०३ ॥ ६०४ ॥

आह– ननु 'रूपिद्रव्याण्येवावधिः पश्यति' इति गीयते, क्षेत्रं त्वमूर्तत्वात् कथं तद्विषयः ?, इत्याशङ्क्याह–

[1]सामत्थमेत्तमेयं जइ दट्ठव्वं हवेज्ज, पेच्छेज्जा । न य तं तत्थत्थि जओ सो रूविनिबंधणो भणिओ ॥६०५॥

यदवधेरेतावत् क्षेत्रं विषय उच्यते, तदेतत् तस्य सामर्थ्यमात्रमेव कीर्त्यते । कोऽर्थः ?, इत्याह– यद्येतावत्क्षेत्रे द्रष्टव्यं किमपि भवेत् तदा पश्येदवधिज्ञानी । न च तद् द्रष्टव्यं तत्राऽलोके समस्ति, यतोऽयमवधिस्तीर्थकर-गणधरै रूपिद्रव्यनिबन्धनो भणितः, तच्च रूपिद्रव्यमलोके नास्त्येवेति ॥ ६०५ ॥

आह– यद्येवम्, लोकप्रमाणोऽवधिर्भूत्वा यस्य पुरतो विशुद्धिवशतो लोकाद् बहिरप्यसौ वर्धते तस्य तद्वृद्धेः किं फलं, लोकाद् बहिर्द्रष्टव्याभावात् ?, इत्याशङ्क्याह–

[2]वड्ढंतो उण बाहिं लोयत्थं चेव पासइ दव्वं । सुहुमयरं सुहुमयरं परमोही जाव परमाणुं ॥ ६०६ ॥

लोकाद् बहिष्पुनर्विशुद्धिवशाद् वर्धमानोऽवधिर्लोकस्थमेवाऽधिकमधिकतरं च द्रव्यं पश्यति । कथंभूतम् ?, सूक्ष्मं, सूक्ष्मतरं, सूक्ष्मतमं यावत् परमावधिः सर्वसूक्ष्मं परमाणुमपि पश्यति, इति तद्वृद्धेस्तात्त्विकं फलमिति । अलोके तु लोकप्रमाणासंख्येयखण्डेषु द्रव्यदर्शनसामर्थ्यमेव तस्येति । अन्यकर्तृकेयं प्रक्षेपगाथा, सोपयोगेति च व्याख्यातेति ॥ ६०६ ॥

तदेवं जघन्यमुत्कृष्टं चाभिहितमवधेर्विषयभूतं क्षेत्रम् । एतस्माच्चान्यत् सर्वं विमध्यममिति सामर्थ्याद् गम्यत एव, केवलं यद् यत्र विमध्यमे क्षेत्रविशेषे कालमानं भवति, यावति च काले यद् विमध्यमं क्षेत्रं भवति, इत्यभिधित्सुः प्रस्तावनामाह–

[3]भणियं जहण्णमुक्कोसयं च खेत्तं विमज्झिमं सेसं । एयस्स कालमाणं वोच्छं जं जम्मि खेत्तम्मि ॥६०७॥

गतार्थैव, नवरमुपलक्षणत्वादिह यावति काले यद्विमध्यमं क्षेत्रं भवति, इत्यप्यभिधास्यत इति द्रष्टव्यम् ॥ इति गाथानवकार्थः ॥६०७॥

यथाप्रतिज्ञातमेवाह–

१ सामर्थ्यमात्रमेतद् यदि द्रष्टव्यं भवेत्, प्रेक्षेत । न च तत् तत्रास्ति यतः स रूपिनिबन्धनो भणितः ॥ ६०५ ॥
२ वर्धमानः पुनर्बहिर्लोकस्थमेव पश्यति द्रव्यम् । सूक्ष्मतरं सूक्ष्मतरं परमावधिर्यावत् परमाणुम् ॥ ६०६ ॥
३ भणितं जघन्यमुत्कृष्टं च क्षेत्रं विमध्यमं शेषम् । एतस्य कालमानं वक्ष्ये यद् यस्मिन् क्षेत्रे ॥ ६०७ ॥

पूर्वं मर्यादा-ऽक्षादाववधिज्ञानासंबद्धे अपि नाम-स्थापने प्रोक्ते, अत्र त्वभिधान-द्रव्याद्याकारयोरवधिज्ञानसंबद्धयोस्ते अभिहिते इति विशेष इति ॥ ५८३ ॥

अथ द्रव्यावधिरुच्यते, स च द्विविधः– आगमतः, नोआगमतश्च । तत्रागमतोऽवधिपदार्थज्ञस्तत्र चानुपयुक्तः "अनुपयोगो द्रव्यम्" इतिवचनाद् द्रव्यावधिः । नोआगमतो ज्ञशरीरद्रव्यावधिः, भव्यशरीरद्रव्यावधिश्च । ज्ञशरीर-भव्यशरीरव्यतिरिक्तं तु द्रव्यावधिं भाष्यकारः स्वयमेवाह—

दव्वोही[1] उप्पज्जइ जत्थ तओ जं च पासए तेणं । जं वोवगारि दव्वं देहाइ तदुब्भवे होइ ॥ ५८४ ॥

तद् द्रव्यं द्रव्यावधिर्भण्यते। यत्र किम्?, इत्याह–'उप्पज्जइ जत्थ तओ त्ति' यत्र विपुलाचलशिलादौ कायोत्सर्गादिस्थितस्य साध्वादेस्तकोऽसौ अवधिरुत्पद्यते । यद् वा भू-भूधरादि रूपि द्रव्यं तेनाऽवधिना साध्वादिः पश्यति तद् द्रव्यावधिरुच्यते । यद् वा तस्याऽवधेरुद्भव उत्पत्तौ सहकारित्वेनोपकारकं देहादिद्रव्यं तत् सर्वं द्रव्यावधिरभिधीयते । इदमुक्तं भवति– इहाधारभूतशिलादिद्रव्याण्युत्पद्यमानस्यावधेः सहकारिकारणानि भवन्ति । कारणं च

"भूतस्य भाविनो वा भावस्य हि कारणं तु यल्लोके । तद् द्रव्यं तत्त्वज्ञैः सचेतना-ऽचेतनं गदितम् ॥ १ ॥"

इति वचनाद् द्रव्यमुच्यते । अतोऽन्यान्यपि तपः-संयमादीन्यवध्युत्पत्तिकारणानि द्रव्यावधित्वेनाऽवसेयानीति ॥ ५८४ ॥

अथ क्षेत्र-कालावधी प्राह–

खेत्ते[2] जत्थुप्पज्जइ कहिज्जए पेच्छए व दव्वाइं । एवंचेव य काले न उ पेच्छइ खित्त-काले सो ॥ ५८५ ॥

यत्र नगरोद्यानादिक्षेत्रे स्थितस्यावधिरुत्पद्यते स क्षेत्रेऽधिकरणभूतेऽवधिः क्षेत्रावधिरुच्यते, क्षेत्रस्याधारत्वेन प्राधान्यविवक्षया क्षेत्रेण व्यपदेश इति भावः । यत्र वा क्षेत्रेऽवधिः कथ्यते प्रज्ञापकेन स्वरूपतः प्ररूप्यते, यत्र वा क्षेत्रे व्यवस्थितानि द्रव्याण्यवधिज्ञानी प्रेक्षते तत्प्राधान्यविवक्षया तेन व्यपदेशात् क्षेत्रावधिरभिधीयते । एवं यत्र प्रथमपौरुष्यादौ कालेऽवधिरुत्पद्यते, यत्र वा प्रज्ञापकेन प्ररूप्यते, यत्कालविशिष्टानि वा द्रव्याण्यवधिज्ञानी पश्यति, तत्प्राधान्यविवक्षया तेन व्यपदेशात् स कालावधिरुच्यते । ननु किमिति 'क्षेत्र-

१ द्रव्यावधिरुत्पद्यते यत्र सकश्च यच्च पश्यति तेन । यद्वोपकारि द्रव्यं देहादि तदुद्भवे भवति ॥ ५८४ ॥

२ क्षेत्रे यत्रोत्पद्यते कथ्यते प्रेक्षते वा द्रव्याणि । एवमेव च काले न तु प्रेक्षते क्षेत्र-कालौ सः ॥ ५८५ ॥

अथ भाष्यम्–

[1]खेत्तमसंखेज्जंगुलभागं पासंतमेव कालेणं । आवलियाए भागं भूयमणागयं[2] च जाणाइ ॥ ६११ ॥

तत्थेव य जे दव्वा तेसिं चिय जे हवंति पज्जाया । इय खेत्ते कालम्मि य जोएज्जा दव्व-पज्जाए ॥ ६१२ ॥

संखेज्जंगुलभाए आवलियाए वि मुणइ तइभागं । अंगुलमिह पेच्छंतो आवलियंतो मुणइ कालं ॥ ६१३ ॥

आवलियं मुणमाणो संपुण्णं खेत्तमंगुलपुहुत्तं[3] । एवं खेत्ते कालं काले खेत्तं च जोएज्जा[4] ॥ ६१४ ॥

गतार्था एव, नवरं 'अणागयं च' इत्यनागतम् । नन्वमूर्तौ क्षेत्र-कालौ कथमवधिः पश्यति, मूर्तालम्बनत्वात् तस्य ?, इत्याह– 'तत्थेव येत्यादि' इदमत्र हृदयम्– अङ्गुलासंख्येयभागादिकं क्षेत्रं पश्यतीति कोऽर्थः ?, तत्रैवैतावति क्षेत्रे यानि प्रस्तुतावधिदर्शनयोग्यानि पुद्गलद्रव्याणि तान्येवासौ पश्यति । आवलिकासंख्येयभागादिकं कालं पश्यतीत्यत्रापि कोऽर्थः ?, तेषामेव पुद्गलद्रव्याणां ये प्रस्तुतावधेर्दर्शनयोग्याः पर्यायास्तान् भूतेऽनागते चैतावति कालेऽसौ वीक्षत इति । एवं सर्वत्र क्षेत्रे काले चावधेर्विषयत्वेनोक्ते यथासंख्यं क्षेत्रगतानि योग्यरूपिद्रव्याणि, कालगतांस्तद्योग्यांस्तत्पर्यायानायोजयेत् । क्षेत्र-कालौ तु 'मञ्चाः क्रोशन्ति' इत्यादिन्यायेनोपचारत एवोच्येते इति भावः ॥ इति भाष्यगाथाचतुष्टयार्थः ॥ ६११ ॥ ६१२ ॥ ६१३ ॥ ६१४ ॥

[5]संखिज्जम्मि उ काले दीव-समुद्दा वि होंति संखिज्जा । कालम्मि असंखिज्जे दीव-समुद्दा य भइअव्वा[6] ॥६१५॥

संख्यायत इति संख्येयः, स च संवत्सर-मासादिरूपोऽपि भवति । अतस्तुशब्दो विशेषणार्थः कृतः । किं विशिनष्टि ?, संख्येयोऽत्र वर्षसहस्रात् परतो गृह्यते । अत एव पूर्वगाथायां 'वाससहस्सं च रुयगम्मि' इति पाठान्तरम् । तस्मिन् वर्षसहस्रात् परतो वर्तिनि संख्येये कालेऽवधिविषये प्राप्ते सति क्षेत्रतस्तस्यैवावधेर्विषयतया द्वीप-समुद्रास्तेऽपि भवन्ति संख्येयाः, अपिशब्दाद् महानेकोऽपि

1 क्षेत्रमसंख्येयाङ्गुलभागं पश्यन्नेव कालेन । आवलिकाया भागं भूतमनागतं च जानाति ॥ ६११ ॥
तत्रैव च यानि द्रव्याणि तेषामेव ये भवन्ति पर्यायाः । इति क्षेत्रे काले च योजयेद् द्रव्य-पर्यायान् ॥ ६१२ ॥
संख्येयाङ्गुलभागे आवलिकाया अपि जानाति तावद्भागम् । अङ्गुलमिह प्रेक्षमाण आवलिकान्तर्जानाति कालम् ॥ ६१३ ॥
आवलिकां जानन् संपूर्णं क्षेत्रमङ्गुलपृथक्त्वम् । एवं क्षेत्रे कालं काले क्षेत्रं च योजयेत् ॥६१४॥ 2 घ छ 'णाय' । 3 घ छ 'पुहत्तं' । 4 घ छ 'जोदज्जा'।
5 संख्येये तु काले द्वीप-समुद्रा अपि भवन्ति संख्येयाः । कालेऽसंख्येये द्वीप-समुद्राश्च भक्तव्याः ॥ ६१५ ॥ 6 झ 'भयणिज्जा' ।

यावती यावत्प्रमाणा त्रीन् समयानाहारयतीति त्रिसमयाहारकस्तस्य, सूक्ष्मनामकर्मोदयात् सूक्ष्मस्तस्य, पनकश्चासौ जीवश्च पनकजीवो वनस्पतिविशेषस्तस्य , अवगाहन्ते यस्यां प्राणिनः साऽवगाहना तनुरित्यर्थः, जघन्या सर्वस्तोका, अवधेः क्षेत्रमवधिक्षेत्रं जघन्यं सर्वस्तोकम् । तुशब्दोऽवधारणे । तस्य चैवं प्रयोगः– अवधेर्विषयभूतं क्षेत्रं जघन्यमेतावदेव ॥ इति निर्युक्तिगाथासंक्षेपार्थः॥५८८॥

अथ सांप्रदायिकार्थव्याख्यानपरं भाष्यम्–

[1]जो जोयणसाहस्सो मच्छो नियए सरीरदेसम्मि । उववज्जंतो पढमे समए संखिवइ आयामं ॥ ५८९ ॥

पयरमसंखिज्जंगुलभागतणुं मच्छदेहविच्छिण्णं । बीए, तईए सूइं संखिविउं होइ तो पणओ ॥ ५९० ॥

उववायाओ तईए समए जं देहमाणमेयस्स । तण्णेयदव्वभायणमोहिक्खित्तं जहन्नं तं ॥ ५९१ ॥

यो मत्स्यो योजनसहस्रो योजनसहस्रायामः स्वदेहस्यैव बाह्यदेश उत्पद्यमानः प्रथमे समये आयामं संक्षिपति 'तं च संक्षिपन् प्रतरं करोति' इति शेषः । कथंभूतम् ?, इत्याह– ' असंखेज्जंगुलभागतणुं ति ' बाहल्येनाङ्गुलासंख्येयभागसूक्ष्ममित्यर्थः । पुनरपि[3] तत् कथंभूतम् ?, इत्याह– मत्स्यदेहविस्तीर्णं शरीरान्तःसंबद्धत्वादूर्ध्वाधस्तिर्यक् च यावान् मत्स्यदेहविस्तरस्तावांस्तज्जीवप्रदेशप्रतरस्यापीत्यर्थः; एवं चायामतो विष्कम्भतश्च मत्स्यशरीरपृथुत्वतुल्योऽङ्गुलासंख्येयभागबाहल्यश्चायं प्रतरो भवतीति प्रथमसमयव्यापारः । ननु च प्रथमे समये आयामं संक्षिपति, इत्येतदेवोक्तं, यथोक्तप्रतरकरणं तु कुतो लभ्यते ?, इति चेत् । उच्यते– अनन्तरं द्वितीयसमये तत्संक्षेपस्य भणनात् , तस्य च करणपूर्वकत्वादिति । 'वीए' इति 'संखिविउं' इत्यत्रापि संबध्यते । ततो द्वितीयसमये तं प्रतरमुभयतः संक्षिप्याऽङ्गुलासंख्येयभागबाहल्यां मत्स्यशरीरपृथुत्वायामां सूचिं 'करोति' इत्यध्याहारः । अत्राप्यनन्तरतृतीयसमये सूचिसंक्षेपाभिधानात् तस्य च तत्करणपूर्वकत्वात् सूचिकरणमध्याह्रियते । 'तईए त्ति' ततस्तृतीयसमये, एतामपि सूचिं संक्षिप्याङ्गुलासंख्येयभागमात्रावगाहनो भूत्वा निर्जीर्णमत्स्यभवायुरुदीर्णपरभवायुश्चाऽविग्रहगत्या मत्स्यशरीरस्यैवैकदेशे पनकः सूक्ष्मवनस्पतिजीवविशेषो

---

१ यो योजनसहस्रो मत्स्यो निजके शरीरदेशे । उपपद्यमान. प्रथमे समये संक्षिपत्यायामम् ॥ ५८९ ॥
प्रतरमसंख्येयाङ्गुलभागतनु मत्स्यदेहविस्तीर्णम् । द्वितीये, तृतीये सूचिं संक्षिप्य भवति तत. पनकः ॥ ५९० ॥
उपपादात् तृतीये समये यद् देहमानमेतस्य । तज्ज्ञेयद्रव्यभाजनमवधिक्षेत्रं जघन्यं तत् ॥ ५९१ ॥
२ घ.छ 'वाहुल्ये'। ३ घ छ 'पि क'। ४ क ख.ग. 'ये ता'।

द्रव्य-पर्यायास्तु तद्वृद्धौ नियमाद् वर्धन्त एवेति स्वयमेव दृश्यमिति। 'वुड्ढीए दव्व-पज्जवेत्यादि' द्रव्यपर्याययोर्वृद्धौ सत्यां क्षेत्र-कालौ भक्तव्यौ विकल्पनीयौ वर्धेते वा नवा; तथाहि– अवस्थितयोरपि क्षेत्र-कालयोस्तथाविधशुभाध्यवसायतः क्षयोपशमवृद्धौ द्रव्यं वर्धत एव; तद्वृद्धौ च पर्यायवृद्धिरवश्यंभाविन्येव, प्रतिद्रव्यं पर्यायानन्त्यात्, जघन्यतोऽपि चैकैकद्रव्यादप्यवधेः पर्यायचतुष्टयलाभादिति, पर्यायवृद्धौ च द्रव्यवृद्धिर्भाज्या– भवति वा नवेति स्वयमेव द्रष्टव्यम्। अवस्थितेऽपि हि द्रव्ये तथाविधक्षयोपशमवृद्धौ पर्याया वर्धन्त एव॥ इति निर्युक्तिगाथार्थः॥ ६१७॥

अथ भाष्यम्—

[1]कालं पवड्ढमाणे सव्वे दव्वादओ पवड्ढंति। खेत्ते कालो भइओ वड्ढंति उ दव्व-पज्जाया॥ ६१८॥

भयणाए खेत्त-काला परिवड्ढंतेसु दव्व-भावेसु। दव्वे वड्ढइ भावो भावे दव्वं तु भयणिज्जं॥ ६१९॥

द्वे अपि व्याख्यातार्थे॥ ६१८॥ ६१९॥

अथोत्तरगाथासंवन्धनार्थं विनेयमुखेन प्रश्नं कारयति–

[2]अण्णोण्णनिबद्धाणं जहण्णयाईण खित्त-कालाणं। समय-प्पएसमाणं किं तुल्लं होज्ज हीणहियं?॥ ६२०॥

अन्योन्यनिबद्धयोर्जघन्यादिरूपयोः क्षेत्र-कालयोः समय-प्रदेशमानं किं तुल्यं भवेत्, हीनम्, अधिकं वेति। इदमुक्तं भवति– '[3]अंगुलमावलियाणं भागमसंखिज्ज' इत्यादिना ग्रन्थेन परस्परसंबद्धत्वेनाऽवधिविषयतया प्रोक्तयोर्जघन्ययोः, मध्यमयोः, उत्कृष्टयोश्च क्षेत्र-कालयोः संबन्धिनां प्रदेशानां समयानां च संख्यामाश्रित्य यद् मानं तत् परस्परं किं तुल्यं, हीनम्, अधिकं वा भवेत्?, इति प्रश्नः॥ ६२०॥

अत्रोच्यते– सर्वत्र प्रतियोगिनः खल्वावलिकासंख्येयभागादेः कालादसंख्येयगुणमेव क्षेत्रम्; यतः प्राह–

---

[1] काले प्रवर्धमाने सर्वे द्रव्यादयः प्रवर्धन्ते। क्षेत्रे कालो भाज्यो वर्धेते तु द्रव्य-पर्यायौ॥ ६१८॥
भजनया क्षेत्र-कालौ परिवर्धमानयोर्द्रव्य-भावयोः। द्रव्ये वर्धते भावो भावे द्रव्य तु भजनीयम्॥ ६१९॥

[2] अन्योन्यनिबद्धयोर्जघन्याद्योः क्षेत्र-कालयोः। समय-प्रदेशमान किं तुल्यं भवेद् हीनमधिकम्?॥ ६२०॥ [3] गाथा ६०८।

[1]यो हि योजनसहस्रायामो महाकायो मत्स्यः, त्रिभिश्च समयैरात्मानं संक्षिपति, स किल प्रयत्नविशेषादतिसूक्ष्मामवगाहनां कुरुते, नान्यः। अनेन 'किमिति मत्स्योऽतिमहान् गृह्यते, तृतीयसमयसंक्षिप्तश्च ?' इत्येतस्योत्तरमदायि। दूरे च गत्वाऽन्यत्र यद्युत्पद्यते, विग्रहेण च गच्छति, तदा जीवप्रदेशाः किञ्चिद्विस्तरं यान्तीत्यवगाहना स्थूलतरा स्यात्, इत्यविग्रहगत्या स्वशरीरदेश एवोत्पादित इत्येतत् स्वयमेव द्रष्टव्यमिति। 'कीस वा सुहुमो'[2] इत्यादेरुत्तरमाह– 'सण्हयरा इत्यादि' श्लक्ष्णादपि श्लक्ष्णतरस्तावद् भवति। कः ?, पनकः। कथंभूतः ?, सूक्ष्मः, जघन्यदेहश्च जघन्यावगाहश्चेत्यर्थः। वस्तुतोऽर्थतात्पर्यमाह– 'सुबहु इत्यादि' 'जो जोयणसाहस्सो'[3] इत्याद्युक्तप्रकारेण सुबहुविशेषणविशिष्टो गृह्यमाणः पनकजीवः सूक्ष्मतरः सूक्ष्मतमश्च सर्वदेहेभ्यो भवतीति ॥ ५९३ ॥ ५९४ ॥

अथ 'किं त्रिसमयाहारकः ?' इत्यस्योत्तरमाह–

[4]पढम-बिईए अतिसण्हो जमइत्थूलो चउत्थयाईसु। तईयसमयम्मि जोग्गो गहिओ तो तिसमयाहारो ॥५९५॥

यस्मात् प्रथम-द्वितीययोः समययोरतिसूक्ष्मो भवति, चतुर्थादिषु चातिस्थूलः संपद्यते, तृतीयसमये तु योग्यः; अतस्त्रिसमयाहारग्रहणमिति ॥ ५९५ ॥

अत्र केषांचिन्मतमुद्भावयन्नाह–

[5]केई दो झससमया तईओ पणगत्तणोववायम्मि। अह तिसमओ आहारओ य सुहुमो य पणओ य ॥५९६॥

उववाए चेव तओ जओ जहण्णो न सेससमयेसु। तो किर तद्देहसमाणमोहिखित्तं जहण्णं तु ॥ ५९७ ॥

त्रिसमयाहारकत्वविषये केचनाऽप्याचार्या व्याचक्षते यदुत– द्वौ तावज्झषस्य मत्स्यस्य संबन्धिनावाद्यसमयौ गृह्येते– आयामसंहारप्रतरकरणलक्षणः प्रथमः, सूचिं तु यत्र करोति स द्वितीयः, तृतीयसमयस्तु तां संक्षिप्य पनकत्वेनोत्पादे भवति। ततश्च त्रयः समया यस्यासौ त्रिसमयः, अविग्रहेणोत्पत्तेराहारकश्च। एवं च सति प्रत्युताऽतिसूक्ष्मश्च पनकश्चायं सिद्धो भवति। [6]तथा च सति '[7]ति-

१ क ख ग 'त्स्यो म'। २ गाथा ५९२। ३ गाथा ५८९।
४ प्रथम-द्वितीययोरतिसूक्ष्मो यदतिस्थूलश्चतुर्थकादिषु। तृतीयसमये योग्यो गृहीतस्ततस्त्रिसमयाहारः ॥ ५९५ ॥
५ केचिद् द्वौ झषसमयौ तृतीयः पनकत्वोपपाते। अथ त्रिसमय आहारकश्च सूक्ष्मश्च पनकश्च ॥ ५९६ ॥
उपपाद एव सको यतो जघन्यो न शेषसमयेषु। ततः किल तद्देहसमानमवधिक्षेत्रं जघन्यं तु ॥ ५९७ ॥ ६ क ग. 'एवं च'। ७ गाथा ५८८।

[1]सव्वमसंखेज्जगुणं कालाओ खेत्तमोहिविसयम्मि । अवरोप्परसंबद्धं समय-प्पएसप्पमाणेणं ॥ ६२४ ॥

खेत्तपएसेहिंतो दव्वमणंतगुणियं पएसेहिं । दव्वेहिंतो भावो संखगुणो असंखगुणिओ वा ॥ ६२५ ॥

गाथाद्वयमपि गतार्थम्, नवरं यस्मात् सर्वमप्यङ्गुलासंख्येयभागादिकं क्षेत्रं स्वप्रदेशैरावलिकाऽसंख्येयभागादेः कालादेतत्समयानाश्रित्याऽसंख्येयगुणमवधिविषये प्रोक्तम्; क्षेत्रप्रदेशेभ्यस्तद् द्रव्यं प्रदेशैरनन्तगुणमित्यादि, तस्मात् कालादयः स्तोकादितयाऽनुमेया इति ॥ ६२४ ॥ ६२५ ॥

अथ पूर्वोक्तस्य निगमनार्थम्, उत्तरस्य च प्रस्तावनार्थमाह—

[2]भणियं खेत्तपमाणं तम्माणमियं भणामि दव्वमओ । तं केरिसमारंभे परिणिट्ठाणे विमज्झे वा ॥ ६२६ ॥

भणितं जघन्यादिभेदं त्रिविधमपि क्षेत्रप्रमाणम् । सांप्रतं तस्य जघन्यादिभेदस्य क्षेत्रस्य यदङ्गुलासंख्येयभागादिकं मानं तेन मितं परिच्छिन्नं द्रव्यमत ऊर्ध्वं भणामि, द्रव्यावस्थानापेक्षमेव क्षेत्रस्य भणनात्, अन्यथा हि मूर्तविषयेऽवधौ प्रक्रान्ते किममूर्तक्षेत्रभणनेन ? इति भावः । तच्च द्रव्यमारम्भे प्रस्तावने कीदृशमवधेर्विषयो भवति परिनिष्ठानेऽवसाने, विमध्ये वा कीदृशम् ? इत्येवं भणामि ॥ इति गाथापञ्चकार्थः ॥ ६२६ ॥

स्वप्रतिज्ञातमेवाह—

[3]तेया-भासादव्वाण अंतरा एत्थ लभइ पट्ठवओ । गुरुलहु अगुरुयलहुयं तं पि य तेणेव निट्ठाइ॥६२७॥

तैजसं च भाषा च तैजस-भाषे तयोर्द्रव्याणि तेषां तैजस-भाषाद्रव्याणामन्तरादपान्तराले 'एत्थ त्ति' अत्रान्यदेव तदयोग्यं द्रव्यं लभते पश्यति प्रस्थापकोऽवधिज्ञानप्रारम्भकः, अवधिप्रतिपत्तेति यावत् । किंविशिष्टं तत् ?, इत्याह– गुरुलघु, अगुरुलघु चेति– गुरुलघुपर्यायोपेतं गुरुलघु, अगुरुलघुपर्यायोपेतं त्वगुरुलघ्विति । तत्र तैजसद्रव्यासन्नं गुरुलघु, भाषाद्रव्यासन्नं त्वगुरुलघ्विति । तदपि

१ सर्वमसंख्येयगुणं कालात् क्षेत्रमवधिविषये । परस्परसबद्धं समय-प्रदेशप्रमाणेन ॥ ६२४ ॥
क्षेत्रप्रदेशेभ्यो द्रव्यमनन्तगुणित प्रदेशै. । द्रव्येभ्यो भाव संख्यगुणोऽसख्यगुणितो वा ॥ ६२५ ॥
२ भणित क्षेत्रप्रमाण तन्मानमित भणामि द्रव्यमत. । तत् कीदृशमारम्भे परिनिष्ठाने विमध्ये वा ॥ ६२६ ॥
३ तैजस-भाषाद्रव्याणामन्तराऽत्र लभते प्रस्थापक. । गुरुलघ्वगुरुकलघुक तदपि च तेनैव नितिष्ठति ॥ ६२७ ॥ ४ घ छ. 'पेतमगु' ।

अव्वाघाए[1] सव्वासु कम्मभूमीसु जं तदारंभा। सव्वबहवो मणुस्सा होंतजियजिणिंदकालम्मि ॥५९९॥

अव्याघाते– अनलजीवोत्पत्तेर्महावृष्ट्यादिव्याघाताभावे, सर्वासु समस्तभरतै-रावत-विदेहलक्षणासु पञ्चदशसु कर्मभूमिषु सर्वबहवो 'बादराग्निजीवा भवन्ति' इति प्रक्रमाल्लभ्यते। किमविशेषेण सर्वदैवैतास्वेते भवन्ति ?, न, इत्याह– अजिताजिनेन्द्रकाले, अजिताजिनेन्द्रस्योपलक्षणत्वादवसर्पिण्यां द्वितीयतीर्थकरकाल इत्यर्थः। किमिति तत्रैव बहवो भवन्ति ?, इत्याह– 'जमित्यादि' यद् यस्मात् तदारम्भास्तेषां बादराग्निजीवानां संधुक्षण-ज्वालनाद्यारम्भपराः सर्वबहवः सर्वेभ्योऽप्यतीता-ऽनागतेभ्यो बहवः प्रचुरा गर्भजमनुष्या भवन्ति स्वभावादेवेति ॥ ५९९ ॥

आह– किमेतैरेव बादराग्निजीवैः सर्वबह्वग्निजीवपरिमाणं पूर्यते, आहोस्वित् सूक्ष्माग्निभिः सह ?। यदि तैः सह, तदा तेऽविशिष्टा अपि गृह्यन्ते, आहोस्वित् क्वचिदेव विशिष्टाः ?, इत्याह–

उक्कोसया[2] य सुहुमा जया तया सव्वबहुगमगणीणं। परिमाणं संभवओ तं छद्धा पूरणं कुणइ ॥ ६०० ॥

उत्कृष्टाश्च सूक्ष्माग्निजीवाः स्वभावत एव कथमपि यदा संभवन्ति, तदैवैतैर्बादराग्निजीवैः सह सर्वबह्वग्निजीवानां परिमाणं भवति। इदमत्र हृदयम्– अनन्तानन्तास्ववसर्पिणीषु मध्ये स एव कश्चिद् द्वितीयतीर्थकरकालो गृह्यते, यत्र सूक्ष्माग्निजीवा उत्कृष्टपदिनः प्राप्यन्ते। ततश्च तैर्बादरैः सूक्ष्मैश्चाग्निजीवैरुत्कृष्टपदिभिर्मीलितैः सर्वबह्वग्निजीवानां परिमाणं भवति। तच्च संभवतः संभवमात्रमाश्रित्य बुद्ध्या षोढा षट्प्रकारया रचनया व्यवस्थाप्यते। ततश्च बहुतरक्षेत्रपूरणं करोति। तत्र पञ्चाऽनादेशाः, षष्ठस्तु श्रुतादेश इति ॥६००॥

एतदेवाह–

एक्केक्कागासपएसजीवरयणाए[3] सावगाहे य। चउरंसघणं पयरं सेढी छट्ठो सुयाएसो ॥ ६०१ ॥

१ अव्याघाते सर्वासु कर्मभूमिषु यत् तदारम्भाः। सर्वबहवो मनुष्या भवन्त्यजितजिनेन्द्रकाले ॥ ५९९ ॥

२ उत्कृष्टाश्च सूक्ष्मा यदा तदा सर्वबहुकमग्नीनाम्। परिमाणं संभवतस्तत् षोढा पूरणं करोति ॥ ६०० ॥

३ एकैकाकाशप्रदेशजीवरचनया स्वावगाहे च। चतुरस्रघनं प्रतरं श्रेणिः षष्ठः श्रुतादेशः ॥ ६०१ ॥

[1]कुइयण्णगोविसेसोवलक्खणोवम्मओ विणेयाणं । दव्वाइवग्गणाहिं पोग्गलकायं पयंसेंति[2] ॥ ६३२ ॥

आह– किमर्थं पुनरेता वर्गणाः प्ररूप्यन्ते ? । उच्यते– कुविकर्णस्य गोमण्डलाधिपतेर्गावस्तासां परस्परं विशेषस्य यदुपलक्षणं परिज्ञानं तदौपम्यात् तद्दृष्टान्ताद् विनेयानामसंमोहार्थं द्रव्यादिवर्गणाभिः, आदिशब्दात् क्षेत्रवर्गणाभिः, कालवर्गणाभिः, भाववर्गणाभिश्च समस्तमपि पुद्गलास्तिकायं विभज्य तीर्थकर-गणधराः प्रदर्शयन्ति ॥ इति गाथाक्षरार्थः ॥

अथ भावार्थ उच्यते– इह भरतक्षेत्रे मगधजनपदे प्रभूतगोमण्डलस्वामी कुविकर्णो नाम गृहपतिरासीत् । स च तासां गवामतिबहुत्वात् सहस्रादिसंख्यापरिमितानां पृथक् पृथगनुपालनार्थं प्रभूतान् गोपालांश्चक्रे । ते च तासु परस्परं मीलितासु गोष्वात्मीया आत्मीयाः सम्यगजानन्तः सन्तो नित्यं कलहमकार्षुः । तांश्च तथाऽन्योन्यं विवदमानानुपलभ्याऽसौ तेषामव्यामोहार्थं कलहव्यवच्छित्तये शुक्ल-कृष्ण-रक्त-कर्बुरादिभेदाभिन्नानां गवां प्रतिगोपालं सजातीयगोसमुदायरूपा भिन्ना वर्गणा व्यवस्थापितवानिति । एष दृष्टान्तः । अथोपनय उच्यते– इह गोमण्डलप्रभुकल्पस्तीर्थकरो गोपतुल्येभ्यः स्वशिष्येभ्यो गोसमूहमानं पुद्गलास्तिकायं तदसंमोहार्थं परमाण्वादिवर्गणादिविभागेन निरूपितवानिति ॥ ६३२ ॥

एता एव वर्गणाः 'ओराल-विउव्व-'[3] इत्यादिगाथां व्याचिख्यासुर्निरूपयितुमाह–

[4]एगा परमाणूणं एगुत्तरवड्ढिया तओ कमसो । संखेज्जपएसाणं संखेज्जा वग्गणा होंति ॥ ६३३ ॥

तत्तो संखाईआ-संखाइयप्पएसमाणाणं । तत्तो पुणो अणंताणंतपएसाण गंतूणं ॥ ६३४ ॥

ओरालियस्स गहणप्पाओग्गा वग्गणा अणंताओ । अग्गहणप्पाओग्गा तस्सेव तओ अणंताओ ॥६३५॥

इह सजातीयवस्तुसमुदायो वर्गणा, समूहो, वर्गः, राशिः, इति पर्यायाः । ततश्च समस्तलोकाकाशप्रदेशवर्तिनामेकैकपरमाणूनां समुदाय एका वर्गणा । ततः समस्तलोकवर्तिनां द्विप्रदेशिकस्कन्धानां द्वितीया वर्गणा । ततः समस्तानामपि त्रिप्रदेशिकस्कन्धानां तृतीया,

---

१ कुविकर्णगोविशेषोपलक्षणौपम्यतो विनेयानाम् । द्रव्यादिवर्गणाभिः पुद्गलकायं प्रदर्शयन्ति ॥ ६३२ ॥ २ घ छ. 'पयासति' ज्ञ. 'पयंसति' ।
३ गाथा ६३१ । ४ एका परमाणूनामेकोत्तरवर्धितास्ततः क्रमशः । सख्येयप्रदेशानां संख्येया वर्गणा भवन्ति ॥ ६३३ ॥
तत. संख्येया-ऽसख्येयप्रदेशमानानाम् । ततः पुनरनन्तानन्तप्रदेशाना गत्वा ॥ ६३४ ॥
औदारिकस्य ग्रहणप्रायोग्या वर्गणा अनन्ता· । अग्रहणप्रायोग्यास्तस्यैव ततोऽनन्ताः ॥ ६३५ ॥

नन्वेकैकाकाशप्रदेशावगाढजीवघन-प्रतर-श्रेण्याक्रान्ताकाशप्रदेशानां संख्यारूपं गणितं तुल्यमेव । तथा, असंख्येयाकाशप्रदेशावगाढजीवघन-प्रतर-श्रेण्याक्रान्ताकाशदेशानामपि गणितं स्वस्थाने परस्परं तुल्यमेव; तथाहि– यावत एकैकाकाशप्रदेशावगाहिनां जीवानां घन आकाशप्रदेशानाक्रामति, प्रतरोऽपि तेषां तावत एव तानाक्रामति, सूचिरपि तेषां तावत एव तान् स्पृशति, संवृतप्रसारितनेत्रपट्टाक्रान्ताकाशप्रदेशवदिति । एवमसंख्येयाकाशप्रदेशावगाढजीवघन-प्रतर-श्रेण्याक्रान्ताकाशप्रदेशानामपि स्वस्थाने गणिततुल्यता भावनीयेति । अतोऽवगाहभेदद्वयभिन्नो घन एवाऽस्तु, प्रतरो वा, सूचिर्वेति; षोढा तु विकल्पना षड्भेदानां कल्पनं किमिति क्रियते ? न युक्तेयमित्यभिप्रायः ।

अत्र सूरिराह– भण्यत उत्तरम् । किम् ?, इत्याह– 'पुरिसपरिक्खेवओ भेउ त्ति' अस्त्यस्याः षड्विधकल्पनाया भेदः । कथम् ?, इत्याह– पुरुषपरिक्षेपतः । इदमुक्तं भवति– नेह घनाद्याक्रान्ताकाशप्रदेशानां संख्यासमत्व-विषयत्वे चिन्त्येते । किं तर्हि ?, घनादीनां मध्याद् यः कश्चिद् रचनाविशेषोऽवधिज्ञानिनः सर्वासु दिक्षु भ्रम्यमाणो बहुतरं क्षेत्रं स्पृशति, स एवेह ग्राह्यः । एवं सत्यस्त्यमीषां भेदः, तथाहि– एकैकप्रदेशावगाढजीवघनो भ्रम्यमाणो यावत् क्षेत्रं स्पृशति, तस्मादसंख्येयप्रदेशावगाढजीवघनोऽसंख्येयगुणं स्पृशति, ततोऽप्येकैकप्रदेशावगाढजीवप्रतरोऽसंख्येयगुणं, तस्मादप्यसंख्येयप्रदेशावगाढजन्तुप्रतरोऽसंख्येयगुणम् , ततोऽप्येकैकप्रदेशावगाढजीवसूचिरसंख्येयगुणं, तस्मादप्यसंख्येयाकाशप्रदेशावगाढैकैकाग्निजीवसूचिरवधिज्ञानिनः सर्वासु दिक्षु भ्रम्यमाणाऽसंख्येयगुणं क्षेत्रं स्पृशति, तच्चाऽलोके लोकप्रमाणान्यसंख्येयाकाशखण्डानि; अत एतावदेवाऽवधेरुत्कृष्टं क्षेत्रं विषय इति ॥ ६०२ ॥

उक्तमेवार्थं भाष्यकारः स्वयमेवाह–

[2]निययावगाहणागणिजीवसरीरावली समंतेणं । भामिज्जइ ओहिन्नाणिदेहपज्जंतओ सा य ॥ ६०३ ॥

अइगंतूण अलोगं लोगागासप्पमाणमेत्ताइं । ठाइ असंखेज्जाइं इदमोहिखेत्तमुक्कोसं ॥ ६०४ ॥

निजका आत्मीया एकैकस्याऽसंख्येयप्रदेशात्मिकाऽवगाहना येषां तानि तथा, तानि च तानि अग्निजीवशरीराणि च, तेषामावली पङ्क्तिः सूचिरवधिज्ञानिनो देहपर्यन्तात् समन्तात् सर्वासु दिक्षु बुद्ध्या भ्राम्यते । सा चाऽलोके 'लोकप्रमाणमात्राण्यसंख्येया-

१ क. ख. ग. 'र आह' । २ निजकावगाहनाग्निजीवशरीरावली समन्तात् । भ्राम्यतेऽवधिज्ञानिदेहपर्यन्तत सा च ॥ ६०३ ॥
अतिगत्याऽलोक लोकाकाशप्रमाणमात्राणि । तिष्ठत्यसंख्येयानि इदमवधिक्षेत्रमुत्कृष्टम् ॥ ६०४ ॥

आह– कथं पुनरेकैकस्यौदारिकादेः पृथक् त्रयं त्रयमिदं लभ्यते ?, इत्याह–

[1]एक्केक्कस्साईए पज्जंतम्मि य हवंति जोग्गाइं । उभयाजोग्गाइं जओ तेया-भासंतरे पढइ ॥ ६३७ ॥

एकैकस्यौदारिक-वैक्रियादेरादौ पर्यन्ते चाऽयोग्यानि द्रव्याणि भवन्तीति लभ्यत एव। कुतः ?। उच्यते– '[2]तेया-भासादव्वाण अंतरा' इत्यादिवचनाद् यतस्तैजस-भाषयोरन्तरे उभयायोग्यानि द्रव्याणि पठति । इदमुक्तं भवति– यतस्तैजसस्यान्तेऽयोग्यद्रव्याणि पठति, अतः सर्वस्याऽप्यौदारिकादेरन्ते तानि लभ्यन्ते; यतश्च भाषाया आदौ तदयोग्यान्यधीते, अतः सर्वस्याऽप्यौदारिकादेरादौ तानि गम्यन्ते; उभयान्तरालवर्तिनां च सर्वेषामुभयायोग्यत्वे तुल्येऽपि यथासन्नं तत्तदाभासत्वेन तत्तदयोग्यव्यपदेश इत्युक्तमेव ॥ इति गाथाषट्कार्थः ॥६३७॥

अथ कर्माग्रहणवर्गणानामुपर्यन्या वर्गणाः सन्ति, नवा ?, इत्याह–

[3]कम्मोवरिं धुवेयर-सुण्णेयरवग्गणा अणंताओ । चउधुवणंतरतणुवग्गणा य मीसो तहाऽचित्तो ॥ ६३८ ॥

इयं निर्युक्तिगाथा, एतां च भाष्यकारः स्वयमेव विस्तरतो व्याख्यास्यतीति ॥ ६३८ ॥

तथा च भाष्यम्–

[4]निच्चं होंति धुवाओ इयरा लोए न होंति वि कयाई । एकोत्तरवुड्ढीए कयाइ सुण्णंतराओ वि ॥ ६३९ ॥

जाओ हवंति ताओ सुण्णंतरवग्गण त्ति भण्णंति । निययं निरंतराओ होंति असुण्णंतरा उ त्ति ॥ ६४० ॥

कर्मणोऽग्रहणप्रायोग्यवर्गणानामुपर्येकैकपरमाणूपचितातिसूक्ष्मपरिणामानन्तस्कन्धात्मिकाः प्रथमा ध्रुववर्गणा भवन्ति । ततश्चैकोत्तरवृद्ध्या वर्धमानैः प्रत्येकमनन्तैः स्कन्धैर्निष्पन्ना एता अपि ध्रुववर्गणा अनन्ता भवन्ति । ध्रुवा नित्या लोकव्यापितया सर्वकालावस्थायिन्य इति भावः; अन्तदीपकं चेदम् । ततश्चैतासां ध्रुवत्वभणनेन प्रागुक्ता अपि कर्मवर्गणान्ताः सर्वा एव वर्गणा ध्रुवा इत्यवगन्तव्यम्, तासामपि सर्वत्र लोके सदैवाऽव्यवच्छेदात् । अन्यच्च, एताश्च ध्रुववर्गणा वक्ष्यमाणाश्चाऽध्रुवाद्या सर्वा अप्यग्रहणवर्गणाः, अति-

१ एकैकस्यादौ पर्यन्ते च भवन्ति योग्यानि । उभयायोग्यानि यतस्तैजस-भाषान्तरे पठति ॥ ६३७ ॥ २ गाथा ६२७ ।
३ कर्मोपरि ध्रुवेतर-शून्येतरवर्गणा अनन्ता. । चतुर्ध्रुवानन्तरतनुवर्गणा च मिश्रस्तथाऽचित्त. ॥ ६३८ ॥
४ नित्य भवन्ति ध्रुवा इतरा लोके न भवन्त्यपि कदाचित् । एकोत्तरवृद्ध्या कदाचिच्छून्यान्तरा अपि ॥ ६३९ ॥
या भवन्ति ताः शून्येतरवर्गणा इति भण्यन्ते । नियत निरन्तरास्तु भवन्त्यशून्यान्तरास्त्विति ॥ ६४० ॥ ५ घ छ. 'ता ध्रु' ।

[1]अंगुलमावलियाणं भागमसंखिज्ज[2] दोसु संखिज्जा । अंगुलमावलियंतो आवालिया अंगुलपुहुत्तं[3] ॥ ६०८ ॥
हत्थम्मि मुहुत्तंतो दिवसंतो गाउयम्मि बोधव्वो । जोयण दिवसपुहुत्तं[3] पक्खंतो पण्णवीसाओ ॥ ६०९ ॥
भरहम्मि अद्धमासो जंबुद्दीवम्मि साहिओ मासो । वासं च मणुयलोए वासपुहुत्तं[3] च रुयगम्मि ॥ ६१० ॥

अङ्गुलं क्षेत्राधिकारात् प्रमाणाङ्गुलं गृह्यते । 'अवध्यधिकारादुच्छ्रयाङ्गुलं' इति च केचिदिति । असंख्येयसमयसंघातात्मकः
कालविशेष आवलिका । अङ्गुलं चावलिका चाङ्गुला-ऽऽवलिके, तयोरङ्गुला-ऽऽवलिकयोर्भागमसंख्येयं पश्यत्यवधिज्ञानी । एतदुक्तं भवति–
क्षेत्रमङ्गुलासंख्येयभागमात्रं पश्यन् कालत आवलिकाया असंख्येयमेव भागं पश्यति, अतीतमनागतं चेति । क्षेत्र-कालदर्शनं
चोपचारेणोच्यते; अन्यथा हि क्षेत्रव्यवस्थितानि दर्शनयोग्यानि द्रव्याणि, तत्पर्यायांश्च विवक्षितकालान्तर्वर्तिनः पश्यत्यवधिः, न तु
क्षेत्र-कालौ, मूर्तद्रव्यालम्बनत्वात् तस्येति । एवमुत्तरत्रापि सर्वत्र द्रष्टव्यम् । क्रिया चेह गाथात्रयेऽप्यध्याहाराद् दृश्येति । 'दोसु संखिज्ज
त्ति' द्वयोरङ्गुला-ऽऽवलिकयोः संख्येयौ भागौ पश्यति– अङ्गुलसंख्येयभागमात्रं क्षेत्रं पश्यन्नावलिकायाः संख्येयमेव भागं पश्यती-
त्यर्थः । 'अंगुलमावलियंतो त्ति' अङ्गुलं पश्यन् क्षेत्रतः, कालत आवलिकान्तः– भिन्नामावलिकां पश्यतीत्यर्थः । 'आवलिया
अंगुलपुहुत्तं ति' कालत आवलिकां वीक्षमाणः क्षेत्रतोऽङ्गुलपृथक्त्वं पश्यति । पृथक्त्वं च समयपरिभाषया द्विप्रभृत्यानवभ्यः
सर्वत्र द्रष्टव्यमिति । 'हत्थम्मि मुहुत्तंतो' क्षेत्रतो हस्तप्रमाणक्षेत्रविषयोऽवधिः कालतो मुहूर्तान्तः– भिन्नं मुहूर्तं पश्यतीत्यर्थः । 'दिव-
संतो इत्यादि' कालतो दिवसान्तः– भिन्नं दिवसं वीक्षमाणः क्षेत्रतो गव्यूतविषयो बोद्धव्यः । 'जोयण दिवसपुहुत्तं ति' योजनक्षेत्रविष-
योऽवधिः कालतो दिवसपृथक्त्वं पश्यति[4] । 'पक्खंतो इत्यादि' कालतः पक्षान्तः– भिन्नं पक्षं पश्यन् क्षेत्रतः पञ्चविंशतियोजनानि पश्यति ।
'भरहम्मीत्यादि' भरतक्षेत्रविषयेऽवधौ कालतोऽर्धमासस्तद्विषयत्वेन बोद्धव्यः । जम्बूद्वीपविषये तु साधिको मासः । अर्धतृतीयद्वीपस-
मुद्रलक्षणे मनुष्यलोके तु वर्षं संवत्सरः । रुचकाख्यबाह्यद्वीपविषयेऽवधौ वर्षपृथक्त्वं तद्विषयत्वेनाऽवगन्तव्यम् । 'वर्षसहस्रं' इत्यन्ये ॥
इति निर्युक्तिगाथात्रयार्थः ॥ ६०८ ॥ ६०९ ॥ ६१० ॥

---

१ अङ्गुला-ऽऽवलिकयोर्भागमसंख्येय द्वयोः संख्येयौ । अङ्गुलमावलिकान्तरावलिकाऽङ्गुलपृथक्त्वम् ॥ ६०८ ॥
हस्ते मुहूर्तान्तर्दिवसान्तर्गव्यूते बोद्धव्य· । योजने दिवसपृथक्त्वं पक्षान्तः पञ्चविंशतिम् ॥ ६०९ ॥
भरतेऽर्धमासो जम्बूद्वीपे साधिको मास· । वर्षं च मनुजलोके वर्षपृथक्त्व च रुचके ॥६१०॥ २ घ छ 'सखेज्ज' । ३ घ छ 'पुहत्तं' । ४ घ छ 'ति का' ।

न्धाऽचित्तस्कन्धद्वयस्य तनुर्देहः शरीरं, मूर्तिरिति यावत्, तद्योग्यत्वाभिमुखा वर्गणाः । अथ मिश्रस्कन्धस्वरूपं विवरीषुराह– 'सुहुमो इत्यादि' । 'दरगय त्ति' दरगत ईषत्प्राप्तस्तद्योग्यत्वाभिमुख्येन बादरः परिणामो येनाऽसौ दरगतबादरपरिणामोऽनन्तानन्तपरमाणुप्रचितः सूक्ष्मपरिणाम एवेषद्बादरपरिणामाभिमुखः स्कन्धो मिश्र इत्यर्थः ॥ ६४१ ॥ ६४२ ॥

अचित्तस्कन्धव्याख्यानार्थमाह–

[1]जइणसमुग्घायगईए चउहिं समयेहिं पूरणं कुणइ । लोगस्स तेहिं चेव य संहरणं तस्स पडिलोमं ॥६४३॥

इह निर्युक्तिगाथायां 'तहाऽचित्तो'इति न केवलं मिश्रः, तथैकदेशेन समुदायस्य गम्यमानत्वादचित्तमहास्कन्धश्च भवतीति गम्यते । स चाऽस्यां प्रस्तुतगाथायां योज्यते । कथम् ?, इति चेत् । उच्यते– अचित्तमहास्कन्धः स भवति, यः किम् ? इत्याह– जैनसमुद्घातगत्या "दण्डं प्रथमे समये कपाटमथ चोत्तरे" इत्यादिकेवलिसमुद्घातन्यायेन विस्रसापरिणामवशाद् यश्चतुर्भिः समयैर्लोकस्य पूरणं करोति । संहरणमपि प्रतिलोमं पश्चान्मुखं तस्याचित्तमहास्कन्धस्य तैरेव चतुर्भिः समयैर्द्रष्टव्यम् । एवं च सत्यष्टौ समयान् कालमानेनाऽसौ भवतीति ॥६४३॥

आह– ननु पुद्गला इह विचारयितुमुपक्रान्ताः, ततश्च पुद्गलमहास्कन्धोऽचेतन एव भवति, किं तस्याऽचित्तत्वविशेषणेन, व्यवच्छेद्याभावात् ?, इत्याशङ्क्याह—

[2]जइणसमुग्घायसचित्तकम्मपोग्गलमयं महाखंधं । पइ तस्समाणुभावो होइ अचित्तो महाखंधो ॥६४४॥

जैनसमुद्घाते यः सचेतनजीवाधिष्ठितत्वात् सचित्तः कर्मपुद्गलमयो महास्कन्धस्तं प्रति तमाश्रित्य तद्व्यवच्छेदायेत्यर्थः । किम् ?, इत्याह– प्रस्तुतः पुद्गलमहास्कन्धोऽचित्तमहास्कन्ध इति व्यपदेश्यो भवति– अचित्तविशेषणेन विशेष्यो भवतीत्यर्थः । कुतः ?, इत्याह– यतस्तत्समानुभावः, उपलक्षणत्वात् तत्समक्षेत्र-काला-ऽनुभावः– तेन केवलिसमुद्घातवर्तिना कर्मपुद्गलमयमहास्कन्धेन समास्तुल्याः क्षेत्र-काला-ऽनुभावा यस्याऽसौ तत्समक्षेत्र-काला-ऽनुभावः । तत्र क्षेत्रं सर्वलोकलक्षणं, कालोऽष्टसमयमानः, अनुभावो वर्ण-गन्धादिगुणः ।

अयमत्र भावार्थः– अनन्तानन्तपरमाणुपुद्गलोपचितस्कन्धे वक्तुं प्रस्तुते यदि 'महास्कन्धः, इत्येतावन्मात्रमेवोच्येत, तदा केवलिसमुद्घातगतोऽनन्तानन्तकर्मपुद्गलमयस्कन्धोऽपि लभ्येत, प्रस्तुतमहास्कन्धस्य केवलिसमुद्घातगतकर्मपुद्गलमयमहास्कन्धस्य च समानक्षेत्र-काला-ऽनुभावत्वात्; तथाहि– चतुर्थे समये द्वावपि लोकक्षेत्रं व्याप्नुतः, अष्टसामयिकं च कालं द्वावपि तिष्ठतः, वर्णपञ्चक-गन्धद्वय-रस-

1 जैनसमुद्घातगत्या चतुर्भिः समयैः पूरणं करोति । लोकस्य तैरेव च संहरणं तस्य प्रतिलोमम् ॥ ६४३ ॥ २ गाथा ६३८ ।
2 जैनसमुद्घातसचित्तकर्मपुद्गलमयं महास्कन्धम् । प्रति तत्समानुभावो भवत्यचित्तो महास्कन्धः ॥ ६४४ ॥

तदेकदेशोऽपीति। तथा, कालेऽसंख्येये पल्योपमादिलक्षणेऽवधिविषये सति तस्यैवासंख्येयकालपरिच्छेदकस्यावधेः क्षेत्रतः परिच्छेदतया द्वीप-समुद्राश्च भक्तव्या विकल्पयितव्याः– कदाचिदसंख्येयाः– यदिह कस्यचिद् मनुष्यस्यासंख्येयद्वीप-समुद्रविषयोऽवधिरुत्पद्यते; कदाचिद् महान्तः संख्येयाः, कदाचित्त्वतिमहानेकः, कदाचित्तु तदेकदेशोऽपि स्वयंभूरमणतिरश्चोऽवधिर्विज्ञेयः, स्वयंभूरमणविषयमनुष्यबाह्यावधिर्वा; योजनापेक्षया तु सर्वपक्षेष्वसंख्येयमेव क्षेत्रं द्रव्यम् ॥ इति निर्युक्तिगाथार्थः ॥ ६१५ ॥

अथ भाष्यम्—

कोले[1] असंखए दीव-सागरा खुड्डुया असंखेज्जा। भयणिज्जा य महल्ला खेत्तं पुण तं असंखेज्जं ॥ ६१६ ॥

गतार्थैव। एवं तावत् परिस्थिरन्यायमङ्गीकृत्य क्षेत्रवृद्धौ कालवृद्धिरनियता, कालवृद्धौ तु क्षेत्रवृद्धिर्भवत्येवेति प्रतिपादितम् ॥६१६॥

सांप्रतं द्रव्य-क्षेत्र-काल-भावापेक्षया यद्वृद्धौ यस्य वृद्धिर्भवति, यस्य वा न भवति, अमुमर्थं प्रतिपादयन्नाह—

कोले[2] चउण्ह वुड्ढी कालो भइयव्वो खेत्तवुड्ढीए। वुड्ढीए दव्व-पज्जव भइयव्वा खित्त-कालाओ ॥६१७॥

कालेऽवधिगोचरे वर्धमाने सतीति गम्यते, 'चउण्ह वुड्ढि त्ति' नियमात् क्षेत्रादीनां चतुर्णामपि वृद्धिर्भवति। कालात् सूक्ष्म-सूक्ष्मतर-सूक्ष्मतमत्वात् क्षेत्र-द्रव्य-पर्यायाणां, तथाहि– कालस्य समयेऽपि वर्धमाने क्षेत्रस्य प्रभूतप्रदेशा वर्धन्ते, तद्वृद्धौ चावश्यंभाविनी द्रव्यवृद्धिः, प्रत्याकाशप्रदेशं द्रव्यप्राचुर्यात्; द्रव्यवृद्धौ च पर्यायवृद्धिर्भवत्येव, प्रतिद्रव्यं पर्यायबाहुल्यादिति। यद्येवम्, 'काले वर्धमाने शेषस्य क्षेत्रादित्रयस्य वृद्धिर्भवति' इत्येवमेव वक्तुमुचितम्, कथं 'चतुर्णाम्' इत्युक्तम्?। सत्यम्, किन्तु सामान्यवचनमेतत्, तथाहि– यथा देवदत्ते भुञ्जाने सर्वमपि कुटुम्बं भुङ्क्त इत्यादि। अन्यथा ह्यत्रापि 'देवदत्ताच्छेषमपि कुटुम्बं भुङ्क्ते' इति वक्तव्यं स्यात्, इत्यदोषः। 'कालो भइयव्वो खेत्तवुड्ढीए त्ति' क्षेत्रस्यावधिगोचरस्य वृद्धावाधिक्ये सति कालो भक्तव्यो विकल्पनीयो– वर्धते वा नवा, प्रभूते क्षेत्रे वृद्धिं गते वर्धते कालः, न स्वल्पे इति भावः; अन्यथा हि यदि क्षेत्रस्य प्रदेशादिवृद्धौ कालस्य नियमेन समयादिवृद्धिः स्यात्, तदाऽङ्गुलमात्रादिकेऽपि वर्धिते क्षेत्रे कालस्याऽसंख्येया उत्सर्पिण्यवसर्पिण्यो वर्धेरन्, तथाच वक्ष्यति– 'अंगुलसेढीमित्ते[3] ओसप्पिणीओ असंखेज्जा' इति। ततश्च 'आवलिया[4] अंगुलपुहुत्तं' इत्यादि सर्वं विरुध्येत। तस्मात् क्षेत्रवृद्धौ कालवृद्धिर्भजनीयैव,

१ कालेऽसख्ये द्वीप-सागराः क्षुद्रका असख्येया.। भजनीयाश्च महान्तः क्षेत्रं पुनस्तदसंख्येयम् ॥ ६१६ ॥

२ काले चतुर्णां वृद्धिः कालो भक्तव्य. क्षेत्रवृद्धौ। वृद्धौ द्रव्य-पर्याययोर्भक्तव्यौ क्षेत्र-कालौ ॥ ६१७ ॥ ३ गाथा ६२१। ४ गाथा ६०८।

अयं पुनरचित्तमहास्कन्धोऽचित्तमहास्कन्धान्तरेण सहाऽवगाहना-स्थितिभ्यां तुल्य एव । अतो ज्ञायते– एतस्मादपर एव केचित् ते प्रज्ञापनोक्ता उत्कृष्टप्रदेशिकाः स्कन्धा इति । किञ्च, 'अट्ठप्फासो य जओ भणिओ त्ति' 'उक्कोसपएसो' इत्यनन्तरगाथागतं संबध्यते । ततश्चाष्टस्पर्शस्य यतः प्रज्ञापनायां भणित उत्कृष्टप्रदेशिकः स्कन्धः । एष पुनरचित्तमहास्कन्धो यस्माच्चतुःस्पर्श इष्यते । तस्मादनयैवोत्कृष्टप्रदेशिकस्कन्धानां भेदसिद्ध्या पूर्वोक्तवर्गणामिश्राचित्तमहास्कन्धेभ्योऽन्येऽपि केचिदसंगृहीताः पुद्गलविशेषा अद्यापि सन्तीति श्रद्धेयम्, न पुनरेतावता सर्वोऽपि पुद्गलास्तिकायः संगृहीत इति भावः । तदेवमुक्ता द्रव्यवर्गणाः, 'अह दव्ववग्गणाणं कमो' एतत्पर्यन्ता च व्याख्याता निर्युक्तिगाथा ॥ ६४५ ॥ ६४६ ॥

अथ [1]'विवज्जासओ खेत्ते' एतद्व्याचिख्यासुः क्षेत्रादिवर्गणास्वरूपमाह–

[2]एगपएसोगाढाण वग्गणेगा पएसवुड्ढीए । संखेज्जोगाढाणं संखेज्जा वग्गणा तत्तो ॥ ६४७ ॥

तत्तो संखाईयाऽसंखाइयप्पएसमाणाणं । गंतुमसंखेज्जाओ जोग्गाओ कम्मुणो भणिया ॥ ६४८ ॥

तत्तो संखाईया तस्सेव पुणो हवंति जोग्गाओ । माणसदव्वाईण वि एवं तिविगप्पमेक्केक्कं ॥ ६४९ ॥

विपर्यासतो विपर्यासेन पश्चान्मुखः क्षेत्रविषयो वर्गणाक्रमो वेदितव्यः, न तु द्रव्यवर्गणावदिति भावः । इदमुक्तं भवति– परमाणूनां द्व्यणुकाद्यनन्ताणुकपर्यन्तस्कन्धानां चैकाकाशप्रदेशावगाहिनां सर्वेषामप्येका वर्गणा, द्व्यणुकाद्यनन्ताणुकपर्यन्तस्कन्धानामेव द्विप्रदेशावगाहिनां द्वितीया वर्गणा, त्र्यणुकाद्यनन्ताणुकपर्यन्तस्कन्धानामेव त्रिप्रदेशावगाहिनां तृतीया वर्गणा; एवमेकैकप्रदेशवृद्ध्या संख्येयप्रदेशावगाहिनां स्कन्धानां संख्येया वर्गणाः; ततोऽसंख्येयप्रदेशावगाहिनामपि स्कन्धानां प्रदेशवृद्ध्या असंख्या वर्गणा गत्वाऽतिलङ्घ्याऽसंख्यप्रदेशावगाहिस्कन्धानामेकैकाकाशप्रदेशवृद्ध्या वर्धमानाः कर्मणो ग्रहणयोग्या असंख्येया वर्गणास्तीर्थकरैर्भणिताः । ततोऽनन्तरमल्पपरमाणुनिष्पन्नत्वाद् बादरपरिणामत्वेन बह्वाकाशप्रदेशावगाहित्वाच्च तस्यैव कर्मणोऽग्रहणयोग्या एकैकाशप्रदेशवृद्ध्या वर्धमाना असंख्येया वर्गणा भवन्ति । ततश्चैवमेकैकाकाशप्रदेशावगाहवृद्ध्या वर्धमाना मनसोऽप्यसंख्येया अग्रहणवर्गणाः, पुनरेतावत्य एव

1 गाथा ६३१ । 2 एकप्रदेशावगाढाना वर्गणैका प्रदेशवृद्ध्या । सख्येयावगाढानां सख्येया वर्गणास्ततः ॥ ६४७ ॥
ततः सख्यातीता-ऽसंख्येयप्रदेशमानानाम् । गत्वाऽसख्येया योग्या कर्मणो भणिताः ॥ ६४८ ॥
ततः सख्यातीतास्तस्यैव पुनर्भवन्ति योग्या, । मानसद्रव्यादीनामप्येवं त्रिविकल्पमेकैकम् ॥ ६४९ ॥

सुहुमो य होइ कालो तत्तो सुहुमयरं हवइ खेत्तं । अंगुलसेढीमित्ते ओसप्पिणीओ असंखेज्जा ॥ ६२१ ॥

सूक्ष्मस्तावत्कालो भवति, यस्मादुत्पलपत्रशतभेदे प्रतिपत्रभेदमसंख्येयाः समया लगन्तीत्यागमे प्रतिपाद्यते । न चातिसूक्ष्मत्वेन ते पृथग् विभाव्यन्ते; तथापि ततः कालात् सूक्ष्मतरं भवति क्षेत्रं, यस्मादङ्गुलश्रेणिमात्रे क्षेत्रे प्रतिप्रदेशं समयगणनया[2] प्रदेशपरिमाणमवसर्पिण्योऽसंख्येयास्तीर्थकृद्भिरुक्ताः । इदमुक्तं भवति– अङ्गुलश्रेणिमात्रे क्षेत्रे यः प्रदेशराशिः स प्रतिसमयं प्रदेशापहारेणापह्रियमाणोऽसंख्येयावसर्पिणीभिरपह्रियते ॥ इति निर्युक्तिगाथार्थः ॥ ६२१ ॥

अथ भाष्यम्–

[3]खेत्तं बहुयरमंगुलसेढीमित्ते पएसपरिमाणं । जमसंखेज्जोसप्पिणिसमयसमं थोवओ कालो ॥ ६२२ ॥

गतार्थैव ॥ ६२२ ॥

आह– ननु 'कालात् क्षेत्रं सूक्ष्मं' इत्यवगतम्, क्षेत्रात् तु द्रव्य-भावौ कथंभूतौ ?, इति कथ्यताम्, इत्याशङ्क्य कालात् क्षेत्र-द्रव्य-भावानां यथोत्तरं सूक्ष्मत्वोपदर्शनार्थमाह—

[4]कालो खित्तं दव्वं भावो य जहुत्तरं सुहुमभेया । थोवा-संखा-णंता-संखा य जमोहिविसयम्मि ॥ ६२३ ॥

कालादयो यथोत्तरं सूक्ष्मभेदाः समनुमीयन्ते । कुतः?, यतः सर्वत्रावधिविषये स्वमतियोगिक्षेत्राद्यपेक्षया स्तोकः कालो भणितः, ततः क्षेत्रमसंख्येयगुणं, ततोऽपि द्रव्यमनन्तगुणम्, पर्यायास्तु "[5]दव्वाउ[6] असंखेज्जे संखेज्जे यावि पज्जवे लहइ" इतिवचनाद् द्रव्यादसंख्येयगुणाः, संख्येयगुणा वेति ॥ ६२३ ॥

एतदेव व्यक्तीकृत्य भावयति—

१ सूक्ष्मश्च भवति कालस्ततः सूक्ष्मतरं भवति क्षेत्रम् । अङ्गुलश्रेणिमात्रेऽवसर्पिण्योऽसंख्येयाः ॥ ६२१ ॥ २ क ख ग. 'या प्रतिप्र' ।

३ क्षेत्रं बहुतरमङ्गुलश्रेणीमात्रे प्रदेशपरिमाणम् । यदसंख्येयावसर्पिणीसमयसम स्तोककः कालः ॥ ६२२ ॥

४ कालः क्षेत्रं द्रव्य भावश्च यथोत्तर सूक्ष्मभेदा । स्तोका-ऽसंख्या-ऽनन्ता-ऽसंख्याश्च यदवधिविषये ॥ ६२३ ॥

५ द्रव्यादसंख्येयान्, संख्येयाश्चापि पर्यवान् लभते । ६ क ख ग. 'उ संखेज्जे असं' ।

द्वितीया वर्गणा, कृष्णवर्णगुणत्रययुक्तानां तु तेषां तृतीया वर्गणा। एवमेकैकगुणवृद्ध्या संख्येयकृष्णवर्णगुणानां संख्येया वर्गणाः, असंख्येयकृष्णवर्णगुणानामसंख्येया वर्गणाः, अनन्तकृष्णवर्णगुणानामनन्ता वर्गणा भवन्ति। एवमेकगुणनीलानां, संख्येयगुणनीलानाम्, असंख्येयगुणनीलानां, अनन्तगुणनीलानामपि वाच्यम्। एवं कृष्ण-नील-लोहित-हारिद्र-शुक्ललक्षणाः पञ्च वर्णाः, सुरभी-तरौ द्वौ गन्धौ, तिक्त-कटु-कषाया-ऽऽम्ल-मधुराः पञ्च रसाः, कर्कश-मृदु-गुरु-लघु-शीतो-ष्ण-स्निग्ध-रूक्षास्त्वष्टौ स्पर्शाः। एवमेतेषु वर्ण-गन्धादिगतविंशतिभेदेषु प्रत्येकं सर्वत्रैकगुणानामेका, संख्येयगुणानां संख्येयाः, असंख्येयगुणानामसंख्येयाः, अनन्तगुणानामनन्तवर्गणा वाच्याः। नवरं यो यत्र वर्ण-गन्धादिभेदस्तत्र तदभिलापः कार्य इति। तथा, गुरुलघुपर्यायाणां बादरपरिणामान्वितवस्तूनामेका वर्गणा, अगुरुलघुपर्यायाणां तु सूक्ष्मपरिणामपरिणतवस्तूनामेका वर्गणा, एवमेतौ द्वावेव वर्गौ भवतः। तदेवमेताभिर्भाववर्गणाभिः सर्वोऽपि पुद्गलास्तिकायः संगृह्यते, यथोक्तवर्णादिभावेभ्योऽन्यत्र पुद्गलानामभावादिति ॥ ६५१ ॥ ६५२ ॥ ६५३ ॥

तदेवं द्रव्य-क्षेत्र-काल-भाववर्गणाः प्रतिपाद्य प्रकृतं स्मरयन्नुपसंहरन्नाह–

[1]भणियं तेया-भासाविमज्झदव्वावगाहपरिमाणं। ओहिन्नाणारंभो परिणिट्ठाणं च तं जेसु ॥६५४॥

तदेवं भणितं प्रतिपादितम्। किम्?, इत्याह– तैजस-भाषयोर्विमध्येऽन्तराले यानि तदयोग्यद्रव्याणि तेषामवगाहपरिमाणं, उपलक्षणत्वादनन्तपरमाणुप्रचितस्कन्धात्मकत्वादिकं तत्स्वरूपं चोक्तम्। येषु द्रव्येषु किम्?, इत्याह– येष्ववधिज्ञानस्यारम्भः प्रथमोत्पत्तिलक्षणः, परिनिष्ठानं च प्रतिपतनं तत्– समयप्रसिद्धं येषु। इदमुक्तं भवति– '[2]तेया-भासादव्वाण अंतरा एत्थ लभइ पट्ठवओ' इत्युपजीव्य पूर्वं विनेयेन पृष्टम्– तैजस-भाषान्तराले यदयोग्यं द्रव्यं तत् कतमस्वरूपं, कतिप्रदेशावगाढं च? इति। अस्य च शिष्यप्रश्नस्य गुरुणौदारिकवर्गणाः प्ररूपयता दत्तमुत्तरमिति ॥ ६५४ ॥

इह च गुरुलघु, अगुरुलघु च द्रव्यमवधिः प्रथमं पश्यतीति पूर्वमुक्तम्, तत्र गुरुलघुद्रव्यारब्धस्य, अगुरुलघुद्रव्यारब्धस्य चावधेर्यत् स्वरूपं भवति, तद् दर्शयन्नाह–

[3]गुरुलहुदव्वारद्धो गुरुलहुदव्वाइं पिच्छिउं पच्छा। इयराइं कोइ पेच्छइ विसुज्झमाणो कमेणेव ॥ ६५५ ॥

1 भणितं तैजस-भाषाविमध्यद्रव्यावगाहपरिमाणम्। अवधिज्ञानारम्भः परिनिष्ठानं च तद् येषु ॥ ६५४ ॥ 2 गाथा ६२७।
3 गुरुलघुद्रव्यारब्धो गुरुलघुद्रव्याणि प्रेक्ष्य पश्चात्। इतराणि कश्चित् प्रेक्षते विशुध्यमानः क्रमेणैव ॥ ६५५ ॥

चावधिज्ञानं तदावरणोदयात् प्रतिपतत् तेनैवोक्तस्वरूपद्रव्येणोपलब्धेन[1] सता निष्ठां याति प्रतिपततीत्यर्थः। अपिशब्देन चैतज्ज्ञापयति– प्रतिपातिन्यवधिज्ञानेऽयं न्यायः, न चैतदवश्यं प्रतिपतत्येव ॥ इति निर्युक्तिगाथार्थः ॥ ६२७ ॥

अथ भाष्यम्–

[2]पट्ठवओ नामावहिनाणस्सारंभओ तयाईए। उभयाजोग्गं पेच्छइ तेयाभासंतरे दव्वं ॥ ६२८ ॥

गुरुलहु तेयासन्नं भासासन्नमगुरुं च पासेज्जा। आरंभे जं दिट्ठं दट्ठूणं पडइ तं चेव ॥ ६२९ ॥

गाथाद्वयमपि गतार्थम्, नवरं 'नाम' इति शिष्यामन्त्रणे, तैजसद्रव्यासन्नं गुरुलघु, भाषाद्रव्यासन्नं त्वगुरुलघु पश्येदिति॥६२८॥६२९॥

तैजस-भाषाद्रव्याणामन्तरे तदयोग्यं द्रव्यं पश्यतीत्युक्तम्, अतो विनेयः पृच्छति–

[3]तेया-भासाजोग्गं किमजोग्गं वा तयंतराले जं। ओरालियाइतणुवग्गणाकमेणं तयं सज्झं ॥ ६३० ॥

यत् तैजसशरीर-भाषयोर्योग्यमुचितं द्रव्यं, अयोग्यं वा तदन्तराले यदुक्तं तत् किं– कतमस्वरूपं, कियत्प्रदेशं वा? इति कथ्यताम्। अत्रोच्यते– हन्त! परमाणु-द्व्यणुक-त्र्यणुकादिस्कन्धोपचयादौदारिकादिशरीरवर्गणाप्ररूपणक्रमेणैव तत् साध्यं प्ररूपयितुं शक्यं, नान्यथेत्यर्थः ॥ ६३० ॥

अत उच्यते–

[4]ओराल-विउव्वा-हार-तेय-भासा-णपाण-मण-कम्मे। अह दव्ववग्गणाणं कमो विवज्जासओ खेत्ते ॥६३१॥

एतां निर्युक्तिगाथां भाष्यकारः 'कुविकर्णगोप-' इत्युदाहरणपूर्वकं विस्तरतः स्वयमेव व्याख्यास्यतीति ॥ ६३१ ॥

तथा च भाष्यम्–

---

१ घ. छ. 'क्तद्रव्यस्वरूपेणो'। २ प्रस्थापको नामावधिज्ञानस्यारम्भकस्तदादौ। उभयायोग्य प्रेक्षते तैजस-भाषान्तरे द्रव्यम् ॥ ६२८ ॥ गुरुलघु तैजसासन्नं भाषासन्नमगुरु च पश्येत्। आरम्भे यद् दिष्टं दृष्ट्वा पतति तदेव ॥ ६२९ ॥ ३ तैजस-भाषायोग्यं किमयोग्यं वा तदन्तराले यत्। औदारिकादितनुवर्गणाक्रमेण तत् साध्यम् ॥ ६३० ॥ ४ औदारिक-वैक्रिया-ऽऽहार-तैजस-भाषा-ऽऽनपान-मनः-कर्मसु। अथ द्रव्यवर्गणानां क्रमो विपर्यासत. क्षेत्रे ॥ ६३१ ॥

गुरुयं लहुयं उभयं नोभयमिति वावहारियनयस्स । दव्वं, लेट्टुं दीवो वाऊ वोमं जहासंखं ॥ ६५९ ॥
निच्छयओ सव्वगुरुं सव्वलहुं वा न विज्जए दव्वं । बायरमिह गुरुलहुयं अगुरुलहुं सेसयं सव्वं[2] ॥६६०॥

इह यदूर्ध्वं तिर्यग् वा प्रक्षिप्तमपि पुनर्निसर्गादधो निपतति तद् गुरु द्रव्यम्, यथा लेष्ट्वादि । यत्तु निसर्गत एवोर्ध्वगतिस्वभावं द्रव्यं तल्लघु, यथा दीपकलिकादि । यत्तु नोर्ध्वगतिस्वभावं नाप्यधोगतिस्वभावं, किं तर्हि ?, स्वभावेनैव तिर्यग्गतिधर्मकं तद् द्रव्यं गुरुलघु, यथा वाय्वादि । यत्पुनरूर्ध्वा-ऽध-स्तिर्यग्गतिस्वभावानामेकतरस्वभावमपि न भवति, सर्वत्र वा गच्छति तद् गुरुलघु, यथा व्योम-परमाण्वादि । इति व्यावहारिकनयमतम् ।

निश्चयतस्तु– निश्चयनयमतेन, सर्वगुरु– एकान्तेन गुरुस्वभावं किमपि वस्तु नास्ति, गुरोरपि लेष्ट्वादेः परप्रयोगादूर्ध्वादिगमन-दर्शनात् । एकान्तेन लघ्वपि नास्ति, अतिलघोरपि बाष्पादेः करताडनादिनाऽधोगमनादिदर्शनात् । तस्माद् नैकान्तेन गुरु लघु वा किमपि वस्त्वस्ति । अतो निश्चयनयस्येयं परिभाषा– यत् किमप्यत्र लोके औदारिकवर्गणादिकं भू-भूधरादिकं वा बादरं वस्तु तत् सर्वं गुरुलघु, शेषं तु भाषा-ऽऽना-ऽपान-मनोवर्गणादिकं परमाणु-द्व्यणुक-व्योमादिकं च सर्वं वस्त्वगुरुलघ्विति ॥ ६५९ ॥ ६६० ॥

अत्र परः प्राह–

[3]जइ गुरुयं लहुयं वा न सव्वहा दव्वमत्थि तो कीस। उड्ढमहो वि य गमणं जीवाणं पोग्गलाणं च ?॥६६१॥
उड्ढं लहुकम्माणं भणियं गुरुकम्मणामहोगमणं । जीवा य पोग्गला वि य उड्ढा-होगामिणो पायं ॥६६२॥

यदि भो निश्चयनयमतवादिन् ! एकान्तगुरु एकान्तलघु वा सर्वथा द्रव्यं नास्ति, तर्हि किमित्यूर्ध्वम्, अधोऽपि च जीवानां पुद्गलानां च गमनं भवति ?। पर एव स्वपक्षं भावयति– यत ऊर्ध्वं सौधर्मदेवलोकादौ लघुकर्मणां जीवानां गमनं भणितमागमे, गुरुकर्मणां त्वधः सप्तमपृथिव्यादौ गमनमभिहित । अथवा, किमित्थमभिहितेन ?, सर्वेषामपि समयवेदिनां प्रसिद्धमेवेदं यदुत– जीवाश्च पुद्गला अपि

१ गुरुक लघुकमुभयं नोभयमिति व्यावहारिकनयस्य । द्रव्यं, लेष्टु दीपो वायुर्व्योम यथासंख्यम् ॥ ६५९ ॥ निश्चयत सर्वगुरु सर्वलघु वा न विद्यते द्रव्यम् । बादरमिह गुरुलघुकमगुरुलघु शेषक सर्वम् ॥ ६६० ॥ २ घ छ 'दव्व'।
३ यदि गुरुकं लघुकं वा न सर्वथा द्रव्यमस्ति तत कस्मात् । ऊर्ध्वमधोऽपि च गमन जीवानां पुद्गलानां च ? ॥ ६६१ ॥ ऊर्ध्वं लघुकर्मणां भणित गुरुकर्मणामधोगमनम् । जीवाश्च पुद्गला अपि च ऊर्ध्वा-ऽधोगामिन. प्रायः ॥ ६६२ ॥

चतुष्प्रदेशिकस्कन्धानां चतुर्थी, पञ्चप्रदेशिकस्कन्धानां पञ्चमी, षट्प्रदेशिकस्कन्धानां षष्ठी; एवमेकैकोत्तरवृद्ध्याऽनन्ता वर्गणा औदारिकशरीरस्याऽग्रहणयोग्या विलङ्घ्याऽत्रान्तरे तथाविधविशिष्टपरिणामपरिणतानन्तप्रदेशिकस्कन्धानामेकोत्तरवृद्ध्यौदारिकशरीरग्रहणप्रायोग्या अनन्ता वर्गणा भवन्ति- औदारिकशरीरनिर्वर्तनयोग्या इत्यर्थः। ततः प्रदेशवृद्ध्या वर्धमाना औदारिकस्यैवाऽग्रहणयोग्या अनन्ता वर्गणा भवन्ति। एताश्च प्रभूतद्रव्यनिष्पन्नत्वात् सूक्ष्मपरिणामोपेतत्वाच्चौदारिकस्याऽग्रहणयोग्या मन्तव्याः। इह च स्वल्पपरमाणुनिष्पन्नत्वाद् बादरपरिणामयुक्तत्वाच्च वैक्रियस्याऽप्यग्रहणयोग्या एवैताः, केवलमौदारिकवर्गणानामासन्नत्वेन तदाभासत्वात् तदग्रहणयोग्या उच्यन्त इति ॥ ६३३ ॥ ६३४ ॥ ६३५ ॥

अथ कार्मणपर्यन्तानां शेषवर्गणानामतिदेशमाह-

एवमजोग्गा जोग्गा पुणो अजोग्गा य वग्गणाणंता। वेउव्वियाइयाणं नेयं तिविगप्पमिक्केक्कं ॥ ६३६ ॥[1]

एवमुक्तानुसारेणाऽयोग्याः, ततो योग्याः, पुनरयोग्याः प्रत्येकमनन्ता वर्गणा इति। एवं वैक्रिया-ऽऽहारक-तैजस-भाषा-ऽऽनपान-मनः-कर्मणामेकैकं त्रिविकल्पं त्रिभेदं ज्ञेयम्। इति गाथाऽक्षरार्थः।

भावार्थस्तूच्यते- पुनरौदारिकाग्रहणप्रायोग्यवर्गणानामुपर्येकोत्तरवृद्ध्या वर्धमानाः स्वल्पद्रव्यनिष्पन्नत्वाद् बादरपरिणामयुक्तत्वाच्च वैक्रियशरीरस्याऽग्रहणयोग्या अनन्ता वर्गणा भवन्ति। एताश्च प्रचुरद्रव्यनिर्वृत्तत्वात् सूक्ष्मपरिणामत्वाच्चौदारिकस्याऽप्यग्रहणप्रायोग्या एव, केवलं वैक्रियवर्गणासन्नत्वेन तदाभासत्वात् तदग्रहणयोग्यवर्गणाः प्रोच्यन्त इति। एवमुत्तरत्रापि सर्वत्र भावनीयम्। ततश्चैकोत्तरवृद्ध्या वर्धमानाः प्रचुरद्रव्यनिर्वृत्तत्वात्तथाविधसूक्ष्मपरिणामत्वाच्च वैक्रियशरीरस्य ग्रहणयोग्या अनन्ता वर्गणा भवन्ति। ततश्चैकोत्तरवृद्ध्या वर्धमानाः प्रचुरद्रव्यत्वात् सूक्ष्मतरपरिणामत्वाच्च वैक्रियस्याऽग्रहणयोग्या अनन्ता वर्गणा भवन्ति। ततो वैक्रियाग्रहणयोग्यवर्गणानामनन्तरमेकोत्तरवृद्ध्या वर्धमानाः स्वल्पद्रव्यनिष्पन्नत्वाद् बादरपरिणामत्वाच्चाऽऽहारकशरीरस्याग्रहणयोग्या अनन्ता वर्गणा भवन्ति। ततश्चैकोत्तरवृद्ध्या वर्धमानाः प्रचुरद्रव्यनिष्पन्नत्वात् तथाविधसूक्ष्मतरपरिणामत्वाच्चाऽऽहारकशरीरस्य ग्रहणयोग्या अनन्ता वर्गणा भवन्ति। ततोऽप्येकोत्तरवृद्ध्या वर्धमाना बहुतमद्रव्यनिर्वृत्तत्वादतिसूक्ष्मपरिणामत्वाच्चाऽऽहारकशरीरस्याऽग्रहणयोग्या अनन्ता वर्गणा भवन्ति। एवं तैजसस्य, भाषायाः, आना-ऽपानयोः, मनसः, कर्मणश्च यथोत्तरमेकोत्तरप्रदेशवृद्ध्युपेतानां प्रत्येकमनन्तानामयोग्यानां योग्यानां पुनरयोग्यानां वर्गणानां पृथक् पृथक् त्रयमायोजनीयामिति ॥ ६३६ ॥ ॥३२९॥

[1] एवमयोग्या योग्या. पुनरयोग्याश्च वर्गणा अनन्ताः। वैक्रियादिकाना ज्ञेय त्रिविकल्पमेकैकम् ॥ ६३६ ॥

त्कटेन गुरुताऽतिक्रमं दर्शयति– 'किं व विमाणेत्यादि' यदि गुरुताऽधोगतिनिबन्धनमिष्यते, तर्हि हन्त ! किमित्यानतदेवलोकविमानादीनाम्, आदिशब्दादीषत्प्राग्भारापृथिव्यादीनां महागुरूणामप्यधोगमनं न भवति ?। तस्मात् तत्राप्युत्कटः स्थितिपरिणाम एव गुरुतामतिक्रम्य तेषामवस्थितिं करोतीति । अथ यदुक्तम्– 'अन्नो दव्वाण वीरियपरिणामो' इति, एतत्समर्थनार्थमाह– 'तणुयरदेहो इत्यादि' तनुतरशरीरो महावीर्यो देवो वा किमिति महाशैलं कमप्युत्क्षिपति, उत्क्षिप्य चोर्ध्वं प्रक्षिपति ?। इदमुक्तं भवति– यदि गुरुतादयोऽधोगत्यादिकारणं भवेयुस्तदाऽसौ महाशैलो निजगुरुतया महावीर्यवन्तं देवमाक्रम्याधस्तादेव यायादिति ॥६६४॥६६५॥

अत्र पराभिप्रायमाशङ्क्योत्तरमाह–

[2]अह तस्स वीरियं तं तो नाहो गमणकारणं गुरुया । उड्ढगइकारणं वा लहुया एगंतओ जुत्ता ॥६६६॥

अथ मन्यसे– देवस्य संबन्धि तद् महावीर्यं येन गुरुरपि पर्वत ऊर्ध्वमुत्क्षिप्यते । हन्त ! ततस्तर्ह्येकान्ततो नाऽधोगतिकारणं गुरुतैव, नाप्येकान्तेनोर्ध्वगतिकारणं लघुतैव युक्ता । किं तर्हि ?, देवादिगतं वीर्यमपि, इत्यायातम् ॥ ६६६ ॥

ततश्च–

[3]विरियं गुरु-लहुयाणं जहाहियं गइविवज्जयं कुणइ । तह गइ-ठिइपरिणामो गुरु-लहुयाओ विलंघेइ॥६६७॥

यथोक्तन्यायेन देवादिगतं वीर्यमधिकं सद् वस्तूनां गुरु-लघूनां गतिविपर्ययं करोति, तथा गति-स्थितिपरिणामोऽप्यधिकः प्रागुक्तन्यायेन वस्तूनां गुरु-लघुते विलङ्घयत्येव– गतिविपर्ययं करोत्येवेत्यर्थः । यथा गुरौ पर्वते देववीर्याद् गतिविपर्ययो दर्शितः, एवं लघावपि वाष्पादौ करताडिते देवदत्तादिवीर्याद् गतिविपर्ययो दृश्यः । तस्माद् नैकान्तेनाऽधोगत्यादिकारणं गुरुतादयः । किं तर्हि ?, देवादिगतं वीर्यमपि, महीध्र-वाष्पादिषु तथादर्शनात् । तथोत्कटो गति-स्थितिपरिणामोऽपि तत्कारणम्, परमाणु-धूम-विमानादिषु तथादर्शितत्वात्; अतः किमधोगत्यादिसिद्धये गुर्वादिवस्तुचतुष्टयाभ्युपगमेन ?। तत इयमेव परिभाषा युक्तिमती– बादरं गुरुलघु, शेषं तु सूक्ष्मं, अमूर्तं च सर्वं वस्त्वगुरुलघु । इति निश्चयनयः ॥ ६६७ ॥

अथोत्तरनिर्युक्तिगाथासंबन्धनार्थमाह–

---

१ गाथा ६६३ । २ अथ तस्य वीर्यं तत् ततो नाधोगमनकारणं गुरुता । ऊर्ध्वगतिकारणं वा लघुतैकान्ततो युक्ता ॥ ६६६ ॥
३ वीर्यं गुरु-लघुकानां यथाऽधिकं गतिविपर्ययं करोति । तथा गति-स्थितिपरिणामो गुरुलघुते विलङ्घयति ॥ ६६७ ॥

बहुद्रव्योपचितत्वेन, अतिसूक्ष्मपरिणामत्वेन च सर्वजीवैरौदारिकादिभावेन कदाचिदप्यग्रहणादिति । इतश्चोर्ध्वमित्थमेवैकोत्तरवृद्धिक्रमेण वर्धमाना ध्रुववर्गणाभ्य इतरा अध्रुववर्गणा अनन्ता भवन्ति । एताश्च तथाविधपुद्गलपरिणामवैचित्र्यात् कदाचिल्लोके न भवन्त्यपि । अत एवाध्रुवा एता उच्यन्ते । ततश्च शून्याः, इतराश्चाऽशून्या वर्गणा भवन्ति । इह च सूचकत्वात् सूत्रस्याह– 'एकोत्तरेत्यादि' एकोत्तरवृद्ध्या कदाचिच्छून्यानि व्यवहितान्यन्तराणि यासां ताः शून्यान्तरा अपि भवन्ति यास्ताः शून्यान्तरवर्गणा भण्यन्ते । एता ह्येकोत्तरवृद्ध्या निरन्तरमनन्ताः सदैव प्राप्यन्ते, परं कदाचिदेकोत्तरवृद्धिरेतास्वन्तराऽन्तरा त्रुट्यति– न नैरन्तर्येण प्राप्यन्त इति भावः । एकोत्तरवृद्ध्या सर्वदैवाऽशून्यान्यव्यवहितान्यन्तराणि यासां ता अशून्यान्तराः । एता ह्यशून्यान्तरवर्गणा एकोत्तरवृद्ध्या निरन्तरमेव लोके सदैव प्राप्यन्ते, न पुनरेकोत्तरवृद्धिरेतास्वन्तराले कदापि त्रुट्यतीति भावः ॥ ६३९ ॥ ६४० ॥

'चउधुवणंतर-'[1] इत्यादि व्याचिख्यासुराह–

धुवणंतराइं[2] चत्तारि जं धुवाइं अणंतराइं च । भेयपरिणामओ जा सरीरजोग्गत्तणाभिमुहा ॥ ६४१ ॥
खंधदुगदेहजोग्गत्तणेण वा देहवग्गणाउ त्ति । सुहुमो दरगयबायरपरिणामो मीसयक्खंधो ॥ ६४२ ॥

ततोऽशून्यान्तरवर्गणानामुपरि ध्रुवानन्तराणि चत्वारि वर्गणाद्रव्याणि भवन्ति, यद् यस्मात् तानि ध्रुवाणि सर्वकालभावीनि, अनन्तराणि च निरन्तरैकोत्तरवृद्धिभाञ्जीति । इदमुक्तं भवति– आद्या ध्रुवानन्तरवर्गणा अनन्ता भवन्ति, एवमेतावत्यो द्वितीयाः, तृतीयाः, चतुर्थाश्च वाच्याः । ध्रुववर्गणाः प्रागप्युक्ताः, परं ताभ्य एता भिन्ना एव, न पुनस्तास्वन्तर्भवन्ति, अतिसूक्ष्मपरिणामत्वाद् बहुद्रव्योपचितत्वाच्चेति पृथगुक्ताः । आह– ननु भवत्वेवम्, केवलं यद्येता निरन्तरमेकोत्तरवृद्धिभाजः, तर्हि चातुर्विध्ये किं कारणम्? । सत्यम्, किन्तु चतसृणामपि वर्गणानां मध्येष्वेव नैरन्तर्येणैकोत्तरवृद्धिः प्राप्यते, अन्तरालेषु पुनस्तस्यास्त्रुटिसंभवे सत्येव भिन्नवर्गणारम्भः, अन्यद् वा किञ्चिद्वर्णादिपरिणामवैचित्र्यं तद्भेदारम्भे कारणम्, इति बहुश्रुता विदन्तीति । एवं वक्ष्यमाणतनुवर्गणास्वपि वाच्यमिति । एतासां चतसृणां ध्रुवानन्तरवर्गणानामुपरि प्रत्येकमेकोत्तरवृद्धियुक्तानन्तवर्गणात्मिकाश्चतस्र एव तनुवर्गणा भवन्ति । एताश्च तनूनामौदारिकादिशरीराणां भेदा-ऽभेदपरिणामाभ्यां योग्यत्वाभिमुखा इति तनुवर्गणा देहवर्गणा उच्यन्ते । अथवा, वक्ष्यमाणमिश्रस्क-

१ गाथा ६३८ । २ ध्रुवानन्तराणि चत्वारि यद् ध्रुवाण्यनन्तराणि वा । भेदपरिणामतो याः शरीरयोग्यत्वाभिमुखाः ॥ ६४१ ॥
स्कन्धद्विकदेहयोग्यत्वेन वा देहवर्गणा इति । सूक्ष्मो दरगतबादरपरिणामो मिश्रकस्कन्धः ॥ ६४२ ॥

[1]सयलं लोयं पासं पासइ पल्लोवमं स देसूणं । सुद्धाण किमत्थाणे गहणमिहं खेत्त-कालाणं ? ॥ ६७१ ॥

कम्मदव्वमइओ पेच्छइ दुगमित्तियं ति जं भणियं । उवरिं पि तओ कमसो साहिज्जा तयणुमाणेणं॥६७२॥

यो मनोद्रव्यं मुणति स लोक-पल्योपमयोः प्रत्येकं संख्येयतमं भागं 'मुणति' इत्यत्रापि संबध्यते । यः पुनः कर्मणो योग्यं द्रव्यं पश्यति स लोक-पल्योपमयोः प्रत्येकं संख्येयान् भागान् 'पश्यति' इत्यत्रापि योज्यते । सकलं लोकं पश्यन् स प्रस्तुतोऽवधिर्देशोनं पल्योपमं पश्यति । परः प्राह– द्रव्येण सहोपनिबन्धे प्रस्तुते किमितीहाऽस्थाने शुद्धयोरेव द्रव्यरहितयोः क्षेत्र-कालयोर्ग्रहणम् ? । अत्राऽऽचार्यः सामर्थ्याद् द्रव्यं प्राप्यत इति दर्शयति– 'कम्मदव्वेत्यादि' कर्मद्रव्यमतीतोऽतिक्रान्तस्तदुपर्यन्यदपि किञ्चिद् द्रव्यं पश्यन्नेतावत्प्रमाणं लोकं देशोनपल्योपममानं क्षेत्र-काललक्षणं द्वयमवधिः पश्यति, नान्यथेति । इदमुक्तं भवति– 'काले चउण्ह वुड्ढी' इति वचनादयमत्र सामर्थ्यप्रापितोऽर्थो लभ्यत इत्यर्थः । ततः सामर्थ्यादेव तदुपर्यपि ध्रुववर्गणादिद्रव्यं पश्यतस्तदनुमानेन क्रमशः परमावधिं यावत् साधयेत् ॥ इति गाथात्रयार्थः ॥ ६७० ॥ ६७१ ॥ ६७२ ॥

अथापरमपि द्रव्य-क्षेत्र-कालोपनिबन्धमाह–

[3]तेया-कम्मसरीरे तेयादव्वे य भासदव्वे य । बोधव्वमसंखेज्जा दीव-समुद्दा य कालो य ॥ ६७३ ॥

शरीरशब्दः प्रत्येकमभिसंबध्यते । तैजसशरीरे कार्मणशरीरे चैतद्विषयेऽवधावित्यर्थः; तथा, तैजसवर्गणाद्रव्यविषयेऽवधौ, भाषावर्गणाद्रव्यगोचरे चावधौ क्षेत्रतः प्रत्येकमसंख्येया द्वीप-समुद्राः, कालश्चासंख्येयः पल्योपमासंख्येयभागरूपो विषयत्वेन बोद्धव्यः । इह चाविशेषोक्तावपि तैजसशरीरात् कार्मणशरीरस्य सूक्ष्मत्वात् तद्दर्शिन इदमेव द्वीप-समुद्र-कालासंख्येयकं बृहद् द्रष्टव्यम् । कार्मणशरीरादप्यबद्धानां तैजसवर्गणाद्रव्याणां सूक्ष्मत्वात् तद् बृहत्तरं, तेभ्योऽपि भाषाद्रव्याणां सूक्ष्मत्वात् तद् बृहत्तमं द्रष्टव्यम् । आह– ननु पूर्वं कर्मद्रव्यदर्शिनः प्रत्येकं लोक-पल्योपमभागाः संख्येया विषयत्वेनोक्ताः, अत्र तु कार्मणशरीरदर्शिनः किमिति स्तोकौ क्षेत्र-कालौ विषयत्वेनोक्तौ ? । अत्रोच्यते– पूर्वं कर्मद्रव्याणि कर्मवर्गणागतानि जीवेन शरीरतयाऽबद्धान्युक्तानि, अत्र तु तद्रूपतया बद्धानि गृही-

१ सकल लोक पश्यन् पश्यति पल्योपम स देशोनम् । शुद्धयोः किमस्थाने ग्रहणमिह क्षेत्र-कालयोः ? ॥ ६७१ ॥
कर्मद्रव्यमयः प्रेक्षते द्विकमात्रमिति यद् भणितम् । उपर्यपि ततः क्रमशः साधयेत् तदनुमानेन ॥ ६७२ ॥ २ गाथा ६१७ ।

३ तैजस-कर्मशरीरे तैजसद्रव्ये च भाषाद्रव्ये च । बोद्धव्या असंख्येया द्वीप-समुद्राश्च कालश्च ॥ ६७३ ॥

पञ्चक-स्पर्शचतुष्टयलक्षणगुणयुक्तौ च द्वावपि भवतः। तदेवं 'महास्कन्धः' इत्युक्तेऽनन्तानन्तकर्मपुद्गलमयमहास्कन्धः केवलिसमुद्घातगतोऽपि लभ्येत, तस्यापि प्रस्तुतमहास्कन्धसमानक्षेत्र-काला-ऽनुभावत्वात्। न च तेनेह प्रयोजनम्। अतोऽचित्तविशेषणेन तद्व्यवच्छेदः क्रियते, जीवाधिष्ठितत्वेन किल तस्य सचेतनत्वादिति ॥ ६४४ ॥

अथाऽत्र केषांचिद् मतमुपदर्श्य निराकुर्वन्नाह–

सव्वुक्कोसपएसो एसो केई, न चायमेगंतो। उक्कोसपएसो जमवगाहट्ठिइओ चउट्ठाणो ॥ ६४५ ॥

अट्ठप्फासो य जओ भणिओ, एसो य जं चउप्फासो। अण्णे वि तओ पोग्गलभेया संति त्ति सद्धेयं ॥६४६॥

एष प्रस्तुतोऽचित्तमहास्कन्धः सर्वोत्कृष्टप्रदेशनिर्वृत्तो, नान्यः। अयं ह्यौदारिकादिवर्गणाः सर्वा अप्यभिधाय पर्यन्ते प्रोक्तः; अतो ज्ञायते– अयमेव सर्वोत्कृष्टपरमाणुसंख्यामचितो, न स्कन्धान्तराणि; निवर्तते ह्यत ऊर्ध्वं सर्वापि पुद्गलविशेषाणां कथेति भावः। इत्येवं केचिद् व्याचक्षते। न चाऽयमेकान्तो नैतद् व्याख्यानं संगतमित्यर्थः, यद् यस्मादुत्कृष्टप्रदेशः स्कन्धः प्रतियोग्युत्कृष्टप्रदेशस्कन्धान्तरापेक्षया प्रज्ञापनायामवगाहना-स्थितिभ्यां चतुःस्थानपतित उक्तः। तथाच तत्सूत्रम्–

"उक्कोसपएसियाणं भंते! खंधाणं केवइया पज्जवा पण्णत्ता?। गोयमा! अणंता। से केणट्ठेण भंते! एवं वुच्चइ?। गोयमा! उक्कोसपएसिए खंधे उक्कोसपएसियस्स खंधस्स दव्वट्ठियाए तुल्ले (एकैकद्रव्यत्वात्), पएसट्ठियाए तुल्ले (उत्कृष्टप्रदेशिकस्यैव प्रस्तुतत्वात्), ओगाहणट्ठियाए चउट्ठाणवडिए, तं जहा– असंखेज्जभागहीणे वा, संखेज्जभागहीणे वा; संखेज्जगुणहीणे वा, असंखेज्जगुणहीणे वा; असंखेज्जभागब्भहिए वा, संखेज्जभागब्भहिए वा, संखेज्जगुणब्भहिए वा, असंखेज्जगुणब्भहिए वा। एवं ठिईए वि चउट्ठाणवडिए, वण्ण-गंध-रस०। अट्ठहिं फासेहिं छट्ठाणवडिए"।

---

१ सर्वोत्कृष्टप्रदेश एष केचित्, न चायमेकान्तः। उत्कृष्टप्रदेशो यदवगाह-स्थितितश्चतुःस्थानः ॥ ६४५ ॥
अष्टस्पर्शश्च यतो भणितः, एष च यच्चतुःस्पर्शः। अन्येऽपि ततः पुद्गलभेदाः सन्तीति श्रद्धेयम् ॥ ६४६ ॥

२ उत्कृष्टप्रदेशिकानां भगवन्! स्कन्धानां कतिपये पर्यवाः प्रज्ञप्ताः?। गौतम! अनन्ताः। केनार्थेन भगवन्! एवमुच्यते?। गौतम! उत्कृष्टप्रदेशिकः स्कन्ध उत्कृष्टप्रदेशिकस्य स्कन्धस्य द्रव्यार्थतया तुल्यः, प्रदेशार्थतया तुल्यः, अवगाहनार्थतया चतुःस्थानपतितः, तद्यथा- असंख्येयभागहीनो वा, संख्येयभागहीनो वा; संख्येयगुणहीनो वा, असंख्येयगुणहीनो वा; असंख्येयभागाभ्यधिको वा, संख्येयभागाभ्यधिको वा; संख्येयगुणाभ्यधिको वा, असंख्येयगुणाभ्यधिको वा। एवं स्थित्याऽपि चतुःस्थानपतितः; वर्ण-गन्ध-रस०। अष्टाभिः स्पर्शैः षट्स्थानपतितः।

सूक्ष्मत्वात् तदुपलम्भे बादराणां कार्मणशरीरादीनामुपलम्भो गम्यत एव, इति व्यर्थस्तेषां पृथगुपन्यासः; अथवा 'एकप्रदेशावगाढं' इत्यपि न वक्तव्यम्, 'रूपगतं लभते सर्वम्' इत्यस्य वक्ष्यमाणत्वात्। अत्रोच्यते– यः सूक्ष्मं परमाण्वादि पश्यति तेन बादरं कार्मणशरीराद्यवश्यमेव द्रष्टव्यम्, यो वा बादरं पश्यति तेन सूक्ष्ममवश्यं ज्ञातव्यमित्ययं न कोऽपि नियमः, यस्मात् '[1]तेयाभासादव्वाण अंतरा' इत्यादिवचनादुत्पत्तावगुरुलघु द्रव्यं पश्यन्नप्यवधिर्न गुरुलघूपलभते, अन्यद्वाऽतिस्थूरमपि घटादिकं च; मनःपर्यायज्ञानी मनोद्रव्याणि सूक्ष्माण्यपि पश्यति, चिन्तनीयं तु घटादि स्थूरमपि न पश्यति; एवं विज्ञानविषयवैचित्र्यसंभवे सति संशयव्यवच्छेदार्थमेकप्रदेशावगाढग्रहणे सत्यपि शेषविशेषोपादानमदोषायैवेति। अथवैकप्रदेशावगाढग्रहणेन परमाण्वादि द्रव्यं गृहीतं, शेषं तु कर्मवर्गणापर्यन्तं कार्मणशरीरग्रहणेनोपलक्षितम्, कर्मवर्गणोपरितनद्रव्यं तु सर्वमप्यगुरुलघुग्रहणेन संगृहीतम्; चशब्दसूचितगुरुलघुग्रहणेन तु घट-पट-भू-भूधरादिकं गृहीतम्, इत्येवं समस्तपुद्गलास्तिकायविषयत्वं परमावधेराविष्कृतं भवति। एवं च सति 'रूपगतं लभते सर्वम्' इत्येतद् वक्ष्यमाणमस्यैव नियमार्थं द्रष्टव्यमेव– इत्येतदेव हि रूपगतं नान्यत्। इत्यलं प्रपञ्चेन॥ इति निर्युक्तिगाथार्थः॥ ६७५॥

अथ भाष्यम्–

[2]एगपएसोगाढं पेच्छइ, पेच्छइ य कम्मयतणुं पि। अगुरुलहुदव्वाणि य चसद्दओ गुरुलहूइं ति ॥६७६॥

तेयसरीरं पासं पासइ सो भवपुहुत्तमेगभवे। णेगेसुं बहुतरए सरिज्ज न उ पासए सव्वे॥ ६७७॥

गतार्थे एव, नवरं 'एगभवे त्ति' एकस्मिन् विवक्षितभवे समुत्पन्नेऽवधावतीतमनागतं च पृथग्भवपृथक्त्वं पश्यति। 'णेगेसुमित्यादि' यदि पुनस्तस्याऽप्यतीतभवपृथक्त्वस्य मध्येऽनेकेषु भवेष्ववधिज्ञानमुत्पन्नं स्यात् तदा तेन पूर्वावधिना दृष्टाद् भवपृथक्त्वादपि बहुतरानतीता-ऽनागतभवान् स्मरेत्– स्मृतिज्ञानेन जानीयात्, न तु पृथक्त्वान्तर्वर्तिन इव तान् सर्वान् साक्षादवधिज्ञानेन पश्यति, भवपृथक्त्वमात्रमेव साक्षात् पश्यतीति भावः॥ ६७६॥ ६७७॥

अत्र प्रेरकः प्राह–

१ गाथा ६२७। २ एकप्रदेशावगाढं प्रेक्षते, प्रेक्षते च कार्मणतनुमपि। अगुरुलघुद्रव्याणि च चशब्दतो गुरुलघूनीति॥ ६७६॥ तैजसशरीरं पश्यन् पश्यति स भवपृथक्त्वमेकभवे। अनेकेषु बहुतरान् स्मरेद् न तु पश्यति सर्वान्॥ ६७७॥

तस्यैव ग्रहणवर्गणाः, पुनरेतावत्प्रमाणा एव तस्यैवाग्रहणवर्गणा वाच्याः । एवमाना-ऽपानयोः, भाषायाः, तैजसस्य, आहारकस्य, वैक्रियस्य, औदारिकस्य चाऽयोग्य-योग्या-ऽयोग्यवर्गणानां क्षेत्रतोऽपि प्रतिलोमं त्रयं त्रयं प्रत्येकमायोजनीयमिति ।

ध्रुवादिवर्गणास्कन्धा अपि प्रत्येकमङ्गुलासंख्येयभागप्रदेशावगाहिनोऽवगन्तव्याः, परं तच्चिन्तेह न कृता, जीवैः शरीरादौ क्वचिदप्यनुपयुज्यमानत्वेन ध्रुवादिवर्गणानामग्रहणात् । अथवा, कर्मणोऽग्रहणवर्गणानां मध्ये तासामप्यन्तर्भावो द्रष्टव्यः ।, द्रव्यवर्गणाधिकारे तु पृथगेतत्स्वरूपमात्रज्ञापनार्थं विस्तरेण कृता तच्चिन्तेति मन्तव्यमिति । काल-भाववर्गणास्तु समया-ऽसमयादिस्थितिमात्रं वर्णादिमात्रं चाङ्गीकृत्य सामान्येन वक्ष्यन्ते । अतस्ताभिः सर्वोऽपि पुद्गलास्तिकायः संगृह्यत इति भावनीयमिति । तदेवमभिहिताः क्षेत्रवर्गणाः ॥६४७–६४९॥

अथ कालवर्गणाः प्राह—

एगा[1] समयट्ठिईणं संखेज्जा संखसमयट्ठिइयाणं । होंति असंखेज्जाओ तओ असंखेज्जसमयाणं ॥ ६५० ॥

विवक्षितपरिणामेन य एकैकसमयमात्रस्थितयस्तेषां सर्वेषामप्येका वर्गणा, ते पुनरविशेषेण परमाणवः स्कन्धाश्च मन्तव्याः । एवमेकैकसमयवृद्ध्या संख्येयसमयस्थितीनां परमाण्वादीनां संख्येया वर्गणाः, असंख्येयसमयस्थितीनां त्वसंख्येया वर्गणा भवन्ति । एवमेताभिः सर्वोऽपि पुद्गलास्तिकायः संगृह्यते, एकसमयाद्यसंख्येयसमयान्तायाः स्थितेर्बहिः पुद्गलानां स्थितेरेवाभावादिति ॥ ६५० ॥

अथ भाववर्गणाः प्राह—

एगा[2] एगगुणाणं एगुत्तरवुड्ढिया तओ कमसो । संखेज्जगुणाण तओ संखेज्जा वग्गणा होंति ॥ ६५१ ॥
संखाईयगुणाणं संखाईया य वग्गणा तत्तो । होंति अणंतगुणाणं दव्वाणं वग्गणाऽणंता ॥ ६५२ ॥
वण्ण-रस-गंध-फासाण होंति वीसं समासभेएणं । गुरुलहु-अगुरुलहूणं बायर-सुहुमाण दो वग्गा ॥ ६५३ ॥

एकगुणानामेकगुणकृष्णानामित्यर्थः, परमाणूनां स्कन्धानां च सर्वेषामप्येका वर्गणा, कृष्णवर्णगुणद्वययुक्तानां तु परमाण्वादीनां

१ एका समयस्थितीनां सख्येया संख्यसमयस्थितिकानाम् । भवन्त्यसंख्येयास्ततोऽसख्येयसमयानाम् ॥ ६५० ॥

२ एकैकगुणानामेकोत्तरवर्धितास्ततः क्रमशः । संख्येयगुणानां तत. सख्येया वर्गणा भवन्ति ॥ ६५१ ॥
सख्य तीतगुणानां संख्यातीताश्च वर्गणास्तत. । भवन्त्यनन्तगुणानां द्रव्याणां वर्गणा अनन्ता ॥ ६५२ ॥
वर्ण-रस-गन्ध स्पर्शानां भवन्ति विंशतिः समासभेदेन । गुरुलघ्व-गुरुलघूनां बादर-सूक्ष्माणां द्वौ वर्गौ ॥ ६५३ ॥

नियममेव दर्शयति– 'एवं नियेत्यादि' एतदेव परमाण्वादिकं रूपगतं, नातः परं किमपि रूपगतमस्ति ॥ इति गाथानवकार्थः ॥ ६८३ ॥ ६८४ ॥

तदेवं परमावधेर्द्रव्यतो विषय उक्तः, अथ क्षेत्र-कालौ तद्विषयभूतौ प्राह–

[1]परमोहि असंखेज्जा लोगमित्ता समा असंखिज्जा। रूवगयं लहइ सव्वं खेत्तोवमियं अगणिजीवा ॥६८५॥

परमश्चासाववधिश्च परमावधिः क्षेत्रतोऽसंख्येयानि लोकमात्राणि 'खण्डानि' इति गम्यते, 'लभते' इति संबन्धः; कालतस्तु समा उत्सर्पिण्य-वसर्पिणीरसंख्येया एव लभते; द्रव्यतस्तु रूपगतं मूर्तद्रव्यजातं सर्वं परमाण्वादिभेदभिन्नं पुद्गलास्तिकायमित्यर्थः, लभते पश्यति। भावतस्त्वसंख्येयांस्तत्पर्यायानिति। यदुक्तम्– असंख्येयानि लोकमात्राणि खण्डानि परमावधिः पश्यतीति, तदसंख्येयकं न्यूनमधिकं च संभवेत्, अतो नियमार्थमाह– उपमानमुपमितं, भावे निष्ठाप्रत्ययः, क्षेत्रस्योपमितं क्षेत्रोपमितं प्रागभिहिता एवाग्निजीवाः। इदमुक्तं भवति– उत्कृष्टावधेर्विषयत्वेन क्षेत्रतो येऽसंख्येया लोकाः प्रोक्तास्ते प्रागभिहितन्यायावगाहनाव्यवस्थापितोत्कृष्टसंख्येयसूक्ष्मबादराग्निजीवसूच्या परमावधिमतो जीवस्य सर्वतो भ्राम्यमाणया यत्प्रमाणं क्षेत्रं व्याप्यते तत्प्रमाणाः समवसेया इति।

आह– ननु 'रूपगतं लभते सर्वं' इत्येतदनन्तरगाथायामर्थतोऽभिहितमेव, इति किमर्थं पुनरत्राऽभिहितम्?। अत्रोच्यते– विस्मरणशीलस्य मेयमिदं, मतिविहितत्वात्। अथवा, अत्र 'रूपगतं' इत्येतत् प्रस्तुतक्षेत्र-कालद्वयविशेषणतया व्याख्यायते, तद्यथा– लोकमात्राऽसंख्येयखण्डा-ऽसंख्यातोत्सर्पिण्य-ऽवसर्पिणीलक्षणं प्रस्तुतक्षेत्र-कालद्वयं रूपगतं रूपिद्रव्यानुगतमेव लभते, न तु केवलं, क्षेत्र-कालयोरमूर्तत्वात्, अवधेस्तु रूपिद्रव्यविषयत्वात् ॥ इति निर्युक्तिगाथार्थः ॥ ६८५ ॥

अथ भाष्यम्–

[2]खित्तमसंखेज्जाइं लोगसमाइं समाउ कालं च। दव्वं सव्वं रूवं पासइ तेसिं च पज्जाए ॥ ६८६ ॥

क्षेत्रमवधिः पश्यति। कियत्?, इत्याह– असंख्येयानि लोकसमानि लोकतुल्यानि 'खण्डानि' इति गम्यते। कालं चासौ

१ परमावधिरसंख्येयानि लोकमात्राणि समा असंख्येयाः। रूपगतं लभते सर्वं क्षेत्रोपमितमग्निजीवाः ॥ ६८५ ॥

२ क्षेत्रमसंख्येयानि लोकसमानि समाः कालं च। द्रव्यं सर्वं रूपं पश्यति तेषां च पर्यायान् ॥ ६८६ ॥

[1]अगुरुलहुसमारद्धो उड्ढं वड्ढइ कमेण सो नाहो । वड्ढंतो च्चिय कोई[2] पेच्छइ इयराइं सयराहं ॥६५६॥

गुरुलघुद्रव्यारब्धोऽवधिस्तैजसप्रत्यासन्नद्रव्यारब्ध इत्यर्थः । किमिति ? । अत्रोच्यते– वर्धमानोऽधस्तात् तान्येव गुरु-लघून्यौदारिकादिद्रव्याणि दृष्ट्वा कश्चित् पश्चाद् विशुध्यमानः क्रमेणैवाऽगुरुलघूनि भाषादिद्रव्याणि पश्यति, यस्तु न विशुद्धिमासादयति स तेष्वेव गुरुलघुद्रव्येषु क्रियन्तमपि[3] कालं स्थित्वा ततः प्रतिपतति । यस्त्वगुरुलघुद्रव्यसमारब्धोऽवधिर्भाषासन्नद्रव्यारब्ध इत्यर्थः, स ऊर्ध्वमेव क्रमेण वर्धते, नाधस्तात्, उपरिवर्तीन्येवाऽगुरुलघूनि भाषाद्रव्याणि पश्यति; कश्चित्तु तथाविधविशुद्धिमान् वर्धमान एव 'सयराहं' युगपदितराण्यपि गुरुलघून्यौदारिकादीनि पश्यति ॥ ६५५ ॥ ६५६ ॥

अथोत्तरगाथासंबन्धनार्थं परमुखेन प्रश्नं कारयति—

[4]गुरुलहुमगुरुलहुं वा तेया-भासंतरे ति निद्दिट्ठं । ओरालाईयाणं किं गुरुलहुमगुरुलहुयं वा ?॥ ६५७ ॥

'[5]गुरुलहु अगुरुयलहुयं तं पि य तेणेव निद्दाइ' इति वचनात् तैजस-भाषयोरन्तरे गुरुलघु, अगुरुलघु च द्रव्यमस्तीति भवद्भिर्निर्दिष्टम्, औदारिकादिद्रव्याणां तु मध्ये 'किं गुरुलघु, किं चाऽगुरुलघु ?' इति न ज्ञायते, तत्र तत्स्वरूपस्याऽनिर्दिष्टत्वात्, तदेतत् कथ्यतामिति प्रश्नः ॥ इत्येकोनविंशतिगाथार्थः ॥ ६५७ ॥

सूरिरुत्तरमाह—

[6]ओरालिय-वेउव्विय-आहारग-तेय गुरुलहू दव्वा । कम्मग-मण-भासाई एयाइं अगुरुलहुयाइं ॥६५८॥

औदारिक-वैक्रिया-ऽऽहारक-तैजसद्रव्याणि, अपराणि च तदाभासानि सद्रव्याण्यपि बादरद्रव्याणि, गुरुलघूनि गुरुलघुस्वभावानि; कार्मण-मनो-भाषादिद्रव्याणि तु, आदिशब्दादाना-ऽपानद्रव्याणि, अपराण्यपि च परमाणु-द्व्यणुकादीनि, व्योमादीनि चाऽगुरुलघूनि । एतच्च वक्ष्यमाणनीत्या निश्चयनयमतमित्यवगन्तव्यम् ॥ इति निर्युक्तिगाथार्थः ॥ ६५८ ॥

अथ व्यवहार-निश्चयनयविचारणया विस्तरार्थं भाष्यकारः प्राह—

---

१ अगुरुलघुसमारब्ध ऊर्ध्वं वर्धते क्रमेण स नाऽधः । वर्धमान एव कश्चित् प्रेक्षत इतराणि युगपत् ॥ ६५६ ॥ २ क ख ग 'ई पिच्छ' । ३ क ख ग 'न्त का' । ४ गुरुकघ्वगुरुलघु वा तैजस-भाषान्तरे इति निर्दिष्टम् । औदारिकादिकानां किं गुरुलघ्वगुरुलघुकं वा ?॥ ६५७ ॥ ५ गाथा ६२७ । ६ औदारिक- वैक्रिया-ऽऽहारक-तैजसानि गुरुलघूनि द्रव्याणि । कार्मण-मनो-भाषादीनि एतान्यगुरुलघुकानि ॥ ६५८ ॥

मित्यादि' यद् गव्यूतं जघन्यमुक्तं तदुत्कृष्टमध्ये यज्जघन्यं तत्प्रति तदाश्रित्योक्तमित्यदोषः। इदमुक्तं भवति– सप्तस्वपि पृथिवीषु यद् गव्यूतचतुष्टयादिकमुत्कृष्टमवधिक्षेत्रं, तन्मध्ये सप्तमपृथिवीनारकाणां गव्यूतलक्षणमवधिक्षेत्रं स्वस्थान उत्कृष्टमपि शेषपृथिव्युत्कृष्टापेक्षया सर्वस्तोकत्वाज्जघन्यमुक्तम् ॥ इति गाथार्थः ॥ ६९४ ॥

अथ देवानां भवप्रत्ययावधिमाह—

सक्की-साणा[1] पढमं, दोच्चं च सणंकुमार-माहिंदा। तच्चं च बंभ-लंतग सुक्क-सहस्सार य चउत्थिं ॥६९५॥

आणय-पाणयकप्पे देवा पासंति पंचमिं पुढविं। तं चेव आरण-च्चुय ओहिण्णाणेण पासंति[2] ॥ ६९६ ॥

छट्ठिं हेट्ठिम-मज्झिमगेविज्जा सत्तमिं च उवरिल्ला। संभिण्णलोगनालिं पासंति अणुत्तरा देवा ॥ ६९७ ॥

तत्र शक्रश्चेशानश्च शक्रे-शानौ सौधर्मे-शानकल्पदेवेन्द्रौ, तदुपलक्षिताश्चेह सौधर्मे-शानकल्पनिवासिनः सामानिकादयो देवा अपि गृह्यन्ते; ते ह्यवधिना प्रथमां रत्नप्रभाभिधानां पृथिवीं 'पश्यन्ति' इति क्रियां द्वितीयगाथायां वक्ष्यति। तथा, द्वितीयां च 'पृथिवीम्' इत्यग्रतः संबध्यते, सनत्कुमार-माहेन्द्रावपि तृतीय-चतुर्थकल्पदेवाधिपौ, अत्रापि च तदुपलक्षितास्तत्कल्पनिवासिनः सामानिकादयो देवाः परिगृह्यन्ते, ते हि द्वितीयां पृथिवीमवधिना पश्यन्ति। तथा, तृतीयां च पृथिवीं ब्रह्मलोक-लान्तकदेवेन्द्रोपलक्षितास्तत्कल्पनिवासिनो देवाः सामानिकादयः पश्यन्ति। तथा, शुक्र-सहस्रारसुरेन्द्रोपलक्षितास्तत्कल्पवासिनोऽन्येऽपि सामानिकादयो देवाश्चतुर्थीं पृथिवीं पश्यन्तीति। तथा, आनत-प्राणतयोः संबन्धिनो देवाः पश्यन्ति पञ्चमीं पृथिवीम्, तामेव चाऽऽरणा-ऽच्युतदेवलोकयोः संबन्धिनो देवा विशुद्धतरां बहुपर्यायां चावधिज्ञानेन पश्यन्ति; स्वरूपकथनमेवेदं न तु व्यवच्छेदकम्, अवधिज्ञानस्यैवेह विचारयितुं प्रस्तुतत्वाद् व्यवच्छेद्याभावादिति। लोकपुरुषग्रीवास्थाने भवानि विमानानि ग्रैवेयकाणि; तत्राऽधस्त्य-मध्यमग्रैवेयकविमानवासिनो देवा अधस्त्य-मध्यमग्रैवेयका उच्यन्ते; ते तमःप्रभाभिधानां षष्ठीं पृथिवीं पश्यन्ति। तथा, सप्तमीं च पृथिवीमुपरितनग्रैवेयका देवाः पश्यन्ति। तथा, संभिन्नां चतसृष्वपि दिक्षु स्वज्ञानेन व्याप्तां कन्याचोलकसंस्थानां लोकनाडीमवधिना पश्यन्त्यनुत्तरविमानवासिनो देवाः। एष क्षेत्रतो नारकाणां देवानां च भवप्रत्ययावधेर्विषय उक्तः। एतदनुसारतो द्रव्यादयोऽप्यवसेयाः ॥६९५॥६९६॥६९७॥

1 शक्रे शानौ प्रथमा, द्वितीयां च सनत्कुमार-माहेन्द्रौ। तृतीया च ब्रह्म-लान्तकौ शुक्र सहस्रारौ च चतुर्थीम् ॥ ६९५ ॥
आनत-प्राणतकल्पे देवा पश्यन्ति पञ्चमीं पृथिवीम्। तामेवाऽऽरणा-ऽच्युतावधिज्ञानेन पश्यत ॥ ६९६ ॥
षष्ठीमधस्त्य-मध्यमग्रैवेयका', सप्तमीं चोपरितनाः। संभिन्नलोकनाडीं पश्यन्त्यनुत्तरा देवाः ॥ ६९७ ॥ 2 ख. 'पिच्छति'।

चोर्ध्वा-ऽधोगामिनः– प्राय ऊर्ध्वलोकान्तादधोलोकान्तं गच्छन्ति, अधोलोकान्तात् तूर्ध्वलोकान्तम्। प्रायोग्रहणादनुश्रेणि तिर्यग् गच्छन्ति । तस्माद् गुरुताऽभावे कथं तेऽधोऽभिव्रजन्ति, लघुताऽभावे च कथमूर्ध्वमनुधावन्तीति ?।

इह प्रेरकस्याऽयमभिप्रायः– गुरुतानिबन्धनमधोगमनमयोगोलकादीनामिव ; लघुताप्रत्ययं चोर्ध्वगमनं, दीपकलिकादीनामिव ; गुरुलघुत्वसाध्यं च तिर्यग्गमनं, वाय्वादीनामिव; अगुरुलघुताकारणं चावस्थानं, यथा व्योमादीनाम् , आकाशप्रतिष्ठिताऽऽनतदेवलोक-विमानादीनां च । ततो व्यवहारवत् त्वयाऽपि गुर्वादिचतुर्विधवस्त्वभ्युपगमः कार्य इति ॥ ६६१ ॥ ६६२ ॥

अथ निश्चयनयवादी प्रत्युत्तरयति–

[1]अन्न च्चिय गुरुलहुया अन्नो दव्वाण वीरियपरिणामो । अन्नो गइपरिणामो नावस्सं गुरुलहुनिमित्तो॥६६३॥

इहाऽन्यैव काचिद् द्रव्याणां गुरुता[2] लघुता च, अन्यश्च वीर्यपरिणामः, अन्य एव च तेषां गतिपरिणामः, नावश्यं गुरुत्व-लघुत्वनिमित्त इति ॥ ६६३ ॥

कुतः ?, इत्याह–

[3]परमलहूणमणूणं जं गमणमहो वि तत्थ को हेऊ ? । उड्ढं धूमाईणं थूलयराणं पि किं कज्जं ? ॥६६४॥

किं व विमाणाईणं नाहोगमणं महागुरूणं पि । तणुयरदेहो देवो हक्खुवइ व किं महासेलं ? ॥ ६६५ ॥

यद् यस्मात् परमलघूनामप्यणूनां गमनमधोऽपि भवति, तत्र हन्त ! अधोगतिपरिणामोत्कटतां विहाय कोऽन्यो हेतुः ?– न कोऽपीत्यर्थः । तथा, स्थूलतराणामपि बादराणामपि, बादरत्वेन गुरूणामपीति तात्पर्यम् , धूमादीनां यदूर्ध्वं गमनं भवति, तत्राप्यूर्ध्वगतिपरिणामोत्कटत्वं परित्यज्य किं कार्यं किमन्यत्प्रयोजनम् ?– न किञ्चिदित्यर्थः । तदेवमुत्कटेनाधोगतिपरिणामेन लङ्घिता परमाणुगता लघुता, ऊर्ध्वगतिपरिणामेनाऽपि प्रबलेनाऽतिक्रान्ता धूमादिगता गुरुता, इत्यस्यां गाथायां दर्शितम्। तद्दर्शने च '[4]अन्नो गइपरिणामो नावस्सं गुरुलहुनिमित्तो' इत्येतत् समर्थितम् । गतिपरिणामेन च गुरुलघुतयोरतिक्रमणमुपलक्षणम् , अतः स्थितिपरिणामेनाप्यु-

१ अन्यैव गुरुलघुताऽन्यो द्रव्याणां वीर्यपरिणाम. । अन्यो गतिपरिणामो नावश्यं गुरुलघुनिमित्तः ॥ ६६३ ॥ २ क. ख. ग. 'ता च ल'।

३ परमलघूनामणूनां यद् गमनमधोऽपि तत्र को हेतु ?। ऊर्ध्वं धूमादीनां स्थूलतराणामपि किं कार्यम् ? ॥ ६६४ ॥

किं वा विमानादीना नाधोगमनं महागुरूणामपि ?। तनुतरदेहो देव उत्क्षिपति वा किं महाशैलम् ? ॥ ६६५ ॥ ४ गाथा ६६३ ।

[1]पणवीसजोयणाइं दसवाससहस्सिया ठिई जेसिं । दुविहो वि जोइसाणं संखेज्ज ठिईविसेसेणं ॥ ७०१ ॥
वेमाणियाणमंगुलभागमसंखं जहण्णओ होइ । उववाए परभविओ तब्भवजो होइ तो पच्छा ॥ ७०२ ॥

पञ्चविंशतिर्योजनानि यज्जघन्यमवधिक्षेत्रमुक्तं तद् येषां देवानां दशवर्षसहस्रप्रमाणा स्थितिस्तेषामेव विज्ञेयम् । ते च भवनपति-व्यन्तरविशेषा एव । ज्योतिष्काणां पुनर्जघन्य उत्कृष्टश्च द्विविधोऽप्यवधिः स्थितिविशेषेण क्षेत्रतः संख्येयान्येव योजनानि विज्ञेयः । इदमुक्तं भवति– ज्योतिष्काणां जघन्यतोऽपि पल्योपमाष्टभागस्थितिर्न तु दश वर्षसहस्राणि, उत्कृष्टतस्तु वर्षलक्षाधिकं पल्योपमम्; अतो बह्वायुष्कत्वेन महर्द्धिकत्वादुत्कृष्टवज्जघन्योऽप्यवधिस्तेषां संख्येयान्येव योजनानि भवति, केवलं जघन्यक्षेत्रादुत्कृष्टं बृहत्प्रमाणं द्रष्टव्यम् । '[2]संखेज्जजोयणा खलु देवाणं' इत्यादिनैवाऽमीषामुत्कृष्टमवधिक्षेत्रमुक्तम्, केवलं जघन्यभणनप्रस्तावात् पुनरपि तदुक्त-मित्यदोषः । वैमानिकानां तु जघन्योऽवधिः क्षेत्रतोऽङ्गुलासंख्येयभागो भवति, अयं चोत्पादाद्यसमय एव पारभविको विज्ञेयः, ततः पश्चात् ताद्भविकः ॥ इति गाथात्रयार्थः ॥ ७०१ ॥ ७०२ ॥

अथाऽयमेवावधिर्येषामुत्कृष्टादिभेदभिन्नो भवति, तानुपदर्शयन्नाह—

[3]उक्कोसो मणुएसुं मणुस्स-तेरिच्छिएसु य जहण्णो । उक्कोस लोगमेत्तो पडिवाइ परं अपडिवाई ॥७०३॥

इह द्रव्यतः, क्षेत्रतः, कालतो भावतश्चोत्कृष्टोऽवधिर्मनुष्येष्वेव, न देवादिषु । तथा, मनुष्याश्च तिर्यञ्चश्च तेष्वेव जघन्यः, न तु सुर-नारकेषु । तत्र चोत्कृष्टोऽवधिर्द्विविधः– लोकगतः, अलोकगतश्च । तत्र योऽसौ समस्तलोकमात्रदर्शी उत्कृष्टः, मात्रशब्दोऽलोक-व्यवच्छेदार्थः, स प्रतिपतनशीलः प्रतिपाती, अप्रतिपाती च भवति । ततः परं येनैकोऽप्याकाशप्रदेशो दृष्टः सोऽप्रतिपात्येव भवति । क्षेत्रपरिणामद्वारेऽपि प्रस्तुते प्रसङ्गतो विनेयानुग्रहार्थं प्रतिपात्य-प्रतिपातिस्वरूपाभिधानमित्यदोषः ॥ इति निर्युक्तिगाथार्थः ॥ ७०३ ॥

॥ उक्तं क्षेत्रपरिमाणद्वारम् ॥

---

1 पञ्चविंशतिर्योजनानि दशवर्षसहस्रिका स्थितिर्येषाम् । द्विविधोऽपि ज्योतिष्काणां संख्येयानि स्थितिविशेषेण ॥ ७०१ ॥ वैमानिकानामङ्गुलभागमसंख्यं जघन्यतो भवति । उपपाते पारभविकस्तद्भवजो भवति ततः पश्चात् ॥ ७०२ ॥ 2 गाथा ६९९ ।

3 उत्कृष्टो मनुजेषु मनुष्य-तिर्यक्षु च जघन्यः । उत्कृष्टो लोकमात्रः प्रतिपाती परमप्रतिपाती ॥ ७०३ ॥

[1]भणिओ खित्त-द्धाणं सुद्धाणं चिय परोप्परनिबंधो । इह ताणं चिय भण्णइ दव्वेण समं निबंधोऽयं॥६६८॥

इह '[2]अंगुलमावलियाणं भागमसंखिज्ज' इत्यादिना भणितः पूर्वं क्षेत्र-कालयोः शुद्धयोरेव द्रव्यरहितयोः परस्परनिबन्धः । अथ तयोरेव द्रव्येण सहाऽसौ प्रोच्यते ॥ इति गाथादशकार्थः ॥ ६६८ ॥

स्वप्रतिज्ञा[3]तार्थमेवाह—

[4]संखेज्ज मणोदव्वे भागो लोग-पलियस्स बोधव्वो । [5]संखिज्ज कम्मदव्वे लोए थोऊणयं पलियं ॥ ६६९ ॥

मनोवर्गणागतं मनःपरिणामयोग्यं द्रव्यं मनोद्रव्यं तस्मिन् मनोद्रव्ये मनोद्रव्याविषयेऽवधौ 'संखेज्ज त्ति' संख्येयतमो भागो लोक-पल्योपमयोर्विषयत्वेन वोद्धव्यः । इदमुक्तं भवति– मनोवर्गणाद्रव्यं पश्यन्नवधिः क्षेत्रतो लोकस्य संख्याततमं भागं, कालतस्तु पल्योपमस्य संख्येयतमं भागं पश्यतीति । 'संखिज्ज कम्मदव्वे त्ति' कर्मवर्गणागतं कर्मणो योग्यं द्रव्यं तद्विषयेऽवधौ संख्येया लोकपल्योपमभागास्तद्विषयतयाऽवगन्तव्याः । इदमुक्तं भवति– कर्मवर्गणाद्रव्यं पश्यन्नवधिः क्षेत्रतो लोकस्य संख्येयान् भागान् पश्यति, कालतस्तु पल्योपमस्य संख्येयान् भागानवलोकयति । 'लोए थोऊणयं पलियं ति' चतुर्दशरज्ज्वात्मकलोकाविषयेऽवधौ कालतः स्तोकोनं पल्योपमं विषयतया वोद्धव्यम् । इदमत्र हृदयम्– क्षेत्रतः समस्तलोकं पश्यन्नवधिः कालतः स्तोकोनं पल्योपमं पश्यति । द्रव्येण सह क्षेत्र-कालयोरुपनिबन्धे प्रस्तुते केवलयोरुपनिबन्धप्ररूपणं विस्मरणशीलतासूचकमिति चेत् । नैवम्, साक्षादिह द्रव्योपनिबन्धो नोक्तः, सामर्थ्यात् त्वसौ प्रोक्त एव, तथाहि– पूर्वं '[6]काले चउण्ह वुड्ढी' इत्युक्तमेव । कालवृद्धिश्चानन्तरोक्तकर्मद्रव्यदर्शकापेक्षयाऽत्रोक्तैव । ततश्चास्य समस्तलोकस्तोकोनपल्योपमदर्शिनः सामर्थ्यात् कर्मद्रव्योपर्येव किमपि द्रव्यं विषयत्वेन द्रष्टव्यम्, अत एव च तदुपर्यपि ध्रुववर्गणादिद्रव्यं पश्यतः क्षेत्र-कालवृद्धिक्रमेण परमावधिसंभवोऽप्यनुमीयते ॥ इति निर्युक्तिगाथार्थः ॥६६९॥

अथ भाष्यम्–

[8]लोगपलियाण भागं संखइमं मुणइ जो मणोदव्वं । संखेज्जे पुण भाए पासइ जो कम्मुणो जोग्गं ॥६७०॥

१ भणित. क्षेत्रा-ऽद्धयोः शुद्धयोरेव परस्परनिबन्धः । इह तयोरेव भण्यते द्रव्येण समं निबन्धोऽयम् ॥ ६६८ ॥ २ गाथा ६०८ । ३ क. ख. ग 'ज्ञातमे' ।
४ संख्येयो मनोद्रव्ये भागो लोक-पल्ययोर्बोद्धव्यः । संख्येयाः कर्मद्रव्ये लोके स्तोकोनकं पल्यम् ॥६६९॥ ५ घ छ. 'संखेज्ज' । ६ गाथा ६१७ ।
७ घ. छ. 'मुणेय इ' । ८ लोक-पल्ययोर्भागं संख्येयं जानाति यो मनोद्रव्यम् । संख्येयान् पुनर्भागान् पश्यति यः कर्मणो योग्यम् ॥ ६७० ॥

कन्यापरिधानेन सह सीवितो भवति, येन परिधानं न खसति; कन्यानां च मस्तकसत्कपक्षेणाऽयं प्रक्षिप्यते । अयं चोर्ध्वः 'सरकञ्चुक' इति व्यपदिश्यते; एतदाकारोऽवधिरनुत्तरसुराणां भवति । तिर्यग्-मनुष्येषु पुनरवधिर्नानाविधसंस्थानो भणितः । यथा हि स्वयम्भूरमण-समुद्रमत्स्याः सर्वैरप्याकारैः समये भणिताः, तथा तिर्यग्-मनुष्येष्ववधिरपि । किञ्च, स्वयम्भूरमणमत्स्यानां वलयाकारता निषिद्धा, तिर्यग्-मनुष्याणां पुनरवधिस्तदाकारोऽपि भवति ॥ इति निर्युक्तिगाथार्थः ॥ ७०६ ॥

भाष्यम्–

[1]नेरइय-भवण-वणयर-जोइस-कप्पालयाणमोहिस्स । गेविज्जणुत्तराण य होंतागिईओ जहासंखं ॥७०७॥

एतास्तप्रादिसमानाकृतयो नारकाद्यवधेर्यथासंख्यं द्रष्टव्याः । तच्च यथासंख्यं दर्शितमेवेति ॥ ७०७ ॥

अथ तप्रादिस्वरूपं व्याचिख्यासुराह—

[2]तप्पेण समागारो तप्पागारो स चाययत्तंसो । उड्ढायओ य पल्लो उवरिं च स किंचि संखित्तो ॥७०८॥

नच्चायओ समो विय पडहो हिट्ठोवरिं पईओ सो । चम्मावणद्धविच्छिण्णवलयरूवा य झल्लरिया ॥७०९॥

उड्ढायओ मुइंगो हेट्ठारुंदो तहोवरिं तणुओ । पुप्फसिहावलिरइया चंगेरी पुप्फचंगेरी ॥ ७१० ॥

जवनालउ त्ति भणिओ उब्भो सरकंचुओ कुमारीए । अह सव्वकालनियओ कायाइक्को वि सेसाणं ॥७११॥

गतार्था एव, नवरं 'अह सव्वकालेत्यादि' अथ नारक-भवनपत्यादीनां, तिर्यग्-मनुष्याणां चावधिसंस्थाने विशेष उच्यते । कः पुनरसौ ?, इत्याह– सर्वकालनियतोऽवधिसंस्थानमाश्रित्याऽमीषां नारक-भवनपत्यादिदेवानाम्; शेषाणां तिर्यग्-मनुष्याणां कादाचित्कोऽपि भवति । इदमुक्तं भवति– तप्राद्याकारसमानतया यद् नारक-भवनपत्यादीनामवधेः संस्थानमुक्तम्, तदङ्गीकृत्य तेषा-

1 नैरयिक-भवन-व्यन्तर-ज्योतिः-कल्पा-ऽऽनतानामवधेः । ग्रैवेयका-ऽनुत्तराणां च भवन्त्याकृतयो यथासंख्यम् ॥ ७०७ ॥

2 तप्रेण समाकारस्तप्राकार स चाऽऽयतत्र्यस्र. । ऊर्ध्वायतश्च पल्लक उपरि च स किंचित् संक्षिप्त· ॥ ७०८ ॥
नाऽत्यायत. समोऽपि च पटहोऽधस्तादुपरि प्रतीतः स । चर्मावनद्धविस्तीर्णवलयरूपा च झल्लरिका ॥ ७०९ ॥
ऊर्ध्वायतो मृदङ्गोऽधस्ताद् विस्तीर्णस्तथोपरि तनुक· । पुष्पशिखावलिरचिता चङ्गेरी पुष्पचङ्गेरी ॥ ७१० ॥
यवनालक इति भणित ऊर्ध्व. सरकञ्चुक. कुमार्यां. । अथ सर्वकालनियत. कादाचित्कोऽपि शेषाणाम् ॥ ७११ ॥

तानि, अबद्धेभ्यश्च बद्धानि बादराणि भवन्ति, अच्युततन्तुभ्यश्च्युततन्तुषु तथादर्शनात्। अतोऽत्र कार्मणशरीरदर्शिनः स्तोकौ क्षेत्र-कालौ विषयत्वेनोक्ताविति ॥ ६७३ ॥

अत्र भाष्यम्—

[1]एयाइं जओ कम्मयदव्वेहिंतोऽतिथूलयरयाइं। तेयाइयाइं तम्हा थोवयरा खेत्त-काल त्थ ॥ ६७४ ॥

एतानि यतस्तैजसादीनि तैजसशरीर-कार्मणशरीर-तैजसवर्गणाद्रव्य-भाषावर्गणाद्रव्याणीत्यर्थः, कार्मणशरीरयोग्यवर्गणाद्रव्येभ्योऽतिस्थूलतराणि बादराणि, तस्मात् स्तोकतरौ क्षेत्र-कालावत्र प्रोक्तौ, इति प्रागेव भावितम् ॥ इति सभाष्यनिर्युक्तिगाथार्थः ॥ ६७४ ॥

आह—ननु यथा जघन्य-मध्यमावधी निर्दिष्टन्यायेनाऽसर्वरूपिद्रव्यविषयावुक्तौ, तथोत्कृष्टावधिरपि, आहोस्वित् सर्वमपि रूपिद्रव्यमसौ पश्यति ?, इत्याशङ्कयाह—

[2]एगपएसोगाढं परमोही लहइ कम्मगसरीरं। लहइ य अगुरुयलहुयं तेयसरीरे भवपुहुत्तं[3] ॥ ६७५ ॥

एकस्मिन्नाकाशप्रदेशेऽवगाढं स्थितमेकप्रदेशावगाढं परमाणु-द्व्यणुकाद्यनन्ताणुकस्कन्धपर्यन्तं सर्वमपि द्रव्यं, परमश्चासाववधिश्च परमावधिरुत्कृष्टावधिरित्यर्थः, लभते पश्यति, तथा कार्मणशरीरं च लभते। आह— 'एकप्रदेशावगाढं' इति सामान्योक्तौ कथं परमाणु-द्व्यणुकादिकं द्रव्यं गम्यते, यावता 'एकप्रदेशावगाढं कार्मणशरीरं' इत्युपात्तमेव कस्माद् न योज्यते ?। नैवम्, कार्मणशरीरस्याऽसंख्येयप्रदेशावगाहित्वेनैकप्रदेशावगाढत्वासंभवादिति। अगुरुलघु च द्रव्यं सर्वमपि परमावधिः पश्यति। जात्यपेक्षं चैकवचनम्, अन्यथा ह्येकप्रदेशावगाढानि कार्मणशरीराण्यगुरुलघूनि, गुरुलघूनि च सर्वाण्यपि द्रव्याण्यसौ पश्यतीत्यवगन्तव्यमिति। तथा, तैजसशरीरविषयेऽवधौ कालतो भवपृथक्त्वं परिच्छेद्यतयाऽवगन्तव्यम्। एतदुक्तं भवति— यस्तैजसशरीरं पश्यति स कालतो भवपृथक्त्वमपि पश्यति। पृथक्त्वं च द्वाभ्यामारभ्याऽऽनवभ्यः सर्वत्र द्रष्टव्यम्। इह च य एव हि प्राक् तैजसं पश्यतः पल्योपमासंख्येयभागरूपोऽसंख्येयकालोऽभिहितः, स एवानेन भवपृथक्त्वेन विशेष्यते, इदमपि च भवपृथक्त्वं तेनासंख्येयकालेन विशेष्यते— भवपृथक्त्वमध्य एव स पल्योपमासंख्येयभागः कालो नाधिकः, एतन्मध्य एव च भवपृथक्त्वं न बहिस्तादिति। आह— नन्वेकप्रदेशावगाढस्य परमाण्वादेराति-

१ एतानि यतः कार्मणद्रव्येभ्योऽतिस्थूलतरकाणि। तैजसादिकानि तस्मात् स्तोकतरौ क्षेत्र-कालावत्र ॥ ६७४ ॥
२ एकप्रदेशावगाढं परमावधिर्लभते कार्मणशरीरम्। लभते चागुरुकलघुकं तैजसशरीरे भवपृथक्त्वम् ॥ ६७५ ॥ ३ घ छ. 'पुहत्तं'। ४ क.ग. 'गाहित्वा'।

अथ भाष्यम्–

[1]अणुगामिओ अणुगच्छइ गच्छंतं, लोयणं जहा पुरिसं । इयरो य नाणुगच्छइ ठियपईवो व्व गच्छंतं ||७१५||

उभयसहावो मीसो देसो जस्साणुजाइ नो अन्नो । कासइ गयस्स गच्छइ एगं उवहयम्मि जहच्छि ||७१६||

गतार्थं एव || ७१५ || ७१६ ||

|| उक्तमानुगामुकद्वारम् ||

अथावस्थितद्वारमुच्यते— अवस्थितं चावधेराधारभूतक्षेत्रतः, उपयोगतो लब्धितश्च चिन्तनीयम् । तत्र क्षेत्रत उपयोगतश्चाह—

[2]खित्तस्स अवट्ठाणं तेत्तीसं सागरा उ कालेणं । दव्वे भिन्नमुहुत्तो पज्जवलंभे य सत्तट्ठ || ७१७ ||

अवधेराधारपर्यायेण क्षेत्रस्यावस्थानं त्रयस्त्रिंशदेव सागरोपमाणि कालेन कालमाश्रित्य भवति । इदमुक्तं भवति– अनुत्तरसुरा यत्र क्षेत्रे जन्मसमयेऽवगाढास्तत्रैवाऽऽभवक्षयमवतिष्ठन्ते, अतस्तत्संबन्धिनोऽवधेरेकत्र क्षेत्रे त्रयस्त्रिंशत्सागरोपमलक्षणकालमवस्थानं संपद्यते। उपयोगतस्त्ववधेः सुर-नारक-पुद्गलादिके द्रव्ये द्रव्यविषयमुपयोगमाश्रित्य तत्राऽन्यत्र वा क्षेत्रे भिन्नमुहूर्तोऽन्तर्मुहूर्तमेवाऽवस्थानं, न परतः, सामर्थ्याभावादिति । तत्रैव द्रव्ये ये पर्यवाः पर्याया धर्मास्तल्लाभे पर्यायात् पर्यायान्तरं च संचरतोऽवधेस्तदुपयोगे सप्ताऽष्टौ वा समयानऽवस्थानं, न परतः। अन्ये तु व्याचक्षते– पर्यवा द्विविधाः– गुणाः, पर्यायाश्च । तत्र सहवर्तिनो गुणाः शुक्लादयः, क्रमवर्तिनस्तु पर्याया नव-पुराणादयः । तत्र गुणेष्वष्टौ समयानवध्युपयोगावस्थानं, पर्यायेषु सप्त समयानिति, स्थूलं हि द्रव्यं, तेन तत्रान्तर्मुहूर्तं तदुपयोगस्थितिः, गुणास्तु ततः सूक्ष्मास्तेनैतेष्वष्टौ समयान्; गुणेभ्योऽपि पर्यायाः सूक्ष्मा इति तेषु सप्त समयानिति भावः ||७१७||

अथ लब्धितोऽवध्यवस्थानमाह–

[3]अद्धाए अवट्ठाणं छावट्ठि सागरा उ कालेणं । उक्कोसगं तु एयं एक्को समओ जहन्नेणं || ७१८ ||

---

१ अनुगामुकोऽनुगच्छति गच्छन्तं, लोचनं यथा पुरुषम् । इतरश्च नानुगच्छति स्थितप्रदीप इव गच्छन्तम् || ७१५ ||
उभयस्वभावो मिश्रो देशो यस्याऽनुयाति नो अन्य. । कस्यचिद् गतस्य गच्छति एकमुपहते यथाऽक्षि || ७१६ ||

२ क्षेत्रस्यावस्थान त्रयस्त्रिंशत् सागरास्तु कालेन । द्रव्ये भिन्नमुहूर्तः पर्यवलाभे च सप्ताऽष्ट || ७१७ ||

३ अद्धायामवस्थान द्वापष्टिः सागरास्तु कालेन । उत्कृष्टकं त्वेतदेकः समयो जघन्येन || ७१८ ||

[1]एगपएसोगाढे भणिए किं कम्मयं पुणो भणियं । एगपएसोगाढे दिट्ठे का कम्मए चिंता ? ॥ ६७८ ॥
अगुरुलहु[2]गहणं पि य एगपएसावगाहओ सिद्धं । सव्वं वा सिद्धमिओ रूवगयं लहइ सव्वं ति ॥६७९॥

गतार्थे, नवरमेकप्रदेशावगाढे भणिते किमिति कार्मणशरीरं पुनरप्यवधिविषयत्वेन भणितम् ? । कुतः कारणात् पुनर्न भणनीयम् ?, इत्याह– 'एगपएसोगाढे दिट्ठे' इत्यादि । शेषमनिगूढार्थमेवेति ॥ ६७८ ॥ ६७९ ॥

अत्र गुरुराह—

[3]एगोगाढे भणिए वि संसओ सेसए जहारंभे । सण्हयरं पिच्छंतो थूलयरं न मुणइ घडाइं ॥ ६८० ॥
जह वा मणोविउ नत्थि दंसणं सेसएऽतिथूले वि । एगोगाढे गहिए तह सेसे संसओ होज्जा ॥ ६८१ ॥

उपसंहरन्नाह–

[4]इय नाणविसयवइचित्तसंभवे संसयावणोयत्थं । भणिए वेगोगाढे केइ विसेसे पयंसंति ॥ ६८२ ॥

कांश्चित् कार्मणशरीरा-ऽगुरुलघ्वादीन् विशेषान् प्रदर्शयन्ति भद्रबाहुस्वामिन इति ॥ ६८२ ॥

प्रकारान्तरेण समाधानमाह–

[5]एगोगाढग्गहणेऽणुगादओ कम्मयं ति जा सव्वं । तदुवरि अगुरुलहुइं चसद्दओ गुरुलहुइं पि ॥ ६८३ ॥
एवं वा सव्वाइं गहियाइं तेसिमेव नियमत्थं । सव्वं रूवगयं ति य एवं चिय नावरमओ त्थि ॥ ६८४ ॥

---

१ एकप्रदेशावगाढे भणिते किं कार्मण पुनर्भणितम् ? । एकप्रदेशावगाढे दिष्टे का कार्मणे चिन्ता ? ॥ ६७८ ॥
अगुरुलघुग्रहणमपि चैकप्रदेशावगाहतः सिद्धम् । सर्वं वा सिद्धमितो रूपगतं लभते सर्वमिति ॥ ६७९ ॥ २ घ. छ. 'गत्तणं' ।
३ एकावगाढे भणितेऽपि संशयः शेषके यथाऽऽरम्भे । सूक्ष्मतरं प्रेक्षमाणः स्थूलतरं न जानाति घटादिम् ॥ ६८० ॥
यथा वा मनोविदो नास्ति दर्शनं शेषकेऽतिस्थूलेऽपि । एकावगाढे गृहीते तथा शेषे संशयो भवेत् ॥ ६८१ ॥
४ इति ज्ञानविषयवैचित्र्यसंभवे संशयापनोदार्थम् । भणिते वैकावगाढे कांश्चिद् विशेषान् प्रदर्शयन्ति ॥ ६८२ ॥
५ एकावगाढग्रहणेऽणुकादयः कार्मणमिति यावत् सर्वम् । तदुपर्यगुरुलघूनि चशब्दतो गुरुलघून्यपि ॥ ६८३ ॥
एव वा सर्वाणि गृहीतानि तेषामेव नियमार्थम् । सर्वं रूपगतमिति चैवमेव नापरमतोऽस्ति ॥ ६८४ ॥

गतार्थे एव, नवरं तत्र विवक्षितक्षेत्रे, अन्यत्र वा गतस्यावधिमतो द्रव्यविषयेऽन्तर्मुहूर्तमेवोपयोगो भवति । 'दव्वेत्यादि' तत्रैव विवक्षिते द्रव्ये 'गुणे त्ति' गुणेष्वपरापरेषु संचरतः सप्ताऽष्टौ वा समयानवधेरुपयोगो भवति । अन्ये त्वाहुः– गुणेष्वष्टौ, पर्यायेषु सप्त समयानिति ॥ ७२१ ॥ ७२२ ॥

किमित्येवम् ?, आह—

[1]जह जह सुहुमं वत्थुं तह तह थोवोवओगया होइ । दव्व-गुण-पज्जवेसुं तह पत्तेयं पि नायव्वं ॥ ७२३ ॥

गतार्थैव ॥ ७२३ ॥

अथ लब्धितोऽवस्थानमाह–

[2]तत्थण्णत्थ य खित्ते दव्वे गुण-पज्जवो-वओगे य । चिट्ठइ लद्धी सा पुण नाणावरणक्खवोवसमो॥७२४॥

सा सागरोवमाइं छावट्ठिं होज्ज साइरेगाइं । विजयाईसु दो वारे गयस्स नरजम्मणा समयं ॥ ७२५ ॥

गतार्थे ॥ ७२४ ॥ ७२५ ॥

अथोपलब्धिविषयं जघन्यमवस्थानमाह—

[3]सव्वजहण्णो समओ दव्वाईसु होइ सव्वजीवाणं ।

अत्र नर-तिरश्चां समयादूर्ध्वमवधेः प्रतिपातादनुयोगाद् वोपयोग-लब्ध्योः समयमवस्थानं परोऽवगच्छत्येव; अतः सुर-नारक-विषयमेतत् पृच्छन् गाथार्धमाह–

[4]स पुण सुर-नारगाणं हविज्ज किह खेत्त-कालेसु ? ॥ ७२६ ॥

स पुनः सुर-नारकाणां द्रव्यादिष्ववधिलब्ध्यु-पयोगयोर्जघन्यतः कथं समयोऽवस्थानम् ?– क तिष्ठतां सुर-नारकाणाम् ?;

१ यथा यथा शूक्ष्म वस्तु तथा तथा स्तोकोपयोगता भवति । द्रव्य-गुण-पर्यवेषु तथा प्रत्येकमपि ज्ञातव्यम् ॥ ७२३ ॥
२ तत्राऽन्यत्र च क्षेत्रे द्रव्ये गुण-पर्यवो-पयोगेषु च । तिष्ठति लब्धिः सा पुनर्ज्ञानावरणक्षयोपशमः ॥ ७२४ ॥
सा सागरोपमाणि द्वाषष्टिर्भवति सातिरेकाणि । विजयादिषु द्वौ वारौ गतस्य नरजन्मना समकम् ॥ ७२५ ॥
३ सर्वजघन्यः समयो द्रव्यादिषु भवति सर्वजीवानाम् । ४ स पुनः सुर-नारकाणां भवेत् कथ क्षेत्र-कालयो. ? ॥ ७२६ ॥

पश्यति । कियन्तम् ?, इत्याह– समा उत्सर्पिण्य-वसर्पिणीः 'असंख्येयाः' इति लिङ्गव्यत्ययेनाऽत्रापि संबध्यते । द्रव्यं तु सर्वं रूपं पश्यति । भावं तु तेषामेव रूपिद्रव्याणां पर्यायान् वक्ष्यमाणसंख्यान् जानाति ॥ ६८६ ॥

अथ प्रेरकः प्राह–

[2]खेत्तोवमाणमुत्तं जमगणिजीवेहिं किं पुणो भणियं ? । तं चिय संखाइयाइं लोगमित्ताइं निद्दिट्ठं ॥६८७॥

आह– ननु यदग्निजीवैः क्षेत्रोपमानं क्षेत्रोपमितं तद् निर्युक्तिकृता '[3]सव्वबहुअगणिजीवा निरंतरं जत्तियं भरिज्जंसु' इत्यादिगाथायां प्रागेवोक्तं प्रतिपादितम्, किमर्थं पुनरप्यत्र '[4]खेत्तोवमियं अगणिजीवा' इत्यनेन गाथावयवेन भणितम् ? । अत्रोत्तरमाह– 'तं चियेत्यादि' तदेव प्रागुक्तमग्निजीवैः क्षेत्रोपमानं क्षेत्रोपमितमिह '[5]परमोहि असंखेज्जा' इत्यादिवचनादलोके लोकमात्राणि संख्यातीतानि खण्डानि भवन्ति, इति नियतमानतया निर्दिष्टं, न पुनरपूर्वतयेति भावः । इह 'रूवगयं लहइ सव्वं' इत्येतद् भाष्यकृता '[6]दव्वं सव्वं रूवं पासइ' इति वचनादवधेर्द्रव्यतो विषयप्रतिपादनपरं व्याख्यातम् ॥ ६८७ ॥

अथ '[6]एगपएसोगाढं' इत्यादिनैव द्रव्यतोऽवधिविषयस्योक्तत्वात् क्षेत्र-कालयोरेव विशेषणत्वलक्षणेन प्रकारान्तरेण व्याख्यातुमाह–

[7]अहवा दव्वं भणियं इह रूवगयं ति खेत्त-कालदुगं । रूवाणुगयं पेच्छइ न य तं चिय तं जओऽमुत्तं ॥६८८॥

अथवा '[6]एगपएसोगाढं परमोही लहइ कम्मगसरीरं' इत्यादिनैवाऽवधिविषयभूतं द्रव्यं भणितम्, अतो 'रूपगतं लभते सर्वं' इत्येतदवधेर्द्रव्यतो विषयाभिधायकतया न व्याख्यायते । तर्हि कथमिदं नीयते ? इत्याह– 'इहेत्यादि' इह यदसंख्येयलोकखण्डासंख्यातोत्सर्पिण्य-ऽवसर्पिणीलक्षणं क्षेत्र-कालद्वयमवधिविषयत्वेनोक्तम्, तद् 'रूपगतं' इति रूपगतं लभते सर्वम् । कोऽर्थः ?, इत्याह– रूपानुगतं तत्स्थरूपिद्रव्याणां दर्शनाद् रूपिद्रव्यसंबद्धमेव प्रेक्षते, न पुनस्तदेव क्षेत्र-कालद्वयं केवलं पश्यति, यतस्तदमूर्तम्, मूर्तविषयश्चावधिरिति ॥ ६८८ ॥

अथ विनेयानुग्रहार्थं प्रासङ्गिकं किञ्चिदभिधित्सुर्वक्ष्यमाणं च संबन्धयितुमाह–

१ क ग 'संख्येया'। २ क्षेत्रोपमानमुक्त यदग्निजीवै· किं पुनर्भणितम् ? । तदेव संख्यातीतानि लोकमात्राणि निर्दिष्टम् ॥ ६८७ ॥ ३ गाथा ५९८ । ४ गाथा ६८५ । ५ गाथा ६८६ । ६ गाथा ६७५ । ७ अथवा द्रव्यं भणितमिह रूपगतमिति क्षेत्र-कालद्विकम् । रूपानुगतं प्रेक्षते न च तदेव तद् यतोऽमूर्तम् ॥६८८॥

ततः परं तेभ्योऽनन्तभागाधिकानि कश्चित् पश्यति, अपरस्तु तेभ्योऽनन्तगुणवृद्धान्येव तानि पश्यति; न त्वसंख्यातभागाधिक्यादिना वृद्धानि, वस्तुस्वाभाव्यात्; अपरस्ततः परं पूर्वोपलब्धेभ्योऽनन्तभागहीनानि द्रव्याणि पश्यति, अन्यस्त्वनन्तगुणहीनान्येव तानि तेभ्यः पश्यति, न त्वसंख्यातभागहीनत्वादिना हीनानि पश्यति, तथास्वाभाव्यादिति । पर्यायेषु पुनः पूर्वोक्ता षड्विधाऽपि वृद्धिर्हानिर्वा भवति ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ ७२८ ॥

अथ विस्तरार्थं भाष्येणाह–

[1]वुड्ढी वा हाणी वाऽणंता-[2]संखिज्ज-संखभागाणं । [2]संखिज्जा-[2]संखिज्जा-णंतगुणा चेति छब्भेया ॥ ७२९ ॥

अनन्तश्चाऽसंख्येयश्च संख्येयश्च ते तथा, ते च ते भागाश्च, तेषां वृद्धिर्हानिर्वेति । एवं त्रिविधे प्रत्येकं वृद्धि-हानी भवतः । अपरमप्यनयोः प्रत्येकं त्रैविध्यमाह– 'संखेज्जेत्यादि' गुणशब्दः प्रत्येकमभिसंबध्यते । ततश्च संख्यातगुणा, असंख्यातगुणा, अनन्तगुणा चेत्येवं त्रिविधा प्रत्येकं वृद्धिर्हानिश्चेति । इत्थं वृद्धि-हान्योः प्रत्येकं पूर्वदर्शितं षड्विधत्वं भावनीयमिति ॥ ७२९ ॥

तदेवं वृद्धि-हान्योः प्रत्येकं षड्विधत्वं सामान्येनोपदर्श्येदानीं क्षेत्र-कालयोर्वृद्धि-हानिचातुर्विध्यस्य भावार्थं दर्शयन्नाह–

[3]पइसमयम[2]संखिज्जइभागाहियं कोइ संखभागाहियं । अन्नो संखेज्जगुणं [4]खित्तम[2]संखिज्जगुणमण्णो ॥ ७३० ॥

पेच्छइ विवड्ढमाणं हायंतं वा, तहेव कालं पि । नाणंतवुड्ढि-हाणी पेच्छइ जं दो वि नाणंते ॥ ७३१ ॥

गतार्थे एव, नवरं क्षेत्र-कालयोर्नाऽनन्ते वृद्धि-हानी । कुतः ?, इत्याह– 'पेच्छईत्यादि' यद् यस्माद् द्वावपि क्षेत्र-कालौ नाऽनन्ताववधिज्ञानी पश्यति, पूर्वोक्तयुक्तेरिति ॥ ७३० ॥ ७३१ ॥

अथ द्रव्यविषये प्रत्येकं द्विविधे वृद्धि-हानी, पर्यायविषयां तु वृद्धिं हानिं च प्रत्येकं षड्विधामाह–

[5]दव्वमणंतसहियं अनंतगुणवड्ढियं च पेच्छेज्जा । हायंतं व, भावम्मि छव्विहा वुड्ढि-हाणीओ ॥७३२॥

१ वृद्धिर्वा हानिर्वाऽनन्ता-ऽसंख्येय-सख्यभागानाम् । सख्येया-ऽसख्येया-ऽनन्तगुणा चेति षड्भेदा ॥ ७२९ ॥  २ घ.छ. 'सखेज्ज' ।
३ प्रतिसमयमसख्येयभागाधिकं कश्चित् संख्यभागाधिकम् । अन्य' संख्येयगुणं क्षेत्रमसख्येयगुणमन्य' ॥ ७३० ॥
प्रेक्षते विवर्धमान हीयमानं वा तथैव कालमपि । नानन्तवृद्धि-हानी, प्रेक्षते यद् द्वे अपि नाऽनन्ते ॥ ७३१ ॥ ४ घ छ. 'खेत्त' ।
५ द्रव्यमनन्तांशाऽधिकमनन्तगुणवर्धित च प्रेक्षेत । हीयमान वा, भावे षड्विधे वृद्धि-हानी ॥ ७३२ ॥

तदेवमधो वैमानिकावधेः क्षेत्रप्रमाणं प्रतिपाद्य तिर्यगूर्ध्वं च तत्प्रतिपादयन्नाह–

[1]एएसिमसंखिज्जा तिरियं दीवा य सागरा चेव । बहुययरं उवरिमगा उड्ढं च सकप्पथूभाई ॥ ६९८ ॥

एतेषां शक्रादीनामसंख्येयास्तिर्यग् द्वीपाश्च जम्बूद्वीपादयः, समुद्राश्च लवणसागरादयः 'क्षेत्रतोऽवधिपरिच्छेद्यतयाऽवसेयाः' इति वाक्यशेषः। तदेव द्वीप-समुद्रासंख्येयकं बहुतरकं पश्यन्ति, उपरिमा एवोपरिमका उपर्युपरिवर्तिदेवलोकनिवासिनो देवा इत्यर्थः। तथा, ऊर्ध्वं स्वकल्पस्तूपादेव यावत् क्षेत्रं ते पश्यन्ति, न परतः; आदिशब्दाद् ध्वजादिपरिग्रह इति ॥ ६९८ ॥

तदेवं वैमानिकानामवधिक्षेत्रमानमभिधायेदानीं सामान्यतस्तद्वर्जदेवानां प्रतिपादयन्नाह–

[2]संखेज्जजोयणा खलु देवाणं अद्धसागरे ऊणे । तेण परमसंखेज्जा जहण्णयं पण्णवीसं तु ॥ ६९९ ॥

देवानामर्धसागरोपमे न्यूने आयुषि सति संख्येयानि योजनान्यवधिपरिच्छेद्यं क्षेत्रमवसेयम् । ततः परं संपूर्णार्धसागरोपमादिके आयुषि सति पुनरसंख्येयानि योजनान्यवधिक्षेत्रमवगन्तव्यम् । उक्तमुत्कृष्टमवधिक्षेत्रम् । अथ जघन्यमाह– 'जहण्णमित्यादि' दशवर्षसहस्रस्थितीनां भवनपति-व्यन्तराणां जघन्यमवधिक्षेत्रं पञ्चविंशतियोजनानि, ज्योतिष्क-वैमानिकानां तु जघन्यं भाष्यकार एव वक्ष्यति ॥ इति निर्युक्तिगाथापञ्चकार्थः ॥ ६९९ ॥

अथानन्तरगाथाभाष्यम्–

[3]वेमाणियवज्जाणं सामण्णमिणं तहावि उ विसेसो । उड्ढमहे तिरियम्मि य संठाणवसेण विण्णेओ॥७००॥

इदं च '[4]संखेज्जजोयणा खलु' इत्यादिकमवधिक्षेत्रप्रमाणं वैमानिकवर्जानां भवनपत्यादिदेवानां सामान्यमविशेषेण द्रष्टव्यम्; तथापि तूर्ध्वम्, अधः, तिर्यक् च तेषां देवानां कयाचिद् दिशा हीना-ऽधिकावधिलक्षणो यो विशेषः स इहैव '[5]तप्पागारे पल्लग-पडहग-' इत्यादिवक्ष्यमाणावधिक्षेत्रसंस्थानवशेन विज्ञेय इति ॥ ७०० ॥

अथ यदुक्तम्– 'जहण्णयं पण्णवीसं तु' तद् विवृण्वन्, अनुक्तं च ज्योतिष्क-वैमानिकानां जघन्यमवधिक्षेत्रमभिधित्सुराह–

१ एतेषामसंख्येयास्तिर्यग् द्वीपाश्च सागराश्चैव । बहुकतरमुपरिमका ऊर्ध्वं च स्वकल्पस्तूपादीन् ॥ ६९८ ॥
२ सख्येययोजनानि खलु देवानामर्धसागर ऊने । तेन परमसंख्येयानि जघन्यकं पञ्चविंशतिस्तु ॥ ६९९ ॥
३ वैमानिकवर्जानां सामान्यमिदं तथापि तु विशेषः । ऊर्ध्वमधस्तिर्यक् च संस्थानवशेन विज्ञेयः ॥ ७०० ॥ ४ गाथा ६९९ । ५ गाथा ७०६ ।

ननु कथं क्षेत्रस्याऽसंख्येयभागादिवृद्धौ सत्यां तदाधेयद्रव्याणामप्यसंख्येयभागादिवृद्धेर्न संभवः?, कथं वा द्रव्यानन्त्ये द्रव्यस्याऽनन्तभागवृद्धौ जायमानायां पर्यायाणामसंख्येयभागादिवृद्धिः, द्रव्यानन्तगुणवृद्धौ वा पर्यायाणामसंख्यातगुणादिवृद्धिः प्रतिपाद्यते? । इदमुक्तं भवति– क्षेत्राधाराणि हि द्रव्याणि, द्रव्याधाराश्च पर्यायाः, ततो यादृश्याधारस्य वृद्धिर्हानिर्वा, तादृश्येवाऽऽधेयस्यापि युक्ता, तत्कथमिह वैचित्र्यम्– क्षेत्रस्य चतुर्विधे वृद्धि-हानी, द्रव्यस्य द्विविधे, पर्यायाणां तु षड्विधे इति? ॥ ७३४ ॥

अत्र सूरिराह—

[2]खेत्ताणुवत्तिणो पोग्गला गुणा पोग्गलाणुवत्ती य । सामण्णा विण्णेया न[3] उ ओहिन्नाणविसयम्मि[4] ॥७३५॥

क्षेत्रानुवर्तिनः पुद्गलाः परमाणु-स्कन्धादयः, गुणास्तु पर्यायाः पुद्गलानुवर्तिनः, इत्येवमेते सामान्याः सामान्येन विज्ञेयाः ; कस्य किल हन्त ! नैतदभिमतम्? । अनभिमतप्रतिषेधं त्वाह– न त्ववधिज्ञानविषयत्वेनैवमेतेऽभिप्रेताः । इदमत्र हृदयम्– अस्त्येवैतत् सामान्येन, को वै न मन्यते यदुत– सामान्यतः समस्तलोकाकाशस्याऽसंख्येयतमादिके भागे समस्तपुद्गलास्तिकायस्याप्यसंख्येयतमादिक एव भागः स्वरूपेण वर्तते, समग्रपुद्गलास्तिकायस्यानन्ततमादिके भागे समस्ततत्पर्यायराशिरप्यनन्ततमादिभागो वर्तते; अतः क्षेत्रस्याऽसंख्येयादिभागवृद्धि-हान्योर्द्रव्यस्यापि तदनुवृत्त्या तथैव वृद्धि-हानी स्याताम्, द्रव्यस्यानन्ततमभागादिवृद्धि-हान्योस्तत्पर्यायाणामपि तदनुवृत्त्या तथैव वृद्धि-हानी भवेताम्?; परं किन्त्वत्रावधिज्ञानविषयभूतस्य क्षेत्रादेर्वृद्धि-हानी चिन्तयितुमभिप्रेते, न तु सामान्येन स्वरूपस्थस्य । एवं च विशेषिते ये वृद्धि-हानी ते अवधिज्ञानावरणक्षयोपशमाधीनत्वाद् विचित्रे । अतो यथोक्तप्रकारेणैव ते अत्र युक्ते, नान्यथेति ॥ ७३५ ॥

एतद्गाथोक्तमेवार्थं प्रपञ्चयन्नाह—

द्व्वाइं सखेत्ताओऽणंतगुणा पज्जवा सदव्वाओ । निययाहाराहीणा तेसिं वुड्ढी य हाणी य ॥ ७३६ ॥

न उ नियग्राहारवसा अवहिनिबंधो जओ परित्तो सो । चित्तो तहण्णहा वि य आणागब्भो य पाएण ॥७३७॥

१ क ख ग. 'दृश्येवाधा' । २ क्षेत्रानुवर्तिन. पुद्गला गुणाः पुद्गलानुवर्तिनश्च । सामान्या विज्ञेया न त्ववधिज्ञानविषये ॥७३५॥
३ क 'न ओ' घ छ. 'न य ओ' । ४ क 'हिविन्ना' । ५ क. ग 'णास्तत्प' । ६ घ छ 'मस्तपु' । ७ घ. छ 'दिभागे स' ।
८ द्रव्याणि स्वक्षेत्रादनन्तगुणा पर्यवा स्वद्रव्यात् । निजकाधाराधीना तेषां वृद्धिश्च हानिश्च ॥ ७३६ ॥
न तु निजकाधारवशादवधिनिबन्धो यत. परीत स । चित्रस्तथाऽन्यथापि चाज्ञागर्भश्च प्रायेण ॥ ७३७ ॥

अथ संस्थानद्वारमभिधित्सुराह—

[1]थिबुगागार जहन्नो वट्टो, उक्कोसमायओ किंचि । अजहण्णमणुक्कोसो य खेत्तओ अणेगसंठाणो ॥७०४॥

स्तिबुको बिन्दुरुच्यते, तदाकारो जघन्यावधिर्भवति । एतदेवाह– 'वट्टो त्ति' सर्वतो वृत्त इत्यर्थः, 'जावइया तिसमयाहारगस्स' इत्यादिना प्रतिपादितस्य पनकावगाहनाक्षेत्रस्यैतदाकारत्वादिति । उत्कृष्टावधिस्तु परमावधिः किञ्चिदायतः किमपि प्रदीर्घः, न तु सर्वथा वृत्त इत्यर्थः, अग्निजीवसूचेरवधिमच्छरीरस्याऽऽपाद-मस्तकान्तं भ्रम्यमाणाया एतदाकारभावादिति । अजघन्योत्कृष्टो– न जघन्यो नाप्युत्कृष्टो मध्यम इत्यर्थः । अयं पुनः क्षेत्रतोऽनेकानि संस्थानानि यस्येत्यनेकसंस्थानो भवति ॥ इति निर्युक्तिगाथार्थः ॥ ७०४ ॥

अथ भाष्यम्—

[3]पणओ थिबुयागारो तेण जहन्नावही तयागारो । इयरो सेढिपरिक्खेवओ सदेहाणुवत्तीए ॥ ७०५ ॥

इतर उत्कृष्टः, अवधिमत्स्वदेहानुवृत्त्याऽग्निजीवश्रेणिपरिक्षेपात् 'किञ्चिदायतः' इति शेषः । शेषं सुगमम् ॥ ७०५ ॥

अथ मध्यमावधेर्यदनेकसंस्थानत्वमुक्तम्, तद्विशेषतो दर्शयन्नाह—

[4]तप्पागारे पल्लग-पडहग-झल्लरि-मुइंग-पुप्फ-जवे । तिरिय-मणुएसु ओही नाणाविहसंठिओ भणिओ ॥७०६॥

तप्र उडुकस्तस्येवाऽऽकारो यस्याऽसौ तप्राकारोऽवधिर्नारकाणां मन्तव्यः, तप्रश्च किलाऽऽयतत्र्यस्रो भवति । पल्लको धान्याधार-भूतोऽत्रैव प्रतीतः, स चोर्ध्वायतः, उपरि च किञ्चित्संक्षिप्तः, तदाकारोऽवधिर्भवनपतीनाम् । पटहक आतोद्यविशेषः प्रतीत एव, स च नाऽत्यायतोऽध उपरि च समः, तदाकारोऽवधिर्व्यन्तराणाम् । उभयतो विस्तीर्णचर्मावनद्धमुखो मध्ये संकीर्णो ढक्कालक्षणाऽऽतोद्यविशेषो झल्लरी, तदाकारोऽवधिर्ज्योतिष्काणाम् । मृदङ्गोऽप्यातोद्यमेव, स चोर्ध्वायतोऽधोविस्तीर्ण उपरि च तनुकस्तदाकारोऽवधिः सौधर्माद्य-च्युतान्तकल्पनिवासिदेवानाम् । 'पुप्फेति' सूचनात् सूत्रमिति कृत्वा समशिखा पुष्पभृता चङ्गेरी[5] पुष्पचङ्गेरी परिगृह्यते, तदाकारोऽवधिर्ग्रैवे-यकविमानवासिदेवानाम् । 'जवे त्ति' यवो यवनालकः, स च कन्याचोलकोऽवगन्तव्यः । अयं च मरुमण्डलादिप्रसिद्धश्चरणकरूपेण

१ स्तिबुकाकारो जघन्यो वृत्तः, उत्कृष्ट आयतः किञ्चित् । अजघन्या-ऽनुत्कृष्टश्च क्षेत्रतोऽनेकसंस्थान. ॥ ७०४ ॥ २ गाथा ५८८ ।
३ पनक स्तिबुकाकारस्तेन जघन्यावधिस्तदाकारः । इतरः श्रेणिपरिक्षेपतः स्वदेहानुवृत्त्या ॥ ७०५ ॥
४ तप्राकार. पल्लक-पटहक-झल्लरी-मृदङ्ग-पुष्प-यव. । तिर्यग्-मनुजेष्ववधिर्नानाविधसंस्थितो भणितः ॥ ७०६ ॥ ५ घ.छ. 'री प' ।

प्रत्येकं पुनस्त्रिधा भवन्ति, तद्यथा– प्रतिपतनशीलानि प्रतिपातीनि– कियन्तं कालं स्थित्वा ततो ध्वंसनस्वभावानीत्यर्थः, तद्विपरीतानि त्वप्रतिपातीनि– आमरणान्तभावीनीत्यर्थः, प्रतिपात्य-ऽप्रतिपात्युभयरूपाणि तु मिश्राणि– कानिचित् प्रतिपातीनि, कानिचिद् नेत्यर्थः। एतानि च मनुष्य-तिर्यक्षु योऽवधिस्तस्मिन्नेव भवन्ति, न देव-नारकावधाविति ।



आह– ननु तीव्र-मन्दद्वारे प्रस्तुते फड्डकावधिस्वरूपं प्रतिपादयतः प्रक्रमविरोध इति । अत्रोच्यते– प्रायोऽनुगामुका-ऽप्रतिपातीनि फड्डकानि तीव्रविशुद्धियुक्तत्वात् तीव्राणि भण्यन्ते, अननुगामि-प्रतिपातीनि त्वविशुद्धत्वाद् मन्दान्युच्यन्ते, मिश्राणि तु मध्यमानि, इत्यर्थतस्तीव्र-मन्दद्वारम्, इत्यदोषः । अपरस्त्वाह– अनुगामुका-ऽप्रतिपातिफड्डकानां कः परस्परं विशेषः ?, अनानुगामुक-प्रतिपातिफड्डकानां चान्योन्यं को भेदः ? इति । अत्राभिधीयते– अप्रतिपाति फड्डकमनुगाम्येव भवति, अनुगामुकं त्वप्रतिपाति प्रतिपाति च भवतीति विशेषः । तथा, प्रतिपाति पतत्येव, पतितमपि च देशान्तरगतस्य कदाचिज्ज्ञायते; न चेत्थमनानुगामुकम् । इति निर्युक्तिगाथाद्वयसंक्षेपार्थः ॥ ७३८ ॥ ७३९ ॥

विस्तरार्थं तु भाष्यकार एवाह–

[1]जालंतरत्थदीवप्पहोवमो फड्डगावही होइ । तिव्वो विमलो मंदो मलीमसो मीसरूवो य ॥ ७४० ॥

अपवरकजालकान्तरस्थप्रदीपप्रभोपमः फड्डकावधिर्भवति । तत्र च विशुद्धक्षयोपशमजन्यफड्डकप्रभवोऽवधिर्विमलः, स च तीव्र उच्यते, अविशुद्धक्षयोपशमप्रवर्तितश्च मलीमसः, स च मन्दोऽभिधीयते । मध्यमक्षयोपशमाविष्कृतफड्डकसमुत्थस्तु मिश्ररूपस्तीव्र-मन्दस्वरूप इत्यर्थः । अत एव तीव्र-मन्दद्वारमिदमुच्यते ॥ ७४० ॥

'[2]एगफड्डुवओगे' इत्युत्तरार्धं व्याचिख्यासुराह–

[3]उवओगं एगेण वि दिंतो सो फड्डिएहिं सव्वेहिं । उवउज्जइ जुगवं चिय जह समयं दोहिं नयणेहिं ॥ ७४१ ॥

गतार्था ॥ ७४१ ॥

अथ प्रेर्यमुत्थाप्य परिहरन्नाह–

---

१ जालान्तरस्थदीपप्रभोपमः फड्डकावधिर्भवति । तीव्रो विमलो मन्दो मलीमसो मिश्ररूपश्च ॥ ७४० ॥ २ गाथा ७३८ ।
३ उपयोगमेकेनापि ददत् स फड्डकैः सर्वैः । उपयुज्यते युगपदेव यथा समकं द्वाभ्यां नयनाभ्याम् ॥ ७४१ ॥

मवधिः सर्वकालं नियतोऽवस्थित एव भवति, न त्वन्याकारतया परिणमति । तिर्यग्-मनुष्याणां तु येनाकारेण प्रथममुत्पन्नोऽवधिः, केषांचित् तेनैवाकारेण सर्वकालं भवति; केषांचित् त्वन्याकारेण परिणमतीति ॥ ७०८ ॥ ७०९ ॥ ७१० ॥ ७११ ॥

अथ यदुक्तम्- '[1]तिरिय-मणुएसु ओही' इत्यादि, तद् व्याचिख्यासुराह-

[2]णाणागारो तिरिय-मणुएसु मच्छा सयंभूरमणे व्व । तत्थ वलयं निसिद्धं तस्सिह पुण तं पि होज्जाहि ॥७१२॥

तत्र स्वयंभूरमणे तस्य मत्स्यस्याऽऽकारविषये वलयं निषिद्धम्, इह पुनस्तिर्यग्-मनुष्येषु,'तस्यावधेः' इत्येतदप्यावृत्त्या योज्यते, तदपि वलयाकारमाश्रित्य भवेत् । शेषं सुगममिति ॥ ७१२ ॥

तदेवं संस्थाने प्रोक्तेऽपि 'कयापि दिशा बहुरवधिः, कयापि तु स्तोकः?' इति न ज्ञायते । अत एतद् भवनपत्यादीनां दर्शयन्नाह-

[3]भवणवइ-वंतराणं उड्ढं बहुगो अहो य सेसाणं । नारग-जोइसियाणं तिरियं ओरालिओ चित्तो ॥ ७१३ ॥

नारक-ज्योतिष्काणामवधिस्तिर्यग् बहुः, तिर्यग्-मनुष्याणां तु संबन्धी अवधिरौदारिकावधिरुच्यते । अयं पुनश्चित्रो नानाप्रकारः- केषांचिदूर्ध्वं बहुः, अन्येषां त्वधः, अपरेषां तिर्यक्; केषांचित् स्वल्प इति भावः । शेषं सुगमम् । इति गाथासप्तकार्थः॥७१३॥

॥ इत्यवसितं संस्थानद्वारमिति ॥

अथ सप्रतिपक्षमानुगामुकद्वारमाह-

[4]अणुगामिओ य ओही नेरइयाणं तहेव देवाणं । अणुगामी अणणुगामी मीसो य मणुस्स-तेरिच्छे॥७१४॥

अनुगमनशील आनुगामुकः, यः समुत्पन्नोऽवधिः स्वस्वामिनं देशान्तरमभिव्रजन्तमनुगच्छति, लोचनवत्, असावानुगामुक इत्यर्थः । ईदृश एवावधिर्भवति, केषाम्,? इत्याह- नारकाणां तथा देवानां चेति । तथा, आनुगामुक उक्तस्वरूपः, अनानुगामुकस्त्ववस्थितशृङ्खलादिनियन्त्रितप्रदीपवद् विपरीतः । यस्य तूत्पन्नस्यावधेर्देशो व्रजति स्वामिना सहाऽन्यत्र, देशस्तु प्रदेशान्तरचलितपुरुषस्योपहतैकलोचनवदन्यत्र न व्रजति, असौ मिश्र उच्यते । एष त्रिविधोऽप्यवधिर्मनुष्येषु तिर्यक्षु च भवति ॥ इति निर्युक्तिगाथार्थः ॥ ७१४ ॥

---

१ गाथा ७०६ । २ नानाकारस्तिर्यग्-मनुजेषु मत्स्याः स्वयंभूरमण इव । तत्र वलयं निषिद्धं तस्येह पुनस्तदपि भवेत् ॥ ७१२ ॥

३ भवनपति-व्यन्तराणामूर्ध्वं बहुकोऽधश्च शेषाणाम् । नारक-ज्योतिष्काणां तिर्यगौदारिकश्चित्रः ॥ ७१३ ॥

४ अनुगामुकश्चावधिर्नैरयिकाणां तथैव देवानाम् । अनुगामी, अननुगामी मिश्रश्च मनुष्य-तिर्यक्षु ॥ ७१४ ॥

[1]चयइ च्चिय पडिवाई अणाणुगामी चुओ पुणो होइ । नर-तिरिग्गहणं पाओ जं तेसु विसोहिसंकेसा ॥ ७४५ ॥

नियतानुगामिनोरप्रतिपात्यनुगामिनोः फड्डकयोरित्यर्थः, को भेदः ?– न कश्चिदिति पराभिप्रायः । को वाऽनुगाम्य-प्रतिपाति-विपक्षयोः– अननुगामि-प्रतिपातिनोर्भेदः ?। अत्रोत्तरमाह– यो नियतोऽप्रतिपाती स चलद्दीपिकेव नियमादन्यत्र गच्छन्तमवधिमन्तमनुयाति– अनुगच्छत्येव, यस्त्वनुगामी स नियतो वा स्यादनियतो वा– अप्रतिहतलोचनवदप्रतिपाती स्यात्, उपहतलोचनवत् प्रतिपाती वा स्यादित्यर्थः । प्रतिपक्षभेदमाह–'चयइ चियेत्यादि' च्यवत एव प्रतिपतत्येवप्रतिपाती, च्युतोऽपि च कदाचिद्देशान्तरे जायत इत्यत्रापि संबध्यते, अनानुगामुकस्तु नैवंस्वरूपः, यतोऽसौ यत्र देशे तिष्ठतः समुत्पन्नस्तत्रैव तिष्ठतश्च्यवते, नवा; च्युतोऽपि च देशान्तरे पुनरप्युत्पत्तिप्रदेशे समायातस्य भवति, इति प्रतिपात्य-ऽननुगामुकयोर्भेदः । 'नरेत्यादि' इह तीव्र मन्दद्वारमिदम्, तीव्र-मन्दता च फड्डकानां विशुद्धिसंक्लेशवशाज्जायते, विशुद्धिसंक्लेशाश्च तथाविधाः प्रायस्तिर्यग्-मनुष्येषु, इतीह 'फड्डा य आणुगामी' इत्यादिगाथायाः पर्यन्ते 'मणुस्स-तेरिच्छे' इति नर-तिर्यग्ग्रहणं कृतमिति ॥ ७४४ ॥ ७४५ ॥

अथ प्रेर्यान्तरमुत्थाप्य परिहरन्नाह–

[3]गहणमणुगामियाईण किं कयं तिव्व-मंदचिंताए । पायमणुगामिनियया तिव्वा मंदा य जं इयरे ॥७४६॥

ननु चास्य तीव्र-मन्दद्वारत्वात् तीव्र-मन्दचिन्तायां प्रस्तुतायां किमित्यनुगामुकादिफड्डकग्रहणं कृतम् ?– अप्रस्तुतैव फड्डकप्ररूपणेति भावः । प्रतिविधानमाह– 'पायमित्यादि' अनुगामीनि, अप्रतिपातीनि च फड्डकानि यस्मात् प्रायस्तीव्राणि भवन्ति, इतराणि त्वननुगामीनि, प्रतिपातीनि च प्रायो मन्दानि, मिश्राणि तूभयस्वभावानि; अतः फड्डकप्ररूपणायामियं तीव्र-मन्दद्वारता गम्यत एवेति ॥७४६॥

अथ मतान्तरमुपदर्श्य तस्याप्यविरुद्धतामाह–

[5]अण्णे पडिवायु-प्पायदार एवाणुगामियाईणि । नर-तिरियग्गहणेणं अहवा दोसुं पि न विरुद्धं ॥७४७॥

१ च्यवत एव प्रतिपाती अननुगामी च्युत' पुनर्भवति । नर-तिर्यग्ग्रहण प्रायो यत् तेषु विशुद्धिसंक्लेशात् ॥ ७४५ ॥ २ गाथा ७३९ ।
३ ग्रहणमनुगामिकादीना किं कृत तीव्र-मन्दचिन्तायाम् । प्रायोऽनुगामिनियतानि तीव्राणि मन्दानि च यदितराणि ॥ ७४६ ॥ ४ घ.छ.'यामपि ती' ।
५ अन्ये प्रतिपातो त्पादद्वार एवाऽनुगामिकादीनि । नर-तिर्यग्ग्रहणेनाऽथवा द्वयोरपि न विरुद्धम् ॥ ७४७ ॥

इहाऽद्धाशब्देनाऽवधिज्ञानावरणक्षयोपशमलाभरूपा लब्धिरभिप्रेता । सा च तत्राऽन्यत्र वा क्षेत्रे तेष्वन्येषु वा द्रव्यादिषूपयुक्तस्य, अनुपयुक्तस्य वा भवति । अत एतस्या अवधिज्ञानावरणक्षयोपशमलाभरूपाया लब्धेर्निरन्तरमवस्थानं वक्ष्यमाणभाष्ययुक्तया षट्षष्टिः सागरोपमाणि कालेन कालमाश्रित्य भवति । तुशब्दस्य विशेषणार्थत्वाद् नरभवसंबन्धिना कालेनैतान्यधिकानि द्रष्टव्यानि । इदं चावधेर्द्रव्यादिषूपयोगस्य लब्धेश्चान्तर्मुहूर्तादिकमवस्थानमुत्कृष्टं द्रष्टव्यम्, जघन्यतस्त्वेक एव समयो मन्तव्यः; तत्र नर-तिरश्चां समयादूर्ध्वमवधेः प्रतिपातादनुयोगाद् वाऽसौ विज्ञेयः, देव-नारकाणां तु येषां भवस्य चरमसमये सम्यक्त्वलाभाद् विभङ्गज्ञानमवधिरूपतया परिणमति, ततः परं च मृतानां तदवधिज्ञानं प्रच्यवते, तेषामेष द्रष्टव्यः ॥ इति निर्युक्तिगाथाद्वयार्थः ॥ ७१८ ॥

अथ भाष्यम्–

[1]आहारे उवओगे लद्धीए वा [2]हविज्ज अवत्थाणं । आहारो से खित्तं तेत्तीसं सागरा तत्थ ॥ ७१९ ॥

विजयाईसूववाए जत्थोगाढो भवक्खओ जाव । [3]खेत्तेऽवतिट्ठइ तहिं दव्वेसु य देहसयणेसु ॥ ७२० ॥

आधारो-पयोग-लब्धिविषयमवधेरवस्थानं भवेत् । तत्राधारः 'से' तस्याऽधेः क्षेत्रं मन्तव्यम् । 'तत्थ त्ति' तत्राधारभूते क्षेत्रे त्रयस्त्रिंशत् सागरोपमाण्यवधेः 'अवस्थानम्' इति शेषः । क्व पुनः क्षेत्रे एतावन्तं कालमवधिरवतिष्ठते ?, इत्याह– विजयादिष्वनुत्तरविमानेषूपपाताद् भवक्षयं यावत्; यत्र क्वापि 'खेत्ते त्ति' शयनीयाक्रान्तक्षेत्रे देवोऽवगाढोऽवतिष्ठते, 'तहिं ति' तत्र क्षेत्रेऽस्यावधेस्त्रयस्त्रिंशत् सागरोपमाण्यवस्थानं द्रष्टव्यम् । क्षेत्रस्योपलक्षणत्वाद् द्रव्येषु च देहशयनीयेष्ववधेरेतावन्तं कालमवस्थानमवसेयमिति ॥७१९॥७२०॥

अथोपयोगतो द्रव्य-गुण-पर्यायेष्ववधेरवस्थानमाह—

[4]दव्वे भिन्नमुहुत्तं तत्थण्णत्थ व हविज्ज खेत्तम्मि । उवओगो न उ परओ सामत्थाभावओ तस्स ॥ ७२१ ॥

दव्वे तत्थेव गुणा संचरओ सत्त वट्ठ वा समया । अण्णे पुण अट्ठ गुणे भणंति तप्पज्जवे सत्त ॥७२२॥

१ आहार उपयोगे लब्धौ वा भवेदवस्थानम् । आहारस्तस्य क्षेत्रं त्रयस्त्रिंशत् सागरास्तत्र ॥ ७१९ ॥ २ घ छ 'हवेज्ज' । ३ क.ख ग. 'खित्ते' ।
विजयादिषूपपाते यत्रावगाढो भवक्षयो यावत् । क्षेत्रेऽवतिष्ठते तत्र द्रव्येषु च देहशयनेषु ॥ ७२० ॥
४ द्रव्ये भिन्नमुहूर्तं तत्राऽन्यत्र वा भवेत् क्षेत्रे । उपयोगो न तु परत सामर्थ्याभावतस्तस्य ॥ ७२१ ॥
द्रव्ये तत्रैव गुणाः सचरतः सप्ताऽष्ट वा समयाः । अन्ये पुनरष्ट गुणान् भणन्ति तत्पर्यवात् सप्त ॥ ७२२ ॥

स्त्वाह– "[1]वाहिरलंभो नाम जत्थ से ठियस्स ओहिण्णाणं समुप्पण्णं, तम्मि ठाणे सो ओहिनाणं न किंचि पासइ, तं पुण ठाणं जाहे अन्तरियं होइ, तं जहा– अङ्गुलेण वा, अङ्गुलपुहत्तेण वा, विहत्थीए वा, विहत्थिपुहत्तेण वा, एवं जाव संखिज्जेहिं वा, असंखिज्जेहिं वा जोयणेहिं ताहे पासइ; एस वाहिरलंभो भण्णइ" अनेन भाष्योक्तस्तृतीयः पक्ष एव[2] लिखितः, आद्यपक्षद्वयं तु किमुपलक्षणव्याख्यानाच्चूर्णौ द्रष्टव्यम्, आहोस्विदन्यत् किञ्चित् कारणम् ? इति केवलिनो विदन्तीति । तत्र चैवंविधे वाह्यावधावेकस्मिन् समये द्रव्य-क्षेत्र-काल-भावेषु विषये उत्पादादयो भजनीया इति ॥ ७४९ ॥

कथं भजनीयाः ?, इत्याह–

[3]उप्पाओ पडिवाओ उभयं वा होज्ज एगसमएणं । कहमुभयमेगसमये विभागओ तं न सव्वस्स ॥७५०॥

इह कदाचिदेकस्मिन् समये उत्पादो भवति– पूर्वं स्वल्पद्रव्यादिविषयो वाह्यावधिरुत्पन्नः सन् वर्धत इत्यर्थः– अधिकान् द्रव्य-क्षेत्र-काल-भावान् पश्यतीति भावः । कदाचित् त्वेकस्मिन् समये हीयतेऽसौ– पूर्वदृष्टेभ्यो द्रव्यादिभ्यो हीनांस्तान् पश्यतीत्यर्थः । कदाचित् तूत्पाद-प्रतिपातलक्षणमुभयमप्येकस्मिन् समये भवेत्, यतो वाह्यावधिर्देशावधिरयम्, ततश्च यदैवै[4]कदिके वाह्यावधौ तिरश्चीनं संकोचलक्षणः प्रतिपातस्तदैवाग्रतो वृद्धिरूप उत्पादो भवति; यदा चाग्रतः संकोचस्तदैव तिरश्चीनं विस्तरः । एवं सान्तरानेकदिकेऽपि वाह्यावधौ यदैवैकस्यां दिश्यधिकस्यैवोत्पादस्तदैवाऽन्यस्यां प्रतिपातः । एवं च वलयाकारे सर्वतोदिकेऽपि वाह्यावधौ यत्रैव समये एकस्मिन् देशे वलयस्य विस्ताराधिक्यलक्षण उत्पादस्तत्रैव समयेऽन्यस्यां दिशि वलयस्य संकोचलक्षणः प्रतिपातः; इत्यादिप्रकारेणोत्पादादयोऽत्रैकसमये भजनीयाः ।

अत्र परः प्राह– 'कहमुभयमित्यादि' कथमुत्पात-प्रतिपातविरुद्धधर्मद्वयलक्षण[5]मुभयमेकस्यैकस्मिन् समये युक्तम् ?– न घटत एवैतदिति परस्याभिप्रायः । अत्रोत्तरमाह– 'विभागओ तं न सव्वस्स त्ति' । इदमुक्तं भवति– यदि हि सर्वस्याऽप्यवधेर्युगपदेवोत्पाद-प्रतिपातावभ्युपगम्येयाताम्, तर्हि स्याद् विरोधः, एतच्च नास्ति, विभागतो देशतस्तदभ्युपगमात् ॥ ७५० ॥

---

१ बाह्यलाभो नाम यत्र तस्य स्थितस्यावधिज्ञानं समुत्पन्नं, तस्मिन् स्थाने तस्यावधिज्ञान न किञ्चित् पश्यति तत्पुन स्थान यावदन्तरितं भवति, तद्यथा– अङ्गुलेन वा, अङ्गुलपृथक्त्वेन वा, वितस्त्या वा, वितस्तिपृथक्त्वेन वा, एव यावत् संख्येयैर्वा, असंख्येयैर्वा योजनैस्तावत् पश्यति, एष बाह्यलाभो भण्यते। २ क. 'व लक्षित'। ३ उत्पादः प्रतिपात उभयं वा भवेदेकसमयेन । कथमुभयमेकसमये विभागतस्तद् न सर्वस्य ॥७५०॥ ४ घ छ 'कतो दि'। ५ घ.छ 'णमे'।

इत्याह– 'खेत्त-कालेसु त्ति ' तयोरेव निजक्षेत्र-कालयोस्तिष्ठताम् । इदमुक्तं भवति– अन्यत्र नर-तिर्यक्संबन्धिन्याधारभूते क्षेत्रे स्वायुष्करूपे च काले गतानाममीषामपि भवति द्रव्यादिष्ववधेः समयोऽवस्थानं, केवलं ते तत्र गताः सुरनारका न भवन्त्येव, किन्तु नर-तिर्यञ्च एवेति; अत उक्तम्– तस्मिन्नेव स्वाधारभूते क्षेत्रे स्वायुष्कलक्षणे च काले तिष्ठतामिति । तत्र हि तिष्ठतां सुर-नारकाणामवधेः प्रतिपाताभावात् समयमात्रावस्थानासंभव एवेति भावः ॥ ७२६ ॥

अत्र सूरिराह—

[1]चरिमसमयम्मि सम्मं पडिवज्जंतस्स जं चिय विभंगं । तं होइ ओहिनाणं गयस्स बीयम्मि[2] तं पडइ॥७२७॥

व्याख्यातार्थैव ॥ इति गाथानवकार्थः ॥ ७२७ ॥

॥ उक्तमवस्थितद्वारम् ॥

अथ चलद्वारमभिधित्सुराह–

[3]वुड्ढी वा हाणी वा चउव्विहा होइ खेत्त-कालाणं । दव्वेसु होइ दुविहा छव्विह पुण पज्जवे होइ ॥७२८॥

चलद्वारमिदमुच्यते । चलश्चावधिद्रव्यादिविषयमङ्गीकृत्य वर्धमानको हीयमानको वा भवति । वृद्धि-हानी च प्रत्येकं षड्विधे सामान्येन आगमे प्रोक्ते, तद्यथा– अनन्तभागवृद्धिः, असंख्यातभागवृद्धिः, संख्यातभागवृद्धिः, संख्यातगुणवृद्धिः, असंख्यातगुणवृद्धिः, अनन्तगुणवृद्धिः ; अनन्तभागहानिः, असंख्यातभागहानिः, संख्यातभागहानिः, संख्यातगुणहानिः, असंख्यातगुणहानिः, अनन्तगुणहानिः । एतयोश्च षड्विधवृद्धि-हान्योर्मध्यादवधिविषयभूतक्षेत्र-कालयोराद्यन्तभेदद्वयवर्जिता चतुर्विधा वृद्धिर्हानिर्वा भवति । अनन्तभागवृद्धिः, अनन्तगुणवृद्धिर्वा, तथाऽनन्तभागहानिः, अनन्तगुणहानिर्वा क्षेत्र-कालयोर्न संभवति, अवधिविषयभूतक्षेत्रस्याऽऽनन्त्याभावात् , कालस्याऽप्यवधिविषयभूतस्याऽनन्तत्वाप्रतिपादनात् । तदिदमत्र हृदयम्– यावत् क्षेत्रं प्रथममवधिज्ञानिना दृष्टम् , ततः प्रतिसमयमसंख्यातभागवृद्धं कश्चित् पश्यति, कोऽपि संख्यातभागवृद्धम् , अन्यस्तु संख्यातगुणवृद्धम् , अपरस्त्वसंख्यातगुणवृद्धं क्षेत्रं पश्यति । एवं हीयमानमपि वाच्यम् । एवं क्षेत्रे वृद्धिर्हानिर्वा चतुर्धा भवति । एवं कालेऽपि वृद्धि-हान्योश्चातुर्वैध्यं भावनीयमिति ।

द्रव्येषु पुनरवधिविषयभूतेषु द्विविधा वृद्धिर्हानिर्वा भवति । इदमुक्तं भवति– अवधिज्ञानिना यावन्ति द्रव्याण्युपलब्धानि प्रथमं,

---

1 चरमसमये सम्यक् ( त्व ) प्रतिपद्यमानस्य तदेव विभङ्गम् । तद् भवत्यवधिज्ञानं गतस्य द्वितीये तत् पतति ॥ ७२७ ॥ 2 घ छ. 'म्मि से प' ।
3 वृद्धिर्वा हानिर्वा चतुर्विधा भवति क्षेत्र-कालयोः । द्रव्येषु भवति द्विविधा षड्विधा पुनः पर्यवे भवति ॥ ७२८ ॥

[1]अब्भिंतरलद्धी सा जत्थ पईवप्पभ व्व सव्वत्तो । संबद्धमोहिनाणं अब्भंतरओऽवहीनाणी ॥ ७५३ ॥

गतार्थैव, नवरं 'संबद्धमित्यादि' अवधिज्ञानं जीवे संबद्धं सर्वतो भवति, अवधिज्ञानी त्ववधिज्ञानस्याऽभ्यन्तरस्तो भवतीति॥७५३॥

अथात्रोत्पाद-प्रतिपातविधिमाह–

[2]उप्पाओ विगमो वा दीवस्स व तस्स नोभयं समयं । न भवण-नासा समयं वत्थुस्स जमेगधम्मेणं ॥७५४॥

अभिहितार्थैव, नवरं यस्माद् वस्तुनो द्रव्यस्यैकेन धर्मेण स्वभावेन समकं युगपद् न नैव भवन-नाशौ उत्पाद-व्ययौ कदाचनापि भवतः । न ह्यङ्गुलिद्रव्यं येनैवर्जुत्वधर्मेण ऋजु प्राञ्जलं भवति, तेनैव व्येतीति युज्यते, विरुद्धत्वात्; धर्मान्तरेण त्वेकस्यैककालमपि युज्येते उत्पाद-व्ययौ; यथा तदेवाऽङ्गुलिद्रव्यं यस्मिन्नेव समये ऋजुतयोत्पद्यते, तस्मिन्नेव समये वक्रतया विनश्यति, द्रव्यतया त्ववस्थितमेवाऽऽस्त इति ॥ ७५४ ॥

एतदेवाह–

[3]उप्पाय-व्वय-धुवया समयं धम्मंतरेण न विरुद्धा । जह रिउ-वक्कंगुलिता सुर-नर-जीवत्तणाइं वा ॥ ७५५॥

उप्पज्जइ रिउयाए नासइ वक्कत्तणेण तस्समयं । न [4]उ तम्मि चेव रिउयानासो वक्कत्तभवणं च ॥ ७५६ ॥

गतार्थ एव, नवरं तत्प्रत्ययः प्रत्येकमभिसंबध्यते, यथा ऋजुता, वक्रता, अङ्गुलिता चेति; एतत्रितयमपि युगपद् धर्मान्तरेण न विरुद्धम् । यदि वा यथा कोऽपि मृतः साधुर्यस्मिन्नेव समये देवत्वेनोत्पद्यते तस्मिन्नेव नरत्वेन विनश्यति, जीवत्वेन पुनरत्रातिष्ठते । एवमिहाऽपि युगपद् धर्मान्तरेणोत्पादादयो न विरुध्यन्ते। न त्वेकेनैव धर्मेण युगपत् ते युज्यन्ते, तदेवाह– 'न उ तम्मीत्यादि' न पुनरेतद् युज्यते । किम् ?, इत्याह– 'रिउयेत्यादि' यस्मिन्नेव समयेऽङ्गुल्या ऋजुता जायते, तस्मिन्नेव समये तस्या ऋजुताया नाशो भवति, भाविवक्रत्वस्य भवनं चेति । एवं हि 'ऋजुता ऋजुत्वधर्मेणोत्पद्यते, तेनैव धर्मेण तस्मिन्नेवोत्पत्तिसमये सा विनश्यति' इत्यभ्युपगतं भवति, दूरविरुद्धं चैतत् ॥ ७५५ ॥ ७५६ ॥

---

१ अभ्यन्तरलब्धि. सा यत्र प्रदीपप्रभेव सर्वतः । सम्बद्धमवधिज्ञानमभ्यन्तरतोऽवधिज्ञानी ॥ ७५३ ॥
२ उत्पादो विगमो वा दीपस्येव तस्य नोभय समकम् । न भवन-नाशौ समकं वस्तुनो यदेकधर्मेण ॥ ७५४ ॥
३ उत्पाद-व्यय-ध्रुवता समक धर्मान्तरेण न विरुद्धा । यथा ऋजु-वक्रा-ऽङ्गुलिता सुर-नर-जीवत्वानि वा ॥ ७५५ ॥
उत्पद्यते ऋजुतया नश्यति वक्रत्वेन तत् समकम् । न तु तस्मिन्नेवर्जुतानाशो वक्रत्वभवन च ॥ ७५६ ॥ ४ क.ख.ग 'उ चेव तम्मि रि'।

गतार्थैव, नवरं 'अणंतसहियं ति' अनन्ततमांशो भागोऽनन्तांशस्तेनाधिकं द्रव्यं कश्चित् पश्यतीति ॥ ७३२ ॥

एतेषां च द्रव्य-क्षेत्र-काल-भावानां परस्परसंयोगे चिन्त्यमाने एकस्य वृद्धावेवाऽपरस्य वृद्धिः, न त्वेकस्य हानावन्यस्य वृद्धिः; एकस्य हानावेवाऽपरस्य हानिः, न त्वेकस्य वृद्धावपरस्य हानिर्भवति । अपरं च, एकस्य द्रव्यादेर्भागेन वृद्धौ हानौ वा जायमानायामपरस्यापि भागेनैव वृद्धि-हानी प्रायः, न तु गुणकारेण; गुणकारेणाप्येकस्य वृद्धि-हान्योः प्रवर्तमानयोरपरस्यापि प्रायस्तेनैव ते प्रवर्तेते, इति दर्शयन्नाह–

[1]वुड्ढीए चिय वुड्ढी हाणी हाणीए न उ विवज्जासो । भागे भागो गुणणे गुणो य दव्वाइसंजोए ॥ ७३३ ॥

इह वृद्धि-हानी समाश्रित्य द्रव्य-क्षेत्र-काल-भावानां परस्परं संयोगे चिन्त्यमाने एकस्य द्रव्यादेर्वृद्धावेव तदपरस्य वृद्धिर्जायते, एकस्य हानावेव च तदन्यस्य हानिः प्रवर्तते । 'न उ विवज्जासो त्ति' न तूक्तस्य विपर्यासो विपर्ययो मन्तव्यः– एकस्य द्रव्यादेर्हानावपरस्य वृद्धिः, तथा, एकस्य द्रव्यादेर्वृद्धावन्यस्य हानिरित्येवंलक्षणो विपर्ययः कदाचिदपि न भवतीत्यर्थः ।

अथवा गाथार्थमिदमन्यथा व्याख्यायते, एवकारस्य भिन्नक्रमेण योजनात्[3], तद्यथा– एकस्य द्रव्यादेर्वृद्धौ तदपरस्य वृद्धिरेव, न तु हानिलक्षणो विपर्यासो भवति '[4]काले चउण्ह वुड्ढी' इति वचनात्; एकस्मिन् वर्धमानेऽपरस्यावस्थानं तु स्यादपि '[4]कालो भइयव्वो खेत्तवुड्ढीए' इति वचनात् । तथा, एकस्य[5] द्रव्यादेर्हानौ[6] तदपरस्य हानिरेव, न तु वृद्धिलक्षणो विपर्यासः, अवस्थानं तु स्यादपीति । 'भागे भागो त्ति' एकस्य क्षेत्रादेरसंख्याततमादिके भागे वर्धमाने तदपरस्याऽपि भाग एव वर्धते, अवस्थानं वा भवति, न तु गुणकारेण वृद्धिः । तथा, गुणकारेणाप्येकस्य वृद्धौ जायमानायामपरस्याऽपि तेनैवाऽसौ भवति, अवस्थानं वा जायते, न तु भागेन वृद्धिः । प्रायेण चैतद् द्रष्टव्यम्, क्षेत्रादेर्भागेन वृद्धावपि द्रव्यादेर्गुणकारेण वृद्धिसंभवादिति ॥ ७३३ ॥

अथ परः प्रेरयति–

[7]कह खेत्तअसंखभागाइसंभवे संभवो न दव्वे वि ?। किह वा दव्वाणंते पज्जवसंखिज्जभागाइं[8] ? ॥ ७३४ ॥

१ घ छ. 'गुणाका' । २ वृद्धावेव वृद्धिर्हानिर्हानौ न तु विपर्यासः । भागे भागो गुणने गुणश्च द्रव्यादिसंयोगे ॥ ७३३ ॥
३ घ छ. 'ना त' । ४ गाथा ६१७ । ५ घ छ. 'स्य हा' । ६ घ. छ. 'हानावप' ।
७ कथं क्षेत्रासंख्यभागादिसभवे संभवो न द्रव्येऽपि ?। कथं वा द्रव्यानन्त्ये पर्यवासंख्ययेभागादि ? ॥ ७३४ ॥ ८ घ. छ. 'संखेज्ज' ।

तदेवाह–

[1]दव्वाओ असंखेज्जे संखेज्जे यावि पज्जवे लहइ । दो पज्जवे दुगुणिए लहइ य एगाओ दव्वाओ ॥७६०॥

इदं परमाण्वादि द्रव्यमेकं पश्यन्नवधिज्ञानी तत्पर्यायानेकगुणकालकादीन् उत्कृष्टतोऽसंख्येयान्, विमध्यमतः संख्येयाँल्लभते प्राप्नोति, पश्यतीति तात्पर्यम् । जघन्यतस्तु द्वौ पर्यायौ द्विगुणितावेकस्माद् द्रव्याल्लभते– सामान्यतो वर्ण-गन्ध-रस-स्पर्शलक्षणांश्चतुरः पर्यायान् जघन्यत एकस्मिन् द्रव्ये पश्यति, न त्वेकगुणकालकादीन् बहूनित्यर्थः । एकद्रव्यगतानुत्कृष्टतोऽप्यनन्तपर्यायान् न पश्यति, किन्त्वसंख्येयानेव ; अनन्तेषु द्रव्येषु समुदितेष्वनन्तांस्तान् पश्यत्येव ॥ इति निर्युक्तिगाथार्थः ॥ ७६० ॥

अथ भाष्यम्–

[2]एगं दव्वं पेच्छं खंधमणुं वा स पज्जवे तस्स । उक्कोसमसंखिज्जे [3]संखिज्जे पेच्छए कोइ ॥ ७६१ ॥

दो पज्जवे दुगुणिए सव्वजहण्णेण पेच्छए ते य । वण्णाई य चउरो नाणंते पेच्छइ कयाइ ॥ ७६२ ॥

गतार्थे एव ॥ ७६१ ॥ ७६२ ॥

॥ अवसितमुत्पाद-प्रतिपातद्वारम् ॥

अथ ज्ञान-दर्शन-विभङ्गलक्षणद्वारत्रयं युगपदभिधित्सुराह–

[4]सागारमणागारा ओहि-विभंगा जहण्णया तुल्ला । उवरिमगेवेज्जेसु परेण ओही असंखेज्जो ॥ ७६३ ॥

इहाऽवधिविचारे प्रस्तुत एतच्चिन्त्यते यदुत– किमिह ज्ञानम् ?, किंवा दर्शनम् ?, को वा विभङ्गः ? ; किं वा परस्परतस्तुल्यम्, अधिकं च ? इति । तत्र यो वस्तुनो विशेषरूपग्राहकः स साकारः, स च ज्ञानमिष्टं सम्यग्दृष्टेः; मिथ्यादृष्टेस्तु स एव विभङ्गज्ञानम् । यस्तु सामान्यरूपग्राहकः, अयमनाकारः, विशिष्टाकाराग्रहणात्; स च दर्शनम् । तदिह गाथायां साकारग्रहणेनाऽवधिज्ञानं गृहीतम्, अनाकारग्रहणेन

१ द्रव्यादसंख्येयान् संख्येयांश्चापि पर्यवाँल्लभते । द्वौ पर्यायौ द्विगुणितौ लभते चैकस्माद् द्रव्यात् ॥ ७६० ॥
२ एक द्रव्य प्रेक्षमाण स्कन्धमणुं वा स पर्यवास्तस्य । उत्कृष्टतोऽसंख्येयान् संख्येयान् प्रेक्षते कश्चित् ॥ ७६१ ॥
द्वौ पर्यवौ द्विगुणितौ सर्वजघन्येन प्रेक्षते तांश्च । वर्णादींश्च चतुरो नाऽनन्तान् प्रेक्षते कदाचित् ॥ ७६२ ॥ ३ घ. छ. 'संखेज्जे' ।
४ साकारा-ऽनाकाराववधि-विभङ्गौ जघन्यकौ तुल्यौ । उपरिमग्रैवेयकेषु परेणाऽवधिरसंख्येयः ॥ ७६३ ॥

इह स्वरूपेण तावत् समस्तपुद्गलास्तिकायलक्षणानि द्रव्याण्याधारभूतात् स्वक्षेत्रात् 'अनन्तगुणानि' वर्तन्त इति लिङ्गव्यत्ययेनाऽत्रापि योज्यते, एकैकाकाशप्रदेशेऽनन्तस्य परमाणु-द्व्यणुकादिद्रव्यस्यावगाहनात्। पर्यवाः पर्यायाः पुनः स्वाश्रयभूताद् द्रव्यादनन्तगुणाः, एकैकस्य परमाण्वादेरनन्तपर्यायत्वादिति। एवंभूतं क्षेत्रादीनां स्वरूपं वर्तत इति स्वरूपकथनमात्रं तावत् कृतम्। प्रकृतोपयोग्याह– 'नियया-हारेत्यादि' द्रव्यस्य निजकाधारः क्षेत्रम्, पर्यायाणां तु निजकाधारो द्रव्याणि, तदधीना च तेषां द्रव्य-पर्यायाणां सामान्येन वृद्धिः, हानिश्च भवति। क्षेत्रस्य चतुर्विधायां वृद्धौ हानौ वा द्रव्यस्यापि तथैव ते प्राप्नुतः, द्रव्यस्य द्विविधायां वृद्धौ हानौ वा पर्यायाणामपि तथैव ते युज्येते, इत्येवं यथा परः प्रतिपादयति, तथा वयमपि स्वरूपस्थितिसामान्यचिन्तायां मन्यामहे, नात्र विवाद इति भावः। परं किन्तु 'न उ नियमेत्यादि' न तु निजकाधारवशादवधिनिबन्धोऽवधिविषयो वर्धते हीयते वा, यतः परीतः प्रतिनियतोऽसौ यथोक्तस्वरूपेण क्षयोपशमनियमितोऽसौ चित्रक्षयोपशमत्वाच्चित्रोऽनेकरूपो यथा युक्त्या घटते तथैवाऽयं प्रवर्तते, तामुल्लङ्घ्याऽन्यथापि च प्रवर्तत इति नाऽत्रैकान्तः। आज्ञाग्राह्यश्च प्रायेणाऽयम्, इत्याज्ञैवाऽत्र प्रमाणं, किं स्वेच्छाप्रवृत्तशुष्कतर्कयुक्त्युपन्यासेन ?। प्रायोग्रहणाद् यथासंभवं युक्तिरपि वाच्या ॥ इति गाथानवकार्थः ॥ ७३६ ॥ ७३७ ॥

॥ गतं चलद्वारम् ॥

अथ तीव्र-मन्दद्वारमभिधित्सुराह—

फड्डा य असंखेज्जा संखेज्जे यावि एगजीवस्स। एगप्फड्डुवओगे नियमा सव्वत्थ उवउत्तो ॥ ७३८ ॥[1]

फड्डा य आणुगामी अणाणुगामी य मीसया चेव। पडिवाई अपडिवाई मीसा य मणुस्स-तेरिच्छे ॥ ७३९ ॥

अपवरकादिजालकान्तरस्थप्रदीपप्रभानिर्गमस्थानानीवाऽवधिज्ञानावरणक्षयोपशमजन्यान्यवधिज्ञाननिर्गमस्थानानीह फड्डकान्युच्यन्ते। तानि चैकजीवस्य संख्येयानि, असंख्येयान्यपि च भवन्ति। तत्र चैकफड्डकोपयोगे जन्तुर्नियमात् सर्वत्र सर्वैः फड्डकैरुपयुक्तो भवति, एकोपयोगत्वाज्जीवस्य, एकलोचनोपयोगे द्वितीयलोचनोपयुक्तवदिति। एतानि च फड्डकानि त्रिधा भवन्ति, तद्यथा– अनुगमनशीलान्यानुगामुकानि– यत्र देशे तिष्ठतोऽवधिमतो जीवस्योत्पन्नानि, ततोऽन्यत्रापि व्रजतस्तस्यानुयायीनीत्यर्थः, एतद्विपरीतानि त्वनानुगामुकानि, आनुगामुका-ऽनानुगामुकोभयस्वरूपाणि तु मिश्राणि– कानिचिद् देशान्तरानुयायीनि, कानिचिद् नेत्यर्थः। एतानि च

1 फड्डकान्यसंख्येयानि संख्येयानि चाप्येकजीवस्य। एकफड्डकोपयोगे नियमात् सर्वत्रोपयुक्तः ॥ ७३८ ॥
फड्डकानि चानुगामीन्यननुगामीनि मिश्राणि चैव। प्रतिपातीन्यप्रतिपातीनि मिश्राणि च मनुष्य-तिर्यक्षु ॥ ७३९ ॥

नारकाः, देवाः, तीर्थङ्कराश्चावधिज्ञानस्याऽवाह्या भवन्ति, अवध्युपलभ्यस्य क्षेत्रस्यान्तर्वर्तन्ते, अभ्यन्तरवर्तिन एव भवन्तीत्यर्थः। अत एवाऽवाह्यावधय एवैते प्रतिपाद्यन्ते, अवधिप्रकाशितक्षेत्रस्य प्रदीपा इव निजानिजप्रभापटलस्य नैते वहिर्भवन्तीत्यर्थः। तथाऽवधिना पश्यन्त्यवलोकयन्ति, खलुशब्दस्याऽवधारणार्थत्वात् सर्वत एव सर्वास्वेव दिक्षु विदिक्षु च, न तु देशत इत्यर्थः। शेषास्तिर्यग्-मनुष्या देशेनेत्येकदेशेन पश्यन्ति। तत्र वाक्यावधारणविधेरिष्टतः प्रवृत्तेः शेषा एव देशतः पश्यन्ति, न तु शेषा देशत एवेति द्रष्टव्यम्, शेषास्तिर्यग्-मनुष्याः सर्वतो देशतश्च पश्यन्तीति भावः। अथवा पूर्वार्धमन्यथा व्याख्यायते– नारक-देव-तीर्थङ्करा अवधेरवाह्या भवन्तीति कोऽर्थः ?– अवधिज्ञानवन्त एवाऽमी भवन्ति, अवधिज्ञानं नियमेन तेषां भवतीत्यर्थः। तत्र किममी तेनाऽवधिना सर्वतः पश्यन्ति, देशतो वा ?, इति संशये सत्याह– 'पासंति' इत्याद्युत्तरार्धम्। अस्य व्याख्या तथैव ॥ इति निर्युक्तिगाथार्थः ॥ ७६६ ॥

अथ प्रथमं व्याख्यानं तावद् भाष्यकारोऽप्याह–

[1]ओहिणाणक्खेत्त[2]ब्भंतरगा होंति नारयाईया। सव्वादिसोऽवहिविसओ तेसिं दीवप्पभोवम्मो ॥ ७६७ ॥

उक्तार्थैव ॥ ७६७ ॥

चालना-प्रत्यवस्थाने प्राह–

[3]अब्भिंतर त्ति भणिए भण्णइ पासंति सव्वओ कीस ?। ओयइ जमसंतयदिसो अंतो वि ठिओ न सव्वत्तो ॥७६८॥

नन्ववधेरवाह्या भवन्ति, इत्यवध्युपलब्धक्षेत्रस्याभ्यन्तरे नारकादयो वर्तन्त इति प्रथमपक्षे व्याख्यातम्। एवं चोक्ते सति 'पश्यन्ति सर्वतः' इति किमर्थं भण्यते ?; ये ह्यवधिप्रकाशितक्षेत्रस्य मध्ये वर्तन्ते, ते सर्वतः पश्यन्त्येव, इति गतार्थत्वादतिरिच्यत एवेदमिति पराभिप्रायः। अत्र सूरिराह– 'ओयईत्यादि' संतता निरन्तरालाः सर्वा दिग्-विदिग्लक्षणा दिशः प्रकाशविषयभूता यस्याऽवधेरसौ संततादिकोऽवधिरवाह्यावधिरित्यर्थः, न विद्यते संततादिकोऽवधिर्यस्याऽसावसंततादिकोऽवधिमान् वाह्यावधियुक्तः साध्वादिरित्यर्थः। अयं यस्माद् 'न ओयइ त्ति' न पश्यति, कथम् ?, सर्वतः। [4]कथंभूतः सन् ?, इत्याह– अवधिद्योतितक्षेत्रस्याऽन्तर्मध्येऽपि स्थितः, तस्मात् कर्तव्यं 'पासंति सव्वओ खलु' इति। इदमुक्तं भवति– '[5]फड्डोही वाऽहवाऽसंवद्धो' इत्यनेन ग्रन्थेन यः प्राक् प्रतिपादितो

१ अवधिज्ञानक्षेत्राभ्यन्तरका भवन्ति नारकादिकाः। सर्वदिकोऽवधिविषयस्तेषां दीपप्रभौपम्यः ॥ ७६७ ॥ २ क ग 'त्तब्भित'। ३ अभ्यन्तर इति भणिते भण्यते पश्यन्ति सर्वतः कस्मात् ?। पश्यति यदसंततदिकोऽन्तरपि स्थितो न सर्वतः ॥७६८॥ ४ क ग. 'किंभू'। ५ गाथा ७६६। ६ गाथा ७४९।

[1]किह नोवओगबहुया, भण्णइ न विसेसओ स सामण्णो । तग्गयविसेसविमुहो खंधावारोवओगो व्व ॥७४२॥

नन्वेवं सत्यवधिमतः कथं नोपयोगबहुता, अनेकैः फड्डकैरुपयुज्यमानत्वात् ?। अत्रोक्तमेवोत्तरम्– एकस्मिन् समये जीवस्यैक एवोपयोगो भवति, तत्स्वाभाव्यात्, नयनद्वयोपयोगवत् । तस्मादनेकफड्डकैरुपयुज्यमानस्याऽपि न तस्योपयोगबहुता । अथवा, भण्यते-ऽत्रोत्तरम्— अनेकवस्तु[2]विशेषोपयोगे ह्येतत् स्यात्, यथा– एते हस्तिनः, दक्षिणतस्त्वमी वाजिनः, वामतस्तु रथाः, पुरतः पदातय इत्यादि । न चेहानेकवस्तु[2]विशेषोपयोगोऽस्ति । किं तर्हि ?, सामान्योपयोग एव, ग्राह्यवस्तुगतविशेषवैमुख्यात्, नयनद्वयेन स्कन्धावारोपयोगवत्, अयं चैक एवोपयोगः, इति न तद्बहुतेति ॥ ७४२ ॥

'फड्डा[3] य आणुगामी' इत्यादि विवृण्वन्नाह—

[4]अणुगामि-नियय-सुद्धाइं सेयराइं च मीसयाइं च । एक्केक्कसो विभिन्नाइं फड्डयाइं विचित्ताइं ॥ ७४३ ॥

इह तावत् फड्डकानि त्रिधा भवन्ति, तद्यथा– अनुगामीनि, नियतानि– अप्रतिपातीन्यर्थः, शुद्धानि– तीव्राणीत्यर्थः । 'सेयराइं च त्ति' सेतराणि चैतानि भवन्ति, तद्यथा– अनुगामिभ्य इतराण्यननुगामीनि, अप्रतिपातिभ्य इतराणि प्रतिपातीनि, तीव्रेभ्य इतराणि मन्दानि। 'मीसयाइं च त्ति' मिश्राणि चैतानि अनुगाम्यादीनि भवन्ति, तद्यथा– अनुगाम्यननुगामीनि, प्रतिपात्यप्रतिपातीनि, तीव्रमन्दानीति । 'एक्केक्कसो विभिन्नाइं ति' एतानि चानुगाम्यादीन्येकैकशो विभिन्नानि भवन्ति, तद्यथा– अनुगामीनि प्रतिपात्य-ऽप्रतिपातिमिश्रभेदात् त्रिधा, एवमननुगामीन्यपि त्रिधा, अनुगाम्यननुगामीन्यप्येवं त्रिधा। एवं पुनरप्यनुगाम्यादीनि फड्डकानि तीव्र-मन्द-मध्यभेदात् प्रत्येकं त्रिधा वक्तव्यानि, तद्यथा– अनुगामीनि तीव्र-मन्द-मध्यमानि, एवमननुगामीन्यपि, एवमनुगाम्यननुगामीन्यपीति । 'विचित्ताइं ति' एतानि च जघन्य-मध्यमादिभेदाद् विचित्राणि नानाप्रकाराणीति ॥ ७४३ ॥

अत्र प्रेरकः प्राह—

[5]निययाणुगामियाणं को भेओ को व तव्विवक्खाणं ?। नियओऽणुजाइ नियमा नियओऽनियओ व अणुगामी॥७४४॥

१ कथ नोपयोगबहुता, भण्यते न विशेषत' स सामान्य । तद्गतविशेषविमुखः स्कन्धावारोपयोग इव ॥ ७४२ ॥ २ क ग. 'विषयोप' । ३ गाथा ७३९ ।
४ अनुगामि-नियत-शुद्धानि सेतराणि च मिश्रकाणि च । एकैकशो विभिन्नानि फड्डकानि विचित्राणि ॥ ७४३ ॥
५ नियतानुगामिकयोः को भेदः को वा तद्विपक्षयोः ?। नियतोऽनुयाति नियमाद् नियतोऽनियतोवाऽनुगामी ॥ ७४४ ॥

मनेन ?, इत्याशङ्क्याह– भवप्रत्ययादिवचसा सिद्धेऽमीषां नियतावधित्वे '[1]ओहिस्सबाहिरा होंति' इति कालस्य नियमोऽयं विधीयते । इदमुक्तं भवति– भवप्रत्ययादिवचनात् सिध्यति नियमेन नारकादीनामवधिमत्त्वम्, परं न ज्ञायते– 'किमाभवक्षयममीषामवधिर्भवति, आहोस्वित् कियन्तमपि कालं भूत्वाऽसौ प्रतिपततीति ?'। ततश्च 'ओहिस्स बाहिरा होंति' इत्यनेन कालनियमः क्रियते– सर्वदा सर्वकालममीषामवधिर्भवति, न त्वन्तरालेऽपि प्रतिपततीति । आह– यद्येवम्, तीर्थकृतां सर्वकालावस्थायित्वमवधेर्विरुध्यते, केवलोत्पत्तौ तदभावात् । न, तेषां केवलोत्पत्तावपि वस्तुतस्तत्परिच्छेदस्याऽप्यनष्टत्वात्, सुतरां केवलज्ञानेन संपूर्णानन्तधर्मात्मकवस्तुपरिच्छित्तेः, छद्मस्थकालस्य वा विवक्षितत्वाददोषः । इत्यलं विस्तरेणेति ॥ ७७० ॥

'[1]सेसा देसेण पासंति' इत्येतद् व्याचिख्यासुराह–

[2]सेस च्चिय देसेणं न उ देसेणेव सेसया किंतु । देसेण सव्वओ वि य पेच्छंति नरा तिरिक्खा य ॥७७१॥

गतार्थैव ॥ इति गाथापञ्चकार्थः ॥ ७७१ ॥

॥ गतं देशद्वारम् ॥

अथ क्षेत्रद्वारमभिधित्सुराह–

[3]संखेज्जमसंखेज्जो पुरिसमबाहाए खेत्ततो ओही । संबद्धमसंबद्धो लोगमलोगे य संबद्धो ॥ ७७२ ॥

'खेत्तओ ओही संबद्धमसंबद्धो त्ति' इह क्षेत्रतोऽवधिरवधिमति जीवे प्रदीपे प्रभापटलमिव संबद्धो लग्नो भवति- जीवावष्टब्धक्षेत्रादारभ्य निरन्तरं द्रष्टव्यं वस्तु प्रकाशयतीत्यर्थः । कश्चित् पुनरतिप्रकृष्टतमोऽन्याकुलान्तरालवर्तिप्रदेशमुल्लङ्घ्य दूरस्थितभित्त्यादिप्रतिफलितप्रदीपप्रभेव जीवेऽसंबद्धो भवति । कया हेतुभूतयाऽसंबद्धः ?, इत्याह– मकारस्याऽलाक्षणिकत्वात् 'पुरुषाबाधया' इति– पूर्णः सुख-दुःखानामिति पुरुषः, पुरि शरीरे शयनाद् वा पुरुषो जीवः, अबाधनमबाधान्तरालमित्यर्थः, पुरुषादबाधा पुरुषाबाधा तया हेतुभूतयाऽसंबद्ध इति हेत्वर्थे तृतीया ।

स च संबद्धोऽसंबद्धश्चाऽवधिः क्षेत्रतः कियान् भवति ?, इत्याह– संख्येयोऽसंख्येयश्च– योजनापेक्षया संख्येयानि, असंख्ये-

१ गाथा ७६६ । २ शेषा एव देशेन न तु देशेनैव शेषकाः किन्तु । देशेन सर्वतोऽपि च प्रेक्षन्ते नरास्तिर्यञ्चश्च ॥ ७७१ ॥
३ सङ्ख्येयोऽसंख्येयः पुरुषाऽबाधया क्षेत्रतोऽवधिः । सबद्धाऽसबद्धो लोकेऽलोके च सबद्धः ॥ ७७२ ॥

अन्ये त्वाचार्याः 'फड्डा य असंखेज्जा' इत्यादिगाथया तीव्र-मन्दद्वारमभिधायानन्तरमेव वक्ष्यमाणे प्रतिपातो-त्पादद्वार एव 'फड्डा य आणुगामी' इत्यादिगाथोक्तानुगामुकादीन् भेदानाचक्षते । केन कारणेन त एवमाचक्षते ?, इत्याह— 'नरतिरियगहणेणं ति' । इदमुक्तं भवति— प्रतिपातो-त्पादयोस्तिर्यङ्-मनुष्यावधेरेव घटनात् तद्विषयमेव प्रतिपातो-त्पादद्वारम् । अतो नर-तिर्यग्ग्रहणादेतेऽप्यानुगामिकादयो भेदाः प्रतिपातो-त्पादद्वारान्तर्भाविन एव; इत्यन्याचार्याभिप्रायः । अथवा द्वयोरपि तीव्रमन्द-प्रतिपातोत्पादद्वारयोरिदमानुगामुकादिभेदकथनमर्थतो न किञ्चिद् विरुद्धम्, तीव्र-मन्दस्वरूपे, प्रतिपातो-त्पादवति चावधावनुगामुकादिभेदानां घटनात् ॥ इति गाथाष्टकार्थः ॥ ७४७ ॥

॥ गतं तीव्र-मन्दद्वारम् ॥

अथ प्रतिपातो-त्पादद्वारमाह—

[3]बाहिरलंभे भज्जो दव्वे खेत्ते य काल-भावे य । उप्पाय-पडिवाओ वि य तदुभयं चेगसमयेणं ॥ ७४८ ॥

अवधिमतो बहिर्बाह्यो योऽवधिस्तस्य लाभः प्राप्तिरुत्पत्तिस्तस्मिन् बाह्यावधिलाभे भाज्यो भजनीयः । कोऽसौ ?, इत्याह— उत्पादः, प्रतिपातः, तदुभयं चैकसमयेन । क विषये य उत्पादादयः ?, इत्याह— द्रव्य-क्षेत्र-काल-भावेषु ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ ७४८ ॥

अथ भाष्यम्—

[4]बाहिरओ-एगदिसो फड्डोही वाहवा असंबद्धो । दव्वाईसु भयणिज्जा तत्थुप्पायादओ समये ॥ ७४९ ॥

इह बाह्यावधिरुच्यते । कः ?, इत्याह— योऽवधिमत एकस्यां दिशि भवति । अथवाऽनेकास्वपि दिक्षु यः फड्डकावधेरन्योऽन्यं विच्छिन्नः सान्तरो भवति, सोऽपि बाह्यावधिः, तद्यथा— । अथवा, सर्वतः परिमण्डलाकारोऽप्यवधिर्योऽवधिमतो जीवस्याङ्गुलमानादिना क्षेत्रव्यवधानेन सर्वतोऽसंबद्धः सोऽपि बाह्यावधिस्तद्यथा— इति तावद् भाष्यकार-चिरन्तनटीकाकृतामभिप्रायः । आवश्यकचूर्णिकार-

---

१ गाथा ७३८ । २ गाथा ७३९ ।३ बाह्यलाभे भाज्यो द्रव्ये क्षेत्रे च काल-भावयोश्च । उत्पाद-प्रतिपातावपि च तदुभय चैकसमयेन ॥ ७४८ ॥

४ बाह्यत एकदिकः फड्डकावधिर्वाऽथवाऽसंबद्धो । द्रव्यादिषु भजनीयास्तत्रोत्पादादयः समये ॥ ७४९ ॥

गतिद्वारं बिभणिषुराह–

गइ-नेरइयाईया[1] हेट्ठा जह वण्णिया तहेव इहं। इड्ढी एसा वण्णिज्जइ त्ति तो सेसियाओ वि ॥७७६॥

गतिर्नरकगत्यादिका, आदिशब्दादपरोऽपीन्द्रियादिद्वारकलापः प्राक्प्रतिपादितस्वरूपोऽत्र परिगृह्यते। ततश्च नारकादिगत्यादिद्वाराणि यथाऽधस्तात् पूर्वं मतिज्ञानप्ररूपणाप्रस्तावे 'गइ-इंदिए[2] य काए जोए वेए कसाय-लेसासु, सम्मत्त-नाण-' इत्यादिना, तथा '[3]संतपयपरूवणया दव्वपमाणं च' इत्यादिना च प्रतिपादितानि तथेहाप्यवधिप्ररूपणायां वक्तव्यानि, यस्तु विशेषस्तं भाष्यकारः स्वयमेव वक्ष्यति। एषा चावधिज्ञानलक्षणा ऋद्धिः सिद्धान्ते वर्ण्यते, इत्यतोऽनेन संबन्धेन शेषा अप्यामर्षौषध्यादिका ऋद्धयोऽत्र वर्ण्यन्ते ॥ इति निर्युक्तिगाथार्थः ॥ ७७६ ॥

अथ गत्यादिद्वारेषु चिन्त्यमानस्याऽवधिज्ञानस्य मतिज्ञानाद् यो विशेषस्तं भाष्यकारः प्राह–

[4]जे पडिवज्जंति मइं तेऽवहिनाणं पि समहिआ अण्णे। वेय-कसायाईया मणपज्जवनाणिणो चेव ॥७७७॥

सम्मा सुर-नेरइयाऽणाहारा जे य होंतिपज्जत्ता। ते च्चिय पुव्वपवण्णा वियलाऽसण्णी य मोत्तूणं ॥७७८॥

ये मतिज्ञानस्य प्रतिपत्तारः प्रागुक्ताः, इहाऽवधिज्ञानस्याऽपि प्रतिपत्तारस्त एव द्रष्टव्याः, केवलमत्राधिका अन्येऽपि केचित् तेऽवगन्तव्याः; तद्यथा– 'वेय-कसायाईय त्ति' वेदातीताः कषायातीताश्च– अवेदका अकषायिणश्चेत्यर्थः, तथा, मनःपर्यायज्ञानिनश्च, इत्येते मतिज्ञानस्य पूर्वप्रतिपन्ना एवोक्ताः, इह त्ववधेरमी प्रतिपत्तारोऽपि भवन्ति; यतः श्रेणिद्वये वर्तमानानामवेदकानामकषायाणां च केषांचिदवधिज्ञानमुत्पद्यते, येषां चानुत्पन्नावधिज्ञानानां मति-श्रुतचारित्रवतां प्रथममेव मनःपर्यायज्ञानमुत्पद्यते, ते मनःपर्यायज्ञानिनोऽपि केचित् पश्चादवधिज्ञानस्य प्रतिपत्तारो भवन्ति। अपरं च, अनाहारका अपर्याप्तकाश्च मतिज्ञानस्य पूर्वप्रतिपन्ना एवोक्ता न तु प्रतिपद्यमानकाः, इह तु येऽप्रतिपतितसम्यक्त्वास्तिर्यङ्-मनुष्येभ्यो देव-नारका जायन्ते तेऽवधिज्ञानस्य प्रतिपद्यमानका अपि प्राप्यन्त इत्याह– सम्मा सुर-नेरइयाऽणाहारा जे य होंतिपज्जत्त त्ति'। ननूक्तः प्रतिपद्यमानकेषु विशेषः, पूर्वप्रतिपन्नेषु तु का वार्ता ?,

१ गति-नैरयिकादिका अधस्ताद् यथा वर्णितास्तथैवेह। ऋद्धिरेषा वर्ण्यत इति ततः शेषिका अपि ॥ ७७६ ॥ २ गाथा ४०९। ३ गाथा ४०६।
४ ये प्रतिपद्यन्ते मतिं तेऽवधिज्ञानमपि समधिका अन्ये। वेद-कषायातीता मनःपर्यवज्ञानिनश्चैव ॥ ७७७ ॥
सम्यक्त्विनः सुर-नैरयिका अनाहारा ये च भवन्त्यपर्याप्ताः। त एव पूर्वप्रपन्ना विकला-ऽसंज्ञिनश्च मुक्त्वा ॥ ७७८ ॥

कथम् ?, इत्याह-

[1]दावानलो व्व कत्थइ लग्गइ विज्झाइ समयमन्नतो । तह कोइ ओहिदेसो से जायइ, नासए [2]बिईओ॥७५१॥

यथा हि दावानलो यदैवैकतः शुष्ककुश-स्तम्बादौ लगति दीप्यते, तदैवाऽन्यतो दग्धशुष्कतृणादिके देशे विध्यायति निर्वाति; तथाऽस्यापि बाह्यावधेः सदेशत्वात् कोऽपि देशो जायते- वृद्धिमासादयति, अन्यस्तु कोऽपि देशस्तस्मिन्नेव समये नश्यति हीयते । इति नेहोत्पाद-प्रतिपातौ युगपद् विरुध्येते ॥ इति गाथात्रयार्थः ॥ ७५१ ॥

अथैतावेवोत्पाद-प्रतिपातावभ्यन्तरावधौ निरूपयितुमाह-

[3]अब्भिंतरलद्धीए तदुभयं नत्थि एगसमयेणं । उप्पा पडिवाओ वि एगयरो एगसमयेणं ॥ ७५२ ॥

यस्य नैरन्तर्येण सर्वतोभाविनोऽवधेस्तद्वान् जीवोऽभ्यन्तरे वर्तते, असावभ्यन्तरावधिरुक्तः, तल्लब्धौ तत्प्राप्तौ पुनस्तदुभयं प्रतिपातो-त्पादद्वयं युगपदेकसमयेन नास्ति । अयं ह्यभ्यन्तरावधिः प्रदीपप्रभापटलवदवधिमता जीवेन सह सर्वतो नैरन्तर्येण संबद्धोऽखण्डो देशरहित एकस्वरूपः, अत एवाऽयं संबद्धावधिर्देशावधिश्चोच्यते, तथा चोक्तं चूर्णौ- "[4]तत्थ अब्भिंतरलद्धी नाम जत्थ से ठियस्स ओहिन्नाणं समुप्पण्णं, ततो ठाणाओ आरब्भ सो ओहिन्नाणी निरंतरसंबद्धं संखेज्जं वा असंखेज्जं वा खित्तओ ओहिणा जाणइ पासइ, एस अब्भितरलद्धी" इति । अस्मिंश्चैवंविधे एकस्मिन्नखण्डेऽभ्यन्तरावधावेकस्मिन् समये प्रतिपातो-त्पादयोरेकतर एव भवति, न तु युगपदेवोभयं, सदेशत्वप्रसङ्गात्, एकस्यैकदा विरुद्धधर्माऽयोगाच्च; तथाहि— निरावरणे सर्वतः प्रसृते प्रदीपप्रभापटले एकस्मिन् समये संकोच-विस्तारयोरेकतर एव भवति, न त्वेकस्यां दिशि संकोचः, अन्यस्यां तु विस्तरः, इत्येवं युगपदेकसमये संकोच-विस्तरौ भवतः, एवमत्रापीति भावः । एतदेवाह- 'उप्पा पाडिवाओ वि य' इत्यादि ॥ इति निर्युक्तिगाथार्थः ॥ ७५२ ॥

अथ भाष्यम्—

---

१ दावानल इव कुत्रचिल्लगति विध्यायति समकमन्यतः । तथा कश्चिदवधिदेशस्तस्य जायते, नश्यति द्वितीयः ॥ ७५१ ॥ २ घ. छ. 'विइओ' ।

३ अभ्यन्तरलब्धौ तदुभयं नास्त्येकसमयेन । उत्पाद. प्रतिपातोऽप्येकतर एकसमयेन ॥ ७५२ ॥

४ तत्राऽभ्यन्तरलब्धिर्नाम यत्र तस्य स्थितस्यावधिज्ञानं समुत्पन्नम्, तत. स्थानादारभ्य सोऽवधिज्ञानी निरन्तरसंबद्धं संख्येयं वाऽसंख्येयं वा क्षेत्रतोऽवधिना जानाति पश्यति, एषाऽभ्यन्तरलब्धिः ।

ऋद्धिरेवेति। 'उजुमइ त्ति' ऋज्वी प्रायो घटादिसामान्यमात्रग्राहिणी मतिः ऋजुमतिः, विपुलमत्यपेक्षया किञ्चिदविशुद्धतरं मनःपर्यायज्ञानमेव। 'सव्वोसहि त्ति' सर्व एव विड्-मूत्र-केश-नखाद्योऽवयवाः सुरभयो व्याध्यपनयनसमर्थत्वादौषधयो यस्य स सर्वौषधिः, अथवा, सर्वा आमर्षौषध्यादिका औषधयो यस्यैकस्यापि साधोः स तथा। एवमेते ऋद्धिविशेषा बोद्धव्याः।

तथा 'चारण त्ति' अतिशयवद्गमना-ऽऽगमनरूपाच्चारणाच्चारणाः सातिशयगमना-ऽऽगमनलब्धिसंपन्नाः साधुविशेषा एव। ते च द्विविधाः– विद्याचारणाः, जङ्घाचारणाश्च। तत्र विद्या विवक्षितः कोऽप्यागमस्तत्प्रधानश्चारणो विद्याचारणः। अस्य च यथाविधि सातिशयषष्ठलक्षणेन तपसा सर्वदैव तपस्यतो विद्याचरणलब्धिरुत्पद्यते, तया चासावित एकेनोत्पातेन मानुषोत्तरपर्वतं गच्छति, चैत्यानि च तत्र वन्दते। ततो द्वितीयेनोत्पातेन नन्दीश्वरनामानमष्टमद्वीपं गत्वा चैत्यानि वन्दते। तत एकेनोत्पातेन प्रतिनिवृत्त्य यतः स्थानाद् गतः पुनस्तत्रागच्छतीति। एष तावत् तस्य तिर्यग्गतिविषयः। ऊर्ध्वं त्वित एकेनोत्पातेन नन्दनवनं गत्वा तत्र चैत्यानि वन्दते, ततो द्वितीयेनोत्पातेन मेरुशिखरस्थं पण्डकवनं गत्वा चैत्यानि वन्दते। ततश्चैकेनोत्पातेन प्रतिनिवृत्त्य यतः स्थानाद् गतः पुनस्तत्राऽऽगच्छतीति।

लूतातन्तुनिर्वर्तितपुटकतन्तून् रविकरान् वा निश्रां कृत्वा जङ्घाभ्यामाकाशेन चरतीति जङ्घाचारणः। अस्य च यथाविधि सातिशयाऽष्टमलक्षणेन विकृष्टतपसा सर्वदैव तपस्यतो जङ्घाचारणलब्धिरुत्पद्यते। तया चासावित एकेनोत्पातेन त्रयोदशं रुचकवरद्वीपं गत्वा तत्र चैत्यानि वन्दते। ततो निवर्तमानो द्वितीयेनोत्पातेन नन्दीश्वरमागत्य तत्र चैत्यानि वन्दते। ततस्तृतीयेनोत्पातेन यतः स्थानाद् गतस्तत्रागच्छतीति। एषोऽस्य तिर्यग्गतिविषयः। ऊर्ध्वं त्वित एकेनोत्पातेन पण्डकवनं गत्वा चैत्यानि वन्दते। ततो निवर्तमानो द्वितीयेनोत्पातेन नन्दनवने चैत्यानि वन्दित्वा तृतीयोत्पातेन यतः स्थानाद् गतस्तत्राऽऽगच्छतीति।

'आसीविस त्ति' आश्यो दंष्ट्रास्तासु विषं येषां ते आशीविषाः, ते च द्विविधाः– जातितः, कर्मतश्च। तत्र जातितो वृश्चिक-मण्डूक-सर्प-मनुष्यजातयः, क्रमेण बहु-बहुतर-बहुतमविषाः– वृश्चिकविषं ह्युत्कृष्टतोऽर्धभरतक्षेत्रप्रमाणं शरीरं व्याप्नोतीति, मण्डूकविषं तु भरतक्षेत्रप्रमाणम्, भुजङ्गमविषं तु जम्बूद्वीपप्रमाणम्, मनुष्यविषं तु समयक्षेत्रप्रमाणं वपुर्व्याप्नोति। कर्मतस्तु पञ्चेन्द्रियतिर्यञ्चः, मनुष्याः, देवाश्चाऽऽसहस्रारादिति। एते हि तपश्चरणानुष्ठानतोऽन्यतो वा गुणत आशीविषवृश्चिक-भुजङ्गादिसाध्यकर्मक्रियां कुर्वन्ति– शापादिना परं व्यापादयन्तीत्यर्थः। देवाश्चाऽपर्याप्तावस्थायां तच्छक्तिमन्तो द्रष्टव्याः; ते हि पूर्वं मनुष्यभवे समुपार्जिताशीविषलब्धयः सहस्रारान्तदेवेष्वभिनवोत्पन्ना आपर्याप्तावस्थायां प्राग्भविकाऽऽशीविषलब्धिमन्तो मन्तव्याः; ततः परं तल्लब्धिनिवृत्तेः। पर्याप्ता अपि देवाः शापादिना परं विनाशयन्ति, किन्तु लब्धिव्यपदेशस्तदा न प्रवर्तत इति।

कथम् ?, इत्याह—

[1]लद्धत्तलाभनासो जुज्जइ लाभो य तस्स समएणं। जइ तम्मि चेव नासो निच्चविणट्ठे कुओ भवणं? ॥७५७॥

सव्वुप्पायाभावा तदभावे य विगमो भवे कस्स ?। उप्पाय-व्वयाभावे काऽवट्ठिई सव्वहा सुण्णं ॥७५८॥

लब्ध आत्मनो लाभः सत्ता येन तल्लब्धात्मलाभं प्राप्तस्वसत्ताकं, तस्यैवेत्थंभूतस्य वस्तुनो नाशो युज्यते। न ह्यनासादितसत्ताकस्य खरविषाणस्य विनाश इति वक्तुं युज्यते। आत्मलाभश्च तस्य वस्तुनः समयेन भवति। यदि च यस्मिन्नेव समये ऋजुत्वधर्मेण ऋजुता समुत्पद्यते, तस्मिन्नेव समये तेनैव धर्मेण सा विनश्यतीत्यभ्युपगम्यते, तर्ह्येवं सर्वदैवोत्पत्त्यभावाद् नित्यविनष्टे कदाचिदप्यनवाप्तात्मलाभे वस्तुनि कुतो भवनं सत्तारूपम् ?– न कुतश्चिदित्यर्थः। ततः किम् ?, इत्याह– 'सव्वुप्पायेत्यादि' तत इत्थं सर्वदैव विनाशाघ्रातत्वाद् नित्यमेव च वस्तूनामुत्पादाभावः प्रसजति, तथाच सति कस्य विगमो विनाशो भवेत् ?; यदि हि किञ्चिदुत्पन्नं स्यात् तदा तस्य कदाचिदपि विनाशो युज्येत, इतरथा तु कस्य विनाशः ? इति भावः। उत्पाद-व्ययाभावे च 'काऽवट्ठिइ त्ति' काऽवस्थितिः ?, तथाहि– यदुत्पाद-व्ययशून्यं तस्याऽवस्थितिरपि नास्ति, यथा खरविषाणस्य, तच्छून्यं च वस्तूक्तयुक्तेर्भवतः समापतति, इति कुतस्तस्याऽवस्थितिः ?। एवं च सति सर्वथा शून्यं जगत्त्रयमिदं प्राप्नोति; तथाहि– उत्पाद-व्यय-ध्रौव्यरहितं वस्तु नास्त्येव, सत्त्वाद्ययोगात्, खरविषाणवदिति ॥ ७५७ ॥ ७५८ ॥

अथाऽग्रेतननिर्युक्तिगाथासंबन्धं भाष्यकारः स्वत एव कुर्वन्नाह–

[3]दव्वाईणं तिण्हं पुव्वं भणिओ परोप्परनिबंधो। इह दव्वस्स गुणेणं भण्णइ दव्वासिओ जं सो ॥७५९॥

अत्रैव पूर्वं 'संखेज्ज मणोदव्वे भागो लोगपलियस्स बोधव्वो'[4] इत्यादिना द्रव्य-क्षेत्र-काललक्षणत्रयस्य परस्परनिबन्धोऽभिहितः। इह तूत्पाद-प्रतिपातद्वार एव प्रसङ्गतो द्रव्यस्यैव गुणेन सहाऽयमुच्यते, न तु क्षेत्र-कालयोः, यतो द्रव्याश्रितोऽसौ, न तु क्षेत्र-कालाश्रितः ॥ इति गाथासप्तकार्थः ॥ ७५९ ॥

१ लब्धात्मलाभनाशो युज्यते लाभश्च तस्य समयेन। यदि तस्मिन्नेव नाशो नित्यविनष्टे कुतो भवनम् ? ॥ ७५७ ॥ सर्वोत्पादाभावात् तदभावे च विगमो भवेत् कस्य ?। उत्पाद-व्ययाभावे काऽवस्थितिः सर्वथा शून्यम् ॥ ७५८ ॥ २ क ग 'युज्यते इ'। ३ द्रव्यादीनां त्रयाणां पूर्वं भणित परस्परनिबन्ध.। इह द्रव्यस्य गुणेन भण्यते द्रव्याश्रितो यत् स. ॥ ७५९ ॥ ४ गाथा ६६९।

एगुप्पाएण गओ रुयगवरमिओ तओ पडिनियत्तो। बीएणं नंदिस्सरमिहं तओ एइ तइएणं ॥ ७८७ ॥
पढमेण पंडगवणं बीओप्पाएण नंदणं एइ। तइओप्पाएण तओ इह, जंघाचारणो होइ ॥ ७८८ ॥
पढमेण माणुसोत्तरनगं स नंदिस्सरं तु बिइएण। एइ तओ तइएणं कयचेइयवंदणो इहइं ॥ ७८९ ॥
पढमेण नंदणवणे बीओप्पाएण पंडगवणम्मि। एइ इहं तइएणं जो विज्जाचारणो होइ ॥ ७९० ॥
आसी दाढा तग्गयमहाविसासीविसा दुविहभेया। ते कम्म-जाइभेएणणेगहा-चउविहविगप्पा ॥ ७९१ ॥
मणनाणिग्गहणेणं विउलमई केवली चउब्भेओ। सम्मत्त-नाण-दंसण-चरणेहिं खयप्पसूएहिं ॥ ७९२ ॥
ओहिन्नाणावसरे मणपज्जव-केवलाण किं गहणं ?। लद्धिपसंगेण कयं गहणं जह सेसलद्धीणं ॥ ७९३ ॥

एतास्त्रयोदशापि गाथा प्रायो व्याख्यातार्थाः, सुबोधार्थाश्च। नवरं प्रथमगाथायामामर्षौषधि-विप्रुडौषधिस्वरूपं व्याख्यातम्। द्वितीयगाथायां तु खेल-जल्ल-सर्वौषधिस्वरूपं विवृतम्, तत्र 'एए त्ति' एतौ विड्-मूत्रावयवौ, 'अन्ने य त्ति' अन्ये च खेल-जल्ल-केश-नखादयो बहवः सर्वे च समुदिता अवयवा येषां साधूनां सुरभयो रोगोपशमसमर्थाश्च ते साधवो भवन्ति ?। कथंभूताः, इत्याह– 'तओसहिपत्त त्ति' ते च ते औषधयश्च तदौषधयो विड्-मूत्र-खेल-जल्ल-केश-नखाद्यौषधयः सर्वौषधयश्च ताः प्राप्तास्तदौषधिप्राप्ताः साधवो भवन्तीत्यर्थः। तृतीयगाथायां तु संभिन्नश्रोतोऽभिधानार्थस्वरूपं निर्णीतम्। चतुर्थ-पञ्चमगाथाभ्यां तु ऋजुमति-विपुलमतिमनःपर्यायज्ञानस्वरूपम्। निर्युक्तौ विपुलमतेरग्रेतनगाथायां व्यस्तोपादानेऽपि भाष्यकृता द्वयोरपि मनःपर्यायज्ञानावयवतया प्रत्यासन्नत्वादृजुमते-

1 एकोत्पादेन गतो रुचकवरमितस्ततः प्रतिनिवृत्त। द्वितीयेन नन्दीश्वरमिह तत एति तृतीयेन ॥ ७८७ ॥
प्रथमेन पण्डकवन द्वितीयोत्पातेन नन्दनमेति। तृतीयोत्पातेन तत इह, जङ्घाचारणो भवति ॥ ७८८ ॥
प्रथमेन मानुषोत्तरनग स नन्दीश्वरं तु द्वितीयेन। एति ततस्तृतीयेन कृतचैत्यवन्दन इह ॥ ७८९ ॥
प्रथमेन नन्दनवने द्वितीयोत्पातेन पण्डकवने। एतीह तृतीयेन यो विद्याचारणो भवति ॥ ७९० ॥
आशी दाढा तद्गतमहाविषा आशीविषा द्विविधभेदा। ते कर्म-जातिभेदेनाऽनेकधा-चतुर्विधविकल्पाः ॥ ७९१ ॥
मनोज्ञानिग्रहणेन विपुलमति केवली चतुर्भेदः। सम्यक्त्व-ज्ञान-दर्शन-चारित्रैः क्षयप्रसूतैः ॥ ७९२ ॥
अवधिज्ञानावसरे मनःपर्यव केवलयोः किं ग्रहणम् ?। लब्धिप्रसङ्गेन कृतं ग्रहणं यथा शेषलब्धीनाम् ॥ ७९३ ॥ 2 क ग 'श गाथा. प्राग् व्या'।

त्ववधिदर्शनम् , विभङ्गग्रहणेन तु विभङ्गज्ञानम् । अत एव ज्ञान-दर्शन-विभङ्गलक्षणं द्वारत्रयमिदं भवति । तत्र चावधिज्ञान-दर्शने, तथा विभङ्गज्ञानं, तस्य च संबन्धि यत् केषाञ्चिन्मतेनाऽवधिदर्शनम् ; ते च पृथक् स्वस्थाने ; परस्परापेक्षया परस्थाने चाऽवधि-विभङ्गयोर्ज्ञान-दर्शने भवनपतिदेवेभ्य आरभ्य यावदुपरितनग्रैवेयकविमानानि तावत् , जघन्याभ्यामारभ्य यावदुपरिमग्रैवेयकविमानोचितावधि-विभङ्गोत्कृष्टतामाप्तिः, तावत् क्षेत्रादिलक्षणं विषयमाश्रित्य तुल्ये भवतः। इदमुक्तं भवति– भवनपतिदेवेभ्य आरभ्य यावदुपरितनग्रैवेयकविमानवासिनो देवास्तावद् ये ये जघन्यतुल्यस्थितयो देवास्तत्तत्संबन्धिनी जघन्ये अवधिविभङ्गज्ञान-दर्शने क्षेत्रादिरूपं विषयमाश्रित्य परस्परतस्तुल्ये भवतः ; मध्यमतुल्यस्थितीनां च मध्यमे ते तथैव तुल्ये भवतः ; उत्कृष्टतुल्यस्थितीनां तूत्कृष्टे ते तथैव तुल्ये भवतः ।

'परेण ओही असंखेज्जो त्ति' ग्रैवेयकविमानेभ्यस्तु परतोऽनुत्तरविमानेष्ववधिदर्शनरूपोऽवधिरेव भवति, न तु विभङ्गज्ञानम्, मिथ्यादृष्टेरेव तत्सद्भावात्, अनुत्तरसुरेषु च मिथ्यादृष्टेरभावात् । स चाऽनुत्तरसुरावधिः क्षेत्रतः कालतश्चाऽसंख्येयोऽसंख्यातविषयो भवति, द्रव्यभावैस्त्वनन्तविषय इति । इह च तिर्यग्-मनुष्याणां तुल्यस्थितीनामपि क्षयोपशमतीव्र-मन्दतादिकारणवैचित्र्यात् क्षेत्र-कालविषयेऽप्यवधिविभङ्गज्ञान-दर्शनयोर्विचित्रता, न पुनस्तुल्यतैव, इतीह देवेष्वेव तयोरियं प्रतिपादितेति विभावनीयम् ॥ इति निर्युक्तिगाथार्थः ॥ ७६३ ॥

अथ भाष्यम्—

[3]सविसेसं सागारं तं नाणं, निव्विसेसमणगारं । तं दंसणं ति ताइं ओहि-विभंगाण तुल्लाइं ॥ ७६४ ॥

आरब्भ जहण्णाओ उवरिमगेवेज्जगावसाणाणं । परओऽवहिनाणं चिय न विभंगमसंखयं तं च ॥७६५॥

गतार्थे एव ॥ ७६४ ॥ ७६५ ॥

॥ गतं ज्ञान-दर्शन-विभङ्गद्वारत्रयम् ॥

अथ देशद्वाराभिधानायाह—

[4]नेरइय-देव-तित्थंकरा य ओहिस्सबाहिरा होंति । पासंति सव्वओ खलु सेसा देसेण पासंति ॥७६६॥

१ क.ग. 'ये ज' । २ क.ग 'स्तत्सं' । ३ सविशेष साकारं तज्ज्ञानं, निर्विशेषमनाकारम् । तद् दर्शनमिति ते अवधि-विभङ्गयोस्तुल्ये ॥ ७६४ ॥
आरभ्य जघन्यादुपरिमग्रैवेयकावसानानाम् । परतोऽवधिज्ञानमेव न विभङ्गोऽसंख्यकं तच्च ॥ ७६५ ॥
४ नैरयिक-देव-तीर्थङ्कराश्चावधेरबाह्या भवन्ति । पश्यन्ति सर्वतः खलु शेषा देशेन पश्यन्ति ॥ ७६६ ॥

णाणं ति' आकर्षतां भुञ्जीत विलिम्पेत वा हृष्टः सन्नवज्ञयेति। मधुमथनं ते राजानः सबला अपि न शक्नुवन्ति 'आक्रष्टुम्' इति वाक्यशेषः। चक्रवर्तिनस्त्विदं बलं, तद्यथा— द्वौ षोडशकौ द्वात्रिंशत् । तत्र 'द्वात्रिंशत्' इत्येतावत्येव वाच्ये 'द्वौ षोडशकौ' इत्यभिधानं चक्रवर्तिनो वासुदेवाद् द्विगुणर्द्धिख्यापनार्थम्। 'राजसहस्राणि' इति गम्यते। समस्तबलेन सह शृङ्खलानिबद्धमाकर्षन्ति चक्रवर्तिनमवटतटे स्थितं सन्तम्। ततश्च गृहीत्वा शृङ्खलामसौ वामहस्तेनाऽऽकर्षतां भुञ्जीत विलिम्पेत वा; चक्रधरं ते न शक्नुवन्ति 'आक्रष्टुं' इति वाक्यशेषः! यच्च केशवस्य बलं तद्द्विगुणं भवति चक्रवर्तिनः। ततः शेषलोकबलाद् बलदेवा बलवन्तः, तथा निरवशेषवीर्यान्तरायक्षयादपरिमितमनन्तं बलं येषां तेऽपरिमितबला जिनवरेन्द्राः ॥ इति निर्युक्तिगाथापञ्चकार्थः ॥ ७९४ ॥ ७९५ ॥ ७९६ ॥ ७९७ ॥ ७९८ ॥

तदेवमभिहिताः शेषर्द्धयः। एताश्चाऽन्यासामपि क्षीर-मधु-सर्पिराश्रवादिकानामृद्धीनामुपलक्षणमिति। अत एवाह भाष्यकारः—

[1]खीर-महु-सप्पिसाओवमाउवयणा तयासवा होंति। कोट्ठयधन्नसुनिग्गलसुत्तत्था कोट्ठबुद्धीया ॥ ७९९ ॥

जो सुत्तपएण बहुं सुयमणुधावइ पयाणुसारी सो। जो अत्थपएणत्थं अणुसरइ स बीयबुद्धी उ ॥८००॥

चीर्णग्रन्थि[2]पर्णकादिवनस्पतिविशेषस्य चक्रवर्तिसंबन्धिनो गोलक्षस्याऽर्धार्धक्रमेण पीतगोक्षीरस्य पर्यन्ते यावदेकस्या गोः संबन्धि यत् क्षीरं तदिह गृह्यते। मध्वपि किमप्यतिशायिशर्करादिमधुरद्रव्यम्। एवं सर्पिरपि किमप्यतिशायि द्रष्टव्यम्। एवंभूतक्षीर-मधु-सर्पिषां य आस्वादस्तदुपमाप्यायकवचना ये तीर्थंकर-गणधरादयस्ते तदाश्रवा मन्तव्याः, क्षीर-मधु-सर्पिराश्रवा इत्यर्थः, वचनेन यथोक्तक्षीरादीनिव ते स्रवन्तः सकलजनं सुखयन्ति। मकारस्य दीर्घत्वम्, उकारश्चाऽलाक्षणिकः। तथा, कोष्ठकधान्यवत् सुनिर्गलौ— अविस्मृतत्वाच्चिरस्थायिनौ सूत्रार्थौ येषां ते कोष्ठकधान्यसुनिर्गलसूत्रार्थाः कोष्ठबुद्धयः। यस्त्वध्यापकादेकेनापि सूत्रपदेनाऽधीतेन बह्वपि सूत्रं स्वमज्ञयाऽभ्यूह्य गृह्णाति स पदानुसारिलब्धिः। "उत्पाद-व्यय-ध्रौव्ययुक्तं सत्" इत्यादिवदर्थप्रधानं पदमर्थपदं तेनैकेनापि बीजभूतेनाऽधिगतेन योऽन्यं प्रभूतमप्यर्थमनुसरति स बीजबुद्धिरिति ॥७९९॥८००॥

किमेता एव लब्धयः?, इत्याह—

[3]उदय-क्खय-क्खओवसमो-वसमसमुत्था बहुप्पगाराओ। एवं परिणामवसा लद्धीओ होंति जीवाणं ॥८०१॥

---

1 क्षीर-मधु-सर्पि स्वादोपमवचनास्तदाश्रवा भवन्ति। कोष्ठकधान्यसुनिर्गलसूत्रार्थाः कोष्ठबुद्धय ॥ ७९९ ॥
य सूत्रपदेन बहु श्रुतमनुधावति पदानुसारी स। योऽर्थपदेनाऽर्थमनुसरति स बीजबुद्धिस्तु ॥ ८०० ॥ 2 क ग 'पर्णिका'।
3 उदय-क्षय-क्षयोपशमो-पशमसमुत्थाः बहुप्रकाराः। एवं परिणामवशाल्लब्धयो भवन्ति जीवानाम् ॥ ८०१ ॥

द्विविधो बाह्यावधिः फड्डकावधिः, असंबद्धवलयाकारक्षेत्रप्रकाशकावधिश्चेत्यर्थः, तद्वान् साध्वादिरवध्युपलब्धक्षेत्रस्यान्तःस्थितोऽपि न सर्वतः पश्यति, अन्तरालाऽदर्शनात्। अतस्तद्व्यवच्छेदार्थं कर्तव्यं 'पश्यन्ति सर्वतः' इति। आह– नन्वयमसंततदिकावधिरबाह्यावधिरेव न भवति, बाह्यावधित्वेनैव प्राक् प्रतिपादितत्वात्, तत् किमेतद्व्यवच्छेदपरेण 'पासंति' इत्याद्युपादानेन ?। सत्यम्, समयपरिभाषितबाह्याव-धित्वमत्र नास्ति, लोकरूढं त्ववधिप्रकाशितक्षेत्रमध्यवर्तित्वमात्रमत्रापि विद्यते, इत्येतद्व्यवच्छेदार्थं 'पासंति' इत्यादि स्थितम्। इत्यलं विस्तरेणेति ॥७६८॥

अथ द्वितीयव्याख्यानं, तत्र प्रेर्यं चाह–

[1]निययावहिणो अब्भिंतर त्ति वा संसयावणोयत्थं। तो सव्वओऽभिहाणं होउ किमब्भिंतरग्गहणं ? ॥७६९॥

'वा' इत्यथवार्थः, स च व्याख्यानान्तरसूचकः। तत्र नारकादयोऽवधेरबाह्या अभ्यन्तरा भवन्तीति कोऽर्थः ?, इत्याह– नियता-वधयो नियमेनैषामवधिर्भवत्येवेति। तर्हि 'पासंति' इत्यादि किमर्थम् ?, इत्याह– 'संसयावणोयत्थं ति' 'किमेते देशतः पश्यन्ति, आहोस्वित् सर्वतः' इत्येवंभूतसंशयापनोदार्थं 'पश्यन्ति सर्वतः खलु' इति वाक्यशेषः। यद्येवम्, ततः संशयापनोदार्थं सर्वतोऽभिधानमेवाऽस्तु, किमभ्यन्तरग्रहणेन ? इति ॥ ७६९ ॥

अत्रोत्तरमाह–

[2]अब्भिंतर त्ति तेणं निययावहिणोऽवसेसया भइया। भवपच्चायाइवयसा सिद्धे कालस्स नियमोऽयं ॥७७०॥

यदि सर्वतोग्रहणेन नारकादीनां देशदर्शनं निराकृत्य संशयो निरस्त इति ब्रूषे, तेन तर्हि भोः प्रेरक ! 'अभ्यन्तरा अबाह्याः' इत्यनेन नियतावधयो नियमेनाऽवधिमन्तो नारक-देव-तीर्थकराः, अवशेषास्तु तिर्यग्-मनुष्या भजनीयाः– अवधियुक्तास्तद्रहिता वा भवन्तीति प्रतिपादितं द्रष्टव्यम्। सर्वग्रहणेन हि सर्वदेशदर्शनविषय एव संदेहो निवर्त्यते, नियतावधित्वं पुनरमीषां न लभ्यते; अतस्तत्प्रतिपादनार्थम्, 'अवधेरबाह्या भवन्ति' इत्येतद् वचनमिति भावः। तत्रैतत् स्यात् "[3]भवप्रत्ययो नारक देवानाम्" इत्यादिवचनात्, यथा "[4]तीहिं नाणेहिं समग्गा तित्थयरा जाव होंति गिहवासे" इत्यादिवचनाच्च सिद्धमेव नारक-देव-तीर्थकराणां नियतावधित्वम्; तत्कि-

१ नियतावधयोऽभ्यन्तरा इति वा सशयापनोदार्थम्। ततः सर्वतोऽभिधानं भवतु किमभ्यन्तरग्रहणम् ? ॥ ७६९ ॥

२ अभ्यन्तरा इति तेन नियतावधयोऽवशेषका भाज्याः। भवप्रत्ययादिवचसा सिद्धे कालस्य नियमोऽयम् ॥ ७७० ॥

३ तत्त्वार्थसूत्रे १,२२ । ४ त्रीभिर्ज्ञानैः समग्रास्तीर्थंकरा यावद् भवन्ति गृहवासे।

शेषास्तु त्रयोदश लब्धयः स्त्रीणां भवन्तीति सामर्थ्याद् गम्यते । अथैतास्तावत् सप्त, अन्यच्च ऋजुमति-विपुलमतिलक्षणं लब्धि-द्वयं पुरुषाणामप्यभव्यानां न संभवतीति दर्शयितुमाह—

" [1]रिजुमइ-विउलमईओ सत्त य एयाओ पुव्वभणियाओ । लद्धीओ अभव्वाणं होंति नराणं पि न कयाइ ॥ ५ ॥

अभवियमहिलाणं पि हु एयाओ न होंति भणियलद्धीओ । महुखीरासवलद्धी वि नेय सेसा उ अविरुज्झा ॥ ६ ॥"

इत्यलं प्रसङ्गेन । प्रकृतमुच्यते— यदिह विंशतिसंख्यया केचिल्लब्धीर्नियमयन्ति, तद् भवतां प्रमाणं नवा ? । इत्याह— 'तं न जुज्जए इत्यादि' । कुतो न युज्यते ?, इत्याह—लब्धिरिति यः 'अतिशयः' इति वाक्यशेषः, स तावल्लब्धिरहितसामान्यजीवेभ्यो विशेष उच्यते । ते च विशेषाः कर्मक्षय-क्षयोपशमादिवैचित्र्याज्जीवानामपरिमिताः संख्यातुमशक्याः, इति कथं विंशतिसंख्यानियमस्तेषां युज्यते? । किञ्च, गणधरत्व-पुलाकत्व-तेजःसमुद्धाता-ऽऽहारकशरीरकरणादिकास्तावत् प्रसिद्धा अपि बह्वयो लब्धयः श्रूयन्ते, तासामपीत्थमसंग्रहः स्यादिति । एतदेवाह— 'गणहरेत्यादि' ॥ ८०२ ॥ ८०३ ॥

अत्रैव प्रक्रमे परमतमाशङ्क्य निराकर्तुमाह—

[2]भव्वा-भव्वाइविसेसणत्थमहवा तयं पि सवियारं । भव्वा वि अभव्व व्विय जं चक्कहरादओ भणिया ॥८०४॥

'अहव त्ति' अथवेत्थं ब्रूयात् परः— भव्या-ऽभव्यादिविशेषणार्थं विंशतिसंख्यानियमनम्— एता विंशतिलब्धयो भव्यानामेव, शेषास्तु भव्या-ऽभव्यसाधारणा इति । तदपि सविचारं— सव्यभिचारम्, यतो विंशतेरन्यत्रापि गणधर-पुलाका-ऽऽहारकादिलब्धयो भव्यानामेव भवन्ति, विंशतिमध्यपठिता अपि च वैक्रिय-विद्याधरादिलब्धय आमर्षौषध्यादिलब्धयश्चाऽभव्यानामपि भवन्तीति सर्वत्र व्यभिचारः । किञ्च, भव्यत्वेन प्रसिद्धा अपि चक्रवर्त्यादयो यद् यस्मात् तैर्विंशतिलब्धिवादिभिरेतास्वेव विंशतिलब्ध्यन्तर्वर्तिनीष्वामर्षौषधि-वैक्रियकरण-विद्याधरत्वादिकास्वभव्यसाधारणत्वेनाऽभव्यलब्धिषु मध्ये भणिताः पठिताः, इतीत्थमपि व्यभिचारः, आमर्षौषध्या-दिलब्धिवच्चक्रवर्त्यादिलब्धीनामप्यभव्यस्य प्राप्तिप्रसङ्गात् । न च चक्रवर्त्यादिलब्धयः कदाचिदप्यभव्यस्य संभवन्ति ॥ ८०४ ॥

१ ऋजुमति-विपुलमती सप्त चैता. पूर्वभणिता । लब्धयोऽभव्यानां भवन्ति नराणामपि न कदाचित् ॥ ५ ॥
अभव्य-महिलानामपि खलु एता न भवन्ति भणितलब्धय॰ । मधुक्षीराऽऽश्रवलब्धिरपि ज्ञेया॰ शेषास्त्वविरुद्धाः ॥ ६ ॥

२ भव्या-ऽभव्यादिविशेषणार्थमथवा तदपि सविचारम् । भव्या अप्यभव्या इव यच्चक्रधरादयो भणिता. ॥ ८०४ ॥

यानि वा योजनानि प्रत्येकं भवतीत्यर्थः । कया सह ?, इत्याह– 'पुरुषावाधया' इत्येवं सहार्थतृतीयया पुरुषावाधापदमत्रापि योज्यते; न केवलमवधिः संख्येयानि, असंख्येयानि वा योजनानि भवति, किं तर्हि ?, पुरुषाद्यन्तरालरूपा वाधा साऽप्येतावन्माना भवतीत्यर्थः । इदं चान्तरमसंवद्ध एवाऽवधौ भवति, न तु संवद्धे, तत्र संवद्धत्वेनैव तदसंभवात् । इह चासंवद्धेऽवधावन्तरे च चतुर्भङ्गिका– संख्येयमन्तरं संख्येयोऽवधिः, संख्येयमन्तरमसंख्येयोऽवधिः, असंख्येयमन्तरं संख्येयोऽवधिः, असंख्येयमन्तरमसंख्येयोऽवधिः; इत्येवं चत्वारोऽपि भङ्गकाः संभवन्ति । संवद्धे त्ववधौ विकल्पाभावः, तदुत्थानहेतोरन्तरलक्षणस्य द्वितीयपदस्य तत्राभावादिति ।

अयं चावधिर्लोकेऽलोके च संवद्धोऽपि भवति, इत्याह– 'लोगमलोगे य संवद्धो त्ति' इह लोकशब्देन लोकान्तो गृह्यते । अत्रापि च भङ्गचतुष्टयम्– तत्र यो लोकप्रमाणावधिः स पुरुषे संवद्धो भवति, लोकान्ते च; यस्तु लोकदेशवर्ती अभ्यन्तरावधिः स पुरुषे संवद्धो न लोकान्ते; लोकान्तेऽसंवद्धो न पुरुष इति शून्योऽयं भङ्गः, यो हि लोकान्ते संवद्धः स पुरुषे नियमात् संवद्ध एव भवति, न त्वसंवद्ध इत्येतद्भङ्गकासंभवः; न लोकान्ते नापि पुरुषे संवद्धो वाह्यावधिः; यस्त्वलोके संवद्धः स पुरुषे संवद्ध एव भवतीति तत्र भङ्गकाभावः ॥ इति निर्युक्तिगाथार्थः ॥ ७७२ ॥

अथ भाष्यम्–

[3]ओही पुरिसे कोई संबद्धो जह पभा व दीवम्मि । दूरंधयारदीवयदरिसणमिव कोइ विच्छिण्णो ॥७७३॥

[4]संखिज्जमसंखिज्जं देहाओ खित्तमंतरं काउं । संखेज्जा-ऽसंखेज्जं पेच्छइ तदंतरमबाहा ॥ ७७४ ॥

संबद्धा-ऽसंबद्धो नर-लोयंतेसु होइ चउभंगो । संबद्धो उ अलोए नियमा पुरिसे वि संबद्धो ॥ ७७५ ॥

तिस्रोऽपि गतार्थाः, नवरं दूरान्धकारे भित्त्यादिप्रतिफलितदीपकस्य दर्शनं तदिव विच्छिन्नः । 'तदंतरमवाह त्ति' तयोर्देहा-ऽवधिप्रकाश्यक्षेत्रयोरन्तरं तद्वाधोच्यत इति ॥ ७७३ ॥ ७७४ ॥ ७७५ ॥

॥ अवसितं क्षेत्रद्वारम् ॥

---

१ क ग 'वधे सं'। २ क ग 'वन्ति किं' । ३ अवधिः पुरुषे कश्चित् सवद्धो यथा प्रभेव दीपे । दूरान्धकारदीपकदर्शनमिव कश्चिद् विच्छिन्नः ॥ ७७३ ॥ सख्येयमसख्येयं देहात् क्षेत्रमन्तर कृत्वा । सख्येया-ऽसंख्येय प्रेक्षते तदन्तरमवाधा ॥ ७७४ ॥ संवद्धाऽसवद्धो नर-लोकान्तयोर्भवति चतुर्भङ्गः । संबद्धस्त्वलोके नियमात् पुरुषेऽपि संवद्धः ॥७७५॥ ४ घ छ 'संखेज्ज'।

तमेव विषयसंग्रहमाह—

दंव्वाइं अंगुला-वलिसंखेज्जाईयभागविसयाइं । पेच्छइ चउग्गुणाइं जहण्णओ मुत्तिमंताइं ॥ ८०७ ॥

उक्कोसं संखाईयलोगपोग्गलसमानिबद्धाइं । पइदव्वं संखाईयपज्जयाइं च सव्वाइं ॥ ८०८ ॥

जघन्यतो मूर्तिमन्ति द्रव्याण्यवधिज्ञानी पश्यतीति संटङ्कः । कथंभूतानि ?, इत्याह– 'अंगुलेत्यादि' अङ्गुलसंख्यातीतभागविषयाणि, आवलिकासंख्यातीतभागविषयाणि चेत्यर्थः । भावतस्तु प्रतिद्रव्यं चत्वारो गुणा धर्माः पर्याया येषां तानि चतुर्गुणानि पश्यति । इदमुक्तं भवति– जघन्यतोऽवधिज्ञानी द्रव्यतः, क्षेत्रतश्चाङ्गुलासंख्येयभागवर्तीनि मूर्तद्रव्याणि पश्यति, कालतस्त्वेतावद्द्रव्याणामावलिकाऽसंख्येयभागाभ्यन्तरवर्तिनोऽतीतान्, अनागतांश्च पर्यायान् पश्यति, भावतस्तु प्रतिद्रव्यं चतुरः पर्यायान् पश्यतीति ।

उत्कृष्टतस्तु द्रव्यतः क्षेत्रतश्चाऽसंख्येयलोकाकाशखण्डावगाढानि सर्वाण्यपि मूर्तद्रव्याणि पश्यति । एतानि चैकस्मिन्नेव लोकाकाशेऽवगाढानि प्राप्यन्ते, शेषलोकावगाढानां तु दर्शनं शक्तिमात्रापेक्षयैवोच्यते । कालतस्त्वेषां द्रव्याणामसंख्यातोत्सर्पिण्य-वसर्पिणीसमान्तर्गतानतीता-ऽनागतांश्च पर्यायान् पश्यति । भावतस्त्वेकैकद्रव्यमाश्रित्याऽसंख्येयपर्यायाण्येतानि पश्यति । इह च दर्शनक्रियासामान्यमात्रमाश्रित्य 'पश्यति' इत्युक्तम्, विशेषतस्तु जानाति पश्यतीति च सर्वत्र द्रष्टव्यम् ॥ ८०८ ॥

तदेवं जघन्यत उत्कृष्टतश्च प्राग् विस्तरतः प्रोक्तोऽवधिविषयः, इदानीं तु स एव संक्षेपत उक्तः ॥

॥ तद्भणने च सप्रसङ्गमवधिज्ञानं समाप्तमिति ॥

१ द्रव्याण्यङ्गुला-ऽऽवलिसख्यातीतभागविषयाणि । प्रेक्षते चतुर्गुणानि जघन्यतो मूर्तिमन्ति ॥ ८०७ ॥
उत्कृष्टत. सख्यातीतलोकपुद्गलसमानिबद्धानि । प्रतिद्रव्यं सख्यातीतपर्ययाणि च सर्वाणि ॥ ८०८ ॥ २ घ छ. 'ताना' ।

इत्याह– 'ते च्चिय पुव्वपवण्णेत्यादि' य एव मतिज्ञानस्य पूर्वप्रतिपन्ना उक्ता अवधिज्ञानस्याऽपि त एव द्रष्टव्याः । किं सर्वथा ?, न, इत्याह– 'वियलेत्यादि' विकलेन्द्रियान् असंज्ञिपञ्चेन्द्रियांश्च मुक्त्वेत्यर्थः । एते हि सास्वादनसम्यग्दृष्टयो मतिज्ञानस्य पूर्वप्रतिपन्ना उक्ताः, अवधेस्तु न प्रतिपद्यमानका नापि पूर्वप्रतिपन्ना भवन्तीति भावः ॥ इति गाथाद्वयार्थः ॥ ७७७ ॥ ७७८ ॥

॥ अवसितं गत्यादिद्वारम् ॥

अथ शेषर्द्धीर्वर्णयितुमाह–

आमोसहि विप्पोसहि खेलोसहि जल्लमोसहि चेव । संभिन्नसोय उजुमइ सव्वोसहि चेव बोधव्वो ॥७७९॥

चारण आसीविसा केवली य मणनाणिणो य पुव्वधरा । अरहंत-चक्कवट्टी बलदेवा वासुदेवा य ॥७८०॥

तत्राऽऽमर्षणमामर्षः संस्पर्शनमित्यर्थः, स एवौषधिर्यस्याऽसावामर्षौषधिः, करादिसंस्पर्शमात्रादेव व्याध्यपनयनसमर्थो लब्धि-लब्धिमतोरभेदोपचारात् साधुरेवाऽऽमर्षौषधिरित्यर्थः । 'विप्पोसहि त्ति' मूत्र-पुरीषयोरवयवो विप्रुडुच्यते । अन्ये त्वाहुः– विड् उच्चारः, प्रेति प्रस्रवणम् । खेलः श्लेष्मा, जल्लो मलः, औषधिशब्देन समासकरणादिकं तथैव, सुगन्धाश्चैते विडादयस्तल्लब्धिमतां द्रष्टव्याः । इह चात्मानं परं वा रोगापनयनबुद्ध्या विडादिभिः स्पृशतः साधोस्तद्रोगापगमो द्रष्टव्यः, प्रागुक्ताऽऽमर्षलब्धिरपि शरीरैकदेशे सर्वस्मिन् वा शरीरे समुत्पद्यते, तेन चात्मानं परं वा व्याध्यपगमबुद्ध्या परामृशतस्तदपगमो द्रष्टव्यः। 'संभिन्नसोय त्ति' यः सर्वतः सर्वैरपि शरीरदेशैः शृणोति स संभिन्नश्रोताः। अथवा, श्रोतांसीन्द्रियाणि संभिन्नान्येकैकशः सर्वविषयैर्यस्य स तथा, एकतरेणापीन्द्रियेण समस्तापरेन्द्रियगम्यान् विषयान् यो मुणत्यवगच्छति स संभिन्नश्रोता इत्यर्थः । अथवा, श्रोतांसीन्द्रियाणि संभिन्नानि परस्परत एकरूपतामापन्नानि यस्य स तथा, श्रोत्रं चक्षुःकार्यकारित्वाच्चक्षूरूपतामापन्नम्, चक्षुरपि श्रोत्रकार्यकारित्वात् तत्तद्रूपतामापन्नम्, इत्येवं संभिन्नानि श्रोतांसि सर्वाण्यपि परस्परेणेन्द्रियाणि यस्यासौ संभिन्नश्रोता इति भावः, इत्यत्रापि स एवाऽर्थः । अथवा, द्वादशयोजनस्य चक्रवर्तिकटकस्य युगपद् ब्रुवाणस्य, तत्तूर्यसंघातस्य वा युगपदास्फाल्यमानस्य संभिन्नाँल्लक्षणतो विधानतश्च परस्परतो विभिन्नान् जननिवहसमुत्थान् शङ्ख-भेरी-भाणक-ढक्कादितूर्यसमुत्थान् वा युगपदेव सुबहून् शब्दान् यः शृणोति स संभिन्नश्रोताः । एवं च संभिन्नश्रोतृत्वलब्धिरपि

१ आमर्षौषधिर्विप्रुडौषधिः श्लेष्मौषधिर्मलौषधिश्चैव । संभिन्नश्रोता ऋजुमतिः सर्वौषधिश्चैव बोद्धव्यः ॥ ७७९ ॥

२ चारणा आशीविषा केवलिनश्च मनोज्ञानिनश्च पूर्वधराः । अर्ह-चक्रवर्तिनो बलदेवा वासुदेवाश्च ॥ ७८० ॥

प्रकटार्था ॥ ८१२ ॥

तदेवं क्षेत्रतस्तद्विषय उक्तः; अथ द्रव्यतः, कालतः, भावतश्च तद्विषयमाह—

[1]मुणइ मणोदव्वाइं नरलोए सो मणिज्जमाणाइं । काले भूय-भविस्से पलियाऽसंखिज्जभागम्मि[2] ॥ ८१३ ॥

दव्वमणोपज्जाए जाणइ पासइ य तग्गएणंते । तेणावभासिए उण जाणइ बज्झेऽणुमाणेणं ॥ ८१४ ॥

स मनःपर्यायज्ञानी मुणत्यवगच्छति । कानि ?, इत्याह— मनश्चिन्ताप्रवर्तकानि द्रव्याणि मनोद्रव्याणि । तानि किं मनोयोग्यान्यप्याकाशस्थानि जानाति ?। न, इत्याह— नरलोके तिर्यग्लोके मन्यमानानि संज्ञिभिर्जीवैः कार्य[3]-मनोयोगेन गृहीत्वा मनोयोगेन मनस्त्वेन परिणमितानीत्यर्थः । तदयं द्रव्यतो विषय उक्तः । अथ कालतो भावतश्च तमाह— 'काले इत्यादि' भावतस्तावज्जानाति पश्यति च । कान् ?, इत्याह— चिन्तानुगुणान् सर्वपर्यायराश्यनन्तभागरूपानन्तान् रूपादीन् पर्यायान् । कस्य संबन्धिनः ?, इत्याह— मनस्त्वपरिणतानन्तस्कन्धसमूहमयस्य द्रव्यमनसः, न तु भावमनसः, तस्य ज्ञानरूपत्वात्, ज्ञानस्य चामूर्तत्वात्, छद्मस्थस्य चामूर्तविषयाऽयोगादिति । तांश्च तद्गतानेव मनोद्रव्यस्थितानेव जानाति, न पुनश्चिन्तनीयबाह्यघटादिवस्तुगतानिति भावः । न च वक्तव्यमेते मनोद्रव्यसंबन्धिन एव न भवन्ति, किमेतद्व्यवच्छेदपरेण तद्गतग्रहणेन ? इति; मनोद्रव्याणि दृष्ट्वा पश्चादनुमानेन ते ज्ञायन्ते, इत्येतावता मनोद्रव्यैरपि सह संबन्धमात्रस्य विद्यमानत्वात् । एतदेवाह— तेन द्रव्यमनसाऽवभासितान् प्रकाशितान् बाह्यांश्चिन्तनीयघटादीननुमानेन जानाति, यत एव तत्परिणतान्येतानि मनोद्रव्याणि, तस्मादेवंविधेनेह चिन्तनीयवस्तुना भाव्यम्, इत्येवं चिन्तनीयवस्तूनि जानाति न साक्षादित्यर्थः । चिन्तको हि मूर्तममूर्तं च वस्तु चिन्तयेत् । न च च्छद्मस्थोऽमूर्तं साक्षात् पश्यति, ततो ज्ञायते— 'अनुमानादेव चिन्तनीयं वस्त्ववगच्छति'। कियति कस्मिंश्च काले मनोद्रव्य-पर्यायानसौ जानाति ?, इत्याह— 'काले भूयेत्यादि' भूतेऽतीते, भविष्यति चाऽनागते पल्योपमासंख्येयभागरूपे काले ये तेषां मनोद्रव्याणां भूता व्यतीताः, भविष्यन्तश्चाऽनागताश्चिन्तानुगुणाः पर्यायास्तान् जानातीति ॥ ८१३ ॥ ८१४ ॥

अत्र चान्तरे "[4]तं समासओ चउव्विहं पन्नत्तं, तं जहा— दव्वओ, खेत्तओ, कालओ, भावओ । दव्वओ णं उजुमइ अणंते अणंतपएसिए खन्धे जाणइ पासइ" इत्यादि नन्दिसूत्रेऽभिहितम् । तत्र मनःपर्यायज्ञानं पटुक्षयोपशमप्रभवत्वाद् विशेषमेव गृह्णदुत्पद्यते,

१ जानाति मनोद्रव्याणि नरलोके स मन्यमानानि । काले भूत-भविष्यतोः पल्यासंख्येयभागे ॥ ८१३ ॥ द्रव्यमनःपर्यायान् जानाति पश्यति च तद्गताननन्तान् । तेनावभासितान् पुनर्जानाति बाह्यानुमानेन ॥ ८१४ ॥ २ क. ग. 'संखेज्ज'। ३ क. 'ययो'।
४ तत् समासतश्चतुर्विधं प्रज्ञप्तम्, तद्यथा—द्रव्यतः, क्षेत्रतः, कालतः, भावतः । द्रव्यतः ऋजुमतिरनन्ताननन्तप्रदेशिकान् स्कन्धान् जानाति, पश्यति ।

'केवलीत्यादि' केवलिनश्च प्रसिद्धाः। मनःपर्यायज्ञानिग्रहणेन चेह विपुलमतिरूपं मनःपर्यायज्ञानं गृह्यते; ऋजुमतिरूपस्य तस्य प्रागपि गृहीतत्वात्। तत्र विपुलं बहुविशेषसंख्योपेतं वस्तु मन्यते गृह्णातीति विपुलमतिः, पर्यायशतोपेतं चिन्तनीयघटादिवस्तु-विशेषग्राहिणी मतिर्विपुलमतिरित्यर्थः। आह– ननु सामान्येनैव मनःपर्यायज्ञानमेकमेव किं न गृहीतम्, तेनैकेनापि गृहीतेन तदन्तर्गतर्जुमतिविपुलमतिविशेषद्वयसंग्रहसिद्धेः?। अथ विशेषद्वयमिदं पृथग् गृहीतं तथापि व्यस्तं किमित्युपात्तम्, एकस्मिन्नेव स्थाने एतदुपादानस्य युज्यमानत्वात्?। सत्यम्, किन्तु कुतश्चिदतिशयज्ञानिदृष्टविचित्रकारणाद् विचित्रा भगवतः सूत्रस्य विरचनप्रवृत्तिरित्यप्रेर्यमिदमिति। पूर्वाणि धारयन्तीति पूर्वधरा दश-चतुर्दशपूर्वविदः, केवलित्व-मनःपर्यायज्ञानित्व-पूर्वधरत्वानां च ऋद्धित्वं प्रतीतमेव, देवेन्द्राणामपि पूज्यत्वादिति। अर्हत्-चक्रवर्ति-बलदेव-वासुदेवानामपि ऋद्धिमत्त्वं विख्यातमेव॥ इति निर्युक्तिगाथाद्वयार्थः॥ ७७९॥ ७८०॥

अथैतद्व्याख्यानार्थं[1] भाष्यकारः प्राह–

[2]संफुरिसणमामोसो मुत्त-पुरीसाण विप्पुसो विप्पो। अन्ने विडि त्ति विट्ठा भासंति य प त्ति पासवणं॥७८१॥

एए अन्ने य बहू जेसिं सव्वे य सुरभओऽवयवा। रोगोवसमसमत्था ते होंति तओसहिपत्ता॥७८२॥

जो सुणइ सव्वओ मुणइ सव्वविसए व सव्वसोएहिं। सुणइ बहुए व सद्दे भिन्ने संभिन्नसोओ सो॥७८३॥

रिजु सामण्णं तमत्तगाहिणी रिजुमई मणोनाणं। पायं विसेसविमुहं घडमेत्तं चिंतियं मुणए॥७८४॥

विउलं वत्थुविसेसणमाणं तग्गाहिणी मई विउला। चिंतियमणुसरइ घडं पसंगओ पज्जवसएहिं॥७८५॥

अइसयचरणसमत्था जंघा-विज्जाहिं चारणा मुणओ। जंघाहिं जाइ पढमो नीसं काउं रविकरे वि॥७८६॥

---

१ क.ग. 'ख्यानं भा'। २ संस्पर्शनमामर्षो मूत्र-पुरीषयोर्विप्रुड् विप्रुड्। अन्ये विडिति विष्ठा भाषन्ते च प्रेति प्रस्रवणम्॥ ७८१॥
एवावन्ये च बहवो येषां सर्वे च सुरभयोऽवयवाः। रोगोपशमसमर्थास्ते भवन्ति तदौषधिप्राप्ताः॥ ७८२॥
यः शृणोति सर्वतो जानाति सर्वविषयान् वा सर्वश्रोतोभिः। शृणोति बहुकान् वा शब्दान् भिन्नान् संभिन्नश्रोताः सः॥ ७८३॥
ऋजु सामान्यं तन्मात्रग्राहिणी ऋजुमतिर्मनोज्ञानम्। प्रायो विशेषविमुखं घटमात्रं चिन्तितं जानाति॥ ७८४॥
विपुलं वस्तुविशेषमानं तद्ग्राहिणी मतिर्विपुला। चिन्तितमनुसरति घट प्रसंगत. पर्यवशतैः॥ ७८५॥
अतिशयचरणसमर्था जङ्घा-विद्याभ्यां चारणा मुनयः। जङ्घाभ्यां याति प्रथमो निश्रां कृत्वा रविकरेऽपि॥ ७८६॥

द्रव्यार्थग्राहकत्वादित्थं मनःपर्यायज्ञानस्य प्रत्यक्षता युज्यते, न पुनरचक्षुर्दर्शनस्य, मतिभेदत्वेन तस्य परोक्षार्थग्राहकत्वात् । ततः प्रत्यक्षज्ञानित्वं मनःपर्यायज्ञानिनो विरुध्येत; इत्याशङ्क्याह– 'नाणं जईत्यादि' यदि मनःपर्यायज्ञानलक्षणं ज्ञानं प्रत्यक्षार्थग्राहकत्वात् प्रत्यक्षम्, न त्वचक्षुर्दर्शनलक्षणं दर्शनं प्रत्यक्षम्, परोक्षार्थग्राहकत्वेन परोक्षार्थत्वात्; तर्हि हन्त ! तस्य मनःपर्यायज्ञानिनः प्रत्यक्षज्ञानितायां को दोषः– को विरोधः?– न कश्चित्, भिन्नविषयत्वात्, अवधिज्ञानिनश्चक्षुर्दर्शना-ऽचक्षुर्दर्शनवदिति । न ह्यवधिज्ञानिनश्चक्षुरचक्षुर्दर्शनाभ्यां परोक्षमर्थं पश्यतः प्रत्यक्षज्ञानितायाः कोऽपि विरोधः समापद्यते, तद्वदिहाऽपि। तस्माद् मनःपर्यायज्ञानी स्वज्ञानेन मनोद्रव्य-पर्यायान् जानाति, मानसेन त्वचक्षुर्दर्शनेन पश्यतीति स्थितम् ॥ ८१६ ॥

अन्ये तु 'पश्यति' इत्यन्यथा समर्थयन्ति, इति दर्शयति—

अन्नेऽवहिदंसणओ वयंति न य तस्स तं सुए भणियं। न य मणपज्जवदंसणमन्नं च चउप्पयाराओ ॥८१७॥

अन्ये त्ववधिदर्शनेनाऽसौ मनःपर्यायज्ञानी पश्यति, मनःपर्यायज्ञानेन तु जानातीति वदन्ति । एतच्चाऽयुक्तमेव, इत्याह— न च नैव तस्य मनःपर्यायज्ञानिनस्तदवधिदर्शनं श्रुतेऽभिहितम्। न हि मनःपर्यायज्ञानिनोऽवधिज्ञान-दर्शनाभ्यामवश्यमेव भवितव्यम्, अवधिमन्तरेणाऽपि मति-श्रुत-मनःपर्यायलक्षणज्ञानत्रयस्याऽऽगमे प्रतिपादितत्वात् तथा चाह— "मणपज्जवनाणलद्धीया णं भन्ते ! जीवा किं नाणी, अन्नाणी ?। गोयमा ! नाणी, नो अन्नाणी। अत्थेगइया तिनाणी, अत्थेगइया चउनाणी। जे तिनाणी ते आभिणिवोहिय-सुय-मणपज्जवनाणी; जे चउनाणी ते आभिणिवोहिय-सुय-ओहि-मणपज्जवनाणी"। तदेवं मनःपर्यायज्ञानिनोऽवधिनियमस्याऽभावात् कथमवधिदर्शनेनाऽसौ पश्यतीत्युपपद्यते ?। अथैवं मन्यसे– किमेतैर्बहुभिः प्रलपितैः ?, यथाऽवधेर्दर्शनम्, तथा मनःपर्यायस्याऽपि तद् भविष्यति, ततस्तेनाऽसौ पश्यति, इत्युपपत्स्यत एव; इत्याशङ्क्याह– 'न य मणेत्यादि' न च नैव चतुष्प्रकाराचक्षुरादिदर्शनादन्यत् पञ्चमं मनःपर्यायदर्शनं श्रुते भणितम्, येन पश्यतीत्युपपत्स्यते। तथाचाह– "कइविहे णं भंते ! दंसणे पण्णत्ते ?। गोयमा ! चउव्विहे,

१ अन्येऽवधिदर्शनतो वदन्ति न च तस्य तत् श्रुते भणितम्। न च मनःपर्यवदर्शनमन्यच्च चतुष्प्रकारात् ॥ ८१७ ॥

२ मनःपर्यवज्ञानलब्धिका भगवन् ! जीवाः किं ज्ञानिनः, अज्ञानिनः ?। गौतम ! ज्ञानिनः, नो अज्ञानिनः। सन्त्येके त्रिज्ञानाः, सन्त्येके चतुर्ज्ञानाः। ये त्रिज्ञानास्ते आभिनिवोधिक-श्रुत-मनःपर्यवज्ञानिनः, ये चतुर्ज्ञानास्ते आभिनिवोधिक-श्रुता-ऽवधि मनःपर्यवज्ञानिनः। ३ कतिविध भगवन् ! दर्शनं प्रज्ञप्तम् ?। गौतम ! चतुर्विधम्, तद्यथा– चक्षुर्दर्शनम्, अचक्षुर्दर्शनम्, अवधिदर्शनम्, केवलदर्शनम्।

रनन्तरं विपुलमतेरपि व्याख्यानं कृतमित्यदोषः । ‘ विउलं वत्थुविसेसण त्ति ’ विपुलं वस्तुनो घटादेर्विशेषणानां देश-क्षेत्र-कालादीनां मानं संख्यास्वरूपं तद्ग्राहिणी विपुलमतिः। षष्ठ-सप्तमाऽष्टमगाथाभिर्जङ्घाचारणर्द्धिस्वरूपम् । नवम-दशमगाथाभ्यां तु विद्याचारणर्द्धिस्वरूपम्। एकादशगाथयाऽऽशीविषर्द्धिस्वरूपं व्याख्यातम् । ‘ते कम्म-जाईत्यादि’ ते आशीविषाः कर्मभेदेन तिर्यगाद्यनेकाविधाः, जातिभेदेन तु वृश्चिक-मण्डूकादिचतुर्विधविकल्पाः। द्वादशगाथायां केवली चतुर्भेदः, कथम् ?, इत्याह– क्षायिकसम्यक्त्व-ज्ञान-दर्शन-चारित्रभेदादिति। त्रयोदशगाथायां पूर्वार्धेन चालना, उत्तरार्धेन तु प्रत्यवस्थानम् । तत्र मनःपर्यायज्ञानं केवलज्ञानं चोत्तरत्र स्वस्थान एव वक्ष्यते, किमिहावधिज्ञानावसरे तद्ग्रहणम् ? इति चालनाकर्तुरभिप्रायः । आचार्यस्तु मन्यते– यथाऽवधिज्ञानावसरे ऋद्धिसाम्याच्छेषर्द्धिग्रहणम्। तथैवर्द्धिप्रस्तावाद् मनःपर्याय-केवलयोरपीह ग्रहणं कृतमित्यदोष इति ॥ ७८१–७९३ ॥

अथ वासुदेवादीनां बलवर्णनाद्यातिशयं निर्युक्तिकार एव प्रकटयति–

सोलस रायसहस्सा सव्वबलेणं तु संकलनिबद्धं। अंछंति वासुदेवं अगडतडम्मि ठियं संतं ॥ ७९४ ॥

घेत्तूण संकलं सो वामगहत्थेण अंछमाणाणं। भुंजिज्ज विलिंपिज्ज व महुमहणं ते न चाएंति ॥ ७९५ ॥

दो सोला बत्तीसा सव्वबलेणं तु संकलनिबद्धं । अंछंति चक्कवट्टिं अगडतडम्मि ठियं संतं ॥ ७९६ ॥

घेत्तूण संकलं सो वामगहत्थेण अंछमाणाणं। भुंजिज्ज विलिंपिज्ज व चक्कहरं ते न चाएंति ॥ ७९७ ॥

जं केसवस्स बलं तं दुगुणं होइ चक्कवट्टिस्स। तत्तो बला बलवगा अपरिमियबला जिणवरिंदा ॥७९८॥

इह वीर्यान्तरायकर्मक्षयोपशमविशेषाद् बलातिशयो वासुदेवस्य प्रदर्श्यते– षोडश राजसहस्राणि हस्त्य-श्व-रथ-पदाति-समन्वितानि शृङ्खलानिबद्धं ‘अंछंति’ देशीवचनादाकर्षन्ति वासुदेवं, अगडतटे कूपतटे स्थितं सन्तम्। ततश्च गृहीत्वा शृङ्खलामसौ वामहस्तेन ‘अंछमा-

१ षोडश राजसहस्राणि सर्वबलेन तु शृङ्खलानिबद्धम्। आकर्षन्ति वासुदेवमवटतटे स्थितं सन्तम् ॥ ७९४ ॥
गृहीत्वा शृङ्खलां स वामहस्तेनाऽऽकर्षताम्। भुञ्जीत विलिम्पेत वा मधुमथन ते न शक्नुवन्ति ॥ ७९५ ॥
द्वौ षोडशकौ द्वात्रिंशत् सर्वबलेन तु शृङ्खलानिबद्धम्। आकर्षन्ति चक्रवर्तिनमवटतटे स्थित सन्तम् ॥ ७९६ ॥
गृहीत्वा शृङ्खलां स वामहस्तेनाऽऽकर्षताम्। भुञ्जीत विलिम्पेत वा चक्रधरं ते न शक्नुवन्ति ॥ ७९७ ॥
यत् केशवस्य बलं तद्द्विगुणं भवति चक्रवर्तिनः। ततो बला बलवन्तोऽपरिमितबला जिनवरेन्द्राः ॥ ७९८ ॥

पश्यति । यस्त्ववधिरहितत्रिज्ञानी स मनःपर्यायज्ञानेन जानात्येव, न तु पश्यति, तस्याऽवधिदर्शनाभावात् । अतो मनःपर्यायज्ञानमात्रमाश्रित्य संभवमात्रतो जानाति, पश्यति चेति नन्दिसूत्रेऽभिहितमिति ॥ ८२० ॥

अन्ये तु 'जानाति, पश्यति' इत्यन्यथा समर्थयन्ति, इत्याह—

[1]अन्ने जं सागारं तो तं नाणं न दंसणं तम्मि । जम्हा पुण पच्चक्खं पेच्छइ तो तेण तन्नाणी ॥ ८२१ ॥

अन्ये त्वाहुः– यद् यस्मात् पटुक्षयोपशमप्रभवत्वाद् मनःपर्यायज्ञानं साकारमेवोत्पद्यते, 'तो त्ति' ततस्तज्ज्ञानमेव, तेन जानात्येवेत्यर्थः, न पुनस्तत्र मनःपर्यायज्ञानेऽवधि-केवलयोरिव दर्शनमस्ति । तर्हि 'पश्यति' इति कथम् ?, इत्याह-- यस्मात् पुनः प्रत्यक्षं मनःपर्यायज्ञानं, 'तो त्ति' ततः प्रत्यक्षत्वात् तेनैव मनःपर्यायज्ञानेन पश्यत्यसौ तज्ज्ञानी- स चासौ ज्ञानी च[2] तज्ज्ञानी, मनःपर्यायज्ञानीत्यर्थः । इदमुक्तं भवति– 'दृशिर् प्रेक्षणे' प्रकृष्टं चेक्षणं प्रत्यक्षस्यैवोपपद्यते, प्रत्यक्षं च मनःपर्यायज्ञानम्, अतस्तेन पश्यतीति घटत एव । साकारत्वेन तु तस्य ज्ञानत्वात् 'तेन जानाति इति निर्विवादमेव सिद्धम् । तस्माद् दर्शनाभावेऽपि यथोक्तन्यायात् 'मनःपर्यायज्ञानी जानाति, पश्यति' इत्युपपद्यत एवेति ।

एतदपि मूलटीकाकृता दूषितमेव, तद्यथा– ननु मनःपर्यायज्ञाने साकारत्वेन ज्ञानत्वाद् दर्शनं नास्ति, अथ च 'प्रत्यक्षत्वेन दृश्यतेऽनेन वस्तु' इति विरुद्धैवेयं वाचोयुक्तिः, साकारत्वेन निषिद्धस्यापीह दर्शनस्य 'दृश्यतेऽनेनेति दर्शनम्' इति व्युत्पत्त्या[3] सामर्थ्यादापत्तेः । किञ्च, 'जानाति' इत्यनेनाऽत्र साकारत्वं स्थापितम्, 'पश्यति' इत्यनेन च दर्शनरूढेन शब्देनाऽनाकारत्वं व्यवस्थाप्यते, अतो विरुद्धोभयधर्मप्राप्त्याऽपि न किञ्चिदेतादिति ॥ ८२१ ॥

आह– यद्यमी सर्वेऽपि पूर्वोक्ता अन्येषामेवाऽभिप्रायाः, सदोषाश्च केऽपि कथञ्चित् ; तर्ह्याचार्यस्य कोऽभिप्रायः ?, इत्याशङ्क्याह–

[4]भणइ, पन्नवणाए मणपज्जवनाणपासणा भणिया । तो एव पासए सो, संदेहो हेउणा केण ? ॥ ८२२ ॥

भण्यते स्थितः पक्षोऽत्र । कः ?, इत्याह– प्रज्ञापनायां त्रिंशत्तमपदे मनःपर्यायज्ञानस्य प्रकृष्टेक्षणलक्षणा साकारोपयोगविशेषरूपा

१ अन्ये यत् साकारं ततस्तज्ज्ञानं न दर्शनं तस्मिन् । यस्मात् पुन. प्रत्यक्षं प्रेक्षते ततस्तेन तज्ज्ञानी ॥ ८२१ ॥ २ क ख 'च म' । ३ क ग 'त्पात्तिसा' ।
४ भण्यते, प्रज्ञापनायां मनःपर्यवज्ञानपश्यत्ता भणिता । तत एव पश्यत्यति स॰, संदेहो हेतुना केन ? ॥८२२ ॥

कथं पुनर्ज्ञायते चक्रवर्तिलब्धिर्भव्यानामेव भवति ?, इत्याह—

[1]पोग्गलपरियट्टद्धं जं नरदेवंतरं सुए भणियं । तो सो भव्वो, कालो जमयं निव्वाणभावीणं ॥८०५॥

यद् यस्माद् नरदेवाश्चक्रवर्तिनस्तेषामन्तरमपार्धपुद्गलपरावर्तलक्षणं भगवत्यामुक्तम्, यदाह– "[2]नरदेवाणं भंते ! अंतरं कालओ केच्चिरं होइ ? । गोयमा ! जहण्णेणं साइरेगं सागरोवमं, उक्कोसेणं अवड्ढं पोग्गलपरियट्टं देसूणं" इति । तस्मादसौ चक्रवर्ती भव्य एव भवति नाभव्यः, यदस्मादयमपार्धपुद्गलपरावर्तलक्षणोऽन्तरकालो भाविनिर्वाणपदानामेव घटते । अभव्यानां तु भवनपत्यादिभाविदेवानामुत्कृष्टतो वनस्पतिकालस्यैवाऽन्तराऽभिधानात् । किञ्च, अन्यत्रापि देवेन्द्र-चक्रवर्तित्वादिपदयोग्यकर्मणां बन्धो भव्यानामेवोक्त इति भव्य एव चक्रवर्तीति ॥ ८०५ ॥

तदेवं प्रसङ्गाऽऽयाताः शेषर्द्धीः प्रतिपाद्याऽवधिज्ञानं च सप्रसङ्गं विस्तरतः प्ररूप्योपसंहरन् वक्ष्यमाणसंक्षेपप्ररूपणस्य प्रस्तावनां च कर्तुमाह—

[3]भणिओऽवहिणो विसओ तहावि तस्संगहं पुणो भणइ । संखेवरुईण हियं अव्वामोहत्थमिट्ठं च ॥८०६॥

भणितः प्ररूपितः 'ओही खेत्तपरिमाणे संठाणे' इत्यादिना सर्वेणापि पूर्वोक्तग्रन्थेनाऽवधेः स्वरूपाद्यन्वितो विषयो द्रव्य-क्षेत्रादिकः, तथा तत्संग्रहं विषयस्य संक्षेपप्ररूपणं पुनरपि भणत्यत्रान्तरे देववाचको नन्द्यध्ययनसूत्रकारः । अनेन चेदं सूचितम्– नन्द्यध्ययनसूत्रकारेण प्रथमं विस्तरतोऽवधिज्ञानं प्ररूप्य पर्यन्ते पुनरपि संक्षेपतस्तद्विषयः प्ररूपितः, तद्यथा– "[5]तं समासओ चउव्विहं पन्नत्तं, तं जहा– दव्वओ, खेत्तओ, कालओ, भावओ" इत्यादि । ननु नन्दिसूत्रकारेणापि किमिति विषयः पुनरपि प्ररूपितः, पौनरुक्त्यप्रसङ्गात् ?, इत्याशङ्क्याह– 'संखेवेत्यादि' यस्मादतिसंक्षेपरुचीनां हितमिदं संक्षेपभणनम्, अतस्तेषां हितार्थं मन्दमतीनामव्यामोहार्थं चेष्टमेतदिति ॥ ८०६ ॥

१ पुद्गलपरिवर्तार्धं यद् नरदेवाऽन्तरं श्रुते भणितम् । तत स भव्य., कालो यदयं निर्वाणभाविनाम् ॥ ८०५ ॥
२ नरदेवानां भगवन् ! अन्तरं कालत. कियच्चिरं भवति ?। गौतम ! जघन्येन सातिरेकं सागरोपमम्, उत्कर्षेणाऽपार्धं पुद्गलपरिवर्तं देशोनम् ।
३ भणितोऽवधेर्विषयस्तथापि तत्सग्रहं पुनर्भणति । संक्षेपरुचीनां हितमव्यामोहार्थमिष्टं च ॥ ८०६ ॥ ४ गाथा ५७७ ।
५ तत् समासतश्चतुर्विधं प्रज्ञप्तम्, तद्यथा– द्रव्यत., क्षेत्रत., कालत, भावतः ।

[1]मणपज्जवनाणाओ केवलसुद्देस-सुद्धि-लाभेहिं । पुव्वमणंतरमभिहियमहसद्दोऽयं तयत्थम्मि ॥ ८२४ ॥
सव्वदव्वाण पओग-वीससा-मीसजा जहाजोग्गं । परिणामा पज्जाया जम्म-विणासादओ सव्वे ॥८२५॥
तेसिं भावो सत्ता सलक्खणं वा विसेसओ तस्स । नाणं विण्णत्तीए कारणं केवलण्णाणं ॥ ८२६ ॥
किं बहुणा सव्वं सव्वओ सया सव्वभावओ नेयं । सव्वावरणाईयं केवलमेगं पयासेइ ॥ ८२७ ॥
पज्जायओ अणंतं सासयमिट्ठं सदोवओगाओ । अव्वयओऽपडिवाई एगविहं सव्वसुद्धीए ॥ ८२८ ॥

पञ्चापि गाथा गतार्थाः । नवरं प्रथमगाथायामुद्देशो नन्द्यादिसूत्रनिर्देशक्रमः, शुद्धिः सर्वावरणक्षयसंभवत्वेन सर्वोत्कृष्टत्वात् सर्वो-
परिवर्तिनी विशुद्धिः, अतः केवलज्ञानस्यापि तत्संभूतत्वात् सर्वोपर्येवाऽभिधानम् । लाभोऽपि केवलस्य समस्तज्ञानानां पश्चादेव भवति,
इत्यस्य पश्चादेव निर्देशः । 'अणंतरं ति' मनःपर्यायज्ञानादनन्तरमित्यर्थः । चतुर्थगाथायां 'सव्वउ त्ति' सर्वतः समन्तादिति । 'सव्वभावउ
त्ति, सर्वपर्यायतः, सर्वैः पर्यायैरुपेतं ज्ञेयमिति तात्पर्यम् । केवलं कथंभूतम् ?, इत्याह– सर्वावरणातीतं सर्वावरणक्षयसंभूतमित्यर्थः
॥ ८२४ ॥ ८२५ ॥ ८२६ ॥ ८२७ ॥ ८२८ ॥

इह समुत्पन्नकेवलज्ञानस्तीर्थकरादिः शब्देन देशनां करोति, शब्दश्च द्रव्यश्रुतम्, स च प्रायो भावश्रुताऽविनाभावी, इति तत्सं-
भवे केवलिनोऽनिष्टापत्तिः, इत्येवमव्युत्पन्नमतीनां मा भूद् मतिमोहः, इत्याह–

[2]केवलनाणेण त्थे नाउं जे तत्थ पन्नवणजोग्गे । ते भासइ तित्थयरो वइजोग सुयं हवइ सेसं ॥ ८२९ ॥

---

1 मनःपर्यवज्ञानात् केवलमुद्देश-शुद्धि-लाभैः । पूर्वमनन्तरमभिहितमथशब्दोऽयं तदर्थे ॥ ८२४ ॥
सर्वद्रव्याणां प्रयोग-विस्रसा-मिश्रजा यथायोग्यम् । परिणामाः पर्याया जन्म-विनाशादयः सर्वे ॥ ८२५ ॥
तेषां भावः सत्ता स्वलक्षणं वा विशेषतस्तस्य । ज्ञानं विज्ञप्तेः कारणं केवलज्ञानम् ॥ ८२६ ॥
किं बहुना सर्वं सर्वतः सदा सर्वभावतो ज्ञेयम् । सर्वावरणातीतं केवलमेकं प्रकाशयति ॥ ८२७ ॥
पर्यायतोऽनन्तं शाश्वतमिष्टं सदोपयोगात् । अव्ययतोऽप्रतिपाति एकविधं सर्वशुद्ध्या ॥ ८२८ ॥
2 केवलज्ञानेनाऽर्थान् ज्ञात्वा यांस्तत्र प्रज्ञापनयोग्यान् । तान् भाषते तीर्थकरो वाग्योगः श्रुतं भवति शेषम् ॥ ८२९ ॥

कथं पुनर्ज्ञायते चक्रवर्तिलब्धिर्भव्यानामेव भवति ?, इत्याह—

[1]पोग्गलपरियट्टद्धं जं नरदेवंतरं सुए भणियं । तो सो भव्वो, कालो जमयं निव्वाणभावीणं ॥८०५॥

यद् यस्माद् नरदेवाश्चक्रवर्तिनस्तेषामन्तरमपार्धपुद्गलपरावर्तलक्षणं भगवत्यामुक्तम्, यदाह– "[2]नरदेवाणं भंते ! अंतरं कालओ केचिरं होइ ? । गोयमा ! जहण्णेणं साइरेगं सागरोवमं, उक्कोसेणं अवड्ढं पोग्गलपरियट्टं देसूणं" इति । तस्मादसौ चक्रवर्ती भव्य एव भवति नाभव्यः, यदस्मादयमपार्धपुद्गलपरावर्तलक्षणोऽन्तरकालो भाविनिर्वाणपदानामेव घटते । अभव्यानां तु भवनपत्यादिभाविदेवानामुत्कृष्टतो वनस्पतिकालस्यैवाऽन्तराऽभिधानात् । किञ्च, अन्यत्रापि देवेन्द्र-चक्रवर्तित्वादिपदयोग्यकर्मणां बन्धो भव्यानामेवोक्त इति भव्य एव चक्रवर्तीति ॥ ८०५ ॥

तदेवं प्रसङ्गाऽऽयाताः शेषर्द्धीः प्रतिपाद्याऽवधिज्ञानं च समसङ्गं विस्तरतः प्ररूप्योपसंहरन् वक्ष्यमाणसंक्षेपप्ररूपणस्य प्रस्तावनां च कर्तुमाह—

[3]भणिओऽवहिणो विसओ तहावि तस्संगहं पुणो भणइ । संखेवरुईण हियं अव्वामोहत्थमिट्ठं च ॥८०६॥

भणितः प्ररूपितः '[4]ओही खेत्तपरिमाणे संठाणे' इत्यादिना सर्वेणापि पूर्वोक्तग्रन्थेनाऽवधेः स्वरूपाद्यन्वितो विषयो द्रव्य-क्षेत्रादिकः, तथा तत्संग्रहं विषयस्य संक्षेपप्ररूपणं पुनरपि भणत्यत्रान्तरे देववाचको नन्द्यध्ययनसूत्रकारः । अनेन चेदं सूचितम्– नन्द्यध्ययनसूत्रकारेण प्रथमं विस्तरतोऽवधिज्ञानं प्ररूप्य पर्यन्ते पुनरपि संक्षेपतस्तद्विषयः प्ररूपितः, तद्यथा– "[5]तं समासओ चउव्विहं पन्नत्तं, तं जहा– दव्वओ, खेत्तओ, कालओ, भावओ" इत्यादि । ननु नन्दिसूत्रकारेणापि किमिति विषयः पुनरपि प्ररूपितः, पौनरुक्त्यप्रसङ्गात् ?, इत्याशङ्क्याह– 'संखेवेत्यादि' यस्मादतिसंक्षेपरुचीनां हितमिदं संक्षेपभणनम्, अतस्तेषां हितार्थं मन्दमतीनामव्यामोहार्थं चेष्टमेतदिति ॥ ८०६ ॥

१ पुद्गलपरिवर्तार्धं यद् नरदेवाऽन्तरं श्रुते भणितम् । ततः स भव्यः, कालो यदयं निर्वाणभाविनाम् ॥ ८०५ ॥

२ नरदेवानां भगवन् ! अन्तरं कालतः कियच्चिरं भवति ?। गौतम ! जघन्येन सातिरेकं सागरोपमम्, उत्कर्षेणाऽपार्धं पुद्गलपरिवर्तं देशोनम् ।

३ भणितोऽवधेर्विषयस्तथापि तत्सग्रहं पुनर्भणति । संक्षेपरुचीनां हितमव्यामोहार्थमिष्टं च ॥ ८०६ ॥ ४ गाथा ५७७ ।

५ तत् समासतश्चतुर्विधं प्रज्ञप्तम्, तद्यथा– द्रव्यतः, क्षेत्रतः, कालतः, भावतः ।

अथ भाष्यम्—

नाऊण केवलेणं भासइ न सुएण ज सुयाईओ । पण्णवणिज्जे भासइ नाणभिलप्पे सुयाईए ॥ ८३० ॥
तत्थ वि जोग्गे भासइ नाजोग्गे गाहयाणुवित्तीए । भणिए व जम्मि सेसं सयमूहइ भणइ तम्मत्तं ॥८३१॥
वइजोगो तं न सुयं खओवसमियं सुयं जओ न तओ । विन्नाणं से खइयं सद्दो उण दव्वसुयमित्तं ॥८३२॥
सेसं छउमत्थाणं विन्नाणं सुयाणुसारेणं । तं भावसुयं भण्णइ खओवसमिओवओगाओ ॥ ८३३ ॥
भण्णंतं वा न सुयं सेसं कालं सुयं सुणेंताणं । तं चेव सुयं भण्णइ कारणकज्जोवयारेण ॥ ८३४ ॥
अहवा वइजोगसुयं सेसं सेसं ति जं गुणब्भूयं । भावसुयकारणाओ जमप्पहाणं तओ सेसं ॥ ८३५ ॥
वइजोगसुयं तेसिं ति केइ तेसिं ति भासमाणाणं । अहवा सुयकारणओ वइजोगसुयं सुणेंताणं ॥ ८३६ ॥

सप्तापि व्याख्यातार्था एव । नवरं प्रथमगाथायां यद् यस्मात् श्रुतातीतः केवलज्ञानेनैवाऽवभासितसमस्तत्रिभुवनोदरत्वात् श्रुतातिक्रान्तोऽसौ भगवान् केवली 'सुयाईए त्ति' वाग्गोचरातिक्रान्तत्वेन श्रुतातीतानर्थान् न भाषत इति । तृतीयगाथायां 'न तउ त्ति' ततः क्षयोपशमोऽस्य केवलिनो नास्तीति ॥ ८३० ॥ ८३१ ॥ ८३२ ॥ ८३३ ॥ ८३४ ॥ ८३५ ॥ ८३६ ॥

तदेवं प्रतिपादितं केवलज्ञानस्वरूपम् । अथाऽस्य गत्यादिद्वारेषु सत्पदप्ररूपणतादयो वाच्याः । तत्र गतौ तावत्— मनुष्यसिद्धयोः केवलज्ञानं प्राप्यते । इन्द्रियद्वारे— अतीन्द्रियाणाम्; कायद्वारे— त्रसकाया-ऽकाययोः; योगद्वारे— सयोगा-ऽयोगयोः; वेदद्वारे— अवेदकानाम्; कषायद्वारे— अकषायाणाम्; लेश्याद्वारे— सलेश्या-ऽलेश्ययोः; सम्यक्त्वद्वारे— सम्यग्दृष्टीनाम्; ज्ञानद्वारे—

१ ज्ञात्वा केवलेन भाषते न श्रुतेन यत् श्रुतातीतः । प्रज्ञापनीयान् भाषते नाऽनभिलाप्यान् श्रुतातीतान् ॥ ८३० ॥
तत्रापि योग्यान् भाषते नाऽयोग्यान् ग्राहकानुवृत्त्या । भणिते च यस्मिन् शेषं स्वयमूहते भणति तन्मात्रम् ॥ ८३१ ॥
वाग्योगस्तद् न श्रुतं क्षायोपशमिकं श्रुतं यतो न सकः । विज्ञानं तस्य क्षायिकं शब्दः पुनर्द्रव्यश्रुतमात्रम् ॥ ८३२ ॥
शेषं छद्मस्थानां विज्ञानं श्रुतानुसारेण । तद् भावश्रुतं भण्यते क्षायोपशमिकोपयोगात् ॥ ८३३ ॥
भण्यमानं वा न श्रुतं शेषं कालं श्रुतं शृण्वताम् । तदेव श्रुतं भण्यते कारणकार्योपचारेण ॥ ८३४ ॥
अथवा वाग्योगश्रुतं शेषं शेषमिति यद् गुणभूतम् । भावश्रुतकारणाद् यदप्रधानं ततः शेषम् ॥ ८३५ ॥
वाग्योगश्रुतं तेषामिति केचित् तेषामिति भाषमाणानाम् । अथवा श्रुतकारणतो वाग्योगश्रुतं शृण्वताम् ॥ ८३६ ॥

अथ ज्ञानपञ्चकभणनक्रमाऽऽयातस्य मनःपर्यायज्ञान[1]स्य प्रस्तावनां[2] कर्तुमाह—

[3]ओहिविभागे भणियं पि लद्धिसामण्णओ मणोनाणं। विसयाइविभागत्थं भणइ नाणक्कमायातं ॥८०९॥

प्रकटार्थैव ॥ इत्येकादशगाथार्थः ॥ ८०९ ॥

तदेवं प्रतिज्ञातं मनःपर्यायज्ञानमाह—

[4]मणपज्जवनाणं पुण जणमणपरिचिंतियत्थपागडणं। माणुसखेत्तनिबद्धं गुणपच्चइयं चरित्तवओ ॥८१०॥

मनःपर्यायज्ञानं प्राग् निरूपितशब्दार्थम्। पुनःशब्दोऽवधिज्ञानादस्य विशेषद्योतनार्थः। इदं हि रूपिद्रव्यनिबन्धनत्व-क्षायोपशमिकत्व-प्रत्यक्षत्वादिसाम्ये[5]ऽपि सत्यवधिज्ञानात् स्वाम्यादिभेदेन विशिष्टमिति। तत्र विषयमाश्रित्य स्वरूपत इदं प्रतिपादयति— जायन्त इति जनास्तेषां मनांसि जनमनांसि तैः परिचिन्तितो जनमनःपरिचिन्तितः स चासावर्थश्च तं प्रकटयति प्रकाशयति जनमनःपरिचिन्तितार्थप्रकटनम्। मानुषक्षेत्रमर्धतृतीयद्वीप-समुद्रपरिमाणं तन्निबद्धम्, न खलु तद्बहिर्भूतप्राणिमनांस्यवगच्छतीति भावः। गुणा विशिष्टर्द्धिप्राप्ति-क्षान्त्यादयस्त एव प्रत्ययाः कारणानि यस्य तद् गुणप्रत्ययम्। चारित्रमस्याऽस्तीति चारित्रवांस्तस्य चारित्रवत एवेदं भवति, तस्याऽप्यप्रमत्तर्द्धिप्राप्तत्वादिसमयोक्तविशेषविशिष्टस्यैव ॥ इति निर्युक्तिगाथार्थः ॥ ८१० ॥

अथ भाष्यं तत्र पुनःशब्दार्थं तावदाह—

[6]पुणसद्दो उ विसेसे रूविनिबंधाइतुल्लभावे वि। इदमोहिन्नाणाओ सामिविसेसाइणा भिन्नं ॥ ८११ ॥

गतार्थैव ॥ ८११ ॥

अथ कस्य तद् भवति, कियत्क्षेत्रविषयं च ?, इत्याह—

[7]तं संजयस्स सव्वप्पमायरहियस्स विविहरिद्धिमओ। समयक्खेत्त[8]ब्भिंतरसण्णिमणोगयपरिण्णाणं ॥८१२॥

---

१ घ. छ. 'नभणनस्य'। २ क ग 'नां कुर्वन्नाह'। ३ अवधिविभागे भणितमपि लब्धिसामान्यतो मनोज्ञानम्। विषयादिविभागार्थं भणति ज्ञानक्रमायातम् ॥ ८०९ ॥

४ मनःपर्यवज्ञानं पुनर्जनमनःपरिचिन्तितार्थप्रकटनम्। मनुष्यक्षेत्रनिबद्धं गुणप्रत्ययितं चारित्रवतः ॥ ८१० ॥ ५ क. ग. 'सामान्येऽपि'।

६ पुनःशब्दस्तु विशेषे रूपिनिबन्धादितुल्यभावेऽपि। इदमवधिज्ञानात् स्वामिविशेषादिना भिन्नम् ॥ ८११ ॥

७ तत् संयतस्य सर्वप्रमादरहितस्य विविधर्द्धिमतः। समयक्षेत्राभ्यन्तरसंज्ञिमनोगतपरिज्ञानम् ॥ ८१२ ॥ ८ क. ख. ग. 'तब्भंत'।

न सामान्यम्; अतो ज्ञानरूपमेवेदम्, न पुनरिह दर्शनमस्ति, सति च तस्मिन् पश्यतीत्युपपद्यते, इति कथमिहोक्तं 'पासइ' इति ?, इति चेतसि संप्रधार्य प्राह–

[1]सो य किर अचक्खुदंसणेण पासइ जहा सुयन्नाणी । जुत्तं सुए परोक्खे पच्चक्खे न उ मणोनाणे ? ॥८१५॥

स च मनःपर्यायज्ञानी किलाऽचक्षुर्दर्शनेन पश्यति, यथा श्रुतज्ञानी केषांचिद् मतेनाऽचक्षुर्दर्शनेन पश्यतीति प्रागुक्तम् । तथा च पूर्वमभिहितम्–

'[2]उवउत्तो सुयनाणी सव्वं दव्वाइं जाणइ जहत्थं । पासइ य केइ सो पुण तमचक्खुदंसणेणं ति' ॥ १ ॥

इत्यादि । इदमत्र हृदयम्– परस्य घटादिकमर्थं चिन्तयतः साक्षादेव मनःपर्यायज्ञानी मनोद्रव्याणि तावज्जानाति, तान्येव च मानसेनाऽचक्षुर्दर्शनेन विकल्पयति; अतस्तदपेक्षया 'पश्यति' इतीत्युच्यते । ततश्चैकस्यैव मनःपर्यायज्ञानिनः प्रमातुर्मनःपर्यायज्ञानादनन्तरमेव मानसमचक्षुर्दर्शनमुत्पद्यते, इत्यसावेक एव प्रमाता मनःपर्यायज्ञानेन मनोद्रव्याणि जानाति, तान्येव चाऽचक्षुर्दर्शनेन पश्यतीत्यभिधीयत इति ।

अत्र कश्चित् प्रेरकः प्राह– 'जुत्तमित्यादि' "मति-श्रुते परोक्षम्" इति वचनात् परोक्षार्थविषयं श्रुतज्ञानम्, अचक्षुर्दर्शनमपि मतिभेदत्वात् परोक्षार्थविषयमेव; इत्यतो युक्तं घटमानकं श्रुतज्ञानविषयभूते मेरु-स्वर्गादिके परोक्षेऽर्थेऽचक्षुर्दर्शनम्, तस्यापि तदालम्बनत्वेन समानविषयत्वात् । किं पुनस्तर्हि न युक्तम् ?, इत्याह– 'न उ इत्यादि' "अवधि-मनःपर्याय-केवलानि प्रत्यक्षम्" इति वचनात् पुनः प्रत्यक्षार्थविषयं मनःपर्यायज्ञानम् । अतः परोक्षार्थविषयस्याऽचक्षुर्दर्शनस्य कथं तत्र प्रवृत्तिरभ्युपगम्यते, भिन्नविषयत्वात् ? ॥८१५॥

अत्र सूरिराह–

[3]जइ जुज्जए परोक्खे पच्चक्खे नणु विसेसओ[4] घडइ । नाणं जइ पच्चक्खं न दंसणं तस्स को दोसो ? ॥८१६॥

यदि परोक्षेऽर्थेऽचक्षुर्दर्शनस्य प्रवृत्तिरभ्युपगम्यते, तर्हि प्रत्यक्षे सुतरामस्येयमङ्गीकर्तव्या, विशेषेण तस्य तदनुग्राहकत्वात्, चक्षुःप्रत्यक्षोपलब्धघटादिवदिति । अत्राह– को वै न मन्यते, यत् प्रत्यक्षोऽर्थः सुतरामचक्षुर्दर्शनस्याऽनुग्राहक इति ?; केवलं प्रत्यक्षमनो-

१ स च किलाचक्षुर्दर्शनेन पश्यति यथा श्रुतज्ञानी । युक्त श्रुते परोक्षे प्रत्यक्षे न तु मनोज्ञाने ॥ ८१५ ॥ २ गाथा ५५३ ।
३ यदि युज्यते परोक्षे प्रत्यक्षे ननु विशेषतो घटते । ज्ञानं यदि प्रत्यक्ष न दर्शनं तस्य को दोष. ? ॥ ८१६ ॥ ४ क. 'ओ मुणइ' ।

प्रदीप इव श्रुतज्ञानमेव यस्मात् स्व-परस्वरूपप्रकाशकम्, न शेषज्ञानानि । न हि श्रुतज्ञानं विहाय स्वकीयं स्वरूपं, शेषज्ञानचतुष्टयस्वरूपं चाऽन्यज्ज्ञानं परस्य प्रकाशयितुं शक्नोति । अनुयोगोऽपि परप्रबोधनायैव प्रवर्तते । अतः परप्रबोधकत्वेनाऽऽसन्नत्वात् तस्यैव श्रुतस्याऽनुयोगः परप्रबोधनार्थमारभ्यते, न शेषज्ञानानामिति ॥ ८३८ ॥ ८३९ ॥

अथ प्रेर्यमुत्थाप्य परिहरन्नाह–

सोऽहिगओ[1] च्चिय आवस्सयस्स कयरस्स किं त्थ चिंताए । तं च्चिय सुयं ति साहइ सुयाणुयोगाभिहाणेण ॥८४०॥

आह– ननु 'कयप्पवयणप्पणामो' इत्यादौ[2] 'आवस्सयाणुओगं' इत्यनेनाऽसावावश्यकानुयोगोऽधिकृत एवाऽऽस्ते, किमत्र 'सो[3] मइनाणाईणं कयरस्स' इत्यनया चिन्तया कार्यम् ?– न किञ्चिदित्यर्थः । अत्रोत्तरमाह– इह श्रुतज्ञानस्यानुयोग इत्यभिधानेन तदेवावश्यकं श्रुतविशेष एव, नापरं किञ्चिद् घटादिवस्तु, इति साधयति कथयति । अतो नन्यादिषु यदुक्तम्– 'आवश्यकस्याऽनुयोगं वक्ष्यामि' इति, तत् 'श्रुतविशेषरूपस्यैवैतस्य' इत्यावेदितं भवतीति ॥ ८४० ॥

आह– यद्येवम्, 'अनुयोगः' इति कः शब्दार्थः ?, इत्याह–

अणुवयणमणुओगो[4] सुयस्स नियएण जमभिहेएणं । वावारो वा जोगो जोऽणुरूवोऽणुकूलो वा ॥ ८४१ ॥

अहवा जमत्थओ थोव-पच्छभावेहिं सुयमणु तस्स । अभिहिए वावारो जोगो तेणं व संबंधो ॥ ८४२ ॥

यत् सूत्रस्य निजेनाभिधेयेनाऽनुयोजनमनुसंबन्धनमसावनुयोग इत्यर्थः । अथवा, योऽनुरूपोऽनुकूलो वा घटमानः संबध्यमानो व्यापारः प्रतिपादनलक्षणः सूत्रस्य निजार्थविषयेऽयमनुयोगः । अथवा, यद् यस्मादर्थतोऽर्थात् सकाशादणु सूक्ष्मं लघु सूत्रम्, काभ्याम् ?, इत्याह– स्तोक-पश्चाद्भावाभ्यां– एकस्यापि सूत्रस्यानन्तोऽर्थ इत्यर्थात् स्तोकत्वात्, तथा, प्रथममुत्पाद-व्यय-ध्रौव्यलक्षणं तीर्थकरोक्तमर्थं चेतसि व्यवस्थाप्य पश्चादेव सूत्रं रचयन्ति गणधराः, इत्येवमर्थात् पश्चाद्भावाच्च सूत्रमणु एवेति भावः, तस्मात् तस्याऽणोः सूत्रस्य यः स्वकीयाभिधेये योगो व्यापारः, तेन वाऽणुना सूत्रेण सह यः संबन्धो योगोऽसावनुयोग इति ॥ ८४१ ॥ ८४२ ॥

---

१ सोऽधिकृत एवावश्यकस्य कतरस्य किमत्र चिन्तया ? । तदेव श्रुतमिति कथयति श्रुतानुयोगाभिधानेन ॥ ८४० ॥ २ गाथा १ । ३ गाथा ८३८ ।
४ अनुवचनमनुयोग. श्रुतस्य नियतेन यदभिधेयेन । व्यापारो वा योगो योऽनुरूपोऽनुकूलो वा ॥ ८४१ ॥
अथवा यदर्थतः स्तोक-पश्चाद्भावाभ्यां श्रुतमणु तस्य । अभिहिते व्यापारो योगस्तेन वा संबन्धः ॥ ८४२ ॥

तं जहा– चक्खुदंसणे, अचक्खुदंसणे, ओहिदंसणे, केवलदंसणे" इति । तस्मात् पञ्चमस्य मनःपर्यायदर्शनस्याऽनुक्तत्वात् 'तेन पश्यति' इत्येतदपि नोपपद्यत इति ॥ ८१७ ॥

अभिप्रायान्तरमाशङ्कमान आह–

[1]अहवा मणपज्जवदंसणस्स मयमोहिदंसणं सण्णा । विब्भंगदंसणस्स व नणु भणियमिदं सुयाईयं ॥ ८१८ ॥

अथवा कश्चिदेवं मन्येत– यथा विभङ्गदर्शनमवधिदर्शनमेवोच्यते, तथा मनःपर्यायदर्शनस्याऽप्यवधिदर्शनमिति संज्ञाऽभिमता भविष्यति । इदमुक्तं भवति– चक्षुरादिदर्शनचतुष्टयाऽऽधिक्येनाऽनुक्तमपि यथाऽवधिदर्शनेऽन्तर्भूतं विभङ्गदर्शनमिष्यते, तथा मनःपर्यायदर्शनमपि भविष्यति । ततः 'तेन मनःपर्यायज्ञानी पश्यति' इत्युपपत्स्यत एवेति । अत्र सूरिराह– नन्वेतत् श्रुतातीतमागमाविरुद्धमेव त्वया भणितम् ॥ ८१८ ॥

कुतः ?, इत्याह—

[3]जेण मणोनाणविओ दो [4]तिण्णि व दंसणाइं भणियाइं । जइ ओहिदंसणं होज्ज, होज्ज नियमेण तो [5]तिण्णि॥८१९॥

यस्माद् भगवत्यामाशीविषोद्देशके मनःपर्यायज्ञाने चक्षु-रचक्षुर्दर्शनलक्षणे द्वे दर्शने, चक्षु-रचक्षु-रवधिदर्शनलक्षणानि त्रीणि वा दर्शनानि प्रोक्तानि– यो मति-श्रुत-मनःपर्यायज्ञानत्रितयवांस्तस्य द्वे दर्शने, यस्तु मति-श्रुता-ऽवधि-मनःपर्यायज्ञानचतुष्टयवांस्तस्य त्रीणि दर्शनानीति भावः । तस्मादुत्सूत्रं मनःपर्यायज्ञानवतोऽवधिदर्शनसंज्ञितदर्शनाभिधानम् । यदि पुनरित्थं स्यात्, तदा मति-श्रुत-मनःपर्यायज्ञानत्रयवतोऽपि दर्शनानि नियमात् त्रीण्येव स्युः, न तु क्वापि द्वे, तस्मात् श्रुतातीतमिदमिति ॥ ८१९ ॥

अन्ये त्वाहुः । किम् ?, इत्याह—

[6]अन्ने उ मणोनाणी जाणइ पासइ य जोऽवहिसमग्गो । इयरो य जाणइ च्चिय संभवमेत्तं सुएऽभिहियं ॥८२०॥

अन्ये तु मन्यन्ते– योऽवधिज्ञानयुक्तो मनःपर्यायज्ञानी चतुर्ज्ञानीत्यर्थः, असौ मनःपर्यायज्ञानेन जानाति, अवधिदर्शनेन तु

---

१ अथवा मनःपर्यवदर्शनस्य मतमवधिदर्शनं संज्ञा । विभङ्गदर्शनस्येव ननु भणितमिद श्रुतातीतम् ॥ ८१८ ॥ २ क. ग 'मन्यते य' ।
३ येन मनोज्ञानविदो द्वे त्रीणि वा दर्शनानि भणितानि । यद्यवधिदर्शनं भवेत्, भवेयुर्नियमेन ततस्त्रीणि ॥ ८१९ ॥ ४ क ख ग 'तिन्नि व । ५क ग. ङ 'तिन्नि'।
६ अन्ये तु मनोज्ञानी जानाति पश्यति च योऽवधिसहितः । इतरश्च जानात्येव संभवमात्रं श्रुतेऽभिहितम् ॥ ८२० ॥

ज्ञानपञ्चकाभिधानमात्रमेव शास्त्रादौ मङ्गलमिष्टं, न तु तस्या नन्द्याः सर्वस्या अपि शास्त्ररूपाया इहाऽस्थाने व्याख्यानं युज्यते; यथा हि पथि प्रस्थितैर्मङ्गलभूतदधि-दूर्वा-ऽक्षतादिवस्तूनामभिधान-दर्शनादीन्येव मङ्गलतया गृह्यन्ते, न तु तद्भक्षण-तद्गुणश्रवणादीन्यपि क्रियन्ते; तथेहापि ज्ञानोत्कीर्तनमात्रमेव मङ्गलं युज्यते, न तु नन्दिव्याख्यानम्, इह तस्याऽस्थानत्वात्। न ह्यावश्यकशास्त्रारम्भे शास्त्रान्तरभूताया नन्द्या व्याख्यानं युज्यते, अतिप्रसङ्गात्। न च वक्तव्यम्– सर्वशास्त्रान्तर्भूतैव नन्दी, यद् यस्मात् सा विष्वक् पृथगेव श्रुतस्कन्धतया सिद्धान्ते प्रसिद्धा, श्रुतस्कन्धत्वं चास्याः पद-वाक्यसमूहात्मकत्वेनैव द्रष्टव्यम्, न त्वध्ययनकलापात्मकं परिभाषितम्, एकाध्ययनरूपत्वेन रूढत्वादिति ॥ ८४५ ॥

ननु यदि नन्दिव्याख्यानस्याऽस्थानमिदम्, तर्हि किमितीत्थमादावेव भवद्भिर्ज्ञानपञ्चकं विस्तरेण व्याख्यातम्? इति पौर्वापर्येण स्ववचनविरोधः, इत्याशङ्क्याह—

इह साणुग्गहमुइयं न उ नियमोऽयमहवाऽपवादोऽयं। दाइज्जइ कहणाए कयाइ पुरिसादवेक्खाए ॥८४६॥

इहावश्यकारम्भे यद्विस्तरेण ज्ञानपञ्चकस्यादौ व्याख्यानम्, तत्सानुग्रहं शिष्यानुग्रहमास्थायोदितमस्माभिर्न पुनरयं नियम एव, ज्ञानोत्कीर्तनमात्रस्यैव नियमेन मङ्गलतयाऽभीष्टत्वात्। अथवा, कथनायाः कथनविधेरपवादोऽयं दर्श्यते, यथेह पुरुषाद्यपेक्षया कदाचिदुत्क्रमेणापि शास्त्राणि व्याख्यायन्ते– अन्यारम्भेऽन्यद् व्याख्यायत इति ॥ ८४६ ॥

तस्मादावश्यकश्रुतस्कन्धस्याऽनुयोग इति स्थिते किमिदानीं कर्तव्यम्?, इत्याह—

आवस्सयसुयखंधो नामं सत्थस्स तस्स जे भेया। ताइं अज्झयणाइं नासो आवस्सयाईणं ॥ ८४७ ॥

कज्जो पिह प्पिहाणं जहत्थमजहत्थमत्थसुण्णं ति। नामे चेव परिच्छा गज्झं जइ होहिइ जहत्थं ॥८४८॥

इह प्रस्तुतशास्त्रस्याऽऽवश्यकश्रुतस्कन्ध इति नाम। तस्य चावश्यकस्य ये सामायिकादयः षड् भेदास्तान्यध्ययनान्यभिधीयन्ते।

१ घ.छ 'कं पारि'। २ घ छ 'कसेवाध्य'। ३ इह सानुग्रहमुदित न तु नियमोऽयमथवाऽपवादोऽयम्। दर्श्यते कथनाया कदाचित् पुरुषाद्यपेक्षया ॥ ८४६ ॥
४ क. 'दविक्खा'। ५ आवश्यकश्रुतस्कन्धो नाम शास्त्रस्य तस्य ये भेदाः। तान्यध्ययनानि न्यास आवश्यकादीनाम् ॥ ८४७ ॥
कार्यः पृथक् पृथग् यथार्थमयथार्थमर्थशून्यमिति। नाम्नैव परीक्षा ग्राह्यं यदि भवेद् यथार्थम् ॥ ८४८ ॥

पश्यत्ता प्रोक्ता, तयैवासौ 'मनःपर्यायज्ञानी पश्यति' इति व्यपदिश्यते । तत् केन किल हेतुनाऽभिप्रायान्तरवादिनां संदेहोऽत्र, येनाऽपराऽपरान् निजनिजाभिप्रायानत्र प्रकटयन्ति ?, तस्यैव प्रकारस्याऽऽगमोक्तत्वेन निर्दोषत्वादिति भावः ।

प्रक्षेपगाथा चेयं लक्ष्यते, चिरन्तनटीकाद्वयेऽप्यगृहीतत्वात्, केषुचिद् भाष्यपुस्तकेष्वदर्शनाच्च; केवलं केषुचिद् भाष्यपुस्तकेषु दर्शनात्, किञ्चित्साभिप्रायत्वाच्चाऽस्माभिर्गृहीता ॥ इति द्वादशगाथार्थः ॥ सत्पदप्ररूपणतादयोऽस्याऽप्यवधिवद् वाच्याः, केवलमप्रमत्तसंयतोऽस्योत्पादस्वामी, तदनुसारेण सर्वत्र नानात्वं स्वयमभ्यूह्यम् ॥ ८२२ ॥

॥ मनःपर्यायज्ञानं समाप्तमिति ॥

अथ ज्ञानपञ्चकभणनक्रमायातं केवलज्ञानमुच्यते—

अह सव्वदव्वपरिणामभावविन्नत्तिकारणमणंतं । सासयमप्पडिवाई एगविहं केवलन्नाणं ॥ ८२३ ॥

इह नन्द्यादिसूत्रनिर्देशक्रमात्, तथा शुद्धितः, लाभतश्च पूर्वं 'आभिणिबोहियनाणं' इत्यादिगाथायां मनःपर्यायज्ञानादनन्तरं केवलज्ञानमुपन्यस्तम्, अतस्तदर्थसूचकोऽयमथशब्दः । अथाऽनन्तरं केवलज्ञानमुच्यते । कथंभूतम् ?, इत्याह– सर्वाणि च तानि द्रव्याणि च सर्वद्रव्याणि जीवादीनि तेषां परिणमनानि परिणामाः प्रयोग-विस्रसोभयजन्या उत्पादादयः सर्वद्रव्यपरिणामास्तेषां भावः सत्ता स्वलक्षणं वा तस्य विविधं विशेषेण वा ज्ञपनं बोधनं विज्ञप्तिः, अथवा, विविधविशेषेण वा ज्ञानमवबोधः परिच्छित्तिर्विज्ञप्तिः, तस्याः केवलज्ञानाभेदेऽपि विवक्षितभेदायाः कारणं हेतुर्विज्ञप्तिकारणं सर्वद्रव्य-क्षेत्र-काल-भावाऽस्तित्वपरिच्छेदकमित्यर्थः । तच्चानन्तज्ञेयविषयत्वेनाऽनन्तपर्यायत्वादनन्तम्; शश्वद्भावात् शाश्वतं सततोपयोगमित्यर्थः; तथा, अप्रतिपाति– अव्ययं सदाऽवस्थायीत्यर्थः; समस्तावरणक्षयसंभूतत्वादेकविधं भेदविप्रमुक्तम्; केवलं परिपूर्णसमस्तज्ञेयावगमात्, मत्यादिज्ञाननिरपेक्षत्वादसहायं वा केवलं, तच्च तज्ज्ञानं च केवलज्ञानम् ॥ इति निर्युक्तिगाथार्थः ॥ ८२३ ॥

अथ भाष्यम्—

१ अथ सर्वद्रव्यपरिणामभावविज्ञप्तिकारणमनन्तम्। शाश्वतमप्रतिपाति एकविधं केवलज्ञानम् ॥ ८२३ ॥   २ गाथा ७९ ।

[1]न विहीणक्खरमहियक्खरं च वोच्चत्थरयणमाल व्व । वाइद्धक्खरमे[2]यं वच्चासियवण्णविण्णासं ॥ ८५३ ॥
न क्खलियमुवलहलं पि[3]व अमिलियमसरूवधण्णमेलो व्व । वोच्चत्थगंधमहवा अमिलियपय-वक्कविच्छेयं ॥८५४॥
न य विविहसत्थपल्लवविमिस्समट्ठाणच्छिन्नगहियं वा । विच्चामेलिय कोलियपायसमिव भेरिकंथ व्व ॥८५५॥
मत्ताइनिययमाणं पडिप्पुण्णं छंदसाऽहवत्थेणं । नाकंखाइसदोसं पुण्णमुदत्ताइघोसेहिं ॥ ८५६ ॥
कंठो-ट्ठविप्पमुक्कं नाव्वत्तं बाल-मूयभणियं व । गुरुवायणोवयातं न चोरियं पोत्थयाओ वा ॥ ८५७ ॥

इहाऽनुयोगद्वारेषूक्तम्– "[4]से किं तं आगमओ दव्वावस्सयं आवस्सयं ? । जस्स णं आवस्सयं ति पयं सिक्खियं, ठियं, जियं, मियं, परिजियं, नामसमं, घोससमं, अहीणक्खरं, अणच्चक्खरं, अव्वाइद्धक्खरं, अक्खलियं, अमिलियं, अविच्चामेलियं, पडिपुण्णं, पडिपुण्णघोसं, कंठो-ट्ठविप्पमुक्कं, गुरुवायणोवगयं; से यं तत्थ वायणाए, पुच्छणाए, परियट्टणाए, धम्मकहाए, ( 'वर्तते' इत्यध्याहारः ) नो अणुपेहाए (इहाऽपि 'वर्तते' इति शेषः)" इदं च सूत्रं 'आगमओ दव्वावासयं' इत्यादिमागुक्तगाथया प्रायो व्याख्यातम् । शिक्षितादीनि पदानि त्विदानीं व्याख्यायन्ते– तत्र शिक्षितमिति कोऽर्थः– अन्तं नीतं, सर्वमधीतमिति । स्थितम्– हृदि व्यवस्थितमप्रच्युतमित्यर्थः । जितम्– द्रुतमागच्छति । वर्णादिभिः संख्यातं मितम् । यदुत्क्रमेणाऽप्येति– आगच्छति, तत् सर्वतो जितं परिजितम् । स्वकीयेन नाम्ना समं नामसमम्, यथा स्वनाम शिक्षितम्, तथा तदप्यावश्यकम्; तथा यथैव स्वनाम स्थितादिविशेषणविशिष्टं घटते स्थितं, जितं, मितं,

---

१ न विहीनाक्षरमधिकाक्षरं च व्यत्यस्तरत्नमालेव । व्याविद्धाक्षरमेतद् व्यत्यासितवर्णविन्यासम् ॥ ८५३ ॥
न स्खलितमुपललेहलमिव अमिलितमसरूपधान्यमेल इव । व्यत्यस्तग्रन्थमथवाऽमिलितपद-वाक्यविच्छेदम् ॥ ८५४ ॥
न च विविधशास्त्रपल्लवविमिश्रमस्थानच्छिन्नगृहीतं वा । व्यत्याम्रेडित कोलिकपायसमिव भेरीकन्थेव ॥ ८५५ ॥
मात्रादिनियतमानं परिपूर्णं छन्दसाऽथवाऽर्थेन । नाऽऽकाङ्क्षादिसदोष पूर्णमुदात्तादिघोषैः ॥ ८५६ ॥
कण्ठौ-ष्ठविप्रमुक्त नाव्यक्तं बाल-मूकभणितमिव । गुरुवाचनोपयातं न चोरितं पुस्तकाद् वा ॥ ८५७ ॥ २ घ छ 'मेवं व' । ३ घ छ 'व न मि' ।
४ अथ किं तदागमतो द्रव्यावश्यकमावश्यकम् ? । यस्य 'आवश्यकम्' इति पद शिक्षितम्, स्थितम्, जितम्, मितम्, परिजितम्, नामसमम्, घोषसमम्, अहीनाक्षरम्, अनत्यक्षरम्, अव्याविद्धाक्षरम्, अस्खलितम्, अमिलितम्, अव्यत्याम्रेडितम्, परिपूर्णम्, परिपूर्णघोषम्, कण्ठौ-ष्ठविप्रमुक्तम्, गुरुवाचनोपगतम्, तदिदं तत्र वाचनायाम्, पृच्छायाम्, परिवर्तनायाम्, धर्मकथायाम्; नो अनुप्रेक्षायाम् । ५ गाथा ८५० ।

इह समुत्पन्नकेवलज्ञानस्तीर्थकरादिरर्थान् धर्मास्तिकायादीन् मूर्ता-ऽमूर्ता-ऽभिलाप्या-ऽनभिलाप्यान् केवलज्ञानेनैव ज्ञात्वाऽवबुध्य, न तु श्रुतज्ञानेन, तस्य क्षायोपशमिकत्वात्, केवलिनश्चाऽऽवरणस्य सर्वथा क्षीणत्वेन तत्क्षयोपशमाभावात्; न हि सर्वशुद्धे पटे देशशुद्धिः संभवति, तद्वदिहापीति भावः; ततः किम् ?, इत्याह– तत्र तेषामर्थानां मध्ये ये प्रज्ञापनीयाः प्ररूपणीया योग्यास्तानभिलप्यान् भाषते, नेतरान्– अनभिलप्यान् । प्रज्ञापनीयानपि न सर्वानेव भाषते, तेषामनन्तत्वात्, आयुषस्तु परिमितत्वात् । किं तर्हि ?, योग्यानेव भाषते ग्रहीतृशक्त्यपेक्षया, यो हि यावतां योग्य इति । यत्र चाभिहिते शेषमनुक्तमपि विनेयोऽभ्यूहति तदपि योग्यं भाषते; यथा ऋषभसेनादीनामुत्पादादिपदत्रयोपन्यासेनैव शेषगतिः । तत्र केवलज्ञानोपलब्धार्थाभिधायकः शब्दराशिर्भाष्यमाणस्तस्य भगवतो 'वइजोग त्ति' वाग्योग एव भवति, न तु श्रुतम्, नामकर्मोदयजन्यत्वात्, श्रुतस्य च क्षायोपशमिकत्वात्, ज्ञानमप्यस्य क्षायिकत्वात् केवलमेव, न भावश्रुतम् ।

आह– ननु वाग्योगः, वाक्परिष्यन्दः, वाग्वीर्यम्, इत्यनर्थान्तरम् । अयं च भवतु नामकर्मोदयजन्यः, भाष्यमाणस्तु पुद्गलात्मकः शब्दः किं भवतु ?, इति चेत् । उच्यते– सोऽपि श्रोतृणां भावश्रुतकारणत्वाद् द्रव्यश्रुतमात्रं भवति, न तु भावश्रुतम् । तर्हि किं तद् भावश्रुतम् ?, इत्याह– 'सुयं हवइ सेसं ति' यच्छद्मस्थानां गणधरादीनां श्रुतग्रन्थानुसारि ज्ञानं तदेव केवलगतज्ञानापेक्षया शेषमन्यद् भावश्रुतं भवति, क्षायोपशमिकोपयोगात्, न तु केवलिगतम्, तस्य क्षायिकत्वादिति ।

अथवा 'सुयं हवइ सेसं' इत्यन्यथा व्याख्यायते– तद् भण्यमानं शब्दमात्रं तत्काल एव श्रुतं न भवति, किं तर्हि ?, शेषं 'कालम्' इति वाक्यशेषः । इदमुक्तं भवति– तत् केवलिनः शब्दमात्रं श्रोतृणां श्रवणानन्तरलक्षणे शेषकाले श्रोतृगतज्ञानकारणत्वेनोपचारात् श्रुतं भवति, न तु भणनक्रियाकाल इति । अथवा, अन्यथा व्याख्यायते– स केवलिनः संबन्धी वाग्योगः श्रुतं भवति । कथंभूतम् ?, शेषं– गुणभूतम्– प्रधानम्, औपचारिकत्वादिति । अन्ये तु पठन्ति– 'वइजोगसुयं हवइ तेसिं ति' । तत्र तेषां भाषमाणानां संबन्धी वाग्योगः श्रोतृगतश्रुतकारणत्वात् श्रुतं भवति, द्रव्यश्रुतमित्यर्थः । अथवा, तेषामिति श्रोतृणां तानाश्रित्येत्यर्थः, भाषकगतं वाग्योग एव श्रुतं वाग्योगश्रुतं भवति, भावश्रुतकारणत्वाद् द्रव्यश्रुतमेवेत्यर्थः अथवा, तानर्थान् भाषते केवली, वाग्योगश्चाऽयमस्य भाषमाणस्य भवति, तेषां श्रोतृणां भावश्रुतकारणत्वात् श्रुतमसौ भवति ॥ इति निर्युक्तिगाथार्थः ॥ ८२९ ॥

नन्वागमतोऽनुपयुक्तो वक्ता द्रव्यावश्यकम्, इत्येतावतैव सिद्धमागमतो द्रव्यावश्यकम्, 'किं शिक्षितम्, स्थितम्, जितम्' इत्याद्यावश्यकश्रुतगुणविशेषणैरिहाभ्यधिकं फलम् ? इति ॥ ८५८ ॥

अत्रोत्तरमाह—

[1]जह सव्वदोसरहियं पि निगदओ सुत्तमणुवउत्तस्स । दव्वसुयं, दव्वावासयं च तह सव्वकिरियाओ ॥८५९॥

उवउत्तस्स उ क्खलियाइयं पि सुद्धस्स भावओ सुत्तं । साहइ तह किरियाओ सव्वाओ निज्जरफलाओ ॥८६०॥

इह शिक्षितादिविशेषणकलापं कुर्वन्नाचार्य इति साधयति– एतत् कथयति, इति द्वितीयगाथायां क्रिया । किं साधयति ?, इत्याह– यथा शिक्षितादिगुणोपेतत्वात् सर्वदोषरहितमपि सूत्रमनुपयुक्तस्य निगदतो द्रव्यश्रुतम्, वक्ष्यमाणद्रव्यावश्यकं चोक्तस्वरूपं भवति, तथा, प्रत्युपेक्षण-प्रमार्जने-यादि क्रिया अपि सर्वा अनुपयुक्तस्य कुर्वतोऽन्तःप्रणिधानशून्यत्वाद् द्रव्यक्रियास्तत्फलविकला भवन्ति, 'तथा–तथैव' सामर्थ्यादिदं लभ्यते, उपयुक्तस्य त्वन्तःप्रणिधानयुक्तस्य करणाऽवैफल्यादिकारणात् कथमपि स्खलितादिदोषदुष्टमपि सूत्रं निगदतो भावतः शुद्धस्य तस्य भावसूत्रमेव भवति ; तथा, सर्वा अपि प्रत्युपेक्षणादिक्रिया उपयुक्तस्य कुर्वतः कर्मनिर्जराफला एव भवन्ति । अतः सर्वेष्वपि भगवदुक्तानुष्ठानेष्वन्तःप्रणिधानेऽतिप्रयत्नः कार्य इति ॥ ८५९ ॥ ८६० ॥

इह चाधिक-हीनाक्षरश्रुतपाठेऽपायदर्शनार्थमुदाहरणान्याह—

[2]अहिए कुणाल-कविणो हीणे विज्जाहराइदिट्ठंता । बाला-उरातिभोयण-भेसज्जविवज्जआ उभए ॥ ८६१ ॥

अक्षर-बिन्द्वाद्यधिकसूत्रपाठे कुणालनामा राजपुत्रः, कपिश्च वानर उदाहरणम् । हीनाक्षरपाठे तु विद्याधरादयः । अधिक-हीनाक्षरलक्षणे तूभये बाला-ऽऽतुरयोरतिभोजन-भेषजविपर्ययौ बाला-ऽऽतुरातिभोजन-भेषजविपर्ययौ, इति समासः– अतिमात्रं हीनमात्रं च भोजनं यथा बालस्य, भेषजं तु तथाभूतं यथाऽऽतुरस्य दोषाय, तथा सूत्रमपीति भावः ॥ ८६१ ॥

---

१ यथा सर्वदोषरहितमपि निगदतः सूत्रमनुपयुक्तस्य । द्रव्यश्रुतं द्रव्यावासकं च तथा सर्वक्रिया· ॥ ८५९ ॥
उपयुक्तस्य तु स्खलितादिकमपि शुद्धस्य भावत· सूत्रम् । कथयति तथा क्रियाः सर्वा निर्जराफला· ॥ ८६० ॥

२ अधिके कुणाल-कपी हीने विद्याधरादिदृष्टान्ताः । बाला-ऽऽतुरातिभोजन-भैषज्यविपर्ययावुभयस्मिन् ॥ ८६१ ॥

केवलज्ञानिनाम् ; दर्शनद्वारे– केवलदर्शनिनाम् ; संयतद्वारे– संयतानाम् नोसंयता-ऽसंयतानां च; उपयोगद्वारे– साकारा-ऽनाकारोपयोगयोः; आहारकद्वारे– आहारका-ऽनाहारकयोः; भाषकद्वारे– भाषका-ऽभाषकयोः; परीत्तद्वारे– परीत्तानां, नोपरीत्ता-ऽपरीत्तानां च; पर्याप्तद्वारे– पर्याप्तानां नोपर्याप्ता-ऽपर्याप्तानां च; सूक्ष्मद्वारे– बादराणां, नोबादर-सूक्ष्माणां च; संज्ञिद्वारे– नोसंज्ञ्य-ऽसंज्ञिनाम् ; भव्यद्वारे– भव्यानां, नोभव्या-ऽभव्यानां च। चरमद्वारे- चरमाणां भवस्थकेवलिनां, नोचरमा-ऽचरमाणां च सिद्धानां केवलज्ञानं प्राप्यते। पूर्वप्रतिपन्न-प्रतिपद्यमानकयोजना तु स्वबुद्ध्या कर्तव्येति। द्रव्यप्रमाणद्वारे– प्रतिपद्यमानकानाश्रित्योत्कृष्टतोऽष्टोत्तरशतं केवलिनां प्राप्यते, पूर्वप्रतिपन्नास्तु जघन्यत उत्कृष्टतश्च कोटिपृथक्त्वप्रमाणा भवस्थकेवलिनः प्राप्यन्ते, सिद्धास्त्वनन्ताः। क्षेत्र-स्पर्शनाद्वारयोस्तु जघन्यतो लोकस्याऽसंख्येयभागे केवली लभ्यते, उत्कृष्टतस्तु सर्वलोके। कालद्वारे– साद्यपर्यवसितं कालं सर्वोऽपि केवली भवति। अन्तरं तु केवलज्ञानस्य नास्ति, उत्पन्नस्य प्रतिपाताऽभावात्। भागद्वारं मतिज्ञानवदिति। भावद्वारे– क्षायिके भावे केवलमवाप्यते। अल्प-बहुत्वद्वारे मतिज्ञानवद् वाच्यमिति ॥

तदेवं केवलज्ञानं समाप्तम्।

## ॥ तत्समाप्तौ च ज्ञानपञ्चकं समाप्तमिति ॥

अस्यायं भावार्थः— पाटलीपुत्रनगरे चाणक्यप्रतिष्ठितो मौर्यः प्रथमं किल चन्द्रगुप्तो राजा बभूव । ततस्तत्पुत्रो विन्दुसारः समभूत् । तदनन्तरं तु तत्पुत्रोऽशोकश्रीर्जातः । तस्य चान्धोऽसौ कुणालः पुत्रः । एवं च सत्येष चन्द्रगुप्तस्य प्रपौत्रः, विन्दुसारस्य तु नप्तृकः पौत्रः, अशोकश्रीभूपतेस्तु पुत्रः, 'काकणिं' क्षत्रियभाषया राज्यं याचत इति । ततो यवनिकापगमं कारयित्वा किञ्चित् सकौतुकेन राज्ञा सविशेषं पृष्टः सर्वमपि स्वव्यतिकरं कुणालः कथयामास । ततः पृथिवीपतिना पृष्टोऽन्धः— त्वं राज्येन किं करिष्यसि ?। तेन प्रोक्तम्— देव ! मम राज्यार्हः पुत्र उत्पन्नो वर्तते । राज्ञा प्रोक्तम्— कदा ? । कुणालः प्राह— संप्रति । तत् 'संप्रतिः' इत्येव तस्य नाम प्रतिष्ठितम् । राज्यं च तस्मै प्रदत्तमिति । तदेवं यथेहाऽकारस्योपर्येकेनाप्यधिकेन विन्दुना कुमारस्य नेत्राऽपायो जातः, तथा प्रस्तुतेऽपि सूत्रे विन्द्वाद्याधिक्यादर्थान्तरप्राप्त्या सर्वानर्थसंभव इति संभावनीयमिति ॥ ८६२ ॥

अथ भावाधिक्येऽन्यदिह लौकिकमुदाहरणम् । तत्सूचनार्थं 'जो जहा वट्टए कालो' इत्यादिश्लोकः । अस्यार्थः कथानकादवसेयः । तच्चेदम्—

कस्मिंश्चिदटवीप्रदेशे सरोवरमेकमासीत् । तच्च लौकिकेषु 'कामिकतीर्थम्' उच्यते । तस्य हि तीरे वञ्जुलनामा वृक्षोऽभूत् । तच्छाखामारुह्य यदि तिर्यक् सरोवरजले निपतति, तदा तीर्थमाहात्म्यात् किल मनुष्यो भवति । यस्तु मनुष्य एव संनिपतति, असौ देवो जायते । यस्तु लोभाधिक्याद् द्वितीयामपि वारां निपतति स यादृशः प्रागासीत् पुनरपि तादृश एव संपद्यते । एवं चान्यदा वानरमिथुनस्य पश्यतो नरमिथुनं वञ्जुलवृक्षशाखातो निपतितं तत्सरोवरजले । संजातं च भास्वरशरीरं देवमिथुनम् । ततो वानरमिथुनमपि तथैव तत्र पतितम् । जातं च प्रवररूपधरं नरमिथुनम् । ततो वानरेण प्रोक्तम्— पुनरपि 'तथैवेह निपतावः, येन देवरूपौ भवावः' । ततोऽसौ निषिद्धो योषिता— 'यद् न ज्ञायते, पुनरपीत्थं कृते किं संपद्यते ?, पर्याप्तं चानेनैव प्रवरमानुषत्वेन, निषिद्धो ह्यतिलोभः सर्वशास्त्रेष्वपि' इति । इत्थं निवार्यमाणोऽपि तयाऽसौ पुरुषो द्वितीयामपि वारां तथैव तत्र निपपात। जातश्च पुनरपि वानरः। ततो गृहीता सा प्रवररूपा योषित् तत्राऽऽयातेन केनापि राज्ञा । संजाता च तस्य वल्लभा पत्नी । वानरस्तु गृहीतो मायेन्द्रजालिकैः, शिक्षितश्च नर्तयितुम् । नीतश्चासौ सकलत्रोपविष्टस्य राज्ञः पुरतः । प्रत्यभिज्ञाता च तेन सा राज्ञी । तयाऽप्युपलक्षितोऽसौ वानरः । धावति च पुनः पुनर्निगृह्यमाणोऽपि राज्याः संमुखं ग्रहणार्थम् । अतो राज्या पठितम्—

[1]जो जहा वट्टए कालो तं तहा सेव वानरा! । मा वंजुलपरिभट्ठो वानरा! पडणं सर ॥ ८६३ ॥



1 यो यथा वर्तते कालस्त तथा सेवस्व वानर! । मा वञ्जुलपरिभ्रष्टो वानर! पतन स्मर ॥ ८६३ ॥

॥ अर्हम् ॥

तदेवं '[1]तस्स फल-जोग-मंगल-समुदायत्था तहेव दाराइं' इत्यादिकायां धुरि निर्दिष्टद्वितीयगाथायां मङ्गलरूपं तृतीयद्वारं परिसमाप्य, चतुर्थं समुदायार्थद्वारमभिधानीयम्, इति चेतसि निधाय तावदिदमाह–

[2]केवलनाणं नन्दी मंगलमिति चेह परिसमत्ताइं। अहुणा स मंगलत्थो भण्णइ पगओऽणुओग त्ति ॥८३७॥

केवलज्ञानमिह समाप्तम्, तत्समाप्तौ च नामादिभेदभिन्ना नन्दी समाप्ता, तत्समाप्तौ च मङ्गलं परिसमाप्तम्। अधुना स एव मङ्गलार्थः प्रकृतानुयोगो भण्यते। मङ्गलेनाऽर्य्यते– प्राप्तुं साधयितुमिष्यत इति मङ्गलार्थो मङ्गलसाध्यः; अथवा, अर्यते गम्यते साध्यत इत्यर्थः, मङ्गलस्यार्थो मङ्गलार्थो मङ्गलसाध्यः, इतीहापि स एवार्थः। स च कः ?, प्रकृतोऽधिकृतोऽनुयोग इति ॥ ८३७ ॥

ननूक्तज्ञानपञ्चकस्य मध्ये कतमस्य ज्ञानस्याऽयमनुयोगः ?, इत्याह–

[3]सो मइनाणाईणं कयरस्स, सुयस्स, जं न सेसाइं। होंति पराहीणाइं न य परबोहे समत्थाइं ॥ ८३८ ॥

पाएण पराहीणं दीवो व्व परप्पबोहयं जं च। सुयनाणं तेण परप्पबोहणत्थं तदणुओगो ॥ ८३९ ॥

स प्रकृतानुयोगः पूर्वोक्तमत्यादिज्ञानपञ्चकस्य मध्ये कतरस्य ज्ञानस्य ?, इति प्रश्ने सत्याह– श्रुतस्य श्रुतज्ञानस्येत्यर्थः; यद् यस्माद् न शेषज्ञानानि पराधीनानि गुर्वायत्तानि भवन्ति, किन्त्वावरणक्षय-क्षयोपशमाभ्यां स्वत एव जायन्ते। अनुयोगश्च व्याख्यानरूपः परायत्तस्यैव भवति, श्रुतमेव च प्रायः पराधीनम्, न शेषज्ञानानि। प्रत्येकबुद्धादीनां श्रुतस्य स्वयमेव भावात् तद्व्यवच्छेदार्थं प्रायोग्रहणम्। किञ्च, श्रुतज्ञानमेव परप्रबोधे समर्थम्, मुखरत्वात्; न शेषज्ञानानि, मूकत्वात्। इदमुक्तं भवति– उपदेशेनैव परः प्रबोध्यते, उपदेशश्च शब्देनैव, शब्दश्च कारणे कार्योपचारात् श्रुतज्ञान एवाऽन्तर्भवति, न शेषज्ञानेषु; अतः शब्दात्मकं श्रुतमेव परप्रबोधकम्। तथा,

---

१ गाथा २। २ केवलज्ञानं नन्दी मङ्गलमिति चेह परिसमाप्तानि। अधुना स मङ्गलार्थो भण्यते प्रकृतोऽनुयोग इति ॥ ८३७ ॥
३ स मतिज्ञानादीनां कतरस्य, श्रुतस्य, यद् न शेषाणि। भवन्ति पराधीनानि न च परबोधे समर्थानि ॥ ८३८ ॥
प्रायेण पराधीन दीप इव परप्रबोधकं यच्च। श्रुतज्ञानं तेन परप्रबोधनार्थं तदनुयोगः ॥ ८३९ ॥

के पुनस्ते दोषाः ?, इत्याह–

[1]अत्थस्स विसंवाओ सुयभेआओ तओ चरणभेओ। तत्तो मोक्खाभावो मोक्खाभावेऽफला दिक्खा ॥८६६॥

मात्रादिहीनाधिक्ये सूत्रस्य भेदः, सूत्रभेदा[2]च्चाऽर्थस्य विसंवादः, तद्विसंवादे च क्रियारूपस्य चरणस्य विसंवादः, तद्विसंवादे च मोक्षाभावः, तदभावे च दीक्षावैफल्यमिति। तदेवमुक्तमागमतो द्रव्यावश्यकम् ॥ ८६६ ॥

अथ नोआगमतस्तदभिधित्सुराह—

[3]नोआगमओ जाणय-भव्वसरीरा-ऽइरित्तमावासं। लोइय लोगुत्तरियं कुप्पावयणं जहा सुत्ते ॥ ८६७ ॥

नोआगमतो द्रव्यावश्यकं त्रिविधम्– ज्ञशरीरद्रव्यावश्यकम्, भव्यशरीरद्रव्यावश्यकम्, तदुभयव्यतिरिक्तं द्रव्यावश्यकं च। तत्र सम्यक् पूर्वाधीतावश्यकं सिद्धशिलातलगतजीवविप्रमुक्तं मुनिशरीरमनुभूतभावत्वाज्ज्ञशरीरद्रव्यावश्यकम्। यत् पुनरावश्यकार्थं ज्ञास्यति, न पुनरिदानीं जानाति, तत् सचेतनं देवदत्तादिशरीरं योग्यत्वाद् भव्यशरीरद्रव्यावश्यकम्। एतदुभयव्यतिरिक्तं तु नोआगमतो द्रव्यावश्यकं त्रिविधम्– लौकिकम्, लोकोत्तरम्, कुप्रावचनिकं च। तत्र लौकिकं राजादीनां मुखप्रक्षालनाद्यावश्यकम्। लोकोत्तरं तु ये इमे श्रमणगुणविप्रमुक्ता लिङ्गमात्रधारिणः साध्वाभासाः प्रतिपदमनेकान्यसंयमस्थानान्यासेव्योभयकालं प्रतिक्रमणाद्यावश्यकं कुर्वन्ति तद् विज्ञेयम्। कुप्रावचनिकं तु यत् पाखण्डिनश्चामुण्डाऽऽयतनोपलेपनाद्यावश्यकं कुर्वन्ति तद् बोद्धव्यम्। नोशब्दश्चेह सर्वत्राऽऽगमसर्वनिषेधे द्रष्टव्यः। एतच्च सर्वमपि नोआगमतो द्रव्यावश्यकं सप्रभेदं यथा सूत्रेऽनुयोगद्वाराख्ये प्रोक्तं तथा विज्ञेयमिति ॥८६७॥

इह लोकोत्तरं यद् नोआगमतो द्रव्यावश्यकमुक्तम्; तत्रोदाहरणमाह–

[4]लोउत्तरे अभिक्खणमासेवालोयओ उदाहरणं। स रयणदाहगवाणियनाएण जईहुवालद्धो ॥ ८६८ ॥

लोकोत्तरे नोआगमतो द्रव्यावश्यकेऽभीक्ष्णमासेवकालोचकः साध्वाभास उदाहरणम्। आसेवकश्चासावालोचकश्चेति समासः।

१ अर्थस्स विसंवाद' श्रुतभेदात् ततश्चरणभेदः। ततो मोक्षाभावो मोक्षाभावेऽफला दीक्षा ॥ ८६६ ॥ २ क ग. 'दादेव चार्थ'।
३ नोआगमतो ज्ञायक-भव्यशरीरा-ऽतिरिक्तमावश्यकम्। लौकिकं लौकोत्तरिकं कुप्रावचनिक यथा सूत्रे ॥ ८६७ ॥
४ लोकोत्तरेऽभीक्ष्णमासेवकालोचक उदाहरणम्। स रत्नदाहकवणिग्ज्ञातेन यतिभिरुपालब्धः ॥ ८६८ ॥

तस्मादावश्यकस्याऽनुयोग इति स्थिते विनेयपृच्छाम्, उत्तरं चाह—

[1]आवस्सयस्स जइ सो तत्थंगाईण अट्ठ पुच्छाओ । तं होइ सुयक्खंधो अज्झयणाइं च, न उ सेसा ॥८४३॥

यद्यावश्यकस्याऽयमनुयोगः, [2]तथाऽऽवश्यकं श्रुतविशेषः; तर्ह्यत्राङ्गादीन्याश्रित्याऽष्टौ पृच्छाः संभवन्ति, तद्यथा— '[3]आवस्सयं णं किं अंगं, अंगाइं; सुयक्खंधो, सुयक्खंधा; अज्झयणं, अज्झयणाइं; उद्देसो, उद्देसा ?' इति । अत्रोत्तरमाह— इह तदावश्यकं षडध्ययनसमुदायलक्षणश्रुतस्कन्धः, प्रत्येकमध्ययनानि च षडिति । शेषाः षड् प्रकाराः प्रतिषेद्धव्याः, असंभवित्वादिति ॥ ८४३ ॥

अत्र प्रेरकः प्राह—

[4]नणु नंदीवक्खाणे भणियमणंगं इहं कओ संका ? । भण्णइ अकए संका तस्सानियमं च दाएइ ॥८४४॥

ननु नन्द्यध्ययने व्याख्यायमाने '[5]इमं पुण पट्ठवणं पडुच्च अंगबाहिरस्स उद्देसो, समुद्देसो, अणुण्णा, अणुओगो पवत्तइ' इत्यादिवचनादावश्यकमङ्गबाह्यत्वादङ्गं न भवतीति भणितमेव, इति कुतोऽत्र शङ्का, येन पृच्छा क्रियते ? । अत्र निर्वचनमाह— भण्यतेऽत्रोत्तरम्, श्रुतस्कन्धादिविषये तावदस्त्येव शङ्का, तत्राऽस्यार्थस्याऽनिर्णीतत्वात्; अतस्तद्विषयास्तावत् कर्तव्या एव पृच्छाः । अङ्गाऽनङ्गरूपतायामपि यदा नन्द्यध्ययनमश्रुत्वा विनेयः प्रथमत एवेदं शृणोति, तदाऽकृते नन्दिव्याख्यानेऽस्त्येव शङ्का— किमावश्यकमङ्गम्, तद्बाह्यं वेति ? । आह— ननु नन्द्यध्ययनं श्रुत्वा तदावश्यकं श्रोतव्यम्, इतीत्थं क्रमः, अतः कथं नन्द्यध्ययनस्य प्रथमं व्याख्यानाकरणम्, येन प्रस्तुतशङ्का स्यात् ?, इत्याशङ्क्याह— 'तस्सेत्यादि' तस्य प्रथमं नन्दिव्याख्यानकरणस्याऽत एवाऽङ्गा-ऽनङ्गप्रश्ननिर्णयवचनादाचार्योऽनियमं दर्शयति, पुरुषाद्यपेक्षयाऽन्यथाऽपि नन्द्यादिव्याख्यानकरणादिति ॥ ८४४ ॥

आह— ननु मङ्गलार्थं सर्वेषामपि शास्त्राणामादौ नन्दिव्याख्यानं कर्तव्यमेव, इति कथं तदनियमः ?, इत्याह—

[6]नाणाभिहाणमेत्तं मंगलमिट्ठं न तीए वक्खाणं । इह[7]मट्ठाणे जुज्जइ, जं सा वीसुं सुयक्खंधो ॥ ८४५ ॥

१ आवश्यकस्य यदि स तत्राङ्गादीनामष्ट पृच्छाः । तद् भवति श्रुतस्कन्धोऽध्ययनानि च, न तु शेषाः ॥ ८४३ ॥ २ क ग. 'तच्चाव' ।
३ आवश्यक किमङ्गम्, अङ्गानि, श्रुतस्कन्धः, श्रुतस्कन्धाः; अध्ययनम्, अध्ययनानि, उद्देशः, उद्देशाः ? ।
४ ननु नन्दीव्याख्याने भणितमनङ्गमिह कुतः शङ्का ? । भण्यतेऽकृते शङ्का तस्यानियम च दर्शयति ॥ ८४४ ॥
५ इदं पुन. प्रस्थापनं प्रतीत्याऽङ्गबाह्यस्योद्देशः, समुद्देशः, अनुज्ञा, अनुयोगः प्रवर्तते ।
६ ज्ञानाभिधानमात्रं मङ्गलमिष्टं न तस्या व्याख्यानम् । इहाऽस्थाने युज्यते, यत् सा विष्वक् श्रुतस्कन्धः ॥ ८४५ ॥ ७ क. 'हसट्ठा' ।

तस्तथैवाऽनुष्ठितं तैरपि । तदेवंभूतस्य गच्छस्य सत्कं नोआगमतो लोकोत्तरं द्रव्यावश्यकमभिधीयत इति । तदेवं सोदाहरणमुक्तं द्रव्यावश्यकम् ॥ ८६८ ॥

अथ[1] भावावश्यकमभिधीयते– तच्च द्विधा– आगमतः, नोआगमतश्च । तदेतदुभयमप्याह–

आगमओ[2] भावावासयं तदत्थोवओगपरिणामो । नोआगमओ भावे परिणामो नाण-किरियासु ॥८६९॥

आगमतो भावावश्यकमावश्यकार्थोपयोगपरिणामः । नोआगमतस्तु ज्ञान-क्रियोभयपरिणामः, मिश्रवचनत्वाद् नोशब्दस्येति॥८६९॥

इदं च त्रिविधमिति दर्शयन्नाह–

लोइय[3] लोउत्तरियं कुप्पावयणं च तं समासेणं । लोउत्तरं पसत्थं सत्थे तेणाहिगारोऽयं ॥८७०॥

तद् नोआगमतो भावावश्यकं त्रिविधम्– लौकिकम्, लोकोत्तरम्, कुप्रावचनिकं च । एवं चोपन्यासः पूर्वं व्यतिरिक्तद्रव्यावश्यके, अत्र च भावावश्यके बन्धानुलोम्यादिना केनापि हेतुना कृतः, यावताऽनुयोगद्वारसूत्रे इत्थमुक्तम्– 'लौकिकम्, कुप्रावचनिकम्, लोकोत्तरं च' इति । तत्र लौकिकं नोआगमतो भावावश्यकम् 'पूर्वाह्णे भारतम्, अपराह्णे रामायणं वाचनीयम्' इत्यादि । कुप्रावचनिकं तु मन्त्रादिपाठपूर्वकमिज्याऽञ्जलिहोमादि । लोकोत्तरं पुनरुपयुक्तस्य श्रवणादेर्मुखवस्त्रिकाप्रत्युपेक्षणा-ऽऽवर्तादिक्रियामिश्रमुभयकालमावश्यकसूत्रोच्चारणम् । एवं सर्वत्र ज्ञान-क्रियामिश्रता भावनीया । इह च त्रिविधेऽपि नोआगमतो भावावश्यके पारमार्थिकाऽनुपमापवर्गसुखप्राप्तिहेतुत्वाल्लोकोत्तरमेव प्रशस्तम् । तदेवेह शास्त्रेऽधिक्रियत इति ॥ ८७० ॥

अथावश्यकस्य पर्यायनामान्यभिधित्सुराह—

तस्सा[4]भिन्नत्थाइं सुपसत्थाइं जहत्थनिययाइं । अव्वामोहाइनिमित्तमाह पज्जायनामाइं ॥ ८७१ ॥

तस्याऽऽवश्यकस्य पर्यायनामान्याहेति संबन्धः । कथंभूतानि ?, अभिन्नार्थानि, सुप्रशस्तानि, यथाऽर्थो व्यवस्थितस्तथैव निय-

---

१ क ख ग 'अधुना भा' । २ आगमतो भावावश्यकं तदर्थोपयोगपरिणामः । नोआगमतो भावे परिणामो ज्ञान-क्रिययोः ॥ ८६९ ॥
३ लौकिक लौकोत्तरिक कुप्रावचनिकं च तत् समासेन । लोकोत्तर प्रशस्त शास्त्रे तेनाऽधिकारोऽयम् ॥ ८७० ॥
४ तस्याऽभिन्नार्थानि सुप्रशस्तानि यथार्थनियतानि । अव्यामोहादिनिमित्तमाह पर्यायनामानि ॥ ८७१ ॥

अत आवश्यकादिपदानाम्–'आवश्यकम्, श्रुतस्कन्धः, अध्ययनम्' इत्येषां पदानां न्यासो निक्षेपः पृथक् पृथक् कार्यः। कुतः?, इत्याह– यस्माद्धेतोः किञ्चिद् नाम तावद् यथार्थं भवति, यथा दीपः, दहन इत्यादि; किञ्चित् त्वयथार्थं भवति, यथा पलाशः, मण्डप इत्यादि; अपरं त्वर्थशून्यं भवति, यथा डित्थः, डवित्थ इत्यादि। यथार्थं च शास्त्राभिधानमिष्यते, तत्रैव समुदायार्थावगतेः। अतो नाम्नैव परीक्षा विचारणा क्रियते, ततो ग्राह्यमिदं यदि यथार्थं स्यादिति ॥ ८४७ ॥ ८४८ ॥

तमेवाऽऽवश्यकादिन्यासमाह—

[1]नामाईओ नासो चउव्विहो मंगलस्स व स नेओ। विण्णेओ य विसेसो सुत्तगओ, किंचि वुच्छामि ॥८४९॥

इह तावदावश्यकस्य नाम-स्थापना-द्रव्य-भावरूपश्चतुर्विधो निक्षेपो भवति, स चेहैव प्रागुक्तमङ्गलपदस्येव ज्ञातव्यः, यश्च मङ्गल-निक्षेपेण सह विशेषः स सूत्रेऽनुयोगद्वारादिलक्षणे गतः स्थितो भणितः सूत्रगतो विज्ञेयः। किञ्चित्पुनस्तद्विशेषं विनेयानुग्रहार्थमहमत्रापि वक्ष्यामीति ॥ ८४९ ॥

तत्र नाम-स्थापने क्षुण्णत्वाद् नोच्येते। द्रव्यावश्यकं तु द्विधा– आगमतः, नोआगमतश्च। तत्राऽऽगमतः प्राह–

[3]आगमओ दव्वावासयं तमावासयं पयं जस्स। सिक्खियमिच्चाइ तयं तयणुवउत्तो निगदमाणो ॥८५०॥

आगमतो द्रव्यावश्यकं भवति। कः?, इत्याह– तदावश्यकं निगदन् पठन्– अध्येता। कथंभूतः?, तस्मिन्नावश्यकेऽनुपयुक्तः। यस्याऽध्येतुः, किम्?, इत्याह– यस्य तदावश्यकपदं प्रथमं शिक्षितं, स्थितं, जितमित्यादिविशेषणविशिष्टं भवति ॥ ८५० ॥

अथ तान्येवाऽनुयोगद्वारादिसूत्रप्रोक्तानि शिक्षितादिविशेषणानि व्याख्यानयन्नाह–

[4]सिक्खियमंतं नीयं हिययम्मि ठियं जियं दुयं एइ। संखियवण्णाइ मियं परिजियमेत्तुक्कमेणं पि ॥ ८५१ ॥

जह सिक्खियं सनामं तह तं पि तहा ठियाइ नामसमं। गुरुभणियघोससरिसं गहियमुदत्तादओ ते य ॥८५२॥

---

१ नामादिको न्यासश्चतुर्विधो मङ्गलस्येव स ज्ञेयः। विज्ञेयश्च विशेषः सूत्रगतः, किञ्चिद् वक्ष्यामि ॥ ८४९ ॥   २ क ख ग. 'वस्तरू'।

३ आगमतो द्रव्यावासकमावासकं पदं यस्य। शिक्षितमित्यादि तत् तदनुपयुक्तो निगदन् ॥ ८५० ॥

४ शिक्षितमन्तं नीतं हृदये स्थितं जितं द्रुतमेति। संख्यातवर्णादि मितं परिजितमेत्युत्क्रमेणापि ॥ ८५१ ॥

यथा शिक्षितं स्वनाम तथा तदपि तथा स्थितादि नामसमम्। गुरुभणितघोषसदृशं गृहीतमुदात्तादयस्ते च ॥ ८५२ ॥

वासकम् । अथवा, यथा वस्त्रं वास-धूपादयः, तथा गुणैरा समन्तादात्मानं वासयति भावयति रञ्जयतीत्यावासकम् । यदि वा 'वस आच्छादने' गुणैरा समन्तादात्मानं च्छादयति– 'छद खट्ट संवरणे' इति दोषेभ्यः संवृणोतीत्यावासकमिति । तदेवं 'आवस्सयं' इत्याद्यं पर्यायनाम व्याख्यातम् ॥ ८७४ ॥ ८७५ ॥

शेषाण्यतिदिशन्नाह—

[1]एवं चिय सेसाइं विउसा सुय-लक्खणाणुसारेण । कमसो वत्तव्वाइं तहा सुय-क्खंधनामाइं ॥ ८७६ ॥

एवमेव शेषाण्यवश्यकरणीयादिनामानि सिद्धान्त-लक्षणानुसारेण क्रमशो विदुपा वक्तव्यानि; तद्यथा– मुमुक्षुभिरवश्यं क्रियत इत्यवश्यकरणीयमिदमुच्यते; तथा, अर्थतो ध्रुवत्वात् शाश्वतत्वाद् ध्रुवम् । निगृह्यन्त इन्द्रिय-कपायादयो भावशत्रवोऽनेनेति निग्रहः । अन्ये तु– प्रवाहतोऽनादिकालीनत्वाद् ध्रुवं कर्म, तद् निगृह्यतेऽनेनेति 'ध्रुवनिग्रहः' इत्येकमेवेदं पर्यायनाम व्याचक्षते । कर्ममलिनस्याऽऽत्मनो विशुद्धिहेतुत्वाद् विशुद्धिः । सामायिकादिपडध्ययनात्मकत्वादध्ययनपट्कम् । 'वृजी वर्जने' वृज्यन्ते दूरतः परिहियन्ते रागादयो दोषा अनेनेति वर्गः । अन्ये तु– पडध्ययनकलापात्मकत्वात् 'अध्ययनपट्कवर्गः' इतीदमप्येकमेव पर्याय नाम ब्रुवते । अभिप्रेतार्थसिद्धेः सम्यगुपायत्वाद् न्यायः; अथवा, जीव-कर्मसंवन्धापनयनाद् न्यायः । अयमभिप्रायः– यथा कारणिकैर्दृष्टो न्यायो द्वयोरर्थि-प्रत्यर्थिनोर्भूमिद्रव्यादिसंवन्धं चिरकालीनमप्यपनयतीति, एवं जीव-कर्मणोरनादिकालीनमप्याश्रयाश्रयिभावसंवन्धमपनयतीत्यावश्यकमपि न्याय उच्यते । मोक्षाऽऽराधनाहेतुत्वादाराधना । मोक्षपुरप्रापकत्वाद् मार्ग इव मार्ग इति ।

अतिदेशप्रस्तावाद् वक्ष्यमाणान्यप्यैकार्थिकनामान्यातिदिशन्नाह– 'तहा सुयक्खंधनामाइं ति' तथा तेनैवोक्तप्रकारेण श्रुत-सूत्र-ग्रन्थ-सिद्धान्त-प्रवचन-ऽऽज्ञो-पदेशा-ऽऽगमादीनि श्रुतैकार्थिकनामानि, गण-काय-निकाय-स्कन्ध-वर्ग-राश्यादीनि च स्कन्धैकार्थिकनामानि श्रुतानुसारेण, लक्षणानुसारेण चाऽर्थतो विदुपा वक्तव्यानीत्यर्थ इति । तदेवं विहितो नामादिन्यास आवश्यकपदस्य ॥ ८७६ ॥

अथ श्रुतपदस्य तं चिकीर्पुरिदमाह–

[2]आगमओ दव्वसुयं वत्ता सुत्तोपओगनिरवेक्खो । नोआगमओ जाणय-भव्वसरीरा-ऽइरित्तमिदं ॥८७७॥

१ एवमेव शेपाणि विदुपा श्रुत-लक्षणानुसारेण । क्रमशो वक्तव्यानि तथा श्रुत-स्कन्धनामानि ॥ ८७६ ॥
२ आगमतो द्रव्यश्रुतं वक्ता श्रुतोपयोगनिरपेक्षः । नोआगमतो ज्ञायक भव्यशरीरा-ऽतिरिक्तमिदम् ॥ ८७७ ॥

परिजितमित्यर्थः, एवं तदध्यावश्यकं, अतः स्वनामसममुच्यते । यद् वाचनाचार्याभिहितैरुदात्ता-ऽनुदात्त-स्वरितलक्षणैर्घोषैः सदृशमेव गृहीतं तद् घोषसमम् । न हीनाक्षरमहीनाक्षरम्, नाप्यधिकाक्षरम् ।

'वोच्चत्थेत्यादि' यथा प्रान्ताभीरीप्रोतरत्नमाला विपर्ययन्यस्तरत्ननिचया भवति, एवं यद् व्यत्यासितवर्णविन्यासं विपर्ययोपन्यस्तवर्णसंतानमित्यर्थः, तद् व्याविद्धाक्षरं, न तथाऽव्याविद्धाक्षरम् । इदं वर्णमात्रापेक्षं विवक्ष्यते, न तु पद-वाक्यापेक्षम्; पद-वाक्यविपर्यस्तस्य वक्ष्यमाणाऽमिलितविषयत्वादिति । उपलशकलाकुलभूतलेहलमिव यद् न स्खलति तदस्खलितम् । विसदृशानेकधान्यमेलकवद् यद् न मिलति तदमिलितम्; अथवा, विपर्यस्तपद-वाक्यग्रन्थं मिलितम्, नैवं यत्, तदमिलितम् । 'अमिलियपय-वक्कविच्छेयं ति' अथवेत्यत्रापि तृतीयव्याख्यान्तरसूचकः संबध्यते, अमिलितोऽसंसक्तः पद-वाक्यविच्छेदो यत्र, तद् वाऽमिलितमुच्यते ।

अव्यत्याम्रेडितं व्याख्यातुमाह— 'न य विविहेत्यादि' विविधानि नानाप्रकाराण्यनेकानि शास्त्राणि तेषां पद-वाक्यावयवरूपा बहवः पल्लवास्तैर्विमिश्रं व्यत्याम्रेडितम्, अथवा, अस्थानच्छिन्नग्रथितं व्यत्याम्रेडितम्, यथा— "प्राप्तराज्यस्य रामस्य राक्षसा निधनं गताः" कोलिकपायसवद् भेरीकन्थावद् वा; यथोक्तरूपं यद् न भवति तदव्यत्याम्रेडितम् । परिपूर्णं द्विधा— सूत्रतः, अर्थतश्च । तत्र च्छन्दसा च्छन्दः समाश्रित्य मात्रादिनियतमानं सूत्रतः, परिपूर्णम्, यत्तु नाऽऽकाङ्क्षादिसदोषं तदर्थतः परिपूर्णम्— यत् क्रियाध्याहारं नापेक्षते, अव्यापकम्, अस्वतन्त्रं च न भवति तदर्थतः परिपूर्णमिति भावः ।

परिपूर्णघोषमिति व्याख्यातुमाह— 'पुण्णमित्यादि' उदात्तादिघोषैर्यत् परिपूर्णं परावर्तनादिकाले उच्चारयति तत् परिपूर्णघोषम् । इह च शिक्षाकालेऽध्यापकनिगदितोदात्तादिघोषैः समं शिक्षमाणस्य घोषसमम्, शेषकाले तु परावर्तनादि कुर्वन् यदुदात्तादिघोषैः परिपूर्णमुच्चारयति, तत् परिपूर्णघोषम्, इत्यनयोर्विशेषः । कण्ठौ-ष्ठविप्रमुक्तं स्पष्टं, न तु बाल-मूकभाषितवदव्यक्तम् । गुरोः सकाशाद् वाचनयोपयातमायातम्, न पुस्तकादेव चोरितम्— स्वतन्त्रेणैवाऽधीतम्; वाशब्दात् कर्णाघाटकेन वा गृहीतमिति ॥ ८५१–८५७ ॥

अत्र प्रेरकः प्राह—

आगमओऽणुवउत्तो[2] वत्ता दव्वं ति सिद्धमावासं । किं सिक्खियाइसुयगुणविसेसणे फलमिहब्भहियं ॥८५८॥



१ घ.छ.'प्रान्ताभी' । २ आगमतोऽनुपयुक्तो वक्ता द्रव्यमिति सिद्धमावश्यकम् । किं शिक्षितादिश्रुतगुणविशेषणे फलमिहाभ्यधिकम् ॥ ८५८ ॥

[1]नोआगमओ भावे लोइय लोउत्तरं पुराभिहियं। सम्मत्तपरिग्गहियं सम्मसुयं मिच्छमियरं ति ॥८७९॥

नोआगमतो भावश्रुतं द्विविधम्– लौकिकं, लोकोत्तरं च। तत्र लौकिकं भारत-रामायणादि। इदं चेहैव पूर्वं श्रुतज्ञानविचारे प्रोक्तम्। लोकोत्तरं त्वङ्गप्रविष्टादि, इदमपि पूर्वं तत्रैवोक्तम्। एतच्च सर्वं सम्यक्त्वपरिगृहीतं सम्यक्श्रुतं, मिथ्यात्वपरिगृहीतं तु मिथ्याश्रुतमिति ॥ ८७९ ॥

अत्र प्रेरकः प्राह—

[2]आगमओ भावसुयं जुत्तं नोआगमे कहं होइ। जइ नागमो न सुत्तं, अह सुत्तमणागमो किह णु?॥८८०॥

यदागमतो भावश्रुतमुक्तम् तद् युक्तम्– घटत एव। नोआगमतस्तु भावश्रुतं कथं भवति?– न घटत एवैतदित्यर्थः। तथाहि– नोशब्दस्तावद् निषेधवचनः, ततश्च यदि न- नैवाऽऽगमः, तर्हि न श्रुतम्, तस्याऽऽगमरूपत्वात्। अथ श्रुतम्, तर्ह्यनागमः कथम्?। तस्माद् नोआगमतो भावश्रुतमिति 'माता वन्ध्या' इत्यादिवद् विरुद्धमेवेति ॥ ८८० ॥

प्रेरक एवाऽऽशङ्क्याह—

[3]उवओगो जम्मत्ते तं तं जइ वागमोऽवसेसं तु। नोआगमो त्ति एवं किमणुवउत्तम्मि दव्वसुयं? ॥ ८८१ ॥

यदिवा, एवं सिद्धान्तवादी ब्रूयात्– यावन्मात्रे यत्र यत्र श्रुताध्येतरि तदुपयोगस्तत्तदागमतो भावश्रुतम्, यत् त्ववशेषमनुपयुक्तस्याऽध्येतुः श्रुतं तद् नोआगमतो भावश्रुतमिति सर्वं सुस्थमिति। हन्त! तर्हि [4]'आगमओ दव्वसुयं वत्ता सुत्तोवओगनिरवेक्खो' इत्यनेनाऽनुपयुक्ते वक्तरि यत् पूर्वं द्रव्यश्रुतमुक्तं तत् किं स्यात्, तद्विषयस्येदानीं नोआगमतो भावश्रुतत्वेन त्वया प्रतिपाद्यमानत्वात्?– निर्विषयमेव तत् स्यादिति भावः ॥ ८८१ ॥

पर एवाचार्यमतमाशङ्क्य परिहरन्नाह—

[5]अविसुद्धनयमएण व जइ लद्धिसुयमणुवउत्ते वि। भावसुयं चिय पढओ किमणुवउत्तस्स दव्वसुयं?॥८८२॥

१ नोआगमतो भावे लौकिकं लोकोत्तरं पुराभिहितम्। सम्यक्त्वपरिगृहीतं सम्यक्श्रुतं मिथ्येतरदिति ॥ ८७९ ॥
२ आगमतो भावश्रुतं युक्तं नोआगमे कथं भवति?। यदि नागमो न सूत्रं, अथ सूत्रमनागमः कथं नु? ॥ ८८० ॥
३ उपयोगो यन्मात्रे तत्तद् यदि वाऽऽगमोऽवशेषं तु। नोआगम इत्येवं किमनुपयुक्ते द्रव्यश्रुतम्? ॥ ८८१ ॥ ४ गाथा ८७७।
५ अविशुद्धनयमतेन वा यदि लब्धिश्रुतमनुपयुक्तेऽपि। भावश्रुतमेव पठतः किमनुपयुक्तस्य द्रव्यश्रुतम्? ॥ ८८२ ॥

अथ कोऽयं कुणालनामा राजपुत्र उदाहरणम् ?, इति तत्कथासूचनाय श्लोकमाह– 'चंदगुत्तेत्यादि'। अस्यार्थः कथानकादवसेयः, तच्चेदम्–

पाटलीपुत्र[1]नामनगरे मौर्यवंशसमुद्भवोऽशोकश्रीनामा भूपालः। तस्य चैकस्या राज्ञ्याः कुणालनामा तनयः समुत्पन्नः। तस्य च भुक्तौ उज्जयिनीनगरी नरपतिना प्रदत्ता। ततश्च सातिरेकाष्टवार्षिके तस्मिन् कुमारे लेखवाहकेनाऽऽगत्याऽशोकश्रीराजाय निवेदितम्, यथा– एतावति वयसि वर्तते युष्मत्पुत्रः। ततश्चान्तःपुरोपविष्टेन भूपतिना स्वहस्तेनैव लिखितः कुमाराय लेखः। तस्य तत्र चेदमलेखि, यथा– 'इदानीमधीयतां कुमारः'। तं च लेखमसंवर्तितमेव मुक्त्वा शरीरचिन्तार्थमुत्थितो नरनाथः। ततश्चैकया राज्ञ्या गृहीत्वा वाचितोऽसौ लेखः। चिन्तितं च, यथा– ममापि विद्यते पुत्रः, केवलं लघुरसौ, महांश्च कुणालः, ततस्तस्मिन् राज्ययोग्यतां बिभ्रति न मदीयपुत्रस्य राज्यावाप्तिः, ततस्तथा करोमि, यथा कुणालो राज्यस्याऽयोग्यो भवति, अवसरश्चायम्। इति विचिन्त्य निष्ठीवनार्द्रीकृतया हस्तस्थितनयनाञ्जनशलाकयाऽकारस्योपरि प्रदत्तो बिन्दुः। जातं च ततः 'अंधीयतां कुमारः'। ततस्तथैव राज्ञ्या मुक्तस्तत्रैव प्रदेशे लेखः। राज्ञा च कथमपि पुनरवाचित एव संवर्तितोऽसौ। गतश्च कुमारसमीपम्। अवधारितश्च केनापि नियोगिना, अप्रकटश्च विरुद्ध इति मत्वा न वाचितः। कुमारनिर्बन्धे च वाचितः। ततो विज्ञातलेखार्थेन प्रोक्तं कुमारेण– मौर्यवंशोद्भवानामस्माकमाज्ञां भुवनेऽपि न कश्चित् खण्डयति, तत् किमहमेव तातस्याऽऽज्ञां लङ्घयिष्यामि ?, न भवत्येवैतत्, इत्युक्त्वा तत्क्षण एवाऽग्नितप्तां लोहशलाकां गृहीत्वा मुक्तहाहारवे सर्वस्मिन्नपि परिजने निवारयति अञ्जिते अक्षिणी। जातश्चान्धः। ततो विज्ञातसमस्तैतद्व्यतिकरो राजा महान्तं खेदं विधाय कुणालस्योज्जयिनीमुत्सार्योचितं किमप्यन्यग्राममात्रं दत्तवान्।

तत्र च स्थितेन कुणालकुमारेण शिक्षिता प्रकर्षवती गीतकला। पुत्रश्चान्यदा तस्य समुत्पन्नः। ततस्तद्राज्यावाप्तिनिमित्तं गतः पाटलीपुत्रं नगरं कुणालः। समाक्षिप्तश्चातीव तन्नगरनिवासी समस्तोऽपि लोकस्तेन गीतकलया। गता च तत्प्रसिद्धिः। भूपालान्तिकं नीतश्चासौ। तत्र कृतं च यवनिकान्तरे तेन गीतम्। अतीवाक्षिप्तश्च जगाद पृथिवीपतिः– याचस्व भोः!, प्रयच्छामि तव समीहितम्। ततः पठितं कुणालेन–

[2]चंदगुत्तपपुत्तो उ बिंदुसारस्स नत्तुओ। असोगसिरिणो पुत्तो अंधो जायइ कागणिं ॥ ८६२ ॥ ॥४०९॥

१ क. ग. 'थानकसू'। २ घ. छ. 'त्रन'। ३ चन्द्रगुप्तप्रपौत्रस्तु बिन्दुसारस्य नप्तृकः। अशोकश्रियः पुत्रोऽन्धो याचते राज्यम् ॥ ८६२ ॥

सर्वनिषेधवचने नोशब्देऽत्र गृह्यमाणे दोषः प्रसज्यते । कः ?, इत्याह– 'सव्वसुयमित्यादि' नोआगमतो भावश्रुतमिति को-ऽर्थः ?– अनागमः सर्वमपि यद् भावश्रुतमिति– सर्वनिषेधवाचकत्वे नोशब्दस्य सर्वस्यापि भावश्रुतस्याऽऽगमत्वनिषेधः स्यादिति भावः। अयुक्तं चैतत्, श्रुतस्यागमत्वेनं सुप्रतीतत्वात् । अथवा, सर्वनिषेधवाचके नोशब्दे नोआगमतो भावश्रुतमित्ययमर्थः स्यात् । कः ?, इत्यत्रोच्यते– अनागमतोऽनागमत्वात् श्रुतवर्जं मत्यादिचतुष्टयात्मकं यदनागमरूपं ज्ञानं तत् श्रुतं भावश्रुतं भवेदिति– अश्रुतरूपस्यापि मत्यादिज्ञानचतुष्टयस्य श्रुतप्रसङ्गः स्यादिति भावः ॥ ८८५ ॥



देशनिषेधवचनेऽप्यत्र नोशब्दे दूषणमाह—

देसनिसेहे[2] सयलं नोआगमओ सुयं न पावेज्जा । भिन्नं पि व तं देसो चरणाईणं पसज्जेज्जा ॥ ८८६ ॥

देशनिषेधवचने नोशब्दे सकलमप्याचारादि श्रुतं नोआगमतो भावश्रुतं न प्राप्नुयात्– न स्यात्, किन्तु तदेकदेश एव नोआगमतो भावश्रुतं स्यादित्यर्थः । सर्वश्रुतस्य चैतदिष्यते, समस्तस्यापि द्वादशाङ्गगणिपिटकस्य ज्ञान-दर्शन-चारित्रपर्यायपिण्डात्मकत्वाद् नोआगमत्वेन सिद्धान्ते रूढत्वात्; एतच्च मिश्रवचन एव नोशब्दे घटते, नान्यथेति भावः । अत्रैकदेशनिषेधपक्षे दूषणान्तरमाह– 'भिन्नं पि वेत्यादि' 'वा' इत्यथवा, भिन्नमपि पृथग्भूतमपि सत् तद् भावश्रुतं चरणादीनामेकदेशः प्रसज्येत; अभिन्नदेशं चेष्यते तच्चरणादिभिः सह, धात्वञ्जनकपिशवर्णकवत्; अन्यथा संकरैकत्वादिदोषप्रसङ्गादिति ॥ ८८६ ॥

किञ्च, देशनिषेधको नोशब्द एकदेशवाचकः, तत्र चापरोऽपि दोषः । कः ?, इत्याह—

होज्ज[3] व नोआगमओ सुओवउत्तो वि जं स देसम्मि । उवजुज्जइ न उ सव्वे तेणायं मीसभावम्मि ॥ ८८७ ॥

यः श्रुतोपयुक्तः पूर्वमागमतो भावश्रुतमुक्तः, सोऽपि नोशब्दस्य देशवचनत्वे नोआगमतो भावश्रुतं भवेत् । कुतः ?, इत्याह– यद् यस्मात् स श्रुतैकदेश एवोपयुज्यते, न तु सर्वस्मिन्नपि श्रुते, सर्वस्यापि श्रुतस्याऽनन्ताभिलाप्यार्थविषयत्वात्, एतदुपयोगस्य चैकदाऽसंभवात् । ततश्चैकदेशवचनत्वे नोशब्दस्याऽयं नोआगमः । तस्माद् येनैवं सति आगम-नोआगमभावश्रुतयोरविशेषः प्राप्नोति, तेनाऽयं नोशब्दो मिश्रभावे ग्राह्य इति ॥ ८८७ ॥

१ क ख 'न प्र' । २ देशनिषेधे सकल नोआगमत श्रुतं न प्राप्नुयात् । भिन्नमपि वा तद् देशश्चरणादीना प्रसज्येत ॥ ८८६ ॥
३ भवेद् वा नोआगमतः श्रुतोपयुक्तोऽपि यत् स देशे । उपयुज्यते न तु सर्वस्मिन् तेनाऽय मिश्रभावे ॥ ८८७ ॥

उत्तानार्थश्चायं श्लोकः । तदेवं यथाऽधिको लोभाभिप्रायः कृतो वानरस्याऽनर्थाय जातः, तथा मात्राद्यधिकं सूत्रमपीति भावनीयमिति ॥ ८६३ ॥

अथाऽक्षरादिहीनसूत्रपाठेऽपायप्रदर्शनार्थमुदाहरणम्--

[1]विज्जाहर रायगिहे उप्पय पडणं च हीणदोसेण । कहणो सरणागमणं पयाणुसारिस्स दाणं च ॥ ८६४ ॥

अस्या अप्यर्थः कथानकादवसेयः । तच्चेदम्– राजगृहनगरे भगवान् महावीरः समवसृतः । तदन्तिके च धर्मं श्रुत्वोत्थितायां परिषदि गृहं प्रति गच्छता श्रेणिकराजेन दूरे दृष्टः कोऽपि विद्याधारो विधुरितपक्षः पक्षीव नभस्युत्पात-निपातौ विदधानः । ततः समुत्पन्नकौतुकः प्रतिनिवृत्त्य पुनरपि समवसरणमागतः । पृष्टवांश्च तद्व्यतिकरं सर्वमेव भगवन्तम् । 'कहण त्ति' कथनं च कृतं भगवता– यदस्य खेचरस्य विस्मृतमेकमक्षरं नभोगामिन्या विद्यायाः । ततो न सा स्फुरत्यस्य सम्यक् । अतोऽयमुत्पात-निपातौ विदधाति । एतच्चाकर्णितं पितृसमीपस्थितेनाऽभयकुमारेण । ततस्तेन गत्वाऽभिहितो विद्याधरः– यद् भवतो विस्मृतमेकमक्षरं, तदहं लब्ध्वा तव कथयामि, यदि समानसिद्धिकं मां करोष्यस्या विद्यायाः । ततः प्रतिपन्नमिदं खेचरेण । कथितं च पदानुसारिलब्ध्या समुपलभ्य तदक्षरमभयकुमारेण । प्रदत्ता च तस्य पदानुसारिणः खेचरेण विद्या । स्वयं च ततः क्षेमेण प्राप्तो वैताढ्यशिखरिशिखरस्थितप्रवरविद्याधरीसंगमसुखानि । तदेवं यथाऽक्षरहीना विद्या न स्फुरति, अनर्थफला च जायते, तथा सूत्रमपीति ॥ ८६४ ॥

अथ हीना-ऽधिकाक्षरोभयोदाहरणमाह—

[2]तित्त-कडुभेसयाइं मा णं पीलेज्ज ऊणए देइ । पउणइ न तेहिं अहियेहिं मरइ बालो तहाहारे ॥ ८६५ ॥

तिक्त-कटुभेषजान्यातुरस्य 'मा पीड्येताऽयमेतैः' इति विचिन्त्य माता-पितृ-वैद्यादिर्यदूनानि ददाति तदाऽसौ तैर्न प्रगुणीभवति, हीनमात्रत्वात् । अथ कथमप्यधिकानि प्रयच्छति, तदा तैरधिकमात्रैराक्रान्तोऽसौ म्रियत एवाऽऽतुरः । 'बालो तहाहारे त्ति' तथा तेनैव प्रकारेण हीना-ऽधिके आहारेऽपि बालोऽपायमाप्नोति । एवं सूत्रेऽपि हीना-ऽधिके दोषा वाच्या इति ॥ ८६५ ॥

१ विद्याधरो राजगृहे उत्पातं पतनं च हीनदोषेण । कथनं शरणागमनं पदानुसारिणो दानं च ॥ ८६४ ॥

२ तिक्त-कटुभैषज्यानि मा तं पीडयेयुरूनानि ददाति । प्रगुणीभवति न तैरधिकैर्म्रियते बालस्तथाहारे ॥ ८६५ ॥

अथवा, देशवचनोऽपि भवत्वत्र नोशब्दः, न कश्चिद् दोषः, इति दर्शयन्नाह—

[1]अविसेसियसंमिस्सोवओगदेसु[2] त्ति वा सुयं काउं । नोआगमभावसुए नोसद्दो होज्ज देसे वि ॥ ८९० ॥

अविशेषितश्चासौ ज्ञान-दर्शन-चारित्राणां परिपूर्णघटादिरिवाऽखण्डः संमिश्रोपयोगश्चाविशेषितसंमिश्रोपयोगस्तस्य घटादेर्ग्रीवादिरिव श्रुतं देश एकदेश इति कृत्वा नोआगमतो भावश्रुते विचार्ये नोशब्दो देशेऽपि युज्यते । इदमुक्तं भवति– यथा सामान्येन परिपूर्णघटादेरिहाऽखण्डस्यैकदेशो ग्रीवादिर्नोघट उच्यते, एवमविशेपितभेदस्य ज्ञान-क्रियापरिणामरूपस्याऽखण्डस्य वस्तुनः श्रुतमेकदेश इति कृत्वा ज्ञान-क्रियापरिणामो नोआगमतो भावश्रुतमिति स्थितम् ॥ ८९० ॥

अथ मतान्तरमुपदर्श्य परिहरन्नाह—

[3]नोआगमओ केई सद्दसहायमुवओगमिच्छंति । नणु सुतरमागमत्तं हि दव्व-भावागमे जुत्तं ॥ ८९१ ॥

केचिदाचार्याः शब्दसहायं श्रुतोपयोगं नोआगमतो भावश्रुतमिच्छन्ति । अयमभिप्रायः– श्रुतोपयोगपूर्वकं ब्रुवाणस्य यः श्रुतोपयोगसहितः शब्दः स नोआगमतो भावश्रुतम् । तत्र किलोपयोग-शब्दसमुदाये उपयोगलक्षणस्याऽऽगमस्यैकदेशत्वात्, शब्दनिरपेक्षं तूपयोगमात्रमागमतो भावश्रुतमिति । एतच्चायुक्तमिति दर्शयति– 'नण्वित्यादि' नन्वत्र हि स्फुटं श्रुतोपयोगो भावागमः, शब्दस्तु द्रव्यागमः, इति सुतरामागमत्वमेव युक्तम् ; आगमत एव श्रुतं युज्यते, न तु नोआगमत इत्यर्थः । यदि हि केवलोऽपि श्रुतोपयोग आगम उच्यते, तर्हि द्वितीये शब्दलक्षणे द्रव्यागमे मिलिते सुतरामयमागम एव युज्यते, न तु नोआगमः, आगमा-ऽनागमसमुदाय एवं तस्य युज्यमानत्वादिति भावः ॥ ८९१ ॥

पराभिप्रायमेवाशङ्क्य निराचिकीर्षुराह–

[5]अह नागमो त्ति सद्दो नोआगमया य तदहियत्तणओ । आगमओ दव्वसुयं किह सद्दो नागमो जइ सो ? ॥८९२॥

अथ परो मन्येत– शब्द आगमो न भवति, तत उपयोगस्य तदधिकत्वादनागमरूपशब्दाधिकत्वाद् नोआगमता, आगमा-ऽनागमसमुदाये आगमस्यैकदेशत्वाद् नोआगमत्वमित्यभिप्रायः । अत्र सूरिराह– हन्त ! यद्यसौ शब्द आगमो न भवति तर्ह्यागमतो द्रव्यश्रुतं

---

१ अविशेपितसमिश्रोपयोगदेश इति वा श्रुत कृत्वा । नोआगमभावश्रुते नोशब्दो भवेद् देशेऽपि ॥ ८९० ॥ २ क ग. 'देसो त्ति'।

३ नोआगमतः केचित् शब्दसहायमुपयोगमिच्छन्ति । ननु सुतरामागमत्व हि द्रव्य-भावागमयोर्युक्तम् ॥ ८९१ ॥ ४ घ छ 'व यु'।

५ अथ नागम इति शब्दो नोआगमता च तदधिकत्वत. । आगमतो द्रव्यश्रुतं कथ शब्दो नागमो यदि स. ? ॥ ८९२ ॥

आसेवकालोचकस्य च योऽगीतार्थगुरुः स खलु रत्नदाहकवणिग्ज्ञातेन गीतार्थयतिभिरुपालब्धः। इत्यक्षरार्थः। भावार्थस्तु कथानकगम्यः। तच्च कथ्यते–

वसन्तपुरं नाम नगरम्। तत्र चाऽगीतार्थः संविग्नाभास एको गच्छः सूरिसहितो विचरति। तन्मध्ये चैकः साध्वाभासस्तिष्ठति। स च प्रतिदिनमुदकार्द्रहस्तादिदोषदुष्टान्यनेषणीयभक्त-पानकादीनि गृहीत्वाऽऽवश्यककाले महान्तं संवेगमिवोद्वहन् सर्वं गुर्वन्तिकेऽन्वहमालोचयति। गुरुरपि तथैव प्रायश्चित्तं प्रयच्छति। तच्च प्रयच्छन्नगीतार्थत्वेन नित्यमेवं वक्ति– अहो! धर्मश्रद्धालुरयं महाभागः सुखेनाऽऽसेव्यते, दुष्करं च यदित्थमालोच्यते, अतोऽशठत्वादेव शुद्धोऽयम्। एतच्च दृष्ट्वाऽन्ये मुग्धसाधवश्चिन्तयन्ति– अहो! आलोचयितव्यमेवेह साध्यम्, तच्चेत् क्रियते, तदकृत्यासेवनेऽपि न कश्चिद् दोष इति। एवं सर्वस्मिन्नपि गच्छे प्रायः प्रवृत्तमसमञ्जसमिति। इत्थं च व्रजति कालेऽन्यदा गीतार्थसाधुः कश्चित् तत्र गच्छे प्राघूर्णकः समायातः। तेन च सोऽविधिः सर्वोऽपि दृष्टः। ततश्चिन्तितम्– अहो! अनेनाऽगीतार्थगुरुणा सर्वोऽप्ययं नाशितो गच्छः। ततस्तेन भणितो गुरुः– अहो! त्वममुं नित्यमकृत्यासेवकं साधुमित्थं प्रशंसन् भवसि गिरिनगरनृपतेस्तन्नगरनिवासिलोकस्य च सदृशः। कथम्?, इत्यत्रोच्यते–

गिरिनगरं नाम नगरम्। तत्र चैको वणिक् कोटीश्वरो निवसति। स च वैश्वानरभक्तत्वात् प्रतिवर्षं रत्नानामपवरकं भृत्वा वह्निना प्रदीपयति। तं च तथा कुर्वन्तं राजा नगरलोकश्च सर्वदा प्रशंसति, यथा– अहो! वैश्वानरे भक्तिरस्य, यदमुं भगवन्तं प्रतिवर्षमित्थं रत्नैस्तर्पयत्यसौ। एवं च प्रशस्यमानोऽयमादृततरः प्रतिसंवत्सरं तथाऽनुतिष्ठति। ततोऽन्यदा प्रचण्डपवनोद्धूतस्तेन प्रदीपितो वह्निः सराजगृहं समस्तमपि नगरं भस्मसात् करोति। ततः सनगरेण राज्ञा 'किमस्माभिरित्थं कुर्वन्नसौ पूर्वं न निषिद्धः?, किं वा प्रशंसितः?' इत्यादिबहुं पश्चात्तापं कृत्वा दण्डितः, निर्वासितश्च नगरादसौ वणिगिति।

एवमाचार्य! त्वमप्यविधिप्रवृत्तस्याऽस्य साधोर्नित्यमित्थं प्रशंसां कुर्वन्नमुम्, आत्मानम्, गच्छं च नाशयसि। तस्माद् मथुरापुरीनरपतेः, तन्निवासिलोकस्य च सदृशो भव, यतोऽनर्थभाग् न भवसि। कथम्?, इत्यत्राप्यभिधीयते–

मथुरानगर्यामपि वैश्वानरभक्तेन केनापीश्वरवणिजेत्थमेव रत्नभृतं गृहं प्रदीपयितुमारब्धम्। ततः सनगरलोकेन राज्ञा दण्डितः, तिरस्कृतश्चासौ वणिक्। अटव्यां गृहं कृत्वा किमित्थं न प्रदीपयसि?, इति निष्कासितो नगरादिति। त्वमपीत्थं कुर्वन्नमुम्, आत्मानं, गच्छं चानर्थेभ्यो रक्षसि। तदेवं युक्तिभिः शिक्ष्यमाणोऽप्यसौ गुरुरगीतार्थत्वेन साग्रहतया, निर्धर्मतया च स्वप्रवृत्तेर्न निवर्तते। ततस्तेन प्राघूर्णकसाधुना गच्छसाधवोऽभिहिताः– अलमेवंभूतस्य गुरोर्वशवर्तित्वेन, परिह्रियतामयम्; अन्यथा सर्वेषामनर्थाय संपत्स्यते। त-

[1]सचित्तो अचित्तो मीसो य समासओ जहासंखं । दुपयाई दुपएसाइओ य सेणाइदेसाई ॥ ८९६ ॥

व्यतिरिक्तद्रव्यस्कन्धः समासतः संक्षेपेण तावत् सचित्ता-ऽचित्त-मिश्रभेदात् त्रिविधः । स च यथासंख्यं द्विपदादिर्द्रष्टव्यः, तथाहि– द्विपदा-ऽपद-चतुष्पदरूपः सचित्तस्कन्धः । तत्र द्विपदं मनुष्य-शुक-सारिकादि, अपदं दाडिमा-ऽऽम्र-बीजपूरकादि, चतुष्पदं तु गवादि । द्विप्रदेशिकादिरनन्ताणुकस्कन्धपर्यवसानोऽचित्तस्कन्धः सेनाया हस्त्य-श्व-रथ-पदाति-खड्ग-कुन्ताद्यात्मकः पाश्चात्य-मध्यमा-ऽग्रदेशरूपो मिश्रस्कन्धः । आदिशब्दाद् ग्राम-नगराद्येकदेशपरिग्रहः ॥ ८९६ ॥

अथवा व्यतिरिक्तस्कन्धस्य प्रकारान्तरेण त्रैविध्यमाह—

[2]अहवा कसिणो अकसिणो अणेगदव्वो स एव विण्णेओ । देसाऽवचिओवचिओ अणेगदव्वो विसेसोऽयं ॥८९७॥

अथवा स एव व्यतिरिक्तस्कन्धोऽन्यथा त्रिविधो विज्ञेयः, तद्यथा– कृत्स्नस्कन्धः, अकृत्स्नस्कन्धः, अनेकद्रव्यस्कन्धश्चेति । यस्मादन्यो बृहत्तरः स्कन्धो नास्ति स कृत्स्नः परिपूर्णः स्कन्धः कृत्स्नस्कन्धः, स च हयस्कन्धः, गजस्कन्धः, नरस्कन्ध इत्यादि । आह– यद्येवम्, प्रकारान्तरमसिद्धम्, सचित्ततुरङ्गमादिस्कन्धस्यैव संज्ञान्तरेणोक्तत्वात् । नैवम्, यतः प्राक् सचित्तस्कन्धाधिकारात् तथाऽसंभविनोऽपि बुद्ध्या निकृष्य जीवा एवोक्ताः, इह तु जीव-तदधिष्ठितशरीरावयवलक्षणः समुदायः कृत्स्नस्कन्धत्वेन विवक्षितः, अतोऽभिधेयभेदात् सिद्धं प्रकारान्तरत्वम् । अस्त्वेवम्, केवलं हयादिस्कन्धस्य कृत्स्नत्वं नोपपद्यते, तदपेक्षया गजादिस्कन्धस्य बृहत्तरत्वात् । नैतदेवम्, यतोऽसंख्येयप्रदेशात्मको जीवः, तदधिष्ठिताश्च शरीरपुद्गला इत्येवंभूतः समुदाय एव हयादिस्कन्धत्वेन विवक्षितः, जीवस्य चासंख्येयप्रदेशात्मकतया सर्वत्र तुल्यत्वाद् गजादिस्कन्धस्य बृहत्तरत्वमसिद्धम् । यदि हि जीवप्रदेश-पुद्गलसमुदायः सामस्त्येन वर्धेत, तदा स्याद् गजादिस्कन्धस्य बृहत्त्वम्, तच्च नास्ति, समुदायस्य वृद्ध्यभावात्, केवलपुद्गलवृद्धि-हान्योश्चेहाऽविवक्षितत्वात्, इति सर्वत्र हयादौ कृत्स्नस्कन्धत्वं न विरुध्यते । अन्ये तु पूर्वं सचित्तस्कन्धविचारे जीव-तदधिष्ठितशरीरपुद्गलसमुदायः सचित्तस्कन्धः, अत्र तु शरीराद् बुद्ध्या पृथक् कृतो जीव एव केवलः कृत्स्नस्कन्ध इति व्यत्ययं व्याचक्षते । तदत्र व्याख्याने मेर्यमेव नास्ति, हय-गजादि-जीवानां प्रदेशतो हीनाधिक्याभावेन कृत्स्नस्कन्धत्वस्य सर्वत्राविरोधादिति ।

१ सचित्तोऽचित्तो मिश्रश्च समासतो यथासंख्यम् । द्विपदादिर्द्विप्रदेशादिकश्च सेनादिदेशादिः ॥ ८९६ ॥
२ अथवा कृत्स्नोऽकृत्स्नोऽनेकद्रव्यः स एव विज्ञेयः । देशाऽपचितोपचितोऽनेकद्रव्यो विशेषोऽयम् ॥ ८९७ ॥

तानि निश्चितानि। किमिति ?, आह– अव्यामोहादिनिमित्तम्; ऐकार्थिकैर्हि पर्यायनामभिर्ज्ञातैरन्यान्यस्थानेष्वन्यान्यनामश्रवणतः शिष्यो न मुह्यति। आदिशब्दाद् नानादेशजविनेयानां सुखेनैवाऽर्थप्रतिपत्तिर्भवतीत्यादि वाच्यमिति ॥ ८७१ ॥

कानि पुनस्तानि पर्यायनामानि ?, इत्याह—

[1] आवस्सयं अवस्सकरणिज्जं धुव निग्गहो विसोही य। अज्झयणछक्क वग्गो नाओ आराहणा मग्गो ॥ ८७२ ॥

एतानि दश पर्यायनामानि ॥ ८७२ ॥

तत्राऽऽवश्यकमिति कः शब्दार्थः ?, इत्याह—

[2] समणेण सावएण य अवस्सकायव्वयं हवइ जम्हा। अंतोअहो-निसिस्स उ तम्हा आवस्सयं नाम॥८७३॥

श्रमणादिभिरहोरात्रमध्येऽवश्यं करणादावश्यकमितीह तात्पर्यमिति ॥ ८७३ ॥

एतदेव सविशेषमाह—

[3] जदवस्सं कायव्वं तेणावस्सयमिदं गुणाणं वा। आवस्सयमाहारो आ मज्जाया-भिविहिवाई ॥ ८७४ ॥

आ वस्सं वा जीवं करइ जं नाण-दंसण-गुणाणं। संनिज्झ-भावण-च्छायणेहिं वावासयं गुणओ ॥८७५॥

यद् यस्मादवश्यं कर्तव्यं, तेन तस्मादावश्यकमिदामिति। एतत् प्राक्तनगाथायाः पर्यवसितार्थकथनमेव। अथवा, आङ् मर्यादा-ऽभिविधिवाची, आ– मर्यादया, अभिविधिना वा गुणानामपाश्रय आधार इदमित्यापाश्रयः– गुणाधार इत्यर्थः। नन्वाधारवाचक आपाश्रयशब्दः पुंलिङ्गे वर्तते, तत् कथमापाश्रयमिति नपुंसकम् ? इति चेत्। न, प्राकृतशैलीवशतोऽदोपादिति। अथवा, ज्ञानादिगुणानामा समन्ताद् वश्यमात्मानं करोतीत्यावश्यकम्, यथा– अन्तं करोतीत्यन्तकः। सांनिध्य-भावना-ऽऽच्छादनैर्वाऽऽत्रासकं गुणत इत्यावासकमुच्यते। इदमुक्तं भवति– 'वस निवासे' इति गुणशून्यमात्मानं गुणैः, आ– समन्ताद् वासयति गुणसांनिध्यमात्मनः करोतीत्या-

१ आवश्यकमवश्यकरणीयं ध्रुवं निग्रहो विशुद्धिश्च। अध्ययनषट्कं वर्गो न्याय आराधना मार्गः ॥ ८७२ ॥
२ श्रमणेण श्रावकेण चावश्यकर्तव्यकं भवति यस्मात्। अन्तरहर्निशं तु तस्मादावश्यकं नाम ॥ ८७३ ॥
३ यदवश्य कर्तव्यं तेमावश्यकमिद गुणानां वा। आपाश्रय आधार आ मर्यादा-ऽभिविधिवाची ॥ ८७४ ॥
आ वश्यं वा जीवं करोति यज्ज्ञान-दर्शन-गुणानाम्। सांनिध्य-भावना-ऽऽच्छादनैर्वाऽऽवासकं गुणतः ॥ ८७५ ॥

स च ज्ञान-क्रिया-गुणसमूहः कः ?, इत्याह—

[1]सामाइयाइयाणं छण्हज्झयणाणं सो समावेसो । नोआगमो त्ति भण्णइ नोसद्दो मीसभावम्मि ॥८९९॥

स च ज्ञान-क्रिया-गुणसमूहोऽत्र वक्ष्यमाणस्वरूपाणां सामायिकादीनां षण्णामध्ययनानां समावेशः समुदाय उच्यते, अस्यैव ज्ञान-क्रिया-गुणमयत्वात् । अयं च नोआगमो भण्यते । कुतः ?, इत्याह– यतो नोशब्दो मिश्रभावे वर्तते, मिश्रश्चैष ज्ञान-क्रिया-गुणोपयोग इति । तदेवमुक्तो भावस्कन्धोऽपि ॥८९९॥

अथ स्कन्धस्यैकार्थिकनामान्याह—

[2]गण-का[3]य-निकाए य खंधे वग्गे तहेव रासी य । पुंजे पिंडे नियरे संघाए आउल समू[4]हे ॥९००॥

एषामपि स्कन्धैकार्थनाम्नामर्थः प्रागतिदेशतः प्रोक्त एवेति । तदेवमावश्यकस्य श्रुतस्य स्कन्धस्य च विहितो नामादिन्यासः । अथास्य पदत्रयस्यापि समास उच्यते । षण्णां श्रुतविशेषाणां स्कन्धः श्रुतस्कन्धः, आवश्यकं च तत् श्रुतस्कन्धश्चावश्यकश्रुतस्कन्धः । अथवा, आवश्यकं च तत् श्रुतं चावश्यकश्रुतम्, तस्य षडध्ययनसमुदायात्मकः स्कन्ध आवश्यकश्रुतस्कन्ध इति । उक्तं शास्त्राभिधानम् ॥ ९०० ॥

अथ सामायिकाद्यध्ययनानामर्थाधिकारदर्शनार्थं प्रस्तावनामाह–

[5]किं पुण छक्कज्झयणं, जेण च्छलत्थाहिगारविणिउत्तं । सामाइयाइयाणं ते य इमे छ ज्जहासंखं ॥९०१॥

आह–किं पुनरिह कारणम्, येन षडध्ययनमिदमावश्यकम्–षड् अध्ययनानि यत्र तत् षडध्ययनमिति समासः ? । अत्रोच्यते–येन षड्भिरर्थाधिकारैर्विनियुक्तं निबद्धम् । ते च षडर्थाधिकाराः सामायिकादीनां षण्णामध्ययनानां यथासंख्यमेते द्रष्टव्या इति ॥९०१॥

के पुनस्ते ?, इत्याह—

१ सामायिकादिकानां षण्णामध्ययनानां स समावेश. । नोआगम इति भण्यते नोशब्दो मिश्रभावे ॥ ८९९ ॥
२ गण-काय निकायाश्च स्कन्धो वर्गस्तथैव राशिश्च । पुञ्जः पिण्डो निकर· सघात आकुलः समूहः ॥ ९०० ॥ ३ 'काए अ निकाए खं' इत्यनुयोगद्वारसूत्रे । ४ घ छ.'मूहो' । ५ किं पुन. षडध्ययनं, येन षडर्थाधिकारविनियुक्तम् । सामायिकादिकानां ते चेमे षड् यथासंख्यम् ॥ ९०१ ॥

इह नाम-स्थापने सुगमत्वाद् नोक्ते । द्रव्यश्रुतं त्वागमतः, नोआगमतश्च । तत्राऽऽगमतो द्रव्यश्रुतं वक्ता तदुपयोगनिरपेक्षः– अनुपयुक्त इत्यर्थः । नोआगमतस्तु त्रिविधम्– ज्ञशरीरद्रव्यश्रुतम्, भव्यशरीरद्रव्यश्रुतम्, तद्व्यतिरिक्तं द्रव्यश्रुतं चेति । तत्राद्यभेदद्वयमावश्यकवदेव बोद्धव्यम् ॥ ८७७ ॥

तद्व्यतिरिक्तं त्विदं किम् ?, इत्याह–

[1]पत्ताइगयं सुत्तं सुत्तं च जमंडजाइ पंचविहं । आगमओ भावसुयं सुउवउत्तो तओऽणण्णो ॥ ८७८ ॥

इह श्रुतं सूत्रं च द्वे अपि किलैकार्थे । तत्र तल-ताल्यादिप्रभवानि पत्राणि प्रतीतानि, तेषु गतं लिखितं सूत्रं पत्रादिगतम् ; आदिशब्दात् पत्रसंघातनिष्पन्नाः पुस्तकाः[2], वस्त्रादयश्च गृह्यन्ते; तेष्वपि लिखितं सूत्रं ज्ञशरीर-भव्यशरीरव्यतिरिक्तं द्रव्यश्रुतमुच्यते । अथवा, अण्डजाद्यपि यदागमे पञ्चविधं सूत्रमुक्तम् ; तद्यथा– "[3]अंडए, बोंडए, कीडए, वालए, वागए" * । एतदपि सूत्राभिधानसाम्याद् व्यतिरिक्तं द्रव्यश्रुतमुच्यते । तत्राण्डाच्चतुरिन्द्रियकीटविशेषनिर्वर्तितकोशकाररूपाज्जातमण्डजं लोकप्रतीतं चटकसूत्रमित्यर्थः । बोण्डं वमनीफलं तस्माज्जातं बोण्डजं कर्पाससूत्रमित्यर्थः । कीटजं तु पञ्चविधम् , तद्यथा–"[4]पट्टे, मलए, अंसुए, चीणंसुए, किमिराए"* एते पञ्चापि पट्टसूत्रविशेषाः । वालजमपि पञ्चविधम् , तद्यथा– '[5]उण्णिए, उट्टिए, मिगलोमिए, कोतवे, किट्टिसे' * । तत्र मूषिकलोमनिष्पन्नं कौतवम् , ऊर्णाद्युद्वरितकिट्टिसनिष्पन्नं सूत्रं किट्टिसम् ; अथवा, ऊर्णादीनां द्विकादिसंयोगनिष्पन्नं किट्टिसम् ; यदिवा, उक्तशेषाऽश्वादिजीवलोमनिष्पन्नं किट्टिसम् । शेषं प्रतीतम् । सणा-ऽतस्यादिप्रभवं वल्कजम् । तदेतत् सर्वमपि व्यतिरिक्तं द्रव्यश्रुतम् ।

भावश्रुतमपि द्विधा– आगमतः, नोआगमतश्च । तत्र श्रुतोपयुक्तस्तदध्येताऽऽगमतो भावश्रुतम् । ननूपयोग एव भावश्रुतं युज्यते, तत्कथमिह तद्वान् गृह्यते ?, इत्याह 'तओऽणण्णो त्ति' ततः श्रुतोपयोगादनन्य इति कृत्वोपचारतः स एव भावश्रुतमुच्यत इति ॥८७८॥

नोआगमतो भावश्रुतमाह–

१ पत्रादिगत सूत्रं सूत्र च यदण्डजादि पञ्चविधम् । आगमतो भावश्रुतं श्रुतोपयुक्तस्ततोऽनन्यः ॥ ८७८ ॥

२ पुस्तकशब्दस्य पौंस्त्र न दोषाय, "पुस्तक-मुस्तक-" इति लिङ्गानुशासने तस्य पुंनपुंसकत्वेनाऽनुशासनात् ।

३ अण्डजम् , बोण्डजम् , कीटजम् , वालजम् , वल्कजम् । ४ पट्टम् , मलयम् , अंशुकम् , चीनांशुकम् , कृमिरागम् ।

५ और्णिकम् , औष्ट्रिकम् , मृगलोमिकम् , कौतवम् , किट्टिसम् । * अनुयोगद्वारसूत्रस्थोऽयं पाठः ।

अथ 'तस्स फल-जोग मंगल-समुदायत्था तहेव दाराइं'[1] इत्यादिगाथाभणनक्रमायातमुपक्रमाद्यनुयोगद्वारभणनरूपं पञ्चमं द्वारमभिधित्सुः, प्रथमं तावत् सामायिकाध्ययनं वर्णयन्नाह—

तत्थज्झयणं[3] सामाइयं ति समभावलक्खणं पढमं । जं सव्वगुणाहारो वोमं पिव सव्वदव्वाणं ॥९०५॥

तत्र तेषु षट्स्वध्ययनेषु मध्ये समभावेन लक्ष्यते समभावलक्षणं सामायिकाध्ययनं सर्वेषामपि प्रथममाद्यम् । कुतस्तस्य प्राथम्यम् ?, इत्याह— यद् यस्मात् कारणात् सर्वेषामपि मूलो-त्तरगुणानां तदेव सामायिकाध्ययनमाधारः, तस्मिन् सत्येव तद्भावात्, तदभावे च तेषामभावात् । न हि समताशून्ये प्राणिनि क्वापि पारमार्थिकगुणावस्थानमस्ति । यथा केषां किमाधारः ?, इत्याह— व्योम आकाशं तदिव सर्वेषामपि धर्मास्तिकायादिद्रव्याणामिति ॥ ९०५ ॥

अथवा[4] प्राथम्ये तस्य कारणान्तरमाह—

अहवा[5] तब्भेय च्चिय सेसा जं दंसणाइयं तिविहं । न गुणो य नाण-दंसण-चरणब्भहिओ जओ अत्थि ॥९०६॥

अथवा, तद्भेदा एव सामायिकाध्ययनविशेषा एव शेषाणि चतुर्विंशतिस्तवाद्यध्ययनानि । कुतः ?, इत्याह— यद् यस्माद् दर्शन-ज्ञान-चारित्रसामायिकभेदात् त्रिविधं सामायिकम्; यद् वक्ष्यति— 'सामाइयं[6] च तिविहं सम्मत्त सुयं तहा चरित्तं च' इति। अस्मिंश्च भेदत्रये सर्वोऽपि गुणजातिरन्तर्भवति, यस्माद् न ज्ञान-दर्शन-चारित्रेभ्योऽन्यः कश्चनापि चतुर्विंशतिस्तवादिगतो गुणः समस्ति । तदेवं शेषाध्ययनानां तद्भेदत्वात् सामायिकमेवादौ निर्दिष्टमिति ॥ ९०६ ॥

ततः किम् ?, इत्याह—

अणुओगदाराइं[7] महापुरस्सेव तस्स चत्तारि । अणुओगो त्ति तदत्थो दाराइं तस्स उ मुहाइं ॥ ९०७ ॥

---

१ गाथा २ । २ क ग 'श्चमद्वा' । ३ तत्राध्ययन सामायिकमिति समभावलक्षण प्रथमम् । यत् सर्वगुणाधारो व्योमेव सर्वद्रव्याणाम् ॥ ९०५ ॥

४ क.ख ग.'थ प्रा' । ५ अथवा तद्भेदा एव शेषा यद् दर्शनादिकं त्रिविधम् । न गुणश्च ज्ञान दर्शन-चारित्राभ्यधिको यतोऽस्ति ॥ ९०६ ॥

६ सामायिक च त्रिविधं सम्यक्त्व श्रुतं तथा चारित्र च ।

७ अनुयोगद्वाराणि महापुरस्येव तस्य चत्वारि । अनुयोग इति तदर्थो द्वाराणि तस्य तु मुखानि ॥ ९०७ ॥

यदि च सूरिरेतद् ब्रूयात्– अविशुद्धनयमतेन श्रुतलब्धिरपि भावश्रुतमुच्यते। ततश्चानुपयुक्तेऽपि लब्धिसंपन्ने जीवे तल्लब्धिरूपं श्रुतं लब्धिश्रुतं भावश्रुतमेवाऽङ्गीक्रियते, अन्यत्तु लब्ध्यादिशून्यस्य यत् श्रुतं तद् द्रव्यश्रुतम्, इति न तस्य निर्विषयतेति भावः। हन्त! तर्ह्यनुपयुक्तस्य पठतो वक्तुः किं द्रव्यश्रुतम्?, तस्यापि श्रुतलब्धिसद्भावतो भावश्रुतप्राप्त्या तदवस्थैव द्रव्यश्रुतस्य निर्विषयतेति भावः। न हि श्रुतलब्धिरहितः कोऽपि पठति। तस्मादेतदपि वाङ्मात्रत्वाद् न किञ्चिदिति ॥ ८८२ ॥

अथाचार्यः प्रतिविधानमाह—

[1]आगम सुओवओगो सुद्धो चिय न चरणाइसंमिस्सो। मीसेऽवि वा विवक्खा सुयस्स चरणाइभिन्नस्स ॥८८३॥

इह तावत् सर्वस्याप्यस्य प्रक्रमस्य भावार्थ उच्यते– परेण निषेधवचनं नोशब्दमवगम्य पूर्वपक्षः कृतः। आचार्यस्तु मिश्रवचनं नोशब्दं चेतसि निधाय प्रतिविधत्ते। मिश्रवचनेनापि नोशब्देन द्रव्यश्रुतम्, आगमतो भावश्रुतम्, नोआगमतो भावश्रुतं चेत्येतत्त्रितयं कथं पृथगुपपद्यते? इति चेत्। उच्यते–अनुपयुक्तस्य श्रुताध्येतुस्तावद् द्रव्यश्रुतं 'आगम त्ति' एकदेशेन समुदायस्य गम्यमानत्वादागमतो भावश्रुतमुच्यते। किम्?, इत्याह–शुद्ध एव श्रुतोपयोगः, न चरणादिमिश्रः। यदि वा, चरणादिमिश्रेऽपि श्रुतोपयोगे तद्भिन्नश्रुतोपयोगस्य विवक्षा क्रियते। इदमुक्तं भवति–चरणादिमिश्रमपि श्रुतोपयोगं भिन्नं विवक्षितत्वादागमतो भावश्रुतमुच्यत इति ॥ ८८३ ॥

तर्हि नोआगमतो भावश्रुतं किम्?, इत्याह—

[2]चरणाइसमेयम्मि उ उवओगो जो सुए न तओ समए। नोआगमो त्ति भण्णइ नोसद्दो मीसभावम्मि ॥८८४॥

चरणादिसमेते तु श्रुते यश्चरणादिमिश्र उपयोगस्तकोऽसौ समयप्रसिद्ध्या नोआगमतो भावश्रुतमुच्यते। नोशब्दश्चेह मिश्रवचन इति। निषेधवचनस्तु नोशब्दोऽत्र नेष्यते, यतोऽसौ सर्वनिषेधवचनो वा स्यात्, देशनिषेधवचनो वा? ॥ ८८४ ॥

तत्र सर्वनिषेधवचनत्वे नोशब्दस्य दोषमाह–

[3]सव्वनिसेहे दोसो सव्वसुयमणागमो पसज्जेज्जा। होज्जा वाऽणागमओ सुयवज्जमणागमसुयं तु ॥८८५॥

1 आगमत श्रुतोपयोगः शुद्ध एव न चरणादिसंमिश्रः। मिश्रेऽपि वा विवक्षा श्रुतस्य चरणादिभिन्नस्य ॥ ८८३ ॥
2 चरणादिसमेते तूपयोगो यः श्रुते सकः समये। नोआगम इति भण्यते नोशब्दो मिश्रभावे ॥ ८८४ ॥
3 सर्वनिषेधे दोषः सर्वश्रुतमनागमः प्रसज्येत। भवेद् वाऽनागमतः श्रुतवर्जमनागमश्रुतं तु ॥ ८८५ ॥

अथ '[1]तब्भेय त्ति' तद्भेदद्वारमाह– 'छ-त्तीत्यादि' इह यथासंख्यं संबन्धः– उपक्रमः षड्विकल्पः, निक्षेपस्त्रिभेदः, अनुगमो द्विभेदः, नयोऽपि द्विभेदः । प्रभेदतस्तूपक्रमादयोऽनेकभेदाः । एषां च भेद-प्रभेदानां स्वरूपं पुरस्ताद् विस्तरेण वक्ष्यते ॥ ९१० ॥

॥ इति षष्ठं तद्भेदद्वारम् ॥

अथ '[1]निरुत्त त्ति' सप्तमं निरुक्तिद्वारमभिधित्सुराह–

[2]सत्थस्सोवक्कमणं उवक्कमो तेण तम्मि व तओ वा । सत्थसमीवीकरणं आणयणं नासदेसम्मि ॥ ९११ ॥

उप सामीप्ये, 'क्रमु पादविक्षेपे' उपक्रमणं दूरस्थस्य शास्त्रादिवस्तुनस्तैस्तैः प्रतिपादनप्रकारैः समीपीकरणं न्यासदेशानयनं निक्षेपयोग्यताकरणमित्युपक्रमः; उपक्रान्तं ह्युपक्रमान्तर्गतभेदैर्विचारितं निक्षिप्यते, नान्यथेति भावः । उपक्रम्यते वा निक्षेपयोग्यं क्रियतेऽनेन गुरुवाग्योगेनेत्युपक्रमः । अथवा, उपक्रम्यतेऽस्मिन् शिष्यश्रवणभावे सतीत्युपक्रमः । यदिवा, उपक्रम्यतेऽस्माद् विनीतविनेयविनयादित्युपक्रमः; विनयेनाऽऽराधितो हि गुरुरुपक्रम्य निक्षेपयोग्यं शास्त्रं करोतीत्यभिप्रायः । तदेवं करणा-ऽधिकरणा-पादानकारकैर्गुरुवाग्योगादयोऽर्था विवक्षाभेदतो भेदेनोक्ताः; यदि तु विवक्षया सर्वेऽप्येकैककरणादिकारकवाच्यत्वेनोच्यन्ते, तथापि न दोषः । 'सत्थसमीवीकरणं ति' शास्त्रस्य समीपीकरणं शास्त्रस्य न्यासदेशानयनं निक्षेपयोग्यताकरणमुपक्रम इति सर्वत्र संबध्यत इति ॥ ९११ ॥

अथ निक्षेपस्य निरुक्तिमाह—

[3]निक्खिप्पइ तेण तहिं तओ व निक्खेवणं व निक्खेवो । नियओ व निच्छिओ वा खेवो नासो त्ति जं भणियं ॥९१२॥

निक्षिप्यते शास्त्रमध्ययनो-द्देशादिकं च नाम-स्थापना-द्रव्यादिभेदैर्न्यस्यते व्यवस्थाप्यतेऽनेन, अस्मिन्, अस्माद् वेति निक्षेपः; गुरुवाग्योगादिविवक्षा तथैव । अथवा, निक्षेपणं शास्त्रादेर्नाम-स्थापनादिभेदैर्न्यसनं व्यवस्थापनमिति निक्षेपः । निशब्द-क्षेपशब्दयोरर्थमाह– नियतो निश्चितो वा, क्षेपः– शास्त्रादेर्नामादिन्यास इति निक्षेप इति यदुक्तं, भवत्ययं परमार्थ इत्यर्थः ॥ ९१२ ॥

अथानुगमनिरुक्तिमाह—

---

१ गाथा २ । २ शास्त्रस्योपक्रमणमुपक्रमस्तेन तस्मिन् वा ततो वा । शास्त्रसमीपीकरणमानयनं न्यासदेशे ॥ ९११ ॥

३ निक्षिप्यते तेन तस्मिंस्ततो वा निक्षेपण वा निक्षेप. । नियतो वा निश्चितो वा क्षेपो न्यास इति यद् भणितम् ॥ ९१२ ॥

अथ प्रेरकाभिप्रायमाशङ्कमान आह—

[1]आह नणु मीसभावे नाभिहिओ, अभिहिओ य नोसद्दो । देसे तदन्नभावे दव्वे किरियाए भावे य ॥८८८॥

आह– प्रतिषेधवाचकत्वाद् नोशब्दो मिश्रभावे न क्वचिदाभिहितः । किं तर्हि ?, देशादिषु पञ्चस्वर्थेष्वभिहितः । तत्र देशे नोघटो घटैकदेश उच्यते, यतो घटैकदेशस्तावदघटो न वक्तव्यः, नापि घटः, किं तर्हि ?, नोघटः । तथाहि– घटैकदेशस्य ग्रीवादेरघटत्वे तदन्यदेशानामपि तद्वदेवाऽघटत्वात्[2] सर्वघटाभावप्रसङ्गः, एवं पटे[3]-शकटादावप्यभावप्रसङ्गेन सर्वशून्यतापत्तिः । नापि घटैकदेशो घटः, एवं हि प्रत्यवयवं घटप्राप्त्यैकस्मिन्नपि घटे घटबाहुल्यापत्तिः, तथा च सत्येकघटविषयप्रवृत्ति-निवृत्त्यादिव्यवहारोच्छेदप्रसङ्गः । तस्मात् पारिशेष्याद् घटैकदेशो नोघट एवोच्यते, पर्यायशब्दत्वादनयोः । तदन्यभावेऽपि नोशब्दो दृश्यते, यथा 'नोघटः' इत्युक्ते तदन्यः पटादिः प्रतीयते, यथा 'नो ब्राह्मणः' इत्यभिहिते क्षत्रियादिर्गम्यते । द्रव्ये तु नोशब्दो घटैकदेशवचनादिः– नो घटः, नो पटः, नो स्तम्भ इत्यादिघटाद्येकदेशवाचक इत्यर्थः । ननु देशवाचकादस्य को भेदः ?, इति चेत् । उच्यते– तत्र घटादिसंबद्ध एव तदेकदेशो नोघटादिरुक्तः, अत्र तु स एव घटाद्येकदेशो ग्रीवादिः पृथग्भूतो रथ्यादिपतितः स्वतन्त्र एव गृह्यते । स च घटादेः पार्थक्येन वर्तमानत्वात् पृथगेव स्वतन्त्रं द्रव्यम्, इति द्रव्ये नोशब्दः । क्रियानिषेधवचनो नोशब्दः– 'नो पचति, नो पक्तव्यमित्यादि । भावनिषेधे तु नोशब्दो 'नो शय्यते, नो स्थीयते' इत्यादि । भाव-क्रिययोश्च विशेषः सिद्ध-साध्यतादि[4]रूपः कोऽपि शब्दशास्त्रादिगतो बोद्धव्यः । इत्येवं विवक्षावशाद् देशादिष्वर्थेषु दृष्टो नोशब्दः, न तु मिश्रभाव इति ॥ ८८८ ॥

अत्रोत्तरमाह—

[5]सच्चमयं देसाईसु तहवत्थवसेण सद्दविणिओगो । अमियत्था य निवाया जुज्जइ तो मीसभावे वि ॥८८९॥

सत्यम्, देशप्रतिषेधादिवचनोऽयं नोशब्दः, तथाप्यर्थवशाच्छब्दानां विनियोगः– यो यत्राऽर्थो घटते, तस्मिन्नर्थे तत्र ते प्रयुज्यन्त इत्यर्थः। आह– नन्वेकस्यापि शब्दस्य किमनेकार्था विद्यन्ते, येनैवमुच्यते ?, इत्याशङ्क्याह– द्योतकत्वेनापरिमितार्थाश्च निपाता इति मिश्रवचनोऽपि प्रयुज्यते नोशब्दः, न किञ्चित् क्षूयत इति ॥ ८८९ ॥

---

१ आह ननु मिश्रभावे नाभिहित', अभिहितश्च नोशब्द । देशे तदन्यभावे द्रव्ये क्रियायां भावे च ॥ ८८८ ॥ २ क.ग. 'त्वाभा' । ३ क ग. 'टक' ।
४ क ख ग. 'तारू' । ५ सत्यमय देशादिषु तथाऽप्यर्थवशेन शब्दविनियोगः । असितार्थाश्च निपाता युज्यते ततो मिश्रभावेऽपि ॥ ८८९ ॥

नाऽपि नयमतविकलोऽनुगम इति । यतश्च संबन्धरूप उपक्रमः संबन्धोपक्रमस्तेन संबन्धकत्रोंपक्रमेण समीपमानीय न्यासयोग्यं विधाय न्यस्तनिक्षेपं विहितनाम-स्थापनादिनिक्षेपं सत् शास्त्रं ततोऽर्थतोऽनुगम्यते व्याख्यायते नानाविधानैर्नानाभेदैर्नयैः; तस्मादयमेवानुयोग-द्वारक्रमः ॥ ९१५ ॥ ९१६ ॥

॥ इति क्रमप्रयोजनद्वारं समाप्तम् ॥

॥ तत्समाप्तौ च 'तस्स फल-जोग-' इत्यादि गाथा समाप्ता ॥

इह चोपक्रमो भावोपक्रमतो विस्तरेण पुरस्ताद् वक्ष्यते । तथा, आनुपूर्वी-नाम-प्रमाण-वक्तव्यता-ऽर्थाऽधिकार-समवतारलक्षणैः षड्भिर्भेदैर्विस्तरेणाभिधास्यते । विस्तरवतश्चार्थस्यैदंपर्यमवधारयितुं न शक्नुवन्ति मन्दमतयः, अतस्तदनुग्रहार्थं वक्ष्यमाणभावोपक्रमगतम्, आनुपूर्व्यादिषडर्थगतं च संक्षेपमाह—

[2]गुरुभावोवक्कमणं का परिवाडी कइत्थमज्झयणं । भावम्मि कम्मि वट्टइ किमिदं दव्वं गुणो कम्मं ? ॥९१७॥
जीवगुणोऽजीवगुणो किं नाणं दंसणं चरित्तं वा । पच्चक्खं अणुमाणं ओवम्ममहागमो वावि ? ॥ ९१८ ॥
लोइय लोउत्तरिओ किं सुयमत्थोऽहवोभयं होज्जा । अप्पयओ अणंतरओ परंपरं वागमो कस्स ? ॥९१९॥
किं दिट्ठिवाइयं कालियं व किंवा सुयत्थपरिमाणं । ससमय-परसमयोभयसिद्धंताणं व को वच्चो ? ॥९२०॥
को व समएगदेसो समुदायत्थाहियार इह नियओ । अज्झयणोवक्कमणं कायव्वमिहेवमाईहिं ॥ ९२१ ॥

इह सामायिकाद्यध्ययनार्थं बुभुत्सुना विनेयेन गुरोर्भावोपक्रमो विधेयः, केन पुनः प्रकारेणैष सुप्रसन्नः स्यादिति भावोपक्रम-

---

१ गाथा २ । २ गुरुभावोपक्रमण का परिपाटी कतिथमध्ययनम् । भावे कस्मिन् वर्तते किमिदं द्रव्यं गुणः कर्म ? ॥ ९१७ ॥
जीवगुणोऽजीवगुण किं ज्ञानं दर्शनं चारित्रं वा । प्रत्यक्षमनुमानमौपम्यमथाऽऽगमो वापि ? ॥ ९१८ ॥
लौकिको लौकोत्तरिक. किं श्रुतमर्थोऽथवोभय भवेत् । आत्मतोऽनन्तरत परम्परातो वागम कस्य ? ॥ ९१९ ॥
किं दृष्टिवादिकं कालिकं वा किंवा श्रुतार्थपरिमाणम् । स्वसमय परसमयो-भयसिद्धान्तानां वा को वाच्य ? ॥ ९२० ॥
को वा समयैकदेश. समुदायार्थाधिकार इह नियत. । अध्ययनोपक्रमण कर्तव्यमिहैवमादिभि· ॥ ९२१ ॥

स्यात् ? । सुप्रतीतमप्यस्येत्थमागमतो द्रव्यश्रुतत्वं न स्यात्, अनागमत्वात् । तस्माद् द्रव्यत आगम एवाऽयम्, अतो द्रव्यागमसहायो भावागम आगमत एव भावश्रुतम्, न तु नोआगमत इति स्थितम् ॥ ८९२ ॥

अथान्यदपि मतान्तरमुपन्यस्य दूषयति—

अन्ने[1] नोआगमओ सामित्ताणासियं सुयं बेंति । जइ न सुयमणुवओगे नणु सुयरमणासियं नत्थि ॥८९३॥

अन्ये तु केचनाऽप्याचार्याः स्वामिनमाश्रितं श्रुतोपयोगं भावश्रुतं ब्रुवते, स्वाम्यनाश्रितं तु तमेव नोआगमतो भावश्रुतं ब्रुवते, एतच्चातिफल्ग्वेवेति दर्शयति– 'जईत्यादि' यद्यनुपयुक्तेऽपि वक्तरि श्रुतं नोक्तम्, किन्तु विशिष्टेऽपि तस्मिन् स्वामिनि द्रव्यश्रुतमेव पूर्वमभिहितम्; मूढ ! तर्हि सुतरामेवाऽनाश्रितं भावश्रुतं नास्ति, स्वामिनमन्तरेण पुस्तकादिलिखिते श्रुते उपयोगस्य दूरोत्सारितत्वात्, उपयोगमन्तरेण च भावश्रुतस्य सर्वथाऽसत्त्वात्; 'स्वाम्यनाश्रितं च श्रुतं काप्यस्ति' इति प्रतिपादयितुर्महासाहसिकत्वमिति यत् किञ्चिदेतदिति । तदेवमुक्तं नोआगमतोऽपि भावश्रुतम् ॥ ८९३ ॥

अथ श्रुतस्यैकार्थिकनामान्याह—

सुय[2]-सुत्त-गंथ-सिद्धंत-सासणे आण-वयण उवएसो । पण्णवण आगमो वि य एगट्ठा पज्जया सुत्ते ॥८९४॥

एतेषां च नाम्नामर्थः प्रागतिदेशेनोक्त एवेति । तदेवं विहितः श्रुतस्यापि नामादिन्यासः ॥ ८९४ ॥

अथ स्कन्धस्य तमभिधातुमाह—

खंधपए[3]ऽणुवउत्तो वत्ताऽऽगमओ स दव्वखंधो उ । नोआगमओ जाणय-भव्वसरीरा-ऽइरित्तोऽयं ॥८९५॥

इहापि नाम-स्थापने सुखप्ररूपणीयत्वाद् नोक्ते । द्रव्यस्कन्धस्त्वागमतः स्कन्धपदेऽनुपयुक्तो वक्ता । नोआगमतस्तु ज्ञशरीरद्रव्यस्कन्धः, भव्यशरीरद्रव्यस्कन्धः, तदुभयव्यतिरिक्तद्रव्यस्कन्धश्चेत्येवं त्रिविधोऽयमिति ॥ ८९५ ॥

तत्र व्यतिरिक्तद्रव्यस्कन्धः सचित्तादिभेदात् पुनरपि त्रिविध इति दर्शयति—

१ अन्ये नोआगमतः स्वामित्वानाश्रितं श्रुतं ब्रुवन्ति । यदि न श्रुतमनुपयोगे ननु सुतरामनाश्रितं नास्ति ॥ ८९३ ॥
२ श्रुत-सूत्र-ग्रन्थ-सिद्धान्त-शासनानि आज्ञा-वचने उपदेशः । प्रज्ञपनमागमोऽपि चैकार्थाः पर्यायाः सूत्रे ॥ ८९४ ॥
३ स्कन्धपदेऽनुपयुक्तो वक्ताऽऽगमतः स द्रव्यस्कन्धस्तु । नोआगमतो ज्ञायक-भव्यशरीरा-ऽतिरिक्तोऽयम् ॥ ८९५ ॥

तत्राद्यभेदद्वयं सुगमम्। तद्व्यतिरिक्तद्रव्योपक्रमस्तु सचित्तादिभेदात् त्रिविधः। तत्र सचित्तद्रव्योपक्रमो द्विपद-चतुष्पदादीनाम्, अचित्तद्रव्योपक्रमो गुड-खण्ड-कुसुम्भादीनाम्, मिश्रद्रव्योपक्रमस्तु तेषामेवाऽऽभरणादियुक्तानां द्विपदादीनाम्। अयं च सचित्ताद्युपक्रमः प्रत्येकं पुनरपि द्विधा–परिकर्मणि, वस्तुनाशे चेति ॥ ९२२ ॥

तत्र परिकर्म-विनाशयोः स्वरूपमाह–

[1]परिकम्मं किरियाए वत्थूणं गुणविसेसपरिणामो। तदभावे य विणासो दव्वाईणं जहाजोगं ॥ ९२३ ॥

इह परिकर्मोच्यते। किम्?, इत्याह– क्रियया क्रियाविशेषेण यो वस्तूनां गुणविशेषपरिणामो गुणविशेषाधानमित्यर्थः। तद्यथा– पुरुषादीनां घृत-रसायनाद्युपयोगक्रियया, स्नेहमर्दनादिक्रियया च वर्ण-बल-वयःस्तम्भादयः, कर्ण-स्कन्धवर्धनादयश्च क्रियन्ते। केचित् शास्त्र-शिल्प-गन्धर्वनृत्यादिकलाऽऽपादनमपि प्रस्तुतोपक्रममाचक्षते; एतच्च विज्ञानविशेषाधानरूपत्वाद् भावोपक्रमो युज्यते; यदि वा, आत्मद्रव्यसंस्कारविवक्षया द्रव्योपक्रमेऽप्यविरोधः। एवं शुक-सारिकादीनामपि शिक्षागुणाधाने भावनीयम्। इत्युक्तः परिकर्मणि द्विपदादीनां सचित्तद्रव्योपक्रमः।

अथ वस्तुनाशोपक्रम उच्यते– 'तदभावे विणासो त्ति' तदभावे वस्त्वभावापादने विनाशो विनाशस्योपक्रम इत्यर्थः, तेषामेव पुरुषादीनां कालान्तरभाविनो विनाशस्य खड्गादिभिरुपक्रम्येदानीमेव क्रियमाणत्वादिति। एवं चतुष्पदानामपि हस्त्य-श्वादीनाम्, अपदानां दाडिमा-ऽऽम्र-कपित्थादीनां परिकर्म-विनाशौ भावनीयाविति। एवं सचित्तद्रव्योपक्रमः। अचेतनस्य तु मणि-मौक्तिक-वस्त्रादेः क्षार-मृत्पुटपाकादिना परिकर्मोपक्रमः, घनाऽऽघातादिना तु नाशोपक्रमः। मिश्रद्रव्यस्य पुनस्तस्यैव द्विपदादेर्वस्त्रालङ्कारादियुक्तस्य द्विविधोऽप्युपक्रमो भावनीयः। एवं यथा द्रव्यस्योपक्रमः, एवमादिशब्दात् क्षेत्र-कालयोरपि यथायोगं भावनीयः। अत एवोक्तम्–'दव्वाईणं जहाजोगं ति'। तं च क्षेत्र-कालोपक्रमं '[3]नावाए उवक्कमणं' इत्यादिना स्वत एव वक्ष्यतीति ॥ ९२३ ॥

अत्र पराभिप्रायमाशङ्क्य परिहरन्नाह–

[4]खेत्तमरूवं निच्चं न तस्स परिकम्मणा न य विणासो। आहेयगयवसेण उ करण-विणासोवयारोऽत्थ ॥ ९२४ ॥

---

१ परिकर्म क्रियया वस्तूना गुणविशेषपरिणाम॰। तदभावे च विनाशो द्रव्यादीना यथायोगम् ॥ ९२३ ॥ २ क. ग. 'घनघा'। ३ गाथा ९२५। ४ क्षेत्रमरूपं नित्यं न तस्य परिकर्म न च विनाश॰। आधेयगतवशेन तु करण-विनाशोपचारोऽत्र ॥ ९२४ ॥

अथाऽकृत्स्नस्कन्ध उच्यते– यस्मादन्यो बृहत्तरः स्कन्धोऽस्ति, सोऽपरिपूर्णत्वादकृत्स्नस्कन्धः, स च द्विप्रदेशिकादिर्यावत् सर्वोत्कृष्टानन्तपरमाणुसन्ततिनिष्पन्न एकेन परमाणुना न्यूनस्तावद् विज्ञेयः। उत्कृष्टानन्ताणुस्कन्धापेक्षया ह्येकपरमाणुन्यूनोत्कृष्टानन्ताणुकोऽकृत्स्नस्कन्धः, तदपेक्षया तु परमाणुद्वयन्यूनोत्कृष्टानन्ताणुकोऽकृत्स्नस्कन्धः। एवमेकैकपरमाणुहान्या तावद् नेयं यावत् त्रिप्रदेशिकस्कन्धापेक्षया द्विप्रदेशिकस्कन्धोऽकृत्स्नस्कन्धः। अत एव प्रागुक्ताचित्तस्कन्धादस्य भेदः; पूर्वं हि द्विप्रदेशिकादेः परिपूर्णोत्कृष्टानन्ताणुस्कन्धपर्यन्तस्य सर्वस्याप्यचित्तस्कन्धस्य सामान्येन संग्रहात्; अत्र त्वेकः परिपूर्णोत्कृष्टानन्ताणुको न संगृह्यते, तस्य कृत्स्नस्कन्धत्वादिति।

अथानेकद्रव्यस्कन्ध उच्यते– अनेकैः सचित्ता-ऽचित्तलक्षणैर्द्रव्यैर्निष्पन्नः स्कन्धोऽनेकद्रव्यस्कन्धः। स च हय-गजादिस्कन्ध एव। कथंभूतः?, इत्याह– 'देसोऽवचिओवचिओ त्ति' अपचितश्चासावुपचितश्चापचितोपचितः, देशेऽपचितोपचितो देशापचितोपचितः। इदमुक्तं भवति– देशे नख-दशन-केशादिलक्षणेऽपचितो जीवप्रदेशैर्विरहितो देशापचितः, अन्यस्मिंस्तु पृष्ठ-हृदय-बाहू-र्वादिलक्षणे देशे उपचितो जीवप्रदेशैर्व्याप्तो देशोपचितः– विशिष्टैकपरिणामपरिणतसचेतना-ऽचेतनदेशसमुदायात्मको हयादिस्कन्धोऽनेकद्रव्यस्कन्ध इत्यर्थः। आह– यद्येवम्, कृत्स्नस्कन्धादस्य को विशेषः?। उच्यते–तत्र किल हयादिर्यावानेव जीवप्रदेशैर्व्याप्तस्तावानेव कृत्स्नस्कन्धत्वेन विवक्षितः, न तु जीवप्रदेशाव्याप्तनखाद्यपेक्षयापि; अत्र तु नखादियुक्तोऽनेकद्रव्यस्कन्धः, इति विशेषः। तर्हि पूर्वोक्ताद् मिश्रस्कन्धादस्य को भेदः?। उच्यते– तत्राऽश्व-गजादिजीवानां खड्गाद्यजीवानां च पृथग्व्यवस्थितानां समूहकल्पनया मिश्रस्कन्धत्वमुक्तम्, अत्र तु जीवप्रयोगतो विशिष्टैकपरिणामपरिणतानां सचेतना-ऽचेतनद्रव्याणामनेकद्रव्यस्कन्धत्वम्, इति भेदः। अत एवाऽऽह– 'विसेसोऽयं' इति। कृत्स्नस्कन्धाद् मिश्रस्कन्धाच्चायमनन्तरोक्तोऽस्यानेकद्रव्यस्कन्धस्य विशेषो भेद इति। तदेवमुक्तो द्रव्यस्कन्ध इति ॥८९७॥

अथ भावस्कन्धमाह—

आगमभावक्खंधो[1] खंधपयत्थोवओगपरिणामो। नोआगमओ भावम्मि नाण-किरिया-गुणसमूहो ॥८९८॥

आगमतो भावस्कन्धः। कः?, इत्याह– स्कन्धपदार्थोपयोगपरिणामः। नोआगमतस्तु भावस्कन्धो ज्ञान-क्रिया-गुणसमूहः। ज्ञानमत्रावश्यक-श्रुत-स्कन्धावबोधोपयोगलक्षणम्, क्रिया तदुक्तसामाचारीकरणरूपा, गुणास्तु मूलगुणो-त्तरगुणभेदभिन्नाः, तेषां समूहः समुदायो मीलको ज्ञान-क्रिया-गुणसमूह इति ॥ ८९८॥

[1] आगमभावस्कन्ध. स्कन्धपदार्थोपयोगपरिणाम। नोआगमतो भावे ज्ञान-क्रिया-गुणसमूह ॥ ८९८ ॥

[1]छायाए नालियाए च परिकम्मं से जहत्थविण्णाणं । रिक्खाइचारेहिं च तस्स विणासो विवज्जासो॥९२७॥

'से' तस्य समया-ऽऽवलिका-घटिका-मुहूर्तादिलक्षणस्य कालस्येदमेव परिकर्म। यत्, किम्?, इत्याह– यद् यथार्थविज्ञानं यथावत् परिज्ञानम्। कया?, इत्याह– शङ्क्वादिप्रतिच्छायारूपया छायया, घटिकारूपया च नाडिकया। विनाशस्तर्हि तस्य कः?, इत्याह– विपर्यासो वैपरीत्यभवनम्– अनिष्टफलदायकतया परिणमनमित्यर्थः। कैः, इत्याह– ऋक्ष-ग्रहादिचारैः; तथा च वक्तारो भवन्ति– 'अमुकेन नक्षत्रेण, अमुकेन ग्रहेण चेत्थमित्थं च गच्छता विनाशितः कालः' इति। उक्तः कालोपक्रमः ॥ ९२७ ॥

अथ भावोपक्रममाह—

[2]जं परहिययाकूयावधारणमुवक्कमो स भावस्स । तस्सासुभस्स मरुइणि-गणिया-मच्चादओऽभिहिया ॥९२८॥

इह यदिङ्गिताकारादिना परहृदयाकूतस्य परकीयभावस्याऽवधारणं परिज्ञानं स सामान्येन भावोपक्रमः। स च विशेषितो द्विधा– संसारकारणभूतोऽप्रशस्तः, मोक्षनिबन्धनभूतस्तु प्रशस्तः। तत्राऽशुभस्य तस्य भावोपक्रमस्य ब्राह्मणी-वेश्या-अमात्यादयो दृष्टान्ताः प्रतिपादिताः। तद्यथा—

एकस्या ब्राह्मण्यास्तिस्रः पुत्रिकाः। तासां च परिणयनानन्तरं तथा करोमि यथैताः सुखिता भवन्ति, इति विचिन्त्य माता ज्येष्ठदुहितरं प्रत्यवोचत्, यदुत– त्वया वासभवनसमागमे स्वभर्ता कश्चिदपराधमुद्भाव्य मूर्ध्नि पादप्रहारेण हन्तव्यः। हतश्च यदनुतिष्ठति तद् ममाऽऽख्येयम्। कृतं च तया तथैव। सोऽप्यतिस्नेहतरलितमनाः 'अयि प्रियतमे! पीडितस्ते सुकुमालश्चरणो भविष्यति' इत्यभिधानपूर्वकं तस्याश्चरणोपमर्दनं चकार। अमुं च व्यतिकरं सा मात्रे निवेदितवती। साऽप्युपक्रान्तजामात्रिकभावा हृष्टा दुहितरं प्रत्यवादीत्– पुत्रिके! यद् रोचते तत् त्वदीयगृहे कुरु त्वम्, न तवाऽवचनकरो भर्ता भविष्यतीति। द्वितीयाऽपि तथैव शिक्षिता। तयापि च तथैव स्वभर्ता शिरसि प्रहतः, केवलमसौ 'नैतत् कुलप्रसूतानां युज्यते' इत्यादि किञ्चित् क्षणमेकमृपित्वा व्युपरतः। तस्मिंश्च व्यतिकरे तया मातुर्निवेदिते प्रोक्तं मात्रा– वत्से! त्वमपि यथेष्टं[3] तद्गृहे विजृम्भस्व, केवलं तव भर्ता क्षणमेकं मृषित्वा स्थास्यति। एवं

१ छायया नाडिकया च परिकर्म तस्य यथार्थविज्ञानम्। ऋक्षादिचारैश्च तस्य विनाशो विपर्यास ॥ ९२७ ॥
२ यत् परहृदयाकूतावधारणमुपक्रमः स भावस्य। तस्याशुभस्य ब्राह्मणी-गणिका-ऽमात्यादयोऽभिहिताः ॥ ९२८ ॥ ३ घ छ 'ष्टं विजृम्भस्व तद्गृहे के'।

[1]सावज्जजोगविरई उक्कित्तण गुणवओ य पडिवत्ती। खलियस्स निंदणा वणतिगिच्छ गुणधारणा चेव॥९०२॥

सावद्ययोगविरतिरर्थाधिकारः सामायिकाध्ययनस्य। अर्हतां गुणोत्कीर्तनमर्थाधिकारश्चतुर्विंशतिस्तवाध्ययनस्य। गुणवतो गुरोर्वन्दनकदानादिपूजाविशेषरूपा प्रतिपत्तिरर्थाधिकारो वन्दनाध्ययनस्य। श्रुत-शीलस्खलितनिन्दनार्थाधिकारः प्रतिक्रमणाध्ययनस्य। चारित्रात्मनो व्रणचिकित्सा– अपराधव्रणसंरोहणमर्थाधिकारः कायोत्सर्गाध्ययनस्य। व्रतभङ्गातिचारापचितकर्मविशरणार्थमनशनादिगुणधारणाऽर्थाधिकारः प्रत्याख्यानाध्ययनस्येति। तदेवमावश्यक-श्रुत-स्कन्धलक्षणस्य पदत्रयस्य विहितो नामादिन्यासः। कृतं च षडर्थाधिकारभणनलक्षणं समुदायार्थनिरूपणम् ॥ ९०२ ॥

अथाध्ययनस्य पूर्वप्रतिज्ञातो नामादिन्यासो वक्तव्यः। स चावसरप्राप्तोऽपि नोच्यते, यत उपक्रमाद्यनुयोगद्वारक्रमागतानामेव सामायिकादीनां षण्णामप्यध्ययनानां पृथक् पृथगोघनिष्पन्ने निक्षेपे लाघवार्थमिहैवाग्रे वक्ष्यते; एतदेवाह—

[2]दारक्कमागयाणं वीसुं वीसुमिहमोहनिप्फन्ने। अज्झयणाणं नासं वक्खामो लाघवनिमित्तं ॥ ९०३ ॥

पातनयैव व्याख्यातेति ॥ ९०३ ॥

अथोक्तमुपसंहरन् वक्ष्यमाणं च संबन्धयन्नाह—

[3]आवस्सयस्स एसो पिंडत्थो वण्णिओ समासेणं। एत्तो एक्केक्कं पुण अज्झयणं वण्णयिस्सामि ॥९०४॥

इत्येवं पूर्वोक्तप्रकारेण 'आवश्यकश्रुतस्कन्धः' इति सान्वर्थशास्त्रनामप्रतिपादनादेवाऽऽवश्यकस्यैष पूर्वोक्तः पिण्डार्थः समुदायार्थः समासेन संक्षेपेण वर्णितः। अथावयवार्थकथननिमित्तमेकैकं सामायिकाद्यध्ययनं वर्णयिष्यामीति। इति समुदायार्थकथनलक्षणे चतुर्थद्वारे प्रसङ्गायाताऽष्टषष्टिगाथादिरूपकार्थः ॥ ९०४ ॥

॥ तदेवमभिहितं समुदायार्थकथनलक्षणं चतुर्थद्वारम् ॥

---

१ सावद्ययोगविरतिरुत्कीर्तनं गुणवतश्च प्रतिपत्तिः। स्खलितस्य निन्दना व्रणचिकित्सा गुणधारणा चैव ॥ ९०२ ॥
२ द्वारक्रमागतानां विष्वग् विष्वगिहौघनिष्पन्ने। अध्ययनानां न्यासं वक्ष्यामो लाघवनिमित्तम् ॥ ९०३ ॥
३ आवश्यकस्यैष पिण्डार्थो वर्णितः समासेन। इत एकैकं पुनरध्ययनं वर्णयिष्यामि ॥ ९०४ ॥

इह यच्छिष्यः स्वहितार्थं श्रुताध्ययनादिहेतोः प्रशस्तमनाः शुभहेतुत्वात् श्रुतं गुरुभावमुपक्रामति– इङ्गिताकारादिना जानाति, स मोक्षफलत्वात् प्रशस्तभावोपक्रमः। तेनैव चेहाऽधिकारः, मोक्षार्थत्वादेव सर्वस्याऽस्य प्रारम्भस्येति ॥ ९२९ ॥

अत्र परः प्राह—

[1]को वक्खाणावसरे गुरुचित्तोवक्कमाहिगारोऽयं ?। भण्णइ वक्खाणंगं गुरुचित्तोवक्कमो पढमं ॥ ९३० ॥

नन्वावश्यकस्यानुयोगो व्याख्यानमिह प्रक्रान्तम्, ततस्तदवसरे प्रस्तुते कोऽयमप्रस्तुतेन गुरुचित्तोपक्रमेणाधिकारः ?। अत्रोत्तरमाह– 'भण्णईत्यादि' भण्यतेऽत्र प्रतिविधानम्, यद् व्याख्यानमिह प्रस्तुतं भवता गीयते, तद् गुरुचित्तायत्तमेव। ततश्च गुरुचित्तोपक्रमः प्रथममेव व्याख्यानस्याङ्गं कारणम्, कारणमन्तरेण च कार्यस्याभावात् तस्मिन् प्रकृते तत्कारणस्याधिकाराभिधानं न किञ्चिदप्रस्तुतमिति ॥ ९३० ॥

न केवलं गुरुचित्तोपक्रमः प्रथमं व्याख्यानम्, किन्तु यानि कानिचित् सामान्येन शास्त्राद्युपक्रम-पुस्तको-पाश्रया-ऽऽहार-वस्त्र-पात्र-सहायादीनि व्याख्यानाऽङ्गानि, तानि सर्वाण्यपि गुरुचित्तायत्तानि यतो वर्तन्ते, तस्माद् यथा गुरुचित्तं सुप्रसन्नं भवति, तथा कार्यम्, इति दर्शयन्नाह—

[2]गुरुचित्तायत्ताइं वक्खाणंगाइं जेण सव्वाइं। तो जेण सुप्पसन्नं होइ तयं तं तहा कज्जं ॥ ९३१ ॥

गतार्थैव, नवरं गुरुचित्तं च तदा सुप्रसन्नं भवति, यदेङ्गिताकाराद्यभिज्ञः शिष्यस्तदुपक्रमानुकूल्येन प्रवर्तते। अतो न गुरुचित्तोपक्रमोऽत्राऽप्रस्तुत इति भावः ॥ ९३१ ॥

गुरुचित्तप्रसादनोपायानेवाह—

[3]जो जेण पगारेणं तुस्सइ करण-विणया-ऽणुवत्तीहिं। आराहणाए मग्गो सो च्चिय अव्वाहओ तस्स ॥९३२॥

---

१ को व्याख्यानावसरे गुरुचित्तोपक्रमाधिकारोऽयम् ?। भण्यते व्याख्यानाङ्गं गुरुचित्तोपक्रम प्रथमम् ॥ ९३० ॥

२ गुरुचित्तायत्तानि व्याख्यानाङ्गानि येन सर्वाणि। ततो येन सुप्रसन्न भवति तत् तत् तथा कार्यम् ॥ ९३१ ॥

३ यो येन प्रकारेण तुष्यति करण-विनया-ऽनुवृत्तिभि.। आराधनाया मार्ग. स एवाऽव्याहतस्तस्य ॥ ९३२ ॥

तस्य च सामायिकाध्ययनस्य महापुरस्य द्वाराणीव चत्वार्यनुयोगद्वाराणि भवन्ति । तत्रानुयोगः किमुच्यते ?, इत्याह– तदर्थोऽध्ययनार्थः । आह– नन्वनुयोगो व्याख्यानमुच्यते, तत् कथं तदेवाध्ययनार्थ उच्यते ? । सत्यम् , किन्तु व्याख्यानेऽप्यध्ययनार्थः कथ्यते, अतोऽभेदोपचारात् तदपि तथोच्यत इत्यदोषः । द्वाराणि पुनस्तत्प्रवेशमुखानि ॥ ९०७ ॥

अथैतामेव पुरकल्पनां द्वारकल्पनां चार्थवतीं दर्शयन्नाह—

अकयद्दारमनगरं कएगदारं पि दुक्खसंचारं । चउमूलद्दारं पुण सपडिद्दारं सुहाहिगमं ॥ ९०८ ॥[1]

अकृतद्वारं नगरं संततप्राकारवलयवेष्टितमनगरमेव भवति, जनप्रवेश-निर्गमाभावात् । तथा, कृतैकद्वारमपि हस्त्य-श्व-रथ-जनसंकुलत्वाद् दुःखसंचारं जायते, कार्यातिपत्तये च भवति । कृतचतुर्मूलप्रतोलीद्वारं तु सप्रतिद्वारं सुखाधिगमं सुखनिर्गम-प्रवेशं भवति, कार्यानतिपत्तये च संपद्यत इति ॥ ९०८ ॥

तथा किम् ?, इत्याशङ्क्य निर्दिष्टदृष्टान्तस्योपनयमाह–

सामाइयमहपुरमवि अकयदारं तहेगदारं वा । दुरहिगमं, चउदारं सपडिद्दारं सुहाहिगमं ॥ ९०९ ॥[2][3][4]

एवं सामायिकमहापुरमप्यर्थाधिगमोपायभूतद्वारशून्यमशक्याधिगमम्, कृतैकानुयोगद्वारमपि कृच्छ्रेण द्राघीयसा च कालेनाधिगम्यते । विहितसप्रभेदोपक्रमादिद्वारचतुष्टयं पुनरयत्नेनाऽल्पीयसा च कालेनाधिगम्यत इति ॥ ९०९ ॥

कानि पुनस्तान्यनुयोगद्वाराणि ?, इत्याह—

ताणीमाणि उवक्कम-निक्खेवा-ऽणुगम-नयसनामाइं । छ-त्ति-दु-दुविगप्पाइं पभेयओऽणेगभेयाइं ॥९१०॥[5]

तानि चैतान्यनुयोगद्वाराणि, तद्यथा– उपक्रमो वक्ष्यमाणभेदादिस्वरूपः, निक्षेपः, अनुगमः, नयश्चेत्येतैर्नामभिः सनामानि साभिधानानीति ॥

॥ पञ्चमं द्वारोपन्यासद्वारं समाप्तम् ॥

---

१ अकृतद्वारमनगरं कृतैकद्वारमपि दु.खसंचारम् । चतुर्मूलद्वार पुनः सप्रतिद्वारं सुखाधिगमम् ॥ ९०८ ॥

२ सामायिकमहापुरमप्यकृतद्वारं तथैकद्वारं वा । दुरधिगम, चतुर्द्वारं सप्रतिद्वार सुखाधिगमम् ॥ ९०९ ॥ ३ क झ॰ 'यपुरमेवं अ'। ४ क 'मतिक्र'।

५ तानीमानि उपक्रम-निक्षेपा-ऽधिगम-नयसनामानि । षट्-त्रि-द्वि-द्विविकल्पानि प्रभेदतोऽनेकभेदानि ॥ ९१० ॥

अभिधाय च निर्गतः। ततो गतश्च गङ्गायाम्, निरीक्षिता चासौ स्वयम्, पृष्ट्वा च परेभ्यः, शुष्कतृणादिवहनेन चान्वय-व्यतिरेकाभ्यां तस्याः पूर्वाभिमुखवाहित्वं निश्चित्य निवेदितमागत्य गुरुभ्यः– इत्थमित्थं च निश्चिता मया पूर्वाभिमुखी वहति गङ्गा, तत्त्वं तु गुरवो विदन्ति। प्रच्छन्नहेरिकेण चास्यापि संवन्धिनी चेष्टा सर्वापि राज्ञे निवेदिता। ततश्चाभ्युपगतं सहर्षेण राज्ञा गुरुवचनमिति ॥ ९३२ ॥ ९३३ ॥ ९३४ ॥

तदेवं गुरुभावोपक्रमे युक्ततयाऽत्र व्यवस्थापिते सति परः प्राह—

[1]जुत्तं गुरुमयगहणं को सेसोवक्कमोवओगोऽत्थ ?। गुरुचित्तपसायत्थं ते वि जहाजोगमाओज्जा ॥ ९३५ ॥

ननूक्तन्यायेन युक्तं तर्हि गुरुमतग्रहणं– गुरुभावोपक्रमणम्, शेषाणां तु नाम-स्थापना-द्रव्याद्युपक्रमाणां क इहोपयोगः, येन तेऽप्युपन्यस्ताः ?। अत्रोत्तरमाह– ननु गुरुचित्तप्रसादनार्थं तेऽपि शेषोपक्रमा यथायोगं यथाप्रस्तावमायोज्याः सप्रयोजनत्वेनाऽभ्यूह्या इति ॥ ९३५ ॥

तदेवं द्रव्याद्युपक्रमाणां गुरुचित्तप्रसादनोपयोगित्वमाह—

[2]परिकम्म-नासणाओ देसे काले य जा जहा जोग्गा। ताओ दव्वाईणं कज्जाहाराइकज्जेसु ॥ ९३६ ॥

उवहियजोग्गदव्वो देसे काले परेण विणएणं। चित्तण्णू अणुकूलो सीसो सम्मं सुयं लहइ ॥ ९३७ ॥

याः काश्चिद् देशे मरुमण्डलादौ, काले ग्रीष्मादौ येन[3] केनचित् प्रकारेण योग्या उचिताः परिकर्म-नाशनाः परिकर्म-विनाशा भवन्ति, ता द्रव्य-क्षेत्र-कालानां गुरोराहारादिकार्येषु शिष्येण तच्चित्तप्रसादनार्थं कर्तव्याः। तत्र द्रव्यस्य दधि-क्षीर-नीरादेर्गुड-शुण्ठ्यु-शीर-मुस्तादिक्षेपेण परिकर्म भावनीयम्। क्षेत्रस्योपाश्रयादेरुपलेपनादिना। कालस्य मुहूर्तादेः शिक्षकदीक्षादौ घटिकादिनेति। विनाशोऽपि द्रव्यादीनां द्रव्यान्तरसंयोगादिना भावनीय इति। तत इत्थं गुरुचित्तं प्रसादयन् शिष्यः किमाप्नोति ?, इत्याह– 'उवहिएत्यादि' उपहितानि गुरोराहाराद्यर्थं ढौकितानि कृतपरिकर्माणि योग्याऽशन-पान-वस्त्र-पात्रौषधादीनि द्रव्याणि येन, असावुपहितयोग्यद्रव्यः शिष्यः। शेषं सुगमम् ॥ ९३६ ॥ ९३७ ॥

---

१ युक्त गुरुमतग्रहण क. शेपोपक्रमोपयोगोऽत्र ?। गुरुचित्तप्रसादार्थं तेऽपि यथायोगमायोज्या ॥ ९३५ ॥
२ परिकर्म-नाशना देशे काले च या यथा योग्या'। ता द्रव्यादीनां कार्या आहारादिकार्येषु ॥ ९३६ ॥
उपहितयोग्यद्रव्यो देशे काले परेण विनयेन। चित्तज्ञोऽनुकूल. शिष्य सम्यक् श्रुत लभते ॥ ९३७ ॥
३ क ग 'न प्र'।

[1]अणुगम्मइ तेण तहिं तओ अणुगमणमेव वाणुगमो। अणुणोऽणुरूवओ वा जं सुत्तत्थाणमणुसरणं ॥९१३॥

अनुगम्यते व्याख्यायते सूत्रमनेन, अस्मिन्, अस्माद् वेत्यनुगमः, वाच्यार्थविवक्षा तथैव। अथवा, अनुगमनमनुगमः अणुनो वा सूत्रस्य गमो व्याख्यानमित्यनुगमः; यदि वा, अनुरूपस्य घटमानस्याऽर्थस्य गमनमनुगमः। सर्वत्र किमुक्तं भवति?, इत्याह— यत् सूत्रार्थयोरनुरूपमनुकूलं सरणं संबन्धकरणमित्यनुगम इति ॥ ९१३ ॥

अथ नयनिरुक्तिमाह—

[2]से नयइ तेण तहिं वा तओऽहवा वत्थुणो व जं नयणं। बहुहा पज्जायाणं संभवओ सो नओ नाम ॥९१४॥

स एव वक्ता संभवद्भिः पर्यायैर्वस्तु नयति गमयतीति नयः; अथवा, नीयते परिच्छिद्यतेऽनेन, अस्मिन्, अस्माद् वेति नयः; अनन्तधर्माध्यासिते वस्तुन्येकांशग्राहको बोध इत्यर्थः। यदिवा, बहुधा वस्तुनः पर्यायाणां संभवाद् विवक्षितपर्यायेण यद् नयनमधिगमनं परिच्छेदनमसौ नयो नाम ॥ ९१४ ॥

॥ इति सप्तमं निरुक्तिद्वारम् ॥

नन्वादावुपक्रमः, तदनन्तरं निक्षेपः, तदनन्तरं चानुगमः, ततोऽप्यनन्तरं नयः, इत्यमीषामनुयोगद्वाराणामित्थं क्रमोपन्यासे किं प्रयोजनम्?, इत्याशङ्क्य '[3]कम-पओयणाइं च वच्चाइं' इत्यष्टमं क्रमप्रयोजनद्वारमभिधित्सुराह—

[4]दारक्कमोऽयमेव उ निक्खिप्पइ जेण नासमीवत्थं। अणुगम्मइ नाणत्थं नाणुगमो नयमयविहूणो ॥९१५॥

संबंधोवक्कमओ समीवमाणीय नत्थनिक्खेवं। सत्थं तओऽणुगम्मइ नएहिं नाणाविहाणेहिं ॥ ९१६ ॥

एषामनुयोगद्वाराणामयमेवोपन्यासक्रमः, येन नासमीपस्थमनुपक्रान्तं निक्षिप्यते, न च नामादिभिरनिक्षिप्तमर्थतोऽनुगम्यते,

१ अनुगम्यते तेन तस्मिंस्ततोऽनुगमनमेव वाऽनुगमः। अणुनोऽनुरूपतो वा यत् सूत्रा-ऽर्थयोरनुसरणम् ॥ ९१३ ॥
२ स नयति तेन तस्मिन् वा ततोऽथवा वस्तुनो वा यद् नयनम्। बहुधा पर्यायाणां संभवतः स नयो नाम ॥ ९१४ ॥ ३ गाथा २।
४ द्वारक्रमोऽयमेव तु निक्षिप्यते येन नासमीपस्थम्। अनुगम्यते नाऽन्यस्तं नानुगमो नयमतविहीनः ॥ ९१५ ॥
सबन्धोपक्रमतः समीपमानीय न्यस्तनिक्षेपम्। शास्त्रं ततोऽनुगम्यते नयैर्नानाविधानैः ॥ ९१६ ॥

"नामं ठवणा दविए खेत्ते काले य गणणअणुपुव्वी । उक्कित्तण-संठाणे सामायारी य भावे य ॥ १ ॥"

इति वचनादानुपूर्वी दशभेदा, तत् कस्मिन् भेदे नियमात् सामायिकस्य समवतारः ?, इत्याह– 'नियमेत्यादि' नियमेन निश्चयेन पुनः समवतारोऽस्य सामायिकाध्ययनस्योत्कीर्तनानुपूर्व्याम्, गणनानुपूर्व्यां च द्रष्टव्यः । तत्रोत्कीर्तनं संशब्दनं 'सामायिकं, चतुर्विंशतिस्तवः' इत्यादिनामोत्कीर्तनमात्रमित्यर्थः । तत्र 'सामायिकम्' इत्येवमिदमध्ययनमुत्कीर्त्यत इत्युत्कीर्तनानुपूर्व्यामेतत् समवतरति । गणनं तु– एकं, द्वे, त्रीणि, इत्यादिपरिसंख्यानम् । तत्र प्रथम-द्व्यादिकायां संख्यायामिदमध्ययनमवतरति; अतो गणनानुपूर्व्यामस्य समवतार इति ॥ ९४० ॥

यद्येवम्, गणनानुपूर्व्यां कतिथमिदमध्ययनम् ?, इत्याह—

पुव्वाणुपुव्विओ[3] तं पढमं, पच्छाणुपुव्विओ छट्ठं । जायइ गणिज्जमाणं अनियमियमणाणुपुव्वीए ॥९४१॥

इहानुपूर्वी त्रिविधा– पूर्वानुपूर्वी, पश्चानुपूर्वी, अनानुपूर्वी चेति। तत्र पूर्वानुपूर्व्यां तत् सामायिकाध्ययनं प्रथमं भवति, पश्चानुपूर्व्यां तु षष्ठम्, अनानुपूर्व्यां तु गण्यमानमनियमितं जायते– कचिद् भङ्गके प्रथमम्, कचिद् द्वितीयम्, कचित्तु तृतीयम्; इत्यमीषां षण्णामावश्यकाध्ययनानामष्टादशोत्तराणि सप्त शतान्यनानुपूर्वीभङ्गकानां भवन्तीति ॥ ९४१ ॥

एतेषां च भङ्गकानां सामान्येन सर्वसंख्यानयने करणगाथामाह—

एगादेगुत्तरया[4] छगच्छगया परोप्परब्भत्था । पुरिमंतिमदुगहीणा परिमाणमणाणुपुव्वीणं ॥ ९४२ ॥

एकाद्या एकोत्तरका अङ्का व्यवस्थाप्यन्ते । एकैक उत्तरो वर्धमानो येषु ते एकोत्तरकाः । ते चेह षडध्ययनप्रस्तावात् षड्गच्छगताः समवसेयाः । तत्र षण्णां गच्छः समुदायः षड्गच्छः, तं गतास्तत्प्रतिबद्धाः । ते च परस्पराभ्यस्ताः परस्परंगुणिताः[5] प्रथमान्त्यभङ्गकद्वयरहिताः सर्वसंख्यारूपमनानुपूर्वीणां परिमाणं भवति । तथाहि– एकाद्या एकोत्तरकाः षडध्ययनविषयाः षडङ्का व्यवस्थाप्यन्ते; तद्यथा– १ । २ । ३ । ४ । ५ । ६ । एते च परस्परं गुण्यन्ते । तद्यथा– एककेन द्विको गुणितो जातौ द्वावेव, द्वाभ्यां त्रिको

१ नाम स्थापना द्रव्य क्षेत्र कालश्च गणनानुपूर्वी । उत्कीर्तन-संस्थाने सामाचारी च भावश्च ॥ १ ॥ २ क ग 'रतोत्यतो' ।
३ पूर्वानुपूर्वीतस्तत् प्रथम, पश्चानुपूर्वीत पष्ठम् । जायते गण्यमानमनियमितमनानुपूर्व्याम् ॥ ९४१ ॥
४ एकाद्या एकोत्तरका. पड्गच्छगता. परस्पराभ्यस्ता. । प्रथमा-ऽन्तिमद्विकहीना परिमाणमनानुपूर्वीणाम् ॥ ९४२ ॥ ५ क ग. 'रगणि' ।

संक्षेपार्थः। परिपाटी– आनुपूर्व्युच्यते। सा च त्रिविधा वक्ष्यते. तद्यथा– पूर्वानुपूर्वी, पश्चानुपूर्वी, अनानुपूर्वी चेति। तत्रेहाध्ययने का परिपाटी प्रयोजनवती ?, इति प्रश्ने त्रिविधापीह सप्रयोजनेति वाच्यम्। तथा, पूर्वानुपूर्व्यादिना चिन्त्यमानमिदमध्ययनं कतिथम् ? इति प्रष्टव्यम्। तत्र पूर्वानुपूर्व्या प्रथमं, पश्चानुपूर्व्या षष्ठम्, अनानुपूर्व्या पुनः सातिरेकसप्तभङ्गकशतविषयत्वादनियतमिति वक्ष्यते। इत्यानुपूर्वीसंक्षेपार्थः। नाम पुनरौदयिकादिषड्भावविषयत्वात् षड्विधं वक्ष्यते। तत्र कस्मिन् भावे इदमध्ययनं वर्तते ? इति प्रष्टव्यम्। तत्र च क्षायोपशमिके भावे वर्तत इति वक्ष्यते। इति नामसंक्षेपार्थः। प्रमाणविषयसंक्षेपमाह– 'किमिदमित्यादि' किमिदमध्ययनं द्रव्यम्, गुणः, कर्म वा ? इति चिन्तायां गुण इति वाच्यम्। गुणत्वेऽपि किं जीवगुणः, अजीवगुणः ? इति चिन्तायां जीवगुण इति वक्तव्यम्। जीवगुणत्वेऽपि किं ज्ञानं, दर्शनं, चारित्रं वा ? इति चिन्तायां ज्ञानमिति वक्ष्यते। तदपि किं प्रत्यक्षम्, अनुमानम्, औपम्यम्, आगमो वा ? इति चिन्तायामागम इति वक्ष्यते। आगमत्वेऽपि किमसौ लौकिकः, लोकोत्तरो वा ? इति चिन्तायां लोकोत्तर इति वक्ष्यते। लोकोत्तरत्वेऽपि किं सूत्रागमः, अर्थागमः, उभयागमो वा ?; तथा, किमात्मागमः, अनन्तरागमः, परम्परागमो वा ? इति चिन्तायां तीर्थकराणामर्थत इदमध्ययनमात्मागमः, सूत्रतस्तु गणधराणामात्मागम इत्यादि वक्ष्यते। अपि च, लोकोत्तरागमत्वेऽपि किमिदमध्ययनं दृष्टिवादिकम्, कालिकं वा ? इति चिन्तायां कालिकमिति वाच्यम्– कालवेलावर्जे काले पठ्यत इत्यर्थः। कालिकत्वेऽपि किमस्य सूत्रार्थपरिमाणम् ? इति वाच्यम्। इति प्रमाणसंक्षेपार्थः। स्व-परो-भयसमयानां मध्ये कोऽत्र वक्तव्यः ? इति प्रश्ने स्वसमयोऽत्र वक्तव्यः। इति वक्तव्यतासंक्षेपार्थः। स्वसमयत्वेऽपि कोऽस्य समयैकदेशः समुदायार्थत्वेनाऽधिक्रियते ? इति प्रश्ने, सावद्ययोगविरतिरिहाऽर्थाधिकार इति प्रतिवचनम्। इत्यर्थाधिकारसंक्षेपार्थः। समवतारस्त्वानुपूर्व्यादिषु विहित एवेति। एवमादिभिः प्रकारैरस्याध्ययनस्योपक्रमणं निक्षेपयोग्यताऽऽपादनं कर्तव्यम्। इत्युपक्रमसंक्षेपार्थः। इति सप्तदशगाथार्थः ॥९१७॥९१८॥९१९॥९२०॥९२१॥

अथ पूर्वं यदुक्तम्– 'उपक्रमः षड्भेदः'। तत्र तानेव षड् भेदान् स्वरूपतः प्राह–

नामाई[2] छब्भेओ उवक्कमो दव्वओ सचित्ताई। तिविहो य पुणो दुविहो परिकम्मे वत्थुनासे य ॥ ९२२ ॥

इह नाम-स्थापना-द्रव्य-क्षेत्र-काल-भावोपक्रमभेदादुपक्रमः षड्भेदः। तत्र नाम-स्थापने सुगमे। द्रव्योपक्रमस्त्वागमतः, नोआगमतश्च। तत्रागमत उपक्रमपदार्थज्ञस्तत्रानुपयुक्तः, नोआगमतस्तु ज्ञशरीरद्रव्योपक्रमः, भव्यशरीरद्रव्योपक्रमः, तद्व्यतिरिक्तद्रव्योपक्रमश्च।

१ घ छ 'व्यों तु ष' २ नामादिः षड्भेद उपक्रमो द्रव्यतः सचित्तादिः। त्रिविधश्च पुनर्द्विविधः परिकर्मणि वस्तुनाशे च ॥ ९२२ ॥

भावार्थस्तु दिङ्मात्रदर्शनार्थं सुखाधिगमाय च दर्शन-ज्ञान-चारित्रादीनि त्रीणि पदान्याश्रित्य तावद् दर्श्यते– तस्य चैक-द्वि-त्रिलक्षणस्य पदत्रयस्य परस्पराभ्यासे सामान्येन सर्वेऽपि षड् भङ्गा भवन्ति। विशेषतस्तु त एवमानीयन्ते– पूर्वानुपूर्वीलक्षणस्तावत् प्रथमो भङ्गः, तद्यथा– १ । २ । ३ । अस्याश्च पूर्वानुपूर्व्या अधस्ताद् भङ्गकरचने क्रियमाणे एकस्य तावज्ज्येष्ठ एव नास्ति, द्विकस्य तु विद्यते एककः; स तदधस्ताद् निक्षिप्यते, तस्य चाग्रतः 'उवरिमतुल्लं पुरओ नसेज्ज' इतिवचनात् त्रिको न्यस्यते, पृष्ठतस्तु स्थापित-शेषो द्विको दीयते, ततोऽयं द्वितीयो भङ्गः संपद्यते– २ । १ । ३ । अत्र च द्विकस्य विद्यत एकको ज्येष्ठः, परं नासौ तदधस्ताद् निक्षि-प्यते, अग्रतः सदृशाङ्कपातेन समयभेदप्रसङ्गात् । एककस्य तु ज्येष्ठ एव नास्ति, त्रिकस्य तु विद्यते द्विको ज्येष्ठः, स तदधस्ताद् न्यस्यते, अत्र चाग्रभागस्य तावदसंभव एव, पृष्ठतस्तु स्थापितशेषावेकक-त्रिकौ क्रमेण स्थाप्येते 'पुव्वक्कमो सेसो' इति वचनात् । ततस्तृतीयो भङ्गः संजायते– १ । ३ । २ । अत्राप्येककस्य ज्येष्ठ एव नास्ति, त्रिकस्य तु ज्येष्ठोऽस्ति द्विकः, न च तदधस्ताद् निक्षि-प्यते, अग्रे सदृशाङ्कपातेन समयभेदापत्तेः, ततोऽस्यैवानुज्येष्ठ एककः स्थाप्यते, अग्रतस्तु द्विको दीयते 'उवरिमतुल्लं' इत्यादिवचनात्, पृष्ठतस्तु स्थापितशेषस्त्रिको व्यवस्थाप्यत इति चतुर्थो भङ्गः– ३ । १ । २ । अत्र त्रिकस्य विद्यते द्विको ज्येष्ठः, एककश्चानुज्येष्ठः, परं तौ तदधस्ताद् न निक्षिप्येते, पुरतस्तुल्याङ्कपातेन समयभेदप्राप्तेः, एककस्य तु ज्येष्ठ एव नास्ति, द्विकस्य त्वस्त्येकको ज्येष्ठः स तदधस्ताद् न्यस्यते, तत्पृष्ठतस्तु स्थापितशेषौ द्विक-त्रिकौ क्रमशः स्थाप्येते इति पञ्चमो भङ्गः– २ । ३ । १ । अत्र द्विकस्याऽस्त्येकको ज्येष्ठः, किन्त्वसौ तदधस्ताद् न निक्षिप्यते, पुरतः सदृशाङ्कन्यासापत्त्या समयभेदप्रसङ्गात् । त्रिकस्य तु द्विको ज्येष्ठः, स तदधस्ताद् निक्षिप्यते, अग्रतस्त्वेकको दीयते, 'उवरिमतुल्लं' इति वचनात्; पृष्ठतस्तु स्थापितशेषस्त्रिकः स्थाप्यत इति षष्ठो भङ्गः । एषां च षण्णामपि भङ्गानामियं स्थापना–

१ । २ । ३ ।
२ । १ । ३ ।
१ । ३ । २ ।
३ । १ । २ ।
२ । ३ । १ ।
३ । २ । १ ।

क्षेत्रममूर्तम्, नित्यं च, इति न तस्य परिकर्म-विनाशौ कर्तुं शक्येते; तदाधेयद्रव्यस्य तु जल-भूम्यादेस्तौ सुप्रतीतावेव । ततस्तद्गतयोस्तयोरत्र क्षेत्रे 'मञ्चाः क्रोशन्ति' इत्यादिन्यायादुपचारः क्रियत इति ॥ ९२४ ॥

आधेयद्वारेणापि कथं क्षेत्रस्य तौ भवतः ?, इत्याह—

[1]नावाए उवक्कमणं हल-कुलियाईहिं वा वि खेत्तस्स । संमज्जभूमिकम्मे पंथतलागाइयाणं च ॥ ९२५ ॥

जलाधारस्य क्षेत्रस्य नावुडुपादिभिरुपक्रमः क्रियते, भूम्याधारस्य तु तस्य हल-कुलिकादिभिः परिकर्मोपक्रमः । तत्र हलं प्रतीतम्, कुलिकं तु दन्तालवत्तिर्यक्कृतकाष्ठे उभयपार्श्वनिखातकाष्ठमयकीलकयोस्तिर्यग्व्यवस्थापिततीक्ष्णलोहपट्टकं हरितादिच्छेदनार्थं क्षेत्रेषु यद् वाह्यते, तल्लाटादिकृषीवलप्रतीतं वेदितव्यम् । एवं संमार्जन-भूमिकर्म-मार्गतडागादीनां च करणेन परिकर्मणि क्षेत्रोपक्रमः । विनाशोपक्रमस्तु क्षेत्रस्य गजबन्धनादिभिर्विज्ञेय इति ॥ ९२५ ॥

अथ कालोपक्रममाह—

[2]जं वत्तणाइरूवो कालो दव्वाण चेव पज्जाओ । तो तक्करणविणासे कीरइ कालोवयारोऽत्थ ॥ ९२६ ॥

यद् यस्मात् कारणात् 'कालश्चेत्येके' इति वचनाद् वर्तनादिरूपः कालो द्रव्याणामेव पर्यायः, न पुनरन्यः कश्चित् समयावलिकादिरूपः, ततस्तत्करण-विनाशयोर्द्रव्यस्य परिकर्म-विनाशयोः सतोरित्यर्थः, अत्रैव तत्पर्याये कालोपक्रमोपचारः क्रियते । इदमुक्तं भवति— इह केचिद् वर्तनादिरूपमेव कालमिच्छन्ति, न पुनः समयादिरूपम्; तत्र तेन तेन व्यणुक-त्र्यणुकादिरूपेण परमाण्वादिद्रव्याणां वर्तनं वर्तना, आदिशब्दात् परिणाम-क्रियादिपरिग्रहः, नव-पुराणादिभावेन वस्तूनां परिणमनं परिणामः । अतीता-ऽनागत-वर्तमानलक्षणा तु क्रिया । तदेष वर्तना-परिणाम-क्रियादिरूपः कालो द्रव्याणामेव पर्यायः, नान्यः । ततो द्रव्यस्य परिकर्म-विनाशौ वर्तनादिरूपे तत्पर्यायेऽप्युपचर्येते इति ॥ ९२६ ॥

आह— ननु ये समयादिरूपं कालमिच्छन्ति, तदभिप्रेतस्य समयादिकालस्य कथं परिकर्म-विनाशौ ?, इत्याशङ्क्याह—

१ नावोपक्रमणं हल-कुलिकादिभिर्वापि क्षेत्रस्य । समार्जभूमिकर्माणि पथितडागादिकानां च ॥ ९२५ ॥

२ यद् वर्तनादिरूप. कालो द्रव्याणामेव पर्यायः । ततस्तत्करण-विनाशयो. क्रियते कालोपचारोऽत्र ॥९२६ ॥

द्रव्य-क्षेत्र-काल-भावभेदाच्चतुर्विधं प्रमेयम्, प्रमेयचातुर्वैध्याच्च प्रमाणमपि चतुर्विधम्– द्रव्यप्रमाणम्, क्षेत्रप्रमाणम्, कालप्रमाणम्, भावप्रमाणं चेति, द्रव्यादिकं चतुर्विधं प्रमेयं प्रमीयतेऽनेनेति कृत्वा। तत्रेदं सामायिकाध्ययनं श्रुतज्ञानविशेषत्वेन जीवपर्यायत्वाज्जीवभावत्वाद् भावप्रमाणे समवतरति। आह– ननु भावप्रमाणमपि त्रिविधम्– गुणप्रमाणम्, नयप्रमाणम्, संख्याप्रमाणं चेति; तत्र सामायिकं क्व समवतरति? इति। उच्यते– गुणप्रमाणे। ननु गुणप्रमाणमपि द्विविधम्– जीवगुणप्रमाणम्, अजीवगुणप्रमाणं च; तत्र सामायिकं क्व समवतरति? इति। उच्यते– जीवानन्यत्वेन जीवगुणप्रमाणे। ननु जीवगुणोऽपि त्रिविधः– ज्ञान-दर्शन-चारित्रभेदात्; तत्र क्व सामायिकस्याऽवतारः?। उच्यते– बोधात्मकत्वाद् ज्ञानगुणे। ननु ज्ञानमपि प्रत्यक्षा-ऽनुमानो-पमाना-ऽऽगमभेदाच्चतुर्विधम्, तत्र क्वेदमवतरति? इति। उच्यते– आगमे। ननु सोऽपि लौकिक-लोकोत्तरभेदाद् द्विविधः। लोकोत्तरोऽपि सूत्रा-र्थो-भयरूपित्वात् त्रिविध एव, तत्र क्वेदं समवतरति? इति। उच्यते सूत्रा-ऽर्थो-भयभेदात् त्रिविधेऽपि लोकोत्तर आगमे समवतरति, तत्स्वभावत्वात् तत्स्वरूपत्वादिति ॥ ९४६ ॥

एतदेवाह—

जीवाणण्णत्तणओ[1] जीवगुणे बोहभावओ नाणे। लोउत्तरसुत्तत्थोभयागमे तस्सभावाओ ॥ ९४७ ॥

व्याख्यातार्थैव ॥ ९४७ ॥

आह– नन्वात्मागमा-ऽनन्तरागम-परम्परागमभेदतोऽपि लोकोत्तरागमस्त्रिविधः, तत् क्वेदमवतरति?, इत्याशङ्क्याह—

सुयओ[2] गणहारीणं तस्सिस्साणं तहाऽवसेसाणं।
एवं अत्ता-णंतर-परंपरागमपमाणम्मि ॥ ९४८ ॥
अत्थेण उ तित्थंकर-गणहर-सेसाणमेवमेवेदं।

यथा जीवगुणादिष्वस्यावतारः, एवमात्मा-ऽनन्तर-परम्परागमप्रमाणेऽप्यवतारो मन्तव्यः। कथम्?, इत्याह– सूत्रतो गणधरा-

---

१ जीवानन्यत्वतो जीवगुणे बोधभावतो ज्ञाने। लोकोत्तरसूत्रार्थोभयागमे तत्स्वभावात् ॥ ९४७ ॥

२ श्रुततो गणधारिणा तच्छिष्याणां तथावशेषाणाम्। एवमात्मा-ऽनन्तर-परम्परागमप्रमाणे ॥ ९४८ ॥
अर्थेन तु तीर्थङ्कर-गणधर शेषाणामेवमेवेदम्।

तृतीययापि मातृशिक्षितया दुहित्रा तथैव प्रहतः स्वभर्ता। केवलमेतेनोच्छलदतुच्छकोपेन 'नूनमकुलीना त्वम्, येनैवं विशिष्टजनानुचितं विचेष्टसे' इत्याद्यभिधाय गाढं कुट्टयित्वा निष्कासिता गृहात्। तया च गत्वा सर्वं मात्रे निवेदितम्। ततस्तया विज्ञातजामातृस्वभावया तत्समीपं गत्वा 'वत्स! कुलस्थितिरियमस्माकं यदुत– प्रथमसमागमे वध्वा वरस्येत्थं विधातव्यम्' इत्यादि किञ्चिदभिधाय कथमप्युपनीताऽसौ। दुहिता च प्रोक्ता– वत्से! दुराराधस्ते भर्ता भविष्यति, परमदेवतावदप्रमत्ततया समाराधनीयः। इति ब्राह्मणीदृष्टान्तः।

अथ गणिकादृष्टान्त उच्यते— एकस्मिन् नगरे चतुःषष्टिविज्ञानसहिता देवदत्ताभिधाना रूपादिगुणवती वेश्या परिवसति। तया च भुजङ्गजनाभिप्रायपरिज्ञानार्थं स्वस्वव्यापारं कुर्वत्यः सर्वा अपि राजपुत्रादिजातयो रतिभवनभित्तिषु चित्रकर्मणि लेखिताः। तत्र यः कश्चिद् राजपुत्रादिरागच्छति, स यत्र यत्र कृताभ्यासस्तत् तदेव चित्रलिखितं दृष्ट्वाऽत्यर्थं प्रशंसति। ततोऽसौ विलासिनी राजपुत्रादीनामन्यतरत्वेन निश्चित्य यथौचित्येनोपचरति। आनुकूल्येनोपचरिताश्च राजपुत्रादयस्तस्यै प्रचुरमर्थजातं प्रयच्छन्ति। इति गणिकादृष्टान्तः।

अथामात्यदृष्टान्तोऽभिधीयते– एकस्मिन् नगरे कश्चिद् राजाऽमात्येन सहाऽश्ववाहनिकायां निर्गतः। तत्र च पथि गच्छता राजतुरङ्गमेन क्वचित् खिलप्रदेशे प्रस्रवणमकारि। तच्च तत्प्रदेशपृथिव्याः स्थिरत्वेन वद्धच्छिल्लरकं चिरेणाप्यशुष्कं व्यावर्तमानो राजा तथैव व्यवस्थितमद्राक्षीत्। चिरावस्थायिजलः शोभनोऽत्र प्रदेशे तडागो भवतीति विचिन्तयंश्चिरमवलोकितवांस्तदिति। ततश्चेङ्गिताकारकुशलतया विदिततदभिप्रायेणाऽमात्येन राजादेशमन्तरेणापि खानितं तत्र प्रदेशे महत् सरः। तत्पाल्यां च रोपिताः सर्वर्तुकपुष्पफलसमृद्धयो नानाजातीयतरुनिवहाः। अन्यदा च तेनैव प्रदेशेन गच्छता भूपालेन दृष्टम्, पृष्टं च– अहो! मानससरोवरवद् रमणीयं केनेदं खानितं सरः?। अमात्यो जगाद– देव! भवद्भिरेव। राजा सविस्मयं प्राह, कथं कथ कदा मयैतत्कारणाय निरूपितः? इति। ततः सचिवो यथावृत्तं सर्वमपि कथितवान्। 'अहो! परचित्तोपलक्षकत्वममात्यस्य' इति विचिन्त्य परितुष्टो राजा तस्य वृत्तिवर्धनादिना प्रसादं चकार। तदेवमादिकः संसारफलोऽपरोऽप्यप्रशस्तभावोपक्रमः स्वयमभ्यूह्य इति ॥९२८॥

अथ प्रशस्तभावोपक्रममाह—

[3]सीसो गुरुणो भावं जमुवक्कमए सुयं पसत्थमणो। सहियत्थं, स पसत्थो इह भावोवक्कमोऽहिगओ ॥९२९॥

१ क. ग. 'वं शि'। २ क. ख ग. 'महास'। ३ शिष्यो गुरोर्भावं यदुपक्रमते श्रुत प्रशस्तमनाः। स्वहितार्थं, स प्रशस्त इह भावोपक्रमोऽधिकृतः ॥ ९२९ ॥

द्रव्यानुयोगः। नयविचारश्चाऽर्वाक् प्रायो निषिद्धः। इति न सामायिकस्य प्रायो नयेष्ववतार इति ॥ ९५० ॥

संख्याप्रमाणे तर्ह्यवतरतीदं नवा ?, इत्याह–

[1]संखामाणे कालियसुयपरिमाणे परित्तपरिमाणं। सुयओ तदत्थओ पुण भणियं तमणंतपज्जायं ॥ ९५१ ॥

संख्या नाम स्थापना-द्रव्य-क्षेत्र-कालौ-पम्य-परिमाण-भावभेदाऽनुयोगद्वारेष्वष्टधा प्रोक्ता। तत्र संख्यामाने संख्याप्रमाणे विचार्यमाणे कालिकश्रुतपरिमाणे एतदवतरति। तत्र कालिकश्रुतपरिमाणं द्विविधम्– सूत्रतः, अर्थतश्च। तत्र सूत्रतस्तु सामायिकाध्ययनं परीत्तं संख्याताक्षरादिनियतपरिमाणम्। तस्य सामायिकस्यार्थस्तदर्थस्ततः पुनरनन्तपर्यायत्वादनन्तपरिमाणं भणितमिति। तदेवं प्रमाणमप्युक्तं संक्षेपतः ॥ ९५१ ॥

अथ वक्तव्यतामभिधित्सुराह–

[2]समओ जो सिद्धंतो सो स-परो-भयगओ तिविहभेओ। तत्थ इमं अज्झयणं ससमयवत्तव्वयानिययं॥९५२॥

यः सिद्धान्तः स तावत् समय उच्यते। स च त्रिविधः– स्वसमय-परसमयो-भयसमयभेदात्। अत एव वक्तव्यताऽनुयोगद्वारेषु त्रिविधा प्रोक्ता– स्वसमयवक्तव्यता, परसमयवक्तव्यता, स्व-परोभयवक्तव्यता चेति। तत्रेदं सामायिकाध्ययनं स्वसमयवक्तव्यतानियतं, स्वसमयस्यैवेह प्रतिपाद्यमानत्वादिति ॥ ९५२ ॥

न केवलमिदमध्ययनम्, किन्तु सर्वाण्यप्यध्ययनानि स्वसमयवक्तव्यतानियतान्येव। कुतः ?, इत्याह–

[3]परसमओ उभयं वा सम्मद्दिट्ठिस्स ससमओ जेण। तो सव्वज्झयणाइं ससमयवत्तव्वनिययाइं ॥९५३॥

यतः परसमयः, उभयसमयो वा सम्यग्दृष्टेः स्वसमय एव, यथावद्विषयविभागेन व्यवस्थापनात्। ततो यद्यपि केषुचिदध्ययनेषु परो-भय-समयवक्तव्यतापि श्रूयते, तथापि तानि सर्वाण्यपि स्वसमयवक्तव्यतानियतान्येव, सम्यग्दृष्टिपरिग्रहात्। एतच्च पूर्वमनेकशो भावितमेवेति ॥ ९५३ ॥

१ सख्यामाने कालिकश्रुतपरिमाणे परीत्तपरिमाणम्। श्रुततस्तदर्थत· पुनर्भणितं तदनन्तपर्यायम् ॥ ९५१ ॥

२ समयो य· सिद्धान्त· स स्व-परो भयगतस्त्रिविधभेदः। तत्रेदमध्ययन स्वसमयवक्तव्यतानियतम् ॥ ९५२ ॥

३ परसमय उभय वा सम्यग्दृष्टे· स्वसमयो येन। ततः सर्वाध्ययनानि स्वसमयवक्तव्यनियतानि ॥ ९५३ ॥

आगारिंगियकुसलं जइ सेयं वायसं वए पुज्जा। तहवि य सिं न विकूडे विरहम्मि य कारणं पुच्छे ॥९३३॥

निवपुच्छिएण गुरुणा भणिओ गंगा कओमुही वहइ। संपाइयवं सीसो जह तह सव्वत्थ कायव्वं ॥९३४॥

तिस्रोऽपि सुगमाः, नवरं प्रथमगाथायां 'करणेत्यादि' करणं गुर्वादिष्टस्य संपादनम्, विनयोऽभिमुखगमना ऽऽसनप्रदान-पर्युपास्त्य-ञ्जलिवद्धानुव्रजनादिलक्षणः, अनुवृत्तिस्त्विङ्गितादिना गुरुचित्तं विज्ञाय तदानुकूल्ये प्रवृत्तिः, ताभिः। द्वितीयगाथायामाकारेङ्गित-कुशलं शिष्यं प्रति यदि श्वेतं वायसं पूज्या गुरवो वदेयुः, तथापि 'सिं ति' तेषां संबन्धि वचो न विकूटयेद् न प्रतिहन्यात्। विरहे च तद्विषयं कारणं पृच्छेदिति।

नृपपृष्टेन गुरुणा भणितो 'गङ्गा केन मुखेन वहति ?'। ततो यथा सर्वमपि गुरुभणितं शिष्यः संपादितवान्, तथा सर्वत्र सर्वप्रयोजनेषु कार्यम्। इति तृतीयगाथाऽक्षरार्थः। भावार्थस्तु कथानकेनोच्यते– कन्यकुब्जे पुरे केनचिद् राज्ञा सूरिणा सह गोष्ठीप्रबन्धे प्रोक्तम्– राजपुत्रा विनीताः। सूरिणा तूक्तम्– साधवः। ततो विवादे सूरिणाऽभ्यधायि– युष्मदीयः सर्वोत्कृष्टविनयगुणो राजपुत्रः परीक्ष्यते, अस्मदीयस्त्वविनीतो भवतां यः प्रतिभाति स एव साधुः परीक्ष्यते। ततोऽभ्युपेतं राज्ञा। समादिष्टश्चातिविनीततया प्रसिद्धो राजपुत्रः– 'कुतोमुखी गङ्गा वहति ?' इति शोधय। तेनोक्तम्– किमिह शोधनीयम् ?, बालानामपि प्रतीतमेवेदम्– 'पूर्वाभिमुखी गङ्गा प्रवहति' इति। राज्ञा प्रोक्तम्– किमित्यत्रापि वितण्डावादं करोषि ?, गत्वा निरीक्षस्व तावत्। ततो हृद्यसूयावान् बहिः संवृतिं कृत्वा महता कष्टेन ततः प्रदेशाद् निर्गतः। सिंहद्वारे च निर्गच्छन् पृष्टः केनापि मित्रेण– भद्र ! क्व गन्तव्यम् ?। ततोऽसूयया प्रोक्तम्– अरण्ये रोज्ञानां लवणदानार्थम्। ततो मित्रेणोक्तम्– कोऽयं व्यतिकरः ?। राजपुत्रेण सर्वमपि राजादिष्टं निवेदितम्। मित्रेणोक्तम्– यदि राज्ञो ग्रहः संलग्नः, तत् किं तवापि ?, गत्वा निवेदय– 'निरीक्षिता मया गङ्गा, पूर्वाभिमुखी वहति' इति। तथैवानुष्ठितं राजपुत्रेण। प्रच्छन्नहेरिकेण च निवेदितं राज्ञस्तच्चेष्टितम्। ततो विलक्षेण राज्ञा प्रोक्तम्– भव्यम्, साधुरपि परीक्ष्यतां तावत्। ततो यः कश्चिदविनीतो राज्ञा लक्षितस्तद्विषये परीक्षाप्रतिपादितेन गुरुणा भणितः शिष्यः– गत्वा निरीक्षस्व, 'केन मुखेन गङ्गा वहति ?' इति। ततः 'पूर्वाभिमुखी साऽत्र वहति, इति गुरवो विदन्त्येव, परं कारणेन केनाप्यत्र भवितव्यम्' इति चेतसि निश्चित्य प्रोक्तं तेन– 'इच्छाम्यादेशम्' इति।

१ आकारे-ङ्गितकुशलं यदि श्वेतं वायसं वदेयुः पूज्याः। तथापि च तेषां न विकूटयेद् विरहे च कारणं पृच्छेत् ॥ ९३३ ॥
नृपपृष्टेन गुरुणा भणितो गङ्गा कुतोमुखी वहति ?। संपादितवान् शिष्यो यथा तथा सर्वत्र कर्तव्यम् ॥ ९३४ ॥

उपक्रमभेदः समवतारः प्रस्तुतः, स च लाघवार्थं सामायिकस्य प्रतिद्वारं समवतारितत्वात् पूर्वमेवाभिहितः, इति न पुनरप्यत्रोच्यते, पौनरुक्त्यप्रसङ्गात् ॥ इति सप्तदशगाथार्थः ॥ ९५६ ॥

॥ इत्युपक्रमः समाप्तः ॥

अथ निक्षेपलक्षणं द्वितीयमनुयोगद्वारमभिधित्सुराह—

[1]भण्णइ घिप्पइ य सुहं निक्खेवपयाणुसारओ सत्थं । ओहो नामं सुत्तं निक्खेतव्वं तओऽवस्सं ॥ ९५७ ॥

यस्माद् नामादिनिक्षेपानुसारतः शास्त्रम्, अध्ययनम्, उद्देशको वा सुखेनैव भण्यतेऽभिधीयते, सुखेनैव च गृह्यतेऽधिगम्यते, तस्मात् शास्त्रादेः संबन्धी ओघो, नाम, सूत्रं चावश्यमेव निक्षेप्तव्यम् । एतेन च यद् निक्षेपस्य पूर्वं सामान्येन त्रैविध्यमुक्तम्, तदिदानीं विशेषतो दर्शितमवगन्तव्यम्; तद्यथा– त्रिविधो निक्षेपः– ओघनिष्पन्नः, नामनिष्पन्नः, सूत्रालापकनिष्पन्नश्चेति ॥ ९५७ ॥

तत्रौघः किमुच्यते ?, इत्याह—

[2]ओहो जं सामण्णं सुयाभिहाणं चउव्विहं तं च । अज्झयणं अज्झीणं आओ ज्झवणा य पत्तेयं ॥९५८॥

नामाइचउब्भेयं वण्णेऊणं सुयाणुसारेणं । सामाइयमाउज्जं चउसुं पि कमेण भावेसु ॥ ९५९ ॥

इह यत् श्रुतस्य जिनवचनरूपस्य सामान्यमङ्गा-ऽध्ययनो-देशका[3]दिकं नाम तदोघ इत्युच्यते, सामान्यं शास्त्रनामेत्यर्थः । तत्रेह सामायिकस्य प्रस्तुतत्वात् तद्विषयं सामान्यनाम माह– अध्ययनम्, अक्षीणम्, आयः, क्षपणा चेति । इदं च सामायिकादिशास्त्रविशेषस्य सामान्यमध्ययनादिकमभिधानमनुयोगद्वारलक्षणश्रुतानुसारेण प्रत्येकं नामादि चतुर्विधमुपवर्ण्यते; तद्यथा– नामाध्ययनम्, स्थापनाध्ययनम्, द्रव्याध्ययनम्, भावाध्ययनम्; तथा, नामाक्षीणं, स्थापनाक्षीणम्, द्रव्याक्षीणम्, भावाक्षीणम् । एवमाय-क्षपणयोरप्युक्त्वा क्रमेण चतुर्ष्वपि भावेषु भावाध्ययने, भावाक्षीणे, भावाऽऽये, भावक्षपणायां चेत्यर्थः । किम् ?, इत्याह– सामायिकमायोज्यम्– सामायिकमेव भावाध्ययनादिवाच्यत्वेनात्र बोद्धव्यमित्यर्थः ॥ ९५८ ॥ ९५९ ॥

---

१ भण्यते गृह्यते च सुख निक्षेपपदानुसारत. शास्त्रम् । ओघो नाम सूत्र निक्षेप्तव्य ततोऽवश्यम् ॥ ९५७ ॥
२ ओघो यत् सामान्य श्रुताभिधानं चतुर्विध तच्च । अध्ययनमक्षीणमाय· क्षपणा च प्रत्येकम् ॥ ९५८ ॥
नामादिचतुर्भेदं वर्णयित्वा श्रुतानुसारेण । सामायिकमायोज्य चतुर्ष्वपि क्रमेण भावेषु ॥ ९५९ ॥ ३ घ छ· 'दि ना' ।

समाधानान्तरमाह—

अहवोवक्कमसामण्णओ[1] मया पगयनिरुवओगा वि । अण्णत्थ सोवओगा एवं चिय सव्वनिक्खेवो[2] ॥९३८॥

यदिवा, प्रकृते प्रस्तुते निरुपयोगाः प्रकृतनिरुपयोगाः, एवंभूता अपि सन्तो नाम-स्थापना-द्रव्याद्युपक्रमा उपक्रमसामान्यतोऽत्र मता उपन्यस्ताः । कुतः ?, इत्याह— अन्यत्र स्थानान्तरे सोपयोगा इति कृत्वा, न केवलमत्रैवाऽसौ न्यायः, किन्त्वत्र शास्त्रे, अन्येषु वा शास्त्रेषु ये केचन बहुप्रकारा नामादिनिक्षेपास्तेषां सर्वेषामप्यपरसमाधानाभावे इदमेव समाधानं वाच्यमिति । तदेवं नामादिभेदैर्दर्शितमुपक्रमस्य षड्विधत्वम् ॥ ९३८ ॥

यदिवा, अन्यथैवाऽयमुपक्रमः षड्विध इति दिदर्शयिषुः प्रस्तावनामाह—

गुरुभावोवक्कमणं[3] कयमज्झयणस्स छव्विहमियाणिं । तत्थणुपुव्वाईसुं इदमज्झयणं समोयारे ॥ ९३९ ॥

तदेवं नामादिभेदैः षड्विधे उपक्रमे विचार्यमाणे कृतं गुरुभावोपक्रमणम् । तत्करणे च दर्शितमेकेन प्रकारेणोपक्रमस्य षड्विधत्वम् । इदानीं प्रकारान्तरेण प्रस्तुतस्य सामायिकाध्ययनस्य षड्विधमुपक्रमणमुच्यते— आनुपूर्वी-नाम-प्रमाण-वक्तव्यता-ऽर्थाधिकार-समवतारभेदात् षड्विध उपक्रमोऽभिधीयत इत्यर्थः । अत एवाह— आनुपूर्व्यादिषु पञ्चस्पूपक्रमद्वारभेदेषु षष्ठे समवतारद्वारभेदे विचार्यमाण इदं सामायिकाध्ययनं समवतारयेत् । ततश्चानुपूर्व्यादिभेदेन षड्विध उपक्रमोऽभिहितो भवति । इत्यष्टादशगाथार्थः ॥ ९३९ ॥

तत्रानुपूर्वीलक्षणे प्रथमोपक्रमभेदेऽस्य सामायिकाध्ययनस्यावतारं चिन्तयितुमाह—

अणुपुव्विसमोयारो[4] कज्जो सामाइयस्स संभवओ । नियमावतारणं पुण कित्तण-गणणाणुपुव्वीसु ॥९४०॥

आनुपूर्व्यां तावदस्य सामायिकाध्ययनस्य समवतारः संभवतो यत्र यत्रानुपूर्वीभेदे समवतारः संभवति, तत्र तत्रासौ कर्तव्यः । आह— ननु

---

१ अथवोपक्रमसामान्यतो मता॰ प्रकृतनिरुपयोगा अपि । अन्यत्र सोपयोगा एवमेव सर्वनिक्षेपः ॥ ९३८ ॥ २ घ छ 'मन्नओ' ।

३ गुरुभावोपक्रमणं कृतमध्ययनस्य षड्विधमिदानीम् । तत्रानुपूर्व्यादिषु इदमध्ययनं समवतारयेत् ॥ ९३९ ॥

४ आनुपूर्वीसमवतार॰ कार्यः सामायिकस्य सम्भवत । नियमादवतारणं पुनरुत्कीर्तन-गणनानुपूर्व्योः ॥ ९४० ॥

[1]इह जइ कीस निरुत्ते तत्थ व भणियमिह भण्णए कीस ?। निक्खेवमित्तमिहइं तस्स निरुत्तीए वक्खाणं ॥९६३॥

आह– यद्यत्रापीदं चतुर्विधं विशेषनाम भणनीयत्वेनावसरप्राप्तम्, तर्हि किमुच्यते– निरुक्त्यादौ वक्ष्ये ?। अथ तत्र वक्ष्यते, तर्ह्यत्र किमर्थमुच्यते ?। अत्रोत्तरमाह– 'निक्खेवेत्यादि' इह नामादिनिक्षेपमात्रस्यैव भणनावसरः, स च नामादिचातुर्विध्यभणनादुक्त एव, निरुक्तौ तु तदर्थो निरूपयिष्यत इत्यदोषः ॥ ९६३ ॥

पुनरप्यन्यथाऽऽक्षिप्य परिहरति—

[2]तो कीस पुणो सुत्ते, सुत्तालावो तओ न तन्नामं। इह उण नामं नत्थं तं वक्खायं निरुत्तीए ॥ ९६४ ॥

हन्त ! यदि निरुक्तौ सामायिकं व्याख्यायते, तर्हि 'करोमि भदन्त ! सामायिकम्' इत्यादि किमिति पुनरपि सूत्रे व्याख्यायते ?। नैवम्, यतः सूत्रालापक एव तकोऽसौ व्याख्यायते, न पुनस्तन्नामव्याख्यानम्, इह पुनर्नामादिभेदैः सामायिकनाम न्यस्तम्, तच्च निरुक्तौ व्याख्यातम्, इति विषयविभागात् सर्वं सुस्थमिति ॥ ९६४ ॥

पुनः प्रेर्यमुत्थाप्य परिहरति—

[3]इह पुण कीस न भण्णइ जं निक्खेवो इमो स निज्जुत्ती। निज्जुत्ती वक्खाणं निक्खेवो नासमेत्तं तु ॥९६५॥

नन्विहैव निक्षेपद्वारे किमिति न भण्यते न व्याख्यायते सामायिकम्, येन निरुक्तौ व्याख्यायते ?। अत्रोच्यते– यद् यस्मादसौ निक्षेपः प्रस्तुतः, तत्र च प्रस्तुते व्याख्यानस्य कोऽवसरः ?। 'स निज्जुत्ति त्ति' सा पुनर्वक्ष्यमाणा निर्युक्तिरुपोद्घातनिर्युक्तिद्वाररूपत्वाद् निर्युक्तिः। यदि नाम सा निर्युक्तिः, तथापि तत्र व्याख्यानस्य किमायातम् ?, इत्याह– 'निज्जुत्ती वक्खाणं ति' निर्युक्तिरनुगमभेदत्वाद् व्याख्यानात्मिकैव भवति, अतो युक्तं तस्यां व्याख्यानम्। निक्षेपोऽपि तर्हि व्याख्यानरूपो भविष्यति, इत्याह– 'निक्खेवो नासमेत्तं तु त्ति' निक्षेपस्तु नामादिन्यासमात्रात्मक एव वर्तते, न तु व्याख्यानरूपः, अनुगमस्यैव तद्रूपत्वात्। अतः कोऽत्र निक्षेपे व्याख्यानावसरः ? इति ॥ ९६५ ॥

१ इह यदि कस्माद् निरुक्तौ तत्र वा भणितमिह भण्यते कस्मात् ?। निक्षेपमात्रमिह तस्य निरुक्तौ व्याख्यानम् ॥ ९६३ ॥
२ ततः कस्मात् पुनः सूत्रे, सूत्रालापः सको न तन्नाम। इह पुनर्नाम न्यस्तं तद् व्याख्यातं निरुक्तौ ॥ ९६४ ॥
३ इह पुनः कस्माद् न भण्यते यद् निक्षेपोऽयं सा निर्युक्तिः। निर्युक्तिर्व्याख्यानं निक्षेपो न्यासमात्रं तु ॥ ९६५ ॥

गुणितो जातः षट्, तैश्च चत्वारो गुणिताः संजाताश्चतुर्विंशतिः, तया च पञ्चाभ्यस्ता जातं विंशं शतम्। तेन च षड्गुणिताः संपन्नानि विंशतिसप्तभङ्गकशतानि। इह च प्रथमभङ्गः पूर्वानुपूर्वीरूपः, चरमभङ्गस्तु पश्चानुपूर्व्यात्मकः; अतस्तदपनयनेऽष्टादशोत्तराणि सप्त शतानि सामान्येन सर्वसंख्यारूपमनानुपूर्वीभङ्गकपरिमाणं भवति। एवं सप्तादीनामप्यनन्तपर्यन्तानां पदानामयमेव सामान्येन सर्वभङ्गकसंख्यानयनोपाय इति ॥ ९४२ ॥

अथ विशेषतोऽनानुपूर्वीभङ्गकानामानयनोपायभूतां करणगाथामाह—

[3]पुव्वाणुपुव्विहेट्ठा समयाभेएण कुण जहाजेट्ठं। उवरिमतुल्लं पुरओ नसेज्ज पुव्वक्कमो सेसो ॥ ९४३ ॥

इह विवक्षितपदानां क्रमेण स्थापना पूर्वानुपूर्वीत्युच्यते, तस्या 'हेट्ठ त्ति' अधस्ताद् द्वितीयादिभङ्गकान् जिज्ञासुः 'कुण त्ति' स्थापय 'एकादिपदानि' इति शेषः। कथम्, इत्याह— ज्येष्ठस्यानतिक्रमेण यथाज्येष्ठं यो यस्यादौ स तस्य ज्येष्ठो यथा— द्विकस्यैकको ज्येष्ठः, त्रिकस्य त्वयमनुज्येष्ठः, चतुष्कादीनां त्वेकोऽपि ज्येष्ठानुज्येष्ठः; एवं त्रिकस्य द्विको ज्येष्ठः, स एव चतुष्कस्यानुज्येष्ठः, पञ्चकादीनां तु स एव ज्येष्ठानुज्येष्ठ इत्यादि। एवं च सत्युपरितनाङ्कस्याधस्ताज्ज्येष्ठो निक्षिप्यते, तत्रालभ्यमानेऽनुज्येष्ठः, तत्राप्यलभ्यमाने ज्येष्ठानुज्येष्ठः; इति यथाजेष्ठं निक्षेपं कुरु। किमनियमेन ?, न, इत्याह— समयाभेदेनेति, समयः संकेतः प्रस्तुतभङ्गकरचनव्यवस्था, तस्या अभेदोऽनतिक्रमस्तेन समयाभेदेन निक्षेपं कुरु। समयस्य च भेदस्तदा भवति, यदा तस्मिन्नेव भङ्गके निक्षिप्ताङ्कसदृशोऽपरोऽङ्कः पतति। तत एवंभूतं समयभेदं वर्जयन्नेव ज्येष्ठाद्यङ्कनिक्षेपं विदध्यात्, उक्तं च—

" [4]जंहिम्मि य निक्खेत्ते पुणरवि सो चेव होइ कायव्वो। सो होइ समयभेओ वज्जेयव्वो पयत्तेण ॥ १ ॥ "

निक्षिप्तस्य चाङ्कस्य यथासंभवं 'पुरओ त्ति' अग्रत उपरितनाङ्कैस्तुल्यं सदृशं यथा भवति, एवं न्यस्येत्— उपरितनाङ्कसदृशानेवाङ्कान् पुरतः स्थापयेदित्यर्थः। 'पुव्वक्कमो सेस त्ति' निक्षिप्ताङ्कस्य यथासंभवं पृष्ठतः शेष उद्धरितशेषाङ्कानामधस्तात् तानेवोद्धरितशेषानङ्कान् पूर्वक्रमेण स्थापयेदित्यर्थः। यः संख्यया लघुरेककादिः स प्रथमं स्थाप्यते, यस्तु तया महान् स पश्चात् स्थाप्यत इति पूर्वक्रमः, पूर्वानुपूर्वीलक्षणे प्रथमभङ्गके इत्थमेव दृष्टत्वादिति भावः ॥ इति गाथार्थः ॥

---

१ क ख ग 'द् षड्भिश्चत्वा'। २ घ छ, 'षट्ताडिता'। ३ पूर्वानुपूर्व्यधस्तात् समयाभेदेन कुरु यथाज्येष्ठम्। उपरिमतुल्यं पुरतो न्यस्येत् पूर्वक्रमः शेषः ॥ ९४३ ॥
४ यस्मिंश्च निक्षिप्ते पुनरपि स एव भवति कर्तव्यः। स भवति समयभेदो वर्जितव्य. प्रयत्नेन ॥ १ ॥

अथ सूत्रालापकनिक्षेपस्याऽवसरः, तत्राह—

[1]जो सुत्तपयन्नासो सो सुत्तालावयाण निक्खेवो । इह पत्तलक्खणो सो निक्खिप्पइ न पुण किं कज्जं ? ॥९६८॥
सुत्तं चेव न पावइ इह सुत्तालावयाण कोऽवसरो ? । सुत्ताणुगमे काहिइ तण्णासं लाघवनिमित्तं ॥९६९॥

'[2]करेमि भन्ते ! सामाइयं' इत्यादिसूत्रपदानां यो नाम-स्थापनादिरूपेण न्यासः, स सूत्रालापकनिक्षेपः । स चेह प्राप्तलक्षणः- प्राप्तावसर एव, न पुनर्निक्षिप्यते- न पुनः सूत्रालापक इदानीमेव निक्षिप्यत इति भावः । किं कार्यं- कस्माद्धेतोः ?, इत्याह- सूत्रमेव तावदिदानीं न प्राप्नोति, अतः सूत्रालापकानामिह निक्षेपे कर्तव्ये कोऽवसरः ?। इदमुक्तं भवति-सूत्रानुगम एव सूत्रमुच्चारयितव्यम्, उच्चारिते च सूत्रे तदालापकविभागः; तद्विभागे च तन्निक्षेपः । अतः सूत्राभावात् कः सूत्रालापकानामिह निक्षेपेऽवसरः ? । तर्हि कदा तन्निक्षेपो विधेयः ?, इत्याह- सूत्रानुगमे प्राप्ते करिष्यति लाघवार्थं सूरिस्तन्निक्षेपमिति ॥ ९६८ ॥ ९६९ ॥

अथ पूर्वापरासंवद्धतामाशङ्क्य परिहरति—

[3]इह जइ पत्तो वि तओ न नस्सए कीस भण्णए इहइं । दाइज्जइ सो निक्खेवमेत्तसामण्णओ नवरं ॥९७०॥

नन्विह प्राप्तावसरोऽपि यदि तकोऽसौ सूत्रालापकनिक्षेपो न न्यस्यते न विधीयते, तर्ह्यत्र किमर्थं भण्यते-'सूत्रालापकनिक्षेपश्च' इत्येवं निक्षेपतृतीयभेदत्वेन किमर्थमिहोपन्यस्यते ?, अनुगमेऽपि किमिति न भण्यते ? इति भावः । सत्यम्, किन्त्वोघनिष्पन्नादिना निक्षेपेण सह निक्षेपमात्रसाम्यात् नवरं केवलं दर्श्यत एवाऽयमत्र, न तूपन्यस्यते, ग्रन्थगौरवभयात् ॥ इति चतुर्दशगाथार्थः ॥९७०॥

॥ इति निक्षेपः समाप्तः ॥

अथानुगमलक्षणं तृतीयमनुयोगद्वारं संवन्धोपदर्शनपूर्वकमाह-

[4]संपयमोहाईणं संनिक्खित्ताणमणुगमो कज्जो । सोऽणुगमो दुविगप्पो नेओ निज्जुत्ति-सुत्ताणं ॥९७१॥

---

१ यः सूत्रपदन्यास. स सूत्रालापकाना निक्षेप. । इह प्राप्तलक्षण· स निक्षिप्यते न पुन· किं कार्यम् ? ॥ ९६८ ॥ सूत्रमेव न प्राप्नोतीह सूत्रालापकानां कोऽवसर. ? । सूत्रानुगमे करिष्यति तन्न्यास लाघवनिमित्तम् ॥ ९६९ ॥ २ करोमि भदन्त ! सामायिकम् ।
३ इह यदि प्राप्तोऽपि सको न न्यस्यते कस्माद् भण्यते इह ? । दर्श्यते स निक्षेपमात्रसामान्यतो नवरम् ॥ ९७० ॥
४ साम्प्रतमोघादीनां सनिक्षिप्तानामनुगमः कार्य. । सोऽनुगमो द्विविकल्पो ज्ञेयो निर्युक्ति-सूत्रयोः ॥ ९७१ ॥

अत्राप्याद्यभङ्गस्याऽनुपूर्वीत्वात्, अन्तिमस्य च पश्चानुपूर्वीत्वाद् मध्यमा एव चत्वारो भङ्गा अनानुपूर्वीत्वेन मन्तव्याः। एवं चतु-ष्पञ्च-षड्-सप्तादीनामपि पदानामनया दिशा भङ्गकाः समानेतव्याः। तदेवं संक्षेपत उक्ता आनुपूर्व्यः, विस्तरतस्त्विमा वक्ष्यमाणाश्च नामादिभेदा अनुयोगद्वारेभ्योऽवसेया इति ॥ ९४३ ॥

अथ संक्षेपतो नाम विचारयन्नाह–

[1]जं वत्थुणोऽभिहाणं पज्जयभेयाणुसारि तं नामं। पइभेयं जं नमए पइभेयं जाइ जं भणियं ॥ ९४४ ॥

यज्जीवादिवस्तुनोऽभिधानं तद् नामेति संबन्धः। कथंभूतम्?, इत्याह– पर्याया ज्ञान-दर्शन-चारित्र-रूप-रस-गन्ध-स्पर्श-नव-पुराणादयस्तेषां भेदा नानाविधस्वभावास्तांस्तद्वाचकत्वेनाऽनुसरतीति पर्यायभेदानुसारि नामेति। किमुक्तं भवति?, इत्याशङ्क्य तात्पर्यमाह– 'पइभेयमित्यादि' 'णम प्रह्वत्वे' प्रतिपर्यायभेदं यद् नमति याति तद्वाचकत्वेन परिणमति प्रह्वीभवति तद् नामेति यद् भणितं भवति, इत्येतत् तात्पर्यमित्यर्थ इति ॥ ९४४ ॥

एतच्च नाम द्विनाम-त्रिनामयावद्दशनामभेदाद् दशभेदम्, समस्ताभिलाप्यवस्तुविषयत्वाद् बहुभेदं चाऽनुयोगद्वारेषूक्तम्। तत्र षड्नाम्नि क्षायोपशमिके भावे सामायिकस्याऽध्ययनस्यावतार इति दर्शयन्नाह–

[2]छव्विहनामे भावे खओवसमिए सुयं समोयरइ। जं सुयनाणावरणखओवसमजं तयं सव्वं ॥ ९४५ ॥

अनुयोगद्वाराध्ययने षड्नाम्न्यौदयिकादयः षड् भावाः पठ्यन्ते। तत्र च क्षायोपशमिके भावे सर्वमप्याचारादि श्रुतं समवतरति, यद् यस्मात् सर्वमपि तत् श्रुतं श्रुतज्ञानावरणकर्मक्षयोपशमादेव जायते, नान्यतः, तस्मात् क्षायोपशमिक एव भावे समवतरति। अत इदं सामायिकाध्ययनमपि श्रुतविशेषरूपत्वात् क्षायोपशमिक एव भावे समवतरति, नान्यत्रेत्यर्थादुक्तं भवति। इत्युक्तं संक्षेपतो नाम ॥ ९४५ ॥

सांप्रतं प्रमाणमभिधित्सुराह–

[3]दव्वाइचउब्भेयं पमीयए जेण तं पमाणं ति। इदमज्झयणं भावो त्ति भावमाणे समोयरइ ॥ ९४६ ॥

---

१ यद् वस्तुनोऽभिधानं पर्यायभेदानुसारि तद् नाम। प्रतिभेदं यद् नमति प्रतिभेदं याति यद् भणितम् ॥ ९४४ ॥
२ षड्विधनाम्नि भावे क्षायोपशमिके श्रुतं समवतरति। यत् श्रुतज्ञानावरणक्षयोपशमजं तत् सर्वम् ॥ ९४५ ॥
३ द्रव्यादिचतुर्भेदं प्रमीयते येन तत् प्रमाणमिति। इदमध्ययनं भाव इति भावमाने समवतरति ॥ ९४६ ॥

अथ सूत्रालापकनिक्षेपस्याऽवसरः, तत्राह—

[1]जो सुत्तपयन्नासो सो सुत्तालावयाण निक्खेवो। इह पत्तलक्खणो सो निक्खिप्पइ न पुण किं कज्जं? ॥९६८॥

सुत्तं चेव न पावइ इह सुत्तालावयाण कोऽवसरो?। सुत्ताणुगमे काहिइ तण्णासं लाघवनिमित्तं ॥९६९॥

'[2]करेमि भन्ते! सामाइयं' इत्यादिसूत्रपदानां यो नाम-स्थापनादिरूपेण न्यासः, स सूत्रालापकनिक्षेपः। स चेह प्राप्तलक्षणः– प्राप्तावसर एव, न पुनर्निक्षिप्यते– न पुनः सूत्रालापक इदानीमेव निक्षिप्यत इति भावः। किं कार्यं– कस्माद्धेतोः?, इत्याह– सूत्रमेव तावदिदानीं न प्राप्नोति, अतः सूत्रालापकानामिह निक्षेपे कर्तव्ये कोऽवसरः?। इदमुक्तं भवति–सूत्रानुगम एव सूत्रमुच्चारयितव्यम्, उच्चारिते च सूत्रे तदालापकविभागः; तद्विभागे च तन्निक्षेपः। अतः सूत्राभावात् कः सूत्रालापकानामिह निक्षेपेऽवसरः?। तर्हि कदा तन्निक्षेपो विधेयः?, इत्याह– सूत्रानुगमे प्राप्ते करिष्यति लाघवार्थं सूरिस्तन्निक्षेपमिति ॥ ९६८ ॥ ९६९ ॥

अथ पूर्वापरासंबद्धतामाशङ्क्य परिहरति—

[3]इह जइ पत्तो वि तओ न नस्सए कीस भण्णए इहइं। दाइज्जइ सो निक्खेवमेत्तसामण्णओ नवरं ॥९७०॥

नन्विह प्राप्तावसरोऽपि यदि तकोऽसौ सूत्रालापकनिक्षेपो न न्यस्यते न विधीयते, तर्ह्यत्र किमर्थं भण्यते–'सूत्रालापकनिक्षेपश्च' इत्येवं निक्षेपतृतीयभेदत्वेन किमर्थमिहोपन्यस्यते?, अनुगमेऽपि किमिति न भण्यते? इति भावः। सत्यम्, किन्त्वोघनिष्पन्नादिना निक्षेपेण सह निक्षेपमात्रसाम्यात् नवरं केवलं दर्श्यत एवाऽयमत्र, न तूपन्यस्यते, ग्रन्थगौरवभयात् ॥ इति चतुर्दशगाथार्थः ॥९७०॥

॥ इति निक्षेपः समाप्तः ॥

अथानुगमलक्षणं तृतीयमनुयोगद्वारं संबन्धोपदर्शनपूर्वकमाह–

[4]संपयमोहाईणं संनिक्खित्ताणमणुगमो कज्जो। सोऽणुगमो दुविगप्पो नेओ निज्जुत्ति-सुत्ताणं ॥९७१॥

---

१ य सूत्रपदन्यास. स सूत्रालापकाना निक्षेप.। इह प्राप्तलक्षण· स निक्षिप्यते न पुन. किं कार्यम्? ॥ ९६८ ॥
सूत्रमेव न प्राप्नोतीह सूत्रालापकानां कोऽवसर.?। सूत्रानुगमे करिष्यति तन्न्यासं लाघवनिमित्तम् ॥ ९६९ ॥ २ करोमि भदन्त! सामायिकम्।
३ इह यदि प्राप्तोऽपि सको न न्यस्यते कस्माद् भण्यते इह?। दर्श्यते स निक्षेपमात्रसामान्यतो नवरम् ॥ ९७० ॥
४ साम्प्रतमोघादीनां संनिक्षिप्तानामनुगम· कार्य.। सोऽनुगमो द्विविकल्पो ज्ञेयो निर्युक्ति-सूत्रयो. ॥ ९७१ ॥

णामदमात्मागमः, तैरव तत्सूत्रस्य निर्वर्तितत्वात्, अत आत्मन एव सकाशादागमनमस्येति कृत्वा । तच्छिष्याणां तु जम्बूस्वाम्यादीनां सामायिकसूत्रमनन्तरागमः, अनन्तरादेव गणधरादागमनमागमोऽस्येति हेतोः। तथाऽवशेषाणां प्रभव-शय्यंभवादीनामेतत् सूत्रं परम्परागमः सूरिपरम्परयाऽऽगमनमागमोऽस्येति युक्तेः । तदेवं सूत्रतो यथासंख्येन गणधरादीनामात्मागमादित्वयोजना कृता ॥९४८॥ अर्थेनाप्येवमेवेदं सामायिकं यथासंख्येन तीर्थकर-गणधर-शेषजम्बुप्रभृतीनामात्मागमा-ऽनन्तरागम-परम्परागमत्वेन वक्तव्यमिति ॥

ननु नयप्रमाणे समवतारोऽस्य भवति, नवा ?, इत्याशङ्क्य गाथोत्तरार्धमाह—

मूढनयं[1] ति न संपइ नयप्पमाणेऽवयारो से ॥ ९४९ ॥

'मूढनइयं[2] सुयं कालियं, न नया समोयरंति इहं' इतिवचनाद् मूढनयं चिरन्तनमुनिभिः शिष्यव्यामोहभयाद् निषिद्धनयविचारं संप्रति श्रुतम्, अतो नयप्रमाणे नाऽस्याऽवतार इति ॥ ९४९ ॥

आह– ननु कियतः कालादर्थात् कालिकश्रुतेन नयविचारो निषिद्धः ?, इत्याह—

आसी[3] पुरा सो नियओ अणुओगाणमपुहुत्तभावम्मि । संपइ नत्थि पुहुत्ते होज्ज व पुरिसं समासज्ज ॥९५०॥

पुरा पूर्वं चरणकरण-धर्मकथा-गणित-द्रव्यानुयोगलक्षणानां चतुर्णामनुयोगानामपृथग्भावे प्रतिसूत्रं चतुर्णामप्यवतारे स नयावतारो नियतो निश्चित आसीत् । सांप्रतं पुनरनुयोगानां पृथक्त्वे

"कालियसुयं[4] च इसिभासियाइं तइया य सूरपन्नत्ती । सव्वो य दिट्ठिवाओ चउत्थओ होइ अणुओगो ॥ १ ॥"

इति वचनात् पार्थक्येन व्यवस्थापने सति नास्त्यसौ नयावतारः । किं सर्वथा ?, न, इत्याह– भवेद् वा प्राज्ञपुरुषविशेषं समासाद्य कोऽपि कियानपीति । इदमुक्तं भवति– श्रीमदार्यरक्षितसूरीन् यावदेकैकस्मिन् सूत्रेऽनुयोगचतुष्टयव्याख्यानम्, नयविचारश्च विस्तरेणाऽऽसीत् । ततश्च तैरेव श्रीमदार्यरक्षितसूरिभिर्विचारबाहुल्याद् मुग्धतः शिष्यानवलोक्य चत्वारोऽप्यनुयोगा भेदेन व्यवस्थापिताः, तद्यथा– कालिकश्रुते चरणकरणानुयोग एव व्याख्येयः, उत्तराध्ययनादिषु धर्मकथानुयोगः, सूर्यप्रज्ञप्त्यादिषु गणितानुयोगः, दृष्टिवादे

१ मूढनयमिति न सम्प्रति नयप्रमाणेऽवतारस्तस्य ॥ ९४९ ॥ २ मूढनयिकं श्रुत कालिकं, न नयाः समवतरन्तीह ।
३ आसीत् पुरा स नियतोऽनुयोगानामपृथग्भावे । सम्प्रति नास्ति पृथक्त्वे भवेद् वा पुरुषं समासाद्य ॥ ९५० ॥
४ कालिकश्रुत चर्षिभाषितानि तृतीया च सूरप्रज्ञप्तिः । सर्वश्च दृष्टिवादश्चतुर्थको भवत्यनुयोगः ॥ १ ॥

[1]अज्झयणं उद्देसोऽभिहियं सामाइयं ति निद्देसो । सामण्ण-विसिट्ठाणं अभिहाणं सत्थ-नामाणं ॥९७५॥

शास्त्रं च नाम च शास्त्र-नामनी तयोः सामान्य-विशिष्टयोः सामान्य-विशेषभूतयोरोघनिष्पन्ने नामनिष्पन्ने च निक्षेपे यदभिधानमभिहितम्, तावुद्देश-निर्देशौ । यथासंख्येन चेह योजना, तद्यथा– सामान्यस्य शास्त्रस्यौघनिष्पन्ननिक्षेपे यदध्ययनमित्यभिधानमभिहितं स उद्देश इत्युच्यते, नामनिष्पन्ने च निक्षेपे विशिष्टस्य नाम्नो यत् सामायिकमित्यभिधानमभिहितं स निर्देश इत्यभिधीयत इति ॥९७५॥

अथ प्रेरकः प्राह—

[2]दारोवन्नासाइसु निक्खेवे ओह-नामनिप्फन्ने । उद्देसो निद्देसो भणिओ इह किं पुणग्गहणं ? ॥ ९७६ ॥

आह– नन्वसावावश्यकशास्त्रस्य प्रथममध्ययनं सामायिकम्, तस्य च चत्वार्यनुयोगद्वाराणि, इत्यादिना द्वारोपन्यासादिषु प्रक्रमेषु; यदिवा, ओघनिष्पन्न-नामनिष्पन्नयोर्निक्षेपयोः सामान्यनामरूप उद्देशः, विशेषनामरूपश्च निर्देशोऽनेकशः प्रोक्त एव; किमर्थमिहोपोद्घातनिर्युक्तौ पुनरपि तयोर्ग्रहणम् ? इति ॥ ९७६ ॥

अत्रोत्तरमाह—

[3]इह विहियाणमणागयगहणं तत्थन्नहा कहं कुणउ । तेसिं गहणमकाउं दारन्नासाइकज्जाइं ? ॥ ९७७ ॥

इहोपोद्घाते आद्यद्वारद्वयविहितयोरेवोद्देश-निर्देशयोस्तत्र द्वारोपन्यासादौ शास्त्रकृताऽनागतमेव ग्रहणं कृतम्, अन्यथा हि तयोः सामान्य-विशेषनामरूपयोरुद्देश-निर्देशयोस्तत्र ग्रहणमकृत्वा कथं निराश्रयाणि द्वारोपन्यासादिकार्याणि करोतु ? इति ॥ ९७७ ॥

प्रतिविधानान्तरमाह—

[4]अहवा तत्थुद्देसो निद्देसो वि य कओ इहं तेसिं । अत्थाणुगमावसरे विहाणवक्खाणमारद्धं ॥ ९७८ ॥

---

१ अध्ययनमुद्देशोऽभिहित सामायिकमिति निर्देश. । सामान्य-विशिष्टयोरभिधानं शास्त्र-नाम्नो. ॥ ९७५ ॥

२ द्वारोपन्यासादिषु निक्षेप ओघ नामनिष्पन्नयो । उद्देशो निर्देशो भणित इह कि पुनर्ग्रहणम् ? ॥ ९७६ ॥

३ इह विहितयोरनागतग्रहण तत्रान्यथा कथ करोतु । तेषां ग्रहणमकृत्वा द्वारन्यासादिकार्याणि ? ॥ ९७७ ॥

४ अथवा तत्रोद्देशो निर्देशोऽपि च कृत इह तयोः । अर्थानुगमावसरे विधानव्याख्यानमारब्धम् ॥ ९७८ ॥

किञ्च—

[1]मिच्छत्त[2]मयसमूहं सम्मत्तं जं च तदुवगारम्मि । वट्टइ परसिद्धंतो तो तस्स तओ ससिद्धंतो ॥ ९५४ ॥

मिथ्यात्वानामेकान्तक्षणिकत्वा-ऽक्षणिकत्ववा[3]दिसौगतादिमतानां यः समूहः समुदायः स्यात्पदलाञ्छितः, स एव यस्मात् सम्यक्त्वम्, नान्यत् । यस्माच्च तस्य स्वसमयस्योपकारस्तदुपकारस्तस्मिन् वर्तते परसिद्धान्तः, परसिद्धान्तव्यावृत्त्यैव स्वसिद्धान्तसिद्धेः, असमञ्जसवादित्वं परसिद्धान्तानां दृष्ट्वा स्वसिद्धान्ते स्थैर्यसिद्धेश्चेति । ततस्तस्मात्तस्य सम्यग्दृष्टेस्तकः परसिद्धान्तः स्वसिद्धान्त एव । तदेवं सम्यग्दृष्टेः सर्वोऽपि विषयविभागेन स्थापितः स्वसिद्धान्त एव; इति सर्वाण्यप्यध्ययनानि स्वसमयवक्तव्यतानियतान्येवेति स्थितम् । तदेवमभिहिता वक्तव्यता ॥ ९५४ ॥

अथार्थाधिकारमभिधित्सुराह—

[4]सावज्जजोगविरई अज्झयणत्थाहिगार इह सो य । भण्णइ समुदायत्थो ससमयवत्तव्वयादेसो ॥९५५॥

इह सावद्ययोगविरतिः सामायिकाध्ययनस्यार्थाधिकारः, स च समुदायार्थो भण्यत इति प्रागप्युक्तमेव । स एव च स्वसमयवक्तव्यतायाः संपूर्णाया एकदेशोऽभिधीयत इति । उक्तोऽर्थाधिकारः ॥ ९५५ ॥

अथ समवतारमभिधित्सुराह—

[5]अहुणा य समोयारो जेण समोयारियं पइदारं । सामाइयं सोऽणुगओ लाघवओ नो पुणो वच्चो ॥ ९५६ ॥

अधुना समवतारोऽवसरप्राप्तः । चकारो भिन्नक्रमे, तद्यथा– स च 'लाघवउ त्ति' लाघवमाश्रित्य लाघवार्थमित्यर्थः, अनुगतः पूर्वमेव गतोऽतिक्रान्तः पूर्वमेवाभिहित इत्यर्थः । कथम् ?, इत्याह– येन यस्मात् प्रतिद्वारं सामायिकाध्ययनं समवतारितमेव । ततो नेदानीं पुनरपि समवतारो वाच्यः, तद्व्यापारस्याऽध्ययनसमवतारणलक्षणस्य प्रतिद्वारमनिष्ठितत्वात् । एतदुक्तं भवति– अधुना षष्ठ

---

१ मिथ्यात्वमतसमूहः सम्यक्त्व यच्च तदुपकारे । वर्तते परसिद्धान्तस्ततस्तस्य सक. स्वसिद्धान्त' ॥ ९५४ ॥ २ घ छ ज्ञ. 'त्तसमूहमयं स' । ३ क ग 'दिम' । ४ सावद्ययोगविरतिरध्ययनार्थाधिकार इह स च । भण्यते समुदायार्थं स्वसमयवक्तव्यतादेश ॥ ९५५ ॥ ५ अधुना च समवतारो येन समवतारितं प्रतिद्वारम् । सामायिक सोऽनुगतो लाघवतो नो पुनर्वाच्य' ॥ ९५६ ॥

अथ निर्गमनं निर्गमः । स च 'कुतः सामायिकं निर्गतम् ?' इत्येवंरूपो वक्ष्यते । अत्राक्षेप-परिहारौ प्राह—

[1]णणु निग्गमो गउ च्चिय अत्ता-णंतर-परंपरागमओ । तित्थयराईहिंतो आगयमेयं परंपरया ॥ ९८१ ॥

ननु पूर्वमागमद्वार एवात्मा-ऽनन्तर-परम्परागमतस्तीर्थकरादिभ्यः परम्परया समागतमेतत् सामायिकमित्यभिधानात् तीर्थकरादिभ्यो निर्गमनमस्य, इत्यवगतत्वाद् गतार्थ एव निर्गमः, किं पुनरिहोपात्तः ? इति ॥ ९८१ ॥

परिहारमाह—

[2]इह तेसिं चिय भण्णइ निद्देसो निग्गमो जहा तं च । उवयातं तेहिंतो खेत्ताइविसेसियं बहुहा ॥ ९८२ ॥

तेषामेव तीर्थकरादीनां सामान्योद्देशमात्रेण प्रागवगतानामिह विशेषाभिधानरूपो निर्देशो भण्यते, यथा श्रीमन्महावीरतीर्थकरादेतत् सामायिकमर्थतो निर्गतम्, सूत्रतस्तु गौतमादिगणधरेभ्यो निर्गतम्, तथा निर्गमश्चेह मिथ्यात्वाविरत्यादितमसस्तेषां तीर्थकरादीनामत्रोच्यते '[3]अवरविदेहे गामस्स चिंतओ' इत्यादिना ग्रन्थेन । तथा, तच्च सामायिकं बहुधाऽनेकशः क्षेत्र-काल-पुरुष-कारण-प्रत्ययविशेषितं तेभ्यस्तीर्थकरादिभ्यो यथोपयातमागतम्, तच्चेह भण्यत इति विशेषः ॥ ९८२ ॥

अथ लक्षणद्वारविषयमाक्षेपमाह—

[4]अज्झयणलक्खणं णणु खओवसमियं गुणप्पमाणे वा । नाणागमाइगहणे भणियं किमिहं पुणो गहणं ? ॥९८३॥

लक्ष्यतेऽनेनेति लक्षणम्, तच्च '[5]सद्दहण-जाणणा खलु' इत्यादिना सामायिकस्य सावद्ययोगविरत्यादिकं वक्ष्यति । अत्र परः प्रेरयति— नन्वध्ययनस्याऽस्य क्षायोपशमिको भावो लक्षणम्, इति प्रागुपक्रमभेदरूपे षड्नाम्नि क्षायोपशमिके भावे समवतारादर्थापत्त्या भणितमेव । अथवा, 'गुणप्रमाणे ज्ञानमिदम्, तत्राप्यागमः' इत्याद्यभिधानादिदं क्षायोपशमिकभावरूपं लक्षणमर्थापत्त्याऽभिहितमेव ?, आगमस्य क्षायोपशमिकभावलक्षणत्वात्, किमिहानुगमे लक्षणस्य पुनर्ग्रहणम् ? इति ॥ ९८३ ॥

---

१ ननु निर्गमो गत एवाऽऽत्मा-ऽनन्तर-परम्परागमत । तीर्थंकरादिभ्य आगतमेतत् परम्परया ॥ ९८१ ॥

२ इह तेषामेव भण्यते निर्देशो निर्गमो यथा तच्च । उपयात तेभ्य क्षेत्रादिविशेषित बहुधा ॥ ९८२ ॥ ३ अपरविदेहे ग्रामस्य चिन्तक ।

४ अध्ययनलक्षण ननु क्षायोपशमिक गुणप्रमाणे वा । ज्ञाना-ऽऽगमादिग्रहणे भणित किमिह पुनर्ग्रहणम् ? ॥ ९८३ ॥ ५ श्रद्धान-ज्ञाने खलु ।

अथाध्ययनादीनां चतुर्णामपि क्रमेण निरुक्तमाह—

[1]जेण सुहज्झप्पजणं अज्झप्पाणयणमहियमयणं वा। बोहस्स संजमस्स व मोक्खस्स व जं तमज्झयणं ॥९६०॥

इह नैरुक्तेन विधिना प्राकृतस्वाभाव्याच्च, शुभं '[2]अज्झप्पं चित्तं जणेइ त्ति प्पगारलोवाओ अज्झयणं, अहवा, अज्झप्पाणयणं प्पगार-आकार-णकारलोवाओ अज्झयणं ति'। अथवा, बोधस्य, संयमस्य, मोक्षस्य वाऽधिकमयनं तद्धेतुत्वात् प्रापकं यत् तदध्ययनमिति ॥ ९६० ॥

[3]अज्झीणं दिज्जंतं अव्वोच्छित्तिनयओ अ[4]लोओ व्व। आओ नाणाईणं झवणा पावाण खवणं ति ॥९६१॥

अर्थिभ्योऽनवरतं दीयमानमपि वर्धत एव न तु क्षीयत इत्यक्षीणम्। अथवा, अव्यवच्छित्तिनयमतेन सर्वदैवाव्यवच्छेदात्, अलोकवत् अक्षीणम्। आयो लाभः प्राप्तिर्ज्ञानादीनामस्मादित्यायः। क्षपणाऽपचयो निर्जरा पापकर्मणामस्मादिति क्षपणेति। तदेवमभिहितमोघनाम, तदभिधाने चोक्त ओघनिष्पन्नो निक्षेपः ॥ ९६१ ॥

अथ नामनिष्पन्नं निक्षेपमभिधित्सुरध्ययनस्य विशेषनाम, तन्निक्षेपं चाह–

[5]सामाइयं ति नामं विसेसविहियं चउव्विहं तं च। नामाइं निरुत्तीए सुत्तप्फासे व तं वोच्छं ॥ ९६२ ॥

प्रस्तुताध्ययनस्य सामायिकमिति विशेषविहितं नाम। तच्च चतुर्विधम्। कथम् ?, इत्याह– नामादि– नामसामायिकम्, स्थापनासामायिकम्, द्रव्यसामायिकम्, भावसामायिकं चेति। एतच्चार्थनिरूपणतो वक्ष्येऽहम्। क्व ?, इत्याह– निरुक्तौ '[6]उद्देसे निद्देसे य निग्गमे-' इत्याद्युपोद्घातनिर्युक्तिगतगाथाद्वयपर्यन्ते '[7]भवागारिसफोसणनिरुत्ती' इति यद् निर्युक्तिद्वारं तत्रार्थतोऽभिधास्य इत्यर्थः। यदिवा, निर्युक्त्यनुगमभेदरूपायामेव सूत्रस्पर्शिकनिर्युक्तौ वक्ष्य इति ॥ ९६२ ॥

अत्राक्षेप-परिहारौ प्राह––

१ येन शुभाध्यात्मजनकमध्यात्मानयनमधिकमयनं वा। बोधस्य संयमस्य वा मोक्षस्य वा यत् तदध्ययनम् ॥ ९६० ॥

२ अध्यात्म चित्तं जनयतीति प्प(कार)लोपादध्ययनम्, अथवा, अध्यात्मानयनं प्प(कार) आकार-णकारलोपादध्ययनमिति।

३ अक्षीण दीयमानमव्यवच्छित्तिनयतोऽलोक इव। आयो ज्ञानादीनां क्षपणा पापाना क्षपणमिति ॥ ९६१ ॥ ४ क. ग. 'लोय व्व'।

५ सामायिकमिति नाम विशेषविहितं चतुर्विधं तच्च। नामादि निरुक्तौ सूत्रस्पर्शे वा तद् वक्ष्ये ॥ ९६२ ॥ ६ गाथा ९७३। ७ गाथा ९७४।

तेषां सरूपव्याख्यानम्, अथवा, तत्रोपक्रान्ताः, इह त्वयं तदनुमतावतारश्चिन्त्यते । इदमुक्तं भवति– प्रागुपक्रमाधिकारादध्ययनं नयैरुपक्रम्यते, इह तु कस्य नयस्य किं सामायिकमनुमतम् ? इति चिन्त्यते; तथा च वक्ष्यति–

'[1]तव सजमो अणुमओ निग्गंथ पवयण च ववहारो । सद्दुज्जुसुयाणं पुण निव्वाणं संजमो चेव ॥ १ ॥'

तेषां च नयानामिह समवतरणं समवतारो यत्र संभवति तत्र दर्शनीयः, यद् वक्ष्यते– '[2]मूढनइयं सुयं कालियं तु न नया समोयरंति इहं' इत्यादीति ॥ ९८७ ॥

मूलद्वारनयैः सहामीषां भेदमाह–

[3]सामाइयसमुदायत्थमेत्तवावारतप्परा एए । मूलद्दारनया पुण सुत्तप्फासोवओगपरा ॥ ९८८ ॥

सर्वेऽपि चैते नय-प्रमाणोक्ताः, उपोद्घातनिर्युक्तिद्वारोक्ताश्च नयाः सामायिकसमुदायार्थमात्रे व्याप्रियन्ते, न तु सूत्रार्थविनियोगिनः । वक्ष्यमाणास्तु मूलद्वारनयाः प्रतिपदं सूत्रार्थविषया इति विशेष इति ॥ ९८८ ॥

अथ किंद्वारे आक्षेप-परिहारौ प्राह–

[4]जीवगुणो नाणं ति य भणिए इह किं ति का पुणो संका ?। तं चिय किं जीवाओ अण्णमणन्नं ति संदेहो ॥९८९॥

ननु प्रमाणद्वारभेदे गुणप्रमाणे सामायिकं जीवगुणः तत्रापि ज्ञानम्, इत्याद्युक्तेऽत्र 'किं सामायिकम् ?' इति का शङ्का येन किंद्वारमुच्यते ?, इत्याह– 'तं चियेत्यादि' तदेव सामायिकं किं जीवादन्यत्, अनन्यद् वा ? इति संदेहः, तदपनोदार्थमिह किंद्वारोपन्यास इति ॥ ९८९ ॥

अथ कथंद्वारविषयावाक्षेप-परिहारौ प्राह–

[5]भणिए खओवसमियं ति किं पुणो लब्भए कहं तं ति । इह सो चिय चिंतिज्जइ किह लब्भइ सो खओवसमो ? ॥९९०॥

---

१ तपः सयमोऽनुमतो नैर्ग्रन्थ प्रवचन च व्यवहार' । शब्द-र्जुसूत्रयो पुनर्निर्वाण सयम एव ॥१॥

२ मूढनयिक श्रुत कालिक तु न नया समवतरन्तीह ।

३ सामायिकसमुदायार्थमात्रव्यापारतत्परा एते । मूलद्वारनया पुन सूत्रस्पर्शोपयोगपरा ॥९८८॥

४ जीवगुणो ज्ञानमिति च भणिते इह किमिति का पुन' शङ्का ? । तदेव किं जीवादन्यदनन्यदिति संदेह ॥९८९॥

५ भणिते क्षायोपशमिकमिति किं पुनर्लभ्यते कथ तदिति । इह स एव चिन्त्यते कथ लभ्यते स क्षयोपशम. ? ॥९९०॥

पुनरपि परमतमाशङ्क्य प्रतिविधातुमाह—

[1]नणु निज्जुत्तिअणुगमे भणिया एसा वि नासनिज्जुत्ती । सच्चमियं निज्जुत्ती इयं तु निक्खेवमित्तस्स॥९६६॥

ननु यदि निर्युक्तावेव व्याख्यानमिष्यते भवद्भिः, तर्ह्यत्रापि ब्रूमो वयं यदुत– एषाऽपि निर्युक्त्यनुगमे न्यासनिर्युक्तिर्भणिता, अयमपीह प्रस्तुतो निक्षेपो वक्ष्यमाणे निर्युक्त्यनुगमे निक्षेपनिर्युक्तित्वेन भणिष्यत इत्यर्थः । इदमुक्तं भवति–अनुगमो द्विविधो वक्ष्यते, तद्यथा– सूत्रानुगमः, निर्युक्त्यनुगमश्च । निर्युक्त्यनुगमस्त्रिविधोऽभिधास्यते– निक्षेपनिर्युक्त्यनुगमः, उपोद्घातनिर्युक्त्यनुगमः, सूत्रस्पर्शिकनिर्युक्त्यनुगमश्चेति । तथा– "से[2] किं तं निक्खेवनिज्जुत्तिअणुगमे ?। निक्खेवनिज्जुत्तिअणुगमे अणुगए, वक्खमाणे य" । एतदपि वक्ष्यते । तत्रायमर्थः– अत्रैव प्रागावश्यकसामायिकादिपदानां नाम-स्थापनादिनिक्षेपद्वारेण यद् व्याख्यानं कृतम् , तेन निक्षेपनिर्युक्त्यनुगमोऽनुगतः प्रोक्तो द्रष्टव्यः, सूत्रालापकानां निक्षेपप्रस्तावे पुनर्वक्ष्यते च । तदेवमेतेनैषोऽपि निक्षेपो निक्षेपनिर्युक्तित्वेनाऽनुगमे प्ररूप्यमाणेऽभिधास्यते । अतः किमुच्यते– 'नेह व्याख्यानम् , किन्तु निरुक्तावेव इति ?।

तदेवमतिनिपुणं परस्य प्रेर्यमवलोक्याऽभ्युपगमपूर्वकमुत्तरमाह– 'सच्चमित्यादि' सत्यम् , इयमपि प्रस्तुतनिक्षेपलक्षणा निर्युक्तिः, किन्त्वियं निक्षेपमात्रस्य नाम-स्थापनादिनिक्षेपस्वरूपनिरूपणायैव, न विशेपार्थस्येत्यर्थः; निरुक्तौ तु '[3]सम्मदिट्ठि अमोहो सोहीसब्भावदंसणं वोही' इत्यादिना ग्रन्थेन शब्दार्थादिविचारः करिष्यत इति भावः ॥ ९६६ ॥

अथवा, किमनेन वहुना प्रोक्तेन ?, अतिगहनं प्रकरणमिदम् , अतः संक्षिप्य विशेपविषयविभागतात्पर्यमुच्यते, तथा चाह–

[4]निक्खेवमित्तमिह वा अत्थवियारो य नासजुत्तीए । सद्दगओ य निरुत्ते सुत्तप्फासम्मि सुत्तगओ ॥९६७॥

अथवा, इह निक्षेपद्वारे सामायिकस्य नामादिनिक्षेपमात्रमेवोच्यते, तदर्थनिरूपणमात्रमेव च निक्षेपनिर्युक्तौ निर्दिश्यते । नैरुक्तस्तु शब्दगतो विचार उपोद्घातनिर्युक्त्यन्तर्गते निरुक्तिद्वारे– '[3]सम्मदिट्ठि अमोहो' इत्यादिना ग्रन्थेन शब्दार्थविचारः करिष्यत इत्यर्थः । सूत्रस्पर्शे तु सूत्रगतो विचारः– सूत्रस्पर्शिकनिर्युक्तौ सूत्रालापद्वाराऽऽयातस्य सामायिकस्यार्थविचारः क्रियते, न तु सामायिकनाम्न इत्यर्थः । एवं विषयविभागेनाऽवस्थानात् सर्वं समञ्जसमिति । तदेवमभिहितो नामनिष्पन्नोऽपि निक्षेपः ॥ ९६७ ॥

---

१ ननु निर्युक्त्यनुगमे भणितैषाऽपि न्यासनिर्युक्तिः । सत्यमियं निर्युक्तिरिय तु निक्षेपमात्रस्य ॥ ९६६ ॥

२ अथ कः स निक्षेपनिर्युक्त्यनुगमः ? । निक्षेपनिर्युक्त्यनुगमोऽनुगतः, वक्ष्यमाणश्च । ३ गाथा २८०४ ।

४ निक्षेपमात्रमिह वाऽर्थविचारश्च न्यासनिर्युक्तौ । शब्दगतश्च निरुक्ते सूत्रस्पर्शे सूत्रगतः ॥ ९६७ ॥

परिहारान्तरमाह—

[1]नासस्स व संबंधणमुवक्कमोऽयं तु सुत्तवक्खाए। संबंधोवग्घाओ भण्णइ जं सा तदंतम्मि ॥ ९९४ ॥

अथवा, न्यासस्याऽध्ययनसंबन्धिनो नामादिनिक्षेपस्य संबन्धनं तद्योग्यताऽऽपादनमुपक्रम उच्यते, तदन्ते तत्प्रतिपादनात्। अयं तूपोद्घातः सूत्रव्याख्यायाः संबन्धस्तद्योग्यताव्यवस्थापनरूपः, यद् यस्मात् तदन्ते उपोद्घातान्ते सैव सूत्रव्याख्या भण्यते। इत्युपक्रमोपोद्घातयोर्विशेषः। तदेवमभिहितं संक्षेपेणोपोद्घातनिर्युक्तेर्भावार्थमात्रम्; विस्तरार्थस्तु पुरस्तादभिधास्यते ॥ ९९४ ॥

अथ सूत्रस्पर्शिकनिर्युक्तेरवसरः, तदाह—

[2]संपइ सुत्तप्फासियनिज्जुत्ती जं सुयस्स वक्खाणं। तीसेऽवसरो सा उण पत्ता वि ण भण्णए इहइं॥९९५॥

यत् सूत्रस्य व्याख्यानं सा सूत्रस्पर्शिकनिर्युक्तिः। सूत्रं व्याख्यानहेतोः स्पृशतीति सूत्रस्पर्शिका, सा चासौ निर्युक्तिश्च सूत्रस्पर्शिकनिर्युक्तिरित्यर्थः। सांप्रतं तस्या भणितव्याऽवसरः, परं सा क्रमप्राप्ताऽपि नेह भण्यते ॥ ९९५ ॥

अत्र विनेयप्रश्नमाशङ्क्योत्तरमाह—

[3]किं जेणासइ सुत्ते कस्स तई तं जया कमप्पत्ते। सुत्ताणुगमे वोच्छिइ होहिइ तीए तया भागो॥९९६॥

किं कारणम्, येन क्रमप्राप्तापि नेहासौ भण्यते?। उच्यते– येनाऽसति सूत्रे 'कस्स तई त्ति' कस्य सा प्रवर्तते?। सूत्रं हि स्पृशतीति सूत्रस्पर्शिका भण्यते, तच्च नास्ति, तत्कथं तदवसरः?। कदा पुनरसौ तर्हि भविष्यति?, इत्याह– 'तमित्यादि' तत् सूत्रं क्रमप्राप्ते सूत्रानुगमे यदा वक्ष्यति, तदा तस्यास्तदर्थव्याख्यारूपत्वाद् भागोऽवसरो भविष्यति, नाऽर्वाग् ॥ ९९६ ॥

पुनराह प्रेरकः—

[4]अत्थाणमिदं तीसे जइ तो सा कीस भण्णए इहइं?। इह सा भण्णइ निज्जुत्तिमेत्तसामन्नओ नवरं॥९९७॥

---

१ न्यासस्य वा संबन्धनमुपक्रमोऽयं तु सूत्रव्याख्याया। सबन्ध उपोद्घातो भण्यते यत् सा तदन्ते ॥ ९९४ ॥
२ संप्रति सूत्रस्पर्शिकनिर्युक्तिर्यत् श्रुतस्य व्याख्यानम्। तस्या अवसरः सा पुनः प्राप्तापि न भण्यते इह ॥ ९९५ ॥
३ किं येनासति सूत्रे कस्य सा तद् यदा क्रमप्राप्ते। सूत्रानुगमे वक्ष्यते भविष्यति तस्यास्तदा भागः ॥ ९९६ ॥
४ अर्थानामिदं तस्या यदि ततः सा कस्माद् भण्यते इह?। इह सा भण्यते निर्युक्तिमात्रसामान्यतो नवरम् ॥ ९९७ ॥

ओघादीनां निक्षिप्तानां सतां सांप्रतमनुगमस्तद्व्याख्यानरूपः कार्य इत्यनुगमस्यावसरः । स च द्विविधः– निर्युक्त्यनुगमः, सूत्रानुगमश्च; छन्दोऽनुवृत्त्या च कयाचिदित्थं व्यत्ययोपन्यासः । इत्थं च पुनर्द्रष्टव्यः– सूत्रानुगमः, निर्युक्त्यनुगमश्चेति । तथा चानुयोगद्वारेप्युक्तम्– "[1]अणुगमे दुविहे पन्नत्ते, तं जहा– सुत्ताणुगमे, निज्जुत्तिअणुगमे य"। "[2]निज्जुत्तिअणुगमे तिविहे पन्नत्ते, तं जहा– निक्खेवनिज्जुत्तिअणुगमे, उवग्घायनिज्जुत्तिअणुगमे, सुत्तप्फासियनिज्जुत्तिअणुगमे य" इति ॥ ९७१ ॥

एतदेव निर्युक्तित्रैविध्यं भाष्यकारोऽप्याह—

[3]निज्जुत्ती तिविगप्पा नासो-वग्घाय-सुत्तवक्खाणं । निक्खेवस्साणुगया उद्देसाईहुवग्घाओ ॥ ९७२ ॥

निर्युक्तिस्त्रिविकल्पा त्रिभेदा। कथम्?, इत्याह– 'नासो-वग्घाय-सुत्तवक्खाणं ति' न्यासो नामादिनिक्षेपः, उपोद्घातः शास्त्रोत्पत्तिः, सूत्रं प्रतीतं, तेषां व्याख्यानम्– निक्षेपनिर्युक्तिः, उपोद्घातनिर्युक्तिः, सूत्रस्पर्शिकनिर्युक्तिश्चेत्यर्थः । तत्र निक्षेपनिर्युक्तिरनुगता– अनुक्रान्ता, पूर्वमेवोक्तेति यावदिति, अत्रैव प्रागावश्यक-सामायिकादिपदानां नाम-स्थापनादिनिक्षेपद्वारेण यद् व्याख्यानं कृतं, तेन निक्षेपनिर्युक्तिरनुगता प्रोक्ता द्रष्टव्येत्यर्थः । उपोद्घातनिर्युक्तिस्तूद्देश-निर्देशादिभिर्द्वारैरवगन्तव्येति ॥ ९७२ ॥

तान्येवोद्देशादीनि द्वाराण्याह—

[4]उद्देसे निद्देसे य निग्गमे खेत्त काल पुरिसे य। कारण पच्चय लक्खण नए समोयारणाणुमए ॥ ९७३ ॥

किं कइविहं कस्स कहिं केसु कहं केच्चिरं हवइ कालं। कइ संतरमविरहियं भवा-गरिस-फासणनिरुत्ती॥९७४॥

इदं गाथाद्वयमपि पुरस्ताद् विस्तरेण व्याख्यास्यते ॥ ९७३ ॥ ९७४ ॥

आक्षेप-परिहारौ तु यथासंभवं केषुचिद् द्वारेष्वत्रापि विभणिषुः, उद्देश-निर्देशस्वरूपं तावदाह—

---

१ अनुगमो द्विविध प्रज्ञप्तः, तद्यथा– सूत्रानुगम , निर्युक्त्यनुगमश्च । २ निर्युक्त्यनुगमस्त्रिविधः प्रज्ञप्त., तद्यथा– निक्षेपनिर्युक्त्यनुगमः, उपोद्घातनिर्युक्त्यनुगम', सूत्रस्पर्शिकनिर्युक्त्यनुगमश्च ।

३ निर्युक्तिस्त्रिविकल्पा न्यासो-पोद्घात-सूत्रव्याख्यानम् । निक्षेपस्यानुगता उद्देशादिभिरुपोद्घातः ॥ ९७२ ॥

४ उद्देशो निर्देशश्च निर्गमः क्षेत्रः काल पुरुषश्च । कारणं प्रत्ययो लक्षणं नय· समवतारणाऽनुमतः ॥ ९७३ ॥
कि कतिविधं कस्य कुत्र केषु कथं कियच्चिरं भवति कालम् । कति सान्तरमविरहितं भाव-ऽऽकर्ष-स्पर्शननिरुक्तिः ॥ ९७४ ॥

उवमा-रूवगदोसो निद्देस-पयत्थ-संधिदोसो य। एए उ सुत्तदोसा बत्तीसं होंति नायव्वा ॥ ४ ॥"

तत्राऽलीकमभूतोद्भावनम्, भूतनिह्नवश्च ; यथा– 'ईश्वरकर्तृकं जगत्' इत्याद्यभूतोद्भावनम्, 'नास्त्यात्मा' इत्यादिकस्तु भूतनिह्नवः। उपघातजनकं सत्त्वोपघातादिप्रवर्तकम्, यथा– 'वेदविहिता हिंसा धर्माय' इत्यादि। निरर्थकम्– यत्र वर्णानां क्रमनिर्देशमात्रमुपलभ्यते, न त्वर्थः, यथा– 'अ आ इ ई' इत्यादि, डित्थादिवद् वेति। अपार्थकम्– असंबद्धार्थम्, यथा– 'दश दाडिमानि, षडपूपाः, कुण्डमजाऽजिनम्, पललपिण्डः, त्वर कीटिके, दिशमुदीचीम्' इत्यादि। यत्राऽनिष्टस्याऽर्थान्तरस्य संभवतो विवक्षितार्थोपघातः कर्तुं शक्यते तच्छलम्, यथा– 'नवकम्बलो देवदत्तः' इत्यादि। जन्तूनामहितोपदेशेन पापव्यापारपोषकत्वाद् द्रोहस्वभावं द्रुहिलम्, यथा—

"यस्य बुद्धिर्न लिप्येत हत्वा सर्वमिदं जगत्। आकाशमिव पङ्केन नासौ लिप्येत कर्मणा ॥ १ ॥"

तथा—

"एतावानेव लोकोऽयं यावानिन्द्रियगोचरः। भद्रे! वृकपदं पश्य यद् वदन्ति बहुश्रुताः ॥ १ ॥"

"पिब खाद च साधु शोभने! यदतीतं वरगात्रि! तद् न ते। न हि भीरु! गत निवर्तते समुदयमात्रमिद कलेवरम् ॥ १ ॥"

इत्यादि। निःसारम्– वेदवचनादिवत् तथाविधयुक्तिविकलं परिफल्गिवति। आधिकम्– अक्षर-मात्रा-पदादिभिरभ्यधिकम्। तैरेव हीनमूनम्। अथवा, हेतू-दाहरणाभ्यधिकमाधिकम्, यथा– 'अनित्यः शब्दः, कृतकत्व-प्रयत्नानन्तरीयकत्वाभ्याम्' इति हेत्वधिकम् ; 'अनित्यः शब्दः, कृतकत्वात्, घट-पटवत्' इत्युदाहरणाधिकमित्यादि। एताभ्यामेव हीनमूनम्, यथा 'अनित्यः शब्दः, घटवत्' इति हेतूनम् ; 'अनित्यः शब्दः, कृतकत्वात्' इत्युदाहरणहीनमित्यादि। पुनरुक्तं द्विधा– शब्दतः, अर्थतश्च। तथा, अर्थापन्नस्य पुनर्वचनं च पुनरुक्तम्। तत्र शब्दतः पुनरुक्तं यथा– 'घटः, घटः, घटः' इत्यादि। अर्थतः पुनरुक्तं यथा– 'घटः, कुटः, कुम्भः' इत्यादि। अर्थापन्नस्य पुनर्वचनं यथा– 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्युक्तेऽर्थादेव गम्यते– 'रात्रौ भुङ्क्ते' इति ; तत्रार्थापन्नमपि यः साक्षादेतद् ब्रूयात्, तस्य पुनरुक्तता। व्याहतं यत्र पूर्वेण परं विहन्यते, यथा– 'कर्म चास्ति फलं चास्ति कर्ता न त्वस्ति कर्मणाम्' इत्यादि। अयुक्तम्– अनुपपत्तिक्षमम्, यथा—

१ उपमा-रूपकदोषो निर्देश-पदार्थ-संधिदोषश्च। एते तु सूत्रदोषा द्वात्रिंशद् भवन्ति ज्ञातव्याः ॥ ४ ॥

ओघादीनां निक्षिप्तानां सतां सांप्रतमनुगमस्तद्व्याख्यानरूपः कार्य इत्यनुगमस्यावसरः। स च द्विविधः– निर्युक्त्यनुगमः, सूत्रानुगमश्च; छन्दोऽनुवृत्त्या च कयाचिदित्थं व्यत्ययोपन्यासः। इत्थं च पुनर्द्रष्टव्यः– सूत्रानुगमः, निर्युक्त्यनुगमश्चेति। तथा चानुयोगद्वारेष्युक्तम्– "[1]अणुगमे दुविहे पन्नत्ते, तं जहा– सुत्ताणुगमे, निज्जुत्तिअणुगमे य"। "[2]निज्जुत्तिअणुगमे तिविहे पन्नत्ते, तं जहा– निक्खेवनिज्जुत्तिअणुगमे, उवग्घायनिज्जुत्तिअणुगमे, सुत्तप्फासियनिज्जुत्तिअणुगमे य" इति ॥ ९७१ ॥

एतदेव निर्युक्तित्रैविध्यं भाष्यकारोऽप्याह—

[3]निज्जुत्ती तिविगप्पा नासो-वग्घाय-सुत्तवक्खाणं। निक्खेवस्साणुगया उद्देसाईहुवग्घाओ ॥ ९७२ ॥

निर्युक्तिस्त्रिविकल्पा त्रिभेदा। कथम्?, इत्याह– 'नासो-वग्घाय-सुत्तवक्खाणं ति' न्यासो नामादिनिक्षेपः, उपोद्घातः शास्त्रोत्पत्तिः, सूत्रं प्रतीतं, तेषां व्याख्यानम्– निक्षेपनिर्युक्तिः, उपोद्घातनिर्युक्तिः, सूत्रस्पर्शिकनिर्युक्तिश्चेत्यर्थः। तत्र निक्षेपनिर्युक्तिरनुगता– अनुक्रान्ता, पूर्वमेवोक्तेति यावदिति, अत्रैव प्रागावश्यक-सामायिकादिपदानां नाम-स्थापनादिनिक्षेपद्वारेण यद् व्याख्यानं कृतं, तेन निक्षेपनिर्युक्तिरनुगता प्रोक्ता द्रष्टव्येत्यर्थः। उपोद्घातनिर्युक्तिस्तूद्देश-निर्देशादिभिर्द्वारैरवगन्तव्येति ॥ ९७२ ॥

तान्येवोद्देशादीनि द्वाराण्याह—

[4]उद्देसे निद्देसे य निग्गमे खेत्त काल पुरिसे य। कारण पच्चय लक्खण नए समोयारणाणुमए ॥ ९७३ ॥

किं कइविहं कस्स कहिं केसु कहं केच्चिरं हवइ कालं। कइ संतरमविरहियं भवा-गरिस-फोसणनिरुत्ती॥९७४॥

इदं गाथाद्वयमपि पुरस्ताद् विस्तरेण व्याख्यास्यते ॥ ९७३ ॥ ९७४ ॥

आक्षेप-परिहारौ तु यथासंभवं केषुचिद् द्वारेष्वत्रापि विभणिषुः, उद्देश-निर्देशस्वरूपं तावदाह—

---

१ अनुगमो द्विविध· प्रज्ञप्तः, तद्यथा– सूत्रानुगम, निर्युक्त्यनुगमश्च। २ निर्युक्त्यनुगमस्त्रिविधः प्रज्ञप्त·, तद्यथा– निक्षेपनिर्युक्त्यनुगमः, उपोद्घातनिर्युक्त्यनुगम', सूत्रस्पर्शिकनिर्युक्त्यनुगमश्च।

३ निर्युक्तिस्त्रिविकल्पा न्यासो-पोद्घात-सूत्रव्याख्यानम्। निक्षेपस्यानुगता उद्देशादिभिरुपोद्घातः ॥ ९७२ ॥

४ उद्देशो निर्देशश्च निर्गमः क्षेत्रः काल पुरुषश्च। कारणं प्रत्ययो लक्षणं नयः समवतारणाऽनुमत· ॥ ९७३ ॥

किं कतिविध कस्य कुत्र केपु कथं कियच्चिर भवति कालम्। कति सान्तरमविरहितं भाव-ऽऽकर्ष-स्पर्शननिरुक्तिः ॥ ९७४ ॥

र्थेषु मध्ये पदार्थान्तरत्वेन कल्प्यते; एतच्चायुक्तम्, वस्तूनामनन्तपर्यायत्वेन पदार्थानन्त्यप्रसङ्गादिति। यत्र सन्धिप्राप्तौ तं न करोति, दुष्टं वा करोति, असौ संधिदोषः। इति द्वात्रिंशत् सूत्रदोषाः। एतैर्विरहितं यत् तल्लक्षणयुक्तं सूत्रमिति ॥४॥

तथा, अष्टाभिश्च गुणैर्यदुपेतं तल्लक्षणयुक्तं सूत्रमिति वर्तते। ते चेमे गुणाः—

"[2]निद्दोसं सारवंतं च हेउजुत्तमलंकियं। उवणीयं सोवयारं च मियं महुरमेव य ॥ १ ॥"

निर्दोषम्– समस्तोक्ता-ऽनुक्तदोषविप्रमुक्तम्, दोषाभावोऽपि चेह गुणत्वेन विवक्षितः। सारवत्– गोशब्दादिवद् बहुपर्यायक्षमम्। हेतुः– अन्वय-व्यतिरेकोपपत्तिलक्षणः, तेनान्वितं हेतुयुक्तम्। उपमो-त्प्रेक्षादिभिरलङ्कारैर्विभूषितमलङ्कृतम्। उपनयोपसंहृतमुपनीतम्। अग्राम्यभणितिसंयुक्तं सोपचारम्। वर्णाद्युचितपरिमाणं मितम्। श्रुतिमनोहरं मधुरमिति ॥ १ ॥

अन्यैस्तु कैश्चित् षड् गुणाः सूत्रस्य पठ्यन्ते, तद्यथा—

"[3]अप्पक्खरमसंदिद्धं सारवं विस्सओमुहं। अत्थोभमणवज्जं च सुत्तं सव्वण्णुभासियं ॥ १ ॥"

तत्राऽल्पाक्षरम्– बह्वर्थसंग्राहकपरिमिताक्षरम्, यथेदमेव सामायिकसूत्रम्। असंदिग्धम्– सैन्धवशब्दवल्लवण-वसन-तुरङ्ग-[4]पुरुषाद्यनेकार्थसंशयकारि न भवति। सारवत्त्वं च पूर्ववत्। विश्वतोमुखं प्रतिसूत्रं चरणानुयोगाद्यनुयोगचतुष्टयव्याख्याक्षमम्; अथवा, 'अनन्तार्थत्वाद् यतो विश्वतोमुखम्, अतः सारवत्' इत्येवं सारवत्त्वस्यैव हेतुभावेनेदं योज्यते; अस्मिंश्च व्याख्याने पञ्चैते गुणा भवन्ति। स्तोभकाः– चकार-हिकार-तुशब्द-वाशब्दादयो निपाताः, तैर्निरर्थकैर्वियुक्तमस्तोभकम्। अनवद्यम्– कामादिपापव्यापाराऽप्ररूपकम्। एवंभूतं सूत्रं सर्वज्ञभाषितमिति। यैस्तु पूर्वेऽष्टौ गुणाः प्रोक्ताः, तेऽनन्तरश्लोकोक्तगुणास्तेष्वष्टसु गुणेष्वन्तर्भावयन्ति; ये त्वनन्तरश्लोकोक्तानेव सूत्रगुणान् पठन्ति, तेऽमीभिरेव पूर्वोक्तानामष्टानामपि संग्रहं प्रतिपादयन्ति ॥ ९९९ ॥

तदेवंभूतं सूत्रं सूत्रानुगमे उच्चारणीयम्, तस्मिंश्चोच्चारिते कदा सूत्रस्पर्शिकनिर्युक्तेरवसरो भवति?, इत्याह—

[5]सुत्तेऽणुगए सुद्धे त्ति निच्छिए तह कए पयच्छेए। सुत्तालावयनासे निक्खित्ते सुत्तफासो उ ॥१०००॥

१ क ग 'तच्चाष्टा'। २ निर्दोषं सारवच्च हेतुयुक्तमलङ्कृतम्। उपनीतं सोपचारं च मितं मधुरमेव च ॥ १ ॥
३ अल्पाक्षरमसंदिग्धं सारवद् विश्वतोमुखम्। अस्तोभमनवद्यं च सूत्रं सर्वज्ञभाषितम् ॥ १ ॥ ४ क ग 'रग-पु'।
५ सूत्रेऽनुगते शुद्ध इति निश्चिते तथा कृते पदच्छेदे। सूत्रालापकन्यासे निक्षिप्ते सूत्रस्पर्शस्तु ॥ १००० ॥

अथवा, तत्र द्वारोपन्यासादौ सामान्य-विशेषाभिधानरूप उद्देशो निर्देशश्च कृत इत्युपगच्छामः, केवलमिहार्थानुगमावसरेऽर्थव्याख्याप्रस्तावे तयोः पूर्वविहितयोरुद्देश-निर्देशयोर्विधानतो भेदतो व्याख्यानमारब्धमित्यदोष इति ॥ ९७८ ॥

अन्ये तु- ब्रुवते । किम् ?, इत्याह—

[1]अन्ने उ विसेसमिहं भणंति नोद्देसबद्धमेयं ति । जाणावियमज्झयणं समासदारावयारेणं ॥ ९७९ ॥

अन्ये तु पूर्वविहितयोरपीह विशेषमाचक्षते- नोद्देशकबद्धमिदमध्ययनमित्येतज्ज्ञापितं किल । कुतः ?, अङ्ग-श्रुतस्कन्धाध्ययनसमासद्वारावतारात् । इदमत्र हृदयम्-

'[2]नामं ठवणा दविए खेत्ते काले समासउद्देसे । उद्देसुद्देसम्मि य भावम्मि य होइ अट्ठमओ ॥ १ ॥'

इति पुरस्तादिहैव वक्ष्यमाणगाथायामुद्देशोऽष्टविधोऽभिधास्यते; तथा, '[3]एमेव य निद्देसो' इत्यादिगाथायां निर्देशोऽपि चाष्टविधो वक्ष्यते । तत्र च समासद्वारे संक्षेपाभिधायकं नाम समासोद्देश इति व्याख्यास्यते ; तद्यथा- अङ्गम् , श्रुतस्कन्धः, अध्ययनम् , उद्देश इत्यादि । तत्रेदं सामायिकाध्ययनं किलाध्ययनोद्देशो भवति, न तूद्देशोद्देशः, उद्देशरहितत्वात् । एतच्च तत्र व्याख्यास्यते । तदत्रोद्देश-निर्देशयोरष्टविधत्वभणनेन षष्ठं समासद्वारमायातम् । अनेन च समासद्वारेण विचार्यमाणेनेदमध्ययनमुद्देशरहितमिति ज्ञापितम् । एतच्चेहोद्देश-निर्देशाभणनेन निर्मूलस्य समासद्वारस्यैवाऽभावात् किल न ज्ञायेतेति ॥ ९७९ ॥

एतच्च यत्किञ्चिदेव, इति दर्शयति—

[4]अंगाइपण्हकाले कालियसुयमाणसमवयारे य । तमणुद्देसयबद्धं भणियं चिय इह किमब्भहियं ?॥ ९८० ॥

'आवश्यकं किमङ्गम्, अङ्गानि ?' इत्यादिप्रश्नकाल एव कालिकश्रुतपरिमाणसंख्यावतारे चाध्ययनसंख्यावतारात्, 'नोद्देशकः, नोद्देशकाः' इति निषेधाच्च तत् सामायिकाध्ययनमुद्देशकबद्धं न भवतीति भणितमेव, इह किमभ्यधिकमज्ञातं ज्ञायते ? । तस्माद् यत्किञ्चिदेवेदम् । अत एतयोरिह भणनं व्याख्यानार्थमेवेति स्थितम् । तदेवं कृतोद्देश-निर्देशविषया चालना, प्रत्यवस्थानं च ॥ ९८० ॥

---

१ अन्ये तु विशेषमिह भणन्ति नोद्देशबद्धमेतदिति । ज्ञापितमध्ययनं समासद्वारावतारेण ॥ ९७९ ॥
२ नाम स्थापना द्रव्ये क्षेत्रे काले समासोद्देशे । उद्देशोद्देशे च भावे च भवत्यष्टमकः ॥ १ ॥ ३ एवमेव च निर्देशः ।
४ अङ्गादिप्रश्नकाले कालिकश्रुतमानसमवतारे च । तदनुद्देशकबद्धं भणितमेवेह किमभ्यधिकम् ? ॥ ९८० ॥

पयमत्थवायगं जोयगं च तं नामियाइ पंचविहं । कारग-समास-तद्धिय-निरुत्तवच्चो वि य पयत्थो ॥१००३॥
परबोहहिओ वत्थो किरिया-कारगविहाणओ वच्चो । पज्जायवयणओ वि य तह भूयत्थाभिहाणेण ॥१००४॥
पच्चक्खओऽहवा सोऽणुमाणओ लेसओ च सुत्तस्स । वच्चो व जहासंभवमागमओ हेउओ चेव ॥१००५॥

पदं द्विविधं भवति– अर्थवाचकम्, द्योतकं च । तत्र 'वृक्षः, तिष्ठति' इत्यादि वाचकम् । प्रादिकम्, चादिकं च द्योतकम् । तथा, पुनरपि पदं सामान्येन पञ्चविधं नामिकादि । तत्र 'अश्वः' इति नामिकम्, 'खलु' इति नैपातिकम्, 'परि' इत्यौपसर्गिकम्, 'धावति' इत्याख्यातिकम्, 'संयतः' इति मिश्रम् । एवंभूतानां पदानां विच्छेदो द्वितीयं व्याख्यानाङ्गम् । तृतीयं तु व्याख्यानाङ्गं पदार्थः । स च कारकवाच्यादिभेदाच्चतुर्विधः । तत्र कारकेणोच्यत इति कारकवाच्यः, कारकविषय इत्यर्थः, यथा 'पचतीति पाचकः' इत्यादि । समासेनोच्यते समासवाच्यः, 'राज्ञः पुरुषो राजपुरुषः' इत्यादि । तद्धितेनोच्यते तद्धितवाच्यः, 'वसुदेवस्याऽपत्यं वासुदेवः' इत्यादि । निरुक्तेनोच्यते निरुक्तवाच्यः, 'भ्रमति च रौति च भ्रमरः' इत्यादि । तदेवं पदार्थस्य चातुर्विध्यमुक्तम् ।

अथ प्रकारान्तरेण त्रिधोऽप्येष संभवतीति दर्शयति– 'परबोहेत्यादि' वेत्यथवा, परेषां श्रोतॄणां बोधः परबोधः, तत्र कर्तव्ये हितो योऽर्थः पदार्थः स त्रिविधोऽपि वाच्यः, तद्यथा– क्रियाकारकविधानतः, पर्यायवचनतः, भूतार्थाभिधानेन च । तत्र क्रियाकारकभेदेन यथा– 'घट चेष्टायाम्' घटतेऽसाविति घटः । पर्यायवचनैर्यथा– घटः, कुटः, कुम्भः, कलश इत्यादि । भूतः सद्भूतो यथावस्थितोऽर्थस्तदभिधानतस्तत्प्ररूपणेन च पदार्थो वाच्यः, तद्यथा– य ऊर्ध्वकुण्डलोष्ठ आयतवृत्तग्रीवः पृथुबुध्नोदरः स घट उच्यत इत्यादि ।

अथवा, अन्यथा पदार्थः सूत्रस्याऽर्थस्त्रिविधो वाच्यः, तद्यथा– प्रत्यक्षतः, अनुमानतः, लेशतश्च । अत्र प्रत्यक्षेणैव यादृशं पुस्तकादिलिखितमुपलभ्यते, गुरुमुखाद् वा यादृशं श्रूयते, तादृशमेव साक्षाद् यत्र प्ररूप्यते, स प्रत्यक्षतः पदार्थ उच्यते; यथा–"सम्यगद्र्शन-ज्ञान-चारित्राणि मोक्षमार्गः" इति गुरुमुखादेः श्रवणादिप्रत्यक्षेणोपलभ्य सम्यग्दर्शनादीनां मोक्षमार्गत्वं प्ररूपयति । अनुमानं त्विहार्थापत्तिरूपं गृह्यते, तस्यामप्यन्यथानुपपन्नार्थादतीन्द्रियस्य साध्यार्थस्याऽनुमीयमानत्वात् । तत्र प्रत्यक्षोपलब्ध एवाऽर्थो यमर्थापत्तिलब्ध-

१ पदमर्थवाचक द्योतक च तद् नामिकादि पञ्चविधम् । कारक-समास-तद्धित-निरुक्तवाच्योऽपि च पदार्थ ॥ १००३ ॥
परबोधहितो वाऽर्थः क्रिया-कारकविधानतो वाच्यः । पर्यायवचनतोऽपि च तथा भूतार्थाभिधानेन ॥ १००४ ॥
प्रत्यक्षतोऽथवा सोऽनुमानतो लेशतश्च सूत्रस्य । वाच्यो वा यथासंभवमागमतो हेतुतश्चैव ॥ १००५ ॥
२ घ. छ. 'त्याश्च' । ३ क. ग. 'यविधान' । ४ तत्त्वार्थाधिगमसूत्रे १, १ ।

परिहारमाह—

[1]निद्देसमेत्तमुत्तं वक्खाणिज्जइ सवित्थरं तमिह । अहवा सुयस्स भणियं लक्खणमिह तं चउण्हं पि ॥ ९८४ ॥

निर्देशमात्रमेव लक्षणस्य प्रागुक्तम्– निर्दिष्टमेव पूर्वं लक्षणम्, न तु तथाविधव्याख्यया व्याख्यातमित्यर्थः । इह त्वनुगमे व्याख्यानप्रस्तावात् सविस्तरं तद् व्याख्यायते । अथवा, स क्षायोपशमिको भावः श्रुतसामायिकस्यैव पूर्वं लक्षणमुपपद्यते, इह तु श्रद्धान-ज्ञान-देशविरति-सर्वविरतिरूपं चतुर्णामपि सम्यक्त्व-श्रुत-देशचारित्र-सर्वचारित्रसामायिकानां लक्षणमुच्यत इति[2] विशेषः ॥९८४॥

अथ नयद्वारे आक्षेपमाह—

[3]भणिया नयप्पमाणे भण्णंतीहं नया पुणो कीस ? । मूलद्दारे य पुणो एएसिं को णु विणिओगो ? ॥९८५॥

ननु पूर्वं नयप्रमाणे भणिता एव नयाः, किमिहोपोद्धाते पुनरपि भण्यन्ते ?; तथा, वक्ष्यमाणे चतुर्थे नयलक्षणे[4] मूलानुयोगद्वारे भणिष्यन्ते । तदमीषां पूर्वमनेकशो भणितानां पुनर्भणने को विनियोगः किं फलम् ?, न किञ्चिदित्यर्थः ॥ ९८५ ॥

अत्र परिहारमाह—

[5]जे च्चिय नयप्पमाणे[6] ते च्चिय इहइं सवित्थरा भणिया । जं तमुवक्कममेत्तं वक्खाणमिणं अणुगमो त्ति ॥९८६॥

य एव प्राक् प्रमाणद्वारे संक्षेपमात्रेण नया उक्ताः, त एवेह सविस्तरा भणिताः, अग्रे भणिष्यन्त इति भावः । कुतः ?, यतस्तदध्ययनोपक्रमणरूपमुपक्रममात्रम्, एतत् त्वर्थानुगम इति कृत्वा नयानां व्याख्यानमिति ॥ ९८६ ॥

परिहारान्तरमाह—

[7]अहवा तत्थ पमाणं इहं सरूवावहारणं तेसिं । तत्तोवक्कंता वा इह तदणुमयावयारोऽयं ॥ ९८७ ॥

अथवा, प्रमाणद्वाराधिकारात् प्रमीयते वस्त्वेभिरिति प्रमाणं भावमात्रं नयानां तत्राभिहितम्, इह तूपोद्धातनिर्युक्त्यनुगमे

---

१ निर्देशमात्रमुक्तं व्याख्यायते सविस्तरं तदिह । अथवा श्रुतस्य भणित लक्षणमिह तच्चतुर्णामपि ॥ ९८४ ॥ २ घ छ. 'ति शे' ।
३ भणिता नयप्रमाणे भण्यन्त इह नया पुन. कस्मात् ? । मूलद्वारे च पुनरेतेषां को नु विनियोग' ? ॥ ९८५ ॥ ४ घ छ 'णे मौला' ।
५ य एव नयप्रमाणे त एवेह सविस्तरा भणिताः । यत् तदुपक्रममात्रं व्याख्यानमिदमनुगम इति ॥ ९८६ ॥ ६ क. ग 'णे ति चि' ।
७ अथवा तत्र प्रमाणमिह स्वरूपावहारण तेषाम् । तत्रोपक्रान्ता वा इह तदनुमतावतारोऽयम् ॥ ९८७ ॥

अथ चालना-प्रत्यवस्थाने प्राह—

सुत्तगयमत्थविसयं व दूसणं चालणं मयं, तस्स । सद्द-त्थणायाओ परिहारो पच्चवत्थाणं ॥ १००७ ॥

यत् सूत्रविषयम्, अर्थविषयं वा शिष्य-प्रेरकैर्दूषणमुद्भाव्यते, तच्चालनं विचारो मतमभिप्रेतम्। सूरीणां 'तस्स त्ति' तस्य चालनस्य परिहारः प्रत्यवस्थानं दूषितसिद्धिरित्यर्थः। कस्माद् योऽसौ परिहारः?, इत्याह– शब्दा-ऽर्थन्यायतः– शब्दविषयिणा न्यायेन शब्दसंभविन्या युक्त्या शब्दगतदूषणस्य परिहारः, अर्थविषयिणा न्यायेनाऽर्थसंभविन्या युक्त्याऽर्थगतदूषणस्य परिहारः प्रत्यवस्थानं दूषितसिद्धिरिति भावार्थः। नयमतविशेषाच्च शब्दा-ऽर्थगतदूषणस्य परिहारः प्रत्यवस्थानमित्यपि द्रष्टव्यम्।

इदमुक्तं भवति– 'करोमि भदन्त! सामायिकम्' इत्यादौ गुर्वामन्त्रणवचनो भदन्तशब्द इत्युक्ते कश्चिच्चालनां करोति– नन्वेवं तर्हि गुरुविरहे भदन्तशब्दाऽनभिधानप्रसङ्गः, अभिधाने वाऽऽनर्थक्यादिदोषप्रसङ्गः । अत्र प्रत्यवस्थानमुच्यते– आचार्याभावे स्थापनाचार्यस्य पुरतः सर्वापि सामाचारी क्रियत इति ज्ञापनार्थमिदम्, अन्यत्रापि चोक्तम्– "ठवणाआयरियस्स सामायारी पउंजए य" इत्यादि। तथा, दृश्यते चार्हदभावेऽर्हत्प्रतिमोपवेशनमिति । अथवा, गुरुविरहेऽपि स्वातन्त्र्यनिषेधो विनयमूलधर्मोपदर्शनार्थं च गुरुगुणज्ञानोपयोगो विधेय इत्येतच्चानेन ज्ञाप्यते। यदि वा, नाम-स्थापना द्रव्य-भावभेदाच्चतुर्विध आचार्यः, तत्राचार्योपयोगरूपो योऽसौ भावाचार्यः शिष्यस्य मनसि वर्तते, तद्विषयमिदमामन्त्रणं मनोविवर्तमानगुणमयाचार्यनिबन्धनमिति भावः। अतो गुरुविरहोऽप्यत्रासिद्ध एवेति भावः। इत्येवमन्यत्रापि चालना-प्रत्यवस्थाने यथासंभवमभ्यूह्ये इति। तदनेन

"संहिता च पदं चैव पदार्थः पदविग्रहः । चालना प्रत्यवस्थानं व्याख्या तन्त्रस्य षड्विधा ॥ १ ॥"

इत्येतद् यदन्यत्र षड्विधं व्याख्यास्वरूपमुक्तम्, तदिह समर्थितमिति ॥ १००७ ॥

नन्विदं षड्विधं व्याख्यास्वरूपं सर्वत्रापि व्यापकम्, आहोस्वित् प्रतिनियतसूत्रविषयम्?, इत्यत्रोपसंहारगर्भमुत्तरम्, नैगमादिनयविषयं च दर्शयन्नाह–

१ सूत्रगतमर्थविषयं वा दूषणं चालनं मतं तस्य। शब्दा-ऽर्थन्यायात् परिहारः प्रत्यवस्थानम् ॥ १००७ ॥ २ क 'ताविपायिन्'। ३ क 'णप'। ४ क. ग. 'गुर्वभावे भ'। ५ स्थापनाऽऽचार्यस्य सामाचारी प्रयुज्यते च। ६ क. ग. 'पसेवन'।

ननु नामद्वारे 'क्षायोपशमिकं सामायिकम्' इत्युक्ते 'तदावरणक्षयोपशमात् तल्लभ्यते' इत्यर्थादुक्तमेव भवति। अतः 'कथं तल्लभ्यते ?' इत्यर्थप्रतिपादकं किमितीह पुनरपि कथंद्वारमुच्यते ? । अत्रोत्तरमाह– इह कथमितिद्वारे स एवं क्षयोपशमश्चिन्त्यते । कथम् ?, इत्याह— कथं लभ्यते स क्षयोपशमः ? , इत्येष विशेषः ॥ ९९० ॥

अथ द्वारबाहुल्याद् ग्रन्थविस्तरमवलोक्य संक्षिपन्नाह—

[2]किं बहुणा, जमुवक्कम-निक्खेवेसु भणियं पुणो भणइ । अत्थाणुगमावसरे तं वक्खाणाहिगारत्थं ॥९९१॥

किं बहुना ?, सर्वेष्वप्येतेषूपोद्घातद्वारेषु यदुपक्रम-निक्षेपयोर्भणितमपि पुनरप्याचार्यो भणति, तदिहार्थानुगमावसरे पूर्वोपक्रान्त-निक्षिप्तवस्तुव्याख्यानाधिकारार्थम्, इत्येवं भावनीयमिति ॥ ९९१ ॥

तदेवमुपोद्घातोक्तेष्वेतेषूद्देशादिद्वारेषु प्रत्येकं विशेषतश्चालना-प्रत्यवस्थाने अभिधाय, इदानीं सामान्येन सर्वस्याऽप्युपोद्घातस्य चालनामाह—

[3]सत्थसमुत्थाणत्थो पायेणोवक्कमो तहाऽयं पि । सत्थस्सोवग्घाओ को एएसिं पइविसेसो ? ॥ ९९२ ॥

आह– ननूपक्रमोऽपि प्रायः शास्त्रसमुत्थानार्थमेव, तत्रानुपूर्व्यादिभिर्द्वारैरुपक्रम्य शास्त्रं नामादिन्यासव्याख्यानयोग्यतामानीयत इत्यर्थः; तथाऽयमप्युपोद्घातः शास्त्रस्योद्देश-निर्देश-निर्गमादिभिर्द्वारैरुत्थानमुपवर्ण्य व्याख्यानयोग्यतामुपकल्पयति, इति कोऽनयोर्विशेषः ?– न कश्चित् । तत एतयोर्द्वयोरन्यतर एव वाच्य इत्यभिप्राय इति ॥ ९९२ ॥

प्रत्यवस्थानमाह—

[5]उद्देसमेत्तनियओ उवक्कमोऽयं तु तव्विबोहत्थं । पाएणोवग्घाओ नणु भणिओऽयं जओऽणुगमो ॥ ९९३ ॥

उद्देशमात्रनियत एवोपक्रमः– नाम-स्थापना-द्रव्यादिभिः, आनुपूर्व्यादिभिश्च भेदैरुपक्रमः शास्त्रमुद्दिशत्येव, न तु व्याख्यानयतीत्यर्थः । अयं पुनरुपोद्घातः प्रायेण तस्य शास्त्रस्य विबोधार्थो व्याख्यानार्थः । कुत इदं ज्ञायते ?, इत्याह– ननु यस्मादयं प्रस्तुतोऽनुगमो भणितः, उपोद्घातश्चानुगमभेद एव, अनुगमस्य च व्याख्यानरूपत्वात् सिद्धमुपोद्घातस्य व्याख्यानार्थत्वमिति ॥ ९९३॥

१ क ग 'व च क्ष'। २ किं बहुना, यदुपक्रम-निक्षेपयोर्भणितं पुनर्भणति । अर्थानुगमावसरे तद् व्याख्यानाधिकारार्थम् ॥ ९९१ ॥
३ शास्त्रसमुत्थानार्थः प्रायेणोपक्रमस्तथाऽयमपि । शास्त्रस्योपोद्घातः क एतेषां प्रतिविशेषः ? ॥ ९९२ ॥ ४ क. 'स्त्रोद्देशोद्देशानि'।
५ उद्देशमात्रनियत उपक्रमोऽयं तु तद्विबोधार्थम् । प्रायेणोपोद्घातो ननु भणितोऽयं यतोऽनुगमः ॥ ९९३ ॥

इति पूर्वगाथायां प्रायोग्रहणमकारि । कस्मात् पुनः पदविच्छेदोऽपि तद्विषयः ?, इत्याह– येन कारणेन तेषां विच्छिन्नपदानामर्थस्तदर्थस्तस्य, तथा, कारक-काल-क्रियादीनां च गतिरवबोधस्तत एव पदच्छेदमात्रादेव जायते । ततस्तत्र पदविच्छेदमात्रमेव सूत्रस्पर्शिकनिर्युक्तिः करोति, तावतैव तद्व्यापारपरिसमाप्तेः । अतः पदच्छेदोऽपि तदन्तर्भाव्येव । उपलक्षणं चैतत्, ततो न केवलं पदार्थादिरेव नैगमादिनयविषयः, किन्तु पदच्छेद-सूत्रालापकन्यासादयोऽपि प्रायस्तद्विषयः, तत्रापि तद्विचारप्रवृत्तेरिति । तदेवमुक्तोऽनुगमः, तद्भणनप्रसङ्गतो नयाश्चाभिहिताः । तथा च समाप्तान्यनुयोगद्वाराणि ॥ १०११ ॥

अत आह—

अणुओगद्दाराणं परूवणं तप्पओयणं जं च । इह चेव परिसमाणियमव्वामोहत्थमत्थाणे ॥ १०१२ ॥

यद्यप्यध्ययनसमाप्तावेवाऽनुयोगद्वाराणां सामस्त्येन समाप्तिरिष्यते, तथापि यच्चतुर्णामप्यनुयोगद्वाराणां प्ररूपणम्, यच्च तत्प्रयोजनम्, तदिहाऽऽदावस्थान एव शिष्याणामव्यामोहार्थं परिसमापितम् । अन्यथा ह्यध्ययनस्याऽऽदावुपक्रमः समाप्येत, ततो दूरव्यवधानेन क्वचिद् निक्षेपः, क्वाप्यनुगमः, क्वचित्तु नयाः परिसमाप्येरन् । एवं चातिग्रन्थव्यवधानेनाऽनुयोगद्वाराणां समाप्तौ व्यामुह्येयुर्विनेयाः॥१०१२

कथं पुनरित्थं समाप्तौ तेषामव्यामोहः ?, इत्याह—

दाइयदारविभागो संखेवेणेह, वित्थरेणावि । दाराणं विणिओगं नाहिइ काउं जहाजोगं ॥ १०१३ ॥

इहैव संक्षेपेण दर्शितानुयोगद्वारविभागो विनेयः पुरस्ताद् विस्तरेणापि यथायोग्यं यथास्थानं स्वयमेव ज्ञास्यति विनियोगं कर्तुम्, न तु मोहमनुभविष्यति ॥ इति त्रयोदशगाथार्थः ॥ १०१३ ॥

॥ अनुयोगद्वाराणि समाप्तानि ॥

इदानीं 'तित्थयरे भगवंते' इत्यादिवक्ष्यमाणग्रन्थस्य प्रस्तावनामुपरचयन्नाह—

संपयमत्थाणुगमे सत्थोवग्घायवित्थरं वोच्छं । कयमंगलोवयारो सोऽतिमहत्थो त्ति काऊणं ॥ १०१४ ॥

---

१ अनुयोगद्वाराणां प्ररूपणं तत्प्रयोजनं यच्च । इहैव परिसमापितमव्यामोहार्थमस्थाने ॥ १०१२ ॥ २ क ग 'रितीष्य' । ३ दर्शितद्वारविभागः संक्षेपेणेह, विस्तरेणापि । द्वाराणां विनियोगं ज्ञास्यति कर्तुं यथायोगम् ॥ १०१३ ॥ ४ गाथा १०२५ । ५ सांप्रतमर्थानुगमे शास्त्रोपोद्घातविस्तरं वक्ष्ये । कृतमङ्गलोपचारः सोऽतिमहार्थ इति कृत्वा ॥ १०१४ ॥

तस्याः सूत्रस्पर्शिकनिर्युक्तेर्यद्येतदस्थानम्, ततः सा किमितीह भण्यते ? इति । अत्राह– नवरमिह निर्युक्तिभणनप्रस्तावे सा निर्युक्तिसाम्यमात्राद् भण्यते, न तु सूत्रस्पार्शिकत्वेन प्रवर्तते, सूत्रस्याऽद्याप्यसत्त्वादिति। तदेवं त्रिविधापि निर्युक्तिरुक्ता। ततो निर्युक्त्यनुगमः समर्थितः ॥ ९९७ ॥

सांप्रतं सूत्रानुगमो भणनीयः, इति तमेव संबन्धयन्नाह—

[1]तेणेदाणिं सुत्तं सुत्ताणुगमेऽभिधेयमणवज्जं । अक्खलियाइविसुद्धं सलक्खणं लक्खणं चेमं ॥ ९९८ ॥

येन सूत्रे सत्येव सूत्रस्पार्शिकनिर्युक्तिः प्रवर्तते, तेनेदानीं सूत्रानुगमे क्रमप्राप्ते सूत्रमभिधेयम् । कथंभूतम् ?, अनवद्यम्– ऊनाधिक्यादिदोषावद्यरहितम् । पुनः कथंभूतम् ?, अस्खलितादिविशुद्धम्– स्खलित-मिलितादिवक्तृदूषणविशुद्धम् । सह वक्ष्यमाणेन लक्षणेन प्रवर्तत इति सलक्षणम् । [2]तच्च लक्षणमिदम् ॥ ९९८ ॥

किं तत् ?, इत्याह--

[3]अप्पग्गंथ-महत्थं बत्तीसादोसविरहियं जं च । लक्खणजुत्तं सुत्तं अट्ठहि य गुणेहिं उववेयं ॥ ९९९ ॥

अल्पग्रन्थं महार्थं च सूत्रं विज्ञेयम्, "[4]उत्पाद-व्यय-ध्रौव्ययुक्तं सत्" इत्यादिवत् सूत्रमल्पग्रन्थं महार्थं च भवतीत्यर्थः; यच्च द्वात्रिंशद्दोषविरहितम्, तल्लक्षणयुक्तं सूत्रमुच्यते । ते चैतेऽन्यत्रोक्ता द्वात्रिंशद् दोषाः—

"[5]अलियमुवघायजणयं निरत्थयमवत्थयं छलं दुहिलं । निस्सारमहियमूणं पुणरुत्तं वाहयमजुत्तं ॥ १ ॥
कमभिन्न वयणभिन्न विभत्तिभिन्नं च लिंगभिन्नं च । अणभिहियमपयमेव य सहावहीणं ववहियं च ॥ २ ॥
काल-जइ-छविदोसो समयविरुद्धं च वयणमेत्तं च । अत्थावत्ती दोसो नेओ असमासदोसो य ॥ ३ ॥

१ तेनेदानीं सूत्रं सूत्रानुगमेऽभिधेयमनवद्यम् । अस्खलितादिविशुद्धं सलक्षण लक्षण चेदम् ॥ ९९८ ॥ २ घ छ. 'तल्लक्ष' । ३ अल्पग्रन्थमहार्थं द्वात्रिंशद्दोषविरहितं यच्च । लक्षणयुक्त सूत्रमष्टाभिश्च गुणैरुपावेतम् ॥ ९९९ ॥ ४ तत्त्वार्थसूत्रे ५, २९ । ५ अलीकमुपघातजनकं निरर्थकमपार्थकं छल द्रुहिलम् । निःसारमधिकमूनं पुनरुक्त व्याहतमयुक्तम् ॥ १ ॥
क्रमभिन्नं वचनभिन्नं विभक्तिभिन्नं च लिङ्गभिन्न च । अनभिहितमपदमेव च स्वभावहीनं व्यवहितं च ॥ २ ॥
काल-यति-च्छविदोप. समयविरुद्ध च वचनमात्रं च । अर्थापत्तिर्दोषो ज्ञेयोऽसमासदोपश्च ॥ ३ ॥

उपक्रमादीनि चत्वार्यनुयोगद्वाराणि यस्य तच्चतुरनुयोगद्वारं यतः शास्त्रम्, तेनोपक्रम-निक्षेपलक्षणमनुयोगद्वारद्वयमतिक्रम्य यदिदमनुगमभेदात्मकस्योपोद्घातस्यादौ मङ्गलं तद् युक्तित एव मध्यमङ्गलं भवति। यत्र[1] शास्त्रेऽनारब्धेऽप्यनुयोगद्वारमध्ये मङ्गलग्रहणं तदेव साधयति[2] कथयति ज्ञापयति यदुत- शास्त्रस्याऽङ्गानि शास्त्रस्वरूपभूतान्येवाऽनुयोगद्वाराणि, न पुनस्ततो भिन्नानि, अतस्तदारम्भे शास्त्रमारब्धमेव मन्तव्यम्। ततः शास्त्रस्यैवेदं मध्यमङ्गलमिति स्थितम् ॥ १०१७ ॥

इत्याचार्यदेशीयेनोक्ते सूरिराह—

तहवि[3] न मज्झं एयं भणियमिहावस्सयस्स जं मज्झं। तं मंगलमाइट्ठं इदमज्झयणस्स होज्जाहि ॥१०१८॥

तथापि भवदुक्तयुक्त्यापि नैतद् मध्यं भणितं- नैतद् मध्यमुपपद्यते, किन्त्विह षडध्ययनात्मकस्याऽऽवश्यकस्य यद् मध्यं तत्पूर्वमादावेव भाष्यकृता मङ्गलमादिष्टं मध्यमङ्गलत्वेन प्रतिपादितम्, इदं त्वावश्यकमध्यं न भवत्येव, किन्तु भवदभिहितयुक्त्या यदि भवति तदा प्रथमस्य सामायिकाध्ययनस्यैतद् मध्यं भवेदपीति ॥ १०१८ ॥

सूरिरेवाह, किञ्च—

भणियं[4] च पुव्वमेयं सव्वं चिय मंगलं ति किमणेण ?। मंगलं ति य बुद्धिपरिग्गहं पि काराविओ सीसो ॥१०१९॥

भणितं चेदमादौ- सर्वमेवैतच्छास्त्रं मङ्गलरूपमेव, तत्किमनेन विशेषतो मध्यादिमङ्गलकरणप्रयासेन ?। अथैवं ब्रूषे- समस्तशास्त्रस्य मङ्गलरूपत्वेऽपि शिष्यस्य मङ्गलत्रयमतिपरिग्रहार्थो यत्नः। तदपि न, यस्मात् शिष्योऽपि मङ्गलत्रयमतेः परिग्रहं प्रागेव कारितः इति किमनेन ? ॥ १०१९ ॥

अथाचार्यदेशीयो निरुत्तरीकृतो विलक्षः सन् प्राह- ननु यदि सर्वमप्येतच्छास्त्रं मङ्गलम्, मङ्गलत्रयमतिपरिग्रहं च प्रागेव कारितः शिष्यः, अतो नेदं मध्यमङ्गलम्, तर्हि भवन्तोऽपि कथयन्तु- किमर्थमिदं मङ्गलम् ?, इत्याशङ्क्य सूरिर्यथावस्थितं समाधानमाह—

आवस्सयस्स[5] तं कयमिदं तु नावासमित्तयं किंतु। सव्वाणुओगनिज्जुत्तिसत्थ[6]पारंभ एवायं ॥ १०२० ॥

1 क.ग. 'यच्छास्त्रे'। 2 क ग 'ति शा'। 3 तथापि न मध्यमेतद् भणितमिहावश्यकस्य यद् मध्यम्। तद् मङ्गलमादिष्टमिदमध्ययनस्य भवेद् ॥ १०१८ ॥
4 भणित च पूर्वमेतत् सर्वमेव मङ्गलमिति किमनेन ?। मङ्गलमिति च बुद्धिपरिग्रहमपि कारित शिष्यः ॥ १०१९ ॥
5 आवश्यकस्य तत्कृतमिदं तु नावश्यकमात्रकं किन्तु। सर्वानुयोगनिर्युक्तिशास्त्रप्रारम्भ एवाऽयम् ॥ १०२० ॥ 6 क ग. 'सत्थोपा'।

" तेषां कटतटभ्रष्टैर्गजानां मदबिन्दुभिः । प्रावर्तत नदी घोरा हस्त्य-ऽश्व-रथावहिनी ॥ १ ॥ "

इत्यादि ॥ १ ॥

क्रमभिन्नम्– यत्र क्रमो नाराध्यते, यथा– 'स्पर्शन-रसन-घ्राण-चक्षुः-श्रोत्राणामर्थाः स्पर्श-रस-गन्ध-रूप-शब्दाः' इति वक्तव्ये 'स्पर्श-रूप-शब्द-गन्ध-रसाः' इति ब्रूयादित्यादि । वचनभिन्नम्– यत्र वचनव्यत्ययः, यथा– 'वृक्षावेतौ पुष्पिताः' इत्यादि । विभक्तिभिन्नम्, यथा– 'वृक्षं पश्य' इति वाच्ये 'वृक्षः पश्य' इति वदेदित्यादि । लिङ्गभिन्नम्– यत्र लिङ्गव्यत्ययः, यथा– 'अयं स्त्री' इत्यादि । अनभिहितम्– स्वसिद्धान्तेऽनुपदिष्टम्, यथा– 'सप्तमः पदार्थो वैशेषिकस्य, प्रकृति-पुरुषाभ्यामभ्यधिकं सांख्यस्य, दुःख-समुदय-मार्ग-निरोधलक्षणचतुरार्यसत्यातिरिक्तं वा बौद्धस्य' इत्यादि । पद्यबन्धेऽन्यच्छन्दोऽधिकारेऽन्यच्छन्दोऽभिधानमपदम्, यथा– 'आर्यापदेऽभिधातव्ये वैतालीयपदमभिदध्यात्' इत्यादि । यत्र वस्तुस्वभावोऽन्यथास्थितोऽन्यथाऽभिधीयते, तत् स्वभावहीनम्, यथा– 'शीतो वह्निः, मूर्तिमदाकाशम्' इत्यादि । यत्र प्रकृतमुत्सृज्याऽप्रकृतं व्यासतोऽभिधाय पुनः प्रकृतमुच्यते, तद् व्यवहितम् ॥ २ ॥

कालदोषः– यत्राऽतीतादिकालव्यत्ययः, यथा– 'रामो वनं[1] प्रविवेश' इति वक्तव्ये 'रामो वनं[2] प्रविशति' इत्याहेत्यादि । यतिदोषः– अस्थानविरतिः, सर्वथाऽविरतिर्वेति । छविरलङ्कारविशेषस्तेजस्विता तद्रहिते छविदोषः । समयविरुद्धम्[3]– स्वसिद्धान्तविरोधि, यथा– 'सांख्यस्याऽसत् कारणे कार्यम्, वैशेषिकस्य वा सत्' इत्यादि । वचनमात्रम्– निर्हेतुकम्, यथा– 'कश्चिद् यथेच्छया कश्चित् प्रदेशं लोकमध्यतया जनेभ्यः प्ररूपयति' । यत्रार्थापत्त्याऽनिष्टमापतति, तत्रार्थापत्तिदोषः, यथा– 'गृहकुक्कुरो न हन्तव्यः' इत्युक्तेऽर्थापत्त्या 'शेषघातोऽदुष्टः' इत्यापतति । यत्र समासविधिप्राप्तौ समासं न करोति, व्यत्ययेन वा करोति, तत्र समासदोषः ॥ ३ ॥

उपमादोषः– यत्र हीनोपमा क्रियते, यथा– 'मेरुः सर्षपोपमः' अधिकोपमा वा क्रियते, यथा– 'सर्षपो मेरुसंनिभः' । अनुपमा वाऽभिधीयते, यथा– 'मेरुः समुद्रोपमः' इत्यादि । स्वरूपभूतानामवयवानामरूपणम्, व्यत्ययरूपणं वा स रूपकदोषः, यथा– 'पर्वते रूपयितव्ये तत्स्वरूपभूतान् शिखरादीनवयवान् न रूपयति; अन्यस्य वा समुद्रादेः संबन्धिनस्तांस्तत्र रूपयति' इत्यादि । निर्देशदोषः– यत्र निर्दिष्टपदानामेकवाक्यता न क्रियते, यथा– 'इह देवदत्तः स्थाल्यां पचति' इत्यभिधातव्ये पचतिशब्दं नाभिधत्ते । पदार्थदोषः– यत्र वस्तुपर्यायोऽपि सन् पदार्थान्तरत्वेन कल्प्यते, यथा– सतो भावः सत्तेति कृत्वा वस्तुपर्याय एव सत्ता, सा च वैशेषिकैः षट्सु पदा- ॥४६५॥

१ क. ग 'नं वि' । २ घ छ. 'नं वि' । ३ क. ग. 'मये वि' ।

विशेषमात्रं तच्छिष्यः सुखेन लघु च स्वयमपि ग्रहीष्यति । अतो लाघवार्थमिह दशकालिकादीनां ग्रहणमिति ॥ १०२२॥ १०२३ ॥

अथोपसंहरंस्तात्पर्यमाह—

[1]तम्हा जेण महत्थं सत्थं सव्वाणुओगविसयमिणं । सत्थंतरमेवहवा तेण पुणो मंगलग्गहणं ॥ १०२४ ॥

तस्माद् येन कारणेन सर्वानुयोगविषयत्वादिदमुपोद्घातलक्षणं शास्त्रं महार्थम्, अथवा, बहुवक्तव्यत्वाद् वस्तुतो यस्माच्छास्त्रान्तरमेवेदम्, न त्वावश्यकमात्रम्, तेनाऽस्यादौ पुनरपि मङ्गलग्रहणम्, इत्येष स्थितः पक्षः ॥ इत्येकादशगाथार्थः ॥ १०२४ ॥

किं पुनस्तद् मङ्गलम् ?, इत्याह—

[2]तित्थयरे भगवंते अणुत्तरपरक्कमे अमियनाणी । तिण्णे सुगइगइगए सिद्धिपहपएसए वंदे ॥ १०२५ ॥

तीर्यते भवोदधिरनेन, अस्मात्, अस्मिन्निति वा तीर्थं वक्ष्यमाणस्वरूपम्, तत्करणशीलाः "कृञो हेतुताच्छील्ये०"[3] इत्यादिना टप्रत्यये तीर्थकराः, तान् वन्दे, इति संबन्धः । कथंभूतान् ?, इत्याह– भगः समग्रैश्वर्यादिलक्षणो विद्यते येषां ते भगवन्तोऽर्हन्तस्तान् भगवतः । पुनरपि कथंभूतान् ?, इत्याह– अनुत्तरपराक्रमानिति– पराक्रमो वीर्यं, तदनन्तत्वादनुत्तरं येषाम्; अथवा, परेषां क्रोधादिशत्रूणामाक्रमणं विक्षेपणं पराक्रमः सोऽनुत्तरः प्रधानरूपो येषां तेऽनुत्तरपराक्रमास्तानिति । तथा, अनन्तज्ञेयपरिच्छेदादमितमपरिमितं केवलरूपं ज्ञानं येषां तेऽमितज्ञानिनस्तानिति । तथा, तरन्ति स्म भवार्णवमिति तीर्णास्तानिति । तीर्त्वा च भवजलधिं सुगतिगतिगतानिति,– तत्र राग-द्वेषविकलत्व-सर्वज्ञत्व-सर्वदर्शित्वादिभ्यो निरुपमसुखभागिनः सुगतयः सिद्धास्तैरेव गम्यमानत्वाद् गतिः सिद्धिस्तां गताः सुगतिगतिगतास्तानिति । तथा, तस्या एव सिद्धेः पन्थाः सम्यग्दर्शन-ज्ञानादिको मार्गस्तस्य प्रकृष्टा देशकाः सिद्धिपथप्रदेशकास्तान् वन्देऽभिवादये स्तौमि ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ १०२५ ॥

विस्तरार्थं तु विभणिषुर्भाष्यकार एवाह—

[4]तिज्जइ जं तेण तहिं तओ व तित्थं तयं च दव्वम्मि । सरियाईणं भागो निरवायो, तम्मि य पसिद्धे ॥१०२६॥

---

१ तस्माद् येन महार्थं शास्त्रं सर्वानुयोगविषयमिदम् । शास्त्रान्तरमेवाऽथवा तेन पुनर्मङ्गलग्रहणम् ॥ १०२४ ॥
२ तीर्थंकरान् भगवतोऽनुत्तरपराक्रमानमितज्ञानान् । तीर्णान् सुगतिगतिगतान् सिद्धिपथप्रदेशकान् वन्दे ॥ १०२५ ॥ ३ पाणिनीये ॥३।२।२०॥
४ तीर्यते यत् तेन तत्र ततो वा तीर्थं तच्च द्रव्ये । सरिदादिकं भागो निरपायः, तस्मिंश्च प्रसिद्धे ॥ १०२६ ॥

सूत्रानुगमावसरत्वात् सूत्रेऽनुगते उच्चारिते सति, यथा– "करोमि भन्ते ! सामाइयं सव्वं सावज्जं जोगं" इत्यादि ; तथा, सर्वदोषरहितत्वात् 'शुद्धमिदम्' इत्येवं निश्चिते; तथा, व्याख्यानावसरत्वादेव 'करोमि, भदन्त !, सामायिकम्, सावद्यं, योगम्' इत्यादिपदच्छेदे कृते; तथा, सूत्रालापकानां यथासंभवं नाम-स्थापनादिन्यासे निक्षिप्ते न्यस्ते विहिते, ततस्तद्व्याख्यानार्थं सूत्रस्पर्शिकनिर्युक्तेर्व्यापारः ॥ इति द्वात्रिंशद्गाथार्थः ॥ १००० ॥

एवं च सति किम् ?, इत्याह—

एवं[1] सुत्ताणुगमो सुत्तालावगगओ य निक्खेवो । सुत्तप्फासियजुत्ती नया य वच्चंति समयं तु ॥१००१॥

तदेवं सूत्रानुगमोऽनुगमप्रथमभेदः ; तथा, सूत्रालापकगतश्च निक्षेपो निक्षेपद्वारतृतीयभेदः ; तथा, सूत्रस्पर्शिका निर्युक्तिर्निर्युक्त्यनुगमतृतीयभेदः ; तथा, नयाश्च चतुर्थानुयोगद्वारोपन्यस्ताः, समकं युगपत् प्रतिसूत्रं व्रजन्ति गच्छन्तीति ॥ १००१ ॥

आह विनेयः– नन्वनुगमोऽयं द्विविधोऽपि भणितः, परमसौ तावद् व्याख्यास्वरूपः, तत्र व्याख्यायाः किं लक्षणम् ?, इति; अत्राह—

सुत्तं[2] पयं पयत्थो संभवओ विग्गहो वियारो य । दूसियसिद्धी नयमयविसेसओ नेयमणुसुत्तं ॥१००२॥

व्याख्यानविधौ प्रस्तुते प्रथमं तावदस्खलितादिगुणोपेतं यथोक्तलक्षणयुक्तं सूत्रमुच्चारणीयम् । इयं चान्यत्राऽस्खलितपदोच्चारणरूपा संहिता भण्यते । ततश्च 'पदं' इति पदच्छेदो दर्शनीयः । ततः पदार्थो वक्तव्यः । ततः संभवतो विग्रहः समासः कर्तव्यः । ततश्चालनारूपो विचारः कर्तव्यः । ततो दूषितसिद्धिः– दूषणपरिहारः प्रत्यवस्थानरूपो निरूपणीयः । एवमुक्तक्रमेणाऽनुसूत्रं प्रतिसूत्रं नियमितविशेषतो नयानां मतविशेषैर्व्याख्यानं ज्ञेयम् । इति गाथासंक्षेपार्थः । विस्तरार्थस्तु संहितायाः सूत्रलक्षणाभिधानतो भाष्यकारेण वस्तुतोऽभिहित एव ॥ १००२ ॥

पदादिगतं त्वमुं स एवाह—

१ एवं सूत्रानुगमः सूत्रालापकगतश्च निक्षेपः । सूत्रस्पर्शिक(निर्)युक्तिर्नयाश्च व्रजन्ति समकं तु ॥१००१ ॥
२ सूत्रं पदं पदार्थः संभवतो विग्रहो विचारश्च । । दूषितसिद्धिर्नयमतविशेषतो ज्ञेयमनुसूत्रम् ॥ १००२ ॥

इह केचित् तीर्थिका मन्यन्ते– नद्यादेः संबन्धि द्रव्यतीर्थं किल स्नान-पाना-ऽवगाहनादिभिर्विधिवदासेव्यमानं भवतारकं संसारमहामकरालयप्रापकं भवत्येव। कुतः ?, तारणादिफलमिति कृत्वा– शरीरतारण-मलक्षालन-तृड्व्यवच्छेद-देहोपशमादिफलत्वादित्यर्थः; अनेन चाध्यक्षसमीक्षितदेहतारणादिफलेन परोक्षस्यापि संसारतारणफलस्याऽनुमीयमानत्वादिति भावः। तदेतद् नोपपद्यते, स्नानादेर्जीवोपघातहेतुत्वात्, खड्गा-ऽसि-धेनु-शूलादिवदिति। एतदुक्तं भवति– जीवोपघातहेतुत्वाद् दुर्गतिफला एव स्नानादयः कथं नु भवतारकास्ते भवेयुः, सूना-वध्यभूम्यादीनामपि भवतारकत्वप्रसङ्गात् ? इति। इतश्च– नद्यादितीर्थं भवतारकं न भवति, सूनाङ्गत्वात्– सूनाप्रकारत्वात्, उदूखलादिवदिति। न च पुण्यकारणं स्नानम्, नापि यतिजनयोग्यं तत्, कामाङ्गत्वात्, मण्डनवत्; अन्यथा ताम्बूलभक्षण-पुष्पबन्धन-देहादिधूपना-ऽभ्यञ्जनादयोऽपि च भुजङ्गादीनां पुण्यहेतवः स्युः। न च देहतारणादिमात्रफलदर्शनेन विशिष्टं भवतारणादिकं फलमुपपद्यते, नियामकाभावात्, प्रत्यक्षवीक्षितप्राण्युपमर्दबाधितत्वाच्च; इत्याद्यभ्यूह्य स्वधियाऽत्र दोषजालमभिधानीयमिति ॥ १०२९ ॥ १०३० ॥

अथ परो ब्रूयात्; किम् ?, इत्याह—

[१]देहोवगारि वा तेण तित्थमिह दाहनासणाईहिं। महु-मज्ज-मंस-वेस्सादओ वि तो तित्थमावन्नं ॥१०३१॥

यदि प्रेरको मन्येत– जाह्नवीजलादिकं तीर्थमेव, दाहनाश-पिपासोपशमादिभिर्देहोपकारित्वात्। अत्रोच्यते– एवं सति ततो मधु-मद्य-मांस-वेश्यादयोऽपि तीर्थमापद्यन्ते, तेषामपि देहोपकारित्वाविशेषादिति। उक्तं द्रव्यतीर्थम् ॥ १०३१ ॥

अथ भावतीर्थमाह—

[२]भावे तित्थं संघो सुयविहियं तारओ तहिं साहू। नाणाइतियं तरणं तरियव्वं भवसमुद्दोऽयं ॥ १०३२ ॥

भावे भावविषयं श्रुतविहितं श्रुतप्रतिपादितं सङ्घस्तीर्थम्, तथा च भगवत्यामुक्तम्, "[३]तित्थं भंते ! तित्थं तित्थयरे तित्थं ?।

---

१ क ग 'पयुज्यते'। १ देहोपकारि वा तेन तीर्थमिह दाह-नाशनादिभिः। मधु-मद्य-मांस-वेश्यादयोऽपि ततस्तीर्थमापन्नम् ॥ १०३१ ॥

२ भावे तीर्थं सघ श्रुतविहित तारकस्तत्र साधु। ज्ञानादित्रिकं तरण तरयितव्य भवसमुद्र ॥ १०३२ ॥

३ तीर्थं भगवन् ! तीर्थं तीर्थकरस्तीर्थम् ?। गौतम ! अर्हन्तस्तावद् नियमात् तीर्थङ्कराः, तीर्थं पुनश्चातुर्वर्णः श्रमणसंघः।

मर्थं कथयति, सोऽनुमानतः पदार्थ उच्यते, यथा– कथयन्ति मिथ्यादर्शनादीनि, पुनर्मोक्षमार्गो न भवति' इत्यर्थादेव गम्यत इति। तथा, लेशतः पदार्थो भवति, तत्र 'लिश श्लेषणे' लेशः श्लेषः, श्लिष्टं, समस्तमिति यावत् , तन्निर्देशात् पदार्थो गम्यते; यथा 'सम्यग्दर्शन-ज्ञान-चारित्राणि' इति त्रयाणामपि समस्तानां निर्देशात् 'समुदितानामेव मोक्षमार्गत्वम् , नैकैकशः' इति गम्यते। ततोऽसौ लेशेन श्लेषेण सूचितो लेशतः पदार्थोऽभिधीयते। तदेवं प्रकारान्तरेणाऽप्युक्तस्त्रिविधः पदार्थः।

अथवा, यथासंभवमागमतः, हेतुतश्च द्विविधः पदार्थो वाच्यः, तत्र भव्या-ऽभव्य-निगोदादिप्रतिपादकपदानामागमत आज्ञामात्रेणैवाऽर्थः प्रतिपाद्यते। न हि भव्या-ऽभव्यादिभावप्ररूपणे आगमं विहाय प्रायः प्रमाणान्तरं प्रवर्तते। अतोऽयमागमतः पदार्थ उच्यते। यत्र च हेतुः संभवति, तत्र हेतुतः पदार्थोऽभिधीयते, यथा– कायप्रमाण आत्मा न सर्वगतः, कर्तृत्वात् , कुलालादिवत् , इत्यादि। ननु मूर्त आत्मा, कर्तृत्वात् , कुलालादिवत् , इत्येवं मूर्तिमत्त्वमप्यात्मनोऽनेन हेतुना सिध्यतीति चेत्। सत्यम् , इष्यत एव संसार्यात्मनो मूर्तत्वमपि, इति न किञ्चिद् नः क्षूयते। इति हेतुतोऽयं पदार्थोऽभिधीयते। तदनेन

"आणोगेज्झो[1] अत्थो आणाए चेव सो कहेयव्वो। दिट्ठंतिओ दिट्ठंता कहणविहिविराहणा इहरा ॥ १ ॥"

इत्ययमर्थः समर्थितो भवतीति। तदेवमुक्तो विस्तरतः पदार्थः ॥ १००३ ॥ १००४ ॥ १००५ ॥

अथ पदविग्रहमाह—

पायं[3] पयविच्छेओ सामासविसओ तयत्थनियमत्थं। पयविग्गहो त्ति भण्णइ सो सुद्धपए न संभवइ ॥१००६॥

इह प्रायेण यः समासविषयः पदयोः पदानां वाऽनेकार्थसंभवे सतीष्टपदार्थनियमाय विच्छेदः क्रियते स पदविग्रहः, यथा– राज्ञः पुरुषो राजपुरुषः, श्वेतः पटोऽस्येति श्वेतपटः, मत्ता बहवो मातङ्गा यस्मिन् वने तद् मत्तबहुमातङ्गं वनमित्यादि। स च शुद्ध एकस्मिन् पदे न संभवति, अतः पदयोः, पदानां चेत्युच्यते। इह कश्चित् पदविच्छेदोऽपि समासविषयो न भवति, क्वचित् समासनिषेधात्; यथा– व्यासः पारासर्यः, रामो जामदग्न्य इत्यादि। अतः प्रायोग्रहणमिति ॥ १००६ ॥

१ आज्ञाग्राह्योऽर्थ आज्ञयैव स कथयितव्य.। दार्ष्टान्तिको दृष्टान्तात् कथनविधिविराधनेतरथा ॥ १ ॥ २ क. ग 'णागज्झो'।

३ प्रायः पदविच्छेदः समासविषयस्तदर्थनियमार्थम्। पदविग्रह इति भण्यते स शुद्धपदे न संभवति ॥ १००६ ॥

तथा; क्रोधश्च, लोभश्च, कर्म च तन्मयास्तत्स्वरूपा यथासंख्यं ये दाह-तृष्णा-मलाः । क्रोधो हि जीवानां मनः-शरीरसंतापजनकत्वाद् दाहः, लोभस्तु विभवविषयपिपासाऽऽविर्भावकत्वात् तृष्णा, कर्म पुनः पवनोद्धूतश्लक्ष्णरजोवत् सर्वतोऽवगुण्ठनेन मालिन्यहेतुत्वाद् मलः; अतस्तेषां क्रोध-लोभ-कर्ममयानां दाह-तृष्णा-मलानां यदेकान्तेनाऽत्यन्तं चापनयनानि करोति । तथा, कर्मकचवरमलिनाद् भवौघात् संसारापारनीरप्रवाहात् परकूलं नीत्वा शुद्धिं कर्ममलापनयनलक्षणां यतः करोति, तेन तत्संघलक्षणं भावतस्तीर्थमिति पूर्वसंबन्धः । अपरमपि नद्यादितीर्थं तुच्छा-ऽनैकान्तिका-ऽऽत्यान्तिकदाह-तृष्णा-मलापनयनं विदधाति, एतत्तु संघतीर्थमनादिकालालीनत्वेनानन्तानां दाह-तृष्णा-मलानामैकान्तिकमात्यन्तिकं चापनयनं करोति; अतः प्रधानत्वाद् भावतीर्थमुच्यते, नद्यादितीर्थं त्वप्रधानत्वाद् द्रव्यतीर्थमिति भावः ॥ १०३४ ॥

अथवा, प्राकृते 'तित्थं' इत्युक्ते 'त्रिस्थम्' इत्येतदपि लभ्यते, इत्येतदाह—

दाहोवसमाइसु[1] वा जं तिसु थियमहव दंसणाईसु । तो तित्थं संघो च्चिय उभयं व विसेसणविसेस्सं[2] ॥१०३५॥

अथवा, यद् यस्माद् यथोक्तदाहोपशम-तृष्णाच्छेद-मलक्षालनरूपेषु, यदिवा, सम्यग्दर्शन-ज्ञान-चारित्रलक्षणेषु त्रिष्वर्थेषु स्थितं ततस्त्रिस्थं संघ एव; उभयं वा संघ-त्रिस्थितिलक्षणविशेषण-विशेष्यरूपं द्वयं त्रिस्थम् । इदमुक्तं भवति- किं त्रिस्थम् ? संघः, कश्च संघः ? त्रिस्थं, नान्यः, इत्येवं विशेषण-विशेष्ययोरुभयं संलुलितं त्रिस्थमुच्यत इति ॥ १०३५ ॥

अथवा, प्राकृते 'तित्थं' इत्युक्ते 'त्र्यर्थम्' इत्यपि लभ्यते, इत्येतद् दर्शयन्नाह—

कोहग्गिदाहसमणादओ[3] व ते चेव जस्स तिण्णत्था । होइ तियत्थं तित्थं तमत्थसद्दो फलत्थोऽयं ॥१०३६॥

क्रोधाग्निदाहोपशम-लोभतृष्णाव्यवच्छेद-कर्ममलक्षालनलक्षणास्त एवानन्तरोक्तास्त्रयोऽर्थाः फलरूपा यस्य तत् त्र्यर्थं, तच्च संघ एव; तदव्यतिरिक्तं ज्ञानादित्रयं वा त्र्यर्थं प्राकृते 'तित्थं' उच्यते । अर्थशब्दश्चायं फलार्थो मन्तव्यः । इदमुक्तं भवति- भगवान् संघः, तदव्यतिरिक्तज्ञानादित्रयं वा महातरुरिव भव्यैर्निषेव्यमाणं क्रोधाग्निदाहशमनादिकांस्त्रीनर्थान् फलति, अतस्त्र्यर्थमुच्यत इति ॥ १०३६ ॥

अथवा, वस्तुपर्यायोऽत्रार्थ इत्याह—

1 दाहोपशमादिषु वा त्रिषु स्थितमथवा दर्शनादिषु । ततस्तीर्थं संघ एवोभयं वा विशेषणविशेष्यम् ॥ १०३५ ॥ 2 ज्ञ. 'य पि वि' ।
3 क्रोधाग्निदाहशमनादयो वा त एव यस्य त्रयोऽर्थाः । भवति त्र्यर्थं तीर्थं तदर्थशब्दः फलार्थोऽयम् ॥ १०३६ ॥

[1]एवमणुसुत्तमत्थं सव्वनयमयावयारपरिसुद्धं। [2]भासिज्ज निरवसेसं पुरिसं व पडुच्च जं जोग्गं ॥ १००८ ॥

एवमित्थं षड्विधव्याख्यानेन सूत्रं सूत्रं प्रति सर्वत्र सर्वनयावतारपरिशुद्धं निरवशेषमर्थं भाषेत– व्याख्यानयेत्; पुरुषं वा प्रज्ञादिगुणोपेतं प्रतीत्य यद् यस्य व्याख्यानं नयमतविचारणं वा योग्यम्, तत् तस्य वदेत्; उक्तं च—

"[3]नत्थि नएहिं विहूणं सुत्तं अत्थो य जिणमये किंपि। आसज्ज उ सोयारं नए नयविसारओ बूया ॥१॥" इति।

नन्वेतेषु षट्सु व्याख्यानभेदेषु मध्ये सूत्रानुगमादीनां कः कस्य विषयः?, इत्याशङ्क्याह—

[4]होइ कइत्थो वोत्तुं सपयच्छेयं सुयं सुयाणुगमो। सुत्तालावन्नासो नामाइन्नासविणिओगं ॥ १००९ ॥
सुत्तप्फासियनिज्जुत्तिनिओगो सेसओ पयत्थाई। पायं सो च्चिय नेगमनयाइमयगोयरो होइ ॥ १०१० ॥

अस्खलितादिगुणोपेतं सूत्रमुच्चार्य तत्पदच्छेदं चाभिधाय सूत्रानुगमोऽनुगमप्रथमभेदः कृतार्थोऽवसितप्रयोजनो भवति। सूत्रालापकन्यासस्तु निक्षेपतृतीयभेदरूपो नाम-स्थापनादिन्यासविनियोगमात्रं कृत्वा कृतार्थो जायते। 'सुत्तप्फासियेत्यादि' वक्ष्यमाणं प्रायोग्रहणमत्रापि संबध्यते। ततश्च प्रायः शेषः पदार्थ-पदविग्रह-चालना-प्रत्यवस्थानलक्षणव्याख्याचतुष्टयरूपः सूत्रस्पर्शिकनिर्युक्तेर्नियोगो व्यापारः स एव च पदार्थादिः प्रायो नैगमादिनयमतगोचरो भवति, पदार्थादावेव कथ्यमाने नैगमादिनयप्रवृत्तेरिति ॥१००९ ॥१०१०॥

अथवा प्रायोग्रहणस्य फलमाह—

[5]पायं पयविच्छेओ उ सुत्तप्फासोवसंघिओ जेण। कत्थइ तयत्थ-कारग-कालाइगई तओ चेव ॥१०११॥

न केवलं पदार्थादयः, किन्तु प्रायः पदविच्छेदोऽपि सूत्रस्पर्शिकनिर्युक्त्युपसंहृत एव तत्क्रोडीकृतस्तदन्तर्भाव्येव मन्तव्य इत्यर्थः,

---

१ एवमनुसूत्रमर्थं सर्वनयमतविचारपरिशुद्धम्। भाषेत निरवशेषं पुरुषं वा प्रतीत्य यद् योग्यम् ॥ १००८ ॥ २ क ग. 'भासेज्ज'।
३ नास्ति नयैर्विहीनं सूत्रमर्थश्च जिनमते किमपि। आसाद्य तु श्रोतारं नयान् नयविशारदो ब्रूयात् ॥ १ ॥
४ भवति कृतार्थं उक्त्वा सपदच्छेदं श्रुतं श्रुतानुगमः। सूत्रालापन्यासो नामादिन्यासविनियोगम् ॥ १००९ ॥
सूत्रस्पर्शिकनिर्युक्तिनियोगः शेषकः पदार्थादिः। प्राय. स एव नैगमनयादिमतगोचरो भवति ॥ १०१० ॥ ५ क. ग. 'थ प्रा'।
६ प्राय. पदविच्छेदस्तु सूत्रस्पर्शोपसंहृतो येन। कुत्रचित् तदर्थ-कारक-कालादिगतिस्तत एव ॥ १०११ ॥

न संपूर्णाभिप्रेतफलस्य साधकानीत्यर्थः, विकलक्रियावादिति; यथा भिषक्प्रतीचारकातुरौषधाद्यन्यतराङ्गविकला क्रिया न संपूर्णाभिप्रेतफलसाधनी, तथा कुतीर्थान्यपीति । तदेवं यथोक्तप्रकारेण द्रव्य-भावतीर्थप्ररूपणा कृता ॥ १०३९ ॥

अथ प्रकारान्तरेण तत्प्ररूपणां कर्तुमाह—

अहव सुहोतारुत्तारणाइं दव्वे चउव्विहं तित्थं । एवं चिय भावम्मि वि तत्थाइमयं सरक्खाणं ॥ १०४० ॥

तव्वणियाण बीयं विसयसुहकुसत्थभावणाधणियं । तइयं च बोडियाणं चरिमं जइणं सिवफलं तु ॥१०४१॥

इह द्रव्यतीर्थे चत्वारो भङ्गाः, तद्यथा– सुखावतारं सुखोत्तारम्, सुखावतारं दुरुत्तारम्, दुःखावतारं सुखोत्तारम्, दुःखावतारं दुरुत्तारम् । एवं भावतीर्थेऽपीयं चतुर्भङ्गी द्रष्टव्या । इह च यत्र सुखेनैवावतरन्ति प्रविशन्ति प्राणिनस्तत् सुखावतारम्, सुखेनैव यत उत्तरन्ति– सुखेनैव यद् मुञ्चन्तीत्यर्थः, तत् सुखोत्तारम्; इत्याद्यभङ्गवर्तितीर्थभावार्थः । एवमन्यत्रापि ।

एतच्च सरजस्कानां शैवानां संबन्धि वेदितव्यम्; तथाहि– राग-द्वेष-कषाये-न्द्रिय-परीषहो-पसर्ग-मनो-वाक्-कायजयादिलक्षणस्य तथाविधदुष्करकष्टानुष्ठानस्य तैः क्रियमाणस्याऽदर्शनात्, यथा कथञ्चिद्रूपतयाऽपि च तैर्व्रतपरिपालनस्याऽभिधानात् सुखेनैव प्राणिनस्तद्दीक्षां प्रतिपद्यन्ते, इति तत्तीर्थस्य सुखावतारता । तच्छास्त्रेषु च न तथाविधाऽऽवासकस्वाभावा काचिद् निपुणा युक्तिरस्ति, यद्वासितान्तरात्मा पुमांस्तद्दीक्षां न परित्यजेत् । किञ्च,

"शैवो द्वादश वर्षाणि व्रतं कृत्वा ततः परम् । यद्यशक्तस्त्यजेतापि यागं कृत्वा व्रतेश्वरे ॥ १ ॥"

इत्यादिना दीक्षात्यागस्य तैर्निर्दोषतयाऽप्यभिधानात् सुखेनैव तद्दीक्षां जन्तवः परित्यजन्ति, इति तत्तीर्थस्य सुखोत्तारतेति ॥ १ ॥

द्वितीयभङ्गकवर्ति तीर्थं 'तव्वणियाणं ति' सुगतानां संबन्धि मन्तव्यम्; तथाहि—

"मृद्वी शय्या प्रातरुत्थाय पेया भक्तं मध्ये पानकं चापराह्णे । द्राक्षाखण्डं शर्करा चार्धरात्रे मोक्षश्चान्ते शाक्यपुत्रेण दृष्टः ॥ १ ॥"

"मणुन्नं भोयणं भोच्चा मणुन्नं सयणासणं । मणुन्नंसि अगारंसि मणुन्न झायए मुणी ॥ १ ॥"

---

१ अथवा सुखावतारोत्तारणादि द्रव्ये चतुर्विधं तीर्थम् । एवमेव भावेऽपि तत्रादिमकं सरजस्कानाम् ॥ १०४० ॥ सौगतानां द्वितीय विषयसुखकुशास्त्रभावनाधनिकम् । तृतीयं च बोटिकानां चरमं जैनं शिवफलं तु ॥ १०४१ ॥

२ मनोज्ञं भोजनं भुक्त्वा मनोज्ञं शयनाऽऽसनम् । मनोज्ञेऽगारे मनोज्ञं ध्यायति मुनिः ॥ १ ॥

अर्थानुगमेऽर्थानुगमाख्ये तृतीयेऽनुयोगद्वारे 'उद्देसे निद्देसे य निग्गमे' इत्यादिना यः पूर्वं संक्षेपेण शास्त्रस्योपोद्धात उक्तः, तस्यैव सांप्रतमहं विस्तरं वक्ष्ये । कथंभूतः सन् ?, इत्याह– कृतमङ्गलोपचारः कृततीर्थकरादिनमस्कारः सन् । किम् ?, इत्याह– समस्तसिद्धान्तानुयोगसाधारणत्वात् सोऽतिमहार्थ इति कृत्वा ॥ १०१४ ॥

अत्र प्रेरकः प्राह—

[1]णु मंगलं कयं चिय किं भुज्जो, अह कयं पि कायव्वं । दारे दारे कीरइ तो कीस न मंगलग्गहणं ?॥ १०१५॥

नन्वादौ '[3]आभिणिवोहियनाणं' इत्यादिना मङ्गलं कृतमेव, तत् किमिति भूयस्तदारम्भः ?। अथ कृतमपि पुनः कर्तव्यं तत्, तर्हि प्रत्यध्ययनम्, प्रत्युद्देशकम्, प्रतिसूत्रं च द्वारे द्वारे उपक्रमादिके किमिति न मङ्गलग्रहणं क्रियते ? इति ॥ १०१५ ॥

अत्र कश्चिदाचार्यदेशीयोऽन्तरभाषया प्रतिविधानमाह—

[4]णु मज्झम्मि वि मंगलमाइट्ठं तं च मज्झमेयं ति । सत्थमणारद्धं चिय एयं कत्तोच्चयं मज्झं ? ॥१०१६॥

ननु शास्त्रस्यादौ, मध्ये, अवसाने च मङ्गलं कर्तव्यत्वेन पूर्वसूरिभिरादिष्टम्, तत्रादौ विहितं मङ्ग[5]लम् । एतच्च शास्त्रस्य मध्यम्, ततो मध्यमङ्गलमत्र कर्तव्यमेव, किमनेन प्रेर्येण ? इति । तदेतदुत्तरमयुक्तमेव, इत्याचार्यो दर्शयति– 'सत्थमित्यादि' नन्वादिमङ्गलार्थं नन्दिरुक्तः, ततोऽनुयोगद्वाराण्यभिहितानि, यत्तु सामायिकाध्ययनलक्षणं शास्त्रं तदनारब्धमेव, तस्याऽद्याप्यक्षरमपि न व्याख्यायते, कौतस्त्यं पुनस्तन्मध्यं, येन मध्यमङ्गलताऽस्य भवेत् ? इति ॥ १०१६ ॥

अत्रा[6]चार्यदेशीय एव शास्त्रस्य मध्यतां समर्थयन्नाह—

[7]चउरणुओगद्दारं जं सत्थं तस्स तेण मज्झमिणं । साहइ मंगलगहणं सत्थस्संगाइं दाराणि ॥ १०१७ ॥

१ गाथा ९७३ । २ ननु मङ्गल कृतमेव किं भूय., अथ कृतमपि कर्तव्यम् । द्वारे द्वारे क्रियते ततः कस्माद् न मङ्गलग्रहणम् ? ॥ १०१५ ॥
३ गाथा ७९ । ४ ननु मध्येऽपि मङ्गलमादिष्टं तच्च मध्यमेतदिति । शास्त्रमनारब्धमेवैतत् कौतस्त्यं मध्यम् ? ॥ १०१६ ॥ ५ क ग 'लमेव त' ।
६ घ छ 'आचा' । ७ चतुरनुयोगद्वार यत् शास्त्रं तस्य तेन मध्यमिदम् । कथयति मङ्गलग्रहणं शास्त्रस्याङ्गानि द्वाराणि ॥ १०१७ ॥

अत्रोत्तरमाह—

एवं तु दव्वतित्थं भावे दुक्खं हियं लभइ जीवो । मिच्छत्त-ऽन्नाणा-ऽविरइ-विसयसुहभावणाणुगओ ॥ १०४३ ॥
पडिवण्णो उण कम्माणुभावओ भावओ परमसुद्धं। किह मोच्छिइ जाणंतो परमहियं दुल्लहं च पुणो ॥१०४४॥

सत्यम्, द्रव्यतीर्थमेवमेवेष्यते यथैव त्वं ब्रूषे, तस्य सुखमाप्यत्वात्, सुखेनैव च मुच्यमानत्वादिति। भावतीर्थं तु नैवम्, तस्य मोक्षहेतुत्वेन जीवानां परमहितत्वात्। यच्च मोक्षहेतुत्वेन हितं, तद् दुःखं लभते जीवः– महता कष्टेन तत् जीवः प्राप्नोतीत्यर्थः। कथंभूतो यस्मादेष जीवः ?, इत्याह– 'मिच्छत्तेत्यादि' यस्मादनादिकालालीनमिथ्यात्वा-ऽज्ञाना-ऽविरति-विषयसुखभावनानुगतो जीवः, तस्मादित्थंभूतस्य जीवस्याऽनन्तसंसारदुःखव्यवच्छेदहेतुत्वाद् निःसीमनिःश्रेयसावाप्तिनिबन्धनत्वाच्च परमहितं भावतीर्थमतिदुरवापत्वात् पूर्वोक्तकष्टानुष्ठानयुक्तत्वाच्च दुःखावतारम्, तथा, दुरुत्तारं च। कुतः ?, इत्याह– 'पडिवण्णो इत्यादि' शुभकर्मपरिणत्यनुभावतः पुनः कथमपि परमशुद्धं भावतीर्थं भावतः परमार्थतः प्रतिपन्नो जीवः 'परमहितं दुर्लभं च पुनरपि' एतज्जानन्नपि कथं नु नाम तद् मोक्ष्यति ?– कथं तत उत्तरिष्यति ?– न कथञ्चिदित्यर्थः। अतो दुरुत्तारता तस्येति। किञ्च, सद्वैद्यप्रयुक्तकर्कशक्रियोदाहरणतश्च भावतीर्थस्य दुःखावतारो-त्तारता भावनीया ॥ १०४३ ॥ १०४४ ॥

कथम् ?, इत्याह—

अइकक्खडं व किरियं रोगी दुक्खं पवज्जए पढमं। पडिवन्नो रोगक्खयमिच्छंतो मुंचए दुःखं ॥१०४५॥
इय कम्मवाहिगहिओ संजमकिरियं पवज्जए दुक्खं। पडिवन्नो कम्मक्खयमिच्छंतो मुंचए दुक्खं ॥१०४६॥

गाथाद्वयमपि सुबोधम् ॥ १०४५ ॥ १०४६ ॥

---

१ एवं तु द्रव्यतीर्थं भावे दु खं हितं लभते जीव॰। मिथ्यात्वा-ऽज्ञाना-ऽविरति-विषयसुखभावनानुगत॰ ॥ १०४३ ॥
प्रतिपन्नः पुनः कर्मानुभावतो भावतः परमशुद्धम्। कथ मोक्ष्यति जानन् परमहितं दुर्लभ च पुन॰ ॥ १०४४ ॥

२ अतिकर्कशां वा क्रियां रोगी दुःखं प्रपद्यते प्रथमम्। प्रतिपन्नो रोगक्षयमिच्छन् मुञ्चते दुःखम् ॥ १०४५ ॥
इति कर्मव्याधिगृहीत, सयमक्रियां प्रपद्यते दुःखम्। प्रतिपन्न, कर्मक्षयमिच्छन् मुञ्चते दुःखम् ॥ १०४६ ॥

'[1]आभिणिवोहियनाणं' इत्यादिना यदादौ मङ्गलं कृतम्, यच्च 'सर्वमपि शास्त्रमेतद् मङ्गलात्मकमेवेत्युक्तम्, यदपि च शिष्यो मङ्गलत्रयमतिपरिग्रहं कारितः, तदेतत् सर्वमावश्यकस्य कृतम्। इदं तु यस्याऽऽरम्भे प्रस्तुतं मङ्गलं क्रियमाणमास्ते, तद् नावश्यकमात्रम्, किन्तु सर्वेषामपि सिद्धान्तशास्त्राणां योऽयमनुयोगस्तत्संबद्धा येयमुपोद्घातनिर्युक्तिः, तल्लक्षणं यद् वस्तुतोऽन्यत् शास्त्रं तत्मारम्भ एवाऽयम्। तस्य चोपोद्घातनिर्युक्तिशास्त्रस्य सकलसिद्धान्तव्यापकत्वेन महार्थत्वादविघ्नसंपादनायेदं मङ्गलमिति ॥ १०२० ॥

आह– कुतः पुनरेतदवसीयते, यत्सर्वानुयोगनिर्युक्तिशास्त्रप्रारम्भोऽयम्?, इत्याह—

[2]देसकालियाइनिज्जुत्तिगहणओ भणियमुपरि वा जं च। सेसेसु वि अज्झयणेसु होइ एसेव निज्जुत्ती ॥१०२१॥

'[3]आवस्सयस्स दसकालियस्स तह उत्तरज्झमायारे' इत्याद्यनन्तरवक्ष्यमाणग्रन्थे यद् दशकालिकादिनिर्युक्तिग्रहणं करिष्यति तस्माद्, यदि वा यदुपरिष्टादिहैवाग्रे वक्ष्यति– शेषेष्वपि चतुर्विंशतिस्तवादिषु निःशेषसिद्धान्तगतेषु चाध्ययनेष्वेषैवोपोद्घातनिर्युक्तिर्भवतीति। एतस्माच्चैतज्ज्ञायते, यत्सर्वानुयोगनिर्युक्तिशास्त्रारम्भोऽयमिति ॥ १०२१ ॥

अत्राप्याह प्रेरकः—

[4]सामाइयवक्खाणे दसालियाईण कोऽहिगारोऽयं। जं पायमुवग्घाओ तेसिं सामन्न एवायं ॥ १०२२ ॥

इह तेसिं तम्मि गए वीसुं वीसुं विसेसमित्तोऽयं। घिच्छिइ सुहं लहुं चिय तग्गहणं लाघवत्थमओ ॥१०२३॥

ननु सामायिकाध्ययनस्येह व्याख्याने प्रस्तुते को हि दशकालिकादीनां ग्रहणेऽवसरः?। अत्रोच्यते– यद् यस्मादयमुपोद्घातः प्रायस्तेषामपि दशकालिकादीनां सामान्य एव– समानवक्तव्यतारूप एव। अत उपोद्घातसामान्यात् तेषामपीह ग्रहणम्। प्रायोग्रहणात् सामायिकस्य तीर्थकराद् निर्गमः, दशकालिकस्य शय्यंभवात्, उत्तराध्ययनानां तीर्थकरादिनानामहर्षिभ्यो निर्गम इत्यादिविशेषोऽपि कश्चिदल्पो द्रष्टव्यः। ततश्चेह तेषां दशकालिकादीनां तस्मिन् सामान्ये उपोद्घाते गतेऽवगतेऽवबुद्धे यत् पृथक् पृथग् निर्गमादिकं किमपि

1 गाथा ७९। 2 दशकालिकादिनिर्युक्तिग्रहणतो भणितमुपरि वा यच्च। शेषेष्वप्यध्ययनेषु भवत्येषापि निर्युक्तिः ॥ १०२१ ॥ 3 गाथा १०७४।
4 सामायिकव्याख्याने दशकालिकादीना कोऽधिकारोऽयम्। यत्प्राय उपोद्घातस्तेषां सामान्य एवाऽयम् ॥ १०२२ ॥
इह तेषां तस्मिन् गते विष्वग् विष्वग् विशेषमात्रोऽयम्। ग्रहीष्यति सुखं लघ्वेव तद्ग्रहण लाघवार्थमतः ॥ १०२३ ॥

इत्यादिग्रन्थाभिहितं निरुपमं तेषां रूपम् । तथा, श्रीरनन्यसाधारणा तपस्तेजोविभूतिरमीषाम् । तथा, जगत्त्रयातिक्रान्तानुपमगुणग्रामाविर्भावितशरदिन्दुकुन्दविशदं भुवनत्रयव्यापकं यशस्तेषाम् । तथा, समस्तचारित्रमोहनीयक्षयप्रभवत्वादुत्तमक्षमा-मार्दवादिरूपः सर्वोत्कृष्टो धर्मस्तेषाम् । तथा, प्रयतनं प्रयत्नः सर्वेष्वपि हितानुष्ठानेष्वप्रमादः, सोऽपि चारित्रावरणव्यपगमादनुत्तर एव तेषामिति॥१०४८॥

'अणुत्तरपरिक्कमे' इत्येतद् विवृण्वन्नाह—

[2]विरियं परिक्कमो किर परेऽरयो वा जओ तदक्कमणं । सोऽणुत्तरो वरो सिं अणुत्तरपराक्कमा तो ते ॥१०४९॥

पराक्रमः किल वीर्यमभिधीयते । स च भगवतां क्षीणनिःशेषवीर्यान्तरायत्वात् सर्वोऽमर-नरेन्द्रनिवहपराक्रमादनन्तगुणत्वादनुत्तर एव । अनुत्तरः पराक्रमो वीर्यं येषां तेऽनुत्तरपराक्रमाः । अथवा, परेऽरयो भावशत्रवः कषायादयः; 'जउ त्ति' जयः पराभवोऽभिभवनं तदाक्रमणं परेषामाक्रमणमाक्रमः पराक्रमः सोऽनुत्तरो वरोऽमीषाम्, ततोऽनुत्तरपराक्रमास्ते, अतस्तानिति ॥ १०४९ ॥

'अमितज्ञानिनः' इति व्याख्यानयन्नाह—

[3]अमियमणंतं नाणं तं तेसिं अमियणाणिणो तो ते । तं जेण नेयमाणं तं चाणंतं जओ नेयं ॥ १०५० ॥

अनन्तत्वाद् मातुमशक्यममितं केवलज्ञानलक्षणं ज्ञानं तत्तेषां विद्यते, ततोऽमितज्ञानिनस्ते । कथं पुनः केवलज्ञानस्याऽऽनन्त्यमित्याह– तत्केवलज्ञानं येन कारणेन ज्ञेयमानं वर्तते, ज्ञानस्य ज्ञेयानुवर्तित्वात्, तच्च ज्ञेयं सर्वमपि यतोऽनन्तम्, अतः केवलज्ञानस्याऽऽनन्त्यमिति ॥ १०५० ॥

'तिण्णे सुगइगइगए' इत्येतद् व्याख्यानयति—

[4]तिण्णा समइक्कंता भवण्णवं, कं गइं गया तरिउं?।सुगईण गइं पत्ता सुगइगइगया तओ होंति॥१०५१॥

तरन्ति स्म तीर्णा भवार्णवं समतिक्रान्ताः । आह– भवोदधिं तीर्त्वा ततस्ते कां गतिं गताः ?, इत्याह– 'सुगईणेत्यादि' ज्ञानि-

१ गाथा १०२५ । २ वीर्यं पराक्रमः किल परेऽरयो वा जयस्तदाक्रमणम् । सोऽनुत्तरो वर एषामनुत्तरपराक्रमास्ततस्तान् ॥ १०४९ ॥
३ अमितमनन्तं ज्ञानं तत् तेषाममितज्ञानास्ततस्तान् । तद् येन ज्ञेयमानं तच्चाऽनन्तं यतो ज्ञेयम् ॥ १०५० ॥
४ तीर्णाः समतिक्रान्ता भवार्णवं, कां गतिं गतास्तीर्त्वा ? । सुगतीनां गतिं प्राप्ताः सुगतिगतिगतास्ततो भवन्ति ॥ १०५१ ॥

[1]तरिया तरणं तरियव्वं च सिद्धाणि, तारओ पुरिसो । वाहो-डुवाइ तरणं, तरणिज्जं निन्नयाईयं ॥१०२७॥

यद् यस्मात् तीर्यते दुस्तरं वस्तु तेन तस्मिंस्ततो वेत्यतस्तीर्थमुच्यते । तच्च नाम-स्थापना-द्रव्य-भावभेदाच्चतुर्विधम् । तत्र नाम-स्थापने सुगमे । द्रव्ये द्रव्यभूतमप्रधानभूतं सरित्-समुद्रादीनां निरपायः कोऽपि नियतो भागः प्रदेशस्तीर्थमुच्यते । तस्मिंश्च प्रसिद्धे सिद्धे सत्यस्याऽऽपेक्षिकशब्दत्वादेतानि नियमात् सिध्यन्ति । कानि ?, इत्याह– तरिता पुरुषः, तरणं वाहो डुपादि, तरणीयं तु निम्नगादिकमिति ॥ १०२७ ॥

कथं पुनरिदं द्रव्यतीर्थम् ?, इत्याह—

[2]देहाइतारयं जं बज्झमलावणयणाइमत्तं च । णेगंताणच्चंतियफलं च तो दव्वतित्थं तं ॥ १०२८ ॥

यस्मादिदं देहादिकमेव द्रव्यमात्रं तारयति– नद्यादिपरकूलमात्रं नयति, न पुनर्जीवं संसारसमुद्रस्य मोक्षलक्षणं परकूलं प्रापयति, अतोऽप्रधानत्वाद् द्रव्यतीर्थम् । तथा बाह्यमेव मलादिद्रव्यमात्रमपनयति, न त्वन्तरङ्गं प्राणातिपातादिजन्यकर्ममलम्[3] । तथा, अनैकान्तिकफलमेवेदं नद्यादितीर्थम्– कदाचिदनेन नद्यादेस्तरणात्, कदाचित्तु तत्रैव मज्जनात् । तथा, अनात्यन्तिकफलं चेदम्, तथाहि– एकदाऽनेन तीर्णमपि नद्यादिकं पुनरपि च तीर्यत इत्यनात्यन्तिकफलत्वम् । आत्मना वाऽस्य नद्यादितीर्थस्य द्रव्यमात्रत्वेनाऽप्रधानत्वात् सर्वत्र द्रव्यतीर्थत्वं भावनीयमिति ॥ १०२८ ॥

इह केषांचिद् मतमाशङ्क्य परिहरन्नाह—

[4]इह तारणाइफलयं ति ण्हाण-पाणा-ऽवगाहणाईहिं । भवतारयं ति केई तं नो जीवोवघायाओ ॥ १०२९ ॥

सूणंगं पि व तमुदूहलं व न य पुण्हकारणं ण्हाणं । न य जइजोग्गं तं मंडणं व कामंगभावाओ ॥१०३०॥

---

१ तरीता तरणं तरयितव्यं च सिद्धानि, तारकः पुरुष. । वाहो-डुपादि तरणं, तरणीयं निम्नगादिकम् ॥ १०२७ ॥

२ देहादितारकं यद् बाह्यमलापनयनादिमात्रं च । नैकान्ता-ऽऽत्यन्तिकफलं च ततो द्रव्यतीर्थं तत् ॥ १०२८ ॥ ३ क. ग. 'लमनै'।

४ इह तारणादिफलकमिति स्नान-पाना-ऽवगाहनादिभिः । भवतारकमिति केचित् तन्नो जीवोपघातात् ॥ १०२९ ॥

सूनाङ्गमपि वा तदुदूखलमिव न च पुण्यकारणं स्नानम् । न च यतियोग्यं तद् मण्डनमिव कामाङ्गभावात् ॥ १०३० ॥

अथ "वंदे' इत्यस्यार्थं, वक्ष्यमाणमहावीरनमस्कारप्रस्तावनां चाह—

[2]वंदेऽभिवादयेऽभित्थुणामि वा ते तिलोगमंगल्ले। सामण्णवंदणमिणं तित्थयरत्ताविसिट्ठाणं ॥ १०५४ ॥

पत्तेयवंदणमिओ संपइ तित्थाहिवस्स वीरस्स। सुयनाणत्थप्पभवो स विसेसेणोवगारि त्ति ॥ १०५५ ॥

गाथाद्वयमपि प्रसिद्धार्थम्, नवरं तीर्थकरत्वेनाऽविशिष्टानामभिन्नानामृषभादीनां समस्ततीर्थकराणामिदं वन्दनमुक्तम्। 'सुयनाणत्थप्पभवो त्ति' समस्तस्यापि श्रुतज्ञानस्य योऽर्थस्तस्य प्रभवो हेतुरिति ॥ १०५४ ॥ १०५५ ॥

प्रकारान्तरेणापि महावीरनमस्कारस्य प्रस्तावनामाह—

[3]तुल्लगुणाणं परिसं नमिऊण जह ससामियं नमइ। तह तुल्लगुणे वि जिणे नमिउं तित्थाहिवं नमइ ॥१०५६॥

अथवा, यथा तुल्यगुणानां राजादीनां परिषदं समाजं दृष्ट्वा कोऽपि सामान्येन सर्वेभ्यो नमस्कृत्य पुनर्विशेषतो निकटीभूय स्वस्वामिनं प्रणमति, तथा तुल्यगुणांस्तीर्थकरानपि सामान्येन सर्वान् नमस्कृत्य सांप्रतं तीर्थाधिपं महावीरं प्रणमति ॥ इत्येकत्रिंशद्गाथार्थः ॥ १०५६ ॥

कथम्?, इत्याह—

[4]वंदामि महाभागं महामुणिं महायसं महावीरं। अमर-नररायमहियं तित्थयरमिमस्स तित्थस्स ॥१०५७॥

महावीरं वन्द इति योगः। भागः किलाऽचिन्त्या शक्तिः, महान् भागोऽस्येति महाभागो महाप्रभाव इत्यर्थः, तं तथाभूतम्। तथा, मुणति, मनुते, मन्यते वा जगतस्त्रिकालावस्थामिति मुनिः, सर्वज्ञत्वाद् महांश्चासौ मुनिश्च महामुनिः। अथवा, मुनयः साधवस्तेषां महान् प्रधानो महामुनिस्तम्। त्रिभुवनव्यापित्वाद् महद् यशोऽस्येति महायशास्तम्। महावीर इत्यभिधानम्। अथवा, 'शूर वीर विक्रान्तौ' कषायादिमहाशत्रुसैन्यजयाद् महाविक्रान्तो महावीरः। यदिवा, 'ईर गतौ' कियन्क्षिपितकर्मसाध्वपेक्षया विशेषत ईरयति क्षिपति तिरस्करोत्यशेषाण्यपि कर्माणीति वीरः। अथवा, विशेषत ईरयति– शिवपदं प्रति भव्यजन्तून् गमयतीति वीरः। यदिवा,

1 गाथा १०२५। 2 वन्देऽभिवादयेऽभिस्तौमि वा तांस्त्रिलोकमङ्गल्यान्। सामान्यवन्दनमिदं तीर्थकरत्वाविशिष्टानाम् ॥ १०५४ ॥ प्रत्येकवन्दनमित सम्प्रति तीर्थाधिपस्य वीरस्य। श्रुतज्ञानार्थप्रभवः स विशेषेणोपकारीति ॥ १०५५ ॥

3 तुल्यगुणानां परिषद नत्वा यथा स्वस्वामिन नमति। तथा तुल्यगुणानपि जिनान् नत्वा तीर्थाधिप नमति ॥ १०५६ ॥

4 वन्दे महाभागं-महामुनिं महायशस महावीरम्। अमर-नरराजमहितं तीर्थकरमस्य तीर्थस्य ॥ १०५७ ॥

गोयमा ! अरहा ताव नियमा तित्थंकरे, तित्थं पुण चाउवन्नो समणसंघो" इति । इह च तीर्थसिद्धौ तारकादयो नियमादाक्षिप्यन्त एव । तत्रेह संघे तीर्थे तद्विशेषभूत एव तारकः साधुः, ज्ञान-दर्शन-चारित्रत्रिकं पुनस्तरणम्, तरणीयं तु भवसमुद्रः । इह च तीर्थतारकादीनां परस्परतोऽन्यता, अनन्यता च विवक्षावशतो बोद्धव्या । तत्र सम्यग्दर्शनादिपरिणामात्मकत्वात् संघस्तीर्थम्, तत्रावतीर्णानामवश्यं भवोदधितरणात् । तद्विशेषभूतत्वात् तदन्तर्गत एव साधुस्तरीता, सम्यग्दर्शनाद्यनुष्ठानात् । साधकतमत्वेन तत्करणरूपतामापन्नं ज्ञानादित्रयं तु तरणम् । तरणीयं त्वौदयिकादिभावपरिणामात्मकः संसारसमुद्र इति ॥ १०३२ ॥

कस्मात् पुनः संघो भावतीर्थम् ?, इत्याह—

[1]जं नाण-दंसण-चरित्तभावओ तव्विवक्खभावाओ । भवभावओ य तारेइ तेण तं भावओ तित्थं ॥१०३३॥

यद् यस्मात् तारयति पारं प्रापयति तेन तत् संघलक्षणं भावतस्तीर्थमिति संबन्धः । कुतस्तारयति ?, इत्याह— तद्विपक्षभावादिति तेषां ज्ञान-दर्शन-चारित्राणां विपक्षोऽज्ञान-मिथ्यात्वाविरमणानि तद्विपक्षस्तल्लक्षणो भावो जीवपरिणामस्तद्विपक्षभावस्तस्मात् तारयति । कुतः ?, इत्याह— ज्ञान-दर्शन-चारित्रभावतः— ज्ञानाद्यात्मकत्वादित्यर्थः । यो हि ज्ञानाद्यात्मको भवति सोऽज्ञानादिभावात् परं तारयत्येवेति भावः । न केवलमज्ञानादिभावात् तारयति, तथा, भवभावतश्च तारयति, भवः संसारस्तत्र भवनं भावस्तस्मादित्यर्थः । यस्मात् स्वयं ज्ञानादिभावात्मकः, तथाऽज्ञानादिभावाद् भवभावाच्च भव्यांस्तारयति, तस्मादसौ संघो भावतीर्थमितीह तात्पर्यम्; उक्तं च—

"रागाद्यम्भाः प्रमादव्यसनशतचलद्दीर्घकल्लोलमालः क्रोधेर्ष्यावाडवाग्निर्मृतिजननमहानक्रचक्रौघरौद्रः ।
तृष्णापातालकुम्भो भवजलधिरयं तीर्यते येन तूर्णं तज्ज्ञानादिस्वभावं कथितमिह सुरेन्द्रार्चितैर्भावतीर्थम् ॥ १ ॥"

इति ॥ १०३३ ॥

उपपत्त्यन्तरमाह—

[2]तह कोह-लोह-कम्ममयदाह-तण्हा-मलावणयणाइं । एगंतेणच्चंतं च कुणइ य सुद्धिं भवोघाओ ॥ १०३४ ॥ ॥४७९॥

1 यज्ज्ञान-दर्शन-चारित्रभावतस्तद्विपक्षभावात् । भवभावतश्च तारयति तेन तद् भावतस्तीर्थम् ॥ १०३३ ॥
2 तथा क्रोध-लोभ-कर्ममयदाह-तृष्णा-मलापनयनानि । एकान्तेनाऽत्यन्तं च करोति शुद्धिं भवौघात् ॥ १०३४ ॥

अनुत्तरज्ञान-दर्शनादिगुणानां गणं धारयन्तीति गणधरास्तानेकादशापि गौतमादीन् वन्दे । कथंभूतान्?, इत्याह– प्रकर्षेण, प्रधानाः, आदौ वा वाचकाः प्रवाचकाः प्रवचनस्याऽऽगमस्य । एवं तावद् मूलगणधरवन्दनं कृतम् । तथा, सर्वं निरवशेषं, गणधरा जम्बू-प्रभव-शय्यंभवादयः शेषा आचार्यास्तेषां परम्परया प्रवाहो वंशस्तम् । तथा, वाचका उपाध्यायास्तेषां वंशस्तम् । तथा, प्रवचनं चागमं वन्दे ॥ इति निर्युक्तिगाथार्थः ॥ १०६२ ॥

अथ भाष्यम्—

पुज्जो जहत्थवत्ता सुयवत्तारो तहा गणहरा वि । पुज्जा पवायगा पवयणस्स ते बारसंगस्स ॥ १०६३ ॥
जह वा रायाणत्तं रायनिउत्तपणओ सुहं लहइ । तह जिणवरिंदविहियं गणहरपणओ सुहं लहइ ॥१०६४॥
जह मूलसुयप्पभवा पुज्जा जिण-गणहरा तहा जेहिं । तदुभयमाणीयमिदं तेसिं वंसो किह न पुज्जो ? ॥१०६५॥
जिणगणहरुग्गयस्स वि सुयस्स को गहणधरणदाणाइं । कुणमाणो जइ गणहरवायगवंसो न होज्जाहि ? ॥१०६६॥
सीसहिया वत्तारो गणाहिवा गणहरा तयत्थस्स । सुत्तस्सोवज्झाया वंसो तेसिं परंपरओ ॥ १०६७ ॥
पगयं पहाणवयणं पवयणं बारसंगमिह तस्स । जइ वत्तारो पुज्जा तं पि विसेसेण तो पुज्जं ॥ १०६८ ॥

षडपि सुगमार्थाः, नवरं यथाऽर्थस्य वक्ता तीर्थकरः पूज्यः, तथा गणधरा अपि गौतमादयः पूज्याः, यतस्तेऽपि प्रवचनस्य द्वादशाङ्गस्य सूत्रतः प्रवाचका एव; इति तेषामपि नमस्कारः कृतः । अथवा, यथा राज्ञा पृथ्वीपतिनाऽऽज्ञातं तदाज्ञापितमर्थादिकं राजनियुक्तानाममात्यादीनां प्रणतः सुखेनैव लभते, तथा प्रणतिप्रसन्नैर्जिनवरेन्द्रैर्विहितं विस्तीर्णं मङ्गलादिकं गणधरप्रणतः सुखेनैव लभते,

१ पूज्यो यथाऽर्थवक्ता श्रुतवक्तारस्तथा गणधरा अपि । पूज्याः प्रवाचका प्रवचनस्य ते द्वादशाङ्गस्य ॥ १०६३ ॥
यथा वा राज्ञाज्ञातं राजनियुक्तप्रणतः सुखं लभते । तथा जिनवरेन्द्रविहितं गणधरप्रणत सुखं लभते ॥ १०६४ ॥
यथा मूलश्रुतप्रभवा. पूज्या जिन-गणधरास्तथा यै । तदुभयमानीतमिद तेषां वश कथ न पूज्य ? ॥ १०६५ ॥
जिन-गणधरोद्गतस्यापि श्रुतस्य को ग्रहण-धरण-दानादि । कुर्वन् यदि गणधर-वाचकवंशो न भवेत् ? ॥ १०६६ ॥
शिष्यहिता वक्तारो गणाधिपा गणधरास्तदर्थस्य । सूत्रस्योपाध्याया वंशस्तेपा परम्परक ॥ १०६७ ॥
प्रकृतं प्रधानवचन प्रवचनं द्वादशाङ्गमिह तस्य । यदि वक्तार पूज्यास्तदपि विशेषेण तत. पूज्यम् ॥ १०६८ ॥ २ क ग 'तं दापि'।

अहवा सम्मदंसण-नाण-चरित्ताइं तिन्नि जस्सत्था । तं तित्थं पुव्वोइयमिहं अत्थो वत्थुपज्जाओ ॥१०३७॥

अथवा, सम्यग्दर्शनादयस्त्रयोऽर्था यस्य तत् त्र्यर्थम्, अर्थशब्दश्चात्र वस्तुपर्यायः, त्रिवस्तुकमित्यर्थः । तच्च संघ एव, तदव्यतिरिक्तत्वात्, त एव वा सम्यग्दर्शनादयस्त्रयोऽर्थाः समाहृतास्त्र्यर्थम्, संख्यापूर्वत्वात्, स्वार्थत्वाच्च द्विगोरिति ॥ १०३७ ॥

तदेवं संघो भावतस्तीर्थम्, त्रिस्थम्, त्र्यर्थं वा, इति प्रतिपाद्य सांप्रतमिदमेव जैनं तीर्थमभिप्रेतार्थसाधकम्, नान्यत्, इति प्रमाणतः प्रतिपादयन्नाह—

इह सम्मंसद्धाणो-वलद्धि-किरियासभावओ जइणं। तित्थमभिप्पेयफलं सम्मपरिच्छेयकिरिय व्व ॥ १०३८ ॥

इह जैनमेव तीर्थमभिप्रेतार्थसाधकमिति प्रतिज्ञा, सम्यक्श्रद्धानो-पलब्धि-क्रियास्वभावत्वात्— सम्यग्दर्शन-ज्ञान-चारित्रात्मकत्वादित्यर्थः, इह यत् सम्यक्श्रद्धानो-पलब्धि-क्रियात्मकं तदिष्टार्थसाधकं दृष्टम्; यथा सम्यक्परिच्छेदवती रोगापनयनक्रिया, यच्चेष्टार्थसाधकं न भवति, तत् सम्यक्श्रद्धानो-पलब्धि-क्रियात्मकमपि न भवति, यथोन्मत्तप्रयुक्तक्रिया; तथा च शेषतीर्थानि । इदमुक्तं भवति— यथा कस्यचिद् निपुणवैद्यस्य सम्यग् रोगादिस्वरूपं विज्ञाय विशुद्धश्रद्धानवत आतुरस्य सम्यगौषधप्रयोगादिक्रियां कुर्वतोऽभिप्रेतार्थसिद्धिर्जायते । एवं जैनतीर्थादपीति ॥ १०३८ ॥

अन्यतीर्थान्यप्येवंविधानि भविष्यन्ति, न, इत्याह—

नाभिप्पेयफलाइं तयंगवियलत्तओ कुतित्थाइं । वियलनयत्तणओ चिय वियलाइं वियलकिरिय व्व ॥१०३९॥

सुगतादिप्रणीतानि कुतीर्थानि नाभिप्रेतफलानि । कुतः ?, इत्याह— 'तयंगेत्यादि' तस्याभिप्रेतार्थस्याऽङ्गानि तदङ्गानि सम्यग्ज्ञानादीनि कारणानि, तद्विकलत्वात्— तद्रहितत्वात्, नयविकलत्वाच्च विकलानि तानि । सर्वैरेव ह्येकैकांशग्राहिभिर्नयैर्मिलितैः संपूर्णमनन्तधर्मात्मकं वस्तु निश्चीयते, शेषतीर्थानि त्वेक-द्व्यादिनयमात्रमतावलम्बित्वेन समग्रनयविकलान्येवेति तानि नयविकलानि, ततो

१ अथवा सम्यग्दर्शन-ज्ञान-चारित्राणि त्रीणि यस्यार्था । तत् तीर्थं पूर्वोदितमिहाऽर्थो वस्तुपर्याय ॥ १०३७ ॥ २ क. ग 'हमत्थो' ।
३ इह सम्यक्श्रद्धानो-पलब्धि-क्रिया-स्वभावतो जैनम् । तीर्थमभिप्रेतफलं सम्यक्परिच्छेदक्रियेव ॥ १०३८ ॥ ४ क. ग. 'र्थस्य सा' ।
२ नाभिप्रेतफलानि तदङ्गविकलत्वतः कुतीर्थानि । विकलनयत्वत एव विकलानि विकलक्रियेव ॥ १०३९ ॥

अर्थः किमुच्यते ?, इत्याह— श्रुतस्य विषयोऽभिधेयः। तस्माच्चार्थात् कथञ्चिद्भिन्नत्वात् सूत्रं पृथगुच्यते, प्राकृतत्वात् तदेव पृथक्त्वम्। इदं च सूत्रा-ऽर्थलक्षणमुभयं श्रुतज्ञानम्। 'तेसिं ति' तयोः सूत्रा ऽर्थयोः परस्परं [1]नियोजनम्— 'अस्य सूत्रस्याऽयमर्थः' इत्येवं संबन्धनं निर्युक्तिस्तां कीर्तयिष्यामि ॥ १०७१ ॥

अथवा, 'अत्थपुहत्तं' इत्यन्यथा व्याचष्टे—

[2]अत्थस्स व पिहुभावो पुहत्तमत्थस्स वित्थरत्तं ति। इह सुयस्स विसेसणं चिय अत्थपुहत्तं व [4]से सण्णा ॥१०७२॥

अथवा, पृथु सामान्येन विस्तीर्णमुच्यते, तस्य भावः पृथुत्वम्, अर्थस्य पृथुत्वं पृथुभावः, किम् ?, इत्याह— अर्थस्य विस्तरत्वं जीवाद्यर्थविस्तर इति यावत्। एतच्चेह श्रुतविशेषणम्— श्रुतज्ञानस्य कथंभूतस्य ?, अर्थप्रतिपादकेनोपचारादर्थपृथुत्वस्यार्थविस्तररूपस्येत्यर्थः। अथवा, अर्थपृथक्त्वम्, अर्थपृथुत्वं चेति श्रुतज्ञानस्य संज्ञैवेयम्। ततश्चार्थपृथक्त्वसंज्ञितस्य, अर्थपृथुत्वसंज्ञितस्य वा श्रुतज्ञानस्य भगवतो निर्युक्तिं कीर्तयिष्यामीति ॥ १०७२ ॥

अथवा—

[5]अत्थाओ व पुहत्तं जस्स तओ वा पुहत्तओ जस्स। जं वा अत्थेण पिहुं अत्थपुहुत्तं ति तब्भावो ॥१०७३॥

अथवा, अर्थात् पृथक्त्वं कथञ्चिद्भेदो यस्य तदर्थपृथक्त्वम्, स चाऽर्थः पृथक्त्वतः पार्थक्येन भेदेन वर्तते यस्य तदर्थपृथक्त्वम्, अर्थेन वा पृथु विस्तीर्णमर्थपृथु तद्भावोऽर्थपृथोर्भावोऽर्थपृथुत्वम्। अत्र पक्षे भावप्रत्ययान्तस्याप्यर्थपृथुत्वशब्दस्य प्राकृतत्वेन स्वार्थवाचकत्वात् श्रुतज्ञानेन सह सामानाधिकरण्यम्। ततश्च तस्याऽर्थपृथक्त्वस्य, अर्थपृथुत्वस्य वा श्रुतज्ञानस्य भगवतो निर्युक्तिं कीर्तयिष्यामि ॥ इति गाथाचतुष्टयार्थः ॥ १०७३ ॥

किं सर्वस्यापि श्रुतज्ञानस्य निर्युक्तिर्वक्तव्या ?, नैवम्; किं तर्हि—

[6]आवस्सयस्स दसकालियस्स तह उत्तरज्झमायारे। सुयगडे निज्जुत्तिं वोच्छामि तहा दसाणं च ॥१०७४॥

१ क ग 'नियोज'। २ गाथा १०६९। ३ अर्थस्य वा पृथुभावः पृथुत्वमर्थस्य विस्तीर्णत्वमिति। इह श्रुतस्य विशेषणमेवाऽर्थपृथक्त्वं वा तस्य सञ्ज्ञा ॥ १०७२ ॥
४ क ग. 'त्त ति से'। ५ अर्थाद् वा पृथक्त्व यस्य सको वा पृथक्त्वतो यस्य। यद्वाऽर्थेन पृथु अर्थपृथुत्वमिति तद्भाव ॥ १०७३ ॥
६ आवश्यकस्य दशकालिकस्य तथोत्तराध्ययना-ऽऽचारयोः। सूत्रकृते निर्युक्तिं वक्ष्ये तथा दशानां च ॥ १०७४ ॥

इत्यादेस्तैरभिधानतो विषयसुखसिद्धेस्तत्तीर्थस्य सुखावतारता । तथा, कुशास्त्रोक्तनिपुणयुक्तिभिस्तीव्रवासनोत्पादात्, व्रतत्यागे च तैर्महतः संसारदण्डादेः प्रतिपादनात्, तत्समीपगृहीतव्रतस्य दुष्परित्याज्यत्वात् तत्तीर्थस्य दुरुत्तारता । इमां च युक्तिं भाष्यकारः स्वयमेव किञ्चिदाह– 'विसयसुहेत्यादि' गतार्थम् ॥ २ ॥

दुःखावतारं सुखोत्तारमिति तृतीयं बोटिकानां दिगम्बराणाम् । तत्र नाग्न्यादेर्लज्जादिहेतुत्वेन दुरध्यवसेयत्वात् तत्तीर्थस्य दुःखावतारता । अनेषणीयपरिभोग-कषायबाहुल्यादेस्तदसमञ्जसदर्शनात्, नाग्न्यादेश्चातिलज्जनीयत्वेन तत्पराभग्नानां तत्तीर्थस्य सुखोत्तारतेति ॥ ३ ॥

दुःखावतारं दुरुत्तारमिति चरमं चतुर्थं मोक्षफलम् । जैनानां साधूनां राग-द्वेष-कषाये-न्द्रिय-परीषहो-पसर्गादिजयस्य, तथा, अप्रमत्ततया समिति-गुप्ति-शिरोलुञ्चनादिकष्टानुष्ठानस्य दर्शनात् तत्तीर्थस्य दुःखावतारता । सुशास्त्रोक्तनिपुणयुक्तिभिस्तीव्रतरवासनोत्पादनात्, व्रतत्यागे चातिमहतः संसारादिदण्डस्याऽभिधानात् तत्तीर्थस्य दुरुत्तारता ॥ ४ ॥

अन्ये तु सुखोत्तारतां दुरुत्तारतां च सर्वत्र मुक्तिप्राप्तिमाश्रित्य व्याचक्षते– तत्र सरजस्कानां स्वल्पेनैवेश्वरोक्तानुष्ठानेन किल मुक्तिप्राप्त्यभ्युपगमात् सुखोत्तारं तीर्थम्, 'सुखेनैवाऽस्माद् भवार्णवमुत्तरन्ति' इति व्युत्पत्तेः । शाक्यानां तु दुरवापविशिष्टध्यानमार्गाद् योगिज्ञानोत्पत्त्यादिक्रमेण मुक्तिप्राप्त्यभ्युपगमाद् दुःखोत्तारता 'दुःखेनाऽस्मात् संसारमुत्तरन्ति' इति कृत्वा । बोटकानां तु भिक्षाशुद्ध्यादीनां गौणत्वेनाभ्युपगमाद् नाग्न्यलक्षणनिर्ग्रन्थत्वमात्रादेव मुक्त्यभ्युपगमात् सुखोत्तारता । साधूनां तु पूर्वोक्तकष्टानुष्ठानाद् मुक्त्याश्रयणाद् दुरुत्तारता । अवतारपक्षे तु सर्वत्र पूर्वोक्तैव भावना । इत्यलं विस्तरेणेति ॥ १०४० ॥ १०४१ ॥

अत्र प्रेरकः प्राह—

णणु[2] जं दुहावयारं दुक्खोत्तारं च तं दुरहिगम्मं । लोयम्मि पूइयं जं सुहावयारं सुहुत्तारं ॥ १०४२ ॥

ननु यद् दुःखावतारं च दुरुत्तारं च तीर्थं तद् दुरधिगम्यम्, एवंभूतं च जैनतीर्थं भवद्भिः प्रतिपादितम् । एतच्चायुक्तम्, एवंभूततीर्थस्य करणक्रियाविघातित्वेनाऽनिष्टार्थप्रसाधकत्वात्, लोकप्रतीतिबाधितत्वाच्च; तथा चाह– लोके हि यत् सुखावतारं सुखोत्तारं च तीर्थं तत् पूजितं तदेवोपादेयम्, तरणक्रियानुकूल्येनेष्टार्थप्रसाधकत्वात् । तस्मात् प्रथम एव भङ्गः श्रेयान्, इति प्रेरकाभिप्राय इति ॥ १०४२ ॥

१ घ. छ. 'दु खोत्ता'। २ ननु यद् दु खावतार दुःखोत्तारं च तद् दुरधिगमम् । लोके पूजित यत् सुखावतार सुखोत्तारम् ॥ १०४२ ॥

निरुपमसुखाः सिद्धाः, ज्ञाना-ऽनाबाधाप्रकर्षादिति; उपपत्तिमात्रता चेह आविद्वदङ्गनादिलोकप्रतीतस्य साध्य-साधनधर्मानुगतस्य कस्यचिद् दृष्टान्तस्य दर्शयितुमशक्यत्वात्; दृष्टाश्च प्रकृष्टज्ञानाः, राग-द्वेष-क्षुत्-पिपासा-परपरिभवादिभिर्मनोबाधारहिताश्च साधवः परमसुखिनः; अतोऽतिप्रकर्षप्राप्तकेवलज्ञानरूपेण ज्ञानेन, सर्वथा निराबाधत्वेन च सह यद्यपि निरुपमसुखत्वस्येहाऽन्वयो न दृश्यते, तथापि गीतार्थप्रशान्तसाधुसुखित्वदर्शनमात्रेण निरुपमसुखसमृद्धिः सिद्धानां संभाव्यते, इतीहोपपत्तिमात्रतेति ।

अत्र च भाष्यकृता प्रथमं हेतुर्व्याख्यातः, ततो दृष्टान्तः, प्रायेणेत्थमेव प्रयोगोपन्यासात् । निर्युक्तिकृता तु प्रथमं दृष्टान्तम्, ततो हेतुमुपन्यस्यतैतद् दर्शितं यदुत– अस्त्ययमपि न्यायो यत् कचिद्धेतुमनभिधाय दृष्टान्त एवोपदर्श्यते, यथा– गतिपरिणतानां जीव-पुद्गलानां गत्युपष्टम्भको धर्मास्तिकायः, मत्स्यादीनां सलिलवदिति । तथा, कापि हेतुरेव केवलोऽभिधीयते न दृष्टान्तः, यथा– मदीयोऽयमश्वः, प्रागस्मद्दृष्टविशिष्टचिह्नान्यथानुपपत्तेः । तथा चोक्तं निर्युक्तिकारेण—

'[1]जिणवयणं सिद्धं चेव भण्णइ कत्थइ उदाहरणं । आसज्ज उ सोयारं हेऊ वि कहिं च भासेज्जा ॥ १ ॥' इति ।

'एवमित्यादि' एवमुक्तस्वरूपाणि हेतू-दाहरण-कारणार्थानि हेतू-दाहरण-कारणाभिधायकानि यानि पदानि तेषां निवहः संघातो यस्यां निर्युक्तौ सा हेतू-दाहरण-कारणपदनिवहा तां वक्ष्य इति तात्पर्यम् । हेतू-दाहरणपदव्यत्यये तु कारणमभिहितमेव । अथवा, आहरणानि च हेतवश्चाहरण-हेतवस्तेषां कारणं वाचकत्वेन कारणभूतः पदनिवह एव यस्यां सा तथाभूता, तां वक्ष्य इति भावार्थ इति॥१०७७॥१०७८॥

अथोत्तरनिर्युक्तिगाथासंबन्धनार्थमाह—

[2]ईय सव्वसंगहाईए जेणमावासयं अहिगयं च । सामाइयं च तस्स वि तो पढमं तस्स वुच्छामि ॥१०७९॥

यस्मात् '[3]आवासयस्स दसकालियस्स' इत्यादिकस्याऽस्य संग्रहस्यादावावश्यकमुपन्यस्तम्, तथेदमेव च यतोऽत्राधिकृतम्; तस्यापि च यस्मात् सामायिकं प्रथमम्; ततस्तस्यैव प्रथममुपोद्घातनिर्युक्तिं वक्ष्यामि ॥ इति गाथात्रयार्थः ॥ १०७९ ॥

एतदेवाह निर्युक्तिकारः—

---

१ जिनवचनसिद्धमेव भण्यते कुत्रचिदुदाहरणम् । आसाद्य तु श्रोतारं हेतुरपि क्व च भाष्येत ॥ १ ॥

२ इति सर्वसंग्रहादौ येनावश्यकमधिकृतं च । सामायिकं च तस्यापि ततः प्रथमं तस्य वक्ष्यामि ॥ १०७९ ॥ ३ गाथा १०७४ ।

तदेवं तीर्थं प्रतिपाद्य तीर्थकरसिद्धिमाह—

अणुलोम-हेउ-तस्सीलया य जे भावतित्थमेयं तु । कुव्वंति पगासंति य ते तित्थयरा हियत्थकरा ॥१०४७॥

हेतु-ताच्छील्या-ऽऽनुलोम्यतो ये भावतीर्थमेतत् कुर्वन्ति, गुणतः प्रकाशयन्ति च, ते तीर्थकराः । तत्र हेतौ सद्धर्मतीर्थकरणहेतवः "कृञो हेतु-ताच्छील्या-ऽऽनुलोम्येषु" इत्यादिना टप्रत्ययविधानात् तीर्थकराः, यथा यशस्करी विद्येत्यादि । ताच्छील्ये– कृतार्था अपि तीर्थकरनामकर्मोदयतः समग्रप्राणिगणानुकम्पापरतया च सद्धर्मतीर्थदेशकत्वात् तीर्थकराः, भरतादिक्षेत्रे प्रथमनरनाथकुलकरादिवदिति । आनुलोम्ये– स्त्री-पुरुष-बाल-वृद्ध-स्थविरकल्पिक-जिनकल्पिकादीनामनुरूपोत्सर्गा-ऽपवाददेशनयाऽनुलोमसद्धर्मतीर्थकरणात् तीर्थकराः, यथा वचनकर इत्यादि । एवंभूतास्तीर्थकराः, अत एव सर्वासुमतां हितस्य मोक्षार्थस्य करणात् हितार्थकराः । तान्, 'वन्दे' इति क्रियासंबन्धात् सर्वत्र कर्मप्राप्तिः । द्वितीयाबहुवचने च प्राकृतत्वादेकारान्तत्वमिति ॥ १०४७ ॥

'भगवंते' इत्येतद् व्याचष्टे—

ईसरिय-रूव-सिरि-जस-धम्म-पयत्ता मया भगाभिक्खा । ते तेसिमसामण्णा संति जओ तेण भगवंते ॥१०४८॥

इहैश्वर्यादयः षडर्था भगाभिख्या भगसंज्ञास्तावद् मताः प्रोक्ताः । ते च तेषां तीर्थकराणामसामान्या असाधारणाः सन्ति यस्मात्, तेन ते भगवन्तः, तान् वन्दे । तत्र स्वाभाविककर्मक्षयजन्य-सुरनिर्वर्तितचतुस्त्रिंशदतिशयलक्षणं तेषां परमैश्वर्यम् । तथा

"सव्वसुरा जइ रूवं अंगुट्ठपमाणयं विउव्वेज्जा । जिणपायंगुट्ठं पइ न सोहए तं जहिंगालो ॥ १ ॥

गणहर आहार अणुत्तरा य जाव वण चक्कि-वासु-बला । मंडलिया जा हीणा छट्ठाणगया भवे सेसा ॥ २ ॥"

---

१ अनुलोम-हेतु-तच्छीलकाश्च ये भावतीर्थमेतत् तु । कुर्वन्ति प्रकाशयन्ति च तांस्तीर्थकरान् हितार्थकरान् ॥ १०४७ ॥

२ पाणिनीये ॥ ३ । २ । २० ॥ ३ गाथा १०२५ ।

४ ऐश्वर्य-रूप-श्री-यशो-धर्म-प्रयत्ना मता भगाभिख्याः । ते तेषामसामान्याः सन्ति यतस्तेन भगवन्तः ॥ १०४८ ॥

५ सर्वसुरा यदि रूपमङ्गुष्ठप्रमाणकं विकुर्वीरन् । जिनपादाङ्गुष्ठं प्रति न शोभते तद् यथाऽङ्गारः ॥ १ ॥

गणधरा आहारका अनुत्तराश्च यावद् वानाश्चक्रि-वासु-बलाः । मण्डलिका ये हीनाः षड्स्थानगता भवे शेषाः ॥ २ ॥

सूनुः स्वकुलमहासरःसरसिजायमानः शतानीको नाम राजा। तस्य च चेटकराजदुहिता श्रीमहावीरजिनक्रमकमलमधुकरी च भुवनातिशायिरूपा मृगापतिर्नाम पट्टमहादेवी। अन्यदा च शतानीकनरपतिना निजमनःकुविकल्पसंभाविताऽलीकापराधेन स्वनगरीनिवासिनस्तोषितसाकेतपुरप्रतिष्ठितसुरप्रियाभिधानयक्षावाप्तवरस्य निरपराधस्यैवैकस्य चित्रकरस्याऽङ्गुष्ठ-प्रदेशन्योरग्रं छेदितम्। ततस्तेन 'निरर्थकमपमानितोऽहम्' इति गाढं प्रकुपितेनोपायं विमृश्य स्त्रीलोलत्वादतिबलिष्ठत्वाच्चोज्जयिनीनिवासिनश्चण्डप्रद्योतनरनाथस्य चित्रफलके वरलब्धतया यथावस्थितं मृगापतिरूपं प्रदर्शितम्। ततस्तेनातिमदनपरवशेन तद्याचनाय शतानीकान्तिके दूतः प्रेषितः। स च शतानीकेन बाढमपमान्य निर्भर्त्स्य च विसर्जितः। ततस्तद्वचनाकर्णनप्रकुपितश्चण्डप्रद्योतो महाबलैरनेकभटकोटिस्वामिभिर्बद्धमुकुटैश्चतुर्दशभिर्भूपालैः, महता स्वबलेन च सह प्रचलितः शतानीकस्योपरि। तं च तथा महाबलभरेणाऽऽगच्छन्तं श्रुत्वा, आत्मानं चाल्पसामग्रीकं ज्ञात्वा हृदयसङ्कटेन संजातातीसाररोगः पञ्चत्वमुपगतः शतानीकः।

ततो मृगापत्या चिन्तितम्– धिङ् मम रूपम्, यदर्थं मद्भर्तुस्तावद् मरणमागतम्। न चैतावता स्थास्यतीदम्, किन्तु भवकोटीष्वप्यतिदुरवापं श्रीमन्महावीरोपदेशतः सुचिरमनुपालितं मम शीलाभरणमपि विलुप्येत लग्नम्। तस्मादुपायमत्र चिन्तयामि, इति विमृश्यन्त्याः स्वबुद्धिलब्धसम्यगुपायया चण्डप्रद्योतस्यागच्छतो दूरस्थितस्यैव निरूपितः संमुखो दूतः। तेन च गत्वा मृगापतिवचनात् प्रोक्तं यथा– राजन्! मृगापतिर्भणयति यद्– भर्तरि मृते स्वाधीनैव तावत् तवाहम्, परं किन्त्वद्यापि राजा बाल एवाऽयमुदायननामा मत्पुत्रः। ततो यद्यस्य सुस्थमकृत्वैवाऽहं त्वया सह गच्छामि, तदा सीमालराजादिभिरसौ परिभूयते। तस्मादिहैव दूरे स्थितोऽमुं सुस्थं कुरु। अथास्मिन्नकृतेऽप्येवमेवाऽर्वाग् मद्देशसीमायां समेष्यसि, तदा विषादिप्रयोगतो मरिष्यामि।

ततश्चण्डप्रद्योतेनोक्तम्– मयि विद्यमाने न कोऽप्यस्य संमुखमप्यपलोकयिष्यति। ततो दूतेनोक्तम्– नैवम्, यत उच्छीर्षस्थितविषधरस्य योजनशतस्थायी वैद्यः किं कुरुते?, तस्मात् सुस्थं कुरु। तेनोक्तम्– कथं पुनरेतत् संपद्यते?। ततो दूतेनोक्तम्– उज्जयिनीनगरीसत्का बलिष्ठा इष्टका भवन्ति, ताभिः कौशाम्ब्याः प्राकारं कारय। उज्जयिन्याश्चातिदूरे कौशाम्बी, ततो गन्त्र्यादिवाहनैरिष्टका आनेतुं न शक्यन्ते। अतः पदातिपुरुषप्राचुर्याच्चण्डप्रद्योतेन तान् परम्परया व्यवस्थाप्य हस्ताद् हस्तसंचारेणेष्टका आनाय्य कारितः कौशाम्ब्याः प्राकारः। ततो मृगापत्या प्रोक्तम्– धान्य-जल-तृणादिकं यथा नगरीमध्ये प्रचुरं भवति तथा कारय। ततो रागान्धत्वेन नष्टबुद्धिना तेन सर्वं तत् तथैव कारितम्। ततो रोधकसज्जायां तस्यां नगर्यां संजातायां व्यभिचरिता मृगापतिश्चण्डप्रद्योतस्य। ततो नगरीद्वारे समायातो विलक्षीभूतस्तिष्ठत्यसौ। ततो मृगापत्या चिन्तितम्– पुत्रराज्योपद्रवव्यतिकरे निश्चिन्ता संजा-

त्वे सति सर्वबाधाविनिर्मुक्तत्वात् परमसुखिनः सुगतयः सिद्धाः, तेषां सुगतीनां सिद्धानां तैर्गम्यमानत्वाद् गतिः सिद्धिलक्षणा, न तु नरकगत्यादिका सुगतिगतिः, तां गताः प्राप्ताः, सुगतिगतिगतास्तानिति ॥१०५१॥

[1]'सिद्धिपहपएसए' इत्येतद् व्याख्यानयन्नाह—

[2]सै च्चिय सुगईण गई सिद्धी सिद्धाण जो पहो तीसे । तद्देसया पहाणा सिद्धिपहपएसया तो ते ॥१०५२॥

सिद्धानां संबन्धिनी येयमनन्तरगाथायां सुगतिगतिरुक्ता, सैवेह सिद्धिरभिप्रेता, तस्याः सिद्धेर्यः पन्था वक्ष्यमाणज्ञान-दर्शन-चारित्रलक्षणः स सिद्धिपथः, तस्य सिद्धिपथस्य यतः प्रधानाः प्रकृष्टा आदौ वा देशकाः प्रदेशकास्ततः सिद्धिपथप्रदेशकास्ते, अतस्तानिति ॥ १०५२ ॥

सिद्धिपथप्रदेशका इत्युक्तम्, तत्र कोऽयं सिद्धिपथः ?, इत्याशङ्क्य भाष्यकार एव तमाह—

[3]सिद्धिपहो उण सम्मत्त-नाण-चरणाइं वक्खमाणाइं । भवहेउविवक्खाओ निदाणपडिकूलकिरिय व्व ॥१०५३॥

सिद्धेस्तु पन्था इहैव वक्ष्यमाणानि सम्यक्त्व-श्रुत-चारित्रसामायिकलक्षणानि सम्यक्त्व-ज्ञान-चारित्राणि । कुतः ?, इत्याह– 'भवेत्यादि' । इदमुक्तं भवति– मुक्तेर्मार्गो मुक्तेः साधकानि सम्यक्त्व ज्ञान-चारित्राणीति प्रतिज्ञा, भवस्य संसारस्य या मिथ्यात्वाऽज्ञाना-ऽविरतिलक्षणो हेतुस्तद्विपक्षत्वात् तद्विघातकत्वात् सम्यक्त्वादीनामिति हेतुः। इह यो यद्धेतुविपक्षस्वभावः स तद्विपक्षस्य साधको दृष्टः, यथा रोगनिदानस्याऽजीर्णादेर्लङ्घनादिका प्रतिपक्षभूता क्रिया नीरोगत्वस्य साधनी, भवहेतुविपक्षभूताश्च सम्यक्त्वादयः, ततो भवविपक्षस्य मोक्षस्य साधका इति । अथवा, अन्यथा प्रयोगः क्रियते– इष्टार्थप्रसाधकमेव सम्यक्त्वादित्रयमिति प्रतिज्ञा, इष्टार्थविघातकहेतुविपक्षत्वादिति हेतुः, इह यो यस्य विघातहेतूनां विपक्षस्वभावः स तस्य साधको दृष्टः, यथा नीरोगताविघातकस्याऽजीर्णादेः प्रतिपक्षभूता लङ्घनादिक्रिया नीरोगतासाधनी, इष्टार्थस्य मोक्षस्य विघातकानां मिथ्यात्वादीनां विपक्षभूताश्च सम्यक्त्वादयः, ततो मोक्षलक्षणस्येष्टार्थस्य साधका इति ॥ १०५३ ॥

---

१ गाथा १०२५ । २ सैव सुगतीनां गतिः सिद्धिः सिद्धानां य. पथस्तस्या । तद्देशका. प्रधानं सिद्धिपथप्रदेशकास्ततस्तान् ॥ १०५२ ॥

३ सिद्धिपथः पुनः सम्यक्त्व-ज्ञान-चरणानि वक्ष्यमाणानि । भवहेतुविपक्षाद् निदानप्रतिकूलक्रियेव ॥ १०५३ ॥

तस्य तद्धेतुकत्वादित्यर्थः। प्रकृते योजयन्नाह– 'स परंपरओ येत्यादि' चकारस्य भिन्नक्रमत्वात् स च समुद्भव उत्पादोऽत्र प्रस्तुते सामायिकनिर्युक्तेः परम्परात आचार्यपारम्पर्यादिति। यतः परम्परकात् किम्?, इत्याह– 'जओ तमागयं ति' यतो जम्बूस्वाम्याद्याचार्यपारम्पर्यात् तत् सामायिकमागतम्, तत एव तन्निर्युक्तिसमुद्भवः। 'इओ तदुवयारो त्ति' इतोऽस्मात् कारणात् सामायिकनिर्युक्तेस्तदुपचार आगतत्वोपचारः क्रियते; आगतशब्दश्चेहोत्पत्तिवचनो बोधवचनो वा मन्तव्यः।

इदमत्र हृदयम्– यस्य वस्तुनो यस्माद् वस्तुनः सकाशात् समुद्भवस्तद् वस्तु तस्माद् वस्तुन आगतमिवागतं व्यपदिश्यते। यथा कार्षापणरूपकादिसमुद्भूतं धान्य-भोजनादि, घटादेः समुद्भूतं रूपादिज्ञानं वा ततः समागतमित्युच्यते। स च समुद्भवोऽत्र सामायिकनिर्युक्तेर्यत आचार्यपारम्पर्यात् तत् सामायिकमागतं तत एव भवति, अत इह सामायिकनिर्युक्तेस्तस्मादाचार्यपारम्पर्यात् तदुपचार आगतत्वोपचारो विधीयते॥ इति गाथाचतुष्टयार्थः॥ १०८४॥

अथ निर्युक्तिशब्दार्थमाह—

[1]निज्जुत्ता ते अत्था जं बद्धा तेण होइ निज्जुत्ती। तहवि य इच्छावेइ विभासिउं सुत्तपरिवाडी॥१०८५॥

निश्चयेन, आधिक्येन, आदौ वा, साधु वा यथा भवत्येवं युक्ताः संबद्धाः सूत्रे निर्युक्ता एव 'जं ति' यद् यस्मात् कारणात् ते प्रसिद्धाः श्रुताभिधेया जीवादयोऽर्था अनया प्रस्तुतानिर्युक्त्या बद्धा निबद्धा व्यवस्थापिता व्याख्याता इति यावत्, तेनेयं निर्युक्तिः, निर्युक्तानां सूत्रे प्रथममेव संबद्धानां सतामर्थानां व्याख्यारूपा योजनं युक्तिः, निर्युक्तयुक्तिरिति प्राप्ते युक्तलक्षणस्य मध्यपदस्य लोपाद् निर्युक्तिः, यथा पद्ममुखी कन्या, इति सूत्रे निर्युक्तानामेवार्थानां व्याख्या निर्युक्तिर्भण्यत इत्यर्थः।

ननु यदि प्रथममेव सूत्रेऽर्थाः संबद्धा एव सन्ति, तर्हि किमिति ते निर्युक्त्या व्याख्यायन्ते?, इत्याह– 'तहवि येत्यादि' यद्यपि सूत्र एवाऽर्थाः संबद्धाः सन्ति तथापि सूत्रे निर्युक्तानप्यर्थान् विभाषितुं व्याख्यातुं सूत्रपरिपाटी सूत्रपद्धतिरेवैषयति प्रेरयति प्रयोजयति। इदमुक्तं भवति– सतोऽप्यर्थानप्रतिबुध्यमाने श्रोतरि तदनुग्रहार्थं गुरुं सूत्रपरिपाट्येव विभाषितुमेषयतीव 'इच्छत इच्छत मां व्याख्यातुम्' इत्येवं प्रयोजयतीत्यर्थः॥ इति निर्युक्तिगाथासंक्षेपार्थः॥ १०८५॥

विस्तरतो व्याख्यातुं भाष्यकारः प्राह—

1 निर्युक्तास्तेऽर्था यद् बद्धास्तेन भवति निर्युक्तिः। तथापि चैषयति विभाषितुं सूत्रपरिपाटी॥ १०८५॥

विशेषतः शिवपदं स्वयमियर्ति गच्छतीति वीरः। अथवा, 'दॄ विदारणे' विदारयति कर्मरिपुसंघट्टमिति वीरः । अनन्यानुभूतमहातपः-श्रिया वा विराजत इति वीरः । अन्तरङ्गमोहमहाबलनिर्दलनार्थमनन्तं तपोवीर्यं व्यापारयतीति वा वीरः । उक्तं च—

"विदारयति यत्कर्म तपसा च विराजते । तपोवीर्येण युक्तश्च तस्माद् वीर इति स्मृतः ॥ १ ॥"

महांश्चासौ वीरश्चेति महावीरस्तम् । तथा, अमर-नराणां राजानः शक्र-चक्रवर्त्यादयस्तैरपि महितः पूजितः, किं पुनः शेषजनैः ?, अतस्तम् । तथा, अस्य वर्तमानतीर्थस्य प्रवर्तकस्तीर्थकरस्तम् । मङ्गल्यम्, महोपकारकं च वन्दे ॥ इति निर्युक्तिगाथार्थः ॥ १०५७ ॥

अथ भाष्यम्—

[1]भागो चिंता सत्ती स महाभागो [2]महप्पभावो त्ति । स महामुणी महंतं जं मुणइ मुणिप्पहाणो वा॥१०५८॥
तिहुयणविक्खायजसो महाजसो नामओ महावीरो । विक्कंतो व कसायाइसत्तुसे[3]नप्पराजयओ ॥ १०५९ ॥
ईरेइ विसेसेणं खिवेइ कम्माइं ग[4]मेयइ सिवं वा । गच्छइ य, तेण वीरो स महं वीरो महावीरो ॥१०६०॥
अमर-नररायमहियं ति पूइयं तेहिं, किमु य सेसेहिं ? । संपइतित्थस्स पहुं मंगल्लं महोवगारिं च ॥१०६१॥

चतस्रोऽप्युक्तार्था एवेति ॥ १०५८ ॥ १०५९ ॥ १०६० ॥ १०६१ ॥

तदेवमर्थप्रणेतुर्मङ्गलार्थं वन्दनं कृतम्, अथ सूत्रकर्त्रादीनामपि तदाह—

[5]एक्कारस वि गणहरे पवायए पवयणस्स वंदामि । सव्वं गणहरवंसं वायगवंसं पवयणं च ॥ १०६२ ॥

---

१ भागोऽचिन्त्या शक्तिः स महाभागो महाप्रभाव इति । स महामुनिर्महान्तं यं जानाति मुनिप्रधानं वा ॥ १०५८ ॥
त्रिभुवनविख्यातयशा महायशा नामतो महावीरः । विक्रान्तो वा कषायादिशत्रुसेनापराजयतः ॥ १०५९ ॥
ईरयति विशेषेण क्षेपयति कर्माणि गमयति शिवं वा । गच्छति च, तेन वीरः स महान् वीरो महावीरः ॥ १०६० ॥
अमर-नरराजमहितमिति पूजितं तैः, किमु च शेषैः ? । संप्रतितीर्थस्य प्रभुं मङ्गल्यं महोपकारिणमिति ॥ १०६१ ॥
२ क ग. 'महाप्प' । ३ क ग 'नपरा' । ४ क. ग 'मइ य सि' ।
५ एकादशापि गणधरान् प्रवाचकान् प्रवचनस्य वन्दे । सर्वं गणधरवंशं वाचकवंशं प्रवचनं च ॥ १०६२ ॥

यथा मङ्खः फलके नानाप्रकारं लिखितमपि वस्तु ग्रन्थतः पठति, अर्थतश्च प्रभाषते– व्याचष्टे, शलाकाङ्गुल्यादिना च बाल-गोपालाङ्गनादिमुग्धप्रबोधनार्थं प्रतिवस्त्वपरजन्माचीर्णं कर्मविपाकादिकं दर्शयति, यथा– अन्यजन्मन्यनया भर्ता साटिकया वञ्चितः, तेनाऽस्या ईदृशो मातङ्गकुलजन्मादिको विपाकः; अनया च भर्तृमित्रे प्राघूर्णके समायाते मुखमोटको दत्त आसीत्; अनया तु सत्यपि विभवे भिक्षाचरेष्वागच्छत्सु सदैव 'नास्ति नास्ति' इत्याद्येवोद्घुष्टम्, तेनेदृश ईदृशश्च दुःखविपाको जात इत्यादि, तथाऽत्रापि श्रोतृ-वैचित्र्यं पश्यन् सर्वानुग्रहप्रवणबुद्धिराचार्यः सूत्रे निर्युक्तानप्यर्थान् निर्युक्त्या विभाषत इति ॥ १०८९ ॥

अथवा, निर्युक्तिगाथोत्तरार्धमन्यथा व्याख्यायते । कथम् ?, इत्याह—

अहवा सुयपरिवाडी सुयोवएसोऽयमेव जदवस्सं । सोयव्वं निस्संकियसुयविणयत्थं सुबोहं पि ॥१०९०॥

अथवा, श्रुतपरिपाटी श्रुतस्य विधिः श्रुतस्योपदेशोऽयमेव यदवश्यं सुबोधमपि श्रुतं निःशङ्कितत्वहेतोर्विनयोपचारार्थं च मुमुक्षुभिः श्रोतव्यम् । अत एवंभूता सूत्रपरिपाटी यद्यपि सूत्रे निर्युक्ता एवाऽर्थाः सन्ति, तथापि विभाषितुं व्याख्यानयितुमेपयति प्रयोजयति, इत्येषोऽत्र भावार्थः स्वयमेवाऽवगन्तव्य इति ॥ १०९० ॥

'सूत्रपरिपाटीं' इति पाठान्तरं क्वचित्, तत्राह—

इच्छह विभासिउं मे सुयपरिवाडिं न सुट्ठु बुज्झामि । नातिमई वा सीसो गुरुमिच्छावेइ वोत्तुं जे ॥१०९१॥

'वा' इत्यथवा, नातिशयेन मतिर्यस्याऽसौ नातिमतिर्मन्दमतिः शिष्यो गुरुमाचार्यं 'इच्छावेइ त्ति' एपयति प्रयोजयति वक्तुम् । 'जे' इत्यलङ्कारार्थः । कथं वक्तुमेपयति ?, इत्याह– 'इच्छह विभासिउं मे त्ति' इच्छत इच्छत विभाषितुं मम श्रुतपरिपाटीं सूत्रपद्धतिम्, नाहमेतां सुष्ठु बुध्ये– प्रथममेव निर्युक्तत्वेन सतोऽप्येतदभिधेयानर्थान् मन्दमतित्वाद् भवद्भिरव्याख्यातान् नाहं सम्यगवगच्छामीत्यर्थः ।

अथवा, प्रक्रमादेवेह निर्युक्तिः प्रयोक्त्री विवक्ष्यते । ततश्चेत्थमक्षरयोजना– यद्यपि सूत्रे निर्युक्तत्वेन सन्त एवाऽर्थाः, तथापि तानप्रतिबुध्यमानः श्रोता यदैवं वक्ति– नातिमतिर्मन्दमतिरहं सदर्थामपि सूत्रपरिपाटीं सुष्ठु न बुध्ये सम्यग् नावगच्छामि, अत इच्छत इच्छत प्रभो ! एतां मम विभाषितुमिति । तदित्थं वदति तस्मिन् श्रोतरि निर्युक्तिरेव गुरुं सूत्रपरिपाटीं वक्तुमेपयति प्रयोजयति–

1 अथवा श्रुतपरिपाटी श्रुतोपदेशोऽयमेव यदवश्यम् । श्रोतव्य नि शङ्कितश्रुतविनयार्थं सुबोधमपि ॥ १०९०॥ 2 क ग 'र्थं मु' ।
3 इच्छत विभाषितु मम श्रुतपरिपाटीं न सुष्ठु बुध्ये । नातिमतिर्वा शिष्यो गुरुमेपयति वक्तुम् ॥१०९१॥

इति तेषामपि नमस्कारः । अथ सामान्येन शेषाचार्यो-पाध्यायनमस्कृतौ हेतुमाह– 'जहेत्यादि' यथा मूलश्रुतस्य द्वादशाङ्गीसंवन्धिनोऽर्थस्य सूत्रस्य च प्रभवा हेतवो यथासंख्यं जिना गणधराश्च पूज्याः; तथा यैरिदं तयोर्द्वादशाङ्गीसंवन्धिसूत्रार्थयोरुभयमियतीं कालकलां यावदानीतम्, तेषां शेषाचार्यरूपगणधरो-पाध्यायानां वंशः कथं न पूज्यः ?– अपितु पूज्य एवेति ।

किञ्च, 'जिणेत्यादि'। अथ विशेषतो गणधराणाम्, उपाध्यायानां च नमस्कृतौ हेतुमाह– 'सीसेत्यादि' यथा गणाधिपा गौतमादयः, गणधरास्तु जम्बूस्वाम्यादयः शेषाचार्यास्तदर्थस्य द्वादशाङ्गार्थस्य वक्तारो व्याख्यातारः सन्तः शिष्यवर्गस्य हिताः, तद्धितत्वाच्च नमस्क्रियन्ते; तथा तत्सूत्रस्य वक्तारः पाठयितारः सन्त उपाध्याया अपि शिष्यहिता एव । वंशश्च तेषामेवोपाध्यायानां परम्परकः पारम्पर्यव्यवस्थितः समूहः, अतः शिष्यहेतुत्वात् सोऽपि नमस्क्रियते । शेषं सुबोधमिति ॥ १०६३ ॥ १०६४ ॥ १०६५ – १०६८ ॥

नन्वेषां तीर्थकर-गणधराणां नमस्कारं कृत्वा ततः किं कर्तव्यम् ?, इत्याह—

[1]ते वंदिऊण सिरसा अत्थपुहत्तस्स तेहिं कहियस्स । सुयनाणस्स भगवओ निज्जुत्तिं कित्तयिस्सामि ॥१०६९॥

तान् पूर्वोक्तांस्तीर्थकरादीन् शिरसा, उपलक्षणत्वाद् मनः-कायाभ्यां च वन्दित्वा तैरेव कथितस्य प्ररूपितस्य, अर्थात् कथञ्चिद्भिन्नत्वात् सूत्रं पृथगुच्यते, प्राकृतत्वाच्च पृथगेव च पृथक्त्वम्, अर्थस्तु सूत्राभिधेयः प्रतीत एव, अर्थश्च पृथक्त्वं चार्थपृथक्त्वमिति समाहारद्वन्द्वः, तस्याऽर्थपृथक्त्वस्य सूत्रार्थोभयरूपस्य श्रुतज्ञानस्य भगवतः, सूत्रार्थयोः परस्परं [2]निर्योजनं संवन्धनं निर्युक्तिस्तां कीर्तयिष्यामि ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ १०६९ ॥

विस्तरार्थं तु भाष्यकारः प्राह—

[3]ते तित्थ[4]यराईएऽभिवन्दिउं सुकयमङ्गलायारो । निविग्घमओ वोच्छं पगयमुवग्घायनिज्जुत्तिं ॥१०७०॥

पाठसिद्धा ॥ १०७० ॥

[5]अत्थो सुयस्स विसओ तत्तो भिन्नं सुयं पुहत्तं ति। उभयमिदं सुयनाणं नियोजणं तेसिं निज्जुत्ती ॥१०७१॥

१ तान् वन्दित्वा शिरसाऽर्थ-पृथक्त्वस्य तै कथितस्य । श्रुतज्ञानस्य भगवतो निर्युक्तिं कीर्तयिष्यामि ॥ १०६९ ॥ २ क ग 'नियोज' ।
३ तास्तीर्थकरादीनभिवन्द्य सुकृतमङ्गलाचारः । निर्विघ्नमतो वक्ष्ये प्रकृतामुपोद्घातनिर्युक्तिम् ॥ १०७० ॥ ४ क. ग 'त्थगरा' ।
५ अर्थ श्रुतस्य विषयस्ततो भिन्नं श्रुतं पृथक्त्वमिति । उभयमिदं श्रुतज्ञान निर्योजनं तयोर्निर्युक्तिः ॥ १०७१ ॥

अथोक्तप्रश्नस्यैवोत्तरमाह—

तव-नियम-नाणरुक्खं आरूढो केवली अमियनाणी । तो मुयइ नाणवुट्ठिं भवियजणविबोहणट्ठाए ॥१०९४॥[1]

तं बुद्धिमएण पडेण गणहरा गिण्हिउं निरवसेसं । तित्थयरभासियाइं गंथंति तओ पवयणट्ठा ॥ १०९५ ॥

रूपकमिदं द्रष्टव्यम् । तत्र वृक्षो द्विधा– द्रव्यतः, भावतश्च । द्रव्यतः प्रधानः कल्पवृक्षः, यथा च तमारुह्य कश्चिद् गन्धादिगुणविशिष्टानां कुसुमानां संचयं कृत्वा तदधोभागवर्तिनां तदारोहणासमर्थानां पुरुषाणामनुकम्पया कुसुमानि विसृजति, तेऽपि भूपात-रजोगुण्ठनभिया विमलविस्तीर्णपटेषु प्रतीच्छन्ति, ततो यथोपयोगमुपभुञ्जानाः, परेभ्यश्चोपकुर्वाणाः सुखमाप्नुवन्ति । एवं भाववृक्षेऽपि सर्वमिदमायोज्यम्; यद्यथा– तपश्च नियमश्च ज्ञानं च तान्येव वृक्षस्तम् । तपो बाह्या-ऽभ्यन्तरभेदतो द्वादशधा प्रतीतमेव । इन्द्रिय-नोइन्द्रियसंयमस्तु नियमः । तत्र श्रोत्रादीन्द्रियाणां निग्रह इन्द्रियसंयमः, कषायादीनां तु निग्रहो नोइन्द्रियसंयमः । ज्ञानमिह केवलं संपूर्णं गृह्यते । एतत्त्रयरूपं वृक्षमारूढः । ज्ञानमकेवलरूपमपि स्यात्, तद्व्यवच्छेदार्थमाह– 'केवली' केवलशब्दस्येह संपूर्णवाचकत्वात् केवलं संपूर्णमस्याऽस्तीति केवली । अयमपि श्रुत-क्षायिकसम्यक्त्व-क्षायिकज्ञानभेदात् त्रिविधः, अथवा, श्रुता-ऽवधि-मनःपर्याय-केवलज्ञानभेदाच्चतुर्विधः, तत्र शेषव्यवच्छेदार्थमाह– 'अमितज्ञानी' क्षायिकज्ञानकेवली सर्वज्ञ इत्यर्थः। स चेह प्रक्रमाद् भगवांश्चतुस्त्रिंशदतिशयसंपन्नस्तीर्थकरः । 'तो त्ति' ततो वृक्षाज्ज्ञानरूपकुसुमवृष्टिकारणे कार्योपचाराज्ज्ञानकारणभूतशब्दकुसुमवृष्टिमित्यर्थः । किमर्थम्?, भव्याश्च ते जनाश्च तेषां विबोधनं तदर्थं तन्निमित्तमिति ।

तां च ज्ञानकुसुमवृष्टिं बुद्ध्या निर्वृत्तो बुद्धिमयस्तेन विमलबुद्धिमयेन पटेन गणधरा गौतमादयो ग्रहीतुं गृहीत्वाऽऽदाय निरवशेषां संपूर्णाम्, ततस्तीर्थकरभाषितानि कुसुमकल्पानि भगवदुक्तानि विचित्रप्रधानकुसुममालावद् ग्रथ्नन्ति । किमर्थम्?, प्रगतं, शस्तम्, आदौ वा वचनं प्रवचनं द्वादशाङ्गम्, प्रवक्तीति वा प्रवचनं संघस्तदर्थं तन्निमित्तम् ॥ इति निर्युक्तिगाथाद्वयार्थः ॥ १०९४ ॥ १०९५ ॥

भाष्यकारः प्राह—

रुक्खाइरूवयनिरूवणत्थमिह दव्वरुक्खदिट्ठंतो । जह कोइ विउलवणसंडमज्झयारट्ठियं रम्मं ॥१०९६॥[3]

१ तपो नियम-ज्ञानवृक्षमारूढः केवली अमितज्ञान. । ततो मुञ्चति ज्ञानवृष्टिं भव्यजनविबोधनार्थम् ॥ १०९४ ॥
तां बुद्धिमयेन पटेन गणधरा गृहीत्वा निरवशेषाम् । तीर्थकरभाषितानि ग्रथ्नन्ति ततः प्रवचनार्थम् ॥ १०९५ ॥ २ क ग. 'रतो' ।
३ वृक्षादिरूपकनिरूपणार्थमिह द्रव्यवृक्षदृष्टान्तः । यथा कश्चिद् विपुलवनषण्डमध्यस्थित रम्यम् ॥ १०९६ ॥

कप्पस्स य निज्जुत्तिं ववहारस्स य परमनिउणस्स। सूरियपण्णत्तीए वोच्छं इसिभासियाणं च ॥१०७५॥
एएसिं निज्जुत्तिं वोच्छामि अहं जिणोवएसेण। आहरण-हेउ-कारणपयनिवहमिणं समासेण ॥ १०७६ ॥

आवश्यकस्य, दशवैकालिकस्य, तथा, सूत्रस्य सूचकत्वादेकदेशेन समुदायावगतेश्चोत्तराध्ययना-ऽऽचारयोः, सूत्रकृतविषयां च निर्युक्तिं वक्ष्ये। तथा, दशानां च कल्पस्य च निर्युक्तिं व्यवहारस्य च परमनिपुणस्य, तथा, सूर्यप्रज्ञप्तेर्वक्ष्ये। ऋषिभाषितानां च देवेन्द्रस्तवादीनाम्। एतेषां श्रुतविशेषाणामहं जिनोपदेशेनाहरण-हेतु-कारणपदनिवहामेतां निर्युक्तिं समासेन वक्ष्यामि ॥ इति निर्युक्तिगाथात्रयार्थः ॥ १०७४ ॥ १०७५ ॥ १०७६ ॥

अथाहरण-हेत्वादिस्वरूपं भाष्यकारो व्याख्यातुमाह—

हेऊ[2] अणुगम-वइरेगलक्खणो सज्झवत्थुपज्जाओ। आहरणं दिट्ठंतो कारणमुववत्तिमेत्तं तु ॥ १०७७ ॥
एवं पयाण निवहो हेऊ-दाहरण-कारणत्थाणं। अहवा पयनिवहो च्चिय कारणमाहरण-हेऊणं ॥ १०७८ ॥

'यत्र साधनं तत्र साध्यं भवत्येव' इत्येवंलक्षणः साध्यस्य साधनेन सहाऽन्वयोऽनुगमः, साध्याभावे साधनाभावरूपो व्यतिरेकः, अनुगमश्च व्यतिरेकश्च तौ लक्षणं स्वरूपं यस्य स एवंभूतो हेतुः; यथा– अनित्यत्वादिविशिष्टे शब्दादौ साध्ये कृतकत्वादिः। कथंभूतोऽयम्?, इत्याह– साध्यस्याऽनित्यत्वादिविशिष्टस्य शब्दादिवस्तुनः पर्यायः, अन्यस्य वैयधिकरण्यादिदोषदुष्टत्वेन साध्यसाधकत्वायोगादिति। यत् साधर्म्येण वैधर्म्येण वा साध्यसाधनायोपन्यस्यते तदाहरणमुदाहरणं दृष्टान्त इत्यर्थः। तत्र यो भोक्ता स कर्ता दृष्टः, यथा देवदत्तः, इति साधर्म्योदाहरणम्; यस्तु न कर्ता स भोक्तापि न भवति यथाऽऽकाशम्, इति वैधर्म्योदाहरणम्। कारणं तु यद्यप्यन्यत्र हेतुरेवोच्यते तथापीह हेतोः साक्षात् पृथगेवोपादानात् कारणमुपपत्तिमात्रमेवावगन्तव्यम्। यथा–

१ कल्पस्य च निर्युक्तिं व्यवहारस्य च परमनिपुणस्य। सूर्यप्रज्ञप्तेर्वक्ष्य ऋषिभाषितानां च ॥ १०७५ ॥
एतेषां निर्युक्तिं वक्ष्येऽहं जिनोपदेशेन। आहरण-हेतु-कारणपदनिवहामिमां समासेन ॥ १०७६ ॥

२ हेतुरनुगम-व्यतिरेकलक्षणः साध्यवस्तुपर्यायः। आहरणं दृष्टान्तः कारणमुपपत्तिमात्रं तु ॥ १०७७ ॥
एवं पदानां निवहो हेतू-दाहरण-कारणार्थानाम्। अथवा पदनिवह एव कारणमाहरण-हेतूनाम् ॥ १०७८ ॥

नेगंतेण कयत्थो जेणोदिन्नं जिणिन्दनामं से । तदवंझप्फलं तस्स य खवणोवाओऽयमेव जओ ॥११०३॥
जं व कयत्थस्स वि से अणुवकयपरोवगारिसाभव्वं । परमहियदेसयत्तं भासयसाभव्वमिव रविणो ॥११०४॥
किं व कमलेसु राओ रविणो बोहेइ जेण सो ताइं। कुमुएसु व से दोसो जं न विबुज्झंति से ताइं ?॥११०५॥
जं बोह-मउलणाइं सूरकरामरिसओ समाणाओ । कमण-कुमुयाण तो तं साभव्वं तस्स तेसिं च ॥११०६॥
जह वोलूगाईणं पगासधम्मा वि सो सदोसेणं । उइओ वि तमोरूवो एवमभव्वाण जिणसूरो ॥ ११०७ ॥
सज्झं तिगिच्छमाणो रोगं रागी न भण्णए वेज्जो । मुणमाणो य असज्झं निसेहयंतो जह अदोसो ॥११०८॥
तह भव्वकम्मरोगं नासंतो रागवं न जिणवेज्जो । न य दोसी अभव्वासज्झकम्मरोगं निसेहंतो ॥११०९॥
मोत्तुमजोग्गं जोग्गे दलिए रूवं करेइ रूयारो । न य राग[2]दोसिल्लो तहेव जोग्गे विबोहंतो ॥ १११० ॥

सर्वा अपि सुगमाः, नवरं नैकान्तेन तीर्थकरः कृतार्थः, येन तीर्थकरनाम 'से' तस्योदीर्णम्, तच्चाऽवन्ध्यफलम्, इति नाऽवेदितं क्षीयते । तत्क्षपणोपायश्च यस्मादयमेव धर्मकथनादिकः, ततः कथयतीति । किञ्च, कृतार्थत्वे सत्यपि रवेर्भासकस्वाभाव्यमिव यद् यस्मात् 'से' तस्य भगवतस्तीर्थकरस्य कृतार्थस्यापि यदिदं परमहितदेशकत्वं तदनुपकृतोपकारिणः स्वभावोऽनुपकृतोपकारिस्वभावस्तस्य भावोऽनुपकृतोपकारिस्वाभाव्यं, तस्मात् कथयति । कृतार्थस्याऽप्यनुपकृतोपकारिणो भगवतः परोपदेशदातृत्वं स्वभावत एव, इत्यतस्तत्स्वाभाव्यात् कथयतीति तात्पर्यमिति ।

१ नैकान्तेन कृतार्थो येनोदीर्णं जिनेन्द्रनाम तस्य । तदवन्ध्यफलं तस्य च क्षपणोपायोऽयमेव यत ॥ ११०३ ॥
यद्वा कृतार्थस्यापि तस्यानुपकृतपरोपकारिस्वाभाव्यम् । परमहितदेशकत्वं भासकस्वाभाव्यमिव रवेः ॥ ११०४ ॥
किं वा कमलेषु रागो रवेर्बोधयति येन स तानि । कुमुदेषु वा तस्य दोषो यद् न विबुध्यन्ते तस्य तानि ? ॥ ११०५ ॥
न बोध-मुकुलने सूरकरामर्शत समानात् । कमल कुमुदानां ततस्तत् स्वाभाव्य तस्य तेषां च ॥ ११०६ ॥
यथा वोलूकादीनां प्रकाशधर्माऽपि स स्वदोषेण । उदितोऽपि तमोरूप एवमभव्यानां जिनसूर ॥ ११०७ ॥
साध्य चिकित्सन् रोग रागी न भण्यते वैद्य । जानश्चासाध्यमनिषेधन् यथाऽदोष ॥ ११०८ ॥
तथा भव्यकर्मरोग नाशयन् रागवान् न जिनवैद्य । न च दोष्यभव्यासाध्यकर्मरोगमनिषेधन् ॥ ११०९ ॥
मोक्तुमयोग्यं योग्ये दलिके रूप करोति रूपकार. । न च राग-दोषवास्तथैव योग्यान् विबोधन् ॥ १११० ॥ २ घ छ 'दोसेल्लो' ।

सामाइयनिज्जुत्तिं वोच्छं उवएसियं गुरुजणेणं । आयरियपरंपरएण आगयं आणुपुव्वीए ॥ १०८० ॥

सामायिकस्य निर्युक्तिः सामायिकनिर्युक्तिः, तां वक्ष्ये । कथंभूताम् ?, उपदेशितामादौ तीर्थकर-गणधरलक्षणेन गुरुजनेन, पुनरुपदेशकालादारभ्याचार्यपारंपर्येणाऽऽयाताम् । कथम् ?, आनुपूर्व्या परिपाट्या– जम्बूस्वामिनः प्रभवेनाऽऽनीता, ततः शय्यंभवादिभिः । अथवा, जिन-गणधरेभ्य आरभ्याऽऽचार्यपरम्परागतां पश्चात् स्वकीयेनैवाचार्यो-पाध्यायरूपेण गुरुजनेनोपदिष्टाम् ॥ इति निर्युक्तिगाथार्थः ॥ १०८० ॥

'गुरुजणेणं' इत्यस्यार्थमाह भाष्यकारः—

[2]जिण-गणहरगुरुदेसियमायरियपरंपरागयं तत्तो । आयं व परंपरया पच्छा सयगुरुजणोवदिट्ठं ॥१०८१॥

जिन-गणधरलक्षणेन गुरुजनेन देशितम्, ततो जम्बूस्वाम्याद्याचार्यपारम्पर्येणाऽऽगताम्; अथवा, जिन-गणधरेभ्य आरभ्य जम्बूस्वाम्याद्याचार्यपरम्परयाऽऽगतां सतीं पश्चात् स्वकेनाऽऽत्मीयेनैव वर्तमानाचार्यो-पाध्यायरूपेण गुरुजनेनोपदिष्टां 'सामायिकोपोद्घातनिर्युक्तिं वक्ष्यामि' इति प्रक्रम इति ॥ १०८१ ॥

'परंपरएण' इत्यस्य भावार्थमाह—

[4]उज्जेणीओ नीया जहिट्टगाओ पुरा परंपरया । पुरिसेहिं कोसंबिं तहागएयं परंपरया ॥ १०८२ ॥

यथोज्जयिन्या नगर्याः पुरा पूर्वं चण्डप्रद्योतनरपतिपुरुषैर्बद्धपङ्क्तिभिः परम्परया संचारयद्भिरिष्टकाः प्राकारकरणहेतोः कौशाम्बीं नगरीं नीताः, तथैवेयमपि निर्युक्तिराचार्यपरम्परयाऽऽगता । इत्यक्षरार्थः । भावार्थस्तु कथानकगम्यः । तच्चाऽऽवश्यकवृत्तितो विस्तरतोऽवसेयम् । संक्षेपतस्तु प्रकृतोपयोगि किञ्चिदत्रापि लिख्यते; तद्यथा—

अत्रैव भरतक्षेत्रे यमुनानदीकूले पूर्वदिग्वधूकण्ठनिवेशितमुक्ताफलकण्ठिकेव कौशाम्बी नाम नगरी । तत्र च सहस्रानीकराज-

---

1 सामायिकनिर्युक्तिं वक्ष्य उपदेशितां गुरुजनेन । आचार्यपरम्परकेणाऽऽगतामानुपूर्व्या ॥ १०८० ॥ 2 गाथा १०८० ।
3 जिन-गणधरगुरुदेशितामाचार्यपरम्परागतां तत. । आगतां वा परम्परया पश्चात् स्वकगुरुजनोपदिष्टाम् ॥ १०८१ ॥
4 उज्जयिनीतो नीता यथेष्टकाः पुरा परम्परया । पुरुषैः कौशाम्बीं यथागतेयं परम्परया ॥ १०८२ ॥

मुत्कलं भगवता तीर्थकरेणोक्तं वचनवृन्दं मुत्कलकुसुमनिकुरम्बमिव ग्रथितं सूत्रीकृतं सद् ग्रहीतुं वाऽऽदातुं सुखं भवति। इदमुक्तं भवति– पद-वाक्य-प्रकरणा-ऽध्याय-प्राभृतादिनियतक्रमस्थापितं जिनवचनमयत्नत एव ग्रहीतुं शक्यम्– 'एतावदस्य गृहीतम्', 'एतावच्चाद्यापि पुरस्ताद् ग्रहीतव्यम्' इत्यादिविवक्षया ग्रथितं सत् सुखेनैव ग्रहीतुं शक्यमित्यर्थः। तथा, गुणनं च धारणा च गुणन-धारणे, ते अपि ग्रथिते सूत्रे सुखं भवतः। तत्र गुणनं परावर्तनमभ्यासः, धारणा त्वविच्युतिरविस्मृतिः। तथा, दातुं प्रष्टुं च सुखमेव भवति। तत्र दानं शिष्येभ्योऽतिसर्जनम्, प्रश्नस्तु संशयापन्नस्य निःसंशयार्थं गुरुप्रच्छनम्। एतैः कारणैः कृतं रचितं गणधरैः। किं तत्?, इत्याह– 'जीयं ति' जीवितं श्रुतं द्वादशाङ्गम्। अयमत्राभिप्रायः– यथा जीवस्य जीवितमात्रं न कदाचिद् व्यवच्छिद्यते, तथाऽव्यवच्छित्तिनयाभिप्रायतः श्रुतमपि न कदाचिद् व्यवच्छिद्यते। अतो जीवितमिव जीवितं श्रुतमुच्यते, तद्गणधरैः सुखग्रहणादिकारणेभ्यः कृतम्। अथवा, न सुखादिकारणेभ्य एव, किं तर्हि?, 'जीयं ति' जीवितं मर्यादा, ततश्च गणधराणां जीवितं धर्मो मर्यादैवेयं यदुत– तन्नामकर्मोदयतस्तत्स्वाभाव्यात् कर्तव्यमेव तैः श्रुतविरचनम्। अथवा, 'जीयं ति' जीवितमाचरितम्, कल्प एवाऽयं सर्वगणधराणां यत्– तैः संदर्भणीयमेव श्रुतम्। अतः समस्तगणधरैरेतस्मादपि हेतोः कृतं श्रुतं 'इदम्' इति शेषः॥ इति निर्युक्तिगाथार्थः ॥१११३॥

अत्र भाष्यम्—

मुक्ककुसुमाणं गहणाइयाइं जह दुक्करं करेउं जे। गुच्छाणं तु सुहयरं तहेव जिणवयणकुसुमाणं ॥१११४॥
पय-वक्क-पगरण-ज्झाय-पाहुडाइनियतक्कमपमाणं। तदणुसरता सुहं चिय घेप्पइ गहियं इदं गेज्झं ॥१११५॥
एवं गुणणं धरणं दाणं पुच्छा य तदणुसारेणं। होइ सुहं जीयं पि य कायव्वमिदं जओऽवस्सं ॥१११६॥
सव्वेहिं गणहरेहिं जीयं ति सुयं जओ न वोच्छिन्नं। गणहरमज्जाया वा जीयं सव्वाणुचिन्नं वा ॥१११७॥

यथा मुत्कानां मुत्कलानां कुसुमानां ग्रहणादीनि कर्तुं दुष्कराणि, ग्रथितानां तु सुकराणि, तथा जिनवचनकुसुमानामपि द्रष्टव्यम्। अतो गणधरास्तानि ग्रथ्नन्ति। 'अज्झाय त्ति' अध्ययनम्, प्राभृतं पूर्वान्तर्गतः श्रुतविशेषः। 'गहियं इदं गेज्झं ति' एतावदस्य

१ मुत्ककुसुमानां ग्रहणादिकानि यथा दुष्कराणि कर्तुम्। गुच्छाना तु सुखकरं तथैव जिनवचनकुसुमानाम् ॥ १११४ ॥
पद-वाक्य-प्रकरणा-ऽध्याय-प्राभृतादिनियतक्रमप्रमाणम्। तदनुसरता सुखमेव गृह्यते गृहीतमिद ग्राह्यम् ॥ १११५ ॥
एव गुणन धरण दानं पृच्छा च तदनुसारेण। भवति सुखं जीवितमित्यपि च कर्तव्यमिद यतोऽवश्यम् ॥ १११६ ॥
सर्वैर्गणधरैर्जीवितमिति श्रुत यतो न व्यवच्छिन्नम्। गणधरमर्यादा वा जीवितं सर्वानुचीर्णं वा ॥ १११७ ॥

ताऽहं तावत्, ततो धन्यास्ते ग्राम-नगरादिप्रदेशा येषु भगवान् महावीरो विचरति; धन्यश्च स एव लोको यस्तत्पादरजोरञ्जितभालतलः सततं तदन्तिकोपासीनस्तद्वचःपीयूषवृष्टिभिर्निर्वाप्यमानः कालं निर्वाहयति; तद् यद्यत्र कथमपि भगवान् समागच्छति, ततोऽवलोकितातिदुरन्तसंसारवैरस्याऽहमप्येतत् करोमि, प्रव्रज्यां चाऽभ्युपगच्छामि। एतच्च तदाकूतं विज्ञाय समागतस्तत्र भगवान्। मृगापतिश्चण्डप्रद्योतश्च तत्र वन्दनार्थमुपगतः। धर्मकथावसाने च मृगापत्या व्रतग्रहणार्थं चण्डप्रद्योतो मुत्कलापितः। तेनापि भगवल्लज्जया तस्याश्च सदेव-मर्त्या-ऽसुरायाः परिषदो लज्जमानेन सा मुत्कलिता, प्रव्राजिता च।

तदेवं यथोज्जयिन्याः पुरुषपरम्परया कौशाम्ब्यामिष्टकाः समायाताः, तथेयमपि निर्युक्तिराचार्यपरम्परयाऽत्र समायाता, केवलमिष्टकोदाहरणे द्रव्यपरम्परकः, प्रस्तुतस्तु भावपरम्परक इति ॥ १०८२ ॥

अत्र प्रेरकः प्राह—

दव्वस्स[1] परंपरओ जुत्तो भावसुयसंकमो कत्तो ?। सद्दो वि नागओऽयं स एव जिण-गणहरुच्चरिओ ॥१०८३॥

ननु द्रव्यस्येष्टकादेः पुरुषपारम्पर्येणागमनरूपः परम्परको युक्तः, निर्युक्तेस्तु भावश्रुतरूपायाः संक्रमः कुतः ?– न घटत एवेत्यर्थः, भावश्रुतस्य जीवपर्यायत्वात्, पर्यायस्य च वस्त्वन्तरसंक्रमायोगात्। अथ ब्रूयात्– भावश्रुतकारणस्य शब्दात्मकस्य द्रव्यश्रुतस्येत्थमागमनसंभवाद् भावश्रुतेऽप्युपचारादागतव्यपदेशः क्रियते। एतदप्ययुक्तम्, यतः शब्दोऽपि य आदौ जिन-गणधरैरुच्चारितः, न स एवायमत्राऽऽयातः, तस्योच्चारणानन्तरमेवोपरमात्; इति कुतस्तमप्याश्रित्याऽऽगतव्यपदेशः ? इति ॥ १०८३ ॥

अत्र प्रतिविधानमाह—

आगयमिवागयं[2] तं तत्तो जत्तो समुब्भवो जस्स। स परंपरओ य जओ तमागयमिओ तदुवयारो ॥१०८४॥

'जत्तो त्ति' यतो यस्माद् रूपकादेर्घटादेर्वा सकाशाद् यस्य भोजनादे रूपादिविज्ञानस्य वा समुद्भव उत्पत्तिः 'तं ति' तद् भोजनादिकं रूपादिज्ञानं वा वस्तु 'तत्तो त्ति' ततो रूपकादेर्घटादेर्वा सकाशादागतमिवाऽऽगतमुच्यते, हिमवतः समागतगङ्गाप्रवाहस्येव

१ द्रव्यस्य परम्परको युक्तो भावश्रुतसंक्रमः कुतः ?। शब्दोऽपि नागतोऽयं स एव जिन-गणधरोच्चारित ॥ १०८३ ॥
२ आगतमिवागत तत् ततो यत समुद्भवो यस्य। स परम्परातश्च यतस्तदागतमितस्तदुपचार ॥ १०८४ ॥

आह– ननु भाष्यमाणः सर्वत्र शब्द एव दृश्यते, यस्त्वर्थः सोऽनभिलाप्यः– अशब्दात्मकत्वाद् वक्तुमशक्य एव, इति कथं स तीर्थकरस्तमशब्दरूपमर्थं भाषते ? । उच्यते– अर्थप्रत्यायनफले शब्द एव तदुपचारोऽर्थोपचारः क्रियते । एतदुक्तं भवति– अर्थप्रतिपादनस्य कारणभूते शब्देऽर्थोपचारं कृत्वाऽर्थं भाषत इत्युच्यत इत्यदोष इति ॥ ११२० ॥

प्रेरकः प्राह—

[1]तो सुत्तमेव भासइ अत्थप्पच्चायगं, न नामत्थं । गणहारिणो वि तं चिय करेंति को पडिविसेसो त्थ ? ॥११२१॥

ततस्तर्हि त्वदुक्तयुक्त्या शब्दभाषकस्तीर्थकरः सूत्रमेवाऽर्थप्रत्यायकं भाषते, न त्वर्थम् । गणधारिणोऽपि तदेव कुर्वन्ति, तत् को नामोभयत्र विशेषः ?– न कश्चिदिति ॥ ११२१ ॥

आचार्यः प्राह—

[2]सो पुरिसा[3]विक्खाए थोवं भणइ न उ बारसंगाइं । अत्थो तद[4]विक्खाए सुत्तं चिय गणहराणं तं ॥११२२॥

ननु प्रागेवोक्तं यत्– गणधरलक्षणपुरुषापेक्षया स तीर्थकरः "उप्प[5][6]ज्जेइ वा, विगमेइ वा, धुवेइ वा" इति मातृकापदत्रयमात्ररूपं स्तोकमेव भाषते, न तु द्वादशाङ्गानि । ततश्च तद् मातृकापदत्रयमात्रं शब्दरूपमपि सत् तदपेक्षया द्वादशाङ्गापेक्षया तदर्थसंक्षेपरूपत्वादर्थो भण्यते। गणधराणां तु गणधरापेक्षया त्वित्यर्थः, तदेव मातृकापदत्रयं शब्दरूपत्वात् सूत्रम् , इति नोभयत्र समानतादोष इति ॥११२२॥

आह– ननु मातृकापदत्रयस्य शब्दरूपत्वात् सूत्ररूपता बुध्यते, अर्थरूपतां तु तस्य नावगच्छाम इत्याशङ्क्य पुनरपि तस्य तां समर्थयन्नाह—

[7]अंगाइसुत्तरयणानिरवेक्खो जेण तेण सो अत्थो । अहवा न सेसपवयण[8]हियउ त्ति जह बारसंगमिणं॥११२३॥

पवयणहियं पुण तयं जं सुहगहणाइ गणहरेहिंतो । बारसविहं पवत्तइ निउणं सुहुमं महत्थं च ॥ ११२४ ॥

१ तत. सूत्रमेव भाषतेऽर्थप्रत्यायक, न नामार्थम् । गणधारिणोऽपि तदेव कुर्वन्ति क॰ प्रतिविशेषोऽत्र ? ॥ ११२१ ॥

२ स पुरुषापेक्षया स्तोक भणति न तु द्वादशाङ्गानि । अर्थस्तदपेक्षया सूत्रमेव गणधराणां तत् ॥ ११२२ ॥

३ क ग 'सावेक्खा' । ४ क.ग 'दवेक्खा'। ५ उत्पद्यते वा, विगच्छति वा, ध्रुवं वा । ६ 'क घ. छ 'प्पण्णेइ' ।

७ अङ्गादिसूत्ररचनानिरपेक्षो येन तेन सोऽर्थ. । अथवा न शेषप्रवचनहितक इति यथा द्वादशाङ्गमिदम् ॥ ११२३ ॥ प्रवचनहितं पुनस्तद् यत् सुखग्रहणादि गणधरेभ्यः । द्वादशविध प्रवर्तते निपुण सूक्ष्म महार्थं च ॥ ११२४ ॥ ८ 'णहेउ' ।

[1]जं निच्छयाइजुत्ता सुत्ते अत्था इमीए वक्खाया । तेणेयं निज्जुत्ती निज्जुत्तत्थाभिहाणाओ ॥ १०८६ ॥

यद् यस्मात् सूत्रे निश्चयेन, आदिशब्दादाधिक्येन, आदौ, साधु वा युक्ताः संबद्धा निर्युक्ता एव सन्तोऽर्था अनया निर्युक्त्या व्याख्याताः, तेन तस्मात्कारणादियं निर्युक्तार्थाभिधानाद् निर्युक्तानां युक्तिर्युक्तशब्दलोपाद् निर्युक्तिर्भवति ॥ १०८६ ॥

अथ प्रेर्यमाशङ्क्य परिहरन्नाह—

[2]सुत्ते निज्जुत्ताणं निज्जुत्तीए पुणो किमत्थाणं ? । निज्जुत्ते वि न सव्वे कोइ अवक्खाणिए मुणइ ॥१०८७॥

ननु सूत्र एव निर्युक्तानां निबद्धानां सतामर्थानां तद्व्याख्यानार्थं क्रियमाणया निर्युक्त्या किं पुनः कार्यम् ?– न किञ्चिदित्यर्थः । ये हि सूत्र एव विद्यमानार्थाः सन्ति, तान् स्वत एव विनेयवर्गो ज्ञास्यति, अतस्तद्विभाषणप्रवृत्ता वृथैव निर्युक्तिरिति भावः । अत्रोत्तरम्– 'निज्जुत्ते वीत्यादि' सूत्रे निर्युक्तानपि सतः सर्वानप्यर्थान् कोऽपि तथाविधमज्ञापाटवरहितः शिष्यो निर्युक्त्याऽव्याख्यातान् न मुणति नावबुध्यत इति ॥ १०८७ ॥

ततः किम् ?, इत्याह—

[3]तो सुयपरिवाडि च्चिय इच्छावेइ तमणिच्छमाणं पि । निज्जुत्ते वि तदत्थे वोत्तुं तदणुग्गहट्ठाए ॥१०८८॥

ततः श्रुतपरिपाट्येव सूत्रपद्धतिरेव विभाषितुमनिच्छन्तमपि तन्निर्युक्तिकर्तारमाचार्यं तस्य सूत्रस्याऽर्थांस्तदर्थान् सूत्रे निर्युक्तानप्यनवबुध्यमाने श्रोतरि तदनुग्रहार्थं तान् वक्तुमेषयतीव एषयति प्रयोजयति, अतस्तानाचार्यो निर्युक्त्या विभाषते, इति तस्याः साफल्यमिति ॥ १०८८ ॥

अत्र दृष्टान्तमाह—

[4]फलयलिहियं पि मंखो पढइ पभासइ तहा कराईहिं । दाएइ य पइवत्थुं सुहबोहत्थं तह इहं पि ॥१०८९॥

---

१ यद् निश्चयादियुक्ता सूत्रेऽर्था अनया व्याख्याता । तेनेयं निर्युक्तिर्निर्युक्तार्थाभिधानात् ॥ १०८६ ॥
२ सूत्रे निर्युक्तानां निर्युक्त्या पुन. किमर्थानाम् ? । निर्युक्तानपि न सर्वान् कश्चिदव्याख्यातान् जानाति ॥ १०८७ ॥
३ तत. सूत्रपरिपाट्यैवैषयति तमनिच्छन्तमपि । निर्युक्तानपि तदर्थान् वक्तुं तदनुग्रहार्थम् ॥ १०८८ ॥
४ फलकलिखितमपि मङ्ख. पठति प्रभाषते तथा करादिभि. । दर्शयति च प्रतिवस्तु सुखबोधार्थं तथेहाऽपि ॥ १०८९ ॥

ज्ञानस्य निर्वाणहेतुत्वं न स्यात्, किन्तु चरणस्यैव ज्ञानरहितस्यापि तत् स्यात्, अनिष्टं चैतत्, "[1]सम्यग्दर्शन-ज्ञान-चारित्राणि मोक्षमार्गः" तथा, "[2]नाण-किरियाहिं मोक्खो" इत्यादिवचनादिति। इह तु ज्ञान-चरणयोः समानेऽपि निर्वाणहेतुत्वे गुण-प्रधानभावख्यापनार्थमित्थमुपन्यासः 'तस्स वि सारो चरणं' इति। 'सारो चरणस्स निव्वाणं ति' अत्र सारशब्दः फलवचनः, चरणस्य संयम-तपोरूपस्य सारः फलं निर्वाणमित्यर्थः। इहापि शैलेश्यवस्थाभाविसर्वसंवररूपचारित्रमन्तरेण निर्वाणस्याऽभावात्, तद्भावे चावश्यंभावादित्थमुक्तम्, अन्यथा सम्यग्दर्शनादित्रयस्य समुदितस्यैव निर्वाणहेतुत्वमवगन्तव्यम्, शैलेश्यवस्थायामपि क्षायिकदर्शन-ज्ञानयोरवश्यं सद्भावात् ॥ इति निर्युक्तिगाथार्थः ॥११२६ ॥

तदेवं '[3]तं पुण किमाइ-पज्जन्तमाणमह को व से सारो' इत्यनया प्रागुक्तसामान्यतया समायातं व्याख्यातं 'तस्स वि सारो चरणं' इति गाथादलम्। साम्प्रतं त्वस्य पातनान्तरमाह—

[4]सोउं सुयण्णवं वा दुग्गेज्झं सारमेत्तमेयस्स। घेच्छं तयं ति पुच्छइ सीसो चरणं गुरू भणइ ॥११२७॥

'वा' इत्यथवा पातनान्तरसूचकः। 'सोउं ति' सामायिकादि बिन्दुसारपर्यन्तं श्रुतार्णवं दुर्ग्राह्यमतिदुस्तरं श्रुत्वा 'यदि समस्तमपि तं ग्रहीतुं न शक्ष्यामि, तर्हि सारमात्रमस्य श्रुतार्णवस्य ग्रहीष्यामि' इति सञ्चिन्त्य शिष्यस्तत्सारमात्रं पृच्छति–'कोऽस्य द्वादशाङ्गस्य सारः ?' इति सोपस्कारमिह व्याख्येयम्। तत्र गुरुर्भणति– तस्यापि श्रुतज्ञानस्य सारश्चरणमिति। एतत्पुनरपृष्टेनापि गुरुणा निर्युक्तिगाथान्ते प्रोक्तम्– सारश्चरणस्य निर्वाणमिति ॥ ११२७ ॥

अथ प्रेरकः प्राह—

[5]अन्नाणओ हय त्ति य किरिया नाण-किरियाहिं निव्वाणं। भणियं तो किह चरणं सारो नाणस्स तमसारो ? ॥११२८॥

ननु '[6]हयं नाणं कियाहीणं हया अन्नाणओ किया' इत्यादिवचनादज्ञानतो हतैव क्रिया, इति ज्ञान-क्रियाभ्यां समुदिताभ्यामेव निर्वाणमागमे भणितम्– अनेकस्थानेषु प्रतिपादितम्। ततः कथं ज्ञानस्य सारश्चरणम्, तत्तु ज्ञानमसारः ? इति ॥ ११२८ ॥

१ तत्त्वार्थाधिगमसूत्रे १,१। २ ज्ञान-क्रियाभ्यां मोक्ष॰। ३ गाथा ११२५।
४ श्रुत्वा श्रुतार्णवं वा दुर्ग्रहं सारमात्रमेतस्य। ग्रहीष्यामि तदिति पृच्छति शिष्यश्चरणं गुरुर्भणति ॥ ११२७ ॥
५ अज्ञानतो हतेति च क्रिया ज्ञान-क्रियाभ्यां निर्वाणम्। भणित ततः कथं चरण सारो ज्ञानस्य तदसार. ? ॥ ११२८ ॥ ६ गाथा ११५९।

इच्छत इच्छतास्मै महानुभावायैतां विभाषितुम् । ततो निर्युक्तिद्वारेणैव तस्य शिष्यस्य गुरुस्तां विभापत इति । तदेवं 'निज्जुत्ता ते अत्था' इत्यादिभाक्तननिर्युक्तिगाथा व्याख्याता ॥१०९१॥

अथोत्तरगाथासंबन्धनार्थमाह—

[2]कत्तो पसूयमागयमायरियपरंपराइ सुयनाणं । सामाइयाइयमिदं सव्वं चिय सुत्तमत्थो वा ? ॥ १०९२ ॥

ननु पूर्वं भवतेदमुक्तम्– 'आचार्यपरम्परया समागतां सामायिकनिर्युक्तिमहं वक्ष्ये' । तत्रेदं पृच्छ्यते– 'कत्तो पसूयमित्यादि' आदौ कुतः पुरुषविशेषात् प्रसूतामुत्पन्नां सतीं तत आचार्यपरम्परयाऽऽगतामायातां तां सामायिकनिर्युक्तिं त्वं वक्ष्यसि ? इत्युपस्कारः । तथा, इदमपि पृच्छ्यते । किम् ?, इत्याह– 'सुयनाणमित्यादि' सर्वमपि च सामायिकादिकं विन्दुसारपर्यन्तं सूत्रार्थरूपं श्रुतज्ञानमिदं प्रथमं कुतः प्रस्तुतं सत् पश्चादाचार्यपरम्परयाऽत्राऽऽगतम् ? इति ॥ १०९२ ॥

एवमुत्तरगाथाप्रस्तावनां कुर्वन्नाचार्य आत्मनः प्रेर्यमाशङ्क्य परिहरन्नाह—

[3]एयं नणु भणियं चिय अत्थपुहत्तस्स तेहिं कहियस्स । इह तेसिं चिय सीलाइकहण-गहणं फलविसेसो ॥१०९३॥

ननु 'सामायिकनिर्युक्तिः श्रुतज्ञानं वा सर्वं कुतः पुरुषात् प्रथमं प्रसूतम् ?, इत्यत्र यदुत्तरं, तदेतद् भणितमेव प्रोक्तमेव निर्णीतार्थमेवेत्यर्थः । क ?, इत्याह– 'अत्थपुहत्तस्सेत्यादि' 'तैस्तीर्थकर-गणधरैः कथितस्याऽर्थपृथक्त्वरूपस्य श्रुतज्ञानस्य भगवतो निर्युक्तिं कीर्तयिष्ये' इत्युक्ते तीर्थकर-गणधरेभ्यः सर्वमपि श्रुतज्ञानमादौ प्रसूतम्, इत्युक्तमेव, तत् किमिति पुनरपि प्रश्नः ? । अत्र प्रतिविधानमाह– 'इहेत्यादि' सत्यम्, ज्ञातमेवेदं यत्– तीर्थकर-गणधरेभ्य एव सर्वमिदमादौ प्रसूतम्, किन्त्विह तेषामेव तीर्थकर-गणधराणां शीलादिस्वरूपकथनम्, ग्रन्थनम्, फलविशेषश्च विशेषतोऽभिधास्यते, इत्ययं पुनरपि प्रश्नोत्तरोपन्यासः । तत्र तीर्थकृतां तपो-नियम-ज्ञानानि शीलमभिधास्यते, आदिशब्दः स्वगतभेदप्रख्यापकः, तान्येव वृक्षः, तदारूढस्य पुष्पप्रक्षेपकल्पा तु देशना कथनम्, तत्फलविशेषस्तु भव्यजनविबोधनार्थतेति । गणधराणां तु बुद्धिमयपटेन तीर्थकरोक्तं गृहीत्वा सूत्रग्रन्थनं प्रतिपादयिष्यते, फलविशेषस्तु प्रवचनार्थता, सुखग्रहणाद्यनुग्रहश्च ॥ इति गाथाष्टकार्थः ॥ १०९३ ॥

---

१ गाथा १०८५ । २ कुत. प्रसूतमागतमाचार्यपरम्परया श्रुतज्ञानम् । सामायिकादिकमिदं सर्वमेव सूत्रमर्थो वा ॥ १०९२ ॥
३ एतद् ननु भणितमेवार्थपृथक्त्वस्य तै. कथितस्य । इह तेषामेव शीलादिकथन-ग्रन्थने फलविशेष. ॥ १०९३ ॥

लाभे[1] वि जस्स मोक्खो न होइ जस्स य स होइ स पहाणो। एवं चिय सुद्धनया निव्वाणं संजमं बेंति ॥११३२॥

यस्य मत्यादिज्ञानपञ्चकस्य लाभेऽप्यनन्तरमेव मोक्षो न भवति, तज्ज्ञानं मोक्षस्यानन्तर्येण कारणत्वाभावात् 'अप्रधानम्' इति शेषः। यल्लाभानन्तरमेव च स मोक्षोऽवश्यं भवति स संवरो ज्ञानात्प्रधानः। एवमेव च संयमस्य प्रधानकारणतां मन्यमानाः शुद्धनया ऋजुसूत्र-शब्दादयः संयममेव निर्वाणमाहुः, अत्यन्तप्रत्यासन्नकारणे सर्वसंवरसंयमे कार्यस्य निर्वाणस्योपचारात्; न तु ज्ञानं निर्वाणं ते ब्रुवते, तस्य व्यवहितकारणत्वादिति भावः। तथा चोक्तम्—

'तवसजमो[2] अणुमओ निग्गंथ पवयण च ववहारो। सद्द-ज्जुसुयाणं पुण निव्वाण संजमो चेव ॥ १ ॥'

इति ॥११३२॥

प्रेरकः प्राह—

आह[3] पहाणं नाणं न चरित्तं, नाणमेव वा सुद्धं। कारणमिह न उ किरिया सा वि हु नाणप्फलं जम्हा॥११३३॥

ज्ञानवादी प्राह– ज्ञानमेव प्रधानं मोक्षकारणम्, न चारित्रम्। यदिवा, शुद्धं ज्ञानमेवैकं मोक्षस्य कारणं, न तु क्रिया, यस्मादसावपि ज्ञानफलमेव ज्ञानकार्यमेव। ततश्च यथा मृत्तिका घटस्य कारणं भवन्त्यपि तदपान्तरालवर्तिनां पिण्ड-शिवक-कुशूलादीनामपि कारणं भवति, एवं ज्ञानमपि मोक्षस्य कारणं तदपान्तरालभाविनां सर्वसंयमक्रियादीनामपीति। यथा च क्रिया ज्ञानस्य कार्यम्, तथा शेषमपि यत्क्रियानन्तरभावि मोक्षादिकम्, यच्च क्रियाया अर्वाग्भावि बोधिलाभकाले तत्त्वपरिज्ञानादिकं राग-द्वेषनिग्रहादिकं च तत् सर्वं ज्ञानस्यैव कार्यम्। यच्चेह सकलजनप्रत्यक्षं मनश्चिन्तितमहामन्त्रपूतविपभक्षण-भूत-शाकिनीनिग्रहादिकं तत् सर्वं क्रियारहितस्य ज्ञानस्यैव कार्यम्। अतो दृष्टेनाऽदृष्टमपि निर्वाणं ज्ञानस्यैव कार्यमित्यनुमीयत इति ॥ ११३३॥

एतद् दर्शयन्नाह—

जह[4] सा नाणस्स फलं तह सेसं पि तह बोहकाले वि। नेयपरिच्छेयमयं रागादिविणिग्गहो जो य ॥११३४॥

१ लाभेऽपि यस्य मोक्षो न भवति, यस्य च स भवति स प्रधानम्। एवमेव शुद्धनया निर्वाण सयमं ब्रुवते ॥ ११३२ ॥
२ तप.सयमोऽनुमतो नैर्ग्रन्थ्यं प्रवचनं च व्यवहार। शब्द-र्जुश्रुतयोः पुनर्निर्वाण सयम एव ॥ १ ॥
३ आह प्रधानं ज्ञान न चारित्र, ज्ञानमेव वा शुद्धम्। कारणमिह न तु क्रिया सापि खलु ज्ञानफलं यस्मात् ॥ ११३३ ॥
४- यथा सा ज्ञानस्य फल तथा शेषमपि तथा बोधकालेऽपि। ज्ञेयपरिच्छेदमय रागादिविनिग्रहो यश्च ॥ ११३४ ॥

[1]तुंगं विउलक्खंधं साइसओ कप्परुक्खमारूढो । पज्जत्तगहियबहुविहसुरभिकुसुमोऽणुकंपाए ॥१०९७॥

कुसुमत्थिभूमिचिट्ठियपुरिसपसारियपडेसु पक्खिवइ । गंथंति ते वि घेत्तुं सेसजणाणुग्गहट्ठाए ॥१०९८॥

लोगवणसंडमज्झे चोत्तीसाइसयसंपदोवेओ । तव-नियम-नाणमइयं स कप्परुक्खं समारूढो ॥ १०९९ ॥

मा होज्ज नाणगहणम्मि संसओ तेण केवलिग्गहणं । सो वि चउहा ततोऽयं सव्वण्णू अमियनाणि त्ति ॥११००॥

पज्जत्तनाणकुसुमो ताइं छउमत्थभूमिसंथेसु । नाणकुसुमत्थिगणहरसियबुद्धिपडेसु पक्खिवइ ॥११०१॥

षडपि सुगमा एव, नवरमिह वृक्षादिरूपकनिरूपणार्थं द्रव्यवृक्षदृष्टान्तोऽभिधीयते । कः पुनरसौ ?, इत्याह– 'जह कोईत्यादि' । 'साइसउ त्ति' वक्ष्यमाणकेवलिस्थानीयः सातिशयः कोऽपि नरः । उक्तो द्रव्यवृक्षदृष्टान्तः । अथ प्रस्तुते भाववृक्षे सर्वं योजयन्नाह– 'लोगवणसंडेत्यादि' । छद्मस्थत्वमेव भूमिश्छद्मस्थत्वभूमिरिति भावप्रधानोऽयं निर्देशः, तत्संस्थेषु । ज्ञानकुसुमार्थिनो ये गणधरास्तच्छ्वेतबुद्धिपटेष्विति ॥ १०९६ ॥ १०९७ ॥ १०९८ ॥ १०९९ ॥ ११०० ॥ ११०१ ॥

अथ प्रेरकः—

[2]कीस कहइ कइत्थो किं वा भवियाण चेव बोहत्थं । सव्वोवायविहिण्णू किं वाऽभव्वे न बोहेइ ?॥११०२॥

शब्दवृष्टिमोचनेन तीर्थकृतां धर्मकथनं सूचितम्, तत्र कृतार्थोऽप्यसौ भगवान् किमिति कथयति ? । भव्यजनविबोधनार्थमिति चोक्तम्, तत्र किमसौ भव्यानेव बोधयति ?, यावता सर्वोपायविधिज्ञः सन्नभव्यानपि किमिति न बोधयति ? इति ॥ ११०२ ॥

अत्र प्रतिविधानमाह—

---

१ तुङ्गं विपुलस्कन्धं सातिशयः कल्पवृक्षमारूढः । पर्याप्तगृहीतबहुविधसुरभिकुसुमोऽनुकम्पया ॥ १०९७ ॥
कुसुमार्थिभूमिस्थितपुरुषप्रसारितपटेषु प्रक्षिपति । ग्रथ्नन्ति तेऽपि गृहीत्वा शेषजनानुग्रहार्थम् ॥ १०९८ ॥
लोकवनषण्डमध्ये चतुस्त्रिंशदतिशयसंपदुपेतः । तपो-नियम-ज्ञानमयं स कल्पवृक्षं समारूढ. ॥ १०९९ ॥
मा भूज्ज्ञानग्रहणं संशयस्तेन केवलिग्रहणम् । सोऽपि चतुर्धा ततोऽयं सर्वज्ञोऽमितज्ञान इति ॥ ११०० ॥
पर्याप्तज्ञानकुसुमस्तानि च्छद्मस्थ (त्व) भूमिसस्थेषु । ज्ञानकुसुमार्थिगणधरसितबुद्धिपटेषु प्रक्षिपति ॥ ११०१ ॥

२ कस्मात् कथयति कृतार्थ किं वा भव्यानामेव बोधार्थम् । सर्वोपायविधिज्ञः किं वाऽभव्यान् न बोधयति ? ॥ ११०२ ॥

सहचारित्वे कथमेकं ज्ञानं मोक्षस्य कारणम्, न पुनरेकं क्रियारूपं कारणमिष्यते ? । न ह्याग्रहग्रहग्रस्ततां[1] विहायापरो हेतुरिहोपलभ्यत इति भावः ॥ ११३८ ॥

यदुक्तम्– '[2]रागादिविणिग्गहो जो य त्ति' । तत्राह—

[3]रागाइसमो संजमकिरिय च्चिय नाणकारणा होज्ज । तीसे फले विवाओ तं तत्तो नाणसहियाओ ॥११३९॥

रागादिशमो रागादिनिग्रहस्तावत् संयमक्रियैव भण्यते, नापरं किञ्चित्; सा च ज्ञानं कारणं यस्याः सा ज्ञानकारणा ज्ञानफला भवेदेव, नेहाऽस्माकं काचिद् विप्रतिपत्तिः। किन्तु यत् तस्याः[4] समनन्तरं मोक्षादिकं फलमुपजायते तत्र विवदामः, तथाहि– तत्किं ज्ञानादेव केवलादुपजायते, आहोस्वित् केवलक्रियातः, उत ज्ञान-क्रियोभयात् ? इति त्रयी गतिः । तत्र न तावदाद्यः पक्षः, ज्ञानादपान्तराले भवतापि क्रियोत्पत्तेरभ्युपगमात् । नापि द्वितीयः पक्षो युक्तः, ज्ञानशून्यक्रियातो मोक्षादिकार्याभ्युपगमे उन्मत्तादिक्रियातोऽपि मुक्तिप्रसङ्गात् । तस्मात् तृतीय एव पक्षो युज्यते, अत एवाह 'तं तत्तो नाणसहियाउ त्ति' तद् मोक्षादिकार्यं ततस्तस्याः क्रियायाः सकाशादुत्पद्यते । कथंभूतायाः ?, ज्ञानसहितााया इति ॥ ११३९ ॥

यदुक्तम्– '[5]जं च मणोचिन्तियमंतपूयेत्यादि' । तत्राह—

[6]परिजवणाई किरिया मंतेसु वि साहणं न तम्मत्तं । तण्णाणओ य न फलं तं नाणं जेणमक्किरियं ॥११४०॥

विषघात-नभोगमनादिहेतुषु मन्त्रेष्वपि परिजपनादिक्रिया मन्त्रसहायिनी कार्यस्य साधनं कार्यसाधिकेत्यर्थः; न तु तन्मात्रं मन्त्रमात्रमेव तत्साधकम् । अथाभिधत्से– ननु प्रत्यक्षविरुद्धमिदम्, यतो दृष्टं क्वचिद् मन्त्रानुस्मरणज्ञानमात्रादप्यभीष्टफलम्; इत्याह– तज्ज्ञानाच्च केवलाद् मन्त्रानुस्मरणज्ञानाच्च न तत्फलम्, येन कारणेनाऽक्रियमेव तज्ज्ञानम्, अमूर्तत्वात्, यच्चाक्रियं न तत् कार्याणि कुरुते, यथाऽऽकाशम्, अक्रियं च ज्ञानम्, इति कथं कार्याणि कुर्यात् ?; यच्च करोति तत् सक्रियं दृष्टम्, यथा कुलालः, न चैवं ज्ञानम्, इति न तत्केवलं किमपि करोति । न चेदं प्रत्यक्षविरुद्धम् । न हि क्रियासाहाय्यरहितं ज्ञानं क्वचिदपि फलमुपाहरदुपलभ्यत इति॥११४०॥

अथ प्रेर्यमाशङ्क्य परिहरन्नाह—

---

१ क ग. 'हग्रस्त' । २ गाथा ११३४ । ३ रागादिशम संयमक्रियैव ज्ञानकारणा भवेत् । तस्याः फले विवादस्तत् ततो ज्ञानसहिताया ॥ ११३९ ॥
४ घ. छ. 'यस्या' । ५ गाथा ११३५ । ६ परिजपनादिः क्रिया मन्त्रेष्वपि साधन न तन्मात्रम् । तज्ज्ञानतश्च न फल तज्ज्ञान येनाऽक्रियम् ॥ ११४० ॥

न च भव्यानेव प्रतिबोधयतस्तस्य राग-द्वेषौ, इति दृष्टान्तेन दर्शयति– 'किं व कमलेसु इत्यादि'। 'से त्ति'। 'से' तस्य रवेः प्रतिबोधयतोऽपि यत् तानि कुमुदानि न विबुध्यन्त इति। तस्मात् कोऽत्राभिप्रायः ?, इत्याह– 'जं बोहेत्यादि' समानादपि सूरकरपरामर्शाद् यतो बोध-मुकुलनानि यथासंख्यमेव कमल-कुमुदानां जायमानानि दृष्टानि, 'तो त्ति' ततो ज्ञायते– तस्य रवेः, तेषां च कमल-कुमुदानां स्वभावोऽयं यद्– रविः कमलान्येव बोधयति न तु कुमुदानि, कमलान्यपि रवेः सकाशाद् बुध्यन्ते न कुमुदानि, न पुनरिह कस्यापि राग-द्वेषौ। एवं भगवतोऽपि भव्या-ऽभव्येषु योज्यमिति। दृष्टान्तान्तरमाह– 'जह वेत्यादि' उलूकादीनां रात्रिश्चराणां घूकादीनां 'सो त्ति' रविः। अपरमप्यत्र दृष्टान्तमाह– 'सज्झमित्यादि'। अत्रैवोदाहरणान्तरमाह– 'मोत्तुमित्यादि' दलिके काष्ठादौ 'रूयारो' रूपकारः। इति व्याख्याता प्रथमनिर्युक्तिगाथा ॥ ११०३ ॥ ११०४ ॥ ११०५ ॥ ११०६ ॥ ११०७ ॥ ११०८ ॥ ११०९ ॥ १११० ॥

अथ द्वितीयनिर्युक्तिगाथाव्याख्यानमाह—

[2]तं नाणकुसुमवुट्ठिं घेत्तुं बीयाइबुद्धओ सव्वं। गंथंति पवयणट्ठा माला इव चित्तकुसुमाणं ॥ ११११ ॥

पगयं वयणं पवयणमिह सुयनाणं कहं तयं होज्जा ?। पवयणमहवा संघो गहंति तयणुग्गहट्ठाए ॥१११२॥

तां तीर्थकरमुक्तां ज्ञानकुसुमवृष्टिं गृहीत्वा बीजादिबुद्धयो गणधराः, यः पदादप्यनेकानि पदशतानि गृह्णाति, असौ बीजबुद्धिः, आदिशब्दात् कोष्ठबुद्ध्यादिपरिग्रहः; कोष्ठकप्रक्षिप्तं धान्यमिव यस्य सूत्रा-ऽर्थौ सुचिरमपि तिष्ठतः स कोष्ठबुद्धिः; सर्वं तीर्थकरभाषितं विचित्रकुसुममालामिव प्रवचनार्थं ग्रथ्नन्ति। प्रवचनशब्दार्थमेव कथयति– प्रगतं प्रधानं प्रशस्तमादौ वा वचनम्, अत्र श्रुतज्ञानं द्वादशाङ्गम्, 'तत् कथं तु नाम भवेद् निष्पद्यते ?' इत्येवं संप्रधारयन्तस्तदर्थं ग्रथ्नन्ति। अथवा, प्रवक्तीति प्रवचनं संघस्तदर्थं ग्रथ्नन्ति ॥ इत्येकादशगाथार्थः ॥ ११११ ॥ १११२ ॥

'प्रवचनार्थं ग्रथ्नन्ति' इत्युक्तम्। अथवा प्रयोजनान्तरमाह—

[3]घेत्तुं व सुहं सुहगुणण-धारणा दाउं पुच्छिउं चेव। एएहिं कारणेहिं जीयं ति कयं गणहरेहिं ॥ १११३ ॥

१ क. ग 'मत्र'। २ तां ज्ञानकुसुमवृष्टिं गृहीत्वा बीजादिबुद्धय· सर्वम्। ग्रथ्नन्ति प्रवचनार्थं माला इव चित्रकुसुमानाम् ॥ ११११ ॥
प्रकृत वचन प्रवचनमिह श्रुतज्ञानं कथं तद् भवेत् ?। प्रवचनमथवा सघो ग्रथ्नन्ति तदनुग्रहार्थम् ॥ १११२ ॥
३ ग्रहीतु वा सुख सुखगुणन-धारणा दातु प्रष्टु चैव। एतै· कारणैर्जीवितमिति कृत गणधरै ॥ १११३ ॥

भूतः?, इत्याह— यस्तपः-संयमात्मकान् योगान् न शक्नोति वोढुम्, इत्यनेन हेत्वर्थ इति । दृष्टान्तस्त्वभ्यूह्यः, वक्ष्यति वा ॥ इति निर्युक्तिगाथार्थः ॥ ११४३ ॥

अथ सूचितप्रयोगम्, वक्ष्यमाणनिर्युक्तिगाथासंबन्धं च विवक्षुराह—

[1]सक्किरियाविरहाओ न इच्छियसंपावयं ति नाणं ति । मग्गण्णू वाऽचिट्ठो[2] वायविहीणोऽहवा पोओ ॥११४४॥

केवलमेव ज्ञानं नेप्सितार्थसंप्रापकम्, सत्क्रियाशून्यत्वात्, यथा— स्वसमीहितदेशप्रापणक्षमसचेष्टाविरहितो मार्गज्ञः पुरुषः स्वाभिलषितदेशाऽप्रापकः । अथवा, सौत्र एव दृष्टान्तः, यथा— ईप्सितदिक्संप्रापकवातसत्क्रियारहितः पोत ईप्सितदिगसंप्रापकः, सत्क्रियाविरहितं च ज्ञानम्, तस्माद् नेष्टार्थसंपादकं तत् ॥ इति गाथार्थः ॥ ११४४ ॥

तथाहि—

[3]जह छेयलद्धनिज्जामओ वि वाणियगइच्छियं भूमिं । वाएण विणा पोओ न चएइ महण्णवं तरिउं ॥११४५॥
तह नाणलद्धनिज्जामओ वि सिद्धिवसहिं न पाउणइ । निउणो वि जीवपोओ तव-संजममारुयविहीणो[4] ॥११४६॥
संसारसागराओ उच्छुड्डो मा पुणो निबुड्डेज्जा । चरणगुणविप्पहीणो वुड्डइ सुबहुं पि जाणंतो ॥११४७॥

छेको दक्षो लब्धः प्राप्तो निर्यामको येन पोतेन स तथाविधः, अपिशब्दात् सुकर्णधाराद्यधिष्ठितोऽपि वणिज इष्टां वणिगिष्टां तां भूमिं महार्णवं तीर्त्वा वातेन विना पोतो न शक्नोति 'प्राप्तुम्' इति वाक्यशेषः । उपनयमाह— तथा श्रुतज्ञानलब्धनिर्यामकोऽपि, अपिशब्दात् सुनिपुणमतिकर्णधाराद्यधिष्ठितोऽपि संयम-तपो-नियममारुतसत्क्रियारहितो निपुणोऽपि जीवपोतो भवार्णवं तीर्त्वा सन्मनोरथवणिजोऽभिमेतां सिद्धिवसतिं न प्राप्नोति । तस्मात् तपः-संयमानुष्ठानेऽप्रमादवता भवितव्यमिति ।

तथा चोपदेशमाह— 'संसारेत्यादि' विनेयस्योपदिश्यते— भो देवानुप्रिय ! कथं कथमपि महता कष्टेनातिदुर्लभं श्रीसर्वज्ञधर्मा-

---

१ सत्क्रियाविरहाद् नेप्सितसम्प्रापकमिति ज्ञानमिति । मार्गज्ञो वाऽचेष्टो वातविहीनोऽथवा पोतः ॥ ११४४ ॥ २ घ छ 'वाऽचेट्ठो' ।
३ यथा छेकलब्धनिर्यामकोऽपि वणिगिष्टां भूमिम् । वातेन विना पोतो न शक्नोति महार्णवं तरीतुम् ॥ ११४५ ॥
तथा ज्ञानलब्धनिर्यामकोऽपि सिद्धिवसतिं न प्राप्नोति । निपुणोऽपि जीवपोतस्तप-संयममारुतविहीनः ॥ ११४६ ॥
संसारसागरादुन्मग्नो मा पुनर्निब्रुडीः । चरणगुणविप्रहीणो ब्रुडति सुबह्वपि जानन् ॥ ११४७ ॥ ४ क ग 'विहूणो' ।

गृहीतम्, एतावच्चाद्यापि पुरस्ताद् ग्रहीतव्यम्, इत्यादिविवक्षया पद-वाक्यादिक्रमेण विरचितं सत् तत्पदाद्यनुसरता सुखेनैव श्रुतं गृह्यते, एवं गुणनाद्यपि सुखं भवति, अत एतेभ्यः कारणेभ्यः 'जीयं पि य त्ति' जीवितं श्रुतम्। अथवा, जीवितं मर्यादा। यदिवा जीवितं सर्वानुचीर्णम्। कोऽर्थः ?, इत्याह– 'कायव्वमित्यादि' कर्तव्यमिदं यतोऽवश्यं सर्वैर्गणधरैः, इत्युत्तरगाथायां संवन्धः। ततो जीवितं द्वादशाङ्गश्रुतं, मर्यादा, सर्वगणधराचीर्णं वेदमिति कृत्वा कृतं कथितं गणधरैरिति। तदेवं 'जीयं' इति शब्दस्यार्थत्रयं भवति, इति तांस्त्रीनप्यर्थांस्तस्य दर्शयति– 'जीयं ति सुयं' इत्यादि। शेषं सुगमम्॥ इति गाथाचतुष्टयार्थः॥ १११४॥ १११५॥ १११६॥ १११७॥

उत्तरनिर्युक्तिगाथासंवन्धनार्थमाह—

जिणभणिइ च्चिय सुत्तं गणहरकरणम्मि को विसेसो त्थ ?। सो तदविक्खं भासइ न उ वित्थरओ सुयं किंतु॥१११८॥[1]

ननु 'तित्थयरभासियाइं गंथंति'[2] इत्यादिवचनाज्जिनभणितिरेव तीर्थकरोक्तिरेव तर्हि श्रुतम्, गणधरसूत्रीकरणे तु तत्र को विशेषः ?। अत्रोच्यते– स तीर्थकरस्तदपेक्षं गणधरप्रज्ञापेक्षमेव किञ्चिदल्पं भाषते, न तु सर्वजनसाधारणं विस्तरतः समस्तमपि द्वादशाङ्गश्रुतम्, किन्तु यद् भाषते तद् दर्श्यते– ॥ इति गाथार्थः॥ १११८॥

किं पुनस्तत् ?, इत्याह—

[3]अत्थं भासइ अरहा सुत्तं गंथंति गणहरा निउणं। सासणस्स हियट्ठाए तओ सुत्तं पवत्तेइ॥ १११९॥

अर्थमेवाऽर्हन् भाषते, न सूत्रं द्वादशाङ्गरूपम्। गणधरास्तु तत् सूत्रं सर्वमपि निपुणं सूक्ष्मार्थप्ररूपकं बह्वर्थं चेत्यर्थः; अथवा, नियताः प्रमाणनिश्चिता गुणा यत्र तद् नियतगुणं निगुणं ग्रथ्नन्ति। ततः शासनस्य हितार्थं सूत्रं प्रवर्तते॥ इति निर्युक्तिगाथाक्षरार्थः॥ १११९॥

भावार्थं त्वभिधित्सुर्भाष्यकारः प्रेर्यं परिहारं च प्राह—

[4]नणु अत्थोऽणभिलप्पो स कहं भासइ न सद्दरूवो सो ?। सद्दम्मि तदुवयारो अत्थप्पच्चायणफलम्मि॥११२०॥

१ जिनभणितिरेव सूत्रं गणधरकरणे को विशेषोऽत्र ?। स तदपेक्षं भाषते न तु विस्तरतः श्रुतं किन्तु॥ १११८॥ २ गाथा १०९५।
३ अर्थं भाषतेऽर्हन् सूत्रं ग्रथ्नन्ति गणधरा निपुणम्। शासनस्य हितार्थं ततः सूत्रं प्रवर्तते॥ १११९॥
४ नन्वर्थोऽनभिलाप्यः स कथं भाषते न शब्दरूपः स ?। शब्दे तदुपचारोऽर्थप्रत्यायनफले॥ ११२०॥

भमपि 'जानानः' इत्यत्र संबध्यते, स्वजनस्नेहादिना ततो वियोजितः संयमक्रियारहितः पुनरपि तत्रैव भवसागरे निमज्जेदेष संसारिजीवः ॥ इति गाथाद्वयार्थः ॥ ११४८ ॥ ११४९ ॥

अत्र प्रेरकः प्राह—

[1]आहण्णाणी कुम्मो पुणो निमज्जेज्ज न उण तन्नाणी। सक्किरियापरिहीणो बुड्डइ नाणी जहन्नाणी ॥११५०॥
नेच्छइयनयमएण अन्नाणी चेव सो मुणन्तो वि। नाणफलाभावाओ कुम्मो व निबुड्डए भवोहे ॥११५१॥

आह परः– ननु चाज्ञानी हिता-ऽहितविभागपरिज्ञानशून्यः पुनरपि तत्रैव जले निमज्जेत् कूर्मः, नेह किमपि चित्रम्। एतत्तु न विदुषां मतं यत्– जैनमार्गज्ञो हिता-ऽहितविभागवेत्ता ज्ञान्यपि भवसागरे पुनर्निमज्जति। अत्राचार्यः प्राह– ज्ञान्यपि पुनर्भवसागरे निमज्जति, सत्क्रियाविरहात्, अज्ञानिकूर्मवत् समुद्र इति। 'वा' इत्यथवा, निश्चयनयमतेन जानन्नप्यज्ञान्येवासौ सत्क्रियापरिहीणः, ज्ञानफलस्य विरतेरभावात्। अतोऽज्ञानिकूर्म इव पुनर्ब्रुडति निमज्जति भवौघे संसारसमुद्रसंबन्धिनि जन्म-जरा-ऽऽमय-मरणसलिलप्रवाहे[2] ॥ इति गाथाद्वयार्थः ॥ ११५० ॥ ११५१ ॥

अत एवाह निर्युक्तिकारः—

[3]सुबहुं पि सुयमहीयं किं काही चरणविप्पहीणस्स। अंधस्स जह पलित्ता दीवसयसहस्सकोडी वि? ॥११५२॥

सुबह्वपि श्रुतमधीतं चरणविप्रहीणस्य निश्चयतोऽज्ञानमेव। अतस्तस्य फलशून्यत्वादकिञ्चित्करमेव। यथाऽन्धस्य दीपशतसहस्रकोट्यपि प्रदीप्ता न किञ्चित् करोति। दीपानां शतसहस्राणि लक्षा इत्यर्थः, तेषां कोटी, अपिशब्दात् तद्व्यादिकोटयोऽपि ॥ इति निर्युक्तिगाथार्थः ॥ ११५२ ॥

अथ भाष्यम्—

[4]संतं पि तमण्णाणं नाणफलाभावओ सुबहुयं पि। सक्किरियापरिहीणं अंधस्स पईवकोडि व्व ॥ ११५३ ॥

१ आहाज्ञानी कूर्मः पुनर्निमज्जेद् न पुनस्तज्ज्ञानी। सत्क्रियापरिहीणो ब्रुडति ज्ञानी यथाऽज्ञानी ॥ ११५० ॥ नैश्चयिकनयमतेनाऽज्ञान्येव स जानन्नपि। ज्ञानफलाभावात् कूर्म इव निब्रुडेद् भवौघे ॥ ११५१ ॥ २ क. ग. 'रामर'।
३ सुबह्वपि श्रुतमधीतं किं करिष्यति चरणविप्रहीणस्य। अन्धस्य यथा प्रदीप्ता दीपशतसहस्रकोटिरपि? ॥ ११५२ ॥
४. सदपि तदज्ञानं ज्ञानफलाभावतः सुबहुकमपि। सत्क्रियापरिहीणमन्धस्य प्रदीपकोटिरिव ॥ ११५३ ॥

अङ्गा-ऽनङ्गादिविभागेन विरचितमेव सूत्रं प्रसिद्धम्, अयं तु मातृकापदत्रयरूपः शब्दो येन कारणेनाऽङ्गादिविभागेन या सूत्ररचना तन्निरपेक्षस्तत्समुदायार्थरूपत्वेन तद्बहिर्भूत इत्यतः सोऽर्थ इति व्यपदिश्यते। अथवा, शेषस्य गणधरापेक्षयाऽन्यस्य संघरूपस्य प्रवचनस्य यः सुखग्रहण-धारणादिभ्यो हितः शब्दराशिः स एव सूत्रतया प्रोक्तः। अयं तु मातृकापदत्रयरूपः शब्दो न शेषप्रवचनस्येत्थं हितः, यथेदं द्वादशाङ्गम्, अतो नासौ सूत्रम्, किन्त्वर्थ इति। तत्पुनः शब्दजालं शेषप्रवचनस्य हितमेव। यत् किम् ?, इत्याह– यत् सुखग्रहणादिकारणेभ्यो द्वादशधा– आचारादिद्वादशभेदं गणधरेभ्यः प्रवर्तते। अतस्तदेव सूत्रम्, मातृकापदत्रयं त्वर्थ इति स्थितम्। अथ '[1]निउणं' इति निर्युक्तिगाथावयवस्यार्थमाह– तदाचारादिकं द्वादशविधं सूत्रं कथम्भूतम् ?, निपुणं सूक्ष्मम्, सूक्ष्मार्थप्रतिपादकत्वात्; महानपरिमितोऽर्थो यस्मिंस्तद् महार्थं च निपुणमिति ॥ ११२३ ॥ ११२४ ॥

अर्थान्तरमाह—

[2]निययगुणं वा निउणं निद्दोसं गणहराऽहवा निउणा। तं पुण किमाइ-पज्जंतमाणमह को व से सारो ?॥११२५॥

अथवा, नियतगुणं निश्चितगुणं निगुणं संनिहितसमस्तसूत्रगुणत्वाद् निर्दोषमित्यर्थः। 'निउणा' इति पाठान्तरे गणधरा विशेष्यन्ते– निपुणाः, सूक्ष्मार्थदर्शित्वात्, निगुणा वा गणधराः, संनिहितसमस्तगुणत्वादित्यर्थः। वक्ष्यमाणनिर्युक्तिगाथायाः प्रस्तावनामाह– तत् पुनः [3]श्रुतं किमादि ?, किंपर्यन्तमानं– कियत्परिमाणम् ?, को वाऽस्य सारः ? ॥ इति गाथाषट्कार्थः ॥ ११२५ ॥

अनन्तरपृष्टस्यैवोत्तरमाह—

[4]सामाइयमाईयं सुयनाणं जाव बिंदुसाराओ। तस्स वि सारो चरणं सारो चरणस्स निव्वाणं ॥ ११२६ ॥

तच्च श्रुतज्ञानं सामायिकादि वर्तते, चरणप्रतिपत्तिकाले सामायिकस्यैवादौ प्रदानात्। यावद् विन्दुसारादिति विन्दुसाराभिधानचतुर्दशपूर्वपर्यन्तमित्यर्थः, यावच्छब्दादेव च द्व्य-ऽनेक-द्वादशपरिमाणं तद् वेदितव्यम्। तस्यापि श्रुतज्ञानस्य सारश्चरणम्। सारशब्दोऽत्र प्रधानवचनः, फलवचनश्च मन्तव्यः; तस्मादपि श्रुतज्ञानाच्चारित्रं प्रधानम्, तस्य फलं च तदित्यर्थः। अपिशब्दात् सम्यक्त्वस्यापि सारश्चरणमेव। अथवा, अपिशब्दस्य व्यवहितः संवन्धः, तस्य श्रुतज्ञानस्य सारश्चरणमपि, अपिशब्दाद् निर्वाणमपीत्यर्थः, अन्यथा

१ गाथा १११९। २ नियतगुण वा निपुणं निर्दोष गणधरा अथवा निपुणाः। तत्पुनः किमादि-पर्यन्तमानमथ को वा तस्य सारः ? ॥ ११२५ ॥
३ क. ग. 'श्रुतज्ञान कि'। ४ सामायिकादिकं श्रुतज्ञान यावद् विन्दुसारात्। तस्यापि सारश्चरणं सारश्चरणस्य निर्वाणम् ॥ ११२६ ॥

न हि ज्ञानं चरणरहितस्य विफलम्, इत्येतावतैव तिष्ठति, किन्तु पठन-गुणन-चिन्तनादिभिः क्लेशफलदमपि भवति, यथा निष्फलवहनाच्चन्दनकाष्ठभारः खरस्य विफलः, क्लेशप्रदश्च ॥ इति गाथाद्वयार्थः ॥ ११५७ ॥

तथाचाह निर्युक्तिकारः—

[1]जहा खरो चंदणभारवाही भारस्स भागी न उ चंदणस्स ।

एवं खु नाणी चरणेण हीणो नाणस्स भागी न उ सुग्गईए ॥ ११५८ ॥

यथेह खरश्चन्दनकाष्ठभारमुद्वहंस्तज्जनितश्रमादिकष्टभाजनमेव भवति, न तु चन्दनस्य तद्रसोपकल्पितविलेपनादिभाग् भवतीत्यर्थः। एवं चरणेन हीनः श्रुतज्ञान्यपि तद्भारमुद्वहन् ज्ञानभागेव भवति– तत्पठन-परावर्तन-चिन्तनादिकृतकष्टभाजनमेव भवतीत्यर्थः, न तु सुदेवत्व-सुमानुषत्व-सिद्धिलक्षणायाः सुगतेरिति ॥ ११५८ ॥

अथ मा भूदित्थं विनेयस्यैकान्तेन ज्ञानेऽनादरः, क्रियायां चैतच्छून्यायामपि पक्षपातः, इत्यतो द्वयोरपि केवलयोरिष्टफलासाधकत्वमुपदर्शयन्नाह—

[2]हयं नाणं कियाहीणं हया अन्नाणओ किया । पासंतो पङ्गुलो दड्ढो धावमाणो य अंधओ ॥११५९॥

अत्राक्षरार्थः सुगम एव, भावार्थं तु भाष्यकारो वक्ष्यति ॥ इति निर्युक्तिवृत्त-श्लोकार्थः ॥ ११५९ ॥

अथ भाष्यकारोऽनन्तरोक्तश्लोकभावार्थमाह—

[3]हयमिह नाणं किरियाहीणं ति जओ हयं ति जं विफलं । लोयणविन्नाणं पिव पंगुस्स महानगरदाहे ॥११६०॥

[4]कोहिइ नाणच्चायं किरियाए चेव मोक्खमिच्छंतो । मा सीसो, तो भन्नइ हया य अन्नाणओ किरिया ॥११६१॥

हतमिह ज्ञानम् । किंविशिष्टम् ?, इत्याह– क्रियाहीनमिति यत्र चारित्रक्रिया नास्तीत्यर्थः। ननु कथं क्रियाहीनं ज्ञानं हत-

---

१ यथा खरश्चन्दनभारवाही भारस्य भागी न तु चन्दनस्य । एवं खलु ज्ञानी चरणेन हीनो ज्ञानस्य भागी न तु सुगते ॥ ११५८ ॥
२ हत ज्ञान क्रियाहीनं हताऽज्ञानत क्रिया । पश्यन् पङ्गुर्दग्धो धावमानश्चान्धक ॥ ११५९ ॥
३ हतमिह ज्ञान क्रियाहीनमिति यतो हतमिति यद् विफलम् । लोचनविज्ञानमिव पङ्गोर्महानगरदाहे ॥ ११६० ॥
कार्पीज्ज्ञानत्याग क्रिययैव मोक्षमिच्छन् । मा शिष्यस्ततो भण्यते हता चाज्ञानत. क्रिया ॥ ११६१ ॥ ४ क ग 'हि य ना' ।

अत्रोत्तरमाह—

चरणोवलद्धिहेऊ जं नाणं चरणओ य निव्वाणं। सारो त्ति तेण चरणं पहाण-गुणभावओ भणियं ॥११२९॥

नाणं पयासयं वि गुत्ति-विसुद्धिफलं च जं चरणं। मोक्खो य दुगाहीणो चरणं नाणस्स तो सारो ॥११३०॥

यद् यस्माद् मति-श्रुतादिकं ज्ञानं चरणोपलब्धेश्चारित्रप्राप्तेरेव मुख्यं कारणम्, ज्ञानं विना चरणविषयस्य जीवा-ऽजीवादेर्हेयोपादेयादेश्च वस्तुनोऽपरिज्ञानात्, अपरिज्ञातस्य च यथावत् कर्तुमशक्यत्वात्। चरणाच्च तपःसंयमरूपाद् निर्वाणमुपजायते। अतो निर्वाणस्य सर्वसंवररूपं चरणमेव मुख्यं प्रधानं कारणम्, ज्ञानं तु कारणकारणत्वाद् गौणं तस्य कारणम्। अतस्तेन कारणेन प्रधान-गुणभावाज्ज्ञानस्य सारश्चरणं भणितम्।

प्रधान-गुणभावमेव भावयति— 'नाणमित्यादि' ज्ञानं यस्मात् कृत्या-ऽकृत्यादिवस्तुनः प्रकाशकमेव वस्तुपरिज्ञानमात्रे व्याप्रियत इत्यर्थः। चरणं पुनर्गुप्ति-विशुद्धिफलम्— गुप्तिः संवरः, विशुद्धिस्तु कर्मनिर्जरा, गुप्ति-विशुद्धी फलं यस्य तत् तथा। एवं च सति ज्ञान-चरणलक्षणद्वयाधीनो मोक्षः, केवलं प्रधानतया चरणस्याऽधीनोऽसौ, गौणतयैव च ज्ञानस्य। ततः प्रधान-गुणभावाच्चरणं ज्ञानस्य सार इति ॥११२९॥ ११३०॥

प्रकारान्तरेणापि ज्ञानाच्चारित्रस्य प्रधानत्वं भावयन्नाह—

जं सव्वनाणलाभाणंतरमहवा न मुच्चए सव्वो। मुच्चइ य सव्वसंवरलाभे तो सो पहाणयरो ॥११३१॥

अथवा, यद् यस्मात् सर्वं जानातीति सर्वज्ञानं केवलज्ञानं तल्लाभानन्तरमेव सर्वोऽपि प्राणी न मुच्यते— न मुक्तिं प्राप्नोति, मुच्यते च यस्माच्छैलेश्यवस्थायां सर्वसंवरलाभेऽवश्यमेव सर्वः। ततो ज्ञायते केवलज्ञानादप्यन्वय-व्यतिरेकाभ्यां मुख्यो मोक्षकर्ता सर्वसंवर एव प्रधानतरः, स च क्रियारूपत्वाच्चारित्रमिति ॥ ११३१ ॥

अमुमेवार्थं समर्थयन्नाह—

१ चरणोपलब्धिहेतुर्यज्ज्ञानं चरणतश्च निर्वाणम्। सार इति तेन चरण प्रधान-गुणभावतो भणितम् ॥ ११२९ ॥
ज्ञान प्रकाशकमपि गुप्ति-विशुद्धिफलं च यच्चरणम्। मोक्षश्च द्विकाधीनश्चरणं ज्ञानस्य ततः सारः ॥११३०॥
२ यत् सर्वज्ञानलाभानन्तरमथवा न मुच्यते सर्व.। मुच्यते च सर्वसंवरलाभे ततः स प्रधानतरः ११३१ ॥

न च विष्वक् पृथक् सर्वथैव सिकताकणानां तैल इव साध्ये ज्ञान क्रिययोर्मोक्षं प्रति साधनत्वाभावः, किन्तु या च यावती च तयोर्मोक्षं प्रति देशोपकारिता प्रत्येकावस्थायामप्यस्ति, सा च समुदाये संपूर्णा भवति, इत्येतावान् विशेषः, अतः संयोग एव ज्ञान-क्रिययोः कार्यसिद्धिः ॥ इति गाथापञ्चकार्थः ॥ ११६४ ॥

एतदेवाह—

संजोगसिद्धीइ[1] फलं वयंति न हु एगचक्केण रहो पयाइ ।
अंधो य पंगू य वणे समिच्चा ते संपउत्ता नगरं पविट्ठा ॥ ११६५ ॥

ज्ञान-क्रिययोः संयोगनिष्पत्तावेव मोक्षलक्षणं फलमाचक्षते तीर्थकराः । न हि लोकेऽप्येकचक्रेण रथः प्रवर्तते । एवमन्यदपि सर्वं सामग्रीजन्यमेव कार्यमवगन्तव्यम् । तथा चान्ध-पङ्ग्गूदाहरणमिह वक्तव्यम्; तद्यथा— कस्यापि नगरस्य सत्को लोकः कुतोऽपि राजभयादरण्यं गतः । तत्रापि तस्करधाटीभयाद् वाहनादिकमुज्झित्वा प्रपलायितः । अन्ध-पङ्गू पुनरनाथौ तत्रैव स्थितौ । तत्र च दवाग्नौ सर्वतः प्रदीप्ते तौ परस्परं संप्रयुक्तौ । पङ्गुरन्धेन स्वस्कन्धमारोपितः । स चान्धस्य सम-विषम-स्थाणु-कण्टकादिकं कथयति । अतस्तस्य सत्केन चाक्षुपज्ञानेन, अन्धसत्कया च गतिक्रियया सम्यग् मार्गप्रवृत्त्या क्षेमेण नगरं प्रविष्टाविति । एवं सर्वत्र संयोगात् फलसिद्धिर्भावनीया ॥ इति निर्युक्तिवृत्तार्थः ॥ ११६५ ॥

अत्र भाष्यम्—

दुगसंजोगम्मि[2] फलं सम्मकिरिओ-वलद्धिभावाओ । इट्ठपुरागमणं पिव संजोए अन्ध-पंगूणं ॥ ११६६ ॥
वइरेगो जं विफलं न तत्थ सम्मकिरिओ-वलद्धीओ । दीसंति गमणविफले जहेगचक्के भुवि रहम्मि ॥११६७॥

अनेन गाथाद्वयेन प्रस्तुतार्थसिद्ध्येऽन्वय-व्यतिरेकप्रयोगौ निर्दिष्टौ; तथाहि— द्विकं ज्ञान-क्रियालक्षणं तत्संयोग एव फलं मोक्षं-

1 संयोगसिद्धौ फलं वदन्ति न खल्वेकचक्रेण रथः प्रयाति । अन्धश्च पङ्गुश्च वने समेत्य तौ संप्रयुक्तौ नगरं प्रविष्टौ ॥११६५॥
2 द्विकसंयोगे फलं सम्यक्क्रियो-पलब्धिभावात् । इष्टपुराऽऽगमनमिव संयोगेऽन्ध-पङ्ग्वोः ॥ ११६६ ॥
व्यतिरेको यद् विफलं न तत्र सम्यक्क्रियो-पलब्धी । दृश्येते गमनविफले यथैकचक्रे भुवि रथे ॥ ११६७ ॥ 3 क ग. 'क्षफल भ'।

[1]जं च मणोचिंतियमंतपूतविसभक्खणाइबहुभेयं। फलमिह तं पच्चक्खं किरियारहियस्स नाणस्स ॥११३५॥

द्वे अप्युक्तार्थे एव ॥११३४॥ ११३५॥

एवं ज्ञानवादिना परेणोक्ते सत्याचार्यः प्राह—

[2]जेणं चिय नाणाओ किरिया तत्तो फलं च तो दो वि। कारणमिहरा किरियारहियं चिय तं पसाहेज्जा ॥११३६॥

येनैव च यस्मादेव कारणात् ज्ञानात् क्रिया भवति, ततस्तस्याश्च क्रियायाः समनन्तरमिष्टं फलमवाप्यते; तत एव ते ज्ञान-क्रिये द्वे अप्यभीष्टफलस्य मोक्षादेः कारणं भवतः। अन्यथा ज्ञान-क्रियाभ्यां मोक्षभवनपरिकल्पनमनर्थकमेव स्यात्, क्रियारहितमेव ज्ञानमात्मलाभानन्तरमेव झगित्यभीष्टफलं केवलमपि प्रसाधयेत्, क्रियावदिति ॥११३६॥

अपिच,

[3]नाणं परंपरमणंतरा उ किरिया तयं पहाणयरं। जुत्तं कारणमहवा समयं तो दोन्नि जुत्ताइं ॥११३७॥

यदि ज्ञानं परम्परया कार्यस्योपकुरुते, क्रिया त्वानन्तर्येण, ततो यदेवानन्तरमुपकुरुते तदेव प्रधानं कारणं युक्तम्। अथ समकं युगपद् द्वे अपि ज्ञान-क्रिये कार्योत्पत्तावुपकुरुतः, तर्हि द्वयोरपि प्राधान्यं युक्तम्, न त्वेकस्य ज्ञानस्येति ॥ ११३७ ॥

किंच, ज्ञानात् क्रिया भवन्त्यपि मोक्षस्य कारणमसाविष्यते, नवा?। यदि नेष्यते, तर्हि तामनपेक्ष्यैव केवलादपि ज्ञानात् क्रियावद् मोक्षोऽपि भवेत्, अकारणस्याऽनपेक्षणीयत्वात्। अथ क्रियापि कार्यस्य कारणमिष्यते, तत्राह—

[4]कारणमंतं मोत्तुं किरियमणंतं कहं मयं नाणं?। सहचारित्ते व कहं कारणमेक्कं न पुणरेक्कं? ॥११३८॥

नन्वेवं सत्यानन्तर्योपकारित्वादन्त्यकारणभूतां क्रियां मुक्त्वा कथं परम्परोपकारित्वादनन्त्यं ज्ञानं कारणं भवतोऽभिमतम्? इति निवेद्यताम्?। अथ ब्रूषे—नेहाऽन्त्या-ऽनन्त्यविभागः, किन्तु कार्यस्योत्पित्सोः सहैव युगपद् द्वे अप्युपकुरुतः, तर्ह्येवं हन्त! द्वयोरपि

१ यच्च मनश्चिन्तितमन्त्रपूतविषभक्षणादिबहुभेदम्। फलमिह तत्प्रत्यक्षं क्रियारहितस्य ज्ञानस्य ॥ ११३५ ॥
२ येनैव ज्ञानात् क्रिया ततः फलं च ततो द्वे अपि। कारणमितरथा क्रियारहितमेव तत् प्रसाधयेत् ॥ ११३६ ॥
३ ज्ञानं पारम्परमनन्तरा तु क्रिया तत् प्रधानतरम्। युक्तं कारणमथवा समकं ततो द्वे युक्ते ॥ ११३७ ॥
४ कारणमन्त्या मोक्तु क्रियामनन्त्यं कथं मतं ज्ञानम्?। सहचारित्वे वा कथं कारणमेकं न पुनरेकम्? ॥११३८ ॥

आह– ननु जीवापवरकशोधने किमिति ज्ञानादीनां त्रितयमप्यपेक्ष्यते, यावताऽन्यतरेणैकेनापि तच्छुद्धिर्भविष्यति ?, इत्याशङ्क्यैकैकस्मात् कार्यसिद्धिनिराकरणेन त्रितयसमुदायादेव तत्सिद्धिं समर्थयन्नाह भाष्यकारः—

[1]असहायमसोहिकरं नाणमिह पगासमेत्तभावाओ । सोहेइ घरकयारं जह सुपगासो वि न पईवो ॥११७०॥

न य सव्वविसोहिकरी किरिया वि जमपगासधम्मा सा । जह न तमोगेहमलं नरकिरिया सव्वहा हरइ॥११७१॥

दीवाइपयासं पुण सक्किरियाए विसोहियकयारं । संवरियकयारागमदारं सुद्धं घरं होइ ॥ ११७२ ॥

तह नाणदीवविमलं तवकिरियासुद्धकम्मयकयारं । संजमसंवरियमुहं जीवघरं होइ सुविसुद्धं ॥ ११७३ ॥

इह न ज्ञानमसहायमेकाक्येव शोधयितुमलम्, प्रकाशमात्रस्वभावत्वात्, यदक्रियं प्रकाशमात्रस्वभावं न तद् विशुद्धिकरं दृष्टम्, यथा न गृहरजो-मलविशुद्धिकृद् दीपः, यच्च विशुद्धिकरं न तत् प्रकाशमात्रस्वभावम्, यथेष्टाऽनिष्टप्राप्ति-परिहारपरिस्पन्दवान् नयनादिप्रकाशधर्मा देवदत्तः, प्रकाशमात्रस्वभावं च ज्ञानम्, तस्मादसहायत्वाद् न विशुद्धिकरं तदिति । क्रियाप्येकाकिनी न सर्वशुद्धिकरी, अप्रकाशधर्मकत्वात्, यद् यदप्रकाशधर्मकं न तत् सर्वविशुद्धिकरम्, यथा न समस्तगृहरजो-मलविशुद्धयेऽन्धक्रिया, चक्षुष्मतो वा क्रिया यथा तमोयुक्तं गृहं तमोगृहं तस्य न सर्वविशुद्धयेऽलम्, या च सर्वविशुद्धयेऽलं न साऽप्रकाशस्वभावा, यथा चक्षुष्मतो नरस्य वितमस्कगृहे समस्तरजो-मलापनयनक्रिया, अप्रकाशस्वभावा चैकाकिनी क्रिया, अतो न सर्वविशुद्धिकरीति ।

त्रितयादपि समुदितात् तर्हि शुद्धिर्न भविष्यतीति चेत् । नैवम्, इत्याह– दीपादिप्रकाशं पुनर्यथा गृहं सत्क्रियया विशोधितकचवरं संवृतकचवरागमहेतुभूतद्वारं सर्वथा शुद्धं भवति; तथा तेनैव प्रकारेण ज्ञानदीपविमलितं तपःक्रियया शोधितकर्मकचवरं संयमेन संवृतसमस्ताश्रवद्वारं जीवगृहं सुविशुद्धं सिद्धिसुखसंदोहनिवासयोग्यं भवतीत्यर्थ इति ॥ ११७० ॥ ११७१ ॥ ११७२ ॥ ११७३ ॥

आह– ननु पूर्वं ज्ञान-क्रियालक्षणाद् द्वयाद् मोक्षः, इदानीं तु ज्ञान-तपः-संयमरूपात् त्रितयादसावुच्यते, इति कथं न पूर्वा-

१ असहायमशुद्धिकर ज्ञानमिह प्रकाशमात्रभावात् । शोधयति गृहकचवरं यथा सुप्रकाशोऽपि न प्रदीपः ॥ ११७० ॥
न च सर्वविशुद्धिकरी क्रियाऽपि यदप्रकाशधर्मा सा । यथा न तमोगेहमलं नरक्रिया सर्वथा हरति ॥ ११७१ ॥
दीपादिप्रकाश पुन सत्क्रियया विशोधितकचवरम् । संवृतकचवरागमद्वारं शुद्धं गृहं भवति ॥ ११७२ ॥
तथा ज्ञान-दीपविमलं तपःक्रियाशुद्धकर्मकचवरम् । संयमसंवृतमुखं जीवगृहं भवति सुविशुद्धम् ॥ ११७३ ॥

तो तं कत्तो, भन्नइ तं समयनिबद्धदेवओवाहियं। किरियाफलं चिय जओ न मंतनाणोवओगस्स ॥११४१॥

यदि केवलमन्त्रज्ञानकृतं नभोगमनादिकार्यं न भवति, ततस्तर्हि कुतस्तत्? इति वाच्यम्?। भण्यतेऽत्रोत्तरम्– तद् नभोगमनादिकार्यं समयनिबद्धदेवतोपहितं सत् क्रियाफलमेव यस्मात्, ततो न ज्ञानोपयोगमात्रस्यैव फलमिति। इदमुक्तं भवति– समयः संकेतस्ततो यत्र यत्र देवतानां समये संकेते उपनिबद्धा मन्त्रास्तत् तद् देवताकृतमेव तत्तत् फलम्, देवताश्च सक्रिया एव। अतः सक्रियदेवताभिरुपाहृतं सत् तत्क्रियाफलमेव यतः, अतो न केवलस्य ज्ञानमात्रोपयोगस्य फलमिति स्थितम्।

आह– ननु देवताह्वानं तावत् केवलादेव मन्त्रानुस्मरणज्ञानोपयोगाद् भवति, न वा, इति वक्तव्यम्?। यदि भवति, तर्हि शेषकार्याण्यपि केवलात् तत एव किं नेष्यन्ते?। अथ न भवति, तर्हि कथमसाविहागत्य नभोगमन-विषवीर्यापहारादिकार्याणि कुर्यात्?। अत्रोच्यते– देवताह्वानं भवति, परं न केवलादेव मन्त्रस्मरणज्ञानोपयोगमात्रात्; किन्तु पुनः पुनस्तज्जपन-पूजनादिक्रियासहायात् तस्माद् देवताह्वानमपि संपद्यते, इत्यलं विस्तरेणेति ॥ ११४१ ॥

आह– किं ज्ञानं सर्वथैव निष्क्रियम्?, किं वा कांचिदेव विशिष्टां [2]क्रियामधिकृत्य तन्निष्क्रियम्? इति। अत्रोच्यते– वस्तुपरिच्छेदमात्रं तत् करोति, तत्करणादेव च सहकारिकारणतया जीवस्य चारित्रक्रियां जनयति, यत्तु विशिष्टं मोक्षलक्षणं कार्यं, तन्निर्वर्तकं ज्ञानमानन्तर्येण न भवति, इत्येतद् दिदर्शयिषुः, तथा वक्ष्यमाणं च संबन्धयितुमाह—

[3]वत्थुपरिच्छेयफलं हवेज्ज किरियाफलं च तो नाणं। न उ निव्वत्तयमिट्ठं सुद्धं चिय जं तओऽभिहियं ॥११४२॥

'किरियाफलं ति' क्रियैव फलं यस्य तत् क्रियाफलम्। शेषं सुगमम् ॥ इति षोडशगाथार्थः ॥ ११४२ ॥

किं पुनरभिहितम्?, इत्याह—

[4]सुयनाणम्मि वि जीवो वट्टंतो सो न पाउणइ मोक्खं। जो तव-संजममइए जोगे न चएइ वोढुं जे ॥११४३॥

श्रुतज्ञानेऽपि, अपिशब्दाद् मत्यादिज्ञानेष्वपि जीवो वर्तमानः सन् न प्राप्नोति मोक्षम्, इत्यनेन प्रतिज्ञार्थः सूचितः। यः कथं-

---

१ ततस्तत् कुतो, भण्यते तत् समयनिबद्धदेवतोपहितम्। क्रियाफलमेव यतो न मन्त्रज्ञानोपयोगस्य ॥ ११४१ ॥ २ क. ग 'क्रिया सम'।

३ वस्तुपरिच्छेदफलं भवेत् क्रियाफलं च ततो ज्ञानम्। न तु निर्वर्तकमिष्टं शुद्धमेव यत् ततोऽभिहितम् ॥११४२ ॥

४ श्रुतज्ञानेऽपि जीवो वर्तमानः स न प्राप्नोति मोक्षम्। यस्तपः-संयममयान् योगान् न शक्नोति वोढुम् ॥ ११४३ ॥

तम् ?, इत्याह– 'न लभते शिवं मोक्षं श्रुतेऽपि वर्तमानोऽचरणो जीवः' इति । तस्य प्रतिज्ञातस्य हेतुरयं द्रष्टव्यः । कः ?, इत्याह– 'खओवसमउ त्ति' क्षायोपशमिकत्वात्– श्रुतज्ञानस्य क्षायोपशमिकभाववर्तित्वात्, मोक्षस्य च क्षायिकज्ञान एव भावादिति भावः । यथाऽवधिज्ञाने वर्तमान इति दृष्टान्तः ॥ ११७५ ॥

अत्र परः प्राह– ननु यद्येवम्, तर्हि चरणसहितादपि श्रुताद् मोक्षो न भवत्येव, अस्मादेव हेतोः, अमुष्मादेव च दृष्टान्तादिति । कः किमाह ?– क्षायोपशमिके चरणसहितेऽपि ज्ञाने न भवत्येव मोक्ष इति सिद्धसाध्यतैव, किन्तु क्षायिकज्ञान-चारित्राभ्यामेव मोक्ष इति । एतदेवाह—

सक्किरियम्मि वि नाणे मोक्खो खइयम्मि न उ खओवसमे । सुत्तं च खओवसमे न तम्मि तो चरणजुत्ते वि॥११७६॥

गतार्थैव ॥ ११७६ ॥

आह– यद्येवं क्षायोपशमिकभाववृत्तित्वेनैव श्रुताद् मोक्षो निषिद्ध इत्यतश्चरणसहितात् ततः प्राग् यद् मोक्षाभिधानं तच्छून्यचित्तभाषितमेव । नैवम्, यतः साक्षादानन्तर्येणैव श्रुताद् मोक्षो निषिध्यते, पारम्पर्येण तु तस्मादप्यसौ भवत्येव, यस्मात् श्रुतज्ञान-चारित्राभ्यां क्षायिकज्ञान-चारित्रे लभ्येते, ताभ्यां च मोक्षः संप्राप्यते । ततश्चारित्रयुक्तं श्रुतं मोक्षहेतुरिति यदुक्तं प्राक्, तदप्यविरुद्धमेवेति । एतदेवाह—

जं सुयं-चरणेहिंतो खाइयनाण-चरणाणि लब्भंति । त्तो सिवं सुयं तो सचरणमिह मोक्खहेउ त्ति॥११७७॥

व्याख्यातार्थैव ॥ ११७७ ॥

ननुः कुतः पुनरिदमवसीयते यत्– क्षायोपशमिके भावे श्रुतं वर्तते ? । उच्यते– आगमे तथैवाऽभिधानात् । कः पुनरेवमागमः ?, इत्याह– 'भावे खओसमिए इत्यादि' इत्येवमेकया पातनयेयं गाथा संबध्यते । अथ पातनान्तरं चिकीर्षुराह—

आह व निज्जिण्णे च्चिय कम्मे नाणं ति किंव चरणेणं ? । न सुयं खयओ केवलनाण-चरित्ताइं खइयाइं ॥११७८॥

१ सक्रियेऽपि ज्ञाने मोक्षः क्षायिके न तु क्षयोपशमे । सूत्रं च क्षयोपशमे न तस्मिंस्ततश्चरणयुक्तेऽपि ॥ ११७६ ॥
२ यत् श्रुत-चरणाभ्यां क्षायिकज्ञान-चारित्रे लभ्येते । ततः शिवं श्रुतं ततः सचरणमिह मोक्षहेतुरिति ॥ ११७७ ॥ ३ गाथा ११८० ।
४ आह वा निर्जीर्णे एव कर्मणि ज्ञानमिति किंवा चरणेन ? । न श्रुतं क्षयतः केवलज्ञान-चारित्रे क्षायिके ॥ ॥ ११७८ ॥

न्वितं मानुषजन्म त्वया लब्धम्। तल्लाभाच्च संसारसागरादुन्मग्न इवोन्मग्नस्त्वं वर्तसे। अतश्चरणकरणाद्यनुष्ठानप्रमादेन मा तत्रैव निमाङ्क्षीरिति। न च वक्तव्यम्- विशिष्टश्रुतज्ञानयुक्तोऽहं तद्बलेनैव वस्तुपरिज्ञानमात्रादेव मुक्तिमासादयिष्यामीति; यतश्चरणगुणविप्रहीणः सुबह्वपि श्रुतज्ञानेन जानन् ब्रुडति निमज्जति पुनरपि संसारसमुद्रे। अतो ज्ञानमात्रसमुत्थमवष्टम्भमपहाय चरणकरणानुष्ठान एवोद्यमो विधेयः॥ इति निर्युक्तिगाथात्रयार्थः॥ ११४५॥ ११४६॥ ११४७॥

तृतीयगाथाभावार्थं भाष्यकारो दृष्टान्तेनाह—

संसारसागराओ कुम्मो इव कम्मचम्मविवरेण। उम्मज्जिउमिह जइणं नाणाइपगासमासज्ज॥ ११४८॥

दुलहं पि जाणमाणो सयणसिणेहाइणा तयं तत्तो। संजमकिरियारहिओ तत्थेव पुणो निबुड्डेज्जा॥११४९॥

अयमत्र भावार्थः- यथा कश्चित् कूर्मः कच्छपस्तृणपत्रपटलप्रचुरातिनिविडसेवालाच्छादितोदकान्धकारमहाह्रदान्तर्गतोऽनेकजलचरक्षोभादिव्यसनव्यथितमानसः सर्वतः परिभ्रमन् कथमपि सेवालरन्ध्रमासाद्य तेनैवोपरि निर्गत्य च शरत्पार्वणचन्द्रचन्द्रिकास्पर्शसुखमनुभूय भूयोऽपि स्वबन्धुभूताऽन्यजलचरस्नेहाकृष्टचित्तः, तेषामपि वराकाणामदृष्टकल्याणानामहमिदं सुरलोककल्पं किमपि दर्शयामि, इत्यवधार्य पुनस्तदेव ह्रदमध्यं प्रविष्टः। अथ समाहूतशेषजलचरवृन्दस्तद्रन्ध्रोपलब्ध्यर्थं पर्यटन्, अपश्यंश्च कष्टतरं व्यसनमनुभवति। एवमयमपि जीवकच्छपोऽनादिकर्मसंतानाच्छादिताद् मिथ्याज्ञानतिमिरानुगताद् विविधशिरो-नेत्रव्यथा-ज्वर-कुष्ठ-भगन्दरादिशारीरे-ष्टविप्रयोगा-ऽनिष्टसंप्रयोगादिमानसदुःखजलचरसमूहानुगतात् संसारसागरात् कथञ्चिदेव मनुष्यभवप्राप्तियोग्यकर्मोदयलक्षणं रन्ध्रमासाद्य मानुषत्वमाप्त्योन्मग्नः सन् जिनवरेन्द्रचन्द्रवाक्चन्द्रिकासंगमसुखमनुभूय 'दुष्प्रापोऽयं जिनवचनबोधिलाभः' इत्येवं जानन्नपि स्वजनस्नेहविषयानुरक्तचित्ततया पुनरपि तत्रैव भवसागरे निमज्जेत्। अत उच्यते- 'मा त्वमित्थमस्मिन्नेव भवसागरे निमाङ्क्षीः, किन्तु सदनुष्ठानेष्वप्रमादपरो भव' इति।

अक्षरार्थस्तु सुगम एव, नवरं मनुष्यभवप्राप्त्यावारककर्मैव चर्म सेवालः कर्मचर्म तस्य विवरोऽनुदयावस्था तेन। 'जइणमित्यादि' जैनं ज्ञानादिप्रकाशं ज्ञान-दर्शन-चारित्रस्वरूपाववोधात्मकं तत्स्वरूपश्रवणादिद्वारेण गुरुभ्यः समासाद्येति। 'तयं ति' ज्ञानादिप्रकाशं दुर्ले-

१ संसारसागरात् कूर्म इव कर्मचर्मविवरेण। उन्मज्ज्येह जैनं ज्ञानादिप्रकाशमासाद्य॥ ११४८॥
दुर्लभमपि जानन् स्वजनस्नेहादिना तत् ततः। संयमक्रियारहितस्तत्रैव पुनर्निब्रुडेत्॥ ११४९॥

भाष्यम्—

[1]सव्वं पि किमुय देसो केवलवज्जाणि वाविसद्देणं । चत्तारि खओवसमे सामइयाइं च पाएणं ॥११८१॥
सव्वकसायावगमे केवलमिह नाण-दंसण-चरित्तं । देसक्खए वि सम्मं धुवं सिवं सव्वखइएसुं ॥११८२॥

सर्वमपि श्रुतं क्षायोपशमिकभाववर्ति, किमुत तद्देशः, इत्यपिशब्दभावार्थः । अथवा, अपिशब्दात् केवलज्ञानवर्जानि चत्वारि ज्ञानानि, सामायिकानि च सम्यक्त्व-श्रुत-देश-सर्वविरमणरूपाणि चत्वारि, प्रायोग्रहणादक्षायिकौ-पशमिकानीति । इह '[2]नेणत्थ खए कसायाणं' इति केवलज्ञानविषयसामान्योक्तावतिप्रसङ्गाद् विशेषं दर्शयति– केवलज्ञानं, केवलदर्शनं, केवलं परिपूर्णं क्षायिकं चारित्रं चेति । एतानि त्रीणि सर्वेषामेव क्रोधादिकषायाणामपगमे क्षये भवन्ति । क्षायिकं सम्यक्त्वं पुनस्तेषामनन्तानुबन्धिचतुष्टयरूपदेशक्षयेऽपि भवति । ततः सर्वेष्वपि ज्ञान-दर्शन-सम्यक्त्व-चारित्रेषु क्षायिकेषु जातेषु सत्सु ध्रुवं निश्चितं शिवं मोक्षो भवति जीवस्येति ॥११८१॥११८२॥

अथोत्तरनिर्युक्तिगाथासंबन्धनार्थमाह—

[4]कहमेयाणमलाभो लाभो व कमो तदावरणया वा । आवरणखउवसमो समो खओ वा कहं कस्स ?॥११८३॥

कथं पुनरेतेषां सम्यक्त्वादीनामलाभः ?, कथं वा लाभः– कुतो हेतोरित्यर्थः ?, को वा लाभक्रमः ?, कस्य वा किमावरणम् ?, कस्य वा कथमावरणक्षयोपशमः ?, कथं वोपशमः ?, क्षयो वा ? इत्येका पातना ॥ ११८३ ॥

पातनान्तरमाह—

[6]अहवा तवाइमइयं कहमारूढो तरुं जिणो कह वा । तत्तो पवक्खमाणा जाया जिणपवयणुप्पत्ती ?॥ ११८४ ॥

अथवा, '[7]तव-नियम-नाणरुक्खं' इत्यादि प्रागुक्तम्, तत्रेदानीमेतत् पृच्छयते– तं तपोनियमादिवृक्षं जिनः कथमारूढः– केन हेतुना, केन वा क्रमेण ? इत्यर्थः, कथं वा ततो जिनात् प्रवक्ष्यमाणा भणिष्यमाणा जिनप्रवचनोत्पत्तिर्जाता ? इति ॥ ११८४ ॥

१ सर्वमपि किमुत देश केवलवर्जानि वाऽपिशब्देन । चत्वारि क्षयोपशमे सामायिकानि च प्रायेण ॥ ११८१ ॥
सर्वकषायापगमे केवलमिह ज्ञान-दर्शन-चारित्रम् । देशक्षयेऽपि सम्यग् ध्रुव शिव सर्वक्षायिकेषु ॥ ११८२ ॥ २ गाथा ११८० ।
३ क ग 'कं पुनस्तेषा सम्यक्त्वमन' । ४ कथमेतेषामलाभो लाभो वा क्रमस्तदावरणता वा ? । आवरणक्षयोपशम' शम क्षयो वा कथ कस्य ? ॥ ११८३ ॥
५ क ग 'म्यग्ज्ञानादी' । ६ अथवा तपआदिमय कथमारूढस्तरुं जिन' कथ वा । तत. प्रवक्ष्यमाणा जाता जिनप्रवचनोत्पत्ति. ? ॥ ११८४ ॥ ७ गाथा १०९४ ।

गतार्थैव ॥ ११५३ ॥

अत्र प्रेर्यमुत्थाप्य परिहरति—

[1]अंधोऽणवबोहो च्चिय बोहफलं पुण सुयं किमण्णाणं ?। बोहो वि तओ विफलो तस्स जमंधस्स व [2]वबोहो ॥११५४॥

आह— नन्वत्र दृष्टान्त-दार्ष्टान्तिकयोर्वैषम्यमेव, यतोऽन्धोऽनवबोध एव । न खलु तस्य बहुभिरपि प्रदीपकोटिभिः प्रज्वलिताभिर्घटाद्यवबोधो जन्यते, स्वयं चक्षुर्विकलत्वात् तस्य । श्रुतज्ञानं तु सज्जचक्षुषः प्रदीपवद् बोधफलमेव, ततः किमिदमज्ञानमभिधीयते ?– किमिति केवलाधीतश्रुतस्य तदकिञ्चित्करमुच्यते ? इति भावः । अत्रोत्तरम्– बोधोऽपि तकोऽसौ श्रुतजनितस्तस्य चरणहीनस्य विफलो यस्मात्, तस्मादनवबोध एवेति भावः, यथाऽन्धस्य 'अवबोहो त्ति' अवबोधः ॥ इति गाथाद्वयार्थः ॥ ११५४ ॥

व्यतिरेकमाह—

[3]अप्पं पि सुयमहीयं पगासयं होइ चरणजुत्तस्स । एक्को वि जह पईवो सचक्खुअस्सा पयासेइ ॥११५५॥

अल्पमपि श्रुतमधीतं चरणयुक्तस्य तद्धेतुत्वात् प्रकाशकं भवति– प्रकाशकं भण्यते, क्रियाहेतुत्वेन सफलत्वाज्ज्ञानत्वेन व्यपदिश्यत इति तात्पर्यम् । यथैकोऽपि प्रदीपो हेयो-पादेयपरिहारो-पादानादिक्रियाहेतुत्वाच्चक्षुष्मतः प्रकाशयति प्रकाशको भण्यते ॥ इति निर्युक्तिगाथार्थः ॥ ११५५ ॥

भाष्यम्—

[4]किरियाफलसंभवओ अप्पं पि सुयं पगासयं होइ। एको वि हु चक्खुमओ किरियाफलदो जह पईवो॥११५६॥

पूर्वार्धस्यान्ते 'चरणयुक्तस्य' इति शेषः । शेषमुक्तार्थमेव ॥ ११५६ ॥

वक्ष्यमाणवृत्तं संबन्धयन्नाह—

[5]न हि नाणं विफलं चिय किलेसफलयं पि चरणरहियस्स। निप्फलपरिवहणाओ चंदणभारो खरस्सेव ॥११५७॥

---

१ अन्धोऽनवबोध एव बोधफलं पुनः श्रुतं किमज्ञानम् ? । बोधोऽपि सको विफलस्तस्य यदन्धस्येवाऽवबोधः ॥ ११५४ ॥ २ घ. छ. 'दवो' ।

३ अल्पमपि श्रुतमधीत प्रकाशकं भवति चरणयुक्तस्य । एकोऽपि यथा प्रदीपः सचक्षुषः प्रकाशयति ॥ ११५५ ॥

४ क्रियाफलसंभवतोऽल्पमपि श्रुतं प्रकाशकं भवति । एकोऽपि खलु चक्षुष्मतः क्रियाफलदो यथा प्रदीपः ॥ ११५६ ॥

५ न हि ज्ञानं विफलमेव क्लेशफलकमपि चरणरहितस्य । निष्फलपरिवहणाच्चन्दनभारः खरस्येव ॥ ११५७ ॥

आउस सागराइं तेत्तीसं, अवरओ मुहुत्तंतो। अट्ठ य नामा-गोए वेअणीए बारस मुहुत्ता ॥११८८॥[1]

नाम-गोत्रयोर्विंशतिः सागरोपमकोटाकोट्य उत्कृष्टा स्थितिः, मोहनीयस्य तु सप्ततिः, शेषाणां तु ज्ञानावरण-दर्शनावरण-वेदनीया-ऽन्तरायाणां त्रिंशत्, आयुषस्तु त्रयस्त्रिंशत् सागरोपमाण्युत्कृष्टा स्थितिः। अवरतो जघन्यतः पुनर्मुहूर्तान्तः– ज्ञानावरण-दर्शनावरण-ऽऽयु-र्मोहनीया-ऽन्तरायलक्षणानां पञ्चानां कर्मप्रकृतीनामन्तर्मुहूर्तं जघन्या स्थितिरित्यर्थः; नाम-गोत्रयोरष्टौ मुहूर्ताः, वेदनीयस्य तु द्वादश मुहूर्ता जघन्या स्थितिः।

तत्र मोहनीयस्य जघन्यस्थितिबन्धकोऽनिवृत्तिबादरः, आयुषस्तु मिथ्यादृष्टयस्तिर्यग्-मनुष्याः, ज्ञानावरण-दर्शनावरण-वेदनीय-नाम-गोत्रा-ऽन्तरायाणां तु सूक्ष्मसंपरायो जघन्यस्थितिबन्धकः। कषायप्रत्यया चेह जघन्या स्थितिर्विवक्षिता, योगप्रत्ययां[2] तूपशान्तमोहादीनां वेदनीयस्य सामयिक्यप्येषा स्यादिति। आह– किमेताः कर्मप्रकृतयो युगपदेवोत्कृष्टस्थितयो भवन्ति, आहोस्विदेकस्या उत्कृष्टस्थितौ जातायां पश्चादन्या उत्कृष्टस्थितयो भवन्ति, अन्यथा वा कथञ्चित्?। अत्रोच्यते– वैचित्र्यमत्र ॥ ११८७ ॥ ११८८ ॥

किं पुनस्तत्?, इत्याह—

[3]मोहस्सुक्कोसाए ठिईए सेसाण छण्हमुक्कोसा। आउस्सुक्कोसा वा मज्झिमिया वा न उ जहण्णा ॥ ११८९ ॥

मोहविवज्जुक्कोसयठिईए मोहस्स सेसियाणं च। उक्कोस मज्झिमा वा कासइ व जहण्णिया होज्जा ॥११९०॥

मोहनीयस्योत्कृष्टायां स्थितौ बध्यमानायां शेषाणां ज्ञानावरण-दर्शनावरण-वेदनीय-नाम-गोत्रा-ऽन्तरायलक्षणानां षण्णां कर्मणामुत्कृष्टैव स्थितिर्भवति। उत्कृष्टसंक्लेशे हि मोहनीयस्योत्कृष्टा स्थितिर्बध्यते। तत्र वर्तमानो जन्तुर्ज्ञानावरणादीनामप्युत्कृष्टां[4] स्थितिं बध्नातीति सुप्रतीतमेव। आयुषस्तु यदोत्कृष्टस्थितिकेन मोहनीयेन सहोत्कृष्टं नारकायुरपि बद्ध्वा सप्तमपृथिव्यामुत्पद्यते, तदा नारकायुराश्रित्योत्कृष्टा त्रयस्त्रिंशत्सागरोपमलक्षणा स्थितिर्लभ्यते। यदा तु षष्ठपृथिव्यादिषूत्पद्यते, तदा तस्यैव मध्यमा स्थितिर्लभ्यते, न तु जघन्या। एतावत्संक्लेशवतो नरक एवोत्पादात्, तत्र च क्षुल्लकभवग्रहणलक्षणाया आयुर्जघन्यस्थितेरसंभवात्। यदाऽप्युत्कृष्टसं-

१ आयुषः सागरास्त्रयस्त्रिंशत्, अवरतो मुहूर्तान्तः। अष्ट च नाम-गोत्रयोर्वेदनीये द्वादश मुहूर्ता ॥ ११८८ ॥ २ क ग 'या तेषूप'।
३ मोहस्योत्कृष्टायां स्थितौ शेषाणां षण्णामुत्कृष्टा। आयुष उत्कृष्टा वा मध्यमा वा न तु जघन्या ॥ ११८९ ॥
मोहविवर्जोत्कृष्टस्थितौ मोहस्य शेषाणां च। उत्कृष्टा मध्यमा वा कस्यचिद् वा जघन्या भवेत् ॥ ११९० ॥ ४ क. ग 'रणीयादी'।

मुच्यते ?, इत्याह– यतो यस्माद् यद् विफलं तदिह हतं विवक्षितम्, फलं च ज्ञानस्य क्रियैव, ततो विगतफलं ज्ञानं क्रियाहीनमेवोच्यते, नान्यत्। अत्र च प्रयोगः– हतं ज्ञानमेव केवलम्, सत्क्रियाहीनत्वात्, महानगरप्रदीपनकदाहे पलायनक्रियारहितपङ्गुलोचनज्ञानवदिति। एवमुक्ते सति क्रियात एव मोक्षमिच्छन् ज्ञानेऽनादृतस्तत्त्यागं मा कार्षीच्छिष्यः; इत्यतो भण्यते– हताऽज्ञानतः क्रिया। हता मोक्षलक्षणफलरहिताऽज्ञानपरिगृहीता निह्नवादेः क्रिया, सम्यग्दृष्टेरपि ज्ञानोपयोगशून्यस्य क्रिया हतैव, तथाविधफलविकलत्वात्, सर्वतः संकटप्रदीप्तनगरे दह्यमानगृहाद्यभिमुखपलायमानान्धगतिक्रियावदिति। तस्मादन्योन्यापेक्षे समुदिते एव ज्ञान-क्रिये मोक्षस्य साधनमेष्टव्ये, न प्रत्येकमिति ॥ ११६० ॥ ११६१ ॥

एतदेवाह—

[1]अइसंकडपुरदाहम्मि अंधपरिधावणाइकिरिय व्व। तेणं नोन्नावेक्खा साहणमिह नाण-किरियाओ ॥११६२॥

गतार्थैव ॥ ११६२ ॥

अत्र परः प्राह—

[2]पत्तेयमभावाओ निव्वाणं समुदियासु वि न जुत्तं। नाण-किरियासु वोत्तुं सिकतासमुदायतेल्लं व ॥११६३॥

आह– ननु भवत्प्रतिपादितन्यायेन प्रत्येकावस्थायां ज्ञान-क्रिययोर्निर्वाणसाधकसामर्थ्याभावात् समुदिताभ्यामपि ज्ञान-क्रियाभ्यां निर्वाणं वक्तुं न युक्तम्, सिकतासमुदाये तैलवत्। अत्र प्रयोगः– इह यद् यतः प्रत्येकावस्थायां नोत्पद्यते[3], तत् ततः समुदायेऽपि न भवति, यथा सिकताकणेषु प्रत्येकमभवत् तैलं तत्समुदायेऽपि न भवति, न जायते च प्रत्येकं ज्ञान-क्रियाभ्यां मोक्षः, अतस्तत्समुदायादप्यसौ न युज्यत इति। तदेतदयुक्तम्, प्रत्यक्षविरुद्धत्वात्; तथाहि– मृत्-तन्तु-चक्र-चीवरादिभ्यः प्रत्येकमभवन्तोऽपि तत्समुदायाद् घटादिपदार्थसार्थाः प्रादुर्भवन्तो दृश्यन्ते, अतोऽदृष्टस्य मोक्षस्यापि ज्ञान-क्रियासमुदायात् प्रादुर्भूतिरविरुद्धैवेति ॥११६३॥

किञ्च,

[4]वीसुं न सव्वह च्चिय सिकतातेल्लं व साहणाभावो। देसोवगारिया जा सा समवायम्मि संपुण्णा ॥११६४॥

---

१ अतिसकटपुरदाहेऽन्धपरिधावनादिक्रियेव। तेनाऽन्योन्यापेक्षे साधनमिह ज्ञान-क्रिये ॥ ११६२ ॥

२ प्रत्येकमभावाद् निर्वाणं समुदितयोरपि न युक्तम्। ज्ञान-क्रिययोर्वक्तु सिकतासमुदायतैलमिव ॥११६३ ॥ ३ क. ग 'नोपपद्य'।

४ विष्वग् न सर्वथैव सिकतातैलमिव साधनाभावः। देशोपकारिता या सा समवाये सपूर्णा ॥ ११६४ ॥

तिक एकस्मिन्नायुषि भज विकल्पयैतानि– कस्यचित् किञ्चिद् भवति, कस्यचिद् नेति। तत्र चानुत्तरसुरस्य सम्यक्त्व-श्रुतसामायिके पूर्वप्रतिपन्ने भवतः, न शेषमित्युक्तमेवेति। ज्ञानावरणादिसर्वजघन्यस्थितिकोऽपि सूक्ष्मसंपरायादिर्न लभते– नैतानि प्रतिपद्यते, येन यस्मात् सम्यक्त्व-श्रुत-सर्वविरतिसामायिकानां पूर्वप्रतिपन्नोऽसौ वर्तते, तस्मात् पुनरपि न लभते, लब्धस्य पुनर्लाभासंभवादिति। आयुषस्तु क्षुल्लकभवग्रहणजघन्यस्थितिको न पूर्वप्रतिपन्नः, नापि प्रतिपद्यमानकः, इति प्राक् सर्वं भावितमेव ॥ इति गाथाषट्कार्थः ॥ ११९१ ॥ ११९२ ॥

अथ सम्यक्त्वादीनां लाभकारणमाह—

[1]सत्तण्हं पयडीणं अब्भिंतरओ उ कोडकोडीए। काऊण सागराणं जइ लहइ चउण्हमन्नयरं ॥ ११९३ ॥

सप्तानामायुर्वर्जानां कर्मप्रकृतीनां स्थितिमङ्गीकृत्य याऽन्त्या सागरोपमाणां कोटाकोटी तस्या अभ्यन्तरत एव कृत्वा 'आत्मानम्' इति गम्यते, यदि लभते– चतुर्णामन्यतरत् सामायिकं लभते, तदेत्थं लभते नाऽन्यथेत्यर्थः ॥ इति गाथार्थः ॥ ११९३ ॥

भाष्यम्—

[3]अंतिमकोडाकोडीए सव्वकम्माणमाउवज्जाणं। पलियासंखिज्जइमे भागे खीणे भवइ गंठी ॥ ११९४ ॥

यदा किल क्षप्यमाणानामायुर्वर्जसप्त[4]कर्मणां स्थितेरन्त्या सागरोपमकोटाकोटी अवतिष्ठते, तदा तन्मध्यादपि पल्योपमासंख्येय-भागे क्षपिते ग्रन्थिराविर्भवति ॥ ११९४ ॥

ग्रन्थिः किमुच्यते ?, इत्याह—

[5]गंठि त्ति सुदुब्भेओ कक्खडघणरूढगूढगंठि व्व। जीवस्स कम्मजणिओ घणराग-द्दोसपरिणामो ॥११९५॥

ग्रन्थिरिति भण्यते। कः ?, इत्याह– घनोऽतिनिविडो राग-द्वेषोदयपरिणामः। कस्य ?। जीवस्य। कथंभूतः ?। कर्मजनितः– कर्मविशेषप्रत्ययः। अयं च दुर्भेदो दुर्मोचो दुःक्षेपणीयो भवति। क इव ?। वल्कादेर्दारुविशेषस्य संबन्धी कर्कशघनरूढगूढग्रन्थिरिव।

१ सप्तानां प्रकृतीनामभ्यन्तरतस्तु कोटाकोट्या। कृत्वा सागराणां यदि लभते चतुर्णामन्यतरत् ॥ ११९३ ॥ २ घ छ 'कं त'। ३ अन्तिमकोटाकोट्या सर्वकर्मणामायुर्वर्जानाम्। पल्यासंख्येये भागे क्षीणे भवति ग्रन्थि ॥ ११९४ ॥ ४ क ग 'समस्तक'। ५ ग्रन्थिरिति सुदुर्भेद कर्कशघनरूढगूढग्रन्थिरिव। जीवस्य कर्मजनितो घनराग-दोषपरिणाम. ॥ ११९५ ॥

लक्षणं भवति। कुतः?, अत्र संयोगे सम्यक्क्रियो-पलब्धिभावादिति। क्रिया चारित्ररूपा, उपलब्धिस्तु ज्ञानम्। इह यत्र यत्र सम्यक्क्रिया-ज्ञाने तत्र तत्रेष्टफलसिद्धिः, यथाऽन्ध-पङ्गुसम्यक्क्रिया-ज्ञानसंयोगे, सम्यक्क्रिया-ज्ञाने चात्र द्वयसंयोगे, तस्मादतो मोक्षफलसिद्धिः। इत्यन्वयप्रयोगः। अथ व्यतिरेकप्रयोग उच्यते— यद् विफलं न तत्र सम्यक्क्रिया-ज्ञाने दृश्येते, यथा भुवि पृथिव्यां गतिक्रियारहिते विघटितैकचक्रे रथे, सम्यक्क्रिया-ज्ञाने चात्र द्वयसंयोगे, तस्मादतो मोक्षफलप्राप्तिरिति ॥ ११६७ ॥

वक्ष्यमाणनिर्युक्तिगाथासंबन्धनार्थमाह—

[1]सहकारित्ते तेसिं किं केणोवकुरुते सहावेणं। नाण-चरणाणमहवा सहावनिद्धारणमियाणिं ॥ ११६८ ॥

आह— ज्ञान-क्रिययोः सहकारित्वे सति किं केन स्वभावेनोपकुरुते— किमविशेषेणोपकुरुतः, शिविकावाहकपुरुषसंघातवत्?; आहोस्विद् भिन्नस्वभावतया, गतिक्रियायां नयन-चरणादिवत्?। अत्रोच्यते— भिन्नस्वभावतया, यत आह— 'नाणं पयासय-मित्यादि'। इत्येका वक्ष्यमाणगाथायाः प्रस्तावना। अथवा, संक्षिप्ताऽन्या प्रस्तावनोच्यते, यथा— तयोरेव ज्ञान-चरणयोरिदानीं स्वभाव-निर्धारणं क्रियते। इति संक्षेप-विस्तरकृत एव भेदः, न तु पारमार्थिकः॥ इति गाथात्रयार्थः॥ ११६८ ॥

[2]नाणं पयासयं सोहओ तवो संजमो य गुत्तिकरो। तिण्हं पि समाओगे मोक्खो जिणसासणे भणिओ ॥११६९॥

इह यथा किञ्चिदुद्घाटद्वारं बहुवातायनजालकच्छिद्रं वाताकृष्टादिप्रचुररेणु-कचवरपूरितं शून्यगृहम्। तत्र च वस्तुकामः कोऽपि तत् शुशोधयिषुर्द्वारवातायनजालकानि सर्वाण्यपि बाह्यरेणु-कचवरप्रवेशनिषेधार्थं स्थगयति। मध्ये च प्रदीपं प्रज्वलयति। पुरुषं च कचवराद्याकर्षणाय व्यापारयति। तत्र च प्रदीपो रेण्वादिमलप्रकाशनव्यापारेणोपकुरुते, द्वारादिस्थगनं तु बाह्यरेण्वादिप्रवेशनिषेधेन, पुरुषस्तु रेण्वाद्याकर्षणात् तच्छोधनेन। एवमिहापि जीवापवरक उद्घाटाश्रवद्वारः सद्गुणशून्यो मिथ्यात्वादिहेत्वाकृष्टकर्मकचवरपूरितो मुक्तिसुखनिवासहेतोः शोधनीयो वर्तते। तत्र च प्रदीपस्थानीयं ज्ञानं जीवादिवस्तूनां प्रकाशकम्, तपस्तु पुरुषस्थानीयं कर्मकचवरशोधकम्, संयमस्तु द्वारादिस्थगनकल्पो गुप्तिकरो नूतनकर्मकचवरप्रवेशनिषेधकः। एवं त्रयाणामपि ज्ञानादीनां समायोगे समवाये मोक्षो जीवस्य जिनशासने भणितः। एवं शुद्धस्वरूपे जीवमन्दिरे सिद्धिसुखानि संततं निवसन्ति॥ इति निर्युक्तिगाथार्थः ॥ ११६९ ॥

१ सहकारित्वे तयोः किं केनोपकुरुते स्वभावेन?। ज्ञान-चरणयोरथवा स्वभावनिर्धारणमिदानीम् ॥ ११६८ ॥
२ ज्ञानं प्रकाशकं शोधकं तपः संयमश्च गुप्तिकरः। त्रयाणामपि समायोगे मोक्षो जिनशासने भणितः ॥ ११६९ ॥

पाएण पुव्वसेवा परिमउई साहणम्मि गुरुतरिया । होइ महाविज्जाए किरिया पायं सविग्घा य ॥११९९॥
तह कम्मट्ठिइखवणे परिमउई मोक्खसाहणे गुरुई । इह दंसणाइकिरिया दुलहा पायं सविग्घा य ॥१२००॥

महाविद्यासाधनवदेतद् द्रष्टव्यम्– यथा महाविद्यायाः सिसाधयिषितायाः प्रायः पूर्वसेवा नातिगुर्वी, किन्तु परिमृद्वी भवति; तत्साधनकाले तु या क्रिया सा गुरुतराऽतिगरीयसी भवति, सविघ्ना च प्रायः संजायते; तथा ग्रन्थिभेदात् पूर्वं कर्मस्थितिक्षपणे या यथाप्रवृत्तकरणक्रिया सा नातिगुर्वी, किन्तु परिमृद्वी; या पुनर्ग्रन्थिभेदादारभ्य मोक्षसाधने सम्यग्दर्शनज्ञानसहितचारित्रक्रिया, सातीव गुर्वी, दुष्प्रापा, सविघ्ना च भवति । न चैतां सम्यग्दर्शन-ज्ञानान्वितचारित्रक्रियामन्तरेण कस्यापि कदाचिदपि मोक्षो भवति । इति कथमुच्यते– 'सम्यक्त्वादिगुणविकलोऽपि सर्वं कर्म क्षपयित्वा मोक्षमासादयतु जीवः' इति ? ॥ ११९९ ॥ १२०० ॥

प्रतिविधानान्तरमाह—

अहव जओ च्चिय सुबहुं खवियं तो निग्गुणो न सेसं पि । स खवेइ जओ लभए सम्मत्त-सुयाइगुणलाभं ॥१२०१॥

अथवा, यत एव गुणवैकल्यावस्थायां सुबहुनेन कर्म क्षपितम्, अत एव शेषमपि कर्म निर्गुणः सन् न क्षपयति । कुतः ?, इत्याह– यतः क्षपितबहुकर्मत्वादपचितबहुदोषो ग्रन्थिभेदादूर्ध्वं सम्यक्त्वादिगुणलाभं लभते, इति कथं तदा निर्गुणः स्यात् ? । अयमभिप्रायः– न हि केनाप्यध्याहृत्यापेक्षिताः सम्यक्त्वादिगुणा भवन्ति, येन भवता प्रोच्यते– 'किं सम्यक्त्वादिगुणैर्मोक्षहेतुतया कल्पितैः?' इति । क्षपितबहुक्लिष्टकर्मणामनपेक्षिता अपि स्वयमेव प्रादुर्भवन्ति गुणाः, इति कथं निर्गुण एव शेषमपि क्षपयतु ? इति ॥ १२०१ ॥

ग्रन्थिभेदं च जीवो यथाप्रवृत्तादिकरणक्रमेण विदधाति; तत्र कानि, कियन्ति, कस्य चैतानि करणानि भवन्ति ?, इत्याह—

करणं अहापवत्तं अपुव्वमनियट्टियमेव भव्वाणं । इयरेसिं पढमं चिय भन्नइ करणं ति परिणामो ॥१२०२॥

इह भव्यानां त्रीणि करणानि भवन्ति, तद्यथा– यथाप्रवृत्तकरणम्, अपूर्वकरणम्, अनिवर्तिकरणं चेति । तत्र येनाऽनादिसं-

१ प्रायेण पूर्वसेवा परिमृद्वी साधने गुरुतरा । भवति महाविद्यायां क्रिया प्राय सविघ्ना च ॥ ११९९ ॥
तथा कर्मस्थितिक्षपणे परिमृद्वी मोक्षसाधने गुर्वी । इह दर्शनादिक्रिया दुर्लभा प्राय सविघ्ना च ॥ १२०० ॥ २ क ग 'ष्प्राप्या स' ।
३ अथवा यत एव सुबहु क्षपित ततो निर्गुणो न शेषमपि । स क्षपयति यतो लभते सम्यक्त्व-श्रुतादिगुणलाभम् ॥ १२०१ ॥
४ करण यथाप्रवृत्तमपूर्वमनिवर्तिकमेव भव्यानाम् । इतरेषां प्रथममेव भण्यते करणमिति परिणामः ॥ १२०२ ॥

परविरोधः ?, इत्याशङ्कयाह—

[1]संजम-तवोमई जं संवरनिज्जरफला मया किरिया। तो तिगसंजोगो वि हु ताउ च्चिय नाण-किरियाओ ॥११७४॥

संयम-तपोमयी संवर-निर्जरफला च यद् यस्मात् तीर्थकर-गणधराणां मता संमता क्रिया, ततस्तस्माज्ज्ञान-तपः-संयमरूपस्त्रिकसंयोगोऽप्यसौ ते एव पूर्वोक्ते ज्ञान-क्रिये, नाधिकं किञ्चिदिति। इदमुक्तं भवति– एकैव चारित्रक्रिया संयम-तपोभेदाद् द्विधा भिद्यते, तपः-संयमरूपत्वाच्चारित्रस्य। अत एव संवरो निर्जरा च तस्याः फलम्, संयमस्याऽऽश्रवद्वारसंवरहेतुत्वात्, तपसस्तु कर्मनिर्जराकारणत्वात्। अतो यद्यपीह ज्ञानादित्रयाद् मोक्ष उच्यते, तथापि तपः-संयमयोः क्रियायामेवैकस्यामन्तर्भावाज्ज्ञान-क्रियालक्षणद्वयादेवाऽयम्, इति न कश्चिद् विरोधः।

अपरस्त्वाह– ननु "[2]सम्यग्दर्शन-ज्ञान-चारित्राणि मोक्षमार्गः" इति प्रसिद्धम्, अत्र तु ज्ञान-चारित्राभ्यां स प्रतिपाद्यते, इति कथं न विरोधः ?। एतदप्ययुक्तम्, अभिप्रायापरिज्ञानात्, यतो ज्ञानग्रहणेनैवेह सम्यक्त्वमाक्षिप्यते, सम्यक्त्वमन्तरेण ज्ञानस्याऽप्यभावात्, मिथ्यादृष्टिज्ञानस्याऽज्ञानत्वेनाऽसकृत्प्रतिपादनात्; तथा, ज्ञानविशेष एव सम्यक्त्वम्, इति प्रागत्राप्युक्तमेव, तद्यथा—

'[3]नाणमवाय-धिईओ दंसणमिट्ठं जहोग्गहे-हाओ। तह तत्तरुई सम्मं रोइज्जइ जेण तं नाणं ॥ १ ॥'

तस्माज्ज्ञानान्तर्गतमेव सम्यक्त्वम्, अतो ज्ञानग्रहणात् तद् गृहीतमेव, इत्यलं प्रसङ्गेन। तदेवं व्याख्याता '[4]नाणं पयासयं' इत्यादिगाथा ॥ ११७४ ॥

अथ '[6]भावे खओवसमिए' इत्याद्युत्तरगाथासंबन्धनार्थमाह—

[5]न लहइ सिवं सुयम्मि वि वट्टंतो अचरणो त्ति जं तस्स। हेऊ खओवसमओ जह वट्टंतोऽवहिण्णाणे ॥११७५॥

इह 'जं ति' '[6]सुयनाणम्मि वि जीवो वट्टंतो सो न पाउणइ मोक्खं' इत्यादिगाथायां यत् पूर्वं प्रतिज्ञातमित्यर्थः। किं प्रतिज्ञा-

१ संयम-तपोमयी यत् संवर-निर्जराफला मता क्रिया। ततस्त्रिकसंयोगोऽपि खलु ते एव ज्ञान-क्रिये ॥ ११७४ ॥

२ तत्त्वार्थाधिगमसूत्रे १, १। ३ गाथा ५३६। ३ गाथा ११६९। ४ गाथा ११८०।

५ न लभते शिवं श्रुतेऽपि वर्तमानोऽचरण इति यत् तस्य। हेतुः क्षयोपशमतो यथा वर्तमानोऽवधिज्ञाने ॥ ११७५ ॥ ६ गाथा ११४३ ॥

तह कम्मधन्नपल्ले जीवोऽणाभोगओ बहुतरागं। सोहंतो थोवतरं गिण्हंतो पावए गंठिं ॥ १२०६ ॥

यथा कश्चित् कुटुम्बिकोऽतिमहति धान्यभृतपल्ये कदाचित् कथमपि स्तोकस्तोकतरमन्यद् धान्यं प्रक्षिपति, बहुतरं तु शोधयति- गृहव्ययाद्यर्थं ततस्तत् समाकर्षति। एवं च सति क्रमशो गच्छता कालेन तस्य धान्यं क्षीयते। प्रस्तुते योजयति- 'तहेत्यादि' तथा तेनैव प्रकारेण कर्मैव धान्यभृतपल्यः कर्मधान्यपल्यः, तत्र कर्मधान्यपल्ये, चिरसंचितप्रचुरकर्मणीत्यर्थः, कुटुम्बिकस्थानीयो जीवः कदाचित् कथमप्येवमेवाऽनाभोगतो बहुतरं चिरबद्धं कर्म शोधयन् क्षपयन्, स्तोकतरं तु नूतनं गृह्णानो बध्नन् ग्रन्थिं यावत् प्राप्नोति- देशोनकोटीकोटिशेषाण्यायुर्वर्जसप्तकर्माणि धृत्वा शेषं तत् कर्म क्षपयतीत्यर्थः। एष यथाप्रवृत्तकरणस्य व्यापार इति ॥ १२०६ ॥

अत्र कश्चिदाह- नन्वागमविरुद्धमिदम्, यतो ग्रन्थिभेदादर्वागसंयतोऽविरतोऽनादिमिथ्यादृष्टिरयम्। अस्य चैवंभूतस्य जन्तोर्बहुतरस्य कर्मणः क्षेपणम्, स्तोकस्य च बन्धोऽन्यत्रागमे निषिद्ध एव, यदाह—

"[2]पल्ले महइमहल्ले कुंभं पक्खिवइ सोहए नालिं। असंजए अविरए बहु बंधए निज्जरे थोवं ॥ १ ॥
पल्ले महइमहल्ले कुंभं सोहए पक्खिवे नालिं। जे संजए पमत्ते बहु निज्जरे बंधए थोव ॥ २ ॥
पल्ले महइमहल्ले कुंभं सोहेइ पक्खिवे न किंचि। जे संजए अपमत्ते बहु निज्जरे बंधए न किंचि ॥ ३ ॥"

तदेवमिह गाथात्रय आद्यगाथायामसंयता-ऽविरत-मिथ्यादृष्टेः प्रतिसमये बन्धस्य बहुत्वम्, निर्जरायास्त्वल्पत्वमुक्तम्; भवद्भिस्त्वेतद्विपरीतमिह प्रतिपाद्यते, इति कथं न विरोधः ?।

अत्रोच्यते- प्रायोवृत्तिरेषा यत्- असंयतस्य बहुतरकर्मण उपचयः, अल्पतरस्य चापाय इति। यदि पुनरित्थमेव सर्वदैव स्यात्, तदोपचितबहुकर्मणां जीवानां कदापि कस्यापि सम्यक्त्वादिलाभो न स्यात्, न चैतदस्ति, सम्यग्दृष्ट्यादीनां प्रत्यक्षत एवोपलम्भात्। किञ्च, यदि सर्वदैव बहुतरस्य कर्मण उपचयः, तदा कालक्रमेण सर्वस्यापि पुद्गलराशेः कर्मतयैव ग्रहणप्रसङ्गः स्यात्, न चैतदप्यस्ति, स्तम्भ कुम्भा-ऽभ्र-भू-भवन-तनु-तरु-गिरि-सरित्-समुद्रादिभावेनापि परिणतानां तेषां सदैव दर्शनात्। तस्मादिह त्रयो

१ तथा कर्मधान्यपल्ये जीवोऽनाभोगतो बहुतरम्। शोधयन् स्तोकतर गृह्णानः प्राप्नोति ग्रन्थिम् ॥ १२०६ ॥

२ पल्ये महातिमहति कुम्भ प्रक्षिपति शोधयति नाडीम्। असंयतोऽविरतो बहु बध्नाति निर्जृणाति स्तोकम् ॥ १ ॥
पल्ये महातिमहति कुम्भ शोधयति प्रक्षिपति नाडीम्। यः संयतः प्रमत्तो बहु निर्जृणाति बध्नाति स्तोकम् ॥ २ ॥
पल्ये महातिमहति कुम्भं शोधयति प्रक्षिपति न किञ्चित्। यः संयतोऽप्रमत्तो बहु निर्जृणाति बध्नाति न किञ्चित् ॥ ३ ॥

[1]तेसुं य ठियस्स मोक्खो तो सुयमिह सचरणं तदट्ठाए । तं कह मीसं खइयं च केवलं जं सुएऽभिहियं ॥११७९॥

'आह व त्ति' अथवा, पर आह– ननु च स्वावारके कर्मणि तावत् सर्वथा निर्जीर्णे परिक्षीणे सर्वमपि ज्ञानमुत्पद्यते, न तूदयप्राप्ते । ततश्च यथा चारित्रमन्तरेणापि कथमपि तज्ज्ञानावरणं कर्म क्षीणम्, तथा मोक्षलाभावारकमपि कथमप्येवमेव क्षयमुपयास्यति, ततो ज्ञानादेव केवलाद् मोक्षो भविष्यति, किं चारित्रेण ? इति । अत्रोत्तरमाह– 'न सुयं खयउ त्ति' सर्वमपि ज्ञानं स्वावरणे सर्वथा क्षीणे समुत्पद्यते, इत्येतदसिद्धम्, यस्मात् श्रुतज्ञानम्, उपलक्षणत्वाद् मत्य-ऽवधि-मनःपर्यायज्ञानानि च न स्वावरणक्षयात्, किन्तु तत्क्षयोपशमादेवैतानि जायन्ते । क्षायिकं त्वेकमेव केवलज्ञानम्, तथा, क्षीणमोहसंबन्धि चारित्रं च क्षायिकम्; तयोश्च स्थितस्याऽऽनन्तर्येण मोक्षो जायते । ततः सचरणं श्रुतमिह तदर्थाय क्षायिकज्ञान-चारित्रलाभाय भवति, इत्येवं परम्परया चारित्रसहितात् श्रुताद् मोक्षप्राप्तेः पूर्वोक्तं न विरुध्यते । परः प्राह– कथं पुनरिदं विज्ञायते– तत् श्रुतज्ञानं मिश्रं क्षायोपशमिकम्, केवलज्ञानं तु क्षायिकमिति ? । आचार्यः प्राह– यद् यस्मात् श्रुत आगमेऽभिहितमेतत् ॥ इति गाथादशकार्थः ॥ ११७९ ॥

किं तदभिहितम् ?, इत्याह—

[2]भावे खओवसमिए दुवालसंगं पि होइ सुयनाणं । केवलियनाणलंभो नण्णत्थ खए कसायाणं ॥११८०॥

भवनं भावः, भवतीति वा भावः, तत्र भावे श्रुतज्ञानं भवति । कस्मिन् ?, इत्याह– क्षयो-पशमाभ्यां निर्वृत्तः, क्षयो-पशमावेव वा क्षायोपशमिकस्तत्रैव भवति, न त्वौदयिकादिके । कियत् ?, इत्याह–द्वादशाऽङ्गानि यत्र तद् द्वादशाङ्गम्, अपिशब्दाद् बाह्यमपि सर्वम्, तथा, मत्य-ऽवधि-मनःपर्यायज्ञानत्रयमपि,तथा,क्षायिकौ-पशमिकभाववृत्तिवर्जसामायिकचतुष्टयमपि। केवलस्य भावः कैवल्यं घातिकर्मवियोग इत्यर्थः, तस्मिन् कैवल्ये सति ज्ञानं कैवल्यज्ञानं केवलज्ञानमित्यर्थः, तल्लाभः पुनः कषायाणां क्रोधादीनां सर्वथा क्षये सत्येव भवति, नान्यत्र नान्येन प्रकारेण । इह च यद्यपि घातिकर्मसु चतुर्ष्वपि क्षीणेषु केवलज्ञानं भवति, न तु केवलेषु कषायेषु; तथापि प्राधान्यख्यापनार्थं तेषामेव ग्रहणम्, तत्क्षये शेषकर्मक्षयस्याऽवश्यंभावित्वात् ॥ इति निर्युक्तिगाथार्थः ॥ ११८० ॥

१ तयोश्च स्थितस्य मोक्षस्ततः श्रुतमिह सचरणं तदर्थाय । तत् कथं मिश्रं क्षायिकं च केवलं यत् श्रुतेऽभिहितम् ॥ ११७९ ॥

२ भावे क्षायोपशमिके द्वादशाङ्गमपि भवति श्रुतज्ञानम् । कैवल्यज्ञानलाभो नान्यत्र क्षये कषायाणाम् ॥ ११८० ॥

तथा, क्वापि स्थाणौ कीलके उत्सरणमारोहणम्, संजातपक्षाणां च तासां ततः स्थाणोः समुत्पतनम्; कासांचित् तु 'ठाणं थाणुसिरे व त्ति' स्थाणुबुध्नेऽवस्थानं वेत्यर्थः; कासांचित् तु स्थाणुशिरसः स्थाणुबुध्नादवरोहणं वा व्यावर्तनमिति । तत्र कीटिकानां क्षितिगमनसदृशं स्वाभाविकं सदा प्रवृत्तं प्रथमं यथाप्रवृत्तकरणम् । स्थाण्वारोहणसदृशं त्वप्राप्तपूर्वत्वादपूर्वकरणम् । ततः कीलकादुत्पतनमिव जीवानामनिवर्तिकरणम्, अनिवर्तिकरणबलेन मिथ्यात्वादुत्प्लुत्य सम्यग्दृष्टिगुणस्थानकगमनात् । तथा, स्थाणाविव स्थाणुवत् स्थाणुबुध्न इत्यर्थः, यथा स्थाणुबुध्ने कीटिकानामवस्थानं तथा ग्रन्थिना सह वर्तत इति ग्रन्थिकः स चासौ सत्त्वश्च ग्रन्थिकसत्त्वः– अभिन्नग्रन्थिजीवः, तस्य तत्र ग्रन्थिदेशे ग्रन्थिसंनिधानेऽवस्थानम् । यथा च कीटिकानां ततः स्थाणुबुध्नादवसर्पणं व्यावर्तनं तथा जीवस्य पुनरपि कर्मस्थितिविवर्धनमिति ॥ १२०८ ॥ १२०९ ॥ १२१० ॥

पुरुषदृष्टान्तमाश्रित्याह—

[1]जह वा तिन्नि मणूसा जंतडविपहं सहावगमणेणं । वेलाइक्कमभीया तुरंति पत्ता य दो चोरा ॥१२११॥

दट्ठुं मग्गतडत्थे ते एगो मग्गओ पडिनियत्तो । बितिओ गहिओ तइओ समइक्कंतुं पुरं पत्तो ॥१२१२॥

अडवी भवो मणूसा जीवा कम्मट्ठिई[2] पहो दीहो । गंठी य भयट्ठाणं राग-दोसा य दो चोरा ॥१२१३॥

भग्गो ठिइपरिवुड्ढी गहिओ पुण गंठिओ गओ तइओ । सम्मत्तपुरं एवं जोएज्जा तिण्णि करणाणि ॥१२१४॥

यथा वात्र केचित् त्रयः पुंमासोऽटवीमध्येन किञ्चित् पुरं गन्तुं प्रपन्नाः स्वभावगत्या सुदीर्घं पन्थानं यान्ति । ततो वेलातिक्रमभीता यावत् त्वरन्ते तावद् भयस्थाने कस्मिंश्चिद् द्वौ तस्करौ प्राप्तौ । तौ चोत्खातनिशित[3]करालकरवालव्यग्राग्रहस्तौ मार्गस्योभयतटस्थावतीव भीषणौ दृष्ट्वा, एकः पुरुषो विजृम्भितमनःक्षोभो मार्गतः प्रतीपं पश्चान्मुखो व्यावृत्तः; द्वितीयस्तु ताभ्यां गृहीतः; तृतीयस्तु

१ यथा वा त्रयो मनुष्या यान्त्यटवीपथं स्वभावगमनेन । वेलातिक्रमभीतास्त्वरन्ते प्राप्तौ च द्वौ चौरौ ॥ १२११ ॥
दृष्ट्वा मार्गतटस्थौ तावेको मार्गतः प्रतिनिवृत्तः । द्वितीयो गृहीतस्तृतीयः समतिक्रम्य पुरं प्राप्तः ॥ १२१२ ॥
अटवी भवो मनुष्या जीवाः कर्मस्थितिः पथो दीर्घः । ग्रन्थिश्च भयस्थानं राग-दोषौ च द्वौ चौरौ ॥ १२१३ ॥
भग्नः स्थितिपरिवर्धी गृहीतः पुनर्ग्रन्थिको गतस्तृतीयः । सम्यक्त्वपुरमेवं योजयेत् त्रीणि करणानि ॥ १२१४ ॥
२ क. ग. 'ठिति प' । ३ क. ग 'करवालकरालव्य' ।

[1]अत्र ग्रन्थगाम्भीर्यमालोक्य पौर्वापर्यमूढतां शिष्यस्याऽऽशङ्कमानः संक्षिप्य तात्पर्यमाह—

[2]निज्जुत्तिसमुत्थाणप्पसंगओ नाणतरुसमारोहो। वच्चइ य वक्खमाणा समयं जिणपवयणुप्पत्ती ॥ ११८५ ॥

कुतः पुरुषादियं सामायिकनिर्युक्तिः प्रसूता ?, इत्येवं सामायिकनिर्युक्तिसमुत्थानप्रसङ्गतो यस्तपो-नियम-ज्ञानवृक्षसमारोहः प्राक् प्रस्तुतः, या च वक्ष्यमाणा जिनप्रवचनोत्पत्तिः, एतद्द्वितयमप्येवं सति समकं युगपद् व्रजति— युगपत् समर्थयिष्यत इत्यर्थः ॥ इति गाथापञ्चकार्थः ॥ ११८५ ॥

सम्यक्त्वाद्यलाभकारणं तावदाह—

[3]अट्ठण्हं पयडीणं उक्कोसट्ठिईए पवट्टमाणो उ। जीवो न लहइ सामाइयं चउण्हं पि एगयरं ॥ ११८६ ॥

अष्टानां ज्ञानावरणीयादिकर्मप्रकृतीनामुत्कृष्टस्थितौ वर्तमानो जीवो न लभते सामायिकम्। किंविशिष्टम् ?, चतुर्णां सम्यक्त्व-सामायिक-श्रुतसामायिक-देशविरतिसामायिक-सर्वविरतिसामायिकानामेकतरमन्यतरादिति। अपिशब्दाद् मत्यादि च न लभते। न केवलमेतानि न लभते, पूर्वप्रतिपन्नोऽप्यायुर्वर्जकर्मोत्कृष्टस्थितौ न भवति, यतोऽवाप्तसम्यक्त्वस्तत्परित्याग एव कार्मग्रन्थिकमतेनोत्कृष्टस्थितीः कर्मप्रकृतीर्बध्नाति; सैद्धान्तिकाभिप्रायतस्तु भिन्नग्रन्थेः पुनरप्युत्कृष्टस्थितिबन्ध एव न भवति; आयुषस्तूत्कृष्टस्थितौ वर्तमानः सम्यक्त्व-श्रुतसामायिकद्वयस्यानुत्तरसुर उत्पादकाले पूर्वप्रतिपन्नो भवति, न तु प्रतिपद्यमानकः। तुशब्दादायुर्वर्जशेषसप्तकर्मप्रकृतीनां जघन्यस्थितावपि वर्तमानः सूक्ष्मसंपरायादिः सम्यक्त्व-श्रुत-सर्वविरतिसामायिकत्रयस्य पूर्वप्रतिपन्नत्वाद् न लभते न किञ्चित् प्रतिपद्यते। आयुषस्तु जघन्यस्थितौ वर्तमानो न पूर्वप्रतिपन्नः, नापि प्रतिपद्यमानकः, आयुर्जघन्यस्थितेः क्षुल्लकभवग्रहणरूपत्वात्, तद्गतां च जीवानां सम्यक्त्वाद्युभयाभावात्, सास्वादनस्यापि तेष्वनुत्पादात् ॥ इति निर्युक्तिगाथार्थः ॥११८६॥

'अष्टानां कर्मप्रकृतीनामुत्कृष्टस्थितौ' इत्युक्तम्; तत्रोत्कृष्टे-तरभेदभिन्नां तत्स्थितिमेव भाष्यकृदाह—

[4]वीस सयरोवमाणं कोडाकोडीउ नाम-गोयाणं। सयरी मोहस्स ठिई सेसाणं तीसमुक्कोसा ॥११८७॥

१ घ. छ.'अथ ग्र'। २ निर्युक्तिसमुत्थानप्रसङ्गतो ज्ञानतरुसमारोह। व्रजति च वक्ष्यमाणा समकं जिनप्रवचनोत्पत्तिः ॥ ११८५ ॥

३ अष्टानां प्रकृतीनामुत्कृष्टस्थितौ प्रवर्तमानस्तु। जीवो न लभते सामायिकं चतुर्णामप्येकतरम् ॥ ११८६ ॥

४ विंशतिः सागरोपमानां कोटाकोट्यो नाम-गोत्रयोः। सप्ततिर्मोहस्य स्थितिः शेषाणां त्रिंशदुत्कृष्टा ॥ ११८७ ॥

अथ कोद्रवोदाहरणमाह—

[1]नासइ सयं व परिक्कमओ व जह कोद्दवाण मयभावो। नासइ तह मिच्छमओ सयं व परिकम्मणाए वा॥१२१७॥

यथा केषांचित् कोद्रवाणां मदनभावः स्वयमेवापैति, केषांचित्तु गोमयादिपरिकर्मतः, केषांचित् पुनर्नैवापैति; तद्वद् मिथ्यात्वमदनभावोऽपि कश्चित् स्वयमेवापैति, कश्चित्तु गुरूपदेशपरिकर्मणया, कश्चित् पुनर्नापैति ॥ १२१७ ॥

केन पुनः कारणेन मदनकोद्रवस्थानीयं मिथ्यात्वं शोधयति ?, इत्याह—

[2]अपुव्वेण तिपुंजं मिच्छत्तं कुणइ कोद्दवोवमया। अनियट्टीकरणेण उ सो सम्मदंसणं लहइ ॥ १२१८ ॥

इह यथा कस्यचिद् गोमयादिप्रयोगेण शोधयतस्त्रिधा कोद्रवा भवन्ति; तद्यथा– शुद्धाः, अर्धविशुद्धाः, अविशुद्धाश्चेति; तथाऽपूर्वकरणेन मिथ्यात्वं शोधयित्वा जीवाः शुद्धादिभेदेन त्रिभिः पुञ्जैर्व्यवस्थापयन्ति। तत्र सम्यक्त्वावारककर्मरसं क्षपयित्वा विशोधिता ये मिथ्यात्वपुद्गलास्तेषां पुञ्जः सम्यग् जिनवचनरुचेरनावारकत्वादुपचारतः सम्यक्त्वमुच्यते। अर्धशुद्धपुद्गलपुञ्जस्तु सम्यग्मिथ्यात्वम्। अविशुद्धपुद्गलपुञ्जः पुनर्मिथ्यात्वमिति। तदेवं पुञ्जत्रये सत्यप्यनिवर्तिकरणविशेषात् सम्यक्त्वपुञ्जमेव गच्छति जीवः, नेतरौ द्वौ। यदापि प्रतिपातितसम्यक्त्वः पुनरपि सम्यक्त्वं लभते, तदाऽप्यपूर्वकरणेन पुञ्जत्रयं कृत्वाऽनिवर्तिकरणेन तल्लाभादेष एव क्रमो द्रष्टव्यः।

ननु तदाऽपूर्वकरणस्य पूर्वलब्धस्यैव लाभात् कथमपूर्वता ? इति चेत्। सत्यम्, किन्तु 'अपूर्वमिवाऽपूर्वं स्तोकवारमेव लाभात्' इति वृद्धाः, सैद्धान्तिकमतं च सर्वमप्येतत्, कार्मग्रन्थिकमतेन तु– 'मिथ्यात्वस्यान्तरकरणं करोति, तत्प्रविष्टश्चौपशमिकं सम्यक्त्वं लभते, तेन च मिथ्यात्वस्य पुञ्जत्रयं करोति, ततः क्षायोपशमिकपुञ्जोदयात् क्षायोपशमिकसम्यक्त्वं लभते' इत्यलं विस्तरेणेति॥१२१८॥

आह– नन्वित्थं तावत् सर्वत्र भव्यस्यैव सम्यक्त्वलाभ उक्तः, अभव्यस्य तु का वार्ता ?, इत्याह—

[3]तित्थंकराइपूयं दट्ठूणण्णेण वा वि कज्जेण। सुयसामाइयलाहो होज्ज अभव्वस्स गंठिम्मि ॥ १२१९ ॥

१ नश्यति स्वयं वा परिकर्मतो वा यथा कोद्रवाणां मदनभावः। नश्यति तथा मिथ्यात्वमदनः स्वयं वा परिकर्मणया वा ॥ १२१७ ॥
२ अपूर्वेण त्रिपुञ्जं मिथ्यात्वं करोति कोद्रवोपमया। अनिवर्तिकरणेन तु स सम्यग्दर्शनं लभते ॥ १२१८ ॥
३ तीर्थङ्करादिपूजां दृष्ट्वाऽन्येन वाऽपि कार्येण। श्रुतसामायिकलाभो भवेदभव्यस्य ग्रन्थौ ॥ १२१९ ॥

क्लेशौ नारक-देवावुत्कृष्टस्थितिकं मोहनीयं बद्ध्वा तिर्यक्षूत्पद्येते, तदाप्यायुषो जघन्यस्थितिर्न संभवति, क्षुल्लकभवग्रहणलक्षणतज्जघन्यस्थितिषु जीवेषु नारक-देवानामनुत्पादादिति ।

'मोहविवज्जुक्कोसयेत्यादि' यदा तु मोहनीयं वर्जयित्वा शेषस्य ज्ञानावरणाद्यन्यतरस्य कर्मण उत्कृष्टा स्थितिर्बध्यते, तदा मोहनीयस्य, तथा, विवक्षितोत्कृष्टस्थितिकज्ञानावरणादिकर्मणः सकाशादन्यकर्मप्रकृतीनां चोत्कृष्टा वा, मध्यमा वा स्थितिर्लभ्यते, न तु जघन्या; तथाहि– यदा सर्वोत्कृष्टसंक्लेशे वर्तमान उत्कृष्टस्थितिकं ज्ञानावरणीयादिकं कर्म बध्नाति, तदा शेषाणां मोहादिकर्मणामुत्कृष्टा स्थितिर्भवतीत्यवगम्यत एव । यदा तु स्वप्रायोग्योत्कृष्टसंक्लेश उत्कृष्टस्थितीनि ज्ञानावरणादिकर्माणि बध्यन्ते, तदाऽसौ ज्ञानावरणादिकर्मोत्कृष्टस्थितिप्रायोग्यः संक्लेशो मोहनीयकर्मोत्कृष्टस्थितिनिबन्धनसंक्लेशापेक्षया मध्यम एव भवति; अतस्तत्र वर्तमानो मोहनीयं मध्यमस्थितिकं बध्नाति, इत्येदपि सुबोधमेव । दर्शनावरण-वेदनीयादिकर्मोत्कृष्टस्थितिनिबन्धनसंक्लेशापेक्षया त्वसावुत्कृष्टो वा स्यात्, मध्यमो वा; तत्रोत्कृष्टे तस्मिन् दर्शनावरणीयादिकर्माणि तीव्ररसान्युत्कृष्टस्थितीनि बध्यन्ते, मध्यमे तु तस्मिन् मध्यमस्थितीनि तानि बध्यन्ते, इत्येतदपि घटमानकं लक्ष्यते । जघन्या तु तत्स्थितिर्न संभवति । मोहनीय-दर्शनावरणीयादिकर्मणां हि जघन्याऽन्तर्मुहूर्तादिका स्थितिरुक्ता, तां चाऽनिवृत्तिबादर-सूक्ष्मसंपरायावेव बध्नीतः, तौ च ज्ञानावरणादिकर्मोत्कृष्टस्थितिं कदाचिदपि न निर्वर्तयतः, किन्तु मिथ्यादृष्टिरेव; इति न ज्ञानावरणाद्युत्कृष्टस्थितौ मोहनीय-दर्शनावरणादिजघन्यस्थितिसंभवः । किं सर्वथा न ?, इत्याह– 'कासइ व जहण्णिया होज्ज त्ति' कस्याऽप्यायुर्लक्षणस्य कर्मणो जघन्या स्थितिः स्यात्, यथोत्कृष्टस्थितिकं ज्ञानावरणादि कर्म बध्नतस्तिरश्चो मनुष्यस्य वा जघन्यक्षुल्लकभवग्रहणाऽऽयुर्बन्धः । इत्येवं तावद् यथावगतं तथा व्याख्यातमिदं गाथाद्वयम्, परमार्थं त्विह केवलिनः, बहुश्रुता वा विदन्तीति ॥ ११८९ ॥ ११९० ॥

एवं च सति किम् ?, इत्याह—

सम्म[2]-सुय-देस-सव्वव्वयाण सामाइयाणमेक्कं पि । उक्कोसठिईं न लभइ भयाउए पुव्वलद्धाइं ॥११९१॥

सव्वजहण्णठिईउ वि न लभए जेण पुव्वपडिवन्नो । आउयजहण्णठिईओ न पवज्जंतो न पडिवन्नो॥११९२॥

सम्यक्त्व-श्रुत-देशव्रत-सर्वव्रतलक्षणानां चतुर्णां सामायिकानामेकमप्युत्कृष्टकर्मस्थितिको जन्तुर्न लभते, पूर्वलब्धानि तूत्कृष्टस्थ-

१ क ग. 'रणादि' । २ सम्यक् श्रुत-देश-सर्वव्रतानां सामायिकानामेकमपि । उत्कृष्टस्थितिर्न लभते भजाऽऽयुपि पूर्वलब्धानि ॥ ११९१ ॥
सर्वजघन्यस्थितिकोऽपि न लभते येन पूर्वप्रतिपन्नः । आयुर्जघन्यस्थितिको न प्रपद्यमानो न प्रतिपन्न. ॥ ११९२ ॥

सागरोपमेषु क्षपितेषु क्षपकश्रेणिर्भवतीति ॥ १२२२ ॥

कियत्सु भवेष्वेवं देशविरत्यादिलाभो भवति ?, इत्याह—

एवं[1] अपरिवडिए सम्मत्ते देव-मणुयजम्मेसु । अण्णयरसेढिवज्जं एगभवेणं व सव्वाइं ॥ १२२३ ॥

एवमप्रतिपतितसम्यक्त्वस्य देव-मनुष्यजन्मसु [2]संसरणं कुर्वतोऽन्योन्यमनुष्यभवे देशविरत्यादिलाभो भवति । यदिवा, तीव्रशुभपरिणामवशात् क्षपितवहुकर्मस्थितेरेकस्मिन्नपि भवेऽन्यतरश्रेणिवर्जाण्येतानि सर्वाण्यपि भवन्ति । श्रेणिद्वयं त्वेकस्मिन् भवे सैद्धान्तिकाभिप्रायेण न भवत्येव, किन्त्वेकैवोपशमश्रेणिः, क्षपकश्रेणिर्वा भवतीति ॥ तदेवमभिहितं क्रमद्वारम् ॥ १२२३ ॥

अथ तदावरणद्वारं चेतसि निधाय वक्ष्यमाणगाथासंवन्धनार्थमाह—

अहुणा[3] जस्सोदयओ न लभइ दंसणाइसामइयं । लद्धं व पुणो भस्सइ तदिहावरणं कसायाई ॥ १२२४ ॥

सुगमा, नवरं तदिह कषायादिकमावरणमुच्यते । तत्रानन्तानुवन्धिकषायचतुष्टयं मिथ्यात्वं च सम्यक्त्वस्याऽऽवरणम्, श्रुतस्य श्रुतज्ञानावरणम्, चारित्रस्य चारित्रमोहनीयमिति, तदेवाह– 'पढमिल्लुआणेत्यादि' ॥ १२२४ ॥

अथवा पातनान्तरमाह—

अहवा[4] खयाइओ केवलाइं जं जेसिं ते कइ कसाया । को वा कस्सावरणं को व खयाइक्कमो कस्स?॥१२२५॥

अथवा, यत् केवलादिकं, आदिशब्दाद् दर्शन-चारित्रादिपरिग्रहः, येषां कषायाणां क्षयादितो भवति, आदिशब्दात् क्षयोपशमादिपरिग्रहः ; ते कति कषायाः ?, को वा कस्य सामायिकस्याऽऽवरणम् ?, को वा क्षयादिक्रमः कस्य ? ॥ इत्येकविंशतिगाथार्थः ॥ १२२५ ॥

अथ क्रमेणोत्तरमाह—

पढमिल्लुआण[6] उदए नियमा संजोयणाकसायाणं । सम्मद्दंसणलंभं भवसिद्धीया वि न लहंति ॥१२२६॥

---

१ एवमप्रतिपतिते सम्यक्त्वे देव-मनुजजन्मसु । अन्यतरश्रेणिवर्जमेकभवेन वा सर्वाणि ॥ १२२३ ॥ २ क ग. 'सचर' ।
३ अधुना यस्योदयतो न लभते दर्शनादिसामायिकम् । लब्धं वा पुनर्भ्रश्यति तदिहावरणं कषायादिः ॥ १२२४ ॥
४ अथवा क्षयादित· केवलादि यद् येषां ते कति कषायाः । को वा कस्यावरणं को वा क्षयादिक्रम कस्य ? ॥ १२२५ ॥ ५ क. ग. 'नप' ।
६ प्रथमानामुदये नियमात् संयोजनाकाषायणाम् । सम्यग्दर्शनलाभं भवसिद्धिका अपि न लभन्ते ॥ १२२६ ॥

कर्कशोऽतिपरुषः। घनः सर्वतो निबिडः। स चार्द्रोऽपि स्यादित्याह– रूढः शुष्कः। गूढः कथमप्युद्वेष्टयितुमशक्योऽतिप्रचयमापन्नः। यथैवंभूतो द्रव्यग्रन्थिर्दुर्भेदो भवति, एवं राग-द्वेषोदयपरिणामोऽप्यसौ दुर्भेदो भवति। अतो ग्रन्थिरिव ग्रन्थिर्व्यपदिश्यत इति ॥११९५॥

ततः किम्?, इत्याह—

[1]भिन्नम्मि तम्मि लाभो सम्मत्ताईण मोक्खहेऊणं। सो य दुलभो परिस्सम-चित्तविघायाइविग्घेहिं ॥११९६॥

तस्मिन् ग्रन्थौ भिन्ने क्षपयित्वा समतिक्रान्ते मोक्षहेतुभूतानां सम्यक्त्वादीनां लाभो भवति। स च ग्रन्थिभेदो मनोविघात-परिश्रमादिविघ्नैरतिदुर्लभोऽतिशयेन दुष्करः। तस्य हि जीवस्य ग्रन्थिभेदं चिकीर्षोर्विद्यासाधकस्येव विभीषिकादिभ्यो मनोविघातो मनःक्षोभो भवति; प्रचुरदुर्जयकर्मशत्रुसंघातजयाच्च महासमरगतसुभटस्येव परिश्रमश्चातिशयेन संजायत इति ॥ ११९६ ॥

एतदेवाह—

[2]सो तत्थ परिस्सम्मइ घोरमहासमरनिग्गयाइ व्व। विज्जा य सिद्धिकाले जह बहुविग्घा तहा सो वि॥११९७॥

स जीवस्तत्र ग्रन्थिभेदे प्रवृत्तो घोरमहासमरशिरसि दुर्जयापाकृतानेकशत्रुगणः सुभट इव, आदिशब्दाद् महासमुद्रादितारकवत्, परिश्राम्यति। यथा च सिद्धिकाले विद्या बहुविघ्ना संपद्यते– साधकस्योपसर्गैर्मनःक्षोभं जनयति, तथा सोऽपि ग्रन्थिभेद इति ॥११९७॥

अथ प्रेरकः प्राह—

[3]कम्मट्ठिई सुदीहा खविया जइ निग्गुणेण, सेसं पि। स खवेउ निग्गुणो च्चिय किं पुणो दंसणाईहिं॥११९८॥

यदि ग्रन्थिभेदात् पूर्वं सम्यक्त्वादिगुणविकलेनैवाऽनेन जन्तुना सुदीर्घा द्राघीयसी कर्मस्थितिः क्षपिता, तर्हि शेषमपि कर्माऽसौ सम्यक्त्वादिगुणशून्य एव क्षपयतु, ततो मोक्षमप्येवमेवाऽऽसादयतु, किं पुनः सम्यग्दर्शनादिगुणैस्तद्धेतुभिर्विकल्पितैः? इति ॥११९८॥

अत्रोत्तरमाह—

---

१ भिन्ने तस्मिँल्लाभः सम्यक्त्वादीनां मोक्षहेतूनाम्। स च दुर्लभः परिश्रम-चित्तविघातादिविघ्नैः ॥ ११९६ ॥

२ स तत्र परिश्राम्यति घोरमहासमरनिर्गतादिरिव। विद्या च सिद्धिकाले यथा बहुविघ्ना तथा सोऽपि ॥ ११९७ ॥

३ कर्मस्थितिः सुदीर्घा क्षपिता यदि निर्गुणेन, शेषमपि। स क्षपयतु निर्गुण एव किं पुनर्दर्शनादिभिः? ॥ ११९८ ॥ ४ क. ग. 'भि' क'।

कषायाः। ते च बहुवचननिर्देशाच्चत्वारः क्रोधादयो गम्यन्ते। एवं देशविरत्याद्युत्तरोत्तरगुणघातित्वाद् द्वितीय-तृतीय-चतुर्थत्वेन, कषायशब्दादिवाच्यत्वेन च द्वितीयादयोऽपि मताः संमता इति ॥ १२२८ ॥ १२२९ ॥

'भवसिद्धीया वि' इत्येतद् व्याख्यानयति—

[2]भवसिद्धिया वि भणिए नियमा न लहंति तयमभव्वा वि। अविसद्देण व गहिया परित्तसंसारियाईया॥१२३०॥

'भवसिद्धिकाः' इत्युक्तेऽपिशब्दात् 'अभव्यास्तु नैव लभन्ते' इत्यवगम्यत एव। अथवा, अपिशब्दात् 'परीत्तसंसारादयोऽपि न लभन्ते' इति गम्यते ॥ इति गाथाचतुष्टयार्थः ॥ उक्ताः सम्यक्त्वस्याऽऽवरणभूताः कषायाः ॥ १२३० ॥

अथ देशविरत्यावरणभूतांस्तानाह—

[3]बीयकसायाणुदए अप्पच्चक्खाणनामधेयाणं। सम्मद्दंसणलंभं विरयाविरइं न उ लहंति ॥ १२३१ ॥

सर्वप्रत्याख्यानं देशप्रत्याख्यानं च येषामुदये न लभ्यते, तेऽप्रत्याख्यानाः; अकारस्य सर्वप्रतिषेधवचनत्वात्, अप्रत्याख्याना नामधेयं येषां तेऽप्रत्याख्याननामधेयास्तेषामप्रत्याख्याननामधेयानाम्। द्वितीयस्य देशविरतिगुणस्याऽऽवारकत्वाद् द्वितीयाः, ते च ते कषायाश्च द्वितीयकषायास्तेषां द्वितीयकषायाणामुदये 'भव्याः सम्यग्दर्शनलाभं लभन्ते' इति वाक्यशेषः। अयं च वाक्यशेषो 'विरयाविरइं न उ लहंति' इत्यत्र तुशब्दोपादानाल्लभ्यते, एषामुदये भव्याः सम्यग्दर्शनलाभं लभन्ते, विरताविरतिं देशविरतिं पुनर्न लभन्त इति वाक्यसंगतेरिति। विरतं चाऽविरतिश्च यस्यां निवृत्तौ सा विरताविरतिस्ताम् ॥ इति निर्युक्तिगाथार्थः ॥ १२३१ ॥

भाष्यम्—

[4]सव्वं देसो व जओ पच्चक्खाणं न जेसिमुदएणं। ते अप्पच्चक्खाणा सव्वनिसेहे मओऽकारो ॥१२३२॥

सम्मद्दंसणलंभं लभंति भविय त्ति वक्कसेसोऽयं। विरयाविरइविसेसणतुसद्दसंलक्खिओऽयं च ॥१२३३॥

---

१ गाथा १२२६। २ भवसिद्धिका अपि भणिते नियमाद् न लभन्ते तदभव्या अपि। अपिशब्देन वा गृहीताः परीत्तससारादिका. ॥ १२३० ॥

३ द्वितीयकषायाणामुदयेऽप्रत्याख्याननामधेयानाम्। सम्यग्दर्शनलाभं विरताविरतिं न तु लभन्ते ॥ १२३१ ॥

४ सर्वं देशो वा यतः प्रत्याख्यान न येषामुदयेन। तेऽप्रत्याख्याना. सर्वनिषेधे मतोऽकार. ॥ १२३२ ॥

सम्यग्दर्शनलाभं लभन्ते भव्या इति वाक्यशेषोऽयम्। विरताविरतिविशेषणतुशब्दसलक्षितोऽयं च ॥ १२३३ ॥

सिद्धप्रकारेण प्रवृत्तं यथाप्रवृत्तं, क्रियते कर्मक्षपणमनेनेति करणं सर्वत्र जीवपरिणाम एवोच्यते, यथाप्रवृत्तं च तत्करणं च यथाप्रवृत्तकरणम्, एवमुत्तरत्रापि करणशब्देन कर्मधारयः; अनादिकालात् कर्मक्षपणप्रवृत्तोऽध्यवसायविशेषो यथाप्रवृत्तकरणमित्यर्थः। अप्राप्तपूर्वमपूर्वम्, स्थितिघात-रसघाताद्यपूर्वार्थनिर्वर्तकं वाऽपूर्वम्। निवर्तनशीलं निवर्ति, न निवर्ति– अनिवर्ति– आ सम्यग्दर्शनलाभाद् न निवर्तत इत्यर्थः। एतानि त्रीण्यपि यथोत्तरं विशुद्ध-विशुद्धतर-विशुद्धतमाध्यवसायरूपाणि भव्यानां करणानि भवन्ति। इतरेषां त्वभव्यानां प्रथममेव यथाप्रवृत्तकरणं भवति, नेतरे द्वे इति ॥ १२०२ ॥

एतेषां करणानां मध्ये कस्यामवस्थायां किं भवति?, इत्याह—

जा गंठी ता पढमं गंठिं समइच्छओ अपुव्वं तु। अनियट्टीकरणं पुण सम्मत्तपुरक्खडे जीवे ॥१२०३॥

अनादिकालादारभ्य यावद् ग्रन्थिस्थानं तावत् प्रथमं यथाप्रवृत्तकरणं भवति, कर्मक्षपणनिबन्धनस्याऽध्यवसायमात्रस्य सर्वदैव भावात्, अष्टानां कर्मप्रकृतीनामुदयप्राप्तानां सर्वदैव क्षपणादिति। ग्रन्थिं तु समतिक्रामतो भिन्दानस्याऽपूर्वकरणं भवति, प्राक्तनाद् विशुद्धतराध्यवसायरूपेण तेनैव ग्रन्थेर्भेदादिति। अनिवर्तिकरणं पुनः सम्यक्त्वं पुरस्कृतमभिमुखं यस्याऽसौ समक्त्वपुरस्कृतोऽभिमुखसम्यक्त्व इत्यर्थः, तत्रैवंभूते जीवे भवति। तत एव विशुद्धतमाध्यवसायरूपादनन्तरं सम्यक्त्वलाभात् ॥ इति गाथादशकार्थः ॥१२०३॥

अथेदमेव करणत्रयमाश्रित्य सामायिकलाभदृष्टान्तानाह—

पल्लग[2]-गिरिसरिउवल-पिवीलिया-पुरिस-पह-जरग्गहिया। कोद्दव-जल-वत्थाणि य सामाइयलाभदिट्ठंता ॥१२०४॥

पल्लको धान्याधारभूत इहैव प्रतीतः, गिरिसरिदुपलः पर्वतनदीपाषाणः, पिपीलिकाः कीटिकाः, पुरुषाः प्रतीताः, पन्थानो मार्गाः, ज्वरगृहीताः संमुत्पन्न[3]ज्वररोगाः, कोद्रवाः, जलानि, वस्त्राणि। एतेषां पल्लकादीनां संबन्धिनो नव सामायिकलाभदृष्टान्ता वक्तव्याः ॥ इति निर्युक्तिगाथार्थः ॥ १२०४ ॥

अथ पल्लकदृष्टान्तमधिकृत्याह—

जो[4] पल्लेऽतिमहल्ले धण्णं पक्खिवइ थोवथोवयरं। सोहेइ बहुबहुतरं झिज्जइ थोवेण कालेण ॥ १२०५ ॥

---

१ यावद् ग्रन्थिस्तावत् प्रथमं ग्रन्थिं समतिगच्छतोऽपूर्वं तु। अनिवर्तिकरण पुन. पुरस्कृतसम्यक्त्वे जीवे ॥ १२०३ ॥

२ पल्लक-गिरिसरिदुपल-पिपीलिका-पुरुष-पथ-ज्वरगृहीता.। कोद्रव-जल-वस्त्राणि च सामायिकलाभदृष्टान्ता ॥ १२०४ ॥ ३ क ग. 'संपन्न'।

४ यः पल्येऽतिमहति धान्यं प्रक्षिपति स्तोकस्तोकतरम्। शोधयति बहुबहुतरं क्षीयते स्तोकेन कालेन ॥ १२०५ ॥

त्थेसु त्ति' आङ् इह मर्यादायाम्, ईषदर्थे वा; आ- सर्वविरतिप्रत्याख्यानमर्यादया प्रत्याख्यानमावृण्वन्ति, अथवा आ- ईषत् सावद्ययोगानुमतिमात्रविरतिरूपं प्रत्याख्यानमावृण्वन्तीति प्रत्याख्यानावरणा इत्यर्थः। देशविरतो ह्यनन्तं सावद्ययोगं प्रत्याख्याय यदेकादर्शी प्रतिमां प्रतिपन्नः सावद्ययोगस्य परिमितमनुमतिमात्रं न प्रत्याचष्टे, तदेतत्कपायावरणसामर्थ्यात्, इत्यनया विवक्षयेपत्प्रत्याख्यानावरणा एतेऽभिधीयन्त इति ॥ १२३५ ॥

आह- ननु प्रत्याख्यानस्यावरणं सतः, असतो वा ?, इत्याशङ्क्य[2] प्राह—

नासंतस्सावरणं[3] न सतोऽभव्वाइविरमणपसंगा। पच्चक्खाणावरणा तम्हा तस्संभवावरणा ॥ १२३६ ॥

एकान्तेनाऽसतस्तावदावरणं न संभवति, खरविपाणस्यापि तत्प्रसङ्गात्। नापि सतः, अभव्यानामपि प्रत्याख्यानसत्त्वेन विरतिमत्त्वप्रसङ्गात्। तर्हि किमेते कपाया आवृण्वन्ति ?, इत्याह- तस्मात् तत्संभवस्य प्रत्याख्यानसंभवस्य प्रत्याख्यानपरिणतेरावरणाः प्रत्याख्यानावरणा उच्यन्ते, परिणतिशब्दलोपादिति ॥ १२३६ ॥

एतदेव व्यक्तीकुर्वन् सदृष्टान्तमाह—

उदए[4] विरइपरिणई न होइ जेसिं खयाइओ होइ। पच्चक्खाणावरणा त इह जहा केवलावरणं ॥१२३७॥

येषामुदये विरतिपरिणतिरात्मनो न भवति, यत्क्षय-क्षयोपशमादिभ्यस्त्वसौ भवति, त इह प्रत्याख्यानावरणा उच्यन्ते, केवलज्ञानावरणवदिति। इदमुक्तं भवति- केवलावरणेन केवलज्ञानं न सदाऽऽव्रियते, अभव्यानामपि केवलित्वप्रसङ्गात्। अस्त्यभव्यानां केवलम्, किन्त्वावृतमिति चेत्। तदयुक्तम्, मल्लकसंपुटावृतप्रदीपेन तन्मध्यस्येव स्वात्मनस्तेन प्रकाशनप्रसङ्गात्। नाऽप्यसत् केवलज्ञानं केवलज्ञानेनाऽऽव्रियते, खरविषाणस्याऽप्यावरणप्रसङ्गात्। तस्मात् सदसद्रूपं केवलज्ञानं तदावरणेनाऽऽव्रियते। तद्धि जीवद्रव्यरूपतया सदाऽऽव्रियते, आविर्भूततत्परिणत्या त्वसदाऽऽव्रियते, सदसद्रूपयोश्च कथञ्चिदेकत्वमेव। ततः सदसद्रूपस्य केवलज्ञानस्य यथा स्वरूपेण परिणातिसंभवस्तदावरणेनाऽऽव्रियते- आवरणसामर्थ्यात् केवलज्ञानपरिणत्या परिणन्तुं जीवो न लभत इत्यर्थः; एवं प्रत्याख्यानावरणकषायैरपि विरतिपरिणातिसंभव आव्रियते- विरतिपरिणामेन परिणन्तुं जीवो न प्राप्नोतीत्यर्थः। अत्र बहु वक्तव्यम्, तत्तु नोच्यते, ग्रन्थविस्तरभयात् ॥ इति गाथात्रयार्थः ॥ १२३७ ॥

---

१ क ग. 'त्ररू'। २ क.ग 'शङ्कयाह'। ३ नाऽसत आवरण न सतोऽभव्यादिविरमणप्रसङ्गात्। प्रत्याख्यानावरणास्तस्मात् तत्संभवावरणा ॥ १२३६ ॥
४ उदये विरतिपरिणतिर्न भवति येषां क्षयादितो भवति। प्रत्याख्यानावरणास्त इह यथा केवलावरणम् ॥ १२३७ ॥

भङ्गा द्रष्टव्याः, तद्यथा– कस्यचिद् बन्धहेतूनां प्रकर्षात्, पूर्वोपचितकर्मक्षपणहेतूनामपकर्षाच्चोपचयप्रकर्षः, कस्यचित्तु बन्धहेतूनां क्षपणहेतूनां च साम्यादुपचया-ऽपचयसाम्यम्, कस्यचित् पुनर्बन्धहेतूनामपकर्षात् क्षपणहेतूनां च प्रकर्षादपचयप्रकर्षः। तदिह तृतीयभङ्गे यदाऽसौ मिथ्यादृष्टिरपि वर्तते तदा ग्रन्थिदेशं प्राप्नोति। इत्युक्तः पल्यदृष्टान्तः ॥ १२०५ ॥ १२०६ ॥

कथं पुनरनाभोगत एवैतावतः कर्मणोऽपचयः ?, इत्याशङ्क्य द्वितीयं गिरिसरिदुपलदृष्टान्तमाह—

[1]गिरिनइ-वत्तणिपत्थरघडणोवम्मेण पढमकरणेणं। जा गंठी कम्मट्ठिठितिक्खवणमणाभोगओ तस्स॥१२०७॥

गिरिनदीपाषाणानां, तथा, वर्तनी मार्गस्तत्पतितपाषाणानां च लघूपलशकलानां या घटना परस्परादिघर्षणा तदौपम्येन ग्रन्थिं यावत् कर्मस्थितिक्षपणमनाभोगत एव तस्य जीवस्य प्रथमेन यथाप्रवृत्तकरणेन भवति। अयमभिप्रायः– यथा गिरिनदीपाषाणाः मार्गपतितपाषाणाश्चानाभोगतोऽपि– 'वयमीदृशा भवामः' इत्यध्यवसायमन्तरेणापि, परस्परतो लोकचरणादिना वा घृष्यमाणा घञ्चनघोलनान्यायेन केनापि वृत्त-त्र्यस्र-चतुरस्र-ह्रस्व-दीर्घाद्यनेकाकारा भवन्ति; एवमिहापि कथमप्येवमेवाऽनाभोगतो यथाप्रवृत्तकरणेन जीवाः कर्म क्षपयित्वा ग्रन्थिदेशमाप्नुवन्ति ॥ १२०७ ॥

पिपीलिकोदाहरणमधिकृत्याह—

[2]खितिसाभावियगमणं थाणूसरणं तओ समुप्पयणं। ठाणं थाणुसिरे वा ओरुहणं वा मुइंगाणं ॥१२०८॥
खिइगमणं पिव पढमं थाणूसरणं व करणमपुव्वं। उप्पयणं पिव तत्तो जीवाणं करणमनियट्टिं ॥१२०९॥
थाणु व्व गंठिदेसे गंठियसत्तस्स तत्थवत्थाणं। ओयरणं पिव तत्तो पुणो वि कम्मट्ठिइविवुड्ढी ॥१२१०॥

'मुइंगाणं ति' कीटिकानामत्र पञ्चाऽर्थाः किल विवक्षिताः; तद्यथा– क्षितौ तावत् स्वाभाविकमविशिष्टमितश्चेतश्च गमनं पर्यटनम्;

---

१ गिरिनदी-वर्तनीपाषाणघटनौपम्येन प्रथमकरणेन। यावद् ग्रन्थिं कर्मस्थितिक्षपणमनाभोगतस्तस्य ॥ १२०७ ॥

२ क्षितिस्वाभाविकगमनं स्थाणूत्सरणं तत. समुत्पतनम्। स्थानं स्थाणुशिरसि वाऽवरोहण वा कीटिकानाम् ॥ १२०८ ॥
क्षितिगमनमिव प्रथमं स्थाणूत्सरणमिव-करणमपूर्वम्। उत्पतनमिव ततो जीवानां करणमनिवर्ति ॥ १२०९ ॥
स्थाणाविव ग्रन्थिदेशे ग्रन्थिकसत्त्वस्य तत्रावस्थानम्। अवसर्पणमिव ततः पुनरपि कर्मस्थितिविवृद्धि. ॥ १२१० ॥

ननु रात्रीभोजनविरमणमपि मूलगुणः, तदिह किमिति मूलगुणत्वेन नोपात्तम् ?। अत्रोत्तरमाह– व्रतधारिणः संयतस्यैव तद् रात्रीभोजनविरमणं मूलगुणः, शेषस्य तु गृहिणो देशविरतस्योत्तरगुण इत्यर्थः। कुतः ?, आहारविरमणरूपत्वात्, तपोवत्। अथवा, तप एव वा तद् निशिभोजनविरमणमिति प्रतिज्ञा, यतोऽनशनम्– अशनत्यागरूपत्वादिति हेतुः, चतुर्थादिवत्, इत्यनुक्तोऽपि दृष्टान्तः स्वयं दृश्यः, तपश्चोत्तरगुण एवेति भावः। इतश्चेदमुत्तरगुणः। कुतः ?, महाव्रतसंरक्षणात्मकत्वात्, समित्यादिवादिति ॥१२४०॥१२४१॥

अत्राह– यद्येवम्, उक्तयुक्तेर्व्रतधारिणोऽपि तद् मूलगुणो न प्राप्नोति, इत्याह—

तह वि तयं मूलगुणो भण्णइ मूलगुणपालयं जम्हा। मूलगुणगहणम्मि य तं गहियं उत्तरगुण व्व ॥१२४२॥[1]

तथापि व्रतिनस्तन्मूलगुणो भण्यते, समस्तव्रतानुपालनात्, समस्तव्रतसंरक्षणेनाऽत्यन्तोपकारित्वात्, प्राणातिपातविरमणवत्, मूलगुणग्रहणाच्च साक्षादनुपात्तमपि तद् गृहीतमेव द्रष्टव्यम्, उत्तरगुणवादिति ॥ १२४२ ॥

कस्माद् मूलग्रहणे तद् गृह्यते ?, इत्याह—

जम्हा मूलगुण च्चिय न होंति तव्विरहियस्स पडिपुन्ना। तो मूलगुणग्गहणे तग्गहणमिहत्थओ नेयं ॥१२४३॥[2]

यस्मात् तद्विरहितस्य रात्रीभोजनविरमणविरहितस्य महाव्रतादयो मूलगुणा एव परिपूर्णा न भवन्ति, अतो मूलगुणग्रहणे तद्ग्रहणमिहार्थतो विज्ञेयम्; तथाहि– रात्रौ भोजने विधेये रात्रौ भिक्षार्थमचक्षुर्विषये पर्यटनाद् वह्निप्रदीपनादिभिः स्पर्शनात्, पुरःकर्म-पश्चात्कर्माद्यनेषणादोषदुष्टाहारग्रहणादेश्च प्राणातिपातव्रतविघातः। अन्धकारबलेन च पतितहिरण्यादिद्रविणग्रहणादेः, योषित्परि-भोगसंभवाच्च शेषव्रतविलोपः। इत्येवं रात्रिभोजनविरमणमन्तरेण न संभवन्त्येव प्राणातिपातविरत्यादिमूलगुणाः। अत एव तद्ग्रहणेऽ-त्यन्तोपकारित्वाद् गृहीतमेवार्थतस्तादिति ॥ १२४३ ॥

अत्र प्रेरकः प्राह—

जइ मूलगुणो मूलव्वयउवगारि त्ति तं तवाईया। तो सव्वे मूलगुणा जइव न तो, तं पि मा होज्जा ॥१२४४॥[3]

1 तथापि तद् मूलगुणो भण्यते मूलगुणपालक यस्मात्। मूलगुणग्रहणे च तद् गृहीतमुत्तरगुण इव ॥ १२४२ ॥

2 यस्माद् मूलगुणा एव न भवन्ति तद्विरहितस्य परिपूर्णाः। ततो मूलगुणग्रहणे तद्ग्रहणमिहार्थतो ज्ञेयम् ॥ १२४३ ॥

3 यदि मूलगुणो मूलव्रतोपकारीति तत् तपआदिका। तत सर्वे मूलगुणा यदिवा न ते, तदपि मा भूत् ॥ १२४४ ॥

तौ तिरस्कृत्य समतिक्रम्य चेष्टपुरं प्राप्तः। एवं प्रस्तुतेऽपि सर्वमिदं योज्यते. तथाहि– अटवी तावद् भवो द्रष्टव्यः। मनुष्यत्रयरूपास्तु व्यावृत्ताभिन्नग्रन्थिक-ग्रन्थिदेशस्थित-भिन्नग्रन्थिकभेदात् त्रिविधा जीवाः। दीर्घः पन्था द्राघीयसी कर्मस्थितिः, तदतिक्रमणं दीर्घकर्मस्थितिक्षपणम्। भयस्थानं ग्रन्थिदेशः। चौरौ तु राग-द्वेषौ। भग्नः प्रतीपगामी ग्रन्थिदेशमेत्य पुनरप्यशुभपरिणामः कर्मस्थितिवर्धकः। तस्करद्वयगृहीतस्तूदितप्रबलराग-द्वेषो ग्रन्थिकसत्त्वः। इष्टपुरप्राप्तस्तु सम्यग्दर्शनादिषु प्राप्तः। अथ करणत्रयं योज्यते– पुरुषत्रयस्य स्वाभाविकगमनं ग्रन्थिदेशप्रापकं यथाप्रवृत्तिकरणम्, शीघ्रगमनेन तस्करातिक्रमणमपूर्वकरणम्, इष्टसम्यक्त्वादिपुरप्रापकमनिवर्तिकरणमिति ॥१२११॥ १२१२॥ १२१३॥ १२१४॥

आह– ननु ग्रन्थिभेदं कृत्वा सम्यक्त्वादिरूपं निर्वाणपथं जीवाः किं परोपदेशाल्लभन्ते, स्वयमेव वा, न लभन्ते वोभयथापि ?, इत्याशङ्क्य पथदृष्टान्तमाह—

[1]उवएसओ सयं वा लभइ पहं कोइ न लभए कोइ। गंठिट्ठाणं पत्तो सम्मत्तपहं तहा भव्वो ॥ १२१५ ॥

यथेह कश्चित् पथि परिभ्रष्टोऽटव्यामितश्चेतश्च परिभ्रमन् कथमपि स्वयमेव लभते पन्थानम्, कश्चित् तु परोपदेशात् तं प्राप्नोति, कोऽपि पुनर्न लभते। एवं सर्वथा प्रनष्टसत्पथो जीवः संसाराटव्यां पर्यटन् कोऽपि भव्यो ग्रन्थिस्थानं प्राप्तः स्वयमेव सम्यक्त्वादिसत्पथं लभते, कोऽपि परोपदेशात्, कश्चित्तु दूरभव्यः, अभव्यो वा न लभते– ग्रन्थिदेशप्राप्तोऽपि ह्यसौ व्यावर्तत इति भावः ॥ १२१५॥

अथ ज्वरगृहीतदृष्टान्तमाह—

[2]भेसज्जेण सयं वा नस्सइ जरओ न नस्सए कोइ। भव्वस्स गंठिदेसे मिच्छत्तमहाजरो चेवं ॥ १२१६ ॥

यथा ज्वरगृहीतस्य कस्यापि कथमपि ज्वरः स्वयमेवापैति, कस्यचित्तु भेषजोपयोगात्, अपरस्य तु नापगच्छति। एवं मिथ्यात्वमहाज्वरोऽपि कस्यापि ग्रन्थिभेदादिक्रमेण स्वयमेवापगच्छति, कस्यचित्तु गुरुवचनभेषजोपयोगात्, अन्यस्य तु नापैति। तदेवमेतास्तिस्रोऽपि गतयो भव्यस्य भवन्ति, अभव्यस्य त्वेकैव तृतीया गतिरिति ॥ १२१६ ॥

१ उपदेशत स्वयं वा लभते पथं कश्चिद् न लभते कश्चित्। ग्रन्थिस्थानं प्राप्तः सम्यक्त्वपथं तथा भव्यः ॥ १२१५ ॥
२ भैषज्येन स्वयं वा नश्यति ज्वरको न नश्यति कश्चित्। भव्यस्य ग्रन्थिदेशे मिथ्यात्वमहाज्वरश्चैवम् ॥ १२१६ ॥

न हु[1] नवरिमहक्खाओवघाइणो सेसचरणदेसं पि । घाएंति, ताणमुदए होइ जओ साइयारं तं ॥१२४८॥

इह संशब्दस्य त्रयोऽर्थाः, तद्यथा– ईषज्ज्वलनात् संज्वलनाः, अथवा, 'सयराहं' झगिति ज्वलनात् संज्वलनाः, यदिवा, परीषहादिसंपाते चारित्रिणमपि ज्वलयन्नीति संज्वलनाः, तदुदये यथाख्यातचारित्रं न भवति । कुतस्तदुदये तद् न भवति ?, इत्याह– 'अकसायमित्यादि' । 'जं ति' यस्मादकषायं यथाख्यातमुच्यते, तेन कारणेन संज्वलनकषायोदये तद् न लभ्यते, पूर्वलब्धमपि च पुनस्तदुदये सर्वं तद् भ्रश्यतीति । न हि नैव यथाख्यातमात्रोपघातिनः संज्वलनाः, किन्तु शेषचारित्राणामपि देशोपघातिनो भवन्ति, यतस्तेषामुदये तदपि शेषचारित्रं सातिचारं भवति ॥ इति गाथादशकार्थः ॥ १२४६ ॥ १२४७ ॥ १२४८ ॥

अत एवाह—

सव्वे[2] चिय अइयारा संजलणाणं तु उदयओ होंति । मूलच्छेज्जं पुण होइ बारसण्हं कसायाणं ॥१२४९॥

सर्वेऽप्यालोचना-प्रतिक्रमणोभयादिच्छेदपर्यन्तमायश्चित्तशोध्याः, अपिशब्दात् कियन्तोऽपि च, अतिचरणान्यतिचाराश्चारित्र-विराधनाविशेषाः संज्वलनानामेवोदयतो भवन्ति । द्वादशानां पुनः कषायाणामुदयतो मूलच्छेद्यं भवति– मूलेनाऽष्टमस्थानवर्तिना प्रायश्चित्तेन च्छिद्यतेऽपनीयते यद् दोषजातं तद् मूलच्छेद्यम्– अशेषचारित्रोच्छेदकारीत्यर्थः । तदेवंभूतं दोषजातं द्वादशानामनन्तानुबन्ध्य-ऽप्रत्याख्यान-प्रत्याख्यानावरणलक्षणानां कषायाणामुदये संजायते । अथवा, इदं मूलच्छेद्यं दोषजातं यथासंभवतो योज्यते, तद्यथा– प्रत्याख्यानावरणकषायचतुष्टयोदये सर्वविरतिरूपस्य चारित्रस्य मूलच्छेद्यं सर्वनाशरूपं भवति, अप्रत्याख्यानकषायचतुष्कोदये तु देशविरतिचारित्रस्य, अनन्तानुबन्धिकषायचतुष्कोदये पुनः सम्यक्त्वस्य ॥ इति निर्युक्तिगाथार्थः ॥ १२४९ ॥

भाष्यम्—

अइयारा[3] छेदंता सव्वे संजलणहेयवो होंति । सेसकसायोदयओ मूलच्छेज्जं वयारुहणं ॥ १२५० ॥

सप्तमस्थानवर्ती प्रायश्चित्तविशेषश्छेदः । ततश्चालोचनादिना छेदान्तेन सप्तविधप्रायश्चित्तेनान्तो येषां ते, एकस्याऽन्तशब्दस्य

१ न हि नवरमयाख्यातोपघातिनः शेषचरणदेशमपि । घ्नन्ति, तेषामुदये भवति यत सातिचारं तत् ॥ १२४८ ॥
२ सर्वे एवातिचाराः सज्वलनानां तूदयतो भवन्ति । मूलच्छेद्यं पुनर्भवति द्वादशानां कषायाणाम् ॥ १२४९ ॥
३ अतिचाराश्छेदान्ताः सर्वे संज्वलनहेतवो भवन्ति । शेषकषायोदयतो मूलच्छेद्यं व्रतारोहणम् ॥ १२५० ॥

अर्हदादिविभूतिमतिशयवतीं दृष्ट्वा 'धर्मादेवंभूतः सत्कारः, देवत्वराज्यादयो वा प्राप्यन्ते' इत्येवमुत्पन्नबुद्धेरभव्यस्यापि ग्रन्थिस्थानं प्राप्तस्य 'तद्विभूतिनिमित्तम्' इति शेषः; देवत्व-नरेन्द्रत्व-सौभाग्य-रूप-बलादिलक्षणेनाऽन्येन वा प्रयोजनेन सर्वथा निर्वाणश्रद्धानरहितस्याऽभव्यस्यापि कष्टानुष्ठानं किञ्चिदङ्गीकुर्वतोऽज्ञानरूपस्य श्रुतसामायिकमात्रस्य लाभो भवेत्, तस्याऽप्येकादशाङ्गपाठानुज्ञानात्। सम्यक्त्वादिलाभस्तु तस्य न भवत्येव, अभव्यत्वहानिप्रसङ्गादिति ॥ १२१९ ॥

अथ यदुक्तम्– 'अपुव्वेण तिपुंजं मिच्छत्तं कुणइ'[1] इत्यादि। तद्विवरणमाह—

[2]मयणा दरनिव्वलिया निव्वलिया य जह कोद्दवा तिविहा। तह मिच्छत्तं तिविहं परिणामवसेण सो कुणइ॥१२२०॥

यथा परिकर्म्यमाणाः कोद्रवास्त्रिविधा भवन्ति, तद्यथा– मदनाः– अशुद्धा एवेत्यर्थः, तथा, 'दरनिव्वलिय त्ति' ईषन्निर्वलिताः शुद्धा-ऽशुद्धस्वरूपा इत्यर्थः, 'निव्वलिया य त्ति' निर्वलिताश्च शुद्धा एवेत्यर्थः, तथाऽपूर्वकरणलक्षणपरिणामवशेन शुद्धा-ऽशुद्ध-मिश्रभेदाद् मिथ्यात्वं जीवस्त्रिविधं करोतीति ॥ १२२० ॥

अथ जल-वस्त्रदृष्टान्तौ युगपदाह—

[3]जह वेह किंचि मलिणं दरसुद्धं सुद्धमंबु वत्थं च। एवं परिणामवसा करेइ सो दंसणं तिविहं ॥१२२१॥

यथा वा किञ्चिदम्बु जलं, वस्त्रं च मलिनं कलुषं भवति– शोध्यमानमपि न शुध्यति, किञ्चित्तु दरशुद्धमीषद् विशुद्धं भवति, अपरं तु शुद्धं भवति। एवमपूर्वकरणलक्षणपरिणामवशाद् दर्शनमोहनीयं कर्म जीवो मिथ्यात्व-मिश्र-सम्यक्त्वभेदात् त्रिधा करोतीति॥१२२१॥

ननूक्त इत्थं सम्यक्त्वलाभः, अथ देशविरत्यादिलाभः कथम्?, इत्याह—

[4]सम्मत्तम्मि उ लद्धे पलियपुहत्तेण सावओ होज्जा। चरणो-वसम-खयाणं सागर संखंतरा होंति[5] ॥१२२२॥

यावत्यां कर्मस्थितौ सम्यक्त्वं लब्धं तन्मध्यात् पल्योपमपृथक्त्वलक्षणस्थितिखण्डे क्षपिते श्रावको देशविरतो भवेत्। ततोऽपि संख्यातेषु सागरोपमेषु क्षपितेषु चारित्रमवाप्नोति। ततोऽपि संख्यातेषु सागरोपमेषु क्षपितेषूपशमश्रेणीं प्रतिपद्यते, ततोऽपि संख्यातेषु

१ गाथा १२१८। २ मदना दरनिर्वलिता निर्वलिताश्च यथा कोद्रवास्त्रिविधाः। तथा मिथ्यात्वं त्रिविधं परिणामवशेन स करोति ॥ १२२० ॥
३ यथा वेह किञ्चिद् मलिनं दरशुद्धमम्बु वस्त्रं च। एवं परिणामवशात् करोति स दर्शनं त्रिविधम् ॥ १२२१ ॥
४ सम्यक्त्वे तु लब्धे पल्यपृथक्त्वेन श्रावको भवेत्। चरणो-पशम-क्षयाणां सागराः संख्या अन्तरं भवन्ति ॥ १२२२ ॥ ५ क ग. 'वगो हो'।

॥ उक्तमावरणद्वारम् ॥

अथ तत्क्षयोपशमादिभ्यश्चारित्रप्राप्तिमभिधित्सुराह—

[1]बारसविहे कसाए खइए उवसामिए व जोगेहिं । लब्भइ चरित्तलंभो तस्स विसेसा इमे पंच ॥ १२५४ ॥

द्वादशविधे द्वादशप्रकारेऽनन्तानुबन्ध्यादिभेदभिन्ने कषाये, जातावेकवचनम्, क्रोधादिलक्षणे क्षपिते विध्याताग्नितुल्यतां नीते, उपशमिते भस्मच्छन्नदहनकल्पतां प्रापिते; वाशब्दात् क्षयोपशमे चार्धविध्यातज्वलनसमतामुपकल्पिते, योगैर्मनो-वाक्-कायरूपैः प्रशस्तैर्हेतुभिर्लभ्यते चारित्रलाभः, तस्य च सामान्येन चारित्रस्य विशेषा भेदा एते वक्ष्यमाणाः पञ्च ॥ इति निर्युक्तिगाथार्थः ॥ १२५४ ॥

भाष्यम्—

[2]खविए उवसमिए वासद्देणं खओवसमिए वा । बारसविहे कसाए पसत्थझाणाइजोगेहिं ॥ १२५५ ॥

गतार्था, नवरं प्रशस्तध्यानं प्रशस्तं मनः ॥ १२५५ ॥

क्षीणादिकषायस्वरूपमाह—

[3]खीणा निव्वायहुयासणो व छारपिहिय व्व उवसंता । दरविज्झायविहाडियजलणोवम्मा खओवसमा ॥१२५६॥

व्याख्यातार्था, नवरमर्धविध्यातविघट्टितज्वलनोपमाः क्षायोपशमिककषायाः । क्षयोपशमावस्थेषु हि कषायेषु दलिकस्य वेदनमप्यस्ति, तच्च विघट्टितवह्निकल्पमिति ॥ १२५६ ॥

अथ कस्य चारित्रस्य कथं लाभः ?, इत्याह—

[4]खयओ वा समओ वा खओसमओ व तिण्णि लब्भन्ति । सुहुम-हक्खायाइं खयओ समओ व नण्णत्तो ॥१२५७॥

---

१ द्वादशविधे कषाये क्षपिते उपशमिते वा योगैः । लभ्यते चारित्रलाभस्तस्य विशेषा इमे पञ्च ॥ १२५४ ॥
२ क्षपिते उपशमिते वाशब्देन क्षायोपशमिके वा । द्वादशविधे कषाये प्रशस्तध्यानादियोगैः ॥ १२५५ ॥
३ क्षीणा निर्वातहुताशन इव भस्मपिहित इवोपशान्ता । दरविध्यातविघट्टितज्वलनौपम्या. क्षयोपशमा ॥ १२५६ ॥
४ क्षयतो वा शमतो वा क्षयोपशमतो वा त्रीणि लभ्यन्ते । सूक्ष्मा-ऽथाख्याते क्षयतः शमतो वा नान्यतः ॥ १२५७ ॥

प्रथमिल्लुकानां संयोजनाकषायाणामुदये नियमात् सम्यग्दर्शनलाभं भवसिद्धिका अपि न लभन्ते, किमुताऽभव्याः ? । इत्यक्षरयोजना । भावार्थस्त्वयम्— प्रथमा एव देशीवचनतः प्रथमिल्लुकास्तेषां प्रथमिल्लुकानामनन्तानुबन्धिक्रोध-मान-माया-लोभानामित्यर्थः । प्राथम्यं चैषां सम्यक्त्वाख्यप्रथमगुणविघातित्वात्, क्षपणक्रमाद् वेति । उदये विपाकानुभवे सति । नियमाद् नियमेन, अस्य व्यवहितः संबन्धः, स च दर्शित एव । किंविशिष्टानां प्रथमिल्लुकानाम् ?, इत्याह— कर्मणा, तत्फलभूतसंसारेण वा सह संयोजयन्तीति संयोजनास्ते च ते कषायाश्चेति संयोजनकषायाः, दीर्घत्वं प्राकृतत्वात्; अथवा, संयोजनाहेतवः कषायाः संयोजनाकषायास्तेषामुदये नियमात् सम्यगविपरीतं दर्शनं सम्यग्दर्शनं सम्यक्त्वं तस्य लाभस्तम् । भवे सिद्धिर्येषां ते भवसिद्धिकाः । ननु सर्वेषामपि सिद्धिर्भव एव कस्मिंश्चिद् भवेत्, इति किमनेन व्यवच्छिद्यते ? । सत्यम्, किन्त्विह व्याख्यानात् तद्भव एवं भवो गृह्यते, तद्भवसिद्धिका इत्यर्थः, तेऽपि न लभन्ते, किमुताऽभव्याः ? ॥ इति निर्युक्तिगाथार्थः ॥ १२२६ ॥

भाष्यम्—

[2]खवणं पडुच्च पढमा पढमगुणविघाइणो त्ति वा जम्हा । संजोयणाकसाया भवादिसंजोयणाउ त्ति॥ १२२७॥

गतार्थैव ॥ १२२७ ॥

कषायशब्दार्थमाह—

[3]कम्मं कसं भवो वा कसमाओ सिं जओ कसाया तो । कसमाययंति व जओ गमयंति कसं कसाय त्ति॥१२२८॥

आओ व उवादाणं तेण कसाया जओ कसस्साया । चत्तारि बहुवयणओ एवं बिइयादओ वि मया ॥१२२९॥

कर्षन्ति परस्परं हिंसन्ति प्राणिनोऽस्मिन्निति कषं कर्म, भवो वा; अथवा, कृष्यन्ते शारीर-मानसदुःखलक्षैर्घृष्यन्ते प्राणिनोऽस्मिन्निति कषं कर्मैव, भव एव वा; यतो यस्मात् कषं कर्म, कषो वा भव आयो लाभो येषां ततस्ते कषायाः । अथवा, कषमाययन्ति यतः, अतः कषायाः— कषं गमयन्तीत्यर्थः । अथवा, आय उपादानं हेतुरित्यनर्थान्तरम्, यस्मात् कषस्याऽऽया हेतवस्तेन

१ क. ग. 'व गृ' । २ क्षपणं प्रतीत्य प्रथमाः प्रथमगुणविघातिन इति वा यस्मात् । संयोजनाकषाया भवादिसंयोजनादिति ॥ १२२७ ॥
३ कर्म कषं भवो वा कषमाय एषां यतो कषायास्ततः । कषमाययन्ति वा यतो गमयन्ति कषं कषाया इति ॥ १२२८ ॥
आयो वोपादानं तेन कषाया यत. कषस्यायाः । चत्वारो बहुवचनत एवं द्वितीयादयोऽपि मता. ॥ १२२९ ॥

सामाइय त्थ पढमं छेओवट्ठावणं भवे बीयं । परिहारविसुद्धीयं सुहुमं तह संपरायं च ॥ १२६० ॥[1]

तत्तो य अहक्खायं खायं सव्वम्मि जीवलोयम्मि । जं चरिऊण सुविहिया वच्चंतयरा-मरं ठाणं ॥१२६१॥

राग-द्वेषविरहितः समस्तस्य प्रतिक्षणमपूर्वापूर्वनिर्जराहेतुभूताया विशुद्धेरायो लाभः समायः, स एव सामायिकं सर्वसावद्ययोगविरमणमित्यर्थः । ततश्च सर्वमप्येतच्चारित्रमविशेषतः सामायिकमेव; छेदादिविशेषैस्तु विशेष्यमाणमर्थतः संज्ञातश्च नानात्वं प्रतिपद्यते। तदत्रैतेषु मध्ये प्रथमं छेदादिविशेषाणामभावात् सामान्यसंज्ञायामेवात्रातिष्ठते सामायिकम्। एतच्च द्विधा- इत्वरम्, यावत्कथिकं च। तत्र स्वल्पकालभावीत्वरम् । इदं च भरतै-रावतक्षेत्रेषु प्रथम-पश्चिमतीर्थकरतीर्थेऽनारोपितमहाव्रतस्य शिष्यस्य विज्ञेयम् । अत्र जन्मनि यावज्जीवितकथाऽस्यात्मनः, तावत्कालभावि यावत्कथं तदेव यावत्कथिकम्, आभववर्तीत्यर्थः। एतच्च भरतै-रावतमध्यमद्वाविंशतितीर्थकरसाधूनां, महाविदेहार्हत्संयतानां चावसेयम्, एषामुपस्थापनाया अभावादिति ।

द्वितीयं तु चारित्रं छेदोपस्थापनमुच्यते। तत्र च्छेदश्चोपस्थापना च यस्मिंश्चारित्रे तच्छेदोपस्थापनम्- पूर्वपर्यायस्य च्छेदः, महाव्रतेषूपस्थापनं चात्मनो यत्र तच्छेदोपस्थापनमित्यर्थः। एतदपि द्विधा- सातिचारम्, अनतिचारं च । तत्रानतिचारं यदित्वरसामायिकस्य शिष्यस्योपस्थापनायामारोप्यते; तीर्थान्तरसंक्रान्तौ वा, यथा पार्श्वनाथतीर्थाद् महावीरतीर्थं संक्रामतः पञ्चयामधर्मप्रतिपत्ताविति। सातिचारं तु मूलगुणघातिनो यत्पुनरपि महाव्रतारोपणमिति ।

तृतीयं तु चारित्रं परिहारविशुद्धिकम् । तत्र परिहरणं परिहारस्तपोविशेषः, तेन कर्मनिर्जरारूपा विशुद्धिर्यस्मिंश्चारित्रे तत् परिहारविशुद्धिकम्। एतदपि द्विभेदम्- निर्विशमानकम्, निर्विष्टकायिकं च। तत्रास्यैव चारित्रस्यासेवकाः साधवो निर्विशमानका उच्यन्ते, तदव्यतिरेकादिदमपि चारित्रं निर्विशमानकं भण्यते । आसेवितैतच्चारित्रकायास्तु मुनयो निर्विष्टकायाः, त एव स्वार्थिकप्रत्ययोपादानाद् निर्विष्टकायिकाः, तदभेदादिदमपि चारित्रं निर्विष्टकायिकम्। एतत्स्वरूपं च विस्तरतो भाष्येऽभिधास्यत इति ।

'तथा' इत्यानन्तर्ये, गाथाभङ्गभयाद् व्यवहितस्योपन्यासः, 'सूक्ष्मम्' इत्यनुस्वारोऽप्यलाक्षणिकः । सूक्ष्मसंपरायं चतुर्थं चारित्रम्। तत्र संपर्येत्यभिः संसारमिति संपरायाः कषायाः, सूक्ष्मा लोभांशावशेषत्वात् संपराया यत्र तत् सूक्ष्मसंपरायम्। इदमपि द्विविधम्- विशुध्यमानकं संक्लिश्यमानकं च । तत्र विशुध्यमानकं क्षपको-पशमश्रेणिद्वयमारोहतो भवति । संक्लिश्यमानकं तूपशमश्रेणेः प्रच्यवमा-

[1] सामायिकमत्र प्रथमं छेदोपस्थापनं भवेद् द्वितीयम् । परिहारविशुद्धिकं तथा सूक्ष्मसंपरायं च ॥ १२६० ॥
ततश्च यथाख्यातं ख्यातं सर्वस्मिञ्जीवलोके । यच्चरित्वा सुविहिता व्रजन्त्यजरा-मरं स्थानम् ॥ १२६१ ॥

गतार्थे एव ॥ १२३२ ॥ १२३३ ॥

अथ तृतीयस्य सर्वविरतिगुणस्याऽऽवारकांस्तृतीयकषायानाह—

[1]तइयकसायाणुदए पच्चक्खाणावरणनामधेज्जाणं । देसे-क्कदेसविरइं चरित्तलंभं न उ लहंति ॥ १२३४ ॥

सर्वविरतिलक्षणतृतीयगुणघातित्वात्, क्षपणक्रमाद् वा तृतीयाश्च ते कषायाश्च तृतीयकषायाः क्रोधादयश्चत्वारस्तेषामुदये । कथंभूतानाम् ?, आवृण्वन्तीत्यावरणाः, प्रत्याख्यानं सर्वविरतिलक्षणं, तस्याऽऽवरणाः प्रत्याख्यानावरणाः, एतदेव नामधेयं येषां ते प्रत्याख्यानावरणनामधेयाः, तेषाम् । आह– ननु 'अप्रत्याख्याननामधेयानामुदये सर्वथा प्रत्याख्यानं नास्ति' इत्युक्तम्, नञा प्रतिषिद्धत्वात्; इहाऽपि चावरणशब्देन प्रत्याख्यानस्य सर्वस्यापि निषेधो गम्यते, इति क एषां प्रतिविशेषः ? इति । अत्रोच्यते– तत्र नञ् सर्वनिषेध उक्तः, इह त्वाङो मर्यादे-षदर्थत्वात्, आ– सर्वविरतिप्रत्याख्यानमर्यादया, अथवा, ईषत्– सावद्ययोगानुमतिमात्रविरतिरूपं प्रत्याख्यानमावृण्वन्तीति प्रत्याख्यानावरणा इति व्युत्पत्तेः सर्वविरतिरूपप्रत्याख्याननिषेधार्थ एवायं वर्तते, न देशविरतिप्रत्याख्याननिषेध आवरणशब्दः, तथा चाह– देशश्चैकदेशश्च देशै-कदेशौ तत्र देशः स्थूलप्राणातिपातादिः, एकदेशस्तु तस्यैव वनस्पतिकायाद्यतिपातः, तयोर्देशै-कदेशयोर्विरतिर्निवृत्तिस्तां 'लभन्ते' इति वाक्यशेषः । अत्राप्येष वाक्यशेषः 'चरित्तलंभं न उ लहंति' इत्यत्र तुशब्दोपादानादेव लभ्यते । चरन्त्यनिन्दितमनेनेति चारित्रम्, अष्टविधकर्मचयरिक्तीकरणाद् वा चारित्रम्, सर्वविरतिक्रियेत्यर्थः, तस्य लाभस्तम्, एषामुदये न लभन्ते, देशै-कदेशविरतिं पुनर्लभन्ते ॥ इति निर्युक्तिगाथार्थः ॥ १२३४ ॥

भाष्यम्—

[3]सव्वं पच्चक्खाणं वरेंति ते जं न देसमेएणं । पच्चक्खाणावरणा आमज्जादी-सदत्थेसु ॥ १२३५ ॥

यद् यस्मात् सर्वविरतिरूपं सर्वं प्रत्याख्यानमावृण्वन्ति ते तृतीयकषायाः, न देशप्रत्याख्यानम्, एतेन कारणेन प्रत्याख्यानावरणा अमी उच्यन्ते, 'न तु प्रत्याख्यानमावृण्वन्तीति प्रत्याख्यानावरणा इति व्युत्पत्तेः सर्वमपि प्रत्याख्यानमेषामुदये न भवति' इति गम्यते । अयं तु विशेषः कुतः, यत् सर्वविरतिप्रत्याख्यानमावृण्वन्त्यमी, न देशप्रत्याख्यानम् ?, इत्याशङ्क्याह– 'आ मज्जादी-सद-

१ घ छ. 'तीयाना' । २ तृतीयकषायाणामुदये प्रत्याख्यानावरणनामधेयानाम् । देशै-कदेशविरतिं चारित्रलाभ न तु लभन्ते ॥ १२३४ ॥
३ सर्वं प्रत्याख्यानमावृण्वन्ति ते यद् न देशमेतेन । प्रत्याख्यानावरणा आ मर्यादे-षदर्थयोः ॥ १२३५ ॥

अत्रोत्तरमाह—

नणु भणियं सव्वं चिय सामाइयमिणं विसुद्धिओ भिन्नं । सावज्जविरइमइयं को वयलोवो विसुद्धीए ?॥१२६६॥

ननूक्तं सर्वमेवेदं चारित्रमविशेषतः सावद्ययोगविरतिसामान्यात् सामायिकमेव, छेदादिविशुद्धिविशेषैर्विशेष्यमाणमन्यथात्वं प्रतिपद्यते । ततः को नाम विशिष्टतरायां विशुद्धौ प्रतिपद्यमानायां व्रतलोपः ?– न कश्चिदित्यर्थः ॥ १२६६ ॥

कुतः ?, इत्याह—

उन्निक्खमओ भंगो जो पुण तं चिय करेइ सुद्धयरं । सन्नामित्तविसिट्ठं सुहुमं पिव, तस्स को भंगो ? ॥१२६७॥

उन्निष्क्रामतः प्रव्रज्यात्यागमेव कुर्वतो व्रतभङ्गो भवति । यः पुनस्तदेव प्राग् गृहीतं चारित्रं विशुद्धतरं संपादयति, संज्ञामात्रेण तु चारित्रं विशिष्टं भिन्नम्, तस्य भङ्गो न भवति, किन्तु सुतरामेव व्रतनैर्मल्यं संपद्यते । यथा सामायिकसंयतस्य 'सुहुमं ति' सूक्ष्मसंपरायं प्रतिपद्यमानस्य, च्छेदोपस्थापनीयस्य वा परिहारविशुद्धिकमङ्गीकुर्वतो व्रतनिर्मलत्वमिति ॥ १२६७ ॥

छेदोपस्थापनीयस्य व्याख्यामाह—

परियायस्स य छेओ जत्थोवट्ठावणं वएसुं च । छेओवट्ठावणमिह तमणइयारे-यरं दुविहं ॥१२६८॥
सेहस्स निरइयारं तित्थंतरसंकमे च तं होज्जा । मूलगुणघाइणो साइयारमुभयं च ठियकप्पे ॥१२६९॥

'जत्थ त्ति' यत्र चारित्रे पूर्वपर्यायस्य च्छेदः, व्रतेषु चोपस्थापनं विधीयते, तदिह च्छेदोपस्थापनम् । तच्च द्विधा– सातिचारम्, अनतिचारं च । तत्र शिष्यकस्योपस्थापनायां, तीर्थान्तरसंक्रान्तौ वा यदारोप्यते तद् निरतिचारं भवेत् । यत्तु मूलगुणघातिनः पुनरपि समारोप्यते तत् सातिचारम् । एतच्चोभयमपि स्थितकल्प एव भवति, न स्थितास्थितकल्पे । तत्र भरतै-रावतप्रथम-चरमतीर्थकरसाधूनां स्थितकल्पः—

१ ननु भणित सर्वमेव सामायिकमिदं विशुद्धितो भिन्नम् । सावद्यविरतिमय को व्रतलोपो विशुद्धौ ? ॥ १२६६ ॥
२ उन्निष्क्रामतो भङ्गो य· पुनस्तदेव करोति शुद्धतरम् । सञ्ज्ञामात्रविशिष्ट सूक्ष्ममिव, तस्य को भङ्ग· ? ॥ १२६७ ॥
३ पर्यायस्य च च्छेदो यत्रोपस्थापन व्रतेषु च । छेदोपस्थापनमिह तदनतिचारे-तर द्विविधम् ॥ १२६८ ॥
शैक्षस्य निरतिचार तीर्थान्तरसक्रमे च तद् भवेत् । मूलगुणघातिनः सातिचारमुभय च स्थितकल्पे ॥ १२६९ ॥

अथोक्तमेवार्थं संगृह्य विभणिषुः, तथा चतुर्थकषायाणां यथाख्यातचारित्रादिविघातित्वं च दिदर्शयिषुराह—

[1]मूलगुणाणं लंभं न लहइ मूलगुणघाइणो उदए । संजलणाणं उदए न लहइ चरणं अहक्खायं ॥१२३८॥

इह सम्यक्त्वं[2], व्रता-ऽणुव्रतानि च मूलभूता गुणा मूलगुणाः, उत्तरगुणानामाधारभूतत्वात्, तेषां मूलगुणानां लाभं न लभते । कदा ?, इत्याह— यथोक्तान् मूलगुणान् हन्तुं शीलं येषां ते मूलगुणघातिनस्तेषां मूलगुणघातिनामनन्तानुबन्ध्य-ऽप्रत्याख्यान-प्रत्याख्यानावरणानां द्वादशानां कषायाणामुदये । एतच्च '[3]पढमिल्लुआण उदए' इत्यादिना सर्वं भावितमेव । तथा, ईषज्ज्वलनात् संज्वलनाः, सपदि ज्वलनाद् वा संज्वलनाः, परीषहादिसंपाते चारित्रिणमपि ज्वलयन्तीति वा संज्वलनाः क्रोधादय एव चत्वारः कषायाः, तेषामुदये न लभते, लब्धं वा त्यजति चरणं चारित्रम् । किं सर्वमपि ?, न, इत्याह— यथैव तीर्थकर-गणधरैराख्यातं यथाख्यातमकषायमित्यर्थः, सकषायं तु लभते । न च यथाख्यातचारित्रमात्रमेवोपघ्नन्ति संज्वलनाः, किन्तु शेषचारित्राणामपि देशोपघातिनो भवन्ति, तदुदये शेषचारित्रातिचारसिद्धेः ॥ इति निर्युक्तिगाथार्थः ॥ १२३८ ॥

के पुनस्ते मूलगुणाः, यद्विघातिनो द्वादश कषायाः ?, इत्याह—

[4]सम्मत्तसमेयाइं महव्वया-णुव्वयाइं मूलगुणा । मूलं सेसाहारो बारस तग्घाइणो एए ॥ १२३९ ॥

गतार्था, नवरं शेषाणामुत्तरगुणानामाधारत्वात् सम्यक्त्व-महाव्रतादीनि मूलमुच्यते, तद्विघातिन एते द्वादश कषाया इति॥१२३९॥

अत्रार्थापत्त्याऽऽक्षिप्तमनवगच्छन्नाह परः—

[5]निसिभत्तविरमणं पि हु नणु मूलगुणो कहं न गहियं तं ? । वयधारिणो च्चिय तयं मूलगुणो सेसयस्सियरो॥१२४०॥

आहारविरमणाओ तवो व तव एव वा जओऽणसणं । अहव महव्वयसंरक्खत्तणाओ समिइउ व्व ॥ १२४१ ॥

१ मूलगुणानां लाभं न लभते मूलगुणघातिन उदये । संज्वलनानामुदये न लभते चरणमथाख्यातम् ॥ १२३८ ॥ २ घ छ. 'क्त्वं महाव्रतानि । ३ गाथा-१२२६ । ४ सम्यक्त्वसमेतानि महाव्रता-ऽणुव्रतानि मूलगुणा । मूलं शेषाधारो द्वादश तद्घातिन एते ॥ १२३९ ॥,
५ निशिभक्तविरमणमपि हि ननु मूलगुण कथं न गृहीतं तत् ? । व्रतधारिण एव तद् मूलगुण शेषस्येतरः ॥ १२४० ॥
आहारविरमणात् तप इव तप एव वा यतोऽनशनम् । अथवा महाव्रतसंरक्षत्वात् समितय इव ॥ १२४१ ॥

[1]गिम्ह-सिसिर-वासासुं चउत्थयाईणि बारसंताइं । अड्ढापक्कंतीए जहण्ण-मज्झिमु-क्कोसयतवाणं ॥१२७३॥

स च परिहारस्तपः पुनः परिहारिकाणां प्रस्तुततपो वोढॄणां ग्रीष्म-शिशिर-वर्षासु प्रत्येकं जघन्यादित्रिविकल्पश्चतुर्थादि तपो ज्ञेय इति । एतदेव व्यक्तीकरोति– 'गिम्हेत्यादि' ग्रीष्म-शिशिर-वर्षासु चतुर्थादीनि द्वादशान्तानि तपांसि विज्ञेयानि । कया ? । अर्धापक्रान्त्या । केषां याऽर्धापक्रान्तिः ?, इत्याह– जघन्य-मध्यमो-त्कृष्टतपसाम् । इदमुक्तं भवति– ग्रीष्मे सामान्येनैवोष्णकाले जघन्यं तपश्चतुर्थं ते कुर्वन्ति, मध्यमं तु षष्ठम्, उत्कृष्टं पुनरष्टमम् । स्थापना– १।२।३ ॥ एतदेवार्धापक्रान्त्या शिशिरे कुर्वन्ति । तत्रार्धस्याऽसमप्रविभागरूपस्यैकदेशस्य वैकादिपदात्मकस्यापक्रमणमवस्थानम्, शेषस्य तु द्व्यादिपदसंघातरूपस्यैकदेशस्योर्ध्वं गमनं यस्यां रचनायां सा समयपरिभाषयाऽर्धापक्रान्तिरुच्यते । तत्र चतुर्थ-षष्ठा-ऽष्टमानि ग्रीष्मे प्रोक्तानि । एतेषां मध्यादेकदेशश्चतुर्थलक्षणोऽपक्रामत्यत्रातिष्ठते, शेषं तु षष्ठा-ऽष्टमपदद्वयमूर्ध्वं शिशिरे गच्छति, तृतीयं तु दशमलक्षणं पदं मील्यते । ततश्च जघन्यतः षष्ठं, मध्यमतोऽष्टमम्, उत्कृष्टतस्तु दशमं शिशिरे कुर्वन्तीति सिद्धं भवति– २ । ३ । ४ ॥ एतेषां मध्यादेकदेशः षष्ठलक्षणोऽपक्रामति, अष्टम-दशमे तूर्ध्वं वर्षासु गच्छतः, तृतीयं त्वग्रेतनं द्वादशं मील्यते । ततश्च जघन्यतोऽष्टमम्, मध्यमतस्तु दशमम्, उत्कृष्टतस्तु द्वादशं तपो वर्षासु कुर्वन्ति– ३ । ४ । ५ ॥ तदत्र पदत्रयमध्यादेकदेशापक्रान्त्याऽर्धापक्रान्तिरुक्ता ॥ १२७२ ॥ १२७३ ॥

ननु परिहारिकास्तावदिदमुक्तस्वरूपं तपः कुर्वन्ति, अनुपरिहारिक-कल्पस्थितानां तु का वार्ता ? इत्याह—

[2]सेसा उ निययभत्ता पायं भत्तं च ताणमायामं । होइ नवण्हं वि नियमा न कप्पए सेसयं सव्वं ॥१२७४॥

शेषाः पुनरनुपरिहारिक-कल्पस्थिताः पञ्चापि प्रायो नियतभक्ता नित्यभोजिनो भवन्ति । प्रायोग्रहणाद् निजेच्छया कदाचिदुपवासमपि कुर्वन्ति । भक्तं च तेषां सर्वदैवाऽनुपरिहारि-कल्पस्थितानां पारणके परिहारिकाणां च सर्वेषामाचाम्लमेव भवति । शेषं तु विकृति-लेपकृदादिकं वस्तु सर्वं नवानामपि नियमाद् न कल्पत इति ॥ १२७४ ॥

कियन्ति दिनानि केनेदं तपः कर्तव्यम् ?, इत्याह—

[3]परिहारिया-ऽणुपरिहारियाण कप्पट्ठियस्स वि य भत्तं । छ छम्मासा उ तवो अट्ठारसमासिओ कप्पो ॥१२७५॥

१ ग्रीष्म-शिशिर वर्षासु चतुर्थकादीनि द्वादशान्तानि । अर्धापक्रान्त्या जघन्य-मध्यमो त्कृष्टतपसाम् ॥ १२७३ ॥
२ शेषास्तु नियतभक्ता प्रायो भक्त च तेषामाचाम्लम् । भवति नवानामपि नियमाद् न कल्पते शेषक सर्वम् ॥ १२७४ ॥
३ परिहारिका-ऽनुपरिहारिकाणां कल्पस्थितस्यापि च भक्तम् । षट् षड् मासास्तु तपोऽष्टादशमासिक- कल्प- ॥ १२७५ ॥

यदि तद् निशिभोजनविरमणं मूलगुणोपकारित्वाद् मूलगुण इष्यते, ततस्तर्हि तपःप्रभृतयः सर्वेऽपि मूलगुणाः प्राप्नुवन्ति, तेषामपि तदुपकारित्वात्। अतो विशीर्णोत्तरगुणकथा। यदि पुनस्ते तपःप्रभृतयो मूलगुणा न भवन्ति, तर्हि तदपि रात्रीभोजनविरमणं मूलगुणो मा भूत्, उपकारित्वाविशेषात्। पूर्वापरविरोधश्चैवमनभ्युपगच्छतो भवतः, तथाहि– भवतैवानन्तरमुक्तं यथा– 'महाव्रतसंरक्षणादुत्तरगुण इदं, समितिवत्' इति; इदानीं त्वभिधत्से–'महाव्रतसंरक्षणाद् मूलगुण एतदिति'। अत्रोच्यते– किमिह विरुद्धम्?, उभयधर्मकं हि रात्रीभोजनविरमणम्, यतो गृहस्थस्य तदुत्तरगुणः, तस्याऽऽरम्भजप्राणातिपातादनिवृत्तत्वात्, निशि भोजनेऽपि मूलगुणानामखण्डनात्, अत्यन्तोपकाराभावादिति; व्रतिनस्तु तदेव मूलगुणः, तस्याऽऽरम्भजादपि प्राणातिपाताद् निवृत्तत्वात्, रजनिभोजने च तत्संभवात्, अतस्तद्विधाने मूलगुणानां खण्डनात्, तद्विरमणे तु तेषां संरक्षणेनात्यन्तोपकारात् तत् तस्य मूलगुणः। तपःप्रभृतीनां चेत्थमत्यन्तोपकारित्वाभावादुत्तरगुणत्वमिति ॥ १२४४ ॥

आह च—

[२]सव्वव्वओवगारिं जह तं न तहा तवादओ वीसुं। जं ते, तेणुत्तरिया होंति गुणा तं च मूलगुणो ॥१२४५॥

'जं ति' यस्मात् कारणाद् यथा तद् रात्रीभोजनविरमणं सर्वव्रतोपकारकम्, न तथा तपः-समित्यादयो विष्वक् पृथक्, तेन कारणेन त उत्तरिका उत्तरगुणा भवन्ति। तत्तु रात्रीभोजनव्रतं मूलगुणानामत्यन्तोपकारित्वाद् मूलगुणः। यथा हि प्राणातिपातादिव्रतानां पञ्चानामेकस्याप्यभावे शेषाणामभावाद् मूलगुणत्वम्, एवं रात्रिभोजनव्रतस्याऽप्यभावे सर्वव्रताभावादत्यन्तोपकारित्वाद् मूलगुणत्वमिति भावः ॥ १२४५ ॥

अथ '[३]संजलणाणं उदए' इत्यादिनिर्युक्तिगाथोत्तरार्धव्याख्यामाह–

[४]ईसिं सयराहं वा संपाए वा परीसहाईणं। जलणाओ संजलणा नाहक्खायं तदुदयम्मि ॥ १२४६ ॥

अकसायमहक्खायं जं संजलणोदए न तं तेण। लब्भइ लद्धं च पुणो भस्सइ सव्वं तदुदयम्मि ॥१२४७॥

१ घ.छ 'अथवा म'। २ सर्वव्रतोपकारि यथा तद् न तथा तपआदयो विष्वक्। यत् ते, तेनौत्तराहा भवन्ति गुणास्तच्च मूलगुणः ॥ १२४५ ॥ ३ गाथा १२३८। ४ ईषद् झगिति वा संपाते वा परीषहादीनाम्। ज्वलनात् संज्वलना नाऽथाख्यात तदुदये ॥ १२४६ ॥ अकषायमथाख्यातं यत् संज्वलनोदये न तत् तेन। लभ्यते लब्ध च पुनर्भ्रश्यति सर्वं तदुदये ॥ १२४७ ॥

अथ यथाख्यातचारित्रं विवृण्वन्नाह—

[1]अहसद्दो जाहत्थे आङोऽभिविहीए कहियमक्खायं । चरणमकसायमुदितं तमहक्खायं जहक्खायं ॥१२७९॥

'अथ' इत्ययं याथातथ्यार्थे, आङ् अभिविधौ । ततश्च याथातथ्येन, अभिविधिना वाख्यातं कथितं तदकषायं चरणं तदथाख्यातं यथाख्यातं चोदितमिति ॥ १२७९ ॥

एतच्च कतिविधम् ?, इत्याह—

[3]तं दुविगप्पं छउमत्थ-केवलिविहाणओ पुणेक्केक्कं । खय-वसमज-सजोगा-ऽजोगिकेवलिविहाणओ दुविहं ॥१२८०॥

तच्च यथाख्यातचारित्रं छद्मस्थ-केवलिस्वामिभेदाद् द्विभेदम् । छद्मस्थसंबन्धि पुनरपि द्विविधम्— मोहक्षयसमुत्थम्, तदुपशमप्रभवं च । केवलिसंबन्ध्यपि सयोग्य-ऽयोगिकेवलिभेदतो द्विविधमेवेति ॥ १२८० ॥

अथ पूर्वोक्तं निगमयन्, उत्तरनिर्युक्तिगाथां च संबन्धयन्नाह—

[4]भणियं खओवसमओ अहुणोवसमेणं लहइ जह जीवो । सामइयं तं भण्णइ सो जं च खओवसमपुव्वो ॥१२८१॥

तदेवं 'सत्तण्हं पयडीणं अब्भितरओ कोडकोडीए' इत्यादिना भणितः क्षयोपशमात् सामायिकलाभः । अधुना तु '[5]अण-दंस-नपुंसि-त्थी' इत्यादिना वक्ष्यमाणाद् यथा मोहोपशमात् सामायिकं लभ्यते तद् भण्यते । किमिति प्रथमं क्षयोपशमात् तल्लाभ उक्तः ?, इत्याह— 'सो जं चेत्यादि' स यस्माद् वक्ष्यमाण उपशमः क्षयोपशमपूर्वः । पूर्वं हि मोहनीयक्षयोपशमात् सम्यक्त्वादिकं लभ्यते, पश्चाच्चोपशमश्रेणिः । अतोऽनेनैव क्रमेणैतदभिधानम् । इत्येका पातना ॥ १२८१ ॥

अथ पातनान्तरमाह—

[7]अहवा खओवसमओ चरणतियं उवसमेण खयओ वा । सुहुमा-हक्खायाइं तेणोवसम-क्खया कमसो ॥१२८२॥

---

१ क॰ ग॰ 'ख्यात वि' । २ अथशब्दो याथार्थ्ये आङभिविधौ कथितमाख्यातम् । चरणमकषायमुदितं तदथाख्यात यथाख्यातम् ॥ १२७९ ॥
३ तद् द्विविकल्पं छद्मस्थ-केवलिविधानतः पुनरेकैकम् । क्षयो-पशमज सयोग्य-ऽयोगिकेवलिविधानतो द्विविधम् ॥ १२८० ॥
४ भणित क्षयोपशमतोऽधुनोपशमेन लभते यथा जीवः । सामायिक तद् भण्यते स यच्च क्षयोपशमपूर्वः ॥ १२८१ ॥ ५ गाथा ११९३ ।
६ गाथा १२८४ । ७ अथवा क्षयोपशमतश्चरणत्रिकमुपशमेन क्षयतो वा । सूक्ष्मा-ऽथाख्याते तेनोपशम-क्षयौ क्रमशः ॥ १२८२ ॥

लोपाच्छेदान्ताः, सर्वेऽप्यतिचाराः संज्वलनकषायोदयजन्या भवन्ति । शेषकषायाणां द्वादशानामुदये मूलच्छेद्यं समस्तचारित्रोच्छेदकारकं दोषजातं भवति । तद्विशुद्धये च प्रायश्चित्तं पुनर्व्रतारोपणमिति ॥ १२५० ॥

अथवा, यथासंभवं मूलच्छेद्यं योज्यते, इत्येतदाह—

[1]अहवा संजममूलच्छेज्जं तइयकलुसोदए निययं । सम्मत्ताईमूलच्छेज्जं पुण बारसण्हं पि ॥ १२५१ ॥

तृतीयानां प्रत्याख्यानावरणकषायाणामुदये संयमस्य सर्वविरतिरूपस्य मूलच्छेद्यं नियतं निश्चितं भवति, सम्यक्त्वादिमूलच्छेद्यं तु द्वादशानामप्युदये संपद्यत इति ॥ १२५१ ॥

अथ प्रेर्यमाशङ्क्य परिहरन्नाह—

[2]मूलच्छेज्जे सिद्धे पुव्वद्धे मूलगुणघाइगहणेणं । इय कीस पुणो गहणं अइयारविसेसणत्थं ति ॥१२५२॥

पगयमहक्खायं ति य अइयारे तम्मि चेव मा जोए । तो मूलच्छेज्जमिणं सेसचरित्ते निओएइ ॥१२५३॥

आह– नन्वनन्तरनिर्दिष्टनिर्युक्तिगाथायां '[3]मूलगुणाणं लंभं न लहइ मूलगुणघाइणो उदए' इत्येतस्मिन् पूर्वार्धे मूलगुणघातिग्रहणेन द्वादशकषायाणामुदये मूलच्छेद्यं सिद्धमेव, किमितीह पुनस्तद्ग्रहणम् ? । अत्रोत्तरमाह– अतिचारविशेषणार्थमिति– अतिचाराणां विशेषे व्यवस्थापनार्थमित्यर्थः । इदमेव व्यक्तीकुर्वन्नाह– 'पगयमित्यादि' । इदमुक्तं भवति– '[3]संजलणाणं उदए न लहइ चरणं अहक्खायं' इत्यनन्तरनिर्युक्तिगाथोत्तरार्धादिह यथाख्यातचारित्रं प्रकृतमनुवर्तते । ततश्च '[4]सव्वे चिय अइयारा संजलणाणं तु उदयओ होंति' इत्येतानतिचाराननन्तरानुवर्तमाने यथाख्यातचारित्र एव शिष्योऽयौक्षीत्, तदेतद् मा भूत्; ततस्तेनेह पुनरपि मूलच्छेद्यमेतद् यथाख्यातवर्जितेऽशेषचारित्रे सामायिकादिके नियोजयति । अस्यां हि गाथायां मूलच्छेद्यग्रहणात् पुनःशब्दविशेषणाच्चायमर्थः संपद्यते । संज्वलनानामुदये शेषचारित्रस्य सर्वेऽप्यतिचारा भवन्ति, द्वादशकषायाणामुदये पुनर्मूलच्छेद्यं भवति । यस्यैवास्यां गाथायां मूलच्छेद्यमुक्तम्, तस्यैवातिचारा अपि, न तु यथाख्यातचारित्रस्य, कषायोदयरहितत्वेन तस्य निरतिचारत्वात् ॥ इति गाथाचतुष्टयार्थः ॥ १२५२ ॥ १२५३ ॥

१ अथवा संयममूलच्छेद्यं तृतीयकलुषोदये नियतम् । सम्यक्त्वादिमूलच्छेद्यं पुनर्द्वादशानामपि ॥ १२५१ ॥
२ मूलच्छेद्ये सिद्धे पूर्वार्धे मूलगुणघातिग्रहणेन । इति कस्मात् पुनर्ग्रहणमतिचारविशेषणार्थमिति ॥ १२५२ ॥
प्रकृतमथाख्यातमिति चातिचारे तस्मिन्नेव मा यौक्षीत् । ततो मूलच्छेद्यमिदं शेषचारित्रे नियोजयति ॥१२५३॥ ३ गाथा १२३८ । ४ गाथा १२४९ ।

ततो हास्य-रत्य-ऽरति-शोक-भय-जुगुप्सालक्षणं हास्यादिषट्कं युगपदन्तर्मुहूर्तेन, ततः पुरुषवेदमन्तर्मुहूर्तेन । अथ स्त्री प्रारम्भिका, ततः प्रथमं नपुंसकवेदम् , ततः पुरुषवेदम् , ततो हास्यादिषट्कं, ततः स्त्रीवेदमुपशमयति, इत्येवं द्रष्टव्यम् । अथ नपुंसकः प्रारम्भकः, ततोऽसावनुदीर्णमपि प्रथमं स्त्रीवेदमुपशमयति, ततः पुरुषवेदम् , ततः षट्कम् , ततो नपुंसकवेदम् , इत्येष क्रमः । अत ऊर्ध्वं द्वौ द्वौ क्रोधाद्यावेकान्तरितौ संज्वलनक्रोधादिव्यवहितौ, सदृशौ क्रोधादित्वेन परस्परं तुल्यौ सदृशं युगपदेव प्रत्येकमन्तर्मुहूर्तेनोपशमयति । एतदुक्तं भवति— अप्रत्याख्यान-प्रत्याख्यानावरणौ क्रोधौ क्रोधरूपतया सदृशौ सदृशं युगपदन्तर्मुहूर्तेनोपशमयति, ततः संज्वलनं क्रोधमेकाकिनमेकान्तर्मुहूर्तेनोपशमयति । ततोऽप्रत्याख्यान-प्रत्याख्यानावरणौ मानौ मानरूपतया सदृशौ सदृशं युगपदेव, ततः संज्वलनं मानम् , ततोऽप्रत्याख्यान-प्रत्याख्यानावरणमायाद्वयं मायारूपतया सदृशम् , ततः संज्वलनां मायाम् ; ततोऽप्रत्याख्यान-प्रत्याख्यानावरणलोभद्वयं लोभरूपतया सदृशं युगपदुपशमयति, ततः संज्वलनं लोभम् । अमुं चोपशमयंस्त्रिधा करोति— द्वौ भागौ युगपदुपशमयति; तृतीयं तु भागं संख्येयानि खण्डानि करोति, तान्यपि पृथक् पृथक् कालभेदेनोपशमयति । तत एतेषां संख्येयखण्डानां यच्चरमं खण्डं तदसंख्येयानि खण्डानि करोति । ततः समये समय एकैकं खण्डमुपशमयति । इह च दर्शनसप्तक उपशान्तेऽपूर्वकरणः, निवृत्तिबादरो वाऽभिधीयते । तत ऊर्ध्वमनिवृत्तिबादरो यावत्संख्येयखण्डानां चरमखण्डम् । चरमसंख्येयखण्डनिष्पन्नानि त्वसंख्येयखण्डान्युपशमयन् सूक्ष्मसंपरायः । तदेवमन्तर्मुहूर्तेन संज्वलनं लोभमपि सर्वमुपशमयति । एवं सर्वत्र प्रत्येकमन्तर्मुहूर्तमुपशमकालः । सर्वापि चेयं श्रेणिर्महताऽन्तर्मुहूर्तेन समर्थ्यते ।

अस्याश्च श्रेणेरनन्तानुबन्धिचतुष्टयादीनां प्रत्येकं शून्यस्थापनया स्वरूपं भावनीयम् । तत्रानन्तानुबन्धिचतुष्टयस्थापने चत्वारि शून्यानि तिर्यग् व्यवस्थाप्यन्ते, तद्यथा- ० ० ० ० । एषामुपशमस्य प्रारम्भो निष्ठा च समकालमेव, इति तिर्यक्समतया स्थाप्यन्ते । एवमुत्तरत्रापि तिर्यक्समस्थापनायां भावार्थोऽवसेयः । एतदुपरि तिर्यक्समशून्यत्रयेण दर्शनत्रयं स्थाप्यते- ० ० ० । एतदुपर्येकस्य वेदकस्यैकं शून्यम्, तदुपरि द्वितीयस्य द्वितीयम्- ०/० । तदुपरि हास्यादिषट्कं समश्रेण्या तिर्यक् स्थाप्यते- ० ० ० ० ० ० । एतदुपरि तृतीयवेदशून्यम्, तदुपर्यपि तिर्यक्क्रोधशून्यद्वयम्- ० ० । एतदुपरि संज्वलनक्रोधस्य शून्यम्- ० । एतदुपरि तिर्यग्मानद्वयस्य शून्यद्वयम्- ० ० । तदुपरि मानस्यैकं शून्यम्- ० । तदुपरि मायाद्वयस्य तिर्यक् शून्यद्वयम्- ० ० । तदुपरि मायायाः शून्यम्- ० । तदुपरि लोभद्वयस्य तिर्यगेव शून्यद्वयम्- ० ० । एतदुपरि संज्वलनस्य लोभस्यैकं शून्यम्- ० । एवमूर्ध्वं स्थापनां विधाय सर्वं भावनीयम् ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ १२८४ ॥

सामायिक-च्छेदोपस्थापनीय-परिहारविशुद्धिकलक्षणान्याद्यानि त्रीणि चारित्राणि श्रेणिद्वयादन्यत्र कषायक्षयोपशमात् पूर्वप्रतिपन्नानि प्रतिपद्यमानानि च लभ्यन्ते, अनिवृत्तिबादरस्य पुनरुपशमश्रेणौ तदुपशमात् पूर्वप्रतिपन्नानां तेषां लाभः, क्षपकश्रेणौ तु क्षयादिति। सूक्ष्मसंपराय-यथाख्यातचारित्रे तूपशमश्रेणौ कषायोपशमात्, क्षपकश्रेणौ तु तत्क्षयाल्लभ्येते, नान्यतः– क्षयोपशमाद् न प्राप्यत इत्यर्थः ॥१२५७॥

आह– ननु 'तस्स विसेसा इमे पंच' इत्यत्र किं सामान्यं चारित्रमात्रं तच्छब्दस्य वाच्यम्, आहोस्विद् द्वादशानां कषायाणां क्षयादिभ्यो यदनन्तरमेवोक्तं तदेव ?, इत्याशङ्क्याह[1]—

[2]लब्भइ चरित्तलाभो खयाइओ बारसण्ह नियमोऽयं। न उ पंचविहनियमणं पंच विसेस त्ति सामण्णं ॥१२५८॥

द्वादशानां कषायाणां क्षयादितः क्षय-क्षयोपशमो-पशमेभ्य एव लाभश्चारित्रस्य, नान्यथा, इत्येवमेवेह नियमो द्रष्टव्यः, न तु पञ्चविधनियमनम्– द्वादशकषायाणामेव क्षयादितो लब्धस्य चारित्रस्य पञ्चैते विशेषा इत्येवंभूतो नियमोऽत्र न[3] कर्तव्य इत्यर्थः। किं तर्हि ?। द्वादशानां, अधिकानां वा कषायाणां क्षयादितो लब्धस्य तस्य सामान्येनैव चारित्रस्यैते वक्ष्यमाणाः पञ्च विशेषा इत्येवं सामान्यं चारित्रमात्रं तच्छब्दस्य संबध्यत इति ॥ १२५८ ॥

अथ कस्माद् द्वादशकषायाणामेव क्षयादितो लब्धस्य चारित्रस्य पञ्चैते विशेषा इत्येवंभूतो नियमोऽत्र न क्रियते ?, इत्याह—

[4]जं तिण्णि बारसण्हं लब्भंति खयाइओ कसायाणं। सुहुमं पण्णरसण्हं चरिमं पुण सोलसण्हं पि ॥ १२५९ ॥

यतः सामायिक-च्छेदोपस्थापनीय-परिहारविशुद्धिकलक्षणानि त्रीण्येव चारित्राणि द्वादशकषायाणां क्षयादितो लभ्यन्ते, इति कथं तत्क्षयादिलभ्यस्य चारित्रस्य पञ्चविधत्वं स्यात् ?। सूक्ष्मसंपरायचारित्रं तु संज्वलनलोभवर्जितानां शेषपञ्चदशकषायाणां क्षयात्, उपशमाद् वा लभ्यते। चरमं तु यथाख्यातचारित्रं षोडशानामपि कषायाणां क्षयात्, उपशमाद् वा प्राप्यते। एवं च सति सामान्यस्यैव चारित्रस्य पञ्च विशेषा भवन्ति ॥ इति गाथापञ्चकार्थः ॥ १२५९ ॥

के पुनस्ते पञ्च विशेषाः ?, इत्याह—

---

१ गाथा १२५४। २ लभ्यते चारित्रलाभ क्षयादितो द्वादशानां नियमोऽयम्। न तु पञ्चविधनियमन पञ्च विशेषा इति सामान्यम् ॥ १२५८ ॥

३ क ग 'न क्रियत इ'। ४ यत् त्रीणि द्वादशाना लभ्यन्ते क्षयादित. कपायाणाम्। सूक्ष्म पञ्चदशानां चरम पुन. पोडशानामपि ॥ १२५९ ॥

यदा तु नपुंसकः प्रारम्भकः, तदोदीर्णं नपुंसकवेदं षण्ढादुपर्युपशमयति, अनुदीर्णं तु स्त्रीवेदं जघन्यतरत्वाद् दर्शनत्रिकादुपरि प्रथममुपशमयति, ततः पुरुषवेदमिति ॥ १२८८ ॥

ततः किम् ?, इत्याह—

[1]मज्झिल्लकसायाणं कोहाइसमाणजाइए दो दो । एक्केक्केणंतरिए संजलणेणं उवसमेइ ॥ १२८९ ॥

अनन्तानुबन्ध्युपशमस्योक्तत्वात् संज्वलनानां तूपशमस्याऽन्तरालेषु भावात्, अर्थाद् मध्यमकषाया अप्रत्याख्यान-प्रत्याख्यानावरणा एवावशिष्यन्ते । तेषां मध्यात् क्रोधादिसमानजातीयौ द्वौ द्वावेकैकेन क्रोधादिसंज्वलनेनान्तरितावुपशमयतीति ॥ १२८९ ॥

अत्र प्रेरकः प्राह—

[2]संजलणाईणं समो जुत्तो, संजोयणादओ जे उ । ते पुव्वं चिय समिया नणु सम्मत्ताइलाभम्मि ॥१२९०॥

ननु संज्वलनकषाय-हास्यादीनामुदयवर्तित्वाच्छमो युक्तः । ये तु संयोजनादयः कषायास्ते पूर्वमेव सम्यक्त्वादिगुणप्राप्तिकाले उपशमिता एव, सम्यक्त्वादिलाभान्यथानुपपत्तेः । अत इदानीं तेषामुपशमाभिधानमयुक्तमेवेति भावः ॥ १२९० ॥

अत्रोत्तरमाह—

[3]आसि खओवसमो सिं समोऽहुणा, भणइ को विसेसो सिं ? । नणु खीणम्मि उइण्णे सेसोवसमे खओवसमो ॥१२९१॥

हन्त ! सम्यक्त्वादिलाभकाले आसीदेषां संयोजनादिकषायाणां क्षयोपशमः, अत इदानीं तेषामुपशमोऽभिधातव्य एव । अथ प्रेरको भणति— ननु क्षयोपशमो-पशमयोः कः किल विशेषः ? । सूरिराह— ननूदीर्णे उदयप्राप्ते कर्मणि क्षीणे, शेषे चानुदीर्णे उपशान्ते सति क्षयोपशमोऽभिधीयत इति ॥ १२९१ ॥

प्रेरकः प्राह—

[4]सो चेव नणूवसमो उइए खीणम्मि सेसए समिए । सुहुमोदयता मीसे न तूवसमिए विसेसोऽयं ॥ १२९२ ॥

---

१ मध्यमकषायाणां क्रोधादिसमानजातीयौ द्वौ द्वौ । एकैकेनान्तरितौ सञ्ज्वलनेनोपशमयति ॥ १२८९ ॥

२ सञ्ज्वलनादीनां शमो युक्त, सयोजनादयो ये तु । ते पूर्वमेव शमिता ननु सम्यक्त्वादिलाभे ॥ १२९० ॥

३ आसीत् क्षयोपशम एषां शमोऽधुना, भणति को विशेषोऽनयोः ? । ननु क्षीण उदीर्णे शेषोपशमे क्षयोपशमः ॥ १२९१ ॥

४ स एव ननूपशम उदिते क्षीणे शेषके शमिते । सूक्ष्मोदयता मिश्रे न तूपशमिते विशेषोऽयम् ॥ १२९२ ॥

नस्य प्राप्यते। चः समुच्चये। ततश्च सूक्ष्मसंपरायानन्तरं सर्वत्र साधुजीवलोके ख्यातं प्रसिद्धं यथाख्यातं पञ्चमं सर्वविशुद्धं चारित्रं भवति। तत् कथम्भूतम् ?, इत्याह– यच्चरित्वाऽऽसेव्य, शोभनं विहितमनुष्ठानं येषां ते सुविहिताः सुसाधवो व्रजन्त्यजरा-मरं मोक्षलक्षणं स्थानम्। तत्र मरणं मरः। स्वरान्तत्वादल्प्रत्ययः। न विद्यते जरा-मरौ यत्र तदजरा-मरम् । इदं च कषायोदयरहितत्वात् क्षीणमोहोपशान्तमोहलक्षणस्य च्छद्मस्थवीतरागस्य सयोग्य-ऽयोगिकेवलिनश्च भवति ॥ इति निर्युक्तिगाथाद्वयसंक्षेपार्थः ॥ १२६० ॥ १२६१ ॥

विस्तरार्थं तु भाष्यकृदाह—

सव्वमिणं[1] सामाइयं छेयाइविसेसओ पुणो भिन्नं। अविसेसियमाइमयं ठियमिह[2] सामन्नसन्नाए ॥१२६२॥

सावज्जजोगविरइ त्ति तत्थ सामाइयं दुहा तं च। इत्तरमावकहं ति य पढमं पढमं-तिमजिणाणं ॥१२६३॥

तित्थेसुमणारोवियवयस्स सेहस्स थोवकालीयं। सेसाणमावकहियं तित्थेसु, विदेहयाणं च ॥ १२६४ ॥

सर्वमपीदं चारित्रमविशेषतः सामायिकमेव। एतदेव च च्छेदादिविशेषैर्विशेष्यमाणमर्थतः संज्ञातश्च नानात्वं प्रतिपद्यते। तत्राद्यं विशेषणाभावात् सामान्यसंज्ञायामेवावतिष्ठते सामायिकमिति। तत्र सावद्ययोगविरतिस्वरूपमेतत् सामायिकम्। तच्च द्विधा– इत्वरम्, यावत्कथिकं च। तत्रेत्वरं स्वल्पकालीनं भरतै-रावताऽऽद्य-चरमतीर्थकरतीर्थयोरेवानारोपितमहाव्रतस्य शिष्यकस्य द्रष्टव्यम्। यावत्कथिकं यावज्जीविकं भरतै-रावतप्रथम-चरमवर्जशेषतीर्थकरतीर्थसाधूनां, महाविदेहजानां च साधूनामवसेयमिति ॥ १२६२ ॥ १२६३ ॥ १२६४॥

अथ प्रेरकः प्राह—

नणु[3] जावज्जीवाए इत्तिरियं पि गहियं मुयंतस्स। होइ पइण्णालोवो जहावकहियं मुयंतस्स ॥ १२६५॥

आह– ननु 'करोमि भदन्त! सामायिकं यावज्जीवम्' इत्येवं व्रतग्रहणकाले इत्वरमपि सामायिकं गृहीतमुपस्थापनायां मुञ्चतः प्रतिज्ञालोपः प्राप्नोति, यावत्कथिकपरित्याग इव ॥ १२६५ ॥

१ सर्वमिदं सामायिक छेदादिविशेषत' पुनर्भिन्नम्। अविशेषितमादिमकं स्थितमिह सामान्यसंज्ञायाम् ॥ १२६२ ॥
सावद्ययोगविरतिरिति तत्र सामायिक द्विधा तच्च। इत्वरं यावत्कथमिति च प्रथम प्रथमा-ऽन्तिमजिनयो. ॥ १२६३ ॥
तीर्थयोरनारोपितव्रतस्य शैक्षस्य स्तोककालिकम्। शेषाणां यावत्कथिकं तीर्थेषु, विदेहजानां च ॥ १२६४ ॥ २ क. ग. 'यमह'।
३ ननु यावज्जीवमित्वरमपि गृहीतं मुञ्चत। भवति प्रतिज्ञालोपो यथा यावत्कथिकं मुञ्चत' ॥ १२६५ ॥

पएसकम्मं तं अत्थेगइयं वेएइ, अत्थेगइयं नो वेएइ" इति। यस्माद् न खल्वनुदितं कर्म निर्जीर्यते, न चासदुदेति, किन्तु सदेवोदेति। यस्मात् सर्वोऽपि मुमुक्षुः सर्वमपि प्रदेशकर्म वेदयित्वैव मुच्यते, नान्यथा। ततः प्रदेशवेद्यानामनन्तानुबन्ध्यादीनामिदानीमुपशमो निरूप्यत इति प्रकृतम् ॥ १२९५ ॥ १२९६ ॥



पुनरपि परः प्राह—

[1]किह दंसणाइघाओ न होइ संजोयणाइ वेदयओ ?। मंदाणुभावयाए जहाणुभावम्मि वि कहिंचि ॥१२९७॥

निच्चोदिन्नं पि जहा सयलचउण्णाणिणो तदावरणं। न विघाइ मंदयाए पएसकम्मं तहा नेयं ॥ १२९८ ॥

नन्वेवं सति प्रदेशतोऽपि संयोजनादिकषायान् वेदयतः संयतादेः कथं सम्यग्दर्शनादिविघातो न भवति ?। अत्र प्रतिविधानमाह— मन्दानुभावतया नीरसप्रदेशमात्रवेदनाद् न सम्यक्त्वादिघात इत्यर्थः। यथेह क्वचिदनुभावकर्मापि नातिविघातकं दृष्टम्, तद्यथा— नित्योदितमपि मति-श्रुता-ऽवधि-मनःपर्यायावरणचतुष्टयं संपूर्णचतुर्ज्ञानिनो न मत्यादिज्ञानविघाताय दृष्टम्, मन्दत्वात्; तद्वत् तत्प्रदेशकर्मापि नीरसत्वाद् न दर्शनादिविघातायेति ॥ १२९७ ॥ १२९८ ॥

किञ्च,

[2]किरियाए कुणइ रोगो मंदं पीलं जहाऽवणिज्जंतो। किरियामेत्तकयं चिय पएसकम्मं तहा तवसा ॥१२९९॥

यथेह रोगो भिषजादिक्रियया विधिवदपनीयमानो मन्दां क्रियामात्रकृतामेवाऽऽतुरस्य पीडां करोति, नातिगुर्वीम्; तद्वत् प्रदेशकर्मापि तपसाऽपनीयमानं तपोरूपक्रियामात्रप्रकृतामेव पीडां करोतीति; तथाहि—नरकगत्यादिकाः कर्मप्रकृतयस्तद्भवसिद्धिकानामपि मुनीनां सत्तायां विद्यन्त एव, न चाननुभूतास्ताः कदाचिदपि क्षीयन्ते, न च तद्भवसिद्धिका नरकादिजन्मविपाकेन ताः समनुभवति, किन्तु तपसा प्रदेशरूपतया समनुभूय ताः क्षपयति। न च वेदयिता काञ्चिद् बाधामनुभवति। ततो ज्ञायते— न प्रदेशकर्मवेदनं गुणविघाताय, बाधाकरणं वेति ॥ १२९९ ॥

---

१ कथं दर्शनादिघातो न भवति संयोजनादि वेदयतः ?। मन्दानुभावतया यथानुभावेऽपि कुत्रचित् ॥ १२९७ ॥
नित्योदीर्णमपि यथा सकलचतुर्ज्ञानिनस्तदावरणम्। न विघाति मन्दतया प्रदेशकर्म तथा ज्ञेयम् ॥ १२९८ ॥

२ क्रियया करोति रोगो मन्दां पीडां यथाऽपनीयमानः। क्रियामात्रकृतामेव प्रदेशकर्म तथा तपसा ॥ १२९९ ॥

“आचेलक्कु द्देसिअ-सेज्जायर-रायपिंड-किइकम्मे । वय-जिट्ठ-पडिक्कमणे मासं पज्जोसणाकप्पे ॥ १ ॥”

इत्येतस्मिन् दशविधेऽपि कल्पे तेषां स्थितत्वात्। भरतै-रावतशेषद्वाविंशतितीर्थकरसाधूनां, महाविदेहार्हत्साधूनां च स्थितास्थित-कल्पः-

“सिज्जायरपिडम्मि चाउज्जामे य पुरिसजेट्ठे य । किइकम्मस्स य करणे चत्तारि अवट्ठिया कप्पा ॥ १ ॥”

एतेषु चतुर्षु कल्पेषु नियमेन तेषामपि स्थितत्वात्, शेषेषु तु षट्सु नियमाभावेनाऽस्थितत्वादिति ॥ १२६८ ॥ १२६९ ॥

अथ परिहारविशुद्धिकं विवृणोति—

[3]परिहारेण विसुद्धं सुद्धो वा तओ जहिं विसेसेण । तं परिहारविसुद्धं परिहारविसुद्धियं नाम ॥ १२७० ॥

तं दुविगप्पं निव्विस्समाण-निव्विट्ठकाइयवसेणं । परिहारिया-णुपरिहारियस्स कप्पट्ठियस्स वि य ॥१२७१॥

परिहारस्तपोविशेषः, तेन विशुद्धं परिहारविशुद्धम्, अथवा, तकोऽसौ परिहारो विशेषेण शुद्धो यत्र तत्परिहारविशुद्धम्, तदेव स्वार्थिकप्रत्ययोपादानात् परिहारविशुद्धिकं नामेति । एतच्च निर्विशमान-निर्विष्टकायिकभेदाद् द्विविधम् । कस्य पुनरेतच्चारित्रं भवति ?, इत्याह— ‘परिहारिएत्यादि’ इदमुक्तं भवति— नवको गण इदं प्रतिपद्यते, तद्यथा— चत्वारः परिहारिकाः, चत्वारश्चानुपरिहारिकाः एकस्तु कल्पस्थितः । तत्र परिहारिकाणां तदासेवकत्वादिदं निर्विशमानकमुच्यते, अनुपहारिकाणां कल्पस्थितस्य च विहितवक्ष्यमाण-तपसां निर्विष्टकायिकमभिधीयत इति ॥ १२७० ॥ १२७१ ॥

‘परिहारेण तपसा विशुद्धम्’ इत्युक्तम्, किं पुनरिह परिहारः ?, इत्याह—

[4]परिहारो पुण परिहारियाण सो गिम्ह-सिसिर-वासासु । पत्तेयं तिविगप्पो चउत्थयाई तवो नेओ ॥१२७२॥

१ आचेलक्यौ-द्देशिक-शय्यातर-राज-पिण्ड-कृतिकर्माणि । व्रत-ज्येष्ठ-प्रतिक्रमणानि मासं पर्यूषणाकल्पः ॥ १ ॥
२ शय्यातरपिण्डे चातुर्यामे च पुरुषज्येष्ठे च । कृतिकर्मणश्च करणे चत्वारोऽवस्थिता कल्पा ॥ १ ॥
३ परिहारेण विशुद्ध शुद्धो वा सको यत्र विशेषेण । तत् परिहारविशुद्ध परिहारविशुद्धिकं नाम ॥ १२७० ॥ तद् द्विविकल्प निर्विशमान-निर्विष्टकायिकवशेन । परिहारिका-नुपरिहारिकाणां कल्पस्थितस्यापि च ॥ १२७१ ॥
४ परिहारः पुनः परिहारिकाणां स ग्रीष्म-शिशिर-वर्षासु । प्रत्येक त्रिविकल्पश्चतुर्थादि तपो ज्ञेय ॥ १२७२ ॥

उपशमकसूक्ष्मसंपरायस्याधिकारे तत्समभाग इति कृत्वा तत्क्षपकोऽप्ययमेव निर्दिष्टः। यथोपशमश्रेण्यां नवमगुणस्थानकादुपरितनभागे सूक्ष्मसंपरायो भवति, तथा क्षपकश्रेण्यामपि, इति सामानभागत्वादुपशमकाधिकारे लाघवार्थं क्षपकोऽपि निर्दिष्ट इत्यर्थः। उपशमकसूक्ष्मसंपरायश्चैतद्गुणस्थानकादतिक्रान्त उपशान्तमोहनिर्ग्रन्थलक्षणो यथाख्यातो भवति ॥ १३०३ ॥

ततः किम् ?, इत्याह—

[1]बद्धाऊ पडिवन्नो सेढिगओ वा पसंतमोहो वा। जइ कुणइ कोइ कालं वच्चइ तोऽणुत्तरसुरेसु ॥१३०४॥

अनिबद्धाऊ होउं पसंतमोहो मुहुत्तमेत्तद्धं। उइयकसायो नियमा नियत्तए सेढिपडिलोमं ॥ १३०५ ॥

यदि बद्धायुरुपशमश्रेणिं प्रतिपन्नः श्रेणिमध्यगतगुणस्थानकवर्ती वा, उपशान्तमोहो वा भूत्वा कालं करोति, तदा नियमेनानुत्तरसुरेष्वेवोत्पद्यते, श्रेणिप्रतिपतितस्य तु कालकरणेऽनियमः, नानामतित्वेन नानास्थानगमनादिति। अथाऽबद्धायुस्तां प्रतिपद्यते, तदाऽन्तर्मुहूर्तमुपशान्तमोहो भूत्वा ततः कुतश्चिद् निमित्तादुदितकषायः स नियमेन श्रेणिप्रतिलोमं पश्चान्मुखं निवर्तते प्रतिपतति, एतावन्मात्रकालभावित्वादेवास्याः ॥ इति गाथात्रयार्थः ॥ १३०४ ॥ १३०५ ॥

अत एव दुरन्तं कषायसामर्थ्यमुत्कीर्तयन्नाह—

[2]उवसामं उवणीया गुणमहया जिणचरित्तसरिसं पि। पडिवायंति कसाया किं पुण सेसे सरागत्थे ? ॥१३०६॥

उपशमनमुपशमस्तमपिशब्दात् क्षयोपशममप्युपनीताः। केनोपशममुपनीताः ?, इत्याह– गुणैर्महान् गुणमहान् उपशमकस्तेन गुणमहतोपशमकेन। प्रतिपातयन्ति कषायाः संयमात्, भवे वा। कम् ?। तमेवोपशमकम्। कथंभूतम् ?। जिनस्य केवलिनश्चारित्रेण कृत्वा सदृशस्तुल्यो जिनचारित्रसदृशः, द्वयोरप्युपशान्त-मोहकेवलिनोः कषायोदयरहितचारित्रयुक्तत्वाज्जिनसमानचारित्र इत्यर्थः, तमेवंभूतमपि। किं पुनः शेषान् सरागस्थान् न प्रतिपातयन्ति ? ॥ इति निर्युक्तिगाथार्थः ॥ १३०६ ॥

१ बद्धायु प्रतिपन्न. श्रेणिगतो वा प्रशान्तमोहो वा। यदि करोति कोऽपि काल व्रजति ततोऽनुत्तरसुरेषु ॥ १३०४ ॥ अनिबद्धायुर्भूत्वा प्रशान्तमोहो मुहूर्तमात्रार्धम्। उदितकषायो नियमाद् निवर्तते श्रेणिप्रतिलोमम् ॥ १३०५ ॥

२ उपशममुपनीता गुणमहता जिनचारित्रसदृशमपि। प्रतिपातयन्ति कषाया. किं पुनः शेषान् सरागस्थान् ? ॥ १३०६ ॥

एवमुक्तप्रकारेण परिहारिकाणाम्, अनुपरिहारिकाणाम्, कल्पस्थितस्यापि च भक्तं भोजनमाचाम्लेन भवतीति शेषः, षड् षड् मासान् यथोक्तरूपं तपश्च यथायोगं वक्तव्यम्। तत्र परिहारिकास्तावद् ग्रीष्मादिषु पारणके आचाम्लपरिगृहीतचतुर्थादिक्रमेण षड् मासान् यावत् तपः कुर्वन्ति। ततश्चानुपहारिकाः परिहारिकत्वं प्रतिपद्येत्थमेव षड् मासान् यावत् तपः कुर्वन्ति। परिहारिकाश्च विहि-ततपसस्तेषामनुपरिहारिकत्वमनुचरत्वं प्रतिपद्यन्ते। ततश्च कल्पस्थित एक एव परिहारिकत्वं प्रतिपद्येत्थमेव षड् मासान् यावत् तपः करोति, एकस्त्वितरेषां मध्यात् कल्पस्थितो वाचनाचार्यो भवति, शेषास्तु सप्ताऽनुचरा भवन्ति। एवमयं परिहारविशुद्धिककल्पोऽष्टादशभिर्मासैः समर्थ्यते ॥ १२७५ ॥

कल्पसमाप्तौ ते किं कुर्वन्ति?, इत्याह—

[1]कप्पसमत्तीए तयं जिणकप्पं वाउविंति गच्छं वा। ठियकप्पे नियमा दो पुरिसजुगाइं ते होंति ॥१२७६॥

कल्पसमाप्तौ चैषां त्रयी गतिः, तद्यथा- कदाचित् पुनरपि 'तयं ति' तमेव परिहारविशुद्धिककल्पं प्रतिपद्यन्ते, जिनकल्पं वाऽभ्युपगच्छन्ति, गच्छं वा पुनरप्युपयान्ति प्रविशन्ति। ते च परिहारविशुद्धिका नियमेन स्थितिकल्पे भरतै-रावतप्रथमा-ऽन्तिमजिनतीर्थे द्वे एव पुरुषयुगे यावद् भवन्ति, तीर्थकरसमीपे चामुं कल्पं प्रतिपद्यन्ते- तीर्थकरसमीपे प्रतिपन्नः, अन्यसमीपे वा, नान्यत्रेत्यर्थः। तदेवमभिहितं परिहारविशुद्धिकचारित्रम् ॥ १२७६ ॥

अथ सूक्ष्मसंपरायचारित्रमाह—

[2]कोवाइ संपराओ तेण जओ संपरीइ संसारं। तं सुहुमसंपरायं सुहुमो जत्थावसेसो सो ॥ १२७७ ॥

सेढिं विलग्गओ तं विसुज्झमाणं तओ चयंतस्स। तह संकिलिस्समाणं परिणामवसेण विन्नेयं ॥१२७८॥

क्रोधादिः कषायवर्गः संपराय उच्यते। कुतः?, इत्याह- यतः संपरैति पर्यटति संसारमनेनेति संपरायः सूक्ष्मोऽवशेषो यत्र तत् सूक्ष्मसंपरायम्। तच्च श्रेणिं विलगत आरोहतो विशुद्ध्यमानकं भवति। तथा, तस्याः प्रच्यवमानस्य संक्लिश्यमानकं परिणामवशेन तद् विज्ञेयमिति ॥ १२७७ ॥ १२७८ ॥

1 कल्पसमाप्तौ तज्जिनकल्पं वोपयान्ति गच्छं वा। स्थितकल्पे नियमाद् द्वे पुरुषयुगे ते भवन्ति ॥ १२७६ ॥
2 कोपादिः संपरायस्तेन यत. सपर्यैति संसारम्। तत् सूक्ष्मसपराय सूक्ष्मो यत्रावशेषः स· ॥ १२७७ ॥
श्रेणिं विलगतस्तद् विशुध्यमानं ततश्च्यवमानस्य। तथा सक्लिश्यमान परिणामवशेन विज्ञेयम् ॥ १२७८ ॥

द्वितीयनिर्युक्तिगाथाभावार्थमाह—

दासत्तं देइ अणं अइरा मरणं वणो विसप्पंतो । सव्वस्स दाहमग्गी दिंति कसाया भवमणंतं ॥१३११॥

स्तोकमपि ऋणं क्रमेण वर्धमानं दासत्वं ददाति, यथा– काचिद् वणिग्दुहिता गृहीतव्रतस्य निजभ्रातुरागतस्य प्रतिदिनं कर्षवृद्ध्या हट्टात् तैलस्य कर्षमानीय दत्तवती । साधुसेवाव्याक्षेपाच्च तया वणिजोऽसौ न दत्तः। वर्धमानश्च क्रमेण घटादिसंख्यां प्राप्तः । तया च कर्पासकर्तनमात्रेणैव जीवनादसौ दातुं न शकितः । ततस्तस्यैव वणिजः सा ऋणदासी संजाता । अन्यदा चागतेन तेनैव बन्धुसाधुना विज्ञातस्तद्व्यतिकरः । कृता च तस्य वणिजो देशना । मोचयित्वा चेयं ग्राहिता दीक्षाम् । इत्येवं दासत्वदायकं स्तोकमपि ऋणम् । स्तोकोऽपि च व्रणशेषोऽपथ्यादिकमासाद्य विसर्पन्नन्तर्बहिश्च प्रसरन्नचिराद् मरणं प्रयच्छति । अग्नेश्च लवोऽपि मार्गादौ पतितस्तृणादिके लग्नः परंपरया क्रमेण प्रसरन् समस्तमपि ग्राम-नगरादिकं निर्दहति । एवं स्तोकशेषा अपि कषायाः कुतश्चिद् निमित्ताद् वृद्धिमुपगच्छन्तोऽनन्तं भवमुपकल्पयन्तीति ॥ १३११ ॥

वक्ष्यमाणगाथाप्रस्तावनार्थमाह—

ओवसमं[2] सामाइयमुइयं खाइयमओ पवक्खामि। सुहुममहक्खायं पि य खयसेढिसमुब्भवं तं च ॥१३१२॥

तदेवमौपशमिकं सामायिकं चारित्रमुक्तम्, इदानीं क्षायिकं तदुच्यते । इत्येका पातना । अथवा, सूक्ष्मसंपरायचारित्रं यथाख्यातचारित्रं चोपशमश्रेण्याश्रितमुक्तम्, इदानीं क्षपकश्रेणिसमुद्भवं तदेवाह ॥ इति गाथाद्वयार्थः ॥ १३१२ ॥

अण[3]-मिच्छ-मीस-सम्मं अट्ठ नपुंस-त्थिवेय-छक्कं च ।पुमवेयं च खवेइ कोहाईए य संजलणे ॥ १३१३ ॥

इह क्षपकश्रेणिप्रतिपत्तोत्तमसंहननोऽविरत-देशविरत-प्रमत्ता-ऽप्रमत्तानामन्यतम उत्पन्नविशुद्धपरिणामो विज्ञेयः। तत्र पूर्वधरोऽप्रमत्तः शुक्लध्यानोपगतोऽप्येतां प्रतिपद्यते, शेषास्त्वविरतादयो धर्मध्यानोपगता एव । क्षपणक्रमश्चायम्, तद्यथा– प्रथममन्तर्मुहूर्तेना-

१ दासत्वं ददाति ऋणमचिराद् मरणं व्रणो विसर्पन्। सर्वस्य दाहमग्निर्ददति कषाया भवमनन्तम् ॥ १३११ ॥

२ औपशमिकं सामायिकमुदितं क्षायिकमतः प्रवक्ष्यामि । सूक्ष्ममथाख्यातमपि च क्षयश्रेणिसमुद्भवं तच्च ॥ १३१२ ॥

३ अन-मिथ्या मिश्र-सम्यक्त्वानि अष्ट नपुंसक स्त्रीवेद-षट्कानि च । पुंवेदं च क्षपयति क्रोधादींश्च सज्वलनान् ॥ १३१३ ॥

अथवा, आद्यं चारित्रत्रयं कषायाणां क्षयोपशमादुक्तम्, उपलक्षणत्वात् क्षयात्, उपशमाच्चेति। सूक्ष्मसंपराय-यथाख्यातचारित्रद्वयं तु यस्मादुपशमेन, क्षयेण वा लभ्यत इत्युक्तम्, तेन तस्मात् कारणात् तावेवोपशम-क्षयौ क्रमेण भण्येते। यो हि श्रेणिद्वयमुपलप्स्यते[1] स पूर्वमुपशमश्रेणिं करोति, पश्चात्तु क्षपकश्रेणिम्, इत्यमुं क्रममाश्रित्य युगपद् द्वयाभिधाने प्राप्तेऽपि प्रथममत्रोपशमश्रेणी, पश्चात्तु क्षपकश्रेणी वक्ष्यत इति भावः ॥ १२८२ ॥

अथ तृतीयामपि पातनामाह—

[2]सेढिगयस्स सुहुमं सेढीओ निग्गयस्सहक्खायं। सा उवसम-क्खयओ पढमं तत्थोवसमसेढी ॥१२८३॥

'वा' इत्यथवा, श्रेण्यन्तर्भाविनः सूक्ष्मसंपरायमुक्तम्, तद्विनिर्गतस्य तु यथाख्यातम्, अतः श्रेणिद्वयं भणनीयमायातम्, उभयश्रेणिलाभे चोपशमश्रेणिमेवादौ कुरुते, इति सैव तावत् प्रथममुच्यते ॥ इति द्वाविंशतिगाथार्थः ॥ १२८३ ॥

तामेव विहितप्रस्तावनामुपश्रेणिमाह—

[3]अण-दंस-नपुंस-त्थीवेय-च्छक्कं च पुरिसवेयं च। दो दो एगंतरिए सरिसे सरिसं उवसमेइ ॥१२८४॥

इहोपशमश्रेणिप्रारम्भकोऽप्रमत्तसंयतो भवतीति केचित्। अविरत-देशविरत-प्रमत्ता-ऽप्रमत्तसंयतानामन्यतर इत्यन्ये। श्रेणेः समाप्तौ च निवृत्तोऽप्रमत्तगुणस्थाने प्रमत्तगुणस्थाने वाऽवतिष्ठते, कालगतस्तु देवेष्वविरतो वा भवति। कार्मग्रन्थिकाभिप्रायेण तु प्रतिपतितोऽसौ मिथ्यादृष्टिगुणस्थानकमपि यावद् गच्छति। तत्रेत्थमेतामारभते— 'अण त्ति'। 'अण-रण-' इत्यादिदण्डकधातुः। अणन्तीवाऽविकलहेतुत्वेनाऽसातवेद्यम्, नारकाद्यायुष्कं च शब्दयन्त्याकारयन्तीत्यणा आद्याः क्रोधादयश्चत्वारः कषायाः। अथवा, 'अण त्ति' प्राकृतत्वेन अनाः, एकदेशेन समुदायस्य गम्यमानत्वादनन्तानुबन्धिनस्त एवाऽऽद्याः क्रोधादयश्चत्वारः कषाया इत्यर्थः। तत्राऽसौ प्रतिपत्ता प्रशस्तेष्वध्यवसायस्थानेषु वर्तमानः प्रथमं युगपदन्तर्मुहूर्तमात्रेण कालेनाऽनन्तानुबन्धिनः क्रोधादीनुपशमयति। 'दंस त्ति' दर्शनं दर्शः, तच्च दर्शनं मिथ्यात्व-मिश्र-सम्यक्त्वभेदात् त्रिविधम्। ततोऽनन्तानुबन्ध्युपशमानन्तरमेतदपि युगपदन्तर्मुहूर्तेनोपशमयति। ततो यदा पुरुषः श्रेणिसमारम्भको भवति, तदानुदीर्णमपि 'नपुंस त्ति' नपुंसकवेदमन्तर्मुहूर्तेनोपशमयति, ततः स्त्रीवेदमन्तर्मुहूर्तेन,

१ क ग 'यमपि ल'। २ श्रेणिगतस्य सूक्ष्मं श्रेणीतो निर्गतस्याऽथाख्यातम्। सोपशम-क्षयत. प्रथमं तत्रोपशमश्रेणिः ॥ १२८३ ॥
३ अन-दर्श-नपुसक-स्त्रीवेद-षट्कानि च पुरुषवेदं च। द्वौ द्वावेकान्तरितौ सदृशौ सदृशमुपशमयति ॥ १२८४ ॥

भाष्यकारः प्राह—

[1]पडिवत्तीए अविरय-देस-पमत्ता-पमत्त-विरयाणं। अन्नयरो पडिवज्जइ सुद्धज्झाणोवगयचित्तो ॥१३१४॥
पढमकसाए समयं खवेइ अंतोमुहुत्तमेत्तेणं। तत्तो चिय मिच्छत्तं तओ य मीसं तओ सम्मं ॥ १३१५ ॥
बद्धाऊ पडिवन्नो पढमकसायक्खए जइ मरेज्जा। तो मिच्छत्तोदयओ विणिज्ज भुज्जो न खीणम्मि ॥१३१६॥
तम्मि मओ जाइ दिवं तप्परिणामो य सत्तए खीणे। उवरयपरिणामो पुण पच्छा नाणामइगइओ ॥१३१७॥

चतस्रोऽपि व्याख्यातार्थाः ॥ १३१४ ॥ १३१५ ॥ १३१६ ॥ १३१७ ॥

प्रेरकः प्राह—

[2]खीणम्मि दंसणतिए किं होइ तओ तिदंसणाईओ ?। भण्णइ सम्मद्दिट्ठी, सम्मत्तक्खए कओ सम्मं ? ॥१३१८॥

ननु मिथ्यात्वादिकदर्शनत्रिके क्षीणे किं तकोऽसौ क्षपकस्त्रिदर्शनातीतो भवति ?– न मिथ्यादृष्टिः, मिथ्यात्वस्य क्षीणत्वात्; न मिश्रः सम्यग्मिथ्यादृष्टिः, सम्यग्-मिथ्यात्वाभावात्; न च सम्यग्दृष्टिः सम्यक्त्वासत्त्वादित्येवं प्राप्नोति ? इत्यर्थः। आचार्य आह– भण्यतेऽत्रोत्तरम्– दर्शनत्रिके क्षीणे विशुद्धसम्यग्दृष्टिर्भवत्यसौ। पुनरपि परः प्राह– ननूक्तं मया– सम्यक्त्वक्षये सति कुतोऽयं सम्यग्दृष्टिः ?– न घटत एवेत्यर्थः ॥ १३१८ ॥

सूरिराह—

[3]निव्वलियमयणकोद्दवरूवं मिच्छत्तमेव सम्मत्तं। खीणं, न उ जो भावो सद्दहणालक्खणो तस्स ॥१३१९॥

---

1 प्रतिपत्तावविरत-देश-प्रमत्ता-ऽप्रमत्तविरतानाम्। अन्यतर. प्रतिपद्यते शुद्धध्यानोपगतचित्तः ॥ १३१४ ॥
प्रथमकषायान् समक क्षपयत्यन्तर्मुहूर्तमात्रेण। तत एव मिथ्यात्वं ततश्च मिश्र तत सम्यक्त्वम् ॥ १३१५ ॥
बद्धायु. प्रतिपन्न प्रथमकषायक्षये यदि म्रियते। ततो मिथ्यात्वोदयतो विनयेद् भूयो न क्षीणे ॥ १३१६ ॥
तस्मिन् मृतो याति दिवं तत्परिणामश्च सप्तके क्षीणे। उपरतपरिणाम पुनः पश्चाद् नानामतिगतिक ॥ १३१७ ॥

2 क्षीणे दर्शनत्रिके किं भवति सकस्त्रिदर्शनातीत· ?। भण्यते सम्यग्दृष्टि, सम्यक्त्वक्षये कुत· सम्यक्त्वम् ? ॥ १३१८ ॥

3 निर्वलितमदनकोद्रवरूप मिथ्यात्वमेव सम्यक्त्वम्। क्षीणं, न तु यो भाव. श्रद्धानलक्षणस्तस्य ॥ १३१९ ॥

विस्तरार्थं तु भाष्यकारः प्राह—

[1]उवसामगसेढीए पट्ठवओ अप्पमत्तविरओ उ। पज्जवसाणे सो वा होइ पमत्तो अ विरओ वा ॥१२८५॥

अन्ने भणंति अविरय-देस-पमत्ता-ऽपमत्तविरयाणं। अन्नयरो पडिवज्जइ दंसणसमणम्मि उ नियट्टी ॥१२८६॥

द्वे अपि गतार्थे, नवरमविरताद्यप्रमत्तान्तानां मध्यात् केनापि दर्शनसप्तकेनोपशमिते ततो 'नियट्टि त्ति' निवृत्तिबादरो भवतीति ॥ १२८५ ॥ १२८६ ॥

'[2]अण' इत्येतद् व्याख्यातुमाह—

[3]भवमणुबंधंति जओऽणंतमणंताणुबंधिणोऽण त्ति। ते चत्तारि वि समयं समेइ अंतोमुहुत्तेणं ॥ १२८७ ॥

गाथापूर्वार्धस्यान्ते 'अण' इत्येतद्ग्रहणवाक्यम्, अतो व्याख्यानयति— 'भवमित्यादि' भवं संसारमनुबध्नन्तीत्येवंशीला अनन्तानुबन्धिनस्तान् प्रशस्तध्यानतोऽन्तर्मुहूर्तेन युगपदुपशमयति, उदयोद्वर्तनादिकरणाऽयोग्यान् सतोऽप्यसत्कल्पान् करोतीति॥१२८७॥

शेषावयवव्याख्यामाह—

[4]तत्तो य दंसणतिगं तओऽणुइण्णं जहन्नयरवेयं। तत्तो बीयं छक्कं तओ य वेयं सयमुदिन्नं ॥ १२८८ ॥

ततश्चानन्तानुबन्ध्युपशमानन्तरं मिथ्यात्वादिदर्शनत्रिकम्, ततोऽनुदीर्णस्य वेदद्वयस्य मध्ये यो जघन्यो वेदस्तमुपशमयति, ततो द्वितीयम्, ततः षट्कम्, ततो यः कश्चिदुदये वर्तते वेदस्तमुपशमयति। इदमुक्तं भवति— यदि पुरुषः श्रेणिप्रारम्भकः, तदा पुरुषवेदस्तस्योदये वर्तते, स्त्री-नपुंसकवेदौ त्वनुदीर्णौ, तयोश्च मध्ये नपुंसकवेदो जघन्यतरः, ततो दर्शनत्रिकादुपरि प्रथमं तमुपशमयति, ततः स्त्रीवेदम्, उदीर्णं तु पुंवेदं षट्कादुपरि पश्चादुपशमयति। अथ स्त्री प्रारम्भिका, तदा स्त्रीवेदस्तस्या उदये, पुं-नपुंसकवेदौ त्वनुदयावस्थौ। अनयोरपि नपुंसकवेदो जघन्यतरः, इति तं प्रथममुपशमयति, ततः पुंवेदम्, उदीर्णं तु स्त्रीवेदं पश्चात् षट्कादुपर्युपशमयति।

१ उपशमश्रेणौ प्रस्थापकोऽप्रमत्तविरतस्तु। पर्यवसाने स वा भवति प्रमत्तश्च विरतो वा ॥ १२८५ ॥
अन्ये भणन्त्यविरत-देश-प्रमत्ता-ऽप्रमत्तविरतानाम्। अन्यतरः प्रतिपद्यते दर्शनशमने तु निवृत्ति ॥ १२८६ ॥ २ गाथा १२८४।
३ भवमनुबध्नन्ति यतोऽनन्तमनन्तानुबन्धिनोऽन इति। तांश्चतुरोऽपि समकं शमयत्यन्तर्मुहूर्तेन ॥ १२८७ ॥
४ ततश्च दर्शनत्रिकं ततोऽनुदीर्णं जघन्यतरवेदम्। ततो द्वितीयं षट्कं ततश्च वेद स्वकमुदीर्णम् ॥ १२८८ ॥

'तदसंखिज्जइभागं ति' तस्य संज्वलनलोभसंख्येयभागस्यासंख्येयतमो भागस्तदसंख्येयतमो भागस्तम् । 'खीणे त्ति' लोभाणुमात्रेऽपि सर्वथा क्षीण इत्यर्थः, क्षपकनिर्ग्रन्थतामवाप्य मोहसागरं तीर्त्वाऽन्तर्मुहूर्तकालं विश्राम्यति, यथोदधिं बाहुभ्यामुत्तीर्य स्ताघेऽगाधे पदप्रचारलङ्घनीये जानुदघ्नादिके जले प्राप्तः कश्चित् तारकपुरुषो विश्राम्यति । शेषं गतार्थमेवेति ॥ १३३० ॥ १३३१॥ १३३२॥

ततः क्षीणमोहः सन्नसौ किं करोति ?, इत्याह—

छउमत्थकालदुचरिमसमए निद्दं खवेइ पचलं च । चरिमे केवललाभो खीणावरणंतरायस्स ॥१३३३॥

क्षीणमोहच्छद्मस्थकालस्यान्तर्मुहूर्तमानस्य योऽसो द्विचरमसमयः, चरमाद् द्वितीयो द्विचरमः, चरमो वा द्वितीयो यस्मादसौ द्विचरमः, असंख्येयानामेतद्गुणस्थानकसमयानामुपान्त्यसमय इत्यर्थः, तत्र द्विचरमसमये निद्रां प्रचलां च क्षपयति, चरमसमये तु पञ्चविधं ज्ञानावरणम्, पञ्चविधमन्तरायम्, दर्शनचतुष्टयलक्षणं च चतुर्विधं दर्शनावरणं क्षपयित्वा केवलज्ञानमवाप्नोति ॥ १३३३ ॥

अथावरणक्षये केवलज्ञानलाभ इत्यत्र निश्चय-व्यवहारनयवादमुपदर्शयन्नाह—

[2]आवरणक्खयसमए नेच्छइअनयस्स केवलुप्पत्ती । तत्तोऽणंतरसमए ववहारो केवलं भणइ ॥१३३४॥

निश्चयनयस्याऽयमभिप्रायः— यस्मिन्नेव समये आवरणस्य क्षयः— क्षीयमाणमावरणमित्यर्थः, तस्मिन्नेव समये केवलज्ञानोत्पत्तिः, क्षीयमाणस्य क्षीणत्वात्, क्रियाकाल-निष्ठाकालयोरेकत्वात्; भेदे चान्यत्र काले क्रिया, अन्यत्र च कार्योत्पत्तिरिति स्यात्, इदं चायुक्तम्, क्रियाविरहेऽपि कार्योत्पत्त्यभ्युपगमात्, इत्थं च क्रियारम्भकालात् पूर्वमपि कार्योत्पत्तिप्राप्तेरतिप्रसङ्गादिति ।

व्यवहारनयस्तु— आवरणक्षयसमयादनन्तरसमये केवलोत्पत्तिं भणति, आवरणस्य क्षयसमये क्षीयमाणत्वात्, क्षीयमाणस्य चाक्षीणत्वात्, क्रियाकाल-निष्ठाकालयोर्भेदात्, तदेकत्वे च क्रियाकालेऽपि कार्यस्य सत्त्वे क्रियावैयर्थ्यप्रसङ्गात् । न च समानकालभाविनोः क्रिया-कार्ययोः कार्यकारणभावो युज्यते, सव्ये-तरगोविषाणादीनामपि तत्प्रसङ्गात् ॥ १३३४ ॥

तथाच व्यवहारनयो निजपक्षं समर्थयति—

१ छद्मस्थकालद्विचरमसमये निद्रां क्षपयति प्रचलां च । चरमे केवललाभः क्षीणावरणान्तरायस्य ॥ १३३३ ॥

२ आवरणक्षयसमये नैश्चयिकनयस्य केवलोत्पत्तिः । ततोऽनन्तरसमये व्यवहारः केवलं भणति ॥ १३३४ ॥

ननूपशमोऽप्ययमेव, यः। किम्?, इत्याह– उदिते कर्मणि क्षीणे, अनुदिते तूपशान्ते भवति। अत्रोत्तरमाह– ननु मिश्रे क्षयो-
पशमे सूक्ष्मोदयताऽस्ति– प्रदेशोदयेन सत्कर्मवेदनमस्तीत्यर्थः। उपशमितेऽपि तु कर्मणि तदपि नास्ति, इत्यतोऽनयोर्विशेष इति ॥१२९२॥

एतदेवाह—

[1]वेएइ संतकम्मं खओवसमिएसु नाणुभावं सो। उवसंतकसाओ पुण वेएइ न संतकम्मं पि ॥ १२९३ ॥

स क्षयोपशमावस्थकषायवाञ्जीवः क्षायोपशमिकेष्वनन्तानुबन्ध्यादिषु तत्संबन्धि सत्कर्माऽनुभवति– प्रदेशकर्म वेदयति, न पुनरनुभावम्– विपाकतस्तु तान् वेदयतीत्यर्थः। उपशान्तकषायस्तु सत्कर्माऽपि न वेदयति, इति क्षयोपशमो-पशमयोर्विशेष इति ॥१२९३॥

पुनरपि परः प्राह—

[2]संजोयणाइयाणं नणूदयो संजयस्स पडिसिद्धो। सच्चमिह सोऽणुभावं पडुच्च न पएसकम्मं तु ॥ १२९४ ॥

ननु संयतस्य संयोजनादिकषायाणामुदयो निषिद्ध एव, तदुदये संयतत्वहानिप्रसङ्गात्। अत्रोत्तरमाह– सत्यम्, अनुभावं रसं विपाकमाश्रित्येहासौ तदुदयो निषिद्धः संयतादीनाम्, न तु प्रदेशकर्म प्रतीत्य ॥ १२९४ ॥

अनुभावविरहिता अपि प्रदेशा नियमेन वेद्यन्त इत्यागमेऽप्यभिहितमेवेति दर्शयन्नाह—

[3]भणियं च सुए जीवो वेएइ नवाणुभावकम्मं ति। जं पुण पएसकम्मं नियमा वेएइ तं सव्वं ॥ १२९५ ॥

नाणुदियं निज्जीरइ नासंतमुदेइ जं तओऽवस्सं। सव्वं पएसकम्मं वेएउं मुच्चए सव्वो ॥ १२९६ ॥

सूत्रेऽपि भगवतीलक्षणे प्रोक्तम्। किम्?, इत्याह– जीवोऽनुभावकर्म वेदयते, नवा। यत् पुनः प्रदेशकर्म तद् नियमात् सर्वं वेदयतीति। तथा चोक्तम्– "[4]एवं खलु गोयमा! दुविहे कम्मे पन्नत्ते, तं जहा– पएसकम्मे य, अणुभावकम्मे य। तत्थ णं जं तं

१ वेदयति सत्कर्म क्षायोपशमिकेषु नानुभावं सः। उपशान्तकषाय पुनर्वेदयति न सत्कर्मापि ॥ १२९३ ॥
२ संयोजनादिकानां ननूदयः संयतस्य प्रतिषिद्धः। सत्यमिह सोऽनुभावं प्रतीत्य न प्रदेशकर्म तु ॥ १२९४ ॥
३ भणितं च श्रुते जीवो वेदयति नवानुभावकर्मेति। यत्पुनः प्रदेशकर्म नियमाद् वेदयति तत् सर्वम् ॥ १२९५ ॥
नानुदितं निर्जीर्यते नासदुदेति यत् ततोऽवश्यम्। सर्वं प्रदेशकर्म वेदयित्वा मुच्यते सर्वं ॥ १२९६ ॥
४ एवं खलु गौतम! द्विविधं कर्म प्रज्ञप्तम्, तद्यथा– प्रदेशकर्म च, अनुभावकर्म च। तत्र यत् तत् प्रदेशकर्म तदस्त्येकं वेदयति, अस्त्येकं नो वेदयति। १ घ.छ. 'मा मए तु'।

[1]जं निज्जरिज्जमाणं निज्जिण्णं ति भणियं सुए जं च । नोकम्मं निज्जरिइ नावरणं तेण तस्समए ॥१३३८॥

यद् यस्मात् "[2]चलमाणे चलिए, जाव निज्जरिज्जमाणे निज्जिण्णे" इति वचनाद् निर्जीर्यमाणं कर्म निर्जीर्णं श्रुतेऽप्युक्तम्, अतः क्षीयमाणं क्षीणमेव, इति नानयोः कालभेदः । 'जं च त्ति' यस्मादिदं चागमे प्रोक्तम् । किम् ?, इत्याह– "[3]कम्मं वेइज्जइ नोकम्मं निज्जरेज्ज" इत्येतावत् सूत्रं द्रष्टव्यम्, वेद्यमानावस्थायां कर्म वेद्यते, निर्जरावस्थायां तु नोकर्म– अकर्मेत्यर्थः, अन्यश्च वेदनासमयः, अन्यश्च निर्जरासमयः । ततस्तस्मात् कारणात् तत्समय आवरणक्षीयमाणतासमये– आवरणस्य निर्जरणसमय इत्यर्थः, 'नावरणं ति' नास्त्यावरणं-नास्ति प्रतिबन्धकं कर्म, क्षीयमाणस्य क्षीणत्वादित्यर्थः ॥ १३३८ ॥

प्रतिबन्धकाभावाच्च भवत्येवावरणक्षीयमाणतासमये केवलज्ञानोत्पत्तिः, कस्तां निरुणद्धि ? । अहमिति चेत्, इत्याह—

[4]जइ नाणमनावरणे वि नत्थि तो तं न नाम पच्छा वि । जायं च अकारणओ तमकारणओ च्चिय पडेज्जा ॥१३३९॥

यद्यनावरणेऽप्यावरणाभावेऽपि केवलज्ञानमुत्पत्तिं न लभते, ततः पश्चादप्यावरणक्षयोत्तरकालं यदा किल त्वयेष्यते तदापि तदुत्पत्तिर्न स्यात् । अथावरणाभावाविशेषेऽप्यावरणक्षयसमये केवलज्ञानं न भवति, तदुत्तरकालं तु पश्चाद् भवति, इति यदृच्छया प्रोच्यते; हन्त ! तर्ह्यकारणा यदृच्छयैव प्रसूतिरस्य, ततोऽकारणत एव जातम्, अकारणतयैव तत् प्रतिपतेत्, विशेषाभावादिति ॥ १३३९ ॥

तस्मात् किमिह स्थितम् ?, इत्याह—

[5]नाणस्सावरणस्स य समयं तम्हा पगास-तमसो व्व । उप्पाय-व्वयधम्मा तह नेया सव्वभावाणं ॥१३४०॥

तस्मात् केवलज्ञानस्य तदावरणस्य च युगपदेवोत्पाद-व्ययधर्मौ द्रष्टव्यौ । कयोरिव ?, इत्याह– प्रकाश-तमसोरिव । यथा हि युगपदेव तमो निवर्तते, प्रदीपादिप्रकाशस्तूत्पद्यते, इति य एव तमसो निवृत्तिसमयः स एव प्रकाशस्योत्पादसमयः । एवमिहापि युगपदेवावरणं निवर्तते, केवलज्ञानं तूत्पद्यत इति । आत्मद्रव्यं त्ववतिष्ठत इति । य एवावरणस्य क्षयसमयः स एव केवलज्ञानस्योत्पादस-

१ यद् निर्जीर्यमाण निर्जीर्णमिति भणितं श्रुते यच्च । नोकर्म निर्जीर्यते नावरणं तेन तत्समये ॥ १३३८ ॥
२ चल्यमाने चलितः, यावद् निर्जीर्यमाणे निर्जीर्णे । ३ कर्म वेद्यते नोकर्म निर्जीर्येत ।
४ यदि ज्ञानमनावरणेऽपि नास्ति ततस्तद् न नाम पश्चादपि । जात चाकारणतस्तदकारणत एव पतेत् ॥ १३३९ ॥
५ ज्ञानस्यावरणस्य च समकं तस्मात् प्रकाश-तमसोरिव । उत्पाद-व्ययधर्मौ तथा ज्ञेयौ सर्वभावानाम् ॥ १३४० ॥

कियति कर्मण्युपशान्ते कथंभूतोऽसौ प्रोच्यते ?, इत्याह—

**[1]दंसणमोहाईओ भण्णइ अनियट्टिबायरो परओ । जाव उ सेसो संजलणलोभसंखेज्जभागो त्ति ॥१३००॥**

स च दर्शनसप्तक उपशमिते तदतीतः सन् परतः शेषं नपुंसकवेदादिकं कर्मोपशमयन्ननिवृत्तिबादरोऽभिधीयते, यावत् संज्वलनलोभस्य संख्याततमो भागः शेषः । निवृत्तिबादरस्तु न किञ्चिदुपशमयति, इति नेहासौ संगृहीतः ॥ १३०० ॥

ततः किमसौ करोति ?, इत्याह—

**[2]तदसंखेज्जइभागं समए समए समेइ एक्केक्कं । अंतोमुहुत्तमेत्तं तस्सासंखिज्जभागं पि ॥ १३०१ ॥**

तमपि संज्वलनलोभस्य संख्येयभागमसंख्येयैः खण्डैः करोति । ततस्तस्य लोभसंख्येयभागस्याऽसंख्याततममेकैकं भागं समये समय उपशमयति । तस्य च लोभसंख्यातभागस्याऽसंख्याततममपि भागं प्रतिसमयमुपशमयन्नन्तर्मुहूर्तमात्रं कालं सूक्ष्मसंपरायोऽभिधीयत इत्युत्तरगाथायां संबन्धः ॥ इति सप्तदशगाथार्थः ॥ १३०१ ॥

तदेवं सूक्ष्मसंपरायस्वरूपं सविशेषमाह—

**[3]लोभाणू वेयंतो जो खलु उवसामओ व खवओ वा । सो सुहुमसंपराओ अहक्खाया ऊणओ किंचि ॥१३०२॥**

अन्तर्मुहूर्तमात्रं कालं यावत् सूक्ष्मसंपरायोऽभिधीयते । यः किम् ?, इत्याह— 'लोभाणू इत्यादि' लोभसंख्यातभागस्याऽसंख्याततमांशवर्त्यणून् प्रतिसमयं वेदयन् यत उपशमकः क्षपको वा भवति । अयं च लोभांशमात्रावशेषत्वाद् यथाख्याताद् किञ्चिदेव न्यूनः ॥ इति निर्युक्तिगाथार्थः ॥ १३०२ ॥

आह— ननूपशमकाधिकारे किमिति क्षपको निर्दिष्टः ?, इत्याह—

**[4]उवसामयाहिगारे तस्समभागो त्ति खवगनिद्देसो । सुहुमसरागातीतो अहक्खाओ होइ निग्गंथो ॥१३०३॥**

---

१ दर्शनमोहातीतो भण्यतेऽनिवृत्तिबादर परतः । यावत्तु शेषः संज्वलनलोभसंख्येयभाग इति ॥ १३०० ॥

२ तदसंख्येयभागं समये समये शमयत्येकैकम् । अन्तर्मुहूर्तमात्रं तस्यासंख्येयभागमपि ॥ १३०१ ॥

३ लोभाणून् वेदयन् यः खलूपशमको वा क्षपको वा । स सूक्ष्मसंपरायोऽथाख्यातादूनकः किञ्चित् ॥ १३०२ ॥

४ उपशमकाधिकारे तत्समभाग इति क्षपकनिर्देशः । सूक्ष्मसरागातीतोऽथाख्यातो भवति निर्ग्रन्थ ॥ १३०३ ॥

[1]बाहिं जहा तहंतो संभिन्नं सव्वपज्जवेहिं वा । अत्त-परनिव्विसेसं स-परपज्जायओ वा वि ॥ १३४३ ॥

यथा वहिस्तथाऽन्तश्चेति संभिन्नम् । अथवा, सर्वपर्यायैः संकीर्णं व्याप्तं संभिन्नम् । यदिवा, यथाऽऽत्मानं जानाति तथा परमपि, यथा परं तथात्मानमपि निर्विशेषं जानाति, इत्येवं स्व-परानिर्विशेषं संभिन्नं, स्व-परपर्यायैर्वा युक्तं संभिन्नमिति ॥ १३४३॥

अथवा—

[2]संभिन्नग्गहणेणं व दव्वमिह सकाल-पज्जवं गहियं । लोगालोगं सव्वं ति सव्वओ खित्तपरिमाणं ॥१३४४॥

संभिन्नग्रहणेनेह सकाल-पर्यायं द्रव्यं गृह्यते, कालश्च पर्यायाश्च काल-पर्यायाः, सह तैर्वर्तत इति सकाल-पर्यायं संभिन्नम्। 'लोकालोकं च सर्वतः सर्वम्' इत्यनेन क्षेत्रपरिमाणं गृहीतम् । एतावदेव च ज्ञेयं यद् द्रव्यादिचतुष्टयमिति ॥ १३४४ ॥

तच्च पश्यन् किम् ?, इत्याह—

[3]तं पासंतो भूयाइं जं न पासइ तओ तयं नत्थि । पंचत्थिकायपज्जयमाणं नेयं जओऽभिहियं ॥१३४५॥

तच्च द्रव्यादि चतुर्विधं ज्ञेयं पश्यंस्तकोऽसौ केवली भूतादिकालविशिष्टं तत् किमपि वस्तु नास्ति यद् न पश्यति। कुतः ?, इत्याह— यतो यस्मात् पञ्चास्तिकायपर्यायराशिप्रमाणमेव ज्ञेयमागमेऽभिहितम्, नान्यत् । एतच्च द्रव्यादिचतुष्टयं न गृहीतमेवेति भावः ॥१३४५॥

तदेवमियता ग्रन्थेन किमुक्तं भवति ?, इत्याह—

[4]तव-नियम-नाणरुक्खं आरूढो जं जिणो अमियनाणी । एत्तो स परंपरओ एत्तो जिणपवयणुप्पत्ती ॥१३४६॥

तदेवमियता ग्रन्थेनाऽयं स जिनोऽमितज्ञानी प्रोक्तः । यः किम् ?, इत्याह— यस्तपो-नियम-ज्ञानवृक्षमारूढो ज्ञानवृष्टिं मुञ्चति प्राग् निर्दिष्टः । एतस्माच्च स प्रागुक्तो भावपरम्परकः— एतस्मादेव चाचार्यपारम्पर्येण सामायिकादि श्रुतमायातमित्यर्थः । एतस्माच्च जिनप्रवचनोत्पत्तिरिति ॥ १३४६ ॥

१ वहिर्यथा तथाऽन्त सभिन्नं सर्वपर्यैर्वा । आत्म परनिर्विशेष स्व-परपर्यायतो वापि ॥ १३४३ ॥
२ सभिन्नग्रहणेन वा द्रव्यमिह सकाल-पर्यवं गृहीतम् । लोकालोक सर्वमिति सर्वत क्षेत्रपरिमाणम् ॥ १३४४ ॥
३ तत् पश्यन् भूतादि यद् न पश्यति सकस्तद् नास्ति । पञ्चास्तिकायपर्ययमान ज्ञेय यतोऽभिहितम् ॥ १३४५ ॥
४ तपो-नियम-ज्ञानवृक्षमारूढो यज्जिनोऽमितज्ञानी । इत. स परम्परक इतो जिनप्रवचनोत्पत्ति ॥ १३४६ ॥

भाष्यम्—

देवदूमियंजणदुमो छारच्छन्नोऽगणि व्व पच्चयओ । दावेइ जह सरूवं तह स कसायोदए भुज्जो ॥१३०७॥

यथा दवाग्निदग्धोऽञ्जनद्रुमः पुनरपि प्रत्ययत उदकाऽऽसेचनादिकारणसंसर्गादङ्कूर-प्रवाल-पत्र-पुष्पादिरूपं निजस्वरूपं दर्शयति, यथा वा भस्मावच्छन्नोऽग्निः प्रत्ययतस्तृणादीन्धनकारणसाहाय्यात् पुनरपि दाहपाकादिकर्तृत्वलक्षणं निजस्वरूपं प्रकटयति, यथा वा मिथ्यापनीतामयोऽपथ्यादिप्रत्ययतः पुनरपि निजस्वभावमाविष्करोति, तथा सोऽप्युपशान्तकषायो जीवः स्वशरीरोपध्यादिमूर्च्छादिप्रत्ययतः पुनरपि कषायोदये पूर्वस्वरूपं दर्शयति, यतोऽयमुपशान्तमोहः 'अण्णयरसेढिवज्जं' इत्यादिवचनात् सैद्धान्तिकमतेन तस्मिन्नेव भवे क्षपकश्रेणिं न करोति, तामन्तरेण च न सिध्यति, उत्कृष्टतश्च देशोनार्धपुद्गलपरावर्तरूपं संसारं पर्यटति । तस्माद् विहितोपशमश्रेणिरन्तर्मुहूर्ताद् नियमेन प्रतिपततीति ॥ १३०७ ॥

एतदेवाह—

तम्मि[3] भवे निव्वाणं न लभइ उक्कोसओ व संसारं । पोग्गलपरियट्टद्धं देसोणं कोइ हिण्डेज्जा ॥१३०८॥

गतार्था ॥ इति गाथाद्वयार्थः ॥ १३०८ ॥

अहो ! महदाश्चर्यम्, यदेकादशं मोक्षमासादसोपानमारुह्यापि हतजीवः पुनरपि परिभ्रष्ट एतावद् दुःखमनुभवति, इति विस्मितात्मा गुरुरुपदेशमाह—

जइ[4] उवसंतकसाओ लहइ अणंतं पुणो वि पडिवायं । न हु भे वीससियव्वं थेवे वि कसायसेसम्मि॥१३०९॥

अणथोवं वणथोवं अग्गीथोवं कसायथोवं च । न हु भे वीससियव्वं थेवं पि हु तं बहु होइ ॥१३१०॥

'न हु भे त्ति' नैव भवद्भिर्विश्वसितव्यं स्तोकेऽपि कषायशेषे, किन्तु मिथ्यादुष्कृतादिभिर्झटित्येव ततो निवर्तनीयमिति । अणं ऋणम् । शेषं सुगमम् ॥ इति निर्युक्तिगाथाद्वयम् ॥ १३०९ ॥ १३१० ॥

१ दवदग्धाञ्जनद्रुमो भस्मच्छन्नोऽग्निरिव प्रत्ययत. । दर्शयति यथा स्वरूपं तथा स कषायोदये भूय ॥ १३०७ ॥ २ गाथा १२२३।

३ तस्मिन् भवे निर्वाण न लभत उत्कृष्टतो वा संसारम् । पुद्गलपरिवर्तार्धं देशोन कश्चिद् हिण्डेत् ॥ १३०८ ॥

४ यद्युपशान्तकषायो लभतेऽनन्तं पुनरपि प्रतिपातम् । न हि भवद्भिर्विश्वसितव्यं स्तोकेऽपि कषायशेषे ॥ १३०९ ॥
ऋणस्तोकं व्रणस्तोकमग्निस्तोकं कषायस्तोकं च । न हि भवद्भिर्विश्वसितव्यं स्तोकमपि हि तद् बहु भवति ॥ १३१० ॥

एतदेवाह भाष्यकारः—

[1]पासंगियमाइतियं दारविहि त्ति विहि उ उवग्घाओ। अणुओगदारं पुण चउत्थमिट्ठं नयविहि त्ति ॥१३५१॥

सीसा-यरियपरिक्खा वक्खाणविहि त्ति कहणमज्जाया। सुत्तप्फासियजुत्ती सुत्ताणुगमोऽयमणुओगो ॥१३५२॥

गाथाद्वयमपि गतार्थम् ॥ १३५१ ॥ १३५२ ॥

अथ प्रेरकः प्राह—

[2]किं पुण चउत्थदारं नयविहिमभिधाय तोऽणुओगो त्ति। चउदारासंगहिया वक्खाणविहि त्ति किं गहिया? ॥१३५३॥

नन्वनुयोगो व्याख्यानरूपत्वादनुगम एव, अत उपक्रमो निक्षेपानुगमो नय इत्यनुयोगद्वारोपन्यासक्रममाश्रित्य नयानां पूर्वमेवानुयोगोपन्यासो युज्यते। इति कथमिह चतुर्थद्वारवर्तिनो नयानभिधाय पश्चात् तृतीयद्वारवर्त्यनुगमरूपस्यानुयोगस्योपन्यासः कृतः ?। अपरञ्च, चतुरनुयोगद्वारात्मकमेव शास्त्रं भवति। यश्चायमत्र व्याख्यानविधिरुपन्यस्तः स चतुर्णामनुयोगद्वाराणां मध्यादेकेनापि न संगृह्यते; तथाहि— न तावदयमुपक्रम-निक्षेप-नयेष्वन्तर्भवति, तल्लक्षणायोगात्; नाप्यनुगमे। अतो न व्याख्यानविधिः सूत्रानुगमरूपः, नापि सूत्रस्पर्शिकनिर्युक्त्यात्मकः, अतश्चतुरनुयोगद्वारासंगृहीतत्वेनाऽप्रस्तुतत्वात् कथमाकस्मिकोऽत्र व्याख्यानविधिर्गृहीतः ? इति ॥ १३५३ ॥

अत्राचार्यदेशीयस्य कस्याप्युत्तरमुपदर्श्य, निराकृत्य च घटमानकं स्वकीयमुत्तरं सूरिराह—

[3]बंधाणुलोमयाए केई न जओ तई कमेणं पि। तीरइ निबंधेउं जे तेणेयं बुद्धिपुव्व त्ति ॥ १३५४ ॥

केचिदाचार्यदेशीया मन्यन्ते— एवमेव बन्धानुलोम्यादनुयोगनयविधिविपर्ययः। एतच्च 'न जओ तइ त्ति' यतः क्रमेणापि निब-

१ प्रासङ्गिकमादित्रिकं द्वारविधिरिति विधिस्तूपोद्घातः। अनुयोगद्वारं पुनश्चतुर्थमिष्टं नयविधिरिति ॥ १३५१ ॥
शिष्या-ऽऽचार्यपरीक्षा व्याख्यानविधिरिति कथनमर्यादा। सूत्रस्पर्शिकयुक्तिः सूत्रानुगमोऽयमनुयोग. ॥ १३५२ ॥

२ किं पुनश्चतुर्थद्वारं नयविधिमभिधाय ततोऽनुयोग इति। चतुर्द्वारासंगृहीतो व्याख्यानविधिश्च किं गृहीतः ? ॥ १३५३ ॥

३ बन्धानुलोमतया केचिद् न यत. सा क्रमेणापि। शक्यते निबन्द्धुं तेनेयं बुद्धिपूर्वेति ॥ १३५४ ॥

नन्तानुबन्धिनश्चतुरोऽपि क्रोधादीन् युगपत् क्षपयति, तदनन्तभागं च मिथ्यात्वे प्रक्षिप्य ततो मिथ्यात्वं सहैव तदंशेन युगपत् क्षपयति; तथाहि— अतिसंभृतो दावानलः खल्वर्धदग्धेन्धन एवेन्धनान्तरमासाद्योभयमपि निर्दहति, एवमसावपि क्षपकस्तीव्रशुभपरिणामत्वात् सावशेषमन्यत्र प्रक्षिप्य क्षपयति। ततस्तथैव सम्यग्मिथ्यात्वम्, ततः सम्यक्त्वम्। इह च यदि बद्धायुः प्रतिपद्यते, अनन्तानुबन्धिक्षये च व्युपरमते, ततः पश्चात् कदाचिद् मिथ्यात्वोदये पुनरप्यनन्तानुबन्धिचतुष्टयं बध्नाति, तस्याऽवन्ध्यतत्कारणत्वात्; क्षीणमिथ्यात्वस्तु तद् न बध्नाति, कारणाभावात्। तस्मिंश्चानन्तानुबन्धिचतुष्टये क्षीणेऽप्रतिपतितशुभपरिणाम एव यदि म्रियते तदा सुरलोकमेव व्रजति। एवं दर्शनसप्तकक्षयेऽपि कृते वाच्यम्। प्रतिपतितपरिणामस्तु यदि पश्चाद् म्रियते, तदा नानामतित्वाद् नानागतिको भवति। यदि च बद्धायुरिमां श्रेणिं प्रतिपद्यते तदा दर्शनसप्तकं समस्तमपि क्षपयित्वा नियमाद् व्युपरमत एव, ततो यत्रायुर्बद्धं तत्रोत्पद्यते। यः पुनरबद्धायुः प्रतिपद्यते स निःशेषामप्येतां श्रेणीं समापयत्येव। तस्याश्चायं क्रमः— सम्यक्त्वस्य क्षपितशेषे स्वल्पेऽवतिष्ठमान एवाप्रत्याख्यान-प्रत्याख्यानावरणकषायाष्टकं समकमेव क्षपयितुमारभते। एतैश्चार्धक्षपितैरेवान्याः षोडश कर्मप्रकृतीः क्षपयति, तद्यथा— नरकानुपूर्वी, तिर्यगानुपूर्वी, नरकगति-तिर्यग्गतिलक्षणं गतिद्वयम्, पञ्चेन्द्रियजातिवर्जाश्चतस्रश्चाद्या जातयः— एक-द्वि-त्रि-चतुरिन्द्रियजातय इत्यर्थः, आतपोद्द्योत-स्थावर-साधारण-सूक्ष्माणि। निद्रानिद्रा-प्रचलाप्रचला-स्त्यानर्धिलक्षणं महानिद्रात्रयम्। एतत्क्षपणोत्तरकालं कषायाष्टकस्य यच्छेषं तत् क्षपयति। ततो नपुंसकवेदम्, ततः स्त्रीवेदम्, ततो हास्यादिषट्कम्, ततः पुरुषवेदं खण्डत्रयं कृत्वा खण्डद्वयं युगपत् क्षपयति। तृतीयखण्डं तु संज्वलनक्रोधे प्रक्षिपति। पुरुषे प्रतिपत्तर्ययं क्रमो बोद्धव्यः, नपुंसकादौ तु प्रतिपत्तर्युदितवेदस्य पश्चात् क्षपणम्, शेषानुदितवेदद्वयस्य तु मध्येऽधमवेदस्य प्रथमम्, इतरस्य तु तदनन्तरं क्षयः प्रागुक्तोपशमवद् वाच्यः। ततः क्रोधादींश्चतुरः संज्वलनान् प्रत्येकमन्तर्मुहूर्तकालेन क्षपयति। क्षपणं चैषां खण्डत्रयादिकरणक्रमेण पुरुषवेदवद् वाच्यम्। क्रोधसत्कं च तृतीयखण्डं माने प्रक्षिपति, मानसत्कं मायायाम्, तत्सत्कं तु लोभे। क्षपणकालश्च प्रत्येकं सर्वत्रान्तर्मुहूर्तमानो मन्तव्यः। श्रेणिरप्येषा बृहत्तरान्तर्मुहूर्तमानैव। सर्वाप्येकस्मिन्नपि बृहदन्तर्मुहूर्ते लघुतरान्तर्मुहूर्तानामसंख्येयानां प्राप्ते, लोभतृतीयखण्डं तु संख्येयानि खण्डानि कृत्वा पृथक् पृथक् कालभेदेन क्षपयति। एषामपि संख्याततमं चरमखण्डमसंख्येयानि खण्डानि करोति। तान्यपि समये समय एकैकं क्षपयति। इह च क्षीणदर्शनसप्तको निवृत्तिवादर उच्यते। तत ऊर्ध्वं त्वनिवृत्तिवादरो यावत् संख्याततमं लोभखण्डम्। तत ऊर्ध्वमसंख्येयानि तत्खण्डानि क्षपयन् सूक्ष्मसंपरायोऽभिधीयते, यावच्चरमलोभांशक्षयः। तत ऊर्ध्वं क्षीणमोहयथाख्यातचारित्री भवति। स्थापना चेहोक्तानुसारेण विधेया॥ इति निर्युक्तिगाथार्थः॥ १३१३॥

अथवा, स व्याख्यानविधिरधिकृत एवेह द्रष्टव्यः 'सा' इति प्राकृतत्वात् स्त्रीलिङ्गनिर्देशः। कथं पुनरसाविहाधिकृतः ?, इत्याह– यद् यस्माद् व्याख्यानाङ्गमिति, ततस्तस्मादनुगमेऽधिक्रियत इति प्रक्रमः । यदि नाम व्याख्यानाङ्गमसौ, तथापि कथमनुगमेऽन्तर्भवति ?, इत्याह– यद् यद् व्याख्यानाङ्गं, तत् तद् यस्मादनुगमः, तत्कारणत्वात्, व्याख्यानाङ्गं च व्याख्यानविधिः, तस्मादनुगमेऽन्तर्भवतीति ॥ १३५७ ॥

व्याख्यानाङ्गत्वमेवाऽस्य भावयितुमाह—

[1]सुत्ताणुगमाईए वक्खाणविही जओ तदंगं सा । जं च सुयावसरे च्चिय सफलाइं गवाइनायाइं ॥१३५८॥

यतश्च सूत्रानुगमस्यादौ प्रथमं व्याख्यानविधिः 'तीर्थकर-गणधरैरुक्तः' इति शेषः, तथा चेहापि व्याख्याविधानं पूर्वमुक्तम्—

[2]'सुत्त पयं पयत्थो सभवओ विग्गहो वियारो य । दूसियसिद्धी नयमयविसेसओ नेयमणुसुत्त ॥ १ ॥'

यत्तदोर्नित्याभिसंबन्धात्, तस्माद् व्याख्यानाङ्गमसौ। यच्च यस्मात् श्रुतावसर एव सूत्रानुगमप्रस्ताव एव [3]'गोणी चंदणकंथा चेडीउ सावए बहिरगोहे' इत्यादिनाऽत्रैवानन्तरं वक्ष्यमाणानि व्याख्यानविधिगतानि गवाद्युदाहरणानि सफलानि भवन्ति, नान्यथा । इदमुक्तं भवति– सूत्रव्याख्यानविधिविषयाण्येव हि गवाद्युदाहरणानि वक्ष्यन्ते, तानि च सफलानि तदा भवन्ति यदा व्याख्यानविधिरनुगमाङ्गमेव भवति । तद्बहिर्भूतत्वे तु तस्य तानि निरालम्बनान्येव स्युरिति ॥ १३५८ ॥

अत्र प्रेरकः प्राह—

[4]जइ साणुगमंगं चिय दारविहीए तओ किमाईए । उयारेउं भन्नइ उक्कमकरणे गुणो को णु ? ॥१३५९॥

यदि स व्याख्यानविधिरनुगमाङ्गमेवेष्यते, तर्ह्यग्रतोऽनुगमादेरवतार्याऽऽकृष्य किमिति 'उद्देसे निद्देसे य निग्गमे' इत्यादिवक्ष्यमाणद्वारविधेरादौ समानीय भण्यते– [5]'गोणी चंदनकंथा' इत्यादिना किमिति द्वारविध्यादौ भणिष्यते ? इत्यर्थः। यदेव ह्यग्रे सूत्रं व्याख्यास्यते तदेव तर्हि व्याख्यानविधिः 'गोणी चंदनकथा' इत्यादिर्वक्तुमुचितः, किमिति 'उद्देसे निद्देसे य' इत्यादिर्द्वारविधिरर्वागेव प्रस्तुतस्थाने निर्दिष्टः ?, इति भावः। को ह्येवमुत्क्रमकरणे गुणलाभः ?– न कश्चिदित्यर्थः ॥ १३५९ ॥

१ सूत्रानुगमादौ व्याख्यानविधिर्यतस्तदङ्गं स । यच्च श्रुतावसर एव सफलानि गवादिज्ञातानि ॥ १३५८ ॥ २ गाथा १००२ । ३ गाथा १४३५ । ४ यदि सोऽनुगमाङ्गमेव द्वारविधौ ततः किमादौ । अवतार्य भण्यते उत्क्रमकरणे गुण. को नु ? ॥ १३५९ ॥ ५ गाथा ९७३ ।

सो तस्स विसुद्धयरो जायइ सम्मत्तपोग्गलक्खयओ। दिट्ठि व्व सुण्हसुद्धब्भपडलविगमे मणूसस्स ॥१३२०॥
जह सुद्धजलाणुगयं वत्थं सुद्धं जलक्खए सुतरं। सम्मत्तसुद्धपोग्गलपरिक्खए दंसणं पेवं ॥ १३२१ ॥

हन्त ! यः सम्यक्पदार्थश्रद्धानरूपो जीवस्य भावः परिणामः स एव तावद् मुख्यतः सम्यक्त्वमुच्यते, यस्तु शोधितमिथ्यात्वपुद्गलपुञ्जः स तत्त्वतो मिथ्यात्वमेव, केवलं सम्यक्तत्त्वश्रद्धानरूपस्य जीवभावस्याशुद्धमिथ्यात्वपुञ्जवदनावारकत्वादुपचारतः सम्यक्त्वमुच्यते। एवं च सति यदाच्छादितमदनकोद्रवरूपं मिथ्यात्वमेव सदुपचारतः सम्यक्त्वं प्रसिद्धम्, तदेव तस्य क्षपकस्य क्षीणम्, न तु यस्तत्त्वश्रद्धानलक्षणो जीवस्य भावः। स च तस्य तत्त्वश्रद्धानभाव औपचारिकसम्यक्त्वरूपे सम्यक्त्वपुद्गलपुञ्जे क्षपिते प्रत्युत विशुद्धतरो जायते, यथा श्लक्ष्णशुद्धाभ्रपटलविगमे मनुष्यस्य लोचनद्वयरूपा दृष्टिः। स्वच्छाभ्रपटलसदृशो हि सम्यक्त्वपुद्गलपुञ्जः, स च क्षपितोऽभ्रपटलमिव दृष्टेर्यच्च यावच्च तत्त्वश्रद्धानपरिणामस्य विघातक एव। ततोऽनर्थरूपे तस्मिन् क्षपितेऽभ्रपटलविगमे लोचनद्वयीव तत्त्वश्रद्धानपरिणतिर्निर्मलतरैव भवति।

दृष्टान्तान्तरमाह– 'जहेत्यादि' यथा सुधौतं शुद्धं निर्मलं जलानुगतं किञ्चिदार्द्रं वस्त्रमातपशेपात् समस्तजलक्षये सुतरामेव शुद्धं भवति; एवमौपचारिकसम्यक्त्वरूपा ये सुद्धपुद्गलास्तत्परिक्षयात् पारिमार्थिकरुचिरूपं सम्यग्दर्शनमपि सुतरां निर्मलं भवति ॥ १३१९ ॥ १३२० ॥ १३२१ ॥

अपरमपि दृष्टान्तमाह—

[2]सेसन्नाणावगमे सुद्धयरं केवलं जहा नाणं। तह खाइयसम्मत्तं खओवसमसम्मविगमम्मि ॥ १३२२ ॥

यथेह शेषस्य क्षायोपशमिकस्य मत्यादिज्ञानचतुष्टयस्यापगमेऽन्यत् क्षायिकं शुद्धतरं केवलज्ञानलक्षणं ज्ञानान्तरं प्रादुरस्ति, न पुनरज्ञो भवति जीवः, तद्वत् क्षायोपशमिकसम्यक्त्वविगमेऽप्यपरं विशुद्धतरं क्षायिकं सम्यग्दर्शनान्तरमुपजायते, न त्वदर्शनी भवति जीवः ॥ १३२२ ॥

---

1 स तस्य विशुद्धतरो जायते सम्यक्त्वपुद्गलक्षयतः। दृष्टिरिव श्लक्ष्णशुद्धाभ्रपटलविगमे मनुष्यस्य ॥ १३२० ॥
यथा शुद्धजलानुगतं वस्त्रं शुद्धं जलक्षये सुतराम्। सम्यक्त्वशुद्धपुद्गलपरिक्षये दर्शनमप्येवम् ॥ १३२१ ॥
2 शेषज्ञानापगमे शुद्धतरं केवलं यथा ज्ञानम्। तथा क्षायिकसम्यक्त्व क्षयोपशमसम्यक्त्वविगमे ॥ १३२२ ॥

अन्ये त्वाचक्षते । किम् ?, इत्याह—

[1]अणुओगाइविभागे वक्खाणविही वि तप्पसंगेण । जंपंति केइ तेसिं वुत्तुं सोउं व को जोग्गो ? ॥१३६३॥

संगहगाहाए पुणो अणुओगाईए बिंति दाएंता। जो वन्निओऽणुओगो सोऽयं स विही जदत्थं ति ॥ १३६४ ॥

इह केचित् पुनरेवं जल्पन्ति । किम् ?, इत्युच्यते— [2]अणुओगो य निओगो भास-विभासा य वत्तियं चेव' इत्यादिना ग्रन्थेनाऽनुयोग-नियोग-भाषादीनां विभागविशेषेऽभिधास्यमाने व्याख्यानविधिरपि तत्प्रसङ्गेन द्वारविधेरग्रे संग्रहगाथायामुक्तोऽपि पूर्वमेव निर्दिष्टः । किमर्थम् ?, इत्याह— तेषामप्यनुयोग-नियोग-भाषादीनां वक्तुं श्रोतुं वा को योग्यः ?, इति परिज्ञानार्थम् । '[3]जिणपवयणउप्पत्ती' इत्यादिसंग्रहगाथायां पुनः '[4]वक्खाणविही य अणुओगो' इत्येवमनुयोगस्यादौ द्वारविधेस्त्वग्रतो व्याख्यानविधिमुपदर्शयन्त एतद् ब्रुवते यदुत— योऽनुयोगादिविभागावसरे द्वारविधेः पूर्वमनुयोगो वर्णितः, सोऽयं संग्रहगाथान्ते । अयमत्र भावः— '[3]जिणपवयण' इत्यादिसंग्रहगाथायां प्रथमं द्वारविधिः, ततो व्याख्यानविधिः, ततोऽनुयोग उक्त इति, ततः प्रवचनैकार्थिकद्वारव्याख्यायां '[2]अणुओगो य निओगो' इत्यादिगाथयाऽनुयोग उक्तः, ततो '[5]गोणी चंदण' इत्यादिना स्वरूपतो व्याख्यानविधिः, ततो 'उद्देसे निद्देसे' इत्यादिद्वारविधिः, ततोऽपि सूत्रानुयोगः, इत्ययं क्रमः । अत्र च यथा द्वारविधेः पूर्वं स्वरूपतो व्याख्यानविधिरुक्तः, एवं यदि संग्रहगाथायामपि द्वारविधेः पूर्वं नामतोऽप्युच्येत तदा कस्याऽप्येवं संशयः स्यात्— संग्रहगाथान्तोक्तानुयोगद्वारविध्यनन्तरोक्तसूत्रानुयोगयोस्तावदेकत्वं सुबोधम्, संग्रहगाथान्तोक्तानुयोगव्याख्यानरूपत्वात् सूत्रानुयोगस्य, किन्तु प्रवचनैकार्थिकव्याख्यावसरे '[2]अणुओगो य निओगो' इत्यत्र योऽनुयोग उक्तः स संग्रहगाथान्तोक्तानुयोगादन्योऽनन्यो वा ? इति । यदा तु संग्रहगाथायामनुयोगप्रत्यासन्न एव विधिरुच्यते, तदैतद् निश्चीयते— यस्य '[2]अणुओगो य निओगो' इति गाथान्तोक्तानुयोगस्य निमित्तं द्वारविधिरुक्तः, संग्रहगाथान्तोक्तानुयोगोऽपि स एवेति निर्दिष्टः, यदर्थं स व्याख्यानविधिर्द्वारविधेः पूर्वं स्वरूपत उक्तः, अत्र तु संग्रहगाथायामनुयोगस्यादौ नाममात्रेणैवोक्त इति ॥१३६३॥१३६४॥

तदेवं चालना-प्रत्यवस्थाने विधाय प्रस्तुतं '[3]जिणपवयणउप्पत्ती' इत्यादिगाथाव्याख्याशेषं, वक्ष्यमाणगाथाप्रस्तावनां चाह—

१ अनुयोगादिविभागे व्याख्यानविधिरपि तत्प्रसङ्गेन । जल्पन्ति केचित् तयोर्वक्तुं श्रोतुं वा को योग्य ? ॥ १३६३ ॥
संग्रहगाथाया पुनरनुयोगादौ ब्रुवन्ति दर्शयन्तः । यो वर्णितोऽनुयोग सोऽय स विधिर्यदर्थमिति ॥ १३६४ ॥
२ गाथा १३८५ । ३ गाथा १३५० । ४ गाथा १४३५ । ५ गाथा ९७३ ।

[1]नाणं न खिज्जमाणे, खीणे जुत्तं जओ तदावरणे। न य किरियानिट्ठाणं कालेगत्तं जओ जुत्तं॥ १३३५ ॥

यस्मात् क्षीयमाणे तदावरणे ज्ञानमुत्पद्यत इत्येतद् न युक्तम्, अस्य क्रियाकालत्वात्, तत्काले च कार्यसत्त्वाभ्युपगमस्य दूषितत्वात्; किन्तु क्षीण एव तदावरणे ज्ञानं युज्यते, अस्य निष्ठाकालत्वात्। न च क्रिया-निष्ठयोः कालैकत्वं युज्यते, प्रतिविहितत्वादिति ॥ १३३५ ॥

अथ निश्चयनयः प्राह—

[2]जइ किरियाए न खओ को हेऊ तप्परिक्खए अन्नो?। अह ताए, किह काले अन्नत्थ तई, खओऽणत्थ? ॥१३३६॥

हन्त! व्यवहारवादिन्! आवरणस्य क्षये भवता केवलोत्पत्तिरिष्यते, न तु तत्र क्षीयमाणे। तदत्र भवन्तं पृच्छामः— आवरणक्षयकाले क्रिया समस्ति, नवा?। यदि नास्ति, तर्हि क्रियामन्तरेणावरणक्षये कोऽन्यो हेतुरिति वक्तव्यम्?— न कोऽपि प्राप्नोतीत्यर्थः। अथास्त्यावरणक्षयकाले तद्धेतुभूता क्रिया, तया च तत्क्षयो विधीयते; तर्ह्यायातं क्रियाकाल-निष्ठाकालयोरेकत्वम्, इति कथमुच्यते— 'अन्यसमये क्रिया, अन्यत्र च तत्परिक्षयः'? ॥ १३३६ ॥

किञ्च—

[3]किरियाकालम्मि खओ जइ नत्थि तओ न होज्ज पच्छावि। जइवाकिरियस्स खओ पढमम्मि वि कीस किरियाए?॥१३३७॥

यदि क्रियाकालेऽप्यावरणस्य क्षयो नास्ति, ततः पश्चादप्यसौ न भवेत्, अक्रियत्वात्, पूर्वकालवदिति। अथवा, यदि क्रियानिवृत्तौ द्वितीयसमयेऽक्रियस्य सत आवरणक्षयोऽभ्युपगम्यते, तर्हि क्रियान्वितप्रथमसमये किं क्रियया, तामन्तरेणाप्यावरणक्षयोपपत्तेः, क्रियाविरहितद्वितीयसमयवदिति?॥ १३३७ ॥

क्रियाकाल-निष्ठाकालयोश्चैकत्वमागमेऽप्युक्तम्, इति निश्चयः स्वपक्षं द्रढयन्नाह—

१ ज्ञान न क्षीयमाणे, क्षीणे युक्त यतस्तदावरणे। न च क्रियानिष्ठान कालैकत्वं यतो युक्तम् ॥ १३३५ ॥
२ यदि क्रियया न क्षय' को हेतुस्तत्परिक्षयेऽन्य?। अथ तया, कथं कालेऽन्यत्र सा, क्षयोऽन्यत्र? ॥ १३३६ ॥
३ क्रियाकाले क्षयो यदि नास्ति ततो न भवेत् पश्चादपि। यदिचाऽक्रियस्य क्षयः प्रथमेऽपि किं क्रियया? ॥ १३३७ ॥

ति सूत्रम् । श्रूयत इति वा सूत्रम् । सीव्यते विशिष्टघटनामानीयत इति वा सूत्रम् । सरति वाऽर्थमनुगच्छति यस्मात् ततः सूत्रमिति ॥ १३६८ ॥

तथा—

अविवरियं सुत्तं पिव सुट्ठिय-वावित्तउ व सुत्तं ति । जो सुत्ताभिप्पाओ सो अत्थो अज्जए जम्हा ॥ १३६९ ॥

अर्थव्याख्यानतो यावद्याप्यविवृतं तावत् सूत्रं सुप्तमिव सुप्तमुच्यते, प्राकृतशैल्या च 'सुत्तं' इति । अथवा, सुस्थितत्वात् प्रमाणाबाधितत्वात्, व्यापितत्वाच्च सूत्रम्, प्राकृतत्वादेव च 'सुत्तं' । अर्थशब्दस्यार्थमाह– यः सूत्रस्याभिप्रायः सोऽर्थोऽभिधीयते यस्मादर्यते गम्यत इत्यर्थः ॥ १३६९ ॥

अथ प्रेरकः प्राह—

सह[2] पवयणेण जुत्ता न सुयत्थेगत्थया परोप्परओ । जं सुयं वक्खेयं अत्थो तं तस्स वक्खाणं ॥ १३७० ॥

जुज्जइ च विभागाओ तिण्ह वि भिन्नत्थया न चेहरहा । एगत्थाणं पि पुणो किमिहेगत्थाभिहाणेहिं ? ॥ १३७१ ॥

ननु प्रवचनेन सह सूत्रा-ऽर्थयोरेकार्थता युक्ता, तद्विशेषत्वात् । तयोः सूत्रार्थयोः पुनः परस्परत एकार्थता न युज्यते, तयोरत्यन्तभेदात्; तथाहि– व्याख्येयं सूत्रम्, तद्व्याख्यानं चार्थ इति महान् भेदः । अथवा, त्रयाणामप्येषां प्रवचन-सूत्रा-ऽर्थानां भिन्नार्थतैव युज्यते । 'न च त्ति' न पुनः 'एकार्थता' इति शेषः, विभागाद् भिन्नविषयत्वात् । सामान्यविषयं हि प्रवचनम्, विशेषविषयौ च सूत्रार्थौ, इति कथं तेषामेकार्थता ? । न हि मृद्-घट-शरावादीनामेकार्थता युक्तिमती । इतरथा– यद्येकार्थान्येतानि त्रीण्यपि, तर्हि 'एक्केक्कस्स य एत्तो नामा एगट्ठिया पञ्च'[3] इत्यनेन यान्येकैकस्य पञ्च पञ्चैकार्थिकान्यभिधास्यन्ते, तानि न युज्यन्त एव । न हीन्द्र-शक्र-पुरन्दरादिशब्दानामेकार्थानामपि पुनरपि प्रत्येकमेकार्थिकान्युपपद्यन्त इति ॥ १३७० ॥ १३७१ ॥

१ अविवृतं सुप्तमिव सुस्थित-व्यापित्वतो वा सूत्रमिति । यः सूत्राभिप्रायः सोऽर्थोऽर्यते यस्मात् ॥ १३६९ ॥

२ सह प्रवचनेन युक्ता न श्रुतार्थैकार्थता परस्परतः । यत् श्रुत व्याख्येयमर्थस्तत् तस्य व्याख्यानम् ॥ १३७० ॥

युज्यते च विभागात् त्रयाणामपि भिन्नार्थता न चेतरथा । एकार्थानामपि पुनः किमिहैकार्थाभिधानै ? ॥ १३७१ ॥ ३ गाथा १३६६ ।

मयः, तत्र हि समय आवरणस्य क्षीयमाणस्य क्षीणत्वात्, केवलज्ञानस्य चोत्पद्यमानस्योत्पन्नत्वात्, आत्मद्रव्यस्य त्ववस्थितत्वादिति। एवं सर्वेषामपि भावानां मृद-ऽङ्गुल्यादिपदार्थानां घट-ऋजुतादिभिरपूर्वपर्यायैरुत्पादः, पिण्ड-शिवक-स्थास-कोशादिभिः, वक्रत्वादिभिश्च प्राक्तनपर्यायैर्व्ययः, मृद-ऽङ्गुल्यादिद्रव्यरूपतया त्ववस्थानं युगपद् भवतीति ज्ञातव्यमिति ॥ १३४० ॥

यदि चरमसमये केवललाभः, ततः किम् ?, इत्याह—

उभयावरणाईओ[1] केवलवरनाण-दंसणसहावो। जाणइ पासइ य जिणो नेयं सव्वं सयाकालं ॥ १३४१ ॥

ततश्च सर्वमपि ज्ञेयं साद्य-ऽपर्यवसितं सदाकालं जिनः केवली जानाति केवलज्ञानेन, पश्यति च केवलदर्शनेन। कथंभूतः सन् ?, केवलवरज्ञान-दर्शनस्वभावस्तदव्यतिरिक्तस्वरूपः। तर्हि पूर्वमित्थमदृष्ट्वा किमितीदानीमेवं पश्यति ?, इत्याह– यत इदानीमुभयावरणातीतः केवलज्ञान-केवलदर्शनावरणद्वितयातीतत्वादित्यर्थः ॥ इत्यष्टाविंशतिगाथार्थः ॥ १३४१ ॥

अत एवाह—

संभिन्नं[2] पासंतो लोगमलोगं च सव्वओ सव्वं। तं नत्थि जं न पासइ भूयं भव्वं भविस्सं च ॥१३४२॥

सम्– एकीभावेन भिन्नं संभिन्नं– यथा बहिस्तथा मध्येऽपीत्यर्थः, अथवा, द्रव्य-क्षेत्र-काल-भावलक्षणं सर्वमपि ज्ञेयमत्र केवलज्ञानस्य विषयत्वेन दर्शितम्, तत्र संभिन्नमिति द्रव्यं गृह्यते, काल-भावौ च तत्पर्यायत्वाद् गृह्येते; ताभ्यां च समस्ताभ्यां समन्ताद् वा भिन्नं संभिन्नमिति कृत्वा द्रव्यं संभिन्नमुच्यते। तत् पश्यन्नुपलभमानो 'लोकमलोकं च प्रसिद्धस्वरूपं पश्यन्' अनेन क्षेत्रं प्रतिपादितं भवति। एतावदेव द्रव्यादि चतुर्विधं ज्ञेयं, नान्यदिति। किमेवमेकया दिशा पश्यन् ?, इत्याह– सर्वतः सर्वासु दिक्षु। तास्वपि किं कियदपि द्रव्यादि, उत न ?, इत्याह– सर्वं निरवशेषम्। अमुमेवार्थं स्पष्टयन्नाह– तद् नास्ति किमपि ज्ञेयं भूतमतीतम्, भवतीति भव्यं वर्तमानम्, भविष्यच्च, यद् न पश्यति केवली ॥ इति निर्युक्तिगाथार्थः ॥ १३४२ ॥

'संभिन्नं पश्यन्' इत्युक्तम्, तत्र 'संभिन्नम्' इति कोऽर्थः ?, इत्याह—

१ उभयावरणातीतः केवलवरज्ञान-दर्शनस्वभावः। जानाति पश्यति च जिनो ज्ञेयं सर्वं सदाकालम् ॥ १३४१ ॥
२ संभिन्नं पश्यन् लोकमलोकं च सर्वतः सर्वम्। तद् नास्ति यद् न पश्यति भूतं भव्यं भविष्यच्च ॥ १३४२ ॥

'तदुभयमत्थो य जह त्ति' यथा च तयोः सामान्य-विशेषयोरुभयं तदुभयमर्थो भण्यते– अर्थशब्दवाच्यं द्वितयमप्येतद् भवतीत्यर्थः। ते च सामान्य-विशेषा-ऽर्थलक्षणास्त्रयोऽप्यर्था विष्वक् पृथग् यथा बहुपर्याया वह्वेकार्थाः, तद्यथा– सामान्यं, सत्ता, भाव इत्यादि; विशेषाः, भेदाः, पर्याया इत्यादि; अर्थः, द्रव्यं, वस्त्वित्यादि।

एवं प्रस्तुतयोः सूत्रा-ऽर्थयोरपि विवक्षयैकार्थतादयो भावनीयाः, तथाहि– प्रवचनलक्षण एकस्मिन्नर्थे द्वयोरपि सूत्रा-ऽर्थयोर्वृत्तत्वादेकार्थता; सूत्रस्य वाचकत्वात्, अर्थस्य तु वाच्यत्वाद् भिन्नार्थता। 'पवयणमुभयं च तयं ति' तच्च सूत्रा-ऽर्थयोरुभयमपि प्रवचनमुच्यते। त्रिकं चैतत् सूत्रा-ऽर्थ-प्रवचनलक्षणं विष्वक् पृथग् वहुपर्यायं वह्वेकार्थिकम्, तथा च वक्ष्यति– 'सुयधम्म तित्थ मग्गो' इत्यादि ॥ १३७४ ॥ १३७५ ॥

अथवा, नयमतभेदादेषां त्रयाणामपि प्रवचनादीनामेकार्थता, पृथग्बहुपर्यायत्वं च न विरुध्यते, इति दर्शयन्नाह—

अहवा सव्वं नामं वंजणसुद्धियनयस्स भिन्नत्थं। इयरस्स अभिन्नत्थं संववहारो य तदवेक्खो ॥१३७६॥

संववहारट्ठाए तम्हा जेणेगया, न निच्छयओ। तो जुत्ताइं तेसिं वीसुं पज्जायनामाइं ॥ १३७७ ॥

अथवा, व्यञ्जनशुद्धिकनयः समभिरूढलक्षणः शुद्धनयस्तस्याभिप्रायात् सर्वमपि नाम भिन्नार्थमेव, शब्दभेदात्, घट-पटाद्यभिधानवदिति। इतरस्य तु नैगमादेरर्थनयस्याभिप्रायादभिन्नार्थमपि नाम भवति, वस्तुनोऽनेकपर्यायत्वात्, शक्रे-न्द्र-पुरन्दरादिनामवदिति। किञ्च, संव्यवहारश्च लोकव्यवहारश्च तदपेक्षोऽभिन्नार्थनामापेक्ष एकार्थिकनामापेक्षः प्रायः प्रवर्तत इत्यर्थः, स्वः, स्वर्गः, सुरसद्म, त्रिदशावासः, त्रिविष्टपं, त्रिदिवमित्याद्येकार्थिकनाममालादिशास्त्राणां संव्यवहारनयापेक्षयैव प्रवृत्तेरिति। ततः किम्?, इत्याह—'संववहारेत्यादि' तस्माद् येनोक्तप्रकारेण संव्यवहारार्थतया व्यवहारनयापेक्षया नाम्नामेकता– एकार्थताऽप्यस्तीत्यर्थः, न निश्चयतः शुद्धतरशब्दप्रयलक्षणनिश्चयनयमतेन सर्वेषामपि भिन्नार्थत्वाद् न क्वचिदेकार्थतेत्यर्थः। ततस्तस्मात् तेषां प्रवचन-सूत्रा-ऽर्थानां विष्वक् पृथग् व्यवहारनयमतेन युक्तानि घटमानकानि पर्यायनामान्येकार्थिकाभिधानानि ॥ इत्येकादशगाथार्थः ॥१३७६॥१३७७॥

तत्र प्रवचन-सूत्रयोस्तावत् पञ्च पञ्चैकार्थिकान्याह—

---

१ गाथा १३७८। २ अथवा सर्वं नाम व्यञ्जनशुद्धिकनयस्य भिन्नार्थम्। इतरस्याऽभिन्नार्थं संव्यवहारश्च तदपेक्षः॥ १३७६॥ संव्यवहारार्थतया तस्माद् येनैकता, न निश्चयतः। ततो युक्तानि तेषां विष्वक् पर्यायनामानि ॥ १३७७ ॥

अथोपसंहारपूर्वकं प्रकृतं स्मरयन्नाह—

[1]निज्जुत्तिसमुत्थाणप्पसंगओ जाव पवयणुप्पत्ती । पासंगियं गयमियं वुच्छामि अओ उवग्घायं ॥१३४७॥

तदेवं सामायिकनिर्युक्तिसमुत्थानप्रसङ्गतः 'तव-नियम-नाणरुक्खं आरूढो केवली अमियनाणी' इत्यादेरारभ्येदानीं जिनप्रवचनोत्पत्तिं यावत् प्रासङ्गिकमेवेदं गतम् । अतः प्रकृतमुपोद्घातं प्राक्प्रतिज्ञातं वक्ष्यामीति ॥ १३४७ ॥

परं प्रस्तुतोऽपि तिष्ठत्वद्यापि तावदुपोद्घातः । कुतः ?, इत्याह—

[3]अच्छउ तावुग्घाओ का पुण जिणप्पवयणप्पसूइ त्ति । तं कित्तियाभिहाणं पवयणमिह को विभागो सो?॥१३४८॥

एयं पसंगसेसं वुत्तुमुवग्घायवित्थरं वोच्छं । तो सेसदाराइं कमेण तस्संगहो चेमो ॥ १३४९ ॥

तिष्ठतु तावदुपोद्घातः, केयं जिनप्रवचनोत्पत्तिः ?, तद्वा जिनप्रवचनं कियदभिधानम् ?, को वाऽभिधानविभागः स तस्य प्रवचनस्य ? इति विनेयप्रश्नमाशङ्क्य, एतज्जिनप्रवचनोत्पत्ति-प्रवचनैकार्थिकता-तद्विभागलक्षणं तृतीयं प्रसङ्गशेषमुक्त्वाऽभिधाय ततः 'उद्देसे निद्देसे य निग्गमे' इत्यादिद्वारविध्युपन्यासेनोपोद्घातविस्तरं वक्ष्यामि । ततश्च 'नयविही वक्खाणविही य अणुओगो' इत्येतानि विशेषद्वाराणि क्रमेण वक्ष्यामि । एतस्य च भणनीयत्वेन प्रतिज्ञातस्यायं वक्ष्यमाणः संग्रहो मन्तव्यः ॥ इति गाथसप्तकार्थः ॥१३४८॥१३४९॥

कः संग्रहः ?, इत्याह—

[6]जिणपवयणउप्पत्ती पवयणएगट्ठिया विभागो य । दारविही य नयविही वक्खाणविही य अणुओगो॥१३५०॥

इह जिनप्रवचनोत्पत्तिः, प्रवचनैकार्थिकानि, एकार्थिकविभागश्च, इत्येतत् त्रितयमपि तावत् प्रसङ्गशेषद्वाराण्युद्देश-निर्देशादीनि तेषां विधानं प्ररूपणं विधिर्द्वारविधिः, अयं तूपोद्घातः, नयविधिस्तूपक्रमादीनां मूलानुयोगद्वाराणां चतुर्थमनुयोगद्वारम्, शिष्याऽऽचार्यपरीक्षाभिधानं तु व्याख्यानविधिः, अनुयोगस्तु सूत्रस्पर्शिकनिर्युक्तिः, सूत्रानुगमश्च ॥ इति निर्युक्तिसंग्रहगाथार्थः ॥ १३५० ॥

---

१ निर्युक्तिसमुत्थानप्रसङ्गतो यावत् प्रवचनोत्पत्ति । प्रासङ्गिक गतमिदं वक्ष्यामि अत उपोद्घातम् ॥ १३४७ ॥ २ गाथा १०९४ ।
३ तिष्ठतु तावदुपोद्घात का पुनर्जिनप्रवचनप्रसूतिरिति ? । तत् कियदभिधानं प्रवचनमिह को विभागः सः ? ॥ १३४८ ॥
एतं प्रसङ्गशेषमुक्त्वोपोद्घातविस्तरं वक्ष्यामि । ततः शेषद्वाराणि क्रमेण तत्संग्रहश्चायम् ॥ १३४९ ॥ ४ गाथा ९७३ । ५ गाथा १३५० ।
६ जिनप्रवचनोत्पत्तिः प्रवचनैकार्थिता विभागश्च । द्वारविधिश्च नयविधिर्व्याख्यानविधिश्चानुयोगः ॥ १३५० ॥

अथ प्रावचनशब्दार्थमाह—

[1]पगयाइअभिविहीए पवयणं पावयणमाइवयणं वा । सिवपावयवयणं वा पावयणं, पवयणं भणियं॥१३८२॥

'पगयाइ त्ति' पूर्ववत् प्रगताद्यर्थोऽत्रापि प्रशब्दः, आङ् मर्यादायाम्, अभिविधौ च गृह्यते । प्रगतं, प्रशस्तं, प्रधानम्, आदौ वा जीवादिष्वभिविधि-मर्यादाभ्यां वचनं प्रावचनम्, शिवप्रापकं वा वचनं प्रावचनमुच्यते । प्रवचनशब्दार्थस्तु प्रागेव भणित इति । तदेवमुक्तः प्रवचनैकार्थिकविभागः ॥ १३८२ ॥

अथ सूत्र-तन्त्र-ग्रन्थशब्दार्थमाह—

[2]सुत्तं भणियं तंतं तणिज्जए तेण तम्मि व जमत्थो । गंथिज्जइ तेण तओ तम्मि व तो तं मयं गंथो ॥१३८३॥

सूत्रशब्दार्थस्तावत् प्रागेव भणितः । तन्त्रशब्दार्थस्तूच्यते– 'तनु विस्तारे' तन्यते विस्तार्यते यद् यस्मादनेन, अस्मात्, अस्मिन् वाऽर्थ इति तन्त्रम् । अथवा, तन्यते विशिष्टरचनया तदेव विस्तार्यत इति तन्त्रं सूत्रमेवोच्यते । तथा, ग्रथ्यतेऽनेन, अस्मात्, अस्मिन् वाऽर्थ इति तदेव ग्रन्थ उच्यते । अथवा, तदेव ग्रथ्यते विरच्यत इति ग्रन्थः ॥ १३८३ ॥

पाठ-शास्त्रयोः शब्दार्थमाह—

[3]पढणं पाढो तं तेण तम्मि व पढिज्जएऽभिधेयं ति । सासिज्जए तेण तहिं व नेयमाया व तो सत्थं ॥१३८४॥

पठनं पाठः, पठ्यते वा व्यक्तीक्रियते तदिति पाठः । पठ्यतेऽभिधेयमनेन, अस्मात्, अस्मिन्निति वा पाठः । 'शासु अनुशिष्टौ' शास्यते ज्ञेयमात्मा वाऽनेन, अस्मात्, अस्मिन्निति वा शास्त्रम्, शास्यते कथ्यते तदिति वा शास्त्रम् । इति गाथापदार्थः । तदेवमभिहितः सूत्रैकार्थिकविभागः ॥ १३८४ ॥

अथार्थैकार्थिकानि वक्तव्यानि, तत्राऽर्थः, व्याख्यानम्, अनुयोग इत्यनर्थान्तरम्, इत्यनुयोगैकार्थिकान्याह—

---

१ प्रकृताद्यभिविधौ प्रवचनं प्रावचनमादिवचनं वा । शिवप्रापकवचनं वा प्रावचनं, प्रवचनं भणितम् ॥ १३८२ ॥

२ सूत्र भणितं तन्त्रं तन्यते तेन तस्मिन् वा यदर्थ । ग्रथ्यते तेन ततस्तस्मिन् वा ततस्तद् मतं ग्रन्थः ॥ १३८३ ॥

३ पठन पाठस्तत् तेन तस्मिन् वा पठ्यतेऽभिधेयमिति । शास्यते तेन तस्मिन् वा ज्ञेयमात्मा वा तत शास्त्रम् ॥ १३८४ ॥

न्द्धुं ग्रन्थितुं शक्यत एवाऽसौ गाथा; तद्यथा '[1]दारविही वक्खाणविहि अणुओगो नयविही य त्ति'। तस्माद् बुद्धिपूर्विकेयं विपर्य- यरचना ॥ १३५४ ॥

कथम् ?, इत्याह—

[2]अंतम्मि उ वण्णासिउं पुव्वमणुगमस्स जं नए भणइ। तं जाणावेइ समं वच्चंति नयाणुओगो य ॥१३५५॥

उपक्रमः, निक्षेपः, अनुगमः, नयाः, इत्यनुयोगद्वाराणामन्ते पूर्वं नयानुपन्यस्य यदिदानीमनुगमस्यानुयोगस्य पूर्वं प्रथमं नयान् भणति, तज्ज्ञापयति भद्रबाहुस्वामी– नया-ऽनुयोगौ प्रतिसूत्रं युगपदेव व्रजतः। न हि नाम नयैः शून्यः काप्यनुयोगोऽस्ति, यदि युगपद् नया-ऽनुगमौ गच्छतः, तर्ह्येतदुपन्यासोऽपि युगपदेवास्तु, इति चेत्। तदयुक्तम्, अशक्यत्वात्। तस्मादनुयोगद्वारेष्वनुगमस्यान्त उपन्यस्तानामपि नयानां यदिह तदादौ तद्भणनं तद् यौगपद्यगमनज्ञापनार्थमिति ॥ १३५५ ॥

अथ द्वितीयप्रेर्यस्य परिहारमाह—

[3]सुत्ताणुगमावसरे गुरु-सीसाणुग्गहोवएसत्थं। वक्खाणविहिं जंपइ मूलद्दाराणहिकयं पि ॥ १३५६ ॥

चतुर्षु मूलानुयोगद्वारेष्वनधिकृतमपि च– तेष्वनुक्तमपि च, व्याख्यानविधिं सूरिर्जल्पति। क्व ?, इत्याह– इह सूत्रानुगमावसरे– अनुयोगस्यादावित्यर्थः। किमर्थम् ?, इत्याह– गुरुश्च शिष्यश्च गुरु-शिष्यौ, तयोरनुग्रहो गुरु-शिष्यानुग्रहः, तदुपलक्षित उपदेशो गुरु-शिष्यानुग्रहोपदेशस्तदर्थम्। इदमुक्तं भवति– गुणवताऽऽचार्येण गुणवते शिष्याय समस्तगुणोपेतं सूत्रं व्याख्येयम्, इत्येवं गुरु-शिष्यानुग्रहार्थं व्याख्यानविधावुपदिष्टे सुव्याख्यानं सुश्रवणं च शास्त्रं भवति, इति गुणमपेक्ष्यानुयोगद्वारासंगृहीतोऽपीह व्याख्यानविधिरुक्त इति ॥ १३५६ ॥

तदेवं व्याख्यानविधेरनधिकृतत्वमभ्युपगम्योक्तम्। यदिवा, तदेवासिद्धम्, इत्येतदाह—

[4]अहवा साहिकय च्चिय वक्खाणंगं ति जं तओऽणुगमे। जं जं वक्खाणंगं तं तं सव्वं जओऽणुगमो ॥१३५७॥

१ दारविधिर्व्याख्यानविधिरनुयोगो नयविधिश्चेति।
२ अन्ते तु वा न्यस्य पूर्वमनुगमस्य यद् नयान् भणति। तज्ज्ञापयति समं व्रजतो नयोऽनुयोगश्च ॥ १३५५ ॥
३ सूत्रानुगमावसरे गुरु-शिष्यानुग्रहोपदेशार्थम्। व्याख्यानविधिं जल्पति मूलद्वारानधिकृतमपि ॥ १३५६ ॥
४ अथवा सोऽधिकृत एव व्याख्यानाङ्गमिति यत् ततोऽनुगमे। यद् यद् व्याख्यानाङ्गं तत् तत् सर्वं यतोऽनुगमः ॥ १३५७ ॥

[1]नामस्स जोऽणुओगो अहवा जस्साभिहाणमणुओगो। नामेण व जो जोग्गो जोगो नामाणुओगो सो॥१३८९॥
ठवणाए जोऽणुओगोऽणुओग इति वा ठविज्जए जं च। जा वेह जस्स ठवणा जोग्गा ठवणाणुओगो सो॥१३९०॥

नाम्न इन्द्रादेर्योऽनुयोगो व्याख्यानमसौ नामानुयोगः। अथवा, यस्य वस्तुनः 'अनुयोगः' इति नाम क्रियते तद् नाम्ना नाममात्रेणानुयोगो नामानुयोग इत्युच्यते। यदिवा, नाम्ना सह यः कश्चिद् योग्योऽनुरूपो योगः संबन्धः स नामानुयोगः, नाम्ना सहानुरूपः अनुकूलो वा योगो नामानुयोग इति व्युत्पत्तेः; यथा दीपस्य दीपनाम्ना सह, तपनस्य तपननाम्ना सह, ज्वलनस्य ज्वलननाम्ना सहेत्यादि। एव स्थापनाया अनुयोगो व्याख्यानं स्थापनानुयोगः। अथवा, अनुयोगं कुर्वन्नाचार्यादिर्यत्र काष्ठादौ स्थाप्यते तत्स्थापनानुयोगः। या वेहानुयोगकर्तुराचार्यादेस्तदाकारवति लेप्यकर्मादौ योग्याऽनुरूपस्थापना क्रियते स स्थापनानुयोगः, स्थापनाया अनुरूपोऽनुकूलो वा योगः संबन्धः स्थापनानुयोग इति व्युत्पत्तेः॥ १३८९ ॥ १३९० ॥

अथ द्रव्यानुयोगमाह—

[2]दव्वस्स जोऽणुओगो दव्वे दव्वेण दव्वहेऊ वा। दव्वस्स पज्जवेण व जोग्गो दव्वेण वा जोगो ॥ १३९१ ॥
बहुवयणओ वि एवं नेओ जो वा कहे अणुवउत्तो। दव्वाणुओग एसो एवं खेत्ताइयाणं पि ॥ १३९२ ॥

द्रव्यस्य योऽनुयोगो व्याख्यानम्, 'एष द्रव्यानुयोगः' इति द्वितीयगाथायां संबन्धः। तथा, द्रव्ये निषद्यादावधिकरणभूते स्थितस्यानुयोगो द्रव्यानुयोगः। द्रव्येण वा क्षीर-पाषाणशकलादिना करणभूतेनानुयोगो द्रव्यानुयोगः। द्रव्यहेतोर्वा शिष्यद्रव्यप्रतिबोधनादिनिमित्तमनुयोगो द्रव्यानुयोगः। अथवा, द्रव्यस्य वस्त्रादेः कुसुम्भरङ्गादिना पर्यायेण सह य इह योग्योऽनुरूपो योगः संबन्धः स द्रव्यानुयोगः। अथवा, द्रव्येणाम्लीकादिना कृत्वा यस्यैव वस्त्रादेस्तेनैव कुसुम्भरागादिना पर्यायेण सह योगोऽनुरूपो योगः संबन्धः स द्रव्यानुयोगः। एवं बहुवचनतोऽपि ज्ञेयो द्रव्यानुयोगः, तद्यथा- द्रव्याणां, द्रव्येषु, द्रव्यैर्वाऽनुयोगो द्रव्यानुयोगः; तथा, द्रव्याणां

१ नाम्नो योऽनुयोगोऽथवा यस्याभिधानमनुयोग.। नाम्ना वा यो योग्यो योगो नामानुयोग' स.॥ १३८९ ॥
स्थापनाया योऽनुयोगोऽनुयोग इति वा स्थाप्यते यच्च। या वेह यस्य स्थापना योग्या स्थापनानुयोग स ॥ १३९० ॥
२ द्रव्यस्य योऽनुयोगो द्रव्ये द्रव्येण वा द्रव्यहेतुर्वा। द्रव्यस्य पर्यवेण वा योग्यो द्रव्येण वा योग ॥ १३९१ ॥
बहुवचनतोऽप्येव ज्ञेयो यो वा कथयत्यनुपयुक्तः। द्रव्यानुयोग एष एव क्षेत्रादिकानामपि ॥ १३९२ ॥

अत्रोत्तरमाह—

[1]दारविही वि महत्था तत्थ वि वक्खाणविहिविवज्जासो। मा होज्ज तदाईए वक्खाणविहिं निरूवेइ ॥१३६०॥

द्वारविधिरपि सूत्रवद् बहुवृत्तान्तः कल्याणहेतुः, इत्यतस्तत्रापि व्याख्यानविधिविपर्ययोऽविधिव्याख्यानं मा भूत्। अतो '[2]दारविही य नयविही वक्खाणविही य अणुओगो' इत्येवं संग्रहगाथायामनुयोगादौ निर्दिष्टोऽपि ततोऽवतार्य तदादौ द्वारविध्यादौ व्याख्यानविधिं निरूपयति ॥ १३६० ॥

द्वारविध्यादौ निर्दिष्टस्य व्याख्यानविधेर्व्यक्ततरगुणदर्शनार्थमेवाह—

[3]एत्थेव गुरू सीसं सीसो य गुरुं परिच्छिउं पच्छा। वोच्छिइ सोच्छिइ व सुहं मोच्छिइ व सुदिट्ठपेयालो ॥१३६१॥

'एत्थेव त्ति' अत्रैव द्वारविध्यादौ निर्दिष्टं व्याख्यानविधिं श्रुत्वा 'सुदिट्ठपेयालो त्ति' सुदृष्टव्याख्यानविधिविचारो गुरुः शिष्यम्, शिष्यो वा गुरुं परीक्ष्य पश्चाद् गुणवते शिष्याय द्वारविधेरप्यर्थं सुखेनैव वक्ष्यति गुरुः, गुणवदाचार्यान्तिके श्रोष्यति वा शिष्यः, मोक्ष्यति वा त्यक्ष्यति वा दोषवन्तं शिष्यं गुरुः, गुरुं वा तद्वन्तं शिष्यः, इति गुणमपेक्ष्य द्वारविध्यादौ व्याख्यानविधिर्निर्दिष्ट इति ॥ १३६१ ॥

अत्र प्रेरकः प्राह—

[4]साणुगमंगं पि इहं जइ भन्नइ किं न कीरइ इहेव ?। दाएइ पयत्ततरं वक्खाणविही य सुत्तम्मि ॥ १३६२ ॥

ननु यद्यनुगमाङ्गमपि सन् गुणापेक्षया व्याख्यानविधिरिह द्वारविधेरादौ भण्यते, न तु सूत्रानुगमादौ, तर्हि '[2]जिणपवयणउप्पत्ती' इत्यादिसंग्रहगाथायामपीहैव द्वारविधेरादौ किं न क्रियते– किं नोपादीयते, येन 'वक्खाणविही य अणुओगो' इत्येवमनुगमादौ निर्दिष्टः ?। अत्रोत्तरमाह– संग्रहगाथायामित्थमुपन्यासं कुर्वन्नेतद् दर्शयति। किम् ?, इत्याह– प्रयत्नतरं यथा भवत्येवं सूत्रानुगमे व्याख्यानविधिरन्वेषणीय एव। यद्यपि हि द्वारविधौ कथमप्यसौ न जायते तथापि सूत्रानुगमावसरे गुणवदाचार्य-शिष्यपरिग्रहादिको विधिरवश्यमेव कर्तव्यः, इति संग्रहगाथायामनुगमादौ व्याख्यानविधिरुपात्त इति भावः ॥ १३६२ ॥

---

१ द्वारविधिरपि महार्थस्तत्रापि व्याख्यानविधिविपर्यासः। मा भूत् तदादौ व्याख्यानविधिं निरूपयति ॥ १३६० ॥ २ गाथा १३५०।

३ अत्रैव गुरुः शिष्यं शिष्यश्च गुरुं परीक्ष्य पश्चात्। वक्ष्यति श्रोष्यति वा सुखं मोक्ष्यति वा सुदृष्टविचारः ॥ १३६१ ॥

४ सोऽनुगमाङ्गमपीह यदि भण्यते किं न क्रियत इहैव ?। दर्शयति प्रयत्नतरं व्याख्यानविधिश्च सूत्रे ॥ १३६२ ॥

द्रव्येण द्रव्यतो जीव एकं द्रव्यम् । क्षेत्रतस्तु तज्जीवद्रव्यं संख्यातीतप्रदेशावगाढम्, एकैकस्य जीवस्यासंख्याताकाशप्रदेशावगाढत्वात् । काले कालतोऽनादिः, अनिधनश्च जीवो भवति । भावे भावतस्तु ज्ञानादयोऽनन्तास्तस्याऽगुरुलघुपर्यायाः । अजीवद्रव्यस्याप्येवमेव द्रव्यादिभ्यश्चतुर्विधोऽनुयोगः । तत्र द्रव्ये द्रव्यतः परमाणुरेकं द्रव्यम् । क्षेत्रे क्षेत्रतस्त्वेकप्रदेशावगाढ एव । कालतस्तु जघन्यतस्तस्य स्थितिरेकः समयः, मध्यमतस्तु द्व्यादयः समयाः, उत्कृष्टतस्त्वसंख्येया उत्सर्पिण्य-ऽवसर्पिण्यः । भावतः पुनर्वर्ण-गन्धादिरूपा अनन्ता पर्यायाः । एवं द्व्यणुकादिस्कन्धानामपि प्रत्येकं द्रव्यादिभावेन चतुर्विधोऽनुयोगो वक्तव्यः । द्रव्यस्यानुयोग इति गतम् ॥१३९४॥ ॥ १३९५ ॥ १३९६ ॥

अथ 'द्रव्याणामनुयोगः' इत्येतद् व्याचिख्यासुराह—

दव्वाणं[2] अणुओगो जीवा-जीवाण पज्जवा नेया । तत्थवि य मग्गणाओऽणेगा सट्ठाण-परठाणे ॥ १३९७ ॥

द्रव्याणामनुयोगो यदा चिन्त्यते तदा जीवा-ऽजीवद्रव्याणां पर्यवाः पर्याया ज्ञेया ज्ञातव्या यथा प्रज्ञापनायां प्ररूपिताः; तथाच तत्रोक्तम्– "कइविहा[3] णं भंते ! पज्जवा पन्नत्ता ?। गोयमा ! दुविहा पन्नत्ता, तं जहा– जीवपज्जवा य, अजीवपज्जवा य । जीवपज्जवा णं भंते ! किं संखेज्जा, असंखेज्जा, अणंता ? । गोयमा ! नो संखेज्जा, नो असंखेज्जा, अणंता । एवं अजीवपज्जवा वि अणंता" इत्यादि । तत्रापि द्रव्याणामप्यनुयोगपक्षे स्वस्थान-परस्थानभेदादनेका मार्गणा अन्वेषणा विचारणा ज्ञातव्याः । तत्र द्रव्यतोऽनन्तानि जीवद्रव्याणि, अनन्तान्यजीवद्रव्याणि, इत्येवं जीवा-ऽजीवद्रव्याणां द्रव्यतश्चिन्ता स्वस्थानम्, क्षेत्र काल-भावतस्तु चिन्ता परस्थानम् । तत्र क्षेत्रतो जीवा-ऽजीवद्रव्याणि प्रत्येकं समस्तलोकावगाढानि, कालतोऽनाद्य-ऽनिधनानि, भावतस्त्वनन्तपर्यायाणि, इत्यादिमार्गणाः स्वधिया विधेया इति ॥ १३९७ ॥

यदुक्तम्– 'द्रव्येण, द्रव्यैः, द्रव्ये, द्रव्येष्वनुयोगः' इति, तत्राह—

१ घ. छ ज 'व्य'। २ द्रव्याणामनुयोगो जीवा-ऽजीवानां पर्यवा ज्ञेयाः । तत्रापि च मार्गणा अनेकाः स्वस्थान परस्थानयोः ॥ १३९७ ॥
३ कतिविधा भगवन् ? पर्यवाः प्रज्ञप्ता ? । गौतम ! द्विविधा प्रज्ञप्ताः, तद्यथा– जीवपर्यवाश्च, अजीवपर्यवाश्च । जीवपर्यवा भगवन् ! किं संख्येयाः, असंख्येयाः, अनन्ताः ? । गौतम ! नो संख्येयाः, नो असंख्येयाः, अनन्ताः । एवमजीवपर्यवा अप्यनन्ता. ।

[1]सुयमिह जिणपवयणं तस्सुप्पत्ती पसंगओऽभिहिया। जिण-गणहरवयणाओ इमाइं तस्साभिहाणाइं ॥१३६५॥

यदुक्तम्- 'केयं जिनप्रवचनोत्पत्तिः ?' तत्रेहं जिनप्रवचनं तावत् श्रुतमुच्यते, इत्यसकृत् प्रसिद्धमेव। अस्य चोत्पत्तिर्निर्युक्तिसमुत्थानप्रसङ्गतः 'अत्थं भासइ अरहा सुत्तं गंथंति गणहरा निउणं' इत्यादौ 'जिन-गणधरेभ्यः' इति वचनात् पूर्वमप्यभिहितैव। यत्पुनरुक्तम्- 'तथा, जिनप्रवचनं कियदभिधानम् ?, अभिधानविभागो वाऽस्य कः ?' इति। तत्रैतानि तावदस्याभिधानानि ॥ इति पञ्चदशगाथार्थः ॥ १३६५ ॥

कानि पुनस्तानि ?, इत्याह—

[3]एगट्ठियाणि तिन्नि उ पवयण सुत्तं तहेव अत्थो य। एक्केक्कस्स य एत्तो नामा एगट्ठिया पंच ॥ १३६६ ॥

एकोऽर्थो येषां तान्येकार्थिकानि त्रीण्येव। कानि पुनस्तानि ?, प्रवचनमुक्तार्थम्, वक्ष्यमाणार्थं च, सामान्येन श्रुतज्ञानम्। सूचनात् सूत्रं, तद्विशेष एव। अर्यत इत्यर्थः, अयमपि तद्विशेष एव। एषां च प्रवचन-सूत्रा-ऽर्थानां मध्य एकैकस्य प्रत्येकमेकार्थिकानि पञ्च पञ्च नामानि भवन्ति ॥ इति निर्युक्तिगाथार्थः ॥ १३६६ ॥

भाष्यम्—

[4]जमिह पगयं पसत्थं पहाणवयणं च पवयणं तं च। सामन्नं सुयनाणं विसेसओ सुत्तमत्थो य ॥ १३६७॥

गतार्था ॥ १३६७ ॥

सूत्रशब्दस्यार्थमाह—

[5]सिंचइ खरइ जमत्थं तम्हा सुत्तं निरुत्तविहिणा वा। सूएइ सवइ सुव्वइ सिव्वइ सरए व जेणत्थं ॥१३६८॥

'षिंच क्षरणे' सिञ्चति क्षरति यस्मादर्थान्, ततो निरुक्तविधिना सूत्रम्। अथवा, निरुक्तविधिनैव सूचयति, स्रवति वाऽर्थानि-

---

१ श्रुतमिह जिनप्रवचनं तस्योत्पत्तिः प्रसङ्गतोऽभिहिता। जिन गणधरवचनादिमानि तस्याभिधानानि ॥ १३६५ ॥ २ गाथा १११९।

३ एकार्थिकानि त्रीणि तु प्रवचनं सूत्रं तथैवार्थश्च। एकैकस्य चेतो नामान्येकार्थिकानि पञ्च ॥ १३६६ ॥

४ यदिह प्रकृतं प्रशस्तं प्रधानवचन च प्रवचनं तच्च। सामान्यं श्रुतज्ञानं विशेषतः सूत्रमर्थश्च ॥ १३६७ ॥

५ सिञ्चति क्षरति यदर्थं तस्मात् सूत्र निरुक्तविधिना वा। सूचयति स्रवति श्रूयते सीव्यति सरति वा येनार्थम् ॥ १३६८ ॥

अथ क्षेत्रे क्षेत्रेषु चानुयोगमाह—

[1]खेत्तम्मि उ अणुओगो तिरियं लोगम्मि जम्मि वा खेत्ते । अड्ढाइयदीवेसुं छलद्धवीसाए खेत्तेसुं ॥१४०१॥

क्षेत्रे पुनरयमनुयोगः, तद्यथा– तिर्यग्लोकक्षेत्रे योऽनुयोगः प्रवर्तते, यत्र वा ग्राम-नगरादौ, व्याख्यानसभादौ वा क्षेत्रे स्थितोऽनुयोगकर्ताऽनुयोगं करोति, एष क्षेत्रेऽनुयोगः क्षेत्रानुयोग उच्यते । क्षेत्रेष्वनुयोगः कः ?, इत्याह– योऽर्धतृतीयद्वीप-समुद्रान्तवर्तिक्षेत्रेषु प्रवर्तते, सार्धपञ्चविंशतिजनपदरूपेषु वाऽऽर्यक्षेत्रेष्विति । उक्तः षड्विधक्षेत्रानुयोगः ॥ १४०१ ॥

अथ तावद्भेदमेव कालानुयोगमाह—

[2]कालस्स समयरूवण कालाण तदाइ जाव सव्वद्धा । कालेणानिलावहारो कालेहि उ सेसकायाणं ॥१४०२॥

कालस्यानुयोगः कः ?, इत्याह– 'समयरूवण त्ति' उत्पलपत्रशतभेद-पट-शाटिकापाटनादिदृष्टान्तैः समयस्य प्ररूपणेत्यर्थः । कालानां त्वनुयोगः 'तदाइ जाव सव्वद्ध त्ति' समयमादौ कृत्वा यावत् सर्वाद्धायाः प्ररूपणेत्यर्थः । कालेनाऽनुयोगोऽनिलापहारः । इदमुक्तं भवति– 'बादरपर्याप्तवायुकायिका वैक्रियशरीरे वर्तमाना अद्धापल्योपमस्यासंख्येयभागेनापह्रियन्त इत्येवं या प्ररूपणा स कालेनानुयोगः' इत्येवं कोट्याचार्यटीकायां विवृतम् । अन्यत्र त्वनुयोगद्वारादिषु वैक्रियशरीरिणो वायवः क्षेत्रपल्योपमासंख्येयभागप्रदेशपरिमाणा दृश्यन्ते । तत्त्वं तु केवलिनो विदन्ति । शेषाणां तु पृथिव्यादिकायानां यथासंभवं कालैरनुयोगः, तद्यथा– '[3]पज्जत्तबायरानलअसंखया होंति आवलियवग्गा' इति, आवलिकायां यावन्तः समयास्तेषां वर्गः क्रियते, तथाविधेषु चासंख्यातेषु वर्गेषु यावन्तः समयास्तत्प्रमाणा बादरपर्याप्ततेजःकायिका भवन्ति । तथा, प्रत्युत्पन्नत्रसकायिका असंख्येयाभिरुत्सर्पिण्य-ऽवसर्पिणीभिरपह्रियन्ते । एवं पृथिव्यादिष्वपि यथासंभवं वाच्यमिति ॥ १४०२ ॥

अथ काले कालेषु चानुयोगमाह—

[4]कालम्मि बीयपोरिसि समासु तिसु दोसु वा वि कालेसु । पवयणस्सेगवयाइवयणाणं सोलसण्हं तु॥१४०३॥

१ क्षेत्रे त्वनुयोगस्तिर्यग्लोके यस्मिन् वा क्षेत्रे । अर्धतृतीयद्वीपेष्वर्धपड्विशेषु क्षेत्रेषु ॥ १४०१ ॥

२ कालस्य समयरूपणा कालाना तदादि यावत् सर्वाद्धा । कालेनानिलापहार. कालैस्तु शेषकायाणाम् ॥ १४०२ ॥

३ पर्याप्तबादरानलासख्येयका भवन्त्यावलिकावर्गा. ।

४ काले द्वितीयपौरुष्यां समासु तिसृषु द्वयोर्वापि कालयोः । वचनस्यैकवचआदिवचनानां पोडशानां तु ॥ १४०३ ॥

अत्र प्रतिविधानमाह—

[1]मउलं फुल्लं ति जहा संकोय-विबोहमेत्तभिन्नाइं । अत्थेणाभिन्नाइं कमलं सामण्णओ चेगं ॥ १३७२ ॥

अविवरियं तह सुत्तं विवरीयमत्थो त्ति बोहकालम्मि । किंचिम्मत्तविभिन्ना सामान्नं पवयणं नेयं ॥१३७३॥

यथेह मुकुलं, फुल्लमिति च, एतयोः संकोच-विकाशरूपतया भेदः, सामान्यार्थतया चाभेदः कमलमिति । न चैषां पुनः प्रत्येकमेकार्थिकानि न युज्यन्ते, किन्तु श्रूयन्त एव प्रत्येकं तदेकार्थिकानि, तद्यथा– आद्यस्य मुकुलं, कुड्मलं, कोरकं, जालकं, कलिका, वृन्तमित्यादि; द्वितीयस्य तु फुल्लं, विकोचं, विकाशं, विकसितम्, उन्मीलितम्, उन्मिषितं, स्मितम्, उन्निद्रं, विजृम्भितं, हसितम्, उद्बुद्धं, व्याकोशमित्यादि । तृतीयस्य कमलं, पद्मम्, अरविन्दं, पङ्कजं, सरोजमित्यादि । तथेहाऽप्यविवृतार्थतो मुकुलकल्पं सूत्रमुच्यते, तदेव बोधकाले व्याख्यानकाले विवृतं सत् समुत्फुल्लकमलकल्पमर्थोऽभिधीयते । विशेषरूपतया च किञ्चिन्मात्रमनयोर्भेदः, सामान्यरूपतया त्वेकत्वं ज्ञेयं प्रवचनं श्रुतज्ञानमिति । न चैषां प्रवचन-सूत्रा-ऽर्थानामेकार्थिकानि न युज्यन्ते 'सुयधम्म तित्थ' इत्यादिनाऽनन्तरमेवाभिधास्यमानत्वादिति ॥ १३७२ ॥ १३७३ ॥

अत्र दृष्टान्तान्तरेणापि प्रवचन-सूत्रा-ऽर्थानामेकार्थत्वादिरूपतां समर्थयन्नाह—

[3]सामन्न-विसेसाणं जह वेगा-णेगया ववत्थाए। तदुभयमत्थो य जहा वीसुं बहुपज्जवा ते य ॥ १३७४ ॥

एवं सुत्त-त्थाणं एगा-णेगट्ठया ववत्थाए। पवयणमुभयं च तयं तियं च बहुपज्जयं वीसुं ॥ १३७५ ॥

'वा' इति कमलोदाहरणापेक्षयोदाहरणान्तरत्वसूचकः । ततश्च यथा वा सामान्य-विशेषयोर्व्यवस्थया विवक्षयैकता, अनेकता च दृष्टा– एकार्थत्वम्, अनेकार्थत्वं च दृष्टमित्यर्थः; तथाहि– अर्थलक्षण एकस्मिन्नर्थे द्वयोरपि सामान्य-विशेषयोर्वृत्तत्वादेकार्थता; सामान्यस्य च विजातीयव्यावृत्ताकारप्रत्ययनिबन्धनत्वात्, विशेषाणां तु सजातीय-विजातीयभिन्नत्वप्रतिभासकारणत्वादनेकार्थता ।

1 मुकुलं फुल्लमिति यथा सकोच-विबोधमात्रभिन्नानि । अर्थेनाभिन्नानि कमलं सामान्यतश्चैकम् ॥ १३७२ ॥
अविवृतं तथा सूत्रं विवृतमर्थ इति बोधकाले । किञ्चिन्मात्रविभिन्नौ सामान्य प्रवचन ज्ञेयम् ॥ १३७३ ॥ 2 गाथा १३७८ ।
3 सामान्य-विशेषयोर्यथा वैका-ऽनेकता व्यवस्थया । तदुभयमर्थश्च यथा विष्वग् बहुपर्यवास्ते च ॥ १३७४ ॥
एवं सूत्रा-ऽर्थयोरेका-ऽनेकार्थता व्यवस्थया । प्रवचनमुभयं च तत् त्रिकं च बहुपर्यय विष्वक् ॥ १३७५ ॥ 4 क ग. 'दृश्यते ए' ।

यदा स एवाऽसकृद् बहुभिर्वचनैरभ्यर्थितस्तं करोति । क्षायोपशमिके वचने स्थितस्यानुयोगो वचनेऽनुयोगः । वचनेषु पुनर्नास्त्यनुयोगः, वचनस्य क्षायोपशमिकत्वेनानेकत्वासंभवात् । अन्ये तु मन्यन्ते– व्यक्तिविवक्षया येष्वेव क्षायोपशमिकेषु बहुषु वचनेष्वनुयोगः, इत्यप्यविरुद्धमेवेति । तदेवं पञ्चविधः, षड्विधो वा निर्दिष्टो वचनानुयोगोऽपि ॥ १४०४ ॥

अथैतावच्छेदमेव भावानुयोगमाह—

[1]भावस्सेगयरस्स उ अणुओगो जो जहिट्ठिओ भावो । दोमाइसंनिगासे अणुओगो होइ भावाणं ॥१४०५॥

औदयिकादिभावानामेकतरस्य व्याख्यानं यो यथावस्थितो भावस्तथैव प्ररूपणं भावस्यानुयोग इति सोपस्कारस्तात्पर्यार्थः । तेषामेवौदयिकादिभावानां द्व्यादिसंनिकाशे द्व्यादिसंयोगे यद् व्याख्यानं स भावानामनुयोगः । तदेवं भावस्य भावानां वाऽनुयोग इत्युक्तम् ॥ १४०५ ॥

अथ भावेन भावैर्भावे भावेषु वानुयोग इत्येतद् विवरीषुराह—

[2]भावेण संगहाईण ण्णयरेणं दुगाइभावेहिं । भावे खओवसमिए भावेसु य नत्थि अणुओगो ॥ १४०६ ॥

अहवा आयाराइसु भावेसु वि एस होइ अणुओगो । सामित्तं आसज्ज व परिणामेसुं बहुविहेसुं ॥ १४०७ ॥

संग्रहादीनां पञ्चानामध्यवसायानामन्यतरेण चित्ताध्यवसायेन योऽनुयोगः क्रियते स भावेनानुयोगः । ते चामी पञ्चाभिप्रायाः, यदाह स्थानाङ्गे– " [3]पंचहिं ठाणेहिं सुयं वाएज्जा, तं जहा– संगहट्ठाए, उवग्गहट्ठाए, निज्जरट्ठाए, सुयपज्जवजाएणं, अव्वोच्छित्तीए" । अयमर्थः– कथं नु नामैते शिष्याः सूत्रार्थसंग्राहकाः संपत्स्यन्ते ? । तथा, कथं नु नाम गीतार्था भूत्वाऽमी वस्त्राद्युत्पादनेन गच्छस्योपग्रहकरा भविष्यन्ति ?, ममाप्येतां वाचयतः कर्मनिर्जरा भविष्यति । तथा, श्रुतपर्यवजातं श्रुतपर्यायराशिर्ममापि वृद्धिं यास्यति ।

१ भावस्यैकतरस्य त्वनुयोगो यो यथावस्थितो भावः । द्व्यादिसंनिकाशेऽनुयोगो भवति भावानाम् ॥ १४०५ ॥

२ भावेन संग्रहादीनामन्यतरेण, द्व्यादिभावैः । भावे क्षायोपशमिके भावेषु च नास्त्यनुयोग ॥ १४०६ ॥
अथवाऽऽचारादिषु भावेष्वप्येष भवत्यनुयोगः । स्वामित्वमासाद्य वा परिणामेषु बहुविधेषु ॥ १४०७ ॥

३ पञ्चभि. स्थानैः श्रुत वाचयेत्, तद्यथा– संग्रहार्थतया, उपग्रहार्थतया, निर्जरार्थतया, श्रुतपर्यवजातेन, अव्यवच्छित्त्या ।

[1]सुयधम्म तित्थ मग्गो पावयणं पवयणं च एगट्ठा । सुत्तं तंतं गंथो पाठो सत्थं च एगट्ठा ॥ १३७८ ॥

श्रुतधर्मः, तीर्थं, मार्गः, प्रावचनं, प्रवचनम्, एतानि प्रवचनैकार्थिकानि । सूत्रं, तन्त्रं, ग्रन्थः, पाठः, शास्त्रं च, इत्येतानि सूत्रैकार्थिकानि ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ १३७८ ॥

तत्र श्रुतधर्म इति कोऽर्थः ?, इत्याह—

[2]बोहो सुयस्स धम्मो सुयं व धम्मो स जीवपज्जाओ। सुगईए संजमम्मि य धरणाओ वा सुयं धम्मो ॥१३७९॥

श्रुतस्य धर्मः स्वभावः, स च बोधः, बोधस्वभावत्वात् श्रुतस्य । अथवा, श्रुतं च तद् धर्मश्च श्रुतधर्मो जीवपर्यायः अथवा, सुगतौ, संयमे वा धारणाद् धर्मः श्रुतमुच्यते, श्रुतं च तद् धर्मश्चेति श्रुतधर्मः ॥ १३७९ ॥

अथ तीर्थशब्दार्थमाह—

[3]तित्थं ति पुव्वभणियं संघो जो नाण-चरण-संघाओ। इह पवयणं पि तित्थं तत्तोऽणत्थंतरं जेण ॥१३८०॥

तीर्यतेऽनेनेति तीर्थं पूर्वमेवाऽत्राप्युक्तम् । किम् ?, इत्याह– संघः । किंविशिष्टः ? । ज्ञान-दर्शन-चारित्रैर्गुणसंघातः । इह तु प्रवचनमपि तीर्थमुच्यते यस्मात्, ततः संघातात् तदपि श्रुतज्ञानरूपत्वादनर्थान्तरमेवेति ॥ १३८० ॥

मार्गशब्दार्थमाह—

[5]मज्जिज्जइ सोहिज्जइ जेणं तो पवयणं तओ मग्गो । अहवा सिवस्स मग्गो मग्गणमन्नेसणं पंथो ॥१३८१॥

ततस्तस्मात् प्रवचनं मार्ग उच्यते । येन किम् ?, इत्याह– 'मृजू शुद्धौ' मृज्यते शोध्यतेऽनेन कर्ममलिन आत्मा, तस्माद् हेतोः । अथवा, मार्गणं मार्गोऽन्वेषणं पन्थाः शिवस्येति ॥ १३८१ ॥

---

१ श्रुतधर्मस्तीर्थं मार्गः प्रावचनं प्रवचनं चैकार्थानि । सूत्रं तन्त्रं ग्रन्थ. पाठ. शास्त्रं चैकार्थानि ॥ १३७८ ॥
२ बोधः श्रुतस्य धर्मः श्रुतं वा धर्मः स जीवपर्याय । सुगतौ संयमे च धारणाद् वा श्रुतं धर्म ॥ १३७९ ॥
३ तीर्थमिति पूर्वभणितं संघो यो ज्ञान-चारित्रसंघातः । इह प्रवचनमपि तीर्थं ततोऽनर्थान्तरं येन ॥ १३८० ॥ ४ घ छ. ज. 'त्रसं' ।
५ मृज्यते शोध्यते येन तत प्रवचनं ततो मार्गः । अथवा शिवस्य मार्गो मार्गणमन्वेषणं पन्था ॥ १३८१ ॥

अपरमपि द्रव्यादिगतं किञ्चित् स्वरूपं प्रसङ्गतः प्राह—

[1]आहारो आहेयं च होइ दव्वं तहेव भावो य । खेत्तं पुण आहारो कालो नियमाउ आहेओ ॥१४०९॥

द्रव्यमाधारो भवति पर्यायाणाम्, आधेयं च भवति क्षेत्रे । तथा, भावश्चाधारो भवति कालस्य, काल-वर्णादीनां समयादि-स्थितित्वादिति; आधेयश्च भवति द्रव्ये । क्षेत्रमाकाशं पुनः सर्वेषामपि धर्मा ऽधर्म-पुद्गल-जीव-कालद्रव्याणाम्, अगुरुलघुपर्यायाणां चाधार एव, न त्वाधेयम्, सर्वस्यापि वस्तुनस्तत्रैवावगाढत्वात्, तस्य च स्वप्रतिष्ठितत्वेनान्यत्राधेयत्वायोगादिति । 'कालो नियमाउ आहेउ त्ति' कालो नियमादाधेय एव भवति, न त्वाधारः, तस्य द्रव्य-पर्यायेष्वेव स्थितत्वात्, तत्र चाऽन्यस्यास्थितत्वादिति । तदेवं व्याख्यातो नामादिभेदतः सप्तविधोऽप्यनुयोगः ॥ १४०९ ॥

एतद्विपक्षश्चाननुयोगो भवति, अतस्तं विभणिषुरुक्तोपसंहारं प्रस्तावनां चाह—

[2]एसोऽणुरूवजोगो गओऽणुओगो इओ विवज्जत्थं । जो सो अणणुओगो तत्थेमे होंति दिट्ठंता ॥१४१०॥

तदेवं गतो भणित एषोऽनुरूपयोगोऽनुयोगः सप्तविधोऽपि । अथ विपर्यस्तमेतद्विपर्ययेण योऽयमननुयोगः स उच्यते । तत्र चैते वक्ष्यमाणा दृष्टान्ता भवन्ति ॥ इति त्रयोविंशतिगाथार्थः ॥ १४१० ॥

के पुनस्तेऽननुयोगदृष्टान्ताः ?, इत्याह—

[3]वच्छगगोणी खुज्जा सज्झाए चेव बहिरउल्लावे । गामेल्लए य वयणे सत्तेव य होंति भावम्मि ॥ १४११ ॥

सावगभज्जा सत्तवईए य कोंकणगदारए नउले । कमलामेला संबस्स साहसं सेणिए कोवो ॥ १४१२ ॥

यथाऽनुयोगो नामादिभेदात् सप्तविधो वर्णितस्तथाऽननुयोगोऽपि यथासंभवं वक्तव्यः । तत्र नाम-स्थापने सुगमे । द्रव्याननुयोगे, तत्प्रसङ्गतो द्रव्यानुयोगे च वत्सगौरुदाहरणम् । क्षेत्रे त्वननुयोगा-ऽनुयोगयोः कुब्जोदाहरणम् । काले स्वाध्यायः । वचने पुनरुदाहरण-

१ आधार आधेय च भवति द्रव्य तथैव भावश्च । क्षेत्र पुनराधार कालो नियमादाधेय ॥ १४०९ ॥
२ एषोऽनुरूपयोगो गतोऽनुयोग इतो विपर्यस्तम् । य सोऽननुयोगस्तत्रेमे भवन्ति दृष्टान्ता ॥ १४१० ॥
३ वत्सकगौ· कुब्जा स्वाध्यायश्चैव बधिरोल्लापः । ग्रामेयकश्च वचने सप्तैव च भवन्ति भावे ॥ १४११ ॥
श्रावकभार्या साप्तपदिकश्च कोङ्कणकदारको नकुल । कमलामेला शम्बस्य साहस श्रेणिके कोप. ॥ १४१२ ॥

[1]अणुओगो य निओगो भास-विभासा य वात्तियं चेव । एए अणुओगस्स उ नामा एगट्ठिया पंच ॥ १३८५ ॥

अनुयोगः, नियोगः, भाषा, विभाषा, वार्तिकम्, इति पञ्चानुयोगैकार्थिकानि ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ १३८५ ॥

अथानुयोगशब्दार्थं प्रागुक्तमपि विस्मरणशीलविनेयानुग्रहार्थं पुनरप्याह—

[2]अणुओयणमणुओगो सुयस्स नियएण जमभिधेएणं । वावारो वा जोगो जो अणुरूवोऽणुकूलो वा ॥ १३८६ ॥

अहवा जमत्थओ थोव-पच्छभावेहिं सुयमणुं तस्स । अभिधेये वावारो जोगो तेणं व संबंधो ॥ १३८७ ॥

यत् सूत्रस्य निजेनाभिधेयेनार्थेनानुयोजनं संबन्धनं सोऽनुयोगः । अथवा, योगो व्यापार उच्यते । ततश्चानुरूपोऽनुकूलो वा योगः सूत्रस्य निजेऽभिधेये व्यापारः, यथा घटशब्देन घटोऽभिधीयत इत्यनुयोगः । अथवा, सूत्रमणु इत्युच्यते । कुतः ? । यस्मादर्थस्यानन्तत्वात् तदपेक्षया सूत्रमणु । अथवा, "[3]उप्पन्नेइ वा" इत्यादितीर्थकरोक्तार्थात् पश्चादेव गणधराः सूत्रं कुर्वन्ति, इतरकवयोऽप्यर्थं हृदये निवेश्य ततः काव्यं कुर्वन्ति, इत्येवमर्थात् पश्चादेव भवनात् सूत्रमणु व्यपदिश्यते । ततस्तस्याणोः सूत्रस्याभिधेये व्यापारो योगोऽणुयोगः । तेन वाऽणुना सूत्रेण सहाभिधेयस्य योगः संबन्धोऽणुयोगः ॥ इति गाथाद्वयार्थः ॥ १३८६ ॥ १३८७ ॥

अथानुयोगस्यैव संभवन्तं नामादिनिक्षेपमाह—

[4]नामं ठवणा दविए खेत्ते काले वयण-भावे य । एसो अणुओगस्स उ निक्खेवो होइ सत्तविहो ॥ १३८८ ॥

नामानुयोगः, स्थापनानुयोगः, द्रव्यानुयोगः, क्षेत्रानुयोगः, कालानुयोगः, वचनानुयोगः, भावानुयोगः । एषोऽनुयोगस्य सप्तविधो निक्षेपः ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ १३८८ ॥

विस्तरार्थं त्वभिधित्सुर्भाष्यकारो नाम-स्थापनानुयोगस्वरूपं तावदाह—

---

१ अनुयोगश्च नियोगो भाषा-विभाषे च वार्तिकं चैव । एतान्यनुयोगस्य तु नामान्येकार्थिकानि पञ्च ॥ १३८५ ॥

२ अनुयोजनमनुयोग श्रुतस्य नियतेन यदभिधेयेन । व्यापारो वा योगो योऽनुरूपोऽनुकूलो वा ॥ १३८६ ॥
अथवा यदर्थतः स्तोक-पश्चाद्भावाभ्यां श्रुतमणु तस्य । अभिधेये व्यापारो योगस्तेन वा सबन्ध ॥ १३८७ ॥ ३ उत्पद्यन्ते वा ।

४ नाम स्थापना द्रव्यं क्षेत्रं कालो वचन-भावौ च । एषोऽनुयोगस्य तु निक्षेपो भवति सप्तविधः ॥ १३८८ ॥

तद्भेदात् तत्साध्यस्य मोक्षस्याभावप्रसङ्गः, उपायाभावे उपेयासिद्धेः। ततो मोक्षाभावे निष्फलैव दीक्षा, मोक्षार्थमेव तत्प्रतिपत्तेः, ततस्तदभावे निरर्थकैव सेति। तदेवं द्रव्याननुयोगे निर्दिष्टा दोषाः ॥ १४१४ ॥ १४१५ ॥ १४१६ ॥

अथ द्रव्यस्य सम्यगनुयोगे गुणानाह—

सम्मं[1] पयं पयच्छइ सवत्थविणिओगओ जहा धेणू। तह सयपज्जवजोए दव्वं चरणं ततो मोक्खो ॥१४१७॥

यथा परवत्सपरिहारेण स्ववत्सविनियोगाद् गौः सम्यक् पयः प्रयच्छति, तथा द्रव्यमपि स्वपर्यायविनियोगे सम्यक्चरणं प्रसूते। अनर्थावाप्तिश्च काचिद् न भवति। यतश्चरणात् किम्?, इत्याह— यतोऽचिराद् मोक्षः प्राप्यत इति। तदेवं द्रव्याननुयोगे तदनुयोगे च दोष-गुणयोर्वत्सगोदृष्टान्त उक्तः ॥ १४१७ ॥

अथ क्षेत्राद्यननुयोगे दोषान्, तदनुयोगे तु गुणान् सोदाहरणानतिदिशन्नाह—

एवं[2] खेत्ताईसु वि सधम्मविणिओगओऽणुओग त्ति। विवरीए विवरीओ सोदाहरणोऽणुगंतव्वो ॥१४१८॥

एवमुक्तानुसारेण क्षेत्र-काल-वचन-भावेष्वपि स्वधर्मविनियोगत आत्मोचितधर्मयोजनादनुयोगः; विपरीते तु विपरीतधर्मयोजने तु विपरीतोऽननुयोगः सोदाहरणः स्वबुद्ध्या ग्रन्थान्तराच्चानुगन्तव्यो ज्ञातव्यः। तत्रेत्थमतिदिष्टेऽपि मुग्धविनेयानुग्रहार्थं किञ्चिदुच्यते। तत्र क्षेत्रतोऽननुयोगे कुब्जोदाहरणमभिधीयते—

प्रतिष्ठाननगरे सौलवाहनो[3] नाम राजा। स च प्रतिवर्षं समागत्य भृगुकच्छे नभोवाहननृपं रुणद्धि। ऋतुबद्धे च काले तत्र स्थित्वा वर्षासु स्वनगरं गच्छति। अन्यदा च रोहके समागते तेन राज्ञा स्वनगरं जिगमिषुणाऽऽस्थानसभामण्डपिकायां पतद्ग्रहकमन्तरेणापि भूमौ निष्ठ्यूतम्। तस्य च राज्ञः पतद्ग्रहकधारिणी कुब्जा समस्ति। तया चातीव भावज्ञतया लक्षितम्— नूनं परिजिहीर्षुरिदं स्थानं नरपतिर्यास्यति प्रभाते स्वनगरम्, तेनेत्थमिदं निष्ठीवति। इति संचिन्त्य निगदितं कथमप्यात्मपरिचितस्य यानशालिकस्य। ततस्तेन प्रगुणीकृत्य यानान्यगच्छत एव राज्ञः पुरतोऽपि प्रवर्तितानि। तत्पृष्ठतश्च सर्वोऽपि स्कन्धावारः प्रवृत्तो गन्तुम्। व्याप्तं च नभोमण्डलं कटकधूलीनिकरेण। ततश्चिन्तितं विस्मितमनसा नराधिपेन— ननु मया कस्यापि प्रयाणकं न कथितम्, धूलीभयात् किलाहं

१ सम्यक् पय प्रयच्छति स्ववत्सविनियोगतो यथा धेनु। तथा स्वपर्यायोगे द्रव्यं चरण ततो मोक्ष. ॥ १४१७ ॥
२ एवं क्षेत्रादिष्वपि स्वधर्मविनियोगतोऽनुयोग इति। विपरीते विपरीत. सोदाहरणोऽनुगन्तव्य ॥ १४१८ ॥ ३ क ग 'शाल'।

हेतोरनुयोगो द्रव्यानुयोगः, द्रव्याणां वा पर्यायैः सह, द्रव्यैर्वा करणभूतैरनुरूपो योगो द्रव्यानुयोग इति । यो वाऽनुपयुक्तः कथयति– अनुपयुक्तोऽनुयोगं करोति स द्रव्यानुयोगः ।

एवं क्षेत्रादीनामपि– क्षेत्र-काल-वचन-भावेष्वपि यथासंभवमित्थमेवायोज्यत इत्यर्थः, तद्यथा– क्षेत्रस्य, क्षेत्रेण, क्षेत्रे; क्षेत्राणां क्षेत्रैः, क्षेत्रेष्वनुयोगः क्षेत्रानुयोगः । तथा, क्षेत्रस्य, क्षेत्राणां वा हेतोरनुयोगः क्षेत्रानुयोगः– क्षेत्रानुज्ञापनाय देवेन्द्र-चक्रवर्त्यादीनामनुयोगो व्याख्यानं यत् क्रियत इत्यर्थः । तथा, क्षेत्रस्य क्षेत्राणां वा, क्षेत्रेण क्षेत्रैर्वा करणभूतैः, पर्यायेण पर्यायैर्वा सहानुरूपोऽनुकूलो योगः क्षेत्रानुयोगः । एवं काल-वचन-भाव-विषयेऽप्येकवचन-बहुवचनाभ्यां सुधिया यथासंभवं वाच्यम्, नवरं कालाद्यभिलापः कार्य इति ॥ १३९१ ॥ १३९२ ॥

'द्रव्यस्यानुयोगो व्याख्यानं द्रव्यानुयोगः' इत्यादावभिहितम् । तत्र कतिभेदं तद् द्रव्यम्, किंस्वरूपश्च तस्यानुयोगः ?, इत्याशङ्क्याह–

[1]दव्वस्स उ अणुओगो जीवदव्वस्स वा अजीवदव्वस्स । एक्केक्कम्मि वि भेया हवंति दव्वाइया चउरो ॥१३९३॥

द्रव्यानुयोगो य उक्तः स द्रव्यभेदाद् द्विधा भवति– जीवद्रव्यस्य, अजीवद्रव्यस्य च । एकैकस्मिञ्जीवद्रव्ये, अजीवद्रव्ये च द्रव्यादयश्चत्वारो भेदा भवन्ति– जीवद्रव्ये, अजीवद्रव्ये च प्रत्येकं द्रव्यतः, क्षेत्रतः, कालतः, भावतश्चतुर्धाऽनुयोगः प्रवर्तत इत्यर्थः ॥१३९३॥

एतदेवाह–

[2]दव्वेणेगं दव्वं संखाईयप्पएसओगाढं । कालेऽणाइ अनिहणो भावे नाणाइयाणंता ॥ १३९४ ॥

एमेव अजीवस्स वि परमाणू दव्व एगदव्वं तु । खेत्ते एगपएसे ओगाढो सो भवे नियमा ॥ १३९५ ॥

समयाइठिइ असंखा उसप्पिणीओ हवंति कालम्मि । वण्णाइभावणंता एवं दुपएसमाई वि ॥१३९६॥

1 द्रव्यस्य त्वनुयोगो जीवद्रव्यस्य वाऽजीवद्रव्यस्य । एकैकस्मिन्नपि भेदा भवन्ति द्रव्यादिकाश्चत्वारः ॥ १३९३ ॥
2 द्रव्येणैकं द्रव्य सख्यातीतप्रदेशावगाढम् । कालेऽनादिरनिधनो भावे ज्ञानादयोऽनन्ता. ॥ १३९४ ॥
एवमेव जीवस्यापि परमाणुर्द्रव्य एकद्रव्यं तु । क्षेत्र एकप्रदेशेऽवगाढ स भवेद् नियमात् ॥ १३९५ ॥
समयादिस्थितिरसंख्या उत्सर्पिण्यो भवन्ति काले । वर्णादिभावा अनन्ता एवं द्विप्रदेशादयोऽपि ॥ १३९६ ॥

लाया भर्ता मृतः। ततस्तत्रेन्धन-जलादिकष्टेन बाधिताऽनिर्वहन्ती लघुना निजतनयेन सह ग्रामं गताऽसौ। ततो वृद्धिं गतेन पुत्रेण सा पृष्टा– मदीयपितुः का जीविकाऽऽसीत्?। तया प्रोक्तम्– राजसेवा। तेनोक्तम्– अहमपि तां करोमि। तया प्रोक्तम्– पुत्र! दुष्कराऽसौ महता विनयेन क्रियते। कीदृशः पुनरसौ विनयः?। तया प्रोक्तम्– सर्वस्यापि दृष्टस्य प्रणामः कार्यः, नीचैर्वृत्त्या सर्वस्यापि प्रवर्तितव्यम्, परच्छन्दानुवृत्तिपरैश्च सर्वत्र भवितव्यम्। 'एवं करिष्यामि' इत्यभ्युपगम्य चलितोऽयं राजधानीसंमुखः। मार्गे च हरिणेष्वागच्छत्सु वृक्षमूलेष्वाकृष्टधनुर्यष्टयो निलीना व्याधा दृष्टाः। तेषां च तेन महता शब्देन योत्कारः कृतः। ततस्त्रस्ताः प्रपलाय्य गता हरिणाः। ततो व्याधैः कुट्टयित्वा बद्धोऽसौ। ततस्तेनोक्तम्– जनन्याहं शिक्षितः– 'दृष्टस्य सर्वस्यापि योत्कारः कर्तव्यः' इत्यादि। ततश्च 'ऋजुरयम्' इति ज्ञात्वा मुक्तस्तैः। शिक्षितश्च यथा– 'ईदृशेष्वे निलीनैरवनतैः शब्दमकुर्वद्भिः, शनैर्वा जल्पद्भिर्निभृतमागम्यते'। तदभ्युपगम्य पुरतो गन्तुं प्रवृत्तोऽसौ। दृष्टाश्च वस्त्राणि क्षालयन्तो रजकाः। तेषां च वस्त्राणि तस्करैर्नित्यमपह्रियन्ते। ततस्तत्र दिने लगुडादिव्यग्रपाणयो रजकाः प्रच्छन्नोपविष्टा हेरयन्तस्तिष्ठन्ति। आगतश्चाजल्पन्नवनतगात्रो निलीयमानः शनैः स तत्र ग्रामेयकः। 'स एष चौरः' इति मत्वा कुट्टयित्वा बद्धोऽसौ रजकैः। सद्भावे च कथिते मुक्तस्तैः। शिक्षितश्च यथा– 'ईदृशे कस्मिंश्चिद् दृष्टे एवमुच्यते, यथा– ऊषं क्षारोऽत्र पततु, शुद्धं च भवतु' इति। इदं चाभ्युपगम्य प्रवृत्तः पुरतो गन्तुम्। ततो दृष्टं क्वचिद् ग्रामे बहुभिर्मङ्गलैः प्रथमं हलवाहनस्य दिवसकरणं क्रियमाणम्। तत उक्तम्– ऊषमित्यादि। ततस्तैरपि कृषीवलैः पिट्टितः, बद्धश्च। सद्भावे ज्ञाते मुक्तः। शिक्षितश्च यथा– 'ईदृशे क्वापि दृष्टे प्रोच्यते, यथा–गन्त्र्योऽत्र भ्रियन्ताम्, बहुत्र भवतु, सदैव चेदमस्तु' इति। अभ्युपगतं च तेनेदम्। अन्यत्र च मृतके बहिर्नीयमाने प्रोक्तमिदम्। तत्रापि कुट्टितः, बद्धश्च। सद्भावकथने च मुक्तः। शिक्षितश्च यथा– 'ईदृशं मा भूद् भवतां कदाचिदपि, वियोगश्चेदृशेनास्तु' इति। एतच्चान्यत्र विवाहे प्रोक्तम्। तत्रापि तथैव बद्धः। सद्भावे परिज्ञाते मुक्तः। शिक्षितश्च यथा– 'ईदृशे प्रोच्यते– सदैव पश्यन्त्वीदृशानि भवन्तः, शाश्वतश्च भवत्वेतत्संबन्धः, मा भूदिह वियोगः' इति। इदं चान्यत्र क्वचिद् निगडबद्धं राजानमवलोक्य ब्रुवाणस्तथैव कदर्थयित्वा मुक्तः। शिक्षितश्च यथा– 'ईदृशे वियोगः शीघ्रं भवत्वनेन, एवंविधं च मा भूत् कदाचिदपि' इत्यभिधीयते। एतच्चान्यत्र क्वचिद् राज्ञां संधौ जल्प्यमाने प्रोक्तम्। ततस्तत्रापि तथैव कदर्थितः। एवं स्थाने स्थाने कदर्थ्यमानोऽन्यदा कस्यापि विभवविप्रमुक्तठक्कुरस्य सेवां विधातुमारब्धः। तत्र चान्यदा गृहे आम्लखलिकायां सिद्धायां ग्रामसभाजनसमूहमध्ये उपविष्टस्य ठक्कुरस्य 'शीतलीभूतैषा भोक्तुमयोग्या भविष्यति' इति भार्यया तदाकारणाय प्रेषितो ग्रामेयकः। तेनापि जनसमूहस्य शृण्वतो महता शब्देनोक्तम्–आगच्छ ठक्कुर! शीघ्रमेव गृहम्, भुङ्क्ष्व आम्लखलिकाम्, शीतलीभवति लघ्वाऽसौ। ततो लज्जितष्ठक्कुरो गृहं गतः।

वत्तीए[1] अक्खेण व करंगुलाईण वा वि दव्वेणं। अक्खेहिं य दव्वेहिं अहिगरणे कप्प-कप्पेहिं ॥१३९८॥

खटिकाचूर्णनिर्मितया वर्त्याऽक्षर-पदादिकं लिखित्वा योऽनुयोगः क्रियते स द्रव्येणानुयोगः, भङ्गकचारणादिषु च योऽक्षेण क्रियते सोऽपि तथैव। 'करंगुलाईण वा वि त्ति' योऽपि वा प्राकृतत्वेन विभक्तिव्यत्ययात् कराङ्गुल्यादिना हस्ताङ्गुल्यादिद्रव्येण किंचिद् दर्शयद्भिरनुयोगः क्रियते सोऽपि द्रव्येणानुयोगो भण्यते। बहुभिश्चाक्षैर्भङ्गकचारणाद्यर्थं योऽनुयोगोऽसौ द्रव्यैरनुयोगः। अधिकरणे चैकस्मिन् कल्पद्रव्य एककम्बलनिर्मितनिषद्यारूपे समुपविष्टो यदाऽनुयोगं करोति तदा द्रव्येऽनुयोगोऽसौ; यदा तु बहुकल्पमयानिषद्याद्रव्येषु तदा द्रव्येष्वनुयोग इति। तदेवं व्याख्यातः षड्विधो द्रव्यानुयोगः ॥ १३९८ ॥

अथ षड्विधक्षेत्रानुयोगव्याख्यामाह—

पन्नत्तिजंबुदीवे[2] खेत्तस्सेमाइ होइ अणुओगो। खेत्ताणं अणुओगो दीव-समुद्दाण पन्नत्ती ॥ १३९९ ॥

क्षेत्रस्याऽनुयोगः क्षेत्रानुयोग एवमादिको भवति। कः?, इत्याह– 'पन्नत्तिजंबुदीवे त्ति' जम्बूद्वीपप्रज्ञप्तिरित्यर्थः, जम्बूद्वीपलक्षणैकक्षेत्रव्याख्यानरूपत्वात् तस्याः। बहूनां तु क्षेत्राणामनुयोगो द्वीप-सागरप्रज्ञप्तिर्भवति, बहूनां द्वीप[3]-समुद्रक्षेत्राणां तत्र व्याख्यानादिति। तदेवं 'क्षेत्रस्य क्षेत्राणामनुयोगः' इत्युक्तम् ॥ १३९९ ॥

अथ क्षेत्रेण क्षेत्रैरनुयोग इत्येतदाह—

जंबूदीवपमाणं[4] पुढविजियाणं तु पत्थयं काउं। एवं मविज्जमाणा हवंति लोगा असंखेज्जा ॥ १४०० ॥

इह जम्बूद्वीपप्रमाणं प्रस्थकं पल्यं कृत्वा पुनः पुनस्तद्भरण-विरेचनक्रमेण यदा सर्वेऽपि सूक्ष्म-बादर-पृथ्वीकायिकजीवा मीयन्ते तदाऽसंख्येयलोकाकाशप्रदेशसंख्योपेता जम्बूद्वीपप्रमाणाः प्रस्था भवन्ति, इत्येष क्षेत्रेण जम्बूद्वीपरूपेणानुयोगोऽभिधीयत इति। क्षेत्रैस्त्वनुयोगोऽयं द्रष्टव्यः, तद्यथा– बहुद्वीपप्रमाण प्रस्थकं कृत्वाऽभीक्ष्णं तद्भरण-विरेचनक्रमेण समस्तपृथ्वीकायिकजीवा मीयमाना असंख्येयलोकाकाशप्रदेशराशिपरिमाणा बहुद्वीपमानप्रस्था भवन्ति। एतदसंख्येयकं पूर्वस्माल्लघुतरं द्रष्टव्यम्, प्रस्थस्येह बृहत्तरत्वात्। एष बहुद्वीपलक्षणैः क्षेत्रैरनुयोग इति ॥ १४०० ॥

---

१ वर्त्याऽक्षेण वा कराङ्गुल्यादिनां वापि द्रव्येण। अक्षैश्च द्रव्यैरधिकरणे कल्प-कल्पैः ॥ १३९८ ॥

२ जम्बूद्वीपप्रज्ञप्तिः क्षेत्रस्यैवमादिर्भवत्यनुयोगः। क्षेत्राणामनुयोगो द्वीप-समुद्राणां प्रज्ञप्तिः ॥ १३९९ ॥ ३ घ छ.ज. 'पसागरक्षे'।

४ जम्बूद्वीपप्रमाण पृथ्वीजीवानां तु प्रस्थकं कृत्वा। एवं मीयमाना भवन्ति लोका असंख्येयाः ॥ १४०० ॥

इत्यादिसंवेगवशोत्पन्नपश्चात्तापमहानललुप्यमानान्तःकरणः प्रतिदिनमधिकतरं दुर्बलीभवत्यसौ । ततो निर्बन्धेन स्वभार्यया पृष्टो निःश्वस्य सखेदं ब्रवीति– प्रिये ! यतश्चिरकालानुपालितस्वर्गा-ऽपवर्गनिबन्धनव्रतखण्डनेनामुना कृतं मया तदकर्तव्यं यद् बालिशानामप्यविधेयम् । ततः कृशीभवाम्यहमनया चिन्तया । ततो भार्यया संवेगवशीभूतं व्यावृत्तं च तच्चेतो विज्ञाय कथितः सर्वोऽपि यथावृत्तः सद्भावः । साभिज्ञानकथनादिभिश्च समुत्पादिता प्रतीतिस्तस्य । ततः स्वस्थीभूतोऽयमिति । तदेवं स्वकलत्रमपि परकलत्राभिप्रायेण भुञ्जानस्य तस्य भावाननुयोगः, यथावस्थितावगमे तु भावानुयोगः । एवमौदयिकादिभावान् स्वरूपवैपरीत्येन प्ररूपयतो भावाननुयोगः, यथावस्थिततत्प्ररूपणे तु भावानुयोग इति ।

सप्तभिः पदैर्व्यवहरतीति साप्तपदिकः, तदुदाहरणमुच्यते— एकस्मिन् प्रत्यन्तग्रामे कोऽपि सेवकपुरुषो वसति स्म । स च साध्वादिदर्शनिनां संबन्धिनं धर्मं न कदाचिदपि शृणोति, न च तदन्तिके कदाचिदपि व्रजति, न च कस्याप्युपाश्रयं ददाति, यतो दयालुतां, परधन-परकलत्रनिवृत्त्यादिगुणप्रतिपत्तिं चैतेऽमी करिष्यन्ति, न च तां पालयितुमहं शक्नोमीति । अन्यदा च वर्षासन्नमायातास्तत्र कथमपि साधवः । तेषां च तत्र वसतिमन्वेषयतां कौतुकं दिदृक्षुभिः सेवकनरमित्रैर्ग्रामीणैरुक्तम्– अत्रेत्थंभूतो भवतामतीव भक्तोऽमुकगृहे श्रावकस्तिष्ठति । वसत्यादिना न किञ्चित् क्षूणं करिष्यति, तद् गच्छत तत्रेति । कृतं तत् तथैव तैः । स च तेषां पुरतोऽपि स्थितानां संमुखमपि नावलोकयति । तत एकेन साधुना शेषसाधूनामभिमुखमुक्तम्– स एष न भवति, वञ्चिता वा तैर्ग्रामेयकैर्वयम् । ततस्तेन संभ्रान्तेनोक्तम्– किं किं भणथ यूयम् ? । ततस्तैः कथितं सर्वमपि तद्ग्राम्यभाषितम् । ततस्तेन चिन्तितम्– अहो ! मत्तोऽपि ते निकृष्टा यैरेतेऽपि प्रवञ्चिताः । तस्माद् मा भूवन्नमी, अहं च तदुपहासपात्रम् । अतोऽनिष्टमपि करोम्येतत् । इति विचिन्त्योक्तम्– तिष्ठत मम निराकुलाः शालायामेतस्याम्, परं मम धर्माक्षरं न कथनीयम् । प्रतिपन्नमेतत् तैः । स्थिताश्च सुखेन तत्र चतुर्मासकाल्ययं यावत् । ततो विजिहीर्षुभिस्तैरनुव्रजनार्थमागतस्य शय्यातरस्य कल्पोऽयमिति दत्ताऽनुशास्तिः । ततो मद्य-मांस-जीवघातादिविरतिं कर्तुमशक्नुवतस्तस्यातिशयज्ञानितयाऽग्रे प्रतिबोधगुणं पश्यद्भिर्गुरुभिः साप्तपदिकं व्रतं दत्तम्– कश्चित् पञ्चेन्द्रियप्राणिनं जिघांसुना यावता कालेन सप्त पदान्यवष्टभ्यन्ते तावन्तं कालं प्रतीक्ष्य हन्तव्योऽसाविति । प्रतिपन्नमेतत् तेन । गताश्च साधवोऽन्यत्र । अन्यदा चासौ सेवकनरश्चौर्यार्थं गतः क्वापि । ततोऽपशकुनादिकारणेन स्वल्पेनैव कालेन प्रतिनिवृत्तः । कीदृशो मत्परोक्षे मदीयगृहे समाचार इति जिज्ञासुर्निशीथे प्रच्छन्न एव प्रविष्टो निजगृहे । तस्मिंश्च दिने तस्य भगिनी ग्रामान्तरादागता । तया च केनापि हेतुना विहितपुरुषनेपथ्यया नटा नृत्यन्तो निरीक्षिताः । ततोऽतीवप्रबलनिद्रावशात् कृतपुरुषवेषैव भ्रातृजायासमीपे प्रदीपालोकादिरम्यवासभवनगतपल्यङ्क

प्रथमपौरुष्यां किल सूत्रमध्येतव्यम्, द्वितीयपौरुष्यां तु तस्यानुयोगः प्रवर्तते । अत इह कालस्य प्राधान्येन विवक्षणात् काले द्वितीयपौरुषीलक्षणेऽनुयोगः कालानुयोग इत्युच्यते। तथा, अवसर्पिण्यां सुषमदुःषमा-दुःषमसुषमा-दुःषमारूपासु तिसृषु 'समासु त्ति' अरकेषु अनुयोगः प्रवर्तते, नान्यत्र । उत्सर्पिण्यां तु दुःषमसुषमा-सुषमदुःषमारूपयोः समयोर्द्वयोररकयोरनुयोगः प्रवर्तते, नान्यत्र। अयं च कालेष्वनुयोगः कालानुयोगोऽभिधीयते । तदेवं भणितः षड्विधकालानुयोगोऽपि। अथ वचनानुयोगमाह– 'वयणस्सेत्यादि' इत्थंभूतमेकवचनं भवति, एवंभूतं वा द्विवचनम्, ईदृशं वा बहुवचनम्, एवंस्वरूप एकवचनाद्यन्यतरवचनस्य योऽनुयोगः, अयं वचनस्यानुयोग उच्यते । वचनानां त्वनुयोगः षोडशवचनानुयोगः। कानि पुनस्तानि षोडश वचनानि ?। उच्यते—

' [1]लिंगतियं वयणतियं कालतियं तह परुक्ख-पच्चक्खं । उवणय-ऽवयणचउद्धा अज्झत्तं होइ सोलसमं ॥ १ ॥ '

एषाऽपि गाथा विनेयानुग्रहार्थं व्याख्यायते– इयं स्त्री, अयं पुरुषः, इदं कुलमिति त्रीणि लिङ्गप्रधानानि वचनानि लिङ्गत्रिकमुच्यते । एकः, द्वौ, बहव इत्येकत्वाद्यभिधायकशब्दत्रयं वचनत्रयमभिधीयते । अकरोत्, करोति, करिष्यतीति भूतादिकालत्रयप्रतिपादकं वचनं कालत्रिकं कालप्रतिपादकवचनत्रयमित्यर्थः । तथा, 'सः' इति परोक्षार्थनिर्देशः परोक्षवचनम्। 'अयम्' इति प्रत्यक्षनिर्देशः प्रत्यक्षवचनम् । उपनयः स्तुतिः । अपनयस्तु निन्दा, तयोर्वचनं चतुर्धा, तद्यथा– 'रूपवती स्त्री' इत्युपनयवचनम्, 'कुरूपा स्त्री' इत्यपनयवचनम् । 'रूपवती स्त्री, किन्तु कुशीला' इत्युपनया-ऽपनयवचनमिति । 'कुरूपा स्त्री, किन्तु सुशीला' इत्यपनयो-पनयवचनमिति । यत्रान्यच्चेतसि निधाय विप्रतारकबुद्ध्याऽन्यद् विभणिषुरपि सहसा यच्चेतसि तदेव वक्ति, तत् षोडशमध्यात्मवचनमिति । एतत् षोडशवचनव्याख्यानं वचनानामनुयोगः । अत्र प्रथमैकवचनादीनामेकविंशतिवचनानां व्याख्या वचनानामनुयोग इत्यपि द्रष्टव्यमिति । तदेवं वचनस्य वचनानामित्युक्तम् ॥ १४०३ ॥

अथ वचनेन वचनैर्वचनेऽनुयोगः, इत्येतदाह—

[2]वयणेणायरियाई एक्केणुत्तो बहूहिं वयणेहिं । वयणे खओवसमिए वयणेसु उ नत्थि अणुओगो ॥ १४०४ ॥

वचनेनानुयोगो यथा– कश्चिदाचार्यादिः साध्व्यादिना सकृदेकेनापि वचनेनाऽभ्यर्थितोऽनुयोगं करोति । वचनैस्त्वनुयोगः–

१ लिङ्गत्रिकं वचनत्रिकं तथा परोक्ष-प्रत्यक्षे । उपनया-पनययोश्चतुर्धाऽध्यात्मं भवति षोडशम् ॥ १ ॥
२ वचनेनाचार्यादिरेकेनोक्तो बहुभिर्वचनैः । वचने क्षायोपशमिके, वचनेषु तु नास्त्यनुयोगः ॥ १४०४ ॥

तया । ततो 'नूनं मदीयपुत्रो मारयित्वा भक्षितोऽनेन' इति विचिन्त्य कोपावेशाद् मुसलेन हत्वा मारितो नकुलः, गता च पुत्रसमीपे। दृष्टश्च पुत्रेण सह विनष्टः सर्पः। ज्ञातं च यथा सर्पेण पुत्रः, नकुलेन तु सर्पो निहतः। ततो हन्त! इत्थं निरपराधोऽपि, उपकार्यपि मया निकृष्टया हतो वराको नकुल इति विचिन्त्य द्विगुणतरं शोकमापन्ना। पूर्वमनपराधिनमप्यपराधिनं विज्ञाय नकुलं घ्नत्यास्तस्या भावाननुयोगः, यथावत्परिज्ञाने तु भावानुयोग इति। प्रस्तुतयोजना त्वनन्तरोक्तवदिति।

अथ कमलामेलोदाहरणम्– तत्र द्वारवत्यां नगर्यां वलदेवपुत्रो निषधः। तस्यापि पुत्रः सागरचन्द्रः। स च रूपेणातीवोत्कृष्टः, शम्बादीनां च कुमाराणां सर्वेषामप्यतिप्रियः। तस्यामेव च द्वारवत्यां नगर्यामन्यस्य राज्ञो दुहिता कमलामेला नाम समस्ति। सा चोग्रसेनतनयस्य नभःसेनकुमारस्य दत्ता, अवृता च तिष्ठति। अन्यदा च तत्र नारदः सागरचन्द्रस्य समीपं गतः। तेनाऽप्यभ्युत्थित उपवेश्य प्रणम्य च पृष्टः– दृष्टं भगवन्! आश्चर्यं किमपि क्वापि? । नारदेनोक्तम्– दृष्टं कमलामेलाभिधानराजपुत्रिकाया न खलु ममैव, किन्तु भुवनत्रयस्याऽप्याश्चर्यकारि रूपम्। सागरचन्द्रेणोक्तम्– किं दत्ता कस्यचित् सा?। नारदेनोक्तम्– दत्ता, परं नाद्यापि परिणीता। कथं पुनर्मम सा संपत्स्यते? इति सागरचन्द्रेणोक्ते 'न जानाम्येतदहम्' इत्यभिधाय गतो नारदः। सागरचन्द्रस्तु तद्दिनादारभ्य न शयानो नाप्यासीनः क्वापि रतिं लभते। तामेव कन्यकां फलकादिष्वालिखत्। तन्नाममन्त्रजापं चानवरतं कुर्वन्नास्ते। नारदोऽपि कमलामेलान्तिकं गतः। तयापि तथैवाश्चर्यं किमपि दृष्टमिति पृष्टः कलहदर्शनप्रियतया स प्राह– दृष्टमाश्चर्यद्वयं मया, सागरचन्द्रे सुरूपत्वम्, नभःसेने तु कुरूपत्वम्। ततो झगित्येव सा विरक्ता नभःसेने, अनुरक्ता च सागरचन्द्रे। तत्प्राप्तिचिन्तातुरा च समाश्वासिता नारदेन सा। वत्से! स्थिरीभव, संपत्स्यतेऽचिरादेव तवाऽयम्। इत्युक्त्वा गतः सागरचन्द्रसमीपे 'वत्स! इच्छति त्वां सा' इत्यभिधाय च गतः। ततो विरहावस्थाव्यथिते प्रलपति च सागरचन्द्रे आर्तः सर्वोऽपि मात्रादिस्वजनवर्गः। खिद्यन्ते यादवाः। तदन्तरे समायातः कथमपि सागरचन्द्रसमीपे शम्बकुमारः। दृष्टश्च तेनाऽसौ तदवस्थः। ततः पृष्ठतस्तस्य स्थित्वा हस्तद्वयेनाच्छादिते तदक्षिणी शम्बेन। सागरचन्द्रेणोक्तम्– किं कमलामेला?। शम्बेनोक्तम्– नाहं कमलामेला, किन्तु कमलामेलोऽहम्। ततः सागरचन्द्रेण 'शम्बोऽयम्' इति ज्ञात्वा प्रोक्तम्– सत्यमेतत्, त्वमेव मम कमलदीर्घलोचनां कमलामेलां मेलयिष्यसि, कोऽत्रार्थेऽन्यः समर्थः? इति। ततोऽन्यैर्यदुकुमारैः पीतमद्यः परवशीभूतः शम्बो ग्राहितस्तद्दापनप्रतिज्ञाम्। उत्तीर्णे च मदभावे विचिन्तितं शम्बेन– अहो! आलं मयाऽभ्युपगतम्, अशक्यं ह्येतद् वस्तु, कथमियं प्रतिज्ञा निर्वाहयिष्यते?। ततः प्रद्युम्नपार्श्वात् प्रज्ञप्तिविद्या याचिता शम्बेन। विवाहदिवसे च वहुभिर्यादवकुमारैः परिवृतेन तेन सुरङ्गां पातयित्वा पितृगृहादाकृष्य नीता वहिरुद्याने कमलामेला।

तथा, श्रुतपर्यवजातं श्रुतपर्यायराशिर्ममापि वृद्धिं यास्यति, श्रुतस्य चाव्यवच्छित्तिर्भविष्यतीति। एवं पञ्चभिरभिप्रायैः श्रुतं सूत्रार्थतो वाचयेदिति। एषामेव संग्रहादिभावानां मध्याद् द्वि-त्र्यादिभिर्भावैः सर्वैर्वाऽनुयोगं कुर्वतो भावैरनुयोगः। क्षायोपशमिके भावे स्थितस्य व्याख्यां कुर्वतो भावेऽनुयोगः। भावेषु पुनर्नास्त्यनुयोगः, क्षायोपशमिकत्वेन तस्यैकत्वात्। अथवा, एकोऽपि क्षायोपशमिको भाव आचारादिशास्त्रलक्षणविषयभेदाद् भिद्यते। ततश्चाचारादिशास्त्रविषयभेदभिन्नेषु क्षायोपशमिकभावेष्वप्येष भवत्यनुयोगः, न कश्चिद् विरोधः। 'वा' इति अथवा, स्वामित्वमासाद्यानुयोगकर्तृस्वामिनो बहून् प्रतीत्य क्षायोपशमिकपारिणामेषु बहुष्वनुयोगप्रवृत्तेर्भावेष्वनुयोगो न विहन्यते। इत्युक्तः षड्विधो भावानुयोग इति ॥ १४०६ ॥ १४०७ ॥

एषां चानुयोगविषयाणां द्रव्यादीनां परस्परं यस्य यत्र समादेशः, भजना वा, तदेवाह—

दव्वे[2] नियमा भावो न विणा ते यावि खेत्त-कालेहिं। खेत्ते तिण्ह वि भयणा कालो भयणाए तीसुं पि ॥१४०८॥

द्रव्ये तावद् नियमाद् भावः पर्यायोऽस्ति, पर्यायविरहितस्य द्रव्यस्य क्वापि कदाचिदप्यभावात्। तावपि द्रव्य-भावौ क्षेत्र-कालाभ्यां विना न संभवतः। द्रव्य-भावयोर्हि नियमवान् सहभावो दर्शित एव। द्रव्यं चावश्यकं क्वचित् क्षेत्रेऽवगाढमन्यतरास्थितिमदेव च भवति। अतः सिद्धमिदम्— द्रव्य-भावावपि क्षेत्र-कालाभ्यां विना क्वापि न भवतः। क्षेत्रे तु त्रयाणामपि द्रव्य-काल-भावानां भजना विकल्पना— क्वापि तत्र ते प्राप्यन्ते, क्वापि नेत्यर्थः, लोकक्षेत्रे त्रयाणामपि भावात्, अलोकक्षेत्रेऽभावादिति।

आह— अलोकक्षेत्रेऽप्याकाशलक्षणं द्रव्यमस्ति, वर्तनादिरूपस्तु कालः, अगुरुलघवश्चानन्ताः पर्यायाः सन्त्येव; तत् कथं तत्र द्रव्य-काल-भावानामभावः ?। सत्यम्, किन्त्वाकाशलक्षणं द्रव्यं यत् तत्रोच्यते, तदयुक्तम्, तस्य क्षेत्रग्रहणेनैव गृहीतत्वात्। कालस्यापीह समयादिरूपस्य चिन्तयितुं प्रस्तुतत्वात्, तस्य च समयक्षेत्रादन्यत्राभावात्, वर्तनादिरूपस्य त्वत्राविवक्षितत्वात्, क्षेत्रग्रहणेनैव तत्र तस्य गृहीतत्वाच्च। पर्यायाश्चेह धर्मा-ऽधर्म-पुद्गल-जीवास्तिकायद्रव्यसंबन्धिनो विवक्षिताः, ते चालोके न सन्त्येव। आकाशसंबन्धिनस्त्वगुरुलघुपर्यायाः क्षेत्रग्रहणेनैव गृहीतत्वाद् नेह विवक्षिताः। इत्यतोऽलोके त्रयाणामपि द्रव्य-काल-भावानामभावः। 'कालो भयणाए तीसुं पि त्ति' द्रव्य-क्षेत्र-भावेषु त्रिष्वपि कालो भजनया विकल्पनया भवति, समयक्षेत्रान्तर्वर्तिषु तेषु तस्य भावात्, तद्बहिस्त्वभावादिति। एवं च स्थितानाममीषां द्रव्यादीनां यथासंभवमनुयोगः प्रवर्तत इति ॥ १४०८ ॥

१ घ. छ. 'षामिति सं'। २ द्रव्ये नियमाद् भावो न विना तौ चापि क्षेत्र-कालाभ्याम्। क्षेत्रे त्रयाणामपि भजना कालो भजनया त्रिष्वपि ॥ १४०८ ॥

सर्वथाप्यनावरणो मेरुशिखरमिव निष्कम्पः प्रतिमाप्रतिपन्नोऽभिभवकायोत्सर्गे स्थितः संध्यायां दृष्टः कोऽपि तपस्वी। गताऽसौ तद्गुणानेव मनसि ध्यायन्ती गृहम्। सुप्ता च रजन्यामनेकशीतातपहर्तृप्रावरणप्रावृता पल्यङ्के। निर्गतश्च प्रावरणेभ्यो बहिस्तात् कथमप्येकः करः। शीताभिभूतश्चायमतीव स्तब्धीभूतः। तदनुसारेण च समस्तमपि शरीरं तथा व्याप्तं शीतेन, यथा निद्राभरेऽपि जागरितं तया। ततः क्षिप्तो हस्तः प्रावरणमध्ये। स्थितश्च हृदये स तथाकायोत्सर्गस्थायी महामुनिः। ततस्तद्गुणोत्पन्नातुच्छबहुमानया विस्मितया च प्रोक्तं तया– 'स तपस्वी किं करिष्यति ?' इति। 'यद्येकेनाप्यावरणबहिर्निर्गतेन हस्तेनाऽहमेतावतीं शीतबाधां प्राप्ता, तदरण्ये निरावरणो रूक्षस्तपःकर्षितश्चैवंविधमहाशीतबाधितः स तपस्वी किं करिष्यति ?' इति तस्याश्चित्ताभिप्रायः। अयं चेर्ष्यालुतया श्रेणिकनृपस्यान्यथा परिणतः– 'नूनमनया कस्यापि संकेतो दत्तः, तदन्तिके च मयि संनिहिते गन्तुं न शकिता, ततस्तच्चित्तखेदं चेतसि निधायैतदुक्तम्।' ततो महता खेदेन तस्य विभाता रजनी। चलितः श्रीमन्महावीरस्यान्तिकम्। गच्छता चातिकोपावेशाद् निरूपितोऽभयकुमारः– सर्वाभिरेवान्तःपुरिकाभिः सह प्रदीपय सर्वाण्यप्यन्तःपुरगृहाणि। ततोऽभयकुमारेण चिन्तितम्– केनाऽप्यभिनवोत्पन्नकोपावेशेनैवमसौ वक्ति। प्रथमकोपे च यदुच्यते तत् क्रियमाणं न खलु परिणतौ सुखयति। अथवा, अनुवर्तनीयं गुरूणां वचनम्। अतः शून्यां हस्तिशालामेकां प्रदीप्य प्रस्थितः सोऽपि भगवद्वन्दनार्थम्। इतश्च भगवान् पृष्टः श्रेणिकराजेन– भगवन्! चेल्लणा किमेकपत्नी, अनेकपत्नी वा ?। भगवता प्रोक्तम्– एकपत्नीति। ततो निवृत्तः सत्वरमेव गृहाभिमुखमभयकुमारनिवारणाय। मार्गे चागच्छन् वीक्षितोऽसौ। पृष्टश्च– किं दग्धमन्तःपुरम् ?। तेनोक्तम्– दग्धम्। राज्ञा कुपितेनाभ्यधायि– त्वमपि तत्रैव प्रविश्य किं न दग्धोऽसि ?। कुमारेण प्रोक्तम्– किं ममाग्निप्रवेशेन, व्रतमेव ग्रहीष्याम्यहम्। ततो मा भूदस्य महान् खेद इति कथितं यथावदेवेति। तदत्र सुशीलामपि चेल्लणां कुशीलां मन्यमानस्य राज्ञो भावाननुयोगः, यथावदवगमे च तदनुयोगः। एवमौदयिकादिभावान् विपरीतस्वरूपान् प्ररूपयतो भावाननुयोगः, यथावस्थितस्वरूपांस्तु तान् प्ररूपयतो भावानुयोग इति। तदेवमर्थैकार्थिकानि प्रतिपादयता यदुक्तम्– '[1]अणुओगो य निओगो भास-विभासा य' इत्यादि, तत्र सनिक्षेपः, सोदाहरणश्चाभिहितोऽनुयोगः, तत्प्रतिपक्षत्वेनाननुयोगश्च ॥ १४१८ ॥

सांप्रतं नियोगस्वरूपमभिधित्सुर्भाष्यकारः प्राह—

[2]नियओ व निच्छिओ वा हिओ व जोगो मओ निओगो त्ति। नेओ सभेअ-लक्खण-सोदाहरणोऽणुओगो व्व॥१४१९॥



१ गाथा १३८५। २ नियतो वा निश्चितो वा हितो वा योगो मतो नियोग इति। ज्ञेयः सभेद लक्षण-सोदाहरणोऽनुयोग इव ॥ १४१९ ॥

द्वयम्, तद्यथा– बधिरोल्लापः, ग्रामेयकश्च। भावे तु सप्तोदाहरणानि भवन्ति, तद्यथा– श्रावकभार्या, साप्तपदिकः पुरुषः, कोङ्कणकदारकः, नकुलः, कमलामेला, शम्बस्य साहसम्, श्रेणिककोपश्च ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ १४११ ॥ १४१२ ॥

अथ विस्तरतो 'वच्छगगोणी-' उदाहरणं भाष्यकारः प्राह—

[1]खीरं न देइ सम्मं परवत्थनिओगओ जहा गावी। छड्डेज्ज च परदुद्धं करिज्ज देहोवरोहं वा ॥ १४१३॥

यथा काचिच्छबलादिका गौरन्यस्या बहुलादिकायाः संबन्धिनि गोदोहकेन वत्से निर्युक्ते सत्यननुयोगोऽयमिति कृत्वा तन्नियोगतः क्षीरं दुग्धं सम्यग् न ददाति। अथवा, न तावता तिष्ठेत्, किन्तु परदुग्धमन्यस्या अपि गोः सत्कं दुग्धमग्रेऽपि गोदोहनिकाया व्यवस्थितमुल्ललन्ती छर्दयेत् त्याजयेत्। यदिवा, देहोपरोधं लताप्रहारादिभिर्जानुभङ्गादिना देहबाधामपि कुर्यादित्यर्थः ॥१४१३॥

तथा किम् ?, इत्याशङ्क्य प्रस्तुतं योजयन्नाह—

[2]तह न चरणं पसूते परपज्जायविणिओगओ दव्वं। पुव्वचरणोवघायं करेइ देहोवरोहं वा ॥ १४१४ ॥

जिणवयणासायणओ उम्माया-ऽऽतंक-मरणवसणाइं। पावेज्ज सव्वलोयं स बोहिलाहोवघायं च ॥१४१५॥

दव्वविवज्जासाउ साहणभेओ तओ चरणभेओ। तत्तो मोक्खाभावो मोक्खाभावेऽफला दिक्खा॥१४१६॥

तथाऽत्रापि व्याख्याता यदा जीवादिद्रव्यमजीवादिधर्मैः प्ररूपयति, अजीवादिद्रव्यं वा जीवादिधर्मैः प्ररूपयति। तदित्थं प्ररूप्यमाणं तद् द्रव्यमनुयोगतो दुग्धस्थानीयं चरणं चारित्रं न प्रसूते– परपर्यायविनियोगतो विपर्यासात् तद्धेतुस्तद् न भवतीत्यर्थः। न चैतावता तिष्ठति, किन्त्वित्थमननुयोगं कुर्वतः पूर्वप्राप्तचरणोपघातं च करोति। तथा, इत्थमविधिप्ररूपणप्रवृत्तस्य रोगाद्युत्पत्तेर्देहस्याप्युपरोधं बाधां विदधाति। किञ्च, इत्थं जिनवचनाशातनोत्पत्तेरुन्मादा-ऽऽतङ्क-मरणव्यसनान्यपि प्राप्नुयात्। तथा, सर्वव्रतलोपम्, बोधिलाभोपघातं च प्राप्नुयादिति। ननु कथं विपर्ययप्ररूपणामात्रादेवैतावन्तो दोषाः स्युः ?, इत्याह– 'दव्वविवज्जासेत्यादि' विपरीतप्ररूपणे हि द्रव्यस्य विपर्यासो भवति, तथा च सति साधनस्य सम्यग्ज्ञानादेर्भेदोऽन्यथाभावो जायते। ततः साधनभेदाच्चरणभेदः,

१ क्षीरं न ददाति सम्यक् परवत्सनियोगतो यथा गौः। छर्दयेच्च परदुग्धं कुर्याद् देहोपरोधं वा ॥ १४१३ ॥
२ तथा न चरणं प्रसूते परपर्यायविनियोगतो द्रव्यम्। पूर्वचरणोपघातं करोति देहोपरोधं वा ॥ १४१४ ॥
जिनवचनाशातनत उन्मादा-ऽऽतङ्क-मरणव्यसनानि। प्राप्नुयात् सर्वलोपं स बोधिलाभोपघातं च ॥ १४१५ ॥
द्रव्यविपर्यासात् साधनभेदस्ततश्चरणभेदः। ततो मोक्षाभावो मोक्षाभावेऽफला दीक्षा ॥ १४१६ ॥

रायाः लाभः समायः स एव सामायिकम्। इत्यादिका सर्वाऽपि विभाषाऽभिधीयत इति ॥ १४२१ ॥

अथ वार्तिकस्वरूपमाह—

[1]वित्तीए वक्खाणं वत्तियमिह सव्वपज्जवेहिं वा। वि[2]त्तीओ वा जायं जम्मि वा जह वत्तए सुत्ते ॥१४२२॥

वृत्तेः सूत्रविवरणस्य व्याख्यानं भाष्यं वार्तिकमुच्यते। यथेदमेव विशेषावश्यकम्। अथवा, उत्कृष्टश्रुतवतो गणधरादेर्भगवतः सर्वपर्यायैर्यद् व्याख्यानं तद् वार्तिकम्। वृत्तेर्वा सूत्रविवरणाद् यदायातं सूत्रार्थानुकथनरूपं तद् वार्तिकम्। यदिवा, यस्मिन् सूत्रे यथा वर्तते सूत्रस्यैवोपरि गुरुपारम्पर्येणायातं व्याख्यानं तद् वार्तिकमिति ॥ १४२२ ॥

एवं च सति यस्य संबन्धि व्याख्यानं वार्तिकमुच्यते, तदाह—

[3]उक्कोसयसुयनाणी निच्छयओ वत्तियं वियाणाइ। जो वा जुगप्पहाणो तओ व जो गिण्हए सव्वं॥१४२३॥

उत्कृष्टश्रुतज्ञान्येव निश्चयनयमतेन तावद् वार्तिकं कर्तुं विजानाति, नान्यः। यो वा यस्मिन् युगे प्रधानो भद्रबाहुस्वाम्यादिर्भवति। ततो वा युगप्रधानाद् यः स्थूलभद्रस्वाम्यादिः सर्वं श्रुतं गृह्णाति स वार्तिकक्कादिति ॥ १४२३ ॥

[4]अथ भाषक-विभाषक-वार्तिकविद एवान्यथा प्रतिपिपादयिषुराह—

[5]ऊणं सममहियं वा भणियं भासंति भासगाइया। अहवा तिण्णवि साहेज्ज कट्ठकम्माइनाएहिं ॥१४२४॥

अनुयोगाचार्येण यद् भणितं व्याख्यातं तस्मादूनं योऽन्यस्य भाषते व्याचष्टे स भाषक उच्यते। तद्व्याख्यातस्य समं तु भाषमाणो विभाषकः। प्रज्ञातिशयवांस्तदधिकं भाषमाणो वार्तिकक्कादिति। अथवा, किमेतेन बहुना ?, त्रीनप्येतान् भाषकादीननन्तरवक्ष्यमाणकाष्ठकर्मादिभिर्ज्ञातैरुदाहरणैः साधयेत् कथयेदिति। अनन्तरनिर्युक्तिगाथाप्रस्तावनेयम् ॥ इति द्वादशगाथार्थः ॥ १४२४ ॥

तान्येव काष्ठकर्माद्युदाहरणान्याह—

[6]कट्ठे पोत्थे चित्ते सिरिघरिए पोंड-देसिए चेव। भासग-विभासए वा वत्तीकरणे य आहरणा ॥ १४२५ ॥

---

१ वृत्तेर्व्याख्यान वार्तिकमिह सर्वपर्यवैर्वा। वृत्तितो वाऽऽयात यस्मिन् वा यथा वर्तते सूत्रे ॥ १४२२ ॥ २ छ 'वत्ती'
३ उत्कृष्टश्रुतज्ञानी निश्चयतो वार्तिक विजानाति। यो वा युगप्रधानस्ततो वा यो गृह्णाति सर्वम् ॥ १४२३ ॥ ४ क ग छ 'थवा भा'।
५ ऊन सममधिकं वा भणित भाषन्ते भाषकादिका.। अथवा त्रीनपि कथयेत् काष्ठकर्मादिज्ञातैः ॥ १४२४ ॥
६ काष्ठे पुस्ते चित्रे श्रीगृहिके पोण्ड-देशिकयोश्चैव। भाषक विभाषकयोर्वा वृत्तिकरणे चोदाहरणानि ॥ १४२५ ॥

स्वल्पपरिच्छदो भूत्वा सैन्यस्य पुरत एव यास्यामि, एतच्च विपरीतमापन्नम्, तत्कथमिदं कटकलोकेन विज्ञातम्?; इति परम्परया शोधयता विज्ञाता कुब्जा। पृष्टया च तया कथितं सर्वमपि यथावृत्तम्। तदत्र सभामण्डपकादिक्षेत्रेण निष्ठीवनस्यानुयोगः, निष्ठीवनादिरक्षण-प्रमार्जनो-पलेपनादिकस्त्वनुयोगः। एवमेकान्तनित्यम्, एकम्, अप्रदेशं चाकाशं प्ररूपयतोऽननुयोगः, स्याद्वादलाञ्छितं तु तदेव प्ररूपयतोऽनुयोग इति।

कालाननुयोगा-ऽनुयोगयोः स्वाध्यायदृष्टान्तः, तद्यथा—एकः साधुः प्रादोषिककालग्रहणानन्तरं कालिकश्रुतमतीतामपि तद्गुणनवेलामजानानः परावर्तयते। ततः सम्यग्दृष्टिदेवतया चिन्तितम्— बोधयाम्यमुम्, मा भूद् मिथ्यादृष्टिदेवता छलमस्य। ततो मथितकारिकारूपेण मथितभृतमेव घटं मस्तके निधाय तस्यैव साधोरन्तिके गतागतानि कुर्वती 'मथितं लभ्यते' इति महता शब्देन पुनः पुनर्घोषयन्ती परिभ्रमति। ततोऽत्युद्वेजितेन साधुना प्रोक्तम्— अहो! भवत्यास्तक्रविक्रयवेला। ततो मथितकारिकयाऽप्यत्राभिहितम्— अहो! तवापि स्वाध्यायवेला। ततो विस्मितः साधुरुपयुज्य मिथ्यादुष्कृतं ददाति। ततः 'अकालस्वाध्यायविधानेन मिथ्यादृष्टिदेवताविहितच्छलानि भवन्ति, अतः पुनरप्येवं मा कार्षीस्त्वम्' इत्यादि साधुर्देवतयाऽनुशासित इति। एष स्वाध्यायस्य कालाननुयोगः, काले तु पठतस्तदनुयोगः। प्रस्तुतेऽपि कालधर्माणां वैपरीत्या-ऽवैपरीत्यप्ररूपणेऽननुयोगा-ऽनुयोगौ वाच्याविति।

अथ वचनविषयमननुयोगा-ऽनुयोगयोरुदाहरणद्वयमुच्यते। तत्र प्रथमं बधिरोल्लापः। तत्र चैकस्मिन् ग्रामे बधिरं कुटुम्बं परिवसति— स्थविरः, स्थविरा, पुत्रः, वधूश्च। अन्यदा च पुत्रः क्षेत्रे हलं वाहयन् पथिकैर्मार्गं पृष्टो बधिरतया ब्रवीति— गृहजातौ मम बलीवर्दाविमौ, न पुनरन्यस्य सत्कौ। ततो 'बधिरोऽयम्' इति विज्ञाय गताः पथिकाः। ततो भक्तं गृहीत्वा वधूः समायाता। भृङ्गितौ पथिकैर्बलीवर्दावित्यादि निवेदितं ततस्तस्याः। तया च प्रोक्तम्— 'क्षारमलवणं वेति न जानाम्यहम्, एतत् त्वदीयजनन्यैव हि संस्कृतम्। ततो गृहं गतया तयापि क्षारादिभणनव्यतिकरो निवेदितः। स्थविरया च कर्तयन्त्या प्रोक्तम्— स्थूलं सूक्ष्मं वा भवतु, इदं स्थविरस्य परिधानं भविष्यति। निवेदितं चैतत् सानुशयचित्तया स्थविरया गृहमागतस्य स्थविरस्य। तेनापि विभ्यता प्रोक्तम्— तव जीवितं पिबामि, यद्येकमपि तिलमहं भक्षयामीति। एवमेकवचनादिकमप्युक्तं द्विवचनादितया यः शृणोति, तथैव चान्यस्य प्ररूपयति, तस्याननुयोगः, यथावच्छ्रवणप्ररूपणे त्वनुयोग इति।

वचनानुयोगस्यैवेह प्राधान्यख्यापनार्थं वचनविषयमेव द्वितीयं ग्रामेयकोदाहरणमुच्यते— तत्र चैकस्मिन् नगरे कस्याश्चिद् महि- 

१ क.ग.छ. 'प्रदोषिका'।

पुस्तदृष्टान्तं व्याख्यातुमाह—

[1]पोत्थं दिट्ठागारं दिट्ठावयवं समत्तपज्जायं । जह, तह सुत्तं भासा विभासणं वत्तियं चेव ॥ १४२८ ॥

यथा पुस्तं लेप्यं प्रथममिन्द्रादिसंबन्धिरूपस्य दृष्टाकारमात्रं भवति । ततः क्रमेण दृष्टतदवयवम्, ततोऽपि क्रमाद् निर्वर्तित-निःशेषतत्पर्यायं संपद्यते, तथा सूत्रमाश्रित्य भाषा, विभाषा, वार्तिकं च जघन्य-मध्यमो-त्तमव्याख्यानरूपं यथासङ्ख्यं ज्ञेयमिति ॥१४२८॥

चित्रदृष्टान्तं विवरीषुराह—

[2]कुड्डे वत्तीलिहियं वण्णुब्भिन्नं समत्तपज्जायं । जह, तह सुत्तं भासा विभासणं वत्तियं चरिमं ॥ १४२९॥

यथा किञ्चिदिह मसृणं धवलं कुड्यम् । तच्च प्रथमं वर्तिकाभिस्तदालेख्यरूपकाणां लिखिताकारमात्रं भवति । ततश्च वर्णकोद्भिन्नं संपद्यते, हरितालादिवर्णकैरुन्मीलितं गौरवर्णादिस्वरूपं भवतीत्यर्थः । ततः समस्ताः समाप्ता वा पर्याया आलेख्यधर्मा निष्पन्ना यत्र तत् समस्तपर्यायम्, समाप्तपर्यायं वा भवति– सर्वात्मना निष्पन्नं भवतीत्यर्थः । तथाच कुड्यस्थानीयं सूत्रम् । तत्र भाषा, विभाषा, वार्तिकं च चरमं तृतीयं भवतीति ॥ १४२९ ॥

श्रीगृहिकोदाहरणार्थमाह—

[3]भाणे जाई-माणं गुणे य रयणाणं मुणइ सिरिघरिओ । जह, तह सुयभाणे भासगादओऽत्थरयणाणं ॥१४३०॥

श्रीगृहिको भाण्डागारिकः, स च यथा कश्चिद् 'रत्नान्यत्र ताम्रकरण्डिकादिभाजने सन्ति' इत्येवं मुणतीति सोपस्कारं व्याख्येयम् । अपरस्तु तेषामेव रत्नानां जातिं मानं च जानाति । अन्यस्तु ज्वरादिरोगापहर्तृत्व-क्षुत्-पिपासा-श्रमापनेतृत्वादींस्तद्गुणानपि वेत्ति । अथवा, अन्यथा योज्यते– यथा श्रीगृहिकः कश्चिद् रत्नभाजने मरकतादिकां तज्जातिं जानाति, अपरस्तु माष-वल्ल-गद्याणादिकादिकं तन्मानमपि बुध्यते; अन्यस्तु पूर्वोक्तांस्तद्गुणानपि समस्तान् वेत्ति; तथा रत्नभाजनस्थानीये श्रुते स्तोक-बहु-बहुतरार्थवेत्तारो भाषकादयो विज्ञेया इति ॥ १४३० ॥

---

1 पुस्तं दृष्टाकारं दृष्टावयवं समस्तपर्यायम् । यथा, तथा सूत्र भाषा विभाषण वार्तिक चैव ॥ १४२८ ॥
2 कुड्ये वर्तिलिखितं वर्णोद्भिन्नं समस्तपर्यायम् । यथा, तथा सूत्र भाषा विभाषण वार्तिकं चरमम् ॥ १४२९ ॥
3 भाजने जाति-माने गुणाश्च रत्नाना जानाति श्रीगृहिक. । यथा, तथा श्रुतभाजने भाषकादयोऽर्थरत्नानाम् ॥ १४३० ॥

ततो गाढं ताडयित्वा शिक्षितः, यथा–'नेत्थं पूत्कुर्वाणैर्गृहप्रयोजनानि भण्यन्ते, किन्तु वस्त्रेण मुखं स्थगयित्वा कर्णाभ्यर्णे च स्थित्वा शनैः कथ्यन्ते। ततोऽन्यदा वह्निदीप्ते गृहे गतोऽसौ राजसभायां शनैरग्रतः स्थित्वा वस्त्रं च मुखद्वारे दत्त्वा कथितं च तस्य कर्णे। ततः संभ्रमाद् धावितो गृहाभिमुखं ठक्कुरः। दग्धं च ससर्वस्वं सर्वमपि गृहम्। ततः कुपितेन वाढं ताडितोऽसौ ठक्कुरेण। भणितश्च– निर्लक्षण! प्रथममेव धूमे निर्गते जलाचाम्ल-धूलि-भस्मादिकं किमिति त्वया न निक्षिप्तम्?, महता च शब्देन किमिति त्वया न पूत्कृतम्?। तेनोक्तम्– अन्यदेत्थं करिष्यामीति। ततः कदाचिद् विहितस्नानो धूपनायोपविष्टष्ठक्कुरः। निर्गता च प्रच्छादनपट्टस्योपर्यगुरुधूमशिखा। दृष्टा च ग्रामेयकेण। क्षिप्ता चोत्पाट्य तदुपर्याचाम्लभृतमहास्थाली, जल-धूली-भस्मादिकं च, तथा च पूत्कृतं महद्भिः शब्दैरिति। ततः 'अयोग्योऽयम्' इति निष्काशितो गृहात्। एवं शिष्योऽपि यावन्मात्रं वचनं गुरुः कथयति, तावन्मात्रमेव स्वयं द्रव्य-क्षेत्र-काल-पराभिप्रायौचित्यपरिज्ञानशून्यो यो वक्ति तस्य वचनाननुयोगः, यस्तु द्रव्य-क्षेत्राद्यौचित्येन वक्ति तस्य तदनुयोग इति।

भावाननुयोगा-ऽनुयोगयोः सप्तोदाहरणानि– तत्र श्रावकभार्योदाहरणमुच्यते– एकेन गृहीताणुव्रतेन तरुणश्रावकेणातीव रूपवती, कृतोद्भटरूपशृङ्गारा निजपत्न्या एव सखी कदाचिद् दृष्टा, गाढमध्युपपन्नश्च तस्याम्, परं लज्जादिना किमपि वक्तुमशक्नुवंस्तत्प्राप्तिचिन्तया च प्रतिदिनमतीव दुर्बलीभवति। निर्बन्धेन पृष्टं कारणं स्वभार्यया। कथितं च कथं कथमपि तेन। तया चातीव दक्षया प्रोक्तम्– एतावन्मात्रेऽप्यर्थे किं खिद्यते?, प्रथममेव ममैतत् किं न कथितम्?, स्वाधीना हि मम सा, आनयामि सत्वरमेवेति। ततोऽन्यदिने भणितो भर्ता– अभ्युपगतं सहर्षया तया युष्मत्समीहितम्, प्रदोषे चागमिष्यति, परं लज्जालुतया वासभवनप्रविष्टमात्रापि प्रदीपं विध्यापयिष्यति। तेनोक्तम्– एवं भवतु। किमित्थं विनश्यति?। ततो वयस्यायाः सकाशात् किञ्चिद् निमित्तमुद्भाव्य याचितानि तया तदीयानि स्वभर्तृदृष्टपूर्वाणि प्रधानवस्त्राणि, आभरणानि च। ततो गुटिकादिप्रयोगतो विहितसखीसदृशस्वरादिस्वरूपा, तथैव कृतशृङ्गारा तत्सदृशललितेन, विलासैश्चान्विता तस्यैव श्राद्धस्य भार्या संनिहितवरकुसुम-ताम्बूल-श्रीखण्डा-ऽगुरु-कर्पूर-कस्तूरिकादिसमस्तभोगाङ्गा विहितामलप्रदीपालोके रमणीये वासभवने सविलासमन्वविशत्। ततो दृष्टा सोत्कण्ठविस्फारितदृशा त्रिदशकल्लोलिनीपुलिनप्रतिस्पर्धिपल्यङ्कोपविष्टेन झगित्येव नयन-मनसोरमृतवृष्टिमिवादधाना तेनैषा। तथा च दृष्टमात्रया विध्यापितः प्रदीपः। क्रीडितं च विविधगोष्ठीप्रबन्धपूर्वकं तया सह निर्भरं तेन। गतायां च तस्यां प्रत्युषसि चिन्तितमनेन—

"[1]सयलसुरा-ऽसुरपणमियचलणेहिं जिणेहिं जं हियं भणिय। तं परभवसंबलय अहह! मए हारिअं सीलं ॥ १ ॥"



१ सकलसुरा-ऽसुरप्रणतचरणैर्जिनैर्यद्धितं भणितम्। तत् परभवशम्बलकमहह! मया हारितं शीलम् ॥ १ ॥

पूर्वप्रतिपादितसंबन्धो व्याख्यानविधिरुच्यते । पाठान्तरं वा 'विभासाउ त्ति' सामान्येन पूर्वमुद्दिष्टस्येदानीं व्याख्यानविधिर्विशेषेण भाषणं भाषा भणनं 'क्रियते' इति शेषः ॥ इति गाथाष्टकार्थः ॥ १४३३ ॥

तमेव व्याख्यानविधिमाह—

गोणी चंदणकंथा चेडीओ सावए बहिरगोहे । टंकणओ ववहारो पडिवक्खे आयरिय-सीसे ॥१४३४॥

आचार्य-शिष्ययोर्योग्या-ऽयोग्यविचारे 'गोणी' गौस्तदुदाहरणं वक्तव्यम् । तथा, चन्दनकन्थानिदर्शनम् । तथा, चेट्यौ जीर्णा-ऽभिनवश्रेष्ठिपुत्रिके, तद्दृष्टान्तो वाच्यः । तथा, श्रावकोदाहरणम् । तथा, बधिरगोदोहनिदर्शनम् । तथा, टङ्कणकव्यवहारः षष्ठमुदाहरणम् । एतेषु षट्स्वप्युदाहरणेषु शिष्या-ऽऽचार्ययोः साक्षादयोग्यत्वमभिधाय ततः प्रतिपक्षे योग्यत्वं योजनीयम् । अथवा, एषां षण्णामप्युदाहरणानां मध्ये योग्या-ऽयोग्ययोर्विकल्पेनैकमुदाहरणमाचार्यस्य, एकं तु शिष्यस्य, इत्येवं योजनीयम् ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ १४३४ ॥

विस्तरतस्तु गोदृष्टान्तं भाष्यकारः प्राह—

भग्गनिविट्ठं गोणिं केउं दंतो व्व न सुयमायरिओ । एवं मए वि गहियं गिण्हि तुमं पि त्ति जंपंतो ॥ १४३५ ॥

अविगलगोविक्केया व जो वि मदक्खमो सुगंभीरो । अक्खेवनिण्णयपसंगपारओ सो गुरू जोग्गो ॥१४३६॥

सीसो वि पहाणयरो णेगंताणावियारियग्गाही । सुपरिच्छियकेया इव त्थाणवियारक्खमो इट्ठो ॥ १४३७ ॥

कस्यापि धूर्तस्योपचितसर्वाङ्गसुन्दरस्वरूपापि गौः कथमपि संस्थानीप्रदेशे स्थिता भग्ना । ततश्चोत्थातुं न शक्नोति, इत्युपविष्टैव तिष्ठति । ततस्तेन धूर्तेन कस्यापि मुग्धस्य क्रेतुस्तथैवोपविष्टा मूल्येन प्रदत्ताऽसौ । स्वयं पुनरपसृतः । क्रेतापि यावत् तामुत्थापयति, तावद् न शक्नोत्युत्थातुमसौ । ततस्तथैव स्थिताऽन्यस्य मूल्येन दातुमारब्धा तेनेयम् । स च दक्षत्वादुधःप्रभृत्यवयवानां निरीक्षणार्थं

१ गौश्चन्दनकन्था चेट्यौ श्रावको बधिरगोदोहः । टङ्कणको व्यवहारः प्रतिपक्ष आचार्य-शिष्ययोः ॥ १४३४ ॥

२ भग्ननिविष्टां गां क्रीत्वा ददादिव न श्रुतमाचार्यः । एवं मयापि गृहीतं गृहाण त्वमपीति जल्पन् ॥ १४३५ ॥
अविकलगोविक्रेतेव योऽपि मदक्षमः सुगम्भीरः । आक्षेपनिर्णयप्रसङ्गपारकः स गुरुर्योग्यः ॥ १४३६ ॥
शिष्योऽपि प्रधानतरो नैकान्तेनाऽविचारितग्राही । सुपरीक्षितक्रेतेव स्थानविचारक्षम इष्टः ॥ १४३७ ॥

एव निर्भरं प्रसुप्ता। तेनापि च तद्भन्धुनाऽकस्मादेव गृहप्रविष्टेन दृष्टं तत् तादृशम्। ततश्चिन्तितमनेन– अहो! विनष्टं मद्गृहम्, विटः कोऽप्ययं मद्भार्यासमीपे प्रसुप्तस्तिष्ठति। इति कोपावेशादाकृष्टः कृपाणः। ततः स्मृतं व्रतम्। विलम्बितं च सप्तपदापसरणकालम्। अत्रान्तरे तद्भगिनी बाहुलतिका निद्रावशेन तद्भार्याया मस्तकेनाक्रान्ता। ततः पीड्यमानया तद्भगिन्या प्रोक्तम्– हले! मुञ्च मम बाहुम्, दूयेऽत्यर्थमहम्। ततः स्वरविशेषेण ज्ञाताऽनेन स्वभगिनी। अहो! निकृष्टोऽहम्, मनागेव मया न कृतमिदमकार्यम्, तत उत्थिते ससंभ्रमं भगिनी-भार्ये इति। कथितश्च सर्वैः स्वव्यतिकरः परस्परम्। ततो यथोक्ताभिग्रहमात्रस्याऽप्येवंभूतं फलमुद्वीक्ष्य संविग्नः प्रव्राजितोऽसाविति। तदत्र स्वभगिनीमपि परपुरुषाभिप्रायेण जिघांसोस्तस्य भावाननुयोगः, यथावस्थितावगमे तु भावानुयोगः। प्रस्तुतयोजना तु श्रावकभार्योदाहरणवदिति।

कोङ्कणकदारकोदाहरणं यथा– कोङ्कणकविषय[1] एकस्य पुरुषस्य लघुदारकोऽस्ति। भार्या तु मृता। अन्यां च परिणेतुमिच्छताऽपि सपत्नीपुत्रोऽस्याऽस्तीति न कोऽपि ददाति। अन्यदा च सहैव तेन दारकेणासावरण्ये काष्ठानयनाय गतः। तत्र च कस्यापि पित्रा काण्डं मुक्तम्। तदानयनाय च दारकः प्रेषितः, गतश्चायम्। अत्रान्तरे दुष्पितुस्तस्य चलितं चित्तम्, यदस्य दारकस्य सत्ककारणेनाऽन्यां भार्यां मम न कोऽपि ददाति। ततोऽन्यं काण्डं क्षिप्त्वा विद्धोऽसौ दारकः। ततो महता स्वरेणोक्तं बालकेन– तात! किमेतत् काण्डं त्वया मुक्तम्?, विद्धोऽस्म्यनेनाऽहम्। ततो निर्घृणेन पित्राऽन्यत् काण्डं मुक्तम्। ततो ज्ञातं दारकेण– 'हन्त! बुद्धो मारयत्येष माम्, इति विस्वरं रटन् निकृष्टेन तेन मारितोऽसाविति। पूर्वमन्यस्य बाणं मुञ्चता पित्राऽनाभोगत एवाऽहं विद्ध इत्यवबुध्यमानस्य भावाननुयोगः, पश्चाद् यथावस्थिताधिगमे तस्य भावानुयोगः। अथवा, 'संरक्षणार्थमपि तं बालकं मारयामि' इत्यध्यवस्यतः पितुर्भावाननुयोगः, तद्रक्षाध्यवसाये तु भावानुयोगः। एवं विपरीतभावप्ररूपणे भावाननुयोगः, अविपरीतभावप्ररूपणे तु भावानुयोग इति।

अथ नकुलोदाहरणम्– पदातेः कस्यचिद् भार्या गुर्विणी जाता। नकुलिका च काचित् तद्गृहहट्टयाश्रिता गुर्विणी पदातिभार्यया सहैकस्यां रजन्यां प्रसूता। तस्या नकुलो जातः। इतरस्यास्तु पुत्रः। ततोऽस्य समीपे स्थितो नकुलः सदैव तिष्ठति। अन्यदा च पदातिभार्याया द्वारे खण्डयन्त्या मध्ये मञ्चिकायां स्थितो बालकः सर्पेण दष्टः, मृतश्च। ततो मञ्चिकाया उत्तरन् नकुलेन दृष्टो विषधरः, खण्डशः कृत्वा मारितश्च। ततो द्वारे पदातिभार्यायाः समीपे गत्वा शोणितोपलिप्तवक्त्राद्यवयवोऽसौ चाटूनि कर्तुमारब्धः, दृष्टश्च ॥६०९॥

1 क छ. 'कदेश ए'।

नारदं च साक्षिणं कृत्वा कारितस्तत्पाणिग्रहणसंवन्धः सागरचन्द्रस्य । ततः सर्वेऽपि कृतविद्याधरस्वरूपाः क्रीडन्तास्तिष्ठन्ति उद्याने । पितृ-श्वशुरपाक्षिकैश्चान्वेषयद्भिर्दृष्टा कृतविद्याधररूपा नवपरिणीतवेषधारिणी च क्रीडन्ती कमलामेला । विद्याधरैरपहृत्य परिणीता कमलामेलेति कथितं तैर्वासुदेवस्य । निर्गतश्च विद्याधरोपरि कुपितः सवलवाहनोऽसौ । लग्नं च महदायोधनं तावत्, यावत् पश्चाच्छम्बः परिहृतवैक्रियरूपः पतितो जनकस्यांह्रियुग्मे । ततश्चोपसंहृतः संग्रामः । दत्ता च कृष्णेन कमलामेला सागरचन्द्रस्यैव । गताश्च सर्वे स्वस्थानम् । तत्र सागरचन्द्रस्य शम्बं कमलामेलां मन्यमानस्य भावाननुयोगः, यथावस्थितावगमे तु भावानुयोगः । विपरीतादिप्ररूपणयोजना तु प्रस्तुता पूर्ववदिति ।

अथ शम्बस्योदाहरणम्– वासुदेवात्, शेषजनाच्च सदैव शृणोति जाम्बुवती, समस्तानामप्यालीनां मन्दिरं त्वत्पुत्रः शम्ब इति । ततो जाम्बुवत्या विष्णुरभिहितः– मया पुत्रसत्कैकाऽप्यालिर्न दृष्टा । विष्णुना प्रोक्तम्– आगच्छ, येनाऽद्य दर्शयामि । ततो जाम्बुवती उत्कृष्टलावण्यमाभीरीरूपं कारिता । स्वयं पुनराभीररूपं कृत्वा दण्डहस्तः स्वयं पृष्ठे व्यवस्थितः, अग्रतस्तु मस्तकन्यस्तदधिहण्डिका जाम्बुवती कृता । प्रविष्टोऽथ दधिविक्रयार्थं नगरीमध्ये । दृष्टा च शम्बेन माता तदोत्कृष्टरूपाऽऽभीरीति विज्ञाय प्रोक्ता शम्बेनैषा । आगच्छ मद्गृहम्, सर्वस्यापि त्वदीयदध्नो यावन्मात्रं मूल्यं याचसे, तदहं दास्यामि, इत्यग्रतः स्वयम्, पृष्ठतस्त्वाभीरी, पश्चात् त्वाभीरः । ततः शून्यदेवकुलिकायामेकस्यां गत्वा प्रोक्ता शम्बेनाभीरी– प्रविशैतन्मध्ये, मुञ्च दधि, तया च विरूपाभिप्रायं तं विज्ञाय प्रोक्तम्– नाहमत्र प्रविशामि, द्वारस्थिताया एव गृहाण दधि, प्रयच्छ मूल्यम् । वलादपि प्रवेशयिष्यामीत्यभिधाय गृहीता शम्बेन वाहौ । ततो धावित्वा द्वितीयवाहौ लग्न आभीरः । द्वयोरपि चाकर्षण-विकर्षणं कुर्वतोर्भग्नं भण्डनम् । ततः कृतं सहजरूपमात्मनः, जाम्बुवत्याश्च विष्णुना । तच्च दृष्ट्वा लज्जितो नष्टः शम्बः । नागच्छति चावसरेऽपि लज्जया राजकुले । ततोऽन्यदिवसे विष्णुनियुक्तबृहत्पुरुषैः कष्टेनानीयमानः क्षुरिकया वंशकीलकं घटयन्नागच्छत्यसौ । प्रणामे च कृते पृष्टो वासुदेवेन– शम्ब ! किमेतत् क्षुरिकया घट्यते ? । तेनोक्तम्– कीलकोऽयम् । किमर्थः पुनरसौ ? । यः पर्युषितानतीतजलपान् वदिष्यति तन्मुखे आहननार्थं इति । तदत्र शम्बस्य मातरमप्याभीरीं मन्यमानस्य भावाननुयोगः, पश्चाद्द यथावदवगमे तु भावानुयोगः । प्रस्तुतयोजना तु पूर्ववदिति ।

अथ श्रेणिककोपोदाहरणम्– राजगृहे नगरे समवसृतस्य भगवतः श्रीमन्महावीरस्य श्रेणिकनराधिपो राज्ञ्या चेल्लणया सह माघमासे हिमकणप्रवर्षिणि महाशीते पतिते वन्दनार्थं गतः । ततो निवर्तमानस्य च तस्य राज्ञ्या चेल्लणया मार्गासन्नस्तपःकर्षितशरीरः

१ क. ग. छ 'शम्ब' । २ क. ग घ. 'र्थमिति' ।

'कंथत्तणेण तीसे सद्दो सुव्वइ न हरिसभाए वि । कंथीकरणवइयरो विन्नाओ केसवेण तओ ॥ २२ ॥
माराविओ य सो भेरिरक्खओ, तेण अट्ठमं काउं । आराहिओ स देवो अन्न भेरिं च सो देइ ॥ २३ ॥
अन्नो य केसवेण कओ तहिं भेरिपालओ सो य । रक्खइ त जत्तेण लहेइ लाभ च तो हरिणो ॥ २४ ॥''

अथ गाथाक्षरार्थः कथ्यते– स शिष्योऽनुयोगश्रवणस्य न योग्यः । यः, किम् ?, इत्याह– यः सूत्रम् , अर्थं वा चन्दनकन्थावत् परमतादिभिर्मिश्रयति । गलितं वा विस्मृतं शिक्षितमानेन शिक्षितत्वाहङ्कारेण परमतादिभिर्मिश्रयित्वा संपूर्णं करोति । इदमुक्तं भवति– यथा भेरीपालकेन गोशीर्ष[3]-श्रीखण्डभेरी इतरचन्दनखण्डैर्मिश्रयित्वा कन्था कृता, एवं यः शिष्यः सूत्रमर्थं वा परमतेन, आदिशब्देन स्वकीयेनैव ग्रन्थान्तरेण मिश्रयित्वा कन्थीकरोति, अथवा, विस्मृतं सूत्रमर्थं वा 'सुशिक्षितः स्वयमेवाहम् , नान्यं कञ्चित् कदाचित् किमपि पृच्छामि' इत्यहङ्कारेण परमतादिभिरपि मिश्रयित्वा संपूर्णं विदधाति, सोऽनुयोगश्रवणस्य न योग्य इति । एवं कन्थीकृतसूत्रार्थो गुरुरप्यनुयोगभाषणस्य न योग्यः, किन्त्वविनाशितसूत्रार्थाः शिष्या-ऽऽचार्या अनुयोगस्य योग्या विनिर्दिष्टा इति ॥ १४३८ ॥ १४३९ ॥

अथ चेटीदृष्टान्तो विवियते—

[4]अत्थाणत्थनिउत्ताभरणाणं जिण्णसेट्ठिधूय व्व । न गुरू विहिभणिए वा विवरीयनिओयओ सीसो ॥ १४४० ॥
सत्थाणत्थनिउत्ता ईसरधूया सभूसणाणं व । होइ गुरू सीसोऽवि य विणिओएंतो जहाभणियं ॥ १४४१ ॥

भावार्थः कथानकेनोच्यते– वसन्तपुरे नगरेऽग्रेतनः श्रेष्ठी राज्ञा पदात् स्फेटितोऽन्यो नवश्रेष्ठी विहितः । तथापि जीर्णश्रेष्ठिदुहितुर्नवश्रेष्ठिदुहित्रा सह कथमपि महती प्रीतिः संजाता । परं तथापि जीर्णश्रेष्ठिपुत्रिका हृदये कालुष्यं न मुञ्चति– 'वयमेतैः पदात् परिभ्रंशिताः' इति । अन्यदा च ते द्वे अपि जलाशये क्वचिद् गते । ततश्चाभरणानि तटे मुक्त्वा नवश्रेष्ठिदुहिता जीर्णश्रेष्ठिपुत्रिकया सहैव

१ कन्थात्वेन तस्या शब्द' श्रूयते न हरिसभायामपि । कन्थीकरणव्यतिकरो विज्ञात केशवेन तत. ॥ २२ ॥
मारितश्च स भेरिरक्षक , तेनाष्टम कृत्वा । आराधित स देवोऽन्या भेरीं च स ददाति ॥ २३ ॥
अन्यश्च केशवेन कृतस्तत्र भेरिपालक स च । रक्षति ता यत्नेन लभते लाभं च ततो हरे ॥ २४ ॥ २ क ग, 'नभेरीकृ' ।
३ क ग 'र्षश्रीखण्डभे' । ४ अस्थानार्थनियोक्ताभरणाना जीर्णश्रेष्ठिदुहितेव । न गुरुर्विधिभणिते वा विपरीतनियोजक' शिष्य ॥ १४४० ॥
अस्वस्थानार्थनियोक्ता ईश्वरदुहिता स्वभूषणानामिव । भवति गुरु शिष्योऽपि विनियोजयन् यथाभणितम् ॥ १४४१ ॥

नियतो निश्चितो हितो वाऽनुकूलः सूत्रस्याभिधेयेन सह यः खलु योगः संबन्धः स नियोगो मतः । अयं च सभेदः सलक्षणः सोदाहरणश्चानुयोगवदेव विज्ञेय इति ॥ १४१९ ॥

अथ भाषास्वरूपमभिधित्सुराह—

[1]भासा वत्ता वाया सुयवत्तीभावमित्तयं सा य । सुयभावमित्तयं जह सामाइयमिहेवमाईयं ॥ १४२० ॥

'भाष व्यक्तायां वाचि' भाषणं भाषा व्यक्ता वागित्यर्थः। सा चेह व्यक्तिः श्रुतस्य व्यक्तिभावमात्ररूपैव गृह्यते, न त्वशेषविशेषरूपा विभाषा, वार्तिकविषयत्वात् तस्याः । अत्रोदाहरणमाह– यथाऽव्यक्तमनवबुद्धविशेषरूपं तत् श्रुतभावमात्रमविज्ञातव्यक्तरूपस्य त्रिनेयस्य भाषकेन व्याख्यात्रा व्यक्तीक्रियते । कथम् ?, इत्याह– सामायिकमिदं शास्त्रपरिज्ञा, अध्ययनं वा, एतस्य च सामायिकादेरयं शब्दार्थ इत्यादि । इदमुक्तं भवति– भाषक-विभाषक-वार्तिककारभेदात् त्रिविधाः श्रुतस्य व्याख्यातारः । तत्र भाषकोऽविज्ञातविशेषस्वरूपस्य श्रुतमात्रस्य सव्युत्पत्तिकविशेषनाममात्रकथनेन व्यक्तिमात्रं कृत्वा चरितार्थो भवति । यथा समस्याऽऽयः सामायिकमित्यादि । तदेवं भाषकसंबन्धिन्या भाषायाः स्वरूपमुक्तम् ॥ १४२० ॥

अथ विभाषकप्रणीतविभाषायाः स्वरूपमाह—

[2]विविहा विसेसओ वा होइ विभासा दुगाइपज्जाया । जह सामइयं समओ सामाओ वा समाओ वा ॥१४२१॥

विविधा भाषाऽनेकपर्यायैः श्रुतस्य व्यक्तीकरणं विभाषा, विशेषतो वा भाषा विभाषा, भाषापेक्षया सविशेषं श्रुतस्य व्यक्तीकरणमित्यर्थः । एतदेवाह– द्व्यादयः पर्याया यस्यां सा द्व्यादिपर्याया विभाषेत्यर्थः । अत्राप्युदाहरणमाह– यथा 'करेमि भंते ! सामाइयं' इत्यादि श्रुतमिदं सामायिकमुच्यते– सर्वेषामपि मुमुक्षूणां समये संकेते भवं सामायिकमित्यर्थः । सर्वेऽपि हि मुमुक्षवः सर्वसावद्यविरमणरूपेऽस्मिन्नेवागत्य प्रथमं तिष्ठन्ति, तत उत्तरोत्तरगुणप्राप्त्या सर्वक्लेशेभ्यो मुच्यन्त इति भावः । अथवा, 'समओ त्ति' सम्यगयनं मुक्तिमार्गे प्रवर्तनं यस्मात् तत् समयः सामायिकमेवोच्यते । यदिवा, 'सामाउ त्ति' साम सर्वेषामपि जीवानां प्रियं तस्य आयः प्राप्तिः सामायः सामायिकमभिधीयते । अथवा 'समाउ त्ति' समस्य राग-द्वेषविरहितस्याऽऽयः प्रतिसमयमपूर्वापूर्वकर्मनिर्जरासाम्न ...

[1] भाषा व्यक्ता वाक् श्रुतव्यक्तीभावमात्रक सा च । श्रुतभावमात्रकं यथा सामायिकमिहैवमादिकम् ॥ १४२० ॥ [2] विविधा विशेषतो वा भवति विभाषा द्विकादिपर्याया । यथा सामयिकं समय. सामायो वा समायो वा ॥ १४२१ ॥ [3] करोमि भगवन्! सामायिकम् ।

अथ बधिरगोदोहोदाहरणम्—

अन्नं[1] पुट्ठो अन्नं जो साहइ सो गुरू न बहिरु व्व । न य सीसो जो अन्नं सुणेइ परिभासए अन्नं ॥ १४४३ ॥

बधिरकथानकं प्रागुक्तमेव । गाथाक्षरार्थस्तु सुगमः । अथवा, बधिरश्चासौ गोदोहश्चेति कर्मधारयो न क्रियते, किन्तु बधिरश्च गोदोहश्चेति द्वन्द्वः । ततो गोदोहो ग्रामेयकः, तत्कथानकं तु भिन्नमेवेह प्रागुक्तं द्रष्टव्यम् । उपनयस्तु स्वयमभ्यूह्यः– यो ग्रामेयकवद् यावन्मात्रमुक्तस्तावन्मात्रमेव स्वयं द्रव्य-क्षेत्र-कालाद्यौचित्यविरहितो वक्ति, स शिष्यत्वेऽप्ययोग्यः, गुरुत्वं तु दूरेणैव तस्येति ॥१४४३॥

अथ टङ्कणकव्यवहारदृष्टान्तभाष्यम्—

अक्खेव[2]-निण्णय-पसंगदाणगहणाणुवत्तिणो दो वि । जोग्गा सीसायरिया टंकण-वणिओवमा समए ॥१४४४॥

अहवा गुरुविणय-सुयप्पयाणभण्डविणिओगओ दो वि। निज्जरलाभयसहिया टंकण-वणिओवमा जोग्गा ॥१४४५॥

इहोत्तरापथे म्लेच्छदेशे कचिद् टङ्कणाभिधाना म्लेच्छाः । ते च सुवर्णसट्टेन दक्षिणापथायातानि क्रयाणकानि गृह्णन्ति, परं वाणिज्यकारकास्तद्भाषां न जानन्ति, तेऽपीतरभाषां नावगच्छन्ति । ततश्च कनकस्य क्रयाणकानां च तावत् पुञ्जः क्रियते, यावदुभयपक्षस्यापीच्छापरिपूर्त्तिः, यावच्चैकस्यापि पक्षस्येच्छा न पूर्यते, तावत् कनकपुञ्जात् क्रयाणकपुञ्जाच्च हस्तं नापसारयन्ति, इच्छापरिपूर्तौ तु तमपसारयन्ति । एवं तेषां परस्परमीप्सितप्रतीप्सितो व्यवहारः । अथोपनयगाथाद्वयं व्याख्यायते, तद्यथा– टङ्कणाश्च वणिजश्च तेषामुपमैवं समये वर्णिता यथैते टङ्कण-वणिजः परस्परमीप्सित-प्रतीप्सितव्यवहारेण व्यवहरन्ति, एवमाक्षेप-निर्णय-प्रसङ्गदान-ग्रहणानुवर्तिनो द्वयेऽपि शिष्या आचार्याश्चानुयोगयोग्या भवन्ति । इदमुक्तं भवति– यथा टङ्कणा वणिजश्च परस्परेच्छापरिपूर्तिं यावत् सुवर्णस्य क्रयाणकस्य च पुञ्जान् करोति, एवं शिष्योऽपि तावदाक्षेपं पूर्वपक्षं करोति यावत् सूत्रार्थमवबुध्यते, न पुनर्भय-लज्जा-ऽहङ्कारादिभिरेवमेवानवगतेनाग्रतो याति, गुरुरपि तावद् निर्णयं प्रयच्छति यावच्छिष्यः सूत्रार्थमवगच्छति, प्रासङ्गिकं च तावद् गुरुः कथयति यावन्मात्रं शिष्योऽवधारयति । शिष्योऽपि यथाशक्ति तत् सर्वं गृह्णातीति । एवं दान-ग्रहणानुवर्तिनो द्वयेऽपि शिष्या-ऽऽचार्या योग्याः । तत्र

1 अन्यत् पृष्टोऽन्यद् य कथयति स गुरुर्न बधिर इव । न च शिष्यो योऽन्यत् शृणोति परिभाषतेऽन्यत् ॥१४४३॥
2 आक्षेप-निर्णय-प्रसङ्गदान-ग्रहणानुवर्तिनौ द्वावपि । योग्यौ शिष्या-ऽऽचार्यौ टङ्कण वणिगुपमौ समये ॥ १४४४ ॥
अथवा गुरुविनय-श्रुतप्रदानभाण्डविनियोगतो द्वावपि । निर्जरालाभसहितौ टङ्कण-वणिगुपमौ योग्यौ ॥ १४४५ ॥

'काष्ठे' इति काष्ठविषयो दृष्टान्तः। यथा काष्ठे कश्चिद् रूपकार आकारमात्रमेवोन्मीलयति, कश्चित् तु तत्रैव स्थूलावयवं रूपं किञ्चिद् निष्पादयति, अपरस्तु सुविभक्तविचित्रोत्कृष्टनिःशेषाङ्गोपाङ्गावयवयुक्तं निर्वर्तयति। एवं काष्ठकल्पं सामायिकादिसूत्रम्। तत्र भाषकः किञ्चिदर्थमात्रमेव व्याचष्टे। विभाषकस्तु तस्यैवानेकप्रकारैरर्थमाख्याति। वार्तिककरस्तु निरवशेषैरपि व्याख्याप्रकारैस्तदर्थं प्रतिपादयति। पुस्तं लेप्यम्, तद्दृष्टान्तेऽपि काष्ठवदेव सर्वं वाच्यम्। चित्रदृष्टान्ते तु– यथा कोऽपि चित्रकारो वर्तिकाभिः कुड्यादिषु रूपस्याकारमात्रं लिखति। कश्चित्तु तत्रैव हरितालादिवर्णकैर्गौरवर्णादिभावान् दर्शयति। कश्चित्तु निरवशेषानपि तद्गतभावान् सत्यापयति। दार्ष्टान्तिकयोजना तु तथैवेति। श्रीगृहं भाण्डागारम्, तदस्यास्तीति श्रीगृहिको भाण्डागारिकः। तत्र कोऽप्यसौ 'अत्र भाजने रत्नानि सन्ति' इत्येतावन्मात्रमेव जानाति, अपरस्तु तज्जाति-माने अपि वेत्ति, अन्यस्तु सर्वांस्तद्गुण-दोषानप्यवबुध्यत एव। एवं प्रथम-द्वितीय-तृतीयश्रीगृहिकतुल्या यथासंख्यं भाषक-विभाषक-वार्तिककरा विज्ञेयाः। पोण्डमविकासितावस्थं कमलम्। तच्च यथेषद्विकासिता-ऽर्धविकासित-सर्वविकासितभेदात् त्रिधा भवति, एवं भाषकादिव्याख्यानमपीति। देशनं देशः कथनं सोऽस्यास्तीति देशिकः, तत्र यथा कश्चिद् देशिकः पन्थानं पृष्टो दिग्मात्रोपदेशेनैव तं कथयति, कश्चित्तु तद्व्यवस्थित-ग्राम-नगरादिभेदेन, अपरस्तु समस्ततदुत्थगुण-दोषाख्यानद्वारेणापि तमुपदिशति। दार्ष्टान्तिकयोजना तथैव। एवमेतानि भाषक-विभाषक-व्यक्तीकरविषयाण्युदाहरणानि प्रतिपादितानि। इति निर्युक्तिगाथासंक्षेपार्थः॥ १४२५॥

विस्तरार्थं भाष्यकारः प्राह—

पढमो रूवागारं थूलावयवोवदंसणं बीओ। तइओ सव्वावयवे निद्दोसे सव्वहा कुणइ॥ १४२६॥

कट्ठसमाणं सुत्तं तदत्थरूवेगभासणं भासा। थूलत्थाण विभासा सव्वेसिं वत्तियं नेयं॥ १४२७॥

प्रथमगाथायां प्रथम-द्वितीय-तृतीयशब्दवाच्यो रूपकारः, द्वितीयगाथायां तु दार्ष्टान्तिकयोजना। तत्र काष्ठस्थानीयं सूत्रम्। 'तदत्थरूवेगभासणं ति' तस्य च सूत्रस्यार्थस्तदर्थस्तस्य चानन्तरूपत्वाद् यदेकरूपभाषणं सा भाषा– स भाषकव्यापार इत्यर्थः; स्थूलार्थानां तु कियतामपि भाषणं विभाषा, सर्वेषां तु निरवशेषाणामर्थानां भाषणं वार्तिकं ज्ञेयमिति॥ १४२६॥१४२७॥

१ प्रथमो रूपाकारं स्थूलावयवोपदर्शनं द्वितीय। तृतीयः सर्वावयवान् निर्दोषान् सर्वथा करोति॥ १४२६॥
काष्ठसमानं सूत्रं तदर्थरूपैकभाषण भाषा। स्थूलार्थानां विभाषा सर्वेषां वार्तिकं ज्ञेयम्॥ १४२७॥

[1]भन्नइ अणब्भुवगओऽणुवसंपन्नो सुउवसंपदया । गुरुणो करणिज्जाइं अकुव्वमाणो निरुवगारी ॥१४४८॥
अप्पच्छंदमईओ सच्छंदं कुणइ सव्वकज्जाइं । पत्थियओ संपत्थियबिइज्जओ निच्चगमिउ व्व ॥ १४४९ ॥
गंतुमणो जो जंपइ नवरिं समप्पउ इमो सुयक्खंधो । पढिउं सोउं च तओ गच्छं को अत्थए एत्थ ? ॥१४५०॥

तिस्रोऽपि गतार्थाः । नवरं 'निच्चगमिउ व्व त्ति' यो यः प्रस्थितस्तत्तद्द्वितीयः प्रस्थित उच्यते । क इव ?, नित्यगामीव पथिक इवेत्यर्थः ॥ १४४८ ॥ १४४९ ॥ १४५० ॥

अथ योग्यशिष्यगुणान् दर्शयन्नाह—

[2]विणओणएहिं पंजलियडेहिं छंदमणुयत्तमाणेहिं । आराहिओ गुरुजणो सुयं बहुविहं लहुं देइ ॥१४५१॥

विनयो वन्दनादिलक्षणस्तेनावनता विनयावनतास्तैरित्थंभूतैः सद्भिः, तथा, पृच्छादिषु कृताः प्राञ्जलयो यैस्ते कृतप्राञ्जलयस्तैः, तथा, छन्दो गुर्वभिप्रायस्तमिङ्गिताकारादिना विज्ञाय तदध्यवसितश्रद्धान-समर्थन-करण-कारणद्वारेणानुवर्तमानैराराधितो गुरुजनः श्रुतं सूत्रा-ऽर्थोभयरूपं बहुविधमनेकप्रकारं लघु शीघ्रं ददाति प्रयच्छति ॥ इति निर्युक्तिगाथार्थः ॥ १४५१ ॥

भाष्यम्—

[3]विणओणओऽभिवंदइ पढए पुच्छए पडिच्छई[4] वा णं । पंजलियडोऽभिमुहो कयंजली पुच्छणाईसु ॥१४५२॥
सद्दहइ समत्थेइ य कुणइ करावेइ गुरुजणाभिमयं । छंदमणुयत्तमाणो स गुरुजणाराहणं कुणइ ॥ १४५३ ॥

उक्तार्थे ॥ १४५२ ॥ १४५३ ॥

---

१ भण्यतेऽनभ्युपगतोऽनुपसपन्न' श्रुतोपसपदा । गुरो' करणीयान्यकुर्वन् निरुपकारी ॥ १४४८ ॥
आत्मरुच्छन्दमतिकः स्वच्छन्द करोति सर्वकार्याणि । प्रस्थितक सप्रस्थितद्वितीयको नित्यगामीव ॥ १४४९ ॥
गन्तुमना यो जल्पति नवरं समर्प्यतामय श्रुतस्कन्ध । पठित्वा श्रुत्वा च ततो गमिष्यामि कोऽर्थ्यतेऽत्र ? ॥ १४५० ॥
२ विनयावनतैः कृतप्राञ्जलिभिश्छन्दमनुवर्तमानै । आराधितो गुरुजन' श्रुत बहुविधं लघु ददाति ॥ १४५१ ॥
३ विनयावनतोऽभिवन्दते पठति पृच्छति प्रतीच्छति वा । कृतप्राञ्जलिरभिमुख' कृताञ्जलि पृच्छादिषु ॥ १४५२ ॥
श्रद्धत्ते समर्थयते च करोति कारयति गुरुजनाभिमतम् । छन्दमनुवर्तमान स गुरुजनाराधनां करोति ॥ १४५३ ॥ ४ क ग. 'इ ठाणं' ।

पोण्डदृष्टान्तव्याख्यामाह—

[1]वोंडं विभिन्नमीसं दरफुल्लं वियसियं विसेसेण । जह कमलं चउरूवं सुत्ताइचउक्कमप्पेवं ॥ १४३१ ॥

पोण्डमविकसितावस्थं कमलम् । तस्य च पश्चात् तिस्रोऽवस्था जायन्ते, तद्यथा– 'विभिन्नमीसं ति' ईषद्विभिन्नमित्यर्थः । तथा, 'दरफुल्लं ति' अर्धविकासितमित्यर्थः । तथा, 'वियसियं विसेसेण त्ति' सर्वात्मना विकसितमित्यर्थः । एवं च सति यथा कमलं चतूरूपमुक्तम्, तथा सूत्रादिचतुष्कमपि विज्ञेयम्– अविवृतं मुकुलितं सूत्रम्, तथा, अल्प-बहु-बहुतरव्याख्यानरूपास्तस्य तिस्रोऽवस्थाः, इत्येवं चतूरूपतेति ॥ १४३१ ॥

अथ देशिकदृष्टान्तव्याख्यामाह—

[3]पंथो दिसाविभागो गाम-पुराइगुण-दोसपेयालं । जह, पहदेसणमेवं सुत्तं भासाइतियं च ॥ १४३२ ॥

इह पन्थाः कश्चिद् ग्राम-नगरादीनां भवति । तं च पृष्टः कोऽपि दिग्विभागमात्रमेव कथयति, अन्यस्तु तद्व्यवस्थितग्राम-नगरादीन् कथयति, अपरस्तु मार्गगतनिःशेषगुण-दोषविचारमपि कथयति । इत्थं यथा पथो मार्गस्य देशनं त्रिविधं प्रवर्तते, एवं भाषा-विभाषा-वार्तिकलक्षणमपि त्रितयमवगन्तव्यम् । तदिह सर्वेष्वपि काष्ठादिदृष्टान्तेष्वयं परमार्थः– जघन्य-मध्यमो-त्कृष्टव्याख्यातारो भाषक-विभाषक-व्यक्तीकरा उच्यन्त इति । तदेवं जिनप्रवचनोत्पत्तिः, प्रवचनैकार्थिकानि, तद्विभागश्चोक्तः ॥ १४३२ ॥

अथ क्रमप्राप्तमपि द्वारविधिं [4]'दारविही वि महत्था तत्थ वि वक्खाणविहिविवज्जासो, मा होज्ज' इत्यादिपूर्वोक्तकारणादुल्लङ्घ्य, व्याख्यानविधिमेवेह तावदभिधित्सुः प्रस्तावनामाह—

[5]एयस्स को णु जोग्गो वत्तुं सोउं च, केण विहिणा वा ? । पुव्वोइयसंबंधो वक्खाणविही विभागाओ ॥ १४३३ ॥

एतस्य च वक्ष्यमाणस्य [6]'उद्देसे निद्देसे य' इत्यादिद्वारविधेः, सर्वस्य वाऽनुयोगस्य को वक्तुं योग्यो गुरुः ?, कश्च श्रोतुं योग्यः श्रोता ?, केन वा विधिनाऽसौ वक्तव्यः ? इत्येतदभिधानीयम् । अत एव तस्मात् प्रवचनैकार्थिकविभागादनन्तरं 'दारविही वि महत्था' इत्यादिना

१ क 'बोण्ड'। २ पोण्ड विभिन्नमीपदर्धफुल्ल विकसितं विशेषेण । यथा कमलं चतूरूपं सूत्रादिचतुष्कमप्येवम् ॥ १४३१ ॥
३ पन्था दिग्विभागो ग्राम पुरादिगुण-दोषविचारम् । यथा पथदेशनमेवं सूत्रं भाषादित्रितयं च ॥ १४३२ ॥ ४ गाथा १३६० ।
५ एतस्य को नु योग्यो वक्तु श्रोतु च केन विधिना वा ? । पूर्वोदितसंबन्धो व्याख्यानविधिर्विभागात् ॥ १४३३ ॥ ६ गाथा ९७३ ।

विलक्षीभूतः स्वस्थानमुपाश्रितो मेघः। तदेवं मुद्गशैलोदाहरणमभिधायोपनयमाह– 'सेलसममित्यादि' यस्य वचनकोटिभिरपि चित्तं न भिद्यते, एकमप्यक्षरं तन्मध्याद् न परिणमतीत्यर्थः, स एवंभूतः शैलसमो मुद्गशैलतुल्य इत्यर्थः, तं तथाभूतं शिष्यं ज्ञात्वापि कश्चिद् ग्राहयतीति ग्राहको गुरुः,

"आचार्यस्यैव तज्जाड्यं यच्छिष्यो नावबुध्यते। गावो गोपालकेनैव कुतीर्थेनावतारिताः ॥ १ ॥"

इत्यादिश्लोकार्थविभ्रमितमतिर्गर्वाद् 'अहममुं ग्राहयिष्ये' इति प्रतिज्ञाय समागतो महता च संरम्भेणाऽध्यापयितुमारब्धः, तथापि स मुद्गशैलोपमः शिष्योऽक्षरमपि न गृह्णाति। न च मनागपि स्वाग्रहग्रस्तत्वेन बुध्यते। ततश्चैवं यथा पुष्करावर्तः, तथैव सुचिरं क्लेशमनुभूय निर्विद्यते पराभज्यते। ततो विलक्षीभूतो लज्जितश्च निवर्तते तद्ग्रहणादयमाचार्य इति। एवंभूतस्य च शिष्यस्य सूत्रा-ऽर्थदान आगमे प्रायश्चित्तमुक्तम् ॥ १४५५ ॥ १४५६ ॥

कुतः?, इत्याह—

आयरिये[1] सुत्तम्मि य परिवाओ सुत्त-अत्थपलिमंथो। अन्नेसिं पिय हाणी, पुट्ठा वि न दुद्धया वंझा ॥१४५७॥

एवं शैलसमस्यापि शिष्यस्य सूत्रा-ऽर्थदाने प्रवृत्त आचार्ये, सूत्रेऽपि चागमे परिवादोऽवर्णवादो लोकसमुत्थो भवति; तद्यथा– अहो! नास्य सूरेः प्रतिपादिका शक्तिः, नापि तथाविधं किमपि परिज्ञानं, यतोऽमुमप्येकं शिष्यमवबोधयितुं न क्षमः, आगमोऽप्यमीषां संबन्धी निरतिशयो युक्तिविकलश्च, इतरथा कथमयमेकोऽप्यस्माद् नावबुध्यते? इत्यादि। तथा, सूत्रा-ऽर्थयोरन्तरायसंभवात् परिमन्थनं मर्दनं विनाशनं सूत्रा-ऽर्थपरिमन्थः, तच्छिक्षणप्रवृत्तस्य सूरेरात्मनः सूत्रपठन-परावर्तन-व्याख्यानभङ्गो भवतीत्यर्थः। अपरं च, तद्ग्राहणप्रसक्ते सूरावन्येषां शिष्याणां सूत्रा-ऽर्थहानिः– तद्ग्रहणभङ्ग इत्यर्थः। न च बहुनापि कालेन तथाविधः शिष्यः किञ्चिदपि ग्राहयितुं शक्यः। कुतः? इत्याशङ्क्यात्रार्थे दृष्टान्तमाह– 'पुट्ठा वीत्यादि' नियमनेन नियन्त्र्य स्तनेषु करैर्बहुधा स्पृष्टापि वन्ध्या गौर्न खलु दुग्धदा भवति, एवं मुद्गशैलसमः शिष्योऽपि ग्राहणकुशलेनापि गुरुणा ग्राह्यमाणोऽपि नाक्षरमपि गृह्णाति। ततस्तादृशस्य सूत्रा-ऽर्थौ न दातव्यौ, ऐहिका-ऽऽमुष्मिकक्लेशादिबहुदोषसंभवात्। ददाति चेत्, तर्हि समयोक्तप्रायश्चित्तभागिति। अत्राह– ननु प्रोक्तोऽसौ मुद्गशैल-

[1] आचार्ये सूत्रे च परिवाद सूत्रा-ऽर्थपरिमन्थ। अन्येषामपि च हानि., पुष्टापि न दुग्धदा वन्ध्या ॥ १४५७ ॥

तामुत्थापयति । मूलक्रेता च तत्कर्तुं न ददाति । वदति च मयोपविष्टैवेयं गृहीता, त्वमप्युपविष्टामेवामुं गृहाण । एवं च न कोऽपि गृह्णाति, उपहसति च तमिति ।

अथ प्रकृते योज्यते– भग्ना सती निविष्टा भग्ननिविष्टा तां भग्ननिविष्टां 'गोणिं' गां यथा मुग्धः कश्चिदुपविष्टामेव क्रीत्वोपविष्टामेवाऽन्यस्य ददत् प्रयच्छन् क्रेतोपहासविषयत्वादयोग्यः । 'न सुयमायरिउ त्ति' एवमाचार्योऽपि न नैव योग्यो भवति; किं कुर्वन् ?, श्रुतं ददत् प्रयच्छन् । कथंभूतः सन् ?, इत्याह– 'एवमविचारितमेव मयाऽप्येतत् श्रुतं गृहीतम्, त्वमप्यविचारितमेव गृहाण' इति शिष्यं प्रति जल्पन्निति । इत्थंभूतस्य सूरेः पार्श्वे न श्रोतव्यम्, संशीतिपदेषु निश्चयाभावेन मिथ्यात्वगमनप्रसङ्गात् । अतो व्याख्यानस्यायमयोग्योऽभिधीयत इति । कथंभूतः पुनर्योग्यः ?, इत्याह– 'अविगलेत्यादि' सुगमा ।

तदेवं गुरोरयोग्यस्य योग्यस्य च स्वरूपमुपदर्श्य शिष्यस्यापि तदाह– 'सीसो वीत्यादि' शिष्योऽपि न नैव प्रधानतरः, किन्त्वयोग्यः । कथंभूतः ?, इत्याह– मुग्धगोक्रेतेवैकान्तेनाऽविचारितग्राही । यस्तु स्थानविचारक्षम आग्रहरहितो विचारयोग्ये वस्तुनि विचारकः स सुपरीक्षितगवादिक्रायिक इव सिद्धान्तश्रवणे इष्टो योग्यः शिष्य इति ॥ १४३५ ॥ १४३६ ॥ १४३७ ॥

अथ चन्दनकन्थादृष्टान्तविवरणमाह—

[1]जो सीसो सुत्तत्थं चंदणकंथं व परमयाईहिं । मीसेइ गलियमहवा सिक्खियमाणेण स न जोग्गो ॥१४३८॥

कंथीकयसुत्तत्थो गुरू वि जोग्गो न भासियव्वस्स । अविणासियसुत्तत्था सीसा-यरिया विणिद्दिट्ठा ॥१४३९॥

इह भावार्थस्तावत् कथानकेनोच्यते– द्वारवत्यां नगर्यां वासुदेवस्य राज्यं पालयतो गोशीर्ष-श्रीखण्डमय्यो देवतापरिगृहीतास्तिस्रो भेर्य आसन्, तद्यथा– सांग्रामिकी, औद्धूतिकी, कौमुदिका । तत्र प्रथमा संग्रामकाले समुपस्थिते सामन्तादीनां ज्ञापनार्थं वाद्यते, द्वितीया पुनरुद्धूते– आगन्तुके कस्मिंश्चित् प्रयोजने सामन्ता-ऽमात्यादिलोकस्यैव ज्ञापनार्थं वाद्यते । तृतीया तु कौमुदीमहोत्सवाद्युत्सवज्ञापनार्थं वाद्यते । चतुर्थ्यपि गोशीर्ष[2]-श्रीखण्डमयी भेरी तस्यासीत् । इयं तु षट्-षण्मासपर्यन्ते वाद्यते, यश्च तच्छब्दं शृणोति, तस्यातीतम्, अनागतं च प्रत्येकं षाण्मासिकमशिवमुपशाम्यति । इयं च प्रकृतोपयोगिनी चतुर्थी भेरी । इति तदुत्पत्तिर्लिख्यते—

१ यः शिष्य सूत्रा-ऽर्थौ चन्दनकन्थामिव परमतादिभि. । मिश्रयति गलितमथवा शिक्षितमानेन स न योग्यः ॥ १४३८ ॥
कन्थीकृतसूत्रा-ऽर्थो गुरुरपि योग्यो न भाषितव्यस्य । अविनाशितसूत्रार्था. शिष्या-ऽऽचार्या विनिर्दिष्टाः ॥ १४३९ ॥ २ घ छ 'र्षचन्दनम' ।

कुप्पवयणआसन्नेहिं भाविया एवमेव भावकुडा। संविग्गेहिं पसत्था वम्मा अवम्मा य तह चेव ॥१४६१॥

कुटा घटाः, ते च तावद् द्विविधाः– एके आपाकोत्तीर्णा नूतना अव्याप्रियमाणत्वादद्यापि पुष्प-जल-तैलादिनाऽभाविताः, अन्ये तु व्याप्रियमाणत्वाद् भाविताः। तत्र भाविता द्विविधाः,– सुरभिपाटलाकुसुम-पटवासादिप्रशस्तवस्तुभिर्भाविताः प्रशस्तभाविताः, सुरा-तैलाद्यप्रशस्तवस्तुभावितास्त्वप्रशस्तभाविताः। प्रशस्तभाविताः पुनरपि द्विविधाः– तद्भावं वमयितुं शक्या वाम्याः, तद्विपरीतास्त्ववाम्याः। एवमेवाप्रशस्तभाविता अपि वाम्या-ऽवाम्यभेदद्वयादेव द्विविधाः। तत्र ये प्रशस्तवाम्याः प्रशस्तभावं वमयितुं शक्यास्तेऽग्राह्या भवन्ति, अनादेयाः, असुन्दरा इति यावत्। तथा, येऽप्रशस्तभावं वमयितुमशक्या अप्रशस्तावाम्यास्तेऽप्यग्राह्या भवन्ति। 'तप्पडिवक्खा भवे गेज्झ त्ति' तेषां प्रशस्तवाम्यानाम्, अप्रशस्तावाम्यानां च ये प्रतिपक्षाः प्रशस्तावाम्याः, अप्रशस्तवाम्याश्च ते ग्राह्या आदेयाः सुन्दरा भवन्ति। तदेवं द्रव्यकुटास्तावत् प्ररूपिताः। भावकुटा अपि प्रशस्ता-ऽप्रशस्तगुणजलाधारत्वाच्छिष्यजीवा एवमेव भाविता-ऽभावितादिभेदाद् द्रष्टव्याः। केवलमत्र पक्षे कुप्रवचनावसन्नादिभिर्भाविताः 'अप्रशस्तभाविता उच्यन्ते' इत्यध्याहारः। ये तु संविग्नैरेव साधुभिर्भावितास्ते प्रशस्ताः प्रशस्तभाविता इत्यर्थः। 'वम्मा अवम्मा य तह चेव त्ति' वाम्या-ऽवाम्यभावना यथा द्रव्यकुटपक्षे तथैव भावकुटपक्षेऽपि द्रष्टव्येत्यर्थः। सा चैवम्– प्रशस्तभाविता वाम्याः, अप्रशस्तभावितास्त्ववाम्याः, एते उभयेऽप्यग्राह्याः। उक्तविपरीतास्तु ग्राह्या इति। तदेवमुक्तो भावितकुटपक्षः॥ १४५९ ॥ १४६० ॥ १४६१ ॥

अथाभावितकुटपक्षमधिकृत्याह—

[1]जे उण अभाविया ते चउव्विहा, अहाविमो गमो अन्नो। छिड्डकुड-भिन्न-खंडे सगले य परूवणा तेसिं॥ १४६२ ॥

ये पुनरभाविताः कुटास्ते छिन्न-भिन्न-खण्ड-सकलभेदाच्चतुर्विधाः। अथवा, भाविता-ऽभावितपक्षनिरपेक्ष एवाऽयमन्यश्छिन्न-भिन्नादिको गमः प्रकारो वर्तत इत्यर्थः। तमेवाह– 'छिड्डकुडेत्यादि' इह कुटो घटः कोऽपि तावच्छिद्रो भवति, बुध्ने सच्छिद्रो भवतीत्यर्थः। अन्यस्तु भिन्नो राजिमान् भवति। तृतीयस्तु खण्डो भग्नकर्णः। चतुर्थस्तु सकलः परिपूर्ण एव भवति। एतेषां च चतुर्णामपि कुटभेदानां

१ कुप्रवचनावसन्नैर्भाविता एवमेव भावकुटाः। संविग्नैः प्रशस्ता वाम्या अवाम्याश्च तथैव ॥ १४६१ ॥

२ ये पुनरभावितास्ते चतुर्विधाः, अथवाऽयं गमोऽन्यः। छिद्रकुट-भिन्न-खण्डेषु सकले च प्ररूपणा तेषाम् ॥ १४६२ ॥

तो जुज्झामो त्ति भणेइ केसवो किंतु रहवरे अहय । तो गेण्ह तुमं पि रह जेण समाण हवइ जुज्झं ॥ ११ ॥
नेच्छइ एय देवो तुरएहिं गयाइएहिं वि स जुज्झ । जा नेच्छइ ता भणिओ हरिणा तो भणसु तुममेव ॥ १२ ॥
देवेण तओ भणियं परमुहा दो वि होइऊण पुणो । जुज्झामो पूयघाएहि, भणइ तो केसवो देव ॥ १३ ॥
जइ एव तो विजिओ अहयं तुमए, तुरगमं नेहि । जुज्झामि पुणो कहमवि न हु एरिसनीयजुज्झेणं ॥ १४ ॥
संजायपच्चओ सो पच्चक्खो होइऊण तो देवो । भणइ अमोह देवाण दसणं भणसु किं पि वर ॥ १५ ॥
अह भणइ केसवो असिवपसमणिं तो पयच्छ महभेरिं । दिन्ना य सुरेणागमणवइयर साहिउ थ गओ ॥ १६ ॥
छण्हं छण्ह मासाण साइवाइज्जए तहिं भेरी । जो सुणइ तीए सद्दं पुव्वोप्पन्नाओ वाहीओ ॥ १७ ॥
नस्सति तस्स अवरा ताउ तह य न हु होंति जाव छम्मासा । अह अन्नया कयाई वाणिओ आगंतुओ कोइ ॥ १८ ॥
दाहज्जरेण धणियं अभिभूओ भेरिरक्खयं भणइ । दीणारसयसहस्स गेण्हसु मह देसु पलमेगं ॥ १९ ॥
भेरीए छिंदिऊणं दिन्नं तेणावि लोभवसगेणं । अन्नेण चदणेण य भेरीए थिग्गल दिन्नं ॥ २० ॥
इय अन्नाण विदिंतेण तेण कंथीकया इमा भेरी । अह अन्नया य असिवे हरिणा ताडाविया एसा ॥ २१ ॥

---

१ ततो युध्यावहे इति भणति केशव किन्तु रथवरेऽहकम् । ततो गृहाण त्वमपि रथ येन समानं भवति युद्धम् ॥ ११ ॥
नेच्छत्येतद् देवस्तुरगैर्गजादिभिरपि स युद्धम् । यावद् नेच्छति तावद् भणितो हरिणा ततो भण त्वमेव ॥ १२ ॥
देवेन ततो भणितं पराङ्मुखौ द्वावपि भूत्वा पुन । युध्यावहे पूतघातैर्भणति ततः केशवो देवम् ॥ १३ ॥
यद्येवं ततो विजितोऽहक त्वया, तुरङ्गमं नय । युध्ये पुन॰ कथमपि न खल्वीदृशनीचयुद्धेन ॥ १४ ॥
सजातप्रत्यय॰ स प्रत्यक्षो भूत्वा ततो देव॰ । भणत्यमोघं देवानां दर्शन भण किमपि वरम् ॥ १५ ॥
अथ भणति केशवोऽशिवप्रशमनीं तत प्रयच्छ महाभेरीम् । दत्ता च सुरेणागमनव्यतिकर कथयित्वाऽथ गत ॥ १६ ॥
षण्णां षण्णां मासानां सातिवाद्यते तत्र भेरी । यः श्रृणोति तस्याः शब्दं पूर्वोत्पन्ना व्याधय. ॥ १७ ॥
नश्यन्ति तस्याऽपरास्ते तथा च न तु भवन्ति यावत् षड् मासान् । अथान्यदा कदाचिद् वणिगागन्तुक कोऽपि ॥ १८ ॥
दाहज्वरेण घनमभिभूतो भेरीरक्षक भणति । दीनारशतसहस्र गृहाण मम देहि पलमेकम् ॥ १९ ॥
भेर्या छित्वा दत्त तेनापि लोभवशगेन । अन्येन चन्दनेन च भेर्यां॰ संधानशकल दत्तम् ॥ २० ॥
इत्यन्येषामपि ददता तेन कन्थीकृतेयं भेरी । अथान्यदा चाशिवे हरिणा ताडितैषा ॥ २१ ॥

तांवसखउरकठिणयं चालणिपडिवक्खो न सवइ दव्वं पि । परिपूणगम्मि उ गुणा गलंति दोसा य चिट्ठंति ॥१४६५॥

चालनीप्रतिपक्षः 'भवति' इति शेषः । कीदृशः ? इत्याह– तापसानां भोजनादिनिमित्तमुपकरणविशेषः 'खउरकठिनकम्' उच्यते । तच्च किल [2]वंशशुम्बादिकं च द्रव्यमतिश्लक्ष्णं कुट्टयित्वा कमठकाकारं क्रियते । इदं चातिनिविडत्वाद् द्रव्यं, जलमपि प्रक्षिप्तं न स्रवति, किन्तु सम्यग् धराति । एवं शिष्योऽपि यो गुरुभिराख्यातं सर्वमेव धराति, न विस्मरति, स ग्राह्यः, चालनीसमस्त्वग्राह्य इति भावः ।

अथ परिपूणकोदाहरणमाह– 'परिपूणग-' इत्याद्युत्तरार्धम् । परिपूणको नाम सुघरीचिटिकाविरचितो नीडविशेषः, तेन च किल घृतं गाल्यते, ततस्तत्र कचवरमवतिष्ठते, घृतं गलित्वाऽधः पतति, एवं परिपूणकसदृशः शिष्योऽप्युपचारात् परिपूणकः । तत्र हि श्रुतसंबन्धिनो गुणाः सर्वेऽपि घृतवद् गलन्ति, दोषास्तु घृतगतकचवरवदवतिष्ठन्ते, श्रुतस्य दोषानेव गृह्णाति, गुणांस्तु सर्वथा परिहरत्यसौ, अतोऽयोग्य इति भाव इति ॥ १४६५ ॥

अत्र प्रेर्यमुत्थाप्य परिहरन्नाह—

[3]सव्वण्णुपामन्ना दोसा हु न संति जिणमए केइ । जं अणुवउत्तकहणं अपत्तमासज्ज व हवेज्ज ॥१४६६॥

ननु सर्वज्ञप्रामाण्यात् सर्वज्ञोऽस्य प्रवर्तक इति हेतोर्जिनमते दोषाः केचिदपि न सन्तीत्यर्थः, तत् कथमस्य कोऽपि दोषान् ग्रहीष्यति, असत्त्वादेव ? इति भावः । सत्यम् , किन्तु यद्यपि जिनमते दोषा न सन्ति, तथाऽप्यनुपयुक्तस्य गुरोर्यत् कथनं व्याख्याविधानं तदाश्रित्य दोषा भवेयुरिति संवन्धः । अथवा, अपात्रमयोग्यं शिष्यमङ्गीकृत्य जिनमतेऽपि तदुत्प्रेक्षिता दोषा भवेयुः, निर्दोषेऽपि जिनमतेऽपात्रभूताः शिष्या असतोऽपि दोषानुद्भावयन्त्येवेत्यर्थः । तथाच ते वक्तारो भवन्ति, तद्यथा—

"[4]पागयभासनिबद्धं को वा जाणइ पणीय केणेय । किंवा चरणेणं णु दाणेण विणा उ हवइ त्ति ॥ १ ॥

कायावया य त च्चिय ते चेव पमाय–अप्पमाया य । मोक्खाहिगारियाण जोइसजोणीहिं किं कज्जं ? ॥ २ ॥

---

१ तापस–'खउरकठिनकं' चालनीप्रतिपक्षो न स्रवति द्रव्यमपि । परिपूणके तु गुणा गलन्ति दोषाश्च तिष्ठन्ति ॥ १४६५ ॥ २ क ग 'वशकुन्दादिक द्र' । ३ सर्वज्ञप्रामाण्याद् दोषा खलु न सन्ति जिनमते केचित् । यदनुपयुक्तकथनमपात्रमासाद्य वा भवेयु ॥ १४६६ ॥ ४ प्राकृतभाषानिबद्धं को वा जानाति प्रणीत केनेदम् ? । किंवा चरणेन नु दानेन विना तु भवतीति ॥ १ ॥

कायापदश्च ता एव तावेव प्रमाद-ऽप्रमादौ च । मोक्षाधिकारिकाणा ज्योतिर्योनिभि- किं कार्यम् ? ॥ २ ॥

मज्जनार्थं प्रविष्टा। ततश्च जीर्णश्रेष्ठिदुहिता झगित्येव जलाद् निर्गत्य नवश्रेष्ठिदुहितृसत्कान्याभरणानि गृहीत्वा चलिता। इतरया तु जलमध्यगततयाऽप्युच्चैः स्वरेण निषिद्धा। ततश्च 'का त्वम्?, कानि च तानि त्वदीयाभरणानि?, मया ह्येतान्यात्मीयान्येव गृहीतानि' इत्यादि जल्पन्ती गाढमाक्रोशन्ती च सा गृहं गता। कथितं च निजमाता-पित्रोः। अनुमतं च तत् ताभ्याम्। भणिताऽसौ तूष्णीं विधाय तिष्ठ त्वम्। तत इतरयापि निजपित्रोस्तत् कथितम्। याचितानि च ताभ्यां तान्याभरणानि। न समर्पयन्ति चेतराणि। ततो राजकुलव्यवहारो जातः। कारणिकैश्च साक्षी पृष्टः। न च कोऽप्यसौ संजातः। ततस्ते द्वे अपि दारिके आकार्य जीर्णश्रेष्ठिदुहिता प्रोक्ता– यदि त्वदीयान्याभरणानि, तर्हि झगित्येवामून्यस्माकमेव पश्यतां परिधाय दर्शय। यावच्चैषा तानि परिधातुमारब्धा, तावदनभ्यासादन्यस्थानोचितमाभरणमन्यत्र नियोजयति। यदपि किञ्चित् स्थाने नियुङ्क्ते तदप्यश्लिष्टमेवाभाति, क्षुभितत्वेन च न किञ्चिदसौ जानाति। ततो नवश्रेष्ठिदुहिता तैरुक्ता। तया च स्वभ्यस्ततया स्थानौचित्येन सर्वाण्यप्याभरणानि झगित्येव परिहितानि, श्लिष्टानि चातीव शोभन्ते। ततस्तैः पुनरपि सा प्रोक्ता– झगित्येव मुञ्च तानि। तया च क्रमेणावतार्य तथैव मुक्तानि। ततो ज्ञातः कारणिकैः सद्भावः। दण्डितश्च शरीरनिग्रहेण राज्ञा जीर्णश्रेष्ठी। तद्दुहिता चाऽनर्थभाजनं संजाता। एवं जीर्णश्रेष्ठिदुहितेवाभारणानामस्थानेऽर्थानां नियोक्ता न गुरुः– गुरुपदयोग्योऽसौ न भवतीत्यर्थः। ऐहिकामुष्मिकानां निःसंख्यानर्थानां भाजनमसौ संपद्यते। विधिभणिते च– गुरुणा यथावत् प्ररूपिते चाज्ञानादिना विपरीतयोजकः शिष्योऽपि न नैव श्रवणयोग्यः, नापि कल्याणभागित्यर्थः। स्वस्थाने त्वर्थानां नियोक्ता, ईश्वरदुहितेव स्वभूषणानां, गुरुर्योग्यो भवति। शिष्योऽपि गुरुभिर्यथोपदिष्टं तथैव नियोजयन् श्रवणयोग्यः कल्याणभाक् च भवतीति ॥१४४०॥१४४१॥

श्रावकोदाहरणभाष्यम्—

[1]चिरपरिचियं पि न सरइ सुत्तत्थं सावओ सभज्जं व। जो न स जोग्गो सीसो गुरुत्तणं तस्स दूरेणं ॥१४४२॥

इह कथानकं 'सावगभज्जा' इत्यादौ कथितमेव। ततश्च यथा चिरपरिचितामपि स्वभार्यां परकलत्रबुद्ध्या भुञ्जानो न स्मरति, एवं चिरपरिचितमपि सूत्रार्थं यः शून्यहृदयतया न स्मरति, स शिष्यो न योग्यः शिष्यत्वस्यापि, गुरुत्वं तु तस्य दूरेणैवेत्यर्थः ॥ १४४२ ॥

१ चिरपरिचितमपि न स्मरति सूत्रार्थं श्रावकः स्वभार्यामिव। यो न स योग्यः शिष्यो गुरुत्वं तस्य दूरेण ॥ १४४२ ॥ २ गाथा १४१२।

मेषोदाहरणमाह—

अवि गोपयम्मि पिवे सुढिओ तणुयत्तणेण तुंडस्स । न करेइ कलुसं तोयं मेसो एवं सुसीसो वि ॥१४६९॥

जलभृते क्वचिद् गोष्पदेऽपि 'सुढिउ त्ति' संकुचिताङ्गो मेष ऊरणकः पिबेज्जलम् , न च तत् कलुषं करोति । केन हेतुना ? इत्याह— तनुकत्वेनाग्रभागे श्लक्ष्णत्वेन तुण्डस्य मुखस्येति । अग्रपादाभ्यामवनम्य तीक्ष्णेन मुखेन तथासौ जलं पिबति यथा सर्वथैव कलुषं न भवति । एवं सुशिष्योऽपि तथा गुरोः सकाशाद् निभृतः श्रुतं गृह्णाति यथा तस्य, परिषदो वा न कस्यचिद् मनोबाधादिकं कालुष्यं भवतीति ॥ १४६९ ॥

मशक-जलूकोदाहरणद्वयविवृतिमाह—

मसउ व्व तुदं जच्चाइएहिं निच्छुब्भए कुसीसो वि । जलुगा व अदूसंतो पिबइ सुसीसो वि सुयनाणं ॥१४७०॥

यथा मशको जन्तूंस्तुदते व्यथयति । ततश्च वस्त्राञ्चलादिभिस्तिरस्कृत्य दूरीक्रियते, तथा कुशिष्योऽपि जात्यादिदोषोद्घाटनैर्गुरुं तुदन् व्यथयमानो निश्कास्यते परिह्रियत इति । जलूका पुनर्यथाऽसृग् पिबति, न चासृग्मन्तं व्यथयति, तथा सुशिष्योऽपि गुरुभ्यः श्रुतज्ञानं पिबति गृह्णाति न तु जात्युद्घाटनादिना दुनोतीति ॥ १४७० ॥

बिडाल्युदाहरणमाह—

छड्डेउं भूमीए खीरं जह पियइ दुट्ठमज्जारी । परिसदुट्ठियाण पासे सिक्खइ एवं विणयभंसी ॥ १४७१ ॥

यथा दुष्टमार्जारी तथाविधस्वभावतया स्थाल्याः क्षीरं भूमौ छर्दयित्वा पिबति, न पुनस्तत्स्थम् । तथाच सति न तत् तस्यास्तथाविधं किञ्चित् पर्यवस्यति । एवं विनयाद् भ्रश्यतीति विनयभ्रंशी विनयकरणभीरुः कुशिष्यो गोष्ठामाहिलवत् परिषदुत्थितानां विन्ध्यादीनामिव पार्श्वे शिक्षते श्रुतं गृह्णाति, न तु गुरोः समीपे, तद्विनयकरणभयात् । इह च दुष्टमार्जारीस्थानीयः कुशिष्यः, भूमिकल्पस्तु परिषदुत्थिताः शिष्याः, छर्दितदुग्धपानसदृशं तु तद्गतश्रुतश्रवणमिति ॥ १४७१ ॥

---

१ अपि गोष्पदे पिबेद् मेषकस्तनुकत्वेन तुण्डस्य । न करोति कलुषं तोयं मेष एव सुशिष्योऽपि ॥ १४६९ ॥

२ मशक इव तुदञ्जात्यादिभिर्निष्कास्यते कुशिष्योऽपि । जलूकेवाऽदुनन् पिबति सुशिष्योऽपि श्रुतज्ञानम् ॥ १४७० ॥

३ छर्दयित्वा भूमौ क्षीरं यथा पिबति दुष्टमार्जारी । परिषदुत्थितानां पार्श्वे शिक्षत एवं विनयभ्रंशी ॥ १४७१ ॥

दानं च ग्रहणं च दान-ग्रहणे, प्रसङ्गस्य प्रसङ्गागतस्य दान ग्रहणे प्रसङ्गदान ग्रहणे; आक्षेपश्च निर्णयश्च प्रसङ्गदान-ग्रहणे च तानि तथेति समासः, तदनुवर्तनशीला द्वयेऽपि शिष्या-ऽऽचार्या योग्या भवन्ति ।

प्रकारान्तरेणापि टङ्कण-वणिगुपमानं भावयति– अहवेत्यादि गाथा । अथवा, शिष्येणौचित्यानतिक्रमात् कर्तव्यः सर्वोऽपि गुरुविनयः, गुरुणापि शिष्यौचित्येन कर्तव्यं सर्वमपि श्रुतप्रदानम् । गुरुविनयश्च श्रुतप्रदानं च, ते एव भाण्डे ग्राह्य-देयक्रयाणके तयोर्विनियोगो विनिमयस्तस्माद् गुरुविनय-श्रुतप्रदानभाण्डविनियोगाद् द्वयेऽपि शिष्या-ऽऽचार्याः कर्मनिर्जरालाभसहिताष्टङ्कणवणिगुपमा अनुयोगस्य योग्या भवन्ति । विपर्यये तु विपर्यय इति । तदेवं 'गोणी चंदण'[3] इत्यादिना योग्या अयोग्याश्चोक्ताः शिष्या-ऽऽचार्याः ॥ १४४४ ॥ १४४५ ॥

इदानीं शिष्यस्य विशेषत एव योग्या-योग्यत्वमभिधित्सुः प्रस्तावनामाह—

[4]अत्थी स एव य गुरू होइ जओ तो विसेसओ सीसो । जोग्गोऽजोग्गो भन्नइ तत्थाजोग्गो इमो होइ ॥१४४६॥

य इदानीं श्रुतस्यार्थं शृणोति स एव शिष्यः कालान्तरेणार्थी अर्थयुक्तोऽवगतसूत्रा-ऽर्थः सन् यस्माद् गुरुर्भवति नान्यः, तस्माद् योग्योऽयोग्यश्च विशेषतः शिष्यो भण्यते । तत्रायोग्यस्तावदयं वक्ष्यमाणो भवति ॥ इति द्वादशगाथार्थः ॥ १४४६ ॥

[5]कस्स न होही देसो अणब्भुवगओ य निरुवगारी य । अप्पच्छंदमईओ पत्थियओ गंतुकामो य ॥१४४७॥

कस्य गुरोर्न भविष्यति द्वेष्योऽप्रीतिकरः शिष्यः, अपितु भविष्यत्येव । किं सर्व एव ?, न, इत्याह– अनभ्युपगतः श्रुतसंपदाऽनुपसंपन्नोऽनिवेदितात्मेत्यर्थः । अनुपसंपन्नत्वेऽपि तथा निरुपकारी गुरूणामनुपकारकः सर्वथा गुरुकृत्येष्वप्रवर्तक इत्यर्थः । तत्राप्यात्मच्छन्दमतिः स्वाभिप्रायं[6] कार्यकारीत्यर्थः । तथा, प्रस्थितो यो योऽन्यः कोऽपि शिष्यो जिगमिषुः, तस्य तस्य द्वितीयः । तथा, गन्तुकामश्च सदैव गन्तुमना य आस्ते, वक्ति च– 'कोऽस्य गुरोः संनिधानेऽवतिष्ठते ?, समर्प्यतामेतत् श्रुतस्कन्धादि, ततो यास्यामि' इत्येवंचित्त एव सदैवास्ते । तदेवंभूतः शिष्योऽयोग्य एव श्रवणस्येति भावः ॥ इति निर्युक्तिगाथार्थः ॥ १४४७ ॥

अनभ्युपगतादिस्वरूपं भाष्यकारोऽप्याह—

१ घ ज 'पमा भा' । २ गाथा १४३४ । ३ क ख ग घ 'दनेत्या' ।

४ अर्थी स एव च गुरुर्भवति यतस्ततो विशेषतः शिष्यः । योग्योऽयोग्यो भण्यते तत्रायोग्योऽयं भवति ॥ १४४६ ॥

५ कस्य न भविष्यति द्वेष्योऽनभ्युपगतश्च निरुपकारी च । आत्मच्छन्दमतिक. प्रस्थितको गन्तुकामश्च ॥ १४४७ ॥ ६ घ ज 'प्रायका' ।

मा भूज्जनमध्ये ममावर्णवादः, गोहत्या वा मा भूत्, इत्यस्याश्चारीं प्रयच्छामि। यदि तु न दास्यामि तदा संजातकलङ्केभ्योऽस्मभ्यं पुनर्गवादिकं किमपि कोऽपि न दास्यति। अपरश्च, एतस्याश्चारीप्रदाने को दोषः ? प्रत्युत गुण एव, यतश्चारीप्रदानपुष्टामेतां पुनरपि वारकेणागतां वयमेव धोक्ष्यामः। यदिवा, अन्येनापि ब्राह्मणेन दुग्धायामेतस्यामस्माकमेवानुग्रह इति ॥ १४७४ ॥

अथोपनयमाह—

[1]सीसा पडिच्छगाणं भरो त्ति ते विय हु सीसगभरो त्ति। न करेंति सुत्तहाणी अन्नत्थ वि दुल्लहं तेसिं ॥१४७५॥

गुरोर्विनयकर्मणि कर्तव्ये स्वगच्छदीक्षिताः शिष्यास्तावच्चिन्तयन्ति। किम् ? इत्याह— प्रतीच्छकानामुपसंपन्नानामागन्तुकशिष्याणामयं गुरोर्विनयकरणलक्षणो भर आचारः, किमस्माकम्, तेषामेव सांप्रतं वल्लभत्वात् ? इति। तेऽपि च प्रतीच्छका एवं संप्रधारयन्ति— निजशिष्याणामेवाऽयं भरः, किमस्माकमागन्तुकानामद्य समागतानामन्येद्युर्जिगमिषूणाम् ? इति। एवं संप्रधार्योभयेऽपि गुरोर्न किञ्चिद् विनय-वैयावृत्त्यादिकं कुर्वन्ति। ततश्च गुरुषु सीदत्सु तेषां सूत्रा-ऽर्थहानिः, अन्यत्रापि च गतानां तेषां दुर्विनीतानां दुर्लभं सूत्रम्, अर्थश्च। उपलक्षणत्वादन्येऽप्यवर्णवादादयो दोषाः स्वयमेवाभ्यूह्याः। अयं च दुर्विनीतशिष्योपनयः कृतः। सुविनीतविनेयोपनयस्तूक्तविपर्ययेण स्वयमेव कर्तव्य इति ॥ १४७५ ॥

भेरीदृष्टान्तमाह—

[2]कोमुइया तह संगामिया य उब्भूइया य भेरीओ। कण्हस्सासिण्हुतया असिवोवसमी चउत्थी उ ॥ १४७६ ॥
सक्कपसंसा गुणगाहि केसवो नेमिवंद-सुणुदंता। आसरयणस्स हरणं कुमारभंगे य पुयजुद्धं ॥ १४७७ ॥
नेहि जिओ म्हि त्ति अहं असिवोवसमीए संपयाणं च। छम्मासियघोसणया पसमइ न य जायए अन्नो ॥१४७८॥
आगंतुवाहिक्खोभो महिड्ढिमुल्लेण कंथ-दंडणया। अट्ठमआराहण अन्नभेरी अन्नस्स ठवणं च ॥ १४७९ ॥

1 शिष्या· प्रतीच्छकाना भर इति तेऽपिच खलु शिष्यकभर इति। न कुर्वन्ति सूत्र-हान्यावन्यत्रापि दुर्लभ तेपाम् ॥ १४७५ ॥
2 कौमुदिका तथा साग्रामिकी चौद्भूतिकी च भेर्य। कृष्णस्याशिश्नुतयाऽशिवोपशमिनी चतुर्थी तु ॥ १४७६ ॥
शक्रप्रशसा गुणग्राही केशवो नेमिवन्दन-श्वानोदन्तौ। अश्वरत्नस्य हरण कुमारभङ्गे च पूतयुद्धम् ॥ १४७७ ॥
नय जितोऽस्मीत्यहमशिवोपशमिन्या. सप्रदान च। पाण्मासिकघोषणया प्रशमति न जायतेऽन्य ॥ १४७८ ॥
आगन्तुकव्याधिक्षोभो मर्हार्द्धमूल्येन कन्था-दण्डनते। अष्टमाराधनमन्यभेरी अन्यस्य स्थापन च ॥ १४७९ ॥

अथ प्रकारान्तरेणापि योग्या-ऽयोग्यशिष्यानुपदर्शयन्नाह—

[1]सेलघण-कुडग-चालणि-परिपूणग-हंस-महिस-मेसे य। मसग-जलूग-बिराली जाहग-गोभेरी आहेरी ॥१४५४॥

'सेल त्ति' मुद्गशैलः पाषाणविशेषः, घनो मेघः, मुद्गशैलश्च घनश्च तदुदाहरणं प्रथमम्, कुटो घटः, चालनी प्रतीता, परिपूणकः सुघरीचिटिकागृहम्, हंस-महिष-मेष-मशक-जलूका-बिडाल्यः प्रतीताः, जाहकः सेहुलकः, गोभेरी, आभेरी चेति योग्या-ऽयोग्यशिष्यविषयाणि चतुर्दशैतान्युदाहरणानि ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ १४५४ ॥

उदाहरणं च द्विविधं भवति– चरितं, कल्पितं च। तत्रेह प्रथमं कल्पितमुदाहरणम्। एतच्च भाष्यकारो विवृण्वन्नाह—

[2]ऊल्लेऊण न सक्को गज्जइ इय मुग्गसेलओऽरन्ने। तं संवट्टयमेहो गंतुं तस्सुपरिं पडइ ॥ १४५५ ॥

रविउ त्ति ठिओ मेहो, उल्लोऽम्हि नव त्ति गज्जइ सेलो। सेलसमं गाहिस्सं निव्विज्जइ गाहगो एवं॥१४५६॥

इह क्वचिदरण्ये पर्वतासन्नप्रदेशे समन्ताद् निविडो मुद्गवद् वृत्तत्व-श्लक्ष्णत्वादिधर्मयुक्तः किञ्चिद्भूतले निमग्नः किञ्चित्तु प्रकाशश्च कचिकायमानो बदरादिप्रमाणलघूपलरूपो मुद्गशैलः[3] किलासीत्। स च गर्जति– साक्षेपं जल्पति। कथम्?, इत्याह– अहमार्द्रीकर्तुं जलेन भेत्तुं केनापि न शक्य इति। तच्च मुद्गशैलस्य संबन्धि गर्ववचः कुतश्चिद् नारदकल्पात् श्रुत्वा संवर्तको नाम महामेघः 'तद्गर्वमद्याहमपनयामि' इति संप्रधार्य तं मुद्गशैलं गत्वा संप्राप्य तस्यैवोपरि पतति– निरन्तरं मुशलप्रमाणधाराभिर्वर्षतीत्यर्थः। 'संवर्तकमेघश्चोत्सर्पिण्यां शुभीभवति, काले पूर्वदग्धभूम्याश्वासनार्थं वर्षति' इत्यागमे प्रतिपाद्यते। तस्य च संबन्धि जलमतीव भूम्यादेर्द्रावकं वासकं च भवति, इति विशेषतस्तस्येह ग्रहणम्। एवं– सप्ताहोरात्राणि महावृष्टिं कृत्वा 'ठिओ मेघो त्ति' स्थितो वृष्टेरुपरतोऽसौ मेघः। कया बुद्ध्या?, इत्याह– 'रविउ त्ति' द्रावितः खण्डशो नीतो मयाऽसौ मुद्गशैल इत्यभिप्रायेणेत्यर्थः। पानीये चापसृते सुतरामुज्जलीभूतोऽसौ चकचिकायमानो मुद्गशैलः पुनरपि गर्जति। कथम्?, इत्याह–'उल्लोऽम्हि नव त्ति' आर्द्रोऽस्म्यहं नवा? इति सम्यग् निरीक्षस्व। भोः पुष्करावर्तक! किमित्येवमेव स्थितोऽसि, तिलतुषत्रिभागमात्रमपि ममाद्यापि न भिद्यत इति भावः। ततो लज्जितो

१ शैलघन-कुट-चालनी-परिपूणक-हंस-महिष-मेषाश्च। मशक-जलूका-बिडाल्यो जाहक-गोभेर्यावाभेरी ॥ १४५४ ॥

२ आर्द्रीकर्तुं न शक्यो गर्जतीति मुद्गशैलकोऽरण्ये। त संवर्तकमेघो गत्वा तस्योपरि पतति ॥ १४५५ ॥
द्रावित इति स्थितो मेघः, आर्द्रोऽस्मि नवेति गर्जति शैल.। शैलसम ग्राहयिष्ये निर्विद्यते ग्राहक एवम् ॥१४५६॥ ३ घ. ज 'लक आसी'।

प्रदाने केवलं त्वम्, अहं च क्लेशमेवानुभवावः। तदित्थं स्वदोषाप्रतिपत्तौ गुरुदोषोद्भावनेनाभीरमिथुनस्येव गुरु-शिष्ययोः कलह एव प्रवर्तते। तथाच सति व्याख्याव्यवच्छित्ति-सूत्रा-ऽर्थहान्यादयो दोषाः।

अत्र प्रतिपक्षः स्वयमेव द्रष्टव्यः, तथाहि— अन्योऽप्याभीरः किल सकलत्रस्तथैव क्वापि नगरे घृतविक्रयार्थं गतः। कलत्रस्य च चारके समर्पिते भग्ने 'अहो! मयाऽनुपयुक्तेन समर्पितोऽयम्' इति ब्रुवाणो झगिति गन्त्र्याः समुत्तीर्य कर्परकैर्घृतं संवृणोति। भार्याऽपि 'धिग् मयाऽनुपयुक्तया दुष्परिगृहीतः कृतोऽसौ, तेन भग्नः' इति वदन्ती तथैव तत् संवृणोति। ततश्चान्योन्यं कलहेऽज्ञात उभयसंवृत्त्या घृतं शीघ्रमेव विक्रीतम्। सार्थिकैश्च सह क्षेमेण स्वस्थानं जग्मतुः। एवं गुरु-शिष्या अपि स्वदोषं प्रतिपद्यमानाः परदोषं तु निह्नुवाना येऽन्योन्यं न विवदन्ते, त एव सूत्रा-ऽर्थग्रहण-प्रदानयोर्योग्या भवन्ति, निर्जरादिलाभभागिनश्चेति ॥ १४८१ ॥

तदेवं योग्या-ऽयोगान् गुरून् शिष्यांश्चोपदर्श्योपसंहारपूर्वकं तत्फलमाह—

[1]भणिया जोग्गा-ऽजोगा सीसा गुरवो य तत्थ दोण्हं पि। पेयालियगुण-दोसो जोग्गो जोग्गस्स भासेज्जा ॥१४८२॥

भणिता योग्या-ऽयोग्या गुरु-शिष्याः। तत्र द्वयोरपि गुरु-शिष्ययोर्विचारितगुण-दोषो योग्यो गुरुर्योग्याय शिष्याय सूत्रा-र्थौ भाषेतेति ॥ १४८२ ॥

अथ क्रमप्राप्तमुपोद्घातद्वारमभिधित्सुः प्रस्तावनामाह—

[2]कयमंगलोवयारो संपइ वण्णियपसंगवक्खाणो। दाइयवक्खाणविही वोच्छमुवग्घायदारविहिं ॥१४८३॥

तदेवं '[3]तित्थयरे भगवंते' इत्यादिना कृतमङ्गलोपचारो वर्णितप्रसङ्गागतजिनप्रवचनोत्पत्त्यादिव्याख्यानः पूर्वोक्तकारणाद् दर्शितव्याख्यानविधिश्च, सांप्रतं उपोद्घननं व्याख्येयस्य सूत्रस्य व्याख्यानविधिसमीपीकरणमुपोद्घातः, तद्विषयो द्वारविधिस्तं वक्ष्ये ॥ इत्येकोनत्रिंशद्गाथार्थः ॥ १४८३ ॥

स चायं द्वारविधिः। कः? इत्याह—

[4]उद्देसे निद्देसे य निग्गमे खेत्त-काल-पुरिसे य। कारण-पच्चय-लक्खण-नए समोयरणा-णुमए ॥ १४८४ ॥

---

१ भणिता योग्या अयोग्या. शिष्या गुरवश्च, तत्र द्वयो। विचारितगुण-दोषो योग्यो योग्याय भाषेत ॥ १४८२ ॥
२ कृतमङ्गलोपचार. संप्रति वर्णितप्रसङ्गव्याख्यान.। दर्शितव्याख्यानविधिर्वक्ष्ये उपोद्घातद्वारविधिम् ॥ १४८३ ॥ ३ गाथा १०२५।
४ उद्देशश्च निर्देशो निर्गमश्च क्षेत्र-काल-पुरुषाश्च। कारण-प्रत्यय-लक्षण-नया. समवतारा-ऽनुमतौ ॥ १४८४ ॥

दृष्टान्तः, केवलं पाषाण-मेघादीनां जल्पः, अभिप्रायपूर्विके च प्रवृत्ति-निवृत्ती, इत्यलौकिकमेवेदम् । सत्यम्, किन्तु पूर्वमुनिभिरेवात्रोक्तं प्रतिविधानम्, तद्यथा—

"[1]चरिय च कप्पिय विय आहरण दुविहमेव पन्नत्तं । अत्थस्स साहणट्ठा इंधणमिव ओयणट्ठाए ॥ १ ॥

न वि अत्थि न विय होही उल्लावो मुग्गसेल-मेहाण । उवमा खलु एस कया भवियजणविबोहणट्ठाए ॥ २ ॥"

इत्यलं प्रसङ्गेनेति ॥ १४५७ ॥

अथ मुद्गशैलप्रतिपक्षभूतं घनदृष्टान्तमाह—

[2]वुट्ठे वि दोणमेहे न कण्हभोमाओ लोठए उदयं । गहण-धरणासमत्थे इय देयमच्छित्तिकारिम्मि ॥१४५८॥

यावता वृष्टेनाकाशबिन्दुभिर्महती गर्गरी भ्रियते, तावत्प्रमाणजलवर्षी मेघो द्रोणमेघ उच्यते । तस्मिन् वृष्टेऽपि सति कृष्णा भूमिर्यत्र प्रदेशेऽसौ कृष्णभूमः प्रदेशस्तस्माद् न प्रलोठति– यद्यपि तन्मेघजलं पतितं न लुठित्वाऽन्यत्र गच्छति, किन्तु तत्रैवान्तः प्रविशतीति भावः । एवं शिष्योऽपि स कश्चिद् भवति यो गुरुभिरुक्तं तद्व्यवधारयति, न पुनरक्षरमपि पार्श्वतो गच्छतीति । एवंभूते च सूत्रा-ऽर्थग्रहणा-ऽवधारणासमर्थे शिष्ये सूत्रा-ऽर्थयोः शिष्य-प्रशिष्यपरम्पराप्रदानेनाव्यवच्छेदकारिणि देयं सूत्रा-ऽर्थजातम्, नान्यस्मिन्ननन्तराभिहितमुद्गशैलकल्पे । इत्यन्वय-व्यतिरेकात्मकत्वादेकमेवेदमुदाहरणम् ॥ १४५८ ॥

अथ द्वितीयं कुटोदाहरणं विवृण्वन्नाह—

[3]भाविय इयरे य कुडा अपसत्थ-पसत्थभाविया दुविहा । पुप्फाईहिं पसत्था सुर-तेल्लाईहिं अपसत्था ॥१४५९॥

वम्मा अवम्मा वि य पसत्थवम्माओ होंति अगेज्झा । अपसत्थअवम्मा वि य, तप्पडिवक्खा भवे गेज्झा ॥१४६०॥

---

१ चरितं च कल्पितमपिचोदाहरण द्विविधमेव प्रज्ञप्तम् । अर्थस्य साधनार्थमिन्धनमिवौदनार्थितया ॥ १ ॥
नाप्यस्ति नापि च भविष्यत्युल्लापो मुद्गशैल मेघयो॰ । उपमा खल्वेष कृता भविकजनविबोधनार्थम् ॥ २ ॥

२ वृष्टेऽपि द्रोणमेघे न कृष्णभूमाल्लोठत्युदकम् । ग्रहण-धारणासमर्थ इति देयमच्छित्तिकारिणि ॥ १४५८ ॥

३ भाविता इतरे च कुटा अप्रशस्त-प्रशस्तभाविता द्विविधा॰ । पुष्पादिभि प्रशस्ता॰ सुरा-तैलादिभिरप्रशस्ताः ॥ १४५९ ॥
वाम्या अवाम्या अपि च प्रशस्तवाम्या भवन्त्यग्राह्याः । अप्रशस्ताऽवाम्या अपि च, तत्प्रतिपक्षा भवेयुर्ग्राह्या ॥ १४६० ॥

'[1]तव संजमो अणुमओ निग्गंथं पवयणं च ववहारो । सद्दो-ज्जुसुयाणं पुण निव्वाणं संजमो चेव ॥ १ ॥

इति 'किं सामायिकम् ?' इति प्रश्ने प्रत्युत्तरं दास्यति– '[2]जीवो गुणपडिवन्नो नयस्स दव्वट्ठियस्स सामइयं' इत्यादि । 'कतिविधं च तत् ?, इत्यत्र निर्वचनं वक्ष्यति– '[3]सामाइयं च तिविहं सम्मत्त सुयं तहा चरित्तं च' इत्यादि । 'कस्य सामायिकम् ? इत्यत्राभिधास्यति– '[4]जस्स सामाणिओ अप्पा' इत्यादि । 'क्व सामायिकम् ?' इत्येतदपि '[5]खित्त दिसा-काल-गइ-भविय-सन्नि-ऊसास-दिट्ठि-माहारे' इत्यादिना द्वारकलापेन निरूपयिष्यति । 'केषु सामायिकम्' इत्यत्रोत्तरम्– सर्वद्रव्येषु, तथाहि—

'[6]सव्वगयं सम्मत्तं सुए चरित्ते न पज्जवा सव्वे । देसविरइ पडुच्चा दोण्हं वि पडिसेहणं कुज्जा ॥ १ ॥'

इति वक्ष्यति । 'कथं सामायिकमवाप्यते' इत्यत्र '[7]माणुस्सखेत्तजाई' इत्यादि प्रतिपादयिष्यति । 'कियच्चिरं कालं भवति' इति चिन्तायामभिधास्यति–

'[8]सम्मत्तस्स सुयस्स य छावट्ठी सागरोवमाइं ठिई । सेसाण पुव्वकोडी देसूणा होइ उक्कोसा ॥ १ ॥'

इति । 'कइ त्ति' कियन्तः सामायिकस्य युगपत् प्रतिपद्यमानकाः, पूर्वप्रतिपन्ना वा लभ्यन्ते ? इति वक्तव्यम् । तत्र च वक्ष्यति– '[9]सम्मत्त-देसविरया पलियस्स असंखभागमेत्ताओ' इत्यादि । सहान्तरेण वर्तत इति सान्तरम्, इति विचारणायां निर्णेष्यति—

'[10]कालमणंतं च सुए अद्धापरियट्टओ च देसूणो । आसायणबहुलाणं उक्कोसं अंतरं होइ ॥ १ ॥'

इति । 'अविरहितं निरन्तरायं कियन्तं कालं सामायिकस्य प्रतिपत्तारो लभ्यन्ते ?' इत्यत्र निर्वचनयिष्यति—

---

१ तप. सयमोऽनुमतो नैर्ग्रन्थ्य प्रवचन च व्यवहार । शब्द-र्जुसूत्रयो· पुनर्निर्वाण सयम एव ॥ १ ॥
२ जीवो गुणप्रतिपन्नो नयस्य द्रव्यास्तिकस्य सामायिकम् ।
३ सामायिक च त्रिविधं सम्यक्त्वं श्रुतं तथा चारित्र च ।
४ यस्य सामाऽऽनीत आत्मा । ५ क्षेत्र-दिक्-काल-गति-भविक-संज्ञि-उच्छ्वास-दृष्टि-आहारेषु· ।
६ सर्वगतं सम्यक्त्व श्रुते चारित्रे न पर्यवाः सर्वे । देशविरतिं प्रतीत्य द्वयोरपि प्रतिषेधन कुर्या· ॥ १ ॥ ७ मानुष्यक्षेत्रजातयः ।
८ सम्यक्त्वस्य श्रुतस्य च द्वापष्टि. सागरोपमाणि स्थिति· । शेषाणां पूर्वकोटिर्देशोना भवत्युत्कृष्टा ॥ १ ॥
९ सम्यक्त्व-देशविरताः पल्यस्यासंख्यभागमात्रा. ।
१० कालमनन्त च श्रुतेऽद्धापरिपर्तकश्च देशोन· । आशातनाबहुलानामुत्कृष्टमन्तरं भवति ॥ १ ॥

दार्ष्टान्तिकमधिकृत्य प्ररूपणा स्वयमेव कार्या, यथा कोऽपि शिष्यः श्रुतग्रहणमाश्रित्य च्छिद्रघटकल्पो भवति, कश्चित्तु भिन्नघटकल्प इत्यादि वाच्यमिति ॥ १४६२ ॥

अथ क्रमप्राप्तं चालन्युदाहरणमभिधित्सुः, मुद्गशैल च्छिद्रकुट-चालन्युदाहरणानां परस्पराभेदोद्भावकशिष्यमतं च निराचिकीर्षुराह—

[1]सेले य छिड्डु-चालणि मिहो कहा सोउमुट्ठियाणं तु । छिड्डाह तत्थ विट्ठो सुमरिंसु सरामि नेदाणिं ॥ १४६३ ॥

एगेण विसइ बीएण नीइ कन्नेण चालणी आह । धन्न त्थ आह सेलो जं पविसइ नीइ वा तुज्झं ॥ १४६४ ॥

शैल-च्छिद्रकुट-चालन्युदाहरणैः प्रतिपादिताः शिष्या अप्युपचारात् तथोच्यन्ते, तत्सादृश्यात् । ततश्च शैल-च्छिद्रकुट-चालन्यभिधानानां शिष्याणां गुर्वन्तिके व्याख्यानं श्रुत्वा, उत्थायान्यत्र गतानां मिथः परस्परं कथा समभवत् । कीदृशी ?, इत्याह— 'छिड्डेत्यादि' छिद्रघटकल्पच्छिद्रः शिष्यः प्राह । किम् ?, इत्याह— तत्र गुरुसमीपे उपविष्टस्तदुक्तमस्मार्षमहम्, इदानीं तु न किमपि स्मरामि । छिद्रघटो ह्येवंविध एव भवति । सोऽपि स्थानस्थितो मुद्गादिकं प्रक्षिप्तं धरति, अन्यत्र तूत्क्षिप्य नीतस्य तन्न प्राप्यते, अधश्छिद्रेण गलित्वा निःसृतत्वात्, अतस्तत्कल्पः शिष्योऽपीत्थमाहेति भावः । छिद्रकुटकल्पेन शिष्येणैवमुक्ते चालनीकल्पः प्राह— 'एक्केणेत्यादि' चालनीकल्पः शिष्यश्चालनी, स प्राह— भोश्छिद्रकुट ! शोभनस्त्वम्, येन गुरुसमीपस्थेन त्वया तावदवधारितं तद्वचः पश्चादेव विस्मृतम्, मम तु गुर्वन्तिकेऽपि स्थितस्यैकेन कर्णेन विशति, द्वितीयेन तु निर्गच्छति, न पुनः किमपि हृदये स्थितम् । कणिकादिचालन्या अपि हि जलादिकमुपरिभागे निक्षिप्यते, अधोभागेन तु निर्गच्छति, न तु किमपि संतिष्ठते, अतस्तदुपमः शिष्योऽपीत्थमेवाहेति भावः । तदेवं छिद्रकुट-चालनीभ्यामेवमुक्ते मुद्गशैलः प्राह— 'धन्न त्थेत्यादि' मुद्गशैलो वदति— धन्यावत्र युवाम्, यद् यस्मात् कारणाद् युवयोस्तावत्कर्णयोर्गुरूक्तं किमपि प्रविशति, निर्गच्छति च । मम त्वेतदपि नास्ति, तदुक्तस्य सर्वथापि मध्ये प्रवेशाभावात्, उपलस्यैवंविधत्वादेवेति । तदेवं चालन्युदाहरणस्य स्वरूपमुक्तम्, शैल-च्छिद्रघट-चालन्युदाहरणानां परस्परं विशेषश्चाभिहितः ॥१४६३॥१४६४॥

अथ चालनीप्रतिपक्षमाह—

---

१ शैले च च्छिद्र-चालन्योर्मिथः कथा श्रुत्वोत्थितानां तु । छिद्र आह तत्र विष्टोऽस्मार्षं स्मरामि नेदानीम् ॥ १४६३ ॥
एकेन विशति द्वितीयेन निर्गच्छति कर्णेन चालन्याह । धन्यावत्राह शैलो यत् प्रविशति निर्गच्छति वा युवयो ॥ १४६४ ॥

विशेषाकारग्राहकम् । ततस्तस्मात् कारणाद् वस्तुनः सामान्याभिधानलक्षणः प्रथममुद्देशः, ततस्तस्यैव विशेषाभिधानरूपो निर्देशः ॥ इति गाथार्थः ॥ १४८६ ॥

तदेवं स्थापित आदावुद्देशः । अथ 'तत्त्व-भेद-पर्यायैर्व्याख्या' इति कृत्वा तमेव भेदकथनद्वारेण व्याख्यातुमाह—

[1]नामं ठवणा दविए खित्ते काले समासउद्देसे । उद्देसुद्देसम्मि य भावम्मि होइ अट्ठमओ ॥ १४८७ ॥

नामादिभेदादुद्देशोऽष्टविधः, तद्यथा– नामोद्देशः, स्थापनोद्देशः, द्रव्योद्देशः, क्षेत्रोद्देशः कालोद्देशः, समासोद्देशः, उद्देशोद्देशः, भावोद्देशो भवत्यष्टमकः ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ १४८७ ॥

तत्र नामोद्देशं व्याख्यातुमाह भाष्यकारः—

[2]नामं जस्सुद्देसो नामेणुद्देस एव जो जेणं । उद्देस्सो नामस्स व नामुद्देसोऽभिहाणं ति ॥ १४८८ ॥

यस्य जीवादेर्वस्तुन 'उद्देशः' इति नाम क्रियते स नामोद्देशः, नामरूप उद्देशो नामोद्देशः, यथा गोपालदारकादेरुद्देश इति नाम । 'नामेणुद्देस एव जो जेणं ति' यो घट-पट-स्तम्भादिः पदार्थो येन घट-पट-स्तम्भादिनाम्नोद्दिश्यते प्रतिपाद्यते सोऽपि घट-पटादिपदार्थो नामोद्देश इति उच्यते, उद्दिश्यतेऽभिधीयते प्रतिपाद्यते निजेन नाम्नेति कृत्वा । 'उद्देसो नामस्स व नामुद्देसो त्ति' नाम्नो वा वस्तुसामान्याभिधानस्योद्देशनमुच्चारणं नामोद्देशः । किमुक्तं भवति ?, इत्याह– 'अभिहाणं ति' वस्तुनः सामान्यं यदभिधानं स नामोद्देश इत्यर्थः । यथा– आम्रादेर्वृक्षादि नाम । वाशब्दः सर्वत्र प्रकारान्तरसूचकः ॥ १४८८ ॥

अत्र परोऽतिप्रसङ्गमुद्भावयन्नाह—

[3]एवं नणु सव्वो च्चिय नामुद्देसो जओऽभिहाणं ति । दव्वाईणं तेहिं व तेसु व जं कीरए जस्स ॥१४८९॥

ननु यदि वस्तुनः सामान्याभिधानमात्रमुद्देशोऽभिधीयते, एवं तर्हि सर्व एवायं स्थापना-द्रव्य-क्षेत्र-कालाद्युद्देशो नामोद्देश एव प्राप्नोति; यतो द्रव्याणामपि हेम-रजतादीनां हेमादिकं सामान्याभिधानमस्ति, तैर्वा कुसुम्भ-हरिद्रादिद्रव्यैर्हेतुभूतैर्वस्त्रादीनां रक्तं पीत-

1 नाम स्थापना द्रव्ये क्षेत्रे काले समासोद्देशे । उद्देशोद्देशे च भावे च भवत्यष्टमक. ॥ १४८७ ॥
2 नाम यस्योद्देशो नाम्नोद्देश एव यो येन । उद्देशो नाम्नो वा नामोद्देशोऽभिधानमिति ॥ १४८८ ॥
3 एव ननु सर्व एव नामोद्देशो यतोऽभिधानमिति । द्रव्यादीना तैर्वा तेषु वा यत् क्रियते यस्य ॥ १४८९ ॥

को आउरस्स कालो मइलंबरधोयणे य को कालो ? । जइ मोक्खहेउ नाणं को कालो तस्सकालो वा ? ॥ ३ ॥"

इत्यादि । असन्तश्च सर्वेऽप्यमी दोषाः,

"बाल-स्त्री-मूढ-मूर्खाणां नृणां चारित्रकाङ्क्षिणाम् । अनुग्रहार्थं तत्त्वज्ञैः सिद्धान्तः प्राकृतः कृतः ॥ १ ॥"

"पुव्वभणियं पि जं वत्थु भण्णए तत्थ कारणं अत्थि । पडिसेहो य अणुन्ना वत्थुविसेसोवलंभो वा ॥ १ ॥"

इत्यादिना शास्त्रान्तरे विस्तरेण निराकृतत्वादिति ॥ १४६६ ॥

अथ हंसोदाहरणव्याख्यामाह—

अंबत्तणेण जीहाए कूचिया होइ खीरमुदगम्मि । हंसो मुत्तूण जलं आवियइ पयं तह सुसीसो ॥१४६७॥

दुग्धं च जलं च मिश्रयित्वा भाजने व्यवस्थाप्य कोऽपि हंसस्य पानार्थमुपनयति । स च तन्मध्ये चञ्चुं प्रक्षिपति । तस्य च
जिह्वा स्वभावत एवाम्ला भवति । तेन च जिह्वाया आम्लत्वेन हेतुभूतेनोदकमध्यगतं दुग्धं विलित्वा कूचिका बिन्दुरूपा बुद्बुदा भव-
न्तीत्यर्थः । ततश्च जलं मुक्त्वा तद् बुद्बुदीभूतं दुग्धमापिबति हंसः । तथा सुशिष्योऽपि गुरोर्जलस्थानीयान् दोषान् परित्यज्य दुग्ध-
स्थानीयान् गुणान् गृह्णातीत्यर्थ इति ॥ १४६७ ॥

अथ महिषोदाहरणं विवृण्वन्नाह—

सयमवि न पियइ महिसो न य जूहं पियइ लोडियं उदगं । विग्गह-विगहाहि तहा अत्थकुपुच्छाहि य कुसीसो ॥१४६८॥

स्वयूथेन समं वनमहिषो जलाशये क्वचिद् गत्वा तन्मध्ये च प्रविश्योद्वर्तन-परावर्तनादिभिस्तथा तज्जलमालोडयति यथा कलुषितं
सद् न स्वयं पिबति, नापि तद्यूथम् । एवं कुशिष्योऽपि व्याख्यामण्डलिकायामुपविष्टो गुरुणा, अन्येन वा शिष्येण सह विग्रहं
कलहमुदीरयति, विकथाप्रबन्धं वा किञ्चिच्चालयति, संबद्धा-संबद्धरूपाभिरनवरतमुपर्युपरि पृच्छाभिश्च तथा कथञ्चिद् व्याख्यानमा-
लोडयति, यथा नात्मनः किञ्चित् पर्यवस्यति, नापि शेषविनेयानामिति ॥ १४६८ ॥

---

१ क आतुरस्य कालो मलिनाम्बरधावने च क कालः ? । यदि मोक्षहेतुर्ज्ञानं क. कालस्तस्याऽकालो वा ? ॥ ३ ॥

२ पूर्वभणितमपि यद् वस्तु भण्यते तत्र कारणमस्ति । प्रतिषेधश्चानुज्ञा वस्तुविशेषोपलम्भो वा ॥ १ ॥

३ आम्लत्वेन जिह्वाया कूचिका भवति क्षीरमुदके । हंसो मुक्त्वा जलमापिबति पयस्तथा शिष्यः ॥ १४६७ ॥

४ स्वयमपि न पिबति महिषो न च यूथ पिबति लोडितमुदकम् । विग्रह-विकथाभिस्तथाऽर्थकुपृच्छाभिश्च कुशिष्यः ॥ १४६८ ॥

हेतुभूतेन य उद्दिश्यतेऽभिधीयते स द्रव्योद्देशः, यथा द्रव्यपतिरित्यादि । यदिवा, ततस्तस्माद् द्रव्यादुद्देशोऽभिधानप्रवृत्तिर्द्रव्योद्देशः, यथा द्रव्यवानित्यादि । अथवा, तस्मिन् द्रव्ये सत्युद्देशोऽभिधानप्रवृत्तिर्द्रव्योद्देशः, यथा सद्रव्य इत्यादि; सिंहासने राजा, चूते कोकिलः, वने मयूर इत्यादि वा । एममुद्दिश्यते तत्, उद्दिश्यते तेन वेत्यादिव्युत्पत्त्या क्षेत्रम्, क्षेत्री, क्षेत्रपतिः, क्षेत्रे जातं क्षेत्रजमित्यादिकः सर्वोऽपि क्षेत्रोद्देश इति ॥ १४९१ ॥ १४९२ ॥

कालो कालाईयं कालोवेयं ति कालजायं ति । संखेवो त्ति समासो अंगाईणं तओ तिण्हं ॥ १४९३ ॥

अंग-सुयक्खंध-ज्झयणाणं नियनियप्पभेयसंगहओ । होइ समासुदेसो जहंगमंगी तज्झेया ॥ १४९४ ॥

एमेव य सुयक्खंधो तस्सज्झेया तयत्थविण्णाया । अज्झयणं अज्झयणी तस्सज्झेया तयत्थण्णो ॥१४९५॥

'कालो त्ति' काल एवोद्दिश्यमानत्वादुद्देशः कालोद्देशः । तेन वा कालेनोद्देशः कालोद्देशः, यथा कालातीतं कालातिक्रान्तमिदं वस्त्विति । ततो वा कालादुद्देशः कालोद्देशः, यथा कालोपेतं कालप्राप्तमिति । तस्मिन् वा काले जातं कालजातमित्यादिकः कालोद्देशः । अथ समासोद्देशं विवक्षुराह– 'संखेवो इत्यादि' संक्षेपेण विस्तरवतः संकोचनं समास उच्यते । तकोऽयं चेहाङ्गादीनां त्रयाणां विवक्षितः । एतदेव दर्शयति– 'अङ्गेत्यादि' अङ्गं, श्रुतस्कन्धः, अध्ययनम्, इत्येष समासो भवति । कुतः ?, इत्याह– निजनिजप्रभेदसंग्रहादिति । अस्याङ्गादिसमासस्योद्देशनमभिधानं समासोद्देशः । कः ?, इति दर्शयति– यथा 'अङ्गम्' इति, तदेवोद्दिश्यमानत्वादुद्देश इत्यर्थः । तेन वाऽङ्गरूपसमासेनोद्देशः समासोद्देशः, यथा– अङ्गीति, तस्याङ्गात्मकसमासादुद्देशः, यथा तदध्येता– अङ्गाध्येतेत्यर्थः । एवं श्रुतस्कन्धात्मकसमास एवोद्दिश्यमानत्वादुद्देशः, यथा श्रुतस्कन्ध इति । तेन वोद्देशः– यथा श्रुतस्कन्धीति । तस्माद् वोद्देशः, यथा तस्य श्रुतस्कन्धस्याध्येता । तस्मिन् वोद्देशः, यथा तदर्थविज्ञाता श्रुतस्कन्धार्थज्ञ इत्यादि । एवमध्ययनात्मकसमास एवोद्दिश्यत इत्युद्देशः, यथा– अध्ययनमिति । तेन वोद्देशः, यथा– 'अध्ययनी' इति । तस्माद् वोद्देशः, यथा– तस्याध्ययनस्याध्येता, तस्मिन् वाध्ययने सत्युद्देशः, यथा तदर्थज्ञोऽध्ययनार्थवित्, इत्यादि विवक्षया सर्वं भावनीयमिति ॥ १४९३ ॥ १४९४ ॥ १४९५ ॥

१ काल कालातीत कालोपेतमिति कालजातमिति । सक्षेप इति समासोऽङ्गादीनां तकस्त्रयाणाम् ॥ १४९३ ॥
अङ्ग-श्रुतस्कन्धा ऽध्ययनानां निजनिजप्रभेदसंग्रहत । भवति समासोद्देशो यथाङ्गमङ्गी तदध्येता ॥ १४९४ ॥
एवमेव च श्रुतस्कन्धस्तस्याध्येता तदर्थविज्ञाता । अध्ययनमध्ययनी तस्याध्येता तदर्थज्ञ ॥ १४९५ ॥

जाहकोदाहरणमाह—

पीउं थोउं थोउं खीरं पासाइं जाहगो जह लिहइ। एमेव जियं काउं पुच्छइ मइमं न खेएइ ॥ १४७२ ॥

यथा भाजनगतं क्षीरं स्तोकं स्तोकं पीत्वा ततो जाहकः सेहलको भाजनस्य पार्श्वानि लेढि, पुनरपि च स्तोकं तत् पीत्वा भाजनपार्श्वानि लेढि, एवं पुनः पुनस्तावत् करोति यावत् सर्वमपि क्षीरं पीतमिति । एवं मतिमान् सुशिष्योऽग्रेतनं गृहीतं श्रुतं जितं परिचितं कृत्वा पुनरन्यद् गृह्णाति, एवं पुनः पुनस्तावद् विदधाति यावत् सर्वमपि श्रुतं गुरोः सकाशाद् गृह्णाति, न च गुरुं खेदयतीति ॥ १४७२ ॥

अथ गोदृष्टान्त उच्यते– तत्र च केनापि यजमानेन वेदान्तर्गतग्रन्थविशेषाध्ययननिमित्तचरणशब्दवाच्येभ्यश्चतुर्भ्यो ब्राह्मणविशेषेभ्यो गौः प्रदत्ता। प्रोक्ताश्च तेन ते ब्राह्मणाः– 'वारकेणासौ भवद्भिर्दोग्धव्या' इति । अन्येभ्योऽपि च चतुर्भ्यश्चरणद्विजेभ्यो गौरेका तेन प्रदत्ता। तेऽपि च तेन तथैवोक्ताः। तत्र च प्रथमद्विजानां मध्ये ज्येष्ठब्राह्मणेन केनचिद् गौः स्वगृहे नीत्वा दुग्धा। ततश्चारीप्रदानवेलायां चिन्तितं तेन। किम् ? इत्याह—

अन्नो[1] दोज्जिइ कल्ले निरत्थियं किं वहामि से चारिं। चउचरणगवी उ मया अवन्न-हाणी य बहुयाणं ॥१४७३॥

तेनैतच्चिन्तितम्– हन्त! वारकप्राप्तोऽन्यो ब्राह्मणः कल्ये तावदेतां धेनुं धोक्ष्यति, तत् किमद्य निरर्थिकामस्याश्चारीं वहामि। कल्येऽन्योऽपि हि तां दास्यति, इति विनिश्चित्य न तस्याश्चारी प्रदत्ता। ततो द्वितीये दिने द्वितीयेनापि द्विजातीयेन तथैव कृतम्। एवं तृतीये दिने तृतीयेनापि, चतुर्थे दिने चतुर्थेनापि तथैव चेष्टितम्। इत्थं च चारीविरहिता दुह्यमाना कतिपयदिनमध्ये चतुर्णां चरणानां संबन्धिनी सा गौर्मृता। ततश्च तेषां बहूनां गोहत्या समभवत्। जने चावर्णवादो जातः, हानिश्च, तेषां ततो यजमानात्, अन्यस्माद् वा पुनर्गवादिलाभाभावादिति ॥ १४७३ ॥

अन्यैश्च यैश्चतुर्भिश्चरणैर्गौर्लब्धा, तन्मध्ये प्रथमद्विजस्तां दुग्ध्वा चारीप्रदानवेलायामचिन्तयत्, किम् ?, इत्याह—

मा[3] मे होज्ज अवण्णो गोवज्झा वा पुणो वि न दविज्जा। वयमवि दोज्झामो पुणो अणुग्गहो अन्नदुद्धे वि॥१४७४॥

१ पीत्वा स्तोकं स्तोकं क्षीरं पार्श्वानि जाहको यथा लेढि। एवमेव जितं कृत्वा पृच्छति मतिमान् न खेदयति ॥ १४७२ ॥
२ अन्यो धोक्ष्यति कल्ये निरर्थिकां किं वहामि तस्याश्चारीम्। चतुश्चरणगौस्तु मृताऽवर्ण-हान्यौ च बहुकानाम् ॥ १४७३ ॥
३ मा मम भूदवर्णो गोहत्या वा पुनरपि न दास्यति। वयमपि धोक्ष्यामः पुनरनुग्रहोऽन्यदुग्धायामपि ॥ १४७४ ॥

भावनीयेति। तेन वा सचित्तादिद्रव्यविशेषेण निर्देशः, यथा गोमानित्यादि, दण्डीत्यादि, रथीत्यादि ॥ १४९८ ॥

अथ क्षेत्र-कालनिर्देशावाह—

[1]खेत्ते भरहं तत्थ व भवो त्ति मगह त्ति मागहो व त्ति। सरउ त्ति सारउ त्ति य संवच्छरिउ त्ति कालम्मि ॥१४९९॥

क्षेत्रं क्षेत्रीत्यादिकः क्षेत्रोद्देश उक्तः, इह तु तदेव विशिष्टं क्षेत्रं क्षेत्रनिर्देशः, यथा 'भरतम्' इत्यादि। अथवा, 'मगह त्ति' मगधा जनपद इत्यादि। तस्मिन् वा क्षेत्रविशेषे भवः क्षेत्रनिर्देश उच्यते, यथा भारत इत्यादि। एतच्च स्वयमेव द्रष्टव्यम्। मगधासु भवो मागध इत्यादि। एतत्तु गाथायामप्यस्तीति। 'कालो कालाईयं' इत्यादिकः कालोद्देश उक्तः; इह तु तस्यैव कालस्य विशिष्टस्य विशिष्टमभिधानं स कालनिर्देशः, यथा शरदित्यादि। तत्र वा कालविशेषे भवः कालनिर्देशोऽभिधीयते, यथा शरदि भवः शारदः, संवत्सरे भवः सांवत्सरिक इत्यादि ॥ १४९९ ॥

अथ समासनिर्देशम्, उद्देशनिर्देशं चाह—

[3]आयारो आयारवमायारधरो त्ति वा समासम्मि। आवस्सयमावासइ सुत्तत्थधरोऽहवा यं ति ॥ १५०० ॥

सत्थपरिण्णाई य व अज्झेयाऽयं समासनिद्देसो। उद्देसयानिद्देसो सपएसो पोग्गलुद्देसो ॥ १५०१ ॥

विस्तरवतो वस्तुनः संक्षेपः समासः, तस्य सामान्याभिधानं समासोद्देश उक्तः। इह तु तस्यैव समासस्य विशेषाभिधानं समासनिर्देशः। तत्र चाङ्ग-श्रुतस्कन्धा-ऽध्ययनभेदात् त्रिविधः समासोद्देशः पूर्वमुक्तः। इह तु तेषामेव त्रयाणामङ्गादीनां विशेषाभिधानरूपास्त्रिविध एव समासनिर्देशः। तथा चाह– 'आयारो इत्यादि' आचाररूपेणाऽङ्गविशेषाभिधानेन निर्दिश्यमानत्वादाचार इति समासनिर्देशः। तेन वाऽऽचारसमासेन निर्देशो यथा–आचारवानित्यादि। तस्माद्वाऽऽचारसमासाद् निर्देशो यथा–आचारधर इत्यादि। श्रुतस्कन्धसमासनिर्देशो यथा– आवश्यकमिति। तेन वाऽऽवश्यकसमासेन निर्देशो यथा– आवश्यकीति। अथवा, तस्मादावश्यकसमासाद् निर्देशो यथा– आवश्यकसूत्रा-ऽर्थधरोऽयमिति। अध्ययनमाश्रित्य समासनिर्देशः कः? इत्याह– 'आचाराङ्गे प्रथममध्ययनं

1 क्षेत्रे भरत तत्र वा भव इति मगधा इति मागधो वेति। शरदिति शारद इति च सांवत्सरिक इति काले ॥ १४९९ ॥ २ गाथा १४९३।

३ आचार आचारवानाचारधर इति वा समासे। आवश्यकमावश्यकी सूत्रा-ऽर्थधरोऽथवाऽयमिति ॥ १५०० ॥ शास्त्रपरिज्ञादिश्च वाऽध्येताऽयं समासनिर्देशः। उद्देशकनिर्देशः सप्रदेशः पुद्गलोद्देशः ॥ १५०१ ॥

आसां भावार्थः कथानकादवसेयः। तच्च 'गोणी चन्दनकंथा' इत्यत्र सविस्तरं कथितमेव । इह चेत्थमुपनयोऽपि द्रष्टव्यः– यः शिष्योऽशिवोपशमिकां भेरीं प्रथमरक्षक इव जिन-गणधरप्रदत्तां श्रुतरूपां भेरीं परमतादिथिग्गलकैः कन्थीकरोति स न योग्यः, यस्तु नैवं करोति स द्वितीयभेरीरक्षक इव योग्य इति ॥ १४७६ ॥ १४७७ ॥ १४७८ ॥ १४७९ ॥

अथाभीरीदृष्टान्तं विवृण्वन्नाह—

मुंक्कं[2] तया अगहिए दुपरिग्गहियं कयं तया, कलहो । पिट्टण-अइचिरविक्कय गएसु चोरा य ऊणग्घे ॥१४८०॥

इह च कथानकेन भावार्थ उच्यते, तद्यथा– कुतश्चिद् ग्रामाद् गोकुलाद् वाऽऽभीरीसहित आभीरो घृतवारकाणां गन्त्रीं भृत्वा विक्रयार्थं पत्तने समागतः। विक्रयस्थाने च गन्त्र्या अधस्ताद् भूमावाभीरी स्थिता । आभीरस्तूपरि स्थितस्तस्या घृतवारकं समर्पयति। ततश्चानुपयोगेन समर्पणे, ग्रहणे वा घृतवारके भग्ने आभीरी प्राह– भग्नाश ! नगरतरुणीनां मुखान्यवलोकयमानेन त्वया घृतवारकोऽयं मयाऽगृहीत एव मुक्तः, ततो भग्नः। आभीरस्त्वाह– रण्डे ! नगरयूनां वदनानि वीक्षमाणया त्वयैव दुष्परिगृहीतोऽयं कृतः, ततो भग्नः, इत्युभयोरपि कलहः समभवत् । पिट्टिता च तेनाभीरी । कलहयतोश्च तयोरन्यदपि घृतं बहु च्छर्दितम् । उद्धरितशेषेण च घृतेनोत्सूरेऽर्थोऽप्यूनो लब्धः। इतरेषु सार्थिकेषु घृतं विक्रीय गतेषु तयोरेकाकिनोर्गच्छतोर्घृतद्रम्मा गन्त्री बलीवर्दाश्च सर्वं तस्करैरपहृतमिति ॥ १४८० ॥

एवं दृष्टान्तमभिधायोपनयमाह—

मा[3] निण्हवइ य दाउं उवजुज्जिय देहि किं विचिंतेसि ? । वच्चामेलियदाणे किलस्सासि तं च हं चेव ॥१४८१॥

चिन्तनिकाद्यवस्थायां वितथं प्ररूपयन्, अधीयानो वा गुरुणा शिक्षितः शिष्यो जगाद– त्वयैव ममेत्थं व्याख्यातं, पाठितो वा त्वयैवैवंविधम्, अतस्तवैव दोषोऽयम्, किं मां शिक्षयसि ?। आचार्यः प्राह– न मयैवमुपदिष्टम् । कुशिष्यो ब्रवीति– हन्त ! साक्षादेव मम पुरस्सरमित्थं सूत्रमर्थं वा दत्त्वा सूरे ! मा निह्नोष्ठास्त्वम् । इत्थमुक्त आचार्यः किमप्यन्तर्ध्यायन् पुनरप्युक्तः शिष्याभासेन– 'किं बलीवर्दात् पातित इव विचिन्तयसि, भव्यगत्योपयुज्योपयुक्तो भूत्वा देहि सूत्रा-ऽर्थौ, व्यत्याम्रेडितदाने वितथसूत्रा-ऽर्थ-

1 गाथा १४३४। 2 मुक्तं त्वयाऽगृहीते दुष्परिगृहीतं कृतं त्वया, कलहः। पिट्टना-ऽतिचिरविक्रयौ गतेषु चौराश्चोनार्घः ॥ १४८० ॥
3 मा निह्नोष्ठाश्च दत्त्वोपयुज्य देहि किं विचिन्तयसि ?। व्यत्याम्रेडितदाने क्लिश्यावस्त्वं चाहं चैव ॥ १४८१ ॥

नैके गमा वस्तुधर्मपरिच्छेदा यस्यासौ ककारवर्णनाशाद् नैगमः, अनेकप्रकारवस्त्वभ्युपगमपर इत्यर्थः, नैगमश्चासौ नयश्च नैग-
मनयः । स द्विविधमपि 'निर्देश्यवशाद् निर्देशकवशाच्च निर्देशमिच्छति' इति शेषः, लोकव्यवहारपरत्वात्, अनेकगमरूपत्वाच्चास्य
नयस्य । लोके च निर्देश्यवशात्, निर्देशकवशाच्च निर्देशप्रवृत्तिर्दृश्यते । तत्र निर्देश्यवशाद् यथा— 'वासवदत्ता, तरङ्गवती, प्रियद-
र्शनाकथा' इत्यादि । निर्देष्टृवशात्तु मनुना प्रणीतो ग्रन्थो मनुः, अक्षपादेनोक्तोऽक्षपाद इत्यादि। लोकोत्तरे तु निर्देश्यवशात्, षड्जीव-
निकायप्रतिपादकमध्ययनं षड्जीवनिका, साध्वाचारप्रतिपादको ग्रन्थ आचार इत्यादि । तथा, निर्देशकवशाद् निर्देशो यथा—
कपिलेन प्रणीतं कापिलीयमध्ययनम्, हरिकेशिना प्रणीतं हरिकेशीयम्, केशि-गौतमाभ्यामभिहितं केशि-गौतमीयम्, नन्दिसंहिता,
जिनप्रवचनमित्यादि । एवं सावद्यविरमणरूपं सामायिकं रूढितो नपुंसकमिति कृत्वा निर्देश्यवशाद् नैगमो नपुंसकनिर्देशमेवाऽस्य
मन्यते, यथा— सामायिकं नपुंसकमिति । तथा, सामायिकं निर्देष्टुः स्त्री-पुं-नपुंसकलिङ्गत्वात् तद्वशात् सामायिकस्य त्रिलिङ्गताऽप्ये-
तन्मतेन भवति, यथा सामायिकं स्त्री, सामायिकं पुरुषः, सामायिकं नपुंसकमिति; यथा वा देवदत्तादिना घटादिशब्दे समुच्चारिते
स घटादिशब्द उच्चारयितृदेवदत्तादिपरिणामत्वाद् देवदत्तादिशब्दत्वेन व्यपदिश्यते; तथा, तदभिधेयपृथुबुध्नोदराद्याकारघटादि-
पदार्थपरिणामत्वाद् घटादिशब्दत्वेनापि लोके निर्दिश्यते । एवं स्वाभिधेयसावद्यविरमणपर्यायत्वात् सामायिकस्य नैगमो नपुंसक-
निर्देशं मन्यते, अभिधायकस्त्री-पुरुषादिपरिणामत्वात्तु लिङ्गत्रयनिर्देशमप्यस्याभ्युपगच्छति, यथा 'सामायिकं स्त्री' इत्यादि ।

आह— 'दुविहं पि नेगमनओ' एतावन्मात्रोक्तौ 'निर्देश्यवशाद् निर्देशकवशाच्च द्विविधं निर्देशमिच्छति' इति कुतो लभ्यते ?
इति । अत्रोच्यते— 'निद्दिट्ठं संगहो य ववहारो' इति वचनात् । अत्र ह्ययमर्थः— निर्दिष्टमभिधेयं वस्त्वङ्गीकृत्य संग्रह-व्यवहारौ निर्देश-
मिच्छतः, निर्देश्यपर्यायत्वाद् वचनस्य, इत्यादियुक्तिश्च भाष्ये वक्ष्यते । तदिदं 'निर्दिष्टं वस्त्वाश्रित्य' इति वचनात् प्रागपि 'दुविहं पि'
इत्यत्र निर्दिष्टनिर्देशकवशाद् निर्देश इति गम्यते । 'निद्देसयमुज्जुसुउ त्ति' निर्दिशतीति निर्देशको वक्ता तमङ्गीकृत्य ऋजुसूत्रो निर्देश-
मिच्छति, । यथा 'सामायिकं स्त्री' इत्यादि; वक्तृपर्यायत्वाद् वचनस्येत्यादि युक्तिरत्रापि भाष्येऽभिधास्यते । 'उभयसरिच्छं च
सद्दस्स त्ति' उभयमिह निर्देश्यं निर्देशकं च वस्तु तस्योभयस्य सदृशं समानलिङ्गमेवाश्रित्य शब्दनयस्य 'निर्देशप्रवृत्तिः' इति
गम्यते । यदि हि निर्देश्यं नपुंसकं तदा निर्देष्टाऽपि स्त्री-पुं-नपुंसकलक्षणो नपुंसकमेव, वक्तुर्वाच्योपयोगानन्यत्वेन तद्रूपत्वात् ।
उपयोगप्रधाना हि शब्दनयाः, ततो यो यत्रोपयुक्तः स तद्रूप एव, यथाऽग्न्युपयुक्तोऽग्निः, तथा च सति स्त्री-पुरुषावपि यदा रूढितो
नपुंसके सामायिके उपयुक्तौ भवतः, तदा निर्देश्यनपुंसकोपयुक्तत्वाद् नपुंसकमेव, तदुपयोगानन्यत्वेन तद्रूपत्वादिति । स्त्री पुरुषो वा

'किं कइविहं कस्स कहिं केसु कहं केच्चिरं हवइ कालं। कइ संतरमविरहियं भवा-गरिस-फोसणनिरुत्ती ॥१४८५॥

उद्देशनं वस्तुनः सामान्याभिधानमुद्देशः, यथा– 'अध्ययनम्' इति। वक्तव्य इति क्रिया सर्वत्र द्रष्टव्या। तथा, निर्देशनं वस्तुन एव विशेषाभिधानं निर्देशः, यथा 'सामायिकम्' इति। निर्गमनं निर्गमः 'कुतः सामायिकं निर्गतम्' इत्येवंरूपो वक्तव्यः। तथा, क्षेत्र-कालौ च ययोः सामायिकमुत्पन्नं, तौ वक्तव्यौ। यद् वक्ष्यत्यत्रैव–

'[2]वइसाहसुद्धएकारसीए पुव्वण्हदेसकालम्मि। महसेणवणुज्जाणे अणंतरं परंपरं सेसं ॥ १ ॥'

इति। तथा, कुतः पुरुषात् तद् निर्गतमिति वक्तव्यम्। तथा, 'केन कारणेन गौतमादयः सामायिकं भगवतः समीपे शृण्वन्ति' इत्येवंरूपं कारणं वाच्यम्; तथा च वक्ष्यति– '[3]गोयममाई य सामाइयं तु किंकारणं निसामंति' इत्यादि। तथा, प्रत्याययतीति प्रत्ययः स वक्तव्यः, केन प्रत्ययेन भगवता सामायिकमुपदिष्टम्, केन वा प्रत्ययेन गणधरास्तेनोपदिष्टं तत् शृण्वन्ति ?, इत्येतद् वाच्यमित्यर्थः। तथाचाभिधास्यति—

'[4]केवलनाणि त्ति अहं अरिहा सामाइयं परिकहेइ। तेसिं पि पच्चओ खलु सव्वण्णू तो निसामंति ॥ १ ॥'

तथा, सम्यक्त्वसामायिकस्य च तत्त्वश्रद्धानं लक्षणं वक्तव्यम्, श्रुतसामायिकस्य जीवादिपरिज्ञानम्, चारित्रसामायिकस्य सावद्यविरतिः, देशविरतिसामायिकस्य तु विरत्य-ऽविरतिस्वरूपं मिश्रलक्षणम्। तथा च सति निर्देक्ष्यति– '[5]सद्दहण-जाणणा खलु विरइं मीसं च लक्खणं कहए' इत्यादि। एवं नैगमादयो नया वाच्याः। तेषां य नयानां समवतरणं समवतारो यत्र संभवति तत्र दर्शनीयः। यतोऽभिधास्यति—

'[6]मूढनइयं सुयं कालियं तु न नया समोयरंति इहं। अपुहत्ते समोयारो नत्थि पुहत्ते समोयारो ॥ १ ॥'

इत्यादि। तथा, कस्य व्यवहारादिनयस्य किं सामायिकमनुमतमिति निर्देष्टव्यम्। तथाच निर्देक्ष्यति—

---

१ किं कतिविधं कस्य कुत्र केषु कथं कियच्चिरं भवति कालम्। कति सान्तरमविरहितं भवा-ऽऽकर्ष-स्पर्शननिरुक्तिः ॥ १४८५ ॥
२ वैशाखशुक्लैकादश्यां पूर्वाह्णदेशकाले। महासेनवनोद्यानेऽनन्तरं परंपरं शेषम् ॥ १ ॥
३ गौतमादयश्च सामायिकं तु किंकारणं निशाम्यन्ति ?।
४ केवलज्ञानीत्यहमर्हन् सामायिकं परिकथयति। तेषामपि प्रत्ययः खलु सर्वज्ञ इति निशाम्यन्ति ॥ १ ॥
५ श्रद्धान-ज्ञानं खलु विरतिं मिश्रं च लक्षणं कथयति।
६ मूढनयिकं श्रुतं कालिकं तु न नयाः समवतरन्तीह। अपृथक्त्वे समवतारो नास्ति पृथक्त्वे समवतारः ॥ १ ॥

'सामायिकं' इति नपुंसकनिर्देशः, यथा वा मनुः, अक्षपाद इत्यादौ निर्देशकवशाद् निर्देशः, तथाऽत्रापि योपित्-पुरुष नपुंसकलक्षण-त्रिविधनिर्देशकवशात् तदेव सामायिकं स्त्री-पुं-नपुंसकं भवति– स्त्र्यादित्रिविधनिर्देशकवशाद् नन्दसंहिता-मनु-कापिलीयादिवत् त्रिष्वपि लिङ्गेषु सामायिकस्य निर्देशप्रवृत्तिः, यथा 'सामायिकं स्त्री' इत्यादि ॥ १५०९ ॥

अथ प्रकारान्तरेणापि लोकव्यवहारोपदर्शनेन प्रकृतं समर्थयन्नाह—

[1]जह वा घडाभिहाणं घडसद्दो देवदत्तसद्दो त्ति । उभयमविरुद्धमेवं सामइयं नेगमनयस्स ॥ १५१० ॥

इयं च गाथा, 'यथा वा देवदत्तादिना घटादिशब्दे समुच्चारिते' इत्यादिना व्याख्यातैवेति ॥ १५१० ॥

'[2]निद्दिट्टं संगहो य ववहारो' इत्येतद् व्याख्यातुमाह—

[3]अत्थाउ च्चिय वयणं लहइ सरूवं जओ पईवो व्व । तो संगह-ववहारा भणंति निद्दिट्ठवसगं तं ॥ १५११ ॥

यतो यस्मादर्थादेव वाच्याद् घटादेः सकाशाद् वाचकं वचनं स्वरूपमात्मलाभं लभते, नान्यथा, यथा प्रदीपः; प्रदीपो हि प्रकाश्यमेवार्थं प्रकाशयन् प्रदीपो भण्यते, यदि तु प्रकाश्यं वस्तु न स्यात्, तदा किमपेक्षोऽसौ प्रदीपः स्यात् ?। तस्माद् यथा प्रकाश्यादेवार्थात् प्रदीप आत्मलाभं लभते, तथा वाच्यादेवार्थाद् वचनमात्मस्वरूपमाप्नोति । ततस्तस्मात् संग्रह-व्यवहारनयौ 'निर्दिश्यते' इति निर्दिष्टं वाच्यं वस्तु तद्वशगं तदधीनमेव तद् वचनं भणतो ब्रूतः । वाच्यं चेह सामायिकशब्दस्य सावद्यविरतिरूपस्तदभिधेयोऽर्थः । स च रूढितो नपुंसकतया प्रसिद्ध इति । अतः सामायिकस्य नपुंसकलिङ्गतामेव संग्रह-व्यवहारावभ्युपगच्छतः । अथवा, सामायिकवतां सत्त्वानां स्त्री-पुं-नपुंसकत्वात् तत्परिणामानन्यत्वेन च सामायिकार्थस्य स्त्र्यादिरूपत्वाद् वाच्यवशेन त्रिलिङ्गतापि सामायिकस्य संग्रह-व्यवहारनयमतेन द्रष्टव्येति ॥ १५११ ॥

प्रकारान्तरेणापि निर्दिष्टवशाद् निर्देशं समर्थयन्नाह—

[4]अहव निद्दिट्ठत्थस्स पज्जओ चेव तं सधम्म व्व । तप्पच्चयकारणओ घडस्स रूवाइधम्म व्व ॥१५१२॥

---

१ यथा वा घटाभिधान घटशब्दो देवदत्तशब्द इति । उभयमविरुद्धमेव सामायिक नैगमनयस्य ॥ १५१० ॥ २ गाथा १५०५ ॥
३ अर्थादेव वचन लभते स्वरूप यत प्रदीप इव । तत. सग्रह-व्यवहारौ भणतो निर्दिष्टवशग तत ॥ १५११ ॥
४ अथवा निर्दिष्टार्थस्य पर्यय एव तत् स्वधर्म इव । तत्प्रत्ययकारणतो घटस्य रूपादिधर्म इव ॥ १५१२ ॥

'[1]सम्म-सुय-अगारीणं आवलियअसंखभागमेत्ताओ । अट्ठ समया चरित्ते सव्वेसु जहण्ण दो समये ॥ १ ॥'

इत्यादि । 'कियतो भवानुत्कृष्टतः सामायिकमवाप्यते ?' इत्यत्रोत्तरमभिधास्यति—

'[3]सम्मत्त-देसविरया पलियस्स असखभागमेत्ताओ । अट्ठ भवा उ चरित्ते अणंतकालं च सुयसमए ॥ १ ॥'

इति । आकर्षणमाकर्ष एकस्मिन् नानाभवेषु वा पुनः सामायिकस्य ग्रहणं प्रतिपत्तिरिति वाच्यम् । तत्र च

'[4]तिण्हं सहस्सपुहत्त सयपुहत्त च होइ विरईए । एगभवे यागरिसा एवइया होंति नायव्वा ॥ १ ॥'

इत्यादि वक्ष्यति । 'फोसण त्ति' कियत्क्षेत्रं 'सामायिकवन्तः स्पृशन्ति ?' इत्येतदभिधानीयम् । तत्र च वक्ष्यति—

'[5]सम्मत्त-चरणसहिया सव्व लोय फुसेंति निरवसेस । सत्त य चउदस भाए पंच य सुय-देसविरईए ॥ १ ॥'

इत्यादि । तथा, निश्चितोक्तिर्निरुक्तिः सामायिकस्य वक्तव्या । तथा चाभिधास्यति—

'[6]सम्मदिट्ठि अमोहो सोही सब्भावदसण बोही । अविवज्जओ सुदिट्ठि त्ति एवमाई निरुत्ताइं ॥ १ ॥'

इत्यादि । इत्युपोद्घातनिर्युक्तिर्द्वारगाथाद्वयसंक्षेपार्थः ॥ १४८४ ॥ १४८५ ॥

अथ विस्तरार्थमभिधित्सुर्भाष्यकार उद्देश-निर्देशविषयमाक्षेपं चेतस्याशङ्क्य परिहारं तावदाह—

**[8]उद्देट्ठुं निद्दिस्सइ पायं सामन्नओ विसेसो त्ति । उद्देसो तो पढमं निद्देसोऽणंतरं तस्स ॥ १४८६ ॥**

ननु कस्मात् 'प्रथममुद्देशस्ततो निर्देशः ? इत्याशङ्क्य परिहरति— 'उद्देट्ठुंमित्यादि' सामान्येन हि पूर्वं वस्तूद्दिश्य ततः पश्चाद् विशेषतो निर्दिश्यते, इति शास्त्रे लोके च स्थितिः । तथा, ज्ञानमपि प्रायः प्रथमं वस्तुनः सामान्याकारग्राहकमुत्पद्यते, ततो

---

१ सम्यक्त्व-श्रुता-ऽगारिणामावलिकाऽसख्यभागमात्रा । अष्ट समयाश्चारित्रे सर्वेषु जघन्यतो द्वौ समयौ ॥ १ ॥ २ घ ज. 'गमित्ता' ।
३ सम्यक्त्व-देशविरतौ पल्यस्यासख्यभागमात्रान् । अष्ट भवांस्तु चारित्रेऽनन्तकाल च श्रुतसामायिके ।
४ त्रयाणा सहस्रपृथक्त्वं शतपृथक्त्व च भवति विरते । एकभवे आकर्षा एतावन्तो भवन्ति ज्ञातव्या' ॥ १ ॥
५ सम्यक्त्व-चरणसहिता. सर्वं लोकं स्पृशन्ति निरवशेषम् । सप्त च चतुर्दश भागान् पञ्च च श्रुत-देशविरत्योः ॥ १ ॥
६ सम्यग्दृष्टिरमोह. शुद्धि सद्भावदर्शन बोधि । अविपर्यय सुदृष्टिरित्येवमादीनि निरुक्तानि ॥ १ ॥ ७ घ छ 'द्दरस्ताव' ।
८ उद्दिश्य निर्दिश्यते प्रायः सामान्यतो विशेष इति । उद्देशस्तत प्रथम निर्देशोऽनन्तर तस्य ॥ १ ॥

ततो निर्दिष्टस्य सामायिकार्थस्य त्रिलिङ्गत्वाद् निर्देश्यवशादपि संग्रह-व्यवहारमतेन सामायिकस्य त्रिलिङ्गतापि भवति, यथा 'सामायिकं स्त्री' इत्यादि, एतच्च स्वयमेव द्रष्टव्यम् ॥ १५१३ ॥ १५१४ ॥

'[1]निदेसयमुज्जुसुओ' इति व्याचिख्यासुराह—

[2]उज्जुसुओ निद्देसगवसेण सामाइयं विणिद्दिसइ । वयणं वत्तुरहीणं तप्पज्जाओ य तं जम्हा ॥१५१५॥

ऋजुसूत्रनयो निर्देशकवशेनाभिधातृपारतन्त्र्येण सामायिकं निर्दिशति, यदेव निर्देशकस्य लिङ्गं तदेव सामायिकस्यासौ मन्यते, यथा– 'सामायिकं स्त्री' इत्यादि, वचनस्य वक्त्रधीनत्वात्, तत्पर्यायत्वाच्च, विज्ञानवदिति ॥ १५१५ ॥

अथ वचनस्य वक्त्रधीनत्वे युक्तिमाह—

[3]करणत्तणओ मण इव सपज्जयाओ घडाइरूवमिव । साहीणत्तणओ विय सधणं व वओ वयंतस्स ॥१५१६॥

'वदत एव संबन्धि वचः' इति पर्यन्ते प्रतिज्ञा । अत्र सदृष्टान्तान् हेतूनाह– करणत्वात्, मनोवत्; तथा, स्वपर्यायत्वात्, घटादे रूपादिवत्; तथा, स्वाधीनत्वात्, स्वधनवदिति ॥ १५१६ ॥

युक्त्यन्तरमाह—

[4]तह सुत्त-दुरुत्ताओ तस्सेवाणुग्गहो-वघायाओ । तस्स तयामिंदियं पिव इहरा अकयागमो होज्जा ॥ १५१७ ॥

'तस्यैव वक्तुस्तद् वचः' इति पक्षः, वचनस्य सूक्तत्व-दुरुक्तत्वाभ्यां वक्तुरेवानुग्रहो-पघातदर्शनात्, इह यस्य यन्निमित्तावनुग्रहोपघातौ तस्य तदात्मीयम्, यथा देवदत्तादेरिन्द्रियम्, दृश्येते च वचनसूक्तत्व-दुरुक्तत्वाभ्यां वक्तुरनुग्रहो-पघातौ, तस्मात् तत् तस्यात्मीयम् । विपर्यये बाधकमाह– इतरथा अन्यथा वचनस्य वक्तुरसंबन्धित्वे तस्यानुग्रहो-पघातयोरकृताभ्यागम एव स्यादिति ॥ १५१७ ॥

अत्र परः प्राह—

---

१ गाथा १५०५। २ ऋजुसूत्रो निर्देशकवशेन सामायिकं विनिर्दिशति । वचनं वक्तुरधीनं तत्पर्यायश्च तद् यस्मात् ॥ १५१५ ॥
३ करणत्वतो मन इव स्वपर्ययाद् घटादिरूपमिव । स्वाधीनत्वतोऽपि च स्वधनमिव वचो वदतः ॥ १५१६ ॥
४ तथा सूक्त-दुरुक्ताभ्यां तस्यैवानुग्रहो-पघाताभ्याम् । तस्य तदिन्द्रियमिवेतरथाऽकृतागमो भवेत् ॥ १५१७ ॥

मित्यादि सामान्याभिधानं प्रवर्तते, तेषु वा दण्ड-कुण्डल-किरीटादिद्रव्येषु सत्सु दण्डी, कुण्डली, किरीटीत्यादिकं सामान्याभिधानं प्रवर्तमानं दृश्यते। एवं स्थापना-क्षेत्रादिष्वपि वाच्यम्। ततो य एव द्रव्याद्युद्देशोऽभिमतः स एव सर्वोऽपि नामोद्देशः प्राप्नोति, इत्युद्देशस्यैकविधत्वादष्टविधत्वं विशीर्यत इति ॥ १४८९ ॥

अत्र पराभिहितमभ्युपगम्य परिहारमाह—

सच्चं[1] सव्वाणुगओ नामुद्देसोऽभिहाणमेत्तं जं। नाणत्तं तहवि मयं मइ-किरिया-वत्थुभेएहिं ॥ १४९० ॥

सत्यमुक्तं भवता, यतो यत् सामान्यमभिधानमात्रं नामोद्देशः स खलु सर्वानुगत एव, तथापि नाम-स्थापना-द्रव्याद्युद्देशानां नानात्वं भेदरूपं मतं संमतमेव परमार्थवेदिनाम्। कैः ?, इत्याह– मति-क्रिया-वस्तुभेदैः; तथाहि– यादृशी नामेन्द्रे मतिः, न तादृश्येव स्थापनेन्द्रादिषूत्पद्यते, किन्तु विलक्षणैव; न च यां क्रियां नामेन्द्रः करोति तामेव स्थापना-द्रव्येन्द्रादयः, किन्तु विसदृशीमेव। अत एव नामेन्द्रादिवस्तूनां परस्परं वस्तुभेदो विज्ञेयः, भिन्नमत्यादिहेतुत्वात्, घट-पटादिवस्तुवदिति। एवं प्रस्तुतनाम-स्थापना-द्रव्याद्युद्देशानामपि मत्यादिभेदाद् भेदो योजनीय इति ॥ १४९० ॥

अथ स्थापनाद्युद्देशानाह—

ठवणाए[2] उद्देसो ठवणुद्देसो त्ति तस्स वा ठवणा। तं तेण तओ तम्मि व दव्वाईयाणमुद्देसो ॥ १४९१ ॥

दव्वुद्देसो दव्वं दव्वपई दव्ववं सदव्वो त्ति। एवं खेत्तं खेत्ती खेत्तपई खेत्तजायं ति ॥ १४९२ ॥

स्थापनाया उद्देशनमुच्चारणं सामान्येनाभिधानं स्थापनोद्देशः। तस्य वोद्देशस्य अक्षा-ऽक्षरादिषु स्थापना स्थापनोद्देशः। द्रव्योद्देशमाह– द्रव्यादीनामुद्देशो द्रव्योद्देशः, आदिशब्दाद् द्रव्यपति-द्रव्यवदादिपरिग्रहः। कया पुनर्व्युत्पत्त्या द्रव्यादयो वाच्या भवन्ति ?, इत्याह– 'तमित्यादि' तदेव द्रव्यमुद्दिश्यते उच्चार्यते 'द्रव्यम्' इत्येवं सामान्येनाभिधीयत इति द्रव्योद्देशः। द्रव्यं च तदुद्देश-श्चेति कर्मधारयसमासः। अत्र च पक्षे द्रव्यमेवोद्देशशब्दवाच्यम्। अत एव द्वितीयगाथायामाह– दव्वमिति। अथवा, तेन द्रव्येण

1 सत्यं सर्वानुगतो नामोद्देशोऽभिधानमात्रं यत्। नानात्वं तथापि मतं मति-क्रिया-वस्तुभेदैः ॥ १४९० ॥
2 स्थापनाया उद्देश स्थापनोद्देश इति तस्य वा स्थापना। तत्तेन ततस्तस्मिन् वा द्रव्यादिकानामुद्देशः ॥ १४९१ ॥
द्रव्योद्देशो द्रव्य द्रव्यपतिर्द्रव्यवान् सद्रव्य इति। एवं क्षेत्र क्षेत्री क्षेत्रपति क्षेत्रजातमिति ॥ १४९२ ॥

इति । यदि संबद्धं, तर्हि 'चउहिं समएहि लोगो भासाए निरन्तरं तु होइ फुडो' इत्यादिवचनात् त्रिभुवनव्यापित्वात् तद्गतं समस्तमपि पदार्थजातं प्रकाशयतु, संबद्धत्वाविशेषादिति ॥ १५२० ॥

अथासंबद्धं प्रकाशयति, तत्राह—

[2]निव्विण्णाणत्तणओ नासंबद्धं तयं पईवो व्व । भासयइ असंबद्धं अह तो सव्वं पगासेउ ॥ १५२१ ॥

नासंबद्धं तत् पदार्थान् प्रभासयति । कुतः ? इत्याह– निर्विज्ञानत्वात्– विज्ञानादन्यत्वे सत्यसंबद्धत्वादिति भावः, अयं च हेतुः । प्रदीपवदिति दृष्टान्तः । विज्ञानमसंबद्धमपि वस्तु प्रकाशयति, न च वचनं विज्ञानरूपम्, अतो नासंबद्धमर्थं प्रकाशयति, प्रदीपवत् । अथासंबद्धमपि तद् वस्तु प्रकाशयति, तर्हि सर्वमपि प्रकाशयतु, असंबद्धत्वाविशेषात् । तस्माद् वाच्यप्रत्ययकारणत्वेन तद्धर्मो वचनमिति ॥ १५२१ ॥

आह– ननूक्तम्– वचनमर्थादात्मलाभं लभते, प्रदीपवत्, अतः कथमिदं वक्तुरेवेष्यते ? इत्याह—

[3]जइ वि वयणिज्ज वत्ता बज्झ-ब्भंतरनिमित्तसामण्णं । वत्ता तहवि पहाणो निमित्तमब्भंतरं जं सो ॥१५२२॥

इह यद्यपि वचनीयं वक्ता च यथासंख्यं बाह्यमभ्यन्तरं च वचनस्य सामान्यं निमित्तं कारणम्, तथापि वक्ता प्रधानः । कुतः ? इत्याह– यद् यस्मादन्तरङ्गं प्रत्यासन्नं निमित्तमसौ । तस्माद् वचनस्य वक्त्रधीनत्वाद् यदेव वक्तुर्लिङ्गं तदेव सामायिकस्य ऋजुसूत्रनयमतेन लिङ्गमिति स्थितम् ॥ १५२२ ॥

'[4]उभयसरिच्छं च सद्दस्स' इत्येतद् व्याचिख्यासुराह—

[5]सद्दो समाणलिंगं निद्देसं भणइ विसरिसमवत्थुं । उवउत्तो निद्दिट्ठा निद्दिस्साओ जओऽणण्णो॥१५२३॥

शब्दप्रधानो नयः शब्दो निर्देशं वचनमिच्छति । किंविशिष्टम् ? इत्याह– समानलिङ्गं निर्देश्य-निर्देशकयोस्तुल्यमेव लिङ्गमसाविच्छतीत्यर्थः । विसदृशं त्वसमानलिङ्गं निर्देशमघटमानकत्वादवस्तुत्वेनैव मन्यते । कुतः ? इत्याह– उपयुक्तो निर्देश्येऽर्थेऽर्पितान्तः-

१ गाथा ३७९ । २ निर्विज्ञानत्वतो नासंबद्धं तत् प्रदीप इव । भासयत्यसबद्धमथ ततः सर्वं प्रकाशयतु ॥ १५२१ ॥
३ यद्यपि वचनीयं वक्ता बाह्या-ऽभ्यन्तरनिमित्तसामान्यम् । वक्ता तथापि प्रधानं निमित्तमभ्यन्तरं यत् सः ॥ १५२२ ॥ ४ गाथा १५०५ ।
५ शब्दः समानलिङ्गं निर्देशं भणति विसदृशमवस्तु । उपयुक्तो निर्देष्टा निर्देश्याद् यतोऽनन्य. ॥ १५२३ ॥

अथोद्देशोद्देशं भावोद्देशं चाह—

उद्देसो उद्देसी उद्देसण्णो तयत्थवेत्ता वा। उद्देसुद्देसोऽयं भावो भावि त्ति भावम्मि ॥ १४९६ ॥[1]

उद्देशः पुलाकोद्देशकादिः, स एवोद्दिश्यमानत्वादुद्देश उद्देशोद्देशः। स चायं विज्ञेयः। कः? इत्याह— उद्देश इति; पुलाकोद्देशकादिक उद्देशोऽप्युद्दिश्यमानत्वेनोद्देशोद्देश उच्यते। तेन वोद्देशेनोद्देशोऽभिधानं, यथा 'उद्देशी' इति। तस्माद् वोद्देशो यथा— उद्देशज्ञः। तस्मिन् वोद्देशो यथा तस्योद्देशकस्यार्थवेत्त्यादि। 'भावम्मि त्ति' भावविषय उद्देशो भावोद्देशः। कः? इत्याह— 'भावो त्ति' औदयिकादिको भाव उद्दिश्यतेऽभिधीयत इत्युद्देशः, भावश्चासावुद्देशश्च भावोद्देश इत्यर्थः। तेन वा भावेनोद्देशो भावोद्देशो यथा 'भावी' इत्यादि पूर्वोक्तानुसारेण वाच्यम् ॥ इति गाथानवकार्थः ॥ १४९६ ॥

अथोद्देशव्याख्यानेन निर्देशमप्यतिदिशन्नाह—

एमेव य निद्देसो अट्ठविहो सो वि होइ नायव्वो। अविसेसियमुद्देसो विसेसिओ होइ निद्देसो ॥१४९७॥[2]

एवमेव यथोद्देश उक्तस्तथा निर्देशोऽप्यष्टविध एव भवति ज्ञातव्यः। सर्वथा सामान्यप्रतिषेधार्थमाह— किन्त्वविशेषितसामान्यनाम-स्थापनादिरूप उद्देशः, विशेषितनामादिरूपस्तु स एव निर्देशो भवतीति विशेषः॥ इति निर्युक्तिगाथाक्षरार्थः ॥१४९७॥

भावार्थं तु भाष्यकारः प्राह—

नामं जिणदत्ताई ठवणा य विसिट्ठवत्थुनिक्खेवो। दव्वे गोमं दंडी रहि त्ति तिविहो सचित्ताई ॥१४९८॥[3]

वस्तुनः पुरुषादेर्यत् पुरुषादिकं सामान्यनाम स नामोद्देश उक्तः, यत्तु तस्यैव विशेषनाम स इह नामनिर्देश उच्यते, यथा जिनदत्तादि। सामान्यस्य चेन्द्रादेर्वस्तुनः स्थापना स्थापनोद्देश उक्तः, इह तु विशिष्टस्य सौधर्माधिपत्यादिवस्तुनो यः स्थापनारूपो निक्षेपः स स्थापनानिर्देशः। द्रव्यस्यापि त्रिविधस्य सचित्तादेर्विशिष्टस्य यो विशिष्टाभिधानरूपो निर्देशः स इह द्रव्यनिर्देशः। तत्र सचित्तद्रव्यविशेषस्य निर्देशो यथा गौरित्यादि, अचित्तस्य तु दण्ड इत्यादि, मिश्रस्य तु रथ इत्यादि। रथस्य चाश्वादियुक्तस्येह मिश्रता

१ उद्देश उद्देशी उद्देशज्ञस्तदर्थवेत्ता वा। उद्देशोद्देशोऽय भावो भावीति भावे ॥ १४९६ ॥

२ एवमेव च निर्देशोऽष्टविध. सोऽपि भवति ज्ञातव्यः। अविशेषित उद्देशो विशेषितो भवति निर्देश ॥ १४९७ ॥

३ नाम जिनदत्तादि स्थापना च विशिष्टवस्तुनिक्षेप। द्रव्ये गोमान् दण्डी रथीति त्रिविध. सचित्तादि ॥ १४९८ ॥

यदि वा, उच्यते भवता— अनुपयुक्तोऽसौ पुरुषः स्त्रियं भाषते, अतो न स्त्रीरूपतां प्रतिपद्यते । तदयुक्तम्, यत एवं सति तकोऽसावनुपयुक्तभाषकोऽज्ञानी, उपयोगशून्यत्वात्, घटादिवत् । ततश्च न तद्वचनं निर्देशः, उपयोगपूर्वकत्वाभावात्, उन्मत्तादिवचनवत् । कुतः ? इत्याह— येनैतद् मतं संमतं विपश्चिताम् । किम् ? इत्याह— उपयोगपूर्वकतया निश्चित्य देशनं भाषणं देशो निर्देशः, अथवा, निश्चितो देशो भाषणं यत्रासौ निर्देशो भण्यते । न च निरुपयोगभाषकस्यैवं संभवतीति ॥ १५२६ ॥

एतदेव भावयति—

सो[1] जइ नाणुवउत्तोऽणुवउत्तो वा न नाम निद्देसो । निद्देसोऽणुवउत्तो य बेइ सद्दो न तं वत्थुं ॥१५२७॥

हन्त ! स यदि निश्चितदेशो निर्देशोऽभ्युपगम्यते, तर्हि तद्वान् देवदत्तादिर्नानुपयुक्तो युज्यते । अथानुपयुक्तोऽसौ, तर्हि न तस्य निर्देशः, निश्चितज्ञानपूर्वकत्वात् तस्य । किं बहुना ?, 'निर्देशः, अनुपयुक्तश्च तद्वान्' इत्येवंभूतं यद् मतं तच्छब्दनयोऽवस्त्वेव ब्रूते, विरुद्धत्वात्, 'अचेतन आत्मा, अश्रावणः शब्दः' इत्यादिवदिति ॥ १५२७ ॥

अथोपसंहरन्नाह—

तम्हा[2] जं जं निद्दिस्सइ तदुवउत्तो स तम्मओ होइ । वत्ता वयणीज्जाओ अनन्नो त्ति समाणलिंगो सो ॥१५२८॥

तस्मादेतत् शब्दनयमतस्य तात्पर्यम्— यः पुरुषादिर्वक्ता यं यं स्त्र्यादिकमर्थं तदुपयुक्तः स्त्र्याद्युपयुक्तो निर्दिशति वक्ति, स तन्मयो वाच्यार्थात्मको भवति । कुतः ? इत्याह— वक्ता वाच्योपयुक्तो वचनीयादनन्य एव भवतीति कृत्वा । ततो वक्तृवचनीयसमानलिङ्गोऽयमस्य निर्देश इति स्थितम् ॥ १५२८ ॥

प्रकृतमुपदर्शयन्नाह—

सामाइओवउत्तो[3] जीवो सामाइयं सयं चेव । निद्दिसइ जओ सव्वो समाणलिंगो स तेणेव ॥ १५२९ ॥

इह प्रस्तुते सामायिके निर्देश्ये उपयुक्तो निर्देष्टा जीवः सामायिकमेव 'भवति' इति शेषः । ततश्चासौ सामायिकं निर्दिशन्

---

१ स यदि नानुपयुक्तोऽनुपयुक्तो वा न नाम निर्देश । निर्देशोऽनुपयुक्तश्च ब्रूते शब्दो न तद् वस्तु ॥ १५२७ ॥

२ तस्माद् यद् यद् निर्दिशति तदुपयुक्त' स तन्मयो भवति । वक्ता वचनीयादनन्य इति समानलिङ्ग' स ॥ १५२८ ॥

३ सामायिकोपयुक्तो जीव. सामायिक स्वकमेव । निर्दिशति यतः सर्व. समानलिङ्गः स तेनैव ॥ १५२९ ॥

शस्त्रपरिज्ञा' इत्यादि । तेन वा शस्त्रपरिज्ञासमासविशेषेण निर्देशो यथा– 'अज्झेयाऽयं ति' शस्त्रपरिज्ञाध्येताऽयमित्यर्थः, इत्यादि समासनिर्देशः । उद्देशनिर्देशस्तु स उच्यते । कः ? इत्याह– 'पएसो त्ति' अध्ययनस्य प्रदेशोऽंश इत्यर्थः, यथा भगवत्यां पुद्गलोद्देशकः, तस्य निर्देशोऽभिधानमुद्देशनिर्देश इत्यादीति ॥ १५०० ॥ १५०१ ॥

अथ भावनिर्देशं, यकाभ्यां चोद्देश-निर्देशाभ्यामिहाधिकारस्तदाह—

ओदइओ खइउ त्ति व नाणं चरणं ति भावनिद्देसो । एत्थ विसेसाहिगओ समासउद्देस निद्देसो ॥१५०२॥[1]

अज्झयणं उद्देसो तं चिय सामाइयं ति निद्देसो । बुद्धीए जहासंभवमाजोज्जं सेसएसुं पि ॥ १५०३ ॥

औदयिको भावः, क्षायिको भाव इत्यादि, अथवा, ज्ञानं दर्शनं चारित्रमित्यादिको ज्ञानादीनां क्षयिक-क्षायोपशमिकभाववृत्तित्वाद् भावनिर्देशः । इह च प्रत्येकमष्टविध उद्देशे निर्देशे च समासोद्देशः समासनिर्देशश्च विशेषणाधिकृतः तथाहि– प्रस्तुते 'अध्ययनम्' इत्येष समासोद्देशः, 'सामायिकम्' इति च विशेषाभिधानरूपत्वात् समासनिर्देशः । एवं स्वबुद्ध्या यथासंभवं शेषेष्वपि श्रुतस्कन्ध-चतुर्विंशतिस्तवाध्ययनेष्वायोज्यम्, यथा श्रुतस्कन्ध इति समासोद्देशः, आवश्यकमिति समासनिर्देश इत्यादि ॥ १५०२ ॥ १५५३ ॥

उत्तरगाथासंबन्धनार्थमाह—

सामाइयं ति नपुंसयमस्स पुमं थी नपुंसगं वावि । निद्दिट्ठा तत्थिच्छइ कं निद्देसं नओ को णु ? ॥१५०४॥[2]

इह सामायिकमिति नपुंसकतया रूढम् । अस्य च त्रिविधो निर्देष्टा– उच्चारयिता, स्त्री-पुं-नपुंसकभेदात् । तत्रेदं नयैर्विचार्यते– 'को नयः कं निर्देशमिच्छति ?– किं निर्देश्यवशात्, निर्देशकवशाद् वा ?' इति विनेयः पृच्छति ॥ इति गाथासप्तकार्थः ॥१५०४॥

अस्मिंश्च प्रश्ने सत्याह—

दुविहं पि नेगमनओ निद्दिट्ठं संगहो य ववहारो । निद्देसयमुज्जुसुओभयसरिच्छं च सद्दस्स ॥ १५०५ ॥[3]

---

१ औदयिक' क्षयिक इति वा ज्ञानं चरणमिति भावनिर्देश । अत्र विशेषाधिकृतौ समासोद्देश-निर्देशौ ॥ १५०२ ॥
अध्ययनमुद्देशस्तदेव सामायिकमिति निर्देश । बुद्ध्या यथासंभवमायोज्य शेषकेष्वपि ॥ १५०३ ॥

२ सामायिकमिति नपुसकमस्य पुमान् स्त्री नपुंसक वापि । निर्दिष्टा तत्रेच्छति कं निर्देश नय. को नु ? ॥ १५०४ ॥

३ द्विविधमपि नैगमनयो निर्दिष्ट संग्रहश्च व्यवहार. । निर्देशकमृजुसूत्रोभयसदृशं च शब्दस्य ॥ १५०५ ॥

यदि वा, उच्यते भवता— अनुपयुक्तोऽसौ पुरुषः स्त्रियं भाषते, अतो न स्त्रीरूपतां प्रतिपद्यते । तदयुक्तम्, यत एवं सति तकोऽसावनुपयुक्तभाषकोऽज्ञानी, उपयोगशून्यत्वात्, घटादिवत् । ततश्च न तद्वचनं निर्देशः, उपयोगपूर्वकत्वाभावात्, उन्मत्तादिवचनवत् । कुतः ? इत्याह— येनैतद् मतं संमतं विपश्चिताम् । किम् ? इत्याह— उपयोगपूर्वकतया निश्चित्य देशनं भाषणं देशो निर्देशः, अथवा, निश्चितो देशो भाषणं यत्रासौ निर्देशो भण्यते । न च निरुपयोगभाषकस्यैवं संभवतीति ॥ १५२६ ॥

एतदेव भावयति—

सो जइ नाणुवउत्तोऽणुवउत्तो वा न नाम निद्देसो । निद्देसोऽणुवउत्तो य बेइ सद्दो न तं वत्थुं ॥१५२७॥

हन्त ! स यदि निश्चितदेशो निर्देशोऽभ्युपगम्यते, तर्हि तद्वान् देवदत्तादिर्नानुपयुक्तो युज्यते । अथानुपयुक्तोऽसौ, तर्हि न तस्य निर्देशः, निश्चितज्ञानपूर्वकत्वात् तस्य । किं बहुना ?, 'निर्देशः, अनुपयुक्तश्च तद्वान्' इत्येवंभूतं यद् मतं तच्छब्दनयोऽवस्त्वेव ब्रूते, विरुद्धत्वात्, 'अचेतन आत्मा, अश्रावणः शब्दः' इत्यादिवदिति ॥ १५२७ ॥

अथोपसंहरन्नाह—

तम्हा जं जं निद्दिसइ तदुवउत्तो स तम्मओ होइ । वत्ता वयणीज्जाओ अनन्नो त्ति समाणलिंगो सो ॥१५२८॥

तस्मादेतत् शब्दनयमतस्य तात्पर्यम्— यः पुरुषादिर्वक्ता यं यं स्त्र्यादिकमर्थं तदुपयुक्तः स्त्र्याद्युपयुक्तो निर्दिशति वक्ति, स तन्मयो वाच्यार्थात्मको भवति । कुतः ? इत्याह— वक्ता वाच्योपयुक्तो वचनीयादनन्य एव भवतीति कृत्वा । ततो वक्तृवचनीयसमानलिङ्गोऽयमस्य निर्देश इति स्थितम् ॥ १५२८ ॥

प्रकृतमुपदर्शयन्नाह—

सामाइओवउत्तो जीवो सामाइयं सयं चेव । निद्दिसइ जओ सव्वो समाणलिंगो स तेणेव ॥ १५२९ ॥

इह प्रस्तुते सामायिके निर्देश्य उपयुक्तो निर्देष्टा जीवः सामायिकमेव 'भवति' इति शेषः । ततश्चासौ सामायिकं निर्दिशन्

१ स यदि नानुपयुक्तोऽनुपयुक्तो वा न नाम निर्देश. । निर्देशोऽनुपयुक्तश्च ब्रूते शब्दो न तद् वस्तु ॥ १५२७ ॥

२ तस्माद् यद् यद् निर्दिशति तदुपयुक्त' स तन्मयो भवति । वक्ता वचनीयादनन्य इति समानलिङ्ग' स ॥ १५२८ ॥

३ सामायिकोपयुक्तो जीव. सामायिक स्वकमेव । निर्दिशति यत' सर्व. समानलिङ्गः स तेनैव ॥ १५२९ ॥

नपुंसकं ब्रूत इत्यस्य त्वर्थस्य शब्दनयमतेनाऽसंभव एव ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ १५०५ ॥

अथ विस्तरार्थमभिधित्सुर्भाष्यकारः प्राह—

[1]जं संववहारपरो णेगगमो णेगमो तओ दुविहं । इच्छइ, संववहारो दुविहो जं दीसए पायं ॥ १५०६ ॥

यद् यस्माल्लोकव्यवहारपरोऽनेकगमश्च नैगमनयः, ततस्तस्माद् निर्देश्यवशाद् निर्देशकवशाच्च द्विविधमपि निर्देशमिच्छति । लोकव्यवहारश्च प्रायो द्विधा[2] दृश्यते ॥ १५०६ ॥

कथम् ? इत्याह—

[3]छज्जीवणियाऽऽयारो निद्दिट्ठवसेण तह सुयं चण्णं । तं चेव य जिणवयणं सव्वं निद्देसयवसेणं ॥१५०७॥

जह वा निद्दिट्ठवसा वासवदत्ता-तरंगवइयाइं । तह निद्देसगवसओ लोए मणुरक्खवाउ त्ति ॥१५०८॥

लोको द्विधा– अर्हद्दर्शनानुगतो लोकोत्तररूपः, तद्व्यतिरिक्तश्च । तत्र लोकोत्तरे निर्दिष्टार्थवशाद् निर्देशो यथा– षड्जीवनिका नामाध्ययनम्, आचारः, आवश्यकमित्यादि । 'तह सुयं चण्णं तं चेव येत्यादि' तथा, अत्रैव लोकोत्तरे तदन्यच्च श्रुतं निर्देशकवशात् सर्वमपि जिनप्रवचनमुच्यते । तथा, अन्यत् किमपि श्रुतं निर्देशकवशादेवोच्यते, यथा भद्रबाहुनिमित्तम्, नन्दसंहिता, कापिलीयमित्यादि । यथा वा, इतरलोके निर्दिष्टवशाद् वासवदत्ता, तरङ्गवतीत्यादि निर्देशः, निर्देशकवशात्तु मनुः, अक्षपाद इत्यादि ॥ १५०७ ॥ १५०८ ॥

तथा किम् ? इत्याशङ्क्य प्रकृते योजयन्नाह—

[4]तह निद्दिट्ठवसाओ नपुंसगं नेगमस्स सामइयं । थी पुं नपुंसगं वा तं चिय निद्देसयवसाओ ॥१५०९॥

यथा षड्जीवनिका, आचार इत्यादौ निर्दिष्टार्थवशाद् निर्देशः, तथात्रापि सावद्यविरमणलक्षणनिर्दिष्टनपुंसकार्थवशात्

१ यत् सव्यवहारपरो नैकगमो नैगमस्ततो द्विविधम् । इच्छति, संव्यवहारो द्विविधो यद् दृश्यते प्रायः ॥ १५०६ ॥ २ क. ग. ज 'धापि दृ' ।
३ षड्जीवनिकाऽऽचारो निर्दिष्टवशेन तथा श्रुतं चान्यत् । तदेव च जिनवचनं सर्वं निर्देशकवशेन ॥ १५०७ ॥
यथा वा निर्दिष्टवशाद् वासवदत्ता-तरङ्गवत्यादि । तथा निर्देशकवशतो लोके मनुरक्षपाद इति ॥ १५०८ ॥
४ तथा निर्दिष्टवशाद् नपुंसक नैगमस्य सामायिकम् । स्त्री पुमान् नपुसकं वा तदेव निर्देशकवशात् ॥ १५०९ ॥

ईय सव्वनयमयाइं परित्तविसयाइं, समुदियाइं तु । जइणं वज्झ-ब्भंतरनिद्देसनिमित्तसंगाहि ॥१५३०॥

इत्येवमुक्तप्रकारेण सर्वाण्यपि नैगमादिनयमतानि परीत्तविषयाण्यन्योन्यनिरपेक्षतयैकैकांशग्राहीणि, अतो मिथ्यारूपत्वात् तान्यप्रमाणमिति भावः । समुदितानि पुनस्तान्येवान्योन्यसापेक्षतया संपूर्णवस्तुग्राहित्वाज्जैनं मतं भवति । कथंभूतं यज्जैनं मतम् ? इत्याह– 'वज्झेत्यादि' बाह्या ऽऽभ्यन्तराणि निर्देशस्य वचनस्य शब्दस्य निमित्तानि संग्रहीतुमभ्युपगन्तुं शीलं यस्य तद् बाह्या-ऽऽभ्यन्तरनिर्देशनिमित्तसंग्राहि । तत्र बाह्यान्यभिधेयघट-पट-शकटादीनि, आभ्यन्तराणि तु स्वरनामकर्मोदय-ताल्वादि करण-प्रयत्नादीनि निर्देशस्य निमित्तानि द्रष्टव्यानि । समस्तनतसामग्रीजन्यनिर्देशाभ्युपगमपरत्वेन सम्यग्रूपत्वाज्जैनं मतं प्रमाणमितीह भावार्थः ।

आह– बाह्यो घटादिरर्थः शब्दस्य कथं निमित्तम्, संबन्धाभावात् ? । तदयुक्तम्, शब्दा-ऽर्थयोर्वाच्य-वाचकसंबन्धस्य विद्यमानत्वात् । यद्यर्थस्य शब्दो वाचकः, तर्ह्यगृहीतसङ्केतस्यापि म्लेच्छादेरसावर्थं प्रतिपादयेदिति चेत् । नैवम्, कर्मक्षयोपशमसव्यपेक्षस्यैव तस्य तत्प्रतिपादकत्वात्, क्षयोपशमस्य च संकेतादिसापेक्षत्वात् । न हि प्रदीपः प्रकाशक इत्येतावन्मात्रेणैवान्धादीनामप्यर्थं प्रकाशयति । ननु यदि क्षयोपशमापेक्षः शब्दोऽर्थं प्रकाशयति, तर्हि संकेतकरणेऽपि तदप्रकाशनप्रसङ्गः, न चैतदस्ति, गृहीतसंकेतानामविगानेनार्थप्रतिपत्तिदर्शनात्, ततः किमन्तर्गडुकल्पक्षयोपशमकल्पनेन ? । तदयुक्तम्, तथाहि– केषांचिज्जडमतीनां शास्त्रव्याख्यानादौ विषमपदवाक्येषु विशिष्टक्षयोपशमाभावात् संकेतोऽपि कर्तुं न शक्यते, अन्ये तु तत्करणेऽपि नार्थं प्रतिपद्यन्ते । यदपि केषांचिदपूर्वम्लेच्छभाषादिश्रवणेऽकृतसंकेतानामपि झगित्येव कथमप्यर्थप्रतिपत्तिर्दृश्यते, तत्रापि क्षयोपशमस्यैवातिपटुत्वं हेतुः । तस्मात् कर्मक्षयोपशमादिसामग्रीसव्यपेक्षः शब्दो वाचकः, अर्थस्तु वाच्यः, इति शब्दार्थयोर्वाच्यवाचकभावलक्षणः संबन्ध इति । तदेवं व्याख्याता 'दुविहं पि नेगमनओ' इत्यादिगाथा, तद्व्याख्याने च व्याख्यातमुपोद्घातनिर्युक्तिद्वारगाथाद्वयस्य द्वितीयं द्वारम् ॥१५३०॥

अथ तृतीयं निर्गमद्वारमभिधित्सुस्तत्प्रतिपादकगाथायाः प्रस्तावनामाह––

[3]निद्दिट्ठस्स पसूई सा दव्व-खेत्त-काल-भावेहिं । किं तं च जीवदव्वं पसूर्यमेयं जओ जह वा ॥ १५३१ ॥

खेत्ते कम्मि व काले पुरिसविसेसो व भावओ को सो । खेत्ताइतिगं निग्गमभेउ च्चिय छव्विहो जं सो ॥१५३२॥

1 इति सर्वनयमतानि परीत्तविषयाणि, समुदितानि तु । जैन बाह्या-ऽऽभ्यन्तरनिर्देशनिमित्तसंग्राहि ॥ १५३० ॥ 2 गाथा १५०५ ।
3 निर्दिष्टस्य प्रसूति सा द्रव्य क्षेत्र काल-भावैः । किं तच्च जीवद्रव्य प्रसूतमेतद् यतो यथा वा ॥१५३१॥ क्षेत्रे कस्मिन् वा काले पुरुषविशेषो वा भावत. क. स. ? । क्षेत्रादित्रिक निर्गमभेद एव षड्विधो यत् स. ॥ १५३२ ॥ 4 ज. 'मेयं ज' ।

अथवा, तद् वचनं निर्दिष्टार्थस्य वाच्यवस्तुनः पर्याय एव, तत्प्रत्ययकारणत्वात्– वाच्यार्थप्रतीतिहेतुत्वात्, यथा तस्यैव निर्देशस्य घटादेरन्ये संस्थानादयो धर्माः। इह यद् यस्य प्रत्ययकारणं तत् तस्य स्वपर्यायः, यथा घटस्य रूपादयः, वचनं च वाच्यार्थस्य प्रत्ययकारणम्, अतस्तत्पर्यायः, पर्यायश्च पर्यायिणोऽधीन एव, इति युक्तो निर्देश्यवशाद् निर्देश इति ॥ १५१२ ॥

स्यादेतत्, असिद्धोऽयं हेतुः– 'एतत्प्रत्ययकारणत्वाद् वचनस्य' इति, एतन्निराकरणार्थमाह—

वयणं[1] विण्णाणफलं जइ तं भणिए वि नत्थि किं तेणं ?। अण्णत्थ पच्चए वा सव्वत्थ वि पच्चओ पत्तो ॥१५१३॥

अभिधेयसंकरो वा वत्तरि पच्चओऽणभिहिए वि। तम्हा निद्दिट्ठवसा नपुंसगं बेंति सामइयं ॥१५१४॥

अर्थविज्ञानफलं हि वचनं, यदि भणितेऽप्युदीरितेऽपि वचने 'तं ति' तदर्थविज्ञानं नास्ति न भवति, तर्हि कण्ठौष्ठशोषमात्रविधायिना किं तेनोक्तेन, निष्फलत्वात् ?। स्यादेतत्, वाच्यादर्थादन्यत्र वक्तृलक्षणेऽर्थे विज्ञानं जनयिष्यति वचनम्; ततश्च विज्ञानफलं च तद् भविष्यति, वाच्येऽर्थे विज्ञानं च न जनयिष्यति, तथा च सति वाच्यार्थपर्यायो वचनं न भविष्यति, इत्याशङ्क्याह– 'सव्वत्थेत्यादि' यदि हि वाच्यमर्थं विहाय वक्तृलक्षणेऽर्थान्तरे प्रत्ययं वचनं जनयेत्, तर्ह्यविशेषेणैव सर्वत्रार्थे प्रत्ययः प्राप्तः, न वा क्वचिदप्यर्थेऽसौ भवेत्, अविशेषादिति– अतत्पर्यायत्वेऽपि तत्प्रत्ययहेतुत्वे सर्वत्रासौ भवेत्, न वा क्वचिद् भवेदिति भावः।

स्यादेतत्, वचनाद् वक्तरि प्रत्ययो भवत्येव, यथाऽनेनेदमभिहितमिति, तत् किमुच्यते– 'जइ तं भणिए वि नत्थि किं तेणं' इति ? इत्याशङ्क्याह–'अभिधेयसंकरो वेत्यादि'। अथवा, वाच्यादर्थादन्यत्र प्रत्ययेऽभ्युपगम्यमाने सर्वत्रापि प्रत्ययो न भवेदित्येको दोष उक्तः। अथ दोषान्तरमभिधित्सुराह– 'अभिधेयसंकरो वेत्यादि' यदि हि वक्तर्यनभिहितेऽपि वचनात् तत्र प्रत्ययोऽभ्युपगम्यते, हन्त ! तर्हि वक्तृवदनभिहितानि खरोष्ट्र-ढेङ्क-वकादीनि बहूनि वस्तूनि सन्ति, ततो वक्तृवत् तेषामपि श्रोतुः प्रत्यये सत्यभिधेयानां सर्वेषां, अभिधेयेन वा घटादिना सह वक्त्रादीनामन्येषां संकरः, एकस्यां श्रोतृप्रतीतौ सांकर्ये युगपत् तदाकारसंक्रमणं प्राप्नोति, न चैतदस्ति, एकस्माद् वचनादेकस्यैव प्रतिनियतस्य घटाद्याकारस्य संवेदनादिति। तस्मादभिधेयपर्याय एव वचनम्, तत्प्रत्ययकारणत्वात्। अतो निर्दिष्टमिह सामायिकशब्दस्यार्थरूपं सामायिकं रूढितो नपुंसकम्, तद्वशात् सामायिकशब्दः संग्रह-व्यवहारयोर्नपुंसकलिङ्गइत्ति। अथवा, सामायिकवतः स्त्री-पुं-नपुंसकत्वात्, तत्परिणामानन्यत्वाच्च सामायिकार्थस्य त्रिलिङ्गतामपि संग्रह-व्यवहारावभ्युपगच्छतः।

[1] वचन विज्ञानफलं यदि तद् भणितेऽपि नास्ति किं तेन ?। अन्यत्र प्रत्यये वा सर्वत्रापि प्रत्ययः प्राप्तः ॥१५१३॥
अभिधेयसंकरो वा वक्तरि प्रत्ययोऽनभिहितेऽपि। तस्माद् निर्दिष्टवशाद् नपुसक ब्रुवन्ति सामायिकम् ॥ १५१४ ॥

द्रव्याद् द्रव्यस्य वा निर्गमो द्रव्यनिर्गमः। स च सचित्तादिद्रव्यसंबन्धित्वात् सचित्तादिस्त्रिविधः। तस्य च त्रिविधस्य सचित्तादेस्त्रिविधादेव सचित्तादेर्द्रव्यात् संभव उत्पादो ज्ञेय इति ॥ १५३४ ॥

तथाहि—

पभवो[1] सचित्ताओ भूमेरंकुर-पयंग-बप्फाई। किमि-गब्भ-सोणियाई मीसाओ थीसरीराओ ॥ १५३५ ॥

किमि-घुण-घुणचुण्णाई दारुओ जं व निग्गयं जत्तो। दव्वं विगप्पवसओ जहसब्भावो-वयारेहिं ॥१५३६॥

सचित्ताद् भूमिद्रव्यात् सचित्तद्रव्यस्याङ्कुरस्य प्रभवो निर्गमो ज्ञातव्यः, मिश्रस्य तु पतङ्गद्रव्यस्य, तस्य हि पक्षादिप्रदेशा अचित्ताः, शेषं तु सचित्तमिति मिश्रता; अचित्तस्य तु वाष्पद्रव्यस्य। तदेवं सचित्तात् सचित्तादेस्त्रिविधस्य निर्गम इत्युक्तम्। अथ मिश्रात् स्त्रीशरीरद्रव्यात् सचित्तद्रव्यस्य कृमेर्निर्गमो वेदितव्यः, मिश्रस्य तु गर्भद्रव्यस्य डिम्भरूपस्य, तद्गतकेशादीनामचित्तत्वात्, शेषस्य तु सचित्तत्वाद् मिश्रता; अचित्तस्य तु शोणितद्रव्यस्य। मिश्रात् सचित्तादेर्निर्गम इत्यपि भावितम्। अचित्तद्रव्याद् दारुणः काष्ठात् सचित्तस्य कृमिद्रव्यस्य निर्गमः, मिश्रस्य तु घुणस्य, पतङ्गवदस्यापि मिश्रत्वात्; अचित्तस्य तु घुणचूर्णस्य, घुणाकृष्टश्लक्ष्णतदवयवनिवहस्येत्यर्थः। अचित्तात् सचित्तादेर्निर्गम इत्यपि गतम्।

तथा, 'जं वेत्यादि' यद् वा द्रव्यं यस्माद् द्रव्याद् विकल्पवशतो मानसकल्पनासमारोपाद् यथासद्भावेन सद्भूतप्रकारेण, उपचारेण वा निर्गतं, सोऽपि द्रव्याद् निर्गमो द्रव्यनिर्गम उच्यते। तत्र यथासद्भावेन विकल्पवशाद् यथा दुग्धादिद्रव्याद् घृतादिद्रव्यस्य निर्गमः। अत्र हि भूमेः संमूर्च्छजचटकन्यायेन दुग्धाद् घृतादिनिर्गमो न दृश्यत इति 'विकल्पवशतः' इत्युच्यते, दुग्धस्य च घृतादिभावेन परिणामिकारणता समीक्ष्यते, इत्येतावता 'यथासद्भावेन' इत्यभिधीयते। उपचारेण तु रूबकादेर्द्रव्याद् भोजनादेर्निर्गम इत्यादि सर्वं यथासंभवमन्यदपि स्वबुद्ध्याऽभ्यूह्य वक्तव्यमिति ॥ १५३५ ॥ १५३६ ॥

क्षेत्रनिर्गममाह—

खेत्तस्स[2] विनिग्गमणं सरूवओ नत्थि तं जमक्किरियं। खेत्ताओ खेत्तम्मि वि हवेज्ज दव्वाइनिग्गमणं॥१५३७॥

१ प्रभव सचित्ताद् भूमेरङ्कुर-पतङ्ग-बाष्पादय। कृमि-गर्भ-शोणितादयो मिश्रात् स्त्रीशरीरात् ॥ १५३५ ॥
कृमि-घुण घुणचूर्णादयो दारुणो यद्वा निर्गतं यत। द्रव्य विकल्पवशतो यथासद्भावो-पचाराभ्याम् ॥ १५३६ ॥

२ क्षेत्रस्य विनिर्गमन स्वरूपतो नास्ति तद् यदक्रियम्। क्षेत्रात् क्षेत्रेऽपि भवेद् द्रव्यादिनिर्गमनम् ॥ १५३७ ॥

[1]निद्दिट्ठस्स वि कस्सचि नणूवघायाइओ तयं जुत्तं । ते तस्स सकारणाओ इहरा थाणुस्स वि हवेज्जा ॥१५१८॥

ननु न केवलं निर्देशकस्य, किन्तु निर्दिष्टस्याप्यभिधेयस्यापि कस्यचित् तस्करादेर्वचनादुपघातादयो दृश्यन्ते, यथा– 'वध्यतां, हन्यतां चायं तस्करः, मुच्यतां चायम्' इत्याद्युक्ते तस्य विषादाद्युत्पत्तेरुपघातादयोऽध्यक्षत एवोपलभ्यन्ते । अतस्तद्दर्शनाद् निर्दिष्टस्यापि संबन्धि तद् वचनं वक्तुं युज्यते । अत्रोत्तरमाह– 'ते इत्यादि' य इष्टा-ऽनिष्टवचनश्रवणात् तस्करादेर्निर्दिष्टस्यानुग्रहादयो दृश्यन्ते ते तस्य स्वकीयश्रवणेन्द्रिय-मनःपुण्य-पापादिकात् कारणादेव मन्तव्याः, न त्विष्टा-ऽनिष्टवचनोक्तिमात्रात्, अन्यथा श्रोत्रादिकरणविकलानां स्थाण्वादीनामपि तदुक्तिमात्रात् ते भवेयुरिति ॥ १५१८ ॥

वक्तृधर्मत्वमेव वचनस्य हेत्वन्तरोक्तेः समर्थयन्नाह—

[2]सरनामोदयजणियं वयणं देहो व्व वत्तुपज्जाओ । तं नाभिधेयधम्मो जुत्तमभावाभिहाणाओ ॥१५१९॥

'वक्तृपर्यायो वचनम्' इति प्रतिज्ञा, स्वररूपनामकर्मोदयजन्यत्वात्, इह यद् नामकर्मोदयजन्यं तत् तस्यैव वक्तुर्देवदत्तादेः पर्यायः, यथा तस्यैव देहः, नामकर्मोदयजन्यं च वचनम्, तस्मात् तस्यैव वक्तुः पर्यायः । तत् तस्माद् न वचनमभिधेयधर्मो युक्तम्, किन्त्वभिधातुरेव । उपचयमाह– अभावस्यापि वचनेनाभिधानात् । इदमुक्तं भवति– अभावोऽपि हि वचनेनाभिधीयते, न च वचनं तद्धर्म इति वक्तुं शक्यते, अभावस्यासत्त्वात्, यदि च वचनं तद्धर्मः स्यात्, तदा सोऽपि भावः स्यात्, वचनाश्रयत्वात्, देवदत्तादिवदिति ॥ १५१९ ॥

यस्यापि च घटादिशब्दाभिधेयस्य घटादेर्भावस्य वचनं तत्प्रत्ययकारणत्वाद् धर्मत्वेनाभ्युपगम्यते, तत्रापि पृच्छ्यते । किम् ? इत्याह—

[3]भावम्मि वि संबद्धं तमसंबद्धं व तं पगासेज्जा । जइ संबद्धं तिहुयणवावि त्ति तयं पगासेउ ॥ १५२० ॥

भावेऽपि घटादिके वचनाभिधेये पृच्छामो भवन्तं– तद् वचनं तत्र भावे किं संबद्धं सत् तं भावं प्रकाशयति, आहोस्विदसंबद्धम् ?

१ निर्दिष्टस्यापि कस्यचिद् ननूपघातादितस्तद् युक्तम् । ते तस्य स्वकारणादितरथा स्थाणोरपि भवेयुः ॥ १५१८॥
२ स्वरनामोदयजनितं वचनं देह इव वक्तृपर्याय । तद् नाभिधेयधर्मो युक्तमभावाभिधानात् ॥ १५१९ ॥
३ भावेऽपि संबद्धं तदसंबद्धं वा त प्रकाशयेत् । यदि संबद्धं त्रिभुवनव्यापीति तत् प्रकाशयतु ॥ १५२० ॥

[1]रूवाई पोग्गलाओ कसाय-नाणादओ य जीवाओ । निंति पभवंति ते वा तेहिंतो तव्विओगम्मि ॥ १५४२ ॥

भावोऽपि कालवद् द्रव्यधर्म एव । तस्य च ततो द्रव्याद् यो निर्गमः प्रभवः स भावनिर्गमः, द्रव्यस्य वा भावाद् निर्गमो भावनिर्गमः । कः ? इत्याह–– भावतो भावमाश्रित्य यो द्रव्यस्यापगमो विनाशः । इदमुक्तं भवति– यदा द्रव्यं पूर्वपर्यायेण विनश्यति, अपूर्वपर्यायेण तूत्पद्यते, तदा पूर्वपर्यायात् प्राक्तनभावाद् द्रव्यस्य निर्गतत्वाद् भावाद् निर्गमो भावनिर्गम इत्युच्यते । तथा, रूपादयो भावाः पुद्गलद्रव्यात्, कषाय-ज्ञानादयश्च जीवाद् निर्गच्छन्ति प्रभवन्तीति भावानां निर्गमो भावनिर्गम उच्यते । 'ते वा तेहिंतो त्ति' अथवा ते पुद्गल-जीवादयः पदार्थास्तेभ्यो रूपादिभ्यः कषायादिभ्यश्च भावेभ्यस्तद्वियोगे प्राक्तनभावविनाशे निर्गच्छन्तीति भावेभ्यो निर्गमो भावनिर्गम इत्युच्यत इति । तदेवं विनेयमतिव्युत्पादनार्थमभिहितः षड्विधो निर्गमः ॥ १५४१ ॥ १५४२ ॥

इदानीं प्रकृते यावता प्रयोजनं तदुपदर्शयितुम्, प्रशस्तभावनिर्गमस्वरूपं तावद् दर्शयन्नाह––

[2]तत्थ पसत्थं मिच्छत्तण्णाणाविरइभावनिग्गमणं । जीवस्स संभवंति य जं सम्मत्तादओ तत्तो ॥१५४३॥

तत्रानन्तरोक्ते भावनिर्गमे प्रशस्तं शुभं निर्गमनम् । किम् ? इत्याह– मिथ्यात्वा-ऽज्ञाना-ऽविरतिलक्षणादप्रशस्तभावाद् यन्निर्गमनं निःसरणं जीवस्य । किमिति ? इत्याह– यद् यस्मात् संभवन्त्येव ततो मिथ्यात्वाद्यप्रशस्तभावनिर्गमाज्जीवस्य मुक्तिपदप्राप्तिहेतवः सम्यक्त्वादयो गुणा इति ॥ १५४३ ॥

भवत्वेवम्, प्रस्तुते केन प्रयोजनम् ? इत्याह––

[3]एत्थ उ पसत्थभावप्पसूइमेत्तं विसेसओऽहिगयं । अपसत्थावगमो विय सेसा वि तदंगभावाओ ॥१५४४॥

इह च प्रक्रमे सामायिकाध्ययनं प्रस्तुतम् । तच्च क्षायोपशमिके भावे वर्तते । अत इह तस्यैव प्रशस्तक्षायोपशमिकभावस्य या प्रसूतिर्महावीरात् तन्निर्गमरूपा, तयैव विशेषतोऽधिकृतमधिकारः । तथा, अप्रशस्तमिथ्यात्वादिविषयौदयिकभावस्य योऽपगमो विनाशस्तेनापि चाधिकारः, तदपगमाभावे प्रशस्तभावप्रसूतेरेवायोगादिति । शेषास्तु निर्गमभेदास्तदङ्गभावेन प्रशस्तभावनिर्गमकारणतयाऽऽनन्तर्येण पारम्पर्येण वा कोऽपि कथञ्चिद् व्याप्रियत इतीह निर्दिष्टा इति ॥ १५४४ ॥

१ रूपादय. पुद्गलात् कपाय-ज्ञानादयश्च जीवात् । निर्गच्छन्ति प्रभवन्ति ते वा तेभ्यस्तद्वियोगे ॥ १५४२ ॥
२ तत्र प्रशस्त मिथ्यात्वा-ऽज्ञाना-ऽविरतिभावनिर्गमनम् । जीवस्य सभवन्ति च यत् सम्यक्त्वादयस्तत. ॥ १५४३ ॥
३ अत्र तु प्रशस्तभावप्रसूतिमात्र विशेपतोऽधिकृतम् । अप्रशस्तापगमोऽपिच शेपा अपि तदङ्गभावात् ॥ १५४४ ॥

करणो निर्देष्टा यद् यस्माद् निर्देश्यादनन्योऽभिन्नः। इदमुक्तं भवति– वक्तुस्त्रिलिङ्गवतोऽपि पुमांसमभिदधतः पुंनिर्देश एव, स्त्रियं प्रतिपादयतः स्त्रीनिर्देश एव, नपुंसकं निर्दिशतो नपुंसकनिर्देश एव, वाच्य उपयुक्तस्य वक्तुर्वाच्यादभिन्नत्वादिति ॥ १५२३ ॥

तथाचाह—

[1]थीं निद्दिसइ जइ पुमं थी चेव तओ जओ तदुवउत्तो। थीविन्नाणाणन्नो निद्दिट्ठसमाणलिंङ्गो त्ति ॥१५२४॥

स्त्र्यादेः समानलिङ्गं स्त्र्यादिकं निर्दिशतः स्त्र्यादिनिर्देश इति तावत् किल प्रतीतमेव। यद्यपि च पुमान् कर्ता स्त्रियं कर्मतापन्नां निर्दिशति, यथा– 'वासवदत्ते! इदमित्थं विधेहि' इति; तदपि तकोऽसौ निर्देष्टा पुरुषः स्त्र्येव भवति। कुतः? इत्याह– यतो यस्मात् तदुपयुक्तः स्त्र्युपयुक्तः स्त्रीविज्ञानाद् वासवदत्ताध्यवसायादनन्योऽभिन्नः सन् निर्दिष्टया स्त्रिया समानलिङ्गः पुरुषो भवति। ततश्च यदा पुरुषो नपुंसकमभिधत्ते तदापि निर्दिष्टसमानलिङ्गत्वाद् नपुंसकमेवासौ। एवं स्त्रियां नपुंसके च निर्देष्टरि निर्दिष्टसमानलिङ्गता योजनीयेति ॥ १५२४ ॥

ननु कथं स्त्रीविज्ञानादनन्यः स पुरुषोऽपि स्त्र्येव भवति, न पुरुषोऽपि स्यात्? इत्याह—

[2]जइ स पुमं तो नत्थी अह थी न पुमं नवा तदुवउत्तो। जो थीविण्णाणमओ नो थी सो सव्वहा नत्थि॥१५२५॥

यदि स निर्देष्टा पुमान्, ततो न स्त्री– न खल्वसौ स्त्र्युपयोगवानित्यर्थः। अथासौ स्त्र्युपयोगोपयुक्तत्वात् स्त्रीत्यभ्युपगम्यते, तर्हि न पुमान्– न पुंस्त्वेनायमेष्टव्यः, किन्तु स्त्र्युपयोगोपयुक्तत्वात् स्त्र्येवासौ मन्तव्य इत्यर्थः। अथ नैवम्, तर्हि नवा न खल्वसौ तदुपयुक्तः स्त्र्युपयुक्तः, तदुपयुक्तस्य सर्वथैव पुंस्त्वविरोधात्। किं वहुना?, यः स्त्रीविज्ञानमयः स्त्र्युपयोगोपयुक्तोऽपि न स्त्री, किन्तु पुमान् नपुंसकं वा, स एवंभूतः पदार्थः सर्वथा नास्ति– असन्नेव, खरविषाणवदिति ॥ १५२५ ॥

अर्थानुपयुक्तः स्त्रियं भाषमाणोऽपि पुरुषो भविष्यतीत्याशङ्क्याह—

[3]भासइ वाणुवउत्तो जइ अन्नाणी तओ न तव्वयणं। निद्देसो जेण मयं निच्छियदेसो त्ति निद्देसो ॥१५२६॥

---

१ स्त्रिय निर्दिशति यदि पुमान् स्त्र्येव सको यतस्तदुपयुक्त। स्त्रीविज्ञानानन्यो निर्दिष्टसमानलिङ्ग इति ॥ १५२४ ॥

२ यदि स पुमांस्ततो न स्त्री अथ स्त्री न पुमान् नवा तदुपयुक्तः। यः स्त्रीविज्ञानमयो नो स्त्री स सर्वथा नास्ति ॥ १५२५ ॥

३ भाषते वानुपयुक्तो यद्यज्ञानी सको न तद्वचनम्। निर्देशो येन मतं निश्चितदेश इति निर्देशः ॥ १५२६ ॥

इत ऊर्ध्वं ''पंथं किर देसित्ता' इत्यादिका सर्वापि निर्गमवक्तव्यता सूत्रसिद्धैव। यच्चेह दुरवगमं तद् मूलावश्यकविवरणादवगन्तव्यं तावत्, यावत् प्रथमगणधरवक्तव्यतायां भाष्यम् ॥

जीवे[2] तुह संदेहो पच्चक्खं जं न घिप्पइ घडो व्व। अच्चंतापच्चक्खं च नत्थि लोए खपुप्फं व ॥१५४९॥

आयुष्मन् इन्द्रभूते ! तवैष संदेहः– किमयमात्माऽस्ति, नास्ति वा, उभयहेतुसद्भावात् ?। तत्र नास्तित्वहेतवोऽमी– नास्त्यात्मा, प्रत्यक्षेणात्यन्तमगृह्यमाणत्वात्, इह यदत्यन्ताप्रत्यक्षं तल्लोके नास्त्येव, यथा खपुष्पम्, यच्चास्ति तत्प्रत्यक्षेण गृह्यत एव, यथा घट इत्यसौ व्यतिरेकदृष्टान्तः। अणवोऽपि ह्यप्रत्यक्षाः, किन्तु घटादिकार्यतया परिणतास्ते प्रत्यक्षत्वमुपयान्ति, न पुनरेवमात्मा कदाचिदपि[3] भावप्रत्यक्षमुपगच्छति, अतोऽत्रात्यन्तविशेषणमिति ॥ १५४९ ॥

एवं च मन्यसे त्वं, किम् ? इत्याह—

न[4] य सोऽणुमाणगम्मो जम्हा पच्चक्खपुव्वयं तं पि। पुव्वोवलद्धसंबंधसरणओ लिंग-लिंगीणं ॥ १५५० ॥

न चासावात्माऽनुमानगम्यः, यस्मात् तदप्यनुमानं प्रत्यक्षपूर्वकं प्रवर्तते। कुतः ? इत्याह– 'पुव्वोवलद्धेत्यादि' लिङ्ग्यते गम्यतेऽतीन्द्रियार्थोऽनेनेति लिङ्गम्; अथवा लीनं तिरोहितमर्थं गमयतीति लिङ्गं धूम-कृतकत्वादिकम्, तदस्यास्तीति लिङ्गी वह्न्य-ऽनित्यत्वादिः, तयोर्लिङ्ग-लिङ्गिनोर्यः पूर्वं महानसादौ प्रत्यक्षादिनोपलब्धः कार्यकारणभावादिकः संबन्धस्तस्य यत् स्मरणं तस्मादिति। इदमुक्तं भवति– पूर्वं महानसादावग्नि-धूमयोर्लिङ्गि-लिङ्गयोरन्वयव्यतिरेकवन्तमविनाभावमध्यक्षतो गृहीत्वा तत उत्तरकालं क्वचित् कान्तार-पर्वतनितम्बादौ गगनावलम्बिनीं धूमलेखामवलोक्य प्राग् गृहीतं संबन्धमनुस्मरति, तद्यथा– यत्र यत्र धूमस्तत्र तत्र मागहं वह्निमद्राक्षम्, यथा महानसादौ, धूमश्चात्र दृश्यते, तस्माद् वह्निनापीह भवितव्यम्, इत्येवं लिङ्गग्रहण-संबन्धस्मरणाभ्यां तत्र प्रमाता हुतभुजमवगच्छति। न चैवमात्मना लिङ्गिना सार्धं कस्यापि लिङ्गस्य प्रत्यक्षेण संबन्धः सिद्धोऽस्ति, यतस्तत्संबन्धमनुस्मरतः पुनस्तल्लिङ्गदर्शनाज्जीवे संप्रत्ययः स्यात्। यदि पुनर्जीव-लिङ्गयोः प्रत्यक्षतः संबन्धसिद्धिः स्यात् तदा जीवस्यापि प्रत्यक्षत्वापत्त्याऽनुमानवैयर्थ्यं स्यात्, तत एव तत्सिद्धेरिति ॥ १५५० ॥

एतदेवाह—

१ आवश्यकनिर्युक्तौ पृ० २२। २ जीवे तव संदेहः प्रत्यक्षं यद् न गृह्यते घट इव। अत्यन्ताप्रत्यक्षं च नास्ति लोके खपुष्पमिव ॥ १५४९ ॥ ३ घ ज 'पि प्रत्यक्षभावमु'। ४ न च सोऽनुमानगम्यो यस्मात् प्रत्यक्षपूर्वकं तदपि। पूर्वोपलब्धसंबन्धस्मरणतो लिङ्ग-लिङ्गिनोः ॥ १५५० ॥

स्वकमेवात्मानमेव निर्दिशति । कुतः ? इत्याह– यतो यस्मात् स्त्री-पुं-नपुंसकरूपः सर्वोऽप्यसौ निर्देष्टा तदुपयुक्तत्वात् तेनैव निर्देश्येन सामायिकेन समानलिङ्गो भवति, सामायिकार्थस्य रूढितो नपुंसकत्वात्, स्त्रियाः, पुंसः, नपुंसकस्य वा सामायिकमभिदधानस्य नपुंसकलिङ्गनिर्देश एव भवतीति ।

आह– यदि पुनर्भावस्य द्वैविध्याद् निर्देश्य-निर्देशकोभयवशतोऽपि निर्देशः स्यात्, तर्हि को दोषः ?, तथाहि– द्विविधो भावोऽर्थस्य– विज्ञानं, परिणतिश्च; भावाभिधायिनश्च शुद्धनयाः । तत्र यदा पुमानुपयुक्तः सामायिकं नपुंसकमाह, तदा वक्तुर्नपुंसकविज्ञानानन्यत्वाद् नपुंसकनिर्देशोऽस्तु, निर्देष्टश्च मुखरोमादिरूपपुरुषपरिणतिमयत्वात् पुंनिर्देशोऽपि भवत्विति । अत्रोच्यते– भावस्य द्वैविध्ये सत्यपि वस्तुनो विज्ञानमेवेहोपयोगरूपमधिक्रियते, न पुनस्तत्परिणतिः, विज्ञानरूपस्यैवेह निर्देशस्याभिप्रेतत्वात् ।

आह– ननु शब्दोऽपि पुद्गलद्रव्यरूपः 'निर्दिश्यते' इति कृत्वा निर्देश एवोच्यते, तत् किमिति तदुपयोगरूप एव निर्देशोऽधिक्रियते । नैतदेवम्, शब्दस्य द्रव्यमात्रत्वात्, ज्ञानलक्षणभावग्राहिणश्च शब्दनयाः । अत एव पुरुषपरिणतेः सत्यपि भावत्वे न तस्या इह ग्रहणम्, किन्तु विज्ञानरूप एवात्र निर्देशो गृह्यते । तत्रैतत् स्यात्, शब्दप्रधान एव हि शब्दनयः, तत् कथमिह शब्दरूपो निर्देशो नेष्यते ? । तदयुक्तम्, भावार्थापरिज्ञानात्, शब्दनयो हि शब्दादेवार्थज्ञानमभ्युपगच्छति, तद्भावभावित्वात् तस्य । एवं च सति शब्दस्य ज्ञानकारणत्वात्, कारणस्य च द्रव्यत्वात्, द्रव्यस्य च भावशून्यत्वात्, शब्दनयस्य च भावग्राहित्वाद् न शब्दमात्रप्रधानता युक्तेति ।

अपरस्त्वाह– ननु यद्युपयुक्तो वक्ता यमर्थमाह, तद्वशाद् निर्देश इष्यते, ततो निर्देश्यवशाद् निर्देश इति प्राप्तम्, एवं च सति संग्रह-व्यवहारयोः शब्दनयस्य च को विशेषः ? । अत्रोच्यते– संग्रह-व्यवहारयोरुपयुक्तस्याऽनुपयुक्तस्य वा वक्तुरात्मनिरपेक्षोऽभिधेयमात्रवशात् शब्दमात्रमेव निर्देशः, इह तु बाह्यवस्तुप्रत्ययमात्रमुररीकृत्य य उपयोगस्तस्मादनन्यत्वादभिधातुर्जीवस्योपयोगरूपं स्वरूपमेव निर्देशोऽङ्गीक्रियते ।

आह– यद्येवम्, ऋजुसूत्रादस्य को विशेषः, तस्यापि हि निर्देशकवशाद् निर्देशः, स एवेहाप्यापन्नः ? । अत्राप्युच्यते– ऋजुसूत्राभिप्रायेणानुपयुक्तस्यापि वक्तुः शब्दमात्रं निर्देशः, अत्र तु वाच्योपयोग एव निर्देश इति विशेषः, इत्यलं प्रसङ्गेनेति ॥१५२९॥ 

तदेवं नयमतान्यभिधाय सम्यग्-मिथ्याविभागमाह—

जं[1] चागमा विरुद्धा परोप्परमओ वि संसओ जुत्तो । सव्वप्पमाणविसयाईओ जीवो त्ति तो बुद्धी ॥१५५३॥

यतश्च तीर्थिकानां संबन्धिनः सर्वेऽप्यागमाः परस्परविरोधिनः खलु, अतोऽपि संशय एवात्मनो युक्तः, न तु निश्चयः, तथाहि– केचिदागमा आत्मनो नास्तित्वमेव प्रतिपादयन्ति, यदाहुर्नास्तिकाः—

"एतावानेव लोकोऽय यावानिन्द्रियगोचरः । भद्रे ! वृकपदं पश्य यद् वदन्ति बहुश्रुताः ॥ १ ॥" इत्यादि ।

भट्टोऽप्याह–"विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति, न च प्रेत्यसंज्ञास्ति"। सुगतस्त्वाह–"न रूपं भिक्षवः! पुद्गलः" इत्यादि । आत्मास्तित्ववचनान्यप्यागमेषु श्रूयन्ते, तथाच वेदः–"न हि वै सशरीरस्य प्रिया-ऽप्रिययोरपहतिरस्ति, अशरीरं वा वसन्तं प्रिया-ऽप्रिये न स्पृशतः" इति; तथा, "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादि । कापिलागमे तु प्रतिपाद्यते– "अस्ति पुरुषोऽकर्ता निर्गुणो भोक्ता चिद्रूपः" इत्यादि । तस्मादागमानां परस्परविरुद्धत्वाद् नागमप्रमाणादप्यात्मसत्त्वासिद्धिः । इदं च वैशेषिकमतेन प्रत्यक्षा-ऽनुमाना ऽऽगमलक्षणं प्रमाणत्रयमुपन्यस्तम् । एतच्च स्वयं द्रष्टव्यम्–उपमाप्रमाणगम्योऽपि जीवो न भवति । तत्र हि 'यथा गौस्तथा गवयः' इत्यादावेव सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति । न चेहान्यः कश्चित् त्रिभुवनेऽप्यात्मसदृशः पदार्थोऽस्ति, यद्दर्शनादात्मानमवगच्छामः । काला-ऽऽकाश-दिगादयो जीवतुल्या विद्यन्त इति चेत् । न, तेषामपि विवादास्पदीभूतत्वेन तदंह्रिबद्धत्वात् । अर्थापत्तिसाध्योऽपि जीवो न भवति । न हि दृष्टः श्रुतो वा कोऽप्यर्थ आत्मानमन्तरेण नोपपद्यते, यद्बलात् तं साधयामः । तस्मात् सर्वप्रमाणविषयातीतो जीव इति तव बुद्धिः, भावोपलम्भकप्रमाणपञ्चकविषयातीतत्वात्, प्रतिषेधसाधकाऽभावाख्यषष्ठप्रमाणविषय एव जीव इत्यर्थः । इति पूर्वपक्षः ॥ १५५३ ॥

अथैतत्प्रतिविधानमाह—

गोयम[3] ! पच्चक्खु[4] च्चिय जीवो जं संसयाइविन्नाणं । पच्चक्खं च न सज्झं जह सुह-दुक्खा सदेहम्मि[2]॥१५५४॥

गौतम ! भवतोऽपि प्रत्यक्ष एवाऽयं जीवः, किमन्येन प्रमाणान्तरोपन्यासेन ?। कोऽयं जीवो मम प्रत्यक्षः ? इति चेत् । उच्यते– यदेतत् तवैव संशयादिविज्ञानं स्वसंवेदनसिद्धं हृदि स्फुरति स एव जीवः, संशयादिज्ञानस्यैव तदनन्यत्वेन जीवत्वात् । यच्च प्रत्यक्षं

१ यच्चागमा विरुद्धा परस्परमतोऽपि संशयो युक्त । सर्वप्रमाणविषयातीतो जीवोऽस्ति ततो बुद्धि ॥ १५५३ ॥
२ घ ज 'दन्त्वघ' । ३ गौतम ! प्रत्यक्ष एव जीवो यत् संशयादिविज्ञानम् । प्रत्यक्षं च न साध्यं यथा सुख-दुःखे स्वदेहे ॥ १५५४ ॥ ४ घ ज 'च्चक्खो च्चि' ।

स्वकमेवात्मानमेव निर्दिशति । कुतः ? इत्याह– यतो यस्मात् स्त्री-पुं-नपुंसकरूपः सर्वोऽप्यसौ निर्देष्टा तदुपयुक्तत्वात् तेनैव निर्देश्येन सामायिकेन समानलिङ्गो भवति, सामायिकार्थस्य रूढितो नपुंसकत्वात्, स्त्रियाः, पुंसः, नपुंसकस्य वा सामायिकमभिदधानस्य नपुंसकलिङ्गनिर्देश एव भवतीति ।

आह– यदि पुनर्भावस्य द्वैविध्याद् निर्देश्य-निर्देशकोभयवशतोऽपि निर्देशः स्यात्, तर्हि को दोषः ?, तथाहि– द्विविधो भावोऽर्थस्य– विज्ञानं, परिणतिश्च; भावाभिधायिनश्च शुद्धनयाः । तत्र यदा पुमानुपयुक्तः सामायिकं नपुंसकमाह, तदा वक्तुर्नपुंसकविज्ञानानन्यत्वाद् नपुंसकनिर्देशोऽस्तु, निर्देष्टश्च मुखरोमादिरूपपुरुषपरिणतिमयत्वात् पुंनिर्देशोऽपि भवत्विति । अत्रोच्यते– भावस्य द्वैविध्ये सत्यपि वस्तुनो विज्ञानमेवेहोपयोगरूपमधिक्रियते, न पुनस्तत्परिणतिः, विज्ञानरूपस्यैवेह निर्देशस्याभिप्रेतत्वात् ।

आह– ननु शब्दोऽपि पुद्गलद्रव्यरूपः 'निर्दिश्यते' इति कृत्वा निर्देश एवोच्यते, तत् किमिति तदुपयोगरूप एव निर्देशोऽधिक्रियते । नैतदेवम्, शब्दस्य द्रव्यमात्रत्वात्, ज्ञानलक्षणभावग्राहिणश्च शब्दनयाः । अत एव पुरुषपरिणतेः सत्यपि भावत्वे न तस्या इह ग्रहणम्, किन्तु विज्ञानरूप एवात्र निर्देशो गृह्यते । तत्रैतत् स्यात्, शब्दप्रधान एव हि शब्दनयः, तत् कथमिह शब्दरूपो निर्देशो नेष्यते ? । तदयुक्तम्, भावार्थापरिज्ञानात्, शब्दनयो हि शब्दादेवार्थज्ञानमभ्युपगच्छति, तद्भावभावित्वात् तस्य । एवं च सति शब्दस्य ज्ञानकारणत्वात्, कारणस्य च द्रव्यत्वात्, द्रव्यस्य च भावशून्यत्वात्, शब्दनयस्य च भावग्राहित्वाद् न शब्दमात्रप्रधानता युक्तेति ।

अपरस्त्वाह– ननु यद्युपयुक्तो वक्ता यमर्थमाह, तद्वशाद् निर्देश इष्यते, ततो निर्देश्यवशाद् निर्देश इति प्राप्तम्, एवं च सति संग्रह-व्यवहारयोः शब्दनयस्य च को विशेषः ? । अत्रोच्यते– संग्रह-व्यवहारयोरुपयुक्तस्याऽनुपयुक्तस्य वा वक्तुरात्मनिरपेक्षोऽभिधेयमात्रवशात् शब्दमात्रमेव निर्देशः, इह तु बाह्यवस्तुप्रत्ययमात्रमुररीकृत्य य उपयोगस्तस्मादनन्यत्वादभिधातुर्जीवस्योपयोगरूपं स्वरूपमेव निर्देशोऽङ्गीक्रियते ।

आह– यद्येवम्, ऋजुसूत्रादस्य को विशेषः, तस्यापि हि निर्देशकवशाद् निर्देशः, स एवेहाप्यापन्नः ? । अत्राप्युच्यते– ऋजुसूत्राभिप्रायेणानुपयुक्तस्यापि वक्तुः शब्दमात्रं निर्देशः, अत्र तु वाच्योपयोग एव निर्देश इति विशेषः, इत्यलं प्रसङ्गेनेति ॥१५२९॥

तदेवं नयमतान्यभिधाय सम्यग्-मिथ्याविभागमाह—

यदि संशयी जीव एवादौ नास्ति, तर्हि 'अंस्मि नास्मि' इति संशयः कस्य भवतु ?। संशयो हि विज्ञानाख्यो गुण एव, न च गुणिनमन्तरेण गुणः संभवति। देहोऽत्र गुणीति चेत्। न, देहस्य मूर्तत्वाज्जडत्वाच्च, ज्ञानस्य चामूर्तत्वाद् बोधरूपत्वाच्च। न चाननुरूपाणां गुणगुणिभावो युज्यते, आकाश-रूपादीनामपि तद्भावापत्त्याऽतिप्रसङ्गप्राप्तेः। 'संसइए वेत्यादि' वेत्यथवा, संशयिते स्वरूपे गौतम! किमसंशयं शेषं भवेत्?। इदमुक्तं भवति– 'किमस्मि नास्म्यहम्' इत्येवं यः स्वरूपेऽपि संशेते– आत्मनिश्चयोऽपि यस्य नास्तीत्यर्थः, तस्य शेषं कर्मबन्ध-मोक्षादिकं घट-पटादिकं च किमसंशयमसंदिग्धं स्यात्? न किञ्चित्, सर्वसंशय एव तस्य स्यादित्यर्थः, आत्मास्तित्वनिश्चयमूलो हि शेषवस्तुनिश्चय इति भावः। अहंप्रत्ययग्राह्यं च प्रत्यक्षमात्मानं निह्नुवानस्य 'अश्रावणः शब्दः' इत्यादिवत् प्रत्यक्षविरुद्धो नाम पक्षाभासः; तथा, वक्ष्यमाणात्मास्तित्वानुमानसद्भावाद् 'नित्यः शब्दः' इत्यादिवदनुमानविरुद्धोऽपि। तथा, 'अहमस्मि संशयी' इति प्रागभ्युपगम्योत्तरत्र 'नास्मि' इति प्रतिजानानस्य, सांख्यस्याऽनित्यः कर्ता, अचेतन आत्मेत्यादिवदभ्युपगमविरोधः। बाल-गोपालाङ्गनादिप्रसिद्धं चात्मानं निराकुर्वतः 'अचन्द्रः शशी' इत्यादिवल्लोकविरोधः। 'अहं नाहं वा' इति गदतो 'माता मे वन्ध्या' इत्यादिवत् स्ववचनव्याहतिः। एवं च प्रत्यक्षादिबाधितेऽस्मिन् पक्षेऽपक्षधर्मतया हेतुरप्यसिद्धः। हिमवत्पलपरिमाणादौ पिशाचादौ च प्रमाणपञ्चकाभावस्य प्रवृत्तेरनैकान्तिकोऽपि, वक्ष्यमाणानुमानप्रमाणसिद्धे चात्मनि विपक्ष एव वृत्तेर्विरुद्धश्चेति॥१५५७॥

प्रकारान्तरेणाप्यात्मनः प्रत्यक्षसिद्धतामाह—

गुणपच्चक्खत्तणओ[2] गुणी वि जीवो घडो व्व पच्चक्खो। घडओ वि घेप्पइ गुणी गुणमेत्तग्गहणओ जम्हा॥१५५८॥

प्रत्यक्ष एव गुणी जीवः, स्मृति-जिज्ञासा-चिकीर्षा-जिगमिषा-संशीत्यादिज्ञानविशेषाणां तद्गुणानां स्वसंवेदनप्रत्यक्षसिद्धत्वात्, इह यस्य गुणाः प्रत्यक्षाः स प्रत्यक्षो दृष्टः, यथा घटः, प्रत्यक्षगुणश्च जीवः, तस्मात् प्रत्यक्षः, यथा घटोऽपि गुणी रूपादिगुणप्रत्यक्षत्वादेव प्रत्यक्षः, तद्वद् विज्ञानादिगुणप्रत्यक्षत्वादात्मापीति। आह– अनैकान्तिकोऽयम्, यस्मादाकाशगुणः शब्दः प्रत्यक्षोऽस्ति, न पुनराकाशमिति। तदयुक्तम्, यतो नाकाशगुणः शब्दः, किन्तु पुद्गलगुणः, ऐन्द्रियकत्वात्, रूपादिवदिति ॥ १५५८ ॥

गुणानां प्रत्यक्षत्वे गुणिनस्तद्रूपतायां किमायातम्? इति चेत्। उच्यते—

अन्नोऽणन्नो[3] व गुणी होज्ज गुणेहिं, जइ नाम सोऽणन्नो। ननु गुणमेत्तग्गहणे घेप्पइ जीवो गुणी सक्खं ॥१५५९॥

१ क ग 'अस्ति नास्ति'। २ गुणप्रत्यक्षत्वतो गुण्यपि जीवो घट इव प्रत्यक्ष। घटकोऽपि गृह्यते गुणी गुणमात्रग्रहणतो यस्मात् ॥ १५५८ ॥
३ अन्योऽनन्यो वा गुणी भवेद् गुणै, यदि नाम सोऽनन्य। ननु गुणमात्रग्रहणे गृह्यते जीवो गुणी साक्षात् ॥ १५५९ ॥

तदेवमुद्देशेनोद्दिष्टस्य, निर्देशेन च निर्दिष्टस्य प्रस्तुतसामायिकाध्ययनस्येदानीं प्रसूतिरुत्पत्तिर्वक्तव्या। सा च द्रव्य-क्षेत्र-काल-भावैः करणभूतैर्भणनीया। एतदेव दर्शयति– 'किं तमित्यादि' किं नाम तज्जीवद्रव्यम्, 'जउ त्ति' यत इदमेवंभूतं सामायिकाध्ययनं प्रस्तुतम्? इति तावद् वक्तव्यम्। 'जह व त्ति' यथा वा तेन केनापि श्रीमन्महावीरलक्षणेन जीवद्रव्येण क्षायिकभाववृत्तिनैतत् सामायिकं प्ररूपितं तथा वक्तव्यम्। तथा, 'खेत्ते इत्यादि' कस्मिन् क्षेत्रे, क वा काले भगवता प्रथमतः सामायिकाध्ययनं प्ररूपितम्? इति वाच्यम्। तथा, भावतो भावे प्रष्टव्यतया प्रकृते कोऽसौ पुरुषविशेषो जीवो येनेदं सामायिकमभिहितम्? इति भणनीयम्। इह च–

'[1]दव्वा-भिलाव-चिंधे वेए धम्म-त्थ-भोग-भावे य। भावपुरिसो उ जीवो भावे पगयं तु भावेणं ॥ १ ॥'

इति वक्ष्यमाणगाथायां द्रव्यादिभेदैरनेकधा पुरुषसंभवमुपदर्श्य भावे भावनिर्गमे विचार्ये भावपुरुषो जीव इति वक्ष्यते। अतोऽत्रापि 'भावपुरुषविशेषो जीवः' इत्युक्तम्। तदेवमत्र क्षेत्र-काल-पुरुषविशेषलक्षणत्रिकमनन्तरवक्ष्यमाणं निर्गमभेद एव द्रष्टव्यम्, यस्मात् षड्विधोऽसौ निर्गमः। तस्य च निर्गमभेदषट्कस्य मध्ये क्षेत्र-कालौ साक्षादेव पठ्येते, भावनिर्गमे च पुरुषविशेषो जीवो वक्ष्यते, इत्येवं क्षेत्रादित्रिकं निर्गमभेदः। अत्राह– ननु द्रव्यमपि निर्गमभेद एव, तस्यापि तत्राभिधास्यमानत्वात्, तत्कथं क्षेत्रादित्रिकमेव तद्भेदत्वेनोच्यते?। सत्यम्, किन्तु पुरुषविशेषग्रहणेनैव तद्ग्रहणं मन्यत इत्यदोषः। इत्यलं प्रसङ्गेन ॥ इति सप्तविंशतिगाथार्थः ॥ १५३१ ॥ १५३२ ॥

कथं पुनर्निर्गमः षड्विधः? इत्याह—

[2]नामं ठवणा दविए खेत्ते काले तहेव भावे य। एसो उ निग्गमस्स निक्खेवो छव्विहो होइ ॥ १५३३ ॥

नाम-स्थापनानिर्गमौ नामावश्यकाद्युक्तानुसारेण भावनीयौ। द्रव्याद् द्रव्यस्य वा निर्गमः, क्षेत्रात् क्षेत्रस्य वा, कालात् कालस्य वा, भावाद् भावस्य वा निर्गम इत्यादि वाच्यम् ॥ इति निर्युक्तिगाथासंक्षेपार्थः ॥ १५३३ ॥

विस्तरार्थं तु भाष्यकारः प्राह—

[3]दव्वाओ दव्वस्स व विणिग्गमो दव्वनिग्गमो सो य। तिविहो सचित्ताई तिविहाओ संभवो नेओ ॥१५३४॥

१ द्रव्या-ऽभिलाप-चिह्नानि वेदो धर्मा-ऽर्थ भोग-भावाश्च। भावपुरुषस्तु जीवो भावे प्रकृतं तु भावेन ॥ १ ॥
२ नाम स्थापना द्रव्ये क्षेत्रे काले तथैव भावे च। एष तु निर्गमस्य निक्षेप षड्विधो भवति ॥ १५३३ ॥
३ द्रव्याद् द्रव्यस्य वा विनिर्गमो द्रव्यनिर्गमः स च। त्रिविध सचित्तादिस्त्रिविधात् संभवो ज्ञेयः ॥ १५३४ ॥

प्रयोगः– देहस्य संबन्धिनो ज्ञानादयो गुणा न भवन्त्येव, तस्य मूर्तिमत्त्वात्, चाक्षुषत्वाद् वा, घटवत्। न च द्रव्यरहितो गुणः समास्ति। ततो यो ज्ञानादिगुणानामनुरूपोऽमूर्तः, अचाक्षुषश्च गुणी, स देहातिरिक्तो जीवो ज्ञातव्यः। आह– ज्ञानादयो न देहस्येति प्रत्यक्षबाधितमिदम्, देह एव ज्ञानादिगुणानां प्रत्यक्षेणैव ग्रहणात्। तदयुक्तम्, अनुमानबाधितत्वादस्य प्रत्यक्षस्य, तथाहि— इहेन्द्रियातिरिक्तो विज्ञाता, तदुपरमेऽपि तदुपलब्धार्थानुस्मरणात्, यो हि यदुपरमेऽपि यदुपलब्धमर्थमनुस्मरति, स तस्मादर्थान्तरं दृष्टः, यथा– पञ्चवातायनोपलब्धार्थानुस्मर्ता देवदत्त इत्यादि वायुभूतिप्रश्ने वक्ष्याम इति ॥ १५६२ ॥

उपसंजिहीर्षुराह—

इय[1] तुह देसेणायं पच्चक्खो सव्वहा महं जीवो। अविहयनाणत्तणओ तुह विण्णाणं व पडिवज्जा ॥१५६३॥

इत्येवमुक्तप्रकारेण स्वशरीरे तवापि देशतः प्रत्यक्षोऽयमात्मा, छद्मस्थत्वेन भवतः सर्वस्यापि वस्तुनो देशविषयत्वात्, घटवत्, तथाहि– सर्वमपि स्व-परपर्यायतोऽनन्तपर्यायं वस्तु, छद्मस्थश्च प्रत्यक्षेण साक्षात् तद्देशमेव गृह्णाति। प्रत्यक्षेण च प्रदीपादिप्रकाशेनेव देशतः प्रकाशिता अपि घटादयो व्यवहारतः प्रत्यक्षा उच्यन्त एव। सर्वात्मना च केवलिप्रत्यक्षमेव वस्तु प्रकाशयति। अतो ममाप्रतिहतानन्तज्ञानत्वेन सर्वात्मनापि प्रत्यक्षोऽयं जीवः, यथाऽतीन्द्रियमपि त्वत्संशयविज्ञानमिति प्रतिपद्यस्वेति ॥ १५६३ ॥

परशरीरे तर्हि कथम्? इत्याह—

एवं[2] चिय परदेहेऽणुमाणओ गिण्ह जीवमत्थि त्ति। अणुवित्ति-निवित्तीओ विन्नाणमयं सरूवे व्व ॥१५६४॥

यथा स्वदेहे, एवं परदेहेऽपि गृहाण जीवमनुमानतः। कथम्? इत्याह– अस्ति विद्यत इति। कथंभूतं जीवम्? इत्याह– विज्ञानमयं विज्ञानात्मकम्। अनुमानमेव सूचयन्नाह– 'अणुवित्ति-निवित्तीओ सरूवे व त्ति' इदमुक्तं भवति– परशरीरेऽप्यस्ति जीवः, इष्टा-ऽनिष्टयोः प्रवृत्ति-निवृत्तिदर्शनात्, यथा स्वरूपे स्वात्मनि, इह यत्रेष्टा-ऽनिष्टयोः प्रवृत्ति-निवृत्ती दृश्येते, तत्सात्मकं दृष्टम्, यथा स्वशरीरम्, तथा च प्रवृत्ति-निवृत्ती दृश्येते परशरीरे, अतस्तदपि सात्मकम्; आत्माभावे चेष्टा-निष्टप्रवृत्ति-निवृत्ती न भवतः, यथा घटे, इत्यनुमानात् परशरीरेऽपि जीवसिद्धिः ॥ १५६४ ॥

१ इति तव देशेनायं प्रत्यक्ष सर्वथा मम जीव.। अविहतज्ञानत्वतस्तव विज्ञानमिव प्रतिपद्यस्व ॥ १५६३ ॥

२ एवमेव परदेहेऽनुमानतो गृहाण जीवमस्तीति। अनुवृत्ति-निवृत्तिभ्यां विज्ञानमय स्वरूप इव ॥ १५६४ ॥

[1]उवयारओ खेत्तस्स निग्गमो लोगनिक्खुडाणं च। लद्धं विनिग्गयं ति य जह खेत्तं राउलाउ त्ति॥१५३८॥

यथा द्रव्यस्यापि क्वचित् कल्पनया निर्गम उच्यते, न तु स्वरूपतः, एवं क्षेत्रस्यापि स्वरूपेण कुतोऽपि निर्गमो नास्ति, तस्याक्रियत्वेन तदयोगात्। क्षेत्रात् पुनर्निर्गमोऽस्ति, यथाऽऽयुःक्षयादिसमय ऊर्ध्वा-ऽधोलोकादिक्षेत्राद् देव नारकद्रव्यादेर्निर्गमः। क्षेत्रेऽपि धान्यादेर्निर्गमो द्रष्टव्यः। न तु क्षेत्रस्य स्वरूपेण निर्गमः। किं सर्वथा नास्ति? इत्याह– उपचारतः कल्पनामात्रेण क्षेत्रस्यापि निर्गमः समस्त्येव, यथा लोकक्षेत्राद् निष्कुटा निर्गता इति, तेषां स्वरूपेणावस्थितानां निर्गमक्रियाऽभावेऽपि निर्गता इव निर्गता इति निर्गमोपचारः। तथा, लब्धं विनिर्गतं क्षेत्रं राजकुलात्, निर्गतं भरतादिक्षेत्रं दुःषमादिकालाद् दुर्भिक्षा-ऽशिवादेर्वेत्यादीति ॥१५३७॥ १५३८॥

कालनिर्गममाह—

[2]कालो वि दव्वधम्मो निक्किरिओ तस्स निग्गमो पभवो। तत्तो च्चिय दव्वाओ पभवइ काले व जं जम्मि॥१५३९॥

उवयारओ व सरओ विणिग्गओ निग्गओ य तत्तोऽहं। अहवा दुक्कालाओ नरो व बालाइकालाओ॥१५४०॥

कालोऽपि वर्तनारूपो द्रव्यधर्म एव। स च स्वरूपेण निष्क्रियः, द्रव्यद्वारेणैव तत्क्रियाप्रवृत्तेः। तस्य च तत एव स्वाश्रय-भूताद् द्रव्याद् निर्गमः प्रभव उत्पत्तिः। यथा हरितादिकं यस्मिन् वर्षादिके काले प्रभवत्युत्पद्यते स कालनिर्गम इति। अथवा, उपचा-रतोऽपि कालनिर्गमो यथा– शरत्समयोऽसौ निर्गत आविर्भूतः, ततो वा शरत्कालाद् दुष्कालाद् वा निर्गतो निस्तीर्णोऽहम्, बाला-द्यवस्थातो वा नरो निर्गत इत्याद्युपचारतः कालनिर्गम इति ॥ १५३९ ॥ १५४० ॥

अथ भावनिर्गममाह—

[3]भावो वि दव्वधम्मो तत्तो च्चिय तस्स निग्गमो पभवो। दव्वस्स व भावाओ विणिग्गमो भावओऽवगमो॥१५४१॥

---

१ उपचारतः क्षेत्रस्य निर्गमो लोकनिष्कुटाना च। लब्ध विनिर्गतमिति च यथा क्षेत्रं राजकुलादिति ॥ १५३८ ॥
२ कालोऽपि द्रव्यधर्मो निष्क्रियस्तस्य निर्गम प्रभवः। तत एव द्रव्यात् प्रभवति काले वा यद् यस्मिन् ॥ १५३९ ॥
उपचारतो वा शरद् विनिर्गता निर्गतश्च ततोऽहम्। अथवा दुष्कालाद् नर इव बालादिकालात् ॥ १५४० ॥
३ भावोऽपि द्रव्यधर्मस्तत एव तस्य निर्गमः प्रभवः। द्रव्यस्य वा भावाद् विनिर्गमो भावतोऽपगमः ॥ १५४१ ॥

इह यत्रादानादेयभावस्तत्रावश्यमादाता समस्ति,यथा लोके संदंशक-लोहानां कर्मारोऽयस्कारः, विद्यते चेन्द्रिय-विषयाणामादानादेयभावः, अतस्तेषामप्यस्त्यादाता, स च जीवः, यत्र त्वादाता नास्ति, तत्रादानादेयभावोऽपि न विद्यते, यथाऽऽकाश इति ॥ १५६८ ॥

तथा,

[1]भोत्ता देहाईणं भोज्जत्तणओ नरो व्व भत्तस्स । संघायाइत्तणओ अत्थि य अत्थी घरस्सेव ॥ १५६९ ॥

इह देहादीनां भोक्ता समस्ति, भोग्यत्वात्, यथा शाल्यादिभक्त-वस्त्रादीनां नरः, यस्य च भोक्ता नास्ति तद् भोग्यमपि न भवति, यथा खरविषाणम्, भोग्यं च शरीरादिकम्, ततो विद्यमानभोक्तृकमिति । तथा, अर्थी स्वामी । ततश्च देहादीनां विद्यते स्वामी, संघातरूपत्वात्, आदिशब्दाद् मूर्तिमत्त्वात्, ऐन्द्रियकत्वात्, चाक्षुषत्वादित्यादयोऽप्यनैकान्तिकत्वपरिहारार्थं संभवद्विहितविशेषणा हेतवो योजनीयाः, यथा गृहादीनां सूत्रधारादय इति दृष्टान्तः, यत्पुनरस्वामिकं तत् संघातादिरूपमपि न भवति, यथा गगनकुसुमम्, संघातादिरूपं च देहादिकम्, तस्माद् विद्यमानस्वामिकमिति ॥ १५६९ ॥

आह– ननु '[3]देहस्स त्थि विहाया' इत्यादिना शरीरादीनां कर्तादय एव सिध्यन्ति' न तु मस्तुतो जीवः, इत्याशङ्क्योत्तरमाक्षेपपरिहारौ चाह––

[4]जो कत्ताइ स जीवो सज्झविरुद्धो त्ति ते मई होज्जा । मुत्ताइपसंगाओ तं न संसारिणो दोसो ॥१५७०॥

यश्चायमनन्तरं देहे-न्द्रियादीनां कर्ता, अधिष्ठाता, आदाता, भोक्ता, अर्थी चोक्तः स सर्वोऽपि जीव एव, अन्यस्येश्वरादेर्युक्त्यक्षमत्वेन कर्तृत्वाद्यसंभवादिति । अथ साध्यविरुद्धसाधकत्वाद् विरुद्धा एते हेतव इति तव मतिर्भवेत्, तथाहि– घटादीनां कर्त्रादिरूपाः कुलालादयो मूर्तिमन्तः, संघातरूपाः, अनित्यादिस्वभावाश्च दृष्टाः, इत्यतो जीवोऽप्येवंविध एव सिध्यति, एतद्विपरीतश्च किलास्माकं साधयितुमिष्टः, इत्येवं साध्यविरुद्धसाधकत्वं हेतूनामिति । तदेतदयुक्तत्वाद् न, यतः खलु संसारिणो जीवस्य साधयितुमिष्टस्याऽदोषोऽयम् । स ह्यष्टकर्मपुद्गलसंघातोपगूढत्वात् सशरीरत्वाच्च कथंचिन्मूर्तत्वादिधर्मयुक्त एवेति भावः ॥ १५७० ॥

---

१ भोक्ता देहादीना भोग्यत्वतो नर इव भक्तस्य । सघातादित्वतोऽस्ति चार्थी गृहस्येव ॥ १५६९ ॥ २ ग ज 'दे' । ३ गाथा १५६७ ।
४ य कर्त्रादि स जीव साध्यविरुद्ध इति तव मतिर्भवेत् । मूर्तादिप्रसङ्गात् तद् न ससारिणो दोषः ॥ १५७० ॥

तदङ्गत्वमेव द्रव्यादीनां दर्शयति—

[1]वीरो दव्वं खेत्तं महसेणवणं पमाणकालो य । भावो य भावपुरिसो समासओ निग्गमंगाइं ॥ १५४५ ॥

यतो द्रव्यात् सामायिकं निर्गतं तद् द्रव्यमत्र श्रीमन्महावीरो मन्तव्यः । यस्मिंश्च क्षेत्रे तद् निर्गतं तदिह महसेनवनमवगन्तव्यम् । कालस्तु प्रथमपौरुषीलक्षणः प्रमाणकालः । भावस्तु भावपुरुषो वक्ष्यमाणलक्षणः । एतानि समासतः संक्षेपतः सामायिकस्य निर्गमाङ्गानीति ॥ १५४५ ॥

एतदेव दर्शयति—

[2]सामइयं वीराओ महसेणवणे पमाणकाले य । भावपुरिसा हि भावो विणिग्गओ वक्खमाणोऽयं ॥१५४६॥

गतार्था । नवरं श्रीमन्महावीरजीवलक्षणाद् भावपुरुषादयं वक्ष्यमाणविस्तरस्वरूपः सामायिकलक्षणो भावो विनिर्गतः । इह च क्षायोपशमिके भावे वर्तमानत्वात् 'सामायिकं भावः' इत्युक्तम् ॥ १५४६ ॥

अथ महावीरलक्षणस्य द्रव्यस्य निर्गमं तावदभिधित्सुराह—

[3]इच्चेवमाइ सव्वं दव्वाहीणं जओ जिणस्सेव । तो निग्गमणं वोत्तुं वोच्छं सामाइयस्स तओ ॥ १५४७ ॥

इत्येवमादिकं क्षेत्र-कालनिर्गमनादिकं सामायिकाध्ययना-ऽऽवश्यकश्रुतस्कन्धा-ऽऽचारादिकं वा सर्वमपि यतो यस्माद् द्रव्यस्य महावीरलक्षणस्याधीनम् । ततस्तस्यैव महावीरजिनस्य निर्गमनमुक्त्वा ततः सामायिकस्य निर्गमनं वक्ष्य इति ॥ १५४७ ॥

ननु महावीरजिनस्यापि निर्गमनं कथं वक्तव्यम् ? इत्याह—

[4]मिच्छत्ताइतमाओ स निग्गओ जह य केवलं पत्तो । जह य पसूयं तत्तो सामइयं तं पवक्खामि ॥१५४८॥

तमिति तदेतत् सर्वं प्रवक्ष्यामि ॥ इति गाथापञ्चदशकार्थः ॥ १५४८ ॥

---

१ वीरो द्रव्यं क्षेत्रं महासेनवन प्रमाणकालश्च । भावश्च भावपुरुषः समासतो निर्गमाङ्गानि ॥ १५४५ ॥
२ सामायिक वीराद् महासेनवने प्रामाणकाले च । भावपुरुषाद्धि भावो विनिर्गतो वक्ष्यमाणोऽयम् ॥ १५४६ ॥
३ इत्येवमादि सर्वं द्रव्याधीनं यतो जिनस्यैव । ततो निर्गमनमुक्त्वा वक्ष्ये सामायिकस्य तत ॥ १५४७ ॥
४ मिथ्यात्वादितमसः स निर्गतो यथा च केवल प्राप्तः । यथा च प्रसूत तत सामायिकं तत् प्रवक्ष्यामि ॥ १५४८ ॥

'विवरीयगाहे वि त्ति' इदमुक्तं भवति– यदा विपर्यस्तः कश्चित् स्थाणौ 'पुरुष एवायम्' इत्यादिविपरीतग्रहं करोति तदाप्ययमेव न्यायो वाच्यः– सोऽपि विपरीतग्रहो विपरीते पुरुषादिके वस्तुनि सत्येवोपपद्यते नाविद्यमान इत्यर्थः । एवं भवदभिप्रायेण योऽस्मादृशां शरीर आत्मास्तित्वाभिमानः, नायमात्मनः सर्वथा नास्तित्वे युज्यत इति ॥ १५७२ ॥

इतोऽप्यस्ति जीवः । कुतः ? इत्याह—

अत्थि[1] अजीवविवक्खो पडिसेहाओ घडोऽघडस्सेव । नत्थि घडो त्ति व जीवत्थित्तपरो नत्थिसद्दोऽयं ॥१५७३॥

अत्र प्रयोगः– प्रतिपक्षवानयमजीवः, अत्र व्युत्पत्तिमच्छुद्धपदप्रतिषेधात्, यत्र व्युत्पत्तिमतः शुद्धपदस्य प्रतिषेधो दृश्यते स प्रतिपक्षवान् दृष्टः, यथाऽघटो घटप्रतिपक्षवान्, अत्र ह्यघटप्रयोगे शुद्धस्य व्युत्पत्तिमतश्च पदस्य प्रतिषेधः, अतोऽवश्यं घटलक्षणेन प्रतिपक्षेण भवितव्यम् । यस्तु न प्रतिपक्षवान् न तत्र शुद्धस्य व्युत्पत्तिमतश्च पदस्य प्रतिषेधः, यथाऽखरविषाणम्, अडित्थ इति । अखरविषाणमित्यत्र खरविषाणलक्षणस्याशुद्धस्य सामासिकपदस्य प्रतिषेध इति, अतोऽत्र खरस्य विषाणं खरविषाणमित्यादिव्युत्पत्तिमत्त्वे सत्यपि खरविषाणलक्षणो विपक्षो नास्ति। अडित्थ इत्यत्र तु व्युत्पत्तिरहितस्य डित्थपदस्य प्रतिषेधः, इति समासरहितत्वेन शुद्धत्वे सत्यपि नावश्यमवस्थितो डित्थलक्षणः कोऽपि पदार्थो जीववद् विपक्षभूतोऽस्तीति ।

'नत्थि घडो त्ति व' इत्यादि पश्चार्धम् । 'नास्त्यात्मा' इति च योऽयमात्मनिषेधध्वनिः स जीवास्तित्वनान्तरीयक एव, यथा 'नास्त्यत्र घटः' इति शब्दोऽन्यत्र घटास्तित्वाविनाभाव्येव । प्रयोगः– यस्य निषेधः क्रियमाणो दृश्यते तत्क्वचिदस्त्येव, यथा घटादिकम्, निषिध्यते च भवता 'नास्ति जीवः' इति वचनाज्जीवः, तस्मादस्त्येवासौ, यच्च सर्वथा नास्ति तस्य निषेधो न दृश्यत एव, यथा खरविषाणकल्पानां पञ्चभूतातिरिक्तभूतानाम्, निषिध्यते च त्वया जीवः, तस्माद् निषेध एवायं तत्सत्त्वसाधक इति ॥ १५७३ ॥

अनैकान्तिकोऽयं हेतुः, असतोऽपि खरविषाणादेर्निषेधदर्शनात्, इत्याशङ्क्याह—

असओ[2] नत्थि निसेहो संजोगाइपडिसेहओ सिद्धं । संजोगाइचउक्कं पि सिद्धमत्थंतरे नियर्यं ॥ १५७४ ॥

असतोऽविद्यमानस्य नास्ति न संभवत्येव निषेध इति सिद्धम् । कुतः ? इत्याह– संयोगादिप्रतिषेधात्, आदिशब्दात् समवाय

1 अस्त्यजीवविपक्ष प्रतिषेधाद् घटोऽघटस्येव । नास्ति घट इतीव जीवास्तित्वपरो नास्तिशब्दोऽयम् ॥ १५७३ ॥
2 असतो नास्ति निषेध सयोगादिप्रतिषेधत. सिद्धम् । सयोगादिचतुष्कमपि सिद्धमर्थान्तरे नियतम् ॥ १५७४ ॥

[1]न य जीवलिंगसंबंधदरिसणमभू जओ पुणो सरओ । तल्लिंगदरिसणाओ जीवे संपच्चओ होज्जा ॥१५५१॥

गतार्था । न च वक्तव्यं सामान्यतोदृष्टादनुमानादादित्यादिगतिवज्जीवः सिध्यति, यथा– गतिमानादित्यः, देशान्तरप्राप्तेः, देवदत्तवदिति, यतो हन्त ! देवदत्ते दृष्टान्तधर्मिणि सामान्येन देशान्तरप्राप्तिं गतिपूर्विकां प्रत्यक्षेणैव निश्चित्य, सूर्येऽपि तां तथैव प्रमाता साधयतीति युक्तम् । न चैवमत्र क्वचिदपि दृष्टान्ते जीवसत्त्वेनाविनाभूतः कोऽपि हेतुरध्यक्षेणोपलक्ष्यत इति । अतो न सामान्यतोदृष्टादप्यनुमानात् तद्गतिरिति ॥ १५५१ ॥

न चागमगम्योऽपि जीव इति दर्शयति––

[2]नागमगम्मो वि तओ भिज्जइ जं नागमोऽणुमाणाओ । न य कासइ पच्चक्खो जीवो जस्सागमो वयणं ॥१५५२॥

न चागमगम्योऽपि तकोऽसौ जीवः, यद् यस्मादागमोऽपि नानुमानाद् भिद्यते, परमार्थतस्तस्याप्यनुमानत्वात्; तथाहि– शाब्दं प्रमाणमागम उच्यते, शब्दश्च द्विविधः– दृष्टार्थविषयः, अदृष्टार्थविषयश्च । तत्र दृष्टार्थविषया शब्दाद् या प्रतीतिः, सा वस्तुतोऽनुमानसमुत्थैव, यतः क्वचित् प्रथमं पृथुबुध्नोदरो-र्ध्वकुण्ड-लोष्ठायत-वृत्तग्रीवादिमति घटपदार्थे घटशब्दं प्रयुज्यमानं दृष्ट्वा तदुत्तरकालं क्वापि 'घटमानय' इत्यादिशब्दं श्रुत्वा 'पृथुबुध्नोदरादिमदर्थ एव घट उच्यते, तथाभूतपदार्थ एव घटशब्दप्रयोगप्रवृत्तेः, यथा पूर्वं कुम्भकारापणादौ, घटशब्दश्चायमिदानीमपि श्रूयते, तस्मात् तथाभूतस्यैव पृथुबुध्नोदरादिमतः पदार्थस्य मयाऽऽनयनादिक्रिया कर्तव्या' इत्यनुमानं विधाय प्रमाता घटानयनादिक्रियां करोति, इत्येवं दृष्टार्थविषयं शाब्दं प्रमाणं वस्तुतो नानुमानाद् भिद्यते । न चैवमसावात्मशब्दः शरीरादृतेऽन्यत्र प्रयुज्यमानः क्वचिदुपलब्धः, यत्र खल्वात्मशब्दश्रवणात् 'आत्मा' इति प्रत्ययो भवेदिति । यदपि स्वर्ग-नरकाद्यदृष्टार्थविषयं शाब्दं प्रमाणम्, तदपि तत्त्वतोऽनुमानं नातिवर्तते, तथाहि– 'प्रमाणं स्वर्ग-नरकाद्यदृष्टार्थविषयं वचनम्, अविसंवादिवचनाप्तप्रणीतत्वात्, चन्द्रा-ऽर्कोपरागादिवचनवत्' इत्येवमनुमानादेव तत्र प्रमाणता । न चैवंभूतमाप्तं कमपि पश्यामः, यस्यात्मा प्रत्यक्ष इति तद्वचनमागम इति 'प्रतिपद्येमहि' इति शेषः ॥ १५५२ ॥

किञ्च,

---

१ न च जीवलिङ्गसंबन्धदर्शनमभूद् यत. पुनः स्मरत । तल्लिङ्गदर्शनाज्जीवे सप्रत्ययो भवेत ॥ १५५१ ॥

२ नागमगम्योऽपि सको भिद्यते यद् नागमोऽनुमानात् । न च कस्यचित् प्रत्यक्षो जीवो यस्यागमो वचनम् ॥ १५५२ ॥

वयम्, स चेत् सिद्धः, तर्हि तत्सिद्धयन्यथानुपपत्तेरेव तदाश्रयः सेत्स्यति, किं तया चिन्तया?। न च शरीरमन्तरेण जीवस्याश्रयान्तरमुपपद्यते, तत्रैव तदवस्थानलिङ्गोपलब्धेः। न च वक्तव्यं- शरीरमेव जीवः, 'जीवति' 'मृतः' 'मूर्च्छितः' इत्यादिव्यवस्थानुपपत्तेः, इत्यादेरभिधास्यमानत्वादिति ॥ १५७४ ॥



जीवसिद्धावेवोपपत्त्यन्तरमाह—

जीवो[1] त्ति सत्थयमिणं सुद्धत्तणओ घडाभिहाणं व । जेण त्थेण सदत्थं सो जीवो, अह मई होज्ज ॥१५७५॥

अत्थो देहो च्चिय से तं नो पज्जायवयणभेआओ । नाणाइगुणो य जओ भणिओ जीवो न देहो त्ति ॥१५७६॥

जीव इत्येतद् वचनं सार्थकमिति प्रतिज्ञा, व्युत्पत्तिमत्त्वे सति शुद्धपदत्वात्, इह यद् व्युत्पत्तिमत्त्वे सति शुद्धपदं तदर्थवद् दृष्टम्, यथा घटादिकम्, तथा च जीवपदम्, तस्मात् सार्थकम्, यत्तु सार्थकं न भवति तद् व्युत्पत्तिमत् शुद्धपदं च न भवति, यथा डित्थादिकं खरविषाणादिकं च, न च तथा जीवपदम्, तस्मात् सार्थकम्। यद् व्युत्पत्तिमद् न भवति तच्छुद्धपदमपि सद् न सार्थकं, यथा डित्थादिपदम्, इति हेतोरनैकान्तिकतापरिहारार्थं व्युत्पत्तिमत्त्वविशेषणं द्रष्टव्यम् । यदपि शुद्धपदं न भवति किन्तु सामासिकम्, तदपि व्युत्पत्तिमत्त्वे सत्यपि सार्थकं न भवति, यथा खरविषाणादिकम्, इति शुद्धत्वविशेषणम् ।

अथ मन्यसे- देह एवास्य जीवपदस्याऽर्थः, न पुनरर्थान्तरम्; उक्तं च- "देह एवाऽयमनुप्रयुज्यमानो दृष्टः, यथैष जीवः, एनं न हिनस्ति" इति, अतो देह एवास्यार्थो युक्त इति । तदेतद् न । कुतः ? इत्याह- देह-जीवयोः पर्यायवचनभेदात्, यत्र हि पर्यायवचनभेदस्तत्रान्यत्वं दृष्टम्, यथा घटा-ऽऽकाशयोः। तत्र घट कुट-कुम्भ-कलशादयो घटस्य पर्यायाः, नभो-व्योमा-ऽन्तरिक्षा-ऽऽकाशादयस्त्वाकाशपर्यायाः । प्रस्तुते च जीवो जन्तुरसुमान् प्राणी सत्त्वो भूत इत्यादयो जीवपर्यायाः, शरीरं वपुः कायो देहः कलेवरमित्यादयस्तु शरीरपर्यायाः। पर्यायवचनभेदेऽपि च वस्त्वेकत्वे सर्वैकत्वप्रसङ्गोऽत्र बाधकम्। यत्पुनरिदमुक्तम्- "देह एवायमनुप्रयुज्यमानो दृष्टः"- इत्यादि, तच्छरीरसहचरणा-ऽवस्थानादितः शरीरे जीवोपचारः क्रियते । किञ्च, इत्थमपि श्रूयत एव- 'गतः स

1 जीव इति सार्थकमिदं शुद्धत्वतो घटाभिधानमिव । येनार्थेन सदर्थं स जीव, अथ मतिर्भवेत ॥ १५७५ ॥ अर्थो देह एव तस्य तद् नो पर्यायवचनभेदात् । ज्ञानादिगुणश्च यतो भणितो जीवो न देह इति ॥ १५७६ ॥ 2 क ग 'जीवो यथैन' ।

तद् न प्रमाणान्तरेण साध्यम्, तथा स्वशरीर एवात्मसंवेदनसिद्धाः सुख दुःखादयः। प्रत्यक्षसिद्धमपि सग्राम-नगरं विश्वं शून्यवादिनं प्रति साध्यत एवेति चेत्। नैवम्, 'निरालम्बनाः सर्वे प्रत्ययाः, प्रत्ययत्वात्, स्वप्नप्रत्ययवत्, इत्यादेस्तदुद्भावितबाधकप्रमाणस्यैव तत्र निराकरणात्, अत्र त्वात्मग्राहके प्रत्यक्षे बाधकप्रमाणाभावादिति ॥ १५५४ ॥

इतश्चायं प्रत्यक्षो जीवः। कुतः ? इत्याह—

[1]कयवं करेमि काहं वाहमहं पच्चया इमाउ य। अप्पा स प्पच्चक्खो तिकालकज्जोवएसाओ॥ १५५५ ॥

वेत्यथवा, 'कृतवानहम्, करोम्यहम्, करिष्याम्यहम्'; 'उक्तवानहम्, ब्रवीम्यहम्, वक्ष्याम्यहम्'; 'ज्ञातवानहम्, जानेऽहम्, ज्ञास्याम्यहम्' इत्यादिप्रकारेण योऽयं त्रैकालिकः कार्यव्यपदेशः, तद्विषयप्रयुज्यमानतया तत्समुत्थो योऽयमहंप्रत्ययः, एतस्मादपि 'प्रत्यक्ष एवाऽयमात्मा' इति प्रपद्यस्व। अयं ह्यहंप्रत्ययो नानुमानिकः, अलैङ्गिकत्वात्। नाप्यागमादिप्रमाणसंभवः, तदनभिज्ञानानां बाल-गोपालादीनामप्यन्तर्मुखतयाऽऽत्मग्राहकत्वेन स्वसंविदितस्य तस्योत्पादात्, घटादौ चानुत्पादादिति ॥ १५५५ ॥

अपि च,

[2]केह पडिवण्णमहं ति य किमत्थि नत्थि त्ति संसओ कह णु ?। सइ संसयम्मि वायं कस्साहंपच्चओ जुत्तो ? ॥१५५६॥

हन्त ! कथमसति जीवे 'अहम्' इति प्रतिपन्नं त्वया, विषयाभावे विषयिणोऽनुत्थानप्रसङ्गात् ? । देह एवास्य प्रत्ययस्य विषय इति चेत्। न, जीवविप्रमुक्तेऽपि देहे तदुत्पत्तिप्रसङ्गात्। सति च जीवविषयेऽस्मिन्नहंप्रत्यये 'किमहमस्मि[3] नास्मि' इति भवतः संशयः कथं केन प्रकारेणोपजायते ? अहंप्रत्ययग्राह्यस्य जीवस्य सद्भावात् 'अस्म्यहम्' इति निश्चय एव युज्यत इति भावः। सन्ति वास्मिन्नात्मास्तित्वसंशये कस्यायमहंप्रत्ययो युज्यते, निर्मूलत्वेन तदनुत्थानप्रसङ्गात् ? इति ॥ १५५६ ॥

जीवाभावे संशयविज्ञानमपि न युज्यत एवेति दर्शयन्नाह—

[4]जइ नत्थि संसइ च्चिय किमत्थि नत्थि त्ति संसओ कस्स ?। संसइए व सरूवे गोयम ! किमसंसयं होज्जा ? ॥१५५७॥

१ कृतवान् करोमि करिष्यामि वाहमहंप्रत्ययादस्माच्च। आत्मा स प्रत्यक्षस्त्रैकालिककार्योपदेशात् ॥ १५५५ ॥
२ कथ प्रतिपन्नमहामिति च किमस्मि नास्मीति सशय. कथ नु ?। सति संशये चायं कस्याहंप्रत्ययो युक्तः ? ॥१५५६॥ ३ क ग 'मस्ति नास्ति'।
४ यदि नास्ति संशयी एव किमस्मि नास्मीति सशयः कस्य ?। सशयिते वा स्वरूपे गौतम ! किमसशयं भवेत् ? ॥ १५५७ ॥

जानासि, येन सर्वज्ञत्वप्रत्ययस्तव जायते । भयाद्यभावोऽपि तल्लिङ्गादर्शनाद् मयि सिद्ध एवेति स्वयमेव द्रष्टव्यम् । कदाचिदपि लिङ्गादर्शने लिङ्गिनोऽस्तित्वशङ्कायामतिप्रसङ्ग इति ॥ १५७९ ॥

अथोपसंहरन्नाह—

एवमुवओगलिंगं गोयम ! सव्वप्पमाणसंसिद्धं । संसारी-यर-थावर-तसाइभेयं मुणे जीवं ॥ १५८० ॥

एवमुक्तेन प्रकारेण जीवमात्मानं गौतम ! मुण– प्रतिपद्यस्वेति संबन्धः । कथंभूतम् ? उपयोग एव लिङ्गं यस्य स तथा, सर्वैः प्रत्यक्षाऽनुमाना-ऽऽगमप्रमाणैः संसिद्धं प्रतिष्ठितम्, तथा, संसारी-तर-स्थावर-त्रसादिभेदम् । संसारिणश्चेतरे सिद्धाः । आदिशब्दाच्च सूक्ष्म-बादर-पर्याप्ता-ऽपर्याप्तादिभेदपरिग्रह इति ॥ १५८० ॥

अत्र वेदान्तवादी प्राह– ननु बहुभेदत्वमात्मनोऽसिद्धम्, तस्य सर्वत्रैकत्वात्, तदुक्तम्—

"एक एव हि भूतात्मा भूते भूते प्रतिष्ठितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ १ ॥
यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः । संकीर्णमिव मात्राभिर्भिन्नाभिरभिमन्यते ॥ २ ॥
तथेदममलं ब्रह्म निर्विकल्पमविद्यया । कलुषत्वमिवापन्नं भेदरूपं प्रकाशते ॥ ३ ॥
ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् । छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ ४ ॥"

तथा, "पुरुष एवेदं ग्नि सर्वं, यद् भूतं, यच्च भाव्यम्, उतामृतत्वस्येशानः, यदन्नेनातिरोहति, यदेजति, यद् नैजति, यद् दूरे, यदु अन्तिके, यदन्तरस्य सर्वस्य, यत् सर्वस्यास्य बाह्यतः" इत्यादि । इत्येतदेव पूर्वार्धेनाक्षिप्योत्तरार्धेन परिहरन्नाह—

जइ पुण सो एगो च्चिय हवेज्ज वोमं व सव्वपिंडेसु । गोयम ! तदेगलिंगं पिंडेसु तहा न जीवोऽयं ॥१५८१॥

१ एवमुपयोगलिङ्ग गौतम ! सर्वप्रमाणसंसिद्धम् । ससारी तर-स्थावर-त्रसभेद मुण जीवम् ॥ १५८० ॥ २ घ ज 'व्यवस्थित' । ३ घ.ज 'पु' । ४ अयमग्रार्थ·–पुरुष आत्मा । एवशब्दोऽवधारणे । स च कर्म-प्रधानादिव्यवच्छेदार्थ. । इद सर्व प्रत्यक्षं वर्तमान चेतना-ऽचेतनम् । ग्निमिति वाक्यालङ्कारे । यद् भूत यदतीतम्, यच्च भाव्य यच्च भविष्यत्, तत् स एवेत्यर्थ· । उताऽमृतत्वस्येशान इति– उतशब्दोऽप्यर्थे, अपिश्च समुच्चये, अमृतत्वस्याऽमरणभावस्य मोक्षस्य ईशान. प्रभुश्चेत्यर्थः । यदिति यच्च– चशब्दलोपात्, अन्नेन आहारेण अतिरोहति अतिशयेन वृद्धिमुपैति, यदेजति यच्चलति पश्वादि, यद् नैजति पर्वतादि, यद् दूरे मेर्वादि, यदु अन्तिके, उशब्दोऽवधारणे, अन्तिके समीपे यत् तत्पुरुष एवेत्यर्थ. । यदन्तर्मध्येऽस्य चेतना ऽचेतनस्य सर्वस्य, यदेव सर्वस्याऽस्य बाह्यतस्तत्सर्व पुरुष एवेति ॥

५ यदि पुन· स एक एव भवेद् व्योमेव सर्वपिण्डेपु । गौतम ! तदेकलिङ्ग पिण्डेपु तथा न जीवोऽयम् ॥ १५८१ ॥

अह अन्नो तो एवं[1] गुणिनो न घडादओ वि पच्चक्खा । गुणमेत्तग्गहणाओ जीवम्मि कउवियारोऽयं ? ॥१५६०॥

ननु भवता गुणेभ्यो गुणी किमर्थान्तरभूतोऽभ्युपगम्यते, अनर्थान्तरभूतो वा ?[2] । यदि नाम सोऽनन्यस्तेभ्योऽनर्थान्तरभूतः, तर्हि ज्ञानादिगुणग्रहणमात्रादेव गुणी जीवः प्रत्यक्षेण गृह्यत इति सिद्धमेव । प्रयोगः– यो यस्मादनर्थान्तरं स तद्ग्रहणे गृह्यत एव, यथा वाससि रागः, गुणेभ्योऽनर्थान्तरं च गुणी, तस्माद् गुणग्राहकप्रत्यक्षेण सोऽपि गृह्यत एवेति । अथ गुणेभ्योऽन्योऽर्थान्तरभूत एव गुणी । तत एवं सति घटादयोऽपि गुणिनो न प्रत्यक्षाः, तदर्थान्तरभूतस्य रूपादिगुणमात्रस्यैव ग्रहणात् । इह यद् यस्मादर्थान्तरभूतं तद्ग्रहणेऽपि नेतरस्य ग्रहणम्, यथा घटे गृहीते पटस्य, अर्थान्तरभूताश्च गुणिनो गुणा इष्यन्ते, अतो गुणग्रहणेऽपि न गुणिग्रहणम् । अतो घटादीनामपि समानेऽग्रहणदोषे कोऽयं नाम भवतः केवलजीवे विचारो नास्तित्वविवक्षा, येनोच्यते– 'पच्चक्खं जं न[3] घिप्पइ घडो व्व' इत्यादि ? । अथ द्रव्यविरहिताः केऽपि न सन्त्येव गुणाः, इत्यतस्तद्ग्रहणद्वारेण गृह्यन्त एव घटादयः । नन्वेतदात्मन्यपि समानमेव । किञ्च, गुणिनो गुणानामर्थान्तरत्वेऽभ्युपगम्यमाने गुणी भवतु, मा भूद् वा प्रत्यक्षः, तथापि ज्ञानादिगुणेभ्यः पृथगात्मा गुणी त्वदभ्युपगमेनापि सिध्यत्येवेति ॥ १५५९ ॥ १५६० ॥

अत्र पराभिप्रायमाशङ्कमानः प्राह—

अह[4] मन्नसि अत्थि गुणी न य देहत्थंतरं तओ किंतु । देहे नाणाइगुणा सो च्चिय तेसिं गुणी जुत्तो ॥१५६१॥

अथ मन्यसे– अस्त्येव ज्ञानादिगुणानां गुणी, नैव तं प्रत्याचक्ष्महे, एतत्तु नाभ्युपगच्छामो यत्– 'देहादर्थान्तरं तकोऽसौ' इति, किन्तु देह एव ज्ञानादयो गुणाः समुपलभ्यन्ते, अतः स एव तेषां गुणी युक्तः, यथा रूपादीनां घटः, प्रयोगः– देहगुणा एव ज्ञानादयः, तत्रैवोपलभ्यमानत्वात्, गौर-कृश-स्थूलतादिवदिति ॥ १५६१ ॥

अत्रोत्तरमाह—

नाणादओ[5] न देहस्स मुत्तिमत्ताइओ घडस्सेव । तम्हा नाणाइगुणा जस्स स देहाहिओ जीवो ॥१५६२॥

१ अथान्यस्तत एवं गुणिनो न घटादयोऽपि प्रत्यक्षा. । गुणमात्रग्रहणाज्जीवे कुतो विचारोऽयम् ? ॥१५६०॥ २ गाथा १५४९ । ३ क.ग घ.ज.'न दीसइ घ' ।
४ अथ मन्यसेऽस्ति गुणी न च देहार्थान्तरं सकः । किन्तु देहे ज्ञानादिगुणा स एव तेषां गुणी युक्तः ॥ १५६१ ॥
५ ज्ञानादयो न देहस्य मूर्तिमत्त्वादितो घटस्येव । तस्माज्ज्ञानादिगुणा यस्य स देहाधिको जीवः ॥ १५६२ ॥

देवदत्त इति । किञ्च, न कर्ता, न भोक्ता, न मन्ता, न संसारी जीवः, एकत्वात् सर्वजीवानाम्, यच्चैकं न तस्य कर्तृत्वादयः, यथा नभस इति ॥ १५८४ ॥

अपि च,

[1]एगत्ते नत्थि सुही बहूवघाउ त्ति देसनिरुउ व्व । बहुतरबद्धत्तणओ न य मुक्को देसमुक्को व्व ॥१५८५॥

इदमत्र हृदयम्– नारक-तिर्यगादयोऽनन्ता जीवा नानाविधशरीर-मानसोपघातसंपातैर्दुःखिता एव, तदनन्तभागवर्तिनस्तु सुखिनः, एवमनन्ता बद्धाः, तदनन्तभागवर्तिनस्तु मुक्ताः, तेषां च सर्वेषामेकत्वे न कोऽपि सुखी प्राप्नोति, बहुतरोपघातान्वितत्वात्, यथा सर्वाङ्गरोगग्रस्तोऽङ्गुल्येकदेशेन नीरोगो यज्ञदत्तः, एवं न कोऽपि मुक्तस्तत्सुखभाक् च न कोऽपि घटते, बहुतरबद्धत्वात्, यथा सर्वाङ्गकीलितोऽङ्गुल्येकदेशमुक्तः । तस्मादेकत्वे सुखाद्यनुपपत्तेर्नानात्वं जीवानामिति स्थितम् ॥ १५८५ ॥

भवतु तर्हि जीवानां नानात्वम्, किन्त्वेकैको जीवः सर्वजगद्व्यापकोऽस्तु, इति नैयायिकादिमतमपाकुर्वन्नाह—

[3]जीवो तणुमेत्तत्थो जह कुंभो तग्गुणोवलंभाओ । अहवाऽणुवलंभाओ भिन्नम्मि घडे पडस्सेव ॥ १५८६ ॥

तनुमात्रस्थो जीव इति प्रतिज्ञा, तत्रैव तद्गुणोपलब्धेः, यथा घटः, 'स्वात्ममात्रे' इति शेषः । 'अहवेत्यादि' अथवा, यो यत्र प्रमाणैर्नोपलभ्यते तस्य तत्राभाव एव, यथा भिन्ने घटे पटस्य, नोपलभ्यते च शरीराद् बर्हिजीवः, तस्मात् तस्य तत्राभाव एवेति ॥ १५८६ ॥

उपसंहरन्नाह—

[4]तम्हा कत्ता भोत्ता बंधो मोक्खो सुहं च दुक्खं च । संसरणं च बहुत्ता-ऽसव्वगयत्ते सुजुत्ताइं ॥ १५८७ ॥

तस्माद् बहुत्वा-सर्वगतत्वयोरेव सतोः कर्तृत्वादयो धर्मा जीवस्य युज्यन्ते, नान्यथा, इत्येवंविधं प्रमाणसिद्धं जीवं प्रतिपद्यस्वेति ॥ १५८७ ॥

१ एकत्वे नास्ति सुखी बहूपघात इति देशनिरुज इव । बहुतरबद्धत्वतो न च मुक्तो देशमुक्त इव ॥ १५८५ ॥ २ क ग. 'क्तो घ' ।
३ जीवस्तनुमात्रस्थो यथा कुम्भस्तद्गुणोपलम्भात् । अथवाऽनुपलम्भाद् भिन्ने घटे पटस्येव ॥ १५८६ ॥
४ तस्मात् कर्ता भोक्ता बन्धो मोक्षः सुखं च दुःखं च । संसरणं च बहुत्वा-ऽसर्वगतत्वयोः सुयुक्तानि ॥ १५८७ ॥

अत्र परमतमाशङ्क्योत्तरमाह—

[1]जं च न लिंगेहिं समं मन्नासि लिंगी[2] जओ पुरा गहिओ। संगं ससेण व समं न लिंगओ तोऽणुमेओ सो॥१५६५॥

सोऽणेगंतो जम्हा लिंगेहिं समं न दिट्ठपुव्वो वि। गहलिंगदरिसणाओ गहोऽणुमेओ सरीरम्मि ॥१५६६॥

यच्च 'न[3] य जीवलिंगसंबंधदरिसणमभू' इत्यादिपूर्वोक्तपूर्वपक्षानुसारेण मन्यसे त्वम्। किम्? इत्याह— ततो न लिङ्गतो लिङ्गादनुमेयोऽसौ जीवः। यतः, किम्? इत्याह— यतो न खलु लिङ्गैः कैश्चिदपि समं लिङ्गी जीवः क्वापि केनापि पुरा पूर्वं गृहीतः। किंवदित्याह–शृङ्गमिव शशकेन समम्। ततो लिङ्ग-लिङ्गिनोः पूर्वं संबन्धाग्रहणाद् न लिङ्गाज्जीवोऽनुमीयते। इति यद् मन्यसे त्वं तत्र प्रतिविधीयते— सोऽनेकान्तः, यस्माल्लिङ्गैः सममदृष्टपूर्वोऽपि ग्रहो देवयोनिविशेषः, शरीरे हसन-गान-रोदन-कर-चरण-भ्रूविक्षेपादिविकृतग्रहलिङ्गदर्शनादनुमीयत इति बालानामपि प्रतीतमेवेति ॥ १५६५ ॥ १५६६ ॥

अनुमानान्तरमप्यात्मसाधकमाह—

[4]देहस्स त्थि विहाया पइनिययागारओ घडस्सेव। अक्खाणं च करणओ दंडाईणं कुलालो व्व ॥१५६७॥

देहस्यास्ति विधाता कर्तेति प्रतिज्ञा, आदिमत्प्रतिनियताकारत्वात्, घटवत्, यत् पुनरकर्तृकं तदादिमत्प्रतिनियताकारमपि न भवति, यथाऽभ्रविकारः, यश्च देहस्य कर्ता स जीवः। प्रतिनियताकारत्वं मेर्वादीनामप्यस्ति, न च तेषां कश्चिद् विधाता, इति तैरनैकान्तिको हेतुः स्यात्, अतोऽनुक्तमप्यादिमत्त्वविशेषणं द्रष्टव्यमिति। तथा, अक्षाणामिन्द्रियाणामस्ति 'अधिष्ठाता' इत्यध्याहारः, करणत्वात्, यथा चक्र-चीवर-मृत्-सूत्र-दण्डादीनां कुलालः, यच्च निरधिष्ठातृकं तत् करणमपि न भवति, यथाऽऽकाशम्, यश्चेन्द्रियाणामधिष्ठाता स जीव इति ॥ १५६७ ॥

तथा,

[5]अत्थिंदिय-विसयाणं आयाणादेयभावओऽवस्सं। कम्मार इवादाया लोए संडास-लोहाणं ॥ १५६८ ॥

---

१ यच्च न लिङ्गैः सम मन्यसे लिङ्गी यत पुरा गृहीत.। श्रृङ्ग शशेन वा समं न लिङ्गतस्ततोऽनुमेय' स. ॥ १५६५ ॥ सोऽनेकान्तो यस्माल्लिङ्गै सम न दृष्टपूर्वोऽपि। ग्रहलिङ्गदर्शनाद् ग्रहोऽनुमेय' शरीरे ॥ १५६६ ॥ २ क ग 'गी पुरा जओ ग'। ३ गाथा १५५१।

४ देहस्यास्ति विधाता प्रतिनियताकारतो घटस्येव। अक्षाणां च करणतो दण्डादिनां कुलाल इव ॥ १५६७ ॥

५ अस्तीन्द्रिय-विषयाणामादानादेयभावतोऽवश्यम्। कर्मार इवादाता लोके सदंशक-लोहानाम् ॥ १५६८ ॥

देवदत्त इति। किञ्च, न कर्ता, न भोक्ता, न मन्ता, न संसारी जीवः, एकत्वात् सर्वजीवानाम्, यच्चैकं न तस्य कर्तृत्वादयः, यथा नभस इति ॥ १५८४ ॥

अपि च,

[1]एगत्ते नत्थि सुही बहूवघाउ त्ति देसनिरुउ व्व । बहुतरबद्धत्तणओ न य मुक्को देसमुक्को व्व ॥१५८५॥

इदमत्र हृदयम्– नारक-तिर्यगादयोऽनन्ता जीवा नानाविधशरीर-मानसोपघातसंपातैर्दुःखिता एव, तदनन्तभागवर्तिनस्तु सुखिनः, एवमनन्ता बद्धाः, तदनन्तभागवर्तिनस्तु मुक्ताः, तेषां च सर्वेषामेकत्वे न कोऽपि सुखी प्राप्नोति, वहुतरोपघातान्वितत्वात्, यथा सर्वाङ्गरोगग्रस्तोऽङ्गुल्येकदेशेन नीरोगो यज्ञदत्तः, एवं न कोऽपि मुक्तस्तत्सुखभाक् च न कोऽपि घटते, वहुतरवद्धत्वात्, यथा सर्वाङ्गकीलितोऽङ्गुल्येकदेशमुक्तः। तस्मादेकत्वे सुखाद्यनुपपत्तेर्नानात्वं जीवानामिति स्थितम् ॥ १५८५ ॥

भवतु तर्हि जीवानां नानात्वम्, किन्त्वेकैको जीवः सर्वजगद्व्यापकोऽस्तु, इति नैयायिकादिमतमपाकुर्वन्नाह—

[3]जीवो तणुमेत्तत्थो जह कुंभो तग्गुणोवलंभाओ । अहवाऽणुवलंभाओ भिन्नम्मि घडे पडस्सेव ॥ १५८६ ॥

तनुमात्रस्थो जीव इति प्रतिज्ञा, तत्रैव तद्गुणोपलब्धेः, यथा घटः, 'स्वात्ममात्रे' इति शेषः। 'अहवेत्यादि' अथवा, यो यत्र प्रमाणैर्नोपलभ्यते तस्य तत्राभाव एव, यथा भिन्ने घटे पटस्य, नोपलभ्यते च शरीराद् वहिर्जीवः, तस्मात् तस्य तत्राभाव एवेति ॥ १५८६ ॥

उपसंहरन्नाह—

[4]तम्हा कत्ता भोत्ता बंधो मोक्खो सुहं च दुक्खं च । संसरणं च बहुत्ता-ऽसव्वगयत्ते सुजुत्ताइं ॥ १५८७ ॥

तस्माद् वहुत्वा-सर्वगतत्वयोरेव सतोः कर्तृत्वादयो धर्मा जीवस्य युज्यन्ते, नान्यथा, इत्येवंविधं प्रमाणसिद्धं जीवं प्रतिपद्यस्वेति ॥ १५८७ ॥

---

१ एकत्वे नास्ति सुखी बहूपघात इति देशनिरुज इव । वहुतरबद्धत्वतो न च मुक्तो देशमुक्त इव ॥ १५८५ ॥ २ क ग. 'क्तो घ'।
३ जीवस्तनुमात्रस्थो यथा कुम्भस्तद्गुणोपलम्भात् । अथवाऽनुपलम्भाद् भिन्ने घटे पटस्येव ॥ १५८६ ॥
४ तस्मात् कर्ता भोक्ता बन्धो मोक्ष सुख च दु ख च । ससरण च वहुत्वा-ऽसर्वगतत्वयो' सुयुक्तानि ॥ १५८७ ॥

अपरमप्यात्मसाधकमनुमानमाह—

[1]अत्थि च्चिय ते जीवो संसयओ सोम्म ! थाणुपुरिसो व्व । जं संदिद्धं गोयम ! तं तत्थन्नत्थ वत्थि धुवं ॥१५७१॥

हे सौम्य ! गौतम ! अस्त्येव तव जीवः, संशयतः संशयसद्भावात्, यत्र यत्र संशयस्तत् तदस्ति, यथा स्थाणु-पुरुषौ, संशयश्च तव जीवे, तस्मादस्त्येवायम्, तथाहि— स्थाणु-पुरुषयोरूर्ध्वत्वारोह-परिणाहाद्युभयसाधारणधर्मप्रत्यक्षतायां चलन-शिरःकण्डूयन-वयोनिलयन-वल्ल्यारोहणाद्युभयगतविशेषधर्माप्रत्यक्षतायां चोभयगतैतद्धर्मानुस्मरणे च सत्येकतरविशेषनिश्चयचिकीर्षोः 'किमिदम् ?' इति विमर्शरूपः संशयः प्रादुरस्ति । एवंभूते च स्थाणु-पुरुषादिगतसंशये तत् स्थाणु-पुरुषादिकं वस्त्वस्त्येव, अवस्तुनि संशयायोगात् । एवमात्मशरीरयोरपि प्रागुपलब्धसामान्य-विशेषधर्मस्य प्रमातुस्तयोः सामान्यधर्मप्रत्यक्षतायां विशेषधर्माप्रत्यक्षत्वेऽपि च तद्विषयानुस्मृतौ सत्यामेकतरविशेषोपलिप्सोः 'किमयमात्मा -किं वा शरीरमात्रमिदम् ?' इति विमर्शरूपः संशयो जायते । अयं चात्म-शरीरयोः सत्त्व एवोपपद्यते, नैकतरस्याऽप्यभावे, अतोऽस्ति जीवः । अथैवं ब्रूषे— अरण्यादिषु स्थाणु पुरुषसंशये तत्र विवक्षितप्रदेशेऽनयोरेकतर एव भवति, न पुनरुभयमपि, तत्कथमुच्यते— विद्यमान एव वस्तुनि संशयो भवति' इति ? । तदयुक्तम्, अभिप्रायापरिज्ञानात्, न हि वयमेवं ब्रूमः— 'तत्रैव प्रदेशे तदुभयमप्यास्ति' इति, किन्तु यद्गतसंदेहस्तद् वस्तु तत्राऽन्यत्र वा प्रदेशे ध्रुवमस्त्येव, अन्यथा षष्ठभूतविषयोऽपि संशयः स्यात् । एतदेवाह— 'जं संदिद्धमित्यादि' तस्मात् संशयाविषयत्वादस्त्येव जीव इति स्थितम् ॥ १५७१ ॥

अथ पूर्वपक्षमाशङ्क्य परिहरन्नाह—

[2]एवं नाम विसाणं खरस्स पत्तं न तं खरे चेव । अन्नत्थ तदत्थि च्चिय एवं विवरीयगाहे वि ॥ १५७२ ॥

हन्त ! यदि यत्र संशयस्तेनावश्यमेव भवितव्यम्, एवं ततः खरविषाणमप्यस्तीति प्राप्तम्, तत्रापि कस्यचित् संशयसद्भावात् । उच्यते— नन्वभिहितमत्र यदुत— तत्रान्यत्र वा विद्यमान एव वस्तुनि संशयो भवति, नाविद्यमाने । खरस्य विषाणं खरविषाणं नास्तीत्यत्र च कोऽर्थः ? इत्याह— 'न तं खरे चेव त्ति' खर एव तद्विषाणं नास्ति, अन्यत्र गवादावस्त्येवेति न कश्चिद् व्यभिचारः । एवं

१ अस्त्येव तव जीव सशयत. सौम्य ! स्थाणु पुरुषाविव । यत् संदिग्धं गौतम ! तत् तत्रान्यत्र वास्ति ध्रुवम् ॥ १५७१ ॥

२ एव नाम विषाण खरस्य प्राप्त न तत् खर एव । अन्यत्र तदस्त्येव एव विपरीतग्रहेऽपि ॥ १५७२ ॥

गोयम ! पयत्थमेवं मन्नंतो नत्थि मन्नसे जीवं । वक्कंतरेसु य पुणो भणिओ जीवो जमत्थि त्ति ॥ १५९१ ॥
अग्गिहवणाइकिरियाफलं च तो संसयं कुणसि जीवे । मा कुरु न पयत्थोऽयं इमं पयत्थं निसामेहि॥ १५९२ ॥

गौतम ! अस्य वाक्यस्य दर्शितरूपमेव पदार्थं मन्यमानस्त्वं 'नास्ति' इत्येवं जीवं मन्यसे । यस्माच्च पुनः "न ह वै सशरीरस्य प्रिया-ऽप्रिययोरपहतिरस्ति, अशरीरं वा वसन्तं प्रिया-ऽप्रिये न स्पृशतः" इत्यादिषु वेदवाक्यान्तरेषु 'अस्ति' इत्येवं जीवो भणितः प्रतिपादितः । तथा "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादिवचनादग्निहवनादिक्रियायाः फलं च पारभविकं श्रूयते । न चेदं भवान्तरयायिनमात्मानमन्तरेणोपपद्यते । अतः 'किं जीवोऽस्ति नास्ति वा ?' इत्येवं संशयं जीवे करोषि त्वम् । तदमुं मा कृथाः, यस्माद् "विज्ञानघन एव०" इत्यादिवाक्यस्य नायमर्थो यं भवानध्यवस्यति, किन्त्वमुं वक्ष्यमाणं पदार्थमिह निशमयाऽऽकर्णयेति ॥१५९१॥ ॥ १५९२ ॥

तमेव दर्शयति—

[2]विण्णाणाओऽणण्णो विण्णाणघण्णो त्ति सव्वओवावि । स भवइ भूएहिंतो घडविण्णाणाइभावेण ॥ १५९३ ॥
ताइं चिय भूयाइं सोऽणु विणस्सइ विणस्समाणाइं । अत्थंतरोवओगे कमसो विण्णेयभावेणं ॥ १५९४ ॥

इह विज्ञानघनो जीव उच्यते । कथम् ? इति चेत् । उच्यते— विशिष्टं ज्ञानं विज्ञानं ज्ञान-दर्शनोपयोग इत्यर्थः, तेन विज्ञानेन सहानन्यभूतत्वादेकतया घनत्वं निविडत्वमापन्नो विज्ञानघनो जीवः, यदिवा 'सव्वओवावि त्ति' सर्वतः प्रतिप्रदेशमनन्तानन्तविज्ञानपर्यायसङ्घातघटितत्वाद् विज्ञानघनो जीवः । एवकारेण तु विज्ञानघन एवासौ, न तु नैयायिकादीनामिव 'स्वरूपेण निर्विज्ञानत्वाज्जडोऽसौ, बुद्धिस्तु तत्र समवेतैव' इति नियम्यते। स भवति— उद्यत इति क्रिया । केभ्यः ? इत्याह— 'भूएहिंतो त्ति' भूतानीह घट-पटादिज्ञेयवस्तुरूपाण्यभिप्रेतानि, तेभ्यो ज्ञेयभावेन परिणतेभ्यः । केन भवति ? इत्याह— 'घटोऽयम्' 'पटोऽयम्' इत्यादिविज्ञानभावेन घटादि-

१ गौतम ! पदार्थं एवं मन्यमानो नास्ति मन्यसे जीवम् । वाक्यान्तरेषु च पुनर्भणितो जीवो यदस्तीति ॥ १५९१ ॥
अग्निहवनादिक्रियाफलं च ततः संशयं करोषि जीवे । मा कुरु न पदार्थोऽयमिमं पदार्थं निशमय ॥ १५९२ ॥

२ विज्ञानादनन्यो विज्ञानघन इति सर्वतोव्यापी । स भवति भूतेभ्यो घटविज्ञानादिभावेन ॥ १५९३ ॥
तान्येव भूतानि सोऽनु विनश्यति विनश्यमानानि । अर्थान्तरोपयोगे क्रमशो विज्ञेयभावेन ॥ १५९४ ॥

सामान्य-विशेषपरिग्रहः। एतदुक्तं भवति– इह यत् किञ्चित् क्वचिद् देवदत्तादिकं निषिध्यते तस्याऽन्यत्र सत एव विवक्षितस्थाने कस्मिंश्चित् संयोग-समवाय-सामान्य-विशेषलक्षणं चतुष्टयमेव निषिध्यते, न तु सर्वथैव देवदत्तादेरभावः प्रतिपाद्यते। तत्र 'नास्ति गृहे देवदत्तः' इत्यादिषु गृह-देवदत्तादीनां सतामेव संयोगमात्रं निषिध्यते, न तु तेषां सर्वथैवास्तित्वमपाक्रियते। तथा, 'नास्ति खरविषाणम्' इत्यादिषु खर-विषाणादीनां सतामेव समवायमात्रं निराक्रियते। तथा, 'नास्त्यन्यश्चन्द्रमाः' इत्यादिषु विद्यमानस्यैव चन्द्रमसोऽन्य-चन्द्रनिषेधाच्चन्द्रसामान्यमात्रं निषिध्यते, न तु सर्वथा चन्द्राभावः प्रतिपाद्यते। तथा, 'न सन्ति घटप्रमाणा मुक्ताः' इत्यादिषु घटप्रमाणतामात्ररूपो विशेषो मुक्तानां निषिध्यते, न तु मुक्ताऽभावः ख्याप्यत इति। एवं च सति 'नास्त्यात्मा' इत्यत्र विद्यमानस्यैवात्मनो यत्र क्वचन येन केनचित् सह संयोगमात्रमेव त्वया निषेद्धव्यम्, यथा 'नास्त्यात्मा वपुषि' इत्यादि, न तु सर्वथाऽऽत्मनः सत्त्वमिति।

अत्राह कश्चित्– ननु यदि यद् निषिध्यते तदस्ति, तर्हि मत्त्रिलोकेश्वरताऽप्यस्ति, युष्मदादिभिर्निषिध्यमानत्वात्; तथा, चतुर्णां समवायादिप्रतिषेधानां पञ्चमोऽपि प्रतिषेधप्रकारोऽस्ति, त्वयैव निषिध्यमानत्वात्। तदयुक्तम्, त्रिलोकेश्वरताविशेषमात्रं भवतो निषिध्यते, यथा घटप्रमाणत्वं मुक्तानाम्, न तु सर्वथैवेश्वरता, स्वशिष्यादीश्वरतायास्तत्रापि विद्यमानत्वात्। तथा, प्रतिषेधस्यापि पञ्चसंख्याविशिष्टत्वमपाक्रियते, न तु सर्वथा प्रतिषेधस्याभावः, चतुःसंख्याविशिष्टस्य तस्य सद्भावात्। ननु सर्वमप्यसंबद्धमिदम्, तथाहि– मत्त्रिलोकेश्वरत्वं तावदसदेव निषिध्यते, प्रतिषेधस्यापि पञ्चसंख्याविशिष्टत्वमविद्यमानमेव निवार्यते, तथा, संयोग-समवाय-सामान्य-विशेषाणामपि गृहदेवदत्त-खरविषाणादिष्वसतामेव प्रतिषेधः, इत्यतो 'यन्निषिध्यते तदस्त्येव' इत्येतत् कथं न प्लवते? इत्याशङ्क्याह– 'संजोगाइचउक्कं पीत्यादि'। इदमुक्तं भवति– देवदत्तादीनां संयोगादयो गृहादिष्वेवासन्तो निषिध्यन्ते, अर्थान्तरे तु तेषां ते विद्यन्त एव; तथाहि– गृहेणैव सह देवदत्तस्य संयोगो न विद्यते, अर्थान्तरेण तु क्षेत्र-हट्ट-ग्रामादिना सह तस्यासौ समस्त्येव, गृहस्यापि देवदत्तेन सह संयोगो नास्ति, खट्वादिना तु सह तस्यासौ विद्यत एव, एवं विषाणस्यापि खर एव समवायो नास्ति, गवादावस्त्येव; सामान्यमपि द्वितीयचन्द्राभावाच्चन्द्र एव नास्ति, अर्थान्तरे तु घट-गवादावस्त्येव; घटप्रमाणत्वमपि मुक्तासु नास्ति, अर्थान्तरे तु कूष्माण्डादावस्त्येव। त्रिलोकेश्वरताऽपि भवत एव नास्ति, तीर्थकरादावस्त्येव, पञ्चसंख्याविशिष्टत्वमपि प्रतिषेधे नास्ति, अर्थान्तरे त्वनुत्तरविमानादावस्त्येव; इत्यनया विवक्षया ब्रूमः– 'यद् निषिध्यते तत् सामान्येनास्त्येव, न त्वेवं प्रतिजानीमहे–'यद् यत्र निषिध्यते तत् तत्रैवास्ति' इति, येन व्यभिचारः स्यात्।



वयमपि शरीरे जीवं निषेधयामः, नान्यत्रेति चेत्। साधूक्तम्; अस्मत्समीहितस्य सिद्धत्वात्, जीवसिद्ध्यर्थमेव हि यतामहे

अत्थमिए आइच्चे चंदे संतासु अग्गि-वायासु । किंजोइरयं पुरिसो अप्पज्जोइ त्ति निद्दिट्ठो ॥ १५९८ ॥

'बुद्धी'ति स्याद् बुद्धिः प्रेरकस्य– एवमपि– 'से[2] भवइ भूएहिंतो' इत्यादिना युष्मद्व्याख्यानप्रकारेणापीत्यर्थः, पृथिव्यादिभूतधर्म एव ज्ञानं– भूतस्वभावात्मकमेव ज्ञानमिति भावः । कुतः ? इत्याह— 'तब्भावभावउ त्ति' "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति" इति वचनाद् भूतसद्भावे ज्ञानस्य भावात्, तदभावे चाभावादित्यर्थः; यस्य च भाव एव यद् भवति, अभावे च न भवति तत् तस्यैव धर्मः, यथा चन्द्रमसश्चन्द्रिका, तथा च ज्ञानमनुविदधाति भूतान्वय-व्यतिरेकौ, तस्मात् तद् भूतधर्म एव । तदयुक्तम्, विशिष्टमेव हि नील-पीतादिभूतग्राहकं ज्ञानं तदन्वय-व्यतिरेकावनुविदधाति न तु सामान्यं ज्ञानमात्रम्, यस्माद् भूताभावेऽपि वेदलक्षणे समये सिद्धान्ते 'सामान्यज्ञानं भणितमेव' इति शेषः । केन वाक्येन ? इत्याह– 'अत्थमिए इत्यादि' अस्तमिते आदित्ये, याज्ञवल्क्यः, चन्द्रमस्यस्तमिते, शान्तेऽग्नौ, शान्तायां वाचि, किंज्योतिरेवायं पुरुषः; आत्मज्योतिः सम्राडिति होवाच, ज्योतिरिति ज्ञानमाह। आदित्यास्तमयादौ किं ज्योतिः ? इत्याह– 'अयं पुरुष इति, पुरुष आत्मेत्यर्थः । अयं च कथंभूतः ? इत्याह– 'अप्पज्जोइ त्ति' आत्मैव ज्योतिरस्य सोऽयमात्मज्योतिर्ज्ञानात्मक इति हृदयम्, निर्दिष्टो वेदाविद्भिः कथितः, ततो न ज्ञानं भूतधर्म इति स्थितम् ॥१५९७॥१५९८॥

इतश्च न ज्ञानं भूतधर्मः । कुतः ? इत्याह—

तद्[3]भावे भावाओ भावे चाभावओ न तद्धम्मो । जह घडभावाभावे विवज्जयाओ पडो भिन्नो ॥१५९९॥

न भूतधर्मो ज्ञानम्, मु[4]क्त्यवस्थायां भूताभावेऽपि भावात्, मृतशरीरादौ तद्भावेऽपि चाभावात्, यथा घटस्य धर्मः पटो न भवति, किन्तु तस्माद् भिन्न एव। कुतः ? इत्याह– घटभावाभावे विपर्ययात्– घटभावेऽप्यभावात्, तदभावेऽपि च भावादित्यर्थः॥१५९९॥

तदेवं केषांचिद् वेदपदानामर्थं व्याख्याय सांप्रतमुपसंहरन्, सर्वेषां च वेदपदानां संक्षेपतोऽर्थमुपदर्शयन्नाह—

ए[6]सिं वेयपयाणं न तमत्थं वियासि अहव सव्वेसिं । अत्थो किं होज्ज सुई विण्णाणं वत्थुभेओ वा ॥१६००॥

---

1 अस्तमित आदित्ये चन्द्रे शान्तयोरग्नि-वाचोः । किंज्योतिरयं पुरुष आत्मज्योतिरिति निर्दिष्ट ॥ १५९८ ॥ 2 गाथा १५९३ ।
3 तदभावे भावाद् भावे चाभावतो न तद्धर्मः । यथा घटभावाभावे विपर्ययात् पटो भिन्नः ॥ १५९९ ॥ 4 क ग. 'मुक्ताव' । 5 घ ज 'र्शयंश्चा'।
6 एषां वेदपदानां न त्वमर्थं वेत्सि, अथवा सर्वेषाम् । अर्थः किं भवेत् श्रुतिर्विज्ञानं वस्तुभेदो वा ॥ १६०० ॥

जीवः' 'दह्यतामिदं शरीरम्' इति । किञ्च, 'नाणाईत्यादि' यस्माच्च ज्ञानादिगुणयुतो जन्तुः, जडश्च देहः, तत्कथं देह एव जीवः । प्रागिहैव नोक्तम्– न ज्ञानादिगुणो देहः, मूर्तिमत्त्वात्, घटवत्; तथा, देहेन्द्रियातिरिक्त आत्मा, तदुपरमेऽपि तदुपलब्धार्थानामनुस्मरणात्, वातायनपुरुषवदिति ॥ १५७५ ॥ १५७६ ॥

तदद्याप्यप्रतिबुध्यमान इन्द्रभूतौ भगवानाह—

[1]जीवो त्थि वओ सच्चं मव्वयणाओऽवसेसवयणं व । सव्वण्णुवणयओ वा अणुमयसव्वण्णुवयणं व॥१५७७॥

'जीवोऽस्ति' इत्येतद् वचः सत्यम्, मद्वचनत्वात्, भवत्संशयविषयाद्यवशेषवचनवत्, यच्च सत्यं न भवति तद् मदीयवचनमपि न भवति, यथा कूटसाक्षिवचनम् । अथवा, सत्यं 'जीवोऽस्ति' इति वचनम्, सर्वज्ञवचनत्वात्, भवदनुमतसर्वज्ञवचनवदिति ॥१५७७॥

यदिवा,

[2]भय-राग-दोस-मोहाभावाओ सच्चमणइवाइं च । सव्वं चिय मे वयणं जाणयमज्झत्थवयणं व ॥१५७८॥

सर्वमपि मद्वचनं सत्यमनतिपाति च वोद्धव्यम्, भय-राग-द्वेषा-ऽज्ञानरहितत्वात्, इह यद् भयादिरहितस्य वचनं तत् सत्यं दृष्टम्, यथा मार्गज्ञस्य भयरहितस्य प्रष्टरि राग-द्वेषरहितस्य मार्गोपदेशवचनम्, तथाच मद्वचः, तस्मात् सत्यमनतिपाति चेति ॥१५७८॥

अत्र गौतममाशङ्क्य भगवानुत्तरमाह—

[3]केह सव्वण्णु त्ति मई जेणाहं सव्वसंसयच्छेई । पुच्छसु व जं न जाणसि जेण व ते पच्चओ होज्जा ॥१५७९॥

कथं नाम 'त्वं सर्वज्ञः' इति ते मतिः ? एवं त्वं मन्यसे, तथा, भय-राग-द्वेष-मोहाभावश्चासिद्ध इति मन्यसे । तदयुक्तम्, येनाहं सर्वसंशयच्छेदी, यश्च सर्वसंशयच्छेत्ता स सर्वज्ञ एव । दृष्टान्ताभावेनान्वयासिद्धेरनैकान्तिकोऽयं हेतुरिति चेत् । न, सर्वसंशयच्छेत्तृत्वानुपपत्तिरेवेह विपर्यये बाधकं प्रमाणम्, किमिहान्वयान्वेषणेन ? । यदिवा, पृच्छयतां यत् त्रैलोक्यान्तर्गतं वस्तु त्वं न

१ जीवोऽस्ति वच: सत्यं मद्वचनादवशेषवचनमिव । सर्वज्ञवचनतो वाऽनुमतसर्वज्ञवचनमिव ॥ १५७७ ॥
२ भय-राग-द्वेष-मोहाभावात् सत्यमनतिपाति च । सत्यमेव मे वचनं ज्ञायकमध्यस्थवचनमिव ॥ १५७८ ॥
३ कथं सर्वज्ञ इति मतिर्येनाह सर्वसंशयच्छेदी । पृच्छ वा यद् न जानासि येन वा ते प्रत्ययो भवेत् ॥ १५७९ ॥

रवानर्थो वाच्यतया रूढस्तस्यैव वाचकः। एवमन्योऽपि शब्दो विशेषविवक्षया या यत्र देशादौ यस्यार्थस्य वाचकतया रूढः स तस्य वाचको द्रष्टव्यः। सामान्यविवक्षया तु 'सर्वः सर्वस्य वाचकः, सर्वं च सर्वस्य वाच्यम्' इत्यनया दिशा सकलं स्वधिया भावनीयमिति।

तदेवं तेन त्रिजगत्स्वरूपवेदिना भगवता श्रीमन्महावीरेण निःशेषपरप्रबोधनोपायकुशलतया तीक्ष्णपरशुनेव निपुणयुक्तिप्रबन्धेन गुपिलवल्लीवितान इव मूलाच्छिन्नः समस्तोऽपि तस्य तत्समासन्नपरमकल्याणस्येन्द्रभूतेः संशयः ॥१६००॥१६०१॥ १६०२॥१६०३॥

तस्मिंश्च च्छिन्ने किमसौ कृतवान् ? इत्याह—

[1]छिन्नम्मि संसयम्मि जिणेण जर-मरणविप्पमुक्केणं। सो समणो पव्वइओ पंचहिं सह खंडियसएहिं ॥१६०४॥

सुबोधा, नवरं श्राम्यतीति श्रमणः सन्नसौ पापाद् व्रजितः प्रव्रजितो भागवतीं दीक्षां प्रतिपन्न इत्यर्थः। 'संयतः संयतो भवति नासंयतः' इति निश्चयनयमताश्रयणाच्चेत्थमुक्तमितीह भावार्थः। खण्डिकास्तच्छात्रा इति ॥ १६०४॥

अथ वक्ष्यमाणेषु कर्मादिषु दशसु वादस्थानेषु यदिह तुल्यं तद् ग्रन्थलाघवार्थमतिदिशन्नाह—

[2]एवं कम्माईसु वि जं सामण्णं तयं समाउज्जं। जो पुण जत्थ विसेसो समासओ तं पवक्खामि ॥१६०५॥

एवं यदिहात्मवादप्रक्रमे प्रत्यक्षा-ऽनुमाना-ऽऽगमप्रमाणवक्तव्यतादिकं वक्ष्यमाणकर्मादिवादस्थानकैः किमपि तुल्यं तत् स्वधिया तत्र तत्रायोजनीयम्। यस्तु यत्र वादस्थानके विशेषस्तं तत्र संक्षेपतः स्वयमेव वक्ष्यामि ॥ इति सप्तपञ्चाशद्गाथार्थः ॥ १६०५ ॥

॥ इति प्रथमगणधरवादः समाप्तः ॥

अथ द्वितीयगणधरवक्तव्यतामभिधित्सुराह—

[3]तं पव्वइअं सोउं बीओ आगच्छइ अमरिसेणं। वच्चामि णमाणेमी पराजिणित्ता ण तं समणं ॥१६०६॥

---

१ छिन्ने संशये जिनेन जरा-मरणविप्रमुक्तेन। स श्रमणः प्रव्रजितः पञ्चभि सह खण्डिकशतै ॥ १६०४ ॥

२ एव कर्मादिष्वपि यत् सामान्य तत् समायोज्यम्। यः पुनर्यत्र विशेषः समासतस्तं प्रवक्ष्यामि ॥ १६०५ ॥

३ त प्रव्रजितं श्रुत्वा द्वितीय आगच्छत्यमर्षेण। व्रजाम्यानयामि पराजित्य त श्रमणम् ॥ १६१६ ॥

परः प्राह— यदि पुनर्दर्शितन्यायेन स आत्मा सर्वेष्वपि नारक-तिर्यङ्-नरा-ऽमरपिण्डेषु व्योमवदेक एव भवेद् न तु संसारीतरादिभेदभिन्नः, तर्हि किं नाम दूषणं स्यात्?, एवमुक्ते भगवानाह— गौतम ! तद् व्योम सर्वेष्वपि पिण्डेषु मूर्तिविशेषेषु स्थितमेकलिङ्गं वैसदृश्याभावादेकरूपमेव, इति युक्तं तस्यैकत्वम्, जीवस्त्वयं विचार्यत्वेन प्रस्तुतो न तथा— नैकलिङ्गः सर्वत्र दृश्यते, प्रतिपिण्डं तस्य विलक्षणत्वात्, लक्षणभेदे च लक्ष्यभेदात्, इति न तस्यैकत्वमिति ॥ १५८१ ॥

अत्र प्रयोगमाह—

[1]णाणा जीवा कुंभादउ व्व भुवि लक्खणाइभेयाओ । सुह-दुक्ख-बंध-मोक्खाभावो य जओ तदेगत्ते ॥१५८२॥

नानारूपा भुवि जीवाः परस्परं भेदभाज इत्यर्थः । लक्षणादिभेदादिति हेतुः, कुम्भादय इवेति दृष्टान्तः, यच्च न भिन्नं न तस्य लक्षणभेदः, यथा नभस इति । सुख-दुःख-बन्ध-मोक्षाभावश्च यस्मात् तदेकत्वे, तस्माद् भिन्ना एव सर्वेऽपि जीवा इति ॥ १५८२ ॥

कथं पुनस्तेषां प्रतिपिण्डं लक्षणभेदः? इत्याह—

[2]जेणोवओगलिंगो जीवो भिन्नो य सो पइसरीरं । उवओगो उक्करिसा-वगरिसओ तेण तेऽणंता ॥१५८३॥

येन ज्ञान-दर्शनोपयोगलक्षणोऽसौ जीवः, स चोपयोगः प्रतिशरीरमुत्कर्षा-ऽपकर्षभेदादनन्तभेदः, तेन जीवास्तद्भेदादनन्तभेदा एवेति । तदेवं भावितं 'णाणा जीवा' इत्यादि पूर्वार्धम् ॥ १५८३ ॥

इदानीं 'सुख-दुक्ख'[3] इत्याद्युत्तरार्धं भावयन्नाह—

[4]एगत्ते सव्वगयत्तओ न मोक्खादओ नभस्सेव । कत्ता भोत्ता मंता न य संसारी जहागासं ॥ १५८४ ॥

एकत्वे जीवानां सुख-दुःख-बन्ध-मोक्षादयो नोपपद्यन्ते, सर्वगतत्वात्, नभस इव, यत्र तु सुखादयो न तत् सर्वगतं, यथा

१ नाना जीवाः कुम्भादय इव भुवि लक्षणादिभेदात् । सुख दुःख-बन्ध-मोक्षाभावश्च यतस्तदेकत्वे ॥ १५८२ ॥

२ येनोपयोगलिङ्गो जीवो भिन्नश्च स प्रतिशरीरम् । उपयोग उत्कर्षा-पकर्षतस्तेन तेऽनन्ताः ॥ १५८३ ॥ ३ गाथा १५८२ ॥

४ एकत्वे सर्वगतत्वतो न मोक्षादयो नभस इव । कर्ता भोक्ता मन्ता न च संसारी यथाकाशम् ॥ १५८४ ॥

आभाषितश्च संलप्तश्च जाति-जरा-मरणविप्रमुक्तेन सर्वज्ञेन सर्वदर्शिना च जिनेन। कथम्? नाम्ना च– हे अग्निभूते!, गोत्रेण च– हे गौतमसगोत्र! इति। इत्थं च नाम-गोत्राभ्यां संलप्तस्य तस्य चिन्ताऽभूत्– अहो! नामापि मम विजानाति, अथवा, जगत्प्रसिद्धोऽहम्, कः किल मां न वेत्ति?। यदि हि मे हृद्गतं संशयं ज्ञास्यति, अपनेष्यति वा, तदा भवेद् मम विस्मयः ॥१६०९॥

इति चिन्तयति तस्मिन् भगवानाह—

[1]किं मन्ने अत्थि कम्मं उयाहु नत्थि त्ति संसयो तुज्झं। वेयपयाण य अत्थं न याणसि तेसिमो अत्थो ॥१६१०॥

हे अग्निभूते! गौतम! त्वमेतद् मन्यसे चिन्तयसि यदुत– क्रियते मिथ्यात्वादिहेतुसमन्वितेन जीवेनेति कर्म ज्ञानावरणादिकम्, तत् किमस्ति, नास्ति वा? इति। नन्वयमनुचितस्तव संशयः। अयं हि भवतो विरुद्धवेदपदनिबन्धनो वर्तते, तेषां च वेदपदानां त्वमर्थं न जानासि, तेन संशयं करोषि। तेषां च वेदपदानामयं वक्ष्यमाणलक्षणोऽर्थ इति ॥ १६१० ॥

अत्र भाष्यम्—

[2]कम्मे तुह संदेहो मन्नसि तं नाणगोयराईयं। तुह तमणुमाणसाहणमणुभूइमयं फलं जस्स ॥ १६११ ॥

हे आयुष्मन्नग्निभूते! ज्ञानावरणादिपरमाणुसंघातरूपे कर्मणि तव संदेहः, यतः प्रत्यक्षा-ऽनुमानादिसमस्तप्रमाणात्मकज्ञानगोचरातीतमेव तत् त्वं मन्यसे, तथाहि– न तावत् प्रत्यक्षं कर्म, अतीन्द्रियत्वात्, खरविषाणवत्, इत्यादि प्रमाणविषयातीतत्वं प्राग्वज्जीवस्येव कर्मणोऽपि समानप्रायत्वाद् भावनीयमिति। तदेतत् सौम्य! मा मंस्थास्त्वम्, यतो मम तावत् प्रत्यक्षमेव कर्म, तवाप्यनुमानं साधनं यस्य तदनुमानसाधनं वर्तते तत् कर्म, न पुनः सर्वप्रमाणगोचरातीतम्। यस्य, किम्? इत्याह– 'अणुभूइमयं फलं जस्स त्ति' सुख-दुःखानामनुभूतिरनुभवनं तन्मयं तदात्मकं फलं यस्य शुभा-ऽशुभकर्मण इति। अनेन चेदमनुमानं सूचितम्– अस्ति सुख-दुःखानुभवस्य हेतुः, कार्यत्वात्, अङ्कुरस्येवेति।

अथ यदि भवतः प्रत्यक्षं कर्म, तर्हि ममापि तत्प्रत्यक्षं कस्माद् न भवति? इति चेत्। तदयुक्तम्, न हि यदेकस्य कस्यचित् प्रत्यक्षं तेनापरस्यापि प्रत्यक्षेण भवितव्यम्। न हि सिंह-सरभ-हंसादयः सर्वस्यापि लोकस्य प्रत्यक्षाः, न च ते न सन्ति, बालादीना-

१ कि मन्यसेऽस्ति कर्म उताहो नास्तीति संशयस्तव। वेदपदाना चार्थं न जानासि तेषामयमर्थः ॥ १६१० ॥

२ कर्मणि तव संदेहो मन्यसे तज्ज्ञानगोचरातीतम्। तव तदनुमानसाधनमनुभूतिमयं फल यस्य ॥ १६११ ॥

आभाषितश्च संलक्षश्च जाति-जरा-मरणविप्रमुक्तेन सर्वज्ञेन सर्वदर्शिना च जिनेन । कथम् ? नाम्ना च– हे अग्निभूते !, गोत्रेण च– हे गौतमसगोत्र ! इति । इत्थं च नाम-गोत्राभ्यां संलप्तस्य तस्य चिन्ताऽभूत्– अहो ! नामापि मम विजानाति, अथवा, जगत्प्रसिद्धोऽहम्, कः किल मां न वेत्ति ? । यदि हि मे हृद्गतं संशयं ज्ञास्यति, अपनेष्यति वा, तदा भवेद् मम विस्मयः ॥१६०९॥

इति चिन्तयति तस्मिन् भगवानाह—

[1]किं मन्ने अत्थि कम्मं उयाहु न त्थि त्ति संसयो तुज्झं । वेयपयाण य अत्थं न याणासि तेसिमो अत्थो ॥१६१०॥

हे अग्निभूते ! गौतम ! त्वमेतद् मन्यसे चिन्तयसि यदुत– क्रियते मिथ्यात्वादिहेतुसमन्वितेन जीवेनेति कर्म ज्ञानावरणादिकम्, तत् किमास्ति, नास्ति वा ? इति । नन्वयमनुचितस्तव संशयः । अयं हि भवतो विरुद्धवेदपदनिबन्धनो वर्तते, तेषां च वेदपदानां त्वमर्थं न जानासि, तेन संशयं करोषि । तेषां च वेदपदानामयं वक्ष्यमाणलक्षणोऽर्थ इति ॥ १६१० ॥

अत्र भाष्यम्—

[2]कम्मे तुह संदेहो मन्नसि तं नाणगोयराईयं । तुह तमणुमाणसाहणमणुभूइमयं फलं जस्स ॥ १६११ ॥

हे आयुष्मन्नग्निभूते ! ज्ञानावरणादिपरमाणुसंघातरूपे कर्मणि तव संदेहः, यतः प्रत्यक्षा-ऽनुमानादिसमस्तप्रमाणात्मकज्ञानगोचरातीतमेव तत् त्वं मन्यसे, तथाहि– न तावत् प्रत्यक्षं कर्म, अतीन्द्रियत्वात्, खरविषाणवत्, इत्यादि प्रमाणविषयातीतत्वं प्राग्वज्जीवस्येव कर्मणोऽपि समानप्रायत्वाद् भावनीयमिति । तदेतत् सौम्य ! मा मंस्थास्त्वम्, यतो मम तावत् प्रत्यक्षमेव कर्म, तवाप्यनुमानं साधनं यस्य तदनुमानसाधनं वर्तते तत् कर्म, न पुनः सर्वप्रमाणगोचरातीतम् । यस्य, किम् ? इत्याह– 'अणुभूइमयं फलं जस्स त्ति' सुख-दुःखानामनुभूतिरनुभवनं तन्मयं तदात्मकं फलं यस्य शुभा-ऽशुभकर्मण इति । अनेन चेदमनुमानं सूचितम्– अस्ति सुख-दुःखानुभवस्य हेतुः, कार्यत्वात्, अङ्कुरस्येवेति ।

अथ यदि भवतः प्रत्यक्षं कर्म, तर्हि ममापि तत्प्रत्यक्षं कस्माद् न भवति ? इति चेत् । तदयुक्तम्, न हि यदेकस्य कस्यचित् प्रत्यक्षं तेनापरस्यापि प्रत्यक्षेण भवितव्यम् । न हि सिंह-सरभ-हंसादयः सर्वस्यापि लोकस्य प्रत्यक्षाः, न च ते न सन्ति, बालादीना- ॥६८८॥

१ किं मन्यसेऽस्ति कर्म उताहो नास्तीति संशयस्तव । वेदपदानां चार्थं न जानासि तेषामयमर्थः ॥ १६१० ॥

२ कर्मणि तव संदेहो मन्यसे तज्ज्ञानगोचरातीतम् । तव तदनुमानसाधनमनुभूतिमयं फलं यस्य ॥ १६११ ॥

नियामकः, तस्य निराकरिष्यमाणत्वात् । यच्चेह बालशरीरस्य पूर्वं शरीरान्तरं तत् 'कर्म' इति मन्तव्यम्– कार्मणं शरीरमित्यर्थः, "जोएण कम्मएणं आहारेई अणंतरं जीवो"[1] इत्यादिवचनादिति ॥ १६१४ ॥

अनुमानान्तरमपि तत्सिद्धये प्राह––

[2]किरियाफलभावाओ दाणाईणं फलं किसीए व्व । तं चिय दाणाइफलं मणप्पसायाई जइ बुद्धी ॥१६१५॥

किरियासामण्णाओ जं फलमस्सावि तं मयं कम्मं । तस्स परिणामरूवं सुह-दुक्खफलं जओ भुज्जो ॥१६१६॥

'दाणाईणं फलं ति' इह दानादिक्रियाणां फलमस्ति 'किरियाफलभावाउ त्ति' सचेतनारब्धक्रियाणां फलभावात् फलभावदर्शनादित्यर्थः, यथा कृषिक्रियायाः । इह या चेतनारब्धक्रिया तस्याः फलं दृष्टम्, यथा कृष्यादिक्रियायाः, चेतनारब्धाश्च दानादिक्रियाः, तस्मात् फलवत्यः, यच्च तासां फलं तत् कर्म । या तु निष्फला क्रिया सा सचेतनारब्धापि न भवति, यथा परमाण्वादिक्रिया, सचेतनारब्धाश्च दानादिक्रियाः, तस्मात् फलवत्यः । स्यादेतत्, अनैकान्तिकोऽयं हेतुः, चेतनारब्धानामपि कासांचित् कृष्यादिक्रियाणां निष्फलत्वदर्शनात् । तदयुक्तम्, फलवत्त्वाभिप्रायेणैव तदारम्भात् । यच्च क्वचिद् निष्फलत्वमपि दृश्यते तत्सम्यग्ज्ञानाद्यभावेन सामग्रीवैकल्याद् द्रष्टव्यम्, मनःशुद्ध्यादिसामग्रीविकलतया दानादिक्रिया अपि निष्फला इष्यन्त एवेत्यदोषः ।

यदि चात्र परस्यैवंभूता बुद्धिः स्यात् । कथंभूता ? इत्याह– 'तं चियेत्यादि' तदेव दानादिक्रियाणां फलं यदस्मादृशामपि प्रत्यक्षं मनःप्रसादादि । इदमुक्तं भवति– कृष्यादिक्रिया दृष्टधान्याद्यत्राप्तिफला दृष्टाः, अतो दानादिक्रियाणामपि दृष्टमेव मनःप्रसादादिकं फलं भविष्यति, किमदृष्टकर्मलक्षणफलसाधनेन ? । तत इष्टविरुद्धसाधनाद् विरुद्धोऽयं हेतुः । तदत्र[3] वयं ब्रूमः– 'किरियासामण्णाओ इत्यादि' अस्यापि मनःप्रसादस्य यत् फलं तद् मम कर्म संमतम् । ननु मनःप्रसादस्यापि कथं फलमभिधीयते ? इत्याह– किरियासामण्णाउ त्ति' इदमुक्तं भवति– मनःप्रसादोऽपि क्रियारूप एव, ततश्च यथा दान-कृष्यादिकाः क्रियाः फलवत्यः, तथा क्रियासाम्याद् मनःप्रसादस्यापि फलेन भवितव्यमेव, यच्च तस्य फलं तत् कर्मैव, इति न कश्चिद् व्यभिचारः ।

यतः कर्मणः सकाशात्, किम् ? इत्याह– 'सुह-दुक्खफलं जउ त्ति' सुख-दुःखरूपं फलं सुख-दुःखफलं यतो यस्मात् कर्मणः

1 योगेन कर्मकेणाहरत्यनन्तर जीव । 2 क्रियाफलभावाद् दानादीनां फल कृपेरिव । तदेव दानादिफलं मन प्रसादादि यदि बुद्धि ॥ १६१५ ॥ क्रियासामान्याद् यत्फलमस्यापि तद् मत कर्म । तस्य परिणामरूप सुख-दु:खफलं यतो भूय ॥ १६१६ ॥ 3 घ ज. 'त्र ब्रू' ।

अथ "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्यसंज्ञास्ति" इत्यादिवेदवाक्यार्थमनुभावयतस्त्वजतोऽपि मम संशयोऽतिविराधिताऽहित इव पृष्ठं न मुञ्चति, तत् किं करोमि ? इति चेत् । तदयुक्तम् । कुतः ? इत्याह—

गोयम ! वेयपयाणं इमाण अत्थं च तं न याणासि । जं विन्नाणघणो च्चिय भूयेहिंतो समुत्थाय ॥१५८८॥

मण्णसि मज्जंगेसु व मयभावो भूयसमुदउब्भूओ । विन्नाणमेत्तमाया भूएऽणु विणस्सइ स भूओ ॥१५८९॥

अत्थि न य पेच्चसण्णा जं पुव्वभवेऽभिहाणममुगो त्ति । जं भणियं न भवाओ भवंतरं जाइ जीवो त्ति ॥१५९०॥

गौतम ! इत्यामन्त्रणम्, वेदपदानां श्रुतिवाक्यानाममीषां "विज्ञानघन एवैतेभ्यः" इत्यादीनां चेतसि वर्तमानानामर्थं यथावस्थितं त्वं न जानासि नावबुध्यसे । किमिति ? अत आह– यद् यस्मात् त्वमात्माभिप्रायेणैवंभूतमिहार्थं मन्यसे विकल्पयसीति संबन्धः । कथंभूतम् ? इत्याह– 'विण्णाणघणो च्चिय त्ति' पृथिव्यादिभूतानां विज्ञानलवसमुदायो विज्ञानघनः पृथिव्यादिविज्ञानांशानां पिण्ड इत्यर्थः; अवधारणं त्वात्मवादिपरिकल्पितस्य भूतसमुदायातिरिक्तस्य ज्ञान दर्शनादिगुणाश्रयस्यात्मनो निरासार्थम् । भूतेभ्यः पृथिव्यादिभ्यः समुदितेभ्यो न तु व्यस्तेभ्यः, ज्ञानस्य तत्समुदायपरिणामाङ्गीकारादिति भावः, मद्याङ्गेषु मद्यकारणेषु धातक्यादिषु मदभाव इव; कथंभूतो विज्ञानघनः ? इत्याह– 'भूयसमुदउब्भूओ विन्नाणमेत्तमाय त्ति' भूतसमुदयादुद्भूतस्तदैव जातो न तु परभवात् कश्चिदायातो विज्ञानमात्ररूप आत्मेत्यर्थः, समुत्थायोत्पद्य ततस्तान्येव पृथिव्यादीनि भूतानि विनाशमनुवानान्यनु लक्षीकृत्य भूयः पुनरपि स विज्ञानघनो विज्ञानमात्ररूप आत्मा विनश्यति, न त्वात्मवादिनामिवान्यभवं याति । अत एव न प्रेत्यभवे परभवे संज्ञास्ति, यत् पूर्वभवे नारकादिजन्मन्यभिधानमासीत् तत् परभवे नास्ति, यदुत– अमुको नारको देवो वा भूत्वेदानीं मनुष्यः संवृत्त इत्यादि, नारकादेः प्रागेव सर्वनाशं नष्टत्वादिति भावः । किमिह वाक्ये तात्पर्यवृत्त्या प्रोक्तं भवति ? इत्याह– 'जं भणियमित्यादि' सर्वथात्मनः समुत्पद्य विनष्टत्वाद् न भवाद् भवान्तरं कोऽपि यातीत्युक्तं भवति ॥ १५८८ ॥ १५८९ ॥ १५९० ॥

यद्येवंभूतमस्य वेदवाक्यस्यार्थमहमवगच्छामि, ततः किम् ? इत्याह—

१ गौतम ! वेदपदानामेषामर्थं च त्वं न जानासि । यद् विज्ञानघन एव भूतेभ्यः समुत्थाय ॥ १५८८ ॥
मन्यसे मद्याङ्गेष्विव मदभावो भूतसमुदयोद्भूतः । विज्ञानमात्रमात्मा भूतेऽनु विनश्यति स भूयः ॥ १५८९ ॥
अस्ति न च प्रेत्यसंज्ञा यत् पूर्वभवेऽभिधानममुक इति । यद् भणितं न भवाद् भवान्तरं याति जीव इति ॥ १५९० ॥

दृष्टफलमस्तु, किमदृष्टफलकल्पनेन ? । किं बहुना ?, सा क्रिया सर्वापि तन्मात्रफलैव दृष्टमात्रफलैव युज्यते, नादृष्टफला, यथा दृष्ट-मांसमात्रफला पशुविनाशक्रिया; न हि पशुविशसनक्रियामदृष्टाधर्मफलार्थं कोऽप्यारभते, किन्तु मांसभक्षणार्थम्; अतस्तन्मात्रफलैव सा, तावतैवावसितप्रयोजनत्वात्। एवं दानादिक्रियाया अपि दृष्टमात्रमेव श्लाघादिकं किञ्चित् फलम्, नान्यदिति ॥ १६१८ ॥

अस्यैवार्थस्य समर्थनार्थं कारणान्तरमाह—

पायं व जीवलोगो वट्टइ दिट्ठफलासु किरियासु । अदिट्ठफलासुं पुण वट्टइ नासंखभागो वि ॥ १६१९ ॥

लोकोऽपि च प्रायेण दृष्टमात्रफलास्वेव कृषि-वाणिज्यादिक्रियासु प्रवर्तते, अदृष्टफलासु पुनर्दानादिक्रियासु तदसंख्येयभागोऽपि न वर्तते– कतिपयमात्र एव लोकस्तासु प्रवर्तते, न बहुरित्यर्थः। ततश्च हिंसादीनामशुभक्रियाणामदृष्टफलाभावाच्छुभक्रियाणामपि दानादीनामदृष्टफलाभावो भविष्यति। इति पराभिप्राय इति ॥ १६१९ ॥

भगवानाह—

[3]सोम्म ! जउ च्चिय जीवा पायं दिट्ठप्फलासु वट्टंति । अदिट्ठफलाओ वि य ताओ पडिवज्ज तेणेव ॥१६२०॥

सौम्य ! इत्यग्निभूतेरामन्त्रणम्, यत एव प्राणिनः प्रायेण कृषि-वाणिज्य-हिंसादिकास्वेव दृष्टफलास्वशुभक्रियासु प्रवर्तन्ते, अदृष्टफलासु पुनर्दानादिकासु शुभक्रियासु स्वल्पा एव प्रवर्तन्ते, तेनैव तस्मादेव कारणात् ता अपि कृषि-हिंसादिका दृष्टफलाः क्रिया अदृष्टफला अपि प्रतिपद्यस्वाभ्युपगच्छ। इदमुक्तं भवति– यद्यपि कृषि-हिंसादिक्रियाकर्तारो दृष्टफलमात्रार्थमेव ताः समारभन्ते नाधर्मार्थम्, तथापि तेऽधर्मलक्षणं पापरूपमदृष्टफलमश्नुवत एव, अनन्तसंसारिजीवान्यथानुपपत्तेः। ते हि कृषि-हिंसादिक्रियानिमित्तमनभिलषितमप्यदृष्टं पापलक्षणं फलं बद्ध्वाऽनन्तं संसारं परिभ्रमन्तोऽनन्ता इह तिष्ठन्ति, दानादिक्रियानुष्ठातारस्तु स्वल्पा अदृष्टं धर्मरूपं फलमासाद्य क्रमेण मुच्यन्त इति।

ननु दानादिक्रियानुष्ठातृभिर्यददृष्टं धर्मलक्षणं फलमाशंसितं तत् तेषां भवतु, यैस्तु कृषि-हिंसादिक्रियाकर्तृभिरदृष्टमधर्मरूपं फलं नाशंसितं तत् तेषां कथं भवति ? इति चेत्। तदयुक्तम्, न ह्यविकलं कारणं स्वकार्यं जनयत् कस्याप्याशंसामपेक्षते, किन्त्वविकलकारणतया स्वकार्यं जनयत्येव। वप्तुरज्ञातमपि हि कोद्रवादिबीजं क्वचिद् भूप्रदेशे पतितं जलादिसामग्रीसद्भावेऽविकलकारणतां प्राप्तं

1 क ग. 'विनाशन'। 2 प्रायो वा जीवलोको वर्तते दृष्टफलासु क्रियासु। अदृष्टफलासु पुनर्वर्तते नासङ्ख्यभागोऽपि ॥ १६१९ ॥
3 सौम्य ! यत एव जीवाः प्रायो दृष्टफलासु वर्तन्ते। अदृष्टफला अपि च ता प्रतिपद्यस्व तेनैव ॥ १६२० ॥

ज्ञानपर्यायेण। ततः किम्? इत्याशङ्क्य 'तान्येवानु विनश्यति' इत्यस्यार्थमाह– 'ताई चियेत्यादि' तान्येव ज्ञानालम्बनभूतानि घटादिभूतानि क्रमशः कालक्रमेण व्यवधान-स्थगना-ऽन्यमनस्कत्वादिनाऽर्थान्तरोपयोगे सति विज्ञेयभावेन ज्ञानविषयभावेन विनाशमश्नुवानानि, अनु– पश्चात् तद्बोधपर्यायेण, स विज्ञानघनो विनश्यतीति संबन्धः। ज्ञानपर्यायेण घटादिभ्यो ज्ञेयभूतेभ्यो जीवः समुत्थाय कालक्रमाद् व्यवधानादिनाऽर्थान्तरोपयोगे सति ज्ञेयभावेन तान्येव विनाशमश्नुवानान्यनु विनश्यतीति तात्पर्यार्थः ॥१५९३॥१५९४॥

किमित्थं सर्वथाऽयमात्मा विनश्यति? । न, इत्याह—

पुव्वावरविण्णाणोवओगओ विगम-संभवसहावो। विण्णाणसंतईए विण्णाणघणोऽयमविणासी॥ १५९५ ॥[1]

एक एवायमात्मा त्रिस्वभावः। कथम्? इत्युच्यते– अर्थान्तरोपयोगकाले पूर्वविज्ञानोपयोगेन तावदयं विगमस्वभावो विनश्वररूपः, अपरविज्ञानोपयोगतस्तु संभवस्वभाव उत्पादस्वरूपः, अनादिकालप्रवृत्तसामान्यविज्ञानमात्रसंतत्या पुनरयं विज्ञानघनो जीवोऽविनष्ट एवावतिष्ठते। एवमन्यदपि सर्वं वस्तूत्पाद-व्यय-ध्रौव्यस्वभावमेवावगन्तव्यम्, न पुनः किमपि सर्वथोत्पद्यते, विनश्यति चेति ॥ १५९५ ॥

'न प्रेत्यसंज्ञास्ति' इत्येतद् व्याचिख्यासुराह—

न[2] च पेच्चनाणसण्णावतिट्ठए संपओवओगाओ। विण्णाणघणाभिक्खो जीवोऽयं वेयपयभिहिओ ॥१५९६॥

न च प्रेत्येति– न चान्यवस्तूपयोगकाले प्राक्तनी ज्ञानसंज्ञास्ति। कुतः? सांप्रतवस्तुविषयोपयोगात्। इदमुक्तं भवति– यदा घटोपयोगनिवृत्तौ पटोपयोग उत्पद्यते, तदा घटोपयोगसंज्ञा नास्ति, तदुपयोगस्य निवृत्तत्वात्; किन्तु पटोपयोगसंज्ञैवास्ति, तदुपयोगस्यैव तदानीमुत्पन्नत्वात्। तस्माद् विज्ञानघनाभिख्यो वेदपदेष्वभिहितोऽयं जीवः। ततो गौतम! प्रतिपद्यस्वैनमिति ॥ १५९६ ॥

पुनरपीह प्रेर्यमाशङ्क्य परिहरन्नाह—

एवं[3] पि भूयधम्मो नाणं तब्भावभावओ बुद्धी। तं नो तदभावम्मि वि जं नाणं वेयसमयम्मि ॥ १५९७ ॥

---

१ पूर्वा-ऽपरविज्ञानोपयोगतो विगम-संभवस्वभावः। विज्ञानसंतत्या विज्ञानघनोऽयमविनाशी ॥ १५९५ ॥

२ न च प्रेत्यज्ञानसंज्ञाऽवतिष्ठते सांप्रतोपयोगात्। विज्ञानघनाभिख्यो जीवोऽयं वेदपदाभिहितः ॥ १५९६ ॥

३ एवमपि भूतधर्मो ज्ञानं तद्भावभावतो बुद्धिः। तद् न तदभावेऽपि यज्ज्ञानं वेदसमये ॥ १५९७ ॥

यस्मादनिष्टभोगभाजो वहुतरा भूयांसः– अशुभकर्मविपाकजनितदुःखभाज एव प्राणिनः प्रचुरा इहोपलभ्यन्ते, शुभकर्मविपाकनिबन्धनसुखानुभवितारस्तु स्वल्पा एवेति भावः। तेन तस्मात् कारणात् सौम्य ! प्रतिपद्यस्व शुभाऽशुभा वा सर्वाऽपि क्रिया, अदृष्टं शुभाशुभं कर्मरूपमैकान्तिकं फलं यस्याः साऽदृष्टैकान्तिकफलेत्युत्तरगाथायां संबन्धः। इदमुक्तं भवति– येन दुःखिनोऽत्र वहवः प्राणिनो दृश्यन्ते सुखिनस्तु स्वल्पाः, तेन ज्ञायते– कृषि-वाणिज्य-हिंसादिक्रियानिबन्धनाशुभकर्मरूपादृष्टफलविपाको दुःखिनाम्, इतरेषां तु दानादिक्रियाहेतुकशुभकर्मरूपादृष्टफलविपाक इति। व्यत्ययः कस्माद् न भवति ? इति चेत्। उच्यते– अशुभक्रियारम्भिणामेव वहुत्वात्, शुभक्रियानुष्ठातॄणामेव च स्वल्पत्वादिति।

अत्राह– नन्वशुभक्रियारम्भकाणामपि यद्यदृष्टफलं भवति, तत् किमिति दानादिक्रियारम्भक इव तदारम्भकोऽपि कश्चित् तदाशंसां कुर्वाणो न दृश्यते ? इत्याह– 'जं च नेहेत्यादि' यस्माच्च नेहाऽदृष्टमनिष्टमशुभं फलं यस्याः साऽदृष्टानिष्टफला तामित्थंभूतां क्रियां मतिपूर्वामाशंसाबुद्धिपूर्विकां कोऽपि समारभते, इत्यतो न कोऽपि तदाशंसां कुर्वाणो दृश्यते। तस्मात् सर्वापि क्रियाऽदृष्टैकान्तिकफलेति प्रतिपद्यस्वेति।

पुनरपि कथंभूताः ? इत्याह– 'दिट्ठाणेगंतफल त्ति' दृष्टं धान्य-द्रविणलाभादिकमनैकान्तिकमनवश्यंभावि फलं यस्याः कृषि-वाणिज्यादिक्रियायाः सा दृष्टानैकान्तिकफला सर्वापि क्रिया। इदमुक्तं भवति– सर्वस्या अपि क्रियाया अदृष्टं फलं तावदेकान्तेनैव भवति, यत्तु दृष्टफलं तदनैकान्तिकमेव– कस्याश्चित् तद् भवति कस्याश्चिद् नेत्यर्थः। एतच्च दृष्टफलस्यानैकान्तिकत्वमदृष्टानुभावेनैवेति प्रतिपत्तव्यम्। न हि समानसाधनारब्धतुल्यक्रियाणां द्वयोर्बहूनां वैकस्य दृष्टफलविघातः, अन्यस्य तु न, इत्येतददृष्टहेतुमन्तरेणोपपद्यत इति भावः। एतच्चेहैव प्रागुक्तमेवेति ॥ १६२२ ॥ १६२३ ॥

अथवा, किमिह प्रयासेन ? प्रागेव साधितं कर्म। कया युक्त्या ? इत्याह—

अहवा फलाउ कम्मं कज्जत्तणओ पसाहियं पुव्वं। परमाणवो घडस्स व किरियाण तयं फलं भिन्नं ॥१६२४॥

अथवा,

'[3]जो तुल्लसाहणाणं फले विसेसो न सो विणा हेउं। कज्जत्तणओ गोयम ! घडो व्व, हेऊ य सो कम्मं ॥ १ ॥'



1 घ.ज 'ष्टं द्रविणधान्यला'। 2 अथवा फलात् कर्म कार्यत्वत. प्रसाधितं पूर्वम्। परमाणवो घटस्येव क्रियाणां तत् फलं भिन्नम् ॥ १६२४ ॥ 3 गाथा १६१३।

जाई दव्वं किरिया गुणोऽहवा संसओ तवाजुत्तो । अयमेवेति नवायं न वत्थुधम्मो जओ जुत्तो ॥१६०१॥
सव्वं चिय सव्वमयं स-परपज्जायओ जओ नियर्यं । सव्वमसव्वमयं पि य विवित्तरूवं विवक्खाओ ॥१६०२॥
सामण्ण-विसेसमओ तेण पयत्थो विवक्खया जुत्तो । वत्थुस्स विस्सरूवो पज्जायावेक्खया सव्वो ॥१६०३॥

तस्मादेषां पूर्वोक्तानां वेदपदानां यथा मया व्याख्यातोऽर्थस्तथा त्वं न वेत्सि, तेन जीवे संशयं करोषि । अथवा, सर्वेषामप्यशेषवेदपदानामर्थं त्वं न जानासि, यस्मात् सर्वेष्वपि वेदपदेषु विषये तवैवंभूतः संशयोऽस्तीति संवन्धः । कथंभूतः ? इत्याह– 'अत्थो किं होज्ज सुईत्यादि' किमेतेषां वेदपदानामर्थः श्रुतिः शब्दो भवेत्, यथा भेरी-पटह-ढक्कादीनां शब्दस्य शब्द एवार्थः ?; अथवा, यद् घटादिशब्दे समुच्चारिते तदभिधेयार्थविषयं विज्ञानं भवद् दृश्यते, तत् तेषामर्थः ?; किंवा घटशब्दे समुत्कीर्तिते 'पृथुबुध्नोदराद्याकारवान् घटलक्षणोऽर्थोऽनेनोक्तः, न तु पटादिः' इत्येवं यो वस्तुभेदः प्रतीयते स एषामर्थः ?; यदिवा, किं जातिरमीषामर्थः, यथा गोशब्दे समुच्चारिते गोजातिरवसीयते ?; यदिवा, किं द्रव्यमेषामर्थः, यथा दण्डीत्यादिषु दण्डादिमद् द्रव्यम् ?; किंवा धावतीत्यादीनामिव धावनादिक्रियाऽमीषामर्थः ?; अथवा, किं शुक्लादीनामिव शुक्लादिगुण एतेषामर्थः ? इति । अयं च संशयस्तवायुक्तः, यस्मात् 'अयमेव, नैव वाऽयम्' इत्येवं कस्यापि वस्तुनो धर्मोऽवधारयितुं न युक्तः । शब्दोऽपि वस्तुविशेष एव, ततः 'एवंभूतस्यैवार्थस्यायमभिधायकः, नैव वेत्थंभूतस्यार्थस्यायं प्रतिपादकः' इत्येवमेतद्धर्मस्याप्यवधारणमयुक्तमेव । कुतः ? इत्याह– 'सव्वं चियेत्यादि' यस्मात् सर्वमपि वाच्य-वाचकादिकं वस्तु नियतं निश्चितं स्व-परपर्यायैः सर्वात्मकमेव सामान्यविवक्षयेत्यर्थः । तथा, सर्वमसर्वमयमप्यस्ति विविक्तरूपं सर्वतो व्यावृत्तम् । कया ? इत्याह– विवक्षया, केवलस्वपर्यायापेक्षयेत्यर्थः, विशेषविषययेति तात्पर्यार्थः । तस्मात् सर्वेषामपि पदानां विवक्षावशतः सामान्यमयो विशेषमयश्च पदार्थो युक्तः, न पुनरेकान्तेनेत्थंभूत एव, अनित्थंभूत एव वेति । कुतः ? इत्याह– 'वत्थुस्सेत्यादि' यस्मात् सर्वोऽपि वाच्यस्य वाचकस्य वा वस्तुनः स्वभावः पर्यायापेक्षया विश्वरूपो नानाविधो वर्तते । ततश्च सामान्यविवक्षया घटशब्दः सर्वात्मकत्वात् सर्वेषामपि द्रव्य-गुण-क्रियाद्यर्थानां वाचकः, विशेषविवक्षया तु प्रतिनियतरूपत्वाद् य एवास्येह पृथुबुध्नोदराद्याका-

१ जातिर्द्रव्यं क्रिया गुणोऽथवा संशयस्तवायुक्तः । अयमेवेति नवायं न वस्तुधर्मो यतो युक्तः ॥१६०१॥
सर्वमेव सर्वमयं स्व-परपर्यायतो यतो नियतम् । सर्वमसर्वमयमपि च विविक्तरूपं विवक्षया ॥ १६०२ ॥
सामान्य-विशेषमयस्तेन पदार्थो विवक्षया युक्तः । वस्तुनो विश्वरूपः पर्यायापेक्षया सर्वः ॥ १६०३ ॥ २ क.ग. 'ज्ञानभवनं द्द' ।

इह प्रथमगाथोपन्यस्तहेतुचतुष्टयस्य द्वितीयगाथायां यथासंख्यं चत्वारो दृष्टान्ता द्रष्टव्याः। तत्र मूर्तं कर्म, तत्संबन्धे सुखादि-संवित्तेः, इह यत्संबन्धे सुखादि संवेद्यते तद् मूर्तं दृष्टम्, यथाऽशनाद्याहारः, यच्चामूर्तं न तत्संबन्धे सुखादिसंविदस्ति, यथाऽऽकाशसंबन्धे, संवेद्यते च तत्संबन्धे सुखादि, तस्मात् मूर्तं कर्मेति। तथा, यत्संबन्धे वेदनोद्भवो भवति तद् मूर्तं दृष्टम्, यथाऽनलोऽग्निः, भवति च कर्मसंबन्धे वेदनोद्भवः, तस्मात् तद् मूर्तमिति। तथा, मूर्तं कर्म, आत्मनो ज्ञानादीनां च तद्धर्माणां व्यतिरिक्तत्वे सति बाह्येन स्रक्-चन्दना-ऽङ्गनादिना बलस्योपचयस्याधीयमानत्वात्, यथा स्नेहाद्याहितबलो घटः, इह यस्यानात्म-विज्ञानादेः सतो बाह्येन वस्तुना बलमाधीयते तद् मूर्तं दृष्टम्, यथा स्नेहादिनाऽऽधीयमानबलो घटः, आधीयते च बाह्यैर्मिथ्यात्वादिहेतुभूतैर्वस्तुभिः कर्मण उपचयलक्षणं बलम्, तस्मात् तद् मूर्तमिति। तथा, मूर्तं कर्म, आत्मादिव्यतिरिक्तत्वे सति परिणामित्वात्, क्षीरमिवेति। एवमादीनि हेतू-दाहरणानि कर्मणो रूपित्वगमकानीति ॥ १६२६ ॥ १६२७ ॥

अत्र परिणामित्वासिद्धिमाशङ्क्योत्तरमाह—

अह[2] मयमसिद्धमेयं परिणामाउ त्ति सो वि कज्जाओ। सिद्धो परिणामो से दहिपरिणामादिव पयस्स ॥१६२८॥

अथ 'परिणामित्वात्' इत्यसिद्धोऽयं हेतुरिति मतं भवतः। एतदप्ययुक्तम्, यतः सोऽपि परिणामः सिद्धः कर्मणः, 'कज्जाउ त्ति' कर्मकार्यस्य शरीरादेः परिणामित्वदर्शनादित्यर्थः। इह यस्य कार्यं परिणाम्युपलभ्यते तस्यात्मनोऽपि परिणामित्वं निश्चीयते, यथा दध्नस्तक्रादिभावेन परिणामात् पयसोऽपि परिणामित्वं विज्ञायत एवेति ॥ १६२८ ॥

यत् पूर्वं सुख-दुःखादिवैचित्र्यदर्शनात् तद्धेतुभूतं कर्म साधितं, तत्र पुनरप्यग्निभूतिराह—

अब्भादि[3]विगाराणं जह वेचित्तं विणा वि कम्मेण। तह जइ संसारीणं हवेज्ज को नाम तो दोसो? ॥१६२९॥

आह– ननु यथाऽभ्रादिविकाराणामन्तरेणापि कर्म, वैचित्र्यं दृश्यते, तथा तेनैव प्रकारेण संसारिजीवस्कन्धानामपि सुख-दुःखादिभावेन वैचित्र्यं यदि कर्म विनापि स्यात्, ततः को नाम दोषो भवेत्?– न कोऽपीत्यर्थः ॥ १६२९ ॥

भगवानाह—

१ क ख ग 'बन्धि तस्मात् तत्सबन्धिसुखादिसवेदनाद् मू'।

२ अथ मतमसिद्धमेतत् परिणामादिति सोऽपि कार्यात्। सिद्धः परिणामस्तस्य दधिपरिणामादिव पयसः ॥ १६२८ ॥

३ अभ्रादिविकाराणां यथा वैचित्र्य विनापि कर्मणा। तथा यदि संसारिणां भवेत् को नाम ततो दोष ? ॥ १६२९ ॥

तमिन्द्रभूतिं प्रव्राजितं श्रुत्वा द्वितीयोऽग्निभूतिनामा तत्सोदर्यबन्धुरत्रान्तरेऽमर्षेणाकुलितचेताः समागच्छति भगवत्समीपम्। केनाभिप्रायेण ? इत्याह– व्रजामि। 'ण' इति वाक्यालङ्कारे। आनयामि निजभ्रातरमिन्द्रभूतिं 'ततः' इति गम्यते। 'ण' इत्ययमपि वाक्यालङ्कारे। तं श्रमणमिन्द्रजालिकं कमपि पराजित्येति ॥ १६०६ ॥

पुनरपि किं चिन्तयन्नसावागतः ? इत्याह—

छलिओ[1] छलाइणा सो मण्णे माइंदजालिओ वा वि। को जाणइ कह वत्तं एत्ताहे वट्टमाणी से ॥१६०७॥

दुर्जयस्त्रिभुवनस्यापि मद्भ्रातेन्द्रभूतिः, केवलमहमिदं मन्ये– छलादिना छलितोऽसौ तेन धूर्तेन– च्छल-जाति-निग्रहस्थान-ग्रहणनिपुणेन तेन केनापि दुष्टेन भ्रमितो मद्बन्धुरित्यर्थः। अथवा, मायेन्द्रजालिकः कोऽपि निश्चितमसौ, येन तस्यापि जगद्गुरोर्मद्भ्रातुर्भ्रमितं चेतः। तस्मात् किं बहुना ?, को जानाति तद्वादस्थानकं तयोस्तत्र कथमपि वृत्तम्, मत्परोक्षत्वात् ?। इत ऊर्ध्वं पुनर्मयि तत्र गते तस्य तदिन्द्रजालव्यतिकरभ्रमितमानसखचर-नरा-ऽमरव्रातवन्दनमात्रबृंहितचेतसः श्रमणकस्य 'वट्टमाणि त्ति' या काचिद् वार्ता वर्तनी वा भविष्यति तां द्रक्ष्यत्ययं समग्रोऽपि लोक इति ॥ १६०७ ॥

किं च तेन तत्र गच्छता प्रोक्तम् ? इत्याह—

सो[2] पक्खंतरमेगं पि जाइ जइ मे तओ मि तस्सेव। सीसत्तं होज्ज गओ वोत्तुं पत्तो जिणसगासे ॥१६०८॥

को जानाति तावदिन्द्रभूतिस्तेन कथमपि तत्र निर्जितः ?। मम पुनरप्येकमपि पक्षान्तरं पक्षविशेषं स यदि यात्यवबुध्यते– मद्विहितस्य सहेतू-दाहरणस्य पक्षविशेषस्य स यदुत्तरप्रदानेन कथमपि पारं गच्छतीति हृदयम्, ततो 'मि' इति वाक्यालङ्कारे, तस्यैव श्रमणस्य शिष्यत्वेन गतोऽहं भवेयमिति निश्चयः। तत इत्यादि वाग्गर्जि कृत्वा जिनस्य श्रीमन्महावीरस्यान्तिकं प्राप्त इति ॥१६०८॥

ततः किम् ? इत्याह—

आभट्ठो[3] य जिणेणं जाइ-जरा-मरणविप्पमुक्केणं। नामेण य गोत्तेण य सव्वण्णू सव्वदरिसी णं ॥१६०९॥

---

१ छलितश्छलादिना स मन्ये मायेन्द्रजालिको वापि। को जानाति कथ वृत्तमेतस्माद् वर्तमाना तस्य ॥ १६०७ ॥

२ स पक्षान्तरमेकमपि याति यदि मे ततस्तस्यैव। शिष्यत्वं भवेयं गत उक्त्वा प्राप्तो जिनसकाशे ॥ १६०८ ॥

३ आभाषितश्च जिनेन जाति-जरा-मरणविप्रमुक्तेन। नाम्ना च गोत्रेण च सर्वज्ञेन सर्वदर्शिना ॥ १६०९ ॥

वेदं सुरूप-कुरूप-सुख-दुःखादिभावैः स्वभावत एवाभ्रादिविकारवद् विचित्ररूपतया परिणमति, इत्येतदेवास्तु, का नाम पुनस्तद्वैचित्र्यहेतुभूतस्यान्तर्गडुकल्पस्य कर्मणः परिकल्पना, स्वभावादेव सर्वस्यापि पुद्गलपरिणामवैचित्र्यस्य सिद्धत्वात् ? इति। भगवानाह—'कम्मं पीत्यादि'। अयमभिप्रायः— यद्यभ्रादिविकाराणामिव तनोर्वैचित्र्यमभ्युपगम्यते, तर्हि ननु कर्मापि तनुरेव, कार्मणशरीरमेवेत्यर्थः, केवलं श्लक्ष्णतरा, अतीन्द्रियत्वात्; अभ्यन्तरा च, जीवेन सहातिसंश्लिष्टत्वात् । ततश्च यथाऽभ्रादिविकारवद् बाह्यस्थूरतनोर्वैचित्र्यमभ्युपगम्यते, तथा कर्मतनोरपि तत्किं नाभ्युपगम्यते ? इति भावः ॥ १६३२ ॥

अथ प्रेर्यमाशङ्क्य परिहरन्नाह—

को[1] तीए विणा दोसो थूलाए सव्वहा विप्पमुक्कस्स । देहग्गहणाभावो तउ य संसारवोच्छित्ती ॥ १६३३ ॥

प्रेरकः प्राह— ननु बाह्यायाः स्थूरतन्वा वैचित्र्यं प्रत्यक्षदृष्टत्वादेवाभ्रादिविकारवदभ्युपगच्छामः । अन्तरङ्गायास्तु कर्मरूपायाः सूक्ष्मतनोर्वैचित्र्यं कथमिच्छामः, तस्याः सर्वथाऽप्रत्यक्षत्वात् ? । अथ तदनभ्युपगमे दोषः कोऽप्यापतति, ततोऽर्थापत्तेरेव तद्विचित्रताऽभ्युपगन्तव्या, तर्हि निवेद्यतां कस्तया विना दोषोऽनुपज्यते ? । आचार्यः प्राह— मरणकाले स्थूलया दृश्यमानतन्वा सर्वथा विप्रमुक्तस्य जन्तोर्भवान्तरगतस्थूलतनुग्रहणनिबन्धनभूतां सूक्ष्मकर्मतनुमन्तरेणाग्रेतनदेहग्रहणाभावलक्षणो दोषः समापद्यते । न हि निष्कारणमेव शरीरान्तरग्रहणं युज्यते । ततश्च देहान्तरग्रहणानुपपत्तेर्मरणानन्तरं सर्वस्याप्यशरीरत्वादयत्नेनैव संसारव्यवच्छित्तिः स्यात्१६३३

ततोऽपि च किं स्यात् ? इत्याह—

सव्व[2]विमोक्खावत्ती निक्कारणउ व्व सव्वसंसारो । भवमुक्काणं व पुणो संसरणमओ अणासासो ॥ १६३४ ॥

ततः संसारव्यवच्छेदानन्तरं सर्वस्यापि जीवराशेर्मोक्षापत्तिर्भवेत् । अथाशरीराणामपि संसारपर्यटनम्, तर्हि निष्कारण एव सर्वस्यापि संसारः स्यात्, भवमुक्तानां च सिद्धानामित्थं पुनरप्यकस्माद् निष्कारण एव संसारपातः स्यात् । तथैव च तत्र संसरणम् । ततश्च मोक्षेऽप्यनाश्वास इति ॥ १६३४ ॥

१ कस्तया विना दोष स्थूलया सर्वथा विप्रमुक्तस्य । देहग्रहणाभावस्ततश्च ससारव्यवच्छित्ति ॥ १६३३ ॥
२ सर्वविमोक्षापत्तिर्निष्कारणको वा सर्वससार । भवमुक्तानां वा पुन ससरणमतोऽनाश्वास· ॥ १६३४ ॥

मपि तत्सर्वस्य प्रसिद्धत्वात्। तस्मादस्ति कर्म, सर्वज्ञत्वेन मया प्रत्यक्षीकृतत्वात्, भवत्संशयविज्ञानवदिति। न च वक्तव्यम्– त्वयि सर्वज्ञत्वमस्मान् प्रत्यसिद्धम् 'कह सव्वण्णु त्ति मई जेणाहं सव्वसंसयच्छेई, पुच्छसु व जं न याणसि' इत्यादिना प्रागेव प्रतिविहितत्वात्। कार्यप्रत्यक्षतया भवतोऽपि च प्रत्यक्षमेव कर्म, यथा घटादिकार्यप्रत्यक्षतया परमाणव इति ॥ १६११ ॥

यदुक्तम्– 'तुह तमणुमाणसाहणं' इति, तदेवानुमानमाह—

[3]अत्थि सुह-दुक्खहेऊ कज्जाओ बीयमंकुरस्सेव। सो दिट्ठो चेव मई वभिचाराओ न तं जुत्तं ॥१६१२॥

जो तुल्लसाहणाणं फले विसेसो न सो विणा हेउं। कज्जत्तणओ गोयम! घडो व्व, हेऊ य सो कम्मं ॥१६१३॥

प्रतिप्राणि प्रसिद्धयोः सुख-दुःखयोर्हेतुरस्ति, कार्यत्वात्, अङ्कुरस्येव बीजमिति। यश्चेह सुख-दुःखयोर्हेतुस्तत् कर्मैव, इत्यस्ति तदिति। स्याद् मतिः– स्रक्-चन्दना-ऽङ्गनादयः सुखस्य हेतवः, दुःखस्य त्वहि-विष-कण्टकादयः, इति दृष्ट एव सुख-दुःखयोर्हेतुरस्ति, किमदृष्टस्य कर्मणस्तद्धेतुत्वकल्पनेन?। न हि दृष्टपरिहारेणादृष्टकल्पना संगतत्वमावहति, अतिप्रसङ्गात्। तदयुक्तम्, व्यभिचारात्, तथाहि– 'जो तुल्लेत्यादि' इह यस्तुल्यसाधनयोरिष्टशब्दादिविषयसुखसाधनसमेतयोरनिष्टार्थसाधनसंयुक्तयोश्च द्वयोर्बहूनां वा फले सुख-दुःखानुभवनलक्षणे विशेषस्तारतम्यरूपो दृश्यते, नासावदृष्टं कमपि हेतुमन्तरेणोपपद्यते, कार्यत्वात्, घटवत्। यश्च तत्र विशेषाधायकोऽदृष्टहेतुस्तद् गौतम! कर्मेति प्रतिपद्यस्वेति ॥ १६१२ ॥ १६१३ ॥

अनुमानान्तरमपि कर्मसाधनायाह—

[4]बालसरीरं देहंतरपुव्वं इंदियाइमत्ताओ। जह बालदेहपुव्वो जुवदेहो, पुव्वमिह कम्मं ॥ १६१४ ॥

शरीरान्तरपूर्वकमाद्यं बालशरीरम्, इन्द्रियादिमत्त्वात्, युवशरीरवदिति, आदिशब्दात् सुख-दुःखित्व-प्राणा-ऽपान-निमेषोन्मेष-जीवनादिमत्त्वादयोऽपि हेतवो ग्राह्याः। न च जन्मान्तरातीतशरीरपूर्वकमेवेदमिति शक्यते वक्तुम्, तस्यापान्तरालगतावसत्त्वेन तत्पूर्वकत्वानुपपत्तेः। न चाशरीरिणो नियतगर्भ-देश-स्थानप्राप्तिपूर्वकः शरीरग्रहो युज्यते, नियामककारणाभावात्। नापि स्वभावो

---

१ गाथा १५७९। २ घ ज 'च्छेदी'। ३ अस्ति सुख-दुःखहेतुः कार्याद् (र्यत्वात्) बीजमङ्कुरस्येव। स दृष्ट एव मतिर्व्यभिचाराद् न तद् युक्तम् ॥१६१२॥ यस्तुल्यसाधनयो फले विशेषो न स विना हेतुम्। कार्यत्वतो गौतम! घट इव, हेतुश्च स कर्म ॥ १६१३ ॥

४ बालशरीरं देहान्तरपूर्वकमिन्द्रियादिमत्त्वात्। यथा बालदेहपूर्वो युवदेहः, पूर्वमिह कर्म ॥ १६१४ ॥

ननु मूर्तेन कर्मणाऽमूर्तिमतो जीवस्य कथमाह्लाद-परितापाद्यनुग्रहो-पघातौ स्याताम् ?। न ह्यमूर्तस्य नभसो मूर्तैर्मलयजज्वलनज्वालादिभिस्तौ युज्येते इति भावः । अत्रोत्तरमाह– 'जह विण्णाणाईणमित्यादि' यथाऽमूर्तानामपि विज्ञान-त्रित्रिदिपा-धृति-स्मृत्यादिजीवधर्माणां मूर्तैरपि मदिरापान हृत्पूर-विष-पिपीलिकादिभिर्भक्षितैरुपघातः क्रियते, पयः-शर्करा-घृतपूर्णभेषजादिभिस्त्वनुग्रह इत्येवमिहापीति । एतच्च जीवस्यामूर्तत्वमभ्युपगम्योक्तम् ॥ १६३७ ॥

यदिवा, अमूर्तोऽपि सर्वथाऽसौ न भवतीति दर्शयन्नाह—

[1]अहवा नेगंतोऽयं संसारी सव्वहा अमुत्तो त्ति । जमणाइकम्मसंतइपरिणामावन्नरूवो सो ॥ १६३८ ॥

अथवा, नायमेकान्तो यदुत– संसारी जीवः सर्वथाऽमूर्त इति । कुतः ? । यद् यस्मादनादिकर्मसन्ततिपरिणामापन्नं वह्न्ययःपिण्डन्यायेनानादिकर्मसंतानपरिणतिस्वरूपतां प्राप्तं रूपं यस्य स तथा । ततश्च मूर्तकर्मणः कथञ्चिदनन्यत्वाद् मूर्तोऽपि कथञ्चिज्जीवः । इति मूर्तेन कर्मणा भवत एव तस्यानुग्रहो-पघातौ, नभसस्त्वमूर्तत्वात्, अचेतनत्वाच्च तौ न भवत एवेति ॥ १६३८ ॥

कथं पुनः कर्मणोऽनादिसंतानः ? इत्याह—

[2]संताणोऽणाई उ परोप्परं हेउहेउभावाओ । देहस्स य कम्मस्स य गोयम ! वीयं-कुराणं व ॥ १६३९ ॥

अनादिः कर्मणः सन्तान इति प्रतिज्ञा । देह-कर्मणोः परस्परं हेतुहेतुमद्भावादिति हेतुः । वीजा-ऽङ्कुरयोरिवेति दृष्टान्तः । यथा वीजेनाऽङ्कुरो जन्यते, अङ्कुरादपि क्रमेण वीजमुपजायते; एवं देहेन कर्म जन्यते, कर्मणा तु देह इत्येवं पुनःपुनरपि परस्परमनादिकालीनहेतुहेतुमद्भावादित्यर्थः । इह ययोरन्योऽन्यं हेतुहेतुमद्भावस्तयोरनादिः सन्तानः, यथा वीजाङ्कुर-पितृपुत्रादीनाम्, तथा च देह-कर्मणोः, ततोऽनादिः कर्मसन्तान इति ॥ १६३९ ॥

वेदोक्तद्वारेणापि कर्म साधयन्नाह—

[3]कम्मे चासइ गोयम ! जमग्गिहोत्ताइ सग्गकामस्स । वेयविहियं विहण्णइ दाणाइफलं च लोयम्मि ॥१६४०॥

१ अथवा नैकान्तोऽयं संसारी सर्वथाऽमूर्त इति । यदनादिकर्मसन्ततिपरिणामापन्नरूप स० ॥ १६३८ ॥
२ सन्तानोऽनादिस्तु परस्पर हेतुहेतुभावात् । देहस्य च कर्मणश्च गौतम ! वीजा-ऽङ्कुरयोरिव ॥ १६३९ ॥
३ कर्मणि चासति गौतम ! यदग्निहोत्रादि स्वर्गकामस्य । वेदविहित विहन्यते दानादिफल च लोके ॥ १६४० ॥

सकाशाज्जायते। कथम्? भूयः पुनः पुनरपि। कथंभूतं यत् सुख-दुःखफलम्? इत्याह– तस्यैव कर्मणस्तज्जनकत्वेन यत् परिणमनं परिणामस्तद्रूपमिति। एतदुक्तं भवति– यतः कर्मणः सकाशात् प्रतिक्षणं तत्परिणतिरूपं सुख-दुःखफलं प्राणिनां समुपजायते, तत् कर्म मनःप्रसादक्रियाया अपि फलमभिमतम्। आह– नन्वनन्तरगाथायां 'दानादिक्रियाफलं कर्म' इति वदता दानादिक्रियैव कर्मणः कारणमुक्ता, अत्र तु मनःप्रसादादिक्रिया तत्कारणमुच्यते, इति कथं न पूर्वापरविरोधः? इति। सत्यम्, किन्तु मनःप्रसादादिक्रियैवानन्तर्येण कर्मणः कारणम्, केवलं तस्या अपि मनःप्रसादादिक्रियाया दानादिक्रियैव कारणम्, अतः कारणकारणे कारणोपचाराददोष इति ॥ १६१५ ॥ १६१६ ॥

अत्र पुनरपि प्रेर्यमाशङ्क्य परिहारमाह—

होज्ज मणोवित्तीए दाणाइकिए व जइ फलं बुद्धी। तं न निमित्तताओ पिंडो व्व घडस्स विन्नेओ ॥१६१७॥[1]

अत्र परस्य यद्येवंभूता बुद्धिः स्यात्। कथंभूता? इत्याह— ननु मनोवृत्तेर्मनःप्रसत्त्यादिक्रियाया दृष्टरूपा दानादिक्रियैव फलम्, न त्वदृष्टं कर्मेति भावः। अयमभिप्रायः– दानादिक्रियातो मनःप्रसादादयो जायन्ते, तेभ्यश्च प्रवर्धमानदित्सादिपरिणामः पुनरपि दानादिक्रियां करोति, एवं पुनः पुनरपि दानक्रियाप्रवृत्तेः सैव मनःप्रसादादेः फलमस्तु, न तु कर्मेति भावः, दृष्टफलमात्रेणैव चरितार्थत्वात् किमदृष्टफलकल्पनेन? इति हृदयम्। तदेतद् न। कुतः? निमित्तत्वाद्– मनःप्रसादादिक्रियां प्रति दानादिक्रियाया निमित्तकारणत्वादित्यर्थः, यथा मृत्पिण्डो घटस्य निमित्तं विज्ञेयस्तथा दानादिक्रियापि मनःप्रसत्तेः। दृश्यन्ते हि पात्रदानादिभ्यश्चित्ताह्लादादयो जायमानाः। न च यद् यस्य निमित्तं तत् तस्यैव फलं वक्तुमुचितम्, दूरविरुद्धत्वादिति ॥ १६१७ ॥

पुनरपि दृष्टान्तीकृतकृष्यादिक्रियावष्टम्भेनैव सर्वासामपि क्रियाणां दृष्टफलमात्ररूपतामेव साधयन्नाह प्रेरकः—

एवं पि दिट्ठफलया किरिया न कम्मफला पसत्ता ते। सा तम्मेत्तफल च्चिय जह मंसफलो पसुविणासो ॥१६१८॥[2]

नन्वेवमपि युष्मदुपन्यस्तकृष्यादिक्रियानिदर्शनेनापीत्यर्थः, सर्वा दानादिकापि क्रिया दृष्टफलदैव प्रसक्ता न कर्मफला। इदमुक्तं भवति– यथा कृष्यादिक्रिया दृष्टफलमात्रेणैवावसितप्रयोजना भवति, तथा दानादिक्रियाया अपि श्लाघादिकं किञ्चिद्

१ भवेद् मनोवृत्तेर्दानादिक्रियैव यदि फलं बुद्धि। तद् न निमित्तत्वात् पिण्ड इव घटस्य विज्ञेय॥ १६१७ ॥
२ एवमपि दृष्टफला क्रिया न कर्मफला प्रसक्ता ते। सा तन्मात्रफलैव यथा मांसफलः पशुविनाशः॥ १६१८ ॥

स्यात्, सप्रयोजनकर्तृत्वे पुनरनीश्वरत्वप्रसङ्गः। न चानादिशुद्धस्य देहादिकरणेच्छा युज्यते, तस्या रागविकल्परूपत्वात्, इत्याद्यत्र बहु वक्तव्यम्, ग्रन्थगहनताप्रसङ्गात्तु नोच्यत इति। अनेनैव विधानेन विष्णु-ब्रह्मादयोऽपि प्रत्युक्ता द्रष्टव्या इति ॥ १६४२ ॥

अथाशङ्कान्तरं प्रतिविधातुमाह—

अहव सहावं मन्नसि विण्णाणघणाइवेयवुत्ताओ। तह बहुदोसं गोयम ! ताणं च पयाणमयमत्थो ॥१६४३॥

अथ "विज्ञानघन एवैतेभ्यो भूतेभ्यः" इत्यादिवेदवचनश्रवणात् स्वभावं देहादीनां कर्तारं मन्यसे, यतः केचिदाहुः—

"सर्वहेतुनिराशंसं भावाना जन्म वर्ण्यते। स्वभाववादिभिस्ते हि नाहुः स्वमपि कारणम् ॥ १ ॥
राजीवकण्टकादीनां वैचित्र्यं कः करोति हि ? । मयूरचन्द्रिकादिर्वा विचित्र केन निर्मितः ? ॥ २ ॥
कादाचित्क यदत्रास्ति नि.शेप तदहेतुकम्। यथा कण्टकतैक्ष्ण्यादि तथा चैते सुखादय ॥ ३ ॥"

तदेतद् यथा त्वं मन्यसे गौतम !, तथाऽभ्युपगम्यमानं बहुदोपमेव; तथाहि— यो देहादीनां कर्ता स्वभावोऽभ्युपगम्यते, स किं वस्तुविशेषो वा, अकारणता वा, वस्तुधर्मो वा ?, इति त्रयी गतिः। तत्र न तावद् वस्तुविशेषः, तद्ग्राहकप्रमाणाभावात्। अप्रमाणकस्याभ्युपगमे कर्मापि किं नाभ्युपगम्यते, तस्यापि त्वदभिप्रायेणाप्रमाणकत्वात् ?। किञ्च, वस्तुविशेषः स स्वभावो मूर्तो वा स्यात्, अमूर्तो वा ?। यदि मूर्तः, तर्हि स्वभाव इति नामान्तरेण कर्मैवोक्तं स्यात्। अथामूर्तः, तर्हि नासौ कस्यापि कर्ता, अमूर्तत्वात्, निरुपकरणत्वाच्च, व्योमवदिति। न च मूर्तस्य शरीरादेः कार्यस्यामूर्तं कारणमनुरूपम्, आकाशवदिति। अथाकारणता स्वभाव इष्यते, तत्राप्यभिदध्महे— नन्वेवं सत्यकारणं शरीराद्युत्पद्यत इत्ययमर्थः स्यात्, तथा च सति कारणाभावस्य समानत्वाद् युगपदेवाशेषदेहोत्पादप्रसङ्गः। अपिच, इत्थमहेतुकमाकस्मिकं शरीराद्युत्पद्यत इत्यभ्युपगतं भवेत्। एतच्चायुक्तमेव, यतो यदहेतुकमाकस्मिकं न तदादिमत्प्रतिनियताकारम्, यथाऽभ्रादिविकारः, आदिमत्प्रतिनियताकारं च शरीरादि। तस्माद् नाकस्मिकम्, किन्तु कर्महेतुकमेव। प्रतिनियताकारत्वादेव चोपकरणसहितकर्तृनिर्वर्त्यमेव शरीरादिकं घटादिवदिति गम्यत एव। न च गर्भाद्यवस्थासु कर्मणोऽन्यदुपकरणं घटत इत्युक्तमेव। अथ वस्तुनो धर्मः स्वभावोऽभ्युपगम्यते। तथाप्यसौ यद्यात्मधर्मो विज्ञानादिवत्, तर्हि न शरीरादिकारणमसौ, अ-

१ अथवा स्वभाव मन्यसे विज्ञानघनादिवेदोक्तात्। तथा बहुदोपं गौतम ! तेषां च पदानामयमर्थ ॥ १६४३ ॥

वप्त्राशंसाभावेऽपि स्वकार्यं जनयत्येव । अविकलकारणभूताश्च कृषि-हिंसादयोऽधर्मजनने । अतस्तत्कर्तृगताशंसा तत्र कोपयुज्यते ? । न च दानादिक्रियायामपि विवेकिनः फलाशंसां कुर्वते, तथाप्यविकलकारणतया विशिष्टतरमेव ता धर्मफलं जनयन्ति । तस्मात् शुभाया अशुभायाश्च सर्वस्या अपि क्रियाया अदृष्टं शुभा-ऽशुभं फलमस्त्येवेति प्रतिपत्तव्यम्, अनन्तसंसारिजीवसत्तान्यथानुपपत्तेरिति स्थितम् ॥ १६२० ॥

एतदेव प्रतिपादयितुमाह—

ईहरा[1] अदिट्ठरहिया सव्वे मुच्चेज्ज ते अपयत्तेणं । अदिट्ठारंभो चेव केसबहुलो भविज्जाहि ॥ १६२१ ॥

इतरथा यदि कृषि हिंसाद्यशुभक्रियाणामदृष्टं फलं नाभ्युपगम्येत, तदा ते तत्कर्तारोऽदृष्टफलाभावाद् मरणानन्तरमेव सर्वे-ऽप्ययत्नेन मुच्येरन्– संसारकारणाभावाद् मुक्तिं गच्छेयुः, ततश्च प्रायः शून्य एव संसारः स्यादित्यर्थः । यश्चादृष्टारम्भोऽदृष्टफलानां दानादिक्रियाणां समारम्भः स एव क्लेशबहुलः संसारपरिभ्रमणकारणतया दुरन्तः स्यात्; तथाहि– ते दानादिक्रियानुष्ठातारस्त-दनुष्ठानेनादृष्टफलानुबन्धं विदध्युः, ततो जन्मान्तरे तद्विपाकमनुभवन्तस्तत्प्रेरिताः पुनरपि दानादिक्रियास्वेव प्रवर्तेरन्, ततो भूयस्त-त्फलसंचयात् तद्विपाकानुभूतिः, पुनरपि दानादिक्रियारम्भः, इत्येवमनन्तसंततिमयः संसारस्तेषां भवेत् ।

तत्रैतत् स्यात्, इत्थमप्यस्तु, कात्र किलास्माकं बाधा ? । अत्रोच्यते– इयमत्र गरीयसी भवतां बाधा, यत् कृषि-हिंसाद्य-शुभक्रियानुष्ठातॄणामदृष्टसंचयाभावे सर्वेषां मुक्तिगमन एकोऽपि तत्क्रियानुष्ठाता संसारे क्वापि नोपलभ्येत, अशुभतत्फलविपाकानु-भविता चैकोऽपि क्वचिदपि न दृश्येत, दानादिशुभक्रियानुष्ठातारः शुभतत्फलविपाकानुभवितार एव च केवलाः सर्वत्रोपलभ्येरन्, न चैवं दृश्यते ॥ १६२१ ॥

तस्मात् किम् ? इत्याह—

जैमणिट्ठभोगभाजो[2] बहुतरगा जं च नेह मइपुव्वं । अदिट्ठाणिट्ठफलं कोइ वि किरियं समारभइ ॥१६२२॥

तेण पडिवज्ज, किरिया अदिट्ठेगंतियप्फला सव्वा । दिट्ठाणेगंतफला सा वि अदिट्ठाणुभावेण ॥१६२३॥

१ इतरथाऽदृष्टरहिता. सर्वे मुच्येरंस्तेऽप्रयत्नेन । अदृष्टारम्भ एव क्लेशबहुलो भवेत् ॥ १६२१ ॥

२ यदनिष्टभोगभाजो बहुतरका यच्च नेह मतिपूर्वाम् । अदृष्टानिष्टफलां कश्चिदपि क्रियां समारभते ॥ १६२२ ॥
तेन प्रतिपद्यस्व क्रियाऽदृष्टैकान्तिकफला सर्वा । दृष्टानैकान्तिकफला साप्यदृष्टानुभावेन ॥ १६२३ ॥

धानानि, लोकप्रसिद्धस्यैवार्थस्यैतेष्वनुवादादिति।

तस्मात् "पुरुष एवेदं सर्वम्-" इत्यादीनि वेदपदानि स्तुत्यर्थवादप्रधानानि द्रष्टव्यानि। "विज्ञानघन एवैतेभ्यः" इत्यत्राप्ययमर्थः-विज्ञानघनाख्यः पुरुष एवायं भूतेभ्योऽर्थान्तरं वर्तते। स च कर्ता, कार्यं च शरीरादिकमिति प्राक् साधितमेव। ततश्च कर्तृ-कार्याभ्यामर्थान्तरं करणमनुमीयते; तथाहि- यत्र कर्तृ-कार्यभावस्तत्रावश्यंभावि करणम्, यथाऽयस्कारा-ऽयःपिण्डसद्भावे संदंशः, यच्चात्रात्मनः शरीरादिकार्यनिर्वृत्तौ करणभावमापद्यते तत् 'कर्म' इति प्रतिपद्यस्व। अपिच, साक्षादेव कर्मसत्ताप्रतिपादकानि श्रूयन्त एव वेदवाक्यानि, तद्यथा- "पुण्यः पुण्येन कर्मणा पापः पापेन कर्मणा" इत्यादि। तस्मादागमादपि सिद्धं प्रतिपद्यस्व कर्मेति ॥१६४३॥

एवं भगवताऽभिहितेऽग्निभूतिः किं कृतवान्? इत्याह—

[1]छिन्नम्मि संसयम्मि जिणेण जरा-मरणविप्पमुक्केणं। सो समणो पव्वइओ पंचहिं सह खंडियसएहिं ॥१६४४॥

अस्याः पूर्ववदेव व्याख्या। इत्येकोनचत्वारिंशद्गाथार्थः ॥ १६४४ ॥

॥ इति द्वितीयो गणधरवादः समाप्तः ॥

अथ तृतीयगणधरस्य वायुभूतेर्वक्तव्यतामभिधित्सुराह—

[2]ते पव्वइए सोउं तइओ आगच्छइ जिणसगासं। वच्चामि वंदामी वंदित्ता पज्जुवासामि ॥ १६४५ ॥

ताविन्द्रभूत्य-ऽग्निभूती प्रव्रजितौ श्रुत्वा तृतीयो वायुभूतिनामा द्विजोपाध्यायो जिनसकाशमागच्छति सातिशयनिजबन्धुद्वय-निष्क्रमणाकर्णनाज्झगिति विगलिताभिमानो भगवति संजातसर्वज्ञप्रत्ययः सन्नेवमवधार्यागतः- व्रजामि तत्राहमपि, वन्दे भगवन्तं श्रीमन्महावीरम्, वन्दित्वा च पर्युपासे- पर्युपास्तिं करोमि तस्य भगवत इति ॥ १६४५ ॥

अपरं च, किं विकल्प्य समागतोऽसौ? इत्याह—

1 छिन्ने संशये जिनेन जरा-मरणविप्रमुक्तेन। स श्रमण प्रव्रजित पञ्चभि सह खण्डिकशतै ॥ १६४४ ॥
2 तौ प्रव्रजितौ श्रुत्वा तृतीय आगच्छति जिनसकाशम्। व्रजामि वन्दे वन्दित्वा पर्युपासे ॥ १६४५ ॥

इत्यस्यां गाथायां प्रागस्माभिः कर्म प्रसाधितमेव । कुतः ? इत्याह– फलात् तुल्यसाधनानां यः फले विशेषस्तस्मादित्यर्थः । ततोऽपि फलविशेषात् कस्मात् प्रसाधितं कर्म ? इत्याह– कार्यत्वात् तस्य फलविशेषस्य, यच्च कार्यं तस्य कारणं भवत्येव, यथा घटस्य परमाणवः, यच्चेह कारणं तत् कर्म। 'किरियाण तयं फलं भिन्नं ति' तदेव च कर्म सर्वासामपि क्रियाणामदृष्टं फलमित्येवमिहापि साध्यते । कथंभूतम् ? ताभ्यः क्रियाभ्यो भिन्नम्, कर्मणः कार्यत्वात्, क्रियाणां च कारणत्वात्, कार्यकारणयोश्च परस्परं भेदादिति भावः ॥ १५२४ ॥

अत्राक्षेप-परिहारौ प्राह—

[1]आह नणु मुत्तमेवं मुत्तं चिय कज्जमुत्तिमत्ताओ । इह जह मुत्तत्तणओ घडस्स परमाणवो मुत्ता ॥१६२५॥

आह प्रेरकः– ननु यदि कार्याणां शरीरादीनां दर्शनात् तत्कारणभूतं कर्म साध्यते, तर्हि कार्यस्य मूर्तत्वात् कर्मापि मूर्तं प्राप्नोति। आचार्य उत्तरमाह– 'मुत्तं चियेत्यादि' यदस्माभिः प्रयत्नेन साधयितव्यम्, तद्भवतापि परसिद्धान्तानभिज्ञबालबुद्धितयाऽनिष्टापादनाभिप्रायेण साधितमेव, तथाहि– वयमपि ब्रूमः– मूर्तमेव कर्म, तत्कार्यस्य शरीरादेर्मूर्तत्वात्, इह यस्य यस्य कार्यं मूर्तं तस्य तस्य कारणमपि मूर्तम्, यथा घटस्य परमाणवः, यच्चामूर्तं कार्यं न तस्य कारणं मूर्तं, यथा ज्ञानस्यात्मेति । समवायिकारणं चेहाधिक्रियते, न निमित्तकारणभूता रूपा-ऽऽलोकादय इति । आह– ननु सुख-दुःखादयोऽपि कर्मणः कार्यम्, अतस्तेषाममूर्तत्वात् कर्मणोऽमूर्तत्वमपि प्राप्नोति। न हि मूर्तादमूर्तप्रसवो युज्यते। न चैकस्य मूर्तत्वममूर्तत्वं च युक्तम्, विरुद्धत्वात्। अत्रोच्यते– नन्वत एवात्र समवायिकारणमधिक्रियते, न निमित्तकारणम्, सुख-दुःखादीनां चात्मधर्मत्वादात्मैव समवायिकारणम्, कर्म पुनस्तेषामन्न-पाना-ऽहि-विषादिवद् निमित्तकारणमेवेत्यदोष इति ॥ १६२५ ॥

कर्मणो मूर्तत्वसाधनाय हेत्वन्तराण्यप्याह—

[2]तह सुहसंवित्तीओ संबंधे वेयणुब्भवाओ य । बज्झबलाहाणाओ परिणामाओ य विण्णेयं ॥ १६२६ ॥

आहार इवानल इव घडु व्व नेहाइकयबलाहाणो । खीरमिवोदाहरणाइं कम्मरूवित्तगमगाइं ॥१६२७॥

१ आह ननु मूर्तमेव मूर्तमेव कार्यमूर्तिमत्त्वात् । इह यथा मूर्तत्वतो घटस्य परमाणवो मूर्ता ॥ १६२५ ॥

२ तथा सुखसंवित्तेः सबन्धे वेदनोद्भवाच्च । बाह्यबलाधानात् परिणामाच्च विज्ञेयम् ॥ १६२६ ॥

आहार इवानल इव घट इव स्नेहादिकृतबलाधान । क्षीरमिवोदाहरणानि कर्मरूपित्वगमकानि ॥ १६२७ ॥

[1] जह मज्जंगेसु मओ वीसुमदिट्ठो वि समुदए होउं । कालंतरे विणस्सइ तह भूयगणम्मि चेयण्णम् ॥१६५१॥

वसुधा पृथ्वी, आदिशब्दादप्-तेजो-वायुपरिग्रहः, वसुधादय एव भवन्तीति कृत्वा भूतानि वसुधादिभूतानि, तेषां समुदयः परस्परमीलनपरिणतिर्वसुधादिभूतसमुदयः, तस्मात् प्रागसती संभूता संजाता, चेतनेत्येवंभूता तव शङ्का। सा च चेतना पृथिव्यादिभूतेषु प्रत्येकावस्थायामदृष्टापि धातकीकुसुम-गुडो-दकादिषु मद्याङ्गेषु मद इव तत्समुदाये संभूतेति प्रत्यक्षत एव दृश्यते । तदेवमन्वयद्वारेण चेतनाया भूतसमुदायधर्मता-दर्शिता । अथ व्यतिरेकद्वारेण तस्यास्तां दर्शयितुमाह– 'जह मज्जंगेसु इत्यादि' यथा च मद्याङ्गेषु मद-भावः प्रत्येकावस्थायामदृष्टोऽपि तत्समुदाये भूत्वा ततः कियन्तमपि कालं स्थित्वा कालान्तरे तथाविधसामग्रीवशात् कुतश्चिद् विनश्यति, तथा भूतगणेऽपि प्रत्येकमसच्चैतन्यं भूत्वा ततः कालान्तरे विनश्यति । ततोऽन्वय-व्यतिरेकाभ्यां निश्चीयते– भूतधर्म एव चैतन्यम् ।

इदमत्र हृदयम्– यत् समुदायिषु प्रत्येकं नोपलभ्यते तत्समुदाये चोपलभ्यते, तत् तत्समुदायमात्रधर्म एव, यथा मद्याङ्गस-मुदायधर्मो मदः । स हि मद्याङ्गेषु विष्वग् नोपलभ्यते, तत्समुदाये चोपलभ्यते, अतस्तद्धर्मः । एवं चेतनापि भूतसमुदाये भवति, पृथग् न भवति, अतस्तद्धर्मः । धर्म-धर्मिणोश्चाभेद एव, भेदे घट-पटयोरिव धर्मि-धर्मभावाप्रसङ्गात् । तस्मात् स एव जीवस्तदेव च शरीरम् । वाक्यान्तरेषु पुनः शरीराद् भिन्नः श्रूयते जीवः, तद्यथा– "न हि वै सशरीरस्य प्रिया-ऽप्रिययोरपहतिरस्ति, अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशतः" इत्यादि । ततस्तव संशय इति ॥ १६५० ॥ १६५१ ॥

अत्रोत्तरमाह—

[2] पत्तेयमभावाओ न रेणुतेल्लं व समुदये चेया । मज्जंगेसुं तु मओ वीसुं पि न सव्वसो नत्थि ॥ १६५२ ॥

'न समुदये चेय त्ति' न भूतसमुदयमात्रप्रभवा चेतना, 'पत्तेयमभावाउ त्ति' भूतप्रत्येकावस्थायां तस्या अंशतोऽपि सर्वथाऽनु-पलब्धेरित्यर्थः । किं यथा किंप्रभवं न भवति ? इत्याह– 'न रेणुतेल्लं व त्ति' यथा प्रत्येकं सर्वथाऽनुपलम्भाद् रेणुकणसमुदायप्रभवं तैलं न भवतीत्यर्थः । प्रयोगः– यद् येषु पृथगवस्थायां सर्वथा नोपलभ्यते तत् तेषां समुदायेऽपि न भवति, यथा सिकताकणसमुदाये

१ यथा मद्याङ्गेषु मदो विष्वगदृष्टोऽपि समुदये भूत्वा । कालान्तरे विनश्यति तथा भूतगणेऽपि चैतन्यम् ॥ १६५१ ॥

२ प्रत्येकमभावाद् न रेणुतैलमिव समुदये चेतना । मद्याङ्गेषु तु मदो विष्वगपि न सर्वशो नास्ति ॥ १६५२ ॥

[1]कम्मम्मि व को भेओ जह बज्झक्खंधचित्तया सिद्धा । तह कम्मपोग्गलाण वि विचित्तया जीवसहियाणं ॥१६३०॥

यद्यभ्रविकाराणां गन्धर्वनगरे-न्द्रधनुरादीनां गृह-देवकुल-प्राकार-तरु-कृष्ण-नील-रक्तादिभावेन वैचित्र्यमिष्यते सौम्य !, वाशब्दस्यापिशब्दार्थत्वात्, तर्हि कर्मण्यपि को भेदः को विशेषः, येन तत्र वैचित्र्यं नाभ्युपगम्यते ?। ननु हन्त ! यथा सकललोकप्रत्यक्षाणाममीषां गन्धर्वपुर-शक्रकोदण्डादीनां वाह्यस्कन्धानां विचित्रता भवतोऽपि सिद्धा, तथा तेनैव प्रकारेणान्तराणामपि कर्मस्कन्धानां पुद्गलमयत्वे समानेऽपि जीवसहितत्वस्य विशेषवतो वैचित्र्यकारणसद्भावेऽपि सुख-दुःखादिजनकरूपतया विचित्रता किमिति नेष्यते ? । यदि ह्यभ्रादयो वाह्यपुद्गला नानारूपतया परिणमन्ति, तर्हि जीवैः परिगृहीताः सुतरां ते तथा परिणंस्यन्तीति भावः ॥ १६३० ॥

एवदेव भावयति—

[2]बज्झाण चित्तया जइ पडिवन्ना [3]कम्मणो विसेसेण । जीवाणुगयस्स मया भत्तीण [4]व सिप्पिनत्थाणं ॥१६३१॥

यदि हि जीवापरिगृहीतानामपि बाह्यानामभ्रादिपुद्गलानां नानाकारपरिणतिरूपा चित्रता त्वया प्रतिपन्ना, तर्हि जीवानुगतानां कर्म-पुद्गलानां विशेषत एवास्माकं भवतश्च सा सम्मता भविष्यति, भक्तयो विच्छित्तयस्तासामिव [5]चित्रादिषु शिल्पिन्यस्तानाम्। अयमभिप्रायः— चित्रकरादिशिल्पिजीवपरिगृहीतानां चित्र-लेप्य-काष्ठकर्मानुगतपुद्गलानां या परिणामचित्रता सा विस्रसापरिणतेन्द्रधनुरादिपुद्गलपरिणामचित्रतायाः सकाशाद् विशिष्टैवेति प्रत्यक्षत एव दृश्यते । अतो जीवपरिगृहीतत्वेन कर्मपुद्गलानामपि सुख-दुःखादिवैचित्र्यजननरूपा विशिष्टतरा परिणामचित्रता कथं न स्यात् ? इति ॥ १६३१ ॥

अत्र परः प्राह—

[6]तो जइ तणुमेत्तं चिय हवेज्ज का कम्मकप्पणा नाम ? । कम्मं पि नणु तणु च्चिय सण्हयरब्भंतरा नवरं ॥१६३२॥

एवं मन्यते परः— यद्यभ्रादिविकाराणामिव कर्मपुद्गलानां विचित्रपरिणतिरभ्युपगम्यते । ततो वाह्यं सकलजनप्रत्यक्षं तनुमात्रमे-

१ कर्मणि वा को भेदो यथा वाह्यस्कन्धचित्रता सिद्धा । तथा कर्मपुद्गलानामपि विचित्रता जीवसहितानाम् ॥ १६३० ॥
२ बाह्यानां चित्रता यदि प्रतिपन्ना कर्मणो विशेषेण । जीवानुगतस्य मता भक्तीनामिव शिल्पिन्यस्तानाम् ॥१६३१॥ ३ घ ज 'कम्मुणो'। ४ क ख ग. झ 'व चित्तन'।
५ क ख ग 'चित्रन्य'। ६ ततो यदि तनुमात्रमेव भवेत् का कर्मकल्पना नाम ?। कर्मापि ननु तनुरेव सूक्ष्मतराभ्यन्तरा नवरम् ॥ १६३२ ॥

[1]भूयाणं पत्तेयं पि चेयणा समुदए दरिसणाओ। जह मज्जंगेसु मओ मइ त्ति हेऊ न सिद्धोऽयं ॥ १६५५ ॥

स्यात् परस्य मतिः– साधूक्तं यत्– पृथगपि मद्याङ्गेषु किञ्चिद् मदसामर्थ्यमस्तीति। एतदेव हि मम भूतेषु न्यस्तावस्थायां चैतन्यास्तित्वसिद्धावुदाहरणं भविष्यति, तथाहि— न्यस्तेष्वपि भूतेषु चैतन्यमस्ति, तत्समुदाये तद्दर्शनात्, मद्याङ्गेषु मदवदिति। यथा मद्याङ्गेषु मदः पृथगल्पत्वाद् नातिस्पष्टः, तत्समुदाये त्वभिव्यक्तिमेति, तथा भूतेष्वपि पृथगवस्थायामणीयसी चेतना, तत्समुदाये तु भूयसीयमिति। अत्रोत्तरमाह– 'हेऊ न सिद्धोऽयमिति' 'चेतनाया भूतसमुदाये दर्शनात्'इत्यसिद्धोऽयं हेतुरित्यर्थः, आत्मनो भूतसमुदायान्तर्गतत्वेन चेतनायास्तद्धर्मत्वात्, आत्माभावे च तत्समुदायेऽपि तदासिद्धेरसिद्धोऽयं हेतुरिति भावः। यदि हि भूतसमुदायमात्रधर्मश्चेतना भवेत् तदा मृतशरीरेऽप्युपलभ्येत। वायोस्तदानीं तत्राभावात् तदनुपलम्भ इति चेत्। नैवम्, नलिकादिप्रयोगतस्तत्प्रक्षेपेऽपि तदनुपलब्धेः। तेजस्तदानीं तत्र नास्तीति चेत्। न, तत्प्रक्षेपेऽपि तदनुपलम्भात्। विशिष्टतेजो वाय्वभावादनुपलम्भ इति चेत्। किं नामात्मसत्त्वं विहायाऽन्यत् तद्वैशिष्ट्यम्?, ननु संज्ञान्तरेणात्मसत्त्वमेव त्वयापि प्रतिपादितं स्यादिति ॥ १६५५ ॥

अथ परस्योत्तरमाशङ्क्य प्रतिविधातुमाह—

[2]नणु पच्चक्खविरोहो गोयम ! तं नाणुमाणभावाओ। तुह पच्चक्खविरोहो पत्तेयं भूयचेय त्ति ॥ १६५६ ॥

ननु प्रत्यक्षविरुद्धमेवेदं यत्– भूतसमुदाये सत्युपलभ्यमानापि चेतना न तत्समुदायस्येत्यभिधीयते। न हि घटे रूपादय उपलभ्यमाना न घटस्येति वक्तुमुचितम्। तदयुक्तम्, यतो न भू-जलसमुदायमात्रे उपलभ्यमाना अपि हरितादयस्तन्मात्रप्रभवा इति शक्यते वक्तुम्। तद्बीजसाधकानुमानेन बाध्यतेऽसावुपलम्भ इति चेत्। तदेतदिहापि समानम्। एतदेवाह– 'गोयमेत्यादि' वायुभूतेरपीन्द्रभूतिसोदर्यभ्रातृत्वेन समानगोत्रत्वाद् 'गौतम!' इत्येवमामन्त्रणम्, यत्त्वं ब्रूषे– तदेतद् न, भूतसमुदायातिरिक्तात्मसाधकानुमानसद्भावात्, ततस्तेनैव त्वत्प्रत्यक्षस्य बाधितत्वादिति भावः। प्रत्युत तवैव प्रत्यक्षविरोधः। किं कुर्वतः? इत्याह– 'पत्तेयं भूयचेय त्ति' 'ब्रुवतः' इति शेषः। प्रत्येकावस्थायां पृथिव्यादिभूतेषु चैतन्याभावस्यैव दर्शनात् तदास्तित्वं प्रत्यक्षेणैव बाध्यत इति 'प्रत्येकं भूतेषु चेतना' इति ब्रुवतस्तवैव प्रत्यक्षविरोध इत्यर्थः ॥ १६५६ ॥

१ भूतानां प्रत्येकमपि चेतना समुदये दर्शनात्। यथा मद्याङ्गेषु मदो मतिरिति हेतुर्न सिद्धोऽयम् ॥ १६५५ ॥
२ ननु प्रत्यक्षविरोधो गौतम! तद् नानुमानभावात्। तव प्रत्यक्षविरोधः प्रत्येकं भूतचेतनेति ॥ १६५६ ॥

पुनः प्रकारान्तरेण प्रेर्यमाह—

[1]मुत्तस्सामुत्तिमया जीवेण कहं हवेज्ज संबंधो ?। सोम्म ! घडस्स व्व नभसा जह वा दव्वस्स किरियाए॥१६३५॥

ननु मूर्तं कर्मेति प्राग् भवद्भिः समर्थितम्। तस्य च मूर्तस्य कर्मणोऽमूर्तेन जीवेन सह कथं संयोगलक्षणः समवायलक्षणो वा संबन्धः स्यात् ?। अतः कर्मसिद्धावप्येतदपरमेव रन्ध्रं पश्यामः। भगवानाह— सौम्य ! यथा मूर्तस्य घटस्यामूर्तेन नभसा संयोगलक्षणः संबन्धस्तथाऽत्रापि जीव-कर्मणोः। यथा वा द्रव्यस्याङ्गुल्यादेः क्रिययाऽऽकुञ्चनादिकया सह समवायलक्षणः संबन्धः, तथाऽत्रापि जीव-कर्मणोरयमिति ॥ १६३५ ॥

प्रकारान्तरेणापि जीव-कर्मणोः संबन्धसिद्धिमाह—

[2]अहवा पच्चक्खं चिय जीवोवनिबंधणं जह सरीरं। चिट्ठइ कम्मयमेवं भवंतरे जीवसंजुत्तं ॥१६३६॥

अथवा, यथेदं बाह्यं स्थूलशरीरं जीवोपनिबन्धनं जीवेन सह संबद्धं प्रत्यक्षोपलभ्यमानमेव तिष्ठति सर्वत्र चेष्टते, एवं भवान्तरं गच्छता जीवेन सह संयुक्तं कार्मणशरीरं प्रतिपद्यस्व। अथ ब्रूषे— धर्मा-ऽधर्मनिमित्तं जीवसंबद्धं बाह्यं शरीरं प्रवर्तते, तर्हि पृच्छामो भवन्तम्— तावपि धर्मा-ऽधर्मौ मूर्तौ वा भवेताम्, अमूर्तौ वा ?। यदि मूर्तौ, तर्हि तयोरप्यमूर्तेनात्मना सह कथं संबन्धः ?। अथ तयोस्तेन सहासौ कथमपि भवति, तर्हि कर्मणोऽपि तेन सार्धमयं कस्माद् न स्यात् ?। अथामूर्तौ धर्मा-ऽधर्मौ, तर्हि बाह्यमूर्तस्थूरशरीरेण सह तयोः संबन्धः कथं स्यात्, मूर्ता-ऽमूर्तयोर्भवदभिप्रायेण संबन्धायोगात् ?। न चासंबद्धयोस्तयोर्बाह्यशरीरचेष्टानिमित्तत्वमुपपद्यते, अतिप्रसङ्गात्। अथ मूर्तयोरपि तयोर्बाह्यशरीरेण मूर्तेण सहेष्यते संबन्धः, तर्हि जीव-कर्मणोस्तत्सद्भावे कः प्रद्वेषः ? इति ॥१६३६॥

अथापरावाक्षेप-परिहारौ प्राह—

[3]मुत्तेणामुत्तिमओ उवघाया-ऽणुग्गहा कहं होज्जा ?। जह विण्णाणाईणं मइरापाणोसहाईहिं ॥ १६३७ ॥

---

१ मूर्तस्यामूर्तिमता जीवेन कथं भवेत् संबन्ध ?। सौम्य ! घटस्येव नभसा यथा वा द्रव्यस्य क्रियया ॥१६३५॥

२ अथवा प्रत्यक्षमेव जीवोपनिबन्धनं यथा शरीरम्। तिष्ठति कार्मणमेवं भवान्तरे जीवसंयुक्तम् ॥ १६३६ ॥

३ मूर्तेणामूर्तिमत उपघाता ऽनुग्रहौ कथं भवेताम् ?। यथा विज्ञानादीनां मदिरापानौ-षधादिभिः ॥ १६३७ ॥

यथा गवाक्षैरुपलब्धानामर्थानां गवाक्षोपरमेऽपि देवदत्तः, अनुस्मरति चायमात्माऽन्ध-बधिरत्वादिकालेऽपीन्द्रियोपलब्धानर्थान्, अतः स तेभ्योऽर्थान्तरमिति। तथा, इन्द्रियेभ्यो व्यतिरिक्त आत्मा, तद्व्यापारेऽप्यर्थानुपलम्भात्, इह यो यद्व्यापारेऽपि यैरुपलभ्यानर्थान् नोपलभते स तेभ्यो भिन्नो दृष्टः, यथाऽस्थगितगवाक्षोऽप्यन्यमनस्कतयाऽनुपयुक्तोऽपश्यंस्तेभ्यो देवदत्त इति ॥ १६५८ ॥

अपरमपि भूतेन्द्रियव्यतिरिक्तात्मसाधकमनुमानमाह—

उवलम्भन्नेण विगारगहणओ तदहिओ धुवं अत्थि । पुव्वावरवातायणगहणविगाराइपुरिसो व्व ॥१६५९॥[1]

इह ध्रुवं निश्चितं तदधिकस्तेभ्य इन्द्रियेभ्यः समधिको भिन्नः समस्ति जीवः, अन्येनोपलभ्यान्येन विकारग्रहणात्, इह योऽन्येनोपलभ्यान्येन विकारं प्रतिपद्यते स तस्माद् भिन्नो दृष्टः, यथा प्रवरप्रासादोपरीतस्ततः पदपरिपाटीं कुर्वाणः पूर्ववातायनेन रमणीमवलोक्यापरवातायनेन समागतायास्तस्याः करादिना कुचस्पर्शादिविकारमुपदर्शयन् देवदत्तः, तथा चायमात्मा चक्षुषाऽम्लीकामश्नन्तं दृष्ट्वा रसनेन हृल्लास-लालास्रावादिविकारं प्रतिपद्यते, तस्मात् तयोर्भिन्न इति। अथवा, ग्रहणशब्दमिहाऽऽदानपर्यायं कृत्वाऽन्यथानुमानं विधीयते– इन्द्रियेभ्यो व्यतिरिक्त आत्मा, अन्येनोपलभ्यान्येन ग्रहणात्, इह य आदेयं घटादिकमर्थमन्येनोपलभ्यान्येन गृह्णाति स ताभ्यां भेदवान् दृष्टः, यथा पूर्ववातायनेन घटादिकमुपलभ्यापरवातायनेन गृह्णानस्ताभ्यां देवदत्तः, गृह्णाति च चक्षुषोपलब्धं घटादिकमर्थं हस्तादिना जीवः, ततस्ताभ्यां भिन्न इति ॥ १६५९ ॥

अथान्यदनुमानम्—

सव्वेंदिउवलद्धाणुसरणओ तदहिओऽणुमंतव्वो । जह पंचभिन्नविन्नाणपुरिसविन्नाणसंपन्नो ॥ १६६० ॥[2]

सर्वेन्द्रियोपलब्धार्थानुस्मरणतः कारणात् तदधिकोऽस्ति जीवः। दृष्टान्तमाह– यथा पञ्च च ते भिन्नविज्ञानाश्च पञ्चभिन्नविज्ञाना इच्छावशात् प्रत्येकं स्पर्श-रस-गन्ध-रूप-शब्दोपयोगवन्त इत्यर्थः, पञ्चभिन्नविज्ञानाश्च ते पुरुषाश्च पञ्चभिन्नविज्ञानपुरुषास्तेषां यानि स्पर्शादिविषयाणि विज्ञानानि तैः संपन्नस्तद्वेत्ता यः षष्ठः पुरुषस्तेभ्यः पञ्चभ्यो भिन्नः। इदमत्र तात्पर्यम्– य इह यैरुपलब्धानामर्थानामेकोऽनुस्मर्ता स तेभ्यो भिन्नो दृष्टः, यथेच्छानुविधायिशब्दादिभिन्नजातीयविज्ञानपुरुषपञ्चकात् तदशेषविज्ञानाभिज्ञः पुमान्, इच्छानुविधायिशब्दादिभिन्न-

1 उपलभ्यान्येन विकारग्रहणतस्तदधिको ध्रुवमस्ति। पूर्वापरवातायनग्रहणविकारादिपुरुष इव ॥ १६५९ ॥
2 सर्वेन्द्रियोपलब्धानुस्मरणतस्तदधिकोऽनुमन्तव्यः। यथा पञ्चभिन्नविज्ञानपुरुषविज्ञानसंपन्नः ॥ १६६० ॥

कर्मणि चाऽसति गौतम ! अग्निहोत्रादिना स्वर्गकामस्य वेदविहितं यत् किमपि स्वर्गादिफलं तद् विहन्यते, स्वर्गादेः शुभ-कर्महेतुत्वात्, तस्य च भवताऽनभ्युपगमात्। लोके च यद् दानादिक्रियाणां फलं स्वर्गादिकं प्रसिद्धं तदपि विहन्येत। अयुक्तं चेदम्, "[1]किरियाफलभावाओ दाणाईणं फलं किसीए व्व' इत्यादिना प्रतिविहितत्वादिति ॥ १६४० ॥

कर्मानभ्युपगमे च यदीश्वरादयो जगद्वैचित्र्यकर्तार इष्यन्ते तदप्ययुक्तमिति दर्शयन्नाह—

[2]कम्ममणिच्छंतो वा सुद्धं चिय जीवमीसराइं वा। मण्णसि देहाईणं जं कत्तारं न सो जुत्तो ॥ १६४१ ॥

कर्म वाऽनिच्छन्नग्निभूते गौतम ! यं कर्मरहितत्वात् शुद्धमेव जीवमात्मानमीश्वरा[3]व्यक्तकाल-नियति-यदृच्छादिकं वा देहादीनां कर्तारं मन्यसे, तत्राप्युच्यते– नासौ शुद्धजीवे-श्वरादिः कर्ता युज्यत इति ॥ १६४१ ॥

कुतः ? इत्याह—

[4]उवगरणाभावाओ निच्चेट्ठा-ऽमुत्तयाइओ वा वि। ईसरदेहारंभे वि तुल्लया वाऽणवत्था वा ॥ १६४२ ॥

नायमीश्वरजीवादिरकर्मा शरीरादिकार्याण्यारभते, उपकरणाभावात्, दण्डाद्युपकरणरहितकुलालवत्। न च कर्म विना शरीराद्यारम्भे जीवादीनामन्यदुपकरणं घटते, गर्भाद्यवस्थास्वन्योपकरणासंभवात्, शुक्र-शोणितादिग्रहणस्याप्यकर्मणोऽनुपपत्तेः। अथ-वा, अन्यथा प्रयोगः क्रियते–'निच्चेट्ठेत्यादि' नाकर्मा शरीराद्यारभते, निश्चेष्टत्वात्, आकाशवत्, तथाऽमूर्तत्वात्, आदिशब्दादशरीरत्वात्, निष्क्रियत्वात्, सर्वगतत्वात्, आकाशवदेव; तथा, एकत्वात्, एकपरमाणुवदित्यादि। अथोच्यते– शरीरवानीश्वरः, सर्वाण्यपि देहादिकार्याण्यारभते। नन्वीश्वरदेहारम्भेऽपि तर्हि तुल्यता पर्यनुयोगस्य, तथाहि– अकर्मा नारभते निजशरीरमीश्वरः, निरुपकरण-त्वात्, दण्डादिरहितकुलालवदिति। अथान्यः कोऽपीश्वरस्तच्छरीरारम्भाय प्रवर्तते। ततः सोऽपि शरीरवान्, अशरीरो वा ? । यद्य-शरीरः, तर्हि नारभते, निरुपकरणत्वात्, इत्यादि सैव वक्तव्यता। अथ शरीरवान्, तर्हि तच्छरीरारम्भेऽपि तुल्यता, सोऽप्यकर्मा निजशरीरं नारभते, निरुपकरणत्वादित्यादि। अथ तच्छरीरमन्यः शरीरवानारभते। अतस्तस्याप्यन्यः, तस्याप्यन्य इत्येवमनवस्था। अनिष्टं च सर्वमेतत्। तस्माद् नेश्वरो देहादीनां कर्ता, किन्तु कर्मसद्वितीयो जीव एव। निष्प्रयोजनश्चेश्वरो देहादीन् कुर्वन्नुन्मत्तकल्प एव

१ गाथा १६१५। २ कर्मानिच्छन् वा शुद्धमेव जीवमीश्वरादि वा। मन्यसे देहादीनां यं कर्तारं न स युक्तः ॥ १६४१ ॥ ३ क ग. 'रायुक्त'। ४ उपकरणाभावाद् निश्चेष्टा-ऽमूर्तत्वादितो वापि। ईश्वरदेहारम्भेऽपि तुल्यता वाऽनवस्था वा ॥ १६४२ ॥

श्चायमाद्यः स्तनाभिलाषः स शरीरादन्य एव, पूर्वशरीरपरित्यागेऽपीहत्याभिलाषकारणत्वात्। ज्ञानगुणश्चाभिलाषो न गुणिनमन्तरेण संभवति। अतो यस्तस्याश्रयभूतो गुणी स शरीरातिरिक्त आत्मेति।

आह– नन्वनैकान्तिकोऽयम्, सर्वस्याऽप्यभिलाषपूर्वकत्वानुपपत्तेः। न हि मोक्षाभिलाषो मोक्षाभिलाषपूर्वको घटते। तदयुक्तम्, अभिप्रायापरिज्ञानात्, यो हि स्तनाभिलाषः स सामान्येनैवाभिलाषपूर्वक इत्येतदेवास्माभिरुच्यते, न पुनर्विशेषेण ब्रूमः– 'स्तनाभिलाषोऽन्यस्तनाभिलाषपूर्वकः' इति। एवं च सामान्योक्तौ मोक्षाभिलाषपक्षेऽपि घटत एव, मोक्षाभिलाषस्यापि सामान्येनाऽन्याभिलाषपूर्वकत्वादिति ॥ १६६२ ॥

अनुमानान्तरमाह––

बालसरीरं[1] देहंतरपुव्वं इन्दियाइमत्ताओ। जुवदेहो बालादिव स जस्स देहो स देहि त्ति ॥ १६६३ ॥

बालशरीरं शरीरान्तरपूर्वकम्, इन्द्रियादिमत्त्वात्, इह यदिन्द्रियादिमत्, तदन्यदेहपूर्वकं दृष्टम्, यथा युवशरीरं बालदेहपूर्वकम्, यत्पूर्वकं चेदं बालशरीरं तदस्मात् शरीरादर्थान्तरम्, तदत्ययेऽपीहत्यशरीरोपादानात्, यस्य च तच्छरीरं स भवान्तरयायी शरीरादर्थान्तरभूतो देहवानस्त्यात्मा, न पुनः शरीरमेवात्मेति सिद्धमिति ॥ १६६३ ॥

अनुमानान्तरमाह––

अण्णसुह-दुक्खपुव्वं[2] सुहाइ बालस्स संपइसुहं व। अणुभूइमयत्तणओ अणुभूइमओ य जीवो त्ति॥ १६६४ ॥

अन्यसुखपूर्वकमिदमाद्यं बालसुखम्, अनुभवात्मकत्वात्, सांप्रतसुखवत्, यत्सुखपूर्वकं चेदमाद्यं सुखम्, तच्छरीरादन्यदेव, तदत्ययेऽपीहत्यसुखकारणत्वात्। गुणश्चायम्, स च गुणिनमन्तरेण न संभवति, अतो यस्तस्याश्रयभूतो गुणी स देहादर्थान्तरम्, इति सुखानुभूतिमयो जीव इति सिद्धम्। एवं दुःख-राग-द्वेष-भय-शोकादयोऽप्यायोजनीया इति ॥ १६६४ ॥

अथ प्राग् जीवकर्मसिद्धावुक्तान्यप्यनुमानान्यत्रापि जीवसिद्धिप्रस्तावाद् मन्दस्मृत्यनुग्रहार्थं पुनरप्याह––

संताणोऽणाई[3] उ परोप्परं हेउ-हेउभावाओ। देहस्स य कम्मस्स य गोयम ! बीयं-कुराणं व ॥ १६६५ ॥

१ बालशरीर देहान्तरपूर्वमिन्द्रियादिमत्त्वात्। युवदेहो बालादिव स यस्य देह स देहीति ॥ १६६३ ॥
२ अन्यसुख-दु.खपूर्वं सुखादि बालस्य साम्प्रतसुखमिव। अनुभूतिमयत्वतोऽनुभूतिमयश्च जीव इति ॥ १६६४ ॥ ३ गाथा १६३९।

मूर्तत्वात्, आकाशवत्, इत्यभिहितमेव। अथ मूर्तवस्तुधर्मोऽसौ, तर्हि सिद्धसाध्यता, कर्मणोऽपि पुद्गलास्तिकायपर्यायविशेषत्वेनास्माभिरभ्युपगतत्वादिति।

अपिच, "पुरुष एवेदं सर्वम्–" इत्यादिवेदवाक्यश्रवणाद् भवतः कर्मास्तित्वसंशयः। एषां हि वेदपदानामयमर्थस्तव चेतसि विपरिवर्तते– पुरुष आत्मा, एवकारोऽवधारणे, स च पुरुषातिरिक्तस्य कर्म-प्रकृती-श्वरादेः सत्ताऽव्यवच्छेदार्थः, इदं सर्वं– प्रत्यक्षं वर्तमानं चेतनाचेतनस्वरूपम्, 'ग्निं' इति वाक्यालङ्कारे, यद् भूतम्– अतीतम्, यच्च भाव्यं– भविष्यद् मुक्तिसंसारावपि स एवेत्यर्थः। उतामृतत्वस्येशान इति। उतशब्दोऽप्यर्थे। अपिशब्दश्च समुच्चये। अमृतत्वस्य च– अमरणभावस्य मोक्षस्येशानः प्रभुरित्यर्थः। यदन्नेनातिरोहतीति। चशब्दस्य लुप्तस्य दर्शनाद् यच्चान्नेन– आहारेण, अतिरोहति– अतिशयेन वृद्धिमुपैति। यदेजति– चलति, पश्वादि। यद् नैजति– न चलति पर्वतादि। यद् दूरे मेर्वादि। यदु अन्तिके– उशब्दोऽवधारणे, यदन्तिके समीपे तदपि पुरुष एवेत्यर्थः। यदन्तः– मध्ये, अस्य– चेतनाचेतनस्य सर्वस्य; यदेव सर्वस्याप्यस्य बाह्यतः; तत् सर्वं पुरुष एवेति। अतस्तद्व्यतिरिक्तस्य कर्मणः किल सत्ता दुःश्रद्धेयेति ते मतिः। तथा, "विज्ञानघन एवैतेभ्यो भूतेभ्यः" इत्यादीन्यपि वेदपदानि कर्माभावप्रतिपादकानि मन्यसे त्वम्, अत्राप्येवकारस्य कर्मादिसत्ताव्यवच्छेदपरत्वात्।

तदेवमेतेषां "पुरुष एवेदम्–" इत्यादीनां "विज्ञानघन"– आदीनां च वेदपदानां नायमर्थो यो भवतश्चेतसि वर्तते, किन्तु तेषां पदानामयं भावार्थः–"पुरुष एवेदं सर्वम्–" इत्यादीनि तावत् पुरुषस्तुतिपराणि जात्यादिमदत्यागहेतोरद्वैतभावनाप्रतिपादकानि च वर्तन्ते, न तु कर्मसत्ताव्यवच्छेदकानि। वेदवाक्यानि हि कानिचिद् विधिवादपराणि, कान्यप्यर्थवादप्रधानानि, अपराणि त्वनुवादपराणि। तत्र "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादीनि विधिवादपराणि। अर्थवादस्तु द्विधा– स्तुत्यर्थवादः, निन्दार्थवादश्च। तत्र "पुरुष एवेदं सर्वम्–" इत्यादिकः स्तुत्यर्थवादः, तथा तत्र "स सर्वविद् यस्यैषा महिमा भुवि दिव्ये ब्रह्मपुरे ह्येष व्योम्नि आत्मासु प्रतिष्ठितस्तमक्षरं वेदयते यस्तु स सर्वज्ञः सर्ववित् सर्वमेवाविवेश" इति; तथा, "एकया पूर्णयाहूत्या सर्वान् कामानवाप्नोति" इत्यादिकश्च सर्वोऽपि स्तुत्यर्थवादः। "एकया पूर्णया" इत्यादिविधिवादोऽपि कस्माद् न भवति? इति चेत्। उच्यते– शेषस्याग्निहोत्राद्यनुष्ठानस्य वैयर्थ्यप्रसङ्गादिति। "एष वः प्रथमो यज्ञो योऽग्निष्टोमः, योऽनेनानिष्ट्वाऽन्येन यजते स गर्तमभ्यपतत्" अत्र पशुमेधादीनां प्रथमकरणं निन्द्यत इत्ययं निन्दार्थवादः। "द्वादश मासाः संवत्सरः" "अग्निरुष्णः" "अग्निर्हिमस्य भेषजम्" इत्यादीनि तु वेदवाक्यान्यनुवादप-



१ घ छ 'दिप्रथमगणधरालिखितवे'। २ घ ज. 'पूर्वया'

अथ पराभिप्रायमाशङ्क्य प्रतिविधातुमाह—

अह मन्नसि खणिओ वि हु सुमरइ विन्नाणसंतइगुणाओ। तहवि सरीरादण्णो सिद्धो विण्णाणसंताणो ॥१६७२॥

अथैवं मन्यसे त्वम्– क्षणिकोऽपि क्षणभङ्गुरोऽपि जीवः पूर्ववृत्तान्तं स्मरत्येव । कुतः? इत्याह– विज्ञानानां विज्ञानक्षणानां संततिः संतानस्तस्या गुणस्तत्सामर्थ्यरूपस्तस्मादिति, क्षणसंतानस्यावस्थितत्वात् क्षणनश्वरोऽपि स्मरतीत्यर्थः। अत्रोत्तरमाह– ननु तथाप्येवमपि सति ज्ञानलक्षणसन्तानस्याग्रेतनशरीरसंक्रान्तेर्भवान्तरसद्भावः सिध्यति, सर्वशरीरेभ्यश्च विज्ञानसंतानस्येत्थमर्थान्तरता साधिता भवति, अविच्छिन्नविज्ञानसन्तानात्मकश्चैवं शरीरादर्थान्तरभूत आत्मा सिद्धो भवतीति। तदेवं परभवमङ्गीकृत्याविनष्टस्मरणमावेदितम् ॥ १६७२ ॥

इदानीमिहभवमङ्गीकृत्याह–। अथवा, क्षणिकत्वमभ्युपगम्योक्तम्, अधुना तत् क्षणिकमेव न भवतीत्याह—

न[3] य सव्वहेव खणिअं नाणं पुव्वोवलद्धसरणाओ। खणिओ न सरइ भूयं जह जम्माणंतरविनट्ठो॥१६७३॥

न च सर्वथैव क्षणिकं ज्ञानं वक्तुं युज्यते। कथञ्चित्तु क्षणिकतां भगवानपीच्छत्येव, इति 'सर्वथैव' इत्युक्तम्। कस्मात् पुनर्ज्ञानं न क्षणिकम्? इत्याह– पूर्वोपलब्धस्य बालकालाद्यनुभूतस्यार्थस्य वृद्धत्वाद्यवस्थायामपि स्मरणदर्शनात्। न चैतदेकान्तक्षणिकत्वे सत्युपपद्यते। कुतः? इत्याह– 'खणिओ इत्यादि' यः क्षणिको नायं भूतमतीतं स्मरति, यथा जन्मानन्तरविनष्टः, एकान्तक्षणिकं चेष्यते ज्ञानम्, अतः स्मरणाभावप्रसङ्ग इति ॥ १६७३ ॥

क्षणिकज्ञानपक्षे दूषणान्तरमप्याह—

जस्सेगमेगबंधणमेगंतेण खणियं य विण्णाणं। सव्वखणियविण्णाणं तस्साजुत्तं कदाचिदवि ॥१६७४॥

यस्य वादिनो बौद्धस्य 'एकविज्ञानसंततयः सत्त्वाः' इति वचनादेकमेवासहायं ज्ञानं तस्य 'सर्वमपि वस्तु क्षणिकम्' इत्येवंभूतं विज्ञानं कदाचिदपि न युक्तमिति संबन्धः। इष्यते च सर्वक्षणिकताविज्ञानं सौगतैः, 'यत् सत् तत् सर्वं क्षणिकम्' तथा, 'क्षणिकाः

१ अथ मन्यसे क्षणिकोऽपि खलु स्मरति विज्ञानसंततिगुणात्। तथापि शरीरादन्य सिद्धो विज्ञानसतानः ॥ १६७२ ॥ २ घ ज. 'कत्वमे'।
३ न च सर्वथैव क्षणिक ज्ञान पूर्वोपलब्धस्मरणात्। क्षणिको न स्मरति भूत यथा जन्मानन्तरविनष्ट ॥ १६७३ ॥
४ यस्यैकमेकबन्धनमेकान्तेन क्षणिकं च विज्ञानम्। सर्वक्षणिकाविज्ञानं तस्यायुक्तं कदाचिदपि ॥ १६७४ ॥

[1]सीसत्तेणोवगया संपयमिंद-ग्गिभूइणो जस्स । तिहुयणकयप्पणामो स महाभागोऽभिगमणिज्जो ॥१६४६॥

तदभिगमेण-वंदणो-वासणाइणा होज्ज पूयपावोऽहं । वोच्छिण्णसंसओ वा वोत्तुं पत्तो जिणसगासे ॥१६४७॥

पूतपापो विशुद्धपापोऽपगतपाप इत्यर्थः । शेषं सुगमम् ॥ १६४६ ॥ १६४७ ॥

ततः किम्? इत्याह—

[3]आभट्ठो य जिणेणं जाइ-जरा-मरणविप्पमुक्केणं । नामेण य गोत्तेण य सव्वण्णू सव्वदरिसी णं ॥१६४८॥

व्याख्या पूर्ववदिति ॥ १६४८ ॥

इत्थं सगौरवं साञ्जसमाभाषितोऽपि भगवता सकलत्रैलोक्यातिशायिनीं तस्य रूपादिसमृद्धिमभिवीक्ष्य क्षोभादसमर्थो हृद्गत-संशयं प्रष्टुं विस्मयात् तूर्णीमाश्रितः पुनरप्युक्तः । किम्? इत्याह—

[4]तज्जीव तस्सरीरं ति संसओ न वि य पुच्छसे किंचि । वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥१६४९॥

हे आयुष्मन् वायुभूते! 'तदेव वस्तु जीवस्तदेव च शरीरम्, न पुनरन्यत्' इत्येवंभूतस्तव संशयो वर्तते, नापिच तदपनोदार्थं किञ्चिद् मा पृच्छसि । ननु यज्ञपाटाद् निर्गच्छता त्वयाऽभिहितमासीत्– 'वोच्छिण्णसंसओ वा' इति, तत् किमिति न किञ्चित् पृच्छसि? । अयं च संशयस्तव विरुद्धवेदपदश्रवणनिवन्धनो वर्तते । तेषां च वेदपदानामर्थं त्वं न जानासि, तेन संशयं कुरुषे । तेषां चायं वक्ष्यमाणलक्षणोऽर्थ इति ॥ १६४९ ॥

यथा च वायुभूतेरयं संशयस्तथा विशेषत एव भाष्यकारो भावयन्नाह—

[5]वसुहाइभूयसमुदयसंभूया चेयण त्ति ते संका । पत्तेयमदिट्ठा वि हु मज्जंगमउ व्व समुदाये ॥ १६५० ॥

---

१ शिष्यत्वेनोपगतौ सांप्रतमिन्द्रा-ऽग्निभूती यस्य । त्रिभुवनकृतप्रणामः स महाभागोऽभिगमनीयः ॥ १६४६ ॥
तदभिगमन-वन्दनो-पासनादिना भवेयं पूतपापोऽहम् । व्यवच्छिन्नसंशयो वोक्त्वा प्राप्तो जिनसकाशे ॥१६४७॥ २ घ ज. 'मवं'। ३ गाथा १६०९।
४ तज्जीवस्तच्छरीरमिति संशयो नापि च पृच्छसि किञ्चित्? । वेदपदानां चार्थं न जानासि तेषामयमर्थः ॥ १६४९ ॥
५ वसुधादिभूतसमुदयसंभूता चेतनेति तव शङ्का । प्रत्येकमदृष्टाऽपि खलु मद्याङ्गमद इव समुदाये ॥ १६५० ॥

विज्ञानसाम्यादन्यान्यपि विज्ञानानि क्षणिकानि, विषयसाम्याच्चान्येऽपि विषयाः सर्वेऽपि क्षणिकाः, इत्येवं स्वं च विषयाश्च स्वविषयास्तदनुमानात् सर्वस्यापि वस्तुस्तोमस्य क्षणिकत्वादि गृह्यते। अत्र दूषणमाह– 'तं पीत्यादि' तदपि न युक्तं न घटमानकम्। कुतः? इत्याह– यतस्तत् स्वविषयानुमानमन्येषां विज्ञानानामन्यविषयाणां च पक्षीकृतानां सत्तादिप्रसिद्धावेव युज्यते। नहि सत्त्वेनाप्यप्रसिद्धे धर्मिणि क्षणिकतादिधर्मः साध्यमानो विभ्राजते। को हि नाम शब्दादिष्वादावेव सत्त्वेनाप्रतीतेषु कृतकत्वादिनाऽनित्यत्वादिधर्मान् साधयति, 'तत्र पक्षः प्रसिद्धो धर्मी' इत्यादिवचनात्?। न चेदमेकमेकालम्बनं क्षणिकं च ज्ञानमेतद् बोद्धुं शक्नोति यदुत– अन्यज्ञानानि सन्ति, तद्विषयाश्च विद्यन्ते, तेषां च विषयाणां स्वविषयज्ञानजननस्वभावादय एवंभूता धर्माः सन्तीति। एतदपरिज्ञाने च कथमेतेषां क्षणिकतां साधयिष्यति, धर्मिण एवाप्रसिद्धेः?।

स्यादेतत्, स्वविषयानुमानादेवान्यविज्ञानादिसत्तापि सेत्स्यत्येव, तथाहि– यथाऽहमस्मि तथान्यान्यपि ज्ञानानि सन्ति, यथा च मद्विषयो विद्यते, एवमन्येऽपि ज्ञानविषया विद्यन्त एव; यथा चाहं मद्विषयश्च क्षणिकः, एवमन्यज्ञानानि तद्विषयाश्च क्षणिका एवेति, एवं सर्वेषां सत्त्वं क्षणिकता च स्वविषयानुमानादेव सेत्स्यतीति। एतदप्ययुक्तम्, यतः सर्वक्षणिकताग्राहकं ज्ञानं क्षणनश्वरत्वाज्जन्मानन्तरं 'मृत इवाहस्मि, क्षणिकं च' इत्येवमात्मानमपि नावबुध्यते, अन्यपरिज्ञानं तु तस्य दूरोत्सारितमेव। किञ्च, तत् स्वविषयमात्रस्यापि क्षणिकतां नावगच्छति, समानकालमेव द्वयोरपि विनष्टत्वात्। यदि हि स्वविषयं विनश्यन्तं दृष्ट्वा तद्गतक्षणिकतां निश्चित्य स्वयं पश्चात् कालान्तरे तद् विनश्येत्, तदा स्यात् तस्य स्वविषयक्षणिकताप्रतिपत्तिः, न चैतदस्ति, ज्ञानस्य विषयस्य च निजानिजक्षणं जनयित्वा समानकालमेव विनाशाभ्युपगमात्। न च स्वसंवेदनप्रत्यक्षेण, इन्द्रियप्रत्यक्षेण वा क्षणिकता गृह्यत इति सौगतैरिष्यते, अनुमानगम्यत्वेन तस्यास्तैरभ्युपगमादिति ॥ १६७६ ॥

अत्र परस्योत्तरमाशङ्क्य निराचिकीर्षुराह—

जाणेज्ज[१] वासणा उ सा वि हु वासित्त-वासणिज्जाणं। जुत्ता समेच्च दोण्हं न उ जम्माणंतरहयस्स ॥१६७७॥

स्यादेतत् पूर्वपूर्वविज्ञानक्षणैरुत्तरोत्तरविज्ञानक्षणानामेवंभूता वासना जन्यते, ययाऽन्यविज्ञान-तद्विषयाणां सत्त्व-क्षणिकतादीन् धर्मानेकमेकालम्बनं क्षणिकमपि च विज्ञानं जानाति, अतः सर्वक्षणिकताज्ञानं सौगतानां न विरुध्यते। तदप्ययुक्तम्, यतः सापि

१ जानीयाद् वासना तु सापि खलु वासि-वासनीययोः। युक्ता समेत्य द्वयोर्न तु जन्मानन्तरहतस्य ॥ १६७७ ॥

तैलम्; यत्तु तेषां समुदाये भवति न तस्य पृथग् व्यवस्थितेषु तेषु सर्वथाऽनुपलम्भः, यथैकैकतिलावस्थायां तैलस्य, सर्वथा नोपलभ्यते च भूतेषु प्रत्येकावस्थायां चेतना, तस्माद् नासौ तत्समुदायमात्रप्रभवा, किन्त्वर्थापत्तेरेवान्यत् किमपि जीवलक्षणं कारणान्तरं भूतसमुदायातिरिक्तं तत्र संघट्टितं, यत इयं प्रभवतीति प्रतिपत्तव्यम्। आह– 'प्रत्येकावस्थायां सर्वथाऽनुपलम्भात्' इत्यनैकान्तिकोऽयं हेतुः, प्रत्येकावस्थायां सर्वथाऽनुपलब्धस्यापि मदस्य मद्याङ्गसमुदाये दर्शनात्, इत्याशङ्क्याह— 'मज्जंगेसु इत्यादि' धातकीकुसुमादिषु मद्याङ्गेषु पुनर्विष्वक् पृथग् न सर्वथा मदो नास्ति, अपितु या च यावती च मदमात्रा पृथगपि तेष्वस्त्येवेत्यर्थः। ततो नानैकान्तिकता हेतोरिति ॥ १६५२ ॥

भूतेष्वप्येवं भविष्यतीति चेत्। नैतदेवम्। कुतः ? इत्याह—

[2]भमि-घणि-वितण्हयाई पत्तेयं पि हु जहा मयंगेसु। तह जइ भूएसु भवे चेया तो समुदये होज्जा ॥१६५३॥

यथा प्रत्येकावस्थायां धातकीकुसुमेषु या च यावती च भ्रमिश्रितभ्रमापादनशक्तिरस्ति, गुड-द्राक्षे-क्षुरसादिषु पुनर्घ्राणितृप्तिजननशक्तिरस्ति, उदके तु वितृष्णताकरणशक्तिरस्ति, आदिशब्दादन्येष्वपि मद्याङ्गेष्वन्यापि यथासंभवं शक्तिर्वाच्या; तथा तेनैव प्रकारेण व्यस्तेष्वपि पृथिव्यादिभूतेषु यदि काचिच्चैतन्यशक्तिरभविष्यत्, तदा तत्समुदाये संपूर्णा स्पष्टा चेतना स्यात्, न चैतदस्ति, तस्माद् न भूतसमुदायमात्रप्रभवेयमिति ॥ १६५३ ॥

ननु यदि प्रत्येकावस्थायां मद्याङ्गेषु सर्वथैव मदशक्तिर्न स्यात् तदा किं दूषणं स्यात् ? इत्याह—

[3]जइ वा सव्वाभावो वीसुं तो किं तदंगानियमोऽयं। तस्समुदयनियमो वा अन्नेसु वि तो हवेज्जाहि ॥ १६५४॥

यदि च मद्याङ्गेषु पृथगवस्थायां सर्वथैव मदशक्त्यभावः, तर्हि कोऽयं तदङ्गनियमः– कोऽयं धातकीकुसुमादीनां मद्याङ्गतानियमः, तत्समुदायनियमो वा– किमिति मद्यार्थी धातकीकुसुमादीन्येवान्वेषयति, तत्समुदायं किमिति नियमेन मीलयति ? इत्यर्थः, नन्वन्येष्वपि च भस्मा-ऽश्म-गोमयादिषु समुदितेषु मद्यं भवेदिति ॥ १६५४ ॥

अथ मद्याङ्गेषु प्रत्येकावस्थायामपि मदशक्तिसद्भावं साधितमाकर्ण्य कदाचित् पर एवं ब्रूयात्। किम् ? इत्याह—

१ घ. ज. 'घटितं'। २ भ्रमि-घ्राणि-वितृष्णतादयः प्रत्येकमपि खलु यथा मदाङ्गेषु। तथा यदि भूतेषु भवेच्चेतना ततः समुदये भवेत् ॥ १६५३ ॥
३ यदि वा सर्वाभावो विष्वक् ततः किं तदङ्गनियमोऽयम्। तत्समुदयनियमो वाऽन्येष्वपि ततो भवेत् ॥ १६५४ ॥

एते दोषाः प्रसजन्ति, तर्हि कामी दोषा न भवन्ति ? इत्याह– 'न उ ठियेत्यादि' न त्वस्मदभ्युपगते जीवेऽभ्युपगम्यमान एते दोषाः प्रसजन्ति । कथंभूते जीवे ? स्थितसंभूतच्युतविज्ञानमये– कथञ्चिद् द्रव्यरूपतया स्थितम्, कथञ्चितूत्तरपर्यायेण संभूतम्, कथञ्चि-त्पुनः पूर्वपर्यायेण च्युतं विनष्टं यद् विज्ञानं तन्मय इत्यर्थः । तस्मादमुमेवोत्पाद-व्यय-ध्रौव्ययुक्तं शरीरादर्थान्तरभूतमस्मदभ्युपगतमा-त्मानं समस्तव्यवहारसिद्धये प्रतिपद्यस्वेति ॥ १६७८ ॥ १६७९ ॥

नन्वेवंभूतस्यात्मनः कथंभूतानि ज्ञानानि प्रवर्तन्ते, कस्माच्च हेतोस्तानि जायन्ते ? इत्याह—

तस्स विचित्तावरणखओवसमजाइं चित्तरूवाइं । खणियाणि य कालंतरवित्तीणि य मइविहाणाइं ॥ १६८० ॥

मतेर्मतिज्ञानस्य विधानानि नानाभेदरूपाणि तस्य यथोक्तरूपस्यात्मनः प्रवर्तन्ते । कथंभूतानि ? इत्याह– विचित्रो योऽसौ मतिज्ञानावरणक्षयोपशमस्ततो जातानि, अत एव स्वकारणभूतक्षयोपशमवैचित्र्याद् विचित्ररूपाणि । तथा, पर्यायरूपतया क्षणिकानि, द्रव्यरूपतया तु नित्यत्वात् कालान्तरवृत्तीनि । उपलक्षणं च मतिविधानानि, श्रुता-ऽवधि-मनःपर्यायविधानान्यपि यथासंख्यं श्रुता-ऽव-धि-मनःपर्यायज्ञानावरणक्षयोपशमवैचित्र्याद् विचित्ररूपाणि यथासंभवं तस्य द्रष्टव्यानि । केवलज्ञानं त्वेकमेवाविकल्पं केवलज्ञानावरण-क्षयादेव द्रष्टव्यमिति ॥ १६८०॥

एतदेवाह—

[2]निच्चो संताणो सिं सव्वावरणपरिसंखए जं च । केवलमुदियं केवलभावेणाणंतमविगप्पं ॥ १६८१ ॥

'सिं ति' एतेषां च मतिज्ञानादिविधानानामविशेषितज्ञानमात्ररूपसंतानो नित्योऽव्यवच्छिन्नरूपः । केवलज्ञानं त्वविकल्पं भेदरहितमुदितमाख्यातं भगवद्भिः, यतः सर्वस्यापि निजावरणस्य क्षय एव तदुपजायते । अतोऽविकल्पं केवलभावेनानन्तकाला-वस्थायित्वात्, अनन्तार्थविषयत्वाच्चानन्तमिति ॥ १६८१ ॥

पुनर्वायुभूतिः संदिहानः प्राह—

[3]सो जइ देहादन्नो तो पविसंतो व निस्सरंतो वा । कीस न दीसइ, गोयम ! दुविहाऽणुवलद्धि उ सा य ॥१६८२॥

---

१ तस्य विचित्रावरणक्षयोपशमजानि चित्ररूपाणि । क्षणिकानि च कालान्तरवृत्तीनि च मतिविधानानि ॥ १६८० ॥
२ नित्य· सन्तान एषां सर्वावरणपरिसंक्षये यच्च । केवलमुदितं केवलभावेनानन्तमविकल्पम् ॥ १६८१ ॥
३ स यदि देहादन्यस्ततः प्रविशन् वा नि.सरन् वा । कस्माद् न दृश्यते, गोतम ! द्विविधाऽनुपलब्धिस्तु सा च ॥ १६८२ ॥

किं पुनस्तदात्मसाधकमनुमानम्? इत्याह—

[1]भूइंदियोवलद्धाणुसरणओ तेहिं भिन्नरूवस्स । चेया पंचगवक्खोवलद्धपुरिसस्स वा सरओ ॥१६५७॥

तेभ्यो भूतेन्द्रियेभ्यो भिन्नरूपस्य कस्यापि धर्मश्चेतनेति प्रतिज्ञा । भूतेन्द्रियोपलब्धार्थानुस्मरणादिति हेतुः । यथा पञ्चभिर्गवाक्षैरुपलब्धानर्थाननुस्मरतस्तदतिरिक्तस्य कस्यापि देवदत्तादेः पुरुषस्य चेतनेति दृष्टान्तः । अयमत्र तात्पर्यार्थः– इह य एको यैरनेकैरुपलब्धानर्थाननुस्मरति स तेभ्यो भेदवान् दृष्टः, यथा पञ्चभिर्गवाक्षैरुपलब्धानर्थाननुस्मरन् देवदत्तः, यश्च यस्माद् भूतेन्द्रियात्मकसमुदायाद् भिन्नो न भवति, किं तर्हि? अनन्यः, नायमेकोऽनेकोपलब्धानामर्थानामनुस्मर्ता, यथा शब्दादिग्राहकमनोविज्ञानविशेषः, तैरुपलभ्यानुस्मरतोऽपि च तदनतिरिक्तत्वे देवदत्तस्यापि गवाक्षमात्रप्रसङ्गो बाधकं प्रमाणम् । इन्द्रियाण्येवोपलभन्ते, न पुनस्तैरन्य उपलभत इति चेत् । न, 'तदुपरमेऽपि तदुपलब्धार्थानुस्मरणात्, तद्व्यापारे च कदाचिदनुपलम्भात्' इत्यनन्तरमेव वक्ष्यमाणत्वादिति ॥ १६५७ ॥

अनुमानान्तरमप्यात्मसिद्धये प्राह—

[2]तदुवरमे वि सरणओ तव्वावारे वि नोवलंभाओ । इंदियभिन्नस्स मई पंचगवक्खाणुभविणो व्व ॥१६५८॥

इन्द्रियेभ्यो भिन्नस्यैव कस्यापीयं घटादिज्ञानलक्षणा मतिरिति प्रतिज्ञा । तदुपरमेऽपि– अन्धत्व-बाधिर्याद्यवस्थायामिन्द्रियव्यापाराभावेऽपि, तद्द्वारेणोपलब्धानामर्थानामनुस्मरणादिति हेतुः । अथवा, अस्यामेव प्रतिज्ञायां तद्व्यापारेऽपि– इन्द्रियव्यापृतावपि कदाचिदनुपयुक्तावस्थायाम्, वस्त्वनुलम्भादित्यपरो हेतुः । यदि हीन्द्रियाण्येव द्रष्टॄणि भवेयुः, तर्हि किमिति विस्फारिताक्षस्यापि प्रगुणश्रोत्रादीन्द्रियवर्गस्यापि योग्यदेशस्थितानामपि रूप-शब्दादिवस्तूनामनुपयुक्तस्य अन्यमनस्कस्य शून्यचित्तस्योपलम्भो न भवति? । ततो ज्ञायते– इन्द्रियग्रामव्यतिरिक्तस्यैव कस्यचिदयमुपलम्भः, यथा पञ्चभिर्गवाक्षैर्योषिदादिवस्तून्यनुभवितुर्दर्शकस्येति दृष्टान्तः ।

अत्रापि प्रयोगाभ्यां तात्पर्यमुपदर्श्यते, तद्यथा– इह यो [3]यदुपरमेऽपि यैरुपलब्धानामर्थानामनुस्मर्ता स तेभ्यो व्यतिरिक्तो दृष्टः,

---

१ भूतेन्द्रियोपलब्धानुस्मरणतस्तेभ्यो भिन्नरूपस्य । चेतना पञ्चगवाक्षोपलब्धपुरुषस्येव स्मरतः ॥ १६५७ ॥

२ तदुपरमेऽपि स्मरणतस्तद्व्यापारेऽपि नोपलम्भात् । इन्द्रियभिन्नस्य मतिः पञ्चगवाक्षानुभविन इव ॥ १६५८ ॥ ३ क ख. ग. 'यदुप' ।

वेदोक्तद्वारेणापि देहव्यतिरिक्तमात्मानं साधयितुमाह—

[1]देहाणण्णे व जिए जमग्गिहोत्ताइं सग्गकामस्स । वेयविहियं विहण्णइ दाणाइफलं च लोयम्मि ॥१६८४॥

शरीरमात्रे जीवे सति गौतम ! यत् स्वर्गकामस्य वेदविहितमग्निहोत्राद्यनुष्ठानं तद् विहन्यते, देहस्य वह्निनाऽत्रैव भस्मीकरणात्, जीवाभावे कस्यासौ स्वर्गो भवेत् ? इति भावः । दानादिफलं चानुभवितुरभावात् कस्य भवेत् ? इति ॥ १६८४ ॥

विरुद्धवेदपदश्रवणनिबन्धनश्चैष वायुभूतेर्जीव-शरीरयोर्भेदाभेदविषयः संशयः । अतो वेदपदार्थकथनद्वारेणापि तमपाकुर्वन्नाह—

[2]विण्णाणघणाईणं वेयपयाणं तमत्थमविदंतो । देहाणण्णं मन्नसि ताणं च पयाणमयमत्थो ॥ १६८५ ॥

विज्ञानघनाख्यः पुरुष एवायं भूतेभ्योऽर्थान्तरमित्यादिव्याख्या पूर्ववदेव। अत एव प्रागुक्तम्– 'शरीरतया परिणतो भूतसंघातोऽयं विद्यमानकर्तृकः, आदिमत्प्रतिनियताकारत्वात्, घटवद्, यश्च तत्कर्ता स तदातिरिक्तो जीवः' इति । भूतातिरिक्तात्मप्रतिपादकानि च वेदवाक्यानि तवापि प्रतीतान्येव । तद्यथा– "सत्येन लभ्यस्तपसा ह्येष ब्रह्मचर्येण नित्यं ज्योतिर्मयो विशुद्धो यं पश्यन्ति धीरा यतयः संयतात्मानः" इत्यादि । तदेवं सर्वेषामपि वेदवाक्यानां भूतातिरिक्तस्य जीवस्य प्रतिपादकत्वाद् भूतेभ्योऽतिरिक्तं जीवं प्रतिपद्यस्वेति ॥ १६८५ ॥

एवं भगवता संशयेऽपनीते सति वायुभूतिः किं कृतवान् ? इत्याह—

[3]छिन्नम्मि संसयम्मि जिणेणं जरा-मरणविप्पमुक्केणं । सो समणो पव्वइओ पंचहिं सह खंडियसएहिं ॥१६८६॥

व्याख्या पूर्ववत् ॥ इति द्विचत्वारिंशद्गाथार्थः ॥ १६८६ ॥

॥ इति तृतीयो गणधरवादः समाप्तः ॥

---

१ देहानन्ये वा जीवे यदग्निहोत्रादि स्वर्गकामस्य । वेदविहितं विहन्यते दानादिफल च लोके ॥ १६८४ ॥
२ विज्ञानघनादीना वेदपदाना त्वमर्थमविदन् । देहानन्यं मन्यसे तेषा च पदानामयमर्थः ॥ १६८५ ॥ ३ गाथा १६०४ ।

जातीयविज्ञानेन्द्रियपञ्चकाशेषविज्ञानवेत्ता चायमेक आत्मा, तस्मादिन्द्रियपञ्चकाद् भिन्न एवेति। शब्दादिभिन्नविज्ञानपुरुषपञ्चकस्यैव पृथगिन्द्रियाणामुपलब्धिप्रसङ्गतोऽनिष्टापादनाद् विरुद्धोऽयं हेतुरिति चेत्। न, इच्छानुविधायिविशेषणात्, इच्छायाश्चेन्द्रियाणामसंभवात्, सहकारिकारणतयोपलब्धिकारणमात्रताया इन्द्रियेष्वपि सद्भावात्, उपचारतस्तेषामप्युपलब्धेरविरोधाददोषः। किञ्च, प्रतिपत्त्युपायमात्रमेवैतत्, न ह्यतीन्द्रियेष्वर्थेष्वेकान्तेनैव युक्त्यन्वेषणपरैर्भाव्यम्; उक्तं च—

"आगमश्चोपपत्तिश्च संपूर्णं दृष्टिकारणम्। अतीन्द्रियाणामर्थानां सद्भावप्रतिपत्तये ॥ १ ॥"

इति ॥ १६६० ॥

अथापरमपि भूतव्यतिरिक्तात्मसाधकमनुमानमाह—

[1]विण्णाणंतरपुव्वं बालण्णाणमिह नाणभावाओ। जह बालनाणपुव्वं जुवनाणं तं च देहहिअं ॥१६६१॥

अन्यविज्ञानपूर्वकमिदं बालविज्ञानम्, विज्ञानत्वात्, इह यद् विज्ञानं तदन्यविज्ञानपूर्वकं दृष्टम्, यथा बालविज्ञानपूर्वकं युवविज्ञानम्, यद्विज्ञानपूर्वकं चेदं बालविज्ञानं तच्छरीरादन्यदेव, पूर्वशरीरत्यागेऽपीहत्यविज्ञानकारणत्वात्. तस्य च विज्ञानस्य गुणत्वेन गुणिनमात्मानमन्तरेणासंभवात्, तच्छरीरव्यतिरिक्तमात्मानं व्यवस्यामः, न तु शरीरमेवात्मेति। विज्ञानत्वादिति प्रतिज्ञार्थैकदेशत्वादसिद्धो हेतुरिति चेत्। न, विशेषस्य पक्षीकृतत्वात्। भवति च विशेषे पक्षीकृते सामान्यं हेतुः, यथाऽनित्यो वर्णात्मकः शब्दः, शब्दत्वात्, मेघशब्दवत्। एवमिहापि बालविज्ञानमन्यविज्ञानपूर्वकमिति विशेषः पक्षीकृतः, न तु सामान्यविज्ञानमन्यविज्ञानपूर्वकमिति पक्षीकृतं, येन विज्ञानत्वादिति प्रतिज्ञार्थैकदेशः स्यात्, यथाऽनित्यः शब्दः, शब्दत्वादित्यादि ॥ १६६१ ॥

अथान्यदनुमानम्—

[2]पढमो थणाहिलासो अण्णाहाराहिलासपुव्वोऽयं। जह संपयाहिलासोऽणुभूइओ सो य देहहिओ ॥१६६२॥

गौतम! आद्यः स्तनाभिलाषो बालस्यायमन्याभिलाषपूर्वकः, अनुभूतेः— अनुभवात्मकत्वात्, सांप्रताभिलाषवदिति। [3]अथवा, 'अभिलाषत्वात्' इत्ययमनुक्तोऽपि हेतुर्द्रष्टव्यः, इह योऽभिलाषः सोऽन्याभिलाषपूर्वको दृष्टः, यथा सांप्रताभिलाषः, यदभिलाषपूर्वक-

१ विज्ञानान्तरपूर्वं बालज्ञानमिह ज्ञानभावात्। यथा बालज्ञानपूर्वं युवज्ञानं तच्च देहाधिकम् ॥ १६६१॥
२ प्रथमः स्तनाभिलाषोऽन्याहाराभिलाषपूर्वोऽयम्। यथा सांप्रताभिलाषोऽनुभूतितः स च देहाधिकः ॥ १६६२ ॥ ३ घ ज. 'योऽयमाद्य'।

भूयाइसंसयाओ जीवाइसु का कह त्ति ते बुद्धी । तं सव्वसुण्णसंकी मन्नसि मायोवमं लोयं ॥१६९१॥

आयुष्मन् व्यक्त ! भूतेषु भवतः संदेहः, यतः स्वप्नोपमानि मायोपमानि चैतानि भवेयुरिति त्वं मन्यसे । यथा हि स्वप्ने किल कश्चिद् निःस्वोऽपि निजगृहाङ्गणे गजघटा-तुरगनिवह-मणि-कनकराश्यादिकमभूतमपि पश्यति, मायायां चेन्द्रजालविलसितरूपायामविद्यमानमपि कनक-मणि-मौक्तिक-रजतभाजना-ऽऽराम-पुष्प-फलादिकं दृश्यते, तथैतान्यपि भूतान्येवंविधान्येवेति मन्यसे, यद् यस्माद् विचार्यमाणान्येतानि सर्वथैव न काञ्चिद् युक्तिं भजन्ते सहन्ते । भूतेषु च संशये जीव-पुण्य-पापादिषु किल का वार्ता, भूतविकाराधिष्ठानत्वात् तेषाम् ?, इति तव बुद्धिः । तस्मात् सर्वस्यापि भूत-जीवादिवस्तुनस्त्वदभिप्रायेणाभावात् सर्वशून्यताशङ्की त्वं निरवशेषमपि लोकं मायोपमं स्वप्ने-न्द्रजालतुल्यं मन्यस इति ॥ १६९० ॥ १६९१ ॥

युक्तिं चात्र व्यक्तचेतोगतां भगवान् व्यक्तीकुर्वन्नाह—

[2]जह किर न सओ परओ नोभयओ नावि अन्नओ सिद्धी । भावाणमवेक्खाओ वियत्त ! जह दीह-हस्साणं॥१६९२॥

व्यक्त ! भवतोऽयमभिप्रायः— यथा किल न स्वतः, न परतः, न चोभयतः, नाप्यन्यतो भावानां सिद्धिः संभाव्यते । कुतः ? इत्याह— अपेक्षातः— कार्यकारणादिभावस्यापेक्षिकत्वादित्यर्थः, ह्रस्व-दीर्घव्यपदेशवत् । तथाहि— यत् किमपि भावजातमस्ति तेन सर्वेणापि कार्येण वा भवितव्यम्, कारणेन वा । तत्र कार्यं कारणेन क्रियत इति कारणायत्त एव तस्य कार्यत्वव्यपदेशः, न तु कार्यस्य कार्यत्वं स्वतः सिद्धं किमप्यस्ति । एवं कारणमपि कार्यं करोतीति कार्यायत्त एव तस्य कारणत्वव्यपदेशः, न तु तस्य कारणत्वं स्वतः सिद्धं किञ्चिदस्ति । तदेवं कार्यादिभावः स्वतो न सिध्यति । यच्च स्वतो न सिद्धं तस्य परतोऽपि सिद्धिर्नास्ति, यथा खरविषाणस्य । ततश्च न स्वतः कार्यादिभावः, नापि परतः । स्व-परोभयतस्तर्हि तस्य सिद्धिरिति चेत् । तदयुक्तम्, व्यस्तादुभयतस्तत्सिद्धेरभावात् तत्समुदायेऽपि तदयोगात् । न हि सिकताकणेषु प्रत्येकमसत् तैलं तत्समुदाये प्रादुर्भवति ।

अपिच, उभयतः सिद्धिपक्ष इतरेतराश्रयदोषः प्राप्नोति । यावद्धि कार्यं न सिध्यति न तावत्कारणसिद्धिरस्ति, यावच्च कारणं न सिध्यति न तावत् कार्यं सिद्धिमासादयति । अत इतरेतराश्रयदोषः । तस्माद् नोभयतोऽपि कार्यादिभावसिद्धिः । नाप्यन्यतः—

1 भूतादिसंशयात् जीवादिषु का कथेति ते बुद्धिः । त्वं सर्वशून्यशङ्की मन्यसे मायोपम लोकम् ॥ १६९१ ॥
2 यथा किल न स्वतः परतो नोभयतो नाप्यन्यत सिद्धिः । भावानामपेक्षातो व्यक्त ! यथा दीर्घ-ह्रस्वयो ॥ १६९२ ॥

यदि नाम देह-कर्मणोरनादिः संतानः, तर्हि जीवसिद्धौ किमायातम् ? इत्याह—

[1]तो कम्म-सरीराणं कत्तारं करण-कज्जभावाओ। पडिवज्ज तदब्भहिअं दंड-घडाणं कुलालं व ॥ १६६६ ॥

[2,3]अत्थि सरीरविहाया पइनियययागारओ घटस्सेव। अक्खाणं च करणओ दंडाईणं कुलालो व्व ॥ १६६७ ॥

[4]अत्थिंदियविसयाणं आयाणादेयभावओऽवस्सं। कम्मार इवादाया लोए संडास-लोहाणं ॥ १६६८ ॥

[5]भोत्ता देहाईणं भोज्जत्तणओ नरो व्व भत्तस्स। संघायाइत्तणओ अत्थि य अत्थी घरस्सेव ॥ १६६९ ॥

[6]जो कत्ताइ स जीवो सज्झविरुद्धो त्ति ते मई होज्जा। मुत्ताइपसंगाओ तं नो संसारिणो दोसो ॥ १६७० ॥

आसां व्याख्या पूर्ववदेवेति ॥ १६६६ ॥ १६६७ ॥ १६६८ ॥ १६६९ ॥ १६७० ॥

अथ सुगतमतानुसारी कश्चिदाह— ननु सर्वपदार्थानां क्षणनश्वरत्वाज्जीवस्यापि क्षणिकतया शरीरेण सहैव विनष्टत्वाद् वस्तुतः शरीरात् तस्यानर्थान्तरतैव, इति किं तद्व्यतिरिक्तत्वसाधनप्रयासेन ? इत्यत्राह[7]—

[8]जाइस्सरो न विगओ सरणाओ बालजाइसरणो व्व। जह वा सदेसवत्तं नरो सरंतो विदेसम्मि ॥ १६७१ ॥

इह यो जातिस्मरो जीवः स प्राग्भविकशरीरविगमेऽपि सति न विगत इति प्रतिज्ञा। 'सरणाउ त्ति' स्मरणादिति हेतुः। यथा बालजातौ बालजन्मनि वृत्तं स्मरतीति बालजातिस्मरणो वृद्ध इति दृष्टान्तः। यथा वा, स्वदेशे मालवकमध्यदेशादौ वृत्तं विदेशेऽपि गतो नरः स्मरन् न विगतः। इदमुक्तं भवति— योऽन्यदेश-कालाद्यनुभूतमर्थं स्मरति सोऽविनष्टो दृष्टः, यथा बालकालानुभूतानामर्थानामनुस्मर्ता वृद्धाद्यवस्थायां देवदत्तः। यस्तु विनष्टो नासौ किञ्चिदनुस्मरति, यथा जन्मानन्तरमेवोपरतः। न च पूर्वपूर्वक्षणानुभूतमाहितसंस्कारा उत्तरोत्तरक्षणाः स्मरन्तीति वक्तव्यम्, पूर्व-पूर्वक्षणानां निरन्वयविनाशेन सर्वथा विनष्टत्वात्, उत्तरोत्तरक्षणानां सर्वथाऽन्यत्वात्। न चान्यानुभूतमन्योऽनुस्मरति, देवदत्तानुभूतस्य यज्ञदत्तानुस्मरणप्रसङ्गादिति ॥ १६७१ ॥

---

१ ततः कर्म-शरीरयोः कर्तारं करण-कार्यभावात्। प्रतिपद्यस्व तदभ्यधिकं दण्ड-घटयोः कुलालमिव ॥ १६६६ ॥

२ गाथा १५६७। ३ पूर्वत्र 'देहस्स त्थि विहाया' इति पाठः। ४ गाथा १५६८। ५ गाथा १५६९। ६ गाथा १५७०। ७ व ज. 'इत्याह'।

८ जातिस्मरो न विगत. स्मरणाद् बालजातिस्मरण इव। यथा वा स्वदेशवृत्तं नरः स्मरन् विदेशे ॥ १६७१ ॥

इह तावद् न जातं जायते, जातत्वादेव, निष्पन्नघटवत् । अथ जातमपि जायते, तर्ह्यनवस्था, जातत्वाविशेषेण पुनःपुनर्जन्मप्रसङ्गात् । अथाजातं जायते । तत्रोत्तरमाह– 'अभाव त्ति' सूचकत्वात् सूत्रस्य, तर्ह्यभावोऽपि खरविषाणलक्षणो जायताम्, अजातत्वाविशेषात् । अथ जाताजातरूपं जायते । तदप्ययुक्तम् । कुतः ? इत्याह– उभयदोषात् प्रत्येकोभयपक्षोक्तदोषापत्तेरित्यर्थः । किञ्च, एतज्जाताजातलक्षणमुभयमस्ति वा, न वा ? । यद्यस्ति, तर्हि जातमेव तत्, न पुनरुभयम्, तत्र चोक्तो दोषः । अथ नास्ति, तथापि नोभयं तत्, किन्त्वजातमेव, तत्रापि चाभिहितमेव दूषणम् । नापि जायमानं जायते, पूर्वोक्तविकल्पद्वयानतिवृत्तेः, तथाहि– तदपि जायमानमस्ति, नवा ? । यद्यस्ति, तर्हि जातमेव तत् । नास्ति चेत्, तर्ह्यजातमेव । पक्षद्वयेऽपि चास्मिन्नभिहित एव दोषः । उक्तं च—

"गत न गम्यते तावदगतं नैव गम्यते । गतागतविनिर्मुक्तं गम्यमानं न गम्यते[1] ॥ १ ॥"

इत्यादि । यस्मादेवम्, तस्मादनवस्थादिदोषप्रसङ्गेन वस्तूनामुत्पादायोगाज्जगतः शून्यतैवं युक्तेति ॥ १६९४ ॥

प्रकारान्तरेणापि वस्तूत्पत्त्ययोगतः शून्यतासाधनार्थमाह—

[2]हेऊ-पच्चयसामग्गि वीसु भावेसु नो व जं कज्जं । दीसइ सामग्गिमयं सव्वाभावे न सामग्गी ॥१६९५॥

हेतवः– उपादानकारणानि, प्रत्ययास्तु निमित्तकारणानि, तेषां हेतु-प्रत्ययानां या सामग्री तस्या विष्वग् भावेषु पृथगवस्थासु यत् कार्यं न दृश्यते, दृश्यते च सामग्रीमयम्– संपूर्णसामग्र्यवस्थायां पुनर्दृश्यत इत्यर्थः । एवं च सति कार्यस्य सर्वाभाव एव युक्त इति शेषः । सर्वाभावे च न सामग्री– नैव सामग्रीसद्भावः प्राप्नोतीत्यर्थः । ततः सर्वशून्यतैवेति भावः । इदमत्र हृदयम्– हेतवश्च प्रत्ययाश्च स्वजन्यमर्थं किमेकैकशः कुर्वन्ति, संभूय वा ? । न तावदेकैकशः, तथाऽनुपलब्धेः । तत एकैकस्मात् कार्यस्याभावात् सामग्र्यामपि तदभाव एव स्यात्, सिकताकणतैलवदिति । इत्थं च सर्वस्यापि कार्यस्योत्पत्त्यभावे सामग्रीसद्भावो न प्राप्नोति, अनुत्पन्नायाः सामग्र्या अप्ययोगात् । ततश्च सर्वशून्यतैव जगतः । उक्तं च—

"हेतु-प्रत्ययसामग्री पृथग् भावेष्वदर्शनात् । तेन ते नाभिलप्या हि भावाः सर्वे स्वभावतः ॥ १ ॥"

"लोके यावत् संज्ञा सामग्र्यामेव दृश्यते यस्मात् । तस्माद् न सन्ति भावा भावे सति नास्ति सामग्री ॥ १ ॥"

इत्यादि । [3]अस्य च व्याख्या— पृथग् भावेष्वदर्शनात् 'कार्यस्य' इति शेषः । तेन ते घटादयो भावाः सर्वेऽपि स्वभावतः

१ नागार्जुनकृते मध्यमककारिकाग्रन्थे कारिका १५ ।
२ हेतु-प्रत्ययसामग्री विष्वग् भावेषु नो वा यत् कार्यम् । दृश्यते सामग्रीमयं सर्वाभावे न सामग्री ॥ १६९५ ॥ ३ घ ज. 'अत्र व्या' ।

सर्वसंस्काराः' इत्यादिवचनात् । एतच्च क्षणिकताग्राहकज्ञानस्यैकत्वे न संभवत्येव । यदि हि त्रिलोकीतलगतैः सर्वैरपि क्षणिकैः पदार्थैः पुरः स्थित्वा तदेकं विज्ञानं जन्येत, तदा तदेतज्जानीयाद् यदुत– 'क्षणिकाः सर्वेऽप्यमी पदार्थाः' इति । न चैवं सर्वैरपि तैस्तज्जन्यते । कुतः ? इत्याह– 'एगबंधणं ति' यस्मादेकमेव प्रतिनियतं बन्धनं निबन्धनमालम्बनं यस्य तदेकबन्धनं ज्ञानम्, अतः कथमशेषवस्तुस्तोमव्यापिनीं क्षणिकतामवबुध्येत ? । अपिच, एकालम्बनत्वेऽपि यद्यशेषपदार्थविषयाणामपि ज्ञानानां युगपदुत्पत्तिरिष्यते, आत्मा च तदर्थानुसर्ता, तदा स्यादशेषपदार्थक्षणिकतापरिज्ञानम् । न चाशेषार्थग्राहकानेकज्ञानानां युगपदुत्पत्तिरिष्यते ।

किञ्च, तदेकमप्येकार्थविषयमपि च विज्ञानं सर्वपदार्थगतां क्षणिकतामज्ञास्यदेव यद्युत्पत्त्यनन्तरध्वंसि नाभविष्यत् । अविनाशित्वे हि तदवस्थिततयोपविष्टं सदन्यमन्यं चार्थमुत्पत्त्यनन्तरमुपरमन्तं दृष्ट्वा 'सर्वमेवास्मद्वर्जमस्मत्सजातीयवर्जं च वस्तु क्षणिकमेव' इत्यवबुध्येत, न चैतदस्ति । कुतः ?, इत्याह– 'एगंतेण खणियं चेति' यस्य च बौद्धस्यैकान्तेन क्षणिकं क्षणध्वंस्येव विज्ञानं, न पुनश्चिरावस्थायि, तस्य कथं सर्ववस्तुगतक्षणिकतापरिज्ञानं स्यात् ? । तस्मादक्षणिकमेव प्रमातृ ज्ञानमेष्टव्यम् । तच्च गुणत्वादनुरूपं गुणिनमात्मानमन्तरेण न संभवति । अतः सिद्धः शरीराद् व्यतिरिक्त आत्मेति ॥ १६७४ ॥

उक्तगाथोक्तमेव कञ्चिदर्थं भावयति—

[1]जं सविसयनिययं चिय जम्माणंतरहयं च तं किह णु । नाहिति सुबहुयविण्णाणविसयखयभंगयाईणि ? ॥ १६७५ ॥

यत् स्वविषयमात्रनियतं जन्मानन्तरहतं च प्रमातृ विज्ञानं, तत्कथं सुबहुविज्ञानविषयगतान् क्षणभङ्ग-निरात्मकत्व-सुखि-दुःखितादीन् धर्मान् ज्ञास्यति ? न कथञ्चिदित्यर्थः ॥ १६७५ ॥

अत्र परमतमाशङ्क्य परिहरन्नाह—

[2]गिण्हिज्ज सव्वभंगं जइ य मई सविसयाणुमाणाओ । तं पि न जओऽणुमाणं जुत्तं सत्ताइसिद्धीओ ॥ १६७६ ॥

यदि च परस्यैवंभूता मतिः स्याद् यदुत– एकमपि– एकालम्बनमपि क्षणिकमपि च प्रमातृ विज्ञानं सर्ववस्तुगतक्षणभङ्गं गृह्णीयात् । कुतः ? इत्याह– स्वविषयानुमानात् । एतदुक्तं भवति– यस्मादयमस्मद्विषयः क्षणिकः, अहं च क्षणनश्वररूपम्, ततो

1 यद् स्वविषयनियतमेव जन्मानन्तरहतं च तत् कथं नु । ज्ञास्यति सुबहुकविज्ञानविषयक्षयभङ्गकादीनि ? ॥ १६७५ ॥

2 गृह्णीयात् सर्वभङ्गं यदि च मति स्वविषयानुमानात् । तदपि न यतोऽनुमान युक्तं सत्तादिसिद्धौ ॥ १६७६ ॥

एतदेव भावयति—

[1]को वा विसेसहेऊ सव्वाभावे वि थाणु-पुरिसेसु । संका न खपुप्फाइसु विवज्जओ वा कहं न भवे ? ॥१६९८॥

को वाऽत्र विशेषहेतुरुच्यतां यत्– सर्वाभावे सर्वशून्यतायामविशिष्टायामपि स्थाण्वादिषु संशयो भवति, न खपुष्पादिषु ?। ननु विशेषहेत्वभावादविशेषेण सर्वत्र संशयोऽस्तु, नियामकाभावाद् । विपर्ययो वा भवेत्– खपुष्पादिषु संशयः स्याद् न स्थाण्वादिष्विति भावः ॥ १६९८ ॥

अपि च,

[2]पच्चक्खओऽणुमाणादागमओ वा पसिद्धिरत्थाणं । सव्वप्पमाणविसयाभावे किह संसओ जुत्तो ?॥ १६९९ ॥

यदा हि प्रमाणैरर्थानां प्रसिद्धिर्जाता भवेत् तदा कथञ्चित् क्वचिद् वस्तुनि संशयो युज्येत। यदा च सर्वेषां प्रमाणानां सर्वेषां च तद्विषयाणामभावस्तदा कथं संशयोऽस्तु, संशयस्य ज्ञातृ-ज्ञेयाद्यर्थसामग्रीजन्यत्वात् ? । सर्वशून्यत्वे च तदभावाद् न संशयोद्भूतिः, निर्मूलत्वादिति भावः ॥ १६९९ ॥

एतदेव समर्थयति—

[3]जं संसयादउ नाणपज्जया तं च नेयसंबद्धं । सव्वन्नेयाभावे न संसओ तेण ते जुत्तो ॥ १७०० ॥

यस्मात् संशय-विपर्यया-ऽनध्यवसाय-निर्णया विज्ञानपर्ययाः, तच्च ज्ञेयनिबन्धनमेव, सर्वशून्यतायां न ज्ञेयमस्ति, तस्माद् न तव संशयो युक्तः । सति च संशयेऽनुमानसिद्धा एव भावाः ॥ १७०० ॥

कथम् ? इत्याह—

[4]संति च्चिय ते भावा संसयओ सोम्म ! थाणु-पुरिस व्व । अह दिट्ठंतमसिद्धं मण्णसि नणु संसयाभावो ॥१७०१॥

---

१ को वा विशेषहेतुः सर्वाभावेऽपि स्थाणु-पुरुषयोः । शङ्का न खपुष्पादिषु विपर्ययो वा कथं न भवेत् ? ॥ १६९८ ॥

२ प्रत्यक्षतोऽनुमानादागमतो वा प्रसिद्धिरर्थानाम् । सर्वप्रमाणविषयाभावे कथं संशयो युक्तः ? ॥ १६९९ ॥

३ यत् संशयादयो ज्ञानपर्यायास्तच्च ज्ञेयसम्बद्धम् । सर्वज्ञेयाभावे न संशयस्तेन ते युक्तः ॥ १७०० ॥

४ सन्त्येव ते भावाः संशयतः सौम्य ! स्थाणु-पुरुषाविव । अथ दृष्टान्तमसिद्धं मन्यसे ननु संशयाभावः ॥ १७०१ ॥

वासना वासक-वासनीययोर्द्वयोरपि समेत्य संयुज्य विद्यमानयोरेव युक्ता, न तु जन्मानन्तरमेव हतस्य विनष्टस्य। वास्य-वासकयोश्च संयोगेनावस्थाने क्षणिकताहानिप्रसङ्गः। किञ्च, सापि वासना क्षणिका, अक्षणिका वा ?। क्षणिकत्वे कथं तद्वशात् सर्वक्षणिकतापरिज्ञानम् ?। अक्षणिकत्वे तु प्रतिज्ञाहानिरिति ॥ १६७७ ॥

तदेवं परपक्षं दूषयित्वा सांप्रतं स्वपक्षमुपदिदर्शयिषुरुपसंहरन्नाह—

बहुविण्णाणप्पभवो जुगवमणेगत्थयाऽहवेगस्स। विण्णाणावत्था वा पडुच्चवित्तीविघाओ वा ॥ १६७८ ॥

विण्णाणखणविणासे दोसा इच्चादयो पसज्जंति। न उ ठियसंभूयच्चुयविण्णाणमयम्मि जीवम्मि ॥१६७९॥

तदेवं विज्ञानस्य प्रतिक्षणं विनाशेऽभ्युपगम्यमाने इत्यादयो दोषाः प्रसजन्ति। के पुनस्ते दोषाः ? इत्याह– 'बहुविण्णाणेत्यादि' इत्येवं संबन्धः। क्षणनश्वरविज्ञानवादिना भुवनत्रयान्तर्वर्तिसर्वार्थग्रहणार्थं युगपदेव बहूनां ज्ञानानां प्रभव उत्पादोऽभ्युपगन्तव्यः, तदाश्रयभूतश्च तद्दृष्टानामर्थानामनुस्मर्ताऽवस्थित आत्माऽभ्युपगन्तव्यः; अन्यथा 'यत् सत् तत् सर्वं क्षणिकम्' 'क्षणिकाः सर्वे संस्काराः' 'निरात्मानः सर्वे भावाः' इत्यादि सर्वक्षणिकतादिविज्ञानं नोपपद्येत, तदभ्युपगमे च स्वमतत्यागप्रसक्तिः। अथवा, क्षणिकं विज्ञानमिच्छतैकस्यापि विज्ञानस्य युगपदनेकार्थता– सर्वभवनान्तर्गतार्थग्राहिताऽभ्युपगन्तव्या, येन सर्वक्षणिकतादिविज्ञानमुपपद्यते, न चैतदिष्यते, दृश्यते वा। 'विण्णाणावत्था व त्ति' यदिवा, अवस्थानमवस्था, विज्ञानस्यावस्था विज्ञानावस्थाऽभ्युपगन्तव्या भवति। इदमुक्तं भवति– विज्ञानस्यानल्पकल्पाग्रशोऽवस्थानमेष्टव्यम्, येन तत् सर्वदा समासीनमन्यान्यवस्तुविनश्वरतां वीक्षमाणं सर्वक्षणिकतामवगच्छेदिति सर्वं प्रागेवोक्तमेव। एवं चाभ्युपगमे विज्ञानसंज्ञामात्रविशिष्ट आत्मैवाभ्युपगतो भवति।

अथैतद् बहुविज्ञानप्रभवादिकं नेष्यते, तर्हि प्रतीत्यवृत्तिविघातः प्राप्नोति। इदमत्र हृदयम्– कारणं प्रतीत्याश्रित्य कार्यस्य वृत्तिः प्रवृत्तिरुत्पत्तिरिति यावत्, न पुनः कारणं कार्यावस्थायां कथञ्चिदप्यन्वेति, इत्येवं सौगतैरभ्युपगम्यते। इत्थं चाभ्युपगम्यमानेऽतीतस्मरणादिसमस्तव्यवहारोच्छेदप्रसङ्गः। एवं हि व्यवहारप्रवृत्तिः स्याद् यद्यतीतानेकसंकेतादिज्ञानाश्रयस्तत्तद्विज्ञानरूपेण परिणामादन्वयी आत्माऽभ्युपगम्यते। तथाभ्युपगमे च सति प्रतीत्यवृत्त्यभ्युगमविघातः स्यादिति। ननु यदि विज्ञानस्य क्षणविनाश

१ बहुविज्ञानप्रभवो युगपदनेकार्थताऽथवैकस्य। विज्ञानावस्था वा प्रतीत्यवृत्तिविघातो वा ॥ १६७८ ॥
विज्ञानक्षणविनाशे दोषा इत्यादयः प्रसजन्ति। न तु स्थितसंभूतच्युतविज्ञानमये जीवे ॥ १६७९ ॥

¹असओ खरसंगस्स व सओ वि दूराइभावओऽभिहिया। सुहुमा-ऽमुत्तत्तणओ कम्माणुगयस्य जीवस्स ॥१६८३॥

यदि नाम शरीरादन्योऽसौ जीवस्ततो घटे चटक इव शरीरे प्रविशन् निःसरन् वा किमिति नोपलभ्यते ? । भगवानाह— 'गोयमेत्यादि' यतो द्विविधाऽनुपलब्धिरस्ति, अतस्तस्यानुपलब्धेः कारणाद् गौतम ! जीवो न दृश्यते । कथं पुनः साऽनुपलब्धि-र्द्विविधा ? इत्याह– सा चानुपलब्धिरेकाऽसतो भवति, यथा खरशृङ्गस्य । द्वितीया तु सतोऽप्यर्थस्य भवति । कुतः ? इत्याह– दूरादिभावादिति, दूरात् सन्नप्यर्थो न दृश्यते, यथा स्वर्गादिः, आदिशब्दात्– अतिसंनिकर्षात्, अतिसौक्ष्म्यात्, मनोऽनवस्थानात्, इन्द्रियापाटवात्, मतिमान्द्यात्, अशक्यत्वात्, आवरणात्, अभिभवात्, सामान्यात्, अनुपयोगात्, अनुपायात्, विस्मृतेः, दुरागमात्, मोहात्, विदर्शनात्, विकारात्, अक्रियातः, अनधिगमात्, कालविप्रकर्षात्, स्वभावविप्रकर्षाच्चेति ।

तत्रातिसंनिकर्षात् सन्नप्यर्थो नोपलभ्यते, यथा नेत्रदूषिका-पक्ष्मादिः । अतिसौक्ष्म्यात् परमाण्वादिः । मनोऽनवस्थानात् सतोऽप्यनुपलब्धिर्यथा नष्टचेतसाम् । इन्द्रियापाटवात् किञ्चिद्बधिरादीनाम् । मतिमान्द्यादनुपलब्धिः सतामपि सूक्ष्मशास्त्रार्थविशेषाणाम् । अशक्यत्वात् स्वकर्ण-कृकाटिका-मस्तक-पृष्ठादीनाम् । आवरणाद् हस्तादिस्थगितलोचनानां कट-कुड्याद्यावृतानां वा । अभिभवात् प्रसृतसूरतेजसि दिवसे तारकाणाम् । सामान्यात् सूपलक्षितस्यापि माषादेः समानजातीयमाषादिराशिपतितस्याप्रत्यभिज्ञानात् सतोऽप्यनुपलब्धिः । अनुपयोगाद् रूपोपयुक्तस्य शेषविषयाणाम् । अनुपायात् शृङ्गादिभ्यो गोमहिष्यादिपयःपरिमाणजिज्ञासोः । विस्मृतेः पूर्वोपलब्धस्य । दुरागमाद् दुरुपदेशात् तत्प्रतिरूपकरीतिकादिविप्रलम्भितमतेः कनकादीनां सतामप्यनुपलब्धिः । मोहात् सतामपि जीवादितत्त्वानाम् । विदर्शनात् सर्वथाऽन्धादीनाम् । वार्धक्यादिविकाराद् बहुशः पूर्वोपलब्धस्य सतोऽप्यनुपलब्धिः । अक्रियातो भूखननादिक्रियाऽभावाद् वृक्षमूलादीनामनुपलब्धिः । अनधिगमात् शास्त्राश्रवणात् तदर्थस्य सतोऽप्यनुपलब्धिः । कालविप्रकर्षाद् भूत-भविष्यदृषभदेव-पद्मनाभतीर्थकरादीनामनुपलब्धिः । स्वभावविकर्षाद् नभःपिशाचादीनामनुपलम्भः । तदेवं सतामप्यर्थानामेकविंशतिविधाऽनुपलब्धिः प्रवर्तते । अतोऽस्य कर्मानुगतस्य संसारिणो जीवस्याऽमूर्तत्वाद् नभस इव, कार्मणस्य तु सौक्ष्म्यात् परमाणोरिव सतोऽनुपलब्धिः, नासतः । कथं पुनरेतज्ज्ञायते– नासत आत्मनोऽनुपलब्धिः, किन्तु सतः ? इति चेत् । उच्यते– अनुमानैस्तत्सत्त्वस्य साधितत्वादिति ॥ १६८२ ॥ १६८३ ॥

१ असतः खरशृङ्गस्येव सतोऽपि दूरादिभावतोऽभिहिता । सूक्ष्मा-ऽमूर्तत्वत. कर्मानुगतस्य जीवस्य ॥ १६८३ ॥

अथ चतुर्थस्य व्यक्तगणधरस्य वक्तव्यतामभिधित्सुराह—

[1]ते पव्वइए सोउं वियत्तु आगच्छइ जिणसगासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ १६८७ ॥

सुगमा ॥ १६८७ ॥

एवं विचिन्त्य व्यक्तनामा द्विजोपाध्यायः समागतो भगवतः समीपम् । ततो भगवता किं कृतम् ? इत्याह—

[2]आभट्टो य जिणेणं जाइ-जरा-मरणविप्पमुक्केणं । नामेण य गोत्तेण य सव्वण्णू सव्वदरिसी णं ॥१६८८॥

व्याख्या पूर्ववदिति ॥ १६८८ ॥

आभाष्य भगवता किमुक्तोऽयम् ? इत्याह—

[3]किं मण्णे अत्थि भूया उदाहु नत्थि त्ति संसओ तुज्झ। वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥१६८९॥

पृथिव्य-ऽप्-तेजो-वाय्वा-ऽऽकाशलक्षणानि पञ्च भूतानि, तानि च किं सन्ति, नवा ? इति त्वं मन्यसे । संशयश्च तवायं विरुद्धवेदपदश्रवणनिबन्धनो वर्तते । तानि चामूनि वेदपदानि– "स्वप्नोपमं वै सकलमित्येष ब्रह्मविधिरञ्जसा विज्ञेयः" इत्यादि, तथा, "द्यावा-पृथिवी" इत्यादि, तथा, "पृथिवी देवता, आपो देवताः" इत्यादि । एतेषां चायमर्थस्तव प्रतिभासते– 'स्वप्नोपमम्– स्वप्नसदृशम्, वैनिपातोऽवधारणे, सकलम्– अशेषं जगत्, इत्येष ब्रह्मविधिः– परमार्थप्रकारः, अञ्जसा– प्रगुणेन न्यायेन, विज्ञेयः– ज्ञातव्यः' [4]इति । तदेवमादीनि वेदपदानि किल भूतनिह्नवपराणि, 'द्यावा-पृथिवी' इत्यादीनि तु सत्ताप्रतिपादकानि, अतस्तव संशयः । तदेतेषां वेदपदानां त्वमर्थं न जानासि, चशब्दाद् युक्तिहृदयं च न वेत्सि । तेन संशयं कुरुषे । तेषां चायमर्थो वक्ष्यमाणलक्षण इति ॥ १६८९ ॥

अथ भाष्यम्—

[5]भूएसु तुज्झ संका सुविणय-माओवमाइं हों[6]ज्ज त्ति । न वियारिज्जंताइं भयंति जं सव्वहा जुत्तिं ॥१६९०॥

---

१ तान् प्रव्रजितान् श्रुत्वा व्यक्त आगच्छति जिनसकाशम् । व्रजामि वन्दे वन्दित्वा पर्युपासे ॥ १६८७ ॥ २ गाथा १६०९ ।
३ किं मन्यसे सन्ति भूतान्युताहो न सन्तीति संशयस्तव । वेदपदानां चार्थं न जानासि तेषामयमर्थः ॥ १६८९ ॥ ४ क ग 'इत्यादि त' ।
५ भूतेषु तव शङ्का स्वप्नक-मायोपमानि भवेयुरिति । न विचार्यमाणानि भजन्ति यत् सर्वथा युक्तिम् ॥१६९०॥ ६ क.ग.'होज्ज ति'स्त 'हुज्ज ति' ।

अनुभयत इत्यर्थः, स्व-परो-भयव्यतिरेकेणान्यस्य वस्तुनोऽसत्त्वेन निर्हेतुकत्वप्रसङ्गात् । एवं ह्रस्व-दीर्घलक्षणे दृष्टान्तेऽपि 'अपेक्षातः' इत्यस्य ह्रस्व-दीर्घत्वासिद्धिलक्षणेन साध्येनान्वयो भावनीयः । तथाहि– प्रदेशिन्या अङ्गुष्ठमपेक्ष्य दीर्घत्वं प्रतीयते, मध्यमां त्वपेक्ष्य ह्रस्वत्वम्, परमार्थेन त्वियं स्वतो न ह्रस्वा, नापि दीर्घा । तदेवं न स्वतो ह्रस्व-दीर्घत्वयोः सिद्धिः । ततः परतः, उभयतः, अनुभयतश्च तत्सिद्ध्यभावो यथोक्तवद् भावनीयः, तदुक्तम्—

"न दीर्घेऽस्तीह दीर्घत्वं न ह्रस्वे नापि च द्वये । तस्मादसिद्धं शून्यत्वात् सदित्याख्यायते क हि ? ॥ १ ॥"

"ह्रस्वं प्रतीत्य सिद्धं दीर्घं, दीर्घं प्रतीत्य ह्रस्वमपि । न किंचिदस्ति सिद्धं व्यवहारवशाद् वदन्त्येवम् ॥ १ ॥" ॥ १६०२ ॥

इतश्च सर्वजगच्छून्यता । कुतः ? इत्याह—

[1]अत्थित्त-घडेगाणेगया व सव्वेगयाइदोसाओ। सव्वेऽणभिलप्पा वा सुण्णा वा सव्वहा भावा ॥ १६९३ ॥

नन्वस्तित्व-घटयोरेकत्वम्, अनेकत्वं वा ? । यद्येकत्वम्, तर्हि सर्वैकता प्राप्नोति– यो योऽस्ति स स घट इत्यस्तित्वे घटस्य प्रवेशात् सर्वस्य घटत्वप्रसङ्गः स्यात्, न पटादि पदार्थान्तरम् । घटो वा सर्वसत्त्वाव्यतिरेकात् सर्वात्मकः स्यात्; अथवा, यो घटः स एवास्तीति घटमात्रेऽस्तित्वं प्रविष्टम्, ततोऽन्यत्र सत्त्वाभावादघटस्य सर्वस्याप्यभावप्रसङ्गतो घट एवैकः स्यात् । सोऽपि वा न भवेत्, अघटव्यावृत्तो हि घटो भवति, यदा च तत्प्रतिपक्षभूतोऽघट एव नास्ति, तदा किमपेक्षोऽसौ घटः स्यात् ? । इति सर्वशून्यत्वमिति । अथ घट-सत्त्वयोरन्यत्वमिति द्वितीयो विकल्पः । तर्हि सत्त्वरहितत्वादसन् घटः, खरविषाणवदिति । अपिच, सतो भावः सत्त्वमुच्यते, तस्य च स्वाधारभूतेभ्यो घटादिभ्यः सद्भ्योऽन्यत्वेऽसत्त्वमेव स्यात्, आधारादन्यत्वे आधेयस्याप्यनुपपत्तेः । तदेवमस्तित्वेन सह घटादीनामेकत्वा-ऽन्यत्वविकल्पाभ्यामुक्तन्यायेन सर्वैकतादिदोषप्रसङ्गात् सर्वेऽपि भावा अनभिलप्या वा भवेयुः, सर्वथा शून्या वा स्युः, सर्वथैव तेषामभावो वा भवेदित्यर्थः । अपिच, यद् नोत्पद्यते तत्तावद् निर्विवादं खरविषाणवदसदेव, इति निवृत्ता तत्कथा । यदप्युत्पत्तिमल्लोकेऽभ्युपगम्यते, तस्यापि जाता-ऽजातादिविकल्पयुक्तिभिरुत्पादो न घटते, इति शून्यतैव युक्तेति ॥ १६९३ ॥

एतदेवाह[2]—

[3]जाया-ऽजायो-भयओ न जायमाणं च जायए जम्हा। अणवत्था-ऽभावो-भयदोसाओ सुण्णया तम्हा ॥१६९४॥

१ अस्तित्व-घटैकानेकता वा सर्वैकतादिदोषात् । सर्वेऽनभिलाप्या वा शून्या वा सर्वथा भावाः ॥ १६९३ ॥ २ घ.ज. 'तदाह' ।

३ जाता-ऽजातोभयतो न जायमानं च जायते यस्मात् । अनवस्था-ऽभावो-भयदोषात् शून्यता तस्मात् ॥ १६९४ ॥

स्वरूपतो नाभिलाप्याः, पृथगेकैकावस्थाया कार्यस्यानुत्पादात्, उत्पत्तिमन्तरेण च घटादिसंज्ञाऽप्रवृत्तेः; संज्ञाऽभावे चाभिलप्तुमशक्यत्वादिति। कुतः पुनः पृथगवस्थायां संज्ञाऽप्रवृत्तिः? इत्याह— 'लोके यावदित्यादि' लोके यावत् संज्ञा 'घटोऽयम्' इत्यादिसंज्ञाप्रवृत्तिः, तावत् संपूर्णं कार्यं संपूर्णसामग्र्यामेव यस्माद् दृश्यते, पृथगभावे च सामग्र्यामप्यभावात् सिकतातैलवद् न सन्त्येव भावाः, भावासत्त्वे च कुतः सामग्रीसद्भावः? इति ॥ १६९५ ॥

प्रकारान्तरेणापि शून्यतासिद्ध्यर्थमाह—

परभागादरिसणओ सव्वाराभागसुहमयाओ य। उभयाणुवलंभाओ सव्वाणुवलद्धिओ सुण्णं ॥ १६९६ ॥[1]

इह यत् तावददृश्यं तदसदेव, अनुपलम्भात्, खरविषाणवदिति निवृत्ता तद्वार्ता। दृश्यस्यापि च स्तम्भ-कुम्भ-कुड्यादेः पर-मध्यभागयोरसत्त्वमेव, अर्वाग्भागान्तरितत्वेन तयोरप्यदर्शनात्, आराद्भागस्यापि च सावयवत्वात् पुनरन्यः खल्वाराद्भागः, तस्याप्यन्यः पुनस्तस्याप्यन्य इत्येवं तावत्, यावत् सर्वारातीयभागस्य, परमाणुप्रतरमात्रत्वेनातिसौक्ष्म्यात्, पूर्वेषां चाराद्भागानामन्यस्यान्येनान्तरितत्वेनानुपलब्धेः। ततश्चोक्तन्यायेन परभागसर्वारातीयभागलक्षणोभयभागानुपलम्भात् सर्वस्यापि वस्तुजातस्यानुपलब्धेः शून्यं जगदिति। उक्तं च—

"यावद् दृश्यं परस्तावद् भागः स च न दृश्यते। तेन ते नाभिलाप्या हि भावाः सर्वे स्वभावतः ॥ १ ॥"

तदेवमुक्तयुक्त्या सर्वस्यापि भूतादेरभावः प्राप्नोति, श्रूयते च श्रुतौ भूतादिसद्भावोऽपीति संशयः। इति पूर्वपक्षः ॥ १६९६ ॥

अथ भगवान् प्रतिविधानमाह—

मा कुरु वियत्त! संसयमसइ न संसयसमुब्भवो जुत्तो। खकुसुम-खरसिंगेसु व, जुत्तो सो थाणु-पुरिसेसु ॥१६९७॥[2]

आयुष्मन् व्यक्त! मा कृथाः संशयं– मा भूताभावं बुध्यस्व, यतोऽसति भूतकदम्बके संशयः खकुसुम-खरविषाणयोरिव न युक्तः, अपि त्वभावनिश्चय एव स्यात्। सत्स्वेव च भूतेषु स्थाणु-पुरुषादिष्विव संशयो युक्तः। यदि पुनरसत्यपि वस्तुनि संदेहः स्यात् तदाऽविशेषेण खरविषाणादिष्वपि स्यादिति भावः ॥ १६९७ ॥

---

१ परभागादर्शनतः सर्वाराद्भागसौक्ष्म्याच्च। उभयानुपलम्भात् सर्वानुपलब्धितः शून्यम् ॥ १६९६ ॥

२ मा कुरु व्यक्त! संशयमसति न संशयसमुद्भवो युक्तः। खकुसुम-खरशृङ्गयोरिव, युक्तः स स्थाणु-पुरुषयोः ॥ १६९७॥